मपि तद्गतमीश्वरेण परिच्छिद्येत, पुरुषगता च महासंख्या । ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारान्मुच्यन्ते, तेषां संसारोऽन्तवान्, संसारित्वं च तेषामन्तवत्; एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां च अन्तवत्त्वं स्यात्; प्रधानं च सविकारं पुरुषार्थमीश्वरस्य अधिष्ठेयं संसारत्वेनाभिमतम्; तच्छून्यतायाम् ईश्वरः किमधितिष्ठेत्? किंविषये वा सर्वज्ञतेश्वरते स्याताम्? प्रधानपुरुषेश्वराणाम् चैवमन्तवत्त्वे सति आदिमत्त्वप्रसङ्गः; आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः । अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत —न प्रधानस्य पुरुषाणामात्मनश्च इयत्ता ईश्वरेण परिच्छिद्यत इति; तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत । तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता च उभयात्मकं कारणमीश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यायते । ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः—प्रकृतिश्चाधिष्ठाता चेति; श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति

८. उत्पत्त्यसंभवाधिकरणम् ।

स्थितिः; तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति— उच्यते— यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवति, अस्ति त्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः ॥

तत्र भागवता मन्यते— भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम्; स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितः— वासुदेवव्यूहरूपेण, संकर्षणव्यूहरूपेण, प्रद्युम्नव्यूहरूपेण, अनिरुद्धव्यूहरूपेण च; वासुदेवो नाम परमात्मा उच्यते; संकर्षणो नाम जीवः; प्रद्युम्नो नाम मनः; अनिरुद्धो नाम अहंकारः; तेषां वासुदेवः परा प्रकृतिः, इतरे संकर्षणादयः कार्यम्; तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति । तत्र यत्तावदुच्यते— योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा, स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति— तन्न निराक्रियते, 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात्; यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न प्रतिषिध्यते, श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । य-

त्पुनरिदमुच्यते— वासुदेवात्संकर्षण उत्पद्यते, संकर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्चानिरुद्ध इति, अत्र ब्रूमः— न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति, अनित्यत्वादिदोषप्रसङ्गात्; उत्पत्तिमत्त्वे हि जीवस्य अनित्यत्वादयो दोषाः प्रसज्येरन्; ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्, कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्; प्रतिषेधिष्यति च आचार्यो जीवस्योत्पत्तिम्—'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' इति। तस्मादसंगतैषा कल्पना ॥

## न च कर्तुः करणम् ॥ ४३ ॥

इतश्चासंगतैषा कल्पना— यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते; वर्णयन्ति च भागवताः कर्तुर्जीवात्संकर्षणसंज्ञकात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते, कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहंकार उत्पद्यत इति; न चैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः; न चैवंभूतां श्रुतिमुपलभामहे ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथापि स्यात्— न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते; किं तर्हि, ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्य-

तेजोभिरैश्वर्यधर्मैरन्विता अभ्युपगम्यन्ते— वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति; तस्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति। अत्रोच्यते— एवमपि, तदप्रतिषेधः उत्पत्त्यसंभवस्याप्रतिषेधः, प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः; कथम्? यदि तावदयमभिप्रायः— परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणः, नैषामेकात्मकत्वमस्तीति— ततोऽनेकेश्वरकल्पनानर्थक्यम्, एकेनैवेश्वरेणेश्वरकार्यसिद्धेः; सिद्धान्तहानिश्च, भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात्। अथायमभिप्रायः— एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः; न हि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति, संकर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात्; भवितव्यं हि कार्यकारणयोरतिशयेन, यथा मृद्घटयोः; न ह्यसत्यतिशये, कार्यं कारणमित्यवकल्पते। न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु एकस्मिन्सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते; वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात्॥

## विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्च अस्मिन् शास्त्रे बहुविध उपलभ्यते—गुणगुणित्वकल्पनादिलक्षणः; ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति—चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मात् असंगतैषा कल्पनेति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

शारीरकमीमांसासूत्रभाष्ये

द्वितीयाध्यायस्य द्वितीयः पादः ॥

# तृतीयः पादः ॥

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते; केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न; तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न; एवं जीवस्य प्राणानां च; एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते; विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितम्; तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येत— इत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते; तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते—

## न वियदश्रुतेः ॥ १ ॥

किमस्याकाशस्योत्पत्तिरस्ति, उत नास्तीति । तत्र तावत्प्रतिपद्यते— न वियदश्रुतेरिति; न खल्वाकाशमुत्पद्यते;

कस्मात्? अश्रुतेः—न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति; छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य, 'तदैक्षत' 'तत्तेजोऽसृजत' इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते; श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ; न च अत्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी; तस्मान्नाकाशस्योत्पत्तिरिति ॥

१. वियदधिकरणम्।

## अस्ति तु ॥ २ ॥

तु-शब्दः पक्षान्तरपरिग्रहे; मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः; श्रुत्यन्तरे त्वस्ति; तैत्तिरीयका हि समामनन्ति —'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति। ततश्च श्रुत्योर्विप्रतिषेधः—क्वचित्तेजःप्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति। नन्वेकवाक्यता अनयोः श्रुत्योर्युक्ता; सत्यं सा युक्ता, न तु सा अवगन्तुं शक्यते; कुतः? 'तत्तेजोऽसृजत' इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः— 'तत्तेजोऽसृजत' 'तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते—यथा सः सूपं पक्त्वा ओदनं

पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजत इति योजयिष्यामि; नैवं युज्यते; प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते; तैत्तिरीयके च आकाशस्य; न च उभयोः प्रथमजत्वं संभवति; एतेन इतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यत्रापि—तस्मादाकाशः संभूतः, तस्मात्तेजः संभूतम्—इति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः, 'वायोरग्निः' इति च पृथगाम्नानात् ॥

अस्मिन्विप्रतिषेधे कश्चिदाह—

**गौण्यसंभवात् ॥ ३ ॥**

नास्ति वियत उत्पत्तिः, अश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता, सा गौणी भवितुमर्हति; कस्मात्? असंभवात् । न ह्याकाशस्योत्पत्तिः संभावयितुं शक्या, श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु; ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति; समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते; द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति; न चाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति; यस्मि-

न्समवायिकारणे सति, असमवायिकारणे च तत्संयोगे, आकाश उत्पद्येत; तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेव आकाशस्य भवति। उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते— प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव, पश्चाच्च भवतीति; आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते; किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्? पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणात् आकाशस्य अजत्वसिद्धिः। तस्माद्यथा लोके—आकाशं कुरु, आकाशो जातः—इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च—घटाकाशः, करकाकाशः गृहाकाशः— इत्येकस्याप्याकाशस्य एवंजातीयको भेदव्यपदेशो गौणो भवति— वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति; एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या॥

## शब्दाच्च॥ ४॥

शब्दः खल्वप्याकाशस्य अजत्वं ख्यापयति, यत आह— 'वायुश्चान्तरिक्षं चैतदमृतम्' इति; न ह्यमृतस्योत्पत्तिरुपपद्यते; 'आकाशवत्सर्वगतश्च नित्यः' इति च आकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमानः आकाशस्यापि तौ धर्मौ सूचयति; न च तादृशस्योत्पत्तिरुपपद्यते। 'स

यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति च उदाहरणम्— 'आकाशशरीरं ब्रह्म' 'आकाश आत्मा' इति च । न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति—नीलेनेवोत्पलस्य । तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

इदं पदोत्तरं सूत्रम । स्यादेतत् । कथं पुनरेकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवति, आकाशे च गौणत्वमिति । अत उत्तरमुच्यते— स्याच्चैकस्यापि संभूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगः— ब्रह्मशब्दवत्; यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः, आनन्दे च मुख्यः; यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यते, अञ्जसा तु विज्ञेये ब्रह्मणि—तद्वत् । कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' इतीयं प्रतिज्ञा समर्थ्यते? ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति; कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति, तदुच्यते— 'एकमेव' इति तावत्स्वकार्यापेक्षयो-

पपद्यते; यथा लोके कश्चित्कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि च उपलभ्य अपरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात्—'मृदेवैकाकिनी पूर्वेद्युरासीत्' इति, स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात्, न दण्डचक्रादि— तद्वदद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति— यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठाता अस्तीति । न च नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते; लक्षणान्यत्वनिमित्तं हि नानात्वम्; न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति— क्षीरोदकयोरिव संसृष्टयोः— व्यापित्वामूर्तत्वादिधर्मसामान्यात्; सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते, स्तिमितमितरत्तिष्ठति, तेनान्यत्वमवसीयते; तथा च 'आकाशशरीरं ब्रह्म' इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः; अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः; अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा च अव्यतिरिक्तदेशकालमेवाकाशं भवतीति—अतो ब्रह्मणा तत्कार्येण च विज्ञातेन सहविज्ञातमेवाकाशं भवति— यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति; न हि क्षीरग्रहणादब्बिन्दुग्रहणं

परिशिष्यते; एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नभो भवति । तस्माद्वाक्तं नभसः संभवश्रवणमिति ॥

एवं प्राप्ते, इदमाह—

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

'येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इति, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति, 'न काचन मद्बहिर्धा विद्यास्ति' इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते; तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात्; व्यतिरेके हि सति एकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते; तथा हि— 'येनाश्रुतꣳ श्रुतं भवति' इति प्रतिज्ञाय, मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते; तत्साधनायैव चोत्तरे शब्दाः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत' 'तत्तेजोऽसृज-

त' इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्य, अव्यतिरेकं प्रदर्शयन्ति— 'ऐतदात्म्यमिदꣳ सर्वम्' इत्यारभ्य आ प्रपाठकपरिसमाप्तेः ; तद्यद्याकाशं न ब्रह्मकार्यं स्यात्, न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ; ततश्च प्रतिज्ञाहानिः स्यात् ; न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम् । तथा हि प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति— 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदममृतं पुरस्तात्' इत्येवमादयः ; तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते ॥

यदुक्तम्—अश्रुतेर्न वियदुत्पद्यत इति, तदयुक्तम्, वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात्— 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति । सत्यं दर्शितम्, विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण ; न, एकवाक्यत्वात्सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानाम् ; इह तु विरोध उक्तः—सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवाद्द्वयोश्च प्रथमजत्वासंभवाद्विकल्पासंभवाच्चेति—नैष दोषः, तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात्—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः' इति ; अशक्या हीयं श्रुतिरन्यथा परिणेतुम् ; शक्या तु परिणेतुं छान्दोग्यश्रुतिः—तदाकाशं वायुं च सृष्ट्वा 'तत्तेजोऽसृजत'

इति; न हीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति, एकस्य वाक्यस्य व्यापारद्वयासंभवात्; स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत्—इत्येकवाक्यत्वकल्पनायां संभवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या; न चास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्; यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति। ननु शमविधानार्थमेतद्वाक्यम्—'तज्जलानिति शान्त उपासीत' इति श्रुतेः; नैतत्सृष्टिवाक्यम्; तस्मादेतन्न प्रदेशान्तरप्रसिद्धं क्रममनुरोद्धुमर्हतीति; 'तत्तेजोऽसृजत' इत्येतत्सृष्टिवाक्यम; तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति। नेत्युच्यते; न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात्क्रमस्य; अपि च 'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति; अर्थात्तु क्रमो गम्यते; स च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते; विक-

ल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसंभवानभ्युपगमाभ्यां निवारितौ; तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः। अपि च छान्दोग्ये 'येनाश्रुतं श्रुतं भवति' इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियत् उत्पत्तावुपसंख्यातव्यम्; किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते। यच्चोक्तम्—आकाशस्य सर्वेणानन्यदेशकालत्वाद्ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद्भवति; अतो न प्रतिज्ञा हीयते; न च 'एकमेवाद्वितीयम्' इति श्रुतिकोपो भवति, क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति। अत्रोच्यते—न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम्; मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते; क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्; न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति; न च वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणमुपपद्यते; सावधारणा चेयम् 'एकमेवाद्वितीयम्' इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत। न च स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेवाद्वितीयतावधारणं चेति न्याय्यम्, मृदादिष्वपि हि तत्संभवात्—न तदपूर्ववदुपन्य-

सितव्यं भवति—'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति' इत्यादिना । तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् ॥

यत्पुनरेतदुक्तम्— असंभवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति, अत्र ब्रूमः—

**यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥**

तु-शब्दोऽसंभवाशङ्काव्यावृत्त्यर्थः । न खल्वाकाशोत्पत्तावसंभवाशङ्का कर्तव्या ; यतो यावत्किंचिद्विकारजातं दृश्यते— घटघटिकोदञ्चनादि वा, कटककेयूरकुण्डलादि वा, सूचीनाराचनिस्त्रिंशादि वा— तावानेव विभागो लोके लक्ष्यते ; न त्वविकृतं किंचित्कुतश्चिद्विभक्तमुपलभ्यते ; विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते ; तस्मात्सोऽपि विकारो भवितुमर्हति । एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् । नन्वात्माप्याकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत्प्राप्नोति ; न, 'आत्मन आकाशः संभूतः' इति श्रुतेः ; यदि ह्यात्मापि विकारः स्यात्, तस्मात्परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरा-

त्मकमात्मनः कार्यत्वे स्यात्; तथा च शून्यवादः प्रसज्येत; आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः न ह्यात्मागन्तुकः कस्यचित्, स्वयंसिद्धत्वात्; न ह्यात्मा आत्मनः प्रमाणमपेक्ष्य सिध्यति; तस्य हि प्रत्यक्षादीनि प्रमाणान्यसिद्धप्रमेयसिद्धये उपादीयन्ते; न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयं सिद्धाः केनचिदभ्युपगम्यन्ते; आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति; न चेदृशस्य निराकरणं संभवति; आगन्तुकं हि वस्तु निराक्रियते, न स्वरूपम्; य एव हि निराकर्ता तदेव तस्य स्वरूपम्; न ह्यग्नेरौष्ण्यमग्निना निराक्रियते; तथा अहमेवेदानीं जानामि वर्तमानं वस्तु, अहमेवातीतमतीततरं चाज्ञासिषम्, अहमेवानागतमनागततरं च ज्ञास्यामि, इत्यतीतानागतवर्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात्; तथा भस्मीभवत्यपि देहे नात्मन उच्छेदः; वर्तमानस्वभावादन्यस्वभावत्वं वा न संभावयितुं शक्यम्; एवमप्रत्याख्येयस्वभावत्वादकार्यत्वमात्मानः, कार्यत्वं च आकाशस्य ॥

यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति, तत्प्रत्युच्यते—न तावत्समानजातीयमेवारभते, न भि-

न्नजातीयमिति नियमोऽस्ति; न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति, द्रव्यगुणत्वाभ्युपगमात्; न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति । स्यादेतत्——समवायिकारणविषय एव समानजातीयत्वाभ्युपगमः, न कारणान्तरविषय इति; तदप्यनैकान्तिकम्; सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते; तथा सूत्रैरूर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते; सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम्, सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यनेकमेवारभते, नैकम्——इति नियमोऽस्ति; अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते, न द्रव्यान्तरैः संहत्य——इत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत्, न; परिणामाभ्युपगमात् । भवेदेष नियमः—— यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत; तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते; तच्च क्वचिदनेकं परिणमते मृद्बीजादि, अङ्कुरादिभावेन; क्वचिदेकं परिणमते क्षीरादि, दध्यादिभावेन; नेश्वरशासनमस्ति——अनेकमेव कारणं कार्यं जनयतीति । अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण

आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते; तथा चोक्तम्—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' इति ॥

यच्चोक्तम् आकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति, तदयुक्तम्; येनैव विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते, स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते; यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्—'अस्थूलमनणु' इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते; तस्मात्प्रागुत्पत्तेरनाकाशमिति स्थितम्। यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति, तदप्यसत्, श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्याभासत्वोपपत्तेः, उत्पत्त्यनुमानस्य च दर्शितत्वात्; अनित्यमाकाशम्, अनित्यगुणाश्रयत्वात्, घटादिवदित्यादिप्रयोगसंभवाच्च; आत्मन्यनैकान्तिकमिति चेत्, न; तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः; विभुत्वादीनां च आकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात्। यच्चोक्तमेतत्— शब्दाच्चेति— तत्रामृतत्वश्रुतिस्तावद्वियति 'अमृता दिवौकसः' इतिवद्द्रष्टव्या; उत्पत्तिप्रलययोरुपपादितत्वात्; 'आकाशवत्सर्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशोपमानं क्रियते निरतिशयमह-

त्वाय, न आकाशसमत्वाय– यथा ‘इषुरिव सविता धावति’ इति क्षिप्रगतित्वायोच्यते, न इषुतुल्यगतित्वाय— तद्वत्; एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता; ‘ज्यायानाकाशात्’ इत्यादिश्रुतिभ्यश्च ब्रह्मणः सकाशादाकाशस्योनपरिमाणत्वसिद्धिः ‘न तस्य प्रतिमास्ति’ इति च ब्रह्मणोऽनुपमानत्वं दर्शयति; ‘अतोऽन्यदार्तम्’ इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति । तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम् । तस्माद्ब्रह्मकार्यं वियदिति सिद्धम् ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

२. मातरिश्वाधिकरणम् ।

अतिदेशोऽयम् । एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः । तत्राप्येते यथायोगं पक्षा रचयितव्याः—न वायुरुत्पद्यते, छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः, अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नानम् ‘आकाशाद्वायुः’— इति पक्षान्तरम्; ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिः, असंभवात् इत्यपरोऽभिप्रायः; असंभवश्च ‘सैषानस्तमिता देवता यद्वायुः’ इत्यस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्च । प्रतिज्ञानुपरोधाद्यावद्विकारं च वि-

भागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः । अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः, अग्न्यादीनामिव वायोरस्तमयाभावात् । कृतप्रतिविधानं च अमृतत्वादिश्रवणम् । ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु किमतिदेशेनासति विशेष इति, उच्यते— सत्यमेवमेतत्; तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते— संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात् अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

३. असंभवाधिकरणम् ।

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य, ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः; तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्य, आकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत; तामाशङ्कामपनेतुमिदं सूत्रम्— असंभवस्त्विति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या; कस्मात्? अनुपपत्तेः । सन्मात्रं हि ब्रह्म; न तस्य सन्मात्रादेवोत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः;

नापि सद्विशेषात्, दृष्टविपर्ययात्— सामान्याद्विशेषा उत्पद्यमाना दृश्यन्ते, मृदादेर्घटादयः, न तु विशेषेभ्यः सामान्यम्; नाप्यसतः, निरात्मकत्वात्; 'कथमसतः सज्जायेत' इति च आक्षेपश्रवणात्। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता, न तु ब्रह्मणः सा अस्तीति वैषम्यम्। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हति, मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्; या मूलप्रकृतिरभ्युपगम्यते, तदेव च नो ब्रह्मेत्यविरोधः ॥

## तेजोऽतस्तथा ह्याह ॥ १० ॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितम्, तैत्तिरीयके तु वायुमूलत्वम्; तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्याम्,

४. तेजोऽधिकरणम्।

प्राप्तं तावद्ब्रह्मयोनिकं तेज इति। कुतः? 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात्; सर्वविज्ञानप्रतिज्ञायाश्च, ब्रह्मप्रभवत्वे सर्वस्य, संभवात्; 'तज्जलान्' इति च अविशेषश्रुतेः; 'एतस्माज्जायते प्राणः' इति च उपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्; तैत्तिरीयके च 'स तपस्तप्त्वा। इदं सर्व-

मसृजत। यदिदं किंच' इत्यविशेषश्रवणात्; तस्मात्—'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः—वायोरनन्तरमग्निः संभूत इति—

एवं प्राप्ते, उच्यते—तेजः अतः मातरिश्वनः जायत इति; कस्मात्? तथा ह्याह—'वायोरग्निः' इति। अव्यवहिते हि तेजसो ब्रह्मजत्वे सति, असति वायुजत्वे 'वायोरग्निः' इतीयं श्रुतिः कदर्थिता स्यात्। ननु क्रमार्थैषा भविष्यतीत्युक्तम्; नेति ब्रूमः— 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति पुरस्तात् संभवत्यपादानस्य आत्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, परस्तादपि तदधिकारे 'पृथिव्या ओषधयः' इत्यपादानपञ्चमीदर्शनात्, 'वायोरग्निः' इत्यपादानपञ्चम्येवैषेति गम्यते; अपि च, वायोरूर्ध्वमग्निः संभूतः—इति कल्प्यः उपपदार्थयोगः, क्लृप्तस्तु कारकार्थयोगः— वायोरग्निः संभूतः इति; तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति। नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति— 'तत्तेजोऽसृजत' इति; न, तस्याः पारंपर्यजत्वेऽप्यविरोधात्; यदापि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं तेजसो न विरुध्यते,

यथा— तस्याः शृतम्, तस्या दधि, तस्या आमिक्षेत्यादि; दर्शयति च ब्रह्मणो विकारात्मनावस्थानम्— 'तदात्मानꣲ स्वयमकुरुत' इति; तथा च ईश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः' इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति । यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते, तथापि सर्वस्य भावजातस्य साक्षात्प्रणाड्या वा ईश्वरवंश्यत्वात्; एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः, तासां सर्वथोपपत्तेः, क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः । प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते, न अव्यवहितजन्यत्वम्— इत्यविरोधः ॥

## आपः ॥ ११ ॥

५. अबधिकरणम् ।

'अतस्तथा ह्याह' इत्यनुवर्तते; आपः, अतः तेजसः, जायन्ते; कस्मात्? तथा ह्याह—'तदपोऽसृजत' इति, 'अग्नेरापः' इति च; सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्, अपोऽन्तरियामिति 'आपः' इति सूत्रयांबभूव ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्न-

मसृजन्त' इति श्रूयते; तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वा ओदनाद्युच्यते, किं वा पृथिवीति; तत्र प्राप्तं तावत्—व्रीहियवादि ओदनादि वा परिग्रहीतव्यमिति; तत्र ह्यन्नशब्दः प्रसिद्धो लोके; वाक्यशेषोऽप्येतमर्थमुपोद्बलयति—'तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवति' इति—व्रीहियवाद्येव हि सति वर्षणे बहु भवति, न पृथिवीति ॥

६. पृथिव्यधिकाराधिकरणम् ।

एवं प्राप्ते, ब्रूमः— पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति; कस्मात्? अधिकारात्, रूपात्, शब्दान्तराच्च । अधिकारस्तावत्— 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति महाभूतविषयो वर्तते; तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः । तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते— 'यत्कृष्णं तदन्नस्य' इति; न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति, नापि व्रीह्यादीनाम् । ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात्; नायं दोषः—बाहुल्यापेक्षत्वात्; भूयिष्ठं हि पृथिव्याः कृष्णं रूपम्, न तथा श्वेतरोहिते; पौराणिका अपि पृथिवीछायां

शर्वरीमुपदिशन्ति, सा च कृष्णाभासा— इत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते । श्रुत्यन्तरमपि समानाधिकारम् — 'अद्भ्यः पृथिवी' इति भवति, 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इति च; पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति— 'पृथिव्या ओषधय ओषधीभ्योऽन्नम्' इति च । एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः? प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते; वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्सृजन्ति, आहोस्वित्परमेश्वर एव तेन तेन आत्मनावतिष्ठमानोऽभिध्यायन् तं तं विकारं सृजतीति संदेहे सति, प्राप्तं तावत्— स्वयमेव सृजन्तीति; कुतः? 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । ननु अचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा; नैष दोषः— 'तत्तेज ऐक्षत ता आप ऐक्षन्त' इति च भूतानामपि चेतनत्वश्रवणादिति ॥

७. तदभिध्यानाधिकरणम् ।

एवं प्राप्ते, अभिधीयते—स एव परमेश्वरस्तेन तेन आत्मना अवतिष्ठमानोऽभिध्यायन् तं तं विकारं सृजतीति ; कुतः? तल्लिङ्गात् । तथा हि शास्त्रम्— 'यः पृथिव्यां तिष्ठन्यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इत्येवंजातीयकम्— साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति ; तथा 'सोऽकामयत बहु स्यां प्रजायेयेति' इति प्रस्तुत्य, 'सच्च त्यच्चाभवत्, तदात्मानं स्वयमकुरुत' इति च तस्यैव च सर्वात्मभावं दर्शयति । यत्तु ईक्षणश्रवणमप्तेजसोः, तत्परमेश्वरावेशवशादेव द्रष्टव्यम्— 'नान्योऽतोऽस्ति द्रष्टा' इतीक्षित्रन्तरप्रतिषेधात्, प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत बहु स्यां प्रजायेयेति' इत्यत्र ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

८. विपर्ययाधिकरणम् ।

भूतानामुत्पत्तिक्रमश्चिन्तितः; अथेदानीम् अप्ययक्रमश्चिन्त्यते— किमनियतेन क्रमेणाप्ययः, उत उत्पत्तिक्रमेण, अथवा तद्विपरीतेनेति । त्रयोऽपि च उत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते— 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' इति । तत्रानियमोऽविशेषादिति प्राप्तम्; अथवा उत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्यापि क्र-

माकाङ्क्षिणः स एव क्रमः स्यादिति ॥

एवं प्राप्तं ततो ब्रूमः— विपर्ययेण तु प्रलयक्रमः, अतः उत्पत्तिक्रमात्, भवितुमर्हति ; तथा हि लोके दृश्यते—येन क्रमेण सोपानमारूढः, ततो विपरीतेन क्रमेणावरोहतीति ; अपि च दृश्यते—मृदो जातं घटशरावादि अप्ययकाले मृद्भावमप्येति, अद्भ्यश्च जातं हिमकरकादि अब्भावमप्येतीति । अतश्चोपपद्यत एतत्— यत्पृथिवी अद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तौ अपः अपीयात् ; आपश्च तेजसो जाताः सत्यः तेजः अपीयुः ; एवं क्रमेण सूक्ष्मं सूक्ष्मतरं च अनन्तरमनन्तरतरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम् ; न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः—'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते' इत्येवमादौ । उत्पत्तिक्रमस्तु उत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति ; न च असौ अयोग्यत्वादप्ययेनाकाङ्क्ष्यते ; न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः, कारणाप्यये कार्यस्यावस्थानानुपपत्तेः ; कार्याप्यये तु कारणस्यावस्थानं युक्तम्— मृदादिष्वेवं दृष्टत्वात् ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २९ ॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम्; आत्मादिरुत्पत्तिः प्रलयश्चात्मान्तः— इत्यप्युक्तम्।

१. अन्तराविज्ञानाधिकरणम्।

सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः— 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुः' इत्यादिलिङ्गेभ्यः; तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात्। अपि च आथर्वणे उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते— 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति। तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत्, न; अविशेषात्— यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम्; भवति च भौतिकत्वे लिङ्गं करणानाम्— 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्येवंजातीयकम्; व्यपदेशोऽपि क्वचिद्भूतानां करणानां च ब्राह्मणपरिव्राजक-

न्यायेन नेतव्यः । अथ त्वभौतिकानि करणानि, तथापि भूतोत्पत्तिक्रमो न करणैर्विशिष्यते— प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि, प्रथमं वा भूतान्युत्पद्यन्ते चरमं करणानीति; आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्रोत्पत्तिक्रम उच्यते; तथा अन्यत्रापि पृथगेव भूतक्रमात्करणक्रम आम्नायते—'प्रजापतिर्वा इदमग्र आसीत्स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत्तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

स्तो जीवस्याप्युत्पत्तिप्रलयौ, जातो देवदत्तो मृतो देवदत्त इत्येवंजातीयकाल्लौकिकव्यपदेशात् जातकर्मादिसंस्कारविधानाच्च—इति स्यात्कस्यचिद्भ्रान्तिः; तामपनुदामः । न जीवस्योत्पत्तिप्रलयौ स्तः, शास्त्रफलसंबन्धोपपत्तेः; शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम्; श्रूयते च—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति ।

१०. चराचरव्यपाश्रयाधिकरणम् ।

ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः; सत्यं दर्शितः; भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः। किमाश्रयः पुनरयं मुख्यः, यदपेक्षया भाक्त इति? उच्यते— चराचरव्यपाश्रयः; स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ; स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च; अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते, तद्भावभावित्वात्— शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः, नासतोः; न हि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते; 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन् म्रियमाणः' इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्, अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति; देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्तः इत्येतदनेन सूत्रेणावोचत्॥

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः॥ १७॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी; स किं व्योमादिवदुत्पद्यते ब्रह्मणः, आहोस्विद्ब्रह्म-

वदेव नोत्पद्यते, इति श्रुतिविप्रतिपत्तेर्विशयः; कासुचिच्छ्रुति-

११. आत्माधिकरणम्।

षु अग्निविस्फुलिङ्गादिनिदर्शनैः जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते; कासुचित्तु अविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते, न च उत्पत्तिराम्नायत इति । तत्र प्राप्तं तावत्—उत्पद्यते जीव इति; कुतः? प्रतिज्ञानुपरोधादेव । 'एकस्मिन्विदिते सर्वमिदं विदितम्' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत । न च अविकृतः परमात्मैव जीव इति शक्यते विज्ञातुम्, लक्षणभेदात्—अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः । विभागाच्चास्य विकारत्वसिद्धिः—यावान् हि आकाशादिः प्रविभक्तः, स सर्वो विकारः; तस्य च आकाशादेरुत्पत्तिः समधिगता; जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखयुक् प्रतिशरीरं प्रविभक्त इति, तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति । अपि च 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा 'सर्व एत आत्मानो व्युच्चरन्ति' इति भोक्तॄणामात्मनां पृथक्सृष्टिं शास्ति । 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।

तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते, सरूपवचनात्—जीवात्मानो हि परमात्मना सरूपा भवन्ति, चैतन्ययोगात्; न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्याप्यविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या—'तदात्मानं स्वयमकुरुत' इत्यादिवत्। तस्मादुत्पद्यते जीव इति ॥

एवं प्राप्ते, ब्रूमः—नात्मा जीव उत्पद्यत इति; कस्मात्? अश्रुतेः; न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम्; सत्यमुक्तम्; उत्पत्तिरेव त्वस्य न संभवतीति वदामः; कस्मात्? नित्यत्वाच्च ताभ्यः— च-शब्दादजत्वादिभ्यश्च—नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथा अजत्वम् अविकारित्वम् अविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मना चेति; न चैवंरूपस्योत्पत्तिरुपपद्यते। ताः काः श्रुतयः?—'न जीवो म्रियते' 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' 'न जायते म्रियते वा विपश्चित्' 'अजो नित्यः शाश्वतोऽयं पुराणः' 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अनेन जी-

वेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म सर्वानुभूः' इत्येवमाद्या नित्यत्ववादिन्यः सत्यः जीवस्योत्पत्तिं प्रतिबध्नन्ति । ननु प्रविभक्तत्वाद्विकारः, विकारत्वाच्चोत्पद्यते—इत्युक्तम्; अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतेः; बुद्ध्याद्युपाधिनिमित्तं तु अस्य प्रविभागप्रतिभानम्, आकाशस्येव घटादिसंबन्धनिमित्तम्; तथा च शास्त्रम्—'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इत्येवमादि— ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेकबुद्ध्यादिमयत्वं दर्शयति; तन्मयत्वं च अस्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वम्—स्त्रीमयो जाल्म इत्यादिवत्—द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणम्, तदप्यत एवोपाधिसंबन्धान्नेतव्यम्—उपाध्युत्पत्त्या अस्योत्पत्तिः, तत्प्रलयेन च प्रलय इति; तथा च दर्शयति—'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' इति; तथोपाधिप्रलय एवायम्, नात्मविलयः—इत्येतदपि— 'अत्रैव मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि'—न प्रेत्य

संज्ञास्ति— इति प्रश्नपूर्वकं प्रतिपादयति— 'न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा'— मात्रासंसर्गस्त्वस्य भवति—इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्; लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव, 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मात् नैवात्मोत्पद्यते प्रविलीयते चेति ॥

## ज्ञोऽत एव ॥ १८ ॥

स किं काणभुजानामिवागन्तुकचैतन्यः, स्वतोऽचेतनः, आहोस्वित्सांख्यानामिव नित्यचैतन्यस्वरूप एव, इति वादिविप्रतिपत्तेः संशयः । किं तावत्प्राप्तम्? आगन्तुकमात्मनश्चैतन्यमात्ममनःसंयोगजम्, अग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तम्; नित्यचैतन्यत्वे हि सुप्तमूर्छितग्रहाविष्टानामपि चैतन्यं स्यात्; ते पृष्टाः सन्तः 'न किंचिद्वयं चेतयेमहि' इति जल्पन्ति; स्वस्थाश्च चेतयमाना दृश्यन्ते; अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेति ॥

१२. ज्ञाधिकरणम् ।

एवं प्राप्ते, अभिधीयते— ज्ञः नित्यचैतन्योऽयमात्मा—

अत एव— यस्मादेव नोत्पद्यते, परमेव ब्रह्म अविकृतमुपाधिसंपर्काज्जीवभावेनावतिष्ठते ; परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्—'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इत्यादिषु श्रुतिषु ; तदेव चेत्परं ब्रह्म जीवः, तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति गम्यते। विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति—'असुप्तः सुप्तानभिचाकशीति' 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्येवंरूपाः। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति च— सर्वैः करणद्वारैः 'इदं वेद, इदं वेद' इति विज्ञानेनानुसंधानात् तद्रूपत्वसिद्धिः। नित्यचैतन्यस्वरूपत्वे घ्राणाद्यानर्थक्यमिति चेत्, न, गन्धादिविषयविशेषपरिच्छेदार्थत्वात् ; तथा हि दर्शयति—'गन्धाय घ्राणम्' इत्यादि। यत्तु सुप्तादयो न चेतयन्त इति, तस्य श्रुत्यैव परिहारोऽभिहितः सुषुप्तं प्रकृत्य— 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति; न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्; न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादिना ; एतदुक्तं भवति— विषयाभावादियमचेतयमानता, न चैतन्याभावादिति— यथा वियदाश्रयस्य प्रका-

शस्य प्रकाश्याभावादनभिव्यक्तिः, न स्वरूपाभावात्—तद्वत् । वैशेषिकादितर्कश्च श्रुतिविरोध आभासीभवति । तस्मान्नित्यचैतन्यस्वरूप एव आत्मेति निश्चिनुमः ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

इदानीं तु किंपरिमाणो जीव इति चिन्त्यते—किमणुपरिमाणः, उत मध्यमपरिमाणः, आहोस्वित् महापरिमाण

१३. उत्क्रान्ति- गत्यधि- करणम् ।

इति । ननु च नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तम्; अतश्च पर एव आत्मा जीव इत्यापतति; परस्य च आत्मनोऽनन्तत्वमाम्नातम्; तत्र कुतो जीवस्य परिमाणचिन्तावतार इति; उच्यते—सत्यमेतत्; उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति; स्वशब्देन च अस्य क्वचिदणुपरिमाणत्वमाम्नायते; तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावत्—उत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नोऽणुपरिमाणो जीव इति; उत्क्रान्तिस्तावत्—'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' इति; गतिरपि—'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति; आगतिरपि—'तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' इति; आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नस्तावज्जीव इति

प्राप्नोति— न हि विभोश्चलनमवकल्पत इति; सति परिच्छेदे, शरीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वात् अणुरात्मेति गम्यते ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत; उत्तरे तु गत्यागती नाचलतः संभवतः; स्वात्मना हि तयोः संबन्धो भवति, गमेः कर्तृस्थक्रियात्वात् ; अमध्यमपरिमाणस्य च गत्यागती अणुत्वे एव संभवतः; सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते; न हि अनपसृप्तस्य देहाद्गत्यागती स्याताम्— देहप्रदेशानां च उत्क्रान्तावपादानत्ववचनात्— ‘चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः’ इति; ‘स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति’ ‘शुक्रमादाय पुनरैति स्थानम्’ इति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः; तस्मादप्यस्याणुत्वसिद्धिः ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यात्— नाणुरयमात्मा; कस्मात् ? अतच्छ्रु-

तेः; अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः; 'स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु' 'आकाशवत्सर्वगतश्च नित्यः' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत्, नैष दोषः; कस्मात्? इतराधिकारात्— परस्य हि आत्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः, परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्, 'विरजः पर आकाशात्' इत्येवंविधाच्च परस्यैवात्मनस्तत्र तत्र विशेषाधिकारात्। ननु 'योऽयं विज्ञानमयः प्राणेषु' इति शारीर एव महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते— शास्त्रदृष्ट्या तु एष निर्देशो वामदेववद्द्रष्टव्यः। तस्मात्प्राज्ञविषयत्वात्परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्चाणुरात्मा, यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते— 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश' इति; प्राणसंबन्धाच्च जीव एवायमणुरभिहित इति गम्यते। तथोन्मानमपि जीवस्याणिमानं गमयति—'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः' इति; 'आराग्रमात्रो ह्यवरोऽपि दृष्टः'

इति च उन्मानान्तरम् ॥

नन्वणुत्वे सति एकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते; दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिः, निदाघसमये च सकलशरीरपरितापोपलब्धिरिति—अत उत्तरं पठति—

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथा हि हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति; त्वक्संबन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते; त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते; त्वक्च कृत्स्नशरीरव्यापिनीति ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह—यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तम्, दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्; सिद्धे हि आत्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति, प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च; आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षम्, नैकदेशवर्तित्वम्; अनुमेयं तु तदिति य-

दप्युच्येत—न च अत्रानुमानं संभवति—किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः, किं वा विभोर्नभस इव, आहोस्विच्चन्दनबिन्दोरिवाणोरेकदेशस्थस्य इति संशयानतिवृत्तेरिति; अत्रोच्यते— नायं दोषः; कस्मात्? अभ्युपगमात्। अभ्युपगम्यते हि आत्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यम्; कथमिति, उच्यते—हृदि ह्येष आत्मा पठ्यते वेदान्तेषु, 'हृदि ह्येष आत्मा' 'स वा एष आत्मा हृदि' 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्यात् युक्तमेवैतत्—'अविरोधश्चन्दनवत्' इति ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वा अणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते— यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभा अपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति— तद्वत्। स्यात् कदाचिच्चन्दनस्य सावयवत्वात्सूक्ष्मावयवविसर्पणेनापि सकलदेह आह्लादयितृत्वम्; न त्वणोर्जीवस्यावयवाः सन्ति, यैरयं सकलदेहं विसर्पेत्—इत्याशङ्क्य 'गुणाद्वा लोकवत्' इत्युक्तम् ॥

कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत? न हि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । प्रदीपप्रभावद्भवेदिति चेत्, न; तस्या अपि द्रव्यत्वाभ्युपगमात्— निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तु तेजोद्रव्यमेव प्रभा इति, अत उत्तरं पठति—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति, अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमगन्धोपलब्धेः; एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति । अतश्चानैकान्तिकमेतत्— गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति, गुणस्यैव सतो गन्धस्य आश्रयविश्लेषदर्शनात् । गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत्, न; यस्मान्मूलद्रव्याद्विश्लेषः तस्य क्षयप्रसङ्गात्; अक्षीयमाणमपि तत्पूर्वावस्थातो गम्यते; अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतत्—गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात् सन्नपि विश्लेषो नोपलक्ष्यते; सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्, न; अतीन्द्रियत्वात्परमाणूनाम्, स्फुटगन्धोपलब्धेश्च नागकेसरादिषु; न च लोके प्रतीतिः

—गन्धवद्द्रव्यमाघ्रातमिति ; गन्ध एव आघ्रात इति तु लौकिकाः प्रतियन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्, न ; प्रत्यक्षत्वादनुमानाप्रवृत्तेः ; तस्मात् यत् यथा लोके दृष्टम्, तत् तथैव अनुमन्तव्यं निरूपकैः, नान्यथा ; न हि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं च आत्मनः अभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' इति च आत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् चैतन्यगुणेनैव अस्य शरीरव्यापिता गम्यते । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेशः एतमेवाभिप्रायमुपोद्बलयति । तस्मादणुरात्मेति ॥

एवं प्राप्ते, ब्रूमः—

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

तु-शब्दः पक्षं व्यावर्तयति । नैतदस्ति— अणुरात्मेति; उत्पत्त्यश्रवणात् परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्; परमेव चेद्ब्रह्म जीवः, तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति; परस्य च ब्रह्मणो विभुत्वमाम्नातम्; तस्माद्विभुर्जीवः; तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति । न च अणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते; त्वक्संबन्धात्स्यादिति चेत्, न; कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत—त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते— त्वक्च कृत्स्नशरीरव्यापिनीति; पादतल एव तु कण्टकनुन्नो वेदनां प्रतिलभते । न च अणोर्गुणव्याप्तिरुपपद्यते, गुणस्य गुणिदेशत्वात्; गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत; प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम् । गन्धोऽपि गुणत्वाभ्युपगमात्साश्रय एव संचरितुमर्हति, अन्यथा गुणत्वहानिप्रसङ्गात्; तथा चोक्तं भगवता द्वैपायनेन—'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः ।

पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्' इति। यदि च चैतन्यं जीवस्य समस्तशरीरं व्याप्नुयात्, नाणुर्जीवः स्यात्; चैतन्यमेव हि अस्य स्वरूपम्, अग्नेरिवौष्ण्यप्रकाशौ—नात्र गुणगुणिविभागो विद्यत इति। शरीरपरिमाणत्वं च प्रत्याख्यातम्। परिशेषाद्विभुर्जीवः॥

कथं तर्हि अणुत्वादिव्यपदेश इत्यत आह—तद्गुणसारत्वात्तु तद्व्यपदेश इति। तस्या बुद्धेः गुणास्तद्गुणाः—इच्छा द्वेषः सुखं दुःखमित्येवमादयः—तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति, स तद्गुणसारः, तस्य भावस्तद्गुणसारत्वम्। न हि बुद्धेर्गुणैर्विना केवलस्य आत्मनः संसारित्वमस्ति; बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वम् अकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः; तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः, तदुत्क्रान्त्यादिभिश्च अस्योत्क्रान्त्यादिव्यपदेशः, न स्वतः। तथा च—'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह; तच्चैवमेव समञ्जसं स्यात्—यद्यौपचारिकमणुत्वं जीवस्य भवेत्, पारमार्थिकं च आनन्त्यम्; न हि उभयं मुख्यमवक-

ल्पेत; न च आनन्त्यमौपचारिकमिति शक्यं विज्ञातुम्, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात्। तथेतरस्मिन्नप्युन्माने 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति च बुद्धिगुणसंबन्धेनैव आराग्रमात्रतां शास्ति, न स्वेनैवात्मना। 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यत्रापि न जीवस्य अणुपरिमाणत्वं शिष्यते, परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः; तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनम्, उपाध्यभिप्रायं वा द्रष्टव्यम्। तथा 'प्रज्ञया शरीरं समारुह्य' इत्येवंजातीयकेष्वपि भेदोपदेशेषु—बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्य—इत्येवं योजयितव्यम्, व्यपदेशमात्रं वा—शिलापुत्रकस्य शरीरमित्यादिवत्; न ह्यत्र गुणगुणिविभागोऽपि विद्यत इत्युक्तम्। हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात्। तथा उत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति—'कस्मिन्नु अहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति' 'स प्राणमसृजत' इति; उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते; न हि अनपसृप्तस्य देहाद्गत्यागती स्याताम्। एवमुपाधिगुणसारत्वाज्जीवस्याणु-

त्वादिव्यपदेशः, प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषु उपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः— 'अणीयान्व्रीहेर्वा यवाद्वा' 'मनोमयः प्राणमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः' इत्येवंप्रकारः —तद्वत् ॥

स्यादेतत्— यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सति आत्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति— अत उत्तरं पठति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया; कस्मात्? यावदात्मभावित्वाद्बुद्धिसंयोगस्य— यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति; यावदेव चायं बुद्ध्युपाधिसंबन्धः, तावदेवास्य जीवत्वं संसारित्वं च; परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्ति; न हि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो

धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते— 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतिशतेभ्यः । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह; तथा हि शास्त्रं दर्शयति— 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव' इत्यादि; तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति, प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानमयस्य मनआदिभिः सह पाठात्; बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते— यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते, तद्वत्; 'स समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति; केन समानः? तयैव बुद्ध्येति गम्यते, संनिधानात्; तच्च दर्शयति—'ध्यायतीव लेलायतीव' इति; एतदुक्तं भवति—नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव, चलन्त्यां बुद्धौ चलतीवेति । अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसंबन्धः; न च मिथ्याज्ञानस्य सम्यग्ज्ञाना-

दन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधः, तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति; दर्शयति च—'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥

ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्, 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति वचनात्, कृत्स्नविकारप्रलयाभ्युपगमाच्च; तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति, अत्रोच्यते—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति; न अविद्यमानान्युत्पद्यन्ते, षण्डादीनामपि तदुत्पत्तिप्रसङ्गात्— एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति; एवं हि एतद्युज्यते; न हि आकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात्। दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्—'सति संपद्य न विदुः सति संप-

ग्रामह इति' 'त इह व्याघ्रो वा सिंहो वा' इत्यादिना । तस्मात्सिद्धमेतत्—यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-नियमो वान्यथा ॥ ३२ ॥

तच्चात्मन उपाधिभूतम्—अन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति च अनेकधा तत्र तत्राभिलप्यते; कचिच्च वृत्तिविभागेन—संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति; तच्चैवं भूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम्, अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात्—आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत; अथ सत्यपि हेतुसमवधाने फलाभावः, ततो नित्यमेवानुपलब्धिः प्रसज्येत; न चैवं दृश्यते । अथवा अन्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः; न च आत्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात्; नापि इन्द्रियस्य; न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत । तस्मात् यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतः,

तन्मनः । तथा च श्रुतिः—‘अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्’ इति, ‘मनसा ह्येव पश्यति मनसा शृणोति’ इति च; कामादयश्चास्य वृत्तय इति दर्शयति—‘कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव’ इति । तस्माद्युक्तमेतत्—तद्गुणसारत्वात्तद्व्यपदेश इति ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते । कर्ता च अयं जीवः स्यात्; कस्मात्? शास्त्रार्थवत्त्वात्—एवं च ‘यजेत’ ‘जुहुयात्’ ‘दद्यात्’ इत्येवंविधं विधिशास्त्रमर्थवद्भवति; अन्यथा तदनर्थकं स्यात्; तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति; न च असति कर्तृत्वे तदुपपद्येत । तथेदमपि शास्त्रमर्थवद्भवति—‘एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः’ इति ॥

१४. कर्त्रधिकरणम् ।

## विहारोपदेशात् ॥ ३४ ॥

इतश्च जीवस्य कर्तृत्वम्, यज्जीवप्रक्रियायां संध्ये स्थाने विहारमुपदिशति— ‘स ईयतेऽमृतो यत्र कामम्’ इति, ‘स्वे शरीरे यथाकामं परिवर्तते’ इति च ॥

## उपादानात् ॥ ३५ ॥

इतश्चास्य कर्तृत्वम्, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति— 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति, 'प्राणान्गृहीत्वा' इति च ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

इतश्च जीवस्य कर्तृत्वम्, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रम्—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति । ननु विज्ञानशब्दो बुद्धौ समधिगतः, कथमनेन जीवस्य कर्तृत्वं सूच्यत इति, नेत्युच्यते —जीवस्यैवैष निर्देशः, न बुद्धेः; न चेज्जीवस्य स्यात्, निर्देशविपर्ययः स्यात्—विज्ञानेनेत्येवं निरदेक्ष्यत्; तथा हि अन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते— 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति; इह तु 'विज्ञानं यज्ञं तनुते' इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥

अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्, स स्वतन्त्रः सन् प्रियं हितं चैव आत्मनो नियमेन संपादयेत्,

न विपरीतम्; विपरीतमपि तु संपादयन्नुपलभ्यते; न च स्वतन्त्रस्यात्मनः ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति, अत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽपि अनियमेनेष्टमनिष्टं च उपलभते, एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति; उपलब्धावप्यस्वातन्त्र्यम्, उपलब्धिहेतूपादानोपलम्भादिति चेत्, न, विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम्; उपलब्धौ तु अनन्यापेक्षत्वमात्मनः, चैतन्ययोगात्। अपि च अर्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति, देशकालनिमित्तविशेषापेक्षत्वात्; न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते; भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्; सहकारिवैचित्र्याच्च इष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्, ततः शक्तिविपर्ययः स्यात्—करणशक्तिर्बुद्धेर्हीयेत, कर्तृशक्तिश्चापद्येत; सत्यां च बुद्धेः कर्तृशक्तौ, तस्या एव अहंप्रत्ययविष-

यत्वमभ्युपगन्तव्यम्, अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्— 'अहं गच्छामि, अहमागच्छामि, अहं भुञ्जे, अहं पिबामि' इति च; तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत्कल्पयितव्यम्; शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यते; ततश्च संज्ञामात्रे विवादः स्यात्, न वस्तुभेदः कश्चित्, करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥

## समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु— 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'ओमित्येवं ध्यायथ आत्मानम्' इत्येवंलक्षणः, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत । तस्मादप्यस्य कर्तृत्वसिद्धिः ॥

## यथा च तक्षोभयथा ॥ ४० ॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितम्; तत्पुनः स्वाभाविकं वा स्यात्, उपाधिनिमित्तं वेति चिन्त्यते । तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम्, अप-

१५. तक्षाधिकरणम् ।

वादहेत्वभावादिति । एवं प्राप्ते, ब्रूमः— न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात्; कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवति— अग्नेरिवौष्ण्यात्; न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात् । ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः सेत्स्यति; तत्परिहारश्च निमित्तपरिहारात्— यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावः— तद्वत्— न, निमित्तानामपि शक्तिलक्षणेन संबन्धेन संबद्धानामत्यन्तपरिहारासंभावात् । ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति— न, साधनायत्तस्य अनित्यत्वात् । अपि च नित्यशुद्धमुक्तात्मप्रतिपादनात् मोक्षसिद्धिरभिमता; तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत; तस्मात् उपाधिधर्माध्यासेनैवात्मनः कर्तृत्वम्, न स्वाभाविकम्; तथा च श्रुतिः— 'ध्यायतीव लेलायतीव' इति 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति च— उपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रवणात् । पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत; परस्मादन्यश्चेच्चिति-

मात्जीवः कर्ता, बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्— न, अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः; तथा च शास्त्रम्— 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा, विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति— 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति; तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा, तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति— 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' इत्युपसंहारात् ॥

तदेतदाहाचार्यः— 'यथा च तक्षोभयथा' इति । त्वर्थे च अयं चः पठितः । नैवं मन्तव्यम्— स्वाभाविकमेवात्मनः कर्तृत्वम्, अग्नेरिवौष्ण्यमिति; यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवति— एवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, सः तच्छ्रमापनु-

त्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम्— तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूय आत्मैव केवलो निर्वृत्तः सुखी भवति। तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः— तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति, स्वशरीरेण तु अकर्तैव; एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना तु कर्तैवेति। न तु आत्मनस्तक्ष्ण इवावयवाः सन्ति, यैः हस्तादिभिरिव वास्यादीनि तक्षा, मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा ॥

यत्तूक्तम्, शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति, तन्न—विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्वमात्मनः प्रतिपादयति; न च स्वाभाविकमस्य कर्तृत्वमस्ति, ब्रह्मात्मत्वोपदेशात्— इत्यवोचाम; तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते। कर्ता विज्ञानात्मा पुरुषः— इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते, तयोरप्यनुवादरूपत्वात्। ननु संध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परि-

वर्तते—इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति; तथोपादानेऽपि ‘तदेषां प्राणानां विज्ञानेन विज्ञानमादाय’ इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयत इति; अत्रोच्यते—न तावत्संध्ये स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति, ‘सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति’ इति तत्रापि धीसंबन्धश्रवणात्; तथा च स्मरन्ति—‘इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम्’ इति; कामादयश्च मनसो वृत्तयः इति श्रुतिः; ताश्च स्वप्ने दृश्यन्ते; तस्मात्समना एव स्वप्ने विहरति; विहारोऽपि च तत्रत्यो वासनामय एव, न तु पारमार्थिकोऽस्ति; तथा च श्रुतिः इवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति—‘उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्’ इति; लौकिका अपि तथैव स्वप्नं कथयन्ति—आरुक्षमिव गिरिश्रृङ्गम्, अद्राक्षमिव वनराजिमिति; तथोपादानेऽपि यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशः, तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्, केवले कर्तृत्वासंभवस्य दर्शितत्वात्; भवति च लोकेऽनेकप्रकारा विवक्षा—योधा युध्यन्ते, योधै राजा युध्यत इति । अपि च अस्मिन्नुपादाने करणव्यापारोपरममात्रं विव-

क्ष्यते, न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितः, 'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रापयति— विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोऽनन्तरं पाठाच्च, 'तस्य श्रद्धैव शिरः' इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्— श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः, 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' इति च वाक्यशेषात्— ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वान्, 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्। न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति, सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्; उपलब्ध्यपेक्षं त्वेषां करणानां करणत्वम्; सा चात्मनः; न च तस्यामप्यस्य कर्तृत्वमस्ति, नित्योपलब्धिस्वरूपत्वात्। अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति, अहंकारस्याप्युपलभ्यमानत्वात्; न चैवं सति करणान्तरकल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः, यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात्कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम्॥

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितम्, तत्किमनपेक्ष्येश्वरं भवति, आहोस्विदीश्वरापेक्षमिति भवति विचारणा। तत्र प्राप्तं तावत्— नेश्वरमपेक्षते जीवः कर्तृत्व इति; कस्मात्? अपेक्षाप्रयोजनाभावात्; अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति; तस्य किमीश्वरः करिष्यति? न च लोके प्रसिद्धरस्ति— कृष्यादिकासु क्रियास्वनडुहादिवत् ईश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन च कर्तृत्वेन जन्तून्संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत; विषमफलं च एषां कर्तृत्वं विदधतो वैषम्यम्। ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्युक्तम्— सत्यमुक्तम्, सति तु ईश्वरस्य सापेक्षत्वसंभवे; सापेक्षत्वं च ईश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः; तयोश्च सद्भावः सति जीवस्य कर्तृत्वे; तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात्, किंविषयमीश्वरस्य सापेक्षत्वमुच्येत। अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत। तस्मात्स्वत एवास्य कर्तृत्वमिति— एतां प्राप्तिं तु-शब्देन व्यावर्त्य प्रतिजानीते— परादिति; अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्याविद्याति-

१६. परायत्ताधिकरणम्।

मिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः ; तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति ; कुतः ? तच्छ्रुतेः ; यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम्, तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते ; तथा हि श्रुतिर्भवति— 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति, 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति च एवंजातीयका ॥

ननु एवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्याताम्, अकृताभ्यागमश्च जीवस्येति ; नेत्युच्यते—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तु-शब्दश्चोदितदोषव्यावर्तनार्थः । कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः, तदपेक्ष एवैनमीश्वरः कारयति ; अतश्चैते चोदिता दोषा न प्रसज्यन्ते—जीवकृतधर्माधर्मवैषम्या-

पेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवत् ईश्वरो निमित्तत्वमात्रेण— यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां च असाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः— न हि असति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु—एवं जीवकृतप्रयत्नापेक्ष ईश्वरः तेषां शुभाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते—नैष दोषः; परायत्तेऽपि हि कर्तृत्वे, करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति; अपि च पूर्वप्रयत्नमपेक्ष्य इदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदिति—अनादित्वात्संसारस्येति— अनवद्यम् । कथं पुनरवगम्यते— कृतप्रयत्नापेक्ष ईश्वर इति? विहितप्रतिषिद्धावैयर्थ्यादिभ्यः इत्याह; एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य च अवैयर्थ्यं भवति; अन्यथा तदनर्थकं स्यात्; ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत, अत्यन्तपरतन्त्रत्वाज्जीवस्य; तथा विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्धकारिणमप्यर्थेन; ततश्च प्रामाण्यं वेदस्यास्तमियात्; ईश्वरस्य च अत्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यम्,

तथा देशकालनिमित्तानाम्; पूर्वोक्तदोषप्रसङ्गश्च——इत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

१७. अंशाधिकरणम्।

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः; स च संबद्धयोरेव लोके दृष्टः——यथा स्वामिभृत्ययोः, यथा वा अग्निविस्फुलिङ्गयोः; ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत्संबन्धः, आहोस्विदग्निविस्फुलिङ्गवत्? इत्यस्यां विचिकित्सायाम् अनियमो वा प्राप्नोति। अथवा स्वामिभृत्यप्रकारेष्वेव ईशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध इति प्राप्नोति ॥

अतो ब्रवीति अंश इति; जीव ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्विस्फुलिङ्गः; अंश इवांशः; न हि निरवयवस्य मुख्योऽशः संभवति; कस्मात्पुनः निरवयवत्वात् स एव न भवति? नानाव्यपदेशात्; 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति च एवंजातीयको भेदनिर्देशो

नासति भेदे युज्यते। ननु च अयं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इति, अत आह—अन्यथा चापीति; न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः; किं तर्हि, अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः; तथा ह्येके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते— 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना; दाशा य एते कैवर्ताः प्रसिद्धाः, ये च अमी दासाः स्वामिष्वात्मानमुपक्षपयन्ति, ये च अन्ये कितवा द्यूतकृतः, ते सर्वे ब्रह्मैव— इति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह; तथा अन्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्रपञ्च्यते— 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवति विश्वतोमुखः' इति, 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति च; 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिभ्यश्च अस्यार्थस्य सिद्धिः। चैतन्यं च अविशिष्टं जीवेश्वरयोः, यथाग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः ॥

कुतश्च अंशत्वावगमः?—

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति— 'तावानस्य महिमा। ततो ज्यायाꣳश्च पूरुषः। पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' इति; अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति, 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात्; अंशः पादो भाग इत्यनर्थान्तरम्; तस्मादप्यंशत्वावगमः ॥

कुतश्च अंशत्वावगमः?—

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि च ईश्वरांशत्वं जीवस्य स्मर्यते— 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति; तस्मादप्यंशत्वावगमः। यत्तूक्तम्, स्वामिभृत्यादिष्वेव ईशित्रीशितव्यभावो लोके प्रसिद्ध इति— यद्यप्येषा लोके प्रसिद्धिः, तथापि शास्त्रात्तु अत्र अंशांशित्वमीशित्रीशितव्यभावश्च निश्चीयते; निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नाञ्जीवान् प्रशास्तीति न किंचिद्विप्रतिषिध्यते ॥

अत्राह— ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्यापि दुःखित्वं स्यात्— यथा

लोके हस्तपादाद्यन्यतमाङ्गगतेन दुःखेन अङ्गिनो देवदत्तस्य दुःखित्वम्, तद्वत्; ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्; अतो वरं पूर्वावस्थः संसार एवास्तु— इति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यात्— इति; अत्रोच्यते—

**प्रकाशादिवन्नैवं परः ॥ ४६ ॥**

यथा जीवः संसारदुःखमनुभवति, नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे; जीवो हि अविद्यावेशवशात् देहाद्यात्मभावमिव गत्वा, तत्कृतेन दुःखेन दुःखी अहम् इति अविद्यया कृतं दुःखोपभोगम् अभिमन्यते; नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वा अस्ति; जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानः, न तु पारमार्थिकोऽस्ति; यथा च स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवति— अहमेव पुत्रः, अहमेव मित्रम् इत्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः; ततश्च निश्चितमेतदवगम्यते— मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति । व्यतिरेकदर्शनाच्च एवमवगम्यते; तथा हि— पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिष्वितरेषु च, पुत्रो मृतो मित्रं मृतमित्ये-

वमाघोषिते, येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते, न अभिमानहीनानां परिव्राजकादीनाम् । अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टम्, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति ; तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः । प्रकाशादिवदिति निदर्शनोपन्यासः— प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्य अवतिष्ठमानः अङ्गुल्याद्युपाधिसंबन्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते, यथा च आकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा च उदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान्सूर्यः कम्पते—एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्ये अंशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते । जीवस्यापि दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम् । तथा च अविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः— ‘तत्त्वमसि’ इत्येवमादयः । तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः ॥

**स्मरन्ति च ॥ ४७ ॥**

स्मरन्ति च व्यासादयः— यथा जैवेन दुःखेन न परमात्मा दुःखायत इति; 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः' इति । च-शब्दात्—समामनन्ति च—इति वाक्यशेषः— 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति, 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति च ॥

अत्राह— यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्, कथमनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ चेति । ननु च अंशो जीव ईश्वरस्य इत्युक्तम्; तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते; किमत्र चोद्यत इति, उच्यते— नैतदेवम्; अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति— 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'नान्योऽतोऽस्ति द्रष्टा' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्येवंजातीयकाः । ननु भेदाभेदावगमाभ्यामंशत्वं सिध्यतीत्युक्तम्—स्यादेतदेवम्, यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्; अभेद एव त्वत्र प्रतिपिपादयिषितः, ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थ-

सिद्धेः; स्वभावप्राप्तस्तु भेदोऽनूद्यते; न च निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवतीत्युक्तम्; तस्मात्पर एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्या अनुज्ञापरिहारोपपत्तिः। तां ब्रूमः—

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा, 'गुर्वङ्गनां नोपगच्छेत्' इति परिहारः; तथा 'अग्नीषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा, 'न हिंस्यात्सर्वा भूतानि' इति परिहारः;— एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा, शत्रुः परिहर्तव्य इति परिहारः— एवंप्रकारावनुज्ञापरिहारौ एकत्वेऽप्यात्मनः देहसंबन्धात् स्यात्। देहैः संबन्धो देहसंबन्धः; कः पुनर्देहसंबन्धः? देहादिरयं संघातोऽहमेव— इत्यात्मनि विपरीतप्रत्ययोत्पत्तिः; दृष्टा च सा सर्वप्राणिनाम्—अहं गच्छामि अहमागच्छामि, अहमन्धः अहमनन्धः, अहं मूढः अहममूढः इत्येवमात्मिका; न हि अस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति; प्राक्तु सम्यग्दर्शनात्प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्तदेहाद्युपाधिसंबन्धकृताद्विशेषादैकात्म्याभ्युपगमे-

ऽप्यनुज्ञापरिहाराववकल्पेते । सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम्— न, तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः— हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्; आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन् कथं नियुज्येत; न च आत्मा आत्मन्येव नियोज्यः स्यात् । शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्, न; तत्संहतत्वाभिमानात्—सत्यं व्यतिरेकदर्शिनो नियोज्यत्वम्; तथापि व्योमादिवद्देहाद्यसंहतत्वमपश्यत एव आत्मनो नियोज्यत्वाभिमानः; न हि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः, किमुतैकात्म्यदर्शिनः । न च नियोगाभावात् सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः, सर्वत्राभिमानस्यैव प्रवर्तकत्वात्, अभिमानाभावाच्च सम्यग्दर्शिनः । तस्माद्देहसंबन्धादेवानुज्ञापरिहारौ— ज्योतिरादिवत्— यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिह्रियते, नेतरः; यथा च प्रकाश एकस्यापि सवितुरमेध्यदेशसंबद्धः परिह्रियते, नेतरः शुचिभूमिष्ठः; तथा भौमाः प्रदेशा वज्रवैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेबरादयः परिह्रियन्ते; तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते, तदेव जात्यन्तरे परिवर्ज्यते— तद्वत् ॥

**असंततेश्चाव्यतिकरः ॥ ४९ ॥**

स्यातां नाम अनुज्ञापरिहारावेकस्यात्मनो देहविशेषयोगात्; यस्त्वयं कर्मफलसंबन्धः, स च ऐकात्म्याभ्युपगमे व्यतिकीर्येत, स्वाम्येकत्वादिति चेत्, नैतदेवम्, असंततेः; न हि कर्तुर्भोक्तुश्चात्मनः संततः सर्वैः शरीरैः संबन्धोऽस्ति; उपाधितन्त्रो हि जीव इत्युक्तम्; उपाध्यसंतानाच्च नास्ति जीवसंतानः— ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति ॥

## आभास एव च ॥ ५० ॥

आभास एव च एष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः, न स एव साक्षात्, नापि वस्त्वन्तरम् । अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्धः । एवमव्यतिकर एव कर्मफलयोः । आभासस्य च अविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति, तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषां तु बहव आत्मानः, ते च सर्वे सर्वगताः, तेषामेवैष व्यतिकरः प्राप्नोति; कथम्? बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च; तदर्थं साधारणं प्रधानम्; तन्निमित्तैषां

भोगापवर्गसिद्धिरिति सांख्याः। सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानः, तदुपकरणानि च अणूनि मनांस्यचेतनानि, तत्र आत्मद्रव्याणां मनोद्रव्याणां च संयोगात् नव इच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते, ते च अव्यतिरेकेण प्रत्येकमात्मसु समवयन्ति, स संसारः; तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः। तत्र सांख्यानां तावच्चैतन्यस्वरूपत्वात्सर्वात्मनां संनिधानाद्यविशेषाच्च एकस्य सुखदुःखसंबन्धे सर्वेषां सुखदुःखसंबन्धः प्राप्नोति। स्यादेतत्—प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वाद्व्यवस्था भविष्यति; अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्; तथा च अनिर्मोक्षः प्रसज्येतेति—नैतत्सारम्—न हि अभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम; उपपत्त्या तु कयाचिद्व्यवस्थोच्येत; असत्यां पुनरुपपत्तौ कामं मा भूदभिलषितं पुरुषकैवल्यम्; प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः। काणादानामपि—यदा एकेनात्मना मनः संयुज्यते, तदा आत्मान्तरैरपि नान्तरीयकः संयोगः स्यात्, संनिधानाद्यविशेषात्; ततश्च हेत्वविशेषात्फलाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुःखित्वं प्रसज्येत ॥

स्यादेतत्—अदृष्टनिमित्तो नियमो भविष्यतीति ; नेत्याह—

**अदृष्टानियमात् ॥ ५१ ॥**

बहुष्वात्मस्वाकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण संनिहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते । सांख्यानां तावत् तदनात्मसमवायि प्रधानवर्ति । प्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते । काणादानामपि पूर्ववत्साधारणेनात्ममनःसंयोगेन निर्वर्तितस्यादृष्टस्यापि अस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः ॥

स्यादेतत्— अहमिदं फलं प्राप्नवानि, इदं परिहराणि, इत्थं प्रयतै, इत्थं करवाणि— इत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति ; नेत्याह—

**अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥**

अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥

**प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥**

अथोच्येत— विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एव आत्मप्रदेशे भविष्यति; अतः प्रदेशकृता व्यवस्था अभिसंध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति, तदपि नोपपद्यते; कस्मात्? अन्तर्भावात्; विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति; तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः; कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति; शरीरमपि सर्वात्मसंनिधावुत्पद्यमानम्— अस्यैव आत्मनः, नेतरेषाम्— इति न नियन्तुं शक्यम् । प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्, समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्; तथा हि— देवदत्तो यस्मिन्प्रदेशे सुखदुःखमन्वभूत्, तस्मात्प्रदेशादपक्रान्ते तच्छरीरे, यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते, तस्यापि इतरेण समानः सुखदुःखानुभवो दृश्यते; स न स्यात्, यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात् । स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्, ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य ।

सर्वगतत्वानुपपत्तिश्च बहूनामात्मनाम्, दृष्टान्ताभावात्; वद तावत् त्वम्— के बहवः समानदेशाश्चेति; रूपादय इति चेत्, न; तेषामपि धर्म्यंशेनाभेदात्, लक्षणभेदाच्च—न तु बहूनामात्मनां लक्षणभेदोऽस्ति; अन्त्यविशेषवशाद्भेदोपपत्तिरिति चेत्, न; भेदकल्पनाया अन्त्यविशेषकल्पनायाश्च इतरेतराश्रयत्वात्; आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धम्, कार्यत्वाभ्युपगमात्। तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
शारीरकमीमांसासूत्रभाष्ये
द्वितीयाध्यायस्य तृतीयः पादः ॥

## चतुर्थः पादः ॥

वियदादिविषयश्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः; चतुर्थेन इदानीं प्राणविषयः परिह्रियते । तत्र तावत्— 'तत्तेजोऽसृजत' इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति च एवमादिषु उत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्न आम्नायते; क्वचिच्चानुत्पत्तिरेव एषामाम्नायते, 'असद्वा इदमग्र आसीत्' 'तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के ते ऋषय इति । प्राणा वाव ऋषयः'— इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्; अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते— 'यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' इति, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति, 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्' इति च

एवमादिप्रदेशेषु । तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्च अप्रतिपत्तिः प्राप्नोति । अथवा प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति । अत इदमुत्तरं पठति—

## तथा प्राणाः ॥ १ ॥

१. प्राणोत्पत्त्यधिकरणम् ।

तथा प्राणा इति । कथं पुनरत्र तथा इत्यक्षरानुलोम्यम्, प्रकृतोपमानाभावात्— सर्वगतात्मबहुत्ववादिदूषणम् अतीतानन्तरपादान्ते प्रकृतम्; तत्तावन्नोपमानं संभवति, सादृश्याभावात्; सादृश्ये हि सति उपमानं स्यात्— यथा सिंहस्तथा बलवर्मेति; अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत— यथा अदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वम्, एवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति— तदपि देहानियमेनैवोक्तत्वात्पुनरुक्तं भवेत्; न च जीवेन प्राणा उपमीयेरन्, सिद्धान्तविरोधात्— जीवस्य हि अनुत्पत्तिराख्याता, प्राणानां तु उत्पत्तिराचिख्यासिता; तस्मात्तथा इत्यसंबद्धमिव प्रतिभाति— न, उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः— अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्— 'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' इत्येवंजातीयकम्; तत्र

यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते, तथा प्राणा अपीत्यर्थः; तथा— 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्येवमादिष्वपि खादिवत्प्राणानामुत्पत्तिरिति द्रष्टव्यम् । अथवा 'पानव्यापच्च तद्वत्' इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात्— यथा अतीतानन्तरपादादावुक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगताः, तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यम् । कः पुनः प्राणानां विकारत्वे हेतुः? श्रुतत्वमेव; ननु केषुचित्प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तम्— तदयुक्तम्, प्रदेशान्तरेषु श्रवणात्; न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते; तस्माच्छ्रुतत्वाविशेषादाकाशादिवत्प्राणा अप्युत्पद्यन्त इति सूक्तम् ॥

## गौण्यसंभवात् ॥ २ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति, तत्प्रत्याह— गौण्यसंभवादिति; गौण्या असंभवो गौण्यसंभवः—न हि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति, प्रतिज्ञाहानिप्रसङ्गात्—'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति हि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय त-

त्साधनायेदमाम्नायते 'एतस्माज्जायते प्राणः' इत्यादि; सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात्सिध्यति; गौण्यां तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञा इयं हीयेत। तथा च प्रतिज्ञातार्थमुपसंहरति—'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इति, 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इति च; तथा 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इत्येवंजातीयकासु श्रुतिषु एषैव प्रतिज्ञा योजयितव्या। कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम्? नैतन्मूलप्रकृतिविषयम्, 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्; अवान्तरप्रकृतिविषयं त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यम्, व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः। वियदधिकरणे हि— 'गौण्यसंभवात्' इति पूर्वपक्षसूत्रत्वात्— गौणी जन्मश्रुतिः, असंभवात्— इति व्याख्यातम्; प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः; इह तु सिद्धान्तसूत्रत्वात्— गौण्या जन्मश्रुतेरसंभवात्— इति व्याख्यातम्; तदनुरोधेन तु इहापि— गौणी जन्मश्रुतिः, असंभवात्— इति व्याचक्षाणैः

प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

इतश्च आकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः— यत् 'जायते' इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सत् उत्तरेष्वाकाशादिष्वनुवर्तते— 'एतस्माज्जायते प्राणः' इत्यत्र; आकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितम्; तत्सामान्यात्प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति; न हि एकस्मिन्प्रकरणे एकस्मिंश्च वाक्ये एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यम्, वैरूप्यप्रसङ्गात् । तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते । यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते, तत्राप्येष एव न्यायः— यथा 'सर्वाणि भूतानि व्युच्चरन्ति' इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव त्रयाणां भूतानामुत्पत्ति-

श्रवणात्; तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसाम्, तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथा हि— अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते— 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति; तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वम्, ततो वर्तत एव ब्रह्मप्रभवत्वम्; अथ भाक्तम्, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात्, 'येनाश्रुतं श्रुतं भवति' इति चोपक्रमात्, 'ऐतदात्म्यमिदं सर्वम्' इति चोपसंहारात्, श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः॥

## सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

२. सप्तगत्यधिकरणम्।

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः; संख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति; संप्रति तु कति इतरे प्राणा इति संप्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः— क्वचित्सप्त प्राणाः संकीर्त्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' इति; क्वचिदष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते—'अ-

ष्टौ ग्रहा अष्टावतिग्रहाः' इति; क्वचिन्नव–'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' इति; क्वचिद्दश–'नव वै पुरुषे प्राणा नाभिर्दशमी' इति; क्वचिदेकादश–'दशेमे पुरुषे प्राणा आत्मैकादशः' इति; क्वचिद्द्वादश–'सर्वेषां स्पर्शानां त्वगेकायनम्' इत्यत्र; क्वचित्त्रयोदश–'चक्षुश्च द्रष्टव्यं च' इत्यत्र— एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । किं तावत्प्राप्तम्? सप्तैव प्राणा इति। कुतः? गतेः; यतस्तावन्तोऽवगम्यन्ते 'सप्त प्राणाः प्रभवन्ति तस्मात्' इत्येवंविधासु श्रुतिषु, विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र । ननु 'प्राणा गुहाशया निहिताः सप्त सप्त' इति वीप्सा श्रूयते; सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति—नैष दोषः; पुरुषभेदाभिप्रायेयं वीप्सा–प्रतिपुरुषं सप्त सप्त प्राणा इति; न तत्त्वभेदाभिप्राया– सप्त सप्त अन्येऽन्ये प्राणा इति । नन्वष्टत्वादिकापि संख्या प्राणेषु उदाहृता; कथं सप्तैव स्युः? सत्यमुदाहृता; विरोधात्त्वन्यतमा संख्या अध्यवसातव्या; तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्यवसानम्; वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥

अत्रोच्यते—

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥**

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते— 'हस्तो वै ग्रहः स कर्मणातिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति' इत्येवमाद्यासु श्रुतिषु ; स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम् ; हीनाधिकसंख्याविप्रतिपत्तौ हि अधिका संख्या संग्राह्या भवति ; तस्यां हीना अन्तर्भवति, न तु हीनायामधिका ; अतश्च नैवं मन्तव्यम्— स्तोककल्पनानुरोधात्सप्तैव प्राणाः स्युरिति । उत्तरसंख्यानुरोधात्तु एकादशैव ते प्राणाः स्युः ; तथा च उदाहृता श्रुतिः— 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति ; आत्मशब्देन च अत्र अन्तःकरणं परिगृह्यते, करणाधिकारात् । नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते— सत्यमुदाहृते ; न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति, यदर्थमधिकं करणं कल्प्येत ; शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदाः, तदर्थानि पञ्च बुद्धीन्द्रियाणि ; वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदाः, तदर्थानि च पञ्च कर्मेन्द्रियाणि ; सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्तु एकम् अनेकवृत्तिकम् ; तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते— 'मनो बुद्धिरहंकारश्चित्तं च' इति ; तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह— 'एतत्सर्वं मन एव' इति ।

अपि च सप्तैव शीर्षण्यान्प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः; स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते— 'द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्' इति; न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुम्, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात् । तथा 'नव वै पुरुषे प्राणा नाभिर्दशमी' इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण, 'नाभिर्दशमी' इति वचनात्; न हि नाभिर्नाम कश्चित्प्राणः प्रसिद्धोऽस्ति; मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमिति—अतो 'नाभिर्दशमी' इत्युच्यते । क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते, क्वचित्प्रदर्शनार्थम्; तदेवं विचित्रे प्राणेयत्ताम्नाने सति, क किं परम् आम्नानमिति विवेक्तव्यम्; कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम् ॥

इयमपरा सूत्रद्वययोजना— सप्तैव प्राणाः स्युः, यतः सप्तानामेव गतिः श्रूयते— 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यत्र । ननु सर्वशब्दोऽत्र पठ्यते, तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति; विशेषितत्वादित्याह— सप्तैव हि प्राणाश्चक्षुरादयस्त्व-

कपर्यन्ता विशेषिता इह प्रकृताः 'स यत्रैव चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति' 'एकीभवति न पश्यतीत्याहुः' इत्येवमादिना अनुक्रमणेन; प्रकृतगामी च सर्वशब्दो भवति; यथा सर्वे ब्राह्मणा भोजयितव्या इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते, नान्ये—एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते, नान्य इति । नन्वत्र विज्ञानमष्टममनुक्रान्तम्; कथं सप्तानामेवानुक्रमणम्? नैष दोषः । मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि सप्तत्वोपपत्तेः । तस्मात्सप्तैव प्राणा इति—एवं प्राप्ते, ब्रूमः— हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते 'हस्तो वै ग्रहः' इत्यादिश्रुतिषु; ग्रहत्वं च बन्धनभावः, गृह्यते बध्यते क्षेत्रज्ञः अनेन ग्रहसंज्ञकेन बन्धनेनेति; स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य; तस्माच्छरीरान्तरसंचारि इदं ग्रहसंज्ञकं बन्धनम् इत्यर्थादुक्तं भवति । तथा च स्मृतिः—'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च' इति प्राङ्मोक्षात् ग्रहसंज्ञकेन बन्धनेन अवियोगं दर्शयति; आथर्वणे च विषयेन्द्रियानुक्रमणे 'चक्षुश्च द्रष्टव्यं च' इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सवि-

षयाण्यनुक्रामति—'हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च' इति; तथा 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति' इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति । सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान्प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य बलीयस्त्वात्; सर्वे ब्राह्मणा भोजयितव्याः इत्यत्रापि सर्वेषामेव अवनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यम्, सर्वशब्दसामर्थ्यात्; सर्वभोजनासंभवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता; इह तु न किंचित्सर्वशब्दार्थसंकोचने कारणमस्ति; तस्मात्सर्वशब्देन अत्र अशेषाणां प्राणानां परिग्रहः । प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम् । तस्मादेकादशैव प्राणाः—शब्दतः कार्यतश्चेति सिद्धम् ॥

## अणवश्च ॥ ७ ॥

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति । अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः; अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात् — सूक्ष्मा एते

३. प्राणाणुत्वाधिकरणम् ।

प्राणाः, स्थूलाश्चेत्स्युः— मरणकाले शरीरान्निर्गच्छन्तः, बिलाद्दहिरिव, उपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः; परिच्छिन्नाश्चैते प्राणाः, सर्वगताश्चेत्स्युः— उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वं च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न, वृत्तिमात्रस्य करणत्वोपपत्तेः; यदेव हि उपलब्धिसाधनम्— वृत्तिः अन्यद्वा— तस्यैव नः करणत्वम्, संज्ञामात्रे विवादः इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः ॥

## श्रेष्ठश्च ॥ ८ ॥

४. प्राणश्रैष्ठ्याधिकरणम्।

मुख्यश्च प्राण इतरप्राणवद्ब्रह्मविकारः— इत्यतिदिशति। तच्च अविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' इत्यादिश्रवणेभ्यश्च। किमर्थः पुनरतिदेशः? अधिकाशङ्कावारणार्थः— नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति—'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किंचनास' इति; 'आनीत्' इति

प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति; तस्मादजः प्राण इति जायते कस्यचिन्मतिः; तामतिदेशेनापनुदति । आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति, 'अवातम्' इति विशेषणात्, 'अप्राणो ह्यमनाः शुभ्रः' इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्; तस्मात्कारणसद्भावप्रदर्शनार्थ एवायम् आनीच्छब्द इति । 'श्रेष्ठः' इति च मुख्यं प्राणमभिदधाति, 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतिनिर्देशात्; ज्येष्ठश्च प्राणः, शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्—न चेत्तस्य तदानीं वृत्तिलाभः स्यात्, योनौ निषिक्तं शुक्रं पूयेत, न संभवेद्वा; श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणः, गुणाधिक्यात्—'न वै शक्ष्यामस्त्वदृते जीवितुम्' इति श्रुतेः ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

स पुनर्मुख्यः प्राणः किंस्वरूप इति इदानीं जिज्ञास्यते । तत्र प्राप्तं तावत्—श्रुतेः वायुः प्राण इति; एवं हि श्रूयते—

५. वायुक्रियाधिकरणम् ।

'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति । अथवा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण

इति प्राप्तम्; एवं हि तन्त्रान्तरीया आचक्षते— सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्चेति ॥

अत्रोच्यते— न वायुः प्राणः, नापि करणव्यापारः; कुतः? पृथगुपदेशात्; वायोस्तावत् प्राणस्य पृथगुपदेशो भवति— 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' इति; न हि वायुरेव सन् वायोः पृथगुपदिश्येत। तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात्, वृत्तिवृत्तिमतोरभेदात्; न हि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः' इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः। न च समस्तानां करणानामेका वृत्तिः संभवति, प्रत्येकमेकैकवृत्तित्वात्, समुदायस्य च अकारकत्वात्; ननु पञ्जरचालनन्यायेन एतद्भविष्यति— यथा एकपञ्जरवर्तिन एकादशपक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूय एकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादशप्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूय एकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति; नेत्युच्यते— युक्तं तत्र— प्रत्ये-

कवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूय एकं पञ्जरं चालयेयुरिति, तथा दृष्टत्वात्; इह तु— श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात्, अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणम्, गुणभावोपगमश्च तं प्रति वागादीनाम्, न करणवृत्तिमात्रे प्राणेऽवकल्पते । तस्मादन्यो वायुक्रियाभ्यां प्राणः । कथं तर्हीयं श्रुतिः— 'यः प्राणः स वायुः' इति? उच्यते—वायुरेवायम् अध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरम्, नापि वायुमात्रम्; अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥

स्यादेतत्— प्राणोऽपि तर्हि जीववत् अस्मिन् शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात्, गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम्; तथा हि अनेकविधा विभूतिः प्राणस्य श्राव्यते— सुप्तेषु वागादिषु प्राण एवैको जागर्ति, प्राण एवैको मृत्युना अनाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते, प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्— इति; तस्मात्प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः; तं परिहरति—

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥**

तु-शब्दः प्राणस्य जीववत् स्वातन्त्र्यं व्यावर्तयति । यथा चक्षुरादीनि, राजप्रकृतिवत्, जीवस्य कर्तृत्वं भोक्तृत्वं च प्रति उपकरणानि, न स्वतन्त्राणि; तथा मुख्योऽपि प्राणः, राजमन्त्रिवत्, जीवस्य सर्वार्थकरत्वेन उपकरणभूतः, न स्वतन्त्रः । कुतः? तत्सहशिष्ट्यादिभ्यः; तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु; समानधर्मणां च सह शासनं युक्तं बृहद्रथंतरादिवत्; आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति ॥

स्यादेतत्— यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत् प्रसज्येत— रूपालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति । अपि च एकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि, यदर्थमेकादश प्राणाः संगृहीताः; न तु द्वादशमपरं कार्यजातमवगम्यते, यदर्थमयं द्वादशः प्राणः प्रतिज्ञायत इति; अत उत्तरं पठति—

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

न तावद्विषयान्तरप्रसङ्गो दोषः, अकरणत्वात्प्राणस्य; न हि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपग-

स्यते। न च अस्य एतावता कार्याभाव एव; कस्मात्? तथा हि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु—'अथ ह प्राणा अहं श्रेयसि व्यूदिरे' इत्युपक्रम्य, 'यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः' इति च उपन्यस्य, प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा, प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति; 'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति च एतमेवार्थं श्रुतिराह; 'प्राणेन रक्षन्नवरं कुलायम्' इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति; 'यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति', इति 'तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति; 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति, 'स प्राणमसृजत...' इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥

**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥**

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यम्, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु—'प्राणोऽपानो व्यान उदानः समानः' इति; वृत्तिभेदश्चायं कार्यभेदापेक्षः— प्राणः प्राग्वृत्तिः उच्छ्वासादिकर्मा, अपानः अवाग्वृत्तिर्निश्वासादिकर्मा, व्यानः तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः, उदानः ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयति—इत्येवं पञ्चवृत्तिः प्राणः, मनोवत्— यथा मनसः पञ्च वृत्तयः, एवं प्राणस्यापीत्यर्थः। श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः; न तु 'कामः संकल्पः...' इत्याद्याः परिपठिता गृह्येरन्, पञ्चसंख्यातिरेकात्। नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषया अपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्यातिरेकः; एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायात् इहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते— 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' नाम; बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम्। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वात्, मनोवत्— इति वा योजयितव्यम्॥

**अणुश्च ॥ १३ ॥**

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः, इतरप्राणवत् । अणुत्वं च इहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्, पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्;—

६. श्रेष्ठाणुत्वाधिकरणम् ।

सूक्ष्मः प्राणः, उत्क्रान्तौ पार्श्वस्थेन अनुपलभ्यमानत्वात्; परिच्छिन्नश्च, उत्क्रान्तिगत्यागतिश्रुतिभ्यः । ननु विभुत्वमपि प्राणस्य समाम्नायते—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' इत्येवमादिषु प्रदेशेषु; तदुच्यते— आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैव एतद्विभुत्वमाम्नायते, न आध्यात्मिकेन; अपि च 'समः प्लुषिणा' इत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते; तस्माददोषः ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति, आहोस्विद्देवताधिष्ठिताः प्रभवन्ति इति विचार्यते । तत्र प्राप्तं तावत्— यथास्वं कार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति; अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्यु-

७. ज्योतिराद्यधिकरणम् ।

गम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत; अतः स्वमहिम्नैव एषां प्रवृत्तिरिति; एवं प्राप्ते, इदमुच्यते— ज्योतिराद्यधिष्ठानं तु—इति। तु-शब्देन पूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते। हेतुं च व्याचष्टे—तदामननादिति; तथा हि आमनन्ति—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादि; अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मना अधिष्ठातृत्वमङ्गीकृत्य उच्यते; न हि देवतासंबन्धं प्रत्याख्याय अग्नेः वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते; तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्येवमाद्यपि योजयितव्यम्। तथा अन्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' इत्येवमादिना वागादीनाम् अग्न्यादिज्योतिष्ट्वादिवचनेन एतमेवार्थं द्रढयति। 'स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्' इति च एवमादिना वागादीनामग्न्यादिभावापत्तिवचनेन एतमेवार्थं द्योतयति। सर्वत्र च अध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणम् अनयैव प्रत्यासत्त्या भवति। स्मृतावपि— 'वाग-

ध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः । वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्' इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं प्रदर्शितम् । यदुक्तम्— स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति, तदयुक्तम्, शक्तानामपि शकटादीनामनडुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात्; उभयथोपपत्तौ च आगमात् वागादीनां देवताधिष्ठितत्वमेव निश्चीयते ॥

यदप्युक्तम्—देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गः, न शारीरस्येति, तत्परिह्रियते—

**प्राणवता शब्दात् ॥ १५ ॥**

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैव एषां प्राणानां संबन्धः श्रुतेरवगम्यते; तथा हि श्रुतिः—'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति । अपि च अनेकत्वात्प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वम् अस्मिन् शरीरेऽवकल्पते; एको ह्ययमस्मिन् शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥

**तस्य च नित्यत्वात् ॥ १६ ॥**

तस्य च शारीरस्यास्मिन् शरीरे भोक्तृत्वेन नित्यत्वम्—पुण्यपापोपलेपसंभवात् सुखदुःखोपभोगसंभवाच्च, न देवतानाम्; ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिन् शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति; श्रुतिश्च भवति— 'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति' इति। शारीरेणैव च नित्यः प्राणानां संबन्धः, उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्— 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति; करणपक्षस्यैव हि देवता, न भोक्तृपक्षस्येति॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥ १७॥

८. इन्द्रियाधिकरणम्।

मुख्यश्चैकः इतरे चैकादश प्राणा अनुक्रान्ताः; तत्रेदमपरं संदिह्यते— किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणाः, आहोस्वित् तत्त्वान्तराणीति। किं तावत्प्राप्तम्—मुख्यस्यैवेतरे वृत्तिभेदा इति; कुतः? श्रुतेः; तथा हि श्रुतिः मुख्यमितरांश्च प्राणान्संनिधाप्य, मुख्यात्मतामितरेषां ख्यापयति— 'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव

सर्वे रूपमभवन्' इति; प्राणैकशब्दत्वाच्च एकत्वाध्यवसायः; इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत, एकत्र वा मुख्यस्येतरत्र लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः, एवं वागाद्या अप्येकादशेति; एवं प्राप्ते, ब्रूमः— तत्त्वान्तराण्येव प्राणाद्वागादीनीति; कुतः? व्यपदेशभेदात्; कोऽयं व्यपदेशभेदः? ते प्रकृताः प्राणाः, श्रेष्ठं वर्जयित्वा अवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते, श्रुतावेवं व्यपदेशभेददर्शनात्— 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च इति ह्येवंजातीयकेषु प्रदेशेषु पृथक् प्राणो व्यपदिश्यते, पृथक्च इन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनम् इन्द्रियत्वेन, प्राणवत्, स्यात्— 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात्; सत्यमेतत्— स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपि इन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते; प्राणस्य तु इन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्षे उपपद्यते; तत्त्वैकत्वे तु, स एवैकः सन् प्राण इन्द्रियव्यपदेशं लभते न लभते च— इति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे ॥

कुतश्च तत्त्वान्तरभूताः?—

## भेदश्रुतेः ॥ १८ ॥

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते— 'ते ह वाचमूचुः' इत्युपक्रम्य, वागादीनसुरपाप्मविध्वस्तानुपन्यस्य, उपसंहृत्य वागादिप्रकरणम्, 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥

कुतश्च तत्त्वान्तरभूताः ?—

## वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं च भवति, मुख्यस्य इतरेषां च— सुप्तेषु वागादिषु मुख्य एको जागर्ति; स एव च एको मृत्युना अनाप्तः, आप्तास्त्वितरे; तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वम्, न इन्द्रियाणाम्; विषयालोचनहेतुत्वं च इन्द्रियाणाम्, न प्राणस्य— इत्येवंजातीयको भूयाँल्लक्षणभेदः प्राणेन्द्रियाणाम्; तस्मादप्येषां तत्त्वान्तरभावसिद्धिः । यदुक्तम् — 'त एतस्यैव सर्वे रूपमभवन्' इति श्रुतेः प्राण एवेन्द्रियाणीति, तदयुक्तम्, तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः; तथा हि—'वदिष्याम्येवाहमिति वाग्दध्रे' इति वागादीनी-

न्द्रियाण्यनुक्रम्य, 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्रा-म्यत्येव वाक्' इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादी-नामभिधाय, 'अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः' इति पृथक् प्राणं मृत्युना अनभिभूतं तमनुक्रामति ; 'अयं वै नः श्रेष्ठः' इति च श्रेष्ठतामस्यावधारयति, तस्मात् तदविरोधेन, वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वम्— तद्रूपभवनं वागा-दीनाम्—इति मन्तव्यम्, न तु तादात्म्यम्। अत एव च प्राण-शब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः ; तथा च श्रुतिः— 'त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणाः' इति मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति । तस्मात्तत्त्वान्तराणि प्राणात् वागादीनि इन्द्रियाणीति ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते— 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेना-त्मनानुप्रविश्य नामरूपे व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' तत्र संशयः—किं जीवकर्तृकमिदं नाम-

९. संज्ञामूर्तिक्लृप्त्यधिकरणम् ।

रूपव्याकरणम्, आहोस्वित्परमेश्वरकर्तृकमिति । तत्र प्राप्तं तावत्—जीवकर्तृकमेवेदं नामरूपव्याकरणमिति; कुतः? 'अनेन जीवेनात्मना' इति विशेषणात्— यथा लोके 'चारेणाहं परसैन्यमनुप्रविश्य संकलयानि' इत्येवंजातीयके प्रयोगे, चारकर्तृकमेव सत् सैन्यसंकलनं हेतुकर्तृत्वात् राजा आत्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण; एवं जीवकर्तृकमेव सत् नामरूपव्याकरणं हेतुकर्तृत्वात् देवता आत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण । अपि च डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् । तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्ते—

अभिधत्ते— संज्ञामूर्तिक्लृप्तिस्त्विति । तु-शब्देन पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिरिति— नामरूपव्याक्रियेत्येतत्; त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्—येयं संज्ञाक्लृप्तिः मूर्तिक्लृप्तिश्च, अग्निः आदित्यः चन्द्रमाः विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च, प्रत्याकृति प्रतिव्यक्ति च अनेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति; कुतः? उपदेशात्; तथा हि—'सेयं देवता' इत्युपक्रम्य

'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते । ननु 'जीवेन' इति विशेषणात् जीवकर्तृकत्वं व्याकरणस्याध्यवसितम्—नैतदेवम्; 'जीवेन' इत्येतत् 'अनुप्रविश्य' इत्यनेन संबध्यते, आनन्तर्यात्; न 'व्याकरवाणि' इत्यनेन— तेन हि संबन्धे 'व्याकरवाणि' इत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत; न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति; येष्वपि च अस्ति सामर्थ्यम्, तेष्वपि परमेश्वरायत्तमेव तत्; न च जीवो नाम परमेश्वरादत्यन्तभिन्नः— चार इव राज्ञः, 'आत्मना' इति विशेषणात्, उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य; तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति; परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः, 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादिश्रुतिभ्यः; तस्मात् परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणम् । त्रिवृत्करणपूर्वकमेवेदम् इह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैवोक्तत्वात्; तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्या-

दिना; तत्राग्निरिति इदं रूपं व्याक्रियते, सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरिति इदं नाम व्याक्रियते; एवमेवादित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम्। अनेन च अग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति, उपक्रमोपसंहारयोः साधारणत्वात्; तथा हि—अविशेषेणैव उपक्रमः— 'इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति' इति, अविशेषेणैव च उपसंहारः— 'यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्' इत्येवमादिः, 'यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समासः' इत्येवमन्तः ॥

तासां तिसृणां देवतानाम्, बहिस्त्रिवृत्कृतानां सतीनाम्, अध्यात्ममपरं त्रिवृत्करणमुक्तम्— 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' इति; तदिदानीम् आचार्यो यथाश्रुत्येवोपदर्शयति, आशङ्कितं कंचिद्दोषं परिहरिष्यन्—

## मांसादि भौमं यथाशब्द-मितरयोश्च ॥ २१ ॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादिकार्यं यथाशब्दं निष्पद्यते; तथा हि श्रुतिः—'अन्नमशितं त्रेधा

विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति; त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेण अद्यत इत्यभिप्रायः; तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति; मध्यममध्यात्मं मांसं वर्धयति; अणिष्ठं तु मनः। एवमितरयोरप्तेजसोर्यथाशब्दं कार्यमवगन्तव्यम्— मूत्रं लोहितं प्राणश्च अपां कार्यम्, अस्थि मज्जा वाक् तेजसः— इति ॥

अत्राह— यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकम्, अविशेषश्रुतेः— 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति, किंकृतस्तर्ह्ययं विशेषव्यपदेशः— इदं तेजः, इमा आपः, इदमन्नम् इति? तथा अध्यात्मम्— इदमन्नस्याशितस्य कार्यं मांसादि, इदमपां पीतानां कार्यं लोहितादि, इदं तेजसोऽशितस्य कार्यमस्थ्यादि इति? अत्रोच्यते—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

तु-शब्देन चोदितं दोषमपनुदति; विशेषस्य भावो वैशेष्यम्, भूयस्त्वमिति यावत्; सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते— अग्नेस्तेजोभूयस्त्वम्, उदकस्याब्भूयस्त्वम्, पृथिव्या अन्नभूयस्त्वम् इति। व्यवहार-

प्रसिद्ध्यर्थं चेदं त्रिवृत्करणम्; व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्याम्, न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत्। तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते। 'तद्वादस्तद्वादः' इति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**द्वितीयोऽध्यायः॥**

ॐ

# ॥ तृतीयोऽध्यायः ॥

द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः, परपक्षाणां च अनपेक्षत्वं प्रपञ्चितम्, श्रुतिविप्रतिषेधश्च परिहृतः; तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम्। अथेदानीम् उपकरणोपहितस्य जीवस्य संसारगतिप्रकारः तदवस्थान्तराणि ब्रह्मतत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात्पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदः मुक्तिफलानियमश्च— इत्येतदर्थजातं तृतीये निरूपयिष्यते; प्रसङ्गागतं च किमप्यन्यत्। तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतोः— 'तस्माज्जुगुप्सेत' इति च अन्ते श्रवणात्। जीवो मुख्यप्राणसचिवः सेन्द्रियः

समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रपद्यत इत्येतदवगतम्— 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसंभवाच्च; स किं देहबीजैर्भूतसूक्ष्मैरसंपरिष्वक्तो गच्छति, आहोस्वित्संपरिष्वक्तः— इति चिन्त्यते ॥

किं तावत्प्राप्तम्? असंपरिष्वक्त इति; कुतः? करणोपादानवद्भूतोपादानस्य अश्रुतत्वात्— 'स एतास्तेजोमात्राः समभ्याददानः' इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति, वाक्यशेषे चक्षुरादिसंकीर्तनात्; नैवं भूतमात्रोपादानसंकीर्तनमस्ति; सुलभाश्च सर्वत्र भूतमात्राः, यत्रैव देह आरब्धव्यस्तत्रैव सन्ति; ततश्च तासां नयनं निष्प्रयोजनम्; तस्मादसंपरिष्वक्तो याति— इत्येवं प्राप्ते, पठत्याचार्यः—

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति । तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ, देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तः, रंहति गच्छति— इत्यवगन्तव्यम्; कुतः? प्रश्ननिरूपणाभ्या-

१. तदन्तरप्रतिपत्त्यधिकरणम् ।

म्; तथा हि प्रश्नः—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति; निरूपणं च प्रतिवचनम्, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्च आहुतीर्दर्शयित्वा,—'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति; तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते। नन्वन्या श्रुतिः जलूकावत्पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति—'तद्यथा तृणजलायुका' इति; तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः। एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति, याः पुरुषमतिप्रभवाः कल्पनाः—व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति,— केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति, इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते,— मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते,— जीव एव वा उत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते, शुक इव वृक्षाद्वृक्षान्तरम्—इत्येवमाद्याः, ताः सर्वा एव अनादर्तव्याः, श्रुतिविरोधात् ॥

ननु उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात्; तत्र कथं सामान्येन प्रतिज्ञायते— सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति? अत उत्तरं पठति—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तु-शब्देन चोदितामाशङ्कामुच्छिनत्ति । त्र्यात्मिका हि आपः, त्रिवृत्करणश्रुतेः; तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहः, त्रयाणामपि तेजोबन्नानां तस्मिन्कार्योपलब्धेः । पुनश्च त्र्यात्मकः, त्रिधातुत्वात्— त्रिभिर्वातपित्तश्लेष्मभिः; न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्माद्भूयस्त्वापेक्षोऽयम्— 'आपः पुरुषवचसः' इति— प्रश्नप्रतिवचनयोरप्शब्दः, न कैवल्यापेक्षः; सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते; नैष दोषः— इतरापेक्षया अपां बाहुल्यं भविष्यति; दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहान्तरारम्भे; कर्माणि च अग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि; कर्मसमवायिन्यश्च आपः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति

वक्ष्यति ; तस्मादप्यपां बाहुल्यप्रसिद्धिः । बाहुल्याच्च अप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम् ॥

## प्राणगतेश्च ॥ ३ ॥

प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते— 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभिः ; सा च प्राणानां गतिर्नाश्रयमन्तरेण संभवतीत्यतः, प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरर्थादवगम्यते ; न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा, जीवतो दर्शनात् ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

स्यादेतत्— नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः ; तथा हि श्रुतिः मरणकाले वागादयः प्राणा अग्न्यादीन्देवान्गच्छन्तीति दर्शयति– 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' इत्यादिना इति चेत्, न, भाक्तत्वात् ; वागादीनामग्न्यादिगतिश्रुतिर्गौणी, लोमसु केशेषु च अदर्शनात्– 'ओषधीर्लोमानि वनस्पतीन्के-

शाः’ इति हि तत्राम्नायते, न हि लोमानि केशाश्चोत्प्लुत्य ओषधीर्वनस्पतींश्च गच्छन्तीति संभवति; न च जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्पते ; नापि प्राणैर्विना देहान्तरे उपभोग उपपद्यते; विस्पष्टं च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम् ; अतो वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उपकारनिवृत्तिमात्रमपेक्ष्य— वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

स्यादेतत्— कथं पुनः ‘पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति’ इत्येतत् निर्धारयितुं पार्यते, यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति?— इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेनाधीताः ; तेषां च प्रमुखे ‘असौ वाव लोको गौतमाग्निः’ इत्युपन्यस्य ‘तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति’ इति श्रद्धा होम्यद्रव्यत्वेन आवेदिता ; न तत्र आपो होम्यद्रव्यतया श्रुताः ; यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्वग्निष्वपां होम्यद्रव्यता परिकल्प्येत, परिकल्प्यतां नाम, तेषु होतव्यतयोपात्तानां सोमादीनामब्बहुलत्वोपपत्तेः ; प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्य अश्रुता आपः परिकल्प्यन्त इति

साहसमेतत्; श्रद्धा च नाम प्रत्ययविशेषः, प्रसिद्धिसामर्थ्यात्; तस्मादयुक्तः पञ्चम्यामाहुतावपां पुरुषभाव इति चेत्—

नैष दोषः; हि यतः तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिप्रेयन्ते; कुतः? उपपत्तेः; एवं ह्यादिमध्यावसानसंगानात् अनाकुलमेतदेकवाक्यमुपपद्यते; इतरथा पुनः, पञ्चम्यामाहुतौ अपां पुरुषवचस्त्वप्रकारे पृष्टे, प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामावतारयेत्— ततः अन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यात्। 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति च उपसंहरन् एतदेव दर्शयति। श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवदब्बहुलं लक्ष्यते; सा च श्रद्धाया अप्त्वे युक्तिः। कारणानुरूपं हि कार्यं भवति। न च श्रद्धाख्यः प्रत्ययः, मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातुं शक्यते— पश्वादिभ्य इव हृदयादीनि इति, आप एव श्रद्धाशब्दा भवेयुः। श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकप्रयोगदर्शनात्—'श्रद्धा वा आपः' इति। तनुत्वं श्रद्धासारूप्यं गच्छन्ति आपो देहबीजभूता इत्यतः, श्रद्धाशब्दाः स्युः— यथा सिंहपराक्रमो नरः सिंहशब्दो भवति। श्रद्धापूर्वककर्मसमवायाच्च अप्सु श्रद्धाशब्द उपपद्यते, मञ्चशब्द

इव पुरुषेषु; श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः, ‘आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे’ इति श्रुतेः ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अथापि स्यात्—प्रश्नप्रतिवचनाभ्यां नाम आपः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्; न तु तत्संपरिष्वक्ता जीवा रंहेयुः, अश्रुतत्वात्—न ह्यत्र अपामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति; तस्मात् ‘रंहति संपरिष्वक्तः’ इत्ययुक्तम्—इति चेत्, नैष दोषः; कुतः? इष्टादिकारिणां प्रतीतेः— ‘अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति’ इत्युपक्रम्य इष्टादिकारिणां धूमादिना पितृयाणेन पथा चन्द्रप्राप्तिं कथयति ‘आकाशाच्चन्द्रमसमेष सोमो राजा’ इति; त एवेहापि प्रतीयन्ते, ‘तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति’ इति श्रुतिसामान्यात्। तेषां च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात्प्रत्यक्षमेव आपः सन्ति; ता आहवनीये हुताः सूक्ष्मा आहुत्योऽपूर्वरूपाः सत्यः तानिष्टादिकारिण आश्रयन्ति—तेषां च शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति—

'असौ स्वर्गाय लोकाय स्वाहा' इति; ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुतिमय्य आपोऽपूर्वरूपाः सत्यः तानिष्टादिकारिणो जीवान्परिवेष्ट्य अमुं लोकं फलदानाय नयन्तीति यत्, तदत्र जुहोतिना अभिधीयते— श्रद्धां जुह्वतीति। तथा च अग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इत्येवमादिना अग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिर्दर्शिता। तस्मादाहुतीमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते॥

कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते, यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति— 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति, 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति' इति च समानविषयं श्रुत्यन्तरम्? न च व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः संभवतीति; अत उत्तरं पठति—

**भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति॥ ७॥**

वा-शब्दश्चोदितदोषव्यावर्तनार्थः । भाक्तमेषामन्नत्वम्, न मुख्यम्; मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयकाधिकारश्रुतिरुपरुध्येत; चन्द्रमण्डले चेदिष्टादिकारिणामुपभोगो न स्यात्, किमर्थमधिकारिण इष्टादि आयासबहुलं कर्म कुर्युः । अन्नशब्दश्चोपभोगहेतुत्वसामान्यात् अनन्नेऽप्युपचर्यमाणो दृश्यते, यथा— विशोऽन्नं राज्ञां पशवोऽन्नं विशामिति । तस्मादिष्टस्त्रीपुत्रमित्रभृत्यादिभिरिव गुणभावोपगतैरिष्टादिकारिभिर्यत्सुखविहरणं देवानाम्, तदेवैषां भक्षणमभिप्रेतम्, न मोदकादिवच्चर्वणं निगरणं वा । 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति च देवानां चर्वणादिव्यापारं वारयति । तेषां च इष्टादिकारिणां देवान्प्रति गुणभावोपगतानामप्युपभोग उपपद्यते, राजोपजीविनामिव परिजनानाम् । अनात्मवित्त्वाच्च इष्टादिकारिणां देवोपभोग्यभाव उपपद्यते; तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति— 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति; स चास्मिन्नपि लोके इष्टादिभिः कर्मभिः प्रीणयन्पशुवद्देवानामुपकरोति, अमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्यते ॥

अनात्मवित्त्वात् तथा हि दर्शयति इत्यस्य अपरा व्याख्या— अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणः, न ज्ञानकर्मसमुच्चयानुष्ठायिनः पञ्चाग्निविद्यामिह आत्मविद्येत्युपचरन्ति, प्रकरणात्; पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविज्ञानप्रशंसायै; पञ्चाग्निविद्येह विधित्सिता, वाक्यतात्पर्यावगमात्; तथा हि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति— 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति; तथा अन्यदपि श्रुत्यन्तरम् 'अथ ये शतं पितॄणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते' इति इष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति। एवं भाक्तत्वादन्नभाववचनस्य, इष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते। तस्मात् 'रंहति संपरिष्वक्तः' इति युक्तमेवोक्तम् ॥

**कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥**

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते— 'तस्मिन्यावत्सं-

पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' इत्यारभ्य,—

२. कृतात्यया- यावत्— रमणीयचरणा ब्राह्मणादियोनि-

धिकरणम्। मापद्यन्ते कपूयचरणाः श्वादियोनिमि-

ति । तत्रेदं विचार्यते— किं निरनुशया भुक्तकृत्स्नकर्मा-

णोऽवरोहन्ति, आहोस्वित्सानुशया इति । किं तावत्प्राप्तम्? निरनुशया इति; कुतः? 'यावत्संपातम्' इति विशेषणात्— संपातशब्देनात्र कर्माशय उच्यते, संपतन्ति अनेन अस्माल्लोकात् अमुं लोकं फलोपभोगायेति; 'यावत्संपातमुषित्वा' इति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति; 'तेषां यदा तत्पर्यवैति' इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादेतत्— यावदमुष्मिँल्लोके उपभोक्तव्यं कर्म तावदुपभुङ्क्त इति कल्पयिष्यामीति; नैवं कल्पयितुं शक्यते, 'यत्किंच' इत्यन्यत्र परामर्शात्— 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' इति हि अपरा श्रुतिः 'यत्किंच' इत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणः तत्र क्षयिततां दर्शयति। अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम्; प्राक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः; तच्च अविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम्;

न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति ; न ह्यविशिष्टे प्रदीपसंनिधौ, घटोऽभिव्यज्यते न पट इत्युपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते—

ब्रूमः— कृतात्ययेऽनुशयवानिति । येन कर्मबृन्देन चन्द्रमसमारूढाः फलोपभोगाय, तस्मिन्नुपभोगेन क्षयिते, तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धम् , तत् उपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते— सवितृकिरणसंपर्कादिव हिमकरकाः, हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम् ; ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति, सानुशया एवेममवरोहन्ति ; केन हेतुना ? दृष्टस्मृतिभ्यामित्याह । तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति— 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति ; चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति । दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृति-

रपि—‘वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते’ इति सानुशयानामेवावरोहं दर्शयति ॥

कः पुनरनुशयो नामेति—केचित्तावदाहुः— स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम, भाण्डानुसारिस्नेहवत्—यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते, भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते, तथा अनुशयोऽपीति। ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम्; नायं दोषः; न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे। ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढाः; बाढम्—तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थानं न लभ्यते; यथा किल कश्चित्सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तश्चिरप्रवासात्परिक्षीणबहूपकरणश्छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति, एवमनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति ॥

न चैतद्युक्तमिव। न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वात्—इत्युक्तम्। नन्वेतदप्युक्तम्—न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति; तदेतदपेशलम्—स्वर्गार्थं किल कर्म स्वर्गस्थ-

स्यैव स्वर्गफलं निखिलं न जनयति, स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति; न शब्दप्रमाणकानामीदृशी कल्पना अवकल्पते; स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते; तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते; न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते; नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्। अवश्यं चैतदेवं विज्ञेयम्—न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति; यदि हि येन सुकृतेन कर्मणा इष्टादिना स्वर्गमन्वभूवन्, तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत, ततो रमणीय एवैकोऽनुशयः स्यात्, न विपरीतः; तत्रेयमनुशयविभागश्रुतिरुपरुध्येत—'तद्य इह रमणीयचरणाः...अथ य इह कपूयचरणाः' इति। तस्मादामुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः, तद्वन्तोऽवरोहन्तीति ॥

यदुक्तम्—'यत्किंच' इत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति, नैतदेवम्; अनुशयसद्भावस्यावगमितत्वात्, यत्किंचिदिह कृतमामुष्मिकफलं कर्म आरब्धभोगम्, तत्सर्वं फलोपभोगेन क्षपयित्वा—इति गम्यते। यदप्युक्तम्—प्राय-

णम् अविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति; तत्र केनचित्कर्मणामुष्मिँल्लोके फलमारभ्यते, केनचिदस्मिन् इत्ययं विभागो न संभवतीति— तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम् । अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम्; आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेः, तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत—ततो वक्तव्यम्—यथैव तर्हि पाक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्य इतरस्य वृत्त्युद्भवानुपपत्तिः, एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासंभवात् बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति । न हि अनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्म एकस्मिन्प्रायणे युगपदभिव्यक्तं सत् एकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्; नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्, ऐकान्तिकफलत्वविरोधात्; न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते; स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति— 'कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति । मज्जमानस्य संसारे यावद्दुः-

खाद्विमुच्यते' इत्येवंजातीयाका । यदि च कृत्स्नमनारब्धफलं कर्म एकस्मिन्प्रायणेऽभिव्यक्तं सत् एकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमात् धर्माधर्मानुत्पत्तौ निमित्ताभावात् नोत्तरा जातिरुपपद्येत, ब्रह्महत्यादीनां च एकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत; न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम् । न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीति, अव्यापिकापीयं प्रायणस्याभिव्यञ्जकत्वकल्पना; प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः; स्थूलसूक्ष्मरूपाभिव्यक्तिवच्चेदं द्रष्टव्यम्— यथा हि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभिव्यनक्ति, न सूक्ष्मम्— एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति । तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः । शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः, सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः । तस्मात् स्थितमेतदेव— अनुशयवन्तोऽवरोहन्तीति । ते च अवरोहन्तो यथेतमनेवं च अवरोहन्ति; यथेतमिति यथागतमित्यर्थः; अनेवमिति तद्विपर्ययेणेत्यर्थः । धू-

माकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे संकीर्तनात् यथेतं-शब्दाच्च यथागतमिति प्रतीयते ; रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

अथापि स्यात्— या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता— 'तद्य इह रमणीयचरणाः' इति, सा खलु चरणात् योन्यापत्तिं दर्शयति, नानुशयात्; अन्यच्चरणम्, अन्योऽनुशयः—चरणं चारित्रम् आचारः शीलमित्यनर्थान्तरम्, अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्म अभिप्रेतम्; श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति— 'यथाकारी यथाचारी तथा भवति इति' 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि' इति च; तस्मात् चरणाद्योन्यापत्तिश्रुतेः नानुशयसिद्धिः इति चेत्, नैष दोषः— यतोऽनुशयोपलक्षणार्थैव एषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्— कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकः अनुशयः प्रत्याय्यते? ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति; अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम्, अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येत— इति चेत्, नैष दोषः; कुतः? तदपेक्षत्वात्; इष्टादि हि कर्मजातं चरणापेक्षम्; न हि सदाचारहीनः कश्चिदधिकृतः स्यात्—'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः। पुरुषार्थत्वेऽप्याचारस्य न आनर्थक्यम्; इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते। कर्म च सर्वार्थकारि— इति श्रुतिस्मृतिप्रसिद्धिः। तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्; न हि कर्मणि संभवति शीलात् योन्यापत्तिर्युक्ता; न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हति— इति ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते; चरणम् अनुष्ठानं कर्मेत्यनर्थान्तरम्। तथा हि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते—यो हि

इष्टादिलक्षणं पुण्यं कर्म करोति, तं लौकिका आचक्षते—धर्मं चरत्येष महात्मेति । आचारोऽपि च धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्मात् रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माणः इति निर्णयः ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम् । ये त्वितरेऽनिष्टादिकारिणः, तेऽपि किं चन्द्रमसं गच्छन्ति, उत न गच्छन्तीति चिन्त्यते । तत्र तावदाह—इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतत् न ; कस्मात्? यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम् । तथा हि अविशेषेण कौषीतकिनः समामनन्ति—'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति । देहारम्भोऽपि च पुनर्जायमानानां न अन्तरेण चन्द्रप्राप्तिम् अवकल्पते, 'पञ्चम्यामाहुतौ' इत्याहुतिसंख्यानियमात् । तस्मात्सर्व एव चन्द्रमसमासीदेयुः । इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्, न, इतरेषां चन्द्रमण्डले भोगाभावात् ॥

३. अनिष्टादिकार्यधिकरणम् ।

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तु-शब्दः पक्षं व्यावर्तयति। नैतदस्ति—सर्वे चन्द्रमसं गच्छन्तीति; कस्मात्? भोगायैव हि चन्द्रारोहणम्, न निष्प्रयोजनम्; नापि प्रत्यवरोहायैव,—यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय, न निष्प्रयोजनम्, नापि पतनायैव; भोगश्च अनिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्; तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति, नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेव इमं लोकं प्रत्यवरोहन्ति; एवंभूतौ तेषामारोहावरोहौ भवतः; कुतः? तद्गतिदर्शनात्; तथा हि यमवचनरूपा श्रुतिः प्रयताम् अनिष्टादिकारिणां यमवश्यतां दर्शयति—'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति। 'वैवस्वतं संगमनं जनानाम्' इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥

## स्मरन्ति च ॥ १४ ॥

अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं

कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥

**अपि च सप्त ॥ १५ ॥**

अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः; ताननिष्टादिकारिणः प्राप्नुवन्ति; कुतस्ते चन्द्रं प्राप्नुयुः इत्यभिप्रायः ॥

ननु विरुद्धमिदम्— यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति; नेत्याह—

**तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥**

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः; यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**

पञ्चाग्निविद्यायाम् 'वेत्थ यथासौ लोको न संपूर्यते' इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते— 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको

न संपूर्यते' इति। तत्र एतयोः पथोरिति विद्याकर्मणोरित्येतत्; कस्मात्? प्रकृतत्वात्; विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपदे प्रकृते— 'तद्य इत्थं विदुः' इति विद्या, तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः; 'इष्टापूर्ते दत्तम्' इति कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः— तत्प्रक्रियायाम् 'अथैतयोः पथोर्न कतरेणचन' इति श्रुतम्। एतदुक्तं भवति— ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति; तस्मादपि न अनिष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्—तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्त इति; तदपि नास्ति, आरोहानर्थक्यात्। अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्सु असौ लोकः प्रयद्भिः संपूर्येत—इत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत; तथा हि प्रतिवचनं दातव्यम्, यथा असौ लोको न संपूर्यते। अवरोहाभ्युपगमादसंपूरणोपपत्तिरिति चेत्, न, अश्रुतत्वात्; सत्यम् अवरोहादप्यसंपूरणमुपपद्यते; श्रुतिस्तु तृतीयस्थानसंकीर्तनेन असंपूरणं दर्शयति— 'एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' इति; तेन अनारोहादेव असंपूरणमिति युक्तम्;

अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात् । तु-शब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति ; एवं सति अधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते—ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति ॥

यत्पुनरुक्तम्—देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, 'पञ्चम्यामाहुतौ...' इत्याहुतिसंख्यानियमादिति, तत्प्रत्युच्यते—

## न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः ; कुतः? तथोपलब्धेः ; तथा हि अन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते—'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति । अपि च 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति मनुष्यशरीरहेतुत्वेन आहुतिसंख्या कीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात् । अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, न अपञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात् । तत्र येषामारोहावरोहौ संभवतः, तेषां पञ्चम्यामाहुतौ देह उद्भवि-

ष्यति; अन्येषां तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभि-रद्भिर्देह आरप्स्यते ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

अपि च स्मर्यते लोके, द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदी-प्रभृतीनां च अयोनिजत्वम् । तत्र द्रोणादीनां योषिद्विषया एका आहुतिर्नास्ति; धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः । यथा च तत्र आहुतिसंख्यानियमानादरो भवति, एवमन्यत्रापि भविष्यति । बलाकापि अन्तरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः ॥

## दर्शनाच्च ॥ २० ॥

अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जल-क्षणे स्वेदजोद्भिज्जयोः अन्तरेणैव ग्राम्यधर्मम् उत्पत्तिदर्शना-त् आहुतिसंख्यानादरो भवति । एवमन्यत्रापि भविष्यति ॥

ननु 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्' इत्यत्र त्रिविध एव भूतग्रामः श्रूयते; कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति, अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात् । स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः ॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम्; अथावरोहप्रकारः परीक्ष्यते । तत्रेयमवरोहश्रुतिर्भवति— 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति । तत्र संशयः—किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते, किं वा आकाशादिसाम्यमिति । तत्र प्राप्तं तावत्— आकाशादिस्वरूपमेव प्रतिपद्यन्त इति ; कुतः? एवं हि श्रुतिर्भवति ; इतरथा लक्षणा स्यात्; श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा ; तथा च 'वायुर्भूत्वा धूमो भवति' इत्येवमादीन्यक्षराणि तत्तत्स्वरूपापत्तौ आञ्जस्येन अवकल्पन्ते; तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति ; एवं प्राप्ते, ब्रूमः—आकाशा-

४. साभाव्यापत्त्यधिकरणम् ।

दिसाम्यं प्रतिपद्यन्त इति ; चन्द्रमण्डले यत् अम्मयं शरीरमुपभोगार्थमारब्धम् , तत् उपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति ; ततो वायोर्वशमेति ; ततो धूमादिभिः संपृच्यत इति । तदेतदुच्यते—‘ यथेतमाकाशमाकाशाद्वायुम् ’ इत्येवमादिना । कुत एतत् ? उपपत्तेः ; एवं हि एतदुपपद्यते ; न हि अन्यस्यान्यभावो मुख्य उपपद्यते ; आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते ; विभुत्वाच्च आकाशेन नित्यसंबद्धत्वात् न तत्सादृश्यापत्तेरन्यः तत्संबन्धो घटते । श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव । अत आकाशादितुल्यतापत्तिरेव अत्र आकाशादिभाव इत्युपचर्यते ॥

५. नातिचिराधिकरणम् ।

## नातिचिरेण विशेषात् ॥ २३ ॥

तत्र अकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिभावापत्तेः भवति विशयः— किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति, उताल्पमल्पमिति । तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते, इदमाह— नातिचिरेणेति । अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सह इमां भुवमापतन्ति ; कुत एतत् ? विशेषदर्शनात् ; तथा हि व्रीह्यादि-

भावापत्तेरनन्तरं विशिनष्टि— 'अतो वै खलु दुर्निष्प्रपतरम्' इति; तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः; दुर्निष्प्रपततरं दुर्निष्क्रमतरम्— दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः; तत् अत्र दुःखं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति; सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः, तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात् । तस्माद्व्रीह्यादिभावापत्तेः प्राक् अल्पेनैव कालेनावरोहः स्यादिति ॥

## अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते— 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति। तत्र

६. अन्याधिष्ठिताधिकरणम् ।

संशयः— किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्ति, आहोस्वित्क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति । किं तावत्प्राप्तम्? स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति; कुत एतत्? जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः, पशुहिंसादियोगाच्च इष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः; तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म,

श्वादिजन्मवत्— यथा 'श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति, एवं व्रीह्यादिजन्मापीति । एवं प्राप्ते—

ब्रूमः— अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति, पूर्ववत्— यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम्, एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् । कुत एतत्? तद्वदेवेहाप्यभिलापात्; कोऽभिलापस्य तद्वद्भावः? कर्मव्यापारमन्तरेण संकीर्तनम्— यथा आकाशादिषु प्रवर्षणान्तेषु न किंचित्कर्मव्यापारं परामृशति, एवं व्रीह्यादिजन्मन्यपि । तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति तत्र कर्मव्यापारम्— 'रमणीयचरणाः ... कपूयचरणाः' इति । अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि, व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः; यो हि जीवो यच्छरीरमभिमन्यते, स तस्मिन्पीड्यमाने प्रवसति— इति प्रसिद्धम्; तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत; अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति। एतेन

जनेर्मुख्यार्थत्वं प्रतिब्रूयात्, उपभोगस्थानत्वं च स्थावरभावस्य; न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे; भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानाम् एतत् उपभोगस्थानम्; चन्द्रमसस्तु अवरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

यत्पुनरुक्तम्—पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म, तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवानुशयिनां व्रीह्यादिजन्म अस्तु; तत्र गौणी कल्पना अनर्थिकेति—तत्परिह्रियते—न, शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य; अयं धर्मः अयमधर्म इति शास्त्रमेव विज्ञाने कारणम्, अतीन्द्रियत्वात्तयोः; अनियतदेशकालनिमित्तत्वाच्च—यस्मिन्देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते, स एव देशकालनिमित्तान्तरेष्वधर्मो भवति; तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति । शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः, स कथमशुद्ध इति शक्यते वक्तुम् । ननु 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रमेव भूतविषयां हिंसाम् अधर्म इत्यवगमयति; बाढम्—उत्सर्गस्तु सः; अपवादोऽयं च 'अग्नीषोमीयं पशुमालभेत' इति; उत्सर्गा-

पवादयोश्च व्यवस्थितविषयत्वम्; तस्माद्विशुद्धं कर्म वैदिकम्, शिष्टैरनुष्ठीयमानत्वात् अनिन्द्यमानत्वाच्च; तेन न तस्य प्रतिरूपं फलम् जातिस्थावरत्वम् । न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति; तद्धि कपूयचरणानधिकृत्य उच्यते; नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति । अतश्चन्द्रस्थलस्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावः, यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते—'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति; न चात्र मुख्यो रेतःसिग्भावः संभवति; चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति; कथमिव अनुपचरितं तद्भावम् अद्यमानान्नानुगतोऽनुशयी प्रतिपद्यते? तत्र तावदवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः; तद्वत् व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥

## योनेः शरीरम् ॥ २७ ॥

अथ रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि, योनेरधि शरीरम् अनुशयिनाम् अनुशयफलोपभोगाय जायत

इत्याह शास्त्रम्—'तद्य इह रमणीयचरणा' इत्यादि; तस्मादप्यवगम्यते—नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति। तस्मात् व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**तृतीयाध्यायस्य प्रथमः पादः ॥**

## CONTENTS.

## ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

पृष्ठम्

## तृतीयोऽध्यायः

# द्वितीयः पादः ॥



अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः; इदानीं तस्यैवावस्थाभेदः प्रपञ्च्यते । इदमामनन्ति— 'स यत्र प्रस्वपिति' इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' इत्यादि । तत्र संशयः— किं प्रबोधे इव स्वप्नेऽपि पारमार्थिकी सृष्टिः, आहोस्विन्मायामयीति । तत्र तावत्प्रतिपद्यते—

## संध्ये सृष्टिराह हि ॥ १ ॥

संध्ये सृष्टिरिति; संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात्— 'संध्यं तृतीयꣳ स्वप्नस्थानम्' इति; द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति संध्यम्; तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति; कुतः? यतः प्रमाणभूता श्रुतिरेवमाह— 'अथ रथान्रथयोगान्पथः सृजते'

१. संध्याधिकरणम् ।

इत्यादि; 'स हि कर्ता' इति च उपसंहारात् एवमेवावगम्यते ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपि च एके शाखिनः अस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति—'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति; पुत्रादयश्च तत्र कामा अभिप्रेयन्ते—काम्यन्त इति। ननु कामशब्देनेच्छाविशेषा एवोच्येरन्; न, 'शतायुषः पुत्रपौत्रान्वृणीष्व' इति प्रकृत्य अन्ते 'कामानां त्वा कामभाजं करोमि' इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात्। प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः—प्राज्ञस्य हीदं प्रकरणम्—'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादि; तद्विषय एव च वाक्यशेषोऽपि—'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' इति। प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया, तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति; तथा च श्रुतिः—'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यान्येव जाग्रत्पश्यति तानि सुप्तः' इति स्वप्नजागरितयोः समानन्यायतां श्रावयति। तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति ॥

एवं प्राप्ते, प्रत्याह—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्त-स्वरूपत्वात् ॥ ३ ॥**

तु-शब्दः पक्षं व्यावर्तयति । नैतदस्ति—यदुक्तम्, संध्ये सृष्टिः पारमार्थिकीति ; मायैव संध्ये सृष्टिः, न परमार्थगन्धोऽप्यस्ति ; कुतः ? कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्—न हि कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः ; किं पुनरत्र कार्त्स्न्यमभिप्रेतम् ? देशकालनिमित्तसंपत्तिः अबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने संभाव्यन्ते—

न तावत्स्वप्ने रथादीनामुचितो देशः संभवति ; न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन् ; स्यादेतत्— बहिर्देहात् स्वप्नं द्रक्ष्यति, देशान्तरितद्रव्यग्रहणात् ; दर्शयति च श्रुतिः बहिर्देहात्स्वप्नम्—'बहिष्कुलायादमृतश्चरित्वा । स ईयते ऽमृतो यत्र कामम्' इति ; स्थितिगतिप्रत्ययभेदश्च न अनिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीत—इति । नेत्युच्यते—न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते ; कचिच्च प्रत्या-

गमनवर्जितं स्वप्नं श्रावयति— कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः, स्वप्ने पञ्चालानभिगतश्च अस्मिन्प्रतिबुद्धश्च— इति; देहाच्चेदपेयात्, पञ्चालेष्वेव प्रतिबुध्येत; तानसावभिगत इति; कुरुष्वेव तु प्रतिबुध्यते; येन च अयं देहेन देशान्तरमश्नुवानो मन्यते, तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति; यथाभूतानि च अयं देशान्तराणि स्वप्ने पश्यति, न तानि तथाभूतान्येव भवन्ति; परिधावंश्चेत्पश्येत्, जाग्रद्वत् वस्तुभूतमर्थमाकलयेत् । दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्— 'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिष्कुलायश्रुतिः गौणी व्याख्यातव्या—बहिरिव कुलायात् अमृतश्चरित्वेति—यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति, स बहिरिव शरीराद्भवति—इति । स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः ॥

कालविसंवादोऽपि च स्वप्ने भवति— रजन्यां सुप्तो वासरं भारते वर्षे मन्यते; तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचित् बहून् वर्षपूगान् अतिवाहयति । निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वा उचितानि विद्यन्ते; करणोपसंहाराद्धि नास्य अश्वरथादिग्रहणाय चक्षुरादीनि सन्ति;

रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा । बाध्यन्ते चैते रथाश्वादयः स्वप्नदृष्टाः प्रबोधे; स्वप्न एव च एते सुलभबाधा भवन्ति, आद्यन्तयोर्व्यभिचारदर्शनात्— रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते, मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः। स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम्— 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम् ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति—नेत्युच्यते— सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः; तथा हि श्रूयते- 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' इति; तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति; आचक्षते च स्वप्नाध्यायविदः— 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानादीन्यधन्यानि' इति; मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति

मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम्; सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम्, बाध्यमानत्वादित्यभिप्रायः । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥

यदुक्तम्— 'आह हि' इति तदेवं सति भाक्तं व्याख्यातव्यम्—यथा 'लाङ्गलं गवादीनुद्वहति' इति निमित्तमात्रत्वादेवमुच्यते, न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति; एवं निमित्तमात्रत्वात्— सुप्तो रथादीन्सृजते, 'स हि कर्ता'— इति च उच्यते; न तु प्रत्यक्षमेव सुप्तो रथादीन्सृजति । निमित्तत्वं तु अस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम् । अपि च जागरिते विषयेन्द्रियसंयोगात् आदित्यादिज्योतिर्व्यतिकराच्च आत्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः; तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत, ततः स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्; तस्माद्रथाद्यभाववचनं श्रुत्या, रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम् । एतेन निर्माणश्रवणं व्याख्यातम् । यदप्युक्तम्— 'प्राज्ञमेनं निर्मातारमामनन्ति' इति, तदप्यसत्, श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति जीवव्यापारश्रवणात्; इहापि 'य एष सुप्तेषु जागर्ति' इति प्रसिद्धानुवादाज्जीव

एवायं कामानां निर्माता संकीर्त्यते; तस्य तु वाक्यशेषेण 'तदेव शुक्रं तद्ब्रह्म' इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते– 'तत्त्वमसि' इत्यादिवत्– इति न ब्रह्मप्रकरणं विरुध्यते । न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः ; पारमार्थिकस्तु नायं संध्याश्रयः सर्गः वियदादिसर्गवत्– इत्येतावत्प्रतिपाद्यते ; न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति ; प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति ; संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यते—इत्यतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम् ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

अथापि स्यात्—परस्यैव तावदात्मनोंऽशः जीवः–अग्नेरिव विस्फुलिङ्गः; तत्रैवं सति यथा अग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः, एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती; ततश्च जीवस्य ज्ञानैश्वर्यवशात् सांकल्पिकी स्व-

प्रे रथादिसृष्टिर्भविष्यतीति । अत्रोच्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् । किं पुनर्जीवस्य ईश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव; विद्यमानमपि तत् तिरोहितम् अविद्यादिव्यवधानात् । तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य—तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात्—ईश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव, सर्वेषां जन्तूनाम्; कुतः? ततो हि ईश्वराद्धेतोः, अस्य जीवस्य, बन्धमोक्षौ भवतः— ईश्वरस्वरूपापरिज्ञानात् बन्धः, तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इत्येवमाद्या ॥

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात्पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वम्, विस्फुलिङ्गस्येव दहनप्रकाशनयोः—इति । उच्यते—सत्यमेवैतत्; सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावः, देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगात् भवति । अस्ति च अत्रोपमा—

यथा अग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतः, यथा वा भस्मच्छन्नस्य— एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः । वा-शब्दो जीवस्य ईश्वरात् अन्यत्वशङ्काव्यावृत्त्यर्थः । नन्वन्य एव जीवः ईश्वरादस्तु, तिरस्कृतज्ञानैश्वर्यत्वात्; किं देहयोगकल्पनया? नेत्युच्यते —न हि अन्यत्वं जीवस्य ईश्वरादुपपद्यते— 'सेयं देवतैक्षत' इत्युपक्रम्य 'अनेन जीवेनात्मनानुप्रविश्य' इत्यात्मशब्देन जीवस्य परामर्शात्; 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति च जीवाय उपदिशति ईश्वरात्मत्वम्; अतः अनन्य एव ईश्वराज्जीवः सन् देहयोगात्तिरोहितज्ञानैश्वर्यो भवति । अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते; यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यात्, नैवानिष्टं कश्चित्स्वप्नं पश्येत्, न हि कश्चिदनिष्टं संकल्पयते । यत्पुनरुक्तम्—जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति, न तत्साम्यवचनं सत्यत्वाभिप्रायम्, स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्; जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत् । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

२. तदभावाधिकरणम् ।

स्वप्नावस्था परीक्षिता; सुषुप्तावस्थेदानीं परीक्ष्यते । तत्रैताः सुषुप्तविषयाः श्रुतयो भवन्ति; क्वचिच्छ्रूयते— 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' इति; अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते— 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति; तथान्यत्र नाडीरेवानुक्रम्य— 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति; तथान्यत्र— 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति; तथान्यत्र— 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति; तथा— 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति च ॥

तत्र संशयः— किमेतानि नाड्यादीनि परस्परनिरपेक्षतया भिन्नानि सुषुप्तिस्थानानि, आहोस्वित्परस्परापेक्षतया एकं सुषुप्तिस्थानमिति । किं तावत्प्राप्तम्? भिन्नानीति; कुतः? एकार्थत्वात्— न हि एकार्थानां क्वचित्परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्; नाड्यादीनां च एकार्थता सुषुप्तौ दृश्यते, 'नाडीषु सृप्तो भवति' 'पुरीतति शेते' इति च तत्र तत्र

सप्तमीनिर्देशस्य तुल्यत्वात् । ननु नैवं सति सप्तमीनिर्देशो दृश्यते— 'सता सोम्य तदा संपन्नो भवति' इति; नैष दोषः, तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्— वाक्यशेषो हि तत्र आयतनैषी जीवः सत् उपसर्पतीत्याह— 'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' इति; प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्; आयतनं च सप्तम्यर्थः, सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते— 'सति संपद्य न विदुः सति संपद्यामहे' इति । सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते । तस्मादेकार्थत्वात् नाड्यादीनां विकल्पेन कदाचित् किंचित्स्थानं स्वापायोपसर्पति—इति ॥

एवं प्राप्ते, प्रतिपाद्यते— तदभावो नाडीष्वात्मनि चेति । तदभाव इति, तस्य प्रकृतस्य स्वप्नदर्शनस्य अभावः सुषुप्तमित्यर्थः; नाडीष्वात्मनि चेति समुच्चयेन एतानि नाड्यादीनि स्वापायोपसर्पति, न विकल्पेन— इत्यर्थः; कुतः? तच्छ्रुतेः; तथा हि सर्वेषामेव नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वं श्रूयते; तच्च समुच्चये संगृहीतं भवति; विकल्पे ह्येषाम्, पक्षे बाधः स्यात् । ननु एकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवत्—इत्युक्तम्; नेत्युच्यते—न हि एकविभक्तिनिर्देशमा-

त्रेण एकार्थत्वं विकल्पश्च आपतति, नानार्थत्वसमुच्चययो-रप्येकविभक्तिनिर्देशदर्शनात्– प्रासादे शेते पर्यङ्के शेते इत्ये-वमादिषु, तथा इहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीति उपपद्यते समुच्चयः; तथा च श्रुतिः— 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति, एकवाक्योपादानात्; प्राणस्य च ब्रह्मत्वं समधिगतम्– 'प्राणस्तथानुगमात्' इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुषुप्तिस्थानत्वेन श्रावयति— 'आसु तदा नाडीषु सृप्तो भवति' इति, तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रति-षेधात् नाडीद्वारेण ब्रह्मण्येवावतिष्ठत इति प्रतीयते; न चैवमपि नाडीषु सप्तमी विरुध्यते, नाडीभिरपि ब्रह्मोपसर्पन् सृप्त एव नाडीषु भवति– यो हि गङ्गया सागरं गच्छति, गत एव स गङ्गायां भवति। भवति च अत्र रश्मिनाडी-द्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वात् नाडीस्तुत्यर्थं सृप्तिसंकीर्तनम्—'नाडीषु सृप्तो भवति' इत्युक्त्वा 'तं न कश्चन पाप्मा स्पृशति' इति ब्रुवन् नाडीः प्रशंसति; ब्रवीति च पाप्मस्पर्शाभावे हेतुम् 'तेजसा हि तदा संपन्नो भवति' इति– तेजसा नाडीगतेन पित्ताख्येन अभिव्याप्तक-

रणो न बाह्यान् विषयानीक्षत इत्यर्थः; अथवा तेजसेति ब्रह्मण एवायं निर्देशः, श्रुत्यन्तरे 'ब्रह्मैव तेज एव' इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात्; ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेण, अतस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः—ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः 'सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' इत्यादिश्रुतिभ्यः; एवं च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थानेनानुगतो नाडीनां समुच्चयः समधिगतो भवति । तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात् तदनुगुणमेव सुषुप्तिस्थानत्वं ज्ञायते— 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति हृदयाकाशे सुषुप्तिस्थाने प्रकृते इदमुच्यते— 'पुरीतति शेते' इति; पुरीतदिति हृदयपरिवेष्टनमुच्यते; तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते 'पुरीतति शेते' इति वक्तुम्— प्राकारपरिक्षिप्तेऽपि हि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते; हृदयाकाशस्य च ब्रह्मत्वं समधिगतम् 'दहर उत्तरेभ्यः' इत्यत्र । तथा नाडीपुरीतत्समुच्चयोऽपि 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्येकवाक्योपादानात् अवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि—नाड्यः पुरीतत् ब्रह्म चेति;

तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव तु एकम् अनपायि सुषुप्तिस्थानम् । अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति—तत्रास्य करणानि वर्तन्त इति; न हि उपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात् । ब्रह्माधारत्वमप्यस्य सुषुप्ते नैव आधाराधेयभेदाभिप्रायेण उच्यते, कथं तर्हि? तादात्म्याभिप्रायेण; यत आह— 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति—स्वशब्देन आत्मा अभिलप्यते, स्वरूपमापन्नः सुप्तो भवतीत्यर्थः । अपि च न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायित्वात्; स्वप्नजागरितयोस्तूपाधिसंपर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात्सुषुप्तेः स्वरूपापत्तिर्विवक्ष्यते— 'स्वमपीतो भवति' इति; अतश्च सुप्तावस्थायां कदाचित्सता संपद्यते, कदाचिन्न संपद्यते— इत्ययुक्तम् । अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत्सुषुप्तं न क्वचिद्विशिष्यते; तत्र सति संपन्नस्तावत् एकत्वात् न विजानातीति युक्तम्, 'तत्केन कं विजानीयात्' इति श्रुतेः; नाडीषु पुरीतति च शयानस्य न किंचित् अविज्ञाने कारणं शक्यं विज्ञातुम्, भेदविषयत्वात्, 'यत्र वा

अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इति श्रुतेः । ननु भेदविषयस्याप्यतिदूरादिकारणमविज्ञाने स्यात्; बाढमेवं स्यात्, यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत—यथा विष्णुमित्रः प्रवासी स्वगृहान न पश्यतीति; न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते; उपाधिगतमेवातिदूरादिकारणम अविज्ञाने इति यद्युच्येत, तथाप्युपाधेरुपशान्तत्वात् सत्येव संपन्नः न विजानातीति युक्तम । न च वयमिह तुल्यवत् नाड्यादिसमुच्चयं प्रतिपादयामः; न हि नाड्यः सुप्तिस्थानं पुरीतच्च इत्यनेन विज्ञानेन किंचित्प्रयोजनमस्ति; न ह्येतद्विज्ञानप्रतिबद्धं किंचित्फलं श्रूयते; नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते । ब्रह्म तु अनपायि सुप्तिस्थानम्—इत्येतत्प्रतिपादयामः; तेन तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च । तस्मादात्मैव सुप्तिस्थानम ॥

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

यस्माच्च आत्मैव सुप्तिस्थानम्, अत एव च कारणात् नित्यवदेव अस्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते, 'कुत एतदागात्' इत्यस्य प्रश्नस्य प्रतिवचनावसरे—'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः'

इत्यादिना, 'सत आगम्य न विदुः सत आगच्छामहे...' इति च । विकल्प्यमानेषु तु सुषुप्तिस्थानेषु, कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मनः— इत्यशासिष्यत् । तस्मादप्यात्मैव सुप्तिस्थानमिति ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यते, उत स वा अन्यो वा इति चिन्त्यते । तत्र प्राप्तं तावत्—अनियम इति; कुतः? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुर्भवति— इति दुःसंपादम् — तद्वत् सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति; तस्मात् स एव ईश्वरो वा अन्यो वा जीवः प्रतिबुध्यते इति ॥

३. कर्मानुस्मृतिशब्दविध्यधिकरणम् ।

एवं प्राप्ते, इदमाह— स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः; कस्मात्? कर्मानुस्मृतिशब्दविधिभ्यः; विभज्य हेतुं दर्शयिष्यामि—कर्मशेषानुष्ठानदर्शनात्तावत्स एवोत्थातुमर्हति नान्यः; तथा हि— पूर्वेद्युरनुष्ठितस्य

कर्मणः अपरेद्युः शेषमनुतिष्ठन्दृश्यते; न चान्येन सामिकृतस्य कर्मणः अन्यः शेषक्रियायां प्रवर्तितुमुत्सहते, अतिप्रसङ्गात्; तस्मादेक एव पूर्वेद्युरपरेद्युश्च एकस्य कर्मणः कर्तेति गम्यते । इतश्च स एवोत्तिष्ठति, यत्कारणम् अतीतेऽहनि अहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणम् अन्यस्योत्थाने नोपपद्यते; न ह्यन्यदृष्टम् अन्योऽनुस्मर्तुमर्हति; सोऽहमस्मीति च आत्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते । शब्देभ्यश्च तस्यैवोत्थानमवगम्यते; तथा हि— 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारपठिता न आत्मान्तरोत्थाने सामञ्जस्यम् ईयुः । कर्मविद्याविधिभ्यश्चैवमेवावगम्यते; अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः; अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापद्येत; एवं चेत्स्यात्, वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात् । अपि च अन्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्, तत्रत्यव्यवहारलोपप्रसङ्गः स्यात्; अथ तत्र सुप्त

उत्तिष्ठेत्, कल्पनानर्थक्यं स्यात्— यो हि यस्मिन् शरीरे सुप्तः सः तस्मिन् नोत्तिष्ठति, अन्यस्मिन् शरीरे सुप्तः अन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्? अथ मुक्त उत्तिष्ठेत्, अन्तवान्मोक्ष आपद्येत; निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्; एतेन ईश्वरस्योत्थानं प्रत्युक्तम्, नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्याताम्। तस्मात्स एवोत्तिष्ठति, नान्य इति। यत्पुनरुक्तम्— यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यते, एवं सति संपन्नो जीवो नोत्पतितुमर्हतीति, तत्परिह्रियते— युक्तं तत्र विवेककारणाभावात् जलबिन्दोरनुद्धरणम्, इह तु विद्यते विवेककारणम्— कर्म च अविद्या च, इति वैषम्यम्; दृश्यते च दुर्विवेचयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोः हंसेन विवेचनम्। अपि च न जीवो नाम कश्चित्परस्मादन्यो विद्यते, यो जलबिन्दुरिव जलराशेः सतो विविच्येत; सदेव तु उपाधिसंपर्काज्जीव इत्युपचर्यते इत्यसकृत्प्रपञ्चितम्; एवं सति यावदेकोपाधिगता बन्धानुवृत्तिः, तावदेकजीवव्यवहारः; उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः; स एवायमुपाधिः स्वापप्रबोधयोः बीजाङ्कुरन्यायेन— इत्यतः स

एव जीवः प्रतिबुध्यत इति युक्तम् ॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

अस्ति मुग्धो नाम, यं मूर्छित इति लौकिकाः कथयन्ति ; स तु किमवस्थ इति परीक्षायाम् , उच्यते— तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः— जागरितं स्वप्नः सुषुप्तमिति ; चतुर्थी शरीरादपसृप्तिः ; न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धा अस्ति ; तस्माच्चतसृणामेवावस्थानामन्यतमावस्था मूर्छा— इति ॥

४. मुग्धाधिकरणम् ।

एवं प्राप्ते, ब्रूमः—न तावन्मुग्धो जागरितावस्थो भवितुमर्हति ; न ह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत्—इषुकारन्यायेन मुग्धो भविष्यति—यथा इषुकारो जाग्रदपि इष्वासक्तमनस्तया नान्यान्विषयानीक्षते, एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति ; न, अचेतयमानत्वात् ; इषुकारो हि व्यापृतमना ब्रवीति—इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति, मुग्धस्तु लब्धसंज्ञो ब्रवीति— अन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवम् , न किंचिन्मया चेतितमिति । जाग्रतश्चैकविषयविषक्तचेतसोऽपि देहो विध्रियते ; मुग्धस्य तु देहो धरण्यां पतति ।

तस्मान्न जागर्ति । नापि स्वप्नान्पश्यति, निःसंज्ञकत्वात् । नापि मृतः, प्राणोष्मणोर्भावात्—मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयानाः, ऊष्मास्ति नास्तीति, हृदयदेशमालभन्ते, निश्चयार्थम्, प्राणोऽस्ति नास्तीति च, नासिकादेशम्; यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽयमित्यध्यवसाय दहनायारण्यं नयन्ति; अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते, ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति; पुनरुत्थानाच्च न दिष्टं गतः; न हि यमं गतः यमराष्ट्रात्प्रत्यागच्छति। अस्तु तर्हि सुषुप्तः, निःसंज्ञत्वात्, अमृतत्वाच्च; न, वैलक्षण्यात्—मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति, सवेपथुरस्य देहो भवति, भयानकं च वदनम्, विस्फारिते नेत्रे; सुषुप्तस्तु प्रसन्नवदनस्तुल्यकालं पुनः पुनरुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते; पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः—मुसलसंपातादिनिमित्तत्वान्मोहस्य, श्रमनिमित्तत्वाच्च स्वापस्य। न च लोकेऽस्ति प्रसिद्धिः—मुग्धः सुप्त इति । परिशेषादर्धसंपत्तिर्मुग्धतेत्यवगच्छामः—निःसंज्ञत्वात् संपन्नः, इतरस्माच्च वैलक्षण्यादसंपन्नः इति ॥

कथं पुनरर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम्?—यावता सुप्तं प्रति तावदुक्तं श्रुत्या—'सता सोम्य तदा संपन्नो भवति' इति, 'अत्र स्तेनोऽस्तेनो भवति' 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' इत्यादि; जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति; न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते; मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते; तस्मात् उपाध्युपशमात् सुषुप्तवन्मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति, नार्धसंपत्तिरिति । अत्रोच्यते—न ब्रूमः—मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति; किं तर्हि, अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वम्, अर्धेनावस्थान्तरपक्षस्य—इति ब्रूमः; दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये । द्वारं चैतत् मरणस्य; यदास्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः; यदा तु निरवशेषं कर्म भवति, तदा प्राणोष्माणावपगच्छतः । तस्मादर्धसंपत्तिं ब्रह्मविद इच्छन्ति । यत्तूक्तम्—न पञ्चमी काचिदवस्था प्रसिद्धास्तीति, नैष दोषः; कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात् । प्रसिद्धा चैषा लोकायुर्वेदयोः । अर्धसंपत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम् ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संपद्यते, तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते। सन्त्युभयलिङ्गाः

५. उभयलिङ्गाधिकरणम्।

श्रुतयो ब्रह्मविषयाः— 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्येवमाद्याः सविशेषलिङ्गाः; 'अस्थूलमनण्वह्रस्वमदीर्घम्' इत्येवमाद्याश्च निर्विशेषलिङ्गाः। किमासु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्, उतान्यतरलिङ्गम्; यदाप्यन्यतरलिङ्गम्, तदापि सविशेषम्, उत निर्विशेषम्— इति मीमांस्यते। तत्र उभयलिङ्गश्रुत्यनुग्रहात् उभयलिङ्गमेव ब्रह्म इत्येवं प्राप्ते, ब्रूमः— न तावत्स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते; न हि एकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं च इत्यवधारयितुं शक्यम्, विरोधात्। अस्तु तर्हि स्थानतः, पृथिव्याद्युपाधियोगादिति; तदपि नोपपद्यते— न हि उपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति; न हि स्वच्छः सन् स्फटिकः अलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य; उपाधीनां च अविद्याप्रत्युपस्थापितत्वात्। अतश्च अन्यतर-

लिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्, न तद्विपरीतम्; सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्म उपदिश्यते ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

अथापि स्यात्—यदुक्तम्, निर्विकल्पमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वा उभयलिङ्गत्वमस्तीति, तन्नोपपद्यते; कस्मात्? भेदात्; भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते, चतुष्पात् ब्रह्म, षोडशकलं ब्रह्म, वामनीत्वादिलक्षणं ब्रह्म, त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म, इत्येवंजातीयकाः; तस्मात् सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम्। ननु उक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति; अयमप्यविरोधः, उपाधिकृतत्वादाकारभेदस्य; अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येत—इति चेत्, नेति ब्रूमः; कस्मात्? प्रत्येकमतद्वचनात्; प्रत्युपाधिभेदं हि अभेदमेव ब्रह्मणः श्रावयति शास्त्रम्—'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स

योऽयमात्मा' इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्, भेदस्य उपासनार्थत्वात्, अभेदे तात्पर्यात् ॥

## अपि चैवमेके ॥ १३ ॥

अपि चैवं भेददर्शननिन्दापूर्वकम् अभेददर्शनमेव एके शाखिनः समामनन्ति— 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति; तथान्येऽपि—'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्' इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥

कथं पुनः आकारवदुपदेशिनीषु अनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीषु, अनाकारमेव ब्रह्म अवधार्यते, न पुनर्विपरीतम्? इत्यत उत्तरं पठति—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूपाद्याकाररहितमेव हि ब्रह्म अवधारयितव्यम्, न रूपादिमत्; कस्मात्? तत्प्रधानत्वात्; 'अस्थूलमनण्वह्रस्वमदीर्घम्' 'अशब्दमस्पर्शमरूपमव्ययम्' 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' 'दिव्यो ह्यमूर्तः

पुरुषः सबाह्याभ्यन्तरो ह्यजः' 'तदेतद्ब्रह्मापूर्वमनपरमनन्त-रमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि, न अर्थान्तरप्रधानानि—इत्ये-तत्प्रतिष्ठापितम् 'तत्तु समन्वयात्' इत्यत्र; तस्मादेवंजाती-यकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्म अवधारयित-व्यम् । इतराणि तु आकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि; उपासनाविधिप्रधानानि हि तानि; तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्; सति तु विरोधे तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसि भवन्ति— इत्येष विनिगमनायां हेतुः, येन उभयीष्वपि श्रुतिषु सतीषु अनाकारमेव ब्रह्म अवधार्यते, न पुनर्विपरीतमिति ॥

का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिः? इत्यत आह—

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्य अवतिष्ठ-मानः अङ्गुल्याद्युपाधिसंबन्धात् तेषु ऋजुवक्रादिभावं प्रति-पद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपा-धिसंबन्धात् तदाकारतामिव प्रतिपद्यते; तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते; एवम् अवै-

यर्थ्यम् आकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति; न हि वेदवाक्यानां कस्यचिदर्थवत्त्वम् कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम्, प्रमाणत्वाविशेषात् । नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातम्— नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते; नेति ब्रूमः—उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः; उपाधीनां च अविद्याप्रत्युपस्थापितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्र अवोचाम ॥

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिः चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति । एतदुक्तं भवति—नास्य आत्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम्—यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरम्, तथैवेति ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म—निर्विशेष-

त्वात्— 'अथात आदेशो नेति नेति' 'अन्यदेव तद्विदितादथो अविदितादधि' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्येवमाद्या । बाष्कलिना च बाध्वः पृष्टः सन् अवचनेनैव ब्रह्म प्रोवाचेति श्रूयते— 'स होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि । उपशान्तोऽयमात्मा' इति । तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते— 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति ॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एव च अयमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्यः, अत एव च अस्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमा उपादीयते मोक्षशास्त्रेषु— 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । 'एक एव

हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति चैवमादिषु ॥

अत्र प्रत्यवस्थीयते—

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात्; सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते; तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः; न तु आत्मा मूर्तः, न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात् सर्वानन्यत्वाच्च । तस्मादयुक्तोऽयं दृष्टान्त इति ॥

अत्र प्रतिविधीयते—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥**

युक्त एव तु अयं दृष्टान्तः, विवक्षितांशसंभवात्; न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् कंचित् विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचित् दर्शयितुं शक्यते; सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्; न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्; शास्त्रप्रणीतस्य तु अस्य

प्रयोजनमात्रमुपन्यस्यते । किं पुनरत्र विवक्षितं सारूप्यमिति, तदुच्यते— वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते— इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति ; एवं परमार्थतोऽविकृतमेकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान्वृद्धिह्रासादीन् । एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः ॥

## दर्शनाच्च ॥ २१ ॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम— 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इति ; 'अनेन जीवेनात्मनानुप्रविश्य' इति च । तस्माद्युक्तमेतत् 'अत एव चोपमा सूर्यकादिवत्' इति । तस्मात् निर्विकल्पकैकलिङ्गमेव ब्रह्म, न उभयलिङ्गं विपरीतलिङ्गं वा इति सिद्धम् ॥

अत्र केचित् द्वे अधिकरणे कल्पयन्ति— प्रथमं तावत् किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म, उत प्रपञ्चवदनेकाकारोपेतमिति ; द्वितीयं तु प्रत्यस्तमितप्रपञ्चत्वे किं सल्ल-

क्षणं ब्रह्म, उत बोधलक्षणम् , उत उभयलक्षणमिति। अत्र वयं वदामः— सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति; यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासः, तत् पूर्वेणैव 'न स्थानतोऽपि' इत्यनेनाधिकरणेन निराकृतमिति, उत्तरमधिकरणम् 'प्रकाशवच्च' इत्येतद्व्यर्थमेव भवेत्। न च सल्लक्षणमेव ब्रह्म न बोधलक्षणम्—इति शक्यं वक्तुम्, 'विज्ञानघन एव' इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्; कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत? नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणम्— इति शक्यं वक्तुम्, 'अस्तीत्येवोपलब्धव्यः' इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्; कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत। नाप्युभयलक्षणमेव ब्रह्म—इति शक्यं वक्तुम्, पूर्वाभ्युपगमविरोधप्रसङ्गात्; सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तया उपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं प्रसज्येत। श्रुतत्वाददोष इति चेत्, न, एकस्य अनेकस्वभावत्वानुपपत्तेः। अथ सत्तैव बोधः, बोध एव च सत्ता, नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्म, उत बोधलक्षणम्, उतोभयलक्षणम्—इत्ययं विकल्पो निरालम्बन एव स्यात्। सूत्राणि त्वे-

काधिकरणत्वेनैवास्माभिर्नीतानि। अपि च ब्रह्मविषयासु श्रुतिषु आकारवदनाकारप्रतिपादनेन विप्रतिपन्नासु, अनाकारे ब्रह्मणि परिगृहीते, अवश्यं वक्तव्या इतरासां श्रुतीनां गतिः; तादर्थ्येन 'प्रकाशवच्च' इत्यादीनि सूत्राण्यर्थवत्तराणि संपद्यन्ते॥

यदप्याहुः—आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेन अनाकारप्रतिपत्त्यर्था एव, न पृथगर्था इति, तदपि न समीचीनमिव लक्ष्यते; कथम्? ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते, यथा—'युक्ता ह्यस्य हरयः शता दशेति, अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' इत्येवमादयः—ते भवन्तु प्रविलयार्थाः; 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इत्युपसंहारात्। ये पुनरुपासनाविधानाधिकारे प्रपञ्चा उच्यन्ते, यथा—'मनोमयः प्राणशरीरो भारूपः' इत्येवमादयः—न तेषां प्रविलयार्थत्वं न्याय्यम्; 'स क्रतुं कुर्वीत' इत्येवंजातीयकेन प्रकृतेनैव उपासनविधिना तेषां संबन्धात्। श्रुत्या च एवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्पते। सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' इति विनिगमनकारणवचनम् अनव-

काशं स्यात् । फलमप्येषां यथोपदेशं क्वचिद्दुरितक्षयः, क्वचिदैश्वर्यप्राप्तिः, क्वचित्क्रममुक्तिरित्यवगम्यत एव—इत्यतः पार्थगर्थ्यमेव उपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यम्, न एकवाक्यत्वम् ॥

कथं च एषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्—एकनियोगप्रतीतेः, प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्, न, ब्रह्मवाक्येषु नियोगाभावात्—वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि, न नियोगोपदेशीनि इत्येतद्विस्तरेण प्रतिष्ठापितम् 'तत्तु समन्वयात्' इत्यत्र । किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्; पुरुषो हि नियुज्यमानः 'कुरु' इति स्वव्यापारे कस्मिंश्चिन्नियुज्यते । ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति—अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः—यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चप्रविलयः; यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः—ब्रह्मस्वभावो हि प्रपञ्चः, न प्रपञ्चस्वभावं ब्रह्म; तेन नामरूपप्रपञ्चप्रविलापनेन

ब्रह्मतत्त्वावबोधो भवति—इति । अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविलयो नाम ?—किमग्निप्रतापसंपर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः, आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवत् अविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्यः—इति । तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चः देहादिलक्षण आध्यात्मिकः बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत, स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात्; एकेन च आदिमुक्तेन पृथिव्यादिप्रविलयः कृत इति इदानीं पृथिव्यादिशून्यं जगदभविष्यत् । अथ अविद्याध्यस्तो ब्रह्मण्येकस्मिन् अयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैव अविद्याध्यस्तप्रपञ्चप्रत्याख्यानेन आवेदयितव्यम्—'एकमेवाद्वितीयं ब्रह्म' 'तत्सत्यं स आत्मा तत्त्वमसि' इति—तस्मिन्नावेदिते, विद्या स्वयमेवोत्पद्यते ; तया च अविद्या बाध्यते, ततश्च अविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते— अनावेदिते तु ब्रह्मणि 'ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं च' इति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायेत । नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगः

स्यात्; न, निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैव उभयसिद्धेः—रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानम् अविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति; न च कृतमेव पुनः क्रियते ॥

नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम, स प्रपञ्चपक्षस्यैव वा स्यात्, ब्रह्मपक्षस्यैव वा— प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवत् जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चविलये नियोग उच्येत? कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत? द्वितीयेऽपि ब्रह्मैव अनियोज्यस्वभावं जीवस्य स्वरूपम्, जीवत्वं तु, अविद्याकृतमेव— इति प्रतिपादिते ब्रह्मणि नियोज्याभावात् नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः तत्त्वाभिमुखीकरणप्रधानाः, न तत्त्वावबोधविधिप्रधाना भवन्ति; लोकेऽपि— इदं पश्य, इदमाकर्णयेति च एवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति; ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते, कदाचिन्न जायते; तस्मात् तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन; तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते; न च प्रमाणान्तरेण अन्यथाप्रसिद्धेऽर्थे अन्यथाज्ञानं नियुक्तस्याप्युपपद्यते; यदि

पुनर्नियुक्तोऽहमिति अन्यथा ज्ञानं कुर्यात्, न तु तत् ज्ञानम्, किं तर्हि, मानसी सा क्रिया; स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च; न तत् नियोगशतेनापि कारयितुं शक्यते, न च प्रतिषेधशतेनापि वारयितुं शक्यते; न हि तत् पुरुषतन्त्रम्, वस्तुतन्त्रमेव हि तत्; अतोऽपि नियोगाभावः; किंचान्यत्— नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये, यद्भ्युपगतम् अनियोज्यब्रह्मात्मत्वं जीवस्य, तत् अप्रमाणकमेव स्यात्; अथ शास्त्रमेव अनियोज्यब्रह्मात्मत्वमाचक्षीत, तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च, श्रुतहानिः अश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वम् अनित्यत्वं च— इत्येवमाद्यो दोषा न केनचित्परिहर्तुं शक्याः। तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि, न नियोगनिष्ठानि। अतश्च एकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम्॥

अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे, तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु च असिद्धम्; न हि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने, सर्वत्र एको नियोग इति शक्यमाश्रयितुम्; प्रयाजदर्शपूर्णमासवाक्येषु

तु अधिकारांशेनाभेदात् युक्तमेकत्वम्; न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वकरोंशोऽस्ति; न हि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः, नापि प्रपञ्चविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात्; न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं च एकस्मिन्धर्मिणि युक्तं समावेशयितुम्। तस्मात् अस्मदुक्त एव विभागः आकारवदनाकारोपदेशानां युक्ततर इति ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्युपक्रम्य, पञ्चमहाभूतानि द्वैराश्येन प्रविभज्य, अमूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा, पुनः पठ्यते— 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे; न ह्यत्र इदं तदिति विशेषितं किंचित्प्रतिषेध्यमुपलभ्यते; इति-शब्देन तु अत्र प्रतिषेध्यं किमपि समर्प्यते, 'नेति नेति' इति इति-परत्वात् नञ्प्रयोगस्य; इति-शब्दश्चायं संनिहितालम्बनः एवंशब्दसमानवृत्तिः प्रयुज्यमानो

६. प्रकृतैतावत्त्वाधिकरणम्।

दृश्यते— 'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु; संनिहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणः, तच्च ब्रह्म, यस्य ते द्वे रूपे । तत्र नः संशय उपजायते— किमयं प्रतिषेधो रूपे रूपवच्च उभयमपि प्रतिषेधति, आहोस्विदेकतरम्; यदाप्येकतरम्, तदापि किं ब्रह्म प्रतिषेधति, रूपे परिशिनष्टि, आहोस्विद्रूपे प्रतिषेधति, ब्रह्म परिशिनष्टि— इति ॥

तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे— द्वौ चैतौ प्रतिषेधौ, द्विः नेतिशब्दप्रयोगात्; तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यते, अपरेण रूपवद्ब्रह्म— इति भवति मतिः । अथवा ब्रह्मैव रूपवत् प्रतिषिध्यते; तद्धि वाङ्मनसातीतत्वादसंभाव्यमानसद्भावं प्रतिषेधार्हम्; न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः; अभ्यासस्त्वादरार्थः इत्येवं प्राप्ते—

ब्रूमः—न तावदुभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात्— कंचिद्धि परमार्थमालम्ब्य अपरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः; तच्च परिशिष्यमाणे कस्मिंश्चिद्भावे अवकल्पते; कृत्स्नप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत? अपरिशिष्यमाणे चान्यस्मिन्, य इतरः प्रतिषेद्धुमारभ्यते

प्रतिषेद्धुमशक्यत्वात् तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः । नापि ब्रह्मप्रतिषेध उपपद्यते— 'ब्रह्म ते ब्रवाणि' इत्याद्युपक्रमविरोधात्, 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' इत्याद्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च । वाङ्मनसातीतत्वमपि ब्रह्मणो न अभावाभिप्रायेणाभिधीयते; न हि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परम्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनः अभावोऽभिलप्येत; 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति हि न्यायः । प्रतिपादनप्रक्रिया तु एषा– 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति; एतदुक्तं भवति— वाङ्मनसातीतमविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति । तस्माद्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति, परिशिनष्टि ब्रह्म—इत्यवगन्तव्यम् ॥

तदेतदुच्यते—प्रकृतैतावत्त्वं हि प्रतिषेधतीति । प्रकृतं यदेतावत् इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि प्रकृतं प्रपञ्चितं च पूर्वस्मिन्ग्रन्थे अधिदैवतमध्यात्मं च । तज्जनितमेव च वासनालक्षणमपरं

रूपम् अमूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं माहारजनाद्युपमाभिर्दर्शितम्—अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदेतत् सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेन इति-करणेन प्रतिषेधकं नञं प्रति उपनीयत इति गम्यते । ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन्ग्रन्थे, न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायाम् इदमुपक्रान्तम्—'अथात आदेशो नेति नेति' इति । तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिति निर्णीयते । तदास्पदं हि इदं समस्तं कार्यम् 'नेति नेति' इति प्रतिषिद्धम् । युक्तं च कार्यस्य, वाचारम्भणशब्दादिभ्योऽसत्त्वमिति, नेति नेतीति प्रतिषेधनम्; न तु ब्रह्मणः, सर्वकल्पनामूलत्वात् । न च अत्र इयमाशङ्का कर्तव्या— कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा, स्वयमेव पुनः प्रतिषेधति—'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति—यतः नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं तु इदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय च— इति निरवद्यम् । द्वौ च एतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रति-

षेधतः; यद्वा पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति, उत्तरो वासनाराशिम् । अथवा 'नेति नेति' इति वीप्सा इयम्— 'इति' इति यावत्किंचित् उत्प्रेक्ष्यते, तत्सर्वं न भवतीत्यर्थः—परिगणितप्रतिषेधे हि क्रियमाणे, यदि नैतद्ब्रह्म, किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात्; वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधात् अविषयः प्रत्यगात्मा ब्रह्मेति, जिज्ञासा निवर्तते । तस्मात् प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति, परिशिनष्टि ब्रह्म— इति निर्णयः ॥

इतश्च एष एव निर्णयः, यतः— ततः प्रपञ्चप्रतिषेधात्, भूयो ब्रह्म ब्रवीति— 'अन्यत्परमस्ति' इति । अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात् । तत्रैषा अक्षरयोजना— 'नेति नेति' इति ब्रह्म आदिश्य, तमेव आदेशं पुनर्निर्वक्ति— 'नेति नेति' इत्यस्य कोऽर्थः? न हि एतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतः 'नेति नेति' इत्युच्यते, न पुनः स्वयमेव नास्ति— इत्यर्थः; तच्च दर्शयति— अन्यत्परम् अप्रतिषिद्धं ब्रह्म अस्तीति । यदा पुनरेवमक्षराणि योज्यन्ते—न हि, एतस्मात् 'इति न' 'इति न' इति प्रपञ्चप्रतिषेधरूपात् आदेशनात्, अन्यत्परमादेशनं ब्रह्मणः अस्तीति— तदा, 'ततो ब्रवीति च भूयः' इत्येतत् नामधेयविषयं यो-

जयितव्यम्— 'अथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इति हि ब्रवीति— इति । तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति; अभावावसाने तु प्रतिषेधे, किम् 'सत्यस्य सत्यम्' इत्युच्येत? तस्माद्ब्रह्मावसानः अयं प्रतिषेधः, नाभावावसानः— इत्यध्यवस्यामः ॥

## तदव्यक्तमाह हि ॥ २३ ॥

यत्तत् प्रतिषिद्धात्प्रपञ्चजातादन्यत् परं ब्रह्म, तदस्ति चेत्, कस्मान्न गृह्यत इति, उच्यते—तत् अव्यक्तमनिन्द्रियग्राह्यम्, सर्वदृश्यसाक्षित्वात् । आह हि एवं श्रुतिः— 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' 'स एष नेति नेत्यात्मागृह्यो न हि गृह्यते' 'यत्तदद्रेश्यमग्राह्यम्' 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इत्याद्या; स्मृतिरपि— 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' इत्याद्या ॥

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपि च एनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः; संराधनं च भक्तिध्यानप्रणिधानाद्य-

नुष्ठानम् । कथं पुनरवगम्यते— संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्याम्, श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः —'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति, 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति चैवमाद्या । स्मृतिरपि—'ये विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति चैवमाद्या ॥

ननु संराध्यसंराधकभावाभ्युपगमात्परापरात्मनोरन्यत्वं स्यादिति ; नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यथा प्रकाशाकाशसवितृप्रभृतयः अङ्गुलिकरकोदकप्रभृतिषु कर्मसु उपाधिभूतेषु सविशेषा इवावभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति ; एवमुपाधिनिमित्त एवायमात्मभेदः, स्वतस्तु ऐकात्म्यमेव । तथा हि वेदान्तेषु अभ्यासेन असकृत् जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

अतश्च स्वाभाविकत्वादभेदस्य, अविद्याकृतत्वाच्च भेदस्य, विद्यया अविद्यां विधूय जीवः परेण अनन्तेन प्राज्ञेन आत्मना एकतां गच्छति । तथा हि लिङ्गम्—'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादि ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति, स्वमतविशुद्धये । क्वचित् जीवप्राज्ञयोर्भेदो व्यपदिश्यते— 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च ; 'परात्परं पुरुषमुपैति दिव्यम्' इति गन्तृगन्तव्यत्वेन ; 'यः सर्वाणि भूतान्यन्तरो यमयति' इति नियन्तृनियन्तव्यत्वेन च । क्वचित्तु तयोरेवाभेदो व्यपदिश्यते— 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'एष त आत्मा सर्वान्तरः' 'एष त आत्मान्तर्याम्यमृतः' इति । तत्रैवमुभयव्यपदेशे सति, यद्यभेद एव एकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात् । अत उभयव्यपदेशदर्शनात् अहिकुण्डलवदत्र तत्त्वं भवितुमर्हति— यथा अहिरित्यभेदः, कुण्डलाभोगप्रांशुत्वादीनीति च भेदः, एवमिहापीति ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथवा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्— यथा प्रकाशः सावित्रः तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात्; अथ च भेदव्यपदेशभाजौ भवतः– एवमिहापीति ॥

## पूर्ववद्वा ॥ २९ ॥

यथा वा पूर्वमुपन्यस्तम्–'प्रकाशादिवच्चावैशेष्यम्' इति, तथैव एतद्भवितुमर्हति ; तथा हि अविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्मा अहिकुण्डलन्यायेन परस्य आत्मनः संस्थानभूतः, प्रकाशाश्रयन्यायेन च एकदेशभूतोऽभ्युपगम्येत; ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यं प्रसज्येत । न चात्र उभावपि भेदाभेदौ श्रुतिः तुल्यवद्व्यपदिशति ; अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदति अर्थान्तरविवक्षया । तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः ॥

## प्रतिषेधाच्च ॥ ३० ॥

इतश्च एष एव सिद्धान्तः, यत्कारणं परस्मादात्मनोऽन्यं

चेतनं प्रतिषेधति शास्त्रम्— 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादि । 'अथात आदेशो नेति नेति' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणात् ब्रह्ममात्रपरिशेषाच्च एष एव सिद्धान्त इति गम्यते ॥

यदेतत् निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितम्, अस्मात्परम् अन्यत्तत्त्वमस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्धि वाक्यानि आपातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परम् अन्यत्तत्त्वं प्रतिपादयन्तीव; तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते—

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

परम् अतो ब्रह्मणः अन्यत्तत्त्वं भवितुमर्हति; कुतः? सेतुव्यपदेशात् उन्मानव्यपदेशात् संबन्धव्यपदेशात् भेदव्यपदेशाच्च । सेतुव्यपदेशस्तावत्— 'अथ य आत्मा स सेतुर्विधृतिः' इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति; सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः; इह च सेतुशब्दः आत्मनि प्रयुक्त इति लौकिकसेतोरिव आत्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति;

'सेतुं तीर्त्वा' इति च तरतिशब्दप्रयोगात्– यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोति, एवमात्मानं सेतुं तीर्त्वा अनात्मानमसेतुं प्राप्नोतीति गम्यते । उन्मानव्यपदेशश्च भवति—तदेतद्ब्रह्म चतुष्पात् अष्टाशफं षोडशकलमिति; यच्च लोके उन्मितम् एतावदिदमिति परिच्छिन्नं कार्षापणादि, ततोऽन्यद्वस्त्वस्तीति प्रसिद्धम्; तथा ब्रह्मणोऽप्युन्मानात् ततोऽन्येन वस्तुना भवितव्यमिति गम्यते। तथा संबन्धव्यपदेशो भवति— 'सता सोम्य तदा संपन्नो भवति' इति, शारीर आत्मा 'प्राज्ञेनात्मना संपरिष्वक्तः' इति च; मितानां च मितेन संबन्धो दृष्टः, यथा नराणां नगरेण; जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ; अतः ततः परमन्यदमितमस्तीति गम्यते । भेदव्यपदेशश्च एनमर्थं गमयति; तथा हि— 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादित्याधारमीश्वरं व्यपदिश्य, ततो भेदेन अक्ष्याधारमीश्वरं व्यपदिशति– 'अथ य एषोऽक्षिणि पुरुषो दृश्यते' इति; अतिदेशं च अस्य अमुना रूपादिषु करोति– 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति; सावधिकं च ईश्वरत्वमुभयोर्व्यपदिशति– 'ये चामुष्मात्पराञ्चो लो-

कास्तेषां चेष्टे देवकामानां च' इत्येकस्य, 'ये चैतस्माद-र्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' इत्येकस्य, यथा इदं मागधस्य राज्यम्, इदं वैदेहस्येति । एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीति ॥

एवं प्राप्ते, प्रतिपाद्यते—

## सामान्यात्तु ॥ ३२ ॥

तु-शब्देन प्रदर्शितां प्राप्तिं निरुणद्धि । न ब्रह्मणोऽन्यत् किंचिद्भवितुमर्हति, प्रमाणाभावात्—न ह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे; सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्, अनन्यत्वं च कारणात् कार्यस्य; न च ब्रह्मव्यतिरिक्तं किंचित् अजं संभवति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यवधारणात्; एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशाः ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्; नेत्युच्यते— सेतुव्यपदेशस्तावत् न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते; सेतुरात्मेति हि आह, न अतः परमस्तीति; तत्र परस्मिन् असति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत; न चैतत् न्याय्यम्; हठो हि अप्रसिद्धकल्पना;

अपि च सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन सबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयतापि प्रासङ्क्ष्यत; न चैतन्न्याय्यम्, अजत्वादिश्रुतिविरोधात्; सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते; जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः; अतः सेतुरिव सेतुः— इति प्रकृत आत्मा स्तूयते। 'सेतुं तीर्त्वा' इत्यपि तरतिः अतिक्रमासंभवात् प्राप्नोत्यर्थ एव वर्तते— यथा व्याकरणं तीर्ण इति प्राप्तः उच्यते, न अतिक्रान्तः, तद्वत्॥

## बुद्ध्यर्थः पादवत्॥ ३३॥

यदप्युक्तम्— उन्मानव्यपदेशादस्ति परमिति, तत्राभिधीयते— उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः; किमर्थस्तर्हि? बुद्ध्यर्थः, उपासनार्थ इति यावत्; चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा—बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति—विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते; न हि अविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम्, मन्दमध्यमोत्तमबुद्धित्वात् पुंसामिति। पादवत्— यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोः, चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते, चत्वारश्च अग्न्यादय आ-

काशसंबन्धिनः— आध्यानाय— तद्वत् । अथवा पादव-
दिति— यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय
कल्प्यते— न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना
व्यवहर्तुमीशते, क्रयविक्रये परिमाणानियमात्—तद्वदित्यर्थः ॥

**स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥**

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारोऽभि-
धीयते । यदप्युक्तम्— संबन्धव्यपदेशात् भेदव्यपदेशाच्च
परमतः स्यादिति, तदप्यसत्; यत एकस्यापि स्थानविशे-
षापेक्षया एतौ व्यपदेशावुपपद्येते । संबन्धव्यपदेशे तावद-
यमर्थः— बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशे-
षविज्ञानस्य उपाध्युपशमे य उपशमः, स परमात्मना संब-
न्धः— इत्युपाध्यपेक्षया उपचर्यते, न परिमितत्वापेक्षया ।
तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैव उपचर्यते,
न स्वरूपभेदापेक्षया । प्रकाशादिवदिति उपमोपादानम्—यथा
एकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वा उपाधियोगादुप-
जातविशेषस्य उपाध्युपशमात्संबन्धव्यपदेशो भवति, उपा-
धिभेदाच्च भेदव्यपदेशः; यथा वा सूचीपाशाकाशादिषूपा-
ध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतः— तद्वत् ॥

**उपपत्तेश्च ॥ ३५ ॥**

उपपद्यते च अत्र ईदृश एव संबन्धः, नान्यादृशः— 'स्वमपीतो भवति' इति हि स्वरूपसंबन्धमेनमामनन्ति ; स्वरूपस्य च अनपायित्वात् न नरनगरन्यायेन संबन्धो घटते ; उपाधिकृतस्वरूपतिरोभावात्तु 'स्वमपीतो भवति' इत्युपपद्यते । तथा भेदोऽपि नान्यादृशः संभवति, बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात् ; तथा च श्रुतिरेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति— 'योऽयं बहिर्धा पुरुषादाकाशः' 'योऽयमन्तः पुरुष आकाशः' 'योऽयमन्तर्हृदय आकाशः' इति ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

एवं सेत्वादिव्यपदेशान् परपक्षहेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरेणोपसंहरति । तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते ; तथा हि— 'स एवाधस्तात्... अहमेवाधस्तात्' 'आत्मैवाधस्तात्' 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' 'नेह नानास्ति किंचन' 'यस्मात्परं नापरमस्ति किंचित्' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इत्येवमादीनि वाक्यानि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति । सर्वान्तरश्रुतेश्च न पर-

मात्मनोऽन्यः अन्तरात्मा अस्तीत्यवगम्यते ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति; अन्यथा हि तन्न सिध्येत् । सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्; तथा अन्यप्रतिषेधेऽप्यसति, वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एव आत्मनः प्रसज्येत । सर्वगतत्वं च अस्य आयामशब्दादिभ्योऽवगम्यते; आयामशब्दः व्याप्तिवचनः शब्दः; 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' 'आकाशवत्सर्वगतश्च नित्यः' 'ज्यायान्दिवः' 'ज्यायानाकाशात्'— 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥

## फलमत उपपत्तेः ॥ ३८ ॥

तस्यैव ब्रह्मणो व्यावहारिक्याम् ईशित्रीशितव्यविभागावस्थायाम्, अयमन्यः स्वभावो वर्ण्यते । यदेतत् इष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनाम्, किमेतत् कर्मणो

८. फलाधिकरणम् ।

भवति, आहोस्विदीश्वरादिति भवति विचारणा । तत्र तावत्प्रतिपाद्यते— फलम् अतः ईश्वरात् भवितुमर्हति ; कुतः ? उपपत्तेः ; स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् विचित्रान विदधत् देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते ; कर्मणस्तु अनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम् , अभावाद्भावानुत्पत्तेः । स्यादेतत्— कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति ; तदपि न परिशुध्यति, प्राग्भोक्तृसंबन्धात् फलत्वानुपपत्तेः— यत्कालं हि यत् सुखं दुःखं वा आत्मना भुज्यते, तस्यैव लोके फलत्वं प्रसिद्धम् ; न हि असंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः । अथोच्येत— मा भूत्कर्मानन्तरं फलोत्पादः, कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति, तदपि नोपपद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्ठसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः, तदस्तित्वे एव प्रमाणाभावात् ; अर्थापत्तिः प्रमाणमिति चेत् , न, ईश्वरसिद्धेरर्थापत्तिक्षयात् ॥

## श्रुतत्वाच्च ॥ ३९ ॥

न केवलम् उपपत्तेरेव ईश्वरं फलहेतुं कल्पयामः, किं तर्हि श्रुतत्वादपि ईश्वरमेव फलहेतुं मन्यामहे, तथा च श्रुतिर्भवति

—'स वा एष महानज आत्मान्नादो वसुदानः' इत्येवंजातीयका ॥

## धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते, अत एव हेतोः— श्रुतेः उपपत्तेश्च । श्रूयते तावदयमर्थः 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु; तत्र च विधिश्रुतेर्विषयभावोपगमात् यागः स्वर्गस्योत्पादक इति गम्यते; अन्यथा हि अननुष्ठातृको याग आपद्येत; तत्र अस्य उपदेशवैयर्थ्यं स्यात् । ननु अनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति, परित्यक्तोऽयं पक्षः; नैष दोषः, श्रुतिप्रामाण्यात्—श्रुतिश्चेत् प्रमाणम्, यथायं कर्मफलसंबन्धः श्रुत उपपद्यते, तथा कल्पयितव्यः; न च अनुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति; अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्था अपूर्वं नाम अस्तीति तर्क्यते । उपपद्यते च अयमर्थ उक्तेन प्रकारेण । ईश्वरस्तु फलं ददातीत्यनुपपन्नम्, अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेः वैषम्यनैर्घृण्यप्रसङ्गात्, तदनुष्ठानवैयर्थ्यापत्तेश्च । तस्मात् धर्मादेव फलमिति ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेव ईश्वरं फलहेतुं मन्यते। केवलात्कर्मणः अपूर्वाद्वा केवलात् फलमित्ययं पक्षः तु-शब्देन व्यावर्त्यते। कर्मापेक्षात् अपूर्वापेक्षाद्वा यथा तथास्तु ईश्वरात्फलमिति सिद्धान्तः; कुतः? हेतुव्यपदेशात्; धर्माधर्मयोरपि हि कारयितृत्वेन ईश्वरो हेतुः व्यपदिश्यते, फलस्य च दातृत्वेन— 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति; स्मर्यते च अयमर्थो भगवद्गीतासु— 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान्हितान्' इति। सर्ववेदान्तेषु च ईश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते; तदेव च ईश्वरस्य फलहेतुत्वम्, यत् स्वकर्मानुरूपाः प्रजाः सृजति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**शारीरकमीमांसासूत्रभाष्ये**
**तृतीयाध्यायस्य द्वितीयः पादः॥**

## तृतीयः पादः ॥

—*—

व्याख्यातं विज्ञेयस्य ब्रह्मणः तत्त्वम्; इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते, न वेति विचार्यते। ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितम् एकरसं सैन्धवघनवत् अवधारितम्; तत्र कुतो विज्ञानभेदाभेदचिन्तावसरः? न हि कर्मबहुत्ववत् ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्, ब्रह्मण एकत्वात् एकरूपत्वाच्च; न च एकरूपे ब्रह्मणि अनेकरूपाणि विज्ञानानि संभवन्ति; न हि—अन्यथा अर्थः अन्यथा ज्ञानम्—इत्यभ्रान्तं भवति; यदि पुनः एकस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तेषु प्रतिपिपादयिषितानि, तेषाम् एकमभ्रान्तम्, भ्रान्तानि इतराणीति अनाश्वासप्रसङ्गो वेदान्तेषु; तस्मान्न तावत्प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। नाप्यस्य चोदनाद्यविशेषादभेद उच्येत, ब्रह्मविज्ञानस्य अचोदनालक्षणत्वात्; अविधिप्रधानैर्हि वस्तुपर्यवसायिभिः ब्रह्मवाक्यैः

ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः ‘तत्तु समन्वयात्’ इत्यत्र। तत्कथमिमां भेदाभेदचिन्तामारभत इति ॥

तदुच्यते— सगुणब्रह्मविषया प्राणादिविषया च इयं विज्ञानभेदाभेदचिन्तेत्यदोषः। अत्र हि कर्मवत् उपासनानां भेदाभेदौ संभवतः; कर्मवदेव च उपासनानि दृष्टफलानि अदृष्टफलानि च उच्यन्ते, क्रममुक्तिफलानि च कानिचित् सम्यग्दर्शनोत्पत्तिद्वारेण। तेषु एषा चिन्ता संभवति— किं प्रतिवेदान्तं विज्ञानभेदः, आहोस्वित् नेति ॥

तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते— नाम्नस्तावत् भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु; अस्ति च अत्र वेदान्तान्तरविहितेषु विज्ञानेषु अन्यदन्यत् नाम— तैत्तिरीयकं वाजसनेयकं कौथुमकं कौषीतकं शाट्यायनकमित्येवमादि। तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः—‘वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्’ इत्येवमादिषु; अस्ति च अत्र रूपभेदः; तद्यथा— केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति, अपरे पुनः पञ्चैव पठन्ति; तथा प्राणसंवादादिषु केचित् ऊनान्वागादीनामनन्ति, केचिदधिकान्। तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कारीर्यादिषु; अस्ति च अत्र धर्मविशेषः; यथा आथ-

वैणिकानां शिरोव्रतमिति । एवं पुनरुक्त्यादयोऽपि भेदहेतवः यथासंभवं वेदान्तान्तरेषु योजयितव्याः । तस्मात् प्रतिवेदान्तं विज्ञानभेद इत्येवं प्राप्ते, ब्रूमः—

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिन् तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति; कुतः? चोदनाद्यविशेषात्; आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते— संयोगरूपचोदनाख्याविशेषादित्यर्थः । यथा एकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते— जुहुयादिति, एवम् 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना । प्रयोजनसंयोगोऽप्यविशिष्ट एव—'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति । रूपमप्युभयत्र तदेव विज्ञानस्य, यदुत ज्येष्ठश्रेष्ठादिविशेषणान्वितं प्राणतत्त्वम्— यथा च द्रव्यदेवते यागस्य रूपम्, एवं विज्ञेयं रूपं विज्ञानस्य; तेन हि तत् रूप्यते । समाख्यापि सैव— प्राणविद्येति । तस्मात् सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम् । एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्येत्येवमादिष्वपि योजयितव्यम् । ये तु नामरूपादयो भेदहे-

१. सर्ववेदान्तप्रत्ययाधिकरणम् ।

त्वाभासाः, ते प्रथम एव काण्डे 'न नाम्ना स्यादचोदनाभिधानत्वात्' इत्यारभ्य परिहृताः ॥

इहापि कंचिद्विशेषमाशङ्क्य परिहरति—

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्यादेतत्— सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदात् नोपपद्यते ; तथा हि— वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति— 'तस्याग्निरेवाग्निर्भवति' इत्यादिना ; छन्दोगास्तु तं न आमनन्ति, पञ्चसंख्ययैव च ते उपसंहरन्ति— 'अथ ह य एतानेवं पञ्चाग्नीन्वेद' इति ; येषां च स गुणोऽस्ति, येषां च नास्ति, कथमुभयेषामेका विद्योपपद्येत ? न च अत्र गुणोपसंहारः शक्यते प्रत्येतुम्, पञ्चसंख्याविरोधात् । तथा प्राणसंवादे श्रेष्ठात् अन्यान् चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति ; वाजसनेयिनस्तु पञ्चममप्यामनन्ति—'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' इति ; आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदः, द्रव्यदेवताभेदादिव यागस्येति चेत्— नैष दोषः ; यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते ; यद्यपि षष्ठस्याग्नेरुपसंहारो

न संभवति, तथापि द्युप्रभृतीनां पञ्चानामग्नीनाम् उभयत्र प्रत्यभिज्ञायमानत्वात् न विद्याभेदो भवितुमर्हति ; न हि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते । पठ्यतेऽपि च षष्ठोऽग्निः छन्दोगैः— 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' इति ; वाजसनेयिनस्तु सांपादिकेषु पञ्चस्वग्निषु अनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' इत्यादि समामनन्ति ; स नित्यानुवादः ; अथाप्युपासनार्थ एष वादः, तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम् । न च अत्र पञ्चसंख्याविरोध आशङ्क्यः ; सांपादिकाग्न्यभिप्राया हि एषा पञ्चसंख्या नित्यानुवादभूता, न विधिसमवायिनी— इत्यदोषः । एवं प्राणसंवादादिष्वपि अधिकस्य गुणस्य इतरत्रोपसंहारो न विरुध्यते । न च आवापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्च आशङ्क्यः, कस्यचिद्वेद्यांशस्य आवापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात् । तस्मादैकविद्यमेव ॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यदप्युक्तम्—आथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणात् अन्येषां च तदनपेक्षणात् विद्याभेद इति, तत्प्रत्यु-

च्यते । स्वाध्यायस्य एष धर्मः, न विद्यायाः; कथमिदमवगम्यते? यतः, तथात्वेन स्वाध्यायधर्मत्वेन, समाचारे वेदव्रतोपदेशपरे ग्रन्थे, आथर्वणिकाः 'इदमपि वेदव्रतत्वेन व्याख्यातम्' इति समामनन्ति; 'नैतदचीर्णव्रतोऽधीते' इति च अधिकृतविषयादेतच्छब्दात् अध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एव एष इति निर्धार्यते । ननु 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति ब्रह्मविद्यासंयोगश्रवणात्, एकैव सर्वत्र ब्रह्मविद्येति, संकीर्येत एष धर्मः—न, तत्रापि एतामिति प्रकृतप्रत्यवमर्शात्; प्रकृतत्वं च ब्रह्मविद्यायाः ग्रन्थविशेषापेक्षम्—इति ग्रन्थविशेषसंयोग्येव एष धर्मः । सववच्च तन्नियम इति निदर्शननिर्देशः—यथा च सवाः सप्त सौर्यादयः शतौदनपर्यन्ताः वेदान्तरोदितत्रेताग्न्यनभिसंबन्धात् आथर्वणोदितैकाग्न्यभिसंबन्धाच्च आथर्वणिकानामेव नियम्यन्ते, तथैव अयमपि धर्मः स्वाध्यायविशेषसंबन्धात् तत्रैव नियम्यते । तस्मादप्यनवद्यं विद्यैकत्वम् ॥

## दर्शयति च ॥ ४ ॥

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात्—'सर्वे वेदा यत्पदमामनन्ति' इति, 'तथैतं ह्येव

बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः’ इति च । तथा ‘महद्भयं वज्रमुद्यतम्’, इति काठके उक्तस्य ईश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते—‘यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य’ इति । तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम्—‘यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते’ इति । तथा सर्ववेदान्तप्रत्ययत्वेन अन्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानाय उपादानात् प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानाम्, अन्यत्रोदितानां विज्ञानगुणानाम्, अन्यत्रापि समाने विज्ञाने उपसंहारो भवति; अर्थाभेदात्—य एव हि तेषां गुणानामेकत्र अर्थो विशिष्टविज्ञानोपकारः, स एव अन्यत्रापि; उभयत्रापि हि तदेवैकं विज्ञानम्; तस्मादुपसंहारः । विधिशेषवत्

२. उपसंहाराधिकरणम् ।

—यथा विधिशेषाणामग्निहोत्रादिधर्माणाम, तदेव एकमग्निहोत्रादि कर्म सर्वत्रेति, अर्थाभेदात् उपसंहरणम्; एवमिहापि। यदि हि विज्ञानभेदो भवेत्, ततो विज्ञानान्तरनिबद्धत्वाद्गुणानाम, प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः; विज्ञानैकत्वे तु नैवमिति। अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः 'सर्वाभेदात्' इत्यारभ्य भविष्यति ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' 'ते ह वाचमूचुस्त्वं न उद्गाय' इति प्रक्रम्य, वागादीन्प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा, मुख्यप्राणपरिग्रहः पठ्यते— 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति। तथा छान्दोग्येऽपि 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' इति प्रक्रम्य, इतरान्प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा, तथैव मुख्यप्राणपरिग्रहः पठ्यते— 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' इति। उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते। तत्र संशयः— किमत्र विद्या-

३. अन्यथात्वाधिकरणम्।

भेदः स्यात्, आहोस्वित् विद्यैकत्वमिति । किं तावत्प्राप्तम्? पूर्वेण न्यायेन विद्यैकत्वमिति । ननु न युक्तं विद्यैकत्वम्, प्रक्रमभेदात्; अन्यथा हि प्रक्रमन्ते वाजसनेयिनः, अन्यथा छन्दोगाः— 'त्वं न उद्गाय' इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगास्तु उद्गीथत्वेन 'तमुद्गीथमुपासांचक्रिरे' इति; तत्कथं विद्यैकत्वं स्यादिति चेत्— नैष दोषः; न हि एतावता विशेषेण विद्यैकत्वम् अपगच्छति, अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्; तथा हि— देवासुरसंग्रामोपक्रमत्वम्, असुरात्ययाभिप्रायः, उद्गीथोपन्यासः, वागादिसंकीर्तनम्, तन्निन्दया मुख्यप्राणव्यपाश्रयः, तद्वीर्याच्च असुरविध्वंसनम् अश्मलोष्टनिदर्शनेन— इत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि च उद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम्— 'एष उ वा उद्गीथः' इति । तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम् । तस्माच्च विद्यैकत्वमिति ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

न वा विद्यैकत्वमत्र न्याय्यम्; विद्याभेद एव अत्र न्याय्यः; कस्मात्? प्रकरणभेदात्, प्रक्रमभेदादित्यर्थः; तथा

हि इह प्रक्रमभेदो दृश्यते—छान्दोग्ये तावत्—‘ओमित्येतदक्षरमुद्गीथमुपासीत’ इत्येवमुद्गीथावयवस्य ओंकारस्य उपास्यत्वं प्रस्तुत्य, रसतमत्वादिगुणोपव्याख्यानं तत्र कृत्वा, अथ ‘खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति’ इति पुनरपि तमेव उद्गीथावयवमोंकारमनुवर्त्य, देवासुराख्यायिकाद्वारेण तम् ‘प्राणमुद्गीथमुपासांचक्रिरे’ इत्याह; तत्र यदि उद्गीथशब्देन सकला भक्तिरभिप्रेयेत, तस्याश्च कर्ता उद्गाता ऋत्विक्, तत उपक्रमश्चोपरुध्येत, लक्षणा च प्रसज्येत; उपक्रमतन्त्रेण च एकस्मिन्वाक्ये उपसंहारेण भवितव्यम्; तस्मात् अत्र तावत् उद्गीथावयवे ओंकारे प्राणदृष्टिरुपदिश्यते—वाजसनेयके तु उद्गीथशब्देन अवयवग्रहणे कारणाभावात् सकलैव भक्तिरावेद्यते; ‘त्वं न उद्गाय’ इत्यपि तस्याः कर्ता उद्गाता ऋत्विक् प्राणत्वेन निरूप्यत इति—प्रस्थानान्तरम्। यदपि तत्र उद्गीथसामानाधिकरण्यं प्राणस्य, तदपि उद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति। सकलभक्तिविषय एव च तत्रापि उद्गीथशब्द इति वैषम्यम्। न च प्राणस्योद्गातृत्वम् असंभवेन हेतुना परित्यज्यते, उद्गीथभाववत् उद्गातृभावस्यापि उपासनार्थत्वेन उपदिश्यमानत्वात्; प्राणवीर्येणैव

च उद्गाता औद्गात्रं करोतीति नास्त्यसंभवः; तथा च तत्रैव श्रावितम्—'वाचा च ह्येव स प्राणेन चोदगायत्' इति । न च विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छायानुकारमात्रेण समानार्थत्वमध्यवसातुं युक्तम्; तथा हि—अभ्युदयवाक्ये पशुकामवाक्ये च 'त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' इत्यादिनिर्देशसाम्येऽपि, उपक्रमभेदात् अभ्युदयवाक्ये देवतापनयोऽध्यवसितः, पशुकामवाक्ये तु यागविधिः—तथा इहापि उपक्रमभेदात् विद्याभेदः । परोवरीयस्त्वादिवत्— यथा परमात्मदृष्ट्यध्याससाम्येऽपि, 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इति परोवरीयस्त्वगुणविशिष्टम् उद्गीथोपासनम् अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनात् भिन्नम्; न च इतरेतरगुणोपसंहार एकस्यामपि शाखायाम्— तद्वत् शाखान्तरस्थेष्वपि एवंजातीयकेषु उपासनेष्विति ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत— संज्ञैकत्वात् विद्यैकत्वमत्र न्याय्यम्, उद्गीथविद्येत्युभयत्रापि एका संज्ञेति, तदपि नोपपद्यते; उक्तं ह्येतत्— 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' इति;

तदेव च अत्र न्याय्यतरं श्रुत्यक्षरानुगतं हि; तत्र संज्ञैकत्वं तु श्रुत्यक्षरबाह्यम् उद्गीथशब्दमात्रयोगात् लौकिकैर्व्यवहर्तृभिरुपचर्यते। अस्ति च एतत्संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषु— उद्गीथविद्येति; तथा प्रसिद्धभेदानामपि अग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते, तथेहापि भविष्यति। यत्र तु नास्ति कश्चित् एवंजातीयको भेदहेतुः, तत्र भवतु संज्ञैकत्वात् विद्यैकत्वम्— यथा संवर्गविद्यादिषु ॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्र अक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणे अध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभासनात् कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः। तत्र अध्यासो

४. व्याप्त्यधिकरणम्।

नाम—द्वयोर्वस्तुनोः अनिवर्तितायामेव अन्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते; यस्मिन् इतरबुद्धिरध्यस्यते, अनुवर्तत एव तस्मिन् तद्बुद्धिः, अध्यस्तेतरबुद्धावपि— यथा नाम्नि ब्रह्मबुद्धावध्यस्यमानायामपि अनुवर्तत एव नामबुद्धिः, न ब्रह्मबुद्ध्या निवर्तते— यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः— एवमिहापि अक्षरे उद्गीथबुद्धिरध्यस्येत, उद्गीथे वा अक्ष-

रबुद्धिरिति । अपवादो नाम— यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायाम्, पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेः निवर्तिका भवति —यथा देहेन्द्रियसंघाते आत्मबुद्धिः, आत्मन्येव आत्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्वमसि' इत्यनया यथार्थबुद्ध्या निवर्त्यते— यथा वा दिग्भ्रान्तिबुद्धिः दिग्याथात्म्यबुद्ध्या निवर्त्यते— एवमिहापि अक्षरबुद्ध्या उद्गीथबुद्धिर्निवर्त्येत, उद्गीथबुद्ध्या वा अक्षरबुद्धिरिति । एकत्वं तु अक्षरोद्गीथशब्दयोरनतिरिक्तार्थवृत्तित्वम्— यथा द्विजोत्तमो ब्राह्मणो भूमिदेव इति । विशेषणं पुनः सर्ववेदव्यापिन ओमित्येतस्याक्षरस्य ग्रहणप्रसङ्गे औद्गात्रविशेषस्य समर्पणम्— यथा नीलं यदुत्पलम् तदानयेति, एवमिहापि उद्गीथो य ओंकारः तमुपासीतेति । एवमेतस्मिन्सामानाधिकरण्यवाक्ये विमृश्यमाने, एते पक्षाः प्रतिभान्ति; तत्रान्यतमनिर्धारणकारणाभावात् अनिर्धारणप्राप्तौ—

इदमुच्यते— व्याप्तेश्च समञ्जसमिति । च-शब्दोऽयं तु-शब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः । तदिह त्रयः पक्षाः सावद्या इति पर्युदस्यन्ते; विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावत्— या बुद्धिः इतरत्र अ-

ध्यस्यते, तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येत, तत्फलं च कल्प्येत; श्रूयत एव फलम्, 'आपयिता ह वै कामानां भवति' इत्यादि, इति चेत्—तन्न, तस्य अन्यफलत्वात्; आप्त्यादिदृष्टिफलं हि तत्, नोद्गीथाध्यासफलम्। अपवादेऽपि समानः फलाभावः; मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न; पुरुषार्थोपयोगानवगमात्; न च कदाचिदपि ओंकारात् ओंकारबुद्धिर्निवर्तेत, उद्गीथाद्वा उद्गीथबुद्धिः; न चेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरम्, उपासनाविधिपरत्वात्। नापि एकत्वपक्षः संगच्छते; निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्, एकेनैव विवक्षितार्थसमर्पणात्। न च हौत्रविषये आध्वर्यवविषये वा अक्षरे ओंकारशब्दवाच्ये उद्गीथशब्दप्रसिद्धिरस्ति, नापि सकलायाम् साम्नो द्वितीयायां भक्तौ उद्गीथशब्दवाच्यायाम् ओंकारशब्दप्रसिद्धिः, येनानतिरिक्तार्थता स्यात्। परिशेषाद्विशेषणपक्षः परिगृह्यते, व्याप्तेः सर्ववेदसाधारण्यात्; सर्वव्याप्यक्षरमिह मा प्रसञ्जि— इत्यत उद्गीथशब्देन अक्षरं विशेष्यते— कथं नाम उद्गीथावयवभूत ओंकारो गृह्येतेति। नन्वस्मिन्नपि पक्षे समाना लक्षणा, उद्गीथशब्दस्य अवयवलक्षणार्थत्वात्; सत्यमेवमेतत्; लक्षणायामपि तु संनिकर्षविप्रकर्षौ भवत एव; अध्यासपक्षे हि

अर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा, विशेषणपक्षे तु अवयवविवचनेन शब्देन अवयवः समर्प्यत इति संनिकृष्टा; समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तमाना दृष्टाः पटग्रामादिषु। अतश्च व्याप्तेर्हेतोः 'ओमित्येतदक्षरम्' इत्येतस्य 'उद्गीथम्' इत्येतद्विशेषणमिति समञ्जसमेतत्, निरवद्यमित्यर्थः ॥

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्य उपास्यत्वमुक्तम्; वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः; ते च गुणाः प्राणे पुनः प्रत्यर्पिताः—'यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि' इत्यादिना। अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानमेता ह वै देवता अहंश्रेयसे विवदमानाः' इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तम्, न त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः। तत्र संशयः—किमिमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्रापि अस्येरन्, उत नास्येरन्निति। तत्र प्राप्तं तावत्— नास्येरन्निति; कुतः? एवं-शब्दसंयोगात्; 'अथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' इति हि तत्र तत्र

(५. सर्वाभेदाधिकरणम्।)

एवं-शब्देन वेद्यं वस्तु निवेद्यते; एवं-शब्दश्च संनिहितावलम्बनः न शाखान्तरपरिपठितम् एवंजातीयकं गुणजातं शक्नोति निवेदयितुम्; तस्मात् स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमित्येवं प्राप्ते—

प्रत्याह— अस्येरन् इमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयः अन्यत्रापि; कुतः? सर्वाभेदात्— सर्वत्रैव तदेव एकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते, प्राणसंवादादिसारूप्यात्; अभेदे च विज्ञानस्य कथम् इमे गुणाः क्वचिदुक्ता अन्यत्र न अस्येरन्। ननु एवं-शब्दः तत्र तत्र भेदेन एवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम्; अत्रोच्यते— यद्यपि कौषीतकिब्राह्मणगतेन एवं-शब्देन वाजसनेयिब्राह्मणगतं गुणजातम् असंशब्दितम् असंनिहितत्वात्, तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेन एवं-शब्देन तत् संशब्दितमिति—न परशाखागतमपि अभिन्नविज्ञानावबद्धं गुणजातं स्वशाखागताद्विशिष्यते; न चैवं सति श्रुतहानिः अश्रुतकल्पना वा भवति; एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात्; न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धः देशान्तरं गतः तद्देश्यैरविभावितशौर्यादिगुणोऽपि अतद्गुणो भवति; यथा च तत्र परिचय-

विशेषात् देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते, एवम् अभियोगविशेषात् शाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽभ्यस्येरन् । तस्मादेकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैव उपसंहर्तव्या इति ॥

## आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वमित्येवंजातीयका ब्रह्मणो धर्माः क्वचित् केचिन् श्रूयन्ते । तेषु संशयः— किमानन्दादयो ब्रह्मधर्माः यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः, किं वा सर्वे सर्वत्रेति । तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायाम्, इदमुच्यते— आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः; कस्मात्? सर्वाभेदादेव— सर्वत्र हि तदेव एकं प्रधानं विशेष्यं ब्रह्म न भिद्यते; तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणाम्— तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन ॥

६. आनन्दाद्यधिकरणम् ।

ननु एवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन्; तथा हि तैत्तिरीयके आनन्दमयमात्मानं प्रक्रम्य आम्नायते— ‘तस्य प्रियमेव शिरः । मोदो दक्षिणः

पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' इति । अत उत्तरं पठति—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्ति अन्यत्र प्राप्तिः, यत्कारणम्—प्रियं मोदः प्रमोद आनन्द इत्येते—परस्परापेक्षया भोक्त्रन्तरापेक्षया च उपचितापचितरूपा उपलभ्यन्ते; उपचयापचयौ च सति भेदे संभवतः; निर्भेदं तु ब्रह्म 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभ्यः। न च एते प्रियशिरस्त्वादयो ब्रह्मधर्माः; कोशधर्मास्तु एते इत्युपदिष्टमस्माभिः 'आनन्दमयोऽभ्यासात्' इत्यत्र । अपि च परस्मिन् ब्रह्मणि चित्तावतारोपायमात्रत्वेन एते परिकल्प्यन्ते, न द्रष्टव्यत्वेन; एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम् । ब्रह्मधर्मांस्तु एतान्कृत्वा न्यायमात्रमिदम् आचार्येण प्रदर्शितम्— प्रियशिरस्त्वाद्यप्राप्तिरिति; स च न्यायः अन्येषु निश्चितेषु ब्रह्मधर्मेषु उपासनायोपदिश्यमानेषु नेतव्यः— संयद्वामत्वादिषु सत्यकामत्वादिषु च; तेषु हि सत्यपि उपास्यस्य ब्रह्मण एकत्वे, प्रक्रमभेदादुपासनाभेदे सति, न अन्योन्यधर्माणाम् अन्योन्यत्र प्राप्तिः; यथा

च द्वे नार्यौ एकं नृपतिमुपासाते— छत्रेण अन्या चामरेण अन्या— तत्रोपास्यैकत्वेऽपि उपासनभेदो धर्मव्यवस्था च भवति— एवमिहापीति। उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते, न निर्गुणे परस्मिन्ब्रह्मणि। अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः॥

## इतरे त्वर्थसामान्यात्॥ १३॥

इतरे तु आनन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपादनायैव उच्यमानाः, अर्थसामान्यात् प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्, सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यम्—प्रतिपत्तिमात्रप्रयोजना हि ते इति॥

## आध्यानाय प्रयोजनाभावात्॥ १४॥

७. आध्यानाधिकरणम्।

काठके हि पठ्यते—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः' इत्यारभ्य 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति। तत्र संशयः—किमिमे सर्व एव अर्थादयः ततस्ततः परत्वेन प्रतिपाद्यन्ते, उत पुरुष एव एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति। तत्र

तावत् सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः; तथा हि श्रूयते—इदमस्मात्परम्, इदमस्मात्परमिति। ननु बहुष्वर्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्; नैष दोषः, वाक्यबहुत्वोपपत्तेः; बहून्येव हि एतानि वाक्यानि प्रभवन्ति बहूनर्थान् परत्वोपेतान् प्रतिपादयितुम्। तस्मात् प्रत्येकमेषां परत्वप्रतिपादनमित्येवं प्राप्ते—

ब्रूमः—पुरुष एव हि एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तम्, न प्रत्येकमेषां परत्वप्रतिपादनम्; कस्मात्? प्रयोजनाभावात्; न हि इतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते, श्रूयते वा; पुरुषे तु इन्द्रियादिभ्यः परस्मिन् सर्वानर्थव्रातातीते प्रतिपन्ने दृश्यते प्रयोजनम्, मोक्षसिद्धिः; तथा च श्रुतिः—'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' इति। अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयन् पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति। आध्यानायेति—आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः; सम्यग्दर्शनार्थमेव हि इह आध्यानमुपदिश्यते, न तु आध्यानमेव स्वप्रधानम् ॥

## आत्मशब्दाच्च ॥ १५ ॥

इतश्च पुरुषप्रतिपत्त्यर्थैव इयमिन्द्रियादिप्रवाहोक्तिः, य-

त्कारणम् 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति प्रकृतं पुरुषम् आत्मेत्याह ; अतश्च अनात्मत्वमितरेषां विवक्षितमिति गम्यते ; तस्यैव च दुर्विज्ञानतां संस्कृतमतिगम्यतां च दर्शयति; तद्विज्ञानायैव च—'यच्छेद्वाङ्मनसी प्राज्ञः' इति आध्यानं विदधाति । तत् व्याख्यातम् 'आनुमानिकमप्येकेषाम्' इत्यत्र । एवम् अनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते, नेतरेषु । अपि च 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्युक्ते, किं तत् अध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायाम् इन्द्रियाद्यनुक्रमणात् परमपदप्रतिपत्त्यर्थ एवायम् आम्नाय इत्यवसीयते ॥

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

८. आत्मगृहीत्यधिकरणम् ।

ऐतरेयके श्रूयते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापः' इत्यादि । तत्र संशयः— किं पर एवात्मा इह आत्मशब्देनाभिलप्यते, उत अन्यः कश्चिदिति । किं तावत्प्राप्तम्? न परमात्मा इह आत्मशब्दाभिलप्यो भवितुमर्हतीति; कस्मात्? वाक्यान्वयदर्शनात् । ननु वाक्यान्वयः

सुतरां परमात्मविषयो दृश्यते, प्रागुत्पत्तेः आत्मैकत्वावधारणात्, ईक्षणपूर्वकस्रष्टृत्ववचनाच्च; नेत्युच्यते, लोकसृष्टिवचनात्—परमात्मनि हि स्रष्टरि परिगृह्यमाणे, महाभूतसृष्टिः आदौ वक्तव्या; लोकसृष्टिस्तु इह आदावुच्यते; लोकाश्च महाभूतसंनिवेशविशेषाः; तथा च अम्भःप्रभृतीन् लोकत्वेनैव निर्ब्रवीति— 'अदोऽम्भः परेण दिवम्' इत्यादिना। लोकसृष्टिश्च परमेश्वराधिष्ठितेन अपरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते; तथा हि श्रुतिर्भवति— 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्याद्या; स्मृतिरपि— 'स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति; ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति; आत्मशब्दोऽपि तस्मिन्प्रयुज्यमानो दृश्यते— 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्यत्र। एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते; ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम्। अपि च 'ताभ्यो गामानयत्' 'ताभ्योऽश्वमानयत्' 'ताभ्यः पुरुषमानयत्' 'ता अब्रुवन्' इत्येवंजातीयको भूयान् व्यापारविशेषः लौकिकेषु विशेषवत्सु आत्मसु प्रसिद्धः इहानुग-

क्ष्यते । तस्मात् विशेषवानेव कश्चिदिह आत्मा स्यादित्येवं प्राप्ते—

ब्रूमः— पर एव आत्मा इह आत्मशब्देन गृह्यते ; इतरवत्— यथा इतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्येवमादिषु परस्यात्मनो ग्रहणम्, यथा च इतरस्मिन् लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते— तथा इहापि भवितुमर्हति । यत्र तु 'आत्मैवेदमग्र आसीत्' इत्येवमादौ 'पुरुषविधः' इत्येवमादि विशेषणान्तरं श्रूयते, भवेत् तत्र विशेषवत आत्मनो ग्रहणम् ; अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमपि उत्तरम् उपलभ्यते—'स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजत इत्येवमादि ; तस्मात् तस्यैव ग्रहणमिति न्याय्यम् ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

वाक्यान्वयदर्शनात् न परमात्मग्रहणमिति पुनः यदुक्तम्, तत्परिहर्तव्यमिति—अत्रोच्यते—स्यादवधारणादिति । भवेदुपपन्नं परमात्मनो ग्रहणम्; कस्मात्? अवधारणात्; परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते ; अन्यथा हि अनाञ्जसं तत्परिकल्प्येत । लोकसृष्टिवचनं तु

श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि; यथा 'तत्तेजोऽसृजत' इत्येतत् श्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमिति अयूयुजम, एवमिहापि; श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषु उपसंहर्तव्यो भवति। योऽपि अयं व्यापारविशेषानुगमः 'ताभ्यो गामानयत्' इत्येवमादिः, सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः; न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम, तत्प्रतिपत्तौ पुरुषार्थाभावात्; ब्रह्मात्मत्वं तु इह विवक्षितम्; तथा हि—अम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा, करणानि करणायतनं च शरीरमुपदिश्य, स एव स्रष्टा 'कथं न्विदं मदृते स्यात' इति वीक्ष्य, इदं शरीरं प्रविवेशेति दर्शयति—'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' इति; पुनश्च 'यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्' इत्येवमादिना करणव्यापारविवेचनपूर्वकम् 'अथ कोऽहम्' इति वीक्ष्य, 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' इति ब्रह्मात्मत्वदर्शनमवधारयति; तथोपरिष्टात्—'एष ब्रह्मैष इन्द्रः' इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य, 'सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति ब्रह्मात्मत्वदर्श-

नमेव अवधारयति । तस्मात् इह आत्मगृहीतिरित्यनपवादम् ॥

अपरा योजना—**आत्मगृहीतिरितरवदुत्तरात्** । वाजसनेयके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यात्मशब्देनोपक्रम्य, तस्यैव सर्वसङ्गविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति ; तथा हि उपसंहरति— 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' इति । छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति अन्तरेणैवात्मशब्दम् उपक्रम्य उदर्के 'स आत्मा तत्त्वमसि' इति तादात्म्यमुपदिशति । तत्र संशयः—तुल्यार्थत्वं किमनयोराम्नानयोः स्यात्, अतुल्यार्थत्वं वेति । अतुल्यार्थत्वमिति तावत् प्राप्तम्, अतुल्यत्वादाम्नानयोः ; न हि आम्नानवैषम्ये सति अर्थसाम्यं युक्तं प्रतिपत्तुम्, आम्नानतन्त्रत्वादर्थपरिग्रहस्य ; वाजसनेयके च आत्मशब्दोपक्रमात् आत्मतत्त्वोपदेश इति गम्यते ; छान्दोग्ये तु उपक्रमविपर्ययात् उपदेशविपर्ययः । ननु छन्दोगानामपि अस्त्युदर्के तादात्म्योपदेश इत्युक्तम् ; सत्यमुक्तम्, उपक्रमतन्त्रत्वादुपसंहारस्य, तादात्म्यसंपत्तिः सा—इति मन्यते । तथा प्राप्ते, अभिधीयते—आत्मगृहीतिः 'सदेव सो-

स्येदमग्र आसीत्' इत्यत्र च्छन्दोगानामपि भवितुमर्हति; इतरवत्—यथा 'कतम आत्मा' इत्यत्र वाजसनेयिनामात्मगृहीतिः, तथैव; कस्मात्? उत्तरात् तादात्म्योपदेशात्। **अन्वयादिति चेत्स्यादवधारणात्**—यदुक्तम्, उपक्रमान्वयात् उपक्रमे च आत्मशब्दश्रवणाभावात् न आत्मगृहीतिरिति, तस्य कः परिहार इति चेत्, सोऽभिधीयते—स्यादवधारणादिति। भवेदुपपन्ना इह आत्मगृहीतिः, अवधारणात्; तथा हि—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इत्येकविज्ञानेन सर्वविज्ञानमवधार्य, तत्संपिपादयिषया 'सदेव' इत्याह; तच्च आत्मगृहीतौ सत्यां संपद्यते; अन्यथा हि, योऽयं मुख्य आत्मा स न विज्ञात इति, नैव सर्वविज्ञानं संपद्येत। तथा प्रागुत्पत्तेः एकत्वावधारणम्, जीवस्य च आत्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसंपत्तिकथनम्, परिचोदनापूर्वकं च पुनः पुनः 'तत्त्वमसि' इत्यवधारणम्— इति च सर्वमेतत् तादात्म्यप्रतिपादनायामेव अवकल्पते, न तादात्म्यसंपादनायाम्। न च अत्र उपक्रमतन्त्रत्वोपन्यासो न्याय्यः; न हि उपक्रमे आत्मत्वसंकीर्तनम् अनात्मत्वसंकीर्तनं वा अस्ति; सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण

विरुध्यते, विशेषाकङ्क्षित्वात्सामान्यस्य । सच्छब्दार्थोऽपि च पर्यालोच्यमानः न मुख्यादात्मनोऽन्यः संभवति, अतोऽन्यस्य वस्तुजातस्य आरम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः । आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति, 'आहर पात्रम्' 'पात्रमाहर' इत्येवमादिषु अर्थसाम्येऽपि तद्दर्शनात् । तस्मात् एवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥

## कार्याख्यानादपूर्वम् ॥ १८ ॥

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्य अन्नमाम्नाय, तस्यैव आपो वास आमनन्ति; अनन्तरं च

९. कार्याख्याना- धिकरणम् ।

छन्दोगा आमनन्ति— 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इति; वाजसनेयिनश्चामनन्ति— 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति । तत्र च आचमनम् अनग्नताचिन्तनं च प्राणस्य प्रतीयते; तत्किमुभयमपि विधीयते, उत आचमनमेव, उत अनग्नताचिन्तनमेवेति विचार्यते । किं तावत्प्राप्तम्? उभयमपि विधीयत इति; कुतः?

उभयस्याप्यवगम्यमानत्वात्; उभयमपि च एतत् अपूर्वत्वात् विध्यर्हम्। अथवा आचमनमेव विधीयते; विस्पष्टा हि तस्मिन्विधिविभक्तिः— 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्' इति; तस्यैव स्तुत्यर्थम् अनग्नतासंकीर्तनमित्येवं प्राप्ते—

ब्रूमः— न आचमनस्य विधेयत्वमुपपद्यते, कार्याख्यानात्—प्राप्तमेव हि इदं कार्यत्वेन आचमनं प्रायत्यार्थं स्मृतिप्रसिद्धम् अन्वाख्यायते। ननु इयं श्रुतिः तस्याः स्मृतेर्मूलं स्यात्; नेत्युच्यते, विषयनानात्वात्; सामान्यविषया हि स्मृतिः पुरुषमात्रसंबद्धं प्रायत्यार्थमाचमनं प्रापयति; श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेव आचमनं विदधती विदध्यात्; न च भिन्नविषययोः श्रुतिस्मृत्योः मूलमूलिभावोऽवकल्पते; न च इयं श्रुतिः प्राणविद्यासंयोगि अपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम्, पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्य इह प्रत्यभिज्ञायमानत्वात्; अत एव च नोभयविधानम्; उभयविधाने च वाक्यं भिद्येत; तस्मात् प्राप्तमेव अशिशिषतामाशितवतां च उभयत आचमनम् अनूद्य, 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति प्राणस्य अनग्नताकरणसंकल्पः अनेन वाक्येन आचमनीयास्वप्सु

प्राणविद्यासंबन्धित्वेन अपूर्वं उपदिश्यते । न च अयमनग्न-तावादः आचमनस्तुत्यर्थं इति न्याय्यम्, आचमनस्याविधेयत्वात् । स्वयं च अनग्नतासंकल्पस्य विधेयत्वप्रतीतेः । न च एवं सति एकस्य आचमनस्य उभयार्थता अभ्युपगता भवति—प्रायत्यार्थता परिधानार्थता चेति, क्रियान्तरत्वाभ्युपगमात्— क्रियान्तरमेव हि आचमनं नाम प्रायत्यार्थं पुरुषस्य अभ्युपगम्यते; तदीयासु तु अप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्य अभ्युपगम्यत इत्यनवद्यम् । अपि च 'यदिदं किंचा श्वभ्य आ कृमिभ्य आ कीटपतंगेभ्यस्तत्तेऽन्नम्' इत्यत्र तावत् न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यं वक्तुम्, अशब्दत्वादशक्यत्वाच्च; सर्वं तु प्राणस्यान्नमिति इयमन्नदृष्टिश्चोद्यते; तत्साहचर्याच्च 'आपो वासः' इत्यत्रापि न अपामाचमनं चोद्यते; प्रसिद्धास्वेव तु आचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम्; न हि अर्धवैशसं संभवति । अपि च आचामन्तीति वर्तमानापदेशित्वात् नायं शब्दो विधिक्षमः । ननु मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम्; सत्यमेव तत्; अवश्यविधेये तु अन्यतरस्मिन् वासःकार्याख्यानात् अपां वासःसंकल्पनमेव अपूर्वं विधीयते; न आचमनम्; पूर्ववद्धि तत्—इत्युपपादितम् ।

यदप्युक्तम्—विस्पष्टा च आचमने विधिविभक्तिरिति, तदपि पूर्ववत्त्वेनैव आचमनस्य प्रत्युक्तम्; अत एव आचमनस्याविधित्सितत्वात् 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इत्यत्रैव काण्वाः पर्यवस्यन्ति, न आमनन्ति 'तस्मादेवंवित्' इत्यादि; तस्मात् माध्यंदिनानामपि पाठे आचमनानुवादेन एवंवित्त्वमेव प्रकृतप्राणवासोवित्त्वं विधीयत इति प्रतिपत्तव्यम्। योऽप्ययमभ्युपगमः— क्वचिदाचमनं विधीयताम्, क्वचिद्वासोविज्ञानमिति—सोऽपि न साधुः, 'आपो वासः' इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैकरूप्यात्। तस्मात् वासोविज्ञानमेव इह विधीयते, न आचमनमिति न्याय्यम्॥

## समान एवं चाभेदात्॥ १९॥

१०. समानाधिकरणम्।

वाजसनेयिशाखायाम् अग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता; तत्र च गुणाः श्रूयन्ते— 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्येवमादयः; तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते— 'मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' इति। तत्र संशयः— किमियम् एका विद्या अग्निरहस्यबृहदारण्य-

कयोः गुणोपसंहारश्च, उत द्वे इमे विद्ये गुणानुपसंहारश्चेति । किं तावत्प्राप्तम्? विद्याभेदः गुणव्यवस्था चेति; कुतः? पौनरुक्त्यप्रसङ्गात्— भिन्नासु हि शाखासु अध्येतृवेदितृभेदात् पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसाय एकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिषु— इत्युक्तम्; एकस्यां पुनः शाखायाम् अध्येतृवेदितृभेदाभावात् अशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्था एका विद्या भवितुमर्हति । न च अत्र एकमाम्नानं विद्याविधानार्थम्, अपरं गुणविधानार्थम्— इति विभागः संभवति; तदा हि अतिरिक्ता एव गुणा इतरत्रेतरत्र च आम्नायेरन्, न समानाः; समाना अपि तु उभयत्राम्नायन्ते मनोमयत्वादयः । तस्मात् नान्योन्यगुणोपसंहार इत्येवं प्राप्ते—

ब्रूमहे— यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति एवमेकस्यामपि शाखायां भवितुमर्हति, उपास्याभेदात् । तदेव हि ब्रह्म मनोमयत्वादिगुणकम् उभयत्रापि उपास्यम् अभिन्नं प्रत्यभिजानीमः; उपास्यं च रूपं विद्यायाः; न च विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः; नापि विद्याभेदे गुणव्यवस्थानम् । ननु पौनरुक्त्यप्रसङ्गात् विद्याभेदोऽध्यवसितः; नेत्युच्यते, अर्थविभागोपपत्तेः— एकं

हि आम्नानं विद्याविधानार्थम्, अपरं गुणविधानार्थम्—इति न किंचिन्नोपपद्यते। ननु एवं सति यदपठितमाग्निरहस्ये, तदेव बृहदारण्यके पठितव्यम्—'स एष सर्वस्येशानः' इत्यादि; यत्तु पठितमेव 'मनोमयः' इत्यादि, तन्न पठितव्यम्—नैष दोषः, तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात्; समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाप्य तस्याम् ईशानत्वादि उपदिश्यते; अन्यथा हि कथं तस्याम् अयं गुणविधिरभिधीयते। अपि च अप्राप्तांशोपदेशेन अर्थवति वाक्ये संजाते, प्राप्तांशपरामर्शस्य नित्यानुवादतयापि उपपद्यमानत्वात् न तद्बलेन प्रत्यभिज्ञा उपेक्षितुं शक्यते। तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नम् ॥

## संबन्धादेवमन्यत्रापि ॥ २० ॥

२१. संबन्धाधिकरणम्।

बृहदारण्यके 'सत्यं ब्रह्म' इत्युपक्रम्य, तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' इति तस्यैव सत्यस्य ब्रह्मणः अधिदैवतमध्यात्मं च आयतनविशेषमुपदिश्य, व्याहृतिशरीरत्वं च संपाद्य, द्वे उपनिषदावादिश्येते—'तस्योपनिषदहः' इति—अधिदैवतम्, 'तस्योपनिषद-

हम्' इति—अध्यात्मम् । तत्र संशयः—किमविभागेनैव उभे अपि उपनिषदावुभयत्रानुसंधातव्ये, उत विभागेन—एका अधिदैवतम्, एका अध्यात्ममिति । तत्र सूत्रेणैवोपक्रमते—यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्तः, एवमन्यत्रापि एवंजातीयके विषये भवितुमर्हति, एकविद्याभिसंबन्धात्—एका हि इयं सत्यविद्या अधिदैवतम् अध्यात्मं च अधीता, उपक्रमाभेदात् व्यतिषक्तपाठाच्च; कथं तस्यामुदितो धर्मः तस्यामेव न स्यात् । यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः, स ग्रामगतेऽरण्यगते च तुल्यवदेव भवति । तस्मात् उभयोरप्युपनिषदोः उभयत्र प्राप्तिरिति ॥

एवं प्राप्ते, प्रतिविधत्ते—

**न वा विशेषात् ॥ २१ ॥**

नैव उभयोः उभयत्र प्राप्तिः; कस्मात्? विशेषात्, उपासनस्थानविशेषोपनिबन्धादित्यर्थः । कथं स्थानविशेषोपनिबन्ध इति, उच्यते— 'य एष एतस्मिन्मण्डले पुरुषः' इति हि आधिदैविकं पुरुषं प्रकृत्य, 'तस्योपनिषदहः' इति श्रावयति; 'योऽयं दक्षिणेऽक्षन्पुरुषः' इति च आध्यात्मिकं पुरुषं प्रकृत्य, 'तस्योपनिषदहम्' इति; तस्येति च एतत् संनिहि-

तावलम्बनं सर्वनाम; तस्मात् आयतनविशेषव्यपाश्रयेणैव एते उपनिषदावुपदिश्येते; कुत उभयोरुभयत्र प्राप्तिः। ननु एक एवायम् अधिदैवतमध्यात्मं च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्; सत्यमेवमेतत्; एकस्यापि तु अवस्थाविशेषोपादानेनैव उपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति; अस्ति चायं दृष्टान्तः— सत्यपि आचार्यस्वरूपानपाये, यत् आचार्यस्य आसीनस्य अनुवर्तनमुक्तम्, न तत् तिष्ठतो भवति; यच्च तिष्ठत उक्तम्, न तदासीनस्येति। ग्रामारण्ययोस्तु आचार्यस्वरूपानपायात तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावात् उभयत्र तुल्यवद्भाव इति अदृष्टान्तः सः। तस्मान् व्यवस्था अनयोरुपनिषदोः॥

## दर्शयति च॥ २२॥

अपि च एवंजातीयकानां धर्माणां व्यवस्थेति लिङ्गदर्शनं भवति— 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति। कथमस्य लिङ्गत्वमिति, तदुच्यते— अक्ष्यादित्यस्थानभेदभिन्नान् धर्मान् अन्योन्यस्मिन्ननुपसंहार्यान् पश्यन् इह अतिदेशेन आदित्यपुरुषगतान्रूपादीन् अक्षिपुरुषे उपसंहरति— 'तस्यैतस्य

तदेव रूपम्' इत्यादिना। तस्माद्व्यवतिष्ठेते एव एते उपनिषदाविति निर्णयः॥

## संभृतिद्युव्याप्त्यपि चातः॥ २३॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते; तेषामेव च उपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते; तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन्, न वेति विचारणायाम्, ब्रह्मसंबन्धादुपसंहारप्राप्तौ एवं पठति। संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः, अत एव च आयतनविशेषयोगात्। तथा हि शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तम्— 'एष म आत्मान्तर्हृदये' इति; तद्वदेव दहरविद्यायामपि— 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति; उपकोसलविद्यायां तु अक्ष्यायतनत्वम्— 'य एषोऽक्षिणि पुरुषो दृश्यते' इति; एवं तत्र तत्र तत्तत् आध्यात्मिकमायतनम् एतासु विद्यासु प्रतीयते; आधिदैविक्यस्तु एता विभूतयः संभृतिद्युव्याप्तिप्रभृतयः; तासां कुत एतासु प्राप्तिः। नन्वेतास्वपि आधिदैवि-

१२. संभृत्यधिकरणम्।

क्यो विभूतयः श्रूयन्ते—'ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' 'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' इत्येवमाद्याः; सन्ति च अन्या आयतनविशेषहीना अपि इह ब्रह्मविद्याः षोडशकलाद्याः—सत्यमेवमेतत्; तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः— समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्टदेशगुणा उपसंह्रियेरन्निति युक्तम्; संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च गुणाः परस्परव्यावृत्तस्वरूपत्वात् न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः। न च ब्रह्मसंबन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमित्युच्यते, विद्याभेदेऽपि तदुपपत्तेः; एकमपि हि ब्रह्म विभूतिभेदैरनेकधा उपास्यत इति स्थितिः, परोवरीयस्त्वादिवद्भेददर्शनात्। तस्मात् वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिषु अनुपसंहार इति ॥

## पुरुषविद्यायामिव चेतरेषाम-नाम्नानात् ॥ २४ ॥

अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या; तत्र पुरुषो यज्ञः कल्पितः; तदीयमायुः त्रेधा विभज्य सव-

नत्रयं कल्पितम्; अशिशिषादीनि च दीक्षादिभावेन कल्पितानि; अन्ये च धर्मास्तत्र समधिगता आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित् पुरुषयज्ञं कल्पयन्ति— 'तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्येतेनानुवाकेन। तत्र संशयः—किमितरत्र उक्ताः पुरुषयज्ञस्य धर्माः तैत्तिरीयकेषु उपसंहर्तव्याः, किं वा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषात् उपसंहारप्राप्तौ, आचक्ष्महे— नोपसंहर्तव्या इति; कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात्; तदाहाचार्यः पुरुषविद्यायामिवेति— यथा एकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नानम्, नैवम् इतरेषां तैत्तिरीयाणामाम्नानमस्ति; तेषां हि इतरविलक्षणमेव यज्ञसंपादनं दृश्यते, पत्नीयजमानवेदिवेदबर्हिर्यूपाज्यपशवृत्विगाद्यनुक्रमणात्। यदपि सवनसंपादनम्, तदपि इतरविलक्षणमेव— 'यत्प्रातर्मध्यंदिनं सायं च तानि' इति। यदपि किंचित्, मरणावभृथत्वादिसामान्यम्, तदपि अल्पीयस्त्वात् भूयसा वैलक्षण्येन अभिभूयमानं न प्रत्यभिज्ञापनक्षमम्। न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते; 'विदुषः' 'यज्ञस्य' इति हि न च एते समानाधिकरणे षष्ठ्यौ— विद्वानेव यो यज्ञ-

१३. पुरुषविद्याधिकरणम्।

स्तस्येति; न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति; व्यधिकरणे तु एते षष्ठ्यौ—विदुषो यो यज्ञस्तस्येति; भवति हि पुरुषस्य मुख्यो यज्ञसंबन्धः; सत्यां च गतौ, मुख्य एवार्थ आश्रयितव्यः, न भाक्तः। 'आत्मा यजमानः' इति च यजमानत्वं पुरुषस्य निर्ब्रुवन् वैयधिकरण्येनैव अस्य यज्ञसंबन्धं दर्शयति। अपि च 'तस्यैवंविदुषः' इति सिद्धवदनुवादश्रुतौ सत्याम्, पुरुषस्य यज्ञभावम् आत्मादीनां च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात्। अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्य अनन्तरम् 'तस्यैवंविदुषः' इत्याद्यनुक्रमणं पश्यन्तः—पूर्वशेष एव एष आम्नायः, न स्वतन्त्र इति प्रतीमः; तथा च एकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे—'ब्रह्मणो महिमानमाप्नोति' इति; इतरेषां तु अनन्यशेषः पुरुषविद्याम्नायः; आयुरभिवृद्धिफलो ह्यसौ, 'प्रह षोडशं वर्षशतं जीवति य एवं वेद' इति समभिव्याहारात्। तस्मात् शाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिः तैत्तिरीयके॥

## वेधाद्यर्थभेदात्॥ २५॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः—'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा

१४. वेधाद्यधिकरणम्।

विपृक्तः' इत्यादिः; ताण्डिनाम्— 'देव सवितः प्रसुव यज्ञम्' इत्यादिः; शाट्यायनिनाम्— 'श्वेताश्वो हरितनीलोऽसि' इत्यादिः; कठानां तैत्तिरीयाणां च— 'शं नो मित्रः शं वरुणः' इत्यादिः; वाजसनेयिनां तु उपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते— 'देवा ह वै सत्रं निषेदुः' इत्यादि; कौषीतकिनामपि अग्निष्टोमब्राह्मणम्— 'ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति' इति । किमिमे सर्वे प्रविध्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासु उपसंह्रियेरन्, किं वा न उपसंह्रियेरन्— इति मीमांसामहे । किं तावत् नः प्रतिभाति? उपसंहार एव एषां विद्यास्विति; कुतः? विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात् । ननु एषां विद्यार्थतया विधानं नोपलभामहे— बाढम्, अनुपलभमाना अपि तु अनुमास्यामहे, संनिधिसामर्थ्यात्; न हि संनिधेः अर्थवत्त्वे संभवति, अकस्मादसावनाश्रयितुं युक्तः । ननु नैषां मन्त्राणां विद्याविषयं किंचित्सामर्थ्यं पश्यामः; कथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति—नैष दोषः; सामर्थ्यं तावत् मन्त्राणां विद्या-

विषयमपि किंचित् शक्यं कल्पयितुम, हृदयादिसंकीर्तनात्; हृदयादीनि हि प्रायेण उपासनेषु आयतनादिभावेनोपदिष्टानि; तद्द्वारेण च 'हृदयं प्रविध्य' इत्येवंजातीयकानां मन्त्राणाम् उपपन्नमुपासनाङ्गत्वम्; दृष्टश्च उपासनेष्वपि मन्त्रविनियोगः— 'भूः प्रपद्येऽमुनामुनामुना' इत्येवमादिः; तथा प्रवर्ग्यादीनां कर्मणाम अन्यत्रापि विनियुक्तानां सताम अविरुद्धो विद्यासु विनियोगः— वाजपेय इव बृहस्पतिसवस्य— इत्येवं प्राप्ते—

ब्रूमः— नैषामुपसंहारो विद्यास्विति; कस्मात्? वेधाद्यर्थभेदात्— 'हृदयं प्रविध्य' इत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयः, भिन्नाः अनभिसंबद्धाः ते उपनिषदुदिताभिर्विद्याभिः; न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति। ननु हृदयस्य उपासनेष्वप्युपयोगात् तद्द्वारक उपासनासंबन्ध उपन्यस्तः— नेत्युच्यते; हृदयमात्रसंकीर्तनस्य हि एवमुपयोगः कथंचिदुत्प्रेक्ष्येत; न च हृदयमात्रमत्र मन्त्रार्थः; 'हृदयं प्रविध्य धमनीः प्रवृज्य' इत्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसंबध्यते; अभिचारविषयो ह्येषोऽर्थः; तस्मादाभिचारिकेण कर्मणा 'सर्वं प्रविध्य' इत्येतस्य मन्त्रस्याभिसंबन्धः; तथा 'देव सवितः प्रसुव यज्ञम्'

इत्यस्य यज्ञप्रसवलिङ्गत्वात् यज्ञेन कर्मणा अभिसंबन्धः; तद्विशेषसंबन्धस्तु प्रमाणान्तरादनुसर्तव्यः; एवमन्येषामपि मन्त्राणाम्—केषांचित् लिङ्गेन, केषांचिद्वचनेन, केषांचित्प्रमाणान्तरेणेत्येवम्— अर्थान्तरेषु विनियुक्तानाम्, रहस्यपठितानामपि सताम्, न संनिधिमात्रेण विद्याशेषत्वोपपत्तिः; दुर्बलो हि संनिधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे— 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यत्र । तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः; न ह्येषां विद्याभिः सह ऐकार्थ्यं किंचिदस्ति; वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्— 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति; अपि च एकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेन अन्यत्र विनियुक्तः न दुर्बलेन प्रमाणेन अन्यत्रापि विनियोगमर्हति; अगृह्यमाणविशेषत्वे हि प्रमाणयोः एवं स्यात्; न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता संभवति, बलवदबलवत्त्वविशेषादेव । तस्मात् एवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम्; अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यम् ॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

अस्ति ताण्डिनां श्रुतिः— 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति; तथा आथर्वणिकानाम् — 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति; तथा शाट्यायनिनः पठन्ति— 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति; तथैव कौषीतकिनः— 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति । तदिह क्वचित् सुकृतदुष्कृतयोर्हानं श्रूयते; क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनम्; क्वचित्तु उभयमपि हानमुपायनं च; तद्यत्रोभयं श्रूयते तत्र तावत् न किंचिद्वक्तव्यमस्ति; यत्राप्युपायनमेव श्रूयते, न हानम्, तत्राप्यर्थादेव हानं संनिपतति, अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोः आवश्यकत्वात्तद्धानस्य; यत्र तु हानमेव श्रूयते, नोपायनम्—तत्रोपायनं संनिपतेद्वा, न वेति विचिकित्सायाम्—अश्रवणादसंनिपातः, विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपि च आत्म-

१५. हान्यधिकरणम् ।

कर्तृकं सुकृतदुष्कृतयोर्हानम्; परकर्तृकं तु उपायनम्; तयो-रसत्यावश्यकभावे, कथं हानेनोपायनमाक्षिप्येत? तस्माद-संनिपातो हानावुपायनस्येति ॥

अस्यां प्राप्तौ पठति— हानाविति। हानौ तु एतस्यां केवलायामपि श्रूयमाणायाम् उपायनं संनिपतितुमर्हति; त-च्छेषत्वात्—हानशब्दशेषो हि उपायनशब्दः समधिगतः कौ-षीतकिरहस्ये; तस्मादन्यत्र केवलहानश्रवणेऽप्युपायनानुवृ-त्तिः। यदुक्तम्—अश्रवणात् विद्यान्तरगोचरत्वात् अनावश्य-कत्वाच्च असंनिपात इति, तदुच्यते—भवेदेषा व्यवस्थोक्तिः, यद्यनुष्ठेयं किंचिदन्यत्र श्रुतम् अन्यत्र निनीष्येत; न त्विह हानमुपायनं वा अनुष्ठेयत्वेन संकीर्त्यते; विद्यास्तुत्यर्थं तु अन-योः संकीर्तनम्—इत्थं महाभागा विद्या, यत्सामर्थ्यादस्य वि-दुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते च अस्य सुहृ-द्दुर्हृत्सु निविशेते इति; स्तुत्यर्थे च अस्मिन्संकीर्तने, हानान-न्तरभावित्वेनोपायनस्य, क्वचिच्छ्रुतत्वात् अन्यत्रापि हानश्रु-तावुपायनानुवृत्तिं मन्यते—स्तुतिप्रकर्षलाभाय; प्रसिद्धा च अर्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्तिः—'एकविंशो वा इतो-ऽसावादित्यः' इत्येवमादिषु; कथं हि इह एकविंशता आदि-त्यस्याभिधीयेत, अनपेक्ष्यमाणेऽर्थवादान्तरे—'द्वादश मासाः

पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्यस्मिन्? तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते। विद्यास्तुत्यर्थत्वाच्च अस्योपायनवादस्य, कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम्। उपायनशब्दशेषत्वादिति च शब्दशब्दं समुच्चारयन् स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति; गुणोपसंहारविवक्षायां हि उपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्मात् गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम्। कुशाच्छन्दस्तुत्युपगानवदिति उपमोपादानम्; तद्यथा— भाल्लविनाम् 'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे, शाट्यायनिनाम् 'औदुम्बराः' इति विशेषवचनात् औदुम्बर्यः कुशा आश्रीयन्ते; यथा च क्वचित् देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे, देवच्छन्दांसि पूर्वाणीति पैङ्ग्याम्नानात्प्रतीयते; यथा च षोडशिस्तोत्रे केषांचित्कालाविशेषप्राप्तौ, 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः; यथैव च अविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः— यथा एतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः।

श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् ; स च अन्याय्यः सत्यां गतौ ; तदुक्तं द्वादशलक्षण्याम्— 'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्' इति ॥

अथवा एतास्वेव विधूननश्रुतिषु एतेन सूत्रेण एतच्चिन्तयितव्यम्— किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किं वा अर्थान्तरमिति । तत्र च एवं प्रापयितव्यम्— न हानं विधूननमभिधीयते, 'धूञ् कम्पने' इति स्मरणात्, 'दोधूयन्ते ध्वजाग्राणि' इति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात् ; तस्मात् चालनं विधूननमभिधीयते ; चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनात्— इत्येवं प्रापय्य, प्रतिवक्तव्यम्— हानावेव एष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात् ; न हि परपरिग्रहभूतयोः सुकृतदुष्कृतयोः अप्रहीणयोः परैरुपायनं संभवति ; यद्यपि इदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं न आञ्जसं संभाव्यते, तथापि तत्संकीर्तनात्तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते । क्वचिदपि च इदं विधूननसंनिधावुपायनं श्रूयमाणं कुशाच्छन्दस्तुत्युपगानवत् विधूननश्रुत्या सर्वत्रापेक्ष्यमाणं सार्वत्रिकं निर्णय-

कारणं संपद्यते । न च चालनं ध्वजाग्रवत् सुकृतदुष्कृत-
योर्मुख्यं संभवति, अद्रव्यत्वात् । अश्वश्च रोमाणि विधू-
न्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शात-
यति—'अश्व इव रोमाणि विधूय पापम्' इति च
ब्राह्मणम्; अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणवि-
रोधः । तदुक्तमिति व्याख्यातम् ॥

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्म अभिप्रस्थितस्य व्यध्वनि
सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति

१६. सांपरायाधिकरणम् ।

—'स एतं देवयानं पन्थानमासाद्याग्नि-
लोकमागच्छति' इत्युपक्रम्य, 'स आग-
च्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनु-
ते' इति । तत् किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रति-
पत्तव्यम्, आहोस्वित् आदावेव देहादपसर्पणे— इति विचार-
णायाम्, श्रुतिप्रामाण्यात् यथाश्रुति प्रतिपत्तिप्रसक्तौ, पठति
—सांपराय इति । सांपराये गमन एव देहादपसर्पणे, इदं
विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवति— इति प्रतिजानीते;
हेतुं च आचष्टे— तर्तव्याभावादिति; न हि विदुषः संपरेत-
स्य विद्यया ब्रह्म संप्रेप्सतः अन्तराले सुकृतदुष्कृताभ्यां कि-

चित्प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणानक्षीणे ते कल्पेयाताम् । विद्याविरुद्धफलत्वाच्च विद्यासामर्थ्येन तयोः क्षयः; स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति । तस्मात् प्रागेव सन् अयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते । तथा हि अन्येऽपि शाखिनः ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति—'अश्व इव रोमाणि विधूय पापम्' इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ॥

## छन्दत उभयाविरोधात् ॥ २८ ॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्य अर्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषयत्नस्य इच्छातोऽनुष्ठानानुपपत्तेः अनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात्; तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्, तत्पूर्वकं च सुकृतदुष्कृतहानम्— इति द्रष्टव्यम्; एवं निमित्तनैमित्तिकयोरुपपत्तिः ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

क्वचित् पुण्यपापापहानसंनिधौ देवयानः पन्थाः श्रूयते, क्वचिन्न; तत्र संशयः— किं हानावविशेषेणैव देवयानः पन्थाः संनिपतेत्, उत विभागेन क्वचित्संनिपतेत् क्वचिन्नेति। यथा तावत् हानावविशेषेणैव उपायनानुवृत्तिरुक्ता एवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तौ, आचक्ष्महे— गतेः देवयानस्य पथः, अर्थवत्त्वम्, उभयथा विभागेन भवितुमर्हति— क्वचिदर्थवती गतिः क्वचिन्नेति; न अविशेषेण। अन्यथा हि अविशेषेणैव एतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात्— 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत; कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत्; गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तम्— इत्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥

१७. गतेरर्थवत्त्वाधिकरणम्।

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

उपपन्नश्चायम् उभयथाभावः— क्वचिदर्थवती गतिः क्वचिन्नेति; तल्लक्षणार्थोपलब्धेः— गतिकारणभूतोऽर्थः पर्यङ्कविद्यादिषु सगुणेषु उपासनेषु उपलभ्यते; तत्र हि पर्यङ्कारोहणम्, पर्यङ्कस्थेन ब्रह्मणा सह संवदनम्, विशिष्टगन्धादि-

प्राप्तिश्च– इत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते; तत्र अर्थवती गतिः; न तु सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति; न हि आत्मैकत्वदर्शिनामाप्तकामानाम् इहैव दग्धाशेषक्लेश-बीजानाम् आरब्धभोगकर्माशयक्षपणव्यतिरेकेण अपेक्षितव्यं किंचिदस्ति; तत्र अनर्थिका गतिः। लोकवच्च एष विभागो द्रष्टव्यः— यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते, न आरोग्यप्राप्तौ, एवमिहापीति। भूयश्च एनं वि-भागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥

## अनियमः सर्वासामविरोधः शब्दा-नुमानाभ्याम् ॥ ३१ ॥

सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्म-विद्यायाम्– इत्युक्तम्; सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते– यथा पर्यङ्कविद्यायाम् उपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्याया-मिति; न अन्यासु–यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति। तत्र संशयः— किं यास्वेषा गतिः श्रूयते, तास्वेव नियम्येत; उत अनि-यमेन सर्वाभिरेव एवंजातीयकाभिर्विद्याभिरभिसंबध्येतेति। किं तावत्प्राप्तम्? नियम इति; यत्रैव श्रूयते, तत्रैव भवि-

१८. अनियमाधिकरणम्।

तुमर्हति, प्रकरणस्य नियामकत्वात्; यद्यन्यत्र अश्रूयमाणापि गतिः विद्यान्तरं गच्छेत्, श्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात्। अपि च अर्चिरादिका एकैव गतिः उपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत्पठ्यते; तत् सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्। तस्मान्नियम इत्येवं प्राप्ते—

पठति—अनियम इति। सर्वासामेव अभ्युदयप्राप्तिफलानां सगुणानां विद्यानाम् अविशेषेण एषा देवयानाख्या गतिर्भवितुमर्हति। ननु अनियमाभ्युपगमे प्रकरणविरोध उक्तः—नैषोऽस्ति विरोधः; शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः; तथा हि श्रुतिः—'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति। कथं पुनरवगम्यते—विद्यान्तरशीलिनामियं गतिरिति? ननु श्रद्धातपःपरायणानामेव स्यात्, तन्मात्रश्रवणात्—नैष दोषः; न हि केवलाभ्यां श्रद्धातपोभ्याम् अन्तरेण विद्याबलम् एषा गतिर्लभ्यते—'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति श्रुत्यन्त-

रात्; तस्मात् इह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् । वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते— 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति; तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासते इति व्याख्येयम्, सत्यशब्दस्य ब्रह्मणि असकृत्प्रयुक्तत्वात् । पञ्चाग्निविद्याविदां च इत्थंवित्तयैव उपात्तत्वात्, विद्यान्तरपरायणानामेव एतदुपादानं न्याय्यम् । 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिः देवयानपितृयाणयोरेव एनान् अन्तर्भावयति । तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः । स्मृतिरपि — 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययावर्तते पुनः' इति । यत्पुनः देवयानस्य पथो द्विराम्नानम् उपकोसलविद्यायां पञ्चाग्निविद्यायां च, तत् उभयत्रापि अनुचिन्तनार्थम् । तस्मादनियमः ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते, न वा— इति चिन्त्यते । ननु विद्यायाः साधनभूतायाः संपत्तौ कैव-

ल्यनिर्वृत्तिः स्यात्, न वेति नेयं चिन्ता उपपद्यते; न हि पाकसाधनसंपत्तौ, ओदनो भवेत्, न वेति चिन्ता संभवति; नापि भुञ्जानः तृप्येत्, न वेति चिन्त्यते—उपपन्ना तु इयं चिन्ता, ब्रह्मविदामपि केषांचित् इतिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्; तथा हि—अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति; वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन् निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति; भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते; सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव; एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते तेन तेन निमित्तेन स्मृतौ। श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन् योगैश्वर्यवशात् अनेकदेहादानन्यायेन। सर्वे च एते समधिगतसकलवेदार्थाः स्मर्यन्ते। तत् एतेषां देहान्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम्, अहेतुत्वं वेति ॥

१९. यावदधिकाराधिकरणम्।

अत उत्तरमुच्यते—न, तेषाम् अपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानाम् अधिकारतन्त्रत्वात्स्थितेः। यथासौ भगवान्सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति—'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इति श्रुतेः; यथा च वर्तमाना ब्रह्मविदः आरब्धभोगक्षये कैवल्यमनुभवन्ति—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः—एवम् अपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतौ अक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने च अपवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः, स्वातन्त्र्येणैव गृहादिव गृहान्तरम् अन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनाय, अपरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वात् निर्माय देहान् युगपत् क्रमेण वा अधितिष्ठन्ति; न च एते जातिस्मरा इत्युच्यन्ते—त एवैते इति स्मृतिप्रसिद्धेः—यथा हि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहम्, जानकं देहमाविश्य, व्युद्य तेन, पश्चात् स्वमेव देहमाविवेश—इति स्मर्यते। यदि हि उपयुक्ते सकृत्प्रवृ-

त्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्, ततः अन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम् अहेतुत्वं वा शङ्क्येत; न तु इयमाशङ्का युक्ता, ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथा हि श्रुतिः— 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति, 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति चैवमाद्या। स्मृतिरपि— 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति, 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति चैवमाद्या। न च अविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्य एकदेशदाहः एकदेशप्ररोहश्च इत्युपपद्यते; न हि अग्निदग्धस्य शालिबीजस्य एकदेशप्ररोहो दृश्यते; प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयात् निवृत्तिः, 'तस्य तावदेव चिरम्' इति शरीरपातावधिक्षेपकरणात्। तस्मादुपपन्ना यावदधिकारम् आधिकारिकाणामवस्थितिः। न च ज्ञानफलस्य अनैकान्तिकता; तथा च श्रुतिः अविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति— 'तद्यो यो देवानां प्रत्यबुध्यत स एव

तद्भवत्तथर्षीणां तथा मनुष्याणाम्' इति । ज्ञानान्तरेषु च ऐश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः; ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुरित्युपपद्यते— 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मरणात् । प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः; कर्मफले हि स्वर्गादावनुभवानारूढे स्यादाशङ्का— भवेद्वा न वेति; अनुभवारूढं तु ज्ञानफलम्— 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः, 'तत्त्वमसि' इति सिद्धवदुपदेशात्; न हि 'तत्त्वमसि' इत्यस्य वाक्यस्य अर्थः— तत् त्वं मृतो भविष्यसीति— एवं परिणेतुं शक्यः । 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति । तस्मात् ऐकान्तिकी विदुषः कैवल्यसिद्धिः ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

वाजसनेयके श्रूयते— 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' इत्यादि;

**२०. अक्षरध्यधिकरणम्।**

तथा आथर्वणे श्रूयते— ‘अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्’ इत्यादि; तथैव अन्यत्रापि विशेषनिराकरणद्वारेण अक्षरं परं ब्रह्म श्राव्यते; तत्र च क्वचित् केचित् अतिरिक्ता विशेषाः प्रतिषिध्यन्ते; तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिः, उत व्यवस्थेति संशये, श्रुतिविभागात् व्यवस्थाप्राप्तौ, उच्यते— अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः, सामान्यतद्भावाभ्याम्— समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः; तदेव च सर्वत्र प्रतिपाद्यं ब्रह्म अभिन्नं प्रत्यभिज्ञायते; तत्र किमिति अन्यत्र कृता बुद्धयः अन्यत्र न स्युः। तथा च ‘आनन्दादयः प्रधानस्य’ इत्यत्र व्याख्यातम्; तत्र विधिरूपाणि विशेषणानि चिन्तितानि, इह प्रतिषेधरूपाणीति विशेषः; प्रपञ्चार्थश्चायं चिन्ताभेदः। औपसदवदिति निदर्शनम्; यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु, पुरोडाशप्रदानमन्त्राणाम् ‘अग्नेर्वेर्होत्रं वेरध्वरम्’ इत्येवमादीनाम् उद्गातृवेदोत्पन्नानामपि अध्वर्युभिरभिसंबन्धो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानाम्—एवमिहापि अक्षरत-

न्त्रत्वात् तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानाम् अक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः । तदुक्तं प्रथमे काण्डे—'गुणमुख्य-व्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इत्यत्र ॥

## इयदामननात् ॥ ३४ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति'—इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति; तथा कठाः—'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' इति । किमत्र विद्यैकत्वम्, उत विद्यानानात्वमिति संशयः । किं तावत्प्राप्तम्? विद्यानानात्वमिति; कुतः? विशेषदर्शनात्— 'द्वा सुपर्णा' इत्यत्र हि एकस्य भोक्तृत्वं दृश्यते, एकस्य च अभोक्तृत्वं दृश्यते; 'ऋतं पिबन्तौ' इत्यत्र उभयोरपि भोक्तृत्वमेव दृश्यते; तत् वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते—

२१. इयदधिकरणम् ।

ब्रवीति— विद्यैकत्वमिति; कुतः? यतः उभयोरप्यनयोर्मन्त्रयोः इयत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यं रूपम् अभिन्नम् आमनन्ति । ननु दर्शितो रूपभेदः—नेत्युच्यते; उभा-

वप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः, नार्थान्तरम् । ‘द्वा सुपर्णा’ इत्यत्र तावत्— ‘अनश्नन्नन्यो अभिचाकशीति’ इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते; वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते ‘जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्’ इति; ‘ऋतं पिबन्तौ’ इत्यत्र तु जीवे पिबति, अशनायाद्यतीतः परमात्मापि साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते; परमात्मप्रकरणं हि एतत्— ‘अन्यत्र धर्मादन्यत्राधर्मात्’ इत्युपक्रमात्; तद्विषय एव च अत्रापि वाक्यशेषो भवति— ‘यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्’ इति। ‘गुहां प्रविष्टावात्मानौ हि’ इत्यत्र च एतत्प्रपञ्चितम् । तस्मान्नास्ति वेद्यभेदः; तस्माच्च विद्यैकत्वम् । अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैव अवगम्यते; तादात्म्यविवक्षयैव जीवोपादानम्, नार्थान्तरविवक्षया; न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम् । तस्मात्प्रपञ्चार्थ एव एष प्रयोगः; तस्माच्चाधिकधर्मोपसंहार इति ॥

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

‘यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः’ इत्येवं द्विः उषस्तकहोलप्रश्नयोः नैरन्तर्येण वाजसनेयिनः समामनन्ति ।

२२. अन्तरत्वाधिकरणम् ।

तत्र संशयः—विद्यैकत्वं वा स्यात्, विद्यानानात्वं वेति । विद्यानानात्वमिति तावत्प्राप्तम्, अभ्याससामर्थ्यात्; अन्यथा हि अनूनानतिरिक्तार्थे द्विराम्नानम् अनर्थकमेव स्यात्; तस्मात यथा अभ्यासात्कर्मभेदः, एवमभ्यासाद्विद्याभेद इत्येवं प्राप्ते, प्रत्याह— अन्तरा आम्नानाविशेषात् स्वात्मनः विद्यैकत्वमिति; सर्वान्तरो हि स्वात्मा उभयत्राप्यविशिष्टः पृच्छ्यते, प्रत्युच्यते च; न हि द्वावात्मानौ एकस्मिन्देहे सर्वान्तरौ संभवतः; तदा हि एकस्य आञ्जसं सर्वान्तरत्वमवकल्पेत, एकस्य तु भूतग्रामवत् नैव सर्वान्तरत्वं स्यात्; यथा च पञ्चभूतसमूहे देहे— पृथिव्या आपोऽन्तराः, अद्भ्यस्तेजोऽन्तरमिति— सत्यप्यापेक्षिकेऽन्तरत्वे, नैव मुख्यं सर्वान्तरत्वं भवति, तथेहापीत्यर्थः । अथवा भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति; यथा— 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्मा आम्नायते— एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्मात् वेद्यैक्यात् विद्यैकत्वमिति ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तम्— अनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम्; अत्रोच्यते— नायं दोषः; उपदेशान्तरवदुपपत्तेः; यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके— 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवति, एवमिहापि भविष्यति। कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति? उपक्रमोपसंहाराभ्यामेकार्थतावगमात्— 'भूय एव मा भगवान्विज्ञापयतु' इति च एकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितत्वेन उपक्षेपात् आशङ्कान्तरनिराकरणेन च असकृदुपदेशोपपत्तेः। एवमिहापि प्रश्नरूपाभेदात्, 'अतोऽन्यदार्तम्' इति च परिसमाप्त्यविशेषात् उपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते; 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति द्वितीये प्रश्ने एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थम् उत्तरत्रानुकृष्यमाणं दर्शयति; पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्य आत्मनः सद्भावः कथ्यते; उत्तरस्मिंस्तु तस्यैव अशनायादिसंसारधर्मातीतत्वं विशेषः कथ्यते—इत्येकार्थतोपपत्तिः। तस्मात् एका विद्येति ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

यथा—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादित्य-

पुरुषं प्रकृत्यैतरेयिणः समामनन्ति, तथा जाबालाः—'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति । तत्र संशयः—किमिह व्यतिहारेण उभयरूपा मतिः कर्तव्या, उत एकरूपैवेति । एकरूपैवेति तावदाह; न हि अत्र आत्मन ईश्वरेणैकत्वं मुक्त्वा अन्यत्किंचिच्चिन्तयितव्यमस्ति; यदि चैवं चिन्तयितव्यविशेषः परिकल्प्येत, संसारिणश्च ईश्वरात्मत्वम्, ईश्वरस्य संसार्यात्मत्वमिति—तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्; ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात् । तस्मात् ऐकरूप्यमेव मतेः । व्यतिहाराम्नायस्तु एकत्वदृढीकारार्थ इत्येवं प्राप्ते, प्रत्याह—व्यतिहारोऽयम् आध्यानायाम्नायते; इतरवत्—यथा इतरे गुणाः सर्वात्मत्वप्रभृतयः आध्यानाय आम्नायन्ते, तद्वत् । तथा हि विशिंषन्ति समाम्नातारः उभयोच्चारणेन—'त्वमहमस्म्यहं च त्वमसि' इति; तच्च उभयरूपायां मतौ कर्तव्यायाम् अर्थवद्भवति; अन्यथा हि इदं विशेषेणोभयाम्नानम् अनर्थकं स्यात्, एकेनैव कृतत्वात् । ननु उभयाम्नानस्य अर्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेः निकर्षः प्रसज्येतेत्युक्तम्—नैष दोषः; ऐकात्म्यस्यैव अनेन प्रकारेणा-

२३. व्यतिहाराधिकरणम् ।

नुचिन्त्यमानत्वात् । ननु एवं सति स एव एकत्वदृढीकार आपद्येत—न वयमेकत्वदृढीकारं वारयामः; किं तर्हि, व्यतिहारेण इह द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात्, नैकरूपेत्येतावत् उपपादयामः; फलतस्तु एकत्वमपि दृढी-भवति । यथा आध्यानार्थेऽपि सत्यकामादिगुणोपदेशे त-द्गुण ईश्वरः प्रसिध्यति, तद्वत् । तस्मादयमाध्यातव्यो व्य-तिहारः समाने च विषये उपसंहर्तव्यो भवतीति ॥

## सैव हि सत्यादयः ॥ ३८ ॥

'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधाय, अनन्त-रमाम्नायते— 'तद्यत्तत्सत्यमसौ स आ-दित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चा-यं दक्षिणेऽक्षन्पुरुषः' इत्यादि । तत्र संशयः— किं द्वे एते सत्यविद्ये, किं वा एकैवेति । द्वे इति तावत्प्राप्तम्; भेदेन हि फलसंयोगो भवति— 'जयतीमाँल्लोकान्' इति पुरस्तात्, 'हन्ति पाप्मानं जहाति च' इत्युपरिष्टात् । प्रकृताकर्षणं तु उपास्यैकत्वादित्येवं प्राप्ते—

२४. सत्याद्यधि-करणम् ।

ब्रूमः— एकैवेयं सत्यविद्येति; कुतः? 'तद्यत्तत्सत्यम्' इति प्रकृताकर्षणात् । ननु विद्याभेदेऽपि प्रकृताकर्षणम् उपा-

स्यैकत्वादुपपद्यत इत्युक्तम्— नैतदेवम्; यत्र तु विस्पष्टात् कारणान्तरात् विद्याभेदः प्रतीयते, तत्र एतदेवं स्यात्; अत्र तु उभयथा संभवे 'तद्यत्तत्सत्यम्' इति प्रकृताकर्षणात् पूर्वविद्यासंबद्धमेव सत्यम् उत्तरत्र आकृष्यत इति एकविद्यात्वनिश्चयः । यत्पुनरुक्तम्— फलान्तरश्रवणाद्विद्यान्तरमिति, अत्रोच्यते— 'तस्योपनिषदहः...अहम्' इति च अङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमित्यदोषः । अपि च अर्थवादादेव फले कल्पयितव्ये सति, विद्यैकत्वे च अवयवेषु श्रूयमाणानि बहून्यपि फलानि अवयविन्यामेव विद्यायाम् उपसंहर्तव्यानि भवन्ति; तस्मात्सैवेयम् एका सत्यविद्या तेन तेन विशेषेणोपेता आम्नाता— इत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्प्रयोगे उपसंहर्तव्याः ॥

केचित्पुनरस्मिन्सूत्रे इदं च वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यम्, छान्दोग्ये च 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'य एषोऽक्षिणि पुरुषो दृश्यते' इति—उदाहृत्य, सैवेयम् अक्ष्यादित्यपुरुषविषया विद्या उभयत्र एकैवेति कृत्वा, सत्यादीन्गुणान् वाजसनेयिभ्यश्छन्दोगानामुपसंहार्यान् मन्यन्ते । तन्न साधु लक्ष्यते; छान्दोग्ये हि कर्मसंबन्धिनी उद्गीथव्यपाश्रया विद्या विज्ञायते; तत्र हि

आदिमध्यावसानेषु कर्मसंबन्धिचिह्नानि भवन्ति—'इयमेवर्गग्निः साम' इत्युपक्रमे, 'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः' इति मध्ये, 'य एवं विद्वान्साम गायति' इत्युपसंहारे । नैवं वाजसनेयके किंचित् कर्मसंबन्धि चिह्नम् अस्ति; तत्र प्रक्रमभेदात् विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति प्रस्तुत्य, छन्दोगा अधीयते—'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इत्यादि; तथा वाजसनेयिनः—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी' इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च, किं वा नेति संशये—विद्यैकत्वमिति । तत्रेदमुच्यते— कामादीति, सत्यकामादीत्यर्थः— यथा देवदत्तो दत्तः, सत्यभामा भामेति । यदेतत् छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते, तदितरत्र वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र संबध्येत; यच्च वाजसनेयके वशित्वादि

२५. कामाद्यधिकरणम् ।

उपलभ्यते, तदपि इतरत्र छान्दोग्ये 'एष आत्मापहतपाप्मा' इत्यत्र संबध्येत; कुतः? आयतनादिसामान्यात्; समानं हि उभयत्रापि हृदयमायतनम्, समानश्च वेद्य ईश्वरः, समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनम्— इत्येवमादि बहुसामान्यं दृश्यते । ननु विशेषोऽपि दृश्यते— छान्दोग्ये हृदयाकाशस्य गुणयोगः, वाजसनेयके तु आकाशाश्रयस्य ब्रह्मण इति—न, 'दहर उत्तरेभ्यः' इत्यत्र च्छान्दोग्येऽपि आकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात् । अयं तु अत्र विद्यते विशेषः— सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते—'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इत्यात्मवत् कामानामपि वेद्यत्वश्रवणात्, वाजसनेयके तु निर्गुणमेव ब्रह्म उपदिश्यमानं दृश्यते— 'अथ उर्ध्वं विमोक्षाय ब्रूहि' 'असङ्गो ह्ययं पुरुषः' इत्यादिप्रश्नप्रतिवचनसमन्वयात् । वशित्वादि तु स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते; तथा च उपरिष्टात् 'स एष नेति नेत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्म उपसंहरति । गुणवतस्तु ब्रह्मण एकत्वात् विभूतिप्रदर्शनाय अयं गुणोपसंहारः सूत्रितः, नोपासनाय— इति द्रष्टव्यम् ॥

**आदरादलोपः ॥ ४० ॥**

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते— 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' इत्यादि; तत्र

२६. आदराधिकरणम्।

पञ्च प्राणाहुतयो विहिताः; तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' इति, 'यथेह क्षुधिता बाला मातरं पर्युपासते। एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' इति च। तत्रेदं विचार्यते— किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य, उत अलोप इति। 'तद्यद्भक्तम्' इति भक्तागमनसंयोगश्रवणात्, भक्तागमनस्य च भोजनार्थत्वात्, भोजनलोपे लोपः प्राणाग्निहोत्रस्येत्येवं प्राप्ते, न लुप्येतेति तावदाह; कस्मात्? आदरात्; तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः— 'पूर्वोऽतिथिभ्योऽश्नीयात्। यथा ह वै स्वयमहुत्वाग्निहोत्रं परस्य जुहुयादेवं तत्' इति अतिथिभोजनस्य प्राथम्यं निन्दित्वा, स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति; या हि न प्राथम्यलोपं सहते, नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते। ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः—न, तस्य द्रव्यविशेषविधानार्थत्वात्; प्रा-

कृते हि अग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वात् इहापि अग्निहोत्रशब्दात् कौण्डपायिनामयनवत् तद्धर्मप्राप्तौ सत्याम्, भक्तद्रव्यतागुणविशेषविधानार्थम् इदं वाक्यम् 'तद्यद्भक्तम्' इति; अतो गुणलोपे न मुख्यस्येत्येवं प्राप्तम्; भोजनलोपेऽपि अद्भिर्वा अन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥

अत उत्तरं पठति—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजने अतः तस्मादेव भोजनद्रव्यात् प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यम्; कस्मात्? तद्वचनात्; तथा हि—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ताः अप्रयोजकलक्षणापन्नाः सत्यः, कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । न च अत्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति; कुण्डपायिनामयने हि 'मासमग्निहोत्रं जुहोति' इति विध्युद्देशगतोऽग्निहोत्रशब्दः तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः; इह पुनः अर्थवादगतोऽग्निहोत्रशब्दः न तद्वद्भावं विधापयितुमर्हति; तद्धर्मप्राप्तौ च अभ्युपगम्यमानायाम्, अग्न्युद्धरणादयोऽपि प्राप्येरन्; न

च अस्ति संभवः; अग्न्युद्धरणं तावत् होमाधिकरणभावाय ; न च अयम् अग्नौ होमः, भोजनार्थताव्याघातप्रसङ्गात् ; भोजनार्थोपनीतद्रव्यसंबन्धाच्च आस्य एव एष होमः ; तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात्' इति आस्याधारामेव इमां होमनिर्वृत्तिं दर्शयति; अत एव च इहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति—'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति ; वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात् , तदङ्गानां च इह संपिपादयिषितत्वात् ; भोजनेनैव च कृतकालेन संयोगात् न अग्निहोत्रकालावरोधसंभवः; एवमन्येऽपि उपस्थानादयो धर्माः केचित्कथंचित् विरुध्यन्ते । तस्माद्भोजनपक्ष एव एते मन्त्रद्रव्यदेवतासंयोगात् पञ्च होमा निर्वर्तयितव्याः । यत्तु आदरदर्शनवचनम् , तत् भोजनपक्षे प्राथम्यविधानार्थम् ; न ह्यस्ति वचनस्य अतिभारः; न तु अनेन अस्य नित्यता शक्यते दर्शयितुम् । तस्मात् भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥**

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येवमादीनि । किं तानि नित्यान्येव

२७. तन्निर्धारणाधिकरणम् ।

स्युः कर्मसु, पर्णमयीत्वादिवत्; उत अनित्यानि, गोदोहनादिवदिति विचारयामः । किं तावत्प्राप्तम्? नित्यानीति; कुतः? प्रयोगवचनपरिग्रहात्— अनारभ्याधीतान्यपि हि एतानि उद्गीथादिद्वारेण क्रतुसंबन्धात् क्रतुप्रयोगवचनेनैव अङ्गान्तरवत् संस्पृश्यन्ते; यत्तु एषां स्ववाक्येषु फलश्रवणम् — 'आपयिता ह वै कामानां भवति' इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रमेव, अपापश्लोकश्रवणादिवत्, न फलप्रधानम्; तस्मात् यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनाम् अप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् प्रकरणपठितवत् नित्यता, एवमुद्गीथाद्युपासनानामपीत्येवं प्राप्ते—

ब्रूमः—तन्निर्धारणानियम इति । यान्येतानि उद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि—रसतमः, आप्तिः, समृद्धिः, मुख्यप्राणः, आदित्यः—इत्येवमादीनि, नैतानि नित्यवत् कर्मसु नियम्येरन्; कुतः? तद्दृष्टेः; तथा हि अनित्यत्वमेवंजातीयकानां दर्शयति श्रुतिः—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च

न वेद' इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात्; प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात्—'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि' 'तां चेदविद्वानुद्गास्यसि' 'तां चेदविद्वान्प्रतिहरिष्यसि' इति च । अपि च एवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलम् उपलभ्यते—कर्मफलसिद्ध्यप्रतिबन्धः तत्समृद्धिः अतिशयविशेषः कश्चित्—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति; तत्र 'नाना तु' इति विद्वदविद्वत्प्रयोगयोः पृथक्करणात्, 'वीर्यवत्तरम्' इति च तरप्प्रत्ययप्रयोगात् विद्याहीनमपि वीर्यवदिति गम्यते; तच्च अनित्यत्वे विद्याया उपपद्यते; नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत; सर्वाङ्गोपसंहारे हि वीर्यवत्कर्मेति स्थितिः । तथा लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते—'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' इत्येवमादीनि । न चेदं फलश्रवणम् अर्थवादमात्रं युक्तं प्रतिपत्तुम्; तथा हि गुणवाद आपद्येत; फलोपदेशे तु मुख्यवादोपपत्तिः; प्रयाजादिषु तु इतिकर्तव्यताकाङ्क्षस्य क्रतोः

प्रकृतत्वात् तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम् । तथा अनारभ्याधीतेष्वपि पर्णमयीत्वादिषु—न हि पर्णमयीत्वादीनामक्रियात्मकानाम् आश्रयमन्तरेण फलसंबन्धोऽवकल्पते ; गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः ; तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः ; न तु पर्णमयीत्वादिषु एवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति ; वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात् । उपासनानां तु क्रियात्मकत्वात् विशिष्टविधानोपपत्तेः उद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते । तस्मात् यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि, एवमुद्गीथाद्युपासनान्यपि इति द्रष्टव्यम् । अत एव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः ॥

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

२८. प्रदानाधिकरणम् ।

वाजसनेयके ‘वदिष्याम्येवाहमिति वाग्दध्रे’ इत्यत्र अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवतमग्न्यादीनां वायुः ; तथा छान्दोग्ये ‘वायुर्वाव संवर्गः’ इत्यत्र अधिदैवतम् अग्न्यादीनां वायुः संवर्गोऽवधारितः, प्राणो वाव संवर्गः’ इत्यत्र

अध्यात्मं वागादीनां प्राणः । तत्र संशयः—किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्याताम् , उत अपृथगिति । अपृथगिति तावत्प्राप्तम् , तत्त्वाभेदात् ; न हि अभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम् ; दर्शयति च श्रुतिः अध्यात्ममधिदैवतं च तत्त्वाभेदम्—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यारभ्य ; तथा 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति आध्यात्मिकानां प्राणानाम् आधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथा अन्यत्रापि तत्र तत्र अध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति ; कचिच्च 'यः प्राणः स वायुः' इति स्पष्टमेव वायुं प्राणं च एकं करोति । तथा उदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' इत्यस्मिन् उपसंहारश्लोके, 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति प्राणेनैव उपसंहरन् एकत्वं दर्शयति ; 'तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च' इति च प्राणव्रतेनैव एकेनोपसंहरन् एतदेव द्रढयति । तथा छान्दोग्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' इत्येकमेव संवर्गं गमयति; न ब्रवीति—एक एव एषां चतुर्णां संवर्गः, अपरोऽपरेषामिति । तस्मादपृथक्त्वमुपगमनस्येत्येवं प्राप्ते—

ब्रूमः— पृथगेव वायुप्राणावुपगन्तव्याविति; कस्मात्? पृथगुपदेशात्; आध्यानार्थो हि अयम् अध्यात्माधिदैवविभागोपदेशः; सः असत्याध्यानपृथक्त्वे अनर्थक एव स्यात् । ननु उक्तम्, अपृथगनुचिन्तनं तत्त्वाभेदादिति—नैष दोषः; तत्त्वाभेदेऽप्यवस्थाभेदात् उपदेशभेदवशेन अनुचिन्तनभेदोपपत्तेः, श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणापि उपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्, 'स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः' इति च उपमानोपमेयकरणात् । एतेन व्रतोपन्यासो व्याख्यातः; 'एकमेव व्रतम्' इति च एवकारः वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः; भग्नव्रतानि हि वागादीन्युक्तानि, 'तानि मृत्युः श्रमो भूत्वोपयेमे' इति श्रुतेः; न वायुव्रतनिवृत्त्यर्थः, 'अथातो व्रतमीमांसा' इति प्रस्तुत्य तुल्यवत् वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्; 'एकमेव व्रतं चरेत्' इति च उक्त्वा, 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं [illegible]यति; देवतेत्यत्र वायुः स्यात्, अपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्, पुरस्तात्प्रयोगाच्च—'सैषानस्तमिता देवता य-

द्वायुः' इति। तथा 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति भेदेन व्यपदिशति; 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' इति च भेदेनैव उपसंहरति; तस्मात्पृथगेव उपगमनम्। प्रदानवत्—यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ, 'सर्वेषामभिगमयन्नवद्यत्यछंबट्कारम्' इत्यतो वचनात्, इन्द्राभेदाच्च, सहप्रदानाशङ्कायाम्— राजादिगुणभेदात् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति; एवं तत्त्वाभेदेऽपि आध्येयांशपृथक्त्वात् आध्यानपृथक्त्वमित्यर्थः। तदुक्तं संकर्षे— 'नाना वा देवता पृथग्ज्ञानात्' इति। तत्र तु द्रव्यदेवताभेदात् यागभेदो विद्यते; नैवमिह विद्याभेदोऽस्ति, उपक्रमोपसंहाराभ्याम् अध्यात्माधिदैवोपदेशेषु एकविद्याविधानप्रतीतेः; विद्यैक्येऽपि तु अध्यात्माधिदैवभेदात् प्रवृत्तिभेदो भवति— अग्निहोत्र इव सायंप्रातःकालभेदात्— इत्येतावदभिप्रेत्य प्रदानवदित्युक्तम्॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि॥ ४४॥

वाजसनेयिनोऽग्निरहस्ये 'नैव वा इदमग्रे सदासीत्' इत्ये-

तस्मिन्ब्राह्मणे मनोऽधिकृत्य अधीयते—'तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इत्यादि; तथैव

२९. लिङ्गभूयस्त्वाधिकरणम् ।

'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीन् आमनन्ति सांपादिकान्। तेषु संशयः—किमेते मनश्चिदादयः क्रियानुप्रवेशिनः तच्छेषभूताः, उत स्वतन्त्राः केवलविद्यात्मका इति । तत्र प्रकरणात् क्रियानुप्रवेशे प्राप्ते, स्वातन्त्र्यं तावत्प्रतिजानीते— लिङ्गभूयस्त्वादिति । भूयांसि हि लिङ्गानि अस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते— 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति, 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति च एवंजातीयकानि । तद्धि लिङ्गं प्रकरणाद्बलीयः । तदप्युक्तं पूर्वस्मिन्काण्डे— 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति ॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

नैतद्युक्तम्—स्वतन्त्रा एतेऽग्नयः अनन्यशेषभूता इति; पूर्वस्य क्रियामयस्य अग्नेः प्रकरणात् तद्विषय एव अयं

विकल्पविशेषोपदेशः स्यात् , न स्वतन्त्रः । ननु प्रकरणा-ल्लिङ्गं बलीयः— सत्यमेवमेतत् ; लिङ्गमपि तु एवंजातीयकं न प्रकरणाद्बलीयो भवति ; अन्यार्थदर्शनं हि एतत् , सांपादिकाग्निप्रशंसारूपत्वात् ; अन्यार्थदर्शनं च असत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते ; तस्मात् सांपादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिन एव स्युः । मानसवत्— यथा दशरात्रस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येव आम्नायन्ते, स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात् क्रियाशेष एव भवति— एवमयमप्यग्नि-कल्प इत्यर्थः ॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्च एषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति— ‘ षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ’ इति ; सति हि सामान्ये अतिदेशः प्रवर्तते ; ततश्च पूर्वेण इष्टकाचितेन क्रियानुप्रवेशिना अग्निना सांपादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेव एषां द्योतयति ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तु-शब्दः पक्षं व्यावर्तयति । विद्यात्मका एव एते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युः, न क्रियाशेषभूताः । तथा हि निर्धारयति— 'ते हैते विद्याचित एव' इति, 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति च ॥

## दर्शनाच्च ॥ ४८ ॥

दृश्यते च एतेषां स्वातन्त्र्ये लिङ्गम्; तत्पुरस्ताद्दर्शितम् —'लिङ्गभूयस्त्वात्' इत्यत्र ॥

ननु लिङ्गमपि असत्यामन्यस्यां प्राप्तौ असाधकं कस्यचिदर्थस्येति, अपास्य तत्, प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसितम्—इत्यत उत्तरं पठति—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः, श्रुत्यादेर्बलीयस्त्वात्; बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे; तानि च इह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते; कथम्? श्रुतिस्तावत्— 'ते हैते विद्याचित एव' इति; तथा लिङ्गम्— 'सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति; तथा वाक्यमपि— 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति ।

'विद्याचित एव' इति हि सावधारणा इयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात्। ननु अबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति—नेत्युच्यते ; तदभिप्रायतायां हि 'विद्याचितः' इति इयता स्वरूपसंकीर्तनेनैव कृतत्वात्, अनर्थकमवधारणं भवेत्—स्वरूपमेव हि एषाम् अबाह्यसाधनत्वमिति ; अबाह्यसाधनत्वेऽपि तु मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलम् अवधारणम् अर्थवद्भविष्यति। तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इति सातत्यदर्शनम् एषां स्वातन्त्र्येऽवकल्पते—यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे 'प्राणं तदा वाचि जुहोति...वाचं तदा प्राणे जुहोति' इति च उक्त्वा उच्यते—'एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति' इति— तद्वत् ; क्रियानुप्रवेशे तु क्रियाप्रयोगस्य अल्पकालत्वात् न सातत्येन एषां प्रयोगः कल्पेत। न च इदमर्थवादमात्रमिति न्याय्यम् ; यत्र हि विस्पष्टो विधायको लिङादिः उपलभ्यते, युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम् ; इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेव एषां विज्ञानविधानं कल्पनीयम् ; तच्च यथासंकीर्तनमेव कल्पयितुं शक्यत इति, सातत्यदर्शनात् तथाभूतमेव कल्प्यते ; ततश्च

सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः । एतेन 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इत्यादि व्याख्यातम् । तथा वाक्यमपि 'एवंविदे' इति पुरुषविशेषसंबन्धमेव एषामाचक्षाणं न क्रतुसंबन्धं मृष्यते । तस्मात् स्वातन्त्र्यपक्ष एव ज्यायानिति ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम्, यत् क्रियावयवान् मनआदिव्यापारेष्वनुबध्नाति— 'ते मनसैवाधीयन्त मनसाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसास्तुवन्मनसाशंसन्यत्किंच यज्ञे कर्म क्रियेत यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' इत्यादिना; संपत्फलो हि अयमनुबन्धः; न च प्रत्यक्षाः क्रियावयवाः सन्तः संपदा लिप्सितव्याः । न च अत्र उद्गीथाद्युपासनवत् क्रियाङ्गसंबन्धात् तदनुप्रवेशित्वमाशङ्कितव्यम्, श्रुतिवैरूप्यात्; न हि अत्र क्रियाङ्गं किंचिदादाय तस्मिन् अदो नामाध्यवसितव्यमिति वदति; षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदान् आदाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति, पुरुषयज्ञादिवत्; संख्या च इयं पुरुषायुषस्याहःसु

दृष्टा सती तत्संबन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम् । एवमनुबन्धात्स्वातन्त्र्यं मनश्चिदादीनाम् । आदिशब्दात् अतिदेशाद्यपि यथासंभवं योजयितव्यम्; तथा हि— 'तेषामेकैक एव तावान्यावानसौ पूर्वः' इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्य अतिदिशन् क्रियायामनादरं दर्शयति; न च सत्येव क्रियासंबन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्यं वक्तुम्; न हि, येन व्यापारेण आहवनीयधारणादिना पूर्वः क्रियायामुपकरोति, तेन उत्तरे उपकर्तुं शक्नुवन्ति । यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तम्— सति हि सामान्येऽतिदेशः प्रवर्तत इति, तत् अस्मत्पक्षेऽप्यग्नित्वसामान्येनातिदेशसंभवात्प्रत्युक्तम्— अस्ति हि सांपादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कारणानि दर्शितानि । एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम्; प्रज्ञान्तरपृथक्त्ववत्— यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेन अनुबन्धेन अनुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्ति, एवमिति; दृष्टश्च अवेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः— वर्णत्रयानुबन्धात्; राजयज्ञत्वाच्च राजसूयस्य; तदुक्तं प्रथमे काण्डे— 'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' इति ॥

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

यदुक्तं मानसवदिति, तत्प्रत्युच्यते । न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम्, पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः; न हि किंचित् कस्यचित् केनचित् सामान्यं न संभवति; न च तावता यथास्वं वैषम्यं निवर्तते; मृत्युवत्—यथा 'स वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' इति, 'अग्निर्वै मृत्युः' इति च अग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे, न अत्यन्तसाम्यापत्तिः; यथा च 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्' इत्यत्र न समिदादिसामान्यात् लोकस्याग्निभावापत्तिः– तद्वत् ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

परस्तादपि 'अयं वाव लोक एषोऽग्निश्चितः' इत्यस्मिन् अनन्तरे ब्राह्मणे, ताद्विध्यं केवलविद्याविधित्वम् शब्दस्य प्रयोजनं लक्ष्यते, न शुद्धकर्माङ्गविधित्वम्; तत्र हि— 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र

दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसन् इदं गमयति । तथा पुरस्तादपि 'यदेतन्मण्डलं तपति' इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते— 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति विद्याफलेनैव उपसंहारात् न कर्मप्रधानता । तत्सामान्यात् इहापि तथात्वम् । भूयांस्तु अग्न्यवयवाः संपादयितव्या विद्यायाम्— इत्येतस्मात्कारणात् अग्निना अनुबध्यते विद्या, न कर्माङ्गत्वात् । तस्मात् मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

३०. शरीरेभावाधिकरणम् ।

इह देहव्यतिरिक्तस्य आत्मनः सद्भावः समर्थ्यते, बन्धमोक्षाधिकारसिद्धये; न हि असति देहव्यतिरिक्त आत्मनि परलोकफलाश्चोदना उपपद्येरन्; कस्य वा ब्रह्मात्मत्वमुपदिश्येत । ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्य आत्मनोऽस्तित्वमुक्तम्—सत्यमुक्तं भाष्यकृता; न तु तत्रात्मास्तित्वे सूत्रमस्ति; इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम्; इत एव च आकृष्य आचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्; अत एव च भ-

गवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः । इह च इदं चोदनालक्षणेषु उपासनेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते, कृत्स्नशास्त्रशेषत्वप्रदर्शनाय; अपि च पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्; कोऽसौ पुरुषः, यदर्था एते मनश्चिदादयः—इत्यस्यां प्रसक्तौ इदं देहव्यतिरिक्तस्य आत्मनोऽस्तित्वमुच्यते; तदस्तित्वाक्षेपार्थमिदमादिमं सूत्रम्—आक्षेपपूर्विका हि परिहारोक्तिः विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति ॥

अत्र एके देहमात्रात्मदर्शिनो लोकायतिकाः देहव्यतिरिक्तस्य आत्मनोऽभावं मन्यमानाः, समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति—संभावयन्तस्तेभ्यश्चैतन्यम्, मदशक्तिवत् विज्ञानम् चैतन्यविशिष्टः कायः पुरुषः—इति च आहुः । न स्वर्गगमनाय अपवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्मा अस्ति, यत्कृतं चैतन्यं देहे स्यात्; देह एव तु चेतनश्च आत्मा च इति प्रतिजानते । हेतुं च आचक्षते— शरीरे भावादिति; यद्धि यस्मिन्सति भवति, असति च न भवति, तत् तद्धर्मत्वेनाध्यवसीयते—यथा अग्निधर्मावौष्ण्य-

प्रकाशौ । प्राणचेष्टाचैतन्यस्मृत्यादयश्च आत्मधर्मत्वेनाभिमता आत्मवादिनाम्—तेऽपि अन्तरेव देहे उपलभ्यमानाः बहिश्च अनुपलभ्यमानाः असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति । तस्मादव्यतिरेको देहादात्मन इति ॥

एवं प्राप्ते, ब्रूमः—

### व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वेतदस्ति—यदुक्तमव्यतिरेको देहादात्मन इति; व्यतिरेक एव अस्य देहाद्भवितुमर्हति; तद्भावाभावित्वात्; यदि देहभावे भावात् देहधर्मत्वम आत्मधर्माणां मन्येत—ततो देहभावेऽपि अभावात् अतद्धर्मत्वमेव एषां किं न मन्येत? देहधर्मवैलक्षण्यात्; ये हि देहधर्मा रूपादयः, ते यावद्देहं भवन्ति; प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति; देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते, न त्वात्मधर्माश्चैतन्यस्मृत्यादयः । अपि च सति हि तावत् देहे जीवदवस्थायाम् एषां भावः शक्यते निश्चेतुम्, न तु असत्यभावः; पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसंचारेण आत्मधर्मा अनुवर्तेरन्; संशयमात्रेणापि परपक्षः

प्रतिषिध्यते । किमात्मकं च पुनरिदं चैतन्यं मन्यते, यस्य भूतेभ्य उत्पत्तिमिच्छति—इति परः पर्यनुयोक्तव्यः, न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित् तत्त्वं प्रत्येति; यत् अनुभवनं भूतभौतिकानाम्, तत् चैतन्यमिति चेत्, तर्हि विषयत्वात्तेषाम् न तद्धर्मत्वमश्नुवीत, स्वात्मनि क्रियाविरोधात्। न हि अग्निरुष्णः सन् स्वात्मानं दहति, न हि नटः शिक्षितः सन् स्वस्कन्धमधिरोक्ष्यति । न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्; न हि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते; विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन । अतश्च यथैव अस्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते, एवं व्यतिरेकोऽपि अस्यास्तेभ्यः अभ्युपगन्तव्यः; उपलब्धिस्वरूप एव च न आत्मेति आत्मनो देहव्यतिरिक्तत्वम् । नित्यत्वं च उपलब्धेः, ऐकरूप्यात्, 'अहम् इदम् अद्राक्षम्' इति च अवस्थान्तरयोगेऽप्युपलब्धृत्वेन प्रत्यभिज्ञानात्, स्मृत्याद्युपपत्तेश्च । यत्तूक्तम्— शरीरे भावाच्छरीरधर्म उपलब्धिरिति, तत् वर्णितेन प्रकारेण प्रत्युक्तम् । अपि च सत्सु प्रदीपादिषु उपकरणेषु उपलब्धिर्भवति असत्सु न भवतीति— न च एतावता प्रदीपादिधर्म एव उपलब्धिर्भवति; एवं सति

देहे उपलब्धिर्भवति, असति च न भवतीति— न देहधर्मो भवितुमर्हति; उपकरणत्वमात्रेणापि प्रदीपादिवत् देहोपयोगोपपत्तेः। न च अत्यन्तं देहस्य उपलब्धावुपयोगोऽपि दृश्यते, निश्चेष्टेऽप्यस्मिन्देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्य आत्मनोऽस्तित्वम् ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

समाप्ता प्रासङ्गिकी कथा; संप्रति प्रकृतामेवानुवर्तामहे। 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'लोकेषु पञ्चविधं सामोपासीत' 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम्' 'इयमेव पृथिवी' 'अयं वाव लोकः' 'एषोऽग्निश्चितः' इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः, ते तच्छाखागतेष्वेव उद्गीथादिषु भवेयुः, अथवा सर्वशाखागतेषु— इति विशयः। प्रतिशाखं च स्वरादिभेदात् उद्गीथादिभेदानुपादाय अयमुपन्यासः। किं तावत्प्राप्तम्? स्वशाखागतेष्वेव उद्गीथादिषु विधीयेरन्निति; कुतः? संनिधानात्— 'उद्गीथमुपसीत' इति हि सामान्यविहितानां विशेषाकाङ्क्षायां संनिकृष्टेनैव स्वशाखागतेन

३१. अङ्गावबद्धाधिकरणम्।

विशेषेण आकाङ्क्षादिनिवृत्तेः, तदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति । तस्मात्प्रतिशाखं व्यवस्थेत्येवं प्राप्ते, ब्रवीति— अङ्गावबद्धास्त्विवति । तु-शब्दः पक्षं व्यावर्तयति । नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्' अपि तु सर्वशाखास्वनुवर्तेरन्; कुतः? उद्गीथादिश्रुत्यविशेषात्; स्वशाखाव्यवस्थायां हि 'उद्गीथमुपासीत' इति सामान्यश्रुतिरविशेषप्रवृत्ता सती संनिधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात्; न चैतन्न्याय्यम्; संनिधानाद्धि श्रुतिर्बलीयसी; न च सामान्याश्रयः प्रत्ययो नोपपद्यते । तस्मात् स्वरादिभेदे सत्यपि उद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेव उद्गीथादिषु एवंजातीयकाः प्रत्ययाः स्युः ॥

## मन्त्रादिवद्वाविरोधः ॥ ५६ ॥

अथवा नैवात्र विरोधः शङ्कितव्यः— कथमन्यशाखागतेषु उद्गीथादिषु अन्यशाखाविहिताः प्रत्यया भवेयुरिति, मन्त्रादिवत् अविरोधोपपत्तेः । तथा हि— मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तरे उपसंग्रहो दृश्यते; येषामपि हि शाखिनाम् 'कुटरुरसि' इत्यश्मादानमन्त्रो नाम्नातः, तेषामपि असौ विनियोगो दृश्यते—'कुक्कुटोऽसीत्यश्मानमादत्ते, कुटरुरसीति वा' इति; येषामपि

समिदादयः प्रयाजा नाम्नाताः, तेषामपि तेषु गुणविधिराम्नायते— 'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति; तथा येषामपि 'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति, तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते— 'छागस्य वपाया मेदसोऽनुब्रूहि' इति; तथा वेदान्तरोत्पन्नानामपि 'अग्नेर्वैहोत्रं वेरध्वरम्' इत्येवमादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः; तथा बह्वृचपठितस्य सूक्तस्य 'यो जात एव प्रथमो मनस्वान्' इत्यस्य, 'अध्वर्यवे सजनीयं शस्यम्' इत्यत्र परिग्रहो दृष्टः। तस्मात् यथा आश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिः, एवम् आश्रितानामपि प्रत्ययानाम्—इत्यविरोधः ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

'प्राचीनशाल औपमन्यवः' इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्य उपासनं श्रूयते। व्यस्तोपासनं तावत्— 'औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' इत्यादि; तथा समस्तोपासन-

३२. भूमज्यायस्त्वाधिकरणम्।

मपि— 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' इत्यादि । तत्र संशयः— किमिह उभयथापि उपासनं स्यात् व्यस्तस्य समस्तस्य च, उत समस्तस्यैवेति । किं तावत्प्राप्तम्? प्रत्यवयवं सुतेजः-प्रभृतिषु 'उपास्से' इति क्रियापदश्रवणात्, 'तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते' इत्यादिफलभेदश्रवणाच्च, व्यस्तान्यप्युपासनानि स्युः— इति प्राप्तम् ॥

ततोऽभिधीयते— भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येन अस्मिन्वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकम् अवयवोपासनानामपि; क्रतुवत्—यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एव एको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनाम्, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य—तद्वत् । कुत एतत्—भूमैव ज्यायानिति? तथा हि श्रुतिः भूम्नो ज्यायस्त्वं दर्शयति, एकवाक्यतावगमात्; एकं हि इदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात्प्रतीयते; तथा हि—प्राचीनशालप्रभृतय उद्दालकावसानाः षट् ऋषयः वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमानाः अश्वपतिं कैकेयं राजानमभ्याजग्मुः—

इत्युपक्रम्य, एकैकस्य ऋषेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा, 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिना मूर्धादिभावं तेषां विदधाति; 'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिना च व्यस्तोपासनमपवदति; पुनश्च व्यस्तोपासनं व्यावर्त्य, समस्तोपासनमेवानुवर्त्य, 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति भूमाश्रयमेव फलं दर्शयति। यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणम्, तत् एवं सति अङ्गफलानि प्रधान एवाभ्युच्चिनोति—इति द्रष्टव्यम्। तथा 'उपास्से' इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थम्, न व्यस्तोपासनविधानार्थम्। तस्मात्समस्तोपासनपक्ष एव श्रेयानिति ॥

केचित्तु अत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य, ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कल्पयन्ति। तदयुक्तम्, एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्, 'मूर्धा ते व्यपतिष्यत्' इति च एवमादिनिन्दाविरोधात्, स्पष्टे च उपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणापि उपपद्यमानत्वात् ॥

## नाना शब्दादिभेदात् ॥ ५८ ॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तस्योपासनं ज्याय इत्युक्तम्; अतः प्राप्ता बुद्धिः—अन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्य उपासिष्यन्ते इति । अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते; वेद्यं हि रूपं विद्यायाः, द्रव्यदैवतमिव यागस्य; वेद्यश्च एक एव ईश्वरः श्रुतिनानात्वेऽप्यवगम्यते– 'मनोमयः प्राणशरीरः' 'कं ब्रह्म खं ब्रह्म' 'सत्यकामः सत्यसंकल्पः' इत्येवमादिषु– तथा 'एक एव प्राणः' 'प्राणो वाव संवर्गः' 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' 'प्राणो ह पिता प्राणो माता' इत्येवमादिषु; वेद्यैकत्वाच्च विद्यैकत्वम् । श्रुतिनानात्वमपि अस्मिन्पक्षे गुणान्तरपरत्वात् न अनर्थकम् । तस्मात् स्वपरशाखाविहितम् एकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकार्त्स्न्याय इत्येवं प्राप्ते—

२३. शब्दादिभेदाधिकरणम् ।

प्रतिपाद्यते— नानेति; वेद्याभेदेऽपि एवंजातीयका विद्या भिन्ना भवितुमर्हति; कुतः? शब्दादिभेदात्; भवति हि शब्दभेदः– 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' इत्येवमादिः; शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात् 'श-

ब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इति । आदिग्रहणात् गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्याः । ननु 'वेद' इत्यादिषु शब्दभेद एव अवगम्यते, न 'यजति' इत्यादिवत् अर्थभेदः, सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात्, अर्थान्तरासंभवाच्च; तत् कथं शब्दभेदाद्विद्याभेद इति—नैष दोषः, मनोवृत्त्यर्थत्वाभेदेऽपि अनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः; एकस्यापीश्वरस्य उपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते; तथा एकस्यापि प्राणस्य तत्र तत्र उपास्यस्य अभेदेऽपि अन्यादृग्गुणोऽन्यत्रोपासितव्यः अन्यादृग्गुणश्चान्यत्र— इत्येवमनुबन्धभेदाद्विधिभेदे सति विद्याभेदो विज्ञायते । न च अत्र एको विद्याविधिः, इतरे गुणविधय इति शक्यं वक्तुम्— विनिगमनायां हेत्वभावात्, अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः । न च अस्मिन्पक्षे समानाः सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः । प्रतिप्रकरणं च— इदंकामेनेदमुपासितव्यम्, इदंकामेन च इदम्— इति नैराकाङ्क्ष्यावगमात् नैकवाक्यतापत्तिः । न च अत्र वैश्वानरविद्यायामिव समस्तचोदना अपरा अस्ति, यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वा एकवाक्यताम् इयुः ।

वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने, समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत । तस्मात् सुष्ठु उच्यते— नाना शब्दादिभेदादिति । स्थिते च एतस्मिन्नधिकरणे, सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

स्थिते विद्याभेदे विचार्यते— किमासामिच्छया समुच्चयो विकल्पो वा स्यात्, अथवा विकल्प एव नियमेनेति । तत्र स्थितत्वात् तावद्विद्याभेदस्य न समुच्चयनियमे किंचित्कारणमस्ति । ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते— नैष दोषः; नित्यताश्रुतिर्हि तत्र कारणम्; नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति; तस्मान्न समुच्चयनियमः । नापि विकल्पनियमः, विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात् । पारिशेष्यात् याथाकाम्यमापद्यते । ननु अविशिष्टफलत्वादासां विकल्पो न्याय्यः; तथा हि— 'मनोमयः प्राणशरीरः' 'कं ब्रह्म खं ब्रह्म' 'सत्यकामः सत्यसंकल्पः' इत्येवमाद्याः तुल्यवत् ईश्वरत्वप्राप्तिफला लक्ष्यन्ते—नैष दोषः, समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात् । तस्मात् याथाकाम्यप्राप्तौ, उच्यते— विकल्प एव आसां भवितुम-

३४. विकल्पाधिकरणम् ।

र्हति, न समुच्चयः; कस्मात्? अविशिष्टफलत्वात् । अविशिष्टं हि आसां फलमुपास्यविषयसाक्षात्करणम्; एकेन च उपासनेन साक्षात्कृते उपास्ये विषये ईश्वरादौ, द्वितीयमनर्थकम् । अपि च असंभव एव, साक्षात्करणस्य समुच्चयपक्षे, चित्तविक्षेपहेतुत्वात्; साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः—'यस्य स्यादद्धा न विचिकित्सास्ति' इति, 'देवो भूत्वा देवानप्येति' इति च एवमाद्याः; स्मृतयश्च—'सदा तद्भावभावितः' इत्येवमाद्याः । तस्मात् अविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्यात्, यावदुपास्यविषयसाक्षात्करणेन तत्फलं प्राप्तमिति ॥

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥**

३५. काम्याधिकरणम् ।

अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम् । यासु पुनः काम्यासु विद्यासु 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इति चैवमाद्यासु क्रियावत् अदृष्टेनात्मना आत्मीयं फलं साधयन्तीषु, साक्षात्करणापेक्षा नास्ति;

ता यथाकामं समुच्चीयेरन्, न वा समुच्चीयेरन्—पूर्वहेत्वभावात्— पूर्वस्य अविशिष्टफलत्वादित्यस्य विकल्पहेतोः अभावात् ॥

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

३६. यथाश्रयभावाधिकरणम् ।

कर्माङ्गेषु उद्गीथादिषु ये आश्रिताः प्रत्यया वेदत्रयविहिताः, किं ते समुच्चीयेरन्, किं वा यथाकामं स्युरिति संशये— यथाश्रयभाव इत्याह । यथैव एषामाश्रयाः स्तोत्रादयः संभूय भवन्ति, एवं प्रत्यया अपि, आश्रयतन्त्रत्वात्प्रत्ययानाम् ॥

## शिष्टेश्च ॥ ६२ ॥

यथा वा आश्रयाः स्तोत्रादयः त्रिषु वेदेषु शिष्यन्ते, एवमाश्रिता अपि प्रत्ययाः— नोपदेशकृतोऽपि कश्चिद्विशेषः अङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः ॥

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति' इति च— प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात् उद्गाता स्वकर्मण्युत्पन्नं

क्षतं हौत्रात्कर्मणः प्रतिसमादधाति— इति ब्रुवन् वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसंबन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयति— इति लिङ्गदर्शनम् ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणं च विद्याश्रयं सन्तम् ओंकारं वेदत्रयसाधारणं श्रावयति—'तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति च; ततश्च आश्रयसाधारण्यात् आश्रितसाधारण्यमिति— लिङ्गदर्शनमेव । अथवा गुणसाधारण्यश्रुतेश्चेति; यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युः, न स्यात् ततः तदाश्रयाणां प्रत्ययानां सहभावः; ते तु उद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते; ततश्च आश्रयसहभावात्प्रत्ययसहभाव इति ॥

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वेति पक्षव्यावर्तनम् । न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति; कुतः? तत्सहभावाश्रुतेः; यथा हि त्रिवेदविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते— 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति, स्तुतमनु-

शंसति, प्रस्तोतः साम गाय, होतरेतद्यज' इत्यादिना; नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन एषां सहभावं प्रापयेत्—नेति ब्रूमः, पुरुषार्थत्वादुपासनानाम्; प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्; उद्गीथाद्युपासनानि तु क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम 'पृथग्घ्यप्रतिबन्धः फलम्' इत्यत्र। अयमेव च उपदेशाश्रयो विशेषः अङ्गानां तदालम्बनानां च उपासनानाम्— यदेकेषां क्रत्वर्थत्वम्, एकेषां पुरुषार्थत्वमिति। परं च लिङ्गद्वयम् अकारणमुपासनसहभावस्य, श्रुतिन्यायाभावात्। न च प्रतिप्रयोगम् आश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यम्, अतत्प्रयुक्तत्वादुपासनानाम्— आश्रयतन्त्राण्यपि हि उपासनानि कामम् आश्रयाभावे मा भूवन्; न त्वाश्रयसहभावेन सहभावनियममर्हन्ति, तत्सहभावाश्रुतेरेव। तस्मात् यथाकाममेव उपासनान्यनुष्ठीयेरन्॥

## दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्—'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति। सर्व-

प्रत्ययोपसंहारे हि, सर्वे सर्वविद इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत । तस्मात् यथाकाममुपासनानां समुच्चयो विकल्पो वेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**तृतीयाध्यायस्य तृतीयः पादः ॥**

श्रीमच्छंकरभगवत्पादैर्विरचितम्

# ॥ ब्रह्मसूत्रभाष्यम् ॥

## तृतीयाध्याये
## चतुर्थः पादः

## चतुर्थः पादः ॥

अथेदानीम् औपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशति, आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः, सिद्धान्तेनैव तावदुपक्रमते—

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

१. पुरुषार्थाधिकरणम् ।

पुरुषार्थोऽत इति । अस्माद्वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात् पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते ; कुत एतदवगम्यते? शब्दादित्याह । तथा हि— 'तरति शोकमात्मवित्' 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' 'य आत्मापहतपाप्मा' इत्युपक्रम्य, 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' इति ; 'आत्मा वा अरे द्रष्टव्यः' इत्युपक्रम्य, 'एता-

वदरे खल्वमृतत्वम्' इति एवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति ॥

अथात्र प्रत्यवतिष्ठते—

**शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥**

कर्तृत्वेन आत्मनः कर्मशेषत्वात्, तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् विषयद्वारेण कर्मसंबन्ध्येव— इत्यतः, तस्मिन् अवगतप्रयोजने आत्मज्ञाने या फलश्रुतिः, सा अर्थवादः— इति जैमिनिराचार्यो मन्यते। यथा अन्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत्प्रयाजानूयाजा इज्यन्ते, वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिः अर्थवादः— तद्वत्। कथं पुनः अस्य अनारभ्याधीतस्य आत्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते? कर्तृद्वारेण वाक्यात् तद्विज्ञानस्य क्रतुसंबन्ध इति चेत्, न, वाक्याद्विनियोगानुपपत्तेः— अव्यभिचारिणा हि केनचिद्द्वारेण अनारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते; कर्ता तु व्यभिचारि द्वारम्, लौकिकवैदिककर्म-

साधारण्यात्; तस्मान्न तद्द्वारेण आत्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति— न, व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्र अनुपयोगात्; न हि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु कर्मसु उपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः; वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिः नोपपद्यत इति, उपयुज्यते व्यतिरेकविज्ञानम् । ननु अपहतपाप्मत्वादिविशेषणात् असंसार्यात्मविषयम् औपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्— न, प्रियादिसंसूचितस्य संसारिण एव आत्मनो द्रष्टव्यत्वोपदेशात्; अपहतपाप्मत्वादि विशेषणं तु स्तुत्यर्थं भविष्यति । ननु तत्र तत्र प्रसाधितमेतत्—अधिकमसंसारि ब्रह्म जगत्कारणम्; तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपम् उपनिषत्सु उपदिश्यत इति—सत्यं प्रसाधितम्; तस्यैव तु स्थूणानिखननवत् फलद्वारेण आक्षेपसमाधाने क्रियेते दार्ढ्याय ॥

## आचारदर्शनात् ॥ ३ ॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्येवमादीनि ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्मसंबन्धदर्शनानि भवन्ति । तथा उद्दालकादीनामपि पुत्रानुशासनादिदर्शनात् गार्हस्थ्यसंबन्धोऽवगम्य-

ते । केवलाच्चेत् ज्ञानात् पुरुषार्थसिद्धिः स्यात्, किमर्थम् अनेकायाससमन्वितानि कर्माणि ते कुर्युः? 'अत्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् ॥

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च कर्मशेषत्वश्रवणात् विद्याया न केवलायाः पुरुषार्थहेतुत्वम् ॥

## समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इति च विद्याकर्मणोः फलारम्भे साहित्यदर्शनात् न स्वातन्त्र्यं विद्यायाः ॥

## तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इति च एवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति; तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम् । ननु अत्र 'अधीत्य' इत्यध्ययनमात्रं वेदस्य श्रूयते, न अर्थविज्ञानम्— नैष दोषः; दृष्टार्थत्वात् वेदाध्ययनम् अर्थावबोधपर्यन्तमिति स्थितम् ॥

## नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति— तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा'— इत्येवंजातीयकान् नियमादपि कर्मशेषत्वमेव विद्याया इति ॥

एवं प्राप्ते, प्रतिविधत्ते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तु-शब्दात् पक्षो विपरिवर्तते । यदुक्तम् 'शेषत्वात्पुरुषार्थवादः' इति, तत् नोपपद्यते; कस्मात्? अधिकोपदेशात्; यदि संसार्येव आत्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषु उपदिष्टः स्यात्, ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात्; अधिकस्तावत् शारीरादात्मनः असंसारी ईश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु । न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिनत्ति— इति वक्ष्यति 'उपमर्दं च' इत्यत्र । तस्मात्

'पुरुषार्थोऽतः शब्दात्' इति यन्मतं भगवतो बादरायणस्य, तत् तथैव तिष्ठति; न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथा हि तमधिकं शारीरात् ईश्वरमात्मानं दर्शयन्ति श्रुतयः— 'यः सर्वज्ञः सर्ववित्' 'भीषास्माद्वातः पवते' 'महद्भयं वज्रमुद्यतम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एव आत्मनो वेद्यतया अनुकर्षणम्— 'आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः' 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति चैवमादि— तदपि, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्येवमादिभिर्वाक्यशेषैः सत्यामेव अधिकोपदिदिक्षायाम्, अत्यन्ताभेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्; उपाधिकृतं तु शारीरत्वम्, 'तत्त्वमसि' 'नान्यदतोऽस्ति द्रष्टृ' इत्यादिश्रुतिभ्यः। सर्वं च एतत् विस्तरेणास्माभिः पुरस्तात् तत्र तत्र वर्णितम्॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

यत्तूक्तम्—आचारदर्शनात्कर्मशेषो विद्येति, अत्र ब्रूमः—तुल्यमाचारदर्शनम् अकर्मशेषत्वेऽपि विद्यायाः । तथा हि श्रुतिर्भवति—'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे । एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्येवंजातीयका । याज्ञवल्क्यादीनामपि ब्रह्मविदाम् अकर्मनिष्ठत्वं दृश्यते—'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज' इत्यादिश्रुतिभ्यः । अपि च 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्येतत् लिङ्गदर्शनं वैश्वानरविद्याविषयम्; संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम; न तु अत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात् ॥

यत्पुनरुक्तम्—'तच्छ्रुतेः' इति, अत्र ब्रूमः—

## असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोति' इत्येषा श्रुतिर्न सर्वविद्याविषया,

प्रकृतविद्याभिसंबन्धात् । प्रकृता च उद्गीथविद्या— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्र ॥

## विभागः शतवत् ॥ ११ ॥

यदप्युक्तम्— 'तं विद्याकर्मणी समन्वारभेते' इत्येतत् समन्वारम्भवचनम् अस्वातन्त्र्ये विद्याया लिङ्गमिति, तत् प्रत्युच्यते— विभागोऽत्र द्रष्टव्यः— विद्या अन्यं पुरुषमन्वारभते, कर्म अन्यमिति । शतवत्— यथा शतम् आभ्यां दीयतामित्युक्ते विभज्य दीयते— पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वत् । न च इदं समन्वारम्भवचनं मुमुक्षुविषयम्— 'इति नु कामयमानः' इति संसारिविषयत्वोपसंहारात्, 'अथाकामयमानः' इति च मुमुक्षोः पृथगुपक्रमात्; तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते, विशेषाभावात्; कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात्; एवं सति अविभागेनापि इदं समन्वारम्भवचनमवकल्पते ॥

यच्चैतत्— 'तद्वतो विधानात्' इति, अत उत्तरं पठति—

## अध्ययनमात्रवतः ॥ १२ ॥

'आचार्यकुलाद्वेदमधीत्य' इत्यत्र अध्ययनमात्रस्य श्रव-

णात् अध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः । ननु एवं सति अविद्यत्वात् अनधिकारः कर्मसु प्रसज्येत— नैष दोषः ; न वयम् अध्ययनप्रभवं कर्मावबोधनम अधिकारकारणं वारयामः ; किं तर्हि औपनिषदमात्मज्ञानम् , स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानम् , न कर्माधिकारकारणतां प्रतिपद्यते— इत्येतत्प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेण अपेक्ष्यते, एवमेतदपि द्रष्टव्यमिति ॥

यदप्युक्तम्— 'नियमाच्च' इति, अत्राभिधीयते—

## नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति, अविशेषेण नियमविधानात् ॥

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

'कुर्वन्नेवेह कर्माणि' इत्यत्र अपरो विशेष आख्यायते । यद्यपि अत्र प्रकरणसामर्थ्यात् विद्वानेव— कुर्वन्— इति संबध्येत, तथापि विद्यास्तुतये कर्मानुज्ञानम् एतद्द्रष्टव्यम् ; 'न कर्म लिप्यते नरे' इति हि वक्ष्यति । एतदुक्तं भवति — यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि पुरुषे न कर्म

लेपाय भवति, विद्यासामर्थ्यादिति— तदेवं विद्या स्तूयते ॥

**कामकारेण चैके ॥ १५ ॥**

अपि च एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तः, तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेण— इति श्रुतिर्भवति वाजसनेयिनाम्— 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति'। अनुभवारूढमेव च विद्याफलं न क्रियाफलवत् कालान्तरभावि— इत्यसकृदवोचाम। अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥

**उपमर्दं च ॥ १६ ॥**

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्य अविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति— 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत। तस्मादपि स्वातन्त्र्यं विद्यायाः ॥

**ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥**

ऊर्ध्वरेतःसु च आश्रमेषु विद्या श्रूयते; न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात्; न हि अग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत्, ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति—तदपि नास्ति; तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते—'त्रयो धर्मस्कन्धाः' 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्येवमादिषु। प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानाम् अपाकृतानपाकृतर्णत्रयाणां च ऊर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम्। तस्मादपि स्वातन्त्र्यं विद्यायाः॥

## परामर्शं जैमिनिरचोदना चापवदति हि॥ १८॥

२. परामर्शाधिकरणम्।

'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावाय उदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति; यतः परामर्शम् एषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम्। कुतः? न हि अत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति; अर्थान्तरपरत्वं च एषु प्रत्येकमुपलभ्यते। 'त्रयो धर्मस्कन्धाः' इत्यत्र तावत् 'यज्ञोऽध्ययनं दानमिति प्रथमस्तप

एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति' इति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्य, आत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते— 'ब्रह्मसंस्थोऽमृतत्वमेति' इति। ननु परामर्शेऽपि आश्रमा गम्यन्त एव—सत्यं गम्यन्ते; स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः, न प्रत्यक्षश्रुतेः; अतश्च प्रत्यक्षश्रुतिविरोधे सति अनादरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टम्— 'यज्ञोऽध्ययनं दानमिति प्रथमः' इति— सत्यमेवम्; तथापि तु गृहस्थं प्रत्येव अग्निहोत्रादीनां कर्मणां विधानात् श्रुतिप्रसिद्धमेव हि तदस्तित्वम्; तस्मात्स्तुत्यर्थ एव अयं परामर्शः, न चोदनार्थः। अपि च अपवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम्— 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' इति च देवयानोपदेशः, न आश्रमान्तरोपदेशः। संदिग्धं च आश्रमान्तराभिधानम्— 'तप एव द्वितीयः' इत्येवमादिषु। तथा 'एतमेव

प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति’ इति लोकसंस्तवोऽयम्, न पारिव्राज्यविधिः । ननु ‘ब्रह्मचर्यादेव प्रव्रजेत्’ इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्— सत्यमेवमेतत्; अनपेक्ष्य तु एतां श्रुतिम् अयं विचार इति द्रष्टव्यम् ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयम् आश्रमान्तरं बादरायण आचार्यो मन्यते— वेदेऽश्रवणादग्निहोत्रादीनां च अवश्यानुष्ठेयत्वात् तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरम्— इति हि इमां मतिं निराकरोति, गार्हस्थ्यवदेव आश्रमान्तरमपि अनिच्छता प्रतिपत्तव्यमिति मन्यमानः । कुतः? साम्यश्रुतेः; समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते— ‘त्रयो धर्मस्कन्धाः’ इत्याद्या; यथा इह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टम्, एवमाश्रमान्तरमपीति प्रतिपत्तव्यम्—यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये; तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येन आश्रमान्तरस्य । तथा ‘एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति’ इत्यस्य वेदानुवचनादिभिः समभिव्याहारः; ‘ये चेमेऽरण्ये श्रद्धा तप इत्युपासते’ इत्यस्य च पञ्चाग्निविद्यया । यत्तूक्तम्—

'तप एव द्वितीयः' इत्यादिष्वाश्रमान्तराभिधानं संदिग्धमिति; नैष दोषः, निश्चयकारणसद्भावात; 'त्रयो धर्मस्कन्धाः' इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम्; न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तः अन्यत्राश्रमसंबन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते; तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः, तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमान् धर्मस्कन्धोऽभ्युपगम्येत । 'ये चेमेऽरण्ये' इति च अरण्यलिङ्गात् श्रद्धातपोभ्यामाश्रमगृहीतिः । तस्मात् परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम् ॥

## विधिर्वा धारणवत् ॥ २० ॥

विधिर्वा अयमाश्रमान्तरस्य, न परामर्शमात्रम् । ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत; प्रतीयते च अत्र एकवाक्यता— पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थता त्वमृतत्वफलेति— सत्यमेतत्; सतीमपि तु एकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात्, विस्पष्टाच्चाश्रमान्तरप्रत्ययात् गुणवादकल्पनया एकवाक्यत्वयोजनानुपपत्तेः । धारणवत्— यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवे-

भ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेन एकवाक्यताप्रतीतौ, विधीयत एव उपरिधारणम्, अपूर्वत्वात्; तथा च उक्तं शेषलक्षणे 'विधिस्तु धारणेऽपूर्वत्वात्' इति; तद्वत् इहापि आश्रमपरामर्शश्रुतिः विधिरेवेति कल्प्यते ॥

यद्यपि परामर्श एवायमाश्रमान्तराणाम्, तदापि ब्रह्मसंस्थता तावत्, संस्तवसामर्थ्यादवश्यं विधेया अभ्युपगन्तव्या। सा च किं चतुर्ष्वाश्रमेषु यस्य कस्य चित्, आहोस्वित्परिव्राजकस्यैवेति विवेक्तव्यम्। यदि च ब्रह्मचर्यान्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टः, ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषात् अनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति; अथ न परामृष्टः, ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति। तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपि इति केचित्। तदयुक्तम्; न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति; यथा अत्र ब्रह्मचारिगृहमेधिनौ असाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितौ, एवं भिक्षुवैखानसावपीति युक्तम्; तपश्च असाधारणो धर्मो वानप्रस्थानां कायक्लेशप्रधानत्वात्, तपःशब्दस्य तत्र रूढेः; भिक्षोस्तु धर्म इन्द्रियसंयमादिः लक्षणयैव तपःशब्देना-

भिलप्येत । चतुष्ट्वेन च प्रसिद्धा आश्रमाः त्रित्वेन परामृश्यन्त इत्यन्याय्यम् । अपि च भेदव्यपदेशोऽत्र भवति—त्रय एते पुण्यलोकभाजः, एकोऽमृतत्वभागिति; पृथक्त्वे च भेदव्यपदेशोऽवकल्पते; न ह्येवं भवति—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्त्वनयोर्महाप्रज्ञ इति; भवति त्वेवम्—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञ इति; तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः, परिशिष्यमाणः परिव्राट् अमृतत्वभाक् । कथं पुनः ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन् परिव्राजक एवावतिष्ठेत ? रूढ्यभ्युपगमे च आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति— अत्रोच्यते— ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिः अनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते; तच्च त्रयाणामाश्रमाणां न संभवति, स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्; परिव्राजकस्य तु सर्वकर्मसंन्यासात् प्रत्यवायो न संभवति अननुष्ठाननिमित्तः; शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थाया उपोद्बलकः, न विरोधी; ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म; यज्ञादीनि च इतरेषाम्; तद्व्यतिक्रमे च तस्य प्रत्यवायः । तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा । तानि वा एतान्यवराणि

तपांसि न्यास एवात्यरेचयत्' 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्याद्याः श्रुतयः, स्मृतयश्च 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' इत्याद्याः— ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति । तस्मात् परिव्राजकस्य आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति । तदेवं परामर्शेऽपि इतरेषामाश्रमाणाम्, पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यतैव । अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीम् अयमाचार्येण विचारः प्रवर्तितः; विद्यत एव तु आश्रमान्तरविधिश्रुतिः प्रत्यक्षा— 'ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इति; न च इयं श्रुतिः अनधिकृतविषया शक्या वक्तुम्, अविशेषश्रवणात्, पृथग्विधानाच्च अनधिकृतानाम्—'अथ पुनरेव व्रती वाव्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा' इत्यादिना; ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य न अनधिकृतविषयत्वम्, तच्च दर्शयति—'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' इति । तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः । सिद्धं च ऊर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

३. स्तुतिमात्राधिकरणम्।

'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' 'इयमेवर्गग्निः साम' 'अयं वाव लोकः, एषोऽग्निश्चितः, तदिदमेवोक्थम्, इयमेव पृथिवी' इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्थाः, आहोस्वित् उपासनाविध्यर्था इत्यस्मिन्संशये—स्तुत्यर्था इति युक्तम्, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्; यथा 'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थाः, तद्वत्—इति चेत्, नेत्याह; न हि स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तम्, अपूर्वत्वात्; विध्यर्थतायां हि अपूर्वोऽर्थो विहितो भवति; स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्; विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम् 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यत्र; प्रदेशान्तरविहितानां तु उद्गीथादीनाम् इयं प्रदेशान्तरपठिता स्तुतिः वाक्यशेषभावमप्रतिपद्यमाना अनर्थिकैव स्यात्; 'इयमेव जुहूः' इत्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम् । तस्मात् विध्यर्था एव एवंजातीयकाः श्रुतयः ॥

## भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीत' 'सामोपासीत' 'अहमुक्थमस्मीति विद्यात्' इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते; ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् । तथा च न्यायविदां स्मरणम्— 'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्' इति; लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति। प्रतिप्रकरणं च फलानि श्राव्यन्ते— 'आपयिता ह वै कामानां भवति' 'एष ह्येव कामागानस्येष्टे' 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' इत्यादीनि; तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

४. पारिप्लवाधिकरणम् ।

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः— किमिमानि पारिप्लवप्रयोगार्थानि, आहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थानीति । पा-

रिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्, आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्; ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत् प्रयोगशेषत्वादिति चेत् —तन्न; कस्मात्? विशेषितत्वात्— 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य, 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेव आख्यानानि तत्र विशेष्यन्ते; आख्यानसामान्याच्चेत सर्वगृहीतिः स्यात्, अनर्थकमेवेदं विशेषणं भवेत्। तस्मात् न पारिप्लवार्था एता आख्यानश्रुतयः ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

असति च पारिप्लवार्थत्वे आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या, एकवाक्यतोपबन्धात्; तथा हि तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च—मैत्रेयीब्राह्मणे तावत्—'आत्मा वा अरे द्रष्टव्यः' इत्याद्यया विद्यया एकवाक्यता दृश्यते; प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्याद्यया; 'जानश्रुतिः' इत्यत्रापि 'वायुर्वाव संवर्गः' इत्याद्यया —यथा 'स आत्मनो वपामुदखिदत्' इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता, तद्वत्। तस्मान्न पारिप्लवार्थत्वम् ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

'पुरुषार्थोऽतः शब्दात्' इत्येतत् व्यवहितमपि संभवात् 'अतः' इति परामृश्यते । अत एव च विद्यायाः पुरुषार्थहेतुत्वात् अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति आद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया ॥

५. अग्नीन्धनाद्यधिकरणम् ।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

इदमिदानीं चिन्त्यते— किं विद्याया अत्यन्तमेवानपेक्षा आश्रमकर्मणाम्, उत अस्ति काचिदपेक्षेति । तत्र अत एवाग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्ते; एवमत्यन्तमेवानपेक्षायां प्राप्तायाम्, इदमुच्यते— सर्वापेक्षा चेति; अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव । ननु विरुद्धमिदं वचनम्— अपेक्षते च आश्रमकर्माणि विद्या, नापेक्षते चेति । नेति ब्रूमः; उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते, उत्पत्तिं प्रति तु अपेक्षते; कुतः? यज्ञादिश्रुतेः; तथा हि श्रुतिः— 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति, यज्ञादीनां विद्यासाधनभावं दर्शयति; विविदिषासंयोगाच्चै-

६. सर्वापेक्षाधिकरणम् ।

षामुत्पत्तिसाधनभावोऽवसीयते; 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवात् यज्ञादीनामपि हि साधनभावः सूच्यते; 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि' इत्येवमाद्या च श्रुतिः आश्रमकर्मणां विद्यासाधनभावं सूचयति; स्मृतिरपि— 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनम्— यथा च योग्यतावशेन अश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते, एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ च अपेक्ष्यन्त इति॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥२७॥

यदि कश्चिन्मन्येत— यज्ञादीनां विद्यासाधनभावो न न्याय्यः, विध्यभावात्; 'यज्ञेन विविदिषन्ति' इत्येवंजातीयका हि श्रुतिः अनुवादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा—इत्थं महाभागा विद्या, यत् यज्ञादिभिरेतामवाप्तुमिच्छन्तीति—तथापि तु शमदमाद्युपेतः स्यात् विद्यार्थी, 'तस्मा-

देवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्ये-वात्मानं पश्यति ' इति विद्यासाधनत्वेन शमदमादीनां विधानात् विहितानां च अवश्यानुष्ठेयत्वात् । ननु अत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते, न विधिः— नेति ब्रूमः, ' तस्मात् ' इति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः; ' पश्येत् ' इति च माध्यंदिना विस्पष्टमेव विधिमधीयते । तस्मात् यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि । यज्ञादीन्यपि तु अपेक्षितव्यानि, यज्ञादिश्रुतेरेव । ननु उक्तम्—यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति— सत्यमुक्तम्; तथापि तु अपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते ; न हि अयं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तः, येनानूद्येत ; ' तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि ' इत्येवमादिषु च अश्रुतविधिकेष्वपि वाक्येषु अपूर्वत्वाद्विधिं परिकल्प्य, ' पौष्णं पेषणं विकृतौ प्रतीयेत '— इत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः ; तथा च उक्तम् ' विधिर्वा धारणवत् ' इति । स्मृतिष्वपि भगवद्गीताद्यासु अनभिसंधाय फलम् अनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम् । तस्माद्यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येव आश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्रापि ' एवंवित् ' इति विद्यासंयो-

गात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

७. सर्वान्नानुमत्यधिकरणम् ।

प्राणसंवादे श्रूयते छन्दोगानाम्—'न ह वा एवंविदि किंचनानन्नं भवति' इति; तथा वाजसनेयिनाम्— 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्' इति; सर्वमस्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवत् विद्याङ्गं विधीयते, उत स्तुत्यर्थं संकीर्त्यत इति संशये—विधिरिति तावत्प्राप्तम्; तथा हि प्रवृत्तिविशेषकर उपदेशो भवति; अतः प्राणविद्यासंनिधानात् तदङ्गत्वेन इयं नियमनिवृत्तिरुपदिश्यते। ननु एवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्—नैष दोषः, सामान्यविशेषभावात् बाधोपपत्तेः; यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च 'न कांचन स्त्रियं परिहरेत्तद्व्रतम्' इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते—एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेत्येवं प्राप्ते—

ब्रूमः—नेदं सर्वान्नानुज्ञानं विधीयत इति ; न हि अत्र विधायकः शब्द उपलभ्यते, 'न ह वा एवंविदि किंचनानन्नं भवति' इति वर्तमानापदेशात् । न च असत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्युपगन्तुं शक्यते । अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वा, इदमुच्यते—नैवंविदः किंचिदनन्नं भवतीति ; न च श्वादिमर्यादमन्नं मानुषेण देहेनोपभोक्तुं शक्यते ; शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम् । तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादः, न सर्वान्नानुज्ञानविधिः । तद्दर्शयति—'सर्वान्नानुमतिश्च प्राणात्यये' इति ; एतदुक्तं भवति—प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते, तद्दर्शनात् ; तथा हि श्रुतिः चाक्रायणस्य ऋषेः कष्टायामवस्थायाम् अभक्ष्यभक्षणे प्रवृत्तिं दर्शयति 'मटचीहतेषु कुरुषु' इत्यस्मिन् ब्राह्मणे— चाक्रायणः किल ऋषिः आपद्गतः इभ्येन सामिखादितान्कुल्माषांश्चखाद ; अनुपानं तु तदीयम् उच्छिष्टदोषात्प्रत्याचचक्षे ; कारणं चात्रोवाच 'न वा अजीविष्यमिमानखादन्' इति, 'कामो म उदपानम्' इति च ; पुनश्च उत्तरेद्युः तानेव स्वपरोच्छिष्टान्पर्युषितान्कुल्माषान् भक्षयांबभूव— इति ; तदेतत् उच्छिष्टोच्छिष्टपर्युषितभक्षणं

दर्शयन्त्याः श्रुतेः आशयातिशयो लक्ष्यते— प्राणात्ययप्रसङ्गे प्राणसंधारणाय अभक्ष्यमपि भक्षयितव्यमिति ; स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावतापि— इत्यनुपानप्रत्याख्यानाद्गम्यते । तस्मात् अर्थवादः 'न ह वा एवंविदि' इत्येवमादिः ॥

## अबाधाच्च ॥ २९ ॥

एवं च सति 'आहारशुद्धौ सत्त्वशुद्धिः' इत्येवमादि भक्ष्याभक्ष्यविभागशास्त्रम् अबाधितं भविष्यति ॥

## अपि च स्मर्यते ॥ ३० ॥

अपि च आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्च अविशेषेण—'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति । तथा 'मद्यं नित्यं ब्राह्मणः' 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः', 'सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च—स्मर्यते वर्जनमनन्नस्य ॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्च अनन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां संहितायां श्रूयते—'तस्माद्ब्राह्मणः सुरां न पिबेत्' इति । सोऽपि 'न ह वा एवंविदि' इत्यस्यार्थवादत्वात् उपप-

न्तरो भवति । तस्मादेवंजातीयका अर्थवादा न विधय इति ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

'सर्वापेक्षा च' इत्यत्र आश्रमकर्मणां विद्यासाधनत्वमवधारितम्; इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयानि, उताहो नेति चिन्त्यते । तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना आश्रमकर्मणां विद्यासाधनत्वेन विहितत्वात् विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि; अथ तस्याप्यनुष्ठेयानि, न तर्हि एषां विद्यासाधनत्वम्, नित्यानित्यसंयोगविरोधात्—इत्यस्यां प्राप्तौ, पठति— आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्; न हि वचनस्यातिभारो नाम कश्चिदस्ति ॥

८. आश्रमकर्माधिकरणम् ।

अथ यदुक्तम्— नैवं सति विद्यासाधनत्वमेषां स्यादिति, अत उत्तरं पठति—

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि च एतानि स्युः, विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना; तदुक्तम्—

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति । न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवत् विद्याफलविषयं मन्तव्यम्, अविधिलक्षणत्वाद्विद्यायाः, असाध्यत्वाच्च विद्याफलस्य; विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिषाधयिषया सहकारिसाधनान्तरम् अपेक्षते, नैवं विद्या; तथा चोक्तम्—'अत एव चाग्नीन्धनाद्यनपेक्षा' इति; तस्मादुत्पत्तिसाधनत्व एव एषां सहकारित्ववाचोयुक्तिः । न च अत्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि संयोगभेदात्; नित्यो हि एकः संयोगो यावज्जीवादिवाक्यकल्पितः, न तस्य विद्याफलत्वम्; अनित्यस्तु अपरः संयोगः 'तमेतं वेदानुवचनेन' इत्यादिवाक्यकल्पितः, तस्य विद्याफलत्वम्—यथा एकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वम्, अनित्येन संयोगेन पुरुषार्थत्वम्, तद्वत् ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि आश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च, त एव अग्निहोत्रादयो धर्मा अनुष्ठेयाः । 'त एव' इत्यवधारयन्नाचार्यः किं निवर्तयति? कर्मभेदशङ्कामिति ब्रूमः; यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्यत्र नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते, नैवमिह कर्मभेदोऽस्तीत्यर्थः ।

कुतः? उभयलिङ्गात्— श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च। श्रुतिलिङ्गं तावत्— 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते, न तु 'जुहोति' इत्यादिवत् अपूर्वमेषां रूपमुत्पादयतीति। स्मृतिलिङ्गमपि— 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति; 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इत्याद्या च संस्कारत्वप्रसिद्धिः वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति। तस्मात्साध्विदम् अभेदावधारणम्॥

## अनभिभवं च दर्शयति॥ ३५॥

सहकारित्वस्यैव एतदुपोद्बलकं लिङ्गदर्शनम्। अनभिभवं च दर्शयति श्रुतिः ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः— 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' इत्यादिना। तस्मात् यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति स्थितम्॥

## अन्तरा चापि तु तद्दृष्टेः॥ ३६॥

विधुरादीनां द्रव्यादिसंपद्रहितानां च अन्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति, किं-

वा नास्ति— इति संशये, नास्तीति तावत्प्राप्तम्, आश्रमकर्मणां विद्याहेतुत्वावधारणात्, आश्रमकर्मासंभवाच्चैतेषाम्— इत्येवं प्राप्ते, इदमाह— अन्तरा चापि तु— अनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते ; कुतः? तद्दृष्टेः— रैक्वावाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥

९. विधुराधिकरणम्।

## अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनां च नग्नचर्यादियोगात् अनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इतिहासे ॥

ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तम ; का नु खलु प्राप्तिरिति, सा अभिधीयते—

## विशेषानुग्रहश्च ॥ ३८ ॥

तेषामपि च विधुरादीनाम् अविरुद्धैः पुरुषमात्रसंबन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति । तथा च स्मृतिः— 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति असंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयति । जन्मान्तरानुष्ठितैरपि च आश्रमकर्मभिः संभवत्येव विद्याया

अनुग्रहः; तथा च स्मृतिः— 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति जन्मान्तरसंचितानपि संस्कारविशेषान् अनुग्रहीतॄन् विद्यायां दर्शयति । दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणापि अर्थिनमधिकरोति श्रवणादिषु । तस्मात् विधुरादीनामप्यधिकारो न विरुध्यते ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतस्तु अन्तरालवर्तित्वात् इतरत् आश्रमवर्तित्वं ज्यायो विद्यासाधनम्, श्रुतिस्मृतिसंदृब्धत्वात्; श्रुतिलिङ्गाच्च— 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इति; 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति च स्मृतिलिङ्गात् ॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

सन्ति ऊर्ध्वरेतस आश्रमा इति स्थापितम्; तांस्तु प्राप्तस्य कथंचित् ततः प्रच्युतिरस्ति, नास्ति वेति संशयः । पूर्वपक्षस्तावत्— अनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात् विशेषाभावादित्येवं प्राप्ते, उच्यते—तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथं-

१०. तद्भूताधिकरणम् ।

चिदपि अतद्भावः, न ततः प्रच्युतिः स्यात्; कुतः? नियमातद्रूपाभावेभ्यः। तथा हि—'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति, 'अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत्' इति, 'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्। आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि' इति च एवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत्' 'ब्रह्मचर्यादेव प्रव्रजेत्' इति च एवमादीनि आरोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि। न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वधर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्—'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति स्मरणात्, न्यायाच्च— यो हि यं प्रति विधीयते स तस्य धर्मः, न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात्प्रच्युतिः, नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीति अपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय॥

## न चाधिकारिकमपि पतनानुमानात्तदयोगात्॥ ४१॥

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत, किं तस्य

'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्येतत्प्रायश्चित्तं स्यात्, उत नेति । नेत्युच्यते; यदपि अधिकारलक्षणे निर्णीतं प्रायश्चित्तम् 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' इति, तदपि न नैष्ठिकस्य भवितुमर्हति; किं कारणम्? 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इति अप्रतिसमाधेयपतनस्मरणात् छिन्नशिरस इव प्रतिक्रियानुपपत्तेः; उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत्प्रायश्चित्तम् ॥

११. आधिकारिकाधिकरणम् ।

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

अपि तु एके आचार्या उपपातकमेवैतदिति मन्यन्ते; यत् नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्येत, न तत् महापातकं भवति, गुरुतल्पादिषु महापातकेष्वपरिगणनात्; तस्मात् उपकुर्वाणवत् नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति, ब्रह्मचारित्वाविशेषात् अवकीर्णित्वाविशेषाच्च; अशनवत्—यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनः संस्कारश्च, एवमिति । ये हि प्रायश्चित्तस्याभावमिच्छन्ति, तेषां न मूलमुपलभ्यते; ये तु भावमिच्छन्ति, तेषां 'ब्रह्म-

चार्यवकीर्णी' इत्येतदविशेषश्रवणं मूलम्; तस्मात् भावो युक्त-तरः; तदुक्तं प्रमाणलक्षणे—'समा विप्रतिपत्तिः स्यात्' 'शास्त्रस्था वा तन्निमित्तत्वात्' इति; प्रायश्चित्ताभावस्मरणं तु एवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम्। एवं भिक्षुवैखानसयोरपि—'वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादश-रात्रं चरित्वा महाकक्षं वर्धयेत्' 'भिक्षुर्वानप्रस्थवत्सोमवृद्धि-वर्जं स्वशास्त्रसंस्कारश्च' इत्येवमादि प्रायश्चित्तस्मरणम् अनु-सर्तव्यम् ॥

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

यदि ऊर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकम्, यदि वा उपपातकम्, उभयथापि शिष्टैस्ते बहिष्कर्तव्याः—

१२. बहिरधिकरणम्।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इति, 'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम्। उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत्' इति च एवमादि-निन्दातिशयस्मृतिभ्यः, शिष्टाचाराच्च— न हि यज्ञाध्ययनवि-वाहादीनि तैः सह आचरन्ति शिष्टाः ॥

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**

अङ्गेषूपासनेषु संशयः— किं तानि यजमानकर्माणि

आहोस्वित् ऋत्विक्कर्माणीति । किं तावत्प्राप्तम्? यजमानकर्माणीति; कुतः? फलश्रुतेः; फलं हि श्रूयते— 'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधं सामोपास्ते' इत्यादि; तच्च स्वामिगामि न्याय्यम्, तस्य साङ्गे प्रयोगेऽधिकृतत्वात्, अधिकृताधिकारत्वाच्च एवंजातीयकस्य; फलं च कर्तरि उपासनानां श्रूयते— 'वर्षत्यस्मै य उपास्ते' इत्यादि। ननु ऋत्विजोऽपि फलं दृष्टम् 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' इति— न, तस्य वाचनिकत्वात्। तस्मात् स्वामिन एव फलवत्सु उपासनेषु कर्तृत्वम्— इत्यात्रेय आचार्यो मन्यते ॥

१३. स्वाम्यधिकरणम् ।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

नैतदस्ति— स्वामिकर्माण्युपासनानीति; ऋत्विक्कर्माण्येतानि स्युः— इत्यौडुलोमिराचार्यो मन्यते; किं कारणम्? तस्मै हि साङ्गाय कर्मणे यजमानेन ऋत्विक् परिक्रियते; तत्प्रयोगान्तःपातीनि च उद्गीथाद्युपासनानि अधिकृताधिकारत्वात्; तस्मात् गोदोहनादिनियमवदेव ऋत्विग्भिर्निर्वर्त्येरन्; तथा च 'तं ह बको दाल्भ्यो विदांचकार स ह

नैमिशीयानामुद्गाता बभूव' इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति। यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति— नैष दोषः, परार्थत्वादृत्विजः अन्यत्र वचनात् फलसंबन्धानुपपत्तेः ॥

## श्रुतेश्च ॥ ४६ ॥

'यां वै कांचन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच' इति, 'तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायानि' इति च ऋत्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति। तस्मात् अङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इति बृहदारण्यके श्रूयते। तत्र संशयः— मौनं विधीयते, न वेति। न विधीयत इति तावत्प्राप्तम्, 'बाल्येन तिष्ठासेत्' इत्यत्रैव विधेरवसितत्वात्; न हि 'अथ मुनिः' इत्यत्र विधायिका विभक्तिरुपलभ्यते; तस्मादयमनुवादो

१४. सहकार्यन्तरविध्यधिकरणम्।

युक्तः; कुतः प्राप्तिरिति चेत्— मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् 'पाण्डित्यं निर्विद्य' इत्येव प्राप्तं मौनम् । अपि च 'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इत्यत्र तावत् न ब्राह्मणत्वं विधीयते, प्रागेव प्राप्तत्वात्; तस्मात् 'अथ ब्राह्मणः' इति प्रशंसावादः, तथैव 'अथ मुनिः' इत्यपि भवितुमर्हति, समाननिर्देशत्वादित्येवं प्राप्ते—

ब्रूमः— सहकार्यन्तरविधिरिति । विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेव आश्रयितव्यः, अपूर्वत्वात् । ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम्— नैष दोषः, मुनिशब्दस्य ज्ञानातिशयार्थत्वात्, मननान्मुनिरिति च व्युत्पत्तिसंभवात्, 'मुनीनामप्यहं व्यासः' इति च प्रयोगदर्शनात् । ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र—न, 'वाल्मीकिर्मुनिपुंगवः' इत्यादिषु व्यभिचारदर्शनात्; इतराश्रमसंनिधानात्तु पारिशेष्यात् तत्र उत्तमाश्रमोपादानम्, ज्ञानप्रधानत्वादुत्तमाश्रमस्य । तस्मात् बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते । यत्तु बाल्य एव विधिपर्यवसानमिति, तथापि अपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते—मुनिः स्यादिति; निर्वेदनीयत्वनिर्देशादपि मौ-

नस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम् । तद्वतः विद्यावतः संन्यासिनः; कथं च विद्यावतः संन्यासिन इत्यवगम्यते? तदधिकारात्—आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थाय 'अथ भिक्षाचर्यं चरन्ति' इति । ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः, किं मौनविधिना—इत्यत आह—प-क्षेणेति । एतदुक्तं भवति—यस्मिन्पक्षे भेददर्शनप्राबल्यात् न प्राप्नोति, तस्मिन् एष विधिरिति। विध्यादिवत्—यथा 'दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजातीयके विध्यादौ स-हकारित्वेन अग्न्यन्वाधानादिकम् अङ्गजातं विधीयते, एवम् अविधिप्रधानेऽपि अस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः ॥

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने, कस्मात् छान्दोग्ये गृहिणा उपसंहारः 'अभिसमावृत्य कुटु-म्बे' इत्यत्र? तेन हि उपसंहरन् तद्विषयमादरं दर्शयति—इत्यत उत्तरं पठति—

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

तु-शब्दो विशेषणार्थः; कृत्स्नभावोऽस्य विशेष्यते; बहु-लायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्त-व्यतयोपदिष्टानि, आश्रमान्तरकर्माणि च यथासंभवमहिंसे-न्द्रियसंयमादीनि तस्य विद्यन्ते । तस्मात् गृहमेधिना उपसं-

हारो न विरुध्यते ॥

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

यथा मौनं गार्हस्थ्यं च एतावाश्रमौ श्रुतिमन्तौ, एवमितरावपि वानप्रस्थगुरुकुलावासौ; दर्शिता हि पुरस्ताच्छ्रुतिः—'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' इत्याद्या । तस्मात् चतुर्णामप्याश्रमाणाम् उपदेशाविशेषात् तुल्यवत् विकल्पसमुच्चयाभ्यां प्रतिपत्तिः । इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षया अनुष्ठातृभेदापेक्षया वा— इति द्रष्टव्यम् ॥

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥**

१५. अनाविष्काराधिकरणम् ।

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यमनुष्ठेयतया श्रूयते; तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति, बालभावस्य वयोविशेषस्य इच्छया संपादयितुमशक्यत्वात्, यथोपपादमूत्रपुरीषत्वादि बालचरितम्, अन्तर्गता वा भावविशुद्धिः अप्ररूढेन्द्रियत्वं दम्भादिरहितत्वं वा बाल्यं स्यादिति संशयः । किं तावत्प्राप्तम्? कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वं च

प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम् । ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्— न ; विद्यावतः संन्यासिनो वचनसामर्थ्यात् दोषनिवृत्तिः, पशुहिंसादिष्विवेत्येवं प्राप्ते—

अभिधीयते—न, वचनस्य गत्यन्तरसंभवात् ; अविरुद्धे हि अन्यस्मिन् बाल्यशब्दाभिलप्ये लभ्यमाने, न विध्यन्तरव्याघातकल्पना युक्ता ; प्रधानोपकाराय च अङ्गं विधीयते ; ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम् ; न च सकलायां बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते ; तस्मात् आन्तरो भावविशेषो बालस्य अप्ररूढेन्द्रियत्वादिः इह बाल्यमाश्रीयते ; तदाह— अनाविष्कुर्वन्निति । ज्ञानाध्ययनधार्मिकत्वादिभिः आत्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत्— यथा बालः अप्ररूढेन्द्रियतया न परेषाम् आत्मानमाविष्कर्तुमीहते, तद्वत् । एवं हि अस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते ; तथा च उक्तं स्मृतिकारैः— ‘यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् । अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्’ ‘अव्यक्तलिङ्गोऽव्यक्ताचारः’ इति चैवमादि ॥

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यत आरभ्य उच्चावचं विद्यासाधनमवधारितम्; तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यति, उत कदाचित् अमुत्रापीति चिन्त्यते । किं तावत्प्राप्तम्? इहैवेति; किं कारणम्? श्रवणादिपूर्विका हि विद्या; न च कश्चित् अमुत्र मे विद्या जायतामित्यनुसंधाय श्रवणादिषु प्रवर्तते; समान एव तु जन्मनि विद्याजन्म अभिसंधाय एतेषु प्रवर्तमानो दृश्यते । यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति, प्रमाणजन्यत्वाद्विद्यायाः । तस्मादैहिकमेव विद्याजन्मेत्येवं प्राप्ते—

१६. ऐहिकाधिकरणम् ।

वदामः— ऐहिकं विद्याजन्म भवति, असति प्रस्तुतप्रतिबन्ध इति । एतदुक्तं भवति— यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण, तदा इहैव विद्या उत्पद्यते; यदा तु खलु तत्प्रतिबन्धः क्रियते तदा अमुत्रेति । उपस्थितविपाकत्वं च कर्मणो देशकालनिमित्तोपनिपाताद्भवति; यानि च एकस्य कर्मणो विपाचकानि देशकालनिमित्तानि, तान्येव अन्य-

स्यापीति न नियन्तुं शक्यते; यतो विरुद्धफलान्यपि कर्माणि भवन्ति । शास्त्रमपि अस्य कर्मण इदं फलमित्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि संकीर्तयति । साधनवीर्यविशेषात्तु अतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठति । न च अविशेषेण विद्यायाम् अभिसंधिर्नोत्पद्यते— इह अमुत्र वा मे विद्या जायतामिति, अभिसंधेर्निरङ्कुशत्वात् । श्रवणादिद्वारेणापि विद्या उत्पद्यमाना प्रतिबन्धक्षयापेक्षयैव उत्पद्यते । तथा च श्रुतिः दुर्बोधत्वमात्मनो दर्शयति— 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः' इति । गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचितात् साधनात् जन्मान्तरे विद्योत्पत्तिं दर्शयति; न हि गर्भस्थस्यैव ऐहिकं किंचित्साधनं संभाव्यते । स्मृतावपि— 'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' इत्यर्जुनेन पृष्टो भगवान्वासुदेवः 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इत्युक्त्वा, पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले संभूतिं च अभिधाय, अनन्तरम् 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' इत्यादिना 'अनेकजन्मसंसिद्धस्ततो याति परां

गतिम्' इत्यन्तेन एतदेव दर्शयति । तस्मात् ऐहिकम् आमुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम् ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥**

१७. मुक्तिफलानियमाधिकरणम् ।

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽपि उत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यात्—इत्याशङ्क्य, आह— मुक्तिफलानियम इति । न खलु मुक्तिफले कश्चित् एवंभूतो विशेषप्रतिनियम आशङ्कितव्यः; कुतः? तदवस्थावधृतेः— मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैव अवधार्यते; ब्रह्मैव हि मुक्त्यवस्था; न च ब्रह्मणोऽनेकाकारयोगोऽस्ति, एकलिङ्गत्वावधारणात्— 'अस्थूलमनणु' 'स एष नेति नेत्यात्मा' 'यत्र नान्यत्पश्यति' 'ब्रह्मैवेदममृतं पुरस्तात्' 'इदं सर्वं यदयमात्मा' 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिभ्यः । अपि च विद्यासाधनं स्ववीर्यविशेषात् स्वफल एव विद्यायां कंचिदतिशयमासञ्जयेत्, न विद्याफले मुक्तौ; तद्धि असाध्यं नित्यसिद्धस्वभावमेव

विद्यया अधिगम्यत इत्यसकृदवादिष्म। न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात्; उत्कृष्टैव हि विद्या भवति; तस्मान्न तस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन् भवेत्। न तु मुक्तौ कश्चित् अतिशयसंभवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः, कर्मफलवत्; न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति। सगुणासु तु विद्यासु 'मनोमयः प्राणशरीरः' इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्याम्, उपपद्यते यथास्वं फलभेदनियमः, कर्मफलवत्—तथा च लिङ्गदर्शनम्—'तं यथा यथोपासते तदेव भवति' इति; नैवं निर्गुणायां विद्यायाम्, गुणाभावात्; तथा च स्मृतिः—'न हि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्' इति। तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**तृतीयोऽध्यायः॥**

श्रीमच्छंकरभगवत्पादैर्विरचितम्

# ॥ ब्रह्मसूत्रभाष्यम् ॥

## चतुर्थाध्याये

## प्रथमः पादः

ॐ

# ॥ चतुर्थोऽध्यायः ॥

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेण अत्यगात्; अथेह चतुर्थे फलाश्रय आगमिष्यति; प्रसङ्गागतं च अन्यदपि किंचिच्चिन्तयिष्यते; प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः—

**आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

१. आवृत्यधिकरणम् ।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति च एवमादिश्रवणेषु संशयः— किं सकृत्प्रत्ययः कर्तव्यः, आहोस्वित् आवृत्त्येति । किं तावत्प्राप्तम्? सकृत्प्र-

त्यय: स्यात्, प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात्; अश्रूयमाणायां हि आवृत्तौ क्रियमाणायाम अशास्त्रार्थ: कृतो भवेत्। ननु असकृदुपदेशा उदाहृता:— 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य:' इत्येवमादय:— एवमपि यावच्छब्दमावर्तयेत्— सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम्। सकृदुपदेशेषु तु 'वेद' 'उपासीत' इत्येवमादिषु अनावृत्तिरित्येवं प्राप्ते, ब्रूम:— प्रत्ययावृत्ति: कर्तव्या; कुत:? असकृदुपदेशात्— 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य:' इत्येवंजातीयको हि असकृदुपदेश: प्रत्ययावृत्तिं सूचयति। ननु उक्तम्— यावच्छब्दमेव आवर्तयेत्, नाधिकमिति—न, दर्शनपर्यवसानत्वादेषाम; दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति— यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि हि, तद्वत्। अपि च उपासनं निदिध्यासनं च— इत्यन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते; तथा हि लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इति च—यस्तात्पर्येण गुर्वादीननुवर्तते, स एवमुच्यते; तथा 'ध्यायति प्रोषितनाथा पतिम्' इति— या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा, सा एवमभिधीयते। विद्युपास्त्योश्च वेदान्तेषु अव्यतिरेकेण प्रयोगो

दृश्यते; क्वचित् विदिनोपक्रम्य उपासिनोपसंहरति, यथा— 'यस्तद्वेद यत्स वेद स मयैतदुक्तः' इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति; क्वचिच्च उपासिनोपक्रम्य विदिनोपसंहरति, यथा— 'मनो ब्रह्मेत्युपासीत' इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' इति । तस्मात्सकृदुपदेशेष्वपि आवृत्तिसिद्धिः । असकृदुपदेशस्तु आवृत्तेः सूचकः ॥

## लिङ्गाच्च ॥ २ ॥

लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति । तथा हि—उद्गीथविज्ञानं प्रस्तुत्य, 'आदित्य उद्गीथः' इत्येतत् एकपुत्रतादोषेणापोद्य, 'रश्मींस्त्वं पर्यावर्तयात्' इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत्प्रत्ययावृत्तिं दर्शयति; तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः ॥

अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः, तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात्; यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेव आत्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्था आवृत्तिरिति । सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्, न, आवृत्तावपि तदनुपपत्तेः; यदि हि 'तत्त्वमसि' इत्येवंजातीयकं वाक्यं स-

कृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् ततस्तदेव आवर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्। अथोच्येत—न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोति; अतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति— तथाप्यावृत्त्यानर्थक्यमेव; सापि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्यात्— युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम्; यथा 'अस्ति मे हृदये शूलम्' इत्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति— यथा स एव शूली; विशेषानुभवश्च अविद्याया निवर्तकः; तदर्था आवृत्तिरिति चेत्— न, असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्; न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते; तस्मात् यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत, यदि वा सामान्यमेव, उभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इति आवृत्त्यनुपयोगः; न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुम्, विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम्। अपि च अनेकांशोपेते लौकिके पदार्थे सामान्यविशेषवति एकेनावधानेन

एकमंशमवधारयति, अपरेण अपरम्— इति स्यादप्यभ्यासो-पयोगः, यथा दीर्घप्रपाठकग्रहणादिषु ; न तु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्ताव-भ्यासापेक्षा युक्तेति ॥

अत्रोच्यते— भवेदावृत्त्यानर्थक्यं तं प्रति, यः 'तत्त्व-मसि' इति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् ; यस्तु न शक्नोति, तं प्रति उपयुज्यत एव आवृत्तिः । तथा हि च्छान्दोग्ये— 'तत्त्वमसि श्वेतकेतो' इत्युपदिश्य, 'भूय एव मा भगवान्विज्ञापयतु' इति पुनः पुनः परिचो-द्यमानः तत्तदाशङ्काकारणं निराकृत्य, 'तत्त्वमसि' इत्येवास-कृदुपदिशति ; तथा च 'श्रोतव्यो मन्तव्यो निदिध्यासि-तव्यः' इत्यादि दर्शितम् । ननु उक्तम्— सकृच्छ्रुतं चेत् तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति, तत आवर्त्य-मानमपि नैव शक्ष्यतीति— नैष दोषः ; न हि दृष्टेऽनुप-पन्नं नाम ; दृश्यन्ते हि सकृच्छ्रुताद्वाक्यात् मन्दप्रतीतं वाक्यार्थं आवर्तयन्तः तत्तदाभासव्युदासेन सम्यक्प्रतिपद्य-मानाः । अपि च 'तत्त्वमसि' इत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे ; तत्पदेन च प्रकृतं सत् ब्रह्म ईक्षितृ जगतो जन्मादिकारणमभिधीयते— 'सत्यं ज्ञानमनन्तं ब्रह्म'

'विज्ञानमानन्दं ब्रह्म' 'अदृष्टं द्रष्टृ' 'अविज्ञातं विज्ञातृ' 'अजमजरममरम्' 'अस्थूलमनण्वह्रस्वमदीर्घम्' इत्यादिशास्त्रसिद्धम्; तत्र अजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः; अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः; विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्; एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः; तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानः चैतन्यपर्यन्तत्वेनावधारितः; तत्र येषाम् एतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ, तेषां 'तत्त्वमसि' इत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य— इत्यतः, तान्प्रति एष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशः, तथापि अध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्; तत्र एकेन अवधानेन एकमंशमपोहति, अपरेण अपरम्— इति युज्यते तत्र क्रमवती प्रतिपत्तिः; तत्तु पूर्वरूपमेव आत्मप्रतिपत्तेः। येषां पुनः निपुणमतीनां न अज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थम् अनुभवितु-

मिति, तान्प्रति आवृत्त्यानर्थक्यमिष्टमेव; सकृदुत्पन्नैव हि आत्मप्रतिपत्तिः अविद्यां निवर्तयतीति, नात्र कश्चिदपि क्रमोऽभ्युपगम्यते । सत्यमेवं युज्येत, यदि कस्यचित् एवं प्रतिपत्तिर्भवेत्; बलवती हि आत्मनो दुःखित्वादिप्रतिपत्तिः; अतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत्—न, देहाद्यभिमानवत् दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः; प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वा 'अहं छिद्ये दह्ये' इति च मिथ्याभिमानो दृष्टः; तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेषु 'अहमेव संतप्ये' इत्यध्यारोपो दृष्टः; तथा दुःखित्वाद्यभिमानोऽपि स्यात्, देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनाम्, सुषुप्तादिषु च अननुवृत्तेः; चैतन्यस्य तु सुषुप्तेऽपि अनुवृत्तिमामनन्ति—'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति' इत्यादिना; तस्मात् सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः । न च एवम् आत्मानमनुभवतः किंचिदन्यत्कृत्यमवशिष्यते; तथा च श्रुतिः—'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' इत्यात्मविदः कर्तव्याभावं दर्शयति; स्मृतिरपि—'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति । यस्य तु न एषोऽनुभवो

द्रागिव जायते, तं प्रति अनुभवार्थ एव आवृत्त्यभ्युपगमः। तत्रापि न तत्त्वमसिवाक्यार्थात् प्रच्याव्य आवृत्तौ प्रवर्तयेत्; न हि वरघाताय कन्यामुद्वाहयन्ति; नियुक्तस्य च 'अस्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यम्' इत्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते; यस्तु स्वयमेव मन्दमतिः अप्रतिभानात् तं वाक्यार्थं जिहासेत्, तस्य एतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्या अभ्युपेयते। तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥

यः शास्त्रोक्तविशेषणः परमात्मा, स किम् अहमिति ग्रहीतव्यः, किं वा मदन्य इति— एतद्विचारयति। कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति, उच्यते— अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुम्, सति जीवेश्वरयोरभेदसंभवे; इतरथा तु गौणोऽयमभ्युपगन्तव्यः— इति मन्यते।

२. आत्मत्वोपासनाधिकरणम्।

किं तावत्प्राप्तम्? न अहमिति ग्राह्यः; न हि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुम्, विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन; अपहतपाप्मत्वादिगुणश्च परमेश्वरः, तद्विपरीतगुणस्तु शारीरः; ईश्वरस्य च संसार्यात्मत्वे

ईश्वराभावप्रसङ्गः; ततः शास्त्रानर्थक्यम्; संसारिणोऽपि ईश्वरात्मत्वे अधिकार्यभावाच्छास्त्रानर्थक्यमेव, प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात् कर्तव्यम्—प्रतिमादिष्विव विष्ण्वादिदर्शनम् इति चेत्— काममेवं भवतु; न तु संसारिणो मुख्य आत्मा ईश्वर इत्येतत् नः प्रापयितव्यम् ॥

एवं प्राप्ते, ब्रूमः—आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथा हि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैव एतमुपगच्छन्ति—'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि देवते' इति; तथा अन्येऽपि 'अहं ब्रह्मास्मि' इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति च आत्मत्वेनैव ईश्वरं वेदान्तवाक्यानि—'एष त आत्मा सर्वान्तरः' 'एष त आत्मान्तर्याम्यमृतः' 'तत्सत्यं स आत्मा तत्त्वमसि' इत्येवमादीनि। यदुक्तम्—प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम्, गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च—यत्र हि प्रतीकदृष्टिरभिप्रेयते, सकृदेव तत्र वचनं भवति—यथा 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इत्यादि; इह पुनः—त्वम् अहमस्मि, अहं च त्वमसीत्याह—अतः प्रतीकश्रुतिवैरूप्यात् अभेदप्रतिपत्तिः; भेददृष्ट्यपवादाच्च; तथा हि—

'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्येवमाद्या भूयसी श्रुतिः भेददर्शनमपवदति । यत्तूक्तम्—न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति, नायं दोषः, विरुद्धगुणताया मिथ्यात्वोपपत्तेः । यत्पुनरुक्तम्—ईश्वराभावप्रसङ्ग इति, तदसत्, शास्त्रप्रामाण्यात् अनभ्युपगमाच्च; न हि ईश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः; किं तर्हि, संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सति अद्वैतेश्वरस्य अपहतपाप्मत्वादिगुणता विपरीतगुणता तु इतरस्य—मिथ्येति व्यवतिष्ठते । यदप्युक्तम्—अधिकार्यभावः प्रत्यक्षादिविरोधश्चेति, तदप्यसत्, प्राक्प्रबोधात् संसारित्वाभ्युपगमात्, तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य; 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत्, न, इष्टत्वात्; 'अत्र पितापिता भवति' इत्युपक्रम्य, 'वेदा अवेदाः' इति वचनात् इष्यत एव अस्माभिः श्रुतेरप्यभावः प्रबोधे । कस्य पुनरयम् अप्रबोध इति चेत्, यस्त्वं पृच्छसि तस्य ते—इति

वदामः । ननु अहमीश्वर एवोक्तः श्रुत्या—यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः । योऽपि दोषश्चोद्यते—कैश्चिदविद्यया किल आत्मनः सद्वितीयत्वात् अद्वैतानुपपत्तिरिति, सोऽपि एतेन प्रत्युक्तः । तस्मात् आत्मेत्येव ईश्वरे मनो दधीत ॥

## न प्रतीके न हि सः ॥ ४ ॥

३. प्रतीकाधिकरणम् ।

'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' तथा 'आदित्यो ब्रह्मेत्यादेशः' 'स यो नाम ब्रह्मेत्युपास्ते' इत्येवमादिषु प्रतीकोपासनेषु संशयः— किं तेष्वपि आत्मग्रहः कर्तव्यः, न वेति । किं तावत्प्राप्तम्? तेष्वपि आत्मग्रह एव युक्तः कर्तुम्; कस्मात्? ब्रह्मणः श्रुतिषु आत्मत्वेन प्रसिद्धत्वात्, प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सति आत्मत्वोपपत्तेरित्येवं प्राप्ते, ब्रूमः— न प्रतीकेष्वात्ममतिं बध्नीयात्; न हि स उपासकः प्रतीकानि व्यस्तानि आत्मत्वेन आकलयेत् । यत्पुनः ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्च आत्मत्वमिति, तदसत्, प्रतीकाभावप्रसङ्गात्; विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेव आश्रितं भवति; स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वम् आत्मग्रहो वा? न च ब्रह्मण

आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्; कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः; तदनिराकरणेन च उपासनविधानम्। अतश्च उपासकस्य प्रतीकैः समत्वात् आत्मग्रहो नोपपद्यते; न हि रुचकस्वस्तिकयोः इतरेतरात्मत्वमस्ति; सुवर्णात्मनेव तु ब्रह्मात्मना एकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मदृष्टिः क्रियते ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

तेष्वेव उदाहरणेष्वन्यः संशयः— किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किं वा ब्रह्मदृष्टिरादित्यादिष्विति। कुतः

४. ब्रह्मदृष्ट्यधिकरणम्।

संशयः? सामानाधिकरण्ये कारणानवधारणात्; अत्र हि ब्रह्मशब्दस्य आदित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, 'आदित्यो ब्रह्म' 'प्राणो ब्रह्म' 'विद्युद्ब्रह्म' इत्यादिसमानविभक्तिनिर्देशात्; न च अत्र आञ्जसं सामानाधिकरण्यमवकल्पते, अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानाम्; न हि भवति— गौरश्व इति सामानाधिकरण्यम्। ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात्— नेत्युच्यते; विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात्स्यात्, ततश्च प्रतीका-

भावप्रसङ्गमवोचाम; परमात्मवाक्यं चेदं तदानीं स्यात्, तत-
श्चोपासनाधिकारो बाध्येत, परिमितविकारोपादानं च व्यर्थ-
म् । तस्मात् 'ब्राह्मणोऽग्निर्वैश्वानरः' इत्यादिवत् अन्यतरत्रा-
न्यतरदृष्ट्यध्यासे सति, क्व किंदृष्टिरध्यस्यतामिति संशयः ।
तत्र अनियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् ।
अथवा आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तम्;
एवं हि आदित्यादिदृष्टिभिः ब्रह्म उपासितं भवति; ब्रह्मोपा-
सनं च फलवदिति शास्त्रमर्यादा । तस्मात् न ब्रह्मदृष्टिरा-
दित्यादिष्वित्येवं प्राप्ते——

ब्रूमः—— ब्रह्मदृष्टिरेव आदित्यादिषु स्यादिति । कस्मात्?
उत्कर्षात्; एवम् उत्कर्षेण आदित्यादयो दृष्टा भवन्ति, उत्कृ-
ष्टदृष्टेस्तेष्वध्यासात्; तथा च लौकिको न्यायोऽनुगतो भवति;
उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः— यथा
राजदृष्टिः क्षत्तरि; स च अनुसर्तव्यः विपर्यये प्रत्यवायप्रस-
ङ्गात्; न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः
श्रेयसे स्यात् । ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवा-
यप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं
युक्तेति— अत्रोच्यते—— निर्धारिते शास्त्रार्थे एतदेवं स्यात्;
संदिग्धे तु तस्मिन्, तन्निर्णयं प्रति लौकिकोऽपि न्याय आ-

श्रीयमाणो न विरुध्यते; तेन च उत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे, निकृष्टदृष्टिमध्यस्यन्प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्च आदित्यादिशब्दानां मुख्यार्थत्वम् अविरोधात् ग्रहीतव्यम्; तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ, पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवात्, ब्रह्मदृष्टिविधानार्थतैव अवतिष्ठते। इति-परत्वादपि ब्रह्मशब्दस्य एष एवार्थो न्याय्यः; तथा हि— 'ब्रह्मेत्यादेशः' 'ब्रह्मेत्युपासीत' 'ब्रह्मेत्युपास्ते' इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्तु आदित्यादिशब्दान्; ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र, शुक्तिवचन एव शुक्तिकाशब्दः, रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः— प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति— एवमत्रापि आदित्यादीन्ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेन आदित्यादीनेव उपास्तिक्रियया व्याप्यमानान्दर्शयति— 'स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' 'यो वाचं ब्रह्मेत्युपास्ते' 'यः संकल्पं ब्रह्मेत्युपास्ते' इति च। यत्तूक्तम्— ब्रह्मोपासनमेवात्र आदरणीयं फलवत्त्वायेति, तदयुक्तम्, उक्तेन न्यायेन आदित्यादीनामेव उपास्यत्वावगमात्; फलं तु अतिथ्याद्युपासन इव आदित्याद्युपासनेऽपि ब्रह्मैव

दास्यति, सर्वाध्यक्षत्वात्; वर्णितं चैतत् 'फलमत उपपत्तेः' इत्यत्र। ईदृशं च अत्र ब्रह्मण उपास्यत्वम्, यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणम्— प्रतिमादिष्विव विष्ण्वादीनाम्॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः॥ ६॥

५. आदित्यादिमत्यधिकरणम्।

'य एवासौ तपति तमुद्गीथमुपासीत' 'लोकेषु पञ्चविधं सामोपासीत' 'वाचि सप्तविधं सामोपासीत' 'इयमेवर्गग्निः साम' इत्येवमादिषु अङ्गावबद्धेषूपासनेषु संशयः—किमादित्यादिषु उद्गीथादिदृष्टयो विधीयन्ते, किं वा उद्गीथादिष्वेव आदित्यादिदृष्टय इति। तत्र अनियमः, नियमकारणाभावात्—इति प्राप्तम्; न हि अत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते; ब्रह्म हि समस्तजगत्कारणत्वात् अपहतपाप्मत्वादिगुणयोगाच्च आदित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुम्; न तु आदित्योद्गीथादीनां विकारत्वाविशेषात् किंचिदुत्कर्षविशेषावधारणे कारणमस्ति। अथवा नियमेनैव उद्गीथादिमतय आदित्यादिषु अध्यस्येरन्; कस्मात्? कर्मात्मकत्वादुद्गीथादीनाम्, कर्मणश्च फलप्राप्तिप्रसिद्धेः; उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति। तथा च 'इयमेव-

र्ग्निः साम' इत्यत्र 'तदेतदेतस्यामृच्यध्यूढं साम' इति ऋक्शब्देन पृथिवीं निर्दिशति, सामशब्देनाग्निम्; तच्च पृथिव्यग्न्योः ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायाम्; क्षत्तरि हि राजदृष्टिकरणात् राजशब्द उपचर्यते, न राजनि क्षत्तृशब्दः। अपि च 'लोकेषु पञ्चविधं सामोपासीत' इति अधिकरणनिर्देशात् लोकेषु साम अध्यसितव्यमिति प्रतीयते; 'एतद्गायत्रं प्राणेषु प्रोतम्' इति च एतदेव दर्शयति। प्रथमनिर्दिष्टेषु च आदित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तम्— 'आदित्यो ब्रह्मेत्यादेशः' इत्यादिषु; प्रथमनिर्दिष्टाश्च पृथिव्यादयः, चरमनिर्दिष्टा हिंकारादयः— 'पृथिवी हिंकारः' इत्यादिश्रुतिषु। अतः अनङ्गेष्वादित्यादिषु अङ्गमतिक्षेप इत्येवं प्राप्ते—

ब्रूमः— आदित्यादिमतय एव अङ्गेषु उद्गीथादिषु क्षिप्येरन्; कुतः? उपपत्तेः; उपपद्यते हि एवम् अपूर्वसंनिकर्षात् आदित्यादिमतिभिः संस्क्रियमाणेषु उद्गीथादिषु कर्मसमृद्धिः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति। भवतु कर्मसमृद्धिफलेष्वेवम्; स्वतन्त्रफलेषु तु कथम्— 'य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामो-

पास्ते' इत्यादिषु? तेष्वपि अधिकृताधिकारात् प्रकृतापूर्वसंनिकर्षेणैव फलकल्पना युक्ता, गोदोहनादिनियमवत् । फलात्मकत्वाच्च आदित्यादीनाम उद्गीथादिभ्यः कर्मात्मकेभ्यः उत्कर्षोपपत्तिः; आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु । अपि च 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति च उद्गीथमेव उपास्यत्वेनोपक्रम्य, आदित्यादिमतीर्विदधाति । यत्तूक्तम्—उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति, तदयुक्तम्, स्वयमेवोपासनस्य कर्मत्वात् फलवत्त्वोपपत्तेः आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात् । 'तदेतदेतस्यामृच्यध्यूढं साम' इति तु लाक्षणिक एव पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगः; लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबन्धेन प्रवर्तते; तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा, तथापि प्रसिद्धयोः ऋक्सामयोर्भेदेनानुकीर्तनात्, पृथिव्यग्न्योश्च संनिधानात्, तयोरेव एष ऋक्सामशब्दप्रयोगः ऋक्सामसंबन्धादिति निश्चीयते; क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद्राजानमुपसर्पन् न निवारयितुं पार्यते । 'इयमेवर्क्' इति च यथाक्षरन्यासम् ऋच एव पृथिवीत्वमवधारयति;

पृथिव्या हि ऋक्त्वेऽवधार्यमाणे—इयमृगेवेत्यक्षरन्यासः स्यात् । 'य एवं विद्वान्साम गायति' इति च अङ्गाश्रयमेव विज्ञानमुपसंहरति, न पृथिव्याद्याश्रयम् । तथा 'लोकेषु पञ्चविधं सामोपासीत' इति यद्यपि सप्तमीनिर्दिष्टा लोकाः, तथापि साम्न्येव ते अध्यस्येरन्, द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात्; सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति, अन्यथा पुनः लोकाः सामात्मना उपासिताः स्युः । एतेन 'एतद्गायत्रं प्राणेषु प्रोतम्' इत्यादि व्याख्यातम् । यत्रापि तुल्यो द्वितीयानिर्देशः 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' इति, तत्रापि— 'समस्तस्य खलु साम्न उपासनं साधु' 'इति तु पञ्चविधस्य' 'अथ सप्तविधस्य' इति च साम्न एव उपास्यत्वोपक्रमात्— तस्मिन्नेव आदित्याद्यध्यासः । एतस्मादेव च साम्न उपास्यत्वावगमात् 'पृथिवी हिंकारः' इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः । तस्मात् अनङ्गाश्रया आदित्यादिमतयः अङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम् ॥

## आसीनः संभवात् ॥ ७ ॥

कर्माङ्गसंबद्धेषु तावत् उपासनेषु कर्मतन्त्रत्वात् न आसनादिचिन्ता; नापि सम्यग्दर्शने, वस्तुतन्त्रत्वाद्विज्ञानस्य; इतरेषु तु

उपासनेषु किम् अनियमेन तिष्ठन् आसीनः शयानो वा प्रवर्तेत उत नियमेन आसीन एवेति चिन्तयति । तत्र मानसत्वादुपासनस्य अनियमः शरीरस्थितेरित्येवं प्राप्ते, ब्रवीति—आसीन एवोपासीतेति; कुतः? संभवात् । उपासनं नाम समानप्रत्ययप्रवाहकरणम्; न च तत् गच्छतो धावतो वा संभवति, गत्यादीनां चित्तविक्षेपकरत्वात्; तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति; शयानस्यापि अकस्मादेव निद्रया अभिभूयते; आसीनस्य तु एवंजातीयको भूयान्दोषः सुपरिहर इति संभवति तस्योपासनम् ॥

६. आसीनाधिकरणम् ।

## ध्यानाच्च ॥ ८ ॥

अपि च ध्यायत्यर्थ एषः, यत्समानप्रत्ययप्रवाहकरणम्; ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिषु एकविषयाक्षिप्तचित्तेषु उपचर्यमाणो दृश्यते—ध्यायति बकः, ध्यायति प्रोषितबन्धुरिति । आसीनश्च अनायासो भवति; तस्मादपि आसीनकर्मोपासनम् ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥

अपि च 'ध्यायतीव पृथिवी' इत्यत्र पृथिव्यादिषु अच-

लत्वमेवापेक्ष्य ध्यायतिवादो भवति; तच्च लिङ्गम् उपासनस्य आसीनकर्मत्वे ॥

## स्मरन्ति च ॥ १० ॥

स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेन आसनम्—'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इत्यादिना । अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

७. एकाग्रताधिकरणम् ।

दिग्देशकालेषु संशयः–किमस्ति कश्चिन्नियमः, नास्ति वेति । प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात्, स्यादिहापि कश्चिन्नियम इति यस्य मतिः, तं प्रत्याह— दिग्देशकालेषु अर्थलक्षण एव नियमः; यत्रैव अस्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति, तत्रैवोपासीत, प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवत् विशेषाश्रवणात्, एकाग्रताया इष्टायाः सर्वत्राविशेषात् । ननु विशेषमपि केचिदामनन्ति—'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्' इति यथेति— उच्यते; सत्यमस्ति एवंजातीयको नियमः; सति त्वेतस्मिन्,

तद्गतेपु विशेषेष्वनियम इति सुहृद्भूत्वा आचार्य आचष्टे । 'मनोनुकूले' इति चैषा श्रुतिः यत्रैकाग्रता तत्रैव—इत्येतदेव दर्शयति ॥

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

८. आप्रायणाधिकरणम् ।

आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे; तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि, तानि अवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेव एषामावृत्तिपरिमाणम्; न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यम्, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । यानि पुनः अभ्युदयफलानि, तेष्वेषा चिन्ता——किं कियन्तंचित्कालं प्रत्ययमावर्त्य उपरमेत, उत यावज्जीवमावर्तयेदिति । किं तावत्प्राप्तम्? कियन्तंचित्कालं प्रत्ययमभ्यस्य उत्सृजेत्, आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादित्येवं प्राप्ते, ब्रूमः——आ प्रायणादेव आवर्तयेत्प्रत्ययम्, अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः; कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति——'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' 'यच्चित्तस्तेनैष प्राणमायाति' 'प्राणस्तेजसा युक्तः सहात्मना

यथासंकल्पितं लोकं नयति' इति चैवमादिश्रुतिभ्यः; तृण-जलूकानिदर्शनाच्च; प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकालभावि भावनाविज्ञानमपेक्षेरन् । तस्मात् ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययाः, तेषु आ प्रायणात् आवृत्तिः । तथा च श्रुतिः—'स यावत्क्रतुरयमस्माल्लोकात्प्रैति' इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति । स्मृतिरपि—'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः' इति, 'प्रयाणकाले मनसाचलेन' इति च । 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत' इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

गतस्तृतीयशेषः; अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते । ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते, न क्षीयते वेति संशयः । किं तावत्प्राप्तम्? फलार्थत्वात्कर्मणः फलमदत्त्वा न संभाव्यते क्षयः; फलदायिनी हि अस्य शक्तिः श्रुत्या समधिगता; यदि तत् अन्तरेणैव फलोपभोगमपवृज्येत, श्रुतिः कदर्थिता स्यात्; स्मरन्ति च—'न हि कर्म क्षीयते' इति ।

९. तदधिगमाधिकरणम् ।

नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति– नैष दोषः, प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेः गृहदाहेष्ट्यादिवत्। अपि च प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता; न त्वेवं ब्रह्मविद्यायां विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात्– नेत्युच्यते; देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भविष्यति। तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरित्येवं प्राप्ते—

ब्रूमः— तदधिगमे ब्रह्माधिगमे सति उत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः– उत्तरस्य अश्लेषः, पूर्वस्य विनाशः। कस्मात्? तद्व्यपदेशात्; तथा हि ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्य आगामिनो दुरितस्यानभिसंबन्धं विदुषो व्यपदिशति— 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति; तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति— 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति; अयमपरः कर्मक्षयव्यपदेशो भवति— 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति। यदुक्तम्– अनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति, नैष दोषः; न हि

वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे; विद्यत एव सा; सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः; शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते, न प्रतिबन्धाप्रतिबन्धयोरपि। 'न हि कर्म क्षीयते' इत्येतदपि स्मरणमौत्सर्गिकम्—न हि भोगादृते कर्म क्षीयते तदर्थत्वादिति; इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः— 'सर्वं पाप्मानं तरति, तरति ब्रह्महत्याम्, योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इत्यादि श्रुतिस्मृतिभ्यः। यत्तूक्तम्—नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति, तदसत्, दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः। यत्पुनरेतदुक्तम्— न प्रायश्चित्तवत् दोषक्षयोद्देशेन विद्याविधानमस्तीति, अत्र ब्रूमः— सगुणासु तावद्विद्यासु विद्यत एव विधानम्, तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्चाविवक्षाकारणं नास्ति—इत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिः तासां फलमिति निश्चीयते; निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, तथापि अकर्त्रात्मत्वबोधात्कर्मप्रदाहसिद्धिः। अश्लेष इति च आगामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति। अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्कर्तृत्वं प्रतिपेद इव, तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननि-

वृत्तेः तान्यपि प्रविलीयन्त इत्याह— विनाश इति । पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता भोक्ता वा अहमासम्, नेदानीम्, नापि भविष्यत्काले— इति ब्रह्मविदवगच्छति; एवमेव च मोक्ष उपपद्यते; अन्यथा हि अनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात् । न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भवितुमर्हति; अनित्यत्वप्रसङ्गात्, परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । तस्मात् ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्य अश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ; धर्मस्य पुनः शास्त्रीयत्वात् शास्त्रीयेण ज्ञानेन अविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते— इतरस्यापि पुण्यस्य कर्मणः एवम् अघवत् असंश्लेषो विनाशश्च ज्ञानवतो भवतः; कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्, 'उभे उ हैवैष एते तरति' इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात्, अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य

१०. इतरासंश्लेषाधिकरणम् ।

सुकृतदुष्कृतयोस्तुल्यत्वात्, 'क्षीयन्ते चास्य कर्माणि' इति च अविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दः पठ्यते, तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्, ज्ञानापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः—'नैनं सेतुमहोरात्रे तरतः' इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य, 'सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्। 'पाते तु' इति तु-शब्दोऽवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोः विद्यासामर्थ्यादश्लेषविनाशसिद्धेः अवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः; स किमविशेषेण आरब्धकार्ययोरनारब्धकार्ययोश्च भवति, उत विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र 'उभे उ हैवैष एते तरति' इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते, प्रत्याह— अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसंचिते, अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते, सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते; न तु आरब्धकार्ये सामिभुक्तफले, याभ्यामेतत् ब्रह्मज्ञानायतनं जन्म

११. अनारब्धाधिकरणम्।

निर्मितम् । कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति शरीरपातावधिकरणात्क्षेमप्राप्तेः; इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत; तत्र शरीरपातप्रतीक्षां न आचक्षीत । ननु वस्तुबलेनैव अयमकर्त्रात्मावबोधः कर्माणि क्षपयन् कथं कानिचित्क्षपयेत् कानिचिच्चोपेक्षेत? न हि समानेऽग्निबीजसंपर्के, केषांचिद्बीजशक्तिः क्षीयते, केषांचिन्न क्षीयते— इति शक्यमङ्गीकर्तुमिति; उच्यते— न तावदनाश्रित्य आरब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते; आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्य अन्तराले प्रतिबन्धासंभवात् भवति वेगक्षयप्रतिपालनम् । अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति; बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तत एव । अपि च नैवात्र विवदितव्यम्— ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति; कथं हि एकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं च अपरेण प्रतिक्षेप्तुं शक्येत? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेन एतदेव निरुच्यते । तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥**

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः; सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति।

१२. अग्निहोत्राद्यधिकरणम्। तु-शब्द आशङ्कामपनुदति; यन्नित्यं कर्म वैदिकमग्निहोत्रादि, तत् तत्कार्यायैव भवति; ज्ञानस्य यत्कार्यं तदेव अस्यापि कार्यमित्यर्थः; कुतः? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिदर्शनात्। ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः—नैष दोषः, ज्वरमरणकार्ययोरपि दधिविषयोः गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्, तद्वत् कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः। ननु अनारभ्यो मोक्षः, कथमस्य कर्मकार्यत्वमुच्यते? नैष दोषः, आरादुपकारकत्वात्कर्मणः; ज्ञानस्यैव हि प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते; अत एव च अतिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम्। न हि ब्रह्मविद आगाम्यग्निहोत्रादि संभवति, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवति आगाम्यपि अग्निहोत्रादि। तस्यापि निरभिसंधिनः कार्यान्तराभावाद्विद्यासंगत्युपपत्तिः॥

किंविषयं पुनरिदम् अश्लेषविनाशवचनम्, किंविषयं वा अदो विनियोगवचनम् एकेषां शाखिनाम्— 'तस्य पुत्रा

दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति —अत उत्तरं पठति—

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादेर्नित्यात्कर्मणः अन्यापि ह्यस्ति साधुकृत्या, या फलमभिसंधाय क्रियते, तस्या एष विनियोग उक्तः एकेषां शाखिनाम्—'सुहृदः साधुकृत्यामुपयन्ति' इति । तस्या एव च इदम् अघवदश्लेषविनाशनिरूपणम्—इतरस्याप्येवमसंश्लेष इति । तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिः उभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥

## यदेव विद्ययेति हि ॥ १८ ॥

समधिगतमेतदनन्तराधिकरणे — नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतु-

१३. विद्याज्ञान- द्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं

साधनत्वा- मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्म-

धिकरणम् । विद्यया सह एककार्यं भवतीति; तत्र

अग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति— 'य एवं विद्वान्यजति' 'य एवं विद्वाञ्जुहोति' 'य एवं

विद्वाञ्शंसति' 'य एवं विद्वान्गायति' 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत' 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति, केवलमप्यस्ति। तत्रेदं विचार्यते—किं विद्यासंयुक्तमेव अग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सह एककार्यत्वं प्रतिपद्यते, न केवलम्; उत विद्यासंयुक्तं केवलं च अविशेषेणेति। कुतः संशयः? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषेण आत्मवेदनाङ्गत्वेन श्रवणात्, विद्यासंयुक्तस्य च अग्निहोत्रादेर्विशिष्टत्वावगमात्। किं तावत्प्राप्तम्? विद्यासंयुक्तमेव कर्म अग्निहोत्रादि आत्मविद्याशेषत्वं प्रतिपद्यते, न विद्याहीनम्, विद्योपेतस्य विशिष्टत्वावगमाद्विद्याविहीनात्— 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्' इत्यादिश्रुतिभ्यः, 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय' इत्यादिस्मृतिभ्यश्च इत्येवं प्राप्ते—

प्रतिपाद्यते— यदेव विद्ययेति हि। सत्यमेतत्—विद्यासंयुक्तं कर्म अग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टम्, विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात्; तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्म अग्निहोत्रादिकम्;

कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इत्यविशेषेण अग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात् । ननु विद्यासंयुक्तस्य अग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमात् विद्याविहीनमग्निहोत्रादि आत्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्— नैतदेवम्; विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगात् आत्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्य—इति युक्तं कल्पयितुम्; न तु 'यज्ञेन विविदिषन्ति' इत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्; तथा हि श्रुतिः—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेः वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति; कर्मणश्च वीर्यवत्त्वं तत्, यत्स्वप्रयोजनसाधनसहत्वम् । तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं च उभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेन इह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्, तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया

सह एककार्यं भवतीति स्थितम् ॥

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥**

अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्तः । इतरे तु आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति 'ब्रह्मैव सन्ब्रह्माप्येति' इति च एवमादिश्रुतिभ्यः । ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तम्, एवं पश्चादप्यनुवर्तेत—न, निमित्ताभवात् । उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, न च तादृशमत्र किंचिदस्ति । ननु अपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते—न, तस्य दग्धबीजत्वात्; मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपात उपभोगान्तरमारभेत; तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धम्—इत्यतः साध्वेतत् आरब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति ॥

१४. इतरक्षपणाधिकरणम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

शारीरकमीमांसासूत्रभाष्ये

चतुर्थाध्यायस्य प्रथमः पादः ॥

## द्वितीयः पादः ॥

अथ अपरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन् प्रथमं तावत् यथाशास्त्रमुत्क्रान्तिक्रममन्वाचष्टे ; समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति—

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

१. वागधिकरणम् ।

अस्ति प्रायणविषया श्रुतिः— 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति । किमिह वाच एव वृत्तिमत्त्या मनसि संपत्तिरुच्यते, उत वाग्वृत्तेरिति विशयः । तत्र वागेव तावत् मनसि संपद्यत इति प्राप्तम् ; तथा हि श्रुतिरनुगृहीता भवति ; इतरथा लक्षणा स्यात् ; श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा ; तस्मात् वाच एव अयं मनसि प्रलय इति ॥

एवं प्राप्ते, ब्रूमः— वाग्वृत्तिर्मनसि संपद्यत इति । कथं वाग्वृत्तिरिति व्याख्यायते, यावता 'वाङ्मनसि' इत्येव

आचार्यः पठति? सत्यमेतत्; पठिष्यति तु परस्तात्— 'अविभागो वचनात्' इति; तस्मादत्र वृत्त्युपशममात्रं विवक्षतीति गम्यते। तत्त्वप्रलयविवक्षायां तु सर्वत्रैव अविभागसाम्यात् किं परत्रैव विशिंष्यात्— 'अविभागः' इति; तस्मादत्र वृत्त्युपसंहारविवक्षा। वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः। कस्मात्? दर्शनात्— दृश्यते हि वाग्वृत्तेः पूर्वोपसंहारो मनोवृत्तौ विद्यमानायाम्; न तु वाच एव वृत्तिमत्त्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्यात् वाच एवायं मनस्यप्ययो युक्त इत्युक्तम्— नेत्याह, अतत्प्रकृतित्वात्; यस्य हि यत उत्पत्तिः, तस्य तत्र प्रलयो न्याय्यः, मृदीव शरावस्य; न च मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति। वृत्त्युद्भवाभिभवौ तु अप्रकृतिसमाश्रयावपि दृश्येते; पार्थिवेभ्यो हि इन्धनेभ्यः तैजसस्याग्नेर्वृत्तिरुद्भवति, अप्सु च उपशाम्यति। कथं तर्हि अस्मिन्पक्षे शब्दः— 'वाङ्मनसि संपद्यते' इति? अत आह— शब्दाच्चेति; शब्दोऽप्यस्मिन्पक्षेऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः॥

## अत एव च सर्वाण्यनु ॥ २ ॥

'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः'

इत्यत्र अविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते; तत्रापि अत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासंभवात् शब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणम् 'वाङ्मनसि संपद्यते' इत्युदाहरणानुरोधेन ॥

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

समाधिगतमेतत्—'वाङ्मनसि संपद्यते' इत्यत्र वृत्तिसंपत्तिविवक्षेति; अथ यदुत्तरं वाक्यम् 'मनः प्राणे' इति,

२. मनोऽधिकरणम् ।

किमत्रापि वृत्तिसंपत्तिरेव विवक्ष्यते, उत वृत्तिमत्संपत्तिः— इति विचिकित्सायाम्, वृत्तिमत्संपत्तिरेव अत्र इति प्राप्तम्, श्रुत्यनुग्रहात्; तत्प्रकृतित्वोपपत्तेश्च; तथा हि—'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इत्यन्नयोनि मन आमनन्ति, अब्योनिं च प्राणम्; आपश्चान्नमसृजन्त—इति श्रुतिः । अतश्च यन्मनः प्राणे प्रलीयते, अन्नमेव तदप्सु प्रलीयते; अन्नं हि मनः, आपश्च प्राणः, प्रकृतिविकाराभेदादिति । एवं प्राप्ते, ब्रूमः—तदपि आगृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इति उत्तराद्वाक्यादवगन्तव्यम्; तथा हि सुषुप्सो-

मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायाम्, मनोवृत्तीनामुपशमो दृश्यते; न च मनसः स्वरूपाप्ययः प्राणे संभवति; अतत्प्रकृतित्वात्। ननु दर्शितं मनसः प्राणप्रकृतित्वम्—नैतत्सारम्; न हि ईदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति; एवमपि हि अन्ने मनः संपद्येत, अप्सु चान्नम्, अप्स्वेव च प्राणः; न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति; तस्मात् न मनसः प्राणे स्वरूपाप्ययः। वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारात् इति दर्शितम्॥

## सोऽध्यक्षे तदुपगमादिभ्यः॥ ४॥

३. अध्यक्षाधिकरणम्।

स्थितमेतत्—यस्य यतो नोत्पत्तिः, तस्य तस्मिन्वृत्तिप्रलयः, न स्वरूपप्रलय इति; इदमिदानीम् 'प्राणस्तेजसि' इत्यत्र चिन्त्यते—किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किं वा देहेन्द्रियपञ्जराध्यक्षे जीव इति। तत्र श्रुतेरनतिशङ्क्यत्वात् प्राणस्य तेजस्येव संपत्तिः स्यात्, अश्रुतकल्पनाया अन्याय्यत्वात्—इत्येवं प्राप्ते प्रतिपद्यते—सोऽध्यक्ष इति। स प्रकृतः प्राणः, अध्यक्षे अविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मनि अवतिष्ठते;

तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः ; कुतः ? तदुपगमादिभ्यः— 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रै-तदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यन्तरम् अध्यक्षोपगामिनः सर्वान्प्राणान् अविशेषेण दर्शयति; विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति पञ्चवृत्तेः प्राणस्य अध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां च इतरेषाम् 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति; 'सविज्ञानो भवति' इति च अध्यक्षस्य अन्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन् अपीतकरणग्रामस्य प्राणस्य अवस्थानं गमयति । ननु 'प्राणस्तेजसि' इति श्रूयते ; कथं प्राणोऽध्यक्षे इत्यधिकावापः क्रियते? नैष दोषः, अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य, श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥

कथं तर्हि 'प्राणस्तेजसि' इति श्रुतिरित्यत आह—

**भूतेषु तच्छ्रुतेः ॥ ५ ॥**

स प्राणसंपृक्तोऽध्यक्षः तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेषु अवतिष्ठत इत्यवगन्तव्यम्, 'प्राणस्तेजसि' इति श्रुतेः । ननु च इयं श्रुतिः प्राणस्य तेजसि स्थितिं

दर्शयति, न प्राणसंपृक्तस्याध्यक्षस्य— नैष दोषः, सोऽध्यक्षे— इति अध्यक्षस्याप्यन्तराल उपसंख्यातत्वात्; योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम्; तस्मात् 'प्राणस्तेजसि' इति प्राणसंपृक्तस्याध्यक्षस्यैव एतत् तेजः-सहचरितेषु भूतेष्ववस्थानम् ॥

कथं तेजःसहचरितेषु भूतेष्वित्युच्यते, यावता एकमेव तेजः श्रूयते— 'प्राणस्तेजसि' इति? अत आह—

**नैकस्मिन्दर्शयतो हि ॥ ६ ॥**

न एकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते, कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात्। दर्शयतश्च एतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' इति; तद्व्याख्यातम् 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इत्यत्र। श्रुतिस्मृती च एतमर्थं दर्शयतः; श्रुतिः— 'पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' इत्याद्या; स्मृतिरपि— अण्व्यो मात्राविनाशिन्यो दशार्धानां तु याः स्मृताः। ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः' इत्याद्या। ननु च उपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायाम् 'कार्यं तदा

पुरुषो भवति' इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति— 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः' इति; अत्रोच्यते— तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्य इन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता; इह पुनः भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्; प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितम्, न त्वाश्रयान्तरं निवारितम्; तस्मादविरोधः ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

४. आसृत्युपक्रमाधिकरणम् ।

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किं वा विशेषवती— इति विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा; पुनर्भवाय च भूतान्याश्रीयन्ते; न च विदुषः पुनर्भवः संभवति; अमृतत्वं हि विद्वानश्नुते— इति स्थितिः; तस्मादविदुष एव एषा उत्क्रान्तिः । ननु विद्याप्रकरणे समाम्नानात् विदुष एव एषा भवेत्— न, स्वापादिवत् यथाप्राप्तानुकीर्तनात्; यथा हि 'यत्रैतत्पुरुषः स्वपिति नाम' 'अशिशिषति नाम' 'पिपासति नाम' इति च सर्वप्राणिसाधारणा एव स्वापाद-

योऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते ; एवम् इयमपि उत्क्रान्तिः महाजनगतैवानुकीर्त्यते, यस्यां परस्यां देवतायां पुरुषस्य प्रयतः तेजः संपद्यते स आत्मा तत्त्वमसि– इत्येतत्प्रतिपादयितुम् । प्रतिषिद्धा च एषा विदुषः– 'न तस्य प्राणा उत्क्रामन्ति' इति । तस्मात् अविदुष एवैषेति ॥

एवं प्राप्ते, ब्रूमः—समाना चैषा उत्क्रान्तिः 'वाङ्मनसि' इत्याद्या विद्वदविदुषोः आसृत्युपक्रमात् भवितुमर्हति, अविशेषश्रवणात्; अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवन् संसरति, विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते– तदेतत् 'आसृत्युपक्रमात्' इत्युक्तम् । ननु अमृतत्वं विदुषा प्राप्तव्यम्, न च तद्देशान्तरायत्तम्, तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति– अत्रोच्यते— अनुपोष्य च, इदम्, अदग्ध्वा अत्यन्तमविद्यादीन्क्लेशान्, अपरविद्यासामर्थ्यात् आपेक्षिकममृतत्वं प्रेप्सते संभवति तत्र सृत्युपक्रमः ; भूताश्रयत्वं च– न हि निराश्रयाणां प्राणानां गतिरुपपद्यते ; तस्माददोषः ॥

**तदापीतेः संसारव्यपदेशात् ॥ ८ ॥**

'तेजः परस्यां देवतायाम्' इत्यत्र प्रकरणसामर्थ्यात् तत् यथा प्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति; कीदृशी पुनरियं संपत्तिः स्यादिति चिन्त्यते । तत्र आत्यन्तिक एव तावत् स्वरूपप्रविलय इति प्राप्तम्, तत्प्रकृतित्वोपपत्तेः; सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्; तस्मात् आत्यन्तिकी इयमविभागापत्तिरिति । एवं प्राप्ते, ब्रूमः —तत् तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतम् आपीतेः आसंसारमोक्षात् सम्यग्ज्ञाननिमित्तात् अवतिष्ठते—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इत्यादिसंसारव्यपदेशात्; अन्यथा हि सर्वः प्रायणसमय एव उपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म संपद्येत, तत्र विधिशास्त्रमनर्थकं स्यात्, विद्याशास्त्रं च; मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति; तस्मात् तत्प्रकृतित्वेऽपि सुषुप्तिप्रलयवत् बीजभावावशेषैव एषा सत्संपत्तिरिति ॥

५. संसारव्यपदेशाधिकरणम् ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

तच्च इतरभूतसहितं तेजो जीवस्य अस्माच्छरीरात्प्रवसत

आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति । तथा हि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते । तत्र तनुत्वात्संचारोपपत्तिः ; स्वच्छत्वाच्च अप्रतिघातोपपत्तिः ; अत एव च देहान्निर्गच्छत् पार्श्वस्थैर्नोपलभ्यते ॥

## नोपमर्देनातः ॥ १० ॥

अत एव च सूक्ष्मत्वात् नास्य स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेन इतरत्सूक्ष्मं शरीरमुपमृद्यते ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव च सूक्ष्मस्य शरीरस्य एष ऊष्मा, यमेतस्मिञ्जीवच्छरीरे संस्पर्शेनोष्माणं विजानन्ति । तथा हि मृतावस्थायाम् अवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु, न ऊष्मा उपलभ्यते, जीवदवस्थायामेव तु उपलभ्यते— इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एव एष ऊष्मेति । तथा च श्रुतिः—'उष्ण एव जीविष्यञ्शीतो मरिष्यन्' इति ॥

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

'अमृतत्वं चानुपोष्य' इत्यतो विशेषणात् आत्यन्तिकेऽमृ-

तत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः; तत्रापि केनचित्कारणेन

६. प्रतिषेधा- उत्क्रान्तिमाशङ्क्य प्रतिषेधति— 'अथा-
धिकरणम्। कामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' इति। अतः परविद्याविषयात्प्रतिषेधात् न परब्रह्मविदो देहात् प्राणानामुत्क्रान्तिरस्तीति चेत्, नेत्युच्यते, यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानाम, न शरीरात्। कथमवगम्यते? 'न तस्मात्प्राणा उत्क्रामन्ति' इति शाखान्तरे पञ्चमीप्रयोगात्; संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते; 'तस्मात्' इति च प्राधान्यात् अभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते, न देहः; न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा अपक्रामन्ति, सहैव तेन भवन्ति— इत्यर्थः। सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादिति॥

एवं प्राप्ते, प्रत्युच्यते—

## स्पष्टो ह्येकेषाम्॥ १३॥

नैतदस्ति– यदुक्तम्, परब्रह्मविदोऽपि देहात् अस्त्युत्क्रान्तिः उत्क्रान्तिप्रतिषेधस्य देहापादानत्वादिति; यतो

देहापादान एव उत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथा हि—— आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति' इत्यत्र, 'नेति होवाच याज्ञवल्क्यः' इत्यनुत्क्रान्तिपक्षं परिगृह्य, न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृतः— इत्यस्यामाशङ्कायाम् 'अत्रैव समवनीयन्ते' इति प्रविलयं प्राणानां प्रतिज्ञाय, तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति स-शब्दपरामृष्टस्य प्रकृतस्य उत्क्रान्त्यवधेः उच्छ्वयनादीनि समामनन्ति; देहस्य च एतानि स्युः न देहिनः; तत्सामान्यात्, 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्रापि——अभेदोपचारेण देहापादानस्यैव उत्क्रमणस्य प्रतिषेधः— यद्यपि प्राधान्यं देहिनः—— इति व्याख्येयम्, येषां पञ्चमीपाठः । येषां तु षष्ठीपाठः, तेषां विद्वत्संबन्धिनी उत्क्रान्तिः प्रतिषिध्यत इति, प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वात् अस्य वाक्यस्य, देहापादानैव सा प्रतिषिद्धा भवति देहादुत्क्रान्तिः प्राप्ता, न देहिनः; अपि च 'चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्येवमविद्वद्विषये सप्रपञ्चमुत्क्रमणं संसारगमनं च दर्शयित्वा, 'इति नु कामयमानः'

इति उपसंहृत्य अविद्वत्कथाम्, 'अथाकामयमानः' इति व्यपदिश्य विद्वांसम्—यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेत्, असमञ्जस एव व्यपदेशः स्यात्; तस्मात् अविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योः विद्वद्विषये प्रतिषेधः—इत्येवमेव व्याख्येयम्, व्यपदेशार्थवत्त्वाय। न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मणः उत्क्रान्तिः गतिर्वा उपपद्यते, निमित्ताभावात्। 'अत्र ब्रह्म समश्नुते' इति च एवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति ॥

## स्मर्यते च ॥ १४ ॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः— 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः' इति। ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते— 'शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' इति— न; सशरीरस्यैव अयं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम्, सर्वभूतदृश्यत्वाद्युपन्यासात्; न हि अशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः; तथा च तत्रैवोपसंहृतम्— 'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः। दर्शयित्वा प्रभावं स्वं

सर्वभूतगतोऽभवत्' इति । तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः; गतिश्रुतीनां तु विषयमुपरिष्टाद्व्याख्यास्यामः ॥

## तानि परे तथा ह्याह ॥ १५ ॥

तानि पुनः प्राणशब्दोदितानि इन्द्रियाणि भूतानि च परब्रह्मविदः तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते; कस्मात्? तथा हि आह श्रुतिः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति । ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयम् आह स्म— न; सा खलु व्यवहारापेक्षा— पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति; इतरा तु विद्वत्प्रतिपत्त्यपेक्षा— कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव संपद्यत इति; तस्माददोषः ॥

७. वागादिलयाधिकरणम् ।

## अविभागो वचनात् ॥ १६ ॥

स पुनर्विदुषः कलाप्रलयः किम् इतरेषामिव सावशेषो भवति, आहोस्विन्निरवशेष इति । तत्र प्रलयसामान्यात्

८. अविभागाधिकरणम् ।

शक्त्यवशेषताप्रसक्तौ ब्रवीति— अविभागापत्तिरेवेति ; कुतः ? वचनात् ; तथा हि कलाप्रलयमुक्त्वा वक्ति— 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति । अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः । तस्मादविभाग एवेति ॥

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

९. तदोकोऽधिकरणम् ।

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता; संप्रति तु अपरविद्याविषयामेव चिन्तामनुवर्तयति । समाना च आसृत्युपक्रमात् विद्वदविदुषोरुत्क्रान्तिः— इत्युक्तम्; तम् इदानीं सृत्युपक्रमं दर्शयति । तस्य उपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मनः, ओकः आयतनं हृदयम्—'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुतेः, तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना च उत्क्रान्तिः श्रूयते—'तस्य हैत-

स्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः’ इति । सा किमनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चिद्विदुषो विशेषनियमः— इति विचिकित्सायाम् , श्रुत्यविशेषादनियमप्राप्तौ, आचष्टे—समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च, मूर्धस्थानादेव विद्वान्निष्क्रामति, स्थानान्तरेभ्यस्तु इतरे; कुतः? विद्यासामर्थ्यात्; यदि विद्वानपि इतरवत् यतः कुतश्चिद्देहदेशात् उत्क्रामेत्, नैव उत्कृष्टं लोकं लभेत, तत्र अनर्थिकैव विद्या स्यात् । तच्छेषगत्यनुस्मृतियोगाच्च—विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिः अनुशीलयितव्या विद्याविशेषेषु विहिता; तामभ्यस्यन् तयैव प्रतिष्ठत इति युक्तम् । तस्मात् हृदयालयेन ब्रह्मणा सूपासितेन अनुगृहीतः तद्भावं समापन्नो विद्वान् मूर्धन्ययैव शताधिकया शतादतिरिक्तया एकशततम्या नाड्या निष्क्रामति, इतराभिरितरे । तथा हि हार्दविद्यां प्रकृत्य समामनन्ति— ‘शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति’ इति ॥

## रश्म्यनुसारी ॥ १८ ॥

अस्ति हार्दविद्या 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्युपक्रम्य विहिता; तत्प्रक्रियायाम् 'अथ या एता हृदयस्य नाड्यः' इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसंबन्धमुक्त्वा उक्तम्— 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति; पुनश्चोक्तम्— 'तयोर्ध्वमायन्नमृतत्वमेति' इति; तस्मात् शताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते। तत् किम् अविशेषेणैव अहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वम्, आहोस्विदहन्येव —इति संशये सति, अविशेषश्रवणात् अविशेषेणैव तावत् रश्म्यनुसारीति प्रतिज्ञायते ॥

१०. रश्म्यधिकरणम्।

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

अस्ति अहनि नाडीरश्मिसंबन्ध इति अहनि मृतस्य स्यात् रश्म्यनुसारित्वम्; रात्रौ तु प्रेतस्य न स्यात्, नाडीरश्मिसंबन्धाविच्छेदात्— इति चेत्, न, नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात्; यावद्देहभावी हि शिराकिरणसंपर्कः; दर्शयति चैतमर्थं श्रुतिः— 'अमुष्मादादित्यात्प्र-

तायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' इति; निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते, प्रतापादिकार्यदर्शनात्; स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वम् ऋत्वन्तररजनीषु, शैशिरेष्विव दुर्दिनेषु; 'अहरेवैतद्रात्रौ दधाति' इति च एतदेव दर्शयति। यदि च रात्रौ प्रेतः विनैव रश्म्यनुसारेण ऊर्ध्वमाक्रमेत, रश्म्यनुसारानर्थक्यं भवेत्; न ह्येतत् विशिष्य अभिधीयते— यो दिवा प्रैति, स रश्मीनपेक्ष्योर्ध्वमाक्रमते, यस्तु रात्रौ सोऽनपेक्ष्यैवेति; अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षिकफला विद्येति अप्रवृत्तिरेव तस्यां स्यात्, मृत्युकालानियमात्; अथापि रात्रावुपरतोऽहरागमम् उदीक्षेत, अहरागमेऽप्यस्य कदाचित् अरश्मिसंबन्धार्हं शरीरं स्यात् पावकादिसंपर्कात्; 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति च श्रुतिः अनुदीक्षां दर्शयति। तस्मात् अविशेषेणैव इदं रात्रिंदिवं रश्म्यनुसारित्वम्॥

## अतश्चायनेऽपि दक्षिणे ॥ २० ॥

अत एव च उदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च विद्यायाः; अनियतकालत्वाच्च मृत्योः, दक्षिणायनेऽपि म्रियमा-

णो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेः, भीष्मस्य च प्रतीक्षादर्शनात्, 'आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्' इति च श्रुतेः, अपेक्षितव्यमुत्तरायणम्— इतीमामाशङ्काम् अनेन सूत्रेणापनुदति; प्राशस्त्यप्रसिद्धिः अविद्वद्विषया; भीष्मस्य प्रतिपालनम् आचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं च। श्रुतेस्तु अर्थं वक्ष्यति 'आतिवाहिकास्तल्लिङ्गात्' इति ॥

११. दक्षिणायनाधिकरणम्।

ननु च 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' इति कालप्राधान्येन उपक्रम्य अहरादिकालविशेषः स्मृतावनावृत्तये नियतः; कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायात्— इत्यत्रोच्यते—

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

योगिनः प्रति च अयम् अहरादिकालविनियोगः अनावृत्तये स्मर्यते; स्मार्ते चैते योगसांख्ये, न श्रौते; अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य

श्रौतेषु विज्ञानेषु अवतारः । ननु 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति, उच्यते— 'तं कालं वक्ष्यामि' इति स्मृतौ कालप्रतिज्ञानात् विरोधमाशङ्क्य अयं परिहारः उक्तः । यदा पुनः स्मृतावपि अग्न्याद्या देवता एव आतिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**चतुर्थाध्यायस्य द्वितीयः पादः ॥**

## तृतीयः पादः ॥

आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तम्; सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते— नाडीरश्मिसंबन्धेनैका 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' इति; अर्चिरादिकैका 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' इति; 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' इत्यन्या; 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' इत्यपरा; 'सूर्यद्वारेण ते विरजाः प्रयान्ति' इति च अपरा। तत्र संशयः— किं परस्परं भिन्ना एताः सृतयः, किं वा एकैव अनेकविशेषणेति। तत्र प्राप्तं तावत्—भिन्ना एताः सृतय इति, भिन्नप्रकरणत्वात्, भिन्नोपासनशेषत्वाच्च; अपि च 'अथैतैरेव रश्मिभिः' इत्यवधारणम् अर्चिराद्यपेक्षायाम् उपरुध्येत, त्वरावचनं च पीड्येत—'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति; तस्मादन्योन्यभिन्ना एवैते पन्थान इति। एवं प्राप्ते, अभिदध्महे—

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अर्चिरादिनेति; सर्वो ब्रह्म प्रेप्सुः अर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे; कुतः? तत्प्रथितेः; प्रथितो ह्येष मार्गः सर्वेषां विदुषाम्; तथा हि पञ्चाग्निविद्याप्रकरणे—'येचामी अरण्ये श्रद्धां सत्यमुपासते' इति विद्यान्तरशीलिनामपि अर्चिरादिका सृतिः श्राव्यते। स्यादेतत्—यासु विद्यासु न काचिद्गतिरुच्यते, तासु इयमर्चिरादिका उपतिष्ठताम्; यासु तु अन्या श्राव्यते, तासु किमित्यर्चिराद्याश्रयणमिति, अत्रोच्यते—भवेदेतदेवम्, यद्यत्यन्तभिन्ना एव एताः सृतयः स्युः; एकैव त्वेषा सृतिः अनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित् केनचित् विशेषणेनोपलक्षितेति वदामः, सर्वत्रैकदेशप्रत्यभिज्ञानात् इतरेतरविशेषणविशेष्यभावोपपत्तेः; प्रकरणभेदेऽपि हि विद्यैकत्वे भवति इतरेतरविशेषणोपसंहारवत् गतिविशेषणानामप्युपसंहारः; विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानात् गन्तव्याभेदाच्च गत्यभेद एव; तथा हि— 'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' 'तस्मिन्वसन्ति शाश्वतीः समाः' 'सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते' 'तद्य एवैतं

१. अर्चिराद्यधिकरणम्।

ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति' इति च तत्र तत्र तदेव एकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते । यत्तु 'एतैरेव' इत्यवधारणम् अर्चिराद्याश्रयणे न स्यादिति, नैष दोषः, रश्मिप्राप्तिपरत्वादस्य ; न हि एक एव शब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादींश्च व्यावर्तयितुम् ; तस्मात् रश्मिसंबन्ध एवायमवधार्यत इति द्रष्टव्यम् । त्वरावचनं तु अर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया क्षैप्रयार्थत्वात् नोपरुध्यते— यथा निमेषमात्रेणात्रागम्यत इति । अपि च 'अथैतयोः पथोर्न कतरेणचन' इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति; भूयांस्यर्चिरादिस्मृतौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्र ; भूयसां च आनुगुण्येन अल्पीयसां नयनं न्याय्यमित्यतोऽपि अर्चिरादिना तत्प्रथितेरित्युक्तम् ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानाम् इतरेतरविशेषणविशेष्यभावः—इति तदेतत् सुहृद्भूत्वा आचार्यो ग्रथयति । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति

२. वाय्वधिकरणम् ।

कौषीतकिनां देवयानः पन्थाः पठ्यते; तत्र अर्चिरग्निलोकशब्दौ तावत् एकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः कश्चिदन्वेष्यः; वायुस्तु अर्चिरादौ वर्त्मनि कतमस्मिन्स्थाने निवेशयितव्य इति, उच्यते— 'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यम्' इत्यत्र संवत्सरात्पराञ्चम् आदित्यादर्वाञ्चं वायुमभिसंभवन्ति; कस्मात्? अविशेषविशेषाभ्याम् । तथा हि 'स वायुलोकम्' इत्यत्र अविशेषोपदिष्टस्य वायोः श्रुत्यन्तरेण विशेषोपदेशो दृश्यते— 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति; एतस्मात् आदित्यात् वायोः पूर्वत्वदर्शनात् विशेषान् अब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः । कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते? नैषोऽस्ति विशेष इति वदामः; ननूदाहृता श्रुतिः—'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' इति; उच्यते—केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति; पदार्थोपदर्शनमात्रं ह्यत्र

क्रियते— एतं एतं च आगच्छतीति; इतरत्र पुनः, वायुप्रत्तेन रथचक्रमात्रेण च्छिद्रेण ऊर्ध्वमाक्रम्य आदित्यमागच्छतीति— अवगम्यते क्रमः; तस्मात् सूक्तम् अविशेषविशेषाभ्यामिति । वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति समामनन्ति; तत्र आदित्यानन्तर्याय देवलोकाद्वायुमभिसंभवेयुः; 'वायुमब्दात्' इति तु च्छन्दोगश्रुत्यपेक्षयोक्तम् । छान्दोग्यवाजसनेयकयोस्तु एकत्र देवलोको न विद्यते, परत्र संवत्सरः; तत्र श्रुतिद्वयप्रत्ययात् उभावपि उभयत्र ग्रथयितव्यौ; तत्रापि माससंबन्धात्संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम् ॥

## तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' इत्यस्या विद्युत उपरिष्टात् 'स वरुणलोकम्' इत्ययं वरुणः संबध्येत; अस्ति हि संबन्धो विद्युद्वरुणयोः; यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्ति, अथ आपः प्रपतन्ति; 'विद्योतते स्तनयति वर्षिष्यति वा' इति च ब्राह्मणम्; अपां च अधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः; वरुणादधि इन्द्रप्रजापती स्थानान्तराभावात् पाठसामर्थ्याच्च; आगन्तुकत्वादपि वरु-

३. तडिदधिकरणम् ।

णादीनामन्ते एव निवेशः, वैशेषिकस्थानाभावात्; विद्युच्च अन्त्या अर्चिरादौ वर्त्मनि ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

४. आतिवाहिकाधिकरणम्।

तेष्वेव अर्चिरादिषु संशयः— किमेतानि मार्गचिह्नानि, उत भोगभूमयः, अथवा नेतारो गन्तॄणामिति। तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम्, तत्स्वरूपत्वादुपदेशस्य; यथा हि लोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते—गच्छ इतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसीति— एवमिहापि 'अर्चिषोऽहरह्न आपूर्यमाणपक्षम्' इत्याद्याह। अथवा भोगभूमय इति प्राप्तम्; तथाहि लोकशब्देन अग्न्यादीननुबध्नाति— 'अग्निलोकमागच्छति' इत्यादि; लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते— 'मनुष्यलोकः पितृलोको देवलोकः' इति च; तथा च ब्राह्मणम्— 'अहोरात्रेषु ते लोकेषु सज्जन्ते' इत्यादि। तस्मान्नातिवाहिका अर्चिरादयः। अचेतनत्वादप्येषामातिवाहिकत्वानुपपत्तिः; चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यान् अतिवाहयन्तीति। एवं प्राप्ते, ब्रूमः— आतिवाहिका एवैते भवितुमर्हन्ति; कुतः? तल्लिङ्गात्; तथा हि—'चन्द्रम-

सो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' इति सिद्धवद्गमयितृत्वं दर्शयति; तद्वचनं तद्विषयमेवोपक्षीणमिति चेत्, न, प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य; यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्ताः ते च मानवाः, ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणम्— अमानव इति ॥

ननु तल्लिङ्गमात्रमगमकम्, न्यायाभावात्; नैष दोषः—

**उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥**

ये तावदर्चिरादिमार्गगाः ते देहवियोगात् संपिण्डितकरणग्रामा इति अस्वतन्त्राः, अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यम्—इत्यतः अर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते; लोकेऽपि हि मत्तमूर्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः; न हि रात्रौ प्रेतस्य अहःस्वरूपाभिसंभव उपपद्यते; न च प्रतिपालनमस्तीत्युक्तं पुरस्तात्; ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति। अर्चिरादिशब्दता च एषाम् अर्चिराद्यभिमानादुपपद्यते; 'अर्चिषोऽहः' इत्यादिनिर्देशस्तु आतिवाहिकत्वेऽपि न विरुध्यते—अर्चिषा हेतुना अहरभिसंभवति, अह्ना

हेतुना आपूर्यमाणपक्षमिति; तथा च लोके प्रसिद्धेष्वप्यातिवाहिकेषु एवंजातीयक उपदेशो दृश्यते–गच्छ त्वम् इतो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति । अपि च उपक्रमे 'तेऽर्चिरभिसंभवन्ति' इति संबन्धमात्रमुक्तम्, न संबन्धविशेषः कश्चित्; उपसंहारे तु 'स एतान्ब्रह्म गमयति' इति संबन्धविशेषः अतिवाह्यातिवाहकत्वलक्षण उक्तः; तेन स एवोपक्रमेऽपीति निर्धार्यते । संपिण्डितकरणत्वादेव च गन्तॄणां न तत्र भोगसंभवः; लोकशब्दस्तु अनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते, अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतः अग्निस्वामिकं लोकं प्राप्तः अग्निना अतिवाह्यते, वायुस्वामिकं प्राप्तो वायुना— इति योजयितव्यम् ॥

कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः? विद्युतो ह्यधि वरुणादय उपक्षिप्ताः, विद्युतस्त्वनन्तरम् आ ब्रह्मप्राप्तेः अमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतम्—इत्यत उत्तरं पठति—

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥**

ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्य-

वगन्तव्यम्, 'तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गमयति' इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु तस्यैव अप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचित् अनुग्राहका इत्यवगन्तव्यम् । तस्मात्साधूक्तम्— आतिवाहिका देवतात्मानोऽर्चिरादय इति ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

'स एनान्ब्रह्म गमयति' इत्यत्र विचिकित्स्यते— किं कार्यमपरं ब्रह्म गमयति, आहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति । कुतः संशयः? ब्रह्मशब्दप्रयोगात्, गतिश्रुतेश्च । तत्र कार्यमेव सगुणमपरं ब्रह्म एनान्गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते; कुतः? अस्य गत्युपपत्तेः— अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते, प्रदेशवत्त्वात्; न तु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वा अवकल्पते, सर्वगतत्वात्प्रत्यगात्मत्वाच्च गन्तॄणाम् ॥

५. कार्याधिकरणम् ।

## विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' इति च श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव

गतिरिति गम्यते; न हि बहुवचनेन विशेषणं परस्मिन्ब्रह्मण्यवकल्पते; कार्ये तु अवस्थाभेदोपपत्तेः संभवति बहुवचनम् । लोकश्रुतिरपि विकारगोचरायामेव संनिवेशविशिष्टायां भोगभूमावाञ्जसी; गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' इत्यादिषु । अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मणि अनाञ्जसः स्यात् । तस्मात् कार्यविषयमेवेदं नयनम् ॥

ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते, समन्वये हि समस्तस्य जगतो जन्मादिकारणं ब्रह्मेति स्थापितम्— इत्यत्रोच्यते—

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तु-शब्द आशङ्काव्यावृत्त्यर्थः; परब्रह्मसामीप्यात् अपरस्य ब्रह्मणः, तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते । परमेव हि ब्रह्म विशुद्धोपाधिसंबन्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिः उपासनाय उपदिश्यमानम् अपरमिति स्थितिः ॥

ननु कार्यप्राप्तौ अनावृत्तिश्रवणं न घटते; न हि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति; दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्—'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति, तेषामिह न पुनरावृत्तिर-

स्ति—'तयोर्ध्वमायन्नमृतत्वमेति' इति च; अत्र ब्रूमः—

**कार्यात्यये तदध्यक्षेण सहातः पर-मभिधानात् ॥ १० ॥**

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैव उत्पन्नसम्यग्दर्शनाः सन्तः, तदध्यक्षेण हिरण्यगर्भेण सह अतः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते—इतीत्थं क्रममुक्तिः अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या । न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम ॥

**स्मृतेश्च ॥ ११ ॥**

स्मृतिरप्येतमर्थमनुजानाति— 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति । तस्मात्कार्यब्रह्मविषया एव गतिश्रुतयः इति सिद्धान्तः ॥

कं पुनः पूर्वपक्षमाशङ्क्य अयं सिद्धान्तः प्रतिष्ठापितः 'कार्यं बादरिः' इत्यादिनेति, स इदानीं सूत्रैरेवोपदर्श्यते—

**परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

जैमिनिस्त्वाचार्यः 'स एनान्ब्रह्म गमयति' इत्यत्र परमे-

व ब्रह्म प्रापयतीति मन्यते; कुतः? मुख्यत्वात् । परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम्, गौणमपरम्; मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेति' इति च गतिपूर्वकममृतत्वं दर्शयति; अमृतत्वं च परस्मिन्ब्रह्मण्युपपद्यते, न कार्ये, विनाशित्वात्कार्यस्य—'अथ यत्रान्यत्पश्यति तदल्पं तन्मर्त्यम्' इति प्रवचनात् परविषयैव च एषा गतिः कठवल्लीषु पठ्यते; न हि तत्र विद्यान्तरप्रक्रमोऽस्ति—'अन्यत्र धर्मादन्यत्राधर्मात्' इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥

## न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

अपि च 'प्रजापतेः सभां वेश्म प्रपद्ये' इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः, 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात्; 'यशोऽहं भवामि ब्राह्मणानाम्' इति च सर्वात्मत्वेनोपक्रमणात्; 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः । सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका हार्दविद्यायामुदिता— 'तदपराजिता पू-

ब्रह्मणः प्रभुविमितं हिरण्मयम्' इत्यत्र। पदेरपि च गत्यर्थत्वात् मार्गापेक्षता अवसीयते। तस्मात्परब्रह्मविषया गतिश्रुतय इति पक्षान्तरम्। तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ—गत्युपपत्त्यादिभिरेकः, मुख्यत्वादिभिरपरः। तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुम्, न तु मुख्यत्वादयो गत्युपपत्त्यादीन्—इति आद्य एव सिद्धान्तो व्याख्यातः, द्वितीयस्तु पूर्वपक्षः। न ह्यसत्यपि संभवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदाज्ञापयिता विद्यते। परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते—'विष्वङ्ङन्या उत्क्रमणे भवन्ति' इतिवत्। 'प्रजापतेः सभां वेश्म प्रपद्ये' इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनम् 'सर्वकर्मा सर्वकामः' इत्यादिवत् अवकल्पते। तस्मादपरविषया एव गतिश्रुतयः॥

केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति उत्तराणि सिद्धान्तसूत्राणि— इत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति; तत् अनुपपन्नम्, गन्तव्यत्वानुपपत्तेर्ब्रह्मणः; यत्सर्वगतं सर्वान्तरं सर्वात्मकं च परं ब्रह्म 'आकाशवत्सर्वगतश्च नित्यः' 'यत्साक्षादपरोक्षाद्ब्रह्म'

'य आत्मा सर्वान्तरः' 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इत्यादिश्रुतिनिर्धारितविशेषम्—तस्य गन्तव्यता न कदाचिदप्युपपद्यते ; न हि गतमेव गम्यते ; अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके । ननु लोके गतस्यापि गन्तव्यता देशान्तरविशिष्टस्य दृष्टा—यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति, तथा अनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभूतमेव गन्तव्यं दृष्टम्, तद्वत् ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात् कथंचित् गन्तव्यता स्यादिति—न, प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः ; 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' 'अस्थूलमनण्वह्रस्वमदीर्घम्' 'स बाह्याभ्यन्तरो ह्यजः' 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' 'स एष नेति नेत्यात्मा' इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते, येन भूप्रदेशवयोवस्थान्यायेनास्य गन्तव्यता स्यात् ; भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गन्तव्यता । जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्, न, विशेषनिराकरणश्रुतीनामनन्यार्थत्वात् । उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्, न, तासामेकत्वप्रतिपादनपरत्वात् ;

मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य च अनृतत्वं प्रतिपादयन् शास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति ॥

कस्मात्पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वम्, न पुनरितरशेषत्वमितरासामिति, उच्यते— विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात्; न हि आत्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः काचिदाकाङ्क्षा उपजायते, पुरुषार्थसमाप्तिबुद्ध्युत्पत्तेः, 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'अभयं वै जनक प्राप्तोऽसि' 'विद्वान्न बिभेति कुतश्चन । एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवम्' इत्यादिश्रुतिभ्यः, तथैव च विदुषां तुष्ट्यनुभवादिदर्शनात्, विकारानृताभिसंध्यपवादाच्च— 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति; अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यम् । नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति; प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते; तथा हि— 'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति' इत्युपन्यस्य उदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति; 'यतो वा इमानि

भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' इति च; एवमुत्पत्त्यादिश्रुतीनाम् ऐकात्म्यावगमपरत्वात् नानेकशक्तियोगो ब्रह्मणः; अतश्च गन्तव्यत्वानुपपत्तिः । 'न तस्य प्राणा उत्क्रामन्ति' 'ब्रह्मैव सन्ब्रह्माप्येति' इति च परस्मिन्ब्रह्मणि गतिं निवारयति; तद्व्याख्यातम् 'स्पष्टो ह्येकेषाम्' इत्यत्र ॥

गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणः अवयवः विकारः अन्यो वा ततः स्यात्, अत्यन्ततादात्म्ये गमनानुपपत्तेः । यद्येवम्, ततः किं स्यात्? अत उच्यते— यद्येकदेशः, तेन एकदेशिनो नित्यप्राप्तत्वात् न पुनर्ब्रह्मगमनमुपपद्यते; एकदेशैकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना, निरवयवत्वप्रसिद्धेः । विकारपक्षेऽप्येतत्तुल्यम्, विकारेणापि विकारिणो नित्यप्राप्तत्वात्; न हि घटो मृदात्मतां परित्यज्य अवतिष्ठते, परित्यागे वा अभावप्राप्तेः । विकारावयवपक्षयोश्च तद्वतः स्थिरत्वात् ब्रह्मणः संसारगमनमपि अनवक्लृप्तम् । अथ अन्य एव जीवो ब्रह्मणः, सोऽणुः व्यापी मध्यमपरिमाणो वा भवितुमर्हति; व्यापित्वे गमनानुपपत्तिः; मध्यमपरिमाणत्वे च अनित्यत्वप्रसङ्गः; अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः; प्रतिषिद्धे च अणुत्वमध्यमपरिमाणत्वे विस्तरेण

पुरस्तात्। परस्माच्च अन्यत्वे जीवस्य 'तत्त्वमसि' इत्यादिशास्त्रबाधप्रसङ्गः। विकारावयवपक्षयोरपि समानोऽयं दोषः। विकारावयवयोस्तद्वतोऽनन्यत्वात् अदोष इति चेत्, न, मुख्यैकत्वानुपपत्तेः। सर्वेषु च एतेषु पक्षेषु अनिर्मोक्षप्रसङ्गः, संसार्यात्मत्वानिवृत्तेः; निवृत्तौ वा स्वरूपनाशप्रसङ्गः, ब्रह्मात्मत्वानभ्युपगमाच्च ॥

यत्तु कैश्चिज्जल्प्यते—नित्यानि नैमित्तिकानि च कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, सांप्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षिप्यन्ते—इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतया एवंवृत्तस्य सेत्स्यतीति—तदसत्, प्रमाणाभावात्। न ह्येतत् शास्त्रेण केनचित्प्रतिपादितम्—मोक्षार्थी इत्थं समाचरेदिति। स्वमनीषया तु एतत्तर्कितम्—यस्मात्कर्मनिमित्तः संसारः तस्मान्निमित्ताभावान्न भविष्यतीति। न च एतत् तर्कयितुं शक्यते, निमित्ताभावस्य दुर्ज्ञानत्वात्। बहूनि हि कर्माणि जात्यन्तरसंचितानि इष्टानिष्टविपाकानि एकैकस्य जन्तोः संभाव्यन्ते। तेषां विरुद्धफलानां युगपदुपभोगासंभवात् कानिचिल्लब्धावसराणि इदं जन्म

निर्मिमते, कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासते—इत्यतः तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासंभवात् न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम् । कर्मशेषसद्भावसिद्धिश्च 'तद्य इह रमणीयचरणाः' 'ततः शेषेण' इत्यादिश्रुतिस्मृतिभ्यः । स्यादेतत्—नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति—तन्न, विरोधाभावात्; सति हि विरोधे क्षेप्यक्षेपकभावो भवति; न च जन्मान्तरसंचितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः, शुद्धिरूपत्वाविशेषात्; दुरितानां तु अशुद्धिरूपत्वात् सति विरोधे भवतु क्षपणम्; न तु तावता देहान्तरनिमित्ताभावसिद्धिः, सुकृतनिमित्तत्वोपपत्तेः, दुरितस्याप्यशेषक्षपणानवगमात् । न च नित्यनैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रम्, न पुनः फलान्तरोत्पत्तिः इति प्रमाणमस्ति, फलान्तरस्याप्यनुनिष्पादिनः संभवात्; स्मरति हि आपस्तम्बः—'तद्यथा आम्रे फलार्थे निमित्ते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणम् अर्था अनूत्पद्यन्ते' इति । न च असति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित्प्रतिज्ञातुं शक्यम्, सुनिपुणानामपि सूक्ष्मापराधदर्शनात्; संशयितव्यं तु भवति;

तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव । न च अनभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्य आत्मनः कैवल्यमाकाङ्क्षितुं शक्यम्, अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात् । स्यादेतत्—कर्तृत्वभोक्तृत्वकार्यम् अनर्थः, न तच्छक्तिः, तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति—तच्च न । शक्तिसद्भावे कार्यप्रसवस्य दुर्निवारत्वात् । अथापि स्यात्—न केवला शक्तिः कार्यमारभते अनपेक्ष्य अन्यानि निमित्तानि; अत एकाकिनी सा स्थितापि नापराध्यतीति—तच्च न, निमित्तानामपि शक्तिलक्षणेन संबन्धेन नित्यसंबद्धत्वात् । तस्मात् कर्तृत्वभोक्तृत्वस्वभावे सति आत्मनि, असत्यां विद्यागम्यायां ब्रह्मात्मतायाम्, न कथंचन मोक्षं प्रति आशा अस्ति । श्रुतिश्च— 'नान्यः पन्था विद्यतेऽयनाय' इति ज्ञानादन्यं मोक्षमार्गं वारयति ॥

परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः, प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत्— न, प्राक्प्रबोधात् स्वप्नव्यवहारवत् तदुपपत्तेः; शास्त्रं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिना अप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा, पुनः प्रबुद्धविषये— 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना तदभावं

दर्शयति । तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वात् न कथंचन गतिरुपपादयितुं शक्या । किंविषयाः पुनर्गतिश्रुतय इति, उच्यते—सगुणविद्याविषया भविष्यन्ति । तथा हि—क्वचित्पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते, क्वचित्पर्यङ्कविद्याम्, क्वचिद्वैश्वानरविद्याम्; यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते—'यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति च, तत्रापि वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैव उपास्यत्वात् संभवति गतिः । न क्वचित्परब्रह्मविषया गतिः श्राव्यते, यथा गतिप्रतिषेधः श्रावितः—'न तस्य प्राणा उत्क्रामन्ति' इति । 'ब्रह्मविदाप्नोति परम्' इत्यादिषु तु, सत्यपि आप्नोतेर्गत्यर्थत्वे, वर्णितेन न्यायेन देशान्तरप्राप्त्यसंभवात् स्वरूपप्रतिपत्तिरेवेयम् अविद्याध्यारोपितनामरूपप्रविलयापेक्षया अभिधीयते—'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादिवत् इति द्रष्टव्यम । अपि च परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यात्, अनुचिन्तनाय वा; तत्र प्ररोचनं तावत् ब्रह्मविदो न गत्युक्त्या क्रियते, स्वसंवेद्येनैव अव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः; न च नित्यसिद्धनिःश्रेयसनिवेदनस्य असाध्यफलस्य विज्ञा-

नस्य गत्यनुचिन्तने काचिदपेक्षा उपपद्यते ; तस्मादपरविषया गतिः । तत्र परापरब्रह्मविवेकानवधारणेन अपरस्मिन्ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते । किं द्वे ब्रह्मणी—परमपरं चेति? बाढम्— 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्यादिदर्शनात् । किं पुनः परं ब्रह्म किमपरमिति, उच्यते— यत्र अविद्याकृतनामरूपादिविशेषप्रतिषेधान् अस्थूलादिशब्दैर्ब्रह्मोपदिश्यते, तत्परम् ; तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टम् उपासनायोपदिश्यते—'मनोमयः प्राणशरीरो भारूपः' इत्यादिशब्दैः, तदपरम् । ननु एवमद्वितीयश्रुतिरुपरुध्येत— न, अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात् । तस्य च अपरब्रह्मोपासनस्य तत्संनिधौ श्रूयमाणम् 'स यदि पितृलोककामो भवति' इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः ; तस्य च देशविशेषावबद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धम् । सर्वगतत्वेऽपि च आत्मनः, आकाशस्येव घटादिगमने, बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिः इत्यवादिष्म 'तद्गुणसारत्वात्' इत्यत्र । तस्मात् 'कार्यं बादरिः' इत्येष एव स्थितः पक्षः ; 'परं जैमिनिः' इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यम् ॥

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ॥ १५ ॥**

स्थितमेतत्— कार्यविषया गतिः, न परविषयेति। इदमिदानीं संदिह्यते— किं सर्वान्विकारालम्बनान् अविशेषेणैव अमानवः पुरुषः प्रापयति ब्रह्मलोकम्, उत कांश्चिदेवेति। किं तावत्प्राप्तम्? सर्वेषामेव एषां विदुषाम् अन्यत्र परस्माद्ब्रह्मणः गतिः स्यात्; तथा हि 'अनियमः सर्वासाम्' इत्यत्र अविशेषेणैव एषा विद्यान्तरेष्ववतारितेति। एवं प्राप्ते, प्रत्याह—अप्रतीकालम्बनानिति; प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान्विकारालम्बनान् नयति ब्रह्मलोकम्— इति बादरायण आचार्यो मन्यते; न हि एवम् उभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति, अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्च अस्य उभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः; यो हि ब्रह्मक्रतुः, स ब्राह्ममैश्वर्यमासीदेत्—इति श्लिष्यते, 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः, न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति, प्रतीकप्रधानत्वादुपासनस्य। ननु, अब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते; यथा पञ्चाग्निविद्यायाम्— 'स एनान्ब्रह्म गमयति' इति— भवतु,

६. अप्रतीकालम्बनाधिकरणम्।

यत्र एवम् आहृत्यवाद उपलभ्यते; तदभावे तु औत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिः, न इतरेषाम्— इति गम्यते ॥

## विशेषं च दर्शयति ॥ १६ ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात् फलविशेषम् उत्तरस्मिन्नुत्तरस्मिन् उपासने दर्शयति— 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' 'वाग्वाव नाम्नो भूयसी' 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' 'मनो वाव वाचो भूयः' इत्यादिना । स च अयं फलविशेषः प्रतीकतन्त्रत्वादुपासनानाम् उपपद्यते। ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात् । तस्मात् न प्रतीकालम्बनानाम् इतरैस्तुल्यफलत्वमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**चतुर्थाध्यायस्य तृतीयः पादः ॥**

## चतुर्थः पादः ॥

'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रूयते । तत्र संशयः—किं देवलोकाद्युपभोगस्थानेष्विव आगन्तुकेन केनचिद्विशेषेण अभिनिष्पद्यते, आहोस्वित् आत्ममात्रेणेति । किं तावत्प्राप्तम्? स्थानान्तरेष्विव आगन्तुकेन केनचिद्रूपेण अभिनिष्पत्तिः स्यात्, मोक्षस्यापि फलत्वप्रसिद्धेः, अभिनिष्पद्यत इति च उत्पत्तिपर्यायत्वात्; स्वरूपमात्रेण चेदभिनिष्पत्तिः, पूर्वावस्थासु स्वरूपानपायात् विभाव्येत; तस्मात् विशेषेण केनचिदभिनिष्पद्यत इति । एवं प्राप्ते, ब्रूमः—

**संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥**

केवलेनैव आत्मना आविर्भवति, न धर्मान्तरेणेति;

कुतः? 'स्वेन रूपेणाभिनिष्पद्यते' इति स्वशब्दात्; अन्यथा हि स्वशब्देन विशेषणमनवक्लृप्तं स्यात्। ननु, आत्मीयाभिप्रायः स्वशब्दो भविष्यति— न, तस्यावचनीयत्वात्; येनैव हि केनचिद्रूपेणाभिनिष्पद्यते, तस्यैव आत्मीयत्वोपपत्तेः, स्वेनेति विशेषणमनर्थकं स्यात्; आत्मवचनतायां तु अर्थवत्— केवलेनैव आत्मरूपेणाभिनिष्पद्यते, न आगन्तुकेनापररूपेणापीति॥

१. संपद्याविर्भावाधिकरणम्।

कः पुनर्विशेषः पूर्वावस्थासु, इह च स्वरूपानपायसाम्ये सतीत्यत आह—

## मुक्तः प्रतिज्ञानात्॥ २॥

योऽत्र अभिनिष्पद्यत इत्युक्तः, स सर्वबन्धविनिर्मुक्तः शुद्धेनैव आत्मना अवतिष्ठते; पूर्वत्र तु—अन्धो भवत्यपि रोदितीव विनाशमेवापीतो भवति—इति च अवस्थात्रयकलुषितेन आत्मना—इत्ययं विशेषः। कथं पुनरवगम्यते—मुक्तोऽयमिदानीं भवतीति? प्रतिज्ञानादित्याह। तथा हि— 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति अवस्थात्रयदोषविहीनम् आत्मानम् व्याख्येयत्वेन प्रतिज्ञाय, 'अशरीरं वाव

सन्तं न प्रियाप्रिये स्पृशतः' इति च उपन्यस्य, 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति च उपसंहरति; तथा आख्यायिकोपक्रमेऽपि 'य आत्मापहतपाप्मा' इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम् । फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा, न अपूर्वोपजनापेक्षा । यदपि अभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वम्, तदपि न अपूर्वावस्थापेक्षम्—यथा रोगनिवृत्तौ अरोगोऽभिनिष्पद्यत इति, तद्वत् । तस्माददोषः ॥

## आत्मा प्रकरणात् ॥ ३ ॥

कथं पुनर्मुक्त इत्युच्यते, यावता 'परं ज्योतिरुपसंपद्य' इति कार्यगोचरमेव एनं श्रावयति, ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात्? न च अनतिवृत्तो विकारविषयात् कश्चिन्मुक्तो भवितुमर्हति, विकारस्य आर्तत्वप्रसिद्धेरिति—नैष दोषः, यतः आत्मैवात्र ज्योतिःशब्देन आवेद्यते, प्रकरणात्; 'य आत्मापहतपाप्मा विजरो विमृत्युः' इति प्रकृते परस्मिन्नात्मनि न अकस्माद्भौतिकं ज्योतिः शक्यं ग्रहीतुम्, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्; ज्योतिःशब्दस्तु आत्मन्यपि दृश्यते— 'तद्देवा ज्योतिषां ज्योतिः' इति । प्रपञ्चितं च एतत् 'ज्योतिर्दर्शनात्' इत्यत्र ॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः, स किं परस्मादात्मनः पृथगेव भवति, उत अविभागेनैवाव-तिष्ठत इति वीक्षायाम्, 'स तत्र पर्येति' इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योति-रुपसंपद्य' इति च कर्तृकर्मनिर्देशात् भेदेनैवावस्थान-मिति यस्य मतिः, तं व्युत्पादयति—अविभक्त एव परेण आत्मना मुक्तोऽवतिष्ठते; कुतः? दृष्टत्वात्; तथा हि— 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'यत्र नान्यत्पश्यति' 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति; यथादर्शनमेव च फलं युक्तम्, तत्क्रतुन्यायात्; 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम' इति च एवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्या-न्यविभागमेव दर्शयन्ति; नदीसमुद्रादिनिदर्शनानि च। भेद-निर्देशस्तु अभेदेऽप्युपचर्यते 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति, 'आत्मरतिरात्मक्रीडः' इति च एव-मादिदर्शनात् ॥

२. अविभागाधि-करणम्।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

स्थितमेतत् 'स्वेन रूपेण' इत्यत्र—आत्ममात्ररूपेणाभिनिष्पद्यते, न आगन्तुकेनापररूपेणेति । अधुना तु तद्विशेषबुभुत्सायामभिधीयते— स्वम् अस्य रूपं ब्राह्मम् अपहतपाप्मत्वादिसत्यसंकल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च, तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते; कुतः? उपन्यासादिभ्यस्तथात्वावगमात्; तथा हि 'य आत्मापहतपाप्मा' इत्यादिना 'सत्यकामः सत्यसंकल्पः' इत्येवमन्तेन उपन्यासेन एवमात्मकतामात्मनो बोधयति; तथा 'स तत्र पर्येति जक्षत्क्रीडन्रममाणः' इति ऐश्वर्यरूपमावेदयति, 'तस्य सर्वेषु लोकेषु कामचारो भवति' इति च; 'सर्वज्ञः सर्वेश्वरः' इत्यादिव्यपदेशाश्च एवमुपपन्ना भविष्यन्तीति ॥

३. ब्राह्माधिकरणम् ।

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

यद्यपि अपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते, तथापि शब्दविकल्पजा एव एते; पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते; चैतन्यमेव तु अस्य आत्मनः स्वरूपमिति तन्मात्रेण स्वरूपेण अभिनिष्पत्तिर्युक्ता; तथा च श्रुतिः 'एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इत्ये-

वंजातीयका अनुगृहीता भविष्यति; सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते—सत्याः कामा अस्येति, तथापि उपाधिसंबन्धाधीनत्वात्तेषां न चैतन्यवत् स्वरूपत्वसंभवः, अनेकाकारत्वप्रतिषेधात्; प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम् 'न स्थानतोऽपि परस्योभयलिङ्गम्' इत्यत्र । अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थम् 'आत्मरतिः' इत्यादिवत् । न हि मुख्यान्येव रतिक्रीडामिथुनानि आत्मनिमित्तानि शक्यन्ते वर्णयितुम्, द्वितीयविषयत्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेन अव्यपदेश्येन बोधात्मना अभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्य ऐश्वर्यरूपस्य अप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥

## संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

हार्दविद्यायां श्रूयते— 'स यदि पितृलोककामो भवति

संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादि । तत्र संशयः

४. संकल्पाधिकरणम् । — किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुः, उत निमित्तान्तरसहित इति । तत्र सत्यपि 'संकल्पादेव' इति श्रवणे लोकवत् निमित्तान्तरापेक्षता युक्ता; यथा लोके अस्मदादीनां संकल्पात् गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवति एवं मुक्तस्यापि स्यात्; एवं दृष्टविपरीतं न कल्पितं भविष्यति; 'संकल्पादेव' इति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्य योक्ष्यते; न च संकल्पमात्रसमुत्थानाः पित्रादयः मनोरथविजृम्भितवत् चञ्चलत्वात् पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते, ब्रूमः— संकल्पादेव तु केवलात् पित्रादिसमुत्थानमिति; कुतः? तच्छ्रुतेः; 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत; निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्यात्, भवतु; न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमिष्यते, प्राक्संपत्तेः वन्ध्यसंकल्पत्वप्रसङ्गात्; न च श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते; संकल्पबलादेव च एषां यावत्प्रयोजनं स्थैर्योपपत्तिः, प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव च अवन्ध्यसंकल्पत्वात् अनन्याधिपतिर्विद्वान्भवति— नास्यान्योऽधिपतिर्भवतीत्यर्थः । न हि प्राकृतोऽपि संकल्पयन् अन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति । श्रुतिश्चैतद्दर्शयति— 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' इति ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥

५. अभावाधिकरणम् ।

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यतः श्रुतेः मनस्तावत्संकल्पसाधनं सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति, न वा सन्ति—इति समीक्ष्यते । तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां च अभावं महीयमानस्य विदुषो मन्यते; कस्मात्? एवं हि आह आम्नायः— 'मनसैतान्कामान्पश्यन्रमते' 'य एते ब्रह्मलोके' इति; यदि मनसा शरीरेन्द्रियैश्च विहरेत, मनसेति विशेषणं न स्यात्; तस्मादभावः शरीरेन्द्रियाणां मोक्षे ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्त्वाचार्यः मनोवत् शरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते; यतः 'स एकधा भवति त्रिधा भवति' इत्यादिना अनेकधाभावविकल्पमामनन्ति । न हि अनेकविधता विना शरीरभेदेन आञ्जसी स्यात् । यद्यपि निर्गुणायां भूमविद्यायाम् अयमनेकधाभावविकल्पः पठ्यते, तथापि विद्यमानमेवेदं सगुणावस्थायाम् ऐश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेन उपतिष्ठत इति ॥

उच्यते—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

बादरायणः पुनराचार्यः अत एव उभयलिङ्गश्रुतिदर्शनात् उभयविधत्वं साधु मन्यते—यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा तु अशरीरतां तदा अशरीर इति; सत्यसंकल्पत्वात्, संकल्पवैचित्र्याच्च । द्वादशाहवत्— यथा द्वादशाहः सत्रम् अहीनश्च भवति, उभयलिङ्गश्रुतिदर्शनात्—एवमिदमपीति ॥

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

यदा तनोः सेन्द्रियस्य शरीरस्य अभावः, तदा, यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वपि उपलब्धिमा-

त्रा एव पित्रादिकामा भवन्ति, एवं मोक्षेऽपि स्युः; एवं हि एतदुपपद्यते ॥

## भावे जाग्रद्वत् ॥ १४ ॥

भावे पुनः तनोः, यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्ति, एवं मुक्तस्याप्युपपद्यते ॥

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

'भावं जैमिनिर्विकल्पामननात्' इत्यत्र सशरीरत्वं मुक्तस्योक्तम्; तत्र त्रिधाभावादिषु अनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्रवत्सृज्यन्ते, किं वा सात्मकान्यस्मदादिशरीरवत्—इति भवति वीक्षा। तत्र च आत्ममनसोः भेदानुपपत्तेः एकेन शरीरेण योगात् इतराणि शरीराणि निरात्मकानि—इत्येवं प्राप्ते, प्रतिपद्यते— प्रदीपवदावेश इति; यथा प्रदीप एकः अनेकप्रदीपभावमापद्यते, विकारशक्तियोगात्, एवमेकोऽपि सन् विद्वान् ऐश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति; कुतः? तथा हि दर्शयति शास्त्रमेकस्यानेकभावम्— 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' इत्यादि; नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते, नापि जीवान्तरावेशे; न च निरात्मकानां शरीराणां प्रवृत्तिः

६. प्रदीपाधिकरणम्।

संभवति । यत्तु आत्ममनसोर्भेदानुपपत्तेः अनेकशरीरयोगासंभव इति— नैष दोषः; एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात् स्रक्ष्यति; सृष्टेषु च तेषु उपाधिभेदात् आत्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते; एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया ॥

कथं पुनः मुक्तस्य अनेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते, यावता 'तत्केन कं विजानीयात्' 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' 'सलिल एको द्रष्टाद्वैतो भवति' इति च एवंजातीयका श्रुतिः विशेषविज्ञानं वारयति— इत्यत उत्तरं पठति—

**स्वाप्ययसंपत्त्योरन्यतरापेक्ष-**
**माविष्कृतं हि ॥ १६ ॥**

स्वाप्ययः सुषुप्तम्, 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इति श्रुतेः; संपत्तिः कैवल्यम्, 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः; तयोरन्यतरामवस्थामपेक्ष्य एतत् विशेषसंज्ञाभाववचनम्— क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते, क्वचित्कैवल्यावस्थाम् । कथमवगम्यते? यतस्तत्रैव एतदधिकारवशात् आविष्कृतम्— 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीति' 'यत्र त्वस्य सर्व-

मात्मैवाभूत्' 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' इत्यादिश्रुतिभ्यः। सगुणविद्याविपाकस्थानं तु एतत् स्वर्गादिवत् अवस्थान्तरम्, यत्रैतदैश्वर्यमुपवर्ण्यते। तस्माददोषः॥

## जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यं व्रजन्ति, किं तेषां निरवग्रहमैश्वर्यं भवति, आहोस्वित्सावग्रहमिति संशयः। किं तावत्प्राप्तम्? निरङ्कुशमेव एषामैश्वर्यं भवितुमर्हति, 'आप्नोति स्वाराज्यम्' 'सर्वेऽस्मै देवा बलिमावहन्ति' 'तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतिभ्य इति। एवं प्राप्ते, पठति— जगद्व्यापारवर्जमिति; जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यत् अणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैव ईश्वरस्य; कुतः? तस्य तत्र प्रकृतत्वात्; असंनिहितत्वाच्चेतरेषाम्; पर एव हि ईश्वरो जगद्व्यापारेऽधिकृतः, तमेव प्रकृत्य उत्पत्त्याद्युपदेशात्, नित्यशब्दनिबन्धनत्वाच्च; तदन्वेषणविजिज्ञासनपूर्वकं तु इतरेषामणिमाद्यैश्वर्यं श्रूयते; तेनासंनिहितास्ते जगद्व्यापारे। स-

७. जगद्व्यापाराधिकरणम्।

मनस्कत्वादेव च एतेषामनैकमत्ये, कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात्; अथ कस्यचित् संकल्पमनु अन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

अथ यदुक्तम्— 'आप्नोति स्वाराज्यम्' इत्यादिप्रत्यक्षोपदेशात् निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत्परिहर्तव्यम्; अत्रोच्यते— नायं दोषः, आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरः, तदायत्तैव इयं स्वाराज्यप्राप्तिरुच्यते; यत्कारणम् अनन्तरम् 'आप्नोति मनसस्पतिम्' इत्याह; यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरः तं प्राप्नोतीत्येतदुक्तं भवति; तदनुसारेणैव च अनन्तरम् 'वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः' च भवति इत्याह । एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेव इतरेषामैश्वर्यं योजयितव्यम् ॥

## विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपम्, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम्; तथा हि अस्य द्विरूपां स्थितिमाह आम्नायः– 'तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इत्येवमादिः। न च तत् निर्विकाररूपम् इतरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुम् अतत्क्रतुत्वात्तेषाम्। अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम्॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने॥ २०॥

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती— 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इति, 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' इति च। तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः॥

## भोगमात्रसाम्यलिङ्गाच्च॥ २१॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यम्, यस्मात् भोगमात्रमेव एषाम् अनादिसिद्धेनेश्वरेण समानमिति श्रूयते —'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति 'स यथैतां

देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥

ननु एवं सति सातिशयत्वादन्तवत्त्वम् ऐश्वर्यस्य स्यात्; ततश्च एषामावृत्तिः प्रसज्येत— इत्यतः उत्तरं भगवान्बादरायण आचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेन अर्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति— यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि, यस्मिन्नैरं मदीयं सरः, यस्मिन्नश्वत्थः सोमसवनः, यस्मिन्नपराजिता पूर्ब्रह्मणः, यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म, यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते— ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते; कुतः? 'तयोर्ध्वमायन्नमृतत्वमेति' 'तेषां न पुनरावृत्तिः' 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' 'ब्रह्मलोकमभिसंपद्यन्ते' 'न च पुनरावर्तते' इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि तु ऐश्वर्यस्य यथा अनावृत्तिः तथा वर्णितम्— 'कार्यात्यये तदध्यक्षेण सहातः परम्' इत्यत्र;

सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैव अनावृत्तिः ; तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । अनावृत्तिः शब्दादनावृत्तिः शब्दात्— इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

**शारीरकमीमांसासूत्रभाष्ये**

**चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**॥ इति श्रीमच्छारीरकमीमांसासूत्रभाष्यं संपूर्णम् ॥**

ॐ

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीत-मस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

यश्छन्दसामृषभो विश्वरूपः । छ-न्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जि-ह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳ सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम्॥

ॐ शान्तिः शान्तिः शान्तिः॥

भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु॥

ॐ शान्तिः शान्तिः शान्तिः॥

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

वाङ् मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेन । अहोरात्रान्संदधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

भद्रं नोऽपि वातय मनः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तꣳ ह देव-मात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ श्रीः ॥

# ॥ सूत्रानुक्रमणिका ॥

# MEMORIAL EDITION

OF THE WORKS OF

# SRI SANKARACHARYA

# CONTENTS

# ॥ विषया ॥

पृष्ठम्

॥ श्री ॥

# उपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादै
विरचितम् ।

## प्रथमो भागः

॥ ईशकेनकठप्रश्नाः ॥

॥ श्री ॥

# ॥ विषयानुक्रमणिका ॥

## ईशावास्योपनिषद्भाष्यम् १—२८

॥ ॐ ॥

# ईशावास्योपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः
विरचितम् ।



ॐ

पूर्णमद पूर्णमिद

पूर्णात्पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय

पूर्णमेवावशिष्यते ॥

---

ॐ शान्ति. शान्ति शान्तिः ॥

# ॥ ईशावास्योपनिषत् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन भाष्येण सहिता ।

'ईशा वास्यम्' इत्यादयो मन्त्रा कर्मस्वविनियुक्ता, तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्य चात्मन शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। तच्च कर्मणा विरुध्यत इति युक्त एवैषा कर्मस्वविनियोग। न ह्येवलक्षणमात्मनो याथात्म्यम् उत्पाद्य विकार्यम् आप्य सस्कार्य वा कर्तृभोक्तृरूप वा, येन कर्मशेषता स्यात्, सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्, गीताना मोक्षधर्माणा चैव-

परत्वात् । तस्मादात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वादि च अशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्ध कर्माणि विहितानि । यो हि कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिना अदृष्टेन स्वर्गादिना च द्विजातिरह न काणत्वकुणित्वाद्यनधिकारप्रयोजकधर्मवानित्यात्मान मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो वदन्ति । तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेन आत्मविषय स्वाभाविककर्मविज्ञान निवर्तयन्त शोकमोहादिससारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्तीति । एवमुक्ताधिकार्यभिधेयसबन्धप्रयोजनान्मन्त्रान्सक्षेपतो व्याख्यास्याम —

**ईशा वास्यमिदꣳ सर्वं**
**यत्किं च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा**
**मा गृध कस्य स्विद्धनम् ॥ १ ॥**

ईशा ईष्टे इति ईट्, तेन ईशा । ईशिता परमेश्वर परमात्मा सर्वस्य । स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् प्रत्यगात्मतया । तेन स्वेन रूपेणात्मना ईशा वास्यम् आच्छादनीयम् । किम्? इद सर्वं यत्किं च यत्किंचित् जगत्या

पृथिव्या जगत् तत्सर्वम् । स्वेनात्मना ईशेन प्रत्यगात्मतया अहमेवेद सर्वमिति परमार्थसत्यरूपेणानृतमिद सर्वं चराचर-माच्छादनीय परमात्मना । यथा चन्दनागर्वादेरुदकादि-सबन्धजक्लेदादिजमौपाधिक दौर्गन्ध्य तत्स्वरूपनिघर्षणेना-च्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेव हि स्वात्मन्य-ध्यस्त स्वाभाविक कर्तृत्वभोक्तृत्वादिलक्षण जगद्द्वैतरूप पृथि-व्याम्, जगत्यामित्युपलक्षणार्थत्वात्सर्वमेव नामरूपकर्माख्य विकारजात परमार्थसत्यात्मभावनया त्यक्त स्यात् । एवमी श्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसन्यासे एवाधिकार, न कर्मसु । तेन त्यक्तेन त्यागेनेत्यर्थ । न हि त्यक्तो मृत पुत्रो भृत्यो वा आत्मसबन्धिताभावादात्मान पालय-ति । अतस्त्यागेनेत्ययमेवार्थ । भुञ्जीथा पालयेथा । एव त्यक्तैषणस्त्व मा गृध गृधिम् आकाङ्क्षा मा कार्षी धनविष याम् । कस्य स्वित् कस्यचित् परस्य स्वस्य वा धन मा काङ्क्षीरित्यर्थ । स्विदित्यनर्थको निपात । अथवा, मा गृध । कस्मात्[2] कस्य स्विद्धनम् इत्याक्षेपार्थ । न कस्य चिद्धनमस्ति, यद्गृध्येत । आत्मैवेद सर्वमितीश्वरभावनया सर्वं त्यक्तम् । अत आत्मन एवेद सर्वम्, आत्मैव च सर्वम् । अतो मिथ्याविषया गृधिं मा कार्षीरित्यर्थ ॥

एवमात्मविद् पुत्राद्येषणात्रयसन्यासेनात्मज्ञाननिष्ठतया आत्मा रक्षितव्य इत्येष वेदार्थ । अथेतरस्य अनात्मज्ञतया त्मग्रहणाशक्तस्य इदमुपदिशति म त्र —

कुर्वन्नेवेह कर्माणि
जिजीविषेच्छत५ समा ।
एवं त्वयि नान्यथेतोऽस्ति
न कर्म लिप्यते नरे ॥ २ ॥

कुर्वन्नेव निर्वर्तयन्नेव इह कर्माणि अग्निहोत्रादीनि जिजीविषेत् जीवितुमिच्छेत् शत शतसख्याका समा सवत्सरा न् । तावद्धि पुरुषस्य परमायुर्निरूपितम् । तथा च प्राप्तानुवादेन यज्जिजीविषेच्छत वर्षाणि तत्कुर्वन्नेव कर्माणीत्येतद्वि धीयते । एवम् एवप्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इत एतस्मादग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात्प्रकारात् अन्यथा प्रकारान्तर नास्ति, येन प्रकारेणाशुभ कर्म न लिप्यते, कर्मणा न लिप्यस इत्यर्थ । अत शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् ॥

कथ पुनरिदमवगम्यते—पूर्वेण मन्त्रेण सन्यासिनो ज्ञाननिष्ठोक्ता, द्वितीयेन तदशक्तस्य कर्मनिष्ठेति ? उच्यते—

ज्ञानकर्मणोर्विरोध पर्वतवदकम्प्य यथोक्त न स्मरसि किम्? इहाप्युक्तम्— यो हि जिजीविषेत्स कर्माणि कुर्वन्नेव इति, 'ईशा वास्यमिद सर्वम्', 'तेन त्यक्तेन भुञ्जीथा मा गृध कस्य स्विद्धनम्' इति च । 'न जीविते मरणे वा गृधिं कुर्वीतारण्यमियात् इति पद ततो न पुनरेयात्' इति च सन्यासशासनात् । उभयो फलभेद च वक्ष्यति । 'इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवत क्रियापथश्चैव पुरस्तात्सन्यासश्च', तयो सन्यास एवातिरेचयति— 'न्यास एवात्यरेचयत्' इति तैत्तिरीयके । 'द्वाविमावथ पन्थानौ यत्र वेदा प्रतिष्ठिता । प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभाषित' इत्यादि पुत्राय विचार्य निश्चितमुक्त व्यासेन वेदाचार्येण भगवता । विभाग चानयो प्रदर्शयिष्याम ॥

अथेदानीमविद्वन्निन्दार्थोऽय मन्त्र आरभ्यते—

**असुर्या नाम ते लोका**
**अन्धेन तमसा वृता ।**
**तास्ते प्रेत्याभिगच्छन्ति**
**ये के चात्महनो जनाः ॥ ३ ॥**

असुर्या परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरा ।

तेषा च स्वभूता लोका असुर्या नाम । नामशब्दोऽनर्थको निपात । ते लोका कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि । अन्धेन अदर्शनात्मकेनाज्ञानेन तमसा आवृता आच्छादिता । तान् स्थावरान्तान्, प्रेत्य त्यक्त्वेम देहम् अभिगच्छन्ति यथाकर्म यथाश्रुतम् । ये के च आत्महन आत्मान घ्नन्तीत्यात्महन । के? ते जना येऽविद्वास । कथ ते आत्मान नित्य हिंसन्ति? अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् । विद्यमानस्यात्मनो यत्कार्यं फलमजरामरत्वादिसवेदनादिलक्षणम्, तत् हतस्येव तिरोभूत भवतीति प्राकृता अविद्वासो जना आत्महन इत्युच्यन्ते । तेन ह्यात्महननदोषेण ससरन्ति ते ॥

यस्यात्मनो हननादविद्वास ससरन्ति, तद्विपर्ययेण विद्वासो मुच्यन्तेऽनात्महन, तत्कीदृशमात्मतत्त्वमित्युच्यते—

**अनेजदेकं मनसो जवीयो**
**नैनद्देवा आप्नुवन्पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठ-**
**त्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

अनेजत् न एजत् । 'एजृ कम्पने', कम्पन चलन स्वा-

वस्थाप्रच्युति, तद्वर्जितम्, सर्वदा एकरूपमित्यर्थ । तच्च एक सर्वभूतेषु । मनस सकल्पादिलक्षणात् जवीयो जववत्तरम् । कथ विरुद्धमुच्यते— ध्रुव निश्चलमिदम्, मनसो जवीय इति च? नैष दोष, निरुपाध्युपाधिमत्त्वेनोपपत्ते । तत्र निरुपाधिकेन स्वेन रूपेणोच्यते— अनेजदेकम् इति । मनस अन्त करणस्य सकल्पविकल्पलक्षणस्योपाधेरनुवर्तनात् । इह देहस्थस्य मनसो ब्रह्मलोकादिदूरस्थसकल्पन क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्व लोकप्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकादीन् द्रुत गच्छति सति, प्रथमप्राप्त इवात्मचैतन्याभासो गृह्यते । अत मनसो जवीय इत्याह । नैन देवा, द्योतनाद्देवा चक्षुरादीनीन्द्रियाणि, एनत् प्रकृतमात्म तत्त्व नाप्नुवन् न प्राप्तवन्त । तेभ्यो मनो जवीय । मनोव्यापारव्यवहितत्वादाभासमात्रमप्यात्मनो नैव देवाना विषयीभवति, यस्माज्जवनान्मनसोऽपि पूर्वमर्षत् पूर्वमेव गतम्, व्योमवद्व्यापित्वात् । सर्वव्यापि तदात्मतत्त्व सर्वससारधर्मवर्जित स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सत्, उपाधिकृता सर्वा ससारविक्रिया अनुभवतीवाविवेकिना मूढानामनेकमिव च प्रतिदेह प्रत्यवभासत इत्येतदाह— तत् धावत द्रुत गच्छत अन्यान् आत्मविलक्षणान्मनोवागिन्द्रियप्रभृ-

तीन् अत्यति अतीत्य गच्छतीव । इत्रार्थं स्वयमेव दर्शयति— तिष्ठदिति, स्वयमविक्रियमेव सदित्यर्थं । तस्मिन् आत्मतत्त्वे सति नित्यचैतन्यस्वभावे, मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायु सर्वप्राणभृत्क्रियात्मक, यदाश्रयाणि कार्यकरणजातानि यस्मिन्नोतानि प्रोतानि च, यत्सूत्रसञ्ज्ञक सर्वस्य जगतो विधारयितृ, स मातरिश्वा, अप कर्माणि प्राणिना चेष्टालक्षणानि अग्न्यादित्यपर्जन्यादीना ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि, दधाति विभजतीत्यर्थं, धारयतीति वा, 'भीषास्माद्वात पवते' इत्यादिश्रुतिभ्य । सर्वा हि कार्यकरणविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थं ॥

न मन्त्राणा जामितास्तीति पूर्वमन्त्रोक्तमप्यर्थं पुनराह—

**तदेजति तन्नैजति**
**तद्दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य**
**तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥**

तत् आत्मतत्त्व यत्प्रकृतम् एजति चलति तदेव च नैजति स्वतो नैव चलति, स्वत अचलमेव सत् चलतीव

त्यर्थ । किंच, तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव । तदु अन्तिके समीपे अत्यन्तमेव विदुषाम्, आत्मत्वात् न केवल दूरे, अन्तिके च । तत् अन्त अभ्यन्तरे अस्य सर्वस्य, 'य आत्मा सर्वान्तर' इति श्रुते, अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य। तत् उ सर्वस्य अस्य बाह्यत, व्यापित्वादाकाशवन्निरतिशयसूक्ष्मत्वादन्त, 'प्रज्ञानघन एव' इति शासनान्निरन्तर च ॥

**यस्तु सर्वाणि भूतानि**
**आत्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मान**
**ततो न विजुगुप्सते ॥ ६ ॥**

यस्तु परिव्राट् मुमुक्षु सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि आत्मन्येव अनुपश्यति, आत्मव्यतिरिक्तानि न पश्यतीत्यर्थ । सर्वभूतेषु तेष्वेव च आत्मान तेषामपि भूताना स्वमात्मानमात्मत्वेन— यथास्य देहस्य कार्यकरणसघातस्यात्मा अह सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीना स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मान निर्विशेष यस्त्वनुपश्यति, स तत

तस्मादेव दर्शनात् न विजुगुप्सते विजुगुप्सां घृणां न करोति । प्राप्तस्यैवानुवादोऽयम् । सर्वा हि घृणा आत्मनोऽन्यद्दुष्टं पश्यतो भवति, आत्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमर्थान्तरमस्तीति प्राप्तमेव— ततो न विजुगुप्सत इति ॥

इममेवार्थमन्योऽपि मन्त्र आह—

**यस्मिन्सर्वाणि भूतानि**
**आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक**
**एकत्वमनुपश्यतः ॥ ७ ॥**

यस्मिन्सर्वाणि भूतानि यस्मिन् काले यथोक्तात्मनि वा, तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनात् आत्मैवाभूत् आत्मैव संवृत्तं परमार्थवस्तु विजानतः, तत्र तस्मिन्काले तत्रात्मनि वा, को मोहः कः शोकः । शोकश्च मोहश्च कामकर्मबीजमजानतो भवति, न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः । को मोहः कः शोक इति शोकमोहयोरविद्याकार्ययोराक्षेपेणासंभवप्रकाशनात् सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥

योऽयमतीतैर्मन्त्रैरुक्त आत्मा, स स्वेन रूपेण किंलक्षण इत्याह अय मन्त्र —

**स पर्यगाच्छुक्रमकायमव्रण-**
**मस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतो-**
**ऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥**

स पर्यगात्, स यथोक्त आत्मा पर्यगात् परि समन्तात् अगात् गतवान्, आकाशवद्व्यापीत्यर्थ । शुक्र शुभ्र ज्योतिष्मत् दीप्तिमानित्यर्थ । अकायम् अशरीर लिङ्गशरीरवर्जित इत्यर्थ । अव्रणम् अक्षतम् । अस्नाविरम् स्नावा सिरा यस्मिन्न विद्यन्त इत्यस्नाविरम् । अव्रणमस्नाविरमित्येताभ्या स्थूलशरीरप्रतिषेध । शुद्ध निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेध । अपापविद्ध धर्माधर्मादिपापवर्जितम् । शुक्रमित्यादीनि वचासि पुलिङ्गत्वेन परिणेयानि, स पर्यगात् इत्युपक्रम्य कविर्मनीषी इत्यादिना पुलिङ्गत्वेनोपसहारात् । कवि क्रान्तदर्शी सर्वदृक्, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुते । मनीषी मनस ईषिता, सर्वज्ञ ईश्वर इत्यर्थ । परिभू सर्वेषा परि उपरि भवतीति परिभू । स्वयभू

स्वयमेव भवतीति, यषामुपरि भवति यश्चोपरि भवति स सर्वं स्वयमेव भवतीति स्वयभू । स नित्यमुक्त ईश्वर याथातथ्यत सर्वज्ञत्वात् यथातथाभावो याथातथ्य तस्मात् यथाभूतकर्मफलसाधनत अर्थान् कर्तव्यपदार्थान् व्यदधात् विहितवान्, यथानुरूप व्यभजदित्यर्थ । शाश्वतीभ्य नित्याभ्य समाभ्य सवत्सराख्येभ्य प्रजापतिभ्य इत्यथ ॥

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमो वेदार्थ 'ईशावास्यमिद सर्वम्' 'मा गृध कस्य स्विद्धनम्' इति । अज्ञाना जिजीविषूणा ज्ञाननिष्ठासभवे 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इति कर्मनिष्ठाक्ता द्वितीयो वेदार्थ । अनयोश्च निष्ठयोर्विभागो मन्त्रद्वयप्रदर्शितयोर्बृहदारण्यकेऽपि दर्शित — 'सोऽकामयत जाया मे स्यात्' इत्यादिना अज्ञस्य कामिन कर्माणीति । 'मन एवास्यात्मा वाग्जाया' इत्यादिवचनात् अज्ञत्व कामित्व च कर्मनिष्ठस्य निश्चितमवगम्यते । तथा च तत्फल सप्तान्नसर्गस्तेष्वात्मभावेनात्मस्वरूपावस्थानम् । जायाद्येषणात्रयसन्यासेन चात्मविदा कर्मनिष्ठाप्रातिकूल्येन आत्मस्वरूपनिष्ठैव दर्शिता— 'किं प्रजया करिष्यामो येषा नोऽयमात्माय लोक' इत्यादिना । ये तु ज्ञाननिष्ठा संन्यासिनस्तेभ्य 'असुर्या नाम ते' इत्यादिना अविद्वन्निन्दाद्वार

णात्मनो याथात्म्यम् 'स पर्यगात्' इत्येतदन्तैर्मन्त्रैरुपदिष्ट-
म् । ते ह्यत्राधिकृता न कामिन इति । तथा च श्वेताश्वतरा-
णा मन्त्रोपनिषदि—'अत्याश्रमिभ्य परम पवित्र प्रोवाच
सम्यगृषिसघजुष्टम्' इत्यादि विभज्योक्तम् । ये तु कामिन
कर्मनिष्ठा कर्म कुर्वन्त एव जिजीविषव, तेभ्य इदमुच्य-
ते— 'अन्ध तम' इत्यादि । कथ पुनरेवमवगम्यते, न तु
सर्वेषाम् इति? उच्यते—अकामिन साध्यसाधनभेदोपमर्देन
'यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानत । तत्र को
मोह क शोक एकत्वमनुपश्यत' इति यत् आत्मैकत्ववि-
ज्ञानम्, तन्न केनचित्कर्मणा ज्ञानान्तरेण वा ह्यमूढ समुच्चि-
चीषति । इह तु समुच्चिचीषया अविद्वदादिनिन्दा क्रियते ।
तत्र च यस्य येन समुच्चय सभवति न्यायत शास्त्रतो वा
तदिहोच्यते । तद्दैव वित्त देवताविषय ज्ञान कर्मसबन्धित्वे-
नोपन्यस्त न परमात्मज्ञानम्, 'विद्यया देवलोक' इति
पृथक्फलश्रवणात् । तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा स-
मुच्चिचीषया, न निन्दापरैव एकैकस्य, पृथक्फलश्रवणात्—
'विद्यया तदारोहन्ति' 'विद्यया देवलोक' 'न तत्र दक्षि-
णा यान्ति' 'कर्मणा पितृलोक' इति । न हि शास्त्रविहित
किंचिदकर्तव्यतामियात् । तत्र—

अन्धं तमः प्रविशन्ति
ये अविद्यामुपासते ।
ततो भूय इव ते तमो
य उ विद्याया५ रताः ॥ ९ ॥

अन्धं तमं अदर्शनात्मकं तमः प्रविशन्ति । के? ये अविद्याम्, विद्याया अन्या अविद्या कर्मेत्यर्थः, कर्मणो विद्याविरोधित्वात्, तामविद्यामग्निहोत्रादिलक्षणामेव केवलाम् उपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततः तस्मादन्धात्मकात्तमसः भूय इव बहुतरमेव ते तमः प्रविशन्ति । के? कर्म हित्वा ये उ ये तु विद्यायामेव देवताज्ञाने एव रताः अभिरताः ॥

तत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितया जामितैव स्यादिति—

अन्यदेवाहुर्विद्यया
अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां
ये नस्तद्विचचक्षिरे ॥ १० ॥

अन्यत् पृथगेव विद्यया क्रियते फलमिति आहु वदन्ति, अन्यदाहुरविद्यया कर्मणा क्रियते फलमिति । तथोक्तम्— 'कर्मणा पितृलोक , विद्यया देवलोक ' इति । इति एव शुश्रुम श्रुतवन्तो वय धीराणा धीमता वचनम् । ये आचार्या न अस्मभ्य तत् कर्म च ज्ञान च विचचक्षिरे व्याख्या-तवन्त , तेषामयमागम पारम्पर्यागत इत्यर्थ ॥

यत एवमत —

**विद्या चाविद्या च**
**यस्तद्वेदोभय॑ सह ।**
**अविद्यया मृत्यु तीर्त्वा**
**विद्ययामृतमश्नुते ॥ ११ ॥**

विद्या च अविद्या च देवताज्ञान कर्म चेत्यर्थ । यस्तत् एतदुभय सह एकेन पुरुषेण अनुष्ठेय वेद तस्यैव समुच्चय-कारिण एकैकपुरुषार्थसबन्ध क्रमेण स्यादित्युच्यते— अवि-द्यया कर्मणा अग्निहोत्रादिना मृत्युम्, स्वाभाविक कर्म ज्ञान च मृत्युशब्दवाच्यम् , तदुभय तीर्त्वा अतिक्रम्य विद्यया देव-ताज्ञानेन अमृत देवतात्मभावम् अश्नुते प्राप्नोति । तद्ध्यमृत मुच्यते, यद्देवतात्मगमनम् ॥

अधुना व्याकृताव्याकृतोपासनयो समुच्चिचीषया प्रत्येक निन्दोच्यते—

**अन्ध तमः प्रविशन्ति**
**येऽसंभूतिमुपासते ।**
**ततो भूय इव ते तमो**
**य उ संभूत्याꣳ रता ॥ १२ ॥**

अन्ध तम प्रविशन्ति ये असभूतिम्, सभवन सभूति सा यस्य कार्यस्य सा सभूति तस्या अन्या असभूति प्रकृति कारणम् अव्याकृताख्यम्, तामसभूतिमव्याकृताख्या प्रकृति कारणमविद्या कामकर्मबीजभूतामदर्शनात्मिकाम् उपासते ये ते तदनुरूपमेवान्ध तम अदर्शनात्मक प्रविशन्ति । तत तस्मादपि भूयो बहुतरमिव तम ते प्रविशन्ति ये उ सभूत्या कार्यब्रह्मणि हिरण्यगर्भाख्ये रता ॥

अधुना उभयोरुपासनयो समुच्चयकारणमवयवफलभेद-माह—

**अन्यदेवाहुः सभवा-**
**दन्यदाहुरसभवात् ।**

**इति शुश्रुम धीराणा**
**ये नस्तद्विचचक्षिरे ॥ १३ ॥**

अन्यदेव पृथगेव आहु फल सभवात् सभूते कार्य-ब्रह्मोपासनात् अणिमाद्यैश्वर्यलक्षणम् आख्यातवन्त इत्यर्थ । तथा च अन्यदाहुरसभवात् असभूते अव्याकृतात् अव्याकृतोपासनात् यदुक्तम् 'अन्ध तम प्रविशन्ति' इति, प्रकृतिलय इति च पौराणिकैरुच्यते। इति एव शुश्रुम धीराणा वचन ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफल व्याख्यातवन्त इत्यर्थ ॥

यत एवम्, अत समुच्चय सभूत्यसभूत्युपासनयोर्युक्त एकैकपुरुषार्थत्वाच्चेत्याह—

**सभूति च विनाश च**
**यस्तद्वेदोभय सह ।**
**विनाशेन मृत्यु तीर्त्वा-**
**संभूत्यामृतमश्नुते ॥ १४ ॥**

सभूतिं च विनाश च यस्तद्वेदोभय सह, विनाशेन, विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणा अभेदेनोच्यते

'विनाश ' इति । तेन तदुपासनेनानैश्वर्यमधर्मकामादिदोष-
जात च मृत्यु तीर्त्वा, हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्ति
फलम् , तेनानैश्वर्यादिमृत्युमतीत्य, असभूत्या अव्याकृतोपा-
सनया अमृत प्रकृतिलयलक्षणम् अश्नुते । 'सभूति च
विनाश च ' इत्यत्रावर्णलोपेन निर्देशो द्रष्टव्य , प्रकृतिलयफ-
लश्रुत्यनुरोधात् ॥

मानुषदैववित्तसाध्य फल शास्त्रलक्षण प्रकृतिलयान्तम् ,
एतावती ससारगति । अत पर पूर्वोक्तम् 'आत्मैवाभूद्वि
जानत ' इति सर्वात्मभाव एव सर्वैषणासन्यासज्ञाननिष्ठा-
फलम् । एव द्विप्रकार प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र
प्रकाशित । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्ष
णस्य कृत्स्नस्य प्रकाशने प्रवर्ग्या॑ त ब्राह्मणमुपयुक्तम् । निवृ-
त्तिलक्षणस्य प्रकाशने अत ऊर्ध्वं बृहदारण्यकम् । तत्र निषे
कादिश्मशानान्त कर्म कुर्वन् जिजीविषेद्यो विद्यया सहापर
ब्रह्मविषयया, तदुक्तम्— 'विद्या चाविद्या च यस्तद्वेदो-
भय सह । अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते ' इति,
तत्र सोऽधिकारी केन मार्गेणामृतत्वमश्नुते इत्युच्यते—
'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो
यश्चाय दक्षिणेऽक्षन्पुरुष ' एतदुभय सत्य ब्रह्मोपासीन

यथोक्तकर्मकृच्च य, सोऽन्तकाले प्राप्ते सत्यात्मानमात्मन प्राप्तिद्वार याचते—

**हिरण्मयेन पात्रेण**
**सत्यस्यापिहित मुखम् ।**
**तत्त्वं पूषन्नपावृणु**
**सत्यधर्माय दृष्टये ॥ १५ ॥**

हिरण्मयेन पात्रेण हिरण्मयमिव हिरण्मयम्, ज्योतिर्मय-मित्येतत्, तेन पात्रेणेव अपिधानभूतेन सत्यस्य आदित्यमण्ड-लस्थस्य ब्रह्मण अपिहितम् आच्छादित मुख द्वारम्, तत् त्व हे पूषन् अपावृणु अपसारय सत्यधर्माय तव सत्यस्यो-पासनात्सत्य धर्मो यस्य मम सोऽह सत्यधर्मा तस्मै मह्यम्, अथवा, यथाभूतस्य धर्मस्यानुष्ठात्रे, दृष्टये तव सत्यात्मन उपलब्धये ॥

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजो यत्ते रूप कल्याण-तम तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥**

हे पूषन् जगत पोपणात्पूषा रवि । तथा एक एव ऋषति गच्छतीत्येकर्षि हे एकर्षे । तथा सर्वस्य सयमनाद्यम हे यम । तथा रश्मीना प्राणाना रसाना च स्वीकरणात्सूर्य हे सूर्य । प्रजापतेरपत्य प्राजापत्य हे प्राजापत्य । व्यूह विगमय रश्मीन् स्वान् । समूह एकीकुरु उपसहर तेज तावक ज्योति । यत् ते तव रूप कल्याणतमम् अत्यन्तशोभनम्, तत् ते तवात्मन प्रसादात् पश्यामि । किंच, अह न तु त्वा भृत्यवद्याचे योऽसौ आदित्यमण्डलस्थ असौ व्याहृत्यवयव पुरुष पुरुषाकारत्वात्, पूर्ण वानेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुष, पुरि शयनाद्वा पुरुष । सोऽहम् अस्मि भवामि ॥

**वायुरनिलममृत-**
**मथेद भस्मान्त॑ शरीरम् ।**
**ॐ क्रतो स्मर कृत॑ स्मर**
**क्रतो स्मर कृत॑ स्मर ॥ १७ ॥**

अथेदानीं मम मरिष्यतो वायु प्राण अध्यात्मपरिच्छेद हित्वा अधिदैवतात्मान सर्वात्मकम् अनिलम् अमृत सूत्रात्मान प्रतिपद्यतामिति वाक्यशेष । लिङ्ग चेद ज्ञानकर्मसंस्कृतमुत्क्रामत्विति द्रष्टव्यम्, मार्गयाचनसामर्थ्यात् । अथ

इद शरीरमग्नौ हुत भस्मान्त भस्मावशेष भूयात् । ओमिति यथोपासनम् ओंप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्य ब्रह्मा भेदेनोच्यते । हे क्रतो सकल्पात्मक स्मर यन्मम स्मर्तव्य तस्य कालोऽय प्रत्युपस्थित, अत स्मर एतावन्त काल भावित कृतम अग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठित कर्म तच्च स्मर । क्रतो स्मर कृत स्मर इति पुनर्वचनमादरार्थम् ॥

पुनरन्येन मन्त्रेण मार्ग याचते—

**अग्ने नय सुपथा राये अस्मा-**
**न्विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो**
**भूयिष्ठा ते नमउक्ति विधेम ॥ १८ ॥**

हे अग्ने नय गमय सुपथा शोभनेन मार्गेण । सुपथेति विशेषण दक्षिणमार्गनिवृत्त्यर्थम् । निर्विण्णोऽह दक्षिणेन मार्गेण गतागतलक्षणेन, अतो याचे त्वा पुन पुन गमना-गमनवर्जितेन शोभनेन पथा नय । राये धनाय, कर्मफल भोगायेत्यर्थ । अस्मान् यथोक्तधर्मफलविशिष्टान् विश्वानि सर्वाणि हे देव वयुनानि कर्माणि, प्रज्ञानानि वा विद्वान् जानन् । किंच, युयोधि वियोजय विनाशय अस्मत् अस्मत्त

जुहुराण कुटिल वञ्चनात्मकम् एन पापम् । ततो वय विशुद्धा सन्त इष्ट प्राप्स्याम इत्यभिप्राय । किंतु वयमिदानीं ते न शक्नुम परिचर्यां कर्तुम्, भूयिष्ठा बहुतरा ते तुभ्य नमउक्तिं नमस्कारवचन विधेम नमस्कारेण परिचरेम इत्यर्थ ॥

'अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते' 'विनाशेन मृत्यु तीर्त्वा असभूत्यामृतमश्नुते' इति श्रुत्वा केचित्सशय कुर्वन्ति । अतस्तन्निर्धारणार्थं सक्षेपतो विचारणा करिष्याम । तत्र तावत्किंनिमित्त सशय इति, उच्यते— विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यते, अमृतत्व च ? ननूक्ताया परमात्मविद्याया कर्मणश्च विरोधात्समुच्चयानुपपत्ति । सत्यम् । विरोधस्तु नावगम्यते, विरोधाविरोधयो शास्त्रप्रमाणकत्वात्, यथा अविद्यानुष्ठान विद्योपासन च शास्त्रप्रमाणकम्, तथा त द्विरोधाविरोधावपि । यथा च 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रादवगत पुन शास्त्रेणैव बाध्यते 'अध्वरे पशु हिंस्यात्' इति, एव विद्याविद्ययोरपि स्यात्, विद्याकर्मणोश्च समुच्चय । न, 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' इति श्रुते । 'विद्या चाविद्या च' इति वचनादविरोध इति चेत्, न, हेतुस्वरूपफलविरोधात् । विद्याविद्याविरोधाविरोध

योर्विकल्पासम्भवात् समुच्चयविधानादविरोध एवेति चेत्, न, सहसम्भवानुपपत्ते । क्रमेणैकाश्रये स्याता विद्याविद्ये इति चेत्, न, विद्योत्पत्तौ तदाश्रयेऽविद्यानुपपत्ते , न हि अग्नि रुष्ण प्रकाशश्च इति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नम्, तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वा इत्यविद्याया उत्पत्ति । नापि सशय अज्ञान वा, 'यस्मिन्सर्वाणि भूतानि आत्मैवा भूद्विजानत । तत्र को मोह क शोक एकत्वमनुपश्यत ' इति शोकमोहाद्यसम्भवश्रुते । अविद्यासम्भवात्तदुपादानस्य कर्मणोऽप्यनुपपत्तिमवोचाम। 'अमृतमश्नुते' इत्यापेक्षिकममृ तम्, विद्याशब्देन परमात्मविद्याग्रहणे 'हिरण्मयेन' इत्यादिना द्वारमार्गयाचनमनुपपन्न स्यात् । तस्मात् यथाव्याख्यात एव मन्त्राणामर्थ इत्युपरम्यते ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
ईशावास्योपनिषद्भाष्यम्
सपूर्णम् ॥

ॐ

पूर्णमदः पूर्णमिदं

पूर्णात्पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय

पूर्णमेवावशिष्यते ॥

---

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ ॐ ॥

# केनोपनिषत्पदभाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः
विरचितम् ।



ॐ

आप्यायन्तु ममाङ्गानि
वाक्प्राणश्चक्षु. श्रोत्रमथो ब-
लमिन्द्रियाणि च सर्वाणि ।
सर्वं ब्रह्मौपनिषद् माह ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि -
राकरण मेऽस्तु । तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्ति शान्ति' शान्ति. ॥

ॐ

# ॥ केनोपनिषत् ॥

श्रीमच्छंकरभगवत्पादविरचितेन

पदभाष्येण सहिता ।

'के नेषितम्' इत्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भ । प्रागेतस्मात्कर्माण्यशेषत परिसमापितानि, समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि, कर्माङ्गसामविषयाणि च । अनन्तर च गायत्रसामविषय दर्शन वशान्तमुक्त कार्यम् । सर्वमेतद्यथोक्त कर्म च ज्ञान च सम्य-

गनुष्ठित निष्कामस्य मुमुक्षो सत्त्वशुद्धयर्थं भवति। सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति । स्वाभाविक्या त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ता अधोगति स्यात् । 'अथैतयो पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानम्' इति श्रुते , 'प्रजा ह तिस्रोऽत्यायमीयु ' इति च मन्त्रवर्णात्। विशुद्धसत्त्वस्य तु निष्कामस्यैव बाह्यादनित्यात्साध्यसाधनसबन्धादिह कृतात्पूर्वकृताद्वा सस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्तते । तदेतद्वस्तु प्रश्नप्रतिवचन लक्षणया श्रुत्या प्रदर्श्यते 'केनेषितम' इत्याद्यया। काठके चोक्तम् 'पराञ्चि खानि व्यतृणत्स्वयभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीर प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्यादि । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छे त्समित्पाणि श्रोत्रिय ब्रह्मनिष्ठम्' इत्याद्याथर्वणे च । एव हि विरक्तस्य प्रत्यगात्मविषय विज्ञान श्रोतु मन्तु विज्ञातु च सामर्थ्यमुपपद्यते, नान्यथा । एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात्ससारबीजमज्ञान कामकर्मप्रवृत्तिकारणमशेषतो निवर्तते, 'तत्र

को मोह क शोक एकत्वमनुपश्यत ’ इति मन्त्रवर्णात्, ‘तरति शोकमात्मवित्’ ‘भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसशया ।क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे’ इत्यादिश्रुतिभ्यश्च । कर्मसहितादपि ज्ञानादेतत्सिध्यतीति चेत्, न, वाजसनेयके तस्यान्यकारणत्ववचनात् । ‘जाया मे स्यात्’ इति प्रस्तुत्य ‘पुत्रेणाय लोको जय्यो नान्येन कर्मणा, कर्मणा पितृलोका विद्यया देवलोक ’ इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्त वाजसनेयके । तत्रैव च पारिव्राज्यविधाने हेतुरुक्त ‘किं प्रजया करिष्यामो येषा नोऽयमात्माय लोक ’ इति । तत्राय हेत्वर्थ — प्रजाकर्मतत्सयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तिकारणै किं करिष्याम । न चास्माक लोकत्रयमनित्य साधनसाध्यमिष्टम्, येषामस्माक स्वाभाविकोऽजोऽजरोऽमृतोऽभयो न वर्धते कर्मणा नो कनीयान्नित्यश्च लोक इष्ट । स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्य । तस्मात्प्रत्यगात्मब्रह्मविज्ञानपूर्वक सर्वैषणासन्यास एव कर्तव्य इति । कर्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य । न ह्युपात्तकारकफलभेदविज्ञानेन कर्मणा प्रत्यस्तमितसर्वभेददर्शनस्य प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते,

वस्तुप्राधान्ये सति अपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य । तस्माद्दृष्टादृष्टेभ्यो बाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयम् 'केनेषितम्' इत्यादिश्रुत्या प्रदर्श्यते । शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारणं भवति । केवलतर्कागम्यत्वं च दर्शितं भवति ॥

**केनेषितं पतति प्रेषितं मनः**
**केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति**
**चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥**

'नैषा तर्केण मतिरापनेया' इति श्रुतेश्च । 'आचार्यवान्पुरुषो वेद' 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति' 'तद्विद्धि प्रणिपातेन' इत्यादिश्रुतिस्मृतिनियमाच्च कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन्पप्रच्छेति कल्प्यते— केनेषितमित्यादि । केन इषितं केन कर्त्रा इषितम् इष्टमभिप्रेतं सत् मनः पतति गच्छति स्वविषयं प्रतीति संबध्यते । इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासंभवादिच्छार्थ-

स्यैवैतद्रूपमिति गम्यते। इषितमिति इट्प्रयोगस्तु च्छान्दस । तस्यैव प्रपूर्वस्य नियोगार्थे प्रेषितमित्येतत्। तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषणविशेषविषयाकाङ्क्षा स्यात्—केन प्रेषयितृविशेषेण, कीदृश वा प्रेषणमिति । इषितमिति तु विशेषणे सति तदुभय निवर्तते, कस्येच्छामात्रेण प्रेषितमित्यर्थविशेषनिर्धारणात्। यद्येषोऽर्थोऽभिप्रेत स्यात्, केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यम्। अपि च शब्दाधिक्यादर्थाधिक्य युक्तमिति इच्छया कर्मणा वाचा वा केन प्रेषितमित्यर्थविशेषोऽवगन्तु युक्त । न, प्रश्नसामर्थ्यात्, देहादिसघातादनित्यात्कर्मकार्याद्विरक्त अतोऽन्यत्कूटस्थ नित्य वस्तु बुभुत्समान पृच्छतीति सामर्थ्यादुपपद्यते । इतरथा इच्छावाक्कर्मभिर्देहादिसघातस्य प्रेरयितृत्व प्रसिद्धमिति प्रश्नोऽनर्थक एव स्यात्। एवमपि प्रेषितशब्दस्यार्थो न प्रदर्शित एव । न, सशयवतोऽय प्रश्न इति प्रेषितशब्दस्यार्थविशेष उपपद्यते । किं यथाप्रसिद्धमेव कार्यकरणसघातस्य प्रेषयितृत्वम्, किं वा सघातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्वम्, इत्यस्यार्थस्य प्रदर्शनार्थं केनेषित पतति प्रेषित मन इति विशेषणद्वयमुपपद्यते । ननु स्वतन्त्र मन स्वविषये स्वय पततीति प्रसिद्धम्, तत्र कथ प्रश्न उपपद्यते इति, उच्यते—यदि स्वतन्त्र मन

प्रवृत्तिनिवृत्तिविषये स्यात्, तर्हि सर्वस्यानिष्टचिन्तन न स्यात् । अनर्थं च जानन्सकल्पयति । अभ्यग्रदु खे च कार्ये वार्यमाणमपि प्रवर्तत एव मन । तस्माद्युक्त एव केनेषितमित्यादिप्रश्न । केन प्राण युक्त नियुक्त प्रेरित सन् प्रैति गच्छति स्वव्यापार प्रति । प्रथम इति प्राणविशेषण स्यात्, तत्पूर्वकत्वात्सर्वेन्द्रियप्रवृत्तीनाम् । केन इषिता वाचम् इमा शब्दलक्षणा वदन्ति लौकिका । तथा चक्षु श्रोत्र च स्वे स्वे विषये क उ देव द्योतनवान् युनक्ति नियुङ्क्ते प्रेरयति ॥

**श्रोत्रस्य श्रोत्र मनसो मनो य-**
**द्वाचो ह वाच॑ स उ प्राणस्य प्राणः ।**
**चक्षुषश्चक्षुरतिमुच्य धीरा**
**प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**

एव पृष्टवते योग्यायाह गुरु । शृणु यत् त्व पृच्छसि, मनआदिकरणजातस्य को देव स्वविषय प्रति प्रेरयिता कथ वा प्रेरयतीति । श्रोत्रस्य श्रोत्र शृणोत्यनेनेति श्रोत्रम्, शब्दस्य श्रवण प्रति करण शब्दाभिव्यञ्जक श्रोत्रमिन्द्रियम्, तस्य श्रोत्र स यस्त्वया पृष्ट 'चक्षु श्रोत्र क उ देवा युनक्ति' इति । असावेवविशिष्ट श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये, नन्वे

तदननुरूप प्रतिवचन श्रोत्रस्य श्रोत्रमिति। नैष दोष , तस्यान्यथा विशेषानवगमात् । यदि हि श्रोत्रादिव्यापारव्यतिरिक्तेन स्वव्यापारेण विशिष्ट श्रोत्रादिनियोक्ता अवगम्येत दात्रादिप्रयोक्तृवत्, तदेदमननुरूप प्रतिवचन स्यात् । न त्विह श्रोत्रादीना प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते । श्रोत्रादीनामेव तु सहताना व्यापारेणालोचनसकल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते— अस्ति हि श्रोत्रादिभिरसहत , यत्प्रयोजनप्रयुक्त श्रोत्रादिकलाप गृहादिवदिति । सहताना परार्थत्वादवगम्यते श्रोत्रादीना प्रयोक्ता । तस्मादनुरूपमेवेद प्रतिवचन श्रोत्रस्य श्रोत्रमित्यादि । क पुनरत्र पदार्थ श्रोत्रस्य श्रोत्रमित्यादे ? न ह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थ , यथा प्रकाशस्य प्रकाशा तरेण । नैष दोष । अयमत्र पदार्थ — श्रोत्र तावत्स्वविषयव्यञ्जनसमर्थ दृष्टम् । तत्तु स्वविषयव्यञ्जनसामर्थ्य श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्येऽसहते सर्वान्तरे सति भवति, न असति इति । अत श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते । तथा च श्रुत्यन्तराणि—'आत्मनैवाय ज्योतिषास्ते' 'तस्य भासा सर्वमिद विभाति' 'येन सूर्यस्तपति तेजसेद्ध' इत्यादीनि । 'यदादित्यगत तेजो जगद्भासयतेऽखिलम् । क्षेत्र क्षेत्री तथा कृत्स्न प्रकाशयति भारत' इति च

गीतासु । काठके च 'नित्यो नित्याना चेतनश्चेतनानाम' इति । श्रोत्राद्येव सर्वस्यात्मभूत चेतनमिति प्रसिद्धम, तदिह निवर्त्यते । अस्ति किमपि विद्वद्बुद्धिगम्य सर्वान्तरतम कूटस्थमजमजरममृतमभय श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तम् इति प्रतिवचन शब्दार्थश्चोपपद्यत एव । तथा मनस अन्त करणस्य मन । न ह्यन्त करणम् अन्तरेण चैतन्यज्योतिषो दीधितिं स्वविषयसकल्पाध्यवसायादिसमर्थं स्यात् । तस्मान्मनसोऽपि मन इति । इह बुद्धिमनसी एकीकृत्य निर्देशो मन स इति । यद्वाचो ह वाचम्, यच्छब्दो यस्मादर्थे श्रोत्रादिभि सर्वै सबध्यते— यस्माच्छ्रोत्रस्य श्रोत्रम्, यस्मान्मनसो मन इत्येवम् । वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते, प्राणस्य प्राण इति दर्शनात् । वाचो ह वाचमित्येतदनुरोधेन प्राणस्य प्राणमिति कस्माद्द्वितीयैव न क्रियते? न, बहूनामनुरोधस्य युक्तत्वात् । वाचमित्यस्य वागित्येतावद्वक्तव्य स उ प्राणस्य प्राण इति शब्दद्वयानुरोधेन, एव हि बहूनामनुरोधो युक्त कृत स्यात् । पृष्ट च वस्तु प्रथमयैव निर्देष्टु युक्तम् । स यस्त्वया पृष्ट प्राणस्य प्राणाख्यवृत्तिविशेषस्य प्राण, तत्कृत हि प्राणस्य प्राणनसामर्थ्यम् । न ह्यात्मनानधिष्ठितस्य प्राणनमुपपद्यते,

'को ह्यवान्यात्क प्राण्याद्यदेष आकाश आनन्दो न स्यात्' 'ऊर्ध्वं प्राणमुन्नयत्यपान प्रत्यगस्यति' इत्यादिश्रुतिभ्य । इहापि च वक्ष्यते 'येन प्राण प्रणीयते तदेव ब्रह्म त्व विद्धि' इति । श्रोत्रादीन्द्रियप्रस्तावे घ्राणस्यैव प्राणस्य न तु युक्त ग्रहणम् । सत्यमेवम् । प्राणग्रहणेनैव तु घ्राणस्य ग्रहण कृतमेव मन्यते श्रुति । सर्वस्यैव करणकलापस्य यद् र्थप्रयुक्ता प्रवृत्ति, तद्ब्रह्मेति प्रकरणार्थो विवक्षित । तथा चक्षुषश्चक्षु रूपप्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यं तदा त्मचैतन्याधिष्ठितस्यैव । अतश्चक्षुषश्चक्षु । प्रष्टु पृष्टस्यार्थस्य ज्ञातुमिष्टत्वात् श्रोत्रादे श्रोत्रादिलक्षण यथोक्त ब्रह्म 'ज्ञात्वा' इत्यध्याह्रियते, अमृता भवन्ति इति फलश्रुतेश्च । ज्ञाना-द्ध्यमृतत्व प्राप्यते । ज्ञात्वा अतिमुच्य इति सामर्थ्यात् श्रोत्रादिकरणकलापमुज्झित्वा— श्रोत्रादौ ह्यात्मभाव कृत्वा, तदुपाधि सन्, तदात्मना जायते म्रियते ससरति च । अत श्रोत्रादे श्रोत्रादिलक्षण ब्रह्मात्मेति विदित्वा, अतिमुच्य श्रो-त्राद्यात्मभाव परित्यज्य— ये श्रोत्राद्यात्मभाव परित्यजन्ति, ते धीरा धीमन्त । न हि विशिष्टधीमत्त्वमन्तरेण श्रो त्राद्यात्मभाव शक्य परित्युक्तम् । प्रेत्य व्यावृत्य अस्मात् लोकात् पुत्रमित्रकलत्रबन्धुषु ममाहभावसव्यवहारलक्षणात्,

त्यक्तसर्वैषणा भूत्वेत्यर्थः । अमृता अमरणधर्माण भवन्ति । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु' 'पराञ्चि खानि व्यतृणत् आवृत्तचक्षुरमृतत्वमिच्छन्' 'यदा सर्वे प्रमुच्यन्ते अत्र ब्रह्म समश्नुते' इत्यादि-श्रुतिभ्य । अथवा, अतिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वात् अस्माल्लोकात्प्रेत्य अस्माच्छरीरादपेत्य मृत्वेत्यर्थः ॥

**न तत्र चक्षुर्गच्छति**
**न वाग्गच्छति नो मनः ।**
**न विद्मो न विजानीमो**
**यथैतदनुशिष्यात् ॥ ३ ॥**

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूत ब्रह्म, अत न तत्र तस्मिन्ब्रह्मणि चक्षु गच्छति, स्वात्मनि गमनासभवात् । तथा न वाक् गच्छति । वाचा हि शब्द उच्चार्यमाणोऽभिधेय प्रकाशयति यदा, तदाभिधेय प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निर्वर्तकस्य च करणस्यात्मा ब्रह्म । अतो न वाग्गच्छति । यथाग्निर्दाहक प्रकाशकश्चापि सन् न ह्यात्मान प्रकाशयति दहति वा, तद्वत् । नो मन मनश्चान्यस्य सकल्पयितृ अध्यवसातृ च सत् नात्मान सकल्पयत्यध्यवस्यति च, तस्यापि

ब्रह्मात्मेति। इन्द्रियमनोभ्या हि वस्तुनो विज्ञानम्। तदगोचर त्वात् न विद्म तद्ब्रह्म ईदृशमिति । अतो न विजानीम यथा येन प्रकारेण एतत् ब्रह्म अनुशिष्यात् उपदिशेच्छिष्यायेत्यभि-प्राय । यद्धि करणगोचर , तदन्यस्मै उपदेष्टु शक्य जातिगु-णक्रियाविशेषणै । न तज्जात्यादिविशेषणवद्ब्रह्म । तस्माद्विषम शिष्यानुपदेशेन प्रत्याययितुमिति उपदेशे तदर्थग्रहणे च यत्नातिशयकर्तव्यता दर्शयति ॥

**अन्यदेव तद्विदिता**
**दथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषा**
**ये नस्तद्व्याचचक्षिरे ॥ ४ ॥**

'न विद्मो न विजानीमो यथैतदनुशिष्यात्' इति अत्य-न्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते । सत्यमेव प्रत्यक्षादिभि प्रमाणैर्न पर प्रत्याययितु शक्य आगमेन तु शक्यत एव प्रत्याययितुमिति तदुपदेशार्थ-मागममाह— अन्यदेव तद्विदितादथो अविदितादधीति । अन्यदेव पृथगेव तत् यत्प्रकृत श्रोत्रादीना श्रोत्रादीत्युक्तमवि षयश्च तेषाम् । तत् विदितात् अन्यदेव हि । विदित नाम

यद्विदिक्रिययातिशयेनाप्तं विदिक्रियाकर्मभूतम्। क्वचित्किंचित्कस्यचिद्विदितं स्यादिति सर्वमेव व्याकृतं विदितमेव, तस्मादन्यदेवेत्यर्थः । अविदितमज्ञातं तर्हीति प्राप्ते आह—अथो अपि अविदितात् विदितविपरीतादव्याकृतादविद्यालक्षणाद्व्याकृतबीजात्। अधि इति उपर्यर्थे, लक्षणया अन्यदित्यर्थः । यद्धि यस्मादधि उपरि भवति, तत्तस्मादन्यदिति प्रसिद्धम्। यद्विदितं तदल्पं मर्त्यं दुःखात्मकं चेति हेयम्। तस्माद्विदितादन्यद्ब्रह्मेत्युक्ते त्वहेयत्वमुक्तं स्यात्। तथा अविदितादधीत्युक्तेऽनुपादेयत्वमुक्तं स्यात्। कार्यार्थं हि कारणमन्यदन्येनोपादीयते। अतश्च न वेदितुरन्यस्मै प्रयोजनायान्यदुपादेयं भवतीत्येवं विदिताविदिताभ्यामन्यदिति हेयोपादेयप्रतिषेधेन स्वात्मनोऽनन्यत्वात् ब्रह्मविषया जिज्ञासा शिष्यस्य निर्वर्तिता स्यात्। न ह्यन्यस्य स्वात्मनो विदिताविदिताभ्यामन्यत्वं वस्तुनः संभवतीत्यात्मा ब्रह्मेत्येष वाक्यार्थः, 'अयमात्मा ब्रह्म' 'य आत्मापहतपाप्मा' 'यत्साक्षादपरोक्षाद्ब्रह्म' 'य आत्मा सर्वान्तरः' इत्यादिश्रुत्यन्तरेभ्यश्चेति। एवं सर्वात्मनः सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यार्थस्याचार्योपदेशपरम्परया प्राप्तत्वमाह—इति शुश्रुमेत्यादि। ब्रह्म चैवमाचार्योपदेशपरम्परयैवाधि-

गन्तव्य न तकत प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्च, इति एव शुश्रुम श्रुतवन्तो वय पूर्वेषाम् आचार्याणा वचनम्, ये आचार्या न अस्मभ्य तत् ब्रह्म व्याचचक्षिरे व्याख्यातवन्त विस्पष्ट कथितवन्त तेषामित्यर्थ ॥

**यद्वाचानभ्युदित**
**येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्व विद्धि**
**नेद यदिदमुपासते ॥ ५ ॥**

'अन्यदेव तद्विदितादथो अविदितादधि' इत्यनेन वाक्येन आत्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता— कथ न्वात्मा ब्रह्म । आत्मा हि नामाधिकृत कर्मण्युपासने च ससारी कर्मोपासन वा साधनमनुष्ठाय ब्रह्मादिदेवान्स्वर्ग वा प्राप्तुमिन्छति । तत्तस्मादन्य उपास्यो विष्णुरीश्वर इ द्र प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा, लोकप्रत्ययविरोधात् । यथान्ये तार्किका ईश्वरादन्य आत्मेत्याचक्षते, तथा कर्मिणोऽमु यजामु यजेत्यन्या एव देवता उपासते । तस्माद्युक्त यद्विदितमुपास्य तद्ब्रह्म भवेत्, ततोऽ य उपासक इति । तामेतामाशङ्का शिष्यलिङ्गेनोपलक्ष्य तद्वाक्याद्वा आह—नैव

शङ्किष्ठा । यत् चैतन्यमात्रसत्ताकम्, वाचा— वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमाग्नेयं वर्णानामभिव्यञ्जक करणम्, वर्णाश्चार्थसंकेतपरिच्छिन्ना एतावन्त एवंक्रमप्रयुक्ता इति, एवं तदभिव्यङ्ग्यः शब्दः पदं वागित्युच्यते, 'अकारो वै सर्वा वाक्सैषास्य स्पर्शान्तःस्थोष्मभिर्व्यज्यमाना बह्वी नाना-रूपा भवति' इति श्रुतेः । मितममितं स्वरः सत्यानृते एष विकारो यस्याः तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्या— अनभ्युदितम् अप्रकाशितमनभ्युक्तम् । येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वाक् अभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत् । यत् 'वाचो ह वाक्' इत्युक्तम्, 'वदन्वाक्' 'यो वाचमन्तरो यमयति' इत्यादि च वाजस-नेयके । 'या वाक् पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित्ता वेद ब्राह्मणः' इति प्रश्नमुत्पाद्य प्रतिवचनमुक्तम् 'सा वाग्यया स्वप्ने भाषते' इति । सा हि वक्तुर्वक्तिर्नित्या वाक् चैतन्यज्योति-स्वरूपा, 'न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते' इति श्रुतेः । तदेव आत्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्त्वाद्ब्रह्मेति विद्धि विजानीहि त्वम् । यैर्वागाद्युपाधिभिः 'वाचो ह वाक्' 'चक्षुषश्चक्षुः' 'श्रोत्रस्य श्रोत्रं मनसो मनः' 'कर्ता भोक्ता वि-ज्ञाता नियन्ता प्रशासिता' 'विज्ञानमानन्दं ब्रह्म' इत्येवमादयः

सव्यवहारा असव्यवहार्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते, तान्व्युदस्य आत्मानमेव निर्विशेष ब्रह्म विद्धीति एवशब्दार्थ । नेद ब्रह्म यदिदम् इत्युपाधिभेदविशिष्टमनात्मेश्वरादि उपासते ध्यायन्ति । तदेव ब्रह्म त्व विद्धि इत्युक्तेऽपि नेद ब्रह्म इत्यनात्मनोऽब्रह्मत्व पुनरुच्यते नियमार्थम् अन्यब्रह्मबुद्धि परिसख्यानार्थं वा ॥

**यन्मनसा न मनुते**
**येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्व विद्धि**
**नेदं यदिदमुपासते ॥ ६ ॥**

यन्मनसा न मनुते । मन इत्यन्त करण बुद्धिमनसोरेकत्वेन गृह्यते । मनुतेऽनेनेति मन सर्वकरणसाधारणम्, सर्वविषयव्यापकत्वात् । ‘काम सकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव’ इति श्रुते कामादिवृत्तिमन्मन । तेन मनसा यत् चैतन्यज्योतिर्मनसोऽवभासक न मनुते न सकल्पयति नापि निश्चिनोति लोक, मनसोऽव भासकत्वेन नियन्तृत्वात्। सर्वविषय प्रति प्रत्यगेवेति स्वात्मनि न प्रवर्ततेऽन्त करणम् । अन्त स्थेन हि चैतन्यज्योतिषावभासितस्य मनसो मननसामर्थ्यम्, तेन सवृत्तिक मन येन

ब्रह्मणा मत विषयीकृत व्याप्तम् आहु कथयन्ति ब्रह्मविद । तस्मात् तदेव मनस आत्मान प्रत्यक्चेतयितार ब्रह्म विद्धि । नेदमित्यादि पूर्ववत् ॥

**यच्चक्षुषा न पश्यति**
**येन चक्षूꣳषि पश्यति ।**
**तदेव ब्रह्म त्व विद्धि**
**नेद यदिदमुपासते ॥ ७ ॥**

यत् चक्षुषा न पश्यति न विषयीकरोति अन्त करणवृत्तिसयुक्तेन लोक , येन चक्षूषि अन्त करणवृत्तिभेदभिन्नाश्चक्षुर्वृत्ती पश्यति चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति । तदेवेत्यादि पूर्ववत् ॥

**यच्छ्रोत्रेण न शृणोति**
**येन श्रोत्रमिदꣳ श्रुतम् ।**
**तदेव ब्रह्म त्व विद्धि**
**नेद यदिदमुपासते ॥ ८ ॥**

यत् श्रोत्रेण न शृणोति दिग्देवताधिष्ठितेन आकाशकार्येण मनोवृत्तिसयुक्तेन न विषयीकरोति लोक , येन श्रोत्रम् इद

श्रुत यत्प्रसिद्ध चैतन्यात्मज्योतिषा विषयीकृतम् । तदेवत्यादि पूर्ववत् ॥

यत्प्राणेन न प्राणिति
येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि
नेदं यदिदमुपासते ॥ ९ ॥

इति प्रथम खण्ड ॥

यत् प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तरवस्थिते ना-त करणप्राणवृत्तिभ्या सहितेन यन्न प्राणिति गन्धवन्न विषयीकरोति, येन चैतन्यात्मज्योतिषावभास्यत्वेन स्वविषय प्रति प्राण प्रणीयते तदेवेत्यादि सर्वं समानम् ॥

इति प्रथम खण्ड ॥

## द्वितीय. खण्ड ॥

यदि मन्यसे सु वेदेति दभ्रमेवापि नूनं त्व वेत्थ ब्रह्मणो रूपं यदस्य त्व यदस्य देवेष्वथ नु मीमास्यमेव ते मन्ये विदितम् ॥ १ ॥

एव हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायित शिष्य अहमेव ब्रह्मेति सुष्ठु वेदाहमिति मा गृह्णीयादित्याश याद्दाहाचार्य शिष्यबुद्धिविचालनार्थम्—यदीत्यादि। नन्विष्टैव सु वेदाहम् इति निश्चिता प्रतिपत्ति । सत्यम् , इष्टा निश्चिता प्रतिपत्ति , न हि सु वेदाहमिति । यद्धि वेद्य वस्तु विषयीभवति, तत्सुष्ठु वेदितु शक्यम् , दाह्यमिव दग्धुम् अग्नेर्दग्धु न त्वग्ने स्वरूपमेव । सर्वस्य हि वेदितु स्वात्मा ब्रह्मेति सर्ववेदान्ताना सुनिश्चितोऽर्थ । इह च तदेव प्रतिपादित प्रश्नप्रतिवचनोक्त्या 'श्रोत्रस्य श्रोत्रम्' इत्याद्यया । 'यद्वाचानभ्युदितम्' इति च विशेषतोऽवधारितम् । ब्रह्मवित्सप्रदायनिश्चयश्चोक्त 'अन्यदेव तद्विदितादथो अविदितादधि' इति । उपन्यस्तमुप-

सहरिष्यति च 'अविज्ञात विजानता विज्ञातमविजानताम्' इति। तस्माद्युक्तमेव शिष्यस्य सु वेदेति बुद्धिं निराकर्तुम्। न हि वेदिता वेदितुर्वेदितु शक्य, अग्निर्दग्धुरिव दग्धुमग्ने । न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत्स्याद्ब्रह्म। 'नान्यदतोऽस्ति विज्ञातृ' इत्यन्यो विज्ञाता प्रतिषिध्यते। तस्मात् सुष्ठु वेदाह ब्रह्मेति प्रतिपत्तिर्मिथ्यैव। तस्माद्युक्तमेवाहाचार्यो यदीत्यादि। यदि कदाचित् मन्यसे सु वेदेति सुष्ठु वेदाह ब्रह्मेति। कदाचिद्यथाश्रुत दुर्विज्ञेयमपि क्षीणदोष सुमेधा कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमाह यदीत्यादि। दृष्ट च 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' इत्युक्ते प्राजापत्य पण्डितोऽप्यसुरराड्विरोचन स्वभावदोषवशादनुपपद्यमानमपि विपरीतमर्थं शरीरमात्मेति प्रतिपन्न । तथेन्द्रो देवराट् सकृद्द्विस्त्रिरुक्त चाप्रतिपद्यमान स्वभावदोषक्षयमपेक्ष्य चतुर्थे पर्याये प्रथमोक्तमेव ब्रह्म प्रतिपन्नवान्। लोकेऽपि एकस्माद्गुरो शृण्वता कश्चिद्यथावत्प्रतिपद्यते कश्चिदयथावत् कश्चिद्विपरीत कश्चिन्न प्रतिपद्यते। किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम्। अत्र हि विप्रतिपन्ना सदसद्वादिनस्तार्किका सर्वे। तस्माद्विदित ब्रह्मेति सुनिश्चितोक्तमपि विषमप्रतिपत्तित्वात् यदि मन्यसे

इत्यादि साशङ्क वचन युक्तमेवाचार्यस्य । दभ्रम् अल्पमेवापि नून त्व वेत्थ जानीषे ब्रह्मणो रूपम् । किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च, येनाह दभ्रमेवेत्यादि? बाढम् । अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि, न स्वत । स्वतस्तु 'अशब्दमस्पर्शमरूपमव्यय तथारस नित्यमगन्धवच्च यत्' इति शब्दादिभि सह रूपाणि प्रतिषिध्यन्ते । ननु येनैव धर्मेण यद्रूप्यते तदेव तस्य स्वरूपमिति ब्रह्मणोऽपि येन विशेषेण निरूपण तदेव तस्य स्वरूप स्यात् । अत उच्यते— चैतन्यम्, पृथिव्यादीनामन्यतमस्य सर्वेषा विपरिणताना वा धर्मो न भवति, तथा श्रोत्रादीनामन्त करणस्य च धर्मो न भवतीति ब्रह्मणो रूपमिति ब्रह्म रूप्यते चैतन्येन । तथा चोक्तम् । 'विज्ञानमानन्द ब्रह्म' 'विज्ञानघन एव' 'सत्य ज्ञानमनन्त ब्रह्म' 'प्रज्ञान ब्रह्म' इति च ब्रह्मणो रूप निर्दिष्ट श्रुतिषु । सत्यमेवम्, तथापि तदन्त करणदेहेन्द्रियोपाधिद्वारेणैव विज्ञानादिशब्दैर्निर्दिश्यते, तदनुकारित्वाद्देहादिवृद्धिसकोचच्छेदादिषु नाशेषु च, न स्वत । स्वतस्तु 'अविज्ञात विजानता विज्ञातमविजानताम्' इति स्थित भविष्यति । 'यदस्य ब्रह्मणो रूपम्' इति पूर्वेण सबन्ध । न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूप त्वमल्प वेत्थ,

यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूप देवेषु वेत्थ त्वम्, तदपि नून दभ्रमेव वेत्थ इति मन्येऽहम् । यदध्यात्म यदपि देवेषु तदपि चोपाधिपरिच्छिन्नत्वाद्दभ्रत्वान्न निवर्तते । यत्तु विध्वस्तसर्वोपाधिविशेष शान्तमनन्तमेकमद्वैत भूमाख्य नित्य ब्रह्म, न तत्सुवेद्यमित्यभिप्राय । यत एवम् अथ नु तस्मात् मन्ये अद्यापि मीमास्य विचार्यमेव ते तव ब्रह्म । एवमाचार्योक्त शिष्य एकान्ते उपविष्ट समाहित सन्, यथोक्तमाचार्येण आगमसर्थतो विचार्य, तर्कतश्च निर्धार्य, स्वानुभव कृत्वा, आचार्यसकाशमुपगम्य, उवाच—मन्येऽहमथेदानीं विदित ब्रह्मेति ॥

**नाह मन्ये सु वेदेति**
**नो न वेदेति वेद च ।**
**यो नस्तद्वेद तद्वेद**
**नो न वेदेति वेद च ॥ २ ॥**

कथमिति, शृणु— न अह मन्ये सु वेदेति, नैवाह मन्ये सु वेद ब्रह्मेति । नैव तर्हि विदित त्वया ब्रह्मेत्युक्ते आह—नो न वेदेति वेद च । वेद चेति च-शब्दात् न वेद च । ननु विप्रतिषिद्ध नाह मन्ये सु वेदेति, नो न वेदेति, वेद च इति ।

यदि न मन्यसे सु वेदेति, कथ मन्यसे वेद चेति । अथ मन्यसे वेदैवेति, कथ न मन्यसे सुवेदेति । एक वस्तु येन ज्ञायते, तेनैव तदेव वस्तु न सु विज्ञायत इति विप्रतिषिद्ध सशयविपर्ययौ वर्जयित्वा । न च ब्रह्म सशयितत्वेन ज्ञेय विपरीतत्वेन वेति नियन्तु शक्यम् । सशयविपर्ययौ हि सर्वत्रानर्थकरत्वेनैव प्रसिद्धौ । एवमाचार्येण विचाल्यमानोऽपि शिष्यो न विचचाल, 'अन्यदेव तद्विदितादथो अविदितादधि' इत्याचार्योक्तागमसप्रदायबलात् उपपत्त्यनुभवबलाच्च, जगर्ज च ब्रह्मविद्याया दृढनिश्चयता दर्शयन्नात्मन । कथमित्युच्यते— य य कश्चित् न अस्माक सब्रह्मचारिणा मध्ये तत् मदुक्त वचन तत्त्वतो वेद, स तत् ब्रह्म वेद । किं पुनस्तद्वचनमित्यत आह— नो न वेदेति वेद च इति । यदेव 'अन्यदेव तद्विदितादथो अविदितादधि' इत्युक्तम्, तदेव वस्तु अनुमानानुभवाभ्या सयोज्य निश्चित वाक्यान्तरेण नो न वेदेति वेद च इत्यवोचत् आचार्यबुद्धिसवादार्थं मन्दबुद्धिग्रहणव्यपोहार्थं च । तथा च गर्जितमुपपन्न भवति 'यो नस्तद्वेद तद्वेद' इति ॥

**यस्यामत तस्य मत**

**मत यस्य न वेद स' ।**

**अविज्ञात विजानतां**

**विज्ञातमविजानताम् ॥ ३ ॥**

शिष्याचार्यसवादात्प्रतिनिवृत्य स्वेन रूपेण श्रुति समस्त-सवादनिर्वृत्तमर्थमेव बोधयति— यस्यामतमित्यादिना । यस्य ब्रह्मविद् अमतम् अविज्ञातम् अविदित ब्रह्मेति मतम् अभिप्राय निश्चय, तस्य मत ज्ञात सम्यग्ब्रह्मेत्यभिप्राय । यस्य पुन मत ज्ञात विदित मया ब्रह्मेति निश्चय, न वेदैव स न ब्रह्म विजानाति स । विद्वदविदुषोर्यथोक्तौ पक्षाववधारयति—अविज्ञात विजानतामिति, अविज्ञातम् अमतम् अविदितमेव ब्रह्म विजानता सम्यग्विदितवतामित्येतत् । विज्ञात विदित ब्रह्म अविजानताम् असम्यग्दर्शिनाम्, इन्द्रियमनोबुद्धिष्वेवात्मदर्शिनामित्यर्थ , न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम् । न हि तेषा विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति । इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिना तु ब्रह्मोपाधिविवेकानुपलम्भात्, बुद्ध्याद्युपाधेश्च विज्ञातत्वात् विदित ब्रह्मेत्युपपद्यते भ्रान्तिरित्यत असम्यग्दर्शन पूर्वपक्षत्वेनोपन्यस्यते—— विज्ञातमविजानतामिति । अथवा हेत्वर्थ उत्तरार्धोऽविज्ञातमित्यादि ॥

**प्रतिबोधविदित मत-**

**मम्तृत्व हि विन्दते ।**

आत्मना विन्दते वीर्यं
विद्यया विन्दतेऽमृतम् ॥ ४ ॥

'अविज्ञात विजानताम्' इत्यवधृतम्। यदि ब्रह्मात्यन्तमेवाविज्ञातम्, लौकिकाना ब्रह्मविदा चाविशेष प्राप्त। 'अविज्ञात विजानताम्' इति च परस्परविरुद्धम्। कथ तु तद्ब्रह्म सम्यग्विदित भवतीत्येवमर्थमाह—प्रतिबोधविदित बोध बोध प्रति विदितम्। बोधशब्देन बौद्धा प्रत्यया उच्यन्ते। सर्वे प्रत्यया विषयीभवन्ति यस्य, स आत्मा सर्वबोधान्प्रतिबुध्यते सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्र प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते, नान्यद्द्वारमन्तरात्मनो विज्ञानाय। अत प्रत्ययप्रत्यगात्मतया विदित ब्रह्म यदा, तदा तत् मत तत्सम्यग्दर्शनमित्यर्थ सर्वप्रत्ययदर्शित्वे चोपजननापायवर्जितदृक्स्वरूपता नित्यत्व विशुद्धस्वरूपत्वमात्मत्व निर्विशेषतैकत्व च सर्वभूतेषु सिद्ध भवेत्, लक्षणभेदाभावाद्व्योम्न इव घटगिरिगुहादिषु। विदिताविदिताभ्यामन्यद्ब्रह्मेत्यागमवाक्यार्थ एव परिशुद्ध एवोपसहृतो भवति। 'दृष्टेर्द्रष्टा श्रुते श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता' इति हि श्रुत्यन्तरम्। यदा पुनर्बोधक्रियाकर्तेति बोधक्रियालक्षणेन तत्कर्तार विजानातीति बोधलक्षणेन विदित प्रतिबोधविदितमिति व्याख्यायते, यथा यो

वृक्षशाखाश्चालयति स वायुरिति तद्वत्, तदा बोधक्रियाश-क्तिमानात्मा द्रव्यम्, न बोधस्वरूप एव। बोधस्तु जायते विनश्यति च। यदा बोधो जायते, तदा बोधक्रियया स-विशेष। यदा बोधो नश्यति, तदा नष्टबोधो द्रव्यमात्र निर्विशेष। तत्रैव सति विक्रियात्मक सावयवोऽनित्योऽशुद्ध इत्यादयो दोषा न परिहर्तुं शक्यन्ते। यदपि काणादानाम् आत्मभन सयोगजो बोध आत्मनि समवैति, अत आत्मनि बोद्धृत्वम्, न तु विक्रियात्मक आत्मा, द्रव्यमात्रस्तु भवति घट इव रागसमवायी। अस्मिन्पक्षेऽप्यचेतन द्रव्यमात्र ब्रह्मेति 'विज्ञानमानन्द ब्रह्म' 'प्रज्ञान ब्रह्म' इत्याद्या श्रुतयो बाधिता स्यु। आत्मनो निरवयवत्वेन प्रदेशाभावात् नित्य-सयुक्तत्वाच्च मनस स्मृत्युत्पत्तिनियमानुपपत्तिरपरिहार्या स्यात्। ससर्गधर्मित्व चात्मन श्रुतिस्मृतिन्यायविरुद्ध कल्पित स्यात्। 'असङ्गो न हि सज्जत' 'असक्त सर्वभृत्' इति हि श्रुतिस्मृती। न्यायश्च— गुणवद्गुणवता ससृज्यते, नातुल्यजातीयम्। अत निर्गुण निर्विशेष सर्वविलक्षण केन चिदप्यतुल्यजातीयेन ससृज्यत इत्येतत् न्यायविरुद्ध भवेत्। तस्मात् नित्यालुप्तज्ञानस्वरूपज्योतिरात्मा ब्रह्मेत्ययमर्थ सर्व-बोधबोद्धृत्वे आत्मन सिध्यति, नान्यथा। तस्मात् 'प्रतिबो-

धविदित मतम्' इति यथाव्याख्यात एवार्थोऽस्माभि । यत्पुन स्वसवेद्यता प्रतिबोधविदितमित्यस्य वाक्यस्यार्थो वर्ण्यते, तत्र भवति सोपाधिकत्वे आत्मनो बुद्ध्युपाधिस्वरूपत्वेन भेद परिकल्प्यात्मनात्मान वेत्तीति सव्यवहार — 'आत्मन्येवात्मान पश्यति' 'स्वयमेवात्मनात्मान वेत्थ त्व पुरुषोत्तम' इति । न तु निरुपाधिकस्यात्मन एकत्वे स्वसवेद्यता परसवेद्यता वा सभवति । सवेदनस्वरूपत्वात्सवेदनान्तरापेक्षा च न सभवति, यथा प्रकाशस्य प्रकाशान्तरापेक्षाया न सभव तद्वत् । बौद्धपक्षे स्वसवेद्यताया तु क्षणभङ्गुरत्व निरात्मकत्व च विज्ञानस्य स्यात्, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' 'नित्य विभु सर्वगतम्' 'स वा एष महान ज आत्माजरोऽमरोऽमृतोऽभय' इत्याद्या श्रुतयो बाध्येरन् । यत्पुन प्रतिबोधशब्देन निर्निमित्तो बोध प्रतिबोध यथा सुप्तस्य इत्यर्थ परिकल्पयन्ति, सकृद्विज्ञान प्रतिबोध इत्यपरे, निर्निमित्त सनिमित्त सकृद्वासकृद्वा प्रतिबोध एव हि स । अमृतत्वम् अमरणभाव स्वात्मन्यवस्थान मोक्ष हि यस्मात् विन्दते लभते यथोक्तात्प्रतिबोधात्प्रतिबोधविदितात्मकात्, तस्मात्प्रतिबोधविदितमेव मतमित्यभिप्राय । बोधस्य हि प्रत्यगात्मविषयत्व च मतममृतत्वे हेतु । न ह्यात्मनो-

ऽनात्मत्वममृतत्व भवति । आत्मत्वादात्मनोऽमृतत्व निर्निमि-त्तमेव । एव मर्त्यत्वमात्मनो यदविद्यया अनात्मत्वप्रतिपत्ति । कथ पुनर्यथोक्तयात्मविद्ययामृतत्व विन्दत इत्यत आह— आत्मना स्वेन रूपेण विन्दते लभते वीर्य बल सामर्थ्यम् । धनसहायमन्त्रौषधितपोयोगकृत वीर्य मृत्यु न शक्नोत्यभिभ-वितुम् , अनित्यवस्तुकृतत्वात् , आत्मविद्याकृत तु वीर्यमात्म नैव विन्दते, नान्येनेत्यतोऽनन्यसाधनत्वादात्मविद्यावीर्यस्य तदेव वीर्य मृत्यु शक्नोत्यभिभवितुम् । यत एवमात्मविद्याकृत वीर्यमात्मनैव विन्दते, अत विद्यया आत्मविषयया विन्दते ऽमृतम् अमृतत्वम् । 'नायमात्मा बलहीनेन लभ्य' इत्याथ र्वणे । अत समर्थो हेतु अमृतत्व हि विन्दत इति ॥

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥

इति द्वितीय खण्ड ॥

कष्टा खलु सुरनरतिर्यक्प्रेतादिषु ससारदु खबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसप्राप्तिरज्ञानात् । अत

इह एव चेत् मनुष्योऽधिकृत समर्थ सन् यदि अवेदीत् आत्मान यथोक्तलक्षण विदितवान् यथोक्तेन प्रकारेण, अथ तदा अस्ति सत्य मनुष्यजन्मन्यस्मिन्नविनाशोऽर्थवत्ता वा सद्भावो वा परमार्थता वा सत्य विद्यते । न चेदिहावेदीदिति, न चेत् इह जीवश्चेत् अधिकृत अवेदीत् न विदितवान्, तदा महती दीर्घा अनन्ता विनष्टि विनाशन जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा ससारगति । तस्मादेव गुणदोषौ विजानन्तो ब्राह्मणा भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु च एकमात्मतत्त्व ब्रह्म विचित्य विज्ञाय साक्षात्कृत्य धीरा धीमन्त प्रेत्य व्यावृत्य ममाहभावलक्षणादविद्यारूपादस्माल्लोकात् उपरम्य सर्वात्मैकभावमद्वैतमापन्ना सन्त अमृता भवन्ति ब्रह्मैव भवन्तीत्यर्थ । 'स यो ह वै तत्पर ब्रह्म वेद ब्रह्मैव भवति' इति श्रुते ॥

इति द्वितीय खण्ड ॥

## तृतीयः खण्ड ॥

---

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवाय विजयोऽस्माकमेवाय महिमेति ॥ १ ॥**

ब्रह्म ह देवेभ्यो विजिग्ये । 'अविज्ञात विजानता विज्ञातमविजानताम्' इत्यादिश्रवणात् यदस्ति तद्विज्ञात प्रमाणै यन्नास्ति तदविज्ञात शशविषाणकल्पमत्यन्तमेवासदृष्टम् । तथेद ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीना व्यामोहो मा भूदिति तदर्थेयमाख्यायिका आरभ्यते । तदेव हि ब्रह्म सर्व प्रकारेण प्रशास्तृ देवानामपि परो देव , ईश्वराणामपि परमेश्वर , दुर्विज्ञेय , देवाना जयहेतु , असुराणा पराजयहेतु , तत्कथ नास्तीत्येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचासि दृश्यन्ते । अथवा ब्रह्मविद्याया स्तुतये । कथम्? ब्रह्मविज्ञानाद्धि अग्न्यादयो देवा देवाना श्रेष्ठत्व जग्मु । ततोऽप्यतितरामिन्द्र इति । अथवा दुर्विज्ञेय ब्रह्मेत्येतत्प्रदर्श्यते— येना-

ग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तस्तथेन्द्रो देवानामीश्वरोऽपि सन्निति । वक्ष्यमाणोपनिषद्विधिपर वा सर्वम् । ब्रह्मविद्याव्यतिरेकेण प्राणिना कर्तृत्वभोक्तृत्वाद्यभिमानो मिथ्येत्येतद्दर्शनार्थ वा आख्यायिका, यथा देवाना जयाद्यभिमानस्तद्वदिति । ब्रह्म यथोक्तलक्षण पर ह किल देवेभ्योऽर्थाय विजिग्ये जय लब्धवत् देवानामसुराणा च सग्रामेऽसुराञ्जित्वा जगदरातीनीश्वरसेतुभेत्तॄन् देवेभ्यो जय तत्फल च प्रायच्छज्जगत स्थेम्ने । तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादय अमहीयन्त महिमान प्राप्तवन्त । तदा आत्मसस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसयोजयितु प्राणिना सर्वशक्ते जगत स्थितिं चिकीर्षो अय जयो महिमा चेत्यजानन्त ते देवा ऐक्षन्त ईक्षितवन्त अग्न्यादिस्वरूपपरिच्छिन्नात्मकृत अस्माकमेवाय विजय अस्माकमेवाय महिमा अग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इति ॥

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव**
**तन्न व्यजानत किमिदं यक्षमिति ॥ २ ॥**

एव मिथ्याभिमानेक्षणवता तत् ह किल एषा मिथ्येक्षण

विजज्ञौ विज्ञातवद्ब्रह्म । सर्वेक्षितृ हि तत् सर्वभूतकरणप्रयोक्तृत्वात् देवाना च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान्मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्य देवेभ्य ह किल अर्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव प्रादुर्भूतवत् । तत् प्रादुर्भूत ब्रह्म न व्यजानत नैव विज्ञातवन्त देवा किमिद यक्ष पूज्य महद्भूतमिति ॥

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ३ ॥

तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥

तस्मिꣳस्त्वयि कि वीर्यमित्यपीदꣳसर्वं दहेयं यदिद पृथिव्यामिति ॥ ५ ॥

तस्मै तृण निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धु स तत एव

**निववृते नैतदशकं विज्ञातुं यदेतद्यक्ष-मिति ॥ ६ ॥**

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवः अग्निम् अग्रगामिनं जातवेदसं सर्वज्ञकल्पम् अब्रुवन् उक्तवन्तः । हे जातवेदः एतत् अस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति । तथा अस्तु इति तत् यक्षम् अभि अद्रवत् तत्प्रति गतवानग्निः । तं च गतवन्तं पिपृच्छिषुं तत्समीपेऽप्रगल्भत्वात्तूष्णींभूतं तद्यक्षम् अभ्यवदत् अग्निं प्रति अभाषत कोऽसीति । एवं ब्रह्मणा पृष्टोऽग्निः अब्रवीत् अग्निर्वै अग्निर्नामाहं प्रसिद्धो जातवेदा इति च नामद्वयेन प्रसिद्धतयात्मानं श्लाघयन्निति । एव-मुक्तवन्तं ब्रह्मावोचत् तस्मिन् एवं प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यम् इति । सोऽब्रवीत् इदं जगत् सर्वं दहेयं भस्मीकुर्यां यत् इदं स्थावरादि पृथिव्याम् इति । पृथिव्या-मित्युपलक्षणार्थम्, यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना । तस्मै एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्रे स्थापितवत् । ब्रह्मणा 'एतत् तृणमात्रं ममाग्रतः दह, न चेदसि दग्धुं समर्थः, मुञ्च दग्धृत्वाभिमानं सर्वत्र' इत्युक्तः तत् तृणम् उपप्रेयाय तृणसमीपं गतवान् सर्वजवेन सर्वोत्साहकृतेन

वेगन । गत्वा तत् न शशाक नाशकत् दग्धुम् । स जात-वेदा तृण दग्धुमशक्तो व्रीडितो हतप्रतिज्ञ तत एव यक्षादेव तूष्णीं देवान्प्रति निववृते निवृत्त प्रतिगतवान् न एतत् यक्षम् अशक शक्तवानह विज्ञातु विशेषत यदेतद्यक्षमिति ॥

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ७ ॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ ८ ॥

तस्मिꣳस्त्वयि कि वीर्यमित्यपीदꣳसर्वमाददीय यदिद पृथिव्यामिति ॥ ९ ॥

तस्मै तृण निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातु स तत एव निववृते नैतदशकं विज्ञातु यदेतद्यक्षमिति ॥ १० ॥

अथ अनन्तर वायुमब्रुवन् हे वायो एतद्विजानीहीत्यादि

समानार्थं पूर्वेण । वानाद्गमनाद्गन्धनाद्वा वायु । मातर्यन्त-रिक्षे श्वयतीति मातरिश्वा । इद सर्वमपि आददीय गृह्णी-याम् । यदिद पृथिव्यामित्यादि समानमेव ॥

**अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि कि मेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्ति-रोदधे ॥ ११ ॥**

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहु शोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ॥ १२ ॥**

इति तृतीय खण्ड ॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहीत्यादि पूर्ववत् । इन्द्र परमेश्वरो मघवा बलवत्त्वात् तथेति तदभ्यद्रवत् । तस्मात् इन्द्रादात्मसमीप गतात् तद्ब्रह्म तिरोदधे तिरोभूतम् । इन्द्रस्ये-न्द्रत्वाभिमानोऽतितरा निराकर्तव्य इत्यत सवादमात्रमपि नादाद्ब्रह्मन्द्राय । तद्यक्ष यस्मिन्नाकाशे आकाशप्रदेश आत्मान दर्शयित्वा तिरोभूतमिन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्ना काशे आसीत्, स इन्द्र तस्मिन्नेव आकाशे तस्थौ किं

तद्यक्षमिति ध्यायन्, न निववृतेऽग्न्यादिवत् । तस्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुरभूत्स्त्रीरूपा । स इन्द्र ताम् उमा बहु शोभमानाम्, सर्वेषा हि शोभमानाना शोभनतमा विद्या । तदा बहु शोभमानेति विशेषणमुपपन्न भवति । हैमवतीं हेमकृताभरणवतीमिव बहु शोभमानामित्यर्थ । अथवा उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तत इति ज्ञातु समर्थेति कृत्वा तामुपजगाम । इन्द्र ता ह उमा किल उवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूत यक्षमिति ॥

इति तृतीय खण्ड ॥

## चतुर्थ• खण्ड• ॥

ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाचकार ब्रह्मेति ॥ १ ॥

सा ब्रह्मेति होवाच ह किल ब्रह्मण वै ईश्वरस्यैव विजये—ईश्वरेणैव जिता असुरा । यूय तत्र निमित्तमात्रम् । तस्यैव विजये— यूय महीयध्व महिमान प्राप्नुथ । एतदिति क्रियाविशेषणार्थम् । मिथ्याभिमानस्तु युष्माकम्— अस्माकमेवाय विजयोऽस्माकमेवाय महिमेति । तत तस्मादुमावाक्यात् ह एव विदाचकार ब्रह्मेति इन्द्र , अवधारणात् ततो हैव इति, न स्वातन्त्र्येण ॥

तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठ पस्पर्शुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥

यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मण सवाददर्शनादिना सामीप्यमुपगता , तस्मात् स्वैर्गुणै अतितरामिव शक्ति

गुणादिमहाभाग्यै अन्यान् देवान् अतितराम् अतिशेरत इव एते देवा । इवशब्दोऽनर्थकोऽवधारणार्थो वा । यत् अग्नि वायु इन्द्र ते हि देवा यस्मात् एनत् ब्रह्म नेदिष्ठम् अन्तिकतम प्रियतम पस्पर्शु स्पृष्टवन्तो यथोक्तैर्ब्रह्मण सवादादिप्रकारै, ते हि यस्माच्च हेतो एनत् ब्रह्म प्रथम प्रथमा प्रधाना सन्त इत्येतत्, विदाचकार विदाचक्रुरित्येतत्, ब्रह्मेति ॥

**तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनन्नेदिष्ठ पस्पर्श स ह्येनत्प्रथमो विदाचकार ब्रह्मेति ॥ ३ ॥**

यस्मादग्निवायू अपि इन्द्रवाक्यादेव विदाचक्रतु, इन्द्रेण हि उमावाक्यात्प्रथम श्रुत ब्रह्मेति, तस्माद्वै इन्द्र अति तरामिव अतिशेत इव अन्यान् देवान् । स ह्येनन्नेदिष्ठ पस्पर्श यस्मात् स ह्येनत्प्रथमो विदाचकार ब्रह्मेत्युक्तार्थ वाक्यम् ॥

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥ ४ ॥**

तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेश । निरुपमस्य ब्रह्मणो येनोपमानेनोपदेश सोऽयमादेश इत्युच्यते । कि तत्? यदेतत् प्रसिद्ध लोके विद्युत व्यद्युतत् विद्योतन कृतवदित्येतदनुपपन्नमिति विद्युतो विद्योतनमिति कल्प्यते । आ३ इत्युपमार्थे । विद्युतो विद्योतनमिवेत्यर्थ, 'यथा सकृद्विद्युतम्' इति श्रुत्यन्तरे च दर्शनात् । विद्युदिव हि सकृदात्मान दर्शयित्वा तिरोभूत ब्रह्म देवेभ्य । अथवा विद्युत 'तेज' इत्यध्याहार्यम् । व्यद्युतत् विद्योतितवत् आ३ इव । विद्युतस्तेज सकृद्विद्योतितवदिवेत्यभिप्राय । इतिशब्द आदेशप्रतिनिर्देशार्थ —इत्ययमादेश इति । इच्छब्द समुच्चयार्थ । अय चापरस्तस्यादेश । कोऽसौ? न्यमीमिषत् यथा चक्षु । न्यमीमिषत् निमेष कृतवत् । स्वार्थे णिच् । उपमार्थ एव आकार । चक्षुषो विषय प्रति प्रकाशतिरोभाव इव चेत्यर्थ । इति अधिदैवत देवताविषय ब्रह्मण उपमानदर्शनम् ॥

**अथाध्यात्मं यदेतद्गच्छतीव च मनो-**
**ऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ॥ ५ ॥**

अथ अनन्तरम् अध्यात्म प्रत्यगात्मविषय आदेश उच्यत । यदेतत् गच्छतीव च मन । एतद्ब्रह्म ढौकत इव विषयीकरोतीव । यश्च अनेन मनसा एतत् ब्रह्म उपस्मरति समीपत

स्मरति साधक अभीक्ष्ण भृशम् । सकल्पश्च मनसो ब्रह्म-विषय । मनउपाधिकत्वाद्धि मनस सकल्पस्मृत्यादिप्रत्ययै-रभिव्यज्यते ब्रह्म, विषयीक्रियमाणमिव । अत स एष ब्रह्मणोऽध्यात्ममादेश । विद्युन्निमेषणवदधिदैवत द्रुतप्रका-शनधर्मि, अध्यात्म च मन प्रत्ययसमकालाभिव्यक्तिधर्मि, इत्येष आदेश । एवमादिश्यमान हि ब्रह्म मन्दबुद्धिगम्य भवतीति ब्रह्मण आदेश उपदेश । न हि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितु शक्यम् ॥

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्य स य एतदेव वेदाभि हैन सर्वाणि भू-तानि सवाञ्छन्ति ॥ ६ ॥**

किंच, तत् ब्रह्म ह किल तद्वन नाम तस्य वन तद्वन तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वाद्वन वननीय सभजनीयम् । अत तद्वन नाम, प्रख्यात ब्रह्म तद्वनमिति यत , तस्मात् तद्वन-मिति अनेनैव गुणाभिधानेन उपासितव्य चिन्तनीयम् । अनेन नाम्नोपासनस्य फलमाह—स य कश्चित् एतत् यथोक्त ब्रह्म एव यथोक्तगुण वेद उपास्ते अभि ह एनम् उपासक सर्वाणि भूतानि अभि सवाञ्छन्ति ह प्रार्थयन्त एव यथा ब्रह्म ॥

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥**

एवमनुशिष्टः शिष्य आचार्यमुवाच— उपनिषदं रहस्यं यच्चिन्त्यं भो भगवन् ब्रूहि इति। एवमुक्तवति शिष्ये आहाचार्यः —उक्ता अभिहिता ते तव उपनिषत्। का पुनः सेत्याह— ब्राह्मीं ब्रह्मणः परमात्मन इयं ब्राह्मी ताम्, परमात्मविषयत्वादतीतविज्ञानस्य, वाव एव ते उपनिषदमब्रूमेति उक्तामेव परमात्मविषयामुपनिषदमब्रूमेत्यवधारयत्युत्तरार्थम्। परमात्मविषयामुपनिषदं श्रुतवतः उपनिषदं भो ब्रूहीति पृच्छतः शिष्यस्य कोऽभिप्रायः? यदि तावच्छ्रुतस्यार्थस्य प्रश्नः कृतः, ततः पिष्टपेषणवत्पुनरुक्तोऽनर्थकः प्रश्नः स्यात्। अथ सावशेषोक्तोपनिषत्स्यात्, ततस्तस्याः फलवचनेनोपसंहारो न युक्तः 'प्रेत्यास्माल्लोकादमृता भवन्ति' इति। तस्मादुक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एव, अनवशेषितत्वात्। कस्तर्ह्यभिप्रायः प्रष्टुरिति। उच्यते। किं पूर्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा, अथ निरपेक्षैव? सापेक्षा चेदपेक्षितविषयामुपनिषदं ब्रूहि। अथ निरपेक्षा चेदवधारय पिप्पलादवन्नातः परमस्तीत्येवमभिप्रायः। एतदुपपन्नमाचार्यस्यावधारणवचनम् 'उक्ता त उपनिषत्' इति। ननु नावधा-

रणमिदम्, यतोऽन्यद्वक्तव्यमाह 'तस्यै तपो दम' इत्यादि । सत्यम्, वक्तव्यमुच्यते आचार्येण । न तूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तराभिप्रायेण वा, किंतु ब्रह्मविद्याप्राप्त्युपायाभिप्रायेण वेदैस्तदङ्गैश्च सहपाठेन समीकरणात्तप प्रभृतीनाम् । न हि वेदाना शिक्षाद्यङ्गाना च साक्षाद्ब्रह्मविद्याशेषत्व तत्सहकारिसाधनत्व वा सभवति । सहपठितानामपि यथायोग विभज्य विनियोग स्यादिति चेत्, यथा सूक्तवाकानुमन्त्रण मन्त्राणा यथादैवत विभाग, तथा तपोदमकर्मसत्यादीनामपि ब्रह्मविद्याशेषत्व तत्सहकारिसाधनत्व वेति कल्प्यते । वेदाना तदङ्गाना चार्थप्रकाशकत्वेन कर्मात्मज्ञानोपायत्वमित्येव ह्यय विभागो युज्यते अर्थसबन्धोपपत्तिसामर्थ्यादिति चेत्, न, अयुक्ते । न ह्यय विभागो घटना प्राञ्चति । न हि सर्वक्रियाकारकफलभेदबुद्धितिरस्कारिण्या ब्रह्मविद्याया शेषापेक्षा सहकारिसाधनसबन्धो वा युज्यते । सर्वविषयव्यावृत्तप्रत्यगात्मविषयनिष्ठत्वाच्च ब्रह्मविद्यायास्तत्फलस्य च नि श्रेयसस्य । 'मोक्षमिच्छन्सदा कर्म त्यजेदेव ससाधनम् । त्यजतैव हि तज्ज्ञेय त्यक्तु प्रत्यक्पर पदम्' तस्मात्कर्मणा सहकारित्व कर्मशेषापेक्षा वा न ज्ञानस्योपपद्यते । ततोऽसदेव सूक्तवाकानुमन्त्रणवद्यथायोग विभाग इति । तस्मादवधा

रणार्थतैव प्रश्नप्रतिवचनस्योपपद्यते । एतावत्येवेयमुपनिष दुक्तान्यनिरपेक्षा अमृतत्वाय ॥

**तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः**
**सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥**

यामिमा ब्राह्मीमुपनिषद तवाग्रेऽब्रूमेति तस्यै तस्या उक्ताया उपनिषद प्राप्त्युपायभूतानि तपआदीनि । तप कायेन्द्रियमनसा समाधानम् । दम उपशम । कर्म अग्निहोत्रादि । एतैर्हि सस्कृतस्य सत्त्वशुद्धिद्वारा तत्त्वज्ञानोत्पत्तिर्दृष्टा । दृष्टा ह्यमृदितकल्मषस्योक्तेऽपि ब्रह्मण्यप्रतिपत्तिर्विपरीतप्रतिपत्तिश्च, यथेन्द्रविरोचनप्रभृतीनाम् । तस्मादिह वातीतेषु वा बहुषु जन्मान्तरेषु तपआदिभि कृतसत्त्वशुद्धेर्ज्ञान समुत्पद्यते यथा श्रुतम्, ‘यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन ’ इति मन्त्रवर्णात् । ‘ज्ञानमुत्पद्यते पुसा क्षयात्पापस्य कर्मण ’ इति स्मृतेश्च । इतिशब्द उपलक्षणत्वप्रदर्शनार्थ । इति एवमाद्यन्यदपि ज्ञानोत्पत्तेरुपकारकम् ‘अमानित्वमदम्भित्वम्’ इत्याद्युपदर्शित भवति । प्रतिष्ठा पादौ पादाविवास्या , तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या प्रवर्तते, पद्भ्यामिव पुरुष । वेदाश्चत्वार सर्वाणि चाङ्गानि शिक्षादीनि षट् कर्म-

ज्ञानप्रकाशकत्वाद्वेदाना तद्रक्षणार्थत्वादङ्गाना प्रतिष्ठात्वम । अथवा, प्रतिष्ठाशब्दस्य पादरूपकल्पनार्थत्वाद्वेदास्त्वितराणि सर्वाङ्गानि शिरआदीनि । अस्मिन्पक्षे शिक्षादीना वेदग्रहणे नैव ग्रहण कृत प्रत्येतव्यम् । अङ्गिनि हि गृहीतेऽङ्गानि गृहीता न्येव भवन्ति, तदायत्तत्वादङ्गानाम् । सत्यम् आयतन यत्र तिष्ठत्युपनिषत् तदायतनम् । सत्यमिति अमायिता अकौटिल्य वाङ्मन कायानाम् । तेषु ह्याश्रयति विद्या ये अमायाविन साधव , नासुरप्रकृतिषु मायाविषु , 'न येषु जिह्ममनृत न माया च' इति श्रुते । तस्मात्सत्यमायतनमिति कल्प्यते । तप आदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहण साधनातिशयत्वज्ञापनार्थम् । 'अश्वमेधसहस्र च सत्य च तुलया धृतम् । अश्वमेधसहस्राच्च सत्यमेक विशिष्यते' इति स्मृते ॥

**यो वा एतामेव वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ९ ॥**

इति चतुर्थ खण्डः ॥

यो वै एता ब्रह्मविद्याम् 'केनेषितम्' इत्यादिना यथोक्ताम् एव महाभागाम् 'ब्रह्म ह देवेभ्य ' इत्यादिना स्तुता सर्वविद्या-

प्रतिष्ठा वेद। 'अमृतत्व हि विन्दते' इत्युक्तमपि ब्रह्मविद्या-फलमन्ते निगमयति— अपहत्य पाप्मानम् अविद्याकामकर्म-लक्षण ससारबीज विधूय अनन्ते अपर्यन्ते स्वर्गे लोके सुखा-त्मके ब्रह्मणीत्येतत्। अनन्ते इति विशेषणान्न त्रिविष्टपे अन-न्तशब्द औपचारिकोऽपि स्यादित्यत आह— ज्येये इति। ज्येय ज्यायसि सर्वमहत्तरे स्वात्मनि मुख्ये एव प्रतिति-ष्ठति। न पुन ससारमापद्यत इत्यभिप्राय ॥

इति चतुर्थ खण्ड ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छकरभगवत कृतौ

केनोपनिषत्पदभाष्यम्

सपूर्णम् ॥

ॐ

आप्यायन्तु ममाङ्गानि
वाक्प्राणश्चक्षु श्रोत्रमथो ब-
लमिन्द्रियाणि च सर्वाणि ।
सर्वं ब्रह्मौपनिषद् माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि -
राकरण मेऽस्तु । तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्ति शान्ति शान्ति ॥

॥ ॐ ॥

# केनोपनिषद्वाक्यभाष्यम्

श्रीमच्छकरभगवत्पूज्यपादैः
विरचितम् ।



ॐ

आप्यायन्तु ममाङ्गानि
वाक्प्राणश्चक्षु श्रोत्रमथो ब
लमिन्द्रियाणि च सर्वाणि ।
सर्वं ब्रह्मौपनिषद् माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि-
राकरण मेऽस्तु । तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्ति शान्तिः ॥

ॐ

# ॥ केनोपनिषत् ॥

## श्रीमच्छङ्करभगवत्पादविरचितेन वाक्यभाष्येण सहिता ।

---

समाप्त कर्मात्मभूतप्राणविषय विज्ञान कर्म चानेकप्रकारम्, ययो- र्विकल्पसमुच्चयानुष्ठानाद्दक्षिणोत्तराभ्या सृतिभ्यामावृत्त्यनावृत्ती भवत । अत ऊर्ध्वं फलनिरपेक्षज्ञानकर्मसमुच्चयानु- ष्ठानात्कृतात्मसस्कारस्य उच्छिन्नात्म- ज्ञानप्रतिबन्धकस्य द्वैतविषयदोषदर्शिन निर्ज्ञाताशेषबाह्यविषयत्वात् ससारबीजमज्ञानमुच्चिच्छित्सत प्रत्यगात्मविषयजिज्ञासो 'केनेषितम्' इत्यात्मस्वरूपत

त्त्वविज्ञानाय अयमध्याय आरभ्यते। तेन च मृत्युपदमज्ञान-मुच्छेत्तव्यम, तत्तन्त्रो हि ससारो यत । अनधिगतत्वादात्मनो युक्ता तदधिगमाय तद्विषया जिज्ञासा। कर्मविषये चानुक्ति स्तद्विरोधित्वात्। अस्य विजिज्ञासितव्यस्यात्मतत्त्वस्य कर्म-विषयेऽवचन कस्मादिति चेत्, आत्मनो हि यथावद्विज्ञान कर्मणा विरुध्यते। निरतिशयब्रह्मस्वरूपो ह्यात्मा विजिज्ञाप-यिषित, 'तदेव ब्रह्म त्व विद्धि नेद यदिदम्' इत्यादिश्रुते । न हि स्वाराज्येऽभिषिक्तो ब्रह्मत्व गमित कचन नमितु-मिच्छति। अतो ब्रह्मास्मीति सबुद्धौ न कर्म कारयितु शक्यते। न ह्यात्मानमवाप्तार्थ ब्रह्म मन्यमान प्रवृत्ति प्रया जनवतीं पश्यति। न च निष्प्रयोजना प्रवृत्ति । अतो विरुध्यत एव कर्मणा ज्ञानम्। अत कर्मविषयेऽनुक्ति । विज्ञानविशेषविषयैव जिज्ञासा। कर्मानारम्भ इति चेत्, न, निष्कामस्य सस्कारार्थत्वात्। यदि ह्यात्मविज्ञानेन आत्मा-विद्याविषयत्वात्परितित्याजयिषित कर्म, तत 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शन वरम्' इत्यनारम्भ एव कर्मण श्रेयान अल्पफलत्वात् आयासबहुलत्वात् तत्त्वज्ञानादेव च श्रेय प्राप्ते इति चत, सत्यम् एतदविद्याविषय कर्म अल्पफल त्वादिदोषवद्बन्धरूप च सकामस्य, 'कामान्य कामयते'

'इति नु कामयमान' इत्यादिश्रुतिभ्य । न निष्कामस्य । तस्य तु सस्कारार्थान्येव कर्माणि भवन्ति तन्निर्वर्तक प्राणविज्ञानसहितानि । 'देवयाजी श्रेयानात्मयाजी वा' इत्युपक्रम्य 'आत्मयाजी तु करोतीद मेऽनेनाङ्ग सस्क्रियते' इति सस्कारार्थमेव कर्माणीति वाजसनेयके, 'महायज्ञैश्च यज्ञैश्च ब्राह्मीय क्रियते तनु । यज्ञो दान तपश्चैव पावनानि मनीषिणाम्' इत्यादिस्मृतेश्च । प्राणादिविज्ञान च केवल कर्मसमुच्चित वा सकामस्य प्राणात्मप्राप्त्यर्थमेव भवति । निष्कामस्य त्वात्मज्ञानप्रतिबन्धकनिमृष्ट्यै भवत्यादर्शनिर्माजेनवत् । उत्पन्नात्मविद्यस्य त्वनारम्भ, निरथकत्वात् । 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतय पारदर्शिन' इति, क्रियापथश्चैव पुरस्तात्सन्यासश्च तयो सन्यास एवात्यरेचयत् इति, 'त्यागेनैके' 'नान्य पन्था विद्यते' इत्यादिश्रुतिभ्यश्च । न्यायाच्च । उपायभूतानि हि कर्माणि सस्कारद्वारेण ज्ञानस्य । ज्ञानेन त्वमृतत्वप्राप्ति, 'अमृतत्व हि विन्दते' 'विद्यया विन्दतेऽमृतम्' इत्यादिश्रुति स्मृतिभ्यश्च । न हि नद्या पारगो नाव न मुञ्चति यथेष्टदेश गमन प्रति स्वातन्त्र्ये सति । न हि स्वभावसिद्ध वस्तु सिषाधयिषति साधनै । स्वभावसिद्धश्चात्मा । तथा नापिपायि-

षित , आत्मत्वे सति नित्याप्तत्वात् । नापि विचिकारयिषित , आत्मत्वे सति नित्यत्वादविकारित्वादविषयत्वादमूर्तत्वाच्च , श्रुतेश्च 'न वर्धते कर्मणा' इत्यादि , स्मृतेश्च 'अविकार्योऽयमुच्यते' इति । न च सचिस्कीर्षित , 'शुद्धमपापविद्धम्' इत्यादिश्रुतिभ्य । अनन्यत्वाच्च । अन्येनान्यत्सस्क्रियते । न चात्मनोऽन्यभूता क्रियास्ति । न च स्वेनैवात्मना स्वमात्मान सचिस्कीर्षेत् । न च वस्त्वन्तराधान नित्यप्राप्तिर्वा वस्त्वन्तरस्य नित्या । नित्यत्व चेष्ट मोक्षस्य । अत उत्पन्नविद्यस्य कर्मारम्भोऽनुपपन्न । अतो व्यावृत्तबाह्यबुद्धेरात्मविज्ञानाय 'केनेषितम्' इत्याद्यारम्भ ॥

**केनेषित पतति प्रेषित मनः**
**केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषिता वाचमिमा वदन्ति**
**चक्षुःश्रोत्रं क उ देवो युनक्ति ॥ १ ॥**

प्रवृत्तिलिङ्गाद्विशेषार्थे प्रश्न उपपन्न । रथादीना हि चेतनावदधिष्ठिताना प्रवृत्तिर्दृष्टा, न अनधिष्ठितानाम् । मनआदीना च अचेतनाना प्रवृत्तिर्दृश्यते , तद्धि लिङ्ग चेतनावतोऽधिष्ठातुरस्तित्वे । करणानि हि मनआदीनि नियमेन

प्रवर्तन्ते, तस्मासति चेतनावत्यधिष्ठातर्युपपद्यते । तद्विशेषस्य चानधिगमाच्चेतनावत्यधिष्ठातृसामान्ये चाधिगते विशेषार्थे प्रश्न उपपद्यते । केनेषित केनेष्ट कस्येच्छामात्रेण मन पतति गच्छति, स्वविषये नियमेन व्याप्रियत इत्यर्थ । मनुतेऽनेनेति विज्ञाननिमित्तमन्त करण मन । प्रेषितमिवेत्युपमार्थ । न त्विषितप्रेषितशब्दयोरर्थाविह सभवत । न हि शिष्यानिव मनआदीनि विषयेभ्य प्रेषयत्यात्मा । विविक्तनित्यचि त्स्वरूपतया तु निमित्तमात्र प्रवृत्तौ नित्यचिकित्साधिष्ठातृवत् । प्राण इति नासिकाभव प्रकरणात् । प्रथमत्व च क्रियाया प्राणनिमित्तत्वात् । स्वतो विषयावभासमात्र करणाना प्रवृत्ति । चलिक्रिया तु, प्राणस्यैव मनआदिषु । तस्मात्प्राथम्य प्राणस्य । प्रैति गच्छति । युक्त प्रयुक्त इत्येतत् । वाचो वचन किंनि मित्त प्राणिनाम् । चक्षु श्रोत्रयोश्च को देव प्रयोक्ता । करणानामधिष्ठाता चेतनावान्य , स किंविशेषण इत्यर्थ ॥

**श्रोत्रस्य श्रोत्र मनसो मनो य-**
**द्वाचो ह वाच॑ स उ प्राणस्य प्राणः ।**
**चक्षुषश्चक्षुरतिमुच्य धीरा**
**प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**

'श्रोत्रस्य श्रोत्रम्' इत्यादिप्रतिवचन निर्विशेषस्य निमि

त्त्वार्थम् । विक्रियादिविशेषरहितस्यात्मनो मनआदिप्रवृत्तौ निमित्तत्वमित्येतत् 'श्रोत्रस्य श्रोत्रम्' इत्यादिप्रतिवचनस्यार्थं, अनुगमात् । अनुगतानि ह्यस्मिन्नर्थेऽक्षराणि । कथम्? शृणोत्यनेनेति श्रोत्रम् । तस्य शब्दावभासकत्वं श्रोत्रत्वम् । शब्दोपलब्धृरूपतयावभासकत्वं न स्वतः श्रोत्रस्य, अचिद्रूपत्वात्, आत्मनश्च चिद्रूपत्वात् । यच्छ्रोत्रस्योपलब्धृत्वेनावभासकत्वं तदात्मनिमित्तत्वाच्छ्रोत्रस्य श्रोत्रमित्युच्यते । यथा क्षत्रस्य क्षत्रम्, यथा वा उदकस्यौष्ण्यमग्निनिमित्तमिति दग्धुरप्युदकस्य दग्धाग्निरुच्यते उदकमपि ह्यग्निसंयोगादग्निरुच्यते, तद्वदनित्यं यत्संयोगादुपलब्धृत्वं तत्करणं श्रोत्रादि । उदकस्येव दग्धृत्वमनित्यं हि तत्र तत् । यत्र तु नित्यमुपलब्धृत्वमग्नाविवौष्ण्यं स नित्योपलब्धिस्वरूपत्वात् दग्धेवोपलब्धोच्यते । श्रोत्रादिषु श्रोतृत्वाद्युपलब्धिरनित्या, नित्या चात्मनि । अतः श्रोत्रस्य श्रोत्रमित्याद्यक्षराणामर्थानुगमादुपपद्यते निर्विशेषस्योपलब्धिस्वरूपस्यात्मनो मनआदिप्रवृत्तिनिमित्तत्वमिति । मनआदिष्वेव यथोक्तम् । वाचो ह वाचं प्राणस्य प्राण इति विभक्तिद्वयम् । सर्वत्रैव हि द्रष्टव्यम् । कथम्? पृष्टत्वात् स्वरूपनिर्देशः । प्रथमयैव च निर्देशः । तस्य च ज्ञेयत्वात्कर्मत्वमिति द्वितीया । अतो वाचो ह वाचं

प्राणस्य प्राण इत्यस्मात्सर्वत्रैव विभक्तिद्वयम् । यदेतच्छ्रोत्रा-द्युपलब्धिनिमित्त श्रोत्रस्य श्रोत्रमित्यादिलक्षण तत् नित्यो पलब्धिस्वरूप निर्विशेषमात्मतत्त्व बुद्ध्वा अतिमुच्य अनवबो धनिमित्ताध्यारोपिताद्बुद्ध्यादिलक्षणात्ससारान्मोक्षण कृत्वा धीरा धीमन्त प्रेत्य अस्मात् लोकात् शरीरात् प्रेत्य वियुज्य अन्यस्मिन्नप्रतिसधीयमाने निर्निमित्तत्वादमृता भवन्ति । सति ह्यज्ञाने कर्माणि शरीरान्तर प्रतिसदधते । आत्माव बोधे तु सर्वकर्मारम्भनिमित्ताज्ञानविपरीतविद्याग्निविप्लुष्टत्वा-त्कर्मणामिति अनारम्भेऽमृता एव भवन्ति । शरीरादिसताना विच्छेदप्रतिसधानाद्यपेक्षया अध्यारोपितमृत्युवियोगात्पूर्वम प्यमृता सन्तो नित्यात्मस्वरूपत्वादमृता भवन्तीत्युपचर्यते ॥

**न तत्र चक्षुर्गच्छति**
**न वाग्गच्छति नो मन' ।**
**न विद्मो न विजानीमो**
**यथैतदनुशिष्यात् ॥ ३ ॥**

न तत्र चक्षुर्गच्छतीत्युक्तेऽपि पर्यनुयोगे हेतुरप्रतिपत्ते । 'श्रोत्रस्य श्रोत्रम्' इत्येवमादिनोक्तेऽप्यात्मतत्त्वे अप्रतिपन्न-त्वात्सूक्ष्मत्वहेतोर्वस्तुन पुन पुन पर्यनुयुयुक्षाकारणमाह—

न तत्र चक्षुर्गच्छतीति । तत्र श्रोत्राद्यात्मभूते चक्षुरादीनि, वाक्चक्षुषो सर्वेन्द्रियोपलक्षणार्थत्वात्, न विज्ञानमुत्पादयन्ति । सुखादिवत्तर्हि गृह्येतान्त करणेन अत आह—नो मन, न सुखादिवन्मनसो विषयस्तत्, इन्द्रियाविषयत्वात् । न विद्मो न विजानीम अन्त करणेन, यथा एतत् ब्रह्म मनआदिकरणजातम् अनुशिष्यात् अनुशासन कुर्यात् प्रवृत्तिनिमित्त यथा भवेत्, तथा अविषयत्वान्न विद्मा न विजानीम । अथवा श्रोत्रादीना श्रोत्रादिलक्षण ब्रह्म विशेषेण दर्शयेत्युक्त आचार्य आह—न शक्यते दर्शयितुम् । कस्मात्? न तत्र चक्षुर्गच्छतीत्यादि पूर्ववत्सर्वम् । अत्र तु विशेषो यथैतदनुशिष्यादिति । यथैतत् अनुशिष्यात् प्रतिपादयेत् अन्योऽपि शिष्यानितोऽन्यन विधिनेत्यभिप्राय ॥

**अन्यदेव तद्विदिता-**
**दथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषा**
**ये नस्तद्व्याचचक्षिरे ॥ ४ ॥**

सर्वथापि ब्रह्म बोधयेत्युक्त आचार्य आह 'अन्यदेव तद्विदितादथो अविदितादधि' इत्यागमम् । विदिताविदिताभ्यामन्यत् यो हि ज्ञाता स एव स, सर्वात्मकत्वात् ।

अत सर्वात्मनो ज्ञातुर्ज्ञात्रन्तराभावाद्विदितादन्यत्वम् । 'स वेत्ति वेद्य न च तस्यास्ति वेत्ता' इति च मन्त्रवर्णात् । 'वि ज्ञातारमरे केन विजानीयात्' इति च वाजसनेयके । अपि च व्यक्तमेव विदित तस्मादन्यदित्यभिप्राय । यद्विदित व्यक्त तदन्यविषयत्वादल्प सविरोध ततोऽनित्यम् अत एवानेक त्वादशुद्धम् अत एव तद्विलक्षण ब्रह्मेति सिद्धम् । अस्तु तह्य विदितम् । न, विज्ञानानपेक्षत्वात् । यद्धयविदित तद्विज्ञानापे क्षम् । अविदितविज्ञानाय हि लोकप्रवृत्ति । इद तु विज्ञा-नानपेक्षम् । कस्मात् ? विज्ञानस्वरूपत्वात् । न हि यस्य यत्स्व-रूप तत्तेनान्यतोऽपेक्ष्यते । न च स्वत एव वापेक्षा, अनपेक्षमेव सिद्धत्वात् । न हि प्रदीप स्वरूपाभिव्यक्तौ प्रकाशान्तरमन्यता-ऽपेक्षते, स्वतो वा । यद्धयनपेक्ष तत्स्वत एव सिद्धम् , प्रकाशात्म-कत्वात् । प्रदीपस्यान्योऽपेक्षितोऽप्यनर्थक स्यात्, प्रकाशे विशेषाभावात् । न हि प्रदीपस्य स्वरूपाभिव्यक्तौ प्रदीपप्रका-शोऽर्थवान् । न चैवमात्मनोऽन्यत्र विज्ञानमस्ति, येन स्वरूप-विज्ञानेऽप्यपेक्ष्येत । विरोध इति चेत् , न , अन्यत्वात् । स्व रूपविज्ञाने विज्ञानस्वरूपत्वाद्विज्ञानान्तर नापेक्षत इत्येतदसत् । दृश्यते हि विपरीतज्ञानमात्मनि सम्यग्ज्ञान च— न जाना-म्यात्मानमिति च, श्रुतेश्च । 'तत्त्वमसि' 'आत्मानमेवावेत्'

'एत वै तमात्मान विदित्वा' इति च सर्वत्र श्रुतिष्वात्मविज्ञाने विज्ञानान्तरापेक्षत्व दृश्यते। तस्मात्प्रत्यक्षश्रुतिविरोध इति चेत्, न। कस्मात्? अन्यो हि स आत्मा बुद्ध्यादिकार्यकरण सघातात्माभिमानसतानाविच्छेदलक्षणोऽविवेकात्मको बुद्ध्याद्यवभासप्रधानश्चक्षुरादिकरणो नित्यचित्स्वरूपात्मान्त सारो यत्रानित्य विज्ञानमवभासते। बौद्धप्रत्ययानामाविर्भावतिरोभावधर्मकत्वात्तद्धर्मतयैव विलक्षणमपि चावभासते। अन्त -करणस्य मनसोऽपि मनोऽन्तर्गतत्वात् सर्वान्तरश्रुते। अन्तर्गतेन नित्यविज्ञानस्वरूपेण आकाशवदप्रचलितात्मना अन्तर्गर्भभूतेन स बाह्यो बुद्ध्यात्मा तद्विलक्षण, अनग्निरिवाग्नि अर्चिर्भिरिवाग्ने प्रत्ययैराविर्भावतिरोभावधर्मकैर्विज्ञानाभासरूपैरनित्यै अनित्यविज्ञान आत्मा सुखी दु खी इत्यभ्युपगतो लौकिकै, अतोऽन्यो नित्यविज्ञानस्वरूपादात्मन। तत्र हि विज्ञानापेक्षा विपरीतज्ञानत्व चोपपद्यते, न पुनर्नित्यविज्ञाने। 'तत्त्वमसि' इति बोधोपदेशो नोपपन्नत इति चेत्, 'आत्मानमेवावेत्' इत्येवमादीनि च, नित्यबोधात्मकत्वात्। न ह्यादित्योऽन्येन प्रकाश्यते, अतस्तदर्थबोधोपदेशोऽनर्थक एवेति चेत्, न, लोकाध्यारोपापोहार्थत्वात्। सर्वात्मनि हि नित्यविज्ञाने बुद्ध्याद्यनित्यधर्मा लोकैरध्यारोपिता आत्मा

विवेकत , तदपोहार्थो बोधोपदेशो बोधा मन । तत्र च बोधाबोधौ समञ्जसौ । अन्यनिमित्तत्वादुदक इवौष्ण्यमग्नि-निमित्तम् । रात्र्यहनी इवादित्यनिमित्ते लोके नित्यावौष्ण्यप्र काशावग्न्यादित्ययोरन्यत्र भावाभावयो सनिमित्तत्वादनि त्याविवोपचर्येते । धक्ष्यत्यग्नि प्रकाशयिष्यति सविता इति तद्वत् । एव च सुखदु खबन्धमोक्षाद्यध्यारोपो लोकस्य तदपे क्ष्य 'तत्त्वमसि' 'आत्मानमेवावेत्' इत्यात्मावबोधोपदेशिन्य श्रुतय केवलमध्यारोपापोहार्था । यथा सवितासौ प्रकाशय-त्यात्मानम् इति तद्वत् बोधकर्तृत्व च नित्यबोधात्मनि । तस्मादन्यदविदितात् । अधिशब्दश्चान्यार्थे । यद्वा यद्धि यस्याधि तत्ततोऽन्यत्सामर्थ्यात्, यथाधि भृत्यादीना राजा । अव्यक्तमेवाविदित ततोऽन्यदित्यर्थ । विदितमविदित च व्यक्ताव्यक्ते कार्यकारणत्वेन विकल्पिते, ताभ्यामन्यद्ब्रह्म वि-ज्ञानस्वरूप सर्वविशेषप्रत्यस्तमितमित्यय समुदायार्थ । अत एवात्मत्वान्न हेय उपादेयो वा । अन्यद्ध्यन्येन हेयमुपादेय वा, न तेनैव तद्यस्य कस्यचिद्धेयमुपादेय वा भवति । आ-त्मा च ब्रह्म सर्वान्तरत्वादविषय । अतोऽन्यस्यापि न हेयमुपादेय वा । अन्याभावाच्च । इति शुश्रुम पूर्वेषामित्या गमोपदेश । व्याचचक्षिरे इत्यस्वातन्त्र्य तर्कप्रतिषेधार्थम् । ये

न तत् ब्रह्म उक्तवन्त ते तमेवागम ब्रह्मप्रतिपादक व्या ख्यातवन्त, न पुन स्वबुद्धिप्रभवेण तर्केणोक्तवन्त इति तस्यैव द्रढिम्ने आगमपारम्पर्याविच्छेद दर्शयति विद्यास्तु- तये। तर्कस्त्वनवस्थितो भ्रान्तोऽपि भवतीति ॥

**यद्वाचानभ्युदित**
**येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्व विद्धि**
**नेद यदिदमुपासते ॥ ५ ॥**

यद्वाचेति मन्त्रानुवादो दृढप्रतीत्यै । 'अन्यदेव तद्विदि तात्' इति योऽयमागमार्थो ब्राह्मणोक्त अस्यैव द्रढिम्ने इमे मन्त्रा यद्वाचा इत्यादय पठ्यन्ते । यत् ब्रह्म वाचा शब्देन अनभ्युदितम् अनभ्युक्तम्, अप्रकाशितमित्येतत् । येन वाग- भ्युद्यत इति वाकप्रकाशहेतुत्वोक्ति । येन प्रकाश्यत इति वाचो ऽभिधानस्य अभिधेयप्रकाशकत्वस्य हेतुत्वमुच्यते ब्रह्मण । उक्त च 'केनेषिता वाचमिमा वदन्ति' 'यद्वाचो ह वाचम्' इति । तदेव ब्रह्म त्व विद्धि इत्यविषयत्वेन ब्रह्मण आत्मन्य वस्थापनार्थं आम्नाय । यद्वाचानभ्युदित वाकप्रकाशनिमित्त चेति ब्रह्मणोऽविषयत्वेन वस्त्वन्तरजिघृक्षा निवर्त्य स्वात्मन्ये

वावस्थापयत्याम्नाय तदेव ब्रह्म त्वं विद्धि इति, यत्नत उपरमयति नेदमित्युपास्यप्रतिषेधाच्च ॥

यन्मनसा न मनुते
येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि
नेदं यदिदमुपासते ॥ ६ ॥

यच्चक्षुषा न पश्यति
येन चक्षूꣳषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि
नेदं यदिदमुपासते ॥ ७ ॥

यच्छ्रोत्रेण न शृणोति
येन श्रोत्रमिदꣳ श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि
नेदं यदिदमुपासते ॥ ८ ॥

यत्प्राणेन न प्राणिति
येन प्राणः प्रणीयते ।

तदेव ब्रह्म त्व विद्धि
नेद यदिदमुपासते ॥ ९ ॥

इति प्रथम खण्ड ॥

यन्मनसत्यादि समानम् । मनो मतमिति । येन ब्रह्मणा मनोऽपि विषयीकृत नित्यविज्ञानस्वरूपेणेत्येतत् । सर्वकरणा नामविषयस्तानि च सव्यापाराणि सविषयाणि नित्यविज्ञान-स्वरूपावभासतया येनावभास्यन्त इति श्लोकार्थ । 'क्षेत्र क्षेत्री तथा कृत्स्न प्रकाशयति भारत' इति स्मृते । 'तस्य भासा' इति चाथर्वणे । येन प्राण इति क्रियाशक्तिरप्यात्म-विज्ञाननिमित्तेत्येतत् ॥

इति प्रथम खण्ड ॥

## द्वितीय खण्ड ॥

---

**यदि मन्यसे सु वेदेति दभ्रमेवापि नून त्व वेत्थ ब्रह्मणो रूप यदस्य त्व यदस्य देवेष्वथ नु मीमास्यमेव ते मन्ये विदितम् ॥ १ ॥**

यदि मन्यसे सु वेदेति शिष्यबुद्धिविचालना गृहीतस्थिरतायै । विदिताविदिताभ्या निवर्त्य बुद्धि शिष्यस्य स्वात्मन्यवस्थाप्य 'तदेव ब्रह्म त्व विद्धि' इति स्वाराज्येऽभिषिच्य उपास्यप्रतिषेधेनाथास्य बुद्धि विचालयति— यदि मन्यसे सुष्ठु वेद अह ब्रह्मतत्त्वमिति, ततोऽल्पमेव ब्रह्मणो रूप वेत्थ त्वमिति नून निश्चित मन्यते आचार्य । सा पुनर्विचालना किमर्थेति, उच्यते—पूर्वगृहीते वस्तुनि बुद्धे स्थिरतायै । दवेष्वपि सु वेदाहमिति मन्यते य सोऽप्यस्य ब्रह्मणो रूप दभ्रमेव वेत्ति नूनम् । कस्मात्? अविषयत्वात्कस्यचिद्ब्रह्मण । अथ वा अल्पमेवास्याध्यात्मिक मनुष्येषु देवेषु चाधिदैविकमस्य ब्रह्मणो यद्रूप तदिति सबन्ध । अथ नु इति हेतुर्मीमा

साया । यस्माद्दभ्रमेव सुविदित ब्रह्मणो रूपम् 'अन्यदेव तद्विदितात्' इत्युक्तत्वात्, सु वेदेति च मन्यसे, अत अल्पमेव वेत्थ त्व ब्रह्मणो रूप यस्मात् अथ नु तस्मात् मीमास्यमेव अद्यापि ते तव ब्रह्म विचार्यमेव यावद्विदिताविदितप्रतिषेधागमार्थानुभव इत्यर्थ । मन्ये विदितमिति शिष्यस्य मीमासानन्तरोक्ति प्रत्ययत्रयसगते । सम्यग्वस्तुनिश्चयाय विचालित शिष्य आचार्येण मीमास्यमेव ते इति चोक्त एकान्ते समाहितो भूत्वा विचार्य यथोक्त सुपरिनिश्चित सन्नाह आगमाचार्यात्मानुभवप्रत्ययत्रयस्यैकविषयत्वेन सग त्यर्थम् । एव हि 'सुपरिनिष्ठिता विद्या सफला स्यान्नानिश्चिता' इति न्याय प्रदर्शितो भवति, मन्ये विदितमिति परिनिष्ठितनिश्चितविज्ञानप्रतिज्ञाहेतूक्ते ॥

**नाह मन्ये सु वेदेति**
**नो न वेदेति वेद च ।**
**यो नस्तद्वेद तद्वेद**
**नो न वेदेति वेद च ॥ २ ॥**

परिनिष्ठित सफल विज्ञान प्रतिजानीते आचार्यात्मनिश्चययोस्तुल्यतायै यस्माद्धेतुमाह— नाह मन्ये सु वेदेति । अहे-

त्यवधारणार्थो निपात । नैव मन्ये इत्येतत् । यावदपरिनिष्ठित विज्ञान तावत् सु वेद सुष्ठु वेद अह ब्रह्मेति विपरीतो मम निश्चय आसीत् । सोऽपजगाम भवद्भिर्विचालितस्य यथोक्तार्थमीमासाफलभूतात्स्वात्मब्रह्मत्वनिश्चयरूपात्सम्यक्प्रत्ययात् । विरुद्धत्वादतो नाह मन्ये सु वेदेति । यस्माच्चैतत् नैव न वेद नो न वेदेति, मन्ये इत्यनुवर्तते, अविदितब्रह्मप्रतिषेधात् । कथ तर्हि मन्यसे इत्युक्त आह—वेद च । च-शब्दाद्वेद च न वेद च इत्यभिप्राय, विदिताविदिताभ्यामन्यत्वाद्ब्रह्मण । तस्मान्मया विदित ब्रह्मेति मन्ये इति वाक्यार्थ । अथवा वेद चेति नित्यविज्ञानब्रह्मस्वरूपतया नो न वेद वेदैव चाह स्वरूपविक्रियाभावात् । विशेषविज्ञान च पराध्यस्त न स्वत इति परमार्थतो न च वेदेति । यो नस्तद्वेद तद्वेदेति पक्षान्तरनिरासार्थमाम्नाय उक्तार्थानुवादात् । य न अस्माक मध्ये तद्वेद स एव तद्ब्रह्म वेद नान्य, उपास्यब्रह्मविस्त्वात् । अतोऽन्यस्य यथाह वेदेति पक्षान्तरे ब्रह्मविस्त्व निरस्यते । कुतोऽयमर्थोऽवसीयत इति, उच्यते— उक्तानुवादात् । उक्त ह्यनुवदति नो न वेदेति वेद चेति ॥

**यस्यामत तस्य मतं**

**मत यस्य न वेद स ।**

अविज्ञातं विजानता
विज्ञातमविजानताम् ॥ ३ ॥

यस्यामतमिति श्रौतमाख्यायिकार्थोपसंहारार्थम्। शिष्याचार्योक्तिप्रत्युक्तिलक्षणया अनुभवयुक्तिप्रधानया आख्यायिकया योऽर्थः सिद्धः स श्रौतेन वचनेनागमप्रधानेन निगमनस्थानीयेन संक्षेपत उच्यते। यदुक्तं विदिताविदिताभ्यामन्यद्वागादीनामगोचरत्वात् मीमांसितं चानुभवोपपत्तिभ्यां ब्रह्म, तत्तथैव ज्ञातव्यम्। कस्मात्? यस्यामतं यस्य विविदिषाप्रयुक्तप्रवृत्तस्य साधकस्य अमतम् अविज्ञातम् अविदितं ब्रह्म इत्यात्मतत्त्वनिश्चयफलावसानावबोधतया विविदिषा निवृत्तेत्यभिप्रायः, तस्य मतं ज्ञातम्, तेन विदितं ब्रह्म येनाविषयत्वेन आत्मत्वेन प्रतिबुद्धमित्यर्थः। स सम्यग्दर्शी यस्य विज्ञानानन्तरमेव ब्रह्मात्मभावस्यावसितत्वात् सर्वतः कार्याभावो विपर्ययेण मिथ्याज्ञानो भवति। कथम्? मतं विदितं ज्ञातं मया ब्रह्म इति यस्य विज्ञानम्, स मिथ्यादर्शी विपरीतविज्ञानो विदितादन्यत्वाद्ब्रह्मणो न वेद स न विजानाति। ततश्च सिद्धमवैदिकस्य विज्ञानस्य मिथ्यात्वम्, अब्रह्मविषयतया निन्दितत्वात्। तथा कपिलकणभुगादिसमयस्यापि विदितब्रह्मविषयत्वात् अनवस्थिततर्कजन्यत्वाविदितविषयतया

विविदिषानिवृत्तेश्च मिथ्यात्वमिति। स्मृतश्च—'या वेदबाह्या स्मृतयो याश्च काश्च कुदृष्टय । सर्वास्ता निष्फला प्रोक्तास्तमोनिष्ठा हि ता स्मृता ' इति। 'अविज्ञात विजानता विज्ञा तमविजानताम्' इति पूर्वहेतूक्ति अनुवादस्यानर्थक्यात्— अनुवादमात्रेऽनर्थक वचनमिति विपर्ययमिथ्याज्ञानयोर्नष्टत्वात् पूर्वोक्तयो यस्यामतमित्यादिज्ञानाज्ञानयोर्हेत्वर्थत्वेनेदमुच्यते— अविज्ञातम् अविदितमात्मत्वेनाविषयतया ब्रह्म विजानता यस्मात्, तस्मात्तदेव ज्ञान यत्तेषा विज्ञात विदित व्यक्तमेव बुद्ध्यादिविषय ब्रह्म अविजानता विदिताविदितव्यावृत्तमात्मभूत नित्यविज्ञानस्वरूपमात्मस्थमविक्रियममृतमजरमभयमनन्यत्वादविषयमित्येवमविजानता बुद्ध्यादिविषयात्मतयैव नित्य विज्ञात ब्रह्म। तस्माद्विदिताविदितव्यक्ताव्यक्तधर्माध्यारोपेण कार्यकारणभावेन सविकल्पमयथार्थविषयत्वात्। शुक्तिकादौ रजताद्यध्यारोपणज्ञानवन्मिथ्याज्ञान तेषाम् ॥

**प्रतिबोधविदितं मत**<br>**ममृतत्व हि विन्दते ।**<br>**आत्मना विन्दते वीर्य**<br>**विद्यया विन्दतेऽमृतम् ॥ ४ ॥**

प्रतिबोधविदितमिति वीप्साप्रत्ययानामात्मावबोधद्वारत्वात् बोधं बोधं प्रति प्रतीति वीप्सा सर्वप्रत्ययव्याप्त्यर्था। बौद्धा हि सर्वे प्रत्ययास्तप्तलोहवन्नित्यविज्ञानस्वरूपात्मव्याप्तत्वाद्विज्ञानस्वरूपावभासा तदन्यावभासश्चात्मा तद्विलक्षणोऽग्निवदुपलभ्यत इति ते द्वारीभवन्त्यात्मोपलब्धौ। तस्मात्प्रतिबोधावभासप्रत्यगात्मतया यद्विदितं तद्ब्रह्म, तदेव मतं तदेव सम्यग्ज्ञानं यत्प्रत्यगात्मविज्ञानम्, न विषयविज्ञानम्। आत्मत्वेन 'प्रत्यगात्मानमैक्षत्' इति च काठके। अमृतत्वं हि विन्दते इति हेतुवचनं विपर्यये मृत्युप्राप्तेः। विषयात्मविज्ञाने हि मृत्युः प्रारभते इत्यात्मविज्ञानममृतत्वनिमित्तमिति युक्तं हेतुवचनममृतत्वं हि विन्दते इति। आत्मज्ञानेन किममृतत्वमुत्पाद्यते। न। कथं तर्हि? आत्मना विन्दते स्वेनैव नित्यात्मस्वभावेनामृतत्वं विन्दते, नालम्बनपूर्वकं विन्दत इति आत्मज्ञानापेक्षम्। यदि हि विद्योत्पाद्यममृतत्वं स्यात्, अनित्यं भवेत्कर्मकार्यवत्। अतो न विद्योत्पाद्यम्। यदि चात्मनैवामृतत्वं विन्दते, किं पुनर्विद्यया क्रियत इत्युच्यते। अनात्मविज्ञानं निवर्तयन्ती सा तन्निवृत्त्या स्वाभाविकस्यामृतत्वस्य निमित्तमिति कल्प्यते, यत आह— वीर्यं विद्यया विन्दते। वीर्यं सामर्थ्यम् अनात्माध्यारोपमायास्वान्तध्वान्तानभिभाव्यलक्षणं

बल विद्यया विन्दते। तच्च किंविशिष्टम्? अमृतम् अविनाशि। अविद्याज हि वीर्यं विनाशि, विद्ययाविद्याया बाध्यत्वात्। न तु विद्याया बाधकोऽस्तीति विद्याजममृत वीर्यम्। अतो विद्या अमृतत्वे निमित्तमात्र भवति। 'नायमात्मा बलहीनेन लभ्य' इति चाथर्वणे। लोकेऽपि विद्याजमेव बलम भिभवति न शरीरादिसामर्थ्यम्, यथा हस्त्यादे। अथवा प्रतिबोधविदित मतमिति सकृदेवाशेषविपरीतनिरस्तसस्कारेण स्वप्नप्रतिबोधवद्यद्विदित तदेव मत ज्ञात भवतीति। अथवा गुरूपदेश प्रतिबोध। तेन वा विदित मतमिति। उभयत्र प्रतिबोधशब्दप्रयोगोऽस्ति— 'सुप्तप्रतिबुद्ध' 'गुरुणा प्रतिबोधित' इति। पूर्वं तु यथार्थम्॥

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति॥ ५॥

इति द्वितीय खण्ड॥

इह चेदवेदीदिति अवश्यकर्तव्यतोक्ति विपर्यये विनाशश्रुते। इह मनुष्यजन्मनि सति अवश्यमात्मा वेदितव्य

इत्येतद्विधीयते । कथम् ? इह चेत् अवेदीत् विदितवान्, अथ सत्य परमार्थतत्त्वम् अस्ति अवाप्तम्, तस्य जन्म सफलमित्यभिप्राय । न चेदिहावेदीत् न विदितवान्, वृथैव जन्म । अपि च महती विनष्टि महान्विनाशो जन्ममरणप्रबन्धाविच्छेदप्राप्तिलक्षण स्यात्, तस्मादवश्य तद्विच्छेदाय ज्ञेय आत्मा। ज्ञानेन तु किं स्यादिति, उच्यते— भूतेषु भूतेषु चराचरेषु सर्वेष्वित्यर्थ । विचित्य विचार्य पृथङ्निष्कृष्यैकमात्मतत्त्व ससारधर्मैरस्पृष्टमात्मभावेनोपलभ्येत्यर्थ, अनेकार्थत्वाद्धातूनाम् । न पुनश्चित्वेति सभवति, विरोधात् । धीरा धीमन्त विवेकिन विनिवृत्तबाह्यविषयाभिलाषा, प्रेत्य मृत्वा अस्मात् लोकात् शरीराद्यनात्मलक्षणात् व्यावृत्तममत्वाहकारा सन्त इत्यर्थ, अमृता अमरणधर्माणो नित्यविज्ञानामृतत्वस्वभावा एव भवन्ति ॥

इति द्वितीय खण्ड ॥

## तृतीय खण्ड ॥

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवाय महिमेति ॥ १ ॥

तद्धैषा विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिद यक्षमिति ॥ २ ॥

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ३ ॥

तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मी-ति ॥ ४ ॥

तस्मिꣳस्त्वयि कि वीर्यमित्यपीदꣳसर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥

तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्ष-मिति ॥ ६ ॥

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ७ ॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायु-र्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अह-मस्मीति ॥ ८ ॥

तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳसर्व-माददीय यदिदं पृथिव्यामिति ॥ ९ ॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुप-प्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदे-तद्यक्षमिति ॥ १० ॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि कि-

**मेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्ति-रोदधे ॥ ११ ॥**

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहु शोभमानामुमा हैमवतीं ताँ होवाच किमेतद्यक्षमिति ॥ १२ ॥**

इति तृतीय खण्ड. ॥

ब्रह्म ह देवेभ्य इति ब्रह्मणो दुर्विज्ञेयतोक्ति यत्नाधिक्यार्था । समाप्ता ब्रह्मविद्या यदधीन पुरुषार्थ । अत ऊध्वमर्थवादेन ब्रह्मणो दुर्विज्ञेयतोच्यते । तद्विज्ञाने कथ नु नाम यत्नमधिक कुर्यादिति । शमाद्यर्थो वाम्नाय अभिमानशातनात् । शमादि वा ब्रह्मविद्यासाधन विधित्सित तदर्थोऽयमर्थवादाम्नाय । न हि शमादिसाधनरहितस्य अभिमानरागद्वेषादियुक्तस्य ब्रह्मविज्ञाने सामर्थ्यमस्ति, व्यावृत्तबाह्यमिथ्याप्रत्ययग्राह्यत्वाद्ब्रह्मण । यस्माच्चाग्न्यादीना जयाभिमान शातयति, ततश्च ब्रह्मविज्ञान दर्शयत्यभिमानोपशमे, तस्माच्छमादिसाधनविधानार्थोऽयमर्थवाद इत्यवसीयते । सगुणोपासनार्थो वा, अपोदितत्वात् । 'नेद यदिदमुपासते' इत्युपास्यत्व ब्रह्मणो-

ऽपोदितम् । अपोदितत्वादनुपास्यत्वे प्राप्ते तस्यैव ब्रह्मण सगुणत्वेनाधिदैवतमध्यात्म चोपासन विधातव्यमित्येवमर्थो वेति । अधिदैवतम् 'तद्वनमित्युपासितव्यम्' इति हि वक्ष्यति । ब्रह्मेति पर, लिङ्गात् । न ह्यन्यत्र परादीश्वरान्नित्यसर्वज्ञात्प रिभूयाग्न्यादींस्तृण वशीकर्तुं सामर्थ्यमस्ति । 'तन्न शशाक दग्धुम्' इत्यादिलिङ्गाद्ब्रह्मशब्दवाच्य ईश्वर इत्यवसीयते । न ह्यन्यथा अग्निस्तृण दग्धु नोत्सहते वायुर्वा आदातुम् । ईश्वरे च्छया तु तृणमपि वज्रीभवतीत्युपपद्यते । तत्सिद्धिर्जगतो नियतप्रवृत्ते । श्रुतिस्मृतिप्रसिद्धिभिर्नित्यसर्वविज्ञाने ईश्वरे सर्वा त्मनि मर्वशक्तौ सिद्धेऽपि शास्त्रार्थनिश्चयार्थमुच्यते । तस्ये श्वरस्य सद्भावसिद्धि कुतो भवतीति, उच्यते । यदिद जगद्देव गन्धर्वयक्षरक्ष पितृपिशाचादिलक्षण द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्रविचित्र विविधप्राण्युपभोगयोग्यस्थानसाधनसबन्धि, तदत्यन्तकुशलशिल्पिभिरपि दुर्निर्माण देशकालनिमित्तानुरूपनियतप्रवृत्तिनिवृत्तिक्रमम् एतद्भोक्तृकर्मविभागज्ञप्रयत्नपूर्वक भवितुमर्हति, कार्यत्वे सति यथोक्तलक्षणत्वात्, गृहप्रासादरथशयनासनादिवत्, विपक्षे आत्मादिवत् । कर्मण एवति चेत्, न, परतन्त्रस्य निमित्तमात्रत्वात् । यदिदमुपभोगवैचित्र्य प्राणिना तत्साधनवैचित्र्य च देशकालनिमित्तानुरूप-

नियतप्रवृत्तिनिवृत्तिक्रम च, तन्न नित्यसर्वज्ञकर्तृकम्, किं तर्हि, कर्मण एव, तस्याचिन्त्यप्रभावत्वात् सर्वैश्च फलहेतुत्वाभ्युप गमाच्च। सति कर्मण फलहेतुत्वे किमीश्वराधिककल्पनयेति न नित्यस्येश्वरस्य नित्यसर्वज्ञशक्ते फलहेतुत्व चेति चेत् न, कमण एवोपभोगवैचित्र्याद्युपपद्यते। कस्मात्? कर्तृ तन्त्रत्वात्कर्मण। चितिमत्प्रयत्ननिर्वृत्त हि कर्म तत्प्रयत्नो-परमादुपरत सद्देशान्तरे कालान्तरे वा नियतनिमित्तविशे षापेक्ष कर्तु फल जनयिष्यतीति न युक्तमनपेक्ष्यान्यदात्मन प्रयोक्तृ, कर्तैव फलकाले प्रयोक्तेति चेत्, मया निर्वर्तितोऽसि त्वा प्रयोक्ष्ये फलाय यदात्मानुरूप फलमिति न देशकालनि-मित्तविशेषानभिज्ञत्वात्। यदि हि कर्ता देशादिविशेषाभिज्ञ सन्स्वातन्त्र्येण कर्म नियुञ्ज्यात्, ततोऽनिष्टफलस्याप्रयोक्ता स्यात्। न च निर्निमित्त तदनिच्छयात्मसमवेत तच्चर्मवद्विक रोति कम। न चात्मकृतमकर्तृसमवेतमयस्कान्तमणिवदा कृष्ट भवति, प्रधानकर्तृसमवेतत्वात्कर्मण। भूताश्रयमिति चेत्, न, साधनत्वात्। कर्तृक्रियाया साधनभूतानि भूतानि क्रियाकालेऽनुभूतव्यापाराणि समाप्तौ च हलादि-वत्कर्त्रा परित्यक्तानि न फल कालान्तरे कर्तुमुत्सह ते। न हि हल क्षेत्राद्व्रीहीन्गृह प्रवेशयति। भूतकर्मणोश्चाचेतनत्वा-

त्स्वत प्रवृत्त्यनुपपत्ति । वायुवदिति चेत्, न, असि द्धत्वात् । न हि वायोरचितिमत स्वत प्रवृत्ति सिद्धा, रथादिष्वदर्शनात् । शास्त्रात्कर्मण एवेति चेत्— शास्त्र हि क्रियात फलसिद्धिमाह नेश्वरादे 'स्वर्गकामो यजेत' इत्यादि । न च प्रमाणाधिगतत्वादानर्थक्य युक्तम् । न चेश्वरास्तित्वे प्रमाणान्तरमस्तीति चेत्, न, दृष्टन्यायहानानुपपत्ते । क्रिया हि द्विविधा दृष्टफला अदृष्टफला च । दृष्टफलापि द्विविधा अनन्तरफला कालान्तरफला च । अनन्तरफला गतिभुजिलक्षणा । कालान्तरफला च कृषिसेवादिलक्षणा । तत्रानन्तरफला फलापवर्गिण्येव । कालान्तरफला तु उत्पन्नप्रध्वंसिनी । आत्मसेव्याद्यधीन हि कृषिसेवादे फल यत । न चोभयन्यायव्यतिरेकेण स्वतन्त्र कर्म ततो वा फल दृष्टम् । तथा च कर्मफलप्राप्तौ न दृष्टन्यायहानमुपपद्यते । तस्माच्छान्ते यागादिकर्मणि नित्य कर्तृकर्मफलविभागज्ञ ईश्वर सेव्यादिवद्यागाद्यनुरूपफलदातोपपद्यते । स चात्मभूत सर्वस्य सर्वक्रियाफलप्रत्ययसाक्षी नित्यविज्ञानस्वभाव ससारधर्मैरसस्पृष्ट । श्रुतेश्च । 'न लिप्यते लोकदु-खेन बाह्य' 'जरा मृत्युमत्येति' 'विजरो विमृत्यु' 'सत्य काम सत्यसकल्प' 'एष सर्वेश्वर पुण्य कर्म कारयति'

'अनश्नन्नन्यो अभिचाकशीति' 'एतस्य वा अक्षरस्य प्रशासने' इत्याद्या असंसारिण एकस्यात्मनो नित्यमुक्तस्य सिद्धौ श्रुतय । स्मृतयश्च सहस्रशो विद्यन्ते । न चार्थवादा शक्यन्ते कल्पयितुम्, अनन्ययोगित्वे सति विज्ञानोत्पादकत्वात् । न चोत्पन्न विज्ञान बाध्यते । अप्रतिषेधाच्च । न चेश्वरो नास्तीति निषेधोऽस्ति । प्राप्त्यभावादिति चेत्, न, उक्तत्वात् । 'न हिंस्यात्' इतिवत्प्राप्त्यभावात्प्रतिषेधो नारभ्यत इति चेत्, न, ईश्वरसद्भावे न्यायस्योक्तत्वात् । अथ वा अप्रतिषेधादिति कर्मण फलदाने ईश्वरकालादीना न प्रतिषेधोऽस्ति । न च निमित्तान्तरनिरपेक्ष केवलेन कर्त्रैव प्रयुक्त फलद दृष्टम् । न च विनष्टोऽपि याग कालान्तरे फलदो भवति । सेव्यबुद्धिवत्सेवकेन सर्वज्ञेश्वरबुद्धौ तु सस्कृताया यागादिकर्मणा विनष्टेऽपि कर्मणि सेव्यादिवेश्वरात्फल कर्तुर्भवतीति युक्तम् । न तु पुन पदार्था वाक्यशतेनापि देशान्तरे कालान्तरे वा स्व स्व स्वभाव जहति । न हि देशकालान्तरेषु चाग्निरनुष्णो भवति । एव कर्मणोऽपि कालान्तरे फल द्विप्रकारमेवोपलभ्यते । बीजक्षेत्रसस्कारपरिरक्षाविज्ञानवत्कर्त्रपेक्षफल कृष्यादि, विज्ञानवत्सेव्यबुद्धिसस्कारापेक्षफल च सेवादि । यागादे कर्मणस्तथाविज्ञानवत्कर्त्रपे-

क्षफलत्वानुपपत्तौ कालान्तरफलत्वात्कर्मदेशकालनिमित्तवि-
पाकविभागज्ञबुद्धिसंस्कारापेक्षं फलं भवितुमर्हति, सेवादि
कर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलस्येव । तस्मात्सिद्धः
सर्वज्ञ ईश्वरः सर्वजन्तुबुद्धिकर्मफलविभागसाक्षी सर्वभूतान्त-
रात्मा । 'यत्साक्षादपरोक्षात्' 'य आत्मा सर्वान्तरः' इति
श्रुतेः । स एव चात्रात्मा जन्तूनाम्, 'नान्योऽतोऽस्ति द्रष्टा
श्रोता मन्ता विज्ञाता' 'नान्यदतोऽस्ति विज्ञातृ' इत्याद्या-
त्मान्तरप्रतिषेधश्रुतेः 'तत्त्वमसि' इति चात्मत्वोपदेशात् । न
हि मृत्पिण्डः काञ्चनात्मत्वेनोपदिश्यते । ज्ञानशक्तिकर्मोपा-
स्योपासकशुद्धाशुद्धमुक्तामुक्तभेदादात्मभेद एवेति चेत्, न,
भेददृष्ट्यपवादात् । यदुक्तं संसारिण ईश्वरादनन्या इति तन्न ।
किं तर्हि? भेद एव संसार्यात्मनाम् । कस्मात्? लक्षणभे-
दात्, अश्वमहिषवत् । कथं लक्षणभेद इति, उच्यते—ईश्वरस्य
तावन्नित्यं सर्वविषयं ज्ञानं सवितृप्रकाशवत् । तद्विपरीतं संसा-
रिणां खद्योतस्येव । तथैव शक्तिभेदोऽपि । नित्या सर्वविषया
चेश्वरशक्तिः, विपरीतेतरस्य । कर्म च चित्स्वरूपात्मसत्ता
मात्रनिमित्तमीश्वरस्य । औष्ण्यस्वरूपद्रव्यसत्तामात्रनिमित्त-
दहनकर्मवत् राजायस्कान्तप्रकाशकर्मवच्च स्वात्मनोऽविक्रिया
रूपम्, विपरीतमितरस्य । 'उपासीत' इति वचनादु-

पास्य ईश्वरो गुरुराजवत् । उपासकश्चेतर शिष्यभृत्यवत् । अपहतपाप्मादिश्रवणान्नित्यशुद्ध ईश्वर । 'पुण्यो वै पुण्येन' इति वचनाद्विपरीत इतर । अत एव नित्य मुक्त ईश्वर । नित्याशुद्धियोगात्ससारीतर । यत्र च ज्ञानादिलक्षणभेदोऽस्ति तत्र भेदो दृष्ट यथा अश्वमहिषयो । तथा ज्ञानादिलक्षणभेदादीश्वरादात्मना भेदोऽस्तीति चेत्, न । कस्मात्? 'अन्योऽसावन्योऽहमस्मीति न स वेद' 'ते क्षय्यलोका भवन्ति' 'मृत्यो स मृत्युमाप्नोति' इति भेददृष्टिर्ह्यपोद्यते । एकत्वप्रतिपादिन्यश्च श्रुतय सहस्रशो विद्यन्ते । यदुक्त ज्ञानादिलक्षणभेदादिति अत्रोच्यते । न, अनभ्युपगमात् । बुद्ध्यादिभ्यो व्यतिरिक्ता विलक्षणाश्चेश्वराद्भिन्नलक्षणा आत्मानो न सन्ति । एक एवेश्वरश्चात्मा सर्व भूताना नित्यमुक्तोऽभ्युपगम्यते । बाह्यश्च बुद्ध्यादिसमाहार सतानाहकारममत्वादिविपरीतप्रत्ययप्रबन्धाविच्छेदलक्षणो नित्यशुद्धबुद्धमुक्तस्वरूपविज्ञानात्मेश्वरगर्भो नित्यविज्ञानावभास चित्तचैत्यबीजबीजिस्वभाव कल्पितोऽनित्यविज्ञान ईश्वरलक्षणविपरीतोऽभ्युपगम्यते । यस्याविच्छेदे ससारव्यवहार, विच्छेदे च मोक्षव्यवहार । अन्यश्च मृत्प्रलेपवत्प्रत्यक्ष प्रध्वसो देवपितृमनुष्यादिलक्षणो भूतविशेषसमाहारो न

पुनश्चतुर्थोऽन्यो भिन्नलक्षण ईश्वरादभ्युपगम्यते। बुद्ध्या-दिकल्पितात्मव्यतिरेकाभिप्रायेण तु लक्षणभेदादित्याश्रया सिद्धो हेतु, ईश्वरादन्यस्यात्मनोऽसत्त्वात्। ईश्वरस्यैव विरुद्धलक्षणत्वमयुक्तमिति चेत् सुखदुःखादियोगश्च, न, निमित्तत्वे सति लोकविपर्ययाध्यारोपणात्, सवितृवत्। यथा हि सविता नित्यप्रकाशरूपत्वाल्लोकाभिव्यक्त्यनभिव्यक्तिनिमित्तत्वे सति लोकदृष्टिविपर्ययेणोदयास्तमयाहोरात्रादिकर्तृत्वाध्यारोपभाग्भवति, एवमीश्वरे नित्यविज्ञानशक्तिरूपे लोकज्ञानापोहसुखदुःखस्मृत्यादिनिमित्तत्वे सति लोकविपरीतबुद्ध्याध्यारोपित विपरीतलक्षणत्व सुखदुःखादयश्च, न स्वत। आत्मदृष्ट्यनुरूपाध्यारोपाच्च। यथा घनादिविप्रकीर्णेऽम्बरे येनैव सवितृप्रकाशो न दृश्यते, स आत्मदृष्ट्यनुरूपमेवाध्यस्यति सवितेदानीमिह न प्रकाशयतीति सत्यव प्रकाशेऽन्यत्र भ्रान्त्या। एवमिह बौद्धादिवृत्त्युद्भवाभिभवाकुलभ्रान्त्याध्यारोपित सुखदुःखादियोग उपपद्यते। तत्स्मरणाच्च। तस्यैव ईश्वरस्यैव हि स्मरणम् 'मत्त स्मृतिर्ज्ञानमपोहन च' 'नादत्ते कस्यचित्पापम्' इत्यादि। अतो नित्यमुक्त एकस्मिन्स वितरीव लोकाविद्याध्यारोपितमीश्वरे ससारित्वम्, शास्त्रादिप्रामाण्यादभ्युपगतमससारित्वमित्यविरोध इति। एतेन

प्रत्येक ज्ञानादिभेद प्रत्युक्त । सौक्ष्म्यचैतन्यसर्वगतत्वाद्य-
विशेषे च भेदहेत्वभावात् । विक्रियावत्त्वे चानित्यत्वात् ।
मोक्षे च विशेषानभ्युपगमात् अभ्युपगमे चानित्यत्वप्रसङ्गात् ।
अविद्यावदुपलभ्यत्वाच्च भेदस्य तत्क्षयेऽनुपपत्तिरिति सिद्ध-
मेकत्वम् । तस्माच्छरीरेन्द्रियमनोबुद्धिविषयवेदनासतानस्या-
हकारसबन्धादज्ञानबीजस्य नित्यविज्ञानान्यनिमित्तस्यात्मत
त्त्वयाथात्म्यविज्ञानाद्विनिवृत्तावज्ञानबीजस्य विच्छेद आत्मनो
मोक्षसज्ञा, विपर्यये च बन्धसज्ञा , स्वरूपापेक्षत्वादुभयो ।
ब्रह्म— ह इत्यैतिह्यार्थ — पुरा किल देवासुरसग्रामे जग-
त्स्थितिपरिपिपालयिषया आत्मानुशासनानुवर्तिभ्यो देवेभ्य
अर्थिभ्योऽर्थाय विजिग्ये अजैषीदसुरान् । ब्रह्मण इच्छानि-
मित्तो विजयो देवाना बभूवेत्यर्थ । तस्य ह ब्रह्मणो विजय
देवा अमहीयन्त । यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजि-
तेषु देवा वृद्धि पूजा वा प्राप्तवन्त । त ऐक्षन्तेति मिथ्या-
प्रत्ययत्वाद्धेयत्वख्यापनार्थ आम्नाय । ईश्वरनिमित्ते विजये स्व
सामर्थ्यनिमित्तोऽस्माकमेवाय विजयोऽस्माकमेवाय महिमे-
त्यात्मनो जयादिश्रेयोनिमित्त सर्वात्मानमात्मस्थ सर्वकल्या-
णास्पदमीश्वरमेवात्मत्वेनाबुद्धा पिण्डमात्राभिमाना सन्तो य
मिथ्याप्रत्यय चक्रु तस्य पिण्डमात्रविषयत्वेन मिथ्याप्रत्य-

यत्वात्सर्वात्मेश्वरयाथात्म्यावबोधेन ह्यातव्यताख्यापनार्थं तद्धै-षामित्याद्याख्यायिकाम्नाय । तद्ब्रह्म ह किल एषा देवानाम-भिप्राय मिथ्याहकाररूप विजज्ञौ विज्ञातवत् । ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया देवेभ्योऽर्थाय तेषा-मेवेन्द्रियगोचरे नातिदूरे प्रादुर्बभूव महेश्वरशक्तिमायोपात्ते-नात्यन्ताद्भुतेन प्रादुर्भूत किल कनचिद्रूपविशेषेण । तत्किलो-पलभमाना अपि देवा न व्यजानत न विज्ञातवन्त किमिद यदेतद्यक्ष पूज्यमिति । तद्विज्ञानायाग्निमब्रुवन् । तृणनिधाने ऽयमभिप्राय — अत्यन्तसभावितयोरग्निमारुतयोस्तृणदहना-दानाशक्त्या आत्मसभावना शातिता भवेदिति । इन्द्र आ-दित्यो वज्रभृद्वा, अविरोधात् । इन्द्रोपसर्पणे ब्रह्म तिरोदध इत्यस्यायमभिप्राय — इन्द्रोऽहमित्यधिकतमोऽभिमानोऽस्य, सोऽहमग्न्यादिभि प्राप्त वाक्सभाषणमात्रमप्यनेन न प्राप्तो-ऽस्मीत्यभिमान कथ न नाम जह्यादिति । तदनुग्रहायैवान्त-र्हित तद्ब्रह्म बभूव । स शान्ताभिमान इन्द्र अत्यर्थं ब्रह्म विजिज्ञासु यस्मिन्नाकाशे ब्रह्मण प्रादुर्भाव आसीत्तिरोधान च, तस्मिन्नेव स्त्रियमतिरूपिणीं विद्यामाजगाम । अभिप्रायो-द्बोधहेतुत्वाद्रुद्रपत्नी उमा हैमवतीव बहु शोभमाना विद्यैव । विरूपोऽपि विद्यावान्बहु शोभते ॥

इति तृतीय खण्ड ॥

## चतुर्थः खण्डः ॥

ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥ १ ॥

तस्माद्वा एते देवा अतितरामिवान्या-न्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्प-र्शुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥

तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवा-न्स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ ३ ॥

तस्यैष आदेशो यदेतद्विद्युतो व्यद्यु-तदा३ इतीन्न्यमीमिषदा३ इत्यधिदैव-तम् ॥ ४ ॥

ता च पृष्ट्वा तस्या एव वचनात् विदाञ्चकार विदित

वान् । अत इन्द्रस्य बोधहेतुत्वाद्विद्यैवोमा । ‘ विद्यासहायवा-नीश्वर ’ इति स्मृति । यस्मादिन्द्रोविज्ञानपूर्वकमग्निवाय्विन्द्रास्ते हि एनत् नेदिष्ठम् अतिसमीप ब्रह्मविद्यया ब्रह्म प्राप्ता सन्त पस्पर्शु स्पृष्टवन्त । ते हि एनत प्रथम प्रथम विदाचकार विदाचक्रुरित्येतत् । तस्मात् अतितराम् अतीत्य अतिशयेन दीप्यन्तेऽन्यान् देवान् । ततोऽपीन्द्रोऽतितरा दीप्यते, आदौ ब्रह्मविज्ञानात् । तस्यैष आदेश तस्य ब्रह्मण एष वक्ष्यमाण आदेश उपासनोपदेश इत्यर्थ । यस्माद्देवेभ्यो विद्युदिव सहसैव प्रादुर्भूत ब्रह्म द्युतिमत्, तस्माद्विद्युतो विद्योतन यथा यदेतद्ब्रह्म व्यद्युतत् विद्योतितवत् । आ इत्युपमार्थे आ शब्द । यथा घनान्धकार विदार्य विद्युत्सर्वत प्रकाशते, एव तद्ब्रह्म देवाना पुरत सर्वत प्रकाशवद्व्यक्तीभूतम् । अतो व्यद्युतदिवेत्युपास्यम । ‘ यथा सकृद्विद्युतम ’ इति च वाजसनेयके । यस्माच्चेन्द्रोपसर्पणकाले न्यमीमिषत्— यथा कश्चिच्चक्षुर्निमेषण कृतवानिति । इतीदित्यनर्थकौ निपातौ—निमिषितवदिव तिरोभूतमित्येवमधिदैवत देवताया अधि यद्दर्शनमधिदैवत तत् ॥

**अथाध्यात्मं यदेतद्गच्छतीव च मनो-**
**ऽनेन चैतदुपस्मरत्यभीक्ष्ण संकल्पः ॥ ५ ॥**

अथ अनन्तरम् अध्यात्मम् आत्मन अधि आत्मविषयम् अध्यात्मम् उच्यत इति वाक्यशेष । यदेतत् यथोक्तलक्षण ब्रह्म गच्छतीव प्राप्नोतीव विषयीकरोतीवेत्यर्थ । न पुनर्विषयीकरोति मन, अविषयत्वाद्ब्रह्मण । अतो मनो न गच्छति । 'येनाहुर्मनो मतम्' इति चोक्तम् । गच्छतीवेति तु मनसोऽपि मनस्त्वात् आत्मभूतत्वाच्च ब्रह्मण तत्समीपे मनो वर्तते इति उपस्मरति अनेन मनसैव तद्ब्रह्म विद्वान्यस्मात्, तस्माद्ब्रह्म गच्छतीवेत्युच्यते । अभीक्ष्ण पुन पुन । सकल्प ब्रह्मप्रेषितस्य मनस । अत उपस्मरणसकल्पादिभिर्लिङ्गैर्ब्रह्म मनआध्यात्मभूतमित्युपास्यमित्यभिप्राय ॥

**तद्ध तद्वन नाम तद्वनमित्युपासितव्य स य एतदेवं वेदाभि हैन सर्वाणि भूतानि सवाञ्छन्ति ॥ ६ ॥**

तस्य चाध्यात्ममुपासने गुणो विधीयते—तद्ध तद्वन तदेतद्ब्रह्म तच्च तद्वन च तत् परोक्ष वन सभजनीयम् । वनतेस्तत्कर्मण । तस्मात्तद्वन नाम । ब्रह्मणो गौण हीद नाम । तस्मादनेन गुणेन तद्वनमित्युपासितव्यम् । स य कश्चिदेतद्यथोक्तमेव यथोक्तेन गुणेन वनमित्यनेन नाम्नाभिधेय ब्रह्म

वेद उपास्ते तस्यैतत्फलमुच्यते—सर्वाणि भूतानि एनम् उ-
पासकम् अभिसवाञ्छन्ति इहाभिसभजन्ते सेवन्ते स्मेत्यर्थः ।
यथागुणोपासन हि फलम् ।

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिष-
द्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥**

उपनिषद भो ब्रूहीत्युक्तायामुपनिषदि शिष्येणोक्त आचार्य
आह—उक्ता कथिता ते तुभ्यम् उपनिषदात्मोपासनम् । अधु-
ना ब्राह्मीं वाव ते तुभ्य ब्रह्मणो ब्राह्मणजाते उपनिषदम्
अब्रूम वक्ष्याम इत्यर्थः । वक्ष्यति हि । ब्राह्मी नोक्ता । उक्ता
त्वात्मोपनिषत् । तस्मान्न भूताभिप्रायोऽब्रूमेत्यय शब्द ॥

**तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः
सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥**

तस्यै तस्या वक्ष्यमाणाया उपनिषद तप ब्रह्मचर्यादि
दम उपशम कर्म अग्निहोत्रादि इत्येतानि प्रतिष्ठा आश्रय ।
एतेषु हि सत्सु ब्राह्म्युपनिषत्प्रतिष्ठिता भवति । वेदा
चत्वार अङ्गानि च सर्वाणि । प्रतिष्ठेत्यनुवर्तते । ब्रह्माश्रया
हि विद्या । सत्य यथाभूतवचनमपीडाकरम् आयतन निवास ।
सत्यवत्सु हि सर्वं यथोक्तमायतन इवावस्थितम् ॥

**यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ९ ॥**

इति चतुर्थः खण्ड ॥

तामेता तपआद्यङ्गा तत्प्रतिष्ठा ब्राह्मीमुपनिषद सायतनामात्मज्ञानहेतुभूताम् एव यथावत् यो वेद अनुवर्तते अनुतिष्ठति, तस्यैतत्फलमाह— अपहत्य पाप्मानम् अपक्षय्य धर्माधर्मावित्यर्थ । अनन्ते अपारे अविद्यमानान्ते स्वर्गे लोके सुखप्राये निर्दुःखात्मनि पर ब्रह्मणि ज्येये महति सर्वमहत्तरे प्रतितिष्ठति सर्ववेदान्तवेद्य ब्रह्म आत्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यत इत्यर्थ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
केनोपनिषद्वाक्यभाष्यम्
सपूर्णम् ॥

इति चतुर्थ खण्ड ॥

ॐ

आप्यायन्तु ममाङ्गानि
वाक्प्राणश्चक्षुः श्रोत्रमथो ब-
लमिन्द्रियाणि च सर्वाणि ।
सर्वं ब्रह्मौपनिषदं माह ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि-
राकरणं मेऽस्तु । तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ ॐ ॥

# काठकोपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः

विरचितम् ।

ॐ

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

---

ॐ शान्ति शान्ति शान्ति ॥

# ॥ काठकोपनिषत् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन भाष्येण सहिता ।

ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय, नचिकेतसे च ।

अथ काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते । सद्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमिदम् 'उपनिषत्' इति । उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्या उच्यते । केन

पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इति, उच्यते। ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति, तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते। तथा च वक्ष्यति 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति। पूर्वोक्तविशेषणान्वा मुमुक्षून्परं ब्रह्म गमयतीति च ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्या उपनिषत्। तथा च वक्ष्यति 'ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः' इति। लोकादिर्ब्रह्मजज्ञो योऽग्निः, तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्यापि उपनिषदित्युच्यते। तथा च वक्ष्यति 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यादि। ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति— उपनिषदमधीमहे उपनिषदमध्यापयाम इति च। नैष दोषः, अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसंभवाद्विद्यायां च संभवात् ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः 'आयुर्वै घृतम्' इत्यादिवत्। तस्माद्विद्यायां मुख्यया वृत्त्या

उपनिषच्छब्दो वर्तते, ग्रन्थे तु भक्त्येति । एवमुपनिषन्निर्वचनेनैव विशिष्टोऽधिकारी विद्यायाम् उक्त । विषयश्च विशिष्ट उक्तो विद्याया पर ब्रह्म प्रत्यगात्मभूतम् । प्रयोजन चास्या आत्यन्तिकी ससारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा । सबन्धश्चैवभूतप्रयोजनेनोक्त । अतो यथोक्ताधिकारिविषयप्रयोजनसबन्धाया विद्याया करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसबन्धा एता वल्ल्यो भवन्तीति । अतस्ता यथाप्रतिभान व्याचक्ष्महे ॥

**उशन्ह वै वाजश्रवस: सर्ववेदस ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥**

तत्राख्यायिका विद्यास्तुत्यर्था । उशन् कामयमान । ह वै इति वृत्तार्थस्मरणार्थौ निपातौ । वाजम् अन्नम्, तद्दानादिनिमित्त श्रवो यशो यस्य स वाजश्रवा, रूढितो वा, तस्यापत्य वाजश्रवस । स वाजश्रवस किल विश्वजिता सर्वमेधेनेजे तत्फल कामयमान । स तस्मिन्क्रतौ सर्ववेदस सर्वस्व धन ददौ दत्तवान् । तस्य यजमानस्य ह नचिकेता नाम पुत्र किल आस बभूव ॥

**तँ ह कुमारँ सन्तं दक्षिणासु नीय-**
**मानासु श्रद्धाविवेश सोऽमन्यत ॥ २ ॥**

तं ह नचिकेतसं कुमारं प्रथमवयसं सन्तम् अप्राप्तप्रजननशक्तिं बालमेव श्रद्धा आस्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ता आविवेश प्रविष्टवती । कस्मिन्काले इति, आह— ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु, स आविष्टश्रद्धो नचिकेता अमन्यत ॥

**पीतोदका जग्धतृणा**
**दुग्धदोहा निरिन्द्रियाः ।**
**अनन्दा नाम ते लोका-**
**स्तान्स गच्छति ता ददत् ॥ ३ ॥**

कथमिति, उच्यते— पीतोदका इत्यादिना दक्षिणार्था गावो विशेष्यन्ते । पीतमुदकं याभिस्ताः पीतोदकाः । जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः । दुग्धो दोहः क्षीराख्यो यासां ता दुग्धदोहाः । निरिन्द्रियाः प्रजननासमर्था जीर्णाः, निष्फला गाव इत्यर्थः । यास्ता एवंभूता गा ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत् प्रयच्छन् अनन्दा अनानन्दा असुखा नामेत्येतत् । ये ते लोकाः, तान् स यजमानो गच्छति ॥

**स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं तꣳ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥**

तदेव ऋत्वसंपत्तिनिमित्तं पितुरनिष्टं फलं पुत्रेण सता निवारणीयं मया आत्मप्रदानेनापि क्रतुसंपत्तिं कृत्वेत्येवं मन्यमानः पितरमुपगम्य स होवाच पितरम्— हे तत तात कस्मै ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसीति प्रयच्छसीत्येतत् । स एवमुक्तेन पित्रा उपेक्ष्यमाणोऽपि द्वितीयं तृतीयमपि उवाच— कस्मै मां दास्यसि कस्मै मां दास्यसीति । नायं कुमारस्वभाव इति क्रुद्धः सन् पिता तं ह पुत्रं किल उवाच मृत्यवे वैवस्वताय त्वा त्वां ददामीति ॥

**बहूनामेमि प्रथमो**
**बहूनामेमि मध्यमः ।**
**किꣳ स्विद्यमस्य कर्तव्यं**
**यन्मयाद्य करिष्यति ॥ ५ ॥**

स एवमुक्तः पुत्रः एकान्ते परिदेवयाचकार । कथमिति, उच्यते— बहूनां शिष्याणां पुत्राणां वा एमि गच्छामि

प्रथम सन् मुख्यया शिष्यादिवृत्त्येत्यर्थः । मध्यमाना च बहूना मध्यम मध्यमयैव वृत्त्या एमि । नाधमया कदाचिदपि । तमेव विशिष्टगुणमपि पुत्र माम् 'मृत्यवे त्वा ददामि' इत्युक्तवान् पिता । स किंस्वित् यमस्य कर्तव्य प्रयोजन मया प्रत्तेन करिष्यति यत्कर्तव्यम् अद्य ? नून प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान् पिता । तथापि तत्पितुर्वचो मृषा मा भूदिति ॥

अनुपश्य यथा पूर्वे
प्रतिपश्य तथा परे ।
सस्यमिव मर्त्यः पच्यते
सस्यमिवाजायते पुनः ॥ ६ ॥

एव मत्वा परिदेवनापूर्वकमाह पितर शोकाविष्ट कि मयोक्तमिति— अनुपश्य आलोचय विभावयानुक्रमेण यथा येन प्रकारेण वृत्ता पूर्वे अतिक्रान्ता पितृपितामहादयस्तव । तान्दृष्ट्वा च तेषा वृत्तमास्थातुमर्हसि । वर्तमानाश्च अपरे साधवो यथा वर्तन्ते तांश्च तथा प्रतिपश्य आलोचय । न च तेषा मृषाकरण वृत्त वर्तमान वा अस्ति । तद्विपरीतमसता च वृत्त मृषाकरणम् । न च मृषाभूत कृत्वा कश्चिदजरामरो

भवति, यत सस्यमिव मर्त्यं मनुष्य पच्यते जीर्णो म्रियते, मृत्वा च सस्यमिव आजायते आविर्भवति पुन , एव मनित्ये जीवलोके किं मृषाकरणेन² पालयात्मन सत्यम् । प्रेषय मा यमायेत्यभिप्राय ॥

वैश्वानरः प्रविशति
अतिथिर्ब्राह्मणो गृहान् ।
तस्यैता८ शान्ति कुर्वन्ति
हर वैवस्वतोदकम् ॥ ७ ॥

स एवमुक्त पिता आत्मन सत्यतायै प्रेषयामास । स च यमभवन गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते । प्रोष्यागत यमम् अमात्या भार्या वा ऊचुर्बोधयन्त — वैश्वानर अग्निरेव साक्षात् प्रविशति अतिथि सन् ब्राह्मण गृहान् दहन्निव । तस्य दाह शमयन्त इवाग्ने एता पाद्यासनादिदानलक्षणा शान्ति कुर्वन्ति सन्तोऽतिथेर्यत, अत हर आहर हे वैवस्वत, उदक नचिकतसे पाद्यार्थम् ॥

आशाप्रतीक्षे सगत८ सूनृता च
इष्टापूर्ते पुत्रपशू८श्च सर्वान् ।

एतद्वृङ्क्ते पुरुषस्याल्पमेधसो
यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥

यतश्चाकरणे प्रत्यवाय श्रूयते— आशाप्रतीक्षे, अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना आशा, निर्ज्ञातप्राप्यार्थप्रतीक्षण प्रतीक्षा, ते आशाप्रतीक्षे, सगत सत्सयोगज फलम्, सूनृता च सूनृता हि प्रिया वाक् तन्निमित्त च, इष्टापूर्ते इष्ट यागज फल पूर्तम् आरामादिक्रियाज फलम्, पुत्रपशूश्च पुत्राश्च पशूश्च सर्वान्, एतत् सर्वं यथोक्त वृङ्क्ते वर्जयति विनाशयतीत्येतत्। पुरुषस्य अल्पमेधस अल्पप्रज्ञस्य, यस्य अनश्नन् अभुञ्जान ब्राह्मण गृहे वसति। तस्मादनुपेक्षणीय सर्वावस्थास्वप्यतिथिरित्यथ ॥

तिस्रो रात्रीर्यदवात्सीर्गृहे मे
अनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु
तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥

एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुर सरम्— तिस्र रात्री यत् यस्मात् अवात्सी उषितवानसि गृहे मे मम अनश्नन् हे ब्रह्मन् अतिथि सन् नमस्य नमस्कारार्हश्च,

तस्मात् नम ते तुभ्यम् अस्तु भवतु । हे ब्रह्मन् स्वस्ति भद्र मे अस्तु । तस्मात् भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात् । तत्प्राप्त्युपशमेन यद्यपि भवदनुग्रहेण सर्वं मम स्वस्ति स्यात्, तथापि त्वदधिकसप्रसादनार्थमनशनेनोषितामेकैका रात्रिं प्रति त्रीन् वरान् वृणीष्व अभिप्रेतार्थविषया॰प्रार्थयस्व मत्त ॥

**शान्तसकल्प सुमना यथा स्या-**
**द्वीतमन्युर्गौतमो माभिमृत्यो ।**
**त्वत्प्रसृष्ट माभिवदेत्प्रतीत**
**एतत्त्रयाणां प्रथम वर वृणे ॥ १० ॥**

नचिकेतास्त्वाह—यदि दित्सुर्वरान्, शान्तसकल्प उपशान्त सकल्पो यस्य मा प्रति 'यम प्राप्य किं नु करिष्यति मम पुत्र ' इति, स शा तसकल्प सुमना प्रसन्नचित्तश्च यथा स्यात् वीतमन्यु विगतरोषश्च गौतम मम पिता मा अभि मा प्रति हे मृत्यो , किंच, त्वत्प्रसृष्ट त्वया विनिर्मुक्त प्रेषित गृह प्रति मा माम् अभिवदेत् प्रतीत लब्धस्मृति , 'स एवाय पुत्रो ममागत ' इत्येव प्रत्यभिजानन्नित्यर्थ । एतत्प्रयोजन त्रयाणा वराणा प्रथमम् आद्य वर वृणे प्रार्थये यत्पितुपरितोषणम् ॥

यथा पुरस्ताद्भविता प्रतीत
औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखꣳ रात्रीः शयिता वीतमन्यु-
स्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥११॥

मृत्युरुवाच— यथा बुद्धि त्वयि पुरस्तात् पूर्वम् आसी त्स्नेहसमन्विता पितुस्तव, भविता प्रीतिसमन्वितस्तव पिता तथैव प्रतीत प्रतीतवान्सन् । औद्दालकि उद्दालक एव औद्दालकि अरुणस्यापत्यम् आरुणि द्व्यामुष्यायणो वा मत्प्रसृष्ट मयानुज्ञात सन् उत्तरा अपि रात्री सुख प्रसन्न मना शयिता स्वप्ता वीतमन्यु विगतमन्युश्च भविता स्यात्, त्वा पुत्र ददृशिवान् दृष्टवान् सन् मृत्युमुखात् मृत्युगोचरात् प्रमुक्त सन्तम् ॥

स्वर्गे लोके न भयं किंचनास्ति
न तत्र त्व न जरया बिभेति ।
उभे तीर्त्वा अशनायापिपासे
शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥

नचिकेता उवाच— स्वर्गे लोके रोगादिनिमित्त भय

किंचन किंचिदपि नास्ति । न च तत्र त्व मृत्यो सहसा प्रभवसि, अतो जरया युक्त इह लोक इव त्वत्तो न बिभेति कश्चित्तत्र । किं च उभे अशनायापिपासे तीर्त्वा अतिक्रम्य शोकमतीत्य गच्छतीति शोकातिग सन् मानसेन दु खेन वर्जित मोदते हृष्यति स्वर्गलोके दिवि ॥

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो
प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्व भजन्त
एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥

एवगुणविशिष्टस्य स्वगलोकस्य प्राप्तिसाधनभूतम् अग्नि स्वर्ग्य स त्व मृत्यु अध्येषि स्मरसि, जानासीत्यर्थ । हे मृत्यो, यत त प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्य स्वगार्थिने । येनाग्निना चितेन स्वर्गलोका स्वर्गो लोको येषा ते स्वर्गलोका यजमाना अमृतत्वम् अमरणता देवत्व भजन्ते प्राप्नुवन्ति, तत् एतत् अग्निविज्ञान द्वितीयेन वरेण वृणे ॥

प्र ते ब्रवीमि तदु मे निबोध
स्वर्ग्यमग्नि नचिकेतः प्रजानन् ।

**अनन्तलोकाप्तिमथो प्रतिष्ठां**
**विद्धि त्वमेतं निहितं गुहायाम् ॥१४॥**

मृत्योः प्रतिज्ञेयम्— ते तुभ्यं प्रब्रवीमि, यत्त्वया प्रार्थितं तत् उ मे मम वचसः निबोध बुध्यस्व एकाग्रमनाः सन् । स्वर्ग्यं स्वर्गाय हितं स्वर्गसाधनम् अग्निं हे नचिकेतः प्रजानन् विज्ञातवान्सन्नहमित्यर्थः । प्रब्रवीमि तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम् । अधुनाग्निं स्तौति—अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत्, अथो अपि प्रतिष्ठाम् आश्रयं जगतो विराट्स्वरूपेण, तम् एतम् अग्निं मयोच्यमानं विद्धि विजानीहि त्वं निहितं स्थितं गुहायाम् । विदुषां बुद्धौ निविष्टमित्यर्थः ॥

**लोकादिमग्निं तमुवाच तस्मै**
**या इष्टका यावतीर्वा यथा वा ।**
**स चापि तत्प्रत्यवदद्यथोक्त-**
**मथास्य मृत्युः पुनरेवाह तुष्टः ॥ १५ ॥**

इदं श्रुतेर्वचनम्— लोकादिं लोकानामादिं प्रथमशरीरित्वात् अग्निं तं प्रकृतं नचिकेतसा प्रार्थितम् उवाच उक्तवान्मृत्युः तस्मै नचिकेतसे । किंच, या इष्टकाश्चेतव्याः

स्वरूपेण यावतीर्वा सख्यया यथा वा चीयतेऽग्निर्येन प्रकारेण सर्वमेतदुक्तवानित्यर्थ । स चापि नचिकेता तत् मृत्युनोक्त प्रत्यवदत् यथावत्प्रत्ययेनावदत् प्रत्युच्चारितवान् । अथ अस्य प्रत्युच्चारणेन तुष्ट सन् मृत्यु पुनरेवाह वरत्रयव्यतिरेकेणान्य वर दित्सु ॥

**तमब्रवीत्प्रीयमाणो महात्मा**
**वर तवेहाद्य ददामि भूय ।**
**तवैव नाम्ना भवितायमग्नि'**
**सृङ्का चेमामनेकरूपा गृहाण ॥ १६ ॥**

कथम्? त नचिकेतसम् अब्रवीत् प्रीयमाण शिष्यस्य योग्यता पश्यन्प्रीयमाण प्रीतिमनुभवन् महात्मा अक्षुद्रबुद्धि वर तव चतुर्थम् इह प्रीतिनिमित्तम् अद्य इदानीं ददामि भूय पुन प्रयच्छामि । तवैव नचिकेतस नाम्ना अभिधानेन प्रसिद्ध भविता मयोच्यमान अयम् अग्नि । किंच, सृङ्का शब्दवतीं रत्नमयीं मालाम् इमाम् अनेकरूपा विचित्रा गृहाण स्वीकुरु । यद्वा, सृङ्काम् अकुत्सिता गतिं कर्ममयीं गृहाण । अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थ ॥

**त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं**
**त्रिकर्मकृत्तरति जन्ममृत्यू ।**
**ब्रह्मजज्ञं देवमीड्यं विदित्वा**
**निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥**

पुनरपि कर्मस्तुतिमेवाह— त्रिणाचिकेतः त्रिः कृत्वा नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतः, तद्विज्ञानवान् वा । त्रिभिः मातृपित्राचार्यैः एत्य प्राप्य सन्धिं सन्धानं सम्बन्धम्, मात्राद्यनुशासनं यथावत्प्राप्येत्येतत् । तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते 'यथा मातृमान्पितृमान्' इत्यादेः । वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा । तेभ्यो हि विशुद्धिः प्रत्यक्षा । त्रिकर्मकृत् इज्याध्ययनदानानां कर्ता तरति अतिक्रामति जन्ममृत्यू । किंच, ब्रह्मजज्ञम्, ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः । सर्वज्ञो ह्यसौ । तं देवं द्योतनाज्ज्ञानादिगुणवन्तम्, ईड्यं स्तुत्यं विदित्वा शास्त्रतः, निचाय्य दृष्ट्वा चात्मभावेन इमां स्वबुद्धिप्रत्यक्षां शान्तिम् उपरतिम् अत्यन्तम् एति अतिशयेनैति । वैराजं पदं ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः ॥

**त्रिणाचिकेतस्त्रयमेतद्विदित्वा**
**य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।**

**स मृत्युपाशान्पुरतः प्रणोद्य**
**शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥**

इदानीमग्निविज्ञानचयनफलमुपसंहरति, प्रकरणं च— त्रिणाचिकेतः त्रयं यथोक्तम् 'या इष्टका यावतीर्वा यथा वा' इति । एतत् विदित्वा अवगम्य यश्च एवम् आत्मस्वरूपेण अग्निं विद्वान् चिनुते निवर्तयति नाचिकेतमग्निं क्रतुम्, स मृत्युपाशान् अधर्माज्ञानरागद्वेषादिलक्षणान् पुरतः अग्रतः, पूर्वमेव शरीरपातादित्यर्थः, प्रणोद्य अपहाय, शोकातिगः मानसैर्दुःखैर्विगत इत्येतत्, मोदते स्वर्गलोके वैराजे विराडात्मस्वरूपप्रतिपत्त्या ॥

**एष तेऽग्निर्नचिकेतः स्वर्ग्यो**
**यमवृणीथा द्वितीयेन वरेण ।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनास-**
**स्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥**

एष ते तुभ्यम् अग्निः वरः हे नचिकेतः, स्वर्ग्यः स्वर्गसाधनः, यम् अग्निं वरम् अवृणीथाः वृतवान् प्रार्थितवानसि द्वितीयेन वरेण, सोऽग्निर्वरो दत्त इत्युक्तोपसंहारः । किंच, एतम् अग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासः जना इत्येतत् ।

एष वरो दत्तो मया चतुर्थस्तुष्टेन । तृतीय वर नचिकेत वृणीष्व । तस्मि ह्यदत्ते ऋणवानेवाहमित्यभिप्राय ॥

**येयं प्रेते विचिकित्सा मनुष्ये**
**अस्तीत्येके नायमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाह**
**वराणामेष वरस्तृतीय. ॥ २० ॥**

एतावद्व्यतिक्रान्तेन विधिप्रतिषेधार्थेन मन्त्रब्राह्मणेनाव गन्तव्य यद्वरद्वयसूचित वस्तु नात्मतत्त्वविषययाथात्म्यविज्ञानम् । अतो विधिप्रतिषेधार्थविषयस्य आत्मनि क्रियाकारक-फलाध्यारोपणलक्षणस्य स्वाभाविकस्याज्ञानस्य ससारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञान क्रियाकारकफला-ध्यारोपणशून्यमात्यन्तिकनि श्रेयसप्रयोजन वक्तव्यमित्युत्तरो ग्रन्थ आरभ्यते । तमेतमर्थं द्वितीयवरप्राप्त्याप्यकृतार्थत्व तृतीयवरगोचरमात्मज्ञानमन्तरेणेत्याख्यायिकया प्रपञ्चयति । यत पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्त स्यात्मज्ञानेऽधिकार इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभन क्रियते । नचिकेता उवाच 'तृतीय वर नचिकेतो वृणीष्व' इत्युक्त सन्— येय विचिकित्सा सशय प्रेते

मृत मनुष्ये, अस्ति इत्येके अस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसबन्ध्यात्मा इत्येके मन्यन्ते, नायमस्ति इति चैके नायमेवविधोऽस्तीति चैके । अत्र चास्माक न प्रत्यक्षेण नाप्यनुमानेन निर्णयविज्ञानम् । एतद्विज्ञानाधीनो हि पर पुरुषार्थ इत्यत एतत् विद्या विजानीयाम् अहम् अनुशिष्ट ज्ञापित त्वया । वराणामेष वरस्तृतीयोऽवशिष्ट ॥

**देवैरत्रापि विचिकित्सितं पुरा**
**न हि सुविज्ञेयमणुरेष धर्मः ।**
**अन्य वर नचिकेतो वृणीष्व**
**मा मोपरोत्सीरति मा सृजैनम् ॥२१॥**

किमयमेकान्ततो नि श्रेयससाधनात्मज्ञानार्हो न वेत्येतत्परीक्षणार्थमाह—देवैरपि अत्र एतस्मिन्वस्तुनि विचिकित्सित सशयित पुरा पूर्वम् । न हि सुविज्ञेय सुष्ठु विज्ञेयम असकृच्छ्रुतमपि प्राकृतैजनै , यत अणु सूक्ष्म एष आत्माख्य धर्म । अत अन्यम असदिग्धफल वर नचिकेत , वृणीष्व । मा मा मा उपरोत्सी उपरोध मा कार्षी अधमर्णमिवोत्तमर्ण । अतिसृज विमुञ्च एन वर मा मा प्रति ॥

देवैरत्रापि विचिकित्सित किल
त्व च मृत्यो यन्न सुज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो
नान्यो वरस्तुल्य एतस्य कश्चित् ॥२२॥

एवमुक्तो नचिकेता आह— देवैरत्रापि विचिकित्सित किलेति भवत एव न श्रुतम् । त्व च मृत्यो, यत् यस्मात् न सुज्ञेयम् आत्मतत्त्वम् आत्थ कथयसि । अत पण्डितैरप्यवेदनीयत्वात् वक्ता च अस्य धर्मस्य त्वादृक् त्वत्तुल्य अन्य पण्डितश्च न लभ्य अन्विष्यमाणोऽपि । अय तु वरो नि श्रेयसप्राप्तिहेतु । अत न अन्य वर तुल्य सदृश अस्ति एतस्य कश्चिदपि । अनित्यफलत्वादन्यस्य सर्वस्यैवेत्य भिप्राय ॥

शतायुषः पुत्रपौत्रान्वृणीष्व
बहून्पशून्हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनन वृणीष्व
स्वयं च जीव शरदो यावदिच्छसि ॥

एवमुक्तोऽपि पुन प्रलोभयन्नुवाच मृत्यु — शतायुष

शत वर्षाणि आयूषि येषा तान् शतायुष पुत्रपौत्रान् वृणीष्व । किंच, गवादिलक्षणान् बहून् पशून् हस्तिहिरण्यम्, हस्ती च हिरण्य च हस्तिहिरण्यम्, अश्वाश्च । किंच, भूमे पृथिव्या महत् विस्तीर्णम् आयतनम् आश्रय मण्डल साम्राज्य वृणीष्व । किंच, सर्वमप्येतदनथक स्वय चेदल्पायुरित्यत आह— स्वय च त्व जीव धारय शरीर समग्रेन्द्रियकलाप शरद वर्षाणि यावत् इच्छसि जीवितुम् ॥

**एतत्तुल्य यदि मन्यसे वर**
**वृणीष्व वित्त चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि**
**कामाना त्वा कामभाज करोमि ॥२४॥**

एतत्तुल्यम् एतेन यथोपदिष्टेन सदृशम् अन्यमपि यदि मन्यसे वरम्, तमपि वृणीष्व । किंच, वित्त प्रभूत हिरण्य-रत्नादि चिरजीविका च सह वित्तेन वृणीष्वेत्येतत् । किं बहुना ? महाभूमौ महत्या भूमौ राजा नचिकेत त्वम् एधि भव । किंचान्यत्, कामाना दिव्याना मानुषाणा च त्वा त्वा कामभाज कामभागिन कामार्हं करोमि, सत्यसकल्पो ह्यह देव ॥

ये ये कामा दुर्लभा मर्त्यलोके
सर्वान्कामाꣳश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या
न हीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व
नचिकेतो मरणं मानुप्राक्षीः ॥ २५ ॥

ये ये कामा प्रार्थनीया दुर्लभाश्च मर्त्यलोके, सर्वान् तान् कामान् छन्दत इच्छात प्रार्थयस्व । किंच, इमा दिव्या अप्सरस, रमयन्ति पुरुषानिति रामा, सह रथैर्वर्तन्त इति सरथा, सतूर्या सवादित्रा, ताश्च न हि लम्भनीया प्रापणीया ईदृशा एवंविधा मनुष्यै मर्त्यैं अस्मदादिप्रसादमन्तरेण । आभि मत्प्रत्ताभि मया प्रदत्ताभि परिचारिकाभि परिचारयस्व आत्मानम्, पादप्रक्षालनादिशुश्रूषा कारयात्मन इत्यर्थ । हे नचिकेत, मरण मरणसबद्ध प्रश्न प्रेत्यास्ति नास्तीति काकदन्तपरीक्षारूप मा अनुप्राक्षी मैव प्रष्टुमर्हसि ॥

श्वोभावा मर्त्यस्य यदन्तकैत-
त्सर्वेन्द्रियाणां जरयन्ति तेज. ।

अपि सर्वं जीवितमल्पमेव
तवैव वाहास्तव नृत्यगीते ॥ २६ ॥

मृत्युना एव प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्य आह—श्वो भविष्यन्ति न वेति संदिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां ते श्वोभावाः । किंच, मर्त्यस्य मनुष्यस्य अन्तक हे मृत्यो, यत् एतत् सर्वेन्द्रियाणां तेजः तत् जरयन्ति अपक्षपयन्ति । अप्सरःप्रभृतयो भोगा अनर्थायैवैते, धर्मवीर्यप्रज्ञातेजोयशःप्रभृतीनां क्षपयितृत्वात् । या चापि दीर्घजीविका त्वं दित्ससि तत्रापि शृणु । सर्वं यद्ब्रह्मणोऽपि जीवितम् आयुः अल्पमेव, किमुतास्मदादिदीर्घजीविका । अतः तवैव तिष्ठन्तु वाहाः रथादयः, तथा तव नृत्यगीते च ॥

न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ॥ २७ ॥

किंच, न प्रभूतेन वित्तेन तर्पणीयो मनुष्यः । न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टः । यदि नामा-

स्माक वित्ततृष्णा स्यात्, लप्स्यामहे प्राप्स्यामहे वित्तम्, अद्राक्ष्म दृष्टवन्तो वय चेत् त्वा त्वाम्। जीवितमपि तथैव— जीविष्याम यावत् याम्ये पदे त्वम् ईशिष्यसि ईशिष्यसे प्रभु स्या। कथ हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत्? वरस्तु मे वरणीय स एव यदात्मविज्ञानम्॥

अजीर्यताममृतानामुपेत्य
जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्।
अभिध्यायन्वर्णरतिप्रमोदा-
नतिदीर्घे जीविते को रमेत॥ २८॥

यतश्च अजीर्यता वयोहानिमप्राप्नुवताम् अमृताना सकाशम् उपेत्य उपगम्य आत्मन उत्कृष्ट प्रयोजनान्तर प्राप्तव्य तेभ्य प्रजानन् उपलभमान स्वय तु जीर्यन् मर्त्य जरामरणवान् क्वध स्थ कु पृथिवी अधश्चासावन्तरिक्षादिलोकापेक्षया तस्या तिष्ठतीति क्वध स्थ सन् कथमेवमविवेकिभि प्रार्थनीय पुत्रवित्ताद्यस्थिर वृणीते। 'क्व तदास्थ' इति वा पाठान्तरम्। अस्मिन्पक्षे चैवमक्षरयोजना— तेषु पुत्रादिषु आस्था आस्थिति तात्पर्येण वर्तन यस्य स तदास्थ। ततोऽधिकतर पुरुषार्थ दुष्प्रापमपि अभिप्रेप्सु क्व तदास्थो भवेत्? न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थ।

सर्वो ह्युपर्युपर्येव बुभूषति लोक । तस्मान्न पुत्रवित्तादि-लोभै प्रलोभ्योऽहम् । किंच, अप्सर प्रमुखान् वर्णरतिप्रमोदान् अनवस्थितरूपतया अभिध्यायन् निरूपयन् यथावत् अतिदीर्घे जीविते क विवेकी रमेत ॥

**यस्मिन्निदं विचिकित्सन्ति मृत्यो**
**यत्सापराये महति ब्रूहि नस्तत् ।**
**योऽय वरो गूढमनुप्रविष्टो**
**नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥**

इति प्रथमा वल्ली ॥

अतो विहायानित्यै कामै प्रलोभनम्, यन्मया प्रार्थित यस्मिन् प्रेते इद विचिकित्सन विचिकित्सन्ति अस्ति नास्तीत्येवप्रकार हे मृत्यो, सांपराये परलोकविषये महति महत्प्रयोजननिमित्ते आत्मनो निर्णयविज्ञान यत्, तत् ब्रूहि कथय न अस्मभ्यम् । किं बहुना, योऽय प्रकृत आत्मविषय वर गूढ गहन दुर्विवेचन प्राप्त अनुप्रविष्ट, तस्मात् वरात् अन्यम् अविवेकिभि प्रार्थनीयमनित्यविषय वर नचिकेता न वृणीते मनसापि इति श्रुतेर्वचनमिति ॥

इति प्रथमवल्लीभाष्यम् ॥

## द्वितीया वल्ली ॥

---

अन्यच्छ्रेयोऽन्यदुतैव प्रेय-
स्ते उभे नानार्थे पुरुषꣳ सिनीतः ।
तयोः श्रेय आददानस्य साधु
भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥

परीक्ष्य शिष्य विद्यायोग्यतां चावगम्याह— अन्यत् पृथगव श्रेय नि श्रेयस तथा अन्यत् उतैव अपि च प्रेय प्रियतरमपि त श्रेय प्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषम् अधिकृत वर्णाश्रमादिविशिष्ट सिनीत बध्नीत । ताभ्या विद्याविद्याभ्यामात्मकर्तव्यतया प्रयुज्यते सर्व पुरुष । प्रेय श्रेयसोर्हि अभ्युदयामृतत्वार्थी पुरुष प्रवर्तते । अत श्रेय प्रेय प्रयोजनकर्तव्यतया ताभ्या बद्ध इत्युच्यते सर्व पुरुष । ते यद्यप्येकैकपुरुषार्थसबन्धिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयो हित्वा अविद्यारूप प्रेय , श्रेय एव केवलम् आददानस्य उपादान कुवर्त साधु शोभन शिव भवति ।

यस्त्वदूरदर्शी विमूढो हीयते वियुज्यते अर्थात् पुरुषार्थात्पा-रमार्थिकात्प्रयोजनान्नित्यात् प्रच्यवत इत्यर्थ । कोऽसौ ? य उ प्रेय वृणीते उपादत्ते इत्येतत् ॥

**श्रेयश्च प्रेयश्च मनुष्यमेत-**
**स्तौ सपरीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते**
**प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥**

यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण, किमर्थं प्रेय एवादत्ते बाहुल्येन लोक इति, उच्यते। सत्य स्वायत्ते, तथापि साधनत फलतश्च मन्दबुद्धीना दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्य पुरुषम् आ इत एत प्राप्नुत श्रेयश्च प्रेयश्च । अतो हस इवाम्भस पय , तौ श्रेय प्रेय पदार्थौ सपरीत्य सम्य कपरिगम्य मनसा आलोच्य गुरुलाघव विविनक्ति पृथक्करोति धीर धीमान् । विविच्य च श्रेयो हि श्रेय एव अभिवृणीते प्रेयसोऽभ्यर्हितत्वाच्छ्रेयस । कोऽसौ ? धीर । यस्तु मन्द अल्पबुद्धि स सदसद्विवेकासामर्थ्यात् योगक्षेमात् योगक्षेम-निमित्त शरीराद्युपचयरक्षणनिमित्तमित्येतत् । प्रेय पशुपुत्रा दिलक्षण वृणीते ॥

स त्वं प्रियान्प्रियरूपाꣳश्च कामा-
नभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैताꣳसृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

स त्वं पुन पुन मया प्रलोभ्यमानोऽपि प्रियान् पुत्रा-दीन् प्रियरूपांश्च अप्सर प्रभृतिलक्षणान् कामान् अभिध्या-यन् चिन्तयन् तेषामनित्यत्वासारत्वादिदोषान् हे नचि केत, अत्यस्राक्षी अतिसृष्टवान् परित्यक्तवानसि, अहो बुद्धिमत्ता तव । न एताम् अवाप्तवानसि सृङ्कां सृतिं कुत्सिता मूढजनप्रवृत्ता वित्तमयीं धनप्रायाम्, यस्या सृतौ मज्जन्ति सादन्ति बहव अनेक मूढा मनुष्या ॥

दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये
न त्वा कामा बहवोऽलोलुपन्त ॥ ४ ॥

'तयो श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते' इति ह्युक्तम्, तत्कस्मात्? यत दूरं दूरेण मह

तान्तरेण एते विपरीते अ योन्यव्यावृत्तरूपे विवेकाविवे कात्मकत्वात् तम प्रकाशाविव विषूची विषूच्यौ नानागती भिन्नफले ससारमोक्षहेतुत्वेनेत्येतत् । के ते इति, उच्यते । या च अविद्या प्रेयोविषया विद्येति च श्रेयोविषया ज्ञाता निर्ज्ञाता अवगता पण्डितै । तत्र विद्याभीप्सिन विद्यार्थिन नचिकेतस त्वामह मन्य । कस्मात्[2] यस्माद्विद्वद्बुद्धिप्रलोभिन कामा अप्सर प्रभृतय बहवोऽपि त्वा त्वा न अलोलुपन्त न विच्छेद कृतवन्त श्रेयोमार्गादात्मोपभोगाभिवाञ्छासपादनेन । अतो विद्यार्थिन श्रेयोभाजन मन्ये इत्यभिप्राय ॥

**अविद्यायामन्तरे वर्तमाना**

**स्वय धीरा पण्डितमन्यमाना ।**

**दन्द्रम्यमाणाः परियन्ति मूढा**

**अन्धेनैव नीयमाना यथान्धाः ॥ ५ ॥**

ये तु ससारभाजो जना , अविद्यायाम् अन्तरे मध्ये घनीभूत इव तमसि वर्तमाना वेष्ट्यमाना पुत्रपश्वादितृष्णापाशशतै , स्वय धीरा प्रज्ञावन्त पण्डिता शास्त्रकुशलाश्चेति मन्यमाना ते दन्द्रम्यमाणा अत्यर्थं कुटिला-

मनेकरूपा गतिं गच्छन्त जरामरणरोगादिदु खै परियन्ति परिगच्छन्ति मूढा अविवेकिन अन्धेनैव दृष्टिविकलेनैव नीयमाना विषमे पथि यथा बहव अन्धा महान्तमनर्थ-मृच्छन्ति, तद्वत् ॥

न सापराय' प्रतिभाति बालं
प्रमाद्यन्त वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी
पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

अत एव मूढत्वान् न सापराय प्रतिभाति । सपरेयत इति सपराय परलोक, तत्प्राप्तिप्रयोजन साधनविशेष शास्त्रीय सापराय । स च बालम् अविवेकिन प्रति न प्रति-भाति न प्रकाशते नोपतिष्ठत इत्येतत् । प्रमाद्यन्त प्रमाद कुर्वन्त पुत्रपश्वादिप्रयोजनेष्वासक्तमनस तथा वित्तमोहेन वित्त-निमित्तेनाविवेकेन मूढ तमसाच्छन्नम् । स तु अयमेव लोक योऽय दृश्यमान स्त्र्यन्नपानादिविशिष्ट नास्ति पर अदृष्टो लोक इत्येव मननशील मानी पुन पुन जनित्वा वशम् अधीनताम् आपद्यते मे मृत्योर्मम । जननमरणादि-लक्षणदु खप्रबन्धारूढ एव भवतीत्यर्थ ॥

**श्रवणायापि बहुभिर्यो न लभ्य'**
**शृण्वन्तोऽपि बहवो य न विद्यु. ।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धा**
**आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥**

प्रायेण ह्येवविध एव लोक । यस्तु श्रेयोर्थी स सहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विध यस्मात् श्रवणायापि श्रवणार्थं श्रोतुमपि य न लभ्य आत्मा बहुभि अनेकै , शृण्वन्तोऽपि बहव अनेके अन्ये यम् आत्मान न विद्यु न विदन्ति अभागिन असस्कृतात्मानो न विजानीयु । किंच, अस्य वक्तापि आश्चर्य अद्भुतवदेव, अनेकेषु कश्चिदेव भवति । तथा श्रुत्वापि अस्य आत्मन कुशल निपुण एवानेकेषु लब्धा कश्चिदेव भवति । यस्मात् आश्चर्य ज्ञाता कश्चिदेव कुशला-नुशिष्ट कुशलेन निपुणेनाचार्येणानुशिष्ट सन् ॥

**न नरेणावरेण प्रोक्त एष**
**सुविज्ञेयो बहुधा चिन्त्यमान ।**
**अनन्यप्रोक्ते गतिरत्र नास्ति**
**अणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥**

कस्मात्? न हि नरेण मनुष्येण अवरेण प्रोक्त अवरण

हीनेन प्राकृतबुद्धिनेत्येतत् । उक्त एष आत्मा य त्व मा पृच्छसि । न हि सुष्ठु सम्यक् विज्ञेय विज्ञातु शक्य यस्मात् बहुधा अस्ति नास्ति कर्ताकर्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमान वादिभि । कथ पुन सुविज्ञेय इति, उच्यते—अनन्य प्रोक्ते अनन्येन अपृथग्दर्शिनाचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्ते उक्ते आत्मनि गति , अनेकधा अस्तिनास्तीत्यादिलक्षणा चिन्ता गति , अत्र अस्मिन्नात्मनि नास्ति न विद्यते सर्वविकल्पगतिप्रत्यस्तमितरूपत्वादात्मन । अथवा स्वात्मभूते अनन्यस्मिन् आत्मनि प्रोक्ते अनन्यप्रोक्ते गति अत्र अन्यावगतिर्नास्ति ज्ञेयस्यान्यस्याभावात् । ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम् । अत गन्तव्याभावान्न गतिरत्रावशिष्यते ससारगतिर्वात्र नास्त्यनन्य आत्मनि प्रोक्ते नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य । अथवा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण अनन्यतया प्रोक्ते आत्मनि अगति अनवबोधोऽपरिज्ञानमत्र नास्ति । भवत्येवावगतिस्तद्विषया श्रोतुस्तदनन्योऽहमित्याचार्यस्येवेत्यर्थ । एव सुविज्ञेय आत्मा आगमवताचार्येणानन्यतया प्रोक्त । इतरथा अणीयान् अणुतर अणुप्रमाणादपि सपद्यत आत्मा । अतर्क्यम अतर्क्य , अणु प्रमाणो न तर्क्य स्वबुद्ध्यभ्यूहेन केवलेन तर्केण । तर्क्य-

माणेऽणुपरिमाणे केनचित्स्थापिते आत्मनि ततोऽणुतरमन्यो ऽभ्यूहति ततोऽप्यन्योऽणुतरमिति । न हि तर्कस्य निष्ठा कचिद्विद्यते ॥

**नैषा तर्केण मतिरापनेया**
**प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।**
**यां त्वमापः सत्यधृतिर्बतासि**
**त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥**

अतोऽनन्यप्रोक्त आत्मन्युत्पन्ना येयमागमप्रभवा मति , नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेण आपनेया नापनीया न प्रापणीयेत्यर्थ , नापनेतव्या वा, नोपहन्तव्या । तार्किको ह्यनागमज्ञ स्वबुद्धिपरिकल्पित यत्किंचिदेव कल्पयति । अत एव च येयमागमप्रभूता मति अन्येनैव आगमाभिज्ञेनाचार्येणैव तार्किकात्, प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम । का पुन सा तर्कागम्या मति इति, उच्यते— या त्व मतिं मद्वरप्रदानेन आप प्राप्तवानसि । सत्या अवितथविषया धृतिर्यस्य तव स त्व सत्यधृति । बतासीत्यनुकम्पयन्नाह मृत्युर्नचिकेतस वक्ष्यमाणविज्ञानस्तुतये । त्वादृक् त्वत्तुल्य न अस्मभ्य भूयात् भवतात् । भवत्वन्य पुत्र शिष्यो वा प्रष्टा । कीदृक्? यादृक्त्व हे नचिकेत प्रष्टा ॥

जानाम्यहꣳ शेवधिरित्यनित्य
न ह्यध्रुवैः प्राप्यते हि ध्रुव तत् ।
ततो मया नाचिकेतश्चितोऽग्नि-
रनित्यैर्द्रव्यै' प्राप्तवानस्मि नित्यम् ॥

पुनरपि तुष्ट आह— जानाम्यहꣳ शेवधि निधि कर्म-फललक्षण निधिरिव प्रार्थ्यत इति । असौ अनित्यम् अनित्य इति जानामि । न हि यस्मात् अनित्यै अध्रुवै यत् नित्य ध्रुवम्, तत् प्राप्यते परमात्माख्य शेवधि । यस्त्वनित्यसुखात्मक शेवधि, स एवानित्यैर्द्रव्यै प्राप्यते हि यत, तत तस्मात् मया जानतापि नित्यमनित्यसाधनै प्राप्यत इति नाचिकेत चित अग्नि अनित्यै द्रव्यै पश्वा-दिभि स्वर्गसुखसाधनभूतोऽग्नि निर्वर्तित इत्यर्थ । तेनाहꣳ मधिकारापन्नो नित्य याम्य स्थान स्वर्गाख्य नित्यमापेक्षिक प्राप्तवानस्मि ॥

कामस्याप्ति जगत' प्रतिष्ठा
क्रतोरनन्त्यमभयस्य पारम् ।
स्तोममहदुरुगायं प्रतिष्ठा दृष्ट्वा
धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥

त्व तु कामस्य आप्तिं समाप्तिम्, अत्र हि सर्वे कामा परिसमाप्ता, जगत साध्यात्माधिभूताधिदैवादे प्रतिष्ठाम् आश्रय सर्वात्मकत्वात्, क्रतो उपासनाया फल हैरण्यगर्भं पदम, अनन्त्यम आनन्त्यम्, अभयस्य च पार परा निष्ठाम्, स्तोम स्तुत्य महत् अणिमाद्यैश्वर्याद्यनेकगुणसहतम्, स्तोम च तन्महच्च निरतिशयत्वात् स्तोममहत्, उरुगाय विस्तीर्णां गतिम्, प्रतिष्ठा स्थितिमात्मनोऽनुत्तमामपि दृष्ट्वा धृत्या धैर्येण धीर नचिकेत, धीमान् बुद्धिमान्सन् अत्यस्राक्षी परमेवाकाङ्क्षन्नतिसृष्टवानसि सर्वमेतत्ससारभोगजातम । अहो बतानुत्तमगुणोऽसि ॥

**त दुर्दर्श गूढमनुप्रविष्ट**
**गुहाहित गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देव**
**मत्वा धीरो हर्षशोकौ जहाति ॥१२॥**

य त्व ज्ञातुमिच्छस्यात्मान त दुर्दर्श दु खेन दर्शनमस्येति दुर्दर्श अतिसूक्ष्मत्वात् तम्, गूढ गहनम्, अनुप्रविष्ट प्राकृतविषयविज्ञानै प्रच्छन्नमित्येतत् । गुहाहित गुहाया बुद्धौ हित निहित स्थित तत्रोपलभ्यमानत्वात् । गह्वरेष्ठ गह्वरे विषमे

अनेकानर्थसंकटे तिष्ठतीति गह्वरेष्ठम् । यत एव गूढमनुप्रविष्टो गुहाहितश्च, अतोऽसौ गह्वरेष्ठ , अतो दुर्दर्श । त पुराण पुरातनम् अध्यात्मयोगाधिगमेन विषयेभ्य प्रतिसहृत्य चेतस आत्मनि समाधानमध्यात्मयोग तस्याधिगम प्राप्ति तेन मत्वा देवम् आत्मान धीर हर्षशोकौ आत्मन उत्कर्षापकर्षयोरभावात् जहाति ॥

**एतच्छ्रुत्वा संपरिगृह्य मर्त्य.**
**प्रवृह्य धर्म्यमणुमेतमाप्य ।**
**स मोदते मोदनीयꣳ हि लब्ध्वा**
**विवृतꣳ सद्म नचिकेतस मन्ये ॥ १३ ॥**

किंच, एतदात्मतत्त्व यदह वक्ष्यामि, तच्छ्रुत्वा आचार्य सकाशात् सम्यगात्मभावेन परिगृह्य उपादाय मर्त्य मरण धर्मा धर्मादनपेत धर्म्य प्रवृह्य उद्यम्य पृथक्कृत्य शरीरादे अणु सूक्ष्मम् एतम् आत्मानम् आप्य प्राप्य स मर्त्य विद्वान् मोदते मोदनीय हि हर्षणीयमात्मान लब्ध्वा । तदेतदेवविध ब्रह्म सद्म भवन नचिकेतस त्वा प्रत्यपावृतद्वार विवृतम् अभिमुखीभूत मन्ये, मोक्षार्हं त्वा मन्ये इत्यभिप्राय ॥

**अन्यत्र धर्मादन्यत्राधर्मा-**
**दन्यत्रास्मात्कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च**
**यत्तत्पश्यसि तद्वद ॥ १४ ॥**

एतच्छ्रुत्वा नचिकेता पुनराह— यद्यहं योग्य, प्रसन्नश्चासि भगवन्, मा प्रति अन्यत्र धर्मात् शास्त्रीयाद्धर्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूतमित्यर्थ । तथा अन्यत्र अधर्मात् विहिताकरणरूपात् पापात्, तथा अन्यत्रास्मात्कृताकृतात्, कृत कार्यमकृत कारणमस्मादन्यत्र । किंच, अन्यत्र भूताच्च अतिक्रान्तात्कालात् भव्याच्च भविष्यतश्च तथा अन्यत्र वर्तमानात् । कालत्रयेण यन्न परिच्छिद्यत इत्यर्थ । यदीदृश वस्तु सर्वव्यवहारगोचरातीत पश्यसि जानासि तद्वद मह्यम् ॥

**सर्वे वेदा यत्पदमामनन्ति**
**तपाꣳसि सर्वाणि च यद्वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदꣳसंग्रहेण ब्रवीम्योमित्येतत् ॥**

इत्येव पृष्टवते मृत्युरुवाच, पृष्ट वस्तु विशेषणान्तर च विवक्षन् । सर्वे वेदा यत्पद पदनीय गमनीयम् अविभागेन अविरोधेन आमनन्ति प्रतिपादयन्ति, तपासि सर्वाणि च यद्वदन्ति यत्प्राप्त्यर्थानीत्यर्थ । यदिच्छन्तो ब्रह्मचर्यं गुरुकुलवासलक्षणमन्यद्वा ब्रह्मप्राप्त्यर्थं चरन्ति, तत् ते तुभ्य पद यज्ज्ञातुमिच्छसि सग्रहेण सक्षेपत ब्रवीमि ॐ इत्येतत् । तदेतत्पद यद्बुभुत्सित त्वया तदेतदोमिति ओंशब्दवाच्यमोशब्दप्रतीक च ॥

**एतद्ध्येवाक्षर ब्रह्म**
**एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षर ज्ञात्वा**
**यो यदिच्छति तस्य तत् ॥ १६ ॥**

अत एतद्ध्येवाक्षर ब्रह्म अपरम् एतद्ध्येवाक्षर पर च । तयोर्हि प्रतीकमेतदक्षरम् । एतद्ध्येवाक्षर ज्ञात्वा उपास्य ब्रह्मेति यो यदिच्छति परमपर वा तस्य तत् भवति । पर चेत् ज्ञातव्यम्, अपर चेत् प्राप्तव्यम् ॥

**एतदालम्बनꣳ श्रेष्ठ-**
**मेतदालम्बनं परम् ।**

**एतदालम्बन ज्ञात्वा**
**ब्रह्मलोके महीयते ॥ १७ ॥**

यत एवम् , अत एव एतत् ब्रह्मप्राप्त्यालम्बनाना श्रेष्ठ प्रशस्यतमम् । एतदालम्बन परम् अपर च, परापरब्रह्मविषयत्वात् । एतदालम्बन ज्ञात्वा ब्रह्मलोके महीयते । परस्मिन्ब्रह्मण्यपरस्मिंश्च ब्रह्मभूतो ब्रह्मवदुपास्यो भवतीत्यर्थ ॥

**न जायते म्रियते वा विपश्चि-**
**न्नाय कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ १८ ॥**

अन्यत्र धर्मादित्यादिना पृष्टस्यात्मनोऽशेषविशेषरहितस्यालम्बनत्वेन प्रतीकत्वेन चोंकारो निर्दिष्ट , अपरस्य च ब्रह्मणो मन्दमध्यमप्रतिपत्तॄन्प्रति । अथेदानीं तस्योकारालम्बनस्यात्मन साक्षात्स्वरूपनिर्दिधारयिषयेदमुच्यते । न जायते नोत्पद्यते म्रियते वा न म्रियते च उत्पत्तिमतो वस्तुनोऽनित्यस्यानेका विक्रिया , तासामाद्यन्ते जन्मविनाशलक्षणे विक्रिये इहात्मनि प्रतिषिध्येते प्रथम सर्वविक्रियाप्रतिषेधार्थं न जायते म्रियते वेति । विपश्चित् मेधावी अपरिलु-

प्रचैतन्यस्वभावत्वात् । किंच, नायमात्मा कुतश्चित् कारणान्तरात् बभूव न प्रभूत । अस्माच्चात्मनो न बभूव कश्चिदर्थान्तरभूत । अतोऽयमात्मा अजो नित्य शाश्वत अपक्षयविवर्जित । यो ह्यशाश्वत , सोऽपक्षीयते , अय तु शाश्वत अत एव पुराण पुरापि नव एवेति । यो ह्यवयवोपचयद्वारेणाभिनिर्वर्त्यते, स इदानीं नव , यथा कुड्यादि , तद्विपरीतस्त्वात्मा पुराणो वृद्धिविवर्जित इत्यर्थ । यत एवम् , अत न हन्यते न हिंस्यते हन्यमाने शस्त्रादिभि शरीर , तत्स्थोऽप्याकाशवदेव ॥

हन्ता चेन्मन्यते हन्तुꣳ
हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो
नायꣳ हन्ति न हन्यते ॥ १९ ॥

एवभूतमप्यात्मान शरीरमात्रात्मदृष्टि हन्ता चेत् यदि मन्यते चिन्तयति इच्छति हन्तु हनिष्याम्येनमिति यो ऽप्यन्यो हत सोऽपि चेन्मन्यते हतमात्मान हतोऽहमिति उभावपि तौ न विजानीत स्वमात्मानम् , यत नाय हन्ति अविक्रियत्वादात्मन , तथा न हन्यते आकाशवदविक्रियत्वादेव ।

अतोऽनात्मज्ञविषय एव धर्माधर्मादिलक्षण ससार नात्मज्ञस्य, श्रुतिप्रामाण्यान्न्यायाच्च धर्माधर्माद्यनुपपत्त ॥

**अणोरणीयान्महतो महीया-**
**नात्मास्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोको**
**धातुप्रसादान्महिमानमात्मनः ॥ २० ॥**

कथ पुनरात्मान जानातीति, उच्यते— अणो सूक्ष्मात् अणीयान् श्यामाकादेरणुतर । महतो महत्परिमाणात् महीयान् महत्तर पृथिव्यादे , अणु महद्वा यदस्ति लोके वस्तु, तत्तेनैवात्मना नित्येनात्मवत्सभवति । तदात्मना विनिर्मुक्तमसत्सपद्यते । तस्मादसावेवात्मा अणोरणीयान्महतो महीयान् , सर्वनामरूपवस्तूपाधिकत्वात् । स च आत्मा अस्य जन्तो ब्रह्मादिस्तम्बपर्यन्तस्य प्राणिजातस्य गुहाया हृदये निहित आत्मभूत स्थित इत्यर्थ । तम् आत्मान दर्शनश्रवणमननविज्ञानलिङ्गम् अक्रतु अकाम , दृष्टादृष्टबाह्यविषयेभ्य उपरतबुद्धिरित्यर्थ । यदा चैव तदा मनआदीनि करणानि धातव शरीरस्य धारणात्प्रसीदन्तीत्येषा धातूना प्रसादादात्मनो महिमान कर्मनिमित्तवृद्धिक्षयरहित पश्यति अयमहमस्मीति साक्षा

द्विजानाति, ततो विगतशोको भवति ॥

आसीनो दूरं व्रजति
शयानो याति सर्वतः ।
कस्तं मदामदं देवं
मदन्यो ज्ञातुमर्हति ॥ २१ ॥

अन्यथा दुर्विज्ञेयोऽयमात्मा कामिभिः प्राकृतपुरुषैर्यस्मात् आसीन अवस्थितोऽचल एव सन् दूरं व्रजति शयानः याति सर्वतः, एवमसावात्मा देवो मदामदः समदोऽमदश्च सहर्षोऽहर्षश्च विरुद्धधर्मवानतोऽशक्यत्वाज्ज्ञातुं कः तं मदामदं देवं मदन्यो ज्ञातुमर्हति । अस्मदादेरेव सूक्ष्मबुद्धेः पण्डितस्य विज्ञेयोऽयमात्मा स्थितिगतिनित्यानित्यादिविरुद्धानेकधर्मोपाधिकत्वाद्विरुद्धधर्मवान् विश्वरूप इव चिन्तामणिवत्कस्यचिदवभासते । अतो दुर्विज्ञेयत्वं दर्शयति— कस्तं मदन्यो ज्ञातुमर्हतीति । करणानामुपशमः शयनं करणजनितस्यैकदेशविज्ञानस्योपशमः शयानस्य भवति । यदा चैवं केवलसामान्यविज्ञानत्वात्सर्वतो यातीव यदा विशेषविज्ञानस्थः स्वेन रूपेण स्थित एव सन् मनआदिगतिषु तदुपाधिकत्वाद्दूरं व्रजतीव । स चेहैव वर्तते ॥

**अशरीरँ शरीरेषु**
**अनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं**
**मत्वा धीरो न शोचति ॥ २२ ॥**

तद्विज्ञानाच्च शोकात्यय इत्यपि दर्शयति—अशरीरः स्वेन रूपेणाकाशकल्प आत्मा तम् अशरीरं शरीरेषु देवपितृमनुष्यादिशरीरेषु अनवस्थेषु अवस्थितिरहितेष्वनित्येषु अवस्थितं नित्यम् अविकृतमित्येतत् । महान्तम् । महत्त्वस्यापेक्षिकत्वशङ्कायामाह— विभुं व्यापिनम् आत्मानम्, आत्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थम् । आत्मशब्दः प्रत्यगात्मविषय एव मुख्यः तमीदृशमात्मानं मत्वा अयमहमिति, धीरः धीमान् न शोचति । न ह्येवंविधस्यात्मविदः शोकोपपत्तिः ॥

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥**

यद्यपि दुर्विज्ञेयोऽयमात्मा तथाप्युपायेन सुविज्ञेय एवे

त्याह— नायमात्मा प्रवचनेन अनेकवेदस्वीकरणेन लभ्य ज्ञेय , नापि मेधया ग्रन्थार्थधारणशक्त्या , न बहुना श्रुतेन न बाहुश्रुत्येन केवलेन । केन तर्हि लभ्य इति, उच्यते– यमेव स्वमात्मानम् एष साधको वृणुते प्रार्थयते, तेनैवा त्मना वरित्रा स्वयमात्मा लभ्य ज्ञायत इत्येतत् । निष्का- मश्चात्मानमेव प्रार्थयते । आत्मनैवात्मा लभ्यत इत्यर्थ । कथ लभ्यत इति, उच्यते— तस्यात्मकामस्य एष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं स्वा तनू स्वकीय याथा- त्म्यमित्यर्थ ॥

**नाविरतो दुश्चरिता-**
**न्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वापि**
**प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

किंचान्यत् । न दुश्चरितात् प्रतिषिद्धाच्छ्रुतिस्मृत्यविहिता- त्पापकर्मण अविरत अनुपरत । नापि इन्द्रियलौल्यात् अ- शान्त अनुपरत । नापि असमाहित अनेकाग्रमना विक्षिप्त- चित्त । समाहितचित्तोऽपि सन्समाधानफलार्थित्वात् नापि अशान्तमानस व्यापृतचित्तो वा । प्रज्ञानेन ब्रह्मविज्ञानेन एन

प्रकृतमात्मानम् आप्नुयात्, यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च, समाहितचित्त समाधानफलादप्युपशान्तमानसश्चाचार्यवान् प्रज्ञानन एन यथोक्तमात्मान प्राप्नोतीत्यर्थ ॥

यस्य ब्रह्म च क्षत्न च
उभे भवत ओदन' ।
मृत्युर्यस्योपसेचन
क इत्था वेद यत्न सः ॥ २५ ॥

इति द्वितीया वल्ली ॥

यस्त्वनेवभूत यस्य आत्मन ब्रह्म च क्षत्र च ब्रह्मक्षत्रे सर्वधर्मविधारके अपि सर्वप्राणभूते उभे ओदन अशन भवत स्याताम्, सर्वहरोऽपि मृत्यु यस्य उपसेचनमिवौदनस्य, अशनत्वेऽप्यपर्याप्त , त प्राकृतबुद्धियथाक्तसाधनानभियुक्त सन् क इत्था इत्थमेव यथोक्तसाधनवानिवेत्यर्थ , वेद विजानाति यत्र स आत्मेति ॥

इति द्वितीयवल्लीभाष्यम् ॥

# तृतीया वल्ली ॥

ऋत पिबन्तौ सुकृतस्य लोके
गुहा प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेता. ॥ १ ॥

ऋत पिबन्ताविल्यस्या वल्ल्या सबन्ध — विद्याविद्ये नाना विरुद्धफले इत्युपन्यस्ते, न तु सफले ते यथावन्निर्णीते । तन्निर्णयार्था रथरूपककल्पना, तथा च प्रतिपत्तिसौकर्यम् । एव च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थं रथरूपकद्वारा द्वावात्मानावुपन्यस्येत— ऋत सत्यम् अवश्यभावित्वात्कर्मफल पिबन्तौ, एकस्तत्र कमफल पिबति भुङ्क्ते नेतर, तथापि पातृसबन्धात्पिबन्तावित्युच्येते च्छत्रिन्यायन । सुकृतस्य स्वयकृतस्य कर्मण ऋतमिति पूर्वेण सबन्ध । लोके अस्मिञ्शरीरे, गुहा गुहाया बुद्धौ प्रविष्टौ, परमे, बाह्यपुरुषाकाशसस्थानापेक्षया परमम, परार्धे परस्य ब्रह्मणोऽर्धं स्थान परार्ध हार्दाकाशम् । तस्मिन्हि पर ब्रह्मोपलभ्यते । तत

तस्मिन्परमे परार्धे हार्दाकाशे प्रविष्टावित्यर्थ । तौ च च्छा-यातपाविव विलक्षणौ ससारित्वाससारित्वेन ब्रह्मविदो वदन्ति कथयन्ति । न केवलमकर्मिण एव वदन्ति । पञ्चाग्नयो गृहस्था । ये च त्रिणाचिकेता त्रि कृत्वो नाचिकेतोऽग्निश्चिता यैस्ते त्रिणाचिकेता ॥

**य' सेतुरीजानाना**
**मक्षर ब्रह्म यत्परम् ।**
**अभय तितीर्षता पार**
**नाचिकेत॰ शकेमहि ॥ २ ॥**

य सेतु सेतुरिव सेतु ईजानाना यजमानाना कर्मिणाम्, दु खसतरणार्थत्वात् । नाचिकेत नाचिकेतोऽग्नि तम्, वय ज्ञातु चेतु च शकेमहि शक्तवन्त । किंच, यच्च अभय भयशून्य ससारस्य पार तितीर्षता तरितुमिच्छता ब्रह्मविदा यत्परम् आश्रयम् अक्षरम् आत्माख्य ब्रह्म, तच्च ज्ञातु शकेमहि । परापरे ब्रह्मणी कर्मिब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थ, तयोरेव ह्युपन्यास कृत 'ऋत पिब तौ' इति ॥

**आत्मान॰ रथिनं विद्धि**
**शरीर॰ रथमेव तु ।**

**बुद्धिं तु सारथिं विद्धि**
**मनः प्रग्रहमेव च ॥ ३ ॥**

तत्र य उपाधिकृतः संसारी विद्याविद्ययोरधिकृतो मोक्षगमनाय संसारगमनाय च, तस्य तदुभयगमने साधनो रथः कल्प्यते— तत्रात्मानम् ऋतपं संसारिणं रथिनं रथस्वामिनं विद्धि विजानीहि, शरीरं रथम् एव तु रथबद्धहयस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य । बुद्धिं तु अध्यवसायलक्षणां सारथिं विद्धि, बुद्धिनेतृप्रधानत्वाच्छरीरस्य, सारथिनेतृप्रधान इव रथः । सर्वं हि देहगतं कार्यं बुद्धिकर्तव्यमेव प्रायेण । मनः संकल्पविकल्पादिलक्षणं प्रग्रहमेव च रशनामेव विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः ॥

**इन्द्रियाणि हयानाहु-**
**र्विषयाँस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं**
**भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

इन्द्रियाणि चक्षुरादीनि हयानाहुः रथकल्पनाकुशलाः,

शरीररथाकर्षणसामान्यात् । तेषु इन्द्रियेषु हयत्वेन परिकल्पितेषु गोचरान् मार्गान् रूपादीन्विषयान् विद्धि । आत्मेन्द्रियमनोयुक्त शरीरेन्द्रियमनोभि सहित सयुतमात्मान भोक्तेति ससारीति आहु मनीषिण विवेकिन । न हि केवलस्यात्मनो भोक्तृत्वमस्ति, बुद्धयाद्युपाधिकृतमेव तस्य भोक्तृत्वम् । तथा च श्रुत्यन्तर केवलस्याभोक्तृत्वमेव दर्शयति— 'ध्यायतीव लेलायतीव' इत्यादि । एव च सति वक्ष्यमाणरथकल्पनया वैष्णवस्य पदस्यात्मतया प्रतिपत्तिरुपपद्यते, नान्यथा, स्वभावानतिक्रमात् ॥

**यस्त्वविज्ञानवान्भव-**
**त्ययुक्तेन मनसा सदा ।**
**तस्येन्द्रियाण्यवश्यानि**
**दुष्टाश्वा इव सारथेः ॥ ५ ॥**

तत्रैव सति यस्तु बुद्धयाख्य सारथि अविज्ञानवान् अनिपुणोऽविवेकी प्रवृत्तौ च निवृत्तौ च भवति यथेतरो रथचर्यायाम् अयुक्तेन अप्रगृहीतेन असमाहितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति, तस्य अकुशलस्य बुद्धिसारथे इन्द्रियाणि अश्वस्थानीयानि अवश्यानि अशक्यनिवारणानि

दुष्टाश्वा अदान्ताश्वा इव इतरसारथे भवन्ति ॥

यस्तु विज्ञानवान्भवति
युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि
सदश्वा इव सारथे ॥ ६ ॥

यस्तु पुन पूर्वोक्तविपरीतसारथिर्भवति तस्य फलमाह— यस्तु विज्ञानवान् निपुण विवेकवान् युक्तेन मनसा प्रगृहीतमना समाहितचित्त सदा, तस्य अश्वस्थानीयानीन्द्रियाणि प्रवर्तयितु निवतयितु वा शक्यानि वश्यानि दान्ता सदश्वा इवेतरसारथे ॥

यस्त्वविज्ञानवान्भव-
त्यमनस्कः सदाशुचि ।
न स तत्पदमाप्नोति
सꣳसार चाधिगच्छति ॥ ७ ॥

तत्र पूर्वोक्तस्याविज्ञानवता बुद्धिसारथेरिद फलमाह— यस्त्वविज्ञानवान्भवति । अमनस्क अप्रगृहीतमनस्क स तत एव अशुचि सदैव । न स रथी तत् पूर्वोक्तमक्षर

यत्पर पदम् आप्नोति तेन सारथिना । न केवल तन्नाप्नोति, ससार च जन्ममरणलक्षणम् अधिगच्छति ॥

**यस्तु विज्ञानवान्भवति**
**समनस्क सदा शुचिः ।**
**स तु तत्पदमाप्नोति**
**यस्माद्भूयो न जायते ॥ ८ ॥**

यस्तु द्वितीयो विज्ञानवान् भवति विज्ञानवत्सारथ्युपेतो रथी, विद्वानित्येतत् । युक्तमना समनस्क स तत एव सदा शुचि । स तु तत्पदमाप्नोति, यस्मादाप्तात्पदादप्रच्युत सन भूय पुन न जायते ससारे ॥

**विज्ञानसारथिर्यस्तु**
**मन.प्रग्रहवान्नर ।**
**सोऽध्वन पारमाप्नोति**
**तद्विष्णो. परम पदम् ॥ ९ ॥**

किं तत्पदमित्याह— विज्ञानसारथि यस्तु यो विवेकबुद्धि-सारथि पूर्वोक्त मन प्रग्रहवान् प्रगृहीतमना समाहितचित्त

सन् शुचिर्नरो विद्वान्, स अध्वन ससारगते पार परमेव, अधिगन्तव्यमित्येतत्, आप्नोति, मुच्यते सर्वससारबन्धनै । तत् विष्णो व्यापनशीलस्य ब्रह्मण परमात्मनो वासुदेवाख्यस्य परम प्रकृष्ट पद स्थानम्, सतत्त्वमित्येतत्, यत् असावाप्नोति विद्वान् ॥

इन्द्रियेभ्यः परा ह्यर्था
अर्थेभ्यश्च पर मनः ।
मनसस्तु परा बुद्धि-
र्बुद्धेरात्मा महान्पर ॥ १० ॥

अधुना यत्पद ग तव्य तस्येन्द्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतयाधिगम कर्तव्य इत्येवमर्थमिदमारभ्यते । स्थूलानि तावदिन्द्रियाणि, तानि यै परैरर्थैरात्मप्रकाशनायारब्धानि तेभ्य इन्द्रियेभ्य स्वकार्येभ्य ते परा हि अर्था सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च । तेभ्योऽपि अर्थेभ्यश्च पर सूक्ष्मतर महत्प्रत्यगात्मभूत च मन । मन शब्दवाच्य मनस आरम्भक भूतसूक्ष्मम्, सकल्पविकल्पाद्यारम्भकत्वात्। मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धि, बुद्धिशब्दवाच्यमध्यवसायाद्यारम्भक भूतसूक्ष्मम् ।

बुद्धेरात्मा सर्वप्राणिबुद्धीना प्रत्यगात्मभूतत्वादात्मा महान् सर्वमहत्त्वात् अव्यक्ताद्यत्प्रथम जात हैरण्यगर्भ तत्त्व बोधाबोधात्मक महानात्मा बुद्धे पर इत्युच्यते ॥

**महत परमव्यक्त-**
**मव्यक्तात्पुरुष पर. ।**
**पुरुषान्न पर किंचि-**
**त्सा काष्ठा सा परा गति' ॥ ११ ॥**

महतोऽपि पर सूक्ष्मतर प्रत्यगात्मभूत सर्वमहत्तर च अव्यक्त सर्वस्य जगतो बीजभूतमव्याकृतनामरूप सतत्त्व सर्व कार्यकारणशक्तिसमाहाररूपम् अव्यक्तम् अव्याकृताकाशादिनामवाच्य परमात्मन्योतप्रोतभावेन समाश्रित वटकणिकायामिव वटवृक्षशक्ति । तस्मादव्यक्तात् पर सूक्ष्मतर सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च महाश्च, अत एव पुरुष सर्वपूरणात् । ततोऽन्यस्य परस्य प्रसङ्ग निवारयन्नाह— पुरुषान्न पर किंचिदिति । यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्पर किंचिदपि वस्त्वन्तरम्, तस्मात्सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वाना मा काष्ठा निष्ठा पर्यवसानम् । अत्र हि इन्द्रियेभ्य आरभ्य सूक्ष्मत्वादि परिसमाप्तम् । अत एव च गन्तृणा सर्वगति

मता ससारिणा सा परा प्रकृष्टा गति , 'यद्गत्वा न निव र्तन्ते' इति स्मृते ॥

एष सर्वेषु भूतेषु
गूढोऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या
सूक्ष्मया सूक्ष्मदर्शिभि. ॥ १२ ॥

ननु गतिश्चेदागत्यापि भवितव्यम्, कथम् 'यस्माद्भूयो न जायते' इति? नैष दोष । सर्वस्य प्रत्यगात्मत्वादवगति- रेव गतिरित्युपचर्यते । प्रत्यगात्मत्व च दर्शितम् इन्द्रियम- नोबुद्धिपरत्वेन । यो हि गन्ता सोऽयमप्रत्यग्रूप पुरुष गच्छति अनात्मभूत न विन्दति स्वरूपेण । तथा च श्रुति 'अनध्वगा अध्वसु पारयिष्णव' इत्याद्या । तथा च दर्श यति प्रत्यगात्मत्व सर्वस्य— एष पुरुष सर्वेषु ब्रह्मादिस्त- म्बपर्यन्तेषु भूतेषु गूढ सवृत दर्शनश्रवणादिकर्मा अविद्या- मायाच्छन्न अत एव आत्मा न प्रकाशते आत्मत्वेन कस्य- चित् । अहो अतिगम्भीरा दुरवगाह्या विचित्रा चेय माया, यदय सर्वो जन्तु परमार्थत परमार्थसतत्त्वोऽप्येव बोध्य- मानोऽह परमात्मेति न गृह्णाति, अनात्मान देहेन्द्रियादिस

घातमात्मनो दृश्यमानमपि घटादिवदात्मत्वेनाहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति । नून परस्यैव मायया मोमुह्यमान सर्वो लोकोऽय बभ्रमीति । तथा च स्मरणम्—'नाह प्रकाश सर्वस्य योगमायासमावृत ' इत्यादि । ननु विरुद्धमिदमुच्यते—मत्वा धीरो न शोचति, न प्रकाशत इति च । नैतदेवम् । असस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युक्तम् । दृश्यते तु सस्कृतया अग्र्यया, अग्रमिवाग्र्या तया, एकाग्रतयोपेतयेत्येतत्, सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया । कै ? सूक्ष्मदर्शिभि 'इन्द्रियेभ्य परा ह्यर्था ' इत्यादिप्रकारेण सूक्ष्मतापारम्पर्यदर्शनेन पर सूक्ष्म द्रष्टु शील येषा ते सूक्ष्मदर्शिन , तै सूक्ष्मदर्शिभि , पण्डितैरित्येतत् ॥

**यच्छेद्वाङ्मनसी प्राज्ञ-**
**स्तद्यच्छेज्ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति नियच्छे-**
**त्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥**

तत्प्रतिपत्त्युपायमाह— यच्छेत् नियच्छेदुपसहरेत् प्राज्ञ विवेकी । किम् ? वाक् वाचम्, वागत्रोपलक्षणार्था सर्वेषामिन्द्रियाणाम् । क ? मनसी मनसि । छान्दस दैर्घ्यम् । तच्च मन

यच्छेत् ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि । बुद्धिर्हि मनआदिकरणान्याप्नोतीत्यात्मा प्रत्यक् च तेषाम् । ज्ञान बुद्धिम आत्मनि महति प्रथमजे नियच्छेत् । प्रथमजवत्स्वच्छस्वभावकमात्मनो विज्ञानमापादयेदित्यथ । त च महान्तमात्मान यच्छेत् शान्ते सर्वविशेषप्रत्यस्तमितरूपे अविक्रिये सर्वान्तरे सर्वबुद्धिप्रत्ययसाक्षिणि मुख्ये आत्मनि ॥

उत्तिष्ठत जाग्रत
प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्ग पथस्तत्कवयो वदन्ति ॥ १४ ॥

एव पुरुषे आत्मनि सर्व प्रविलाप्य नामरूपकर्मत्रय यन्मिथ्याज्ञानविजृम्भित क्रियाकारकफललक्षण स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थ प्रशान्त कृतकृत्यो भवति यत , अतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तव , आत्मज्ञानाभिमुखा भवत, जाग्रत अज्ञाननिद्राया घोररूपाया सर्वानर्थबीजभूताया क्षय कुरुत । कथम् ? प्राप्य उपगम्य वरान् प्रकृष्टानाचार्यास्तत्त्वविद , तदुपदिष्ट सर्वान्तरमात्मानमहमस्मीति

निबोधत अवगच्छत, न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पया आह मातृवत्, अतिसूक्ष्मबुद्धिविषयत्वाज्ज्ञेयस्य । किमिव सूक्ष्मबुद्धिरिति, उच्यते— क्षुरस्य धारा अग्र निशिता तीक्ष्णीकृता दुरत्यया दुःखेनात्ययो यस्याः सा दुरत्यया । यथा सा पद्भ्यां दुर्गमनीया तथा दुर्गं दुःसंपाद्यमित्येतत्, पथः पन्थानं तत् तं ज्ञानलक्षणं मार्गं कवयः मेधाविनो वदन्ति । ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दुःसंपाद्यत्वं वदन्तीत्यभिप्रायः ॥

अशब्दमस्पर्शमरूपमव्ययं
  तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
  निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥१५॥

तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येति, उच्यते । स्थूला तावदियं मेदिनी शब्दस्पर्शरूपरसगन्धोपचिता सर्वेन्द्रियविषयभूता तथा शरीरम् । तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति । ते गन्धादयः सर्वे एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति, किमु तस्य सूक्ष्मत्वादिनिरतिश-

यत्व वक्तव्यमित्येतद्दर्शयति श्रुति — अशब्दमस्पर्शमरूपम-रसमगन्धवच्च यत्, एतद्व्याख्यात ब्रह्म । अव्ययम्, यद्धि शब्दादिमत्, तद्व्येति, इद त्वशब्दादिमत्त्वादव्यय न व्येति न क्षीयते, अत एव च नित्यम्, यद्धि व्येति, तदनित्यम्, इद तु न व्येति, अतो नित्यम । इतश्च नित्यम्—अनादि अविद्यमान आदि कारणमस्य तदिदमनादि । यच्चादिमत्, तत्कार्यत्वादनित्य कारणे प्रलीयते यथा पृथिव्यादि, इद तु सर्वकारणत्वादकार्यम्, अकार्यत्वान्नित्यम्, न तस्य कारणमस्ति यस्मिन्प्रलीयेत । तथा अनन्तम् अविद्यमानोऽन्त कार्यमस्य तदनन्तम् । यथा कदल्यादे फलादिकार्योत्पादनेनाप्यनित्यत्व दृष्टम्, न च तथाप्यन्तवत्त्व ब्रह्मण, अतोऽपि नित्यम । महत महत्तत्त्वाद्बुद्ध्याख्यात् पर विलक्षण नित्यविज्ञप्तिस्व-रूपत्वात्, सर्वसाक्षि हि सर्वभूतात्मत्वाद्ब्रह्म । उक्त हि—'एष सर्वेषु भूतेषु' इत्यादि । ध्रुव च कूटस्थ नित्य न पृथिव्यादि-वदापेक्षिक नित्यत्वम । तत् एवभूत ब्रह्म आत्मान निचाय्य अवगम्य तम् आत्मान मृत्युमुखात् मृत्युगोचरादविद्याका-मकर्मलक्षणात् प्रमुच्यते वियुज्यते ॥

नाचिकेतमुपाख्यान
मृत्युप्रोक्तऽ सनातनम् ।

उक्त्वा श्रुत्वा च मेधावी
ब्रह्मलोके महीयते ॥ १६ ॥

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुति — नाचिकेत नचिकेतसा प्राप्त नाचिकेत मृत्युना प्रोक्त मृत्युप्रोक्तम् इदमाख्यानमुपाख्यान वल्लीत्रयलक्षण सनातन चिरतन वैदिकत्वात् उक्त्वा ब्राह्मणेभ्य श्रुत्वा च आचार्येभ्य मेधावी ब्रह्मैव लोको ब्रह्मलोक तस्मिन् ब्रह्मलोके महीयते आत्मभूत उपास्यो भवतीत्यभिप्राय ॥

य इम परम गुह्य
श्रावयेद्ब्रह्मससदि ।
प्रयतः श्राद्धकाले वा
तदानन्त्याय कल्पते ॥
तदानन्त्याय कल्पत इति ॥ १७ ॥

इति तृतीया वल्ली ॥

इति काठकोपनिषदि प्रथमोऽध्यायः ॥

य कश्चिदिम ग्रन्थ परम प्रकृष्ट गुह्य गोप्य श्रावयेत् ग्रन्थतोऽर्थतश्च ब्राह्मणाना ससदि ब्रह्मससदि प्रयत शुचि-

भूत्वा श्राद्धकाले वा श्रावयेत् भुञ्जानान्, तत् श्राद्धम् अस्य आनन्त्याय अनन्तफलाय कल्पते समर्थ्यते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥

इति तृतीयवल्लीभाष्यम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
काठकोपनिषद्भाष्ये
प्रथमोऽध्यायः ॥

# द्वितीयोऽध्याय. ॥

—— ❀ ——

'एष सर्वेषु भूतेषु गुढोऽत्मा न प्रकाशते' ,दृश्यते त्वग्र्यया बुद्धया' इत्युक्तम् । क पुन प्रतिबन्धोऽग्र्याया बुद्धे , येन तदभा-वादात्मा न दृश्यत इति तददर्शनकारणप्रद शनार्था वल्ली आरभ्यते, विज्ञाते हि श्रेय प्रतिब धकारण तदपनयनाय यत्न आरब्धु शक्यते, नान्यथेति—

**पराञ्चि खानि व्यतृणत्स्वयम्भू**
**स्तस्मात्पराङ् पश्यति नान्तरात्मन् ।**
**कश्चिद्धीर प्रत्यगात्मानमैक्ष**
**दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

पराञ्चि पराग्ञ्चन्ति गच्छन्तीति, खानि खोपलक्षि-तानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते । तानि परा ञ्चन्त्येव शब्दादिविषयप्रकाशनाय प्रवर्तन्ते । यस्मादवस्वभा-वकानि तानि व्यतृणत् हिंसितवान् हनन कृतवानित्यर्थ ।

कोऽसौ ? स्वयभू परमेश्वर स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति । तस्मात् पराङ् पराग्रूपाननात्मभूताञ्शब्दादीन् पश्यति उपलभते उपलब्धा नान्तरात्मन् नान्तरात्मानमित्यर्थ । एवस्वभावेऽपि सति लोकस्य कश्चित् नद्या प्रतिस्रोत प्रवर्तनमिव धीर धीमान्विवेकी प्रत्यगात्मान प्रत्यक् चासावात्मा चेति प्रत्यगात्मा । प्रतीच्येवात्मशब्दो रूढो लोके, नान्यत्र । व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्तते, 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सततो भावस्तस्मादात्मेति कीर्त्यते' इत्यात्मशब्दव्युत्पत्तिस्मरणात् । त प्रत्यगात्मान स्वस्वभावम् ऐक्षत् अपश्यत् पश्यतीत्यर्थ , छन्दसि कालानियमात् । कथ पश्यतीति, उच्यते— आवृत्तचक्षु आवृत्त व्यावृत्त चक्षु श्रोत्रादिकमिन्द्रियजातमशेषविषयात् यस्य स आवृत्तचक्षु । स एव सस्कृत प्रत्यगात्मान पश्यति । न हि बाह्यविषयालोचनपरत्व प्रत्यगात्मेक्षण चैकस्य सभवति । किमिच्छन्पुनरित्थ महता प्रयासेन स्वभावप्रवृत्तिनिरोध कृत्वा धीर प्रत्यगात्मान पश्यतीति, उच्यते । अमृतत्वम् अमरणधर्मत्व नित्यस्वभावताम् इच्छन् आत्मन इत्यर्थ ॥

पराच कामाननुयन्ति बाला-
स्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्व विदित्वा
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

यत्तावत्स्वाभाविक परागेवानात्मदर्शन तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वाद्या च परागेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्या प्रतिबद्धात्मदर्शना पराच बहिर्गतानेव कामान् काम्यान्विषयान् अनुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञा ते तेन कारणेन मृत्यो अविद्याकामकर्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाश पाश्यते बध्यते येन त पाश देहेन्द्रियादिसयोगवियोगलक्षणम् । अनवरत जन्ममरणजरारोगाद्यनेकानर्थव्रात प्रतिपद्यन्त इत्यर्थ । यत एवम अथ तस्मात् धीरा विवेकिन प्रत्यगात्मस्वरूपावस्थानलक्षणम् अमृतत्व ध्रुव विदित्वा । देवाद्यमृतत्व ह्यध्रुवम् , इद तु प्रत्यगात्मस्वरूपावस्थानलक्षण ध्रुवम् , 'न कर्मणा वर्धते नो कनीयान्' इति श्रुते । तदेवभूत कूटस्थमविचाल्यममृतत्व विदित्वा अध्रुवेषु सर्वपदार्थेषु अनित्येषु निर्धार्य, ब्राह्मणा इह ससारे

ऽनर्थप्राये न प्रार्थयन्ते किंचिदपि प्रत्यगात्मदर्शनप्रतिकूलत्वात् । पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यभिप्रायः ॥

**येन रूपं रसं गन्धं**
**शब्दान्स्पर्शा४श्च मैथुनान् ।**
**एतेनैव विजानाति**
**किमत्र परिशिष्यते । एतद्वै तत् ॥३॥**

यद्विज्ञानान्न किंचिदन्यत्प्रार्थयन्ते ब्राह्मणाः, कथं तदधिगम इति, उच्यते—येन विज्ञानस्वभावेनात्मना रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् मैथुननिमित्तान्सुखप्रत्ययान् विजानाति विस्पष्टं जानाति सर्वो लोकः । ननु नैवं प्रसिद्धिर्लोकस्य आत्मना देहादिविलक्षणेनाहं विजानामीति । देहादिसंघातोऽहं विजानामीति तु सर्वो लोकोऽवगच्छति । ननु देहादिसंघातस्यापि शब्दादिस्वरूपत्वाविशेषाद्विज्ञेयत्वाविशेषाच्च न युक्तं विज्ञातृत्वम् । यदि हि देहादिसंघातो रूपाद्यात्मकः सन् रूपादीन्विजानीयात्, तर्हि बाह्या अपि रूपादयोऽन्योन्यं स्वं स्वं रूपं च विजानीयुः । न चैतदस्ति । तस्माद्देहादिलक्षणांश्च रूपादीन् एतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनात्मना विजानाति लोकः । यथा येन लोहो दहति सो-

ऽग्निरिति तद्वत् आत्मनोऽविज्ञेयम । किम् अत्र अस्मिँल्लोके परिशिष्यते न किंचित्परिशिष्यते सर्वमेव त्वात्मना विज्ञेयम्, यस्यात्मनोऽविज्ञेय न किंचित्परिशिष्यते, स आत्मा सवज्ञ । एतद्वै तत् । किं तत् यन्नचिकेतसा पृष्ट देवादिभिरपि विचि कित्सित धर्मादिभ्योऽन्यत् विष्णो परम पद यस्मात्पर नास्ति तद्वै एतत् अधिगतमित्यथ ॥

**स्वप्नान्त जागरितान्त**

**चोभौ येनानुपश्यति ।**

**महान्त विभुमात्मान**

**मत्वा धीरो न शोचति ॥ ४ ॥**

अतिसूक्ष्मत्वाद्दुर्विज्ञेयमिति मत्वैतमेवार्थं पुन पुनराह— स्वप्नान्त स्वप्नमध्य स्वप्नविज्ञेयमित्येतत् । तथा जागरितान्त जागरितमध्य जागरितविज्ञेय च । उभौ स्वप्नजागरितान्तौ येन आत्मना अनुपश्यति लोक इति सर्व पूर्ववत् । त महान्त विभुमात्मान मत्वा अवगम्यात्मभावेन साक्षादहमस्मि परमा मेति धीर न शोचति ॥

**य इम मध्वद वेद**

**आत्मानं जीवमन्तिकात् ।**

**ईशान भूतभव्यस्य**
**न ततो विजुगुप्सते । एतद्वै तत् ॥५॥**

किच, य कश्चित् इम मध्वद कर्मफलभुज जीव प्राणा विकलापस्य धारयितारमात्मान वेद विजानाति अन्तिकात अन्तिके समीपे ईशानम् इशितार भूतभव्यस्य कालत्रयस्य तत तद्विज्ञानादूर्ध्वमात्मान न विजुगुप्सते न गोपायितु मिच्छति, अभयप्राप्तत्वात् । यावद्धि भयमध्यस्थोऽनित्यमात्मान मन्यते तावद्गोपायितुमिच्छत्यात्मानम् । यदा तु नित्यम द्वैतमात्मान विजानाति, तदा क किं कुतो वा गोपायितुमिच्छेत् । एतद्वै तदिति पूववत् ॥

**य पूर्व तपसो जात-**
**मद्भ्यः पूर्वमजायत ।**
**गुहा प्रविश्य तिष्ठन्त**
**यो भूतेभिर्व्यपश्यत । एतद्वै तत् ॥६॥**

य प्रत्यगात्मेश्वरभावेन निर्दिष्ट, स सर्वात्मेत्येतद्दर्शयति—य कश्चिन्मुमुक्षु पूर्व प्रथम तपस ज्ञानादिलक्षणाद्ब्रह्मण इत्येतत्, जातम् उत्पन्न हिरण्यगर्भम् । किमपेक्ष्य पूर्व मिति, आह—अद्भ्य पूर्वम् अप्सहितेभ्य पञ्चभूतेभ्य, न

केवलाभ्योऽद्भ्य इत्यभिप्राय । अजायत उत्पन्न यस्त प्रथमज देवादिशरीराण्युत्पाद्य सर्वप्राणिगुहा हृदयाकाश प्रविश्य तिष्ठन्त शब्दादीनुपलभमान भूतेभि भूतै कार्यकरणलक्षणै सह तिष्ठन्त यो व्यपश्यत य पश्यतीत्येतत्, य एव पश्यति, स एतदेव पश्यति— यत्तत्प्रकृत ब्रह्म ॥

**या प्राणेन सभवति**
**अदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्तीं**
**या भूतेभिर्व्यजायत । एतद्वै तत् ॥७॥**

किंच, या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मण सभवति शब्दादीनामदनात् अदिति ता पूर्ववद्गुहा प्रविश्य तिष्ठन्तीम् अदितिम् । तामेव विशिनष्टि—या भूतेभि भूतै समन्विता व्यजायत उत्पन्नेत्येतत् ॥

**अरण्योर्निहितो जातवेदा**
**गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवे दिव ईड्यो जागृवद्भि**
**र्हविष्मद्भिर्मनुष्येभिरग्नि । एतद्वै तत् ॥**

किंच, य अधियज्ञम् उत्तराधरारण्योर्निहित स्थित जात-वेदा अग्नि पुन सर्वहविषा भोक्ता अध्यात्म च योगिभि, गर्भ इव गर्भिणाभि अ तवत्नीभिरगर्हितान्नभोजनादिना यथा गर्भ सुभृत सुष्ठु सम्यग्भृतो लोके, इत्थमेव ऋत्विग्भिर्योगिभिश्च सुभृत इत्येतत् । किंच, दिवे दिवे अहन्यहनि ईड्य स्तुत्यो वन्द्यश्च कर्मिभिर्योगिभिश्चाध्वरे हृदये च जागृवद्भि जागरणशीलै अप्रमत्तैरित्येतत् । हविष्मद्भि आज्यान्मिद्भि ध्यानभावनावद्भिश्च मनुष्येभि मनुष्यै अग्नि, एतद्वै तत् तदेव प्रकृत ब्रह्म ॥

**यतश्चोदेति सूर्यः**
**अस्त यत्र च गच्छति ।**
**त देवा' सर्वे अर्पिता-**
**स्तदु नात्येति कश्चन । एतद्वै तत् ॥**

किंच, यतश्च यस्मात्प्राणात् उदेति उत्तिष्ठति सूर्य, अस्त निम्लोचन तिरोधान यत्र यस्मिन्नेव च प्राणे अहन्यहनि गच्छति, त प्राणमात्मान देवा सर्वे अग्न्यादय अधिदैव वागादयश्चाध्यात्म सर्वे विश्वे अरा इव रथनाभौ अर्पिता सम्प्रवेशिता स्थितिकाले । सोऽपि ब्रह्मैव । तत् एतत्सर्वा-

त्मक ब्रह्म, उ नात्येति नातीत्य तदात्मकता तदन्यत्व गच्छ-
ति, कश्चन कश्चिदपि एतद्वै तत् ॥

यदेवेह तदमुत्र
यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति
य इह नानेव पश्यति ॥ १० ॥

यद्ब्रह्मादिस्थावरान्तेषु वर्तमान तत्तदुपाधित्वादब्रह्मवदव
भासमान ससार्यन्यत्परस्माद्ब्रह्मण इति मा भूत्कस्यचिदाश
ङ्कतीदमाह— यदेवेह कार्यकारणोपाधिसमन्वित ससारधर्म
वदवभासमानमविवेकिनाम्, तदेव स्वात्मस्थम् अमुत्र नित्य
विज्ञानघनस्वभाव सर्वससारधर्मवर्जित ब्रह्म। यच्च अमुत्र अ-
मुष्मिन्नात्मनि स्थितम्, तदनु इह तदेव इह कार्यकरणनामरू-
पोपाधिम् अनु विभाव्यमान नान्यत्। तत्रैव सति उपाधि-
स्वभावभेददृष्टिलक्षणया अविद्यया मोहित सन् य इह
ब्रह्मण्यनानाभूते परस्मादन्योऽह मत्तोऽन्यत्पर ब्रह्मेति नानेव
भिन्नमिव पश्यति उपलभते, स मृत्योर्मरणात् मृत्यु मरण पुन
पुन जननमरणभावमाप्नोति प्रतिपद्यते । तस्मात्तथा न
पश्येत्। विज्ञानैकरस नैरन्तर्येणाकाशवत्परिपूर्ण ब्रह्मैवाहम-
स्मीति पश्येदिति वाक्यार्थ ॥

**मनसैवेदमाप्तव्यं**
**नेह नानास्ति किंचन ।**
**मृत्योः स मृत्युं गच्छति**
**य इह नानेव पश्यति ॥ ११ ॥**

प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसैव इदं ब्रह्मैकरसम् आप्तव्यम् आत्मैव नान्यदस्तीति । आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वात् इह ब्रह्मणि नाना नास्ति किंचन अणुमात्रमपि । यस्तु पुनरविद्यातिमिरदृष्टिं न मुञ्चति इह ब्रह्मणि नानेव पश्यति, स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥

**अङ्गुष्ठमात्रः पुरुषो**
**मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य**
**न ततो विजुगुप्सते । एतद्वै तत् ॥**

पुनरपि तदेव प्रकृतं ब्रह्माह— अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः । अङ्गुष्ठपरिमाणं हृदयपुण्डरीकं तच्छिद्रवर्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रः अङ्गुष्ठमात्रवंशपर्वमध्यवर्त्यम्बरवत् । पुरुषः

पूर्णमनेन सर्वमिति । मध्ये आत्मनि शरीरे तिष्ठति य तम् आत्मानम् ईशान भूतभव्यस्य विदित्वा, न तत इत्यादि पूर्ववत् ॥

**अङ्गुष्ठमात्र॰ पुरुषो**
**ज्योतिरिवाधूमक॰ ।**
**ईशानो भूतभव्यस्य**
**स एवाद्य स उ श्वः । एतद्वै तत् ॥**

किंच, अङ्गुष्ठमात्र पुरुष ज्योतिरिव अधूमक , अधूमकमिति युक्त ज्योति परत्वात् । यस्त्वेव लक्षितो योगिभिर्हृदये ईशान भूतभव्यस्य स एव नित्य कूटस्थ अद्य इदानीं प्राणिषु वर्तमान स उ श्वोऽपि वर्तिष्यते, नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थ । अनेन 'नायमस्तीति चैके' इत्यय पक्षो न्यायतोऽप्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्त , तथा क्षणभङ्गवादश्च ।

**यथोदक दुर्गे वृष्ट**
**पर्वतेषु विधावति ।**

एवं धर्मान्पृथक्पश्य-
स्तानेवानुविधावति ॥ १४ ॥

पुनरपि भेददर्शनापवाद ब्रह्मण आह— यथा उदक दुर्गे दुर्गमे देशे उच्छ्रिते वृष्ट सिक्त पर्वतेषु पर्ववत्सु निम्नप्रदेशेषु विधावति विकीर्ण सद्विनश्यति, एव धर्मान् आत्मनाऽभिन्नान् पृथक् पश्यन् पृथगव प्रतिशरीर पश्यन् तानव शरीरभेदानुवर्तिन अनुविधावति । शरीरभेदमेव पृथक् पुन पुन प्रतिपद्यत इत्यर्थ ॥

यथोदक शुद्धे शुद्ध-
मासिक्त तादृगेव भवति ।
एव मुनेर्विजानत
आत्मा भवति गौतम ॥ १५ ॥

इति चतुर्थी वल्ली ।

अस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैकरसमद्वयमात्मान पश्यतो विजानतो मुनेर्मनन शीलस्यात्मस्वरूप कथ सभवतीति, उच्यते— यथा उदक शुद्धे प्रसन्ने शुद्ध प्रसन्नम् आसिक्त प्रक्षिप्तम् एकरसमेव

नान्यथा, तादृगेव भवति अत्माप्येवमव भवति एकत्व विजानतो मुने मननशीलस्य हे गौतम । तस्मात्कुतार्किकभेददृष्टि नास्तिककुदृष्टिं चोज्झित्वा मातृपितृसहस्रभ्योऽपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शन शान्तदर्पैरादरणीयमित्यर्थ ॥

इति चतुर्थवल्लीभाष्यम् ॥

# पञ्चमी वल्ली ।

---

पुरमेकादशद्वार-

मजस्यावक्रचेतसः ।

अनुष्ठाय न शोचति

विमुक्तश्च विमुच्यते । एतद्वै तत् ॥ १ ॥

पुनरपि प्रकारान्तरेण ब्रह्मतत्त्वनिर्धारणार्थोऽयमारम्भ, दुर्विज्ञयत्वाद्ब्रह्मण — पुर पुरमिव पुरम । द्वारद्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसपत्तिदर्शनात् शरीर पुरम् । पुर च सोपकरण स्वात्मना असहतस्वतन्त्रस्वाम्यर्थं दृष्टम् । तथेद पुरसामान्यादनेकोपकरणसहत शरीर स्वात्मना असहतराजस्थानीयस्वाम्यर्थं भवितुमर्हति । तच्चेद शरीराख्य पुरम् एकादशद्वारम्, एकादश द्वाराण्यस्य—सप्त शीर्षण्यानि, नाभ्या सहार्वाञ्चि त्रीणि, शिरस्येकम्, तैरेकादशद्वार पुरम् । कस्य ? अजस्य जन्मादिविक्रियारहितस्यात्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य । अवक्रचेतस अवक्रम् अकुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूप चेतो विज्ञानमस्येति अव-

ऋचेता तस्यावक्रचेतस राजस्थानीयस्य ब्रह्मण यस्येव पुर त परमेश्वर पुरस्वामिनम् अनुष्ठाय ध्यात्वा । ध्यान हि तस्यानुष्ठान सम्यग्विज्ञानपूर्वकम् । त सर्वैषणाविनिर्मुक्त सन्सम सर्वभूतस्थ ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्ते शोकावसराभावात्कुतो भयेक्षा । इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन्विमुच्यते, पुन शरीर न गृह्णातीत्यर्थ ॥

**हसः शुचिषद्वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमस-**
**दब्जा गोजा ऋतजा अद्रिजा**
**ऋत बृहत् ॥ २ ॥**

स तु नैकपुरवर्त्येवात्मा किं तर्हि सर्वपुरवर्ती । कथम् ? हस हन्ति गच्छतीति । शुचिषत् शुचौ दिवि आदित्यात्मना सीदतीति । वसु वासयति सर्वानिति । वाय्वात्मना अन्तरिक्षे सीदतीति अन्तरिक्षसत् । होता अग्नि, 'अग्निर्वै होता' इति श्रुते । वेद्या पृथिव्या सीदतीति वेदिषत्, 'इय वेदि परोऽन्त पृथिव्या' इति मन्त्रवर्णात् । अतिथि सोम सन् दुरोणे

कलशे सीदतीति दुरोणसत् । ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति दुरोणसत् । नृषत् नृषु मनुष्येषु सीदतीति नृषत् । वरसत् वरेषु देवेषु सीदतीति वरसत् । ऋतसत् ऋत सत्य यज्ञो वा, तस्मिन् सीदतीति ऋतसत् । व्योमसत् व्योम्नि आकाशे सीदतीति व्योमसत् । अब्जा अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति अब्जा । गोजा गवि पृथिव्या व्रीहियवादिरूपेण जायत इति गोजा । ऋतजा यज्ञाङ्गरूपेण जायत इति ऋतजा । अद्रिजा पर्वतेभ्यो नद्यादिरूपेण जायत इति अद्रिजा । सर्वात्मापि सन् ऋतम् अवितथस्वभाव एव । बृहत् महान्, सर्वकारणत्वात् । यदाप्यादित्य एव मन्त्रेणोच्यते तदाप्यात्मस्वरूपत्वमादित्यस्याङ्गीकृतमिति ब्राह्मणे व्याख्यानेऽप्यविरोध । सर्वथाप्येक एवात्मा जगत , नात्मभेद इति मन्त्रार्थ ॥

ऊर्ध्वं प्राणमुन्नयति
अपानं प्रत्यगस्यति ।
मध्ये वामनमासीन
विश्वे देवा उपासते ॥ ३ ॥

आत्मन स्वरूपाधिगमे लिङ्गमुच्यते—ऊर्ध्वं हृदयात् प्राण

प्राणवृत्तिं वायुम् उन्नयति ऊर्ध्वं गमयति। तथा अपान प्रत्यक् अध अस्यति क्षिपति य इति वाक्यशेष । त मध्ये हृदयपुण्डरीकाकाश आसीन बुद्धावभिव्यक्त विज्ञानप्रकाशन वामन वननीय सभजनीय विश्वे सर्वे देवा चक्षुरादय प्राणा रूपादिविज्ञान बलिमुपाहरन्तो विश इव राजानम् उपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थ । यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरणव्यापारा, सोऽन्य सिद्ध इति वाक्यार्थ ॥

**अस्य विस्रसमानस्य**
**शरीरस्थस्य देहिन. ।**
**देहाद्विमुच्यमानस्य**
**किमत्र परिशिष्यते । एतद्वै तत् ॥ ४ ॥**

किंच, अस्य शरीरस्थस्य आत्मन विस्रसमानस्य भ्रशमानस्य देहिनो देहवत । विस्रसनशब्दार्थमाह— देहाद्विमुच्यमानस्येति । किमत्र परिशिष्यते प्राणादिकलापे न किंचन परिशिष्यते, अत्र देहे पुरस्वामिविद्रवण इव पुरवासिना यस्यात्मनोऽपगमे क्षणमात्रात्कायकरणकलापरूप सव मिद हतबल विध्वस्त भवति विनष्ट भवति, सोऽन्य सिद्ध आत्मा ॥

न प्राणेन नापानेन
मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति
यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु व्यतिरिक्तात्मापगमात्, प्राणादिभिरेवेह मर्त्यो जीवतीति, नैतदस्ति—न प्राणेन नापानेन चक्षुरादिना वा मर्त्यो मनुष्यो देहवान् कश्चन जीवति न कोऽपि जीवति। न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेनासंहतेन परेण संहतानामवस्थानं न दृष्टं केनचिदप्रयुक्तं यथा गृहादीनां लोके, तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हति। अत इतरेण तु इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति। यस्मिन् संहतविलक्षणे आत्मनि सति परस्मिन् एतौ प्राणापानौ चक्षुरादिभिः संहतौ उपाश्रितौ यस्यासंहतस्यार्थे प्राणापानादिः सर्वं व्यापारं कुर्वन्वर्तते संहतः सन् स ततोऽन्यः सिद्ध इत्यभिप्रायः ॥

हन्त त इदं प्रवक्ष्यामि
गुह्यं ब्रह्म सनातनम् ।

**यथा च मरण प्राप्य**
**आत्मा भवति गौतम ॥ ६ ॥**

हन्तेदानीं पुनरपि ते तुभ्यम् इद गुह्य गोप्य ब्रह्म सनातन चिरतन प्रवक्ष्यामि । यद्विज्ञानात्सर्वससारापरमो भवति, अविज्ञानाच्च यस्य मरण प्राप्य यथा च आत्मा भवति यथा आत्मा ससरति तथा शृणु हे गौतम ॥

**योनिमन्ये प्रपद्यन्ते**
**शरीरत्वाय देहिन ।**
**स्थाणुमन्येऽनुसयन्ति**
**यथाकर्म यथाश्रुतम् ॥ ७ ॥**

योनिं योनिद्वार शुक्रबीजसमन्विता सन्त अन्ये केचिद्-विद्यावन्तो मूढा प्रपद्यन्ते शरीरत्वाय शरीरग्रहणार्थं देहिन देहवन्त योनिं प्रविशन्तीत्यर्थ । स्थाणु वृक्षादिस्थावरभावम् अन्ये अत्यन्ताधमा मरण प्राप्य अनुसयन्ति अनुगच्छन्ति । यथाकर्म यद्यस्य कर्म तद्यथाकर्म यैर्यादृश कर्म इह जन्मनि कृत तद्वशेनेत्येतत् । तथा यथाश्रुत यादृश च विज्ञानमुपार्जित तदनुरूपमेव शरीर प्रतिपद्यन्त इत्यर्थ , ' यथाप्रज्ञ हि स भवा ' इति श्रुत्यन्तरात् ॥

य एष सुप्तेषु जागर्ति
कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म
तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे
तदु नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥

यत्प्रतिज्ञातं गुह्यं ब्रह्म प्रवक्ष्यामीति तदाह—य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति, कथम्? कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्मिमाणः निष्पादयन्, जागर्ति पुरुषो यः, तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेव अमृतम् अविनाशि उच्यते सर्वशास्त्रेषु । किंच, पृथिव्यादयो लोकास्तस्मिन्नेव सर्वे ब्रह्मणि श्रिता आश्रिताः, सर्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्ववदेव ॥

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

अत कुतार्किकपाषण्डबुद्धिविचालितान्त करणाना प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीना ब्राह्मणाना चेतसि नाधीयत इति तत्प्रतिपादने आदरवती पुन पुनराह श्रुति — अग्नि यथा एक एव प्रकाशात्मा सन् भुवनम्, भवन्त्यस्मिन्भूतानीति भुवनम्, अय लोक, तमिम प्रविष्ट अनुप्रविष्ट, रूप रूप प्रति, दार्वादिदाह्यभेद प्रतीत्यर्थ, प्रतिरूप तत्र तत्र प्रतिरूपवान् दाह्यभेदेन बहुविधो बभूव, एक एव तथा सर्वभूतान्तरात्मा रूप रूप स र्वेषा भूतानामभ्यन्तर आत्मा अतिसूक्ष्मत्वाद्दार्वादिष्विव सर्वदेह प्रति प्रविष्टत्वात् प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेण आकाशवत् ॥

**वायुर्यथैको भुवन प्रविष्टो**
**रूप रूप प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा**
**रूप रूप प्रतिरूपो बहिश्च ॥ १० ॥**

तथान्यो दृष्टान्त — वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्ट । रूप रूप प्रतिरूपो बभूवेत्यादि समानम ॥

सूर्यो यथा सर्वलोकस्य चक्षु-
न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्य ॥ ११ ॥

एकस्य सर्वात्मत्वे ससारदु खित्व परस्यैव स्यादिति प्राप्त, इदमुच्यते— सूर्य यथा चक्षुष आलोकेनोपकार कुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिन सर्वलोकस्य चक्षु अपि सन् न लिप्यते चाक्षुषै अशुच्यादिदर्शननिमित्तैराध्यात्मिकै पापदोषै बाह्यैश्च अशुच्यादिससर्गदोषै एक सन्, तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु खेन बाह्य । लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भव दु खमनुभवति । न तु सा परमार्थत स्वात्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदकमलानि न रज्ज्वादीना स्वतो दोषरूपाणि सन्ति, ससर्गिणि विपरीतबुद्ध्यध्यासनिमित्तात्तु तद्दोषवद्विभाव्यन्ते, न तद्दोषैस्तेषा लेप, विपरीतबुद्ध्यध्यासबाह्या हि ते, तथा आत्मनि सर्वो लोक क्रियाकारकफलात्मक विज्ञान सर्पादिस्थानीय विपरीतमध्यस्य तन्निमित्त जन्ममरणादिदु खमनुभवति, न त्वात्मा सर्वलोकात्मापि सन विपरीताध्यारोपनिमित्तेन लिप्यते लोकदु खेन । कुत ? बाह्य रज्ज्वादिवदेव

विपरीतबुद्ध्यध्यासबाह्यो हि स इति ॥

**एको वशी सर्वभूतान्तरात्मा**
**एकं रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥**

किंच, स हि परमेश्वरः सर्वगतः स्वतन्त्र एकः, न तत्समोऽभ्यधिको वान्योऽस्ति । वशी, सर्वं ह्यस्य जगद्वशे वर्तते । कुतः? सर्वभूतान्तरात्मा । यत एकमेव सदैकरसमात्मानं विशुद्धविज्ञानघनरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधा अनेकप्रकारेण यः करोति स्वात्मसत्तामात्रेण अचिन्त्यशक्तित्वात्, तम् आत्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत्— न हि शरीरस्याधारत्वमात्मनः, आकाशवदमूर्तत्वात्, आदर्शस्थं मुखमिति यद्वत्— तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयः अनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनः, तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखम् आत्मानन्दलक्षणं भवति, नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमपि, अविद्याव्यवधानात् ॥

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥

किंच, नित्यः अविनाशी नित्यानाम् अविनाशिनाम् । चेतनः चेतनानां चेतयितॄणां ब्रह्मादीनां प्राणिनाम् । अग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् । किंच, स सर्वज्ञः सर्वेश्वरः कामिनां संसारिणां कर्मानुरूपं कामान् कर्मफलानि स्वानुग्रहनिमित्तांश्च कमान् यः एको बहूनाम् अनेकेषाम् अनायासेन विदधाति प्रयच्छतीत्येतत् । तम् आत्मस्थं ये अनुपश्यन्ति धीराः, तेषां शान्तिः उपरतिः शाश्वती नित्या स्वात्मभूतैव स्यात् । न इतरेषाम् अनेवंविधानाम् ॥

तदेतदिति मन्यन्ते-
ऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां
किमु भाति विभाति वा ॥ १४ ॥

यत्तदात्मविज्ञानसुखम् अनिर्देश्य निर्देष्टुमशक्य परम प्रकृष्ट प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते तदेतत्प्रत्यक्षमेवेति मन्यन्त, कथ नु केन प्रकारेण तत्सुखमह विजानीयाम् इदमित्यात्मबुद्धिविषयमापादयेय यथा निवृत्तविषयैषणा यतय । किमु तत् भाति दीप्यते प्रकाशात्मक तत् यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्ट दृश्यते किं वा नेति ॥

**न तत्र सूर्यो भाति न चन्द्रतारक**
**नेमा विद्युतो भान्ति कुतोऽयमग्नि. ।**
**तमेव भान्तमनुभाति सर्व**
**तस्य भासा सर्वमिद विभाति ॥ १५ ॥**

इति पञ्चमी वल्ली ।

अत्रोत्तरमिदम्— भाति च विभाति चेति । कथम्? न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्य भाति तद्ब्रह्म न प्रकाशयतीत्यर्थ । तथा न चन्द्रतारकम्, नेमा विद्युतो भान्ति, कुत अयम् अस्मद्दृष्टिगोचर अग्नि । किं बहुना? यदिदमादित्यादिक भाति तत् तमेव परमेश्वर भान्त दीप्यमानम् अनुभाति अनुदीप्यते । यथा जलोल्मुकादि अग्नि-

संयोगादग्निं दहन्तमनुदहति न स्वतः, तद्वत्। तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि विभाति। यत एवं तदेव ब्रह्म भाति च विभाति च। कार्यगतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते। न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्यम्, घटादीनामन्यावभासकत्वादर्शनात् भारूपाणां च आदित्यादीनां तद्दर्शनात्॥

इति पञ्चमवल्लीभाष्यम्॥

## षष्ठी वल्ली ।

ऊर्ध्वमूलोऽवाक्शाख

एषोऽश्वत्थ. सनातन॰ ।

तदेव शुक्रं तद्ब्रह्म

तदेवामृतमुच्यते ।

तस्मिँल्लोका श्रिता सर्वे

तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥

तूलावधारणेनैव मूलावधारण वृक्षस्य यथा क्रियते लोक, एव ससारकार्यवृक्षावधारणेन तन्मूलस्य ब्रह्मण स्वरूपावदिधारयिषया इय षष्ठी वल्ली आरभ्यते । ऊर्ध्वमूल ऊर्ध्वं मूल यत् तद्विष्णा परम पदमस्येति सोऽयमव्यक्तादिस्थावरान्त ससारवृक्ष ऊर्ध्वमूल । वृक्षश्च व्रश्चनात् विनश्वरत्वात् । अविच्छिन्नजन्मजरामरणशोकाद्यनेकानर्थात्मक प्रतिक्षणमन्यथाम्वभाव मायामरीच्युदकगन्धर्वनगरादिवदृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मक कदलीस्तम्भवन्नि सार अनेकशतपाषण्डबुद्धिविकल्पास्पद तत्त्वविजिज्ञासुभिरनिर्धारि-

तेदतत्त्व वेदान्तनिर्धारितपरब्रह्ममूलसार अविद्याकाम-कर्माव्यक्तबीजप्रभव अपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहि-रण्यगर्भाङ्कुर सर्वप्राणिलिङ्गभेदस्कन्ध तत्तत्तृष्णाजलासेकोद्भू-तदर्प बुद्धीन्द्रियविषयप्रवालाङ्कुर श्रुतिस्मृतिन्यायविद्योपदे शपलाश यज्ञदानतपआद्यनेकक्रियासुपुष्प सुखदु खवेद-नानकरस प्राण्युपजीव्यानन्तफल तत्तृष्णासलिलावसेकप्ररू ढजटिलीकृतदृढबद्धमूल सत्यनामादिसप्तलोकब्रह्मादिभूतप क्षिकृतनीड प्राणिसुखदु खोद्भूतहर्षशोकजातनृत्यगीतवादित्र क्ष्वेलितास्फोटितहसिताकुष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्द-कृततुमुलीभूतमहारव वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृ-तोच्छेद एष ससारवृक्ष अश्वत्थ अश्वत्थवत्कामकर्मवातेरि-तनित्यप्रचलितस्वभाव । स्वर्गनरकतिर्यक्प्रेतादिभि शखाभि अवाक्शाख, अवाञ्च शाखा यस्य स, सनातन अनादि-त्वाच्चिरप्रवृत्त । यदस्य ससारवृक्षस्य मूल तदेव शुक्र शुभ्र शुद्ध ज्योतिष्मत् चैतन्यात्मज्योति स्वभाव तदेव ब्रह्म सर्व-महत्त्वात् । तदेव अमृतम् अविनाशस्वभावम् उच्यते कथ्यते सत्यत्वात् । वाचारम्भण विकारो नामधेयमनृतमन्यदतो मर्त्य-म् । तस्मिन् परमार्थसत्ये ब्रह्मणि लोका गन्धर्वनगरमरी-च्युदकमायासमा परमार्थदर्शनाभावावगमना श्रिता आ-

श्रिता सर्वे समस्ता उत्पत्तिस्थितिलयेषु। तदु तद्ब्रह्म नात्येति नातिवर्तते मृदादिकमिव घटादिकार्यं कश्चन कश्चिदपि विकार । एतद्वै तत् ॥

**यदिद किंच जगत्सर्वं**
**प्राण एजति नि'सृतम् ।**
**महद्भय वज्रमुद्यत**
**य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥**

यद्विज्ञानादमृता भवन्तीत्युच्यते जगतो मूल तदेव नास्ति ब्रह्म, अमत एवेद नि सृतमिति, तन्न—यदिद किंच यत्कि चेद जगत्सर्वं प्राणे परस्मिन्ब्रह्मणि सति एजति कम्पते, तत एव नि सृत निर्गत सत् प्रचलति नियमेन चेष्टते। यदेव जगदुत्पत्त्यादिकारण ब्रह्म तत् महद्भयम्, महच्च तत् भय च बिभेत्यस्मादिति महद्भयम्, वज्रमुद्यतम् उद्यतमिव वज्रम्, यथा वज्रोद्यतकर स्वामिनम् अभिमुखीभूत दृष्ट्वा भृत्या नियमेन तच्छासने वर्तन्ते, तथेद चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षण जगत्सेश्वर नियमेन क्षणमप्यविश्रान्त वर्तत इत्युक्त भवति। ये एतत् विदु स्वात्मप्रवृत्तिसाक्षिभूतमेक ब्रह्म अमृता अमरणधर्माण ते भवन्ति ॥

भयादस्याग्निस्तपति
भयात्तपति सूर्य ।
भयादिन्द्रश्च वायुश्च
मृत्युर्धावति पञ्चम ॥ ३ ॥

कथ तद्भयाज्जगद्वर्तत इति, आह— भयात् भीत्या अस्य परमेश्वरस्य अग्नि तपति, भयात्तपति सूर्य , भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम । न हि, ईश्वराणा लोकपालाना समर्थाना सता नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्, स्वामिभयभीतानामिव भृत्याना नियता प्रवृत्तिरुपपद्यते ॥

इह चेदशकद्बोद्धु
प्राक्शरीरस्य विस्रस ।
तत सर्गेषु लोकेषु
शरीरत्वाय कल्पते ॥ ४ ॥

तच्च इह जीवन्नेव चेत् यद्यशकत् शक्त सन् जानातीत्ये तत्, भयकारण ब्रह्म बोद्धुम् अवगन्तुम्, प्राक् पूर्व शरीरस्य विस्रस अवस्रसनात्पतनात् ससारबन्धनाद्विमुच्यते । न चेद शकद्बोद्धुम्, तत अनवबोधात् सर्गेषु, सृज्यन्ते येषु स्रष्टव्या प्राणिन इति सर्गा पृथिव्यादयो लोका तेषु सर्गेषु,

लोकेषु शरीरत्वाय शरीरभावाय कल्पते समर्थो भवति शरीर गृह्णातीत्यर्थ । तस्माच्छरीरविस्रसनात्प्रागात्मावबोधाय यत्न आस्थेय यस्मादिहैवात्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते, न लोकान्तरेषु ब्रह्मलोकाद् यत्र । स च दुष्प्राप ॥

**यथादर्शे तथात्मनि**
**यथा स्वप्ने तथा पितृलोके ।**
**यथाप्सु परीव ददृशे**
**तथा गन्धर्वलोके च्छायातपयोरिव**
**ब्रह्मलोके ॥ ५ ॥**

कथमिति, उच्यते—यथा आदर्शे प्रतिबिम्बभूतमात्मान पश्यति लोक अत्यन्तविविक्तम्, तथा इह आत्मनि स्वबुद्धावादर्शवन्निर्मलीभूताया विविक्तमात्मनो दर्शन भवतीत्यर्थ । यथा स्वप्न अविविक्त जाग्रद्वासनोद्भूतम्, तथा पितृलोके अविविक्तमेव दर्शनमात्मन कर्मफलोपभोगासक्तत्वात्। यथा च अप्सु अविविक्तावयवमात्मस्वरूप परीव ददृशे परिदृश्यत इव, तथा गन्धर्वलोके अविविक्तमेव दर्शनमात्मन । एव च लोकान्तरेष्वपि शास्त्रप्रामाण्यादवगम्यते । छायातपयोरिव अत्यन्तवि-

विक्त ब्रह्मलोक एवैकस्मिन् । स च दुष्प्राप , अत्यन्तविशिष्टकर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनाय इहैव यत्न कर्तव्य इत्यभिप्राय ॥

इन्द्रियाणा पृथग्भाव-
मुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानाना
मत्वा धीरो न शोचति ॥ ६ ॥

कथमसौ बोद्धव्य , किं वा तदवबोधे प्रयोजनमिति, उच्यते—— इन्द्रियाणा श्रोत्रादीना स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्य प्रथगुत्पद्यमानानाम् अत्यन्तविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात् पृथग्भाव स्वभावविलक्षणात्मकताम्, तथा तेषामेवेन्द्रियाणाम उदयास्तमयौ च उत्पत्तिप्रलयौ जाग्रत्स्वप्नावस्थाप्रतिपत्त्या नात्मन इति मत्वा ज्ञात्वा विवेकतो धीर धीमान् न शोचति, आत्मनो नित्यैकस्वभावत्वाव्यभिचाराच्छोककारणत्वानुपपत्त । तथा च श्रुत्यन्तरम् 'तरति शोकमात्मवित्' इति ॥

इन्द्रियेभ्य. पर मनो
मनस. सत्त्वमुत्तमम् ।

**सत्त्वादधि महानात्मा**
**महतोऽव्यक्तमुत्तमम् ॥ ७ ॥**

यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगन्तव्यः यस्मात्प्रत्यगात्मा स सर्वस्य, तत्कथमिति, उच्यते—इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिहोच्यते ॥

**अव्यक्तात्तु परः पुरुषो**
**व्यापकोऽलिङ्ग एव च ।**
**यं ज्ञात्वा मुच्यते जन्तु-**
**रमृतत्वं च गच्छति ॥ ८ ॥**

अव्यक्तात्तु परः पुरुषः व्यापकः, व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात् । अलिङ्गः लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि, तदविद्यमानं यस्य सोऽयमलिङ्ग एव च, सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वा आचार्यतः शास्त्रतश्च मुच्यते जन्तुः अविद्यादिहृदयग्रन्थिभिर्जीवन्नेव, पतितेऽपि शरीरे अमृतत्वं च गच्छति । सोऽलिङ्गः परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबन्धः ॥

**न संदृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाभिक्लृप्तो**
**य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥**

कथं तर्हि तस्य अलिङ्गस्य दर्शनमुपपद्यत इति, उच्यते— न संदृशे संदर्शनविषये न तिष्ठति प्रत्यगात्मनः अस्य रूपम् । अतः न चक्षुषा सर्वेन्द्रियेण, चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्, पश्यति नोपलभते कश्चन कश्चिदपि एनं प्रकृतमात्मानम् । कथं तर्हि तं पश्येदिति, उच्यते— हृदा हृत्स्थया बुद्ध्या, मनीषा मनसः संकल्पादिरूपस्य ईष्टे नियन्तृत्वेनेति मनीट् तया मनीषा विकल्पवर्जितया बुद्ध्या । मनसा मननरूपेण सम्यग्दर्शनेन अभिक्लृप्तः अभिसमर्थितः अभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्य इति वाक्यशेषः । तमात्मानं ब्रह्म एतत् ये विदुः अमृताः ते भवन्ति ॥

**यदा पञ्चावतिष्ठन्ते**
**ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति**
**तामाहुः परमां गतिम् ॥ १० ॥**

सा ह्युन्मनीट् कथं प्राप्यत इति तदर्थो योग उच्यते— यदा यस्मिन्काले स्वविषयेभ्यो निवर्तितानि आत्मन्येव पञ्च ज्ञानानि— ज्ञानार्थत्वाच्छ्रोत्रादीनीन्द्रियाणि ज्ञानान्युच्यन्ते— अवतिष्ठन्ते सह मनसा यदनुगतानि, तेन संकल्पादिव्यावृत्तेनान्तःकरणेन । बुद्धिश्च अध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न व्याप्रियते, तामाहुः परमां गतिम् ॥

**तां योगमिति मन्यन्ते**
**स्थिरामिन्द्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति**
**योगो हि प्रभवाप्ययौ ॥ ११ ॥**

ताम् ईदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायाम् अविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा स्थिरामिन्द्रियधारणां स्थिरामचलामिन्द्रियधारणां बाह्यान्तःकरणानां धारणमित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नवान् तदा तस्मिन्काले, यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसंभवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमात् अप्रमादो

विधीयते। अथवा, यदैव इन्द्रियाणां स्थिरा धारणा, तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयते अप्रमत्तस्तदा भवतीति। कुतः ? योगो हि यस्मात् प्रभवाप्ययौ उपजनापायधर्मक इत्यर्थः। अतः अपायपरिहारायाप्रमादः कर्तव्य इत्यभिप्रायः ॥

नैव वाचा न मनसा
प्राप्तुं शक्यो न चक्षुषा।
अस्तीति ब्रुवतोऽन्यत्र
कथं तदुपलभ्यते ॥ १२ ॥

बुद्ध्यादिचेष्टाविषयं चेद्ब्रह्म इदं तदिति विशेषतो गृह्येत, बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म। यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके विपरीतं चासदिति। अतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्ते, इदमुच्यते। सत्यम्। नैव वाचा न मनसा न चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्यते इत्यर्थः। तथापि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव, कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात्। तथा हीदं कार्यं सौक्ष्म्यतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति। यदापि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिः, तदापि सा

सत्प्रत्ययगर्भैव निलीयते । बुद्धिर्हि न प्रमाण सदसतोर्याथा-त्म्यावगमे । मूल चेज्जगतो न स्यादसदन्वितमवेद कार्यमस-दसदित्येव गृह्येत, न त्वेतदस्ति, सत्सदित्येव तु गृह्यते, यथा मृदादिकार्य घटादि मृदाद्यन्वितम् । तस्माज्जगतो मूलमात्मा अस्तीत्यवोपलब्धव्य । कस्मात्? अस्तीति ब्रुवत अस्तित्ववा दिन आगमार्थानुसारिण श्रद्धधानादन्यत्र नास्तिकवादिनि ना-स्ति जगतो मूलमात्मा निरन्वयमेवेद कार्यमभावा त प्रवि-लीयत इति मन्यमाने विपरीतदर्शिनि, कथ तद्ब्रह्म तत्त्वत उपलभ्यते, न कथचनोपलभ्यत इत्यर्थ ॥

**अस्तीत्येवोपलब्धव्य-**
**स्तत्त्वभावेन चोभयो. ।**
**अस्तीत्येवोपलब्धस्य**
**तत्त्वभावः प्रसीदति ॥ १३ ॥**

तस्मादपोह्यासद्वादिपक्षमासुरम् अस्तीत्यव आत्मा उप-लब्धव्य सत्कार्यबुद्ध्याद्युपाधिभि । यदा तु तद्रहितोऽविक्रिय आत्मा कार्य च कारणव्यतिरेकेण नास्ति 'वाचारम्भण वि कारो नामधेय मृत्तिकेत्येव सत्यम्' इति श्रुते, तदा तस्य निरु पाधिकस्यालिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्त-

स्वभावो भवति । तेन च रूपेणात्मोपलब्धव्य इत्यनुवर्तते । तत्राप्युभयो सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयो — निर्धारणार्था षष्ठी—पूर्वमस्तीत्येवोपलब्धस्यात्मन सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थ । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मन तत्त्वभाव विदिताविदिताभ्यामन्योऽद्वयस्वभाव नेति नेतीत्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्ये निरुक्तेऽनिलयन इत्यादिश्रुतिनिर्दिष्ट प्रसीदति अभिमुखीभवति । आत्मप्रकाशनाय पूर्वमस्तीत्युपलब्धवत इत्येतत् ॥

> **यदा सर्वे प्रमुच्यन्ते**
> **कामा येऽस्य हृदि श्रिता ।**
> **अथ मर्त्योऽमृतो भव-**
> **त्यत्र ब्रह्म समश्नुते ॥ १४ ॥**

एव परमार्थात्मदर्शिनो यदा यस्मिन्काले सर्वे कामा कामयितव्यस्यान्यस्याभावात् प्रमुच्यन्ते विशीर्यन्ते, ये अस्य प्राक्प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिता, बुद्धिर्हि कामानामाश्रय नात्मा, 'काम सकल्प' इत्यादिश्रुत्यन्तराच्च, अथ तदा मर्त्य प्राक्प्रबोधादासीत् स प्रबोधोत्तरकालमविद्याकामकर्मलक्षणस्य मृत्योर्विनाशात् अमृतो भवति

ामनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्ते । अत्र इहैव प्रदीपनिर्वाणवत्सर्वबन्धनोपशमात् ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थ ॥

यदा सर्वे प्रभिद्यन्ते
हृदयस्येह ग्रन्थय ।
अथ मर्त्योऽमृतो भव-
त्येतावद्ध्यनुशासनम् ॥ १५ ॥

कदा पुन कामाना मूलतो विनाश इति, उच्यते— यदा सर्वे प्रभिद्यन्ते भेदमुपयान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थ । अहमिद शरीर ममेद धन सुखी दु खी चाहमित्येवमादिलक्षणा तद्विपरीतात् ब्रह्मात्मप्रत्ययोपजनात् ब्रह्मैवाहमस्म्यससारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ता कामा मूलतो विनश्यन्ति । अथ मर्त्योऽमृतो भवति एतावद्धि एतावदेवैतावन्मात्र नाधिकमस्तीत्याशङ्का कर्तव्या । अनुशासनम् अनुशिष्टि उपदेश सर्ववेदान्तानामिति वाक्यशेष ॥

शत चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।

**तयोर्ध्वमायन्नमृतत्वमेति**
**विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥१६॥**

निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थे जीवत एव ब्रह्मभूतस्य विदुषो न गतिर्विद्यते, 'अत्र ब्रह्म समश्नुते' इत्युक्तत्वात् 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुत्यन्तराच्च। ये पुनर्मन्दब्रह्मविदो विद्यान्तरशीलिनश्च ब्रह्मलोकभाजो ये च तद्विपरीताः संसारभाजः, तेषामेष गतिविशेष उच्यते प्रकृतोत्कृष्टब्रह्मविद्याफल-स्तुतये । किंचान्यत्, अग्निविद्या पृष्टा प्रत्युक्ता च । तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः । तत्र— शतं च शतसंख्याकाः एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः सिराः, तासां मध्ये मूर्धानं भित्त्वा अभिनिःसृता निर्गता एका सुषुम्ना नाम । तया अन्तकाले हृदये आत्मानं वशीकृत्य योजयेत् । तया नाड्या ऊर्ध्वम् उपरि आयन् गच्छन् आदित्यद्वारेण अमृतत्वम् अमरणधर्मत्वमापेक्षिकम्— 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मृतेः— ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान्ब्रह्मलोकगतान् । विष्वङ् नानागतयः अन्या नाड्यः उत्क्रमणे उत्क्रमणनिमित्तं भवन्ति

ससारप्रतिपत्त्यर्था एव भवन्तीत्यर्थ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनाना हृदये सनिविष्ट. ।
त स्वाच्छरीरात्प्रवृहे-
न्मुञ्जादिवेषीका धैर्येण ।
त विद्याच्छुक्रममृत
त विद्याच्छुक्रममृतमिति ॥ १७ ॥

इदानीं सर्ववल्ल्यर्थोपसहारार्थमाह—अङ्गुष्ठमात्र पुरुष अन्तरात्मा सदा जनाना सबन्धिनि हृदये सनिविष्ट यथाव्याख्यात , त स्वात आत्मीयात् शरीरात् प्रवृहेत् उद्यच्छेत निष्कर्षेत् पृथक्कुर्यादित्यथ । किमिवेति, उच्यते— मुञ्जादिव षीकाम अन्त स्था धैर्येण अप्रमादेन । त शरीरान्निष्कृष्ट चिन्मात्र विद्यात् विजानीयात् शुक्र शुद्धम अमृत यथोक्त ब्रह्मेति । द्विर्वचनमुपनिषत्परिसमाप्त्यर्थम् , इतिशब्दश्च ॥

मृत्युप्रोक्ता नचिकेतोऽथ लब्ध्वा
विद्यामेतां योगविधिं च कृत्स्नम् ।

**ब्रह्म प्राप्तो विरजोऽभूद्विमृत्यु-**
**रन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥**

विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहार अधुनोच्यते— मृत्युप्रोक्ताम् एतां यथोक्तां ब्रह्मविद्यां योगविधिं च कृत्स्नं समस्तं सोपकरणं सफलमित्येतत् । नचिकेता अथ वरप्रदाना-न्मृत्यो लब्ध्वा प्राप्येत्यर्थः । किम्? ब्रह्म प्राप्तोऽभूत् मुक्तो-ऽभवदित्यर्थः । कथम्? विद्याप्राप्त्या विरजः विगतरजाः विग-तधर्माधर्मः विमृत्युः विगतकामाविद्यश्च सन् पूर्वमित्यर्थः । न केवलं नचिकेता एव, अन्योऽपि य एवं नचिकेतोवदात्मवित् अध्यात्ममेव निरुपचरितं प्रत्यक्स्वरूपं प्राप्यतत्त्वमेवेत्यभि-प्रायः । नान्यद्रूपमप्रत्यग्रूपम् । तदेवमध्यात्मम् एवम् उक्तेन प्रकारेण वेद विजानातीति एवंवित्, सोऽपि विरजाः सन् ब्रह्म प्राप्य विमृत्युर्भवतीति वाक्यशेषः ॥

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ १९ ॥**

**ॐ शान्तिः शान्तिः शान्तिः ॥**

इति षष्ठी वल्ली ॥

अथ शिष्याचार्ययो प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रशमनार्थेय शान्तिरुच्यते— सह नौ आवाम् अवतु पालयतु विद्यास्वरूपप्रकाशनेन । क ? स एव परमेश्वर उपनिषत्प्रकाशित । किंच, सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु । सहैव आवा विद्याकृत वीर्य सामर्थ्य करवावहै निष्पादयावहै । किंच, तेजस्विनौ तेजस्विनोरावयो यत् अधीत तत्स्वधीतमस्तु । अथवा, तेजस्वि नौ आवाभ्या यत् अधीत तदतीव तेजस्वि वीर्यवदस्त्वित्यर्थ । मा विद्विषावहै शिष्याचार्यावन्योन्य प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्त द्वेष मा करवावहै इत्यर्थ । शान्ति शान्ति शान्तिरिति त्रिर्वचन सर्वदोषोपशमनार्थम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
काठकोपनिषद्भाष्यम्
सपूर्णम् ॥

ॐ

सह नाववतु । सह नौ
भुनक्तु । सह वीर्यं कर-
वावहै । तेजस्वि नावधीत-
मस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ ॐ ॥

# ॥ प्रश्नोपनिषद्भाष्यम् ॥

श्रीमच्छङ्करभगवत्पूज्यपादैः
विरचितम् ।



ॐ

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ

# ॥ प्रश्नोपनिषत् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन

## भाष्येण सहिता

---*---

मन्त्रोक्तस्यार्थस्य विस्तरानुवादीद ब्राह्मणमारभ्यते । ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये । एव संवत्सरब्रह्मचर्यसवासादितपोयुक्तैर्ग्राह्या, पिप्पलादवत्सर्वज्ञकल्पैराचार्यैर्वक्तव्या च, न येन केनचिदिति विद्या स्तौति । ब्रह्मचर्यादिसाधनसूचनाच्च तत्कर्तव्यता स्यात्—

**सुकेशा च भारद्वाजः शैब्यश्च सत्य-काम: सौर्यायणी च गार्ग्यः कौसल्यश्चा-श्वलायनो भार्गवो वैदर्भिः कबन्धी का-त्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्य-तीति ते ह समित्पाणयो भगवन्तं पि-प्पलादमुपसन्नाः ॥ १ ॥**

सुकेशा च नामतः, भरद्वाजस्यापत्यं भारद्वाजः । शैब्यश्च शिबेरपत्यं शैब्यः, सत्यकामो नामतः । सौर्यायणी सूर्यस्यापत्यं सौर्यः, तस्यापत्यं सौर्यायणिः, छान्दसं सौर्याय-णीति, गार्ग्यः गर्गगोत्रोत्पन्नः । कौसल्यश्च नामतः, अश्वल स्यापत्यमाश्वलायनः । भार्गवः भृगोर्गोत्रापत्यं भार्गवः, वैदर्भिः विदर्भेषु भवः । कबन्धी नामतः, कत्यस्यापत्यं कात्यायनः, वि-द्यमानः प्रपितामहो यस्य सः, युवप्रत्ययः । ते ह एते ब्रह्मपराः अपरं ब्रह्म परत्वेन गताः, तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः, परं ब्रह्म अन्वेषमाणाः किं तत् यन्नित्यं विज्ञेयमिति तत्प्राप्त्यर्थं यथाकामं यतिष्याम इत्येवं तदन्वेषणं कुर्वन्तः, तदधिगमाय एष ह वै तत्सर्वं वक्ष्यतीति आचार्यमुपजग्मुः । कथम् ? ते ह

समित्पाणय समिद्भारगृहीतहस्ता स त, भगवन्त पूजावन्त पिप्पलादमाचार्यम् उपसन्ना उपजग्मु ॥

**तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सर संवत्स्यथ यथाकाम प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

तान् एवमुपगतान् स ह किल ऋषि उवाच भूय पुनरेव—यद्यपि यूय पूर्व तपस्विन एव, तथापीह तपसा इन्द्रियसयमेन विशेषतो ब्रह्मचर्येण श्रद्धया च आस्तिक्यबुद्ध्या आदरवन्त सवत्सर काल सवत्स्यथ सम्यग्गुरुशुश्रूषापरा सन्तो वत्स्यथ । तत यथाकाम यो यस्य कामस्तमन तिक्रम्य यद्विषये यस्य जिज्ञासा तद्विषयान् प्रश्नान् पृच्छत । यदि तद्युष्मत्पृष्ट विज्ञास्याम । अनुद्धतत्वप्रदर्शनार्थ। यदिशब्दो नाज्ञानसशयार्थं प्रश्ननिर्णयादवसीयते सर्वं ह वो व पृष्टार्थं वक्ष्याम इति ॥

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥**

अथ संवत्सरादूर्ध्वं कबन्धी कात्यायन उपेत्य उपगम्य पप्रच्छ पृष्टवान्—हे भगवन्, कुत कस्मात् ह वै इमा ब्राह्मणाद्या प्रजा प्रजायन्ते उत्पद्यन्ते इति । अपरविद्याकर्मणो समुच्चितयोर्यत्कार्यं या गतिस्तद्वक्तव्यमिति तदर्थोऽय प्रश्न ॥

**तस्मै स होवाच प्रजाकामो वै प्रजापति. स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राण चेत्येतौ मे बहुधा प्रजा करिष्यत इति ॥ ४ ॥**

तस्मै एव पृष्टवते स ह उवाच तदपाकरणायाह—प्रजाकाम प्रजा आत्मन सिसृक्षु वै, प्रजापति सर्वात्मा सन् जगत्स्रक्ष्यामीत्येव विज्ञानवान्यथोक्तकारी तद्भावभावित कल्पादौ निर्वृत्तो हिरण्यगर्भ, सृज्यमानाना प्रजाना स्थावरजङ्गमाना पति सन्, जन्मान्तरभावित ज्ञान श्रुतिप्रकाशितार्थविषय तप, अन्वालोचयत् अतप्यत । अथ तु स एव तप तप्त्वा श्रौत ज्ञानमन्वालोच्य, सृष्टिसाधनभूत मिथुनम् उत्पादयत मिथुन द्वन्द्वमुत्पादितवान् रयिं च सोममन्न प्राण च अग्निमत्तारम् इत्येतौ अग्नीषोमौ अत्रन्नभूतौ म मम बहुधा अनकधा प्रजा करिष्यत इति एव सचिन्त्य अण्डोत्पत्तिक्रमेण सूर्याचन्द्रमसावकल्पयत् ॥

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥ ५ ॥**

तत्र आदित्य ह वै प्राण अत्ता अग्नि । रयिरेव चन्द्रमा । रयिरेवान्न सोम एव । तदेतदेकमत्ता अग्निश्चान्न च प्रजापतिरेक तु मिथुनम्, गुणप्रधानकृतो भेद । कथम्? रयिर्वै अन्नमेव एतत् सर्वम् । किं तत्? यत् मूर्तं च स्थूल च अमूर्तं च सूक्ष्म च । मूर्तामूर्ते अत्त्रन्नरूपे अपि रयिरेव । तस्मात् प्रविभक्तादमूर्तात् यदन्यन्मूतरूप मूर्ति, सैव रयि अन्नम् अमूर्तेन अत्त्रा अद्यमानत्वात् ॥

**अथादित्य उदयन्यत्प्राचीं दिश प्रविशति तेन प्राच्यान्प्राणान्रश्मिषु सनिधत्ते । यद्दक्षिणा यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन, सर्वान्प्राणान्रश्मिषु संनिधत्ते ॥ ६ ॥**

तथा अमूर्तोऽपि प्राणोऽत्ता सर्वमेव यच्चाद्यम् । कथम्?

अथ आदित्य उदयन् उद्गच्छन् प्राणिना चक्षुर्गोचरमागच्छन् यत्प्राचीं दिश स्वप्रकाशेन प्रविशति व्याप्नोति, तेन स्वात्मव्याप्त्या सर्वान्त स्थान् प्राणान् प्राच्यानन्नभूतान् रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात्प्राणिन संनिधत्ते संनिवेशयति आत्मभूतान्करोतीत्यर्थ । तथैव यत्प्रविशति दक्षिणा यत्प्रतीचीं यदुदीचीम् अध ऊर्ध्वं यत्प्रविशति यच्च अन्तरा दिश कोणदिशोऽवान्तरदिश यच्चान्यत् सर्वं प्रकाशयति, तेन स्वप्रकाशव्याप्त्या सर्वान् सर्वदिक्स्थान् प्राणान् रश्मिषु संनिधत्ते ॥

**स एष वैश्वानरो विश्वरूप प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तम् ॥ ७ ॥**

स एष अत्ता प्राणो वैश्वानर सर्वात्मा विश्वरूप विश्वात्मत्वाच्च प्राण अग्निश्च स एवात्ता उदयत उद्गच्छति प्रत्यह सर्वा दिश आत्मसात्कुर्वन् । तदेतत् उक्त वस्तु ऋचा मन्त्रेणापि अभ्युक्तम् ॥

**विश्वरूप हरिण जातवेदस**

**परायण ज्योतिरेक तपन्तम् ।**

**सहस्ररश्मि शतधा वर्तमान'**
**प्राण' प्रजानामुदयत्येष सूर्य ॥ ८ ॥**

विश्वरूप सर्वरूप हरिण रश्मिवन्त जातवेदस जातप्रज्ञान परायण सर्वप्राणाश्रय ज्योति सर्वप्राणिना चक्षुर्भूतम एकम अद्वितीय तपन्त तापक्रिया कुर्वाण स्वात्मान सूर्य विज्ञातवन्तो ब्रह्मविद । कोऽसौ य विज्ञातवन्त ? सहस्ररश्मि अनेकरश्मि शतधा अनेकधा प्राणिभेदेन वर्तमान प्राण प्रजानाम् उदयति एष सूर्य ॥

**सवत्सरो वै प्रजापतिस्तस्यायने दक्षिण चोत्तर च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते तस्मादेत ऋषय. प्रजाकामा दक्षिण प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाण ॥ ९ ॥**

यश्चासौ चन्द्रमा मूर्तिरन्नममूर्तिश्च प्राणाऽत्तादित्यस्तदेतदेक मिथुन सर्व कथ प्रजा करिष्यत इति, उच्यते—तदेव काल सवत्सरो वै प्रजापति, तन्निर्वर्त्यत्वात्सवत्सरस्य ।

चन्द्रादित्यनिर्वर्त्यैति ऽयहोरात्रसमुदायो हि सवत्सर तदन-न्यत्वाद्रयिप्राणैतन्मिथुनात्मक एवेत्युच्यते । तत्कथम् ? तस्य सवत्सरस्य प्रजापते अयने मार्गौ द्वौ दक्षिण चोत्तर च । प्रसिद्धे ह्ययने षण्मासलक्षणे, याभ्या दक्षिणेनोत्तरेण च याति सविता कवलकर्मिणा ज्ञानसयुक्तकर्मवता च लोकान्विदधत् । कथम् ? तत् तत्र च ब्राह्मणादिषु ये ह वै ऋषय तदुपासत इति । क्रियाविशेषणो द्वितीयस्तच्छब्द । इष्ट च पूर्त च इष्टापूर्ते इत्यादि कृतमेवोपासते नाकृत नित्यम्, ते चान्द्र-मसमेव चन्द्रमसि भव प्रजापतर्मिथुनात्मकस्याश रयिमन्न भूत लोकम् अभिजय त कृतरूपत्वाच्चान्द्रमसस्य । ते एव च कृतक्षयात् पुनरावर्तन्ते इम लोक हीनतर वा विशन्तीति ह्युक्तम । यस्मादव प्रजापतिमन्नात्मक फलत्वेनाभिनिर्वर्त-यन्ति चन्द्रमिष्टापूर्तकर्मणा प्रजाकामा प्रजार्थिन एते ऋषय स्वर्गद्रष्टार गृहस्था, तस्मात्स्वकृतमेव दक्षिण दक्षि णायनोपलक्षित चन्द्र प्रतिपद्यन्ते । एष ह वै रयि अन्नम्, य पितृयाण पितृयाणापलक्षितश्चन्द्र ॥

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमे-**

**तत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः । तदेष श्लोक ॥ १० ॥**

अथ उत्तरेण अयनेन प्रजापतेरंश प्राणमत्तारम् आदित्यम् अभिजयन्ते । केन ? तपसा इन्द्रियजयेन । विशेषतो ब्रह्मचर्येण श्रद्धया विद्यया च प्रजापत्यात्मविषयया आत्मान प्राण सूर्यं जगत तस्थुषश्च अन्विष्य अहमस्मीति विदित्वा आदित्यम् अभिजयन्ते अभिप्राप्नुवन्ति । एतद्वै आयतन सर्वप्राणाना सामान्यमायतनम आश्रय एतत् अमृतम् अविनाशि अभयम् अत एव भयवर्जितम् न चन्द्रवत्क्षयवृद्धि भयवत्, एतत् परायण परा गतिर्विद्यावता कर्मिणा च ज्ञानवताम् एतस्मान्न पुनरावर्तन्ते यथेतर केवलकर्मिण इति यस्मात् एष अविदुषा निरोध , आदित्याद्धि निरुद्धा अविद्वास । नैते सवत्सरमादित्यमात्मान प्राणमभिप्राप्नुवन्ति । स हि सवत्सर कालात्मा अविदुषा निरोध । तत् तत्रास्मिन्नर्थे एष श्लोक मन्त्र ॥

**पञ्चपाद पितर द्वादशाकृतिं**
**दिव आहु परे अर्धे पुरीषिणम् ।**

**अथेमे अन्य उ परे विचक्षण**
**सप्तचक्रे षडर आहुरर्पितमिति ॥११॥**

पञ्चपाद पञ्च ऋतव पादा इवास्य सवत्सरात्मन आदित्यस्य, तैर्ह्यसौ पादैरिव ऋतुभिरावर्तते। हेमन्तशिशिरावेकीकृत्येय कल्पना। पितर सर्वस्य जनयितृत्वात्पितृत्व तस्य, द्वादशाकृतिं द्वादश मासा आकृतयोऽवयवा आकरण वा अवयविकरणमस्य द्वादशमासै त द्वादशाकृतिम्, दिव द्युलोकात् परे ऊर्ध्वे अर्धे स्थाने तृतीयस्या दिवीत्यथ, पुरीषिण पुरीषवन्तम् उदकवन्तम आहु कालविद। अथ तमेवान्ये इमे उ परे कालविद विचक्षण निपुण सर्वज्ञ सप्तचक्रे सप्तहयरूपे चक्रे सततगतिमति कालात्मनि षडरे षड्तुमति आहु सर्वमिद जगत्कथयन्ति—अर्पितम् अरा इव रथनाभौ निविष्टमिति। यदि पञ्चपादो द्वादशाकृतिर्यदि वा सप्तचक्र षडर सर्वथापि सवत्सर कालात्मा प्रजापतिश्चन्द्रादित्यलक्षणो जगत कारणम्॥

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्ल प्राणस्तस्मादेत ऋषय' शुक्ल इष्ट कुर्वन्तीतर इतरस्मिन्॥ १२॥**

यस्मिन्निद प्रोत विश्व स एव प्रजापति सवत्सराख्य स्वावयवे मासे कृत्स्न परिसमाप्यते । मासो वै प्रजापति यथोक्तलक्षण एव मिथुनात्मक । तस्य मासात्मन प्रजापते-रेको भाग कृष्णपक्ष एव रयि अन्न चन्द्रमा अपरो भाग शुक्ल शुक्लपक्ष प्राण आदित्योऽत्ताग्निर्यस्माच्छुक्लपक्षात्मान प्राण सर्वमेव पश्यन्ति, तस्मात्प्राणदर्शिन एते ऋषय कृष्ण पक्षेऽपीष्ट याग कुर्वन्त शुक्लपक्ष एव कुर्वन्ति । प्राणव्यति-रेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मात्, इतरे तु प्राण न पश्य-न्तीत्यदर्शनलक्षण कृष्णात्मानमेव पश्यन्ति । इतरे इतरस्मि-न्कृष्णपक्ष एव कुर्वन्ति शुक्ले कुर्वन्तोऽपि ॥

**अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राण वा एते प्रस्कन्दन्ति ये दिवा रत्या सयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या सयुज्यन्ते ॥ १३ ॥**

सोऽपि मासात्मा प्रजापति स्वावयवे अहोरात्रे परिसमाप्यते । अहोरात्रो वै प्रजापति पूर्ववत् । तस्यापि अहरेव प्राण अत्ता अग्नि रात्रिरेव रयि पूर्ववदेव । प्राणम् अहरात्मान वै एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छि-

क्षापनयन्ति । के? ये दिवा अहनि रत्या रतिकारणभूतया सह स्त्रिया संयुज्यन्ते मैथुनमाचरन्ति मूढाः । यत एवं तस्मात्तन्न कर्तव्यमिति प्रतिषेधः प्रासङ्गिकः । यत् रात्रौ संयुज्यन्ते रत्या ऋतौ ब्रह्मचर्यमेव तदिति प्रशस्तत्वात् रात्रौ भार्यागमनं कर्तव्यमित्ययमपि प्रासङ्गिको विधिः ॥

**अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्त स्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥**

प्रकृतं तूच्यते सोऽहोरात्रात्मकः प्रजापतिर्व्रीहियवाद्यन्नात्मना व्यवस्थित एवं क्रमेण परिणम्य । तत् अन्नं वै प्रजापतिः । कथम्? ततः तस्मात् ह वै रेतः नृबीजं तत्प्रजाकारणं तस्मात् योषिति सिक्तात् इमाः मनुष्यादिलक्षणाः प्रजाः प्रजायन्ते यत्पृष्टं कुतो ह वै प्रजाः प्रजायन्त इति । तदेवं चन्द्रादित्यमिथुनादिक्रमेण अहोरात्रान्तेन अन्नरेतोद्वारेण इमाः प्रजाः प्रजायन्त इति निर्णीतम् ॥

**तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥**

तत्र तत्रैव सति ये गृहस्था । ह वै इति प्रसिद्धस्मरणार्थौ निपातौ । तत्र प्रजापतेर्व्रत प्रजापतिव्रतम् ऋतौ भार्यागमन चरन्ति कुर्वन्ति, तेषा दृष्ट फलमिदम । किम् ? ते मिथुन पुत्र दुहितर च उत्पादयन्ते । अदृष्ट च फलमिष्टापूर्तदत्तकारिणा तेषामेव एष यश्चान्द्रमसा ब्रह्मलोक पितृयाणलक्षण यषा तप स्नातकव्रतादि ब्रह्मचर्यम् ऋतोरन्यत्र मैथुनासमाचरण येषु च सत्यम् अनृतवर्जन प्रतिष्ठितम अव्यभिचारितया वर्तते नित्यमेव ॥

**तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृत न माया चेति ॥ १६ ॥**

## इति प्रथम प्रश्न ॥

यस्तु पुनरादित्योपलक्षित उत्तरायण प्राणात्मभावो विरज शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्त असौ तेषाम्, केषामिति, उच्यते—यथा गृहस्थानामनेकविरुद्धसव्यवहारप्रयोजनवत्त्वात् जिह्म कौटिल्य वक्रभावोऽवश्यभावि तथा न येषु जिह्मम्, यथा च गृहस्थाना क्रीडादिनिमित्तमनृतमवर्जनीय तथा न येषु तत् तथा माया गृहस्थानामिव न येषु विद्यते । माया नाम बहिरन्यथात्मान प्रकाश्यान्यथैव

कार्यं करोति, सा माया मिथ्याचाररूपा । मायेत्येवमादयो दोषा येष्वेकाकिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते, तत्साधनानुरूप्येणैव तेषामसौ विरजो ब्रह्मला क इत्येषा ज्ञानयुक्तकर्मवतां गति । पूर्वोक्तस्तु ब्रह्मलोक केवलकर्मिणां चन्द्रलक्षण इति ॥

इति प्रथमप्रश्नभाष्यम् ॥

## द्वितीय प्रश्न ॥

---

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ भगवन्कत्येव देवा प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥**

प्राणोऽत्ता प्रजापतिरित्युक्तम् । तस्य प्रजापतित्वमत्तृत्वं चास्मिञ्शरीरेऽवधारयितव्यमित्ययं प्रश्न आरभ्यते । अथ अनन्तरं ह किल एनं भार्गवः वैदर्भिः पप्रच्छ—हे भगवन् कत्येव देवा प्रजां शरीरलक्षणां विधारयन्ते विशेषेण धारयन्ते । कतरे बुद्धीन्द्रियकर्मेन्द्रियविभक्तानाम् एतत् प्रकाशनं स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते । कः असौ पुनः एषां वरिष्ठः प्रधानः कार्यकरणलक्षणानामिति ॥

**तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च । ते प्रकाश्याभिवदन्ति वयमेत**

**द्बाणमवष्टभ्य विधारयाम' ॥ २ ॥**

एव पृष्टवते तस्मै स ह उवाच— आकाश ह वै एष देव वायु अग्नि आप पृथिवी इत्येतानि पञ्च महाभूतानि शरीरारम्भकाणि वाङ्मनश्चक्षु श्रोत्रमित्यादीनि कर्मेन्द्रियबुद्धीन्द्रियाणि च। कार्यलक्षणा करणलक्षणाश्च ते देवा आत्मनो माहात्म्य प्रकाश्य प्रकाश्याभिवदन्ति स्पर्धमाना अहश्रेष्ठतायै। कथ वदन्ति? वयमेतत् बाण कार्यकरणसघातम् अवष्टभ्य प्रासादमिव स्तम्भादय अविशिथिलीकृत्य विधारयाम विस्पष्ट धारयाम । मयैवैकेनाय सघातो ध्रियत इत्येकैकस्याभिप्राय ॥

**तान्वरिष्ठ प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मान प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति तेऽश्रद्दधाना बभूवु ॥ ३ ॥**

तान् एवमभिमानवत वरिष्ठ मुख्य प्राण उवाच उक्तवान्— मा मैव मोहम् आपद्यथ अविवेकितयाभिमान मा कुरुत, यस्मात् अहमेव एतद्बाणम् अवष्टभ्य विधारयामि पञ्चधा आत्मान प्रविभज्य प्राणादिवृत्तिभेद स्वस्य कृत्वा

विधारयामि इति उक्तवति च तस्मिन ते अश्रद्दधाना अप्र त्ययवन्त बभूवु — कथमेतदेवमिति ॥

**सोऽभिमानादूर्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिꣳश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्त सर्वा एवोत्क्रामन्ते तस्मिꣳश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मन श्चक्षु श्रोत्र च ते प्रीता प्राण स्तुन्वन्ति ॥ ४ ॥**

स च प्राण तेषामश्रद्दधानतामालक्ष्य अभिमानात् ऊर्ध्वम् उत्क्रामत इव उत्क्रामतीव उत्क्रान्तवानिव स रोषान्निरपेक्ष । तस्मिन्नुत्क्रामति यद्वृत्त तद्दृष्टान्तेन प्रत्यक्षीकरोति— तस्मिन् उत्क्रामति सति अथ अनन्तरमेव इतरे सर्व एव प्राणाश्चक्षुरादय उत्क्रामन्ते उत्क्रामन्ति उच्चक्रमु । तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवति अनुत्क्रामति सति, सर्व एव प्रातिष्ठन्ते तूष्णीं व्यवस्थिता बभूवु । तत् यथा लोके मक्षिका

मधुकरा स्वराजानं मधुकरराजानम् उत्क्रामन्तं प्रति सर्वा एव उत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते प्रतितिष्ठन्ति । यथायं दृष्टान्तः एवं वाङ्मनश्चक्षुः श्रोत्रं चेत्यादयः ते उत्सृज्याश्रद्दधानतां बुद्ध्वा प्राणमाहात्म्यं प्रीताः प्राणं स्तुन्वन्ति स्तुवन्ति ॥

**एषोऽग्निस्तपत्येष सूर्य**

**एष पर्जन्यो मघवानेष वायु ।**

**एष पृथिवी रयिर्देव**

**सदसच्चामृतं च यत् ॥ ५ ॥**

कथम्? एष प्राणः अग्निः सन् तपति ज्वलति। तथा एष सूर्यः सन् प्रकाशते। तथा एष पर्जन्यः सन् वर्षति । किंच मघवान् इन्द्रः सन् प्रजाः पालयति जिघांसत्यसुररक्षांसि । किंच, एष वायुः आवहप्रवहादिभेदः । किंच, एष पृथिवी रयिः देवः सर्वस्य जगतः सत् मूर्तम् असत् अमूर्तं च अमृतं च यत् देवानां स्थितिकारणम् ॥

**अरा इव रथनाभौ**

**प्राणे सर्वं प्रतिष्ठितम् ।**

**ऋचो यजूंषि सामानि**
**यज्ञ क्षत्र ब्रह्म च ॥ ६ ॥**

किं बहुना ? अरा इव रथनाभौ श्रद्धादि नामान्त सर्व स्थितिकाले प्राणे एव प्रतिष्ठितम् । तथा ऋच यजूषि सामानि इति त्रिविधा मन्त्रा तत्साध्यश्च यज्ञ क्षत्र च सर्वस्य पालयितृ ब्रह्म च यज्ञादिकर्मकर्तृत्वेऽधिकृत च एष एव प्राण सर्वम् ॥

**प्रजापतिश्चरसि गर्भे**
**त्वमेव प्रतिजायसे ।**
**तुभ्य प्राण प्रजास्त्विमा बलि हरन्ति**
**य प्राणैः प्रतितिष्ठसि ॥ ७ ॥**

किच, य प्रजापतिरपि स त्वमेव गर्भे चरसि, पितुर्मातुश्च प्रतिरूप सन् प्रतिजायसे, प्रजापतित्वादेव प्रागेव सिद्ध तव मातृपितृत्वम्, सर्वदेहदेह्याकृतिच्छन्न एक प्राण सर्वात्मासीत्यथ । तुभ्य त्वदर्थाय इमा मनुष्याद्या प्रजास्तु हे प्राण चक्षुरादिद्वारै बलिं हरन्ति, य त्व प्राणै चक्षुरादिभि सह प्रतितिष्ठसि सर्वशरीरषु, अतस्तुभ्य बलिं

हरन्तीति युक्तम् । भोक्तासि यतस्त्व तवैवान्यत्सर्व भा
ज्यम् ॥

देवानामसि वह्नितम
पितृणा प्रथमा स्वधा ।
ऋषीणा चरित सत्य-
मथर्वाङ्गिरसामसि ॥ ८ ॥

किंच, देवानाम इन्द्रादीनाम् असि भवसि त्व वह्नि
तम हविषा प्रापयितृतम । पितृणा ना दीमुखे श्राद्धे या
पितृभ्यो दीयत स्वधा अन्न सा देवप्रदानमपेक्ष्य प्रथमा
भवति । तस्या अपि पितृभ्य प्रापयिता त्वमेवेत्यर्थ ।
किंच, ऋषीणा चक्षुरादीना प्राणानाम् अथर्वाङ्गिरसाम्
अङ्गिरसभूतानामथर्वणाम्— 'तेषामेव प्राणो वाथर्वा' इति
श्रुते — चरित चेष्टित सत्यम् अवितथ देहधारणाद्युपकारल
क्षण त्वमेवासि ॥

इन्द्रस्त्व प्राण तेजसा
रुद्रोऽसि परिरक्षिता ।

**त्वमन्तरिक्षे चरसि**
**सूर्यस्त्व ज्योतिषा पतिः ॥ ९ ॥**

किंच, इन्द्र परमेश्वर त्व हे प्राण, तेजसा वीर्येण रुद्रोऽसि सहरन् जगत् । स्थितौ च परि समन्तात् रक्षिता पालयिता, परिरक्षिता त्वमेव जगत सौम्येन रूपेण । त्वम् अन्तरिक्षे अजस्र चरसि उदयास्तमयाभ्या सूर्य त्वमेव च सर्वेषा ज्योतिषा पति ॥

**यदा त्वमभिवर्षसि**
**अथेमा॰ प्राण ते प्रजाः ।**
**आनन्दरूपास्तिष्ठन्ति**
**कामायान्नं भविष्यतीति ॥ १० ॥**

यदा पर्जन्यो भूत्वा अभिवर्षसि त्वम् , अथ तदा अन्न प्राप्य इमा प्रजा प्राणते प्राणचेष्टा कुवन्तीत्यर्थ । अथवा, हे प्राण, ते तव इमा प्रजा स्वात्मभूतास्त्वदन्नसवर्धितास्त्वद-भिवर्षणदर्शनमात्रेण च आनन्दरूपा सुख प्राप्ता इव सत्य तिष्ठन्ति । कामाय इन्छात अन्न भविष्यति इत्येवम-भिप्राय ॥

व्रात्यस्त्वं प्राणैकर्षि-
रत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः
पिता त्वं मातरिश्व नः ॥ ११ ॥

किंच, प्रथमजत्वादन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्य त्वम्, स्वभावत एव शुद्ध इत्यभिप्राय । हे प्राण, एकर्षि त्वम् आथर्वणाना प्रसिद्ध एकर्षिनामा अग्नि सन् अत्ता सर्वहविषाम् । त्वमेव विश्वस्य सर्वस्य सतो विद्यमानस्य पति सत्पति , साधुर्वा पति सत्पति । वय पुन आद्यस्य तव अदनीयस्य हविषो दातार । त्व पिता मातरिश्व हे मातरिश्वन्, न अस्माकम् अथवा, मातरिश्वन वायो पिता त्वम् । अतश्च सर्वस्यैव जगत पितृत्व सिद्धम् ॥

या ते तनूर्वाचि प्रतिष्ठिता
या श्रोत्रे या च चक्षुषि ।
या च मनसि संतता
शिवा तां कुरु मोत्क्रमीः ॥ १२ ॥

किं बहुना ? या ते त्वदीया तनू वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती, या श्रोत्रे या च चक्षुषि या च मनसि संकल्पादिव्यापारेण संतता समनुगता तनू, तां शिवां शान्तां कुरु, मा उत्क्रमी उत्क्रमणेनाशिवां मा कार्षीरित्यर्थः ॥

**प्राणस्येदं वशे सर्वं**
**त्रिदिवे यत्प्रतिष्ठितम् ।**
**मातेव पुत्रान्रक्षस्व**
**श्रीश्च प्रज्ञां च विधेहि न इति ॥ १३ ॥**

किं बहुना । अस्मिँल्लोके प्राणस्यैव वशे सर्वमिदं यत्किंचिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत् प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एव ईशिता रक्षिता । अतो मातेव पुत्रान् अस्मान् रक्षस्व पालयस्व । त्वन्निमित्ता हि ब्राह्मयः क्षात्त्र्यश्च श्रियः तास्त्वं श्रीश्च श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां विधेहि नः विधत्स्वेत्यर्थः । इत्येवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरेवेत्यवधृतम् ॥

इति द्वितीयः प्रश्नः ॥

# तृतीय· प्रश्न ॥

**अथ हैन कौसल्यश्चाश्वलायनः पप्रच्छ भगवन्कुत एष प्राणो जायते कथमाया-त्यस्मिञ्शरीर आत्मान वा प्रविभज्य कथ प्रातिष्ठते केनोत्क्रमते कथ बाह्यम भिधत्ते कथमध्यात्ममिति ॥ १ ॥**

अथ हैन कौसल्यश्चाश्वलायन प्रपच्छ। प्राणैर्ह्येव निर्धारि-ततत्त्व उपलब्धमहिमापि सहतत्वात्स्यादस्य कार्यत्वम्, अत पृच्छामि। हे भगवन, कुत कस्मात्कारणात् एष यथावधृ-त प्राण जायते। जातश्च कथ केन वृत्तिविशेषेण आयाति अस्मिन् शरीरे, किंनिमित्तकमस्य शरीरग्रहणमित्यर्थ। प्रवि-ष्टश्च शरीरे आत्मान वा प्रविभज्य प्रविभाग कृत्वा कथ कन प्रकारेण प्रातिष्ठत प्रतितिष्ठति। केन वा वृत्तिविशेषेणास्मा च्छरीरात् उत्क्रमते उत्क्रामति। कथ बाह्यम् अधिभूतमधि दैवत च अभिधत्ते धारयति, कथमध्यात्ममिति, धारयतीति शेष ॥

**तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्र-ह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥**

एवं पृष्टः तस्मै स होवाचाचार्यः । प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हः, तस्यापि जन्मादि त्वं पृच्छसि, अत अतिप्रश्नान्पृच्छसि । ब्रह्मिष्ठोऽसीति अतिशयेन त्वं ब्रह्मवित्, अतस्तुष्टोऽहम्, तस्मात् ते तुभ्यम् अहं ब्रवीमि यत्पृष्टं शृणु ॥

**आत्मन एष प्राणो जायते । यथैषा पुरुषे च्छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्शरीरे ॥ ३ ॥**

आत्मनः परस्मात्पुरुषादक्षरात्सत्यात् एषः उक्तः प्राणः जायते । कथमित्यत्र दृष्टान्तः । यथा लोके एषा पुरुषे शिरःपाण्यादिलक्षणे निमित्ते च्छाया नैमित्तिकी जायते, तद्वत् एतस्मिन् ब्रह्मण्येतत्प्राणाख्यं छायास्थानीयमनृतरूपं तत्त्वं सत्ये पुरुषे आततं समर्पितमित्येतत् । छायेव देहे मनोकृतेन मनःकृतेन मनःसंकल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतत् । वक्ष्यति हि पुण्येन पुण्यमित्यादि । 'तदेव सक्तः सह कर्मणैति' इति श्रुत्यन्तरात् । आयाति आगच्छत्यस्मिञ्शरीरे ॥

**यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव संनिधत्ते ॥ ४ ॥**

यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते । कथम्? एतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेति । एवमेव यथायं दृष्टान्तः । एष मुख्यः प्राणः इतरान् प्राणान् चक्षुरादीनात्मभेदांश्च पृथक्पृथगेव यथास्थानं संनिधत्ते विनियुङ्क्ते ॥

**पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥**

तत्र विभागः । पायूपस्थे पायुश्च उपस्थश्च पायूपस्थं तस्मिन् । अपानम् आत्मभेदं मूत्रपुरीषाद्यपनयनं कुर्वन् संनिधत्ते तिष्ठति । तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिंश्चक्षुःश्रोत्रे । मुखनासिकाभ्यां मुखं च नासिका च मुख-

नासिक ताभ्या मुखनासिकाभ्या निर्गच्छन् प्राण स्वय सम्रा ट्स्थानीय प्रातिष्ठते प्रतितिष्ठति । मध्ये तु प्राणापानयो स्थानयो नाभ्याम्, समान अशित पीत च सम नयतीति समान । एष हि यस्मात् यदेतत् हुत भुक्त पीत चात्माग्नौ प्रक्षिप्तम् अन्न सम नयति, तस्मात् अशितपीतेन्धनादग्नेरौदर्या-द्धृदयदेश प्राप्तात् एता सप्तसख्याका अर्चिष दीप्तयो निर्ग च्छन्त्यो भवन्ति । शीर्षण्यप्राणद्वारा दर्शनश्रवणादिलक्षणरूपा-दिविषयप्रकाश इत्यभिप्राय ॥

**हृदि ह्येष आत्मा । अत्रैतदेकशत ना-डीना तासा शत शतमेकैकस्या द्वास-प्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्रा-णि भवन्त्यासु व्यानश्चरति ॥ ६ ॥**

हृदि ह्येष पुण्डरीकाकारमासपिण्डपरिच्छिन्ने हृदयाकाशे एष आत्मा आत्मसयुक्तो लिङ्गात्मा, जीवात्मेत्यर्थ , अत्र अस्मिन्हृदये एतत् एकशतम् एकोत्तरशत सख्यया प्रधाननाडीना भवति । तासा शत शतम् एकैकस्या प्रधान नाड्या भेदा , पुनरपि द्वासप्ततिर्द्वासप्तति द्वे द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि, सहस्राणा द्वासप्तति , प्रतिशाखानाडी

सहस्राणि प्रतिप्रतिनाडीशत संख्यया प्रधाननाडीना सहस्रा णि भवन्ति । आसु नाडीषु व्यानो वायुश्चरति । व्यानो व्यापनात् । आदित्यादिव रश्मयो हृदयात्सर्वतोगामिनीभिर्नाडीभि सर्वदेह सव्याप्य व्यानो वर्तते । सधिस्कन्धमर्मदेशेषु विशेषेण प्राणापानवृत्त्योश्च मध्ये उद्भूतवृत्तिर्वीर्यवत्कर्मकर्ता भवति ॥

**अथैकयोर्ध्व उदान पुण्येन पुण्य लोक नयति पापेन पापमुभाभ्यामेव मनुष्य-लोकम् ॥ ७ ॥**

अथ या तु तत्रैकशताना नाडीना मध्ये ऊर्ध्वगा सुषुम्ना-ख्या नाडी, तया एकया ऊर्ध्व सन् उदान वायु आपादतल मस्तकवृत्ति सचरन् पुण्येन कर्मणा शास्त्रविहितेन पुण्य लोक देवादिस्थानलक्षण नयति प्रापयति । पापेन तद्विपरीतेन पाप नरक तिर्यग्योन्यादिलक्षणम् । उभाभ्या समप्रधा नाभ्या पुण्यपापाभ्यामेव मनुष्यलोक नयतीत्यनुवर्तते ॥

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येन चाक्षुष प्राणमनुगृह्णानः । पृथिव्या या देवता सैषा पुरुषस्यापानमवष्टभ्या-**

**न्तरा यदाकाश स समानो वायु र्व्यानः ॥ ८ ॥**

आदित्य ह वै प्रसिद्धो ह्यधिदैवत बाह्य प्राण स एष उदयति उद्गच्छति। एष हि एनम् आध्यात्मिक चक्षुषि भव चाक्षुष प्राण प्रकाशेन अनुगृह्णान रूपोपलब्धौ चक्षुष आलोक कुर्वन्नित्यर्थ । तथा पृथिव्याम् अभिमानिनी या देवता प्रसिद्धा सैषा पुरुषस्य अपानम् अपानवृत्तिम् अवष्टभ्य आकृष्य वशी कृत्याध एवापकर्षणेनानुग्रह कुर्वती वर्तत इत्यर्थ । अन्यथा हि शरीर गुरुत्वात्पतेत्सावकाशे वोद्गच्छेत्। यदेतत् अन्तरा मध्ये द्यावापृथिव्यो य आकाश तत्स्थो वायुराकाश उच्यते, मञ्चस्थवत्। स समान समानमनुगृह्णानो वर्तत इत्यर्थ । समानस्यान्तराकाशस्थत्वसामा यात् । सामान्येन च यो बाह्यो वायु स व्याप्तिसामान्यात् व्यान व्यानमनुगृह्णानो वर्तत इत्यभिप्राय ॥

**तेजो ह वाव उदानस्तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सपद्यमानैः ॥**

यद्बाह्य ह वाव प्रसिद्ध सामान्य तेज तच्छरीरे उदान उदान वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्राय । यस्मात्तेज -स्वभावो बाह्यतेजोनुगृहीत उत्क्रान्तिकर्ता तस्मात् यदा लौकि

क पुरुष उपशान्ततेजा भवति, उपशान्त स्वाभाविक ते-
जो यस्य स । तदा त क्षीणायुष मुमूर्षुं विद्यात् । स पुन
भव शरीरान्तर प्रतिपद्यते । कथम्? सह इन्द्रियै मनसि
सपद्यमानै प्रविशद्भिर्वागादिभि ॥

**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेज-
सा युक्तः । सहात्मना यथासकल्पित
लोकं नयति ॥ १० ॥**

मरणकाले यच्चित्तो भवति तेन एष जीव चित्तेन सक
ल्पेनेन्द्रियै सह प्राण मुख्यप्राणवृत्तिमायाति । मरणकाले क्षी
णेन्द्रियवृत्ति सन्मुख्यया प्राणवृत्त्यैवावतिष्ठत इत्यर्थ । तदा हि
वदन्ति ज्ञातय उच्छ्वसिति जीवतीति । स च प्राण तेजसा
उदानवृत्त्या युक्त सन् सहात्मना स्वामिना भोक्त्रा स एव-
मुदान उदानवृत्त्यैव युक्त प्राणस्त भोक्तार पुण्यपापकमवशात्
यथासकल्पित यथाभिप्रेत लोक नयति प्रापयति ॥

**य एवविद्वान्प्राण वेद न हास्य प्रजा
हीयतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥**

य कश्चित् एव विद्वान् यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादि-
भि प्राण वेद जानाति तस्येद फलमैहिकमामुष्मिक चोच्यते ।

न ह् अस्य नैवास्य विदुष प्रजा पुत्रपौत्रादिलक्षणा हीयते च्छिद्यते । पतिते च शरीरे प्राणसायुज्यतया अमृत अमरण-धर्मा भवति, तत् एतस्मिन्नर्थे सक्षेपाभिधायक एष श्लोक मन्त्रो भवति ॥

**उत्पत्तिमायति स्थान**

**विभुत्व चैव पञ्चधा ।**

**अध्यात्म चैव प्राणस्य**

**विज्ञायामृतमश्नुते**

**विज्ञायामृतमश्नुत इति ॥**

इति तृतीय प्रश्न ॥

उत्पत्तिं परमात्मन प्राणस्य आयतिम् आगमन मनोकृते-नास्मिञ्शरीरे स्थान स्थितिं च पायूपस्थादिस्थानेषु विभुत्व च स्वाम्यमेव सम्राडिव प्राणवृत्तिभेदाना पञ्चधा स्थापनम् । बाह्यमादित्यादिरूपेणाध्यात्म चैव चक्षुराद्याकारणावस्थान विज्ञाय एव प्राणम् अमृतमश्नुते इति । विज्ञायामृतश्नुत इति द्विर्वचन प्रश्नार्थपरिसमाप्त्यर्थम ॥

इति तृतीयप्रश्नभाष्यम् ॥

# चतुर्थ प्रश्न ॥

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुख भवति कस्मिन्नु सर्वे सप्रतिष्ठिता भवन्तीति ॥ १ ॥

अथ ह एन सौर्यायणी गार्ग्य पप्रच्छ प्रश्नत्रयेणापरविद्या गोचर सर्व परिसमाप्य ससार व्याकृतविषय साध्यसाधन लक्षणमनित्यम् । अथेदानीं साध्यसाधनविलक्षणमप्राणममनोगोचरमतीन्द्रियमविषय शिव शान्तमविकृतमक्षर सत्य पर विद्यागम्य पुरुषारय सबाह्याभ्यन्तरमज वक्तव्यमित्युत्तर प्रश्नत्रयमारभ्यते । तत्र सुदीप्तादिवाग्नेर्यस्मात्परस्मादक्षरात्सर्वे भावा विस्फुलिङ्गा इव जायन्ते तत्र चैवापियन्तीत्युक्त द्वितीये मुण्डके, के ते सर्वे भावा अक्षराद्विस्फुलिङ्गा इव विभज्यन्ते। कथ वा विभक्ता सन्तस्तत्रैवापियन्ति । किंलक्षण वा तदक्षरमिति । एतद्विवक्षया अधुना प्रश्नानुद्भावयति—भगवन्, एत-

स्मिन् पुरुषे शिर पाण्यादिमति कानि करणानि स्वपति स्वाप कुर्वन्ति स्वव्यापाराादुपरमन्ते, कानि च अस्मिन् जाग्रति जागरणमनिद्रावस्था स्वव्यापार कुर्वन्ति। कतर कार्यकरण-लक्षणयो एष देव स्वप्नान्पश्यति। स्वप्नो नाम जाग्रद्दर्शना-न्निवृत्तस्य जाग्रद्वदन्त शरीरे यद्दर्शनम्। तत्किं कार्यलक्षणेन देवेन निर्वर्त्यते, किं वा करणलक्षणेन केनचिदित्यभिप्राय। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्न निरायासलक्षणमना-बाध सुख कस्य एतत् भवति। तस्मि काले जाग्रत्स्वप्नव्यापा-राादुपरता सन्त कस्मिन्नु सर्वे सम्यगेकीभूता सप्रतिष्ठिता। मधुनि रसवत्समुद्रप्रविष्टनद्यादिवच्च विवेकानर्हा प्रतिष्ठिता भवन्ति सगता सप्रतिष्ठिता भवन्तीत्यर्थ। ननु न्यस्तदा त्रादिकरणवत्स्वव्यापाराादुपरतानि पृथक्पृथगेव स्वात्मन्यव-तिष्ठन्त इत्येतद्युक्तम्, कुत प्राप्ति सुषुप्तपुरुषाणा करणाना कस्मिंश्चिदेकीभावगमनाशङ्काया प्रष्टु ? युक्तैव त्वाशङ्का, यत सहतानि करणानि स्वाम्यर्थानि परतन्त्राणि च जाग्र-द्विषये, तस्मात्स्वापेऽपि सहताना पारतन्त्र्येणैव कस्मिंश्चि-त्सगतिर्न्याय्येति, तस्मादाशङ्कानुरूप एव प्रश्नोऽयम्। अत्र तु कार्यकरणसघातो यस्मिंश्च प्रलीन सुषुप्तप्रलयकालयो, तद्विशेष बुभुत्सो स को नु स्यादिति कस्मि सर्वे सप्रतिष्ठिता भवन्तीति ॥

**तस्मै स होवाच यथा गार्ग्य मरीच-
योऽर्कस्यास्त गच्छत. सर्वा एतस्मिंस्ते-
जोमण्डल एकीभवन्ति ता पुन पुन-
रुदयत: प्रचरन्त्येव ह वै तत्सर्वं परे देवे
मनस्येकीभवति । तेन तर्ह्येष पुरुषो न
शृणोति न पश्यति न जिघ्रति न रस-
यते न स्पृशते नाभिवदते नादत्ते नान-
न्दयते न विसृजते नेयायते स्वपितीत्या-
चक्षते ॥ २ ॥**

तस्मै स ह उवाच आचार्य । शृणु हे गार्ग्य, यत्त्वया प्रष्टम्। यथा मरीचय रश्मय अकस्य आदित्यस्य अस्तम् अद र्शन गच्छत सर्वा अशेषत एतस्मिन् तेजोमण्डले तेजोराशि रूपे एकीभवन्ति विवेकानर्हत्वमविशेषता गच्छन्ति, ता मरी चयस्तस्यैवार्कस्य पुन पुन उदयत उद्गच्छत प्रचरन्ति विकीर्यन्ते यथाय दृष्टान्त । एव ह वै तत् सर्व विषयेन्द्रिया-दिजात परे प्रकृष्टे देवे द्योतनवति मनसि चक्षुरादिदेवाना मनस्तन्त्रत्वात्परो देवो मन , तस्मिन्स्वप्रकाले एकीभवति मण्डले मरीचिवदविशेषता गच्छति । जिजागरिषोश्च र

श्मिवन्मण्डलान्मनस एव प्रचरन्ति स्वव्यापाराय प्रतिष्ठन्ते यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि मन स्येकीभूतानीव करणव्यापारादुपरतानि तेन तस्मात् तर्हि तस्मिन्स्वापकाले एष देवदत्तादिलक्षण पुरुष न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते न अभिवदते न आदत्ते न आनन्दयते न विसृजते न इयायते स्वपिति इति आचक्षते लौकिका ॥

**प्राणाग्नय एवैतस्मिन्पुरे जाग्रति । गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥**

सुप्तवत्सु श्रोत्रादिषु करणेषु एतस्मिन् पुरे नवद्वारे देहे प्राणाग्नय प्राणा एव पञ्च वायवोऽग्नय इवाग्नय जाग्रति । अग्निसामान्य हि आह— गार्हपत्यो ह वा एषोऽपान । कथमिति, आह । यस्मात् गार्हपत्यात् अग्नेरग्निहोत्रकाले इतरोऽग्नि राहवनीय प्रणीयते प्रणयनात्, प्रणीयते अस्मादिति प्रणयनो गार्हपत्योऽग्नि , तथा सुप्तस्यापानवृत्ते प्रणीयत इव प्राणो मुखनासिकाभ्या सचरति अत आहवनीयस्थानीय प्राण ।

व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिणदिक्सबन्धात् अन्वाहार्यपचन दक्षिणाग्नि ॥

**यदुच्छ्वासनिःश्वासावेतावाहुती सम नयतीति स समानः । मनो ह वाव यजमान इष्टफलमेवोदान स एन यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥**

अत्र च होता अग्निहोत्रस्य यत् यस्मात् उच्छ्वासनिश्वासौ अग्निहोत्राहुती इव नित्य द्वित्वसामान्यादेव तु एतौ आहुती सम साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानीयोऽपि होता चाहुत्योर्नेतृत्वात् । कोऽसौ [2] स समान । अतश्च विदुष स्वापोऽप्यग्निहोत्रहवनमेव । तस्माद्विद्वान्नाकर्मीत्येव मन्तव्य इत्यभिप्राय । सर्वदा सर्वाणि च भूतानि विचिन्वन्त्यपि स्वपत इति हि वाजसनेयके । अत्र हि जाग्रत्सु प्राणाग्निषूपसहृत्य बाह्यकरणानि विषयाश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषु मनो ह वाव यजमान जागर्ति । यजमानवत्कार्यकरणेषु प्राधान्येन सव्यवहारात्स्वर्गमिव ब्रह्म प्रति प्रस्थितत्वाद्यजमानो मन कल्प्यते । इष्टफल यागफलमेव उदान वायु । उदाननिमित्तत्वादिष्टफ-

लप्राप्ते । कथम्[2] स उदान एन मनआख्य यजमान स्वप्र-
वृत्तिरूपादपि प्रच्याव्य अहरह सुषुप्तिकाले स्वर्गमिव ब्रह्म
अक्षर गमयति । अतो यागफलस्थानीय उदान ॥

**अत्रैष देव स्वप्ने महिमानमनुभवति । यद्दृष्ट दृष्टमनुपश्यति श्रुत श्रुतमेवार्थमनु शृणोति देशदिगन्तरैश्च प्रत्यनुभूत पुन पुन प्रत्यनुभवति दृष्ट चादृष्ट च श्रुत चाश्रुत चानुभूत चाननुभूत च सच्चासच्च सर्व पश्यति सर्व पश्यति ॥ ५ ॥**

एव विदुष श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो
भवति तावत्सर्वयागफलानुभव एव, नाविदुषामिवानर्थायेति
विद्वत्ता स्तूयते । न हि विदुष एव श्रोत्रादीनि स्वपन्ति,
प्राणाग्नयो वा जाग्रति । जाग्रत्स्वप्नयोर्मन स्वातन्त्र्यमनुभव-
दहरह सुषुप्त वा प्रतिपद्यते । समान हि सर्वप्राणिना
पर्यायेण जाग्रत्स्वप्नसुषुप्तगमनम् , अतो विद्वत्तास्तुतिरेवेयमुप-
पद्यते । यत्पृष्ट कतर एष देव स्वप्नान्पश्यतीति, तदाह—
अत्र उपरतेषु श्रोत्रादिषु देहरक्षायै जाग्रत्सु प्राणादिवायुषु
प्राक्सुषुप्तिप्रतिपत्ते एतस्मिन्नन्तराल एष देव अर्करश्मिव-

त्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनम् अनुभवति प्रतिपद्यते। ननु महिमानुभवने करणं मनोऽनुभवितृ, तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते? स्वतन्त्रो हि क्षेत्रज्ञः। नैष दोषः। क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वात्। न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्ति वा। मनउपाधिकृतमेव तस्य जागरणं स्वप्नश्च। उक्तं वाजसनेयके 'सधीः स्वप्नो भूत्वा ध्यायतीव लेलायतीव' इत्यादि। तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव। मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयञ्ज्योतिष्ट्वं बाध्येत इति केचित्। तन्न। श्रुत्यर्थापरिज्ञानकृता भ्रान्तिस्तेषाम्। यस्मात्स्वयञ्ज्योतिष्ट्वादिव्यवहारोऽप्यामोक्षान्तः सर्वोऽप्यविद्याविषय एव मनआद्युपाधिजनितः, 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येन्मात्रासंसर्गस्त्वस्य भवति' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिभ्यः। अतो मन्दब्रह्मविदामेवेयमाशङ्का, न त्वेकात्मविदाम्। नन्वेवं सति 'अत्रायं पुरुषः स्वयञ्ज्योतिः' इति विशेषणमनर्थकं भवति। अत्रोच्यते। अत्यल्पमिदमुच्यते 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति अन्तर्हृदयपरिच्छेदकरणे सुतरां स्वयञ्ज्योतिष्ट्वं बाध्येत। सत्यमेवम् अयं दोषो यद्यपि

स्यात्स्वप्ने केवलतया स्वयञ्ज्योतिष्ट्वेनार्ध तावदपनीत भारस्येति चेत्, न, तत्रापि 'पुरीतति नाडीषु शेते' इति श्रुते पुरीतन्नाडीसबन्धादत्रापि पुरुषस्य स्वयञ्ज्योतिष्ट्वेनार्धभारापनयाभिप्रायो मृषैव । कथ तर्हि 'अत्राय पुरुष स्वयञ्ज्योति' इति? अन्यशाखात्वादनपेक्षा सा श्रुतिरिति चेत्, न, अर्थैकत्वस्येष्टत्वात् । एको ह्यात्मा सर्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च । तस्माद्युक्ता स्वप्न आत्मन स्वयञ्ज्योतिष्ट्वोपपत्तिर्वक्तुम्, श्रुतेर्यथार्थतत्त्वप्रकाशकत्वात् । एव तर्हि शृणु श्रुत्यर्थं हित्वा सर्वमभिमानम्, न ह्यभिमानेन वर्षशतेनापि श्रुत्यर्थो ज्ञातु शक्यते सर्वै पण्डितमन्यै । यथा हृदयाकाश पुरीतति नाडीषु च स्वपतस्तत्सबन्धाभावात्ततो विविच्य दर्शयितु शक्यत इति आत्मन स्वयञ्ज्योतिष्ट्व न बाध्यते । एव मनस्यविद्याकामकर्मनिमित्तोद्भूतवासनावति कर्मनिमित्ता वासना अविद्यया अन्यद्वस्त्वन्तरमिव पश्यत सर्वकार्यकरणेभ्य प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयञ्ज्योतिष्ट्व सुदर्पितेनापि तार्किकेण केन वारयितु शक्यते? तस्मात्साधूक्त मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमय स्वप्नान्पश्यतीति । कथ महिमानमनुभवतीति उच्यते । यन्मित्र पुत्रादि वा पूर्व दृष्ट तद्वासनावासित पुत्रमित्रादि

वासनासमुद्भूत पुत्र मित्रमिव वा अविद्यया पश्यतीत्येव मन्यते। शृणोति तथा श्रुतमर्थं तद्वासनयानु शृणोतीव। देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूत पुन पुनस्तत्प्रत्यनुभवतीव अविद्यया। तथा दृष्ट चास्मिञ्जन्मन्यदृष्ट च जन्मान्तरदृष्ट मित्यर्थ। अत्यन्तादृष्टे वासनानुपपत्ते। एव श्रुत चाश्रुत चानुभूत चास्मिञ्जन्मनि केवलेन मनसा अननुभूत च मनसैव जन्मान्तरेऽनुभूतमित्यर्थ। सच्च परमार्थोदकादि। असच्च मरीच्युदकादि। किं बहुना, उक्तानुक्त सर्वं पश्यति सर्व पश्यति सर्वमनोवासनोपाधि सन्नेव सर्वकरणात्मा मनोदेव स्वप्नान्पश्यति॥

**स यदा तेजसाभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथैतदस्मिञ्शरीरे एतत्सुख भवति॥ ६॥**

स यदा मनोरूपो देवो यस्मिन्काले सौरेण पित्ताख्येन तेजसा नाडीशयेन सर्वत अभिभूतो भवति तिरस्कृतवासनाद्वारो भवति, तदा सह करणैर्मनसो रश्मयो हृद्युपसहृता भवन्ति। यदा मनो दावाग्निवदविशेषविज्ञानरूपेण कृत्स्न शरीर व्याप्यावतिष्ठते, तदा सुषुप्तो भवति। अत्र एतस्मिन्काले एष मनआख्यो देव स्वप्नान् न पश्यति दर्शनद्वारस्य निरुद्धत्वा-

त्तेजसा । अथ तदा एतस्मिन् शरीरे एतत्सुख भवति यद्वि-
ज्ञान निराबाधमविशेषेण शरीरव्यापक प्रसन्न भवतीत्यर्थ ॥

**स यथा सोम्य वयासि वासोवृक्ष स-
प्रतिष्ठन्त एव ह वै तत्सर्व पर आत्म-
नि सप्रतिष्ठते ॥ ७ ॥**

एतस्मिन्काले अविद्याकामकर्मनिबन्धनानि कार्यकरणानि शान्तानि भवन्ति । तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा विभाव्यमानमद्वयमेक शिव शान्त भवतीत्येतामेवावस्था पृथिव्याद्याविद्याकृतमात्रानुप्रवेशेन दर्शयितु दृष्टान्तमाह— स दृष्टान्त यथा येन प्रकारेण हि सोम्य प्रियदर्शन, वयासि पक्षिण वासार्थ वृक्ष वासोवृक्ष प्रति सप्रतिष्ठन्ते गच्छन्ति, एव यथा दृष्टान्त ह वै तत् वक्ष्यमाण सर्व परे आत्मनि अक्षरे सप्रतिष्ठते ॥

**पृथिवी च पृथिवीमात्रा चापश्चापोमा-
त्रा च तेजश्च तेजोमात्रा च वायुश्च वा-
युमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च
द्रष्टव्य च श्रोत्र च श्रोतव्य च घ्राण च**

घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥

किं तत्सर्वम्? पृथिवी च स्थूला पञ्चगुणा तत्कारणं च पृथिवीमात्रा गन्धतन्मात्रा, तथा आपश्च आपोमात्रा च, तेजश्च तेजोमात्रा च, वायुश्च वायुमात्रा च, आकाशश्चाकाशमात्रा च, स्थूलानि च सूक्ष्माणि च भूतानीत्यर्थः । तथा चक्षुश्च इन्द्रियं रूपं च द्रष्टव्यं च, श्रोत्रं च श्रोतव्यं च, घ्राणं च घ्रातव्यं च, रसश्च रसयितव्यं च, त्वक्च स्पर्शयितव्यं च, वाक्च वक्तव्यं च, हस्तौ च आदातव्यं च, उपस्थश्च आनन्दयितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं च, बुद्धीन्द्रियाणि कर्मेन्द्रियाणि तदर्थाश्चोक्ताः । मनश्च पूर्वोक्तम् । मन्तव्यं च तद्विषयः । बुद्धिश्च निश्चयात्मिका । बो-

द्रष्टव्य च तद्विषय । अहकारश्च अभिमानलक्षणमन्त करणम् । अहकर्तव्य च तद्विषय । चित्त च चेतनावदन्त करणम् । चेतयितव्य च तद्विषय । तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक् । तया निर्भास्यो विषयो विद्योतयितव्यम् । प्राणश्च सूत्र यदाचक्षते तेन विधारयितव्य सग्रथनीयम् । सर्व हि कार्यकरणजात पारार्थ्येन सहत नामरूपात्मकमेता वदेव ॥

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष.। स परेऽक्षर आत्मनि सप्रतिष्ठते ॥**

अत पर यदात्मस्वरूप जलसूर्यकादिवद्भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टम्, एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा, विज्ञान विज्ञायतेऽनेनेति करणभूत बुद्ध्यादि, इद तु विजानातीति विज्ञान कर्तृकारकरूपम्, तदात्मा तत्स्वभावो विज्ञातृस्वभाव इत्यर्थ । पुरुष कार्यकरणसघातोक्तोपाधिपूरणात्पुरुष । स च जलसूर्यकादिप्रतिबिम्बस्य सूर्यादिप्रवेशवज्जलाद्याधारशोषे परे अक्षरे आत्मनि सप्रतिष्ठते ॥

**परमेवाक्षरं प्रतिपद्यते स यो ह वै त-
दच्छायमशरीरमलोहितं शुभ्रमक्षरं वेद-
यते यस्तु सोम्य। स सर्वज्ञः सर्वो
भवति तदेष श्लोकः ॥ १० ॥**

तदेकत्वविदः फलमाह—परमेव अक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यते इति। एतदुच्यते—स यो ह वै तत् सर्वैषणाविनिर्मुक्तः अच्छायं तमोवर्जितम्, अशरीरं नामरूपसर्वोपाधिशरीरवर्जितम्, अलोहितं लोहितादिसर्वगुणवर्जितम्, यत एवमतः शुभ्रं शुद्धम्, सर्वविशेषणरहितत्वादक्षरम्, सत्यं पुरुषाख्यमप्राणममनोगोचरं शिवं शान्तं सबाह्याभ्यन्तरमजं वेदयते विजानाति यस्तु सर्वत्यागी हे सोम्य, स सर्वज्ञः न तेनाविदितं किंचित्संभवति। पूर्वमविद्यया असर्वज्ञ आसीत्। पुनर्विद्यया अविद्यापनये सर्वो भवति। तत् अस्मिन्नर्थे एष श्लोकः मन्त्रो भवति उक्तार्थसंग्राहकः ॥

**विज्ञानात्मा सह देवैश्च सर्वैः
प्राणा भूतानि संप्रतिष्ठन्ति यत्र।**

तदक्षरं वेदयते यस्तु सोम्य
स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥

इति चतुर्थः प्रश्नः ॥

विज्ञानात्मा, सह देवैश्च अग्न्यादिभिः प्राणाः चक्षुरादयः भूतानि पृथिव्यादीनि सम्प्रतिष्ठन्ति प्रविशन्ति यत्र यस्मिन्नक्षरे, तत् अक्षरं वेदयते यस्तु हे सोम्य प्रियदर्शन, स सर्वज्ञः सर्वमेव आविवेश आविशतीत्यर्थः ॥

इति चतुर्थप्रश्नभाष्यम् ॥



## पञ्चम प्रश्न ॥

---

**अथ हैन शैब्य सत्यकाम' पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतम वाव स तेन लोक जयतीति ॥**

अथ ह एन शैब्य सत्यकाम पप्रच्छ । अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेन ॐकारस्योपासनविधित्सया प्रश्न आरभ्यते । स य कश्चित् ह वै भगवन्, मनुष्येषु मनुष्याणा मध्ये तत् अद्भुतमिव प्रायणान्त मरणान्त यावज्जीवमित्येतत्, ॐकारम् अभिध्यायीत आभिमुख्येन चिन्तयेत । बाह्यविषयेभ्य उपसहृतकरण समाहितचित्तो भक्त्यावेशितब्रह्मभावे ॐकारे आत्मप्रत्ययसतानाविच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निवातस्थदीपशिखासमोऽभिध्यानशब्दार्थ । सत्यब्रह्मचर्याहिंसापरिग्रहत्यागसन्यासशौचसतोषामायावित्वाद्यनेकयमनियमानुगृहीत स एव यावज्जीवव्रतधारण, कतम वाव, अनेके हि ज्ञानकर्मभिर्जेतव्या

लोकास्तिष्ठन्ति , तेषु तेन ॐकाराभिध्यानेन कतम स लोक जयतीति ॥

**तस्मै स होवाच । एतद्वै सत्यकाम पर चापर च ब्रह्म यदोंकार । तस्माद्वि-द्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥**

पृष्टवते तस्मै स ह उवाच पिप्पलाद — एतद्वै स-त्यकाम । एतत् ब्रह्म वै पर च अपर च ब्रह्म पर सत्यमक्षर पुरुषाख्यम् अपर च प्राणाख्य प्रथमज यत् तदोंकार एव ॐकारात्मकम् ॐकारप्रतीकत्वात् । पर हि ब्रह्म शब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितम् , अतो न श क्यमतीन्द्रियगोचरत्वात्केवलेन मनसावगाहितुम्। ॐकारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिना त त्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्। तथा पर च ब्रह्म । तस्मात्पर चापर च ब्रह्म यदोंकार इत्युपचर्यते । तस्मादेव विद्वान् एतेनैव आत्मप्राप्तिसाधनेनैव ॐकाराभिध्यानेन एक-तर परमपर वा अन्वेति ब्रह्मानुगच्छति , नेदिष्ठ ह्यालम्बन-मोंकारो ब्रह्मण ॥

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥**

स यद्यप्योंकारस्य सकलमात्राविभागज्ञो न भवति, तथाप्योंकाराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति, एतदेकदेशज्ञानवैगुण्यतयोंकारशरणः कर्मज्ञानोभयभ्रष्टो न दुर्गतिं गच्छति, किं तर्हि, यदि एवमोंकारमेव एकमात्राविभागज्ञ एव केवलः अभिध्यायीत एकमात्रं सदा ध्यायीत, स तेनैव एकमात्राविशिष्टोंकाराभिध्यानेनैव संवेदितः संबोधितः तूर्णं क्षिप्रमेव जगत्यां पृथिव्याम् अभिसंपद्यते । किम्? मनुष्यलोकम् । अनेकानि हि जन्मानि जगत्यां संभवन्ति । तत्र तं साधकं जगत्यां मनुष्यलोकमेव उपनयन्ते उपनिगमयन्ति ऋचः । ऋग्वेदरूपा ह्योंकारस्य प्रथमा एकमात्रा । तेन स तत्र मनुष्यजन्मनि द्विजाग्र्यः सन् तपसा ब्रह्मचर्येण श्रद्धया च संपन्नः महिमानं विभूतिम् अनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति, योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति ॥

**अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥**

अथ पुन यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोंकारमभिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सौमदैवत्ये सपद्यत एकाग्रतयात्मभाव गच्छति, स एव सपन्नो मृत अन्तरिक्षम् अन्तरिक्षाधार द्वितीयमात्रारूप द्वितीयमात्रारूपैरेव यजुर्भि उन्नीयते सोमलोक सौम्य जन्म प्रापयन्ति त यजूषीत्यर्थ । स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोक प्रति पुनरावर्तत ॥

**य' पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभिध्यायीत स तेजसि सूर्ये सपन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्त स सामभिरुन्नीयते ब्रह्मलोकं स एतस्मा ज्जीवघनात्परात्पर पुरिशय पुरुषमीक्षते । तदेतौ श्लोकौ भवत ॥ ५ ॥**

य पुन एतम् ॐकार त्रिमात्रेण त्रिमात्राविषयविज्ञान विशिष्टेन ओमित्येतेनैव अक्षरेण पर सूर्यान्तर्गत पुरुष प्रतीकत्वेन अभिध्यायीत तेनाभिध्यानेन प्रतीकत्वेन ह्याल-म्बनत्व प्रकृतमोंकारस्य पर चापर च ब्रह्मेति अभेदश्रुते, ॐकारमिति च द्वितीयानेकश श्रुता बाध्येतान्यथा । यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते, तथापि प्रकृतानुरो-धात्त्रिमात्र पर पुरुषमिति द्वितीयैव परिणेया 'त्यजेदेक कुलस्यार्थे' इति न्यायेन । स तृतीयमात्रारूपे तेजसि सूर्ये सपन्नो भवति ध्यायमान, मृतोऽपि सूर्यात्सोमलोकादिवन्न पुनरावर्तते, किंतु सूर्ये सपन्नमात्र एव । यथा पादोदर सर्प त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्त स पुनर्नवो भवति । एव ह वै एष यथा दृष्टान्त स पाप्मना सर्पत्वक्स्थानीये-नाशुद्धिरूपेण विनिर्मुक्त स सामभि तृतीयमात्रारूपै ऊर्ध्व-मुन्नीयते ब्रह्मलोक हिरण्यगर्भस्य ब्रह्मणो लोक सत्याख्यम् । स हिरण्यगर्भ सर्वेषा ससारिणा जीवानामात्मभूत । स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानाम् । तस्मिन् हि लिङ्गा-त्मनि सहता सर्वे जीवा । तस्मात्स जीवघन स विद्वा-न्त्रिमात्रोंकाराभिज्ञ एतस्माज्जीवघनात् हिरण्यगर्भात्परात्पर परमात्माख्य पुरुषमीक्षते पुरिशय सर्वशरीरानुप्रविष्ट पश्यति

ध्यायमान । तत् एतौ अस्मिन्यथोक्तार्थप्रकाशकौ श्लोकौ मन्त्रौ भवत ॥

**तिस्रो मात्रा मृत्युमत्य' प्रयुक्ता**
**अन्योन्यसक्ता अनविप्रयुक्ताः ।**
**क्रियासु बाह्याभ्यन्तरमध्यमासु**
**सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥**

तिस्र त्रिसंख्याका अकारोकारमकाराख्या ओँकारस्य मात्रा । मृत्युमत्य मृत्युर्यासा विद्यते ता मृत्युमत्य मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थ । ता आत्मनो ध्यानक्रियासु प्रयुक्ता । किंच, अन्योन्यसक्ता इतरेतरसबद्धा । अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ता विप्रयुक्ता, न तथा विप्रयुक्ता अविप्रयुक्ता, न अविप्रयुक्ता अनविप्रयुक्ता । किं तर्हि, विशेषेणैकस्मिन्ध्यानकाले तिसृषु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु युक्तासु सम्यक्प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलति ज्ञ योगी यथोक्तविभागज्ञ ओँकारस्येत्यर्थ । न तस्यैवंविदश्चलनमुपपद्यते । यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषा सह स्थानैर्मात्रात्रयरूपेणोंकारात्मरूपेण दृष्टा, स ह्येव विद्वान्सर्वात्मभूत ओँकारमय कुतो वा

चलेत्कस्मिन्वा ॥

**ऋग्भिरेतं यजुर्भिरन्तरिक्षं**
**सामभिर्यत्तत्कवयो वेदयन्ते ।**
**तमोंकारेणैवायतनेनान्वेति विद्वा-**
**न्यत्तच्छान्तमजरममृतमभयं परं चेति ॥**

**इति पञ्चमः प्रश्नः ॥**

सर्वार्थसंग्रहार्थो द्वितीयो मन्त्रः—ऋग्भिः एतं लोकं मनुष्योपलक्षितम् । यजुर्भिः अन्तरिक्षं सोमाधिष्ठितम् । सामभिः यत् तद्ब्रह्मलोक इति तृतीयं कवयः मेधाविनो विद्यावन्त एव नाविद्वांसः वेदयन्ते । तं त्रिविधं लोकमोंकारेण साधनेनापरब्रह्मलक्षणम् अन्वेति अनुगच्छति विद्वान् । तेनैवोंकारेण यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शान्तं विमुक्तजाग्रत्स्वप्नसुषुप्तादिविशेषं सर्वप्रपञ्चविवर्जितम् , अत एव अजरं जरावर्जितम् अमृतं मृत्युवर्जितमत एव । यस्माज्जरादिविक्रियारहितमतः अभयम् । यस्मादेवाभयं तस्मात् परं निरतिशयम् । तदप्योंकारेणैवायतनेन गमनसाधनेनान्वेतीत्यर्थः । इतिशब्दो वाक्यपरिसमाप्त्यर्थः ॥

इति पञ्चमप्रश्नभाष्यम् ॥

---

## षष्ठ प्रश्नः ॥

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन्हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत षोडशकलं भारद्वाज पुरुषं वेत्थ। तमहं कुमारमब्रवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति, समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

अथ ह एनं सुकेशा भारद्वाजः पप्रच्छ समस्तं जगत्कार्यकारणलक्षणं सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले सम्प्रतिष्ठत इत्युक्तम्। तत्सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे सम्प्रतिष्ठते जगत्तत एवोत्पद्यत इति च सिद्धं भवति। न

ह्यकारणे कार्यस्य सप्रतिष्ठानमुपपद्यते । उक्त च 'आत्मन एष प्राणो जायते' इति । जगतश्च यन्मूल तत्परिज्ञानात्पर श्रेय इति सर्वोपनिषदा निश्चितोऽर्थ । अनन्तर चोक्तम् 'स सर्वज्ञ सर्वो भवति' इति । वक्तव्य च क तर्हि तदक्षर सत्य पुरुषाख्य विज्ञेयमिति, तदर्थोऽय प्रश्न आरभ्यते । वृत्तान्वाख्यान च विज्ञानस्य दुर्लभत्वज्ञापनेन तल्लब्ध्यर्थं मुमुक्षूणा यत्नविशेषोपादानार्थम । हे भगवन्, हिरण्यनाभ नामत कोसलाया भव कौसल्य राजपुत्र जातित क्षत्रिय माम् उपेत्य उपगम्य एतम उच्यमान प्रश्नम् अपृच्छत । षोडशकल षोडशसख्याका कला अवयवा इवात्मन्यविद्याध्यारोपित रूपा यस्मिन्पुरुषे, सोऽय षोडशकल , त षोडशकल हे भारद्वाज, पुरुष वेत्थ त्व विजानासि । तम् अह राजपुत्र कुमार पृष्टवन्तम् अब्रवम उक्तवानस्मि——नाहमिम वेद य त्व पृच्छसीति । एवमुक्तवत्यपि मय्यज्ञानमसभावयन्त तमज्ञाने कारणमवादिषम्——यदि कथचित् अहम् इम त्वया पृष्ट पुरुषम अवेदिष विदितवानस्मि, कथम् अत्य तशिष्यगुणवतेऽथिने ते तुभ्य न अवक्ष्य नोक्तवानस्मि न ब्रूयामित्यर्थ । भूयोऽप्यप्रत्ययमेवालक्ष्य प्रत्याययितुमब्रवम्—— समूल सह मूलेन वै एष अन्यथा सन्तमात्मानमन्यथा कुर्वन् य अनृतम् अयथा-

भूतार्थम् अभिवदति, स परिशुष्यति शोषमुपैति इहलोकपर-लोकाभ्या विच्छिद्यते विनश्यति । यत एव जाने तस्मात् न अर्हामि अहम् अनृत वक्तु मूढवत् । स राजपुत्र एव प्रत्या-यित तूष्णीं व्रीडित रथम् आरुह्य प्रवव्राज प्रगतवान् यथा-गतमेव । अतो न्यायत उपसन्नाय योग्याय जानता विद्या वक्तव्यैव, अनृत च न वक्तव्य सर्वास्वप्यवस्थास्वित्येतत्सिद्ध भवति । त पुरुष त्वा त्वा पृच्छामि मम हृदि विज्ञेयत्वेन शल्यमिव स्थितम्, क असौ वर्तते विज्ञेय पुरुष इति ॥

**तस्मै स होवाचेहैवान्त शरीरे सो-म्य स पुरुषो यस्मिन्नेता षोडश कला प्रभवन्तीति ॥ २ ॥**

तस्मै स होवाच । इहैव अन्त शरीरे हृदयपुण्डरीकाकाश-मध्ये हे सोम्य स पुरुष, न देशान्तरे विज्ञेय । यस्मिन् एता उच्यमाना षोडश कला प्राणाद्या प्रभवन्ति उत्पद्यन्त इति षोडशभि कलाभिरुपाधिभूताभि सकल इव निष्कल पुरुषो लक्ष्यतेऽविद्ययेति, तदुपाधिकलाध्यारोपापनयनेन विद्यया स पुरुष केवलो दर्शयितव्य इति कलाना तत्प्रभवत्वमुच्यते प्राणादीनाम् । अत्यन्तनिर्विशेषे ह्यद्वये विशुद्धे तत्त्वे न शक्यो-

ऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारं कर्तुमिति कलाना प्रभवस्थित्यप्यया आरोप्यन्तेऽविद्याविषया । चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्य प्रलीयमानाश्च सर्वदा लक्ष्यन्ते । अत एव भ्रान्ता केचित्— अग्निसंयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षणं जायते नश्यतीति । तन्निरोधे शून्यमेव सर्वमिति अपरे । घटादिविषयं चैतन्यं चेतयितुर्नित्यस्यात्मनोऽनित्यं जायते विनश्यतीत्यपरे । चैतन्यं भूतधर्म इति लौकायतिका । अनपायोपजनधर्मकचैतन्यमात्मैव नामरूपाद्युपाधिधर्मैः प्रत्यवभासते 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञानं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'विज्ञानघन एव' इत्यादिश्रुतिभ्य । स्वरूपव्यभिचारिषु पदार्थेषु चैतन्यस्याव्यभिचाराद्यथा यथा यो य पदार्थो ज्ञायते, तथा तथा ज्ञायमानत्वादेव तस्य तस्य चैतन्यस्याव्यभिचारित्वम् । वस्तुतत्त्वं भवति किंचित्, न ज्ञायत इति चानुपपन्नम्, रूपं च दृश्यते, न चास्ति चक्षुरिति यथा । व्यभिचरति तु ज्ञेयम्, न ज्ञानं व्यभिचरति कदाचिदपि ज्ञेयम्, ज्ञेयाभावेऽपि ज्ञेयान्तरे भावाज्ज्ञानस्य । न हि ज्ञानेऽसति ज्ञेयं नाम भवति कस्यचित्, सुषुप्तेऽदर्शनात्— ज्ञानस्यापि सुषुप्तेऽभावाज्ज्ञेयवज्ज्ञानस्वरूपस्य व्यभिचार इति चेत्, न, ज्ञेयावभासकस्य ज्ञानस्यालोकव-

ज्ज्ञेयाभिव्यक्त्यर्थत्वात्स्वव्यङ्ग्याभावे आलोकाभावानुपपत्ति वत् अप्रतीतेषु वस्तुषु सुषुप्ते विज्ञानाभावानुपपत्ते । न ह्यन्धकारे चक्षुषो रूपानुपलब्धौ चक्षुषोऽभाव शक्य कल्पयितुमवैनाशिकेन । वैनाशिको ज्ञेयाभावे ज्ञानाभाव कल्पयत्येवेति चेत्, येन तदभाव कल्पयेत्तस्याभाव केन कल्प्यत इति वक्तव्य वैनाशिकेन, तदभावस्यापि ज्ञेयत्वाज्ज्ञानाभावे तद नुपपत्ते । ज्ञानस्य ज्ञेयाव्यतिरिक्तत्वाज्ज्ञेयाभावे ज्ञानाभाव इति चेत्, न, अभावस्यापि ज्ञेयत्वाभ्युपगमात्—अभावोऽपि ज्ञेयोऽभ्युपगम्यते वैनाशिकैर्नित्यश्च । तदव्यतिरिक्त चेज्ज्ञान नित्य कल्पित स्यात् । तदभावस्य च ज्ञानात्मकत्वादभावत्व च वाङ्मात्रमेव, न परमार्थतोऽभावत्वमनित्यत्व च ज्ञानस्य । न च नित्यस्य ज्ञानस्याभावनाममात्राध्यारोप किंचिन्नश्छिन्नम् । अथाभावो ज्ञेयोऽपि सन् ज्ञानव्यतिरिक्त इति चेत्, न तर्हि ज्ञेयाभावे ज्ञानाभाव । ज्ञेय ज्ञानव्यतिरिक्तम्, न तु ज्ञान ज्ञेयव्यतिरिक्तमिति चेत्, न, शब्दमात्रत्वाद्विशेषानुप पत्ते । ज्ञेयज्ञानयोरेकत्व चेदभ्युपगम्यते, ज्ञेय ज्ञानव्यतिरिक्तम्, न ज्ञेयव्यतिरिक्त ज्ञानम् इति तु शब्दमात्रमेव तत्—वह्निरग्निव्यतिरिक्त, अग्निर्न वह्निव्यतिरिक्त इति यद्वत्—अभ्युपगम्यम् । ज्ञेयव्यतिरेके तु ज्ञानस्य ज्ञेयाभावे ज्ञानाभा-

वानुपपत्ति सिद्धा । ज्ञेयाभावऽदर्शनादभावो ज्ञानस्येति चेत्, न, सुषुप्ते ज्ञप्त्यभ्युपगमात्— वैनाशिकैरभ्युपगम्यते हि सुषुप्तेऽपि विज्ञानास्तित्वम् । तत्रापि ज्ञेयत्वमभ्युपगम्यते ज्ञानस्य स्वनैवेति चत्, न, भेदस्य सिद्धत्वात्— सिद्ध ह्यभावविज्ञेयविषयस्य ज्ञानस्याभावज्ञयव्यतिरेकाज्ज्ञेयज्ञानयोरन्यत्वम् । न हि तत्सिद्ध मृतमिवोज्जीवयितु पुनरन्यथा कर्तुं शक्यते वैनाशिकशतैरपि । ज्ञानस्य स्वाज्ञेयत्वे तदप्यन्येन तदप्यन्येनेति त्वत्पक्षेऽतिप्रसङ्ग इति चेत्, न, तद्विभागोपपत्ते सर्वस्य— यदा हि सर्व ज्ञेय कस्यचित्, तदा तद्व्यतिरिक्त ज्ञान ज्ञानमेवेति द्वितीयो विभाग एवाभ्युपगम्यतेऽवैनाशिकै । न तृतीयस्तद्विषय इत्यनवस्थानुपपत्ति । ज्ञानस्य स्वेनैवाविज्ञेयत्वे सर्वज्ञत्व हानिरिति चेत्, सोऽपि दोषस्तस्यैवास्तु, किं तन्निबर्हणेनास्माकम्? अनवस्थादोषश्च ज्ञानस्य ज्ञयत्वाभ्युपगमात्— अवश्य च वैनाशिकाना ज्ञान ज्ञेयम् । स्वात्मना चाविज्ञेयत्वेनानवस्था अनिवार्या । समान एवाय दोष इति चेत्, न, ज्ञानस्यैकत्वोपपत्ते —सर्वदेशकालपुरुषाद्यवस्थास्वेकमेव ज्ञान नामरूपाद्यनेकोपाधिभेदात् सवित्रादिजलादिप्रतिबिम्बवदनेकधावभासत इति । नासौ दोष । तथा चेहेदमुच्यते । ननु

श्रुतेरिहैवान्त शरीरे परिच्छिन्न कुण्डबदरवत्पुरुष इति, न, प्राणादिकलाकारणत्वात्— न हि शरीरमात्रपरिच्छिन्न प्राणश्रद्धादीना कलाना कारणत्व प्रतिपत्तु शक्नुयात् । कलाकार्यत्वाच्च शरीरस्य— न हि पुरुषकार्याणा कलाना कार्य सन्छरीर कारणकारण स्वस्य पुरुष कुण्डबदरमिवा ऽभ्यन्तरीकुर्यात् । बीजवृक्षादिवत्स्यादिति चेत्— यथा बीज-कार्य वृक्षस्तत्कार्य च फल स्वकारणकारण बीजमभ्यन्तरी-करोत्याम्रादि, तद्वत्पुरुषमभ्यन्तरीकुर्याच्छरीर स्वकारणका-रणमपीति चेत्, न, अन्यत्वात्सावयवत्वाच्च—दृष्टान्ते कार-णाद्बीजाद्वृक्षफलसवृत्तान्यन्यान्येव बीजानि, दार्ष्टान्तिके तु स्वकारणकारणभूत स एव पुरुष शरीरेऽभ्यन्तरीकृत श्रूयते । बीजवृक्षादीना सावयवत्वाच्च स्यादाधाराधेयत्वम्, निरवयवश्च पुरुष, सावयवाश्च कला शरीर च । एतेना-काशस्यापि शरीराधारत्वमनुपपन्नम्, किमुताकाशकारणस्य पुरुषस्य? तस्मादसमानो दृष्टान्त । किं दृष्टान्तेन? वचना-त्स्यादिति चेत्, न, वचनस्याकारकत्वात्— न हि वचन वस्तुनोऽन्यथाकरणे व्याप्रियते, किं तर्हि, यथाभूतार्थाव द्योतने । तस्मादन्त शरीर इत्येतद्वचनम् 'अण्डस्यान्तर्व्योम' इतिवद्द्रष्टव्यम । उपलब्धिनिमित्तत्वाच्च— दर्शनश्रवणमनन-

विज्ञानादिलिङ्गैरन्त शरीर परिच्छिन्न इव ह्युपलभ्यते पुरुष उपलभ्यते चात्र । अत उच्यते— अन्त शरीरे सोम्य स पुरुष इति । न पुनराकाशकारणभूत सन्कुण्डबदरवच्छरीर-परिच्छिन्न इति मनसापीच्छति वक्तु मूढोऽपि , किमुत प्रमाणभूता श्रुति ॥

**स ईक्षाचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रा-न्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥**

यस्मिन्नेता षोडश कला प्रभवन्तीत्युक्त पुरुषविशेषणार्थं कलाना प्रभव , स चान्यार्थोऽपि श्रुत केन क्रमेण स्यादित्यत इदमुच्यते । चेतनपूर्विका च सृष्टिरित्येवमर्थं च । स पुरुष षोडशकल पृष्टो यो भारद्वाजेन स ईक्षाचक्रे ईक्षण दर्शन चक्रे—कृतवानित्यर्थ — सृष्टिफलक्रमादिविषयम् । कथमिति, उच्यते— कस्मिन् कर्तृविशेषे देहादुत्क्रान्ते उत्क्रान्तो भविष्यामि अहमेव , कस्मिन्वा शरीरे प्रतिष्ठिते अह प्रतिष्ठास्यामि प्रतिष्ठित स्यामित्यर्थ । नन्वात्मा अकर्ता प्रधान कर्तृ , अत पुरुषार्थं प्रयोजनमुररीकृत्य प्रधान प्रवर्तते महदाद्याकारेण, तत्रेदमनुपपन्न पुरुषस्य स्वातन्त्र्येणेक्षापूर्वक कर्तृत्वव

चनम् , सत्त्वादिगुणसाम्ये प्रधाने प्रमाणोपपन्ने सृष्टिकर्तरि सति ईश्वरेच्छानुवर्तिषु वा परमाणुषु सत्सु आत्मनोऽप्येकत्वेन कर्तृत्वे साधनाभावादात्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च । न हि चेतनावान्बुद्धिपूर्वकारी आत्मन अनर्थं कुर्यात् । तस्मात्पुरुषार्थेन प्रयोजनेनेक्षापूर्वकमिव नियतक्रमेण प्रवर्तमानेऽचेतनेऽपि प्रधाने चेतनवदुपचारोऽस्य स ईक्षाचक्रे इत्यादि , यथा राज्ञः सर्वार्थकारिणि भृत्ये राजेति, तद्वत् । न , आत्मनो भोक्तृत्ववत्कर्तृत्वोपपत्तेः —यथा साङ्ख्यस्य चिन्मात्रस्यापरिणामिनाऽप्यात्मनो भोक्तृत्वम् , तद्वद्वेदवादिनामीक्षापूर्वकं जगत्कर्तृत्वमुपपन्नं श्रुतिप्रामाण्यात् । तत्त्वान्तरपरिणामादात्मनोऽनित्यत्वाशुद्धत्वानेकत्वनिमित्तं चिन्मात्रस्वरूपविक्रियातः पुरुषस्य स्वात्मन्येव भोक्तृत्वे चिन्मात्रस्वरूपविक्रिया न दोषाय । भवतां पुनर्वेदवादिनां सृष्टिकर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादिसर्वदोषप्रसङ्ग इति चेत् , न , एकस्याप्यात्मनोऽविद्याविषयनामरूपोपाध्यनुपाधिकृतविशेषाभ्युपगमात् । अविद्याकृतनामरूपोपाधिनिमित्तो हि विशेषोऽभ्युपगम्यते आत्मनो बन्धमोक्षादिशास्त्रकृतसंव्यवहाराय । परमार्थतोऽनुपाधिकृतं च तत्त्वमेकमेवाद्वितीयमुपादेयं सर्वतार्किकबुद्ध्यनवगम्यं ह्यजमभयं शिवमिष्यते । न

तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारकफलं वास्ति, अद्वैतत्वा-त्सर्वभावानाम्। सांख्यास्त्वविद्याध्यारोपितमेव पुरुषे क-र्तृत्वं क्रियाकारकं फलं चेति कल्पयित्वा आगमबाह्यत्वात्पु-नस्ततस्त्रस्यन्तः परमार्थत एव भोक्तृत्वं पुरुषस्येच्छन्ति। तत्त्वान्तरं च प्रधानं पुरुषाद्बाह्यं परमार्थवस्तुभूतमेव कल्पय-न्तोऽन्यतार्किककृतबुद्धिविषयाः सन्तो विहन्यन्ते। तथेतरे तार्किकाः सांख्यैः, इत्येवं परस्परविरुद्धार्थकल्पनात आमिषा-र्थिन इव प्राणिनोऽन्योन्यविरुध्यमानार्थदर्शित्वात्परमार्थत-त्त्वाद्दूरमेवापकृष्यन्ते। अतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमे-कत्वदर्शनं प्रत्यादरवन्तो मुमुक्षवः स्युरिति तार्किकमतदोष-प्रदर्शनं किंचिदुच्यतेऽस्माभिः, न तु तार्किकवत्तात्पर्येण। तथैतदत्रोक्तम्— विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणम्। तैः संरक्षितसद्बुद्धिः सुखं निर्वाति वेदवित्॥ किंच, भोक्तृत्वकर्तृत्वयोर्विक्रिययोर्विशेषानुपपत्तिः। का नामासौ कर्तृत्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया, यतो भोक्तैव पुरुषः कल्प्यते न कर्ता, प्रधानं तु कर्त्रेव न भोक्तृ इति। ननूक्तं पुरुषश्चिन्मात्र एव, स च स्वात्मस्थो विक्रियते भुञ्जानः, न तत्त्वान्तरपरिणामेन। प्रधानं तु त-त्त्वान्तरपरिणामेन विक्रियते, अतो नैकमशुद्धमचेतनं चेत्या-

दिधर्मवत् । तद्विपरीत पुरुष । नासौ विशेष , वाङ्मात्रत्वात् । प्राग्भागोत्पत्त केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्व नाम विशेषो भोगोत्पत्तिकाले चेत् जायते, निवृत्ते च भोगे पुनस्तद्विशेषादपेतश्चिन्मात्र एव भवतीति चेत् , महदाद्याकारेण च परिणम्य प्रधान ततोऽपेत्य पुन प्रधानस्वरूपेण व्यवतिष्ठत इति अस्या कल्पनाया न कश्चिद्विशेष इति वाङ्मात्रेण प्रधानपुरुषयोर्विशिष्टविक्रिया कल्प्यते । अथ भोगकालेऽपि चिन्मात्र एव प्राग्वत्पुरुष इति चेत् , न तर्हि परमार्थतो भोग पुरुषस्य । अथ भोगकाले चिन्मात्रस्य विक्रिया परमार्थैव, तेन भोग पुरुषस्येति चेत् , न , प्रधानस्यापि भोगकाले विक्रियावत्त्वाद्भोक्तृत्वप्रसङ्ग । चिन्मात्रस्यैव विक्रिया भोक्तृत्वमिति चेत् , औष्ण्याद्यसाधारणधर्मवतामग्न्यादीनामभोक्तृत्वे हेत्वनुपपत्ति । प्रधानपुरुषयोर्द्वयोर्युगपद्भोक्तृत्वमिति चत् , न , प्रधानस्य पारार्थ्यानुपपत्त —न हि भोक्त्रोर्द्वयोरितरेतरगुणप्रधानभाव उपपद्यते प्रकाशयोरिवेतरेतरप्रकाशने । भोगधर्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बोदयादविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेत् , न , पुरुषस्य विशेषाभावे भोक्तृत्वकल्पनानर्थक्यात् । भोगरूपश्चेदनर्थ पुरुषस्य नास्ति सदा निर्विशेषत्वात्पुरुषस्य, कस्यापनयनार्थ मोक्षसाधन शास्त्र प्रणीयते ? अ-

विद्याध्यारोपितानर्थापनयनाय शास्त्रप्रणयनमिति चेत्, परमार्थत पुरुषो भोक्तैव, न कर्ता, प्रधान कर्त्रेव न भोक्तृ परमार्थसद्वस्त्वन्तर पुरुषाच्च इतीय कल्पना आगमबाह्या व्यर्था निर्हेतुका च इति नादर्तव्या मुमुक्षुभि । एकत्वेऽपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेत्, न, अभावात्—सत्सु हि शास्त्रप्रणेत्रादिषु तत्फलार्थिषु च शास्त्रस्य प्रणयनमथवदनर्थक वति विकल्पना स्यात्। न ह्यात्मैकत्वे शास्त्रप्रणेत्रादयस्ततो भिन्ना सन्ति, तदभावे एव विकल्पनैवानुपपन्ना। अभ्युपगते आत्मैकत्वे प्रमाणार्थश्चाभ्युपगतो भवता यदात्मैकत्वमभ्युपगच्छता। तदभ्युपगमे च विकल्पानुपपत्तिमाह शास्त्रम 'यत्र त्वस्य सवमात्मैवाभूत्तत्केन क पश्येत्' इत्यादि, शास्त्रप्रणयनाद्युपपत्तिं चाह अन्यत्र परमार्थवस्तुस्वरूपादविद्याविषये 'यत्र हि द्वैतमिव भवति' इत्यादि विस्तरतो वाजसनेयके। अत्र च विभक्त विद्याविद्ये परापरे इत्यादावेव शास्त्रस्य। अतो न तार्किकवादभटप्रवेशो वेदान्तराजप्रमाणबाहुगुप्ते इहात्मैकत्वविषये इति। एतेनाविद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्त्वाद्ब्रह्मण स्रष्टयादिकर्तृत्वे साधनाद्यभावो दोष प्रत्युक्तो वेदितव्य, परैरुक्त आत्मानर्थकर्तृत्वादिदोषश्च। यस्तु दृष्टान्तो राज्ञ सर्वार्थकारिणि कर्तरि भृत्ये

उपचारो राजा करोतीति, सोऽत्रानुपपन्न , 'स ईक्षाचक्रे' इति श्रुतेर्मुख्यार्थबाधनात्प्रमाणभूताया । तत्र हि गौणी कल्पना शब्दस्य, यत्र मुख्यार्थो न सभवति । इह त्वचेतनस्य मुक्त-बद्धपुरुषविशेषापेक्षया कर्तृकर्मदेशकालनिमित्तापेक्षया च बन्धमोक्षादिफलार्था नियता पुरुष प्रति प्रवृत्तिर्नोपपद्यते, यथोक्तसर्वज्ञेश्वरकर्तृत्वपक्षे तु उपपन्ना । ईश्वरेणैव सर्वाधिकारी प्राण पुरुषेण सृज्यते ॥

**स प्राणमसृजत प्राणाच्छ्रद्धा ख वायु ज्योतिराप पृथिवीन्द्रिय मन. । अन्नमन्नाद्वीर्य तपो मन्त्रा कर्मलोका लोकेषु च नाम च ॥ ४ ॥**

कथम् ? स पुरुष उक्तप्रकारेणेक्षित्वा सर्वप्राण हिरण्यगर्भाख्य सर्वप्राणिकरणाधारमन्तरात्मानम् असृजत सृष्टवान । तत प्राणात् श्रद्धा सर्वप्राणिना शुभकर्मप्रवृत्तिहेतुभूताम्, तत कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतानि असृजत—ख शब्दगुणकम्, वायु स्वेन स्पर्शगुणेन शब्दगुणेन च विशिष्टो द्विगुण , तथा ज्योति स्वेन रूपेण पूर्वगुणाभ्या च विशिष्ट शब्दस्पर्शाभ्या त्रिगुणम्, तथा आपो रसगुणेना

साधारणेन पूर्वगुणानुप्रवेशेन च चतुर्गुणा, तथा गन्धगुणेन पूर्वगुणानुप्रवेशेन च पञ्चगुणा पृथिवी, तथा तैरेव भूतैरारब्धम् इन्द्रियं द्विप्रकारं बुद्ध्यर्थं कर्मार्थं च दशसंख्याकम्, तस्य चेश्वरमन्तःस्थं संशयविकल्पादिलक्षणं मनः। एवं प्राणिनां कार्यं करणं च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणम् अन्नम्, ततश्च अन्नात् अद्यमानात् वीर्यं सामर्थ्यं बलं सर्वकर्मप्रवृत्तिसाधनम्, तद्वीर्यवतां च प्राणिनां तपः विशुद्धिसाधनं संकीर्यमाणानाम्, मन्त्राः तपोविशुद्धान्तर्बहिःकरणेभ्यः कर्मसाधनभूता ऋग्यजुःसामाथर्वाङ्गिरसः, ततः कर्म अग्निहोत्रादिलक्षणम्, ततो लोकाः कर्मणां फलम्, तेषु च लोकेषु सृष्टानां प्राणिनां नाम च देवदत्तो यज्ञदत्त इत्यादि। एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च सर्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम्॥

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः**

**पुरुषायणा. पुरुष प्राप्यास्त गच्छन्ति भिद्येते चासा नामरूपे पुरुष इत्येव प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोक. ॥ ५ ॥**

कथम्? स दृष्टान्त, यथा लोके इमा नद्य स्यन्दमाना स्रवन्त्य समुद्रायणा, समुद्र एव अयन गतिरात्मभावो यासा ता समुद्रायणा, समुद्र प्राप्य उपगम्य अस्तम् अदर्शन नामरूपतिरस्कार गच्छन्ति, तासा चास्त गताना भिद्येते विनश्येते नामरूपे गङ्गा यमुनेत्यादिलक्षणे, तदभेदेन समुद्र इत्येव प्रोच्यत तद्वस्तूदकलक्षणम्, एव यथाय दृष्टान्त उक्तलक्षणस्य प्रकृतस्य अस्य पुरुषस्य परिद्रष्टु परि समन्ताद्द्रष्टुर्दर्शनस्य कर्तु स्वरूपभूतस्य। यथा अर्क स्वात्मप्रकाशस्य कर्ता सर्वत, तद्वत् इमा षोडश प्राणाद्या उक्ता कला पुरुषायणा नदीनामिव समुद्र पुरुषोऽयनमात्मभावगमन यासा कलाना ता पुरुषायणा पुरुष प्राप्य पुरुषात्मभावमुपगम्य तथैवास्त गच्छन्ति । भिद्येते च आसा नामरूपे कलाना प्राणाद्याख्या रूप च यथास्वम्। भेदे च नामरूपयोर्यदनष्ट तत्तत्त्व पुरुष इत्येव प्रोच्यते ब्रह्मविद्भि । य एव विद्वान्गुरुणा प्रदर्शितकलाप्र

लयमार्गं, स एष विद्यया प्रविलापितास्वविद्याकामकर्मज-
नितासु प्राणादिकलासु अकल अविद्याकृतकलानिमित्तो हि
मृत्यु, तदपगमेऽकलत्वादेव अमृत भवति। तदेतस्मिन्नर्थे
एष श्लोक ॥

**अरा इव रथनाभौ**
**कला यस्मिन्प्रतिष्ठिता।**
**त वेद्य पुरुष वेद**
**यथा मा वो मृत्यु परिव्यथा इति ॥**

अरा इव रथचक्रपरिवारा इव रथनाभौ रथचक्रस्य नाभौ
यथाप्रवेशिता तदाश्रया भवन्ति यथा, तथेत्यर्थ। कला
प्राणाद्या यस्मिन पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु
त पुरुष कलानामात्मभूत वेद्य वेदनीय पूर्णत्वात्पुरुष पुरि
शयनाद्वा वेद जानाति, यथा हे शिष्या, मा व युष्मान्
मृत्यु परिव्यथा मा परिव्यथयतु। न चेद्विज्ञायेत पुरुषो
मृत्युनिमित्ता व्यथामापन्ना दु खिन एव यूय स्थ। अतस्त
न्माभूद्युष्माकमित्यभिप्राय ॥

**तान्होवाचैतावदेवाहमेतत्पर ब्रह्म वेद**
**नात परमस्तीति ॥ ७ ॥**

तान् एवमनुशिष्य शिष्यान् तान् होवाच पिप्पलाद किल एतावदेव वेद्य पर ब्रह्म वेद विजानाम्यहमेतत् । न अत अस्मात् परम् अस्ति प्रकृष्टतर वेदितव्यम् इत्येवमुक्तवान् शिष्याणामविदितशेषास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थं च ॥

**ते तमर्चयन्तस्त्वं हि नः पिता यो-**
**ऽस्माकमविद्यायाः पर पार तारयसीति ।**
**नम' परमऋषिभ्यो नम' परमऋषिभ्यः ॥**

इति षष्ठः प्रश्न समाप्त' ॥

तत त शिष्या गुरुणानुशिष्टा त गुरु कृतार्था सन्तो विद्यानिष्क्रयमन्यदपश्यन्त किं कृतवन्त इत्युच्यते—अर्चयन्त पूजयन्त पादयो पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा। किमूचुरित्याह—त्व हि न अस्माक पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरणस्याभयस्य । य त्वमेव अस्माकम् अविद्याया विपरीतज्ञानाज्जन्मजरामरणरोगदु खादिग्राहादपारादविद्यामहोदधेर्विद्याप्लवेन परम् अपुनरावृत्तिलक्षण मोक्षाख्य महोदधेरिव पार तारयसि अस्मानित्यत

पितृत्व तवास्मान्प्रत्युपपन्नमितरस्मात् । इतरोऽपि हि पिता शरीरमात्र जनयति, तथापि स पूज्यतमो लोके, किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्राय । नम परमऋषिभ्य ब्रह्मविद्यासप्रदायकर्तृभ्य । नम परमऋषिभ्य इति द्विर्वचनमादरार्थम ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोवि दभगव
त्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
प्रश्नोपनिषद्भाष्य सपूर्णम् ॥

ॐ

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा॑सस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो॑ऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ श्री ॥

# उपनिषन्मन्त्राणां

# ॥ वर्णानुक्रमणिका ॥

---

# MEMORIAL EDITION

OF THE WORKS OF

# SRI SANKARACHARYA.

# CONTENTS

## ॥ विषया ॥

पृष्ठम्

॥ श्री ॥

# उपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादै

विरचितम् ।

## द्वितीयो भाग

## ॥ मुण्डमाण्डूक्यैतरेयाणि ॥

॥ श्री ॥

# ॥ विषयानुक्रमाणिका ॥

---

## मुण्डकोपनिषद्भाष्यम्

## वैतथ्यप्रकरणम् १२२—१४३

## अद्वैतप्रकरणम् १४३—१७९



## अलातशान्तिप्रकरणम् १८०—२३०

॥ ॐ ॥

# मुण्डकोपनिषद्भाष्यम्

श्रीमच्छकरभगवत्पूज्यपादै.

विरचितम् ।



५ ॥ ॥ ।

ॐ

भद्र कर्णेभि श्रृणुयाम
देवा । भद्र पश्येमाक्षभिर्य-
जत्रा । स्थिरैरङ्गैस्तुष्टुवाꣳ
सस्तनूभि । व्यशेम देव
हित यदायु ॥ स्वस्ति न
इन्द्रो वृद्धश्रवा । स्वस्ति न
पूषा विश्ववेदा । स्वस्ति न-
स्तार्क्ष्योऽरिष्टनेमि । स्वस्ति
नो बृहस्पतिर्दधातु ॥

ॐ शान्ति शान्तिः शान्ति ॥

# ॥ मुण्डकोपनिषत् ॥

## श्रीमच्छकरभगवत्पादविरचितेन भाष्येण सहिता ॥

---

'ब्रह्मा देवानाम्' इत्याद्याथर्वणोपनिषत्। अस्याश्च विद्यासप्रदायकर्तृपारम्पर्यलक्षण सबन्धमादावेवाह स्वयमेव स्तुत्यर्थम्— एव हि महद्भि परमपुरुषार्थसाधनत्वेन गुरुणायासेन लब्धा विद्येति। श्रोतृबुद्धिप्ररोचनाय विद्या महीकरोति, स्तुत्या प्ररोचिताया हि विद्याया सादरा

प्रवर्तेरन्निति । प्रयोजनेन तु विद्याया साध्यसाधनल-
क्षण सबन्धमुत्तरत्र वक्ष्यति 'भिद्यते हृदयग्रन्थि' इत्या-
दिना । अत्र चापरशब्दवाच्याया ऋग्वेदादिलक्षणाया विधि
प्रतिषेधमात्रपराया विद्याया ससारकारणाविद्यादिदोषनि
वर्तकत्व नास्तीति स्वयमेवोक्त्वा परापरेति विद्याभेदकरणपू-
र्वकम् 'अविद्यायामन्तरे वर्तमाना' इत्यादिना, तथा
परप्राप्तिसाधन सर्वसाधनसाध्यविषयवैराग्यपूर्वक गुरुप्र
सादलभ्या ब्रह्मविद्यामाह 'परीक्ष्य लोकान्' इत्यादिना ।
प्रयोजन चासकृद्ब्रवीति 'ब्रह्म वेद ब्रह्मैव भवति' इति
'परामृता परिमुच्यन्ति सर्वे' इति च । ज्ञानमात्रे यद्यपि
सर्वाश्रमिणामधिकार, तथापि सन्यासनिष्ठैव ब्रह्मविद्या
मोक्षसाधन न कर्मसहितेति 'भैक्षचर्या चरन्त' 'सन्या
सयोगात्' इति च ब्रुवन्दर्शयति । विद्याकर्मविरोधाच्च । न
हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि सपादयितु
शक्यम्, विद्याया कालविशेषाभावादनियतनिमित्तत्वाच्च
कालसकोचानुपपत्ते । यत्तु गृहस्थेषु ब्रह्मविद्यासप्रदायकर्तृ
त्वादि लिङ्ग न तत्स्थित न्याय बाधितुमुत्सहते, न हि
विधिशतेनापि तम प्रकाशयोरेकत्र सद्भाव शक्यते कर्तुम्,
किमुत लिङ्गै केवलैरिति । एवमुक्तसबन्धप्रयोजनाया उप-

निषदोऽल्पग्रन्थ विवरणमारभ्यते । य इमा ब्रह्मविद्यामुप-
यन्त्यात्मभावेन श्रद्धाभक्तिपुर सरा सन्त , तेषा गर्भजन्म-
जरारोगाद्यनर्थपूग निशातयति पर वा ब्रह्म गमयत्यविद्या
दिसंसारकारण वा अत्यन्तमवसादयति विनाशयतीत्युप-
निषत् , उपनिपूर्वस्य सदेरेवमर्थस्मरणात् ॥

**ब्रह्मा देवाना प्रथम' सबभूव**
**विश्वस्य कर्ता भुवनस्य गोप्ता ।**
**स ब्रह्मविद्या सर्वविद्याप्रतिष्ठा-**
**मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

ब्रह्मा परिबृढो महान् धर्मज्ञानवैराग्यैश्वर्यै सर्वानन्यान-
तिशेत इति , देवाना द्योतनवतामिन्द्रादीना प्रथम गुणै
प्रधान सन् , प्रथम अग्रे वा सबभूव अभिव्यक्त सम्यक्
स्वातन्त्र्येणेत्यभिप्राय । न तथा यथा धर्माधर्मवशात्ससारि-
णोऽन्ये जायन्ते, 'योऽसावतीन्द्रियोऽग्राह्य ' इत्यादिस्मृते ।
विश्वस्य सर्वस्य जगत कर्ता उत्पादयिता, भुवनस्य उत्पन्नस्य
गोप्ता पालयितेति विशेषण ब्रह्मणो विद्यास्तुतये । स एव
प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्या ब्रह्मण परमात्मना विद्या
ब्रह्मविद्याम् , 'येनाक्षर पुरुष वेद सत्यम्' इति विशषणात् ।

परमात्मविषया हि सा । ब्रह्मणा वाग्रजेनोक्तेति ब्रह्मविद्या । ता ब्रह्मविद्याम्, सर्वविद्याप्रतिष्ठा सर्वविद्याभिव्यक्तिहेतुत्वात्सर्वविद्याश्रयामित्यर्थ, सर्वविद्यावेद्य वा वस्त्वनयैव ज्ञायत इति, 'येनाश्रुत श्रुत भवति अमत मतमविज्ञात विज्ञातम्' इति श्रुते । सर्वविद्याप्रतिष्ठामिति च स्तौति विद्याम् । अथर्वाय ज्येष्ठपुत्राय ज्येष्ठश्चासौ पुत्रश्च, अनेकेषु ब्रह्मण सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वम् अथर्वा सृष्ट इति ज्येष्ठ, तस्मै ज्येष्ठपुत्राय प्राह प्रोक्तवान् ॥

अथर्वणे यां प्रवदेत ब्रह्मा-
थर्वा ता पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवहाय प्राह
भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

याम् एताम् अथर्वणे प्रवदेत प्रावदद्ब्रह्मविद्या ब्रह्मा, तामेव ब्रह्मण प्राप्ताम् अथर्वा पुरा पूर्वम्, उवाच उक्तवान् अङ्गिरे अङ्गीर्नाम्ने ब्रह्मविद्याम् । स चाङ्गी भारद्वजाय भरद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने प्राह प्रोक्तवान् । भारद्वाज अङ्गिरसे स्वशिष्याय पुत्राय वा परावरा परस्मात्परस्मादवरेणावरेण प्राप्तेति परावरा परावरसर्वविद्या-

विषयव्याप्तेर्वा, ता परावरामङ्गिरसे प्राहेत्यनुषङ्ग ॥

**शौनको ह वै महाशालोऽङ्गिरस विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवतीति ॥**

शौनक शुनकस्यापत्य महाशाल महागृहस्थ अङ्गिरस भारद्वाजशिष्यमाचार्यं विधिवत् यथाशास्त्रमित्येतत्, उपसन्न उपगत सन् पप्रच्छ पृष्टवान् । शौनकाङ्गिरसो सबन्धादर्वाग्विधिवद्विशेषणाभावादुपसदनविधे पूर्वेषामनियम इति गम्यते । मर्यादाकरणार्थं विशेषणम । मध्यदीपिकान्यायार्थं वा विशेषणम्, अस्मदादिष्वप्युपसदनविधेरिष्टत्वात् । किमित्याह—कस्मिन्नु भगवो विज्ञाते, नु इति वितर्के, भगव हे भगवन्, सर्वं यदिद विज्ञेय विज्ञात विशेषेण ज्ञातमवगत भवतीति 'एकस्मिन्विज्ञाते सर्वविद्भवति' इति शिष्टप्रवाद श्रुतवाञ्शौनक तद्विशेष विज्ञातुकाम सन्कस्मिन्निति वितर्कयन्पप्रच्छ । अथवा, लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ । सन्ति हि लोके सुवर्णादिशकलभेदा सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकै, तथा किं न्वस्ति सर्वस्य जगद्भेदस्यैक कारणम्, यत्रैकस्मिन्विज्ञाते सर्वं विज्ञात भवतीति । नन्वविदिते हि

कस्मिन्निति प्रश्नोऽनुपपन्न , किमस्ति तदिति तदा प्रश्नो युक्त , सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् , यथा कस्मिन्निधेय मिति । न , अक्षरबाहुल्यादायासभीरुत्वात्प्रश्न सभवत्येव— किं न्वस्ति तद्यस्मिन्नेकस्मिन्विज्ञात सर्ववित्स्यादिति ॥

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चै-वापरा च ॥ ४ ॥**

तस्मै शौनकाय स अङ्गिरा ह किल उवाच उक्तवान् । किमिति, उच्यते—द्वे विद्ये वेदितव्ये ज्ञातव्ये इति । एव ह स्म किल यत् ब्रह्मविद वेदार्थाभिज्ञा परमार्थदर्शिन वद न्ति । के त इत्याह— परा च परमात्मविद्या, अपरा च धर्माधर्मसाधनतत्फलविषया । ननु कस्मिन्विदिते सर्वविद्भव-तीति शौनकेन पृष्टम् , तस्मिन्वक्तव्येऽपृष्टमाहाङ्गिरा — द्वे विद्ये इत्यादि । नैष दोष , क्रमापेक्षत्वात्प्रतिवचनस्य । अपरा हि विद्या अविद्या, सा निराकर्तव्या तद्विषये हि अविदिते न किंचित्तत्त्वतो विदित स्यादिति, ‘ निराकृत्य हि पूर्वपक्ष पश्चात्सिद्धान्तो वक्तव्यो भवति ’ इति न्यायात् ॥

**तत्रापरा, ऋग्वेदो यजुर्वेद' सामवेदो-**

**ऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥**

तत्र का अपरेत्युच्यते— ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् इत्यङ्गानि षट्, एषा अपरा विद्योक्ता । अथ इदानीम् इयं परा विद्योच्यते यया तत् वक्ष्यमाणविशेषणम् अक्षरम् अधिगम्यते प्राप्यते, अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात्, न च परप्राप्तेरवगमार्थस्य च भेदोऽस्ति, अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम् । ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यात् मोक्षसाधनं च । 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ' इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वादनादेया स्यात्, उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथक्करणमनर्थकम् अथ परेति । न, वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितम् नोपनिषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि यत्ना-

न्तरमन्तरेण गुर्वभिगमनादिलक्षण वैराग्य च नाक्षराधिगम सभवतीति पृथक्करण ब्रह्मविद्याया अथ परा विद्येति ॥

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण-**
**मचक्षुःश्रोत्र तदपाणिपादम् ।**
**नित्य विभु सर्वगत सुसूक्ष्म**
**तदव्यय यद्भूतयोनिं परिपश्यन्ति धीरा ॥**

यथा विधिविषये कर्त्राद्यनेककारकोपसहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षण , न तथेह परविद्याविषये वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति, केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात् । तस्मादिह परा विद्या सविशेषणेनाक्षरेण विशिनष्टि— यत्तदद्रेश्यमित्यादिना । वक्ष्यमाण बुद्धौ सहृत्य सिद्धवत्परामृशति— यत्तदिति । अद्रेश्यम् अदृश्य सर्वेषा बुद्धीन्द्रियाणामगम्यमित्येतत् । दृशेर्बहि प्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात् । अग्राह्य कर्मेन्द्रियाविषयमित्येतत् । अगोत्रम्, गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रम् अनन्वय मित्यर्थ । न हि तस्य मूलमस्ति येनान्वित स्यात् । वर्ण्यन्त इति वर्णा द्रव्यधर्मा स्थूलत्वादय शुक्लत्वादयो वा । अवि

द्यमाना वर्णा यस्य तत् अवर्णम् अक्षरम् । अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनाम्, ते अविद्यमाने यस्य तदचक्षुःश्रोत्रम् । 'यः सर्वज्ञः सर्ववित्' इति चेतनावत्त्वविशेषणात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वम्, तदिह अचक्षुःश्रोत्रमिति वार्यते, 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिदर्शनात् । किंच, तत् अपाणिपादं कर्मेन्द्रियरहितमित्येतत् । यत एवम् अग्राह्यमग्राहकं च अतो नित्यमविनाशि । विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम् । सर्वगतं व्यापकमाकाशवत्सुसूक्ष्मम् । शब्दादिस्थूलत्वकारणरहितत्वात् । शब्दादयो ह्याकाशवाय्वादीनामुत्तरोत्तरस्थूलत्वकारणानि, तदभावात्सुसूक्ष्मम्, किंच, तत् अव्ययम् उक्तधर्मत्वादेव न व्येतीत्यव्ययम् । न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः संभवति शरीरस्येव । नापि कोशापचयलक्षणो व्ययः संभवति राज्ञ इव । नापि गुणद्वारको व्ययः संभवति, अगुणत्वात्सर्वात्मकत्वाच्च । यत् एवंलक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूतं सर्वस्य अक्षरं पश्यन्ति धीरा धीमन्तो विवेकिनः । ईदृशमक्षरं यया विद्यया अधिगम्यते सा परा विद्येति समुदायार्थः ॥

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः संभवन्ति ।**
**यथा सतः पुरुषात्केशलोमानि**
**तथाक्षरात्संभवतीह विश्वम् ॥ ७ ॥**

भूतयोनिरक्षरमित्युक्तम् । तत्कथं भूतयोनित्वमित्युच्यते दृष्टान्तैः — यथा लोके प्रसिद्धः ऊर्णनाभिः लूताकीटः किंचित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून्बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवापादयति, यथा च पृथिव्याम् ओषधयः, व्रीह्यादिस्थावराणीत्यर्थः, स्वात्माव्यतिरिक्ता एव प्रभवन्ति संभवन्ति, यथा च सतः विद्यमानाज्जीवतः पुरुषात् केशलोमानि केशाश्च लोमानि च संभवन्ति विलक्षणानि । यथैते दृष्टान्ताः, तथा विलक्षणं सलक्षणं च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणात् अक्षरात् संभवति समुत्पद्यते इह संसारमण्डलं विश्वं समस्तं जगत् । अनेकदृष्टान्तोपादानं तु सुखावबोधनार्थम् ॥

**तपसा चीयते ब्रह्म**
**ततोऽन्नमभिजायते ।**

अन्नात्प्राणो मनः सत्य
लोका कर्मसु चामृतम् ॥ ८ ॥

यद्ब्रह्मण उत्पद्यमान विश्व तदनेन क्रमेणोत्पद्यते, न युग पद्बदरमुष्टिप्रक्षेपवदिति क्रमनियमविवक्षार्थोऽय मन्त्र आ रभ्यते— तपसा ज्ञानेन उत्पत्तिविधिज्ञतया भूतयोन्यक्षर ब्रह्म चीयते उपचीयते उत्पादयिष्यदिद जगत् अङ्कुरमिव बीजमुच्छूनता गच्छति पुत्रमिव पिता हर्षेण । एव सर्वज्ञ-तया सृष्टिस्थितिसहारशक्तिविज्ञानवत्तयोपचिताल् तत ब्रह्म-ण अन्नम् अद्यते भुज्यत इत्यन्नमव्याकृत साधारण कारण ससारिणा व्याचिकीर्षितावस्थारूपेण अभिजायते उत्पद्यते । ततश्च अव्याकृताद्व्याचिकीर्षितावस्थात् अन्नात प्राण हिरण्य-गर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितो जगत्साधारणोऽविद्या-कामकर्मभूतसमुदायबीजाङ्कुरो जगदात्मा अभिजायत इत्यनु-षङ्ग । तस्माच्च प्राणात् मन मनआख्य सकल्पविकल्पसशय-निर्णयाद्यात्मकमभिजायते । ततोऽपि सकल्पाद्यात्मकान्मनस सत्य सत्याख्यमाकाशादिभूतपञ्चकमभिजायते । तस्मात्स-त्याख्याद्भूतपञ्चकादण्डक्रमेण सप्त लोका भूरादय । तेषु म नुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि । कर्मसु च निमित्तभू-तेषु अमृत कर्मज फलम् । यावत्कर्माणि कल्पकोटिशतैरपि

न विनश्यन्ति, तावत्फल न विनश्यतीत्यमृतम् ॥

य' सर्वज्ञ सर्ववि-

द्यस्य ज्ञानमय तप ।

तस्मादेतद्ब्रह्म नाम

रूपमन्न च जायते ॥ ९ ॥

इति प्रथममुण्डके प्रथम. खण्ड ॥

उक्तमेवार्थमुपसजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह—य उक्तलक्षणोऽक्षराख्य सर्वज्ञ सामान्येन सर्व जानातीति सर्वज्ञ । विशेषेण सर्व वेत्तीति सर्ववित् । यस्य ज्ञानमय ज्ञानविकारमेव सार्वज्ञ्यलक्षण तप अनायासलक्षणम्, तस्मात् यथोक्तात्सर्वज्ञात् एतत् उक्त कार्यलक्षण ब्रह्म हिरण्यगर्भाख्य जायते । किच, नाम असौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम्, रूपम् इद शुक्ल नीलमित्यादि, अन्न च व्रीहियवादिलक्ष जायते पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्य ॥

इति प्रथममुण्डके प्रथमखण्डभाष्यम् ॥

## द्वितीय खण्डः ॥

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यं
स्तानि त्रेतायां बहुधा संततानि ।
तान्याचरथ नियतं सत्यकामा
एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥

साङ्गा वेदा अपरा विद्योक्ता 'ऋग्वेदो यजुर्वेदः' इत्यादिना । 'यत्तदद्रेश्यम्' इत्यादिना 'नामरूपमन्नं च जायते' इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाधिगम्यत इति सा परा विद्या सविशेषणोक्ता । अतः परमनयोर्विद्ययोर्विषयौ विवक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते । तत्रापरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः सामस्त्येन नदीस्रोतोवदविच्छेदरूपसंबन्धः तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति । पूर्वं तावदपरविद्याया विषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्वेदोपपत्तिः । तथा च वक्ष्यति—'परीक्ष्य लोकान्कर्मचितान्'

इत्यादिना । न ह्यप्रदर्शिते परीक्षोपपद्यत इति तत्प्रदर्शयन्नाह— तदेतत् सत्यम् अवितथम् । किं तत्? मन्त्रेषु ऋग्वेदाद्याख्येषु कर्माणि अग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयः मेधाविनो वसिष्ठादयः यानि अपश्यन् दृष्टवन्तः । यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात्, तानि च वेदविहितानि ऋषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं संततानि संप्रवृत्तानि कर्मिभिः क्रियमाणानि त्रेतायां वा युगे प्रायशः प्रवृत्तानि, अतो यूयं तानि आचरथ निर्वर्तयत नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः । एष वः युष्माकं पन्थाः मार्गः सुकृतस्य स्वयं निर्वर्तितस्य कर्मणः लोके फलनिमित्तं लोक्यते दृश्यते भुज्यत इति कर्मफलं लोक उच्यते । तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः । यान्येतान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि, तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः ॥

यदा लेलायते ह्यर्चिः
समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरे-
णाहुतीः प्रतिपादयेत् ॥ २ ॥

तत्राग्निहोत्रमेव तावत्प्रथम प्रदर्शनार्थमुच्यते, सर्वकर्मणा प्राथम्यात् । तत्कथम्? यदैव इन्धनैरभ्याहितैः सम्यगिद्धे समिद्धे दीप्ते हव्यवाहने लेलायते चलति अर्चिः, तदा तस्मिन्काले लेलायमाने चलत्यर्चिषि आज्यभागौ आज्यभागयोः अन्तरेण मध्ये आवापस्थाने आहुती प्रतिपादयेत् प्रक्षिपेत् देवतामुद्दिश्य। अनेकाह प्रयोगापेक्षया आहुतीरिति बहुवचनम्। एष सम्यगाहुतिप्रक्षेपादिलक्षण कर्ममार्गो लोकप्राप्तये पन्था । तस्य च सम्यक्करण दुष्करम्, विपत्तयस्त्वनेका भवन्ति ॥

**यस्याग्निहोत्रमदर्शमपौर्णमास-**
**मचातुर्मास्यमनाग्रयणमतिथिवर्जित च ।**
**अहुतमवैश्वदेवमविधिना हुत-**
**मासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥**

कथम्? यस्य अग्निहोत्रिण अग्निहोत्रम् अदर्श दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिभिरवश्यकर्तव्यत्वाद्दर्शस्य । अग्निहोत्रिसबन्ध्यग्निहोत्रविशेषणमिव भवति । तद् क्रियमाणमित्येतत् । तथा अपौर्णमासम् इत्यादिष्वप्यग्निहोत्रविशेषणत्व द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्याविशिष्टत्वात् । अपौर्णमास पौर्णमासकर्मवर्जितम् । अचातुर्मास्य चातुर्मा

स्यकर्मवर्जितम् । अनाग्रयणम् आग्रयणं शरदादिषु कर्तव्यम्, तच्च न क्रियते यस्य तत्तथा । अतिथिवर्जितं च अतिथिपूजनं चाहन्यहन्यक्रियमाणं यस्य । स्वयं सम्यगग्निहोत्रकाले अहुतम् । अदर्शादिवत् अवैश्वदेवं वैश्वदेवकर्मवर्जितम् । हूयमानमप्यविधिना हुतम् अयथाहुतमित्येतत् । एवं दुःसंपादितमसंपादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते— आसप्तमान् सप्तमसहितान् तस्य कर्तुर्लोकान् हिनस्ति हिनस्तीव आयासमात्रफलत्वात् । सम्यक् क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूप्येण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्तव्यम् । ते लोका एवंभूतेनाग्निहोत्रादिकर्मणा त्वप्राप्यत्वाद्धिंस्यन्त इव, आयासमात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा संबध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्त लोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥

**काली कराली च मनोजवा च**
**सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरुची च देवी**
**लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥**

काली कराली च मनोजवा च सुलोहिता या च सुधू-

स्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इह नस्य जिह्वा । काल्याद्या विश्वरुन्यन्ता लेलायमाना अग्ने र्हविराहुतिग्रसनार्था एता किल सप्त जिह्वा ॥

एतेषु यश्चरते भ्राजमानेषु
यथाकाल चाहुतयो ह्याददायन् ।
त नयन्त्येता सूर्यस्य रश्मयो
यत्र देवाना पतिरेकोऽधिवासः ॥ ५ ॥

एतेषु अग्निजिह्वाभेदेषु य अग्निहोत्री चरते कर्माचरत्यग्निहोत्रादिक भ्राजमानेषु दीप्यमानेषु । यथाकाल च यस्य कर्मणो य कालस्त कालमनतिक्रम्य यथाकाल यजमानम् आददायन आददाना आहुतय त नयन्ति प्रापयन्ति । एता आहुतयो या इमा अनेन निर्वर्तिता सूर्यस्य रश्मय भूत्वा, रश्मिद्वारैरित्यर्थ । यत्र यस्मिन्स्वर्गे देवाना पति इन्द्र एक सर्वानुपरि अधि वसतीति अधिवास ॥

एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमान वहन्ति ।
प्रिया वाचमभिवदन्त्योऽर्चयन्त्य
एष व पुण्य, सुकृतो ब्रह्मलोकः ॥

कथ सूर्यस्य रश्मिभिर्यजमान वहन्तीत्युच्यत—एहि एहि इति आह्वयन्त्य त यजमानम् आहुतय सुवर्चस दीप्तिमत्य, किंच, प्रियाम् इष्टा वाच स्तुत्यादिलक्षणाम् अभिवदन्त्य उच्चारयन्त्य अर्चयन्त्य पूजयन्त्यश्च एष व युष्माक पुण्य सुकृत ब्रह्मलोक फलरूप, इत्थ प्रिया वाचम् अभिवदन्त्यो वह तीत्यर्थ । ब्रह्मलाक स्वर्ग प्रकरणात् ॥

**प्लवा ह्येते अदृढा यज्ञरूपा**
**अष्टादशोक्तमवर येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा**
**जरामृत्यु ते पुनरेवापि यन्ति ॥ ७ ॥**

एतच्च ज्ञानरहित कर्मैतावत्फलमविद्याकामकर्मकार्यम् अतोऽसार दु खमूलमिति निन्द्यते—प्लवा विनाशिन इत्यर्थ । हि यस्मात् एते अदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादश अष्टादशसख्याका षोडशर्त्विज पत्नी यजमानश्चेत्यष्टादश । एतदाश्रय कर्म उक्त कथित शास्त्रेण येषु अष्टादशसु अवर केवल ज्ञानवर्जित कर्म । अतस्तेषामवरकर्माश्रयाणामष्टादशानामदृढतया प्लवत्वात्प्लवते सह फलेन तत्साध्य कर्म, कुण्डविनाशादिव क्षीरदध्यादीना तत्स्थाना नाश, यत एवम् एतत् कर्म श्रेय श्रेय साधन-

मिति ये अभिनन्दन्ति अभिहृष्यन्ति अविवेकिन मूढा , अत ते जरा च मृत्यु च जरामृत्यु कञ्चित्काल स्वर्गे स्थित्वा पुनरेव अपि यान्ति भूयोऽपि गच्छन्ति ॥

अविद्यायामन्तरे वर्तमाना
स्वय धीराः पण्डितंमन्यमाना ।
जङ्घन्यमाना परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धा ॥ ८ ॥

किंच, अविद्यायाम् अन्तरे मध्ये वर्तमाना अविवेकप्राया स्वय वयमेव धीरा धीमन्त पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मान सभावयन्त , ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृश पीड्यमाना परियन्ति विभ्रमन्ति मूढा । दर्शनवर्जितत्वात् अन्धेनैव अचक्षुष्केणैव नीयमाना प्रदर्श्यमानमार्गा , यथा लोके अन्धा चक्षूरहिता गर्तकण्टकादौ पतन्ति, तद्वत् ॥

अविद्यायां बहुधा वर्तमाना
वय कृतार्था इत्यभिमन्यन्ति बाला ।
यत्कर्मिणो न प्रवेदयन्ति रागा
त्तेनातुरा. क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

किंच, अविद्याया बहुधा बहुप्रकार वर्तमाना वयमेव

कृतार्था कृतप्रयोजना इति एवम् अभिमन्यन्ति अभिम-न्यन्ते अभिमान कुर्वन्ति बाला अज्ञानिन । यत यस्मादेव कर्मिण न प्रवेदयन्ति तत्त्व न जानन्ति रागात् कर्मफलरागाभिभवनिमित्तम् , तेन कारणेन आतुरा दु खार्ता सन्त क्षीणलोका क्षीणकर्मफला स्वर्गलोकात् च्यवन्ते ॥

इष्टापूर्तं मन्यमाना वरिष्ठ
नान्यच्छ्रेयो वेदयन्ते प्रमूढा' ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वे-
म लोक हीनतर वा विशन्ति ॥ १० ॥

इष्टापूर्तम् इष्ट यागादि श्रौत कर्म पूर्त स्मार्त वापीकूप तडागादिकर्म मन्यमाना एतदेवातिशयेन पुरुषार्थसाधन वरिष्ठ प्रधानमिति चिन्तयन्त , अन्यत आत्मज्ञानाख्य श्रे-य साधन न वेदयन्ते न जानन्ति प्रमूढा पुत्रपशुबान्धवादिषु प्रमत्ततया मूढा , ते च नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतने अनुभूत्वा अनुभूय कर्मफल पुन इम लोक मानुषम् अस्मात् हीनतर वा तिर्यङ्नरकादिलक्षण यथाकर्मशेष विशन्ति ॥

तप'श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्या चरन्त ।

**सूर्यद्वारेण ते विरजा प्रयान्ति**

**यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥**

ये पुनस्तद्विपरीतज्ञानयुक्ता वानप्रस्था सन्यासिनश्च, तप श्रद्धे हि तप स्वाश्रमविहित कर्म, श्रद्धा हिरण्यगर्भादिविषया विद्या, ते तप श्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्तमाना सन्त । शान्ता उपरतकरणग्रामा । विद्वास गृहस्थाश्च ज्ञानप्रधाना इत्यर्थ । भैक्षचर्या चरन्त परिग्रहाभावादुप वसन्त्यरण्ये इति सबन्ध । सूर्यद्वारेण सूर्योपलक्षितेनोत्तरेण पथा ते विरजा विरजस, क्षीणपुण्यपापकर्माण सन्त इत्यर्थ । प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन्सत्यलोकादौ अमृत स पुरुष प्रथमजो हिरण्यगर्भ हि अव्ययात्मा अव्ययस्वभावो यावत्ससारस्थायी । एतदन्तास्तु ससार गतयोऽपरविद्यागम्या । नन्वेत मोक्षमिच्छन्ति केचित् । न, 'इहैव सर्वे प्रविलीयन्ति कामा' 'ते सर्वग सर्वत प्राप्य धीरा युक्तात्मान सर्वमेवाविशन्ति' इत्यादि श्रुतिभ्य, अप्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति । विरजस्त्व त्वापेक्षिकम् । समस्तमपरविद्याकार्य साध्यसाधनलक्षण क्रियाकारकफलभेदभिन्न द्वैतम् एतावदेव यद्धिरण्यगर्भप्राप्त्यवसानम् । तथा च म

नुनोक्त स्थावराद्या ससारगतिमनुक्रामता—'ब्रह्मा विश्व-सृजो धर्मो महानव्यक्तमेव च । उत्तमा सात्त्विकीमेता ग-तिमाहुर्मनीषिण ' इति ॥

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो
निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छे-
त्समित्पाणिः श्रोत्रिय ब्रह्मनिष्ठम् ॥

अथेदानीमस्मात्साध्यसाधनरूपात्सर्वस्मात्ससाराद्विरक्तस्य परस्या विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते— परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषय स्वाभाविकाविद्याकामकर्मदोष-वत्पुरुषानुष्ठेयमविद्यादिदोषवन्तमेव पुरुष प्रति विहितत्वा-त्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणा फलभूता , ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्या नर कतिर्यक्प्रेतलक्षणा , तानेता-परीक्ष्य प्रत्यक्षानुमानोपमाना-गमै सर्वतो याथात्म्येनावधार्य लोकान् ससारगतिभूतान-व्यक्तादिस्थावरान्ता-व्याकृताव्याकृतलक्षणान्बीजाङ्कुरवदित रेतरोत्पत्तिनिमित्ताननेकानर्थशतसहस्रसकुला-कदलीगर्भवद् - सारान्मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनस - मान्प्रतिक्षणप्रध्वसान्पृष्ठत कृत्वा विद्याकामदोषप्रवर्तितकर्म

च्चितान्धर्माधर्मनिर्वर्तितानित्येतत् । ब्राह्मण, ब्राह्मणस्यैव विशेषतोऽधिकार सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मण ग्रहणम् । परीक्ष्य लोकान्कि कुर्यादित्युच्यते— निर्वेदम्, निष्पूर्वो विदिरत्र वैराग्यार्थे, वैराग्यम् आयात् कुर्यादित्येतत् । स वैराग्यप्रकार प्रदर्श्यते— इह ससारे नास्ति कश्चिदपि अकृत पदार्थ । सर्वे एव हि लोका कर्मचिता कर्म कृतत्वाच्चानित्या । न नित्य किंचिदस्तीत्यभिप्राय । सर्वं तु कर्मानित्यस्यैव साधनम् । यस्माच्चतुर्विधमेव हि सर्वं कर्म कार्यम्—उत्पाद्यमाप्य विकार्यं सस्कार्य वा । नात पर कर्मणो विषयोऽस्ति । अह च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थेनार्थी, न तद्विपरीतेन । अत किं कृतेन कर्मणा आयासबहुलेनानर्थसाधनेन इत्येव निर्विण्णोऽभय शिवम-कृत नित्य पद यत्, तद्विज्ञानार्थं विशेषेणाधिगमार्थं स निर्विण्णो ब्राह्मण गुरुमेव आचार्यं शमदमादिसपन्नम् अभिगच्छेत् । शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषण न कुर्यादित्येतद्गुरुमेवेत्यवधारणफलम् । समित्पाणि समिद्भार गृहीतहस्त श्रोत्रियम् अध्ययनश्रुतार्थसपन्न ब्रह्मनिष्ठ हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽय ब्रह्मनिष्ठ, जपनिष्ठस्तपोनिष्ठ इति यद्वत् । न हि कर्मिणो ब्रह्म-

निष्ठता सभवति, कर्मात्मज्ञानयोर्विरोधात । स त गुरु विधिवदुपसन्न प्रसाद्य पृच्छेदक्षर पुरुष सत्यम ॥

**तस्मै स विद्वानुपसन्नाय सम्य-**
**क्प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षर पुरुष वेद सत्य**
**प्रोवाच ता तत्त्वतो ब्रह्मविद्याम् ॥**

तस्मै स विद्वान् गुरुर्ब्रह्मवित्, उपसन्नाय उपगताय । सम्यक् यथाशास्त्रमित्येतत् । प्रशान्तचित्ताय उपरतदर्पादिदोषाय । शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय, सर्वतो विरक्तायेत्येतत् । येन विज्ञानेन यया विद्यया च परया अक्षरम अद्रेश्यादिविशेषण तदेवाक्षर पुरुषशब्दवाच्य पूर्णत्वात्पुरि शयनाच्च, सत्य तदेव परमार्थस्वाभाव्यादव्ययम्, अक्षर चाक्षरणादक्षतत्वादक्षयत्वाच्च, वेद विजानाति ता ब्रह्मविद्या तत्त्वत यथावत प्रोवाच प्रब्रूयादित्यर्थ । आचार्यस्याप्ययमेव नियमो यन्न्यायप्राप्तसच्छिष्यनिस्तारणमविद्यामहोदधे ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
मुण्डकोपनिषद्भाष्ये प्रथम मुण्डक समाप्तम् ॥

# द्वितीय मुण्डकम् ॥

—————*—————

अपरविद्याया सर्वं कार्यमुक्तम् । स च ससारो यत्सारो यस्मान्मूलादक्षरात्सभवति यस्मिंश्च प्रलीयते, तदक्षर पुरुषाख्य सत्यम् । यस्मिन्विज्ञाते सर्वमिद विज्ञात भवति, तत्परस्या ब्रह्मविद्याया विषय । स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते—

**तदेतत्सत्य यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा**
**सहस्रशः प्रभवन्ते सरूपा ।**
**तथाक्षराद्विविधा' सोम्य भावा**
**प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥**

यदपरविद्याविषय कर्मफललक्षणम्, सत्य तदापेक्षिकम् । इद तु परविद्याविषयम्, परमार्थसल्लक्षणत्वात् । तदेतत् सत्य यथाभूत विद्याविषयम्, अविद्याविषयत्वाच्च अनृतमितरत् ।

अत्यन्तपरोक्षत्वात्कथ नाम प्रत्यक्षवत्सत्यमक्षर प्रतिपद्येरन्निति दृष्टान्तमाह— यथा सुदीप्तात सुष्ठु दीप्तादिद्धात् पावकात् अग्ने विस्फुलिङ्गा अग्न्यवयवा सहस्रश अनेकश प्रभवन्ते निर्गच्छन्ति सरूपा अग्निसलक्षणा एव, तथा उक्तलक्षणात् अक्षरात् विविधा नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा हे सोम्य, भावा जीवा आकाशादिवद्घटादिपरिच्छिन्ना सुषिरभेदा घटाद्युपाधि प्रभेदमनु भवन्ति, एव नानानामरूपकृतदेहोपाधिप्रभव मनु प्रजायन्ते तत्र चैव तस्मिन्नेव चाक्षरे अपियन्ति देहोपाधिविलयमनु विलीयन्ते घटादिविलयमन्विव सुषिरभेदा । यथाकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्व घटाद्युपाधिकृतमेव, तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् ॥

**दिव्यो ह्यमूर्तः पुरुषः**
**सबाह्याभ्यन्तरो ह्यज ।**
**अप्राणो ह्यमनाः शुभ्रो**
**ह्यक्षरात्परत' पर ॥ २ ॥**

नामरूपबीजभूतादव्याकृताख्यात्स्वविकारापेक्षया परात्-

क्षरात्पर यत्सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्तिवर्जित नेति नेतीत्यादिविशेषण विवक्षन्नाह—दिव्य द्योतनवान्, स्वयञ्ज्योतिष्ट्वात् । दिवि वा स्वात्मनि भव अलौकिका वा । हि यस्मात् अमूर्त सर्वमूर्तिवर्जित, पुरुष पूर्ण पुरिशयो वा, सबाह्याभ्यन्तर सह बाह्याभ्यन्तरेण वर्तत इति । अज न जायते कुतश्चित्, स्वतोऽजस्य जन्मनिमित्तस्य चाभावात्, यथा जलबुद्बुदादेर्वाय्वादि, यथा नभ सुषिरभेदाना घटादि । सर्वभावविकाराणा जनिमूलत्वात् तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति । सबाह्याभ्यन्तरो ह्यज अतोऽजरोऽमृतोऽक्षरो ध्रुवोऽभय इत्यर्थ । यद्यपि देहाद्युपाधिभेददृष्टिभेदेषु सप्राण समना सेन्द्रिय सविषय इव प्रत्यवभासते तलमलादिमदिवाकाशम्, तथापि तु स्वत परमार्थस्वरूपदृष्टीनाम अप्राण अविद्यमान क्रियाशक्तिभेदवान् चलनात्मको वायुर्यस्मिन्नसौ अप्राण । तथा अमना अनेकज्ञानशक्तिभेदवत्सकल्पाद्यात्मक मनोऽप्यविद्यमान यस्मिन्सोऽयममना । अप्राणो ह्यमनाश्चेति प्राणादिवायुभेदा कर्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्या, यथा श्रुत्यन्तरे ध्यायतीव लेलायतीवेति । यस्माच्चैव प्रति-

षिद्धोपाधिद्वयस्तस्मात् शुभ्र शुद्ध । अतोऽक्षरान्नामरूपबीजोपाधिलक्षितस्वरूपात् सवकायकरणबीजत्वेनोपलक्ष्यमाणत्वात्पर तत्त्व तदुपाधिलक्षणमव्याकृताख्यमक्षर सर्वविकारेभ्यस्तस्मात्परतोऽक्षरात्पर निरुपाधिक पुरुष इत्यर्थ । यस्मिंस्तदाकाशाख्यमक्षर सव्यवहारविषयमोत च प्रोत च । कथ पुनरप्राणादिमत्त्व तस्येत्युच्यते । यदि हि प्राणादय प्रागुत्पत्ते पुरुष इव स्वेनात्मना सन्ति, तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्व स्यात्, न तु ते प्राणादय प्रागुत्पत्ते सन्ति । अत प्राणादिमान्पर पुरुष, यथानुत्पन्ने पुत्रे अपुत्रो दवदत्त ॥

**एतस्माज्जायते प्राणो**
**मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः**
**पृथिवी विश्वस्य धारिणी ॥ ३ ॥**

कथ ते न सन्ति प्राणादय इति, उच्यते— यस्मात् एतस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षितात् जायते उत्पद्यतेऽविद्याविषयो विकारभूतो नामधेयोऽनृतात्मक प्राण, 'वाचारम्भण विकारो नामधेयम्' 'अनृतम्' इति

श्रुत्यन्तरात् । न हि तेनाविद्याविषयेणानृतेन प्राणेन स-प्राणत्व परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम् । एव मन सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते । तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थ । यथा च प्रागुत्पत्ते परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्या । यथा करणानि मनश्चेन्द्रियाणि च, तथा शरीरविषयकारणानि भूतानि खम् आकाशम्, वायु बाह्य आवहादिभेद, ज्योति अग्नि, आप उदकम्, पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी, एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितान्येतस्मादेव जाय ते ॥

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ**
**दिश श्रोत्रे वाग्विवृताश्च वेदाः ।**
**वायु प्राणो हृदय विश्वमस्य**
**पद्भ्या पृथिवी ह्येष सर्वभूतान्तरात्मा ॥**

सक्षेपत परविद्याविषयमक्षर निर्विशेष पुरुष सत्यम् 'दिव्यो ह्यमूर्त' इत्यादिना मन्त्रेणोक्त्वा, पुनस्तदेव सविशेष विस्तरेण वक्तव्यमिति प्रववृते, सक्षेपविस्तरोक्तो हि पदार्थ सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति । यो हि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्विराट्,

स तत्त्वान्तरितत्त्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायत एतन्मयश्चेत्येतदर्थमाह, त च विशिनष्टि— अग्नि द्युलोक, 'असौ वाव लोको गौतमाग्नि' इति श्रुते । मूर्धा यस्योत्तमाङ्ग शिर, चक्षुषी चन्द्रश्च सूर्यश्चेति चन्द्रसूर्यौ, यस्येति सर्वत्रानुषङ्ग कर्तव्य अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणाम कृत्वा । दिश श्रोत्रे यस्य । वाक् विवृताश्च उद्घाटिता प्रसिद्धा वेदा यस्य । वायु प्राणो यस्य । हृदयम् अन्त करण विश्व समस्त जगत् अस्य यस्येत्येतत् । सर्व ह्यन्त करणविकारमेव जगत्, मनस्येव सुषुप्ते प्रलयदर्शनात्, जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात् । यस्य च पद्भ्या जाता पृथिवी, एष देवो विष्णुरनन्त प्रथमशरीरी त्रैलोक्यदेहोपाधि सर्वेषा भूतानामन्तरात्मा । स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकरणात्मा ॥

पञ्चाग्निद्वारेण च या ससरन्ति प्रजा, ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते—

**तस्मादग्निः समिधो यस्य सूर्य**
**सोमात्पर्जन्य ओषधयः पृथिव्याम् ।**
**पुमान्रेतः सिञ्चति योषितायां**
**बह्वी॰ प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥**

तस्मात् परस्मात्पुरुषात् प्रजावस्थानविशेषरूप अग्नि । स विशेष्यते— समिधो यस्य सूर्य , समिध इव समिध , सूर्येण हि द्युलोक समिध्यते । ततो हि द्युलोकाग्नेर्निष्पन्नात् सोमात् पर्जन्य द्वितीयोऽग्नि सभवति । तस्माच्च पर्जन्यात् ओषधय पृथिव्या सभवन्ति । ओषधिभ्य पुरुषाग्नौ हुताभ्य उपादानभूताभ्य पुमानग्नि रेत सिञ्चति योषिताया योषिति योषाग्नौ स्त्रियामिति । एव क्रमेण वह्वी वह्वय प्रजा ब्राह्मणाद्या पुरुषात् परस्मात् सप्रसूता समुत्पन्ना ॥

**तस्मादृच साम यजूꣳषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**सवत्सरश्च यजमानश्च लोका**
**सोमो यत्र पवते यत्र सूर्य ॥ ६ ॥**

किंच, कर्मसाधनानि फलानि च तस्मादेवेत्याह—कथम् ? तस्मात् पुरुषात् ऋच नियताक्षरपादावसाना गायत्र्यादिच्छन्दोविशिष्टा मन्त्रा , साम पाञ्चभक्तिक साप्तभक्तिक च स्तोभादिगीतिविशिष्टम् , यजूषि अनियताक्षरपादावसानानि वाक्यरूपाणि , एव त्रिविधा मन्त्रा । दीक्षा मौञ्ज्यादिलक्षणा कर्तृनियमविशेषा । यज्ञाश्च सर्वे अग्निहोत्रादय ।

ऋतव सयूपा । दक्षिणाश्च एकगवाद्या अपरिमितसर्वस्वान्ता । सवत्सरश्च काल कर्माङ्गभूत । यजमानश्च कर्ता । लोका तस्य कर्मफलभूता , ते विशेष्यन्ते—सोम यत्र येषु लोकेषु पवते पुनाति लोकान् यत्र च येषु सूर्यस्तपति । ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूता ॥

**तस्माच्च देवा बहुधा सप्रसूता**
**साध्या मनुष्या पशवो वयासि ।**
**प्राणापानौ व्रीहियवौ तपश्च**
**श्रद्धा सत्य ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

तस्माच्च पुरुषात्कर्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन सप्रसूता सम्यक् प्रसूता — साध्या देवविशेषा , मनुष्या कर्माधिकृता , पशव ग्राम्यारण्या , वयासि पक्षिण जीवन च मनुष्यादीना प्राणापानौ, व्रीहियवौ हविरर्थौ, तपश्च कर्माङ्ग पुरुषसस्कारलक्षण स्वतन्त्र च फलसाधनम् श्रद्धा यत्पूर्वक सर्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धि , तथा सत्यम् अनृतवर्जन यथाभूतार्थवचन चापीडाकरम्, ब्रह्मचर्यं मैथुनासमाचार , विधिश्च इतिकर्तव्यता ॥

सप्त प्राणाः प्रभवन्ति तस्मा-
त्सप्तार्चिष समिध. सप्त होमा. ।
सप्तेमे लोका येषु चरन्ति प्राणा
गुहाशया निहिता सप्त सप्त ॥ ८ ॥

किंच, सप्त शीर्षण्या प्राणा तस्मादेव पुरुषात् प्रभवन्ति । तेषा सप्त अर्चिष दीप्तय स्वस्वविषयावद्योतनानि । तथा सप्त समिध सप्त विषया, विषयैर्हि समिध्यन्ते प्राणा । सप्त होमा तद्विषयविज्ञानानि, 'यदस्य विज्ञान तज्जुहोति' इति श्रुत्यन्तरात् । किंच, सप्त इमे लोका इन्द्रियस्थानानि, येषु चरन्ति सचरन्ति प्राणा इति विशेषणात् । प्राणा येषु चरन्तीति प्राणाना विशेषणमिद प्राणापानादिनिवृत्त्यर्थम । गुहाया शरीरे हृदये वा स्वापकाले शेरत इति गुहाशया । निहिता स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदम् । यानि च आत्मयाजिना विदुषा कर्माणि कर्मफलानि चाविदुषा च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत्परस्मादेव पुरुषात्सर्वज्ञात्प्रसूतमिति प्रकरणार्थ ॥

अत. समुद्रा गिरयश्च सर्वे-
ऽस्मात्स्यन्दन्ते सिन्धव. सर्वरूपा' ।

**अतश्च सर्वा ओषधयो रसश्च**
**येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥**

अत पुरुषात् समुद्रा सर्वे क्षाराद्या । गिरयश्च हिमवदादय अस्मादेव पुरुषात् सर्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्या सिन्धव नद्य सर्वरूपा बहुरूपा । अस्मादेव पुरुषात् सर्वा ओषधय व्रीहियवाद्या । रसश्च मधुरादि षड्विध, येन रसेन भूतै पञ्चभि स्थूलै परिवेष्टित तिष्ठते तिष्ठति हि अन्तरात्मा लिङ्ग सूक्ष्म शरीरम । तद्ध्यन्तराले शरीरस्यात्मनश्चात्मवद्वर्तत इत्यन्तरात्मा ॥

**पुरुष एवेद विश्व कर्म**
**तपो ब्रह्म परामृतम् ।**
**एतद्यो वेद निहित गुहाया**
**सोऽविद्याग्रन्थि विकिरतीह सोम्य ॥**

इति द्वितीयमुण्डके प्रथम खण्ड ॥

एव पुरुषात्सर्वमिद सम्प्रसूतम् । अतो वाचारम्भण विकारो नामधेयमनृत पुरुष इत्येव सत्यम्, अत पुरुष एव इद विश्व सर्वम् । न विश्व नाम पुरुषादन्यत्किंचिदस्ति । अ-

तो यदुक्त तदेवेदमभिहितम् 'कस्मिन्नु भगवो विज्ञाते सर्व-मिद विज्ञात भवति' इति, एतस्मिन्हि परस्मिन्नात्मनि सर्व कारणे पुरुषे विज्ञाते, पुरुष एवेद विश्व नान्यदस्तीति विज्ञात भवतीति । किं पुनरिद विश्वमित्युच्यते— कर्म अग्निहोत्रा दिलक्षणम्, तप ज्ञान तत्कृत फलमन्यदेव तावद्धीद सर्वम्, तच्च एतद्ब्रह्मण कार्यम, तस्मात्सर्व ब्रह्म परामृत परममृतमह मेवेति यो वेद निहित स्थित गुहाया हृदि सर्वप्राणिनाम, स एव विज्ञानात् अविद्याग्रन्थिं ग्रन्थिमिव दृढीभूतामविद्यावा-सना बिकिरति विक्षिपति विनाशयति इह जीवन्नेव, न मृत सन् हे सोम्य प्रियदर्शन ॥

इति द्वितीयमुण्डके प्रथमखण्डभाष्यम् ॥

## द्वितीय खण्ड. ॥

---

आवि' सन्निहित गुहाचर नाम
महत्पदमत्रैतत्समर्पितम् ।
एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्य
पर विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

अरूप सदक्षर केन प्रकारेण विज्ञेयमित्युच्यते— आवि प्रकाश सन्निहितम्, वागाद्युपाधिभि —ज्वलति भ्राजतीति श्रुत्यन्तरात्—शब्दादीनुपलभमानवदवभासत, दर्शनश्रवणमनन-विज्ञानाद्युपाधिधर्मैराविर्भूत सल्लक्ष्यते हृदि सर्वप्राणिनाम् । यदेतदाविर्भूत ब्रह्म सन्निहित सम्यक् स्थित हृदि, तत् गुहाचर नाम गुहाया चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम् । महत् सर्वमहत्त्वात् पद पद्यते सर्वेणाति, सर्वपदार्थास्पदत्वात् । कथ तन्महत्पदमित्युच्यते? यत अत्र अस्मिन्ब्रह्मणि एतत्सर्व समर्पित सप्रवेशित रथनाभाविवारा — एजत् चलत्पक्ष्यादि, प्राणत् प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि, निमिषच्च यन्निमेषादिक्रियावत् यच्चानिमिषत्,

च-शब्दात् समस्तमेतदत्रैव ब्रह्मणि समर्पितम् । एतत् यदास्पदं सर्वं जानथ हे शिष्याः, अवगच्छत तदात्मभूतं भवताम्, सदसत् सदसत्स्वरूपं सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोः, तद्व्यतिरेकेणाभावात्। वरेण्यं वरणीयम्, तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयम्, परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सबन्धः, यल्लौकिकविज्ञानागोचरमित्यर्थः । यत् वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु, तद्ध्येकं ब्रह्म अतिशयेन वरं सर्वदोषरहितत्वात् ॥

यदर्चिमद्यदणुभ्योऽणु च
यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म
स प्राणस्तदु वाङ्मनः ।
तदेतत्सत्यं तदमृतं
तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

किंच, यत् अर्चिमत् दीप्तिमत्, तद्दीप्त्या ह्यादित्यादि दीप्यत इति दीप्तिमद्ब्रह्म । किंच, यत् अणुभ्यः श्यामाकादिभ्योऽपि अणु च सूक्ष्मम् । च शब्दात्स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः । यस्मिन् लोका भूरादयः निहिताः स्थिताः,

ये च लौकिन लोकनिवासिन मनुष्यादय, चैतन्याश्रया हि सर्वे प्रसिद्धा, तदेतत् सर्वाश्रयम् अक्षर ब्रह्म स प्राण तदु वाड्मन वाक्च मनश्च सर्वाणि च करणानि तदु अन्तश्चैतन्यम, चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसघात, 'प्राणस्य प्राणम्' इति श्रुत्यन्तरात्। यत्प्राणादीनामन्तश्चैतन्य-मक्षर तदेतत् सत्यम अवितथम, अत अमृतम् अविनाशि तत् वेद्धव्य मनसा ताडयितव्यम। तस्मिन्मनस समाधान कर्तव्यमित्यर्थ। यस्मादेव हे सोम्य, विद्धि अक्षरे चेत समाधत्स्व ॥

**धनुर्गृहीत्वौपनिषद महास्त्र**
**शर ह्युपासानिशित सदधीत।**
**आयम्य तद्भावगतेन चेतसा**
**लक्ष्य तदेवाक्षर सोम्य विद्धि ॥ ३ ॥**

कथ वेद्धव्यमिति, उच्यते— धनु इष्वासन गृहीत्वा आदाय औपनिषदम् उपनिषत्सु भव प्रसिद्ध महास्त्र महच्च तदस्त्र च महास्त्र धनु, तस्मिन् शरम्, किंविशिष्टमित्याह— उपासानिशित सतताभिध्यानेन तनूकृतम्, सस्कृतमित्येतत्, सदधीत सधान कुर्यात्। सधाय च आयम्य आकृष्य सेन्द्रि-यमन्त करण स्वविषयाद्विनिवर्त्य लक्ष्य एवावर्जित कृत्वे-

त्यर्थ । न हि हस्तेनेव धनुष आयमनमिह सभवति । तद्भावगतेन तस्मिन्ब्रह्मण्यक्षरे लक्ष्ये भावना भाव तद्गतेन चेतसा, लक्ष्य तदेव यथोक्तलक्षणम अक्षर सोम्य, विद्धि ॥

**प्रणवो धनु' शरो ह्यात्मा**
**ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्य**
**शरवत्तन्मयो भवेत् ॥ ४ ॥**

यदुक्त धनुरादि, तदुच्यते—प्रणव ओंकार धनु । यथा इष्वासन लक्ष्ये शरस्य प्रवेशकारणम्, तथा आत्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोंकार । प्रणवेन ह्यभ्यस्यमानेन सस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते । यथा धनुषा अस्त इषुर्लक्ष्ये । अत प्रणवो धनुरिव धनु । शरो ह्यात्मा उपाधिलक्षण पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया, स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि, अत ब्रह्म तत् लक्ष्यमुच्यते लक्ष्य इव मन समाधित्सुभिरात्मभावेन लक्ष्यमाणत्वात् । तत्रैव सति अप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्य ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्ध्वं

शरवत् तन्मय भवेत्, यथा शरस्य लक्ष्यैकात्मत्व फल भवति, तथा देहाद्यात्मताप्रत्ययतिरस्करणेनाक्षरैकात्मत्व फलमापादयेदित्यर्थ ॥

**यस्मिन्द्यौ पृथिवी चान्तरिक्ष-**
**मोत मन सह प्राणैश्च सर्वैः ।**
**तमेवैक जानथ आत्मान-**
**मन्या वाचो विमुञ्चथामृतस्यैष सेतु ॥**

अक्षरस्यैव दुर्लक्ष्यत्वात्पुन पुनर्वचन सुलक्षणार्थम् । यस्मिन् अक्षरे पुरुषे द्यौ पृथिवी च अन्तरिक्ष च ओत समर्पित मनश्च सह प्राणै करणै अन्यै सर्वै, तमेव सर्वाश्रयमेकमद्वितीय जानथ जानीत हे शिष्या । आत्मान प्रत्यक्स्वरूप युष्माक सर्वप्राणिना च ज्ञात्वा च अन्या वाच अपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत । तत्प्रकाश्य च सर्व कर्म ससाधनम् । यत अमृतस्य एष सेतु एतदात्मज्ञानममृतस्यामृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतु, ससारमहोदधेरुत्तरणहेतुत्वात्, तथा च श्रुत्यन्तरम्—'तमेव विदित्वाति मृत्युमेति नान्य पन्था विद्यतेऽयनाय' इति ॥

**अरा इव रथनाभौ सहता यत्र नाड्य.**
**स एषोऽन्तश्चरते बहुधा जायमान. ।**
**ओमित्येव ध्यायथ आत्मान**
**स्वस्ति व' पाराय तमस परस्तात् ॥ ६ ॥**

किंच, अरा इव यथा रथनाभौ समर्पिता अरा, एव सहता सप्रविष्टा यत्र यस्मिन्हृदये सर्वतो देहव्यापिन्य नाड्य, तस्मिन्हृदये बुद्धिप्रत्ययसाक्षिभूत स एष प्रकृत आत्मा अन्त मध्ये चरते चरति वर्तते । पश्यन् शृण्वन्मन्वानो विजानन् बहुधा अनेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमान अन्त करणोपाध्यनुविधायित्वात्, वदन्ति हि लौकिका हृष्टो जात क्रुद्धो जात इति । तमात्मानम् ओमित्येवम् ओंकारालम्बना सन्त यथोक्तकल्पनया ध्यायथ चिन्तयत । उक्त च वक्तव्य शिष्येभ्य आचार्येण जानता । शिष्याश्च ब्रह्मविद्याविविदिषुत्वान्निवृत्तकर्माणो मोक्षपथे प्रवृत्ता । तेषा निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्य — स्वस्ति निर्विघ्नमस्तु व युष्माक पाराय परकूलाय, कस्य ? अविद्यातमस परस्तात्, अविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थ ॥

**य सर्वज्ञः सर्ववि-**
**द्यस्यैष महिमा भुवि ।**

**दिव्ये ब्रह्मपुरे ह्येष**
**व्योमन्यात्मा प्रतिष्ठित ॥ ७ ॥**

योऽसौ तमस परस्तात्ससारमहोदधिं तीर्त्वा गन्तव्य परविद्याविषय , स कस्मिन्वर्तत इत्याह—— य सर्वज्ञ सर्ववित् व्याख्यात । त पुनर्विशिनष्टि——यस्यैष प्रसिद्धो महिमा विभूति । कोऽसौ महिमा? यस्येमे द्यावापृथिव्यौ शासने विधृते तिष्ठत , सूर्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्र भ्रमत , यस्य शासने सरित सागराश्च स्वगोचर नातिक्रामन्ति, तथा स्थावर जङ्गम च यस्य शासने नियतम् , तथा ऋतवोऽयने अब्दाश्च यस्य शासन नातिक्रामन्ति, तथा कर्तार कर्माणि फल च यच्छासनात्स्व स्व काल नातिवर्तन्ते, स एष महिमा, भुवि लोके यस्य स एष सर्वज्ञ एवमहिमा देव । दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे। ब्रह्मणो ह्यत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वात् , ब्रह्मण पुर हृदयपुण्डरीक तस्मिन्यद्व्योम, तस्मिन्व्योमनि आकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते , न ह्याकाशवत्सर्वगतस्य गतिरागति प्रतिष्ठा वान्यथा सभवति ॥

**मनोमय प्राणशरीरनेता**
**प्रतिष्ठितोऽन्ने हृदय सनिधाय ।**
**तद्विज्ञानेन परिपश्यन्ति धीरा**
**आनन्दरूपममृत यद्विभाति ॥ ८ ॥**

स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति मनोमय , मनउपाधित्वात् । प्राणशरीरनेता प्राणश्च तच्छरीर च तत्प्राणशरीर तस्याय नेता । अस्मात्स्थूलाच्छरीराच्छरीरान्तर सूक्ष्म प्रति प्रतिष्ठित अवस्थित अन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमाने अपचीयमाने च पिण्डरूपेऽन्ने हृदय बुद्धि पुण्डरीकच्छिद्रे सनिधाय समवस्थाप्य , हृदयावस्थानमेव ह्यात्मन स्थिति , न ह्यात्मन स्थितिरन्ने , तत् आत्मतत्त्व विज्ञानेन विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेन परिपश्यन्ति सर्वत पूर्ण पश्यन्ति उपलभन्ते धीरा विवेकिन । आनन्दरूप सर्वानर्थदु खायासप्रहीण सुखरूपम् अमृत यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा ॥

**भिद्यते हृदयग्रन्थि-**
**श्छिद्यन्ते सर्वसशयाः ।**

क्षीयन्ते चास्य कर्माणि
तस्मिन्दृष्टे परावरे ॥ ९ ॥

अस्य परमात्मज्ञानस्य फलमिदमभिधीयते— हृदय-ग्रन्थि अविद्यावासनामयो बुद्ध्याश्रय काम, 'कामा येऽस्य हृदि श्रिता ' इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ, नात्माश्रय । भिद्यते भेद विनाशमुपयाति। छिद्यन्ते सर्वे ज्ञेय-विषया सशया लौकिकानाम् आ मरणात् गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति। अस्य विच्छिन्नसशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्ते प्राक्कृतानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्माणि, न त्वेत ज्जन्मारम्भकाणि, प्रवृत्तफलत्वात्। तस्मिन् सर्वज्ञेऽससारिणि परावरे पर च कारणात्मना अवर च कार्यात्मना तस्मिन्परावरे साक्षादहमस्मीति दृष्टे, ससारकारणोच्छेदान्मुच्यत इत्यर्थ ॥

हिरण्मये परे कोशे
विरज ब्रह्म निष्कलम्।
तच्छुभ्र ज्योतिषा ज्योति-
स्तद्यदात्मविदो विदुः ॥ १० ॥

उक्तस्यैवार्थस्य सक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि—हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे परे कोशे कोश इवासे । आत्मस्वरूपोपलब्धिस्थानत्वात्पर तत्सर्वाभ्यन्तरत्वात्, तस्मिन् विरजम् अविद्याद्यशेषदोषरजोमलवर्जित ब्रह्म सर्वमहत्त्वात्सर्वात्मत्वाच्च निष्कल निर्गता कला यस्मात्तन्निष्कल निरवयवमित्यर्थ । यस्माद्विरज निष्कल च अत तच्छुभ्र शुद्ध ज्योतिषा सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योति अवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थ । तद्धि पर ज्योतिर्यद् यानवभास्यमात्मज्योति , तत् यत् आत्मविद आत्मान स्व शब्दादिविषयबुद्धिप्रत्ययसाक्षिण ये विवेकिनो विदु विजानन्ति, ते आत्मविद तद्विदु , आत्मप्रत्ययानुसारिण । यस्मात्पर ज्योतिस्तस्मात्त एव तद्विदु , नेतरे बाह्यार्थप्रत्ययानुसारिण ॥

**न तत्र सूर्यो भाति न चन्द्रतारक**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्व**
**तस्य भासा सर्वमिद विभाति ॥ ११ ॥**

कथ तत् ' ज्योतिषा ज्योति ' इति, उच्यते—न तत्र तस्मि

न्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति, तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयति, न तु तस्य स्वतः प्रकाशनसामर्थ्यम् । तथा न चन्द्रतारकम्, न इमा विद्युतः भान्ति, कुतोऽयमग्निरस्मद्गोचरः । किं बहुना । यदिदं जगद्भाति, तत्तमेव परमेश्वरं स्वतो भारूपत्वात् भान्तं दीप्यमानम् अनुभाति अनुदीप्यते । यथा जलमुल्मुकादि वा अग्निसंयोगादग्निं दहन्तमनुदहति, न स्वतः, तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि जगद्विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्यगतेन विविधेन भासा, अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्नोति । घटादीनामन्यावभासकत्वादर्शनात् भारूपाणां चादित्यादीनां तद्दर्शनात् ॥

ब्रह्मैवेदममृतं पुरस्ता-
द्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं
ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

इति द्वितीयमुण्डके द्वितीयः खण्डः ॥

यत्तज्ज्योतिषा ज्योतिर्ब्रह्म, तदेव सत्यम्, सर्वं तद्विकार वाचारम्भण विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुत प्रतिपादित निगमनस्थानीयेन मन्त्रेण पुनरुप सहरति— ब्रह्मैव उक्तलक्षणम्, इद यत् पुरस्तात् अग्रेऽब्रह्मेवाविद्यादृष्टीना प्रत्यवभासमान तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथा उत्तरेण तथैवाधस्तात् ऊर्ध्वं च सर्वतोऽन्यदिव कार्याकारेण प्रसृत प्रगत नामरूपवदवभासमानम्। किं बहुना, ब्रह्मैवेद विश्व समस्तमिद जगत् वरिष्ठ वरतमम्। अब्रह्मप्रत्यय सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्यय। ब्रह्मैवैक परमार्थसत्यमिति वेदानुशासनम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवत कृतौ
मुण्डकोपनिषद्भाष्ये द्वितीय मुण्डक समाप्तम्॥

# तृतीयं मुण्डकम् ॥

---

परा विद्योक्ता यया तदक्षर पुरुषाख्य सत्यमधिगम्यते । यदधिगमे हृदयग्रन्थ्यादिससारकारणस्यात्यन्तिको विनाश स्यात्, तद्दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्त । अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थं उत्तर ग्रन्थारम्भ । प्राधान्येन तत्त्वनिर्धारण च प्रकारान्तरेण क्रियते । अत्यन्तदुरवगाहत्वात्कृतमपि तत्र सूत्रभूतो मन्त्र परमार्थवस्त्ववधारणार्थमुपन्यस्यते—

> द्वा सुपर्णा सयुजा सखाया
> समान वृक्ष परिषस्वजाते ।
> तयोरन्य पिप्पल स्वाद्वत्ति
> अनश्नन्नन्योऽभिचाकशीति ॥ १ ॥

द्वा द्वौ, सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ, पक्षि

सामान्याद्वा सुपर्णौ, सयुजा सयुजौ सहैव सर्वदा युक्तौ, सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ, एवंभूतौ सन्तौ समानम् अविशेषमुपलब्ध्यधिष्ठानतया, एकं वृक्षं वृक्षमिवोच्छेदसामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। सुपर्णाविवैकं वृक्षं फलोपभोगार्थम्। अयं हि वृक्ष ऊर्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः सर्वप्राणिकर्मफलाश्रयः, तं परिष्वक्तवन्तौ सुपर्णाविव अविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ। तयोः परिष्वक्तयोः अन्यः एकः क्षेत्रज्ञो लिङ्गोपाधिवृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपं स्वादु अत्ति भक्षयत्युपभुङ्क्ते अविवेकतः। अनश्नन् अन्यः इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सत्त्वोपाधिरीश्वरो नाश्नाति। प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण। स तु अनश्नन् अन्यः अभिचाकशीति पश्यत्येव केवलम्। दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत्॥

**समाने वृक्षे पुरुषो निमग्नो-**
**ऽनीशया शोचति मुह्यमानः।**
**जुष्टं यदा पश्यत्यन्यमीश-**
**मस्य महिमानमिति वीतशोकः॥ २॥**

तत्रैव सति समाने वृक्षे यथोक्ते शरीरे पुरुष भोक्ता जीवोऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले निमग्न निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृश स्थूलो गुणवान्निर्गुण सुखी दु खीत्येव प्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते सयुज्यते वियुज्यते च सबन्धिबान्धवै , अत अनीशया, न कस्यचित्समर्थोऽह पुत्रो मम विनष्टो मृता मे भार्या किं मे जीवितेनेत्येव दीनभावोऽनीशा, तया शोचति सतप्यते मुह्यमान अनेकैरनर्थप्रकारैरविवेकितया अन्तश्चिन्तामापद्यमान स एव प्रेततिर्यङ्मनुष्यादियोनिष्वाजवजवीभावमापन्न कदाचिदनेकजन्मसु शुद्धधर्मसचितनिमित्तत केनचित्परमकारुणिकेन दर्शितयोगमार्ग अहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसपन्न समाहितात्मा सन् जुष्ट सेवितमनेकैर्योगमार्गै कर्मिभिश्च यदा यस्मिन्काले पश्यति ध्यायमान अन्य वृक्षोपाधिलक्षणाद्विलक्षणम् ईशम् असंसारिणमशनायापिपासाशोकमोहजरामृत्य्वतीतमीश सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य सम सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति महिमान विभूतिं च जगद्रूपमस्यैव मम परमेश्वरस्य इति

यदैव द्रष्टा, तदा वीतशोक भवति सर्वस्माच्छोकसागराद्वि-
प्रमुच्यते, कृतकृत्यो भवतीत्यर्थ ॥

यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जन परम साम्यमुपैति ॥ ३ ॥

अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम्—यदा यस्मि-
न्काले पश्य पश्यतीति विद्वान् साधक इत्यर्थ । पश्यते
पश्यति पूर्ववत्, रुक्मवर्ण स्वयज्योति स्वभाव रुक्मस्येव
वा ज्योतिरस्याविनाशि, कर्तार सर्वस्य जगत ईश पुरुष
ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्त ब्रह्मयोनिं
ब्रह्मणो वा अपरस्य योनिं स यदा चैव पश्यति, तदा स
विद्वान्पश्य पुण्यपाप बन्धनभूते कर्मणी समूले विधूय
निरस्य दग्ध्वा निरञ्जन निर्लेपो विगतक्लेश परम प्रकृष्ट
निरतिशय साम्य समतामद्वयलक्षणाम्, द्वैतविषयाणि सा-
म्यान्यत अर्वाञ्च्येव, अतोऽद्वयलक्षणमेतत् परम साम्य-
मुपैति प्रतिपद्यते ॥

**प्राणो ह्येष यः सर्वभूतैर्विभाति**
**विजानन्विद्वान्भवते नातिवादी ।**
**आत्मक्रीड आत्मरति' क्रियावा-**
**नेष ब्रह्मविदा वरिष्ठ. ॥ ४ ॥**

किंच, योऽय प्राणस्य प्राण पर ईश्वर हि एष प्रकृत सर्वभूतै सर्वैर्भूतै ब्रह्मादिस्तम्बपर्यन्तै , इत्थभूतलक्षणा तृतीया । सर्वभूतस्थ सर्वात्मा सन्नित्यर्थ । विभाति विविध दीप्यते । एव सर्वभूतस्थ य साक्षादात्मभावेनायमहमस्मीति विजानन् विद्वान् वाक्यार्थज्ञानमात्रेण न भवते न भवतीत्येतत । किम् ? अतिवादी अतीत्य सर्वानन्यान्वदितु शील मस्येत्यतिवादी । यस्त्वेव साक्षादात्मान प्राणस्य प्राण विद्वान्, सोऽतिवादी न भवतीत्यर्थ । सर्व यदा आत्मैव नान्यदस्तीति दृष्टम , तदा किं ह्यसावतीत्य वदेत्। यस्य त्वपरमन्यदृष्टमस्ति, स तदतीत्य वदति । अय तु विद्वान्नात्मनो ऽन्यत्पश्यति, नान्यच्छृणोति, नान्यद्विजानाति । अता नातिवदति । किंच, आत्मक्रीड आत्मन्येव क्रीडा क्रीडन यस्य नान्यत्र पुत्रदारादिषु, स आत्मक्रीड । तथा आत्मरति आत्मन्येव रती रमण प्रीतिर्यस्य, स आत्मरति । क्रीडा बाह्यसाधनसापेक्षा, रतिस्तु साधननिरपेक्षा बाह्य-

विषयप्रीतिमात्रमिति विशेष । तथा क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽय क्रियवान् । समासपाठे आत्म रतिरेव क्रियास्य विद्यत इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । केचित्त्वग्निहोत्रादिकर्मब्रह्मविद्ययो समुच्चयार्थमिच्छन्ति । तच्चैष ब्रह्मविदा वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रियावानात्मक्रीड आत्मरतिश्च भवितु शक्त । कश्चित्कचिद्बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीडयोर्विरोधात् । न हि तम प्रकाशयोर्युगपदेकत्र स्थिति सभवति । तस्मादसत्प्रलपितमेवैतदनेन ज्ञानकर्मसमुच्चयप्रतिपादनम । 'अन्या वाचो विमुञ्चथ' 'सन्यासयोगात्' इत्यादिश्रुतिभ्यश्च । तस्मादयमेवेह क्रियावान्यो ज्ञानध्यानादिक्रियावानसभिन्नार्यमर्याद सन्यासी । य एवलक्षणो नातिवाद्यात्मक्रीड आत्मरति क्रियावान्ब्रह्मनिष्ठ , स ब्रह्मविदा सर्वेषा वरिष्ठ प्रधान ॥

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्त शरीरे ज्योतिर्मयो हि शुभ्रो**
**य पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

अधुना सत्यादीनि भिक्षो सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि—सत्येन अनृतत्यागेन मृषावदनत्यागेन लभ्य प्राप्तव्य । किंच, तपसा हीन्द्रियमनएकाग्रतया । 'मनसश्चेन्द्रियाणा च ह्यैकाग्र्य परम तप' इति स्मरणात् । तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात्परम साधन तपो नेतरच्चान्द्रायणादि । एष आत्मा लभ्य इत्यनुषङ्ग सर्वत्र । सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचारेण । नित्य सर्वदा, नित्य सत्येन नित्य तपसा नित्य सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्य । वक्ष्यति च 'न येषु जिह्ममनृत न माया च' इति । कासावात्मा य एतै साधनैर्लभ्य इत्युच्यते—अन्त शरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्ण शुभ्र शुद्धो यमात्मान पश्यन्ति उपलभन्ते यतय यतनशीला सन्यासिन क्षीणदोषा क्षीणक्रोधादिचित्तमला, स आत्मा नित्य सत्यादिसाधनै सन्यासिभिर्लभ्यत इत्यर्थ । न कादाचित्कै सत्यादिभिर्लभ्यते । सत्यादिसाधनस्तुत्यर्थोऽयमर्थवाद ॥

**सत्यमेव जयते नानृत**

**सत्येन पन्था विततो देवयानः ।**

**येनाक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥**

सत्यमेव सत्यवानेव जयते जयति, नानृतं नानृतवादीत्यर्थः । न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोर्जयः पराजयो वा संभवति । प्रसिद्धं लोके सत्यवादिनानृतवाद्यभिभूयते न विपर्ययः, अतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किंच, शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम्? सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः । येन पथा ह्यक्रमन्ति आक्रमन्ते ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहंकारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिन्, तत्परमार्थतत्त्वं सत्यस्य उत्तमसाधनस्य संबन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयत इति निधानं वर्तते । तत्र च येन पथा आक्रमन्ति, स सत्येन विततः इति पूर्वेण संबन्धः ॥

**बृहच्च तद्दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥**

किं तत्किंधर्मकं च तदित्युच्यते— बृहत् महच्च तत् प्रकृतं ब्रह्म सत्यादिसाधनेन सर्वतो व्याप्तत्वात् । दिव्यं स्वयंप्रभमनिन्द्रियगोचरम् अत एव न चिन्तयितुं शक्यतेऽस्य रूपमिति अचिन्त्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरम्, निरतिशयं हि सौक्ष्म्यमस्य सर्वकारणत्वात्, विभाति विविधमादित्यचन्द्राद्याकारेण भाति दीप्यते । किंच, दूरात् विप्रकृष्टाद्देशात्सुदूरे विप्रकृष्टतरे देशे वर्ततेऽविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म । इह देहे अन्तिके समीपे च, विदुषामात्मत्वात् । सर्वान्तरत्वाच्चाकाशस्याप्यन्तरश्रुतेः । इह पश्यत्सु चेतनावत्स्वित्येतत्, निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम् । क्व ? गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं लक्ष्यते विद्वद्भिः । तथाप्यविद्यया संवृतं सन्न लक्ष्यते तत्रस्थमेवाविद्वद्भिः ॥

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमुच्यते—यस्मात् न

चक्षुषा गृह्यते केनचिदप्यरूपत्वात् नापि गृह्यते वाचा अनभिधेयत्वात् न चान्यैर्देवै इतरेन्द्रियै । तपस सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह—ज्ञानप्रसादेन आत्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिना ज्ञान बाह्यविषयरागादिदोषकलुषितमप्रससन्नमशुद्ध सन्नावबोधयति नित्यसनिहितमप्यात्मतत्त्व मलावनद्धमिवादर्शम्, विलुलितमिव सलिलम् । तद्यदेन्द्रियविषयससर्गजनितरागादिमलकालुष्यापनयनादादर्शसलिलादिवत्प्रसादित स्वच्छ शान्तमवतिष्ठते, तदा ज्ञानस्य प्रसाद स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्व विशुद्धान्त करण योग्यो ब्रह्म द्रष्टु यस्मात्, तत तस्मात्तु तमात्मान पश्यते पश्यति उपलभते निष्कल सर्वावयवभेदवर्जित ध्यायमान सत्यादिसाधनवानुपसहृतकरण एकाग्रेण मनसा ध्यायमान चिन्तयन् ॥

एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पञ्चधा सविवेश ।
प्राणैश्चित्तं सर्वमोत प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

यमात्मानमेव पश्यति, एष अणु सूक्ष्म आत्मा चेतसा विशुद्धज्ञानेन केवलेन वेदितव्य । क्वासौ ? यस्मिन् शरीरे प्राण वायु पञ्चधा प्राणापानादिभेदेन सविवेश सम्यक् प्रविष्ट , तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थ । कीदृशेन चेतसा वेदितव्य इत्याह—प्राणै सहेन्द्रियै चित्त सर्वमन्त - करण प्रजानाम् आत व्याप्त येन क्षीरमिव स्नेहेन, काष्ठमिव चाग्निना । सर्व हि प्रजानामन्त करण चतनावत्प्रसिद्ध लोके । यस्मिश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवति, एष उक्त आत्मा विशेषेण स्वेनात्मना विभवति आत्मान प्रकाशयतीत्यर्थ ॥

य य लोक मनसा सविभाति
विशुद्धसत्त्व' कामयते याश्च कामान् ।
त त लोक जयते तांश्च कामां-
स्तस्मादात्मज्ञ ह्यर्चयेद्भूतिकाम ॥१०॥

इति तृतीयमुण्डके प्रथम खण्ड ॥

य एवमुक्तलक्षण सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षण फलमाह—य य लोक पित्रादिलक्षण मनसा सविभाति सकल्पयति मह्यमन्यस्मै वा भ-

वेत्तीति, विशुद्धसत्त्व क्षीणक्लेश आत्मविन्निर्मलान्त करण कामयते याश्च कामान् प्रार्थयते भोगान, त त लोक जयते प्राप्नोति ताश्च कामान्सकल्पितान्भोगान । तस्माद्विदुष सत्यसकल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्त करण ह्यर्चयेत्पूजयेत्पादप्रक्षालनशुश्रूषानमस्कारादिभि भूतिकाम विभूतिमिच्छु । तत पूजार्ह एवासौ ॥

इति तृतीयमुण्डके प्रथमखण्डभाष्यम् ॥

## द्वितीय खण्ड ॥

स वेदैतत्परम ब्रह्म धाम
यत्र विश्व निहित भाति शुभ्रम् ।
उपासते पुरुष ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

यस्मात् स वेद जानाति एतत् यथोक्तलक्षण ब्रह्म परम प्रकृष्ट धाम सर्वकामाणामाश्रयमास्पदम्, यत्र यस्मिन्ब्रह्मणि धाम्नि विश्व समस्त जगत् निहितम् अर्पितम्, यच्च स्वेन ज्योतिषा भाति शुभ्र शुद्धम्, तमप्येवविधमात्मज्ञ पुरुष ये हि अकामा विभूतितृष्णावर्जिता मुमुक्षव सन्त उपासते परमिव देवम्, ते शुक्र नृबीज यदेतत्प्रसिद्ध शरीरोपादानकारणम् अतिवर्तन्ति अतिगच्छन्ति धीरा बुद्धिमन्त, न पुनर्योनिं प्रसर्पन्ति । 'न पुन क रतिं करोति' इति श्रुते । अतस्त पूजयेदित्यभिप्राय ॥

कामान्यः कामयते मन्यमान.
स कामभिर्जायते तत्र तत्र ।

पर्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामा ॥

मुमुक्षो कामत्याग एव प्रधान साधनमित्येतद्दर्शयति— कामान् य दृष्टादृष्टेष्टविषयान् कामयते मन्यमान तद्गुणाश्चिन्तयान प्रार्थयते, स तै कामभि कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपै सह जायते, तत्र तत्र, यत्र यत्र विषयप्राप्तिनिमित्त कामा कर्मसु पुरुष नियोजयन्ति, तत्र तत्र तषु तेषु विषयषु तैरेव कामैर्वेष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकाम आत्मकामत्वेन परि समन्तत आप्ता कामा यस्य, तस्य पर्याप्तकामस्य कृतात्मन अविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य, तस्य कृतात्मनस्तु इहैव तिष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतव प्रविलीयन्ति प्रविलीयन्ते विलयमुपयान्ति, नश्यन्तीत्यर्थ । कामा तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्राय ॥

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।

**यमेवैष वृणुते तेन लभ्य-**

**स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥**

यद्येव सर्वलाभात्परम आत्मलाभ, तल्लाभाय प्रवचनाद्य उपाया बाहुल्येन कर्तव्या इति प्राप्ते, इदमुच्यते— य अयमात्मा व्याख्यात, यस्य लाभ पर पुरुषार्थ, नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्य । तथा न मेधया ग्रन्थार्थधारणशक्त्या, न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थ । केन तर्हि लभ्य इति, उच्यते— यमेव परमात्मानमेव एष विद्वान् वृणुते प्राप्तुमिच्छति, तेन वरणेन एष पर आत्मा लभ्य, नान्येन साधनान्तरेण, नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इति, उच्यते— तस्य एष आत्मा अविद्यासछन्ना स्वा परा तनूं स्वात्मतत्त्व स्वरूप विवृणुते प्रकाशयति, प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थ । तस्मादन्यत्यागेनात्मप्रार्थनैव आत्मलाभसाधनमित्यर्थ ॥

**नायमात्मा बलहीनेन लभ्यो**

**न च प्रमादात्तपसो वाप्यलिङ्गात् ।**

एतैरुपायैर्यतते यस्तु विद्वा-
स्तस्यैष आत्मा विशते ब्रह्म धाम ॥

आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिङ्गयुक्तानि सन्याससहितानि। यस्मात् न अयमात्मा बलहीनेन बलप्रहीणेनात्मनिष्ठाजनितवीर्यहीनेन लभ्य, नापि लौकिकपुत्रपश्वादिविषयासङ्गनिमित्तात्प्रमादात्, तथा तपसा वापि अलिङ्गात् लिङ्गरहितात्। तपोऽत्र ज्ञानम्, लिङ्ग सन्यास, सन्यासरहिताज्ज्ञानान्न लभ्यत इत्यर्थ। एतै उपायै बलाप्रमादसन्यासज्ञानै यतते तत्पर सन्प्रयतते यस्तु विद्वान्विवेकी आत्मवित्, तस्य विदुष एष आत्मा विशते सप्रविशति ब्रह्म धाम ॥

सप्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः।
ते सर्वग सर्वतः प्राप्य धीरा
युक्तात्मान. सर्वमेवाविशन्ति ॥ ५ ॥

कथं ब्रह्म विशत इति, उच्यते—सप्राप्य समवगम्य एनम् आत्मानम् ऋषय दर्शनवन्त तेनैव ज्ञानेन तृप्ता, न, बा-

ह्येन तृप्तिसाधनेन शरीरोपचयकारणेन । कृतात्मान परमात्मस्वरूपेणैव निष्पन्नात्मान सन्त । वीतरागा विगतरागादिदोषा । प्रशान्ता उपरतेन्द्रिया । ते एवभूता सर्वग सर्वव्यापिनम् आकाशवत् सर्वत सर्वत्र प्राप्य, नोपाधिपरिच्छिन्नेनैकदेशेन, किं तर्हि, तद्ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य धीरा अत्यन्तविवेकिन युक्तात्मानो नित्यसमाहितस्वभावा सर्वमेव समस्त शरीरपातकालेऽपि आविशन्ति भिन्नघटाकाशवदविद्याकृतोपाधिपरिच्छेद जहति । एव ब्रह्मविदो ब्रह्म धाम प्रविशन्ति ॥

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**सन्यासयोगाद्यतय शुद्धसत्त्वा' ।**
**ते ब्रह्मलोकेषु परान्तकाले**
**परामृता परिमुच्यन्ति सर्वे ॥ ६ ॥**

किंच, वेदान्तजनित विज्ञान वेदान्तविज्ञान तस्यार्थ पर आत्मा विज्ञेय, सोऽर्थ सुनिश्चितो येषा ते वेदान्तविज्ञानसुनिश्चितार्था । ते च सन्यासयोगात् सर्वकर्मपरित्यागलक्षणयोगात्केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतय यतनशीला शुद्धसत्त्वा शुद्ध सत्त्व येषा सन्यासयोगात्, ते शुद्धसत्त्वा । ते ब्र-

ह्मलोकेषु , ससारिणा ये मरणकालास्ते अपरान्तकाला , तान पेक्ष्य मुमुक्षूणा ससारावसाने देहपरित्यागकाल परान्तकाल तस्मिन परान्तकाले साधकाना बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद्दृश्यते प्राप्यते च । अतो बहुवचन ब्रह्मलोके ष्विति, ब्रह्मणीत्यर्थ । परामृता परम् अमृतम अमरणधर्मक ब्रह्म आत्मभूत येषा ते परामृता जीवन्त एव ब्रह्मभूता , परामृता सन्त परिमुच्यन्ति परि समन्तात्प्रदीपनिर्वाणवद्भिन्नघटाकाशवच्च निवृत्तिमुपयान्ति परिमुच्यन्ति परि सम न्तान्मुच्यन्ते सर्वे, न देशान्तर गन्तव्यमपेक्षन्ते । 'शकु नीनामिवाकाशे जले वारिचरस्य वा । पद यथा न दृश्येत तथा ज्ञानवता गति ' 'अनध्वगा अध्वसु पारयिष्णव ' इति श्रुतिस्मृतिभ्याम, देशपरिच्छिन्ना हि गति ससारविषयैव, परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् । यदि हि देशपरिच्छिन्न ब्रह्म स्यात , मूर्तद्रव्यवदाद्यन्तवदन्याश्रित सावयवमनित्य कृतक च स्यात् । न त्वेवविध ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितु युक्ता ॥

**गता: कला. पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु ।**

**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

अपि च, अविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविद , न तु कार्यभूतम् । किंच, मोक्षकाले या देहार म्भिका कला प्राणाद्या , ता स्वा प्रतिष्ठा गता स्व स्व कारण गता भवन्तीत्यर्थ । प्रतिष्ठा इति द्विती याबहुवचनम् । पञ्चदश पञ्चदशसंख्याका या अन्त्यप्रश्न-परिपठिता प्रसिद्धा , देवाश्च देहाश्रयाश्चक्षुरादिकरणस्था सर्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थ । यानि च मुमुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि, प्रवृत्तफलानामुपभो-गेनैव क्षीणत्वात् । विज्ञानमयश्चात्मा अविद्याकृतबुद्ध्या द्युपाधिमात्मत्वेन गत्वा जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्मणा तत्फलार्थत्वात्सह तेनैव विज्ञान-मयेनात्मना, अतो विज्ञानमयो विज्ञानप्राय । त एते कर्माणि विज्ञानमयश्च आत्मा उपाध्यपनये सति परे अव्यये अनन्तेऽक्षये ब्रह्मणि आकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽन-परेऽनन्तरेऽबाह्येऽद्वये शिवे शान्ते सर्वे एकीभवन्ति अवि-शेषता गच्छन्ति एकत्वमापद्यन्ते जलाद्याधारापनय इव सू-

र्यादिप्रतिबिम्बा सूर्ये, घटाद्यपनय इवाकाशे घटाद्या-
काशा ॥

यथा नद्य स्यन्दमाना' समुद्रे-
ऽस्त गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्त
परात्पर पुरुषमुपैति दिव्यम् ॥ ८ ॥

किंच, यथा नद्य गङ्गाद्या स्यन्दमाना गच्छन्त्य समुद्रे
समुद्र प्राप्य अस्तम अदर्शनमविशेषात्मभाव गच्छन्ति प्राप्नु-
वन्ति नाम च रूप च नामरूपे विहाय हित्वा, तथा अवि-
द्याकृतनामरूपात् विमुक्त सन् विद्वान् परात् अक्षरात्पूर्वो
क्तात पर दिव्य पुरुष यथोक्तलक्षणम उपैति उपगच्छति ॥

स यो ह वै तत्परम ब्रह्म वेद
ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति ।
तरति शोक तरति पाप्मान
गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

ननु श्रेयस्यनेके विघ्ना प्रसिद्धा , अत क्लेशानामन्यतम-
नान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्या गतिं मृतो

गच्छति न ब्रह्मैव, न, विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वात्। अविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्ध, नित्यत्वादात्मभूतत्वाच्च। तस्मात् स य कश्चित् ह वै लोके तत् परम ब्रह्म वेद साक्षादहमेवास्मीति जानाति, स नान्या गतिं गच्छति। देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम्, आत्मा ह्येषा स भवति। तस्माद्ब्रह्म विद्वान् ब्रह्मैव भवति। किंच, न अस्य विदुष अब्रह्मवित् कुले भवति, किंच, तरति शोकम् अनेकेष्टवैकल्यनिमित्त मानस सताप जीव न्नेवातिक्रान्तो भवति। तरति पाप्मान धर्माधर्माख्य गुहाग्रन्थिभ्य हृदयाविद्याग्रन्थिभ्य विमुक्त सन मृत भवतीत्युक्तमेव 'भिद्यते हृदयग्रन्थि' इत्यादि ॥

**तदेतदृचाभ्युक्तम्—**

**क्रियावन्त' श्रोत्रिया ब्रह्मनिष्ठा**
**स्वय जुह्वत एकर्षि श्रद्धयन्त ।**
**तेषामेवैता ब्रह्मविद्या वदेत**
**शिरोव्रत विधिवद्यैस्तु चीर्णम् ॥ १० ॥**

अथेदानीं ब्रह्मविद्यासप्रदानविध्युपप्रदर्शनेनोपसहार क्रियते—तदेतत् विद्यासप्रदानविधानम् ऋचा मन्त्रेण अभ्यु-

क्तम् अभिप्रकाशितम् । क्रियावन्त यथोक्तकर्मानुष्ठानयुक्ता । श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ता पर ब्रह्म बुभुत्सव स्वयम् एकर्षिम् एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्त श्रद्दधाना सन्त ये, तेषामेव सस्कृतात्मना पात्रभूतानाम् एता ब्रह्मविद्या वदेत ब्रूयात् शिरोव्रत शिरस्यग्निधारणलक्षणम् । यथा आथर्वणाना वेदव्रत प्रसिद्धम् । यैस्तु यैश्च तत् चीर्णं विधिवत् यथाविधान तेषामेव वदेत ॥

**तदेतत्सत्यमृषिराङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते । नम परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥**

तदेतत् अक्षर पुरुष सत्यम् ऋषि अङ्गिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच । तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थ । न एतत् ग्रन्थरूपम् अचीर्णव्रत अचरितव्रतोऽपि अधीते न पठति, चीर्णव्रतस्य हि विद्या फलाय सस्कृता भवतीति । समाप्ता ब्रह्मविद्या, सा येभ्यो ब्रह्मादिभ्य पारम्पर्यक्रमेण सप्राप्ता, तेभ्यो नम परमऋषिभ्य । परम

ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च, ते परमर्षय तेभ्यो भूयोऽपि नम । द्विर्वचनमत्यादरार्थं मुण्डकसमाप्त्यर्थं च ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
मुण्डकोपनिषद्भाष्य सपूर्णम् ॥

ॐ

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ ॐ ॥

# माण्डूक्योपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः
विरचितम् ।



ॐ

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## सगौडपादीयकारिका

# ॥ माण्डूक्योपनिषत् ॥

### श्रीमच्छङ्करभगवत्पादविरचितेन
### भाष्येण सहिता ॥

प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोका
 भुक्त्वा भोगान्स्थविष्ठान्पुनरपि धिषणोद्भासितान्कामजन्यान्
पीत्वा सर्वान्विशेषान्स्वपिति मधुरभुङ्मायया भोजयन्नो
 मायासंख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥

यो विश्वात्मा विधिजविषयान्प्राश्य भोगान्स्थविष्ठा
 न्पश्चाच्चान्यान्स्वमतिविभवाञ्ज्योतिषा स्वेन सूक्ष्मान् ।
सर्वानेतान्पुनरपि शनैः स्वात्मनि स्थापयित्वा
 हित्वा सर्वान्विशेषान्विगतगुणगणः पात्वसौ नस्तुरीयः ॥ २

# आगमप्रकरणम् ॥

ओमित्येतदक्षरमिद सर्वं तस्योपव्याख्यानम् । वेदान्तार्थसारसग्रहभूतमिद प्रकरणचतुष्टयम् ओमित्येतदक्षरमित्यादि आरभ्यते । अत एव न पृथक् सबन्धाभिधेयप्रयोजनानि वक्तव्यानि । यान्येव तु वेदान्ते सबन्धाभिधेयप्रयोजनानि, तान्येवेहापि भवितुमर्हन्ति, तथापि प्रकरणव्याचिख्यासुना सक्षेपतो वक्तव्यानीति मन्यन्ते व्याख्यातार । तत्र प्रयोजनवत्साधनाभिव्यञ्जकत्वेनाभिधेयसबद्ध शास्त्र पारम्पर्येण विशिष्टसबन्धाभिधेयप्रयोजनवद्भवति । किं पुनस्तत्प्रयोजनमिति, उच्यते—रोगार्तस्येव रोगनिवृत्तौ स्वस्थता, तथा दु खात्मकस्यात्मनो द्वैतप्रपञ्चोपशमे स्वस्थता, अद्वैतभाव प्रयोजनम् । द्वैतप्रपञ्चस्य चाविद्याकृतत्वाद्विद्यया तदुपशम स्यादिति ब्रह्मविद्याप्रकाशनाय अस्यारम्भ क्रियते । 'यत्र हि द्वैतमिव भवति' 'यत्र वान्यदिव स्यात्तत्रान्योऽन्य-

त्पश्येदन्योऽन्यद्विजानीयात्' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयात्' इत्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः । तत्र तावदोंकारनिर्णयाय प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम् । यस्य द्वैतप्रपञ्चस्योपशमे अद्वैतप्रतिपत्तिः रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिः, तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम् । तथा अद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ, युक्तितस्तथात्वप्रतिपादनाय तृतीयं प्रकरणम् । अद्वैतस्य तथात्वप्रतिपत्तिविपक्षभूतानि यानि वादान्तराण्यवैदिकानि सन्ति, तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम् ॥

**ओमित्येतदक्षरमिदँ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ॥ १ ॥**

कथं पुनरोंकारनिर्णय आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इति, उच्यते—'ओमित्येतत्' 'एतदालम्बनम्' 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः । तस्माद्विद्वानेतेनै

वायतनेनैकतरमन्वेति' 'ओमित्यात्मानं युञ्जीत' 'ओमिति ब्रह्म' 'ओंकार एवेदं सर्वम्' इत्यादिश्रुतिभ्यः । रज्ज्वादिरिव सर्पादिविकल्पस्यास्पदमद्वय आत्मा परमार्थतः सन्प्राणादिविकल्पस्यास्पदं यथा, तथा सर्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषय ओंकार एव । स चात्मस्वरूपमेव, तदभिधायकत्वात् । ओंकारविकारशब्दाभिधेयश्च सर्वः प्राणादिरात्मविकल्पः अभिधानव्यतिरेकेण नास्ति, 'वाचारम्भणं विकारो नामधेयम्' 'तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्, सर्वं हीदं नामनि' इत्यादिश्रुतिभ्यः । अत आह—ओमित्येतदक्षरमिदं सर्वमिति । यदिदम् अर्थजातमभिधेयभूतम्, तस्य अभिधानाव्यतिरेकात्, अभिधानभेदस्य च ओंकाराव्यतिरेकात् ओंकार एवेदं सर्वम् । परं च ब्रह्म अभिधानाभिधेयोपायपूर्वकमवगम्यत इत्योंकार एव । तस्य एतस्य परापरब्रह्मरूपस्याक्षरस्य ओमित्येतस्य उपव्याख्यानम्, ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया विस्पष्टं प्रकथनमुपव्याख्यानम्, प्रस्तुतं वेदितव्यमिति वाक्यशेषः । भूतं भवत् भविष्यत् इति कालत्रयपरिच्छेद्यं यत्, तदपि ओंकार एव, उक्तन्यायतः । यच्च अन्यत् त्रिकालातीतं कार्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि, तदपि ओंकार एव ॥

**सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽय मात्मा चतुष्पात् ॥ २ ॥**

अभिधानाभिधेययोरेकत्वेऽपि अभिधानप्राधान्येन निर्देश कृत 'ओमित्येतदक्षरमिद सर्वम्' इत्यादि । अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देश अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थं । इतरथा हि अभिधानतन्त्राभिधेयप्रतिपत्तिरिति अभिधेयस्याभिधानत्व गौणमित्याशङ्का स्यात् । एकत्वप्रतिपत्तेश्च प्रयोजनमभिधानाभिधेययो — एकेनैव प्रयत्नेन युगपत्प्रविलापयस्तद्विलक्षण ब्रह्म प्रतिपद्येतेति । तथा च वक्ष्यति— 'पादा मात्रा मात्राश्च पादा' इति । तदाह— सर्वं ह्येतद्ब्रह्मेति । सर्वं यदुक्तमोंकारमात्रमिति, तदेतत् ब्रह्म । तच्च ब्रह्म परोक्षाभिहित प्रत्यक्षतो विशेषेण निर्दिशति—अयमात्मा ब्रह्मेति । अयम् इति चतुष्पात्त्वेन प्रविभज्यमान प्रत्यगात्मतयाभिनयेन निर्दिशति अयमात्मेति । सोऽयमात्मा ओंकाराभिधेय परापरत्वेन व्यवस्थित चतुष्पात् कार्षापणवत्, न गौरिव । त्रयाणा विश्वादीना पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधन पादशब्द , तुरीयस्य तु पद्यत इति कर्मसाधन पादशब्द ॥

**जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥**

कथं चतुष्पात्त्वमित्याह—जागरितस्थान इति । जागरितं स्थानमस्येति जागरितस्थानः, बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य, स बहिःप्रज्ञः, बहिर्विषयेव प्रज्ञा यस्याविद्याकृतावभासत इत्यर्थः । तथा सप्त अङ्गान्यस्य, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ' इत्यग्निहोत्राहुतिकल्पनाशेषत्वेनाग्निर्मुखत्वेनाहवनीय उक्त इत्येवं सप्ताङ्गानि यस्य, स सप्ताङ्गः । तथा एकोनविंशतिर्मुखान्यस्य, बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च दश, वायवश्च प्राणादयः पञ्च, मनो बुद्धिरहंकारश्चित्तमिति, मुखानीव मुखानि तानि, उपलब्धिद्वाराणीत्यर्थः । स एवंविशिष्टो वैश्वानरः यथोक्तैर्द्वारैः शब्दादीन्स्थूलान्विषयान्भुङ्क्त इति स्थूलभुक् । विश्वेषां नराणामनेकधा सुखादिनयनाद्विश्वानरः, यद्वा विश्वश्चासौ नरश्चेति विश्वानरः, विश्वानर एव वैश्वानरः, सर्वपिण्डात्मानन्यत्वात्, स प्रथमः पादः । एतत्पूर्वकत्वादुत्तरपादाधिगमस्य प्राथम्यमस्य । कथम् 'अयमात्मा ब्रह्म'

इति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते द्युलोकादीना मूर्धा-द्यङ्गत्वमिति [2] नैष दोष , सर्वस्य प्रपञ्चस्य साधिदैविकस्य अनेनात्मना चतुष्पात्त्वस्य विवक्षितत्वात् । एव च सति सर्वप्रपञ्चोपशमे अद्वैतसिद्धि । सर्वभूतस्थश्च आत्मा एको दृष्ट स्यात्, सर्वभूतानि चात्मनि । 'यस्तु सर्वाणि भूतानि' इत्यादिश्रुत्यर्थश्चैवमुपसहृत स्यात्, अन्यथा हि स्वदेहपरिच्छिन्न एव प्रत्यगात्मा साख्यादिभिरिव दृष्ट स्यात्, तथा च सति अद्वैतमिति श्रुतिकृतो विशेषो न स्यात्, साख्यादिदर्शनेनाविशेषात् । इष्यते च सर्वोपनिषदा सर्वात्मैक्यप्रतिपादकत्वम्, ततो युक्तमेवास्य आध्यात्मिकस्य पिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मनाधिदैविकेनैकत्वमित्यभिप्रेत्य सप्ताङ्गत्ववचनम् । 'मूर्धा ते व्यपतिष्यत्' इत्यादिलिङ्गदर्शनाच्च । विराजैकत्वमुपलक्षणार्थ हिरण्यगर्भाव्याकृतात्मनो । उक्त चैतन्मधुब्राह्मणे— 'यश्चायमस्या पृथिव्या तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मम्' इत्यादि । सुषुप्ताव्याकृतयोस्त्वेकत्व सिद्धमेव, निर्विशेषत्वात् । एव च सत्येतत्सिद्ध भविष्यति— सर्वद्वैतोपशमे चाद्वैतमिति ॥

**स्वप्नस्थानोऽन्तःप्रज्ञ सप्ताङ्ग एकोनविंशतिमुख. प्रविविक्तभुक्तैजसो द्वितीय-**

य. पाद् ॥ ४ ॥

स्वप्न स्थानमस्य तैजसस्येति स्वप्नस्थान । जाग्रत्प्रज्ञा अनेकसाधना बहिर्विषयेवावभासमाना मन स्पन्दनमात्रा सती तथाभूत संस्कार मनस्याधत्ते, तन्मन तथा संस्कृत चित्रित इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभि प्रेर्यमाण जाग्रद्वदवभासते । तथा चोक्तम्— 'अस्य लोकस्य सर्वावतो मात्रामपादाय' इत्यादि । तथा 'परे देवे मनस्येकीभवति' इति प्रस्तुत्य 'अत्रैष देव स्वप्ने महिमानमनुभवति' इत्याथर्वणे । इन्द्रियापेक्षया अन्त स्थत्वान्मनस तद्वासनारूपा च स्वप्ने प्रज्ञा यस्येति अ त प्रज्ञ , विषय शून्यायां प्रज्ञायां केवलप्रकाशस्वरूपायां विषयित्वेन भवतीति तैजस । विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोज्यत्वम्, इह पुन केवला वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोग इति । समानमन्यत् । द्वितीय पाद तैजस ॥

**यत्र सुप्तो न कचन काम कामयते न कचन स्वप्न पश्यति तत्सुषुप्तम् । सुषुप्त स्थान एकीभूत प्रज्ञानघन एवानन्दम-**

**यो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीय पाद ॥ ५ ॥**

दर्शनादर्शनवृत्त्योः स्वापस्य तुल्यत्वात्सुषुप्तग्रहणार्थं यत्र सुप्त इत्यादिविशेषणम् । अथवा, त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षण स्वापोऽविशिष्ट इति पूर्वाभ्या सुषुप्त विभजते—यत्र यस्मिन्स्थाने काले वा सुप्तो न कचन काम कामयते न कचन स्वप्न पश्यति । न हि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षण स्वप्नदर्शन कामो वा कश्चन विद्यते । तदेतत्सुषुप्त स्थानमस्येति सुषुप्तस्थान । स्थानद्वयप्रविभक्त मन स्पन्दित द्वैतजात तथा रूपापरित्यागेनाविवेकापन्न नैशतमोग्रस्तमिवाह सप्रपञ्चमेकीभूतमित्युच्यते । अत एव स्वप्नजाग्रन्मन स्पन्दनानि प्रज्ञानानि घनीभूतानीव, सेयमवस्था अविवेकरूपत्वा त्प्रज्ञानघन उच्यते । यथा रात्रौ नैशेन तमसा अविभज्यमान सर्वं घनमिव, तद्वत्प्रज्ञानघन एव । एवशब्दान्न जात्यन्तर प्रज्ञानव्यतिरेकणास्तीत्यर्थ । मनसो विषयविषय्याकारस्पन्द नायासदु खाभावात् आन दमय आनन्दप्राय , नानन्द एव, अनात्यन्तिकत्वात् । यथा लोके निरायास स्थित सुख्यानन्दभुगुच्यते । अत्यन्तानायासरूपा हीय स्थितिरनेनात्मनानुभूयत इत्यान दभुक्, 'एषोऽस्य परम आनन्द'

इति श्रुते । स्वप्नादिप्रतिबोध चेत प्रति द्वारीभूतत्वात् चेतोमुख , बोधलक्षण वा चेतो द्वार मुखमस्य स्वप्नाद्याग-मन प्रतीति चेतोमुख । भूतभविष्यज्ज्ञातृत्व सर्वविषय-ज्ञातृत्वमस्यैवेति प्राज्ञ । सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते । अथवा, प्रज्ञप्तिमात्रमस्यैव असाधारण रूपमिति प्राज्ञ , इतरयोर्विशिष्टमपि विज्ञानमस्तीति । सोऽय प्राज्ञ स्तृतीय पाद ॥

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्या-म्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥**

एष हि स्वरूपावस्थ सर्वेश्वर साधिदैविकस्य भेदजा तस्य सर्वस्य ईश्वर ईशिता , नैतस्माज्जात्यन्तरभूतोऽन्येषामि-व, 'प्राणबन्धन हि सोम्य मन ' इति श्रुते । अयमेव हि सर्वस्य सर्वभेदावस्थो ज्ञातेति एष सर्वज्ञ । अत एव एष अन्तर्यामी, अन्तरनुप्रविश्य सर्वेषा भूताना यमयिता नि यन्ताप्येष एव । अत एव यथोक्त सभेद जगत्प्रसूयत इति एष योनि सर्वस्य । यत एवम् , प्रभवश्चाप्ययश्च प्रभवा प्ययौ हि भूतानामेष एव ॥

अत्रैते श्लोका भवन्ति—

बहि प्रज्ञो विभुर्विश्वो ह्यन्त प्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थित ॥ १ ॥

अत्र एतस्मिन्यथोक्तेऽर्थे एते श्लोका भवन्ति—बहि प्रज्ञ इति । पर्यायेण त्रिस्थानत्वात् सोऽहमिति स्मृत्या प्रतिसधानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्व शुद्धत्वमसङ्गत्व च सिद्धमित्यभिप्राय , महामत्स्यादिदृष्टान्तश्रुते ॥

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजस ।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥

जागरितावस्थायामेव विश्वादीना त्रयाणामनुभवप्रदर्शनार्थोऽय श्लोक —दक्षिणाक्षीति । दक्षिणमक्ष्येव मुखम् , तस्मिन्प्राधान्येन द्रष्टा स्थूलाना विश्व अनुभूयते, 'इन्धो ह वै नामैष योऽय दक्षिणेऽक्षन्पुरुष' इति श्रुते । इन्धो दीप्तिगुणो वैश्वानर आदित्यान्तर्गतो वैराज आत्मा चक्षुषि च द्रष्टैक । नन्वन्यो हिरण्यगर्भ , क्षेत्रज्ञो दक्षिणेऽक्षिण्यक्ष्णोर्नियन्ता द्रष्टा चान्यो देहस्वामी , न, स्वतो भेदानभ्युपगमात्, 'एको देव सर्वभूतेषु गूढ' इति श्रुते , 'क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत' 'अविभक्त च भू-

तेषु विभक्तमिव च स्थितम्' इति स्मृतेश्च, सर्वेषु करणेष्व विशेषेष्वपि दक्षिणाक्षिण्युपलब्धिपाटवदर्शनात्तत्र विशेषेण निर्देशोऽस्य विश्वस्य। दक्षिणाक्षिगतो दृष्ट्वा रूप निमीलिताक्ष-स्तदेव स्मरन्मनस्यन्त स्वप्न इव तदेव वासनारूपाभिव्यक्त पश्यति। यथा तत्र तथा स्वप्ने, अत मनसि अन्तस्तु तैज सोऽपि विश्व एव। आकाश च हृदि स्मरणाख्यव्यापारोप रमे प्राज्ञ एकीभूतो घनप्रज्ञ एव भवति, मनोव्यापाराभा वात्। दर्शनस्मरणे एव हि मन स्पन्दितम्, तदभावे हृद्येवा-विशेषेण प्राणात्मनावस्थानम्, 'प्राणो ह्येवैतान्सर्वान्सवृङ्क्ते' इति श्रुत। तैजस हिरण्यगर्भ, मन स्थत्वात्, 'लिङ्ग मन' 'मनोमयोऽय पुरुष' इत्यादिश्रुतिभ्य। ननु, व्या कृत प्राण सुषुप्ते, तदात्मकानि करणानि भवन्ति, कथम व्याकृतता? नैष दोष, अव्याकृतस्य देशकालविशेषाभावा-त्। यद्यपि प्राणाभिमाने सति व्याकृततैव प्राणस्य, तथा पि पिण्डपरिच्छिन्नविशेषाभिमाननिरोध प्राणे भवतीत्यव्या कृत एव प्राण सुषुप्ते परिच्छिन्नाभिमानवताम्। यथा प्राण लये परिच्छिन्नाभिमानिना प्राणोऽव्याकृत, तथा प्राणाभि मानिनोऽप्यविशेषापत्तावव्याकृतता समाना, प्रसवबीजात्म कत्व च। तदध्यक्षश्चैकोऽव्याकृतावस्थ। परिच्छिन्नाभिमा

निनामध्यक्षाणा च तनैकत्वमिति पूर्वोक्त विशेषणमेकीभूत प्रज्ञानघन इत्याद्युपपन्नम् । तस्मिन्नेतास्मन्नुक्तहेतुसत्त्वाच्च । कथ प्राणशब्दत्वमव्याकृतस्य[2] 'प्राणबन्धन हि सोम्य मन ' इति श्रुते । ननु, तत्र 'सदेव सोम्य' इति प्रकृत सद्ब्रह्म प्राणशब्दवाच्यम्, नैष दोष, बीजात्मकत्वाभ्युपगमात्सत । यद्यपि सद्ब्रह्म प्राणशब्दवाच्य तत्र, तथापि जीवप्रसवबीजा त्मकत्वमपरित्यज्यैव प्राणशब्दत्व सत सच्छब्दवाच्यता च। यदि हि निर्बीजरूप विवक्षित ब्रह्माभविष्यत्, 'नेति नेति' यतो वाचो निवर्तन्ते' 'अन्यदेव तद्विदितादथो अवि दितादधि' इत्यवक्ष्यत्, 'न सत्तन्नासदुच्यते' इति स्मृते । निर्बीजतयैव चेत्, सति प्रलीनाना सपन्नाना सुषुप्तिप्रलययो पुनरुत्थानानुपपत्ति स्यात्, मुक्ताना च पुनरुत्पत्तिप्रसङ्ग, बीजाभावाविशेषात्, ज्ञानदाह्यबीजाभाव च ज्ञानानर्थक्य-प्रसङ्ग, तस्मात्सबीजत्वाभ्युपगमेनैव सत प्राणत्वव्यप-देश, सर्वश्रुतिषु च कारणत्वव्यपदेश । अत एव 'अक्ष रात्परत पर' 'सबाह्याभ्यन्तरा ह्यज' 'यतो वाचो निवर्तन्ते' 'नेति नेति' इत्यादिना बीजत्वापनयनेन व्यप देश । तामबीजावस्था तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसबन्धजाग्रदादिरहिता पारमार्थिकीं पृथग्वक्ष्यति ।

बीजावस्थापि ‘न किंचिदवेदिषम’ इत्युत्थितस्य प्रत्ययदर्शनाद्देहेऽनुभूयत एवेति त्रिधा देहे व्यवस्थित इत्युच्यते ॥

विश्वो हि स्थूलभुङ् नित्य तैजस प्रविविक्तभुक ।
आनन्दभुक्तथा प्राज्ञस्त्रिधा भोग निबोधत ॥ ३ ॥

स्थूल तर्पयते विश्व प्रविविक्त तु तैजसम् ।
आनन्दश्च तथा प्राज्ञ त्रिधा तृप्तिं निबोधत ॥ ४ ॥

उक्तार्थौ हि श्लोकौ ॥

त्रिषु धामसु यद्भोज्य भोक्ता यश्च प्रकीर्तित. ।
वेदैतदुभय यस्तु स भुञ्जानो न लिप्यते ॥ ५ ॥

त्रिषु धामसु जाग्रदादिषु स्थूलप्रविविक्तानन्दाख्य यद्भोज्यमेक त्रिधाभूतम, यश्च विश्वतैजसप्राज्ञाख्यो भोक्तैक ‘सोऽहम’ इत्येकत्वेन प्रतिसधानात द्रष्टृत्वाविशेषाच्च प्रकीर्तित , या वेद एतदुभय भोज्यभोक्तृतया अनेकधा भिन्नम् , स भुञ्जान न लिप्यते, भोज्यस्य सर्वस्यैकभोक्तृभोज्यत्वात् । न हि यस्य यो विषय , स तेन हीयते वर्धते वा । न ह्यग्नि स्वविषय दग्ध्वा काष्ठादि, तद्वत् ॥

प्रभवः सर्वभावाना सतामिति विनिश्चयः ।
सर्व जनयति प्राणश्चेतोंशून्पुरुष पृथक ॥ ६ ॥

सता विद्यमानाना स्वेन अविद्याकृतनामरूपमायास्वरूपेण सर्वभावाना विश्वतैजसप्राज्ञभेदाना पभव उत्पत्ति । वक्ष्यति च— 'वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते' इति । यदि ह्यसतामेव जन्म स्यात्, ब्रह्मणोऽव्यवहार्यस्य ग्रहणद्वाराभावादसत्त्वप्रसङ्ग । दृष्ट च रज्जुसर्पादीनामविद्याकृतमायाबीजोत्पन्नाना रज्ज्वाद्यात्मना सत्त्वम् । न हि निरास्पदा रज्जुसर्पमृगतृष्णिकादय कचिदुपलभ्यन्ते केनचित् । यथा रज्ज्वा प्राक्सर्पोत्पत्ते रज्ज्वात्मना सर्प सन्नेवासीत्, एव सर्वभावानामुत्पत्ते प्राक्प्राणबीजात्मनैव सत्त्वमिति। श्रुतिरपि वक्ति 'ब्रह्मैवेदम्' 'आत्मैवेदमग्र आसीत्' इति । अत सर्वं जनयति प्राण चेतोशून् अशव इव रवेश्चिदात्मकस्य पुरुषस्य चेतोरूपा जलार्कसमा प्राज्ञतैजसविश्वभेदेन देवमनुष्यातिर्यगादिदेहभेदेषु विभाव्यमानाश्चेतोशवो ये, तान् पुरुष पृथक् सृजति विषयभावविलक्षणानग्निविस्फुलिङ्गवत्सलक्षणान् जलार्कवच्च जीवलक्षणास्त्वितरान्सर्वभावान् प्राणो बीजात्मा जनयति, 'यथोर्णनाभि' 'यथाग्ने क्षुद्रा विस्फुलिङ्गा' इत्यादिश्रुते ॥

**विभूतिं प्रसव त्वन्ये मन्यन्ते सृष्टिचिन्तका ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥**

विभूतिर्विस्तार ईश्वरस्य सृष्टिरिति सृष्टिचिन्तका मन्यन्ते, न तु परमार्थचिन्तकाना सृष्टावादर इत्यर्थ, 'इन्द्रो मायाभि पुरुरूप ईयते' इति श्रुते । न हि मायाविन सूत्रमाकाशे नि क्षिप्य तेन सायुधमारुह्य चक्षुर्गोचरतामतीत्य युद्धेन खण्डशश्छिन्न पतित पुनरुत्थित च पश्यता तत्कृत मायादिसतत्त्वचिन्तायामादरो भवति । तथैवाय मायाविन सूत्रप्रसारणसम सुषुप्तस्वप्नादिविकास, तदारूढमायाविस मश्च तत्स्थप्राज्ञतैजसादि, सूत्रतदारूढाभ्यामन्य परमार्थमायावी । स एव भूमिष्ठो मायाच्छन्न अदृश्यमान एव स्थितो यथा, तथा तुरीयाख्य परमार्थतत्त्वम । अतस्तच्चिन्तायामेवादरो मुमुक्षूणामार्याणाम, न निष्प्रयोजनाया सृष्टावादर इत्यत सृष्टिचिन्तकानामेवैते विकल्पा इत्याह— स्वप्नमायासरूपेति । स्वप्नसरूपा मायासरूपा चेति ॥

इच्छामात्र प्रभो सृष्टिरिति सृष्टौ विनिश्चिता ।
कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तका ॥८॥

इच्छामात्र प्रभो सत्यसकल्पत्वात् सृष्टि घटादीना सकल्पनामात्रम्, न सकल्पनातिरिक्तम । कालादेव सृष्टिरिति केचित ॥

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।**
**देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ ९ ॥**

इति ।

भोगार्थम्, क्रीडार्थमिति च अन्ये सृष्टिं मन्यन्ते । अनयोः पक्षयोर्दूषणं देवस्यैष स्वभावोऽयमिति देवस्य स्वभावपक्षमाश्रित्य, सर्वेषां वा पक्षाणाम्— आप्तकामस्य का स्पृहेति । न हि रज्ज्वादीनामविद्यास्वभावव्यतिरेकेण सर्पाद्याभासत्वे कारणं शक्यं वक्तुम् ॥

**नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञम् । अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥**

चतुर्थः पादः क्रमप्राप्तो वक्तव्य इत्याह—नान्तःप्रज्ञमित्यादिना । सर्वशब्दप्रवृत्तिनिमित्तशून्यत्वात्तस्य शब्दानभिधेयत्वमिति विशेषप्रतिषेधेनैव तुरीयं निर्दिदिक्षति । शून्यमेव तर्हि, तन्न, मिथ्याविकल्पस्य निर्निमित्तत्वानुपपत्तेः, न

हि रजतसर्पपुरुषमृगतृष्णिकादिविकल्पा शुक्तिकारज्जुस्थाणूषरादिव्यतिरेकेण अवस्त्वास्पदा शक्या कल्पयितुम् । एवं तर्हि प्राणादिसर्वविकल्पास्पदत्वात्तुरीयस्य शब्दवाच्यत्वमिति न प्रतिषेधैः प्रत्याय्यत्वमुदकाधारादेरिव घटादेः, न, प्राणादिविकल्पस्यावस्तुत्वाच्छुक्तिकादिष्विव रजतादेः, न हि सदसतोः सबन्धः शब्दप्रवृत्तिनिमित्तभाक्, अवस्तुत्वात्, नापि प्रमाणान्तरविषयत्वं स्वरूपेण गवादिवत्, आत्मनो निरुपाधिकत्वात्, गवादिवन्नापि जातिमत्त्वम्, अद्वितीयत्वेन सामान्यविशेषाभावात्, नापि क्रियावत्त्वं पाचकादिवत्, अविक्रियत्वात्, नापि गुणवत्त्वं नीलादिवत्, निर्गुणत्वात्, अतो नाभिधानेन निर्देशमर्हति । शशविषाणादिसमत्वान्निरर्थकत्वं तर्हि, न, आत्मत्वावगमे तुरीयस्यानात्मतृष्णाव्यावृत्तिहेतुत्वात् शुक्तिकावगम इव रजततृष्णायाः, न हि तुरीयस्यात्मत्वावगमे सति अविद्यातृष्णादिदोषाणां सभवोऽस्ति, न च तुरीयस्यात्मत्वानवगमे कारणमस्ति, सर्वोपनिषदां तादर्थ्येनोपक्षयात्— 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'तत्सत्यं स आत्मा' 'यत्साक्षादपरोक्षाद्ब्रह्म' 'सबाह्याभ्यन्तरो ह्यजः' 'आत्मैवेदं सर्वम्' इत्यादीनाम् । सोऽयमात्मा परमार्थापरमार्थरूपश्चतुष्पादित्युक्तः । तस्यापरमार्थरूपमविद्या

कृत रज्जुसर्पादिसममुक्त पादत्रयलक्षण बीजाङ्कुरस्थानीयम् । अथेदानीमबीजात्मक परमार्थस्वरूप रज्जुस्थानीय सर्पादिस्थानीयोक्तस्थानत्रयनिराकरणेनाह— ना त प्रज्ञमित्यादिना । नन्वात्मनश्चतुष्पात्त्व प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्त प्रज्ञादिभ्योऽन्यत्वे सिद्धे 'नान्त प्रज्ञम्' इत्यादिप्रतिषेधोऽनर्थक , न , सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतिपत्तिवत्त्र्यवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात्, 'तत्त्वमसि' इतिवत् । यदि हि त्र्यवस्थात्मविलक्षण तुरीयमन्यत्, तत्प्रतिपत्तिद्वाराभावात् शास्त्रोपदेशानर्थक्य शून्यतापत्तिर्वा । रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽप्यात्मैक एव अन्त प्रज्ञादित्वेन विकल्प्यते यदा, तदा अन्त प्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेव आत्मन्यनर्थप्रपञ्चनिवृत्तिलक्षण फल परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तर साधनान्तर वा न मृग्यम्, रज्जुसर्पविवेकसमकाल इव रज्ज्वा सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य । येषा पुनस्तमोपनयनव्यतिरेकेण घटाधिगमे प्रमाण व्याप्रियते, तेषा छेद्यावयवसबन्धवियोगव्यतिरेकेण अन्यतरावयवेऽपि छिदिर्व्याप्रियत इत्युक्त स्यात् । यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्त प्रमाणमनुपादित्सिततमो

निवृत्तिफलावसान छिदिरिव च्छेद्यावयवसबन्धविवेककरण प्रवृत्ता तदवयवद्वैधीभावफलावसाना, तदा नान्तरीयक घट-विज्ञान न प्रमाणफलम् । न च तद्वदात्मन्यध्यारोपि-तान्त प्रज्ञत्वादिविवेककरणे प्रवृत्तस्य प्रतिषेधविज्ञानप्रमा-णस्य अनुपादित्सितान्त प्रज्ञत्वादिनिवृत्तिव्यतिरेकेण तुरीये व्यापारोपपत्ति , अन्त प्रज्ञत्वादिनिवृत्तिसमकालमेव प्रमातृ-त्वादिभेदनिवृत्ते । तथा च वक्ष्यति— 'ज्ञाते द्वैत न विद्यते' इति । ज्ञानस्य द्वैतनिवृत्तिक्षणव्यतिरेकेण क्षणा-न्तरानवस्थानात्, अवस्थाने वा अनवस्थाप्रसङ्गाद्द्वैतानि-वृत्ति , तस्मात्प्रतिषेधविज्ञानप्रमाणव्यापारसमकालैव आ त्मन्यध्यारोपितान्त प्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धम् । ना-न्त प्रज्ञमिति तैजसप्रतिषेध , नबहि प्रज्ञमिति विश्वप्रति-षेध , नोभयत प्रज्ञमिति जागरितस्वप्नयोरन्तरालावस्थाप्रति-षेध , नप्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेध , बीजभा-वाविवेकस्वरूपत्वात्, नप्रज्ञमिति युगपत्सर्वविषयज्ञातृत्व-प्रतिषेध , नाप्रज्ञमित्यचैतन्यप्रतिषेध । कथ पुनरन्त प्र-ज्ञत्वादीनामात्मनि गम्यमानाना रज्ज्वादौ सर्पादिवत्प्रति षेधादसत्त्व गम्यत इति, उच्यते, ज्ञस्वरूपाविशेषेऽपि इतरे-तरव्यभिचारादसत्यत्व रज्ज्वादाविव सर्पधारादिविकल्पभेद

वन्, सर्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वम् । सुषुप्ते व्यभिचरतीति चेत्, न, सुषुप्तस्यानुभूयमानत्वात्, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुते , अत एव अदृश्यम । यस्माददृश्यम , तस्मादव्यवहार्यम् । अग्राह्य कर्मेन्द्रियै । अलक्षणम् अलिङ्गमित्येतत्, अननुमेयमित्यर्थ । अत एव अचिन्त्यम् । अत एव अव्यपदेश्य शब्दै । एकात्मप्रत्ययसार जाग्रदादिस्थानेषु एक एवायमात्मा इत्यव्यभिचारी य प्रत्यय , तेनानुसरणीयम्, अथवा, एक आत्मप्रत्यय सार प्रमाण यस्य तुरीयस्याधिगमे, तत्तुरीयमेकात्मप्रत्ययसारम , 'आत्मेत्येवोपासीत' इति श्रुते । अन्त प्रज्ञत्वादिस्थानिधर्मप्रतिषेध कृत । प्रपञ्चोपशमामिति जाग्रदादिस्थानधर्माभाव उच्यते । अत एव शान्तम् अविक्रियम्, शिव यत अद्वैत भेदविकल्परहित चतुर्थं तुरीय मन्यन्ते, प्रतीयमानपादत्रयरूपवैलक्षण्यात् । स आत्मा स विज्ञेय इति । प्रतीयमानसर्पदण्डभूच्छिद्रादिव्यतिरिक्ता यथा रज्जु , तथा 'तत्त्वमसि' इत्यादिवाक्यार्थ आत्मा 'अदृष्टो द्रष्टा' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिभिरुक्तो य , स विज्ञेय इति भूतपूर्वगत्या । ज्ञाते द्वैताभाव ॥

अत्रैते श्लोका भवन्ति—

निवृत्ते सर्वदु खानामीशान प्रभुरव्यय ।
अद्वैत सर्वभावाना देवस्तुर्यो विभुः स्मृत ॥ १० ॥

अत्रैते श्लोका भवन्ति । प्राज्ञतैजसविश्वलक्षणाना सर्वदु खाना निवृत्ते ईशान तुरीय आत्मा । ईशान इत्यस्य पदस्य व्याख्यान प्रभुरिति, दु खनिवृत्तिं प्रति प्रभुर्भवतीत्यर्थ, तद्विज्ञाननिमित्तत्वाद्दु खनिवृत्ते । अव्यय न व्येति, स्वरूपान्न व्यभिचरति न न्यवत इत्येतत् । कुत ? यस्मात् अद्वैत, सर्वभावानाम्—सर्पादीना रज्जुरद्वया सत्या च, एव तुरीय, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुते – अतो रज्जुसर्पवन्मृषात्वात् । स एष देव द्योतनात् तुर्ये चतुर्थ विभु व्यापी स्मृत ॥

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यत ॥

विश्वादीना सामान्यविशेषभावो निरूप्यते तुर्ययाथात्म्यावधारणार्थम्—कार्यं क्रियत इति फलभाव, कारण करोतीति बीजभाव । तत्त्वाग्रहणान्यथाग्रहणाभ्या बीजफलभावाभ्या तौ यथोक्तौ विश्वतैजसौ बद्धौ सगृहीतौ इष्येते । प्राज्ञस्तु बीजभावेनैव बद्ध । तत्त्वाप्रतिबोधमात्रमेव हि बीज

प्राज्ञत्वे निमित्तम् । तत द्वौ तौ बीजफलभावौ तत्त्वाग्रहणा-न्यथाग्रहणे तुरीये न सिध्यत न विद्येते, न सभवत इत्यर्थ ॥

नात्मान न पर चैव न सत्य नापि चानृतम् ।
प्राज्ञः किंचन सवेत्ति तुर्य तत्सर्वदृक्सदा ॥ १२ ॥

कथ पुन कारणबद्धत्व प्राज्ञस्य तुरीये वा तत्त्वाग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति? यस्मात्—आत्मानम्, विलक्षणम, अविद्याबीजप्रसूत वेद्य बाह्य द्वैतम्—प्राज्ञो न किंचन सवेत्ति, यथा विश्वतैजसौ, ततश्चासौ तत्त्वाग्रहणेन तमसा अन्यथाग्रहणबीजभूतेन बद्धो भवति । यस्मात् तुर्यं तत्सर्वदृक्सदा तुरीयादन्यस्याभावात् सर्वदा सदैव भवति, सर्वं च तद्दृक्चेति सर्वदृक्, तस्मान्न तत्त्वाग्रहणलक्षण बीजम् । तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभाव । न हि सवितरि सदाप्रकाशात्मके तद्विरुद्धमप्रकाशनमन्यथाप्रकाशन वा सभवति, 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुते । अथवा, जाग्रत्स्वप्नयो सर्वभूतावस्थः सर्ववस्तुदृगाभासस्तुरीय एवेति सर्वदृक्सदा, 'नान्यदतोऽस्ति द्रष्टृ' इत्यादिश्रुते ॥

द्वैतस्याग्रहण तुल्यमुभयो प्राज्ञतुर्ययोः ।
बीजनिद्रायुत' प्राज्ञः सा च तुर्ये न विद्यते ॥ १३ ॥

निमित्तान्तरप्राप्ताशङ्कानिवृत्त्यर्थोऽय श्लोक —कथ द्वैताग्रहणस्य तुल्यत्व कारणबद्धत्व प्राज्ञस्यैव, न तुरीयस्येति प्राप्ता आशङ्का निवर्त्यते, यस्मात् बीजनिद्रायुत, तत्त्वाप्रतिबोधो निद्रा, सैव च विशेषप्रतिबोधप्रसवस्य बीजम्, सा बीजनिद्रा, तया युत प्राज्ञ । सदासर्वदृक्स्वभावत्वात्तत्त्वाप्रतिबोधलक्षणा बीजनिद्रा तुर्ये न विद्यते, अतो न कारणबन्धस्तस्मिन्नित्यभिप्राय ॥

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्न तुर्ये पश्यन्ति निश्चिता ॥

स्वप्न अन्यथाग्रहण सर्प इव रज्ज्वाम्, निद्रोक्ता तत्त्वाप्रतिबोधलक्षण तम इति, ताभ्या स्वप्ननिद्राभ्या युतौ विश्वतैजसौ, अतस्तौ कार्यकारणबद्धावित्युक्तौ । प्राज्ञस्तु स्वप्नवर्जितया केवलयैव निद्रया युत इति कारणबद्ध इत्युक्तम् । नोभय पश्यन्ति तुरीय निश्चिता ब्रह्मविद इत्यर्थ, विरुद्धत्वात्सवितरीव तम । अतो न कार्यकारणबद्ध इत्युक्तस्तुरीय ॥

अन्यथा गृह्णत• स्वप्नो निद्रा तत्त्वमजानत• ।
विपर्यासे तयो• क्षीणे तुरीय पदमश्नुते ॥ १५ ॥

कदा तुरीये निश्चितो भवतीत्युच्यते— स्वप्नजागरितयो अन्यथा रज्ज्वा सर्पवत् गृह्णत तत्त्व स्वप्नो भवति, निद्रा तत्त्वमजानत तिसृष्ववस्थासु तुल्या । स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम् । अ यथाग्रहणप्राधान्याच्च गुणभूता निद्रेति तस्मिन्विपर्यास स्वप्न । तृतीये तु स्थाने तत्त्वाग्रहणलक्षणा निद्रैव केवला विपर्यास । अत तयो कार्यकारणस्थानयो अन्यथाग्रहणतत्त्वाग्रहणलक्षणविपर्यासे कार्यकारणबन्धरूप परमार्थतत्त्वप्रतिबोधत क्षीणे तुरीय पदमश्नुते, तदा उभयलक्षण बन्धन तत्रापश्यस्तुरीये निश्चितो भवतीत्यर्थ ॥

अनादिमायया सुप्तो यदा जीव प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥ १६ ॥

योऽय ससारी जीव, स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना, अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वापेन, ममाय पिता पुत्रोऽय नप्ता क्षेत्र गृह पशव, अहमेषा स्वामी सुखी दु खी क्षयितोऽहमनेन वर्धितश्चानेन इत्येवप्रकारान्स्वप्नान् स्थानद्वयेऽपि पश्यन्सुप्त, यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा 'नास्येव त्व हेतुफलात्मक, किंतु तत्त्वमसि' इति प्रति-

बोध्यमान , तदैव प्रतिबुध्यते । कथम्? नास्मिन्बाह्यमाभ्य-न्तरं वा जन्मादिभावविकारोऽस्ति, अत अजम् 'सबाह्या-भ्यन्तरो ह्यज ' इति श्रुते , सर्वभावविकारवर्जितमित्यर्थ । यस्माज्जन्मादिकारणभूतम , नास्मिन्नविद्यातमोबीज निद्रा विद्यत इति अनिद्रम , अनिद्र हि तत्तुरीयम , अत एव अस्वप्नम् , तन्निमित्तत्वादन्यथाग्रहणस्य । यस्माच्च अनि-द्रमस्वप्नम् , तस्मादजम् अद्वैत तुरीयमात्मान बुध्यते तदा ॥

**प्रपञ्चो यदि विद्येत निवर्तेत न संशय. ।**
**मायामात्रमिद द्वैतमद्वैत परमार्थत ॥ १७ ॥**

प्रपञ्चनिवृत्त्या चेत्प्रतिबुध्यते, अनिवृत्ते प्रपञ्चे कथ मद्वैतमिति, उच्यते । सत्यमेव स्यात्प्रपञ्चो यदि विद्येत , रज्ज्वा सर्प इव कल्पितत्वान्न तु स विद्यते । विद्यमान-श्चेत् निवर्तेत, न सशय । न हि रज्ज्वा भ्रान्तिबुद्धया क-ल्पित सर्पो विद्यमान सन्विवकतो निवृत्त , न च माया मायाविना प्रयुक्ता तद्दर्शिना चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता, तथेद प्रपञ्चाख्य मायामात्र द्वैतम् , रज्जु-वन्मायाविवच्च अद्वैत परमार्थत , तस्मान्न कश्चित्प्रपञ्च प्रवृत्तो निवृत्तो वास्तीत्यभिप्राय ॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥

ननु शास्ता शास्त्रं शिष्य इत्ययं विकल्पः कथं निवृत्त इति, उच्यते— विकल्पो विनिवर्तेत यदि केनचित्कल्पितः स्यात् । यथा अयं प्रपञ्चो मायारज्जुसर्पवत्, तथा अयं शिष्यादिभेदविकल्पोऽपि प्राक्प्रतिबोधादेवोपदेशनिमित्तः, अत उपदेशादयं वादः—शिष्यः शास्ता शास्त्रमिति । उपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे, द्वैतं न विद्यते ॥

सोऽयमात्माध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

अभिधेयप्राधान्येन ओंकारश्चतुष्पादात्मेति व्याख्यातो यः, सोऽयम् आत्मा अध्यक्षरम् अक्षरमधिकृत्य अभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम् । किं पुनस्तदक्षरमित्याह— ओंकारः । सोऽयमोंकारः पादशः प्रविभज्यमानः, अधिमात्रं मात्रामधिकृत्य वर्तत इत्यधिमात्रम् । कथम्? आत्मनो ये पादाः, ते ओंकारस्य मात्राः । कास्ताः? अकार उकारो मकार इति ॥

**जागरितस्थानो वैश्वानरोऽकारः प्रथ-मा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वा-न्कामानादिश्च भवति य एवं वेद ॥ ९ ॥**

तत्र विशेषनियमः क्रियते—जागरितस्थानो वैश्वानरो यः, स ओंकारस्याकारः प्रथमा मात्रा। केन सामान्येनेत्याह—आप्तेः, आप्तिर्व्याप्तिः, अकारेण सर्वा वाग्व्याप्ता, 'अकारो वै सर्वा वाक्' इति श्रुतेः। तथा वैश्वानरेण जगत्, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिश्रुतेः। अभिधानाभिधेययोरेकत्वं चावोचाम। आदिरस्य विद्यत इत्यादिमत्, यथैवादिमदकाराख्यमक्षरम्, तथा वैश्वानरः, तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य। तदेकत्वविदः फलमाह—आप्नोति ह वै सर्वान्कामान्, आदिः प्रथमश्च भवति महताम्, य एवं वेद, यथोक्तमेकत्वं वेदेत्यर्थः॥

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञा-नसंततिं समानश्च भवति नास्याब्रह्मवि-त्कुले भवति य एवं वेद ॥ १० ॥**

स्वप्नस्थान तैजस य, स ओकारस्य उकार द्वितीया मात्रा । केन सामान्येनेत्याह— उत्कर्षात्, अकारादुत्कृष्ट इव ह्युकार तथा तैजसो विश्वात् । उभयत्वाद्वा, अकार-मकारयोर्मध्यस्थ उकार तथा विश्वप्राज्ञयोमध्ये तैजस, अत उभयभाक्त्वसामान्यात् । विद्वत्फलमुच्यते— उत्कर्षति ह वै ज्ञानसततिं विज्ञानसततिं वर्धयतीत्यर्थ, समान तुल्यश्च, मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति, अब्रह्मविच्च अस्य कुले न भवति, य एव वेद ॥

**सुषुप्तस्थान॰ प्राज्ञो मकारस्तृतीया मा-त्रा मितेरपीतेर्वा मिनोति ह वा इद॰ सर्वमपीतिश्च भवति य एव वेद ॥ ११ ॥**

सुषुप्तस्थान प्राज्ञ य, स ओकारस्य मकार तृतीया मात्रा । केन सामान्येनेत्याह— सामान्यमिदमत्र—मिते, मितिर्मानम, मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्यो प्रवेशनिर्गमाभ्या प्रस्थेनेव यवा, तथा ओकारसमाप्तौ पुन प्रयोगे च प्रविश्य निर्गच्छत इव अकारोकारौ मकार । अपीतेर्वा, अपीतिरप्यय एकीभाव, ओकारोच्चारणे हि अन्त्येऽक्षरे एकीभूताविव अकारोकारौ, तथा वि

श्वतैजसौ सुषुप्तकाले प्राज्ञे । अतो वा सामान्यादेकत्व प्राज्ञम कारयो । विद्वत्फलमाह—मिनोति ह वै इद सर्वम्, जग याथात्म्य जानातीत्यर्थ , अपीतिश्च जगत्कारणात्मा च भव तीत्यथ । अत्रावान्तरफलवचन प्रधानसाधनस्तुत्यर्थम् ॥

अत्रैते श्लोका भवन्ति—

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १९ ॥**

अत्र एते श्लोका भवन्ति । विश्वस्य अत्वम अकारमा त्रत्व यदा विवक्ष्यते तदा आदित्वसामान्यम् उक्तन्यायेन उत्कटम उद्भूत दृश्यत इत्यर्थ । अत्वविवक्षायामित्यस्य व्याख्यानम—मात्रासम्प्रतिपत्तौ इति । विश्वस्य अकारमात्र त्व यदा सम्प्रतिपद्यते इत्यर्थ । आप्तिसमान्यमेव च, उत्क टमित्यनुवर्तते, च-शब्दात् ॥

**तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम् ।**
**मात्रासम्प्रतिपत्तौ स्यादुभयत्व तथाविधम् ॥ २० ॥**

तैजसस्य उत्वविज्ञाने उकारत्वविवक्षायाम् उत्कर्षो दृ-श्यते स्फुट स्पष्टमित्यर्थ । उभयत्व च स्फुटमेवेति । पूर्व-वत्सर्वम् ॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥ २१ ॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्ये इत्यर्थः ॥

त्रिषु धामसु यस्तुल्यं सामान्यं वेत्ति निश्चितः ।
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥

यथोक्तस्थानत्रये यः तुल्यमुक्तं सामान्यं वेत्ति, एवमेवैतदिति निश्चितः मनः स पूज्यः वन्द्यश्च ब्रह्मवित् लोके भवति ॥

अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ २३ ॥
इति ।

यथोक्तैः सामान्यैः आत्मपादाना मात्राभिः सह एकत्वं कृत्वा यथोक्तोंकारं प्रतिपद्यते यो ध्यायी, तम् अकारः नयते विश्वं प्रापयति । अकारालम्बनमोंकारं विद्वान्वैश्वानरो भवतीत्यर्थः । तथा उकारः तैजसम्, मकारश्चापि पुनः प्राज्ञम्, च शब्दान्नयत इत्यनुवर्तते । क्षीणे तु मकारे बीजभावक्षयात् अमात्रे ओंकारे गतिः न विद्यते कचिदित्यर्थः ॥

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनात्मानं य एवं वेद ॥ १२ ॥**

**इति माण्डूक्योपनिषत्समाप्ता ॥**

अमात्रः मात्रा यस्य न सन्ति, स अमात्रः ओंकारः चतुर्थः तुरीय आत्मैव केवलः अभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वात् अव्यवहार्यः, प्रपञ्चोपशमः शिवः अद्वैतः संवृत्तः एवं यथोक्तविज्ञानवता प्रयुक्त ओंकारस्त्रिमात्रस्त्रिपाद आत्मैव, संविशति आत्मना स्वेनैव स्वं पारमार्थिकमात्मानम्, य एवं वेद, परमार्थदर्शनात् ब्रह्मवित् तृतीयं बीजभावं दग्ध्वा आत्मानं प्रविष्ट इति न पुनर्जायते, तुरीयस्याबीजत्वात्। न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पः बुद्धिसंस्कारात्पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति। मन्दमध्यमधिया तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां संन्यासिनां मात्राणां पादानां च क्लृप्तसामान्यविदां यथावदुपास्यमान ओंकारो ब्रह्मप्रतिपत्तये आलम्बनीभवति। तथा च वक्ष्यति— 'आश्रमास्त्रिविधाः' इत्यादि ॥

अत्रैते श्लोका भवन्ति—

ओंकार पादशो विद्यात्पादा मात्रा न सशय ।
ओंकारं पादशो ज्ञात्वा न किंचिदपि चिन्तयेत् ॥२४॥

पूर्ववदत्रैते श्लोका भवन्ति । यथोक्तै सामान्यै पादा एव मात्रा, मात्राश्च पादा, तस्मात् ओंकार पादश विद्यात् इत्यर्थ । एवमोकारे ज्ञाते दृष्टार्थमदृष्टार्थ वा न किंचिदपि प्रयोजन चिन्तयेत्, कृतार्थत्वादित्यर्थ ॥

युञ्जीत प्रणवे चेत प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भय विद्यते कचित् ॥ २५ ॥

युञ्जीत समादध्यात् यथाव्याख्याते परमार्थरूपे प्रणवे चेत मन, यस्मात्प्रणव ब्रह्म निर्भयम्, न हि तत्र सदा-युक्तस्य भय विद्यते कचित्, 'विद्वान्न बिभेति कुतश्चन' इति श्रुते ॥

प्रणवो ह्यपर ब्रह्म प्रणवश्च पर स्मृत' ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्यय ॥ २६ ॥

परापरे ब्रह्मणी प्रणव, परमार्थत क्षीणेषु मात्रापादेषु पर एवात्मा ब्रह्म इति, न पूर्व कारणमस्य विद्यत इत्यपूर्व, नास्य अन्तर भिन्नजातीय किंचिद्विद्यत इति अनन्तर, तथा

बाह्यमन्यत न विद्यत इत्यबाह्य , अपर कार्यमस्य न विद्यत इत्यनपर, सबाह्याभ्यन्तरो ह्यज सैन्धवघनवत्प्रज्ञानघन इत्यर्थ ॥

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एव हि प्रणव ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥

आदिमध्यान्ता उत्पत्तिस्थितिप्रलया सर्वस्य प्रणव एव । मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादय , एव हि प्रणवमात्मान मायाव्यादिस्थानीय ज्ञात्वा तत्क्षणादेव तदात्मभाव व्यश्नुत इत्यथ ॥

प्रणव हीश्वर विद्यात्सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोकारं मत्वा धीरो न शोचति ॥ २८ ॥

सर्वस्य प्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये स्थितमीश्वर प्रणव विद्यात् सर्वव्यापिन व्योमवत् ओकारमात्मानमससारिण धीर धीमान्बुद्धिमान् आत्मतत्त्व मत्वा ज्ञात्वा न शोचति, शोकनिमित्तानुपपत्ते , 'तरति शोकमात्मवित्' इत्यादिश्रुतिभ्य ॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशम शिव ।
ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ २९ ॥

अमात्र तुरीय ओंकार, मीयते अनयेति मात्रा परिच्छित्ति, सा अनन्ता यस्य स अनन्तमात्र नैतावत्त्वमस्य परिच्छेत्तु शक्यत इत्यर्थ । सर्वद्वैतोपशमत्वादेव शिव । ओंकारो यथाव्याख्यातो विदितो येन, स एव परमार्थतत्त्वस्य मननान्मुनि, नेतरो जन शास्त्रविदपीत्यर्थ ॥

इति प्रथममागमप्रकरण सपूर्णम् ॥



# वैतथ्यप्रकरणम् ॥

वैतथ्य सर्वभावाना स्वप्न आहुर्मनीषिण ।
अन्त स्थानात्तु भावाना सवृतत्वेन हेतुना ॥ १ ॥

ज्ञाते द्वैत न विद्यते' इत्युक्तम् 'एकमेवाद्वितीयम् इत्यादिश्रुतिभ्य । आगममात्र तत् । तत्र उपपत्त्यापि द्वैतस्य वैतथ्य शक्यतेऽवधारयितुमिति द्वितीय प्रकरणमारभ्यते— वैतथ्यमित्यादिना । वितथस्य भावा वैतथ्यम्, असत्यत्व मित्यर्थ । कस्य? सर्वेषा बाह्याध्यात्मिकाना भावाना पदार्थाना स्वप्ने उपलभ्यमानानाम्, आहु कथयन्ति मनीषिण प्रमाणकुशला । वैतथ्ये हेतुमाह— अन्त स्थानात्, अन्त शरीरस्य मध्ये स्थान येषाम्, तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादय, न बहि शरीरात्, तस्मात् ते वितथा भवितुमर्हन्ति । ननु अपवरकाद्यन्तरुपलभ्यमानैर्घटादिभि-रनैकान्तिको हेतुरित्याशङ्क्याह— सवृतत्वेन हेतुनेति । अन्त सवृतस्थानादित्यर्थ । न ह्यन्त सवृते देहान्तर्नाडीषु पर्वतहस्त्यादीना सभवोऽस्ति, न हि देहे पर्वतोऽस्ति ॥

अदीर्घत्वाच्च कालस्य गत्वा देहान्न पश्यति ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ २ ॥

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धम्, यस्मात्प्राच्येषु सुप्त उदक्षु स्वप्नान्पश्यन्निव दृश्यत इत्येतदाशङ्क्याह— न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान्पश्यति, यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान्पश्यन्निव दृश्यते, न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति, अतः अदीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति । किंच, प्रतिबुद्धश्च वै सर्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते । यदि च स्वप्ने देशान्तरं गच्छेत्, यस्मिन्देशे स्वप्नान्पश्येत्, तत्रैव प्रतिबुध्येत । न चैतदस्ति । रात्रौ सुप्तः अहनीव भावान्पश्यति, बहुभिः संगतो भवति, यैश्च संगतः स तैर्गृह्येत, न च गृह्यते, गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः, न चैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।
वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥ ३ ॥

इतश्च स्वप्नदृश्या भावा वितथाः, यतः अभावश्च

रथादीना स्वप्नदृश्याना श्रूयते, न्यायपूर्वक युक्तित श्रुतौ 'न तत्र रथा' इत्यत्र । तेन अन्त स्थानसवृतत्वादि हेतुना प्राप्त वैतथ्य तदनुवादिन्या श्रुत्या स्वप्ने स्वयज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहु ब्रह्मविद ॥

अन्त स्थानात्तु भेदाना तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने सवृतत्वेन भिद्यते ॥ ४ ॥

जाग्रद्दृश्याना भावाना वैतथ्यमिति प्रतिज्ञा । दृश्यत्वादिति हेतु । स्वप्नदृश्यभाववदिति दृष्टान्त । यथा तत्र स्वप्ने दृश्याना भावाना वैतथ्यम्, तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनय । तस्माज्जागरितेऽपि वैतथ्य स्मृतमिति निगमनम् । अन्त स्थानात्सवृतत्वेन च स्वप्नदृश्याना भावाना जाग्रद्दृश्येभ्यो भेद । दृश्यत्वमसत्यत्व चाविशिष्टमुभयत्र ॥

स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिण ।
भेदाना हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥

प्रसिद्धेनैव भेदाना ग्राह्यत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाहुर्विवेकिन इति पूर्वप्रमाणसिद्धस्यैव फलम् ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥

इतश्च वैतथ्य जाग्रद्दृश्याना भेदानाम् आद्यन्तयोरभावात्, यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि, तन्मध्येऽपि नास्तीति निश्चित लोके, तथेमे जाग्रद्दृश्या भेदा आद्यन्तयोरभावात् वितथैरेव मृगतृष्णिकादिभि सदृशत्वाद्वितथा एव, तथापि अवितथा इव लक्षिता मूढैरनात्मविद्भि ॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मदाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृता ॥ ७ ॥

स्वप्नदृश्यवज्जागरितदृश्यानामप्यसत्त्वमिति यदुक्तम्, तदयुक्तम्, यस्माज्जाग्रद्दृश्या अन्नपानवाहनादय क्षुत्पिपासादिनिवृत्तिं कुर्वन्तो गमनागमनादि कार्यं च सप्रयोजना दृष्टा । न तु स्वप्नदृश्याना तदस्ति । तस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्व मनोरथमात्रमिति । तन्न । कस्मात्? यस्माद्या सप्रयोजनता दृष्टा अन्नपानादीनाम्, सा स्वप्ने विप्रतिपद्यते । जागरिते हि भुक्त्वा पीत्वा च तृप्तो विनिवर्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोपोषितमभुक्तवन्तमात्मान मन्यते, यथा स्वप्ने भुक्त्वा पीत्वा च अ

त्सुप्तोत्थित तथा । तस्माज्जाग्रद्दृश्यानां स्वप्ने विप्रतिपत्ति दृष्टा । अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति । तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृता ॥

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम् ।
तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षित ॥ ८ ॥

स्वप्नजाग्रद्दृश्ययो समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तम्, तदसत् । कस्मात्? दृष्टान्तस्यासिद्धत्वात् । कथम्? न हि जाग्रद्दृश्या ये, ते भेदा स्वप्ने दृश्यन्ते । किं तर्हि? अपूर्वं स्वप्ने पश्यति चतुर्दन्तं गजमारूढाऽष्टभुजमात्मानम् । अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने । तन्नान्येनासता सममिति सदेव । अतो दृष्टान्तोऽसिद्ध । तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम् । तन्न । स्वप्ने दृष्टमपूर्वं यन्मन्यसे, न तत्स्वत सिद्धम् । किं तर्हि? अपूर्वं स्थानिधर्मो हि, स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्म, यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि, तथा स्वप्नदृशोऽपूर्वोऽयं धर्म, न स्वत सिद्धो द्रष्टु स्वरूपवत् । तान् एवंप्रकारानपूर्वान्स्वचित्तविकल्पान् अयं स्थानी य स्वप्नदृक्स्वप्नस्थानं गत्वा प्रेक्षते । यथैव इह लोके सुशिक्षितदेशान्त-

रमार्गस्तेन मार्गेण देशान्तर गत्वा पदार्थान्पश्यति, तद्वत् । तस्माद्यथा स्थानिधर्माणा रज्जुसर्पमृगतृष्णिकादीनामसत्त्वम्, तथा स्वप्नदृश्यानामप्यपूर्वाणा स्थानिधर्मत्वमेवेत्यसत्त्वम्, अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पित त्वसत् ।
बहिश्चेतो गृहीत सदृष्ट वैतथ्यमेतयो ॥ ९ ॥

अपूर्वत्वाशङ्का निराकृत्य स्वप्नदृष्टान्तस्य पुन स्वप्नतुल्यता जाग्रद्भेदाना प्रपञ्चयन्नाह— स्वप्नवृत्तावपि स्वप्नस्थानेऽपि अन्तश्चेतसा मनोरथसकल्पितमसत्, सकल्पानन्तरसमकालमेवादर्शनात् । तत्रैव स्वप्न बहिश्चेतसा गृहीत चक्षुरादिद्वारेणोपलब्ध घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्ट । उभयोरप्यन्तर्बहिश्चेत कल्पितयोर्वैतथ्यमेव दृष्टम् ॥

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पित त्वसत् ।
बहिश्चेतोगृहीत सद्युक्त वैतथ्यमेतयो ॥ १० ॥

सदसतोर्वैतथ्य युक्तम्, अन्तर्बहिश्चेत कल्पितत्वाविशेषादिति । व्याख्यातमन्यत् ॥

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ।
क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः ॥११॥

चोदक आह—स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यम्, क एतानन्तर्बहिश्चेतःकल्पितान्बुध्यते । को वै तेषां विकल्पकः, स्मृतिज्ञानयोः क आलम्बनमित्यभिप्रायः, न चेन्निरात्मवाद इष्टः ॥

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥ १२ ॥

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन्, स्वयमेव च तान्बुध्यते भेदान्, तद्वदेवेत्येवं वेदान्तनिश्चयः । नान्योऽस्ति ज्ञानस्मृत्याश्रयः । न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥

विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान् ।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥

संकल्पयन्केन प्रकारेण कल्पयतीत्युच्यते— विकरोति नाना करोति अपरान् लौकिकान् भावान् पदार्थाञ्शब्दा

दीनन्याश्च अन्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतान् नियतांश्च पृथिव्यादीननियतांश्च कल्पनाकालान् बहिश्चित्त सन्, तथा अन्तश्चित्तो मनोरथादिलक्षणानित्येव कल्पयति, प्रभु ईश्वर, आत्मेत्यर्थ ॥

**चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहि ।**
**कल्पिता एव ते सर्वे विशेषो नान्यहेतुक ॥ १४ ॥**

स्वप्नवच्चित्तपरिकल्पित सर्वमित्येतदाशङ्क्यते—यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्य बाह्यानामन्योन्यपरिच्छेद्यत्वमिति, सा न युक्ताशङ्का । चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्या, नान्यश्चित्तकालव्यतिरेकेण परिच्छेदक कालो येषाम्, ते चित्तकाला, कल्पनाकाल एवोपलभ्यन्त इत्यर्थ । द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्या, यथा आगोदोहनमास्ते यावदास्ते तावद्गा दोग्धि, यावद्गा दोग्धि तावदास्ते, तावानयमेतावान्स इति परस्परपरिच्छेद्यपरिच्छेदकत्व बाह्याना भेदानाम्, ते द्वयकाला । अन्तश्चित्तकाला बाह्याश्च द्वयकाला कल्पिता एव ते सर्वे । न बाह्यो द्वयकालत्वविशेष कल्पितत्वव्यतिरेकेणान्यहेतुक । अत्रापि हि स्वप्नदृष्टान्तो भवत्येव ॥

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहि ।
कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥

यदपि अन्तरव्यक्तत्व भावाना मनोवासनामात्राभिव्यक्ताना स्फुटत्व वा बहिश्चक्षुरादीन्द्रियान्तरे विशेष , नासौ भेदानामस्तित्वकृत , स्वप्नेऽपि तथा दर्शनात् । किं तर्हि ? इन्द्रियान्तरकृत एव । अत कल्पिता एव जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम ॥

जीव कल्पयते पूर्व ततो भावान्पृथग्विधान् ।
बाह्यानाध्यात्मिकाश्चैव यथाविद्यस्तथास्मृति ॥ १६ ॥

बाह्याध्यात्मिकाना भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनाया किं मूलमित्युच्यते— जीव हेतुफलात्मकम 'अह करोमि, मम सुखदु खे' इत्येवलक्षणम । अनेवलक्षण एव शुद्ध आत्मनि रज्ज्वामिव सर्प कल्पयते पूर्वम । ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान्भावान्बाह्यानाध्यात्मिकाश्चैव कल्पयते । तत्र कल्पनाया को हेतुरित्युच्यते— योऽसौ स्वय कल्पितो जीव सर्वकल्पनायामधिकृत , स यथाविद्य यादृशी विद्या विज्ञानमस्येति यथाविद्य , तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति । अतो हेतु-

कल्पनाविज्ञानात्फलविज्ञानम्, ततो हेतुफलस्मृति, ततस्तद्वि-ज्ञानम्, तत तदर्थक्रियाकारकतत्फलभेदविज्ञानानि, तेभ्यस्त-त्स्मृति, तत्स्मृतेश्च पुनस्तद्विज्ञानानि इत्येव बाह्यानाध्यात्मि-काश्च इतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पित ॥ १७ ॥

तत्र जीवकल्पना सवकल्पनामूलमित्युक्तम, सैव जीव-कल्पना किंनिमित्तेति दृष्टान्तन प्रतिपादयति— यथा लोके स्वेन रूपेण अनिश्चिता अनवधारिता एवमेवेति रज्जु मन्दान्धकारे कि सर्प उदकधारा दण्ड इति वा अनेकधा विकल्पिता भवति पूर्व स्वरूपानिश्चयनिमित्तम । यदि हि पूर्वमेव रज्जु स्वरूपेण निश्चिता स्यात्, न सर्पादि-विकल्पोऽभविष्यत्, यथा स्वहस्ताङ्गुल्यादिषु, एष दृष्टा न्त । तद्वद्धेतुफलादिससारधर्मानर्थविलक्षणतया स्वेन विशु द्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभा-वभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदा सिद्धान्त ॥

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैत तद्वदात्मविनिश्चय ॥ १८ ॥

रज्जुरेवेति निश्चये सर्पादिविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा, तथा नेति नेतीति सर्वसंसारधर्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्यालोककृतात्मविनिश्चयः 'आत्मैवेदं सर्वमपूर्वोऽनपरोऽनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजोऽजरोऽमृतोऽभय एक एवाद्वयः' इति ॥

**प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः ।**
**मायैषा तस्य देवस्य यया यं मोहितः स्वयम् ॥**

यदि आत्मैक एवेति निश्चयः, कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति? उच्यते शृणु—मायैषा तस्यात्मनो देवस्य। यथा मायाविना विहिता माया गगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकीर्णमिव करोति, तथा इयमपि देवस्य माया, यया अयं स्वयमपि मोहित इव मोहितो भवति। 'मम माया दुरत्यया' इत्युक्तम् ॥

**प्राण इति प्राणविदो भूतानीति च तद्विदः ।**
**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥**

**पादा इति पादविदो विषया इति तद्विदः ।**
**लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥**

वेदा इति वेदविदो यज्ञा इति च तद्विद ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विद ॥

सूक्ष्म इति सूक्ष्मविद' स्थूल इति च तद्विद ।
मूर्त इति मूर्तविदोऽमूर्त इति च तद्विद ॥ २३ ॥

काल इति कालविदो दिश इति च तद्विद. ।
वादा इति वादविदो भुवनानीति तद्विद ॥ २४ ॥

मन इति मनोविदो बुद्धिरिति च तद्विद ।
चित्तमिति चित्तविदो धर्माधर्मौ च तद्विद ॥ २५ ॥

पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥

लोकॉल्लोकविद आहुराश्रमा इति तद्विद. ।
स्त्रीपुनपुसक लैङ्गा' परापरमथापरे ॥ २७ ॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विद ।
स्थितिरिति स्थितिविद सर्वे चेह तु सर्वदा ॥२८॥

प्राण प्राज्ञो बीजात्मा, तत्कार्यभेदा हीतरे स्थित्यन्ता ।

अन्य च सव लौकिका सर्वप्राणिपरिकल्पिता भेदा रज्ज्वामिव सर्पादय । तच्छून्ये आत्मन्यात्मस्वरूपानिश्चय हेतोरविद्यया कल्पिता इति पिण्डितोऽर्थ । प्राणादिश्लोकाना प्रत्येक पदार्थव्याख्याने फल्गुप्रयोजनत्वात्सिद्धपदार्थत्वाच्च यत्नो न कृत ॥

य भाव दर्शयेद्यस्य त भाव स तु पश्यति ।
त चावति स भूत्वासौ तद्ग्रह समुपैति तम् ॥ २९ ॥

किं बहुना? प्राणादीनामन्यतममुक्तमनुक्त वा अन्य य भाव पदार्थ दर्शयेद्यस्याचार्योऽन्यो वा आप्त इदमेव तत्त्वमिति, स त भावमात्मभूत पश्यत्ययमहमिति वा ममेति वा, त च द्रष्टार स भावोऽवति, यो दर्शितो भाव , असौ स भूत्वा रक्षति, स्वेनात्मना सर्वतो निरुणद्धि । तस्मिन्ग्रह स्तद्ग्रहस्तदभिनिवेश इदमेव तत्त्वमिति स त ग्रहीतारमुपैति, तस्यात्मभाव निगच्छतीत्यर्थ ॥

एतैरेषोऽपृथग्भावै पृथगेवेति लक्षित ।
एव यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कित ॥ ३० ॥

एतै प्राणादिभि आत्मनोऽपृथग्भूतैरपृथग्भावै एष आत्मा रज्जुरिव सर्पादिविकल्पनारूपै पृथगेवेति लक्षित

अभिलक्षित निश्चित मूढैरित्यर्थं । विवेकिना तु रज्वामिव कल्पिता सर्पादयो नात्मव्यतिरेकेण प्राणादय सन्तीत्य- भिप्राय , 'इद सर्वं यदयमात्मा' इति श्रुते । एवमात्मव्य- तिरेकेणासत्त्व रज्जुसर्पवदात्मनि कल्पितानामात्मान च केवल निर्विकल्प यो वेद तत्त्वेन श्रुतितो युक्तितश्च, स अविशङ्कितो वेदार्थं विभागत कल्पयेत् कल्पयतीत्यर्थ — इदमेवपर वाक्यम् अदोऽन्यपरम् इति । न ह्यनध्यात्मविद्वे- दान्ज्ञातु शक्नोति तत्त्वत , 'न ह्यनध्यात्मवित्कश्चित्क्रियाफ- लमुपाश्नुते' इति हि मानव वचनम् ॥

स्वप्नमाये यथा दृष्टे गन्धर्वनगर यथा ।
तथा विश्वमिद दृष्ट वेदान्तेषु विचक्षणै ॥ ३१ ॥

यदेतद्वैतस्यासत्त्वमुक्त युक्तित , तदेतद्वेदान्तप्रमाणावगत मित्याह— स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके सत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभि । यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुजनपदव्यवहाराकीर्णमिव गन्धर्वनगर दृश्यमानमेव सत् अकस्मादभावता गत दृष्टम्, यथा च स्वप्नमाये दृष्टे असद्रूपे, तथा विश्वमिद द्वैत सम स्तमसद्दृष्टम् । केत्याह—वेदान्तेषु, 'नेह नानास्ति किंचन' 'इन्द्रो मायाभि' 'आत्मैवेदमग्र आसीत्' 'ब्रह्मैवेदमग्र

आसीत्' 'द्वितीयाद्वै भय भवति' 'न तु तद्द्वितीयमस्ति' 'यत्र त्वस्य सर्वमात्मैवाभूत' इत्यादिषु, विचक्षणै निपुणतरवस्तुदर्शिभि पण्डितैरित्यर्थ , 'तम श्वभ्रनिभ दृष्ट वर्ष बुद्बुदसंनिभम् । नाशप्राय सुखाद्धीन नाशोत्तरमभावगम्' इति व्यासस्मृते ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥

प्रकरणार्थोपसहारार्थोऽय श्लोक — यदा वितथ द्वैतम आत्मैवैक परमार्थत सन्, तदा इद निष्पन्न भवति—सर्वोऽय लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति । तदा न निरोध, निरोधन निरोध प्रलय, उत्पत्ति जननम्, बद्ध ससारी जीव, साधक साधनवान्मोक्षस्य, मुमुक्षु मोचनार्थी, मुक्त विमुक्तबन्ध । उत्पत्तिप्रलययोरभावाद्बद्धादयो न सन्तीत्यषा परमार्थता । कथमुत्पत्तिप्रलययोरभाव इति, उच्यते— द्वैतस्यासत्त्वात । 'यत्र हि द्वैतमिव भवति' 'य इह नानेव पश्यति' 'आत्मैवेद सर्वम्' 'ब्रह्मैवेद सर्वम्' 'एकमेवाद्वितीयम्' 'इद सर्व यदयमात्मा' इत्यादिनानाश्रुतिभ्यो द्वैतस्यासत्त्व सिद्धम । सतो ह्युत्पत्ति प्रलयो वा स्यात्, नासत शशविषाणादे । नाप्यद्वैतमुत्प-

द्यते प्रलीयते वा । अद्वैत च, उत्पत्तिप्रलयवच्चेति विप्रतिषिद्धम् । यस्तु पुनर्द्वैतसव्यवहार , स रज्जुसर्पवदात्मनि प्राणादिलक्षण कल्पित इत्युक्तम्, न हि मनोविकल्पनाया रज्जुसर्पादिलक्षणाया रज्ज्वा प्रलय उत्पत्तिर्वा, न च मनसि रज्जुसर्पस्योत्पत्ति प्रलयो वा, न चोभयतो वा । तथा मानसत्वाविशेषाद्द्वैतस्य । न हि नियते मनसि सुषुप्ते वा द्वैत गृह्यते, अतो मनोविकल्पनामात्र द्वैतमिति सिद्धम् । तस्मात्सूक्तम्— द्वैतस्यासत्त्वान्निरोधाद्यभाव परमार्थतेति । यद्येव द्वैताभावे शास्त्रव्यापार , नाद्वैते, विरोधात्, तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावाच्छून्यवादप्रसङ्ग , द्वैतस्य चाभावात्, न, रज्जुवत्सर्पादिकल्पनाया निरास्पदत्वेऽनुपपत्तिरिति प्रत्युक्तमेतत्कथमुज्जीवयसीति, आह—रज्जुरपि सर्पविकल्पस्यास्पदभूता कल्पितैवेति दृष्टान्तानुपपत्ति , न, विकल्पनाक्षये अविकल्पितस्याविकल्पितत्वादेव सत्त्वोपपत्ते , रज्जुसर्पवदसत्त्वमिति चेत्, न एकान्तेनाविकल्पितत्वात् अविकल्पितरज्ज्वशवत्प्राक्सर्पाभावविज्ञानात्, विकल्पयितुश्च प्राग्विकल्पनोत्पत्ते सिद्धत्वाभ्युपगमादेवासत्त्वानुपपत्ति । कथ पुन स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तकत्वम् ? नैष दोष , रज्ज्वा सर्पादि

वदात्मनि द्वैतस्याविद्याध्यस्तत्वात् कथं सुख्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान् पश्यामि व्यक्ताव्यक्तः कर्ता फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममैत इत्येवमादयः सर्वे आत्मन्यध्यारोप्यन्ते । आत्मा एतेष्वनुगतः, सर्वत्राव्यभिचारात्, यथा सर्पधारादिभेदेषु रज्जुः । यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्तव्यत्वं शास्त्रेण । अकृतकर्तृ च शास्त्रं कृतानुकारित्वे अप्रमाणम् । यतः अविद्याध्यारोपितसुखित्वादिविशेषप्रतिबन्धादेवात्मनः स्वरूपेणानवस्थानम्, स्वरूपावस्थानं च श्रेयः इति सुखित्वादिनिवर्तकं शास्त्रमात्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादिवाक्यैः, आत्मस्वरूपवदसुखित्वादिरपि सुखित्वादिभेदेषु नानुवृत्तोऽस्ति धर्मः । यद्यनुवृत्तः स्यात्, नाध्यारोप्येत सुखित्वादिलक्षणो विशेषः, यथोष्णत्वगुणविशेषवत्यग्नौ शीतता, तस्मान्निर्विशेष एवात्मनि सुखित्वादयो विशेषाः कल्पिताः । यत्त्वसुखित्वादिशास्त्रमात्मनः, तत्सुखित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम् । 'सिद्धं तु निवर्तकत्वात्' इत्यागमविदां सूत्रम् ॥

भावैरसद्भिरेवायमद्वयेन च कल्पितः ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ ३३ ॥

पूर्वश्लोकार्थस्य हेतुमाह—यथा रज्ज्वामसद्भि सर्पधारादिभि अद्वयेन च रज्जुद्रव्येण सता अय सर्प इति धारेय दण्डोऽयमिति वा रज्जुद्रव्यमेव कल्प्यते, एव प्राणादिभिरनन्तै असद्भिरेव अविद्यमानै, न परमार्थत । न ह्यप्रचलिते मनसि कश्चिद्भाव उपलक्षयितु शक्यते केनचित्, न चात्मन प्रचलनमस्ति । प्रचलितस्यैवोपलभ्यमाना भावा न परमार्थत सन्त कल्पयितु शक्या । अत असद्भिरेव प्राणादिभिर्भावैरद्वयेन च परमार्थसता आत्मना रज्जुवत्सर्वविकल्पास्पदभूतेन अय स्वयमेवात्मा कल्पित सदैकस्वभावोऽपि सन् । ते चापि प्राणादिभावा अद्वयेनैव सता आत्मना विकल्पिता, न हि निरास्पदा काचित्कल्पना उपपद्यते, अत सर्वकल्पनास्पदत्वात्स्वेनात्मना अद्वयस्य अव्यभिचारात् कल्पनावस्थायामपि अद्वयता शिवा, कल्पना एव त्वशिवा, रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ता । अद्वयता अभया, अत सैव शिवा ॥

**नात्मभावेन नानेद न स्वेनापि कथचन ।**
**न पृथङ् नापृथक्किंचिदिति तत्त्वविदो विदु ॥ ३४ ॥**

कुतश्चाद्वयता शिवा? नानाभूत प्रथक्त्वम् अन्यस्य अन्यस्मात् यत्र दृष्टम्, तत्राशिव भवेत् । न ह्यत्राद्वये परमा-

र्थमत्यात्मनि प्राणादिमसारजातमिद जगत् आत्मभावेन प रमार्थस्वरूपेण निरूप्यमाण नाना वस्त्वन्तरभूत भवति, यथा रज्जुस्वरूपेण प्रकाशेन निरूप्यमाणो न नानाभूत कल्पित सर्पोऽस्ति, तद्वत्। नापि स्वेन प्राणाद्यात्मना इद विद्यते कदाचिदपि, रज्जुसर्पवत्कल्पितत्वादेव। तथा अन्योन्य न पृथक् प्राणादि वस्तु यथा अश्वान्महिष पृथग्विद्यते, एवम्। अत असत्त्वात् नापि अपृथक् विद्यतेऽन्योन्य परेण वा किंचिदिति। एव परमार्थतत्त्वविदो ब्राह्मणा विदु। अत अशिवहेतुत्वाभावादद्वयतैव शिवेत्यभिप्राय ॥

वीतरागभयक्रोधैर्मुनिभिर्वेदपारगै ।
निर्विकल्पो ह्यय दृष्ट प्रपञ्चोपशमोऽद्वय ॥ ३५ ॥

तदेतत्सम्यग्दर्शन स्तूयते— विगतरागभयक्रोधादिसर्वदोषै सर्वदा मुनिभि मननशीलैर्विवेकिभि वेदपारगै अवगतवेदान्तार्थतत्त्वैर्ज्ञानिभि निर्विकल्प सर्वविकल्पशून्य अयम् आत्मा दृष्ट उपलब्धो वेदान्तार्थतत्परै, प्रपञ्चोपशम, प्रपञ्चो द्वैतभेदविस्तार, तस्योपशमोऽभावो यस्मिन्, स आत्मा प्रपञ्चोपशम, अत एव अद्वय विगतदोषैरेव पण्डितैर्वेदान्तार्थतत्परै सन्यासिभि अयमात्मा द्रष्टु शक्य,

नान्यै रागादिकलुषितचेतोभि स्वपक्षपातिदर्शनैस्तार्किका दिभिरित्यभिप्राय ॥

**तस्मादेव विदित्वैनमद्वैते योजयेत्स्मृतिम् ।**
**अद्वैत समनुप्राप्य जडवल्लोकमाचरेत् ॥ ३६ ॥**

यस्मात्सर्वानर्थोपशमरूपत्वादद्वय शिवमभयम् , अत एव विदित्वैनम् अद्वैते स्मृति योजयेत् , अद्वैतावगमायैव स्मृति कुर्यादित्यर्थ । तच्च अद्वैतम् अवगम्य 'अहमस्मि पर ब्रह्म' इति विदित्वा अशनायाद्यतीत साक्षादपरोक्षादजमात्मान सर्वलोकव्यवहारातीत जडवत् लोकमाचरेत् , अप्रख्यापयन्नात्मानमहमेवविध इत्यभिप्राय ॥

**नि.स्तुतिर्निर्नमस्कारो नि.स्वधाकार एव च ।**
**चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥ ३७ ॥**

कया चर्यया लोकमाचरेदिति, आह— स्तुतिनमस्कारादिसर्वकर्मविवर्जित त्यक्तसर्वबाह्यैषण प्रतिपन्नपरमहसपारिव्राज्य इत्यभिप्राय , 'एत वै तमात्मान विदित्वा' इत्यादिश्रुते , 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणा ' इत्यादिस्मृतेश्च । चल शरीरम् , प्रतिक्षणमन्यथाभावात् , अचलम् आत्म-

तत्त्वम् । यदा कदाचिद्भोजनादिसंव्यवहारनिमित्तमाकाशवद् चलं स्वरूपमात्मतत्त्वम् आत्मनो निकेतमाश्रयमात्मस्थितिं विस्मृत्य अहमिति मन्यते यदा, तदा चलो देहो निकेतो यस्य सोऽयमेव चलाचलनिकेतो विद्वान्न पुनर्बाह्यविषयाश्रयः । स च याहच्छिको भवेत्, यहच्छाप्राप्तकौपीनाच्छादनग्रास मात्रदेहस्थितिरित्यर्थः ॥

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ।
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ३८ ॥

बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकं च देहादिलक्षणं रज्जुसर्पादिवत्स्वप्नमायादिवच्च असत्, 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतेः । आत्मा च सबाह्याभ्यन्तरो ह्यजोऽपूर्वोऽनपरोऽनन्तरोऽबाह्यः कृत्स्नः तथा आकाशवत्सर्वगतः सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियः 'तत्सत्यं स आत्मा तत्त्वमसि' इति श्रुतेः, इत्येवं तत्त्वं दृष्ट्वा तत्त्वी-भूतस्तदारामो न बाह्यरमणः, यथा अतत्त्वदर्शी कश्चित्तमा-त्मत्वेन प्रतिपन्नश्चित्तचलनमनु चलितमात्मानं मन्यमानः तत्त्वाच्चलितं देहादिभूतमात्मानं कदाचिन्मन्यते प्रच्युतोऽहमात्मतत्त्वादिदानीमिति, समाहिते तु मनसि कदाचित्तत्त्वभूतं प्रसन्नमात्मानं मन्यते इदानीमस्मि तत्त्वीभूत इति,

न तथा आत्मविद्भवेत्, आत्मन एकरूपत्वात्, स्वरूपप्रच्य वनासंभवाच्च । सदैव ब्रह्मास्मीत्यप्रच्युतो भवेत्तत्त्वात्, सदा अप्रच्युतात्मतत्त्वदर्शनो भवेदित्यभिप्राय , 'शुनि चैव श्व पाके च' 'सम सर्वेषु भूतेषु' इत्यादिस्मृते ॥

इति द्वितीय वैतथ्यप्रकरण सम्पूर्णम् ॥

# अद्वैतप्रकरणम् ॥

उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥ १ ॥

ओंकारनिर्णय उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण, 'ज्ञाते द्वैतं न विद्यते' इति च । तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः । अद्वैतं किमागममात्रेण प्रतिपत्तव्यम्, आहोस्वित्तर्केणापीत्यत आह — शक्यते तर्केणापि ज्ञातुम्, तत्कथमित्यद्वैतप्रकरणमारभ्यते । उपास्योपासनादिभेदजातं सर्वं वितथम्, केवलश्चात्मा अद्वयः परमार्थ इति स्थितमतीते प्रकरणे, यतः उपासनाश्रितः उपासनामात्मनो मोक्षसाधनत्वेन गतः उपासकोऽहं ममोपास्यं ब्रह्म । तदुपासनं कृत्वा जाते ब्रह्मणीदानीं वर्तमानः अजं ब्रह्म शरीरपातादूर्ध्वं प्रतिपत्स्ये प्रागुत्पत्तेश्चाजमिदं सर्वमहं च । यदात्मकोऽहं प्रागुत्पत्तेरिदानीं जातो जाते ब्रह्मणि च वर्तमान उपासनया पुनस्तदेव प्रति-

पत्स्ये इत्येवमुपासनाश्रितो धर्म साधक येनैव क्षुद्रब्रह्म-वित्, तेनासौ कारणेन कृपणो दीनोऽल्पक स्मृतो नित्या-जब्रह्मदर्शिभिर्महात्मभिरित्यभिप्राय, 'यद्वाचानभ्युदित येन वागभ्युद्यते । तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते' इत्यादिश्रुतेस्तलवकाराणाम् ॥

**अतो वक्ष्याम्यकार्पण्यमजाति समता गतम् ।**
**यथा न जायते किंचिज्जायमान समन्तत ॥ २ ॥**

सबाह्याभ्यन्तरमजमात्मान प्रतिपत्तुमशक्नुवन् अवि-द्यया दीनमात्मान मन्यमान जातोऽह जाते ब्रह्मणि वर्ते तदुपासनाश्रित सन्ब्रह्म प्रतिपत्स्ये इत्येव प्रतिपन्न कृपणो भवति यस्मात्, अतो वक्ष्यामि अकार्पण्यम अकृपणभाव मज ब्रह्म। तद्धि कार्पण्यास्पदम्, 'यत्रान्योऽन्यत्पश्यत्यन्य-च्छृणोत्यन्यद्विजानाति तदल्पम्' 'मर्त्य तत्' 'वाचारम्भण विकारो नामधेयम्' इत्यादिश्रुतिभ्य । तद्विपरीत सबा ह्याभ्यन्तरमजमकार्पण्य भूमाख्य ब्रह्म, यत्प्राप्याविद्याकृत-सर्वकार्पण्यनिवृत्ति, तदकार्पण्य वक्ष्यामीत्यर्थ । तत् अ जाति अविद्यमाना जातिरस्य । समता गत सर्वसाम्य गतम्, कस्मात्? अवयववैषम्याभावात् । यद्धि सावयव

वस्तु, तदवयववैषम्य गच्छज्जायत इत्युच्यते, इद तु निरवयवत्वात्समता गतमिति न कैश्चिदवयवै स्फुटति, अत अजाति अकार्पण्य समन्तत समन्तात्, यथा न जायते किंचित् अल्पमपि न स्फुटति रज्जुसर्पवदविद्याकृतदृष्ट्या जायमान येन प्रकारेण न जायते सर्वत अजमेव ब्रह्म भवति, तथा त प्रकार शृण्वित्यर्थ ॥

आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदित ।
घटादिवच्च सघातैर्जातावेतन्निदर्शनम् ॥ ३ ॥

अजाति ब्रह्माकार्पण्य वक्ष्यामीति प्रतिज्ञातम्, तत्सिद्ध्यर्थ हेतु दृष्टान्त च वक्ष्यामीत्याह— आत्मा पर हि यस्मात् आकाशवत सूक्ष्मो निरवयव सर्वगत आकाशवदुक्त जीवै क्षेत्रज्ञै घटाकाशैरिव घटाकाशतुल्यै उदित उक्त, स एव आकाशसम पर आत्मा । अथवा घटाकाशैर्यथा आकाश उदित उत्पन्न, तथा परो जीवात्मभिरुत्पन्न, जीवात्मना परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु, सा महाकाशाद्घटाकाशोत्पत्तिसमा, न परमार्थत इत्यभिप्राय । तस्मादेवाकाशाद्घटादय सघाता यथा उत्पद्यन्ते, एवमाकाशस्थानीयात्परमात्मन पृथिव्यादिभूतसघाता आध्यात्मि-

काश्च कार्यकरणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते, अत उच्यते— घटादिवच्च सघातैरुदित इति । यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्या आत्मनो जातिरुच्यते जीवादीनाम्, तदा जातावुपगम्यमानायाम् एतत् निदर्शन दृष्टान्त यथोदिताकाशवदित्यादि ॥

घटादिषु प्रलीनेषु घटाकाशादयो यथा ।
आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि ॥ ४ ॥

यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्ति, यथा च घटादिप्रलयेन घटाकाशादिप्रलय, तद्वद्देहादिसघातोत्पत्त्या जीवोत्पत्ति तत्प्रलयेन च जीवानाम् इह आत्मनि प्रलय, न स्वत इत्यर्थ ॥

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवा' सुखादिभि• ॥ ५ ॥

सर्वदेहेष्वात्मैकत्वे एकस्मिन् जननमरणसुखदु खादिमत्यात्मनि सर्वात्मना तत्सबन्ध क्रियाफलसाकर्य च स्यादिति ये त्वाहुर्द्वैतिन, तान्प्रतीदमुच्यते— यथा एकस्मिन् घटाकाशे रजोधूमादिभि युते सयुक्ते, न सर्वे घटाकाशादय तद्रजोधूमादिभि सयुज्यन्ते, तद्वत् जीवा सुखादिभि । ननु,

एक एवात्मा, बाढम, ननु न श्रुत त्वया आकाशवत्सर्व संघातेष्वेक एवात्मेति? यद्येक एवात्मा, तर्हि सर्वत्र सुखी दु खी च स्यात्, न चेद् सांख्यस्य चोद्य संभवति, न हि सांख्य आत्मन सुखदु खादिमत्त्वमिच्छति, बुद्धिसमवाया-भ्युपगमात्सुखदु खादीनाम, न चोपलब्धिस्वरूपस्यात्मनो भेदकल्पनाया प्रमाणमस्ति। भेदाभावे प्रधानस्य पारार्थ्या-नुपपत्तिरिति चेन्, न, प्रधानकृतस्यार्थस्यात्मन्यसमवा-यान्, यदि हि प्रधानकृतो बन्धो मोक्षो वा अर्थ पुरुषेषु भेदेन समवैति, तत प्रधानस्य पारार्थ्यमात्मैकत्वे नोपप-द्यत इति युक्ता पुरुषभेदकल्पना, न च सांख्यैर्बन्धो मोक्षो वार्थ पुरुषसमवेतोऽभ्युपगम्यते, निर्विशेषाश्च चेतनमात्रा आत्मानोऽभ्युपगम्यन्ते, अत पुरुषसत्तामात्रप्रयुक्तमेव प्र-धानस्य पारार्थ्य सिद्धम, न तु पुरुषभेदप्रयुक्तमिति, अत पुरुषभेदकल्पनाया न प्रधानस्य पारार्थ्य हेतु, न चान्यत्पुरुषभेदकल्पनाया प्रमाणमस्ति सांख्यानाम। परस-त्तामात्रमेव चैतन्निमित्तीकृत्य स्वय बध्यते मुच्यते च प्रधा-नम, परश्चोपलब्धिमात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतु, न केनचिद्विशेषेणेति, केवलमूढतयैव पुरुषभेदकल्पना वेदार्थप-रित्यागश्च। ये त्वाहुर्वैशेषिकादय इच्छादय आत्मसमवायिन

इति, तदप्यसत्, स्मृतिहेतूना संस्काराणामप्रदेशवत्यात्मन्य-समवायात्, आत्ममन संयोगाच्च स्मृत्युत्पत्ते स्मृतिनियमानुपपत्ति, युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्ग । न च भिन्नजातीयाना स्पर्शादिहीनानामात्मना मनआदिभि संबन्धो युक्त । न च द्रव्याद्रूपाद्या गुणा कर्मसामान्यविशेषसमवाया वा भिन्ना सन्ति । परेषा यदि ह्यत्यन्तभिन्ना एव द्रव्यात्स्यु इच्छाद यश्चात्मन, तथा सति द्रव्येण तेषा संबन्धानुपपत्ति । अयुतसिद्धाना समवायलक्षण संबन्धो न विरुध्यत इति चेत्, न, इच्छादिभ्योऽनित्येभ्य आत्मनो नित्यस्य पूर्वसिद्धत्वान्नायुतसिद्धत्वोपपत्ति । आत्मना अयुतसिद्धत्वे च इच्छादीनामात्मगतमहत्त्ववन्नित्यत्वप्रसङ्ग । स चानिष्ट, आत्मनोऽनिर्मोक्षप्रसङ्गात् । समवायस्य च द्रव्यादन्यत्वे सति द्रव्येण संबन्धान्तर वाच्यम, यथा द्रव्यगुणयो । समवायो नित्यसंबन्ध एवेति न वाच्यमिति चेत्, तथा सति समवायसंबन्धवता नित्यसंबन्धप्रसङ्गात्पृथक्त्वानुपपत्ति । अत्यन्तपृथक्त्वे च द्रव्यादीना स्पर्शवदस्पर्शद्रव्ययोरिव षष्ठ्यर्थानुपपत्ति । इच्छाद्युपजनापायवद्गुणवत्त्वे च आत्मनोऽनित्यत्वप्रसङ्ग । देहफलादिवत्सावयवत्व विक्रियावत्त्व च देहादिवदेवेति दोषावपरिहार्यौ । यथा त्वाकाशस्य अविद्याध्यारोपितघटाद्यु

काश घनरजोधूमादिमलै मलिन मलवत, न गगन याथात्म्यविवेकवताम्, तथा भवति आत्मा परोऽपि— यो विज्ञाता प्रत्यक्— क्लेशकर्मफलमलैर्मलिन अबुद्धाना प्रत्यगात्मविवेकरहितानाम्, नात्मविवेकवताम्। न ह्यूषरदेश तृड्वत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमान, तथा नात्मा अबुधारोपितक्लेशादिमलै मलिनो भवतीत्यर्थ ॥

मरणे सभवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु चाकाशेनाविलक्षण ॥ ९ ॥

पुनरप्युक्तमेवार्थ प्रपञ्चयति—घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षण प्रत्येतव्य इत्यर्थ ॥

सघाता स्वप्नवत्सर्वे आत्ममायाविसर्जिता ।
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ १० ॥

घटादिस्थानीयास्तु देहादिसघाता स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्च आत्ममायाविसर्जिता, आत्मनो माया अविद्या, तया प्रत्युपस्थापिता, न परमार्थत सन्तीत्यर्थ । यदि आधिक्यमधिकभाव तिर्यग्देहाद्यपेक्षया देवादिकार्य-

करणसघातानाम्, यदि वा सर्वेषा समतैव, तेषा न ह्युपपत्तिसभव , सभवप्रतिपादको हेतु न विद्यते नास्ति, हि यस्मात्, तस्मादविद्याकृता एव, न परमार्थत सन्तीत्यर्थ ॥

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ।**
**तेषामात्मा परो जीव ख यथा सप्रकाशित ॥११॥**

उत्पत्त्यादिवर्जितस्याद्वयस्यास्यात्मतत्त्वस्य श्रुतिप्रमाणकत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते— रसादय अन्नरसमय प्राणमय इत्येवमादय कोशा इव कोशा असयादे , उत्तरोत्तरापेक्षया बहिर्भावात्पूर्वपूर्वस्य व्याख्याता विस्पष्टमाख्याता तैत्तिरीयके तैत्तिरीयकशाखोपनिषद्वल्ल्याम् , तेषा कोशानामात्मा येनात्मना पञ्चापि कोशा आत्मवन्तोऽन्तरतमेन । स हि सर्वेषा जीवननिमित्तत्वाज्जीव । कोऽसावित्याह— पर एवात्मा य पूर्वम् सत्य ज्ञानमनन्त ब्रह्म ' इति प्रकृत , यस्मादात्मन स्वप्नमायादिवदाकाशादिक्रमेण रसादय कोशलक्षणा सघाता आत्ममायाविसर्जिता इत्युक्तम् । स आत्मा अस्माभि यथा ख तथेति सप्रकाशित , ' आत्मा ह्याकाशवत् ' इत्यादिश्लोकै । न तार्किकपरिकल्पितात्मवत्पुरुषबुद्धिप्रमाणगम्य इत्यभिप्राय ॥

द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।
पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः ॥ १२ ॥

किंच, अधिदैवतमध्यात्मं च तेजोमयोऽमृतमयः पुरुषः पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवात्मा ब्रह्म सर्वमिति द्वयोर्द्वयोः आ द्वैतक्षयात् परं ब्रह्म प्रकाशितम्, क्वेत्याह— ब्रह्मविद्याख्यं मधु अमृतम्, अमृतत्वं मोदनहेतुत्वात्, तद्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणम्, तस्मिन्नित्यर्थः । किमिवेत्याह— पृथिव्याम् उदरे चैव यथा एक आकाशः अनुमानेन प्रकाशितः लोके, तद्वदित्यर्थः ॥

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।
नानात्वं निन्द्यते यच्च तदेव हि समञ्जसम् ॥ १३ ॥

यद्युक्तितः श्रुतितश्च निर्धारितं जीवस्य परस्य चात्मनोऽनन्यत्वम् अभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च, यच्च सर्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिर्मुखैः कुतार्किकैर्विरचितं नानात्वदर्शनं निन्द्यते, 'न तु तद्द्वितीयमस्ति' 'द्वितीयाद्वै भयं भवति' 'उदरमन्तरं कुरुते, अथ तस्य भयं भवति' 'इदं सर्वं यदयमात्मा' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवमादिवाक्यैरन्यै-

श्च ब्रह्मविद्भि यच्चैतत्, तदेव हि समञ्जसम् ऋज्ववबोध न्याय्यमित्यर्थं । यास्तु तार्किकपरिकल्पिता कुदृष्टय, ता अनृज्व्यो निरूप्यमाणा न घटना प्राञ्चन्तीत्यभिप्राय ॥

जीवात्मनो पृथक्त्व यत्प्रागुत्पत्ते प्रकीर्तितम् ।
भविष्यद्वृत्त्या गौण तन्मुख्यत्व हि न युज्यते ॥१४॥

ननु श्रुत्यापि जीवपरमात्मनो पृथक्त्व यत् प्रागुत्पत्ते उत्पत्त्यर्थोपनिषद्वाक्येभ्य पूर्व प्रकीर्तित कर्मकाण्डे अनेकश कामभेदत इदकाम अद काम इति, परश्च 'स दाधार पृथिवीं द्याम्' इत्यादिमन्त्रवर्णै, तत्र कथ कर्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्य मवधार्यत इति । अत्रोच्यते— 'यतो वा इमानि भूतानि जायन्ते' 'यथाग्ने क्षुद्रा विस्फुलिङ्गा' 'तस्माद्वा एतस्मादात्मन आकाश सभूत' 'तदैक्षत तत्तेजोऽसृजत' इत्याद्युत्पत्त्यथापनिषद्वाक्येभ्य प्राकपृथक्त्व कर्मकाण्डे प्रकीर्तित यत्, तन्न परमार्थत । किं तर्हि? गौणम्, महाकाशघटाकाशादिभेदवत्, यथा ओदन पचतीति भविष्यद्वृत्त्या, तद्वत् । न हि भेदवाक्याना कदाचिदपि मुख्यभेदार्थकत्वमुपपद्यते, स्वाभाविकाविद्यावत्प्राणिभेददृष्ट्यनुवादित्वादात्मभे-

द्वाक्यानाम् । इह च उपनिषत्सु उत्पत्तिप्रलयादिवाक्यै-र्जीवपरात्मनोरेकत्वमेव प्रतिपिपादयिषितम् 'तत्त्वमसि' 'अन्योऽसावन्योऽहमस्मीति न स वेद' इत्यादिभि , अत उपनिषत्स्वेकत्व श्रुत्या प्रतिपिपादयिषित भविष्यतीति भावि नीमिव वृत्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभि-प्राय । अथवा, 'तदैक्षत' 'तत्तेजोऽसृजत' इत्याद्युत्पत्ते प्राक् 'एकमेवाद्वितीयम्' इत्येकत्व प्रकीर्तितम्, तदेव च 'तत्सत्य स आत्मा, तत्त्वमसि' इत्येकत्व भविष्यतीति ता भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनो पृथक्त्व यत्र कचिद्वाक्ये गम्यमानम्, तद्गौणम्, यथा ओदन पचतीति, तद्वत् ॥

मृल्लोहविस्फुलिङ्गाद्यै सृष्टिर्या चोदितान्यथा ।
उपाय सोऽवताराय नास्ति भेदः कथचन ॥ १५ ॥

ननु यद्युत्पत्ते प्रागज सर्वमेकमेवाद्वितीयम्, तथापि उ-त्पत्तेरूर्ध्व जातमिद सर्वं जीवाश्च भिन्ना इति । मैवम्, अ-न्यार्थत्वादुत्पत्तिश्रुतीनाम् । पूर्वमपि परिहृत एवाय दोष — स्वप्नवदात्ममायाविसर्जिता सघाता, घटाकाशोत्पत्तिभेदा दिवज्जीवानामुत्पत्तिभेदादिरिति । इत एव उत्पत्तिभेदादिश्रु-तिभ्य आकृष्य इह पुनरुत्पत्तिश्रुतीनामैदपर्यप्रतिपिपादयिष-

याप-यास मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासै सृष्टि या च उदिता प्रकाशिता कल्पिता अन्यथान्यथा च, स सर्वे सृष्टि-प्रकारा जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्, यथा प्राणसवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणवै-शिष्ट्यबोधावताराय, तदप्यसिद्धमिति चेत्, न, शाखाभेदेष्व-न्यथान्यथा च प्राणादिसवादश्रवणात्। यदि हि वाद परमार्थ एवाभूत्, एकरूप एव सवाद सवशाखास्वश्रोष्यत, विरु द्धानेकप्रकारेण नाश्रोष्यत, श्रूयते तु, तस्मान्न तादर्थ्यं स-वादश्रुतीनाम् । तथोत्पत्तिवाक्यानि प्रत्येतव्यानि । कल्पस र्गभेदात्सवादश्रुतीनामुत्पत्तिश्रुतीना च प्रतिसर्गमन्यथात्व-मिति चेत्, न, निष्प्रयोजनत्वाद्यथोक्तबुद्ध्यवतारप्रयोज-नव्यतिरेकेण । न ह्यन्यप्रयोजनवत्त्व सवादोत्पत्तिश्रुतीना शक्य कल्पयितुम् । तथात्वप्रतिपत्तये ध्यानार्थमिति चेत्, न, कलहोत्पत्तिप्रलयाना प्रतिपत्तेरनिष्टत्वात्। तस्मादुत्पत्त्या-दिश्रुतय आत्मैकत्वबुद्ध्यवतारायैव, नान्यार्था कल्पयितु युक्ता । अतो नास्त्युत्पत्त्यादिकृतो भेद कथचन ॥

आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टय ।
उपासनोपदिष्टेय तदर्थमनुकम्पया ॥ १६ ॥

यदि हि पर एवात्मा नित्यशुद्धबुद्धमुक्तस्वभाव एक पर-

मार्थेत सन् 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभ्य, असदन्यत्, किमर्थेयमुपासनोपदिष्टा 'आत्मा वा अरे द्रष्टव्य' 'य आत्मापहतपाप्मा' 'स क्रतु कुर्वीत' 'आत्मेत्येवोपासीत' इत्यादिश्रुतिभ्य, कर्माणि चाग्निहोत्रादीनि? शृणु तत्र कारणम्— आश्रमा आश्रमिणोऽधिकृता, वर्णिनश्च मार्गगा, आश्रमशब्दस्य प्रदर्शनार्थत्वात्, त्रिविधा। कथम्? हीनमध्यमोत्कृष्टदृष्टय हीना निकृष्टा मध्यमा उत्कृष्टा च दृष्टि दर्शनसामर्थ्य येषा ते, मन्दमध्यमोत्तमबुद्धिसामर्थ्योपेता इत्यर्थ। उपासना उपदिष्टा इय तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्माणि च। न चात्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थम्। दयालुना वेदेनानुकम्पया सन्मार्गगा सन्त कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति, 'यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते' 'तत्त्वमसि' 'आत्मैवेद सर्वम्' इत्यादिश्रुतिभ्य ॥

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।
परस्पर विरुध्यन्ते तैरय न विरुध्यते ॥ १७ ॥

शास्त्रोपपत्तिभ्यामवधारितत्वादद्वयात्मदर्शन सम्यग्दर्शनम्, तद्बाह्यत्वान्मिथ्यादर्शनमन्यत्। इतश्च मिथ्यादर्शन

द्वैतिना रागद्वेषादिदोषास्पदत्वात् । कथम् ? स्वसिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हतादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिता , एवमेवैष परमार्थो नान्यथेति, तत्र तत्रानुरक्ता प्रतिपक्ष चात्मन पश्यन्तस्त द्विषन्त इत्येव रागद्वेषोपेता स्वसिद्धान्तदर्शननिमित्तमेव परस्परम् अन्योन्य विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽय वैदिक सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते, यथा स्वहस्तपादादिभि । एव रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्राय ।

अद्वैत परमार्थो हि द्वैत तद्भेद उच्यते ।
तेषामुभयथा द्वैत तेनाय न विरुध्यते ॥ १८ ॥

केन हेतुना तैर्न विरुध्यत इत्युच्यते—अद्वैत परमार्थ , हि यस्मात् द्वैत नानात्व तस्याद्वैतस्य भेद तद्भेद , तस्य कार्यमित्यर्थ , 'एकमेवाद्वितीयम' 'तत्तेजोऽसृजत' इति श्रुते , उपपत्तेश्च, स्वचित्तस्पन्दनाभावे समाधौ मूर्छाया सुषुप्तौ वा अभावात् । अत तद्भेद उच्यते द्वैतम् । द्वैतिना तु तेषा परमार्थतोऽपरमार्थतश्च उभयथापि द्वैतमेव, यदि च तेषा भ्रान्ताना द्वैतदृष्टि अस्माकमद्वैतदृष्टिरभ्रान्तानाम्, तेनाय हेतुना अस्मत्पक्षो न विरुध्यते तै , 'इन्द्रो मायाभि ' 'न

तु तद्द्वितीयमस्ति’ इति श्रुते । यथा मत्तगजारूढ उन्मत्त भूमिष्ठम् ‘ प्रतिगजारूढोऽहं गज वाहय मा प्रति ’ इति ब्रुवाण मपि त प्रति न वाहयत्यविरोधबुद्ध्या, तद्वत् । तत परमा र्थतो ब्रह्मविदात्मैव द्वैतिनाम् । तेनाय हेतुना अस्मत्पक्षो न विरुध्यते तै ॥

**मायया भिद्यते ह्येतन्नान्यथाज कथचन ।**

**तत्त्वतो भिद्यमाने हि मर्त्यताममृत व्रजेत् ॥ १९ ॥**

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत्परमार्थसदिति स्या त्कस्यचिदाशङ्केत्यत आह— यत्परमार्थसदद्वैतम् , मायया भिद्यत ह्येतत् तैमिरिकानेकचन्द्रवत् रज्जु सर्पधारादिभिर्भे दैरिव , न परमार्थत , निरवयवत्वादात्मन । सावयव ह्यवयवान्यथात्वेन भिद्यते, यथा मृत घटादिभेदै । तस्मान्नि रवयवमज नान्यथा कथचन, केनचिदपि प्रकारेण न भिद्यत इत्यभिप्राय । तत्त्वतो भिद्यमान हि अमृतमजमद्वय स्वभावत सत् मर्त्यता व्रजेत्, यथा अग्नि शीतताम् । तच्चानिष्ट स्वभा ववैपरीत्यगमनम् , सर्वप्रमाणविरोधात् । अजमद्वयमात्म- तत्त्व माययैव भिद्यते, न परमार्थत । तस्मान्न परमार्थ- सद्द्वैतम् ॥

अजातस्यैव भावस्य जातिमिच्छन्ति वादिन ।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥ २० ॥

य तु पुन कश्चिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैव आत्मतत्त्वस्यामृतस्य स्वभावतो जातिम् उत्पत्तिम् इच्छन्ति परमार्थत एव, तेषा जात चेत्, तदेव मर्त्यतामेष्यत्यवश्यम । स च अजातो ह्यमृता भाव स्वभावत सन्नात्मा कथ मर्त्यतामेष्यति? न कथञ्चन मर्त्यत्व स्वभाव वैपरीत्यमेष्यतीत्यथ ॥

न भवत्यमृत मर्त्य न मर्त्यममृत तथा ।
प्रकृतेरन्यथाभावा न कथंचिद्भविष्यति ॥ २१ ॥

यस्मान्न भवति अमृत मर्त्य लोके नापि मर्त्यममृत तथा, तत प्रकृते स्वभावस्य अ यथाभाव स्वत प्रच्युति न कथंचिद्भविष्यति, अग्नेरिवौष्ण्यस्य ॥

स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथ स्थास्यति निश्चल ॥ २२ ॥

यस्य पुनर्वादिन स्वभावेन अमृतो भाव मर्त्यता गच्छति परमार्थतो जायते, तस्य प्रागुत्पत्ते स भाव स्वभावतो-

ऽमृत इति प्रतिज्ञा मृषैव । कथं तर्हि? कृतकेनामृत तस्य स्वभाव । कृतकेनामृत स कथं स्थास्यति निश्चल? अमृतस्वभावतया न कथञ्चित्स्थास्यति । आत्मजातिवादिन सर्वथा अज नाम नास्त्येव । सर्वमेतन्मर्त्यम्, अत अनिर्मोक्षप्रसङ्ग इत्यभिप्राय ॥

भूततोऽभूततो वापि सृज्यमाने समा श्रुति ।
निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥

नन्वजातिवादिन सृष्टिप्रतिपादिका श्रुतिर्न सगच्छते । बाढम्, विद्यते सृष्टिप्रतिपादिका श्रुति, सा त्वन्यपरा, 'उपाय सोऽवतारय' इत्यवोचाम । इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधशङ्कामात्रपरिहारार्थौ । भूतत परमार्थत सृज्यमाने वस्तुनि, अभूतत मायया वा मायाविनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टिश्रुति । ननु गौणमुख्ययोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता, न, अन्यथासृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्च इत्यवोचाम । अविद्यासृष्टिविषयैव सर्वा गौणी मुख्या च सृष्टि, न परमार्थत, 'सबाह्याभ्यन्तरो ह्यज' इति श्रुते । तस्मात् श्रुत्या निश्चितं यत् एकमेवाद्वितीयमजममृतमिति, युक्तियुक्तं च युक्त्या च सपन्नम्,

तदेवेत्यवोचाम पूर्वैर्ग्रन्थै , तदेव श्रुत्यर्थो भवति, नेतरत्क दाचिदपि क्वचिदपि ॥

**नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।**
**अजायमानो बहुधा जायते मायया तु स ॥ २४ ॥**

कथ श्रुतिनिश्चय इत्याह—यदि हि भूतत एव सृष्टि स्यात्, तत सत्यमेव नानावस्त्विति तदभावप्रदर्शनार्थ आम्नाया न स्यात्, अस्ति च 'नेह नानास्ति किंचन' इत्याम्नायो द्वैतभावप्रतिषेधार्थ , तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव प्राणसवादवत् । 'इन्द्रो मायाभि ' इत्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशात् । ननु प्रज्ञावचनो मायाशब्द , सत्यम , इन्द्रियप्रज्ञाया अविद्यामयत्वेन मायात्वाभ्युपगमाददोष । मायाभि इन्द्रियप्रज्ञाभिरविद्यारूपाभिरित्यर्थ । अजायमानो बहुधा विजायते ' इति श्रुते । तस्मात् जायते मायया तु स , तु शब्दोऽवधारणार्थ माययैवेति । न ह्यजायमानत्व बहुधाजन्म च एकत्र सभवति, अग्नाविव शैत्यमौष्ण्य च। फलवत्त्वाच्चात्मैकत्वदर्शनमेव श्रुति निश्चितोऽर्थ , 'तत्र को मोह क शोक एकत्वमनुपश्यत ' इत्यादिमन्त्रवर्णात् 'मृत्यो स मृत्युमाप्नोति' इति निन्दित

त्वाच्च सृष्ट्यादिभेददृष्टेः ॥

संभूतेरपवादाच्च संभवः प्रतिषिध्यते ।
को न्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥

'अन्धं तमः प्रविशन्ति ये संभूतिमुपासते' इति संभूतेरुपास्यत्वापवादात्संभवः प्रतिषिध्यते, न हि परमार्थसद्भूतायां संभूतौ तदपवाद उपपद्यते । ननु विनाशेन संभूतेः समुच्चयविधानार्थः संभूत्यपवादः, यथा 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति । सत्यमेव, देवतादर्शनस्य संभूतिविषयस्य विनाशशब्दवाच्यस्य च कर्मणः समुच्चयविधानार्थः संभूत्यपवादः, तथापि विनाशाख्यस्य कर्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्ववत् देवतादर्शनकर्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्मफलरागप्रवृत्तिरूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वम् । एवं ह्येषणाद्वयरूपान्मृत्योरशुद्धेर्वियुक्तः पुरुषः संस्कृतः स्यात् । अतो मृत्योरतितरणार्था देवतादर्शनकर्मसमुच्चयलक्षणा ह्यविद्या । एवमेव एषणाद्वयलक्षणाविद्याया मृत्योरतितीर्णस्य विरक्तस्योपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयिका परमात्मैकत्वविद्योत्पत्तिरिति पूर्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मवि-

द्या अमृतत्वसाधना एकेन पुरुषेण सबध्यमाना अविद्यया समुच्चीयत इत्युच्यत । अत अन्यार्थत्वादमृतत्वसाधन ब्रह्म विद्यामपेक्ष्य, निन्दार्थ एव भवति सभूत्यपवाद यद्यप्यशु द्धिवियोगहेतु अतन्निष्ठत्वात । अत एव सभूतेरपवादात्सभू तेरापेक्षिकमेव सत्त्वमिति परमार्थसदात्मैकत्वमपेक्ष्य अमृ- तारय सभव प्रतिषिध्यते । एव मायानिर्मितस्यैव जीवस्य अविद्यया प्रत्युपस्थापितस्य अविद्यानाशे स्वभावरूपत्वात्पर मार्थत को न्वेन जनयेत्? न हि रज्ज्वामविद्याध्यारोपित सर्प पुनर्विवेकतो नष्ट जनयेत्कश्चित्, तथा न कश्चिदेन जन- येदिति । को न्वित्याक्षेपार्थत्वात्कारण प्रतिषिध्यते । अविद्यो- द्भूतस्य नष्टस्य जनयितृ कारण न किंचिन्स्तीत्यभिप्राय , 'नाय कुतश्चिन्न बभूव कश्चित्' इति श्रुते ॥

स एष नेति नेतीति व्याख्यात निह्नुते यत ।
सर्वमग्राह्यभावेन हेतुनाज प्रकाशते ॥ २६ ॥

सर्वविशेषप्रतिषेधेन 'अथात आदेशा नेति नेति' इति प्रतिपादितस्यात्मनो दुर्बोधत्व मन्यमाना श्रुति पुन पुन- रुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद्व्याख्यात तत्सर्व निह्नुते । ग्राह्य जनिमद्बुद्धिविषयमपलपत्यर्थात् 'स एष

नेति नेति' इत्यात्मनोऽदृश्यता दर्शयन्ती श्रुति । उपायस्योपेयनिष्ठतामजानत उपायत्वेन व्याख्यातस्य उपेयवद्ग्राह्यता मा भूदिति अग्राह्यभावेन हेतुना कारणेन निहुत इत्यर्थ । ततश्चैवमुपायस्योपेयनिष्ठतामेव जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्व प्रकाशते स्वयमेव ॥

सतो हि मायया जन्म युज्यते न तु तत्त्वत ।
तत्त्वतो जायते यस्य जात तस्य हि जायते ॥ २७ ॥

एव हि श्रुतिवाक्यशतै सबाह्याभ्यन्तरमजमात्मतत्त्वमद्वय न ततोऽन्यदस्तीति निश्चितमेतत् । युक्त्या चाधुनैतदेव पुनर्निर्धार्यत इत्याह—तत्रैतत्स्यात् सदा अग्राह्यमेव चेदसदेवात्मतत्त्वमिति, तन्न, कार्यग्रहणात् । यथा सतो मायाविन मायया जन्म कार्यम्, एव जगतो जन्म कार्य गृह्यमाण मायाविनमिव परमार्थसन्तमात्मान जगज्जन्म मायास्पदमेव गमयति । यस्मात् सतो हि विद्यमानात्कारणान्मायानिर्मितस्य हस्त्यादिकार्यस्येव जगज्जन्म युज्यते, नासत कारणात् । न तु तत्त्वत एव आत्मनो जन्म युज्यते । अथवा, सत विद्यमानस्य वस्तुनो रज्ज्वादे सर्पादिवत् मायया जन्म युज्यते न तु तत्त्वतो यथा, तथा अग्राह्यस्यापि

सत एवात्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते । न तु तत्त्वत एवाजस्यात्मनो जन्म । यस्य पुन परमार्थसदजमात्मतत्त्व जगद्रूपेण जायते वादिन न हि तस्य अज जायत इति शक्य वक्तुम्, विरोधात् । तत तस्यार्थाज्जात जायत इत्यापन्नम् । ततश्चानवस्थापाताज्जायमानत्व न । तस्मादजमेकमेवात्मतत्त्वमिति सिद्धम् ॥

असतो मायया जन्म तत्त्वतो नैव युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥ २८ ॥

असद्वादिनाम् असतो भावस्य मायया तत्त्वतो वा न कथचन जन्म युज्यते, अदृष्टत्वात् । न हि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते । तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थ ॥

यथा स्वप्ने द्वयाभास स्पन्दते मायया मन ।
तथा जाग्रद्द्वयाभास स्पन्दते मायया मन. ॥ २९ ॥

कथ पुन सतो माययैव जन्मेत्युच्यते— यथा रज्ज्वा विकल्पित सर्पो रज्जुरूपेणावेक्ष्यमाण सन्, एव मन परमात्मविज्ञप्त्यात्मरूपणावेक्ष्यमाण सत् ग्राह्यग्राहकरूपेण द्वयाभास स्पन्दते स्वप्न मायया रज्ज्वामिव सर्प , तथा तद्व

देव जाग्रत् जागरिते स्पन्दते मायया मन , स्पन्दत इवेत्यर्थ ॥

अद्वय च द्वयाभास मन स्वप्ने न सशय ।
अद्वयं च द्वयाभास तथा जाग्रन्न संशय ॥ ३० ॥

रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेण अद्वय सत् द्वयाभास मन स्वप्ने, न सशय । न हि स्वप्ने हस्त्यादि ग्राह्य तद्ग्राहक वा चक्षुरादि, द्वय विज्ञानव्यतिरेकेणास्ति , जाग्रदपि तथैवेत्यर्थ , परमार्थसद्विज्ञानमात्राविशेषात् ॥

मनोदृश्यमिद द्वैत यत्किंचित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैत नैवोपलभ्यते ॥ ३१ ॥

रज्जुसर्पवद्विकल्पनारूप द्वैतरूपेण मन एवेत्युक्तम् । तत्र किं प्रमाणमिति, अन्वयव्यतिरेकलक्षणमनुमानमाह । कथम् ? तेन हि मनसा विकल्प्यमानेन दृश्य मनोदृश्यम् इद द्वैत सर्वं मन इति प्रतिज्ञा, तद्भावे भावात् तदभावे चाभावात् । मनसो हि अमनीभावे निरुद्धे विवेकदर्शनाभ्यासवैराग्याभ्या रज्ज्वामिव सर्पे लय गते वा सुषुप्ते द्वैत नैवोपलभ्यत इति अभावात्सिद्ध द्वैतस्यासत्त्वमित्यर्थ ॥

आत्मसत्यानुबोधेन न सकल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥

कथं पुनरयममनीभाव इत्युच्यते— आत्मैव सत्यमात्मसत्यम्, मृत्तिकावत्, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुते। तस्य शास्त्राचार्योपदेशमन्ववबोध आत्मसत्यानुबोध । तेन सकल्प्याभावात्तन्न सकल्पयते दाह्याभावे ज्वलनमिवाग्ने यदा यस्मिन्काले, तदा तस्मिन्काले अमनस्ताम् अमनोभाव याति, ग्राह्याभावे तत् मन अग्रह ग्रहणविकल्पनावर्जितमित्यर्थ ॥

**अकल्पकमज ज्ञान ज्ञेयाभिन्न प्रचक्षते ।**

**ब्रह्म ज्ञेयमज नित्यमजेनाज विबुध्यते ॥ ३३ ॥**

यद्यसदिद द्वैतम्, केन समञ्जसमात्मतत्त्व विबुध्यत इति, उच्यते—अकल्पक सर्वकल्पनावर्जितम्, अत एव अज ज्ञान ज्ञप्तिमात्र ज्ञेयेन परमार्थसता ब्रह्मणा अभिन्न प्रचक्षते कथयन्ति ब्रह्मविद । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' अग्न्युष्णवत्, 'विज्ञानमानन्द ब्रह्म' 'सत्य ज्ञानमनन्त ब्रह्म' इत्यादिश्रुतिभ्य । तस्यैव विशेषणम्— ब्रह्म ज्ञेय यस्य, स्वस्थ तदिद ब्रह्म ज्ञेयम् औष्ण्यस्येवाग्निवदभिन्नम्, तेन आत्मस्वरूपेण अजेन ज्ञानेन अज ज्ञेयमात्मतत्त्व स्वयमेव विबुध्यते अवगच्छति। नित्यप्रकाशस्वरूप इव सविता नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्षत इत्यर्थ ॥

निगृहीतस्य मनसो निर्विकल्पस्य धीमत ।
प्रचार. स तु विज्ञेय सुषुप्तेऽन्यो न तत्सम ॥३४॥

आत्मसत्यानुबोधेन सकल्पमकुर्वत् बाह्यविषयाभावे निरिन्धनाग्निवत्प्रशान्त सत् निगृहीत निरुद्ध मनो भवतीत्युक्तम् । एव च मनसो ह्यमनीभावे द्वैताभावश्चोक्त । तस्यैव निगृहीतस्य निरुद्धस्य मनस निर्विकल्पस्य सर्वकल्पनावर्जितस्य धीमत विवेकवत प्रचरण प्रचारो य , स तु प्रचार विशेषेण ज्ञेयो विज्ञेयो योगिभि । ननु सर्वप्रत्ययाभावे यादृश सुषुप्तिस्थस्य मनस प्रचार , तादृश एव निरुद्धस्यापि, प्रत्ययाभावाविशेषात्, कि तत्र विज्ञेयमिति । अत्रान्यते— नैवम , यस्मात्सुषुप्ते अन्य प्रचारोऽविद्यामोहतमोग्रस्तस्य अन्त लीनानेकानर्थप्रवृत्तिबीजवासनावतो मनस आत्मसत्यानु बोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्य निरुद्धस्य अन्य एव प्रशान्तसर्वक्लेशरजस स्वतन्त्र प्रचार । अतो न तत्सम । तस्माद्युक्त स विज्ञातुमित्यभिप्राय ॥

लीयते हि सुषुप्तौ तन्निगृहीत न लीयते ।
तदेव निर्भय ब्रह्म ज्ञानालोक समन्तत ॥ ३५ ॥

प्रचारभेदे हेतुमाह—लीयते सुषुप्तौ हि यस्मात्सर्वाभिर-

विद्यादिप्रत्ययबीजवासनाभि सह तमोरूपम् अविशेषरूप बीजभावमापद्यते तद्विवेकविज्ञानपूर्वक निगृहीत निरुद्ध सत न लीयते तमोबीजभाव नापद्यते । तस्माद्युक्त प्रचारभेद सुषुप्तस्य समाहितस्य मनस । यदा ग्राह्यग्राहकाविद्याकृतम-लद्वयवर्जितम्, तदा परमद्वय ब्रह्मैव तत्सवृत्तमित्यत तदेव निर्भयम्, द्वैतग्रहणस्य भयनिमित्तस्याभावात् । शान्तमभय ब्रह्म यद्विद्वान्न बिभेति कुतश्चन । तदेव विशेष्यते— ज्ञप्तिर्ज्ञानम आत्मस्वभावचैतन्यम, तदेव ज्ञानमालोक प्रकाशो यस्य, तद्ब्रह्म ज्ञानालोक विज्ञानैकरसघनमित्यर्थ । समन्तत समन्तात्, सर्वतो व्योमवन्नैरन्तर्येण व्यापक-मित्यर्थ ॥

**अजमनिद्रमस्वप्नमनामकमरूपकम् ।**
**सकृद्विभात सर्वज्ञ नोपचार कथचन ॥ ३६ ॥**

जन्मनिमित्ताभावात्सबाह्याभ्यन्तरम अजम, अविद्यानि-मित्त हि जन्म रज्जुसर्पवदित्यवोचाम । सा चाविद्या आत्मस त्यानुबोधेन निरुद्धा यत, अत अजम्, अत एव अनिद्रम अविद्यालक्षणानादिर्मायानिद्रास्वापात्प्रबुद्धम अद्वयस्वरूपे-णात्मना, अत अस्वप्नम् । अप्रबोधकृते ह्यस्य नामरूपे, प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे । न नाम्नाभिधीयते ब्रह्म, रूप्य

ते वा न केनचित्प्रकारेण इति अनामकम् अरूपक च तत्, 'यतो वाचो निवर्तन्ते' इत्यादिश्रुते । किंच, सकृद्विभात सदैव विभात सदा भारूपम्, अग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात् । ग्रहणाग्रहण हि राज्यहनी, तमश्चाविद्यालक्षण सदा अप्रभातत्वे कारणम्, तदभावान्नित्यचैतन्य भारूपत्वाच्च युक्त सकृद्विभातमिति । अत एव सर्व च तत् ज्ञप्तिस्वरूप चेति सर्वज्ञम् । नेह ब्रह्मण्येवविधे उपचरणमुपचार कर्तव्य यथा अन्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचार । नित्यशुद्धबुद्धमुक्तस्वभावत्वाद्ब्रह्मण कथचन न कथचिदपि कर्तव्यसभव अविद्यानाशे इत्यर्थ ॥

सर्वाभिलापविगत सर्वचिन्तासमुत्थित ।
सुप्रशान्त सकृज्ज्योति समाधिरचलोऽभय ॥

अनामकत्वाद्युक्तार्थसिद्धये हेतुमाह—अभिलप्यते अनेनेति अभिलाप वाक्करण सर्वप्रकारस्याभिधानस्य, तस्माद्विगत, वागत्रोपलक्षणार्था, सर्वबाह्यकरणवर्जित इत्येतत । तथा, सर्वचिन्तासमुत्थित, चिन्त्यते अनयेति चिन्ता बुद्धि, तस्या समुत्थित, अन्त करणविवर्जित इत्यर्थ, 'अप्राणो ह्यमना शुभ्र' 'अक्षरात्परत पर' इत्यादिश्रुते । यस्मात्सर्वविषयवर्जित, अत सुप्रशान्त । सकृज्ज्योति सदैव ज्योति आ-

त्मचैतन्यस्वरूपेण । समाधिः समाधिनिमित्तप्रज्ञावगम्यत्वात्, समाधीयते अस्मिन्निति वा समाधिः । अचलः अविक्रियः । अत एव अभयः विक्रियाभावात् ॥

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ।**

**आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ ३८ ॥**

यस्माद्ब्रह्मैव 'समाधिरचलोऽभयः' इत्युक्तम्, अतः न तत्र तस्मिन्ब्रह्मणि ग्रहः ग्रहणमुपादानम्, न उत्सर्गः उत्सर्जनं हानं वा विद्यते । यत्र हि विक्रिया तद्विषयत्वं वा, तत्र हानोपादाने स्याताम्, न तद्द्वयमिह ब्रह्मणि संभवति, विकारहेतोरन्यस्याभावान्निरवयवत्वाच्च, अतो न तत्र हानोपादाने संभवतः । चिन्ता यत्र न विद्यते, सर्वप्रकारैव चिन्ता न संभवति यत्र अमनस्त्वात्, कुतस्तत्र हानोपादाने इत्यर्थः । यदैव आत्मसत्यानुबोधो जातः, तदैव आत्मसंस्थं विषयाभावादग्न्युष्णवदात्मन्येव स्थितं ज्ञानम्, अजाति जातिवर्जितम्, समतां गतं परं साम्यमापन्नं भवति । यदादौ प्रतिज्ञातम् 'अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम्' इति, इदं तदुपपत्तितः शास्त्रतश्चोक्तमुपसंह्रियते— अजाति समतां गतमिति । एतस्मादात्मसत्यानुबोधात्कार्पण्यविषयमन्यत्, यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति

स कृपण ' इति श्रुते । प्राप्यैतत्सर्वं कृतकृत्यो ब्राह्मणो भवतीत्यभिप्राय ॥

अस्पर्शयोगो वै नाम दुर्दर्श सर्वयोगिणाम् ।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिन ॥ ३९ ॥

यद्यपीदमित्थ परमार्थतत्त्वम् , अस्पर्शयोगो नाम अय सर्वसबन्धाख्यस्पर्शवर्जितत्वात् अस्पर्शयोगो नाम वै स्मर्यते प्रसिद्ध उपनिषत्सु । दु खेन दृश्यत इति दुर्दर्श सर्वयोगिणाम् वेदान्तविज्ञानरहितानाम् , आत्मसत्यानुबोधायासलभ्य एवेत्यर्थ । योगिन बिभ्यति हि अस्मात्सर्वभयवर्जितादपि आत्मनाशरूपमिमम योग मन्यमाना भय कुर्वन्ति, अभये अस्मिन भयदर्शिन भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थ ॥

मनसो निग्रहायत्तमभयं सर्वयोगिणाम् ।
दु खक्षय प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ ४० ॥

येषा पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत्कल्पितमेव मन इन्द्रियादि च न परमार्थतो विद्यते, तेषा ब्रह्मस्वरूपाणाम भय मोक्षाख्या च अक्षया शान्ति स्वभावत एव सिद्धा, नान्यायत्ता, 'नोपचार कथचन' इत्युक्ते , ये त्वतोऽन्ये

योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्त-मात्मसबन्धि पश्यन्ति, तेषामात्मसत्यानुबोधरहिताना मनसो निग्रहायत्तमभय सर्वेषा योगिनाम् । किंच, दु खक्षयोऽपि । न ह्यात्मसबन्धिनि मनसि प्रचलिते दु खक्षयोऽस्त्यविवेकिनाम् । किंच, आत्मप्रबोधोऽपि मनोनिग्रहायत्त एव । तथा, अक्षयापि मोक्षाख्या शान्तिस्तेषा मनोनिग्रहायत्तैव ॥

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदत ॥ ४१ ॥

मनोनिग्रहोऽपि तेषाम् उदधे कुशाग्रण एकबिन्दुना उत्सेचनेन शोषणव्यवसायवत् व्यवसायवतामनवसन्नान्त -करणानामनिर्वेदात् अपरिखेदत भवतीत्यर्थ ॥

उपायेन निगृह्णीयाद्विक्षिप्त कामभोगयो. ।
सुप्रसन्न लये चैव यथा कामो लयस्तथा ॥ ४२ ॥

किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रहे उपाय ? नेत्युच्यते, अपरिखिन्नव्यवसायवान्सन, वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्त मनो निगृह्णीयात् निरुन्ध्यादात्मन्येवेत्यर्थ । किंच, लीयतेऽस्मिन्निति सुषुप्तो लय , तस्मिन्

लय चेत्सुप्रसन्नम् आयासवर्जितमपीत्येतत्, निगृह्णीयादि त्यनुवर्तते। सुप्रसन्नं चेत्कस्मान्निगृह्यत इति, उच्यते, यस्मात् यथा कामः अनर्थहेतुः, तथा लयोऽपि, अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यत्वमित्यर्थः ॥

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥

कः स उपाय इति, उच्यते— सर्वं द्वैतमविद्याविजृम्भितं दुःखमेव इत्यनुस्मृत्य कामभोगात् कामनिमित्तो भोग इच्छाविषयः तस्मात् विप्रसृतं मनो निवर्तयेत् वैराग्यभावनयेत्यर्थः। अजं ब्रह्म सर्वम् इत्येतच्छास्त्राचार्योपदेशतः अनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति अभावात् ॥

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ४४ ॥

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं संबोधयेत् मनः आत्मविवेकदर्शनेन योजयेत्। चित्तं मनः इत्यनर्थान्तरम्। विक्षिप्तं च कामभोगेषु शमयेत्पुनः। एवं पुनः पुनरभ्यासतो लयात्संबोधितं विषयेभ्यश्च व्यावर्तितम्, नापि साम्यापन्नम् अन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं

मन इति विजानीयात् । ततोऽपि यत्नत साम्यमापादयेत् । यदा तु समप्राप्त भवति, समप्राप्त्यभिमुखीभवतीत्यर्थ , तत तत् न चालयेत् , विषयाभिमुख न कुर्यादित्यथ ॥

नास्वादयेत्सुख तत्र नि सङ्ग प्रज्ञया भवेत् ।
निश्चल निश्चरच्चित्तमेकीकुर्यात्प्रयत्नत ॥ ४५ ॥

समाधित्सतो योगिनो यत्सुख जायते, तत् नास्वादयेत तत्र न रज्येतेत्यर्थ । कथ तर्हि ? नि सङ्ग नि स्पृह प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखम् , तदविद्यापरिकल्पित मृषैवेति विभावयेत्, ततोऽपि सुखरागान्निगृह्णीयादित्यर्थ । यदा पुन सुखरागान्निवृत्त निश्चलस्वभाव सत निश्चरत् बहिर्निर्गच्छद्भवति चित्तम् , ततस्तत नियम्य उक्तोपायेन आत्मन्येव एकीकुर्यात् प्रयत्नत । चित्स्वरूपसत्तामात्रमेवापादयेदित्यथ ॥

यदा न लीयते चित्त न च विक्षिप्यते पुन ।
अनिङ्गनमनाभास निष्पन्न ब्रह्म तत्तदा ॥ ४६ ॥

यथोक्तेनोपायेन निगृहीत चित्त यदा सुषुप्ते न लीयते, न च पुनर्विषयेषु विक्षिप्यते , अनिङ्गनम् अचल निवातप्रदी

पकल्पम्, अनाभास न केनचित्कल्पितेन विषयभावेनावभासते इति, यदा एवलक्षण चित्तम्, तदा निष्पन्न ब्रह्म, ब्रह्मस्वरूपेण निष्पन्न चित्त भवतीत्यर्थ ॥

स्वस्थ शान्त सनिर्वाणमकथ्य सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञ परिचक्षते ॥ ४७ ॥

यथोक्त परमार्थसुखमात्मसत्यानुबोधलक्षण स्वस्थ स्वात्मनि स्थितम्, शान्त सर्वानर्थोपशमरूपम्, सनिर्वाणम्, निर्वृतिर्निर्वाण कैवल्यम्, सह निर्वाणेन वर्तते, तच्च अकथ्य न शक्यते कथयितुम्, अत्यन्तासाधारणविषयत्वात्, सुखमुत्तम निरतिशय हि तद्योगिप्रत्यक्षमेव, न जातमिति अजम्, यथा विषयविषयम्, अजेन अनुत्पन्नेन ज्ञेयेन अव्यतिरिक्त सत् स्वेन सर्वज्ञरूपेण सर्वज्ञ ब्रह्मैव सुख परिचक्षते कथयन्ति ब्रह्मविद ॥

न कश्चिज्जायते जीव सभवोऽस्य न विद्यते ।
एतत्तदुत्तम सत्य यत्र किंचिन्न जायते ॥ ४८ ॥

सर्वोऽप्यय मनोनिग्रहादि मृल्लोहादिवत्सृष्टिरुपासना च उक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन, न परमार्थसत्येति । परमार्थसत्य तु न कश्चिज्जायत जीव कर्ता भोक्ता च नोत्प-

द्यत केनचिदपि प्रकारण । अत स्वभावत अजस्य अस्य एकस्यात्मन सभव कारण न विद्यते नास्ति । यस्मान्न विद्यतेऽस्य कारणम, तस्मान्न कश्चिज्जायते जीव इत्येतत । पूर्वेषूपायत्वेनोक्ताना सत्यानाम एतत् उत्तम सत्य यस्मिन्सत्यस्वरूपे ब्रह्मणि अणुमात्रमपि किंचिन्न जायते इति ॥

इति तृतीयमद्वैतप्रकरण सपूर्णम् ॥

# अलातशान्तिप्रकरणम् ॥

ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाभिन्नेन सबुद्धस्त वन्दे द्विपदा वरम् ॥ १ ॥

ओंकारनिर्णयद्वारेण आगमत प्रतिज्ञातस्याद्वैतस्य बाह्य विषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्या साक्षान्निर्धारितस्य एतदुत्तम सत्यमित्युपसहार कृतोऽन्ते । तस्यैतस्यागमार्थस्य अद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिना वैनाशिकाश्च । तेषा चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पद दर्शनमिति मिथ्यादर्शनत्व सूचितम्, क्लेशानास्पदत्वात्सम्यग्दर्शनमित्य द्वैतदर्शनस्तुतये । तदिह विस्तरेणान्योन्यविरुद्धतया असम्यग्दर्शनत्व प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसहर्तव्या आवीतन्यायेनेत्यलातशान्तिप्रकरणमारभ्यते । तत्राद्वैतदर्शनसप्रदायकर्तुरद्वैतस्वरूपेणैव नमस्कारार्थोऽयमाद्यश्लोक । आचार्यपूजा हि अभिप्रेतार्थसिद्ध्यर्थेष्यते शास्त्रारम्भे । आकाशेन ईषद्समाप्तमाकाशकल्पमाकाशतुल्यमित्येतत् । तेन आकाशकल्पेन ज्ञानेन । किम्? धर्मानात्मन । किंविशिष्टान्? गगनोपमान्

गगनमुपमा येषां ते गगनोपमाः, तानात्मनो धर्मान्। ज्ञानस्यैव पुनर्विशेषणम्— ज्ञेयैर्धर्मैरात्मभिरभिन्नम् अग्न्युष्णवत् सवितृप्रकाशवच्च यत् ज्ञानम्, तेन ज्ञेयाभिन्नेन ज्ञानेन आकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन, गगनोपमान्धर्मान्यः स बुद्धः संबुद्धवानित्यमेव इश्वरो यो नारायणाख्यः, तं वन्दे अभिवादये। द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानम्, पुरुषोत्तममित्यभिप्रायः। उपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।
अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥

अधुना अद्वैतदर्शनयोगस्य नमस्कारः तत्स्तुतये—स्पर्शनं स्पर्शः संबन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि, स अस्पर्शयोगः ब्रह्मस्वभाव एव वै नामेति, ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः। स च सर्वसत्त्वसुखो भवति। कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखस्वरूपः, यथा तपः। अयं तु न तथा। किं तर्हि? सर्वसत्त्वानां सुखः। तथा इह भवति कश्चिद्विषयोपभोगः सुखो न हितः, अयं तु सुखो हितश्च, नित्यमप्रचलितस्वभावत्वात्।

किं च अविवाद , विरुद्ध वदन विवाद पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते स अविवाद । कस्मात्? यत अविरुद्धश्च , य ईदृशो योग देशित उपदिष्ट शास्त्रेण, त नमाम्यह प्रणमामीत्यर्थ ॥

भूतस्य जातिमिच्छन्ति वादिन केचिदेव हि ।
अभूतस्यापरे धीरा विवदन्तः परस्परम् ॥ ३ ॥

कथ द्वैतिन परस्पर विरुध्यन्त इति, उच्यते— भूतस्य विद्यमानस्य वस्तुन जातिम उत्पत्तिम् इच्छन्ति वादिन केचिदेव हि सांख्या , न सर्वे एव द्वैतिन । यस्मात् अभूतस्य अविद्यमानस्य अपरे वैशेषिका नैयायिकाश्च धीरा धीमन्त , प्राज्ञाभिमानिन इत्यर्थ । विवदन्त विरुद्ध वदन्तो हि अन्योन्यमिच्छन्ति जेतुमित्यभिप्राय ॥

भूत न जायते किंचिदभूत नैव जायते ।
विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते ॥ ४ ॥

तैरेव विरुद्धवदनेन अन्योन्यपक्षप्रतिषेध कुर्वद्भि किं ख्यापित भवतीति, उच्यते— भूत विद्यमान वस्तु न जायते किंचिद्विद्यमानत्वादेव आत्मवत् इत्येव वदन असद्वादी सांख्यपक्ष प्रतिषेधति सज्जन्म । तथा अभूतम् अविद्यमा

नम अविद्यमानत्वान्नैव जायते शशविषाणवत् इत्येव वदन्सा-ख्योऽपि असद्वादिपक्षमसज्जन्म प्रतिषेधति । विवदन्त वि रुद्ध वदन्त अद्वया अद्वैतिनो ह्येते अन्योऽन्यस्य पक्षौ सद सतोर्जन्मनी प्रतिषेधन्त अजातिम् अनुत्पत्तिमर्थात्ख्याप-यन्ति प्रकाशयन्ति ते ॥

ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
विवदामो न तै सार्धमविवाद निबोधत ॥ ५ ॥

तैरव ख्याप्यमानामजातिम् एवमस्तु इति अनुमोदामहे केवलम्, न तै सार्धं विवदाम पक्षप्रतिपक्षपरिग्रहेण, यथा ते अन्योन्यमित्यभिप्राय । अत तम् अविवाद विवादर हित परमार्थदर्शनमनुज्ञातमस्माभि निबोधत हे शिष्या ॥

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिन ।
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥

सदसद्वादिन सर्वे । अय तु पुरस्तात्कृतभाष्य श्लोक ॥

न भवत्यमृत मर्त्य न मर्त्यममृत तथा ।
प्रकृतेरन्यथाभावो न कथचिद्भविष्यति ॥ ७ ॥

स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।

**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ ८ ॥**

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुत्पत्त्यामोदनप्रदर्शनार्थः ॥

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति, कासावित्याह—सम्यक्सिद्धिः संसिद्धिः, तत्र भवा सांसिद्धिकी, यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः, सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति । तथैव सा । स्वाभाविकी द्रव्यस्वभावत एव सिद्धा, यथा अग्न्यादीनामुष्णप्रकाशादिलक्षणा । सापि न कालान्तरे व्यभिचरति देशान्तरे वा, तथा सहजा आत्मना सहैव जाता, यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्यापि या काचित् अकृता केनचिन्न कृता, यथा अपां निम्नदेशगमनादिलक्षणा । अन्यापि या काचित्स्वभावं न जहाति, सा सर्वा प्रकृतिरिति विज्ञेया लोके । मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति, किमुत अजस्वभावेषु परमार्थवस्तुषु? अमृतत्वलक्षणा प्रकृतिर्नान्यथा भवेदित्यभिप्रायः ॥

**जरामरणनिर्मुक्ता सर्वे धर्मा स्वभावत ।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

किंविषया पुन सा प्रकृति , यस्या अन्यथाभावो वादिभि कल्प्यते ? कल्पनाया वा को दोष इत्याह— जरामरणनिर्मुक्ता जरामरणादिसर्वविक्रियावर्जिता इत्यर्थ । क ? सर्वे धर्मा सर्वे आत्मान इत्येतत् । स्वभावत प्रकृतित एव । अत एवस्वभावा सन्तो धर्मा जरामरणमिच्छन्त इवेच्छन्त रज्ज्वामिव सर्पमात्मनि कल्पयन्त च्यवन्त, स्वभावतश्चलन्तीत्यर्थ । तन्मनीषया जरामरणचिन्तया तद्भावभावितत्वदोषेणेत्यथ ॥

**कारण यस्य वै कार्य कारण तस्य जायते ।**
**जायमान कथमज भिन्न नित्य कथ च तत् ॥**

कथ सज्जातिवादिभि साख्यैरनुपपन्नमुच्यते इति, आह वैशेषिक —कारण मृद्वदुपादानलक्षण यस्य वादिन वै कार्यम , कारणमेव कार्याकारेण परिणमते यस्य वादिन इत्यर्थ । तस्य अजमेव सत् प्रधानादि कारण महदादिकार्यरूपेण जायत इत्यर्थ । महदाद्याकारेण चेज्जायमान प्रधानम , कथमजमुच्यते तै ? विप्रतिषिद्ध चेदम—जायते अज चेति ।

नित्य च तैरुच्यते । प्रधान भिन्न विदीर्णम्, स्फुटितमेकदेशेन सत् कथ नित्य भवेदित्यर्थ । न हि सावयव घटादि एकदेशेन स्फुटनधर्मि नित्य दृष्ट लोके इत्यर्थ । विदीर्ण च स्यादेकदेशेनाज नित्य चेत्येतत् विप्रतिषिद्ध तैरभिधीयत इत्यभिप्राय ॥

कारणाद्यद्यनन्यत्वमत कार्यमज तव ।
जायमानाद्धि वै कार्यात्कारण ते कथ ध्रुवम् ॥ १२ ॥

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह— कारणात् अजात् कार्यस्य यदि अनन्यत्वमिष्ट त्वया, तत कार्यमप्यजमिति प्राप्तम । इद चान्यद्विप्रतिषिद्ध कार्यमज चेति तव । किंचान्यत्, कार्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्यात् कारणम् अनन्यान्नित्य ध्रुव च ते कथ भवेत् ? न हि कुक्कुट्या एकदेश पच्यत, एकदेश प्रसवाय कल्प्यते ॥

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥

किंचान्यत्, यत अजात् अनुत्पन्नाद्वस्तुन जायते यस्य वादिन कार्यम्, दृष्टान्त तस्य नास्ति वै, दृष्टान्ताभावे अर्थादजान्न किंचिज्जायत इति सिद्ध भवतीत्यर्थ । यदा पुन

जातात् जायमानस्य वस्तुन अभ्युपगम , तदपि अन्यस्मा ज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्यते । अनवस्था स्यादित्यर्थ ॥

हेतोरादि फल येषामादिर्हेतु फलस्य च ।
हेतो फलस्य चानादि कथ तैरुपवर्ण्यते ॥ १४ ॥

'यत्र त्वस्य सर्वमात्मैवाभूत्' इति परमार्थतो द्वैताभाव श्रुत्योक्त , तमाश्रित्याह— हेतो धर्मादे आदि कारण देहादिसघात फल येषा वादिनाम , तथा आदि कारण हेतुर्धर्मादि फलस्य च देहादिसघातस्य , एव हेतुफलयोरितरेतरकायकारणत्वेन आदिमत्त्व ब्रुवद्भि एव हेतो फलस्य च अनादित्व कथ तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थ । न हि नित्यस्य कूटस्थस्यात्मनो हेतुफलात्मकता सभवति ॥

हेतोरादि॰ फल येषामादिर्हेतु फलस्य च ।
तथा जन्म भवेत्तेषा पुत्राज्जन्म पितुर्यथा ॥ १५ ॥

कथ तैर्विरुद्धमभ्युपगम्यत इति, उच्यत— हेतुजन्यादेव फलात् हेतोर्जन्माभ्युपगच्छता तेषामीदृशो विरोध उक्तो भवति, यथा पुत्राज्जन्म पितु ॥

संभवे हेतुफलयोरेषितव्य क्रमस्त्वया ।
युगपत्सभवे यस्मादसबन्धो विषाणवत् ॥ १६ ॥

यथोक्तो विरोधो न युक्तोऽभ्युपगन्तुमिति चेन्मन्यसे, सभवे उत्पत्तौ हेतुफलयो क्रम एषितव्य अन्वेष्टव्य त्वया—हेतु पूर्व पश्चात्फल चेति । इतश्च युगपत्सभवे यस्माद्धेतुफलयो कार्यकारणत्वेन असबन्ध , यथा युगपत्सभवतो सव्येतरगोविषाणयो ॥

फलादुत्पद्यमान सन्न ते हेतु प्रसिध्यति ।
अप्रसिद्ध कथ हेतुः फलमुत्पादयिष्यति ॥ १७ ॥

कथमसबन्ध इत्याह्——जन्यात्स्वतोऽलब्धात्मकात् फलात् उत्पद्यमान सन् शशविषाणादेरिवासतो न हेतु प्रसिध्यति जन्म न लभते । अलब्धात्मक अप्रसिद्ध सन शशविषाणादिकल्प तव स कथ फलमुत्पादयिष्यति ? न हि इतरेतरापेक्षसिद्धयो शशविषाणकल्पयो कार्यकारणभावेन सबन्ध क्वचिद्दृष्ट अन्यथा वेत्यभिप्राय ॥

यदि हेतो फलात्सिद्धिः फलसिद्धिश्च हेतुत ।
कतरत्पूर्वनिष्पन्न यस्य सिद्धिरपेक्षया ॥ १८ ॥

असबन्धतादोषेणापाकृतेऽपि हेतुफलयो कार्यकारणभावे, यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया, कत-रत्पूर्वनिष्पन्न हेतुफलयो ? यस्य पश्चाद्भाविन सिद्धि स्यात्पूर्वसिद्धापेक्षया, तद्ब्रूहीत्यर्थ ॥

**अशक्तिरपरिज्ञान क्रमकोपोऽथ वा पुन ।**
**एव हि सर्वथा बुद्धैरजाति परिदीपिता ॥ १९ ॥**

अथ एतन्न शक्यते वक्तुमिति मन्यसे, सेयमशक्ति अपरिज्ञान तत्त्वाविवेक, मूढतेत्यर्थ । अथ वा, योऽय त्वयोक्त क्रम हेतो फलस्य सिद्धि फलाच्च हेतो सिद्धि-रिति इतरेतरानन्तर्यलक्षण, तस्य कोप विपर्यासोऽन्यथा-भाव स्यादित्यभिप्राय । एव हेतुफलयो कार्यकारणभावा नुपपत्ते अजाति सर्वस्यानुत्पत्ति परिदीपिता प्रकाशिता अन्योन्यपक्षदोष ब्रुवद्भिर्वादिभि बुद्धै पण्डितैरित्यर्थ ॥

**बीजाङ्कुराख्यो दृष्टान्त सदा साध्यसमो हि स ।**
**न हि साध्यसमो हेतु सिद्धौ साध्यस्य युज्यते ॥**

ननु हेतुफलयो कार्यकारणभाव इत्यस्माभिरुक्त शब्द-मात्रमाश्रित्य च्छलमिद त्वयोक्तम्— 'पुत्राज्जन्म पितुर्यथा'

'विषाणवद्यासबन्ध' इत्यादि । न ह्यस्माभि असिद्धाद्धेतो फलसिद्धि, असिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता । किं तर्हि ? बीजाङ्कुरवत्कार्यकारणभावोऽभ्युपगम्यत इति । अत्रोच्यते—बीजाङ्कुराख्यो दृष्टान्तो य, स साध्येन सम तुल्यो ममेत्यभिप्राय । ननु प्रत्यक्ष कार्यकारणभावो बीजाङ्कुरयोरनादि, न, पूर्वस्य पूर्वस्य अपरभावादादिमत्त्वाभ्युपगमात् । यथा इदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान् बीज चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत् । एव पूर्व पूर्वोऽङ्कुरो बीज च पूर्व पूर्वमादिमदेवेति प्रत्येक सर्वस्य बीजाङ्कुरजातस्यादिमत्त्वात्कस्यचिदप्यनादित्वानुपपत्ति । एव हेतुफलयो । अथ बीजाङ्कुरसततेरनादिमत्त्वमिति चेत्, न, एकत्वानुपपत्ते, न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसततिर्नामैका अभ्युपगम्यते हेतुफलसततिर्वा तदनादित्ववादिभि । तस्मात्सूक्तम 'हेतो फलस्य चानादि कथ तैरुपवर्ण्यते' इति । तथा च अन्यदप्यनुपपत्तेर्न च्छलमित्यभिप्राय । न च लोके साध्यसमो हेतु साध्यस्य सिद्धौ सिद्धिनिमित्त युज्यत प्रयुज्यते प्रमाणकुशलैरित्यर्थ । हेतुरिति दृष्टान्तोऽत्राभिप्रेत, गमकत्वात्, प्रकृतो हि दृष्टान्त, न हेतुरिति ॥

पूर्वापरापरिज्ञानमजाते परिदीपकम् ।

जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥ २१ ॥

कथं बुद्धैरजातिः परिदीपितेति, आह— यदेतत् हेतुफलयोः पूर्वापरापरिज्ञानम्, तच्चैतत् अजातेः परिदीपकम् अवबोधकमित्यर्थः । जायमानो हि चेद्धर्मो गृह्यते, कथं तस्मात्पूर्वं कारणं न गृह्यते? अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम्, जन्यजनकयोः संबन्धस्यानपेतत्वात्, तस्मादजातिपरिदीपकं तदित्यर्थः ॥

स्वतो वा परतो वापि न किंचिद्वस्तु जायते ।
सदसत्सदसद्वापि न किंचिद्वस्तु जायते ॥ २२ ॥

इतश्च न जायते किंचित् यज्जायमानं वस्तु स्वतः परतः उभयतो वा सत् असत् सदसद्वा न जायते, न तस्य केनचिदपि प्रकारेण जन्म संभवति । न तावत्स्वयमेवापरिनिष्पन्नात्स्वतः स्वरूपात्स्वयमेव जायते, यथा घटस्तस्मादेव घटात् । नापि परतः अन्यस्मादन्यः, यथा घटात्पटः । तथा नोभयतः, विरोधात्, यथा घटपटाभ्यां घटः पटो वा न जायते । ननु मृदा घटो जायते पितुश्च पुत्रः, सत्यम्, अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम् । तावेव तु शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते— किं सत्यमेव

तौ, उत मृषा इति, यावता परीक्ष्यमाणे शब्दप्रत्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत्, 'वाचारम्भणम्' इति श्रुतेः। सच्चेत् न जायते, सत्त्वात्, मृत्पित्रादिवत्। यद्यसत्, तथापि न जायते, असत्त्वादेव, शशविषाणादिवत्। अथ सदसत्, तथापि न जायते विरुद्धस्यैकस्यासंभवात्। अतो न किंचिद्वस्तु जायत इति सिद्धम्। येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः, ते दूरत एव न्यायापेताः। इदमित्थमित्यवधारणक्षणान्तरानवस्थानात्, अननुभूतस्य स्मृत्यनुपपत्तेश्च ॥

हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः।
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥

किंच, हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरजन्मैवाभ्युपगतं स्यात्। कथम्? अनादेः आदिरहितात्फलात् हेतुः न जायते। न ह्यनुत्पन्नादनादेः फलाद्धेतोर्जन्मेष्यते त्वया, फलं चापि आदिरहितादनादेर्हेतोरजात्स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते। तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते। यस्मात् आदिः कारणं न विद्यते यस्य लोके, तस्य ह्यादिः

पूर्वोक्ता जातिर्न विद्यते । कारणवत एव ह्यादेरभ्युपगम्यते, न अकारणवत ॥

**प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः ।**
**संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥**

उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति— प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिः, तस्याः सनिमित्तत्वम्, निमित्तं कारणं विषय इत्येतत्, सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत्, प्रतिजानीमहे। न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात्, तस्याः सनिमित्तत्वात् । अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतः नाशोऽभावः प्रसज्येतेत्यर्थः । न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात् । अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात्, परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रम्, तस्य परतन्त्रस्य परतन्त्राश्रयस्य बाह्यार्थस्य प्रज्ञानव्यतिरिक्तस्य अस्तिता मता अभिप्रेता। न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वभावभेदेनैतद्वैचित्र्यं संभवति । स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः । इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता । संक्ल-

शन सङ्क्लेश , दु खमित्यर्थ । उपलभ्यते हि अग्निदाहादि- निमित्त दु खम् । यद्यग्न्यादिबाह्य दाहादिनिमित्त विज्ञानव्य- तिरिक्त न स्यात् , ततो दाहादिदु ख नोपलभ्येत । उपलभ्य- ते तु । अत तेन मन्यामहे अस्ति बाह्योऽर्थ इति । न हि विज्ञानमात्रे सङ्क्लेशो युक्त , अन्यत्रादर्शनादित्यभिप्राय ॥

प्रज्ञप्ते सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।
निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥

अत्रोच्यते—बाढमेव प्रज्ञप्ते सनिमित्तत्व द्वयसङ्क्लेशो- पलब्धियुक्तिदर्शनादिष्यते त्वया । स्थिरीभव तावत्त्व युक्ति दर्शन वस्तुनस्तथात्वाभ्युगमे कारणमित्यत्र । ब्रूहि किं तत इति । उच्यते— निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य तव घटा देरनिमित्तत्वमनालम्बनत्व वैचित्र्याहेतुत्वमिष्यतेऽस्माभि । कथम् ? भूतदर्शनात् परमार्थदर्शनादित्येतत । न हि घटो यथा- भूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति, यथा अश्वान्महिष , पटो वा तन्तुव्यतिरेकेण तन्तवश्चांशुव्यतिरेकेण इत्येवमुत्तरोत्त रभूतदर्शन आ शब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामहे इत्य र्थ । अथ वा, अभूतदर्शनाद्बाह्यार्थस्य अनिमित्तत्वमिष्यते र ज्ज्वादाविव सर्पादेरित्यर्थ । भ्रान्तिदर्शनविषयत्वाच्च निमि-

त्तस्यानिमित्तत्व भवेत्, तदभावे अभानात् । न हि सुषुप्त-समाहितमुक्ताना भ्रान्तिदर्शनाभावे आत्मव्यतिरिक्तो बाह्यो-ऽर्थ उपलभ्यते । न ह्युन्मत्तावगत वस्त्वनुन्मत्तैरपि तथाभूतं गम्यते । एतन द्वयदर्शन सङ्क्लेशोपलब्धिश्च प्रत्युक्ता ॥

चित्त न सस्पृशत्यर्थं नार्थाभास तथैव च ।
अभूतो हि यतश्चार्थो नार्थाभासस्तत. पृथक् ॥ २६ ॥

यस्मान्नास्ति बाह्य निमित्तम्, अत चित्त न स्पृशत्यर्थं बाह्यालम्बनविषयम्, नाप्यर्थाभासम, चित्तत्वात्, स्वप्नचि त्तवत् । अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्य शब्दा-यर्था यत उक्तहेतुत्वाच्च । नाप्यर्थाभासश्चित्तात्पृथक् । चित्त-मेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥

निमित्त न सदा चित्त सस्पृशत्यध्वसु त्रिषु ।
अनिमित्तो विपर्यासः कथ तस्य भविष्यति ॥ २७ ॥

ननु विपर्यासस्तर्हि असति घटादौ घटाद्याभासता चि-त्तस्य, तथा च सति अविपर्यास कश्चिद्वक्तव्य इति, अत्रोच्यते— निमित्त विषयम अतीतानागतवर्तमानाध्वसु त्रिष्वपि सदा चित्त न सस्पृशेदेव हि । यदि हि कश्चित्स-स्पृशेत्, स अविपर्यास परमार्थ इत्यतस्तदपेक्षया असति

घटे घटाभासता विपर्यास स्यात्, न तु तदस्ति कदाचि दपि चित्तस्याथसस्पर्शनम् । तस्मात अनिमित्त विपर्यास कथ तस्य चित्तस्य भविष्यति ? न कथंचिद्विपर्यासोऽस्तीत्यभिप्राय । अयमेव हि स्वभावश्चित्तस्य, यदुत असति निमित्ते घटादौ तद्वदवभासनम् ॥

तस्मान्न जायते चित्त चित्तदृश्य न जायते ।
तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥

'प्रज्ञप्तेः सनिमित्तत्वम्' इत्यादि एतदन्त विज्ञानवादिनो बौद्धस्य वचन बाह्यार्थवादिपक्षप्रतिषेधपरम् आचार्येणानुमोदितम् । तदेव हेतु कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते—तस्मादित्यादि । यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिना अभ्युपगता, तदनुमोदितमस्माभिरपि भूतदर्शनात्, तस्मात्तस्यापि चित्तस्य जायमानावभासता असत्येव जन्मनि युक्ता भवितुमिति अतो न जायते चित्तम् । यथा चित्तदृश्य न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिन क्षणिकत्वदु खित्वशून्यत्वानात्मत्वादि च, तेनैव चित्तेन चित्तस्वरूप द्रष्टुमशक्य पश्यन्त खे वै पश्यन्ति ते पद पक्ष्यादीनाम् । अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थ । येऽपि शून्यवादिन

पश्यन्त एव सर्वशून्यता स्वदर्शनस्यापि शून्यता प्रतिजानते, ते ततोऽपि साहसिकतरा ख मुष्टिनापि जिघृक्षन्ति ॥

अजात जायते यस्मादजाति प्रकृतिस्ततः ।
प्रकृतेरन्यथाभावो न कथचिद्भविष्यति ॥ २९ ॥

उक्तैर्हेतुभिरजमेक ब्रह्मेति सिद्धम्, यत्पुनरादौ प्रतिज्ञातम्, तत्फलोपसहारार्थोऽय श्लोक —अजात यच्चित्त ब्रह्मैव जायत इति वादिभि परिकल्प्यत, तत् अजात जायते यस्मात् अजाति प्रकृति तस्य, तत तस्मात् अजातरूपाया प्रकृतेरन्यथाभावो जन्म न कथचिद्भविष्यति ॥

अनादेरन्तवत्त्व च ससारस्य न सेत्स्यति ।
अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥ ३० ॥

अय चापर आत्मन ससारमोक्षयो परमार्थसद्भाववादिना दोष उच्यते—अनादे अतीतकोटिरहितस्य ससारस्य अन्तवत्त्व समाप्ति न सेत्स्यति युक्तित सिद्धिं नोपयास्यति । न ह्यनादि सन अन्तवान्कश्चित्पदार्थो दृष्टो लोके । बीजाङ्कुरसबन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत, न, एकवस्त्वभावेनापोदितत्वात् । तथा अनन्ततापि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्य आदिमतो न भविष्यति, घटादिष्वदर्शनात् ।

घटादिविनाशवदवस्तुत्वाददोष इति चेत्, तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः, असत्त्वादेव शशविषाणस्येव आदिमत्त्वाभावश्च ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥

'निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्' इत्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः ॥

न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ ३४ ॥

जागरिते गत्यागमनकालौ नियतौ, देशः प्रमाणतो यः, तस्य अनियमात् नियमस्याभावात् स्वप्ने न देशान्तरगमन-

मित्यर्थः ॥

मित्राद्यैः सह संमन्त्र्य संबुद्धो न प्रपद्यते ।
गृहीतं चापि यत्किंचित्प्रतिबुद्धो न पश्यति ॥ ३५ ॥

मित्राद्यैः सह संमन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते, गृहीतं च यत्किंचिद्धिरण्यादि न प्राप्नोति, ततश्च न देशान्तरं गच्छति स्वप्ने ॥

स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥

स्वप्ने च अटन्दृश्यते यः कायः, स अवस्तुकः ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात् । यथा स्वप्नदृश्यः कायः असन्, तथा सर्वं चित्तदृश्यम् अवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः । स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः ॥

ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ।
तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥

इतश्च असत्त्वं जाग्रद्वस्तुनः जागरितवत् जागरितस्येव ग्रहणात् ग्राह्यग्राहकरूपेण स्वप्नस्य, तज्जागरितं हेतुः अस्य स्व-

प्रस्य स स्वप्न तद्धेतु जागरितकार्यम् इष्यते । तद्धेतुत्वात् जागरितकार्यत्वात् तस्यैव स्वप्नदृश एव सज्जागरितम् , न त्वन्येषाम् , यथा स्वप्न इत्यभिप्राय । यथा स्वप्न स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते, तथा तत्कारण त्वात्साधारणविद्यमानवस्तुवदवभासनम् , न तु साधारण विद्यमानवस्तु स्वप्नवदेवेत्यभिप्राय ॥

उत्पादस्याप्रसिद्धत्वादज सर्वमुदाहृतम् ।
न च भूतादभूतस्य सभवोऽस्ति कथचन ॥ ३८ ॥

ननु स्वप्नकारणत्वेऽपि जागरितवस्तुना न स्वप्नवदवस्तुत्वम् । अत्यन्तचलो हि स्वप्न जागरित तु स्थिर लक्ष्यत । सत्यमेवमविवेकिना स्यात् । विवेकिना तु न कस्यचिद्वस्तुन उत्पाद प्रसिद्ध । अत अप्रसिद्धत्वात् उत्पादस्य आत्मैव सर्वमिति अज सर्वम् उदाहृत वेदान्तेषु ‘ सबाह्याभ्यन्तरो ह्यज ’ इति । यदपि मन्यसे जागरितात्सत अमन्स्वप्नो जायत इति, तदसत् । न भूतात् विद्यमानात् अभूतस्य असत सभवोऽस्ति लोके । न ह्यसत शशविषाणादे स भवो दृष्ट कथचिदपि ॥

असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मय ।

असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥

ननु उक्तं त्वयैव स्वप्नो जागरितकार्यमिति, तत्कथमुत्पादाऽप्रसिद्ध इति उच्यते? शृणु तत्र यथा कार्यकारणभावोऽस्माभिरभिप्रेत इति। असत् अविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मय स्वप्नेऽपि जागरितवत् ग्राह्यग्राहकरूपेण विकल्पयन्पश्यति, तथा असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति अविकल्पयन्, चशब्दात्। तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थ। तस्माज्जागरितं स्वप्नहेतुरित्युच्यते, न तु परमार्थसदिति कृत्वा ॥

नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा ।
सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुत ॥ ४० ॥

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्यकारणभाव उपपद्यते। कथम्? नास्ति असद्धेतुकम् असत् शशविषाणादि हेतु कारणं यस्य असत एव खपुष्पादे, तत् असद्धेतुकम् असत् न विद्यते। तथा सदपि घटादिवस्तु असद्धेतुकम् शशविषाणादिकार्यं नास्ति। तथा सच्च विद्यमानं घटादि वस्त्वन्तरकार्यं नास्ति। सत्कार्यम् असत् कुत

एव सभवति ? न चान्य कार्यकारणभाव सभवति शक्यो वा कल्पयितुम् । अतो विवेकिनामसिद्ध एव कार्यकारणभाव कस्यचिदित्यभिप्राय ॥

**विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् ।**
**तथा स्वप्ने विपर्यासाद्धर्मास्तत्रैव पश्यति ॥ ४१ ॥**

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावाशङ्कामपनयन्नाह— विपर्यासात् अविवेकत यथा जाग्रत् जागरिते अचिन्त्यान्भावान अशक्यचिन्तनान रज्जुसर्पादीन भूतवत् परमार्थवत् स्पृशेत, स्पृशन्निव विकल्पयेदित्यर्थ, कश्चिद्यथा, तथा स्वप्ने विपर्यासात् हस्त्यादीन्पश्यन्निव विकल्पयति । तत्रैव पश्यति, न तु जागरितादुत्पद्यमानानित्यर्थ ॥

**उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम् ।**
**जातिस्तु देशिता बुद्धैरजातेस्त्रसता सदा ॥ ४२ ॥**

यापि बुद्धै अद्वैतवादिभि जाति देशिता उपदिष्टा, उपलम्भनमुपलम्भ, तस्मात् उपलब्धेरित्यर्थ । समाचारात् वर्णाश्रमादिधर्मसमाचरणाच्च ताभ्या हेतुभ्याम् अस्तिवस्तुत्ववादिनाम् अस्ति वस्तुभाव इत्येववदनशीलाना दृढाग्रहवता

श्रद्दधाना मन्दविवेकिनामर्थोपायत्वेन सा दर्शिता जातिः । ता गृह्णन्तु तावत् । वेदान्ताभ्यासिना तु स्वयमेव अजाद्वयात्मविषयो विवेको भविष्यतीति, न तु परमार्थबुद्ध्या । ते हि श्रोत्रियाः स्थूलबुद्धित्वात् अजाते अजातिवस्तुनः सदा त्रस्यन्ति आत्मनाशं मन्यमाना अविवेकिन इत्यर्थः । 'उपायः सोऽवताराय' इत्युक्तम् ॥

अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये ।
जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति ॥

ये च एवमुपलम्भात्समाचाराच्च अजाते अजातिवस्तुनः त्रसन्तः अस्ति वस्त्विति अद्वयादात्मनः वियन्ति विरुद्धं यन्ति द्वैतं प्रतिपद्यन्त इत्यर्थः । तेषाम् अजाते त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषाः जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति, विवेकमार्गप्रवृत्तत्वात् । यद्यपि कश्चिद्दोषः स्यात्, सोऽप्यल्प एव भविष्यति, सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः ॥

उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।
उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥ ४४ ॥

ननु उपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्तु-

ति, न, उपलम्भसमाचारयोर्व्यभिचारात् । कथ व्यभिचार इति, उच्यते— उपलभ्यते हि मायाहस्ती हस्तीव, हस्तिनमिवात्र समाचरन्ति बन्धनारोहणादिहस्तिसबन्धिभिर्धर्मै, हस्तीति चोच्यते असन्नपि यथा, तथैव उपलम्भात्समाचारात् द्वैत भेदरूप अस्ति वस्तु इत्युच्यते । तस्मान्नापलम्भसमाचारौ द्वैतवस्तुसद्भावे हतू भवत इत्यभिप्राय ॥

जात्याभास चलाभास वस्त्वाभास तथैव च ।
अजाचलमवस्तुत्व विज्ञान शान्तमद्वयम् ॥ ४५ ॥

किं पुन परमार्थसद्वस्तु, यदास्पदा जात्याद्यसद्बुद्धय इत्याह— अजाति सत् जातिवदवभासत इति जात्याभासम्, तद्यथा देवदत्तो जायत इति । चलाभास चलमिवाभासत इति, यथा स एव देवदत्तो गच्छतीति । वस्त्वाभास वस्तु द्रव्य धर्मि, तद्वदवभासत इति वस्त्वाभासम्, यथा स एव देवदत्तो गौरा दीर्घ इति । जायते देवदत्त स्पन्दते दीर्घो गौर इत्येवमवभासते । परमार्थतस्तु अजमचलमवस्तुत्वमद्रव्य च । किं तदेवप्रकारम्? विज्ञान विज्ञप्ति, जात्यादिरहितत्वाच्छान्तम अत एव अद्वय च तदित्यर्थ ॥

एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः ।
एवमेव विजानन्तो न पतन्ति विपर्यये ॥ ४६ ॥

एवं यथोक्तेभ्यो हेतुभ्यः न जायते चित्तम् । एवं धर्मा आत्मानः अजाः स्मृताः ब्रह्मविद्भिः । धर्मा इति बहुवचनं देहभेदानुविधायित्वादद्वयस्यैव उपचारतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तः त्यक्त-बाह्यैषणाः पुनर्न पतन्ति अविद्याध्वान्तसागरे विपर्यये, 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिमन्त्रवर्णात् ॥

ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥ ४७ ॥

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह— यथा हि लोके ऋजुवक्रादिप्रकाराभासम् अलातस्पन्दितम् उल्काचलनम्, तथा ग्रहणग्राहकाभासं विषयिविषयाभासमित्यर्थः । किं तत्? विज्ञानस्पन्दितं स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति, 'अजाचलम्' इति ह्युक्तम् ॥

अस्पन्दमानमलातमनाभासमजं यथा ।
अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥

अस्पन्दमान स्पन्दनवर्जित तदेव अलातम् ऋज्वाद्याकारेणाजायमानम् अनाभासम् अज यथा, तथा अविद्यया स्पन्दमानम अविद्योपरमे अस्पन्दमान जात्याद्याकारेण अनाभासम् अजम अचल भविष्यतीत्यर्थ ॥

अलाते स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र नि स्पन्दान्नालात प्रविशन्ति ते ॥

किं च, तस्मिन्नेव अलाते स्प दमाने ऋजुवक्राद्याभासा अलातादन्यत कुतश्चिदागत्यालाते नैव भवन्तीति नान्यतोभुव । न च तस्मान्नि स्पन्दादलातादन्यत्र निर्गता । न च नि स्पन्दमलातमेव प्रविशन्ति ते ॥

न निर्गता अलातात्ते द्रव्यत्वाभावयोगत ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषत ॥ ५० ॥

कि च, न निर्गता अलातात् ते आभासा गृहादिव, द्रव्यत्वाभावयोगत , द्रव्यस्य भावो द्रव्यत्वम , तदभाव द्रव्यत्वा भाव , द्रव्यत्वाभावयोगत द्रव्यत्वाभावयुक्ते वस्तुत्वाभावादित्यर्थ । वस्तुनो हि प्रवेशादि सभवति, नावस्तुन । विज्ञानेऽपि जात्याद्याभासा तथैव स्यु , आभासस्य अविशेषत तुल्यत्वात् ॥

विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र नि स्पन्दान्न विज्ञान विशन्ति ते ॥

न निर्गतास्ते विज्ञानाद्द्रव्यत्वाभावयोगत ।
कार्यकारणताभावाद्यतोऽचिन्त्या सदैव ते ॥ ५२ ॥

कथ तुल्यत्वमित्याह— अलातेन समान सर्व विज्ञानस्य, सदा अचलत्व तु विज्ञानस्य विशेष । जात्याद्याभासा विज्ञाने अचले किंकृता इत्याह— कार्यकारणताभावात् जन्यजनकत्वानुपपत्तेरभावरूपत्वात अचिन्त्या ते यत सदैव । यथा असत्सु ऋज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टा अलातमात्रे, तथा असत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादिबुद्धिर्मृषैवेति समुदायार्थ ॥

द्रव्य द्रव्यस्य हेतु स्यादन्यदन्यस्य चैव हि ।
द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥ ५३ ॥

अजमेकमात्मतत्त्वमिति स्थितम । तत्र यैरपि कार्यकारणभाव कल्प्यते, तेषा द्रव्य द्रव्यस्या यस्यान्यत हेतु कारण स्यात्, न तु तस्यैव तत् । नाप्यद्रव्य कस्यचित्कारण स्वतन्त्र दृष्ट लोके । न च द्रव्यत्व धर्माणाम आत्मनाम उपपद्यते अन्यत्व वा कुतश्चित, येन अन्यस्य कारण-

त्व कार्यत्व वा प्रतिपद्येत । अत अद्रव्यत्वादनन्यत्वाच्च न कस्यचित्कार्यं कारण वा आत्मेत्यर्थ ॥

एव न चित्तजा धर्माश्चित्त वापि न धर्मजम् ।
एव हेतुफलाजातिं प्रविशन्ति मनीषिण ॥ ५४ ॥

एव यथोक्तेभ्यो हेतुभ्य आत्मविज्ञानस्वरूपमेव चित्त मिति, न चित्तजा बाह्यधर्मा नापि बाह्यधर्मज चित्तम्, विज्ञानस्वरूपाभासमात्रत्वात्सर्वधर्माणाम । एव न हेतो फल जायते, नापि फलाद्धेतुरिति हेतुफलयोरजातिं हेतुफला-जातिं प्रविशन्ति अध्यवस्यन्ति । आत्मनि हेतुफलयोरभाव-मेव प्रतिपद्यन्ते ब्रह्मविद इत्यथ ॥

यावद्धेतुफलावेशस्तावद्धेतुफलोद्भव ।
क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भव ॥ ५५ ॥

ये पुनर्हेतुफलयोरभिनिविष्टा, तेषा किं स्यादिति, उच्यते—धर्माधर्माख्यस्य हेतो अह कर्ता मम धर्माधर्मौ तत्फल कालान्तरे कचित्प्राणिनिकाये जातो भोक्ष्ये इति यावद्धेतुफलयोरावेश हेतुफलाग्रह आत्मन्यध्यारोपणम्, त चित्ततेत्यर्थ, तावद्धेतुफलयोरुद्भव धर्माधर्मयोस्तत्फलस्य चा

नुच्छेदेन प्रवृत्तिरित्यर्थ । यदा पुनर्मन्त्रौषधिवीर्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेन अविद्योद्भूतहेतुफलावेशोपनीतो भवति, तदा तस्मिन्क्षीणे नास्ति हेतुफलोद्भव ॥

**यावद्धेतुफलावेश ससारस्तावदायत ।**
**क्षीणे हेतुफलावेशे ससार न प्रपद्यते ॥ ५६ ॥**

यदि हेतुफलोद्भव , तदा का दोष इति, उच्यते—यावत् सम्यग्दर्शनेन हेतुफलावेश न निवर्तते, अक्षीण ससार तावत् आयात दीर्घो भवतीत्यथ । क्षीणे पुन हेतुफलावेशे ससार न प्रपद्यते, कारणाभावात् ॥

**सवृत्या जायते सर्व शाश्वत नास्ति तेन वै ।**
**सद्भावेन ह्यज सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥**

ननु अजादात्मनोऽन्यन्नास्त्येव, तत्कथ हेतुफलयो ससारस्य च उत्पत्तिविनाशावुच्येते त्वया? शृणु, सवृत्या सवरण सवृति अविद्याविषयो लौकिकव्यवहार , तया सवृत्या जायते सर्वम । तेन अविद्याविषये शाश्वत नित्य नास्ति वै । अत उत्पत्तिविनाशलक्षण ससार आयत इत्युच्यते । परमार्थसद्भावेन तु अज सर्वम् आत्मैव यस्मात्, अतो जात्यभावात् उच्छेद तेन नास्ति वै कस्य-

चिद्धेतुफलादेरित्यर्थ ॥

धर्मा य इति जायन्ते जायन्ते ते न तत्त्वत. ।
जन्म मायोपम तेषा सा च माया न विद्यते ॥ ५८ ॥

येऽप्यात्मानोऽन्य च धर्मा जायन्त इति कल्प्यन्ते, ते इति एवप्रकारा यथोक्ता सवृतिर्निर्दिश्यत इति सवृत्यैव धर्मा जायन्ते । न ते तत्त्वत परमार्थत जायन्ते । यत्पुनस्तत्सवृत्या जन्म तेषा धर्माणा यथोक्ताना यथा मायया जन्म तथा तत् मायोपम प्रत्येतव्यम् । माया नाम वस्तु तर्हि, नैवम, सा च माया न विद्यते । मायेत्यविद्यमानस्याख्येत्यभिप्राय ॥

यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।
नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥

कथ मायोपम तेषा धर्माणा जन्मेति, आह— यथा मायामयात् आम्रादिबीजात् जायते तन्मय मायामय अङ्कुर, नासावङ्कुरो नित्य, न च उच्छेदी विनाशी वा । अभूतत्वादेव धर्मेषु जन्मनाशादियोजना युक्ति, न तु परमार्थतो धर्माणा जन्म नाशो वा युज्यत इत्यर्थ ॥

नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ।

**यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥**

परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वत अशाश्वत इति वा न अभिधा, नाभिधान प्रवर्तेत इत्यर्थ । यत्र येषु वर्ण्यन्ते यैरर्था, ते वर्णा शब्दा न वर्तन्ते अभिधातु प्रकाशयितु न प्रवर्तन्त इत्यर्थ । इदमेवमिति विवेक विविक्तता तत्र नित्योऽनित्य इति नोच्यते, 'यतो वाचो निवतन्ते' इति श्रुते ॥

**यथा स्वप्ने द्वयाभास चित्त चलति मायया ।**
**तथा जाग्रद्वयाभास चित्त चलति मायया ॥ ६१ ॥**

**अद्वय च द्वयाभास चित्त स्वप्ने न सशय ।**
**अद्वय च द्वयाभास तथा जाग्रन्न सशय ॥ ६२ ॥**

यत्पुनर्वाग्गोचरत्व परमार्थत अद्वयस्य विज्ञानमात्रस्य, तन्मनस स्पन्दनमात्रम, न परमार्थत इत्युक्तार्थौ श्लोकौ ॥

**स्वप्नदृक्प्रचरन्स्वप्ने दिक्षु वै दशसु स्थितान् ।**
**अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥**

इतश्च वाग्गोचरस्याभावो द्वैतस्य—स्वप्नान्पश्यतीति स्वप्नदृक् प्रचरन् पर्यटन्स्वप्ने स्वप्नस्थाने दिक्षु वै दशसु स्थितान

वर्तमानान् जीवान्प्राणिनः अण्डजान्स्वेदजान्वा यान् सदा पश्यतीति ॥

स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ।
तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥ ६४ ॥

यद्येवम्, ततः किम्? उच्यते—स्वप्नदृशश्चित्तं स्वप्नदृक्चित्तम्, तेन दृश्यास्ते जीवाः, ततः तस्मात् स्वप्नदृक्चित्तात् पृथक् न विद्यन्ते न सन्तीत्यर्थः । चित्तमेव ह्यनेकजीवादिभेदाकारेण विकल्प्यते । तथा तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव, तेन स्वप्नदृशा दृश्यं तद्दृश्यम् । अतः स्वप्नदृग्व्यतिरेकेण चित्तं नाम नास्तीत्यर्थः ॥

चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान् ।
अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥

जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ।
तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥

जाग्रतो दृश्या जीवाः तच्चित्ताव्यतिरिक्ताः, चित्तेक्षणीयत्वात्, स्वप्नदृक्चित्तेक्षणीयजीववत् । तच्च जीवेक्षणात्मकं चित्तं द्रष्टुरव्यतिरिक्तं द्रष्टृदृश्यत्वात् स्वप्नचित्तवत् । उक्तार्थमन्यत् ॥

उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति चोन्यते ।
लक्षणाशून्यमुभय तन्मते नैव गृह्यते ॥ ६७ ॥

जीवचित्ते उभे चित्तचैत्ये ते अन्योन्यदृश्ये इतरेतरगम्ये । जीवादिविषयापेक्ष हि चित्त नाम भवति । चित्तापेक्ष हि जीवादि दृश्यम् । अतस्ते अन्योन्यदृश्ये । तस्मान्न किंचिदस्तीति चोन्यत चित्त वा चित्तेक्षणीय वा । किं तदस्तीति विवेकिनोन्यते । न हि स्वप्ने हस्ती हस्तिचित्त वा विद्यते, तथा इहापि विवेकिनामित्यभिप्राय । कथम् ? लक्षणाशून्य लक्ष्यते अनयेति लक्षणा प्रमाणम, प्रमाणशून्यमुभय चित्त चैत्य द्वय यत तन्मतेनैव तच्चित्ततयैव तत् गृह्यते । न हि घटमतिं प्रत्याख्याय घटो गृह्यते, नापि घट प्रत्याख्याय घटमति । न हि तत्र प्रमाणप्रमेयभेद शक्यते कल्पयितुमित्यभिप्राय ॥

यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६८॥

यथा मायामयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६९॥

यथा निर्मितको जीवो जायते म्रियतेऽपि च ।

**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥७०॥**

मायामय मायाविना य कृतो निर्मितक मन्त्रौषध्या दिभिर्निष्पादित । स्वप्नमायानिर्मितका अण्डजादयो जीवा यथा जायन्ते म्रियन्त च, तथा मनुष्यादिलक्षणा अविद्य-माना एव चित्तविकल्पनामात्रा इत्यर्थ ॥

**न कश्चिज्जायते जीव सभवोऽस्य न विद्यते ।**
**एतत्तदुत्तम सत्य यत्र किंचिन्न जायते ॥ ७१ ॥**

व्यवहारसत्यविषये जीवाना जन्ममरणादि स्वप्नादि जीववदित्युक्तम् । उत्तम तु परमार्थसत्य न कश्चिज्जायते जीव इति । उक्तार्थमन्यत् ॥

**चित्तस्पन्दितमेवेद ग्राह्यग्राहकवद्द्वयम् ।**
**चित्त निर्विषय नित्यमसङ्ग तेन कीर्तितम् ॥ ७२ ॥**

सर्वं ग्राह्यग्राहकवच्चित्तस्पन्दितमेव द्वयम् । चित्त परमार्थत आत्मैवेति निर्विषयम् । तेन निर्विषयत्वेन नित्यम् असङ्ग कीर्तितम् । 'असङ्गो ह्यय पुरुष ' इति श्रुते । सविषयस्य हि विषये सङ्ग । निर्विषयत्वाच्चित्तमसङ्गमित्यर्थ ।

**योऽस्ति कल्पितसवृत्त्या परमार्थेन नास्त्यसौ ।**
**परतन्त्राभिसवृत्त्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥**

ननु निर्विषयत्वेन चेदसङ्गत्वम्, चित्तस्य न नि सङ्गता भवति, यस्मात् शास्ता शास्त्र शिष्यश्चेत्येवमादेर्विषयस्य विद्यमानत्वात्, नैष दोष । कस्मात्? य पदार्थं शास्त्रा दिर्विद्यते, स कल्पितसवृत्या । कल्पिता च सा परमार्थप्रतिपत्त्युपायत्वेन सवृतिश्च सा तया योऽस्ति परमार्थेन, नास्त्यसौ न विद्यते । 'ज्ञाते द्वैत न विद्यते' इत्युक्तम् । यश्च परतन्त्राभिसवृत्या परशास्त्रव्यवहारेण स्यात्पदार्थ, स परमार्थतो निरूप्यमाणो नास्त्येव । तेन युक्तमुक्तम् 'असङ्ग तेन कीर्तितम्' इति ॥

अज• कल्पितसवृत्या परमार्थेन नाप्यज ।
परतन्त्राभिनिष्पत्त्या सवृत्या जायते तु स ॥ ७४ ॥

ननु शास्त्रादीना सवृतित्वे अज इतीयमपि कल्पना सवृति स्यात् । सत्यमेवम्, शास्त्रादिकल्पितसवृत्यैव अज इत्युच्यते । परमार्थेन नाप्यज, यस्मात् परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिमपेक्ष्य य अज इत्युक्त, स सवृत्या जायते । अत अज इतीयमपि कल्पना परमार्थविषये नैव क्रमत इत्यर्थ ॥

अभूताभिनिवेशोऽस्ति द्वय तत्र न विद्यते ।
द्वयाभाव स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥

यस्माद्सद्विषय , तस्मात् असत्यभूते द्वैते अभिनिवेशोऽस्ति केवलम् । अभिनिवेश आग्रहमात्रम् । द्वय तत्र न विद्यते मिथ्याभिनिवेशमात्र च जन्मन कारण यस्मात्, तस्मात् द्वयाभाव बुद्ध्वा निर्निमित्त निवृत्तमिथ्याद्वयाभिनिवेश य , स न जायते ॥

यदा न लभते हेतूनुत्तमाधममध्यमान् ।
तदा न जायते चित्त हेत्वभावे फल कुतः ॥ ७६ ॥

जात्याश्रमविहिता आशीर्वर्जितैरनुष्ठीयमाना धर्मा देवत्वादिप्राप्तिहेतव उत्तमा केवलाश्च । धर्मा अधर्मव्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमा । तिर्यगादिप्राप्तिनिमित्ता अधर्मलक्षणा प्रवृत्तिविशेषाश्चाधमा । तानुत्तममध्यमाधमानविद्यापरिकल्पितान् यदा एकमेवाद्वितीयमात्मतत्त्व सर्वकल्पनावर्जित जानन् न लभते न पश्यति, यथा बालैर्दृश्यमान गगने मल विवेकी न पश्यति, तद्वत् , तदा न जायते नोत्पद्यते चित्त देवाद्याकारै उत्तमाधममध्यमफलरूपेण । न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादि ॥

अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाद्वया ।
अजातस्यैव सर्वस्य चित्तदृश्य हि तद्यत ॥ ७७ ॥

हेत्वभावे चित्त नोत्पद्यत इति हि उक्तम् । सा पुनरनुत्पत्तिश्चित्तस्य कीदृशीत्युच्यते— परमार्थदर्शनेन निरस्तधर्माधर्माख्योत्पत्तिनिमित्तस्य अनिमित्तस्य चित्तस्येति या मोक्षाख्या अनुत्पत्ति, सा सर्वदा सर्वावस्थासु समा निर्विशेषा अद्वया च, पूर्वमपि अजातस्यैव अनुत्पन्नस्य चित्तस्य सर्वस्याद्वयस्येत्यर्थ । यस्मात्प्रागपि विज्ञानात् चित्त दृश्य तद्वय जन्म च, तस्मादजातस्य सर्वस्य सर्वदा चित्तस्य समा अद्वयैव अनुत्पत्ति न पुन कदाचिद्भवति, कदाचिद्वा न भवति । सर्वदा एकरूपैवेत्यर्थ ॥

बुद्ध्वानिमित्तता सत्या हेतु पृथगनाप्नुवन् ।
वीतशोक तथा काममभय पदमश्नुते ॥ ७८ ॥

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयस्य अभावादनिमित्तता च सत्या परमार्थरूपा बुद्ध्वा हेतु धर्मादिकारण देवादियोनिप्राप्तये पृथगनाप्नुवन् अनुपाददान त्यक्तबाह्यैषण, सन् कामशोकादिवर्जितम् अविद्यादिरहितम् अभय पदम् अश्नुते, पुनन जायत इत्यर्थ ॥

अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ।
वस्त्वभाव स बुद्ध्वैव निःसङ्ग विनिवर्तते ॥ ७९ ॥

यस्मात् अभूताभिनिवेशात् असति द्वये द्वयास्तित्व निश्चय अभूताभिनिवेश, तस्मात् अविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे तत् चित्त प्रवर्तते। तस्य द्वयस्य वस्तुन अभाव यदा बुद्धवान्, तदा तस्मात् नि सङ्ग निरपेक्ष सत् विनिवर्तते अभूताभिनिवेशविषयात् ॥

निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थिति।
विषय स हि बुद्धानां तत्साम्यमजमद्वयम् ॥ ८० ॥

निवृत्तस्य द्वैतविषयात्, विषयान्तरे च अप्रवृत्तस्य अभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थिति, यैषा ब्रह्मस्वरूपा स्थिति चित्तस्य अद्वयविज्ञानैकरसघनलक्षणा। स हि यस्मात् विषय गोचर परमार्थदर्शिना बुद्धानाम्, तस्मात् तत्साम्य पर निर्विशेषमजमद्वय च ॥

अजमनिद्रमस्वप्न प्रभात भवति स्वयम्।
सकृद्विभातो ह्येवैष धर्मो धातुस्वभावत ॥ ८१ ॥

पुनरपि कीदृशश्चासौ बुद्धाना विषय इत्याह—स्वयमेव तत् प्रभात भवति न आदित्याद्यपेक्षम्, स्वय ज्योति स्वभावमित्यर्थ। सकृद्विभात सदैव विभात इत्येतत्। एष एव-

लक्षण आत्माख्या धर्म धातुस्वभावत वस्तुस्वभावत इत्यर्थ ॥

**सुखमाव्रियते नित्य दु ख विव्रियते सदा ।**
**यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥**

एव बहुश उच्यमानमपि परमार्थतत्त्व कस्माल्लौकिकैर्न गृह्यत इत्युच्यते—यस्मात् यस्य कस्यचित् द्वयवस्तुनो धर्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते अनायासेन आच्छाद्यत इत्यर्थ । द्वयोपलब्धिनिमित्त हि तत्रावरण न यत्नान्तरमपेक्षते । दु ख च विव्रियते प्रकटीक्रियते, परमार्थज्ञानस्य दुर्लभत्वात् । भगवानसौ आत्माद्वयो देव इत्यर्थ । अतो वेदान्तैराचार्यैश्च बहुश उच्यमानोऽपि नैव ज्ञातु शक्य इत्यथ, 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा' इति श्रुते ॥

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः।**
**चलस्थिरोभयाभावैरावृणोत्येव बालिश' ॥ ८३ ॥**

अस्ति नास्तीत्यादि सूक्ष्मविषया अपि पण्डिताना ग्रहा भगवत परमात्मन आवरणा एव, किमुत मूढजनाना बुद्धि लक्षणा इत्येवमर्थ प्रदर्शयन्नाह—अस्तीति । अस्त्यात्मति

कश्चिद्वादी प्रतिपद्यते । नास्तीत्यपरो वैनाशिक । अस्ति नास्तीत्यपरोऽर्धवैनाशिक सदसद्वादी दिग्वासा । नास्ति नास्तीत्यत्यन्तशून्यवादी । तत्रास्तिभावश्चल , घटाद्यनित्यविलक्षणत्वात् । नास्तिभाव स्थिर , सदाविशेषत्वात् । उभय चलस्थिरविषयत्वात् सदसद्भाव । अभावोऽत्यन्ताभाव । प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावै सदसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव बालिशोऽविवेकी । यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात्, किमु स्वभावमूढो जन इत्यभिप्राय ॥

कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृत ।
भगवानाभिरस्पृष्टो येन दृष्ट स सर्वदृक् ॥ ८४ ॥

कीदृक्पुन परमार्थतत्त्वम् , यदवबोधादबालिश पण्डितो भवतीत्याह— कोट्य प्रावादुकशास्त्रनिर्णयान्ता एता उक्ता अस्ति नास्तीत्याद्या चतस्र , यासा कोटीना ग्रहै ग्रहणै उपलब्धिनिश्चयै सदा सर्वदा आवृत आच्छादित तेषामेव प्रावादुकाना य , स भगवान् आभि अस्ति नास्तीत्यादिकोटिभि चतसृभिरपि अस्पृष्ट अस्त्यादिविकल्पनावर्जित इत्येतत् । येन मुनिना दृष्टो ज्ञात वेदान्तेष्वौपनिषद पुरुष , स सर्वदृक् सर्वज्ञ , परमार्थपण्डित इत्यर्थ ॥

प्राप्य सर्वज्ञता कृत्स्ना ब्राह्मण्य पदमद्वयम् ।
अनापन्नादिमध्यान्त किमत परमीहते ॥ ८५ ॥

प्राप्य एता यथोक्ता कृत्स्ना समस्ता सर्वज्ञता ब्राह्मण्य पदम् 'स ब्राह्मण ' ' एष नित्यो महिमा ब्राह्मणस्य ' इति श्रुते । अनापन्नादिमध्यान्तम् आदिमध्यान्ता उत्पत्तिस्थितिलया अनापन्ना अप्राप्ता यस्य अद्वयस्य पदस्य न विद्यन्ते, तत् अनापन्नादिमध्यान्त ब्राह्मण्य पदम् । तदेव प्राप्य लब्ध्वा किमत परमस्मादात्मलाभादूर्ध्वम् ईहते चेष्टते, निष्प्रयोजनमित्यर्थ । 'नैव तस्य कृतेनार्थ ' इत्यादिस्मृते ॥

विप्राणां विनयो ह्येष शम' प्राकृत उच्यते ।
दम प्रकृतिदान्तत्वादेव विद्वाञ्शम व्रजेत् ॥ ८६ ॥

विप्राणा ब्राह्मणाना विनय विनीतत्व स्वाभाविक यदेतदात्मस्वरूपेणावस्थानम् । एष विनय शमोऽप्येष एव प्राकृत स्वाभाविक अकृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात् स्वभावत एव चोपशान्तरूपत्वाद्ब्रह्मण । एव यथोक्त स्वभावोपशान्त ब्रह्म विद्वान् शमम् उपशान्तिं स्वाभाविकी ब्रह्मस्वरूपा व्रजेत् ब्रह्मस्वरूपेणावतिष्ठत इत्यर्थ ॥

सवस्तु सोपलम्भ च द्वय लौकिकमिष्यते ।

अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥ ८७ ॥

एवमन्योन्यविरुद्धत्वात् संसारकारणरागद्वेषदोषास्पदानि प्रावादुकानां दर्शनानि । अतो मिथ्यादर्शनानि तानी-ति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वात् रागादि-दोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्यु-पसंहृतम् । अथेदानीं स्वप्रक्रियाप्रदर्शनार्थं आरम्भः — सवस्तु संवृतिसता वस्तुना सह वर्तत इति सवस्तु, तथा च उपलब्धिरुपलम्भः, तेन सह वर्तत इति सोपलम्भं च शास्त्रादिसर्वव्यवहारास्पदं ग्राह्यग्रहणलक्षणं द्वयं लोका-दनपेतं लौकिकं जागरितमित्येतत् । एवंलक्षणं जागरि-तमिष्यते वेदान्तेषु । अवस्तु संवृतेरप्यभावात् । सो-पलम्भं वस्तुवदुपलम्भनमुपलम्भः असत्यपि वस्तुनि, तेन सह वर्तत इति सोपलम्भं च । शुद्धं केवलं प्रविभक्तं जाग-रितात्स्थूलाल्लौकिकं सर्वप्राणिसाधारणत्वात् इष्यते स्वप्न इत्यर्थः ॥

अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ।
ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥ ८८ ॥

अवस्त्वनुपलम्भं च ग्राह्यग्रहणवर्जितमित्येतत्, लोकोत्तरम्, अत एव लोकातीतम् । ग्राह्यग्रहणविषयो हि लोकः, तदभा-

वात् सर्वप्रवृत्तिबीज सुषुप्तमित्येतत् । एव स्मृत सोपाय परमार्थ-तत्त्व लौकिक शुद्धलौकिक लोकोत्तर च क्रमेण येन ज्ञानेन ज्ञायते, तत् ज्ञान ज्ञेयम् एतान्येव त्रीणि, एतद्व्यतिरेकेण ज्ञेयानुपपत्ते । सर्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावात्, विज्ञेय यत्परमार्थसत्य तुर्याख्यमद्वयमजमात्मतत्त्वमित्यर्थ , सदा सर्वदैव, तल्लौकिकादि विज्ञेयान्त बुद्धै परमार्थदर्शिभिर्ब्रह्मविद्भि प्रकीर्तितम् ॥

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।**
**सर्वज्ञता हि सर्वत्र भवतीह महाधिय. ॥ ८९ ॥**

ज्ञाने च लौकिकादिविषये ज्ञेये च लौकिकादौ त्रिविधे, पूर्व लौकिक स्थूलम् , तदभावेन पश्चाच्छुद्ध लौकिकम्, तदभावेन लोकोत्तरमित्येव क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्ये अद्वये अजे अभये विदिते, स्वयमेव आत्मस्वरूप मेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञ , तद्भाव सर्वज्ञता इह अस्मिन् लोके भवति महाधिय महाबुद्धे । सर्वलोकाति शयवस्तुविषयबुद्धित्वादेवविद सर्वत्र सर्वदा भवति । सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थ । न हि परमा र्थविदो ज्ञानिन ज्ञानोद्भवाभिभवौ स्त , यथा अन्येषा प्रावा दुकानाम ॥

**हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणत ।**
**तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृत ॥ ९० ॥**

लौकिकादीना क्रमेण ज्ञेयत्वेन निर्देशादस्तित्वाशङ्का परमार्थतो मा भूदित्याह— हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तानि आत्मन्यसत्त्वेन रज्ज्वा सर्पवद्धातव्यानीत्यर्थ । ज्ञेयमिह चतुष्कोटिवर्जित परमार्थतत्त्वम् । आप्यानि आप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। पाक्यानि रागद्वेषमोहादयो दोषा कषायाख्यानि पक्तव्यानि । सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणा उपायत्वेनेत्यर्थ । अग्रयाणत प्रथमत । तेषा हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्य विज्ञेय ब्रह्मैक वर्जयित्वा । उपलम्भनमुपलम्भ अविद्याकल्पनामात्रम । हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भि न परमार्थसत्यता त्रयाणामित्यर्थ ॥

**प्रकृत्याकाशवज्ज्ञेया सर्वे धर्मा अनादय ।**
**विद्यते न हि नानात्व तेषा क्वचन किंचन ॥ ९१ ॥**

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवत् आकाशतुल्या सूक्ष्मनिरञ्जनसर्वगतत्वै सर्वे धर्मा आत्मानो ज्ञेया

मुमुक्षुभि अनादय नित्या । बहुवचनकृतभेदाशङ्का निरा-राकुर्वन्नाह— कचन कचिदपि किंचन किंचित् अणुमात्रमपि तेषा न विद्यते नानात्वमिति ॥

आदिबुद्धा प्रकृत्यैव सर्वे धर्माः सुनिश्चिता ।
यस्यैव भवति क्षान्ति सोऽमृतत्वाय कल्पते ॥९२॥

ज्ञेयतापि धर्माणा सवृत्यैव, न परमाथत इत्याह— यस्मात् आदौ बुद्धा आदिबुद्धा प्रकृत्यैव स्वभावत एव यथा नित्यप्रकाशस्वरूप सविता, एव नित्यबोधस्वरूपा इत्यर्थ । सव धर्मा सर्वे आत्मान । न च तेषा निश्चय कर्तव्य नित्यनिश्चितस्वरूपा इत्यर्थ । न सदिह्यमानस्व रूपा एव नैव वेति यस्य मुमुक्षो एव यथोक्तप्रकारेण सर्वदा बोधनिश्चयानिरपेक्षता आत्मार्थं परार्थं वा । यथा सविता नित्य प्रकाशान्तरनिरपेक्ष स्वार्थं परार्थं वेत्येव भवति क्षान्ति बाधकर्तव्यतानिरपक्षता सवदा स्वात्मनि, स अमृतत्वाय अमृतभावाय कल्पत मोक्षाय समर्थो भव-तीत्यर्थ ॥

आदिशान्ता ह्यनुत्पन्ना प्रकृत्यैव सुनिर्वृता ।
सर्वे धर्मा समाभिन्ना अज साम्य विशारदम् ॥

तथा नापि शान्तिकर्तव्यता आत्मनीत्याह— यस्मात् आदिशान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृता सुष्ठूपरतस्वभावा नित्यमुक्तस्वभावा इत्यर्थ । सर्वे धर्मा समाश्च अभिन्नाश्च समाभिन्ना अज साम्य विशारद विशुद्धमात्मतत्त्व यस्मात्, तस्मात् शान्तिर्मोक्षो वा नास्ति कर्तव्य इत्यर्थ । न हि नित्यैकस्वभावस्य कृत किंचिदर्थ वत्स्यात् ॥

**वैशारद्य तु वै नास्ति भेदे विचरता सदा ।**
**भेदनिम्ना पृथग्वादास्तस्मात्ते कृपणा स्मृता ॥**

ये यथोक्त परमार्थतत्त्व प्रतिपन्ना, ते एव अकृपणा लोके, कृपणास्त्वन्य इत्याह— यस्मात् भेदनिम्ना भेदानुयायिन ससारानुगा इत्यर्थ । के? पृथग्वादा पृथक् नाना वस्तु इत्येव वदन येषा ते पृथग्वादा द्वैतिन इत्यर्थ । तस्मात्ते कृपणा क्षुद्रा स्मृता यस्मात् वैशारद्य विशुद्धि तन्नास्ति तेषा भेदे विचरता द्वैतमार्ग अविद्यापरिकल्पिते सर्वदा वर्तमानानामित्यर्थ । अतो युक्तमेव तेषा कार्पण्यमित्यभिप्राय ॥

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिता ।**
**ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥ ९५ ॥**

यदिद परमार्थतत्त्वम्, अमहात्मभिरपण्डितैर्वेदान्तबहि-ष्ठै क्षुद्रैरल्पप्रज्ञैरनवगाह्यमित्याह—अजे साम्ये परमार्थतत्त्वे एवमेवेति ये केचित् स्त्र्यादयोऽपि सुनिश्चिता भविष्यन्ति चेत्, त एव हि लोके महाज्ञाना निरतिशयतत्त्वविषयज्ञाना इत्यर्थ । तच्च तेषा वर्त्म तेषा विदित परमार्थतत्त्व सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विषयीकरोतीत्यर्थ । 'सर्वभूतात्मभूतस्य सम्यगर्थं प्रपश्यत । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिण । शकुनीनामिवाकाश गतिर्नैवोपलभ्यते' इत्यादिस्मरणात् ॥

अजेष्वजमसक्रान्त धर्मेषु ज्ञानमिष्यते ।
यतो न क्रमते ज्ञानमसङ्ग तेन कीर्तितम् ॥ ९६ ॥

कथ महाज्ञानत्वमित्याह— अजेषु अनुत्पन्नेषु अचलेषु धर्मेषु आत्मसु अजमचल च ज्ञानमिष्यते सवितरीव औष्ण्य प्रकाशश्च यत, तस्मात् असक्रान्तम् अर्थान्तरे ज्ञानमजमिष्यते । यस्मान्न क्रमते अर्थान्तरे ज्ञानम्, तेन कारणेन असङ्ग तत् कीर्तितम् आकाशकल्पमित्युक्तम् ॥

अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चित ।
असङ्गता सदा नास्ति किमुतावरणच्युति. ॥ ९७ ॥

इतोऽन्येषां वादिनाम् अणुमात्रे अल्पेऽपि वैधर्म्ये वस्तुनि बहिरन्तर्वा जायमाने उत्पद्यमाने अविपश्चित अविवेकिन असङ्गता असङ्गत्वं सदा नास्ति, किमुत वक्तव्यम् आवरणच्युति बन्धनाशो नास्तीति ॥

अलब्धावरणा सर्वे धर्मा प्रकृतिनिर्मला ।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायका ॥

तेषामावरणच्युतिर्नास्तीति ब्रुवता स्वसिद्धान्ते अभ्युपगत तर्हि धर्माणामावरणम् । नेत्युच्यते— अलब्धावरणा अलब्धमप्राप्तमावरणम् अविद्यादिबन्धन येषा ते धर्मा अलब्धावरणा बन्धनरहिता इत्यर्थ । प्रकृतिनिर्मला स्वभावशुद्धा आदौ बुद्धा तथा मुक्ता, यस्मात् नित्यशुद्धबुद्धमुक्तस्वभावा । यद्येव कथ तर्हि बुध्यन्त इत्युच्यते— नायका स्वामिन समर्था बोद्धु बोधशक्तिमत्स्वभावा इत्यर्थ । यथा नित्यप्रकाशस्वरूपोऽपि सन सविता प्रकाशत इत्युच्यते, यथा वा नित्यनिवृत्तगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यत, तद्वत ॥

क्रमते न हि बुद्धस्य ज्ञान धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञान नैतद्बुद्धेन भाषितम् ॥ ९९ ॥

यस्मात् न हि क्रमत बुद्धस्य परमार्थदर्शिनो ज्ञान विषयान्तरेषु धर्मेषु धर्मसस्थ सवितरीव प्रभा । तायिन तायोऽस्यास्तीति तायी, सतानवतो निरन्तरस्य आकाशकल्पस्येत्यर्थ , पूजावतो वा प्रज्ञावतो वा सर्वे धर्मा आत्मानोऽपि तथा ज्ञानवदेव आकाशकल्पत्वान्न क्रमन्त कचिदप्यर्थान्तर इत्यर्थ । यदादावुपन्यस्तम् 'ज्ञानेनाकाशकल्पेन' इत्यादि, तदिदमाकाशकल्पस्य तायिनो बुद्धस्य तदनन्यत्वादाकाशकल्प ज्ञान न क्रमते कचिदप्यर्थान्तरे । तथा धर्मा इति आकाशमिव अचलमविक्रिय निरवयव नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीत ब्रह्मात्मतत्त्वम् , 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुते । ज्ञानज्ञेयज्ञातृभेदरहित परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम् । यद्यपि बाह्यार्थनिराकरण ज्ञानमात्रकल्पना च अद्वयवस्तुसामीप्यमुक्तम् । इद तु परमार्थतत्त्वमद्वैत वेदान्तष्वेव विज्ञेयमित्यर्थ ॥

दुर्दर्शमतिगम्भीरमज साम्य विशारदम् ।
बुद्ध्वा पदमनानात्व नमस्कुर्मो यथाबलम् ॥ १०० ॥

शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थ नमस्कार उच्यते—दुर्दर्श दु खेन दर्शनमस्येति दुर्दर्शम । अस्ति नास्तीति चतुष्कोटिवर्जितत्वाद्दुर्विज्ञेयमित्यर्थ । अत एव अतिगम्भीर

दुष्प्रवेश महासमुद्रवदकृतप्रज्ञै । अज साम्य विशारदम् । इ द्दक् पदम् अनानात्व नानात्ववर्जित बुद्ध्वा अवगम्य तद्भूता सन्त नमस्कुर्म तस्मै पदाय । अव्यवहार्यमपि व्यवहार-गोचरतामापाद्य यथाबल यथाशक्तीत्यर्थ ॥

अजमपि जनियोग प्रापदैश्वर्ययोगा
दगति च गतिमत्ता प्रापदेक ह्यनेकम् ।
विविधविषयधर्मग्राहि मुग्धेक्षणाना
प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थ
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभ भूतहेतो
र्यस्त पूज्याभिपूज्य परमगुरुममु पादपातैर्नतोऽस्मि ॥ २ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत्स्वान्तमोहान्धकारो
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।
यत्पादावाश्रिताना श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥ ३ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
माण्डूक्योपनिषत्कारिकाभाष्य सपूर्णम् ॥

ॐ

भद्र कर्णोंभि श्रृणुयाम
देवा । भद्र पश्येमाक्षभिर्य-
जत्रा । स्थिरैरङ्गैस्तुष्टुवाऽ-
सस्तनूभि । व्यशेम देव-
हित यदायु ॥ स्वस्ति न
इन्द्रो वृद्धश्रवा । स्वस्ति न
पूषा विश्ववेदा । स्वस्ति न-
स्तार्क्ष्योऽरिष्टनेमि । स्वस्ति
नो बृहस्पतिर्दधातु ॥

ॐ शान्ति शान्ति शान्ति ॥

॥ ॐ ॥

# ऐतरेयोपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः

विरचितम् ।



ॐ

वाङ्मे मनसि प्रतिष्ठिता
मनो मे वाचि प्रतिष्ठितमा-
विरावीर्म एधि । वेदस्य म
आणीस्थ श्रुत मे मा प्रहा-
सी । अनेनाधीतेनाहोराता-
न्सदधाम्यृत वदिष्यामि ।
सत्य वदिष्यामि । तन्मामव-
तु । तद्वक्तारमवतु अवतु मा-
मवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्ति शान्ति शान्ति ॥

# ॥ ऐतरेयोपनिषत् ॥

## श्रीमच्छङ्करभगवत्पादविरचितेन भाष्येण सहिता ।

— ❀ —

परिसमाप्त कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसहृता । एतत्सत्य ब्रह्म प्राणाख्यम् । एष एको देव । एतस्यैव प्राणस्य सर्वे देवा विभूतय । एतस्य प्राणस्यात्मभाव गच्छन् देवता अप्येति इत्युक्तम् । सोऽय देवताप्ययलक्षण पर पुरुषार्थ । एष मोक्ष । स चाय यथो

क्तेन ज्ञानकर्मसमुच्चयेन साधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नाः । तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थम् 'आत्मा वा इदम्' इत्याद्याह । कथं पुनरकर्मसंबन्धिकेवलात्मविज्ञानविधानार्थ उत्तरो ग्रन्थ इति गम्यते? अन्यार्थानवगमात् । तथा च पूर्वोक्तानां देवतानामग्न्यादीनां संसारित्वं दर्शयिष्यत्यशनायादिदोषवत्त्वेन 'तमशनायापिपासाभ्यामन्ववार्जत्' इत्यादिना । अशनायादिमत्सर्वं संसार एव, परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः । भवत्वेवं केवलात्मज्ञानं मोक्षसाधनम्, न त्वत्राकर्म्येवाधिक्रियते, विशेषाश्रवणात् । अकर्मिण आश्रम्यन्तरस्येहाश्रवणात् । कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्य अनन्तरमेवात्मज्ञानं प्रारभ्यते । तस्मात्कर्म्येवाधिक्रियते । न च कर्मासंबन्ध्यात्मविज्ञानम्, पूर्ववदन्ते उपसंहारात् । यथा कर्मसंबन्धिनः पुरुषस्य सूर्यात्मनः स्थावरजङ्गमादिसर्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च 'सूर्य आत्मा' इत्यादिना, तथैव 'एष ब्रह्मैष इन्द्रः' इत्याद्युपक्रम्य सर्वप्राण्यात्मत्वम् । 'यच्च स्थावरम्, सर्वं तत्प्रज्ञानेत्रम्' इत्युपसंहरिष्यति । तथा च संहितोपनिषत्—'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' इत्यादिना कर्मसंबन्धित्वमुक्त्वा 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इत्युपसंहरति ।

तथा तस्यैव 'योऽयमशरीर प्रज्ञात्मा' इत्युक्तस्य 'यश्चासा-
वादित्य एकमेव तदिति विद्यात्' इत्येकत्वमुक्तम् । इहापि
'कोऽयमात्मा' इत्युपक्रम्य प्रज्ञात्मत्वमेव 'प्रज्ञान ब्रह्म'
इति दर्शयिष्यति । तस्मान्नाकर्मसबन्ध्यात्मज्ञानम् । पुनरु-
क्त्यानर्थक्यमिति चेत्—'प्राणो वा अहमस्म्यृषे' इत्यादि
ब्राह्मणेन 'सूर्य आत्मा' इति च मन्त्रेण निर्धारितस्यात्मन
'आत्मा वा इदम्' इत्यादिब्राह्मणेन 'कोऽयमात्मा' इति
प्रश्नपूर्वक पुनर्निर्धारण पुनरुक्तमनर्थकमिति चेत्, न, तस्यैव
धर्मान्तरविशेषनिर्धारणार्थत्वान्न पुनरुक्ततादोष । कथम्?
तस्यैव कर्मसबन्धिनो जगत्सृष्टिस्थितिसहारादिधर्मविशेषनि-
र्धारणार्थत्वात् केवलोपास्यर्थत्वाद्वा, अथवा, आत्मेत्यादि परो
ग्रन्थसन्दर्भ आत्मन कर्मिण कर्मणोऽ यत्रोपासनाप्राप्तौ
कर्मप्रस्तावेऽविहितत्वाद्वा केवलोऽप्यात्मोपास्य इत्येवमर्थ ।
भेदाभेदोपास्यत्वाच्च 'एक एवात्मा' कर्मविषये भेददृष्टिभाक्।
स एवाकर्मकाले अभेदेनाप्युपास्य इत्येवमपुनरुक्तता ॥

'विद्या चाविद्या च यस्तद्वेदोभय सह । अविद्यया
मृत्यु तीर्त्वा विद्ययामृतमश्नुते' इति 'कुर्वन्नेवेह कर्माणि
जिजीविषेच्छत समा' इति च वाजिनाम् । न च वर्ष-
शतात्परमायुर्मर्त्यानाम्, येन कर्मपरित्यागेन आत्मानमुपा-

सीत । दर्शित च ' तावन्ति पुरुषायुषोऽह्रा सहस्राणि भवन्ति' इति । वर्षशत चायु कर्मणैव व्याप्तम् । दर्शितश्च मन्त्र ' कुर्वन्नेवेह कर्माणि' इत्यादि , तथा ' यावज्जीवमग्निहोत्र जुहोति' ' यावज्जीव दर्शपूर्णमासाभ्या यजेत' इत्याद्याश्च , ' त यज्ञपात्रैर्दहन्ति' इति च । ऋणत्रयश्रुतेश्च । तत्र हि पारिव्राज्यादिशास्त्रम् ' व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्यात्मज्ञानस्तुतिपरोऽर्थवादोऽनधिकृतार्थो वा । न, परमार्थात्मविज्ञाने फलादर्शने क्रियानुपपत्ते — यदुक्त कर्मिण एव चात्मज्ञान कर्मसबन्धि चेत्यादि, तन्न, पर ह्याप्तकाम सर्वससारदोषवर्जित ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाने, कृतेन कर्तव्येन वा प्रयोजनमात्मनोऽपश्यत फलादर्शने क्रिया नोपपद्यते । फलादर्शनेऽपि नियुक्तत्वात्करोतीति चेत् , न , नियोगाविषयात्मदर्शनात् । इष्टयोगमनिष्टवियोग वात्मन प्रयोजन पश्यस्तदुपायार्थी यो भवति, स नियोगस्य विषयो दृष्टो लोके, न तु तद्विपरीतनियोगाविषयब्रह्मात्मत्वदर्शी । ब्रह्मात्मत्वदर्श्यपि सश्चेन्नियुज्येत, नियोगाविषयोऽपि सन्न कश्चिन्न नियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्तव्य प्राप्नोति । तच्चानिष्टम् । न च स नियोक्तु शक्यते केनचित् । आम्नायस्यापि तत्प्रभवत्वात् । न हि स्वविज्ञानोत्थेन वचसा स्वय नियुज्यते ।

नापि बहुवित्स्वामी अविवेकिना भृत्येन । आम्नायस्य नित्यत्व सति स्वातन्त्र्यात्सर्वान्प्रति नियोक्तृत्वसामर्थ्यमिति चेत्, न, उक्तदोषात् । तथापि सर्वेण सर्वदा सर्वमविशिष्ट कर्म कर्तव्यमित्युक्तो दोषोऽप्यपरिहार्य एव । तदपि शास्त्रेणैव विधीयत इति चेत्— यथा कर्मकर्तव्यता शास्त्रेण कृता, तथा तद्व्यात्मज्ञान तस्यैव कर्मिण शास्त्रेण विधीयत इति चेत्, न, विरुद्धार्थबोधकत्वानुपपत्ते । न ह्येकस्मिन्कृता कृतसबन्धित्व तद्विपरीतत्व च बोधयितु शक्यम् । शीतो ष्णत्वमिवाग्ने । न चेष्टयोगचिकीर्षा आत्मनोऽनिष्टवियोगचि कीर्षा च शास्त्रकृता, सर्वप्राणिना तद्दर्शनात् । शास्त्रकृत चेत्, तदुभय गोपालादीना न दृश्येत, अशास्त्रज्ञत्वात्तेषाम् । यद्धि स्वतोऽप्राप्तम्, तच्छास्त्रेण बोधयितव्यम । तच्चेत्कृतकर्त व्यताविरोध्यात्मज्ञान शास्त्रेण कृतम्, कथ तद्विरुद्धा कर्तव्यता पुनरुत्पादयेत् शीततामिवाग्नौ, तम इव च भानौ? न बोधयत्येवेति चेत्, न, 'स म आत्मेति विद्यात्प्रज्ञान ब्रह्म' इति चोपसहारात् । 'तदात्मानमे वावेत्तत्त्वमसि' इत्येवमादिवाक्याना तत्परत्वात् । उत्प न्नस्य च ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्न भ्रान्त वा इति शक्य वक्तुम् । त्यागेऽपि प्रयोजनाभावस्य तुल्य-

त्वमिति चेत् 'नाकृतेनेह कश्चन' इति स्मृते — य आहुर्विदित्वा ब्रह्म व्युत्थानमेव कुर्यादिति, तेषामप्येष समानो दोष प्रयोजनाभाव इति चेत्, न, अक्रियामात्रत्वाद्व्युत्थानस्य । अविद्यानिमित्तो हि प्रयोजनस्य भाव, न वस्तुधर्म, सर्वप्राणिना तद्दर्शनात्, प्रयोजनतृष्णया च प्रेर्यमाणस्य वाड्मनकायै प्रवृत्तिदर्शनात्, 'सोऽकामयत जाया मे स्यात्' इत्यादिना पुत्रवित्तादि पाङ्क्तलक्षण काम्यमेवेत्युभे ह्येते साध्यसाधनलक्षणे एषणे एवेति वाजसनेयिब्राह्मणेऽवधारणात् । अविद्याकामदोषनिमित्ताया वाड्मनकायप्रवृत्ते पाङ्क्तलक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्ते क्रियाभावमात्र व्युत्थानम्, न तु यागादिवदनुष्ठेयरूप भावात्मकम् । तच्च विद्यावत्पुरुषधर्म इति न प्रयोजनमन्वेष्टव्यम् । न हि तमसि प्रवृत्तस्य उदित आलोके यद्गर्तपङ्ककण्टकाद्यपतनम्, तत्किंप्रयोजनमिति प्रश्नार्हम् । व्युत्थानतर्ह्यर्थप्राप्तत्वान्न चोदनार्थ इति । गार्हस्थ्ये चेत्पर ब्रह्मविज्ञान जातम्, तत्रैवास्त्वकुर्वत आसन न ततोऽन्यत्र गमनमिति चेत्, न, कामप्रयुक्तत्वाद्गार्हस्थ्यस्य । 'एतावान्वै काम' 'उभे ह्येते एषणे एव' इत्यवधारणात् कामनिमित्तपुत्रवित्तादिसबन्धनियमाभावमात्रम्, न हि ततोऽन्यत्र गमन

व्युत्थानमुच्यते । अतो न गार्हस्थ्य एवाकुर्वत आसनमुत्पन्नविद्यस्य । एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुष सिद्धा । अत्र केचिद्गृहस्था भिक्षाटनादिभयात्परिभवाच्च त्रस्यमाना सूक्ष्मदृष्टिता दर्शयन्त उत्तरमाहु । भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वासनमिति, न, स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत् । स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिन स्वपरिग्रहविशेषभावेऽर्थाद्भिक्षुकत्वमेव । शरीरधारणार्थाया भिक्षाटनादिप्रवृत्तौ यथा नियमो भिक्षो शौचादौ च, तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादिश्रुतिनियुक्तत्वात्प्रत्यवायपरिहारायेति । एतन्नियोगाविषयत्वेन विदुष प्रत्युक्तमशक्यनियोज्यत्वाच्चेति । यावज्जीवादिनित्यचोदनानर्थक्यमिति चेत्, न, अविद्वद्विषयत्वेनार्थवत्त्वात् । यत्तु भिक्षो शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वम्, तत्प्रवृत्तेर्न प्रयोजकम् । आचमनप्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवगम्यते । न चाग्निहोत्रादीना तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोपपत्ति । अर्थ-

प्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेत्, न, तन्नियमस्य पूर्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थ-प्राप्तस्य व्युत्थानस्य पुनर्वचनाद्विदुषो मुमुक्षो कर्तव्यत्वो पपत्ति । अविदुषापि मुमुक्षुणा पारिव्राज्य कर्तव्यमेव, तथा च 'शान्तो दान्त ' इत्यादिवचन प्रमाणम् । शमदमादीना चात्मदर्शनसाधनानामन्याश्रमेष्वनुपपत्ते । 'अत्याश्रमिभ्य परम पवित्र प्रोवाच सम्यगृषिसघजुष्टम्' इति च श्वेताश्वतरे विज्ञायते । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृत-त्वमानशु ' इति च कैवल्यश्रुति । ज्ञात्वा नैष्कर्म्यमाच-रेत्' इति च स्मृते । 'ब्रह्माश्रमपदे वसेत्' इति च ब्रह्मच-र्यादिविद्यासाधनाना च साकल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्येऽस भवात् । न च असपन्न साधन कस्यचिदर्थस्य साधनायालम् । यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्माणि, तेषा परम फलमुपसहृत देवताप्ययलक्षण ससारविषयमेव । यदि कर्मिण एव परमात्मविज्ञानमभविष्यत्, ससारविषयस्यैव फलस्यो पसहारो नोपापत्स्यत । अङ्गफल तदिति चेत्, न, तद्विरोध्या त्मवस्तुविषयत्वादात्मविद्याया । निराकृतसर्वनामरूपकर्म-परमार्थात्मवस्तुविषयमात्मज्ञानममृतत्वसाधनम् । गुणफल सबन्धे हि निराकृतसर्वविशेषात्मवस्तुविषयत्व ज्ञानस्य न

प्राप्नोति, तच्चानिष्टम्, 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यधिकृत्य क्रियाकारकफलादिसर्वव्यवहारनिराकरणाद्विदुष, तद्विपरीतस्याविदुष 'यत्र हि द्वैतमिव भवति' इत्युक्त्वा क्रियाकारकफलरूपस्य ससारस्य दर्शितत्वाच्च वाजसनेयिब्राह्मणे। तथेहापि देवताध्यय ससारविषय यत्फलमशनायादिमद्वस्त्वात्मक तदुपसहृत्य केवल सर्वात्मकवस्तुविषय ज्ञानममृतत्वाय वक्ष्यामीति प्रवर्तते। ऋणप्रतिबन्धश्चाविदुष एव मनुष्यपितृदेवलोकप्राप्तिं प्रति, न विदुष, 'सोऽय मनुष्यलोक पुत्रेणैव' इत्यादिलोकत्रयसाधननियमश्रुते। विदुषश्च ऋणप्रतिबन्धाभावो दर्शित आत्मलोकार्थिन 'किं प्रजया करिष्याम' इत्यादिना। तथा 'एतद्ध स्म वै तद्विद्वास आहुर्ऋषय कावषेया' इत्यादि 'एतद्ध स्म वै तत्पूर्वे विद्वासोऽग्निहोत्र न जुहवाचक्रु' इति च कौषीतकिनाम्। अविदुषस्तर्हि ऋणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेत्, न, प्राग्गार्हस्थ्यप्रतिपत्तेर्ऋणित्वासभवादधिकारानारूढोऽपि ऋणी चेत्स्यात्, सर्वस्य ऋणित्वमित्यनिष्ट प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि 'गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इत्यात्मदर्शनसाधनोपायत्वेनेष्यत एव पारिव्राज्यम्। यावज्जीवादिश्रुतीनामविद्वदमुमुक्षुविषये कृतार्थता। छान्दोग्ये च केषा-

श्चिद्वादशरात्रमग्निहोत्रं हुत्वा तत ऊर्ध्वं परित्यागः श्रूयते। यत्त्वनधिकृतानां पारिव्राज्यमिति, तन्न, तेषां पृथगेव 'उत्सन्नाग्निरनग्निको वा' इत्यादिश्रवणात्, सर्वस्मृतिषु च अविशेषेण आश्रमविकल्पः प्रसिद्धः, समुच्चयश्च। यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यशास्त्रार्थत्वे, गृहे वने वा तिष्ठतो न विशेष इति, तदसत्। व्युत्थानस्यैवार्थप्राप्तत्वान्नान्यत्रावस्थानं स्यात्। अन्यत्रावस्थानस्य कामकर्मप्रयुक्तत्वं ह्यवोचाम, तदभावमात्रं व्युत्थानमिति च। यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तम्, अत्यन्तमूढविषयत्वेनावगमात्। तथा शास्त्रचोदितमपि कर्मात्मविदोऽप्राप्तं गुरुभारतयावगम्यते, किमुत अत्यन्ताविवेकनिमित्तं यथाकामित्वम्? न ह्युन्मादतिमिरदृष्ट्युपलब्धं वस्तु तदपगमेऽपि तथैव स्यात्, उन्मादतिमिरदृष्टिनिमित्तत्वादेव तस्य। तस्मादात्मविदो व्युत्थानव्यतिरेकेण न यथाकामित्वम्, न चान्यत्कर्तव्यमित्येतत्सिद्धम्। यत्तु 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह' इति न विद्यावतो विद्यया सहाविद्यापि वर्तेत इत्ययमर्थः, कस्तर्हि? एकस्मिन्पुरुषे एते न सह संबध्येयातामित्यर्थः, यथा शुक्तिकायां रजतशुक्तिकाज्ञाने एकस्य पुरुषस्य। 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' इति हि काठके। तस्मान्न

विद्याया सत्यामविद्याया सभवोऽस्ति । 'तपसा ब्रह्म विजिज्ञासस्व' इत्यादिश्रुते । तपआदि विद्योत्पत्तिसाधन गुरूपासनादि च कर्म अविद्यात्मकत्वादविद्योच्यते । तेन विद्यामुत्पाद्य मृत्यु काममतितरति । ततो निष्कामस्त्यक्तैषणो ब्रह्मविद्यया अमृतत्वमश्नुत इत्येतमर्थं दर्शयन्नाह— 'अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते' इति । यत्तु पुरुषायु सर्वं कर्मणैव व्याप्तम्, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा' इति, तदविद्वद्विषयत्वेन परिहृतम्, इतरथा असभवात् । यत्तु वक्ष्यमाणमपि पूर्वोक्ततुल्यत्वात्कर्मणा अविरुद्धमात्मज्ञानमिति, तत्सविशेषनिर्विशेषात्मविषयतया प्रत्युक्तम्, उत्तरत्र व्याख्याने च दर्शयिष्याम । अत केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते ॥

**आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति ॥ १ ॥**

आत्मेति । आत्मा आप्नोतेरत्तेरततेर्वा पर सर्वज्ञ सर्वशक्तिरशनायादिसर्वससारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वयो वै । इद यदुक्त नाम

रूपकर्मभेदभिन्न जगत् आत्मैव एक अग्रे जगत सृष्टे प्राक् आसीत्। किं नेदानीं स एवैक ? न। कथ तर्हि आसीदित्युच्यते ? यद्यपीदानीं स एवैक, तथाप्यस्ति विशेष। प्रागुत्पत्ते अव्याकृतनामरूपभेदमात्मभूतमात्मैक-शब्दप्रत्ययगोचर जगत् इदानी व्याकृतनामरूपभेदत्वादने कशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचर चेति विशेष। यथा सलिलात्पृथक् फेननामरूपव्याकरणात्प्राक्सलिलैकश ब्दप्रत्ययगोचरमेव फेनम्, यदा सलिलात्पृथङ् नामरूपभेदेन व्याकृत भवति, तदा सलिल फेन चेति अनेकशब्दप्रत्ययभाक् सलिलमेवेति चैकशब्दप्रत्ययभाक्च फेन भवति, तद्वत्। न अन्यत्किंचन न किंचिदपि मिषत् निमिषद्व्यापारवदितरद्वा। यथा सांख्यानामनात्मपक्षपाति स्वतन्त्र प्रधानम्, यथा च काणादानामणव, न तद्वदिहान्यदात्मन किंचिदपि वस्तु विद्यते। किं तर्हि ? आत्मैवैक आसीदित्यभिप्राय। स सर्वज्ञस्वाभाव्यात् आत्मा एक एव सन् ईक्षत। ननु प्रागुत्प-त्तेरकार्यकरणत्वात्कथमीक्षितवान् ? नाय दोष, सर्वज्ञ स्वाभाव्यात्। तथा च मन्त्रवर्ण — 'अपाणिपादो जवनो ग्रहीता' इत्यादि। केनाभिप्रायेणेत्याह—लोकान् अम्भ प्रभृ तीन्प्राणिकर्मफलोपभोगस्थानभूतान् नु सृजै सृजेऽहम् इति॥

**स इमाँल्लोकानसृजत। अम्भो मरीची-र्मरमापोऽदोऽम्भ परेण दिव द्यौः प्रतिष्ठान्तरिक्ष मरीचयः। पृथिवी मरो या अधस्तात्ता आपः॥ २॥**

एवमीक्षित्वा आलोच्य स आत्मा इमान् लोकान् असृजत सृष्टवान्। यथेह बुद्धिमांस्तक्षादि एवप्रकारान्प्रासादादीन्सृजे इतीक्षित्वा ईक्षानन्तर प्रासादादीन्सृजति, तद्वत्। ननु सोपादानस्तक्षादि प्रासादादीन्सृजतीति युक्तम्, निरुपादानस्त्वात्मा कथ लोकान्सृजतीति? नैष दोष । सलिलफेनस्थानीये आत्मभूते नामरूपे अव्याकृते आत्मैकशब्दवाच्ये व्याकृतफेनस्थानीयस्य जगत उपादानभूत सभवत। तस्मादात्मभूतनामरूपोपादानभूत सन् सर्वज्ञो जगन्निर्मिमीते इत्यविरुद्धम्। अथवा, विज्ञानवान्यथा मायावी निरुपादान आत्मानमेव आत्मान्तरत्वेन आकाशेन गच्छन्तमिव निर्मिमीते, तथा सर्वज्ञो देव सर्वशक्तिर्महामाय आत्मानमेव आत्मान्तरत्वेन जगद्रूपेण निर्मिमीते इति युक्ततरम्। एव च सति कार्यकारणोभयासद्वाद्यादिपक्षाश्च न प्रसज्जन्ते, सुनिराकृताश्च भवन्ति। कान् लोकानसृजतेत्याह— अम्भो

मरीचीर्मरमाप इति । आकाशादिक्रमेण अण्डमुत्पाद्य अम्भ प्रभृतीन् लोकानसृजत । तत्र अम्भ प्रभृतीन्स्वयमेव व्याचष्टे श्रुति । अद तत् अम्भ शब्दवाच्यो लोक , परेण दिव द्युलोकात्परेण परस्तात् , सोऽम्भ शब्द वाच्य , अम्भोभरणात् । द्यौ प्रतिष्ठा आश्रय तस्याम्भसो लोकस्य । द्युलोकादधस्तात् अन्तरिक्ष यत् , तत् मरीचय । एकोऽपि अनेकस्थानभेदत्वाद्बहुवचनभाक्— मरीचय इति , मरीचिभिर्वा रश्मिभि सबन्धात् । पृथिवी मर — म्रियन्ते अस्मिन् भूतानीति । या अधस्तात् पृथिव्या , ता आप उच्यन्ते, आप्नोते , लोका । यद्यपि पञ्चभूतात्मकत्व लोकानाम् , तथापि अब्बाहुल्यात् अब्नामभिरेव अम्भो मरीचीर्मरमाप इत्युच्यन्ते ॥

**स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुष समुद्धृत्यामूर्छयत् ॥ ३ ॥**

सर्वप्राणिकर्मफलोपादानाधिष्ठानभूताश्चतुरो लोकान्सृष्ट्वा स ईश्वर पुनरेव ईक्षत— इमे नु तु अम्भ प्रभृतय मया सृष्टा लोका परिपालयितृवर्जिता विनश्येयु , तस्मादेषा

रक्षणार्थं लोकपालान् लोकाना पालयितॄन् नु सृजै सृजेऽहम् इति। एवमीक्षित्वा स अद्भ्य एव अप्प्रधानेभ्य एव पञ्च भूतेभ्य , येभ्योऽम्भ प्रभृतीन्सृष्टवान् , तेभ्य एवेत्यर्थ , पुरुष पुरुषाकार शिर पाण्यादिमन्त समुद्धृत्य अद्भ्य समुपादाय, मृत्पिण्डमिव कुलाल पृथिव्या , अमूर्छयत् मूर्छितवान् , सपिण्डितवान्स्वावयवसयोजनेनेत्यर्थ ।।

तमभ्यतपत्तस्याभितसस्य मुख निरभिद्यत यथाण्ड मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्या प्राण प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्या चक्षुश्चक्षुष आदित्य॰ कर्णौ निरभिद्येता कर्णाभ्या श्रोत्र श्रोत्राद्दिशस्त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदय निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्यु॰ शिश्न निरभिद्यत शिश्नाद्रेतो रेतस आप ॥ ४ ॥

इति प्रथम खण्डः ॥

त पिण्ड पुरुषविधमुद्दिश्य अभ्यतपत्, तदभिध्यान सकल्प कृतवानित्यर्थ, 'यस्य ज्ञानमय तप' इत्यादिश्रुते। तस्य अभितप्तस्य ईश्वरसकल्पेन तपसाभितप्तस्य पिण्डस्य मुख निरभिद्यत मुखाकार सुषिरमजायत, यथा पक्षिण अण्ड निर्भिद्यते एवम्। तस्माच्च निर्भिण्णात् मुखात् वाक् करणमिन्द्रिय निरवर्तत, तदधिष्ठाता अग्नि, ततो वाच, लोकपाल। तथा नासिके निरभिद्येताम्। नासिकाभ्या प्राण, प्राणाद्वायु, इति सर्वत्राधिष्ठान करण देवता च—त्रय क्रमेण निर्भिण्णमिति। अक्षिणी, कर्णौ, त्वक्, हृदयमन्त करणाधिष्ठानम्, मन अन्त करणम्, नाभि सर्वप्राणबन्धनस्थानम्। अपानसयुक्तत्वात अपान इति पाय्विन्द्रियमुच्यते, तस्मात् तस्याधिष्ठात्री देवता मृत्यु। यथा अन्यत्र, तथा शिश्न निरभिद्यत प्रजननेन्द्रियस्थानम्। इन्द्रिय रेत रेतोविसर्गार्थत्वात्सह रेतसोच्यते। रेतस आप इति॥

इति प्रथमखण्डभाष्यम्॥

## द्वितीय खण्ड ॥

---

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतस्तमशनायापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

ता एता अग्न्यादयो देवता लोकपालत्वेन संकल्प्य सृष्टा ईश्वरेण अस्मिन् संसारार्णवे संसारसमुद्रे महति अविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहे अनादौ अनन्ते अपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृष्णामारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीरे एतस्मिन् महत्यर्णवे प्रापतन् पतितवत्यः । तस्मादग्न्यादिदेवताप्ययलक्षणापि या गतिर्व्याख्याता ज्ञानकर्मसमुच्चयानुष्ठानफलभूता, सापि नालं संसारदुःखोपशमायेत्ययं विवक्षितोऽर्थोऽत्र । यत एवम्, त-

स्मादेव विदित्वा, पर ब्रह्म, आत्मा आत्मन सर्वभूताना च, यो वक्ष्यमाणविशेषण प्रकृतश्च जगदुत्पत्तिस्थितिसहारहेतु त्वेन, स सर्वससारदु खोपशमनाय वेदितव्य । तस्मात् 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्' यदेतत्परब्रह्मात्मज्ञानम्, 'नान्य पन्था विद्यतेऽयनाय' इति मन्त्रवर्णात् । त स्थान-करणदेवतोत्पत्तिबीजभूत पुरुष प्रथमोत्पादित पिण्डमात्मा-नम् अशनायापिपासाभ्याम् अन्ववार्जत अनुगमितवान् स-योजितवानित्यर्थ । तस्य कारणभूतस्य अशनायादिदोषव-त्त्वात् तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वम् । ता तत अशनायापिपासाभ्या पीड्यमाना एन पितामह स्रष्टा-रम् अब्रुवन् उक्तवत्य । आयतनम् अधिष्ठान न अस्मभ्य प्रजानीहि विधत्स्व, यस्मिन् आयतने प्रतिष्ठिता समर्था सत्य अन्नम् अदाम भक्षयाम इति ॥

**ताभ्यो गामानयत्ता अब्रुवन्न वै नो-ऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रु-वन्न वै नोऽयमलमिति ॥ २ ॥**

एवमुक्त ईश्वर ताभ्य देवताभ्य गा गवाकृतिविशिष्ट पिण्ड ताभ्य एवाद्भ्य पूर्ववत्पिण्ड समुद्धृत्य मूर्छयित्वा आ

नयत् दर्शितवान् । ता पुन गवाकृतिं दृष्ट्वा अब्रुवन् । न वै न अस्मदर्थम् अधिष्ठाय अन्नमत्तुम् अय पिण्ड अल न वै । अल पर्याप्त । अत्तु न योग्य इत्यर्थ । गवि प्रत्याख्याते तथैव ताभ्य अश्वम् आनयत् । ता अब्रुवन्—न वै नोऽयमलमिति, पूर्ववत् ॥

**ताभ्य पुरुषमानयत्ता अब्रुवन्सु कृत बतेति पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतन प्रविशतेति ॥ ३ ॥**

सर्वप्रत्याख्याने ताभ्य पुरुषमानयत् स्वयोनिभूतम् । ता स्वयोनिं पुरुष दृष्ट्वा अखिन्ना सत्य सु कृत शोभन कृतम् इदमधिष्ठान बत इति अब्रुवन् । तस्मात्पुरुषो वाव पुरुष एव सुकृतम्, सर्वपुण्यकर्महेतुत्वात्, स्वय वा स्वेनैवात्मना स्वमायाभि कृतत्वात्सुकृतमित्युच्यते । ता देवता ईश्वर अब्रवीत् इष्टमासामिदमधिष्ठानमिति मत्वा—सर्वे हि स्वयोनिषु रमन्ते, अत यथायतन यस्य यत् वदनादिक्रिया योग्यमायतनम्, तत् प्रविशत इति ॥

**अग्निर्वाग्भूत्वा मुख प्राविशद्वायु' प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भू-**

**त्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥**

तथास्त्वित्यनुज्ञां प्रतिलभ्येश्वरस्य नगर्यामिव बलाधिकृतादय अग्नि वागभिमानी वागेव भूत्वा स्वयोर्नि मुखं प्राविशत् तथोक्तार्थमन्यत् । वायुर्नासिके, आदित्योऽक्षिणी, दिशः कर्णौ, ओषधिवनस्पतयस्त्वचम्, चन्द्रमा हृदयम्, मृत्युर्नाभिम्, आपः शिश्नम्, प्राविशन् ॥

**तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति । ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवतः ॥ ५ ॥**

इति द्वितीयः खण्डः ॥

एव लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्यौ अशना यापिपासे तम् ईश्वरम् अब्रूताम् उक्तवत्यौ—आवाभ्याम् अधिष्ठानम् अभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थ । स ईश्वर एवमुक्त ते अशनायापिपासे अब्रवीत् । न हि युवयो र्भावरूपत्वाच्चेतनावद्वस्त्वनाश्रित्य अन्नात्तृत्व सभवति । तस्मात् एतास्वेव अग्न्याद्यासु वा युवा देवतासु अध्यात्माधिदेवतासु आभजामि वृत्तिसविभागेनानुगृह्णामि । एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षण स्यात्, तस्यास्तेनैव भागेन भागिन्यौ भागवत्यौ वा करोमीति । सृष्ट्यादावीश्वर एव व्यदधाद्यस्मात्, तस्मात् इदानीमपि यस्यै कस्यै च देवतायै देवताया अर्थाय हविर्गृह्यते चरुपुरोडाशादिलक्षण भागिन्यौ एव भागवत्यावेव अस्या देवतायाम् अशनायापिपासे भवत ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीयः खण्ड ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चा-
न्नमेभ्य' सृजा इति ॥ १ ॥

स एवमीश्वर ईक्षत । कथम्[2] इमे नु लोकाश्च लोक-
पालाश्च मया सृष्टा , अशनायापिपासाभ्या च सयोजिता ।
अतो नैषा स्थितिरन्नमन्तरेण । तस्मात् अन्नम् एभ्य लोक-
पालेभ्य सृजै सृजे इति । एव हि लोके ईश्वराणामनुग्रहे
निग्रहे च स्वातन्त्र्य दृष्ट स्वेषु । तद्वन्महेश्वरस्यापि सर्वेश्वर-
त्वात्सर्वान्प्रति निग्रहे अनुग्रहे च स्वातन्त्र्यमेव ॥

सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मू-
र्तिरजायत । या वै सा मूर्तिरजायतान्न
वै तत् ॥ २ ॥

स ईश्वर अन्न सिसृक्षु ता एव पूर्वोक्ता अप उद्दिश्य
अभ्यतपत् । ताभ्य अभितप्ताभ्य उपादानभूताभ्य मूर्ति
घनरूप धारणसमर्थं चराचरलक्षणम् अजायत उत्पन्नम् ।
अन्न वै तत् मूर्तिरूप या वै सा मूर्तिरजायत ॥

तदेनदभिसृष्टं पराङत्यजिघांसत्तद्वा-
चाजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम्। स
यद्धैनद्वाचाग्रहैष्यदभिव्याहृत्य हैवान्नम
त्रप्स्यत् ॥ ३ ॥

तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्र
हीतुम् । स यद्धैनत्प्राणेनाग्रहैष्यदभि-
प्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥

तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्र-
हीतुम्। स यद्धैनच्चक्षुषाग्रहैष्यद्दृष्ट्वा है-
वान्नमत्रप्स्यत् ॥ ५ ॥

तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण
ग्रहीतुम्। स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रु-
त्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रही-
तुम्। स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवा-
न्नमत्रप्स्यत् ॥ ७ ॥

**तन्मनसाजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥**

**तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ ९ ॥**

**तदपानेनाजिघृक्षत्तदावयत् । सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥**

तदेनत् अन्न लोकलोकपालान्नार्थ्यभिमुखे सृष्ट सत् , यथा मूषकादिर्मार्जारादिगोचरे सन् , मम मृत्युरन्नाद इति मत्वा परागच्चतीति पराङ् पराक्सत् अत्तृन् अतीत्य अजिघासत् अतिगन्तुमैच्छत् , पलायितु प्रारभतेत्यर्थः । तमन्नाभिप्राय मत्वा स लोकलोकपालसघातकार्यकरणलक्षण पिण्ड प्रथमजत्वादन्याश्चान्नादानपश्यन् , तत् अन्न वाचा वदनव्यापारेण अजिघृक्षत् ग्रहीतुमैच्छत् । तत् अन्न नाशक्नोत् न समर्थोऽभवत् वाचा वदनक्रियया ग्रहीतुम् उपादातुम् । स प्रथमज शरीरी यत् यदि ह एनत् वाचा अग्रहैष्यत गृहीतवान्स्यात्

अन्नम् , सर्वोऽपि लोक तत्कार्यभूतत्वात् अभिव्याहृत्य हैव अ न्नम् अत्रप्स्यत् तृप्तोऽभविष्यत् । न चैतदस्ति । अतो नाशक्नोद्वा चा ग्रहीतुमित्यवगच्छाम पूर्वजोऽपि । समानमुत्तरम् । तत्प्रा णेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेण अन्न ग्रहीतुमशक्नुवन्पश्चात् अपानेन वायुना मुखच्छिद्रेण तत् अन्नम् अजिघृक्षत् , तदावयत् तदन्न- मेव जग्राह अशितवान् । तेन स एष अपानवायु अन्नस्य ग्रह अन्नग्राहक इत्येतत् । यद्वायु यो वायुरन्नायु अन्नब न्धनोऽन्नजीवनो वै प्रसिद्ध , स एष यो वायु ॥

**स ईक्षत कथ न्विद मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाभिव्याहृत यदि प्राणेनाभि- प्राणित यदि चक्षुषा दृष्ट यदि श्रोत्रेण श्रुत यदि त्वचा स्पृष्ट यदि मनसा ध्यात यद्यपानेनाभ्यपानित यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥**

स एव लोकलोकपालसघातस्थितिम् अन्ननिमित्ता कृत्वा पुरपौरतत्पालयितृस्थितिसमा स्वामीव ईक्षत—कथ नु केन

प्रकारेण नु इति वितर्कयन्, इद मत् ऋते मामन्तरेण पुरस्वामिनम्, यदिद कार्यकरणसघातकार्य वक्ष्यमाण कथ नु खलु मामन्तरेण स्यात् परार्थं सत्। यदि वाचाभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि, तन्निरर्थक न कथचन भवेत् बलिस्तुत्यादिवत्। पौरबन्धादिभि प्रयुज्यमान स्वाम्यर्थं सत्स्वामिनमन्तरेण असत्येव स्वामिनि, तद्वत्। तस्मान्मया परेण स्वामिना अधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्य पुरस्येव राज्ञा। यदि नामैतत्सहृत कार्यस्य परार्थत्वम्, परार्थिन मा चेतन त्रातारमन्तरेण भवेत्, पुरपौरकार्यमिव तत्स्वामिनम्। अथ कोऽह किंस्वरूप कस्य वा स्वामी? यद्यह कार्यकरणसघातमनुप्रविश्य वागाद्यभिव्याहृतादिफल नोपलभेय राजेव पुरमाविश्याधिकृतपुरुषकृताकृतादिलक्षणम्, न कश्चिन्माम् अय सन् एवरूपश्च इत्यधिगच्छेद्विचारयेत्। विपर्यये तु, योऽय वागाद्यभिव्याहृतादीदमिति वेद, स सन् वेदनरूपश्च इत्यधिगन्तव्योऽह स्याम्, यदर्थमिद सहृताना वागादीनामभिव्याहृतादि। यथा स्तम्भकुड्यादीना प्रासादादिसहृताना स्वावयवैरसहृतपरार्थत्वम्, तद्वदिति। एवमीक्षित्वा अत कतरेण प्रपद्या इति। प्रपद च मूर्धा च अस्य सघातस्य प्रवेशमार्गौ, अनयो कतरेण मार्गेणेद

कार्यकरणसघातलक्षण पुर प्रपद्यै प्रपद्ये इति ॥

**स एतमेव सीमान विदार्यैतया द्वारा प्रापद्यत । सैषा विद्दतिर्नाम द्वास्तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रय स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

एवमीक्षित्वा न तावन्मद्भृत्यस्य प्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गेण प्रपदाभ्यामध प्रपद्ये । किं तर्हि, पारिशेष्यादस्य मूर्धान विदार्य प्रपद्ये इति लोक इव ईक्षितकारी य स्रष्टेश्वर , स एतमेव मूर्धसीमान केशविभागावसान विदार्य च्छिद्र कृत्वा एतया द्वारा मार्गेण इम कार्यकारणसघात प्रापद्यत प्रविवेश । सेय हि प्रसिद्धा द्वा , मूर्ध्नि तैलादिधारणकाले अन्तस्तद्रसादिसवेदनात् । सैषा विद्दति विदारितत्वाद्विद्दतिर्नाम प्रसिद्धा द्वा । इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नानन्दहेतूनि । इद तु द्वार परमेश्वरस्यैव केवलस्येति । तदेतत् नान्दन नन्दनमेव । नान्दनमिति दैर्घ्य छान्दसम् ।

नन्दत्यनेन द्वारेण गत्वा परस्मिन्ब्रह्मणीति । तस्यैव सृष्ट्वा प्रविष्टस्यानेन जीवेनात्मना राज्ञ इव पुरम् , त्रय आवसथा — जागरितकाले इन्द्रियस्थानं दक्षिणं चक्षुः, स्वप्नकाले अन्तर्मनः, सुषुप्तिकाले हृदयाकाश इत्येते, वक्ष्यमाणा वा त्रय आवसथा — पितृशरीरं मातृगर्भाशयं स्वं च शरीरमिति । त्रयः स्वप्ना जाग्रत्स्वप्नसुषुप्त्याख्याः । ननु जागरितं प्रबोधरूपत्वान्न स्वप्नः । नैवम्, स्वप्न एव । कथम्? परमार्थस्वात्मप्रबोधाभावात् स्वप्नवदसद्वस्तुदर्शनाच्च । अयमेव आवसथश्चक्षुर्दक्षिणं प्रथमः । मनोऽन्तरं द्वितीयः । हृदयाकाशस्तृतीयः । अयमावसथ इत्युक्तानुकीर्तनमेव । तेषु ह्ययमावसथेषु पर्यायेणात्मभावेन वर्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या, न प्रबुध्यतेऽनेकशतसहस्रानर्थसंनिपातजदुःखमुद्गराभिघातानुभवैरपि ॥

**स जातो भूतान्यभिव्यैख्यत्किमिहा-न्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३ ॥ १३ ॥**

स जातः शरीरे प्रविष्टो जीवात्मना भूतानि अभिव्यैख्यत् व्याकरोत् । स कदाचित्परमकारुणिकेन आचार्येणा-

त्मज्ञानप्रबोधकृच्छब्दिकाया वेदान्तमहाभेर्यां तत्कर्णमूले ताड्यमानायाम्, एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृत पुरुष पुरि शयानमात्मान ब्रह्म बृहत् ततम तकारेणैकेन लुप्तेन तततम व्याप्ततम परिपूर्णमाकाशवत् प्रत्यबुध्यत अपश्यत् । कथम् ? इद ब्रह्म मम आत्मन स्वरूपमदर्शं दृष्टवानस्मि । अहो इति । विचारणार्था प्लुति पूर्वम् ॥

**तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्र सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवा' ॥ १४ ॥**

इति तृतीयः खण्ड ॥

यस्मादिदमित्येव यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यत् न परोक्षेण, तस्मात् इद पश्यतीति इदन्द्रो नाम परमात्मा । इदन्द्रो ह वै नाम प्रसिद्धो लोके ईश्वर । तम् एवम् इदन्द्र सन्तम् इन्द्र इति परोक्षेण परोक्षाभिधानेन आचक्षते ब्रह्मविद सव्यवहारार्थं पूज्यतमत्वात्प्रत्यक्षनामग्रहणभयात् ।

तथा हि परोक्षप्रिया परोक्षनामग्रहणप्रिया इव एव हि यस्मात् देवा । किमुत सर्वदेवानामपि देवो महेश्वर । द्विर्वचन प्रकृताध्यायपरिसमाप्त्यर्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवत कृतौ
ऐतरेयोपनिषद्भाष्ये प्रथमोऽध्याय ॥

# द्वितीयोऽध्याय. ॥

अस्मिन्नध्याये एष वाक्यार्थ — जगदुत्पत्तिस्थितिप्रलयकृदससारी सर्वज्ञ सर्वशक्ति सर्ववित्सर्वमिद जगत्स्वतोऽन्यद्वस्त्वन्तरमनुपादायैव आकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्वाणि च प्राणादिमच्छरीराणि स्वय प्रविवेश, प्रविश्य च स्वमात्मान यथाभूतमिद ब्रह्मास्मीति साक्षात्प्रत्यबुध्यत, तस्मात्स एव सर्वशरीरेष्वेक एवात्मा, नान्य इति । अन्योऽपि 'स म आत्मा ब्रह्मास्मीत्येव विद्यात्' इति 'आत्मा वा इदमेक एवाग्र आसीत्' 'ब्रह्म ततमम्' इति चोक्तम् । अन्यत्र च सर्वगतस्य सर्वात्मनो वालाग्रमात्रमप्यप्रविष्ट नास्तीति कथ सीमान विदार्य प्रापद्यत पिपीलिकेव सुषिरम्? नन्वत्यल्पमिद चोद्यम् । बहु चात्र चोदयितव्यम् । अकरण सन्नीक्षत । अनुपादाय किंचिल्लोकानसृजत । अद्भ्य पुरुष समुद्धृत्यामूर्छयत् । तस्या-

भिध्यानान्मुखादि निर्भिन्न मुखादिभ्यश्चाग्न्यादयो लोकपाला । तेषा चाशनायादिसयोजन तदायतनप्रार्थन तदर्थं गवादिप्रदर्शन तेषा च यथायतनप्रवेशन सृष्टस्यान्नस्य पला यन वागादिभिस्तज्जिघृक्षेति । एतत्सर्व सीमाविदारणप्रवेशसममेव ॥

अस्तु तर्हि सर्वमेवेदमनुपपन्नम् । न, अत्रात्मावबोधमात्रस्य विवक्षितत्वात्सर्वोऽयमर्थवाद इत्यदोष । मायाविवद्वा , महामायावी देव सर्वज्ञ सर्वशक्ति सर्वमेतच्चकार सुखावबोधप्र तिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्च इति युक्ततर पक्ष । न हि सृष्टयाख्यायिकादिपरिज्ञानात्किंचित्फलमिष्यते । ऐकात्म्यस्वरूपपरिज्ञानात्तु अमृतत्व फल सर्वोपनिषत्प्रसिद्धम् । स्मृतिषु च गीताद्यासु 'सम सर्वेषु भूतेषु तिष्ठन्त परमेश्वरम' इत्यादिना । ननु त्रय आत्मानो भोक्ता कर्ता ससारी जीव एक सर्वलोकशास्त्रप्रसिद्ध । अनेकप्राणिकर्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन पुरप्रासादादिनिर्माणलिङ्गेन तद्विषयकौशलज्ञानवास्तत्कर्ता तक्षादिरिव ईश्वर सर्वज्ञो जगत कर्ता द्वितीयश्चेतन आत्मा अवगम्यते । 'यतो वाचो निवर्तन्ते' 'नेति नेति' इत्यादिशास्त्रप्रसिद्ध औपनिषद पुरुषस्तृ

तीय । एवमेते त्रय आत्मानोऽन्योन्यविलक्षणा । तत्र कथमेक एवात्मा अद्वितीय असंसारीति ज्ञातु शक्यते ? तत्र जीव एव तावत्कथ ज्ञायते ? नन्वेव ज्ञायते श्रोता मन्ता द्रष्टा आदेष्टाघोष्टा विज्ञाता प्रज्ञातेति । ननु विप्रतिषिद्ध ज्ञायते य श्रवणादिकर्तृत्वेन अमतो मन्ता अविज्ञातो विज्ञाता इति च । तथा 'न मतेर्मन्तार मन्वीथा न विज्ञातेर्विज्ञातार विजानीया ' इत्यादि च । सत्य विप्रतिषिद्धम्, यदि प्रत्यक्षेण ज्ञायेत सुखादिवत् । प्रत्यक्षज्ञान च निवार्यते 'न मतेर्मन्तारम्' इत्यादिना । ज्ञायते तु श्रवणादिलिङ्गेन, तत्र कुतो विप्रतिषेध ? ननु श्रवणादिलिङ्गेनापि कथ ज्ञायते, यावता यदा शृणोत्यात्मा श्रोतव्य शब्दम्, तदा तस्य श्रवणक्रिययैव वर्तमानत्वान्मननविज्ञानक्रिये न सभवत आत्मनि परत्र वा । तथा अन्यत्रापि मननादिक्रियासु । श्रवणादिक्रियाश्च स्वविषये ष्वेव । न हि मन्तव्यादन्यत्र मन्तु मननक्रिया सभवति । ननु मनस सर्वमेव मन्तव्यम् । सत्यमेवम्, तथापि सर्वमपि मन्तव्य मन्तारमन्तरेण न मन्तु शक्यम् । यद्येव किं स्यात् ? इदमत्र स्यात्— सर्वस्य योऽय मन्ता, स मन्तैवेति न स मन्तव्य स्यात् । न च द्वितीयो मन्तुर्मन्तास्ति । यदा स आत्मनैव मन्तव्य , तदा येन च मन्तव्य आत्मा आत्मना,

यश्च मन्तव्य आत्मा, तौ द्वौ प्रसज्येयाताम् । एक एव आत्मा द्विधा मन्तृमन्तव्यत्वेन द्विशकलीभवेद्वंशादिवत्, उभयथा प्यनुपपत्तिरेव । यथा प्रदीपयो प्रकाश्यप्रकाशकत्वानुप पत्ति, समत्वात्, तद्वत् । न च मन्तुर्मन्तव्ये मननव्या पारशून्य कालेऽस्त्यात्ममननाय । यदापि लिङ्गेनात्मान मनुते मन्ता, तदापि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा, यश्च तस्य मन्ता, तौ द्वौ प्रसज्येयाताम्, एक एव वा द्विधेति पूर्वोक्ता दोष । न प्रत्यक्षेण, नाप्यनुमानेन ज्ञायते चेत्, कथमुच्यते 'स म आत्मेति विद्यात्' इति, कथ वा श्रोता मन्तेत्यादि? ननु श्रोतृत्वादिधर्मवानात्मा, अश्रोतृत्वादि च प्रसिद्धमात्मन, किमत्र विषम पश्यसि? यद्यपि तव न विषमम्, तथापि मम तु विषम प्रतिभाति । कथम्? यदासौ श्रोता, तदा न मन्ता, यदा मन्ता, तदा न श्रोता । तत्रैव सति, पक्षे श्रोता मन्ता, पक्षे न श्रोता नापि मन्ता । तथा अन्यत्रापि च । यदैवम्, तदा श्रोतृत्वादिधर्मवानात्मा अश्रोतृ त्वादिधर्मवान्वेति सशयस्थाने कथ तव न वैषम्यम्? यदा देवदत्तो गच्छति, तदा न स्थाता, गन्तैव । यदा तिष्ठति, न गन्ता, स्थातैव, तदास्य पक्ष एव गन्तृत्व स्थातृत्व च, न नित्य गन्तृत्व स्थातृत्व वा, तद्वत् । तथैवात्र काणा-

दादय पश्यन्ति । पक्षप्राप्तेनैव श्रोतृत्वादिना आत्मोच्यते श्रोता मन्तेत्यादिवचनात् । सयोगजत्वमयौगपद्य च ज्ञानस्य ह्याचक्षते । दर्शयन्ति च अन्यत्रमना अभूव नादर्शम् इत्यादि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति च न्याय्य म् । भवत्वेव किं तव नष्ट यद्येव स्यात् ? अस्त्वेव तवेष्ट चेत्, श्रुत्यर्थस्तु न सभवति । किं न श्रोता मन्तेत्यादिश्रुत्यर्थ ? न, न श्रोता न मन्तेत्यादिवचनात् । ननु पाक्षिकत्वेन प्रत्युक्त त्वया, न, नित्यमेव श्रोतृत्वाद्यभ्युपगमात्, 'न हि श्रोतु श्रुतेर्विपरिलोपो विद्यते' इत्यादिश्रुते । एव तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे, प्रत्यक्षविरुद्धा युगपज्ज्ञानोत्पत्ति अज्ञानाभाव श्चात्मन कल्पित स्यात् । तच्चानिष्टमिति । नोभयदोषोपपत्ति, आत्मन श्रुत्यादिश्रोतृत्वादिधर्मवत्त्वश्रुते । अनित्याना मूर्ताना च चक्षुरादीना दृष्ट्याद्यनित्यमेव सयोगवियोगधर्मिणाम् । यथा अग्नेर्ज्वलन तृणादिसयोगजत्वात्, तद्वत् । न तु नित्यस्यामूर्तस्यासयोगविभागधर्मिण सयोगजदृष्ट्याद्य नित्यधर्मवत्त्व सभवति । तथा च श्रुति 'न हि द्रष्टुर्दृष्टेर्वि परिलोपो विद्यते' इत्याद्या । एव तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टि, नित्या चात्मन । तथा च द्वे श्रुती श्रोत्रस्या-

नित्या, नित्या चात्मस्वरूपस्य । तथा द्वे मती विज्ञाती वा ज्ञावह्ये । एव ह्येव चेय श्रुतिरुपपन्ना भवति— 'दृष्टेर्द्रष्टा श्रुते श्रोता' इत्याद्या । लोकेऽपि प्रसिद्ध चक्षुषस्तिमिराग-मापाययो नष्टा दृष्टि जाता दृष्टि इति चक्षुर्दृष्टेरनित्यत्वम् । तथा च श्रुतिमत्यादीनामात्मदृष्ट्यादीना च नित्यत्व प्रसिद्ध-मेव लोके । वदति ह्युद्धृतचक्षु स्वप्नेऽद्य मया भ्राता दृष्ट इति । तथा अवगतबाधिर्यं स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि । य-दि चक्षु सयोगजैवात्मनो नित्या दृष्टिस्तन्नाशे नश्येत्, तदा उद्धृतचक्षु स्वप्ने नीलपीतादि न पश्येत् । 'न हि द्रष्टुर्दृष्टे' इत्याद्या च श्रुति अनुपपन्ना स्यात् । 'तच्चक्षु पुरुषे येन स्वप्न पश्यति' इत्याद्या च श्रुति । नित्या आत्मनो दृष्टिर्बाह्यानि-त्यदृष्टेर्ग्राहिका । बाह्यदृष्टेश्च उपजनापायाद्यनित्यधर्मवत्त्वात् ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वमनित्यत्वादि भ्रान्तिनि मित्त लोकस्येति युक्तम् । यथा भ्रमणादिधर्मवदलातादिवस्तु विषयदृष्टिरपि भ्रमतीव, तद्वत् । तथा च श्रुति 'ध्यायतीव लेलायतीव' इति । तस्मादात्मदृष्टेर्नित्यत्वान्न यौगपद्यम यौगपद्य वा अस्ति । बाह्यानित्यदृष्ट्युपाधिवशात्तु लोकस्य तार्किकाणा च आगमसप्रदायवर्जितत्वात् अनित्या आत्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव । जीवेश्वरपरमात्मभेदकल्पना च

एतन्निमित्तैव । तथा अस्ति, नास्ति, इत्याद्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैक भवन्ति, तद्विषयाया नित्याया दृष्टेर्निर्विशेषाया । अस्ति नास्ति, एक नाना, गुणवद्गुणम्, जानाति न जानाति, क्रियावदक्रियम, फलवद्फलम्, सबीज निर्बीजम्, सुख दु खम्, मध्यममध्यम्, शून्यमशून्यम्, परोऽहमन्य, इति वा सर्ववाक्प्रत्ययागोचरे स्वरूपे यो विकल्पयितुमिच्छति, स नून खमपि चर्मवद्वेष्टयितुमिच्छति, सोपानमिव च पद्भ्यामारोढुम्, जले खे च मीनाना वयसा च पद दिदृक्षते, 'नेति नेति' 'यतो वाचा निवर्तन्ते' इत्यादिश्रुतिभ्य, 'को अद्धा वेद' इत्यादिमन्त्रवर्णात् ।

कथ तर्हि तस्य स म आत्मेति वेदनम, ब्रूहि केन प्रकारेण तमह स म आत्मेति विद्याम् । अत्राख्यायिकामाचक्षते— कश्चित्किल मनुष्यो मुग्ध कैश्चिदुक्त कस्मिंश्चिदपराधे सति धिक्त्वा नासि मनुष्य इति । स मुग्धतया आत्मनो मनुष्यत्व प्रत्याययितु कंचिदुपेत्याह— ब्रवीतु भवान्कोऽहमस्मीति । स तस्य मुग्धता ज्ञात्वा आह— क्रमेण बोधयिष्यामीति । स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इत्युक्त्वोपरराम । स त मुग्ध प्रत्याह— भवान्मा बोधयितु प्रवृत्तस्तूष्णीं बभूव, किं न

बोधयतीति । तादृगेव तद्भवतो वचनम् । नास्यमनुष्य इत्युक्तेऽपि मनुष्यत्वमात्मनो न प्रतिपद्यते य , स कथ मनुष्योऽसीत्युक्तोऽपि मनुष्यत्वमात्मन प्रतिपद्येत ? तस्माद्यथा शास्त्रोपदेश एवात्मावबोधविधि , नान्य । न ह्यग्नेर्दाह्य तृणादि अन्येन केनचिद्दग्धु शक्यम् । अत एव शास्त्रमात्म स्वरूप बोधयितु प्रवृत्त सत अमनुष्यत्वप्रतिषेधेनैव 'नेति नेति' इत्युक्त्वोपरराम । तथा 'अनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभू' इत्यनुशासनम् , 'तत्त्वमसि' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्' इत्येवमाद्यपि च । यावदयमेव यथोक्तमिममात्मान न वेत्ति, तावदय बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्य अविद्यया उपाधिधर्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्यन्तेषु स्थानेषु पुन पुन रावर्तमान अविद्याकामकर्मवशात्ससरति । स एव ससरन् उपात्तदेहेन्द्रियसघात त्यजति । त्यक्त्वा अन्यमुपादत्ते । पुन पुनरेवमेव नदीस्रोतोवज्जन्ममरणप्रबन्धाविच्छेदेन वर्त मान काभिरवस्थाभिर्वर्तते इत्येतमर्थ दर्शयन्त्याह श्रुति वैराग्यहेतो —

**पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेज' सभू-**

**तमात्मन्येवात्मान विभर्ति तद्यथा स्त्रि या सिश्वत्यथैनज्जनयति तदस्य प्रथम जन्म ॥ १ ॥**

अयमेवाविद्याकामकर्माभिमानवान् यज्ञादिकर्म कृत्वा अस्माल्लोकाद्धूमादिक्रमेण चन्द्रमस प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेण इम लोक प्राप्य अन्नभूत पुरुषाग्नौ हुत । तस्मिन्पुरुषे ह वै अय ससारी रसादिक्रमेण आदित प्रथमत रेतोरूपेण गर्भो भवतीति एतदाह— यदेतत्पुरुष रेत, तेन रूपेणेति । तच्च एतत् रेत अन्नमयस्य पिण्डस्य सर्वेभ्य अङ्गेभ्य अवयवेभ्यो रसादिलक्षणेभ्य तेज साररूप शरीरस्य सभूत परिनिष्पन्न तत् पुरुषस्य आत्मभूतत्वादात्मा, तमात्मान रेतोरूपेण गर्भीभूतम् आत्मन्येव स्वशरीर एव आत्मान विभर्ति धारयति । तत् रेत स्त्रिया सिञ्चति यदा, यदा यस्मिन्काले भार्या ऋतुमती तस्या योषाग्नौ स्त्रिया सिञ्चति उपगच्छन्, अथ तदा एनत् एतद्रेत आत्मनो गर्भरूप जनयति पिता । तत् अस्य पुरुषस्य स्थानान्निर्गमन रेत सेककाले रेतोरूपेण अस्य ससारिण प्रथम जन्म प्रथमावस्थाभिव्यक्ति । तदेतदुक्त पुरस्तात् 'असावात्मा अमुमात्मानम्' इत्यादिना ॥

**तत्स्त्रिया आत्मभूय गच्छति यथा स्वमङ्ग तथा । तस्मादेना न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति ॥ २ ॥**

तत् रेत यस्या स्त्रिया सिक्त सत्तस्या स्त्रिया आत्मभूयम् आत्माव्यतिरेकता यथा पितु एव गच्छति प्राप्नोति यथा स्वमङ्ग स्तनादि, तथा तद्वदेव। तस्माद्धेतो एना मातर स गर्भो न हिनस्ति पिटकादिवत् । यस्मात्स्तनादि स्वाङ्गवदात्मभूय गतम्, तस्मान्न हिनास्ति न बाधत इत्यर्थ । सा अन्तर्वत्नी एतम् अस्य भर्तुरात्मानम् अत्र आत्मन उदरे गत प्रविष्ट बुद्ध्वा भावयति वर्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारम् अनुकूलाशनाद्युपयोग च कुर्वती ॥

**सा भावयित्री भावयितव्या भवति त स्त्री गर्भ बिभर्ति सोऽग्र एव कुमार जन्मनोऽग्रेऽधि भावयति । स यत्कुमार जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषा लोकाना सतत्या एव सतता हीमे लोकास्तदस्य द्वितीय जन्म ॥ ३ ॥**

सा भावयित्री वर्धयित्री भर्तुरात्मनो गर्भभूतस्य भावयितव्या वर्धयितव्या च भर्त्रा भवति । न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित्केनचित्सबन्ध उपपद्यते । त गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्ति धारयति अग्रे प्राग्जन्मन । स पिता अग्रे एव पूर्वमेव जातमात्र कुमार जन्मन अधि ऊर्ध्वं जन्मन जात कुमार जातकर्मादिना पिता भावयति । स पिता यत् यस्मात् कुमार जन्मन अधि ऊर्ध्वं अग्रे जातमात्रमेव जातकर्मादिना यद्भावयति, तत् आत्मानमेव भावयति, पितुरात्मैव हि पुत्ररूपेण जायते । तथा ह्युक्तम् 'पतिर्जाया प्रविशति' इत्यादि । तत्किमर्थमात्मान पुत्ररूपेण जनयित्वा भावयतीति? उच्यते— एषा लोकाना सतत्यै अविच्छेदायेत्यर्थ । विच्छिद्येरन्हीमे लोका पुत्रोत्पादनादि यदि न कुर्यु । एव पुत्रोत्पादनादिकर्माविच्छेदेनैव सतता प्रबन्धरूपेण वर्तन्ते हि यस्मात् इमे लोका , तस्मात्तदविच्छेदाय तत्कर्तव्यम्, न मोक्षायेत्यर्थ । तत् अस्य ससारिण कुमाररूपेण मातुरुदराद्यन्निर्गमनम् , तत् रेतोरूपापेक्षया द्वितीय जन्म द्वितीयावस्थाभिव्यक्ति ॥

**सोऽस्यायमात्मा पुण्येभ्य कर्मभ्य प्रतिधीयते । अथास्यायमितर आत्मा**

**कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ ४ ॥**

अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधीयत इत्यर्थः । तथा च सम्प्रत्तिविद्यायां वाजसनेयके—'पित्रानुशिष्टोऽहं ब्रह्माहं यज्ञ इत्यादि प्रतिपद्यते' इति । अथ अनन्तरं पुत्रे निवेश्यात्मनो भारम् अस्य पुत्रस्य इतरः अयं यः पित्रात्मा कृतकृत्यः कर्तव्यात् ऋणत्रयात् विमुक्तः कृतकर्तव्य इत्यर्थः, वयोगतः गतवयाः जीर्णः सन् प्रैति म्रियते । स इतः अस्मात् प्रयन्नेव शरीरं परित्यजन्नेव, तृणजलूकादिवत्, देहान्तरमुपाददानः कर्मचितम्, पुनर्जायते । तदस्य मृत्वा प्रतिपत्तव्यं यत्, तत् तृतीयं जन्म । ननु संसरतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म, तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तम्, तस्यैव तृतीये जन्मनि वक्तव्ये, प्रयतस्तस्य पितुर्यज्जन्म, तत्तृतीयमिति कथमुच्यते? नैष दोषः, पितापुत्रयोरेकात्मत्वस्य विवक्षितत्वात् । सोऽपि पुत्रः स्वपुत्रे भारं निधाय इतः प्रयन्नेव पुनर्जायते यथा पिता । तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः । पितापुत्रयोरेकात्मत्वात् ॥

**तदुक्तमृषिणा । गर्भे नु सन्नन्वेषामवे-दमहं देवाना जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निर-दीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥**

एव ससरन्नवस्थाभिव्यक्तित्रयेण जन्ममरणप्रबन्धारूढ सर्वो लोक ससारसमुद्रे निपतित कथचिद्यदा श्रुत्युक्तमा-त्मान विजानाति यस्या कस्याचिदवस्थायाम्, तदैव मुक्तस-र्वससारबन्धन कृतकृत्यो भवतीत्येतद्वस्तु, तत् ऋषिणा म-न्त्रेणापि उक्तमित्याह— गर्भे नु मातुर्गर्भाशय एव सन्, नु इति वितर्के । अनेकजन्मान्तरभावनापरिपाकवशात् एषा देवाना वागग्न्यादीना जनिमानि जन्मानि विश्वा विश्वानि सर्वाणि अन्ववेदम् अहम अहो अनुबुद्धवानस्मीत्यर्थ । शतम् अनेका बह्वय मा मा पुर आयसी आयस्यो लोहमय्य इवा-भेद्यानि शरीराणीत्यभिप्राय । अरक्षन् रक्षितवत्य ससार पाशनिर्गमनात् अध । अथ श्येन इव जाल भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीय निर्गतोऽस्मि । अहो गर्भ एव शयानो वामदेव ऋषि एवमुवाच एतत् ॥

**स एव विद्वानस्माच्छरीरभेदादूर्ध्व उ-**

**त्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामाना-
प्त्वामृतः समभवत्समभवत् ॥ ६ ॥**

**इति चतुर्थ खण्डः ॥**

स वामदेव ऋषि यथोक्तमात्मानम् एव विद्वान् अ-स्मात् शरीरभेदात् शरीरस्य अविद्यापरिकल्पितस्य आयसवद्-निर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धस्य पर-मात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदात् शरीरोत्पत्तिबीजा-विद्यादिनिमित्तोपमर्दहेतो शरीरविनाशादित्यर्थ । ऊर्ध्व पर-मात्मभूत सन् अधोभवात्ससारात् उत्क्रम्य ज्ञानावद्योति-तामलसर्वात्मभावमापन्न सन् अमुष्मिन् यथोक्ते अजरेऽमरे-ऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तरेऽबाह्ये प्रज्ञानामृतैकरसे स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपे अमृत समभवत् आ त्मज्ञानेन पूर्वमाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वा इत्य-र्थ । द्विर्वचन सफलस्य सोदाहरणस्य आत्मज्ञानस्य परि-समाप्तिप्रदर्शनार्थम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोवि द
भगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
ऐतरेयोपनिषद्भाष्ये द्वितीयोऽध्याय ॥

## तृतीयोऽध्याय. ॥

ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया पारम्पर्यश्रुत्यावद्योत्यमाना ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धाम् उपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्मजिज्ञासव अनित्यात्साध्यसाधनलक्षणात्ससारात् आ जीवभावाद्याविवृत्सवो विचारयन्त अन्योन्य पृच्छन्ति । कथम् ?—

**कोऽयमात्मेति वयमुपास्महे कतर. स आत्मा येन वा पश्यति येन वा श्रृणोति येन वा गन्धानाजिघ्रति येन वा वाच व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥**

यमात्मानम् अयमात्मा इति साक्षात् वयमुपास्महे क स आत्मेति, य चात्मानमयमात्मेति साक्षादुपासीनो

वामदेव अमृत समभवत्, तमेव वयमप्युपास्महे को नु खलु स आत्मेति एव जिज्ञासापूर्वमन्योन्य पृच्छताम् अतिक्रान्तविशेषविषयश्रुतिसस्कारजनिता स्मृतिरजायत— तम् 'प्रपदाभ्या प्रापद्यत ब्रह्मेम पुरुषम्' 'स एतमेव सीमान विदार्य एतया द्वारा प्रापद्यत' एतमेव पुरुष द्वे ब्रह्मणी इतरेतरप्रातिकूल्येन प्रतिपन्ने—इति। ते चास्य पिण्डस्यात्म-भूते। तयोरन्यतर आत्मोपास्यो भवितुमर्हति। योऽत्रो-पास्य, कतर स आत्मा इति विशेषनिर्धारणार्थं पुनरन्योन्य पप्रच्छुर्विचारयन्त। पुनस्तेषा विचारयता विशेषविचा रणास्पदविषया मतिरभूत्। कथम्? द्वे वस्तुनी अस्मि-न्पिण्डे उपलभ्येते— अनेकभेदभिन्नेन करणेन येनोपल भते, यश्चैक उपलभते, करणान्तरोपलब्धिविषयस्मृतिप्रति सधानात्। तत्र न तावत् येनोपलभते, स आत्मा भवि तुमर्हति। केन पुनरुपलभत इति, उच्यते— येन वा चक्षु-र्भूतेन रूप पश्यति, येन वा शृणोति श्रोत्रभूतेन शब्दम्, येन वा घ्राणभूतेन गन्धानाजिघ्रति, येन वा वाक्करणभूतेन वाच नामात्मिका व्याकरोति गौरश्व इत्ये-वमाद्याम्, साध्वसाध्विति च, येन वा जिह्वाभूतेन स्वादु च अस्वादु च विजानातीति ॥

**यदेतद्धृदय मनश्चैतत् । सज्ञानमाज्ञान विज्ञान प्रज्ञान मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृति सकल्प क्रतुरसु' कामो वश इति । सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥**

किं पुनस्तदेकमनेकधा भिन्न करणमिति, उच्यते । यदुक्त पुरस्तात् प्रजाना रेतो हृदय हृदयस्य रेतो मन मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमा , तदेवैतद्धृदय मनश्च, एकमेव तदनेकधा । एतेनान्त करणेनैकेन चक्षुर्भूतेन रूप पश्यति, श्रोत्रभूतेन शृणोति, घ्राणभूतेन जिघ्रति, वाग्भूतेन वदति, जिह्वाभूतेन रसयति, स्वेनैव विकल्पनारूपेण मनसा सकल्पयति, हृदयरूपेणाध्यवस्यति । तस्मात्सर्वकरणविषयव्यापारकमेकमिद करण सर्वोपलब्ध्यर्थमुपलब्धु । तथा च कौषीतकिनाम 'प्रज्ञया वाच समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षु समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति' इत्यादि । वाजसनेयके च— 'मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि विजानाति' इत्यादि । तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्व प्रसिद्धम् । तदात्मकश्च प्राण 'यो वै प्राण, सा

प्रज्ञा या वै प्रज्ञा स प्राण ' इति हि ब्राह्मणम् । करणसहतिरूपश्च प्राण इत्यवोचाम प्राणसवादादौ । तस्मा-द्यत्पद्भ्या प्रापद्यत, तद्ब्रह्म तदुपलब्धुरुपलब्धिकरणत्वेन गुण-भूतत्वान्नैव तद्वस्तु ब्रह्म उपास्य आत्मा भवितुमर्हति । पा रिशेष्याद्यस्योपलब्धुरुपलब्ध्यर्था गतस्य हृदयमनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणा , स उपलब्धा उपास्य आत्मा नोऽस्माक भवितुमर्हतीति निश्चय कृतव त । तदन्त करणा-पाधिस्थस्योपलब्धु प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यथा या अन्त करणवृत्तयो बाह्यान्तर्वर्तिविषयविषया , ता इमा उच्य-न्ते— सज्ञान सज्ञप्ति चेतनभाव , आज्ञानम् आज्ञप्ति ईश्वरभाव , विज्ञान कलादिपरिज्ञानम्, प्रज्ञान प्रज्ञप्ति प्रज्ञता, मेधा ग्रन्थधारणसामर्थ्यम्, दृष्टि इन्द्रियद्वारा सर्वविषयोपलब्धि , धृति धारणम् अवसन्नाना शरीरेन्द्रियाणा यथोत्तम्भन भवति, 'धृत्या शरीरमुद्वहन्ति ' इति हि वदन्ति, मति मननम्, मनीषा तत्र स्वातन्त्र्यम्, जूति चेतसो रुजादिदु खित्वभाव , स्मृति स्मरणम् , सकल्प शुक्लकृष्णा-दिभावेन सकल्पन रूपादीनाम्, क्रतु अध्यवसाय , असु प्राणनादिजीवनक्रियानिमित्ता वृत्ति , काम असनिहितवि षयाकाङ्क्षा तृष्णा, वश स्त्रीव्यतिकराद्यभिलाष , इत्येव-

मात्रा अन्त करणवृत्तय उपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि सज्ञानादीनि सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति, न स्वत साक्षात् । तथा चोक्तम् 'प्राणन्नेव प्राणो नाम भवति इत्यादि ॥

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव । बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किचेद प्राणि जङ्गम च पतत्रि च यच्च स्थावरम् । सर्व तत्प्रज्ञानेत्र प्रज्ञाने प्रतिष्ठित प्रज्ञानेत्रो लोक प्रज्ञा प्रतिष्ठा प्रज्ञान ब्रह्म ॥ ३ ॥

स एष प्रज्ञानरूप आत्मा ब्रह्म अपर सर्वशरीरस्थ प्राण प्रज्ञात्मा अन्त करणोपाधिष्वनुप्रविष्टो जलभेदगतसू-

र्यप्रतिबिम्बवत् हिरण्यगर्भं प्राण प्रज्ञात्मा । एष एव इन्द्र गुणात्, देवराजो वा । एष प्रजापति य प्रथमज शरीरी, यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाता, स प्रजापतिरेष एव । येऽपि एते अग्न्यादय सर्वे देवा एष एव । इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतानि अन्नान्नादत्वलक्षणानि एतानि । किंच, इमानि च क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मिश्राणि, इवशब्द अनर्थक, सर्पादीनि । बीजानि कारणानि इतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि । कानि तानि ? उच्यन्ते—अण्डजानि पक्ष्यादीनि, जारुजानि जरायुजानि मनुष्यादीनि, स्वेदजानि यूकादीनि, उद्भिज्जानि च वृक्षादीनि । अश्वा गाव पुरुषा हस्तिन अन्यच्च यत्किंचेद प्राणि । किं तत् ? जङ्गम यच्चलति पद्भ्या गच्छति, यच्च पतत्रि आकाशेन पतनशीलम्, यच्च स्थाव रम् अचलम्, सर्वं तत् अशेषत प्रज्ञानेत्रम्, प्रज्ञप्ति प्रज्ञा, तच्च ब्रह्मैव, नीयतेऽनेनेति नेत्रम्, प्रज्ञा नेत्र यस्य तदिद प्रज्ञानेत्रम्, प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितम्, प्रज्ञाश्रयमित्यर्थ । प्रज्ञानेत्रो लोक पूर्ववत्, प्रज्ञाचक्षुर्वा सर्व एव लोक । प्रज्ञा प्रतिष्ठा सर्वस्य जगत । तस्मात् प्रज्ञान ब्रह्म । तदेतत्प्रत्यस्तमितसर्वोपाधिविशेष सत् निरञ्जन निर्म-

ळ निष्क्रिय शान्तम् एकम् अद्वय नेति नेतीति सर्वविशेषापोहसवेद्य सर्वशब्दप्रत्ययागोचर तदत्यन्तविशुद्धप्रज्ञोपाधिसबन्धेन सर्वज्ञमीश्वर सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तक नियन्तृत्वादन्तर्यामिसज्ञ भवति । तदेव व्याकृतजगद्बीजभूतबुद्धथात्माभिमानलक्षण हिरण्यगर्भसज्ञ भवति । तदेव अन्तरण्डोद्भूतप्रथमशरीरोपाधिमत् विराट्प्रजापतिसज्ञ भवति । तदुद्भूताग्न्याद्युपाधिमत् देवतासज्ञ भवति । तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मण । तदेवैक सर्वोपाधिभेदभिन्न सर्वैं प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते च अनेकधा । 'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राणम परे ब्रह्म शाश्वतम्' इत्याद्या स्मृति ॥

**स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभवत्समभवत् ॥ ४ ॥**

इति पञ्चम खण्ड ॥

स वामदेवोऽन्यो वा एव यथोक्त ब्रह्म वेद प्रज्ञेनात्मना, येनैव प्रज्ञेन आत्मना पूर्वे विद्वासोऽमृता अभूवन् तथा

अयमपि विद्वान् एतेनैव प्रज्ञेन आत्मना अस्मात् लोकात् उत्क्रम्येत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान्कामान् आप्त्वा अमृत समभवत्समभव-दित्योमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवत कृतौ
**ऐतरेयोपनिषद्भाष्य संपूर्णम् ॥**

ॐ

वाङ्मे मनसि प्रतिष्ठिता
मनो मे वाचि प्रतिष्ठितमा-
विरावीर्म एधि । वेदस्य म
आणीस्थ. श्रुत मे मा प्रहा-
सी । अनेनाधीतेनाहोरात्रा-
न्सदधाम्यृत वदिष्यामि ।
सत्य वदिष्यामि । तन्मामव-
तु । तद्वक्तारमवतु अवतु मा-
मवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्ति शान्ति शान्ति ॥

॥ श्री ॥

# उपनिषन्मन्त्राणां

# ॥ वर्णानुक्रमणिका ॥

---

॥ श्रीः ॥

# गौडपादीय-

# कारिकानुक्रमणिका ॥

# ॥ विषया ॥

॥ श्री ॥

# उपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादै

विरचितम् ।

## तृतीयो भाग

## तैत्तिरीयं छान्दोग्ये

१—३. अध्यायाश्च

॥ ॐ ॥

# तैत्तिरीयोपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः
विरचितम् ।



॥ श्री ॥

# ॥ विषयानुक्रमणिका ॥



५ ।। ।।। ()

## ब्रह्मानन्दवल्ली ५५—१२२

## भृगुवल्ली १२३—१५०

ॐ

श नो मित्र श वरुण । श नो भवत्वर्यमा । श न इन्द्रो बृहस्पति । श नो विष्णुरुरुक्रम. । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्ष ब्रह्मासि । त्वामेव प्रत्यक्ष ब्रह्म वदिष्यामि । ऋत वदिष्यामि । सत्य वदिष्यामि । तन्मामवतु तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥

ॐ शान्ति शान्ति शान्ति ॥

# ॥ तैत्तिरीयोपनिषत् ॥

## श्रीमच्छङ्करभगवत्पादविरचितेन

## भाष्येण सहिता ।

॥ ॐ नम परमात्मने ॥

यस्माज्जात जगत्सर्व यस्मिन्नेव प्रलीयते ।
येनेद धार्यते चैव तस्मै ज्ञानात्मने नम ॥ १ ॥

यैरिमे गुरुभि पूर्व पदवाक्यप्रमाणत ।
व्याख्याता सर्ववेदान्तास्तान्नित्य प्रणतोऽस्म्यहम् ॥ २ ॥

तैत्तिरीयकसारस्य मयाचार्यप्रसादत ।
विस्पष्टार्थरुचीना हि व्याख्येय सम्प्रणीयते ॥ ३ ॥

## शीक्षावल्ली ॥

नित्यान्यधिगतानि कर्माणि उपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिना पूर्वस्मिन्ग्रन्थे । इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतु काम स्यात्, प्रवर्तकत्वात् । आप्तकामाना हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्ति । आत्मकामत्वे चाप्तकामता । आत्मा च ब्रह्म । तद्विदो हि परप्राप्ति वक्ष्यति । अत अविद्यानिवृत्तौ स्वात्मन्यवस्थान परप्राप्ति, 'अभय प्रतिष्ठा विन्दते' 'एतमानन्दमयमात्मानमुपसक्रामति' इत्यादिश्रुते । काम्यप्रतिषिद्धयोरनारम्भात आरब्धस्य च उपभोगेन क्षयात् नित्यानुष्ठानेन च प्रत्यवायाभावात् अयत्नत एव स्वात्मन्यवस्थान मोक्ष । अथवा, निरतिशयाया प्रीते स्वर्गशब्दवाच्याया कर्महेतुत्वात्कर्मभ्य एव मोक्ष इति चेत्, न, कर्मानेकत्वात् । अनेकानि हि आरब्धफलानि अनारब्धफलानि च अनेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि सम्भवन्ति ।

अत तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगेन क्षयास भवात् शेषकर्मनिमित्तशरीरारम्भोपपत्ति । कर्मशेषसद्भाव-सिद्धिश्च 'तद्य इह रमणीयचरणा' 'तत शेषेण' इत्यादि-श्रुतिस्मृतिशतेभ्य । इष्टानिष्टफलानामनारब्धाना क्षयार्थानि नित्यानि इति चेत्, न, अकरणे प्रत्यवायश्रवणात् । प्रत्यवा-यशब्दो हि अनिष्टविषय । नित्याकरणनिमित्तस्य प्रत्यवाय स्य दु खरूपस्य आगामिन परिहारार्थानि नित्यानीत्यभ्युपग-मात् न अनारब्धफलकर्मक्षयार्थानि । यदि नाम अनारब्ध-फलकर्मक्षयार्थानि नित्यानि कर्माणि, तथाप्यशुद्धमेव क्षप-ययु , न शुद्धम्, विरोधाभावात् । न हि इष्टफलस्य कर्मण शुद्धरूपत्वान्नित्यैर्विरोध उपपद्यते । शुद्धाशुद्धयोर्हि विरोधो यु-क्त । न च कर्महेतूना कामाना ज्ञानाभावे निवृत्त्यसभवाद-शेषकमक्षयोपपत्ति । अनात्मविदो हि काम , अनात्मफल-विषयत्वात् । स्वात्मनि च कामानुपपत्ति , नित्यप्राप्तत्वात् । स्वय चात्मा पर ब्रह्मेत्युक्तम् । नित्याना च अकरणमभाव तत प्रत्यवायानुपपत्तिरिति । अत पूर्वोपचितदुरितेभ्य प्रा-प्यमाणाया प्रत्यवायक्रियाया नित्याकरण लक्षणमिति शतृ प्रत्ययस्य नानुपपत्ति —'अकुर्वन्विहित कर्म' इति । अन्य-था हि अभावाद्भावोत्पत्तिरिति सर्वप्रमाणव्याकोप इति ।

अत अयत्नत स्वात्मन्यवस्थानमित्यनुपपन्नम् । यच्चोक्त निरतिशयप्रीत स्वर्गशब्दवाच्याया कर्मनिमित्तत्वात्कर्मारभ्य एव मोक्ष इति, तन्न, नित्यत्वान्मोक्षस्य । न हि नित्य किंचिदारभ्यते, लोके यदारब्धम, तदनित्यमिति । अतो न कर्मारभ्यो मोक्ष । विद्यासहिताना कर्मणा नित्यारम्भसामर्थ्यमिति चेत्, न, विरोधात । नित्य चारभ्यत इति विरुद्धम् । यद्धि नष्टम्, तदेव नोत्पद्यत इति प्रध्वसाभाववन्नित्योऽपि मोक्ष आरभ्य एवेति चेत, न, मोक्षस्य भावरूपत्वात् । प्रध्वसाभावोऽप्यारभ्यत इति न सभवति, अभावस्य विशेषाभावाद्विकल्पमात्रमेतत । भावप्रतियोगी ह्यभाव । यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते भिन्न इव घटभाव पटभाव इति, एव निर्विशेषोऽप्यभाव क्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते । न ह्यभाव उत्पलादिवद्विशेषणसहभावी । विशेषणवत्त्वे भाव एव स्यात । विद्याकर्मकर्तुर्नित्यत्वात विद्याकर्मसतानजनितमोक्षनित्यत्वमिति चेत, न, गङ्गास्रोतोवत्कर्तृत्वस्य दु खरूपत्वात्, कर्तृत्वोपरमे च मोक्षविच्छेदात् । तस्मादविद्याकामकर्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थान मोक्ष इति । स्वय चात्मा ब्रह्म । तद्विज्ञानादविद्यानिवृत्तिरिति । अत ब्रह्मविद्यार्थोपनिषदारभ्यते । उप

निषदिति विद्योच्यते, तत्सेविना गर्भजन्मजरादिनिशातनात् , तदवसादनाद्वा ब्रह्मण उपनिगमयितृत्वात्, उपनिषण्ण वा अस्या पर श्रेय इति । तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ॥

**ॐ श नो मित्र• श वरुण' । श नो भवत्वर्यमा । श न इन्द्रो बृहस्पतिः । श नो विष्णुरुरुक्रम । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्ष ब्रह्मासि । त्वामेव प्रत्यक्ष ब्रह्म वदिष्यामि । ऋत वदिष्यामि । सत्य वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ॐ शान्ति' शान्ति' शान्ति' ॥ १ ॥**

इति प्रथमोऽनुवाकः ॥

श सुख प्राणवृत्तेरहश्चाभिमानी देवतात्मा मित्र न अस्माक भवतु । तथैव अपानवृत्ते रात्रेश्चाभिमानी देवतात्मा वरुण , चक्षुषि आदित्ये चाभिमानी अर्यमा, बले इन्द्र , वाचि बुद्धौ च बृहस्पति , विष्णु उरुक्रम विस्तीर्ण क्रम पादयोरभिमानी, एवमाद्या अध्यात्मदेवता श न ,

भवतु इति सर्वत्रानुषङ्ग । तासु हि सुखकृत्सु विद्याश्रवण-धारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकृत्त्व प्रार्थ्यते— श नो भवतु इति । ब्रह्मविद्याविविदिषुणा नम-स्कारब्रह्मवदनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थे क्रि-येते— सर्वत्र क्रियाफलाना तदधीनत्वात । ब्रह्म वायु , तस्मै ब्रह्मणे नम प्रह्वीभावम् , करोमीति वाक्यशेष । नम ते तुभ्य ह वायो नमस्करोमि इति परोक्षप्रत्यक्षाभ्या वायुरेवा-भिधीयते । किं च, त्वमेव चक्षुराद्यपेक्ष्य बाह्य सनिकृष्टम व्यवहित प्रत्यक्ष ब्रह्मासि यस्मात्, तस्मात त्वामेव प्रत्यक्ष ब्रह्म वदिष्यामि, ऋत यथाशास्त्र यथाकर्तव्य बुद्धौ सुप रिनिश्चितमर्थं त्वदधीनत्वात त्वामेव वदिष्यामि, सत्यमिति स एव वाक्कायाभ्या सपाद्यमान , सोऽपि त्वदधीन एव सपाद्यत इति त्वामेव सत्य वदिष्यमि । तत सर्वात्मक वाय्वाख्य ब्रह्म मयैव स्तुत सत् विद्यार्थिन माम् अवतु विद्यासयोजनेन । तदेव ब्रह्म वक्तारम आचार्यं च वक्तृत्व-सामर्थ्यसयोजनेन अवतु । अवतु माम् अवतु वक्तारम् इति पुनर्वचनमादरार्थम् । शान्ति शान्ति शान्ति इति त्रिर्वचनम् आध्यात्मिकाधिभौतिकाधिदैविकाना विद्याप्राप्त्यु पसर्गाणा प्रशमनार्थम् ॥

इति प्रथमानुवाकभाष्यम् ॥

## द्वितीयोऽनुवाकः ॥

---

अर्थज्ञानप्रधानत्वादुपनिषद्ग्रन्थपाठे यत्नोपरमो मा भूदिति शीक्षाध्याय आरभ्यते—

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥ १ ॥**

इति द्वितीयोऽनुवाकः ॥

शिक्षा शिक्ष्यते अनयेति वर्णाद्युच्चारणलक्षणम्, शिक्ष्यन्ते अस्मिन्निति वा शिक्षा वर्णादयः । शिक्षैव शीक्षा । दैर्घ्यं छान्दसम् । तां शीक्षां व्याख्यास्यामः विस्पष्टम् आ समन्तात्प्रकथयिष्यामः । चक्षिङः ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम् । तत्र वर्णः अकारादिः । स्वरः उदात्तादिः । मात्रा ह्रस्वाद्याः । बलं प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं समता । सन्तानः संततिः, संहितेत्यर्थः । एवं शिक्षितव्योऽर्थः शिक्षा यस्मिन्नध्याये, सोऽयं शीक्षाध्याय इति एवम् उक्तः उदितः । उक्त इत्युपसंहारार्थः ॥

इति द्वितीयानुवाकभाष्यम् ॥

## तृतीयोऽनुवाक ॥

---

सह नौ यश । सह नौ ब्रह्मवर्च्च सम् । अथात सꣳहिताया उपनिषद ्व्याख्यास्याम । पञ्चस्वधिकरणेषु । अधि लोकमधिज्यौतिषमधिविद्यमधिप्रजमध्या त्मम् । ता महासꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरु त्तररूपम् । आकाश सधि ॥ १ ॥

अधुना सहितोपनिषदुच्यते । तत्र सहिताद्युपनिषत्प- रिज्ञाननिमित्त यत् यश प्राप्यते, तत् नौ आवयो शिष्या- चार्ययो सहैव अस्तु । तन्निमित्त च यत् ब्रह्मवचस तेज , तच्च सहैवास्तु इति शिष्यवचनमाशी । शिष्यस्य हि अकृता- र्थत्वात्प्राथनापपद्यते , नाचार्यस्य, कृतार्थत्वात् । कृतार्थो ह्या- चार्यो नाम भवति । अथ अनन्तरम् अध्ययनलक्षणवि- धानस्य पूर्ववृत्तस्य, अत यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसार्थज्ञानविषयेऽवतारयितुमित्यत , सहिताया उपनिषद सहिताविषय दर्शनमित्येतत् ग्रन्थसनिकृष्टामव

व्याख्यास्याम , पञ्चसु अधिकरणेषु आश्रयेषु, ज्ञानविष येष्वित्यर्थ । कानि तानीत्याह— अधिलोक लोकष्वधि यद्दर्शनम्, तदधिलोकम्, तथा अधिज्यौतिषम् अधि-विद्यम अधिप्रजम् अध्यात्ममिति । ता एता पञ्च विषया उपनिषद लोकादिमहावस्तुविषयत्वात्संहिताविषय-त्वाच्च महत्यश्च ता संहिताश्च महासंहिता इति आचक्षत कथयन्ति वेदविद । अथ तासा यथोप यस्ताना मध्ये अधि-लोक दर्शनमुच्यते । दर्शनक्रमविवक्षार्थ अथशब्द सर्वत्र । पृथिवी पूर्वरूपम, पूर्वो वर्ण पूर्वरूपम्, संहिताया पूर्वे वर्णे पृथिवीदृष्टि कर्तव्येत्युक्त भवति । तथा द्यौ उत्तररू पम । आकाश अन्तरिक्षलोक संधि मध्य पूर्वोत्तररूपयो संधीयते अस्मिन्पूर्वोत्तररूपे इति ॥

**वायु संधानम् । इत्यधिलोकम् । अ-थाधिज्यौतिषम् । अग्नि पूर्वरूपम् । आ-दित्य उत्तररूपम् । आप संधिः । वैद्युत. संधानम् । इत्यधिज्यौतिषम् । अथाधि-विद्यम् । आचार्यः पूर्वरूपम् ॥ २ ॥**

**अन्तेवास्युत्तररूपम् । विद्या संधि**

प्रवचनꣳ सधानम् । इत्याधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सधि । प्रजननꣳ सधानम् । इत्यधिप्रजम् ॥ ३ ॥

अथाध्यात्मम् । अधरा हनु' पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सधि । जिह्वा सधानम् । इत्यध्यात्मम् । इतीमा महासꣳहिता । य एवमेता महासꣳहिता व्याख्याता वेद । सधीयते प्रजया पशुभि । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥ ४ ॥

इति तृतीयोऽनुवाकः ॥

वायु सधानम् । सधीयते अनेनेति सधानम् । इति अधिलोक दर्शनमुक्तम् । अथाधिज्यौतिषम इत्यादि समानम् । इतीमा इति उक्ता उपप्रदर्श्यन्ते । य कश्चित् एवम् एता महासहिता व्याख्याता वेद उपास्ते, वेदेत्युपासन स्यात्, विज्ञानाधिकारात्, 'इति प्राचीनयोग्योपास्स्व' इति

च वचनात । उपासन च यथाशास्त्र तुल्यप्रत्ययसततिरस कीर्णा च अतत्प्रत्ययै शास्त्रोक्तालम्बनविषया च । प्रसिद्ध श्चोपासनशब्दार्थो लोके— 'गुरुमुपास्ते' 'राजानमुपास्ते' इति । यो हि गुर्वादीन्सततमुपचरति, स उपास्त इत्यु- च्यते । स च फलमाप्नोत्युपासनस्य । अत अत्रापि य एव वेद, सधीयत प्रजादिभि स्वर्गान्तै । प्रजादिफल प्राप्नो- तीत्यर्थ ॥

इति तृतीयानुवाकभाष्यम् ॥

## चतुर्थोऽनुवाक ॥

यश्छन्दसामृषभो विश्वरूप । छन्दोभ्योऽध्यमृतात्सबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीर मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्या भूरि विश्रुवम् । ब्रह्मण कोशोऽसि मेधया पिहित । श्रुत मे गोपाय । आवहन्ती वितन्वाना ॥ १ ॥

कुर्वाणाचीरमात्मन । वासाऽसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशा पशुभि सह स्वाहा । आमायन्तु ब्रह्मचारिण स्वाहा । विमायन्तु ब्रह्मचारिण स्वाहा । प्रमायन्तु ब्रह्मचारिण. स्वाहा । दमायन्तु ब्रह्मचारिण. स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ॥ २ ॥

यशो जनेऽसानि स्वाहा । श्रेयान् वस्य-
सोऽसानि स्वाहा । त त्वा भग प्रविशा-
नि स्वाहा । स मा भग प्रविश स्वाहा ।
तस्मिन्सहस्रशाखे । निभगाह त्वयि मृजे
स्वाहा । यथाप' प्रवता यन्ति । यथा मासा
अहर्जरम् । एव मा ब्रह्मचारिण । धात-
रायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र
मा पाहि प्र मा पद्यस्व ॥ ३ ॥

इति चतुर्थोऽनुवाक ॥

यश्छन्दसामिति मेधाकामस्य श्रीकामस्य च तत्प्राप्ति
साधन जपहोमावुच्येते, 'स मेन्द्रो मेधया स्पृणोतु' 'ततो
मे श्रियमावह' इति च लिङ्गदर्शनात । य छन्दसा वेदा
नाम् ऋषभ इव ऋषभ, प्राधान्यात । विश्वरूप सर्वरूप,
सर्ववाग्व्याप्ते 'तद्यथा शङ्कुना सर्वाणि पर्णानि सतृण्णान्ये
वमोंकारेण सर्वा वाक्सतृण्णोंकार एवेद सर्वम्' इत्यादि
श्रुत्यन्तरात् । अत एव ऋषभत्वमोंकारस्य । ओंकारो ह्यत्रोपास्य
इति ऋषभादिशब्दै स्तुतिर्न्याय्यैव ओंकारस्य । छन्दोभ्य

नदभ्य नगा ह्यमृतम्, तस्मात् अमृतात् अधि सब-भूत लोकन्ववन्व्याहृतिभ्य सारिष्ठ जिघृक्षा प्रजापत स्तापस्यन आकार सारिष्ठत्वेन न्यभादित्यर्थ । न हि नित्यस्य आकारस्य अञ्जसैवात्पत्तिरुपकल्पते । स एवभूत ओकार इन्द्र सवकामश परमेश्वर मा मा मवया प्रज्ञया स्पृणोतु प्रीणयतु, बलयतु वा, प्रज्ञाबल हि प्राप्यत । अमृ-तस्य अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य, तदधिकारात्, ह देव धारण धारयिता भूयास भवेयम । किं च, शरीर म मम विचर्षण विचक्षण योग्यमित्यतत्, भूयादिति प्रथमपुरुष-विपरिणाम । जिह्वा म मम मधुमत्तमा मधुमती, अति-शयेन मधुरभाषिणीत्यथ । कर्णाभ्या श्रोत्राभ्या भूरि बहु विश्रुव व्यश्रवम, श्रोता भूयासमित्यथ । आत्मज्ञानया य कायकरणसघातोऽस्त्विति वाक्यार्थ । मेधा च तदर्थमेव हि प्रा र्यते—ब्रह्मण परमात्मन कोश असि असेरिव, उप लब्ध्यधिष्ठानत्वात्, त्व हि ब्रह्मण प्रतीकम्, त्वयि ब्रह्मा पलभ्यत । मधया लौकिकप्रज्ञया पिहित आच्छादित स त्व सामान्यप्रज्ञैरविदिततत्त्व इत्यथ । श्रुत श्रवणपूर्वकमा-त्मज्ञानादिक विज्ञान मे गोपाय रक्ष, तत्प्राप्त्यविस्मरणा-दिक कुर्वित्यथ । जपाथा एते मन्त्रा मधाकामस्य । श्रीका-

मस्य होमार्थास्त्वधुनोन्यन्ते मन्त्रा — आवहन्ती आनयन्ती, वितन्वाना विस्तारयन्ती, तनोतेस्तत्कर्मकत्वात्, कुर्वाणा निर्वर्तयन्ती अचीरम अचिर क्षिप्रमेव, छान्दसो दीर्घ, चिर वा, कुर्वाणा, आत्मन मम, किमित्याह— वासासि वस्त्राणि, मम, गावश्च गाश्चेति यावत, अन्नपाने च सर्वदा, एवमादीनि कुर्वाणा श्रीर्या, ता तत मेधानिर्वर्तनात्परम् आवह आनय, अमेधसो हि श्रीरनर्थायैवेति। किंविशिष्टाम ? लोमशाम अजाव्यादियुक्ताम अन्यैश्च पशुभि सह युक्ताम् आवहेति । अधिकारादोंकार एवाभिसबध्यते । स्वाहा, स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थ । आमायन्त्विति । आयन्तु, मामिति व्यवहितेन सबन्ध, ब्रह्मचारिण । विमायन्तु प्रमायन्तु दमायन्तु शमायन्तु इत्यादि । यशोजन यशस्विजनेषु असानि भवानि । श्रेयान प्रशस्यतर, वस्यस वसीयस वसुतराद्वसुमत्तराद्वा धनवज्जातीयपुरुषाद्विशेषवानहमसानीत्यर्थ । किं च, त ब्रह्मण कोशभूत त्वा त्वा ह भग भगवन पूजार्ह, प्रविशानि । प्रविश्य चानन्यस्त्वदात्मैव भवानीत्यर्थ । स त्वमपि मा मा भग भगवन, प्रविश, आवयोरेकात्मत्वमेवास्तु । तस्मिन त्वयि सहस्रशाखे बहुशाखाभेदे हे भगवन्, निमृजे शोधयामि

अह पापकृत्याम् । यथा लोक आप प्रवता प्रवणवता निम्न वता देशेन यन्ति गच्छन्ति, यथा च मासा अहर्जरम् , मवत्सरोऽहर्जर अहाभि परिवर्तमानो लोकाञ्जरयतीति, अहानि वा अस्मिन् जीर्यन्ति अन्तर्भवन्तीत्यहर्जर , त च यथा मासा यन्ति, एव मा ब्रह्मचारिण हे धात सर्वस्य विधात , माम् आयन्तु आगच्छन्तु सर्वत सर्वदिग्भ्य । प्रतिवेश श्रमापनयनस्थानम् आसन्न गृहमित्यर्थ । एव त्व प्रतिवेश इव प्रतिवेश त्वच्छीलिना सर्वपापदु खापनयनस्थानमसि । अत मा मा प्रति प्रभाहि प्रकाशयात्मानम् , प्र मा पद्यस्व प्रपद्यस्व च माम् । रसविद्धमिव लोह त्वन्मय त्वदात्मान कुर्वित्यर्थ । श्रीकामोऽस्मिन्विद्याप्रकरण अभिधीयमाना धनार्थ , धन च कर्मार्थम् , कर्म च उपात्तदुरित क्षयार्थम् , तत्क्षय हि विद्या प्रकाशते । तथा च स्मृति —
' ज्ञानमुत्पद्यते पुसा क्षयात्पापस्य कर्मण । यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि ' इति ॥

इति चतुर्थानुवाकभाष्यम् ॥

## पञ्चमोऽनुवाक ॥

भूर्भुव सुवरिति वा एतास्तिस्रो व्याहृतय.। तासामु ह स्मैता चतुर्थीम्। माहाचमस्य प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवता। भूरिति वा अय लोक.। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोक ॥ १ ॥

मह इत्यादित्य। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्नि। भुव इति वायु। सुवरित्यादित्य। मह इति चन्द्रमा। चन्द्रमसा वाव सर्वाणि ज्योतीऽषि महीयन्ते। भूरिति वा ऋच्च। भुव इति सामानि। सुवरिति यजूऽषि ॥ २ ॥

मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राण। भुव

**इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ ३ ॥**

इति पञ्चमोऽनुवाकः ॥

संहिताविषयमुपासनमुक्तम् । तदनु मेधाकामस्य श्रीकामस्य चानुक्रान्ता मन्त्राः । ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणः अन्तरुपासनं स्वाराज्यफलं प्रस्तूयते— भूर्भुवः सुवरिति । इतीत्युक्तोपप्रदर्शनार्थः । एतास्तिस्र इति च प्रदर्शितानां परामर्शार्थः परामृष्टाः स्मर्यन्ते वै इत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः स्मर्यन्त इति यावत् । तासाम् इयं चतुर्थी व्याहृतिर्मह इति, तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते, उ ह स्म इत्येतेषां वृत्तानुकथनार्थत्वात् विदितवान् ददर्शेत्यर्थः । माहाचमस्यग्रहणमार्षानुस्मरणार्थम् । ऋष्यनुस्मरणमप्युपासनाङ्गमिति गम्यते, इहोपदेशात् । येयं माहाचमस्येन दृष्टा व्याहृतिः मह इति, तत् ब्रह्म । महद्धि ब्रह्म, महश्च

व्याहृति । कि पुनस्तत् ? स आत्मा, आप्नोतेर्व्याप्तिकर्मण आत्मा, इतराश्च व्याहृतयो लोका देवा वेदा प्राणाश्च मह इत्यनेन व्याहृत्यात्मना आदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यत, अत अङ्गानि अवयवा अन्या देवता । देवताग्रहण मुपलक्षणार्थं लोकादीनाम् । मह इत्यस्य व्याहृत्यात्मनो देवा लोकादयश्च सर्वे अवयवभूता यत अत आह— आदित्यादिभिर्लोकादयो महीयन्त इति । आत्मना ह्यङ्गानि महीयते । महन वृद्धि उपचय । महीयन्ते वर्धन्त इत्यर्थ । अय लोक अग्नि ऋग्वेद प्राण इति प्रथमा व्याहृति भू, अन्तरिक्ष वायु सामानि अपान इति द्वितीया व्याहृति भुव, असौ लोक आदित्य यजूंषि व्यान इति तृतीया व्याहृति सुव, आदित्य चन्द्रमा ब्रह्म अन्नम् इति चतुर्थी व्याहृति मह इत्येवम् एकैकाश्चतुर्धा भवन्ति । मह इति ब्रह्म ब्रह्मेत्योकार, शब्दाधिकारे अन्यस्यासंभवात् । उक्तार्थमन्यत् । ता वा एताश्चतस्रश्चतुर्धेति । ता वै एता भूर्भुव सुवर्मह इति चतस्र एकैकश चतुर्धा चतु प्रकारा । धा शब्द प्रकारवचन । चतस्रश्चतस्र सत्य चतुर्धा भवन्तीत्यर्थ । तासा यथाक्लृप्ताना पुनरुपदेशस्तथैवोपासननियमार्थ । ता यथोक्ता व्याहृती य वेद, स वेद विजा-

नाति । किं तत्? ब्रह्म । ननु, 'तद्ब्रह्म स आत्मा' इति ज्ञाते ब्रह्मणि, न वक्तव्यमविज्ञातवत् 'स वेद ब्रह्म' इति, न, तद्विशेषविवक्षुत्वाददोषः । सत्यं विज्ञातं चतुर्थव्याहृत्या आत्मा ब्रह्मेति, न तु तद्विशेषः — हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च । 'शान्तिसमृद्धम्' इत्येवमन्तो विशेषण-विशेषरूपो धर्मपूगो न विज्ञायत इति, तद्विवक्षु हि शास्त्र-मविज्ञातमिव ब्रह्म मत्वा 'स वेद ब्रह्म' इत्याह । अतो न दोषः । यो वा वक्ष्यमाणेन धर्मपूगेण विशिष्टं ब्रह्म वेद, स वेद ब्रह्म इत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यता अस्य, उभयोर्ह्यनुवाकयोरेकमुपासनम् । लिङ्गाच्च । 'भूरित्यग्नौ प्रतितिष्ठति' इत्यादिकं लिङ्गमुपासनैकत्वे । विधाय-काभावाच्च । न हि 'वेद उपासीत' वेति विधायकः कश्चिच्छ-ब्दोऽस्ति । व्याहृत्यनुवाके 'ता यो वेद' इति तु वक्ष्यमाणार्थत्वान्नोपासनाभेदकः । वक्ष्यमाणार्थत्वं च तद्विशेषविव-क्षुत्वादित्यादिनोक्तम् । सर्वे देवा अस्मै एवंविदुषे अङ्ग-भूता आवहन्ति आनयन्ति बलिम्, स्वाराज्यप्राप्तौ सत्या-मित्यर्थः ॥

इति पञ्चमानुवाकभाष्यम् ॥

---

## षष्ठोऽनुवाक ॥

स य एषोऽन्तर्हृदय आकाश । तस्मिन्नय पुरुषो मनोमय. । अमृतो हिरण्मय. । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनि । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रातितिष्ठाति । भुव इति वायौ ॥ १ ॥

सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पाति । श्रोत्रपतिर्विज्ञानपति' । एतत्ततो भवति । आकाशशरीर ब्रह्म । सत्यात्म प्राणाराम मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्स्व ॥ २ ॥

इति षष्ठोऽनुवाक ॥

भूर्भुव सुव स्वरूपा मह इत्येतस्य हिरण्यगर्भस्य व्याहृत्यात्मना ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम । यस्य ता अङ्गभूता , तस्यैतस्य ब्रह्मण माक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाश स्थानमुच्यते, सालग्राम इव विष्णो । तस्मिन्हि तद्ब्रह्म उपास्यमान मनोमयत्वादिधर्मविशिष्ट साक्षादुपलभ्यते, पाणाविवामलकम । मार्गश्च सर्वात्मभाव प्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते—स इति व्युत्क्रम्य अय पुरुष इत्यनेन सबध्यते । य एष अन्तर्हृदये हृदय स्यान्त । हृदयमिति पुण्डरीकाकारो मासपिण्ड प्राणायतनोऽनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते । तस्यान्त य एष आकाश प्रसिद्ध एव करकाकाशवत् , तस्मिन् सोऽय पुरुष , पुरि शयनात् , पूर्णा वा भूरादयो लोका येनेति पुरुष मनोमय मन विज्ञान मनुतेर्ज्ञानकर्मण , तन्मय तत्प्राय , तदुपलभ्यत्वात् । मनुते अनेनेति वा मन अन्त करणम् , तदभिमानी तन्मय , तल्लिङ्गो वा । अमृत अमरणधर्मा । हिरण्मय ज्योतिर्मय । तस्यैवलक्षणस्य हृदयाकाश साक्षात्कृतस्य विदुष आत्मभूतस्य ईश्वररूपस्य प्रतिपत्तय मार्गोऽभिधीयते—हृदयादूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु

प्रसिद्धा । सा च अन्तरेण तालुके मध्ये तालुकयोगता । यश्च एष तालुकयोर्मध्ये स्तन इव अवलम्बत मासखण्ड, तस्य च अन्तरेण इत्येतत । यत्र च असौ केशान्त केशानामन्तो मूल केशान्त निवर्तत विभागेन वर्तत, मूर्धप्रदेश इत्यथ, त देश प्राप्य तेनान्तरेण व्यपोह्य विभज्य विदार्य शीषकपाले शिर कपाले, विनिर्गता या, सा इन्द्रयोनि इन्द्रस्य ब्रह्मण योनि मार्ग, स्वरूपप्रतिपत्तिद्वारमित्यर्थ । तथा एव विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्य अस्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो योऽग्नि महतो ब्रह्मणोऽङ्गभूत, तस्मिन अग्नौ प्रतितिष्ठति, अग्न्यात्मना इम लोक व्याप्नोतीत्यर्थ । तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ, प्रतितिष्ठतीत्यनुवतते । सुवरिति तृतीयव्याहृत्यात्मनि आदित्ये । मह इत्याङ्गनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठतीति । तष्वात्मभावन स्थित्वा आप्नोति ब्रह्मभूत स्वाराज्य स्वराडभाव स्वयमेव राजा अधिपतिर्भवति अङ्गभूताना देवताना यथा ब्रह्म, दवाश्च सर्वे अस्मै अङ्गिने बलिमावहन्ति अङ्गभूता यथा ब्रह्मणे । आप्नोति मनसस्पतिम्, सर्वेषा हि मनसा पति, सवात्मकत्वाद्ब्रह्मण सर्वैर्हि मनोभिस्तन्मनुते । तदाप्नोत्येव विद्वान । किं च, वाक्पति सर्वासा

वाचा पतिर्भवति । तथैव चक्षुष्पतिः चक्षुषां पतिः । श्रोत्रपतिः श्रोत्राणां च पतिः । विज्ञानपतिः विज्ञानानां च पतिः । सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः । किं च, ततोऽपि अधिकतरम् एतत् भवति । किं तत्? उच्यते—आकाशशरीरम् आकाशः शरीरमस्य, आकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम् । किं तत्? प्रकृतं ब्रह्म । सत्यात्म, सत्यं मूर्तामूर्तम् अवितथं स्वरूपं वा आत्मा स्वभावोऽस्य, तदिदं सत्यात्म । प्राणारामम्, प्राणेष्वारमणमाक्रीडा यस्य तत्प्राणारामम्, प्राणानां वा आरामो यस्मिन्, तत्प्राणारामम् । मन आनन्दम्, आनन्दभूतं सुखकृदेव यस्य मनः, तन्मन आनन्दम् । शान्तिसमृद्धम् शान्तिरुपशमः, शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्, शान्त्या वा समृद्धवत्तदुपलभ्यत इति शान्तिसमृद्धम् । अमृतम् अमरणधर्मि, एतच्चाधिकरणविशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यमिति । एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्व इत्याचार्यवचनोक्तिरादरार्था । उक्तस्तूपासनाशब्दार्थः ॥

इति षष्ठानुवाकभाष्यम् ॥

---

## सप्तमोऽनुवाक ॥

पृथिव्यन्तरिक्ष द्यौर्दिशोऽवान्तरदिश । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदान समान । चक्षु' श्रोत्र मनो वाक् त्वक् । चर्म मा॑स॑ स्नावास्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्त वा इद॑ सर्वम् । पाङ्क्तेनैव पाङ्क्त॑ स्पृणोतीति ॥ १ ॥

इति सप्तमोऽनुवाक ॥

यदेतद्व्याहृत्यात्मक ब्रह्मोपास्यमुक्तम, तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते— पञ्चसख्यायोगात्पङ्क्तिच्छन्द मपात्ति, तत पाङ्क्तत्व सर्वस्य । पाङ्क्तश्च यज्ञ, 'पञ्चपदा पङ्क्ति पाङ्क्तो यज्ञ' इति श्रुते । तेन यत्सर्व लोकाद्यात्मान्त च पाङ्क्त परिकल्पयाति, यज्ञमेव तत्परिकल्प

यति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभि
संपद्यते । तत्कथं पाङ्क्तं वा इदं सर्वमित्युच्यते आह— पृथिवी
अन्तरिक्षं द्यौः दिशः अवान्तरदिशः इति लोकपाङ्क्तम् ।
अग्निः वायुः आदित्यः चन्द्रमाः नक्षत्राणि इति देवतापा
ङ्क्तम् । आपः ओषधयः वनस्पतयः आकाशः आत्मा इति
भूतपाङ्क्तम् । आत्मेति विराट्, भूताधिकारात् । इत्यधिभू-
तमिति अधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम्, लोकदेव
तापाङ्क्तयोर्द्वयोश्चाभिहितत्वात् । अथ अनन्तरम् अध्यात्मं
पाङ्क्तत्रयमुच्यते—प्राणादि वायुपाङ्क्तम् । चक्षुरादि इन्द्रि-
यपाङ्क्तम् । चर्मादि धातुपाङ्क्तम् । एतावद्धीदं सर्वमध्यात्मं
बाह्यं च पाङ्क्तमेव इति एतत् एवम् अधिविधाय परिकल्प्य
ऋषिः वेदः एतद्दर्शनसंपन्नो वा कश्चिदृषिः, अवोचत् उक्त-
वान् । किमित्याह—पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैव आध्या
त्मिकेन, संख्यासामान्यात्, पाङ्क्तं बाह्यं स्पृणोति बलयति
पूरयति एकात्मतयोपलभ्यत इत्येतत् । एवं पाङ्क्तमिदं सर्वं
मिति यो वेद, स प्रजापत्यात्मैव भवतीत्यर्थः ॥

इति सप्तमानुवाकभाष्यम् ॥

## अष्टमोऽनुवाक ॥

ओमिति ब्रह्म । ओमितीद॒ँ सर्वम् । ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्राव-येत्याश्रावयन्ति । ओमिति सामानि गा यन्ति । ओ॒ँ शोमिति शस्त्राणि श॒ँसन्ति । ओमित्यध्वर्युः प्रतिगर प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मण प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥ १ ॥

इति अष्टमोऽनुवाक ॥

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम । अनन्तर च पाङ्क्तस्वरूपेण तस्यैवोपासनमुक्तम । इदानीं सर्वोपास नाङ्गभूतस्य ओंकारस्योपासन विधित्स्यते । परापरब्रह्मदृष्ट्या हि उपास्यमान ओंकार शब्दमात्रोऽपि परापरब्रह्म प्राप्तिसाधन भवति, स ह्यालम्बन ब्रह्मण परस्यापरस्य च,

प्रतिमेव विष्णा, 'एतेनैवायतनेनैकतरमन्वेति' इति श्रुतेः। ओमिति, इतिशब्दः स्वरूपपरिच्छेदार्थः, ओम् इत्येतच्छब्द-रूपं ब्रह्म इति मनसा धारयेत् उपासीत, यत ओम् इति इदं सर्वं हि शब्दस्वरूपमोंकारेण व्याप्तम्, 'तद्यथा शङ्कुना' इति श्रुत्यन्तरात्। 'अभिधानतन्त्रं ह्यभिधेयम्' इत्यत इदं सर्वमोंकार इत्युच्यते। ओंकारस्तुत्यर्थ उत्तरो ग्रन्थः, उपास्यत्वात्तस्य। ओम् इत्येतत् अनुकृतिः अनुकरणम्। करोमि यास्यामि चेति कृतमुक्तः ओमित्यनुकरोत्यन्यः, अत ओंकारोऽनुकृतिः। ह स्म वै इति प्रसिद्धार्थद्योतकाः। प्रसिद्धं ह्योंकारस्यानुकृतित्वम्। अपि च ओश्रावय इति प्रैषपूर्वमाश्रावयन्ति प्रतिश्रावयन्ति। तथा ओम् इति सामानि गायन्ति सामगाः। ओम् शोमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि। तथा ओम् इति अध्वर्युः प्रतिगरं प्रतिगृणाति। ओम् इति ब्रह्मा प्रसौति अनुजानाति। ओम् इति अग्निहोत्रम् अनुजानाति जुहोमीत्युक्त ओम् इत्येव अनुज्ञां प्रयच्छति। ओम् इत्येव ब्राह्मणः प्रवक्ष्यन् प्रवचनं करिष्यन् अध्येष्यमाण ओमित्याह ओमित्येव प्रतिपद्यते अध्येतुमित्यर्थः, ब्रह्म वेदम् उपाप्नवानि इति प्राप्नुयां ग्रहीष्यामीति उपाप्नोत्येव ब्रह्म। अथवा, ब्रह्म परमात्मानम् उपाप्नवानीत्यात्मानं प्रवक्ष्यन् प्रापयिष्यन् ओ

मित्येवाह् । स च तेनोकारेण ब्रह्म प्राप्नोत्येव । ओंकार-पूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्, तस्मादोंकारं ब्रह्मेत्युपासीतेति वाक्यार्थः ॥

इत्यष्टमानुवाकभाष्यम् ॥



## नवमोऽनुवाक ॥

ऋत च स्वाध्यायप्रवचने च । सत्य च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्र च स्वाध्यायप्रवचन च । अतिथयश्च स्वाध्यायप्रवचने च । मानुष च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतर । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्य' । तद्धि तप स्तद्धि तप' ॥ २ ॥

इति नवमोऽनुवाक' ॥

विज्ञानादेवाप्नोति स्वाराज्यमित्युक्तत्वात् श्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तमित्येतन्मा प्रापदिति कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थं इहोपन्यासः —ऋतमिति व्याख्यातम् । स्वाध्यायः अध्ययनम् । प्रवचनमध्यापनं ब्रह्मयज्ञो वा । एतानि ऋतादीनि, अनुष्ठेयानि इति वाक्यशेषः । सत्यं सत्यवचनं यथाव्याख्यातार्थं वा । तपः कृच्छ्रादि । दमः बाह्यकरणोपशमः । शमः अन्तःकरणोपशमः । अग्नयश्च आधातव्याः । अग्निहोत्रं च होतव्यम् । अतिथयश्च पूज्याः । मानुषमिति लौकिकः संव्यवहारः । तच्च यथाप्राप्तमनुष्ठेयम् । प्रजा च उत्पाद्या । प्रजनश्च प्रजननम्, ऋतौ भार्यागमनमित्यर्थः । प्रजातिः पौत्रोत्पत्तिः, पुत्रो निवेशयितव्य इत्येतत् । सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम् । स्वाध्यायाधीनं ह्यर्थज्ञानम् । अर्थज्ञानाधीनं च परं श्रेयः । प्रवचनं च तदविस्मरणार्थं धर्मवृद्ध्यर्थं च । ततः स्वाध्यायप्रवचनयोरादरः कार्यः । सत्यमिति सत्यमेवानुष्ठेयमिति सत्यवचा सत्यमेव वचो यस्य सोऽयं सत्यवचाः, नाम वा तस्य, राथीतरः रथीतरसगोत्रः राथीतरः आचार्यो मन्यते । तप इति तपः

एव कर्तव्यमिति तपोनित्य तपसि नित्य तप पर, तपोनित्य इति वा नाम, पौरुशिष्टि पुरुशिष्टस्यापत्य पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एव अनुष्ठेये इति नाको नामत मुद्गलस्यापत्य मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तप । यस्मात्स्वाध्यायप्रवचने एव तप, तस्मात्त एवानुष्ठेये इति । उक्तानामपि सत्यतप स्वाध्यायप्रवचनाना पुनग्रहणमादराथम ॥

इति नवमानुवाकभाष्यम् ॥

## दशमोऽनुवाक ॥

---

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षित । इति त्रिशङ्कोर्वेदानुवचनम् ॥ १ ॥

इति दशमोऽनुवाक ॥

अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नाय । स्वाध्यायश्च विद्योत्पत्तये, प्रकरणात् । विद्यार्थं हीदं प्रकरणम्, न च अन्यार्थत्वमवगम्यते । स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते । अहं वृक्षस्य उच्छेद्यात्मकस्य ससारवृक्षस्य रेरिवा प्रेरयिता अन्तर्याम्यात्मना । कीर्ति ख्याति गिरे पृष्ठमिव उच्छ्रिता मम । ऊर्ध्वपवित्र ऊर्ध्वं कारण पवित्रं पावन ज्ञानप्रकाश्य परं ब्रह्म यस्य सर्वात्मनो मम, सोऽहमूर्ध्वपवित्र , वाजिनि इव वाजवतीव, वाजमन्नम्, तद्वति सवितरीवेत्यर्थ , यथा सवितरि अमृतमात्मतत्त्व विशुद्ध प्रसिद्ध श्रुतिस्मृतिशतेभ्य , एव सु अमृत

शोभन विशुद्धमात्मतत्त्वम् अस्मि भवामि । द्रविण धन सवर्चस दीप्तिमत् तदेव आत्मतत्त्वम्, अस्मीत्यनुवर्तते । ब्रह्मज्ञान वा आत्मतत्त्वप्रकाशकत्वात्सवर्चसम्, द्रविणमिव द्रविणम्, मोक्षसुखहेतुत्वात् । अस्मिन्पक्षे प्राप्त मयेत्यध्याहार कर्तव्य । सुमेधा शोभना मेधा सर्वज्ञत्वलक्षणा यस्य मम, सोऽह सुमेधा, ससारस्थित्युत्पत्तिसहारकौशलयोगात्सुमेधस्त्वम्, अत एव अमृत अमरणधर्मा, अक्षित अक्षीण अव्यय अक्षतो वा अमृतेन वा उक्षित सिक्त 'अमृतोक्षितोऽहम्' इत्यादि ब्राह्मणम् । इति एव त्रिशङ्को ऋषे ब्रह्मभूतस्य ब्रह्मविद् वेदानुवचनम्, वेद वेदनम् आत्मैकत्वविज्ञानम्, तस्य प्राप्तिमनु वचन वेदानुवचनम्, आत्मन कृतकृत्यताप्रख्यापनार्थं वामदेववत्त्रिशङ्कुना आर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थ । अस्य च जपो विद्योत्पत्त्यर्थोऽधिगम्यते । 'ऋत च' इति धर्मोपन्यासादनन्तर च वेदानुवचनपाठादेतदवगम्यते । एव श्रौतस्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य पर ब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति ॥

इति दशमानुवाकभाष्यम् ॥

## एकादशोऽनुवाकः ॥

वेदमनूच्याचार्योऽन्तेवासिनमनुशा-
स्ति । सत्यं वद । धर्मं चर । स्वाध्याया-
न्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य
प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न
प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् ।
कुशलान्न प्रमदितव्यम् । भूत्यै न प्रम-
दितव्यम् । स्वाध्यायप्रवचनाभ्यां न
प्रमदितव्यम् ॥ १ ॥

देवपितृकार्याभ्यां न प्रमदितव्यम् ।
मातृदेवो भव । पितृदेवो भव । आ-
चार्यदेवो भव । अतिथिदेवो भव । या-
न्यनवद्यानि कर्माणि । तानि सेवितव्या-
नि । नो इतराणि । यान्यस्माकँ सुच-
रितानि । तानि त्वयोपास्यानि ॥ २ ॥

नो इतराणि । ये के चास्मच्छ्रेयाँसो

ब्राह्मणा । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयादेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥

ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ४ ॥

इति एकादशोऽनुवाकः ॥

वेदमनूच्येत्येवमादिकर्तव्यतोपदेशारम्भ प्रागब्रह्मात्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मार्तानि कर्माणीत्येवमर्थ, अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशुद्धसत्त्वस्य आत्मज्ञानमञ्जसैवोपजायते। 'तपसा कल्मषं हन्ति विद्ययामृतमश्नुते' इति हि स्मृतिः। वक्ष्यति च— 'तपसा ब्रह्म विजिज्ञासस्व' इति। अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि। अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः। प्रागुपन्यासाच्च कर्मणाम्, केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि। उदितायां च ब्रह्मविद्यायाम् 'अभयं प्रतिष्ठां विन्दते' 'न बिभेति कुतश्चन' 'किमहं साधु नाकरवम्' इत्यादिना कर्मनैष्किंचन्यं दर्शयिष्यति। अतः अवगम्यते— पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति। मन्त्रवर्णाच्च— 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति। ऋतादीनां पूर्वत्रोपदेश आनर्थक्यपरिहारार्थः, इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यतानियमार्थः। वेदम् अनूच्य अध्याप्य आचार्यः अन्तेवासिनं शिष्यम् अनुशास्ति ग्रन्थग्रहणात् अनु पश्चात् शास्ति तदर्थं ग्राहयतीत्यर्थः। अतोऽवगम्यते अधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति। 'बुद्ध्वा क

र्माणि कुर्वीत' इति स्मृतेश्च । कथमनुशास्तीत्यत आह—सत्य वद यथाप्रमाणावगत वक्तव्य च वद । तद्वत् धर्मं चर, धर्म इत्यनुष्ठेयाना सामान्यवचनम्, सत्यादिविशेष निर्देशात् । स्वाध्यायात् अध्ययनात् मा प्रमद प्रमाद मा कार्षी । आचार्याय आचार्यार्थं प्रियम् इष्ट धनम आहृत्य आनीय दत्त्वा विद्यानिष्क्रयार्थम् आचार्येण च अनुज्ञात अनुरूपान्दारानाहृत्य प्रजातन्तु प्रजासतान मा व्यवच्छेत्सी, प्रजासततेर्विच्छित्तिर्न कर्तव्या, अनुत्पद्यमानेऽपि पुत्रे पुत्र-काम्यादिकर्मणा तदुत्पत्तौ यत्न कर्तव्य इत्यभिप्राय, प्रजाप्रजनप्रजातित्रयनिर्देशसामर्थ्यात्, अन्यथा प्रजनश्चे त्येतदेकमेवावक्ष्यत । सत्यात् न प्रमदितव्य प्रमादो न कर्त व्य, सत्याच्च प्रमदनमनृतप्रसङ्ग, प्रमादशब्दसामर्थ्याद्वि-स्मृत्याप्यनृत न वक्तव्यमित्यर्थ, अन्यथा असत्यवदनप्र तिषेध एव स्यात् । धर्मात् न प्रमदितव्यम्, धर्मशब्द स्यानुष्ठेयविशेषविषयत्वादननुष्ठान प्रमाद, स न कर्तव्य, अनुष्ठातव्य एव धर्म इति यावत् । एव कुशलात् आत्मर-क्षार्थात्कर्मण न प्रमदितव्यम् । भूति विभूति, तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मण न प्रमदितव्यम । स्वाध्यायप्र वचनाभ्या न प्रमदितव्यम्, ते हि नियमेन कर्तव्ये इत्यर्थ ।

तथा देवपितृकार्याभ्या न प्रमदितव्यम् , दैवपित्र्ये कर्मणी कर्तव्ये । मातृदेव माता देवो यस्य स , त्व मातृदव भव स्या । एव पितृदेवो भव , आचार्यदेवो भव , अतिथिदवो भव , देवतावदुपास्या एते इत्यथ । यान्यपि च अन्यानि अनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्माणि, तानि सेवितव्यानि कर्तव्यानि त्वया । नो न कर्तव्यानि इतराणि सावद्यानि शिष्टकृतान्यपि । यानि अस्माकम् आचार्याणा सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि, तान्येव त्वया उपास्यानि अदृष्टार्थान्यनुष्ठेयानि नियमेन कर्तव्यानीत्येतत् । नो इतराणि विपरीतान्याचार्यकृतान्यपि । ये के च विशेषिता आचार्यत्वादिधर्मैं अस्मत् अस्मत्त श्रेयाम्स प्रशस्ततरा , त च ब्राह्मणा , न क्षत्रियादय , तेषाम् आसनेन आसनदानादिना त्वया प्रश्वसितव्यम् , प्रश्वसन प्रश्वास श्रमापनय , तेषा श्रमस्त्वया अपनेतव्य इत्यथ । तेपा वा आसन गोष्ठीनिमित्ते समुदिते, तेषु न प्रश्वासितव्य प्रश्वासोऽपि न कतव्य , केवल तदुक्तसारग्राहिणा भवितव्यम् । किं च यत्किंचिद्देयम , तत् श्रद्धयैव दातव्यम । अश्रद्धया अदेय न दातव्यम् । श्रिया विभूत्या दय दातव्यम । ह्रिया लज्जया च देयम् । भिया भीत्या च

देयम् । संविदा च मैत्र्यादिकार्येण देयम् । अथ एवं वर्तमानस्य यदि कदाचित् ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः स्यात् भवेत्, ये तत्र तस्मिन्देशे काले वा ब्राह्मणाः तत्र कर्मादौ युक्ता इति व्यवहितेन संबन्धः कर्तव्यः, संमर्शिनः विचारक्षमाः, युक्ताः अभियुक्ताः, कर्मणि वृत्ते वा आयुक्ताः अपरप्रयुक्ताः, अलूक्षाः अरूक्षाः अक्रूरमतयः, धर्मकामाः अदृष्टार्थिनः अकामहता इत्येतत्, स्युः भवेयुः, ते ब्राह्मणाः यथा येन प्रकारेण तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरन्, तथा त्वमपि वर्तेथाः । अथ अभ्याख्यातेषु, अभ्याख्याता अभ्युक्ता दोषेण संदिह्यमानेन संयोजिताः केनचित्, तेषु च, यथोक्तं सर्वमुपनयेत्— ये तत्रेत्यादि । एष आदेशः विधिः । एष उपदेशः पुत्रादिभ्यः पित्रादीनामपि । एषा वेदोपनिषत् वेदरहस्यम्, वेदार्थ इत्येतत् । एतदेव अनुशासनम् ईश्वरवचनम्, आदेशवाक्यस्य विधेरुक्तत्वात् । सर्वेषां वा प्रमाणभूतानामनुशासनमेतत् । यस्मादेवम्, तस्मात् एवं यथोक्तं सर्वम् उपासितव्यं कर्तव्यम् । एवमु च एतत् उपास्यम् उपास्यमेव चैतत् नानुपास्यम् इत्यादरार्थं पुनर्वचनम् ॥

अत्रैतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थम्— किं कर्मभ्य

एव केवलेभ्य पर श्रेय , उत विद्यासव्यपेक्षेभ्य , आहोस्वि-द्विद्याकर्मभ्या सहताभ्याम् , विद्याया वा कर्मापेक्षाया , उत केवलाया एव विद्याया इति । तत्र केवलेभ्य एव कर्मभ्य स्यात् , समस्तवेदार्थज्ञानवत कर्माधिकारात् ‘ वेद कृत्स्नोऽधिगन्तव्य सरहस्यो द्विजन्मना ’ इति स्मरणात् । अधिगमश्च सहोपनिषदर्थेनात्मज्ञानादिना । ‘ विद्वान्यजते ’ ‘ विद्वान्याजयति ’ इति च विदुष एव कर्मण्यधिकार प्रदर्श्यते सर्वत्र ज्ञात्वानुष्ठानमिति च । कृत्स्नश्च वेद कर्मार्थ इति हि मन्यन्ते केचित् । कर्मभ्यश्चेत्पर श्रेयो नावाप्यते, वेदोऽनथक स्यात् । न, नित्यत्वा मोक्षस्य । नित्यो हि मोक्ष इष्यत । कर्मकार्यस्य चानित्यत्व प्रसिद्ध लोके । कर्मभ्यश्चेच्छ्रेय , अनित्य स्यात् , तच्चानिष्टम । ननु काम्यप्रतिषिद्धयोरनारम्भात् आरब्धस्य च कर्मण उपभोगेनैव क्षयात् नित्यानुष्ठानाच्च प्रत्यवायानुपपत्ते ज्ञाननिरपेक्ष एव मोक्ष इति चेत् , तच्च न, कर्मशेषसभवात्तन्निमित्ता शरीरान्तरोत्पत्ति प्राप्नोतीति प्रत्युक्तम् , कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति च । यदुक्त समस्तवेदाथज्ञानवत कर्माधिकारादित्यादि , तच्च न, श्रुतज्ञानव्यतिरेकादुपासनस्य । श्रुतज्ञानमात्रेण हि कर्मण्यधि-

क्रियते, नोपासनज्ञानमपेक्षते । उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते मोक्षफलम्, अर्थान्तरप्रसिद्धेश्च स्यात्, 'श्रोतव्य' इत्युक्त्वा तद्व्यतिरेकेण 'मन्तव्यो निदिध्यासितव्य' इति यत्नान्तरावधानात् मनननिदिध्यासनयोश्च प्रसिद्ध श्रवणज्ञानादर्थान्तरत्वम् । एवं तर्हि विद्यासव्यपेक्षेभ्य कर्मभ्य स्यान्मोक्ष, विद्यासहितानां च कर्मणां भवेत्कार्यान्तरारम्भसामर्थ्यम्, यथा स्वतो मरणज्वरादिकार्यारम्भसमर्थानामपि विषदध्यादीनां मन्त्रशर्करादिसयुक्तानां कार्यान्तरारम्भसामर्थ्यम्, एवं विद्यासहितै कर्मभि मोक्ष आरभ्यत इति चेत्, न, आरभ्यस्यानित्यत्वादित्युक्तो दोष । वचनादारभ्योऽपि नित्य एवेति चेत्, न, ज्ञापकत्वाद्वचनस्य । वचनं नाम यथाभूतस्यार्थस्य ज्ञापकम्, नाविद्यमानस्य कर्तृ । न हि वचनशतेनापि नित्यमारभ्यते, आरब्धं वा अविनाशि भवेत् । एतेन विद्याकर्मणो सहतयोर्मोक्षारम्भकत्वं प्रत्युक्तम् ॥

विद्याकर्मणी मोक्षप्रतिबन्धहेतुनिवर्तके इति चेत्, न, कर्मण फलान्तरदर्शनात् । उत्पत्तिविकारसंस्काराप्तयो हि फलं कर्मणो दृश्यन्ते । उत्पत्त्यादिफलविपरीतश्च मोक्ष । गतिश्रुतेराप्य इति चेत्— 'सूर्यद्वारेण' 'तयोर्ध्वमायन्' इत्येवमादिगतिश्रुतिभ्य प्राप्यो मोक्ष इति चेत्, न, सर्वग-

तत्वात् गन्तृभ्यश्चानन्यत्वात् । आकाशादिकारणत्वात्सर्वगत ब्रह्म, ब्रह्माव्यतिरिक्ताश्च सर्वे विज्ञानात्मान , अतो नाप्यो मोक्ष । गन्तुरन्यद्भिन्नदेश च भवति गन्तव्यम् । न हि, येनैवाव्यतिरिक्त यत्, तत्तेनैव गम्यते । तदनन्यत्वसिद्धिश्च 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'क्षेत्रज्ञ चापि मा विद्धि सर्व क्षेत्रेषु' इत्येवमादिश्रुतिस्मृतिशतेभ्य । गत्यैश्वर्यादिश्रुतिविरोध इति चेत्—अथापि स्यात् यद्यप्राप्यो मोक्ष , तदा गतिश्रुतीनाम् 'स एकधा' 'स यदि पितृलोककाम ' 'स्त्रीभिर्वा यानैर्वा' इत्यादिश्रुतीना च कोप स्यात् इति चेत् , न, कार्यब्रह्मविषयत्वात्तासाम् । कार्ये हि ब्रह्मणि स्त्र्यादय स्यु , न कारणे, 'एकमेवाद्वितीयम्' 'यत्र नान्यत्पश्यति' 'तत्केन क पश्येत्' इत्यादिश्रुतिभ्य । विरोधाच्च विद्याकर्मणो समुच्चयानुपपत्ति । प्रलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते । न ह्येक वस्तु परमार्थत कर्त्रादिविशेषवत् तच्छून्य चेति उभयथा द्रष्टु शक्यते । अवश्य ह्यन्यतरन्मिथ्या स्यात् । अन्यतरस्य च मिथ्यात्वप्रसङ्गे युक्त यत्स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम्, 'यत्र हि द्वैतमिव भवति' 'मृत्यो स मृत्युमाप्नोति' 'अथ यत्रान्यत्प-

श्यति तदल्पम्' 'अन्योऽसावन्योऽहमस्मि' 'उदरमन्तरं कुरुते' 'अथ तस्य भयं भवति' इत्यादिश्रुतिशतेभ्यः । सत्यत्वं च एकत्वस्य 'एकधैवानुद्रष्टव्यम्' 'एकमेवाद्वितीयम्' 'ब्रह्मैवेदꣳ सर्वम्' 'आत्मैवेदꣳ सर्वम्' इत्यादिश्रुतिभ्यः । न च सम्प्रदानादिकारकभेदादर्शने कर्मोपपद्यते । अन्यत्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते । अतो विरोधो विद्याकर्मणोः । अतश्च समुच्चयानुपपत्तिः ॥

तत्र यदुक्तं संहताभ्यां विद्याकर्मभ्यां मोक्ष इत्येतदनुपपन्नमिति, तदयुक्तम्, तद्विहितत्वात्कर्मणां श्रुतिविरोध इति चेत्—यद्युपमृद्य कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते सर्पादिभ्रान्तिज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्, प्राप्तः कर्मविधिश्रुतीनां निर्विषयत्वाद्विरोधः । विहितानि च कर्माणि । स च विरोधो न युक्तः, प्रमाणत्वाच्छ्रुतीनामिति चेत्, न, पुरुषार्थोपदेशपरत्वाच्छ्रुतीनाम् । विद्योपदेशपरा तावच्छ्रुतिः संसारात्पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया विद्यया निवृत्तिः कर्तव्येति विद्याप्रकाशकत्वेन प्रवृत्तेति न विरोधः । एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं शास्त्रं विरुध्यत एवेति चेत्, न, यथाप्राप्तमेव कारकास्तित्वमुपादाय उपात्तदुरितक्षयार्थं कर्माणि

विदधच्छास्त्रं मुमुक्षूणा फलार्थिना च फलसाधन न कारकास्तित्वे व्याप्रियते । उपचितदुरितप्रतिबन्धस्य हि विद्योत्पत्तिर्नावकल्पते । तत्क्षये च विद्योत्पत्ति स्यात्, ततश्चाविद्यानिवृत्ति, तत आत्यन्तिक ससारोपरम । अपि च, अनात्मदर्शिनो ह्यनात्मविषय काम, कामयमानश्च करोति कर्माणि, ततस्तत्फलोपभोगाय शरीराद्युपादानलक्षण ससार । तद्व्यतिरेकेणात्मैकत्वदर्शिनो विषयाभावात्कामानुपपत्ति, आत्मनि चानन्यत्वात्कामानुपपत्तौ स्वात्मन्यवस्थान मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोध । विरोधादेव च विद्या मोक्ष प्रति न कर्माण्यपेक्षते । स्वात्मलाभे तु पूर्वोपचितदुरितप्रतिबन्धापनयनद्वारेण विद्याहेतुत्व प्रतिपद्यन्ते कर्माणि नित्यानीति । अत एवास्मिन्प्रकरणे उपन्यस्तानि कर्माणीत्यवोचाम । एव च अविरोध कर्मविधिश्रुतीनाम् । अत केवलाया एव विद्याया पर श्रेय इति सिद्धम् ॥

एव तर्हि आश्रमान्तरानुपपत्ति, कर्मनिमित्तत्वाद्विद्योत्पत्ते । गृहस्थस्यैव विहितानि कर्माणीत्यैकाश्रम्यमेव । अतश्च यावज्जीवादिश्रुतय अनुकूलतरा स्यु । न, कर्मानेकत्वात् । न ह्यग्निहोत्रादीन्येव कर्माणि, ब्रह्मचर्यं तप सत्यवचन शम दम अहिंसा इत्येवमादीन्यपि कर्माणि इतराश्रमप्रसि

द्धानि विद्योत्पत्तौ साधकतमान्यसंकीर्णानि विद्यन्ते ध्यानधारणादिलक्षणानि च। वक्ष्यति च—'तपसा ब्रह्म विजिज्ञासस्व' इति। जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्याद्विद्योत्पत्तिसंभवात्, कर्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः, कर्मसाध्यायां च विद्यायां सत्यां गार्हस्थ्यप्रतिपत्तिरनर्थिकैव। लोकार्थत्वाच्च पुत्रादीनाम्। पुत्रादिसाध्येभ्यश्च अयं लोकः पितृलोको देवलोक इत्येतेभ्यो व्यावृत्तकामस्य, नित्यसिद्धात्मदर्शिनः, कर्मणि प्रयोजनमपश्यतः, कथं प्रवृत्तिरुपपद्यते? प्रतिपन्नगार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकाद्विरक्तस्य कर्मसु प्रयोजनमपश्यतः कर्मभ्यो निवृत्तिरेव स्यात्, 'प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि' इत्येवमादिश्रुतिलिङ्गदर्शनात्। कर्म प्रति श्रुतेर्यत्नाधिक्यदर्शनादयुक्तमिति चेत्,—अग्निहोत्रादिकर्म प्रति श्रुतेरधिको यत्नः महांश्च कर्मण्यायासः, अनेकसाधनसाध्यत्वादग्निहोत्रादीनाम्, तपोब्रह्मचर्यादीनां च इतराश्रमकर्मणां गार्हस्थ्येऽपि समानत्वादल्पसाधनापेक्षत्वाच्चेतरेषां न युक्तस्तुल्यवद्विकल्प आश्रमिभिस्तस्य इति चेत्, न, जन्मान्तरकृतानुग्रहात्। यदुक्तं कर्मणि श्रुतेरधिको यत्न इत्यादि, नासौ दोषः, यतो जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं कर्म ब्रह्मचर्यादिलक्षणं चानु-

ग्राहक भवति विद्योत्पत्तिं प्रति, येन च जन्मनैव विरक्ता दृश्यन्ते केचित्, केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिण । तस्माज्जन्मान्तरकृतसंस्कारेभ्यो विरक्तानामाश्रमान्तरप्रतिपत्तिरेवेष्यते । कर्मफलबाहुल्याच्च । पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य कर्मफलस्यासंख्येयत्वात् तत्प्रति च पुरुषाणा कामबाहुल्यात्तदर्थं श्रुतेरधिको यत्न कर्मसूपपद्यते, आशिषा बाहुल्यदर्शनात्—इद मे स्यादिद मे स्यादिति । उपायत्वाच्च । उपायभूतानि हि कर्माणि विद्या प्रति इत्यवोचाम । उपाये च अधिको यत्न कर्तव्य, न उपेये । कर्मनिमित्तत्वाद्विद्याया यत्नान्तरानर्थक्यमिति चेत्—कर्मभ्य एव पूर्वोपचितदुरितप्रतिबन्धक्षयाद्विद्योत्पद्यते चेत् कर्मभ्य पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेत्, न, नियमाभावात् । न हि, 'प्रतिबन्धक्षयादेव विद्योत्पद्यते, न त्वीश्वरप्रसादतपोध्यानाद्यनुष्ठानात्' इति नियमोऽस्ति, अहिंसाब्रह्मचर्यादीना च विद्या प्रत्युपकारकत्वात्, साक्षादेव च कारणत्वाच्छ्रवणमनननिदिध्यासनादीनाम् । अत सिद्धान्याश्रमान्तराणि । सर्वेषा चाधिकारो विद्यायाम्, पर च श्रेय केवलाया विद्याया एवेति सिद्धम् ॥

इत्येकादशानुवाकभाष्यम् ॥

## द्वादशोऽनुवाक ॥

शं नो मित्र. शं वरुण. । शं नो भव त्वर्यमा । शं न इन्द्रो बृहस्पति । शं नो विष्णुरुरुक्रम । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥

ॐ शान्ति । शान्ति' । शान्ति. ॥

इति द्वादशोऽनुवाक ॥

अतीतविद्याप्राप्त्युपसर्गशमनार्था शान्तिं पठति—शं नो मित्र इत्यादि । व्याख्यातमेतत्पूर्वम ॥

इति द्वादशानुवाकभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवत कृतौ तैत्तिरीयोपनिषद्भाष्ये शीक्षावल्लीभाष्यम् संपूर्णम् ॥

# तैत्तिरीयोपनिषद्भाष्यम्

## ब्रह्मानन्दवल्ली

ॐ

# ब्रह्मानन्दवल्ली ॥

---

अतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्ति पठिता । इदानीं तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्ति पठ्यते—

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्ति शान्ति शान्ति' ॥**

सह नाववत्विति । सह नाववतु, नौ शिष्याचार्यौ सहैव अवतु रक्षतु । सह नौ भुनक्तु ब्रह्म भोजयतु । सह वीर्यं विद्यानिमित्त सामर्थ्यं करवावहै निर्वर्तयावहै । तेजस्वि नौ तेजस्विनोरावयो अधीत स्वधीतम् अस्तु अर्थज्ञानयोग्यमस्त्वित्यर्थ । मा विद्विषावहै, विद्याग्रहणनिमित्त शिष्यस्य आचार्यस्य वा प्रमादकृतादन्यायाद्विद्वेष प्राप्त, तच्छम

नायेयमाशी —मा विद्विषावहै इति। मैव नावितरेतर विद्वे-षमापद्यावहै । शान्ति शान्ति शान्तिरिति त्रिर्वचनमु-क्तार्थम् । वक्ष्यमाणविद्याविघ्नप्रशमानार्था चेय शान्ति । अविघ्नानात्मविद्याप्राप्तिराशास्यते, तन्मूल हि पर श्रेय इति ॥

ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता । सत्य ज्ञानमनन्त ब्रह्म । यो वेद नि हित गुहाया परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिते-ति । तस्माद्वा एतस्मादात्मन आकाश सभूत । आकाशाद्वायु । वायोरग्नि । अग्नेराप । अद्भ्य पृथिवी । पृथिव्या ओ-षधय । ओषधीभ्योऽन्नम् । अन्नात्पुरुष । स वा एष पुरुषोऽन्नरसमय । तस्येदमेव शिर । अय दक्षिण पक्ष । अयमुत्तर पक्ष । अयमात्मा । इद पुच्छ प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

इति प्रथमोऽनुवाक ॥

सहितादिविषयाणि कर्मभिरविरुद्धान्युपासनान्युक्तानि । अनन्तर च अन्त सोपाधिकमात्मदर्शनमुक्त व्याहृतिद्वारेण स्वाराज्यफलम् । न चैतावता अशेषत ससारबीजस्य उपम र्दनमस्ति । अत अशेषोपद्रवबीजस्य अज्ञानस्य निवृत्त्यर्थ विधूतसर्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते— ब्रह्मविदा- प्नोति परमित्यादि । प्रयोजन चास्या ब्रह्मविद्याया अविद्या निवृत्ति , ततश्च आत्यन्तिक ससाराभाव । वक्ष्यति च— 'विद्वान्न बिभेति कुतश्चन' इति । ससारनिमित्ते च सति अभय प्रतिष्ठा विन्दत इत्यनुपपन्नम्, कृताकृते पुण्यपापे न तपत इति च । अतोऽवगम्यते—अस्माद्विज्ञानात्सर्वात्मब्रह्म विषयादात्यन्तिक ससाराभाव इति । स्वयमेवाह प्रयोजनम् 'ब्रह्मविदाप्नोति परम' इत्यादावेव सबन्धप्रयोजनज्ञापना र्थम । निर्ज्ञातयोर्हि सबन्धप्रयोजनयो विद्याश्रवणग्रहणधा- रणाभ्यासार्थ प्रवर्तेत । श्रवणादिपूर्वक हि विद्याफलम, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य ' इत्यादिश्रुत्यन्तरभ्य । ब्रह्मवित्, ब्रह्मेति वक्ष्यमाणलक्षणम्, बृहत्तमत्वात् ब्रह्म, तद्वेत्ति विजानातीति ब्रह्मवित्, आप्नोति प्राप्नोति पर निर- तिशयम्, तदेव ब्रह्म परम्, न ह्यन्यस्य विज्ञानादन्यस्य प्राप्ति । स्पष्ट च श्रुत्यन्तर ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्श-

यति— 'स यो ह वै तत्परम ब्रह्म वेद ब्रह्मैव भवति' इत्यादि ॥

ननु, सर्वगत सर्वस्य चात्मभूत ब्रह्म वक्ष्यति । अतो नाप्यम् । आप्तिश्च अन्यस्यान्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा । अपरिच्छिन्न सर्वात्मक च ब्रह्मेत्यत परिच्छिन्नवत् अनात्मवच्च तस्याप्तिरनुपपन्ना । नाय दोष । कथम्? दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्यो, परमार्थतो ब्रह्मस्वरूपस्यापि सत अस्य जीवस्य भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिन तदासक्तचेतस । प्रकृतसख्यापूरणस्यात्मन अव्यवहितस्यापि बाह्यसख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत् परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणया अविद्यया अन्नमयादीन्बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वात् अन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते । एवमविद्यया आत्मभूतमपि ब्रह्म अनाप्त स्यात् । तस्यैवमविद्यया अनाप्तब्रह्मस्वरूपस्य प्रकृतसख्यापूरणस्यात्मन अविद्ययानाप्तस्य सत केनचित्स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा, तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव । ब्रह्मविदाप्नोति परमिति वाक्य सूत्रभूत सर्वस्य वल्ल्यर्थस्य । ब्रह्मविदाप्नोति पर-

मित्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारित स्वरूपविशेषस्य सर्वतो व्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय अविशेषेण च उक्त वेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतया अनन्यरूपेण विज्ञेयत्वाय, ब्रह्मविद्याफल च ब्रह्मविदो यत्प रप्राप्तिलक्षणमुक्तम्, स सर्वात्मभाव सर्वससारधर्मातीत-ब्रह्मस्वरूपत्वमेव, नान्यदित्येतत्प्रदर्शनाय च एषा ऋगुदा-ह्रियते—तदेषाभ्युक्तेति । तत् तस्मिन्नेव ब्राह्मणवाक्योक्तार्थे एषा ऋक् अभ्युक्ता आम्नाता । सत्य ज्ञानमनन्त ब्रह्म इति ब्रह्मणो लक्षणार्थ वाक्यम । सत्यादीनि हि त्रीणि विशेष-णार्थानि पदानि विशेष्यस्य ब्रह्मण । विशेष्य ब्रह्म, विव क्षितत्वाद्वेद्यतया । वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षि तम, तस्माद्विशेष्य विज्ञेयम । अत अस्माद्विशेषणविशे ष्यत्वादेव सत्यादीनि एकविभक्त्यन्तानि पदानि समानाधि-करणानि । सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाण ब्रह्म विशे ष्यान्तरेभ्यो निर्धार्यते । एव हि तज्ज्ञात भवति, यदन्येभ्यो निर्धारितम्, यथा लोके नील महत्सुगन्ध्युत्पलमिति । ननु, विशेष्य विशेषणान्तर व्यभिचरद्विशेष्यते, यथा नील रक्त चोत्पलमिति, यदा ह्यनेकानि द्रव्याणि एकजातीयान्येक-

विशेषणयोगीनि च, तदा विशेषणस्यार्थवत्त्वम्, न ह्येकस्मि न्नेव वस्तुनि, विशेषणान्तरायोगात्, यथा असावेक आ दित्य इति, तथा एकमेव ब्रह्म, न ब्रह्मान्तराणि, येभ्या विशेष्येत नीलोत्पलवत्। न, लक्षणार्थत्वाद्विशेषणानाम्। नाय दोष। कस्मात्? लक्षणार्थप्रधानानि विशेषणानि, न विशेषणप्रधानान्येव। क पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्य-योर्वा विशेष? उच्यते। सजातीयेभ्य एव निवर्तकानि विशेषणानि विशेष्यस्य, लक्षण तु सर्वत एव, यथा अव-काशप्रदात्राकाशमिति। लक्षणार्थं च वाक्यमित्यवोचाम॥

सत्यादिशब्दा न परस्पर सबध्यन्ते, परार्थत्वात्, विशे ष्यार्था हि त। अत एव एकैको विशेषणशब्द परस्पर नि रपेक्षो ब्रह्मशब्देन सबध्यते— सत्य ब्रह्म ज्ञान ब्रह्म अनन्त ब्रह्मेति। सत्यमिति यद्रूपेण यन्निश्चित तद्रूप न व्यभिचरति, तत्सत्यम्। यद्रूपेण यन्निश्चित तद्रूप व्यभिचरति, तदनृत-मित्युच्यते। अतो विकारोऽनृतम्, 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्', एव सदेव सत्यमित्यवधार-णात्। अत 'सत्य ब्रह्म' इति ब्रह्म विकारान्निवर्तयति। अत कारणत्व प्राप्त ब्रह्मण। कारणस्य च कारकत्वम्, वस्तुत्वात् मृद्वत् अचिद्रूपता च प्राप्ता, अत इदमुच्यते—

ज्ञान ब्रह्मेति । ज्ञान ज्ञप्ति अवबोध ,— भावसाधनो ज्ञान-शब्द — न तु ज्ञानकर्तृ, ब्रह्मविशषणत्वात्सत्यानन्ताभ्या सह । न हि सत्यता अनन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते । ज्ञानकर्तृत्वेन हि विक्रियमाण कथ सत्य भवेत्, अनन्त च ? यद्धि न कुतश्चित्प्रविभज्यते, तदनन्तम् । ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्या प्रविभक्तमित्यनन्तता न स्यात्, 'यत्र नान्य-द्विजानाति स भूमा, अथ यत्रान्यद्विजानाति तदल्पम्' इति श्रुत्यन्तरात् । 'नान्यद्विजानाति' इति विशेषप्रतिषधात् आ-त्मान विजानातीति चेत्, न, भूमलक्षणविधिपरत्वाद्वाक्य स्य । 'यत्र नान्यत्पश्यति' इत्यादि भूम्नो लक्षणविधिपर वाक्यम् । यथाप्रसिद्धमेव अन्योऽन्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति, स भूमा इति भूमस्वरूप तत्र ज्ञाप्यत । अन्यग्रहणस्य प्राप्तप्रतिषेधार्थत्वात् न स्वात्मनि क्रियास्तित्व-पर वाक्यम् । स्वात्मनि च भेदाभावाद्विज्ञानानुपपत्ति । आत्मनश्च विज्ञेयत्वे ज्ञात्रभावप्रसङ्ग , ज्ञेयत्वेनैव विनियुक्त-त्वात् ॥

एक एवात्मा ज्ञेयत्वेन ज्ञातृत्वेन च उभयथा भवतीति चेत्, न, युगपदनशत्वात् । न हि निरवयवस्य युगपज्ज्ञेय-ज्ञातृत्वोपपत्ति । आत्मनश्च घटादिवद्विज्ञेयत्वे ज्ञानोपदेशा-

नर्थक्यम् । न हि घटादिवत्प्रसिद्धस्य ज्ञानोपदेश अर्थवान् । तस्मात् ज्ञातृत्वे सति आनन्त्यानुपपत्ति । सन्मात्रत्व चानुपपन्न ज्ञानकर्तृत्वादिविशेषवत्त्वे सति, सन्मात्रत्व च सत्यम्, 'तत्सत्यम्' इति श्रुत्यन्तरात् । तस्मात्सत्यानन्तशब्दाभ्या सह विशेषणत्वेन ज्ञानशब्दस्य प्रयोगाद्भावसाधनो ज्ञानशब्द । 'ज्ञान ब्रह्म' इति कर्तृत्वादिकारकनिवृत्त्यर्थ मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते । 'ज्ञान ब्रह्म' इति वचनात्प्राप्तमन्तवत्त्वम्, लौकिकस्य ज्ञानस्य अन्तवत्त्वदर्शनात् । अत तन्निवृत्त्यर्थमाह—अनन्तमिति । सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वाद्विशेष्यस्य च ब्रह्मण उत्पलादिवत्प्रसिद्धत्वात 'मृगतृष्णाम्भसि स्नात खपुष्पकृतशेखर । एष वन्ध्यासुतो याति शशशृङ्गधनुधर' इतिवत् शून्यार्थतैव प्राप्ता सत्यादिवाक्यस्येति चेत्, न, लक्षणार्थत्वात् । विशेषणत्वेऽपि सत्यादीना लक्षणार्थप्राधान्यमित्यवोचाम । शून्य हि लक्ष्य अनर्थक लक्षणवचनम् । अत लक्षणार्थत्वान्मन्यामहे न शून्यार्थतेति । विशेषणार्थत्वेऽपि च सत्यादीना स्वार्थापरित्याग एव । शून्यार्थत्वे हि सत्यादिशब्दाना विशेष्यनियन्तृत्वानुपपत्ति । सत्याद्यर्थैरर्थवत्त्वे तु तद्विपरीतधर्मवद्भ्यो विशेष्येभ्यो ब्रह्मणो विशेष्यस्य

नियन्तृत्वमुपपद्यते । ब्रह्मशब्दोऽपि स्वार्थेनार्थवानेव । तत्र अनन्तशब्द अन्तवत्त्वप्रतिषेधद्वारेण विशेषणम् । सत्य ज्ञानशब्दौ तु स्वार्थसमर्पणेनैव विशेषणे भवत ॥

'तस्माद्वा एतस्मादात्मन' इति ब्रह्मण्येव आत्मशब्द-प्रयोगात् वेदितुरात्मैव ब्रह्म । 'एतमानन्दमयमात्मानमुप-सङ्क्रामति' इति च आत्मता दर्शयति । तत्प्रवेशाच्च, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति च तस्यैव जीवरूपेण शरीरप्रवेश दर्शयति । अतो वेदितु स्वरूप ब्रह्म । एव तर्हि, आत्मत्वाज्ज्ञानकर्तृत्वम्, 'आत्मा ज्ञाता' इति हि प्रसिद्धम्, 'सोऽकामयत' इति च कामिनो ज्ञानकर्तृत्वप्रसिद्धि, अतो ज्ञानकर्तृत्वात् ज्ञप्तिर्ब्रह्मेत्ययुक्तम्, अनित्यत्वप्रसङ्गाच्च, यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मण, तदाप्यनित्यत्व प्रसज्येत, पारतन्त्र्य च, धात्वर्थाना कारकापेक्षत्वात्, ज्ञान च धात्वर्थ, अतोऽस्य अनित्यत्व परतन्त्रता च । न, स्व-रूपाव्यतिरेकेण कार्यत्वोपचारात् । आत्मन स्वरूप ज्ञप्ति न ततो व्यतिरिच्यते । अतो नित्यैव । तथापि बुद्धेरुपाधि-लक्षणायाश्चक्षुरादिद्वारैर्विषयाकारपरिणामिन्या ये शब्दा-द्याकारावभासा, ते आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एव आत्मविज्ञानेन व्याप्ता उत्पद्यन्ते । तस्मादात्मविज्ञाना-

वभास्याश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्मा विक्रियारूपा इत्यविवेकिभिः परिकल्प्यन्ते । यत्तु ब्रह्मणो विज्ञानम्, तत् सवितृप्रकाशवत् अग्न्युष्णत्ववच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तत् । न तत्कारणान्तरसव्यपेक्षम्, नित्यस्वरूपत्वात्, सर्वभावानां च तेनाविभक्तदेशकालत्वात् कालाकाशादिकारणत्वात् निरतिशयसूक्ष्मत्वाच्च । न तस्यान्यदविज्ञेयं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वा अस्ति । तस्मात्सर्वज्ञं तद्ब्रह्म । मन्त्रवर्णाच्च 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' इति । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति' इत्यादिश्रुतेश्च । विज्ञातृस्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षत्वाच्च ब्रह्मणो ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिः । अतो नैव धात्वर्थस्तत्, अक्रियारूपत्वात् । अत एव च न ज्ञानकर्तृ, तस्मादेव च न ज्ञानशब्दवाच्यमपि तद्ब्रह्म । तथापि तदाभासवाचकेन बुद्धिधर्मविशेषेण ज्ञानशब्देन तल्लक्ष्यते, न तु उच्यते, शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात् । तथा सत्यशब्देनापि । सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणः बाह्यसत्तासामान्यविष

येण सत्यशब्देन लक्ष्यते 'सत्य ब्रह्म' इति, न तु सत्यशब्दवाच्य ब्रह्म । एव सत्यादिशब्दा इतरेतरसनिधानादन्योन्यनियम्यनियामका सन्त सत्यादिशब्दवाच्यात् निवर्तका ब्रह्मण, लक्षणार्थाश्च भवन्तीति । अत सिद्धम् 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'अनिरुक्तेऽनिलयने' इति च अवाच्यत्वम्, नीलोत्पलवदवाक्यार्थत्व च ब्रह्मण ॥

तद्यथाव्याख्यात ब्रह्म य वेद विजानाति निहित स्थित गुहायाम्, गूहते सवरणार्थस्य निगूढा अस्या ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धि, गूढावस्या भोगापवर्गौ पुरुषार्थाविति वा, तस्या परमे प्रकृष्टे व्योमन् व्योम्नि आकाशे अव्याकृताख्ये, तद्धि परम व्योम, 'एतस्मिन्खल्वक्षरे गार्ग्याकाश' इत्यक्षरसनिकर्षात्, 'गुहाया व्योमन्' इति वा सामानाधिकरण्यादव्याकृताकाशमेव गुहा, तत्रापि निगूढा सर्वे पदार्थास्त्रिषु कालेषु, कारणत्वात्सूक्ष्मतरत्वाच्च, तस्मिन्नन्तर्निहित ब्रह्म । हार्दमेव तु परम व्योमेति न्याय्यम्, विज्ञानाङ्गत्वेन व्योम्नो विवक्षितत्वात् । 'यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्त पुरुष आकाशो योऽयम न्तर्हृदय आकाश' इति श्रुत्यन्तरात्प्रसिद्ध हार्दस्य व्योम्न पर

त्मत्वम् । तस्मिन्हार्दे व्योम्नि या बुद्धिर्गुहा, तस्यां निहितं ब्रह्म तद्व्यावृत्त्या विविक्ततयोपलभ्यत इति । न ह्यन्यथा विशिष्टदेशकालसंबन्धोऽस्ति ब्रह्मणः, सर्वगतत्वान्निर्विशेषत्वाच्च । स एवं ब्रह्म विजानन्, किमित्याह—अश्नुते भुङ्क्ते सर्वान् निरवशेषान् कामान् काम्यभोगानित्यर्थः । किमस्मदादिवत्पुत्रस्वर्गादीन्पर्यायेण? नेत्याह— सह युगपत् एकक्षणोपारूढानेव एकयोपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपाव्यतिरिक्तया, यामवोचाम 'सत्यं ज्ञानम्' इति । एतत्तदुच्यते—ब्रह्मणा सहेति । ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वान्कामान् सह अश्नुते । न तथा यथोपाधिकृतेन स्वरूपेणात्मनो जलसूर्यकादिवत्प्रतिबिम्बभूतेन सांसारिकेण धर्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च सर्वान्कामान्पर्यायेणाश्नुते लोकः । कथं तर्हि? यथोक्तेन प्रकारेण सर्वज्ञेन सर्वगतेन सर्वात्मना नित्यब्रह्मात्मस्वरूपेण धर्मादिनिमित्तानपेक्षान् चक्षुरादिकरणानपेक्षांश्च सर्वान्कामान्सहाश्नुत इत्यर्थः । विपश्चिता मेधाविना सर्वज्ञेन । तद्धि वैपश्चित्यम्, यत्सर्वज्ञत्वम् । तेन सर्वज्ञस्वरूपेण ब्रह्मणा अश्नुत इति । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥

सर्व एव वल्ल्यर्थः 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मण

वाक्येन सूत्रित । स च सूत्रितोऽर्थ सक्षेपतो मन्त्रेण व्याख्यात । पुनस्तस्यैव विस्तरेणार्थनिर्णय कर्तव्य इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते—तस्माद्वा एतस्मादित्यादि । तत्र च 'सत्य ज्ञानमनन्त ब्रह्म' इत्युक्त मन्त्रादौ, तत्कथ सत्यमनन्त चेत्यत आह । त्रिविध ह्यानन्त्यम्—देशत कालतो वस्तुतश्चेति । तद्यथा— देशतोऽनन्त आकाश , न हि देशतस्तस्य परिच्छेदोऽस्ति । न तु कालतश्चानन्त्य वस्तुतश्च आकाशस्य । कस्मात् ? कार्यत्वात् । नैव ब्रह्मण आकाशवत्कालतोऽप्यन्तवत्त्वम्, अकार्यत्वात् । कार्यं हि वस्तु कालेन परिच्छिद्यत । अकार्यं च ब्रह्म । तस्मात्कालतोऽस्यानन्त्यम् । तथा वस्तुत । कथ पुनर्वस्तुत आनन्त्यम् ? सर्वानन्यत्वात् । भिन्न हि वस्तु वस्त्वन्तरस्य अन्तो भवति, वस्त्वन्तरबुद्धिर्हि प्रसक्ताद्वस्त्वन्तरान्निवर्तते । यतो यस्य बुद्धेर्निवृत्ति , स तस्यान्त । तद्यथा गोत्वबुद्धिरश्वत्वान्निवर्तत इत्यश्वत्वान्त गोत्वमित्यन्तवदेव भवति । स चान्तो भिन्नेषु वस्तुषु दृष्ट । नैव ब्रह्मणो भेद । अतो वस्तुतोऽप्यानन्त्यम् । कथ पुन सर्वानन्यत्व ब्रह्मण इति, उच्यते—सर्ववस्तुकारणत्वात् । सर्वेषा हि वस्तूना कालाकाशादीना कारण ब्रह्म । कार्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेत्, न, अनृ

तत्त्वात्कार्यस्य वस्तुन । न हि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति, यत कारणबुद्धिर्विनिवर्तेत, 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' एव सदेव सत्यमिति श्रुत्यन्तरात् । तस्मादाकाशादिकारणत्वाद्देशतस्तावदनन्त ब्रह्म । आकाशो ह्यनन्त इति प्रसिद्ध देशत , तस्येद कारणम्, तस्मात्सिद्ध देशत आत्मन आनन्त्यम् । न ह्यसर्वगतात्सर्वगतमुत्पद्यमान लोके किंचिद्दृश्यते । अतो निरतिशयमात्मन आनन्त्य देशत । तथा अकार्यत्वात्कालत , तद्भिन्नवस्त्वन्तराभावाच्च वस्तुत । अत एव निरतिशयसत्यत्वम् ॥

तस्मात् इति मूलवाक्यसूत्रित ब्रह्म परामृश्यते, एतस्मात् इति मन्त्रवाक्येन अनन्तर यथालक्षितम् । यद्ब्रह्म आदौ ब्राह्मणवाक्येन सूत्रितम्, यच्च 'सत्य ज्ञानमनन्त ब्रह्म' इत्यनन्तरमेव लक्षितम्, तस्मादेतस्माद्ब्रह्मण आत्मन आत्मशब्दवाच्यात्, आत्मा हि तत् सर्वस्य, 'तत्सत्य स आत्मा' इति श्रुत्यन्तरात्, अतो ब्रह्म आत्मा, तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपात् आकाश सभूत समुत्पन्न । आकाशो नाम शब्दगुण अवकाशकरो मूर्तद्रव्याणाम् । तस्मात् आकाशात् स्वेन स्पर्शगुणेन पूर्वेण च आकाशगुणेन शब्देन द्विगुण वायु , सभूत इत्यनुवर्तते । वायोश्च स्वेन रूपगुणेन पूर्वाभ्या च त्रि-

गुण अग्नि सभूत । अग्नेश्च स्वेन रसगुणेन पूर्वैश्च त्रिभि चतुर्गुणा आप सभूता । अद्भ्यश्च स्वेन गन्धगुणेन पूर्वैश्च चतुर्भि पञ्चगुणा पृथिवी सभूता । पृथिव्या ओषधय । ओ-षधीभ्य अन्नम । अन्नात् रेतोरूपेण परिणतात् पुरुष शिर पाण्याद्याकृतिमान् । स वै एष पुरुष अन्नरसमय अन्नर-सविकार पुरुषाकृतिभावित हि सर्वेभ्योऽङ्गेभ्यस्तेज सभूत रेतो बीजम् । तस्माद्यो जायते, सोऽपि तथा पुरुषाकृतिरेव स्यात्, सर्वजातिषु जायमानाना जनकाकृतिनियमदर्शनात् । सर्वेषामप्यन्नरसविकारत्व ब्रह्मवश्यत्वे च अविशिष्टे, कस्मात्पु-रुष एव गृह्यते ? प्राधान्यात् । किं पुन प्राधान्यम् ? कर्म-ज्ञानाधिकार । पुरुष एव हि शक्तत्वादर्थित्वादपर्युदस्तत्वाच्च कर्मज्ञानयोरधिक्रियते, 'पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सपन्नतमो विज्ञात वदति विज्ञात पश्यति वेद श्वस्तन वेद लोकालोकौ मर्त्येनामृतमीक्षतीत्येव सपन्न , अथेतरेषा पशूनामशनायापिपासे एवाभिविज्ञानम्' इत्यादि श्रुत्यन्तरदर्शनात ॥

स हि पुरुष इह विद्यया आन्तरतम ब्रह्म सक्रामयितु-मिष्ट । तस्य च बाह्याकारविशेषेष्वनात्मसु आत्मभाविताबु द्धि विना आलम्बनविशेष कचित सहसा आन्तरतमप्रत्य-

गात्मविषया निरालम्बना च कर्तुमशक्येति दृष्टशरीरात्मसा मान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्त प्रवेशयन्नाह्—त-स्येदमेव शिर । तस्य अस्य पुरुषस्यान्नरसमयस्य इदमेव शिर प्रसिद्धम् । प्राणमयादिष्वशिरसा शिरस्त्वदर्शनादिहा पि तत्प्रसङ्गो मा भूदिति इदमेव शिर इत्युच्यते । एव प क्षादिषु योजना । अय दक्षिणो बाहु पूर्वाभिमुखस्य दक्षि ण पक्ष । अय सव्यो बाहु उत्तर पक्ष । अय मध्यमो देहभाग आत्मा अङ्गानाम्, 'मध्य ह्येषामङ्गानामात्मा' इति श्रुते । इदमिति नाभेरधस्ताद्यदङ्गम्, तत् पुच्छ प्रतिष्ठा । प्रतितिष्ठत्यनयेति प्रतिष्ठा । पुच्छमिव पुच्छम्, अधोलम्बन-सामान्यात्, यथा गो पुच्छम । एतत्प्रकृत्य उत्तरेषा प्राण मयादीना रूपकत्वसिद्धि, मूषानिषिक्तद्रुतताम्रप्रतिमावत् । तदप्येष श्लोको भवति । तत् तस्मिन्नेवार्थे ब्राह्मणोक्ते अन्न मयात्मप्रकाशके एष श्लोक मन्त्र भवति ॥

इति प्रथमानुवाकभाष्यम् ॥

## द्वितीयोऽनुवाकः ॥

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवी֊श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्न֊ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्न֊ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः ।

**आकाश आत्मा। पृथिवी पुच्छ प्रतिष्ठा। तदप्येष श्लोको भवति ॥ १ ॥**

इति द्वितीयोऽनुवाक ॥

अन्नात् रसादिभावपरिणतात्, वै इति स्मरणार्थ, प्रजा स्थावरजङ्गमात्मका, प्रजायन्ते। या काश्च अविशिष्टा पृथिवीं श्रिता पृथिवीमाश्रिता, ता सर्वा अन्नादेव प्रजायन्ते। अथो अपि, जाता अन्नेनैव जीवन्ति प्राणान्धारयन्ति, वर्धन्त इत्यर्थ। अथ अपि, एनत् अन्नम्, अपियन्ति अपिगच्छन्ति, अपि शब्द प्रतिशब्दार्थे, अन्न प्रति लीयन्त इत्यर्थ, अन्तत अन्ते जीवनलक्षणाया वृत्ते परिसमाप्तौ। कस्मात्? अन्न हि यस्मात् भूताना प्राणिना ज्येष्ठ प्रथमजम्। अन्नमयादीना हि इतरेषा भूताना कारणमन्नम्, अत अन्नप्रभवा अन्नजीवना अन्नप्रलयाश्च सर्वा प्रजा। यस्माच्चैवम्, तस्मात् सर्वौषध सर्वप्राणिना देहदाहप्रशमनमन्नमुच्यते ॥

अन्नब्रह्मविद फलमुच्यते— सर्व वै ते समस्तमन्नजातम् आप्नुवन्ति। के? ये अन्न ब्रह्म यथोक्तम् उपासते। कथम्? अन्नजोऽन्नात्मान्नप्रलयोऽहम्, तस्मादन्न ब्रह्म इति। कुत पुन सर्वान्नप्राप्तिफलमन्नात्मोपासनमिति, उच्यते—

अन्नं हि भूतानां ज्येष्ठं भूतेभ्यः पूर्वमुत्पन्नत्वाज्ज्येष्ठं हि य-
स्मात्, तस्मात्सर्वौषधमुच्यते, तस्मादुपपन्ना सर्वान्नात्मोपा-
सकस्य सर्वान्नप्राप्तिः । अन्नाद्भूतानि जायन्ते, जातान्यन्नेन
वर्धन्ते इति उपसंहारार्थं पुनर्वचनम् । इदानीमन्नशब्दनिर्वच-
नमुच्यते—अद्यते भुज्यते चैव यद्भूतैः अत्ति च भूतानि
स्वयम्, तस्मात् भूतैर्भुज्यमानत्वाद्भूतभोक्तृत्वाच्च अन्नं तत्
उच्यते । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः । अन्नमया-
दिभ्य आनन्दमयान्तेभ्य आत्मभ्यः अभ्यन्तरतमं ब्रह्म वि-
द्यया प्रत्यगात्मत्वेन दिदर्शयिषु शास्त्रम् अविद्याकृतपञ्चको-
शापनयनेन अनेकतुषकोद्रववितुषीकरणेनेव तण्डुलान् प्रस्तौ-
ति—तस्माद्वा एतस्मादन्नरसमयादित्यादि । तस्माद्वै एतस्मा-
त् यथोक्तात् अन्नरसमयात्पिण्डात् अन्यः व्यतिरिक्तः अ-
न्तरः अभ्यन्तरः आत्मा पिण्डवदेव मिथ्यापरिकल्पित आ-
त्मत्वेन प्राणमयः, प्राणः वायुः, तन्मयः तत्प्रायः ।
तेन प्राणमयेन एष अन्नरसमय आत्मा पूर्णः वायु-
नेव दृतिः । स वै एष प्राणमय आत्मा पुरुषविध
एव पुरुषाकार एव शिरःपक्षादिभिः । किं स्वत एव? ने-
त्याह— प्रसिद्धं तावदन्नरसमयस्यात्मनः पुरुषविधत्वम्,
तस्य अन्नरसमयस्य पुरुषविधतां पुरुषाकारताम् अनु अयं

प्राणमय पुरुषविध मूषानिषिक्तप्रतिमावत् , न स्वत एव । एव पूर्वस्य पूर्वस्य पुरुषविधता , तामनु उत्तरोत्तर पुरुष विधो भवति, पूर्व पूर्वश्चोत्तरोत्तरेण पूर्ण । कथ पुन पुरुषविधता अस्येति, उच्यते— तस्य प्राणमयस्य प्राण एव शिर प्राणमयस्य वायुविकारस्य प्राण मुखनासिकानि - सरणो वृत्तिविशेष शिर इति कल्प्यते, वचनात् । सर्वत्र वचनादेव पक्षादिकल्पना । व्यान व्यानवृत्ति दक्षिण पक्ष । अपान उत्तर पक्ष । आकाश आत्मा, य आकाशस्थो वृत्तिविशेष समानाख्य , स आत्मेव आत्मा प्राणवृत्त्यधिकारात् । मध्यस्थत्वादितरा पर्यन्ता वृत्तीरपेक्ष्य आत्मा, 'मध्य ह्येषामङ्गानामात्मा' इति प्रसिद्ध मध्यस्थस्यात्मत्वम । पृथिवी पुच्छ प्रतिष्ठा । पृथिवीति पृथिवीदेवता आध्यात्मिकस्य प्राणस्य धारयित्री स्थितिहेतुत्वात । 'सैषा पुरुषस्यापानमवष्टभ्य' इति हि श्रुत्यन्तरम । अन्यथा उदानवृत्त्या ऊर्ध्वगमन गुरुत्वात्पतन वा स्याच्छरीरस्य । तस्मात्पृथिवी देवता पुच्छ प्रतिष्ठा प्राणमयस्य आत्मन । तत् तस्मिन्नेवार्थे प्राणमयात्मविषये एष श्लोको भवति ॥

इति द्वितीयानुवाकभाष्यम् ॥

---

## तृतीयोऽनुवाकः ॥

---

प्राण देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राण ब्रह्मोपासते । प्राणो हि भूतानामायु. । तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविध । तस्य यजुरेव शिरः । ऋग्दक्षिण पक्षः । सामोत्तर. पक्ष. । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छ प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

इति तृतीयोऽनुवाक. ॥

प्राण देवा अनु प्राणन्ति । अग्न्यादय देवा प्राण वायवात्मान प्राणनशक्तिमन्तम् अनु तदात्मभूता सन्त प्राणन्ति प्राणनकर्म कुर्वन्ति, प्राणनक्रियया क्रियावन्तो भवन्ति । अध्यात्माधिकारात् देवा इन्द्रियाणि प्राणमनु प्राणन्ति मुख्यप्राणमनु चेष्टन्त इति वा । तथा मनुष्या पशवश्च ये, ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति । अतश्च नान्नमयेनैव परिच्छिन्नात्मना आत्मवन्त प्राणिन । कि तर्हि? तदन्तर्गतप्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिना आत्मवन्तो मनुष्यादय । एव मनोमयादिभि पूर्वपूर्वव्यापिभि उत्तरोत्तरै सूक्ष्मै आनन्दमयान्तैराकाशादिभूतारब्धैरविद्याकृतै आत्मवन्त सर्वे प्राणिन , तथा, स्वाभाविकेनाप्याकाशादिकारणेन नित्येनाविकृतेन सर्वगतेन सत्यज्ञानानन्तलक्षणेन पञ्चकोशातिगेन सर्वात्मना आत्मवन्त , स हि परमार्थत आत्मा सर्वेषामित्येतदप्यर्थादुक्त भवति । प्राण देवा अनु प्राणन्तीत्याद्युक्तम् , तत्कस्मादित्याह—प्राण हि यस्मात् भूताना प्राणिनाम् आयु जीवनम् , 'यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदेवायु ' इति श्रुत्यन्तरात् । तस्मात् सर्वायुषम् , सर्वेषामायु सर्वायु , सर्वायुरेव सर्वायुषम् इत्युच्यते, प्राणापगमे मरणप्रसिद्धे । प्रसिद्ध हि लोके

सर्वायुश्च प्राणस्य । अत अस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽपक्रम्य अन्त साधारण प्राणमयमात्मान ब्रह्म उपासते ये 'अहमस्मि प्राण सर्वभूतानामात्मा आयु, जीवनहेतुत्वात्' इति, ते सर्वमेव आयु अस्मिँल्लोके यन्ति, नापमृत्युना म्रियन्ते प्राक्प्राप्तादायुष इत्यर्थ । शत वर्षाणीति तु युक्तम्, 'सर्वमायुरेति' इति श्रुतिप्रसिद्धे । कि कारणम्?—प्राणो हि भूतानामायु तस्मात्सर्वायुषमुच्यत इति । यो यद्गुणक ब्रह्मोपास्ते, स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं पुनर्वचनम्— प्राणो हीत्यादि । तस्य पूर्वस्य अन्नमयस्य एष एव शरीरे अन्नमये भव शारीर आत्मा । क? य एष प्राणमय । तस्माद्वा एतस्मादित्याद्युक्तार्थमन्यत् । अन्योऽन्तर आत्मा मनोमय । मन इति सकल्पविकल्पात्मकमन्त करणम्, तन्मयो मनोमय, सोऽय प्राणमयस्याभ्यन्तर आत्मा । तस्य यजुरेव शिर । यजुरिति अनियताक्षरपादावसानो मन्त्रविशेष, तज्जातीयवचनो यजु शब्द, तस्य शिरस्त्वम्, प्राधान्यात् । प्राधान्य च यागादौ सन्निपत्योपकारकत्वात् यजुषा हि हविर्दीयते स्वाहाकारादिना ॥

वाचनिकी वा शिरआदिकल्पना सर्वत्र । मनसो हि

स्थानप्रयत्ननादस्वरवर्णपदवाक्यविषया तत्संकल्पात्मिका त-द्भाविता वृत्तिः श्रोत्रकरणद्वारा यजुःसंकेतेन विशिष्टा यजु-रित्युच्यते । एवम् ऋक्, एवं साम च । एवं च मनोवृत्तित्वे मन्त्राणाम्, वृत्तिरेव आवर्त्यत इति मानसो जप उपपद्यते । अन्यथा अविषयत्वान्मन्त्रो नावर्तयितुं शक्यः घटादिवत् इति मानसो जपो नोपपद्यते । मन्त्रा-वृत्तिश्चोद्यते बहुशः कर्मसु । अक्षरविषयस्मृत्यावृत्त्या मन्त्रा-वृत्तिः स्यात् इति चेत्, न, मुख्यार्थासंभवात् । 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति ऋगावृत्तिः श्रूयते । तत्र ऋचः अविषयत्वे तद्विषयस्मृत्यावृत्त्या मन्त्रावृत्तौ च क्रिय-माणायाम् 'त्रिः प्रथमामन्वाह' इति ऋगावृत्तिर्मुख्योऽर्थ-श्चोदितः परित्यक्तः स्यात् । तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुःशब्दवाच्यम् आ-त्मविज्ञानं मन्त्रा इति । एवं च नित्यत्वोपपत्तिर्वेदानाम् । अन्य-थाविषयत्वे रूपादिवदनित्यत्वं च स्यात्, नैतद्युक्तम् । 'सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मा' इति च श्रुतिः नित्यात्मनैकत्वं ब्रुवन्ती ऋगादीनां नित्यत्वे समञ्जसा स्यात् । 'ऋचोऽक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः' इति च मन्त्रवर्णः । आदेशः अत्र ब्राह्मणम्, आदेष्टव्यवि-

शेषानादिशतीति। अथर्वणाङ्गिरसा च दृष्टा मन्त्रा ब्राह्मण च शान्तिकपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात् पुच्छ प्रतिष्ठा । तदप्येष श्लोको भवति मनोमयात्मप्रकाशक पूर्ववत् ।।

इति तृतीयानुवाकभाष्यम् ॥

## चतुर्थोऽनुवाक ॥

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्द ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमय । तेनैष पूर्ण । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वय पुरुषविध । तस्य श्रद्धैव शिर' । ऋत दक्षिण पक्षः । सत्यमुत्तर पक्ष' । योग आत्मा । मह' पुच्छ प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

इति चतुर्थोऽनुवाक ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादि । तस्य पूर्वस्य प्राणमयस्य एष एव आत्मा शारीर शरीरे प्राणमये भव शारीर । क ? य एष मनोमय । तस्माद्वा एतस्मा

दिति पूर्ववत् । अन्योऽन्तर आत्मा विज्ञानमय मनोमय-स्याभ्यन्तरो विज्ञानमय । मनोमयो वेदात्मा उक्त । वेदार्थविषया बुद्धिर्निश्चयात्मिका विज्ञानम्, तच्चाध्यवसायलक्षणमन्त करणस्य धर्म, तन्मय निश्चयविज्ञानै प्रमाणस्वरूपैर्निर्वर्तित आत्मा विज्ञानमय प्रमाणविज्ञानपूर्वको हि यज्ञादि तायते । यज्ञादिहेतुत्व च वक्ष्यति श्लोकेन । निश्चयविज्ञानवतो हि कर्तव्येष्वर्थेषु पूर्व श्रद्धा उपपद्यते । सा सवकर्तव्याना प्राथम्यात् शिर इव शिर । ऋतसत्ये यथाव्यारयाते एव । योग युक्ति समाधानम् आत्मैव आत्मा । आत्मवतो हि युक्तस्य समाधानवत अङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति । तस्मात्समाधान योग आत्मा विज्ञानमयस्य । मह पुच्छ प्रतिष्ठा । मह इति महत्तत्त्व प्रथमजम्, 'महद्यक्ष प्रथमज वेद' इति श्रुत्यन्तरात्, पुच्छ प्रतिष्ठा कारणत्वात् । कारण हि कार्याणा प्रतिष्ठा, यथा वृक्षवीरुधा पृथिवी । सर्वविज्ञानाना च महत्तत्त्व कारणम् । तेन तद्विज्ञानमयस्यात्मन प्रतिष्ठा । तदप्येष श्लोको भवति पूर्ववत् । यथा अन्नमयादीना ब्राह्मणोक्ताना प्रकाशका श्लोका, एव विज्ञानमयस्यापि ॥

इति चतुर्थानुवाकभाष्यम् ॥

## पञ्चमोऽनुवाक ॥

विज्ञान यज्ञ तनुते । कर्माणि तनुते-
ऽपि च । विज्ञान देवा सर्वे । ब्रह्म ज्येष्ठ-
मुपासते । विज्ञान ब्रह्म चेद्वेद । तस्माच्चेन्न
प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वा
न्कामान्समश्नुत इति । तस्यैष एव शा
रीर आत्मा । य पूर्वस्य । तस्माद्वा एत-
स्माद्विज्ञानमयात् । अन्योऽन्तर आत्मा-
नन्दमय । तेनैष पूर्ण । स वा एष पुरुष
विध एव । तस्य पुरुष विधताम् । अन्वय
पुरुषविध । तस्य प्रियमेव शिर । मोदो
दक्षिण' पक्ष' । प्रमोद उत्तर' पक्ष । आ-
नन्द आत्मा । ब्रह्म पुच्छ प्रतिष्ठा । तद-
प्येष श्लोको भवति ॥ १ ॥

इति पञ्चमोऽनुवाक ॥

विज्ञान यज्ञ तनुते, विज्ञानवान्हि यज्ञ तनोति श्रद्धापूर्वकम्, अतो विज्ञानस्य कर्तृत्व तनुत इति । कर्माणि च तनुते । यस्माद्विज्ञानकर्तृक सर्वम्, तस्माद्युक्त विज्ञानमय आत्मा ब्रह्मेति । किंच, विज्ञान ब्रह्म सर्वे देवा इन्द्रादय ज्येष्ठम्, प्रथमजत्वात्, सर्ववृत्तीना वा तत्पूर्वकत्वात्प्रथमज विज्ञान ब्रह्म उपासते ध्यायन्ति, तस्मिन्विज्ञानमये ब्रह्मण्य भिमान कृत्वा उपासत इत्यर्थ । तस्मात्ते महता ब्रह्मण उपासनात् ज्ञानैश्वर्यवन्तो भवन्ति । तच्च विज्ञान ब्रह्म चेत् यदि वेद विजानाति, न केवल वेदैव, तस्मात् ब्रह्मण चेत् न प्रमाद्यति, बाह्येष्वनात्मस्वात्मा भावित, तस्मात्प्राप्त विज्ञानमये ब्रह्मण्यात्मभावनाया प्रमदनम्, तन्निवृत्त्यर्थमुच्यते— तस्माच्चेन्न* प्रमाद्यतीति । अन्नमयादिष्वात्मभाव हित्वा केवले विज्ञानमये ब्रह्मण्यात्मत्व भावयन्नास्ते चेदित्यर्थ । तत किं स्यादिति, उच्यते— शरीरे पाप्मनो हित्वा, शरीराभिमाननिमित्ता हि सर्वे पाप्मान, तेषा च विज्ञान मये ब्रह्मण्यात्माभिमानात् निमित्तापाये हानमुपपद्यते, छत्रापाय इव च्छायाया । तस्मात् शरीराभिमाननिमित्तान्सर्वान् पाप्मन शरीरप्रभवान् शरीरे एव हित्वा विज्ञानमय ब्रह्मस्वरूपापन्न तत्स्थान् सर्वान् कामान् विज्ञानमयेनैवा-

त्मना समश्नुते सम्यग्भुङ्क्ते इत्यर्थ । तस्य पूर्वस्य मनो मयस्य आत्मा एष एव शरीरे मनोमये भव शारीर । क ? य एष विज्ञानमय । तस्माद्वा एतस्मादित्युक्तार्थम । आनन्दमय इति कार्यात्मप्रतीति, अधिकारात् मयट्शब्दाच्च । अन्नादिमया हि कार्यात्मानो भौतिका इहाधिकृता । तदधिकारपतितश्चायमानन्दमय । मयट् चात्र विकारार्थे दृष्ट यथा अन्नमय इत्यत्र । तस्मात्कार्यात्मा आनन्दमय प्रत्येतव्य । सक्रमणाच्च । 'आनन्दमयमात्मानमुपसक्रामति' इति वक्ष्यति । कार्यात्मना च सक्रमणमन्नात्मना दृष्टम् । सक्रमणकर्मत्वेन च आनन्दमय आत्मा श्रूयते, यथा 'अन्नमयमात्मानमुपसक्रामति' इति । न च आत्मन एवोपसक्रमणम्, अधिकारविरोधात् । असभवाच्च । न ह्यात्मनैव आत्मन उपसक्रमण सभवति, स्वात्मनि भेदाभावात्, आत्मभूत च ब्रह्म सक्रमितु । शिरआदि कल्पनानुपपत्तेश्च । न हि यथोक्तलक्षणे आकाशादिकारणे अकार्यपतिते शिरआद्यवयवरूपकल्पना उपपद्यते । 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' 'अस्थूलमनणु' 'नेति नेत्यात्मा' इत्यादिविशेषापोहश्रुतिभ्यश्च । मन्त्रोदाहरणानुपपत्तेश्च । न हि, प्रियशिरआद्यवयवविशिष्टे प्रत्यक्षतोऽनुभूय-

माने आनन्दमये आत्मनि ब्रह्मणि नास्ति ब्रह्मेत्याशङ्काभावात् 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति मन्त्रोदाहरणमुपपद्यते। 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यपि चानुपपन्नं पृथग्ब्रह्मणः प्रतिष्ठात्वेन ग्रहणम्। तस्मात्कार्यपतित एवानन्दमयः, न पर एवात्मा। आनन्द इति विद्याकर्मणोः फलम्, तद्विकार आनन्दमयः। स च विज्ञानमयादान्तरः, यज्ञादिहेतोर्विज्ञानमयादस्यान्तरत्वश्रुतेः। ज्ञानकर्मणोर्हि फलं भोक्त्रर्थत्वादान्तरतमं स्यात्, आन्तरतमश्च आनन्दमय आत्मा पूर्वेभ्यः। विद्याकर्मणोः प्रियाद्यर्थत्वाच्च। प्रियादिप्रयुक्ते हि विद्याकर्मणी, तस्मात्प्रियादीनां फलरूपाणामात्मसंनिकर्षात् विज्ञानमयादस्याभ्यन्तरत्वमुपपद्यते, प्रियादिवासनानिर्वर्तितो ह्यात्मा आनन्दमयो विज्ञानमयाश्रितः स्वप्ने उपलभ्यते। तस्य आनन्दमयस्यात्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः, प्राधान्यात्। मोद इति प्रियलाभनिमित्तो हर्षः। स एव च प्रकृष्टो हर्षः प्रमोदः। आनन्द इति सुखसामान्यम् आत्मा प्रियादीनां सुखावयवानाम्, तेष्वनुस्यूतत्वात्। आनन्द इति परं ब्रह्म, तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधौ अन्तःकरणवृत्तिविशेषे तमसा अप्रच्छाद्यमाने प्रसन्ने

अभिव्यज्यते । तद्विषयसुखमिति प्रसिद्ध लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽनवस्थितत्वात् सुखस्य क्षणिकत्वम् । तद्यदन्त करण तपसा तमोघ्नेन विद्यया ब्रह्मचर्येण श्रद्धया च निर्मलत्वमापद्यते यावत्, तावत् विविक्ते प्रसन्ने अन्त करणे आनन्दविशेष उत्कृष्यते विपुली भवति । वक्ष्यति च—'रसो वै स, रस ह्येवाय लब्ध्वानन्दी भवति, एप ह्येवानन्दयाति, एतस्यैवान दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यन्तरात् । एव च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते । एव च उत्कृष्यमाणस्य आनन्दमयस्यात्मन परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव यत्प्रकृत सत्यज्ञानानन्तलक्षणम्, यस्य च प्रतिपत्त्यर्थ पञ्च अन्नादिमया कोशा उपन्यस्ता, यच्च तभ्य आभ्यन्तरम्, येन च ते सर्वे आत्मवन्त, तत् ब्रह्म पुच्छ प्रतिष्ठा । तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्य अवसानभूतम् अद्वैत ब्रह्म प्रतिष्ठा, आनन्दमयस्य एकत्वावसानत्वात । अस्ति तदेकमविद्याकल्पितस्य द्वैतस्यावसानभूतमद्वैत ब्रह्म प्रतिष्ठा पुच्छम् । तदेतस्मिन्नप्यर्थे एष श्लोको भवति ॥

इति पञ्चमानुवाकभाष्यम् ॥

## षष्ठोऽनुवाकः ॥

असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती ३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता ३ उ । सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किंच । तत्सत्यमि-

त्याचक्षते । तदप्येष श्लोको भवति ॥ १ ॥

इति षष्ठोऽनुवाक ॥

असन्नेव असत्सम एव, यथा असन् अपुरुषार्थसबन्धी, एव स भवति अपुरुषार्थसबन्धी । कोऽसौ? य असन् अविद्यमान ब्रह्म इति वेद विजानाति चेत् यदि । तद्विपर्ययेण यत्सर्वविकल्पास्पद सर्वप्रवृत्तिबीज सर्वविशेषप्रत्यस्तमितमपि, अस्ति तत् ब्रह्म इति वेद चेत्, कुत पुनराशङ्का तन्नास्तित्व? व्यवहारातीतत्व ब्रह्मण इति ब्रूम । व्यवहारविषये हि वाचारम्भणमात्रे अस्तित्वभावितबुद्धि तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते । यथा 'घटादिर्व्यवहारविषयतयोपपन्न सन्, तद्विपरीत असन्' इति प्रसिद्धम्, एव तत्सामान्यादिहापि स्याद्ब्रह्मणो नास्तित्व प्रत्याशङ्का । तस्मादुच्यते— आस्त ब्रह्मति चेद्वेदेति । कि पुन स्यात्तदस्तीति विजानत? तदाह—सन्त विद्यमान ब्रह्मस्वरूपेण परमार्थसदात्मापन्नम् एनम् एवविद विदु ब्रह्मविद । तत तस्मात् अस्तित्ववदनात् स अन्येषा ब्रह्मवद्विज्ञेया भवतीत्यर्थ । अथवा यो नास्ति ब्रह्मेति मन्यते, स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्य नास्तित्व प्रतिपद्यते, ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य । अत नास्तिक स असन्

असाधुरुच्यते लोके । तद्विपरीत सन् य अस्ति ब्रह्मेति चेद्वेद, स तद्ब्रह्मप्रतिपत्तिहेतु सन्मार्गं वर्णाश्रमादिव्यवस्था-लक्षण श्रद्धानतया यथावत्प्रतिपद्यते यस्मात्, तत तस्मात् सन्त साधुमार्गस्थम् एन विदु साधव । तस्मा दस्तीत्येव ब्रह्म प्रतिपत्तव्यमिति वाक्यार्थ । तस्य पूर्वस्य विज्ञानमयस्य एष एव शरीरे विज्ञानमये भव शारीर आत्मा । कोऽसौ? य एष आनन्दमय । त प्रति नास्त्या शङ्का नास्तित्वे । अपोढसर्वविशेषत्वात्तु ब्रह्मणो नास्तित्व प्रत्याशङ्का युक्ता, सर्वसाम्याच्च ब्रह्मण । यस्मादेवम्, अत तस्मात् अथ अनन्तर श्रोतु शिष्यस्य अनुप्रश्ना आचार्योक्तिमनु एते प्रश्ना । सामान्य हि ब्रह्म आकाशादिकारणत्वात् विदुष अविदुषश्च, अत अविदुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते — उत अपि अविद्वान् अमु लोक परमात्मानम् इत प्रेत्य कश्चन, चनशब्द अप्यर्थे, अविद्वानपि गच्छति प्राप्नोति? 'किं वा न गच्छति?' इति द्वितीयोऽपि प्रश्नो द्रष्टव्य, अनुप्रश्ना इति बहुवचनात् । विद्वास प्रत्यन्यौ प्रश्नौ—यद्यविद्वान्सामान्य कारणमपि ब्रह्म न गच्छति, अतो विदुषोऽपि ब्रह्मागमनमा-शङ्क्यते, अतस्त प्रति प्रश्न — आहो विद्वानिति । उकार च वक्ष्यमाणमधस्तादपकृष्य तकार च पूर्वस्मादुतशब्दाद्धा

सञ्य आहो इत्येतस्मात्पूर्वमुतशब्द संयोज्य पृच्छति—उताहो विद्वानिति। विद्वान् ब्रह्मविदपि कश्चित् इत प्रेत्य अमु लोक समश्नुते प्राप्नोति। समश्नुते उ इत्येव स्थिते, अयादेशे य लोपे च कृते, अकारस्य प्लुति — समश्नुता ३ उ इति। विद्वान्समश्नुते अमु लोकम्, किं वा, यथा अविद्वान्, एव विद्वानपि न समश्नुते इत्यपर प्रश्न। द्वावेव वा प्रश्नौ विद्वदविद्वद्विषयौ, बहुवचन तु सामर्थ्यप्राप्तप्रश्नान्तरापेक्षया घटते। 'असद्ब्रह्मेति वेद चेत्' 'अस्ति ब्रह्मेति चेद्वेद' इति श्रवणादस्ति नास्तीति सशय। तत अर्थप्राप्त किमस्ति नास्तीति प्रथमोऽनुप्रश्न। ब्रह्मण अपक्षपातित्वात् अविद्वान्गच्छति न गच्छतीति द्वितीय। ब्रह्मण समत्वेऽपि अविदुष इव विदुषोऽप्यगमनमाशङ्क्य कि विद्वान्समश्नुते न समश्नुते इति तृतीयोऽनुप्रश्न॥

एतेषा प्रतिवचनार्थ उत्तरो ग्रन्थ आरभ्यते। तत्र अस्तित्वमेव तावदुच्यते। यच्चोक्तम् 'सत्य ज्ञानमनन्त ब्रह्म' इति, तत्र च कथ सत्यत्वमित्येतद्वक्तव्यमिति इदमुच्यते। सत्त्वोक्त्यैव सत्यत्वमुच्यते। उक्त हि सदेव सत्यमिति, त स्मात्सत्त्वोक्त्यैव सत्यत्वमुच्यते। कथमेवमर्थता अवगम्यते अस्य ग्रन्थस्य? शब्दानुगमात्। अनेनैव ह्यर्थेनान्वितानि उ-

त्तरवाक्यानि—'तत्सत्यमित्याचक्षते' 'यदेष आकाश आनन्दो न स्यात्' इत्यादीनि । तत्र असदेव ब्रह्मेत्याशङ्क्यते । कस्मात्? यदस्ति, तद्विशेषतो गृह्यते, यथा घटादि । यन्नास्ति, तन्नोपलभ्यते, यथा शशविषाणादि । तथा नोपलभ्यते ब्रह्म, तस्माद्विशेषत अग्रहणान्नास्तीति । तन्न, आकाशादिकारणत्वाद्ब्रह्मण । न नास्ति ब्रह्म । कस्मात्? आकाशादि हि सर्व कार्य ब्रह्मणो जात गृह्यते, यस्माच्च जायते किंचित्, तदस्तीति दृष्ट लोके, यथा घटाङ्कुरादिकारण मृद्बीजादि, तस्मादाकाशादिकारणत्वादस्ति ब्रह्म । न चासतो जात किंचिद्गृह्यते लोके कार्यम् । असतश्चेन्नामरूपादि कार्यम्, निरात्मकत्वान्नोपलभ्येत, उपलभ्यते तु, तस्मादस्ति ब्रह्म । असतश्चेत्कार्यं गृह्यमाणमपि असदन्वितमेव स्यात्, न चैवम्, तस्मादस्ति ब्रह्म । तत्र 'कथमसत सज्जायेत' इति श्रुत्यन्तरमसत सज्जन्मासभवमन्वाचष्टे न्यायत । तस्मात्सदेव ब्रह्मेति युक्तम् । तद्यदि मृद्बीजादिवत् कारण स्यात्, अचेतन तर्हि । न कामयितृत्वात् । न हि कामयित्रचेतनमस्ति लोके । सवज्ञ हि ब्रह्मेत्यवोचाम, अत कामयितृत्वोपपत्ति । कामयितृत्वादस्मदादिवदनाप्तकाममिति चेत्, न, स्वातन्त्र्यात् । यथा

अन्यान्परवशीकृत्य कामादिदोषा प्रवर्तयन्ति, न तथा ब्रह्म-
ण प्रवर्तका कामा । कथ तर्हि ? सत्यज्ञानलक्षणा स्वात्म-
भूतत्वाद्विशुद्धा । न तैर्ब्रह्म प्रवर्त्यते, तेषा तु तत्प्रवर्तक ब्रह्म
प्राणिकर्मापेक्षया । तस्मात्स्वातन्त्र्य कामेषु ब्रह्मण , अता न
अनाप्तकाम ब्रह्म । साधनान्तरानपेक्षत्वाच्च । यथा अन्येषाम-
नात्मभूता धर्मादिनिमित्तापेक्षा कामा स्वात्मव्यतिरिक्तका-
यकरणसाधनान्तरापेक्षाश्च, न तथा ब्रह्मण । किं तर्हि ?
स्वात्मनोऽनन्या । तदेतदाह—सोऽकामयत । स आत्मा
यस्मादाकाश सभूत , अकामयत कामितवान । कथम् ? बहु
प्रभूत स्या भवेयम् । कथमेकस्यार्थान्तराननुप्रवेशे बहुत्व स्या-
दिति, उच्यते—प्रजायेय उत्पद्येय । न हि पुत्रोत्पत्तेरिवार्थान्तर-
विषय बहुभवनम । कथ तर्हि ? आत्मस्थानभिव्यक्तनामरू-
पाभिव्यक्त्या । यदा आत्मस्थे अनभिव्यक्ते नामरूपे व्या
क्रियेते, तदा आत्मस्वरूपापरित्यागेनैव ब्रह्मण अप्रविभ-
क्तदेशकाले सर्वावस्थासु व्याक्रियेते । तदेतन्नामरूपव्याक-
रण ब्रह्मणो बहुभवनम् । नान्यथा निरवयवस्य ब्रह्मणो
बहुत्वापत्तिरुपपद्यते अल्पत्व वा, यथा आकाशस्याल्पत्व
बहुत्व च वस्त्वन्तरकृतमेव । अत तद्वारेणैवात्मा
बहु भवति । न ह्यात्मनोऽन्यदनात्मभूत तत्प्रविभक्त-

देशकाल सूक्ष्म व्यवहित विप्रकृष्ट भूत भवद्भविष्यद्वा वस्तु विद्यते । अत नामरूपे सर्वावस्थे ब्रह्मणैवात्मवती । न ब्रह्म तदात्मकम् । ते तत्प्रत्याख्याने न स्त एवेति तदात्मके उच्येते । ताभ्या च उपाधिभ्या ज्ञातृज्ञेयज्ञानशब्दार्थादिसर्वसव्यवहारभाग्ब्रह्म । स आत्मा एवकाम सन् तप अतप्यत । तप इति ज्ञानमुच्यते, 'यस्य ज्ञानमय तप' इति श्रुत्यन्तरात् । आप्तकामत्वाच्च इतरस्य असभव एव तपस । तत्तप अतप्यत तप्तवान्, सृज्यमानजगद्रचनादिविषयामालोचनामकरोदात्मेत्यर्थ । स एवमालोच्य तप तप्त्वा प्राणिकर्मादिनिमित्तानुरूपम् इद सर्व जगत् देशत कालत नाम्ना रूपेण च यथानुभव सर्वै प्राणिभि सर्वावस्थैरनुभूयमानम् असृजत सृष्टवान् । यदिद किंच यत्किंचेदमविशिष्टम, तत् इद जगत् सृष्ट्वा, किमकरोदिति, उच्यते— तदेव सृष्ट जगत् अनुप्राविशदिति ॥

तत्रैतच्चिन्त्यम्—कथमनुप्राविशदिति । किम्, य स्रष्टा, स तेनैवात्मनानुप्राविशत्, उत अन्येनेति ? किं तावद्युक्तम् ? क्त्वाप्रत्ययश्रवणात्, य स्रष्टा, स एवानुप्राविशदिति । ननु न युक्त मृद्वच्चेत्कारण ब्रह्म, तदात्मकत्वात्कार्यस्य, कारणमेव हि कार्यात्मना परिणमते, अत अप्रविष्टस्यैव कार्योत्प

त्तेरूर्ध्वं पृथक्कारणस्य पुनः प्रवेशोऽनुपपन्नः । न हि घटपरिणामव्यतिरेकेण मृदो घटे प्रवेशोऽस्ति । यथा घटे चूर्णात्मना मृदोऽनुप्रवेशः, एवमनेन आत्मना नामरूपकार्ये अनुप्रवेश आत्मन इति चेत्, श्रुत्यन्तराच्च 'अनेन जीवेनात्मनानुप्रविश्य' इति, नैव युक्तम्, एकत्वाद्ब्रह्मणः । मृदात्मनस्त्वनेकत्वात् सावयवत्वाच्च युक्तो घटे मृदश्चूर्णात्मनानुप्रवेशः, मृदश्चूर्णस्य अप्रविष्टदेशत्वाच्च । न त्वात्मन एकत्वे सति निरवयवत्वादप्रविष्टदेशाभावाच्च प्रवेश उपपद्यते, कथं तर्हि प्रवेशः स्यात् ? युक्तश्च प्रवेशः, श्रुतत्वात्— 'तदेवानुप्राविशत्' इति । सावयवमेवास्तु, तर्हि सावयवत्वात् मुखे हस्तप्रवेशवत् नामरूपकार्ये जीवात्मनानुप्रवेशो युक्त एवेति चेत्, न, अशून्यदेशत्वात् । न हि कार्यात्मना परिणतस्य नामरूपकार्यदेशव्यतिरेकेण आत्मशून्यः प्रदेशोऽस्ति यं प्रविशेज्जीवात्मना । कारणमेव चेत्प्रविशेत्, जीवात्मत्वं जह्यात्, यथा घटो मृत्प्रवेशे घटत्वं जहाति । 'तदेवानुप्राविशत्' इति च श्रुतेर्न कारणानुप्रवेशो युक्तः । कार्यान्तरमेव स्यादिति चेत् — तदेवानुप्राविशदिति जीवात्मरूपं कार्यं नामरूपपरिणतं कार्यान्तरमेव आपद्यत इति चेत्, न, विरोधात् । न हि घटो घटान्तरमापद्यते, व्यतिरेकश्रुतिविरोधाच्च । जीवस्य

नामरूपकार्यव्यतिरेकानुवादिन्य श्रुतयो विरुध्येरन्, तदापत्तौ मोक्षासम्भवाच्च । न हि यतो मुच्यमान, तदेव आपद्यते । न हि शृङ्खलापत्ति बद्धस्य तस्करादे । बाह्यान्तर्भेदेन परिणतमिति चेत्—तदेव कारण ब्रह्म शरीराद्याधारत्वेन तदन्तर्जीवात्मना आधेयत्वेन च परिणतमिति चेत्, न, बहिष्ठस्य प्रवेशोपपत्ते । न हि यो यस्यान्त स्थ स एव तत्प्रविष्ट उच्यते । बहिष्ठस्यानुप्रवेश स्यात्, प्रवेशशब्दार्थस्यैव दृष्टत्वात्—यथा गृह कृत्वा प्राविशदिति । जलसूर्यकादिप्रतिबिम्बवत् प्रवेश स्यादिति चेत्, न, अपरिच्छिन्नत्वादमूर्तत्वाच्च । परिच्छिन्नस्य मूर्तस्यान्यस्य अन्यत्र प्रसादस्वभावके जलादौ सूर्यकादिप्रतिबिम्बोदय स्यात्, न त्वात्मन, अमूर्तत्वात्, आकाशादिकारणस्य आत्मन व्यापकत्वात् । तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वन्तराभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्त । एव तर्हि नैवास्ति प्रवेश, न च गत्यन्तरमुपलभामहे, 'तदेवानुप्राविशत्' इति श्रुते । श्रुतिश्च नोऽतीन्द्रियविषये विज्ञानोत्पत्तौ निमित्तम् । न चास्माद्वाक्यात् यत्नवतामपि विज्ञानमुत्पद्यते । हन्त तर्ह्यनर्थकत्वादपोह्यमेतद्वाक्यम् 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति, न, अन्यार्थत्वात् । किमर्थमस्थाने चर्चा? प्रकृतो ह्यन्यो

विवक्षितोऽस्य वाक्यार्थ अस्ति, स स्मर्तव्य — 'ब्रह्मविदाप्नोति परम्' 'सत्य ज्ञानमनन्त ब्रह्म' 'यो वेद निहित गुहायाम्' इति । तद्विज्ञान च विवक्षितम्, प्रकृत च तत् । ब्रह्मस्वरूपावगमाय च आकाशाद्यन्नमयान्त कार्य प्रदर्शितम्, ब्रह्मावगमश्च आरब्ध । तत्र अन्नमयादात्मनोऽन्योऽन्तर आत्मा प्राणमय, तदन्तर्मनोमयो विज्ञानमय इति विज्ञानगुहाया प्रवेशित, तत्र च आनन्दमयो विशिष्ट आत्मा प्रदर्शित । अत परमानन्दमयलिङ्गाधिगमद्वारेण आनन्दविवृद्ध्यवसान आत्मा । ब्रह्म पुच्छ प्रतिष्ठा सर्वविकल्पास्पदो निर्विकल्पोऽस्यामेव गुहायामधिगन्तव्य इति तत्प्रवेश प्रकल्प्यते । न ह्यन्यत्रोपलभ्यते ब्रह्म, निर्विशेषत्वात्, विशेषसम्बन्धो ह्युपलब्धिहेतुर्दृष्ट — यथा राहोश्चन्द्रार्कविशेषसम्बन्ध । एवमन्त करणगुहात्मसम्बन्धो ब्रह्मण उपलब्धिहेतु, संनिकर्षात्, अवभासात्मकत्वाच्च अन्त करणस्य । यथा च आलोकविशिष्टा घटाद्युपलब्धि एव बुद्धिप्रत्ययालोकविशिष्टात्मोपलब्धि स्यात्, तस्मात् उपलब्धिहेतौ गुहाया निहितमिति प्रकृतमेव । तद्वृत्तिस्थानीये त्विह पुनस्तत्सृष्ट्वा तदेवानुप्राविशदित्युच्यते ॥

तदेवेदमाकाशादिकारण कार्य सृष्ट्वा तदनुप्रविष्टमिवान्त-

गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञात्रित्येव विशेषवदुपलभ्यते । स एव तस्य प्रवेश , तस्मादस्ति तत्कारण ब्रह्म । अत अस्तित्वादस्तीत्येवोपलब्धव्य तत् । तत् कार्यमनुप्रविश्य, किम्? सच्च मूर्त त्यच्च अमूर्तम् अभवत् । मूर्तामूर्ते ह्यव्याकृतनामरूपे आत्मस्थे अन्तर्गतेन आत्मना व्याक्रियेते मूर्तामूर्तशब्दवाच्ये । ते आत्मना त्वप्रविभक्तदेशकाले इति कृत्वा आत्मा ते अभवदित्युच्यते । किं च, निरुक्त चानिरुक्त च, निरुक्त नाम निष्कृष्य समानासमानजातीयेभ्य देशकालविशिष्टतया इद तदित्युक्तम्, अनिरुक्त तद्विपरीतम्, निरुक्तानिरुक्ते अपि मूर्तामूर्तयोरेव विशेषणे । यथा सच्च त्यच्च प्रत्यक्षपरोक्ष, तथा निलयन चानिलयन च । निलयन नीडम् आश्रय मूर्तस्यैव धम , अनिलयन तद्विपरीतम् अमूर्तस्यैव धम । त्यदनिरुक्तानिलयनानि अमूर्तधर्मत्वेऽपि व्याकृतविषयाण्येव, सर्गोत्तरकालभावश्रवणात् । त्यदिति प्राणाद्यनिरुक्त तदेवानिलयन च । अता विशषणानि अमूर्तस्य व्याकृतविषयाण्येवैतानि । विज्ञान चेतनम्, अविज्ञान तद्रहितमचेतन पाषाणादि । सत्य च व्यवहारविषयम्, अधिकारात्, न परमार्थसत्यम्, एकमेव हि परमार्थसत्य ब्रह्म । इह पुन व्यवहारविषयमापेक्षिक सत्यम , मृगतृष्णि

काद्यनृतापेक्षया उदकादि सत्यमुच्यते । अनृत च तद्विपरीतम् । कि पुन ? एतत्सर्वमभवत्, सत्य परमार्थसत्यम्, कि पुनस्तत्? ब्रह्म, 'सत्य ज्ञानमनन्त ब्रह्म' इति प्रकृतत्वात् । यस्मात् सत्त्यदादिक मूर्तामूर्तधर्मजात यत्किंचेद सर्वमविशिष्ट विकारजातमेकमेव सच्छब्दवाच्य ब्रह्माभवत्, तद्व्यतिरेकेणाभावान्नामरूपविकारस्य, तस्मात् तत् ब्रह्म सत्यमित्याचक्षते ब्रह्मविद । अस्ति नास्तीत्यनुप्रश्न प्रकृत, तस्य प्रतिवचनविषये एतदुक्तम्—'आत्माकामयत बहु स्याम्' इति । स यथाकाम च आकाशादिकार्य सत्त्यदादिलक्षण सृष्ट्वा तदनुप्रविश्य पश्यञ्शृण्वन्मन्वानो विजानन बह्वभवत, तस्मात् तदेवेदमाकाशादिकारण कार्यस्थ परमे व्योमन् हृदयगुहाया निहित तत्प्रत्ययावभासविशेषेणोपलभ्यमानमस्तीत्येव विजानीयादित्युक्त भवति । तत् एतस्मिन्नर्थे ब्राह्मणोक्ते एष श्लोक मन्त्र भवति । यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशका पञ्चस्वपि, एव सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्र कार्यद्वारेण भवति ॥

इति षष्ठानुवाकभाष्यम् ॥

## सप्तमोऽनुवाकः ॥

---

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानँ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वै तत्सुकृतम् । रसो वै सः । रसँ ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषो मन्वानस्य । तदप्येष श्लोको भवति ॥ १ ॥

इति सप्तमोऽनुवाकः ॥

असद्वा इदमग्र आसीत् । असदिति व्याकृतनामरूप विशेषविपरीतरूपम् अव्याकृत ब्रह्म उच्यते, न पुनरत्यन्त मेवासत् । न ह्यसत सज्जन्मास्ति । इदम् इति नामरूपविशेषवद्व्याकृत जगत, अग्रे पूर्व प्रागुत्पत्ते ब्रह्मैव असच्छब्दवाच्यमासीत् । तत असत वै सत् प्रविभक्तनामरूपविशेषम् अजायत उत्पन्नम । किं तत प्रविभक्त कार्यमिति—पितुरिव पुत्र ' नेत्याह । तत् असच्छब्दवाच्य स्वयमेव आत्मानमेव अकुरुत कृतवत् । यस्मादेवम , तस्मात् तत् ब्रह्मैव सुकृत स्वय कर्तृ उच्यते । स्वय कर्तृ ब्रह्मेति प्रसिद्ध लोके सर्वकारणत्वात । यस्माद्वा स्वयमकरोत्सर्वं सर्वात्मना, तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारण सुकृतम उच्यते । सर्वथापि तु फलसबन्धादिकारण सुकृतशब्दवाच्य प्रसिद्ध लोके । यदि पुण्य यदि वा अन्यत सा प्रसिद्धि नित्ये चेतनकारणे सति उपपद्यते, तस्मादस्ति ब्रह्म, सुकृतप्रसिद्धेरिति । इतश्चास्ति , कुत ' रसत्वात् । कुतो रसत्वप्रसिद्धिर्ब्रह्मण इत्यत आह— यद्वै तत्सुकृत रसो वै स । रसो नाम तृप्तिहेतु आनन्दकरो मधुराम्लादि प्रसिद्धो लोके । रसमेव हि अय लब्ध्वा प्राप्य आनन्दी सुखी भवति । नासत आनन्दहेतुत्व दृष्ट लोके । बाह्यानन्दसाधनरहिता अपि अनीहा निरेषणा ब्राह्मणा बाह्यरस-

लाभादिव सानन्दा दृश्यन्ते विद्वास , नून ब्रह्मैव रसस्ते षाम् । तस्मादस्ति तत्तेषामानन्दकारण रसवद्ब्रह्म । इतश्चा- स्ति, कुत ? प्राणनादिक्रियादर्शनात् । अयमपि हि पिण्डो जीवत प्राणेन प्राणिति अपानेन अपानिति । एव वायवी- या ऐन्द्रियकाश्च चेष्टा सहतै कायकरणैर्निर्वर्त्यमाना दृश्य- न्ते । तच्चैकार्थवृत्तित्वेन सहनन नान्तरेण चेतनमसहत स भवति, अन्यत्रादर्शनात् । तदाह—यत् यदि एष आकाशे परमे व्योम्नि गुहाया निहित आनन्दो न स्यात् न भवेत, को ह्येव लोके अन्यात् अपानचेष्टा कुर्यादित्यर्थ । क प्रा ण्यात् प्राणन वा कुर्यात्, तस्मादस्ति तद्ब्रह्म , यदर्था कार्य करणप्राणनादिचेष्टा , तत्कृत एव च आनन्दो लोकस्य । कुत ? एष ह्येव पर आत्मा आनन्दयाति आनन्दयति सुखयति लोक धर्मानुरूपम । स एवात्मा आनन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थ । भयाभयहेतुत्वाद्विद्वदविदुषा रस्ति तद्ब्रह्म । सद्वस्त्वाश्रयणेन हि अभय भवति, नासद्व- स्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते । कथमभयहेतुत्वमिति, उच्यते— यदा ह्येव यस्मात् एष साधक एतस्मिन् ब्रह्मणि— किंविशिष्टे ? अदृश्ये दृश्य नाम द्रष्टव्य विकार , दर्शनार्थत्वाद्विकारस्य , न दृश्यम् अदृश्यम् , अविकार

इत्यर्थः । एतस्मिन्नदृश्ये अविकारेऽविषयभूते, अनात्म्ये अशरीरे यस्माददृश्यं तस्मादनात्म्यम्, यस्मादनात्म्यं तस्मान्निरुक्तम्, विशेषो हि निरुच्यते, विशेषश्च विकारः, अविकारं च ब्रह्म, सर्वविकारहेतुत्वात् तस्मात् अनिरुक्तम् । यत एवम् तस्मादनिलयनं निलयनं नीडः आश्रयः न निलयनम् अनिलयनम् अनाधारः तस्मिन् एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः । अभयमिति क्रियाविशेषणम् । अभयामिति वा लिङ्गान्तरं परिणम्यते । प्रतिष्ठां स्थितिमात्मभावं विन्दते लभते । अथ तदा सः तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति । स्वरूपप्रतिष्ठो ह्यसौ यदा भवति, तदा नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति । अन्यस्य ह्यन्यतो भयं भवति, न आत्मन एव आत्मनो भयं युक्तम्, तस्मात् आत्मैव आत्मनः अभयकारणम् । सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु, तच्चायुक्तमसति भयत्राणे ब्रह्मणि । तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति । कदा असौ अभयं गतो भवति साधकः ? यदा नान्यत्पश्यति आत्मनि च अन्तरं भेदं न कुरुते, तदा अभयं गतो भवतीत्यभिप्रायः । यदा पुनरविद्यावस्थायां हि यस्मात् एषः अविद्या

वान् अविद्यया प्रत्युपस्थापित वस्तु तैमिरिकद्वितीयचन्द्रव-त्पश्यत्यात्मनि च एतस्मिन् ब्रह्मणि, उत अपि, अरम् अल्प-मपि, अन्तर छिद्र भेददर्शन कुरुते, भेददर्शनमेव हि भयका-रणम्, अल्पमपि भेद पश्यतीत्यर्थ । अथ तस्माद्भेददर्शनाद्धेतो तस्य भेददर्शिन आत्मनो भय भवति । तस्मादात्मैवात्मनो भयकारणमविदुष, तदेतदाह—तत् ब्रह्म त्वेव भय भेददर्शि-नो विदुष ईश्वरोऽयो मत्त अहमन्य ससारीत्येवविदुष भेददृष्टमीश्वराख्य तदेव ब्रह्म अल्पमप्य तर कुर्वत भय भवति एकत्वेन अमन्वानस्य । तस्मात् विद्वानप्यविद्वानेवासौ, योऽय-मेकमभिन्नमात्मतत्त्व न पश्यति । उच्छेदहेतुदर्शनाद्धयुच्छे-द्याभिमतस्य भय भवति, अनुच्छेद्यो ह्युच्छेदहेतु, तत्र अ सत्युच्छेदहेतौ उच्छेद्ये न तद्दर्शनकार्य भय युक्तम् । सर्व च जगद्भयवद्दृश्यते । तस्माज्जगतो भयदर्शनाद्गम्यते—नून तद-स्ति भयकारणमुच्छेदहेतुरनुच्छेद्यात्मकम्, यतो जगद्बिभेती ति । तत् एतस्मिन्नप्यर्थे एष श्लोक भवति ॥

इति सप्तमानुवाकभाष्यम् ॥

## अष्टमोऽनुवाकः ॥

भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः ॥ १ ॥

स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोका-

नामानन्दः। श्रोत्रियस्य चाकामहतस्य।
ते ये शतं पितॄणां चिरलोकलोकानामा-
नन्दाः। स एक आजानजानां देवानामा-
नन्दः॥ २॥

श्रोत्रियस्य चाकामहतस्य। ते ये
शतमाजानजानां देवानामानन्दाः। स
एकः कर्मदेवानां देवानामानन्दः। ये
कर्मणा देवानपियन्ति। श्रोत्रियस्य चा-
कामहतस्य। ते ये शतं कर्मदेवानां देवा-
नामानन्दाः। स एको देवानामानन्दः।
श्रोत्रियस्य चाकामहतस्य। ते ये शतं
देवानामानन्दाः। स एक इन्द्रस्या-
नन्दः॥ ३॥

श्रोत्रियस्य चाकामहतस्य। ते ये शत-
मिन्द्रस्यानन्दाः। स एको बृहस्पतेरान-
न्दः। श्रोत्रियस्य चाकामहतस्य। ते ये
शतं बृहस्पतेरानन्दाः। स एकः प्रजाप

**तेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ॥ ४ ॥**

भीषा भयेन अस्मात् वातः पवते । भीषोदेति सूर्यः । भीषा अस्मात् अग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । वातादयो हि महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्येष्वायासबहुलेषु नियताः प्रवर्तन्ते, तद्युक्तं प्रशास्तरि सति, यस्मात् नियमेन तेषां प्रवर्तनम्, तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म । यतस्ते भृत्या इव राज्ञः अस्मात् ब्रह्मणः भयेन प्रवर्तन्ते तच्च भयकारणमानन्दं ब्रह्म । तस्य अस्य ब्रह्मण आनन्दस्य एषा मीमांसा विचारणा भवति । किमानन्दस्य मीमांस्यमिति, उच्यते— किमानन्दो विषयविषयिसंबन्धजनितः लौकिकानन्दवत्, आहोस्वित् स्वाभाविकः, इत्येवमेषा आनन्दस्य मीमांसा ॥

तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसंपत्तिनिमित्त उत्कृष्टः । स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम् । अनेन हि प्रसिद्धेन आनन्देन व्यावृत्तविषयबुद्धिगम्य

आनन्दोऽनुगन्तु शक्यते । लौकिकोऽप्यानन्द ब्रह्मानन्द स्यैव मात्रा, अविद्यया तिरस्क्रियमाणे विज्ञाने उत्कृष्यमा णाया च अविद्याया ब्रह्मादिभि कर्मवशात् यथाविज्ञान विषयादिसाधनसबन्धवशाच्च विभाव्यमानश्च लोकेऽनव स्थितो लौकिक सपद्यते, स एव अविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिषु अकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्र ह्मण आनन्द इति ॥

निरस्ते त्वविद्याकृते विषयविषयिविभागे, विद्यया स्वाभा विक परिपूर्ण एक आनन्द अद्वैत भवतीत्येतमर्थ विभावयिष्यन्नाह—युवा प्रथमवया, साधुयुवेति साधु श्चासौ युवा चेति यूनो विशेषणम, युवाप्यसाधुर्भवति सा धुरप्ययुवा, अतो विशेषण युवा स्यात्साधुयुवेति, अध्या यक अधीतवेद । आशिष्ठ आशास्तृतम, दृढिष्ठ दृढ तम, बलिष्ठ बलवत्तम, एवमाध्यात्मिकसाधनसपन्न । तस्येय पृथिवी उर्वी सर्वा वित्तस्य वित्तेनोपभोगसाधनेन दृष्टार्थेनादृष्टार्थेन च कर्मसाधनेन सपन्ना पूर्णा राजा पृथि वीपतिरित्यर्थ । तस्य च य आनन्द, स एक मानुष मनु ष्याणा प्रकृष्ट एक आनन्द । ते ये शत मानुषा आनन्दा,

स एको मनुष्यगन्धर्वाणामानन्द , मानुषानन्दात शतगुणेनोत्कृष्ट मनुष्यगन्धर्वाणामानन्द भवति । मनुष्या सन्त कर्मविद्याविशेषात गन्धर्वत्व प्राप्ता मनुष्यगन्धर्वा । ते ह्यन्तर्धानादिशक्तिसपन्ना सूक्ष्मकार्यकरणा , तस्मात्प्रतिघाताल्पत्व तेषा द्वन्द्वप्रतिघातशक्तिसाधनसपत्तिश्च । तत अप्रतिहन्यमानस्य प्रतीकारवत मनुष्यगन्धर्वस्य स्याच्चित्तप्रसाद । तत्प्रसादविशेषात्सुखविशेषाभिव्यक्ति । एव पूर्वस्या पूर्वस्या भूमेरुत्तरस्यामुत्तरस्या भूमौ प्रसादविशेषत शतगुणेन आनन्दोत्कर्ष उपपद्यते । प्रथम तु अकामहताग्रहण मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्यानन्दात् शतगुणत आनन्दोत्कर्ष मनुष्यगन्धर्वेण तुल्यो वक्तव्य इत्येवमर्थम । साधुयुवा अध्यायक इति श्रोत्रियत्वावृजिनत्वे गृह्यते । ते ह्यविशिष्टे सर्वत्र । अकामहतत्व तु विषयोत्कर्षापकर्षत सुखोत्कर्षापकर्षाय विशेष्यते । अत अकामहतग्रहणम् , तद्विशेषत शतगुणसुखोत्कर्षोपलब्ध अकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम । व्याख्यातमन्यत । देवगन्धर्वा जातित एव । चिरलोकलोकानामिति पितॄणा विशेषणम् । चिरकालस्थायी लोको येषा पितॄणाम्, ते चिरलोकलोका इति । आजान इति देवलोक तस्मिन्नाजाने

जाता आजानजा देवा, स्मार्तकर्मविशेषतो देवस्थानेषु जाता । कर्मदेवा ये वैदिकेन कर्मणा अग्निहोत्रादिना केवलेन देवानपियन्ति । देवा इति त्रयस्त्रिंशद्धविर्भुज , इन्द्रस्तेषा स्वामी, तस्य आचार्यो बृहस्पति । प्रजापति विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूप ससारमण्डलव्यापी । यत्रैते आनन्दभेदा एकता गच्छन्ति, धर्मश्च तन्निमित्त ज्ञान च तद्विषयम् अकामहतत्व च निरतिशय यत्र, स एष हिरण्यगर्भो ब्रह्मा, तस्यैष आनन्द श्रोत्रियेण अवृजिनेन अकामहतेन च सर्वत प्रत्यक्षमुपलभ्यत । तस्मादेतानि त्रीणि साधनानीत्यवगम्यते । तत्र श्रोत्रियत्वावृजिनत्वे नियते, अकामहतत्व तु उत्कृष्यत इति प्रकृष्टसाधनता अवगम्यते । तस्य अकामहतत्वप्रकर्षतश्चोपलभ्यमान श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्द यस्य परमानन्दस्य मात्रा एकदेश , 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यन्तरात् । स एष आनन्द —यस्य मात्रा समुद्राम्भस इव विप्रुष प्रविभक्ता यत्रैकता गता —स एष परमानन्द स्वाभाविक , अद्वैतात्, आनन्दानन्दिनोश्च अविभागोऽत्र ॥

**स यश्चाय पुरुषे । यश्चासावादित्ये । स एक । स य एववित् । अस्माल्लोका-**

**त्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति । तदप्येष श्लोको भवति ॥ ५ ॥**

इति अष्टमोऽनुवाकः ॥

तदेतन्मीमांसाफलमुपसंह्रियते—स यश्चायं पुरुष इति । यः गुहायां निहितः परमे व्योम्नि आकाशादिकार्यं सृष्ट्वा अन्नमयान्तम्, तदेवानुप्रविष्टः, स यः इति निर्दिश्यते । कोऽसौ? अयं पुरुषे । यश्चासावादित्ये यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टः, यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति, स यश्चासावादित्ये इति निर्दिश्यते । स एकः भिन्नप्रदेशघटाकाशाकाशैकत्ववत् । ननु तन्निर्देशे स यश्चायं पुरुष इत्यविशेषतोऽध्यात्मं न युक्तो निर्देशः, यश्चायं दक्षिणेऽक्षन्निति तु युक्तः, प्रसिद्धत्वात् । न, पराधिकारात् । परो ह्यात्मा अत्र अधिकृतः 'अदृश्येऽनात्म्ये' 'भीषास्माद्वातः पवते' 'सैषानन्दस्य मीमांसा' इति । न

हि अकस्मादप्रकृतो युक्तो निर्देष्टुम् , परमात्मविज्ञान च विव क्षितम् । तस्मात् पर एव निर्दिश्यते—स एक इति । नन्वा नन्दस्य मीमासा प्रकृता तस्या अपि फलमुपसहर्तव्यम् । अभिन्न स्वाभाविक आनन्द परमात्मैव, न विषयविषयि सबन्धजनित इति । ननु तदनुरूप एव अय निर्देश — 'स यश्चाय पुरुषे यश्चासावादित्ये स एक ' इति भिन्नाधि- करणस्थविशेषोपमर्देन । नन्वेवमप्यादित्यविशेषग्रहणमनर्थ कम् , न अनर्थकम , उत्कर्षापकर्षापोहार्थत्वात् । द्वैतस्य हि यो मूर्तामूर्तलक्षणस्य पर उत्कर्ष सवित्रभ्यन्तर्गत स चेत्पुरु षगताविशेषोपमर्देन परमानन्दमपेक्ष्य समो भवति, न कश्चि दुत्कर्षोऽपकर्षो वा ता गति गतस्येत्यभय प्रतिष्ठा विन्दत इत्युपपन्नम् ॥

अस्ति नास्तीत्यनुप्रश्नो व्याख्यात । कार्यरसलाभप्राण- नाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्योऽस्त्येव तदाकाशादिकारण ब्रह्मेत्यपाकृत अनुप्रश्न एक , द्वावन्यानुप्रश्नौ विद्वदविदुषो ब्रह्मप्राप्त्यप्राप्तिविषयौ , तत्र विद्वान्समश्नुते न समश्नुत इत्य नुप्रश्नोऽन्त्य , तदपाकरणायोच्यते । मध्यमोऽनुप्रश्न अन्त्या पाकरणादेव अपाकृत इति तदपाकरणाय न यत्यते । स य कश्चित् एव यथोक्त ब्रह्म उत्सृज्योत्कर्षापकर्षमद्वैत सत्य ज्ञा-

नमनन्तमस्मीत्येव वेत्तीति एवंवित्, एवंशब्दस्य प्रकृतपरामर्शार्थत्वात्। स किम्? अस्माल्लोकात्प्रेत्य दृष्टादृष्टेष्टविषयसमुदायो हि अयं लोकः, तस्मादस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वा एतं यथाव्याख्यातम् अन्नमयमात्मानमुपसंक्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति, सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः। ततः अभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम्। अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति। अथादृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते॥

तत्रैतच्चिन्त्यम्—कोऽयमेवंवित्, कथं वा संक्रामतीति, किं परस्मादात्मनोऽन्यः संक्रमणकर्ता प्रविभक्तः, उत स एवेति। किं ततः? यद्यन्यः स्यात् श्रुतिविरोधः—'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्योऽसावन्योऽहमस्मीति। न स वेद' 'एकमेवाद्वितीयम्' 'तत्त्वमसि' इति। अथ स एव आनन्दमयमात्मानमुपसंक्रामतीति, कर्मकर्तृत्वानुपपत्तिः। परस्यैव च संसारित्वं पराभावो वा। यद्युभयथा प्राप्तो दोषो न परिहर्तुं शक्यत इति, व्यर्था चिन्ता। अथ अन्यतरस्मिन्पक्षे दोषाप्राप्तिः तृतीये वा पक्षे अदुष्टे, स एव शास्त्रार्थ इति व्यर्थैव चिन्ता, न, तन्निर्धारणार्थत्वात्। सत्यं

प्राप्तो दोषो न शक्य परिहर्तुमन्यतरस्मिन् तृतीये वा पक्षे अदुष्टे अवधृते व्यर्था चिन्ता स्यात्, न तु सोऽवधृत इति तदवधारणार्थत्वादर्थवत्येवैषा चिन्ता । सत्यमर्थवती चिन्ता, शास्त्रार्थावधारणार्थत्वात् । चिन्तयासि च त्वम्, न तु निर्णेष्यसि, किं न निर्णेतव्यमिति वेदवचनम्? न, कथ तर्हि? बहुप्रतिपक्षत्वात्, एकत्ववादी त्वम्, वेदार्थपरत्वात्, बहवो हि नानात्ववादिनो वेदबाह्या त्वत्प्रतिपक्षा, अतो ममाशङ्का—न निर्णेष्यसीति । एतदेव मे स्वस्त्ययनम्— यन्मामेकयोगिनमनेकयोगिबहुप्रतिपक्षमात्थ । अतो जेष्यामि सर्वान्, आरभे च चिन्ताम ॥

स एव तु स्यात्, तद्भावस्य विवक्षितत्वात् । तद्विज्ञानेन परमात्मभावो हि अत्र विवक्षित — 'ब्रह्मविदाप्नोति परम' इति । न हि अन्यस्य अन्यभावापत्तिरुपपद्यते । ननु तस्यापि तद्भावापत्तिरनुपपन्नैव । न, अविद्याकृतानात्मापोहार्थत्वात् । या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यत, सा अविद्याकृतस्य अन्नादिविशेषात्मन आत्मत्वनाध्यारोपितस्य अनात्मन अपोहार्था । कथमेवमर्थता अवगम्यते? विद्यामात्रोपदेशात् । विद्यायाश्च दृष्ट कार्यमविद्यानिवृत्ति, तच्चेह विद्यामात्रमात्मप्राप्तौ साधनमुपदिश्यते । मार्गविज्ञानोपदेशव

न्निति चेत्, तदात्मत्व विद्यामात्रसाधनोपदेशाऽहेतु । कस्मात्? देशान्तरप्राप्तौ मार्गविज्ञानोपदेशदर्शनात् । न हि ग्राम एव गन्तेति चेत्, न, वैधर्म्यात् । तत्र हि ग्रामविषय नोपदिश्यते, तत्प्राप्तिमार्गविषयमेवोपदिश्यते विज्ञानम्, न तथह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तरविषय विज्ञान मुपदिश्यते । उक्तकर्मादिसाधनापेक्ष ब्रह्मविज्ञान परप्राप्तौ साधनमुपदिश्यत इति चेत्, न, नित्यत्वान्मोक्षस्येत्यादिना प्रत्युक्तत्वात् । श्रुतिश्च 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति कायस्य तदात्मत्व दर्शयति । अभयप्रतिष्ठोपपत्तेश्च । यदि हि विद्वावान् स्वात्मनाऽन्यत्र पश्यति, तत अभय प्रतिष्ठा विन्दत इति स्यात्, भयहेतो परस्य अन्यस्य अभावात् । अन्यस्य च अविद्याकृतत्वे विद्यया अवस्तुत्वदर्शनोपपत्ति, तद्धि द्वितीयस्य चन्द्रस्य असत्त्वम्, यदतैमिरिकेण चक्षुष्मता न गृह्यत, नैव न गृह्यत इति चेत्, न, सुषुप्तसमाहितयोरग्रहणात् । सुषुप्तऽग्रहणमन्यासक्तवदिति चेत्, न, सर्वाग्रहणात् । जाग्रत्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवेति चेत्, न, अविद्याकृतत्वात् जाग्रत्स्वप्नयो, यदन्यग्रहण जाग्रत्स्वप्नयो, तदविद्याकृतम्, विद्याभावे अभावात् । सुषुप्ते अग्रहणमपि अविद्याकृतमिति चेत्, न, स्वाभाविकत्वात् । द्रव्यस्य

हि तत्त्वमविक्रिया, परानपेक्षत्वात्, विक्रिया न तत्त्वम्, परापेक्षत्वात् । न हि कारकापेक्ष वस्तुनस्तत्त्वम्, सतो विशेष कारकापेक्ष , विशेषश्च विक्रिया, जाग्रत्स्वप्नयोश्च ग्रहण विशेष । यद्धि यस्य नान्यापेक्ष स्वरूपम्, तत्तस्य त त्त्वम् , यदन्यापेक्षम्, न तत्तत्त्वम्, अन्याभावे अभावात् । तस्मात् स्वाभाविकत्वात् जाग्रत्स्वप्नवत् न सुषुप्ते विशेष । येषा पुनरीश्वरो अन्य आत्मन , कार्यं च अन्यत्, तेषा भया निवृत्ति , भयस्य अन्यनिमित्तत्वात्, सतश्च अन्यस्य आत्म-हानानुपपत्ति । न च असत आत्मलाभ । सापेक्षस्य अन्यस्य भयहेतुत्वमिति चेत्, न, तस्यापि तुल्यत्वात् । यद्धर्माद्यनु सहायीभूत नित्यमनित्य वा निमित्तमपेक्ष्य अन्यद्भयकारण स्यात्, तस्यापि तथाभूतस्य आत्महानाभावात् भयानिवृत्ति , आत्महान वा सदसतोरितरेतरापत्तौ सर्वत्र अनाश्वास एव । एकत्वपक्षे पुन सनिमित्तस्य ससारस्य अविद्या कल्पितत्वाददोष । तैमिरिकदृष्टस्य हि द्वितीयचन्द्रस्य न आत्मलाभो नाशो वा अस्ति । विद्याविद्ययो तद्धर्मत्व मिति चेत्, न, प्रत्यक्षत्वात् । विवेकाविवेकौ रूपादिवत् प्रत्यक्षावुपलभ्येते अन्त करणस्थौ । न हि रूपस्य प्रत्यक्षस्य सतो द्रष्टृधर्मत्वम् । अविद्या च स्वानुभवेन रूप्यते— मूढो

ऽहम् अविविक्तं मम विज्ञानम् इति । तथा विद्याविवेको अनुभूयते । उपदिशन्ति च अन्येभ्य आत्मनो विद्यां बुधाः । तथा च अन्ये अवधारयन्ति । तस्मात् नामरूपपक्षस्यैव विद्याविद्ये नामरूपे च, न आत्मधर्मौ, 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति श्रुत्यन्तरात् । ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते, न परमार्थतो विद्यमाने । अभेदे 'एतमानन्दमयमात्मानमुपसंक्रामति' इति कर्मकर्तृत्वानुपपत्तिरिति चेत्, न, विज्ञानमात्रत्वात् संक्रमणस्य । न जलूकादिवत् संक्रमणमिहोपदिश्यते, किं तर्हि, विज्ञानमात्रं संक्रमणश्रुतेरर्थः । ननु मुख्यमेव संक्रमणं श्रूयते—उपसंक्रामतीति इति चेत्, न, अन्नमये अदर्शनात् । न हि अन्नमयमुपसंक्रामतो बाह्यादस्माल्लोकात् जलूकावत् संक्रमणं दृश्यते, अन्यथा वा । मनोमयस्य बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्यावृत्त्या आत्मसंक्रमणमिति चेत्, न, स्वात्मनि क्रियाविरोधात् । अन्योऽन्नमयमन्यमुपसंक्रामतीति प्रकृत्य मनोमयो विज्ञानमयो वा स्वात्मानमेवोपसंक्रामतीति विरोधः स्यात् । तथा न आनन्दमयस्य आत्मसंक्रमणमुपपद्यते । तस्मात् न प्राप्तिः संक्रमणम्, नापि अन्नमयादीनामन्यतमकर्तृकं पारिशेष्यादन्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं

ज्ञानमात्र च सक्रमणमुपपद्यते । ज्ञानमात्रत्वे च आनन्दम-यान्त स्थस्यैव सर्वान्तरस्य आकाशाद्यन्नमयान्त कार्यं सृष्ट्वा अनुप्रविष्टस्य हृदयगुहाभिसबन्धादन्नमयादिषु अनात्मसु आत्मविभ्रम सक्रमणात्मकविवेकविज्ञानात्पत्त्या विनश्यति । तदतस्मिन्नविद्याविभ्रमनाशे सक्रमणशब्द उपचर्यते, न हि अन्यथा सर्वगतस्य आत्मन सक्रमणमुपपद्यते । वस्त्व-न्तराभावाच्च । न च स्वात्मन एव सक्रमणम् । न हि जलू का आत्मानमेव सक्रामति । तस्मात् सत्य ज्ञानमनन्त ब्रह्मेति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभवनसर्गप्रवेशरसलाभा भयसक्रमणादि परिकल्प्यते ब्रह्मणि सर्वव्यवहारविषये, न तु परमार्थतो निर्विकल्प ब्रह्मणि कश्चिदपि विकल्प उपपद्यते । तमेत निर्विकल्पमात्मानम एव क्रमेणोपसक्र-म्य विदित्वा न बिभेति कुतश्चन अभय प्रतिष्ठा विन्दत इत्येतस्मिन्नर्थेऽपि एष श्लोक भवति । सर्वस्यैव अस्य प्रकरणस्य आनन्दवल्ल्यर्थस्य सक्षेपत प्रकाशनाय एष मन्त्रो भवति ॥

इति अष्टमानुवाकभाष्यम् ॥

## नवमोऽनुवाक ॥

यता वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्द ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳह वाव न तपति । किमहꣳसाधु नाकरवम् । किमह पापमकरवमिति । स य एव विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳस्पृणुते । य एव वेद । इत्युपनिषत् ॥ १ ॥

इति नवमोऽनुवाक ॥

यत यस्मान निर्विकल्पान यथोक्तलक्षणान अद्वयानन्दात् आत्मन , वाच अभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणे वस्तुसामान्यान्निर्विकल्पे अद्वयऽपि ब्रह्मणि प्रयोक्तृभि प्रकाशनाय प्रयुज्यमानानि, अप्राप्य अप्रकाश्यैव निवर्तन्ते स्वसामर्थ्याद्धीयन्ते । मन इति प्रत्ययो विज्ञानम । तच, यत्राभिधान प्रवृत्तमतीन्द्रियऽप्यर्थे, तदर्थे च प्रवर्तते प्रकाशनाय । यत्र च विज्ञानम, तत्र वाच प्रवृत्ति । तस्मात् सहैव वाङ्मनसया अभिधानप्रत्ययो प्रवृत्ति सर्वत्र । त

स्मात् ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभि प्रयुज्यमाना अपि वाच यस्मादप्रत्ययविषयादनभिधेयाददृश्यादिविशेषणात् सहैव मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते, त ब्रह्मण आनन्द श्रोत्रियस्य अवृजिनस्य अकामहतस्य सर्वैषणाविनिर्मुक्तस्य आत्मभूत विषयविषयिसम्बन्धविनिर्मुक्त स्वाभाविक नित्यमविभक्त परमानन्द ब्रह्मणो विद्वान् यथोक्तेन विधिना न बिभति कुतश्चन, निमित्ताभावात् । न हि तस्माद्विदुष अन्यद्वस्त्वन्तरमस्ति भिन्न यतो बिभेति । अविद्यया यदा उदरमन्तर कुरुते, अथ तस्य भय भवतीति हि युक्तम् । विदुषश्च अविद्याकायस्य तैमिरिकदृष्टद्वितीयचन्द्रवत् नाशाद्भयनिमित्तस्य न बिभेति कुतश्चनेति युज्यते । मनोमये च उदाहृत मन्त्र , मनसो ब्रह्मविज्ञानसाधनत्वात् । तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति भयमात्र प्रतिषिद्धम्, इह अद्वैतविषये न बिभेति कुतश्चनेति भयनिमित्तमेव प्रतिषिध्यते । नन्वस्ति भयनिमित्त साध्वकरण पापक्रिया च । नैवम् । कथमिति, उच्यते— एत यथोक्तमेवविदम् , ह वाव इत्यवधारणार्थौ, न तपति नोद्वेजयति न सतापयति । कथ पुन साध्वकरण पापक्रिया च न तपतीति, उच्यते— किं

कस्मात् साधु शोभन कर्म नाकरव न कृतवानस्मि इति पश्चात्सतापो भवति आसन्ने मरणकाले, तथा किं कस्मात् पाप प्रतिषिद्ध कर्म अकरव कृतवानस्मि इति च नरकपतनादिदु खभयात् तापो भवति । ते एते साध्वकरणपापक्रिये एवमेन न तपत, यथा अविद्वास तपत । कस्मात्पुनर्विद्वास न तपत इति, उच्यते—स य एवविद्वान् एते साध्वसाधुनी तापहेतू इति आत्मान स्पृणुते प्रीणाति बलयति वा, परमात्मभावेन उभे पश्यतीत्यर्थ । उभे पुण्यपाप हि यस्मात् एवम् एष विद्वान् एते आत्मानात्मरूपेणैव पुण्यपापे स्वेन विशेषरूपेण शून्ये कृत्वा आत्मान स्पृणुत एव । क ? य एव वेद यथोक्तमद्वैतमानन्द ब्रह्म वेद, तस्य आत्मभावन दृष्टे पुण्यपापे निर्वीर्ये अतापके जन्मा तरारम्भके न भवत । इतीयम् एव यथोक्ता अस्या वल्ल्या ब्रह्मविद्योपनिषत्, सर्वाभ्य विद्याभ्य परमरहस्य दर्शितमित्यर्थ —पर श्रेय अस्या निषण्णमिति ॥

इति नवमानुवाकभाष्यम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ तैत्तिरीयोपनिषद्भाष्ये ब्रह्मानन्दवल्लीभाष्य सपूर्णम् ॥

ॐ

# भृगुवल्ली ॥

---

सत्य ज्ञानमनन्त ब्रह्म आकाशादिकार्यमन्नमयान्त सृष्ट्वा तदेवानुप्रविष्ट विशेषवदिवोपलभ्यमान यस्मात् , तस्मात् सर्वकार्यविलक्षणम् अदृश्यादिधर्मकमेव आनन्द तदेवाहमिति विजानीयात् , अनुप्रवेशस्य तदर्थत्वात् , तस्यैव विजानत शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवत इत्येवमानन्दवल्ल्या विवक्षितोऽर्थ । परिसमाप्ता च ब्रह्म विद्या । अत पर ब्रह्मविद्यासाधन तपो वक्तव्यम् , अन्नादिविषयाणि च उपासनान्यनुक्तानीत्यत इदमारभ्यते—

**भृगुर्वै वारुणिः । वरुण पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एत त्प्रोवाच । अन्न प्राण चक्षु श्रोत्र मनो वाचमिति । तꣳ होवाच । यतो वा इमा-**

**नि भूतानि जायन्ते । येन जातानि जी-
वन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्वि
जिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्य
त । स तपस्तप्त्वा ॥ १ ॥**

इति प्रथमोऽनुवाकः ॥

आख्यायिका विद्यास्तुतये, प्रियाय पुत्राय पित्रोक्तेति—भृगुर्वै वारुणिः । वै-शब्दः प्रसिद्धानुस्मारकः, भृगुरित्येवं नामा प्रसिद्धो अनुस्मार्यते, वारुणिः वरुणस्यापत्यं वारुणिः वरुणं पितरं ब्रह्म विजिज्ञासुः उपससार उपगतवान्—अधीहि भगवो ब्रह्म इत्यनेन मन्त्रेण । अधीहि अध्यापय कथय । स च पिता विधिवदुपसन्नाय तस्मै पुत्राय एतत् वचनं प्रोवाच— अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम् इति । अन्नं शरीरं तदभ्यन्तरं च प्राणम् अत्तारम् अनन्तरमुपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचम् इत्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान् । उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच ब्रह्मणो लक्षणम् । किं तत्? यतः यस्मात् वा इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते, येन जातानि जीवन्ति प्राणान्धारयन्ति वर्धन्ते,

विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति, अभिसविशन्ति तादात्म्यमेव प्रतिपद्यन्ते, उत्पत्तिस्थितिलयकालेषु यदात्मता न जहति भूतानि, तदेतद्ब्रह्मणो लक्षणम्, तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व, यदेवलक्षण ब्रह्म तद ज्ञादिद्वारेण प्रतिपद्यस्वेत्यथ । श्रुत्यन्तर च—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्न मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम्' इति ब्रह्मोपलब्धौ द्वाराण्येतानीति दर्शयति । स भृगु ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षण च श्रुत्वा पितु, तपो ब्रह्मोपलब्धिसाधनत्वेन अतप्यत तप्तवान । कुत पुनरनुपदिष्टस्यैव तपस साधनत्वप्रतिपत्तिर्भृगो ? सावशेषोक्ते । अन्नादिब्रह्मण प्रतिपत्तौ द्वार लक्षण च यतो वा इमानि इत्याद्युक्तवान् । सावशेष हि तत्, साक्षाद्ब्रह्मणोऽनिर्देशात् । अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्य जिज्ञासवे पुत्राय इदमित्थरूप ब्रह्म इति, न चैव निरदिशत्, किं तर्हि, सावशेषमेवोक्तवान । अतोऽवगम्यते नून साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञान प्रतीति । तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात्, सर्वेषा हि नियतसाध्यविषयाणा साधनाना तप एव साधकतम साधनमिति हि प्रसिद्ध लोके । तस्मात् पित्रा अनुपदिष्टमपि ब्रह्मविज्ञानसा

धनत्वेन तप प्रतिपेद भृगु । तच्च तपो बाह्यान्त करणसमाधानम, तद्द्वारकत्वाद्ब्रह्मप्रतिपत्ते, 'मनसश्चेन्द्रियाणा च ह्यैकाग्र्य परम तप । तज्ज्याय सवधर्मेभ्य स धर्म पर उच्यत' इति स्मृत । स च तपस्तप्त्वा ॥

इति प्रथमानुवाकभाष्यम ॥

## द्वितीयोऽनुवाकः ॥

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ १ ॥

इति द्वितीयोऽनुवाकः ॥

अन्नं ब्रह्मेति व्यजानात् विज्ञातवान् । तद्धि यथोक्तलक्षणोपेतम् । कथम्? अन्नाद्ध्येव खलु इमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः । स एवं तपस्तप्त्वा, अन्नं ब्रह्मेति विज्ञाय लक्षणेन उपपत्त्या च पुन-

रेव सशयमापन्न वरुण पितरमुपससार—अधीहि भगवो ब्रह्मेति । क पुन सशयहेतुरस्येति, उच्यते—अन्नस्योत्पत्तिदर्शनात । तपस पुन पुनरुपदेश साधनातिशयत्वावधारणार्थं । यावद्ब्रह्मणो लक्षण निरतिशय न भवति, यावच्च जिज्ञासा न निवर्तते, तावत्तप एव ते साधनम, तपसैव ब्रह्म विजिज्ञासस्वेत्यर्थ । ऋज्वन्यत ॥

इति द्वितीयानुवाकभाष्यम् ॥

# तृतीयोऽनुवाकः ॥

---

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राण प्रयन्त्यभिसवि-शन्तीति । तद्विज्ञाय । पुनरेव वरुण पि-तरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेनि । स तपोऽतप्यत । स तप-स्तप्त्वा ॥ १ ॥

इति तृतीयोऽनुवाकः ॥

## चतुर्थोऽनुवाक ॥

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मन प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुण पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ १ ॥

इति चतुर्थोऽनुवाक ॥

## पञ्चमोऽनुवाक ॥

विज्ञान ब्रह्मेति व्यजानात् । विज्ञाना-द्ध्येव खल्विमानि भूतानि जायन्ते । वि-ज्ञानेन जातानि जीवन्ति । विज्ञान प्रय-न्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुण पितरमुपससार । अधीहि भगवो ब्रह्मेति । त॰ होवाच । तपसा ब्रह्म वि-जिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्य-त । स तपस्तप्त्वा ॥ १ ॥

इति पञ्चमोऽनुवाक ॥

## षष्ठोऽनुवाक ॥

---

आनन्दो ब्रह्मेति व्यजानात्। आनन्दा-द्ध्येव खल्विमानि भूतानि जायन्ते। आ-नन्देन जातानि जीवन्ति। आनन्दं प्रय-न्त्यभिसंविशन्तीति। सैषा भार्गवी वा-रुणी विद्या। परमे व्योमन् प्रतिष्ठिता। स य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभि-र्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ १ ॥

इति षष्ठोऽनुवाक ॥

एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्ष-णमपश्यन् शनैः शनैः अन्तरनुप्रविश्य अन्तरतममानन्दं ब्रह्म विज्ञातवान् तपसैव साधनेन भृगुः, तस्मात् ब्रह्म विजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपः साधनमनुष्ठेयमिति प्रकरणार्थः। अधुना आख्यायिका च

उपसहृत्य श्रुति स्वेन वचनेन आख्यायिकानिर्वर्त्यमर्थमाचष्टे । सैषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन हृदयाकाशगुहाया परमे आनन्दे अद्वैत प्रतिष्ठिता परिसमाप्ता अन्नमयादात्मनोऽधिप्रवृत्ता । य एवमन्योऽपि तपसैव साधनेन अनेनैव क्रमेण अनुप्रविश्य आनन्द ब्रह्म वेद, स एव विद्याप्रतिष्ठानात् प्रतितिष्ठति आनन्दे परमे ब्रह्मणि, ब्रह्मैव भवतीत्यथ । दृष्ट च फल तस्योच्यते—अन्नवान प्रभूतमन्नमस्य विद्यत इत्यन्नवान्, सत्तामात्रेण तु सर्वो हि अन्नवानिति विद्याया विशषा न स्यात् । एवमन्नमत्तीत्यन्नाद, दीप्ताग्निर्भवतीत्यर्थ । महान्भवति । केन महत्त्वमित्यत आह— प्रजया पुत्रादिना पशुभि गवाश्वादिभि ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा । महान्भवति कीर्त्या ख्यात्या शुभाचारनिमित्तया ॥

इति षष्ठानुवाकभाष्यम् ॥

## सप्तमोऽनुवाक ॥

---

अन्नं न निन्द्यात । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ १ ॥

इति सप्तमोऽनुवाक ॥

किं च, अन्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्, तस्मात् गुरुमिव अन्नं न निन्द्यात्, तत अस्य एव ब्रह्मविदो व्रतम् उपदिश्यते । व्रतोपदेशो अन्नस्तुतये, स्तुतिभाक्त्वं च अन्नस्य ब्रह्मोपलब्ध्युपायत्वात् । प्राणो वा अन्नम्, शरीरान्तर्भावात्प्राणस्य । यत् यस्यान्तः प्रतिष्ठितं भवति, तत्तस्यान्नं भवतीति । शरीरे च प्राणः प्रतिष्ठितः, तस्मात् प्राणोऽन्नं शरीर-

मन्नादम । तथा शरीरमप्यन्न प्राणोऽन्नाद । कस्मात् प्राणे शरीर प्रतिष्ठितम्[2] तन्निमित्तत्वाच्छरीरस्थिते । तस्मात् तदेतत् उभय शरीर प्राणश्च अन्नमन्नादश्च । येनान्योन्यस्मिन्प्रतिष्ठित तेनान्नम्, येनान्योन्यस्य प्रतिष्ठा तेनान्नाद । तस्मात् प्राण शरीर च उभयमन्नमन्नाद च । स य एवम एतदन्नमन्ने प्रतिष्ठित वेद प्रतितिष्ठति अन्नान्नादात्मनैव । किं च, अन्नवानन्नादो भवतीत्यादि पूर्ववत् ॥

इति सप्तमानुवाकभाष्यम् ॥

## अष्टमोऽनुवाक ॥

अन्न न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योति प्रतिष्ठितम् । ज्योतिष्याप प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठित वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥

इति अष्टमोऽनुवाक ॥

अन्न न परिचक्षीत न परिहरेत् । तद्व्रत पूर्ववत्स्तुत्यर्थम् । तदेव शुभाशुभकल्पनया अपरिह्रीयमाण स्तुत महीकृतमन्न स्यात् । एव यथोक्तमुत्तरेष्वपि आपो वा अन्नम इत्यादिषु योजयेत् ॥

इति अष्टमानुवाकभाष्यम् ॥

## नवमोऽनुवाक ॥

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥

इति नवमोऽनुवाकः ॥

अप्सु ज्योतिः इत्यब्ज्योतिषोरन्नान्नादगुणत्वेनोपासकस्य अन्नस्य बहुकरणं व्रतम् ॥

इति नवमानुवाकभाष्यम् ॥

# दशमोऽनुवाक ॥

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्न प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यत ॥ १ ॥

तथा पृथिव्याकाशोपासकस्य वसतौ वसतिनिमित्त कञ्चन काञ्चदपि न प्रत्याचक्षीत, वसत्यर्थमागत न निवारयेदित्यर्थ । वासे च दत्त अवश्य हि अशन दातव्यम् । तस्माद्यया कया च विधया येन केन च प्रकारेण बह्वन्न प्राप्नुयात् बह्वन्नसग्रह कुर्यादित्यर्थ । यस्मादन्नवन्तो विद्वास अभ्यागताय अन्नार्थिने अराधि ससिद्धम अस्मै अन्नम इत्याचक्षते, न नास्ती-

ति प्रत्याख्यान कुर्वन्ति, तस्माच्च हेतो बह्वन्न प्राप्नुयादिति पूर्वेण सबन्ध । अपि च अन्नदानस्य माहात्म्यमुच्यते— यथा यत्काल प्रयच्छत्यन्नम्, तथा तत्कालमेव प्रत्युपनमते । कथमिति तदेतदाह— एतद्वै अन्न मुखत मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या पूजापुर सरमभ्यागतायान्नार्थिने राद्ध ससिद्ध प्रयच्छतीति वाक्यशेष । तस्य किं फल स्या दिति, उच्यते— मुखत पूर्वे वयसि मुख्यया वा वृत्त्या अस्मै अन्नदाय अन्न राध्यत, यथादत्तमुपतिष्ठत इत्यर्थ । एव मध्यतो मध्यमे वयसि मध्यमेन च उपचारेण, तथा अन्तत अन्ते वयसि जघन्येन च उपचारेण परिभवेन तथैवास्मै राध्यते ससिध्यत्यन्नम् ॥

**य एव वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयो । कर्मेति हस्तयो. । गतिरिति पादयो. । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति ॥२॥**

य एव वेद य एवमन्नस्य यथोक्त माहात्म्य वेद तद्दानस्य च फलम्, तस्य यथोक्त फलमुपनमते । इदानीं ब्रह्मण

उपासनप्रकार उच्यते— क्षेम इति वाचि। क्षेमो नाम उपात्तपरिरक्षणम्। ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठित मित्युपास्यम्। योगक्षेम इति, योग अनुपात्तस्योपादा नम्। तौ हि योगक्षेमौ प्राणापानयो बलवतो सतोर्भवत यद्यपि, तथापि न प्राणापाननिमित्तावेव, किं तर्हि, ब्रह्मनि- मित्तौ। तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयो प्रतिष्ठित मित्युपास्यम्। एवमुत्तरेष्वन्येषु तेन तेन आत्मना ब्रह्मैवो पास्यम्। कर्मणो ब्रह्मनिर्वर्त्यत्वात् हस्तयो कर्मात्मना ब्रह्म प्रतिष्ठितमित्युपास्यम्। गतिरिति पादयो। विमुक्तिरिति पायौ। इत्येता मानुषी मनुष्येषु भवा मानुष्य समाज्ञा, आध्यात्मिक्य समाज्ञा ज्ञानानि विज्ञानान्युपासनानीत्यर्थ। अथ अनन्तर दैवी दैव्य देवेषु भवा समाज्ञा उच्यन्ते। तृप्तिरिति वृष्टौ। वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्या त्मना वृष्टौ व्यवस्थितमित्युपास्यम्, तथा अन्येषु तेन तेना त्मना ब्रह्मैवोपास्यम्। तथा बलरूपेण विद्युति॥

**यश इति पशुषु। ज्योतिरिति नक्ष- त्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्व मित्याकाशे। तत्प्रतिष्ठेत्युपासीत। प्रति**

**ष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मन इत्युपासीत। मानवान् भवति॥ ३॥**

यशोरूपेण पशुषु। ज्योतीरूपेण नक्षत्रेषु। प्रजाति अमृतम् अमृतत्वप्राप्ति पुत्रेण ऋणविमोक्षद्वारेण आनन्द सुखमित्ये तत्सर्वमुपस्थनिमित्त ब्रह्मैव अनेनात्मना उपस्थे प्रतिष्ठितमित्युपास्यम्। सर्वं हि आकाशे प्रतिष्ठितम्, अतो यत्सर्वमाकाशे तद्ब्रह्मैवेत्युपास्यम्, तच्चाकाश ब्रह्मैव। तस्मात् तत् सर्वस्य प्रतिष्ठेत्युपासीत। प्रतिष्ठागुणोपासनात् प्रतिष्ठावान् भवति। एव सर्वेष्वपि। यद्यत्राधिगत फलम्, तत् ब्रह्मैव, तदुपासनात्तद्वा न्भवतीति द्रष्टव्यम्, श्रुत्यन्तराच्च—'त यथा यथोपासते तदेव भवति' इति। तन्मह इत्युपासीत। मह महत्त्वगुण वत् तदुपासीत। महान्भवति। तन्मन इत्युपासीत। मनन मन। मानवान्भवति मननसमर्थो भवति॥

**तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामा। तद्ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद्ब्रह्मण परिमर इत्युपासीत। पर्येण म्रियन्ते द्विषन्तः सपत्ना। परि ये**

ऽप्रिया भ्रातृव्या' । स यश्चायं पुरुषे । य-
श्चासावादित्ये । स एकः ॥ ४ ॥

तन्नम इत्युपासीत नमनं नमः नमनगुणवत् तदुपासी-
त । नम्यन्ते प्रह्वीभवन्ति अस्मै उपासित्रे कामाः काम्यन्त
इति भोग्या विषया इत्यर्थः । तद्ब्रह्मेत्युपासीत । ब्रह्म परि
बृढतममित्युपासीत । ब्रह्मवान् तद्गुणो भवति । तद्ब्रह्मणः प-
रिमर इत्युपासीत ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन्पञ्च दे-
वता विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः । अतः वायुः
परिमरः, श्रुत्यन्तरप्रसिद्धेः । स एवायं वायुराकाशेनानन्य
इत्याकाशो ब्रह्मणः परिमरः, तस्मादाकाशं वाय्वात्मानं ब्रह्म-
णः परिमर इत्युपासीत । एनमेवंविदं प्रतिस्पर्धिनो द्विष
न्तः, अद्विषन्तोऽपि सपत्ना यतो भवन्ति, अतो विशेष्यन्ते द्वि-
षन्तः सपत्ना इति । एनं द्विषन्तः सपत्नाः ते परिम्रियन्ते
प्राणान् जहति । किं च, ये च अप्रिया अस्य भ्रातृव्या अद्वि-
षन्तोऽपि ते च परिम्रियन्ते ॥

'प्राणो वा अन्नं शरीरमन्नादम्' इत्यारभ्य आकाशान्तस्य
कार्यस्यैव अन्नान्नादत्वमुक्तम् । उक्तं नाम—किं तेन ? तेनै
तत्सिद्धं भवति— कार्यविषय एव भोज्यभोक्तृत्वकृतः

ससार, न त्वात्मनीति । आत्मनि तु भ्रान्त्या उपचर्यंते । नन्वात्मापि परमात्मन कार्यम्, ततो युक्त तस्य ससार इति, न, अससारिण एव प्रवेशश्रुते । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्याकाशादिकारणस्य हि अससारिण एव परमात्मन कार्येष्वनुप्रवेश श्रूयते । तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एव अससारी, सृष्ट्वा अनुप्राविशदिति समानकर्तृत्वोपपत्तेश्च । सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्ता, तत क्त्वाप्रत्ययो युक्त । प्रविष्टस्य तु भावान्तरापत्तिरिति चेत्, न, प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात् । 'अनेन जीवेन' इति विशेषश्रुते धर्मान्तरेणानुप्रवेश इति चेत्, न, 'तत्सत्यम्' 'स आत्मा' 'तत्त्वमसि' इति सामानाधिकरण्यात् । दृष्ट जीवस्य ससारित्वमिति चेत्, न, उपलब्धुरनुपलभ्यत्वात् । ससारधर्मविशिष्ट आत्मोपलभ्यत इति चेत्, न, धर्माणा धर्मिणोऽव्यतिरकात् कर्मत्वानुपपत्ते । उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत् त्रासादिदर्शनाद्दु खित्वाद्यनुमीयत इति चेत्, न, त्रासादेर्दु खस्य च उपलभ्यमानत्वात् नोपलब्धृधर्मत्वम् । कापिलकाणादादितर्कशास्त्रविरोध इति चेत्, न, तेषा मूलाभावे वेदविरोधे च भ्रान्तत्वोपपत्ते । श्रुत्युपपत्तिभ्या च सिद्धम् आत्मनोऽससारित्वम्, एकत्वाच्च । कथमेकत्वमिति, उ

न्यते—स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येवमादि पूर्ववत्सर्वम् ॥

**स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । हा३वु हा३वु हा३वु ॥ ५ ॥**

अन्नमयादिक्रमेण आनन्दमयमात्मानमुपसंक्रम्य एतत्साम गायन्नास्ते । 'सत्यं ज्ञानम्' इत्यस्या ऋचः अर्थो व्याख्यातः विस्तरेण तद्विवरणभूतया आनन्दवल्ल्या । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति तस्य फलवचनस्य अर्थविस्तारो नोक्तः । के ते ? किंविषया वा सर्वे कामाः ? कथं वा ब्रह्मणा सह समश्नुते ?— इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते । तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपः ब्रह्मविद्यासाधनमुक्तम् । प्राणादे-

राकाशान्तस्य च कार्यस्य अन्नान्नादत्वेन विनियोगश्च उक्त , ब्रह्मविषयोपासनानि च । ये च सर्वे कामा प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषया , एते दर्शिता । एकत्वे पुन कामकामित्वानुपपत्ति , भेदजातस्य सर्वस्य आत्मभूतत्वात् । तत्र कथ युगपद्ब्रह्मस्वरूपेण सर्वान्कामान् एवंवित्समश्नुत इति, उच्यते— सर्वात्मत्वोपपत्ते । कथ सर्वात्मत्वोपपत्तिरिति, आह—पुरुषादित्यस्थात्मैकत्वविज्ञानेनापोह्योत्कषापकर्षावन्नमयादीन् आत्मनोऽविद्याकल्पितान् क्रमेण सक्रम्य आनन्दमयान्तान् सत्य ज्ञानमनन्त ब्रह्म अदृश्यादिधर्मक स्वाभाविकमानन्दमजममृतमभयमद्वैत फलभूतमापन्न इमाँल्लोकान्भूरादीननुसचरन्निति व्यवहितेन सबन्ध । कथमनुसचरन् ? कामान्नी कामतोऽन्नमस्येति कामान्नी, तथा कामतो रूपाण्यस्येति कामरूपी , अनुसचरन् सर्वात्मना इमान् लोकानात्मत्वेन अनुभवन् । किम् ? एतत्साम गायन्नास्ते । स मत्वाद्ब्रह्मैव साम सर्वानन्यरूप गायन् शब्दयन् आत्मैकत्व प्रख्यापयन् लोकानुग्रहार्थं तद्विज्ञानफल च अतीव कृतार्थत्व गायन् आस्ते तिष्ठति । कथम् ? हा३वु हा३वु हा३वु । अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम् ॥

**अहमन्नमहमन्नमहमन्नम् । अहमन्ना-**

**दो३ऽहमन्नादो३ऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुवर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ॥ ६ ॥**

इति दशमोऽनुवाकः ॥

कः पुनरसौ विस्मयः इति, उच्यते— अद्वैत आत्मा निरञ्जनोऽपि सन् अहमेवान्नमन्नादश्च । किंच, अहमेव श्लोककृत् । श्लोको नाम अन्नान्नादयोः संघातः, तस्य कर्ता चेतनावान् । अन्नस्यैव वा परार्थस्य अन्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना संघातकृत् । त्रिरुक्तिर्विस्मयत्वख्यापनार्था । अहमस्मि भवामि । प्रथमजाः प्रथमजः प्रथमोत्पन्नः । ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिः अमृतत्वस्य नाभिः, मध्यं मत्संस्थम् अमृतत्वं प्राणिनामित्यर्थः । यः कश्चित् मा

माम् अन्नमन्नार्थिभ्यो ददाति प्रयच्छति—अन्नात्मना ब्रवीति, स इत् इत्थमेवेत्यर्थ , एवमविनष्ट यथाभूत माम् आवा अवतीत्यर्थं । य पुनरन्यो मामदत्वा अर्थिभ्य काले प्राप्तेऽन्नमत्ति तमन्नमदन्त भक्षयन्त पुरुषमहमन्नमेव सप्रत्यद्मि भक्षयामि । अत्राह— एव तर्हि बिभेमि सर्वात्मत्वप्राप्त मोक्षात्, अस्तु ससार एव, यतो मुक्तोऽप्यहम् अन्नभूत अद्य स्याम् अन्यस्य । एव मा भैषी , सव्यवहारविषय त्वात् सर्वकामाशनस्य, अतीत्याय सव्यवहारविषयमन्नान्ना-दादिलक्षणमविद्याकृत विद्यया ब्रह्मत्वमापन्न विद्वान्, तस्य नैव द्वितीय वस्त्वन्तरमस्ति, यतो बिभेति, अतो न भेतव्य मोक्षात् । एव तर्हि किमिदमाह— अहमन्नमहमन्नाद इति? उच्यते । योऽयमन्नान्नादादिलक्षण सव्यवहार कार्यभूत, स सव्यवहारमात्रमेव, न परमार्थवस्तु । स एवभूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्याकार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते—'अहमन्नमहमन्नमहमन्नम् । अ-हमन्नादोऽहमन्नादोऽहमन्नाद' इत्यादि । अत भयादिदोषग न्धोऽपि अविद्यानिमित्त अविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीति । अह विश्व समस्त भुवन भूतै सभजनीय ब्रह्मादिभिर्भव न्तीति वा अस्मिन् भूतानीति भुवनम् अभ्यभवाम अभि-

भवामि परेणेश्वरेण स्वरूपण । सुवर्न ज्योती सुव आदित्य ,
नकार उपमार्थे, आदित्य इव सकृद्विभातमस्मदीय ज्योती
ज्योति , प्रकाश इत्यथ । इति वल्लीद्वयविहिता उपनिषत् पर-
मात्मज्ञानम्, तामेता यथोक्तामुपनिषत् शान्तो दान्त उपरत-
स्तितिक्षु समाहितो भूत्वा भृगुवत् तपो महदास्थाय य
एव वेद, तस्येत फल यथोक्तमोक्ष इति ॥

इति दशमानुवाकभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्-
पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवत कृता
तैत्तिरीयोपनिषद्भाष्य सम्पूर्णम् ॥

ॐ

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ श्री ॥

## उपनिषन्मन्त्राणां

# ॥ वर्णानुक्रमणिका ॥

॥ ॐ ॥

# छान्दोग्योपनिषद्भाष्यम्

श्रीमच्छङ्करभगवत्पूज्यपादैः
विरचितम् ।



॥ श्री ॥

# ॥ विषयानुक्रमणिका ॥

## द्वितीयोऽध्याय ८१—१३६

## तृतीयोऽध्याय १३७—२००

ॐ

आप्यायन्तु ममाङ्गानि वा-
क्प्राणश्चक्षु श्रोत्रमथो बल-
मिन्द्रियाणि च सर्वाणि।
सर्वं ब्रह्मौपनिषद् माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि-
राकरण मेऽस्तु। तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु॥

ॐ शान्ति शान्ति शान्ति॥

# ॥ छान्दोग्योपनिषत् ॥

## श्रीमच्छकरभगवत्पादविरचितेन

## भाष्येण सहिता ।

'ओमित्येतदक्षरम्' इत्याद्यष्टाध्यायी छान्दोग्योपनिषत । तस्या सक्षेपत अर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थमिदमारभ्यते । तत्र सबन्ध — समस्त कर्माधिगत प्राणादिदेवताविज्ञानसहितम अर्चिरादिमार्गेण ब्रह्मप्रतिपत्तिकारणम्, केवल च कर्म धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणम्, स्वभाववृत्ताना च मार्गद्वयपरिभ्रष्टाना कष्टा अधोगतिरुक्ता, न

च उभयोर्मार्गयोरन्यतरस्मिन्नपि मार्गे आत्यन्तिकी पुरुषार्थ सिद्धि – इत्यत कर्मनिरपेक्षम् अद्वैतात्मविज्ञान ससारगति क्षयहेतूपमर्देन वक्तव्यमिति उपनिषदारभ्यते । न च अद्वै तात्मविज्ञानादन्यत्र आत्यन्तिकी नि श्रेयसप्राप्ति । वक्ष्यति हि—' अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भव न्ति ', विपर्यये च–'स स्वराड् भवति '—इति। तथा—द्वैत विषयानृताभिसधस्य बन्धनम् , तस्करस्यव तप्तपरशुग्रहणे बन्धदाहभाव , ससारदु खप्राप्तिश्च इत्युक्त्वा—अद्वैतात्मसत्या भिसधस्य, अतस्करस्येव तप्तपरशुग्रहण बन्धदाहाभाव , स- सारदु खनिवृत्तिर्मोक्षश्च—इति ॥

अत एव न कर्मसहभावि अद्वैतात्मदर्शनम् , क्रिया कारकफलभेदोपमर्देन 'सत् एकमेवाद्वितीयम्' 'आ- त्मैवद सर्वम्' इत्येवमादिवाक्यजनितस्य बाधकप्रत्यया नुपपत्ते । कर्मविधिप्रत्यय इति चेत् , न, कर्तृभोक्तृस्वभा वविज्ञानवत तज्जानतकर्मफलरागद्वेषादिदोषवतश्च कर्मवि धानात् । अधिगतसकलवदार्थस्य कर्मविधानात् अद्वैतज्ञान वतोऽपि कर्मेति चेत् , न, कर्माधिकृतविषयस्य कर्तृभोक्त्रा दिज्ञानस्य स्वाभाविकस्य 'सत् एकमेवाद्वितीयम्' 'आ- त्मैवेद सर्वम्' इत्यनेनापमर्दितत्वात् । तस्मात् अविद्यादि-

दोषवत एव कर्माणि विधीयन्ते, न अद्वैतज्ञानवत । अत एव हि वक्ष्यति—'सर्वे एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति' इति ॥

तत्रैतस्मिन्नद्वैतविद्याप्रकरणे अभ्युदयसाधनानि उपासनान्युच्यन्ते, कैवल्यसंनिकृष्टफलानि च अद्वैतादीषद्विकृत ब्रह्मविषयाणि 'मनोमय प्राणशरीर' इत्यादीनि, कर्म समृद्धिफलानि च कर्माङ्गसंबन्धीनि, रहस्यसामान्यात् मनोवृत्तिसामान्याच्च— यथा अद्वैतज्ञान मनोवृत्तिमात्रम्, तथा अन्यान्यप्युपासनानि मनोवृत्तिरूपाणि– इत्यस्ति हि सामान्यम । कस्तर्हि अद्वैतज्ञानस्योपासनाना च विशेष ? उच्यते— स्वाभाविकस्य आत्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानम्, रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चय प्रकाशनिमित्त , उपासन तु यथाशास्त्रसमर्थित किंचिदालम्बनमुपादाय तस्मिन्समानचित्तवृत्तिसंतानकरण तद्विलक्षणप्रत्ययानन्तरितम्— इति विशेष । तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वात् अद्वैतज्ञानोपकारकाणि, आलम्बनविषयत्वात् सुखसाध्यानि च—इति पूर्वमुपन्यस्यन्ते । तत्र कर्माभ्यासस्य दृढीकृतत्वात् कर्मपरित्यागेनो-

पासन एव दु ख चेत समर्पण कर्तुमिति कर्माङ्गविषयमेव तावत् आदौ उपासनम् उपन्यस्यते ॥

**ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥**

ओमित्येतदक्षरमुद्गीथमुपासीत— ओमित्येतदक्षर परमात्मनोऽभिधान नेदिष्ठम्, तस्मिन्हि प्रयुज्यमाने स प्रसीदति, प्रियनामग्रहण इव लोक , तदिह इतिपर प्रयुक्तम् अभिधायकत्वाद्व्यावर्तित शब्दस्वरूपमात्र प्रतीयते , तथा च अर्चादिवत् परस्यात्मन प्रतीक सपद्यते, एव नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधन श्रेष्ठमिति सर्ववेदान्तेष्ववगतम्, जपकर्मस्वाध्यायाद्यन्तेषु च बहुश प्रयोगात् प्रसिद्धमस्य श्रैष्ठ्यम , अत तदेतत् , अक्षर वर्णात्मकम् , उद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यम् , उपासीत– कर्माङ्गावयवभूते ओंकारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणा मतिं सतनुयात् । स्वयमेव श्रुति ओंकारस्य उद्गीथशब्दवाच्यत्वे हेतुमाह— ओमिति ह्युद्गायति, ओमित्यारभ्य, हि यस्मात्, उद्गायति, अत उद्गीथ ओंकार इत्यर्थ ।

तस्य उपव्याख्यानम्– तस्य अक्षरस्य, उपव्याख्यानम्

एवमुपासनमेवविभूत्येवफलमित्यादिकथनम् उपव्याख्यानम्, प्रवर्तत इति वाक्यशेष —

**एषा भूताना पृथिवी रस पृथिव्या आपो रस । अपामोषधयो रस ओषधीना पुरुषो रस पुरुषस्य वाग्रसो वाच ऋग्रस ऋच साम रस साम्न उद्गीथो रस ॥ २ ॥**

एषा चराचराणा भूताना पृथिवी रस गति परायणमवष्टम्भ, पृथिव्या आप रस — अप्सु हि ओता च प्रोता च पृथिवी, अत ता रस पृथिव्या । अपाम् ओषधय रस, अप्परिणामत्वादोषधीनाम, तासा पुरुषो रस, अन्नपरिणामत्वात्पुरुषस्य, तस्यापि पुरुषस्य वाक् रस — पुरुषावयवाना हि वाक् सारिष्ठा, अतो वाक् पुरुषस्य रस उच्यते, तस्या अपि वाच, ऋक् रस सारतरा, ऋच साम रस सारतरम, तस्यापि साम्न उद्गीथ प्रकृतत्वादोंकार सारतर ॥

**स एष रसाना रसतमः परम परार्ध्योऽष्टमो यदुद्गीथ ॥ ३ ॥**

एवम्— स एष उद्गीथाख्य ॐकार , भूतादीनामुत्तरोत्त-रसानाम , अतिशयेन रस रसतम , परम , परमात्मप्र-तीकत्वात् , परार्ध्य – अर्ध स्थानम् , पर च तदर्ध च परार्धम् , तदर्हतीति परार्ध्य ,— परमात्मस्थानार्ह , परमात्मवदुपा स्यत्वादित्यभिप्राय , अष्टम — पृथिव्यादिरससख्यायाम् , यदुद्गीथ य उद्गीथ ॥

**कतमा कतमर्क्कतमत्कतमत्साम कतम॰**
**कतम उद्गीथ इति विमृष्ट भवति ॥ ४ ॥**

वाच ऋग्रस इत्युक्तम् , कतमा सा ऋक् ? कतमत्त त्साम ? कतमो वा स उद्गीथ ? कतमा कतमेति वीप्सा आदरा-र्था । ननु 'वा बहूना जातिपरिप्रश्ने डतमच' इति डतमच्प्र-त्यय इष्ट , न हि अत्र ऋग्जातिबहुत्वम् , कथ डतमच्प्रयोग ? नैष दोष , जातौ परिप्रश्नो जातिपरिप्रश्न —इत्येतस्मिन्विग्रहे जातावृग्व्यक्तीना बहुत्वोपपत्ते , न तु जाते परिप्रश्न इति विगृह्यते । ननु जात परिप्रश्न —इत्यस्मिन्विग्रहे 'कतम कठ' इत्याद्युदाहरणमुपपन्नम् , जातौ परिप्रश्न इत्यत्र तु न युज्यते— तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्य-दोष । यदि जाते परिप्रश्न स्यात् , 'कतमा कतमर्क्' इत्या

दावुपसख्यान कर्तव्य स्यात । विमृष्ट भवति विमर्श कृतो भवति ॥

**वागेवक्प्राण सामोमित्येतदक्षरमुद्गीथ । तद्वा एतन्मिथुन यद्वाक्च प्राणश्चर्क्च साम च ॥ ५ ॥**

विमर्शे हि कृते सति, प्रतिवचनोक्तिरुपपन्ना— वागव ऋक् प्राण साम ओमित्येतदक्षरमुद्गीथ इति । वागृचोरेकत्वेऽपि न अष्टमत्वव्याघात , पूर्वस्मात् वाक्यान्तरत्वात् , आप्तिगुणसिद्धये हि ओमित्येतदक्षरमुद्गीथ इति । वाक्प्राणौ ऋक्सामयोनी इति वागेव ऋक् प्राण साम इत्युच्यत , यथाक्रमम ऋक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्वासामृचा सर्वेषा च साम्नामवरोध कृत स्यात्, सर्वर्क्सामावरोधे च ऋक्सामसाध्याना च सर्वकर्मणामवरोध कृत स्यात्, तदवरोधे च सर्वे कामा अवरुद्धा स्यु । ओमित्येतदक्षरम् उद्गीथ इति भक्त्याशङ्का निवर्त्यते । तद्वा एतत् इति मिथुन निर्दिश्यते । किं तन्मिथुनमिति, आह— यद्वाक्च प्राणश्च सर्वर्क्सामकारणभूतौ मिथुनम्, ऋक्च साम चेति ऋक्सामकारणौ ऋक्सामशब्दोक्तावित्यर्थ , न तु स्वातन्त्र्येण ऋक्च

साम च मिथुनम् । अन्यथा हि वाक्प्राणश्च इत्येकं मिथुनम्, ऋक्साम च अपरम्, इति द्वे मिथुने स्याताम्, तथा च तद्वा एतन्मिथुनम् इत्येकवचननिर्देशोऽनुपपन्नः स्यात्, तस्मात् ऋक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम् ॥

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥**

तदेतत् एवंलक्षणं मिथुनम् ओमित्येतस्मिन्नक्षरे संसृज्यते, एवं सर्वकामाप्तिगुणविशिष्टं मिथुनम् ओंकारे संसृष्टं विद्यत इति ओंकारस्य सर्वकामाप्तिगुणवत्त्वं सिद्धम्, वाङ्मयत्वम् ओंकारस्य प्राणनिष्पाद्यत्वं च मिथुनेन संसृष्टत्वम् । मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते—यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुंसौ यदा समागच्छतः ग्राम्यधर्मतया संयुज्येयातां तदा आपयतः प्रापयतः अन्योन्यस्य इतरेतरस्य तौ कामम्, तथा स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वम् ओंकारस्य सिद्धमित्यभिप्रायः ॥

तदुपासकोऽप्युद्गाता तद्धर्मा भवतीत्याह—

**आपयिता ह वै कामाना भवति य**
**एतदेव विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥**

आपयिता ह वै कामाना यजमानस्य भवति, य एतत अक्षरम् एवम् आप्तिगुणवत् उद्गीथम् उपास्ते, तस्य एतद्यथोक्त फलमित्यथ, 'त यथा यथोपासते तदेव भवति' इति श्रुते ॥

**तद्वा एतदनुज्ञाक्षर यद्धि किंचानुजा-**
**नात्योमित्येव तदाहैषो एव समृद्धिर्यद**
**नुज्ञा समर्धयिता ह वै कामाना भवति**
**य एतदेव विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥**

समृद्धिगुणवाश्च ओंकार , कथम् ? तत् वै एतत् प्रकृतम् , अनुज्ञाक्षरम् अनुज्ञा च सा अक्षर च तत् , अनुज्ञा च अनु- मति , ओंकार इत्यर्थ । कथमनुज्ञेति, आह श्रुतिरेव—यद्धि किंच यत्किंच लोके ज्ञान धन वा अनुजानाति विद्वान् धनी वा, तत्रानुमतिं कुर्वन् ओमित्येव तदाह, तथा च वेदे 'त्रय- स्त्रिंशदित्योमिति होवाच' इत्यादि, तथा च लोकेऽपि तवेद धन गृह्णामि इत्युक्ते ओमित्येव आह। अत एषा उ एव एषैव हि समृद्धि यदनुज्ञा या अनुज्ञा सा समृद्धि , तन्मूलत्वादनु-

ज्ञाया, समृद्धो हि ओमित्यनुज्ञा ददाति, तस्मात् समृद्धि गुणवानोंकार इत्यर्थ । समृद्धिगुणोपासकत्वात् तद्धर्मा सन् समर्धयिता ह वै कामाना यजमानस्य भवति, य एतदेव विद्वानक्षरमुद्गीथमुपास्ते इत्यादि पूर्ववत् ॥

**तेनेय त्रयीविद्या वर्तते ओमित्याश्रावयत्योमिति शꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥**

अथ इदानीमक्षर स्तौति, उपास्यत्वात्, प्ररोचनार्थम्, कथम्? तेन अक्षरेण प्रकृतेन इयम् ऋग्वेदादिलक्षणा त्रयीविद्या, त्रयीविद्याविहित कर्मेत्यर्थ — न हि त्रयीविद्यैव— आश्रावणादिभिर्वर्तते । कर्म तु तथा प्रवर्तत इति प्रसिद्धम्, कथम्? ओमित्याश्रावयति ओमिति शसति ओमित्युद्गायति, लिङ्गाच्च सोमयाग इति गम्यते । तच्च कर्म एतस्यैव अक्षरस्य अपचित्यै पूजार्थम्, परमात्मप्रतीक हि तत्, तदपचिति परमात्मन एव स्यात्, ' स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव ' इति स्मृते । किंच, एतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थ, तथा एतस्यैवाक्षरस्य रसेन व्रीहियवादिरसनिर्वृत्तेन हविषेत्यर्थ,

यागहोमादि अक्षरेण क्रियते, तच्च आदित्यमुपतिष्ठते, ततो वृष्ट्यादिक्रमेण प्राणोऽन्न च जायते, प्राणैरन्नेन च यज्ञस्तायते, अत उच्यते—अक्षरस्य महिम्ना रसेन इति ॥

तत्र अक्षरविज्ञानवत कर्म कर्तव्यमिति स्थितमाक्षिपति—

**तेनोभौ कुरुतो यश्चैतदेव वेद यश्च न वेद । नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्यो-पव्याख्यान भवति ॥ १० ॥**

इति प्रथमाध्यायस्य प्रथमः खण्ड' ॥

तेन अक्षरेण उभौ कुरुत, यश्च एतत् अक्षरम् एव यथा व्याख्यात वेद, यश्च कर्ममात्रवित् अक्षरयाथात्म्य न वेद, ता-वुभौ कुरुत कर्म, तयोश्च कर्मसामर्थ्यादेव फल स्यात्, किं तत्राक्षरयाथात्म्यविज्ञानेन इति, दृष्ट हि लोके हरीतकीं भक्ष यतो तद्रसाभिज्ञेतरयो विरेचनम्—नैवम्, यस्मात् नाना तु विद्या च अविद्या च, भिन्ने हि विद्याविद्ये, तु शब्द

पक्षव्यावृत्त्यर्थं , न ओंकारस्य कर्माङ्गत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानम् , किं तर्हि ? ततोऽभ्यधिकम् , तस्मात् तदङ्गाधिक्यात् तत्फलाधिक्य युक्तमित्यभिप्राय , दृष्ट हि लोके वणिक्शबरयो पद्मरागादिमणिविक्रये वणिजो विज्ञानाधिक्यात् फलाधिक्यम् , तस्मात् यदेव विद्यया विज्ञानेन युक्त सन् करोति कर्म श्रद्धया श्रद्दधानश्च सन् , उपनिषदा योगेन युक्तश्चेत्यर्थ , तदेव कर्म वीर्यवत्तरम् अविद्वत्कर्मणोऽधिकफल भवतीति , विद्वत्कर्मणो वीर्यवत्तरत्ववचनादविदुषोऽपि कर्म वीर्यवदेव भवतीत्यभिप्राय । न च अविदुष कर्मण्यनधिकार , औषस्त्ये काण्डे अविदुषामप्यार्त्विज्यदर्शनात् । रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनम् , मध्ये प्रयत्नान्तरादर्शनात् , अनेकैर्हि विशेषणै अनेकधा उपास्यत्वात् खलु एतस्यैव प्रकृतस्य उद्गीथाख्यस्य अक्षरस्य उपव्याख्यान भवति ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीय खण्ड ॥

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनै-नानभिभविष्याम इति ॥ १ ॥

देवासुरा देवाश्च असुराश्च, देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इन्द्रियवृत्तय, असुरा तद्विपरीता स्वेष्वे-वासुषु विष्वग्विषयासु प्राणनक्रियासु रमणात् स्वाभाविक्य तमआत्मिका इन्द्रियवृत्तय एव, ह वै इति पूर्ववृत्तोद्भास-कौ निपातौ, यत्र यस्मिन्निमित्ते इतरेतरविषयापहारलक्षणे संयेतिरे, संपूर्वस्य यतते संग्रामार्थत्वमिति, संग्राम कृतवन्त इत्यर्थ । शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ता स्वाभावि-क्यस्तमोरूपा इन्द्रियवृत्तय असुरा, तथा तद्विपरीता शास्त्रार्थविषयविवेकज्योतिरात्मान देवा स्वाभाविकतमो-रूपासुराभिभवनाय प्रवृत्ता इति अन्योन्याभिभवोद्भवरूप संग्राम इव, सर्वप्राणिषु प्रतिदेह देवासुरसंग्रामा अनादिका-लप्रवृत्त इत्यभिप्राय । स इह श्रुत्या आख्यायिकारूपेण धर्मा-

धर्मोत्पत्तिविवेकविज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया । अत उभयेऽपि देवासुरा , प्रजापतेरपत्यानीति प्राजापत्या — प्रजापति कर्मज्ञानाधिकृत पुरुष , 'पुरुष एवोक्थमयमेव महान्प्रजापति ' इति श्रुत्यन्तरात् , तस्य हि शास्त्रीया स्वाभाविक्यश्च करणवृत्तयो विरुद्धा अपत्यानीव, तदुद्भवत्वात् । तत् तत्र उत्कर्षापकर्षलक्षणनिमित्ते ह देवा उद्गीथम् उद्गीथभक्त्युपलक्षितमौद्गात्र कर्म आजह्रु आहृतवन्त , तस्यापि केवलस्य आहरणासभवात् ज्योतिष्टोमाद्या हृतवन्त इत्यभिप्राय । तत्किमर्थमाजह्रुरिति, उच्यते—अनेन कर्मणा एनान् असुरान् अभिभविष्याम इति एवमभिप्राया सन्त ॥

यदा च तदुद्गीथ कर्म आजिहीर्षव , तदा—

**ते ह नासिक्य प्राणमुद्गीथमुपासा चक्रिरे तꣳ हासुरा' पाप्मना विविधुस्तस्मात्तेनोभय जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्ध ॥ २ ॥**

त ह देवा नासिक्य नासिकाया भव प्राण चेतनावन्त प्राणम् उद्गीथकर्तारम् उद्गातारम् उद्गीथभक्त्या उपासाचक्रिरे

उपासन कृतवन्त इत्यर्थ , नासिक्यप्राणदृष्टया उद्गीथाख्यम क्षरमोंकारम् उपासाचक्रिरे इत्यर्थ । एव हि प्रकृतार्थपरित्याग अप्रकृतार्थोपादान च न कृत स्यात्—'खल्वेतस्याक्षरस्य' इत्योंकारो हि उपास्यतया प्रकृत । ननु उद्गीथोपलक्षित कर्म आहृतवन्त इत्यवोच , इदानीमेव कथ नासिक्यप्राण-दृष्टया उद्गीथाख्यमक्षरमोकारम् उपासाचक्रिर इत्यात्थ ? नैष दोष , उद्गीथकर्मण्येव हि तत्कर्तृप्राणदेवतादृष्टया उ द्गीथभक्त्यवयवश्च ओंकार उपास्यत्वेन विवक्षित , न स्व तन्त्र , अत तादर्थ्येन कर्म आहृतवन्त इति युक्तमेवोक्तम् । तम् एव देवैर्वृतमुद्गातार ह असुरा स्वाभाविकतमआत्मान ज्योतीरूप नासिक्य प्राण देव स्वकीयेन पाप्मना अधर्मा सङ्गरूपेण विविधु विद्धवन्त , ससर्ग कृतवन्त इत्यर्थ । स हि नासिक्य प्राण कल्याणग धग्रहणाभिमानासङ्गा-भिभूतविवेकविज्ञानो बभूव , स तेन दोषेण पाप्मससर्गी बभूव तदिदमुक्तमसुरा पाप्मना विविधुरिति । यस्मादा-सुरेण पाप्मना विद्ध , तस्मात् तेन पाप्मना प्रेरित प्राण दुर्गन्धग्राहक प्राणिनाम् । अत तेन उभय जिघ्रति लोक सुरभि च दुर्गन्धि च, पाप्मना हि एष यस्मात् विद्ध । उभयग्रहणम् अविवक्षितम्—'यस्योभय हविरार्तिमार्च्छेति'

इति यद्वत्, 'यदेवेदमप्रतिरूपं जिघ्रति' इति समान-प्रकरणश्रुतं ॥

अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥

अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥

अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥

अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ

**सकल्पते सकल्पनीय चासकल्पनीय च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥**

मुख्यप्राणस्य उपास्यत्वाय तद्विशुद्धत्वानुभवार्थं अय विचार श्रुत्या प्रवर्तित । अत चक्षुरादिदेवता क्रमेण विचार्य आसुरेण पाप्मना विद्धा इत्यपोह्यन्ते । समानमन्यत् — अथ ह वाच चक्षु श्रोत्र मन इत्यादि । अनुक्ता अप्यन्या त्वग्रसनादिदेवता द्रष्टव्या , 'एवमु खल्वेता देवता पाप्मभि ' इति श्रुत्यन्तरात ॥

**अथ ह य एवाय मुख्य प्राणस्तमुद्गीथमुपासांचक्रिरे त॰ हासुरा ऋत्वा विदध्वसुर्यथाश्मानमाखणमृत्वा विध्व॰सेतैवम् ॥ ७ ॥**

आसुरेण पाप्मना विद्धत्वात् प्राणादिदवता अपोह्य, अथ अनन्तरम् , ह, य एवाय प्रसिद्ध , मुखे भव मुख्य प्राण , तम् उद्गीथम उपासाचक्रिर, त ह असुरा पूर्ववत् ऋत्वा प्राप्य विदध्वसु विनष्टा , अभिप्रायमात्रेण, अकृत्वा किंचिदपि प्राणस्य , कथ विनष्टा इति, अत्र दृष्टान्तमाह—यथा लोके अश्मानम् आखणम्— न शक्यते खनितु कुद्दालादिभिरपि,

टङ्कैश्च छेत्तु न शक्य अखन , अखन एव आखण , तम्—ऋत्वा— सामर्थ्यात् लोष्ट पासुपिण्ड , श्रुत्यन्तराच्च— अश्मनि क्षिप्त अश्मभेदनाभिप्रायेण, तस्य अश्मन किंचिदप्यकृत्वा स्वय विध्वसेत विदीर्येत—— एव विदध्वसुरित्यर्थ । एव विशुद्ध असुरैरधर्षितत्वात् प्राण इति ॥

**यथाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पाप कामयते यश्चैनमभिदासति स एषोऽश्माखण ॥ ८ ॥**

एवविद प्राणात्मभूतस्य इद फलमाह—यथाश्मानमिति । एष एव दृष्टान्त , एव हैव स विध्वसते विनश्यति, कोऽसाविति, आह— य एवविदि यथोक्तप्राणविदि पाप तदनर्ह कर्तुं कामयते इच्छति यश्चापि एनम् अभिदासति हिनस्ति प्राणविद प्रति आक्रोशताडनादि प्रयुङ्क्ते, सोऽप्येवमेव विध्वसत इत्यर्थ , यस्मात् स एष प्राणवित् प्राणभूतत्वात् अश्माखण इव अश्माखण अधर्षणीय इत्यर्थ । ननु नासिक्योऽपि प्राण वाय्वात्मा, यथा मुख्य , तत्र नासिक्य प्राण पाप्मना विद्ध — प्राण एव सन्, न मुख्य —कथम् ? नैष दोष , नासिक्यस्तु

स्थानकरणवैगुण्यात् असुरै पाप्मना विद्ध , वाग्वात्मापि सन्, मुख्यस्तु तदसभवात् स्थानदेवताबलीयस्त्वात् न विद्ध इति श्लिष्टम्—यथा वास्यादय शिक्षावत्पुरुषाश्रया कार्यविशेष कुर्वन्ति, न अन्यहस्तगता , तद्वत् दोषवद्घ्राणसचिवत्वाद्विद्धा घ्राणदेवता, न मुख्य ॥

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥**

यस्मान्न विद्ध असुरै मुख्य , तस्मात् नैव एतेन सुरभि न दुर्गन्धि च विजानाति लोक , घ्राणेनैव तदुभय विजानाति, अतश्च पाप्मकार्यादर्शनात् अपहतपाप्मा अपहत विनाशित अपनीत पाप्मा यस्मात् सोऽयमपहतपाप्मा हि एष , विशुद्ध इत्यर्थ । यस्माच्च आत्मभरय कल्याणाद्यासङ्गवत्त्वात् घ्राणादय — न तथा आत्मभरिर्मुख्य , किं तर्हि ? सर्वार्थ , कथमिति, उच्यते—तेन मुख्येन यद् अश्नाति यत्पिबति लोक तेन अशितेन पीतेन च इतरान्

प्राणान् घ्राणादीन् अवति पालयति, तेन हि तेषां स्थिति-र्भवतीत्यर्थः, अतः सर्वंभरिः प्राणः, अतो विशुद्धः। कथं पुनर्मुख्याशितपीताभ्यां स्थितिः इतरेषां गम्यत इति, उच्यते— एतमु एव मुख्यं प्राणं मुख्यप्राणस्य वृत्तिम्, अन्नपाने इत्यर्थः, अन्ततः अन्ते मरणकाले अवित्त्वा अलब्ध्वा उत्क्रामति, घ्राणादिप्राणसमुदाय इत्यर्थः, अप्राणो हि न शक्नोत्याशितुं पातुं वा, तदा उत्क्रान्तिः प्रसिद्धा घ्राणादिकलापस्य, दृश्यते हि उत्क्रान्तौ प्राणस्याशिशिषा, यतः व्याददात्येव, आस्यविदारणं करोतीत्यर्थः, तद्धि अन्नालाभे उत्क्रान्तस्य लिङ्गम् ॥

**तꣳ हाङ्गिरा उद्गीथमुपासांचक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥**

तं ह अङ्गिरा— तं मुख्यं प्राणं ह अङ्गिरा इत्येवंगुणम् उद्गीथम् उपासांचक्रे उपासनं कृतवान्, बको दाल्भ्य इति वक्ष्यमाणेन संबध्यते, तथा बृहस्पतिरिति, आयास्य इति च उपासांचक्रे बक इत्येव संबन्धं कृतवन्तः केचित्, एतमु एवाङ्गिरसं बृहस्पतिमायास्यं प्राणं मन्यन्ते— इति वचनात्। भवत्येव यथाश्रुतासंभवे, संभवति तु यथाश्रुतम् ऋषिचोदनायामपि—श्रुत्यन्तरवत्—'तस्माच्छतर्चिन इत्याच-

क्षते एतमेव सन्तम्' ऋषिमपि, तथा माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रि इत्यादीन् ऋषीनेव प्राणमापादयति श्रुति, तथा तानपि ऋषीन् प्राणोपासकान् अङ्गिरोबृहस्पत्यायास्यान् प्राण करोत्यभेदविज्ञानाय— 'प्राणो ह पिता प्राणो माता' इत्यादिवच्च । तस्मात् ऋषि अङ्गिरा नाम, प्राण एव सन्, आत्मानमङ्गिरस प्राणमुद्गीथम् उपासाचक्रे इत्येतत्, यत् यस्मात् स अङ्गाना प्राण सन् रस, तेनासौ अङ्गिरस ॥

**तेन तँ ह बृहस्पतिरुद्गीथमुपासाचक्र एतमु एव बृहस्पति मन्यन्ते वाग्घि बृहती तस्या एष पति' ॥ ११ ॥**

तथा वाचो बृहत्या पति तेनासौ बृहस्पति ॥

**तेन तँ हायास्य उद्गीथमुपासाचक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥**

तथा यत् यस्मात् आस्यात् अयते निर्गच्छति तेन आयास्य ऋषि प्राण एव सन् इत्यर्थ । तथा अन्योऽप्युपासक आत्मानमेव आङ्गिरसादिगुण प्राणमुद्गीथमुपासीतेत्यर्थ ॥

**तेन तँ ह बको दाल्भ्यो विदाचकार ।**

**स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्य कामानागायति ॥ १३ ॥**

न केवलमङ्गिर प्रभृतय उपासाचक्रिरे, त ह बको नाम दल्भस्यापत्य दाल्भ्य विदाचकार यथादर्शित प्राण विज्ञातवान्, विदित्वा च स ह नैमिशीयाना सत्रिणाम् उद्गाता बभूव, स च प्राणविज्ञानसामर्थ्यात् एभ्य नैमिशीयेभ्य कामान् आगायति स्म ह आगीतवान्किलेत्यथ ॥

**आगाता ह वै कामाना भवति य एतदेव विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥**

इति द्वितीय खण्ड ॥

तथा अन्योऽप्युद्गाता आगाता ह वै कामाना भवति, य एतत् एव विद्वान् यथोक्तगुण प्राणम् अक्षरमुद्गीथमुपास्ते, तस्य एतद्दृष्ट फलम् उक्तम्, प्राणात्मभावस्त्वदृष्टम्—'देवो भूत्वा देवानप्येति' इति श्रुत्यन्तरात्सिद्धमेवेत्यभिप्राय । इत्यध्यात्मम्—एतत् आत्मविषयम् उद्गीथोपासनम् इति उक्तोपसहार, अधिदैवतोद्गीथोपासने वक्ष्यमाणे, बुद्धिसमाधानार्थं ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीय खण्ड ॥

अथाधिदैवत य एवासौ तपति तमु-
द्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गा-
यति । उद्यꣳस्तमो भयमपहन्त्यपहन्ता
ह वै भयस्य तमसो भवति य एव
वेद ॥ १ ॥

अथ अनन्तरम् अधिदैवत देवताविषयमुद्गीथोपासन प्र-
स्तुतमित्यर्थ , अनेकधा उपास्यत्वादुद्गीथस्य , य एवासौ आ
दित्य तपति, तम् उद्गीथमुपासीत आदित्यदृष्ट्या उद्गीथमुपा-
सीतेत्यर्थ , तमुद्गीथम् इति उद्गीथशब्द अक्षरवाची सन्
कथमादित्ये वर्तत इति, उच्यते— उद्यन् उद्गच्छन् वै एष
प्रजाभ्य प्रजार्थम् उद्गायति प्रजानामन्नोत्पत्त्यर्थम्, न हि
अनुद्यति तस्मिन्, व्रीह्यादे निष्पत्ति स्यात्, अत उद्गाय
तीवोद्गायति— यथैवोद्गाता अन्नार्थम्, अत उद्गीथ सविते
त्यर्थ । किंच उद्यन् नैश तम तज्ज च भय प्राणिनाम् अप
हन्ति, तमेवगुण सवितार य वेद, स अपहन्ता नाशयिता

ह् वै भयस्य जन्ममरणादिलक्षणस्य आत्मन तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति ॥

यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते, तथापि न स तत्त्वभेदस्तयो । कथम्—

**समान उ एवाय चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमु तस्माद्वा एतमिमममु चोद्गीथमुपासीत ॥ २ ॥**

समान उ एव तुल्य एव प्राण सवित्रा गुणत , सविता च प्राणेन, यस्मात् उष्णोऽय प्राण उष्णश्चासौ सविता । किंच स्वर इति इम प्राणमाचक्षते कथयन्ति, तथा स्वर इति प्रत्यास्वर इति च अमु सवितारम्, यस्मात् प्राण स्वरत्येव न पुनर्मृत प्रत्यागच्छति, सविता तु अस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छति, अत प्रत्यास्वर , अस्मात् गुणतो नामतश्च समानावितरेतर प्राणादित्यौ । अत तत्त्वाभेदात् एत प्राणम् इमम् अमु च आदित्यम् उद्गीथमुपासीत ॥

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सो**

**ऽपान । अथ य प्राणापानयो सधि' स व्यानो यो व्यान सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥**

अथ खलु इति प्रकारान्तरेणोपासनमुद्गीथस्योच्यते, व्यानमेव वक्ष्यमाणलक्षण प्राणस्यैव वृत्तिविशेषम् उद्गीथम् उपासीत । अधुना तस्य तत्त्व निरूप्यते—यद्वै पुरुष प्राणिति मुखनासिकाभ्या वायु बहिर्नि सारयति, स प्राणाख्यो वायोर्वृत्तिविशेष , यदपानिति अपश्वसिति ताभ्या मेवान्तराकर्षति वायुम , स अपान अपानाख्या वृत्ति । तत किमिति, उच्यते—अथ य उक्तलक्षणयो प्राणापानयो सधि तयोरन्तरा वृत्तिविशेष , स व्यान , य साख्यादिशास्त्रप्रसिद्ध , श्रुत्या विशेषनिरूपणात्—नासौ व्यान इत्यभिप्राय । कस्मात्पुन प्राणापानौ हित्वा महता आयासेन व्यानस्यैवोपासनमुच्यते [2] वीर्यवत्कर्महेतुत्वात् । कथ वीर्यवत्कर्महेतुत्वमिति, आह—य व्यान सा वाक्, व्यानकार्यत्वाद्वाच । यस्माद्व्याननिर्वर्त्या वाक्, तस्मात् अप्राणन्ननपानन् प्राणापानव्यापारावकुर्वन् वाचमभिव्याहरति उच्चारयति लोक ॥

**या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचम**

**भिव्याहरति यदृक्तत्साम तस्मादप्राणन्ननपानन्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥**

तथा वाग्विशेषामृचम्, ऋक्संस्थं च साम, सामावयवं चोद्गीथम्, अप्राणन्ननपानन् व्यानेनैव निवर्तयतीत्यभिप्रायः ॥

**अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥**

न केवलं वागाद्यभिव्याहरणमेव, अतः अस्मात् अन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि—यथा अग्नेर्मन्थनम्, आजेः मर्यादायाः सरणं धावनम्, दृढस्य धनुष आयमनम् आकर्षणम्—अप्राणन्ननपानꣳस्तानि करोति, अतो विशिष्टो व्यानः प्राणादिवृत्तिभ्यः। विशिष्टस्योपासनं ज्यायः, फलवत्त्वाद्राजोपासनवत्। एतस्य हेतोः एतस्मात्कारणात् व्यानमेवोद्गीथमुपासीत, नान्यद्वृत्त्यन्तरम्। कर्मवीर्यवत्तरत्वं फलम् ॥

**अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गी-र्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीद॒ँ सर्व॒ँ स्थितम् ॥ ६ ॥**

अथ अधुना खलु उद्गीथाक्षराण्युपासीत भक्त्यक्षराणि मा भूवन्नित्यतो विशिनष्टि—उद्गीथ इति, उद्गीथनामाक्षरा णीत्यथ –नामाक्षरोपासनेऽपि नामवत एवोपासन कृत भ-वेत् अमुकमिश्रा इति यद्वत् । प्राण एव उत्, उदित्यस्मिन्न क्षरे प्राणदृष्टि । कथ प्राणस्य उत्त्वमिति, आह—प्राणेन हि उत्तिष्ठति सर्व , अप्राणस्यावसाददर्शनात्, अतोऽस्त्युद प्राणस्य च सामान्यम् । वाक् गी , वाचो ह गिर इत्याचक्षते शिष्टा । तथा अन्न थम्, अन्ने हि इद सर्व स्थितम्, अत अस्त्यन्नस्य थाक्षरस्य च सामान्यम् ॥

त्रयाणा श्रुत्युक्तानि सामान्यानि, तानि तेनानुरूपेण शेषेष्वपि द्रष्टव्यानि—

**द्यौरेवोदन्तरिक्ष गीः पृथिवी थमादि-त्य एवोद्वायुर्गीरग्निस्थ॒ँ सामवेद एवोद्य जुर्वेदो गीर्ऋग्वेदस्थ दुग्धेऽस्मै वाग्दोह**

**यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येव विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥**

द्यौरेव उत् उच्चैः स्थानात्, अन्तरिक्षं गी गिरणाल्लोकानाम्, पृथिवी थ प्राणिस्थानात्, आदित्य एव उत् ऊर्ध्वत्वात्, वायुः गी अग्न्यादीनां गिरणात्, अग्निः थ याज्ञीयकर्मावस्थानात्, सामवेद एव उत् स्वर्गसंस्तुतत्वात्, यजुर्वेदो गी यजुषा प्रत्तस्य हविषो देवतानां गिरणात्, ऋग्वेदः थम् ऋच्यध्यूढत्वात्साम्नः । उद्गीथाक्षरोपासनफलमधुनोच्यते—दुग्धे दोग्धि असौ साधकाय, का सा? वाक्, कम्? दोहम्, कोऽसौ दोहः इति, आह—यो वाचो दोहः, ऋग्वेदादिशब्दसाध्यं फलमित्यभिप्रायः, तत् वाचो दोहं तं स्वयमेव वाक् दोग्धि आत्मानमेव दोग्धि । किंच अन्नवान् प्रभूतान्नः अन्नादश्च दीप्ताग्निर्भवति, य एतानि यथोक्तानि एवं यथोक्तगुणानि उद्गीथाक्षराणि विद्वान्सन् उपास्ते उद्गीथ इति ॥

**अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥**

अथ खलु इदानीम्, आशी समृद्धि आशिष कामस्य समृद्धि यथा भवेत् तदुच्यत इति वाक्यशेष, उपसरणानि उपसर्तव्यान्युपगन्तव्यानि ध्येयानीत्यर्थ, कथम्? इत्युपासीत एवमुपासीत, तद्यथा— येन साम्ना येन सामविशेषेण स्तोष्यन् स्तुतिं करिष्यन् स्यात् भवेदुद्गाता तत्साम उपधावेत् उपसरेत् चिन्तयेदुत्पत्त्यादिभि ॥

**यस्यामृचि तामृच यदार्षेय तमृषि या देवतामभिष्टोष्यन्स्यात्ता देवतामुप धावेत् ॥ ९ ॥**

यस्यामृचि तत्साम ता च ऋचम् उपधावेत् देवतादिभि, यदार्षेय साम त च ऋषिम्, या देवतामभिष्टोष्यन्स्यात् ता देवतामुपधावेत् ॥

**येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाण स्यात्त स्तोममुपधावेत् ॥ १० ॥**

येन च्छन्दसा गायत्र्यादिना स्तोष्यन्स्यात् तच्छन्द उपधावेत्, येन स्तोमेन स्तोष्यमाण स्यात्, स्तोमाङ्गफलस्य कर्तृगामित्वादात्मनेपद स्तोष्यमाण इति, त स्तोममुपधावेत् ॥

**या दिशमभिष्टोष्यन्स्यात्तां दिशमुप-**
**धावेत् ॥ ११ ॥**

या दिशमभिष्टोष्यन्स्यात् ता दिशमुपधावेत् अधिष्ठात्रा-
दिभि ॥

**आत्मानमन्तत उपसृत्य स्तुवीत काम**
**ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स का**
**म. समृध्येत यत्कामः स्तुवीतेति यत्का**
**म स्तुवीतेति ॥ १२ ॥**

इति तृतीयः खण्ड ॥

आत्मानम् उद्गाता स्व रूप गोत्रनामादिभि — सामादीन्
क्रमेण स्व च आत्मानम्— अन्तत अन्ते उपसृत्य स्तुवीत,
काम ध्यायन् अप्रमत्त स्वरोष्मव्यञ्जनादिभ्य प्रमादमकुर्वन्।
तत अभ्याश क्षिप्रमेव ह यत् यत्र अस्मै एवविदे स काम
समृध्येत समृद्धि गच्छेत् । कोऽसौ ? यत्काम य काम
अस्य सोऽय यत्काम सन् स्तुवीतेति । द्विरुक्तिरादरार्था ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थ खण्ड ॥

---

**ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतत् इत्यादिप्रकृतस्याक्षरस्य पुनरुपादानम् उद्गीथाक्षराद्युपासनान्तरितत्वादन्यत्र प्रसङ्गो मा भूदित्येवमर्थम्, प्रकृतस्यैवाक्षरस्यामृताभयगुणविशिष्टस्योपासन विधातव्यमित्यारम्भ । ओमित्यादि व्याख्यातम् ॥

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्या प्राविशꣳस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयꣳस्तच्छन्दसा छन्दस्त्वम् ॥ २ ॥**

देवा वै मृत्यो मारकात् बिभ्यत किं कृतवन्त इति, उच्यत— त्रयीं विद्या त्रयीविहित कर्म प्राविशन् प्रविष्टवन्त, वैदिक कर्म प्रारब्धवन्त इत्यथ, तत् मृत्योस्त्राण मन्यमाना । किंच, ते कर्मण्यविनियुक्तै छन्दोभि मन्त्रै जपहोमादि कुर्वन्त आत्मान कर्मान्तरेष्वच्छादयन् छादितवन्त ।

यत् यस्मात् एभि मन्त्रै अच्छादयन्, तत् तस्मात् छन्दसा मन्त्राणा छादनात् छन्दस्त्व प्रसिद्धमेव ॥

**तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेव पर्यपश्यदृचि साम्नि यजुषि । ते नु विदित्वोर्ध्वा ऋच. साम्नो यजुष. स्वरमेव प्राविशन् ॥ ३ ॥**

तान् तत्र देवान्कर्मपरान् मृत्यु यथा लोके मत्स्यघातको मत्स्यमुदके नातिगम्भीरे परिपश्येत् बडिशोदकस्रावोपायसाध्य मन्यमान, एव पर्यपश्यत् दृष्टवान्, मृत्यु कर्मक्षयोपायेन साध्या देवान्मेने इत्यर्थ । क्वासौ देवान्ददर्शेति, उच्यते— ऋचि साम्नि यजुषि, ऋग्यजु सामसबन्धिकर्मणीत्यर्थ । ते नु देवा वैदिकेन कर्मणा सस्कृता शुद्धात्मान सन्त मृत्योश्चिकीर्षित विदितवन्त, विदित्वा च ते ऊर्ध्वा व्यावृत्ता कर्मभ्य ऋच साम्न यजुष ऋग्यजु सामसबद्धात्कर्मण अभ्युत्थायेत्यर्थ । तेन कर्मणा मृत्युभयापगम प्रति निराशा तदपास्य अमृताभयगुणमक्षर स्वर स्वरशब्दित प्राविशन्नेव प्रविष्टवन्त, ओंकारोपासनपरा सवृत्ता, एव-शब्द अवधारणार्थ सन् समुच्चयप्रतिषेधार्थ, तदुपासनपरा सवृत्ता इत्यर्थ ॥

कथ पुन स्वरशब्दवाच्यत्वमक्षरस्येति, उच्यते—

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वर-त्येव॰ सामैव यजुरेष उ स्वरो यदेतदक्ष-रमेतदमृतमभय तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥**

यदा वै ऋचम् आप्नोति ओमित्येवातिस्वरति एव साम एव यजु , एष उ स्वर , कोऽसौ? यदेतदक्षरम् एतदमृ-तम् अभयम्, तत्प्रविश्य यथागुणमेव अमृता अभयाश्च अभवन् देवा ॥

**स य एतदेव विद्वानक्षर प्रणौत्येतदे-वाक्षर॰ स्वरममृतमभय प्रविशति तत्प्र-विश्य यदमृता देवास्तदमृतो भवति ॥**

इति चतुर्थ खण्ड ॥

स य अन्योऽपि देववदेव एतदक्षरम् एवम् अमृता-भयगुण विद्वान् प्रणौति स्तौति, उपासनमेवात्र स्तुति-रभिप्रेता, स तथैव एतदेवाक्षर स्वरममृतमभय प्रविशति, तत्प्रविश्य च—राजकुल प्रविष्टानामिव राज्ञोऽन्तरङ्गबहिरङ्ग-

तावत् न परस्य ब्रह्मणोऽन्तरङ्गबहिरङ्गताविशेष —कि तर्हि ? यदमृता देवा येनामृतत्वेन यदमृता अभूवन्, तेनैवामृतत्वेन विशिष्ट तदमृतो भवति, न न्यूनता नाप्यधिकता अमृतत्वे इत्यर्थ ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चम खण्ड ॥

प्राणादित्यदृष्टिविशिष्टस्योद्गीथस्योपासनमुक्तमेवानूद्य प्रण वोद्गीथयोरेकत्व कृत्वा तस्मिन्प्राणरश्मिभेदगुणविशिष्टदृष्ट्या अक्षरस्योपासनमनेकपुत्रफलमिदानीं वक्तव्यमित्यारभ्यते—

**अथ खलु य उद्गीथ स प्रणवो य प्रणव स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥**

अथ खलु य उद्गीथ स प्रणव बह्वृचानाम्, यश्च प्रणव तेषा स एव च्छान्दोग्ये उद्गीथशब्दवाच्य । असौ वा आदित्य उद्गीथ एष प्रणव , प्रणवशब्दवाच्योऽपि स एव बह्वृचानाम्, नान्य । उद्गीथ आदित्य कथम्? उद्गीथाख्यमक्षरम् ओमिति एतत् एष हि यस्मात् स्वरन् उच्चारयन्, अनेकार्थत्वाद्धातूनाम्, अथवा स्वरन् गच्छन् एति । अत असावुद्गीथ सविता ॥

**एतमु एवाहमभ्यगासिष तस्मान्मम**

**त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥**

तम् एतम् उ एव अहम् अभ्यगासिषम् आभिमुख्येन गीतवानस्मि, आदित्यरश्म्यभेदं कृत्वा ध्यानं कृतवानस्मीत्यर्थः । तेन तस्मात्कारणात् मम त्वमेकोऽसि पुत्र इति ह कौषीतकिः कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाच उक्तवान् । अतः रश्मीनादित्यं च भेदेन त्वं पर्यावर्तयात् पर्यावर्तयेत्यर्थः, त्वयोगात् । एवं बहवो वै ते तव पुत्रा भविष्यन्तीत्यधिदैवतम् ॥

**अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥**

अथ अनन्तरम् अध्यात्मम् उच्यते । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतेत्यादि पूर्ववत् । तथा ओमिति ह्येष प्राणोऽपि स्वरन्नेति ओमिति ह्यनुज्ञां कुर्वन्निव वागादिप्रवृत्त्यर्थमेतीत्यर्थः । न हि मरणकाले मुमूर्षोः समीपस्थाः प्राणस्योंकरणं शृण्वन्तीति । एतत्सामान्यादादित्येऽप्योंकरणमनुज्ञामात्रं द्रष्टव्यम् ॥

**एतमु एवाहमभ्यगासिष तस्मान्मम त्वमेकोऽसीति ह कौषीतकि पुत्रमुवाच प्राणा्ँस्त्व भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥**

एतमु एवाहमभ्यगासिषमित्यादि पूर्ववदेव । अतो वागादीन्मुख्य च प्राण भेदगुणविशिष्टमुद्गीथ पश्यन् भूमान मनसा अभिगायतात्, पूर्ववदावर्तयेत्यर्थ , बहवो वै मे मम पुत्रा भविष्यन्तीत्येवमभिप्राय सन्नित्यर्थ । प्राणादित्यैकत्वोद्गीथ दृष्टे एकपुत्रत्वफलदोषणापादितत्वात् रश्मिप्राणभेददृष्टे कर्तव्यता चोद्यते अस्मिन्खण्ड बहुपुत्रफलत्वार्थम् ॥

**अथ खलु य उद्गीथ स प्रणवो य. प्रणव स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥**

इति पञ्चम' खण्ड ॥

अथ खलु य उद्गीथ इत्यादि प्रणवोद्गीथैकत्वदर्शनमुक्तम्, तस्यैतत्फलमुच्यते— होतृषदनात् होता यत्रस्थ शसति तत्स्थान होतृषदनम्, हौत्रात्कर्मण सम्यक्प्रयुक्तादित्यर्थ ।

न हि देशमात्रात्फलमाहर्तुं शक्यम् । किं तत्? ह एवापि दुरुद्गीत दुष्टमुद्गीतम् उद्गान कृतम् उद्गात्रा स्वकर्मणि क्षत कृतमित्यर्थ , तदनुसमाहरति अनुसधत्त इत्यर्थं ——चिकित्स येव धातुवैषम्यसमीकरणमिति ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठ खण्ड ॥

---

अथेदानीं सर्वफलसंपत्त्यर्थम् उद्गीथस्य उपासनान्तरं विधित्स्यते—

**इयमेवर्गग्निः साम तदेतदेतस्यामृच्य-
ध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गी-
यत इयमेव साग्निरमस्तत्साम ॥ १ ॥**

इयमेव पृथिवी ऋक्, ऋचि पृथिवीदृष्टिः कार्या । तथा अग्निः साम, साम्नि अग्निदृष्टिः । कथं पृथिव्यग्न्योः ऋक्सामत्वमिति, उच्यते— तदेतत् अग्न्याख्यं साम एतस्यां पृथिव्याम् ऋचि अध्यूढम् अधिगतम् उपरिभावेन स्थित मित्यर्थः, ऋचीव साम, तस्मात् अत एव कारणात् ऋच्यध्यूढमेव साम गीयते इदानीमपि सामगैः । यथा च ऋक्सामनी नात्यन्तं भिन्ने अन्योन्यम्, तथैतौ पृथिव्यग्नी, कथम्? इयमेव पृथिवी सा सामनामार्धशब्दवाच्या, इतरार्धशब्दवाच्यः अग्निः अमः, तत् एतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वमापन्नं साम, तस्मान्नान्योन्यं भिन्नं पृथिव्यग्निद्वयं नित्यसंश्लिष्टमृक्सामनी इव । तस्माच्च पृथिव्यग्न्योर्ऋक्सामत्वमित्यर्थः । सामाक्षरयोः पृथिव्यग्निदृष्टिविधानार्थमियमेव सा अग्निरमः इति केचित् ॥

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेत-स्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायु-रमस्तत्साम ॥ २ ॥

अन्तरिक्षमेव ऋक् वायुः साम इत्यादि पूर्ववत् ॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृ-च्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव सादित्योऽमस्तत्साम ॥ ३ ॥

नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतदेत स्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥

नक्षत्राणामधिपतिश्चन्द्रमा अतः स साम ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदे-तस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥ ५ ॥

अथ यदेतदादित्यस्य शुक्ल भा शुक्ला दीप्ति सैव ऋक् । अथ यदादित्ये नील पर कृष्ण परोऽतिशयेन कार्ष्ण्यं तत्साम । तद्ध्येकान्तसमाहितदृष्टेर्दृश्यते ॥

**अथ यदेवैतदादित्यस्य शुक्ल भा सैव साथ यन्नील पर कृष्ण तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मय पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण ॥ ६ ॥**

ते एवैते भासौ शुक्लकृष्णत्वे सा च अमश्च साम । अथ य एष अन्तरादित्ये आदित्यस्यान्त मध्ये हिरण्मय हिरण्मय इव हिरण्मय । न हि सुवर्णविकारत्व देवस्य सभवति, ऋक्सामगेष्णत्वापहतपाप्मत्वासभवात्, न हि सौवर्णेऽचेतने पाप्मादिप्राप्तिरस्ति, येन प्रतिषिध्येत, चाक्षुषे च अग्रहणात्, अत लुप्तोपम एव हिरण्मयशब्द , ज्योतिर्मय इत्यर्थ । उत्तरेष्वपि समाना योजना । पुरुष पुरि शयनात् पूरयति वा स्वेन आत्मना जगदिति, दृश्यते निवृत्तचक्षुर्भि समाहितचेतोभिर्ब्रह्मचर्यादिसाधनापेक्षै । तेजस्विनोऽपि श्मश्रुकेशादय कृष्णा स्युरित्यतो विशिनष्टि— हिरण्यश्मश्रुर्हि-

रण्यकेश इति, ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेत्यर्थ । आप्रणखात् प्रणख नखाग्र नखाग्रेण सह सर्व सुवर्ण इव भारूप इत्यर्थ ॥

**तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्य पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एव वेद ॥ ७ ॥**

तस्य एव सवत सुवर्णवणस्याप्यक्ष्णोर्विशष । कथम्? तस्य यथा कपे मर्कटस्य आस कप्यास , आसेरुपवेशनार्थस्य करण घञ् , कपिपृष्ठान्त येनोपविशति , कप्यास इव पुण्डरीकम् अत्यन्ततेजस्वि एवम् देवस्य अक्षिणी , उपमितोपमानत्वात् न हीनोपमा । तस्य एवगुणविशिष्टस्य गौणमिद नाम उदिति , कथ गौणत्वम्? स एष देव सर्वेभ्य पाप्मभ्य पाप्मना सह तत्कार्येभ्य इत्यर्थ , 'य आत्मापहतपाप्मा' इत्यादि वक्ष्यति, उदित उत् इत , उद्गत इत्यथ । अत असौ उन्नामा । तम् एवगुणसपन्नमुन्नामान यथोक्तन प्रकारेण यो वेद सोऽप्येवमेव उदेति उद्गच्छति सर्वेभ्य पाप्मभ्य — ह वै इत्यवधारणार्थौ निपातौ— उदेत्येवेत्यर्थ ॥

**तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथ-**

**स्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषा चेष्टे देवकामाना चेत्यधिदैवतम् ॥ ८ ॥**

**इति षष्ठ खण्ड ॥**

तस्योद्गीथत्व देवस्य आदित्यादीनामिव विवक्षित्वा आह— तस्य ऋक्च साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्वणी । सर्वात्मा हि देव । परापरलोककामेशितृत्वादुपपद्यते पृथिव्यग्न्याद्यृक्सामगेष्णत्वम्, सर्वयोनित्वाच्च । यत एवमुन्नामा च असौ ऋक्सामगेष्णश्च तस्मादृक्सामगेष्णत्वे प्राप्ते उद्गीथत्वमुच्यते परोक्षेण, परोक्षप्रियत्वाद्देवस्य, तस्मादुद्गीथ इति । तस्मात्त्वेव हेतो उद् गायतीत्युद्गाता । यस्माद्धि एतस्य यथोक्तस्योन्नाम्न गाता असौ अतो युक्ता उद्गातेति नामप्रसिद्धि उद्गातु । स एष देव उन्नामा ये च अमुष्मात् आदित्यात् पराञ्च पराग‍ञ्चनात् ऊर्ध्वा लोका तेषा लोकाना च ईष्टे न केवलमीशितृत्वमेव, च शब्दाद्धारयति च, 'स दाधार पृथिवीं द्यामुतेमाम्' इत्यादिमन्त्रवर्णात् । किंच, देवकामानामीष्टे इति एतत् अधिदैवत देवताविषय देवस्योद्गीथस्य स्वरूपमुक्तम् ॥

**इति षष्ठखण्डभाष्यम् ॥**

## सप्तमः खण्डः ॥

अथाध्यात्मं वागेवर्क्प्राणः साम तदे-तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । वागेव सा प्राणोऽमस्तत्साम ॥ १ ॥

अथ अधुना अध्यात्ममुच्यते—वागेव ऋक् प्राणः साम, अधरोपरिस्थानत्वसामान्यात् । प्राणो घ्राणमुच्यते सह वायुना । वागेव सा प्राणोऽम इत्यादि पूर्ववत् ॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । चक्षुरेव सात्मामस्तत्साम ॥ २ ॥

चक्षुरेव ऋक् आत्मा साम । आत्मेति च्छायात्मा, तत्स्थत्वात्साम ॥

श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । श्रोत्रमेव सा मनोऽमस्तत्साम ॥

श्रोत्रमेव ऋक् मन साम, श्रोत्रस्याधिष्ठातृत्वान्मनस सामत्वम् ॥

**अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नील परः कृष्ण तत्साम तदेतदेतस्या-मृच्यध्यूढ५ साम तस्मादृच्यध्यूढ५ साम गीयते। अथ यदेवैतदक्ष्ण' शुक्लं भाः सैव साथ यन्नील पर कृष्ण तदमस्त-त्साम ॥ ४ ॥**

अथ यदेतदक्ष्ण शुक्लं भा सैव ऋक्। अथ यन्नील पर कृष्णमादित्य इव दृक्शक्त्यधिष्ठान तत्साम ॥

**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्य ते सैवर्क्तत्साम तदुक्थ तद्यजुस्तद्ब्रह्म त स्यैतस्य तदेव रूप यदमुष्य रूप यावमु ष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥**

अथ य एषोऽ तरक्षिणि पुरुषो दृश्यते, पूर्ववत्। सैव ऋक् अध्यात्म वागाद्या, पृथिव्याद्या च अधिदैवतम्, प्र-सिद्धा च ऋक् पादबद्धाक्षरात्मिका, तथा साम, उक्थ-साहचर्याद्वा स्तोत्र साम ऋक शस्त्रम् उक्थाद्‌यत् तथा

यजु स्वाहास्वधावषडादि सर्वमेव वाग्यजु तत्स एव। सर्वात्मकत्वात्सर्वयोनित्वाच्चेति ह्यवोचाम। ऋगादिप्रकरणात् तद्ब्रह्मेति त्रयो वेदा। तस्यैतस्य चाक्षुषस्य पुरुषस्य तदेव रूपमतिदिश्यते। किं तत्? यदमुष्य आदित्यपुरुषस्य— हिरण्मय इत्यादि यदधिदैवतमुक्तम्, यावमुष्य गेष्णौ पर्वणी, तावेवास्यापि चाक्षुषस्य गेष्णौ, यच्चामुष्य नाम उदित्युद्गीथ इति च तदेवास्य नाम। स्थानभेदात् रूपगुणनामाति देशात् ईशितृत्वविषयभेदव्यपदेशाच्च आदित्यचाक्षुषयोर्भेद इति चेत्, न, 'अमुना' 'अनेनैव' इत्येकस्योभयात्मत्वप्राप्त्यनुपपत्ते। द्विधाभावेनोपपद्यत इति चेत्— वक्ष्यति हि 'स एकधा भवति त्रिधा भवति' इत्यादि, न, चेतनस्यैकस्य निरवयवत्वाद्द्विधाभावानुपपत्ते। तस्मादध्यात्माधिदैवतयोरेकत्वमेव। यत्तु रूपाद्यतिदेशो भेदकारणमवोच, न तद्भेदावगमाय, किं तर्हि, स्थानभेदाद्भेदाशङ्का मा भूदित्येवमर्थम्॥

**स एष ये चैतस्मादर्वाञ्चो लोकास्तेषा चेष्टे मनुष्यकामाना चेति तद्य इमे वीणाया गायन्त्येत ते गायन्ति तस्मात्ते धनसनय.॥ ६॥**

स एष चाक्षुष पुरुष ये च एतस्मात् आध्यात्मिका

दात्मन अर्वाञ्च अर्वाग्गता लोका तेषा चेष्टे मनुष्य सबन्धिना च कामानाम्। तत् तस्मात् य इमे वीणाया गायन्ति गायका त एतमेव गायन्ति । यस्मादीश्वर गायन्ति तस्मात्ते धनसनय धनलाभयुक्ता, धनवन्त इत्यर्थ ॥

**अथ य एतदेव विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ता२ँश्चाप्नोति देवकामा२ँश्च ॥ ७ ॥**

अथ य एतदेव विद्वान् यथोक्त देवमुद्गीथ विद्वान् साम गायति उभौ स गायति चाक्षुषमादित्य च । तस्यैवविद फलमुच्यते— सोऽमुनैव आदित्येन स एष ये च अमुष्मात्पराञ्च लोका तांश्च आप्नोति, आदित्यान्तर्गतदेवो भूत्वेत्यर्थ, देवकामांश्च ॥

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ता२ँश्चाप्नोति मनुष्यकामा२ँश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥**

**क ते काममागायानीत्येष ह्येव काम-**

**गानस्येष्टे य एव विद्वान्साम गायति साम गायति ॥ ९ ॥**

इति सप्तम खण्ड ॥

अथ अनेनैव चाक्षुषेणैव ये च एतस्मादर्वाञ्चो लोका ताश्च आप्नोति, मनुष्यकामाश्च—चाक्षुषो भूत्वेत्यर्थ । तस्मादु ह एववित् उद्गाता ब्रूयात् यजमानम्— कम् इष्ट ते तव काममागायानीति । एष हि यस्मादुद्गाता कामागानस्य उद्गानेन काम सपादयितुमीष्टे समथ इत्यथ । कोऽसौ[1] य एव विद्वान् साम गायति । द्विरुक्तिरुपासनसमाप्त्यर्था ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टम. खण्ड ॥

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशला स्मो हन्तोद्गीथे कथा वदाम इति ॥ १ ॥

अनेकधोपास्यत्वात् अक्षरस्य प्रकारान्तरेण परोवरीय स्त्वगुणफलमुपासनान्तरमानिनाय। इतिहासस्तु सुखावबोधनार्थ। त्रय त्रिसङ्ख्याका, ह इत्यैतिह्यार्थ, उद्गीथे उद्गीथज्ञान प्रति, कुशला निपुणा बभूवु, कस्मिंश्चिद्देशे काले च निमित्ते वा समेतानामित्यभिप्राय। न हि सर्वस्मि ञ्जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने। श्रूयन्ते हि उषस्तिजानश्रुतिकैकेयप्रभृतय सर्वज्ञकल्पा। के ते त्रय इति, आह—शिलक नामत, शलावतोऽपत्य शालावत्य, चिकितायनस्यापत्य चैकितायन, दल्भगोत्रो दाल्भ्य, द्व्यामुष्यायणो वा, प्रवाहणो नामत, जीवलस्यापत्य जैवलि इत्येते त्रय —ते होचु अन्योन्यम्—उद्गीथे वै कुशला निपुणा इति प्रसिद्धा स्म। अतो हन्त यद्यनुमतिर्भवताम् उद्गीथे उद्गीथज्ञाननिमित्ता कथा विचारणा पक्षप्रतिपक्षोपन्यासेन

वदाम वाद कुर्म इत्यर्थ । तथा च तद्विद्यसवादे विपरीत ग्रहणनाशोऽपूर्वविज्ञानोपजन सशयनिवृत्तिश्चेति । अत त-द्विद्यसयोग कर्तव्य इति च इतिहासप्रयोजनम् । दृश्यते हि शिलकादीनाम् ॥

**तथेति ह समुपविविशु स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदता ब्राह्मणयोर्वदतोर्वाच९ श्रोष्यामीति ॥ २ ॥**

तथेत्युक्त्वा ते समुपविविशु ह उपविष्टवन्त किल । तत्र राज्ञ प्रागल्भ्योपपत्ते स ह प्रवाहणो जैवलिरुवाच इत रौ— भगवन्तौ पूजावन्तौ अग्रे पूर्व वदताम्, ब्राह्मणयोरिति लिङ्गाद्राजा असौ, युवयोर्ब्राह्मणयो वदतो वाच श्रोष्यामि, अर्थरहितामित्यपरे, वाचमिति विशेषणात् ॥

**स ह शिलक' शालावत्यश्चैकितायन दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥**

उक्तयो स ह शिलक शालावत्य चैकितायन दाल्भ्य मुवाच— हन्त यद्यनुमस्यसे त्वा त्वा पृच्छानि इत्युक्त इतर पृच्छेति होवाच ॥

**का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥**

लब्धानुमतिराह— का साम्न — प्रकृतत्वादुद्गीथस्य, उद्गीथो हि अत्र उपास्यत्वेन प्रकृत , 'परोवरीयासमुद्गीथम्' इति च वक्ष्यति— गति आश्रय , परायणमित्येतत् । एव पृष्टो दाल्भ्य उवाच— स्वर इति, स्वरात्मकत्वात्साम्न । यो यदात्मक स तद्गतिस्तदाश्रयश्च भवतीति युक्तम् , मृदाश्रय इव घटादि । स्वरस्य का गतिरिति, प्राण इति होवाच , प्राणनिष्पाद्यो हि स्वर , तस्मात्स्वरस्य प्राणो गति । प्राणस्य का गतिरिति, अन्नमिति होवाच , अन्नावष्टम्भो हि प्राण , 'शुष्यति वै प्राण ऋतेऽन्नात्' इति श्रुते , 'अन्न दाम' इति च । अन्नस्य का गतिरिति, आप इति होवाच, अप्सभवत्वादन्नस्य ॥

**अपा का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्ग लोकमति नयेदिति होवाच स्वर्ग वय लो-**

**कं सामाभिसंस्थापयाम स्वर्गसंस्तावं हि सामेति ॥ ५ ॥**

अपां का गतिरिति, असौ लोक इति होवाच, अमुष्माद्धि लोकाद्वृष्टिः संभवति। अमुष्य लोकस्य का गतिरिति पृष्टः दाल्भ्य उवाच— स्वर्गममुं लोकमतीत्य आश्रयान्तरं साम न नयेत्कश्चित् इति होवाच आह। अतो वयमपि स्वर्गं लोकं साम अभिसंस्थापयाम, स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः। स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम स्वर्गसंस्तावम्, हि यस्मात् स्वर्गो वै लोकः साम वेद इति श्रुतिः ॥

**तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥**

तम् इतरः शिलकः शालावत्यः चैकितायनं दाल्भ्यमुवाच — अप्रतिष्ठितम् असंस्थितम्, परोवरीयस्त्वेनासमाप्तगति सामेत्यर्थः, वै इत्यागमं स्मारयति किलेति च, दाल्भ्य ते तव साम। यस्तु असहिष्णुः सामवित् एतर्हि एतस्मिन्काले ब्रूयात् कश्चिद्विपरीतविज्ञानम्— अप्रतिष्ठितं साम प्रतिष्ठित

मिति— एववादापराधिनो मूर्धा शिर ते विपतिष्यति वि स्पष्ट पतिष्यतीति । एवमुक्तश्चापराधिन तथैव तद्विपतेत् न सशय , न त्वह ब्रवीमीत्यभिप्राय । ननु मूर्धपातार्हं चेद-पराध कृतवान्, अत परेणानुक्तस्यापि पतेन्मूर्धा, न चेदप-राधी उक्तस्यापि नैव पतति, अन्यथा अकृताभ्यागम कृत-नाशश्च स्याताम् । नैष दोष , कृतस्य कर्मण शुभाशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात् । तत्रैव सति मूर्धपातनि मित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्तापेक्षत्वमिति ॥

**हन्ताहमेतद्भगवत्तो वेदानीति विद्धी ति होवाचामुष्य लोकस्य का गतिरि त्यय लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठा लोकमति नयेदिति होवाच प्रतिष्ठा वय लोकꣳ सामाभिस ꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सा मेति ॥ ७ ॥**

एवमुक्तो दाल्भ्य आह—हन्ताहमेतद्भगवत्त भगवत वे-दानि यत्प्रतिष्ठ साम इत्युक्त प्रत्युवाच शालावत्य – विद्धीति होवाच । अमुष्य लोकस्य का गतिरिति पृष्ट दाल्भ्येन

शालावत्य अयं लोक इति होवाच, अयं हि लोको याग दानहोमादिभिरमुं लोकं पुष्यतीति, 'अतः प्रदानं देवा उपजीवन्ति' इति हि श्रुतयः, प्रत्यक्षं हि सर्वभूतानां धरणी प्रतिष्ठेति, अतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तम्। अस्य लोकस्य का गतिरित्युक्त आह शालावत्यः— न प्रतिष्ठाम् इमं लोकमतीत्य नयेत् साम कश्चित्। अतो वयं प्रतिष्ठां लोकं साम अभिसंस्थापयामः, यस्मात्प्रतिष्ठा संस्तावं हि, प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः, 'इयं वै रथंतरम्' इति च श्रुतिः॥

**तꣳह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच॥ ८॥**

इति अष्टमः खण्डः॥

तमेवमुक्तवन्तं ह प्रवाहणो जैवलिरुवाच अन्तवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत्। ततः शालावत्य आह— हन्ताहमेतद्भगवत्तो वेदानीति, विद्धीति होवाच इतरः॥

इति अष्टमखण्डभाष्यम्॥

## नवम खण्ड ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥

अनुज्ञात आह— अस्य लोकस्य का गतिरिति, आकाश इति होवाच प्रवाहण , आकाश इति च पर आत्मा, 'आकाशो वै नाम' इति श्रुते तस्य हि कम सवभूतोत्पादकत्वम्, तस्मिन्नेव हि भूतप्रलय – 'तत्तेजोऽसृजत' 'तेज परस्या दवतायाम' इति हि वक्ष्यति, सवाणि ह वै इमानि भूतानि स्थावरजङ्गमानि आकाशादेव समुत्पद्यन्ते तेजोबन्नादिक्रमेण, सामर्थ्यात्, आकाश प्रति अस्त यन्ति प्रलयकाले तेनैव विपरीतक्रमेण, हि यस्मादाकाश एवैभ्य सर्वेभ्यो भूतेभ्य ज्यायान् महत्तर , अत स सर्वेषा भूताना परमयन परायण प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थ ॥

**स एष परोवरीयानुद्गीथ स एषोऽनन्त परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेव विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥ २ ॥**

यस्मात् पर पर वरीय वरीयसाऽप्येष वर परश्च वरीयाश्च परोवरीयान् उद्गीथ परमात्मा सपन्न इत्यर्थ, अत एव स एष अनन्त अविद्यमानान्त । तमत परोवरीयास परमात्मभूतमनन्तम एव विद्वान परोवरीयासमुद्गीथमुपास्ते । तस्यैतत्फलमाह—परोवरीय पर पर वरीयो विशिष्टतर जीवन ह अस्य विदुषो भवति दृष्ट फलम्, अदृष्ट च परोवरीयस उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्तान् लोकान् जयति— य एतदेव विद्वानुद्गीथमुपास्ते ॥

**तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एन प्रजायामुद्गीथ वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवन भविष्यति ॥ ३ ॥**

किं च तमेतमुद्गीथ विद्वान् अतिधन्वा नामत, शुनक-

स्यापत्य शौनक , उदरशाण्डिल्याय शिष्याय एतम् उद्गीथ दर्शनम् उक्त्वा उवाच— यावत् ते तव प्रजायाम् , प्रजास ततावित्यर्थ , एनम् उद्गीथ त्वत्सततिजा वेदिष्यन्ते ज्ञास्य न्ति, तावन्त काल परोवरीयो हैभ्य प्रसिद्धेभ्यो लौकिक जीवनेभ्य उत्तरोत्तरविशिष्टतर जीवन तेभ्यो भविष्यति ॥

**तथामुष्मिँल्लोके लोक इति स य एतमेव विद्वानुपास्ते परोवरीय एव हास्या स्मिँल्लोके जीवन भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥**

इति नवम खण्ड ॥

तथा अदृष्टेऽपि परलोके अमुष्मिन परोवरीयाँल्लोको भविष्यतीत्युक्तवान् शाण्डिल्याय अतिधन्वा शौनक । स्यादे-तत्फल पूर्वेषा महाभाग्यानाम् , नैदयुगीनानाम्— इत्याश ङ्कानिवृत्तये आह— स य कश्चित् एतमेव विद्वान् उद्गी थम् एतर्हि उपास्ते, तस्याप्येवमेव परोवरीय एव ह अस्य अस्मिँल्लोके जीवन भवति तथा अमुष्मिँल्लोके लोक इति ॥

इति नवमखण्डभाष्यम् ॥

## दशम खण्ड. ॥

**मटचीहतेषु कुरुष्वाटिक्या सह जायघोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥**

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासन व क्तव्यमितीदमारभ्यते, आख्यायिका तु सुखावबोधार्था । मटचीहतेषु मटच्य अशनय ताभिर्हतेषु नाशितेषु कुरुषु कुरुसस्येष्वित्यर्थ । ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यञ्जनया सह जायया उषस्तिर्ह नामत, चक्रस्यापत्य चाक्रायण, इभो हस्ती तमर्हतीति इभ्य ईश्वर, हस्त्यारोहो वा, तस्य ग्राम इभ्यग्राम तस्मिन, प्रद्राणक अन्नालाभात, 'द्रा कुत्साया गतौ', कुत्सिता गतिं गत, अन्त्यावस्था प्राप्त इत्यर्थ, उवास उषितवान् कस्य चिद्गृहमाश्रित्य ॥

**स हेभ्य कुल्माषान्खादन्त बिभिक्षे तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥ २ ॥**

स अन्नार्थमटन् इभ्य कुल्माषान् कुत्सितान्माषान् खाद-

न्त भक्षयन्त यदृच्छयोपलभ्य बिभिक्षे याचितवान् । तम् उषस्ति ह उवाच इभ्य — न इत , अस्मान्मया भक्ष्यमा णादुच्छिष्टराशे कुल्माषा अन्ये न विद्यन्ते , यच्च ये राशौ मे मम उपनिहिता प्रक्षिप्ता इमे भाजने, किं करोमि , इत्युक्त प्रत्युवाच उषस्ति —

**एतेषा मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्ट वै मे पीत५ स्यादिति होवाच ॥ ३ ॥**

एतेषाम् एतानित्यर्थ , मे मह्य देहीति ह उवाच , तान् स इभ्य अस्मै उषस्तये प्रददौ प्रदत्तवान् । पानाय समी पस्थमुदक च गृहीत्वा उवाच—ह त गृहाणानुपानम् , इत्युक्त प्रत्युवाच— उच्छिष्ट वै मे मम इदमुदक पीत स्यात् , यदि पास्यामि , इत्युक्तवन्त प्रत्युवाच इतर —

**न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति ॥ ४ ॥**

किं न स्विदते कुल्माषा अप्युच्छिष्टा , इत्युक्त आह उषस्ति — न वै अजीविष्य नैव जीविष्यामि इमान् कुल्मा

षान् अखादन् अभक्षयन् इति होवाच । काम इच्छात मे मम उदकपान लभ्यत इत्यर्थ । अतश्चैतामवस्था प्राप्तस्य विद्याधर्मयशोवत स्वात्मपरोपकारसमर्थस्यैतदपि कर्म कुर्वतो न अघस्पर्श इत्यभिप्राय । तस्यापि जीवित प्रति उपाया न्तरेऽजुगुप्सिते सति जुगुप्सितमेतत्कर्म दोषाय, ज्ञानाव लेपन कुर्वतो नरकपात स्यादेवेत्यभिप्राय, प्रद्राणकशब्द श्रवणात् ॥

**स ह खादित्वातिशेषाञ्जायाया आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥**

तांश्च स खादित्वा अतिशेषान अतिशिष्टान् जायायै कारुण्यादाजहार, सा आटिकी अग्र एव कुल्माषप्राप्ते सुभिक्षा शोभनभिक्षा, लब्धान्नेत्येतत्, बभूव सवृत्ता, तथापि स्त्रीस्वाभाव्यादनवज्ञाय तान्कुल्माषान पत्युर्हस्तात्प्र तिगृह्य निदधौ निक्षिप्तवती ॥

**स ह प्रात सजिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्राꣳ राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥**

स तस्या कर्म जानन् प्रात उष काले सजिहान शयन निद्रा वा परित्यजन उवाच पत्न्या शृण्वन्त्या —यत् यदि बतेति खिद्यमान अन्नस्य स्तोक लभेमहि, तद्भुक्त्वान्न समर्थो गत्वा लभेमहि धनमात्रा धनस्याल्पम्, तत अस्माक जीवन भविष्यतीति । धनलाभे च कारणमाह— राजासौ नातिदूरे स्थाने यक्ष्यते, यजमानत्वात्तस्य आत्मनेपदम, स च राजा मा मा पात्रमुपलभ्य सर्वैरार्त्विज्यै ऋत्विक्कर्मभि ऋत्विक्कर्मप्रयोजनायेत्यर्थ वृणीतेति ॥

**त जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वामु यज्ञ विततमेयाय ॥ ७ ॥**

एवमुक्तवन्त जायोवाच— हन्त गृहाण हे पते इम एव ये मद्धस्ते विनिक्षिप्तास्त्वया कुल्माषा इति । तान्खादित्वा अमु यज्ञ राज्ञो वितत विस्तारितमृत्विग्भि एयाय ॥

**तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥ ८ ॥**

तत्र च गत्वा, उद्गातॄन् उद्गातृपुरुषानागत्य, आ स्तुवन्त्यस्मिन्निति आस्ताव तस्मिन्नास्तावे स्तोष्यमाणान् उपोपविवेश

समीपे उपविष्टस्तेषामित्यर्थः । उपविश्य च स ह प्रस्तोतारमुवाच ॥

**प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ता चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥**

हे प्रस्तोत इत्यामन्त्र्य अभिमुखीकरणाय, या देवता प्रस्ताव प्रस्तावभक्तिम् अनुगता अन्वायत्ता, ता चत् देवता प्रस्तावभक्ते अविद्वान्सन प्रस्तोष्यसि, विदुषो मम समीपे—तत्परोक्षेऽपि चत् विपतेत्तस्य मूर्धा, कर्ममात्रविदामनधिकार एव कर्मणि स्यात्, तच्चानिष्टम्, अविदुषामपि कमान्दर्शनात् दक्षिणमार्गश्रुतेश्च, अनधिकारे च अविदुषामुत्तर एवैको माग श्रूयेत, न च स्मार्तकर्मनिमित्त एव दक्षिण पन्था, 'यज्ञेन दानेन' इत्यादिश्रुते, 'तथोक्तस्य मया' इति च विशेषणाद्विद्वत्समक्षमेव कर्मण्यनधिकार, न सवत्राग्निहोत्रस्मार्तकर्माध्ययनादिषु च, अनुज्ञायास्तत्र तत्र दर्शनात्, कर्ममात्रविदामप्यधिकार सिद्ध कर्मणीति— मूधा त विपतिष्यतीति ॥

**एवमेवोद्गातारमुवाचोद्गातर्या देवतो द्गीथमन्वायत्ता ता चेदविद्वानुद्गास्यसि**

**मूर्धा ते विपतिष्यतीति ॥ १० ॥**

**एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ता चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे ॥११॥**

**इति दशम खण्ड ॥**

एवमेवोद्गातार प्रतिहर्तारमुवाचेत्यादि समानमन्यत् । ते प्रस्तोत्रादय कर्मभ्य समारता उपरता सन्त मूर्धपातभयात् तूष्णीमासाचक्रिर अन्यच्चाकुर्वन्त , अर्थित्वात् ॥

इति दशमखण्डभाष्यम् ॥

## एकादश खण्ड ॥

अथ हैन यजमान उवाच भगवन्त वा अह विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

अथ अनन्तर ह एनम् उषस्ति यजमान राजा उवाच भगवन्त पूजावन्तम् वै अह विविदिषाणि वेदितुमिच्छामि, इत्युक्त उषस्ति अस्मि चाक्रायण तवापि श्रोत्रपथमागतो यदि— इति ह उवाच उक्तवान ॥

स होवाच भगवन्त वा अहमेभि स वैरार्त्विज्यै पर्यैषिष भगवतो वा अहम-वित्त्यान्यानवृषि ॥ २ ॥

स ह यजमान उवाच—सत्यमेवमह भगवन्त बहुगुणम श्रौषम्, सर्वैश्च ऋत्विक्कर्मभि आर्त्विज्यै पर्यैषिष पर्येषण कृतवानस्मि, अन्विष्य भगवतो वा अहम् अवित्त्या अलाभेन अन्यानिमान् अवृषि वृतवानस्मि ॥

भगवा॰स्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टा' स्तुवता

**यावत्त्वेभ्यो धन दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥**

अद्यापि भगवांस्त्वेव मे मम सर्वैरार्त्विज्यै ऋत्विक्कर्मार्थम् अस्तु, इत्युक्त तथेत्याह उषस्ति , किं तु अथैव तर्हि एते एव त्वया पूर्व वृता मया समतिसृष्टा मया सम्यक्प्रसन्नेनानुज्ञाता सन्त स्तुवताम्, त्वया त्वेतत्कार्यम्—— यावत्त्वेभ्य प्रस्तोत्रादिभ्य सर्वेभ्यो धन दद्या प्रयच्छसि, तावन्मम दद्या , इत्युक्त तथेति ह यजमान उवाच ॥

**अथ हैन प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ता चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥**

अथ ह एनम् औषस्त्य वच श्रुत्वा प्रस्तोता उपससाद उषस्ति विनयेनोपजगाम । प्रस्तोतर्या देवतेत्यादि मा मा भगवानवोचत्पूर्वम्—— कतमा सा देवता या प्रस्तावभक्ति-मन्वायत्तेति ॥

**प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसविशन्ति**

**प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥**

पृष्ट प्राण इति ह उवाच, युक्त प्रस्तावस्य प्राणो देवतेति । कथम्? सर्वाणि स्थावरजङ्गमानि भूतानि प्राणमेव अभिसंविशन्ति प्रलयकाले, प्राणमभि लक्षयित्वा प्राणात्मनैवोज्जिहते प्राणादेवोद्गच्छन्तीत्यथ उत्पत्तिकाले, अत सैषा देवता प्रस्तावमन्वायत्ता, ता चेदविद्वान् त्व प्रास्तोष्य प्रस्तवन प्रस्तावभक्ति कृतवानसि यदि, मूर्धा शिर ते व्यपतिष्यत् विपतितमभविष्यत् तथोक्तस्य मया तत्काले मूर्धा ते विपतिष्यतीति । अतस्त्वया साधु कृतम्, मया निषिद्ध कर्मणा यदुपरममकार्षीरित्यभिप्राय ॥

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता ता चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥**

तथोद्गाता पप्रच्छ कतमा सा उद्गीथभक्तिमनुगता अन्वायत्ता देवतेति ॥

**आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चै' सन्त गायन्ति सैषा देवतोद्गीथमन्वायत्ता ता चेदविद्वा नुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥**

पृष्ट आदित्य इति होवाच । सर्वाणि ह वा इमानि भूतानि आदित्यम् उच्चै ऊर्ध्वं सन्त गायन्ति शब्दयन्ति, स्तुवन्तीत्यभिप्राय , उच्छब्दसामान्यात्, प्रशब्दसामान्यादिव प्राण । अत सैषा देवतेत्यादि पूर्ववत् ॥

**अथ हैन प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ता चेदविद्वा न्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥**

एवमेवाथ ह एन प्रतिहर्ता उपससाद कतमा सा देवता प्रतिहारमन्वायत्तेति ॥

**अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीव**

न्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥

इति एकादश खण्ड ॥

पृष्ट अन्नमिति होवाच । सर्वाणि ह वा इमानि भूतान्यन्नमेव आत्मान प्रति सर्वत प्रतिहरमाणानि जीवन्ति । सैषा देवता प्रतिशब्दसामान्यात्प्रतिहारभक्तिमनुगता । समानमन्यत्तथोक्तस्य मयेति । प्रस्तावोद्गीथप्रतिहारभक्ती प्राणादित्यान्नदृष्टयोपासीतेति समुदायार्थ । प्राणाद्यापत्ति कर्मसमृद्धिर्वा फलमिति ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादश खण्ड ॥

**अथात शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेय स्वाध्यायमुद्वव्राज ॥ १ ॥**

अतीते खण्डेऽन्नाप्राप्तिनिमित्ता कष्टावस्थोक्ता उच्छिष्टोच्छिष्टपर्युषितभक्षणलक्षणा, सा मा भूदित्यन्नलाभाय अथ अनन्तर शौव श्वभिर्दृष्ट उद्गीथ उद्गान साम अत प्रस्तूयते। तत् तत्र ह किल बको नामत, दल्भस्यापत्य दाल्भ्य, ग्लावो वा नामत, मित्रायाश्चापत्य मैत्रेय, वा शब्दश्चार्थे, द्व्यामुष्यायणो ह्यसौ, वस्तुविषय क्रियास्विव विकल्पानुपपत्ते, द्विनामा द्विगोत्र इत्यादि हि स्मृति, दृश्यते च उभयत पिण्डभाक्त्वम्, उद्गीथे बद्धचित्तत्वात् ऋषावनादराद्वा। वा शब्द स्वाध्यायार्थ। स्वाध्याय कर्तुं ग्रामाद्बहि उद्वव्राज उद्गतवान्विविक्तदेशस्थोदकाभ्याशम्। 'उद्वव्राज' 'प्रतिपालयाचकार' इति च एकवचनाल्लिङ्गात् एकोऽसौ ऋषि। श्वोद्गीथकालप्रतिपालनात् ऋषे स्वाध्यायकरणमन्नकामनयेति लक्ष्यत इत्यभिप्रायत ॥

**तस्मै श्वा श्वेत प्रादुर्बभूव तमन्ये**

**श्वान उपसमेत्योचुरन्नं नो भगवानागाय-त्वशनायामवा इति ॥ २ ॥**

स्वाध्यायेन तोषिता देवता ऋषिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः सन् तस्मै ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार । तमन्ये क्षुल्लकाः श्वानः क्षुल्लकाः श्वानः उपसमेत्य ऊचुः उक्तवन्तः — अन्नं नः अस्मभ्यं भगवान् आगायतु आगानेन निष्पादयत्वित्यर्थः । मुख्यप्राणवागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः सन्तः अनुगृह्णीयुरेनं श्वरूपमादायेति युक्तमेव प्रतिपत्तुम् । अशनायाम वै बुभुक्षिताः स्मो वै इति ॥

**तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥**

एवमुक्ते श्वा श्वेत उवाच तान् क्षुल्लकान् शुनः, इहैव अस्मिन्नेव देशे मा मां प्रातः प्रातःकाले उपसमीयातेति । दैर्घ्यं छान्दसम्, समीयातेति प्रमादपाठो वा । प्रातःकालकरणं तत्काल एव कर्तव्यार्थम्, अन्नदस्य वा सवितुरपराह्णेऽनाभिमुख्यात् । तत् तत्रैव ह बको दाल्भ्यो ग्लावो वा मैत्रेयः ऋषिः प्रतिपालयाञ्चकार प्रतीक्षणं कृतवानित्यर्थः ॥

**ते ह यथैवेद बहिष्पवमानेन स्तोष्य माणा सꣳरब्धा सर्पन्तीत्येवमाससृपु स्ते ह समुपविश्य हि चक्रु ॥ ४ ॥**

ते श्वान तत्रैव आगत्य ऋषे समक्ष यथैवेह कर्मणि बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषा सरब्धा सलग्ना अन्योन्यमेव सर्पन्ति, एव मुखेनान्योन्यस्य पुच्छ गृहीत्वा आससृपु आसृप्तवन्त , परिभ्रमण कृतवन्त इत्यर्थ , त एव सꣳसृप्य समुपविश्य उपविष्टा सन्त हि चक्रु हिंकार कृतवन्त ॥

**ओ३मदा३मो३ पिबा३मो३ देवो वरुण प्रजापतिः सविता२न्नमिहा२हरदन्नपते३ ऽन्नमिहा२हरा२हरो३मिति ॥ ५ ॥**

ओमदामों पिबामों देव , द्योतनात्, वरुण वर्षणाज्जगत , प्रजापति , पालनात्प्रजानाम्, सविता प्रसवितृत्वात्सर्वस्य आदित्य उच्यते । एतै पर्यायै स एवभूत आदित्य अन्नम् अस्मभ्यम् इह आहरत् आहरत्विति । ते एव हिं कृत्वा पुनरप्यूचु — स त्व हे अन्नपते, स हि सर्वस्यान्नस्य प्रसवितृत्वात्पति , न हि तत्पाकेन विना प्रसूतमन्नमणुमात्रमपि जायते प्राणिनाम्, अतोऽन्नपति । ह अन्नपते, अन्नमस्मभ्यमिहाहराहरेति, अभ्यास आदरार्थ । ओमिति ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदश खण्ड ॥

भक्तिविषयोपासन सामावयवसबद्धमित्यत सामावयवा न्तरस्तोभाक्षरविषयाण्युपासनान्तराणि सहतान्युपदिश्यन्ते ऽनन्तरम्, तेषा सामावयवसबद्धत्वाविशेषात्—

**अय वाव लोको हाउकारो वायुर्हाइ कारश्चन्द्रमा अथकार । आत्मेहकारो-ऽग्निरीकार ॥ १ ॥**

अय वाव अयमेव लोक हाउकार स्तोभो रथतरे साम्नि प्रसिद्ध —'इय वै रथतरम्' इत्यस्मात्सबन्धसामान्या-त् हाउकारस्तोभोऽय लोक इत्येवमुपासीत । वायुर्हाइकार, वामदेव्ये सामनि हाइकार प्रसिद्ध, वाग्वप्सबन्धश्च वामदेव्यस्य साम्नो योनि इत्यस्मात्सामान्यात् हाइकार वायुदृष्टयोपासीत । चन्द्रमा अथकार, चन्द्रदृष्टया अथ-कारमुपासीत, अन्ने हीद स्थितम्, अन्नात्मा चन्द्र, थकाराकारसामान्याच्च । आत्मा इहकार, इहेति स्तोभ, प्रत्यक्षो ह्यात्मा इहेति व्यपदिश्यते, इहेति च स्तोभ, तत्सामान्यात् । अग्निरीकार, ईनिधनानि च आग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यात् ॥

**आदित्य ऊकारो निहव एकारो विश्वे देवा औहोयिकार प्रजापतिर्हिंकार. प्रा-ण' स्वरोऽन्न या वाग्विराट् ॥ २ ॥**

आदित्य ऊकार , उच्चैरूर्ध्वं सन्तमादित्य गायन्तीति ऊ कारश्चाय स्तोभ , आदित्यदैवत्ये साम्नि स्तोभ इति आदित्य ऊकार । निहव इत्याह्वानम्, एकार स्तोभ , एहीति च आह्वयन्तीति तत्सामान्यात् । विश्वदेवा औहोयिकार , वैश्व देव्ये साम्नि स्तोभस्य दर्शनात् । प्रजापतिर्हिंकार , आनि रुक्त्यात्, हिंकारस्य च अव्यक्तत्वात् । प्राण स्वर , स्वर इति स्तोभ , प्राणस्य च स्वरहेतुत्वसामान्यात् । अन्न या या इति स्तोभ अन्नम्, अन्नेन हीद यातीत्यतस्तत्सामा न्यात् । वागिति स्तोभो विराट् अन्न देवताविशेषो वा, वैराजे साम्नि स्तोभदर्शनात् ॥

**अनिरुक्तस्त्रयोदश' स्तोभ' सचरो हु-कार ॥ ३ ॥**

अनिरुक्त अव्यक्तत्वादिद चेद चेति निर्वक्तु न शक्यत इत्यत सचर विकल्प्यमानस्वरूप इत्यर्थ । कोऽसाविति, आह— त्रयोदश स्तोभ हुकार । अव्यक्तो ह्ययम्, अतो-ऽनिरुक्तविशेष एवोपास्य इत्यभिप्राय ॥

स्तोभाक्षरोपासनाफलमाह—

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहो-ऽन्नवानन्नादो भवति य एतामेवꣳ साम्ना-मुपनिषदं वेदोपनिषदं वेदेति ॥ ४ ॥**

इति त्रयोदशः खण्डः ॥

दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम् । य एतामेव यथोक्तल क्षणां साम्नां सामावयवस्तोभाक्षरविषयाम् उपनिषदं दर्शनं वेद, तस्य एतद्यथोक्तं फलमित्यर्थः । द्विरभ्यास अध्यायपरि समाप्त्यर्थः । सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थः इति-शब्दः इति ॥

इति त्रयोदशखण्डभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव त्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः समाप्तः ॥

# ॥ द्वितीयोऽध्यायः ॥

'ओमित्येतदक्षरम्' इत्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम् । अनन्तरं च स्तोभाक्षरविषयमुपासनमुक्तम्— सर्वथापि सामैकदेशसंबद्धमेव तदिति । अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः । युक्तं हि एकदेशोपासनानन्तरमेकदेशिविषयमुपासनमुच्यत इति ॥

**समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥**

समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य च इत्यर्थः । खल्विति वाक्यालंकारार्थः । साम्न उपासनं साधु । समस्ते साम्नि साधुदृष्टिविधिपरत्वान्न पूर्वोपासननिन्दार्थत्वं साधुशब्दस्य । ननु पूर्वत्राविद्यमानं साधुत्वं

समस्ते साम्न्यभिधीयते। न, 'साधु सामेत्युपास्ते' इत्युपसंहारात्। साधुशब्दः शोभनवाची। कथमवगम्यत इति, आह—यत्खलु लोके साधु शोभनमनवद्यं प्रसिद्धम्, तत्सामेत्याचक्षते कुशलाः। यदसाधु विपरीतम्, तदसामेति ॥

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥**

तत् तत्रैव साध्वसाधुविवेककरणे उताप्याहुः—साम्ना एनं राजानं सामन्तं च उपागात् उपगतवान्, कोऽसौ? यतः असाधुत्वप्राप्त्याशङ्का स इत्यभिप्रायः, शोभनाभिप्रायेण साधुना एनमुपागात् इत्येव तत् तत्र आहुः लौकिकाः बन्धनाद्यसाधुकार्यमपश्यन्तः। यत्र पुनर्विपर्ययेण बन्धनाद्यसाधुकार्यं पश्यन्ति, तत्र असाम्ना एनमुपागादिति असाधुनैनमुपागादित्येव तदाहुः ॥

**अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥**

अथोताप्याहु स्वसवेद्य साम न अस्माक बतेति अनुक-म्पयन्त सवृत्तमित्याहु , एतत्तैरुक्त भवति, यत्साधु भवति साधु बतेत्येव तदाहु , विपर्यये जाते असाम नो बतेति, यदसाधु भवति असाधु बतेत्येव तदाहु , तस्मात्सामसाधु शब्दयोरेकार्थत्व सिद्धम् ॥

**स य एतदेव विद्वान्साधु सामेत्युपा-स्तेऽभ्याशो ह यदेन१ साधवो धर्मा आ च गच्छेयुरुप च नमेयु ॥ ४ ॥**

इति प्रथम खण्ड ॥

अत स य कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्त साम साधुगुणवद्विद्वान् , तस्यैतत्फलम् अभ्याशो ह क्षिप्र ह, यत् इति क्रियाविशेषणार्थम् , एनम् उपासक साधव शोभना धर्मा श्रुतिस्मृत्यविरुद्धा आ च गच्छेयु आगच्छेयुश्च , न केवलमागच्छेयु , उप च नमेयु उपनमेयुश्च, भोग्यत्वेनोपतिष्ठयुरित्यर्थ ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीयः खण्डः ॥

लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिंकारः । अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥

कानि पुनस्तानि साधुदृष्टिविशिष्टानि, समस्तानि सामान्युपास्यानीति, इमानि तान्युच्यन्ते— लोकेषु पञ्चविधम् इत्यादीनि । ननु लोकादिदृष्ट्या तान्युपास्यानि साधुदृष्ट्या च इति विरुद्धम्, न, साध्वर्थस्य लोकादिकार्येषु कारणस्यानुगतत्वात्— मृदादिवद्घटादिविकारेषु । साधुशब्दवाच्योऽर्थो धर्मो ब्रह्म वा सर्वथापि लोकादिकार्येष्वनुगतम् । अतः यथा यत्र घटादिदृष्टिः मृदादिदृष्ट्यनुगतैव सा, तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः— धर्मादिकार्यत्वाल्लोकादीनाम् । यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोः, तथापि धर्म एव साधुशब्दवाच्य इति युक्तम्, साधुकारी साधुर्भवति इति धर्मविषये साधुशब्दप्रयोगात् । ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैव तद्दृष्टिरिति 'साधु सामेत्युपास्ते' इति न वक्तव्यम्,

न, शास्त्रगम्यत्वात्तद्दृष्टे , सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या , न विद्यमाना अप्यशास्त्रीया ॥

लोकेषु पृथिव्यादिषु पञ्चविध पञ्चभक्तिभेदेन पञ्चप्रकार साधु समस्त सामोपासीत । कथम् ? पृथिवी हिंकार । लोकेष्विति या सप्तमी, ता प्रथमात्वेन विपरिणमय्य पृथिवीदृष्टया हिंकारे पृथिवी हिंकार इत्युपासीत । व्यत्यस्य वा सप्तमीश्रुतिं लोकविषया हिंकारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत । तत्र पृथिवी हिंकार , प्राथम्यसामान्यात् । अग्नि प्रस्ताव । अग्नौ हि कर्माणि प्रस्तूयन्ते । प्रस्तावश्च भक्ति । अन्तरिक्षमुद्गीथ । अन्तरिक्ष हि गगनम् । गकारविशिष्टश्चोद्गीथ । आदित्य प्रतिहार , प्रतिप्राण्यभिमुखत्वान्मा प्रति मा प्रतीति । द्यौर्निधनम् । दिवि निधीयन्ते हि इतो गता इत्यूर्ध्वेषूर्ध्वगतेषु लोकदृष्ट्या सामोपासनम् ॥

**अथावृत्तेषु द्यौर्हिंकार आदित्य प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्नि प्रतिहार पृथिवी निधनम् ॥ २ ॥**

अथ आवृत्तेषु अवाङ्मुखेषु पञ्चविधमुच्यते सामोपासनम् । गत्यागतिविशिष्टा हि लोका । यथा ते, तथादृ-

ष्टयैव सामोपासन विधीयते यत, अत आवृत्तेषु लोकेषु। द्यौर्हिंकार, प्राथम्यात्। आदित्य प्रस्ताव, उदिते ह्यादित्ये प्रस्तूयन्ते कर्माणि प्राणिनाम्। अन्तरिक्षमुद्गीथ पूर्ववत्। अग्नि प्रतिहार, प्राणिभि प्रतिहरणादग्ने। पृथिवी निधनम्, तत आगतानामिह निधनात्॥

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेव विद्वाँल्लोकेषु पञ्चविध सामोपास्ते॥ ३॥**

इति द्वितीय खण्ड॥

उपासनफल— कल्पन्ते समर्था भवन्ति ह अस्मै लोका ऊर्ध्वाश्च आवृत्ताश्च, गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठन्त इत्यर्थ। य एतदेव विद्वान लोकेषु पञ्चविध समस्त साधु सामेत्युपास्ते इति सर्वत्र योजना पञ्चविधे सप्तविधे च॥

इति द्वितीयखण्डभाष्यम्॥

## तृतीय खण्ड ॥

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनम् ॥ १ ॥**

वृष्टौ पञ्चविध साम उपासीत । लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्यम् । पुरोवातो हिंकार । पुरोवाताद्युद्ग्रहणान्ता हि वृष्टि, यथा साम हिंकारादिनिधनान्तम्, अत पुरोवातो हिंकार, प्राथम्यात् । मेघो जायते स प्रस्ताव, प्रावृषि मेघजनने वृष्टे प्रस्ताव इति हि प्रसिद्धि, वर्षति स उद्गीथ, श्रैष्ठ्यात्, विद्योतते स्तनयति स प्रतिहार, प्रतिहृतत्वात्, उद्गृह्णाति तत् निधनम्, समाप्तिसामान्यात् ॥

**वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥**

इति तृतीय खण्ड ॥

फलमुपासनस्य— वर्षति ह अस्मै इच्छात । तथा वर्षयति ह असत्यामपि वृष्टौ । य एतदित्यादि पूर्ववत् ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थ खण्ड ॥

**सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत्सम्प्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥**

सर्वास्वप्सु पञ्चविधं साम उपासीत । वृष्टिपूर्वकत्वात्सर्वासामपामानन्तर्यम् । मेघो यत्सम्प्लवते एकीभावेनेतरतरं घनीभवति मेघः यदा उन्नतः, तदा सम्प्लवते इत्युच्यते, तदा अपामारम्भः स हिंकारः, यद्वर्षति स प्रस्तावः, आपः सर्वतो व्याप्तुं प्रस्तुताः । याः प्राच्यः स्यन्दन्ते स उद्गीथः, श्रैष्ठ्यात्, याः प्रतीच्यः स प्रतिहारः, प्रतिशब्दसामान्यात्, समुद्रो निधनम्, तन्निधनत्वादपाम् ॥

**न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥**

इति चतुर्थः खण्डः ॥

न ह अप्सु प्रैति । नेच्छति चेत् । अप्सुमान् अम्मान्भवति फलम् ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चम खण्ड ॥

**ऋतुषु पञ्चविधᳶ सामोपासीत वसन्तो हिंकारो ग्रीष्म' प्रस्तावो वर्षा उद्गीथ शरत्प्रतिहारो हेमन्तो निधनम् ॥१॥**

ऋतुषु पञ्चविध साम उपासीत । ऋतुव्यवस्थाया यथोक्ताम्बुनिमित्तत्वादानन्तयम् । वसन्तो हिंकार, प्राथम्यात्, ग्रीष्म प्रस्ताव, यवादिसग्रह प्रस्तूयते हि प्रावृडर्थम्, वर्षा उद्गीथ, प्राधान्यात्, शरत् प्रतिहार, रोगिणा मृताना च प्रतिहरणात्, हेमन्तो निधनम, निवाते निधनात्प्राणिनाम् ॥

**कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेव विद्वानृतुषु पञ्चविधᳶ सामोपास्ते ॥ २ ॥**

इति पञ्चम खण्ड ॥

फलम्——कल्पन्ते ह ऋतुव्यवस्थानुरूप भोग्यत्वेनास्मै उपासकाय ऋतव । ऋतुमान् आर्तवैर्भोगैश्च सपन्नो भवतीत्यथ ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठ' खण्ड ॥

---

**पशुषु पञ्चविधꣳ सामोपासीताजा हिंकारोऽवय' प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहार' पुरुषो निधनम् ॥ १ ॥**

पशुषु पञ्चविध साम उपासीत । सम्यग्वृत्तेष्वृतुषु पश्वय काल इत्यानन्तर्यम् । अजा हिंकार , प्राधान्यात् , प्राथम्याद्वा— 'अज पशूना प्रथम ' इति श्रुते , अवय प्रस्ताव , साहचर्यदर्शनादजावीनाम् , गाव उद्गीथ , श्रैष्ठ्यात् , अश्वा प्रतिहार , प्रतिहरणात्पुरुषाणाम् , पुरुषो निधनम् , पुरुषाश्रयत्वात्पशूनाम् ॥

**भवन्ति हास्य पशव. पशुमान्भवति य एतदेव विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥**

इति षष्ठः खण्डः ॥

फलम्—भवन्ति ह अस्य पशव पशुमान्भवति, पशुफलैश्च भोगत्यागादिभिर्युज्यत इत्यर्थ ॥

इति षष्ठखण्डभाष्यम् ॥

## सप्तम खण्ड ॥

प्राणेषु पञ्चविध परोवरीय' सामोपासीत प्राणो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथ' श्रोत्र प्रतिहारो मनो निधन परोवरीयाꣳसि वा एतानि ॥ १ ॥

प्राणेषु पञ्चविध परोवरीय साम उपासीत, पर पर वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्ट सामोपासीतेत्यर्थ । प्राणो हिंकार , उत्तरोत्तरवरीयसा प्राथम्यात् , वाक् प्रस्ताव , वाचा हि प्रस्तूयते सर्वम् , वाग्वरीयसी प्राणात्— अप्राप्तमप्युच्यते वाचा, प्राप्तस्यैव तु गन्धस्य ग्राहक प्राण , चक्षुरुद्गीथ , वाचो बहुतरविषय प्रकाशयति चक्षु , अता वरीया वाच उद्गीथ , श्रैष्ठ्यात् , श्रोत्र प्रतिहार , प्रतिहृतत्वात् , वरीयश्चक्षुष , सर्वत श्रवणात् , मनो निधनम् , मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्वेन्द्रियाहृता विषया , वरीयस्त्व च श्रोत्रान्मनस , सर्वेन्द्रियविषयव्यापकत्वात् , अतीन्द्रियविषयोऽपि मनसो गोचर एवेति । यथोक्तहेतुभ्य परोवरीयासि प्राणादीनि वै एतानि ॥

**परोवरीयो ह्यस्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेव विद्वान्प्राणेषु पञ्चविध परोवरीय सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥**

**इति सप्तम खण्ड ॥**

एतद्दृष्टया विशिष्ट य परोवरीय साम उपास्ते, परावरीयो ह अस्य जीवन भवतीत्युक्तार्थम । इति तु पञ्चविधस्य साम्न उपासनमुक्तमिति सप्तविधे वक्ष्यमाणविषये बुद्धिसमाधानार्थम । निरपेक्षो हि पञ्चविधे, वक्ष्यमाणे बुद्धिं समाधित्सति ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टम. खण्ड ॥

**अथ सप्तविधस्य वाचि सप्तविध५ सा मोपासीत यत्किंच वाचो हुमिति स हिंकारो यत्प्रेति स प्रस्तावो यदेति स आदि. ॥**

अथ अनन्तर सप्तविधस्य समस्तस्य साम्न उपासन साध्विदमारभ्यते। वाचि इति सप्तमी पूर्ववत्, वाग्दृष्टि-विशिष्ट सप्तविध सामोपासीतेत्यर्थ । यत्किंच वाच शब्दस्य हुमिति यो विशेष स हिंकार, हकारसामान्यात्। यत्प्रेति शब्दरूप स प्रस्ताव, प्र सामान्यात्। यत् आ इति स आदि, आकारसामान्यात्। आदिरित्योंकार, सर्वादित्वात्॥

**यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम्॥**

यदुदिति स उद्गीथ, उत्पूर्वत्वादुद्गीथस्य, यत्प्रतीति स प्रतिहार, प्रतिसामान्यात्, यदुपेति स उपद्रव, उपोपक्र-मत्वादुपद्रवस्य, यन्नीति तन्निधनम्, नि शब्दसामान्यात॥

**दुग्धेऽस्मै वाग्दोह् यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेव विद्वान्वाचि सप्तविध५ सामोपास्ते ॥ ३ ॥**

दुग्धेऽस्मै इत्याद्युक्तार्थम्॥

इति अष्टमखण्डभाष्यम्॥

## नवम खण्ड ॥

**अथ खल्वमुमादित्यꣳ सप्तविधꣳ सा-मोपासीत सर्वदा समस्तेन साम मा प्रति मा प्रतीति सर्वेण समस्तेन साम ॥**

अवयवमात्रे साम्न्यादित्यदृष्टि पञ्चविधेषूक्ता प्रथमे चाध्याये । अथ इदानीं खलु अमुमादित्य समस्ते साम्न्य-वयवविभागशोऽध्यस्य सप्तविध सामोपासीत । कथ पुन सामत्वमादित्यस्येति, उच्यते— उद्गीथत्वे हेतुवदादित्यस्य सामत्वे हेतु । कोऽसौ² सर्वदा सम वृद्धिक्षयाभावात्, तेन हेतुना साम आदित्य । मा प्रति मा प्रतीति तुल्या बुद्धि मुत्पादयति, अत सर्वेण सम , अत साम, समत्वादित्यर्थ । उद्गीथभक्तिसामान्यवचनादेव लोकादिषूक्तसामान्यात हिं-कारादित्व गम्यत इति हिंकारादित्वे कारण नोक्तम् । सामत्वे पुन सवितुरनुक्त कारण न सुबोधमिति समत्व-मुक्तम् ॥

**तस्मिन्निमानि सर्वाणि भूतान्यन्वाय-त्तानीति विद्यात्तस्य यत्पुरोदयात्स हिं-**

**कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हि कुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥**

तस्मिन् आदित्ये अवयवविभागश इमानि वक्ष्यमाणानि सर्वाणि भूतानि अन्वायत्तानि अनुगतान्यादित्यमुपजीव्यत्वेन इति विद्यात् । कथम्? तस्य आदित्यस्य यत्पुरोदयात् धर्मरूपम्, स हिंकार भक्ति, तत्रेद सामान्यम्, यत्तस्य हिंकारभक्तिरूपम् । तदस्यादित्यस्य साम्न पशव गवादय अन्वायत्ता अनुगता तद्भक्तिरूपमुपजीवन्तीत्यर्थ । यस्मादेवम्, तस्मात्ते हिं कुर्वन्ति पशव प्रागुदयात् । तस्माद्धिंकारभाजिनो हि एतस्य आदित्याख्यस्य साम्न, तद्भक्तिभजनशीलत्वाद्धि त एव वर्तन्ते ॥

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामा प्रशꣳसाकामा प्रस्तावभाजिनो ह्येतस्य साम्न ॥ ३ ॥**

अथ यत्प्रथमोदिते सवितृरूपम्, तदस्य आदित्याख्यस्य साम्न स प्रस्ताव, तदस्य मनुष्या अन्वायत्ता पूर्ववत् । त

स्मात्ते प्रस्तुतिं प्रशंसां कामयन्ते, यस्मात्प्रस्तावभाजिनो हि एतस्य साम्नः ॥

**अथ यत्सङ्गववेलायाँ स आदिस्त दस्य वयाँस्यन्वायत्तानि तस्मात्तान्य-न्तरिक्षेऽनारम्बणान्यादायात्मानं परिप तन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥**

अथ यत् संगववेलायां गवां रश्मीनां संगमनं संगवो यस्यां वेलायाम्, गवां वा वत्सैः सह, सा संगववेला तस्मि-न्काले यत्सावित्रं रूपम्, स आदिः भक्तिविशेष ओंकारः । तदस्य वयांसि पक्षिणोऽन्वायत्तानि । यत एवम्, तस्मात् तानि वयांसि अन्तरिक्षे अनारम्बणानि अनालम्बनानि, आ-त्मानमादाय आत्मानमेव आलम्बनत्वेन गृहीत्वा, परिपत न्ति गच्छन्ति, अत आकारसामान्यादादिभक्तिभाजीनि हि एतस्य साम्नः ॥

**अथ यत्संप्रतिमध्यंदिने स उद्गीथस्त-दस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य सा म्नः ॥ ५ ॥**

अथ यत् सप्रतिमध्यदिने ऋजुमध्यदिने इत्यर्थ , स उद्गीथभक्ति , तदस्य देवा अन्वायत्ता , द्योतनातिशयात्त-त्काले । तस्मात्ते सत्तमा विशिष्टतमा प्राजापत्याना प्रजा-पत्यपत्यानाम् , उद्गीथभाजिनो हि एतस्य साम्न ॥

**अथ यदूर्ध्वं मध्यदिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मा त्ते प्रतिहृतानावपद्यन्ते प्रतिहारभाजि नो ह्येतस्य साम्न ॥ ६ ॥**

अथ यदूर्ध्वं मध्यदिनात् प्रागपराह्णात् यद्रूप सवितु , स प्रतिहार , तदस्य गर्भा अन्वायत्ता । अत ते सवितु प्रतिहारभक्तिरूपेणोर्ध्वं प्रतिहृता सन्त नावपद्यन्ते नाध पतन्ति, तद्द्वारे सत्यपीत्यर्थ । यत प्रतिहारभाजिना हि एतस्य साम्नो गर्भा ॥

**अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स-उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुष दृष्ट्वा कक्षऽ श्वभ्रमित्युपद्रवन्त्युपद्र-वभाजिनो ह्येतस्य साम्न. ॥ ७ ॥**

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रव , तदस्य आरण्या पशव अन्वायत्ता । तस्मात्ते पुरुष दृष्ट्वा भीता कक्षम् अरण्य श्वभ्र भयशून्यमिति उपद्रवन्ति उपगच्छन्ति , दृष्ट्वोपद्रवणात् उपद्रवभाजिनो हि एतस्य साम्न ॥

**अथ यत्प्रथमास्तमिते तन्निधन तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एव खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥**

इति नवम खण्ड ॥

अथ यत् प्रथमास्तमितेऽदर्शन जिगमिषति सवितरि, तन्निधनम् , तदस्य पितर अन्वायत्ता , तस्मात्तान्निदधति— पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति तान् , तदर्थं पिण्डान्वा स्थापयन्ति । निधनसबन्धान्निधनभाजिनो हि एतस्य साम्न पितर । एवमवयवश सप्तधा विभक्त खलु अमुमादित्य सप्तविध सामोपास्ते य , तस्य तदापत्ति फलमिति वाक्यशेष ॥

इति नवमखण्डभाष्यम् ॥

## दशम खण्ड ॥

मृत्यु आदित्य, अहोरात्रादिकालेन जगत प्रमापयितृत्वान् । तस्य अतितरणाय इद सामोपासनमुपदिश्यते—

**अथ खल्वात्मसमितमतिमृत्यु सप्तविध॰ सामोपासीत हिंकार इति त्र्यक्षर प्रस्ताव इति त्र्यक्षर तत्समम् ॥ १ ॥**

अथ खलु अनन्तरम्, आदित्यमृत्युविषयसामोपासनस्य, आत्मसमित स्वावयवतुल्यतया मितम्, परमात्मतुल्यतया वा समितम्, अतिमृत्यु, मृत्युजयहेतुत्वात्, यथा प्रथमेऽध्याये उद्गीथभक्तिनामाक्षराणि उद्गीथ इत्युपास्यत्वेनोक्तानि, तथेह साम्न सप्तविधभक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभि समतया सामत्व परिकल्प्य उपास्यत्वेन उच्यन्ते । तदुपासन मृत्युगोचराक्षरसख्यासामान्येन मृत्यु प्राप्य, तदतिरिक्ताक्षरेण तस्य आदित्यस्य मृत्योरतिक्रमणायैव सक्रमण कल्पयति । अतिमृत्यु सप्तविध साम उपासीत, मृत्युमतिक्रान्तमतिरिक्ताक्षरसख्यया इत्यतिमृत्यु साम । तस्य प्रथमभक्तिनामाक्षराणि हिंकार इति, एतत् त्र्यक्षर भक्तिनाम । प्रस्ताव इति च भक्तेस्त्र्यक्षरमेव नाम, तत् पूर्वेण समम् ॥

**आदिरिति द्व्यक्षर प्रतिहार इति चतु-**

**रक्षर तत इहैक तत्समम् ॥ २ ॥**

आदिरिति द्व्यक्षरम , सप्तविधस्य साम्न सख्यापूरणे ओकार आदिरित्युच्यते। प्रतिहार इति चतुरक्षरम् । तत इहैकमक्षरमवच्छिद्य आद्यक्षरयो प्रक्षिप्यते , तेन तत् सममेव भवति ॥

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षर त्रिभिस्त्रिभि सम भवत्यक्षरमतिशिष्यते त्र्यक्षर तत्समम् ॥ ३ ॥**

उद्गीथ इति त्र्यक्षरम् उपद्रव इति चतुरक्षर त्रिभिस्त्रिभि सम भवति । अक्षरमतिशिष्यत अतिरिच्यत । तेन वैषम्ये प्राप्ते, साम्न समत्वकरणाय आह— तदकमपि सदक्षरमिति त्र्यक्षरमेव भवति । अत तत् समम ॥

**निधनमिति त्र्यक्षर तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥**

निधनमिति त्र्यक्षर तत्सममेव भवति । एव त्र्यक्षरसमतया सामत्व सपाद्य यथाप्राप्तान्येवाक्षराणि सख्यायन्ते —तानि ह वा एतानि सप्तभक्तिनामाक्षराणि द्वाविशति ॥

**एकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाक तद्विशोकम् ॥ ५ ॥**

तत्रैकविंशत्यक्षरसख्यया आन्त्यमाप्नोति मृत्युम् । यस्मादेकविंश इत अस्माल्लोकात् असावादित्य सख्यया । 'द्वादश मासा पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश ' इति श्रुते , अतिशिष्टेन द्वाविंशेनाक्षरेण पर मृत्यो आदित्यात् जयति आप्नोतीत्यर्थ । यच्च तदादित्यात्परम, किं तत्? नाकम् , कमिति सुख तस्य प्रतिषेधोऽक तन्न भवतीति नाकम् , कमेवेत्यर्थ , अमृत्युविषयत्वात् । विशोक च तत विगतशोक मानसदु खरहितमित्यर्थ — तदाप्नोतीति ॥

**आप्नोति हादित्यस्य जय परो हास्यादित्यजयाज्जयो भवति य एतदेव विद्वानात्मसमितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥**

इति दशम खण्ड ॥

उक्तस्यैव पिण्डितार्थमाह—एकविंशतिसख्यया आदित्यस्य जयमनु, परा ह, अस्य एवविद आदित्यजयात् मृत्युगोचरात परो जयो भवति, द्वाविंशत्यक्षरसख्ययेत्यर्थ । य एतदेव विद्वानित्याद्युक्तार्थम , तस्यैतद्यथोक्त फलमिति। द्विरभ्यास साप्तविध्यसमाप्त्यर्थ ॥

इति दशमखण्डभाष्यम् ॥

## एकादश खण्ड ॥

**मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथ श्रोत्र प्रतिहारः प्राणो निधनमेतद्गायत्र प्राणेषु प्रोतम् ॥ १ ॥**

विना नामग्रहण पञ्चविधस्य सप्तविधस्य च साम्न उपासनमुक्तम् । अथेदानीं गायत्रादिनामग्रहणपूर्वक विशिष्टफलानि सामोपासनान्तराण्युच्यन्ते । यथाक्रम गायत्रादीना कर्मणि प्रयोग , तथैव मनो हिंकार , मनस सर्वकरणवृत्तीना प्राथम्यात् । तदानन्तर्यात् वाक् प्रस्ताव , चक्षु उद्गीथ , श्रैष्ठ्यात् । श्रोत्र प्रतिहार , प्रतिहृतत्वात् । प्राणो निधनम् , यथोक्ताना प्राणे निधनात्स्वापकाल । एतद्गायत्र साम प्राणेषु प्रोतम् , गायत्र्या प्राणसस्तुतत्वात् ॥

**स एवमेतद्गायत्र प्राणेषु प्रोत वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामना स्यात्तद्व्रतम् ॥ २ ॥**

स , य एवमेतद्गायत्र प्राणेषु प्रोत वेद, प्राणी भवति , अविकलकरणो भवतीत्येतत् । सर्वमायुरेति, शत वर्षाणि सर्वमायु पुरुषस्य इति श्रुते । ज्योक् उज्ज्वल सन् जीवति । महान भवति प्रजादिभि । महाश्च कीर्त्या । गायत्रोपासकस्य एतत् व्रत भवति, यत् महामना अक्षुद्रचित्त स्यादित्यर्थ ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादश खण्ड ॥

**अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ संशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥**

अभिमन्थति स हिंकार, प्राथम्यात्। अग्नेर्धूमो जायते स प्रस्ताव, आनन्तर्यात्। ज्वलति स उद्गीथ, हवि सबन्धाच्छ्रैष्ठ्यच्च ज्वलनस्य। अङ्गारा भवन्ति स प्रतिहार, अङ्गाराणा प्रतिहृतत्वात्। उपशम, सावशेषत्वादग्ने, संशम नि शेषोपशम, समाप्तिसामान्यान्निधनम्। एतद्रथन्तरम् अग्नौ प्रोतम्। मन्थने हि अग्निर्गीयत ॥

**स य एवमेतद्रथन्तरमग्नौ प्रोत वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥**

स य इत्यादि पूर्ववत्। ब्रह्मवर्चसी वृत्तस्वाध्यायनिमित्त तेजो ब्रह्मवर्चसम्। तेजस्तु केवल त्विड्भाव। अन्नादो दीप्ताग्नि। न प्रत्यक्, अग्नेरभिमुखो न आचामेत् न भक्षयेत्किंचित्, न निष्ठीवेत् श्लेष्मनिरसन च न कुर्यात्, तद्व्रतम् ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदश खण्ड ॥

---

उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्ताव· स्त्रिया सह शेते स उद्गीथ· प्रति स्त्री सह शेते स प्रतिहारः काल गच्छति तन्निधन पार गच्छति तन्निधनमेतद्वामदेव्य मिथुने प्रोतम् ॥ १ ॥

उपमन्त्रयते सकेत करोति, प्राथम्यात् स हिंकार । ज्ञपयते तोषयति, स प्रस्ताव । सहशयनम् एकपर्यङ्कगमनम्, स उद्गीथ, श्रैष्ठ्यात् । प्रति स्त्रीं शयन स्त्रिया अभिमुखीभाव, स प्रतिहार । काल गच्छति मैथुनेन, पार समाप्तिं गच्छति तन्निधनम्, एतद्वामदेव्य मिथुने प्रोतम्, वाग्वम्बुमिथुनसम्बन्धात् ॥

स य एवमेतद्वामदेव्य मिथुने प्रोत वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्र-

**जया पशुभिर्भवति महान्कीर्त्या न का**
**चन परिहरेत्तद्व्रतम् ॥ २ ॥**

इति त्रयोदश खण्ड ॥

स य इत्यादि पूर्ववत् । मिथुनीभवति अविधुरो भवती त्यर्थ । मिथुनान्मिथुनात्प्रजायते इति अमोघरेतस्त्वमु च्यते । न काचन, काचिदपि स्त्रिय स्वात्मतल्पप्राप्ता न परि हरेत् समागमार्थिनीम्, वामदेव्यसामोपासनाङ्गत्वेन विधा नात् । एतस्मादन्यत्र प्रतिषेधस्मृतय । वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोध ॥

इति त्रयोदशखण्डभाष्यम् ॥

## चतुर्दश खण्ड. ॥

उद्यन्हिंकार उदित' प्रस्तावो मध्यंदिन उद्गीथोऽपराह्ण. प्रतिहारोऽस्त यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥ १ ॥

उद्यन्सविता स हिंकार, प्राथम्याद्दर्शनस्य । उदित प्रस्ताव, प्रस्तवनहेतुत्वात्कर्मणाम् । मध्यंदिन उद्गीथ, श्रैष्ठ्यात् । अपराह्ण प्रतिहार, पश्वादीना गृहान्प्रति हरणात् । यदस्त यस्तन्निधनम्, रात्रौ गृहे निधानात्प्राणिनाम् । एतद्बृहत् आदित्ये प्रोतम, बृहत आदित्यदैवत्यत्वात् ॥

स य एवमेतद्बृहदादित्ये प्रोत वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

इति चतुर्दश खण्डः ॥

स य इत्यादि पूर्ववत् । तपन्त न निन्देत्, तद्व्रतम् ॥

इति चतुर्दशखण्डभाष्यम् ॥

## पञ्चदश खण्ड ॥

---

अभ्राणि सम्प्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूप पर्जन्ये प्रोतम् ॥ १ ॥

अभ्राणि अब्भरणात् । मेघ उदकसेक्तृत्वात् । उक्तार्थमन्यत् । एतद्वैरूप नाम साम पर्जन्ये प्रोतम् । अनेकरूपत्वात् अभ्रादिभि पर्जन्यस्य, वैरूप्यम् ॥

स य एवमेतद्वैरूप पर्जन्ये प्रोत वेद विरूपाꣳश्च सुरूपाꣳश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्त न निन्देत्तद्व्रतम् ॥ २ ॥

इति पञ्चदश खण्ड ॥

विरूपाश्च सुरूपाश्चाजाविप्रभृतीन्पशूनवरुन्धे प्राप्नोतीत्यर्थ । वर्षन्त न निन्देत् तद्व्रतम् ॥

इति पञ्चदशखण्डभाष्यम् ॥

## षोडश. खण्ड. ॥

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो व
र्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निध-
नमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥

वसन्तो हिंकार, प्राथम्यात्। ग्रीष्म प्रस्ताव इत्यादि पूर्ववत् ॥

स य एवमेतद्वैराजमृतुषु प्रोत वेद
विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन स
र्वमायुरेति ज्योग्जीवति महान्प्रजया प
शुभिर्भवति महान्कीर्त्यर्तून्न निन्देत्तद्व्र
तम् ॥ २ ॥

इति षोडश. खण्डः ॥

एतद्वैराजमृतुषु प्रोत वेद, विराजति ऋतुवत्— यथा ऋतव आर्तवैर्धर्मैर्विराजन्ते, एव प्रजादिभिर्विद्वानिति। उक्त-मन्यत्। ऋतून्न निन्देत्, तद्व्रतम् ॥

इति षोडशखण्डभाष्यम् ॥

## सप्तदश खण्ड. ॥

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौ-
रुद्गीथो दिशः प्रतिहारः समुद्रो निधनमे-
ताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥

पृथिवी हिंकार इत्यादि पूर्ववत् । शक्वय इति नित्य बहु
वचन रेवत्य इव । लोकेषु प्रोता ॥

स य एवमेताः शक्वर्यो लोकेषु प्रोता
वेद लोकी भवति सर्वमायुरेति ज्योग्जी
वति महान्प्रजया पशुभिर्भवति महा
न्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥

इति सप्तदश खण्ड ॥

लोकी भवति लोकफलेन युज्यत इत्यर्थ । लोकान्न
निन्देत्, तद्व्रतम् ॥

इति सप्तदशखण्डभाष्यम् ॥

## अष्टादश खण्ड ॥

---

अजा हिंकारोऽवय प्रस्तावो गाव उद्गीथोऽश्वा प्रतिहार पुरुषो निधनमेता रेवत्य पशुषु प्रोता. ॥ १ ॥

अजा हिंकार इत्यादि पूर्ववत् । पशुषु प्रोता ॥

स य एवमेता रेवत्य. पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति अष्टादश. खण्ड ॥

पशून न निन्दत्, तद्व्रतम् ॥

इति अष्टादशखण्डभाष्यम् ॥

## एकोनविंश खण्ड ॥

लोम हिंकारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

लोम हिंकार, देहावयवाना प्राथम्यात्। त्वक् प्रस्ताव, आनन्तर्यात्। मासम् उद्गीथ, श्रैष्ठ्यात्। अस्थि प्रतिहार, प्रतिहृतत्वात्। मज्जा निधनम्, आन्त्यात्। एतद्यज्ञायज्ञीय नाम साम देहावयवेषु प्रोतम् ॥

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोत वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या सवत्सर मज्ज्ञो नाश्नीयात्तद्व्रत मज्ज्ञो नाश्नीयादिति वा ॥

अङ्गी भवति समग्राङ्गो भवतीत्यर्थ । नाङ्गेन हस्तपादादिना विहूर्छति न कुटिलीभवति, पङ्गु कुणी वा इत्यर्थ । सवत्सर सवत्सरमात्र मज्ज्ञो मासानि नाश्नीयात् न भक्षयेत् । बहुवचन मत्स्योपलक्षणार्थम् । मज्ज्ञो नाश्नीयात् सर्वदैव नाश्नीयादिति वा, तद्व्रतम् ॥

इति एकोनविंशखण्डभाष्यम् ॥

## विंश खण्डः ॥

**अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजन देवतासु प्रोतम् ॥ १ ॥**

अग्नि हिंकार, प्रथमस्थानत्वात्। वायु प्रस्ताव, आनन्तर्यसामान्यात्। आदित्य उद्गीथ, श्रैष्ठ्यात्। नक्षत्राणि प्रतिहार, प्रतिहृतत्वात्। चन्द्रमा निधनम्, कर्मिणा तन्निधनात्। एतद्राजन देवतासु प्रोतम्, देवताना दीप्तिमत्त्वात् ॥

**स य एवमेतद्राजन देवतासु प्रोत वेदैतासामेव देवताना सलोकता सार्ष्टिता सायुज्य गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥**

विद्वत्फलम्—एतासामेवाग्न्यादीना देवताना सलोकता समानलोकता सार्ष्टिता समानर्द्धित्व सायुज्य सयुग्भावम् एकदेहदेहित्वमित्येतत्, वा शब्दोऽत्र लुप्तो द्रष्टव्य, सलोकता वा इत्यादि, भावनाविशेषत फलविशेषोपपत्ते। गच्छति प्राप्नोति, समुच्चयानुपपत्तेश्च। ब्राह्मणान् न निन्देत्, तद्व्रतम्। 'एते वै देवा प्रत्यक्ष यद्ब्राह्मणा' इति श्रुते ब्राह्मणनिन्दा देवतानिन्दैवेति ॥

इति विंशखण्डभाष्यम् ॥

## एकविंश. खण्ड. ॥

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचय. स प्रतिहार. सर्पा गन्धर्वा पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥ १ ॥

त्रयी विद्या हिंकार । अग्न्यादिसाम्न आनन्तर्यं त्रयी विद्याया अग्न्यादिकार्यत्वश्रुते । हिंकार प्राथम्यात्सर्वकर्तव्यानाम् । त्रय इमे लोकास्तत्कार्यत्वादनन्तरा इति प्रस्ताव । अग्न्यादीनामुद्गीथत्व श्रैष्ठ्यात् । नक्षत्रादीना प्रतिहृतत्वात्प्रतिहारत्वम् । सर्पादीना धकारसामान्यान्निधनत्वम् । एतत्साम नामविशेषाभावात्सामसमुदाय सामशब्द सर्वस्मिन् प्रोतम् । त्रयीविद्यादि हि सर्वम् । त्रयीविद्यादिदृष्ट्या हिंकारादिसामभक्तय उपास्या । अतीतेष्वपि सामोपासनेषु येषु येषु प्रोत यद्यत्साम, तद्दृष्ट्या तदुपास्यमिति । कर्माङ्गाना दृष्टिविशेषेणेवाज्यस्य सस्कार्यत्वात् ॥

स य एवमेतत्साम सर्वस्मिन्प्रोत वेद सर्वꣳ ह भवति ॥ २ ॥

सर्वविषयसामविद फलम्—सर्वं ह भवति सर्वेश्वरो भवतीत्यर्थ । निरुपचरितसर्वभावे हि दिक्स्थेभ्यो बलिप्राप्त्यनुपपत्ति ॥

**तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्याय परमन्यदस्ति ॥**

तत् एतस्मिन्नर्थे एष श्लोक मन्त्रोऽप्यस्ति । यानि पञ्चधा पञ्चप्रकारेण हिंकारादिविभागै प्रोक्तानि त्रीणि त्रीणि त्रयीविद्यादीनि, तेभ्य पञ्चत्रिकेभ्य ज्याय महत्तर पर च व्यतिरिक्तम् अन्यत् वस्त्वन्तर नास्ति न विद्यत इत्यर्थ । तत्रैव हि सर्वस्यान्तर्भाव ॥

**यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रत तद्व्रतम् ॥ ४ ॥**

इति एकविंशः खण्डः ॥

य तत् यथोक्त सर्वात्मक साम वेद, स वेद सर्व स सर्वज्ञो भवतीत्यर्थ । सर्वा दिश सर्वदिक्स्था अस्मै एवंविदे बलिं भोग हरन्ति प्रापयन्तीत्यर्थ । सर्वम् अस्मि भवामि इति एवम् एतत्साम उपासीत, तस्य एतदेव व्रतम् । द्विरुक्ति सामोपासनसमाप्त्यर्था ॥

इति एकविंशखण्डभाष्यम् ॥

## द्वाविंश खण्ड ॥

---

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्त सोमस्य मृदु श्लक्ष्ण वायो श्लक्ष्ण बलवदिन्द्रस्य क्रौञ्च बृहस्पतेरपध्वान्त वरुणस्य तान्सर्वानेवोपसेवेत वारुण त्वेव वर्जयेत् ॥ १ ॥

सामोपासनप्रसङ्गेन गानविशेषादिसपत् उद्गातुरुपदिश्यते, फलविशेषसबन्धात् । विनर्दि विशिष्टो नर्द स्वरविशेष ऋषभकूजितसमोऽस्यास्तीति विनर्दि गानमिति वाक्यशेष । तच्च साम्न मबन्धि पशुभ्यो हित पशव्यम् अग्ने अग्निदेवत्य च उद्गीथ उद्गानम् । तदहमेवविशिष्ट वृणे प्रार्थये इति कश्चिद्यजमान उद्गाता वा मन्यते । अनिरुक्त अमुकसम इत्यविशेषित प्रजापते प्रजापतिदेवत्य स गानविशेष , आनिरुक्त्यात्प्रजापते । निरुक्त स्पष्ट । सोमस्य सोमदेवत्य स उद्गीथ इत्यथ । मृदु श्लक्ष्ण च गान वायो वायुदेवत्य तत् । श्लक्ष्ण बलवच्च प्रयत्नाधिक्योपेत च इन्द्रस्य ऐन्द्र तद्गानम् । क्रौञ्च क्रौञ्चपक्षिनिनादसम बृहस्पते बार्हस्पत्य तत् । अप-

ध्वान्त भिन्नकास्यस्वरसम वरुणस्य एतद्गानम् । तान्सर्वानेवोपसेवेत प्रयुञ्जीत वारुण त्वेवैक वर्जयेत् ॥

**अमृतत्व देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशा मनुष्येभ्यस्तृणोदक पशुभ्य स्वर्ग लोक यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्त स्तुवीत ॥ २ ॥**

अमृतत्व देवेभ्य आगायानि साधयानि, स्वधा पितृभ्य आगायानि, आशा मनुष्येभ्य, आशा प्रार्थना प्रार्थितमित्येतत्, तृणोदक पशुभ्य, स्वर्ग लोक यजमानाय, अन्नम् आत्मने मह्यम् आगायानि, इत्येतानि मनसा चिन्तयन् ध्यायन् अप्रमत्त स्वरोष्मव्यञ्जनादिभ्य स्तुवीत ॥

**सर्वे स्वरा इन्द्रस्यात्मान. सर्व ऊष्माण प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्त यदि स्वरेषूपालभेतेन्द्र॑शरण प्रपन्नोऽभूव स त्वा प्रति वक्ष्यतीत्येन ब्रूयात् ॥ ३ ॥**

सर्वे स्वरा अकारादय इन्द्रस्य बलकर्मण प्राणस्य आत्मान देहावयवस्थानीया । सर्वे ऊष्माण शषसहादय प्रजापतेर्विराज कश्यपस्य वा आत्मान । सर्वे स्पर्शा कादयो व्यञ्जनानि मृत्योरात्मान । तमेवविदमुद्गातार यदि कश्चित् स्वरेषूपालभेत– स्वरस्त्वया दुष्ट प्रयुक्त इति, एवमु पालब्ध इन्द्र प्राणमीश्वर शरणम् आश्रय प्रपन्नोऽभूव स्वरान्प्रयुञ्जानोऽहम्, स इन्द्र यत्तव वक्तव्य त्वा त्वा प्रति वक्ष्यति स एव देव उत्तर दास्यतीत्येन ब्रूयात् ॥

**अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरण प्रपन्नोऽभूव स त्वा प्रति पेक्ष्यतीत्येन ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳशरण प्रपन्नोऽभूव स त्वा प्रति धक्ष्यतीत्येन ब्रूयात् ॥ ४ ॥**

अथ यद्येनमूष्मसु तथैवोपालभेत, प्रजापतिं शरण प्रपन्नोऽभूवम्, स त्वा प्रति पेक्ष्यति सचूर्णयिष्यतीत्येन ब्रूयात् । अथ यद्येन स्पर्शेषूपालभेत, मृत्यु शरण प्रपन्नोऽभूवम, स त्वा प्रति धक्ष्यति भस्मीकरिष्यतीत्येन ब्रूयात् ॥

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्त**

व्या इन्द्रे बलं ददानीति सर्व ऊष्माणो ऽग्रस्ता अनिरस्ता विवृता वक्तव्या' प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥

इति द्वाविंशः खण्डः ॥

यत इन्द्राद्यात्मानः स्वरादयः, अतः सर्वे स्वरा घोषवन्तः बलवन्तो वक्तव्याः । तथा अहमिन्द्रे बलं ददानि बलमादधानीति । तथा सर्वे ऊष्माणः अग्रस्ताः अन्तरप्रवेशिताः अनिरस्ताः बाहरप्रक्षिप्ताः विवृताः विवृतप्रयत्नोपेताः । प्रजापतेरात्मानं परिददानि प्रयच्छानीति । सर्वे स्पर्शा लेशेन शनकैः अनभिनिहिताः अनभिनिक्षिप्ता वक्तव्याः । मृत्यो रात्मानं बालानिव शनकैः परिहरन् मृत्योरात्मानं परिहराणीति ॥

इति द्वाविंशखण्डभाष्यम् ॥

## त्रयोविंश. खण्ड ॥

त्रयो धर्मस्कन्धा यज्ञोऽध्ययन दान-
मिति प्रथमस्तप एव द्वितीयो ब्रह्मचा-
र्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मा-
नमाचार्यकुलेऽवसादयन्सर्व एते पुण्य-
लोका भवन्ति ब्रह्मस स्थोऽमृतत्व-
मेति ॥ १ ॥

ओंकारस्योपासनविध्यर्थं त्रयो धमस्कन्धा इत्याद्यार भ्यते । नैव मन्तव्य सामावयवभूतस्यैवोद्गीथादिलक्षणस्यो कारस्योपासनात्फल प्राप्यत इति, कि तर्हि, यत्सर्वैरपि सामोपासनै कर्मभिश्चाप्राप्य तत्फलममृतत्व केवलादोंकारो पासनात्प्राप्यत इति । तत्स्तुत्यर्थं सामप्रकरणे तदुपन्यास । त्रय त्रिसख्याका धर्मस्य स्कन्धा धर्मस्कन्धा धर्मप्रवि- भागा इत्यर्थ , के ते इति, आह— यज्ञ अग्निहोत्रादि , अध्ययन सनियमस्य ऋगादेरभ्यास , दान बहिर्वेदि यथा- शक्ति द्रव्यसविभागो भिक्षमाणेभ्य , इति एष प्रथम धर्म

स्कन्ध गृहस्थसमवेतत्वात् तन्निर्वर्तकेन गृहस्थेन निर्दिश्यते, प्रथम एक इत्यर्थ, द्वितीयतृतीयश्रवणात् न आद्यार्थ । तप एव द्वितीय, तप इति कृच्छ्रचान्द्रायणादि तद्वान् तापस परिव्राड्वा, न ब्रह्मसस्थ आश्रमधर्ममात्रसस्थ, ब्रह्म सस्थस्य तु अमृतत्वश्रवणात्, द्वितीय धर्मस्कन्ध । ब्रह्मचारी आचार्यकुले वस्तु शीलमस्येत्याचार्यकुलवासी । अत्यन्त यावज्जीवम् आत्मान नियमै आचार्यकुले अवसादयन् क्षपयन् देह तृतीय धर्मस्कन्ध । अत्यन्तमित्यादिविशेषणान्नैष्ठिक इति गम्यते । उपकुर्वाणस्य स्वाध्यायग्रहणार्थत्वात् न पुण्यलोकत्व ब्रह्मचर्येण । सर्वं एते त्रयोऽप्याश्रमिण यथोक्तैर्धर्मै पुण्यलोका भवन्ति, पुण्यो लोको येषा त इमे पुण्यलोका आश्रमिणो भवन्ति । अवशिष्टस्त्वनुक्त परिव्राट् तुरीय ब्रह्मसस्थ ब्रह्मणि सम्यक्स्थित, सोऽमृतत्व पुण्यलोकविलक्षणममरणभावमात्यन्तिकम् एति, न आपेक्षिकम्, देवाद्यमृतत्ववत्, पुण्यलोकात्पृथक् अमृतत्वस्य विभागकरणात् ॥

यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्, तत पुण्यलोकत्वाद्विभक्त नावक्ष्यत् । विभक्तोपदेशाच्च आत्यन्तिकममृतत्वमिति गम्यते । अत्र च आश्रमधर्मफलोपन्यास

प्रणवसेवास्तुत्यर्थं , न तत्फलविध्यर्थं , स्तुतये च प्रणवसे वाया , आश्रमधर्मफलविधये च, इति हि भिद्येत वाक्यम् । तस्मात्स्मृतिप्रसिद्धाश्रमफलानुवादेन प्रणवसेवाफलममृतत्व ब्रुवन् प्रणवसेवा स्तौति । यथा पूणवर्मेण सेवा भक्तपरिधानमात्रफला, राजवर्मणस्तु सेवा राज्यतुल्यफलेति— तद्वत् । प्रणवश्च तत्सत्य पर ब्रह्म तत्प्रतीकत्वात् । ‘एतद्ध्येवाक्षर ब्रह्म एतद्ध्येवाक्षर परम्’ इत्याद्याम्नानात्काठके, युक्त तत्सेवातोऽमृतत्वम् ॥

अत्र आहु केचित्— चतुर्णामाश्रमिणामविशेषेण स्वधर्मानुष्ठानात्पुण्यलोकता इहोक्ता ज्ञानवर्जितानाम् ‘सव एते पुण्यलोका भवन्ति’ इति। नात्र परिव्राडवशेषित , परिव्राजकस्यापि ज्ञान यमा नियमाश्च तप एवेति , तप एव द्वितीय इत्यत्र तप शब्देन परिव्राट्तापसौ गृहीतौ । अतस्तेषामेव चतुर्णा यो ब्रह्मसस्थ प्रणवसेवक सोऽमृतत्वमेतीति चतुर्णामधिकृतत्वाविशेषात्, ब्रह्मसस्थत्वेऽप्रतिषेधाच्च, स्वकर्मच्छिद्रे च ब्रह्मसस्थताया सामर्थ्योपपत्ते । न च यववराहादिशब्दवत् ब्रह्मसस्थशब्द परिव्राजके रूढ , ब्रह्मणि सस्थितिनिमित्तमुपादाय प्रवृत्तत्वात् । न हि रूढिशब्दा निमित्तमुपाददते । सर्वेषा च ब्रह्मणि स्थितिरुपपद्यते । यत्र यत्र निमित्तमस्ति

ब्रह्मणि संस्थितिः, तस्य तस्य निमित्तवतो वाचकः सन्त ब्रह्मसंस्थशब्दः परिव्राडेकविषये संकोचे कारणाभावात् निरोद्धुमयुक्तम्। न च पारिव्राज्याश्रमधर्ममात्रेणामृतत्वम्, ज्ञानानर्थक्यप्रसङ्गात्। पारिव्राज्यधर्मयुक्तमेव ज्ञानममृतत्वसाधनमिति चेत्, न, आश्रमधर्मत्वाविशेषात्। धर्मो वा ज्ञानविशिष्टोऽमृतत्वसाधनमित्येतदपि सर्वाश्रमधर्माणामविशिष्टम्। न च वचनमस्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षः, नान्येषाम् इति। ज्ञानान्मोक्ष इति च सर्वोपनिषदां सिद्धान्तः। तस्माद्य एव ब्रह्मसंस्थः स्वाश्रमविहितधर्मवताम्, सोऽमृतत्वमेतीति॥

न, कर्मनिमित्तविद्याप्रत्यययोर्विरोधात्। कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादाय इदं कुरु इदं मा कार्षीः इति कर्मविधयः प्रवृत्ताः। तच्च निमित्तं न शास्त्रकृतम्, सर्वप्राणिषु दर्शनात्। 'सत् एकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' इति शास्त्रजन्यः प्रत्ययो विद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्मविधिनिमित्तमनुपमृद्य न जायते, भेदाभेदप्रत्यययोर्विरोधात्। न हि तैमिरिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते, विद्याविद्याप्रत्यययोर्विरोधात्।

तत्रैव सति य भेदप्रत्ययमुपादाय कर्मविधय प्रवृत्ता, स यस्योपमर्दित 'सत् एकमेवाद्वितीयम्' 'तत्सत्यम्' 'विकारभेदोऽनृतम्' इत्येतद्वाक्यप्रमाणजनितनैकत्वप्रत्ययेन, स सर्वकर्मभ्यो निवृत्त, निमित्तनिवृत्ते, स च निवृत्तकर्मा ब्रह्मसस्थ उच्यते, स च परिव्राडेव, अन्यस्यासभवात्, अन्यो हि अनिवृत्तभेदप्रत्यय सोऽन्यत्पश्यञ्शृण्वन्मन्वा नो विजानन्निद कृत्वेद प्राप्नुयामिति हि मन्यते । तस्यैव कुर्वतो न ब्रह्मसस्थता, वाचारम्भणमात्रविकारानृताभिस धिप्रत्ययवत्त्वात् । न च असत्यमित्युपमर्दिते भदप्रत्यये स त्यमिदमनन कर्तव्य मयेति प्रमाणप्रमेयबुद्धिरुपपद्यते— आकाश इव तलमलबुद्धिर्विवकिन । उपमर्दितेऽपि भेद प्रत्यये कर्मभ्यो न निवर्तते चेत्, प्रागिव भेदप्रत्ययानुपमर्दनादेकत्वप्रत्ययविधायक वाक्यमप्रमाणीकृत स्यात् । अभक्ष्यभक्षणादिप्रतिषधवाक्याना प्रामाण्यवत् युक्तमेकत्ववाक्यस्यापि प्रामाण्यम्, सर्वोपनिषदा तत्परत्वात् । कर्मविधीनामप्रामाण्यप्रसङ्ग इति चेत्, न, अनुपमर्दितभेदप्रत्ययवत्पुरुषविषये प्रामाण्योपपत्ते स्वप्नादिप्रत्यय इव प्राक्प्रबोधात् । विवेकिनामकरणात् कर्मविधिप्रामाण्यो च्छेद इति चेत्, न, काम्यविध्यनुच्छेददर्शनात् । न हि,

कामात्मता न प्रशस्तेत्येव विज्ञानवद्भि काम्यानि कर्माणि नानुष्ठीयन्त इति, काम्यकर्मविधय उच्छिद्यन्ते, अनुष्ठीयन्त एव कामिभिरिति, तथा ब्रह्मसस्थैब्रह्मविद्भिर्नानुष्ठीयन्ते कर्माणीति न तद्विधय उच्छिद्यन्ते, अब्रह्मविद्भिरनुष्ठीयन्त एवेति । परिव्राजकाना भिक्षाचरणादिवत् उत्पन्नैकत्वप्रत्य यानामपि गृहस्थादीनामग्निहोत्रादिकर्मानिवृत्तिरिति चेत् , न, प्रामाण्यचिन्ताया पुरुषप्रवृत्तेरदृष्टान्तत्वात्— न हि, नाभिचरेदिति प्रतिषिद्धमप्यभिचरण कश्चित्कुर्वन्दृष्ट इति, शत्रौ द्वेषरहितेनापि विवेकिना अभिचरण क्रियते । न च कर्मविधिप्रवृत्तिनिमित्ते भेदप्रत्यये बाधिते अग्निहोत्रादौ प्रव र्तक निमित्तमस्ति, परिव्राजकस्येव भिक्षाचरणादौ बुभुक्षादि प्रवर्तकम् । इहाप्यकरणे प्रत्यवायभय प्रवर्तकमिति चेत् , न, भेदप्रत्ययवतोऽधिकृतत्वात । भेदप्रत्ययवान् अनुपमर्दितभेदबु द्धिर्विद्यया य, स कर्मण्यधिकृत इत्यवोचाम, यो हि अधिकृत कर्मणि, तस्य तदकरणे प्रत्यवाय , न निवृत्ताधि- कारस्य, गृहस्थस्येव, ब्रह्मचारिणो विशेषधर्माननुष्ठाने । एव तर्हि सर्व स्वाश्रमस्थ उत्पन्नैकत्वप्रत्यय परिव्राडिति चेत्, न, स्वस्वामित्वभेदबुद्ध्यनिवृत्ते, कर्मार्थत्वाच्च इतराश्रमा- णाम्— 'अथ कर्म कुर्वीय' इति श्रुते । तस्मात् स्वस्वा-

मित्वाभावात् भिक्षुरेक एव परिव्राट्, न गृहस्थादि । एकत्वप्रत्ययविधिजनितन प्रत्ययेन विधिनिमित्तभेदप्रत्ययस्योपमर्दितत्वात् यमनियमाद्यनुपपत्ति परिव्राजकस्येति चेत्, न, बुभुक्षादिना एकत्वप्रत्ययात्प्रच्यावितस्योपपत्ते, निवृत्त्यर्थत्वात् । न च प्रतिषिद्धसेवाप्राप्ति, एकत्वप्रत्ययात्पत्ते प्रागेव प्रतिषिद्धत्वात् । न हि रात्रौ कूपे कण्टके वा पतित उदितेऽपि सवितरि पतति तस्मिन्नेव । तस्मात् सिद्ध निवृत्तकर्मा भिक्षुक एव ब्रह्मसस्थ इति । यत्पुनरुक्त सर्वेषा ज्ञानवर्जिताना पुण्यलोकतेति—सत्यमेतत् । यच्चोक्त तप शब्देन परिव्राडप्युक्त इति—एतदसत् । कस्मात्? परिव्राजकस्यैव निवृत्तभेदप्रत्ययस्य ब्रह्मसस्थतासभवात् । स एव हि अवशेषित इत्यवाचाम । एकत्वविज्ञानवतोऽग्निहोत्रादिवत्तपोनिवृत्तेश्च । भेदबुद्धिमत एव हि तप कर्तव्यता स्यात् । एतेन कर्मच्छिद्रे ब्रह्मसस्थतासामर्थ्यम्, अप्रतिषेधश्च प्रत्युक्त । तथा ज्ञानवानेव निवृत्तकर्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तम् । यत्पुनरुक्त यववराहादिशब्दवत्परिव्राजके न रूढो ब्रह्मसस्थशब्द इति, तत्परिहृतम्, तस्यैव ब्रह्मसस्थतासभवान्नान्यस्येति । यत्पुनरुक्त रूढशब्दा निमित्त नोपाददत इति, तन्न, गृहस्थतक्षपरिव्राजकादिशब्द-

दर्शनात् । गृहस्थितिपारिव्राज्यतक्षणादिनिमित्तोपादाना अपि, गृहस्थपरिव्राजकावाश्रमिविशेषे, विशिष्टजातिमति च तक्षेति, रूढा दृश्यन्ते शब्दाः । न यत्र यत्र निमित्तानि तत्र तत्र वर्तन्ते, प्रसिद्ध्यभावात् । तथा इहापि ब्रह्मसंस्थशब्दो निवृत्तसर्वकर्मतत्साधनपरिव्राडेकविषयेऽत्याश्रमिणि परमहंसाख्ये वृत्त इह भवितुमर्हति, मुख्यामृतत्वफलश्रवणात् । अतश्चेदमेवैकं वेदोक्तं पारिव्राज्यम्, न यज्ञोपवीतत्रिदण्डकमण्डल्वादिपरिग्रह इति, 'मुण्डोऽपरिग्रहोऽसङ्गः' इति च । श्रुतिः 'अत्याश्रमिभ्यः परमं पवित्रम्' इत्यादि च श्वेताश्वतरीये, 'निस्तुतिर्निर्नमस्कारः' इत्यादिस्मृतिभ्यश्च, 'तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः । तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गः' इत्यादिस्मृतिभ्यश्च ॥

यत्तु साङ्ख्यैः कर्मत्यागोऽभ्युपगम्यते, क्रियाकारकफलभेदबुद्धेः सत्यत्वाभ्युपगमात्, तन्मृषा । यच्च बौद्धैः शून्यताभ्युपगमात् अकर्तृत्वमभ्युपगम्यते, तदप्यसत्, तदभ्युपगन्तुः सत्त्वाभ्युपगमात् । यच्च अज्ञैरलसतया अकर्तृत्वाभ्युपगमः, सोऽप्यसत्, कारकबुद्धेरनिवर्तितत्वात्प्रमाणेन । तस्मात् वेदान्तप्रमाणजनितैकत्वप्रत्ययवत एव कर्मनिवृत्तिलक्षणं पारिव्राज्यं ब्रह्मसंस्थत्वं चेति सिद्धम् । एतेन गृहस्थस्यैकत्ववि-

ज्ञाने सति पारिव्राज्यमर्थसिद्धम् ॥

ननु अग्न्युत्सादनदोषभाक्स्यात् परिव्रजन्— 'वीरहा वा एष देवाना योऽग्निमुद्वासयते' इति श्रुते , न, दैवोत्सादितत्वात् , उत्सन्न एव हि स एकत्वदर्शने जाते— 'अपा गादग्नेराग्नित्वम्' इति श्रुते । अतो न दोषभाक् गृहस्थ परिव्रजन्निति ॥

यत्सस्थ अमृतत्वमेति, तन्निरूपणार्थमाह—

**प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितसेभ्यस्त्रयी विद्या सप्रास्रवत्तामभ्यतपत्तस्या अभितसाया एतान्यक्षराणि सप्रास्रवन्त भूर्भुव स्वरिति ॥ २ ॥**

प्रजापति विराट् कश्यपो वा, लोकान् उद्दिश्य तेषु सारजिघृक्षया अभ्यतपत् अभिताप कृतवान् ध्यान तप कृतवानित्यर्थ , तेभ्य अभितप्तेभ्य सारभूता त्रयी विद्या सप्रास्रवत् प्रजापतेर्मनसि प्रत्यभादित्यथ । तामभ्यतपत्— पूर्ववत् । तस्या अभितप्ताया एतान्यक्षराणि सप्रास्रवन्त भूर्भुव स्वरिति व्याहृतय ॥

**तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकार सम्प्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि सतृण्णान्येवमोंकारेण सर्वा वाक्सतृण्णोंकार एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम् ॥ ३ ॥**

इति त्रयोविंश खण्ड ॥

तानि अक्षराणि अभ्यतपत्, तेभ्य अभितप्तेभ्य ॐकार सम्प्रास्रवत्। तत् ब्रह्म कीदृशमिति, आह— तद्यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि पत्रावयवजातानि सतृण्णानि निविद्धानि व्याप्तानीत्यर्थ । एवम् ओंकारेण ब्रह्मणा परमात्मन प्रतीकभूतेन सर्वा वाक् शब्दजात सतृण्णा—'अकारो वै सर्वा वाक्' इत्यादिश्रुते । परमात्मविकारश्च नामधेयमात्रम् इत्यत ओंकार एवेदꣳ सर्वमिति । द्विरभ्यास आदरार्थ । लोकादिनिष्पादनकथनम ओंकारस्तुत्यर्थमिति ॥

इति त्रयोविंशखण्डभाष्यम् ॥

## चतुर्विंश॰ खण्ड॰ ॥

---

सामोपासनप्रसङ्गेन कर्मगुणभूतत्वान्निवर्त्य ओंकार पर मात्मप्रतीकत्वादमृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्य अङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह—

**ब्रह्मवादिनो वदन्ति यद्वसूना प्रात सवन॰ रुद्राणा माध्यादिन॰ सवनमादित्याना च विश्वेषा च देवानां तृतीयसवनम् ॥ १ ॥**

ब्रह्मवादिनो वदन्ति, यत्प्रात सवन प्रसिद्ध तद्वसूनाम् । तैश्च प्रात सवनसबद्धोऽय लोको वशीकृत प्रात सवनेशानै । तथा रुद्रैर्माध्यदिनसवनेशानै अन्तरिक्षलोक । आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशीकृत । इति यजमानस्य लोकोऽन्य परिशिष्टो न विद्यते ॥

**क्व तर्हि यजमानस्य लोक इति स यस्त न विद्यात्कथ कुर्यादथ विद्वान्कुर्यात् ॥**

अत क तर्हि यजमानस्य लोक, यदर्थं यजते, न क चिल्लोकोऽस्तीत्यभिप्राय — 'लोकाय वै यजते यो यजते' इति श्रुते । लोकाभावे च स यो यजमान त लाकस्वीकरणोपाय सामहोममन्त्रोत्थानलक्षण न विद्यात् न विजानीयात्, सोऽज्ञ कथ कुर्यात् यज्ञम्, न कथचन तस्य कर्तृत्वमुपपद्यत इत्यर्थ । सामादिविज्ञानस्तुतिपरत्वात् न अविदुष कर्तृत्व कममात्रविद प्रतिषिध्यते— स्तुतये च सामादिविज्ञानस्य, अविद्वत्कर्तृत्वप्रतिषेधाय च इति हि भिद्येत वाक्यम् । आद्ये च औषस्त्ये काण्डे अविदुषोऽपि कर्मास्तीति हेतुमवोचाम । अथ एतद्वक्ष्यमाण सामाद्युपाय विद्वान्कुर्यात् ॥

**पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासव५ सामाभिगायति ॥ ३ ॥**

किं तद्वेद्यमिति, आह— पुरा पूर्वं प्रातरनुवाकस्य शस्त्रस्य प्रारम्भात् जघनेन गार्हपत्यस्य पश्चात् उदङ्मुख सन् उपविश्य स वासव वसुदैवत्य साम अभिगायति ॥

**लो३कद्वारमपावा३र्णू ३३ पश्येम त्वा वय५रा ३३३३३ हु ३ म् आ ३३ ज्या ३**

**यो ३ आ ३२१११ इति ॥ ४ ॥**

लोकद्वारम् अस्य पृथिवीलोकस्य प्राप्तय द्वारम् अपावृणु हे अग्ने तेन द्वारेण पश्येम त्वा त्वा राज्यायेति ॥

**अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोक मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥**

अथ अनन्तर जुहोति अनेन मन्त्रेण— नमोऽग्नये प्रह्वी भूता तुभ्य वय पृथिवीक्षिते पृथिवीनिवासाय लोकक्षिते लोकनिवासाय, पृथिवीलोकनिवासायेत्यर्थ , लोक म मह्य यजमानाय विन्द लभस्व, एष वै मम यजमानस्य लोक एता गन्ता अस्मि ॥

**अत्र यजमान परस्तादायुष स्वाहा-पजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रात सवन५ सम्प्रयच्छन्ति ॥ ६ ॥**

अत्र अस्मिँल्लोके यजमान अहम् आयुष परस्तात् ऊर्ध्व मृत सन् इत्यर्थ । स्वाहेति जुहोति । अपजहि अपनय परिघ लोकद्वारार्गलम्— इति एत मन्त्रम् उक्त्वा उत्तिष्ठति । एव-

मेतैर्वसुभ्य प्रात सवनसबद्धो लोको निष्क्रीत स्यात् । ततस्ते प्रात सवन वसवो यजमानाय सप्रयच्छन्ति ॥

**पुरा माध्यदिनस्य सवनस्योपाकरणा-ज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥ ७ ॥**

**लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वय वैरा३३३३३ हु३म् आ३३ज्या३यो३ आ३२१११इति ॥ ८ ॥**

तथा आग्नीध्रीयस्य दक्षिणाग्न जघनेन उदङ्मुख उप-विश्य स रौद्र साम अभिगायति यजमान रुद्रदैवत्य वैरा ज्याय ॥

**अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोक मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ९ ॥**

**अत्र यजमान. परस्तादायुषः स्वाहा पजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यदिनꣳ सवनꣳ सप्रयच्छन्ति ॥**

अन्तरिक्षक्षित इत्यादि समानम् ॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेना-
हवनीयस्योदङ्मुख उपविश्य स आदि-
त्यऽस वैश्वदेवऽसामाभिगायति ॥ ११ ॥

लो३कद्वारमपावा३र्णू३३पश्येम त्वा व-
यऽ स्वारा ३३३३३ हु३म् आ३३ ज्या३
यो ३ आ ३२१११ इति ॥ १२ ॥

आदित्यमथ वैश्वदेव लो३कद्वारमपा-
वा३र्णू३३ पश्येम त्वा वयऽ साम्रा३३३३३
हु३म् आ३३ ज्या३यो३आ ३२१११ इति ॥

तथा आहवनीयस्योदङ्मुख उपविश्य स आदित्यदैव
त्यम् आदित्य वैश्वदेव च साम अभिगायति क्रमेण स्वारा
ज्याय साम्राज्याय ॥

अथ जुहोति नम आदित्येभ्यश्च विश्वे-
भ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो
लोक मे यजमानाय विन्दत ॥ १४ ॥

**एष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहापहत परिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥**

दिविक्षिद्ध्य इत्येवमादि समानमन्यत् । विन्दत अपहत इति बहुवचनमात्र विशेष । याजमान त्वेतत्, एतास्म्यत्र यजमान इत्यादिलिङ्गात् ॥

**तस्मा आदित्याश्च विश्वे च देवास्तृती यसवन५ सम्प्रयच्छन्त्येष ह वै यज्ञस्य मात्रा वेद य एव वेद य एव वेद ॥१६॥**

इति चतुर्विंश• खण्ड ॥

एष ह वै यजमान एवंवित् यथोक्तस्य सामादेर्विद्वान् यज्ञस्य मात्रा यज्ञयाथात्म्य वेद यथोक्तम् । य एव वेदेति द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

इति चतुर्विंशखण्डभाष्यम् ॥

इति श्रीमत्परमहसपरिव्राजकाचायस्य श्रीगोवि दभग
वत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
छान्दोग्योपनिषद्भाष्ये द्वितीयोऽध्याय ॥
समाप्त ॥

## ॥ तृतीयोऽध्यायः ॥

'असौ वा आदित्य' इत्यादि अध्यायारम्भे सबन्ध । अतीतानन्तराध्यायान्ते उक्तम् 'यज्ञस्य मात्रा वेद' इति । यज्ञविषयाणि च सामहोम मन्त्रोत्थानानि विशिष्टफलप्राप्तये यज्ञाङ्गभूता न्युपदिष्टानि । सर्वयज्ञाना च कार्यनिर्वृत्तिरूप सविता महत्या श्रिया दीप्यते । स एष सर्वप्राणिकर्मफल भूत प्रत्यक्ष सर्वैरुपजीव्यते । अतो यज्ञव्यपदेशानन्तर त त्कार्यभूतसवितृविषयमुपासन सर्वपुरुषार्थेभ्य श्रेष्ठतमफल वि धास्यामीत्येवमारभते श्रुति —

**असौ वा आदित्यो देवमधु तस्य द्यौ-रेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

असौ वा आदित्यो देवमध्वित्यादि । देवाना मोदनात् मध्विव मधु असौ आदित्य । वस्वादीना च मोदनहेतुत्व वक्ष्यति सर्वयज्ञफलरूपत्वादादित्यस्य । कथ मधुत्वमिति, आह—तस्य मधुन द्यौरेव भ्रामरस्येव मधुन तिरश्चीनव

श तिरश्चीनश्चासौ वशश्चेति तिरश्चीनवश । तिर्यग्गतेव हि द्यौर्लक्ष्यते । अन्तरिक्ष च मध्वपूप द्युवश लग्न सन् लम्बत इव, अतो मध्वपूपसामान्यात् अन्तरिक्ष मध्वपूप , मधुन सवितुराश्रयत्वाच्च । मरीचय रश्मय रश्मिस्था आपा भौ मा सवित्राकृष्टा । 'एता वा आप स्वराजो यन्मरीचय ' इति हि विज्ञायन्ते । ता अन्तरिक्षमध्वपूपस्थरश्म्यन्तर्गत त्वात् भ्रमरबीजभूता पुत्रा इव हिता लक्ष्यन्त इति पुत्रा इव पुत्रा , मध्वपूपनाड्यन्तगता हि भ्रमरपुत्रा ॥

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य । ऋच एव मधुकृत ऋग्वेद एव पुष्प ता अमृता आपस्ता वा एता ऋच ॥ २ ॥**

तस्य सवितु मध्वाश्रयस्य मधुना य प्राञ्च प्राच्या दिशि गता रश्मय , ता एव अस्य प्राच्य प्रागञ्चनात् मधुनो नाड्य मधुनाड्य इव मध्वाधारच्छिद्राणीत्यर्थ । तत्र ऋच एव मधुकृत लोहितरूप सविताश्रय मधु कुर्वन्तीति मधुकृत भ्रमरा इव, यतो रसानादाय मधु कुर्वन्ति, तत्पु ष्पमिव पुष्पम् ऋग्वद एव । तत्र ऋग्ब्राह्मणसमुदायस्य

ऋग्वेदाख्यत्वात् शब्दमात्राच्च भोग्यरूपरसनिस्रावासभवात् ऋग्वेदशब्देन अत्र ऋग्वेदविहित कर्म, ततो हि कर्मफलभूतमधुरसनिस्रावसभवात् । मधुकरैरिव पुष्पस्थानीयादृग्वेदविहितात्कर्मण अप आदाय ऋग्भिमधु निर्वर्त्यते । कास्ता आप इति, आह— ता कर्मणि प्रयुक्ता सोमाज्यपयोरूपा अग्नौ प्रक्षिप्ता तत्पाकाभिनिर्वृत्ता अमृता अमृतार्थत्वादत्यन्तरसवत्य आपो भवन्ति । तद्रसानादाय ता वा एता ऋच पुष्पेभ्यो रसमाददाना इव भ्रमरा ऋच ॥

**एतमृग्वेदमभ्यतप्ꣲस्तस्याभितप्तस्य यशस्तेज इन्द्रिय वीर्यमन्नाद्यꣲ रसोऽजायत ॥ २ ॥**

एतम् ऋग्वेदम् ऋग्वेदविहित कर्म पुष्पस्थानीयम् अभ्यतपन् अभिताप कृतवत्य इव एता ऋच कर्मणि प्रयुक्ता । ऋग्भिर्हि मन्त्रै शस्त्राद्यङ्गभावमुपगतै क्रियमाण कर्म मधुनिर्वर्तक रस मुञ्चतीत्युपपद्यते, पुष्पाणीव भ्रमरैराचूष्यमाणानि । तदेतदाह— तस्य ऋग्वेदस्य अभितप्तस्य । कोऽसौ रस , य ऋङ्मधुकराभितापनि सृत इत्युच्यते ? यश विश्रुतत्व तेज देहगता दीप्ति इन्द्रिय सामर्थ्योपेतैरिन्द्रियैरवैकल्य वीर्य सामर्थ्य बलमित्यर्थ , अन्नाद्यम् अन्न च तदाद्य च

येनोपयुज्यमानेनाहन्यहनि देवाना स्थिति स्यात् तदन्नाद्यम् एष रस अजायत यागादिलक्षणात्कर्मण ॥

**तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहित रूपम् ॥ ४ ॥**

**इति प्रथम खण्ड ॥**

यश आद्यन्नाद्यपर्यन्त तत् व्यक्षरत् विशेषेणाक्षरत् अगमत्। गत्वा च तदादित्यम् अभित पार्श्वत पूर्वभाग सवितु अश्रयत् आश्रितवदित्यर्थ । अमुष्मिन्नादित्ये सचित कर्मफलाख्य मधु भोक्ष्यामह इत्येव हि यशआदिलक्षणफलप्राप्तये कर्माणि क्रियन्ते मनुष्यै —केदारनिष्पादनमिव कर्षकै । तत्प्रत्यक्ष प्रदर्श्यते श्रद्धाहृतो । तद्वा एतत्, किं तत्? यदेतत् आदित्यस्य उद्यतो दृश्यते रोहित रूपम ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीय खण्ड ॥

**अथ येऽस्य दक्षिणा रश्मयस्ता एवा स्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृ- तो यजुर्वेद एव पुष्प ता अमृता आप ॥**

अथ ये अस्य दक्षिणा रश्मय इत्यादि समानम् । यजू ष्येव मधुकृत यजुर्वेदविहिते कर्माणि प्रयुक्तानि, पूर्ववन्मधु कृत इव । यजुर्वेदविहित कर्म पुष्पस्थानीय पुष्पमित्युन्यते । ता एव सोमाद्या अमृता आप ॥

**तानि वा एतानि यजूꣳष्येत यजुर्वेद- मभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इ न्द्रिय वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

**तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा ए तद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥**

इति द्वितीयः खण्ड ॥

तानि वा एतानि यजूष्येत यजुर्वेदमभ्यतपन् इत्येवमादि सर्वं समानम् । मधु एतदादित्यस्य दृश्यते शुक्ल रूपम् ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीय खण्ड ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृत सामवेद एव पुष्प ता अमृता आप ॥

तानि वा एतानि सामान्येत५ सामवेदमभ्यतप५स्तस्याभितप्तस्य यशस्तेज इन्द्रिय वीर्यमन्नाद्य५ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्ण५ रूपम् ॥ ३ ॥

इति तृतीय खण्ड ॥

अथ येऽस्य प्रत्यञ्चो रश्मय इत्यादि समानम् । तथा साम्ना मधु, एतदादित्यस्य कृष्ण रूपम् ॥

इति तृतीयखण्डभाष्यम् ॥

---

## चतुर्थ॰ खण्ड॰ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्यो दीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराण पुष्प ता अमृता आपः ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहास पुराणमभ्यतप५ंस्तस्याभितप्तस्य यशस्तेज इन्द्रिय वीर्यमन्नाद्य५ं रसोऽजायत ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य पर कृष्ण५ं रूपम् ॥३॥

इति चतुर्थ॰ खण्ड ॥

अथ येऽस्योदञ्चो रश्मय इत्यादि समानम्। अथर्वाङ्गिरस अथर्वणा अङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरस, कर्मणि प्रयुक्ता मधुकृत । इतिहासपुराण पुष्पम्। तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लवासु रात्रिषु कर्माङ्गत्वेन विनियोग सिद्ध । मधु एतदादित्यस्य पर कृष्ण रूपम् अतिशयेन कृष्णमित्यर्थ ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चम खण्ड ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्यो-
र्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो
ब्रह्मैव पुष्प ता अमृता आप' ॥ १ ॥

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्य
तप५स्तस्याभितसस्य यशस्तेज इन्द्रिय
वीर्यमन्नाद्य५रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा ए
तद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

अथ येऽस्योर्ध्वा रश्मय इत्यादि पूर्ववत् । गुह्या गोप्या रहस्या एव आदेशा लोकद्वारीयादिविधय उपासनानि च कर्माङ्गविषयाणि मधुकृत, ब्रह्मैव शब्दाधिकारात्प्रणवाख्य पुष्पम् । समानमन्यत् । मधु एतत् आदित्यस्य मध्ये क्षोभत इव समाहितदृष्टेर्दृश्यते सचलतीव ॥

ते वा एते रसाना५ रसा वेदा हि

**रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥**

इति पञ्चम खण्ड ॥

ते वा एत यथोक्ता रोहितादिरूपविशेषा रसाना रसा । केषा रसानामिति, आह— वेदा हि यस्माल्लोकनिष्यन्दत्वात्सारा इति रसा , तेषा रसाना कर्मभावमापन्नानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूता इत्यर्थ । तथा अमृताना ममृतानि वेदा ह्यमृता , नित्यत्वात् , तेषामेतानि रोहितादीनि रूपाण्यमृतानि । रसाना रसा इत्यादि कर्मस्तुतिरेषा—यस्यैवविशिष्टान्यमृतानि फलमिति ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठ· खण्ड ॥

---

**तद्यत्प्रथममममृत तद्वसव उपजीवन्त्य ग्निना मुखेन न वै देवा अश्नन्ति न पिब- न्त्येतदेवामृत दृष्ट्वा तृप्यन्ति ॥ १ ॥**

तत् तत्र यत्प्रथमममृत रोहितरूपलक्षण तद्वसव प्रात सवनेशाना उपजीवन्ति अग्निना मुखेन अग्निना प्रधानभूतेन, अग्निप्रधाना सन्त उपजीवन्तीत्यर्थ । 'अन्नाद्य रसोऽजायत' इति वचनात् कवलग्राहमश्नन्तीति प्राप्तम्, तत्प्रतिषिध्यते— न वै देवा अश्नन्ति न पिबन्तीति । कथ तर्हि उपजीवन्तीति, उच्यते—एतदेव हि यथोक्तममृत रोहित रूप दृष्ट्वा उप- लभ्य सर्वकरणैरनुभूय तृप्यन्ति, दृश सर्वकरणद्वारोपल ब्ध्यर्थत्वात् । ननु रोहित रूप दृष्ट्वेत्युक्तम्, कथमन्येन्द्रिय विषयत्व रूपस्येति, न, यशआदीना श्रोत्रादिगम्यत्वात् । श्रोत्रग्राह्य यश । तेजोरूप चाक्षुषम् । इन्द्रिय विषयग्रह णकार्यानुमेय करणसामर्थ्यम् । वीर्य बल देहगत उत्साह प्राणवत्ता । अन्नाद्य प्रत्यहमुपजीव्यमान शरीरस्थितिकर यद्भवति । रसो ह्येवमात्मक सर्व । य दृष्ट्वा तृप्यन्ति सर्वे ।

देवा दृष्ट्वा तृप्यन्तीति एतत्सर्वं स्वकरणैरनुभूय तृप्यन्तीत्यर्थ । आदित्यसश्रया सन्तो वैगन्ध्यादिदेहकरणदोषरहिताश्च ॥

**त एतदेव रूपमभिसविशन्त्येतस्मा-द्रूपादुद्यन्ति ॥ २ ॥**

कि ते निरुद्यमा अमृतमुपजीवन्ति? न, कथ तर्हि, एतदेव रूपम् अभिलक्ष्य अधुना भोगावसरो नास्माक मिति बुद्ध्वा अभिसविशन्ति उदासते । यदा वै तस्यामृतस्य भोगावसरो भवेत्, तदैतस्मादमृतादमृतभोगनिमित्तमित्यथ, एतस्माद्रूपात् उद्यन्ति उत्साहवन्तो भवन्तीत्यर्थ । न हि अनुत्साहवतामननुतिष्ठतामलसाना भोगप्राप्तिर्लोके दृष्टा ॥

**स य एतदेवममृत वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृत दृष्ट्वा तृप्य-ति स एतदेव रूपमभिसविशत्येतस्माद्रू-पादुदेति ॥ ३ ॥**

स य कश्चित् एतदेव यथादितम ऋङ्मधुकरतापरसस क्षरणम् ऋग्वेदविहितकर्मपुष्पात् तस्य च आदित्यसश्रयण रोहितरूपत्व च अमृतस्य प्राचीदिग्गतरश्मिनाडीसस्थता वसुदेवभोग्यता तद्विदश्च वसुभि सहैकता गत्वा अग्निना

मुखेनोपजीवन दर्शनमात्रेण तृप्तिं च स्वभोगावसरे उद्यमन तत्कालापाये च संवेशन वेद, सोऽपि वसुवत् सर्वं तथैवानुभवति ॥

**स यावदादित्य' पुरस्तादुदेता पश्चाद-स्तमेता वसूनामेव तावदाधिपत्य॑ स्वाराज्य पर्येता ॥ ४ ॥**

इति षष्ठ खण्ड ॥

कियन्त काल विद्वास्तदमृतमुपजीवतीति, उच्यते— स विद्वान् यावदादित्य पुरस्तात् प्राच्या दिशि उदेता पश्चात् प्रतीच्याम् अस्तमता, तावद्वसूना भोगकाल तावन्तमेव काल वसूनामाधिपत्य स्वाराज्य पर्येता परितो गन्ता भवतीत्यर्थ । न यथा चन्द्रमण्डलस्थ केवलकर्मी परतन्त्रो देवानामन्नभूत , किं तर्हि, अयम आधिपत्य स्वाराज्य स्वराड्भाव च अधि गच्छति ॥

इति षष्ठखण्डभाष्यम् ॥

## सप्तम खण्डः ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादि समानम् ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

इति सप्तमः खण्डः ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत् ततो द्विगुणं कालं दक्षिणत उदेता उत्तरतोऽस्तमेता रुद्राणां तावद्भोगकालः ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टम खण्ड ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेतादित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

इति अष्टम खण्ड ॥

तथा पश्चात् उत्तरत ऊर्ध्वमुदेता विपर्ययेण अस्तमेता । पूर्वस्मात्पूर्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराण दर्शनम् । सवितु चतुर्दिशमिन्द्रयमवरुणसोमपुरीषु उदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम्, मानसोत्तरस्य मूर्धनि मेरो

प्रदक्षिणावृत्तेस्तुल्यत्वादिति । अत्रोक्त परिहार आचार्यै । अमरावत्यादीना पुरीणा द्विगुणोत्तरोत्तरेण कालेनोद्वास स्यात् । उदयश्च नाम सवितु तन्निवासिना प्राणिना चक्षुर्गोचरापत्ति , तदत्ययश्च अस्तमनम् , न परमार्थत उदयास्तमने स्त । तन्निवासिना च प्राणिनामभावे तान्प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति, चक्षुर्गोचरापत्तेस्तदत्ययस्य च अभावात् । तथा अमरावत्या सकाशाद्द्विगुण काल सयमनी पुरी वसति, अतस्तन्निवासिन प्राणिन प्रति दक्षिणत इव उदति उत्तरतोऽस्तमेति इत्युच्यतेऽस्मद्बुद्धिं च अपेक्ष्य । तथोत्तरास्वपि पुरीषु योजना । सर्वेषा च मेरुरुत्तरतो भवति । यदा अमरावत्या मध्याह्नगत सविता, तदा सयमन्यामुद्यन्दृश्यते, तत्र मध्याह्नगतो वारुण्यामुद्यन्दृश्यते, तथोत्तरस्याम्, प्रदक्षिणावृत्तेस्तुल्यत्वात् । इलावृतवासिना सर्वत पर्वतप्राकारनिवारितादित्यरश्मीना सविता ऊर्ध्व इव उदेता अर्वागस्तमेता दृश्यते, पर्वतोर्ध्वच्छिद्रप्रवेशात्सवितृप्रकाशस्य । तथा ऋगाद्यमृतोपजीविनाममृताना च द्विगुणोत्तरोत्तरवीर्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन । उद्यमनसवेशनादि देवाना रुद्रादीना विदुषश्च समानम् ॥

इति अष्टमखण्डभाष्यम् ॥

## नवम खण्ड ॥

अथ यच्चतुर्थममृत तन्मरुत उपजीव न्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृत दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसविशन्त्येतस्मा द्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृत वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृत दृष्ट्वा तृप्यति स एतदेव रूपमभिसविशत्येत-स्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पश्चादुदेता पुरस्ताद स्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतो ऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वा-राज्य पर्येता ॥ ४ ॥

इति नवम खण्डः ॥

## दशम खण्ड ॥

अथ यत्पञ्चममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेतार्वागस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति दशमः खण्ड ॥

## एकादश खण्ड ॥

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्त मेतैकल एव मध्ये स्थाता तदेष श्लोक' ॥**

कृत्वैवमुदयास्तमनेन प्राणिना स्वकर्मफलभोगनिमित्तमनु ग्रहम , तत्कर्मफलभोगक्षये तानि प्राणिजातान्यात्मनि सहृत्य, अथ तत तस्मादनन्तर प्राण्यनुग्रहकालादूर्ध्व सन् आत्मन्यु-देत्य उद्गम्य यान्प्रत्युदेति तेषा प्राणिनामभावात् स्वात्मस्थ नैवोदेता नास्तमेता एकल अद्वितीय अनवयव मध्ये स्वा त्मन्येव स्थाता । तत्र कश्चिद्विद्वान्वस्वादिसमानचरण रोहि ताद्यमृतभोगभागी यथोक्तक्रमेण स्वात्मान सवितारमात्मत्वे नोपेत्य समाहित सन् एत मन्त्र दृष्ट्वा उत्थित अन्यस्मै पृष्ट वते जगाद—यतस्त्वमागतो ब्रह्मलोकात् किं तत्राप्यहोरात्रा भ्या परिवर्तमान सविता प्राणिनामायु क्षपयति यथेहास्मा-कम् , इत्येव पृष्ट प्रत्याह—तत् तत्र यथा पृष्टे यथोक्ते च अर्थे एष श्लोको भवति तेनोक्तो योगिनेति श्रुतेर्वचनमिदम् ॥

**न वै तत्र न निम्लोच नोदियाय कदाचन । देवास्तेनाह सत्येन मा विरा-धिषि ब्रह्मणेति ॥ २ ॥**

न वै तत्र यतोऽह ब्रह्मलोकादागत तस्मिन्न वै तत्र एतदस्ति यत्पृच्छसि । न हि तत्र निम्लोच अस्तमगमत्सविता न च

उदियाय उद्गत कुतश्चित कदाचन कस्मिंश्चिदपि काले इति। उदयास्तमयवर्जित ब्रह्मलोक इत्यनुपपन्नम् इत्युक्त शपथ मिव प्रतिपेदे—हे देवा साक्षिणो यूय शृणुत, यथा मयाक्त सत्य वच तेन सत्येन अह ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुध्येयम्, अप्राप्तिर्ब्रह्मणो मम मा भूदित्यर्थ ॥

सत्य तेनोक्तमित्याह श्रुति —

**न ह वा अस्मा उदेति न निम्लोचाति सकृद्दिवा हैवास्मै भवति य एतामेव ब्रह्मोपनिषद् वेद ॥ ३ ॥**

न ह वा अस्मै यथोक्तब्रह्मविदे न उदेति न निम्लोचति नास्तमेति, किं तु ब्रह्मविदेऽस्मै सकृद्दिवा हैव सदैव अहर्भवति, स्वयञ्ज्योतिष्ट्वात्, य एता यथोक्ता ब्रह्मोपनिषद् वेद गुह्य वेद, एव तन्त्रेण वशादित्रय प्रत्यमृतसबन्ध च यच्च अन्यदवोचाम एव जानातीत्यथ । विद्वान् उदयास्तमयकालापरिच्छेद्य नित्यमज ब्रह्म भवतीत्यर्थ ॥

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनु प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥**

तद्धैतत् मधुज्ञान ब्रह्मा हिरण्यगर्भ विराजे प्रजापतये

उवाच, सोऽपि मनवे, मनुरिक्ष्वाक्वाद्याभ्य प्रजाभ्य प्रोवाचेति विद्या स्तौति—ब्रह्मादिविशिष्टक्रमागतेति। किं च, तद्धैतत् मधुज्ञानम् उद्दालकाय आरुणये पिता ब्रह्मविज्ञान ज्येष्ठाय पुत्राय प्रोवाच॥

**इद वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने॥**

इद वाव तद्यथोक्तम् अन्योऽपि ज्येष्ठाय पुत्राय सर्वप्रियार्हाय ब्रह्म प्रब्रूयात्। प्रणाय्याय वा योग्याय अन्तेवासिने शिष्याय॥

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमाम-द्भि॰ परिगृहीता धनस्य पूर्णा दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति॥६॥**

नान्यस्मै कस्मैचन प्रब्रूयात्। तीर्थद्वयमनुज्ञातमनेकेषा प्राप्ताना तीर्थानामाचार्यादीनाम्। कस्मात्पुनस्तीर्थसकोचन विद्याया कृतमिति, आह—यद्यपि अस्मै आचार्याय इमा कश्चित्पृथिवीम् अद्भि परिगृहीता समुद्रपरिवेष्टिता समस्तामपि दद्यात्, अस्या विद्याया निष्क्रयार्थम्, आचार्याय धनस्य पूर्णा सपन्ना भोगोपकरणै, नासावस्य निष्क्रय, यस्मात् ततोऽपि दानात् एतदेव यन्मधुविद्यादान भूय बहुतरफलमित्यर्थ। द्विरभ्यास आदरार्थ॥

इति एकादशखण्डभाष्यम्॥

## द्वादश खण्ड ॥

यत एवमतिशयफलैषा ब्रह्मविद्या, अत सा प्रकारान्तरेणापि वक्तव्येति 'गायत्री वा' इत्याद्यारभ्यते । गायत्रीद्वारेण च उच्यते ब्रह्म, सर्वविशेषरहितस्य 'नेति नेति' इत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात् । सत्स्वनेकेषु च्छन्द सु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादान प्राधान्यात् । सोमाहरणात् इतरच्छन्दोक्षराहरणन इतरच्छन्दोव्याप्त्या च सर्वसवनव्यापकत्वाच्च यज्ञे प्राधान्य गायत्र्या । गायत्रीसारत्वाच्च ब्राह्मणस्य मातरमिव, हित्वा गुरुतरा गायत्रीं ततोऽन्यद्गुरुतर न प्रतिपद्यते यथोक्त ब्रह्मापीति, तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात् । अतो गायत्रीमुखेनैव ब्रह्मोच्यते—

**गायत्री वा इद५ सर्व भूत यदिद किच वाग्वै गायत्री वाग्वा इद५ सर्व भूत गायति च त्रायते च ॥ १ ॥**

गायत्री वा इत्यवधारणार्थो वै शब्द । इद सर्व भूत प्राणिजात यत्किंच स्थावर जङ्गम वा तत्सर्व गायत्र्येव ।

तस्याश्छन्दोमात्राया सर्वभूतत्वमनुपपन्नमिति गायत्रीकारण वाच शब्दरूपामापादयति गायत्री वाग्वै गायत्रीति । वाग्वा इद सर्व भूतम् । यस्मात् वाक् शब्दरूपा सती सर्वं भूत गायति शब्दयति— असौ गौ असावश्व इति च, त्रायते च रक्षति— अमुष्मान्मा भैषी कि ते भयमुत्थितम् इत्यादिना सर्वतो भयान्निवर्त्यमान वाचा त्रात स्यात् । यत् वाक् भूत गायति च त्रायते च, गायत्र्येव तत् गायति च त्रायते च, वाच अनन्यत्वाद्गायत्र्या । गानात्त्राणाच्च गायत्र्या गायत्रीत्वम् ॥

**या वै सा गायत्रीय वाव सा येय पृथिव्यस्या् हीद् सर्वं भूत प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥**

या वै सा एवलक्षणा सर्वभूतरूपा गायत्री, इय वाव सा यय पृथिवी । कथ पुनरिय पृथिवी गायत्रीति, उच्यते— सर्वभूतसबन्धात् । कथ सर्वभूतसबन्ध , अस्या पृथिव्या हि यस्मात् सर्वं स्थावर जङ्गम च भूत प्रतिष्ठितम् , एतामेव पृथिवीं नातिशीयते नातिवर्तत इत्येतत् । यथा गानत्राणाभ्या भूतसबन्धो गायत्र्या , एव भूतप्रतिष्ठानाद्भूतसबद्धा पृथिवी, अतो गायत्री पृथिवी ॥

**या वै सा पृथिवीय वाव सा यदिदम-स्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणा प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

या वै मा प्रथिवी गायत्री इय वाव सा इदमेव । तत्किम्? यदिदमस्मिन्पुरुष कार्यकरणसघाते जीवति शरीरम्, पार्थिवत्वाच्छरीरस्य । कथ शरीरस्य गायत्रीत्वमिति, उच्यते—अस्मिन्हि इम प्राणा भूतशब्दवाच्या प्रतिष्ठिता, अत पृथिवीवद्भूतशब्दवाच्यप्राणप्रतिष्ठानात् शरीर गायत्री, एतदेव यस्माच्छरीर नातिशीयन्ते प्राणा ॥

**यद्वै तत्पुरुषे शरीरमिद वाव तद्यदिदमस्मिन्नन्त. पुरुषे हृदयमस्मिन्हीमे प्राणा प्रतिष्ठिता एतदेव नातिशीयन्ते ॥४॥**

यद्वै तत्पुरुषे शरीर गायत्री इद वाव तत् । यदिदमस्मिन्नन्त मध्ये पुरुषे हृदय पुण्डरीकाख्यम् एतद्गायत्री । कथमिति, आह—अस्मिन्हि इमे प्राणा प्रतिष्ठिता, अत शरीरवत् गायत्री हृदयम् । एतदेव च नातिशीयन्ते प्राणा । 'प्राणो ह पिता । प्राणो माता' 'अहिंसन्सर्वभूतानि' इति श्रुते भूतशब्दवाच्या प्राणा ॥

**सैषा चतुष्पदा षड्विधा गायत्री तदे तदृचाभ्यनूक्तम् ॥ ५ ॥**

सैषा चतुष्पदा षडक्षरपदा छन्दोरूपा सती भवति गायत्री षड्विधा—वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति । वाक्प्राणयोरन्यार्थनिर्दिष्टयोरपि गायत्रीप्रकारत्वम्, अन्यथा षाड्विध्यसंख्यापूरणानुपपत्ते । तत् एतस्मिन्नर्थे एतत् गायत्र्याख्य ब्रह्म गायत्र्यनुगत गायत्रीमुखेनोक्तम् ऋचा अपि मन्त्रेणाभ्यनूक्त प्रकाशितम् ॥

**तावानस्य महिमा ततो ज्यायाꣳश्च पूरुष । पादोऽस्य सर्वा भूतानि त्रिपाद स्यामृत दिवीति ॥ ६ ॥**

तावान् अस्य गायत्र्याख्यस्य ब्रह्मण समस्तस्य महिमा विभूतिविस्तार, यावाꣳश्चतुष्पात्षड्विधश्च ब्रह्मणो विकार पादो गायत्रीति व्याख्यात । अत तस्माद्विकारलक्षणाद्गा यत्र्याख्याद्वाचारम्भणमात्रात् ततो ज्यायान् महत्तरश्च परमार्थसत्यरूपोऽविकार पूरुष पुरुष सर्वपूरणात् पुरि शय नाच्च । तस्य अस्य पाद सर्वा सर्वाणि भूतानि तेजोबन्ना दीनि सस्थावरजङ्गमानि, त्रिपात् त्रय पादा अस्य सोऽय

त्रिपात्, त्रिपादमृत पुरुषाख्य समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थं इति ॥

**यद्वै तद्ब्रह्मेतीद वाव तद्योय बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादा काशः ॥ ७ ॥**

यद्वै तत् त्रिपादमृत गायत्रीमुखेनोक्त ब्रह्मेति, इद वाव तत् इदमेव तत्, योऽय प्रसिद्ध बहिर्धा बहि पुरुषादाकाश भौतिको यो वै, स बहिर्धा पुरुषादाकाश उक्त ॥

**अय वाव स योऽयमन्त. पुरुष आका शो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥**

अय वाव स, योऽयमन्त पुरुष शरीरे आकाश । यो वै सोऽन्त पुरुष आकाश ॥

**अय वाव स योऽयमन्तर्हृदय आका शस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनी श्रिय लभते य एव वेद ॥ ९ ॥**

इति द्वादशः खण्ड. ॥

अथ वाव स , योऽयमन्तर्हृदये हृदयपुण्डरीके आकाश । कथमेकस्य सत आकाशस्य त्रिधा भेद इति, उच्यते—बाह्येन्द्रियविषये जागरितस्थाने नभसि दु खबाहुल्य दृश्यते । ततोऽन्त शरीरे स्वप्नस्थानभूते मन्दतर दु ख भवति । स्वप्नान्पश्यतो हृदयस्थे पुनर्नभसि न कचन काम कामयते न कचन स्वप्न पश्यति । अत सर्वदु खनिवृत्तिरूपमाकाश सुषुप्तस्थानम । अतो युक्तमेकस्यापि त्रिधा भेदान्वाख्यानम् । बहिर्धा पुरुषादारभ्य आकाशस्य हृदये सकोचकरण चेत - समाधानस्थानस्तुतये—यथा 'त्रयाणामपि लोकाना कुरुक्षेत्र विशिष्यते । अर्धतस्तु कुरुक्षेत्रमधतस्तु पृथूदकम्' इति, तद्वत् । तदेतद्धार्दाकाशाख्य ब्रह्म पूर्ण सर्वगतम्, न हृदय मात्रपरिच्छिन्नमिति मन्तव्यम्, यद्यपि हृदयाकाशे चेत समाधीयते । अप्रवर्ति न कुतश्चित्क्वचित्प्रवर्तितु शीलमस्येत्यप्रवर्ति, तदनुच्छित्तिधर्मकम् । यथा अन्यानि भूतानि परिच्छिन्नान्युच्छित्तिधमकाणि, न तथा हार्द नभ । पूर्णामप्रवर्तिनीमनुच्छेदात्मिका श्रिय विभूतिं गुणफल लभते दृष्टम् । य एव यथोक्त पूर्णाप्रवर्तिगुण ब्रह्म वेद जानाति इहैव जीवन् तद्भाव प्रतिपद्यत इत्यर्थ ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदश. खण्ड ॥

---

तस्य ह् वा एतस्य हृदयस्य पञ्च देव-
सुषय स योऽस्य प्राङ्सुषि स प्राणस्तच्च
क्षु. स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपा
सीत तेजस्व्यन्नादो भवति य एव वेद ॥

तस्य ह् वा इत्यादिना गायत्र्याख्यस्य ब्रह्मण उपास नाङ्गत्वेन द्वारपालादिगुणविधानाथमारभ्यते । यथा लोके द्वारपाला राज्ञ उपासनेन वशीकृता राजप्राप्त्यर्थो भवन्ति, तथेहापीति । तस्य इति प्रकृतस्य हृदयस्येत्यर्थ । एतस्य अनन्तरनिर्दिष्टस्य पञ्च पञ्चसख्याका देवाना सुषय देव सुषय स्वर्गलोकप्राप्तिद्वारच्छिद्राणि, देवै प्राणादित्यादिभि रक्ष्यमाणानि इत्यतो देवसुषय , तस्य स्वर्गलोकभवनस्य हृद-यस्य अस्य य प्राङ्सुषि पूर्वाभिमुखस्य प्राग्गत यच्छिद्र द्वार स प्राण , तत्स्थ तेन द्वारेण य सचरति वायुविशष स प्रागनितीति प्राण । तेनैव सबद्धमव्यतिरिक्त तच्चक्षु , तथैव स आदित्य 'आदित्यो ह् वै बाह्यप्राण ' इति श्रुते चक्षूरूपप्रतिष्ठाक्रमेण हृदि स्थित , 'स आदित्य कस्मि-

न्प्रतिष्ठित इति चक्षुषि' इत्यादि हि वाजसनेयके। प्राण-वायुदेवतैव हि एका चक्षुरादित्यश्च सहाश्रयेण। वक्ष्यति च—प्राणाय स्वाहेति हुत हवि सर्वमेतत्तर्पयतीति। तदेतत् प्राणाख्य स्वर्गलोकद्वारपालत्वात् ब्रह्म। स्वर्गलोक प्रतिपित्सु तेजस्वी एतत् चक्षुरादित्यस्वरूपेण अन्नाद्यत्वाच्च सवितु तेज अन्नाद्यम् इत्याभ्या गुणाभ्याम् उपासीत। तत तेजस्व्यन्नादश्च आमयावित्वरहितो भवति, य एव वेद तस्यै तद्गुणफलम्। उपासनेन वशीकृतो द्वारप स्वर्गलोकप्राप्तिहेतु र्भवतीति मुख्य च फलम्॥

**अथ योऽस्य दक्षिणः सुषिः स व्यान स्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यश श्चेत्युपासीत श्रीमान्यशस्वी भवति य एव वेद॥ २॥**

अथ योऽस्य दक्षिण सुषि तत्स्थो वायुविशेष स वीर्यवत्कर्म कुर्वन् विगृह्य वा प्राणापानौ नाना वा अनितीति व्यान। तत्सबद्धमेव च तच्छ्रोत्रमिन्द्रियम्। तथा स चन्द्रमा—श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च इति श्रुते। सहाश्रयौ पूर्ववत्, तदेतत् श्रीश्च विभूति श्रोत्रचन्द्रमसोर्ज्ञानान्नहे-

तुत्वम्, अतस्ताभ्या श्रीत्वम् । ज्ञानान्नवतश्च यश ख्या तिर्भवतीति यशोहतुत्वात् यशस्त्वम् । अतस्ताभ्या गुणाभ्या- मुपासीतेत्यादि समानम ॥ २ ॥

**अथ योऽस्य प्रत्यङ्सुषि सोऽपान' सा वाक्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्य- मित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एव वेद ॥ ३ ॥**

अथ योऽस्य प्रत्यङ्सुषि पाश्चम तत्स्थो वायुविशेष स मूत्रपुरीषाद्यपनयन् अधोऽनितीत्यपान । सा तथा वाक्, तत्सबन्धात्, तथा अग्नि, तदेतद्ब्रह्मवर्चस वृत्तस्वाध्यायनि- मित्त तेज ब्रह्मवर्चसम, अग्निसबन्धाद्वृत्तस्वाध्यायस्य । अन्नग्रसनहेतुत्वात् अपानस्य अन्नाद्यत्वम । समानमन्यत् ॥

**अथ योऽस्योदङ्सुषि स समानस्त न्मन स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टि श्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एव वेद ॥ ४ ॥**

अथ योऽस्योदङ् सुषि उदग्गत सुषि तत्स्थो वायु-

विशेष साऽशितपीते सम नयतीति समान । तत्सबद्ध मनोऽन्त करणम्, स पर्जन्या वृष्टयात्मको देव पर्जन्यनिमित्ताश्च आप इति, 'मनसा सृष्टा आपश्च वरुणश्च' इति श्रुते । तदेतत्कीर्तिश्च, मनसा ज्ञानस्य कीर्तिहेतुत्वात् । आत्मपरोक्ष विश्रुतत्व कीर्तियश । स्वकरणसवद्य विश्रुतत्व व्युष्टि कान्तिर्देहगत लावण्यम् । ततश्च कीर्तिसभवा त्कीर्तिश्चेति । समानमन्यत् ॥

**अथ योऽस्योर्ध्व सुषि स उदान' स वायुः स आकाशस्तदेतदोजश्च महश्चेत्यु पासीतौजस्वी महस्वान्भवति य एव वेद ॥ ५ ॥**

अथ योऽस्योर्ध्व सुषि स उदान आ पादतलादार भ्योर्ध्वमुत्क्रमणात् उत्कषार्थ च कम कुवन् अनितीत्युदान । स वायु तदाधारश्च आकाश । तदेतत् वाय्वाकाशयोरोजोहेतुत्वादोज बल महत्वाच्च मह इति । समानमन्यत् ॥

**ते वा एते पञ्च ब्रह्मपुरुषा स्वर्गस्य लोकस्य द्वारपाः स य एतानेव पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदा**

**स्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेव पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥**

ते वा एते यथोक्ता पञ्चसुषिसबन्धात् पञ्च ब्रह्मणो हार्दस्य पुरुषा राजपुरुषा इव द्वारस्था स्वर्गस्य हार्दस्य लोकस्य द्वारपा द्वारपाला । एतैर्हि चक्षु श्रोत्रवाङ्मन-प्राणैर्बहिर्मुखप्रवृत्तैर्ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि । प्रत्यक्ष हि एतदजितकरणतया बाह्यविषयासङ्गानृतप्ररूढ-त्वात् न हार्दे ब्रह्मणि मनस्तिष्ठति । तस्मात्सत्यमुक्तमेते पञ्च ब्रह्मपुरुषा स्वर्गस्य लोकस्य द्वारपा इति । अत स य एता-नेव यथोक्तगुणविशिष्टान् स्वर्गस्य लोकस्य द्वारपान् वेद उपास्ते उपासनया वशीकरोति, स राजद्वारपालानिवोपास-नेन वशीकृत्य तैरनिवारित प्रतिपद्यते स्वर्गं लोकं राजान-मिव हार्दं ब्रह्म । किं च अस्य विदुष कुले वीर पुत्रो जायते वीरपुरुषसेवनात् । तस्य च ऋणापाकरणेन ब्रह्मो-पासनप्रवृत्तिहेतुत्वम् । ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैक फलम् ॥

**अथ यदतः परो दिवो ज्योतिर्दीप्यते**

**विश्वत' पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विद् वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति' ॥ ७ ॥**

अथ यत् असौ विद्वान् स्वर्ग लोक वीरपुरुषसेवनात्प्रतिपद्यते, यच्चोक्त त्रिपादस्यामृत दिवीति, तदिद लिङ्गेन चक्षु - श्रोत्रेन्द्रियगोचरमापादयितव्यम् , यथा अग्न्यादि धूमादि लिङ्गेन । तथा हि एवमेवेदमिति यथोक्ते अर्थे दृढा प्रतीति स्यात्– अनन्यत्वेन च निश्चय इति । अत आह— यदत अमुष्मात् दिव द्युलोकात् , पर परमिति लिङ्गव्यत्ययेन, ज्योतिर्दीप्यते, स्वयप्रभ सदाप्रकाशत्वाद्दीप्यत इव दीप्यत इत्युच्यते, अग्न्यादिवज्ज्वलनलक्षणाया दीप्तेरसभवात् । विश्वत पृष्ठेष्वित्येतस्य व्याख्यान सर्वत पृष्ठेष्विति, ससाराद्दुपरीत्यर्थ , ससार एव हि सर्व , अससारिण एकत्वा न्निर्भेदत्वाच्च । अनुत्तमेषु, तत्पुरुषसमासाशङ्कानिवृत्तये आह उत्तमेषु लोकेष्विति , सत्यलोकादिषु हिरण्यगर्भादिकार्यरूपस्य परस्येश्वरस्य आसन्नत्वादुच्यते उत्तमेषु लोकेष्विति । इद वाव इदमेव तत् यदिदमस्मिन्पुरुषे अन्त मध्ये ज्योति चक्षु श्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन च अवगम्यते । यत् त्वचा

स्पर्शरूपेण गृह्यते तच्चक्षुषैव, दृढप्रतीतिकरत्वात्त्वच , अवि नाभूतत्वाच्च रूपस्पर्शयो ॥

**तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे स‌ऽ स्पर्शेनोष्णिमान विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपश्रृणोति तदेतद्दृष्ट च श्रुत चेत्युपासीत चक्षुष्य श्रुतो भवति य एव वेद य एवं वेद ॥ ८ ॥**

इति त्रयोदशः खण्ड ॥

कथ पुन तस्य ज्योतिष लिङ्ग त्वग्दृष्टिगोचरत्वमापद्यत इति, आह— यत्र यस्मिन्काले, एतदिति क्रियाविशेषणम, अस्मिञ्शरीरे हस्तेन आलभ्य सस्पर्शेन उष्णिमान रूपसहभाविनमुष्णस्पर्शभाव विजानाति, स हि उष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिष लिङ्गम्, अव्यभिचारात् । न हि जीवन्तमात्मानमुष्णिमा व्यभिचरति । उष्ण एव जीविष्यन् शीतो मरिष्यन् इति हि विज्ञायते । मरणकाले च तेज परस्या देवतायामिति परेणाविभाग-

त्वोपगमात् । अत असाधारण लिङ्गमौष्ण्यमग्नेरिव धूम । अ
तस्तस्य परस्यैषा दृष्टि साक्षादिव दर्शन दर्शनोपाय इत्यर्थ ।
तथा तस्य ज्योतिष एषा श्रुति श्रवण श्रवणोपायोऽप्युच्य
मान । यत्र यदा पुरुष ज्योतिषो लिङ्ग शुश्रूषति श्रोतुमि
च्छति, तदा एतत् कर्णावपिगृह्य, एतच्छब्द क्रियाविशेषणम्,
अपिगृह्य अपिधायेत्यर्थ, अङ्गुलिभ्या प्रोर्णुत्य निनदमिव
रथस्येव घोषो निनद तमिव शृणोति, नदथुरिव ऋषभकूजित
मिव शब्द, यथा च अग्नेर्बहिर्ज्वलत एव शब्दमन्त शरीरे
उपशृणोति, तदेतत् ज्योति दृष्टश्रुतलिङ्गत्वात् दृष्ट च श्रुत च
इत्युपासीत । तथोपासनात् चक्षुष्य दर्शनीय श्रुत विश्रु
तश्च । यत् स्पर्शगुणोपासननिमित्त फल तत् रूपे सपादयति
चक्षुष्य इति, रूपस्पर्शयो सहभावित्वात्, इष्टत्वाच्च दर्शनी
यताया । एव च विद्याया फलमुपपन्न स्यात्, न तु मृदुत्वा-
दिस्पर्शवत्त्वे । य एव यथोक्तौ गुणौ वेद । स्वर्गलोकप्रतिप-
त्तिस्तु उक्तमदृष्ट फलम । द्विरभ्यास आदरार्थ ॥

इति त्रयोदशखण्डभाष्यम् ॥

## चतुर्दश खण्ड. ॥

पुनस्तस्यैव त्रिपादमृतस्य ब्रह्मणोऽनन्तगुणवतोऽनन्तश-क्तेरनेकभेदोपास्यस्य विशिष्टगुणशक्तिमत्त्वेनोपासन विधि-त्सन् आह—

**सर्व खल्विद ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमय पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेत प्रेत्य भवति स क्रतु कुर्वीत ॥ १ ॥**

सर्व समस्तम्, खल्विति वाक्यालकारार्थो निपात । इद जगत् नामरूपविकृत प्रत्यक्षादिविषय ब्रह्म कारणम्, वृद्धतम त्वात् ब्रह्म । कथ सर्वस्य ब्रह्मत्वमित्यत आह— तज्जलानि-ति, तस्माद्ब्रह्मणो जात तेजोबन्नादिक्रमेण सर्वम्, अत तज्जम्, तथा तेनैव जननक्रमेण प्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयत तदात्मतया श्लिष्यत इति तल्लम्, तथा तस्मिन्नेव स्थितिकाल, अनिति प्राणिति चेष्टत इति। एव ब्रह्मात्मतया त्रिषु कालेष्वविशिष्टम्, तद्व्यतिरेकेणाग्रहणात्। अत तदेवेद जगत्। यथा च इद तदेवैकमाद्वितीय तथा षष्ठे विस्तरेण व क्ष्याम । यस्माच्च सर्वमिद ब्रह्म, अत शान्त रागद्वेषादिदो-षरहित सयत सन्, यत् तत्सर्व ब्रह्म तत् वक्ष्यमाणैर्गुणैरुपा सीत। कथमुपासीत ? क्रतु कुर्वीत—क्रतु निश्चयोऽध्यवसाय

एवमव नान्यथेत्यनिचल प्रत्यय , त क्रतु कुर्वीत उपासीत इत्यनेन व्यवहितन सबन्ध । कि पुन क्रतुकरणेन कर्तव्य प्रयाजनम् ? कथ वा क्रतु कर्तव्य ? क्रतुकरण च अभि प्रेतार्थसिद्धिसाधन कथम् ? इत्यस्यार्थस्य प्रतिपादनार्थम् अथे त्यादिग्रन्थ । अथ खल्विति हेत्वर्थ । यस्मात्क्रतुमय क्रतुप्रायोऽध्यवसायात्मक पुरुष जीव , यथाक्रतु यादृश क्रतु अस्य सोऽय यथाक्रतु यथाध्यवसाय यादृङ्निश्च य अस्मिँल्लोके जीवन् इह पुरुषो भवति तथा इत अस्मा द्देहात् प्रेत्य मृत्वा भवति, क्रत्वनुरूपफलात्मको भवती- त्यर्थ । एव हि एतच्छास्त्रतो दृष्टम्—'य य वापि स्मर न्भाव त्यजत्यन्ते कलेबरम्' इत्यादि । यत एव व्यवस्था शास्त्रदृष्टा, अत स एव जानन् क्रतु कुर्वीत, यादृश क्रतु वक्ष्याम तम । यत एव शास्त्रप्रामाण्यादुपपद्यते क्रत्वनुरूप फलम् , अत स कर्तव्य क्रतु ॥

**मनोमयः प्राणशरीरो भारूप सत्य सकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवा क्यनादरः ॥ २ ॥**

कथम् ? मनोमय मन प्राय , मनुतेऽनेनेति मन तत्

स्ववृत्त्या विषयेषु प्रवृत्त भवति, तेन मनसा तन्मय , तथा प्रवृत्त इव तत्प्रायो निवृत्त इव च । अत एव प्राणशरीर प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसमूर्छित , 'यो वै प्राण सा प्रज्ञा या वा प्रज्ञा स प्राण ' इति श्रुत । स शरीर यस्य, स प्राणशरीर , 'मनोमय प्राणशरीर-नेता' इति च श्रुत्यन्तरात् । भारूप भा दीप्ति चैतन्य-लक्षण रूप यस्य स भारूप । सत्यसकल्प सत्या अवितथा सकल्पा यस्य, सोऽय सत्यसकल्प , न यथा ससारिण इवानैकान्तिकफल सकल्प ईश्वरस्येत्यर्थ । स सारिण अनृतेन मिथ्याफलत्वहेतुना प्रत्यूढत्वात् सकल्पस्य मिथ्याफलत्व वक्ष्यति—'अनृतेन हि प्रत्यूढा ' इति । आका शात्मा आकाश इव आत्मा स्वरूप यस्य स आकाशात्मा । सर्वगतत्व सूक्ष्मत्व रूपादिहीनत्व च आकाशतुल्यता ईश्व रस्य । सर्वकर्मा सर्व विश्व तेनेश्वरेण क्रियत इति जगत्सर्व कर्म यस्य स सर्वकर्मा, 'स हि सर्वस्य कर्ता ' इति श्रुते । सर्वकाम सर्वे कामा दोषरहिता अस्येति सर्वकाम , 'धर्मा विरुद्धो भूतेषु कामोऽस्मि ' इति स्मृत । ननु कामोऽस्मीति वचनात् इह बहुव्रीहिर्न सभवति सर्वकाम इति । न, काम स्य कर्तव्यत्वात् शब्दादिवत्पारार्थ्यप्रसङ्गाच्च देवस्य । तस्मात्

यथेह सर्वकाम इति बहुव्रीहि , तथा कामोऽस्मीति स्मृत्यर्थो वान्य । सर्वगन्धं सर्वे गन्धा सुखकरा अस्य सोऽय सर्वगन्ध , 'पुण्यो गन्ध पृथिव्याम्' इति स्मृते । तथा रसा अपि विज्ञया , अपुण्यगन्धरसग्रहणस्य पाप्मसबन्धनिमित्तत्वश्रवणात् , 'तस्मात्तेनोभय जिघ्रति सुरभि च दुर्गन्धि च । पाप्मना ह्येष विद्ध ' इति श्रुते । न च पाप्मससर्ग ईश्वरस्य, अविद्यादिदोषस्यानुपपत्त । सर्वमिद जगत् अभ्यात्त अभिव्याप्त । अतततर्व्याप्त्यर्थस्य कर्तरि निष्ठा । तथा अवाकी— उच्यत अनयति वाक् वागेव वाक , यद्वा वचेर्घञन्तस्य करणे वाक , स यस्य विद्यते स वाकी, न वाकी अ वाकी । वाक्प्रतिषेधश्च अत्र उपलक्षणार्थ । गन्धरसादिश्रवणात् ईश्वरस्य प्राप्तानि घ्राणादीनि करणानि गन्धादि ग्रहणाय, अत वाक्प्रतिषेधेन प्रतिषिध्यन्ते तानि, 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु स शृणोत्यकर्ण ' इत्यादिमन्त्रवर्णात् । अनादर असभ्रम , अप्राप्तप्राप्तौ हि सभ्रम स्यादनाप्तकामस्य । न तु आप्तकामत्वात् नित्यतृप्तस्येश्वरस्य सभ्रमोऽस्ति क्वचित् ॥

**एष म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाक तण्डुलाद्वैष म आत्मान्तर्हृदये ज्याया-**

न्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दि
वो ज्यायानेभ्यो लोकेभ्य ॥ ३ ॥

एष यथोक्तगुण मे मम आत्मा अन्तर्हृदये हृदयपुण्ड-
रीकस्यान्त मध्ये अणीयान अणुतर, व्रीहेर्वा यवाद्वा इत्यादि
अत्यन्तसूक्ष्मत्वप्रदर्शनार्थम् । श्यामाकाद्वा श्यामाकतण्डुलाद्वा
इति परिच्छिन्नपरिमाणात् अणीयानित्युक्तेऽणुपरिमाणत्व
प्राप्तमाशङ्क्य, अत तत्प्रतिषेधायारभत—एष म आत्मा
न्तर्हृदय ज्यायान्पृथिव्या इत्यादिना । ज्याय परिमाणाच्च
ज्यायस्त्व दर्शयन् अन तपरिमाणत्व दर्शयति—मनोमय
इत्यादिना ज्यायानेभ्यो लोकेभ्य इत्यन्तेन ॥

सर्वकर्मा सर्वकाम सर्वगन्ध सर्व
रस' सर्वमिदमभ्यात्तोऽवाक्यनादर एष
म आत्मान्तर्हृदय एतद्ब्रह्मैतमित: प्रेत्या-
भिसभवितास्मीति यस्य स्यादद्धा न
विचिकित्सास्तीति ह स्माह शाण्डिल्य'
शाण्डिल्य ॥ ४ ॥

यथोक्तगुणलक्षण ईश्वर ध्येय, न तु तद्गुणविशिष्ट
एव—यथा राजपुरुषमानय चित्रगु वा इत्युक्ते न विशष-

णस्याग्यानयने व्याप्रियते तद्वदिहापि प्राप्तम, अतस्तन्नि वृत्त्यर्थं सवकर्मेत्यादि पुनर्वचनम । तस्मात् मनोमयत्वादिगु णविशिष्ट एवेश्वरो ध्यय । अत एव षष्ठसप्तमयोरिव 'त त्त्वमसि' 'आत्मैवेद सर्वम' इति नेह स्वाराज्येऽभिषि च्यति, एष म आत्मा एतद्ब्रह्मैतमित प्रेत्याभिसभवितास्मि इति लिङ्गात्, न तु आत्मशब्देन प्रत्यगात्मैव उच्यते, ममेति षष्ठ्या सब धाथप्रत्यायकत्वात्, एतमभिसभवितास्मीति च कर्मकर्तृत्वनिर्देशात् । ननु षष्ठेऽपि 'अथ सपत्स्ये' इति सत्सपत्ते कालान्तारतत्व दर्शयति । न, आरब्धसस्कारशे- षस्थित्यर्थपरत्वात्, न कालान्तरितार्थता, अन्यथा तत्त्व मसीत्येतस्यार्थस्य बाधप्रसङ्गात् । यद्यपि आत्मशब्दस्य प्र त्यगर्थत्व सर्वं खल्विद ब्रह्मेति च प्रकृतम एष म आत्मा न्तर्हृदय एतद्ब्रह्मेत्युच्यते, तथापि अन्तर्धानमीषदपरित्यज्यैव एतमात्मान इत अस्माच्छरीरात प्रेत्य अभिसभवितास्मी त्युक्तम् । यथाक्रतुरूपस्य आत्मन प्रतिपत्तास्मीति यस्यैवविद स्यात् भवेत् अद्धा सत्यम् एव स्यामह प्रेत्य, एव न स्यामिति न च विचिकित्सा अस्ति इत्येतस्मिन्नर्थे क्रतुफलसबन्धे, स तथैवेश्वरभाव प्रतिपद्यते विद्वान्, इत्येतदाह स्म उक्तवान्किल शाण्डिल्या नाम ऋषि । द्विरभ्यास आदरार्थ ॥

इति चतुर्दशखण्डभाष्यम् ॥

## पञ्चदश खण्ड. ॥

'अस्य कुले वीरो जायते' इत्युक्तम् । न वीरज ममात्र पितुस्त्राणाय, 'तस्मात्पुत्रमनुशिष्ट लोक्यमाहु' इति श्रुत्यन्तरात् । अतस्तद्दीर्घायुष्ट्व कथ स्यादित्येवमर्थ कोशविज्ञानारम्भ । अभ्यर्हितविज्ञानव्यासङ्गादनन्तरमेव नोक्त तदिदानीमेव आरभ्यते—

**अन्तरिक्षोदर. कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तर बिलꣳस एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳश्रितम् ॥ १ ॥**

अन्तरिक्षम् उदरम् अन्त सुषिर यस्य सोऽयम् अन्तरिक्षोदर, कोश कोश इव अनेकधर्मसादृश्यात्कोश, स च भूमिबुध्न भूमिर्बुध्नो मूल यस्य स भूमिबुध्न, न जीर्यति न विनश्यति, त्रैलोक्यात्मकत्वात् । सहस्रयुगकालावस्थायी हि स । दिशो हि अस्य सर्वा स्रक्तय कोणा । द्यौरस्य कोशस्य उत्तरम ऊर्ध्व बिलम्, स एष यथोक्तगुण कोश वसुधान वसु धीयतेऽस्मिन्प्राणिना कर्मफलाख्यम, अतो वसुधान । तस्मिन्नन्त विश्व समस्त प्राणिकर्मफल सह तत्साधनै इद यद्गृह्यते प्रत्यक्षादिप्रमाणै श्रितम् आश्रित स्थितमित्यर्थ ॥

**तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥**

तस्यास्य प्राची दिक् प्राग्गतो भागः जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम । सहमाना नाम सहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना नाम दक्षिणा दिक् । तथा राज्ञी नाम प्रतीची पश्चिमा दिक्, राज्ञी राज्ञा वरुणेनाधिष्ठिता, सन्ध्यारागयोगाद्वा । सुभूता नाम भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात् सुभूता नाम उदीची । तासां दिशां वायुः वत्सः, दिग्जत्वाद्वायोः, पुरोवात इत्यादिदर्शनात् । स यः कश्चित् पुत्रदीर्घजीवितार्थी एवं यथोक्तगुणं वायुं दिशां वत्सम् अमृतं वेद, स न पुत्ररोदं पुत्रनिमित्तं रोदनं न रोदिति, पुत्रो न म्रियत इत्यर्थः । यत एवं विशिष्टं कोशदिग्वत्सविषयं विज्ञानम्, अतः सोऽहं पुत्रजीवितार्थी एवमेतं वायुं दिशां वत्सं वेद

जाने । अत पुत्ररोद मा रुद पुत्रमरणनिमित्त पुत्ररोदो मम मा भूदित्यर्थ ॥

**अरिष्ट कोश प्रपद्येऽमुनामुनामुना प्राण प्रपद्येऽमुनामुनामुना भू प्रपद्येऽमुनामुनामुना भुव प्रपद्येऽमुनामुनामुना स्व प्रपद्येऽमुनामुनामुना ॥ ३ ॥**

अरिष्टम् अविनाशिन कोश यथोक्त प्रपद्ये प्रपन्नोऽस्मि पुत्रायुषे । अमुनामुनामुनेति त्रिर्नाम गृह्णाति पुत्रस्य । तथा प्राण प्रपद्येऽमुनामुनामुना, भू प्रपद्येऽमुनामुनामुना, भुव प्रपद्येऽमुनामुनामुना, स्व प्रपद्येऽमुनामुनामुना, सर्वत्र प्रपद्ये इति त्रिर्नाम गृह्णाति पुन पुन ॥

**स यदवोच प्राण प्रपद्य इति प्राणो वा इद९ सर्व भूत यदिद किंच तमेव तत्प्रापत्सि ॥ ४ ॥**

स यदवोच प्राण प्रपद्य इति व्याख्यानार्थमुपन्यास । प्राणो वा इद९ सर्व भूत यदिद जगत्। यथा वारा नाभौ' इति वक्ष्यति । अतस्तमेव सर्व तत् तेन प्राणप्रतिपादनेन प्रापत्सि प्रपन्नोऽभूवम् ॥

**अथ यदवोच भू प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्ष प्रपद्ये दिव प्रपद्य इत्येव तदवोचम् ॥ ५ ॥**

तथा भू प्रपद्ये इति त्रीँल्लोकान्भूरादीन्प्रपद्ये इति तदवोचम् ॥

**अथ यदवोच भुवः प्रपद्य इत्यग्नि प्रपद्ये वायु प्रपद्य आदित्य प्रपद्य इत्येव तदवोचम् ॥ ६ ॥**

अथ यदवोच भुव प्रपद्ये इति, अग्न्यादीन्प्रपद्ये इति तदवोचम् ॥

**अथ यदवोच८ स्व प्रपद्य इत्यृग्वेद प्रपन्ये यजुर्वेद प्रपद्ये सामवेद प्रपद्य इत्येव तदवोच तदवोचम् ॥ ७ ॥**

इति पञ्चदश खण्ड ॥

अथ यदवाच स्व प्रपद्ये इति, ऋग्वेदादीन्प्रपद्ये इत्येव तदवोचमिति । उपरिष्ठान्मन्त्रान् जपेत् तत पूर्वोक्तमजर कोश सदिग्वत्स यथावद्ध्यात्वा । द्विर्वचनमादरार्थम् ॥

इति पञ्चदशखण्डभाष्यम् ॥

## षोडश खण्ड ॥

पुत्रायुष उपासनमुक्त जपश्च । अथेदानीमात्मन दीर्घ जीवनायेदमुपासन जप च विदधदाह, जीवन्हि स्वय पुत्रादिफलेन युज्यते, नान्यथा । इत्यत आत्मान यज्ञ सपादयति पुरुष —

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विꣳशति वर्षाणि तत्प्रात꣡सवन चतुर्विꣳशत्यक्षरा गायत्री गायत्र प्रात सवन तदस्य व सवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥**

पुरुष जीवनविशिष्ट कार्यकरणसघात यथाप्रसिद्ध एव, वावशब्दोऽवधारणार्थं , पुरुष एव यज्ञ इत्यर्थं । तथा हि सामान्यै सपादयति यज्ञत्वम । कथम ? तस्य पुरुषस्य यानि चतुर्विंशतिवर्षाण्यायुष , तत्प्रात सवन पुरुषाख्यस्य यज्ञस्य । केन सामान्येनेति, आह— चतुर्विंशत्यक्षरा गायत्री छन्द , गायत्र गायत्रीछन्दस्क हि विधियज्ञस्य प्रात -

सवनम्, अत प्रात सवनसपन्नेन चतुर्विंशतिवर्षायुषा युक्त पुरुष अतो विधियज्ञसादृश्यात् यज्ञ । तथोत्तरयोरप्या युषो सवनद्वयसपत्ति त्रिष्टुब्जगत्यक्षरसख्यासामान्यतो वा-न्यथा । किंच, तदस्य पुरुषयज्ञस्य प्रात सवन विधियज्ञस्येव वसव देवा अन्वायत्ता अनुगता, सवनदेवतात्वेन स्वा मिन इत्यर्थ । पुरुषयज्ञेऽपि विधियज्ञ इव अग्न्यादयो वस व देवा प्राप्ता इत्यतो विशिनष्टि—प्राणा वाव वसव वा-गादयो वायवश्च । एते हि यस्मात् इद पुरुषादिप्राणिजातम् एते वासयन्ति । प्राणेषु हि देहे वसत्सु सर्वमिद वसति, नान्यथा । इत्यतो वसनाद्वासनाच्च वसव ॥

**त चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा वसव इद मे प्रात सवन मा-ध्यदिन९सवनमनुसतनुतेति माह प्राणा-नां वसूना मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥**

त चेत् यज्ञसपादिनम् एतस्मिन् प्रात सवनसपन्ने वयसि किंचित् व्याध्यादि मरणशङ्काकारणम् उपतपेत् दु खमुत्पा दयेत्, स तदा यज्ञसपादी पुरुष आत्मान यज्ञ मन्यमान

ब्रूयात जपेदित्यथ इम मन्त्रम्— हे प्राणा वसव इद म प्रात सवन मम यज्ञस्य वर्तत, तत् माध्यदिन सवनम् अनुसत नुतेति माध्यदिनन सवनेन आयुषा सहित एकीभूत सतत कुरुतत्यथ । मा अह् यज्ञ युष्माक प्राणाना वसूना प्रात सव नेशाना मध्ये विलोप्सीय विलुप्येय विच्छिद्येयत्यथ । इति शब्दो मन्त्रपरिसमाप्त्यथ । स तेन जपेन ध्यानेन च तत तस्मादुपतापात् उत् एति उद्गच्छति । उद्गम्य विमुक्त सन् अगदो ह अनुपतापो भवत्यव ॥

**अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यदिनꣳ सवन चतुश्चत्वारिꣳशद्-क्षरा त्रिष्टुप्त्रैष्टुभ माध्यदिनꣳ सवन त-दस्य रुद्रा अन्वायत्ता प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥**

अथ यानि चतुश्चत्वारिंशद्वर्षाणीत्यादि समानम् । रुदन्ति रोदयन्तीति प्राणा रुद्रा । क्रूरा हि ते मध्यमे वयसि, अतो रुद्रा ॥

**त चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इद मे माध्यदिनꣳ सवन**

तृतीयसवनमनुसंतनुतेति माहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदꣳ सर्वमाददते ॥ ५ ॥

तं चेदस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

तथा आदित्याः प्राणाः । ते हि इदं शब्दादिजातम् आददते, अत आदित्याः । तृतीयसवनमायुः षोडशोत्तरवर्षशतं समापयत अनुसंतनुत यज्ञं समापयतेत्यर्थः । समानमन्यत् ॥

निश्चिता हि विद्या फलायेत्येतद्दर्शयन् उदाहरति—

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडश वर्षशतमजीवत्प्र ह षोडश वर्षशतं जीवति य एवं वेद ॥ ७ ॥**

इति षोडश खण्ड ॥

एतत् यज्ञदर्शन ह स्म वै किल तद्विद्वानाह महिदासो नामत, इतराया अपत्यम ऐतरेय । किं कस्मात् म मम एतत् उपतपनम् उपतपसि स त्व ह रोग, योऽह यज्ञ अनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्यामि, अतो वृथा तव श्रम इत्यर्थ । इत्येवमाह स्म—इति पूर्वेण सबन्ध । स एवं निश्चय सन् षोडश वर्षशतमजीवत् । अन्योऽप्येवंनिश्चय षोडश वर्षशत प्रजीवति, य एव यथोक्त यज्ञसपादन वेद जानाति, स इत्यर्थ ॥

इति षोडशखण्डभाष्यम् ॥

## सप्तदश खण्ड ॥

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा ॥ १ ॥**

स यदशिशिषतीत्यादियज्ञसामान्यनिर्देश पुरुषस्य पूर्वे णैव सबध्यते । यदशिशिषति आशतुमिच्छति, तथा पिपासति पातुमिच्छति, यन्न रमत इष्टाद्यप्राप्तिनिमित्तम्, यदेवजातीयक दु खमनुभवति, ता अस्य दीक्षा , दु ख सामान्याद्धिधियज्ञस्येव ॥

**अथ यदश्नाति यत्पिबति यद्रमते तदु-पसदैरेति ॥ २ ॥**

अथ यदश्नात यत्पिबति यद्रमते रतिं च अनुभवति इष्टादिसयोगात्, ता उपसदै समानतामेति । उपसदा च प-योव्रतत्वनिमित्त सुखमस्ति । अल्पभोजनीयानि च अहान्यास न्नानि इति प्रश्वास , अतोऽशनादीनामुपसदा च सामान्यम् ॥

**अथ यद्धसति यज्जक्षति यन्मैथुन चर-ति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥**

अथ यद्धसति यज्जक्षति भक्षयति यन्मैथुन चरति, स्तुत-शस्त्रैरेव तत्समानतामेति , शब्दवत्त्वसामान्यात् ॥

**अथ यत्तपो दानमार्जवमहिꣳसा सत्य वचनमिति ता अस्य दक्षिणा ॥ ४ ॥**

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य दक्षिणा , धर्मपुष्टिकरत्वसामान्यात् ॥

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथ ॥ ५ ॥**

यस्माच्च यज्ञ पुरुष , तस्मात् त जनयिष्यति माता यदा, तदा आहुरन्ये सोष्यतीति तस्य मातरम्, यदा च प्रसूता भवति, तदा असोष्ट पूर्णिकेति , विधियज्ञ इव सोष्यति सोम देवदत्त , असोष्ट सोम यज्ञदत्त इति , अत शब्दसामान्याद्वा पुरुषो यज्ञ । पुनरुत्पादनमेवास्य तत् पुरुषाख्यस्य यज्ञस्य, यत्सोष्यत्यसोष्टेति शब्दसबन्धित्व विधियज्ञस्येव। किंच तन्मरणमेव अस्य पुरुषयज्ञस्य अवभृथ , समाप्तिसामान्यात् ॥

**तद्धैतद्घोर आङ्गिरस कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रय प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवत ॥ ६ ॥**

तद्धैतत् यज्ञदर्शन घोर नामत , आङ्गिरस गोत्रत , कृष्णाय देवकीपुत्राय शिष्याय उक्त्वा, उवाच तदेतत्त्रयम् इत्यादिव्यवहितेन सबन्ध । स च एतद्दर्शन श्रुत्वा अपि

पास एवान्याभ्यो विद्याभ्यो बभूव । इत्थ च विशिष्टा इयम्, यत्कृष्णस्य देवकीपुत्रस्य अन्या विद्या प्रति तृड्विच्छेदकरी इति पुरुषयज्ञविद्या स्तौति । घोर आङ्गिरस कृष्णायोक्त्वेमा विद्या किमुवाचेति, तदाह—स एव यथोक्तयज्ञवित् अन्त-वेलाया मरणकाले एतत् मन्त्रत्रय प्रतिपद्येत जपदित्यर्थ । कि तत्? अक्षितम् अक्षीणम् अक्षत वा असि इत्येक यजु । सामर्थ्यादादित्यस्थ प्राण च एकीकृत्य आह । तथा तमेव आह, अच्युत स्वरूपादप्रच्युतमसि इति द्वितीय यजु । प्राणस शित प्राणश्च स सशित सम्यक्तनूकृत च सूक्ष्म तत् त्वमसि इति तृतीय यजु । तत्र एतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवत, न जपार्थे, त्रय प्रतिपद्येत इति त्रित्वसख्याबाधनात्, पञ्चसख्या हि तदा स्यात् ॥

**आदित्प्रत्नस्य रेतस । उद्वय तमसस्परि ज्योति पश्यन्त उत्तरꣳ स्व' पश्यन्त उत्तर देव देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥**

आदित् इत्यत्र आकारस्यानुबन्धस्तकार अनर्थक छन्दश्च । प्रत्नस्य चिरतनस्य पुराणस्येत्यर्थ, रेतस कारणस्य बीजभूतस्य जगत, सदाख्यस्य ज्योति प्रकाश

पश्यन्ति । आशब्द उत्सृष्टानुबन्ध पश्यन्तीत्यनेन सबध्यते, कि तज्ज्योति पश्यन्ति, वासरम् अह अहरिव तत् सर्वतो व्याप्त ब्रह्मणो ज्योति , निवृत्तचक्षुषो ब्रह्मविद ब्रह्मचर्यादिनिवृत्तिसाधनै शुद्धान्त करणा आ समन्तत ज्योति पश्यन्तीत्यथ । पर परमिति लिङ्गव्यत्ययेन, ज्योतिष्परत्वात्, यत् इध्यते दीप्यते दिवि द्योतनवति परस्मिन्ब्रह्मणि वर्तमानम् येन ज्योतिषेद्ध सविता तपति चन्द्रमा भाति विद्युद्विद्योतते ग्रहतारागणा विभासन्ते। किं च, अन्यो मन्त्रदृगाह यथोक्त ज्योति पश्यन्—उद्वय तमस अज्ञानलक्षणात् परि परस्तादिति शेष , तमसो वा अपनेतृ यज्ज्योति उत्तरम्—आदित्यस्थ परिपश्यन्त वयम् उत् अगन्म इति व्यवहितेन सबन्ध , तज्ज्योति स्व स्वम् आत्मीयमस्मद्धृदि स्थितम , आदित्यस्थ च तदेक ज्योति , यत् उत्तरम् उत्कृष्टतरमूर्ध्वतर वा अपर ज्योतिरपेक्ष्य, पश्यन्त उदगन्म वयम् । कमुदगन्मति, आह । देव द्योतनवन्त देवत्रा देवेषु सर्वेषु, सूर्य रसाना रश्मीना प्राणाना च जगत ईरणात्सूर्य तमुदगन्म गतवन्त , ज्योतिरुत्तम सर्वज्योतिर्भ्य उत्कृष्टतमम् अहो प्राप्ता वयमित्यर्थ । इद तज्ज्योति , यत् ऋग्भ्या स्तुत यद्यजुर्त्रयेण प्रकाशितम् । द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थ ॥

इति सप्तदशखण्डभाष्यम् ॥

## अष्टादश खण्ड ॥

---

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधि-
दैवतमाकाशो ब्रह्मेत्युभयमादिष्ट भवत्य-
ध्यात्म चाधिदैवत च ॥ १ ॥**

मनोमय ईश्वर उक्त आकाशात्मेति च ब्रह्मणो गुणैक-देशत्वेन । अथेदानीं मनआकाशयो समस्तब्रह्मदृष्टिविधा-नाथ आरम्भ मनो ब्रह्मेत्यादि । मन मनुतेऽनेनेत्यन्त करण तद्ब्रह्म परमित्युपासीतति एतदात्मविषय दर्शनम् अध्यात्मम् । अथ अधिदैवत देवताविषयमिद वक्ष्याम । आकाशो ब्रह्मेत्युपासीत, एवमुभयमध्यात्ममधिदैवत च उभय ब्रह्मदृष्टिविषयम् आदिष्टम उपदिष्ट भवति, आकाशमनसो सूक्ष्मत्वात् मनसोपलभ्यत्वाच्च ब्रह्मण, योग्य मनो ब्रह्म-दृष्टे, आकाशश्च, सर्वगतत्वात्सूक्ष्मत्वादुपाधिहीनत्वाच्च ॥

**तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राण' पाद
श्चक्षुः पाद' श्रोत्र पाद इत्यध्यात्ममथा-
धिदैवतमग्नि' पादो वायु. पाद आदित्य.**

**पादो दिश पाद इत्युभयमेवादिष्ट भव- त्यध्यात्म चैवाधिदैवत च ॥ २ ॥**

तदेतत् मनआख्य चतुष्पाद्ब्रह्म, चत्वार पादा अस्येति । कथ चतुष्पात्त्व मनसा ब्रह्मण इति, आह—वाक्प्राणश्चक्षु श्रोत्रमित्येते पादा इत्यध्यात्मम । अथाधिदैवतम् आकाशस्य ब्रह्मणोऽग्निर्वायुरादित्यो दिश इत्येते । एवमुभयमेव चतुष्पा-द्ब्रह्म आदिष्ट भवति अध्यात्म चैवाधिदैवत च । तत्र वागेव मनसो ब्रह्मणश्चतुर्थ पाद इतरपादत्रयापेक्षया— वाचा हि पादेनेव गवादि वक्तव्यविषय प्रति तिष्ठति, अतो मनस पाद इव वाक् । तथा प्राणो घ्राण पाद , तेनापि गन्ध-विषय प्रति च क्रामति । तथा चक्षु पाद श्रोत्र पाद इत्ये-वमध्यात्म चतुष्पात्त्व मनसो ब्रह्मण । अथाधिदैवतम अग्नि-वाग्वादित्यदिश आकाशस्य ब्रह्मण उदर इव गो पादा इव लग्ना उपलभ्यन्ते, तेन तस्य आकाशस्य अग्न्यादय पादा उच्यन्ते । एवमुभयमध्यात्म चैवाधिदैवत च चतुष्पादादिष्ट भवति ॥

**वागेव ब्रह्मणश्चतुर्थ पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च**

तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एव वेद ॥ ३ ॥

तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः । माऽग्निना अधिदैवतेन ज्योतिषा भाति च दीप्यते तपति च संतापं च औष्ण्यं करोति । अथवा तैलघृताद्याग्नेयाशनेन इद्धा वाग्भाति च तपति च वदनायोत्साहवती स्यादित्यर्थः । विदुषः फलम्, भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं यथोक्तं वेद ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दि

**ग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एव वेद य एव वेद ॥ ६ ॥**

**इति अष्टादश खण्ड ॥**

तथा प्राण एव ब्रह्मणश्चतुर्थ पाद । स वायुना गन्धाय भाति च तपति च । तथा चक्षु आदित्येन रूपग्रहणाय, श्रोत्र दिग्भि शब्दग्रहणाय । विद्याफल समान सर्वत्र ब्रह्मसपत्तिरदृष्ट फल य एव वेद । द्विरुक्तिर्दर्शनसमाप्त्यर्था ॥

इति अष्टादशखण्डभाष्यम् ॥



## एकोनविंश खण्ड ॥

आदित्यो ब्रह्मण पाद उक्त इति तस्मिन्सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते—

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् । तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥**

आदित्यो ब्रह्मेत्यादेश उपदेश, तस्योपव्याख्यानं क्रियते स्तुत्यर्थम् । असत अव्याकृतनामरूपम् इदं जगत् अशेषमग्रे प्रागवस्थायामुत्पत्ते आसीत् न त्वसदेव, 'कथमसत सज्जायेत' इति असत्कार्यत्वस्य प्रतिषेधात् । ननु इहासदेवेति विधानाद्विकल्प स्यात् । न, क्रियास्विव वस्तुनि विकल्पानुपपत्ते । कथं तर्हि इदमसदेवेति ? नन्ववोचाम अव्याकृतनामरूपत्वादसदिवासदिति । नन्वेवशब्दोऽवधारणार्थ, सत्यमेवम्, न तु सत्त्वाभावमवधारयति, किं तर्हि, व्याकृतनाम

रूपाभावमवधारयति, नामरूपव्याकृतविषये सच्छब्दप्रयागा दृष्ट । तच्च नामरूपव्याकरणमादित्यायत्त प्रायशो जगत । तदभावे हि अन्ध तम इव इद न प्रज्ञायेत किंचन इत्यत तत्स्तुतिपरे वाक्ये सदपीद प्रागुत्पत्तेर्जगदसदेवेत्यादित्य स्तौति ब्रह्मदृष्टयर्हत्वाय, आदित्यनिमित्तो हि लोके सदिति व्यवहार — यथा असदेवेद राज्ञ कुल सर्वगुणसपन्ने पूर्णवर्मणि राजन्यसतीति तद्वत् । न च सत्त्वमसत्त्व वा इह जगत प्रतिपिपादयिषितम्, आदित्यो ब्रह्मेत्यादेशपरत्वात् । उपसहरिष्यत्यन्ते आदित्य ब्रह्मेत्युपास्त इति । तत्सदासीत् तत् असच्छब्दवाच्य प्रागुत्पत्ते स्तिमितम् अनिस्पन्दमसदिव सत्कार्याभिमुखम् ईषदुपजातप्रवृत्ति सदासीत्, ततो लब्धपरिस्पन्द तत्समभवत् अल्पतरनामरूपव्याकरणेन अङ्कुरीभूतमिव बीजम् । ततोऽपि क्रमेण स्थूलीभवत् अद्भ्य आण्ड समवर्तत सवृत्तम् । आण्डमिति दैर्घ्य छान्दसम् । तदण्ड सवत्सरस्य कालस्य प्रसिद्धस्य मात्रा परिमाणम् अभिन्न स्वरूपमेव अशयत स्थित बभूव । तत् तत सवत्सरपरिमाणात्कालादूर्ध्व निरभिद्यत निर्भिन्नम् — वयसामिवाण्डम् । तस्य निर्भिन्नस्याण्डस्य कपाले द्वे रजत च सुवर्ण च अभवता सवृत्ते ॥

**तद्यद्रजतꣳ सेय पृथिवी यत्सुवर्णꣳ सा द्यौर्यज्जरायु ते पर्वता यदुल्बꣳ समेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रः ॥ २ ॥**

तत् तयो कपालयो यद्रजत कपालमासीत्, सेय पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थ । यत्सुवर्ण कपाल सा द्यौ द्युलोकोपलक्षितमूर्ध्व कपालमित्यर्थ । यज्जरायु गर्भपरिवेष्टन स्थूलम् अण्डस्य द्विशकलीभावकाले आसीत्, ते पर्वता बभूवु । यदुल्ब सूक्ष्म गर्भपरिवेष्टनम्, तत् सह मेघै समेघ नीहारोऽवश्याय बभूवेत्यर्थ । या गर्भस्य जातस्य देहे धमनय शिरा, ता नद्यो बभूवु । यत् तस्य वस्तौ भव वास्तेयमुदकम्, स समुद्र ॥

**अथ यत्तदजायत सोऽसावादित्यस्त जायमान घोषा उलूलवोऽनूदतिष्ठन्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदय प्रति प्रत्यायन प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥**

अथ यत्तदजायत गर्भरूप तस्मिन्नण्डे, सोऽसावादित्य , तमादित्य जायमान घोषा शब्दा उलूलव उरूरवो विस्तीर्णरवा उदतिष्ठन् उत्थितवन्त इश्वरस्येवेह प्रथमपुत्रजन्मनि सर्वाणि च स्थावरजङ्गमानि भूतानि सर्वे च तेषा भूताना कामा काम्यन्त इति विषया स्त्रीवस्त्रान्नादय । यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्ति , तस्मादद्यत्वेऽपि तस्यादित्यस्योदय प्रति प्रत्यायन प्रति अस्तगमन च प्रति, अथवा पुन पुन प्रत्यागमन प्रत्यायन तत्प्रति तन्निमित्तीकृत्यत्यर्थ , सर्वाणि च भूतानि सर्वे च कामा घोषा उलूलवश्चानुतिष्ठन्ति । प्रसिद्ध हि एतदुदयादौ सवितु ॥

**स य एतमेव विद्वानादित्य ब्रह्मेत्युपास्तेऽभ्याशो ह यदेन१ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥**

इति एकोनविंश खण्ड ॥

स य कश्चित् एतमेव यथोक्तमहिमान विद्वान्सन् आदित्य ब्रह्मेत्युपास्ते, स तद्भाव प्रतिपद्यत इत्यर्थ । किंच दृष्ट फलम् अभ्याश क्षिप्र तद्विद , यदिति क्रियाविशेषणम् , एनमेवविद साधव शोभना घोषा , साधुत्व घोषादीना यदु-

पभोगे पापानुबन्धाभाव , आ च गन्छेयु आगन्छेयुश्च, उप च निम्रेडेरन् उपनिम्रेडेरश्च—न केवलमागमनमात्र घोषाणाम् उपसुखयेयुश्च उपसुख च कुर्युरित्यथ । द्विर भ्यास अध्यायपरिसमाप्त्यर्थ आदरार्थश्च ॥

**इति एकोनविंशखण्डभाष्यम् ॥**

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोवि दभग वत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ

**छान्दोग्योपनिषद्भाष्ये तृतीयोऽध्याय समाप्त ॥**

# CONTENTS.

# ॥ विषयाः ॥

॥ श्रीः ॥

# उपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः
विरचितम् ।

## चतुर्थो भागः

## छान्दोग्ये

४—८. अध्यायाः

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

पृष्ठम्

S. U. IV. 00

अष्टमोऽध्यायः .... ४६९—५५३



——*——

# ॥ चतुर्थोऽध्यायः ॥



वायुप्राणयोर्ब्रह्मणः पाददृष्टयध्यासः पुरस्ताद्वर्णितः । अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते । सुखावबोधार्था आख्यायिका, विद्यादानग्रहणविधिप्रदर्शनार्था च । श्रद्धान्नदानानुद्धतत्वादीनां च विद्याप्राप्तिसाधनत्वं प्रदर्श्यते आख्यायिकया—

**जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्तीति ॥ १ ॥**

जानश्रुतिः जनश्रुतस्यापत्यम् । ह ऐतिह्यार्थः । पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयः । बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी । बहुपाक्यः बहु पक्तव्यमहन्यहनि गृहे यस्यासौ बहुपा-

क्य: ; भोजनार्थिभ्यो बह्वस्य गृहेऽन्नं पच्यत इत्यर्थ: । एवं-गुणसंपन्नोऽसौ जानश्रुति: पौत्रायणो विशिष्टे देशे काले च कस्मिंश्चित् आस बभूव । स ह सर्वत: सर्वासु दिक्षु ग्रामेषु नगरेषु आवसथान एत्य वसन्ति येष्विति आवसथा: तान् मापयांचक्रे कारितवानित्यर्थ: । सर्वत एव मे मम अन्नं तेष्वावसथेषु वसन्त: अत्स्यन्ति भोक्ष्यन्त इत्येवमभिप्राय: ॥

**अथ ह ँसा निशायामतिपेतुस्तद्धै-वँ ह ँसोह ँसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुते: पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षी-स्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥**

तत्रैवं सति राजनि तस्मिन्घर्मकाले हर्म्यतलस्थे अथ ह हंसा निशायां रात्रौ अतिपेतु: । ऋषयो देवता वा राज्ञो-ऽन्नदानगुणैस्तोषिता: सन्त: हंसरूपा भूत्वा राज्ञो दर्शनगो-चरे अतिपेतु: पतितवन्त: । तत् तस्मिन्काले तेषां पततां हंसानाम् एक: पृष्ठत: पतन् अग्रत: पतन्तं हंसमभ्युवाद अभ्युक्तवान्— हो होयीति भो भो इति संबोध्य भल्लाक्ष भल्लाक्षेत्यादरं दर्शयन् यथा पश्य पश्याश्चर्यमिति तद्वत् ; भ-ल्लाक्षेति मन्ददृष्टित्वं सूचयन्नाह ; अथवा सम्यग्ब्रह्मदर्शना-

भिमानवत्त्वात्तस्य असकृदुपालब्धस्तेन पीड्यमानोऽमर्षितया तत्सूचयति भल्लाक्षेति ; जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरम् अन्नदानादिजनितप्रभावजम् आततं व्याप्तं द्युलोकस्पृगित्यर्थः ; दिवा अह्ना वा समं ज्योतिरित्येतत् ; तन्मा प्रसाङ्क्षीः सञ्जनं सक्तिं तेन ज्योतिषा संबन्धं मा कार्षीरित्यर्थः । तत्प्रसञ्जनेन तत् ज्योतिः त्वा त्वां मा प्रधाक्षीः मा दहत्वित्यर्थः ; पुरुषव्यत्ययेन मा प्रधाक्षीदिति ॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥**

तम् एवमुक्तवन्तं परः इतरोऽग्रगामी प्रत्युवाच— अरे निकृष्टोऽयं राजा वराकः, तं कमु एनं सन्तं केन माहात्म्येन युक्तं सन्तमिति कुत्सयति एनमेवं सबहुमानमेतद्वचनमात्थ रैक्वमिव सयुग्वानम्, सह युग्वना गन्त्र्या वर्तत इति सयुग्वा रैक्वः, तमिव आत्थ एनम् ; अननुरूपमस्मिन्नयुक्तमीदृशं वक्तुं रैक्व इवेत्यभिप्रायः । इतरश्च आह— यो नु कथं त्वयोच्यते सयुग्वा रैक्वः । इत्युक्तवन्तं भल्लाक्ष आह— शृणु यथा स रैक्वः ॥

**यथा कृतायविजितायाधरेयाः संय-**

**न्त्येवमेनꣳ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥**

यथा लोके कृतायः कृतो नामायो द्यूतसमये प्रसिद्धश्चतुरङ्कः, स यदा जयति द्यूते प्रवृत्तानाम्, तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेयाः त्रेताद्वापरकलिनामानः संयन्ति संगच्छन्तेऽन्तर्भवन्ति; चतुरङ्के कृताये त्रिद्व्येकाङ्कानां विद्यमानत्वात्तदन्तर्भवन्तीत्यर्थः। यथा अयं दृष्टान्तः, एवमेनं रैक्वं कृतायस्थानीयं त्रेताद्ययस्थानीयं सर्वं तदभिसमैति अन्तर्भवति रैक्वे। किं तत्? यत्किंच लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति, तत्सर्वं रैक्वस्य धर्मेऽन्तर्भवति, तस्य च फले सर्वप्राणिधर्मफलमन्तर्भवतीत्यर्थः। तथा अन्योऽपि कश्चित् यः तत वेद्यं वेद। किं तत्? यत् वेद्यं सः रैक्वः वेद; तद्वेद्यमन्योऽपि यो वेद, तमपि सर्वप्राणिधर्मजातं तत्फलं च रैक्वमिवाभिसमैतीत्यनुवर्तते। सः एवंभूतः अरैक्वोऽपि मया विद्वान् एतदुक्तः एवमुक्तः, रैक्ववत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः ॥

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवा-**

**चाङ्गारे ह सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥**

**यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥**

तदु ह तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य विदुषो रैक्वादेः प्रशंसारूपम उपशुश्राव श्रुतवान्हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः । तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास । ततः स वन्दिभी राजा स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमानः उवाच क्षत्तारं संजिहान एव शयनं निद्रां वा परित्यजन्नेव, हेऽङ्ग वत्स अरे सयुग्वानमिव रैक्वमात्थ किं माम् ; स एव स्तुत्यर्हो नाहमित्यभिप्रायः । अथवा सयुग्वानं रैक्वमात्थ गत्वा मम तद्दिदृक्षाम् । तदा इवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः । स च क्षत्ता प्रत्युवाच रैक्वानयनकामो राज्ञोऽभिप्रायज्ञः— यो नु कथं सयुग्वा रैक्व इति, राज्ञा एवं चोक्तः आनेतुं तच्चिह्नं ज्ञातुमिच्छन् यो नु कथं सयुग्वा रैक्व इत्यवोचत् । स च भद्राक्षवचनमेवावोचत तस्य स्मरन् ॥

**स ह क्षत्तान्विष्य नाविदमिति प्रत्ये-याय त१्होवाच यत्रारे ब्राह्मणस्यान्वेष-णा तदेनमर्च्छेति ॥ ७ ॥**

स ह क्षत्ता नगरं ग्रामं वा गत्वा अन्विष्य रैक्वं नाविदं न व्यज्ञासिषमिति प्रत्येयाय प्रत्यागतवान्। तं होवाच क्षत्ता-रम्— अरे यत्र ब्राह्मणस्य ब्रह्मविद एकान्तेऽरण्ये नदीपु-लिनादौ विविक्ते देशे अन्वेषणा अनुमार्गणं भवति, तत् तत्र एनं रैक्वम् अर्च्छ ऋच्छ गच्छ, तत्र मार्गणं कुर्वित्यर्थः ॥

**सोऽधस्ताच्छकटस्य पामानं कषमाण-मुपोपविवेश त१्हाभ्युवाद त्वं नु भग-वः सयुग्वा रैक इत्यह१्ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताविदमिति प्रत्येयाय ॥**

इत्युक्तः क्षत्ता अन्विष्य तं विजने देशे अधस्ताच्छकटस्य गन्त्र्याः पामानं खर्जूं कषमाणं कण्डूयमानं दृष्ट्वा, अयं नूनं सयुग्वा रैक इति उप समीपे उपविवेश विनयेनोपविष्ट-वान्। तं च रैकं ह अभ्युवाद उक्तवान। त्वमसि हे भगवः भगवन् सयुग्वा रैक इति। एवं पृष्टः अहमस्मि हि अरा३ अरे इति ह अनादर एव प्रतिजज्ञे अभ्युपगतवान्— स तं विज्ञाय अविदं विज्ञातवानस्मीति प्रत्येयाय प्रत्यागत इत्यर्थः ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीयः खण्डः ॥

**तदु ह जानश्रुतिः पौत्रायणः षट्-शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥**

तत् तत्र ऋषेर्गार्हस्थ्यं प्रति अभिप्रायं बुद्ध्वा धनार्थितां च उ ह एव जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कं कण्ठहारम् अश्वतरीरथम् अश्वतरीभ्यां युक्तं रथं तदादाय धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान् । तं च गत्वा अभ्युवाद ह अभ्युक्तवान ॥

**रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥ २ ॥**

हे रैक्व गवां षट् शतानि इमानि तुभ्यं मया आनीतानि, अयं निष्कः अश्वतरीरथश्चायम् एतद्धनमादत्स्व । भगवोऽनुशाधि च मे माम् एताम्, यां च देवतां त्वमुपास्से तद्देवतोपदेशेन मामनुशाधीत्यर्थः ॥

**तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥**

तम् एवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्कः । अहेत्ययं निपातो विनिग्रहार्थीयोऽन्यत्र, इह त्वनर्थकः, एवशब्दस्य पृथक्प्रयोगात् । हारेत्वा हारेण युक्ता इत्वा गन्त्री सेयं हारेत्वा गोभिः सह तवैवास्तु तवैव तिष्ठतु न मम अपर्याप्तेन कर्मार्थमनेन प्रयोजनमित्यभिप्रायः । हे शूद्रेति—ननु राजासौ क्षत्तृसंबन्धात्, स ह क्षत्तारमुवाचेत्युक्तम्; विद्याग्रहणाय च ब्राह्मणसमीपोपगमात् शूद्रस्य च अनधिकारात् कथमिदमननुरूपं रैक्केणोच्यते हे शूद्रेति । तत्राहुराचार्याः—हंसवचनश्रवणात् शुगेनमाविवेश; तेनासौ शुचा श्रुत्वा रैक्वस्य महिमानं वा आद्रवतीति ऋषिः आत्मनः परोक्षज्ञतां दर्शयन् शूद्रेत्याहेति । शूद्रवद्वा धनेनैव एनं विद्याग्रहणायोपजगाम न च शुश्रूषया । न तु जात्यैव शूद्र इति । अपरे पुनराहुः अल्पं धनमाहृतमिति रुषैव एनमुक्तवान् शूद्रेति । लिङ्गं च बह्वाहरणे उपादानं धनस्येति । तदु ह

ऋषेर्मतं ज्ञात्वा पुनरेव जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायां च ऋषेरभिमतां दुहितरमात्मनः तदादाय प्रतिचक्रमे क्रान्तवान् ॥

**तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥**

**तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास स तस्मै होवाच ॥ ५ ॥**

इति द्वितीयः खण्डः ॥

रैक्व इदं गवां सहस्रम् अयं निष्कः अयमश्वतरीरथः इयं जाया जायार्थं मम दुहिता आनीता अयं च ग्रामः यस्मिन्नास्से तिष्ठसि स च त्वदर्थे मया कल्पितः; तदेतत्सर्वमादाय अनुशाध्येव मा मां हे भगवः, इत्युक्तः तस्या जायार्थमानीताया राज्ञो दुहितुः ह एव मुखं द्वारं विद्याया दाने तीर्थम् उपोद्गृह्णन् जानन्नित्यर्थः । 'ब्रह्मचारी धनदायी मेधावी श्रोत्रियः

प्रियः । विद्यया वा विद्यां प्राह तानि तीर्थानि षण्मम' इति विद्याया वचनं विज्ञायते हि । एवं जानन् उपोद्गृह्णन् उवाच उक्तवान् । आजहार आहृतवान् भवान् इमाः गाः यच्चान्यद्धनं तत्साध्विति वाक्यशेषः । शूद्रेति पूर्वोक्तानुकृतिमात्रं न तु कारणान्तरापेक्षया पूर्ववत् । अनेनैव मुखेन विद्याग्रहणतीर्थेन आलापयिष्यथाः आलापयसीति मां भाणयसीत्यर्थः । ते ह एते ग्रामा रैक्वपर्णा नाम विख्याता महावृषेषु देशेषु यत्र येषु ग्रामेषु उवास उषितवान् रैक्वः, तानसौ ग्रामानदादस्मै रैक्वाय राजा । तस्मै राज्ञे धनं दत्तवते ह किल उवाच विद्यां सः रैक्वः ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीयः खण्डः ॥

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥

वायुर्वाव संवर्गः वायुर्बाह्यः, वावेत्यवधारणार्थः, संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गः; वक्ष्यमाणा अग्न्याद्या देवता आत्मभावमापादयतीत्यतः संवर्गः संवर्जनाख्यो गुणो ध्येयो वायोः, कृतायान्तर्भावदृष्टान्तात् । कथं संवर्गत्वं वायोरिति, आह——यदा यस्मिन्काले वै अग्निः उद्वायति उद्गमनं प्राप्नोति उपशाम्यति, तदा असौ अग्निः वायुमेव अप्येति वायुस्वाभाव्यमपिगच्छति । तथा यदा सूर्योऽस्तमेति, वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति । ननु कथं सूर्याचन्द्रमसोः स्वरूपावस्थितयोः वायौ अपिगमनम् ? नैष दोषः, अस्तमने अदर्शनप्राप्तेः वायुनिमित्तत्वात् ; वायुना हि अस्तं नीयते सूर्यः, चलनस्य वायुकार्यत्वात् । अथवा प्रलये सूर्याचन्द्रमसोः स्वरूपभ्रंशे तेजोरूपयोर्वायावेव अपिगमनं स्यात् ॥

**यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥**

तथा यदा आपः उच्छुष्यन्ति उच्छोषमाप्नुवन्ति, तदा वायुमेव अपियन्ति । वायुर्हि यस्मादेव एतान् अग्न्याद्या-न्महाबलान संवृङ्क्ते, अतो वायुः संवर्गगुण उपास्य इत्यर्थः । इत्यधिदैवतं देवतासु संवर्गदर्शनमुक्तम ॥

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥**

अथ अनन्तरम् अध्यात्मम आत्मनि संवर्गदर्शनमिदमु-च्यते । प्राणः मुख्यः वाव संवर्गः । स पुरुषः यदा य-स्मिन्काले स्वपिति, तदा प्राणमेव वागप्येति—वायुमिवाग्निः । प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो हि यस्मादेवैता-न्वागादीन सर्वान्संवृङ्क्त इति ॥

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥**

तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ—वायुरेव देवेषु

संवर्गः प्राणः प्राणेषु वागादिषु मुख्यः ॥

**अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥५॥**

अथ एतयोः स्तुत्यर्थम् इयमाख्यायिका आरभ्यते । हेत्यैतिह्यार्थः । शौनकं च शुनकस्यापत्यं शौनकं कापेयं कपिगोत्रमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं भोजनायोपविष्टौ परिविष्यमणौ सूपकारैः ब्रह्मचारी ब्रह्मविच्छौण्डो बिभिक्षे भिक्षितवान् । ब्रह्मचारिणो ब्रह्मविन्मानितां बुद्ध्वा तं जिज्ञासमानौ तस्मै उ भिक्षां न ददतुः न दत्तवन्तौ ह किमयं वक्ष्यतीति ॥

**स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥**

स ह उवाच ब्रह्मचारी महात्मनश्चतुर इति द्वितीयाबहुवचनम् । देव एकः अग्न्यादीन्वायुर्वागादीन्प्राणः । कः

सः प्रजापतिः जगार ग्रसितवान् । कः स जागरेति प्रश्नमेके । भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः सर्वो लोकः तस्य गोपाः गोपायिता रक्षिता गोप्तेत्यर्थः । तं कं प्रजापतिं हे कापेय नाभिपश्यन्ति न जानन्ति मर्त्याः मरणधर्माणोऽविवेकिनो वा हे अभिप्रतारिन् बहुधा अध्यात्माधिदैवताधिभूतप्रकारैः वसन्तम् । यस्मै वै एतत् अहन्यहनि अन्नम् अदनायाह्रियते संस्क्रियते च, तस्मै प्रजापतये एतदन्नं न दत्तमिति ॥

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजाना̐ँ हिरण्यद̐ँष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥**

तदु ह ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वानः मनसा आलोचयन् ब्रह्मचारिणं प्रत्येयाय आजगाम । गत्वा च आह यं त्वमवोचः नाभिपश्यन्ति मर्त्या इति, तं वयं पश्यामः । कथम्? आत्मा सर्वस्य स्थावरजङ्गमस्य । किंच देवानामग्न्यादीनाम् आत्मनि संहृत्य ग्रसित्वा पुनर्जनयिता

उत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनाम् । अध्यात्मं च प्राणरूपेण वागादीनां प्रजानां च जनिता । अथवा आत्मा देवानामग्निवागादीनां जनिता प्रजानां स्थावरजंगमानाम् । हिरण्यदंष्ट्रः अमृतदंष्ट्रः अभग्नदंष्ट्र इति यावत् । बभसो भक्षणशीलः । अनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिः सूरिरेवेत्यर्थः । महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिम् आहुर्ब्रह्मविदः । यस्मात्स्वयमन्यैरनद्यमानः अभक्ष्यमाणः यदनन्नम् अग्निवागादिदेवतारूपम् अत्ति भक्षयतीति । वा इति निरर्थकः । वयं हे ब्रह्मचारिन्, आ इदम् एवं यथोक्तलक्षणं ब्रह्म वयमा उपास्महे । वयमिति व्यवहितेन संबन्धः । अन्ये न वयमिदमुपास्महे, किं तर्हि? परमेव ब्रह्म उपास्महे इति वर्णयन्ति । दत्तास्मै भिक्षामित्यवोचद्भृत्यान् ॥

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥**

**इति तृतीयः खण्डः ॥**

तस्मा उ ह ददुः ते हि भिक्षाम् । ते वै ये ग्रस्यन्ते अग्न्यादयः यश्च तेषां ग्रसिता वायुः पञ्चान्ये वागादिभ्यः, तथा अन्ये तेभ्यः पञ्चाध्यात्मं वागादयः प्राणश्च, ते सर्वे दश भवन्ति संख्यया, दश सन्तः तत्कृतं भवति ते, चतुरङ्क एकायः एवं चत्वारस्त्र्यङ्कायः एवं त्रयोऽपरे द्व्यङ्कायः एवं द्वावन्यावेकाङ्कायः एवमेकोऽन्यः इत्येवं दश सन्तः तत्कृतं भवति । यत एवम्, तस्मात् सर्वासु दिक्षु दशस्वप्यग्न्याद्या वागाद्याश्च दशसंख्यासामान्यादन्नमेव, 'दशाक्षारा विराट्' 'विराडन्नम' इति हि श्रुतिः । अतोऽन्नमेव, दशसंख्यत्वात् । तत एव दश कृतं कृतेऽन्तर्भावात् चतुरङ्कायत्वेनेत्यवोचाम । सैषा विराट् दशसंख्या सती अन्नं च अन्नादी अन्नादिनी च कृतत्वेन । कृते हि दशसंख्या अन्तर्भूता, अतोऽन्नमन्नादिनी च सा । तथा विद्वान्दशदेवतात्मभूतः सन् विराट्त्वेन दशसंख्यया अन्नं कृतसंख्यया अन्नादी च । तया अन्नान्नादिन्या इदं सर्वं जगत् दशदिक्संस्थं दृष्टं कृतसंख्याभूतया उपलब्धम् । एवंविदः अस्य सर्वं कृतसंख्याभूतस्य दशदिक्संबद्धं दृष्टम् उपलब्धं भवति । किंच अन्नादश्च भवति, य एवं वेद यथोक्तदर्शी । द्विरभ्यासः उपासनसमाप्त्यर्थः ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थः खण्डः ॥

---

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥**

सर्वं वागाद्यग्न्यादि च अन्नान्नादत्वसंस्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते । श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनाय आख्यायिका । सत्यकामो ह नामतः, ह-शब्द ऐतिह्यार्थः, जबालाया अपत्यं जाबालः जबालां स्वां मातरम् आमन्त्रयांचक्रे आमन्त्रितवान् । ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्यामि आचार्यकुले, किंगोत्रोऽहं किमस्य मम गोत्रं सोऽहं किंगोत्रो नु अहमस्मीति ॥

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि स-**

**त्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रवीथा इति ॥ २ ॥**

एवं पृष्टा जबाला सा ह एनं पुत्रमुवाच—नाहमेतत् तव गोत्रं वेद, हे तात यद्गोत्रस्त्वमसि । कस्मान्न वेत्सीत्युक्ता आह— बहु भर्तृगृहे परिचर्याजातमतिथ्यभ्यागतादि चरन्ती अहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहम्, परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत् । यौवने च तत्काले त्वामलभे लब्धवत्यस्मि । तदैव ते पितोपरतः; अतोऽनाथा अहम्, साहमेतन्न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसि, स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः; यद्याचार्येण पृष्ट इत्यभिप्रायः ॥

**स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥**

**तꣳ होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवी-**

**ह्वहं चरन्ती परिचारिणी यौवने त्वा-मलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालो-ऽस्मि भो इति ॥ ४ ॥**

स ह सत्यकामः हारिद्रुमतं हरिद्रुमतोऽपत्यं हारि-द्रुमतं गौतमं गोत्रतः एत्य गत्वा उवाच— ब्रह्मचर्यं भग-वति पूजावति त्वयि वत्स्यामि अतः उपेयाम् उपगच्छेयं शिष्यतया भगवन्तम् इत्युक्तवन्तं तं ह उवाच गौतमः—किं-गोत्रः नु सोम्य असीति, विज्ञातकुलगोत्रः शिष्य उपनेतव्यः ; इति पृष्टः प्रत्याह सत्यकामः । स ह उवाच— नाहमेतद्वेद भो, यद्गोत्रोऽहमस्मि ; किं तु अपृच्छं पृष्टवानस्मि मातरम् ; सा मया पृष्टा मां प्रत्यब्रवीन्माता ; वह्वहं चरन्तीत्यादि पूर्ववत् ; तस्या अहं वचः स्मरामि ; सोऽहं सत्यकामो जाबा-लोऽस्मि भो इति ॥

**तꣳ होवाच नैतदब्राह्मणो विवक्तुम-र्हति समिधꣳ सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामब-**

**लानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ संपेदुः ॥ ५ ॥**

इति चतुर्थः खण्डः ॥

तं ह उवाच गौतमः—नैतद्वचः अब्राह्मणो विशेषेण वक्तुमर्हति आर्जवार्थसंयुक्तम् । ऋजवो हि ब्राह्मणा नेतरे स्वभावतः । यस्मान्न सत्यात् ब्राह्मणजातिधर्मात् अगाः नापेतवानसि, अतः ब्राह्मणं त्वामुपनेष्ये ; अतः संस्कारार्थं होमाय समिधं सोम्य आहर, इत्युक्त्वा तमुपनीय कृशानामबलानां गोयूथान्निराकृत्य अपकृष्य चतुःशता चत्वारिंशतानि गवाम् उवाच—इमाः गाः सोम्य अनुसंव्रज अनुगच्छ । इत्युक्तः ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच— नासहस्रेण अपूर्णेन सहस्रेण नावर्तेय न प्रत्यागच्छेयम् । स एवमुक्त्वा गाः अरण्यं तृणोदकबहुलं द्वन्द्वरहितं प्रवेश्य स ह वर्षगणं दीर्घं प्रोवास प्रोषितवान् । ताः सम्यग्गावः रक्षिताः यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चमः खण्डः ॥

**अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रं स्मः प्रापय न आचार्य-कुलम् ॥ १ ॥**

तमेतं श्रद्धातपोभ्यां सिद्धं वायुदेवता दिक्संबन्धिनी तुष्टा सती ऋषभमनुप्रविश्य ऋषभभावमापन्ना अनुग्रहाय अथ ह एनमृषभोऽभ्युवाद अभ्युक्तवान सत्यकाम३ इति संबोध्य। तम असौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ। प्राप्ताः सोम्य सहस्रं स्मः, पूर्णा तव प्रतिज्ञा, अतः प्रापय नः अस्मानाचार्यकुलम ॥

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्म-णः प्रकाशवान्नाम ॥ २ ॥**

किंच अहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथ-यानि। इत्युक्तः प्रत्युवाच—ब्रवीतु कथयतु मे मह्यं भग-

वान् । इत्युक्तः ऋषभः तस्मै सत्यकामाय ह उवाच— प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः । तथा प्रतीची दिक्कला दक्षिणा दिक्कला उदीची दिक्कला, एष वै सोम्य ब्रह्मणः पादः चतुष्कलः चतस्रः कला अवयवा यस्य सोऽयं चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम प्रकाशवानित्येव नाम अभिधानं यस्य । तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥**

स यः कश्चित् एवं यथोक्तमेतं ब्रह्मणः चतुष्कलं पादं विद्वान् प्रकाशवानित्यनेन गुणेन विशिष्टम् उपास्ते, तस्येदं फलम्— प्रकाशवानस्मिँल्लोके भवति प्रख्यातो भवतीत्यर्थः; तथा अदृष्टं फलम्— प्रकाशवतः ह लोकान् देवादिसंबन्धिनः मृतः सन् जयति प्राप्नोति; य एतमेवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥

इति पञ्चमखण्डभाष्यम् ॥

षष्ठः खण्डः ॥

---

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥

सोऽग्निः ते पादं वक्तेत्युपरराम ऋषभः । सः सत्यकामः ह श्वोभूते परेद्युः नैत्यकं नित्यं कर्म कृत्वा गाः अभिप्रस्थापयांचकार आचार्यकुलं प्रति । ताः शनैश्चरन्त्यः आचार्यकुलाभिमुख्यः प्रस्थिताः यत्र यस्मिन्काले देशेऽभि सायं निशायामभिसंबभूवुः एकत्राभिमुख्यः संभूताः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ्मुखः उपविवेश ऋषभवचो ध्यायन् ॥

तमग्निरभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

तमग्निरभ्युवाद सत्यकाम३ इति संबोध्य । तम् असौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्र-

**वीतु मे भगवानिति तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥**

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै ह उवाच, पृथिवी कला अन्तरिक्षं कला द्यौः कला समुद्रः कलेत्यात्मगोचरमेव दर्शनमग्निरब्रवीत् । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥**

**इति षष्ठः खण्डः ॥**

स यः कश्चित् यथोक्तं पादमनन्तवत्त्वेन गुणेनोपास्ते, स तथैव तद्गुणो भवत्यस्मिँल्लोके, मृतश्च अनन्तवतो ह लोकान् स जयति; य एतमेवमित्यादि पूर्ववत् ॥

**इति षष्ठखण्डभाष्यम् ॥**

## सप्तमः खण्डः ॥

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

सोऽग्निः हंसः ते पादं वक्तेत्युक्त्वा उपरराम । हंस आदित्यः, शौक्ल्यात्पतनसामान्याच्च । स ह श्वोभूते इत्यादि समानम् ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलै-

ष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

इति सप्तमः खण्डः ॥

अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्येति ज्योतिर्विषयमेव च दर्शनं प्रोवाच; अतो हंसस्य आदित्यत्वं प्रतीयते। विद्वत्फलम्—ज्योतिष्मान् दीप्तियुक्तोऽस्मिँल्लोके भवति। चन्द्रादित्यादीनां ज्योतिष्मत एव च मृत्वा लोकान् जयति। समानमुत्तरम् ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टमः खण्डः ॥

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

हंसोऽपि मद्गुष्टे पादं वक्तेत्युपरराम । मद्गुः उदकचरः पक्षी, स च अप्संबन्धात्प्राणः । स ह श्वोभूते इत्यादि पूर्ववत् ॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष

**वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥**

स च मद्गुः प्राणः स्वविषयमेव च दर्शनमुवाच प्राणः कलेत्याद्यायतनवानित्येवं नाम । आयतनं नाम मनः सर्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे विद्यत इत्यायतनवान्नाम पादः ॥

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥**

**इति अष्टमः खण्डः ॥**

तं पादं तथैवोपास्ते यः स आयतनवान् आश्रयवानस्मिँल्लोके भवति । आयतनवत एव सावकाशाँल्लोकान्मृतो जयति । य एतमेवमित्यादि पूर्ववत् ॥

**इति अष्टमखण्डभाष्यम् ॥**

## नवमः खण्डः ॥

---

**प्राप ह्याचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥**

स एवं ब्रह्मवित्सन प्राप ह प्राप्तावानाचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकाम३ इति; भगव इति ह प्रतिशुश्राव ॥

**ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वेव मे कामे ब्रूयात् ॥**

ब्रह्मविदिव वै सोम्य भासि । प्रसन्नेन्द्रियः प्रहसितवदनश्च निश्चिन्तः कृतार्थो ब्रह्मविद्भवति । अत आह आचार्यो ब्रह्मविदिव भासीति; को न्विति वितर्कयन्नुवाच—कस्त्वामनुशशासेति । स च आह सत्यकामः अन्ये मनुष्येभ्यः । देवता मामनुशिष्टवत्यः । कोऽन्यो भगवच्छिष्यं मां मनुष्यः सन् अनुशासितुमुत्सहेतेत्यभिप्रायः । अतोऽन्ये मनुष्येभ्य

इति ह प्रतिजज्ञे प्रतिज्ञातवान् । भगवांस्त्वेव मे कामे ममेच्छायां ब्रूयात किमन्यैरुक्तेन, नाहं तद्गणयामीत्यभिप्रायः ॥

**श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥ ३ ॥**

इति नवमः खण्डः ॥

किंच श्रुतं हि यस्मात् मम विद्यते एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्यः ऋषिभ्यः। आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापति प्राप्नोति ; अतो भगवानेव ब्रूयादित्युक्तः आचार्यः अब्रवीत् तस्मै तामेव दैवतैरुक्तां विद्याम्। अत्र ह न किंचन षोडशकलविद्यायाः किंचिदेकदेशमात्रमपि न वीयाय न विगतमित्यर्थः । द्विरभ्यासो विद्यापरिसमाप्त्यर्थः ॥

इति नवमखण्डभाष्यम् ॥

## दशमः खण्डः ॥

पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिं च तद्विदोऽग्निविद्यां च । आख्यायिका पूर्ववच्छ्रद्धातपसोर्ब्रह्म-विद्यासाधनत्वप्रदर्शनार्था—

**उपकोसलो ह वै कामलायनः सत्य-कामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार स ह स्मा-न्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मै-व न समावर्तयति ॥ १ ॥**

उपकोसलो ह वै नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य, ह ऐतिह्यार्थः, तस्य आचार्यस्य द्वादश वर्षाणि अग्नीन्परिचचार अग्नीनां परिचरणं कृतवान् । स ह स्म आचार्यः अन्यान्ब्रह्मचा-रिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् तमेवोपकोसलमेकं न समावर्तयति स्म ह ॥

**तं जायोवाच तप्तो ब्रह्मचारी कुशल-मग्नीन्परिचचारीन्मा त्वाग्नयः परिप्रवो-चन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवा-साञ्चक्रे ॥ २ ॥**

तम् आचार्यं जाया उवाच— तप्तो ब्रह्मचारी कुशलं सम्यक् अग्नीन् परिचचारीत् परिचरितवान्; भगवांश्च अग्निषु भक्तं न समावर्तयति; अत: अस्मद्भक्तं न समावर्तयतीति ज्ञात्वा त्वाम् अग्नय: मा परिप्रवोचन् गर्हां तव मा कुर्यु:; अत: प्रब्रूहि अस्मै विद्यामिष्टाम् उपकोसलायेति। तस्मै एवं जायया उक्तोऽपि ह अप्रोच्यैव अनुक्त्वैव किंचित्प्रवासांचक्रे प्रवसितवान्॥

**स ह व्याधिनानशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति॥ ३॥**

स ह उपकोसल: व्याधिना मानसेन दु:खेन अनशितुम् अनशनं कर्तुं दध्रे धृतवान्मन:। तं तूष्णीमग्न्यागारेऽवस्थितम् आचार्यजायोवाच—हे ब्रह्मचारिन् अशान भुङ्क्ष्व, किं नु कस्मान्नु कारणान्नाश्नासि? इति। स ह उवाच— बहव: अनेकेऽस्मिन्पुरुषेऽकृतार्थे प्राकृते कामा: इच्छा: कर्तव्यं प्रति नाना अत्यय: अतिगमनं येषां व्याधीनां कर्तव्यचिन्तानां ते नानात्यया: व्याधय: कर्तव्यताप्राप्तिनिमित्तानि चित्तदु:खा-

नीत्यर्थः; तैः प्रतिपूर्णोऽस्मि; अतो नाशिष्यामीति ॥

**अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥**

उक्त्वा तूष्णींभूते ब्रह्मचारिणि, अथ ह अग्नयः शुश्रूषयावर्जिताः कारुण्याविष्टाः सन्तः त्रयोऽपि समूदिरे संभूयोक्तवन्तः— हन्त इदानीम् अस्मै ब्रह्मचारिणे अस्मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्वेऽनुशास्मः अनुप्रब्रवाम ब्रह्मविद्याम्, इति एवं संप्रधार्य, तस्मै ह ऊचुः उक्तवन्तः— प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥

**स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥**

**इति दशमः खण्डः ॥**

स ह उवाच ब्रह्मचारी— विजानाम्यहं यद्भवद्भिरुक्तं प्रसिद्धपदार्थकत्वात्प्राणो ब्रह्मेति, सः यस्मिन्सति जीवनं यदप-

गमे च न भवति, तस्मिन्वायुविशेषे लोके रूढः; अतः युक्तं ब्रह्मत्वं तस्य; तेन प्रसिद्धपदार्थकत्वाद्विजानाम्यहं यत्प्राणो ब्रह्मेति। कं च तु खं च न विजानामीति। ननु कंखंशब्दयोरपि सुखाकाशविषयत्वेन प्रसिद्धपदार्थकत्वमेव, कस्माद्ब्रह्मचारिणोऽज्ञानम्? नूनम्, सुखस्य कंशब्दवाच्यस्य क्षणप्रध्वंसित्वात् खंशब्दवाच्यस्य च आकाशस्याचेतनस्य कथं ब्रह्मत्वमिति मन्यते; कथं च भगवतां वाक्यमप्रमाणं स्यादिति; अतो न विजानामीत्याह। तम एवमुक्तवन्तं ब्रह्मचारिणं ते ह अग्नय ऊचुः— यद्वाव यदेव वयं कम् अवोचाम, तदेव खम् आकाशम्, इत्येवं खेन विशेष्यमाणं कं विषयेन्द्रियसंयोगजात्सुखान्निवर्तितं स्यात्— नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः। यदेव खम् इत्याकाशमवोचाम, तदेव च कं सुखमिति जानीहि। एवं च सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्तितं स्यात्—नीलोत्पलवदेव। सुखमाकाशस्थं नेतरल्लौकिकम्, आकाशं च सुखाश्रयं नेतरद्भौतिकमित्यर्थः। नन्वाकाशं चेत् सुखेन विशेषयितुमिष्टम्, अस्त्वन्यतरदेव विशेषणम्—यद्वाव कं तदेव खम् इति, अतिरिक्तमितरत्; यदेव खं तदेव कमिति पूर्वविशेषणं वा; ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टेत्य-

वोचाम । सुखेन आकाशे विशेषिते व्यावृत्तिरुभयोरर्थप्राप्तैवेति चेत्, सत्यमेवम्; किंतु सुखेन विशेषितस्यैव आकाशस्य ध्येयत्वं विहितम्; न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्यात्, विशेषणोपादानस्य विशेष्यनियन्तृत्वेनैवोपक्षयात्। अतः खेन सुखमपि विशेष्यते ध्येयत्वाय। कुतश्चैतन्निश्चीयते? कंशब्दस्यापि ब्रह्मशब्दसंबन्धात् कं ब्रह्मेति। यदि हि सुखगुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात्, कं खं ब्रह्मेति ब्रूयुः अग्नयः प्रथमम्। न चैवमुक्तवन्तः। किं तर्हि? कं ब्रह्म खं ब्रह्मेति। अतः ब्रह्मचारिणो मोहापनयनाय कंखंशब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः। तदेतदग्निभिरुक्तं वाक्यार्थमस्मद्बोधाय श्रुतिराह— प्राणं च ह अस्मै ब्रह्मचारिणे, तस्य आकाशः तदाकाशः, प्राणस्य संबन्धी आश्रयत्वेन हार्द आकाश इत्यर्थः, सुखगुणवत्त्वनिर्देशात्; तं च आकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसंपर्कादेव ब्रह्मेत्युभयं प्राणं च आकाशं च समुच्चित्य ब्रह्मणी ऊचुः अग्नय इति॥

इति दशमखण्डभाष्यम्॥

---

## एकादशः खण्डः ॥

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥

संभूयाग्नयः ब्रह्मचारिणे ब्रह्म उक्तवन्तः। अथ अनन्तरं प्रत्येकं स्वस्वविषयां विद्यां वक्तुमारेभिरे। तत्र आदौ एनं ब्रह्मचारिणं गार्हपत्यः अग्निः अनुशशास—पृथिव्यग्निरन्नमादित्य इति ममैताश्चतस्त्रस्तनवः। तत्र य आदित्ये एष पुरुषो दृश्यते, सोऽहमस्मि गार्हपत्योऽग्निः, यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मि, इति पुनः परावृत्त्या स एवाहमस्मीति वचनम्। पृथिव्यन्नयोरिव भोज्यत्वलक्षणयोः संबन्धो न गार्हपत्यादित्ययोः। अत्तृत्वपक्तृत्वप्रकाशनधर्मा अविशिष्टा इत्यतः एकत्वमेवानयोरत्यन्तम्। पृथिव्यन्नयोस्तु भोज्यत्वेन आभ्यां संबन्धः ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्यो-

**ग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥**

इति एकादशः खण्डः ॥

स यः कश्चित् एवं यथोक्तं गार्हपत्यमग्निम् अन्नान्नादत्वेन चतुर्धा प्रविभक्तम् उपास्ते, सोऽपहते विनाशयति पापकृत्यां पापं कर्म । लोकी लोकवांश्चास्मदीयेन लोकेनाग्नेयेन तद्वान्भवति यथा वयम् । इह च लोके सर्वं वर्षशतम् आयुरेति प्राप्नोति । ज्योक् उज्ज्वलं जीवति नाप्रख्यात इत्येतत् । न च अस्य अवराश्च ते पुरुषाश्च अस्य विदुषः संततिजा इत्यर्थः, न क्षीयन्ते संतत्युच्छेदो न भवतीत्यर्थः । किं च तं वयम् उपभुञ्जामः पालयामः अस्मिंश्च लोके जीवन्तम् अमुष्मिंश्च परलोके । य एतमेवं विद्वानुपास्ते, यथोक्तं तस्य तत्फलमित्यर्थः ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादशः खण्डः ॥

अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

अथ ह एनम् अन्वाहार्यपचनः अनुशशास दक्षिणाग्निः—आपो दिशो नक्षत्राणि चन्द्रमा इत्येता मम चतस्रस्तनवः चतुर्धा अहमन्वाहार्यपचने आत्मानं प्रविभज्यावस्थितः । तत्र य एष चन्द्रमसि पुरुषो दृश्यते, सोऽहमस्मि, स एवाहमस्मीति पूर्ववत् । अन्नसंबन्धाज्ज्योतिष्ट्वसामान्याच्च अन्वाहार्यपचनचन्द्रमसोरेकत्वं दक्षिणदिक्संबन्धाच्च । अपां नक्षत्राणां च पूर्ववदन्नत्वेनैव संबन्धः, नक्षत्राणां चन्द्रमसो भोग्यत्वप्रसिद्धेः । अपामन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः—पृथिवीवद्गार्हपत्यस्य । समानमन्यत् ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदशः खण्डः ॥

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति त्रयोदशः खण्डः ॥

अथ ह एनमाहवनीयोऽनुशशास—प्राण आकाशो द्यौर्विद्युदिति ममाप्येताश्चतस्रस्तनवः । य एष विद्युति पुरुषो दृश्यते, सोऽहमस्मीत्यादि पूर्ववत् सामान्यात् । द्युव्याकाशयोः स्वाश्रयत्वात् विद्युदाहवनीययोः भोग्यत्वेनैव संबन्धः । समानमन्यत् ॥

इति त्रयोदशखण्डभाष्यम् ॥

## चतुर्दशः खण्डः ॥

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल३ इति ॥ १ ॥

ते पुनः संभूयोचुः ह—उपकोसल एषा सोम्य ते तव अस्मद्विद्या अग्निविद्येत्यर्थः ; आत्मविद्या पूर्वोक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च ; आचार्यस्तु ते गतिं वक्ता विद्याफलप्राप्तये इत्युक्त्वा उपरेमुरग्नयः । आजगाम ह अस्य आचार्यः कालेन । तं च शिष्यम् आचार्यो अभ्युवाद उपकोसल३ इति ॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति को नु मानुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं भाति को नु त्वा अनुशशास इत्युक्तः प्रत्याह— को नु मा अनुशिष्यात् अनुशासनं कुर्यात् भो भगवन् त्वयि प्रोषिते, इति इह अप इव निह्नुते अपनिह्नुत इवेति व्यवहितेन संबन्धः, न च अपनिह्नुते, न च यथावदग्निभिरुक्तं ब्रवीतीत्यभिप्रायः। कथम्? इमे अग्नयः मया परिचरिताः उक्तवन्तः नूनम्, यतस्त्वां दृष्ट्वा वेपमाना इव ईदृशा दृश्यन्ते पूर्वमन्यादृशाः सन्तः, इति इह अग्नीन् अभ्यूदे अभ्युक्तवान् काका अग्नीन्दर्शयन् । किं नु सोम्य किल ते तुभ्यम् अवोचन् अग्नयः? इति, पृष्टः इत्येवम् इदमुक्तवन्तः इत्येवं ह प्रतिजज्ञे प्रतिज्ञातवान् प्रतीकमात्रं किंचित्, न सर्वं यथोक्तमग्निभिरुक्तमवोचत् । यत आह आचार्यः— लोकान्वाव पृथिव्यादीन् हे सोम्य किल ते अवोचन, न ब्रह्म साकल्येन । अहं तु ते तुभ्यं तद्ब्रह्म यदिच्छसि त्वं श्रोतुं वक्ष्यामि, शृणु तस्य मयोच्यमानस्य ब्रह्मणो ज्ञानमाहात्म्यम्—यथा पुष्करपलाशे पद्मपत्रे आपो न श्लिष्यन्ते, एवं यथा वक्ष्यामि ब्रह्म, एवंविदि पापं कर्म न श्लिष्यते न संबध्यते इति । एवमुक्तवति आचार्ये आह उपकोसलः— ब्रवीतु मे भगवानिति । तस्मै ह उवाच आचार्यः ॥

इति चतुर्दशखण्डभाष्यम् ॥

## पञ्चदशः खण्डः ॥

---

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥

य एषोऽक्षिणि पुरुषः दृश्यते निवृत्तचक्षुर्भिर्ब्रह्मचर्यादिसाधनसंपन्नैः शान्तैर्विवेकिभिः दृष्टेर्द्रष्टा, 'चक्षुषश्चक्षुः' इत्यादिश्रुत्यन्तरात्; ननु अग्निभिरुक्तं वितथम्, यतः आचार्यस्तु ते गतिं वक्ता इति गतिमात्रस्य वक्तेत्यवोचन्, भविष्यद्विषयापरिज्ञानं च अग्नीनाम्; नैष दोषः, सुखाकाशस्यैव अक्षिणि दृश्यत इति द्रष्टुरनुवादात्। एष आत्मा प्राणिनामिति ह उवाच एवमुक्तवान्; एतत् यदेव आत्मतत्त्वमवोचाम, एतदमृतम् अमरणधर्मि अविनाशि अत एवाभयम्, यस्य हि विनाशाशङ्का तस्य भयोपपत्तिः तदभावादभयम्, अत एव एतद्ब्रह्म बृहदनन्तमिति। किंच, अस्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यम्—तत् तत्र पुरुषस्य स्थाने अक्षिणि

यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी एव गच्छति पक्ष्मावेव गच्छति; न चक्षुषा संबध्यते—पद्मपत्रेणेवोदकम् । स्थानस्याप्येतन्माहात्म्यम्, किं पुनः स्थानिनोऽक्षिपुरुषस्य निरञ्जनत्वं वक्तव्यमित्यभिप्रायः ॥

**एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥**

एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते । कस्मात्? यस्मादेतं सर्वाणि वामानि वननीयानि संभजनीयानि शोभनानि अभिसंयन्ति अभिसंगच्छन्तीत्यतः संयद्वामः । तथा एवंविदमेनं सर्वाणि वामान्यभिसंयन्ति य एवं वेद ॥

**एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥**

एष उ एव वामनीः, यस्मादेष हि सर्वाणि वामानि पुण्यकर्मफलानि पुण्यानुरूपं प्राणिभ्यो नयति प्रापयति वहति च आत्मधर्मत्वेन । विदुषः फलम्—सर्वाणि वामानि नयति य एवं वेद ॥

**एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥**

एष उ एव भामनीः, एष हि यस्मात् सर्वेषु लोकेषु आदित्यचन्द्राग्न्यादिरूपैः भाति दीप्यते, 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । अतो भामानि नयतीति भामनीः । य एवं वेद, असावपि सर्वेषु लोकेषु भाति ॥

**अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाँस्तान्मासेभ्यः संवत्सरँ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥ ५ ॥**

इति पञ्चदशः खण्डः ॥

अथेदानीं यथोक्तब्रह्मविदः गतिरुच्यते । यत् यदि उ च एव अस्मिन् एवंविदि शव्यं शवकर्म मृते कुर्वन्ति, यदि च न कुर्वन्ति ऋत्विजः, सर्वथाप्येवंवित् तेन शवकर्मणा अकृतेनापि प्रतिबद्धो न ब्रह्म न प्राप्नोति ; न च कृतेन शवकर्मणा अस्य कश्चनाभ्यधिको लोकः, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुत्यन्तरात् । शवकर्मण्यनादरं दर्शयन् विद्यां स्तौति, न पुनः शवकर्म एवंविदः न कर्तव्यमिति । अक्रियमाणे हि शवकर्मणि कर्मणां फलारम्भे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र । यत इह विद्याफलारम्भकाले शवकर्म स्याद्वा न वेति विद्यावतः अप्रतिबन्धेन फलारम्भं दर्शयति । ये सुखाकाशमक्षिस्थं संयद्वामो वामनीर्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च, तेषामन्यत्कर्म भवतु मा वा भूत् सर्वथा अपि ते अर्चिषमेवाभिसंभवन्ति अर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्त इत्यर्थः । अर्चिषः अर्चिर्देवताया अहः अहरभिमानिनीं देवताम्, अह्नः आपूर्यमाणपक्षं शुक्लपक्षदेवताम्, आपूर्यमाणपक्षात् यान्षण्मासान् उदङ् उत्तरां दिशम् एति सविता तान्मासान् उत्तरायणदेवताम्, तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवताम्, ततः संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम् ।

तत् तत्रस्थान् तान् पुरुषः कश्चिद्ब्रह्मलोकादेत्य अमानवः मानव्यां सृष्टौ भवः मानवः न मानवः अमानवः स पुरुषः एनान्ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः, सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेः । 'ब्रह्मैव सन्ब्रह्माप्येति' इति हि तत्र वक्तुं न्याय्यम् । सर्वभेदनिरासेन सन्मात्रप्रतिपत्तिं वक्ष्यति । न च अदृष्टो मार्गोऽगमनायोपतिष्ठते, 'स एनमविदितो न भुनक्ति' इति श्रुत्यन्तरात् । एष देवपथः देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितः पन्था देवपथ उच्यते । ब्रह्म गन्तव्यं तेन च उपलक्षित इति ब्रह्मपथः । एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्म इमं मानवं मनुसंबन्धिनं मनोः सृष्टिलक्षणमावर्तं नावर्तन्ते आवर्तन्तेऽस्मिञ्जननमरणप्रबन्धचक्रारूढा घटीयन्त्रवत्पुनः पुनरित्यावर्तः तं न प्रतिपद्यन्ते । नावर्तन्ते इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था ॥

इति पञ्चदशखण्डभाष्यम् ॥

## षोडशः खण्डः ॥

रहस्यप्रकरणे प्रसङ्गात् आरण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्था विधातव्याः, तदभिज्ञस्य च ऋत्विजो ब्रह्मणो मौनमित्यत इदमारभ्यते—

**एष ह वै यज्ञो योऽयं पवत एष ह यन्निदꣳ सर्वं पुनाति यदेष यन्निदꣳ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ॥ १ ॥**

एष वै एष वायुः योऽयं पवते अयं यज्ञः । ह वै इति प्रसिद्धार्थावद्योतकौ निपातौ । वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु, 'स्वाहा वातेधाः' 'अयं वै यज्ञो योऽयं पवते' इत्यादिश्रुतिभ्यः । वात एव हि चलनात्मकत्वात्क्रियासमवायी, 'वात एव यज्ञस्यारम्भको वातः प्रतिष्ठा' इति च श्रवणात् । एष ह यन् गच्छन् चलन् इदं सर्वं जगत् पुनाति पावयति शोधयति । न हि अचलतः शुद्धिरस्ति । दोषनिरसनं चलतो हि दृष्टं न स्थिरस्य । यत् यस्माच्च यन् एष इदं सर्वं पुनाति, तस्मादेष एव यज्ञः यत्पुनातीति । तस्यास्यैवं विशिष्टस्य यज्ञस्य वाक्च मन्त्रोच्चारणे व्यापृता, मनश्च यथाभूतार्थज्ञाने व्यापृतम्, ते एते वाङ्मनसे वर्तनी मार्गौ, याभ्यां यज्ञस्तायमानः प्रवर्तते ते वर्तनी ; 'प्राणापानपरिचलनवत्या हि वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञः' इति हि श्रुत्यन्तरम् । अतो वाङ्मनसाभ्यां

यज्ञो वर्तत इति वाङ्मनसे वर्तनी उच्येते यज्ञस्य ॥

**तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतरां स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यवदति ॥ २ ॥**

**अन्यतरामेव वर्तनीं संस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवति ॥ ३ ॥**

तयोः वर्तन्योः अन्यतरां वर्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मा ऋत्विक्, वाचा वर्तन्या होताध्वर्युरुद्गाता इत्येते त्रयोऽपि ऋत्विजः अन्यतरां वाग्लक्षणां वर्तनीं वाचैव संस्कुर्वन्ति। तत्रैवं सति वाङ्मनसे वर्तनी संस्कार्ये यज्ञे । अथ स ब्रह्मा यत्र यस्मिन्काले उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे, पुरा पूर्वं परिधानीयाया ऋचः ब्रह्मा एतस्मिन्नन्तरे काले व्यवदति मौनं परित्यजति यदि, तदा अन्यतरामेव वाग्वर्तनीं संस्करोति। ब्रह्मणा संस्क्रियमाणा मनोवर्तनी हीयते विनश्यति छिद्रीभवति अन्यतरा; स यज्ञः वाग्वर्तन्यैव अन्यतरया वर्तितुमशक्नुवन् रिष्यति।

कथमिवेति, आह—स यथैकपात् पुरुषः व्रजन् गच्छन्नध्वानं रिष्यति, रथो वैकेन चक्रेण वर्तमानो गच्छन् रिष्यति, एवमस्य यजमानस्य कुब्रह्मणा यज्ञो रिष्यति विनश्यति। यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति । यज्ञप्राणो हि यजमानः । अतो युक्तो यज्ञरेषे रेषस्तस्य । सः तं यज्ञमिष्ट्वा तादृशं पापीयान पापतरो भवति ॥

**अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यवदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥४॥**

**स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥**

अथ पुनः यत्र ब्रह्मा विद्वान् मौनं परिगृह्य वाग्विसर्गमकुर्वन् वर्तते यावत्परिधानीयाया न व्यवदति, तथैव सर्वर्त्विजः, उभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरापि । किमिवेत्याह—पूर्वोक्तविपरीतौ दृष्टान्तौ । एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेन आत्मना।विनश्यन्वर्तत इत्यर्थः । यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति । सः यजमानः एवं मौनविज्ञानवद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान्भवति श्रेष्ठो भवतीत्यर्थः ॥

इति षोडशखण्डभाष्यम् ॥

## सप्तदशः खण्डः ॥

---

अत्र ब्रह्मणो मौनं विहितम्, तद्द्रेषे ब्रह्मत्वकर्मणि च अथान्यस्मिंश्च हौत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति तदर्थं व्याहृतयो विधातव्या इत्याह—

**प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाꣳ रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥**

प्रजापतिः लोकानभ्यतपत लोकानुद्दिश्य तत्र सारजिघृक्षया ध्यानलक्षणं तपश्चचार । तेषां तप्यमानानां लोकानां रसान सारूपान्प्रावृहत् उद्धृतवान जग्राहेत्यर्थः । कान? अग्निं रसं पृथिव्याः, वायुमन्तरिक्षात्, आदित्यं दिवः ॥

**स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानाꣳ रसान्प्रावृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ॥ २ ॥**

पुनरप्येवमेवाग्न्याद्याः स एतास्तिस्रो देवता उद्दिश्य अभ्यतपत् । ततोऽपि सारं रसं त्रयीविद्यां जग्राह ॥

**स एतां त्रयीं विद्यामभ्यतपत्तस्यास्त-**

प्यमानाया रसान्प्रावृहद्भूरित्यृग्भ्यो भुव-
रिति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥

तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये
जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां य-
ज्ञस्य विरिष्टꣳ संदधाति ॥ ४ ॥

स एतां पुनरभ्यतपत् त्रयीं विद्याम् । तस्यास्तप्यमा-
नाया रसं भूरिति व्याहृतिम ऋग्भ्यो जग्राह; भुवरिति
व्याहृतिं यजुर्भ्यः; स्वरिति व्याहृतिं सामभ्यः । अत एव
लोकदेववेदरसा महाव्याहृतयः । अतः तत् तत्र यज्ञे यदि
ऋक्तः ऋक्संबन्धादृङ्निमित्तं रिष्येत् यज्ञः क्षतं प्राप्नुयात्,
भूः स्वाहेति गार्हपत्ये जुहुयात् । सा तत्र प्रायश्चित्तिः ।
कथम्? ऋचामेव, तदिति क्रियाविशेषणम्, रसेन ऋचां
वीर्येण ओजसा ऋचां यज्ञस्य ऋक्संबन्धिनो यज्ञस्य विरिष्टं
विच्छिन्नं क्षतरूपमुत्पन्नं संदधाति प्रतिसंधत्ते ॥

स यदि यजुष्टो रिष्येद्भुवः स्वाहेति
दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन य-
जुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ सं-
दधाति ॥ ५ ॥

**अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति ॥ ९ ॥**

अथ यदि यजुष्टो यजुर्निमित्तं रिष्येत, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्। तथा सामनिमित्ते रेषे स्वः स्वाहेत्याहवनीये जुहुयात्। तथा पूर्ववद्यज्ञं संदधाति। ब्रह्मनिमित्ते तु रेषे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात्। त्रय्या हि विद्यायाः स रेषः, 'अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्यया' इति श्रुतेः। न्यायान्तरं वा मृग्यं ब्रह्मत्वनिमित्ते रेषे ॥

**तद्यथा लवणेन सुवर्णꣳ संदध्यात्सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥**

**एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥ ८ ॥**

तद्यथा लवणेन सुवर्णं संदध्यात् । क्षारेण टङ्कणादिना खरं मृदुत्वकरं हि तत् । सुवर्णेन रजतमशक्यसंधानं संदध्यात् । रजतेन तथा त्रपु, त्रपुणा सीसम् , सीसेन लोहम् , लोहेन दारु, दारु चर्मणा चर्मबन्धनेन । एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं संदधाति । भेषजकृतो ह वा एष यज्ञः—— रोगार्त इव पुमांश्चिकित्सकेन सुशिक्षितेन एष यज्ञो भवति । कोऽसौ ? यत्र यस्मिन्यज्ञे एवंवित् यथोक्तव्याहृतिहोमप्रायश्चित्तवित् ब्रह्मा ऋत्विग्भवति स यज्ञ इत्यर्थः ॥

**एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदꣳ ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ॥**

किं च, एष ह वा उदक्प्रवण उदङ्निम्नो दक्षिणोच्छ्रायो यज्ञो भवति ; उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः । यत्रैवंविद्ब्रह्मा भवति । एवंविदं ह वै ब्रह्माणम् ऋत्विजं प्रति एषा अनुगाथा ब्रह्मणः स्तुतिपरा——यतो यत आवर्तते कर्म प्रदेशात् ऋत्विजां यज्ञः क्षतीभवन् , तत्तद्यज्ञस्य क्षतरूपं प्रतिसंदधत् प्रायश्चित्तेन गच्छति परिपालयतीत्येतत् ॥

**मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिर-**

**क्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वा-ꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥**

इति सप्तदशः खण्डः ॥

मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्; ततो ब्रह्मैवैकः ऋत्विक् कुरून् कर्तॄन्— योद्धॄनारूढानश्वा वडवा यथा अभिरक्षति, एवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति, तत्कृतदोषापनयनात् । यत एवं विशिष्टो ब्रह्मा विद्वान्, तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत, नानेवंविदं कदाचनेति । द्विरभ्यासोऽध्याय-परिसमाप्त्यर्थः ॥

इति सप्तदशखण्डभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
छान्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः समाप्तः ॥

## ॥ पञ्चमोऽध्यायः ॥

---*---

स गुणब्रह्मविद्याया उत्तरा गतिरुक्ता । अथेदानीं पञ्चमेऽध्याये पञ्चाग्निविदो गृहस्थस्य ऊर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलिनां तामेव गतिमनूद्य अन्या दक्षिणदिक्संबन्धिनी केवलकर्मिणां धूमादिलक्षणा, पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसारगतिः, वैराग्यहेतोः वक्तव्येत्यारभ्यते । प्राणः श्रेष्ठो वागादिभ्यः प्राणो वाव संवर्ग इत्यादि च बहुशोऽतीते ग्रन्थे प्राणग्रहणं कृतम्, स कथं श्रेष्ठो वागादिषु सर्वैः संहत्यकारित्वाविशेषे, कथं च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधित्सया इदमनन्तरमारभ्यते—

**यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥**

यो ह वै कश्चित् ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणैरभ्यधिकं वेद, स ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । फलेन

पुरुषं प्रलोभ्याभिमुखीकृत्य आह—प्राणो वाव ज्येष्ठश्च वयसा वागादिभ्यः; गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः पूर्वं लब्धात्मिका भवति, यया गर्भो विवर्धते । चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति । श्रेष्ठत्वं तु प्रतिपादयिष्यति— 'सुहय' इत्यादिनिदर्शनेन । अतः प्राण एव ज्येष्ठश्च श्रेष्ठश्च अस्मिन्कार्यकरणसंघाते ॥

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥ २ ॥**

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वसुमत्तमं वा यो वेद, स तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनाम् । कस्तर्हि वसिष्ठ इति, आह— वाग्वाव वसिष्ठः, वाग्मिनो हि पुरुषा वसन्ति अभिभवन्त्यन्यान् वसुमत्तमाश्च, अतो वाग्वसिष्ठः ॥

**यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥**

यो ह वै प्रतिष्ठां वेद, स अस्मिँल्लोके अमुष्मिंश्च परे प्रतितिष्ठति ह । का तर्हि प्रतिष्ठेति, आह— चक्षुर्वाव

प्रतिष्ठा। चक्षुषा हि पश्यन् समे च दुर्गे च प्रतितिष्ठति यस्मात्, अतः प्रतिष्ठा चक्षुः॥

**यो ह वै संपदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव संपत्॥**

यो ह वै संपदं वेद, तस्मा अस्मै दैवाश्च मानुषाश्च कामाः संपद्यन्ते ह। का तर्हि संपदिति, आह— श्रोत्रं वाव संपत्। यस्माच्छ्रोत्रेण वेदा गृह्यन्ते तदर्थविज्ञानं च, ततः कर्माणि क्रियन्ते ततः कामसंपदित्येवम्, कामसंपद्धेतुत्वाच्छ्रोत्रं वाव संपत्॥

**यो ह वा आयतनं वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनम्॥**

यो ह वा आयतनं वेद, आयतनं ह स्वानां भवतीत्यर्थः। किं तदायतनमिति, आह— मनो ह वा आयतनम्। इन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरूपाणां मन आयतनमाश्रयः। अतो मनो ह वा आयतनमित्युक्तम्॥

**अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति॥ ६॥**

अथ ह प्राणाः एवं यथोक्तगुणाः सन्तः अहंश्रेयसि

अहं श्रेयानस्मि अहं श्रेयानस्मि इत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिरे उक्तवन्तः ॥

**ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥**

ते ह ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कंचिदेत्य ऊचुः उक्तवन्तः—हे भगवन् कः नः अस्माकं मध्ये श्रेष्ठः अभ्यधिकः गुणैः ? इत्येवं पृष्टवन्तः । तान् पितोवाच ह—यस्मिन् वः युष्माकं मध्ये उत्क्रान्ते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रान्तप्राणं ततोऽपि पापिष्ठतरमिवातिशयेन दृश्येत कुणपमस्पृश्यमशुचि दृश्येत, सः वः युष्माकं श्रेष्ठ इत्यवोचत् काका तद्दुःखं परिजिहीर्षुः ॥

**सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्या-**

यन्तो मनसैवमिति प्रविवेश ह वाक् ॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

तथोक्तेषु प्रिश्रा प्राणेषु सा ह वाक् उच्चक्राम उत्क्रान्त-

वर्ती ; सा च उत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्नि-वृत्ता सती पुनः पर्येत्य इतरान्प्राणानुवाच— कथं केन प्रकारेणाशकत शक्तवन्तो यूयं मदृते मां विना जीवितुं धारयितुमात्मानमिति ; ते ह ऊचुः— यथा कला इत्यादि, कलाः मूकाः यथा लोकेऽवदन्तो वाचा जीवन्ति । कथम ? प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्या-यन्तो मनसा, एवं सर्वकरणचेष्टां कुर्वन्त इत्यर्थः । एवं वय-मजीविष्मेत्यर्थः । आत्मनोऽश्रेष्ठतां प्राणेषु बुद्ध्वा प्रविवेश ह वाक् पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः । समानमन्यत चक्षुर्होच्चक्राम श्रोत्रं होच्चक्राम मनो होच्चक्रामेत्यादि । यथा बाला अमनसः अप्ररूढमनस इत्यर्थः ॥

**अथ ह प्राण उच्चिक्रमिषन्स यथा सु-हयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणा-न्समखिदत्तꣳ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥**

एवं परीक्षितेषु वागादिषु, अथ अनन्तरं ह स मुख्यः प्राणः उच्चिक्रमिषन उत्क्रमितुमिच्छन किमकरोदिति, उ-च्यते—यथा लोके सुहयः शोभनोऽश्वः पड्वीशशङ्कून पाद-बन्धनकीलान् परीक्षणाय आरूढेन कशया हतः सन सं-

खिदेत् समुत्खनेत् समुत्पाटयेत, एवमितरान्वागादीन्प्राणान् समखिदत समुद्धृतवान् । ते प्राणाः संचालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमानाः अभिसमेत्य मुख्यं प्राणं तमूचुः—हे भगवन् एधि भव नः स्वामी, यस्मात् त्वं नः श्रेष्ठोऽसि; मा च अस्माद्देहादुत्क्रमीरिति ॥

**अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥**

**अथ हैनँ श्रोत्रमुवाच यदहँ संपदस्मि त्वं तत्संपदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥**

अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्येण आपादयन्तः आहुः— बलिमिव हरन्तो राज्ञे विशः । कथम् ? वाक् तावदुवाच—यदहं वसिष्ठोऽस्मि, यदिति क्रियाविशेषणम् , यद्वसिष्ठत्वगुणास्मीत्यर्थः ; त्वं तद्वसिष्ठः तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोऽसि तद्गुणस्त्वमित्यर्थः । अथवा तच्छब्दोऽपि क्रियाविशेषणमेव । त्वत्कृतस्त्वदीयोऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मया अभिमत इत्येतत् । तथोत्तरेषु योज्यं चक्षुःश्रोत्रमनःसु ॥

**न वै वाचो न चक्षूँषि न श्रोत्राणि**

**न मनाꣳसीत्याचक्षते प्राणा इत्येवाच-क्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥**

श्रुतेरिदं वचः— युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितम्; यस्मान्न वै लोके वाचो न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि करणान्याचक्षते लौकिका आगमज्ञा वा; किं तर्हि, प्राणा इत्येव आचक्षते कथयन्ति; यस्मात्प्राणो ह्येवैतानि सर्वाणि वागादीनि करणजातानि भवति; अतो मुख्यं प्राणं प्रत्यनुरूपमेव वागादिभिरुक्तमिति प्रकरणार्थमुपसंजिहीर्षति ॥

ननु कथमिदं युक्तं चेतनावन्त इव पुरुषा अहंश्रेष्ठतायै विवदन्तः अन्योन्यं स्पर्धेरन्निति; न हि चक्षुरादीनां वाचं प्रत्याख्याय प्रत्येकं वदनं संभवति; तथा अपगमो देहात् पुनः प्रवेशो ब्रह्मगमनं प्राणस्तुतिर्वोपपद्यते। तत्र अग्न्यादिचेतनावद्देवताधिष्ठितत्वात् वागादीनां चेतनावत्त्वं तावत् सिद्धमागमतः। तार्किकसमयविरोध इति चेत् देहे एकस्मिन्ननेकचेतनावत्त्वे, न, ईश्वरस्य निमित्तकारणत्वाभ्युपगमात्। ये तावदीश्वरमभ्युपगच्छन्ति तार्किकाः, ते मनआदिकार्यकरणानामाध्यात्मिकानां बाह्यानां च पृथिव्यादीनामीश्वराधिष्ठितानामेव नियमेन प्रवृत्तिमिच्छन्ति— रथादिवत्। न च अस्माभिः अग्न्याद्याश्चेतनावत्योऽपि देवता अध्यात्मं भोक्त्र्यः अभ्युपगम्यन्ते; किं तर्हि,

कार्यकरणवतीनां हि तासां प्राणैकदेवताभेदानामध्यात्माधिभूताधिदैवभेदकोटिविकल्पानामध्यक्षतामात्रेण नियन्ता ईश्वरोऽभ्युपगम्यते । स ह्यकरणः, 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिमन्त्रवर्णात्; 'हिरण्यगर्भं पश्यत जायमानम्' 'हिरण्यगर्भं जनयामास पूर्वम्' इत्यादि च श्वेताश्वतरीयाः पठन्ति । भोक्ता कर्मफलसंबन्धी देहे तद्विलक्षणो जीव इति वक्ष्यामः । वागादीनां च इह संवादः कल्पितः विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्धारणार्थम्—यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कंचिद्गुणविशेषाभिज्ञं पृच्छन्ति को नः श्रेष्ठो गुणैरिति; तेनोक्ता एकैकश्येन अदः कार्यं साधयितुमुद्यच्छत, येनादः कार्यं साध्यते, स वः श्रेष्ठः—इत्युक्ताः तथैवोद्यच्छन्तः आत्मनोऽन्यस्य वा श्रेष्ठतां निर्धारयन्ति—तथेमं संव्यवहारं वागादिषु कल्पितवती श्रुतिः— कथं नाम विद्वान् वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न तु प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्येतेति । तथा च श्रुतिः कौषीतकिनाम्— 'जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्नः' इत्याद्या ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीयः खण्डः ॥

स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमा श्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किंचनानन्नं भवतीति ॥ १ ॥

स होवाच मुख्यः प्राणः—किं मेऽन्नं भविष्यतीति। मुख्यं प्राणं प्रष्टारमिव कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह— यदिदं लोकेऽन्नजातं प्रसिद्धम् आ श्वभ्यः श्वभिः सह आ शकुनिभ्यः सह शकुनिभिः सर्वप्राणिनां यदन्नम्, तत् तवान्नमिति होचुर्वागादय इति। प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्वस्यान्नस्येत्येवं प्रतिपत्तये कल्पिताख्यायिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेण आह—तद्वै एतत् यत्किंचिल्लोके प्राणिभिरन्नमद्यते, अनस्य प्राणस्य तदन्नं प्राणेनैव तदद्यत इत्यर्थः। सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थम् अन इति प्राणस्य प्रत्यक्षं नाम। प्राद्युपसर्गपूर्वत्वे हि विशेषगतिरेव स्यात्। तथा च सर्वान्नानामत्तुर्नामग्रहणमितीदं प्रत्यक्षं नाम अन इति सर्वान्नानामत्तुः साक्षादभिधानम्। न ह वा एवंविदि यथोक्तप्राणविदि प्राणोऽहमस्मि सर्वभूतस्थः सर्वान्नानामत्तेति, तस्मिन्नेवंविदि ह वै किंचन किंचिदपि प्राणिभिरद्यं सर्वैः

अनन्नम् अनद्यं न भवति, सर्वमेवंविद्यन्नं भवतीत्यर्थः, प्राणभूतत्वाद्विदुषः, 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इत्युपक्रम्य 'एवंविदो ह वा उदेति सूर्य एवंविद्यस्तमेति' इति श्रुत्यन्तरात् ॥

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

स ह उवाच पुनः प्राणः— पूर्ववदेव कल्पना । किं मे वासो भविष्यतीति । आप इति होचुर्वागादयः । यस्मात्प्राणस्य वासः आपः, तस्माद्वा एतदशिष्यन्तः भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांसः एतत्कुर्वन्ति । किम्? अद्भिः वासस्थानीयाभिः पुरस्तात् भोजनात्पूर्वम् उपरिष्टाच्च भोजनादूर्ध्वं च परिदधति परिधानं कुर्वन्ति मुख्यस्य प्राणस्य । लम्भुको लम्भनशीलो वासो ह भवति; वाससो लब्धैव भवतीत्यर्थः । अनग्नो ह भवति । वाससो लम्भुकत्वेनार्थसिद्धैवानग्नतेति अनग्नो ह भवतीत्युत्तरीयवान्भवतीत्येतत् ॥

भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं शुद्ध्यर्थं विज्ञातम्, तस्मिन् प्राणस्य वास इति दर्शनमात्रमिह विधीयते—अद्भिः

परिदधतीति; न आचमनान्तरम्—यथा लौकिकैः प्राणिभि-रद्यमानमन्नं प्राणस्येति दर्शनमात्रम् , तद्वत्; किं मेऽन्नं किं मे वास इत्यादिप्रश्नप्रतिवचनयोस्तुल्यत्वात् । यद्याचमनमपूर्वं ता-दर्थ्येन क्रियेत, तदा कृम्याद्यन्नमपि प्राणस्य भक्ष्यत्वेन विहितं स्यात् । तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रतिवचनयोः प्रकरणस्य विज्ञानार्थत्वादर्धजरतीयो न्यायो न युक्तः कल्पयितुम् । यत्तु प्रसिद्धमाचमनं प्रायत्यार्थं प्राणस्यानग्नतार्थं च न भव-तीत्युच्यते, न तथा वयमाचमनमुभयार्थं ब्रूमः । किं तर्हि, प्रायत्यार्थाचमनसाधनभूता आपः प्राणस्य वास इति दर्शनं चोद्यत इति ब्रूमः । तत्र आचमनस्योभयार्थत्वप्रसङ्गदोषचो-दना अनुपपन्ना । वासोऽर्थ एव आचमने तद्दर्शनं स्यादिति चेत् , न, वासोज्ञानार्थवाक्ये वासोर्थापूर्वाचमनविधाने तत्रा-नग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः । आचमनस्य तदर्थत्व-मन्यार्थत्वं चेति प्रमाणाभावात् ॥

**तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्का-य स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

तदेतत्प्राणदर्शनं स्तूयते । कथम् ? तद्धैतत्प्राणदर्शनं सत्य-

कामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः तस्मै गोश्रुत्याख्याय उक्त्वा उवाच अन्यदपि वक्ष्यमाणं वचः । किं तदुवाचेति, आह—यद्यपि शुष्काय स्थाणवे एतद्दर्शनं ब्रूयात्प्राणवित्, जायेरन् उत्पद्येरन्नेव अस्मिन्स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि, किमु जीवते पुरुषाय ब्रूयादिति ॥

यथोक्तप्राणदर्शनविदः इदं मन्थाख्यं कर्म आरभ्यते—

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्याꣳ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ४ ॥**

अथ अनन्तरं यदि महत् महत्त्वं जिगमिषेत् गन्तुमिच्छेत्, महत्त्वं प्राप्तुं यदि कामयेतेत्यर्थः, तस्येदं कर्म विधीयते । महत्त्वे हि सति श्रीरुपनमते । श्रीमतो हि अर्थप्राप्तं धनम्, ततः कर्मानुष्ठानम्, ततश्च देवयानं पितृयाणं वा पन्थानं प्रतिपत्स्यत इत्येतत्प्रयोजनमुररीकृत्य महत्त्वप्रेप्सोरिदं कर्म, न विषयोपभोगकामस्य । तस्यायं कालादिविधिरुच्यते—अमावास्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनियमं

कृत्वा तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादिधर्मवान्भूत्वेत्यर्थः। न पुनर्दैक्षमेव कर्मजातं सर्वमुपादत्ते, अतद्विकारत्वान्मन्थाख्यस्य कर्मणः। 'उपसद्व्रती' इति श्रुत्यन्तरात् पयोमात्रभक्षणं च शुद्धिकारणं तप उपादत्ते। पौर्णमास्यां रात्रौ कर्म आरभते—सर्वौषधस्य ग्राम्यारण्यानामोषधीनां यावच्छक्त्यल्पमल्पमुपादाय तद्वितुषीकृत्य आममेव पिष्टं दधिमधुनोरौदुम्बरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यन्तरात्प्रक्षिप्य उपमथ्य अग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्ये आज्यस्य आवापस्थाने हुत्वा स्रुवसंलग्नं मन्थे संपातमवनयेत् संस्रवमधः पातयेत ॥

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ५ ॥**

समानमन्यत्, वसिष्ठाय प्रतिष्ठायै संपदे आयतनाय स्वाहेति, प्रत्येकं तथैव संपातमवनयेत् हुत्वा ॥

**अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जप-**

**त्यमो नामास्यमा हि ते सर्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयत्वहमेवेदꣳ सर्वमसानीति ॥ ६ ॥**

अथ प्रतिसृप्य अग्नेरीषदपसृत्य अञ्जलौ मन्थमाधाय जपति इमं मन्त्रम्— अमो नामास्यमा हि ते ; अम इति प्राणस्य नाम । अन्नेन हि प्राणः प्राणिति देहे इत्यतो मन्थद्रव्यं प्राणस्य अन्नत्वात् प्राणत्वेन स्तूयते अमो नामासीति; कुतः? यतः अमा सह हि यस्मात्ते तव प्राणभूतस्य सर्वं समस्तं जगदिदम् , अतः । स हि प्राणभूतो मन्थो ज्येष्ठः श्रेष्ठश्च ; अत एव च राजा दीप्तिमान् अधिपतिश्च अधिष्ठाय पालयिता सर्वस्य । सः मा मामपि मन्थः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनः गमयतु, अहमेवेदं सर्वं जगदसानि भवानि प्राणवत् । इति-शब्दो मन्त्रपरिसमाप्त्यर्थः ॥

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं**

**पिबति निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात् ॥ ७ ॥**

अथ अनन्तरं खलु एतया वक्ष्यमाणया ऋचा पच्छः पादशः आचामति भक्षयति, मन्त्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति । तत् भोजनं सवितुः सर्वस्य प्रसवितुः, प्राणमादित्यं च एकीकृत्योच्यते, आदित्यस्य वृणीमहे प्रार्थयेमहि मन्थरूपम्; येनान्नेन सावित्रेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रायः । देवस्य सवितुरिति पूर्वेण संबन्धः । श्रेष्ठं प्रशस्यतमं सर्वान्नेभ्यः सर्वधातमं सर्वस्य जगतो धारयितृतमम् अतिशयेन विधातृतममिति वा; सर्वथा भोजनविशेषणम् । तुरं त्वरं तूर्णं शीघ्रमित्येतत्, भगस्य देवस्य सवितुः स्वरूपमिति शेषः; धीमहि चिन्तयेमहि विशिष्टभोजनेन संस्कृताः शुद्धात्मानः सन्त इत्यभिप्रायः । अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तुं कर्म कृतवन्तो वयं तद्धीमहि चिन्तयेमहीति सर्वं च मन्थलेपं पिबति । निर्णिज्य प्रक्षाल्य कंसं कंसाकारं चमसं चमसाकारं वा औदुम्बरं पात्रम्; पीत्वा आचम्य पश्चादग्नेः

प्राक्शिराः संविशति चर्माणि वा अजिने स्थण्डिले केवलायां वा भूमौ, वाचंयमो वाग्यतः सन्नित्यर्थः, अप्रसाह्रो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा, तथा संयतचित्तः सन्नित्यर्थः । स एवंभूतो यदि स्त्रियं पश्येत्स्वप्नेषु, तदा विद्यात्समृद्धं ममेदं कर्मेति ॥

**तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ ८ ॥**

इति द्वितीयः खण्डः ॥

तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽपि भवति—यदा कर्मसु काम्येषु कामार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति, समृद्धिं तत्र जानीयात्, कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः; तस्मिंस्त्र्यादिप्रशस्तस्वप्नदर्शने सतीत्यभिप्रायः । द्विरुक्तिः कर्मसमाप्त्यर्था ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीयः खण्डः ॥

ब्रह्मादिस्तम्बपर्यन्ताः संसारगतयो वक्तव्याः वैराग्यहेतोर्मुमुक्षूणाम् इत्यत आख्यायिका आरभ्यते—

**श्वेतकेतुर्हारुणेयः पञ्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति ॥**

श्वेतकेतुर्नामतः, ह इति ऐतिह्यार्थः, अरुणस्यापत्यमारुणिः तस्यापत्यमारुणेयः पञ्चालानां जनपदानां समितिं सभाम् एयाय आजगाम । तमागतवन्तं ह प्रवाहणो नामतः जीवलस्यापत्यं जैवलिः उवाच उक्तवान्—हे कुमार अनु त्वा त्वाम् अशिषत् अन्वशिषत् पिता ? किमनुशिष्टस्त्वं पित्रेत्यर्थः । इत्युक्तः स आह—अनु हि अनुशिष्टोऽस्मि भगव इति सूचयन्नाह ॥

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्त३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगव इति ॥ २ ॥**

तं ह उवाच—यद्यनुशिष्टोऽसि, वेत्थ यदितः अस्माल्लोकात् अधि ऊर्ध्वं यत्प्रजाः प्रयन्ति यद्गच्छन्ति, तत्किं जानीषे इत्यर्थः। न भगव इत्याह इतरः, न जानेऽहं तत् यत्पृच्छसि। एवं तर्हि, वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्तन्त इति। न भगव इति प्रत्याह। वेत्थ पथोर्मार्गयोः सहप्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्तना व्यावर्तनमितरेतरवियोगस्थानं सह गच्छतामित्यर्थः ॥

**वेत्थ यथासौ लोको न संपूर्यत३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥**

वेत्थ यथा असौ लोकः पितृसंबन्धी— यं प्राप्य पुनरावर्तन्ते, बहुभिः प्रयद्भिरपि येन कारणेन न संपूर्यते इति। न भगव इति प्रत्याह। वेत्थ यथा येन क्रमेण पञ्चम्यां पञ्चसंख्याकायामाहुतौ हुतायाम् आहुतिनिर्वृत्ता आहुतिसाधनाश्च आपः पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः। इत्युक्तो नैव भगव इत्याह; नैवाहमत्र किंचन जानामीत्यर्थः ॥

**अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हायस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवान्ब्रवीदनु त्वाशिषमिति ॥ ४ ॥**

अथ एवमज्ञः सन् किमनु कस्मात्त्वम् अनुशिष्टोऽसीति-अवोचथा उक्तवानसि; यो हि इमानि मया पृष्टान्यर्थजातानि न विद्यात न विजानीयात्, कथं स विद्वत्सु अनुशिष्टोऽस्मीति ब्रुवीत । इत्येवं स श्वेतकेतुः राज्ञा आयस्तः आयासितः सन् पितुरर्धं स्थानम् एयाय आगतवान्, तं च पितरमुवाच—अननुशिष्य अनुशासनमकृत्वैव मा मां किल भगवान् समावर्तनकालेऽब्रवीत् उक्तवान् अनु त्वाशिषम् अन्वशिषं त्वामिति ॥

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥**

**स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्रासायार्हां चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥**

यतः पञ्च पञ्चसंख्याकान्प्रश्नान राजन्यबन्धुः राजन्या बन्धवोऽस्येति राजन्यबन्धुः स्वयं दुर्वृत्त इत्यर्थः, अप्राक्षीत पृष्टवान् । तेषां प्रश्नानां नैकंचन एकमपि नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः । स ह उवाच पिता– यथा मा मां वत्स त्वं तदा आगतमात्र एव एतान्प्रश्नान् अवद उक्तवानसि—तेषां नैकंचन अशकं विवक्तुमिति, तथा मां जानीहि, त्वदीयाज्ञानेन लिङ्गेन मम तद्विषयमज्ञानं जानीहीत्यर्थः । कथम् ? यथा अहमेषां प्रश्नानाम् एकंचन एकमपि न वेद न जाने इति—यथा त्वमेवाङ्ग एतान्प्रश्नान् न जानीषे, तथा अहमपि एतान्न जाने इत्यर्थः । अतो मय्यन्यथाभावो न कर्तव्यः । कुत एतदेवम् ? यतो न जाने; यद्यहमिमान्प्रश्नान् अवेदिष्यं विदितवानास्मि, कथं

ते तुभ्यं प्रियाय पुत्राय समावर्तनकाले पुरा नावक्ष्यं नोक्तवानस्मि—इत्युक्त्वा स ह गौतमः गोत्रतः राज्ञः जैवलेः अर्धं स्थानम् एयाय गतवान । तस्मै ह गौतमाय प्राप्ताय अर्हाम् अर्हणां चकार कृतवान । स च गौतमः कृतातिथ्यः उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञि उदेयाय । भजनं भागः पूजा सेवा सह भागेन वर्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतमः उदेयाय राजानमुद्गतवान् । तं होवाच गौतमं राजा— मानुषस्य भगवन्गौतम मनुष्यसंबन्धिनो वित्तस्य ग्रामादेः वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः । स ह उवाच गौतमः— तवैव तिष्ठतु राजन् मानुषं वित्तम्; यामेव कुमारस्य मम पुत्रस्य अन्ते समीपे वाचं पञ्चप्रश्नलक्षणाम् अभाषथाः उक्तवानसि, तामेव वाचं मे मह्यं ब्रूहि कथय— इत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव— कथं त्विदमिति ॥

**तꣳ ह चिरं वसेत्याज्ञापयांचकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥**

स ह कृच्छ्रीभूतः अप्रत्याख्येयं ब्राह्मणं मन्वानः न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वस-इत्येवमाज्ञापयांचकार आज्ञप्तवान् । यत्पूर्वं प्रत्याख्यातवान राजा विद्याम्, यच्च पश्चाच्चिरं वसेत्याज्ञप्तवान्, तन्निमित्तं ब्राह्मणं क्षमापयति हेतुवचनोक्त्या । तं ह उवाच राजा—सर्वविद्यो ब्राह्मणोऽपि सन् यथा येन प्रकारेण मा मां हे गौतम अवदः त्वम्—तामेव विद्यालक्षणां वाचं मे ब्रूहि—इत्यज्ञानात्, तेन त्वं जानीहि। तत्रास्ति वक्तव्यम्—यथा येन प्रकारेण इयं विद्या प्राक् त्वत्तो ब्राह्मणान् न गच्छति न गतवती, न च ब्राह्मणा अनया विद्यया अनुशासितवन्तः, तथा एतत्प्रसिद्धं लोके यतः, तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेव अनया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूत् बभूव; क्षत्रियपरम्परयैवेयं विद्या एतावन्तं कालमागता; तथाप्यहमेतां तुभ्यं वक्ष्यामि; त्वत्संप्रदानादूर्ध्वं ब्राह्मणान्गमिष्यति; अतो मया यदुक्तम्, तत्क्षन्तुमर्हसीत्युक्त्वा तस्मै ह उवाच विद्यां राजा ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थः खण्डः ॥

'पञ्चम्यामाहुतावापः' इत्ययं प्रश्नः प्राथम्येनापाक्रियते, तदपाकरणमनु इतरेषामपाकरणमनुकूलं भवेदिति । अग्निहोत्राहुत्योः कार्यारम्भो यः, स उक्तो वाजसनेयके— तं प्रति प्रश्नाः । उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायी इति । तेषां च अपाकरणमुक्तं तत्रैव— 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्राहुतिं ते अन्तरिक्षं तर्पयतस्ते तत उत्क्रामत' इत्यादि ; एवमेव पूर्ववद्दिवं तर्पयतस्ते तत आवर्तेते । इमामाविश्य तर्पयित्वा पुरुषमाविशतः । ततः स्त्रियमाविश्य लोकं प्रत्युत्थायी भवति इति । तत्र अग्निहोत्राहुत्योः कार्यारम्भमात्रमेवंप्रकारं भवतीत्युक्तम् , इह तु तं कार्यारम्भमग्निहोत्रापूर्वविपरिणामलक्षणं पञ्चधा प्रविभज्य अग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन् आह—

**असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥**

असौ वाव लोको गौतमाग्निरित्यादि । इह सायंप्रातरग्निहोत्राहुती हुते पयआदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारकभाविते च अन्तरिक्षक्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते अप्समवायित्वादप्शब्दवाच्ये श्रद्धाहेतुत्वाच्च श्रद्धाशब्दवाच्ये । तयोरधिकरणः अग्निः अन्यच्च तत्संबन्धं समिदादीत्युच्यते । या च असावग्न्यादिभावना आहुत्योः, सापि तथैव निर्दिश्यते । असौ वाव लोकोऽग्निः हे गौतम—यथाग्निहोत्राधिकरणमाहवनीय इह । तस्याग्नेर्द्युलोकाख्यस्य आदित्य एव समित्, तेन हि इद्धः असौ लोको दीप्यते, अतः समिन्धनात् समिदादित्यः । रश्मयो धूमः, तदुत्थानात्; समिधो हि धूम उत्तिष्ठति । अहरर्चिः प्रकाशसामान्यात्, आदित्यकार्यत्वाच्च । चन्द्रमा अङ्गाराः, अह्नः प्रशमेऽभिव्यक्तेः; अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते । नक्षत्राणि विस्फुलिङ्गाः, चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति**
**तस्या आहुतेः सोमो राजा संभवति ॥**

इति चतुर्थः खण्डः ॥

तस्मिन्नेतस्मिन् यथोक्तलक्षणेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदैवतम्। श्रद्धाम् अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यपां होम्यतया प्रश्ने श्रुतत्वात्; 'श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्ति' इति च विज्ञायते। तां श्रद्धाम् अब्रूपां जुह्वति; तस्या आहुतेः सोमो राजा अपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा संभवति—यथा ऋग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्ते आदित्ये यशआदिकार्यं रोहितादिरूपलक्षणमारभन्ते इत्युक्तम्—तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपः द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः। यजमानाश्च तत्कर्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्मणा आकृष्टाः श्रद्धाप्समवायिनो द्युलोकमनुप्रविश्य सोमभूता भवन्ति। तदर्थं हि तैरग्निहोत्रं हुतम्। अत्र तु आहुतिपरिणाम एव पञ्चाग्निसंबन्धक्रमेण प्राधान्येन विवक्षित उपासनार्थं न यजमानानां गतिः। तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति, विदुषां च उत्तरां विद्याकृताम्॥

इति चतुर्थखण्डभाष्यम्॥

## पञ्चमः खण्डः ॥

**पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गाः ॥ १ ॥**

द्वितीयहोमपर्यायार्थमाह— पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित्, वायुना हि पर्जन्योऽग्निः समिध्यते; पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमः, धूमकार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात् । विद्युदर्चिः, प्रकाशसामान्यात् । अशनिः अङ्गाराः, काठिन्याद्विद्युत्संबन्धाद्वा । ह्रादनयो विस्फुलिङ्गाः, ह्रादनयः गर्जितशब्दाः मेघानाम्, विप्रकीर्णत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षꣳ संभवति ॥ २ ॥**

इति पञ्चमः खण्डः ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत्सोमं राजानं जुह्वति । तस्या आहुतेर्वर्षं संभवति; श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठः खण्डः ॥

**पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥**

पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत् । तस्याः पृथिव्याख्यस्याग्नेः संवत्सर एव समित्, संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति । आकाशो धूमः, पृथिव्या इवोत्थित आकाशो दृश्यते— यथा अग्नेर्धूमः । रात्रिरर्चिः, पृथिव्या हि अप्रकाशात्मिकाया अनुरूपा रात्रिः, तमोरूपत्वात्—अग्नेरिवानुरूपमर्चिः । दिशः अङ्गाराः, उपशान्तत्वसामान्यात् । अवान्तरदिशः विस्फुलिङ्गाः, क्षुद्रत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ संभवति ॥ २ ॥**

इति षष्ठः खण्डः ॥

तस्मिन्नित्यादि समानम् । तस्या आहुतेरन्नं व्रीहियवादि संभवति ॥

इति षष्ठखण्डभाष्यम् ॥

## सप्तमः खण्डः ॥

**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥**

पुरुषो वाव गौतमाग्निः । तस्य वागेव समित्, वाचा हि मुखेन समिध्यते पुरुषो न मूकः । प्राणो धूमः, धूम इव मुखान्निर्गमनात् । जिह्वा अर्चिः, लोहितत्वात् । चक्षुः अङ्गाराः, भास आश्रयत्वात् । श्रोत्रं विस्फुलिङ्गाः, विप्रकीर्णत्वसाम्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति ॥ २ ॥**

इति सप्तमः खण्डः ॥

समानमन्यत् । अन्नं जुह्वति व्रीह्यादिसंस्कृतम् । तस्या आहुते रेतः संभवति ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टमः खण्डः ॥

**घोषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥**

योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् , तेन हि सा पुत्राद्युत्पादनाय समिध्यते । यदुपमन्त्रयते स धूमः, स्त्रीसंभवादुपमन्त्रणस्य । योनिरर्चिः, लोहितत्वात् । यदन्तः करोति तेऽङ्गाराः, अग्निसंबन्धात् । अभिनन्दाः सुखलवाः विस्फुलिङ्गाः, क्षुद्रत्वात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ २ ॥**

इति अष्टमः खण्डः ॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः संभवतीति । एवं श्रद्धासोमवर्षान्नरेतोहवनपर्यायक्र-

मेण आप एव गर्भीभूतास्ताः । तत्र अपामाहुतिसमवायित्वात् प्राधान्यविवक्षा—आपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्तीति । न त्वाप एव केवलाः सोमादिकार्यमारभन्ते । न च आपोऽत्रिवृत्कृताः सन्तीति । त्रिवृत्कृतत्वेऽपि विशेषसंज्ञालाभो दृष्टः—पृथिवीयमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तः । तस्मात्समुदितान्येव भूतान्यब्बाहुल्यात्कर्मसमवायीनि सोमादिकार्यारम्भकाण्याप इत्युच्यन्ते । दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु । बहुद्रवं च शरीरं यद्यपि पार्थिवम् । तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूताः ॥

इति अष्टमखण्डभाष्यम् ॥

## नवमः खण्डः ॥

---

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते १ ॥**

इति तु एवं तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यातः एकः प्रश्नः । यत्तु द्युलोकादिमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेण आविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयके उक्तम्, तत्प्रासङ्गिकमिहोच्यते । इह च प्रथमे प्रश्ने उक्तम्— वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । तस्य च अयमुपक्रमः—स गर्भोऽपां पञ्चमः परिणामविशेष आहुतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्यानाम् उल्बावृतः उल्बेन जरायुणा आवृतः वेष्टितः दश वा नव वा मासान् अन्तः मातुः कुक्षौ शयित्वा यावद्वा यावता कालेन न्यूनेनातिरिक्तेन वा अथ अनन्तरं जायते ॥

उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते । कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोशुचिबीजस्य मातुरशितपी-

तरसानुप्रवेशेन विवर्धमानस्य निरुद्धशक्तिबलवीर्यतेजःप्रज्ञाचेष्टस्य शयनम् । ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति, मुहूर्तमप्यसह्यं दश वा नव वा मासानतिदीर्घकालमन्तः शयित्वेति च ॥

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥**

इति नवमः खण्डः ॥

स एवं जातः यावदायुषं पुनः पुनर्घटीयन्त्रवद्गमनागमनाय कर्म कुर्वन् कुलालचक्रवद्वा तिर्यग्भ्रमणाय यावत्कर्मणोपात्तमायुः तावज्जीवति । तमेनं क्षीणायुषं प्रेतं मृतं दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति—यदि चेज्जीवन् वैदिके कर्मणि ज्ञाने वा अधिकृतः— तमेनं मृतम् इतः अस्माद्ग्रामात् अग्नये अग्न्यर्थम् ऋत्विजो हरन्ति पुत्रा वा अन्त्यकर्मणे । यत एव इत आगतः अग्नेः सकाशात् श्रद्धाद्याहुतिक्रमेण, यतश्च पञ्चभ्योऽग्निभ्यः संभूतः उत्पन्नः भवति, तस्मै एव अग्नये हरन्ति स्वामेव योनिम् अग्निम् आपादयन्तीत्यर्थः ॥

इति नवमखण्डभाष्यम् ॥

## दशमः खण्डः ॥

तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान् ॥ १ ॥

मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥

'वेत्थ यदितोऽधि प्रजाः प्रयन्ति' इत्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्तव्यतया। तत् तत्र लोकं प्रति उत्थितानाम् अधिकृतानां गृहमेधिनां ये इत्थम् एवं यथोक्तं पञ्चाग्निदर्शनम्—द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पञ्चाग्न्यात्मानः—इत्येवं विदुः जानीयुः। कथमवगम्यते इत्थं विदुरिति गृहस्था एव उच्यन्ते नान्य इति? गृहस्थानां ये त्वनित्थंविदः केवलेष्टापूर्तदत्तपराः ते धूमादिना चन्द्रं गच्छन्तीति वक्ष्यति। ये च अरण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धा तप

इत्युपासते, तेषां च इत्थंविद्भिः सह अर्चिरादिना गमनं वक्ष्यति, पारिशेष्यादग्निहोत्राहुतिसंबन्धाच्च गृहस्था एव गृह्यन्ते—इत्थं विदुरिति । ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्या अरण्यश्रुत्या च अनुपलक्षिता विद्यन्ते, कथं पारिशेष्यसिद्धिः? नैष दोषः । पुराणस्मृतिप्रामाण्यात् ऊर्ध्वरेतसां नैष्ठिकब्रह्मचारिणाम् उत्तरेणार्यम्णः पन्थाः प्रसिद्धः, अतः तेऽप्यरण्यवासिभिः सह गमिष्यन्ति । उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः । ननु ऊर्ध्वरेतस्त्वं चेत् उत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्रामाण्यादिष्यते, इत्थंवित्त्वमनर्थकं प्राप्तम् । न, गृहस्थान्प्रत्यर्थवत्त्वात् । ये गृहस्था अनित्थंविदः, तेषां स्वभावतो दक्षिणो धूमादिः पन्थाः प्रसिद्धः, तेषां य इत्थं विदुः सगुणं वा अन्यद्ब्रह्म विदुः, 'अथ यदु चैवास्मिञ्शव्यं कुर्वन्ति यदि च नार्चिषमेव' इति लिङ्गात् उत्तरेण ते गच्छन्ति । ननु ऊर्ध्वरेतसां गृहस्थानां च समाने आश्रमित्वे ऊर्ध्वरेतसामेव उत्तरेण पथा गमनं न गृहस्थानामिति न युक्तम् अग्निहोत्रादिवैदिककर्मबाहुल्ये च सति; नैष दोषः, अपूता हि ते—शत्रुमित्रसंयोगनिमित्तौ हि तेषां रागद्वेषौ, तथा धर्माधर्मौ हिंसानुग्रहनिमित्तौ, हिंसानृतमायाब्रह्मचर्यादि च बह्वशुद्धिकारणमपरिहार्यं ते-

षाम्, अतोऽपूताः । अपूतत्वात् न उत्तरेण पथा गमनम् । हिंसानृतमायाब्रह्मचर्यादिपरिहाराच्च शुद्धात्मानो हि इतरे, शत्रुमित्ररागद्वेषादिपरिहाराच्च विरजसः; तेषां युक्त उत्तरः पन्थाः । तथा च पौराणिकाः— 'ये प्रजामीषिरेऽधीरास्ते श्मशानानि भेजिरे । ये प्रजां नेषिरे धीरास्तेऽमृतत्वं हि भेजिरे' इत्याहुः । इत्थंविदां गृहस्थानामरण्यवासिनां च समानमार्गत्वेऽमृतत्वफले च सति, अरण्यवासिनां विद्यानर्थक्यं प्राप्तम्; तथा च श्रुतिविरोधः—'न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति, 'स एनमविदितो न भुनक्ति' इति च विरुद्धम् । न, आभूतसंप्लवस्थानस्यामृतत्वेन विवक्षितत्वात् । तत्रैवोक्तं पौराणिकैः— 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति । यच्च आत्यन्तिकममृतत्वम्, तदपेक्षया 'न तत्र दक्षिणा यन्ति' 'स एनमविदितो न भुनक्ति' इत्याद्याः श्रुतयः— इत्यतो न विरोधः । 'न च पुनरावर्तन्ते' इति 'इमं मानवमावर्तं नावर्तन्ते' इत्यादिश्रुतिविरोध इति चेत्, न; 'इमं मानवम्' इति विशेषणात् 'तेषामिह न पुनरावृत्तिरस्ति' इति च । यदि हि एकान्तेनैव नावर्तेरन्, इमं मानवम् इह इति च विशेषणमनर्थकं स्यात् । इममिह इत्याकृतिमात्रमुच्यत इति चेत्, न; अनावृत्तिशब्दे-

नैव नित्यानावृत्त्यर्थस्य प्रतीतत्वात् आकृतिकल्पना अन-र्थिका । अतः इममिह इति च विशेषणार्थवत्त्वाय अन्यत्र आवृत्तिः कल्पनीया । न च सदेकमेवाद्वितीयमित्येवं प्रत्य-यवतां मूर्धन्यनाड्या अर्चिरादिमार्गेण गमनम्, 'ब्रह्मैव स-न्ब्रह्माप्येति' 'तस्मात्तत्सर्वमभवत्' 'न तस्य प्राणा उत्क्रामन्ति । अत्रैव समवलीयन्ते' इत्यादिश्रुतिशतेभ्यः । ननु तस्माज्जीवादुच्चिक्रमिषोः प्राणा नोत्क्रामन्ति सहैव ग-च्छन्तीत्ययमर्थः कल्प्यत इति चेत्; न, 'अत्रैव समवली-यन्ते' इति विशेषणानर्थक्यात्, 'सर्वे प्राणा अनूत्क्रामन्ति' इति च प्राणैर्गमनस्य प्राप्तत्वात् । तस्मादुत्क्रामन्तीत्यनाशङ्कै-वैषा । यदापि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जी-वेन सह आगमनमाशङ्क्य तस्मान्नोत्क्रामन्तीत्युच्यते, तदा-पि 'अत्रैव समवलीयन्ते' इति विशेषणमनर्थकं स्यात् । न च प्राणैर्वियुक्तस्य गतिरुपपद्यते जीवत्वं वा, सर्वगत-त्वात्सदात्मनो निरवयवत्वात् प्राणसंबन्धमात्रमेव हि अ-ग्निविस्फुलिङ्गवज्जीवत्वभेदकारणमित्यतः तद्वियोगे जीवत्वं गतिर्वा न शक्या परिकल्पयितुम्, श्रुतयश्चेत्प्रमाणम् । न च सतोऽणुरवयवः स्फुटितो जीवाख्यः सद्रूपं छिद्रीकुर्वन् गच्छतीति शक्यं कल्पयितुम् । तस्मात् 'तयोर्ध्वमायन्नमृ-

त्वमेति' इति सगुणब्रह्मोपासकस्य प्राणैः सह नाड्या गमनम्, सापेक्षमेव च अमृतत्वम्, न साक्षान्मोक्ष इति गम्यते, 'तदपराजिता पूस्तदैरं मदीयं सरः' इत्याद्युक्त्वा 'तेषामेवैष ब्रह्मलोकः' इति विशेषणात् ॥

अतः पञ्चाग्निविदो गृहस्थाः, ये च इमे अरण्ये वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धा तप इत्येवमाद्युपासते श्रद्दधानास्तपस्विनश्चेत्यर्थः; उपासनशब्दस्तात्पर्यार्थः; इष्टापूर्ते दत्तमित्युपासत इति यद्वत्। श्रुत्यन्तरात् ये च सत्यं ब्रह्म हिरण्यगर्भाख्यमुपासते, ते सर्वे अर्चिषम् अर्चिरभिमानिनीं देवताम् अभिसंभवन्ति प्रतिपद्यन्ते। समानमन्यत् चतुर्थगतिव्याख्यानेन। एष देवयानः पन्था व्याख्यातः सत्यलोकावसानः, न अण्डाद्बहिः, 'यदन्तरा पितरं मातरं च' इति मन्त्रवर्णात् ॥

**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

अथेत्यर्थान्तरप्रस्तावनार्थः, य इमे गृहस्थाः ग्रामे, ग्राम इति गृहस्थानामसाधारणं विशेषणम् अरण्यवासिभ्यो व्यावृत्त्यर्थम्— यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थम्, तद्वत्; इष्टापूर्ते इष्टमग्निहोत्रादि वैदिकं कर्म, पूर्तं वापीकूपतडागारामादिकरणम्; दत्तं बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तम; इति एवंविधं परिचरणपरित्राणादि उपासते, इति-शब्दस्य प्रकारदर्शनार्थत्वात्। ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवताम् अभिसंभवन्ति प्रतिपद्यन्ते। तया अतिवाहिता धूमाद्रात्रिं रात्रिदेवतां रात्रेरपरपक्षदेवताम् एवमेव कृष्णपक्षाभिमानिनीम् अपरपक्षात् यान्षण्मासान् दक्षिणा दक्षिणां दिशमेति सविता, तान्मासान् दक्षिणायनषण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः। संघचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगः तासु। नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति। कुतः पुनः संवत्सरप्राप्तिप्रसङ्गः, यतः प्रतिषिध्यते? अस्ति हि प्रसङ्गः—संवत्सरस्य हि एकस्यावयवभूते दक्षिणोत्तरायणे, तत्र अर्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्तिरुक्ता; अतः इहापि तदवयवभूतानां दक्षिणायन-

मासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिरापन्नेति । अतः तत्प्राप्तिः प्रतिषिध्यते— नैते संवत्सरमभिप्राप्नुवन्तीति ॥

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥**

मासेभ्यः पितृलोकं पितृलोकादाकाशम् आकाशाच्चन्द्रमसम् । कोऽसौ, यस्तैः प्राप्यते चन्द्रमाः? य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानाम् , तदन्नं देवानाम् , तं चन्द्रमसमन्नं देवा इन्द्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते । ननु अनर्थाय इष्टादिकरणम् , यद्यन्नभूता देवैर्भक्ष्येरन् । नैष दोषः, अन्नमित्युपकरणमात्रस्य विवक्षितत्वात्—न हि ते कबलोत्क्षेपेण देवैर्भक्ष्यन्ते । किं तर्हि, उपकरणमात्रं देवानां भवन्ति ते, स्त्रीपशुभृत्यादिवत् , दृष्टश्चान्नशब्द उपकरणेषु—स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामित्यादि । न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात्कर्मिणो देवानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ति । शरीरं च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते । तदुक्तं पुरस्तात्—

श्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा संभवतीति । ता आपः कर्मसमवायिन्यः इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति । अन्त्यायां च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सह ऊर्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारम्भिका भवन्ति । तदारब्धेन च शरीरेण इष्टादिफलमुपभुञ्जाना आसते ॥

**तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति ॥ ५ ॥**

यावत् तदुपभोगनिमित्तस्य कर्मणः क्षयः, संपतन्ति येनेति संपातः कर्मणः क्षयः यावत्संपातं यावत्कर्मणः क्षय इत्यर्थः, तावत् तस्मिंश्चन्द्रमण्ले उषित्वा अथ अनन्तरम् एतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते । पुनर्निवर्तन्त इति प्रयोगात्पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्च आसन्निति गम्यते । तस्मादिह लोके इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति; तत्क्षये च आवर्तन्ते; क्षणमात्रमपि तत्र स्थातुं न लभ्यते,

स्थितिनिमित्तकर्मक्षयात्—स्नेहक्षयादिव प्रदीपस्य ॥

तत्र किं येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोहणम्, किं वा सावशेष इति। किं ततः? यदि सर्वस्यैव क्षयः कर्मणः, चन्द्रमण्डलस्थस्यैव मोक्षः प्राप्नोति; तिष्ठतु तावत्तत्रैव, मोक्षः स्यात्, न वेति; तत आगतस्य इह शरीरोपभोगादि न संभवति। 'ततः शेषेण' इत्यादिस्मृतिविरोधश्च स्यात्। नन्विष्टापूर्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि संभवन्ति, न च तेषां चन्द्रमण्डले उपभोगः, अतोऽक्षीणानि तानि; यन्निमित्तं चन्द्रमण्डलमारूढः, तान्येव क्षीणानीत्यविरोधः; शेषशब्दश्च सर्वेषां कर्मत्वसामान्यादविरुद्धः; अत एव च तत्रैव मोक्षः स्यादिति दोषाभावः; विरुद्धानेकयोन्युपभोगफलानां च कर्मणाम् एकैकस्य जन्तोरारम्भकत्वसंभवात्। न च एकस्मिञ्जन्मनि सर्वकर्मणां क्षय उपपद्यते, ब्रह्महत्यादेश्च एकैकस्य कर्मण अनेकजन्मारम्भकत्वस्मरणात्, स्थावरादिप्राप्तानां च अत्यन्तमूढानामुत्कर्षहेतोः कर्मण आरम्भकत्वासंभवात्। गर्भभूतानां च स्रंसमानानां कर्मासंभवे संसारानुपपत्तिः। तस्मात् न एकस्मिञ्जन्मनि सर्वेषां कर्मणामुपभोगः ॥

यत्तु कैश्चिदुच्यते— सर्वकर्माश्रयोपमर्देन प्रायेण कर्मणां जन्मारम्भकत्वम् । तत्र कानिचित्कर्माण्यनारम्भकत्वेनैव तिष्ठन्ति कानिचिज्जन्म आरभन्त इति नोपपद्यते, मरणस्य सर्वकर्माभिव्यञ्जकत्वात्, स्वगोचराभिव्यञ्जकप्रदीपवदिति । तदसत्, सर्वस्य सर्वात्मकत्वाभ्युपगमात्—न हि सर्वस्य सर्वात्मकत्वे देशकालनिमित्तावरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनोपपद्यते, तथा कर्मणामपि साश्रयाणां भवेत्— यथा च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृताः विरुद्धानेकवासनाः मर्कटत्वप्रापकेन कर्मणा मर्कटजन्म आरभमाणेन नोपमृद्यन्ते—तथा कर्मण्यप्यन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्त इति युक्तम् । यदि हि सर्वाः पूर्वजन्मानुभववासनाः उपमृद्येरन्, मर्कटजन्मनिमित्तेन कर्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखान्तरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति, इह जन्मन्यनभ्यस्तत्वात् । न च अतीतानन्तरजन्मनि मर्कटत्वमेव आसीत्तस्येति शक्यं वक्तुम्, 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः । तस्माद्वासनावन्नाशेषकर्मोपमर्द इति शेषकर्मसंभवः । यत एवम्, तस्माच्छेषेणोपभुक्तात्कर्मणः

संसार उपपद्यत इति न कश्चिद्विरोधः ॥

कोऽसावध्वा यं प्रति निवर्तन्त इति, उच्यते— यथेतं यथागतं निवर्तन्ते । ननु मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमिति गमनक्रम उक्तः, न तथा निवृत्तिः ; किं तर्हि, आकाशाद्वायुमित्यादि ; कथं यथेतमित्युच्यते । नैष दोषः, आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च । न च अत्र यथेतमेवेति नियमः, अनेवंविधमपि निवर्तन्ते ; पुनर्निवर्तन्त इति तु नियमः । अत उपलक्षणार्थमेतत्— यथेतमिति । अतो भौतिकमाकाशं तावत्प्रतिपद्यन्ते— यास्तेषां चन्द्रमण्डले शरीरारम्भिका आप आसन , तास्तेषां तत्रोपभोगनिमित्तानां कर्मणां क्षये विलीयन्ते—घृतसंस्थानमिवाग्निसंयोगे, ता विलीना अन्तरिक्षस्था आकाशभूता इव सूक्ष्माः भवन्ति । ता अन्तरिक्षाद्वायुर्भवन्ति, वायुप्रतिष्ठा वायुभूता इतश्चामुतश्च ऊह्यमानाः ताभिः सह क्षीणकर्मा वायुभूतो भवति । वायुर्भूत्वा ताभिः सहैव धूमो भवति । धूमो भूत्वा अभ्रम् अब्भरणमात्ररूपो भवति ॥

**अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु**

**दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥**

अभ्रं भूत्वा ततः सेचनसमर्थो मेघो भवति; मेघो भूत्वा उन्नतेषु प्रदेशेष्वथ प्रवर्षति; वर्षधारारूपेण शेषकर्मा पततीत्यर्थः । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवंप्रकारा जायन्ते; क्षीणकर्मणामनेकत्वात् बहुवचननिर्देशः । मेघादिषु पूर्वेष्वेकरूपत्वात् एकवचननिर्देशः । यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसंनिवेशसहस्राणि वर्षधाराभिः पतितानाम्, अतः तस्माद्धेतोः वै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम्—यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति, ततः समुद्रम्, ततो मकरादिभिर्भक्ष्यन्ते; तेऽप्यन्येन; तत्रैव च सह मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वा अगम्ये पतितास्तिष्ठन्ति, कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैः तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन्; कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन्; भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभ एव, बहुत्वात्स्थावराणाम्—इत्यतो दुर्निष्क्रमणत्वम् । अथवा अतः अस्माद्व्रीहियवादिभावात् दुर्निष्प्रपतरं दुर्निर्गमतरम् । दुर्निष्प्रपत-

रमिति तकार एको लुप्तो द्रष्टव्यः; व्रीहियवादिभावो दुर्निष्प्रपतः, तस्मादपि दुर्निष्प्रपताद्रेतःसिग्देहसंबन्धो दुर्निष्प्रपततर इत्यर्थः; यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अन्तराले शीर्यन्ते, अनेकत्वादन्नादानाम्। कदाचित्काकतालीयवृत्त्या रेतःसिग्भिर्भक्ष्यन्ते यदा, तदा रेतःसिग्भावं गतानां कर्मणो वृत्तिलाभः। कथम्? यो यो हि अन्नमत्ति अनुशयिभिः संश्लिष्टं रेतःसिक्, यश्च रेतः सिञ्चति ऋतुकाले योषिति, तद्भूय एव तदाकृतिरेव भवति; तदवयवाकृतिभूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषितो गर्भाशयेऽन्तः प्रविष्टोऽनुशयी, रेतसो रेतःसिगाकृतिभावितत्वात्, 'सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्' इति हि श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः। तथा हि—पुरुषात्पुरुषो जायते गोर्गवाकृतिरेव न जात्यन्तराकृतिः, तस्माद्युक्तं तद्भूय एव भवतीति॥

ये त्वन्ये अनुशयिभ्यश्चन्द्रमण्डलमनारुह्य इहैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते, पुनर्मनुष्यादिभावम्, तेषां नानुशयिनामिव दुर्निष्प्रपतरम्। कस्मात्? कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकाव-

त्संक्रमन्ते सविज्ञाना एव 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' इति श्रुत्यन्तरात् । यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति, तथापि स्वप्नवत् देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति, श्रुतिप्रामाण्यात् । तथा अर्चिरादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन, लब्धवृत्तिकर्मनिमित्तत्वाद्गमनस्य । न तथा अनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानमेव रेतःसिग्योषिद्देहसंबन्ध उपपद्यते, न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति । ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वात् जलूकावत्सविज्ञानतैव युक्ता, तथा सति घोरो नरकानुभव इष्टापूर्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म; तथा च सति, अनर्थायैव इष्टापूर्ताद्युपासनं विहितं स्यात्; श्रुतेश्च अप्रामाण्यं प्राप्तम्, वैदिकानां कर्मणाम् अनर्थानुबन्धित्वात् । न, वृक्षारोहणपतनवद्विशेषसंभवात्— देहाद्देहान्तरं प्रतिपित्सोः कर्मणो लब्धवृत्तित्वात् कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम्— वृक्षाग्रमारोहत इव फलं जिघृक्षोः । तथा अर्चिरादिना गच्छतां सविज्ञानत्वं भवेत्; धूमादिना च चन्द्रमण्ड-

लमारुरुक्षताम् । न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वम्— यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा, तथा चन्द्रमण्डलात मानुषादिदेहान्तरं पति अवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयात् मृदिताब्देहानां प्रतिबद्धकरणानाम् । अतः ते अपरित्यक्तदेहबीजभूताभिरद्भिः मूर्छिता इव आकाशादिक्रमेण इमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतया अनुद्भूतविज्ञाना एव । तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्छितवदेव, देहान्तरारम्भकस्य कर्मणोऽलब्धवृत्तित्वात् । देहबीजभूताप्संबन्धापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावत् चेतनावत्त्वं न विरुध्यते । अन्तराले त्वविज्ञानं मूर्छितवदेवेत्यदोषः । न च वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुम्, हिंसायाः शास्त्रचोदितत्वात् । 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति श्रुतेः शास्त्रचोदिताया हिंसाया न अधर्महेतुत्वमभ्युपगम्यते । अभ्युपगतेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत् तदपनयोपपत्तेः न दुःखकार्यारम्भणोपपत्तिः वैदिकानां कर्मणाम्— मन्त्रेणेव विषभक्षणस्येति ॥

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥**

तत् तत्र तेष्वनुशयिनां ये इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते—रमणीयचरणाः उच्यन्ते; क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः; तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेण अभ्याशो ह क्षिप्रमेव, यदिति क्रियाविशेषणम्, ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन् प्राप्नुयुः ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण। अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणः अशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन् कपूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव ॥

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥**

ये तु रमणीयचरणा द्विजातयः, ते स्वकर्मस्थाश्चेदिष्टादिकारिणः, ते धूमादिगत्या गच्छन्त्यागच्छन्ति च पुनः पुनः, घटीयन्त्रवत् । विद्यां चेत्प्राप्नुयुः, तदा अर्चिरादिना गच्छन्ति; यदा तु न विद्यासेविनो नापि इष्टादिकर्म सेवन्ते, तदा अथैतयोः पथोः यथोक्तयोरर्चिर्धूमादिलक्षणयोः न कतरेण अन्यतरेण चनापि यन्ति । तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति । अतः उभयमार्गपरिभ्रष्टा हि असकृज्जायन्ते म्रियन्ते च इत्यर्थः । तेषां जननमरणसंततेरनुकरणमिदमुच्यते । जायस्व म्रियस्व इति ईश्वरनिमित्तचेष्टा उच्यते । जननमरणलक्षणेनैव कालयापना भवति, न तु क्रियासु शोभनेषु भोगेषु वा कालोऽस्तीत्यर्थः । एतत् क्षुद्रजन्तुलक्षणं तृतीयं पूर्वोक्तौ पन्थानावपेक्ष्य स्थानं संसरताम्, येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्ति,

अनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति, तेनासौ लोको न संपूर्यते । पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यया व्याख्यातः । प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतः । दक्षिणोत्तरयोः पथोर्व्यावर्तनापि— मृतानामग्नौ प्रक्षेपः समानः, ततो व्यावर्त्य अन्येऽर्चिरादिना यन्ति, अन्ये धूमादिना, पुनरुत्तरदक्षिणायने षण्मासान्प्राप्नुवन्तः संयुज्य पुनर्व्यावर्तन्ते, अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकम्—इति व्याख्याता । पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेण उक्ता । अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्—तेनासौ लोको न संपूर्यत इति । यस्मादेवं कष्टा संसारगतिः, तस्माज्जुगुप्सेत । यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे प्रवेशिताः— सागर इव अगाधेऽप्लवे निराशाश्चोत्तरणं प्रति, तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेत्— मा भूदेवंविधे संसारमहोदधौ घोरे पात इति । तदेतस्मिन्नर्थे एषः श्लोकः पञ्चाग्निविद्यास्तुतये ॥

**स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति ॥ ९ ॥**

स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता, सुरां पिबन् ब्राह्मणः सन्, गुरोश्च तल्पं दारानावसन्, ब्रह्महा ब्राह्मणस्य हन्ता चेत्येते पतन्ति चत्वारः। पञ्चमश्च तैः सह आचरन्निति ॥

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥**

इति दशमः खण्डः ॥

अथ ह पुनः यो यथोक्तान्पञ्चाग्नीन्वेद, स तैरप्याचरन् महापातकिभिः सह न पाप्मना लिप्यते, शुद्ध एव। तेन पञ्चाग्निदर्शनेन पावितः यस्मात्पूतः, पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोकः भवति; य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥

इति दशमखण्डभाष्यम् ॥

## एकादशः खण्डः ॥

दक्षिणेन पथा गच्छतामन्नभाव उक्तः—'तद्देवानामन्नम्' 'तं देवा भक्षयन्ति' इति; क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता। तदुभयदोषपरिजिहीर्षया वैश्वानरात्तृभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते, 'अत्स्यन्नं पश्यसि प्रियम्' इत्यादिलिङ्गात्। आख्यायिका तु सुखावबोधार्था विद्यासंप्रदानन्यायप्रदर्शनार्था च—

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥**

प्राचीनशाल इति नामतः, उपमन्योरपत्यमौपमन्यवः। सत्ययज्ञो नामतः, पुलुषस्यापत्यं पौलुषिः। तथेन्द्रद्युम्नो नामतः, भल्लवेरपत्यं भाल्लविः तस्यापत्यं भाल्लवेयः। जन इति नामतः, शर्कराक्षस्यापत्यं शार्कराक्ष्यः। बुडिलो नामतः, अश्वतराश्वस्यापत्यमाश्वतराश्विः। पञ्चापि ते हैते महाशालाः महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः संपन्ना इत्यर्थः, महाश्रोत्रियाः श्रुताध्ययनवृत्तसंपन्ना इत्यर्थः, ते एवं-

भूताः सन्तः समेत्य संभूय क्वचित् मीमांसां विचारणां चक्रुः कृतवन्त इत्यर्थः । कथम्? को नः अस्माकमात्मा किं ब्रह्म—इति; आत्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वम् । ब्रह्मेति अध्यात्मपरिच्छिन्नमात्मानं निवर्तयति, आत्मेति च आत्मव्यतिरिक्तस्य आदित्यादिब्रह्मण उपास्यत्वं निवर्तयति। अभेदेन आत्मैव ब्रह्म ब्रह्मैव आत्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति, 'मूर्धा ते व्यपतिष्यत' 'अन्धोऽभविष्यः' इत्यादिलिङ्गात् ॥

**ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥**

ते ह मीमांसन्तोऽपि निश्चयमलभमानाः संपादयांचक्रुः संपादितवन्तः आत्मन उपदेष्टारम् । उद्दालको वै प्रसिद्धो नामतः, भगवन्तः पूजावन्तः, अयमारुणिः अरुणस्यापत्यं संप्रति सम्यगिममात्मानं वैश्वानरम् अस्मदभिप्रेतमध्येति स्मरति । तं हन्त इदानीमभ्यागच्छाम इत्येवं निश्चित्य तं ह अभ्याजग्मुः गतवन्तः तम् आरुणिम् ॥

**स ह संपादयांचकार प्रक्ष्यन्ति मा-**

**मिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥**

स ह तान् दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा संपादयांचकार । कथम्? प्रक्ष्यन्ति मां वैश्वानरम् इमे महाशालाः महाश्रोत्रियाः, तेभ्योऽहं न सर्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे; अतः हन्ताहमिदानीमन्यम् एषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमिति ॥

**तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥**

एवं संपाद्य तान् ह उवाच— अश्वपतिर्वै नामतः भगवन्तः अयं केकयस्यापत्यं कैकेयः संप्रति सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानम् ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदे-**

**कैकस्मा ऋत्विजे धनं दास्यामि तावद्भ-गवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥**

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाणि अर्हणानि पुरोहितैर्भृत्यैश्च कारयांचकार कारितवान् । स ह अन्येद्युः राजा प्रातः संजिहान उवाच विनयेन उपगम्य—एतद्धनं मत्त उपादध्वमिति । तैः प्रत्याख्यातो मयि दोषं पश्यन्ति नूनम्, यतो न प्रतिगृह्णन्ति मत्तो धनम् इति मन्वानः आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह— न मे मम जनपदे स्तेनः परस्वहर्ता विद्यते; न कदर्यः अदाता सति विभवे; न मद्यपः द्विजोत्तमः सन्; न अनाहिताग्निः शतगुः; न अविद्वान् अधिकारानुरूपम्; न स्वैरी परदारेषु गन्ता; अत एव स्वैरिणी कुतः दुष्टचारिणी न संभवतीत्यर्थः । तैश्च न वयं धनेनार्थिन इत्युक्तः आह— अल्पं मत्वा एते धनं न गृह्णन्तीति, यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि । तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तम् ऋत्विजे धनं दास्यामि, तावत् प्रत्येकं भगवद्भ्योऽपि दास्यामि । वसन्तु भगवन्तः, पश्यन्तु च मम यागम् ॥

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि**

**तमेव नो ब्रूहीति ॥ ६ ॥**

इत्युक्ताः ते ह ऊचुः— येन ह एव अर्थेन प्रयोजनेन यं प्रति चरेत् गच्छेत पुरुषः, तं ह एवार्थं वदेत् । इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सताम् । वयं च वैश्वानरज्ञानार्थिनः । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि सम्यग्जानासि । अतस्तमेव नः अस्मभ्यं ब्रूहि ॥

**तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥ ७ ॥**

इत्युक्तः तान ह उवाच । प्रातः वः युष्मभ्यं प्रतिवक्तास्मि प्रतिवाक्यं दातास्मीत्युक्ताः ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ताः अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । यत एवं महाशालाः महाश्रोत्रियाः ब्राह्मणाः सन्तः महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ताः जातितो हीनं राजानं विद्यार्थिनः विनयेनोपजग्मुः । तथा अन्यैर्विद्योपादित्सुभिर्भवितव्यम् । तेभ्यश्च अदाद्विद्याम् अनुपनीयैव उपनयनमकृत्वैव तान् । यथा योग्येभ्यो विद्यामदात्, तथा अन्येनापि विद्या दातव्येति आख्यायिकार्थः । एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन संबन्धः ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादशः खण्डः ॥

---

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

स कथमुवाचेति, आह— औपमन्यव हे कम् आत्मानं वैश्वानरं त्वमुपास्से इति पप्रच्छ । नन्वयमन्याय:—आचार्य: सन् शिष्यं पृच्छतीति । नैष दोष:, 'यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामि' इति न्यायदर्शनात् । अन्यत्राप्याचार्यस्य अप्रतिभानवति शिष्ये प्रतिभोत्पादनार्थ: प्रश्नो दृष्टोऽजातशत्रो:, 'क्वैष तदाभूत्कुत एतदागात्' इति । दिवमेव द्युलोकमेव वैश्वानरमुपासे भगवो राजन इति ह उवाच । एष वै सुतेजा: शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्मा, आत्मन: अवयवभूतत्वात् । यं त्वम् आत्मानम् आत्मैकदेशम् उपास्से, तस्मात् सुतेजसो वैश्वानरस्य

उपासनात् तव सुतमभिषुतं सोमरूपं कर्मणि प्रसुतं प्रकर्षेण च सुतम् आसुतं च अहर्गणादिषु तव कुले दृश्यते; अतीव कर्मिणस्त्वत्कुलीना इत्यर्थः ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥**

इति द्वादशः खण्डः ॥

अत्स्यन्नं दीप्ताग्निः सन् पश्यसि च पुत्रपौत्रादि प्रियमिष्टम । अन्योऽप्यत्त्यन्नं पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादि कर्मित्वं ब्रह्मवर्चसं कुले, यः कश्चित् एतं यथोक्तम् एवं वैश्वानरमुपास्ते । मूर्धा त्वात्मनो वैश्वानरस्य एष न समस्तो वैश्वानरः । अतः समस्तबुद्धया वैश्वानरस्योपासनात् मूर्धा शिरस्ते विपरीतग्राहिणो व्यपतिष्यत् विपतितमभविष्यत् यत् यदि मां नागतोऽभविष्यः । साध्वकार्षीः यन्मामागतोऽस्मीत्यभिप्रायः ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदशः खण्डः ॥

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीन-योग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥**

अथ होवाच सत्ययज्ञं पौलुषिम्—हे प्राचीनयोग्य कं त्वमात्मानमुपास्से इति; आदित्यमेव भगवो राजन इति ह उवाच। शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य, सर्वरूपत्वाद्वा, सर्वाणि रूपाणि हि त्वाष्ट्राणि यतः, अतो वा विश्वरूप आदित्यः; तदुपासनात् तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले॥

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यन्मां नागमिष्य इति॥**

किंच त्वामनु प्रवृत्तः अश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः। अत्स्यन्नमित्यादि समानम्। चक्षुर्वैश्वानरस्य तु सविता। तस्य समस्तबुद्ध्योपासनात् अन्धोऽभविष्यः चक्षुर्हीनोऽभविष्यः यन्मां नागमिष्य इति पूर्ववत्॥

## चतुर्दशः खण्डः ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेण्योऽनुयन्ति ॥ १ ॥

अथ ह उवाच इन्द्रद्युम्नं भाल्लवेयम्— वैयाघ्रपद्य कं त्वमात्मानमुपास्से इत्यादि समानम् । पृथग्वर्त्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैः वर्तमानस्य सोऽयं पृथग्वर्त्मा वायुः । तस्मात् पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात् पृथक् नानादिक्काः त्वां बलयः वस्त्रान्नादिलक्षणा बलयः आयन्ति आगच्छन्ति । पृथग्रथश्रेणयः रथपङ्क्तयोऽपि त्वामनुयन्ति ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥

अत्स्यन्नमित्यादि समानम् । प्राणस्त्वेष आत्मन इति ह उवाच । प्राणस्ते तव उदक्रमिष्यत् उत्क्रान्तोऽभविष्यत्, यन्मां नागमिष्य इति ॥

## पञ्चदशः खण्डः ॥

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अथ ह उवाच जनमित्यादि समानम् । एष वै बहुल आत्मा वैश्वानरः । बहुलत्वमाकाशस्य सर्वगतत्वात् बहुलगुणोपासनाच्च । त्वं बहुलोऽसि प्रजया च पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति पञ्चदशः खण्डः ॥

संदेहस्त्वेष संदेहः मध्यमं शरीरं वैश्वानरस्य । दिहेरुपचयार्थत्वात् मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्संदेहः ते तव शरीरं व्यशीर्यत् शीर्णमभविष्यत् यन्मां नागमिष्य इति ॥

इति पञ्चदशखण्डभाष्यम् ।

## षोडशः खण्डः ॥

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥ १ ॥

अथ ह उवाच बुडिलमाश्वतराश्विमित्यादि समानम् । एष वै रयिरात्मा वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनमिति । तस्माद्रयिमान धनवान् त्वं पुष्टिमांश्च शरीरेण पुष्टेश्चान्ननिमित्तत्वात् ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति षोडशः खण्डः ॥

बस्तिस्त्वेष आत्मनो वैश्वानरस्य, बस्तिः मूत्रसंग्रहस्थानम्, बस्तिस्ते व्यभेत्स्यत् भिन्नोऽभविष्यत् यन्मां नागमिष्य इति ॥

इति षोडशखण्डभाष्यम् ॥

## सप्तदशः खण्डः ॥

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥

इति सप्तदशः खण्डः ॥

अथ ह उवाच उद्दालकमित्यादि समानम् । पृथिवीमेव भगवो राजन्निति ह उवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्लानावभविष्यतां श्लथीभूतौ यन्मां नागमिष्य इति ॥

इति सप्तदशखण्डभाष्यम् ॥

## अष्टादशः खण्डः ॥

तान्होवाचैते वै खलु यूयं पृथगिवेम-
मात्मानं वैश्वानरं विद्वा्ँसोऽन्नमत्थ य-
स्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मा-
नं वैश्वानरमुपास्ते स सर्वेषु लोकेषु स-
र्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तान् यथोक्तवैश्वानरदर्शनवतो ह उवाच— एते यूयम्, वै खल्वित्यनर्थकौ, यूयं पृथगिव अपृथक्सन्तमिममेकं वैश्वानर-मात्मानं विद्वांसः अन्नमत्थ, परिच्छिन्नात्मबुद्ध्येत्येतत्—हस्ति-दर्शन इव जात्यन्धाः। यस्त्वेतमेवं यथोक्तावयवैः द्युमूर्धादिभिः पृथिवीपादान्तैर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैः द्युमूर्धादिभिः पृथिवीपादान्तैः अध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम्। मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोका-दिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेण आदिश्यन्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादे-शमात्रः। शाखान्तरे तु मूर्धादिश्चिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथा अभिप्रेतः, 'तस्य ह वा एतस्या-

त्मनः' इत्याद्युपसंहारात्। प्रत्यगात्मतया अभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानः तमेतमात्मानं वैश्वानरम्—विश्वान्नराञ्नयति पुण्यपापानुरूपां गतिं सर्वात्मैष ईश्वरो वैश्वानरः, विश्वो नर एव वा सर्वात्मत्वात्, विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः तमेवमुपास्ते यः, सोऽदन् अन्नादी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु, तेषु हि आत्मकल्पनाव्यपदेशः, प्राणिनामन्नमत्ति, वैश्वानरवित्सर्वात्मा सन् अन्नमत्ति। न यथा अज्ञः पिण्डमात्राभिमानः सन् इत्यर्थः ॥

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥**

**इति अष्टादशः खण्डः ॥**

कस्मादेवम्? यस्मात्तस्य ह वै प्रकृतस्यैव एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथ-

ग्वत्मात्मा संदेहः बहुलो बस्तिरेव रयिः पृथिव्येव पादौ । अथवा विध्यर्थमेतद्वचनम्—एवमुपास्य इति । अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन् आह— एतस्य वैश्वानरस्य भोक्तुः उर एव वेदिः, आकारसामान्यात् । लोमानि बर्हिः, वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते । हृदयं गार्हपत्यः, हृदयाद्धि मनः प्रणीतमिवानन्तरी भवति; अतोऽन्वाहार्यपचनोऽग्निः मनः । आस्यं मुखमाहवनीय इव आहवनीयो हूयतेऽस्मिन्नन्नमिति ॥

इति अष्टादशखण्डभाष्यम् ॥

## एकोनविंशः खण्डः ॥

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥**

तत् तत्रैवं सति यद्भक्तं प्रथमं भोजनकाले आगच्छेद्भोजनार्थम्, तद्धोमीयं तद्धोतव्यम, अग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह; स भोक्ता यां प्रथमामाहुतिं जुहुयात्, तां कथं जुहुयादिति, आह— प्राणाय स्वाहेत्यनेन मन्त्रेण; आहुतिशब्दात् अवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः। तेन प्राणस्तृप्यति ॥

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन**

**तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥**

इति एकोनविंशः खण्डः ॥

प्राणे तृप्यति चक्षुस्तृप्यति, चक्षुषि तृप्यति आदित्यो द्यौश्चेत्यादि तृप्यति, यच्चान्यन् द्यौश्च आदित्यश्च स्वामित्वेनाधितिष्ठतः तच्च तृप्यति, तस्य तृप्तिमनु स्वयं भुञ्जानः तृप्यति एवं प्रत्यक्षम् । किं च प्रजादिभिश्च । तेजः शरीरस्था दीप्तिः उज्ज्वलत्वं प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥

इति एकोनविंशखण्डभाष्यम् ॥

## विंशः खण्डः ॥

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

इति विंशः खण्डः ॥

---

## एकविंशः खण्डः ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति एकविंशः खण्डः ॥

## द्वाविंशः खण्डः ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति द्वाविंशः खण्डः ॥

## त्रयोविंशः खण्डः ॥

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन ॥ २ ॥

अथ यां द्वितीयां तृतीयां चतुर्थीं पञ्चमीमिति समानम् ॥

इति त्रयोविंशखण्डभाष्यम् ॥

# चतुर्विंशः खण्डः ॥

---

**स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥**

स यः कश्चित् इदं वैश्वानरदर्शनं यथोक्तम् अविद्वान्सन् अग्निहोत्रं प्रसिद्धं जुहोति, यथा अङ्गारानाहुतियोग्यानपोह्यानाहुतिस्थाने भस्मनि जुहुयात्, तादृक् तत्तुल्यं तस्य तदग्निहोत्रहवनं स्यात्, वैश्वानरविदः अग्निहोत्रमपेक्ष्य— इति प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते ॥

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥**

अतश्च एतद्विशिष्टमग्निहोत्रम् । कथम्? अथ य एतदेवं विद्वान् अग्निहोत्रं जुहोति, तस्य यथोक्तवैश्वानरविज्ञानवतः

सर्वेषु लोकेष्वित्याद्युक्तार्थम् , हुतम् अन्नमत्ति इत्यनयोरेकार्थ-त्वात् ॥

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥**

किंच तद्यथा इषीकायास्तूलम् अग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रम् , एवं ह अस्य विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानः धर्माधर्माख्याः अनेकजन्मसंचिताः इह च प्राग्ज्ञानोत्पत्तेः ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन् वर्तमानशरीरारम्भकपाप्मवर्जम् ; लक्ष्यं प्रति मुक्तेषुवत् प्रवृत्तफलत्वात् तस्य न दाहः । य एतदेवं विद्वान् अग्निहोत्रं जुहोति भुङ्क्ते ॥

**तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥**

स यद्यपि चण्डालाय उच्छिष्टानर्हाय उच्छिष्टं दद्यात् प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्यात् , आत्मनि हैव अस्य चण्डालदेहस्थे वैश्वानरे तद्धुतं स्यात् न अधर्मनिमित्तम्—

इति विद्यामेव स्तौति । तदेतस्मिन्स्तुत्यर्थे श्लोकः मन्त्रोऽप्येष भवति ॥

**यथेह क्षुधिता बाला मातरं पर्युपासत**
**एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत**
**इत्यग्निहोत्रमुपासत इति ॥ ५ ॥**

**इति चतुर्विंशः खण्डः ॥**

यथा इह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते—कदा नो माता अन्नं प्रयच्छतीति, एवं सर्वाणि भूतान्यन्नादानि एवंविदः अग्निहोत्रं भोजनमुपासते—कदा त्वसौ भोक्ष्यत इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

इति चतुर्विंशखण्डभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः समाप्तः ॥

## ॥ षष्ठोऽध्यायः ॥

श्वेतकेतुः ह आरुणेय आस इत्याद्यध्यायसंबन्धः— 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्युक्तम्, कथं तस्मात् जगदिदं जायते तस्मिन्नेव च लीयते अनिति च तेनैव इत्येतद्वक्तव्यम्। अनन्तरं च एकस्मिन्भुक्ते विदुषि सर्वं जगत्तृप्तं भवतीत्युक्तम्, तत् एकत्वे सति आत्मनः सर्वभूतस्थस्य उपपद्यते, न आत्मभेदे; कथं च तदेकत्वमिति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते—

**श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥**

पितापुत्राख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शनार्था। श्वेतकेतुरिति नामतः, ह इत्यैतिह्यार्थः, आरुणेयः अरुणस्य

पौत्रः आस बभूव । तं पुत्रं ह आरुणिः पिता योग्यं विद्याभाजनं मन्वानः तस्योपनयनकालात्ययं च पश्यन् उवाच— हे श्वेतकेतो अनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्यम्; न च एतद्युक्तं यदस्मत्कुलीनो हे सोम्य अननूच्य अनधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान्बन्धून्व्यपदिशति न स्वयं ब्राह्मणवृत्त इति । तस्य अतः प्रवासो अनुमीयते पितुः, येन स्वयं गुणवान्सन्न पुत्रं नोपनेष्यति ॥

**स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳह पितोवाच ॥**

सः पित्रोक्तः श्वेतकेतुः ह द्वादशवर्षः सन् उपेत्य आचार्यं यावच्चतुर्विंशतिवर्षो बभूव, तावत् सर्वान्वेदान् चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा महामनाः महत् गम्भीरं मनः यस्य असममात्मानमन्यैर्मन्यमानं मनः यस्य सोऽयं महामनाः अनूचानमानी अनूचानमात्मानं मन्यत इति एवंशीलो यः सोऽनूचानमानी स्तब्धः अप्रणतस्वभावः एयाय गृहम् । तम् एवंभूतं ह आत्मनोऽननुरूपशीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पितोवाच सद्धर्मावतारचिकीर्षया ॥

**श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥**

श्वेतकेतो यन्नु इदं महामना: अनूचानमानी स्तब्धश्चासि, कस्तेऽतिशय: प्राप्त: उपाध्यायात्, उत अपि तमादेशं आदिश्यत इत्यादेश: केवलशास्त्राचार्योपदेशगम्यमित्येतत्, येन वा परं ब्रह्म आदिश्यते स आदेश: तमप्राक्ष्य: पृष्टवानस्याचार्यम्? तमादेशं विशिनष्टि— येन आदेशेन श्रुतेन अश्रुतमपि अन्यच्छ्रुतं भवति अमतं मतम् अतर्कितं तर्कितं भवति अविज्ञातं विज्ञातं अनिश्चितं निश्चितं भवतीति । सर्वानपि वेदानधीत्य सर्वं च अन्यद्वेद्यमधिगम्यापि अकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते । तदेतदद्भुतं श्रुत्वा आह, कथं नु एतदप्रसिद्धम् अन्यविज्ञानेनान्यद्विज्ञातं भवतीति; एवं मन्वान: पृच्छति— कथं नु केन प्रकारेण हे भगव: स आदेशो भवतीति ॥

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्म-**

**यं विज्ञातँ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

यथा स आदेशो भवति तच्छृणु हे सोम्य—यथा लोके एकेन मृत्पिण्डेन रुचककुम्भादिकारणभूतेन विज्ञातेन सर्वमन्यत्तद्विकारजातं मृन्मयं मृद्विकारजातं विज्ञातं स्यात् । कथं मृत्पिण्डे कारणे विज्ञाते कार्यमन्यद्विज्ञातं स्यात्? नैष दोषः, कारणेनानन्यत्वात्कार्यस्य । यन्मन्यसे अन्यस्मिन्विज्ञातेऽन्यन्न ज्ञायत इति—सत्यमेवं स्यात्, यद्यन्यत्कारणात्कार्यं स्यात्, न त्वेवमन्यत्कारणात्कार्यम् । कथं तर्हीदं लोके—इदं कारणमयमस्य विकार इति? शृणु । वाचारम्भणं वागारम्भणं वागालम्बनमित्येतत् । कोऽसौ? विकारो नामधेयं नामैव नामधेयम्, स्वार्थे धेयप्रत्ययः, वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति ; परमार्थतो मृत्तिकेत्येव मृत्तिकैव तु सत्यं वस्त्वस्ति ॥

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातँ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥**

यथा सोम्य एकेन लोहमणिना सुवर्णपिण्डेन सर्वमन्य-

द्विकारजातं कटकमुकुटकेयूरादि विज्ञातं स्यात् । वाचारम्भणमित्यादि समानम् ॥

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥**

यथा सोम्य एकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेनेत्यर्थः; सर्वं कार्ष्णायसं कृष्णायसविकारजातं विज्ञातं स्यात् । समानमन्यत् । अनेकदृष्टान्तोपादानं दार्ष्टान्तिकानेकभेदानुगमार्थम्, दृढप्रतीत्यर्थं च । एवं सोम्य स आदेशः, यः मयोक्तः भवति । इत्युक्तवति पितरि, आह इतरः—

**न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति तथा सोम्येति होवाच ॥ ७ ॥**

**इति प्रथमः खण्डः ॥**

न वै नूनं भगवन्तः पूजावन्तः गुरवः मम ये, ते एतत् यद्भवदुक्तं वस्तु नावेदिषुः न विज्ञातवन्तः नूनम् । यत् यदि हि अवेदिष्यन् विदितवन्तः एतद्वस्तु, कथं मे गुणवते भक्तायानुगताय नावक्ष्यन् नोक्तवन्तः, तेनाहं मन्ये– न विदितवन्त इति । अवाच्यमपि गुरोर्न्यग्भावमवादीत् पुनर्गुरुकुलं प्रति प्रेषणभयात् । अतो भगवांस्त्वेव मे मह्यं तद्वस्तु, येन सर्वज्ञत्वं ज्ञातेन मे स्यात्, तद्ब्रवीतु कथयतु; इत्युक्तः पिताेवाच– तथास्तु सोम्येति ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीयः खण्डः ॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत ॥ १ ॥

सदेव सदिति अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानम्, यदवगम्यते सर्ववेदान्तेभ्यः । एव-शब्दः अवधारणार्थः । किं तदवध्रियत इति, आह— इदं जगत्, नामरूपक्रियावद्विकृतमुपलभ्यते यत्, तत्सदेवासीत् इति आसीच्छब्देन संबध्यते । कदा सदेवेदमासीदिति, उच्यते— अग्रे जगतः प्रागुत्पत्तेः । किं नेदानीमिदं सत्, येन अग्रे आसीदिति विशेष्यते? न । कथं तर्हि विशेषणम्? इदानीमपीदं सदेव, किंतु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं च इतीदं च भवति । प्रागुत्पत्तेस्तु अग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते । न हि प्रागुत्पत्तेः नामवद्रूपवद्वा इदमिति ग्रहीतुं शक्यं वस्तु सुषुप्तकाले इव । यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति, तथा प्रागुत्पत्तेरित्यभिप्रायः । यथा इदमुच्यते

लोके—पूर्वाह्णे घटादि सिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतः अपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्ण आसीदिति, तथा इहाप्युच्यते—सदेवेदमग्र आसीदिति। एकमेवेति। स्वकार्यपतितमन्यन्नास्तीति एकमेवेत्युच्यते। अद्वितीयमिति। मृद्व्यतिरेकेण मृदः यथा अन्यद्घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टम्, तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते—अद्वितीयमिति, नास्य द्वितीयं वस्त्वन्तरं विद्यते इत्यद्वितीयम्। ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्वस्योपपद्यते, द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः— सद्द्रव्यं सन्गुणः सत्कर्मेत्यादिदर्शनात्। सत्यमेवं स्यादिदानीम्; प्रागुत्पत्तेस्तु नैवेदं कार्यं सदेवासीदित्यभ्युपगम्यते वैशेषिकैः, प्रागुत्पत्तेः कार्यस्यासत्त्वाभ्युपगमात्। न च एकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति। तस्माद्वैशेषिकपरिकल्पितात्सतः अन्यत्कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्यः। तत् तत्र ह एतस्मिन्प्रागुत्पत्तेर्वस्तुनिरूपणे एके वैनाशिका आहुः वस्तु निरूपयन्तः—असत् सदभावमात्रं प्रागुत्पत्तेः इदं जगत् एकमेव अग्रे अद्वितीय-

मासीदिति । सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति बौद्धाः । न तु सत्प्रतिद्वन्द्वि वस्त्वन्तरमिच्छन्ति । यथा सच्चासदिति गृह्यमाणं यथाभूतं तद्विपरीतं तत्त्वं भवतीति नैयायिकाः । ननु सदभावमात्रं प्रागुत्पत्तेश्चेदभिप्रेतं वैनाशिकैः, कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयं चेति कालसंबन्धः संख्यासंबन्धोऽद्वितीयत्वं च उच्यते तैः । बाढं न युक्तं तेषां भावाभावमात्रमभ्युपगच्छताम् । असत्त्वमात्राभ्युपगमोऽप्ययुक्त एव, अभ्युपगन्तुरनभ्युपगमानुपपत्तेः । इदानीमभ्युपगन्ता अभ्युपगम्यते न प्रागुत्पत्तेरिति चेत्, न, प्रागुत्पत्तेः सदभावस्य प्रमाणाभावात् । प्रागुत्पत्तेरसदेवेति कल्पनानुपपत्तिः । ननु कथं वस्त्वाकृतेः शब्दार्थत्वे असदेकमेवाद्वितीयमिति पदार्थवाक्यार्थोपपत्तिः, तदनुपपत्तौ च इदं वाक्यमप्रमाणं प्रसज्येतेति चेत्, नैष दोषः, सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य । सदित्ययं तावच्छब्दः सदाकृतिवाचकः । एकमेवाद्वितीयमित्येतौ च सच्छब्देन समानाधिकरणौ; तथेदमासीदिति च । तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलम्ब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवंलक्षणां ततः सद्वाक्यार्थान्निवर्तयति, अश्वारूढ इव अश्वालम्बनः अश्वं तदभिमुखविषयान्निवर्त-

यति— तद्वत् । न तु पुनः सदभावमेव अभिधत्ते । अतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थपरम् इदमसदेवेत्यादि वाक्यं प्रयुज्यते । दर्शयित्वा हि विपरीतग्रहणं ततो निवर्तयितुं शक्यत इत्यर्थवत्त्वात् असदादिवाक्यस्य श्रौतत्वं प्रामाण्यं च सिद्धमित्यदोषः । तस्मात् असतः सर्वाभावरूपात् सत् विद्यमानम् जायत समुत्पन्नम् । अडभावः छान्दसः ॥

**कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

तदेतद्विपरीतग्रहणं महावैनाशिकपक्षं दर्शयित्वा प्रतिषेधति— कुतस्तु प्रमाणात्खलु हे सोम्य एवं स्यात् असतः सज्जायेत इत्येवं कुतो भवेत्? न कुतश्चित्प्रमाणादेवं संभवतीत्यर्थः । यदपि बीजोपमर्देऽङ्कुरो जायमानो दृष्टः अभावादेवेति, तदप्यभ्युपगमविरुद्धं तेषाम् । कथम्? ये तावद्बीजावयवाः बीजसंस्थानविशिष्टाः तेऽङ्कुरेऽप्यनुवर्तन्त एव, न तेषामुपमर्दोऽङ्कुरजन्मनि । यत्पुनर्बीजाकारसंस्थानम्, तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते, यदङ्कुरजन्मन्युपमृद्येत । अथ तदस्ति अवयवव्यतिरिक्तं वस्तुभूतम्,

तथा च सति अभ्युपगमविरोधः। अथ संवृत्या अभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत्, केयं संवृतिर्नाम—किमसावभावः, उत भावः इति? यद्यभावः, दृष्टान्ताभावः। अथ भावः, तथापि नाभावादङ्कुरोत्पत्तिः, बीजावयवेभ्यो हि अङ्कुरोत्पत्तिः। अवयवा अप्युपमृद्यन्त इति चेत्, न, तदवयवेषु तुल्यत्वात्। यथा वैनाशिकानां बीजसंस्थानरूपोऽवयवी नास्ति, तथा अवयवा अपीति तेषामप्युपमर्दानुपपत्तिः। बीजावयवानामपि सूक्ष्मावयवाः तदवयवानामप्यन्ये सूक्ष्मतरावयवाः इत्येवं प्रसङ्गस्यानिवृत्तेः सर्वत्रोपमर्दानुपपत्तिः। सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तिश्चेति सद्वादिनां सत एव सदुत्पत्तिः सेत्स्यति। न तु असद्वादिनां दृष्टान्तोऽस्ति असतः सदुत्पत्तेः। मृत्पिण्डाद्घटोत्पत्तिर्दृश्यते सद्वादिनाम्, तद्भावे भावात्तदभावे चाभावात्। यद्यभावादेव घट उत्पद्येत, घटार्थिना मृत्पिण्डो नोपादीयेत, अभावशब्दबुद्ध्यनुवृत्तिश्च घटादौ प्रसज्येत; न त्वेतदस्ति; अतः नासतः सदुत्पत्तिः। यदप्याहुः मृद्बुद्धिर्घटबुद्धेर्निमित्तमिति मृद्बुद्धिर्घटबुद्धेः कारणमुच्यते, न तु परमार्थत एव मृद्घटो वा अस्तीति, तदपि मृद्बुद्धिर्विद्यमाना विद्यमानाया एव घटबुद्धेः कारणमिति नासतः सदुत्पत्तिः। मृद्घटबुद्ध्योः निमित्तनैमित्तिकतया आनन्त-

र्यमात्रम् , न तु कार्यकारणत्वमिति चेत् , न, बुद्धीनां नैरन्तर्ये गम्यमाने वैनाशिकानां बहिर्दृष्टान्ताभावात् । अतः कुतस्तु खलु सोम्य एवं स्यात् इति ह उवाच— कथं केन प्रकारेण असतः सज्जायेत इति ; असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तप्रकारोऽस्तीत्यभिप्रायः । एवमसद्वादिपक्षमुन्मथ्य उपसंहरति— सत्त्वेव सोम्येदमग्र आसीदिति स्वपक्षसिद्धिम् । ननु सद्वादिनोऽपि सतः सदुत्पद्यते इति नैव दृष्टान्तोऽस्ति, घटाद्घटान्तरोत्पत्त्यदर्शनात् । सत्यमेवं न सतः सदन्तरमुत्पद्यते ; किं तर्हि, सदेव संस्थानान्तरेणावतिष्ठते— यथा सर्पः कुण्डली भवति, यथा च मृत् चूर्णपिण्डघटकपालादिप्रभेदैः । यद्येवं सदेव सर्वप्रकारावस्थम् , कथं प्रागुत्पत्तेरिदमासीदित्युच्यते ? ननु न श्रुतं त्वया, सदेवेत्यवधारणम् इदं-शब्दवाच्यस्य कार्यस्य । प्राप्तं तर्हि प्रागुत्पत्तेः असदेवासीत् न इदं-शब्दवाच्यम् , इदानीमिदं जातमिति । न, सत एव इदं-शब्दबुद्धिविषयतया अवस्थानात् , यथा मृदेव पिण्डघटादिशब्दबुद्धिविषयत्वेनावतिष्ठते— तद्वत् । ननु यथा मृद्वस्तु एवं पिण्डघटाद्यपि, तद्वत् सद्बुद्धेरन्यबुद्धिविषयत्वात्कार्यस्य सतोऽन्यद्वस्त्वन्तरं स्यात्कार्यजातं यथा अश्वाद्गौः । न, पिण्डघटादीनामितरे-

तरव्यभिचारेऽपि मृत्त्वाव्यभिचारात् । यद्यपि घटः पिण्डं व्यभिचरति पिण्डश्च घटम्, तथापि पिण्डघटौ मृत्त्वं न व्यभिचरतः तस्मान्मृन्मात्रं पिण्डघटौ । व्यभिचरति त्वश्वं गौः अश्वो वा गाम् । तस्मान्मृदादिसंस्थानमात्रं घटादयः । एवं सत्संस्थानमात्रमिदं सर्वमिति युक्तं प्रागुत्पत्तेः सदेवेति, वाचारम्भणमात्रत्वाद्विकारसंस्थानमात्रस्य । ननु निरवयवं सत्, 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' इत्यादिश्रुतिभ्यः; निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते? नैष दोषः, रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवत् बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यः विकारसंस्थानोपपत्तेः । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' एवं सदेव सत्यम्— इति श्रुतेः । एकमेवाद्वितीयं परमार्थतः इदंबुद्धिकालेऽपि ॥

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

तत् सत् ऐक्षत ईक्षां दर्शनं कृतवत् । अतश्च न प्रधानं

सांख्यपरिकल्पितं जगत्कारणम्, प्रधानस्याचेतनत्वाभ्युपगमात्। इदं तु सत् चेतनम्, ईक्षितृत्वात्। तत्कथमैक्षतेति, आह— बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेणोत्पद्येय, यथा मृद्घटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन। असदेव तर्हि सर्वम्, यद्गृह्यते रज्जुरिव सर्पाद्याकारेण। न, सत एव द्वैतभेदेन अन्यथागृह्यमाणत्वात् न असत्त्वं कस्यचित्क्वचिदिति ब्रूमः। यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वम् असत्त्वं ब्रुवते तार्किकाः, न तथा अस्माभिः कदाचित्क्वचिदपि सतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्यते। सदेव तु सर्वमभिधानमभिधीयते च यदन्यबुद्ध्या, यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते, यथा वा पिण्डघटादि मृदोऽन्यबुद्ध्या पिण्डघटादिशब्देनाभिधीयते लोके। रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्तेते, यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी, तद्वत् सद्विवेकदर्शिनामन्यविकारशब्दबुद्धी निवर्तेते— 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' इति, 'अनिरुक्तेऽनिलयने' इत्यादिश्रुतिभ्यः। एवमीक्षित्वा तत् तेजः असृजत तेजः सृष्टवत्। ननु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुत्यन्तरे आकाशाद्वायुः

ततस्तृतीयं तेजः श्रुतम्, इह कथं प्राथम्येन तस्मादेव तेजः सृज्यते तत एव च आकाशमिति विरुद्धम्? नैष दोषः, आकाशवायुसर्गानन्तरं तत्सत् तेजोऽसृजतेति कल्पनोपपत्तेः। अथवा अविवक्षितः इह सृष्टिक्रमः; सत्कार्यमिदं सर्वम्, अतः सदेकमेवाद्वितीयमित्येतद्विवक्षितम्, मृदादिदृष्टान्तात्। अथवा त्रिवृत्करणस्य विवक्षितत्वात् तेजोबन्नानामेव सृष्टिमाचष्टे। तेज इति प्रसिद्धं लोके दग्धृ पक्तृ प्रकाशकं रोहितं चेति। तत् सत्सृष्टं तेजः ऐक्षत तेजोरूपसंस्थितं सत् ऐक्षतेत्यर्थः। बहु स्यां प्रजायेयेति पूर्ववत्। तत् अपोऽसृजत आपः द्रवाः स्निग्धाः स्यन्दिन्यः शुक्लाश्चेति प्रसिद्धा लोके। यस्मात्तेजसः कार्यभूता आपः, तस्माद्यत्र क्वच देशे काले वा शोचति संतप्यते स्वेदते प्रस्विद्यते वा पुरुषः तेजस एव तत् तदा आपः अधिजायन्ते॥

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥**

**इति द्वितीयः खण्डः ॥**

ता आप ऐक्षन्त पूर्ववदेव अबाकारसंस्थितं सदैक्षतेत्यर्थः । बह्व्यः प्रभूताः स्याम भवेम प्रजायेमहि उत्पद्येमहीति । ता अन्नमसृजन्त पृथिवीलक्षणम् । पार्थिवं हि अन्नम्; यस्मादप्कार्यमन्नम्, तस्मात् यत्र क्व च वर्षति देशे तत् तत्रैव भूयिष्ठं प्रभूतमन्नं भवति । अतः अद्भ्य एव तदन्नाद्यमधिजायते । ता अन्नमसृजन्तेति पृथिव्युक्ता पूर्वम्, इह तु दृष्टान्ते अन्नं च तदाद्यं चेति विशेषणात् व्रीहियवाद्या उच्यन्ते । अन्नं च गुरु स्थिरं धारणं कृष्णं च रूपतः प्रसिद्धम् ॥

ननु तेजःप्रभृतिषु ईक्षणं न गम्यते, हिंसादिप्रतिषेधाभावात् त्रासादिकार्यानुपलम्भाच्च; तत्र कथं तत्तेज ऐक्षतेत्यादि? नैष दोषः । ईक्षितृकारणपरिणामत्वात्तेजःप्रभृतीनां सत एव ईक्षितुः नियतक्रमविशिष्टकार्योत्पादकत्वाच्च तेजःप्रभृति ईक्षते इव ईक्षते इत्युच्यते भूतम् । ननु सतोऽप्युपचरितमेव ईक्षितृत्वम् । न । सदीक्षणस्य केवलशब्दगम्यत्वात् न शक्यमुपचरितं कल्पयितुम् । तेजःप्रभृतीनां त्वनुमीयते मुख्येक्षणाभाव इति युक्तमुपचरितं कल्पयितुम् । ननु सतोऽपि मृद्वत्कारणत्वादचेतनत्वं शक्यमनुमातुम् । अतः प्रधानस्यैवाचेतनस्य सतश्चेतनार्थत्वात् नियतकालक्रमविशिष्टकार्योत्पादकत्वाच्च ऐक्षत इव ऐक्षतेति शक्यमनुमातुम् उपचरितमेव ईक्षणम् । दृष्टश्च

लोके अचेतने चेतनवदुपचार:, यथा कूलं पिपतिषतीति तद्वत् सतोऽपि स्यात्। न, 'तत्सत्यं स आत्मा' इति तस्मिन्नात्मोपदेशात्। आत्मोपदेशोऽप्युपचरित इति चेत्— यथा ममात्मा भद्रसेन इति सर्वार्थकारिण्यनात्मनि आत्मोपचार:—तद्वत्; न, सदस्मीति सत्सत्याभिसंधस्य 'तस्य तावदेव चिरम्' इति मोक्षोपदेशात्। सोऽप्युपचार इति चेत्— प्रधानात्माभिसंधस्य मोक्षसामीप्यं वर्तत इति मोक्षोपदेशोऽप्युपचरित एव, यथा लोके ग्रामं गन्तुं प्रस्थित: प्राप्तवानहं ग्राममिति ब्रूयात्त्वरापेक्षया— तद्वत्; न, येन विज्ञातेनाविज्ञातं विज्ञातं भवतीत्युपक्रमात्। सति एकस्मिन्विज्ञाते सर्वं विज्ञातं भवति, तदनन्यत्वात् सर्वस्याद्वितीयवचनाच्च। न च अन्यद्विज्ञातव्यमवशिष्टं श्रावितं श्रुत्या अनुमेयं वा लिङ्गत: अस्ति, येन मोक्षोपदेश उपचरित: स्यात्। सर्वस्य च प्रपाठकार्थस्य उपचरितत्वपरिकल्पनायां वृथा श्रम: परिकल्पयितु: स्यात्, पुरुषार्थसाधनविज्ञानस्य तर्केणैवाधिगतत्वात्तस्य। तस्माद्वेदप्रामाण्यात् न युक्त: श्रुतार्थपरित्याग:। अत: चेतनावत्कारणं जगत इति सिद्धम्॥

इति द्वितीयखण्डभाष्यम्॥

## तृतीयः खण्डः ॥

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥**

तेषां जीवाविष्टानां खलु एषां पक्ष्यादीनां भूतानाम् , एषामिति प्रत्यक्षनिर्देशात् , न तु तेजःप्रभृतीनाम् , तेषां त्रिवृत्करणस्य वक्ष्यमाणत्वात् ; असति त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः। देवताशब्दप्रयोगाच्च तेजःप्रभृतिषु—'इमास्तिस्रो देवताः' इति । तस्मात् तेषां खल्वेषां भूतानां पक्षिपशुस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति । कानि तानीति, उच्यन्ते—आण्डजम् अण्डाज्जातमण्डजम् अण्डजमेव आण्डजं पक्ष्यादि । पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते । तेन पक्षी पक्षिणां बीजं सर्पः सर्पाणां बीजं तथा अन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः । ननु अण्डाज्जातम् अण्डजमुच्यते, अतोऽण्डमेव बीजमिति युक्तम् ; कथमण्डजं बीजमुच्यते ? सत्यमेवं स्यात् , यदि त्वदिच्छातन्त्रा श्रुतिः स्यात् ; स्वतन्त्रा तु श्रुतिः, यत आह अण्डजाद्येव बीजं न अण्डादीति । दृश्यते च अण्डजाद्यभावे तज्जातीयसंतत्यभावः, न अण्डाद्यभावे । अतः अण्डजादीन्येव बीजानि अण्डजादीनाम् ।

तथा जीवाज्जातं जीवजं जरायुजमित्येतत्पुरुषपश्वादि । उद्भिज्जम् उद्भिनत्तीत्युद्भित स्थावरं ततो जातमुद्भिज्जम् , धाना वा उद्भित् ततो जायत इत्युद्भिज्जं स्थावरबीजं स्थावराणां बीजमित्यर्थः । स्वेदजसंशोकजयोरण्डजोद्भिज्जयोरेव यथासंभवमन्तर्भावः । एवं हि अवधारणं त्रीण्येव बीजानीत्युपपन्नं भवति ॥

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति** ॥ २ ॥

सेयं प्रकृता सदाख्या तेजोबन्नयोनिः देवता उक्ता ऐक्षत ईक्षितवती यथापूर्वं बहु स्यामिति । तदेव बहुभवनं प्रयोजनं नाद्यापि निर्वृत्तम् इत्यतः ईक्षां पुनः कृतवती बहुभवनमेव प्रयोजनमुररीकृत्य । कथम् ? हन्त इदानीमहमिमाः यथोक्ताः तेजआद्याः तिस्रो देवताः अनेन जीवेनेति स्वबुद्धिस्थं पूर्वसृष्ट्यनुभूतप्राणधारणम् आत्मानमेव स्मरन्ती आह— अनेन जीवेन आत्मनेति । प्राणधारणकर्त्रा आत्मनेति वचनात् स्वात्मनोऽव्यतिरिक्तेन चैतन्यस्वरूपतया अविशिष्टेनेत्येतद्दर्शयति । अनुप्रविश्य तेजोबन्नभूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती नाम च रूपं च नामरूपे

व्याकरवाणि विस्पष्टमाकरवाणि, असौनामायम् इदंरूप इति व्याकुर्यामित्यर्थः ॥

ननु न युक्तमिदम्— असंसारिण्याः सर्वज्ञायाः देवतायाः बुद्धिपूर्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःखमनुभविष्यामीति संकल्पनम्, अनुप्रवेशश्च स्वातन्त्र्ये सति। सत्यमेवं न युक्तं स्यात्—यदि स्वेनैवाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च संकल्पितवती; न त्वेवम्। कथं तर्हि? अनेन जीवेन आत्मना अनुप्रविश्य इति वचनात्। जीवो हि नाम देवताया आभासमात्रम्, बुद्ध्यादिभूतमात्रासंसर्गजनितः— आदर्शे इव प्रविष्टः पुरुषप्रतिबिम्बः, जलादिष्विव च सूर्यादीनाम्। अचिन्त्यानन्तशक्तिमत्या देवतायाः बुद्ध्यादिसंबन्धः चैतन्याभासः देवतास्वरूपविवेकाग्रहणनिमित्तः सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहेतुः। छायामात्रेण जीवरूपेणानुप्रविष्टत्वात् देवता न दैहिकैः स्वतः सुखदुःखादिभिः संबध्यते— यथा पुरुषादित्यादयः आदर्शोदकादिषु च्छायामात्रेणानुप्रविष्टाः आदर्शोदकादिदोषैर्न संबध्यन्ते— तद्वद्देवतापि। 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' 'आकाशवत्सर्वग-

तश्च नित्यः' इति हि काठके; 'ध्यायतीव लेलायतीव' इति च वाजसनेयके। ननु च्छायामात्रश्चेज्जीवः मृषैव प्राप्तः, तथा परलोकेहलोकादि च तस्य। नैष दोषः, सदात्मना सत्यत्वाभ्युपगमात्। सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातम्, स्वतस्त्वनृतमेव, 'वाचारम्भणं विकारो नामधेयम्' इत्युक्तत्वात्। तथा जीवोऽपीति। यक्षानुरूपो हि बलिरिति न्यायप्रसिद्धिः। अतः सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं सतोऽन्यत्वे च अनृतत्वमिति न कश्चिद्दोषः तार्किकैरिहानुवक्तुं शक्यः, यथा इतरेतरविरुद्धद्वैतवादाः स्वबुद्धिविकल्पमात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुम्॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्॥ ३॥**

सैवं तिस्रो देवताः अनुप्रविश्य स्वात्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीति ईक्षित्वा तासां च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि— एकैकस्यास्त्रिवृत्करणे एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभावः;

अन्यथा हि रज्ज्वा इव एकमेव त्रिवृत्करणं स्यात्, न तु तिसृणां पृथक्पृथक्त्रिवृत्करणमिति । एवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्—तेज इदम् इमा आपः अन्नमिदम् इति च । सति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात् । एवमीक्षित्वा सेयं देवता इमास्तिस्रो देवताः अनेनैव यथोक्तेनैव जीवेन सूर्यबिम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवादीनां च पिण्डाननुप्रविश्य यथासंकल्पमेव नामरूपे व्याकरोत्— असौनामा अयम् इदंरूप इति ॥

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्य-**
**था तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृ-**
**त्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥**

तासां च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतम् एकैकामकरोत् कृतवती देवता । तिष्ठतु तावद्देवतादिपिण्डानां नामरूपाभ्यां व्याकृतानां तेजोबन्नमयत्वेन त्रिधात्वम्, यथा तु बहिरिमाः पिण्डेभ्यस्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे मम निगदतः विजानीहि विस्पष्टम् अवधारय उदाहरणतः ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थः खण्डः ॥

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

यत्तद्देवतानां त्रिवृत्करणमुक्तम् तस्यैवोदाहरणमुच्यते— उदाहरणं नाम एकदेशप्रसिद्ध्या अशेषप्रसिद्ध्यर्थमुदाह्रियत इति । तदेतदाह—यदग्नेः त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके, तत् अत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि । तथा यच्छुक्लं रूपमग्नेरेव तदपामत्रिवृत्कृतानाम्; यत्कृष्णं तस्यैवाग्नेः रूपम् तदन्नस्य पृथिव्याः अत्रिवृत्कृतायाः इति विद्धि । तत्रैवं सति रूपत्रयव्यतिरेकेण अग्निरिति यन्मन्यसे त्वम्, तस्याग्नेरग्नित्वमिदानीम् अपागात् अपगतम् । प्राग्रूपत्रयविवेकविज्ञानात् या अग्निबुद्धिरासीत् ते, सा अग्निबुद्धिरपगता अग्निशब्दश्चेत्यर्थः— यथा दृश्यमानरक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमितिशब्दबुद्ध्योः प्रयोजको भवति प्रागुपधानस्फटिकयोर्विवेकविज्ञानात्, तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्तेते तद्विवेकविज्ञातुः—तद्वत् । ननु

किमत्र बुद्धिशब्दकल्पनया क्रियते, प्राग्रूपत्रयविवेककरणाद्-ग्निरेवासीत्, तदग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादि-ति युक्तम्—यथा तन्त्वपकर्षणे पटाभावः। नैवम्, बुद्धिशब्द-मात्रमेव हि अग्निः; यत आह वाचारम्भणमग्निर्नाम विकारो नामधेयं नाममात्रमित्यर्थः। अतः अग्निबुद्धिरपि मृषैव। किं तर्हि तत्र सत्यम्? त्रीणि रूपाणीत्येव सत्यम्, नाणु-मात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः॥

**यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा-दादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥२॥**

**यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा-च्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नाम-धेयं त्रीणि रूपाणीत्येव सत्यम्॥३॥**

**यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा-द्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो**

**नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥**

तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युत इत्यादि समानम् । ननु 'यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि' इत्युक्त्वा तेजस एव चतुर्भिरप्युदाहरणैः अग्न्यादिभिः त्रिवृत्करणं दर्शितम्, न अबन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे । नैष दोषः । अबन्नविषयाण्यप्युदाहरणानि एवमेव च द्रष्टव्यानीति मन्यते श्रुतिः । तेजस उदाहरणमुपलक्षणार्थम्, रूपवत्त्वात्स्पष्टार्थत्वोपपत्तेश्च । गन्धरसयोरनुदाहरणं त्रयाणामसंभवात् । न हि गन्धरसौ तेजसि स्तः । स्पर्शशब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात् । यदि सर्वं जगत् त्रिवृत्कृतमिति अग्न्यादिवत् त्रीणि रूपाणीत्येव सत्यम्, अग्नेरग्नित्ववत् अपागाज्जगतो जगत्त्वम् । तथा अन्नस्याप्यप्शुङ्गत्वात् आप इत्येव सत्यं वाचारम्भणमात्रमन्नम् । तथा अपामपि तेजःशुङ्गत्वात् वाचारम्भणत्वं तेज इत्येव सत्यम् । तेजसोऽपि सच्छुङ्गत्वात् वाचारम्भणत्वं सदित्येव सत्यम् इत्येषोऽर्थो विवक्षितः । ननु वाय्वन्तरिक्षे तु अत्रिवृत्कृते तेजःप्रभृतिष्वनन्तर्भूतत्वात् अवशिष्येते, एवं गन्धरसशब्दस्पर्शाश्चावशिष्टा इति कथं सता विज्ञातेन सर्वमन्यदविज्ञातं विज्ञातं भवेत्? तद्विज्ञाने वा प्रकारान्तरं वाच्यम्; नैष दोषः,

रूपवद्द्रव्ये सर्वस्य दर्शनात् । कथम्? तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलम्भात् वाय्वन्तरिक्षयोः तत्र स्पर्शशब्दगुणवतोः सद्भावो अनुमीयते । तथा अबन्नयोः रूपवतो रसगन्धान्तर्भाव इति । रूपवतां त्रयाणां तेजोबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदन्तर्भूतं सद्विकारत्वात् त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिः । न हि मूर्तं रूपवद्द्रव्यं प्रत्याख्याय वाय्वाकाशयोः तद्गुणयोर्गन्धरसयोर्वा ग्रहणमस्ति । अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः । यथा तु त्रिवृत्कृते त्रीणि रूपाणीत्येव सत्यम्, तथा पञ्चीकरणेऽपि समानो न्याय इत्यतः सर्वस्य सद्विकारत्वात् सता विज्ञातेन सर्वमिदं विज्ञातं स्यात् सदेकमेवाद्वितीयं सत्यमिति सिद्धमेव भवति । तदेकस्मिन्सति विज्ञाते सर्वमिदं विज्ञातं भवतीति सूक्तम् ॥

**एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥ ५ ॥**

एतत् विद्वांसः विदितवन्तः पूर्वे अतिक्रान्ताः महाशालाः महाश्रोत्रियाः आहुः ह स्म वै किल । किमुक्तवन्त

इति, आह— न नः अस्माकं कुले अद्य इदानीं यथोक्त-विज्ञानवतां कश्चन कश्चिदपि अश्रुतममतमविज्ञातम् उदाहरिष्यति नोदाहरिष्यति, सर्वं विज्ञातमेव अस्मत्कुलीनानां सद्विज्ञानवत्त्वात् इत्यभिप्रायः । ते पुनः कथं सर्वं विज्ञातवन्त इति, आह— एभ्यः त्रिभ्यः रोहितादिरूपेभ्यः त्रिवृत्कृतेभ्यः विज्ञातेभ्यः सर्वमप्यन्यच्छिष्टमेवमेवेति विदांचक्रुः विज्ञातवन्तः यस्मात्, तस्मात्सर्वज्ञा एव सद्विज्ञानात् ते आसुरित्यर्थः । अथवा एभ्यो विदांचक्रुरिति अग्न्यादिभ्यो दृष्टान्तेभ्यो विज्ञातेभ्यः सर्वमन्यद्विदांचक्रुरित्येतत् ॥

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुर्यदु शुक्लमिवाभूदित्यपाꣳ रूपमिति तद्विदांचक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः ॥ ६ ॥**

**यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाꣳ समास इति तद्विदांचक्रुर्यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥**

**इति चतुर्थः खण्डः ॥**

कथम्? यदन्यद्रूपेण संदिह्यमाने कपोतादिरूपे रोहित-मिव यद्गृह्यमाणमभूत् तेषां पूर्वेषां ब्रह्मविदाम्, तत्तेजसो रूपमिति विदांचक्रुः। तथा यच्छुक्लमिवाभूद्गृह्यमाणं तदपां रूपम्, यत्कृष्णमिव गृह्यमाणं तदन्नस्येति विदांचक्रुः। एवमे-वात्यन्तदुर्लक्ष्यं यत् उ अपि अविज्ञातमिव विशेषतो अगृह्य-माणमभूत् तदप्येतासामेव तिसृणां देवतानां समासः समु-दाय इति विदांचक्रुः। एवं तावद्बाह्यं वस्त्वग्न्यादिवद्विज्ञा-तम्, तथेदानीं यथा तु खलु हे सोम्य इमाः यथोक्तास्तिस्रो देवताः पुरुषं शिरःपाण्यादिलक्षणं कार्यकारणसंघातं प्राप्य पुरुषेणोपयुज्यमानाः त्रिवृत्त्रिवृदेकैका भवति, तत् आध्या-त्मिकं विजानीहि निगदतः इत्युक्त्वा आह ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चमः खण्डः ॥

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा ्ँसं योऽणिष्ठस्तन्मनः ॥ १ ॥**

अन्नम् अशितं भुक्तं त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभज्यते । कथम्? तस्यान्नस्य त्रिधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलोंशः, तत्पुरीषं भवति; यो मध्यमोंशो धातुरन्नस्य, तद्रसादिक्रमेण परिणम्य मांसं भवति; यः अणिष्ठः अणुतमो धातुः, स ऊर्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीषु अनुप्रविश्य वागादिकरणसंघातस्य स्थितिमुत्पादयन् मनो भवति । मनोरूपेण विपरिणमन् मनस उपचयं करोति । ततश्च अन्नोपचितत्वात् मनसः भौतिकत्वमेव न वैशेषिकतन्त्रोक्तलक्षणं नित्यं निरवयवं चेति गृह्यते । यदपि मनोऽस्य दैवं चक्षुरिति वक्ष्यति तदपि न नित्यत्वापेक्षया; किं तर्हि, सूक्ष्मव्यवहितविप्रकृष्टादिसर्वेन्द्रियविषयव्यापारकत्वापेक्षया । यच्चान्येन्द्रियविषयापेक्षया नित्यत्वम्, तदप्यापेक्षिकमेवेति वक्ष्यामः, 'सत्...एकमेवाद्वितीयम्' इति श्रुतेः ॥

**आपः पीतास्त्रेधा विधीयन्ते तासां**

**यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥**

तथा आपः पीताः त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुः, तन्मूत्रं भवति, यो मध्यमः, तल्लोहितं भवति; योऽणिष्ठः, स प्राणो भवति । वक्ष्यति हि—'आपोमयः प्राणो नपिबतो विच्छेत्स्यते' इति ॥

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

तथा तेजः अशितं तैलघृतादि भक्षितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुः तदस्थि भवति; यो मध्यमः, स मज्जा अस्थ्यन्तर्गतः स्नेहः; योऽणिष्ठः सा वाक् । तैलघृतादिभक्षणाद्धि वाग्विशदा भाषणे समर्था भवतीति प्रसिद्धं लोके ॥

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

**इति पञ्चमः खण्डः ॥**

यत एवम्, अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक् । ननु केवलान्नभक्षिण आखुप्रभृतयो वाग्मिनः प्राणवन्तश्च, तथा अब्मात्रभक्ष्याः सामुद्रा मीनमकरप्रभृतयो मनस्विनो वाग्मिनश्च, तथा स्नेहपानामपि प्राणवत्त्वं मनस्वित्वं च अनुमेयम्; यदि सन्ति, तत्र कथमन्नमयं हि सोम्य मन इत्याद्युच्यते? नैष दोषः, सर्वस्य त्रिवृत्कृतत्वात्सर्वत्र सर्वोपपत्तेः । न हि अत्रिवृत्कृतमन्नमश्नाति कश्चित्, आपो वा अत्रिवृत्कृताः पीयन्ते, तेजो वा अत्रिवृत्कृतमश्नाति कश्चित् इत्यन्नादानामाखुप्रभृतीनां वाग्मित्वं प्राणवत्त्वं च इत्याद्यविरुद्धम् । इत्येवं प्रत्यायितः श्वेतकेतुराह— भूय एव पुनरेव मा मां भगवान् अन्नमयं हि सोम्य मन इत्यादि विज्ञापयतु दृष्टान्तेनावगमयतु, नाद्यापि मम अस्मिन्नर्थे सम्यङ्निश्चयो जातः । यस्मात्तेजोबन्नमयत्वेनाविशिष्टे देहे एकस्मिन्नुपयुज्यमानान्यन्नाप्स्नेहजातानि अणिष्ठधातुरूपेण मनःप्राणवाच उपचिन्वन्ति स्वजात्यनतिक्रमेणेति दुर्विज्ञेयमित्यभिप्रायः; अतो भूय एवेत्याद्याह । तमेवमुक्तवन्तं तथास्तु सोम्येति ह उवाच पिता शृण्वत्र दृष्टान्तं यथैतदुपपद्यते यत्पृच्छसि ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठः खण्डः ॥

---

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥**

दध्नः सोम्य मथ्यमानस्य योऽणिमा अणुभावः स ऊर्ध्वः समुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति, तत्सर्पिर्भवति ॥

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥**

यथा अयं दृष्टान्तः, एवमेव खलु सोम्य अन्नस्य ओदनादेः अश्यमानस्य भुज्यमानस्य औदर्येणाग्निना वायुसहितेन खजेनेव मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति; तन्मनो भवति, मनोवयवैः सह संभूय मन उपचिनोतीत्येतत् ॥

**अपाᳪ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥३॥**

तथा अपां सोम्य पीयमानानां यो अणिमा, स ऊर्ध्वः समुदीषति, स प्राणो भवतीति ॥

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥**

एवमेव खलु सोम्य तेजसोऽश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥**

इति षष्ठः खण्डः ॥

अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक् इति युक्तमेव मयोक्तमित्यभिप्रायः। अतः अप्तेजसोरस्त्वेतत्सर्वमेवम्। मनस्त्वन्नमयमित्यत्र नैकान्तेन मम निश्चयो जातः। अतः भूय एव मा भगवान् मनसोऽन्नमयत्वं दृष्टान्तेन विज्ञापयत्विति। तथा सोम्येति ह उवाच पिता ॥

इति षष्ठखण्डभाष्यम् ॥

## सप्तमः खण्डः ॥

**षोडशकलः सोम्य पुरुषः पञ्चदशाहा-
नि माशीः काममपः पिबापोमयः प्राणो
नपिबतो विच्छेत्स्यत इति ॥ १ ॥**

अन्नस्य भुक्तस्य यो अणिष्ठो धातुः, स मनसि शक्तिमधात् । सा अन्नोपचिता मनसः शक्तिः षोडशधा प्रविभज्य पुरुषस्य कलात्वेन निर्दिदिक्षिता । तया मनस्यन्नोपचितया शक्त्या षोडशधा प्रविभक्तया संयुक्तः तद्वान्कार्यकारणसंघातलक्षणो जीवविशिष्टः पुरुषः षोडशकल उच्यते ; यस्यां सत्यां द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञाता सर्वक्रियासमर्थः पुरुषो भवति ; हीयमानायां च यस्यां सामर्थ्यहानिः । वक्ष्यति च 'अथान्नस्यायी द्रष्टा' इत्यादि । सर्वस्य कार्यकारणस्य सामर्थ्यं मनःकृतमेव । मानसेन हि बलेन संपन्ना बलिनो दृश्यन्ते लोके ध्यानाहाराश्च केचित्, अन्नस्य सर्वात्मकत्वात् । अतः अन्नकृतं मानसं वीर्यम् । षोडश कलाः यस्य पुरुषस्य सोऽयं षोडशकलः पुरुषः । एतच्चेत्प्रत्यक्षीकर्तुमिच्छसि, पञ्चदशसंख्याकान्यहानि माशीः अशनं माकार्षीः, कामम् इच्छातः अपः पिब, यस्मात् नपिबतः अपः

ते प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते, यस्मादापोमयः अब्विकारः प्राण इत्यवोचाम । न हि कार्यं स्वकारणोपष्टम्भ-मन्तरेण अविभ्रंशमानं स्थातुमुत्सहते ॥

**स ह पञ्चदशाहानि नाशाथ हैनमुप-ससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥**

स ह एवं श्रुत्वा मनसः अन्नमयत्वं प्रत्यक्षीकर्तुमिच्छन् पञ्चदशाहानि न आश अशनं न कृतवान् । अथ षोडशे-ऽहनि ह एनं पितरमुपससाद उपगतवान् । उपगम्य च उवाच—किं ब्रवीमि भो इति । इतर आह—ऋचः सोम्य यजूंषि सामान्यधीष्वेति । एवमुक्तः पित्रा आह—न वै मा माम् ऋगादीनि प्रतिभान्ति मम मनसि न दृश्यन्त इत्यर्थः हे भो भगवन्निति ॥

**तꣳ होवाच यथा सोम्य महतोऽभ्या हितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा**

**स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥**

एवमुक्तवन्तं पिता आह— शृणु तत्र कारणम्, येन ते तानि ऋगादीनि न प्रतिभान्तीति; तं ह उवाच— यथा लोके हे सोम्य महतः महत्परिमाणस्य अभ्याहितस्य उपचितस्य इन्धनैः अग्नेः एकोऽङ्गारः खद्योतमात्रः खद्योतपरिमाणः शान्तस्य परिशिष्टः अवशिष्टः स्यात् भवेत्, तेनाङ्गारेण ततोऽपि तत्परिमाणात् ईषदपि न बहु दहेत्, एवमेव खलु सोम्य ते तव अन्नोपचितानां षोडशानां कलानामेका कला अवयवः अतिशिष्टा अवशिष्टा स्यात्, तया त्वं खद्योतमात्राङ्गारतुल्यया एतर्हि इदानीं वेदान् नानुभवसि न प्रतिपद्यसे, श्रुत्वा च मे मम वाचम् अथ अशेषं विज्ञास्यसि अशान भुङ्क्ष्व तावत् ॥

**स हाशाथ हैनमुपससाद तꣳ ह यत्किंच पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥**

स ह तथैव आश भुक्तवान्। अथ अनन्तरं ह एनं पितरं शुश्रूषुः उपससाद। तं ह उपगतं पुत्रं यत्किंच ऋगादिषु पप्रच्छ ग्रन्थरूपमर्थजातं वा पिता। स श्वेतकेतुः सर्वं ह तत्प्रतिपेदे ऋगाद्यर्थतो ग्रन्थतश्च ॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेत् ॥ ५ ॥

तं ह उवाच पुनः पिता—यथा सोम्य महतः अभ्याहितस्येत्यादि समानम्, एकमङ्गारं शान्तस्याग्नेः खद्योतमात्रं परिशिष्टं तं तृणैश्चूर्णैश्च उपसमाधाय प्राज्वलयेत् वर्धयेत् । तेनेद्धेन अङ्गारेण ततोऽपि पूर्वपरिमाणात् बहु दहेत् ॥

एवꣳ सोम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्साऽन्नेनोपसमाहिता प्राज्वाली तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

इति सप्तमः खण्डः ॥

एवं सोम्य ते षोडशानामन्नकलानां सामर्थ्यरूपाणाम्

एका कला अतिशिष्टा अभूत अतिशिष्टा आसीत्, पञ्चदशाहान्यभुक्तवतः एकैकेनाह्ना एकैका कला चन्द्रमस इव अपरपक्षे क्षीणा, सा अतिशिष्टा कला तव अन्नेन भुक्तेनोपसमाहिता वर्धिता उपचिता प्राज्वाली, दैर्घ्यं छान्दसम्, प्रज्वलिता वर्धितेत्यर्थः। प्राज्वालीदिति पाठान्तरम्, तथा तेनोपसमाहिता स्वयं प्रज्वलितवतीत्यर्थः। तया वर्धितया एतर्हि इदानीं वेदाननुभवसि उपलभसे। एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमिति उपसंहरति—अन्नमयं हि सोम्य मन इत्यादि। यथा एतन्मनसोऽन्नमयत्वं तव सिद्धम्, तथा आपोमयः प्राणः तेजोमयी वाक् इत्येतदपि सिद्धमेवेत्यभिप्रायः। तदेतद्ध अस्य पितुरुक्तं मनआदीनामन्नादिमयत्वं विजज्ञौ विज्ञातवान् श्वेतकेतुः। द्विरभ्यासः त्रिवृत्करणप्रकरणसमाप्त्यर्थः॥

इति सप्तमखण्डभाष्यम्॥

## अष्टमः खण्डः ॥

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥

यस्मिन्मनसि जीवेनात्मनानुप्रविष्टा परा देवता— आदर्शे इव पुरुषः प्रतिबिम्बेन जलादिष्विव च सूर्यादयः प्रतिबिम्बैः, तन्मनः अन्नमयं तेजोमयाभ्यां वाक्प्राणाभ्यां संगतमधिगतम् । यन्मयो यत्स्थश्च जीवो मननदर्शनश्रवणादिव्यवहाराय कल्पते तदुपरमे च स्वं देवतारूपमेव प्रतिपद्यते । तदुक्तं श्रुत्यन्तरे— 'ध्यायतीव लेलायतीव' 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति' 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः' इत्यादि, 'स्वप्नेन शारीरम्' इत्यादि, 'प्राणन्नेव प्राणो नाम भवति' इत्यादि च । तस्यास्य मनस्थस्य मनआख्यां गतस्य मनउपशमद्वारेणेन्द्रियविषयेभ्यो निवृत्तस्य यस्यां परस्यां देवतायां स्वात्मभू-

तायां यदवस्थानम्, तत् पुत्राय आचिख्यासुः उद्दालको ह किल आरुणिः श्वेतकेतुं पुत्रमुवाच उक्तवान्— स्वप्नान्तं स्वप्नमध्यम् स्वप्न इति दर्शनवृत्तेः स्वप्नस्याख्या, तस्य मध्यं स्वप्नान्तं सुषुप्तमित्येतत; अथवा स्वप्नान्तं स्वप्नसतत्त्वमित्यर्थः। तत्राप्यर्थात्सुषुप्तमेव भवति, 'स्वमपीतो भवति' इति वचनात्; न हि अन्यत्र सुषुप्तात् स्वमपीतिं जीवस्य इच्छन्ति ब्रह्मविदः। तत्र हि आदर्शापनयने पुरुषप्रतिबिम्बः आदर्शगतः यथा स्वमेव पुरुषमपीतो भवति, एवं मनआद्युपरमे चैतन्यप्रतिबिम्बरूपेण जीवेन आत्मना मनसि प्रविष्टा नामरूपव्याकरणाय परा देवता सा स्वमेव आत्मानं प्रतिपद्यते जीवरूपतां मनआख्यां हित्वा। अतः सुषुप्त एव स्वप्नान्तशब्दवाच्य इत्यवगम्यते। यत्र तु सुप्तः स्वप्नान्पश्यति तत्स्वाप्नं दर्शनं सुखदुःखसंयुक्तमिति पुण्यापुण्यकार्यम्। पुण्यापुण्ययोर्हि सुखदुःखारम्भकत्वं प्रसिद्धम्। पुण्यापुण्ययोश्चाविद्याकामोपष्टम्भेनैव सुखदुःखदर्शनकार्यारम्भकत्वमुपपद्यते नान्यथेत्यविद्याकामकर्मभिः संसारहेतुभिः संयुक्त एव स्वप्ने इति न स्वमपीतो भवति। 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' 'तद्वा अस्यैतदतिच्छन्दा एष परम आनन्दः'

इत्यादिश्रुतिभ्यः । सुषुप्त एव स्वं देवतारूपं जीवत्वविनिर्मुक्तं दर्शयिष्यामीत्याह— स्वप्रान्तं मे मम निगदतो हे सोम्य विजानीहि विस्पष्टमवधारयेत्यर्थः । कदा स्वप्रान्तो भवतीति, उच्यते— यत्र यस्मिन्काले एतन्नाम भवति पुरुषस्य स्वप्स्यतः । प्रसिद्धं हि लोके स्वपितीति । गौणं चेदं नामेत्याह— यदा स्वपितीत्युच्यते पुरुषः, तदा तस्मिन्काले सता सच्छब्दवाच्यया प्रकृतया देवतया संपन्नो भवति संगतः एकीभूतो भवति । मनसि प्रविष्टं मनआदिसंसर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत्परमार्थसत्यम् अपीतः अपिगतः भवति । अतः तस्मात् स्वपितीत्येनमाचक्षते लौकिकाः । स्वमात्मानं हि यस्मादपीतो भवति; गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिर्गम्यते इत्यभिप्रायः । कथं पुनर्लौकिकानां प्रसिद्धा स्वात्मसंपत्तिः? जाग्रच्छ्रमनिमित्तोद्भवत्वात्स्वापस्य इत्याहुः— जागरिते हि पुण्यापुण्यनिमित्तसुखदुःखाद्यनेकायासानुभवाच्छ्रान्तो भवति; ततश्च आयस्तानां करणानामनेकव्यापारनिमित्तग्लानानां स्वव्यापारेभ्य उपरमो भवति । श्रुतेश्च 'श्राम्यत्येव वाक् श्राम्यति चक्षुः' इत्येवमादि । तथा च 'गृहीता वाक् गृहीतं चक्षुः गृहीतं श्रोत्रं गृहीतं मनः' इत्येवमादीनि करणानि प्राणग्रस्तानि; प्राण एकः

अश्रान्तः देहे कुलाये यो जागर्ति, तदा जीवः श्रमापनुत्तये स्वं देवतारूपमात्मानं प्रतिपद्यते । नान्यत्र स्वरूपावस्थानाच्छ्रमापनोदः स्यादिति युक्ता प्रसिद्धिर्लौकिकानाम्— स्वं ह्यपीतो भवतीति । दृश्यते हि लोके ज्वरादिरोगग्रस्तानां तद्विनिर्मोके स्वात्मस्थानां विश्रमणम्, तद्वदिहापि स्यादिति युक्तम् । 'तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः' इत्यादिश्रुतेश्च ॥

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥**

तत्रायं दृष्टान्तः यथोक्तेऽर्थे— स यथा शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितः दिशं दिशं बन्धनमोक्षार्थी सन् प्रतिदिशं पतित्वा अन्यत्र बन्धनात् आयतनम् आश्रयं विश्रमणाय अलब्ध्वा अप्राप्य बन्धनमेवोपश्रयते । एवमेव यथा अयं दृष्टान्तः खलु हे

सोम्य तन्मनः तत्प्रकृतं षोडशकलमन्नोपचितं मनो निर्धारितम्, तत्प्रविष्टः तत्स्थः तदुपलक्षितो जीवः तन्मन इति निर्दिश्यते—मञ्चाक्रोशनवत् । स मनआख्योपाधिः जीवः अविद्याकामकर्मोपदिष्टां दिशं दिशं सुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वा गत्वा अनुभूयेत्यर्थः, अन्यत्र सदाख्यात् स्वात्मनः आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव, प्राणेन सर्वकार्यकरणाश्रयेणोपलक्षिता प्राण इत्युच्यते सदाख्या परा देवता, 'प्राणस्य प्राणम्' 'प्राणशरीरो भारूपः' इत्यादिश्रुतेः । अतः तां देवतां प्राणं प्राणाख्यामेव उपश्रयते । प्राणो बन्धनं यस्य मनसः तत्प्राणबन्धनं हि यस्मात् सोम्य मनः प्राणोपलक्षितदेवताश्रयम्, मन इति तदुपलक्षितो जीव इति ॥

**अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

S. U. IV. 12

एवं स्वपितिनामप्रसिद्धिद्वारेण यज्जीवस्य सत्यस्वरूपं जगतो मूलम्, तत्पुत्रस्य दर्शयित्वा आह अन्नादिकार्यकारणपरम्परयापि जगतो मूलं सद्दिदर्शयिषुः— अशनापिपासे अशितुमिच्छा अशना, सन यलोपेन, पातुमिच्छा पिपासा ते अशनापिपासे अशनापिपासयोः सतत्त्वं विजानीहीत्येतत्। यत्र यस्मिन्काले एतन्नाम पुरुषो भवति। किं तत्? अशिशिषति अशितुमिच्छतीति। तदा तस्य पुरुषस्य किंनिमित्तं नाम भवतीति, आह— यत्तत्पुरुषेण अशितमन्नं कठिनं पीता आपो नयन्ते द्रवीकृत्य रसादिभावेन विपरिणमयन्ते, तदा भुक्तमन्नं जीर्यति। अथ च भवत्यस्य नाम अशिशिषतीति गौणम्। जीर्णे हि अन्ने अशितुमिच्छति सर्वो हि जन्तुः। तत्र अपामशितनेतृत्वात् अशनाया इति नाम प्रसिद्धमित्येतस्मिन्नर्थे। यथा गोनायः गां नयतीति गोनायः इत्युच्यते गोपालः, तथा अश्वान्नयतीत्यश्वनायः अश्वपाल इत्युच्यते, पुरुषनायः पुरुषान्नयतीति राजा सेनापतिर्वा, एवं तत् तदा अप आचक्षते लौकिकाः अशनायेति विसर्जनीयलोपेन। तत्रैवं सति अद्भिः रसादिभावेन नीतेन अशितेनान्नेन निष्पादितमिदं शरीरं वटकणिकायामिव शुङ्गः अङ्कुर उत्पतितः उद्गतः; तमिमं शुङ्गं कार्यं शरीराख्यं वटादिशुङ्ग-

वटुत्पतितं हे सोम्य विजानीहि । किं तत्र विज्ञेयमिति, उच्यते— शृणु इदं शुङ्गवत्कार्यत्वात् शरीरं नामूलं मूलरहितं भविष्यति इत्युक्तः आह श्वेतकेतुः ॥

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

यद्येवं समूलमिदं शरीरं वटादिशुङ्गवत्, तस्य अस्य शरीरस्य क्व मूलं स्यात् भवेत् इत्येवं पृष्टः आह पिता— तस्य क्व मूलं स्यात् अन्यत्रान्नादन्नं मूलमित्यभिप्रायः । कथम्? अशितं हि अन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसभावेन परिणमते । रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रम् । तथा योषिद्भुक्तं च अन्नं रसादिक्रमेणैवं परिणतं लोहितं भवति । ताभ्यां शुक्रशोणिताभ्यामन्नकार्याभ्यां संयुक्ताभ्यामन्नेन एवं प्रत्यहं भुज्यमानेन आपूर्यमाणाभ्यां कुड्यमिव

मृत्पिण्डैः प्रत्यहमुपचीयमानः अन्नमूलः देहशुङ्गः परिनिष्पन्न इत्यर्थः । यत्तु देहशुङ्गस्य मूलमन्नं निर्दिष्टम्, तदपि देहवद्विनाशोत्पत्तिमत्त्वात् कस्माच्चिन्मूलादुत्पतितं शुङ्ग एवेति कृत्वा आह—यथा देहशुङ्गः अन्नमूलः एवमेव खलु सोम्य अन्नेन शुङ्गेन कार्यभूतेन अपो मूलमन्नस्य शुङ्गस्यान्विच्छ प्रतिपद्यस्व । अपामपि विनाशोत्पत्तिमत्त्वात् शुङ्गत्वमेवेति अद्भिः सोम्य शुङ्गेन कार्येण कारणं तेजो मूलमन्विच्छ । तेजसोऽपि विनाशोत्पत्तिमत्त्वात् शुङ्गत्वमिति तेजसा सोम्य शुङ्गेन सन्मूलम् एकमेवाद्वितीयं परमार्थसत्यम् । यस्मिन्सर्वमिदं वाचारम्भणं विकारो नामधेयमनृतं रज्ज्वामिव सर्पादिविकल्पजातमध्यस्तमविद्यया, तदस्य जगतो मूलम्; अतः सन्मूलाः सत्कारणाः हे सोम्य इमाः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः । न केवलं सन्मूला एव, इदानीमपि स्थितिकाले सदायतनाः सदाश्रया एव । न हि मृदमनाश्रित्य घटादेः सत्त्वं स्थितिर्वा अस्ति । अतः मृद्वत्सन्मूलत्वात्प्रजानां सत् आयतनं यासां ताः सदायतनाः प्रजाः । अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः समाप्तिः अवसानं परिशेषः यासां ताः सत्प्रतिष्ठाः ॥

**अथ यत्रैतत्पुरुषः पिपासति नाम**

**तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

अथ इदानीमप्शुङ्गद्वारेण सतो मूलस्यानुगमः कार्य इत्याह— यत्र यस्मिन्काले एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति । अशिशिषतीतिवत् इदमपि गौणमेव नाम भवति । द्रवीकृतस्याशितस्यान्नस्य नेत्र्यः आपः अन्नशुङ्गं देहं क्लेदयन्त्यः शिथिलीकुर्युः अब्बाहुल्यात् यदि तेजसा न शोष्यन्ते । नितरां च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते; तदा पुरुषः पिपासति नाम; तदेतदाह— तेज एव तत् तदा पीतमबादि शोषयत् देहगतलोहितप्राणभावेन नयते परिणमयति । तद्यथा गोनाय इत्यादि समानम्; एवं तत्तेज आचष्टे लोकः— उदन्येति उदकं नयतीत्युदन्यम्, उदन्येति च्छान्दसं तत्रापि पूर्ववत् । अपामपि एतदेव शरीराख्यं शुङ्गं नान्यदित्येवमादि समानमन्यत् ॥

**तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥**

सामर्थ्यात् तेजसोऽप्येतदेव शरीराख्यं शुङ्गम् । अतः अप्शुङ्गेन देहेन आपो मूलं गम्यते । अद्भिः शुङ्गेन तेजो मूलं गम्यते । तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववत् । एवं हि तेजोबन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रस्य अन्नादिपरम्परया परमार्थसत्यं सन्मूलमभयमसंत्रासं निरायासं सन्मूलमन्विच्छेति पुत्रं गमयित्वा आशिशिषति पिपासतीति नामप्रसिद्धिद्वारेण यदन्यत् इह अस्मिन्प्रकरणे तेजोबन्नानां पुरुषेणोपयुज्यमानानां कार्यकरणसंघातस्य देहशु-

ङ्गस्य स्वजात्यसांकर्येणोपचयकरत्वं वक्तव्यं प्राप्तम्, तदिहोक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशति—यथा तु खलु येन प्रकारेण इमाः तेजोबन्नाख्याः तिस्रः देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवति 'अन्नमशितं त्रेधा विधीयते' इत्यादि तत्रैवोक्तम्। अन्नादीनामशितानां ये मध्यमा धातवः, ते साप्तधातुकं शरीरमुपचिन्वन्तीत्युक्तम्—मांसं भवति लोहितं भवति मज्जा भवति अस्थि भवतीति। ये त्वणिष्ठा धातवः मनः प्राणं वाचं देहस्यान्तःकरणसंघातमुपचिन्वन्तीति च उक्तम्—तन्मनो भवति स प्राणो भवति स वाग्भवतीति। सोऽयं प्राणकरणसंघातः देहे विशीर्णे देहान्तरं जीवाधिष्ठितः येन क्रमेण पूर्वदेहात्प्रच्युतः गच्छति, तदाह—अस्य हे सोम्य पुरुषस्य प्रयतः म्रियमाणस्य वाक् मनसि संपद्यते मनस्युपसंह्रियते। अथ तदाहुः ज्ञातयो न वदतीति। मनःपूर्वको हि वाग्व्यापारः, 'यद्वै मनसा ध्यायति तद्वाचा वदति' इति श्रुतेः। वाच्युपसंहृतायां मनसि मननव्यापारेण केवलेन वर्तते। मनोऽपि यदा उपसंह्रियते, तदा मनः प्राणे संपन्नं भवति—सुषुप्तकाले इव; तदा पार्श्वस्था ज्ञातयः न विजानातीत्याहुः। प्राणश्च तदोर्ध्वोच्छ्वासी स्वात्मन्युपसंहृतबाह्यकरणः संवर्गविद्यायां दर्शनात्

हस्तपादादीन्विक्षिपन् मर्मस्थानानि निकृन्तन्निव उत्सृजन् क्रमेणोपसंहृतः तेजसि संपद्यते ; तदाहुः ज्ञातयो न चलतीति। मृतः नेति वा विचिकित्सन्तः देहमालभमानाः उष्णं च उपलभमानाः देहः उष्णः जीवतीति यदा तदप्यौष्ण्यलिङ्गं तेज उपसंह्रियते, तदा तत्तेजः परस्यां देवतायां प्रशाम्यति। तदैवं क्रमेणोपसंहृते स्वमूलं प्राप्ते च मनसि तत्स्थो जीवोऽपि सुषुप्तकालवत् निमित्तोपसंहारादुपसंह्रियमाणः सन् सत्याभिसंधिपूर्वकं चेदुपसंह्रियते सदेव संपद्यते न पुनर्देहान्तराय सुषुप्तादिवोत्तिष्ठति, यथा लोके सभये देशे वर्तमानः कथंचिदिवाभयं देशं प्राप्तः— तद्वत्। इतरस्तु अनात्मज्ञः तस्मादेव मूलात् सुषुप्तादिवोत्थाय मृत्वा पुनर्देहजालमाविशति यस्मान्मूलादुत्थाय देहमाविशति जीवः ॥

**स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥**

**इति अष्टमः खण्डः ॥**

स यः सदाख्यः एषः उक्तः अणिमा अणुभावः जगतो

मूलम् ऐतदात्म्यम् एतत्सदात्मा यस्य सर्वस्य तत् एतदात्म तस्य भावः ऐतदात्म्यम् । एतेन सदाख्येन आत्मना आत्मवत् सर्वमिदं जगत् । नान्योऽस्त्यस्यात्मासंसारी, 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इत्यादिश्रुत्यन्तरात् । येन च आत्मना आत्मवत्सर्वमिदं जगत्, तदेव सदाख्यं कारणं सत्यं परमार्थसत् । अतः स एव आत्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यम्, आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवत् निरूढत्वात् । अतः तत् सत् त्वमसीति हे श्वेतकेतो इत्येवं प्रत्यायितः पुत्रः आह—भूय एव मा भगवान् विज्ञापयतु, यद्भवदुक्तं तत् संदिग्धं मम-अहन्यहनि सर्वाः प्रजाः सुषुप्तौ सत् संपद्यन्ते इत्येतत्, येन सत् संपद्य न विदुः सत्संपन्ना वयमिति । अतः दृष्टान्तेन मां प्रत्याययत्वित्यर्थः । एवमुक्तः तथा अस्तु सोम्य इति ह उवाच पिता ॥

इति अष्टमखण्डभाष्यम् ॥

## नवमः खण्डः ॥

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणा॰ रसान्समवहारमेकता॰ रसं गमयन्ति ॥ १ ॥**

यत्पृच्छसि—अहन्यहनि सत्संपद्य न विदुः सत्संपन्नाः स्म इति, तत्कस्मादिति—अत्र शृणु दृष्टान्तम—यथा लोके हे सोम्य मधुकृतः मधु कुर्वन्तीति मधुकृतः मधुकरमक्षिकाः मधु निस्तिष्ठन्ति मधु निष्पादयन्ति तत्पराः सन्तः । कथम्? नानात्ययानां नानागतीनां नानादिक्कानां वृक्षाणां रसान् समवहारं समाहृत्य एकताम् एकभावं मधुत्वेन रसान् गमयन्ति मधुत्वमापादयन्ति ॥

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ १ ॥**

ते रसाः यथा मधुत्वेनैकतां गताः तत्र मधुनि विवेकं

न लभन्ते; कथम्? अमुष्याहमाम्रस्य पनसस्य वा वृक्षस्य रसोऽस्मीति— यथा हि लोके बहूनां चेतनावतां समेतानां प्राणिनां विवेकलाभो भवति अमुष्याहं पुत्रः अमुष्याहं नप्तास्मीति ; ते च लब्धविवेकाः सन्तः न संकीर्यन्ते; न तथा इह अनेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेन एकतां गतानां मधुरादिभावेन विवेको गृह्यत इत्यभिप्रायः। यथा अयं दृष्टान्तः, इत्येवमेव खलु सोम्य इमाः सर्वाः प्रजाः अहन्यहनि सति संपद्य सुषुप्तिकाले मरणप्रलययोश्च न विदुः न विजानीयुः— सति संपद्यामहे इति संपन्ना इति वा ॥

**त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥**

यस्माच्च एवमात्मनः सद्रूपतामज्ञात्वैव सत्संपद्यन्ते, अतः ते इह लोके यत्कर्मनिमित्तां यां यां जातिं प्रतिपन्ना आसुः व्याघ्रादीनाम्—व्याघ्रोऽहं सिंहोऽहमित्येवम् , ते तत्कर्मज्ञानवासनाङ्किताः सन्तः सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति पुनः सत आगत्य व्याघ्रो वा सिंहो वा वृको वा वराहो

वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यत्पूर्वमिह लोके भवन्ति बभूवुरित्यर्थः, तदेव पुनरागत्य भवन्ति। युगसहस्रकोट्यन्तरितापि संसारिणः जन्तोः या पुरा भाविता वासना, सा न नश्यतीत्यर्थः। 'यथाप्रज्ञं हि संभवाः' इति श्रुत्यन्तरात्॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच॥ ४॥**

**इति नवमः खण्डः॥**

ताः प्रजाः यस्मिन्प्रविश्य पुनराविर्भवन्ति, ये तु इतोऽन्ये सत्सत्यात्माभिसंधाः यमणुभावं सदात्मानं प्रविश्य नावर्तन्ते, स य एषोऽणिमेत्यादि व्याख्यातम्। यथा लोके स्वकीये गृहे सुप्तः उत्थाय ग्रामान्तरं गतः जानाति स्वगृहादागतोऽस्मीति, एवं सत आगतोऽस्मीति च जन्तूनां कस्माद्विज्ञानं न भवतीति भूय एव मा भगवान्विज्ञापयतु इत्युक्तः तथा सोम्येति ह उवाच पिता॥

**इति नवमखण्डभाष्यम्॥**

## दशमः खण्डः ॥

**इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥**

शृणु तत्र दृष्टान्तम्—यथा सोम्य इमा नद्यः गङ्गाद्याः पुरस्तात् पूर्वां दिशं प्रति प्राच्यः प्रागञ्चनाः स्यन्दन्ते स्रवन्ति । पश्चात् प्रतीचीं दिशं प्रति सिन्ध्वाद्याः प्रतीचीम् अञ्चन्ति गच्छन्तीति प्रतीच्यः, ताः समुद्रादम्भोनिधेः जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिताः गङ्गादिनदीरूपिण्यः पुनः समुद्रम् अम्भोनिधिमेव अपियन्ति स समुद्र एव भवति । ता नद्यः यथा तत्र समुद्रे समुद्रात्मना एकतां गताः न विदुः न जानन्ति— इयं गङ्गा अहमस्मि इयं यमुना अहमस्मीति च ॥

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छमाह**

**इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

इति दशमः खण्डः ॥

एवमेव खलु सोम्य इमाः सर्वाः प्रजाः यस्मात् सति संपद्य न विदुः, तस्मात्सत आगम्य न विदुः—सत आगच्छामहे आगता इति वा । त इह व्याघ्र इत्यादि समानमन्यत् । दृष्टं लोके जले वीचीतरङ्गफेनबुद्बुदादय उत्थिताः पुनस्तद्भावं गता विनष्टा इति । जीवास्तु तत्कारणभावं प्रत्यहं गच्छन्तोऽपि सुषुप्ते मरणप्रलययोश्च न विनश्यन्तीत्येतत्, भूय एव मा भगवान्विज्ञापयतु दृष्टान्तेन । तथा सोम्येति ह उवाच पिता ॥

इति दशमखण्डभाष्यम् ॥

## एकादशः खण्डः ॥

अस्य सोम्य महतो वृक्षस्य यो मूले-ऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्या-ज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मो-दमानस्तिष्ठति ॥ १ ॥

शृणु दृष्टान्तम्—अस्य हे सोम्य महतः अनेकशाखादियु-क्तस्य वृक्षस्य, अस्येत्यग्रतः स्थितं वृक्षं दर्शयन् आह—यदि यः कश्चित् अस्य मूले अभ्याहन्यात्, परश्वादिना सकृद्घातमा-त्रेण न शुष्यतीति जीवन्नेव भवति, तदा तस्य रसः स्रवे-त्। तथा यो मध्ये अभ्याहन्यात् जीवन्स्रवेत्, तथा योऽग्रे अभ्याहन्यात् जीवन्स्रवेत्। स एष वृक्षः इदानीं जीवेन आत्मना अनुप्रभूतः अनुव्याप्तः पेपीयमानः अत्यर्थं पिबन् उदकं भौमांश्च रसान् मूलैर्गृह्णन् मोदमानः हर्षं प्राप्नुवन् तिष्ठति ॥

अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शु-ष्यति तृतीयां जहात्यथ सा शुष्यति

**सर्वं जहाति सर्वः शुष्यति ॥ २ ॥**

तस्यास्य यदेकां शाखां रोगग्रस्ताम् आहतां वा जीवः जहाति उपसंहरति शाखायां विप्रसृतमात्मांशम् , अथ सा शुष्यति । वाङ्मनःप्राणकरणग्रामानुप्रविष्टो हि जीव इति तदुपसंहारे उपसंह्रियते । जीवेन च प्राणयुक्तेन अशितं पीतं च रसतां गतं जीवच्छरीरं वृक्षं च वर्धयत् रसरूपेण जीवस्य सद्भावे लिङ्गं भवति । अशितपीताभ्यां हि देहे जीवस्तिष्ठति । ते च अशितपीते जीवकर्मानुसारिणी इति तस्यैकाङ्गवैकल्यनिमित्तं कर्म यदोपस्थितं भवति, तदा जीवः एकां शाखां जहाति शाखाया आत्मानमुपसंहरति ; अथ तदा सा शाखा शुष्यति । जीवस्थितिनिमित्तो रसः जीवकर्माक्षिप्तः जीवोपसंहारे न तिष्ठति । रसापगमे च शाखा शोषमुपैति । तथा सर्वं वृक्षमेव यदा अयं जहाति तदा सर्वोऽपि वृक्षः शुष्यति । वृक्षस्य रसस्रवणशोषणादि-लिङ्गात् जीववत्त्वं दृष्टान्तश्रुतेश्च चेतनावन्तः स्थावरा इति बौद्धकाणादमतमचेतनाः स्थावरा इत्येतदसारमिति दर्शितं भवति ॥

**एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो**

**म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥**

इति एकादशः खण्डः ॥

यथा अस्मिन्वृक्षदृष्टान्ते दर्शितम्— जीवेन युक्तः वृक्षः अशुष्कः रसपानादियुक्तः जीवतीत्युच्यते, तदपेतश्च म्रियत इत्युच्यते ; एवमेव खलु सोम्य विद्धीति ह उवाच— जीवापेतं जीववियुक्तं वाव किल इदं शरीरं म्रियते न जीवो म्रियत इति। कार्यशेषे च सुप्तोत्थितस्य मम इदं कार्यशेषम् अपरिसमाप्तमिति स्मृत्वा समापनदर्शनात्। जातमात्राणां च जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्च अतीतजन्मान्तरानुभूतस्तन्यपानदुःखानुभवस्मृतिर्गम्यते । अग्निहोत्रादीनां च वैदिकानां कर्मणामर्थवत्त्वात् न जीवो म्रियत इति । स य एषोऽणिमेत्यादि समानम् । कथं पुनरिदमत्यन्तस्थूलं पृथिव्यादि नामरूपवज्जगत् अत्यन्तसूक्ष्मात्सद्रूपान्नामरूपरहितात्सतो जायते, इति एतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयतु इति । तथा सोम्येति ह उवाच पिता ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादशः खण्डः ॥

**न्यग्रोधफलमत आहरेतीदं भगव इति भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति ॥**

यदि एतत्प्रत्यक्षीकर्तुमिच्छसि अतोऽस्मान्महतः न्यग्रोधात् फलमेकमाहर— इत्युक्तः तथा चकार सः ; इदं भगव उपहृतं फलमिति दर्शितवन्तं प्रति आह— फलं भिन्द्धीति । भिन्नमित्याह इतरः । तमाह पिता— किमत्र पश्यसीति ; उक्तः आह— अण्व्यः अणुतरा इव इमाः धानाः बीजानि पश्यामि भगव इति । आसां धानानामेकां धानाम् अङ्ग हे वत्स भिन्द्धि, इत्युक्तः आह— भिन्ना भगव इति । यदि भिन्ना धाना तस्यां भिन्नायां किं पश्यसि, इत्युक्तः आह— न किंचन पश्यामि भगव इति ॥

**तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ॥ २ ॥**

तं पुत्रं ह उवाच— वटधानायां भिन्नायां यं वटबीजाणिमानं हे सोम्य एतं न निभालयसे न पश्यसि, तथा अप्येतस्य वै किल सोम्य एष महान्यग्रोधः बीजस्य अणिम्नः सूक्ष्मस्य अदृश्यमानस्य कार्यभूतः स्थूलशाखास्कन्धफलपलाशवान् तिष्ठति उत्पन्नः सन्, उत्तिष्ठतीति वा, उच्छब्दोऽध्याहार्यः । अतः श्रद्धत्स्व सोम्य सत एव अणिम्नः स्थूलं नामरूपादिमत्कार्यं जगदुत्पन्नमिति । यद्यपि न्यायागमाभ्यां निर्धारितोऽर्थः तथैवेत्यवगम्यते, तथापि अत्यन्तसूक्ष्मेष्वर्थेषु बाह्यविषयासक्तमनसः स्वभावप्रवृत्तस्यासत्यां गुरुतरायां श्रद्धायां दुरवगमत्वं स्यादित्याह— श्रद्धत्स्वेति । श्रद्धायां तु सत्यां मनसः समाधानं बुभुत्सितेऽर्थे भवेत्, ततश्च तदर्थावगतिः, 'अन्यत्रमना अभूवम्' इत्यादिश्रुतेः ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

स य इत्याद्युक्तार्थम् । यदि तत्सज्जगतो मूलम्, कस्मान्नोपलभ्यत इत्येतद्दृष्टान्तेन मा भगवान्भूय एव विज्ञापयत्विति । तथा सोम्येति ह उवाच पिता ॥

इति द्वादशखण्डभाष्यम् ॥

## त्रयोदशः खण्डः ॥

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तँ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥

विद्यमानमपि वस्तु नोपलभ्यते, प्रकारान्तरेण तु उपलभ्यत इति शृणु अत्र दृष्टान्तम्— यदि च इममर्थं प्रत्यक्षीकर्तुमिच्छसि, पिण्डरूपं लवणम् एतद्घटादौ उदके अवधाय प्रक्षिप्य अथ मा मां श्वः प्रातः उपसीदथाः उपगच्छेथाः इति । स ह पित्रोक्तमर्थं प्रत्यक्षीकर्तुमिच्छन् तथा चकार । तं ह उवाच परेद्युः प्रातः—यल्लवणं दोषा रात्रौ उदके अवाधाः निक्षिप्तवानसि अङ्ग हे वत्स तदाहर— इत्युक्तः तल्लवणमाजिहीर्षुः ह किल अवमृश्य उदके न विवेद न विज्ञातवान् । यथा तल्लवणं विद्यमानमेव सत् अप्सु लीनं संश्लिष्टमभूत् ॥

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमि-

**ति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्संवर्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥**

यथा विलीनं लवणं न वेत्थ, तथापि तच्चक्षुषा स्पर्शनेन च पिण्डरूपं लवणमगृह्यमाणं विद्यत एव अप्सु, उपलभ्यते च उपायान्तरेण— इत्येतत् पुत्रं प्रत्याययितुमिच्छन् आह— अङ्ग अस्योदकस्य अन्तात् उपरि गृहीत्वा आचाम—इत्युक्त्वा पुत्रं तथाकृतवन्तमुवाच—कथमिति ; इतर आह— लवणं स्वादुत इति । तथा मध्यादुदकस्य गृहीत्वा आचाम इति, कथमिति, लवणमिति । तथान्तात् अधोदेशात् गृहीत्वा आचाम इति, कथमिति, लवणमिति । यद्येवम् , अभिप्रास्य परित्यज्य एतदुदकम आचम्य अथ मोपसीदथाः इति ; तद्ध तथा चकार लवणं परित्यज्य पितृसमीपमाजगामेत्यर्थः इदं वचनं ब्रुवन्— तल्लवणं तस्मिन्नेवोदके यन्मया रात्रौ क्षिप्तं शश्वन्नित्यं संवर्तते विद्यमानमेव सत् सम्यग्वर्तते । इति एवमुक्तवन्तं तं ह उवाच पिता— यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्वं गृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एव उपायान्तरेण जिह्वयोपलभ्यमानत्वात्— एवमेव अत्रैव

अस्मिन्नेव तेजोबन्नादिकार्ये शुङ्गे देहे, वाव किलेत्याचार्योपदेशस्मरणप्रदर्शनार्थौ, सत् तेजोबन्नादिशुङ्गकारणं वटबीजाणिमवद्विद्यमानमेव इन्द्रियैर्नोपलभसे न निभालयसे । यथा अत्रैवोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमानं लवणं विद्यमानमेव जिह्वया उपलब्धवानसि— एवमेवात्रैव किल विद्यमानं सत् जगन्मूलम् उपायान्तरेण लवणाणिमवत् उपलप्स्यस इति वाक्यशेषः ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ६ ॥**

इति त्रयोदशः खण्डः ॥

स य इत्यादि समानम् । यद्येवं लवणाणिमवदिन्द्रियैरनुपलभ्यमानमपि जगन्मूलं सत् उपायान्तरेण उपलब्धुं शक्यते, यदुपलम्भात्कृतार्थः स्याम अनुपलम्भाच्चाकृतार्थः स्यामहम्, तस्यैवोपलब्धौ क उपायः इत्येतत् भूय एव मा भगवान विज्ञापयतु दृष्टान्तेन। तथा सोम्य इति ह उवाच ॥

इति त्रयोदशखण्डभाष्यम् ॥

## चतुर्दशः खण्डः ॥

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

यथा लोके हे सोम्य पुरुषं यं कंचित् गन्धारेभ्यो जनपदेभ्यः अभिनद्धाक्षं बद्धचक्षुषम् आनीय द्रव्यहर्ता तस्करः तमभिनद्धाक्षमेव बद्धहस्तम् अरण्ये ततोऽप्यतिजने अतिगतजने अत्यन्तविगतजने देशे विसृजेत्, स तत्र दिग्भ्रमोपेतः यथा प्राङ्वा प्रागञ्चनः प्राङ्मुखो वेत्यर्थः, तथोदङ्वा अधराङ्वा प्रत्यङ्वा प्रध्मायीत शब्दं कुर्यात् विक्रोशेन—अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करेणानीतोऽभिनद्धाक्ष एव विसृष्ट इति ॥

तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ॥ २ ॥

एवं विक्रोशतः तस्य यथाभिनहनं यथा बन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चित् एतां दिशमुत्तरतः गन्धाराः एतां दिशं व्रज—इति प्रब्रूयात् । स एवं कारुणिकेन बन्धनान्मोक्षितः ग्रामात् ग्रामान्तरं पृच्छन् पण्डितः उपदेशवान् मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन् गन्धारानेवोपसंपद्येत । नेतरो मूढमतिः देशान्तरदर्शनतृड्वा । यथा अयं दृष्टान्तः वर्णितः—स्वविषयेभ्यो गन्धारेभ्यः पुरुषः तस्करैरभिनद्धाक्षः अविवेकः दिङ्मूढः अशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्रवेशितः दुःखार्तः विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति, स कथंचिदेव कारुणिकेन केनचिन्मोक्षितः स्वदेशान्गन्धारानेवापन्नः निर्वृतः सुख्यभूत्— एवमेव सतः जगदात्मस्वरूपात्तेजोबन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमिमूत्रपुरीषवत् शीतोष्णाद्यनेकद्वन्द्वदुःखवच्च इदं मोहपटाभिनद्धाक्षः भार्यापुत्रमित्रपशुबन्ध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः प्रवेशितः— अहममुष्य पुत्रः, ममैते बान्धवाः, सुख्यहं दुःखी मूढः पण्डितो धार्मिको बन्धुमान् जातः मृतो जीर्णः पापी, पुत्रो मे मृतः, धनं मे नष्टम् , हा हतोऽस्मि, कथं जीविष्यामि, का मे गतिः, किं

मे त्राणम्—इत्येवमनेकशतसहस्रानर्थजालवान् विक्रोशन् कथं-चिदेव पुण्यातिशयात्परमकारुणिकं कंचित्सद्ब्रह्मात्मविदं वि-मुक्तबन्धनं ब्रह्मिष्ठं यदा आसादयति, तेन च ब्रह्मविदा कारुण्यात् दर्शितसंसारविषयदोषदर्शनमार्गः विरक्तः संसा-रविषयेभ्यः—नासि त्वं संसारी अमुष्य पुत्रत्वादिधर्मवान्, किं तर्हि, सत् यत्तत्त्वमसि—इत्यविद्यामोहपटाभिनहनान्मोक्षि-तः गन्धारपुरुषवच्च स्वं सदात्मानम् उपसंपद्य सुखी निर्वृतः स्यादित्येतमेवार्थमाह— आचार्यवान्पुरुषो वेदेति । तस्यास्य एवमाचार्यवतो मुक्ताविद्याभिनहनस्य तावदेव तावानेव कालः चिरं क्षेपः सदात्मस्वरूपसंपत्तेरिति वाक्यशेषः । कियान्कालश्चिरमिति, उच्यते— यावन्न विमोक्ष्ये न विमो-क्ष्यते इत्येतत्पुरुषव्यत्ययेन, सामर्थ्यात्; येन कर्मणा शरी-रमारब्धं तस्योपभोगेन क्षयात् देहपातो यावदित्यर्थः । अथ तदैव सत् संपत्स्ये संपत्स्यत इति पूर्ववत् । न हि देहमोक्षस्य सत्संपत्तेश्च कालभेदोऽस्ति येन अथ-शब्दः आनन्तर्यार्थः स्यात् ॥

ननु यथा सद्विज्ञानानन्तरमेव देहपातः सत्संपत्तिश्च न भवति कर्मशेषवशात्, तथा अप्रवृत्तफलानि प्राग्ज्ञानोत्पत्ते-र्जन्मान्तरसंचितान्यपि कर्माणि सन्तीति तत्फलोपभोगार्थं

पतिते अस्मिञ्शरीरान्तरमारब्धव्यम् । उत्पन्ने च ज्ञाने यावज्जीवं विहितानि प्रतिषिद्धानि वा कर्माणि करोत्येवेति तत्फलोपभोगार्थं च अवश्यं शरीरान्तरमारब्धव्यम् , ततश्च कर्माणि ततः शरीरान्तरम् इति ज्ञानानर्थक्यम् , कर्मणां फलवत्त्वात् । अथ ज्ञानवतः क्षीयन्ते कर्माणि, तदा ज्ञानप्राप्तिसमकालमेव ज्ञानस्य सत्संपत्तिहेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात् । तथा च आचार्याभावः इति आचार्यवान्पुरुषो वेद इत्यनुपपत्तिः । ज्ञानान्मोक्षाभावप्रसङ्गश्च देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य । न, कर्मणां प्रवृत्ताप्रवृत्तफलवत्त्वविशेषोपपत्तेः । यदुक्तम् अप्रवृत्तफलानां कर्मणां ध्रुवफलवत्त्वाद्ब्रह्मविदः शरीरे पतिते शरीरान्तरमारब्धव्यम् अप्रवृत्तकर्मफलोपभोगार्थमिति, एतदसत् । विदुषः 'तस्य तावदेव चिरम्' इति श्रुतेः प्रामाण्यात् । ननु 'पुण्यो वै पुण्येन कर्मणा भवति' इत्यादिश्रुतेरपि प्रामाण्यमेव । सत्यमेवम् । तथापि प्रवृत्तफलानामप्रवृत्तफलानां च कर्मणां विशेषोऽस्ति । कथम् ? यानि प्रवृत्तफलानि कर्माणि यैर्विद्वच्छरीरमारब्धम् , तेषामुपभोगेनैव क्षयः— यथा आरब्धवेगस्य लक्ष्यमुक्तेष्वादेः वेगक्षयादेव स्थितिः, न तु लक्ष्यवेधसमकालमेव

प्रयोजनं नास्तीति—तद्वत् । अन्यानि तु अप्रवृत्तफलानि इह प्राग्ज्ञानोत्पत्तेरूर्ध्वं च कृतानि वा क्रियमाणानि वा अतीतजन्मान्तरकृतानि वा अप्रवृत्तफलानि ज्ञानेन दह्यन्ते प्रायश्चित्तेनेव ; 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति स्मृतेश्च । 'क्षीयन्ते चास्य कर्माणि' इति च आथर्वणे । अतः ब्रह्मविदः जीवनादिप्रयोजनाभावेऽपि प्रवृत्तफलानां कर्मणामवश्यमेव फलोपभोगः स्यादिति मुक्तेषुवत् तस्य तावदेव चिरमिति युक्तमेवोक्तमिति यथोक्तदोषचोदनानुपपत्तिः । ज्ञानोत्पत्तेरूर्ध्वं च ब्रह्मविदः कर्माभावमवोचाम 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यत्र । तच्च स्मर्तुमर्हसि ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

स य इत्याद्युक्तार्थम् । आचार्यवान् विद्वान् येन क्रमेण सन् संपद्यते, तं क्रमं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्य इति ह उवाच ॥

इति चतुर्दशखण्डभाष्यम् ॥

## पञ्चदशः खण्डः ॥

**पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

पुरुषं हे सोम्य उत उपतापिनं ज्वराद्युपतापवन्तं ज्ञातयः बान्धवाः परिवार्य उपासते मुमूर्षुम्— जानासि मां तव पितरं पुत्रं भ्रातरं वा—इति पृच्छन्तः । तस्य मुमूर्षोः यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् इत्येतदुक्तार्थम् ॥

**अथ यदास्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥**

संसारिणः यः मरणक्रमः स एवायं विदुषोऽपि सत्संपत्तिक्रम इत्येतदाह— परस्यां देवतायां तेजसि संपन्ने अथ न जानाति । अविद्वांस्तु सत उत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति । विद्वांस्तु शास्त्रा-

चार्योपदेशजनितज्ञानदीपप्रकाशितं सद्ब्रह्मात्मानं प्रविश्य न आवर्तते इत्येष सत्संपत्तिक्रमः । अन्ये तु मूर्धन्यया नाड्या उत्क्रम्य आदित्यादिद्वारेण सद्गच्छन्तीत्याहुः; तदसत्, देशकालनिमित्तफलाभिसंधानेन गमनदर्शनात् । न हि सदात्मैकत्वदर्शिनः सत्याभिसंधस्य देशकालनिमित्तफलाद्यनृताभिसंधिरुपपद्यते, विरोधात् । अविद्याकामकर्मणां च गमननिमित्तानां सद्विज्ञानहुताशनविप्लुष्टत्वात् गमनानुपपत्तिरेव; 'पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः' इत्याद्याथर्वणे नदीसमुद्रदृष्टान्तश्रुतेश्च ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति पञ्चदशः खण्डः ॥**

स य इत्यादि समानम् । यदि मरिष्यतो मुमुक्षतश्च तुल्या सत्संपत्तिः, तत्र विद्वान् सत्संपन्नो नावर्तते, आवर्तते त्वविद्वान्— इत्यत्र कारणं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति ह उवाच ॥

इति पञ्चदशखण्डभाष्यम् ॥

## षोडशः खण्डः ॥

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥

शृणु—यथा सोम्य पुरुषं चौर्यकर्मणि संदिह्यमानं निग्रहाय परीक्षणाय च उत अपि हस्तगृहीतं बद्धहस्तम् आनयन्ति राजपुरुषाः । किं कृतवानयमिति पृष्टाश्च आहुः—अपहार्षीद्धनमस्यायम् । ते च आहुः— किमपहरणमात्रेण बन्धनमर्हति, अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गात्; इत्युक्ताः पुनराहुः— स्तेयमकार्षीत् चौर्येण धनमपहार्षीदिति । तेष्वेवं वदत्सु इतरः अपह्नुते— नाहं तत्कर्तेति । ते च आहुः— संदिह्यमानं स्तेयमकार्षीः त्वमस्य धनस्येति । तस्मिंश्च अपह्नुवाने आहुः— परशुमस्मै तपतेति शोधयत्वात्मानमिति । स यदि

तस्य स्तैन्यस्य कर्ता भवति बहिश्चापह्नुते, स एवंभूतः तत एवानृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते। स तथा अनृताभिसंधोऽनृतेनात्मानमन्तर्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति, स दह्यते, अथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसंधिदोषेण ॥

**अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसंधः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥**

अथ यदि तस्य कर्मणः अकर्ता भवति, तत एव सत्यमात्मानं कुरुते। स सत्येन तया स्तैन्याकर्तृतया आत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स सत्याभिसंधः सन् न दह्यते सत्यव्यवधानात्, अथ मुच्यते च मृषाभियोक्तृभ्यः। तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसंधो दह्यते न तु सत्याभिसंधः ॥

**स यथा तत्र नादाह्येतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वे-**

**नकेनो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥**

इति षोडशः खण्डः ॥

स यथा सत्याभिसंधः तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्ततलत्वात् नादाह्येत न दह्येतेत्येतत्, एवं सद्ब्रह्मसत्याभिसंधेतरयोः शरीरपातकाले च तुल्यायां सत्संपत्तौ विद्वान् सत्संपद्य न पुनर्व्याघ्रदेवादिदेहग्रहणाय आवर्तते। अविद्वांस्तु विकारानृताभिसंधः पुनर्व्याघ्रादिभावं देवतादिभावं वा यथाकर्म यथाश्रुतं प्रतिपद्यते। यदात्माभिसंध्यनभिसंधिकृते मोक्षबन्धने, यच्च मूलं जगतः, यदायतना यत्प्रतिष्ठाश्च सर्वाः प्रजाः, यदात्मकं च सर्वं यच्चाजममृतमभयं शिवमद्वितीयम्, तत्सत्यं स आत्मा तव, अतस्तत्त्वमसि श्वेतकेतो—इत्युक्तार्थमसकृद्वाक्यम्। कः पुनरसौ श्वेतकेतुः त्वंशब्दार्थः? योऽहं श्वेतकेतुरुद्दालकस्य पुत्र इति वेद आत्मानमादेशं श्रुत्वा मत्वा विज्ञाय च, अश्रुतममतमविज्ञातं विज्ञातुं पितरं पप्रच्छ 'कथं नु भगवः स आदेशो भवति' इति। स एषः अधिकृतः श्रोता मन्ता विज्ञाता तेजोबन्नमयं कार्यकरणसंघातं प्रविष्टा परैव देवता नामरूपव्याकरणाय—आदर्शे इव पुरुषः सूर्यादिरिव जलादौ

प्रतिबिम्बरूपेण। स आत्मानं कार्यकरणेभ्यः प्रविभक्तं सद्रूपं सर्वात्मानं प्राक् पितुः श्रवणात् न विजज्ञौ । अथेदानीं पित्रा प्रतिबोधितः तत्त्वमसि इति दृष्टान्तैर्हेतुभिश्च तत् पितुरस्य ह किलोक्तं सदेवाहमस्मीति विजज्ञौ विज्ञातवान् । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥

किं पुनरत्र षष्ठे वाक्यप्रमाणेन जनितं फलमात्मनि? कर्तृत्वभोक्तृत्वयोरधिकृतत्वविज्ञाननिवृत्तिः तस्य फलम्, यमवोचाम त्वंशब्दवाच्यमर्थं श्रोतुं मन्तुं च अधिकृतमविज्ञातविज्ञानफलार्थम् । प्राक्च एतस्माद्विज्ञानात् अहमेवं करिष्याम्यग्निहोत्रादीनि कर्माणि, अहमत्राधिकृतः, एषां च कर्मणां फलमिहामुत्र च भोक्ष्ये, कृतेषु वा कर्मसु कृतकर्तव्यः स्याम्– इत्येवं कर्तृत्वभोक्तृत्वयोरधिकृतोऽस्मीत्यात्मनि यद्विज्ञानमभूत् तस्य, यत्सज्जगतो मूलम् एकमेवाद्वितीयं तत्त्वमसीत्यनेन वाक्येन प्रतिबुद्धस्य निवर्तते, विरोधात्—न हि एकस्मिन्नद्वितीये आत्मनि अयमहमस्मीति विज्ञाते ममेदम् अन्यदनेन कर्तव्यम् इदं कृत्वा अस्य फलं भोक्ष्ये– इति वा भेदविज्ञानमुपपद्यते । तस्मात् सत्सत्याद्वितीयात्मविज्ञाने विकारानृतजीवात्मविज्ञानं निवर्तते इति युक्तम् । ननु ‘तत्त्वमसि’ इत्यत्र त्वंशब्दवाच्येऽर्थे सद्बु-

द्धिरादिश्यते— यथा आदित्यमनआदिषु ब्रह्मादिबुद्धिः, यथा च लोके प्रतिमादिषु विष्ण्वादिबुद्धिः, तद्वत्; न तु सदेव त्वमिति; यदि सदेव श्वेतकेतुः स्यात्, कथमात्मानं न विजानीयात्, येन तस्मै तत्त्वमसीत्युपदिश्यते? न, आदित्यादिवाक्यवैलक्षण्यात्— 'आदित्यो ब्रह्म' इत्यादौ इतिशब्दव्यवधानात् न साक्षाद्ब्रह्मत्वं गम्यते, रूपादिमत्त्वाच्च आदित्यादीनाम्। आकाशमनसोश्च इतिशब्दव्यवधानादेव अब्रह्मत्वम्। इह तु सत एवेह प्रवेशं दर्शयित्वा 'तत्त्वमसि' इति निरङ्कुशं सदात्मभावमुपदिशति। ननु पराक्रमादिगुणः सिंहोऽसि त्वम् इतिवत् तत्त्वमसीति स्यात्। न, मृदादिवत् सदेकमेवाद्वितीयं सत्यम् इत्युपदेशात्। न च उपचारविज्ञानात् 'तस्य तावदेव चिरम्' इति सत्संपत्तिरुपदिश्येत। मृषात्वादुपचारविज्ञानस्य—त्वमिन्द्रो यम इतिवत्। नापि स्तुतिः, अनुपास्यत्वाच्छ्वेतकेतोः। नापि सत् श्वेतकेतुत्वोपदेशेन स्तूयेत—न हि राजा दासस्त्वमिति स्तुत्यः स्यात्। नापि सतः सर्वात्मन एकदेशनिरोधो युक्तः तत्त्वमसीति—देशाधिपतेरिव ग्रामाध्यक्षस्त्वमिति। न च अन्या गतिरिह सदात्मत्वोपदेशात् अर्थान्तरभूता संभवति। ननु सदस्मीति बुद्धिमात्रमिह कर्तव्यतया चोद्यते न त्वज्ञातं सद-

सीति ज्ञाप्यत इति चेत्। नन्वस्मिन्पक्षेऽपि 'अश्रुतं श्रुतं भवति' इत्याद्यनुपपन्नम्। न, सदस्मीति बुद्धिविधेः स्तुत्यर्थत्वात्। न, 'आचार्यवान्पुरुषो वेद। तस्य तावदेव चिरम्' इत्युपदेशात्। यदि हि सदस्मीति बुद्धिमात्रं कर्तव्यतया विधीयते न तु त्वंशब्दवाच्यस्य सद्रूपत्वमेव, तदा न आचार्यवान्वेद इति ज्ञानोपायोपदेशो वाच्यः स्यात्। यथा 'अग्निहोत्रं जुहुयात्' इत्येवमादिष्वर्थप्राप्तमेव आचार्यवत्त्वमिति, तद्वत्। 'तस्य तावदेव चिरम्' इति च क्षेपकरणं न युक्तं स्यात्, सदात्मतत्त्वे अविज्ञातेऽपि सकृद्बुद्धिमात्रकरणे मोक्षप्रसङ्गात्। न च तत्त्वमसीत्युक्ते नाहं सदिति प्रमाणवाक्यजनिता बुद्धिः निवर्तयितुं शक्या; नोत्पन्नेति वा शक्यं वक्तुम्, सर्वोपनिषद्वाक्यानां तत्परतयैवोपक्षयात्। यथा अग्निहोत्रादिविधिजनिताग्निहोत्रादिकर्तव्यताबुद्धीनामतथार्थत्वमनुत्पन्नत्वं वा न शक्यते वक्तुम्—तद्वत्। यत्तूक्तं सदात्मा सन् आत्मानं कथं न जानीयादिति, नासौ दोषः, कार्यकरणसंघातव्यतिरिक्तः अहं जीवः कर्ता भोक्तेत्यपि स्वभावतः प्राणिनां विज्ञानादर्शनात्। किमु तस्य सदात्मविज्ञानम्। कथमेवं व्यतिरिक्तविज्ञाने असति तेषां कर्तृत्वादिविज्ञानं संभवति दृश्यते च। तद्वत्तस्यापि देहादिष्वात्मबुद्धित्वात् न स्यात्स-

दात्मविज्ञानम् । तस्मात् विकारानृताधिकृतजीवात्मविज्ञान-निवर्तकमेव इदं वाक्यम् 'तत्त्वमसि' इति सिद्धमिति ॥

**इति षोडशखण्डभाष्यम् ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव-
त्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**छान्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः समाप्तः ॥**

# ॥ सप्तमोऽध्यायः ॥

परमार्थतत्त्वोपदेशप्रधानपरः षष्ठोऽध्यायः सदात्मैकत्वनिर्णयपरतयैवोपयुक्तः। न सतोऽर्वाग्विकारलक्षणानि तत्त्वानि निर्दिष्टानीत्यतस्तानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणापि भूमाख्यं निरतिशयं तत्त्वं निर्देक्ष्यामि— शाखाचन्द्रदर्शनवत्, इतीमं सप्तमं प्रपाठकमारभते; अनिर्दिष्टेषु हि सतोऽर्वाक्तत्त्वेषु सन्मात्रे च निर्दिष्टे अन्यदप्यविज्ञातं स्यादित्याशङ्का कस्यचित्स्यात्, सा मा भूदिति वा तानि निर्दिदिक्षति; अथवा सोपानारोहणवत् स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरं च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामीति नामादीनि निर्दिदिक्षति; अथवा नामाद्युत्तरोत्तरविशिष्टानि तत्त्वानि अतितरां च तेषामुत्कृष्टतमं भूमाख्यं तत्त्वमिति तत्स्तुत्यर्थं नामादीनां क्रमेणोपन्यासः। आख्यायिका तु परविद्यास्तुत्यर्था। कथम्? नारदो देवर्षिः कृतकर्तव्यः सर्वविद्योऽपि सन् अना-

त्मज्ञत्वात् शुशोचैव, किमु वक्तव्यम् अन्योऽल्पविज्जन्तुः अकृतपुण्यातिशयोऽकृतार्थ इति ; अथवा नान्यदात्मज्ञानान्निरतिशयश्रेयःसाधनमस्तीत्येतत्प्रदर्शनार्थं सनत्कुमारनारदाख्यायिका आरभ्यते, येन सर्वविज्ञानसाधनशक्तिसंपन्नस्यापि नारदस्य देवर्षेः श्रेयो न बभूव, येनोत्तमाभिजनविद्यावृत्तसाधनशक्तिसंपत्तिनिमित्ताभिमानं हित्वा प्राकृतपुरुषवत् सनत्कुमारमुपससाद श्रेयःसाधनप्राप्तये ; अतः प्रख्यापितं भवति निरतिशयश्रेयःप्राप्तिसाधनत्वमात्मविद्याया इति ॥

**अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥**

अधीहि अधीष्व भगवः भगवन्निति ह किल उपससाद । अधीहि भगव इति मन्त्रः । सनत्कुमारं योगीश्वरं ब्रह्मिष्ठं नारदः उपसन्नवान् । तं न्यायतः उपसन्नं ह उवाच— यदात्मविषये किंचिद्वेत्थ तेन तत्प्रख्यापनेन मामुपसीद इदमहं जाने इति, ततः अहं भवतः विज्ञानात् ते तुभ्यम् ऊर्ध्वं वक्ष्यामि, इत्युक्तवति स ह उवाच नारदः ॥

**ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ साम-**

**वेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥**

ऋग्वेदं भगवः अध्येमि स्मरामि, 'यद्वेत्थ' इति विज्ञानस्य पृष्टत्वात् । तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदं वेदशब्दस्य प्रकृतत्वात् इतिहासपुराणं पञ्चमं वेदं वेदानां भारतपञ्चमानां वेदं व्याकरणमित्यर्थः । व्याकरणेन हि पदादिविभागशः ऋग्वेदादयो ज्ञायन्ते; पित्र्यं श्राद्धकल्पम्; राशिं गणितम्; दैवम् उत्पातज्ञानम्; निधिं महाकालादिनिधिशास्त्रम्; वाकोवाक्यं तर्कशास्त्रम्; एकायनं नीतिशास्त्रम्; देवविद्यां निरुक्तम्; ब्रह्मणः ऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितयः; भूतविद्यां भूततन्त्रम्; क्षत्रविद्यां धनुर्वेदम्; नक्षत्रविद्यां ज्यौतिषम्; सर्पदेवजनविद्यां सर्पविद्यां गारुडं देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि; एतत्सर्वं हे भगवः अध्येमि ॥

**सोऽहं भगवो मन्त्रविदेवास्मि नात्म-**

**विच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥**

सोऽहं भगवः एतत्सर्वं जानन्नपि मन्त्रविदेवास्मि शब्दार्थमात्रविज्ञानवानेवास्मीत्यर्थः । सर्वो हि शब्दः अभिधानमात्रम् अभिधानं च सर्वं मन्त्रेष्वन्तर्भवति । मन्त्रविदेवास्मि मन्त्रवित्कर्मविदित्यर्थः। 'मन्त्रेषु कर्माणि' इति हि वक्ष्यति । न आत्मवित् न आत्मानं वेद्मि । नन्वात्मापि मन्त्रैः प्रकाश्यत एवेति कथं मन्त्रविच्चेत् नात्मवित्? न, अभिधानाभिधेयभेदस्य विकारत्वात् । न च विकार आत्मेष्यते । नन्वात्माप्यात्मशब्देन अभिधीयते । न, 'यतो वाचो निवर्तन्ते', 'यत्र नान्यत्पश्यति' इत्यादिश्रुतेः । कथं तर्हि 'आत्मैवाधस्तात्' 'स आत्मा' इत्यादिशब्दाः आत्मानं प्रत्याययन्ति? नैष दोषः । देहवति प्रत्यगात्मनि भेदविषये प्रयुज्यमानः शब्दः देहादीनामात्मत्वे प्रत्याख्यायमाने यत्परिशिष्टं सत्, अवाच्यमपि प्रत्याययति— यथा सराजिकायां दृश्यमानायां सेनायां छत्रध्वजपताकादिव्यवहिते अदृश्यमानेऽपि

राजनि एष राजा दृश्यत इति भवति शब्दप्रयोगः; तत्र को-ऽसौ राजेति राजविशेषनिरूपणायां दृश्यमानेतरप्रत्याख्याने अन्यस्मिन्नदृश्यमानेऽपि राजनि राजप्रतीतिर्भवेत्— तद्वत्। तस्मात्सोऽहं मन्त्रवित् कर्मविदेवास्मि, कर्मकार्यं च सर्वं विकार इति विकारज्ञ एवास्मि, न आत्मवित् न आत्मप्रकृतिस्वरूपज्ञ इत्यर्थः। अत एवोक्तम् 'आचार्यवान्पुरुषो वेद' इति; 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभ्यश्च। श्रुतमागमज्ञानमस्त्येव हि यस्मात् मे मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यः तरति अतिक्रामति शोकं मनस्तापम् अकृतार्थबुद्धिताम् आत्मवित् इति; अतः सोऽहमनात्मवित्त्वात् हे भगवः शोचामि अकृतार्थबुद्ध्या संतप्ये सर्वदा; तं मा मां शोकस्य शोकसागरस्य पारम् अन्तं भगवान् तारयतु आत्मज्ञानोडुपेन कृतार्थबुद्धिमापादयतु अभयं गमयत्वित्यर्थः। तम् एवमुक्तवन्तं ह उवाच— यद्वै किंच एतदध्यगीष्ठाः अधीतवानसि, अध्ययनेन तदर्थज्ञानमुपलक्ष्यते, ज्ञातवानसीत्येतत्, नामैवैतत्, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः॥

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वा-**

**कोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥ ४ ॥**

नाम वा ऋग्वेदो यजुर्वेद इत्यादि नामैवैतत् । नामोपास्स्व ब्रह्मेति ब्रह्मबुद्धया—यथा प्रतिमां विष्णुबुद्धया उपास्ते, तद्वत् ॥

**स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥**

स यस्तु नाम ब्रह्मेत्युपास्ते, तस्य यत्फलं भवति, तच्छृणु — यावन्नाम्नो गतं नाम्नो गोचरं तत्र तस्मिन् नामविषये अस्य यथाकामचारः कामचरणं राज्ञ इव स्वविषये भवति । यो नाम ब्रह्मेत्युपास्ते इत्युपसंहारः । किमस्ति भगवः नाम्नो भूयः अधिकतरं यद्ब्रह्मदृष्ट्यर्हमन्यदित्यभिप्रायः । सनत्कुमार आह— नाम्नो वाव भूयः अस्त्येवेति । उक्तः आह— यद्यस्ति तन्मे भगवान्ब्रवीतु इति ॥

इति प्रथमखण्डभाष्यम् ॥

## द्वितीयः खण्डः ॥

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

वाग्वाव । वागिति इन्द्रियं जिह्वामूलादिष्वष्टसु स्थानेषु स्थितं वर्णानामभिव्यञ्जकम् । वर्णाश्च नामेति नाम्नो वाग्भू-

यसीत्युच्यते। कार्याद्धि कारणं भूयो दृष्टं लोके— यथा पुत्रात्पिता, तद्वत्। कथं च वाङ्नाम्नो भूयसीति, आह—वाग्वा ऋग्वेदं विज्ञापयति— अयम् ऋग्वेद इति। तथा यजुर्वेदमित्यादि समानम्। हृदयज्ञं हृदयप्रियम्; तद्विपरीतमहृदयज्ञम्। यत् यदि वाङ् नाभविष्यत् धर्मादि न व्यज्ञापयिष्यत्, वागभावे अध्ययनाभावः अध्ययनाभावे तदर्थश्रवणाभावः तच्छ्रवणाभावे धर्मादि न व्यज्ञापयिष्यत् न विज्ञातमभविष्यदित्यर्थः। तस्मात् वागेवैतत् शब्दोच्चारणेन सर्वं विज्ञापयति। अतः भूयसी वाङ्नाम्नः। तस्माद्वाचं ब्रह्मेत्युपास्स्व॥

**स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥ २॥**

**इति द्वितीयः खण्डः॥**

समानमन्यत्॥

इति द्वितीयखण्डभाष्यम्॥

———*———

## तृतीयः खण्डः ॥

---

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥

मनः मनस्यनविशिष्टमन्तःकरणं वाचः भूयः। तद्धि मनस्यनव्यापारवत् वाचं वक्तव्ये प्रेरयति। तेन वाक् मनस्यन्तर्भवति। यच्च यस्मिन्नन्तर्भवति तत्तस्य व्यापकत्वात् ततो भूयो भवति। यथा वै लोके द्वे वा आमलके फले द्वे वा कोले बदरफले द्वौ वा अक्षौ विभीतकफले मुष्टिरनुभवति मुष्टिस्ते फले व्याप्नोति मुष्टौ हि ते अन्तर्भवतः, एवं वाचं च नाम च आमलकादिवत् मनोऽनुभवति। स यदा पुरुषः यस्मिन्काले मनसा अन्तःकरणेन मनस्यति, मनस्यनं विवक्षाबुद्धिः, कथं

मन्त्रान् अधीयीय उच्चारयेयम्— इत्येवं विवक्षां कृत्वा अथाधीते । तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वा अथ कुरुते । पुत्रांश्च पशूंश्च इच्छेयेति प्राप्तीच्छां कृत्वा तत्प्राप्त्युपायानुष्ठानेन अथेच्छते, पुत्रादीन्प्राप्नोतीत्यर्थः । तथा इमं च लोकम् अमुं च उपायेन इच्छेयेति तत्प्राप्त्युपायानुष्ठानेन अथेच्छते प्राप्नोति । मनो हि आत्मा, आत्मनः कर्तृत्वं भोक्तृत्वं च सति मनसि नान्यथेति मनो हि आत्मेत्युच्यते । मनो हि लोकः, सत्येव हि मनसि लोको भवति तत्प्राप्त्युपायानुष्ठानं च इति मनो हि लोकः यस्मात्, तस्मान्मनो हि ब्रह्म । यत एवं तस्मान्मन उपास्स्वेति ॥

**स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति तृतीयः खण्डः ॥**

स यो मन इत्यादि समानम् ॥

इति तृतीयखण्डभाष्यम् ॥

## चतुर्थः खण्डः ॥

---

**संकल्पो वाव मनसो भूयान्यदा वै संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

संकल्पो वाव मनसो भूयान् । संकल्पोऽपि मनस्यनवत् अन्तःकरणवृत्तिः, कर्तव्याकर्तव्यविषयविभागेन समर्थनम् । विभागेन हि समर्थिते विषये चिकीर्षाबुद्धिः मनस्यनानन्तरं भवति । कथम्? यदा वै संकल्पयते कर्तव्यादिविषयान्विभजते—इदं कर्तुं युक्तम् इदं कर्तुमयुक्तमिति, अथ मनस्यति मन्त्रानधीयीयेत्यादि । अथ अनन्तरं वाचम् ईरयति मन्त्राद्युच्चारणे । तां च वाचम् उ नाम्नि नामोच्चारणनिमित्तं विवक्षां कृत्वा ईरयति । नाम्नि नामसामान्ये मन्त्राः शब्दविशेषाः सन्तः एकं भवन्ति अन्तर्भवन्तीत्यर्थः । सामान्ये हि विशेषः अन्तर्भवति । मन्त्रेषु कर्माण्येकं भवन्ति । मन्त्रप्रकाशितानि कर्माणि क्रियन्ते, न अमन्त्रकमस्ति कर्म । यद्धि मन्त्रप्रकाशनेन लब्धसत्ताकं सत् कर्म, ब्राह्मणेनेदं कर्तव्यम् अस्मै फलायेति विधीयते, याप्युत्पत्तिर्ब्राह्मणेषु कर्मणां दृश्यते, सापि मन्त्रेषु लब्धसत्ताकानामेव कर्मणां स्पष्टीकरणम् । न हि मन्त्राप्रका-

शितं कर्म किंचित् ब्राह्मणे उत्पन्नं दृश्यते । त्रयीविहितं कर्मेति प्रसिद्धं लोके; त्रयीशब्दश्च ऋग्यजुःसामसमाख्या । मन्त्रेषु कर्माणि कवयो यान्यपश्यन्— इति च आथर्वणे । तस्माद्युक्तं मन्त्रेषु कर्माण्येकं भवन्तीति ॥

**तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तापश्च तेजश्च तेषाᳪं संक्लृप्त्यै वर्षᳪं संकल्पते वर्षस्य संक्लृप्त्या अन्नᳪं संकल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणानाᳪं संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणाᳪं संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणाᳪं संक्लृप्त्यै लोकः संकल्पते लोकस्य संक्लृप्त्यै सर्वᳪं संकल्पते स एष संकल्पः संकल्पमुपास्स्वेति ॥ २ ॥**

तानि ह वा एतानि मनआदीनि, संकल्पैकायनानि संकल्पः एको अयनं गमनं प्रलयः येषां तानि संकल्पैकायनानि, संक-

ल्पात्मकानि उत्पत्तौ, संकल्पे प्रतिष्ठितानि स्थितौ। समक्लृपतां संकल्पं कृतवत्याविव हि द्यौश्च पृथिवी च द्यावापृथिवी, द्यावापृथिव्यौ निश्चले लक्ष्येते । तथा समकल्पेतां वायुश्चाकाशं च एतावपि संकल्पं कृतवन्ताविव । तथा समकल्पन्त आपश्च तेजश्च, स्वेन रूपेण निश्चलानि लक्ष्यन्ते । यतस्तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संकल्पनिमित्तं वर्षं संकल्पते समर्थीभवति । तथा वर्षस्य संक्लृप्त्यै संकल्पनिमित्तम् अन्नं संकल्पते । वृष्टेर्हि अन्नं भवति। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते । अन्नमया हि प्राणाः अन्नोपष्टम्भकाः । 'अन्नं दाम' इति हि श्रुतिः । तेषां संक्लृप्त्यै मन्त्राः संकल्पन्ते । प्राणवान्हि मन्त्रानधीते नाबलः । मन्त्राणां हि संक्लृप्त्यै कर्माण्यग्निहोत्रादीनि संकल्पन्ते अनुष्ठीयमानानि मन्त्रप्रकाशितानि समर्थीभवन्ति फलाय । ततो लोकः फलं संकल्पते कर्मकर्तृसमवायितया समर्थीभवतीत्यर्थः। लोकस्य संक्लृप्त्यै सर्वं जगत् संकल्पते स्वरूपावैकल्याय। एतद्धीदं सर्वं जगत् यत्फलावसानं तत्सर्वं संकल्पमूलम् । अतः विशिष्टः स एष संकल्पः। अतः संकल्पमुपास्स्व—इत्युक्त्वा फलमाह तदुपासकस्य ॥

**स यः संकल्पं ब्रह्मेत्युपास्ते संक्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठिता-**

**न् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभि-सिध्यति यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मे-त्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवा-न्ब्रवीत्विति ॥ ३ ॥**

इति चतुर्थः खण्डः ॥

स यः संकल्पं ब्रह्मेति ब्रह्मबुद्ध्या उपास्ते, संक्लृप्तान्वै धात्रा अस्येमे लोकाः फलमिति क्लृप्तान् समर्थितान् संकल्पि-तान् स विद्वान् ध्रुवान् नित्यान् अत्यन्ताध्रुवापेक्षया, ध्रुवश्च स्वयम्, लौकिनो हि अध्रुवत्वे लोके ध्रुवक्लृप्तिर्व्यर्थेति ध्रुवः सन् प्रतिष्ठितानुपकरणसंपन्नानित्यर्थः, पशुपुत्रादिभिः प्रतितिष्ठतीति दर्शनात्, स्वयं च प्रतिष्ठितः आत्मीयोपक-रणसंपन्नः अव्यथमानान् अमित्रादित्रासरहितान् अव्यथमा-नश्च स्वयम् अभिसिध्यति अभिप्राप्नोतीत्यर्थः । यावत्सं-कल्पस्य गतं संकल्पगोचरः तत्रास्य यथाकामचारो भ-वति, आत्मनः संकल्पस्य, न तु सर्वेषां संकल्पस्येति, उत्त-रफलविरोधात् । यः संकल्पं ब्रह्मेत्युपास्ते इत्यादि पूर्ववत् ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चमः खण्डः ॥

**चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

चित्तं वाव संकल्पाद्भूयः । चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वम् अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च, तत्संकल्पादपि भूयः । कथम्? यदा वै प्राप्तं वस्तु इदमेवं प्राप्तमिति चेतयते, तदा तदादानाय वा अपोहाय वा अथ संकल्पयते अथ मनस्यतीत्यादि पूर्ववत् ॥

**तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥**

तानि संकल्पादीनि कर्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तोत्पत्तीनि चित्ते प्रतिष्ठितानि चित्तस्थितानी-

त्यपि पूर्ववत् । किंच चित्तस्य माहात्म्यम् । यस्माच्चित्तं संकल्पादिमूलम्, तस्मात् यद्यपि बहुवित् बहुशास्त्रादिपरिज्ञानवान्सन् अचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति, तं निपुणाः लौकिकाः नायमस्ति विद्यमानोऽप्यसत्सम एवेति एनमाहुः । यच्चायं किंचित् शास्त्रादि वेद श्रुतवान् तदप्यस्य वृथैवेति कथयन्ति । कस्मात्? यद्ययं विद्वान्स्यात् इत्थमेवमचित्तो न स्यात्, तस्मादस्य श्रुतमप्यश्रुतमेवेत्याहुरित्यर्थः । अथ अल्पविदपि यदि चित्तवान्भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैव उत अपि शुश्रूषन्ते श्रोतुमिच्छन्ति तस्माच्च । चित्तं ह्येवैषां संकल्पादीनाम् एकायनमित्यादि पूर्ववत् ॥

**स यश्चित्तं ब्रह्मेत्युपास्ते चितान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥**

चितान् उपचितान्बुद्धिमद्गुणैः स चित्तोपासकः ध्रुवानित्यादि च उक्तार्थम् ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठः खण्डः ॥

---

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति षष्ठः खण्डः ॥

ध्यानं वाव चित्ताद्भूयः । ध्यानं नाम शास्त्रोक्तदेवताद्यालम्बनेष्वचलः भिन्नजातीयैरनन्तरितः प्रत्ययसंतानः, एकाग्रतेति यमाहुः । दृश्यते च ध्यानस्य माहात्म्यं फलतः ।

कथम्? यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभे, एवं ध्यायतीव निश्चला दृश्यते पृथिवी। ध्यायतीवान्तरिक्षमित्यादि समानमन्यत्। देवाश्च मनुष्याश्च देवमनुष्याः मनुष्या एव वा देवसमाः देवमनुष्याः शमादिगुणसंपन्नाः मनुष्याः देवस्वरूपं न जहतीत्यर्थः। यस्मादेवं विशिष्टं ध्यानम्, तस्मात् य इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महत्तां महत्त्वं प्राप्नुवन्ति धनादिमहत्त्वहेतुं लभन्त इत्यर्थः। ध्यानापादांशा इव ध्यानस्य आपादनम् आपादः ध्यानफललाभ इत्येतत्, तस्यांशः अवयवः कला काचिद्ध्यानफललाभकलावन्त इवैवेत्यर्थः। ते भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इव। अथ ये पुनरल्पाः क्षुद्राः किंचिदपि धनादिमहत्त्वैकदेशमप्राप्ताः ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासकाः उपवादिनः परदोषं सामीप्ययुक्तमेव वदितुं शीलं येषां ते उपवादिनश्च भवन्ति। अथ ये महत्त्वं प्राप्ताः धनादिनिमित्तं ते अन्यान्प्रति प्रभवन्तीति प्रभवः विद्याचार्यराजेश्वरादयो ध्यानापादांशा इवेत्याद्युक्तार्थम्। अतः दृश्यते ध्यानस्य महत्त्वं फलतः; अतः भूयश्चित्तात्; अतस्तदुपास्स्व इत्याद्युक्तार्थम्॥

इति षष्ठखण्डभाष्यम्॥

---

## सप्तमः खण्डः ॥

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेद-माथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्प-देवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवन-स्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

विज्ञानं वाव ध्यानाद्भूयः । विज्ञानं शास्त्रार्थविषयं ज्ञानं तस्य ध्यानकारणत्वात् ध्यानाद्भूयस्त्वम् । कथं च तस्य भूयस्त्वमिति, आह— विज्ञानेन वै ऋग्वेदं विजानाति अयमृग्वेद इति प्रमाणतया यस्यार्थज्ञानं ध्यानकारणम् ।

तथा यजुर्वेदमित्यादि । किंच पश्वादींश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी लोकतः स्मार्ते वा दृष्टविषयं च सर्वं विज्ञानेनैव विजानातीत्यर्थः । तस्माद्युक्तं ध्यानाद्विज्ञानस्य भूयस्त्वम् । अतो विज्ञानमुपास्स्वेति ॥

**स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमः खण्डः ॥**

शृणु उपासनफलं विज्ञानवतः । विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोकान् ज्ञानवतश्च अभिसिध्यति अभिप्राप्नोति । विज्ञानं शास्त्रार्थविषयं ज्ञानम् , अन्यविषयं नैपुण्यम् , तद्वद्भिर्युक्ताँल्लोकान्प्राप्नोतीत्यर्थः । यावद्विज्ञानस्येत्यादि पूर्ववत् ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टमः खण्डः ॥

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति अष्टमः खण्डः ॥

बलं वाव विज्ञानाद्भूयः । बलमित्यन्नोपयोगजनितं मनसो विज्ञेये प्रतिभानसामर्थ्यम् । अनशनादृगादीनि 'न वै मा प्रतिभान्ति भो' इति श्रुतेः । शरीरेऽपि तदेवोत्थानादिसामर्थ्यं यस्माद्विज्ञानवतां शतमप्येकः प्राणी बलवानाकम्पयते यथा हस्ती मत्तो मनुष्याणां शतं समुदितमपि । यस्मादेवमन्नाद्युपयोगनिमित्तं बलम्, तस्मात्स पुरुषः यदा बली बलेन तद्वान्भवति अथोत्थाता उत्थानस्य कर्ता उत्तिष्ठंश्च गुरूणामाचार्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्ता भवति परिचरन् उपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवतीत्यर्थः । उपसीदंश्च सामीप्यं गच्छन् एकाग्रतया आचार्यस्यान्यस्य च उपदेष्टुः गुरोर्द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । तत इदमेभिरुक्तम् एवमुपपद्यत इत्युपपत्तितो मन्ता भवति; मन्वानश्च बोद्धा भवति एवमेवेदमिति । तत एवं निश्चित्य तदुक्तार्थस्य कर्ता अनुष्ठाता भवति विज्ञाता अनुष्ठानफलस्यानुभविता भवतीत्यर्थः । किंच बलस्य माहात्म्यम्— बलेन वै पृथिवी तिष्ठतीत्यादि ऋज्वर्थम् ॥

इति अष्टमखण्डभाष्यम् ॥

---*---

## नवमः खण्डः ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाद्रष्टाश्रोतामन्ताबोद्धाकर्ताविज्ञाता भवत्यथान्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

अन्नं वाव बलाद्भूयः, बलहेतुत्वात् । कथमन्नस्य बलहेतुत्वमिति, उच्यते— यस्माद्बलकारणमन्नम्, तस्मात् यद्यपि कश्चिद्दश रात्रीर्नाश्नीयात्, सोऽन्नोपयोगनिमित्तस्य बलस्य हान्या म्रियते; यद्यु ह जीवेत्— दृश्यन्ते हि मासमप्यनश्नन्तो जीवन्तः— अथवा स जीवन्नपि अद्रष्टा भवति गुरोरपि, तत एव अश्रोतेत्यादि पूर्वविपरीतं सर्वं भवति । अथ यदा बहून्यहान्यनशितः दर्शनादिक्रियास्वसमर्थः सन् अन्नस्यायी, आगमनम् आयः अन्नस्य प्राप्तिरित्यर्थः, सः यस्य विद्यते सोऽन्नस्यायी । आयै इत्येतद्वर्णव्यत्ययेन ।

अथ अन्नस्याया इत्यपि पाठे एवमेवार्थः, द्रष्टेत्यादिकार्यश्रवणात् । दृश्यते हि अन्नोपयोगे दर्शनादिसामर्थ्यम्, न तदप्राप्तौ ; अतोऽन्नमुपास्स्वेति ॥

**स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥**

इति नवमः खण्डः ॥

फलं च अन्नवतः प्रभूतान्नान्वै स लोकान् पानवतः प्रभूतोदकांश्च अन्नपानयोर्नित्यसंबन्धात् लोकानभिसिध्यति । समानमन्यत् ॥

इति नवमखण्डभाष्यम् ॥

## दशमः खण्डः ॥

आपो वावान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥

आपो वाव अन्नाद्भूयस्य अन्नकारणत्वात् । यस्मादेवं तस्मात् यदा यस्मिन्काले सुवृष्टिः सस्यहिता शोभना वृष्टिः न भवति, तदा व्याधीयन्ते प्राणा दुःखिनो भवन्ति । किंनिमित्तमिति, आह— अन्नमस्मिन्संवत्सरे नः कनीयः अल्पतरं भविष्यतीति । अथ पुनर्यदा सुवृष्टिर्भवति, तदा आनन्दिनः सुखिनः हृष्टाः प्राणाः प्राणिनः भवन्ति अन्नं

बहु प्रभूतं भविष्यतीति । अप्संभवत्वान्मूर्तस्य अन्नस्य आप एवेमा मूर्ताः मूर्तभेदाकारपरिणता इति मूर्ताः—येयं पृथिवी यदन्तरिक्षमित्यादि । आप एवेमा मूर्ताः; अतः अप उपास्स्वेति ॥

**स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाꣳस्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

इति दशमः खण्डः ॥

फलम्—स यः अपो ब्रह्मेत्युपास्ते आप्नोति सर्वान्कामान् काम्यान्मूर्तिमतो विषयानित्यर्थः । अप्संभवत्वाच्च तृप्तेरम्बूपासनात्तृप्तिमांश्च भवति । समानमन्यत् ॥

इति दशमखण्डभाष्यम् ॥

## एकादशः खण्डः ॥

---

तेजो वाव वायाद्भूयो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उपास्स्वेति ॥ १ ॥

तेजो वाव अद्भ्यो भूयः, तेजसोऽप्कारणत्वात् । कथमप्कारणत्वमिति, आह—यस्मादब्योनिस्तेजः, तस्मात् तद्वा एतत्तेजो वायुमागृह्य अवष्टभ्य स्वात्मना निश्चलीकृत्य वायुम् आकाशमभितपति आकाशमभिव्याप्नुवत्तपति यदा, तदा आहुर्लौकिकाः—निशोचति संतपति सामान्येन जगत्, नितपति देहान्, अतो वर्षिष्यति वै इति । प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानम् । तेज एव तत्पूर्वमात्मानमुद्भूतं दर्शयित्वा अथ अनन्तरम् अपः सृजते, अतः अप्स्रष्टृत्वाद्भूयोऽद्भ्यस्तेजः । किंचान्यत्, तदेतत्तेज एव

स्तनयित्नुरूपेण वर्षहेतुर्भवति । कथम्? ऊर्ध्वाभिश्च ऊर्ध्वगाभिः विद्युद्भिः तिरश्चीभिश्च तिर्यग्गताभिश्च सह आह्लादाः स्तनयनशब्दाश्चरन्ति । तस्मात्तद्दर्शनादाहुर्लौकिकाः—विद्योतते स्तनयति, वर्षिष्यति वै इत्याद्युक्तार्थम् । अतस्तेज उपास्स्वेति ॥

**स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

इति एकादशः खण्डः ॥

तस्य तेजस उपासनफलम्—तेजस्वी वै भवति । तेजस्वत एव च लोकान्भास्वतः प्रकाशवतः अपहततमस्कान् बाह्याध्यात्मिकाज्ञानाद्यपनीततमस्कान् अभिसिध्यति । ऋज्वर्थमन्यत् ॥

इति एकादशखण्डभाष्यम् ॥

## द्वादशः खण्डः ॥

---

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥

आकाशो वाव तेजसो भूयान्, वायुसहितस्य तेजसः कारणत्वाद्व्योम्नः। 'वायुमागृह्य' इति तेजसा सहोक्तः वायुरिति पृथगिह नोक्तस्तेजसः। कारणं हि लोके कार्याद्भूयो दृष्टम्—यथा घटादिभ्यो मृत्, तथा आकाशो वायुसहितस्य तेजसः कारणमिति ततो भूयान्। कथम्? आकाशे वै सूर्याचन्द्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च तेजोरूपाण्याकाशेऽन्तः। यच्च यस्यान्तर्वर्ति तदल्पम्, भूय इतरत्। किंच आकाशेन आह्वयति च अन्यमन्यः; आहूतश्चेतरः आकाशेन शृणोति; अन्योक्तं च शब्दम् अन्यः प्रतिशृणोति; आकाशे रमते क्रीडत्यन्योन्यं सर्वः; तथा न रमते च आकाशे बन्ध्वादिवियोगे; आकाशे जायते, न मूर्तेनावष्टब्धे। तथा

आकाशमभि लक्ष्य अङ्कुरादि जायते, न प्रतिलोमम्। अत: आकाशमुपास्स्व ॥

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

इति द्वादशः खण्डः ॥

फलं शृणु—आकाशवतो वै विस्तारयुक्तान्स विद्वाँल्लोकान्प्रकाशवत:, प्रकाशाकाशयोर्नित्यसंबन्धात्प्रकाशवतश्च लोकानसंबाधान् संबाधनं संबाध: संबाधोऽन्योन्यपीडा तद्रहितानसंबाधान् उरुगायवत: विस्तीर्णगतीन्विस्तीर्णप्रचाराँल्लोकान अभिसिध्यति। यावदाकाशस्येत्याद्युक्तार्थम् ॥

इति द्वादशखण्डभाष्यम् ॥

———*———

## त्रयोदशः खण्डः ॥

स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति त्रयोदशः खण्डः ॥

स्मरो वाव आकाशाद्भूयः, स्मरणं स्मरोऽन्तःकरण-

धर्मः, स आकाशाद्भूयानिति द्रष्टव्यं लिङ्गव्यत्ययेन। स्मर्तुः स्मरणे हि सति आकाशादि सर्वमर्थवत्, स्मरणवतो भोग्यत्वात्। असति तु स्मरणे सदप्यसदेव, सत्त्वकार्याभावात्। नापि सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगन्तुमित्यतः स्मरणस्य आकाशाद्भूयस्त्वम्। दृश्यते हि लोके स्मरणस्य भूयस्त्वं यस्मात्, तस्माद्यद्यपि समुदिता बहव एकस्मिन्नासीरन् उपविशेयुः, ते तत्र आसीनाः अन्योन्यभाषितमपि न स्मरन्तश्चेत्स्युः, नैव ते कंचन शब्दं शृणुयुः; तथा न मन्वीरन्, मन्तव्यं चेत्स्मरेयुः तदा मन्वीरन्, स्मृत्यभावान्न मन्वीरन्; तथा न विजानीरन्। यदा वाव ते स्मरेयुर्मन्तव्यं विज्ञातव्यं श्रोतव्यं च, अथ शृणुयुः अथ मन्वीरन् अथ विजानीरन्। तथा स्मरेण वै— मम पुत्रा एते— इति पुत्रान्विजानाति, स्मरेण पशून्। अतो भूयस्त्वात्स्मरमुपास्स्वेति। उक्तार्थमन्यत्॥

इति त्रयोदशखण्डभाष्यम्॥

## चतुर्दशः खण्डः ॥

---

**आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥**

आशा वाव स्मराद्भूयसी, आशा अप्राप्तवस्त्वाकाङ्क्षा, आशा तृष्णा काम इति यामाहुः पर्यायैः; सा च स्मराद्भूयसी। कथम्? आशया हि अन्तःकरणस्थया स्मरति स्मर्तव्यम्। आशाविषयरूपं स्मरन् असौ स्मरो भवति। अतः आशेद्धः आशया अभिवर्धितः स्मरभूतः स्मरन् ऋगादीन्मन्त्रानधीते; अधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्माणि कुरुते तत्फलाशयैव; पुत्रांश्च पशूंश्च कर्मफलभूतान इच्छते अभिवाञ्छति; आशयैव तत्साधनान्यनुतिष्ठति। इमं च लोकम् आशेद्ध एव स्मरन लोकसंग्रहहेतुभिरिच्छते। अमुं च लोकम् आशेद्धः स्मरन् तत्साधनानुष्ठानेन इच्छते। अतः आशारशनावबद्धं स्मराकाशादिना-

मपर्यन्तं जगच्चक्रीभूतं प्रतिप्राणि । अतः आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व ॥

**स य आशां ब्रह्मेत्युपास्त आशयास्य सर्वे कामाः समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

इति चतुर्दशः खण्डः ॥

यस्त्वाशां ब्रह्मेत्युपास्ते शृणु तस्य फलम्— आशया सदोपासितया अस्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्ति । अमोघा ह अस्य आशिषः प्रार्थनाः सर्वाः भवन्ति; यत्प्रार्थितं सर्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्ववत् ॥

इति चतुर्दशखण्डभाष्यम् ॥

——*——

## पञ्चदशः खण्डः ॥

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥

नामोपक्रममाशान्तं कार्यकारणत्वेन निमित्तनैमित्तिकत्वेन च उत्तरोत्तरभूयस्तया अवस्थितं स्मृतिनिमित्तसद्भावमाशारशनापशैर्विपाशितं सर्वं सर्वतो बिसमिव तन्तुभिर्यस्मिन्प्राणे समर्पितम्, येन च सर्वतो व्यापिना अन्तर्बहिर्गतेन सूत्रे मणिगणा इव सूत्रेण ग्रथितं विधृतं च, स एष प्राणो वा आशाया भूयान्। कथमस्य भूयस्त्वमिति, आह दृष्टान्तेन समर्थयन् तद्भूयस्त्वम्—यथा वै लोके रथचक्रस्य अराः रथनाभौ समर्पिताः संप्रोताः संप्रवेशिता इत्येतत्, एवमस्मिँल्लिङ्गसंघातरूपे प्राणे प्रज्ञात्मनि दैहिके मुख्ये—यस्मिन्परा देवता नामरूपव्याकरणाय आदर्शादौ प्रतिबिम्बव-

जीवेन आत्मना अनुप्रविष्टा; यश्च महाराजस्येव सर्वाधिकारीश्वरस्य, 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत' इति श्रुतेः; यस्तु च्छायेवानुगत ईश्वरम्, 'तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा' इति कौषीतकिनाम्— अत एवमस्मिन्प्राणे सर्वं यथोक्तं समर्पितम्। अतः स एष प्राणोऽपरतन्त्रः प्राणेन स्वशक्त्यैव याति, नान्यकृतं गमनादिक्रियास्वस्य सामर्थ्यमित्यर्थः। सर्वं क्रियाकारकफलभेदजातं प्राण एव, न प्राणाद्बहिर्भूतमस्तीति प्रकरणार्थः। प्राणः प्राणं ददाति। यद्ददाति तत्स्वात्मभूतमेव। यस्मै ददाति तदपि प्राणायैव। अतः पित्राद्याख्योऽपि प्राण एव ॥

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्व-**

**मस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥**

कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति, उच्यते— सति प्राणे पित्रादिषु पित्रादिशब्दप्रयोगात् तदुत्क्रान्तौ च प्रयोगाभावात् । कथं तदिति, आह— स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तदननुरूपमिव किंचिद्वचनं त्वंकारादियुक्तं प्रत्याह, तदैनं पार्श्वस्था आहुः विवेकिनः—धिक्त्वा अस्तु धिगस्तु त्वामित्येवम् । पितृहा वै त्वं पितुर्हन्तेत्यादि ॥

**अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति ॥ ३ ॥**

अथ एनानेव उत्क्रान्तप्राणान् त्यक्तदेहनाथान् यद्यपि शूलेन समासं समस्य व्यतिषंदहेत् व्यत्यस्य संदहेत्, एवमप्यतिक्रूरं कर्म समासव्यत्यासादिप्रकारेण दहनलक्षणं तद्देहसंबद्धमेव कुर्वाणं नैवैनं ब्रूयुः पितृहेत्यादि । तस्मादन्वयव्य-

तिरेकाभ्यामवगम्यते एतत्पित्राद्याख्योऽपि प्राण एवेति ॥

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥**

**इति पञ्चदशः खण्डः ॥**

तस्मात् प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भवति चलानि स्थिराणि च। स वा एष प्राणविदेवं यथोक्तप्रकारेण पश्यन् फलतो अनुभवन् एवं मन्वानः उपपत्तिभिश्चिन्तयन् एवं विजानन् उपपत्तिभिः संयोज्य एवमेवेति निश्चयं कुर्वन्नित्यर्थः। मननविज्ञानाभ्यां हि संभूतः शास्त्रार्थो निश्चितो दृष्टो भवेत्। अत एवं पश्यन् अतिवादी भवति नामाद्याशान्तमतीत्य वदनशीलो भवतीत्यर्थः। तं चेद्ब्रूयुः तं ब्रह्मादिस्तम्बपर्यन्तस्य हि जगतः प्राण आत्मा अहमिति ब्रुवाणं यदि ब्रूयुः अतिवाद्यसीति, बाढम् अतिवाद्यस्मीति ब्रूयात्, न अपह्नुवीत। कस्माद्धि असावपह्नुवीत? यत्प्राणं सर्वेश्वरम् अयमहमस्मि इत्यात्मत्वेनोपगतः ॥

इति पञ्चदशखण्डभाष्यम् ॥

## षोडशः खण्डः ॥

स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः परमस्तीत्युपरराम, न पूर्ववत्किमस्ति भगवः प्राणाद्भूय इति पप्रच्छ यतः । तमेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं मन्यमानं योग्यं शिष्यं मिथ्याग्रहविशेषात् विप्रच्यावयन् आह भगवान्सनत्कुमारः—

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥**

एष तु वा अतिवदति, यमहं वक्ष्यामि । न प्राणविदतिवादी परमार्थतः । नामाद्यपेक्षं तु तस्यातिवादित्वम् । यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद, सोऽतिवादीत्याह— एष तु वा अतिवदति यः सत्येन परमार्थसत्यविज्ञानवत्तया अतिवदति । सोऽहं त्वां प्रपन्नः भगवः सत्येनातिवदानि ; तथा मां नियुनक्तु भगवान्, यथा अहं सत्येनातिवदानीत्यभिप्रायः । यद्येवं सत्येनातिवदितुमिच्छसि, सत्यमेव तु तावद्विजिज्ञासितव्यमित्युक्त आह नारदः । तथास्तु तर्हि सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छेयं त्वत्तोऽहमिति ॥

इति षोडशखण्डभाष्यम् ॥

## सप्तदशः खण्डः ॥

---

यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥१॥

इति सप्तदशः खण्डः ॥

यदा वै सत्यं परमार्थतः विजानाति— इदं परमार्थतः सत्यमिति, ततः अनृतं विकारजातं वाचारम्भणं हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेव अथ वदति यद्वदति। ननु विकारोऽपि सत्यमेव, 'नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः' 'प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुत्यन्तरात्। सत्यमुक्तं सत्यत्वं श्रुत्यन्तरे विकारस्य, न तु परमार्थापेक्षमुक्तम्। किं तर्हि? इन्द्रियविषयाविषयत्वापेक्षं सच्च त्यच्चेति सत्यमित्युक्तं तद्द्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति। 'प्राणा वै सत्यं तेषामेष सत्यम्' इति च उक्तम्। इहापि तदिष्टमेव। इह तु प्राणविषयात्परमार्थसत्त्यविज्ञाना-

भिमानाद्व्युत्थाप्य नारदं यत्सदेव सत्यं परमार्थतो भूमाख्यम्, तद्विज्ञापयिष्यामीति एष विशेषतो विवक्षितोऽर्थः । नाविजानन्सत्यं वदति; यस्त्वविजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन्परमार्थसद्रूपान्मन्यमानो वदति; न तु ते रूपत्रयव्यतिरेकेण परमार्थतः सन्ति । तथा तान्यपि रूपाणि सदपेक्षया नैव सन्तीत्यतो नाविजानन्सत्यं वदति । विजानन्नेव सत्यं वदति । न च तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह—विज्ञानं त्वेव विजिज्ञासितव्यमिति । यद्येवम्, विज्ञानं भगवो विजिज्ञासे इति । एवं सत्यादीनां च उत्तरोत्तराणां करोत्यन्तानां पूर्वपूर्वहेतुत्वं व्याख्येयम् ॥

इति सप्तदशखण्डभाष्यम् ॥

---

## अष्टादशः खण्डः ॥

**यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥**

यदा वै मनुत इति । मतिः मननं तर्कः ॥

इति अष्टादशखण्डभाष्यम् ॥

## एकोनविंशतितमः खण्डः ॥

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

इति एकोनविंशतितमः खण्डः ॥

मन्तव्यविषये आदरः आस्तिक्यबुद्धिः श्रद्धा ॥

इति एकोनविंशतितमखण्डभाष्यम् ॥

---

## विंशतितमः खण्डः ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

इति विंशतितमः खण्डः ॥

निष्ठा गुरुशुश्रूषादितत्परत्वं ब्रह्मविज्ञानाय ॥

इति विंशतितमखण्डभाष्यम् ॥

---

## एकविंशः खण्डः ॥

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति एकविंशः खण्डः ॥

यदा वै करोति । कृतिः इन्द्रियसंयमः चित्तैकाग्रताकरणं च । सत्यां हि तस्यां निष्ठादीनि यथोक्तानि भवन्ति विज्ञानावसानानि ॥

इति एकविंशखण्डभाष्यम् ॥

---

## द्वाविंशः खण्डः ॥

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति द्वाविंशः खण्डः ॥

सापि कृतिः यदा सुखं लभते सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते तदा भवतीत्यर्थः । यथा दृष्टफलसुखा कृतिः तथेहापि नासुखं लब्ध्वा करोति ।

भविष्यदपि फलं लब्ध्वेत्युच्यते, तदुद्दिश्य प्रवृत्त्युपपत्तेः । अथेदानीं कृत्यादिषूत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रतिभासत इति न तद्विज्ञानाय पृथग्यत्नः कार्य इति प्राप्तम्; तत इदमुच्यते— सुखं त्वेव विजिज्ञासितव्यमित्यादि । सुखं भगवो विजिज्ञास इत्यभिमुखीभूताय आह ॥

इति द्वाविंशखण्डभाष्यम् ॥

---

## त्रयोविंशः खण्डः ॥

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥**

इति त्रयोविंशः खण्डः ॥

यो वै भूमा महत् निरतिशयं बह्विति पर्यायाः, तत्सुखम । ततोऽर्वाक्सातिशयत्वादल्पम् । अतस्तस्मिन्नल्पे सुखं नास्ति, अल्पस्याधिकतृष्णाहेतुत्वात् । तृष्णा च दुःखबीजम् । न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखम् । तृष्णादिदुःखबीजत्वासंभवाद्भूम्नः ॥

इति त्रयोविंशखण्डभाष्यम् ॥

## चतुर्विंशः खण्डः ॥

**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

किंलक्षणोऽसौ भूमेति, आह—यत्र यस्मिन्भूम्नि तत्त्वे न अन्यद्द्रष्टव्यमन्येन करणेन द्रष्टा अन्यो विभक्तो दृश्यात्पश्यति। तथा नान्यच्छृणोति। नामरूपयोरेवान्तर्भावाद्विषयभेदस्य तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणम् अन्येषां च उपलक्षणार्थत्वेन। मननं तु अत्रोक्तं द्रष्टव्यं नान्यन्मनुत इति, प्रायशो मननपूर्वकत्वाद्विज्ञानस्य। तथा नान्यद्विजानाति। एवंलक्षणो यः स भूमा। किमत्र प्रसिद्धान्यदर्शनाभावो भूम्न्युच्यते नान्यत्पश्यतीत्यादिना, अथ अन्यन्न पश्यति, आत्मानं पश्यतीत्येतत्। किंचातः? यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते, तदा द्वैतसंव्यवहारविलक्षणो भूमेत्युक्तं भवति। अथ अन्यदर्शनविशेषप्रतिषेधेन आत्मानं पश्यतीत्युच्यते, तदैकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत्। यद्येवं को दोषः स्यात्? नन्वयमेव दोषः— संसारानिवृत्तिः। क्रियाकारकफलभेदो हि संसार

इति । आत्मैकत्वे एव क्रियाकारकफलभेदः संसारविलक्षण इति चेत्, न, आत्मनो निर्विशेषैकत्वाभ्युपगमे दर्शनादिक्रियाकारकफलभेदाभ्युपगमस्य शब्दमात्रत्वात् । अन्यदर्शनाद्यभावोक्तिपक्षेऽपि यत्र इति अन्यन्न पश्यति इति च विशेषणे अनर्थके स्यातामिति चेन्—दृश्यते हि लोके यत्र शून्ये गृहेऽन्यन्न पश्यतीत्युक्ते स्तम्भादीनात्मानं च न न पश्यतीति गम्यते; एवमिहापीति चेत्, न, तत्त्वमसीत्येकत्वोपदेशादधिकरणाधिकर्तव्यभेदानुपपत्तेः । तथा सदेकमेवाद्वितीयं सत्यमिति षष्ठे निर्धारितत्वात् । 'अदृश्येऽनात्म्ये' 'न संदृशे तिष्ठति रूपमस्य' 'विज्ञातारमरे केन विजानीयात्' इत्यादिश्रुतिभ्यः स्वात्मनि दर्शनाद्यनुपपत्तिः । यत्र इति विशेषणमनर्थकं प्राप्तमिति चेत्, न, अविद्याकृतभेदापेक्षत्वात्, यथा सत्यैकत्वाद्वितीयत्वबुद्धिं प्रकृतामपेक्ष्य सदेकमेवाद्वितीयमिति संख्याद्यनर्हमप्युच्यते, एवं भूम्न्येकस्मिन्नेव यत्र इति विशेषणम् । अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नस्तदभावत्वलक्षणस्य विवक्षितत्वात् नान्यत्पश्यति इति विशेषणम् । तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः । अथ यत्राविद्याविषये अन्योऽन्येनान्यत्पश्यतीति तदल्पम् अविद्याकालभावीत्यर्थः; यथा स्वप्नदृश्यं वस्तु प्राक्

प्रबोधात्तत्कालभावीति, तद्वत् । तत एव तन्मर्त्यं विनाशि स्वप्नवस्तुवदेव । तद्विपरीतो भूमा यस्तदमृतम् । तच्छब्दः अमृतत्वपरः ; स तर्हि एवंलक्षणो भूमा हे भगवन् कस्मिन्प्रतिष्ठित इति उक्तवन्तं नारदं प्रत्याह सनत्कुमारः— स्वे महिम्नीति स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा । यदि प्रतिष्ठामिच्छसि क्वचित्, यदि वा परमार्थमेव पृच्छसि, न महिम्न्यपि प्रतिष्ठित इति ब्रूमः ; अप्रतिष्ठितः अनाश्रितो भूमा क्वचिदपीत्यर्थः ॥

**गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥**

यदि स्वमहिम्नि प्रतिष्ठितः भूमा, कथं तर्ह्यप्रतिष्ठ उच्यते? शृणु— गोअश्वादीह महिमेत्याचक्षते । गावश्चाश्वाश्च गोअश्वं द्वन्द्वैकवद्भावः । सर्वत्र गवाश्वादि महिमेति प्रसिद्धम् । तदाश्रितः तत्प्रतिष्ठश्चैत्रो भवति यथा, नाहमेवं स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति ब्रवीमि, अत्र हेतुत्वेन अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति व्यवहितेन संबन्धः । किंत्वेवं ब्रवीमीति ह उवाच— स एवेत्यादि ॥

इति चतुर्विंशखण्डभाष्यम् ॥

## पञ्चविंशः खण्डः ॥

---

**स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥**

कस्मात्पुनः क्वचिन्न प्रतिष्ठित इति, उच्यते— यस्मात्स एव भूमा अधस्तात् न तद्व्यतिरेकेणान्यद्विद्यते यस्मिन्प्रतिष्ठितः स्यात् । तथोपरिष्टादित्यादि समानम् । सति भूम्नोऽन्यस्मिन्, भूमा हि प्रतिष्ठितः स्यात्; न तु तदस्ति । स एव तु सर्वम् । अतस्तस्मादसौ न क्वचित्प्रतिष्ठितः । 'यत्र नान्यत्पश्यति' इत्यधिकरणाधिकर्तव्यतानिर्देशात् स एवाधस्तादिति च परोक्षनिर्देशात् द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्यचिन्मा भूदिति अथातः अनन्तरम् अहंकारादेशः अहंकारेण आदिश्यत इत्यहंकारादेशः । द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यते अहंकारेण अहमेवाधस्तादित्यादिना ॥

**अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥**

**इति पञ्चविंशः खण्डः ॥**

अहंकारेण देहादिसंघातोऽप्यादिश्यतेऽविवेकिभिः इत्यतः तदाशङ्का मा भूदिति अथ अनन्तरम् आत्मादेशः आत्मनैव केवलेन सत्स्वरूपेण शुद्धेन आदिश्यते। आत्मैव सर्वतः सर्वम्— इत्येवम् एकमजं सर्वतो व्योमवत्पूर्णम् अन्यशून्यं पश्यन् स वा एष विद्वान् मननविज्ञानाभ्याम् आत्मरतिः आत्मन्येव रतिः रमणं यस्य सोऽयमात्मरतिः। तथा आत्मक्रीडः। देहमात्रसाधना रतिः बाह्यसाधना क्रीडा, लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात्। न तथा विदुषः; किं तर्हि, आत्मविज्ञाननिमित्तमेवोभयं भव-

तीत्यर्थः । मिथुनं द्वन्द्वजनितं सुखं तदपि द्वन्द्वनिरपेक्षं यस्य विदुषः । तथा आत्मानन्दः, शब्दादिनिमित्तः आनन्दः अविदुषाम्, न तथा अस्य विदुषः; किं तर्हि, आत्मनिमित्तमेव सर्वं सर्वदा सर्वप्रकारेण च; देहजीवितभोगादिनिमित्तबाह्यवस्तुनिरपेक्ष इत्यर्थः । स एवंलक्षणः विद्वान् जीवन्नेव स्वाराज्येऽभिषिक्तः पतितेऽपि देहे स्वराडेव भवति । यत एवं भवति, तत एव तस्य सर्वेषु लोकेषु कामचारो भवति । प्राणादिषु पूर्वभूमिषु 'तत्रास्य' इति तावन्मात्रपरिच्छिन्नकामचारत्वमुक्तम् । अन्यराजत्वं च अर्थप्राप्तम्, सातिशयत्वात् । यथाप्राप्तस्वाराज्यकामचारत्वानुवादेन तत्तन्निवृत्तिरिहोच्यते—स स्वराडित्यादिना । अथ पुनः ये अन्यथा अतः उक्तदर्शनादन्यथा वैपरीत्येन यथोक्तमेव वा सम्यक् न विदुः, ते अन्यराजानः भवन्ति अन्यः परो राजा स्वामी येषां ते अन्यराजानस्ते । किंच क्षय्यलोकाः क्षय्यो लोको येषां ते क्षय्यलोकाः, भेददर्शनस्य अल्पविषयत्वात्, अल्पं च तन्मर्त्यमित्यवोचाम । तस्मात् ये द्वैतदर्शिनः ते क्षय्यलोकाः स्वदर्शनानुरूप्येणैव भवन्ति; अत एव तेषां सर्वेषु लोकेष्वकामचारो भवति ॥

इति पञ्चविंशखण्डभाष्यम् ॥

---

## षड्विंशः खण्डः ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद्ँ सर्वमिति ॥ १ ॥

तस्य ह वा एतस्येत्यादि स्वाराज्यप्राप्तस्य प्रकृतस्य विदुष इत्यर्थः। प्राक्सदात्मविज्ञानात् स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्तस्योत्पत्तिप्रलयावभूताम्। सदात्मविज्ञाने तु सति इदानीं स्वात्मत एव संवृत्तौ। तथा सर्वोऽप्यन्यो व्यवहार आत्मत एव विदुषः ॥

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताᳪ᳭ सर्वᳪ᳭ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतं च दश चैकश्च सहस्राणि च विᳪ᳭शतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान्सनत्कुमारस्तᳪ᳭ स्कन्द इत्याचक्षते तᳪ᳭ स्कन्द इत्याचक्षते ॥ २ ॥

इति षड्विंशः खण्डः ॥

किंच तत् एतस्मिन्नर्थे एष श्लोकः मन्त्रोऽपि भवति—न पश्यः पश्यतीति पश्यः यथोक्तदर्शी विद्वानित्यर्थः, मृत्युं मरणं रोगं ज्वरादि दुःखतां दुःखभावं चापि न पश्यति। सर्वं ह सर्वमेव स पश्यः पश्यति आत्मानमेव। सर्वं ततः

सर्वमाप्नोति सर्वशः सर्वप्रकारैरिति। किंच स विद्वान् प्राक्सृष्टिप्रभेदात् एकधैव भवति; एकधैव च सन् त्रिधादिभेदैरनन्तभेदप्रकारो भवति सृष्टिकाले; पुनः संहारकाले मूलमेव स्वं पारमार्थिकम् एकधाभावं प्रतिपद्यते स्वतन्त्र एव—इति विद्यां फलेन प्ररोचयन् स्तौति। अथेदानीं यथोक्ताया विद्यायाः सम्यगवभासकारणं मुखावभासकारणस्येव आदर्शस्य विशुद्धिकारणं साधनमुपदिश्यते—आहारशुद्धौ । आह्रियत इत्याहारः शब्दादिविषयविज्ञानं भोक्तुर्भोगाय आह्रियते। तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिः आहारशुद्धिः, रागद्वेषमोहदोषैरसंसृष्टं विषयविज्ञानमित्यर्थः। तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिः नैर्मल्यं भवति। सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवा अविच्छिन्ना स्मृतिः अविस्मरणं भवति। तस्यां च लब्धायां स्मृतिलम्भे सति सर्वेषामविद्याकृतानर्थपाशरूपाणाम् अनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षः विशेषेण प्रमोक्षणं विनाशो भवतीति। यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्येत्यर्थः।. सर्वं शास्त्रार्थमशेषत उक्त्वा आख्यायिकामुपसंहरति श्रुतिः— तस्मै मृदितकषायाय वार्क्षादि-

रिव कषायो रागद्वेषादिदोषः सत्त्वस्य रञ्जनारूपत्वात् सः ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितः मृदितः विनाशितः यस्य नारदस्य, तस्मै योग्याय मृदितकषायाय तमसः अविद्यालक्षणात् पारं परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः । कोऽसौ? भगवान् 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' एवंधर्मा सनात्कुमारः । तमेव सनत्कुमारं देवं स्कन्द इति आचक्षते कथयन्ति तद्विदः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥

इति षड्विंशखण्डभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः समाप्तः ॥



# ॥ अष्टमोऽध्यायः ॥

यद्यपि दिग्देशकालादिभेदशून्यं ब्रह्म 'सत्...एकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' इति षष्ठसप्तमयोरधिगतम्, तथापि इह मन्दबुद्धीनां दिग्देशादिभेदवद्वस्त्विति एवंभाविता बुद्धिः न शक्यते सहसा परमार्थविषया कर्तुमिति, अनधिगम्य च ब्रह्म न पुरुषार्थसिद्धिरिति, तदधिगमाय हृदयपुण्डरीकदेशः उपदेष्टव्यः। यद्यपि सत्सम्यक्प्रत्ययैकविषयं निर्गुणं च आत्मतत्त्वम्, तथापि मन्दबुद्धीनां गुणवत्त्वस्येष्टत्वात् सत्यकामादिगुणवत्त्वं च वक्तव्यम्। तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमेवोपरमो भवति, तथाप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सहसा निवर्तयितुं शक्यत इति ब्रह्मचर्यादिसाधनविशेषो विधातव्यः। तथा यद्यप्यात्मैकत्वविदां गन्तृगमनगन्तव्याभावादविद्यादिशेषस्थितिनिमित्तक्षये गगन इव विद्युदुद्भूत इव वायुः दग्धेन्ध-

न इव अग्निः स्वात्मन्येव निवृत्तिः, तथापि गन्तृगमनादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्धन्यया नाड्या गतिर्वक्तव्येत्यष्टमः प्रपाठक आरभ्यते। दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसदद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति। सन्मार्गस्थास्तावद्भवन्तु ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यते श्रुतिः—

**अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति॥ १॥**

अथ अनन्तरं यदिदं वक्ष्यमाणं दहरम् अल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्मेव वेश्म, द्वारपालादिमत्त्वात्। अस्मिन् ब्रह्मपुरे ब्रह्मणः परस्य पुरम्—राज्ञोऽनेकप्रकृतिमद्यथा पुरम्, तथेदमनेकेन्द्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्मपुरम्। पुरे च वेश्म राज्ञो यथा, तथा तस्मिन्ब्रह्मपुरे शरीरे दहरं वेश्म, ब्रह्मण उपलब्ध्यधिष्ठानमित्यर्थः। यथा विष्णोः सालग्रामः। अस्मिन्हि स्वविकारशुङ्गे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म जीवेन आत्मनेत्युक्तम्। तस्मादस्मिन्हृदयपुण्डरीके वेश्मनि उपसंहृतकरणैर्बाह्यविषय-

विरक्तैः विशेषतो ब्रह्मचर्यसत्यसाधनाभ्यां युक्तैः वक्ष्यमाण-गुणवद्ध्यायमानैः ब्रह्मोपलभ्यत इति प्रकरणार्थः । दहरः अल्पतरः अस्मिन्दहरे वेश्मनि वेश्मनः अल्पत्वात्तदन्तर्वर्तिनोऽल्पतरत्वं वेश्मनः । अन्तराकाशः आकाशाख्यं ब्रह्म । 'आकाशो वै नाम' इति हि वक्ष्यति । आकाश इव अशरीरत्वात् सूक्ष्मत्वसर्वगतत्वसामान्याच्च । तस्मिन्नाकाशाख्ये यदन्तः मध्ये तदन्वेष्टव्यम् । तद्वाव तदेव च विशेषेण जिज्ञासितव्यं गुर्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्करणीयमित्यर्थः ॥

**तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥**

तं चेत् एवमुक्तवन्तमाचार्यं यदि ब्रूयुः अन्तेवासिनश्चोदयेयुः; कथम्? यदिदमस्मिन्ब्रह्मपुरे परिच्छिन्ने अन्तः दहरं पुण्डरीकं वेश्म, ततोऽप्यन्तः अल्पतर एव आकाशः । पुण्डरीक एव वेश्मनि तावत्किं स्यात् । किं ततोऽल्पतरे खे यद्भवेदित्याहुः । दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते, न किंचन विद्यत इत्यभिप्रायः । यदि नाम बदरमात्रं किमपि

विद्यते, किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञासितुः स्यात्? अतः यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन प्रयोजनमित्युक्तवत्सु स आचार्यो ब्रूयादिति श्रुतेर्वचनम् ॥

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥**

शृणुत— तत्र यद्‌ब्रूथ पुण्डरीकान्तःस्थस्य खस्याल्पत्वात् तत्स्थमल्पतरं स्यादिति, तदसत्। न हि खं पुण्डरीकवेश्मगतं पुण्डरीकादल्पतरं मत्वा अवोचं दहरोऽस्मिन्नन्तराकाश इति। किं तर्हि, पुण्डरीकमल्पं तदनुविधायि तत्स्थमन्तःकरणं पुण्डरीकाकाशपरिच्छिन्नं तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिबिम्बरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिःस्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यत इति दहरोऽस्मिन्नन्तराकाश इत्यवोचाम अन्तःकरणोपाधिनिमित्तम्। स्वतस्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशः

भौतिकः, तावानेषोऽन्तर्हृदये आकाशः यस्मिन्नन्वेष्टव्यं विजिज्ञासितव्यं च अवोचाम । नाप्याकाशतुल्यपरिमाणत्वमभिप्रेत्य तावानित्युच्यते । किं तर्हि, ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात् । कथं पुनर्न आकाशसममेव ब्रह्मेत्यवगम्यते, 'येनावृतं खं च दिवं महीं च', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः,' 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः' इत्यादिश्रुतिभ्यः । किं च उभे अस्मिन्द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टे अन्तरेव समाहिते सम्यगाहिते स्थिते । 'यथा वा अरा नाभौ' इत्युक्तं हि; तथा उभावग्निश्च वायुश्चेत्यादि समानम् । यच्च अस्य आत्मन आत्मीयत्वेन देहवतोऽस्ति विद्यते इह लोके । तथा यच्च आत्मीयत्वेन न विद्यते । नष्टं भविष्यच्च नास्तीत्युच्यते । न तु अत्यन्तमेवासत्, तस्य हृद्याकाशे समाधानानुपपत्तेः ॥

**तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा वाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

तं चेत् एवमुक्तवन्तं ब्रूयुः पुनरन्तेवासिनः— अस्मिंश्चेत्

यथोक्ते चेत् यदि ब्रह्मपुरे ब्रह्मपुरोपलक्षितान्तराकाशे इत्यर्थः। इदं सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः। कथमाचार्येणानुक्ताः कामा अन्तेवासिभिरुच्यन्ते? नैष दोषः। यच्च अस्य इहास्ति यच्च नास्तीत्युक्ता एव हि आचार्येण कामाः। अपि च सर्वशब्देन च उक्ता एव कामाः। यदा यस्मिन्काले एतच्छरीरं ब्रह्मपुराख्यं जरा वलीपलितादिलक्षणा वयोहानिर्वा आप्नोति, शस्त्रादिना वा वृक्णं प्रध्वंसते विस्रंसते विनश्यति, किं ततोऽन्यदतिशिष्यते? घटाश्रितक्षीरदधिस्नेहादिवत् घटनाशे देहनाशेऽपि देहाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यतीत्यभिप्रायः। एवं प्राप्ते नाशे किं ततोऽन्यत् यथोक्तादतिशिष्यते अवतिष्ठते, न किंचनावतिष्ठत इत्यभिप्रायः॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं**

**जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥**

एवमन्तेवासिभिश्चोदितः स आचार्यो ब्रूयात् तन्मतिमपनयन् । कथम्? अस्य देहस्य जरया एतत् यथोक्तमन्तराकाशाख्यं ब्रह्म यस्मिन्सर्वं समाहितं न जीर्यति देहवन्न विक्रियत इत्यर्थः । न च अस्य वधेन शस्त्रादिघातेन एतद्धन्यते, यथा आकाशम्; किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः । कथं देहेन्द्रियादिदोषैर्न स्पृश्यत इति एतस्मिन्नवसरे वक्तव्यं प्राप्तम्, तत्प्रकृतव्यासङ्गो मा भूदिति नोच्यते। इन्द्रविरोचनाख्यायिकायामुपरिष्टाद्वक्ष्यामो युक्तितः । एतत्सत्यमवितथं ब्रह्मपुरं ब्रह्मैव पुरं ब्रह्मपुरम्; शरीराख्यं तु ब्रह्मपुरं ब्रह्मोपलक्षणार्थत्वात् । तत्तु अनृतमेव, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः । तद्विकारे अनृतेऽपि देहशुङ्गे ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं व्यावहारिकम् । सत्यं तु ब्रह्मपुरमेतदेव ब्रह्म, सर्वव्यवहारास्पदत्वात् । अतः अस्मिन्पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्वे कामाः, ये बहिर्भवद्भिः प्रार्थ्यन्ते, ते अस्मिन्नेव स्वात्मनि समाहिताः । अतः तत्प्राप्त्युपायमेवानुतिष्ठत, बाह्यविषयतृष्णां त्यजत इत्यभिप्रायः । एष आत्मा भवतां स्वरूपम् । शृणुत तस्य लक्षणम्— अपहतपाप्मा,

अपहृतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरः विगतजरः विमृत्युश्च। तदुक्तं पूर्वमेव न वधेनास्य हन्यत इति; किमर्थं पुनरुच्यते? यद्यपि देहसंबन्धिभ्यां जरामृत्युभ्यां न संबध्यते, अन्यथापि संबन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थम्। विशोकः विगतशोकः। शोको नाम इष्टादिवियोगनिमित्तो मानसः संतापः। विजिघत्सः विगताशनेच्छः। अपिपासः अपानेच्छः। ननु अपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति, कारणप्रतिषेधात्। धर्माधर्मकार्या हि ते इति। जरादिप्रतिषेधेन वा धर्माधर्मयोः कार्याभावे विद्यमानयोरप्यसत्समत्वमिति पृथक्प्रतिषेधोऽनर्थकः स्यात्। सत्यमेवम्, तथापि धर्मकार्यानन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे, 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः, तथा अधर्मकार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत। अतः युक्तस्तन्निवृत्तये जरादीनां धर्माधर्माभ्यां पृथक्प्रतिषेधः। जरादिग्रहणं सर्वदुःखोपलक्षणार्थम्। पापनिमित्तानां तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्य अशक्यत्वात् सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनम्। सत्याः अवितथाः कामा यस्य सोऽयं सत्यकामः। वितथा हि संसा-

रिणां कामाः; ईश्वरस्य तद्विपरीताः । तथा कामहेतवः संकल्पा अपि सत्याः यस्य स सत्यसंकल्पः । संकल्पाः कामाश्च शुद्धसत्त्वोपाधिनिमित्ताः ईश्वरस्य, चित्रगुवत्; न स्वतः 'नेति नेति' इत्युक्तत्वात् । यथोक्तलक्षण एष आत्मा विज्ञेयो गुरुभ्यः शास्त्रतश्च आत्मसंवेद्यतया च स्वाराज्यकामैः । न चेद्विज्ञायते को दोषः स्यादिति, शृणुत अत्र दोषं दृष्टान्तेन— यथा ह्येव इह लोके प्रजाः अन्वाविशन्ति अनुवर्तन्ते यथानुशासनम्; यथेह प्रजाः अन्यं स्वामिनं मन्यमानाः तस्य स्वामिनो यथा यथानुशासनं तथा तथान्वाविशन्ति । किम्? यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागं च अभिकामाः अर्थिन्यः भवन्ति आत्मबुद्ध्यनुरूपम्, तं तमेव च प्रत्यन्तादिम् उपजीवन्तीति । एष दृष्टान्तः अस्वातन्त्र्यदोषं प्रति पुण्यफलोपभोगे ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान्कामाꣳस्तेषाꣳ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान्कामाꣳस्तेषाꣳ सर्वेषु**

**लोकेषु कामचारो भवति ॥ ६ ॥**

**इति प्रथमः खण्डः ॥**

अथ अन्यो दृष्टान्तः तत्क्षयं प्रति तद्यथेहेत्यादिः । तत् तत्र यथा इह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयते अन्तवान्भवति । अथ इदानीं दार्ष्टान्तिकमुपसंहरति— एवमेव अमुत्र अग्निहोत्रादिपुण्यजितो लोकः पराधीनोपभोगः क्षीयत एवेति । उक्तः दोषः एषामिति विषयं दर्शयति— तद्य इत्यादिना । तत् तत्र ये इह अस्मिँल्लोके ज्ञानकर्मणोरधिकृताः योग्याः सन्तः आत्मानं यथोक्तलक्षणं शास्त्राचार्योपदिष्टमननुविद्य यथोपदेशमनु स्वसंवेद्यतामकृत्वा व्रजन्ति देहादस्मात्प्रयन्ति, य एतांश्च यथोक्तान् सत्यान् सत्यसंकल्पकार्यांश्च स्वात्मस्थान्कामान अननुविद्य व्रजन्ति, तेषां सर्वेषु लोकेषु अकामचारः अस्वतन्त्रता भवति— यथा राजानुशासनानुवर्तिनीनां प्रजानामित्यर्थः । अथ ये अन्ये इह लोके आत्मानं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान्कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति— राज्ञ इव सार्वभौमस्य इह लोके ॥

**इति प्रथमखण्डभाष्यम्**

## द्वितीयः खण्डः ॥

**स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥**

कथं सर्वेषु लोकेषु कामचारो भवतीति, उच्यते— य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्यादिसाधनसंपन्नः सन् तत्स्थांश्च सत्यान्कामान्; स त्यक्तदेहः यदि पितृलोककामः पितरो जनयितारः त एव सुखहेतुत्वेन भोग्यत्वात् लोका उच्यन्ते, तेषु कामो यस्य तैः पितृभिः संबन्धेच्छा यस्य भवति, तस्य संकल्पमात्रादेव पितरः समुत्तिष्ठन्ति आत्मसंबन्धितामापद्यन्ते, विशुद्धसत्त्वतया सत्यसंकल्पत्वात् ईश्वरस्येव। तेन पितृलोकेन भोगेन संपन्नः संपत्तिः इष्टप्राप्तिः तया समृद्धः महीयते पूज्यते वर्धते वा महिमानमनुभवति ॥

**अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥**

**अथ यदि भ्रातृलोककामो भवति सं-**

कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

अथ यदि गीतवादित्रलोककामो भवति संकल्पादेवास्य गीतवादित्रे समु-

त्तिष्ठतस्तेन गीतवादित्रलोकेन संपन्नो महीयते ॥ ८ ॥

अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

समानमन्यत् । मातरो जनयित्र्यः अतीताः सुखहेतुभूताः सामर्थ्यात् । न हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य योगिनः इच्छा तत्संबन्धो वा युक्तः ॥

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥

इति द्वितीयः खण्डः ॥

यं यमन्तं प्रदेशमभिकामो भवति, यं च कामं कामयते यथोक्तव्यतिरेकेणापि, सः अस्यान्तः प्राप्तुमिष्टः कामश्च संकल्पादेव समुत्तिष्ठत्यस्य । तेन इच्छाविघाततया अभिप्रेतार्थप्राप्त्या च संपन्नो महीयते इत्युक्तार्थम् ॥

इति द्वितीयखण्डभाष्यम् ॥

## तृतीयः खण्डः ॥

**त इमे सत्याः कामा अनृतापिधाना-स्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥**

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साह-जननार्थमनुक्रोशन्नाह—कष्टमिदं खलु वर्तते, यत्स्वात्मस्थाः शक्यप्राप्या अपि त इमे सत्याः कामाः अनृतापिधानाः, तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु स्त्र्यन्नभोजनाच्छादनादिषु तृष्णा तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानामप्राप्तिरिति अपिधानमिवापिधानम् । कथमनृतापिधाननिमित्तं तेषामलाभ इति, उच्यते—यो यो हि यस्मादस्य जन्तोः पुत्रो भ्राता वा इष्टः इतः अस्माल्लोकात् प्रैति प्रगच्छति म्रियते, तमिष्टं पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपि इह पुनर्दर्शनायेच्छन्नपि न लभते ॥

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

अथ पुनः ये च अस्य विदुषः जन्तोर्जीवाः जीवन्तीह पुत्राः भ्रात्रादयो वा, ये च प्रेताः मृताः इष्टाः संबन्धिनः, यच्चान्यदिह लोके वस्त्रान्नपानादि रत्नानि वा वस्त्विच्छन् न लभते, तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते । अत्र अस्मिन्हार्दाकाशे हि यस्मात् अस्य ते यथोक्ताः सत्याः कामाः वर्तन्ते अनृतापिधानाः । कथमिव तदन्याय्यमिति, उच्यते—तत् तत्र यथा हिरण्यनिधिं हिरण्यमेव पुनर्ग्रहणाय निधातृभिः निधीयत इति निधिः तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तम् अक्षेत्रज्ञाः निधिशास्त्रैर्निधिक्षेत्रमजानन्तः ते निधेः

उपर्युपरि संचरन्तोऽपि निधिं न विन्देयुः शक्यवेदन-मपि, एवमेव इमाः अविद्यावत्यः सर्वा इमाः प्रजाः यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोकः ब्रह्मलोकः तम् अहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले न विन्दन्ति न लभन्ते—एषोऽहं ब्रह्मलोकभावमापन्नोऽस्म्यद्येति । अ-नृतेन हि यथोक्तेन हि यस्मात् प्रत्यूढाः हृताः, स्वरूपाद-विद्यादिदोषैर्बहिरपकृष्टा इत्यर्थः । अतः कष्टमिदं वर्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः ॥

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृदयमिति तस्माद्धृदयमहरह-र्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥**

स वै यः 'आत्मापहतपाप्मा' इति प्रकृतः, वै-शब्देन तं स्मारयति । एषः विवक्षित आत्मा हृदि हृदयपुण्डरीके आकाशशब्देनाभिहितः । तस्य एतस्य हृदयस्य एतदेव निरुक्तं निर्वचनम्, नान्यत् । हृदि अयमात्मा वर्तत इति यस्मात्, तस्माद्धृदयम्, हृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृ-दये आत्मेत्यवगन्तव्यमित्यभिप्रायः । अहरहर्वै प्रत्यहम् एवंवित् हृदि अयमात्मेति जानन् स्वर्गं लोकं हार्दं ब्रह्म एति प्रतिप-द्यते । ननु अनेवंविदपि सुषुप्तकाले हार्दं ब्रह्म प्रतिपद्यते एव,

'सता सोम्य तदा संपन्नः' इत्युक्तत्वात् । बाढमेवम्, तथाप्यस्ति विशेषः— यथा जानन्नजानंश्च सर्वो जन्तुः सद्ब्रह्मैव, तथापि तत्त्वमसीति प्रतिबोधितः विद्वान्—सदेव नान्योऽस्मि— इति जानन् सदेव भवति; एवमेव विद्वानविद्वांश्च सुषुप्ते यद्यपि सत्संपद्यते, तथाप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते । देहपातेऽपि विद्याफलस्यावश्यंभावित्वादित्येष विशेषः ॥

**अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

सुषुप्तकाले स्वेन आत्मना सता संपन्नः सन् सम्यक्प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति संप्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणः, तथापि एवंवित् स्वर्गं लोकमेतीति प्रकृतत्वात् एष संप्रसाद इति संनिहितवद्यत्नविशेषात् सः अथेदं शरीरं हित्वा अस्माच्छरीरात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः । न तु आसनादिव समुत्थायेति इह युक्तम्, स्वेन रूपेणेति विशे-

षणात्— न हि अन्यत उत्थाय स्वरूपं संपत्तव्यम् । स्वरूपमेव हि तत्र भवति प्रतिपत्तव्यं चेत्स्यात् । परं परमात्मलक्षणं विज्ञप्तिस्वभावं ज्योतिरुपसंपद्य स्वास्थ्यमुपगम्येत्येतत् । स्वेन आत्मीयेन रूपेण अभिनिष्पद्यते, प्रागेतस्याः स्वरूपसंपत्तेरविद्यया देहमेव अपरं रूपम् आत्मत्वेनोपगत इति तदपेक्षया इदमुच्यते— स्वेन रूपेणेति । अशरीरता हि आत्मनः स्वरूपम् । यत्स्वं परं ज्योतिः स्वरूपमापद्यते संप्रसादः, एष आत्मेति ह उवाच—स ब्रूयादिति यः श्रुत्या नियुक्तः अन्तेवासिभ्यः । किं च एतदमृतम अविनाशि भूमा 'यो वै भूमा तदमृतम्' इत्युक्तम् । अत एवाभयम् , भूम्नो द्वितीयाभावात् । अत एतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम अभिधानम् । किं तत्? सत्यमिति । सत्यं हि अवितथं ब्रह्म । 'तत्सत्यं स आत्मा' इति हि उक्तम् । अथ किमर्थमिदं नाम पुनरुच्यते? तदुपासनविधिस्तुत्यर्थम् ॥

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥**

इति तृतीयः खण्डः ॥

तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति, सकारस्तकारो यमिति च। ईकारस्तकारे उच्चारणार्थोऽनुबन्धः, ह्रस्वेनैवाक्षरेण पुनः प्रतिनिर्देशात्। तेषां तन् तत्र यत् सत् सकारः तदमृतं सद्ब्रह्म—अमृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः। अथ यत्ति तकारः तन्मर्त्यम्। अथ यत् यम् अक्षरम्, तेनाक्षरेणामृतमर्त्याख्ये पूर्वे उभे अक्षरे यच्छति नियमयति वशीकरोत्यात्मनेत्यर्थः। यत् यस्मात् अनेन यमित्येतेन उभे यच्छति, तस्मात् यम्। संयते इव हि एतेन यमा लक्ष्येते। ब्रह्मनामाक्षरस्यापि इदममृतत्वादिधर्मवत्त्वं महाभाग्यम्, किमुत नामवतः—इत्युपास्यत्वाय स्तूयते ब्रह्म नामनिर्वचनेन। एवं नामवतो वेत्ता एवंवित्। अहरहर्वा एवंवित्स्वर्गं लोकमेतीत्युक्तार्थम्॥

इति तृतीयखण्डभाष्यम्॥

## चतुर्थः खण्डः ॥

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

अथ य आत्मेति । उक्तलक्षणो यः संप्रसादः, तस्य स्वरूपं वक्ष्यमाणैरुक्तैरनुक्तैश्च गुणैः पुनः स्तूयते, ब्रह्मचर्यसाधनसंबन्धार्थम । य एषः यथोक्तलक्षणः आत्मा, स सेतुरिव सेतुः । विधृतिः विधरणः । अनेन हि सर्वं जगद्वर्णाश्रमादिक्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम् । अध्रियमाणं हि ईश्वरेणेदं विश्वं विनश्येद्यतः, तस्मात्स सेतुः विधृतिः । किमर्थं स सेतुरिति, आह— एषां भूरादीनां लोकानां कर्तृकर्मफलाश्रयाणाम् असंभेदाय अविदारणाय अविनाशायेत्येतत् । किंविशिष्टश्चासौ सेतुरिति, आह— नैतम्, सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परिच्छेदके सती नैतं तरतः । यथा अन्ये संसारिणः कालेन अहोरात्रादिलक्षणेन परिच्छेद्या, न तथा अयं कालपरिच्छेद्य इत्यभिप्रायः, 'यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते' इति श्रुत्यन्तरात् । अत एव एनं न जरा तरति न प्राप्नोति ।

तथा न मृत्युः न शोकः न सुकृतं न दुष्कृतम्, सुकृतदुष्कृते धर्माधर्मौ। प्राप्तिरत्र तरणशब्देन अभिप्रेता, नातिक्रमणम्। कारणं हि आत्मा। न शक्यं हि कारणातिक्रमणं कर्तुं कार्येण। अहोरात्रादि च सर्वं सतः कार्यम्। अन्येन हि अन्यस्य प्राप्तिः अतिक्रमणं वा क्रियेत, न तु तेनैव तस्य। न हि घटेन मृत्प्राप्यते अतिक्रम्यते वा। यद्यपि पूर्वम् 'य आत्मापहतपाप्मा' इत्यादिना पाप्मादिप्रतिषेध उक्त एव, तथापीहायं विशेषः—न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते। तत्र अविशेषेण जराद्यभावमात्रमुक्तम्। अहोरात्राद्या उक्ता अनुक्ताश्च अन्ये सर्वे पाप्मानः उच्यन्ते; अतः अस्मादात्मनः सेतोः निवर्तन्ते अप्राप्यैवेत्यर्थः। अपहतपाप्मा हि एष ब्रह्मैव लोकः ब्रह्मलोकः उक्तः॥

**तस्माद्वा एतꣳ सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतꣳ सेतुं तीर्त्वापि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः॥ २॥**

यस्माच्च पाप्मकार्यमान्ध्यादि शरीरवतः स्यात् न त्वशरीरस्य, तस्माद्वा एतमात्मानं सेतुं तीर्त्वा प्राप्य अनन्धो

भवति देहवत्त्वे पूर्वमन्धोऽपि सन् । तथा विद्धः सन् देहवत्त्वे स देहवियोगे सेतुं प्राप्य अविद्धो भवति । तथोपतापी रोगाद्युपतापवान्सन् अनुपतापी भवति । किंच यस्मादहोरात्रे न स्तः सेतौ, तस्माद्वा एतं सेतुं तीर्त्वा प्राप्य नक्तमपि तमोरूपं रात्रिरपि सर्वमहरेवाभिनिष्पद्यते; विज्ञप्त्यात्मज्योतिःस्वरूपमहरिवाहः सदैकरूपं विदुषः संपद्यत इत्यर्थः । सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेण एष ब्रह्मलोकः ॥

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥**

इति चतुर्थः खण्डः ॥

तत् तत्रैवं सति एतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेन शास्त्राचार्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति ये, तेषामेव ब्रह्मचर्यसाधनवतां ब्रह्मविदाम् एष ब्रह्मलोकः, नान्येषां स्त्रीविषयसंपर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परमम् एतत्साधनं ब्रह्मचर्यं ब्रह्मविदामित्यभिप्रायः ॥

इति चतुर्थखण्डभाष्यम् ॥

## पञ्चमः खण्डः ॥

य आत्मा सेतुत्वादिगुणैः स्तुतः, तत्प्राप्तये ज्ञानसहकारिसाधनान्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह । यज्ञादिभिश्च तत्स्तौति कर्तव्यार्थम्—

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥**

अथ यद्यज्ञ इत्याचक्षते लोके परमपुरुषार्थसाधनं कथयन्ति शिष्टाः, तद्ब्रह्मचर्यमेव । यज्ञस्यापि यत्फलं तत् ब्रह्मचर्यवाँल्लभते; अतः यज्ञोऽपि ब्रह्मचर्यमेवेति प्रतिपत्तव्यम् । कथं ब्रह्मचर्यं यज्ञ इति, आह— ब्रह्मचर्येणैव हि यस्मात् यो ज्ञाता स तं ब्रह्मलोकं यज्ञस्यापि पारम्पर्येण फलभूतं विन्दते लभते, ततो यज्ञोऽपि ब्रह्मचर्यमेवेति । यो ज्ञाता—इत्यक्षरानुवृत्तेः यज्ञो ब्रह्मचर्यमेव । अथ यदिष्टमित्याचक्षते, ब्रह्मचर्यमेव तत् । कथम्? ब्रह्मचर्येणैव साधनेन तम् ईश्वरम् इष्ट्वा पूजयित्वा अथवा एषणाम् आत्मविषयां कृत्वा

तमात्मानमनुविन्दते । एषणादिष्टमपि ब्रह्मचर्यमेव ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥**

अथ यत्सत्त्रायणमित्याचक्षते, ब्रह्मचर्यमेव तत्। तथा सतः परस्मादात्मनः आत्मनस्त्राणं रक्षणं ब्रह्मचर्यसाधनेन विन्दते । अतः सत्त्रायणशब्दमपि ब्रह्मचर्यमेव तत् । अथ यन्मौनमित्याचक्षते, ब्रह्मचर्यमेव तत; ब्रह्मचर्येणैव साधनेन युक्तः सन् आत्मानं शास्त्राचार्याभ्यामनुविद्य पश्चात् मनुते ध्यायति । अतो मौनशब्दमपि ब्रह्मचर्यमेव ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरस्तदश्वत्थः सोमसवन-**

**स्तदपराजिता पूर्ब्रह्मणः प्रभुविमितᳪ हिरण्मयम् ॥ ३ ॥**

अथ यदनाशकायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । यमात्मानं ब्रह्मचर्येण अनुविन्दते, स एष हि आत्मा ब्रह्मचर्यसाधनवतो न नश्यति; तस्मादनाशकायनमपि ब्रह्मचर्यमेव । अथ यदरण्यायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । अरण्यशब्दयोरर्णवयोर्ब्रह्मचर्यवतोऽयनादरण्यायनं ब्रह्मचर्यम् । यो ज्ञानाद्यज्ञः एषणादिष्टं सतस्त्राणात्सत्रायणं मननान्मौनम् अनशनादनाशकायनम् अरण्ययोर्गमनादरण्यायनम् इत्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वात् ब्रह्मचर्यं परमं ज्ञानस्य सहकारिकारणं साधनम्—इत्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः । तत् तत्र हि ब्रह्मलोके अरश्च ह वै प्रसिद्धो ण्यश्च अर्णवौ समुद्रौ समुद्रोपमे वा सरसी, तृतीयस्यां भुवमन्तरिक्षं च अपेक्ष्य तृतीया द्यौः तस्यां तृतीयस्याम् इतः अस्माल्लोकादारभ्य गण्यमानायां दिवि । तत् तत्रैव च ऐरम् इरा अन्नं तन्मयः ऐरः मण्डः तेन पूर्णम् ऐरं मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः । तत्रैव च अश्वत्थो वृक्षः सोमसवनो नामतः सोमोऽमृतं तन्निस्रवः अमृतस्रव इति वा । तत्रैव च ब्रह्मलोके

ब्रह्मचर्यसाधनरहितैर्ब्रह्मचर्यसाधनवद्भ्यः अन्यैः न जीयत इति अपराजिता नाम पूः पुरी ब्रह्मणो हिरण्यगर्भस्य । ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं तच्च हिरण्मयं सौवर्णं प्रभुविमितं मण्डपमिति वाक्यशेषः ॥

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥**

**इति पञ्चमः खण्डः ॥**

तत् तत्र ब्रह्मलोके एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेन अनुविन्दन्ति ये, तेषामेव एषः यो व्याख्यातः ब्रह्मलोकः । तेषां च ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति, नान्येषामब्रह्मचर्यपराणां बाह्यविषयासक्तबुद्धीनां कदाचिदपीत्यर्थः ॥

नन्वत्र 'त्वमिन्द्रस्त्वं यमस्त्वं वरुणः' इत्यादिभिर्यथा कश्चित्स्तूयते महार्हः, एवमिष्टादिभिः शब्दैः न स्त्र्यादिविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्हम्; किं तर्हि, ज्ञानस्य मोक्षसाधनत्वात् तदेवेष्टादिभिः स्तूयत इति केचित् । न,

स्त्र्यादिबाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञानानुपपत्तेः, 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इत्यादिश्रुतिस्मृतिशतेभ्यः । ज्ञानसहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः । ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्यमिति यज्ञादीनां पुरुषार्थसाधनत्वं गम्यते । सत्यं गम्यते, न त्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्यं स्तूयते; किं तर्हि, तेषां प्रसिद्धं पुरुषार्थसाधनत्वमपेक्ष्य । यथेन्द्रादिभिः राजा, न तु यत्रेन्द्रादीनां व्यापारः तत्रैव राज्ञ इति— तद्वत् ॥

य इमेऽर्णवादयो ब्राह्मलौकिकाः संकल्पजाश्च पित्रादयो भोगाः, ते किं पार्थिवा आप्याश्च यथेह लोके दृश्यन्ते तद्वदर्णववृक्षपूःस्वर्णमण्डपानि, आहोस्वित् मानसप्रत्ययमात्राणीति । किंचातः? यदि पार्थिवा आप्याश्च स्थूलाः स्युः, हृद्याकाशे समाधानानुपपत्तिः । पुराणे च मनोमयानि ब्रह्मलोके शरीरादीनीति वाक्यं विरुध्येत; 'अशोकमहिमम्' इत्याद्याश्च श्रुतयः । ननु समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मन्त्रादयश्च मूर्तिमन्तः ब्रह्माणमुपतिष्ठन्ते इति मानसत्वे विरुध्येत पुराणस्मृतिः । न, मूर्तिमत्त्वे प्रसि-

द्रूपाणामेव तत्र गमनानुपपत्तेः । तस्मात्प्रसिद्धमूर्तिव्यतिरेकेण सागरादीनां मूर्त्यन्तरं सागरादिभिरुपात्तं ब्रह्मलोकगन्तृ कल्पनीयम् । तुल्यायां च कल्पनायां यथाप्रसिद्धा एव मानस्यः आकारवत्यः पुंस्त्र्याद्या मूर्तयो युक्ताः कल्पयितुम्, मानसदेहानुरूप्यसंबन्धोपपत्तेः । दृष्टा हि मानस्य एव आकारवत्यः पुंस्त्र्याद्या मूर्तयः स्वप्ने । ननु ता अनृता एव; 'त इमे सत्याः कामाः' इति श्रुतिः तथा सति विरुध्येत । न, मानसप्रत्ययस्य सत्त्वोपपत्तेः । मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते । ननु जाग्रद्वासनारूपाः स्वप्नदृश्याः, न तु तत्र स्त्र्यादयः स्वप्ने विद्यन्ते । अत्यल्पमिदमुच्यते । जाग्रद्विषया अपि मानसप्रत्ययाभिनिर्वृत्ता एव, सदीक्षाभिनिर्वृत्ततेजोबन्नमयत्वाज्जाग्रद्विषयाणाम् । संकल्पमूला हि लोका इति च उक्तम् 'समकॢपतां द्यावापृथिवी' इत्यत्र । सर्वश्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च 'यथा वा अरा नाभौ' इत्यादिना उच्यते । तस्मान्मानसानां बाह्यानां च विषयाणाम् इतरेतरकार्यकारणत्वमिष्यत एव बीजाङ्कुरवत् । यद्यपि बाह्या एव मानसाः मानसा एव च बाह्याः, नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति । ननु स्वप्ने दृष्टाः प्रतिबुद्धस्या-

नृता भवन्ति विषयाः । सत्यमेव । जाग्रद्बोधापेक्षं तु तदनृतत्वं न स्वतः । तथा स्वप्नबोधापेक्षं च जाग्रद्दृष्टविषयानृतत्वं न स्वतः । विशेषाकारमात्रं तु सर्वेषां मिथ्याप्रत्ययनिमित्तमिति वाचारम्भणं विकारो नामधेयमनृतम्, त्रीणि रूपाणीत्येव सत्यम् । तान्यप्याकारविशेषतोऽनृतं स्वतः सन्मात्ररूपतया सत्यम् । प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्वं सत्यमेव स्वप्नदृश्या इवेति न कश्चिद्विरोधः । तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः संकल्पजाश्च पित्रादयः कामाः । बाह्यविषयभोगवदशुद्धिरहितत्वाच्छुद्धसत्त्वसंकल्पजन्या इति निरतिशयसुखाः सत्याश्च ईश्वराणां भवन्तीत्यर्थः । मत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपतामेव प्रतिपद्यन्त इति सदात्मना सत्या एव भवन्ति ॥

इति पञ्चमखण्डभाष्यम् ॥

## षष्ठः खण्डः ॥

यस्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादिसाधनसंपन्नः त्यक्तबाह्यविषयानृततृष्णः सन् उपास्ते, तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति नाडीखण्ड आरभ्यते—

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

अथ या एताः वक्ष्यमाणाः हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य संबन्धिन्यः नाड्यः हृदयमांसपिण्डात्सर्वतो विनिःसृताः आदित्यमण्डलादिव रश्मयः, ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्य अणिम्नः सूक्ष्मरसस्य रसेन पूर्णाः तदाकारा एव तिष्ठन्ति वर्तन्त इत्यर्थः । तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्र अध्याहार्यम् । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेन अल्पेन संपर्कात् पिङ्गलं भवति सौरं तेजः पित्ताख्य-

म् । तदेव च वातभूयस्त्वात् नीलं भवति । तदेव च कफभूयस्त्वात् शुक्लम् । कफेन समतायां पीतम् । शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवन्तीति । श्रुतिस्त्वाह—आदित्यसंबन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति । कथम्? असौ वा आदित्यः पिङ्गलो वर्णतः, एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव ॥

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

तस्याध्यात्मं नाडीभिः कथं संबन्ध इति, अत्र दृष्टान्तमाह— तत् तत्र यथा लोके महान् विस्तीर्णः पन्था महापथः आततः व्याप्तः उभौ ग्रामौ गच्छति इमं च संनिहितम् अमुं च विप्रकृष्टं दूरस्थम् , एवं यथा दृष्टान्तः महापथः उभौ ग्रामौ प्रविष्टः, एवमेवैताः आदित्यस्य रश्मयः

उभौ लोकौ अमुं च आदित्यमण्डलम् इमं च पुरुषं गच्छन्ति उभयत्र प्रविष्टाः । यथा महापथः । कथम्? अमुष्मादादित्यमण्डलात् प्रतायन्ते संतता भवन्ति । ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ताः गताः प्रविष्टा इत्यर्थः । आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः संतानभूताः सत्यः ते अमुष्मिन् । रश्मीनामुभयलिङ्गत्वात् ते इत्युच्यन्ते ॥

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति ॥ ३ ॥**

तत् तत्र एवं सति यत्र यस्मिन्काले एतत् स्वपनम् अयं जीवः सुप्तो भवति । स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति । उपसंहृतसर्वकरणवृत्तिरित्येतत् । अतः बाह्यविषयसंपर्कजनितकालुष्याभावात् सम्यक् प्रसन्नः संप्रसन्नो भवति । अत एव स्वप्नं विषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवति, आसु सौरतेजःपूर्णासु यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टः, नाडीभिर्द्वारभूताभिः हृदयाकाशं गतो भवतीत्यर्थः । न हि अन्यत्र सत्संपत्तेः

स्वप्नादर्शनमस्तीति सामर्थ्यात् नाडीष्विति सप्तमी तृतीयया परिणम्यते । तं सता संपन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति, स्वरूपावस्थितत्वात् तदा आत्मनः । देहेन्द्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति, न तु सत्संपन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते, अविषयत्वात् । अन्यो हि अन्यस्य विषयो भवति, न त्वन्यत्वं केनचित्कुतश्चिदपि सत्संपन्नस्य । स्वरूपप्रच्यवनं तु आत्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं बाह्यविषयप्रतिबोधः अविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशादाहनिमित्तमित्यवोचाम षष्ठे एव; तदिहापि प्रत्येतव्यम् । यदैवं सुप्तः, सौरेण तेजसा हि नाड्यन्तर्गतेन सर्वतः संपन्नः व्याप्तः भवति । अतः विशेषेण चक्षुरादिनाडीद्वारैर्बाह्यविषयभोगाय अप्रसृतानि करणानि अस्य तदा भवन्ति । तस्मादयं करणानां निरोधात् स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तम् ॥

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥**

तत्र एवं सति, अथ यत्र यस्मिन्काले अबलिमानम्

अबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा कृशीभावम् एतत् नयनं नीतः प्रापितः देवदत्तो भवति मुमूर्षुर्यदा भवतीत्यर्थः। तमभितः सर्वतो वेष्टयित्वा आसीना ज्ञातयः आहुः— जानासि मां तव पुत्रं जानासि मां पितरं च इत्यादि। स मुमूर्षुः यावदस्माच्छरीरादनुत्क्रान्तः अनिर्गतः भवति तावत्पुत्रादीञ्जानाति ॥

**अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥**

अथ यत्र यदा, एतत्क्रियाविशेषणमिति, अस्माच्छरीरादुत्क्रामति, अथ तदा एतैरेव यथोक्ताभिः रश्मिभिः ऊर्ध्वमाक्रमते यथाकर्मार्जितं लोकं प्रैति अविद्वान्। इतरस्तु विद्वान् यथोक्तसाधनसंपन्नः स ओमिति ओंकारेण आत्मानं ध्यायन् यथापूर्वं वा ह एव, उद्वा ऊर्ध्वं वा विद्वांश्चेत् इतरस्तिर्यङ्गित्यभिप्रायः। मीयते प्रमीयते गच्छतीत्यर्थः। स विद्वान् उत्क्रमिष्यन्यावत्क्षिप्येन्मनः यावता कालेन मनसः क्षेपः स्यात्, तावता कालेन आदित्यं गच्छति प्राप्नोति क्षिप्रं

गच्छतीत्यर्थः, न तु तावतैव कालेनेति विवक्षितम्। किमर्थमादित्यं गच्छतीति, उच्यते— एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यः; तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान्। अतः विदुषां प्रपदनम्, प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम्। निरोधनं निरोधः अस्मादादित्यादविदुषां भवतीति निरोधः, सौरेण तेजसा देहे एव निरुद्धाः सन्तः मूर्धन्यया नाड्या नोत्क्रमन्त एवेत्यर्थः, 'विष्वङ्ङन्या' इति श्लोकात्॥

**तदेष श्लोकः। शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति॥ ६॥**

तत् तस्मिन् यथोक्तेऽर्थे एष श्लोको मन्त्रो भवति—शतं च एका एकोत्तरशतं नाड्यः हृदयस्य मांसपिण्डभूतस्य संबन्धिन्यः प्रधानतो भवन्ति, आनन्त्याद्देहनाडीनाम्। तासामेका मूर्धानमभिनिःसृता विनिर्गता। तयोर्ध्वमायन् गच्छन् अमृतत्वम् अमृतभावमेति। विष्वक् नानागतयः तिर्यग्विसर्पिण्य ऊर्ध्वगाश्च अन्या नाड्यः भवन्ति संसारगमनद्वारभूताः; न त्वमृतत्वाय; किं तर्हि, उत्क्रमणे एव उत्क्रान्त्यर्थमेव भवन्तीत्यर्थः। द्विरभ्यासः प्रकरणसमाप्त्यर्थः॥

इति षष्ठखण्डभाष्यम्॥

## सप्तमः खण्डः ॥

'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' इत्युक्तम् । तत्र कोऽसौ संप्रसादः? कथं वा तस्याधिगमः, यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते? येन स्वरूपेणाभिनिष्पद्यते स किंलक्षण आत्मा? संप्रसादस्य च देहसंबन्धीनि पररूपाणि, ततो यदन्यत्कथं स्वरूपम? इति एतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते । आख्यायिका तु विद्याग्रहणसंप्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च— राजसेवितं पानीयमितिवत् ।

**य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥**

य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, यस्योपासनाय

उपलब्ध्यर्थं हृदयपुण्डरीकमभिहितम्, यस्मिन्कामाः समाहिताः सत्याः अनृतापिधानाः, यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तम्, उपासनफलभूतकामप्रतिपत्तये च मूर्धन्यया नाड्या गतिरभिहिता, सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यः विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः। किं तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादिति, उच्यते— स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्; यः तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेन अन्विष्य विजानाति स्वसंवेद्यतामापादयति, तस्य एतत्सर्वलोककामावाप्तिः सर्वात्मता फलं भवतीति ह किल प्रजापतिरुवाच। अन्वेष्टव्यः विजिज्ञासितव्य इति च एष नियमविधिरेव, न अपूर्वविधिः। एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः, दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः। दृष्टार्थत्वं च दर्शयिष्यति 'नाहमत्र भोग्यं पश्यामि' इत्यनेन असकृत्। पररूपेण च देहादिधर्मैरवगम्यमानस्य आत्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैव अस्य विधेर्युक्ता, न त्वग्निहोत्रादीनामिव अपूर्वविधित्वमिह संभवति॥

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमा-

**त्मानमन्विष्य सर्वा्ँश्च लोकानाप्नोति सर्वा्ँश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥**

तद्धोभये इत्याद्याख्यायिकाप्रयोजनमुक्तम् । तद्ध किल प्रजापतेर्वचनम् उभये देवासुराः देवाश्चासुराश्च देवासुराः अनु परम्परागतं स्वकर्णगोचरापन्नम् अनुबुबुधिरे अनुबुद्धवन्तः । ते च एतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्निति, उच्यते—ते ह ऊचुः उक्तवन्तः अन्योन्यं देवाः स्वपरिषदि असुराश्च—हन्त यदि अनुमतिर्भवताम्, प्रजापतिनोक्तं तमात्मानमन्विच्छामः अन्वेषणं कुर्मः, यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्— इत्युक्त्वा इन्द्रः हैव राजैव स्वयं देवानाम् इतरान्देवांश्च भोगपरिच्छदं च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रति अभिप्रवव्राज प्रगतवान्, तथा विरोचनः असुराणाम् । विनयेन गुरवः अभिगन्तव्या इत्येतद्दर्शयति, त्रैलोक्यराज्याच्च गुरुतरा विद्येति, यतः देवासुरराजौ महार्हभोगार्हौ सन्तौ तथा गुरुमभ्युपगतवन्तौ । तौ ह किल असंविदानावेव अन्योन्यं संविदमकुर्वाणौ विद्या-

फलं प्रति अन्योन्यमीर्ष्यां दर्शयन्तौ समित्पाणी समिद्भार-हस्तौ प्रजापतिमकाशमाजग्मतुः आगतवन्तौ ॥

**तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावबास्तमिति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्तावबास्तमिति ॥**

तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यम् ऊषतुः उषितवन्तौ । अभिप्रायज्ञः प्रजापतिः तावुवाच—किमिच्छन्तौ किं प्रयोजनमभिप्रेत्य इच्छन्तौ अवास्तम् उषितवन्तौ युवामिति । इत्युक्तौ तौ ह ऊचतुः—य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टाः, अतः तमात्मानं ज्ञातुमिच्छन्तौ अवास्तमिति । यद्यपि प्राक्प्रजापतेः समीपागम-

नात् अन्योन्यमीर्ष्यायुक्तावभूताम् , तथापि विद्याप्राप्तिप्रयोजनगौरवात् त्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वा ऊषतुः ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्यापितमात्मविद्यागौरवम् ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥**

इति सप्तमः खण्डः ॥

तौ एवं तपस्विनौ शुद्धकल्मषौ योग्यौ उपलक्ष्य प्रजापतिरुवाच ह— य एषोऽक्षिणि पुरुषः निवृत्तचक्षुर्भिर्मृदितकषायैः दृश्यते योगिभिर्द्रष्टा, एष आत्मापहतपाप्मादिगुणः, यमवोचं पुरा अहं यद्विज्ञानात्सर्वलोककामावाप्तिः एतदमृतं भूमाख्यम् अत एवाभयम् , अत एव ब्रह्म वृद्धतममिति । अथैतत्प्रजापतिनोक्तम् अक्षिणि पुरुषो दृश्यते इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः । गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ— अथ योऽयं हे भगवः अप्सु परिख्यायते परि

समन्तात् ज्ञायते, यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ च, कतम एष एषां भगवद्भिरुक्तः, किं वा एक एव सर्वेष्विति । एवं पृष्टः प्रजापतिरुवाच— एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति । एतन्मनसि कृत्वा एषु सर्वेष्वन्तेषु मध्येषु परिख्यायत इति ह उवाच ॥

ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेः विगतदोषस्य आचार्यस्य सतः? सत्यमेवम्, नानुज्ञातम् । कथम्? आत्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हि इन्द्र-विरोचनौ, तथैव च प्रथितौ लोके; तौ यदि प्रजापतिना 'मूढौ युवां विपरीतग्राहिणौ' इत्युक्तौ स्याताम्; ततः तयोश्चित्ते दुःखं स्यात्; तज्जनिताच्च चित्तावसादात् पुनःप्रश्नश्रवण-ग्रहणावधारणं प्रति उत्साहविघातः स्यात्; अतो रक्षणीयौ शिष्याविति मन्यते प्रजापतिः । गृह्णीतां तावत्, तदुदशराव-दृष्टान्तेन अपनेष्यामीति च । ननु न युक्तम् एष उ एव इत्यनृतं वक्तुम् । न च अनृतमुक्तम् । कथम्? आत्मनोक्तः अक्षि-पुरुषः मनसि संनिहिततरः शिष्यगृहीताच्छायात्मनः; सर्वेषां चाभ्यन्तरः 'सर्वान्तरः' इति श्रुतेः; तमेवावोचत् एष उ एव इति; अतो नानृतमुक्तं प्रजापतिना ॥

इति सप्तमखण्डभाष्यम् ॥

## अष्टमः खण्डः ॥

---

तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं हि आह—

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥**

उदशरावे उदकपूर्णे शरावादौ आत्मानमवेक्ष्य अनन्तरं यत् तत्र आत्मानं पश्यन्तौ न विजानीथः तन्मे मम प्रब्रूतम् आचक्षीयाथाम्—इत्युक्तौ तौ ह तथैव उदशरावे अवेक्षांचक्राते अवेक्षणं चक्रतुः। तथा कृतवन्तौ तौ ह प्रजापतिरुवाच— किं पश्यथः इति । ननु तन्मे प्रब्रूतम् इत्युक्ताभ्याम् उदशरावे अवेक्षणं कृत्वा प्रजापतये न निवेदितम्— इदमावाभ्यां न विदितमिति, अनिवेदिते च अज्ञानहेतौ

ह प्रजापतिरुवाच—किं पश्यथ इति, तत्र कोऽभिप्राय इति; उच्यते—नैव तयोः इदमावयोरविदितमित्याशङ्का अभूत्, छायात्मन्यात्मप्रत्ययो निश्चित एव आसीत्। येन वक्ष्यति 'तौ ह शान्तहृदयौ प्रवव्रजतुः' इति। न हि अनिश्चिते अभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते। तेन नोचतुः इदमावाभ्यामविदितमिति। विपरीतग्राहिणौ च शिष्यौ अनुपेक्षणीयौ इति स्वयमेव पप्रच्छ—किं पश्यथः इति; विपरीतनिश्चयापनयाय च वक्ष्यति 'साध्वलंकृतौ' इत्येवमादि। तौ ह ऊचतुः—सर्वमेवेदम् आवां भगवः आत्मानं पश्यावः आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति, यथैव आवां हे भगवः लोमनखादिमन्तौ स्वः, एवमेवेदं लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति ॥

**तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥**

तौ ह पुनः प्रजापतिरुवाच च्छायात्मनिश्चयापनयाय—

साध्वलंकृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ च्छिन्नलोमनखौ च भूत्वा उदशरावे पुनरीक्षेथामिति । इह च न आदिदेश—यदज्ञातं तन्मे प्रब्रूतम् इति । कथं पुनरनेन साध्वलंकारादि कृत्वा उदशरावे अवेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात्? साध्वलंकारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा शरीरसंबद्धानाम, एवं शरीरस्यापि च्छायाकरत्वं पूर्वं बभूवेति गम्यते; शरीरैकदेशानां च लोमनखादीनां नित्यत्वेन अभिप्रेतानामखण्डितानां छायाकरत्वं पूर्वमासीत्; छिन्नेषु च नैव लोमनखादिच्छाया दृश्यते; अतः लोमनखादिवच्छरीरस्याप्यागमापायित्वं सिद्धमिति उदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्य अनात्मत्वं सिद्धम; उदशरावादौ छायाकरत्वात्, देहसंबद्धालंकारादिवत् । न केवलमेतावत्, एतेन यावत्किंचिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च कादाचित्कत्वात् नखलोमादिवदनात्मेति प्रत्येतव्यम् । एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलंकारादिदृष्टान्ते प्रजापतिनोक्ते, श्रुत्वा तथा कृतवतोरपि च्छायात्मविपरीतग्रहो नापजगाम यस्मात्, तस्मात् स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानौ इन्द्रविरोचनौ अभूतामिति गम्यते । तौ पूर्ववदेव दृढ-

निश्चयौ पप्रच्छ—किं पश्यथः इति ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृताविल्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥**

तौ तथैव प्रतिपन्नौ, यथैवेदमिति पूर्ववत्, यथा साध्वलंकारादिविशिष्टौ आवां स्वः, एवमेवेमौ छायात्मानौ— इति सुतरां विपरीतनिश्चयौ बभूवतुः । यस्य आत्मनो लक्षणम् 'य आत्मापहतपाप्मा' इत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोः 'य एषोऽक्षिणि पुरुषो दृश्यते' इति साक्षादात्मनि निर्दिष्टे, तद्विपरीतग्रहापनयाय उदशरावसाध्वलंकारदृष्टान्तेऽप्यभिहिते, आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः । अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेव आत्मानं मनसि निधाय एष आत्मेति ह उवाच एतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्ववत् । न तु तदभिप्रेतमात्मानम् । 'य आत्मा' इत्याद्यात्मलक्षणश्रवणेन अक्षिपुरुष-

श्रुत्या च उदशरावाद्युपपत्त्या च संस्कृतौ तावत् । मद्वचनं सर्वं पुनः पुनः स्मरतोः प्रतिबन्धक्षयाच्च स्वयमेव आत्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चित्त-दुःखोत्पत्तिं परिजिहीर्षन्न कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः । तौ ह इन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी इत्यर्थः ; न तु शम एव ; शमश्चेत् तयोर्जातः विपरीतग्रहो विगतोऽभविष्यत् ; प्रवव्रजतुः गतवन्तौ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥**

एवं तयोः गतयोः इन्द्रविरोचनयोः राज्ञोः भोगासक्तयोः यथोक्तविस्मरणं स्यात् इत्याशङ्क्य अप्रत्यक्षं प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुः तौ दूरं गच्छन्तौ अन्वीक्ष्य य

आत्मापहतपाप्मा इत्यादिवचनवत् एतदप्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वा उवाच प्रजापतिः— अनुपलभ्य यथोक्तलक्षणमात्मानम् अननुविद्य स्वात्मप्रत्यक्षं च अकृत्वा विपरीतनिश्चयौ च भूत्वा इन्द्रविरोचनावेतौ व्रजतः गच्छेयाताम् । अतः यतरे देवा वा असुरा वा किं विशेषितेन, एतदुपनिषदः आभ्यां या गृहीता आत्मविद्या सेयमुपनिषत् येषां देवानामसुराणां वा, त एतदुपनिषदः एवंविज्ञानाः एतन्निश्चयाः भविष्यन्तीत्यर्थः । ते किम्? पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीत्यर्थः । स्वगृहं गच्छतोः सुरासुरराजयोः योऽसुरराजः, स ह शान्तहृदय एव सन् विरोचनः असुराञ्जगाम । गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिः योपनिषत् तामेतामुपनिषदं प्रोवाच उक्तवान्— देहमात्रमेव आत्मा पित्रोक्त इति । तस्मादात्मैव देहः इह लोके महय्यः पूजनीयः, तथा परिचर्यः परिचरणीयः, तथा आत्मानमेव इह लोके देहं महयन् परिचरंश्च उभौ लोकौ अवाप्नोति इमं च अमुं च । इहलोकपरलोकयोरेव सर्वे लोकाः कामाश्च अन्तर्भवन्तीति राज्ञोऽभिप्रायः ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयज-**

**मानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥**

इति अष्टमः खण्डः ॥

तस्मात् तत्संप्रदायः अद्याप्यनुवर्तत इति इह लोके अददानं दानमकुर्वाणम् अविभागशीलम् अश्रद्दधानं सत्कार्येषु श्रद्धारहितं यथाशक्त्ययजमानम् अयजनस्वभावम् आहुः आसुरः खल्वयं यत एवंस्वभावः बत इति खिद्यमाना आहुः शिष्टाः । असुराणां हि यस्मात् अश्रद्दधानतादिलक्षणैषोपनिषत् । तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया वसनेन वस्त्रादिनाच्छादनादिप्रकारेणालंकारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्ति । एतेन कुणपसंस्कारेण अमुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥

इति अष्टमखण्डभाष्यम् ॥

## नवमः खण्डः ॥

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

अथ ह किल इन्द्रः अप्राप्यैव देवान् दैव्या अक्रौर्यादिसंपदा युक्तत्वात् गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन् एतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान् । उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तः, तदेकदेशो मघवतः प्रत्यभान् बुद्धौ, येन च्छायात्मग्रहणे दोषं ददर्श । कथम्? यथैव खलु अयमस्मिञ्छरीरे साध्वलंकृते छायात्मापि साध्वलंकृतो भवति, सुवसने च सुवसनः, परिष्कृते परिष्कृतः यथा नखलोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति नखलोमादिरहितो भवति, एवमेवायं छाया-

त्मापि अस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वात् अन्धे चक्षुषोऽपगमे अन्धो भवति, स्रामे स्रामः । स्रामः किल एकनेत्रः तस्यान्धत्वेन गतत्वात् । चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः । परिवृक्णः छिन्नहस्तः छिन्नपादो वा । स्रामे परिवृक्णे वा देहे छायात्मापि तथा भवति । तथा अस्य देहस्य नाशमनु एष नश्यति । अतः नाहमत्र अस्मिंश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति ॥

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

एवं दोषं देहच्छायात्मदर्शने अध्यवस्य स समित्पाणिः ब्रह्मचर्यं वस्तुं पुनरेयाय । तं ह प्रजापतिरुवाच— मघवन् यत् शान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्धं किमिच्छन्पुनरागम इति । विजानन्नपि पुनः पप्रच्छ इन्द्राभिप्रायाभिव्यक्तये— 'यद्वेत्थ तेन मोपसीद' इति यद्वत् । तथा च स्वाभिप्रायं प्रकटमकरोत्— यथैव खल्वयमित्यादि; एवमेवेति च अन्वमोदत प्रजापतिः ॥

ननु तुल्येऽक्षिपुरुषश्रवणे, देहच्छायाम इन्द्रोऽग्रहीदात्मेति देहमेव तु विरोचनः, तत्किंनिमित्तम्? तत्र मन्यते । यथा इन्द्रस्य उदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैव आचार्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषदर्शनं च अभूत्, न तथा विरोचनस्य; किं तर्हि, देह एव आत्मदर्शनम्; नापि तत्र दोषदर्शनं बभूव । तद्वदेव विद्याग्रहणसामर्थ्यप्रतिबन्धदोषाल्पत्वबहुत्वापेक्षम् इन्द्रविरोचनयोश्छायात्मदेहयोर्ग्रहणम् । इन्द्रोऽल्पदोषत्वात् 'दृश्यते' इति श्रुत्यर्थमेव श्रद्दधानतया जग्राह; इतरः छायानिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह— प्रजापतिनोक्तोऽयमिति, दोषभूयस्त्वात् । यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महार्हमिति च्छायानिमित्तं वास एवोच्यते

न च्छया—तद्वदिति विरोचनाभिप्राय: । स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितं 'दाम्यत दत्त दयध्वम्' इति दकारमात्रश्रवणाच्छ्रुत्यन्तरे । निमित्तान्यपि तदनुगुणान्येव सहकारीणि भवन्ति ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥**

**इति नवमः खण्डः ॥**

एवमेवैष मघवन्, सम्यक्त्वया अवगतम्, न च्छाया आत्मा— इत्युवाच प्रजापति: । यो मयोक्त आत्मा प्रकृत:, एतमेवात्मानं तु ते भूय: पूर्वं व्याख्यातमपि अनुव्याख्यास्यामि । यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयं प्राप्तमपि नाग्रहीः, अत: केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वम् । अतस्तत्क्षपणाय वस अपराणि द्वात्रिंशतं वर्षाणि— इत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै ह उवाच ॥

इति नवमखण्डभाष्यम् ॥

———*———

## दशमः खण्डः ॥

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥

य आत्मापहतपाप्मादिलक्षणः 'य एषोऽक्षिणि' इत्यादिना व्याख्यात एष सः । कोऽसौ? यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति अनेकविधान्स्वप्नभोगाननुभवतीत्यर्थः । एष आत्मेति ह उवाच इत्यादि समानम् । स ह एवमुक्तः इन्द्रः शान्तहृदयः प्रवव्राज । स ह अप्राप्यैव देवान् पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श । कथम्? तदिदं शरीरं यद्यप्यन्धं भवति, स्वप्नात्मा यः अनन्धः स भवति । यदि स्राममिदं शरीरम्, अस्रामश्च स भवति । नैवैष स्वप्नात्मा अस्य देहस्य दोषेण दुष्यति ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स

**द्वापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥**

**इति दशमः खण्डः ॥**

नापि अस्य वधेन स हन्यते छायात्मवत् । न च अस्य स्राम्येण स्रामः स्वप्नात्मा भवति । यदध्यायादौ आगममात्रेणोपन्यस्तम्— 'नास्य जरयैतज्जीर्यति' इत्यादि, तदिह न्यायेनोपपादयितुमुपन्यस्तम । न तावदयं छायात्मवद्देहदोषयुक्तः, किं तु घ्नन्ति त्वेव एनम् । एव-शब्दः इवार्थे । घ्नन्तीवैनं केचनेति द्रष्टव्यम्, न तु घ्नन्त्येवेति, उत्तरेषु सर्वेष्विवशब्ददर्शनात् । नास्य वधेन हन्यत इति विशेषणात् घ्नन्ति त्वेवेति चेत्, नैवम् । प्रजापतिं प्रमाणीकुर्वतः अनृतवादित्वापादनानुपपत्तेः । 'एतदमृतम्' इत्येतत्प्रजापतिवचनं कथं मृषा कुर्यादिन्द्रः तं प्रमाणीकुर्वन् । ननु च्छायापुरुषे प्रजापतिनोक्ते 'अस्य शरीरस्य नाशमन्वेष नश्यति' इति दोषमभ्यदधात्, तथेहापि स्यात् । नैवम् । कस्मात्? 'य एषोऽक्षिणि पुरुषो दृश्यते' इति न च्छायात्मा प्रजापतिनोक्त इति मन्यते मघवान् । कथम्? अपहतपाप्मादिलक्षणे पृष्टे यदि च्छायात्मा प्रजापतिनोक्त इति मन्यते, तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत्? जगाम च ।

तस्मात् न च्छायात्मा प्रजापतिनोक्त इति मन्यते । तथा च व्याख्यातम्—द्रष्टा अक्षिणि दृश्यत इति । तथा विच्छादयन्तीव विद्रावयन्तीव, तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति । अपि च स्वयमपि रोदितीव । ननु अप्रियं वेत्त्येव, कथं वेत्तेवेति, उच्यते—न, अमृताभयत्ववचनानुपपत्तेः, 'ध्यायतीव' इति च श्रुत्यन्तरात् । ननु प्रत्यक्षविरोध इति चेत्, न, शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसंभवात् । तिष्ठतु तावदप्रियवेत्तेव न वेति । नाहमत्र भोग्यं पश्यामि । स्वप्नात्मज्ञानेऽपि इष्टं फलं नोपलभे इत्यभिप्रायः । एवमेवैषः तवाभिप्रायेणेति वाक्यशेषः, आत्मनोऽमृताभयगुणवत्त्वस्याभिप्रेतत्वात् । द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति; तस्मात्पूर्ववत् अस्य अद्यापि प्रतिबन्धकारणमस्तीति मन्वानः तत्क्षपणाय वस अपराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यम् इत्यादिदेश प्रजापतिः । तथा उषितवते क्षपितकल्मषाय आह ॥

इति दशमखण्डभाष्यम् ॥

## एकादशः खण्डः ॥

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवे-

**मानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

पूर्ववदेतं त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम् । अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एष: सुप्त: समस्त: संप्रसन्न: स्वप्नं न विजानाति, एष आत्मेति ह उवाच एतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव । मघवान् तत्रापि दोषं ददर्श । कथम्? नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं संप्रति सम्यगिदानीं च आत्मानं जानाति नैवं जानाति । कथम्? अयमहमस्मीति नो एवेमानि भूतानि चेति । यथा जाग्रति स्वप्ने वा । अतो विनाशमेव विनाशमिवेति पूर्ववद्द्रष्टव्यम् । अपीत: अपिगतो भवति, विनष्ट इव भवतीत्यभिप्राय: । ज्ञाने हि सति ज्ञातु: सद्भावोऽवगम्यते, न असति ज्ञाने । न च सुषुप्तस्य ज्ञानं दृश्यते; अतो विनष्ट इवेत्यभिप्राय: । न तु विनाशमेव आत्मनो मन्यते अमृताभयवचनस्य प्रामाण्यमिच्छन् ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणीति स हाप-**

**राणि पञ्च वर्षाण्युवास तान्येकशतꣳ संपेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥**

**इति एकादशः खण्डः ॥**

पूर्ववदेवमेवेत्युक्त्वा आह—यो मया उक्तः त्रिभिः पर्यायैः तमेवैतं नो एवान्यत्रैतस्मादात्मनः अन्यं कंचन, किं तर्हि, एतमेव व्याख्यास्यामि । स्वल्पस्तु दोषस्तवावशिष्टः, तत्क्षपणाय वस अपराणि अन्यानि पञ्च वर्षाणि— इत्युक्तः सः तथा चकार । तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसंबन्धरहितमात्मनः स्वरूपम् अपहतपाप्मत्वादिलक्षणं मघवते तस्मै ह उवाच । तान्येकशतं वर्षाणि संपेदुः संपन्नानि बभूवुः । यदाहुर्लोके शिष्टाः— एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास इति । तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातः अपसृत्य श्रुत्या उच्यते । एवं किल तदिन्द्रत्वादपि गुरुतरम् इन्द्रेणापि महता यत्नेन एकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानम् । अतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥

**इति एकादशखण्डभाष्यम् ॥**

## द्वादशः खण्डः ॥

**मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

मघवन् मर्त्यं वै मरणधर्मीदं शरीरम् । यन्मन्यसेऽक्ष्याधारादिलक्षणः संप्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति, शृणु तत्र कारणम्— यदिदं शरीरं वै यत्पश्यसि तदेतत् मर्त्यं विनाशि । तच्च आत्तं मृत्युना ग्रस्तं सततमेव । कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा संत्रासो भवति, यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते—इति वैराग्यार्थं विशेष इत्युच्यते— आत्तं मृत्युनेति । कथं नाम देहाभिमानतो विरक्तः सन् निवर्तेत इति । शरीरमित्यत्र सहेन्द्रियमनोभिरुच्यते । तच्छ-

रीरमस्य संप्रसादस्य त्रिस्थानतया गम्यमानस्य अमृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्; अमृतस्येत्यनेनैव अशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत् साव-यवत्वमूर्तिमत्त्वे मा भूतामिति; आत्मनो भोगाधिष्ठानम्; आत्मनो वा सत ईक्षितुः तेजोबन्नादिक्रमेण उत्पन्न-मधिष्ठानम्; जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वा अधिष्ठानम्। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्मा-धर्मजनितत्वात्प्रियाप्रियवदधिष्ठानम्, तदधिष्ठितः तद्वान् सशरीरो भवति। अशरीरस्वभावस्य आत्मनः तदेवाहं शरीरं शरीरमेव च अहम्—इत्यविवेकादात्मभावः सशरीर-त्वम्; अत एव सशरीरः सन् आत्तः ग्रस्तः प्रियाप्रिया-भ्याम्। प्रसिद्धमेतत्। तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोः बाह्यविषयसंयोगवियोगनिमित्तयोः बाह्यविष-यसंयोगवियोगौ ममेति मन्यमानस्य अपहृतिः विनाशः उच्छेदः संततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानादशरीरस्व-रूपविज्ञानेन निवर्तिताविवेकज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः। स्पृशिः प्रत्येकं संबध्यत इति प्रियं न स्पृशति अप्रियं न स्पृशतीति वाक्यद्वयं भवति। 'न म्लेच्छाशुच्य-धार्मिकैः सह संभाषेत' इति यद्वत्। धर्माधर्मकार्ये हि ते;

अशरीरता तु स्वरूपमिति तत्र धर्माधर्मयोरसंभवात् तत्कार्यभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः ॥

ननु यदि प्रियमप्यशरीरं न स्पृशतीति, यन्मघवतोक्तं सुषुप्तस्थो विनाशमेवापीतो भवतीति, तदेवेहाप्यापन्नम् । नैष दोषः, धर्माधर्मकार्ययोः शरीरसंबन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात्— अशरीरं न प्रियाप्रिये स्पृशत इति । आगमापायिनोर्हि स्पर्शशब्दो दृष्टः— यथा शीतस्पर्श उष्णस्पर्श इति, न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श इति भवति ; तथा अग्नेः सवितुर्वा उष्णप्रकाशवत् स्वरूपभूतस्य आनन्दस्य प्रियस्यापि नेह प्रतिषेधः, 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिश्रुतिभ्यः । इहापि भूमैव सुखमित्युक्तत्वात् । ननु भूम्नः प्रियस्य एकत्वे असंवेद्यत्वात् स्वरूपेणैव वा नित्यसंवेद्यत्वात् निर्विशेषतेति न इन्द्रस्य तदिष्टम् , 'नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इत्युक्तत्वात् । तद्धि इन्द्रस्येष्टम्—यद्भूतानि च आत्मानं च जानाति, न च अप्रियं किंचिद्वेत्ति, स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् येन ज्ञानेन । सत्यमेतदिष्टमिन्द्रस्य— इमानि भूतानि मत्तोऽन्यानि, लोकाः

कामाश्च सर्वे मत्तो अन्ये, अहमेषां स्वामीति । न त्वेतदिन्द्रस्य हितम् । हितं च इन्द्रस्य प्रजापतिना वक्तव्यम् । व्योमवदशरीरात्मतया सर्वभूतलोककामात्मत्वोपगमेन या प्राप्तिः, तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिना अभिप्रेतम् । न तु राज्ञो राज्याप्तिवदन्यत्वेन । तत्रैवं सति कं केन विजानीयादात्मैकत्वे इमानि भूतान्ययमहमस्मीति । नन्वस्मिन्पक्षे 'स्त्रीभिर्वा यानैर्वा' 'स यदि पितृलोककामः' 'स एकधा भवति' इत्याद्यैश्वर्यश्रुतयोऽनुपपन्नाः; न, सर्वात्मनः सर्वफलसंबन्धोपपत्तेरविरोधात्— मृद इव सर्वघटकरककुण्डाद्याप्तिः । ननु सर्वात्मत्वे दुःखसंबन्धोऽपि स्यादिति चेत्, न, दुःखस्याप्यात्मत्वोपगमादविरोधः । आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि— रज्ज्वामिव सर्पादिकल्पनानिमित्तानि । सा च अविद्या अशरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्ता उच्छिन्नेति दुःखसंबन्धाशङ्का न संभवति । शुद्धसत्त्वसंकल्पनिमित्तानां तु कामानाम् ईश्वरदेहसंबन्धः सर्वभूतेषु मानसानाम् । पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसंव्यवहाराणां पर एव आत्मा आस्पदं नान्योऽस्तीति वेदान्तसिद्धान्तः ॥

'य एषोऽक्षिणि पुरुषो दृश्यते' इति च्छायापुरुष एव

प्रजापतिना उक्तः, स्वप्नसुषुप्तयोश्च अन्य एव, न परोऽपहतपाप्मत्वादिलक्षणः, विरोधात् इति केचिन्मन्यन्ते। छायाद्यात्मनां च उपदेशे प्रयोजनमाचक्षते। आदावेव उच्यमाने किल दुर्विज्ञेयत्वात्परस्य आत्मनः अत्यन्तबाह्यविषयासक्तचेतसः अत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति। यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुः वृक्षं कंचित्प्रत्यक्षमादौ दर्शयति— पश्य अमुमेष चन्द्र इति, ततोऽन्यं ततोऽप्यन्यं गिरिमूर्धानं च चन्द्रसमीपस्थम्— एष चन्द्र इति, ततोऽसौ चन्द्रं पश्यति, एवमेतत् 'य एषोऽक्षिणि' इत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैः, न पर इति। चतुर्थे तु पर्याये देहान्मर्त्यात्समुत्थाय अशरीरतामापन्नो ज्योतिःस्वरूपम्। यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षत्क्रीडन्रममाणो भवति, स उत्तमः पुरुषः पर उक्त इति च आहुः। सत्यम्, रमणीया तावदियं व्याख्या श्रोतुम्। न तु अर्थोऽस्य ग्रन्थस्य एवं संभवति। कथम्? 'अक्षिणि पुरुषो दृश्यते' इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयाय उदशरावोपन्यासः 'किं पश्यथः' इति च प्रश्नः साध्वलंकारोपदेशश्च अनर्थकः स्यात्, यदि 'छायात्मैव प्रजापतिना 'अक्षिणि दृश्यते' इत्युपदिष्टः। किंच यदि स्वयमुप-

दिष्ट इति ग्रहणस्याप्यपनयनकारणं वक्तव्यं स्यात् । स्वप्न-सुषुप्तात्मग्रहणयोरपि तदपनयकारणं च स्वयं ब्रूयात् । न च उक्तम् । तेन मन्यामहे न अक्षिणि च्छायात्मा प्रजापतिना उपदिष्टः । किं चान्यत्, अक्षिणि द्रष्टा चेत् 'दृश्यते' इत्युपदिष्टः स्यात्, तत इदं युक्तम् । 'एतं त्वेव ते' इत्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः । स्वप्ने न द्रष्टोपादिष्ट इति चेत्, न,'अपि रोदितीव' 'अप्रियवेत्तेव' इत्युपदेशात् । न च द्रष्टुरन्यः कश्चित्स्वप्ने महीयमानश्चरति । 'अत्रायं पुरुषः स्वयंज्योतिः' इति न्यायतः श्रुत्यन्तरे सिद्धत्वात् । यद्यपि स्वप्ने सधीर्भवति, तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते । किं तर्हि, पटचित्रवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति न द्रष्टुः स्वयंज्योतिष्ट्वबाधः स्यात् । किंचान्यत्, जाग्रत्स्वप्नयोर्भूतानि च आत्मानं च जानाति— इमानि भूतान्ययमहमस्मीति । प्राप्तौ सत्यां प्रतिषेधो युक्तः स्यात्—नाह खल्वयमित्यादि । तथा चेतनस्यैव अविद्यानिमित्तयोः सशरीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतो विद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तः 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति ।

एकश्चात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः संचरतीति श्रुत्यन्तरे सिद्धम् । यच्चोक्तं संप्रसादः शरीरात्समुत्थाय यस्मिन्स्त्र्यादिभिः रममाणो भवति सोऽन्यः संप्रसादादधिकरणनिर्दिष्ट उत्तमः पुरुष इति, तदप्यसत् । चतुर्थेऽपि पर्याये 'एतं त्वेव ते' इति वचनात् । यदि ततोऽन्योऽभिप्रेतः स्यात्, पूर्ववत् 'एतं त्वेव ते' इति न ब्रूयान्मृषा प्रजापतिः । किंचान्यत्, तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहशुङ्गे प्रवेशं दर्शयित्वा प्रविष्टाय पुनः तत्त्वमसीत्युपदेशः मृषा प्रसज्येत । तस्मिंस्त्वं स्त्र्यादिभिः रन्ता भविष्यसीति युक्त उपदेशोऽभविष्यत् यदि संप्रसादादन्य उत्तमः पुरुषो भवेत् । तथा भूम्नि 'अहमेव' इत्यादिश्य 'आत्मैवेदं सर्वम्' इति नोपसमहरिष्यत्, यदि भूमा जीवादन्योऽभविष्यत्, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्यन्तराच्च । सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत् प्रत्यगात्मा चेत्सर्वजन्तूनां पर आत्मा न भवेत् । तस्मादेक एव आत्मा प्रकरणी सिद्धः ॥

न च आत्मनः संसारित्वम्, अविद्याध्यस्तत्वादात्मनि संसारस्य । न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादीनि मिथ्याज्ञानाध्यस्तानि तेषां भवन्तीति । एतेन सशरीरस्य

प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातम् । यच्च स्थित-मप्रियवेत्तैवेति नाप्रियवेत्तैवेति सिद्धम् । एवं च सति सर्व-पर्यायेषु 'एतदमृतमभयमेतद्ब्रह्म' इति प्रजापतेर्वचनम्, यदि वा प्रजापतिच्छद्मरूपायाः श्रुतेर्वचनम्, सत्यमेव भवेत् । न च तत्कुतर्कबुद्धया मृषा कर्तुं युक्तम्, ततो गुरुतरस्य प्रमा-णान्तरस्यानुपपत्तेः । ननु प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभि-चार्यनुभूयत इति चेत्, न, जरादिरहितो जीर्णोऽहं जातो-ऽहमायुष्मान्गौरः कृष्णो मृतः—इत्यादिप्रत्यक्षानुभववत्तदुपप-त्तेः । सर्वमप्येतत्सत्यमिति चेत्, अस्त्येवैतदेवं दुरवगमम्, येन देवराजोऽप्युदशरावादिदर्शिताविनाशयुक्तिरपि मुमोहैवात्र 'विनाशमेवापीतो भवति' इति । तथा विरोचनो महाप्राज्ञः प्राजापत्योऽपि देहमात्रात्मदर्शनो बभूव । तथा इन्द्रस्य आत्म-विनाशभयसागरे एव वैनाशिका न्यमज्जन् । तथा सांख्या द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वात् मृ-त्युविषये एव अन्यत्वदर्शने तस्थुः । तथा अन्ये काणादा-दिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणै-र्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः । तथा अन्ये कर्मिणो बाह्यविषयापहृतचेतसः वेदप्रमाणा अपि परमार्थसत्यमात्मै-कत्वं सविनाशमिव इन्द्रवन्मन्यमाना घटीयन्त्रवत् आरोहाव-

रोहप्रकारैरनिशं बम्भ्रमन्ति ; किमन्ये क्षुद्रजन्तवो विवेकहीनाः स्वभावत एव बहिर्विषयापहृतचेतसः । तस्मादिदं त्यक्तसर्वबाह्यैषणैः अनन्यशरणैः परमहंसपरिव्राजकैः अत्याश्रमिभिर्वेदान्तविज्ञानपरैरेव वेदनीयं पूज्यतमैः प्राजापत्यं च इमं संप्रदायमनुसरद्भिः उपनिबद्धं प्रकरणचतुष्टयेन । तथा अनुशासति अद्यापि 'त एव नान्ये' इति ॥

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥**

तत्र अशरीरस्य संप्रसादस्य अविद्यया शरीरेणाविशेषतां सशरीरतामेव संप्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण यथा अभिनिष्पत्तिः, तथा वक्तव्येति दृष्टान्त उच्यते— अशरीरो वायुः अविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः । किं च अभ्रं विद्युत्स्तनयित्नुरित्येतानि च अशरीराणि । तत् तत्रैवं सति वर्षादिप्रयोजनावसाने यथा, अमुष्मादिति भूमिष्ठा श्रुतिः द्युलोकसंबन्धिनमाकाशदेशं व्यपदिशति, एतानि यथोक्तान्याकाशसमानरूपतामापन्नानि स्वेन वाय्वादिरूपेणागृह्यमाणानि आकाशाख्यतां गतानि— यथा संप्रसादः

अविद्यावस्थायां शरीरात्मभावमेव आपन्नः, तानि च तथाभूतान्यमुष्मात् द्युलोकसंबन्धिन आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये । कथम्? शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसंपद्य सावित्रमभितापं प्राप्येत्यर्थः । आदित्याभितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हित्वा अभ्रमपि भूमिपर्वतहस्त्यादिरूपेण विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते ॥

**एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥३॥**

यथा अयं दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया संसारावस्थायां शरीरसाम्यमापन्नः अहममुष्य पुत्रो

जातो जीर्णो मरिष्ये—इत्येवंप्रकारं प्रजापतिनेव मघवान् यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्मा तत्त्वमसीति प्रतिबोधितः सन् स एष संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः समुत्थाय देहादिविलक्षणमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत्, स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात्। स येन स्वेन रूपेण संप्रसादोऽभिनिष्पद्यते—प्राक्प्रतिबोधात् तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः, पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते, एवं च स उत्तमपुरुषः उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः स एव उत्तमपुरुषः। अक्षिस्वप्नपुरुषौ व्यक्तौ अव्यक्तश्च सुषुप्तः समस्तः संप्रसन्नः अशरीरश्च स्वेन रूपेणेति। एषामेव स्वेन रूपेणावस्थितः क्षराक्षरौ व्याकृताव्याकृतावपेक्ष्य उत्तमपुरुषः; कृतनिर्वचनो हि अयं गीतासु। सः संप्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिन्द्राद्यात्मना जक्षत् हसन् भक्षयन् वा भक्ष्यान् उच्चावचान् ईप्सितान् क्वचिन्मनोमात्रैः संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन् स्त्र्यादिभिः रममाणश्च मनसैव, नोपजनम्, स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनम् आत्मभावेन वा आत्मसामीप्येन जायत इत्युपजनमिदं शरीरम्,

तन्न स्मरन् । तत्स्मरणे हि दुःखमेव स्यात्, दुःखात्मकत्वात् तस्य । नन्वनुभूतं चेत् न स्मरेत् असर्वज्ञत्वं मुक्तस्य; नैष दोषः । येन मिथ्याज्ञानादिना जनितम् तच्च मिथ्याज्ञानादि विद्यया उच्छेदितम्, अतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिः । न हि उन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्तव्यं स्यात्; तथेहापि संसारिभिरविद्यादोषवद्भिः यदनुभूयते तत्सर्वात्मानमशरीरं न स्पृशति, अविद्यानिमित्ताभावात् । ये तु उच्छिन्नदोषैर्मृदितकषायैः मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात्, त एव मुक्तेन सर्वात्मभूतेन संबध्यन्त इति आत्मज्ञानस्तुतये निर्दिश्यन्ते; अतः साध्वेतद्विशिनष्टि—'य एते ब्रह्मलोके' इति । यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते लोके भवन्तीति सर्वात्मत्वाद्ब्रह्मण उच्यन्ते ॥

ननु कथमेकः सन् नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा कामांश्च ब्राह्मलौकिकान्पश्यन्रमते इति च विरुद्धम्, यथा एको यस्मिन्नेव क्षणे पश्यति स तस्मिन्नेव क्षणे न पश्यति च इति । नैष दोषः, श्रुत्यन्तरे परिहृतत्वात् । द्रष्टुर्दृष्टेरविपरिलोपात्पश्यन्नेव भवति; द्रष्टुरन्यत्वेन कामानामभावान्न पश्यति च इति । यद्यपि

सुषुप्ते तदुक्तम्, मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः। 'केन कं पश्येत्' इति च उक्तमेव। अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन् कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना? तत्र यथा असावक्षिणि साक्षाद्दृश्यते तद्वक्तव्यमितीदमारभ्यते। तत्र को हेतुरक्षिणि दर्शने इति, आह— स दृष्टान्तः यथा प्रयोग्यः, प्रयोग्यपरो वा स-शब्दः, प्रयुज्यत इति प्रयोगः, अश्वो बलीवर्दो वा यथा लोके आचरत्यनेनेत्याचरणः रथः अनो वा तस्मिन्नाचरणे युक्तः तदाकर्षणाय, एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिरिन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः, 'कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति' ईश्वरेण राज्ञेव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः। तस्यैव तु मात्रा एकदेशश्चक्षुरिन्द्रियं रूपोपलब्धिद्वारभूतम् ॥

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स**

**आत्माभिव्याहाराय वागथ यो वेदेद॑॑ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

अथ यत्र कृष्णतारोपलक्षितम् आकाशं देहच्छिद्रम् अनुविषण्णम् अनुषक्तम अनुगतम्, तत्र स प्रकृतः अशरीर आत्मा चाक्षुषः चक्षुषि भव इति चाक्षुषः तस्य दर्शनाय रूपोपलब्धये चक्षुः करणम्; यस्य तत् देहादिभिः संहतत्वात् परस्य द्रष्टुरर्थे, सोऽत्र चक्षुषि दर्शनेन लिङ्गेन दृश्यते परः अशरीरोऽसंहतः। 'अक्षिणि दृश्यते' इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम्; सर्वविषयोपलब्धा हि स एवेति। स्फुटोपलब्धिहेतुत्वात्तु 'अक्षिणि' इति विशेषवचनं सर्वश्रुतिषु। 'अहमदर्शमिति तत्सत्यं भवति' इति च श्रुतेः। अथापि योऽस्मिन्देहे वेद; कथम्? इदं सुगन्धि दुर्गन्धि वा जिघ्राणीति अस्य गन्धं विजानीयामिति, स आत्मा, तस्य गन्धाय गन्धविज्ञानाय घ्राणम्। अथ यो वेद इदं वचनम् अभिव्याहराणीति वदिष्यमीति, स आत्मा, अभिव्याहरणक्रियासिद्धये करणं वागिन्द्रियम्। अथ यो वेद— इदं शृणवानीति, स आत्मा, श्रवणाय श्रोत्रम ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥**

अथ यो वेद— इदं मन्वानीति मननव्यापारमिन्द्रियासंस्पृष्टं केवलं मन्वानीति वेद, स आत्मा, मननाय मनः। यो वेद स आत्मेत्येवं सर्वत्र प्रयोगात् वेदनमस्य स्वरूपमित्यवगम्यते— यथा यः पुरस्तात्प्रकाशयति स आदित्यः, यो दक्षिणतः यः पश्चात् उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्यः— इत्युक्ते प्रकाशस्वरूपः स इति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि। इदं च अस्य आत्मनः सामर्थ्यादवगम्यते— आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वम्, न तु व्यापृततया— यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वम्, न तु व्यापृततयेति— तद्वत्। मनोऽस्य आत्मनो दैवमप्राकृतम् इतरेन्द्रियैरसाधारणं चक्षुः चष्टे पश्यत्यनेनेति चक्षुः। वर्तमानकालविषयाणि च इन्द्रियाणि अतो अदैवानि तानि। मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं च इति दैवं चक्षुरुच्यते। स वै मुक्तः स्वरूपापन्नः अवि-

ऱ्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन् एष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन् एतेनैवेश्वरेण मनसा एतान्कामान् सवितृप्रकाशवत् नित्यप्रततेन दर्शनेन पश्यन् रमते । कान्कामानिति विशिनष्टि— य एते ब्रह्मणि लोके हिरण्यनिधिवत् बाह्यविषयासङ्गानृतेनापिहिताः संकल्पमात्रलभ्याः तानित्यर्थः ॥

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥**

इति द्वादशः खण्डः ॥

यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा, तस्मात् ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते । तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः । यदर्थं हि इन्द्रः एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास, तत्फलं प्राप्तं देवैरित्यभिप्रायः । तद्युक्तं देवानां महाभाग्यत्वात् , न त्विदानीं मनुष्याणामल्पजीवितत्वान्मन्दतरप्र-

ज्ञत्वाच्च संभवतीति प्राप्ते, इदमुच्यते—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् इदानींतनोऽपि । कोऽसौ? इन्द्रादिवत् यः तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः । द्विर्वचनं प्रकरणसमाप्त्यर्थम् ॥

इति द्वादशखण्डभाष्यम् ॥



## त्रयोदशः खण्डः ॥

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥ १ ॥

इति त्रयोदशः खण्डः ॥

श्यामात् शबलं प्रपद्ये इत्यादिमन्त्राम्नायः पावनः जपार्थश्च ध्यानार्थो वा । श्यामः गम्भीरो वर्णः श्याम इव श्यामः हार्दं ब्रह्म अत्यन्तदुरवगाह्यत्वात् तत् हार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामात् शबलं शबल इव शबलः अरण्याद्यनेककामामिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वा ऊर्ध्वं गच्छेयम् । यस्मादहं शबलाद्ब्रह्मलोकात् नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं प्रपन्नोऽस्मीत्यभिप्रायः । अतः तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः । कथं शबलं ब्रह्मलोकं

प्रपद्ये इति, उच्यते—अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतः अपनीय यथा निर्मलो भवति, एवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव च राहुग्रस्तः तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति यथा—एवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयम् इहैव ध्यानेन कृतात्मा कृतकृत्यः सन् अकृतं नित्यं ब्रह्मलोकम् अभिसंभवामीति। द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥

इति त्रयोदशखण्डभाष्यम् ॥

## चतुर्दशः खण्डः ॥

आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कꣳ श्येतं लिन्दु माभिगां लिन्दु माभिगाम् ॥ १ ॥

इति चतुर्दशः खण्डः ॥

आकाशो वा इत्यादि ब्रह्मणो लक्षणनिर्देशार्थम आध्यानाय । आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा । आकाश इव अशरीरत्वात्सूक्ष्मत्वाच्च । स च आकाशः नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोः निर्वहिता निर्वोढा व्याकर्ता । ते नामरूपे यदन्तरा यस्य ब्रह्मणो अन्तरा मध्ये वर्तेते, तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं यदित्येतत्, तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथापि तयोर्निर्वोढृ एवंलक्षणं ब्रह्मेत्यर्थः ।

इदमेव मैत्रेयीब्राह्मणेनोक्तम् ; चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते एकवाक्यता । कथं तदवगम्यत इति, आह — स आत्मा । आत्मा हि नाम सर्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धः तेनैव स्वरूपेणोन्नीय अशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम् । तच्च आत्मा ब्रह्म अमृतम् अमरणधर्मा । अत ऊर्ध्वं मन्त्रः । प्रजापतिः चतुर्मुखः तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम् । किंच यशोऽहं यशो नाम आत्मा अहं भवामि ब्राह्मणानाम् । ब्राह्मणा एव हि विशेषतस्तमुपासते ततस्तेषां यशो भवामि । तथा राज्ञां विशां च । तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि । तद्यशोऽहमनुप्रापत्सि अनुप्राप्तुमिच्छामि । स ह अहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानामात्मा । किमर्थमहमेवं प्रपद्य इति, उच्यते— श्येतं वर्णतः पक्वबदरसमं रोहितम् । तथा अदत्कं दन्तरहितमप्यदत्कं भक्षयितृ स्त्रीव्यञ्जनं तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणाम् अपहन्तृ विनाशयित्रित्येतत् । यदेवंलक्षणं श्येतं लिन्दु पिच्छलं तन्मा अभिगां मा अभिगच्छेयम् । द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थम् ॥

इति चतुर्दशखण्डभाष्यम् ॥

## पञ्चदशः खण्डः ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिꣳसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

इति पञ्चदशः खण्डः ॥

तद्धैतत् आत्मज्ञानं सोपकरणम् 'ओमित्येतदक्षरम्' इत्याद्यैः सहोपासनैः तद्वाचकेन ग्रन्थेन अष्टाध्यायीलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपाय उवाच; असावपि मनवे स्वपुत्राय; मनुः प्रजाभ्यः इत्येवं श्रुत्यर्थसंप्रदायपरम्परयागतम् उपनिषद्विज्ञानम् अद्यापि विद्वत्सु अवगम्यते। यथेह षष्ठाद्यध्यायत्रये प्रकाशिता आत्मविद्या सफला अवगम्यते, तथा कर्मणां न क-

अनार्थ इति प्राप्ते, तदानर्थक्यप्राप्तिपरिजिहीर्षया इदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेन अर्थवत्त्वमुच्यते—आचार्यकुलाद्वेदमधीत्य सहार्थतः अध्ययनं कृत्वा यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन् इत्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्य उपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह— गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालः तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवता अधीतो वेदः कर्मज्ञानफलप्राप्तये भवति, नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन् इत्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते—शुचौ विविक्ते अमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानः नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन् धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधत् धार्मिकत्वेन तान्नियमयन् आत्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्य उपसंहृत्य इन्द्रियग्रहणात्कर्माणि च संन्यस्य अहिंसन् हिंसां परपीडामकुर्वन् सर्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन् इत्यर्थः । भिक्षानिमित्तमटनादिनापि पर-

पीडा स्यादित्यत आह—अन्यत्र तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयः, ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां च एतत्समानम् । तीर्थेभ्योऽन्यत्र अहिंसैवेत्यन्ये वर्णयन्ति । कुटुम्बे एवैतत्सर्वं कुर्वन्, स खल्वधिकृतः, यावदायुषं यावज्जीवम् एवं यथोक्तेन प्रकारेणैव वर्तयन् ब्रह्मलोकमभिसंपद्यते देहान्ते । न च पुनरावर्तते शरीरग्रहणाय, पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिः तावत्तत्रैव तिष्ठति प्राक्ततो नावर्तत इत्यर्थः । द्विरभ्यासः उपनिषद्विद्यापरिसमाप्त्यर्थः ॥

इति पञ्चदशखण्डभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ

## छान्दोग्योपनिषद्भाष्यं संपूर्णम् ॥

ॐ

आप्यायन्तु ममाङ्गानि वा-
क्प्राणश्चक्षुः श्रोत्रमथो बल-
मिन्द्रियाणि च सर्वाणि ।
सर्वं ब्रह्मौपनिषदं माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म नि-
राकरोदनिराकरणमस्त्वनि-
राकरणं मेऽस्तु । तदात्मनि
निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# उपनिषन्मन्त्राणां
# वर्णानुक्रमणिका

॥ श्रीः ॥

# ॥ वर्णानुक्रमणिका ॥

THE WORKS OF

# SRI SANKARACHARYA

## VOLUME

## 8

SRI VANI VILAS PRESS

नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।
संमुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
सर्वाकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।
तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS.

## ॥ विषयाः ॥

THE

# UPANISHAD-BHASHYA

VOL. 5.

## BRIHADARANYAKA
## CHAPTERS I & II.

॥ श्रीः ॥

# उपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः

विरचितम् ।

## पञ्चमो भागः

## ॥ बृहदारण्यकम् ॥

अध्यायौ १-२.

॥ ॐ ॥

# ॥ बृहदारण्यकोपनिषद्भाष्यम् ॥

श्रीमच्छंकरभगवत्पूज्यपादैः

विरचितम् ।



ॐ

पूर्णमदः पूर्णमिदं
पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ॥

---

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

ॐ

# ॥ बृहदारण्यकोपनिषत् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन

## भाष्येण सहिता ।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो नमो गुरुभ्यः ।

'उषा वा अश्वस्य' इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्थवृत्तिः आरभ्यते, संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्; उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते

सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकम् ; बृहत्त्वात्परिमाणतो बृहदारण्यकम् ॥

तस्यास्य कर्मकाण्डेनसंबन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः, सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वात् नागमान्वेषणा । न चासति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्; स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके' इत्युपक्रम्य 'अस्तीत्येवोपलब्धव्यः' इत्येवमादिनिर्णयदर्शनात्; 'यथा च मरणं प्राप्य' इत्युपक्रम्य 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इति च; 'स्वयं ज्योतिः' इत्युपक्रम्य 'तं विद्याकर्मणी समन्वारभेते' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति च; 'ज्ञपयिष्यामि' इत्युपक्रम्य 'विज्ञानमयः' इति च— व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेत्, न; वादिविप्रतिपत्तिदर्शनात् । न हि

देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते, नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्, न; निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात्प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः । तथानुमानादपि । श्रुत्या आत्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वात् नेति चेत्, न; जन्मान्तरसंबन्धस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च, तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति ॥

सर्वथाप्यस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम् । न त्वात्मनः इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम् । यावद्धि तन्नापनीयते, तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषि-

द्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन, स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताधोगतिः। कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम्। तद्द्विविधम्— ज्ञानपूर्वकं केवलं च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। तथा च शास्त्रम्— 'आत्मयाजी श्रेयान्देवयाजिनः' इत्यादि। स्मृतिश्च 'द्विविधं कर्म वैदिकम्' इत्याद्या। साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवती धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया। तदेवेदं व्याकृतं साध्यसाधनरूपं जगत् प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसारः आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते॥

अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनम्—येषामश्वमेधे नाधिकारः, तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः, विद्यया वा कर्मणा वा, 'तद्धैतल्लोकजिदेव' इत्येवमादिश्रुतिभ्यः। कर्मविषयत्वमेव विज्ञानस्येति चेत्, न; 'योऽश्वमे-

धेन यजते य उ चैनमेवं वेद' इति विकल्पश्रुतेः । विद्याप्रकरणे चाम्नानात्, कर्मान्तरे च संपादनदर्शनात्, विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते । सर्वेषां च कर्मणां परं कर्माश्वमेधः, समष्टिव्यष्टिप्राप्तिफलत्वात् । तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम् । तथा च दर्शयिष्यति फलमशनायामृत्युभावम् । न नित्यानां संसारविषयफलत्वमिति चेत्, न; सर्वकर्मपलोपसंहारश्रुतेः । सर्वं हि पत्नीसंबद्धं कर्म; 'जाया मे स्यादेतावान्वै कामः' इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा, पुत्रकर्मापरविद्यानां च 'अयं लोकः पितृलोको देवलोकः' इति फलं दर्शयित्वा, त्र्यन्नात्मकतां चान्ते उपसंहरिष्यति 'त्रयं वा इदं नाम रूपं कर्म' इति——सर्वकर्मणां फलं व्याकृतं संसार एवेति । इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपात् 'एतावदिदम्' इति साध्य-

साधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्या आरभ्यते ॥

तत्र तावदश्वमेधविज्ञानाय 'उषा वा अश्वस्य' इत्यादि। तत्राश्वविषयमेव दर्शनमुच्यते, प्राधान्यादश्वस्य। प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च ॥

ॐ। उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य। द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माँ्सानि। ऊवध्यँ् सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

उषा इति, ब्राह्मो मुहूर्तः उषाः; वैशब्दः स्मारणार्थः, प्रसिद्धं कालं स्मारयति; शिरः, प्राधान्यात्; शिरश्च प्रधानं शरीरावयवानाम्; अश्वस्य, मेध्यस्य मेधार्हस्य यज्ञियस्य, उषाः शिर इति संबन्धः। कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते; प्राजापत्यत्वं च प्रजापतिदृष्ट्यध्यारोपणात्; काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः; एवंरूपो हि प्रजापतिः; विष्णुत्वादिकरणमिव प्रतिमादौ। सूर्यश्चक्षुः, शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च; वातः प्राणः, वायुस्वाभाव्यात्; व्यात्तं विवृतं मुखम् अग्निर्वैश्वानरः; वैश्वानर इत्यग्नेर्विशेषणम्; वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थः, मुखस्याग्निदैवतत्वात्; संवत्सर आत्मा; संवत्सरो द्वादशमासस्त्रयोदशमासो वा; आत्मा शरीरम्; कालावयवानां च संवत्सरः शरीरम्; शरीरं चात्मा, 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेः; अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्। द्यौः पृष्ठम्, ऊर्ध्वत्वसामान्यात्; अन्तरिक्षमुदरम्, सुषिरत्वसामान्यात्; पृथिवी पाजस्यं पादस्यम्, पाजस्यमिति वर्णव्यत्ययेन, पादासनस्थानमित्यर्थः; दिशश्चतस्रोऽपि पार्श्वे, पार्श्वेन दिशां संबन्धात्; पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेत्, न; सर्वमुखत्वोप-

पत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां संबन्धाददोषः; अवान्तर-दिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि; ऋतवोऽङ्गानि, संवत्सरावयवत्वादङ्गसाधर्म्यात्; मासाश्चार्धमासाश्च पर्वाणि संधयः, संधिसामान्यात्; अहोरात्राणि प्रतिष्ठाः; बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि; प्रतिष्ठाः पादाः, प्रतितिष्ठत्येतैरिति; अहोरात्रैर्हि कालात्मा प्रतितिष्ठति, अश्वश्च पादैः; नक्षत्राण्यस्थीनि, शुक्लत्वसामान्यात्; नभो नभःस्था मेघाः, अन्तरिक्षस्योदरत्वोक्तेः; मांसानि, उदकरुधिरसेचनसामान्यात्। ऊवध्यम् उदरस्थमर्धजीर्णमशनं सिकताः, विश्लिष्टावयवत्वसामान्यात्; सिन्धवः स्यन्दनसामान्यात् नद्यः गुदा नाड्यः, बहुवचनाच्च; यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ; क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव; पर्वताः, काठिन्यादुच्छ्रितत्वाच्च; ओषधयश्च क्षुद्राः स्थावराः, वनस्पतयो महान्तः, लोमानि केशाश्च यथासंभवम्; उद्यन्नुद्गच्छन्भवति सविता आ मध्याह्नात् अश्वस्य पूर्वार्धः नाभेरूर्ध्वमित्यर्थः; निम्लोचन्नस्तं यन् आ मध्याह्नात् जघनार्धोऽपरार्धः, पूर्वापरत्वसाधर्म्यात्; यद्विजृम्भते गात्राणि विनामयति विक्षिपति, तद्विद्योतते विद्योतनम्, मुखघनविदारणसामान्यात्; यद्विधूनुते गात्राणि कम्पयति, तत्स्तनयति,

गर्जनशब्दसामान्यात्; यन्मेहति मूत्रं करोत्यश्वः, तद्वर्षति वर्षणं तत्, सेचनसामान्यात्; वागेव शब्द एव अस्याश्वस्य वागिति, नात्र कल्पनेत्यर्थः ॥

**अहर्वा अश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥**

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

अहर्वा इति, सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते, तद्विषयमिदं दर्शनम् । अहः सौवर्णो ग्रहः, दीप्तिसामान्याद्वै । अहरश्वं पुरस्तान्महिमान्वजायतेति कथम्? अश्वस्य प्रजापतित्वात्; प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते; अश्वं लक्षयित्वाजायत सौवर्णो महिमा ग्रहः, वृक्षमनु विद्योतते विद्युदिति यद्वत् । तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रः योनिः, विभक्तिव्यत्ययेन; योनिरित्या-

सादनस्थानम् । तथा रात्री राजतो ग्रहः, वर्णसामान्याज्जघन्यत्वसामान्याद्वा । एनमश्वं पश्चात्पृष्ठतो महिमा अन्वजायत; तस्यापरे समुद्रे योनिः । महिमा महत्त्वात् । अश्वस्य हि विभूतिरेषा, यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते । तावेतौ वै महिमानौ महिमाख्यौ ग्रहौ, अश्वमभितः संबभूवतुः उक्तलक्षणावेव संभूतौ । इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम् । तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गतिकर्मणः, विशिष्टगतिरित्यर्थः; जातिविशेषो वा; देवानवहत् देवत्वमगमयत्, प्रजापतित्वात्; देवानां वा वोढाभवत्; ननु निन्दैव वाहनत्वम्; नैष दोषः; वाहनत्वं स्वाभाविकमश्वस्य, स्वाभाविकत्वादुच्छ्रायप्राप्तिर्देवादिसंबन्धोऽश्वस्य इति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः; वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्गः; तथार्वा भूत्वासुरान्; अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा, बन्धुर्बन्धनम्, बध्यतेऽस्मिन्निति; समुद्रो योनिः कारणमुत्पत्तिं प्रति; एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते; 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः प्रसिद्ध एव वा समुद्रो योनिः ॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

## द्वितीयं ब्राह्मणम् ॥

नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था । नैवेह किंचनाग्र आसीत् इह संसारमण्डले, किंचन किंचिदपि नामरूपप्रविभक्तविशेषम्, नैवासीत् न बभूव, अग्रे प्रागुत्पत्तेर्मनआदेः ॥

किं शून्यमेवं बभूव? शून्यमेव स्यात्; 'नैवेह किंचन' इति श्रुतेः, न कार्यं कारणं वासीत्; उत्पत्तेश्च; उत्पद्यते हि घटः; अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम् । ननु कारणस्य न नास्तित्वम्, मृत्पिण्डादिदर्शनात्; यन्नोपलभ्यते तस्यैव ना-

स्तिता। अस्तु कार्यस्य, न तु कारणस्य, उपलभ्यमानत्वात्। न, प्रागुत्पत्तेः सर्वानुपलम्भात्। अनुपलब्धिश्चेदभावहेतुः, सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते; तस्मात्सर्वस्यैवाभावोऽस्तु॥

न, 'मृत्युनैवेदमावृतमासीत्' इति श्रुतेः; यदि हि किंचिदपि नासीत्, येनाव्रियते यच्चाव्रियते, तदा नावक्ष्यत् 'मृत्युनैवेदमावृतम्' इति; न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति; ब्रवीति च 'मृत्युनैवेदमावृतमासीत्' इति। तस्मात् येनावृतं कारणेन, यच्चावृतं कार्यम्, प्रागुत्पत्तेस्तदुभयमासीत्, श्रुतेः प्रामाण्यात्, अनुमेयत्वाच्च। अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम्। कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्, असति चादर्शनात्, जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते, घटादिकारणास्तित्ववत्। घटादिकारणस्याप्यसत्त्वमेव, अनुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेत्, न; मृदादेः कारणत्वात्। मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेः, न पिण्डाकारविशेषः, तदभावे भावात्। असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते। तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादि-

द्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणम्, न तु पिण्डाकारविशेषः । सर्वं हि कारणं कार्यमुत्पादयत्, पूर्वोत्पन्नस्यात्मकार्यस्य तिरोधानं कुर्वत्, कार्यान्तरमुत्पादयति; एकस्मिन्कारणे युगपदनेककार्यविरोधात् । न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति । तस्मात्पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः प्रागुत्पत्तेः कारणासत्त्वे । पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्— पिण्डादिपूर्वकार्योपमर्दे मृदादि कारणं नोपमृद्यते, घटादिकार्यान्तरेऽप्यनुवर्तते, इत्येतदयुक्तम्, पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेत्, न; मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात् । सादृश्यादन्वयदर्शनम्, न कारणानुवृत्तेरिति चेत्, न; पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः । न च प्रत्यक्षानुमानयोर्विरुद्धाव्यभिचारिता, प्रत्यक्षपूर्वकत्वादनुमानस्य ; सर्वत्रैवानाश्वासप्रसङ्गात्— यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानम्, तद्बुद्धेरप्यन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यतद्बुद्ध्यपेक्षत्वमित्यनवस्थायाम्, तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात्, सर्वत्रानाश्वासतैव । तदिदंबुद्ध्योरपि कर्त्रभावे संबन्धानुपपत्तिः ।

सादृश्यात्तत्संबन्ध इति चेत् , न ; तदिदंबुद्धयोरितरेतरविषयत्वानुपपत्तेः । असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः । असत्येव सादृश्ये तद्बुद्धिरिति चेत् , न ; तदिदंबुद्धयोरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात् । असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेत् , न ; बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात् । तदप्यस्त्विति चेत् , न ; सर्वबुद्धीनां मृषात्वेऽसत्यबुद्धयनुपपत्तेः । तस्मादसदेतत्—सादृश्यात्तद्बुद्धिरिति । अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः ॥

कार्यस्य च अभिव्यक्तिलिङ्गत्वात् । कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः; कथमभिव्यक्तिलिङ्गत्वात्— अभिव्यक्तिलिङ्गमस्येति ? अभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृतं तमआदिना घटादि वस्तु, तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत् , प्राक्सद्भावं न व्यभिचरति; तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः । न ह्यविद्यमानो घटः उदितेऽप्यादित्ये उपलभ्यते । न; ते अविद्यमानत्वाभावादुपलभ्येतैवेति चेत्— न हि तव घटादि कार्यं कदाचिदप्यविद्यमानमित्युदिते आदित्ये उपलभ्येतैव, मृत्पिण्डेसंनिहिते तमआद्यावरणे चासति विद्यमानत्वादिति चेत् , न ; द्विविधत्वादावरणस्य । घटादिकार्यस्य द्विविधं

ह्यावरणम्— मृदादेरभिव्यक्तस्य तमःकुड्यादि, प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम् । तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्यावृतत्वादनुपलब्धिः । नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्तु अभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः । पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत्— तमःकुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टम्; न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले; तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्यावृतत्वादनुपलब्धिरित्ययुक्तम्, आवरणधर्मवैलक्षण्यादिति चेत्, न; क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात् । घटादिकार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत्, न; विभक्तानां कार्यान्तरत्वादावरणत्वोपपत्तेः । आवरणाभावे एव यत्नः कर्तव्य इति चेत्— पिण्डकपालावस्थयोर्विद्यमानमेव घटादि कार्यमावृतत्वान्नोपलभ्यत इति चेत्, घटादिकार्यार्थिना तदावरणविनाशे एव यत्नः कर्तव्यः, न घटाद्युत्पत्तौ; न चैतदस्ति; तस्मादयुक्तं विद्यमानस्यैवावृतत्वादनुपलब्धिः, इति चेत्, न; अनियमात् । न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता; तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् । सोऽपि तमोनाशायैवेति चे-

त्—दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय; तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते; न हि घटे किंचिदाधीयत इति चेत्, न; प्रकाशवतो घटस्योपलभ्यमानत्वात्। यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणे, न तथा प्राक्प्रदीपकरणात्। तस्मान्न तमस्तिरस्करणायैव प्रदीपकरणम्; किं तर्हि, प्रकाशवत्त्वाय; प्रकाशवत्त्वेनैवोपलभ्यमानत्वात्। क्वचिदावरणविनाशेऽपि यत्नः स्यात्; यथा कुड्यादिविनाशे। तस्मान्न नियमोऽस्ति—अभिव्यक्त्यर्थिनावरणविनाशे एव यत्नः कार्य इति। नियमार्थवत्त्वाच्च। कारणे वर्तमानं कार्यं कार्यान्तराणामावरणमित्यवोचाम। तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाशे एव यत्नः क्रियेत, तदा विदलचूर्णाद्यपि कार्यं जायेत। तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव। तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान्। तस्मात्प्रागुत्पत्तेरपि सदेव कार्यम्। अतीतानागतप्रत्ययभेदाच्च। अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तम्। अनागतार्थिप्रवृत्तेश्च। न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा। योगिनां चातीतानागतज्ञानस्य सत्यत्वात्। असंश्चेद्भविष्यद्घटः, ऐश्वरं भविष्यद्घटविषयं प्र-

त्यक्षज्ञानं मिथ्या स्यात्; न च प्रत्यक्षमुपचर्यते; घटसद्भावे ह्यनुमानमवोचाम । विप्रतिषेधाच्च । यदि घटो भविष्यतीति, कुलालादिषु व्याप्रियमाणेषु घटार्थम्, प्रमाणेन निश्चितम्, येन च कालेन घटस्य संबन्धो भविष्यतीत्युच्यते, तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते; भविष्यन्घटोऽसन्निति, न भविष्यतीत्यर्थः; अयं घटो न वर्तत इति यद्वत्। अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत— घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत्कुलालादयः, तथा घटो न वर्तत इत्यसच्छब्दस्यार्थश्चेत्, न विरुध्यते; कस्मात्? स्वेन हि भविष्यद्रूपेण घटो वर्तते; न हि पिण्डस्य वर्तमानता, कपालस्य वा, घटस्य भवति; न च तयोः, भविष्यत्ता घटस्य; तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते । यदि घटस्य यत्स्वं भविष्यत्ताकार्यरूपं तत् प्रतिषिध्येत, तत्प्रतिषेधे विरोधः स्यात्; न तु तद्भवान्प्रतिषेधति; न च सर्वेषां क्रियावतामेकैव वर्तमानता भविष्यत्त्वं वा । अपि च, चतुर्विधानामभावानाम्, घटस्येतरेतराभावो घटादन्यो दृष्टः— यथा घटाभावः पटादिरेव, न घटस्वरूपमेव । न च घटाभावः सन्पटः अभावात्मकः; किं तर्हि? भावरूप एव । एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं

स्यात्, घटेन व्यपदिश्यमानत्वात्, घटस्येतरेतराभाववत्; तथैव भावात्मकताभावानाम् । एवं च सति, घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति । अथ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत, घटस्येति व्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत, शिलापुत्रकस्य शरीरमिति यद्वत्; तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशः, न घटस्वरूपस्यैव । अथार्थान्तरं घटाद्घटस्याभाव इति, उक्तोत्तरमेतत् । किंचान्यत्; प्रागुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वकारणसत्तासंबन्धानुपपत्तिः, द्विनिष्ठत्वात्संबन्धस्य । अयुतसिद्धानामदोष इति चेत्, न; भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धता अयुतसिद्धता वा स्यात्, न तु भावाभावयोरभावयोर्वा । तस्मात्सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम् ॥

किंलक्षणेन मृत्युनावृतमित्यत आह— अशनायया, अशितुमिच्छा अशनाया, सैव मृत्योर्लक्षणम्, तया लक्षितेन मृत्युना अशनायया । कथमशनाया मृत्युरिति, उच्यते— अशनाया हि मृत्युः । हि-शब्देन प्रसिद्धं हेतुमवद्योतयति । यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति

जन्तून् । तेनासावशनायया लक्ष्यते मृत्युरिति, अशनाया हीत्याह । बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते । तेन मृत्युनेदं कार्यमावृतमासीत्, यथा पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत् । तन्मनोऽकुरुत, तदिति मनसो निर्देशः; स प्रकृतो मृत्युः वक्ष्यमाणकार्यसिसृक्षया तत् कार्यालोचनक्षमम्, मनःशब्दवाच्यं संकल्पादिलक्षणमन्तःकरणम्, अकुरुत कृतवान् । केनाभिप्रायेण मनोऽकरोदिति, उच्यते—आत्मन्वी आत्मवान् स्यां भवेयम्; अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्रायः । सः प्रजापतिः, अभिव्यक्तेन मनसा समनस्कः सन्, अर्चन् अर्चयन्पूजयन् आत्मानमेव कृतार्थोऽस्मीति, अचरत् चरणमकरोत् । तस्य प्रजापतेः अर्चतः पूजयतः आपः रसात्मिकाः पूजाङ्गभूताः अजायन्त उत्पन्नाः । अत्राकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यम्, श्रुत्यन्तरसामर्थ्यात्, विकल्पासंभवाच्च सृष्टिक्रमस्य । अर्चते पूजां कुर्वते वै मे मह्यं कम् उदकम् अभूत् इति एवममन्यत यस्मान्मृत्युः, तदेव तस्मादेव हेतोः अर्कस्य अग्नेरश्वमेधक्रत्वौपयोगिकस्य अर्कत्वम्; अर्कत्वे हेतुरित्यर्थः । अग्नेरर्कनामनिर्वचनमेतत्—अर्चनात्सुखहेतुपूजाकरणादप्संबन्धाच्चाग्नेरेतद्गौणं

नामार्क इति । यः एवं यथोक्तम् अर्कस्यार्कत्वं वेद जानाति, कम् उदकं सुखं वा, नामसामान्यात्, ह वै इत्यवधारणार्थौ, भवत्येवेति, अस्मै एवंविदे एवंविदर्थं भवति ॥

**आपो वा अर्कस्तद्यदपाँ शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततताग्निः ॥ २ ॥**

आपो वा अर्कः । कः पुनरसावर्क इति, उच्यते—आपो वै या अर्चनाङ्गभूतास्ता एव अर्कः, अग्नेरर्कस्य हेतुत्वात्, अप्सु चाग्निः प्रतिष्ठित इति; न पुनः साक्षादेवार्कस्ताः, तासामप्रकरणात्; अग्नेश्च प्रकरणम्; वक्ष्यति च—'अयमग्निरर्कः' इति । तत् तत्र, यदपां शर इव शरो दध्न इव मण्डभूतमासीत्, तत्समहन्यत संघातमापद्यत तेजसा बाह्यान्तःपच्यमानम्; लिङ्गव्यत्ययेन वा, योऽपां शरः स समहन्यतेति । सा पृथिव्यभवत्, स संघातो येयं पृथिवी साभवत्; ताभ्योऽद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः; तस्यां पृथिव्यामुत्पादितायाम्, स मृत्युः प्रजापतिः अश्राम्यत् श्रमयुक्तो बभूव; सर्वो हि लोकः कार्यं कृत्वा श्राम्यति; प्रजापतेश्च तन्महत्कार्यम्, यत्पृथवीसर्गः; किं तस्य श्रान्तस्येत्युच्यते—तस्य श्रा-

न्तस्य तप्तस्य स्विन्नस्य, तेजोरसः तेज एव रसस्तेजोरसः, रसः सारः, निरवर्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः; कोऽसौ निष्क्रान्तः? अग्निः सोऽण्डस्यान्तर्विराट् प्रजापतिः प्रथमजः कार्यकरणसंघातवाञ्जातः; 'स वै शरीरी प्रथमः' इति स्मरणात् ॥

**स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्वचैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

स च जातः प्रजापतिः त्रेधा त्रिप्रकारम् आत्मानं स्वयमेव कार्यकरणसंघातं व्यकुरुत व्यभजदित्येतत्; कथं त्रेधेत्याह— आदित्यं तृतीयम् अग्निवाय्वपेक्षया त्रयाणां पूरणम्, अकुरुतेत्यनुवर्तते; तथाग्न्यादित्यापेक्षया

वायुं तृतीयम्; तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति द्रष्टव्यम्; सामर्थ्यस्य तुल्यत्वात्त्रयाणां संख्यापूरणत्वे। स एष प्राणः सर्वभूतानामात्माप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितः विभक्तः, न विराट्स्वरूपोपमर्दनेन। तस्यास्य प्रथमजस्याग्नेरश्वमेधौपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते; सर्वा हि पूर्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्यवोचाम— इत्थमसौ शुद्धजन्मेति। तस्य प्राची दिक् शिरः, विशिष्टत्वसामान्यात्; असौ चासौ च ऐशान्याग्नेय्यौ ईर्मौ बाहू, ईरयतेर्गतिकर्मणः। अथ अस्य अग्नेः, प्रतीची दिक् पुच्छं जघन्यो भागः, प्राङ्मुखस्य प्रत्यग्दिक्संबन्धात्; असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी, पृष्ठकोणत्वसामान्यात्; दक्षिणा चोदीची च पार्श्वे, उभयदिक्संबन्धसामान्यात्; द्यौः पृष्ठमन्तरिक्षमुदरमिति पूर्ववत्; इयमुरः, अधोभागसामान्यात्; स एषोऽग्निः प्रजापतिरूपो लोकाद्यात्मकोऽग्निः अप्सु प्रतिष्ठितः, 'एवमिमे लोका अप्स्वन्तः' इति श्रुतेः; यत्र क्व च यस्मिन्कस्मिंश्चित् एति गच्छति, तदेव तत्रैव प्रतितिष्ठति स्थितिं लभते; कोऽसौ? एवं यथोक्तमप्सु प्रतिष्ठितत्वमग्नेः विद्वान् विजानन्; गुणफलमेतत ॥

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनायामृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः। यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥ ४ ॥**

सोऽकामयत— योऽसौ मृत्युः, सोऽबादिक्रमेणात्मनात्मानमण्डस्यान्तः कार्यकरणसंघातवन्तं विराजमग्निमसृजत, त्रेधा चात्मानमकुरुतेत्युक्तम्। स किंव्यापारः सन्नसृजतेति, उच्यते— सः मृत्युः अकामयत कामितवान्; किम्? द्वितीयः मे मम आत्मा शरीरम्, येनाहं शरीरी स्याम्, स जायेत उत्पद्येत, इति एवमेतदकामयत; सः एवं कामयित्वा, मनसा पूर्वोत्पन्नेन, वाचं त्रयीलक्षणाम्, मिथुनं द्वन्द्वभावम्, समभवत् संभवनं कृतवान्, मनसा त्रयीमालोचितवान्; त्रयीविहितं सृष्टिक्रमं मनसान्वालोचयदित्यर्थः। कोऽसौ? अशनायया लक्षितो मृत्युः; अशनाया मृत्युरित्युक्तम्; तमेव

परामृशति, अन्यत्र प्रसङ्गो मा भूदिति; तद्यद्रेत आसीत्, तत् तत्र मिथुने, यद्रेत आसीत्, प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपम्, त्रय्यालोचनायां यद्दृष्टवानासीज्जन्मान्तरकृतम्; तद्भावभावितोऽपः सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः सः, संवत्सरोऽभवत्, संवत्सरकालनिर्माता संवत्सरः, प्रजापतिरभवत्। न ह, पुरा पूर्वम्, ततः तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः, संवत्सरः कालो नाम, न आस न बभूव ह; तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिम्, यावानिह प्रसिद्धः कालः एतावन्तम् एतावत्संवत्सरपरिमाणं कालम् अबिभः भृतवान् मृत्युः। यावान्संवत्सरः इह प्रसिद्धः, ततः परस्तात्किं कृतवान्? तम्, एतावतः कालस्य संवत्सरमात्रस्य परस्तात् ऊर्ध्वम् असृजत सृष्टवान्, अण्डमभिनदित्यर्थः। तम् एवं कुमारं जातम् अग्निं प्रथमशरीरिणम्, अशनायावत्त्वान्मृत्युः अभिव्याददात् मुखविदारणं कृतवान् अत्तुम्; स च कुमारो भीतः स्वाभाविक्याविद्यया युक्तः भाणित्येवं शब्दम् अकरोत्; सैव वागभवत्, वाक् शब्दः अभवत्॥

**स ऐक्षत यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा**

**तेनात्मनेदꣳ सर्वमसृजत यदिदं किंचर्चो यजूꣳषि सामानि च्छन्दाꣳसि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥**

स ऐक्षत— सः, एवं भीतं कृतरवं कुमारं दृष्ट्वा, मृत्युः ऐक्षत ईक्षितवान्, अशनायावानपि—यदि कदाचिद्वा इमं कुमारम् अभिमंस्ये, अभिपूर्वो मन्यतिर्हिंसार्थः, हिंसिष्ये इत्यर्थः; कनीयोऽन्नं करिष्ये, कनीयः अल्पमन्नं करिष्ये— इति; एवमीक्षित्वा तद्भक्षणादुपरराम; बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय, न कनीयः; तद्भक्षणे हि कनीयोऽन्नं स्यात्, बीजभक्षणे इव सस्याभावः। सः एवं प्रयोजनमन्नबाहुल्यमालोच्य, तयैव त्रय्या वाचा पूर्वोक्तया, तेनैव च आत्मना मनसा, मिथुनीभावमालोचनमुपगम्योपगम्य, इदं सर्वं स्थावरं जङ्गमं च असृजत, यदिदं किंच यत्किंचेदम्; किं तत्? ऋचः, यजूंषि, सामानि, छन्दांसि च सप्त गाय-

ऋचादीनि— स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रान्गाय-त्र्यादिच्छन्दोविशिष्टान्, यज्ञांश्च तत्साध्यान्, प्रजास्त-त्कर्त्रीः, पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान्। ननु त्रय्या मिथुनीभूतयासृजतेत्युक्तम्; ऋगादीनीह कथमसृजतेति? नैष दोषः; मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या; बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्ती-भावः सर्ग इति। सः प्रजापतिः, एवमन्नवृद्धिं बुद्ध्वा, यद्यदेव क्रियां क्रियासाधनं फलं वा किंचित् असृजत, तत्तदत्तुं भक्षयितुम् अध्रियत धृतवान्मनः; सर्वं कृत्स्नं वै यस्मात् अत्ति, तत् तस्मात् अदितेः अदितिनाम्नो मृत्योः अदितित्वं प्रसिद्धम्; तथा च मन्त्रः—'अदितिर्द्यौरदितिरन्त-रिक्षमदितिर्माता स पिता' इत्यादिः; सर्वस्यैतस्य जगतोऽन्न-भूतस्य अत्ता सर्वात्मनैव भवति, अन्यथा विरोधात्; न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते; तस्मात्सर्वात्मा भव-तीत्यर्थः; सर्वमस्यान्नं भवति; अत एव सर्वात्मनो ह्यत्तुः सर्व-मन्नं भवतीत्युपपद्यते; य एवमेतत् यथोक्तम् अदितेः मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं वेद, तस्यैतत्फलम्॥

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्स तपोऽतप्यत**

**तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥**

सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह । भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति; जन्मान्तरकरणापेक्षया भूयःशब्दः; स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत; स तद्भावभावित एव कल्पादौ व्यवर्तत; सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत— भूयसा यज्ञेन भूयो यजेयेति । एवं महत्कार्यं कामयित्वा लोकवदश्राम्यत्; स तपोऽतप्यत; तस्य श्रान्तस्य तप्तस्येति पूर्ववत्; यशो वीर्यमुदक्रामदिति स्वयमेव पदार्थमाह— प्राणाः चक्षुरादयो वै यशः, यशोहेतुत्वात्, तेषु हि सत्सु ख्यातिर्भवति; तथा वीर्यं बलम् अस्मिञ्शरीरे; न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति; तस्मात्प्राणा एव यशो वीर्यं चास्मिञ्शरीरे, तदेवं प्राणलक्षणं यशो वीर्यम् उदक्रामत् उत्क्रान्तवत् । तदेवं यशोवीर्यभूतेषु प्राणेषूत्क्रान्तेषु, शरीरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुम् उच्छूनभावं गन्तुम् अध्रियत, अमेध्यं चाभवत्; तस्य प्रजापतेः, शरीरान्निर्गतस्यापि, तस्मिन्नेव

शरीरे मन आसीत्; यथा कस्यचित्प्रिये विषये दूरं गतस्यापि मनो भवति, तद्वत् ॥

सोऽकामयत मेध्यं म इदँ स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत। तँ संवत्सरस्य परस्तादात्मन आलभत। पशून्देवताभ्यः प्रत्यौहत्। तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते। एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ। सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्।

स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदिति, उच्यते— सोऽकामयत। कथम्? मेध्यं मेधार्हं यज्ञियं मे मम इदं शरीरम् स्यात्; किंच आत्मन्वी आत्मवांश्च अनेन शरीरेण शरीरवान् स्यामिति— प्रविवेश। यस्मात् तच्छरीरं तद्वियोगाद्गतयशोवीर्यं सत् अश्वत् अश्वयत्, ततः तस्मात् अश्वः समभवत्; ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते; यस्माच्च पुनस्तत्प्रवेशात् गतयशोवीर्यत्वादमेध्यं सत् मेध्यमभूत्, तदेव तस्मादेव अश्वमेधस्य अश्वमेधनाम्नः क्रतोः अश्वमेधत्वम् अश्वमेधनामलाभः; क्रियाकारकफलात्मको हि क्रतुः; स च प्रजापतिरेवेति स्तूयते।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तम्—'उषा वा अश्वस्य मेध्यस्य' इत्यादिना। तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्य अग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्योपासनं विधातव्यमित्यारभ्यते। पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात्, क्रियापदापेक्षत्वाच्च प्रकरणस्य, अयमर्थोऽवगम्यते। एष ह वा अश्वमेधं क्रतुं वेद य एनमेवं वेद— यः कश्चित्, एनम् अश्वमग्निरूपमर्कं च यथोक्तम्, एवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं वेद, स एषोऽश्वमेधं वेद, नान्यः; तस्मादेवं वेदितव्य इत्यर्थः। कथम्? तत्र पशुविषय-

मेव तावद्दर्शनमाह। तत्र प्रजापतिः 'भूयसा यज्ञेन भूयो यजेय' इति कामयित्वा, आत्मानमेव पशुं मेध्यं कल्पयित्वा, तं पशुम्, अनवरुध्यैव उत्सृष्टं पशुमवरोधमकृत्वैव मुक्तप्रग्रहम्, अमन्यत अचिन्तयत्। तं संवत्सरस्य पूर्णस्य परस्तात् ऊर्ध्वम् आत्मने आत्मार्थम् आलभत—प्रजापतिदेवताकत्वेनेत्येतत्— आलभत आलम्भं कृतवान्। पशून् अन्यान्ग्राम्यानारण्यांश्च देवताभ्यः यथादैवतं प्रत्यौहत् प्रतिगमितवान्। यस्माच्चैवं प्रजापतिरमन्यत, तस्मादेवमन्योऽप्युक्तेन विधिना आत्मानं पशुमश्वं मेध्यं कल्पयित्वा, 'सर्वदेवत्योऽहं प्रोक्ष्यमाणः; आलभ्यमानस्त्वहं मद्देवत्य एव स्याम्; अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एव' इति विद्यात्। अत एवेदानीं सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते याज्ञिका एवम्। एष ह वा अश्वमेधो य एष तपति, यस्त्वेवं पशुसाधनकः क्रतुः स एष साक्षात्फलभूतो निर्दिश्यते, एष ह वा अश्वमेधः; कोऽसौ? य एषः सविता तपति जगदवभासयति तेजसा; तस्य अस्य क्रतुफलात्मनः, संवत्सरः कालविशेषः, आत्मा शरीरम्, तन्निर्वर्त्यत्वात्संवत्सरस्य; तस्यैव क्रत्वात्मनः अयं पार्थिवोऽग्निः, अर्कः, साधनभूतः; तस्य चार्कस्य क्रतौ

चित्यस्य, इमे लोकास्त्रयोऽपि, आत्मानः शरीरावयवाः; तथा च व्याख्यातम्— 'तस्य प्राची दिक्' इत्यादिना; तावग्न्यादित्यावेतौ यथाविशेषितावर्काश्वमेधौ क्रतुफले; अर्को यः पार्थिवोऽग्निः स साक्षात्क्रतुरूपः क्रियात्मकः; क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः; क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः— आदित्योऽश्वमेध इति । तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ— सा उ, पुनः भूयः, एकैव देवता भवति; का सा? मृत्युरेव; पूर्वमप्येकैवासीत्क्रियासाधनफलभेदाय विभक्ता; तथा चोक्तम् 'स त्रेधात्मानं व्यकुरुत' इति; सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति— मृत्युरेव फलरूपः; यः पुनरेवमेनमश्वमेधं मृत्युमेकां देवतां वेद— अहमेव मृत्युरस्म्यश्वमेध एका देवता मद्रूपाश्वाग्निसाधनसाध्येति; सोऽपजयति, पुनर्मृत्युं पुनर्मरणम्, सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः; अपजितोऽपि मृत्युरेनं पुनराप्नुयादित्याशङ्क्याह— नैनं मृत्युराप्नोति; कस्मात्? मृत्युः, अस्यैवंविदः, आत्मा भवति; किंच मृत्युरेव फलरूपः सन्नेतासां देवतानामेको भवति; तस्यैतत्फलम् ॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

———*———

# तृतीयं ब्राह्मणम् ॥

'द्वया ह' इत्याद्यस्य कः संबन्धः? कर्मणां ज्ञानसाहितानां परा गतिरुक्ता मृत्य्वात्मभावः, अश्वमेधगत्युक्त्या। अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्यत उद्भवः, तत्प्रकाशनार्थमुद्गीथब्राह्मणमारभ्यते ॥

ननु मृत्य्वात्मभावः पूर्वत्र ज्ञानकर्मणोः फलमुक्तम्। उद्गीथज्ञानकर्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति। अतो भिन्नविषयत्वात्फलस्य न पूर्वकर्मज्ञानोद्भवप्रकाशनार्थम् इति चेत्, नायं दोषः; अग्न्यादित्यात्मभावत्वादुद्गीथफलस्य; पूर्वत्राप्येतदेव फलमुक्तम्—'एतासां देवतानामेको भवति' इति। ननु 'मृत्युमतिक्रान्तः' इत्यादि विरुद्धम्; न, स्वाभाविकपाप्मासङ्गविषयत्वादतिक्रमणस्य ॥

कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः? कुतो वा तस्योद्भवः? केन वा तस्यातिक्रमणम्? कथं वा?—इत्येतस्यार्थस्य प्रकाशनाय आख्यायिका आरभ्यते। कथम्?—

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा**

**असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥**

द्वया द्विप्रकाराः; हेति पूर्ववृत्तावद्योतको निपातः; वर्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तम्, तदवद्योतयति ह-शब्देन; प्राजापत्याः प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्याः; के ते? देवाश्चासुराश्च; तस्यैव प्रजापतेः प्राणा वागादयः; कथं पुनस्तेषां देवासुरत्वम्? उच्यते— शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति; त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः, स्वेष्वेवासुषु रमणात्, सुरेभ्यो वा देवेभ्योऽन्यत्वात्। यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततः तस्मात्, कानीयसाः, कनीयांस एव कानीयसाः, स्वार्थेऽणि वृद्धिः; कनीयांसोऽल्पा एव देवाः; ज्यायसा असुरा ज्यायांसोऽसुराः; स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः, दृष्टप्रयोजनत्वात्; अत एव कनीयस्त्वं देवानाम्, शास्त्रजनितप्रवृत्तेरल्पत्वात्; अत्यन्तयत्नसाध्या हि सा; ते देवाश्चासुराश्च प्रजापतिशरीरस्थाः, एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येषु, अस्पर्धन्त स्पर्धां कृतवन्तः; देवानां चासुराणां च वृत्त्युद्भवा-

भिभवौ स्पर्धा । कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति । यदा चोद्भवति, तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्यभिभूयते। स देवानां जयः, असुराणां पराजयः। कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयते, आसुर्या उद्भवः। सोऽसुराणां जयः, देवानां पराजयः। एवं देवानां जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः। असुरजयेऽधर्मभूयस्त्वादपकर्ष आ स्थावरत्वप्राप्तेः। उभयसाम्ये मनुष्यत्वप्राप्तिः। त एवं कनीयस्त्वादभिभूयमाना असुरैर्देवा बाहुल्यादसुराणां किं कृतवन्त इति, उच्यते— ते देवाः, असुरैरभिभूयमानाः, ह किल, ऊचुः उक्तवन्तः; कथम्? हन्त! इदानीम्, अस्मिन्यज्ञे ज्योतिष्टोमे, उद्गीथेन उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणेन, अत्ययाम अतिगच्छामः; असुरानभिभूय स्वं देवभावं शास्त्रप्रकाशितं प्रतिपद्यामहे इत्युक्तवन्तोऽन्योन्यम्। उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणं च ज्ञानकर्मभ्याम्। कर्म वक्ष्यमाणं मन्त्रजपलक्षणम्, विधित्स्यमानम्— 'तदेतानि जपेत्' इति। ज्ञानं त्विदमेव निरूप्यमाणम्॥

नन्विदमभ्यारोहजपविधिशेषोऽर्थवादः, न ज्ञाननिरूपणपरम् । न, 'य एवं वेद' इति वचनात् । उद्गीथप्रस्तावे पुराकल्पश्रवणादुद्गीथविधिपरमिति चेत्, न, अप्रकरणात्; उद्गीथस्य चान्यत्र विहितत्वात्; विद्याप्रकरणत्वाच्चास्य; अभ्यारोहजपस्य चानित्यत्वात् एवंवित्प्रयोज्यत्वात्, विज्ञानस्य च नित्यवच्छ्रवणात्; 'तद्धैतल्लोकजिदेव' इति च श्रुतेः; प्राणस्य वागादीनां च शुद्ध्यशुद्धिवचनात्; न ह्यनुपास्यत्वे—प्राणस्य शुद्धिवचनम्, वागादीनां च सहोपन्यस्तानामशुद्धिवचनम्, वागादिनिन्दया मुख्यप्राणस्तुतिश्चाभिप्रेता,—उपपद्यते— 'मृत्युमतिक्रान्तो दीप्यते' इत्यादि फलवचनं च । प्राणस्वरूपापत्तेर्हि फलं तत्, यद्वागाद्यग्न्यादिभावः ॥

भवतु नाम प्राणस्योपासनम्, न तु विशुद्ध्यादिगुणवत्तेति; ननु स्याच्छ्रुतत्वात्; न स्यात्, उपास्यत्वे स्तुत्यर्थत्वोपपत्तेः । न; अविपरीतार्थप्रतिपत्तेः श्रेयःप्राप्त्युपपत्तेः, लोकवत् । यो ह्यविपरीतमर्थं प्रतिपद्यते लोके, स इष्टं प्राप्नोत्यनिष्टाद्वा निवर्तते, न विपरीतार्थप्रतिपत्त्या; तथेहापि श्रौतशब्दजनितार्थप्रतिपत्तौ श्रेयःप्राप्तिरुपपन्ना, न विपर्यये । न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति । न च तद्विज्ञानस्यापवादः श्रूयते । ततः श्रेयःप्राप्तिद-

र्शनाद्यथार्थतां प्रतिपद्यामहे । विपर्यये चानर्थप्राप्तिदर्शनात्—यो हि विपर्ययेणार्थं प्रतिपद्यते लोके—पुरुषं स्थाणुरिति, अमित्रं मित्रमिति वा, सोऽनर्थं प्राप्नुवन्दृश्यते । आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद्ग्रहणं श्रुतितः, अनर्थप्राप्त्यर्थं शास्त्रमिति ध्रुवं प्राप्नुयाल्लोकवदेव; न चैतदिष्टम् । तस्माद्यथाभूतानेवात्मेश्वरदेवतादीन्ग्राहयत्युपासनार्थं शास्त्रम् । नामादौ ब्रह्मदृष्टिदर्शनादयुक्तमिति चेत्, स्फुटं नामादेरब्रह्मत्वम्; तत्र ब्रह्मदृष्टिं स्थाण्वादाविव पुरुषदृष्टिं विपरीतां ग्राहयच्छास्त्रं दृश्यते; तस्माद्यथार्थमेव शास्त्रतः प्रतिपत्तेः श्रेय इत्ययुक्तमिति चेत्, न; प्रतिमावद्भेदप्रतिपत्तेः । नामादावब्रह्मणि ब्रह्मदृष्टिं विपरीतां ग्राहयति शास्त्रम्, स्थाण्वादाविव पुरुषदृष्टिम्— इति नैतत्साध्ववोचः । कस्मात्? भेदेन हि ब्रह्मणो नामादिवस्तु प्रतिपन्नस्य नामादौ विधीयते ब्रह्मदृष्टिः, प्रतिमादाविव विष्णुदृष्टिः । आलम्बनत्वेन हि नामादिप्रतिपत्तिः, प्रतिमादिवदेव, न तु नामाद्येव ब्रह्मेति । यथा स्थाणावनिर्ज्ञाते, न स्थाणुरिति, पुरुष एवायमिति प्रतिपद्यते विपरीतम्, न तु तथा नामादौ ब्रह्मदृष्टिर्विपरीता ॥

ब्रह्मदृष्टिरेव केवला, नास्ति ब्रह्मेति चेत्;— एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिदृष्टीनां तुल्यता—

न, ऋगादिषु पृथिव्यादिदृष्टिदर्शनात्, विद्यमानपृथिव्यादि-वस्तुदृष्टीनामेव ऋगादिविषये प्रक्षेपदर्शनात्। तस्मात्तत्सामान्यान्नामादिषु ब्रह्मादिदृष्टीनां विद्यमानब्रह्मादिविषयत्वसिद्धिः। एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिबुद्धीनां च सत्यवस्तुविषयत्वसिद्धिः। मुख्यापेक्षत्वाच्च गौणत्वस्य; पञ्चाग्न्यादिषु चाग्नित्वादेर्गौणत्वान्मुख्याग्न्यादिसद्भाववत्, नामादिषु ब्रह्मत्वस्य गौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिः॥

क्रियार्थैश्चाविशेषाद्विद्यार्थानाम्। यथा च, दर्शपूर्णमासादिक्रिया इदंफला विशिष्टेतिकर्तव्यताका एवंक्रमप्रयुक्ताङ्गा च—इत्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतं च वेदवाक्यैरेव ज्ञाप्यते; तथा, परमात्मेश्वरदेवतादिवस्तु अस्थूलादिधर्मकमशनायाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यते—इति अलौकिकत्वात्तथाभूतमेव भवितुमर्हतीति। न च क्रियार्थैर्वाक्यैर्ज्ञानवाक्यानां बुद्ध्युत्पादकत्वे विशेषोऽस्ति। न चानिश्चिता विपर्यस्ता वा परमात्मादिवस्तुविषया बुद्धिरुत्पद्यते। अनुष्ठेयाभावादयुक्तमिति चेत्, क्रियार्थैर्वाक्यैः त्र्यंशा भावनानुष्ठेया ज्ञाप्यतेऽलौकिक्यपि; न तथा परमात्मेश्वरादिविज्ञानेऽनुष्ठेयं किंचिदस्ति; अतः क्रियार्थैः साधर्म्यमित्ययुक्तमिति चेत्, न; ज्ञानस्य तथाभूतार्थविषय-

त्वात् । न ह्यनुष्ठेयस्य त्र्यंशस्य भावनाख्यस्यानुष्ठेयत्वात्तथा-त्वम्; किं तर्हि? प्रमाणसमधिगतत्वात् । न च तद्विषयाया बुद्धेरनुष्ठेयविषयत्वात्तथार्थत्वम्; किं तर्हि? वेदवाक्यजनित-त्वादेव । वेदवाक्याधिगतस्य वस्तुनस्तथात्वे सति, अनुष्ठेय-त्वविशिष्टं चेत् अनुतिष्ठति; नो चेदनुष्ठेयत्वविशिष्टम्, नानु-तिष्ठति । अननुष्ठेयत्वे वाक्यप्रमाणत्वानुपपत्तिरिति चेत्, न ह्यनुष्ठेयेऽसति पदानां संहतिरुपपद्यते; अनुष्ठेयत्वे तु सति तादर्थ्येन पदानि संहन्यन्ते; तत्रानुष्ठेयनिष्ठं वाक्यं प्रमाणं भवति—इदमनेनैवं कर्तव्यमिति; न त्विदमनेनैव-मित्येवंप्रकाराणां पदशतानामपि वाक्यत्वमस्ति,—'कुर्या-त्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम' इत्येवमादीनाम-न्यतमेऽसति; अतः परमात्मेश्वरादीनामवाक्यप्रमाणत्वम्; पदार्थत्वे च प्रमाणान्तरविषयत्वम्; अतोऽसदेतदिति चेत्, न; 'अस्ति मेरुर्वर्णचतुष्टयोपेतः' इति एवमाद्यननुष्ठेयेऽपि वाक्यदर्शनात् । न च, 'मेरुर्वर्णचतुष्टयोपेतः' इत्येवमादि-वाक्यश्रवणे मेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते । तथा अस्ति-पदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेष-णविशेष्यभावेन संहतिः केन वार्यते । मेर्वादिज्ञानवत्परमा-त्मज्ञाने प्रयोजनाभावादयुक्तमिति चेत्, न; 'ब्रह्मविदाप्नो-ति परम्' 'भिद्यते हृदयग्रन्थिः' इति फलश्रवणात्, सं-

सारबीजाविद्यादिदोषनिवृत्तिदर्शनाच्च । अनन्यशेषत्वाच्च तज्ज्ञानस्य, जुह्वामिव, फलश्रुतेरर्थवादत्वानुपपत्तिः ॥

प्रतिषिद्धानिष्टफलसंबन्धश्च वेदादेव विज्ञायते । न चानुष्ठेयः सः । न च प्रतिषिद्धविषये प्रवृत्तक्रियस्य अकरणादन्यदनुष्ठेयमस्ति । अकर्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात् । क्षुधार्तस्य प्रतिषेधज्ञानसंस्कृतस्य, अभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्तान्नादौ 'इदं भक्ष्यम्' 'अदो भोज्यम' इति वा ज्ञानमुत्पन्नम्, तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते; मृगतृष्णिकायामिव पेयज्ञानं तद्विषययाथात्म्यविज्ञानेन । तस्मिन्बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति । विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्निवृत्तिरेव, न पुनर्यत्नः कार्यस्तदभावे । तस्मात्प्रतिषेधविधीनां वस्तुयाथात्म्यज्ञाननिष्ठतैव, न पुरुषव्यापारनिष्ठतागन्धोऽप्यस्ति । तथेहापि परमात्मादियाथात्म्यज्ञानविधीनां तावन्मात्रपर्यवसानतैव स्यात् । तथा तद्विज्ञानसंस्कृतस्य, तद्विपरीतार्थज्ञाननिमित्तानां प्रवृत्तीनाम्, अनर्थार्थत्वेन ज्ञायमानत्वात् परमात्मादियाथात्म्यज्ञानस्मृत्या स्वाभाविके तन्निमित्तविज्ञाने बाधिते, अभावः स्यात् । ननु कलञ्जादिभक्षणादेरनर्थार्थत्ववस्तुयाथात्म्यज्ञानस्मृत्या स्वाभा-

विके तद्भक्ष्यत्वादिविपरीतज्ञाने निवर्तिते तद्भक्षणाद्यनर्थप्रवृत्त्यभाववत्, अप्रतिषेधविषयत्वाच्छास्त्रविहितप्रवृत्त्यभावो न युक्त इति चेत्, न; विपरीतज्ञाननिमित्तत्वानर्थार्थत्वाभ्यां तुल्यत्वात्। कलञ्जभक्षणादिप्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वं च यथा, तथा शास्त्रविहितप्रवृत्तीनामपि। तस्मात्परमात्मयाथात्म्यविज्ञानवतः शास्त्रविहितप्रवृत्तीनामपि, मिथ्याज्ञाननिमित्तत्वेनानर्थार्थत्वेन च तुल्यत्वात्, परमात्मज्ञानेन विपरीतज्ञाने निवर्तिते, युक्त एवाभावः। ननु तत्र युक्तः; नित्यानां तु केवलशास्त्रनिमित्तत्वादनर्थार्थत्वाभावाच्च अभावो न युक्त इति चेत्, न; अविद्यारागद्वेषादिदोषवतो विहितत्वात्। यथा स्वर्गकामादिदोषवतो दर्शपूर्णमासादीनि काम्यानि कर्माणि विहितानि, तथा सर्वानर्थबीजाविद्यादिदोषवतस्तज्जनितेष्टानिष्टप्राप्तिपरिहाररागद्वेषादिदोषवतश्च तत्प्रेरिताविशेषप्रवृत्तेरिष्टानिष्टप्राप्तिपरिहारार्थिनो नित्यानि कर्माणि विधीयन्ते; न केवलं शास्त्रनिमित्तान्येव। न चाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसोमानां कर्मणां स्वतः काम्यनित्यत्वविवेकोऽस्ति। कर्तृगतेन हि स्वर्गादिकामदोषेण कामार्थता; तथा अविद्यादिदोषवतः स्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येव नित्यानि— इति युक्तम्; तं प्रति विहितत्वात्। न परमात्मयाथात्म्यविज्ञानवतः शमोपायव्यति-

रेकेण किंचित्कर्म विहितमुपलभ्यते । कर्मनिमित्तदेवतादि-सर्वसाधनविज्ञानोपमर्देन ह्यात्मज्ञानं विधीयते । न चोपम-र्दितक्रियाकारकादिविज्ञानस्य कर्मप्रवृत्तिरुपपद्यते, विशिष्ट-क्रियासाधनादिज्ञानपूर्वकत्वात्क्रियाप्रवृत्तेः । न हि देशकाला-द्यनवच्छिन्नास्थूलाद्वयादिब्रह्मप्रत्ययधारिणः कर्मावसरोऽस्ति । भोजनादिप्रवृत्त्यवसरवत्स्यादिति चेत्, न; अविद्यादिकेव-लदोषनिमित्तत्वाद्भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तेः । न तु, तथा अनियतं कदाचित्क्रियते कदाचिन्न क्रियते चेति, नित्यं कर्मोपपद्यते । केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽनिय-तत्वं स्यात्, दोषोद्भवाभिभवयोरनियतत्वात्, कामानामिव काम्येषु । शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वा-नुपपत्तिः; दोषनिमित्तत्वे सत्यपि, यथा काम्याग्निहोत्रस्य शास्त्रविहितत्वात्सायंप्रातःकालाद्यपेक्षत्वम्, एवम् । तद्भो-जनादिप्रवृत्तौ नियमवत्स्यादिति चेत्, न; नियमस्य अक्रि-यात्वात् क्रियायाश्चाप्रयोजकत्वात् नासौ ज्ञानस्यापवादकरः । तस्मात्, परमात्मयाथात्म्यज्ञानविधेरपि तद्विपरीतस्थूलद्वै-तादिज्ञाननिवर्तकत्वात् सामर्थ्यात्सर्वकर्मप्रतिषेधविध्यर्थत्वं संपद्यते कर्मप्रवृत्त्यभावस्य तुल्यत्वात्, यथा प्रतिषे-धविषये । तस्मात, प्रतिषेधविधिवच्च, वस्तुप्रतिपादनं तत्प-रत्वं च सिद्धं शास्त्रस्य ॥

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत्। यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥**

ते देवाः, ह एवं विनिश्चित्य, वाचं वागभिमानिनीं देवताम्, ऊचुः उक्तवन्तः; त्वम्, नः अस्मभ्यम्, उद्गाय औद्गात्रं कर्म कुरुष्व; वाग्देवतानिर्वर्त्यमौद्गात्रं कर्म दृष्टवन्तः, तामेव च देवतां जपमन्त्राभिधेयाम्—'असतो मा सद्गमय' इति। अत्र चोपासनायाः कर्मणश्च कर्तृत्वेन वागादय एव विवक्ष्यन्ते। कस्मात्? यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषय एव च सर्वो ज्ञानकर्मसंव्यवहारः। वक्ष्यति हि 'ध्यायतीव लेलायतीव' इत्यात्मकर्तृकत्वाभावं विस्तरतः षष्ठे। इहापि च अध्यायान्ते उपसंहरिष्यति अव्याकृतादिक्रियाकारकफलजातम्— 'त्रयं वा इदं नाम रूपं कर्म' इति—अविद्याविषयम्। अव्याकृतात्तु यत्परं परमात्माख्यं विद्याविषयम् अनामरूपकर्मात्मकम्,

'नेति नेति' इति इतरप्रत्याख्यानेनोपसंहरिष्यति पृथक्। यस्तु वागादिसमाहारोपाधिपरिकल्पितः संसार्यात्मा, तं च वागादिसमाहारपक्षपातिनमेव दर्शयिष्यति—'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति । तस्माद्युक्ता वागादीनामेव ज्ञानकर्मकर्तृत्वफलप्राप्तिविवक्षा । तथेति तथास्त्विति, देवैरुक्ता वाक् तेभ्यः अर्थिभ्यः अर्थाय, उदगायत् उद्गानं कृतवती । कः पुनरसौ देवेभ्योऽर्थायोद्गानकर्मणा वाचा निर्वर्तितः कार्यविशेष इति, उच्यते—यो वाचि—निमित्तभूतायाम्—वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादिव्यापारेण, स एव । सर्वेषां ह्यसौ वाग्वदनाभिनिर्वृत्तो भोगः फलम् । तं भोगं सा त्रिषु पवमानेषु कृत्वा अवशिष्टेषु नवसु स्तोत्रेषु वाचनिकमार्त्विज्यं फलम्—यत्कल्याणं शोभनम्, वदति वर्णानभिनिर्वर्तयति, तत्—आत्मने मह्यमेव । तद्ध्यसाधारणं वाग्देवतायाः कर्म, यत्सम्यग्वर्णानामुच्चारणम्; अतस्तदेव विशेष्यते—'यत्कल्याणं वदति' इति । यत्तु वदनकार्यं सर्वसंघातोपकारात्मकम्, तद्याजमानमेव । तत्र कल्याणवदनात्मसंबन्धासङ्गावसरं देवताया रन्ध्रं प्रतिलभ्य ते विदुः असुराः; कथम्? अनेनोद्गात्रा, नः अस्मान्, स्वाभाविकं ज्ञानं कर्म च, अभिभूय अतीत्य, शास्त्रजनितकर्मज्ञानरूपेण ज्योतिषोद्गात्रात्मना अत्येष्यन्ति अतिगमिष्य-

न्ति—इत्येवं विज्ञाय, तमुद्गातारम्, अभिद्रुत्य अभिगम्य, स्वेन आसङ्गलक्षणेन पाप्मना अविध्यन् ताडितवन्तः संयोजितवन्त इत्यर्थः। स यः स पाप्मा—प्रजापतेः पूर्वजन्मावस्थस्य वाचि क्षिप्तः स एष प्रत्यक्षीक्रियते— कोऽसौ? यदेवेदमप्रतिरूपम् अननुरूपं शास्त्रप्रतिषिद्धं वदति, येन प्रयुक्तोऽसभ्यबीभत्सानृताद्यनिच्छन्नपि वदति; अनेन कार्येणाप्रतिरूपवदनेनानुगम्यमानः प्रजापतेः कार्यभूतासु प्रजासु वाचि वर्तते; स एवाप्रतिरूपवदनेनानुमितः, स प्रजापतेर्वाचि गतः पाप्मा; कारणानुविधायि हि कार्यमिति॥

**अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा॥ ३॥**

**अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोग-**

स्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ शृणोति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ संकल्पयति तदात्मने । ते विदुरनेन वै न

**उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मना-विध्यन्स यः स पाप्मा यदेवेदमप्रति-रूपꣳ संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमे-नाः पाप्मनाविध्यन् ॥ ६ ॥**

तथैव प्राणादिदेवता उद्गीथनिर्वर्तकत्वाज्जपमन्त्रप्रकाश्या उपास्याश्चेति क्रमेण परीक्षितवन्तः । देवानां चैतन्निश्चितमा-सीत्—वागादिदेवताः क्रमेण परीक्ष्यमाणाः कल्याणविषय-विशेषात्मसंबन्धासङ्गहेतोरासुरपाप्मसंसर्गादुद्गीथनिर्वर्तनास-मर्थाः; अतोऽनभिधेयाः, 'असतो मा सद्गमय' इत्यनुपा-स्याश्च; अशुद्धत्वादितराव्यापकत्वाच्चेति । एवमु खलु, अनुक्ता अप्येतास्त्वगादिदेवताः, कल्याणाकल्याणकार्यदर्शनात, एवं वागादिवदेव, एनाः, पाप्मना अविध्यन् पाप्मना विद्धवन्त इति यदुक्तं तत्पाप्मभिरुपासृजन् पाप्मभिः संसर्गं कृतवन्त इत्येतत् ॥

वागादिदेवता उपासीना अपि मृत्य्वतिगमनायाशरणाः सन्तो देवाः, क्रमेण—

**अथ हेममासन्यं प्राणमूचुस्त्वं न उ-**

**द्गायेति तथेति तेभ्य एष प्राण उदगा-
यत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविव्यत्सन्स यथा-
श्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव
विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो
देवा अभवन्परासुरा भवत्यात्मना परा-
स्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥**

अथ अनन्तरम्, ह इममित्यभिनयप्रदर्शनार्थम्, आसन्यम् आस्ये भवमासन्यं मुखान्तर्बिलस्थं प्राणमूचुः— 'त्वं न उद्गाय' इति। तथेत्येवं शरणमुपगतेभ्यः स एष प्राणो मुख्य उदगायत् इत्यादि पूर्ववत्। पाप्मना अविव्यत्सन् वेधनं कर्तुमिष्टवन्तः, ते च दोषासंसर्गिणं सन्तं मुख्यं प्राणम्, स्वेन आसङ्गदोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या, संस्रक्ष्यमाणा विनेशुः विनष्टा विध्वस्ताः; कथमिवेति दृष्टान्त उच्यते— स यथा स दृष्टान्तो यथा— लोके अश्मानं पाषाणम्, ऋत्वा गत्वा प्राप्य, लोष्टः पांसुपिण्डः, पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेत्; एवं हैव यथायं दृष्टान्त एवमेव,

विध्वंसमाना विशेषेण ध्वंसमानाः, विष्वञ्चः नानागतयः, विनेशुः विनष्टाः, यतः ;—ततः तस्मादासुरविनाशाद्देवत्वप्रतिबन्धभूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगात्, असंसर्गधर्मिमुख्यप्राणाश्रयबलात्, देवाः वागादयः प्रकृताः, अभवन्; किमभवन्? स्वं देवतारूपमग्न्याद्यात्मकं वक्ष्यमाणम् । पूर्वमप्यग्न्याद्यात्मका एव सन्तः स्वाभाविकेन पाप्मना तिरस्कृतविज्ञानाः पिण्डमात्राभिमाना आसन् । ते तत्पाप्मवियोगादुज्झित्वा पिण्डमात्राभिमानं शास्त्रसमर्पितवागाद्यग्न्याद्यात्माभिमाना बभूवुरित्यर्थः । किंच ते प्रतिपक्षभूता असुराः परा—अभवन्नित्यनुवर्तते; पराभूता विनष्टा इत्यर्थः । यथा पुराकल्पेन वर्णितः पूर्वयजमानोऽतिक्रान्तकालिकः एतामेवाख्यायिकारूपां श्रुतिं दृष्ट्वा, तेनैव क्रमेण वागादिदेवताः परीक्ष्य, ताश्चापोह्यासङ्गपाप्मास्पददोषवत्त्वेनादोषास्पदं मुख्यं प्राणमात्मत्वेनोपगम्य, वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानं हित्वा, वैराजपिण्डाभिमानं वागाद्यग्न्याद्यात्मविषयं वर्तमानप्रजापतित्वं शास्त्रप्रकाशितं प्रतिपन्नः; तथैवायं यजमानस्तेनैव विधिना भवति प्रजापतिस्वरूपेणात्मना; परा च, अस्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा द्विषन्भ्रातृव्यः, भवति;— यतोऽद्वेष्टापि भ-

वति कश्चिद्भ्रातृव्यो भरतादितुल्यः; यस्त्विन्द्रियविषया-सङ्गजनितः पाप्मा, भ्रातृव्यो द्वेष्टा च, पारमार्थिकात्मस्व-रूपतिरस्करणहेतुत्वात्— स च पराभवति विशीर्यते, लोष्टवत्, प्राणपरिष्वङ्गात्। कस्यैतत्फलमित्याह— य एवं वेद, यथोक्तं प्राणमात्मत्वेन प्रतिपद्यते पूर्वयजमानवदित्यर्थः॥

फलमुपसंहृत्याधुनाख्यायिकारूपमेवाश्रित्याह। कस्माच्च हेतोर्वागादीन्मुक्त्वा मुख्य एव प्राण आत्मत्वेनाश्रयितव्य इति तदुपपत्तिनिरूपणाय, यस्मादयं वागादीनां पिण्डादीनां च साधारण आत्मा— इत्येतमर्थमाख्यायिकया दर्शयन्त्याह श्रुतिः—

**ते होचुः क नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः॥ ८॥**

ते प्रजापतिप्राणाः, मुख्येन प्राणेन परिप्रापितदेवस्वरूपाः, ह ऊचुः उक्तवन्तः, फलावस्थाः; किमित्याह— क न्विति वितर्के; क नु कस्मिन्नु, सोऽभूत्; कः? यो नोऽस्मान्, इत्थम् एवम्, असक्त सञ्जितवान् देवभावमात्मत्वेनोपगमित-

वान् । स्मरन्ति हि लोके केनचिदुपकृता उपकारिणम् ; लोकवदेव स्मरन्तो विचारयमाणाः कार्यकरणसंघाते आत्मन्येवोपलब्धवन्तः ; कथम्? अयमास्येऽन्तरिति— आस्ये मुखे य आकाशस्तस्मिन् , अन्तः, अयं प्रत्यक्षो वर्तत इति । सर्वो हि लोको विचार्याध्यवस्यति ; तथा देवाः । यस्मादयमन्तराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्तमान उपलब्धो देवैः, तस्मात्— स प्राणोऽयास्यः ; विशेषानाश्रयत्वाच्च असक्त सञ्जितवान्वागादीन् ; अत एवाङ्गिरसः आत्मा कार्यकरणानाम् ; कथमाङ्गिरसः? प्रसिद्धं ह्येतत् , अङ्गानां कार्यकरणलक्षणानाम् , रसः सार आत्मेत्यर्थः ; कथं पुनरङ्गरसत्वम्? तदपाये शोषप्राप्तेरिति वक्ष्यामः । यस्माच्चायमङ्गरसत्वाद्विशेषानाश्रयत्वाच्च कार्यकरणानां साधारण आत्मा विशुद्धश्च, तस्माद्वागादीनपास्य प्राण एवात्मत्वेनाश्रयितव्य इति वाक्यार्थः । आत्मा ह्यात्मत्वेनोपगन्तव्यः ; अविपरीतबोधाच्छ्रेयःप्राप्तेः, विपर्यये चानिष्टप्राप्तिदर्शनात् ॥

**सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥**

स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति ; ननु परिहृतमेतद्वागादीनां कल्याणवदनाद्यासङ्गवत्प्राणस्यासङ्गास्पदाभावेन ; बाढम् ; किं त्वाङ्गिरसत्वेन वागादीनामात्मत्वोक्त्या वागादिद्वारेण शवस्पृष्टितत्स्पृष्टेरिवाशुद्धता शङ्क्यत इति । आह— शुद्ध एव प्राणः ; कुतः ? सा वा एषा देवता दूर्नाम— यं प्राणं प्राप्याश्मानमिव लोष्टवद्विध्वस्ता असुराः ; तं परामृशति— सेति ; सैवैषा, येयं वर्तमानयजमानशरीरस्था देवैर्निर्धारिता ‘अयमास्येऽन्तः’ इति ; देवता च सा स्यात्, उपासनक्रियायाः कर्मभावेन गुणभूतत्वात् ; यस्मात्सा दूर्नाम दूरित्येवं ख्याता— नामशब्दः ख्यापनपर्यायः— तस्मात्प्रसिद्धास्या विशुद्धिः, दूर्नामत्वात् ; कुतः पुनर्दूर्नामत्वमित्याह—दूरं दूरे, हि यस्मात्, अस्याः प्राणदेवतायाः, मृत्युरासङ्गलक्षणः पाप्मा ; असंश्लेषधर्मित्वात्प्राणस्य समीपस्थस्यापि दूरता मृत्योः ; तस्माद्दूरित्येवं ख्यातिः ; एवं प्राणस्य विशुद्धिर्ज्ञापिता । विदुषः फलमुच्यते— दूरं ह वा अस्मान्मृत्युर्भवति— अस्मादेवंविदः, य एवं वेद तस्मात्, एवमिति— प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः । उपासनं नाम उपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसोपगम्य, आसनं चिन्तनम्, लौकिकप्रत्ययाव्यवधानेन,

यावत् तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति लौकिकात्माभिमानवत्;—‘देवो भूत्वा देवानप्येति’ ‘किंदेवतोऽस्यां प्राच्यां दिश्यसि’ इत्येवमादिश्रुतिभ्यः ॥

‘सा वा एषा देवता… दूरं ह वा अस्मान्मृत्युर्भवति’ इत्युक्तम्; कथं पुनरेवंविदो दूरं मृत्युर्भवतीति? उच्यते—एवंवित्त्वविरोधात्; इन्द्रियविषयसंसर्गासङ्गजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते, वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविकाज्ञानहेतुत्वाच्च; शास्त्रजनितो हि प्राणात्माभिमानः; तस्मात् एवंविदः पाप्मा दूरं भवतीति युक्तम्, विरोधात्;— तदेतत्प्रदर्शयति—

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥**

सा वा एषा देवतेत्युक्तार्थम्। एतासां वागादीनां देवतानाम्, पाप्मानं मृत्युम्— स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते, स ह्यतो

मृत्युः— तम्, प्राणात्माभिमानरूपाभ्यो देवताभ्यः, अपच्छिद्य अपहृत्य,— प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्युच्यते; विरोधादेव तु पाप्मैवंविदो दूरं गतो भवति; किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहृत्येत्युच्यते— यत्र यस्मिन्, आसां प्राच्यादीनां दिशाम्, अन्तः अवसानम्, तत् तत्र, गमयांचकार गमनं कृतवानित्येतत्। ननु नास्ति दिशामन्तः, कथमन्तं गमितवानिति; उच्यते— श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तः, देशान्तोऽरण्यमिति यद्वत्; इत्यदोषः। तत्तत्र गमयित्वा, आसां देवतानाम्, पाप्मन इति द्वितीयाबहुवचनम्, विन्यदधात् विविधं न्यग्भावेनादधात्स्थापितवती, प्राणदेवता; प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यात्; इन्द्रियसंसर्गजो हि स इति प्राण्याश्रयतावगम्यते। तस्मात्तमन्त्यं जनम्, नेयात् न गच्छेत् संभाषणदर्शनादिभिर्न संसृजेत्; तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्; पाप्माश्रयो हि सः; तज्जननिवासं चान्तं दिगन्तशब्दवाच्यम्, नेयात्—जनशून्यमपि, जनमपि तद्देशवियुक्तम्, इत्यभिप्रायः। नेदिति परिभयार्थे निपातः; इत्थं जनसंसर्गे, पाप्मानं मृत्युम्, अन्ववायानीति— अनु

अव अयानीति अनुगच्छेयमिति; एवं भीतो न जनमन्तं चेयादिति पूर्वेण संबन्धः ॥

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥**

सा वा एषा देवता—तदेतत्प्राणात्मज्ञानकर्मफलं वागादीनामग्न्याद्यात्मत्वमुच्यते । अथैना मृत्युमत्यवहत्—यस्माद्‍ध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञानेनापहतः, तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः; तस्मात्स एव प्राणः, एना वागादिदेवताः, प्रकृतं पाप्मानं मृत्युम्, अतीत्य अवहत् प्रापयत् स्वं स्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपम् ॥

**स वै वाचमेव प्रथमामत्यवहत्; सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्; सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥**

स वै वाचमेव प्रथमामत्यवहत्— स प्राणः, वाचमेव, प्रथमां प्रधानामित्येतत्—उद्गीथकर्मणीतरकरणापेक्षया साध-

कतमत्वं प्राधान्यं तस्याः—तां प्रथमामत्यवहत् वहनं कृतवान्। तस्याः पुनर्मृत्युमतीत्योढायाः किं रूपमित्युच्यते—सा वाक्, यदा यस्मिन्काले, पाप्मानं मृत्युम्, अत्यमुच्यत अतीत्यामुच्यत मोचिता स्वयमेव, तदा सः अग्निः अभवत्—सा वाक्—पूर्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत्। एतावांस्तु विशेषो मृत्युवियोगे—सोऽयमतिक्रान्तोऽग्निः, परेण मृत्युं परस्तान्मृत्योः, दीप्यते; प्राङ्मोक्षान्मृत्युप्रतिबद्धोऽध्यात्मवागात्मना नेदानीमिव दीप्तिमानासीत्; इदानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात्॥

**अथ प्राणमत्यवहत्; स यदा मृत्युमत्यमुच्यत स वायुरभवत्; सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते॥ १३॥**

तथा— प्राणः घ्राणम्— वायुरभवत्; स तु पवते मृत्युं परेणातिक्रान्तः। सर्वमन्यदुक्तार्थम्॥

**अथ चक्षुरत्यवहत्; तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्; सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति॥**

तथा चक्षुरादित्योऽभवत्; स तु तपति॥

**अथ श्रोत्रमत्यवहत्; तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥**

तथा श्रोत्रं दिशोऽभवन्; दिशः प्राच्यादिविभागेनावस्थिताः ॥

**अथ मनोऽत्यवहत्; तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्; सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥**

मनः चन्द्रमाः—भाति। यथा पूर्वयजमानं वागाद्यग्न्यादिभावेन मृत्युमत्यवहत्, एवम् एनं वर्तमानयजमानमपि, ह वै, एषा प्राणदेवता मृत्युमतिवहति वागाद्यग्न्यादिभावेन, एवं यो वागादिपञ्चकविशिष्टं प्राणं वेद; 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः ॥

**अथात्मनेऽन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥**

अथात्मने । यथा वागादिभिरात्मार्थमागानं कृतम्; तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यफलमागानं कृत्वा त्रिषु पवमानेषु, अथ अनन्तरं शिष्टेषु नवसु स्तोत्रेषु, आत्मने आत्मार्थम्, अन्नाद्यम् अन्नं च तदाद्यं च अन्नाद्यम्, आगायत् । कर्तुः कामसंयोगो वाचनिक इत्युक्तम् । कथं पुनस्तदन्नाद्यं प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह— यत्किंचेति— सामान्यान्नमात्रपरामर्शार्थः; हीति हेतौ; यस्माल्लोके प्राणिभिर्यत्किंचिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव; अन इति प्राणस्याख्या प्रसिद्धा; अनःशब्दः सान्तः शकटवाची, यस्त्वन्यः स्वरान्तः स प्राणपर्यायः; प्राणेनैव तदद्यत इत्यर्थः; किंच, न केवलं प्राणेनाद्यत एवान्नाद्यम्, तस्मिञ्शरीराकारपरिणतेऽन्नाद्ये इह, प्रतितिष्ठति प्राणः; तस्मात्प्राणेनात्मनः प्रतिष्ठार्थमागीतमन्नाद्यम् । यदपि प्राणेनान्नादनं तदपि प्राणस्य प्रतिष्ठार्थमेवेति न वागादिष्विव कल्याणासङ्गजपाप्मसंभवः प्राणेऽस्ति ॥

**ते देवा अब्रुवन्नेतावद्वा इदꣳ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति त-**

थेति तꣳ समन्तं परिण्यविशन्त । तस्मा-
यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा
एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ
श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य
एवं वेद य उ हैवंविदꣳ स्वेषु प्रति प्रति-
र्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य
एवैतमनु भवति यो वैतमनु भार्यान्बुभू-
र्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

ते देवाः । नन्ववधारणमयुक्तम् 'प्राणेनैव तदद्यते' इति, वागादीनामप्यन्ननिमित्तोपकारदर्शनात्; नैष दोषः, प्राणद्वारत्वात्तदुपकारस्य । कथं प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह— ते वागादयो देवाः, स्वविषयद्योतनाद्देवाः, अब्रुवन् उक्तवन्तो मुख्यं प्राणम्— 'इदम् एतावत्, नातोऽधिकमस्ति; वा इति स्मरणार्थः; इदं तत्सर्वमेतावदेव; किम्? यदन्नं प्राणस्थितिकरमद्यते लोके, तत्सर्वमात्मने आत्मार्थम्, आगासीः आगीतवानसि आगानेनात्मसात्कृतमित्यर्थः; वयं चान्नमन्तरेण स्थातुं नोत्सहामहे; अतः अनु पश्चात्, नः अस्मान्, अस्मिन्नन्ने आत्मार्थे

तवान्ने, आभजस्व आभाजयस्व; णिचोऽश्रवणं छान्दसम्; अस्मांश्चान्नभागिनः कुरु'। इतर आह— 'ते यूयं यदि अन्नार्थिनः वै, मा माम्, अभिसंविशत समन्ततो मामाभिमुख्येन निविशत'— इति एवमुक्तवति प्राणे, तथेति एवमिति, तं प्राणं परिसमन्तं परिसमन्तात्, न्यविशन्त निश्रयेणाविशन्त, तं प्राणं परिवेष्ट्य निविष्टवन्त इत्यर्थः। तथा निविष्टानां प्राणानुज्ञया तेषां प्राणेनैवाद्यमानं प्राणस्थितिकरं सदन्नं तृप्तिकरं भवति; न स्वातन्त्र्येणान्नसंबन्धो वागादीनाम्। तस्माद्युक्तमेवावधारणम्— 'अनेनैव तदद्यते' इति। तदेव चाह— तस्मात् यस्मात्प्राणाश्रयतयैव प्राणानुज्ञयाभिसंनिविष्टा वागादिदेवतास्तस्मात्, यदन्नम्, अनेन प्राणेन, अत्ति लोकः, तेनान्नेन, एता वागाद्याः, तृप्यन्ति। वागाद्याश्रयं प्राणं यो वेद— 'वागादयश्च पञ्च प्राणाश्रयाः' इति, तमप्येवम्, एवं ह वै, स्वा ज्ञातयः, अभिसंविशन्ति वागादय इव प्राणम्; ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः। अभिसंनिविष्टानां च स्वानाम्, प्राणवदेव वागादीनाम्, स्वान्नेन भर्ता भवति; तथा श्रेष्ठः; पुरोऽग्रतः, एता गन्ता, भवति, वागादीनामिव प्राणः; तथा अन्नादोऽनामयावीत्यर्थः; अधिपतिरधिष्ठाय च पालयिता स्वतन्त्रः पतिः प्राण-

वदेव वागादीनाम्; य एवं प्राणं वेद तस्यैतद्यथोक्तं फलं भवति। किंच य उ हैवंविदं प्राणविदं प्रति, स्वेषु ज्ञातीनां मध्ये, प्रतिः प्रतिकूलः, बुभूषति प्रतिस्पर्धीभवितुमिच्छति, सोऽसुरा इव प्राणप्रतिस्पर्धिनो न हैवालं न पर्याप्तः, भार्येभ्यः भरणीयेभ्यः, भवति, भर्तुमित्यर्थः। अथ पुनर्य एव ज्ञातीनां मध्ये एतमेवंविदं वागादय इव प्राणम्, अनु अनुगतो भवति, यो वा एतमेवंविदम्, अन्वेव अनुवर्तयन्नेव, आत्मीयान्भार्यान्बुभूर्षति भर्तुमिच्छति, यथैव वागादयः प्राणानुवृत्त्यात्मबुभूर्षव आसन्; स हैवालं पर्याप्तः, भार्येभ्यो भरणीयेभ्यः, भवति, भर्तुम्, नेतरः स्वतन्त्रः। सर्वमेतत्प्राणगुणविज्ञानफलमुक्तम्॥

कार्यकरणानामात्मत्वप्रतिपादनाय प्राणस्याङ्गिरसत्वमुपन्यस्तम्— 'सोऽयास्य आङ्गिरसः' इति; 'अस्माद्धेतोरयमाङ्गिरसः' इत्याङ्गिरसत्वे हेतुर्नोक्तः; तद्धेतुसिद्ध्यर्थमारभ्यते। तद्धेतुसिद्ध्यायत्तं हि कार्यकरणात्मत्वं प्राणस्य॥

अनन्तरं च वागादीनां प्राणाधीनतोक्ता; सा च कथमुपपादनीयेत्याह—

**सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः**

**प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानाꣳ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाꣳ रसः ॥ १९ ॥**

'सोऽयास्य आङ्गिरसः' इत्यादि यथोपन्यस्तमेवोपादीयते उत्तरार्थम् । 'प्राणो वा अङ्गानां रसः' इत्येवमन्तं वाक्यं यथाव्याख्यातार्थमेव पुनः स्मारयति । कथम्?— प्राणो वा अङ्गानां रस इति । प्राणो हि; हि-शब्दः प्रसिद्धौ; अङ्गानां रसः; प्रसिद्धमेतत्प्राणस्याङ्गरसत्वं न वागादीनाम्; तस्माद्युक्तम् 'प्राणो वा' इति स्मारणम् । कथं पुनः प्रसिद्धत्वमित्यत आह— तस्माच्छब्द उपसंहारार्थ उपरित्वेन संबध्यते; यस्माद्यतोऽवयवात्, कस्मादनुक्तविशेषात्; यस्मात्कस्मात् यतः कुतश्चिच्च, अङ्गाच्छरीरावयवादविशेषितात्, प्राणः उत्क्रामत्यपसर्पति, तदेव तत्रैव, तदङ्गं शुष्यति नीरसं भवति शोषमुपैति । तस्मादेष हि वा अङ्गानां रस इत्युपसंहारः । अतः कार्यकरणानामात्मा प्राण इत्येतत्सिद्धम् । आत्मापाये हि शोषो मरणं स्यात् । तस्मात्तेन जीवन्ति प्राणिनः सर्वे । तस्मादपास्य वागादीन्प्राण एवोपास्य इति समुदायार्थः ॥

एष उ। न केवलं कार्यकरणयोरेवात्मा प्राणो रूपकर्मभूतयोः; किं तर्हि? ऋग्यजुःसाम्नां नामभूतानामात्मेति सर्वात्मकतया प्राणं स्तुवन्महीकरोत्युपास्यत्वाय—

**एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥**

एष उ एव प्रकृत आङ्गिरसो बृहस्पतिः। कथं बृहस्पतिरिति, उच्यते— वाग्वै बृहती बृहतीच्छन्दः षट्त्रिंशदक्षरा। अनुष्टुप्च वाक्; कथम्? 'वाग्वा अनुष्टुप्' इति श्रुतेः; सा च वागनुष्टुब्बृहत्यां छन्दस्यन्तर्भवति; अतो युक्तम् 'वाग्वै बृहती' इति प्रसिद्धवद्वक्तुम्। बृहत्यां च सर्वा ऋचोऽन्तर्भवन्ति, प्राणसंस्तुतत्वात्; 'प्राणो बृहती प्राण ऋच इत्येव विद्यात्' इति श्रुत्यन्तरात्; वागात्मत्वाच्चर्चां प्राणेऽन्तर्भावः; तत्कथमित्याह— तस्या वाचो बृहत्या ऋचः, एषः प्राणः, पतिः, तस्या निर्वर्तकत्वात्; कौष्ठ्याग्निप्रेरितमारुतनिर्वर्त्या हि ऋक्; पालनाद्वा वाचः पतिः; प्राणेन हि पाल्यते वाक्, अप्राणस्य शब्दोच्चारणसामर्थ्याभावात्; तस्मादु बृहस्पतिः ऋचां प्राण आत्मेत्यर्थः ॥

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म**

**तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥**

तथा यजुषाम् । कथम्? एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म— ब्रह्म यजुः; तच्च वाग्विशेष एव । तस्या वाचो यजुषो ब्रह्मणः, एष पतिः; तस्मादु ब्रह्मणस्पतिः— पूर्ववत् ॥

कथं पुनरेतदवगम्यते बृहतीब्रह्मणोर्ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमिति? उच्यते— वाचः अन्ते सामसामानाधिकरण्यनिर्देशात् 'वाग्वै साम' इति । तथा च 'वाग्वै बृहती' 'वाग्वै ब्रह्म' इति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्वं युक्तम् । परिशेषाच्च— साम्न्यभिहिते ऋग्यजुषी एव परिशिष्टे । वाग्विशेषत्वाच्च— वाग्विशेषौ हि ऋग्यजुषी; तस्मात्तयोर्वाचा समानाधिकरणता युक्ता । अविशेषप्रसङ्गाच्च— 'साम' 'उद्गीथः' इति च स्पष्टं विशेषाभिधानत्वम्, तथा बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्वं युक्तम्; अन्यथा अनिर्धारितविशेषयोरानर्थक्यापत्तेश्च, विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्यात्; ऋग्यजुःसामोद्गीथशब्दानां च श्रुतिष्वेवं क्रमदर्शनात् ॥

**एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव**

**समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां य एवमेतत्साम वेद ॥**

एष उ एव साम । कथमित्याह— वाग्वै सा यत्किंचित्स्त्रीशब्दाभिधेयं सा वाक्; सर्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्वनाम-सा-शब्दः; तथा अम एष प्राणः; सर्वपुंशब्दाभिधेयवस्तुविषयोऽमः-शब्दः; 'केन मे पौंस्नानि नामान्याप्नोषीति, प्राणेनेति ब्रूयात्; केन मे स्त्रीनामानीति, वाचा' इति श्रुत्यन्तरात्; वाक्प्राणाभिधानभूतोऽयं सामशब्दः । तथा प्राणनिर्वर्त्यस्वरादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयते; अतो न प्राणवाग्व्यतिरेकेण सामनामास्ति किंचित्, स्वरवर्णादेश्च प्राणनिर्वर्त्यत्वात्प्राणतन्त्रत्वाच्च । एष उ एव प्राणः साम । यस्मात् साम सामेति वाक्प्राणात्मकम्— सा चामश्चेति, तत् तस्मात् साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्वं तत् प्रगीतं भुवि ॥

यत् उ एव समः तुल्यः सर्वेण वक्ष्यमाणेन प्रकारेण, तस्माद्वा सामेत्यनेन संबन्धः । वा-शब्दः सामशब्दलाभनिमि-

त्तप्रकारान्तरनिर्देशसामर्थ्यलभ्यः। केन पुनः प्रकारेण प्राणस्य तुल्यत्वमित्युच्यते—समः प्लुषिणा पुत्तिकाशरीरेण, समो मशकेन मशकशरीरेण, समो नागेन हस्तिशरीरेण, सम एभिस्त्रिभिर्लोकैः त्रैलोक्यशरीरेण प्राजापत्येन, समोऽनेन जगद्रूपेण हैरण्यगर्भेण। पुत्तिकादिशरीरेषु गोत्वादिवत्कार्त्स्न्येन परिसमाप्त इति समत्वं प्राणस्य, न पुनः शरीरमात्रपरिमाणेनैव; अमूर्तत्वात्सर्वगतत्वाच्च। न च घटप्रासादादिप्रदीपवत्संकोचविकासितया शरीरेषु तावन्मात्रं समत्वम्। 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति श्रुतेः। सर्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते। एवं समत्वात्सामाख्यं प्राणं वेद यः श्रुतिप्रकाशितमहत्त्वं तस्यैतत्फलम्—अश्नुते व्याप्नोति, साम्नः प्राणस्य, सायुज्यं सयुग्भावं समानदेहेन्द्रियाभिमानत्वम्, सालोक्यं समानलोकतां वा, भावनाविशेषतः, य एवमेतत् यथोक्तं साम प्राणं वेद—आ प्राणात्माभिमानाभिव्यक्तेरुपास्ते इत्यर्थः॥

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः॥ २३॥**

एष उ वा उद्गीथः। उद्गीथो नाम सामावयवो भक्ति-

विशेषः नोद्गानम्; सामाधिकारात्। कथमुद्गीथः प्राणः? प्राणो वा उत्—प्राणेन हि यस्मादिदं सर्वं जगत् उत्तब्धम् ऊर्ध्वं स्तब्धमुत्तम्भितं विधृतमित्यर्थः; उत्तब्धार्थावद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायकः; तस्मादुत् प्राणः; वागेव गीथा, शब्दविशेषत्वादुद्गीथभक्तेः; गायतेः शब्दार्थत्वात्सा वागेव; न ह्युद्गीथभक्तेः शब्दव्यतिरेकेण किंचिद्रूपमुत्प्रेक्ष्यते, तस्माद्युक्तमवधारणं वागेव गीथेति। उच्च प्राणः, गीथा च प्राणतन्त्रा वाक्, इत्युभयमेकेन शब्देनाभिधीयते, स उद्गीथः॥

उक्तार्थदार्ढ्यायाख्यायिकारभ्यते—

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति॥ २४॥**

तद्धापि। तत् तत्रैतस्मिन्नुक्तेऽर्थे, हापि आख्यायिकापि श्रूयते ह स्म। ब्रह्मदत्तः नामतः; चिकितानस्यापत्यं चैकितानः तदपत्यं युवा चैकितानेयः, राजानं यज्ञे सोमम्, भक्षयन्नुवाच; किम्? 'अयं चमसस्थो मया भक्ष्यमाणो राजा,

त्यस्य तस्य ममानृतवादिनः, मूर्धानं शिरः, विपातयतात् विस्पष्टं पातयतु'; तोरयं तातङादेशः, आशिषि लोट्—विपातयतादिति ; यद्यहमनृतवादी स्यामित्यर्थः ; कथं पुनरनृतवादित्वप्राप्तिरिति, उच्यते—'यत् यदि इतोऽस्मात्प्रकृतात्प्राणाद्वाक्संयुक्तात्, अयास्यः— मुख्यप्राणाभिधायकेनायास्याङ्गिरसशब्देनाभिधीयते विश्वसृजां पूर्वर्षीणां सत्रे उद्गाता— सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेन, उदगायत् उद्गानं कृतवान्; ततोऽहमनृतवादी स्याम्; तस्य मम देवता विपरीतप्रतिपत्तुर्मूर्धानं विपातयतु' इत्येवं शपथं चकारेति विज्ञाने प्रत्ययकर्तव्यतादार्ढ्यं दर्शयति । तमिममाख्यायिकानिर्धारितमर्थं स्वेन वचसोपसंहरति श्रुतिः— वाचा च प्राणप्रधानया प्राणेन च स्वस्यात्मभूतेन, सः अयास्य आङ्गिरस उद्गाता, उदगायत् इत्येषोऽर्थो निर्धारितः शपथेन ॥

**तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसंपन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य**

**स्वं भवति भवति हास्य स्वं य एवमेत-
त्साम्नः स्वं वेद ॥ २५ ॥**

तस्य हैतस्य । तस्येति प्रकृतं प्राणमभिसंबध्नाति । ह एतस्येति मुख्यं व्यपदिशत्यभिनयेन । साम्नः सामशब्दवाच्यस्य प्राणस्य, यः स्वं धनम्, वेद; तस्य ह किं स्यात्? भवति हास्य स्वम् । फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषवे आह— तस्य वै साम्नः स्वर एव स्वम् । स्वर इति कण्ठगतं माधुर्यम्, तदेवास्य स्वं विभूषणम्; तेन हि भूषितमृद्धिमल्लक्ष्यत उद्गानम्; यस्मादेवं तस्मात् आर्त्विज्यम् ऋत्विक्कर्मोद्गानम्, करिष्यन्, वाचि विषये, वाचि वागाश्रितम्, स्वरम्, इच्छेत इच्छेत्, साम्नो धनवत्तां स्वरेण चिकीर्षुरुद्गाता । इदं तु प्रासङ्गिकं विधीयते; साम्नः सौस्वर्येण स्वरवत्त्वप्रत्यये कर्तव्ये, इच्छामात्रेण सौस्वर्यं न भवतीति, दन्तधावनतैलपानादि सामर्थ्यात्कर्तव्यमित्यर्थः । तयैवं संस्कृतया वाचा स्वरसंपन्नया आर्त्विज्यं कुर्यात् । तस्मात्— यस्मात्साम्नः स्वभूतः स्वरः तेन स्वेन भूषितं साम, अतो यज्ञे स्वरवन्तम् उद्गातारम्, दिदृक्षन्त एव द्रष्टुमिच्छन्त्येव, धनिनमिव लौकिकाः । प्रसिद्धं हि लोके— अथो अपि, यस्य स्वं धनं भवति, तं धनिनं दिदृक्षन्ते— इति ।

सिद्धस्य गुणविज्ञानफलसंबन्धस्योपसंहारः क्रियते— भवति हास्य स्वम्, य एवमेतत्साम्नः स्वं वेदेति ॥

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥**

अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते । असावपि सौस्वर्यमेव । एतावान्विशेषः—पूर्वं कण्ठगतमाधुर्यम्; इदं तु लाक्षणिकं सुवर्णशब्दवाच्यम् । तस्य हैतस्य साम्नो यः सुवर्णं वेद, भवति हास्य सुवर्णम्; सुवर्णशब्दसामान्यात्स्वरसुवर्णयोः । लौकिकमेव सुवर्णं गुणविज्ञानफलं भवतीत्यर्थः । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेदेति पूर्ववत्सर्वम् ॥

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥ २७ ॥**

तथा प्रतिष्ठागुणं विधित्सन्नाह— तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद; प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक्; तां प्रतिष्ठां साम्नो गुणम्, यो वेद स प्रतितिष्ठति ह । 'तं यथा यथोपासते' इति श्रुतेस्तद्गुणत्वं युक्तम् । पूर्ववत्फलेन प्रतिलोभिताय का प्रतिष्ठेति शुश्रूषव आह— तस्य वै साम्नो वागेव । वागिति जिह्वामूलादीनां स्थानानामाख्या; सैव प्रतिष्ठा । तदाह— वाचि हि जिह्वामूलादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राणः एतद्गानं गीयते गीतिभावमापद्यते, तस्मात्साम्नः प्रतिष्ठा वाक् । अन्ने प्रतिष्ठितो गीयत इत्यु ह एके अन्ये आहुः; इह प्रतितिष्ठतीति युक्तम् । अनिन्दितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्यात्— वाग्वा प्रतिष्ठा, अन्नं वेति ॥

**अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माम‍ृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गम-**

यामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥ २८ ॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥

एवं प्राणविज्ञानवतो जपकर्म विधित्स्यते । यद्विज्ञानवतो जपकर्मण्यधिकारस्तद्विज्ञानमुक्तम् । अथानन्तरम् , यस्माच्चैवं विदुषा प्रयुज्यमानं देवभावायाभ्यारोहफलं जपकर्म, अतः तस्मात् तद्विधीयते इह । तस्य चोद्गीथसंबन्धात्सर्वत्र प्राप्तौ पवमानानामिति वचनात् , पवमानेषु त्रिष्वपि कर्तव्यतायां

प्राप्तायाम्, पुनः कालसंकोचं करोति— स वै खलु प्रस्तोता साम प्रस्तौति । स प्रस्तोता, यत्र यस्मिन्काले, साम प्रस्तुयात्प्रारभेत, तस्मिन्काल एतानि जपेत् । अस्य च जपकर्मण आख्या अभ्यारोह इति । आभिमुख्येनारोहत्यनेन जपकर्मणैवंविद्देवभावमात्मानमित्यभ्यारोहः । एतानीति बहुवचनात्त्रीणि यजूंषि । द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यो न मान्त्रः । याजमानं जपकर्म ॥

एतानि तानि यजूंषि— 'असतो मा सद्गमय' 'तमसो मा ज्योतिर्गमय' 'मृत्योर्माऽमृतं गमय' इति । मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं मन्त्रार्थम्— सः मन्त्रः, यदाह यदुक्तवान्; कोऽसावर्थ इत्युच्यते— 'असतो मा सद्गमय' इति । मृत्युर्वा असत्—स्वाभाविककर्मविज्ञाने मृत्युरित्युच्येते ; असत् अत्यन्ताधोभावहेतुत्वात् ; सन् अमृतम्—सत् शास्त्रीयकर्मविज्ञाने, अमरणहेतुत्वादमृतम् । तस्मादसतः असत्कर्मणोऽज्ञानाच्च, मा माम् , सत् शास्त्रीयकर्मविज्ञाने, गमय, देवभावसाधनात्मभावमापादयेत्यर्थः । तत्र वाक्यार्थमाह—अमृतं मा कुर्वित्येवैतदाहेति । तथा तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमः, सर्वं ह्यज्ञानमावरणात्मकत्वात्त-

मः, तदेव च मरणहेतुत्वान्मृत्युः । ज्योतिरमृतं पूर्वोक्तविपरीतं दैवं स्वरूपम् । प्रकाशात्मकत्वाज्ज्ञानं ज्योतिः, तदेवामृतम् अविनाशात्मकत्वात्; तस्मात्तमसो मा ज्योतिर्गमयेति । पूर्ववन्मृत्योर्मामृतं गमयेत्यादि; अमृतं मा कुर्वित्येवैतदाह— दैवं प्राजापत्यं फलभावमापादयेत्यर्थः । पूर्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयेति; द्वितीयस्तु साधनभावादप्यज्ञानरूपात्साध्यभावमापादयेति । मृत्योर्मामृतं गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोच्यत इति प्रसिद्धार्थतैव । नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरस्ति; यथाश्रुत एवार्थः ॥

याजमानमुद्गानं कृत्वा पवमानेषु त्रिषु, अथानन्तरं यानीतराणि शिष्टानि स्तोत्राणि, तेष्वात्मनेऽन्नाद्यमागायेत्— प्राणविदुद्गाता प्राणभूतः प्राणवदेव । यस्मात्स एष उद्गाता एवं प्राणं यथोक्तं वेत्ति, अतः प्राणवदेव तं कामं साधयितुं समर्थः; तस्माद्यजमानस्तेषु स्तोत्रेषु प्रयुज्यमानेषु वरं वृणीत; यं कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत । यस्मात्स एष एवंविदुद्गातेति तस्माच्छब्दात्प्रागेव संबध्यते । आत्मने वा यजमानाय वा यं कामं कामयत इच्छत्युद्गाता, तमागायत्यागानेन साधयति ॥

एवं तावज्ज्ञानकर्मभ्यां प्राणात्मापत्तिरित्युक्तम्; तत्र नास्त्याशङ्कासंभवः। अतः कर्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते; तदाशङ्कानिवृत्त्यर्थमाह— तद्धैतल्लोकजिदेवेति। तद्ध तदेतत्प्राणदर्शनं कर्मवियुक्तं केवलमपि, लोकजिदेवेति लोकसाधनमेव। न ह एव अलोक्यतायै अलोकार्हत्वाय, आशा आशंसनं प्रार्थनम्, नैवास्ति ह। न हि प्राणात्मन्युत्पन्नात्माभिमानस्य तत्प्राप्त्याशंसनं संभवति। न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाशास्ते। असंनिकृष्टविषये ह्यनात्मन्याशंसनम्, न तत्स्वात्मनि संभवति। तस्मान्नाशास्ति— कदाचित्प्राणात्मभावं न प्रतिपद्येयेति॥

कस्यैतत्। य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेद— 'अहमस्मि प्राण इन्द्रियविषयासङ्गैरासुरैः पाप्मभिरधर्षणीयो विशुद्धः; वागादिपञ्चकं च मदाश्रयत्वादग्न्याद्यात्मरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयासङ्गजनितासुरपाप्मदोषवियुक्तम्; सर्वभूतेषु च मदाश्रयान्नाद्योपयोगबन्धनम्; आत्मा चाहं सर्वभूतानाम्, आङ्गिरसत्वात्; ऋग्यजुःसामोद्गीथभूतायाश्च वाच आत्मा, तद्व्याप्तेस्तन्निर्वर्तकत्वाच्च; मम साम्नो गीतिभावमापद्यमानस्य बाह्यं धनं भूषणं सौस्वर्यम्; ततोऽप्यन्तरतरं सौवर्ण्यं लाक्षणिकं सौस्वर्यम्;

गीतिभावमापद्यमानस्य मम कण्ठादिस्थानानि प्रतिष्ठा; एवं-गुणोऽहं पुत्तिकादिशरीरेषु कात्स्न्र्येन परिसमाप्तः, अमूर्त-त्वात्सर्वगतत्वाच्च'— इति आ एवमभिमानाभिव्यक्तेर्वेद उपास्ते इत्यर्थः ॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥

# चतुर्थं ब्राह्मणम् ॥

---

आत्मैवेदमग्र आसीत्पुरुषविधः सोऽ-
नुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मी-
त्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्ये-
तर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वा-
थान्यन्नाम प्रब्रूते यदस्य भवति स यत्पू-
र्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्त-
स्मात्पुरुष ओषति ह वै स तं योऽस्मा-
त्पूर्वो बुभूषति य एवं वेद ॥ १ ॥

आत्मैवेदमग्र आसीत् । ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजा-
पतित्वप्राप्तिर्व्याख्याता; केवलप्राणदर्शनेन च— 'तद्धै-
तल्लोकजिदेव' इत्यादिना । प्रजापतेः फलभूतस्य सृष्टिस्थि-
तिसंहारेषु जगतः स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्म-
णोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते ।
तेन च कर्मकाण्डविहितज्ञानकर्मस्तुतिः कृता भवेत्साम-

थ्यात् । विवक्षितं त्वेतत्— सर्वमप्येतज्ज्ञानकर्मफलं संसार एव, भयारत्यादियुक्तत्वश्रवणात्कार्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति । ब्रह्मविद्याया: केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थं चेति । न हि संसारविषयात्साध्यसाधनादिभेदलक्षणाद्विरक्तस्यात्मैकत्वज्ञानविषयेऽधिकारः, अतृषितस्येव पाने । तस्माज्ज्ञानकर्मफलोत्कर्षोपवर्णनमुत्तरार्थम् । तथा च वक्ष्यति— 'तदेतत्पदनीयमस्य' 'तदेतत्प्रेयः पुत्रात्' इत्यादि ॥

आत्मैव आत्मेति प्रजापतिः प्रथमोऽण्डजः शरीर्यभिधीयते । वैदिकज्ञानकर्मफलभूतः स एव— किम्? इदं शरीरभेदजातं तेन प्रजापतिशरीरेणाविभक्तम् आत्मैवासीत् अग्रे प्राक्शरीरान्तरोत्पत्तेः । स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट्; स एव प्रथमः संभूतोऽनुवीक्ष्यान्वालोचनं कृत्वा— 'कोऽहं किंलक्षणो वास्मि' इति, नान्यद्वस्त्वन्तरम्, आत्मनः प्राणपिण्डात्मकात्कार्यकरणरूपात्, नापश्यत् न ददर्श । केवलं त्वात्मानमेव सर्वात्मानमपश्यन् । तथा पूर्वजन्मश्रौतविज्ञानसंस्कृतः 'सोऽहं प्रजापतिः, सर्वात्माहमस्मि' इत्यग्रे व्याहरत् व्याहृतवान् । ततः तस्मात्, यतः पूर्वज्ञानसंस्कारादात्मानमेवाहमित्यभ्यधादग्रे

तस्मात्, अहंनामाभवत्; तस्योपनिषदहमिति श्रुतिप्रदर्शितमेव नाम वक्ष्यति; तस्मात्, यस्मात्कारणे प्रजापतावेवं वृत्तं तस्मात्, तत्कार्यभूतेषु प्राणिष्वेतर्हि एतस्मिन्नपि काले, आमन्त्रितः कस्त्वमित्युक्तः सन्, 'अहमयम्' इत्येवाग्रे उक्त्वा कारणात्माभिधानेनात्मानमभिधायाग्रे, पुनर्विशेषनामजिज्ञासवे अथ अनन्तरं विशेषपिण्डाभिधानम् 'देवदत्तः' 'यज्ञदत्तः' वेति प्रब्रूते कथयति— यन्नामास्य विशेषपिण्डस्य मातापितृकृतं भवति, तत्कथयति। स च प्रजापतिः, अतिक्रान्तजन्मनि सम्यक्कर्मज्ञानभावनानुष्ठानैः साधकावस्थायाम्, यद्यस्मात्, कर्मज्ञानभावनानुष्ठानैः प्रजापतित्वं प्रतिपित्सूनां पूर्वः प्रथमः सन्, अस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मात्, आदौ औषत् अदहत्; किम्? आसङ्गाज्ञानलक्षणान्सर्वान्पाप्मनः प्रजापतित्वप्रतिबन्धकारणभूतान्; यस्मादेवं तस्मात्पुरुषः— पूर्वमौषदिति पुरुषः। यथायं प्रजापतिरोषित्वा प्रतिबन्धकान्पाप्मनः सर्वान्, पुरुषः प्रजापतिरभवत्; एवमन्योऽपि ज्ञानकर्मभावनानुष्ठानवह्निना केवलं ज्ञानबलाद्वा ओषति भस्मीकरोति ह वै सः तम्— कम्? योऽस्माद्विदुषः पूर्वः प्रथमः प्रजापतिर्बुभूषति भवितुमिच्छति तमित्यर्थः। तं दर्शयति— य एवं वेदेति;

सामर्थ्याज्ज्ञानभावनाप्रकर्षवान् । नन्वनर्थाय प्राजापत्यप्रतिपित्सा, एवंविदा चेद्दह्यते; नैष दोषः, ज्ञानभावनोत्कर्षाभावात् प्रथमं प्रजापतित्वप्रतिपत्त्यभावमात्रत्वाद्दाहस्य । उत्कृष्टसाधनः प्रथमं प्रजापतित्वं प्राप्नुवन् न्यूनसाधनो न प्राप्नोतीति, स तं दहतीत्युच्यते; न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते— यथा लोके आजिसृतां यः प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति, तद्वत् ॥

यदिदं तुष्टूषितं कर्मकाण्डविहितज्ञानकर्मफलं प्राजापत्यलक्षणम्, नैव तत्संसारविषयमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह—

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥ २ ॥**

सोऽबिभेत् । सः प्रजापतिः, योऽयं प्रथमः शरीरी पुरुषविधो व्याख्यातः सः, अबिभेत् भीतवान् अस्मदादिवदेवेत्याह यस्मादयं पुरुषविधः शरीरकरणवान् आत्मनाशविषयविपरीतदर्शनवत्त्वादबिभेत्, तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बि-

भेति । किंचास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं यथाभूतात्मदर्शनम् । सोऽयं प्रजापतिः ईक्षाम् ईक्षणं चक्रे कृतवान्ह । कथमित्याह— यत् यस्मात् मत्तोऽन्यत् आत्मव्यतिरेकेण वस्त्वन्तरं प्रतिद्वन्द्वीभूतं नास्ति, तस्मिन्नात्मविनाशहेत्वभावे, कस्मान्नु बिभेमि इति । तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भयं वीयाय विस्पष्टमपगतवत् । तच्च प्रजापतेर्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह—कस्माद्ध्यभेष्यत्? किमित्यसौ भीतवान्? परमार्थनिरूपणायां भयमनुपपन्नमेवेत्यभिप्रायः । यस्माद्द्वितीयाद्वस्त्वन्तराद्वै भयं भवति; द्वितीयं च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव । न ह्यदृश्यमानं द्वितीयं भयजन्मनो हेतुः, ‘तत्र को मोहः कः शोक एकत्वमनुपश्यतः’ इति मन्त्रवर्णात् । यच्चैकत्वदर्शनेन भयमपनुनोद, तद्युक्तम्; कस्मात्? द्वितीयाद्वस्त्वन्तराद्वै भयं भवति; तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्ति यतः ॥

अत्र चोदयन्ति—कुतः प्रजापतेरेकत्वदर्शनं जातम्? को वास्मा उपदिदेश? अथानुपदिष्टमेव प्रादुरभूत्; अस्मदादेरपि तथा प्रसङ्गः । अथ जन्मान्तरकृतसंस्कारहेतुकम्; एकत्वदर्शनानर्थक्यप्रसङ्गः । यथा प्रजापतेरतिक्रान्तजन्माव-

स्थस्यैकत्वदर्शनं विद्यमानमप्यविद्याबन्धकारणं नापनिन्ये, यतोऽविद्यासंयुक्त एवायं जातोऽबिभेत्, एवं सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति । अन्त्यमेव निवर्तकमिति चेत्, न; पूर्ववत्पुनः प्रसङ्गेनानैकान्त्यात् । तस्मादनर्थकमेवैकत्वदर्शनमिति ॥

नैष दोषः; उत्कृष्टहेतूद्भवत्वाल्लोकवत् । यथा पुण्यकर्मोद्भवैर्विविक्तैः कार्यकरणैः संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यं दृष्टम्, तथा प्रजापतेर्धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्वपाप्मदाहाद्विशुद्धैः कार्यकरणैः संयुक्तमुत्कृष्टं जन्म; तदुद्भवं चानुपदिष्टमेव युक्तमेकत्वदर्शनं प्रजापतेः । तथा च स्मृतिः— 'ज्ञानमप्रतिघं यस्य वैराग्यं च प्रजापतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्' इति ॥ सहसिद्धत्वे भयानुपपत्तिरिति चेत्— न ह्यादित्येन सह तम उदेति— न, अन्यानुपदिष्टार्थत्वात्सहसिद्धवाक्यस्य । श्रद्धातात्पर्यप्रणिपातादीनामहेतुत्वमिति चेत्— स्यान्मतम्— 'श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः' 'तद्विद्धि प्रणिपातेन' इत्येवमादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वम्, प्रजापतेरिव जन्मान्तरकृतधर्महेतुत्वे ज्ञानस्येति चेत्, न; निमित्तविकल्पसमुच्चयगुणवदगुणवत्त्वभेदोपपत्तेः । लोके

हि नैमित्तिकानां कार्याणां निमित्तभेदोऽनेकधा विकल्प्यते । तथा निमित्तसमुच्चयः । तेषां च विकल्पितानां समुच्चितानां च पुनर्गुणवदगुणवत्त्वकृतो भेदो भवति । तद्यथा— रूपज्ञान एव तावन्नैमित्तिके कार्ये तमसि विनालोकेन चक्षूरूपसंनिकर्षो नक्तंचराणां रूपज्ञाने निमित्तं भवति; मन एव केवलं रूपज्ञाननिमित्तं योगिनाम्; अस्माकं तु संनिकर्षालोकाभ्यां सह तथादित्यचन्द्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवन्ति; तथालोकविशेषगुणवदगुणवत्त्वेन भेदाः स्युः । एवमेवात्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृतं कर्म निमित्तं भवति; यथा प्रजापतेः । क्वचित्तपो निमित्तम्; 'तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेः । क्वचित् 'आचार्यवान्पुरुषो वेद' 'श्रद्धावाँल्लभते ज्ञानम्' 'तद्विद्धि प्रणिपातेन' 'आचार्याद्धैव' 'ज्ञातव्यो द्रष्टव्यः श्रोतव्यः' इति श्रुतिस्मृतिभ्य एकान्तज्ञानलाभनिमित्तत्वं श्रद्धाप्रभृतीनाम् अधर्मादिनिमित्तवियोगहेतुत्वात्; वेदान्तश्रवणमनननिदिध्यासनानां च साक्षाज्ज्ञेयविषयत्वात्; पापादिप्रतिबन्धक्षये चात्ममनसोः, भूतार्थज्ञाननिमित्तस्वाभाव्यात् । तस्मादहेतुत्वं न जातु ज्ञानस्य श्रद्धाप्रणिपातादीनामिति ॥

**स वै नैव रेमे तस्मादेकाकी न रमते**

**स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमाँसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताँसमभवत्ततो मनुष्या अजायन्त ॥ ३ ॥**

इतश्च संसारविषय एव प्रजापतित्वम् , यतः सः प्रजापतिः वै नैव रेमे रतिं नान्वभवत् ,— अरत्याविष्टोऽभूदित्यर्थः— अस्मदादिवदेव यतः ; इदानीमपि तस्मादेकाकित्वादिधर्मवत्त्वात् एकाकी न रमते रतिं नानुभवति । रतिर्नामेष्टार्थसंयोगजा क्रीडा । तत्प्रसङ्गिन इष्टवियोगान्मनस्याकुलीभावोऽरतिरित्युच्यते । सः तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्तु ऐच्छत् गृद्धिमकरोत् । तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूव । सः तेन सत्येप्सुत्वात् एतावान् एतत्परिमाण आस बभूव ह । किंपरिमाण इत्याह—यथा लोके स्त्रीपुमांसावरत्यपनोदाय संपरिष्वक्तौ यत्परिमाणौ स्याताम् , तथा तत्परिमाणः, बभू-

वेत्यर्थः। स तथा तत्परिमाणमेवेममात्मानं द्वेधा द्विप्रकारम् अपातयत् पातितवान्। इममेवेत्यवधारणं मूलकारणाद्विराजो विशेषणार्थम्। न क्षीरस्य सर्वोपमर्देन दधिभावापत्तिवद्विराट् सर्वोपमर्देनैतावानास; किं तर्हि? आत्मना व्यवस्थितस्यैव विराजः सत्यसंकल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाणं शरीरान्तरं बभूव। स एव च विराट् तथाभूतः—'स हैतावानास' इति सामानाधिकरण्यात्। ततः तस्मात्पातनात् पतिश्च पत्नी चाभवताम् इति दंपत्योर्निर्वचनं लौकिकयोः; अत एव तस्मात्—यस्मादात्मन एवार्धः पृथग्भूतः—येयं स्त्री—तस्मात्—इदं शरीरमात्मनोऽर्धबृगलम्—अर्धं च तत् बृगलं विदलं च तदर्धबृगलम्, अर्धविदलमिवेत्यर्थः। प्राक्स्त्र्युद्वहनात्कस्यार्धबृगलमित्युच्यते—स्व आत्मन इति। एवमाह स्म उक्तवान्किल, याज्ञवल्क्यः—यज्ञस्य वल्को वक्ता यज्ञवल्कस्तस्यापत्यं याज्ञवल्क्यो दैवरातिरित्यर्थः; ब्रह्मणो वा अपत्यम्। यस्मादयं पुरुषार्ध आकाशः स्त्र्यर्धशून्यः, पुनरुद्वहनात्तस्मात्पूर्यते स्त्र्यर्धेन, पुनः संपुटीकरणेनेव विदलार्धः। तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवत् मैथुनमुपगतवान्। ततः तस्मात्तदुपगमनात् मनुष्या अजायन्त उत्पन्नाः॥

सो हेयमीक्षांचक्रे कथं नु मात्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त बडबेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायताजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्तां समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

सा शतरूपा उ ह इयम्—सेयं दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरन्ती ईक्षांचक्रे । 'कथं न्विदमकृत्यम्, यन्मा माम् आत्मन एव जनयित्वा उत्पाद्य संभवति उपगच्छति; यद्यप्ययं निर्घृणः, अहं हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृता भवानि' इत्येवमीक्षित्वा असौ गौरभवत् । उत्पाद्य प्राणिकर्मभिश्चोद्यमानायाः पुनः पुनः सैव मतिः शतरूपाया मनोश्चाभवत् । ततश्च ऋषभ इतरः । तां समेवाभवदित्यादि पूर्ववत् । ततो गावोऽजायन्त । तथा बडबे-

तराभवत् अश्ववृष इतरः । तथा गर्दभीतरा गर्दभ इतरः । तत्र वडबाश्ववृषादीनां संगमात्तत एकशफम् एकखुरम् अश्वाश्वतरगर्दभाख्यं त्रयमजायत । तथा अजा इतराभवत्, बस्तश्छाग इतरः । तथाविरितरा, मेष इतरः । तां समेवाभवत् । तां तामिति वीप्सा । तामजां तामविं चेति समभवदेवेत्यर्थः । ततोऽजाश्चावयश्चाजावयोऽजायन्त । एवमेव यदिदं किंच यत्किंचेदं मिथुनं स्त्रीपुंसलक्षणं द्वन्द्वम्, आ पिपीलिकाभ्यः पिपीलिकाभिः सह अनेनैव न्यायेन तत्सर्वमसृजत जगत्सृष्टवान ॥

**सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥**

सः प्रजापतिः सर्वमिदं जगत्सृष्ट्वा अवेत् । कथम्? अहं वाव अहमेव, सृष्टिः— सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति— यन्मया सृष्टं जगत् मदभेदत्वादहमेवास्मि, न मत्तो व्यतिरिच्यते; कुत एतत्? अहं हि यस्मात्, इदं सर्वं जगत् असृक्षि सृष्टवानस्मि, तस्मादित्यर्थः । यस्मात्सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिः ततः तस्मात् सृष्टि-

रभवन् सृष्टिनामाभवत् सृष्ट्यां जगति ह अस्य प्रजापतेः एत-स्याम् एतस्मिञ्जगति, स प्रजापतिवत्स्रष्टा भवति, स्वात्मनो-ऽनन्यभूतस्य जगतः; कः? य एवं प्रजापतिवद्यथोक्तं स्वा-त्मनोऽनन्यभूतं जगत् 'साध्यात्माधिभूताधिदैवं जगदहम-स्मि,' इति वेद ॥

अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ता-भ्यां चाग्निमसृजत तस्मादेतदुभयमलो-मकमन्तरतोऽलोमका हि योनिरन्तरतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देव-मेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे दे-वाः । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृज-त तदु सोम एतावद्वा इदꣳ सर्वमन्नं चै-वान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृ-जताथ यन्मर्त्यः सन्नमृतानसृजत तस्मा-दतिसृष्टिरतिसृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

एवं स प्रजापतिर्जगदिदं मिथुनात्मकं सृष्ट्वा ब्राह्मणादिवर्णनियन्त्रीर्देवताः सिसृक्षुरादौ—अथ-इति-शब्दद्वयमभिनयप्रदर्शनार्थम्—अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्य अभ्यमन्थत् आभिमुख्येन मन्थनमकरोत्। सः मुखं हस्ताभ्यां मथित्वा, मुखाच्च योनेः हस्ताभ्यां च योनिभ्याम्, अग्निं ब्राह्मणजातेरनुग्रहकर्तारम्, असृजत सृष्टवान्। यस्माद्दाहकस्याग्नेर्योनिरेतदुभयम्—हस्तौ मुखं च, तस्मात् उभयमप्येतत् अलोमकं लोमविवर्जितम्; किं सर्वमेव? न, अन्तरतः अभ्यन्तरतः। अस्ति हि योन्या सामान्यमुभयस्यास्य। किम्? अलोमका हि योनिरन्तरतः स्त्रीणाम्। तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः। तस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोऽनुगृह्यते, अग्निना ब्राह्मणः। तस्माद्ब्राह्मणोऽग्निदेवत्यो मुखवीर्यश्चेति श्रुतिस्मृतिसिद्धम्। तथा बलाश्रयाभ्यां बाहुभ्यां बलभिदादिकं क्षत्रियजातिनियन्तारं क्षत्रियं च। तस्मादैन्द्रं क्षत्रं बाहुवीर्यं चेति श्रुतौ स्मृतौ चावगतम्। तथोरुत ईहा चेष्टा तदाश्रयाद्वस्वादिलक्षणं विशो नियन्तारं विशं च। तस्मात्कृष्यादिपरो वस्वादिदेवत्यश्च वैश्यः। तथा पूषणं पृथ्वीदैवतं शूद्रं च पद्भ्यां परिचरणक्षममसृजतेति—श्रुतिस्मृतिप्रसिद्धेः। तत्र क्षत्रादिदेवतासर्गमिहानुक्तं वक्ष्यमा-

णमप्युक्तवदुपसंहरति सृष्टिसाकल्यानुकीर्त्यै । यथेयं श्रुतिर्व्यवस्थिता तथा प्रजापतिरेव सर्वे देवा इति निश्चितोऽर्थः; स्रष्टुरनन्यत्वात्सृष्टानाम्, प्रजापतिनैव तु सृष्टत्वाद्देवानाम् । अथैवं प्रकरणार्थे व्यवस्थिते तत्स्तुत्यभिप्रायेणाविद्वन्मतान्तरनिन्दोपन्यासः । अन्यनिन्दा अन्यस्तुतये । तत् तत्र कर्मप्रकरणे, केवलयाज्ञिका यागकाले, यदिदं वच आहुः—'अमुमग्निं यजामुमिन्द्रं यज' इत्यादि—नामशस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः—तन्न तथा विद्यात्; यस्मादेतस्यैव प्रजापतेः सा विसृष्टिर्देवभेदः सर्वः; एष उ ह्येव प्रजापतिरेव प्राणः सर्वे देवाः ॥

अत्र विप्रतिपद्यन्ते—पर एव हिरण्यगर्भ इत्येके; संसारीत्यपरे । पर एव तु मन्त्रवर्णात्—'इन्द्रं मित्रं वरुणमग्निमाहुः' इति श्रुतेः; 'एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवाः' इति च श्रुतेः; स्मृतेश्च—'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्' इति, 'योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ' इति च । संसार्येव वा स्यात्—'सर्वान्पाप्मन औषत्' इति श्रुतेः; न ह्यसंसारिणः पाप्मदाहप्रसङ्गोऽस्ति;

भयारतिसंयोगश्रवणाच्च ; 'अथ यन्मर्त्यः सन्नमृतानसृजत' इति च, 'हिरण्यगर्भं पश्यत जायमानम्' इति च मन्त्रवर्णात् ; स्मृतेश्च कर्मविपाकप्रक्रियायाम्—'ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः' इति । अथैवं विरुद्धार्थानुपपत्तेः प्रामाण्यव्याघात इति चेत्—

न, कल्पनान्तरोपपत्तेरविरोधात् । उपाधिविशेषसंबन्धाद्विशेषकल्पनान्तरमुपपद्यते । 'आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' इत्येवमादिश्रुतिभ्यः उपाधिवशात्संसारित्वम् , न परमार्थतः । स्वतोऽसंसार्येव । एवमेकत्वं नानात्वं च हिरण्यगर्भस्य । तथा सर्वजीवानाम् , 'तत्त्वमसि' इति श्रुतेः । हिरण्यगर्भस्तूपाधिशुद्ध्यतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृतिवादाः प्रवृत्ताः । संसारित्वं तु क्वचिदेव दर्शयन्ति । जीवानां तूपाधिगताशुद्धिबाहुल्यात्संसारित्वमेव प्रायशोऽभिलप्यते । व्यावृत्तकृत्स्नोपाधिभेदापेक्षया तु सर्वः परत्वेनाभिधीयते श्रुतिस्मृतिवादैः ॥

तार्किकैस्तु परित्यक्तागमबलैः अस्ति नास्ति कर्ता अकर्ता इत्यादि विरुद्धं बहु तर्कयद्भिराकुलीकृतः शास्त्रार्थः । तेना-

र्थनिश्चयो दुर्लभः। ये तु केवलशास्त्रानुसारिणः शान्तदर्पास्तेषां प्रत्यक्षविषय इव निश्चितः शास्त्रार्थो देवतादिविषयः॥

तत्र प्रजापतेरेकस्य देवस्यात्राद्यलक्षणो भेदो विवक्षित इति— तत्राग्निरुक्तोऽत्ता, आद्यः सोम इदानीमुच्यते। अथ, यत्किंचेदं लोक आर्द्रं द्रवात्मकम्, तद्रेतस आत्मनो बीजात् असृजत; 'रेतस आपः' इति श्रुतेः। द्रवात्मकश्च सोमः। तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टम्, तदु सोम एव। एतावद्वै एतावदेव, नातोऽधिकम्, इदं सर्वम्। किं तत्? अन्नं चैव सोमो द्रवात्मकत्वादाप्यायकम्, अन्नादश्चाग्निः औष्ण्याद्रूक्षत्वाच्च। तत्रैवमवध्रियते— सोम एवान्नम्, यदद्यते तदेव सोम इत्यर्थः; य एवात्ता स एवाग्निः; अर्थबलाद्ध्यवधारणम्। अग्निरपि क्वचिद्धूयमानः सोमपक्षस्यैव; सोमोऽपीज्यमानोऽग्निरेव, अत्तृत्वात्। एवमग्नीषोमात्मकं जगदात्मत्वेन पश्यन्न केनचिद्दोषेण लिप्यते; प्रजापतिश्च भवति। सैषा ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया। का सेत्याह— यच्छ्रेयसः प्रशस्यतरानात्मनः सकाशात् यस्मादसृजत देवान्, तस्माद्देवसृष्टिरतिसृष्टिः। कथं पुनरात्मनोऽतिशया सृष्टिरित्यत आह— अथ यत् यस्मात् मर्त्यः सन मरणधर्मा सन्, अमृतान् अम-

रणधर्मिणो देवान्, कर्मज्ञानवह्निना सर्वानात्मनः पाप्मन ओषित्वा, असृजत; तस्मादियमतिसृष्टिः उत्कृष्टज्ञानस्य फलमित्यर्थः। तस्मादेतामतिसृष्टिं प्रजापतेरात्मभूतां यो वेद, स एतस्यामतिसृष्ट्यां प्रजापतिरिव भवति प्रजापतिवदेव स्रष्टा भवति ॥

तद्धेतं तर्ह्यव्याकृतमासीत्। सर्वं वैदिकं साधनं ज्ञानकर्मलक्षणं कर्त्राद्यनेककारकापेक्षं प्रजापतित्वफलावसानं साध्यमेतावदेव, यदेतद्व्याकृतं जगत्संसारः। अथैतस्यैव साध्यसाधनलक्षणस्य व्याकृतस्य जगतो व्याकरणात्प्राग्बीजावस्था या, तां निर्दिदिक्षति अङ्कुरादिकार्यानुमितामिव वृक्षस्य, कर्मबीजोऽविद्याक्षेत्रो ह्यसौ संसारवृक्षः समूल उद्धर्तव्य इति; तदुद्धरणे हि पुरुषार्थपरिसमाप्तिः; तथा चोक्तम्—'ऊर्ध्वमूलोऽवाक्शाखः' इति काठके; गीतासु च 'ऊर्ध्वमूलमधःशाखम्' इति; पुराणे च—'ब्रह्मवृक्षः सनातनः' इति ॥

**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदꣳरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳरूप इति स**

एष इह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳ श्लोकं विन्दते य एवं वेद ॥ ७ ॥

तद्धेदम् । तदिति बीजावस्थं जगत्प्रागुत्पत्तेः, तर्हि तस्मिन्काले; परोक्षत्वात्सर्वनाम्ना अप्रत्यक्षाभिधानेनाभिधीयते— भूतकालसंबन्धित्वादव्याकृतभाविनो जगतः; सुखग्रहणार्थमैतिह्यप्रयोगो ह-शब्दः; एवं ह तदा आसीदित्युच्यमाने सुखं तां परोक्षामपि जगतो बीजावस्थां प्रतिपद्यते—युधि-

ष्ठिरो ह किल राजासीदित्युक्ते यद्वत्; इदमिति व्याकृतनामरूपात्मकं साध्यसाधनलक्षणं यथावर्णितमभिधीयते; तदिदंशब्दयोः परोक्षप्रत्यक्षावस्थजगद्वाचकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य जगतोऽवगम्यते; तदेवेदम्, इदमेव च तदव्याकृतमासीदिति। अथैवं सति नासत उत्पत्तिर्न सतो विनाशः कार्यस्येत्यवधृतं भवति। तदेवंभूतं जगत् अव्याकृतं सत् नामरूपाभ्यामेव नाम्ना रूपेणैव च, व्याक्रियत। व्याक्रियतेति कर्मकर्तृप्रयोगात्तत्स्वयमेवात्मैव व्याक्रियत— वि आ अक्रियत— विस्पष्टं नामरूपविशेषावधारणमर्यादं व्यक्तीभावमापद्यत— सामर्थ्यादाक्षिप्तनियन्तृकर्तृसाधनक्रियानिमित्तम्। असौ नामेति सर्वनाम्नाविशेषाभिधानेन नाममात्रं व्यपदिशति। देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामा अयम्। तथा इदमिति शुक्लकृष्णादीनामविशेषः। इदं शुक्लमिदं कृष्णं वा रूपमस्येतीदंरूपः। तदिदम् अव्याकृतं वस्तु, एतर्हि एतस्मिन्नपि काले, नामरूपाभ्यामेव व्याक्रियते— असौनामायमिदंरूप इति। यदर्थः सर्वशास्त्रारम्भः, यस्मिन्नविद्यया स्वाभाविक्या कर्तृक्रियाफलाध्यारोपणा कृता, यः कारणं सर्वस्य जगतः, यदात्मके नामरूपे सलिलादिव स्वच्छान्म-

लमिव फेनमव्याकृते व्याक्रियेते, यश्च ताभ्यां नामरूपाभ्यां विलक्षणः स्वतो नित्यशुद्धबुद्धमुक्तस्वभावः—स एषः अव्याकृते आत्मभूते नामरूपे व्याकुर्वन्, ब्रह्मादिस्तम्बपर्यन्तेषु देहेष्विह कर्मफलाश्रयेष्वशनायादिमत्सु प्रविष्टः ॥

नन्वव्याकृतं स्वयमेव व्याक्रियतेत्युक्तम्; कथमिदमिदानीमुच्यते— पर एव त्वात्मा अव्याकृतं व्याकुर्वन्निह प्रविष्ट इति । नैष दोषः—परस्याप्यात्मनोऽव्याकृतजगदात्मत्वेन विवक्षितत्वात् । आक्षिप्तनियन्तृकर्तृक्रियानिमित्तं हि जगदव्याकृतं व्याक्रियतेत्यवोचाम । इदंशब्दसामानाधिकरण्याच्च अव्याकृतशब्दस्य। यथेदं जगन्नियन्त्राद्यनेककारकनिमित्तादिविशेषवद्व्याकृतम्, तथा अपरित्यक्तान्यतमविशेषवदेव तदव्याकृतम् । व्याकृताव्याकृतमात्रं तु विशेषः । दृष्टश्च लोके विवक्षातः शब्दप्रयोगो ग्राम आगतो ग्रामः शून्य इति—कदाचिद्ग्रामशब्देन निवासमात्रविवक्षायां ग्रामः शून्य इति शब्दप्रयोगो भवति; कदाचिन्निवासिजनविवक्षायां ग्राम आगत इति; कदाचिदुभयविवक्षायामपि ग्रामशब्दप्रयोगो भवति ग्रामं च न प्रविशेदिति यथा—तद्वदिहापि जगदिदं व्याकृतमव्याकृतं चेत्यभेदविवक्षायामात्मानात्मनोर्भवति व्यपदेशः । तथेदं जगदुत्पत्तिविनाशात्मकमिति केवलजगद्व्यप-

देशः । तथा 'महानज आत्मा' 'अस्थूलोऽनणुः' 'स एष नेति नेति' इत्यादि केवलात्मव्यपदेशः ॥

ननु परेण व्याकर्त्रा व्याकृतं सर्वतो व्याप्तं सर्वदा जगत्; स कथमिह प्रविष्टः परिकल्प्यते; अप्रविष्टो हि देशः परिच्छिन्नेन प्रवेष्टुं शक्यते, यथा पुरुषेण ग्रामादिः; नाकाशेन किंचित्, नित्यप्रविष्टत्वात् । पाषाणसर्पादिवद्धर्मान्तरेणेति चेत्—अथापि स्यात्—न पर आत्मा स्वेनैव रूपेण प्रविवेश; किं तर्हि? तत्स्थ एव धर्मान्तरेणोपजायते; तेन प्रविष्ट इत्युपचर्यते; यथा पाषाणे सहजोऽन्तस्थः सर्पः, नारिकेले वा तोयम्—न, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । यः स्रष्टा स भावान्तरमनापन्न एव कार्यं सृष्ट्वा पश्चात्प्राविशदिति हि श्रूयते । यथा 'भुक्त्वा गच्छति' इति भुजिगमिक्रिययोः पूर्वापरकालयोरितरेतरविच्छेदः, अविशिष्टश्च कर्ता, तद्वदिहापि स्यात्; न तु तत्स्थस्यैव भावान्तरोपजनन एतत्संभवति । न च स्थानान्तरेण वियुज्य स्थानान्तरसंयोगलक्षणः प्रवेशो निरवयवस्यापरिच्छिन्नस्य दृष्टः । सावयव एव प्रवेशश्रवणादिति चेत्, न; 'दिव्यो ह्यमूर्तः पुरुषः' 'निष्कलं निष्क्रियम्' इत्यादिश्रुतिभ्यः, सर्वव्यपदेश्यधर्मविशेषप्रतिषेधश्रुतिभ्यश्च । प्रतिबिम्बप्रवेशवदिति चेत्, न;

वस्त्वन्तरेण विप्रकर्षानुपपत्तेः । द्रव्ये गुणप्रवेशवदिति चेत्, न; अनाश्रितत्वात् । नित्यपरतन्त्रस्यैवाश्रितस्य गुणस्य द्रव्ये प्रवेश उपचर्यते; न तु ब्रह्मणः स्वातन्त्र्यश्रवणात्तथा प्रवेश उपपद्यते। फले बीजवदिति चेत्, न; सावयवत्ववृद्धिक्षयोत्पत्तिविनाशादिधर्मवत्त्वप्रसङ्गात् । न चैवं धर्मवत्त्वं ब्रह्मणः, 'अजोऽजरः' इत्यादिश्रुतिन्यायविरोधात् । अन्य एव संसारी परिच्छिन्न इह प्रविष्ट इति चेत्, न; 'सेयं देवतैक्षत' इत्यारभ्य 'नामरूपे व्याकरवाणि' इति तस्या एव प्रवेशव्याकरणकर्तृत्वश्रुतेः। तथा 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' 'त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि' 'पुरश्चक्रे द्विपदः' 'रूपं रूपम्' इति च मन्त्रवर्णान्न परादन्यस्य प्रवेशः। प्रविष्टानामितरेतरभेदात्परानेकत्वमिति चेत्, न। 'एको देवो बहुधा संनिविष्टः' 'एकः सन्बहुधा विचार' 'त्वमेकोऽसि बहूननुप्रविष्टः' 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः ॥

प्रवेश उपपद्यते नोपपद्यत इति—तिष्ठतु तावत्; प्रविष्टानां संसारित्वात्तदनन्यत्वाच्च परस्य संसारित्वमिति चेत्,

न; अशनायाद्यत्ययश्रुतेः । सुखित्वदुःखित्वादिदर्शनान्नेति चेत्, न; 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः । प्रत्यक्षादिविरोधादयुक्तमिति चेत्, न; उपाध्याश्रयजनितविशेषविषयत्वात्प्रत्यक्षादेः । 'न दृष्टेर्द्रष्टारं पश्येः' 'विज्ञातारमरे केन विजानीयात्' 'अविज्ञातं विज्ञातृ' इत्यादिश्रुतिभ्यो न आत्मविषयं विज्ञानम्; किं तर्हि? बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव 'सुखितोऽहं' 'दुःखितोऽहम्' इत्येवमादि प्रत्यक्षविज्ञानम्; 'अयम् अहम्' इति विषयेण विषयिणः सामानाधिकरण्योपचारात्; 'नान्यदतोऽस्ति द्रष्टृ' इत्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्यत्वाच्च सुखदुःखयोर्विषयधर्मत्वम् । 'आत्मनस्तु कामाय' इत्यात्मार्थत्वश्रुतेरयुक्तमिति चेत्, न; 'यत्र वा अन्यदिव स्यात्' इत्यविद्याविषयात्मार्थत्वाभ्युपगमात्, 'तत्केन कं पश्येत्' 'नेह नानास्ति किंचन' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिना विद्याविषये तत्प्रतिषेधाच्च न आत्मधर्मत्वम् । तार्किकसमयविरोधादयुक्तमिति चेत्, न; युक्त्याप्यात्मनो दुःखित्वानुपपत्तेः । न हि दुःखेन प्रत्यक्षविषयेणात्मनो विशेष्यत्वम्, प्रत्यक्षाविषयत्वात् । आकाशस्य शब्दगुणवत्त्ववदात्मनो दुःखित्वमिति चेत्, न; एकप्रत्ययविषयत्वानुपपत्तेः । न हि

सुखग्राहकेण प्रत्यक्षविषयेण प्रत्ययेन नित्यानुमेयस्यात्मनो विषयीकरणमुपपद्यते । तस्य च विषयीकरण आत्मन एकत्वाद्विषय्यभावप्रसङ्गः । एकस्यैव विषयविषयित्वम्, दीपवदिति चेत्, न; युगपदसंभवात्, आत्मन्यंशानुपपत्तेश्च । एतेन विज्ञानस्य ग्राह्यग्राहकत्वं प्रत्युक्तम् । प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुणगुणित्वे न अनुमानम्; दुःखस्य नित्यमेव प्रत्यक्षविषयत्वात्; रूपादिसामानाधिकरण्याच्च; मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य, सावयवत्वविक्रियावत्त्वानित्यत्वप्रसङ्गात् । न ह्यविकृत्य संयोगि द्रव्यं गुणः कश्चिदुपयन् अपयन्वा दृष्टः क्वचित् । न च निरवयवं विक्रियमाणं दृष्टं क्वचित्, अनित्यगुणाश्रयं वा नित्यम् । न चाकाश आगमवादिभिर्नित्यतयाभ्युपगम्यते । न चान्यो दृष्टान्तोऽस्ति । विक्रियमाणमपि तत्प्रत्ययानिवृत्तेः नित्यमेवेति चेत्, न; द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानुपपत्तेः । सावयवत्वेऽपि नित्यत्वमिति चेत्, न; सावयवस्यावयवसंयोगपूर्वकत्वे सति विभागोपपत्तेः । वज्रादिष्वदर्शनान्नेति चेत्, न; अनुमेयत्वात्संयोगपूर्वत्वस्य । तस्मान्नात्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः । परस्यादुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रारम्भानर्थक्यमिति चेत्, न; अविद्याध्यारोपितदुःखित्व-

भ्रमापोहार्थत्वात्——आत्मनि प्रकृतसंख्यापूरणभ्रमापोहवत् ; कल्पितदुःख्यात्माभ्युपगमाच्च ॥

जलसूर्यादिप्रतिबिम्बवत् आत्मप्रवेशश्च प्रतिबिम्बवत् व्याकृते कार्ये उपलभ्यत्वम् । प्रागुत्पत्तेरनुपलब्ध आत्मा पश्चात्कार्ये च सृष्टे व्याकृते बुद्धेरन्तरुपलभ्यमानः, सूर्यादिप्रतिबिम्बवज्जलादौ, कार्यं सृष्ट्वा प्रविष्ट इव लक्ष्यमाणो निर्दिश्यते—— 'स एष इह प्रविष्टः' 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य' इत्येवमादिभिः । न तु सर्वगतस्य निरवयवस्य दिग्देशकालान्तरापक्रमणप्राप्तिलक्षणः प्रवेशः कदाचिदप्युपपद्यते । न च परादात्मनोऽन्योऽस्ति द्रष्टा, 'नान्यदतोऽस्ति द्रष्टृ' 'नान्यदतोऽस्ति श्रोतृ' इत्यादिश्रुतेः——इत्यवोचाम । उपलब्ध्यर्थत्वाच्च सृष्टिप्रवेशस्थित्यप्ययवाक्यानाम् ; उपलब्धेः पुरुषार्थत्वश्रवणात्—— 'आत्मानमेवावेत्' 'तस्मात्तत्सर्वमभवत्' 'ब्रह्मविदाप्नोति परम्' 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'आचार्यवान्पुरुषो वेद' 'तस्य तावदेव चिरम्' इत्यादिश्रुतिभ्यः ; 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' 'तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते

ह्यमृतं ततः' इत्यादिस्मृतिभ्यश्च । भेददर्शनापवादाच्च, सृष्ट्यादिवाक्यानामात्मैकत्वदर्शनार्थपरत्वोपपत्तिः । तस्मात्कार्यस्थस्योपलभ्यत्वमेव प्रवेश इत्युपचर्यते ॥

आ नखाग्रेभ्यः— नखाग्रमर्यादमात्मनश्चैतन्यमुपलभ्यते । तत्र कथमिव प्रविष्ट इत्याह— यथा लोके, क्षुरधाने क्षुरो धीयते अस्मिन्निति क्षुरधानं तस्मिन् नापितोपस्कराधाने, क्षुरः अन्तस्थ उपलभ्यते— अवहितः प्रवेशितः, स्यात्; यथा वा विश्वंभरः अग्निः— विश्वस्य भरणात् विश्वंभरः कुलाये नीडे अग्निः काष्ठादौ, अवहितः स्यादित्यनुवर्तते; तत्र हि स मध्यमान उपलभ्यते । यथा च क्षुरः क्षुरधान एकदेशेऽवस्थितः, यथा चाग्निः काष्ठादौ सर्वतो व्याप्यावस्थितः, एवं सामान्यतो विशेषतश्च देहं संव्याप्यावस्थित आत्मा; तत्र हि स प्राणनादिक्रियावान् दर्शनादिक्रियावांश्चोपलभ्यते । तस्मात् तत्र एवं प्रविष्टं तम् आत्मानं प्राणनादिक्रियाविशिष्टम्, न पश्यन्ति नोपलभन्ते । नन्वप्राप्तप्रतिषेधोऽयम्— 'तं न पश्यन्ति' इति, दर्शनस्याप्रकृतत्वात्; नैष दोषः; सृष्ट्यादिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वात्प्रकृतमेव तस्य दर्शनम्; 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' इति मन्त्रवर्णात् ।

तत्र प्राणनादिक्रियाविशिष्टस्य दर्शने हेतुमाह— अकृत्स्नः असमस्तः, हि यस्मात्, सः प्राणनादिक्रियाविशिष्टः । कुतः पुनरकृत्स्नत्वमिति, उच्यते— प्राणन्नेव प्राणनक्रियामेव कुर्वन्, प्राणो नाम प्राणसमाख्यः प्राणाभिधानो भवति; प्राणनक्रियाकर्तृत्वाद्धि प्राणः प्राणितीत्युच्यते, नान्यां क्रियां कुर्वन्— यथा लावकः पाचक इति; तस्मात्क्रियान्तरविशिष्टस्यानुपसंहारादकृत्स्नो हि सः । तथा वदन् वदनक्रियां कुर्वन्, वक्तीति वाक्, पश्यन् चक्षुः, चष्ट इति चक्षुः द्रष्टा, शृण्वन् शृणोतीति श्रोत्रम् । 'प्राणन्नेव प्राणो वदन्वाक्' इत्याभ्यां क्रियाशक्त्युद्भवः प्रदर्शितो भवति । 'पश्यंश्चक्षुः शृण्वञ्श्रोत्रम्' इत्याभ्यां विज्ञानशक्त्युद्भवः प्रदर्श्यते, नामरूपविषयत्वाद्विज्ञानशक्तेः । श्रोत्रचक्षुषी विज्ञानस्य साधने, विज्ञानं तु नामरूपसाधनम्; न हि नामरूपव्यतिरिक्तं विज्ञेयमस्ति; तयोश्चोपलम्भे करणं चक्षुःश्रोत्रे । क्रिया च नामरूपसाध्या प्राणसमवायिनी; तस्याः प्राणाश्रयाया अभिव्यक्तौ वाक् करणम्; तथा पाणिपादपायूपस्थाख्यानि; सर्वेषामुपलक्षणार्था वाक् । एतदेव हि सर्वं व्याकृतम्— 'त्रयं वा इदं नाम रूपं कर्म' इति हि वक्ष्यति । मन्वानो मनः— मनुत इति; ज्ञानशक्तिविकासानां साधारणं करणं

मनः— मनुतेऽनेनेति; पुरुषस्तु कर्ता सन्मन्वानो मन इत्युच्यते । तान्येतानि प्राणादीनि, अस्यात्मनः कर्मनामानि, कर्मजानि नामानि कर्मनामान्येव, न तु वस्तुमात्रविषयाणि; अतो न कृत्स्नात्मवस्त्ववद्योतकानि— एवं ह्यसावात्मा प्राणनादिक्रियया तत्तत्क्रियाजनितप्राणादिनामरूपाभ्यां व्याक्रियमाणोऽवद्योत्यमानोऽपि । स योऽतः अस्मात्प्राणनादिक्रियासमुदायात्, एकैकं प्राणं चक्षुरिति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकम्, मनसा अयमात्मेत्युपास्ते चिन्तयति, न स वेद न स जानाति ब्रह्म । कस्मात्? अकृत्स्नोऽसमस्तः हि यस्मात् एष आत्मा, अस्मात्प्राणनादिसमुदायात्, अतः प्रविभक्तः, एकैकेन विशेषणेन विशिष्टः, इतरधर्मान्तरानुपसंहारात्— भवति । यावदयमेवं वेद —'पश्यामि' 'शृणोमि' 'स्पृशामि' इति वा स्वभावप्रवृत्तिविशिष्टं वेद, तावदञ्जसा कृत्स्नमात्मानं न वेद ॥

कथं पुनः पश्यन्वेदेत्याह—आत्मेत्येव आत्मेति—प्राणादीनि विशेषणानि यान्युक्तानि तानि यस्य सः—आप्नुवंस्तान्यात्मेत्युच्यते । स तथा कृत्स्नविशेषोपसंहारी सन्कृत्स्नो भवति । वस्तुमात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति । तथा च वक्ष्यति—'ध्यायतीव

ळेलायतीव’ इति । तस्मादात्मेत्येवोपासीत । एवं कृत्स्नो ह्यसौ स्वेन वस्तुरूपेण गृह्यमाणो भवति । कस्मात्कृत्स्न इत्याशङ्क्याह—अत्रास्मिन्नात्मनि, हि यस्मात्, निरुपाधिके, जलसूर्यप्रतिबिम्बभेदा इवादित्ये, प्राणाद्युपाधिकृता विशेषाः प्राणादिकर्मजनामाभिधेया यथोक्ता ह्येते, एकमभिन्नताम्, भवन्ति प्रतिपद्यन्ते ॥

‘आत्मेत्येवोपासीत’ इति नापूर्वविधिः, पक्षे प्राप्तत्वात् । ‘यत्साक्षादपरोक्षाद्ब्रह्म’ ‘कतम आत्मेति— योऽयं विज्ञानमयः’ इत्येवमाद्यात्मप्रतिपादनपराभिः श्रुतिभिरात्मविषयं विज्ञानमुत्पादितम्; तत्रात्मस्वरूपविज्ञानेनैव तद्विषयानात्माभिमानबुद्धिः कारकादिक्रियाफलाध्यारोपणात्मिका अविद्या निवर्तिता; तस्यां निवर्तितायां कामादिदोषानुपपत्तेरनात्मचिन्तानुपपत्तिः; पारिशेष्यादात्मचिन्तैव । तस्मात्तदुपासनमस्मिन्पक्षे न विधातव्यम्, प्राप्तत्वात् ।

तिष्ठतु तावत्—पाक्षिक्यात्मोपासनप्राप्तिर्नित्या वेति । अपूर्वविधिः स्यात्, ज्ञानोपासनयोरेकत्वे सत्यप्राप्तत्वात्; ‘न स वेद’ इति विज्ञानं प्रस्तुत्य ‘आत्मेत्येवोपासीत’ इत्यभिधानाद्वेदोपासनशब्दयोरेकार्थतावगम्यते । ‘अनेन ह्येतत्सर्वं वेद’ ‘आत्मानमेवावेत्’ इत्यादिश्रुतिभ्यश्च विज्ञा-

नमुपासनम् । तस्य चाप्राप्तत्वाद्विध्यर्हत्वम् । न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते । तस्मादपूर्वविधिरेवायम् । कर्मविधिसामान्याच्च— यथा 'यजेत' 'जुहुयात्' इत्यादयः कर्मविधयः, न तैरस्य 'आत्मेत्येवोपासीत' 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यात्मोपासनविधेर्विशेषोऽवगम्यते । मानसक्रियात्वाच्च विज्ञानस्य— यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इत्याद्या मानसी क्रिया विधीयते, तथा 'आत्मेत्येवोपासीत' 'मन्तव्यो निदिध्यासितव्यः' इत्याद्या क्रियैव विधीयते ज्ञानात्मिका । तथावोचाम वेदोपासनशब्दयोरेकार्थत्वमिति । भावनांशत्रयोपपत्तेश्च—यथा हि 'यजेत' इत्यस्यां भावनायाम्, किम्? केन? कथम्? इति भाव्याद्याकाङ्क्षापनयकारणमंशत्रयमवगम्यते, तथा 'उपासीत' इत्यस्यामपि भावनायां विधीयमानायाम्, किमुपासीत? केनोपासीत? कथमुपासीत? इत्यस्यामाकाङ्क्षायाम्, 'आत्मानमुपासीत मनसा त्यागब्रह्मचर्यशमदमोपरमतितिक्षादीतिकर्तव्यतासंयुक्तः' इत्यादिशास्त्रेणैव समर्प्यते अंशत्रयम् । यथा च कृत्स्नस्य दर्शपूर्णमासादिप्रकरणस्य दर्शपूर्णमासादिविध्युद्देशत्वेनोपयोगः; एवमौपनिषदात्मोपासनप्रकरणस्यात्मोपासनविध्युद्देशत्वेनैवो-

पयोगः । 'नेति नेति' 'अस्थूलम्' 'एकमेवाद्वितीयम्' 'अशनायाद्यतीतः' इत्येवमादिवाक्यानामुपास्यात्मस्वरूपविशेषसमर्पणेनोपयोगः । फलं च मोक्षोऽविद्यानिवृत्तिर्वा ॥

अपरे वर्णयन्ति—उपासनेनात्मविषयं विशिष्टं विज्ञानान्तरं भावयेत्; तेनात्मा ज्ञायते; अविद्यानिवर्तकं च तदेव, नात्मविषयं वेदवाक्यजनितं विज्ञानमिति । एतस्मिन्नर्थे वचनान्यपि—'विज्ञाय प्रज्ञां कुर्वीत' 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यादीनि ॥

न, अर्थान्तराभावात् । न च 'आत्मेत्येवोपासीत' इत्यपूर्वविधिः; कस्मात्? आत्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थान्तरस्य कर्तव्यस्य मानसस्य बाह्यस्य वाभावात् । तत्र हि विधेः साफल्यम्, यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्तिर्गम्यते—यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादौ । न हि दर्शपूर्णमासविधिवाक्यजनितविज्ञानमेव दर्शपूर्णमासानुष्ठानम् । तच्चाधिकाराद्यपेक्षानुभावि । न तु 'नेति नेति' इत्याद्यात्मप्रतिपादकवाक्यजनितविज्ञानव्यतिरेकेण दर्शपूर्णमासादिवत्पुरुषव्यापारः संभवति; सर्वव्यापारोपशमहेतुत्वात्तद्भा-

क्यजनितविज्ञानस्य। न ह्युदासीनविज्ञानं प्रवृत्तिजनकम्; अब्रह्मानात्मविज्ञाननिवर्तकत्वाच्च 'एकमेवाद्वितीयम्' 'तत्त्वमसि' इत्येवमादिवाक्यानाम्। न च तन्निवृत्तौ प्रवृत्तिरुपपद्यते, विरोधात्। वाक्यजनितविज्ञानमात्रान्नाब्रह्मानात्मविज्ञाननिवृत्तिरिति चेत्, न; 'तत्त्वमसि' 'नेति नेति' 'आत्मैवेदम्' 'एकमेवाद्वितीयम्' 'ब्रह्मैवेदममृतम्' 'नान्यदतोऽस्ति द्रष्टृ' 'तदेव ब्रह्म त्वं विद्धि' इत्यादिवाक्यानां तद्वादित्वात्। द्रष्टव्यविधेर्विषयसमर्पकाण्येतानीति चेत्, न; अर्थान्तराभावादित्युक्तोत्तरत्वात्— आत्मवस्तुस्वरूपसमर्पकैरेव वाक्यैः 'तत्त्वमसि' इत्यादिभिः श्रवणकाल एव तद्दर्शनस्य कृतत्वाद्द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्तव्यमित्युक्तोत्तरमेतत्। आत्मस्वरूपान्वाख्यानमात्रेणात्मविज्ञाने विधिमन्तरेण न प्रवर्तत इति चेत्, न; आत्मवादिवाक्यश्रवणेनात्मविज्ञानस्य जनितत्वात्— किं भोः कृतस्य करणम्। तच्छ्रवणेऽपि न प्रवर्तत इति चेत्, न; अनवस्थाप्रसङ्गात्— यथात्मवादिवाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्तते, तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्तिष्यत इति विध्यन्तरापेक्षा; तथा तदर्थश्रवणेऽपीत्यनवस्था प्रसज्येत। वाक्यजनितात्मज्ञानस्मृतिसंततेः श्रवणविज्ञानमात्रादर्थान्तरत्व-

मिति चेत्, न; अर्थप्राप्तत्वात्— यदैवात्मप्रतिपादकवाक्यश्रवणादात्मविषयं विज्ञानमुत्पद्यते, तदैव तदुत्पद्यमानं तद्विषयं मिथ्याज्ञानं निवर्तयदेवोत्पद्यते; आत्मविषयमिथ्याज्ञाननिवृत्तौ च तत्प्रभवाः स्मृतयो न भवन्ति स्वाभाविक्योऽनात्मवस्तुभेदविषयाः; अनर्थत्वावगतेश्च— आत्मावगतौ हि सत्याम् अन्यद्वस्तु अनर्थत्वेनावगम्यते, अनित्यदुःखाशुद्ध्यादिबहुदोषवत्त्वात् आत्मवस्तुनश्च तद्विलक्षणत्वात्; तस्मादनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः; पारिशेष्यादात्मैकत्वविज्ञानस्मृतिसंततेरर्थत एव भावान्न विधेयत्वम्। शोकमोहभयायासादिदुःखदोषनिवर्तकत्वाच्च तत्स्मृतेः—विपरीतज्ञानप्रभवो हि शोकमोहादिदोषः; तथा च 'तत्र को मोहः' 'विद्वान्न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' 'भिद्यते हृदयग्रन्थिः' इत्यादिश्रुतयः। निरोधस्तर्ह्यर्थान्तरमिति चेत्— अथापि स्याच्चित्तवृत्तिनिरोधस्य वेदवाक्यजनितात्मविज्ञानादर्थान्तरत्वात्, तन्त्रान्तरेषु च कर्तव्यतया अवगतत्वाद्विधेयत्वमिति चेत्— न, मोक्षसाधनत्वेनानवगमात्। न हि वेदान्तेषु ब्रह्मात्मविज्ञानादन्यत्परमपुरुषार्थसाधनत्वेनावगम्यते— 'आत्मानमेवावेत्तस्मात्तत्सर्वमभवत्' 'ब्रह्मविदाप्नोति परम्' 'स यो ह

वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'आचार्यवान्पुरुषो वेद' 'तस्य तावदेव चिरम्' 'अभयं हि वै ब्रह्म भवति । य एवं वेद' इत्येवमादिश्रुतिशतेभ्यः। अनन्यसाधनत्वाच्च निरोधस्य— न ह्यात्मविज्ञानतत्स्मृतिसंतानव्यतिरेकेण चित्तवृत्तिनिरोधस्य साधनमस्ति । अभ्युपगम्येदमुक्तम्; न तु ब्रह्मविज्ञानव्यतिरेकेण अन्यत् मोक्षसाधनमवगम्यते । आकाङ्क्षाभावाच्च भावनाभावः । यदुक्तम् 'यजेत' इत्यादौ किम्? केन? कथम्? इति भावनाकाङ्क्षायां फलसाधनेतिकर्तव्यताभिः आकाङ्क्षापनयनं यथा, तद्वदिहाप्यात्मविज्ञानविधावप्युपपद्यत इति— तदसत्; 'एकमेवाद्वितीयम्' 'तत्त्वमसि' 'नेति नेति' 'अनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म' इत्यादिवाक्यार्थविज्ञानसमकालमेव सर्वाकाङ्क्षाविनिवृत्तेः । न च वाक्यार्थविज्ञाने विधिप्रयुक्तः प्रवर्तते । विध्यन्तरप्रयुक्तौ चानवस्थादोषमवोचाम । न च 'एकमेवाद्वितीयं ब्रह्म' इत्यादिवाक्येषु विधिरवगम्यते, आत्मस्वरूपान्वाख्यानेनैवावसितत्वात् । वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमिति चेत्— अथापि स्यात्, यथा 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्येवमादौ वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यम्, एवमात्मार्थवाक्यानामपीति चेत्— न, विशेषात् ।

न वाक्यस्य वस्त्वन्वाख्यानं क्रियान्वाख्यानं वा प्रामाण्याप्रामाण्यकारणम् ; किं तर्हि, निश्चितफलवद्विज्ञानोत्पादकत्वम् ; तद्यत्रास्ति तत्प्रमाणं वाक्यम् ; यत्र नास्ति तदप्रमाणम् । किं च, भोः ! पृच्छामस्त्वाम्— आत्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्निश्चितं च विज्ञानमुत्पद्यते, न वा ? उत्पद्यते चेन्, कथमप्रामाण्यमिति । किं वा न पश्यस्यविद्याशोकमोहभयादिसंसारबीजदोषनिवृत्तिं विज्ञानफलम् ? न शृणोषि वा किम्—' तत्र को मोहः कः शोक एकत्वमनुपश्यतः ', ' मन्त्रविदेवास्मि नात्मवित्सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु ' इत्येवमाद्युपनिषद्वाक्यशतानि ? एवं विद्यते किम् ' सोऽरोदीत् ' इत्यादिषु निश्चितं फलवच्च विज्ञानम् ? न चेद्विद्यते, अस्त्वप्रामाण्यम् ; तदप्रामाण्ये, फलवन्निश्चितविज्ञानोत्पादकस्य किमित्यप्रामाण्यं स्यात् ? तदप्रामाण्ये च दर्शपूर्णमासादिवाक्येषु को विश्रम्भः ? ननु दर्शपूर्णमासादिवाक्यानां पुरुषप्रवृत्तिविज्ञानोत्पादकत्वात्प्रामाण्यम् , आत्मविज्ञानवाक्येषु तन्नास्तीति ; सत्यमेवम् ; नैष दोषः, प्रामाण्यकारणोपपत्तेः । प्रामाण्यकारणं च यथोक्तमेव, नान्यत् । अलंकारश्चायम् , यत् सर्वप्रवृत्तिबीजनिरोधफलवद्विज्ञानोत्पादकत्वम् आत्मप्रतिपादकवाक्यानाम् , न अप्रामाण्य-

कारणम् । यत्तूक्तम्—'विज्ञाय प्रज्ञां कुर्वीत' इत्यादिवचनानां वाक्यार्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति, सत्यमेतत्; किंतु न अपूर्वविध्यर्थता; पक्षे प्राप्तस्य नियमार्थतैव । कथं पुनरुपासनस्य पक्षप्राप्तिः, यावता पारिशेष्यादात्मविज्ञानस्मृतिसंततिर्नित्यैवेत्यभिहितम्? बाढम्—यद्यप्येवम्, शरीरारम्भकस्य कर्मणो नियतफलत्वात्, सम्यग्ज्ञानप्राप्तावपि अवश्यंभाविनी प्रवृत्तिर्वाङ्मनःकायानाम्, लब्धवृत्तेः कर्मणो बलीयस्त्वात्— मुक्तेष्वादिप्रवृत्तिवत्; तेन पक्षे प्राप्तं ज्ञानप्रवृत्तिदौर्बल्यम् । तस्मात् त्यागवैराग्यादिसाधनबलावलम्बेन आत्मविज्ञानस्मृतिसंततिर्नियन्तव्या भवति; न त्वपूर्वा कर्तव्या; प्राप्तत्वात्— इत्यवोचाम । तस्मात्प्राप्तविज्ञानस्मृतिसंताननियमविध्यर्थानि 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादिवाक्यानि, अन्यार्थासंभवात् । ननु अनात्मोपासनमिदम्, इति-शब्दप्रयोगात्; यथा 'प्रियमित्येतदुपासीत' इत्यादौ न प्रियादिगुणा एवोपास्याः, किं तर्हि, प्रियादिगुणवत्प्राणाद्येवोपास्यम्; तथा इहापि इति-परात्मशब्दप्रयोगात् आत्मगुणवदनात्मवस्तु उपास्यमिति गम्यते; आत्मोपास्यत्ववाक्यवैलक्षण्याच्च— परेण च वक्ष्यति— 'आत्मानमेव लोकमुपासीत' इति; तत्र च वाक्ये आत्मैवोपास्यत्वेना-

भिप्रेतः, द्वितीयाश्रवणात् 'आत्मानमेव' इति; इह तु न द्वितीया श्रूयते, इति-परश्च आत्मशब्दः—'आत्मेत्येवोपासीत' इति; अतो न आत्मोपास्यः, आत्मगुणश्चान्यः— इति त्ववगम्यते । न, वाक्यशेषे आत्मन उपास्यत्वेनावगमात्; अस्यैव वाक्यस्य शेषे आत्मैवोपास्यत्वेनावगम्यते— 'तदेतत्पदनीयमस्य सर्वस्य, यदयमात्मा', 'अन्तरतरं यदयमात्मा', 'आत्मानमेवावेत्' इति । प्रविष्टस्य दर्शनप्रतिषेधादनुपास्यत्वमिति चेत्— यस्यात्मनः प्रवेश उक्तः, तस्यैव दर्शनं वार्यते—'तं न पश्यन्ति' इति प्रकृतोपादानात्; तस्मादात्मनोऽनुपास्यत्वमेवेति चेत्—न, अकृत्स्नत्वदोषात् । दर्शनप्रतिषेधोऽकृत्स्नत्वदोषाभिप्रायेण, न आत्मोपास्यत्वप्रतिषेधाय; प्राणनादिक्रियाविशिष्टत्वेन विशेषणात्; आत्मनश्चेदुपास्यत्वमनभिप्रेतम्, प्राणनाद्येकैकक्रियाविशिष्टस्यात्मनोऽकृत्स्नत्ववचनमनर्थकं स्यात्— 'अकृत्स्नो ह्येषोऽत एकैकेन भवति' इति । अतः अनेकैकविशिष्टस्त्वात्मा कृत्स्नत्वादुपास्य एवेति सिद्धम् । यस्त्वात्मशब्दस्य इति-परः प्रयोगः, आत्मशब्दप्रत्यययोः आत्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थम्; अन्यथा 'आत्मानमुपासीत' इत्येवमवक्ष्यत; तथा च अर्थात् आत्मनि शब्दप्रत्ययावनुज्ञातौ स्याताम्;

तच्चानिष्टम्—'नेति नेति' 'विज्ञातारमरे केन विजानीयात्' 'अविज्ञातं विज्ञातृ' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतिभ्यः। यत्तु 'आत्मानमेव लोकमुपासीत' इति, तत् अनात्मोपासनप्रसङ्गनिवृत्तिपरत्वात् न वाक्यान्तरम् ॥

अनिर्ज्ञातत्वसामान्यात् आत्मा ज्ञातव्यः, अनात्मा च। तत्र कस्मादात्मोपासन एव यत्न आस्थीयते—'आत्मेत्येवोपासीत' इति, नेतरविज्ञाने इति; अत्रोच्यते—तदेतदेव प्रकृतम्, पदनीयं गमनीयम्, नान्यत्; अस्य सर्वस्येति निर्धारणार्था षष्ठी; अस्मिन्सर्वस्मिन्नित्यर्थः; यदयमात्मा यदेतदात्मतत्त्वम्; किं न विज्ञातव्यमेवान्यत्? न; किं तर्हि, ज्ञातव्यत्वेऽपि न पृथग्ज्ञानान्तरमपेक्षते आत्मज्ञानात्; कस्मात्? अनेनात्मना ज्ञातेन, हि यस्मात्, एतत्सर्वमनात्मजातम् अन्यद्यत् तत्सर्वं समस्तम्, वेद जानाति। नन्वन्यज्ञानेनान्यन्न ज्ञायत इति; अस्य परिहारं दुन्दुभ्यादिग्रन्थेन वक्ष्यामः। कथं पुनरेतत्पदनीयमिति, उच्यते—यथा ह वै लोके, पदेन— गवादिखुराङ्कितो देशः पदमित्युच्यते, तेन पदेन— नष्टं विवित्सितं पशुं पदेनान्वेषमाणः अनुविन्देत् लभेत; एवमात्मनि लब्धे सर्वमनुलभते इत्यर्थः ॥

नन्वात्मनि ज्ञाते सर्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते, कथं लाभोऽप्रकृत उच्यत इति; न, ज्ञानलाभयोरेकार्थत्वस्य विवक्षितत्वात्। आत्मनो ह्यलाभोऽज्ञानमेव; तस्माज्ज्ञानमेवात्मनो लाभः; न अनात्मलाभवत् अप्राप्तप्राप्तिलक्षण आत्मलाभः, लब्धृलब्धव्ययोर्भेदाभावात्। यत्र ह्यात्मनोऽनात्मा लब्धव्यो भवति, तत्रात्मा लब्धा, लब्धव्योऽनात्मा। स चाप्राप्तः उत्पाद्यादिक्रियाव्यवहितः, कारकविशेषोपादानेन क्रियाविशेषमुत्पाद्य लब्धव्यः। स त्वप्राप्तप्राप्तिलक्षणोऽनित्यः, मिथ्याज्ञानजनितकामक्रियाप्रभवत्वात्— स्वप्ने पुत्रादिलाभवत्। अयं तु तद्विपरीत आत्मा। आत्मत्वादेव नोत्पाद्यादिक्रियाव्यवहितः। नित्यलब्धस्वरूपत्वेऽपि अविद्यामात्रं व्यवधानम्। यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं विपरीतज्ञानव्यवधानमात्रम्, तथा ग्रहणं ज्ञानमात्रमेव, विपरीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य; एवमिहाप्यात्मनोऽलाभः अविद्यामात्रव्यवधानम्; तस्माद्विद्यया तदपोहनमात्रमेव लाभः, नान्यः कदाचिदप्युपपद्यते। तस्मादात्मलाभे ज्ञानादर्थान्तरसाधनस्य आनर्थक्यं वक्ष्यामः। तस्मान्निराशङ्कमेव ज्ञानलाभयोरेकार्थत्वं विवक्षन्नाह— ज्ञानं प्रकृत्य— 'अनुविन्देत्' इति;

विन्दतेर्लाभार्थत्वात् ॥

गुणविज्ञानफलमिदमुच्यते— यथा— अयमात्मा नामरूपानुप्रवेशेन ख्यातिं गतः आत्मेत्यादिनामरूपाभ्याम्, प्राणादिसंहतिं च श्लोकं प्राप्तवान्— इति— एवम्, यो वेद; सः कीर्तिं ख्यातिम्, श्लोकं च संघातमिष्टैः सह, विन्दते लभते। यद्वा यथोक्तं वस्तु यो वेद; मुमुक्षूणामपेक्षितं कीर्तिशब्दितमैक्यज्ञानम्, तत्फलं श्लोकशब्दितां मुक्तिमाप्नोति—इति मुख्यमेव फलम् ॥

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मानः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥**

कुतश्चात्मतत्त्वमेव ज्ञेयम् अनादृत्यान्यदित्याह— तदेतदात्मतत्त्वम्, प्रेयः प्रियतरम्, पुत्रात्; पुत्रो हि लोके प्रियः प्रसिद्धः, तस्मादपि प्रियतरम्— इति निरतिशयप्रियत्वं दर्शयति; तथा वित्तात् हिरण्यरत्नादेः; तथा अन्यस्मात्

यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः । तत्कस्मा-
दात्मतत्त्वमेव प्रियतरं न प्राणादीति, उच्यते—अन्तरतरम्—
बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो हि अन्तरः अभ्यन्तरः
संनिकृष्ट आत्मनः; तस्मादप्यन्तरात् अन्तरतरम्, यदय-
मात्मा यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियः स
सर्वप्रयत्नेन लब्धव्यो भवति; तथा अयमात्मा सर्वलौकिक-
प्रियेभ्यः प्रियतमः; तस्मात्तल्लाभे महान्यत्न आस्थेय
इत्यर्थः— कर्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा ।
कस्मात्पुनः आत्मानात्मप्रिययोः अन्यतरप्रियहानेन इतरप्रि-
योपादानप्राप्तौ, आत्मप्रियोपादानेनैवेतरहानं क्रियते, न वि-
पर्ययः—इति, उच्यते—स यः कश्चित्, अन्यमनात्मविशेषं
पुत्रादिकम्, प्रियतरमात्मनः सकाशात्, ब्रुवाणम्, ब्रूयादा-
त्मप्रियवादी—किम्?— प्रियं तवाभिमतं पुत्रादिलक्षणम्,
रोत्स्यति आवरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति; स
कस्मादेवं ब्रवीति?—यस्मादीश्वरः समर्थः पर्याप्तोऽसावेवं
वक्तुं ह; यस्मात् तस्मात् तथैव स्यात्; यत्तेनोक्तम्—'प्राण-
संरोधं प्राप्स्यति'; यथाभूतवादी हि सः, तस्मात्स ईश्वरो
वक्तुम् । ईश्वरशब्दः क्षिप्रवाचीति केचित्; भवेद्यदि प्रसि-
द्धिः स्यात् । तस्मादुज्झित्वान्यत्प्रियम्, आत्मानमेव प्रिय-

मुपासीत । स य आत्मानमेव प्रियमुपास्ते—आत्मैव प्रियो नान्योऽस्तीति प्रतिपद्यते, अन्यल्लौकिकं प्रियमप्यप्रियमेवेति निश्चित्य, उपास्ते चिन्तयति, न ह्यस्य एवंविदः प्रियं प्रमायुकं प्रमरणशीलं भवति । नित्यानुवादमात्रमेतत्, आत्मविदोऽन्यस्य प्रियस्याप्रियस्य च अभावात्; आत्मप्रियग्रहणस्तुत्यर्थं वा; प्रियगुणफलविधानार्थं वा मन्दात्मदर्शिनः, ताच्छील्यप्रत्ययोपादानात् ॥

**तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥**

सूत्रिता ब्रह्मविद्या— 'आत्मेत्येवोपासीत' इति, यदर्थोपनिषत्कृत्स्नापि; तस्यैतस्य सूत्रस्य व्याचिख्यासुः प्रयोजनाभिधित्सयोपोद्घातं करोति— तदिति वक्ष्यमाणमनन्तरवाक्येऽवद्योत्यं वस्तु— आहुः— ब्राह्मणाः ब्रह्म विविदिषवः जन्मजरामरणप्रबन्धचक्रभ्रमणकृतायासदुःखोदकापारमहोदधिप्लवभूतं गुरुमासाद्य तत्तीरमुत्तितीर्षवः धर्माधर्मसाधनतत्फललक्षणात्साध्यसाधनरूपान्निर्विण्णाः तद्विलक्षणनित्यनिरतिशयश्रेयःप्रतिपित्सवः; किमाहुरित्याह— यद्ब्र-

ह्मविद्यया ; ब्रह्म परमात्मा, तत् यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया, सर्वं निरवशेषम् , भविष्यन्तः भविष्याम इत्येवम् , मनुष्या यत् मन्यन्ते ; मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थम् ; मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयससाधनेऽधिकृता इत्यभिप्रायः ; यथा कर्मविषये फलप्राप्तिं ध्रुवां कर्मभ्यो मन्यन्ते, तथा ब्रह्मविद्यायाः सर्वात्मभावफलप्राप्तिं ध्रुवामेव मन्यन्ते, वेदप्रामाण्यस्योभयत्राविशेषात्; तत्र विप्रतिषिद्धं वस्तु लक्ष्यते ; अतः पृच्छामः— किमु तद्ब्रह्म, यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते ? तत्किमवेत् , यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत् ? ब्रह्म च सर्वमिति श्रूयते , तत् यदि अविज्ञाय किंचित्सर्वमभवत् , तथान्येषामप्यस्तु ; किं ब्रह्मविद्यया ? अथ विज्ञाय सर्वमभवत् , विज्ञानसाध्यत्वात्कर्मफलेन तुल्यमेवेत्यनित्यत्वप्रसङ्गः सर्वभावस्य ब्रह्मविद्याफलस्य ; अनवस्थादोषश्च– तदप्यन्यद्विज्ञाय सर्वमभवत् , ततः पूर्वमप्यन्यद्विज्ञायेति । न तावदविज्ञाय सर्वमभवत् , शास्त्रार्थवैरूप्यदोषात् । फलानित्यत्वदोषस्तर्हि ?— नैकोऽपि दोषः, अर्थविशेषोपपत्तेः ॥

यदि किमपि विज्ञायैव तद्ब्रह्म सर्वमभवत् , पृच्छामः— किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति । एवं चोदिते सर्वदो-

षानागन्धितं प्रतिवचनमाह—

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्चनाभूत्या ईशते। आत्मा ह्येषाꣳ स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानाम्। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुः॥ १०॥

ब्रह्म अपरम्, सर्वभावस्य साध्यत्वोपपत्तेः; न हि परस्य ब्रह्मणः सर्वभावापत्तिर्विज्ञानसाध्या; विज्ञानसाध्यां च सर्वभावापत्तिमाह— 'तस्मात्तत्सर्वमभवत्' इति; तस्माद्ब्रह्म वा इदमग्र आसीदित्यपरं ब्रह्मेह भवितुमर्हति ॥

मनुष्याधिकाराद्वा तद्भावी ब्राह्मणः स्यात्; 'सर्वं भविष्यन्तो मनुष्या मन्यन्ते' इति हि मनुष्याः प्रकृताः; तेषां च अभ्युदयनिःश्रेयससाधने विशेषतोऽधिकार इत्युक्तम्, न परस्य ब्रह्मणो नाप्यपरस्य प्रजापतेः; अतो द्वैतैकत्वापरब्रह्मविद्यया कर्मसहितया अपरब्रह्मभावमुपसंपन्नो भोज्यादपावृत्तः सर्वप्राप्त्योच्छिन्नकामकर्मबन्धनः परब्रह्मभावी ब्रह्मविद्याहेतोर्ब्रह्मेत्यभिधीयते; दृष्टश्च लोके भाविनीं वृत्तिमाश्रित्य शब्दप्रयोगः— यथा 'ओदनं पचति' इति, शास्त्रे च— 'परिव्राजकः सर्वभूताभयदक्षिणाम्' इत्यादि, तथा इह— इति केचित्— ब्रह्म ब्रह्मभावी पुरुषो ब्राह्मणः इति व्याचक्षते ॥

तन्न, सर्वभावापत्तेरनित्यत्वदोषात् । न हि सोऽस्ति लोके परमार्थतः, यो निमित्तवशाद्भावान्तरमापद्यते नित्यश्चेति । तथा ब्रह्मविज्ञाननिमित्तकृता चेत्सर्वभावापत्तिः, नित्या चेति विरुद्धम् । अनित्यत्वे च कर्मफलतुल्यतेत्युक्तो दोषः ।

अविद्याकृतासर्वत्वनिवृत्तिं चेत्सर्वभावापत्तिं ब्रह्मविद्याफलं मन्यसे, ब्रह्मभाविपुरुषकल्पना व्यर्था स्यात्। प्राग्ब्रह्मविज्ञानादपि सर्वो जन्तुर्ब्रह्मत्वान्नित्यमेव सर्वभावापन्नः परमार्थतः; अविद्यया तु अब्रह्मत्वमसर्वत्वं चाध्यारोपितम्—यथा शुक्तिकायां रजतम्, व्योम्नि वा तलमलवत्त्वादि; तथेह ब्रह्मण्यध्यारोपितमविद्यया अब्रह्मत्वमसर्वत्वं च ब्रह्मविद्यया निवर्त्यते—इति मन्यसे यदि, तदा युक्तम्—यत्परमार्थत आसीत्परं ब्रह्म, ब्रह्मशब्दस्य मुख्यार्थभूतम् 'ब्रह्म वा इदमग्र आसीत्' इत्यस्मिन्वाक्ये उच्यत इति वक्तुम्; यथाभूतार्थवादित्वाद्वेदस्य। न त्वियं कल्पना युक्ता—ब्रह्मशब्दार्थविपरीतो ब्रह्मभावी पुरुषो ब्रह्मेत्युच्यत इति, श्रुतहान्यश्रुतकल्पनाया अन्याय्यत्वात्—महत्तरे प्रयोजनान्तरेऽसति अविद्याकृतव्यतिरेकेणाब्रह्मत्वमसर्वत्वं च विद्यत एवेति चेत्, न, तस्य ब्रह्मविद्ययापोहानुपपत्तेः। न हि क्वचित्साक्षाद्वस्तुधर्मस्यापोढ्री दृष्टा कर्त्री वा ब्रह्मविद्या, अविद्यायास्तु सर्वत्रैव निवर्तिका दृश्यते; तथा इहाप्यब्रह्मत्वमसर्वत्वं चाविद्याकृतमेव निवर्त्यतां ब्रह्मविद्यया; न तु पारमार्थिकं वस्तु कर्तुं निवर्तयितुं वा अर्हति ब्रह्मविद्या। तस्माद्व्यर्थैव श्रुतहान्यश्रुतकल्पना॥

ब्रह्मण्यविद्यानुपपत्तिरिति चेत्, न, ब्रह्मणि विद्याविधानात्। न हि शुक्तिकायां रजताध्यारोपणेऽसति शुक्तिकात्वं ज्ञाप्यते– चक्षुर्गोचरापन्नायाम्— 'इयं शुक्तिका न रजतम्' इति। तथा 'सदेवेदं सर्वम्, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्, नेदं द्वैतमस्त्यब्रह्म' इति ब्रह्मण्येकत्वविज्ञानं न विधातव्यम्, ब्रह्मण्यविद्याध्यारोपणायामसत्याम्। न ब्रूमः– शुक्तिकायामिव ब्रह्मण्यतद्धर्माध्यारोपणा नास्तीति; किं तर्हि न ब्रह्म स्वात्मन्यतद्धर्माध्यारोपनिमित्तम् अविद्याकर्तृ चेति– भवत्येवं नाविद्याकर्तृ भ्रान्तं च ब्रह्म। किंतु नैव अब्रह्म अविद्यकर्ता चेतनो भ्रान्तोऽन्य इष्यते— 'नान्योऽतोऽस्ति विज्ञाता' 'नान्यदतोऽस्ति विज्ञातृ' 'तत्त्वमसि' 'आत्मानमेवावेत्' 'अहं ब्रह्मास्मि' 'अन्योऽसावन्योऽहमस्मीति, न स वेद' इत्यादिश्रुतिभ्यः; स्मृतिभ्यश्च— 'समं सर्वेषु भूतेषु' 'अहमात्मा गुडाकेश' 'शुनि चैव श्वपाके च'; 'यस्तु सर्वाणि भूतानि' 'यस्मिन्सर्वाणि भूतानि' इति च मन्त्रवर्णात्। नन्वेवं शास्त्रोपदेशानर्थक्यमिति; बाढमेवम्, अवगते अस्त्वेवानर्थक्यम्। अवगमानर्थक्यमपीति चेत्, न, अनवगमनिवृत्तेर्दृष्टत्वात्। तन्निवृत्तेरप्यनुपपत्तिरेकत्व इति चेत्, न, दृष्टविरोधात्; दृश्यते

ह्येकत्वविज्ञानादेवानवगमनिवृत्तिः ; दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात् ; न च दृष्टविरोधः केनचिदप्यभ्युपगम्यते ; न च दृष्टेऽनुपपन्नं नाम, दृष्टत्वादेव । दर्शनानुपपत्तिरिति चेत् , तत्राप्येषैव युक्तिः ॥

"पुण्यो वै पुण्येन कर्मणा भवति' 'तं विद्याकर्मणी समन्वारभेते' 'मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्येवमादिश्रुतिस्मृतिन्यायेभ्यः परस्माद्विलक्षणोऽन्यः संसार्यवगम्यते ; तद्विलक्षणश्च परः 'स एष नेति नेति' 'अशनायाद्यत्येति' 'य आत्मापहतपाप्मा विजरो विमृत्युः' 'एतस्य वा अक्षरस्य प्रशासने' इत्यादिश्रुतिभ्यः ; कणादाक्षपादादितर्कशास्त्रेषु च संसारिविलक्षण ईश्वर उपपत्तितः साध्यते ; संसारदुःखापनयार्थित्वप्रवृत्तिदर्शनात् स्फुटमन्यत्वम् ईश्वरात् संसारिणोऽवगम्यते ; 'अवाक्यनादरः' 'न मे पार्थास्ति' इति श्रुतिस्मृतिभ्यः ; 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'तं विदित्वा न लिप्यते' 'ब्रह्मविदाप्नोति परम्' 'एकधैवानुद्रष्टव्यमेतत्' 'यो वा एतदक्षरं गार्ग्यविदित्वा' 'तमेव धीरो विज्ञाय' 'प्रणवो धनुः, शरो ह्यात्मा, ब्रह्म तल्लक्ष्यमुच्यते' इत्यादिकर्मकर्तृनिर्देशाच्च ; मुमुक्षोश्च गतिमार्गविशेषदेशोपदेशात् ; असति भेदे कस्य

कुतो गतिः स्यात्? तदभावे च दक्षिणोत्तरमार्गविशेषानुपपत्तिः गन्तव्यदेशानुपपत्तिश्चेति; भिन्नस्य तु परस्मात् आत्मनः सर्वमेतदुपपन्नम्; कर्मज्ञानसाधनोपदेशाच्च— भिन्नश्चेद्ब्रह्मणः संसारी स्यात्, युक्तस्तं प्रत्यभ्युदयनिःश्रेयससाधनयोः कर्मज्ञानयोरुपदेशः, नेश्वरस्य आप्तकामत्वात्; तस्माद्युक्तं ब्रह्मेति ब्रह्मभावी पुरुष उच्यत इति चेत्— न, ब्रह्मोपदेशानर्थक्यप्रसङ्गात्— संसारी चेद्ब्रह्मभावी अब्रह्म सन्, विदित्वात्मानमेव अहं ब्रह्मास्मीति, सर्वमभवत्; तस्य संसार्यात्मविज्ञानादेव सर्वात्मभावस्य फलस्य सिद्धत्वात्परब्रह्मोपदेशस्य ध्रुवमानर्थक्यं प्राप्तम्। तद्विज्ञानस्य कचित्पुरुषार्थसाधनेऽविनियोगात्संसारिण एव— अहं ब्रह्मास्मीति— ब्रह्मत्वसंपादनार्थ उपदेश इति चेत्— अनिर्ज्ञाते हि ब्रह्मस्वरूपे किं संपादयेत्— अहं ब्रह्मास्मीति? निर्ज्ञातलक्षणे हि ब्रह्मणि शक्या संपत्कर्तुम्— न 'अयमात्मा ब्रह्म' 'यत्साक्षादपरोक्षाद्ब्रह्म' 'य आत्मा' 'तत्सत्यं स आत्मा' 'ब्रह्मविदाप्नोति परम्' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मनः' इति सहस्रशो ब्रह्मात्मशब्दयोः सामानाधिकरण्यात् एकार्थत्वमेवेत्यवगम्यते; अन्यस्य वै अन्यत्र संपत् क्रियते, नैकत्वे; 'इदं सर्वं यदयमात्मा'

इति च प्रकृतस्यैव द्रष्टव्यस्यात्मन एकत्वं दर्शयति; तस्मा-त्रात्मनो ब्रह्मत्वसंपदुपपत्तिः । न चाप्यन्यत्प्रयोजनं ब्रह्मो-पदेशस्य गम्यते; 'ब्रह्म वेद ब्रह्मैव भवति' 'अभयं हि जनक प्राप्तोऽसि' 'अभयं हि वै ब्रह्म भवति' इति च तदापत्तिश्रवणात् । संपत्तिश्चेत्, तदापत्तिर्न स्यात् । न ह्य-न्यस्यान्यभाव उपपद्यते । वचनात्, संपत्तेरपि तद्भावापत्तिः स्यादिति चेत्, न, संपत्तेः प्रत्ययमात्रत्वात् । विज्ञानस्य च मिथ्याज्ञाननिवर्तकत्वव्यतिरेकेणाकारकत्वमित्यवोचाम । न च वचनं वस्तुनः सामर्थ्यजनकम् । ज्ञापकं हि शास्त्रं न कारकमिति स्थितिः । 'स एष इह प्रविष्टः' इत्यादिवा-क्येषु च परस्यैव प्रवेश इति स्थितम् । तस्माद्ब्रह्मेति न ब्रह्म-भाविपुरुषकल्पना साध्वी । इष्टार्थबाधनाच्च— सैन्धवघ-नवदनन्तरमबाह्यमेकरसं ब्रह्म— इति विज्ञानं सर्वस्यामुपनि-षदि प्रतिपिपादयिषितार्थः— काण्डद्वयेऽप्यन्तेऽवधार-णात्— अवगम्यते— 'इत्यनुशासनम्' 'एतावदरे खल्व-मृतत्वम्' इति; तथा सर्वशाखोपनिषत्सु च ब्रह्मैकत्वविज्ञा-नं निश्चितोऽर्थः; तत्र यदि संसारी ब्रह्मणोऽन्य आत्मा-नमेवावेत्— इति कल्प्येत, इष्टस्यार्थस्य बाधनं स्यात्, तथा च शास्त्रमुपक्रमोपसंहारयोर्विरोधादसमञ्जसं कल्पितं

स्यात् । व्यपदेशानुपपत्तेश्च— यदि च 'आत्मानमेवावेत्' इति संसारी कल्प्येत, 'ब्रह्मविद्या' इति व्यपदेशो न स्यात् आत्मानमेवावेदिति, संसारिण एव वेद्यत्वोपपत्तेः । 'आत्मा' इति वेत्तुरन्यदुच्यत इति चेत्, न, 'अहं ब्रह्मास्मि' इति विशेषणात्; अन्यश्चेद्वेद्यः स्यात्, 'अयमसौ' इति वा विशेष्येत, न तु 'अहमस्मि' इति । 'अहमस्मि' इति विशेषणात् 'आत्मानमेवावेत्' इति च अवधारणात् निश्चितम् आत्मैव ब्रह्मेति अवगम्यते; तथा च सति उपपन्नो ब्रह्मविद्याव्यपदेशः, नान्यथा; संसारिविद्या ह्यन्यथा स्यात्; न च ब्रह्मत्वाब्रह्मत्वे ह्येकस्योपपन्ने परमार्थतः तमः-प्रकाशाविव भानोः विरुद्धत्वात्; न चोभयनिमित्तत्वे ब्रह्म-विद्येति निश्चितो व्यपदेशो युक्तः, तदा ब्रह्मविद्या संसारि-विद्या च स्यात्; न च वस्तुनोऽर्धजरतीयत्वं कल्पयितुं युक्तं तत्त्वज्ञानविवक्षायाम्, श्रोतुः संशयो हि तथा स्यात्; निश्चितं च ज्ञानं पुरुषार्थसाधनमिष्यते— 'यस्य स्यादद्धा न विचिकित्सास्ति' 'संशयात्मा विनश्यति' इति श्रुतिस्मृतिभ्याम् । अतो न संशयितो वाक्यार्थो वाच्यः परहितार्थिना ॥

ब्रह्मणि साधकत्वकल्पनास्मदादिष्विव, अपेशला— 'त-

दात्मानमेवावेत्तस्मात्तत्सर्वमभवत्' इति—इति चेत्, न, शास्त्रोपालम्भात्; न ह्यस्मत्कल्पनेयम्; शास्त्रकृता तु; तस्माच्छास्त्रस्यायमुपालम्भः; न च ब्रह्मण इष्टं चिकीर्षुणा शास्त्रार्थविपरीतकल्पनया स्वार्थपरित्यागः कार्यः। न चैतावत्येवाक्षमा युक्ता भवतः; सर्वं हि नानात्वं ब्रह्मणि कल्पितमेव 'एकधैवानुद्रष्टव्यम्' 'नेह नानास्ति किंचन' 'यत्र हि द्वैतमिव भवति' 'एकमेवाद्वितीयम्' इत्यादिवाक्यशतेभ्यः, सर्वो हि लोकव्यवहारो ब्रह्मण्येव कल्पितो न परमार्थः सन्– इत्यत्यल्पमिदमुच्यते— इयमेव कल्पनापेशलेति।

तस्मात्— यत्प्रविष्टं स्रष्टृ ब्रह्म, तद्ब्रह्म, वै-शब्दोऽवधारणार्थः, इदं शरीरस्थं यद्गृह्यते, अग्रे प्राक्प्रतिबोधादपि, ब्रह्मैवासीत्, सर्वं च इदम्; किंत्वप्रतिबोधात् 'अब्रह्मास्मि असर्वं च' इत्यात्मन्यध्यारोपात् 'कर्ताहं क्रियावान्फलानां च भोक्ता सुखी दुःखी संसारी' इति च अध्यारोपयति; परमार्थस्तु ब्रह्मैव तद्विलक्षणं सर्वं च। तत् कथंचिदाचार्येण दयालुना प्रतिबोधितम् 'नासि संसारी' इति आत्मानमेवावेत्स्वाभाविकम्; अविद्याध्यारोपितविशेषवर्जितमिति एवशब्दस्यार्थः॥

ब्रूहि कोऽसावात्मा स्वाभाविकः, यमात्मानं विदित्व-

द्ब्रह्म । ननु न स्मरस्यात्मानम्; दर्शितो ह्यसौ, य इह प्रविश्य प्राणित्यपानिति व्यानित्युदानिति समानितीति । ननु असौ गौः असावश्व इत्येवमसौ व्यपदिश्यते भवता, न आत्मानं प्रत्यक्षं दर्शयसि; एवं तर्हि द्रष्टा श्रोता मन्ता विज्ञाता स आत्मेति । ननु अत्रापि दर्शनादिक्रियाकर्तुः स्वरूपं न प्रत्यक्षं दर्शयसि; न हि गमिरेव गन्तुः स्वरूपं छिदिर्वा छेत्तुः; एवं तर्हि दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता स आत्मेति । ननु अत्र को विशेषो द्रष्टरि; यदि दृष्टेर्द्रष्टा, यदि वा घटस्य द्रष्टा, सर्वथापि द्रष्टैव; द्रष्टव्य एव तु भवान्विशेषमाह दृष्टेर्द्रष्टेति; द्रष्टा तु यदि दृष्टेः, यदि वा घटस्य, द्रष्टा द्रष्टैव । न, विशेषोपपत्तेः— अस्त्यत्र विशेषः; यो दृष्टेर्द्रष्टा सः दृष्टिश्चेद्भवति नित्यमेव पश्यति दृष्टिम्, न कदाचिदपि दृष्टिर्न दृश्यते द्रष्ट्रा; तत्र द्रष्टुर्दृष्ट्या नित्यया भवितव्यम्; अनित्या चेद्द्रष्टुर्दृष्टिः, तत्र दृश्या या दृष्टिः सा कदाचिन्न दृश्येतापि— यथा अनित्यया दृष्ट्या घटादि वस्तु; न च तद्वत् दृष्टेर्द्रष्टा कदाचिदपि न पश्यति दृष्टिम् । किं द्वे दृष्टी द्रष्टुः— नित्या अदृश्या अन्या अनित्या दृश्येति? बाढम्; प्रसिद्धा तावदनित्या दृष्टिः, अन्धानन्धत्वदर्शनात्; नित्यैव चेत्, सर्वोऽनन्ध

एव स्यात्; द्रष्टुस्तु नित्या दृष्टिः— 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः; अनुमानाच्च—अन्धस्यापि घटाद्याभासविषया स्वप्ने दृष्टिरुपलभ्यते; सा तर्हि इतरदृष्टिनाशे न नश्यति; सा द्रष्टुर्दृष्टिः; तया अविपरिलुप्तया नित्यया दृष्ट्या स्वरूपभूतया स्वयंज्योतिःसमाख्यया इतरामनित्यां दृष्टिं स्वप्नान्तबुद्धान्तयोर्वासनाप्रत्ययरूपां नित्यमेव पश्यन्द्रष्टा भवति । एवं च सति दृष्टिरेव स्वरूपमस्य अग्न्यौष्ण्यवत्, न काणादानामिव दृष्टिव्यतिरिक्तः अन्यः चेतनः द्रष्टा ॥

तद्ब्रह्म आत्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृष्ट्यादिवर्जितमेव अवेत् विदितवत् । ननु विप्रतिषिद्धम्— 'न विज्ञातेर्विज्ञातारं विजानीयाः' इति श्रुतेः— विज्ञातुर्विज्ञानम् । न, एवं विज्ञानान्न विप्रतिषेधः; एवं दृष्टेर्द्रष्टेति विज्ञायत एव; अन्यज्ञानानपेक्षत्वाच्च—न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषयां दृष्टिमन्यामाकाङ्क्षते; निवर्तते हि द्रष्टृविषयदृष्ट्याकाङ्क्षा तदसंभवादेव; न ह्यविद्यमाने विषये आकाङ्क्षा कस्यचिदुपजायते; न च दृश्या दृष्टिर्द्रष्टारं विषयीकर्तुमुत्सहते, यतस्तामाकाङ्क्षेत; न च स्वरूपविषयाकाङ्क्षा स्वस्यैव; तस्मात् अज्ञानाध्यारोपणनिवृत्तिरेव आत्मानमेवावेदित्युक्तम्, नात्मनो विषयीकरणम् ॥

तत्कथमवेदित्याह—अहं दृष्टेर्द्रष्टा आत्मा ब्रह्मास्मि भवामीति। ब्रह्मेति— यत्साक्षादपरोक्षात्सर्वान्तर आत्मा अशनायाद्यतीतो नेति नेत्यस्थूलमनण्वित्येवमादिलक्षणम्, तदेवाहमस्मि, नान्यः संसारी, यथा भवानाहेति। तस्मात् एवं विज्ञानात् तद्ब्रह्म सर्वमभवत्–अब्रह्माध्यारोपणापगमात् तत्कार्यस्यासर्वत्वस्य निवृत्त्या सर्वमभवत्। तस्माद्युक्तमेव मनुष्या मन्यन्ते–यद्ब्रह्मविद्यया सर्वं भविष्याम इति। यत्पृष्टम्–किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति, तन्निर्णीतम् —ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति॥

तत् तत्र, यो यो देवानां प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिना, स एव प्रतिबुद्ध आत्मा तत् ब्रह्म अभवत्; तथा ऋषीणाम्, तथा मनुष्याणां च मध्ये। देवानामित्यादि लोकदृष्ट्यपेक्षया न ब्रह्मत्वबुद्ध्योच्यते; पुरः पुरुष आविशदिति सर्वत्र ब्रह्मैवानुप्रविष्टमित्यवोचाम; अतः शरीराद्युपाधिजनितलोकदृष्ट्यपेक्षया देवानामित्याद्युच्यते; परमार्थतस्तु तत्र तत्र ब्रह्मैवाग्र आसीत् प्राक्प्रतिबोधात् देवादिशरीरेषु अन्यथैव विभाव्यमानम्, तदात्मानमेवावेत्, तथैव च सर्वमभवत्॥

अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य द्रढिम्ने मन्त्रानुदाहरति श्रुतिः। कथम्?— तत् ब्रह्म एतत् आत्मानमेव अहमस्मीति पश्यन् एतस्मादेव ब्रह्मणो दर्शनात् ऋषिर्वामदेवाख्यः प्रतिपेदे ह प्रतिपन्नवान्किल; स एतस्मिन्ब्रह्मात्मदर्शनेऽवस्थितः एतान्मन्त्रान्ददर्श— अहं मनुरभवं सूर्यश्चेत्यादीन्। तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या परामृश्यते; अहं मनुरभवं सूर्यश्चेत्यादिना सर्वभावापत्तिं ब्रह्मविद्याफलं परामृशति; पश्यन्सर्वात्मभावं फलं प्रतिपेदे इत्यस्मात्प्रयोगात् ब्रह्मविद्यासहायसाधनसाध्यं मोक्षं दर्शयति—भुञ्जानस्तृप्यतीति यद्वत्। सेयं ब्रह्मविद्यया सर्वभावापत्तिरासीन्महतां देवादीनां वीर्यातिशयात्, नेदानीमैदंयुगीनानां विशेषतो मनुष्याणाम्, अल्पवीर्यत्वात्— इति स्यात्कस्यचिद्बुद्धिः, तद्व्युत्थापनायाह— तदिदं प्रकृतं ब्रह्म यत्सर्वभूतानुप्रविष्टं दृष्टिक्रियादिलिङ्गम्, एतर्हि एतस्मिन्नपि वर्तमानकाले यः कश्चित् व्यावृत्तबाह्यौत्सुक्य आत्मानमेव एवं वेद अहं ब्रह्मास्मीति— अपोह्य उपाधिजनितभ्रान्तिविज्ञानाध्यारोपितान्विशेषान् संसारधर्मानागन्धितमनन्तरमबाह्यं ब्रह्मैवाहमस्मि केवलमिति— सः अविद्याकृतासर्वत्वनिवृत्तेर्ब्रह्मविज्ञानादिदं सर्वं भवति। न हि महावीर्येषु वाम-

देवादिषु हीनवीर्येषु वा वार्तमानिकेषु मनुष्येषु ब्रह्मणो विशेषः तद्विज्ञानस्य वास्ति । वार्तमानिकेषु पुरुषेषु तु ब्रह्मविद्याफलेऽनैकान्तिकता शङ्क्यत इत्यत आह— तस्य ह ब्रह्मविज्ञातुर्यथोक्तेन विधिना देवा महावीर्याः, चन अपि, अभूत्यै अभवनाय ब्रह्मसर्वभावस्य, नेशते न पर्याप्ताः, किमुतान्ये ॥

ब्रह्मविद्याफलप्राप्तौ विघ्नकरणे देवादय ईशत इति का शङ्केति— उच्यते— देवादीन्प्रति ऋणवत्त्वान्मर्त्यानाम् ; 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति हि जायमानमेव ऋणवन्तं पुरुषं दर्शयति श्रुतिः ; पशुनिदर्शनाच्च 'अथो अयं वा....' इत्यादिलोकश्रुतेश्च आत्मनो वृत्तिपरिपिपालयिषया अधमर्णानिव देवाः परतन्त्रान्मनुष्यान्प्रति अमृतत्वप्राप्तिं प्रति विघ्नं कुर्युरिति न्याय्यैवैषा शङ्का । स्वपशून् स्वशरीराणीव च रक्षन्ति देवाः ; महत्तरां हि वृत्तिं कर्माधीनां दर्शयिष्यति देवादीनां बहुपशुसमतयैकैकस्य पुरुषस्य ; 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति हि वक्ष्यति, 'यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति' इति च ; ब्रह्मवित्त्वे पारार्थ्यनिवृत्तेः न स्वलोकत्वं पशुत्वं चेत्यभिप्रायो अप्रिया-

रिष्टिवचनाभ्यामवगम्यते; तस्माद्ब्रह्मविदो ब्रह्मविद्याफलप्राप्तिं प्रति कुर्युरेव विघ्नं देवाः । प्रभाववन्तश्च हि ते ॥

ननु एवं सत्यन्यास्वपि कर्मफलप्राप्तिषु देवानां विघ्नकरणं पेयपानसमम्; हन्त तर्ह्यविस्रम्भोऽभ्युदयनिःश्रेयससाधनानुष्ठानेषु; तथा ईश्वरस्याचिन्त्यशक्तित्वाद्विघ्नकरणे प्रभुत्वम्; तथा कालकर्ममन्त्रौषधितपसाम्; एषां हि फलसंपत्तिविपत्तिहेतुत्वं शास्त्रे लोके च प्रसिद्धम्; अतोऽप्यनाश्वासः शास्त्रार्थानुष्ठाने । न; सर्वपदार्थानां नियतनिमित्तोपादानात् जगद्वैचित्र्यदर्शनाच्च, स्वभावपक्षे च तदुभयानुपपत्तेः, सुखदुःखादिफलनिमित्तं कर्मेत्येतस्मिन्पक्षे स्थिते वेदस्मृतिन्यायलोकपरिगृहीते, देवेश्वरकालास्तावन्न कर्मफलविपर्यासकर्तारः, कर्मणां काङ्क्षितकारकत्वात्— कर्म हि शुभाशुभं पुरुषाणां देवकालेश्वरादिकारकमनपेक्ष्य नात्मानं प्रति लभते, लब्धात्मकमपि फलदानेऽसमर्थम्, क्रियाया हि कारकाद्यनेकनिमित्तोपादानस्वाभाव्यात्; तस्मात् क्रियानुगुणा हि देवेश्वरादय इति कर्मसु तावन्न फलप्राप्तिं प्रत्यविस्रम्भः । कर्मणामपि एषाम् वशानुगत्वं क्वचित्, स्वसामर्थ्यस्याप्रणोद्यत्वात् । कर्मकालदैवद्रव्यादिस्वभावानां गुणप्रधानभावस्त्वनियतो दुर्विज्ञेयश्चेति तत्कृतो मोहो लोकस्य— कर्मैव कारकं नान्यत्फल-

प्राप्ताविति केचित्; दैवमेवेत्यपरे; काल इत्येके; द्रव्यादिस्वभाव इति केचित्; सर्व एते संहता एवेत्यपरे। तत्र कर्मणः प्राधान्यमङ्गीकृत्य वेदस्मृतिवादाः— 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्यादयः। यद्यपि एषां स्वविषये कस्यचित्प्राधान्योद्भवः इतरेषां तत्कालीनप्राधान्यशक्तिस्तम्भः, तथापि न कर्मणः फलप्राप्तिं प्रति अनैकान्तिकत्वम्, शास्त्रन्यायनिर्धारितत्वात्कर्मप्राधान्यस्य ॥

न, अविद्यापगममात्रत्वाद्ब्रह्मप्राप्तिफलस्य— यदुक्तं ब्रह्मप्राप्तिफलं प्रति देवा विघ्नं कुर्युरिति, तत्र न देवानां विघ्नकरणे सामर्थ्यम्; कस्मात्? विद्याकालानन्तरितत्वाद्ब्रह्मप्राप्तिफलस्य; कथम्; यथा लोके द्रष्टुश्चक्षुष आलोकेन संयोगो यत्कालः, तत्काल एव रूपाभिव्यक्तिः, एवमात्मविषयं विज्ञानं यत्कालम्, तत्काल एव तद्विषयाज्ञानतिरोभावः स्यात्; अतो ब्रह्मविद्यायां सत्याम अविद्याकार्यानुपपत्तेः, प्रदीप इव तमःकार्यस्य, केन कस्य विघ्नं कुर्युर्देवाः— यत्र आत्मत्वमेव देवानां ब्रह्मविदः। तदेतदाह— आत्मा स्वरूपं ध्येयं यत्तत्सर्वशास्त्रैर्विज्ञेयं ब्रह्म, हि यस्मात्, एषां देवानाम्, स ब्रह्मवित्, भवति ब्रह्मविद्यासमकालमेव—अविद्यामात्रव्यवधानापगमात् शुक्तिकाया इव रजताभासायाः

शुक्तिकात्वमित्यवोचाम । अतो नात्मनः प्रतिकूलत्वे देवानां प्रयत्नः संभवति । यस्य हि अनात्मभूतं फलं देशकालनिमित्तान्तरितम्, तत्रानात्मविषये सफलः प्रयत्नो विघ्नाचरणाय देवानाम्; न त्विह विद्यासमकाल आत्मभूते देशकालनिमित्तानन्तरिते, अवसरानुपपत्तेः ॥

एवं तर्हि विद्याप्रत्ययसंतत्यभावात् विपरीतप्रत्ययतत्कार्ययोश्च दर्शनात् अन्त्य एव आत्मप्रत्ययोऽविद्यानिवर्तकः, न तु पूर्व इति । न, प्रथमेनानैकान्तिकत्वात्—यदि हि प्रथम आत्मविषयः प्रत्ययोऽविद्यां न निवर्तयति, तथा अन्त्योऽपि, तुल्यविषयत्वात् । एवं तर्हि संततोऽविद्यानिवर्तकः न विच्छिन्न इति । न, जीवनादौ सति संतत्यनुपपत्तेः—न हि जीवनादिहेतुके प्रत्यये सति विद्याप्रत्ययसंततिरुपपद्यते, विरोधात् । अथ जीवनादिप्रत्ययतिरस्करणेनैव आ मरणान्तात् विद्यासंततिरिति चेत्, न, प्रत्ययेयत्तासंतानानवधारणात् शास्त्रार्थानवधारणदोषात्—इयतां प्रत्ययानां संततिरविद्याया निवर्तिकेत्यनवधारणात् शास्त्रार्थो नावध्रियेत; तच्चानिष्टम् । संततिमात्रत्वेऽवधारित एवेति चेत्, न, आद्यन्तयोरविशेषात्—प्रथमा विद्याप्रत्ययसंततिः मरणकालान्ता वेति विशेषाभावात्, आद्यन्तयोः

प्रत्यययोः पूर्वोक्तौ दोषौ प्रसज्येयाताम् । एवं तर्हि अनिवर्तक एवेति चेत्, न 'तस्मात्तत्सर्वमभवत्' इति श्रुतेः, 'भिद्यते हृदयग्रन्थिः' 'तत्र को मोहः' इत्यादिश्रुतिभ्यश्च ॥

अर्थवाद इति चेत्, न, सर्वशाखोपनिषदामर्थवादत्वप्रसङ्गात्; एतावन्मात्रार्थत्वोपक्षीणा हि सर्वशाखोपनिषदः । प्रत्यक्षप्रमितात्मविषयत्वात् अस्त्येवेति चेत्, न, उक्तपरिहारत्वात्— अविद्याशोकमोहभयादिदोषनिवृत्तेः प्रत्यक्षत्वादिति चोक्तः परिहारः । तस्मात् आद्यः अन्त्यः संततः असंततश्चेत्यचोद्यमेतत्, अविद्यादिदोषनिवृत्तिफलावसानत्वाद्विद्यायाः— य एव अविद्यादिदोषनिवृत्तिफलकृत्प्रत्ययः आद्यः अन्त्यः संततः असंततो वा, स एव विद्येत्यभ्युपगमात् न चोद्यस्यावतारगन्धोऽप्यस्ति । यत्तूक्तं विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादिति, न, तच्छेषस्थितिहेतुत्वात्— येन कर्मणा शरीरमारब्धं तत्, विपरीतप्रत्ययदोषनिमित्तत्वात् तस्य तथाभूतस्यैव विपरीतप्रत्ययदोषसंयुक्तस्य फलदाने सामर्थ्यमिति, यावत् शरीरपातः तावत्फलोपभोगाङ्गतया विपरीतप्रत्ययं रागादिदोषं च तावन्मात्रमाक्षिपत्येव— मुक्तेषुवत् प्रवृत्तफलत्वात् तद्धेतुकस्य कर्मणः । तेन न तस्य निवर्तिका विद्या, अविरोधात्; किं तर्हि स्वाश्रयादेव स्वात्मविरोधि अविद्या-

कार्यं यदुत्पित्सु तन्निरुणद्धि, अनागतत्वात्; अतीतं हि इतरत्। किंच न च विपरीतप्रत्ययो विद्यावत उत्पद्यते, निर्विषयत्वात्——अनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विपरीतप्रत्यय उत्पद्यमान उत्पद्यते, यथा शुक्तिकायां रजतमिति; स च विषयविशेषावधारणवतो अशेषविपरीतप्रत्ययाशयस्योपमर्दितत्वात् न पूर्ववत्संभवति, शुक्तिकादौ सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात्। क्वचित्तु विद्यायाः पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिम् अकस्मात् कुर्वन्ति—यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः। सम्यग्ज्ञानवतोऽपि चेत् पूर्ववद्विपरीतप्रत्यय उत्पद्यते, सम्यग्ज्ञानेऽप्यविस्रम्भाच्छास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात्, सर्वं च प्रमाणमप्रमाणं संपद्येत, प्रमाणाप्रमाणयोर्विशेषानुपपत्तेः। एतेन सम्यग्ज्ञानानन्तरमेव शरीरपाताभावः कस्मादित्येतत्परिहृतम्। ज्ञानोत्पत्तेः प्राक् ऊर्ध्वं तत्कालजन्मान्तरसंचितानां च कर्मणामप्रवृत्तफलानां विनाशः सिद्धो भवति फलप्राप्तिविघ्ननिषेधश्रुतेरेव; 'क्षीयन्ते चास्य कर्माणि' 'तस्य तावदेव चिरम्' 'सर्वे पाप्मानः प्रदूयन्ते' 'तं विदित्वा न लिप्यते कर्मणा पापकेन' 'एतमु हैवैते न

तरत:' 'नैनं कृताकृते तपत:' 'एतꣳ ह वाव न तपति' 'न बिभेति कुतश्चन' इत्यादिश्रुतिभ्यश्च; 'ज्ञानाग्नि: सर्वकर्माणि भस्मसात्कुरुते' इत्यादिस्मृतिभ्यश्च ॥

यत्तु ऋणै: प्रतिबध्यत इति, तन्न, अविद्यावद्विषयत्वात्—अविद्यावान्हि ऋणी, तस्य कर्तृत्वाद्युपपत्ते:, 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इति हि वक्ष्यति— अनन्यत् सद्वस्तु आत्माख्यं यत्राविद्यायां सत्यामन्यदिव स्यात् तिमिरकृतद्वितीयचन्द्रवत् तत्राविद्याकृतानेककारकापेक्षं दर्शनादिकर्म तत्कृतं फलं च दर्शयति, तत्रान्योऽन्यत्पश्येदित्यादिना; यत्र पुनर्विद्यायां सत्यामविद्याकृतानेकत्वभ्रमप्रहाणम्, 'तत्केन कं पश्येत्' इति कर्मासंभवं दर्शयति, तस्मादविद्यावद्विषय एव ऋणित्वम्, कर्मसंभवात्, नेतरत्र। एतच्चोत्तरत्र व्याचिख्यासिष्यमाणैरेव वाक्यैर्विस्तरेण प्रदर्शयिष्याम: ॥

तद्यथेहैव तावत्— अथ य: कश्चिदब्रह्मवित्, अन्यामात्मनो व्यतिरिक्तां यां कांचिद्देवताम्, उपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिना उप आस्ते तस्या गुणभावमुपगम्य आस्ते—अन्योऽसावनात्मा मत्त: पृथक्, अन्योऽहमस्म्यधिकृत:, मया अस्मै ऋणिवत्प्रतिकर्तव्यम्— इ-

त्येवंप्रत्ययः सन्नुपास्ते, न स इत्थंप्रत्ययः वेद विजानाति तत्त्वम् । न स केवलमेवंभूतः अविद्वान् अविद्यादोषवानेव, किं तर्हि, यथा पशुः गवादिः वाहनदोहनाद्युपकारैरुपभुज्यते, एवं सः इज्याद्यनेकोपकारैरुपभोक्तव्यत्वात् एकैकेन देवादीनाम्; अतः पशुरिव सर्वार्थेषु कर्मस्वधिकृत इत्यर्थः । एतस्य हि अविदुषो वर्णाश्रमादिप्रविभागवतोऽधिकृतस्य कर्मणो विद्यासहितस्य केवलस्य च शास्त्रोक्तस्य कार्यं मनुष्यत्वादिको ब्रह्मान्त उत्कर्षः; शास्त्रोक्तविपरीतस्य च स्वाभाविकस्य कार्यं मनुष्यत्वादिक एव स्थावरान्तोऽपकर्षः; यथा चैतत् तथा 'अथ त्रयो वाव लोकाः' इत्यादिना वक्ष्यामः कृत्स्नेनैवाध्यायशेषेण । विद्यायाश्च कार्यं सर्वात्मभावापत्तिरित्येतत् संक्षेपतो दर्शितम् । सर्वा हि इयमुपनिषत् विद्याविद्याविभागप्रदर्शनेनैवोपक्षीणा । यथा च एषोऽर्थः कृत्स्नस्य शास्त्रस्य तथा प्रदर्शयिष्यामः ॥

यस्मादेवम्, तस्मादविद्यावन्तं पुरुषं प्रति देवा ईशत एव विघ्नं कर्तुम् अनुग्रहं च इत्येतद्दर्शयति— यथा ह वै लोके, बहवो गोऽश्वादयः पशवः मनुष्यं स्वामिनमात्मनः अधिष्ठातारं भुञ्ज्युः पालयेयुः, एवं बहुपशुस्थानीयः एकैकः अविद्वान्पुरुषः देवान्— देवानिति पित्राद्युपलक्षणार्थम्— भु-

नक्ति पालयतीति— इमे इन्द्रादयः अन्ये मत्तो ममेशितारः भृत्य इवाहमेषां स्तुतिनमस्कारेज्यादिना आराधनं कृत्वा अभ्युदयं निःश्रेयसं च तत्प्रत्तं फलं प्राप्स्यामीत्येवमभिसंधिः। तत्र लोके बहुपशुमतो यथा एकस्मिन्नेव पशावादीयमाने व्याघ्रादिना अपह्रियमाणे महदप्रियं भवति, तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावात् व्युत्तिष्ठति, अप्रियं भवतीति— किं चित्रम्—देवानाम्, बहुपश्वपहरण इव कुटुम्बिनः। तस्मादेषां तन्न प्रियम्; किं तत्? यदेतद्ब्रह्मात्मतत्त्वं कथंचन मनुष्या विद्युः विजानीयुः। तथा च स्मरणमनुगीतासु भगवतो व्यासस्य—'क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः। न चैतदिष्टं देवानां मर्त्यैरुपरिवर्तनम्' इति। अतो देवाः पशूनिव व्याघ्रादिभ्यः, ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति— अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति। यं तु मुमोचयिषन्ति, तं श्रद्धादिभिर्योक्ष्यन्ति, विपरीतमश्रद्धादिभिः। तस्मान्मुमुक्षुर्देवाराधनपरः श्रद्धाभक्तिपरः प्रणेयोऽप्रमादी स्यात् विद्याप्राप्तिं प्रति विद्यां प्रतीति वा काक्वैतत्प्रदर्शितं भवति देवाप्रियवाक्येन ॥

सूत्रितः शास्त्रार्थः— 'आत्मेत्येवोपासीत' इति; तस्य च व्याचिख्यासितस्य सार्थवादेन 'तदाहुर्यद्ब्रह्मविद्यया'

इत्यादिना संबन्धप्रयोजने अभिहिते; अविद्यायाश्च संसाराधिकारकारणत्वमुक्तम्– 'अथ योऽन्यां देवतामुपास्ते' इत्यादिना; तत्र अविद्वान ऋणी पशुवद्देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तम्। किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तम्? वर्णा आश्रमाश्च; तत्र के वर्णा इत्यत इदमारभ्यते—यन्निमित्तसंबद्धेषु कर्मसु अयं परतन्त्र एवाधिकृतः संसरति। एतस्यैवार्थस्य प्रदर्शनाय अग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः; अग्नेस्तु सर्गः प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शितः; अयं च इन्द्रादिसर्गः तत्रैव द्रष्टव्यः, तच्छेषत्वात्; इह तु स एवाभिधीयते अविदुषः कर्माधिकारहेतुप्रदर्शनाय॥

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा**

**परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ ११ ॥**

ब्रह्म वा इदमग्र आसीत्—यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म—ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते—वै, इदं क्षत्रादिजातम्, ब्रह्मैव, अभिन्नमासीत्, एकमेव—न आसीत्क्षत्रादिभेदः। तत् ब्रह्मैकं क्षत्रादिपरिपालयित्रादिशून्यं सत्, न व्यभवत् न विभूतवत् कर्मणे नालमासीदित्यर्थः। ततस्तद्ब्रह्म— ब्राह्मणोऽस्मि ममेत्थं कर्तव्यमिति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षुः आत्मनः कर्मकर्तृत्वविभूत्यै, श्रेयोरूपं प्रशस्तरूपम्, अति असृजत अतिशयेन असृजत सृष्टवत्। किं पुनस्तत्, यत्सृष्टम्? क्षत्रं क्षत्रियजातिः; तद्व्यक्तिभेदेन प्रदर्शयति— यान्येतानि प्रसिद्धानि लोके, देवत्रा देवेषु, क्षत्राणीति— जात्याख्यायां पक्षे बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण—बहुवचनम्। कानि पुनस्तानीत्याह— तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते— इन्द्रो देवानां राजा, वरुणो यादसाम्, सोमो ब्राह्मणानाम्, रुद्रः पशूनाम्, पर्जन्यो विद्युदादीनाम्, यमः पितॄणाम्, मृत्युः

रोगादीनाम्, ईशानो भासाम्—इत्येवमादीनि देवेषु क्षत्राणि। तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि; तदर्थ एव हि देवक्षत्रसर्गः प्रस्तुतः। यस्मात् ब्रह्मणा अतिशयेन सृष्टं क्षत्रम्, तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ; तस्माद्ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियम् अधस्तात् व्यवस्थितः सन् उपरि स्थितम् उपास्ते—क? राजसूये। क्षत्र एव तत् आत्मीयं यशः ख्यातिरूपम्—ब्रह्मेति—दधाति स्थापयति; राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा आमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्तं प्रत्याह—त्वं राजन्ब्रह्मासीति; तदेतदभिधीयते—क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिरेव, यद्ब्रह्म। तस्मात् यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छति आप्नोति—ब्रह्मैव ब्राह्मणजातिमेव, अन्ततः अन्ते कर्मपरिसमाप्तौ, उपनिश्रयति आश्रयति स्वां योनिम्—पुरोहितं पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मणम्—य उ एनम्—हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वामात्मीयामेव स योनिमृच्छति—स्वं प्रसवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान् पापतरो भवति; पूर्व-

मपि क्षत्रियः पाप एव क्रूरत्वात्, आत्मप्रसवहिंसया सुतराम्; यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति, तद्वत् ॥

**स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥**

क्षत्रे सृष्टेऽपि, स नैव व्यभवत्, कर्मणे ब्रह्म तथा न व्यभवत्, वित्तोपार्जयितुरभावात्; स विशमसृजत कर्मसाधनवित्तोपार्जनाय; कः पुनरसौ विट्? यान्येतानि देवजातानि— स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः— गणशः गणं गणम्, आख्यायन्ते कथ्यन्ते— गणप्राया हि विशः; प्रायेण संहता हि वित्तोपार्जने समर्थाः, न एकैकशः— वसवः अष्टसंख्यो गणः, तथैकादश रुद्राः; द्वादश आदित्याः, विश्वे देवाः त्रयोदश विश्वाया अपत्यानि— सर्वे वा देवाः, मरुतः सप्त सप्त गणाः ॥

**स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वं पुष्यति**

**यदिदं किंच ॥ १३ ॥**

सः परिचारकाभावात्पुनरपि नैव व्यभवत्; स शौद्रं वर्णमसृजत—शूद्र एव शौद्रः, स्वार्थेऽणि वृद्धिः । कः पुनरसौ शौद्रो वर्णः, यः सृष्टः? पूषणम्—पुष्यतीति पूषा । कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति— इयं पृथिवी पूषा; स्वयमेव निर्वचनमाह—इयं हि इदं सर्वं पुष्यति यदिदं किंच ॥

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाꣳसमाशꣳसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १४ ॥**

सः चतुरः सृष्ट्वापि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियतताशङ्कया; तत् श्रेयोरूपम् अत्यसृजत— किं तत्? धर्मम्; तदेतत् श्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ,

उग्रादप्युग्रम्— यद्धर्मः यो धर्मः; तस्मात् क्षत्रस्यापि नियन्तृत्वात् धर्मात्परं नास्ति, तेन हि नियम्यन्ते सर्वे। तत्कथमिति उच्यते— अथो अपि अबलीयान् दुर्बलतरः बलीयांसमात्मनो बलवत्तरमपि आशंसते कामयते जेतुं धर्मेण बलेन— यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिकः, एवम्; तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम्। यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्; सत्यमिति यथाशास्त्रार्थता; स एवानुष्ठीयमानो धर्मनामा भवति; शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति। यस्मादेवं तस्मात्, सत्यं यथाशास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञाः—धर्मं वदतीति, प्रसिद्धं लौकिकं न्यायं वदतीति; तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः—सत्यं वदति, शास्त्रादनपेतं वदतीति। एतत् यदुक्तम् उभयं ज्ञायमानमनुष्ठीयमानं च एतत् धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति; तस्मात् स क्षत्रस्यापि क्षत्रम्; अतस्तदभिमानोऽविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते; तानि च निसर्गत एव कर्माधिकारनिमित्तानि ॥

तदेतद्ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते। अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते॥

तदेतच्चातुर्वर्ण्यं सृष्टम्— ब्रह्म क्षत्रं विट् शूद्र इति; उक्तार्थ उपसंहारः। यत्तत् सृष्टं ब्रह्म, तदग्निनैव, नान्येन रूपेण, देवेषु ब्रह्म ब्राह्मणजातिः, अभवत्; ब्राह्मणः ब्राह्मणस्वरूपेण, मनुष्येषु ब्रह्माभवत्; इतरेषु वर्णेषु विकारा-

न्तरं प्राप्य, क्षत्रियेण— क्षत्रियोऽभवत् इन्द्रादिदेवताधिष्ठितः, वैश्येन वैश्यः, शूद्रेण शूद्रः । यस्मात्क्षत्रादिषु विकारापन्नम्, अग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलम्, इच्छन्ति, अग्निसंबद्धं कर्म कृत्वेत्यर्थः; तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्; तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतत् उपपन्नम् । ब्राह्मणे मनुष्येषु — मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः; यत्र तु देवाधीना पुरुषार्थसिद्धिः, तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा; स्मृतेश्च—'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति । पारिव्राज्यदर्शनाच्च । तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्मफलमिच्छन्ति । यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत् ॥

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित् । तदसत्, अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्, परेण च विशेषणात्; यदि ह्यत्र लोकशब्देन

पर एवात्मोच्येत, परेण विशेषणमनर्थकं स्यात्—'स्वं लोकमदृष्ट्वा' इति; स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकः, ततः स्वमिति युक्तं विशेषणम्, प्रकृतपरलोकनिवृत्त्यर्थत्वात्; स्वत्वेन च अव्यभिचारात्परमात्मलोकस्य, अविद्याकृतानां च स्वत्वव्यभिचारात्— ब्रवीति च कर्मकृतानां व्यभिचारम्—'क्षीयत एव' इति ॥

ब्रह्मणा सृष्टा वर्णाः कर्मार्थम्; तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थसाधनं च; तस्मात्तेनैव चेत्कर्मणा स्वो लोकः परमात्माख्यः अविदितोऽपि प्राप्यते, किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह— अथेति, पूर्वपक्षविनिवृत्त्यर्थः; यः कश्चित्, ह वै अस्मात् सांसारिकात्पिण्डग्रहणलक्षणात् अविद्याकामकर्महेतुकात् अग्न्यधीनकर्माभिमानतया वा ब्राह्मणजातिमात्रकर्माभिमानतया वा आगन्तुकादस्वभूताल्लोकात्, स्वं लोकमात्माख्यम् आत्मत्वेनाव्यभिचारित्वात्, अदृष्ट्वा— अहं ब्रह्मास्मीति, प्रैति म्रियते; स यद्यपि स्वो लोकः, अविदितः अविद्यया व्यवहितः अस्व इवाज्ञातः, एनम्— संख्यापूरण इव लौकिकः आत्मानम्— न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन यथा लोके च वेदः अननूक्तः अन-

धीतः कर्माद्यवबोधकत्वेन न भुनक्ति, अन्यद्वा लौकिकं कृष्यादि कर्म अकृतं स्वात्मना अनभिव्यञ्जितम् आत्मीयफलप्रदानेन न भुनक्ति, एवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितः अविद्यादिप्रहाणेन न भुनक्त्येव। ननु किं स्वलोकदर्शननिमित्तपरिपालनेन? कर्मणः फलप्राप्तिध्रौव्यात् इष्टफलनिमित्तस्य च कर्मणो बाहुल्यात् तन्निमित्तं पालनमक्षयं भविष्यति—तन्न, कृतस्य क्षयवत्त्वादित्येतदाह—यत् इह वै संसारे अद्भुतवत् कश्चिन्महात्मापि अनेवंवित् स्वं लोकं यथोक्तेन विधिना अविद्वान् महत् बहु अश्वमेधादि पुण्यं कर्म इष्टफलमेव नैरन्तर्येण करोति—अनेनैवानन्त्यं मम भविष्यतीति, तत्कर्म ह अस्य अविद्यावतः अविद्याजनितकामहेतुत्वात् स्वप्रदर्शनविभ्रमोद्भूतविभूतवत् अन्ततः अन्ते फलोपभोगस्य क्षीयत एव; तत्कारणयोरविद्याकामयोश्चलत्वात् कृतक्षयध्रौव्योपपत्तिः। तस्मान्न पुण्यकर्मफलपालनानन्त्याशा अस्त्येव। अत आत्मानमेव स्वं लोकम्—आत्मानमिति स्वं लोकमित्यस्मिन्नर्थे, स्वं लोकमिति प्रकृतत्वात् इह च स्वशब्दस्याप्रयोगात्—उपासीत। स य आत्मानमेव लोकमुपास्ते—तस्य किमित्युच्यते—न हास्य कर्म क्षीयते, कर्माभावादेव—इति नित्यानुवादः; यथा अविदुषः

कर्मक्षयलक्षणं संसारदुःखं संततमेव, न तथा तदस्य विद्यत इत्यर्थः—'मिथिलायां प्रदीप्तायां न मे दह्यति किंचन' इति यद्वत् ॥

स्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात् कर्मैव न क्षीयत इत्यपरे वर्णयन्ति; लोकशब्दार्थं च कर्मसमवायिनं द्विधा परिकल्पयन्ति किल——एको व्याकृतावस्थः कर्माश्रयो लोको हैरण्यगर्भाख्यः, तं कर्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते, तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्म क्षीयते; तमेव कर्मसमवायिनं लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते, तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य कर्म न क्षीयत इति । भवतीयं शोभना कल्पना, न तु श्रौती, स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्, स्वं लोकमिति प्रस्तुत्य स्वशब्दं विहाय आत्मशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशात्—आत्मानमेव लोकमुपासीतेति; तत्र कर्मसमवायिलोककल्पनाया अनवसर एव । परेण च केवलविद्याविषयेण विशेषणात्—'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' इति; पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि—अयमात्मा नो लोक इति. 'न हास्य केनचन कर्मणा लोको मीयत एषोऽस्य

परमो लोक:' इति च। तैः सविशेषणैः अस्यैकवाक्यता युक्ता, इहापि स्वं लोकमिति विशेषणदर्शनात्। अस्मात्कामयत इत्ययुक्तमिति चेत्—इह स्वो लोकः परमात्मा; तदुपासनात्स एव भवतीति स्थिते, यद्यत्कामयते तत्तदस्मादात्मनः सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेत्, न। स्वलोकोपासनस्तुतिपरत्वात्; स्वस्मादेव लोकात्सर्वमिष्टं संपद्यत इत्यर्थः, नान्यदतः प्रार्थनीयम्, आप्तकामत्वात्— 'आत्मतः प्राण आत्मत आशा' इत्यादि श्रुत्यन्तरे यथा; सर्वात्मभावप्रदर्शनार्थो वा पूर्ववत्। यदि हि पर एव आत्मा संपद्यते, तदा युक्तः 'अस्माद्ध्येवात्मनः' इत्यात्मशब्दप्रयोगः— स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थः; अन्यथा अव्याकृतावस्थात्कर्मणो लोकादिति सविशेषणमवक्ष्यत् प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च; न ह्यस्मिन्प्रकृते विशेषिते अश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते ॥

अथो अयं वा आत्मा। अत्र अविद्वान्वर्णाश्रमाद्यभिमानो धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्माणि, यत्कर्तव्यतया पशुवत्परतन्त्रो भवति; के वा ते देवादयः, येषां कर्मभिः पशु-

वदुपकरोति– इति तदुभयं प्रपञ्चयति—

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम् ॥ १६ ॥**

अथो इत्ययं वाक्योपन्यासार्थः । अयं यः प्रकृतो गृही कर्माधिकृतः अविद्वान् शरीरेन्द्रियसंघातादिविशिष्टः पिण्ड आत्मेत्युच्यते, सर्वेषां देवादीनां पिपीलिकान्तानां भूतानां

लोको भोग्य आत्मेत्यर्थः, सर्वेषां वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात् । कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोकः इत्युच्यते—स गृही यज्जुहोति यद्यजते—यागो देवतामुद्दिश्य स्वत्वपरित्यागः, स एव आसेचनाधिको होमः—तेन होमयागलक्षणेन कर्मणा अवश्यकर्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकः; अथ यदनुब्रूते स्वाध्यायमधीते अहरहः तेन ऋषीणां लोकः; अथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि, यच्च प्रजामिच्छते प्रजार्थमुद्यमं करोति— इच्छा च उत्पत्त्युपलक्षणार्था— प्रजां चोत्पादयतीत्यर्थः, तेन कर्मणा अवश्यकर्तव्यत्वेन पितृणां लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः; अथ यन्मनुष्यान्वासयते भूम्युदकादिदानेन गृहे, यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वा अर्थिभ्यः अशनं ददाति, तेन मनुष्याणाम्; अथ यत्पशुभ्यस्तृणोदकं विन्दति लम्भयति, तेन पशूनाम्; यदस्य गृहेषु श्वापदा वयांसि च पिपीलिकाभिः सह कणबलिभाण्डक्षालनाद्युपजीवन्ति, तेन तेषां लोकः । यस्मादयमेतानि कर्माणि कुर्वन्नुपकरोति देवादिभ्यः, तस्मात्, यथा ह वै लोके स्वाय लोकाय स्वस्मै देहाय अरिष्टिम् अविनाशं स्वत्वभावाप्रच्युतिम् इच्छेत स्वत्वभाव-

प्रच्युतिभयात्पोषणरक्षणादिभिः सर्वतः परिपालयेत्; एवं ह, एवंविदे—सर्वभूतभोग्योऽहम् अनेन प्रकारेण मया अवश्यमृणिवत्प्रतिकर्तव्यम्—इत्येवमात्मानं परिकल्पितवते, सर्वाणि भूतानि देवादीनि यथोक्तानि, अरिष्टिमविनाशम् इच्छन्ति स्वत्वाप्रच्युत्यै सर्वतः संरक्षन्ति कुटुम्बिन इव पशून्—'तस्मादेषां तन्न प्रियम्' इत्युक्तम्। तद्वा एतत् तदेतत् यथोक्तानां कर्मणामृणवदवश्यकर्तव्यत्वं पञ्चमहायज्ञप्रकरणे विदितं कर्तव्यतया मीमांसितं विचारितं च अवदानप्रकरणे ॥

आत्मैवेदमग्र आसीत्। ब्रह्म विद्वांश्चेत् तस्मात्पशुभावात्कर्तव्यताबन्धनरूपात्प्रतिमुच्यते, केनायं कारितः कर्मबन्धनाधिकारे अवश इव प्रवर्तते, न पुनस्तद्विमोक्षणोपाये विद्याधिकार इति। ननूक्तं देवा रक्षन्तीति; बाढम्—कर्माधिकारस्वगोचरारूढानेव तेऽपि रक्षन्ति, अन्यथा अकृताभ्यागमकृतनाशप्रसङ्गात्, न तु सामान्यं पुरुषमात्रं विशिष्टाधिकारानारूढम्; तस्माद्भवितव्यं तेन, येन प्रेरितोऽवश एव बहिर्मुखो भवति स्वस्माल्लोकात्। नन्वविद्यया सा; अविद्वान्हि बहिर्मुखीभूतः प्रवर्तते—सापि नैव प्रवर्तिका; वस्तुस्वरूपावरणात्मिका हि सा; प्रवर्तकबीजत्वं तु प्रतिप-

द्यते अन्धत्वमिव गर्तादिपतनप्रवृत्तिहेतुः । एतं तर्ह्युच्यतां किं तत्, यत्प्रवृत्तिहेतुरिति; तदिहाभिधीयते— एषणा कामः स:, स्वाभाविक्यामविद्यायां वर्तमाना बालाः पराचः कामाननुयन्तीति काठकश्रुतौ, स्मृतौ च— 'काम एष क्रोध एषः' इत्यादि, मानवे च— सर्वा प्रवृत्तिः कामहेतुक्येवेति । स एषोऽर्थः सविस्तरः प्रदर्श्यत इह आ अध्यायपरिसमाप्तेः ॥

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छꣳश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳश्रोत्रेण हि तच्छृणोत्या-**

**त्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किंच तदिदꣳ सर्वमाप्नोति य एवं वेद ॥ १७ ॥**

**इति प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥**

आत्मैवेदमग्र आसीत् । आत्मैव—स्वाभाविकः अविद्वान् कार्यकरणसंघातलक्षणो वर्णी अग्रे प्राग्दारसंबन्धात् आत्मेत्यभिधीयते; तस्मादात्मनः पृथग्भूतं काम्यमानं जायादिभेदरूपं नासीत्; स एवैक आसीत्—जायाद्येषणाबीजभूताविद्यावानेक एवासीत् । स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणया अविद्यावासनया वासितः सः अकामयत कामितवान् । कथम्? जाया कर्माधिकारहेतुभूता मे मम कर्तुः स्यात्; तया विना अहमनधिकृत एव कर्मणि; अतः कर्माधिकारसंपत्तये भवेज्जाया; अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय; अथ वित्तं मे स्यात् कर्मसाधनं गवादिलक्षणम्; अथाहमभ्युदयनिःश्रेयससाधनं कर्म कुर्वीय—येनाहमनृणी भूत्वा देवादीनां लोकान्प्राप्नुयाम्, तत्कर्म कुर्वीय, काम्यानि च पुत्रवित्तस्वर्गादिसाध-

नानि एतावान्वै कामः एतावद्विषयपरिच्छिन्न इत्यर्थः; एतावानेव हि कामयितव्यो विषयः—यदुत जायापुत्रवित्त-कर्माणि साधनलक्षणैषणा, लोकाश्च त्रयः—मनुष्यलोकः पितृलोको देवलोक इति—फलभूताः साधनैषणायाश्चास्याः; तदर्था हि जायापुत्रवित्तकर्मलक्षणा साधनैषणा; तस्मात् सा एकैव एषणा, या लोकैषणा; सा एकैव सती एषणा साधनापेक्षेति द्विधा; अतोऽवधारयिष्यति 'उभे ह्येते एषणे एव' इति। फलार्थत्वात्सर्वारम्भस्य लोकैषणा अर्थप्राप्ता उक्तैवेति—एतावान्वै एतावानेव काम इति अवध्रियते; भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया, तदर्थत्वाद्भोजनस्य। ते एते एषणे साध्यसाधनलक्षणे कामः, येन प्रयुक्तः अविद्वान् अवश एव कोशकारवत् आत्मानं वेष्टयति—कर्ममार्गे एवात्मानं प्रणिदधत् बहिर्मुखीभूतः न स्वं लोकं प्रतिजानाति; तथा च तैत्तिरीयके—'अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिजानाति' इति। कथं पुनरेतावत्त्वमवधार्यते कामानाम्, अनन्तत्वात्; अनन्ता हि कामाः—इत्येतदाशङ्क्य हेतुमाह—यस्मात्—न-इच्छन्-चन—इच्छन्नपि, अतः अस्मात्फलसाधनलक्षणात्, भूयः अधिकतरम्, न विन्देत् न लभेत; न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा ल-

न्धव्यमस्ति; लब्धव्यविषयो हि कामः; तस्य चैतद्व्यतिरेके-णाभावाद्युक्तं वक्तुम्—एतावान्वै काम इति । एतदुक्तं भव-ति—दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणम् अविद्यावत्पुरुषा-धिकारविषयम् एषणाद्वयं कामः; अतोऽस्माद्विदुषा व्युत्थातव्यमिति। यस्मात् एवमविद्वाननात्मकामी पूर्वः कामयामास, तथा पूर्वतरोऽपि; एषा लोकस्थितिः; प्रजापतेश्चैवमेष सर्ग आसीत्—सोऽबिभेदविद्यया, ततः कामप्रयुक्तः एकाक्यरममाणोऽरत्युपघाताय स्त्रियमैच्छत्, तां समभवत्, ततः सर्गो-ऽयमासीदिति हि उक्तम्— तस्मात् तत्सृष्टौ एतर्हि एतस्मि-न्नपि काले एकाकी सन् प्राग्दारक्रियातः कामयते— जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म कुर्वीयेत्युक्तार्थं वाक्यम् । सः— एवं कामयमानः संपादयंश्च जायादीन् यावत् सः एतेषां यथोक्तानां जायादीनाम् एकैकमपि न प्राप्नोति, अकृत्स्नः असंपूर्णोऽहम् इत्येव तावत् आत्मानं मन्यते; पारिशेष्यात्समस्तानेवैतान्संपादयति यदा, तदा तस्य कृत्स्नता । यदा तु न शक्नोति कृत्स्नतां संपाद-यितुं तदा अस्य कृत्स्नत्वसंपादनाय आह— तस्यो तस्य अकृत्स्नत्वाभिमानिनः कृत्स्नतेयम् एवं भवति; कथम्? अयं कार्यकरणसंघातः प्रविभज्यते; तत्र मनोऽनुवृत्ति

हि इतरत्सर्वं कार्यकरणजातमिति मनः प्रधानत्वात् आत्मेव आत्मा— यथा जायादीनां कुटुम्बपतिरात्मेव तदनुकारित्वाज्जायादिचतुष्टयस्य, एवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै। तथा वाग्जाया मनोऽनुवृत्तित्वसामान्याद्वाचः। वागिति शब्दश्चोदनादिलक्षणो मनसा श्रोत्रद्वारेण गृह्यते अवधार्यते प्रयुज्यते चेति मनसो जायेव वाक्। ताभ्यां च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थमिति प्राणः प्रजेव। तत्र प्राणचेष्टादिलक्षणं कर्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तम्; तत् द्विविधं वित्तम्– मानुषम् इतरच्च; अतो विशिनष्टि इतरवित्तनिवृत्त्यर्थं मानुषमिति; गवादि हि मनुष्यसंबन्धिवित्तं चक्षुर्ग्राह्यं कर्मसाधनम; तस्मात्तत्स्थानीयम्, तेन संबन्धात् चक्षुर्मानुषं वित्तम्; चक्षुषा हि यस्मात् तन्मानुषं वित्तं विन्दते गवाद्युपलभत इत्यर्थः। किं पुनरितरद्वित्तम्? श्रोत्रं दैवम्– देवविषयत्वाद्विज्ञानस्य विज्ञानं दैवं वित्तम्; तदिह श्रोत्रमेव संपत्तिविषयम्; कस्मात्? श्रोत्रेण हि यस्मात् तत् दैवं वित्तं विज्ञानं शृणोति; अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति। किं पुनरेतैरात्मादिवित्तान्तैरिह निर्वर्त्यं कर्मेत्युच्यते— आत्मैव—आ-

त्मेति शरीरमुच्यते; कथं पुनरात्मा कर्मस्थानीयः? अस्य कर्महेतुत्वात् । कथं कर्महेतुत्वम्? आत्मना हि शरीरेण यतः कर्म करोति । तस्य अकृत्स्नत्वाभिमानिन एवं कृत्स्नता संपन्ना—यथा बाह्या जायादिलक्षणा एवम् । तस्मात्स एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तः यज्ञः दर्शनमात्रनिर्वृत्तः अकर्मिणोऽपि । कथं पुनरस्य पञ्चत्वसंपत्तिमात्रेण यज्ञत्वम्? उच्यते—यस्मात् बाह्योऽपि यज्ञः पशुपुरुषसाध्यः, स च पशुः पुरुषश्च पाङ्क्तः एव, यथोक्तमनआदिपञ्चत्वयोगात्; तदाह— पाङ्क्तः पशुः गवादिः, पाङ्क्तः पुरुषः—पशुत्वेऽपि अधिकृतत्वेनास्य विशेषः पुरुषस्येति पृथक्पुरुषग्रहणम् । किं बहुना पाङ्क्तमिदं सर्वं कर्मसाधनं फलं च, यदिदं किंच यत्किंचिदिदं सर्वम् । एवं पाङ्क्तं यज्ञमात्मानं यः संपादयति सः तदिदं सर्वं जगत् आत्मत्वेन आप्नोति— य एवं वेद ॥

इति प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥

# पञ्चमं ब्राह्मणम् ॥

यत्सप्तान्नानि मेधया तपसाजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् । त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्ते ऽद्यमानानि सर्वदा । यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥

यत्सप्तान्नानि मेधया । अविद्या प्रस्तुता; तत्र अविद्वान् अन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति; सः वर्णाश्रमाभिमानः कर्मकर्तव्यतया नियतो जुहोत्यादिकर्मभिः कामप्रयुक्तो देवादीनामुपकुर्वन् सर्वेषां भूतानां लोक इत्युक्तम् । यथा च स्वकर्मभिरेकैकेन सर्वैर्भूतैरसौ लोको भोज्यत्वेन सृष्टः, एवमसावपि जुहोत्यादिपाङ्क्तकर्मभिः सर्वाणि भूतानि सर्वं च जगत् आत्मभोज्यत्वेनासृजत; एवम् एकै-

कः स्वकर्मविद्यानुरूप्येण॰ सर्वस्य जगतो भोक्ता भोज्यं च, सर्वस्य सर्वः कर्ता कार्यं चेत्यर्थः ; एतदेव च विद्याप्रकरणे मधुविद्यायां वक्ष्यामः—सर्वं सर्वस्य कार्यं माध्विति आत्मैकत्वविज्ञानार्थम् । यदसौ जुहोत्यादिना पाङ्क्तेन काम्येन कर्मणा आत्मभोज्यत्वेन जगदसृजत विज्ञानेन च, तज्जगत्सर्वं सप्तधा प्रविभज्यमानं कार्यकारणत्वेन सप्तान्नान्युच्यन्ते, भोज्यत्वात् ; तेनासौ पिता तेषामन्नानाम् । एतेषामन्नानां सविनियोगानां सूत्रभूताः संक्षेपतः प्रकाशकत्वात् इमे मन्त्राः ॥

**यत्सप्तान्नानि मेधया तपसाजनयत्पितेति मेधया हि तपसाजनयत्पिता । एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रꣳ ह्येतत् । द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति**

तत्पयः। पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते। यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं

**प्रतीकं मुखेनेत्येतत् । स देवानपिगच्छ-**
**ति स ऊर्जमुपजीवतीति प्रशꣳसा ॥ २ ॥**

यत्सप्तान्नानि— यत् अजनयदिति क्रियाविशेषणम्; मेधया प्रज्ञया विज्ञानेन तपसा च कर्मणा; ज्ञानकर्मणी एव हि मेधातपःशब्दवाच्ये, तयोः प्रकृतत्वात्; नेतरे मेधातपसी, अप्रकरणात्; पाङ्क्तं हि कर्म जायादिसाधनम्; 'य एवं वेद' इति च अनन्तरमेव ज्ञानं प्रकृतम्; तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्या; अतः यानि सप्तान्नानि ज्ञानकर्मभ्यां जनितवान्पिता, तानि प्रकाशयिष्याम इति वाक्यशेषः । तत्र मन्त्राणामर्थः तिरोहितत्वात्प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते । तत्र यत्सप्तान्नानि मेधया तपसाजनयत्पितेत्यस्य कोऽर्थः ? उच्यते इति—हि-शब्देनैव व्याचष्टे प्रसिद्धार्थावद्योतकेन; प्रसिद्धो ह्यस्य मन्त्रस्यार्थ इत्यर्थः; यदजनयदिति च अनुवादस्वरूपेण मन्त्रेण प्रसिद्धार्थतैव प्रकाशिता; अतः ब्राह्मणम् अविशङ्कयैवाह— मेधया हि तपसाजनयत्पितेति ॥

ननु कथं प्रसिद्धता अस्यार्थस्येति, उच्यते—जायादिकर्मान्तानां लोकफलसाधनानां पितृत्वं तावत्प्रत्यक्षमेव;

अभिहितं च—'जाया मे स्यात्' इत्यादिना । तत्र च दैवं वित्तं विद्या कर्म पुत्रश्च फलभूतानां लोकानां साधनं स्रष्टृत्वं प्रति इत्यभिहितम्; वक्ष्यमाणं च प्रसिद्धमेव । तस्माद्युक्तं वक्तुं मेधयेत्यादि । एषणा हि फलविषया प्रसिद्धैव च लोके; एषणा च जायादीत्युक्तम् 'एतावान्वै कामः' इत्यनेन; ब्रह्मविद्याविषये च सर्वैकत्वात्कामानुपपत्तेः । एतेन अशास्त्रीयप्रज्ञातपोभ्यां स्वाभाविकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति; स्थावरान्तस्य च अनिष्टफलस्य कर्मविज्ञाननिमित्तत्वात् । विवक्षितस्तु शास्त्रीय एव साध्यसाधनभावः, ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात्— सर्वो ह्ययं व्यक्ताव्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्या आरब्धव्येति ॥

तत्र अन्नानां विभागेन विनियोग उच्यते— एकमस्य साधारणमिति मन्त्रपदम्; तस्य व्याख्यानम्— इदमेवास्य तत्साधारणमन्नमित्युक्तम्; भोक्तृसमुदायस्य; किं तत्? यदिदमद्यते भुज्यते सर्वैः प्राणिभिरहन्यहनि, तत् साधारणं सर्वभोक्त्रर्थमकल्पयत्पिता सृष्ट्वा अन्नम् । स य एतत्साधारणं सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते—त-

त्परो भवतीत्यर्थः– उपासनं हि नाम तात्पर्यं दृष्टं लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इत्यादौ–तस्मात् शरीरस्थित्यर्थान्नोपभोगप्रधानः नादृष्टार्थकर्मप्रधान इत्यर्थः ; स एवंभूतो न पाप्मनोऽधर्मात् व्यावर्तते–न विमुच्यत इत्येतत् । तथा च मन्त्रवर्णः—'मोघमन्नं विन्दते' इत्यादिः ; स्मृतिरपि— 'नात्मार्थं पाचयेदन्नम्' 'अप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' 'अन्नादे भ्रूणहा मार्ष्टि' इत्यादिः । कस्मात्पुनः पाप्मनो न व्यावर्तते ? मिश्रं ह्येतत्— सर्वेषां हि स्वं तत् अप्रविभक्तं यत्प्राणिभिर्भुज्यते, सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो दृश्यते– ममेदं स्यादिति हि सर्वेषां तत्राशा प्रतिबद्धा ; तस्मात् न परमपीडयित्वा ग्रसितुमपि शक्यते । 'दुष्कृतं हि मनुष्याणाम्' इत्यादिस्मरणाच्च ।

गृहिणा वैश्वदेवाख्यमन्नं यदहन्यहनि निरूप्यत इति केचित् । तन्न । सर्वभोक्तृसाधारणत्वं वैश्वदेवाख्यस्यान्नस्य न सर्वप्राणभृद्भुज्यमानान्नवत्प्रत्यक्षम् । नापि यदिदमद्यत इति तद्विषयं वचनमनुकूलम् । सर्वप्राणभृद्भुज्यमानान्नान्तःपातित्वाच्च वैश्वदेवाख्यस्य युक्तं श्वचाण्डालाद्याद्यस्य अन्नस्य ग्रहणम्, वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्याद्यान्नदर्शनात्,

तत्र युक्तं यदिदमद्यत इति वचनम् । यदि हि तन्न गृह्येत साधारणशब्देन पित्रा असृष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयाताम् । इष्यते हि तत्सृष्टत्वं तद्विनियुक्तत्वं च सर्वस्यान्नजातस्य । न च वैश्वदेवाख्यं शास्त्रोक्तं कर्म कुर्वत: पाप्मनोऽविनिवृत्तिर्युक्ता । न च तस्य प्रतिषेधोऽस्ति । न च मत्स्यबन्धनादिकर्मवत्स्वभावजुगुप्सितमेतत्, शिष्टनिर्वर्त्यत्वात्, अकरणे च प्रत्यवायश्रवणात् । इतरत्र च प्रत्यवायोपपत्ते:, 'अहमन्नमन्नमदन्तमद्मि' इति मन्त्रवर्णात् ॥

द्वे देवानभाजयदिति मन्त्रपदम्; ये द्वे अन्ने सृष्ट्वा देवानभाजयत्. के ते द्वे इत्युच्यते— हुतं च प्रहुतं च । हुतमित्यग्नौ हवनम्, प्रहुतं हुत्वा बलिहरणम् । यस्मात् द्वे एते अन्ने हुतप्रहुते देवानभाजयत्पिता, तस्मात् एतर्ह्यपि गृहिण: काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वाना जुह्वति, प्रजुह्वति च हुत्वा बलिहरणं च कुर्वत इत्यर्थ: । अथो अप्यन्य आहु:— द्वे अन्ने पित्रा देवेभ्य: प्रत्ते न हुतप्रहुते, किं तर्हि दर्शपूर्णमासाविति । द्वित्वश्रवणाविशेषात् अत्यन्तप्रसिद्धत्वाच्च हुतप्रहुते इति प्रथम: पक्ष: । यद्यपि द्वित्वं हुतप्रहुतयो: संभवति, तथापि श्रौतयोरेव तु दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरम्, मन्त्रप्रकाशितत्वात्;

गुणप्रधानप्राप्तौ च प्रधाने प्रथमतरा अवगतिः; दर्शपूर्ण-मासयोश्च प्राधान्यं हुतप्रहुतापेक्षया; तस्मात्तयोरेव ग्रहणं युक्तम्— द्वे देवानभाजयदिति । यस्माद्देवार्थमेते पित्रा प्रक्ल्प्ते दर्शपूर्णमासाख्ये अन्ने, तस्मात् तयोर्देवार्थत्वाविघाताय नेष्टियाजुकः इष्टियजनशीलः; इष्टिशब्देन किल काम्या इष्टयः; शातपथी इयं प्रसिद्धिः; ताच्छील्यप्रत्ययप्रयोगा-त्काम्येष्टियजनप्रधानो न स्यादित्यर्थः ॥

पशुभ्य एकं प्रायच्छदिति— यत्पशुभ्य एकं प्रायच्छ-त्पिता, किं पुनस्तदन्नम्? तत्पयः । कथं पुनरवगम्यते पशवोऽस्यान्नस्य स्वामिन इत्यत आह— पयो हि अग्रे प्रथमं यस्मात् मनुष्याश्च पशवश्च पय एवोपजीवन्तीति; उचितं हि तेषां तदन्नम्, अन्यथा कथं तदेवाग्रे नियमेनो-पजीवेयुः । कथमग्रे तदेवोपजीवन्तीति उच्यते— मनुष्याश्च पशवश्च यस्मात् तेनैवान्नेन वर्तन्ते अद्यत्वेऽपि, यथा पित्रा आदौ विनियोगः कृतः तथा; तस्मात् कुमारं बालं जातं घृतं वा त्रैवर्णिका जातकर्मणि जातरूपसंयुक्तं प्रतिलेह-यन्ति प्राशयन्ति; स्तनं वा अनुधापयन्ति पश्चात् पाय-यन्ति यथासंभवम् अन्येषाम्; स्तनमेवाग्रे धापयन्ति मनु-ष्येभ्योऽन्येषां पशूनाम् । अथ वत्सं जातमाहुः कियत्प्र-

माणा वत्स इत्येवं पृष्टाः सन्तः— अतृणाद इति— नाद्यापि तृणमत्ति, अतीव बालः पयसैवाद्यापि वर्तत इत्यर्थः। यच्च अग्रे जातकर्मादौ घृतमुपजीवन्ति, यच्च इतरे पय एव, तत् सर्वथापि पय एवोपजीवन्ति; घृतस्यापि पयोविकारत्वात्पयस्त्वमेव। कस्मात्पुनः सप्तमं सत् पश्वन्नं चतुर्थत्वेन व्याख्यायते? कर्मसाधनत्वात्; कर्म हि पयःसाधनाश्रयम् अग्निहोत्रादि; तच्च कर्म साधनं वित्तसाध्यं वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य, यथा दर्शपूर्णमासौ पूर्वोक्तावन्ने; अतः कर्मपक्षत्वात् कर्मणा सह पिण्डीकृत्योपदेशः; साधनत्वाविशेषात् अर्थसंबन्धात् आनन्तर्यमकारणमिति च; व्याख्याने प्रतिपत्तिसौकर्याच्च— सुखं हि नैरन्तर्येण व्याख्यातुं शक्यन्तेऽन्नानि व्याख्यातानि च सुखं प्रतीयन्ते। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेत्यस्य कोऽर्थ इत्युच्यते—तस्मिन् पश्वन्ने पयसि, सर्वम् अध्यात्माधिभूताधिदैवलक्षणं कृत्स्नं जगत् प्रतिष्ठितम्—यच्च प्राणिति प्राणचेष्टावत्, यच्च न स्थावरं शैलादि। तत्र हि-शब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम्। कथं पयोद्रव्यस्य सर्वप्रतिष्ठात्वम्? कारणत्वोपपत्तेः; कारणत्वं च अग्निहोत्रादिकर्मसमवायित्वम्; अग्निहोत्राद्याहुतिविपरिणामात्मकं च

जगत्कृत्स्नमिति श्रुतिस्मृतिवादाः शतशो व्यवस्थिताः; अतो युक्तमेव हि-शब्देन व्याख्यानम् । यत्तद्ब्राह्मणान्तरेष्विदमाहुः—संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति; संवत्सरेण किल त्रीणि षष्टिशतान्याहुतीनां सप्त च शतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसंपद्यमानाः संवत्सरस्य च अहोरात्राणि, संवत्सरमग्निं प्रजापतिमाप्नुवन्ति; एवं कृत्वा संवत्सरं जुह्वत अपजयति पुनर्मृत्युम्—इतः प्रेत्य देवेषु संभूतः पुनर्न म्रियत इत्यर्थः—इत्येवं ब्राह्मणवादा आहुः । न तथा विद्वान् न तथा द्रष्टव्यम्; यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सराभ्यासमपेक्षते; एवं विद्वान्सन्—यदुक्तम्, पयसि हीदं सर्वं प्रतिष्ठितं पयआहुतिविपरिणामात्मकत्वात्सर्वस्येति, तत्—एकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते; तदुच्यते— अपजयति पुनर्मृत्युं पुनर्मरणम्, सकृन्मृत्वा विद्वान् शरीरेण वियुज्य सर्वात्मा भवति न पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णातीत्यर्थः । कः पुनर्हेतुः, सर्वात्माप्त्या मृत्युमपजयतीति? उच्यते—सर्वं समस्तं हि यस्मात् देवेभ्यः सर्वेभ्यः अन्नाद्यम् अन्नमेव तदाद्यं च सायंप्रातराहुतिप्रक्षेपेण प्रयच्छति । तद्युक्तम्—सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेवान्नरूपेण सर्वैः देवैः एकात्मभावं गत्वा

सर्वदेवमयो भूत्वा पुनर्न म्रियत इति । अथैतदप्युक्तं ब्राह्मणेन—'ब्रह्म वै स्वयंभु तपोऽतप्यत, तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति, तत्सर्वेषु भूतेष्वात्मानं हुत्वा भूतानि चात्मनि सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येत्' इति ॥

कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति । यदा पित्रा अन्नानि सृष्ट्वा सप्त पृथक्पृथग्भोक्तृभ्यः प्रत्तानि, तदा प्रभृत्येव तैर्भोक्तृभिरद्यमानानि—तन्निमित्तत्वात्तेषां स्थितेः—सर्वदा नैरन्तर्येण; कृतक्षयोपपत्तेश्च युक्तस्तेषां क्षयः; न च तानि क्षीयमाणानि, जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनात्; भवितव्यं च अक्षयकारणेन; तस्मात् कस्मात्पुनस्तानि न क्षीयन्त इति प्रश्नः । तस्येदं प्रतिवचनम्—पुरुषो वा अक्षितिः । यथा असौ पूर्वमन्नानां स्रष्टासीत्पिता मेधया जायादिसंबद्धेन च पाङ्क्तकर्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सन्तः पितर एव—मेधया तपसा च यतो जनयन्ति तान्यन्नानि । तदेतदभिधीयते पुरुषो वै योऽन्नानां भोक्ता सः अक्षितिः अक्षयहेतुः । कथमस्याक्षितित्वमित्युच्यते—सः हि यस्मात् इदं भुज्यमानं सप्तविधं कार्यकरणलक्षणं क्रियाफलात्मकं

पुनः पुनः भूयो भूयः जनयते उत्पादयति, धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया, कर्मभिश्च वाङ्मनःकायचेष्टितैः; यत् यदि ह यद्येतत्सप्तविधमन्नमुक्तं क्षणमात्रमपि न कुर्यात्प्रज्ञया कर्मभिश्च, ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत ह । तस्मात् यथैवायं पुरुषो भोक्ता अन्नानां नैरन्तर्येण यथाप्रज्ञं यथाकर्म च करोत्यपि; तस्मात् पुरुषोऽक्षितिः, सातत्येन कर्तृत्वात्; तस्मात् भुज्यमानान्यप्यन्नानि न क्षीयन्त इत्यर्थः । अतः प्रज्ञाक्रियालक्षणप्रबन्धारूढः सर्वो लोकः साध्यसाधनलक्षणः क्रियाफलात्मकः संहतानेकप्राणिकर्मवासनासंतानावष्टब्धत्वात् क्षणिकः अशुद्धः असारः नदीस्रोतःप्रदीपसंतानकल्पः कदलीस्तम्भवदसारः फेनमायामरीच्यम्भःस्वप्नादिसमः तदात्मगतदृष्टीनामविकीर्यमाणो नित्यः सारवानिव लक्ष्यते; तदेतद्वैराग्यार्थमुच्यते—धिया धिया जनयते कर्मभिर्यद्वैतन्न कुर्यात्क्षीयेत हेति—विरक्तानां ह्यस्मात् ब्रह्मविद्या आरब्धव्या चतुर्थप्रमुखेनेति । यो वैतामक्षितिं वेदेति । वक्ष्यमाणान्यपि त्रीण्यन्नानि अस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषां याथात्म्यविज्ञानफलमुपसंह्रियते—यो वा एतामक्षितिम् अक्षयहेतुं यथोक्तं वेद—पुरुषो वा

अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति— सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थ उच्यते— मुखं मुख्यत्वं प्राधान्यमित्येतत्, प्राधान्येनैव, अन्नानां पितुः पुरुषस्याक्षितित्वं यो वेद, सोऽन्नमत्ति, नान्नं प्रति गुणभूतः सन्, यथा अज्ञः न तथा विद्वान् अन्नाना-मात्मभूतः— भोक्तैव भवति न भोज्यतामापद्यते । स देवा-नपिगच्छति स ऊर्जमुपजीवतीति— देवानपिगच्छति देवा-त्मभावं प्रतिपद्यते, ऊर्जममृतं च उपजीवतीति यदुक्तम्, सा प्रशंसा; नापूर्वार्थोऽन्योऽस्ति ॥

**त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं ना-दर्शमन्यत्रमना अभूवं नाश्रौषमिति म-नसा ह्येव पश्यति मनसा शृणोति । कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा वि-जानाति यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो**

**व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥**

पाङ्क्तस्य कर्मणः फलभूतानि यानि त्रीण्यन्नान्युपक्षिप्तानि तानि कार्यत्वात् विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्यः पृथगुत्कृष्टानि; तेषां व्याख्यानार्थं उत्तरो ग्रन्थ आ ब्राह्मणपरिसमाप्तेः । त्रीण्यात्मनेऽकुरुतेति कोऽस्यार्थ इत्युच्यते— मनः वाक् प्राणः, एतानि त्रीण्यन्नानि; तानि मनः वाचं प्राणं च आत्मने आत्मार्थम् अकुरुत कृतवान् सृष्ट्वा आदौ पिता । तेषां मनसोऽस्तित्वं स्वरूपं च प्रति संशय इत्यत आह— अस्ति तावन्मनः श्रोत्रादिबाह्यकरणव्यतिरिक्तम्; यत एवं प्रसिद्धम्— बाह्यकरणविषयात्मसंबन्धे सत्यपि अभिमुखीभूतं विषयं न गृह्णाति, किं दृष्टवानसीदं रूपमित्युक्तो वदति—अन्यत्र मे गतं मन आसीत् सोऽहमन्यत्रमना आसं नादर्शम्, तथेदं श्रुतवानसि मदीयं वच इत्युक्तः अन्यत्रमना अभूवम् नाश्रौषं न श्रुतवानस्मीति । तस्मात् यस्यासंनिधौ रूपादिग्रहणसमर्थस्यापि सतः चक्षुरादेः स्वस्वविषयसंबन्धे रूपशब्दादिज्ञानं न भवति, यस्य च भावे भवति, तत् अन्यत् अस्ति मनो नामान्तःकरणं सर्वकरणविषययो-

गीत्यवगम्यते । तस्मात्सर्वो हि लोको मनसा ह्येव पश्यति मनसा शृणोति, तद्व्यग्रत्वे दर्शनाद्यभावात् ॥

अस्तित्वे सिद्धे मनसः स्वरूपार्थमिदमुच्यते— कामः स्त्रीव्यतिकराभिलाषादिः, संकल्पः प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन, विचिकित्सा संशयज्ञानम्, श्रद्धा अदृष्टार्थेषु कर्मसु आस्तिक्यबुद्धिः देवतादिषु च, अश्रद्धा तद्विपरीता बुद्धिः, धृतिः धारणं देहाद्यवसादे उत्तम्भनम्, अधृतिः तद्विपर्ययः, ह्रीः लज्जा, धीः प्रज्ञा, भीः भयम् इत्येतदेवमादिकं सर्वं मन एव; मनसोऽन्तःकरणस्य रूपाण्येतानि । मनोऽस्तित्वं प्रत्यन्यच्च कारणमुच्यते—तस्मान्मनो नामास्त्यन्तःकरणम्, यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचित् हस्तस्यायं स्पर्शः जानोरयमिति विवेकेन प्रतिपद्यते; यदि विवेककृत् मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेकप्रतिपत्तिः स्यात्; यत्तत् विवेकप्रतिपत्तिकारणं तन्मनः ॥

अस्ति तावन्मनः, स्वरूपं च तस्याधिगतम् । त्रीण्यन्नानीह फलभूतानि कर्मणां मनोवाक्प्राणाख्यानि अध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि । तत्र आध्यात्मिकानां वाङ्मनःप्राणानां मनो व्याख्यातम् । अथेदानीं वा-

ग्वक्तव्येत्यारम्भ:—य: कश्चित् लोके शब्दो ध्वनि: ताल्वादिव्यङ्ग्य: प्राणिभि: वर्णादिलक्षण: इतरो वा वादित्रमेघादिनिमित्त: सर्वो ध्वनि: वागेव सा । इदं तावद्वाच: स्वरूपमुक्तम् । अथ तस्या: कार्यमुच्यते—एषा वाक् हि यस्मात् अन्तम् अभिधेयावसानम् अभिधेयनिर्णयम् आयत्ता अनुगता । एषा पुन: स्वयं नाभिधेयवत् प्रकाश्या अभिधेयप्रकाशिकैव प्रकाशात्मकत्वात् प्रदीपादिवत्; न हि प्रदीपादिप्रकाश: प्रकाशान्तरेण प्रकाश्यते; तद्वत् वाक् प्रकाशिकैव स्वयं न प्रकाश्या—इति अनवस्थां श्रुति: परिहरति—एषा हि न प्रकाश्या, प्रकाशकत्वमेव वाच: कार्यमित्यर्थ: ॥

अथ प्राण उच्यते— प्राण: मुखनासिकासंचार्यो हृदयवृत्ति: प्रणयनात्प्राण:, अपनयनान्मूत्रपुरीषादेरपान: अधोवृत्ति: आ नाभिस्थान:, व्यान: व्यायमनकर्मा व्यान: प्राणापानयो: संधि: वीर्यवत्कर्महेतुश्च, उदान: उत्कर्षोर्ध्वगमनादिहेतु: आपादतलमस्तकस्थान ऊर्ध्ववृत्ति:, समान समं नयनाद्भुक्तस्य पीतस्य च कोष्ठस्थानोऽन्नपक्ता, अन इत्येषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टाभिसंबन्धिनी वृत्ति:— एवं यथोक्तं प्राणादिवृत्तिजातमेतत्सर्वं प्राण एव । प्राण इति वृत्तिमानाध्यात्मिक: अन उक्त: ; कर्म च अस्य

वृत्तिभेदप्रदर्शनेनैव व्याख्यातम् ; व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यानि अन्नानि; एतन्मय एतद्विकारः प्राजापत्यैरेतैर्वाङ्मनःप्राणैरारब्धः । कोऽसावयं कार्यकरणसंघातः? आत्मा पिण्डः आत्मस्वरूपत्वेनाभिमतोऽविवेकिभिः— अविशेषेणैतन्मय इत्युक्तस्य विशेषेण वाङ्मयो मनोमयः पाणमय इति स्फुटीकरणम् ॥

तेषामेव प्राजापत्यानामन्नानामाधिभौतिको विस्तारोऽभिधीयते—

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥**

त्रयो लोकाः भूर्भुवःस्वरित्याख्याः एत एव वाङ्मनःप्राणाः ; तत्र विशेषः—वागेवायं लोकः, मनोऽन्तरिक्षलोकः, प्राणोऽसौ लोकः ॥

**त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥**

**देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥**

**पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥**

तथा त्रयो वेदा इत्यादीनि वाक्यानि ऋज्वर्थानि ॥

**विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति ॥ ८ ॥**

विज्ञातं विजिज्ञास्यम् अविज्ञातम् एत एव; तत्र विशेषः यत्किंच विज्ञातं विस्पष्टं ज्ञातं वाचस्तद्रूपम्; तत्र स्वयमेव हेतुमाह— वाक् हि विज्ञाता, प्रकाशात्मकत्वात्; कथमविज्ञाता भवेत् या अन्यानपि विज्ञापयति; 'वाचैव सम्राड्बन्धुः प्रज्ञायते' इति हि वक्ष्यति। वाग्विशेषविद इदं फलमुच्यते—वागेव एनं यथोक्तवाग्विभूतिविदं तत् विज्ञातं भूत्वा अवति पालयति, विज्ञातरूपेणैवास्यान्नं भोज्यतां प्रतिपद्यत इत्यर्थः ॥

**यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति ॥**

तथा यत्किंच विजिज्ञास्यम्, विस्पष्टं ज्ञातुमिष्टं विजि-

ज्ञास्यम्, तत्सर्वं मनसो रूपम्; मनः हि यस्मात् संदिह्यमानाकारत्वाद्विजिज्ञास्यम्। पूर्ववन्मनोविभूतिविदः फलम्—मन एनं तत् विजिज्ञास्यं भूत्वा अवति विजिज्ञास्यस्वरूपेणैवान्नत्वमापद्यते ॥

**यत्किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ॥ १० ॥**

तथा यत्किंच अविज्ञातं विज्ञानागोचरं न च संदिह्यमानम्, प्राणस्य तद्रूपम्; प्राणो ह्यविज्ञातः अविज्ञातरूपः हि यस्मात् प्राणः—अनिरुक्तश्रुतेः। विज्ञातविजिज्ञास्याविज्ञातभेदेन वाङ्मनःप्राणविभागे स्थिते त्रयो लोका इत्यादयो वाचनिका एव। सर्वत्र विज्ञातादिरूपदर्शनाद्वचनादेव नियमः स्मर्तव्यः। प्राण एनं तद्भूत्वावति—अविज्ञातरूपेणैवास्य प्राणोऽन्नं भवतीत्यर्थः। शिष्यपुत्रादिभिः संदिह्यमानाविज्ञातोपकारा अप्याचार्यपित्रादयो दृश्यन्ते; तथा मनःप्राणयोरपि संदिह्यमानाविज्ञातयोरन्नत्वोपपत्तिः ॥

व्याख्यातो वाङ्मनःप्राणानामाधिभौतिको विस्तारः; अथायमाधिदैविकार्थ आरम्भः—

**तस्यै वाचः पृथिवी शरीरं ज्योतीरू-**

**पमयमग्निस्तद्यावत्येव वाक्तावती पृथि-
वी तावानयमग्निः ॥ ११ ॥**

तस्यै तस्याः वाचः प्रजापतेरन्नत्वेन प्रस्तुतायाः पृथिवी शरीरं बाह्य आधारः, ज्योतीरूपं प्रकाशात्मकं करणं पृथिव्या आधेयभूतम् अयं पार्थिवोऽग्निः । द्विरूपा हि प्रजापतेः वाक् कार्यं आधारः अप्रकाशः, करणं च आधेयं प्रकाशः तदुभयं पृथिव्यग्नी वागेव प्रजापतेः । तत् तत्र यावत्येव यावत्परिमाणैव अध्यात्माधिभूतभेदभिन्ना सती वाग्भवति, तत्र सर्वत्र आधारत्वेन पृथिवी व्यवस्थिता तावत्येव भवति कार्यभूता ; तावानयमग्निः आधेयः—करणरूपो ज्योतीरूपेण पृथिवीमनुप्रविष्टस्तावानेव भवति । समानमुत्तरम् ॥

**अथैतस्य मनसो द्यौः शरीरं ज्योती-
रूपमसावादित्यस्तद्यावदेव मनस्तावती
द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समै-
तां ततः प्राणोऽजायत स इन्द्रः स एषो-
ऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो
भवति य एवं वेद ॥ १२ ॥**

अथैतस्य प्राजापत्यान्नोक्तस्यैव मनसः द्यौः द्युलोकः शरीरं कार्यम् आधारः, ज्योतीरूपं करणम् आधेयः असावादित्यः। तत् तत्र यावत्परिमाणमेवाध्यात्ममधिभूतं वा मनः, तावती तावद्विस्तारा तावत्परिमाणा मनसो ज्योतीरूपस्य करणस्य आधारत्वेन व्यवस्थिता द्यौः; तावानसावादित्यो ज्योतीरूपं करणमाधेयम्; तावग्न्यादित्यौ वाङ्मनसे आधिदैविके मातापितरौ मिथुनं मैथुन्यम् इतरेतरसंसर्गं समैतां समगच्छेताम्— मनसा आदित्येन प्रसूतं पित्रा, वाचा अग्निना मात्रा प्रकाशितं कर्म करिष्यामीति— अन्तरा रोदस्योः। ततः तयोरेव संगमनात् प्राणो वायुरजायत परिस्पन्दाय कर्मणे। यो जातः स इन्द्रः परमेश्वरः; न केवलमिन्द्र एव, असपत्नः अविद्यमानः सपत्नो यस्य; कः पुनः सपत्नो नाम? द्वितीयो वै प्रतिपक्षत्वेनोपगतः स द्वितीयः सपत्न इत्युच्यते। तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्वं भजेते; प्राणं प्रति गुणभावोपगते एव हि ते अध्यात्ममिव। तत्र प्रासङ्गिकासपत्नविज्ञानफलमिदम्— नास्य विदुषः सपत्नः प्रतिपक्षो भवति, य एवं यथोक्तं प्राणम् असपत्नं वेद॥

**अथैतस्य प्राणस्यापः शरीरं ज्योती-**

**रूपमसौ चन्द्रस्तंद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥ १३ ॥**

अथैतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्य, न प्रजोक्तस्य अनन्तरनिर्दिष्टस्य, आपः शरीरं कार्यं करणाधारः; पूर्ववत् ज्योतीरूपमसौ चन्द्रः; तत्र यावानेव प्राणः यावत्परिमाणः अध्यात्मादिभेदेषु, तावद्व्याप्तिमत्य आपः तावत्परिमाणाः; तावानसौ चन्द्र अबाधेयः तास्वप्स्वनुप्रविष्टः करणभूतः अध्यात्ममधिभूतं च तावद्व्याप्तिमानेव । तान्येतानि पित्रा पाङ्क्तेन कर्मणा सृष्टानि त्रीण्यन्नानि वाङ्मनःप्राणाख्यानि; अध्यात्ममधिभूतं च जगत्समस्तम् एतैर्व्याप्तम्; नैतेभ्योऽन्यद्व्यतिरिक्तं किंचिदस्ति कार्यात्मकं करणात्मकं वा । समस्तानि त्वेतानि प्रजापतिः त एते वाङ्मनःप्राणाः सर्व एव समाः तुल्याः व्याप्तिमन्तः यावत्प्राणिगोचरं साध्यात्माधिभूतं व्याप्य व्यवस्थिताः; अत एवानन्ता

यावत्संसारभाविनो हि ते। न हि कार्यकरणप्रत्याख्यानेन संसारोऽवगम्यते; कार्यकरणात्मका हि त इत्युक्तम्। स यः कश्चित् ह एतान् प्रजापतेरात्मभूतान् अन्तवतः परिच्छिन्नान् अध्यात्मरूपेण वा अधिभूतरूपेण वा उपास्ते, स च तदुपासनानुरूपमेव फलम् अन्तवन्तं लोकं जयति, परिच्छिन्न एव जायते, नैतेषामात्मभूतो भवतीत्यर्थः। अथ पुनः यः ह एताननन्तान सर्वात्मकान् सर्वप्राण्यात्मभूतान् अपरिच्छिन्नान् उपास्ते, सोऽनन्तमेव लोकं जयति॥

पिता पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तम्; तान्येतानि पाङ्क्तकर्मफलभूतानि व्याख्यातानि; तत्र कथं पुनः पाङ्क्तस्य कर्मणः फलमेतानीति उच्यते— यस्मात्तेष्वपि त्रिष्वन्नेषु पाङ्क्तता अवगम्यते, वित्तकर्मणोरपि तत्र संभवात्; तत्र पृथिव्यग्नी माता, दिवादित्यौ पिता, योऽयमनयोरन्तरा प्राणः स प्रजेति व्याख्यातम्। तत्र वित्तकर्मणी संभावयितव्ये इत्यारम्भः—

**स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च**

**पूर्यतेऽप च क्षीयते सोऽमावास्याꣳ रात्रि-मेतया षोडश्या कलया सर्वमिदं प्राण-भृदनुप्रविश्य ततः प्रातर्जायते तस्मादे-ताꣳ रात्रिं प्राणभृतः प्राणं न विच्छि-न्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥**

स एष संवत्सरः— योऽयं ह्यन्नात्मा प्रजापतिः प्रकृतः, स एष संवत्सरात्मना विशेषतो निर्दिश्यते । षोडशकलः षोडश कला अवयवा अस्य सोऽयं षोडशकलः संवत्सरः संवत्सरात्मा कालरूपः । तस्य च कालात्मनः प्रजापतेः रात्रय एव अहोरात्राणि— तिथय इत्यर्थः— पञ्चदश कलाः । ध्रुवैव नित्यैव व्यवस्थिता अस्य प्रजापतेः षोडशी षोडशानां पूरणी कला । रात्रिभिरेव तिथिभिः कलोक्ताभिः आपूर्यते च अपक्षीयते च प्रतिपदाद्याभिर्हि चन्द्रमाः प्रजापतिः शुक्लपक्ष आपूर्यते कलाभिरुपचीयमानाभिर्वर्धते यावत्संपूर्णमण्डलः पौर्णमास्याम् ; ताभिरेवापचीयमानाभिः कलाभिरपक्षीयते कृष्णपक्षे यावद्ध्रुवैका कला व्यवस्थिता अमावास्यायाम् । स प्रजापतिः कालात्मा अमा-

वास्याम् अमावास्यायाम् रात्रिं रात्रौ या व्यवस्थिता ध्रुवा कलोक्ता एतया षोडश्या कलया सर्वमिदं प्राणभृत् प्राणिजातम् अनुप्रविश्य– यदपः पिबति यच्चौषधीरश्नाति तत्सर्वमेव ओषध्यात्मना सर्वं व्याप्य– अमावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रातर्जायते द्वितीयया कलया संयुक्तः । एवं पाङ्क्तात्मकोऽसौ प्रजापतिः— दिवादित्यौ मनः पिता, पृथिव्यग्नी वाक् जाया माता, तयोश्च प्राणः प्रजा, चान्द्रमस्यस्तिथयः कला वित्तम्– उपचयापचयधर्मित्वात् वित्तवत्, तासां च कलानां कालावयवानां जगत्परिणामहेतुत्वं कर्म; एवमेष कृत्स्नः प्रजापतिः– जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म कुर्वीय– इत्येषणानुरूप एव पाङ्क्तस्य कर्मणः फलभूतः संवृत्तः; कारणानुविधायि हि कार्यमिति लोकेऽपि स्थितिः । यस्मादेष चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्तते, तस्माद्धेतोः एताममावास्यां रात्रिं प्राणभृतः प्राणिनः प्राणं न विच्छिन्द्यात्– प्राणिनं न प्रमापयेदित्येतत्– अपि कृकलासस्य— कृकलासो हि पापात्मा स्वभावेनैव हिंस्यते प्राणिभिः दृष्टोऽप्यमङ्गल इति कृत्वा । ननु प्रतिषिद्धैव प्राणिहिंसा 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति;

बाढं प्रतिषिद्धा, तथापि न अमावास्याया अन्यत्र प्रतिप्रसवार्थं वचनं हिंसायाः कृकलासविषये वा, किं तर्हि एतस्याः सोमदेवतायाः अपचित्यै पूजार्थम् ॥

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः ॥**

यो वै परोक्षाभिहितः संवत्सरः प्रजापतिः षोडशकलः, स नैव अत्यन्तं परोक्षो मन्तव्यः, यस्मादयमेव स प्रत्यक्ष उपलभ्यते ; कोऽसावयम् ? यो यथोक्तं त्र्यन्नात्मकं प्रजापतिमात्मभूतं वेत्ति स एवंवित्पुरुषः ; केन सामान्येन प्रजापतिरिति तदुच्यते— तस्य एवंविदः पुरुषस्य गवादिवित्तमेव पञ्चदश कलाः, उपचयापचयधर्मित्वात्— वित्तसाध्यं च कर्म ; तस्य कृत्स्नतायै— आत्मैव पिण्ड एव अस्य विदुषः षोडशी कला ध्रुवस्थानीया ; स चन्द्रवत् वित्तेनैव आपूर्यते

च अपक्षीयते च; तदेतत् लोके प्रसिद्धम्; तदेतत् नभ्यम् नाभ्यै हितं नभ्यम् नाभिं वा अर्हतीति— किं तत्? यदयं योऽयम् आत्मा पिण्डः; प्रधिः वित्तं परिवारस्थानीयं बाह्यम्— चक्रस्येवारनेम्यादि। तस्मात् यद्यपि सर्वज्यानिं सर्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोति, आत्मना चक्रनाभिस्थानीयेन चेत् यदि जीवति, प्रधिना बाह्येन परिवारेण अयम् अगात् क्षीणोऽयम्—यथा चक्रमरनेमिविमुक्तम्— एवमाहुः; जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इत्यभिप्रायः ॥

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकः प्रजापतिर्भवतीति व्याख्यातम्; अनन्तरं च जायादिवित्तं परिवारस्थानीयमित्युक्तम्। तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतम्; न पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसंबन्धनियमः। सोऽयं पुत्रादीनां साधनानां साध्यविशेषसंबन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते—

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा**

**कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्माद्विद्यां प्रशꣳसन्ति ॥ १६ ॥**

अथेति वाक्योपन्यासार्थः । त्रयः— वावेत्यवधारणार्थः— त्रय एव शास्त्रोक्तसाधनार्हा लोकाः, न न्यूना नाधिका वा ; के त इत्युच्यते—मनुष्यलोकः पितृलोको देवलोक इति । तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यः जेतव्यः साध्यः—यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्यामः—नान्येन कर्मणा, विद्यया वेति वाक्यशेषः । कर्मणा अग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यः, न पुत्रेण नापि विद्यया । विद्यया देवलोकः, न पुत्रेण नापि कर्मणा । देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः ; तस्मात् तत्साधनत्वात् विद्यां प्रशंसन्ति ॥

**अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञास्तेषाꣳ सर्वे-**

षां यज्ञ इत्येकता ये वै के च लोकास्तेषाँ सर्वेषां लोक इत्येकतैतावद्वा इदं सर्वमेतन्मा सर्वँ सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति । स यद्यनेन किंचिदक्ष्णयाकृतं भवति तस्मादेनँ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि; जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमिति पृथक् नाभिहिता; वित्तं च कर्मसाधनत्वान्न पृथक्साधनम्; विद्याकर्मणोर्लोकजयहेतुत्वं स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम्; पुत्रस्य तु अक्रियात्मकत्वात् केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते; अतस्तद्वक्तव्यमिति अथ अनन्तरमारभ्यते— संप्रत्तिः संप्रदानम्; संप्रत्तिरिति वक्ष्यमाणस्य कर्मणो नामधेयम्; पुत्रे हि

स्वात्मव्यापारसंप्रदानं करोति अनेन प्रकारेण पिता, तेन संप्रत्तिसंज्ञकमिदं कर्म । तत् कस्मिन्काले कर्तव्यमित्याह —स पिता यदा यस्मिन्काले प्रैष्यन् मरिष्यन् मरिष्यामी-त्यरिष्टादिदर्शनेन मन्यते, अथ तदा पुत्रमाहूयाह— त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स एवमुक्तः पुत्रः प्रत्याह ; स तु पूर्वमेवानुशिष्टो जानाति मयैतत्कर्त-व्यमिति; तेनाह— अहं ब्रह्म अहं यज्ञः अहं लोक इति एतद्वाक्यत्रयम् । एतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्या-ख्यानाय प्रवर्तते— यद्वै किंच यत्किंच अवशिष्टम् अनू-क्तम् अधीतमनधीतं च, तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पदे एक-ता एकत्वम् ; योऽध्ययनव्यापारो मम कर्तव्य आसीदेता-वन्तं कालं वेदविषयः, सः इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृको-ऽस्त्वित्यर्थः । तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मया अनुष्ठिताश्चाननुष्ठिताश्च, तेषां सर्वेषां यज्ञ इत्येतस्मि-न्पद एकता एकत्वम् ; मत्कर्तृका यज्ञा य आसन्, ते इत ऊर्ध्वं त्वं यज्ञः त्वत्कर्तृका भवन्त्वित्यर्थः । ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च, तेषां सर्वेषां लोक इत्येतस्मिन्पद एकता; इत ऊर्ध्वं त्वं लोकः त्वया जेतव्यास्ते । इत ऊर्ध्वं मया अध्ययनयज्ञलोकजयकर्तव्यक्र-

तुस्त्वयि समर्पितः, अहं तु मुक्तोऽस्मि कर्तव्यताबन्धनविषयात्क्रतोः। स च सर्वं तथैव प्रतिपन्नवान्पुत्रः अनुशिष्टत्वात्। तत्र इमं पितुरभिप्रायं मन्वाना आचष्टे श्रुतिः— एतावत् एतत्परिमाणं वै इदं सर्वम्—यद्गृहिणा कर्तव्यम्, यदुत वेदा अध्येतव्याः, यज्ञा यष्टव्याः, लोकाश्च जेतव्याः; एतन्मा सर्वं सन्नयम्--सर्वं हि इमं भारं मदधीनं मत्तोऽपच्छिद्य आत्मनि निधाय इतः अस्माल्लोकात् मा माम् अभुनजत् पालयिष्यतीति— लडर्थे लङ्, छन्दसि कालनियमाभावात्। यस्मादेवं संपन्नः पुत्रः पितरम् अस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति, तस्मात्पुत्रमनुशिष्टं लोक्यं लोकहितं पितुः आहुर्ब्राह्मणाः। अत एव ह्येनं पुत्रमनुशासति—लोक्योऽयं नः स्यादिति—पितरः। स पिता यदा यस्मिन्काले एवंवित् पुत्रसमर्पितकर्तव्यताक्रतुः अस्माल्लोकात् प्रैति म्रियते, अथ तदा एभिरेव प्रकृतैर्वाङ्मनःप्राणैः पुत्रमाविशति पुत्रं व्याप्नोति। अध्यात्मपरिच्छेदहेत्वपगमात् पितुर्वाङ्मनःप्राणाः स्वेन आधिदैविकेन रूपेण पृथिव्यग्न्याद्यात्मना भिन्नघटप्रदीपप्रकाशवत् सर्वम् आविशन्ति; तैः प्राणैः सह पितापि आविशति वाङ्मनःप्राणात्मभावित्वात्पितुः; अहमस्म्यनन्ता वाङ्मनःप्राणा अध्यात्मादिभेदवि-

स्तारः— इत्येवंभावितो हि पिता ; तस्मात् प्राणानुवृत्तित्वं पितुर्भवतीति युक्तमुक्तम्— एभिरेव प्राणैः सह पुत्रमाविशतीति ; सर्वेषां ह्यसावात्मा भवति पुत्रस्य च । एतदुक्तं भवति—यस्य पितुरेवमनुशिष्टः पुत्रो भवति सोऽस्मिन्नेव लोके वर्तते पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थः ; तथा च श्रुत्यन्तरे—'सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते' इति । अथेदानीं पुत्रनिर्वचनमाह— स पुत्रः यदि कदाचित् अनेन पित्रा अक्ष्णया कोणच्छिद्रतोऽन्तरा अकृतं भवति कर्तव्यम्, तस्मात् कर्तव्यतारूपात्पित्रा अकृतात् सर्वस्माल्लोकप्राप्तिप्रतिबन्धरूपात् पुत्रो मुञ्चति मोचयति तत्सर्वं स्वयमनुतिष्ठन्पूरयित्वा ; तस्मात् पूरणेन त्रायते स पितरं यस्मात्, तस्मात्, पुत्रो नाम ; इदं तत्पुत्रस्य पुत्रत्वम्— यत्पितुश्छिद्रं पूरयित्वा त्रायते । स पिता एवंविधेन पुत्रेण मृतोऽपि सन् अमृतः अस्मिन्नेव लोके प्रतितिष्ठति एवमसौ पिता पुत्रेणेमं मनुष्यलोकं जयति ; न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ, स्वरूपलाभसत्तामात्रेण ; न हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवत् व्यापारान्तरापेक्षया लोकजयहेतुत्वं प्रतिपद्येते । अथ कृतसंप्रत्तिकं पितरम् एनम् एते वागादयः प्राणाः दैवाः हैरण्यगर्भाः अ-

मृताः अमरणधर्माण आविशन्ति ॥

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्त-द्भवति ॥ १८ ॥**

कथमिति वक्ष्यति— पृथिव्यै चैनमित्यादि । एवं पुत्र-कर्मापरविद्यानां मनुष्यलोकपितृलोकदेवलोकसाध्यार्थता प्र-दर्शिता श्रुत्या स्वयमेव; अत्र केचिद्वावदूकाः श्रुत्युक्तविशे-षार्थानभिज्ञाः सन्तः पुत्रादिसाधनानां मोक्षार्थतां वदन्ति; तेषां मुखापिधानं श्रुत्येदं कृतम्— जाया मे स्यादित्यादि प्राक् काम्यं कर्मेत्युपक्रमेण, पुत्रादीनां च साध्यविशेषवि-नियोगोपसंहारेण च; तस्मात् ऋणश्रुतिरविद्वद्विषया न परमात्मविद्विषयेति सिद्धम्; वक्ष्यति च— ‘किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः’ इति ॥

केचित्तु पितृलोकदेवलोकजयोऽपि पितृलोकदेवलोका-भ्यां व्यावृत्तिरेव; तस्मात् पुत्रकर्मापरविद्याभिः समुच्चित्या-नुष्ठिताभिः त्रिभ्य एतेभ्यो लोकेभ्यो व्यावृत्तः परमात्म-विज्ञानेन मोक्षमधिगच्छतीति परम्परया मोक्षार्थान्येव पुत्रा-दिसाधनानि इच्छन्ति; तेषामपि मुखापिधानायेयमेव श्रुतिरुत्तरा कृतसंप्रत्तिकस्य पुत्रिणः कर्मिणः त्र्यन्नात्मविद्या-

विदः फलप्रदर्शनाय प्रवृत्ता । न च इदमेव फलं मोक्षफलमिति शक्यं वक्तुम्, त्र्यन्नसंबन्धात् मेधातपःकार्यत्वाच्चान्नानाम् पुनः पुनर्जनयत इति दर्शनात्, 'यद्धैतन्न कुर्यात्क्षीयेत ह' इति च क्षयश्रवणात्, शरीरम् ज्योतीरूपमिति च कार्यकरणत्वोपपत्तेः, 'त्रयं वा इदम्' इति च नामरूपकर्मात्मकत्वेनोपसंहारात् । न च इदमेव साधनत्रयं संहृतं सत् कस्यचिन्मोक्षार्थं कस्यचित् त्र्यन्नात्मफलमित्यस्मादेव वाक्यादवगन्तुं शक्यम्, पुत्रादिसाधनानां त्र्यन्नात्मफलदर्शनेनैव उपक्षीणत्वाद्वाक्यस्य ॥

पृथिव्यै पृथिव्याः च एनम् अग्नेश्च दैवी अधिदैवात्मिका वाक् एनं कृतसंप्रत्तिकम् आविशति; सर्वेषां हि वाच उपादानभूता दैवी वाक् पृथिव्यग्निलक्षणा; सा ह्याध्यात्मिकासङ्गादिदोषैर्निरुद्धा । विदुषस्तद्दोषापगमे आवरणभङ्ग इवोदकं प्रदीपप्रकाशवच्च व्याप्नोति; तदेतदुच्यते—पृथिव्या अग्नेश्चैनं दैवी वागाविशतीति । सा च दैवी वाक् अनृतादिदोषरहिता शुद्धा, यया वाचा दैव्या यद्यदेव आत्मने परस्मै वा वदति तत्तत् भवति—अमोघा अप्रतिबद्धा अस्य वाग्भवतीत्यर्थः ॥

**दिवश्चैनमादित्याच्च दैवं मन आवि-**

**शति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥ १९ ॥**

तथा दिवश्चैनमादित्याच्च दैवं मन आविशति— तच्च दैवं मनः, स्वभावनिर्मलत्वात्; येन मनसा असौ आनन्द्येव भवति सुख्येव भवति; अथो अपि न शोचति, शोकादिनिमित्तासंयोगात् ॥

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरꣳश्चासंचरꣳश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा देवतैवꣳ स यथैतां देवताꣳ सर्वाणि भूतान्यवन्त्येवꣳ हैवंविदꣳ सर्वाणि भूतान्यवन्ति । यदु किंचेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥२०॥**

तथा अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति । स वै दैवः प्राणः किंलक्षण इत्युच्यते— यः संचरन् प्राणि-

भेदेषु असंचरन् समष्टिव्यष्टिरूपेण—अथवा संचरन् जङ्गमेषु असंचरन्स्थावरेषु—न व्यथते न दुःखनिमित्तेन भयेन युज्यते; अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते । सः— यो यथोक्तमेवं वेत्ति त्र्यन्नात्मदर्शनं सः— सर्वेषां भूतानामात्मा भवति, सर्वेषां भूतानां प्राणो भवति, सर्वेषां भूतानां मनो भवति, सर्वेषां भूतानां वाग्भवति—इत्येवं सर्वभूतात्मतया सर्वज्ञो भवतीत्यर्थः—सर्वकृच्च । यथैषा पूर्वसिद्धा हिरण्यगर्भदेवता एवमेव नास्य सर्वज्ञत्वे सर्वकृत्त्वे वा कचित्प्रतिघातः; स इति दार्ष्टान्तिकनिर्देशः । किंच यथैतां हिरण्यगर्भदेवताम् इज्यादिभिः सर्वाणि भूतान्यवन्ति पालयन्ति पूजयन्ति, एवं ह एवंविदं सर्वाणि भूतान्यवन्ति- इज्यादिलक्षणां पूजां सततं प्रयुञ्जत इत्यर्थः ॥

अथेदमाशङ्क्यते— सर्वप्राणिनामात्मा भवतीत्युक्तम्; तस्य च सर्वप्राणिकार्यकरणात्मत्वे सर्वप्राणिसुखदुःखैः संबध्येतेति— तन्न । अपरिच्छिन्नबुद्धित्वात्— परिच्छिन्नात्मबुद्धीनां ह्याक्रोशादौ दुःखसंबन्धो दृष्टः—, अनेनाहमाकृष्ट इति; अस्य तु सर्वात्मनो य आक्रुश्यते यश्चाक्रोशति तयोरात्मत्वबुद्धिविशेषाभावात् न तन्निमित्तं दुःखमुपपद्यते । मरणदुःखवच्च निमित्ताभावात्— यथा हि कस्मिंश्चिन्मृते

कस्यचिद्दुःखमुत्पद्यते— ममासौ पुत्रो भ्राता चेति— पुत्रादिनिमित्तम् , तन्निमित्ताभावे तन्मरणदर्शिनोऽपि नैव दुःखमुपजायते, तथा ईश्वरस्यापि अपरिच्छिन्नात्मनो ममतवतादिदुःखनिमित्तमिथ्याज्ञानादिदोषाभावात् नैव दुःखमुपजायते । तदेतदुच्यते——यदु किंच यत्किंच इमाः प्रजाः शोचन्ति अमैव सहैव प्रजाभिः तच्छोकादिनिमित्तं दुःखं संयुक्तं भवति आसां प्रजानाम् परिच्छिन्नबुद्धिजनितत्वात् ; सर्वात्मनस्तु केन सह किं संयुक्तं भवेत् वियुक्तं वा । अमुं तु प्राजापत्ये पदे वर्तमानं पुण्यमेव शुभमेव— फलमभिप्रेतं पुण्यमिति— निरतिशयं हि तेन पुण्यं कृतम् , तेन तत्फलमेव गच्छति ; न ह वै देवान्पापं गच्छति, पापफलस्यावसराभावात्— पापफलं दुःखं न गच्छतीत्यर्थः ॥

'त एते सर्व एव समाः सर्वेऽनन्ताः' इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तम् , न अन्यतमगतो विशेष उक्तः ; किमेवमेव प्रतिपत्तव्यम् , किं वा विचार्यमाणे कश्चिद्विशेषो व्रतमुपासनं प्रति प्रतिपत्तुं शक्यत इत्युच्यते—

**अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्ये-**

नास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्ध तस्माच्छ्राम्यत्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे । अयं वै नः श्रेष्ठो यः संचरꣳश्चासंचरꣳश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवꣳस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

अथातः अनन्तरं व्रतमीमांसा उपासनकर्मविचारणेत्यर्थः;

एषां प्राणानां कस्य कर्म व्रतत्वेन धारयितव्यमिति मीमांसा प्रवर्तते । तत्र प्रजापतिः ह— ह-शब्दः किलार्थे— प्रजापतिः किल प्रजाः सृष्ट्वा कर्माणि करणानि वागादीनि— कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते— ससृजे सृष्टवान् वागादीनि करणानीत्यर्थः । तानि पुनः सृष्टानि अन्योन्येन इतरेतरम् अस्पर्धन्त स्पर्धां संघर्षं चक्रुः; कथम्? वदिष्याम्येव स्वव्यापाराद्वदनादनुपरतैव अहं स्यामिति वाग्व्रतं दध्रे धृतवती— यद्यन्योऽपि मत्समोऽस्ति स्वव्यापारादनुपरन्तुं शक्तः, सोऽपि दर्शयत्वात्मनो वीर्यमिति; तथा द्रक्ष्याम्यहमिति चक्षुः; श्रोष्याम्यहमिति श्रोत्रम्; एवमन्यानि कर्माणि करणानि यथाकर्म— यत् यत् यस्य कर्म यथाकर्म—तानि करणानि मृत्युर्मारकः श्रमः श्रमरूपी भूत्वा उपयेमे संजग्राह । कथम्? तानि करणानि स्वव्यापारे प्रवृत्तानि आप्नोत् श्रमरूपेण आत्मानं दर्शितवान्; आप्त्वा च तानि अवारुन्ध अवरोधं कृतवान्मृत्युः— स्वकर्मभ्यः प्रच्यावितवानित्यर्थः । तस्माद्यत्वेऽपि वदने स्वकर्मणि प्रवृत्ता वाक् श्राम्यत्येव श्रमरूपिणा मृत्युना संयुक्ता स्वकर्मतः प्रच्यवते; तथा श्राम्यति चक्षुः; श्राम्यति श्रोत्रम् । अथेममेव मुख्यं प्राणं न आप्नोत् न प्राप्तवान्मृत्युः श्रमरूपी— योऽयं

मध्यमः प्राणः तम् । तेनाद्यत्वेऽप्यश्रान्त एव स्वकर्मणि प्रवर्तते । तानीतराणि करणानि तं ज्ञातुं दध्रिरे धृतवन्ति मनः; अयं वै नः अस्माकं मध्ये श्रेष्ठः प्रशस्यतमः अभ्यधिकः, यस्मात् यः संचरंश्चासंचरंश्च न व्यथते, अथो न रिष्यति— हन्त इदानीमस्यैव प्राणस्य सर्वे वयं रूपमसाम प्राणमात्मत्वेन प्रतिपद्येमहि— एवं विनिश्चित्य ते एतस्यैव सर्वे रूपमभवन् प्राणरूपमेव आत्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरे— अस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानीति । यस्मात्प्राणेन रूपेण रूपवन्तीतराणि करणानि चलनात्मनात्वेन च प्रकाशात्मना; न हि प्राणादन्यत्र चलनात्मकत्वोपपत्तिः; चलनव्यापारपूर्वकाण्येव हि सर्वदा स्वव्यापारेषु लक्ष्यन्ते— तस्मात् एते वागादयः एतेन प्राणाभिधानेन आख्यायन्ते अभिधीयन्ते—प्राणा इत्येवम् । य एवं प्राणात्मतां सर्वकरणानां वेत्ति प्राणशब्दाभिधेयत्वं च, तेन ह वाव तेनैव विदुषा तत्कुलमाचक्षते लौकिकाः, यस्मिन्कुले स विद्वान् जातो भवति— तत्कुलं विद्वन्नाम्नैव प्रथितं भवति—अमुष्येदं कुलमिति—यथा तापत्य इति । य एवं यथोक्तं वेद वागादीनां प्राणरूपतां प्राणाख्यत्वं च, तस्यैतत्फलम् । किंच यः कश्चित् उ ह एवंविदा प्राणात्मदर्शिना स्पर्धते त-

त्प्रतिपक्षी सन् सः अस्मिन्नेव शरीरे अनुशुष्यति शोषमुपगच्छति; अनुशुष्य हैव शोषं गत्वैव अन्ततः अन्ते म्रियते, न सहसा अनुपद्रुतो म्रियते। इत्येवमुक्तमध्यात्मं प्राणात्मदर्शनमिति उक्तोपसंहारः अधिदैवतप्रदर्शनार्थः ॥

**अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः ॥ २२ ॥**

अथ अनन्तरम् अधिदैवतं देवताविषयं दर्शनमुच्यते। कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते। अध्यात्मवत्सर्वम्। ज्वलिष्याम्येवाहमित्यग्निर्दध्रे; तप्स्याम्यहमित्यादित्यः; भास्याम्यहमिति चन्द्रमाः; एवमन्या देवता यथादैवतम्। सः अध्यात्मं वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणो मृत्युना अनाप्तः स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतो यथा, एवम् एतासामग्न्यादीनां

देवतानां वायुरपि । म्लोचन्ति अस्तं यन्ति स्वकर्मभ्य उपरमन्ते— यथा अध्यात्मं वागादयोऽन्या देवता अग्न्याद्याः ; न वायुरस्तं याति— यथा मध्यमः प्राणः ; अतः सैषा अनस्तमिता देवता यद्वायुः योऽयं वायुः । एवमध्यात्ममधिदैवं च मीमांसित्वा निर्धारितम्— प्राणवाय्वात्मनोर्व्रतमभग्नमिति ॥

**अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मँ स एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यँ सलोकतां जयति ॥ २३ ॥**

इति पञ्चमं ब्राह्मणम् ॥

अथैतस्यैवार्थस्य प्रकाशकः एष श्लोको मन्त्रो भवति । यतश्च यस्माद्वायोः उदेति उद्गच्छति सूर्यः, अध्यात्मं च

चक्षुरात्मना प्राणात्— अस्तं च यत्र वायौ प्राणे च गच्छति अपरसंध्यासमये स्वापसमये च पुरुषस्य— तं देवाः तं धर्मं देवाः चक्रिरे धृतवन्तः वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं च पुरा विचार्य । स एव अद्य इदानीं श्वोऽपि भविष्यत्यपि काले अनुवर्त्यते अनुवर्तिष्यते च देवैरित्यभिप्रायः । तत्रेमं मन्त्रं संक्षेपतो व्याचष्टे ब्राह्मणम्— प्राणाद्वा एष सूर्य उदेति प्राणेऽस्तमेति । तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इत्यस्य कोऽर्थ इत्युच्यते—यत् वै एते व्रतम् अमुर्हि अमुष्मिन्काले वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं च अध्रियन्त, तदेवाद्यापि कुर्वन्ति अनुवर्तन्ते अनुवर्तिष्यन्ते च; व्रतं तयोरभग्नमेव । यत्तु वागादिव्रतम् अग्न्यादिव्रतं च तद्भग्नमेव, तेषाम् अस्तमयकाले स्वापकाले च वायौ प्राणे च निम्लुक्तिदर्शनात् । अथैतदन्यत्रोक्तम्— 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं मनः प्राणं चक्षुः प्राणं श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त इत्यध्यात्ममथाधिदैवतं यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुं ह्यनूद्वाति यदादित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठि-

ता वायोरेवाधि पुनर्जायन्ते' इति । यस्मात् एतदेव व्रतं वागादिषु अग्न्यादिषु च अनुगतं यदेतत् वायोश्च प्राणस्य च परिस्पन्दात्मकत्वं सर्वैः देवैरनुवर्त्यमानं व्रतम्— तस्मात् अन्योऽप्येकमेव व्रतं चरेत्; किं तत्? प्राण्यात् प्राणन्व्यापारं कुर्यात् अपान्यात् अपानन्व्यापारं च; न हि प्राणापानव्यापारस्य प्राणनापाननलक्षणस्योपरमोऽस्ति; तस्मात्तदेव एकं व्रतं चरेत् हित्वेन्द्रियान्तरव्यापारम्— नेत् मा मां पाप्मा मृत्युः श्रमरूपी आप्नुवत् आप्नुयात्— नेच्छ-ब्दः परिभये— यद्यहमस्माद्व्रतात्प्रच्युतः स्याम्, ग्रस्त एवाहं मृत्युनेत्येवं त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः । यदि कदा-चित उ चरेत् प्रारभेत प्राणव्रतम्, समापिपयिषेत् समाप-यितुमिच्छेत्; यदि हि अस्माद्व्रतादुपरमेत प्राणः परिभूतः स्यात् देवाश्च; तस्मात्समापयेदेव । तेन उ तेन अनेन व्रतेन प्राणात्मप्रतिपत्त्या सर्वभूतेषु— वागादयः अग्न्यादयश्च मदात्मका एव, अहं प्राण आत्मा सर्वपरिस्पन्दकृत् एवं तेनानेन व्रतधारणेन एतस्या एव प्राणदेवतायाः सायुज्यं सयुग्भावम् एकात्मत्वं सलोकतां समानलोकतां वा एकस्था-नत्वम्— विज्ञानमान्द्यापेक्षमेतत्— जयति प्राप्नोतीति ॥

इति प्रथमाध्यायस्य पञ्चमं ब्राह्मणम् ॥

---

## षष्ठं ब्राह्मणम् ॥

त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति। एतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥

यदेतदविद्याविषयत्वेन प्रस्तुतं साध्यसाधनलक्षणं व्याकृतं जगत् प्राणात्मप्राप्त्यन्तोत्कर्षवदपि फलम्, या चैतस्य व्याकरणात्प्रागवस्था अव्याकृतशब्दवाच्या—वृक्षबीजवत् सर्वमेतत् त्रयम्; किं तत्त्रयमित्युच्यते—नाम रूपं कर्म चेति अनात्मैव— न आत्मा यत्साक्षादपरोक्षाद्ब्रह्म; तस्मादस्माद्विरज्येतेत्येवमर्थः त्रयं वा इत्याद्यारम्भः। न ह्यस्मात् अनात्मनः अव्यावृत्तचित्तस्य आत्मानमेव लोकम् अहं ब्रह्मास्मीत्युपासितुं बुद्धिः प्रवर्तते, बाह्यप्रत्यगात्मप्रवृत्त्योर्विरोधात्। तथा च काठके—'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन' इत्यादि ॥

कथं पुनः अस्य व्याकृताव्याकृतस्य क्रियाकारकफलात्मनः संसारस्य नामरूपकर्मात्मकतैव, न पुनरात्मत्वम्—इत्येतत्संभावयितुं शक्यत इति । अत्रोच्यते— तेषां नाम्नां यथोपन्यस्तानाम्—वागिति शब्दसामान्यमुच्यते, 'यः कश्च शब्दो वागेव सा' इत्युक्तत्वात् वागित्येतस्य शब्दस्य यो अर्थः शब्दसामान्यमात्रम् एतत् एतेषां नामविशेषाणाम् उक्थं कारणम् उपादानम्, सैन्धवलवणकणानामिव सैन्धवाचलः; तदाह—अतो हि अस्मान्नामसामान्यात् सर्वाणि नामानि यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागानि उत्तिष्ठन्ति उत्पद्यन्ते प्रविभज्यन्ते, लवणाचलादिव लवणकणाः; कार्यं च कारणेनाव्यतिरिक्तम् । तथा विशेषाणां च सामान्येऽन्तर्भावात्—कथं सामान्यविशेषभाव इति— एतत् शब्दसामान्यम् एषां नामविशेषाणाम् साम, समत्वात्साम, सामान्यमित्यर्थः; एतत् हि यस्मात् सर्वैर्नामभिः आत्मविशेषैः समम् । किंच आत्मलाभाविशेषाच्च नामविशेषाणाम्—यस्य च यस्मादात्मलाभो भवति, स तेनाप्रविभक्तो दृष्टः, यथा घटादीनां मृदा; कथं नामविशेषाणामात्मलाभो वाच इत्युच्यते— यत एतदेषां वाक्शब्दवाच्यं वस्तु ब्रह्म आत्मा, ततो ह्यात्मलाभो नाम्नाम्, शब्दव्यतिरिक्तस्वरूपानुपपत्तेः;

तत्प्रतिपादयति—एतत् शब्दसामान्यं हि यस्मात् शब्दविशेषान् सर्वाणि नामानि बिभर्ति धारयति स्वरूपप्रदानेन। एवं कार्यकारणत्वोपपत्तेः सामान्यविशेषोपपत्तेः आत्मप्रदानोपपत्तेश्च नामविशेषाणां शब्दमात्रता सिद्धा। एवमुत्तरयोरपि सर्वं योज्यं यथोक्तम्॥

**अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति॥२॥**

अथेदानीं रूपाणां सितासितप्रभृतीनाम्—चक्षुरिति चक्षुर्विषयसामान्यं चक्षुःशब्दाभिधेयं रूपसामान्यं प्रकाश्यमात्रमभिधीयते। अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति, एतदेषां साम, एतद्धि सर्वै रूपैः समम, एतदेषां ब्रह्म, एतद्धि सर्वाणि रूपाणि बिभर्ति॥

**अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्र-**

**यꣳ सदेकमयमात्मात्मो एकः सन्नेतत्त्रयं तदेतदमृतꣳ सत्त्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्त्यं ताभ्यामयं प्राणश्छन्नः ॥**

इति षष्ठं ब्राह्मणम् ॥

अथेदानीं सर्वकर्मविशेषाणां मननदर्शनात्मकानां चलनात्मकानां च क्रियासामान्यमात्रेऽन्तर्भाव उच्यते; कथम्; सर्वेषां कर्मविशेषाणाम्, आत्मा शरीरम् सामान्यम् आत्मा —आत्मनः कर्म आत्मेत्युच्यते; आत्मना हि शरीरेण कर्म करोति— इत्युक्तम्; शरीरे च सर्वं कर्माभिव्यज्यते; अतः तात्स्थ्यात् तच्छब्दं कर्म— कर्मसामान्यमात्रं सर्वेषामुक्थमित्यादि पूर्ववत्। तदेतद्यथोक्तं नाम रूपं कर्म त्रयम् इतरेतराश्रयम् इतरेतराभिव्यक्तिकारणम् इतरेतरप्रलयम् संहतम्— त्रिदण्डविष्टम्भवत्— सत् एकम्। केनात्मनैकत्वमित्युच्यते— अयमात्मा अयं पिण्डः कार्यकरणात्मसंघातः तथा अन्नत्रये व्याख्यातः—'एतन्मयो वा अयमात्मा' इत्यादिना; एतावद्धीदं सर्वं व्याकृतमव्याकृतं च यदुत नाम रूपं कर्मेति; आत्मा उ एकोऽयं कार्यकरणसंघातः सन्,

अध्यात्माधिभूताधिदैवभावेन व्यवस्थितम् एतदेव त्रयं नाम रूपं कर्मेति । तदेतत् वक्ष्यमाणम्; अमृतं सत्त्येन च्छन्न-मित्येतस्य वाक्यार्थमाह— प्राणो वा अमृतम् करणात्मकः अन्तरुपष्टम्भकः आत्मभूतः अमृतः अविनाशी; नामरूपे सत्त्यं कार्यात्मके शरीरावस्थे; क्रियात्मकस्तु प्राणः तयो-रुपष्टम्भकः बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्मिभ्यां मर्त्याभ्यां छन्नः अप्रकाशीकृतः । एतदेव संसारसतत्त्वमवि-द्याविषयं प्रदर्शितम्; अत ऊर्ध्वं विद्याविषय आत्मा अधि-गन्तव्य इति चतुर्थ आरभ्यते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
बृहदारण्यकोपनिषद्भाष्ये
प्रथमोऽध्यायः ॥

## ॥ द्वितीयोऽध्यायः ॥

आत्मेत्येवोपासीत; तदन्वेषणे च सर्वमन्विष्टं स्यात्; तदेव च आत्मतत्त्वं सर्वस्मात् प्रेयस्त्वादन्वेष्टव्यम्— आत्मानमेवावेदहं ब्रह्मास्मीति— आत्मतत्त्वमेकं विद्याविषयः। यस्तु भेददृष्टिविषयः सः— अन्योऽसावन्योऽहमस्मीति न स वेदेति— अविद्याविषयः। 'एकधैवानुद्रष्टव्यम्' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवमादिभिः प्रविभक्तौ विद्याविद्याविषयौ सर्वोपनिषत्सु। तत्र च अविद्याविषयः सर्व एव साध्यसाधनादिभेदविशेषविनियोगेन व्याख्यातः आ तृतीयाध्यायपरिसमाप्तेः। स च व्याख्यातोऽविद्याविषयः सर्व एव द्विप्रकारः— अन्तःप्राण उपष्टम्भको गृहस्येव स्तम्भादिलक्षणः प्रकाशकोऽमृतः, बाह्यश्च कार्यलक्षणोऽप्रकाशक उपजनापायधर्मकः तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्यः; तेन

अमृतशब्दवाच्यः प्राणः छन्न इति च उपसंहृतम् । स एव च प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः । प्राण एको देव इत्युच्यते । तस्यैव बाह्यः पिण्ड एकः साधारणः—विराट् वैश्वानरः आत्मा पुरुषविधः प्रजापतिः कः हिरण्यगर्भः—इत्यादिभिः पिण्डप्रधानैः शब्दैराख्यायते सूर्यादिप्रविभक्तकरणः । एकं च अनेकं च ब्रह्म एतावदेव, नातः परमस्ति प्रत्येकं च शरीरभेदेषु परिसमाप्तं चेतनावत् कर्तृ भोक्तृ च—इति अविद्याविषयमेव आत्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्ता उपस्थाप्यते । तद्विपरीतात्मदृक् अजातशत्रुः श्रोता । एवं हि यतः पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्प्यमाणोऽर्थः श्रोतुश्चित्तस्य वशमेति; विपर्यये हि तर्कशास्त्रवत्केवलार्थानुगमवाक्यैः समर्प्यमाणो दुर्विज्ञेयः स्यात् अत्यन्तसूक्ष्मत्वाद्वस्तुनः; तथा च काठके— 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिवाक्यैः सुसंस्कृतदेवबुद्धिगम्यत्वं सामान्यमात्रबुद्ध्यगम्यत्वं च सप्रपञ्चं दर्शितम्; 'आचार्यवान्पुरुषो वेद' 'आचार्याद्धैव विद्या' इति च च्छान्दोग्ये; 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति च गीतासु; इहापि च शाकल्ययाज्ञवल्क्यसंवादेनातिगह्वरत्वं महता संरम्भेण ब्रह्मणो वक्ष्यति— तस्मात्

श्लिष्ट एव आख्यायिकारूपेण पूर्वपक्षसिद्धान्तरूपमापाद्य वस्तुसमर्पणार्थ आरम्भः । आचारविध्युपदेशार्थश्च— एवमाचारवतोर्वक्तृश्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते । केवलतर्कबुद्धिनिषेधार्था च आख्यायिका—'नैषा तर्केण मतिरापनेया' 'न तर्कशास्त्रदग्धाय' इति श्रुतिस्मृतिभ्याम् । श्रद्धा च ब्रह्मविज्ञाने परमं साधनमित्याख्यायिकार्थः; तथा हि गार्ग्याजातशत्र्वोरतीव श्रद्धालुता दृश्यत आख्यायिकायाम्; 'श्रद्धावाँल्लभते ज्ञानम्' इति च स्मृतिः ॥

**ॐ । दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥**

तत्र पूर्वपक्षवादी अविद्याविषयब्रह्मवित् दृप्तबालाकिः— दृप्तः गर्वितः असम्यग्ब्रह्मवित्त्वादेव— बलाकाया अपत्यं बालाकिः, दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिः, ह-शब्द ऐतिह्यार्थ आख्यायिकायाम्, अनूचानः अनुवचनसमर्थः वक्ता वाग्मी, गार्ग्यो गोत्रतः, आस बभूव कचित्काल-

विशेषे। स होवाच अजातशत्रुम् अजातशत्रुनामानम् काश्यं काशिराजम् अभिगम्य— ब्रह्म ते ब्रवाणीति ब्रह्म ते तुभ्यं ब्रवाणि कथयानि। स एवमुक्तोऽजातशत्रुरुवाच— सहस्रं गवां दद्मः एतस्यां वाचि— यां मां प्रत्यवोचः ब्रह्म ते ब्रवाणीति, तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्रायः। साक्षाद्ब्रह्मकथनमेव निमित्तं कस्मान्नापेक्ष्यते सहस्रदाने, ब्रह्म ते ब्रवाणीति इयमेव तु वाक् निमित्तमपेक्ष्यत इत्युच्यते— यतः श्रुतिरेव राज्ञोऽभिप्रायमाह– जनको दाता जनकः श्रोतेति च एतस्मिन्वाक्यद्वये पदद्वयमभ्यस्यते जनको जनक इति; वै-शब्दः प्रसिद्धावद्योतनार्थः; जनको दित्सुर्जनकः शुश्रूषुरिति ब्रह्म शुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जनाः धावन्ति अभिगच्छन्ति; तस्मात् तत्सर्वं मय्यपि संभावितवानसीति ॥

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमु-**

**पास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥ २०॥**

एवं राजानं शुश्रूषुम् अभिमुखीभूतं स होवाच गार्ग्यः — य एव असौ आदित्ये चक्षुषि च एकः अभिमानी चक्षुर्द्वारेण इह हृदि प्रविष्टः अहं भोक्ता कर्ता चेत्यवस्थितः— एतमेव अहं ब्रह्म पश्यामि अस्मिन्कार्यकरणसंघाते उपासे; तस्मात् तमहं पुरुषं ब्रह्म तुभ्यं ब्रवीमि उपास्स्वेति । स एवमुक्तः प्रत्युवाच अजातशत्रुः मा मेति हस्तेन विनिवारयन्— एतस्मिन् ब्रह्मणि विज्ञेये मा संवदिष्ठाः; मा मेत्याबाधनार्थं द्विर्वचनम्— एवं समाने विज्ञानविषय आवयोः अस्मानविज्ञानवत इव दर्शयता बाधिताः स्यामः, अतो मा संवदिष्ठाः मा संवादं कार्षीः अस्मिन्ब्रह्मणि; अन्यच्चेज्जानासि, तद्ब्रह्म वक्तुमर्हसि, न तु यन्मया ज्ञायत एव । अथ चेन्मन्यसे— जानीषे त्वं ब्रह्ममात्रम्, न तु तद्विशेषेणोपासनफलानीति— तन्न मन्तव्यम्; यतः सर्वमेतत् अहं जाने, यद्ब्रवीषि; कथम्? अतिष्ठाः अतीत्य भूतानि तिष्ठतीत्यतिष्ठाः, सर्वेषां च भूतानां मूर्धा शिरः राजेति वै— राजा दीप्तिगुणोपेतत्वात् एतैर्विशेषणैर्विशिष्टमेतद्ब्रह्म अस्मिन्कार्यकरणसंघाते कर्तृ भोक्तृ चेति अहमे-

तमुपास इति; फलमप्येवं विशिष्टोपासकस्य—स य एतमेवमुपास्ते अतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति; यथागुणोपासनमेव हि फलम्; 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः ॥

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥**

संवादेन आदित्यब्रह्मणि प्रत्याख्यातेऽजातशत्रुणा चन्द्रमसि ब्रह्मान्तरं प्रतिपेदे गार्ग्यः । य एवासौ चन्द्रे मनसि च एकः पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणम् । बृहन् महान् पाण्डरं शुक्लं वासो यस्य सोऽयं पाण्डरवासाः, अप्शरीरत्वात् चन्द्राभिमानिनः प्राणस्य, सोमो राजा चन्द्रः, यश्चान्नभूतोऽभिषूयते लतात्मको यज्ञे, तमेकीकृत्य एतमेवाहं ब्रह्मोपासे; यथोक्तगुणं य उपास्ते तस्य अहरहः सुतः सो-

मोऽभिषुतो भवति यज्ञे, प्रसुतः प्रकृष्टं सुतरां सुतो भवति विकारे— उभयविषयज्ञानुष्ठानसामर्थ्यं भवतीत्यर्थः; अन्नं च अस्य न क्षीयते अन्नात्मकोपासकस्य ॥

**स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी ह्यस्य प्रजा भवति ॥ ४ ॥**

तथा विद्युति त्वचि हृदये च एका देवता; तेजस्वीति विशेषणम्; तस्यास्तत्फलम्— तेजस्वी ह भवति तेजस्विनी ह्यस्य प्रजा भवति— विद्युतां बहुत्वस्याङ्गीकरणात् आत्मनि प्रजायां च फलबाहुल्यम् ॥

**स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स**

**य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥**

तथा आकाशे हृद्याकाशे हृदये च एका देवता; पूर्णम् अप्रवर्ति चेति विशेषणद्वयम्; पूर्णत्वविशेषणफलमिदम्— पूर्यते प्रजया पशुभिः; अप्रवर्तिविशेषणफलम्— नास्यास्माल्लोकात्प्रजोद्वर्तत इति, प्रजा संतानाविच्छित्तिः ॥

**स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥**

तथा वायौ प्राणे हृदि च एका देवता; तस्या विशेषणम्— इन्द्रः परमेश्वरः, वैकुण्ठः अप्रसह्यः, न परैर्जितपूर्वा अपराजिता सेना— मरुतां गणत्वप्रसिद्धेः; उपासनफलमपि— जिष्णुर्ह जयनशीलः अपराजिष्णुः न च परैर्जितस्वभावः भवति, अन्यतस्त्यजायी अन्यतस्त्यानां सपत्नानां जयनशीलो भवति ॥

**स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥**

अग्नौ वाचि हृदि च एका देवता; तस्या विशेषणम्—विषासहिः मर्षयिता परेषाम् अग्निबाहुल्यात् फलबाहुल्यं पूर्ववत् ॥

**स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥**

अप्सु रेतसि हृदि च एका देवता; तस्या विशेषणम्—प्रतिरूपः अनुरूपः श्रुतिस्मृत्यप्रतिकूल इत्यर्थः; फलम्—

प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेव, एनमुपगच्छति प्राप्नोति न विपरीतम्, अन्यच्च—अस्मात् तथाविध एवोपजायते ॥

**स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वाꣳस्तानतिरोचते ॥ ९ ॥**

आदर्शे प्रसादस्वभावे चान्यत्र खङ्गादौ, हार्दे च सत्त्वशुद्धिस्वाभाव्ये च एका देवता; तस्या विशेषणम्— रोचिष्णुः दीप्तिस्वभावः; फलं च तदेव, रोचनाधारबाहुल्यात्फलबाहुल्यम् ॥

**स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति**

**स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥ १० ॥**

यन्तं गच्छन्तं य एवायं शब्दः पश्चात् पृष्ठतः अनूदेति, अध्यात्मं च जीवनहेतुः प्राणः— तमेकीकृत्याह ; असुः प्राणो जीवनहेतुरिति गुणस्तस्य ; फलम्— सर्वमायुरस्मिँल्लोक एतीति— यथोपात्तं कर्मणा आयुः कर्मफलपरिच्छिन्नकालात् पुरा पूर्वं रोगादिभिः पीड्यमानमप्येनं प्राणो न जहाति ॥

**स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥ ११ ॥**

दिक्षु कर्णयोः हृदि चैका देवता अश्विनौ देवाववियुक्तस्वभावौ ; गुणस्तस्य द्वितीयवत्त्वम् अनपगत्वम् अवियुक्तता चान्योन्यं दिशामश्विनोश्च एवं धर्मित्वात् ; तदेव च फलमुपासकस्य— गणाविच्छेदः द्वितीयवत्त्वं च ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥

छायायां बाह्ये तमसि अध्यात्मं च आवरणात्मकेऽज्ञाने हृदि च एका देवता, तस्या विशेषणम्— मृत्युः; फलं सर्वं पूर्ववत्, मृत्योरनागमनेन रोगादिपीडाभावो विशेषः ॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

आत्मनि प्रजापतौ बुद्धौ च हृदि च एका देवता;

तस्याः आत्मन्वी आत्मवानिति विशेषणम्; फलम्— आत्मन्वी ह भवति आत्मवान्भवति, आत्मन्विनी हास्य प्रजा भवति, बुद्धिबहुलत्वात् प्रजायां संपादनमिति विशेषः। स्वयं परिज्ञातत्वेन एवं क्रमेण प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यः क्षीणब्रह्मविज्ञानः अप्रतिभासमानोत्तरः तूष्णीमवाक्शिरा आस ॥

**स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥**

तं तथाभूतम् आलक्ष्य गार्ग्यं स होवाच अजातशत्रुः— एतावन्नू३ इति— किमेतावद्ब्रह्म निर्ज्ञातम्, आहोस्विदधिकमप्यस्तीति; इतर आह—एतावद्धीति। नैतावता विदितेन ब्रह्म विदितं भवतीत्याह अजातशत्रुः— किमर्थं गर्वितोऽसि ब्रह्म ते ब्रवाणीति। किमेतावद्विदितं विदितमेव न भवतीत्युच्यते? न, फलवद्विज्ञानश्रवणात्; न चार्थवादत्वमेव वाक्यानामवगन्तुं शक्यम्; अपूर्वविधानपराणि हि वाक्यानि प्रत्युपासनोपदेशं लक्ष्यन्ते— 'अतिष्ठाः सर्वेषां भूतानाम्' इत्यादीनि; तदनुरूपाणि च फलानि सर्वत्र श्रूयन्ते विभक्तानि; अर्थवादत्वे एतदसमञ्जसम्। कथं तर्हि नैतावता

विदितं भवतीति? नैष दोषः, अधिकृतापेक्षत्वात्——ब्रह्मोपदेशार्थं हि शुश्रूषवे अजातशत्रवे अमुख्यब्रह्मवित् गार्ग्यः प्रवृत्तः; स युक्त एव मुख्यब्रह्मविदा अजातशत्रुणा अमुख्यब्रह्मविद्गार्ग्यो वक्तुम्— यन्मुख्यं ब्रह्म वक्तुं प्रवृत्तः त्वं तत् न जानीष इति; यद्यमुख्यब्रह्मविज्ञानमपि प्रत्याख्यायेत, तदा एतावतेति न ब्रूयात्, न किंचिज्ज्ञातं त्वयेत्येवं ब्रूयात्; तस्माद्भवन्ति एतावन्ति अविद्याविषये ब्रह्माणि; एतावद्विज्ञानद्वारत्वाच्च परब्रह्मविज्ञानस्य युक्तमेव वक्तुम्— नैतावता विदितं भवतीति; अविद्याविषये विज्ञेयत्वं नामरूपकर्मात्मकत्वं च एषां तृतीयेऽध्याये प्रदर्शितम्; तस्मात् 'नैतावता विदितं भवति' इति ब्रुवता अधिकं ब्रह्म ज्ञातव्यमस्तीति दर्शितं भवति । तच्च अनुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः स्वयमेव आह— उप त्वा यानीति— उपगच्छानीति— त्वाम्, यथान्यः शिष्यो गुरुम् ॥

**स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृह-**

**न्पाण्डरवासः सोम राजन्निति स नोत्त-स्थौ तं पाणिनापेषं बोधयांचकार स हो-त्तस्थौ ॥ १५ ॥**

स होवाच अजातशत्रुः—प्रतिलोमं विपरीतं चैतत्; किं तत्? यद्ब्राह्मणः उत्तमवर्णः आचार्यत्वेऽधिकृतः सन् क्षत्रियमनाचार्यस्वभावम् उपेयात् उपगच्छेत् शिष्यवृत्त्या—ब्रह्म मे वक्ष्यतीति; एतदाचारविधिशास्त्रेषु निषिद्धम्; तस्मात् तिष्ठ त्वम् आचार्य एव सन्; विज्ञपयिष्याम्येव त्वामहम् —यस्मिन्विदिते ब्रह्म विदितं भवति, यत्तन्मुख्यं ब्रह्म वेद्यम्। तं गार्ग्यं सलज्जमालक्ष्य विस्रम्भजननाय पाणौ हस्ते आदाय गृहीत्वा उत्तस्थौ उत्थितवान्। तौ ह गार्ग्याजातशत्रू पुरुषं सुप्तं राजगृहप्रदेशे क्वचित् आजग्मतुः आगतौ। तं च पुरुषं सुप्तं प्राप्य एतैर्नामभिः— बृहन् पाण्डरवासः सोम राजन्नित्येतैः— आमन्त्रयांचक्रे। एवमामन्त्र्यमाणोऽपि स सुप्तः नोत्तस्थौ। तम् अप्रतिबुध्यमानं पाणिना आपेषम् आपिष्य आपिष्य बोधयांचकार प्रतिबोधितवान्। तेन स होत्तस्थौ। तस्माद्यो गार्ग्येणाभिप्रेतः, नासावस्मिञ्छरीरे कर्ता भोक्ता ब्रह्मेति ॥

कथं पुनरिदमवगम्यते— सुप्तपुरुषगमनतत्संबोधनानु-

त्थानैः गार्ग्याभिमतस्य ब्रह्मणोऽब्रह्मत्वं ज्ञापितमिति? जागरितकाले यो गार्ग्याभिप्रेतः पुरुषः कर्ता भोक्ता ब्रह्म संनिहितः करणेषु यथा, तथा अजातशत्र्वभिप्रेतोऽपि तत्स्वामी भृत्येष्विव राजा संनिहित एव; किं तु भृत्यस्वामिनोः गार्ग्याजातशत्र्वभिप्रेतयोः यद्विवेकावधारणकारणम्, तत् संकीर्णत्वादनवधारितविशेषम्; यत् द्रष्टृत्वमेव भोक्तुः न दृश्यत्वम्, यच्च अभोक्तुर्दृश्यत्वमेव न तु द्रष्टृत्वम्, तच्च उभयम् इह संकीर्णत्वाद्विविच्य दर्शयितुमशक्यमिति सुप्तपुरुषगमनम्। ननु सुप्तेऽपि पुरुषे विशिष्टैर्नामभिरामन्त्रितो भोक्तैव प्रतिपत्स्यते, न अभोक्ता— इति नैव निर्णयः स्यादिति। न, निर्धारितविशेषत्वाद्गार्ग्याभिप्रेतस्य— यो हि सत्येन च्छन्नः प्राण आत्मा अमृतः वागादिषु अनस्तमितः निम्लोचत्सु, यस्य आपः शरीरं पाण्डरवासाः, यश्च असपत्नत्वात् बृहन्, यश्च सोमो राजा षोडशकलः, स स्वव्यापारारूढो यथानिर्ज्ञात एव अनस्तमितस्वभाव आस्ते; न च अन्यस्य कस्यचिद्व्यापारः तस्मिन्काले गार्ग्येणाभिप्रेयते तद्विरोधिनः; तस्मात् स्वनामभिरामन्त्रितेन प्रतिबोद्धव्यम्; न च प्रत्यबुध्यत; तस्मात् पारिशेष्यात् गार्ग्याभिप्रेतस्य अभोक्तृत्वं ब्रह्मणः। भोक्तृस्वभावश्चेत् भुञ्जीतैव स्वं विषयं प्राप्तम्;

न हि दग्धृस्वभावः प्रकाशयितृस्वभावः सन् वह्निः तृणोलपादि दाह्यं स्वविषयं प्राप्तं न दहति, प्रकाश्यं वा न प्रकाशयति; न चेत् दहति प्रकाशयति वा प्राप्तं स्वं विषयम्, नासौ वह्निः दग्धा प्रकाशयिता वेति निश्चीयते; तथा असौ प्राप्तशब्दादिविषयोपलब्धृस्वभावश्चेत् गार्ग्याभिप्रेतः प्राणः, बृहन्पाण्डरवास इत्येवमादिशब्दं स्वं विषयमुपलभेत— यथा प्राप्तं तृणोलपादि वह्निः दहेत् प्रकाशयेच्च अव्यभिचारेण तद्वत् । तस्मात् प्राप्तानां शब्दादीनाम् अप्रतिबोधात् अभोक्तृस्वभाव इति निश्चीयते; न हि यस्य यः स्वभावो निश्चितः, स तं व्यभिचरति कदाचिदपि; अतः सिद्धं प्राणस्याभोक्तृत्वम् । संबोधनार्थनामविशेषेण संबन्धाग्रहणात् अप्रतिबोध इति चेत्—स्यादेतत्—यथा बहुष्वासीनेषु स्वनामविशेषेण संबन्धाग्रहणात् मामयं संबोधयतीति, शृण्वन्नपि संबोध्यमानः विशेषतो न प्रतिपद्यते; तथा इमानि बृहन्नित्येवमादीनि मम नामानीति अगृहीतसंबन्धत्वात् प्राणो न गृह्णाति संबोधनार्थं शब्दम्, न त्वविज्ञातृत्वादेव— इति चेत्— न, देवताभ्युपगमे अग्रहणानुपपत्तेः; यस्य हि चन्द्राद्यभिमानिनी देवता अध्यात्मं प्राणो भोक्ता अभ्युपगम्यते, तस्य तया संव्यवहाराय विशेषनाम्ना संबन्धोऽवश्यं

ग्रहीतव्यः; अन्यथा आह्वानादिविषये संव्यवहारोऽनुपपन्नः स्यात्। व्यतिरिक्तपक्षेऽपि अप्रतिपत्तेः अयुक्तमिति चेत्— यस्य च प्राणव्यतिरिक्तो भोक्ता, तस्यापि बृहन्नित्यादिनामभिः संबोधने बृहत्त्वादिनाम्नां तदा तद्विषयत्वात् प्रतिपत्तिर्युक्ता; न च कदाचिदपि बृहत्त्वादिशब्दैः संबोधितः प्रतिपद्यमानो दृश्यते; तस्मात् अकारणम् अभोक्तृत्वे संबोधनाप्रतिपत्तिरिति चेत्— न, तद्वतः तावन्मात्राभिमानानुपपत्तेः; यस्य प्राणव्यतिरिक्तो भोक्ता, सः प्राणादिकरणवान् प्राणी; तस्य न प्राणदेवतामात्रेऽभिमानः, यथा हस्ते; तस्मात् प्राणनामसंबोधने कृत्स्नाभिमानिनो युक्तैव अप्रतिपत्तिः, न तु प्राणस्य असाधारणनामसंयोगे; देवतात्मत्वानभिमानाच्च आत्मनः। स्वनामप्रयोगेऽप्यप्रतिपत्तिदर्शनादयुक्तमिति चेत्— सुषुप्तस्य यल्लौकिकं देवदत्तादि नाम तेनापि संबोध्यमानः कदाचिन्न प्रतिपद्यते सुषुप्तः; तथा भोक्तापि सन् प्राणो न प्रतिपद्यत इति चेत्— न, आत्मप्राणयोः सुप्तासुप्तत्वविशेषोपपत्तेः; सुषुप्तत्वात् प्राणग्रस्ततया उपरतकरण आत्मा स्वं नाम प्रयुज्यमानमपि न प्रतिपद्यते; न तु तत् असुप्तस्य प्राणस्य भोक्तृत्वे उपरतकरणत्वं संबोधनाग्रहणं वा युक्तम्। अप्रसिद्धनामभिः संबोधनमयुक्तमिति चेत्—

सन्ति हि प्राणविषयाणि प्रसिद्धानि प्राणादिनामानि ; तान्यपोह्य अप्रसिद्धैर्बृहत्त्वादिनामभिः संबोधनमयुक्तम् , लौकिकन्यायापोहात् ; तस्मात् भोक्तुरेव सतः प्राणस्याप्रतिपत्तिरिति चेत्— न देवताप्रत्याख्यानार्थत्वात् ; केवलसंबोधनमात्राप्रतिपत्त्यैव असुप्तस्य आध्यात्मिकस्य प्राणस्याभोक्तृत्वे सिद्धे, यत् चन्द्रदेवताविषयैर्नामभिः संबोधनम् , तत् चन्द्रदेवता प्राणः अस्मिञ्छरीरे भोक्तेति गार्ग्यस्य विशेषप्रतिपत्तिनिराकरणार्थम् ; न हि तत् लौकिकनाम्ना संबोधने शक्यं कर्तुम् । प्राणप्रत्याख्यानेनैव प्राणग्रस्तत्वात्करणान्तराणां प्रवृत्त्यनुपपत्तेः भोक्तृत्वाशङ्कानुपपत्तिः । देवतान्तराभावाच्च ; ननु अतिष्ठा इत्याद्यात्मन्वीत्यन्तेन ग्रन्थेन गुणवद्देवताभेदस्य दर्शितत्वादिति चेत् , न, तस्य प्राण एव एकत्वाभ्युपगमात् सर्वश्रुतिषु अरनाभिनिदर्शनेन, 'सत्येन च्छन्नः' 'प्राणो वा अमृतम्' इति च प्राणबाह्यस्य अन्यस्य अनभ्युपगमात् भोक्तुः । 'एष उ ह्येव सर्वे देवाः, कतम एको देव इति, प्राणः' इति च सर्वदेवानां प्राण एव एकत्वोपपादनाच्च । तथा करणभेदेष्वनाशङ्का, देहभेदेष्विव स्मृतिज्ञानेच्छादिप्रतिसंधानानुपपत्तेः ; न हि अन्यदृष्टम् अन्यः स्मरति जानाति इच्छति प्रतिसंदधाति

वा; तस्मात् न करणभेदविषया *भोक्तृत्वाशङ्का विज्ञान-मात्रविषया वा कदाचिदप्युपपद्यते। ननु संघात एवास्तु भोक्ता, किं व्यतिरिक्तकल्पनयेति— न, आपेषणे विशेषदर्शनात्; यदि हि प्राणशरीरसंघातमात्रो भोक्ता स्यात् संघातमात्राविशेषात् सदा आपिष्टस्य अनापिष्टस्य च प्रतिबोधे विशेषो न स्यात्; संघातव्यतिरिक्ते तु पुनर्भोक्तरि संघातसंबन्धविशेषानेकत्वात् पेषणापेषणकृतवेदनायाः सुखदुःखमोहमध्यमाधमोत्तमकर्मफलभेदोपपत्तेश्च विशेषो युक्तः; न तु संघातमात्रे संबन्धकर्मफलभेदानुपपत्तेः विशेषो युक्तः; तथा शब्दादिपटुमान्द्यादिकृतश्च। अस्ति चायं विशेषः—यस्मात् स्पर्शमात्रेण अप्रतिबुध्यमानं पुरुषं सुप्तं पाणिना आपेषम् आपिष्य आपिष्य बोधयांचकार अजातशत्रुः। तस्मात् यः आपेषणेन प्रतिबुबुधे— ज्वलन्निव स्फुरन्निव कुतश्चिदागत इव पिण्डं च पूर्वविपरीतं बोधचेष्टाकारविशेषादिमत्त्वेन आपादयन्, सोऽन्योऽस्ति गार्ग्याभिमतब्रह्मभ्यो व्यतिरिक्त इति सिद्धम्। संहतत्वाच्च पारार्थ्योपपत्तिः प्राणस्य; गृहस्य स्तम्भादिवत् शरीरस्य अन्तरुपष्टम्भकः प्राणः शरीरादिभिः संहत इत्यवोचाम— अरनेमिवच्च, नाभिस्थानीय एतस्मिन्सर्वमिति च; तस्मात् गृहादिवत् स्वावयवसमुदाय-

जातीयव्यतिरिक्तार्थं संहन्यत इत्येवम् अवगच्छाम। स्तम्भकुड्यतृणकाष्ठादिगृहावयवानां स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादि-तद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं दृष्ट्वा, मन्यामहे, तत्संघातस्य च—तथा, प्राणाद्यवयवानां तत्संघातस्य च स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादि-तद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं भवितुमर्हतीति। देवताचेतनावत्त्वे समत्वाद्गुणभावानुपगम इति चेत्— प्राणस्य विशिष्टैर्नामभिरामन्त्रणदर्शनात् चेतनावत्त्वमभ्युपगतम्; चेतनावत्त्वे च पारार्थ्योपगमः समत्वादनुपपन्न इति चेत्— न निरुपाधिकस्य केवलस्य विजिज्ञापयिषितत्वात् क्रियाकारकफलात्मकता हि आत्मनो नामरूपोपाधिजनिता अविद्याध्यारोपिता; तन्निमित्तो लोकस्य क्रियाकारकफलाभिमानलक्षणः संसारः; स निरूपाधिकात्मस्वरूपविद्यया निवर्तयितव्य इति तत्स्वरूपविजिज्ञापयिषया उपनिषदारम्भः—'ब्रह्म ते ब्रवाणि' 'नैतावता विदितं भवति' इति च उपक्रम्य 'एतावदरे खल्वमृतत्वम्' इति च उपसंहारात्; न च अतोऽन्यत् अन्तराले विवक्षितम् उक्तं वा अस्ति; तस्मादनवसरः समत्वाद्गुणभावानुपगम इति चोद्यस्य। विशेषवतो हि सोपाधि-

कस्य संव्यवहारार्थो गुणगुणिभावः, न विपरीतस्य; निरुपाख्यो हि विजिज्ञापयिषितः सर्वस्यामुपनिषदि, 'स एष नेति नेति' इत्युपसंहारात्। तस्मात् आदित्यादिब्रह्मभ्य एतेभ्योऽविज्ञानमयेभ्यो विलक्षणः अन्योऽस्ति विज्ञानमय इत्येतत्सिद्धम् ॥

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥**

स एवम् अजातशत्रुः व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य गार्ग्यमुवाच— यत्र यस्मिन्काले एषः विज्ञानमयः पुरुषः एतत् स्वपनं सुप्तः अभूत् प्राक् पाणिपेषप्रतिबोधात्; विज्ञानम् विज्ञायतेऽनेनेत्यन्तःकरणं बुद्धिः उच्यते, तन्मयः तत्प्रायः विज्ञानमयः; किं पुनस्तत्प्रायत्वम्? तस्मिन्नुपलभ्यत्वम्, तेन चोपलभ्यत्वम्, उपलब्धृत्वं च; कथं पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैव अवगम्यते? 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः' इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात् परविज्ञानविकारत्वस्याप्रसिद्धत्वात् 'य एष विज्ञानमयः' इति च प्रसिद्धवदनुवादात् अवयवोपमार्थ-

योश्च अत्रासंभवात् पारिशेष्यात् प्रायार्थतैव; तस्मात् संकल्पविकल्पाद्यात्मकमन्तःकरणं तन्मय इत्येतत्; पुरुषः, पुरि शयनात्। क्वैष तदा अभूदिति प्रश्नः स्वभावविजिज्ञापयिषया —प्राक् प्रतिबोधात् क्रियाकारकफलविपरीतस्वभाव आत्मेति कार्याभावेन दिदर्शयिषितम्; न हि प्राक्प्रतिबोधात्कर्मादिकार्यं सुखादि किंचन गृह्यते; तस्मात् अकर्मप्रयुक्तत्वात् तथास्वाभाव्यमेव आत्मनोऽवगम्यते—यस्मिन्स्वाभाव्येऽभूत्, यतश्च स्वाभाव्यात्प्रच्युतः संसारी स्वभावविलक्षण इति— एतद्विवक्षया पृच्छति गार्ग्यं प्रतिभानरहितं बुद्धिव्युत्पादनाय। क्वैष तदाभूत्, कुत एतदागात्— इत्येतदुभयं गार्ग्येणैव प्रष्टव्यमासीत्; तथापि गार्ग्येण न पृष्टमिति नोदास्तेऽजातशत्रुः; बोधयितव्य एवेति प्रवर्तते, ज्ञापयिष्याम्येवेति प्रतिज्ञातत्वात्। एवमसौ व्युत्पाद्यमानोऽपि गार्ग्यः—यत्रैष आत्माभूत् प्राक्प्रतिबोधात्, यतश्चैतदागमनमागात्— तदुभयं न व्युत्पेदे वक्तुं वा प्रष्टुं वा—गार्ग्यो ह न मेने न ज्ञातवान् ॥

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा**

**गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतꣳ श्रोत्रं गृहीतं मनः ॥**

स होवाच अजातशत्रुः विवक्षितार्थसमर्पणाय । यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः— क्वैष तदाभूत्कुत एतदागादिति यदपृच्छाम, तत् शृणु उच्यमानम्— यत्रैष एतत्सुप्तोऽभूत्, तत् तदा तस्मिन्काले एषां वागादीनां प्राणानाम्, विज्ञानेन अन्तःकरणगताभिव्यक्तिविशेषविज्ञानेन उपाधिस्वभावजनितेन, आदाय विज्ञानम् वागादीनां स्वस्वविषयगतसामर्थ्यं गृहीत्वा, य एषः अन्तः मध्ये हृदये हृदयस्थं आकाशः— य आकाशशब्देन पर एव स्व आत्मोच्यते— तस्मिन् स्वे आत्मन्याकाशे शेते स्वाभाविकेऽसांसारिके; न केवल आकाश एव, श्रुत्यन्तरसामर्थ्यात्— 'सता सोम्य तदा संपन्नो भवति' इति; लिङ्गोपाधिसंबन्धकृतं विशेषात्मस्वरूपमुत्सृज्य अविशेषे स्वाभाविके आत्मन्येव केवले वर्तत इत्यभिप्रायः । यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदा असौ स्वात्मनि वर्तत इति कथमवगम्यते ? नामप्रसिद्धया; कासौ नामप्रसिद्धिरित्याह— तानि वागादेर्विज्ञानानि यदा यस्मिन्काले गृह्णा-

ति आदत्ते, अथ तदा ह एतत्पुरुषः स्वपितिनाम एतन्नाम अस्य पुरुषस्य तदा प्रसिद्धं भवति; गौणमेवास्य नाम भवति; स्वमेव आत्मानम् अपीति अपिगच्छतीति स्वपितीत्युच्यते। सत्यं स्वपितीतिनामप्रसिद्ध्या आत्मनः संसारधर्मविलक्षणं रूपमवगम्यते, न त्वत्र युक्तिरस्तीत्याशङ्क्याह— तत् तत्र स्वापकाले गृहीत एव प्राणो भवति; प्राण इति घ्राणेन्द्रियम्, वागादिप्रकरणात्; वागादिसंबन्धे हि सति तदुपाधित्वादस्य संसारधर्मित्वं लक्ष्यते; वागादयश्च उपसंहृता एव तदा तेन; कथम्? गृहीता वाक्, गृहीतं चक्षुः, गृहीतं श्रोत्रम्, गृहीतं मनः; तस्मात् उपसंहृतेषु वागादिषु क्रियाकारकफलात्मताभावात् स्वात्मस्थ एव आत्मा भवतीत्यवगम्यते ॥

**स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥**

ननु दर्शनलक्षणायां स्वप्नावस्थायां कार्यकरणवियोगेऽपि संसारधर्मित्वमस्य दृश्यते— यथा चै जागरिते सुखी दुःखी बन्धुवियुक्तः शोचति मुह्यते च; तस्मात् शोकमोहधर्मवानेवायम्; नास्य शोकमोहादयः सुखदुःखादयश्च कार्यकरणसंयोगजनितभ्रान्त्या अध्यारोपिता इति। न, मृषात्वात्— सः प्रकृत आत्मा यत्र यस्मिन्काले दर्शनलक्षणया स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते, तदा ते ह अस्य लोकाः कर्मफलानि— के ते? तत् तत्र उत अपि महाराज इव भवति; सोऽयं महाराजत्वमिव अस्य लोकः, न महाराजत्वमेव जागरित इव; तथा महाब्राह्मण इव, उत अपि, उच्चावचम्—उच्चं च देवत्वादि, अवचं च तिर्यक्त्वादि, उच्चमिव अवचमिव च— निगच्छति मृषैव महाराजत्वादयोऽस्य लोकाः, इव-शब्दप्रयोगात्, व्यभिचारदर्शनाच्च; तस्मात् न बन्धुवियोगादिजनितशोकमोहादिभिः स्वप्ने संबध्यत एव॥

ननु च यथा जागरिते जाग्रत्कालाव्यभिचारिणो लोकाः, एवं स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोकाः स्वप्नकालभाविनः स्वप्नकालाव्यभिचारिण आत्मभूता एव, न तु अविद्याध्यारोपिता इति— ननु च जाग्रत्कार्यकरणात्मत्वं देवता-

त्मत्वं च अविद्याध्यारोपितं न परमार्थत इति व्यतिरिक्त-विज्ञानमयात्मप्रदर्शनेन प्रदर्शितम्; तत् कथं दृष्टान्तत्वेन स्वप्नलोकस्य मृत इव उज्जीविष्यन् प्रादुर्भविष्यति— सत्यम्, विज्ञानमये व्यतिरिक्ते कार्यकरणदेवतात्मत्वप्रदर्शनम् अविद्याध्यारोपितम्— शुक्तिकायामिव रजतत्वदर्शनम्— इत्येतत्सिध्यति व्यतिरिक्तात्मास्तित्वप्रदर्शनन्यायेनैव, न तु तद्विशुद्धिपरतयैव न्याय उक्तः इति— असन्नपि दृष्टान्तः जाग्रत्कार्यकरणदेवतात्मत्वदर्शनलक्षणः पुनरुद्भाव्यते; सर्वो हि न्यायः किंचिद्विशेषमपेक्षमाणः अपुनरुक्ती भवति। न तावत्स्वप्नेऽनुभूतमहाराजत्वादयो लोका आत्मभूताः, आत्मनोऽन्यस्य जाग्रत्प्रतिबिम्बभूतस्य लोकस्य दर्शनात्; महाराज एव तावत् व्यस्तसुप्तासु प्रकृतिषु पर्यङ्के शयानः स्वप्नान्पश्यन् उपसंहृतकरणः पुनरुपगतप्रकृतिं महाराजमिव आत्मानं जागरित इव पश्यति यात्रागतं भुञ्जानमिव च भोगान्; न च तस्य महाराजस्य पर्यङ्के शयानात् द्वितीयः अन्यः प्रकृत्युपेतो विषये पर्यटन्नहनि लोके प्रसिद्धोऽस्ति, यमसौ सुप्तः पश्यति; न च उपसंहृतकरणस्य रूपादिमतो दर्शनमुपपद्यते; न च देहे देहान्तरस्य तत्तुल्यस्य संभवोऽस्ति; देहस्थस्यैव हि स्वप्नदर्शनम्।

ननु पर्यङ्के शयानः पथि प्रवृत्तमात्मानं पश्यति—न बहिः स्वप्नान्पश्यतीत्येतदाह— सः महाराजः, जानपदान् जनपदे भवान् राजोपकरणभूतान् भृत्यानन्यांश्च, गृहीत्वा उपादाय, स्वे आत्मीय एव जयादिनोपार्जिते जनपदे, यथाकामं यो यः कामोऽस्य यथाकामम् इच्छातो यथा परिवर्तेतेत्यर्थः; एवमेव एष विज्ञानमयः, एतदिति क्रियाविशेषणम्, प्राणान्गृहीत्वा जागरितस्थानेभ्य उपसंहृत्य, स्वे शरीरे स्व एव देहे न बहिः, यथाकामं परिवर्तते—कामकर्मभ्यामुद्भासिताः पूर्वानुभूतवस्तुसदृशीर्वासना अनुभवतीत्यर्थः। तस्मात् स्वप्ने मृषाध्यारोपिता एव आत्मभूतत्वेन लोका अविद्यमाना एव सन्तः; तथा जागरितेऽपि—इति प्रत्येतव्यम्। तस्मात् विशुद्धः अक्रियाकारकफलात्मको विज्ञानमय इत्येतत्सिद्धम्। यस्मात् दृश्यन्ते द्रष्टुर्विषयभूताः क्रियाकारकफलात्मकाः कार्यकरणलक्षणा लोकाः, तथा स्वप्नेऽपि, तस्मात् अन्योऽसौ दृश्येभ्यः स्वप्नजागरितलोकेभ्यो द्रष्टा विज्ञानमयो विशुद्धः॥

दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वादतद्धर्मतेति विशुद्धता अवगता आत्मनः; तत्र यथाकामं परिवर्तत इति कामवशात्परिवर्तनमुक्तम्; द्रष्टुर्दृश्यसंबन्धश्च अस्य स्वाभाविक इत्यशु-

द्धता शङ्क्यते; अतस्तद्विशुद्ध्यर्थमाह—

**अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वातिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ १९ ॥**

अथ यदा सुषुप्तो भवति— यदा स्वप्न्यया चरति, तदाप्ययं विशुद्ध एव; अथ पुनः यदा हित्वा दर्शनवृत्तिं स्वप्नं यदा यस्मिन्काले सुषुप्तः सुष्ठु सुप्तः संप्रसादं स्वाभाव्यं गतः भवति— सलिलमिवान्यसंबन्धकालुष्यं हित्वा स्वाभाव्येन प्रसीदति । कदा सुषुप्तो भवति? यदा यस्मिन्काले, न कस्यचन न किंचनेत्यर्थः, वेद विजानाति; कस्यचन वा शब्दादेः संबन्धिवस्त्वन्तरं किंचन न वेद— इत्यध्याहार्यम्; पूर्वं तु न्याय्यम्, सुप्ते तु विशेषविज्ञानाभावस्य विवक्षितत्वात् । एवं तावद्विशेषविज्ञानाभावे सुषुप्तो भवतीत्युक्तम्; केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते— हिता नाम

हिता इत्येवंनाम्न्यो नाड्यः सिराः देहस्यान्नरसविपरिणाम-भूताः, ताश्च, द्वासप्ततिः सहस्राणि—द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि— ता द्वासप्ततिः सहस्राणि, हृदयात्—हृदयं नाम मांसपिण्डः— तस्मान्मांसपिण्डात्पुण्डरीकाकारात्, पुरीततं हृदयपरिवेष्टनमाचक्षते— तदुपलक्षितं शरीरमिह पुरीतच्छब्देनाभिप्रेतम्— पुरीततमभिप्रतिष्ठन्त इति—शरीरं कृत्स्नं व्याप्नुवत्यः अश्वत्थपर्णराजय इव बहिर्मुख्यः प्रवृत्ता इत्यर्थः। तत्र बुद्धेरन्तःकरणस्य हृदयं स्थानम्; तत्रस्थबुद्धितन्त्राणि च इतराणि बाह्यानि करणानि; तेन बुद्धिः कर्मवशात् श्रोत्रादीनि ताभिर्नाडीभिः मत्स्यजालवत् कर्णशष्कुल्यादिस्थानेभ्यः प्रसारयति; प्रसार्य च अधितिष्ठति जागरितकाले; तां विज्ञानमयोऽभिव्यक्तस्वात्मचैतन्यावभासतया व्याप्नोति; संकोचनकाले च तस्याः अनुसंकुचति; सोऽस्य विज्ञानमयस्य स्वापः; जाग्रद्विकासानुभवो भोगः; बुद्ध्युपाधिस्वभावानुविधायी हि सः, चन्द्रादिप्रतिबिम्ब इव जलाद्यनुविधायी। तस्मात् तस्या बुद्धेः जाग्रद्विषयायाः ताभिः नाडीभिः प्रत्यवसर्पणमनु प्रत्यवसृप्य पुरीतति शरीरे शेते तिष्ठति— तप्तमिव लोहपिण्डम् अविशेषेण संव्याप्य अग्निवत् शरीरं संव्याप्य वर्तत इत्यर्थः। स्वाभाविक एव स्वा-

त्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात् पुरीतति शेत इत्युच्यते । न हि सुषुप्तिकाले शरीरसंबन्धोऽस्ति । ‘ तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य ’ इति हि वक्ष्यति । सर्वसंसारदुःखवियुक्तेयमवस्थेत्यत्र दृष्टान्तः— स यथा कुमारो वा अत्यन्तबालो वा, महाराजो वा अत्यन्तवश्यप्रकृतिः यथोक्तकृत्, महाब्राह्मणो वा अत्यन्तपरिपक्वविद्याविनयसंपन्नः, अतिघ्नीम्— अतिशयेन दुःखं हन्तीत्यतिघ्नी आनन्दस्य अवस्था सुखावस्था ताम् प्राप्य गत्वा, शयीत अवतिष्ठेत । एषां च कुमारादीनां स्वभावस्थानां सुखं निरतिशयं प्रसिद्धं लोके; विक्रियमाणानां हि तेषां दुःखं न स्वभावतः; तेन तेषां स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते, प्रसिद्धत्वात्; न तेषां स्वाप एवाभिप्रेतः, स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितत्वात् विशेषाभावाच्च; विशेषे हि सति दृष्टान्तदार्ष्टान्तिकभेदः स्यात्; तस्मान्न तेषां स्वापो दृष्टान्तः— एवमेव, यथा अयं दृष्टान्तः, एष विज्ञानमय एतत् शयनं शेते इति— एतच्छन्दः क्रियाविशेषणार्थः— एवमयं स्वाभाविके स्व आत्मनि सर्वसंसारधर्मातीतो वर्तते स्वापकाल इति ॥

कैष तदाभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तम्; अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिः असंसारि-

त्वं च उक्तम्; कुत एतदागादित्यस्य प्रश्नस्यापाकरणार्थः आरम्भः । ननु यस्मिन्ग्रामे नगरे वा यो भवति, सोऽन्यत्र गच्छन् तत एव ग्रामान्नगराद्वा गच्छति, नान्यतः; तथा सति क्वैष तदाभूदित्येतावानेवास्तु प्रश्नः; यत्राभून् तत एव आगमनं प्रसिद्धं स्यात् नान्यत इति कुत एतदागादिति प्रश्नो निरर्थक एव— किं श्रुतिरुपालभ्यते भवता? न; किं तर्हि द्वितीयस्य प्रश्नस्य अर्थान्तरं श्रोतुमिच्छामि, अत आनर्थक्यं चोदयामि । एवं तर्हि कुत इत्यपादानार्थता न गृह्यते; अपादानार्थत्वे हि पुनरुक्तता, नान्यार्थत्वे; अस्तु तर्हि निमित्तार्थः प्रश्नः— कुत एतदागात्— किंनिमित्तमिहागमनमिति । न निमित्तार्थतापि, प्रतिवचनवैरूप्यात्; आत्मनश्च सर्वस्य जगतः अग्निविस्फुलिङ्गादिवदुत्पत्तिः प्रतिवचने श्रूयते; न हि विस्फुलिङ्गानां विद्रवणे अग्निर्निमित्तम्, अपादानमेव तु सः; तथा परमात्मा विज्ञानमयस्य आत्मनोऽपादानत्वेन श्रूयते— 'अस्मादात्मनः' इत्येतस्मिन्वाक्ये; तस्मात् प्रतिवचनवैलोम्यात् कुत इति प्रश्नस्य निमित्तार्थता न शक्यते वर्णयितुम् । नन्वपादानपक्षेऽपि पुनरुक्ततादोषः स्थित एव ॥

नैष दोषः, प्रश्नाभ्यामासनि क्रियाकारकफलात्मतापो-

हस्य विवक्षितत्वात्। इह हि विद्याविद्याविषयावुपन्यस्तौ — 'आत्मेत्येवोपासीत' 'आत्मानमेवावेत्' 'आत्मानमेव लोकमुपासीत' इति विद्याविषयः, तथा अविद्याविषयश्च पाङ्क्तं कर्म तत्फलं चान्नत्रयं नामरूपकर्मात्मकमिति। तत्र अविद्याविषये वक्तव्यं सर्वमुक्तम्। विद्याविषयस्तु आत्मा केवल उपन्यस्तः न निर्णीतः; तन्निर्णयाय च 'ब्रह्म ते ब्रवाणि' इति प्रक्रान्तम्, 'ज्ञपयिष्यामि' इति च। अतः तद्ब्रह्म विद्याविषयभूतं ज्ञापयितव्यं याथात्म्यतः। तस्य च याथात्म्यं क्रियाकारकफलभेदशून्यम् अत्यन्तविशुद्धमद्वैतम्— इत्येतद्विवक्षितम्। अतस्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या— क्वैष तदाभूत्कुत एतदागादिति। तत्र— यत्र भवति तत् अधिकरणम्, यद्भवति तदधिकर्तव्यम्— तयोश्च अधिकरणाधिकर्तव्ययोर्भेदः दृष्टो लोके। तथा— यत आगच्छति तत् अपादानम्— य आगच्छति स कर्ता, तस्मादन्यो दृष्टः। तथा आत्मा क्वाप्यभूदन्यस्मिन्नन्यः, कुतश्चिदागादन्यस्मादन्यः— केनचिद्भिन्नेन साधनान्तरेण— इत्येवं लोकवत्प्राप्ता बुद्धिः; सा प्रतिवचनेन निवर्तयितव्येति। नायमात्मा अन्यः अन्यत्र अभूत्, अन्यो वा अन्यस्मादागतः, साधनान्तरं वा आत्मन्यस्ति; किं

तर्हि स्वात्मन्येवाभूत्— ‘स्वमात्मानमपीतो भवति’ ‘सता सोम्य तदा संपन्नो भवति’ ‘प्राज्ञेनात्मना संपरिष्वक्तः’ ‘पर आत्मनि संप्रतिष्ठते’ इत्यादिश्रुतिभ्यः; अत एव नान्यः अन्यस्मादागच्छति; तत् श्रुत्यैव प्रदर्श्यते ‘अस्मादात्मनः’ इति, आत्मव्यतिरेकेण वस्त्वन्तराभावात्। नन्वस्ति प्राणाद्यात्मव्यतिरिक्तं वस्त्वन्तरम्—न, प्राणादेस्तत एव निष्पत्तेः ॥

तत्कथमिति उच्यते—

**स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥**

इति द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥

तत्र दृष्टान्तः— स यथा लोके ऊर्णनाभिः लूताकीट एक एव प्रसिद्धः सन् स्वात्माप्रविभक्तेन तन्तुना उच्चरेत्

उद्गच्छेत्; न चास्ति तस्योद्गमने स्वतोऽतिरिक्तं कारकान्तरम्— यथा च एकरूपादेकस्मादग्नेः क्षुद्रा अल्पाः विस्फुलिङ्गाः त्रुटयः अग्न्यवयवाः व्युच्चरन्ति विविधं नाना वा उच्चरन्ति— यथा इमौ दृष्टान्तौ कारकभेदाभावेऽपि प्रवृत्तिं दर्शयतः, प्राक्प्रवृत्तेश्च स्वभावत एकत्वम्——एवमेव अस्मात् आत्मनो विज्ञानमयस्य प्राक्प्रतिबोधात् यत्स्वरूपं तस्मादित्यर्थः, सर्वे प्राणा वागादयः, सर्वे लोका भूरादयः सर्वाणि कर्मफलानि, सर्वे देवाः प्राणलोकाधिष्ठातारः अग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि, सर्व एत आत्मान इत्यस्मिन्पाठे उपाधिसंपर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थः, व्युच्चरन्ति । यस्मादात्मनः स्थावरजङ्गमं जगदिदम् अग्निविस्फुलिङ्गवत् व्युच्चरत्यनिशम्, यस्मिन्नेव च प्रलीयते जलबुद्बुदवत्, यदात्मकं च वर्तते स्थितिकाले, तस्य अस्य आत्मनो ब्रह्मणः, उपनिषत्—उप समीपं निगमयतीति अभिधायकः शब्द उपनिषदित्युच्यते— शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषोऽवसीयते उपनिगमयितृत्वं नाम; कासावुपनिषदित्याह——सत्यस्य सत्यमिति; सा हि सर्वत्र चोपनिषत् अलौकिकार्थत्वाद्दुर्विज्ञेयार्थेति तदर्थमाचष्टे—— प्राणा वै सत्यं ते-

षामेष सत्यमिति । एतस्यैव वाक्यस्य व्याख्यानाय उत्तरं ब्राह्मणद्वयं भविष्यति ॥

भवतु तावत् उपनिषद्व्याख्यानाय उत्तरं ब्राह्मणद्वयम्; तस्योपनिषदित्युक्तम्; तत्र न जानीमः—किं प्रकृतस्य आत्मनो विज्ञानमयस्य पाणिपेषणोत्थितस्य संसारिणः शब्दादिभुज इयमुपनिषत्, आहोस्वित् संसारिणः कस्यचित्; किंचातः? यदि संसारिणः तदा संसार्येव विज्ञेयः, तद्विज्ञानादेव सर्वप्राप्तिः, स एव ब्रह्मशब्दवाच्यः तद्विद्यैव ब्रह्मविद्येति; अथ असंसारिणः, तदा तद्विषया विद्या ब्रह्मविद्या, तस्माच्च ब्रह्मविज्ञानात्सर्वभावापत्तिः; सर्वमेतच्छास्त्रप्रामाण्याद्भविष्यति; किंतु अस्मिन्पक्षे 'आत्मेत्येवोपासीत' 'आत्मानमेवावेदहं ब्रह्मास्मि—' इति परब्रह्मैकत्वप्रतिपादिकाः श्रुतयः कुप्येरन्, संसारिणश्च अन्यस्याभावे उपदेशानर्थक्यात्। यत एवं पण्डितानामप्येतन्महामोहस्थानम् अनुक्तप्रतिवचनप्रश्नविषयम्, अतो यथाशक्ति ब्रह्मविद्याप्रतिपादकवाक्येषु ब्रह्म विजिज्ञासूनां बुद्धिव्युत्पादनाय विचारयिष्यामः ॥

न तावत् असंसारी परः— पाणिपेषणप्रतिबोधितात् शब्दादिभुजः अवस्थान्तरविशिष्टात् उत्पत्तिश्रुतेः; न प्रशासिता अशनायादिवर्जितः परो विद्यते; कस्मात्? यस्मात्

'ब्रह्म ज्ञपयिष्यामि' इति प्रतिज्ञाय, सुप्तं पुरुषं पाणिपेषं बोधयित्वा, तं शब्दादिभोक्तृत्वविशिष्टं दर्शयित्वा, तस्यैव स्वप्नद्वारेण सुषुप्त्याख्यमवस्थान्तरमुन्नीय, तस्मादेव आत्मनः सुषुप्त्यवस्थाविशिष्टात् अग्निविस्फुलिङ्गोर्णनाभिदृष्टान्ताभ्याम् उत्पत्तिं दर्शयति श्रुतिः—'एवमेवास्मात्' इत्यादिना; न चान्यो जगदुत्पत्तिकारणमन्तराले श्रुतोऽस्ति; विज्ञानमयस्यैव हि प्रकरणम् । समानप्रकरणे च श्रुत्यन्तरे कौषीतकिनाम् आदित्यादिपुरुषान्प्रस्तुत्य 'स होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः' इति प्रबुद्धस्यैव विज्ञानमयस्य वेदितव्यतां दर्शयति, नार्थान्तरस्य । तथा च 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्युक्त्वा, य एव आत्मा प्रियः प्रसिद्धः तस्यैव द्रष्टव्यश्रोतव्यमन्तव्यनिदिध्यासितव्यतां दर्शयति । तथा च विद्योपन्यासकाले 'आत्मेत्येवोपासीत' 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्' 'तदात्मानमेवावेदहं ब्रह्मास्मि—' इत्येवमादिवाक्यानामानुलोम्यं स्यात् पराभावे । वक्ष्यति च—'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः' इति । सर्ववेदान्तेषु च प्रत्यगात्मवेद्यतैव प्रदर्श्यते— अहमिति, न बहिर्वेद्यता शब्दादिवत् प्रदर्श्यते असौ ब्रह्मेति । तथा कौ-

षीतकिनामेव 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना वागादिकरणैर्व्यावृत्तस्य कर्तुरेव वेदितव्यतां दर्शयति । अवस्थान्तरविशिष्टोऽसंसारीति चेत्— अथापि स्यात्, यो जागरिते शब्दादिभुक् विज्ञानमयः, स एव सुषुप्ताख्यमवस्थान्तरं गतः असंसारी परः प्रशासिता अन्यः स्यादिति चेत्— न, अदृष्टत्वात् । न ह्येवंधर्मकः पदार्थो दृष्टः अन्यत्र वैनाशिकसिद्धान्तात् । न हि लोके गौः तिष्ठन् गच्छन्वा गौर्भवति, शयानस्तु अश्वादिजात्यन्तरमिति । न्यायाच्च— यद्धर्मको यः पदार्थः प्रमाणेनावगतो भवति, स देशकालावस्थान्तरेष्वपि तद्धर्मक एव भवति; स चेत् तद्धर्मकत्वं व्यभिचरति, सर्वः प्रमाणव्यवहारो लुप्येत । तथा च न्यायविदः सांख्यमीमांसकादयः असंसारिणः अभावं युक्तिशतैः प्रतिपादयन्ति । संसारिणोऽपि जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानस्याभावात् अयुक्तमिति चेत्— यन्न महता प्रपञ्चेन स्थापितं भवता, शब्दादिभुक् संसार्येव अवस्थान्तरविशिष्टो जगत इह कर्तेति— तदसत्; यतो जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानशक्तिसाधनाभावः सर्वलोकप्रत्यक्षः संसारिणः; स कथम् अस्मदादिः संसारी मनसापि चिन्तयितुमशक्यं पृथिव्यादिविन्यासविशिष्टं जगत्

निर्मिनुयात् अतोऽयुक्तमिति चेत्— न, शास्त्रात्; शास्त्रं संसारिणः 'एवमेवास्मादात्मनः' इति जगदुत्पत्त्यादि दर्शयति; तस्मात् सर्वं श्रद्धेयमिति स्यादयम् एकः पक्षः ॥

'यः सर्वज्ञः सर्ववित्' 'योऽशनायापिपासे अत्येति' 'असङ्गो न हि सज्जते' 'एतस्य वा अक्षरस्य प्रशासने' 'यः सर्वेषु भूतेषु तिष्ठन्—अन्तर्याम्यमृतः' 'स यस्तान्पुरुषान्निरुह्यात्यक्रामत्' 'स वा एष महानज आत्मा' 'एष सेतुर्विधरणः' 'सर्वस्य वशी सर्वस्येशानः' 'य आत्मापहतपाप्मा विजरो विमृत्युः' 'तत्तेजोऽसृजत' 'आत्मा वा इदमेक एवाग्र आसीत्' 'न लिप्यते लोकदुःखेन बाह्यः' इत्यादिश्रुतिशतेभ्यः—स्मृतेभ्यश्च 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति—परोऽस्ति असंसारी श्रुतिस्मृतिन्यायेभ्यश्च; स च कारणं जगतः। ननु 'एवमेवास्मादात्मनः' इति संसारिण एवोत्पत्तिं दर्शयतीत्युक्तम्— न, 'य एषोऽन्तर्हृदय आकाशः' इति परस्य प्रकृतत्वात्, 'अस्मादात्मनः' इति युक्तः परस्यैव परामर्शः। 'क्वैष तदाभूत्' इत्यस्य प्रश्नस्य प्रतिवचनत्वेन आकाशशब्दवाच्यः पर आत्मा उक्तः 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति; 'सता सोम्य तदा संपन्नो भवति' 'अहरहर्गच्छन्त्य

एतं ब्रह्मलोकं न विन्दन्ति' 'प्राज्ञेनात्मना संपरिष्वक्तः' 'पर आत्मनि संप्रतिष्ठते' इत्यादिश्रुतिभ्य आकाशशब्दः परआत्मेति निश्चीयते; 'दहरोऽस्मिन्नन्तराकाशः' इति प्रस्तुत्य तस्मिन्नेव आत्मशब्दप्रयोगाच्च; प्रकृत एव पर आत्मा। तस्मात् युक्तम् 'एवमेवास्मादात्मनः' इति परमात्मन एव सृष्टिरिति; संसारिणः सृष्टिस्थितिसंहारज्ञानसामर्थ्याभावं च अवोचाम। अत्र च 'आत्मेत्येवोपासीत' 'आत्मानमेवावेदहं ब्रह्मास्मि—' इति ब्रह्मविद्या प्रस्तुता; ब्रह्मविषयं च ब्रह्मविज्ञानमिति; 'ब्रह्म ते ब्रवाणि' इति 'ब्रह्म ज्ञपयिष्यामि' इति प्रारब्धम्। तत्र इदानीम् असंसारि ब्रह्म जगतः कारणम् अशनायाद्यतीतं नित्यशुद्धबुद्धमुक्तस्वभावम्; तद्विपरीतश्च संसारी; तस्मात् अहं ब्रह्मास्मीति न गृह्णीयात्; परं हि देवमीशानं निकृष्टः संसार्यात्मत्वेन स्मरन् कथं न दोषभाक्स्यात्; तस्मात् न अहं ब्रह्मास्मीति युक्तम्। तस्मात्पुष्पोदकाञ्जलिस्तुतिनमस्कारबल्युपहारस्वाध्यायध्यानयोगादिभिः आरिराधयिषेत; आराधनेन विदित्वा सर्वेशितृ ब्रह्म भवति; न पुनरसंसारि ब्रह्म संसार्यात्मत्वेन चिन्तयेत्—अग्निमिव शीतत्वेन आकाशमिव मूर्तिमत्त्वेन। ब्रह्मात्मत्वप्रतिपादकमपि शास्त्रम् अर्थवादो भविष्यति। सर्वतर्कशास्त्र-

लोकन्यायैश्च एवमविरोधः स्यात् ॥

न, मन्त्रब्राह्मणवादेभ्यः तस्यैव प्रवेशश्रवणात्। 'पुरश्चक्रे' इति प्रकृत्य 'पुरः पुरुष आविशत्' इति, 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति सर्वशाखासु सहस्रशो मन्त्रवादाः सृष्टिकर्तुरेवासंसारिणः शरीरप्रवेशं दर्शयन्ति । तथा ब्राह्मणवादाः— तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' 'सेयं देवता– इमास्तिस्रो देवता अनेन जीवेन आत्मनानुप्रविश्य' 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इत्याद्याः । सर्वश्रुतिषु च ब्रह्मणि आत्मशब्दप्रयोगात् आत्मशब्दस्य च प्रत्यगात्माभिधायकत्वात् , 'एष सर्वभूतान्तरात्मा' इति च श्रुतेः परमात्मव्यतिरेकेण संसारिणोऽभावात्– 'एकमेवाद्वितीयम्' 'ब्रह्मैवेदम्' 'आत्मैवेदम्' इत्यादिश्रुतिभ्यः युक्तमेव अहं ब्रह्मास्मीत्यवधारयितुम् ॥

यदा एवं स्थितः शास्त्रार्थः, तदा परमात्मनः संसारित्वम् ; तथा च सति शास्त्रानर्थक्यम् , असंसारित्वे च उपदेशानर्थक्यं स्पष्टो दोषः प्राप्तः ; यदि तावत् परमात्मा सर्वभूतान्तरात्मा सर्वशरीरसंपर्कजनितदुःखानि अनुभवती-

ति, स्पष्टं परस्य संसारित्वं प्राप्तम्; तथा च परस्य असंसारित्वप्रतिपादिकाः श्रुतयः कुप्येरन्, स्मृतयश्च, सर्वे च न्यायाः; अथ कथंचित् प्राणशरीरसंबन्धजैर्दुःखैर्न संबध्यत इति शक्यं प्रतिपादयितुम्, परमात्मनः साध्यपरिहार्याभावात् उपदेशानर्थक्यदोषो न शक्यते निवारयितुम्। अत्र केचित्परिहारमाचक्षते— परमात्मा न साक्षाद्भूतेष्वनुप्रविष्टः स्वेन रूपेण; किं तर्हि विकारभावमापन्नो विज्ञानात्मत्वं प्रतिपेदे; स च विज्ञानात्मा परस्मात् अन्यः अनन्यश्च; येनान्यः, तेन संसारित्वसंबन्धी, येन अनन्यः तेन अहं ब्रह्मेत्यवधारणार्हः; एवं सर्वमविरुद्धं भविष्यतीति ॥

तत्र विज्ञानात्मनो विकारपक्ष एता गतयः— पृथिवीद्रव्यवत् अनेकद्रव्यसमाहारस्य सावयवस्य परमात्मनः, एकदेशविपरिणामो विज्ञानात्मा घटादिवत्; पूर्वसंस्थानावस्थस्य वा परस्य एकदेशो विक्रियते केशोषरादिवत्, सर्व एव वा परः परिणमेत् क्षीरादिवत्। तत्र समानजातीयानेकद्रव्यसमूहस्य कश्चिद्द्रव्यविशेषो विज्ञानात्मत्वं प्रतिपद्यते यदा, तदा समानजातीयत्वात् एकत्वमुपचरितमेव न तु परमार्थतः; तथा च सति सिद्धान्तविरोधः। अथ नित्यायुतसिद्धावयवानुगतः अवयवी पर आत्मा, तस्य तद-

वस्थस्य एकदेशो विज्ञानात्मा संसारी— तदापि सर्वावयवानुगतत्वात् अवयविन एव अवयवगतो दोषो गुणो वेति, विज्ञानात्मनः संसारित्वदोषेण पर एव आत्मा संबध्यत इति, इयमप्यनिष्टा कल्पना । क्षीरवत् सर्वपरिणामपक्षे सर्वश्रुतिस्मृतिकोपः, स च अनिष्टः । 'निष्कलं निष्क्रियं शान्तम्' 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' 'आकाशवत्सर्वगतश्च नित्यः' 'स वा एष महानज आत्माजरोऽमरोऽमृतः' 'न जायते म्रियते वा कदाचित्' 'अव्यक्तोऽयम्' इत्यादिश्रुतिस्मृतिन्यायविरुद्धा एते सर्वे पक्षाः । अचलस्य परमात्मन एकदेशपक्षे विज्ञानात्मनः कर्मफलदेशसंसरणानुपपत्तिः, परस्य वा संसारित्वम्— इत्युक्तम् । परस्यैकदेशः अग्निविस्फुलिङ्गवत् स्फुटितः विज्ञानात्मा संसरतीति चेत्— तथापि परस्यावयवस्फुटनेन क्षतप्राप्तिः, तत्संसरणे च परमात्मनः प्रदेशान्तरावयवव्यूहे छिद्रताप्राप्तिः, अव्रणत्ववाक्यविरोधश्च; आत्मावयवभूतस्य विज्ञानात्मनः संसरणे परमात्मशून्यप्रदेशाभावात् अवयवान्तरनोदनव्यूहनाभ्यां हृदयशूलेनेव परमात्मनो दुःखित्वप्राप्तिः । अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेत्, न; श्रुतेर्ज्ञापकत्वात्— न शास्त्रं पदार्थानन्यथा कर्तुं प्रवृत्तम्, किं

तर्हि यथाभूतानाम् अज्ञातानां ज्ञापने; किंचातः? शृणु, अतो यद्भवति; यथाभूता मूर्तामूर्तादिपदार्थधर्मा लोके प्रसिद्धाः; तद्दृष्टान्तोपादानेन तदविरोध्येव वस्त्वन्तरं ज्ञापयितुं प्रवृत्तं शास्त्रं न लौकिकवस्तुविरोधज्ञापनाय लौकिकमेव दृष्टान्तमुपादत्ते; उपादीयमानोऽपि दृष्टान्तः अनर्थकः स्यात्, दार्ष्टान्तिकासंगतेः; न हि अग्निः शीतः आदित्यो न तपतीति वा दृष्टान्तशतेनापि प्रतिपादयितुं शक्यम्, प्रमाणान्तरेण अन्यथाधिगतत्वाद्वस्तुनः; न च प्रमाणं प्रमाणान्तरेण विरुध्यते; प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति; न च लौकिकपदपदार्थाश्रयणव्यतिरेकेण आगमेन शक्यमज्ञातं वस्त्वन्तरम् अवगमयितुम्; तस्मात् प्रसिद्धन्यायमनुसरता न शक्या परमात्मनः सावयवांशांशित्वकल्पना परमार्थतः प्रतिपादयितुम्। 'क्षुद्रा विस्फुलिङ्गाः' 'ममैवांशः' इति च श्रूयते स्मर्यते चेति चेत्, न, एकत्वप्रत्ययार्थपरत्वात्; अग्नेर्हि विस्फुलिङ्गः अग्निरेव इत्येकत्वप्रत्ययार्हो दृष्टो लोके; तथा च अंशः अंशिना एकत्वप्रत्ययार्हः; तत्रैवं सति विज्ञानात्मनः परमात्मविकारांशत्ववाचकाः शब्दाः परमात्मैकत्वप्रत्ययाधित्सवः। उपक्रमोपसंहाराभ्यां च— सर्वासु हि उपनिषत्सु पूर्वमे-

कत्वं प्रतिज्ञाय, दृष्टान्तैर्हेतुभिश्च परमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य, पुनरेकत्वमुपसंहरति ; तद्यथा इहैव तावत् ‘ इदं सर्वं यदयमात्मा ’ इति प्रतिज्ञाय, उत्पत्तिस्थितिलयहेतुदृष्टान्तैः विकारविकारित्वाद्येकत्वप्रत्ययहेतून् प्रतिपाद्य ‘ अनन्तरमबाह्यम् ’ ‘ अयमात्मा ब्रह्म ’ इत्युपसंहरिष्यति ; तस्मात् उपक्रमोपसंहाराभ्यामयमर्थो निश्चीयते— परमात्मैकत्वप्रत्ययद्रढिम्ने उत्पत्तिस्थितिलयप्रतिपादकानि वाक्यानीति; अन्यथा वाक्यभेदप्रसङ्गाच्च— सर्वोपनिषत्सु हि विज्ञानात्मनः परमात्मना एकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्वेषामुपनिषद्वादिनाम् ; तद्विध्येकवाक्ययोगे च संभवति उत्पत्त्यादिवाक्यानां वाक्यान्तरत्वकल्पनायां न प्रमाणमस्ति ; फलान्तरं च कल्पयितव्यं स्यात् ; तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वप्रतिपादनपराः ॥

अत्र च संप्रदायविद आख्यायिकां संप्रचक्षते—कश्चित्किल राजपुत्रः जातमात्र एव मातापितृभ्यामपविद्धः व्याधगृहे संवर्धितः ; सः अमुष्य वंश्यतामजानन् व्याधजातिप्रत्ययः व्याधजातिकर्माण्येवानुवर्तते, न राजास्मीति राजजातिकर्माण्यनुवर्तते ; यदा पुनः कश्चित्परमकारुणिकः राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन् अमुष्य पुत्रतां बो-

धयति—'न त्वं व्याधः, अमुष्य राज्ञः पुत्रः; कथंचिद्व्याधगृहमनुप्रविष्टः' इति—स एवं बोधितः त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीम् आत्मनः पदवीमनुवर्तते— राजाहमस्मीति। तथा किल अयं परस्मात् अग्निविस्फुलिङ्गादिवत् तज्जातिरेव विभक्तः इह देहेन्द्रियादिगहने प्रविष्टः असंसारी सन् देहेन्द्रियादिसंसारधर्ममनुवर्तते— देहेन्द्रियसंघातोऽस्मि कृशः स्थूलः सुखी दुःखीति—परमात्मतामजानन्नात्मनः; न त्वम् एतदात्मकः परमेव ब्रह्मासि असंसारी— इति प्रतिबोधित आचार्येण, हित्वा एषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते। अत्र राजपुत्रस्य राजप्रत्ययवत् ब्रह्मप्रत्ययो दृढो भवति— विस्फुलिङ्गवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते, विस्फुलिङ्गस्य प्रागग्नेर्भ्रंशात् अग्न्येकत्वदर्शनात्। तस्मात् एकत्वप्रत्ययदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिङ्गदृष्टान्ताः, न उत्पत्त्यादिभेदप्रतिपादनपराः। सैन्धवघनवत् प्रज्ञस्यैकरसनैरन्तर्यावधारणात् 'एकधैवानुद्रष्टव्यम्' इति च— यदि च ब्रह्मणः चित्रपटवत् वृक्षसमुद्रादिवच्च उत्पत्त्याद्यनेकधर्मविचित्रता विजिग्राहयिषिता, एकरसं सैन्धवघनवदनन्तरमबाह्यम्—इति नोपसमहरिष्यत्, 'एकधैवानुद्रष्टव्यम्' इति च न प्रायो-

क्ष्यत— 'य इह नानेव पश्यति' इति निन्दावचनं च। तस्मात् एकरूपैकत्वप्रत्ययदार्ढ्यायैव सर्ववेदान्तेषु उत्पत्तिस्थितिलयादिकल्पना, न तत्प्रत्ययकरणाय ॥

न च निरवयवस्य परमात्मनः असंसारिणः संसार्येकदेशकल्पना न्याय्या, स्वतोऽदेशत्वात् परमात्मनः। अदेशस्य परस्य एकदेशसंसारित्वकल्पनायां पर एव संसारीति कल्पितं भवेत्। अथ परोपाधिकृत एकदेशः परस्य, घटकरकाद्याकाशवत्। न तदा तत्र विवेकिनां परमात्मैकदेशः पृथक्संव्यवहारभागिति बुद्धिरुत्पद्यते। अविवेकिनां विवेकिनां च उपचरिता बुद्धिर्दृष्टेति चेत्, न, अविवेकिनां मिथ्याबुद्धित्वात्, विवेकिनां च संव्यवहारमात्रालम्बनार्थत्वात्—यथा कृष्णो रक्तश्च आकाश इति विवेकिनामपि कदाचित् कृष्णता रक्तता च आकाशस्य संव्यवहारमात्रालम्बनार्थत्वं प्रतिपद्यत इति, न परमार्थतः कृष्णो रक्तो वा आकाशो भवितुमर्हति। अतो न पण्डितैर्ब्रह्मस्वरूपप्रतिपत्तिविषये ब्रह्मणः अंशांश्येकदेशैकदेशिविकारविकारित्वकल्पना कार्या, सर्वकल्पनापनयनार्थसारपरत्वात् सर्वोपनिषदाम्। अतो हित्वा सर्वकल्पनाम् आकाशस्येव निर्विशेषता प्रतिपत्तव्या— 'आकाशवत्सर्वगतश्च नित्यः'

'न लिप्यते लोकदुःखेन बाह्यः' इत्यादिश्रुतिशतेभ्यः । न आत्मानं ब्रह्मविलक्षणं कल्पयेत्– उष्णात्मक इवाग्नौ शीतैकदेशम्, प्रकाशात्मके वा सवितरि तमएकदेशम्– सर्वकल्पनापनयनार्थसारपरत्वात् सर्वोपनिषदाम् । तस्मात् नामरूपोपाधिनिमित्ता एव आत्मनि असंसारधर्मिणि सर्वे व्यवहाराः— 'रूपं रूपं प्रतिरूपो बभूव' 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इत्येवमादिमन्त्रवर्णेभ्यः— न स्वत आत्मनः संसारित्वम्, अलक्तकाद्युपाधिसंयोगजनितरक्तस्फटिकादिबुद्धिवत् भ्रान्तमेव न परमार्थतः । 'ध्यायतीव लेलायतीव' 'न कर्मणा वर्धते नो कनीयान्' 'न कर्मणा लिप्यते पापकेन' 'समं सर्वेषु भूतेषु तिष्ठन्तम्' 'शुनि चैव श्वपाके च' इत्यादिश्रुतिस्मृतिन्यायेभ्यः परमात्मनोऽसंसारितैव । अत एकदेशो विकारः शक्तिर्वा विज्ञानात्मा अन्यो वेति विकल्पयितुं निरवयवत्वाभ्युपगमे विशेषतो न शक्यते । अंशादिश्रुतिस्मृतिवादाश्च एकत्वार्थाः, न तु भेदप्रतिपादकाः, विवक्षितार्थैकवाक्ययोगात्– इत्यवोचाम ॥

सर्वोपनिषदां परमात्मैकत्वज्ञापनपरत्वे अथ किमर्थं तत्प्रतिकूलोऽर्थः विज्ञानात्मभेदः परिकल्प्यत इति । कर्मकाण्ड-

प्रामाण्यविरोधपरिहारायेत्येके ; कर्मप्रतिपादकानि हि वाक्यानि अनेकक्रियाकारकफलभोक्तृकर्त्राश्रयाणि, विज्ञानात्मभेदाभावे हि असंसारिण एव परमात्मन एकत्वे, कथम् इष्टफलासु क्रियासु प्रवर्तयेयुः, अनिष्टफलाभ्यो वा क्रियाभ्यो निवर्तयेयुः ? कस्य वा बद्धस्य मोक्षाय उपनिषदारभ्येत ? अपि च परमात्मैकत्ववादिपक्षे कथं परमात्मैकत्वोपदेशः ? कथं वा तदुपदेशग्रहणफलम् ? बद्धस्य हि बन्धनाशाय उपदेशः ; तदभावे उपनिषच्छास्त्रं निर्विषयमेव । एवं तर्हि उपनिषद्वादिपक्षस्य कर्मकाण्डवादिपक्षेण चोद्यपरिहारयोः समानः पन्थाः— येन भेदाभावे कर्मकाण्डं निरालम्बनमात्मानं न लभते प्रामाण्यं प्रति, तथा उपनिषदपि । एवं तर्हि यस्य प्रामाण्ये स्वार्थविघातो नास्ति, तस्यैव कर्मकाण्डस्यास्तु प्रामाण्यम् ; उपनिषदां तु प्रामाण्यकल्पनायां स्वार्थविघातो भवेदिति मा भूत्प्रामाण्यम् । न हि कर्मकाण्डं प्रमाणं सत् अप्रमाणं भवितुमर्हति ; न हि प्रदीपः प्रकाश्यं प्रकाशयति, न प्रकाशयति च इति । प्रत्यक्षादिप्रमाणविप्रतिषेधाच्च—न केवलमुपनिषदो ब्रह्मैकत्वं प्रतिपादयन्त्यः स्वार्थविघातं कर्मकाण्डप्रामाण्यविघातं च कुर्वन्ति ; प्रत्यक्षादिनिश्चितभेदप्रतिपत्त्यर्थप्रमाणैश्च विरुध्यन्ते । तस्मादप्रामाण्यमेव उपनिषदाम् ; अ-

न्यार्थता वास्तु; न त्वेव ब्रह्मैकत्वप्रतिपत्त्यर्थता ॥

न उक्तोत्तरत्वात् । प्रमाणस्य हि प्रमाणत्वम् अप्रमाणत्वं वा प्रमोत्पादनानुत्पादननिमित्तम्, अन्यथा चेत् स्तम्भादीनां प्रामाण्यप्रसङ्गात् शब्दादौ प्रमेये । किंचातः? यदि तावत् उपनिषदो ब्रह्मैकत्वप्रतिपत्तिप्रमां कुर्वन्ति, कथमप्रमाणं भवेयुः । न कुर्वन्त्येवेति चेत्— यथा अग्निः शीतम्— इति, स भवानेवं वदन् वक्तव्यः— उपनिषत्प्रामाण्यप्रतिषेधार्थं भवतो वाक्यम् उपनिषत्प्रामाण्यप्रतिषेधं किं न करोत्येव, अग्निर्वा रूपप्रकाशम्; अथ करोति— यदि करोति, भवतु तदा प्रतिषेधार्थं प्रमाणं भवद्वाक्यम्, अग्निश्च रूपप्रकाशको भवेत्; प्रतिषेधवाक्यप्रामाण्ये भवत्येवोपनिषदां प्रामाण्यम् । अत्रभवन्तो ब्रुवन्तु कः परिहार इति । ननु अत्र प्रत्यक्षा मद्वाक्य उपनिषत्प्रामाण्यप्रतिषेधार्थप्रतिपत्तिः अग्नौ च रूपप्रकाशनप्रतिपत्तिः प्रमा; कस्तर्हि भवतः प्रद्वेषः ब्रह्मैकत्वप्रत्यये प्रमां प्रत्यक्षं कुर्वतीषु उपनिषत्सु उपलभ्यमानासु? प्रतिषेधानुपपत्तेः । शोकमोहादिनिवृत्तिश्च प्रत्यक्षं फलं ब्रह्मैकत्वप्रतिपत्तिपारम्पर्यजनितम् इत्यवोचाम । तस्मादुक्तोत्तरत्वात् उपनिषदं प्रति अप्रामाण्यशङ्का तावन्नास्ति ॥

यच्चोक्तम् स्वार्थविघातकरत्वादप्रामाण्यमिति, तदपि न,

तदर्थप्रतिपत्तेर्बाधकाभावात् । न हि उपनिषद्भ्यः– ब्रह्मैकमेवाद्वितीयम्, नैव च– इति प्रतिपत्तिरस्ति— यथा अग्निरुष्णः शीतश्चेत्यस्माद्वाक्यात् विरुद्धार्थद्वयप्रतिपत्तिः । अभ्युपगम्य चैतदवोचाम; न तु वाक्यप्रामाण्यसमये एष न्यायः– यदुत एकस्य वाक्यस्य अनेकार्थत्वम्; सति च अनेकार्थत्वे, स्वार्थश्च स्यात्, तद्विघातकृच्च विरुद्धः अन्योऽर्थः । न त्वेतत्— वाक्यप्रमाणकानां विरुद्धमविरुद्धं च, एकं वाक्यम्, अनेकमर्थं प्रतिपादयतीत्येष समयः; अर्थैकत्वाद्धि एकवाक्यता । न च कानिचिदुपनिषद्वाक्यानि ब्रह्मैकत्वप्रतिषेधं कुर्वन्ति । यत्तु लौकिकं वाक्यम्– अग्निरुष्णः शीतश्चेति, न तत्र एकवाक्यता, तदेकदेशस्य प्रमाणान्तरविषयानुवादित्वात्; अग्निः शीत इत्येतत् एकं वाक्यम्; अग्निरुष्ण इति तु प्रमाणान्तरानुभवस्मारकम्, न तु स्वयमर्थावबोधकम्; अतो न अग्निः शीत इत्यनेन एकवाक्यता, प्रमाणान्तरानुभवस्मारणेनैवोपक्षीणत्वात् । यत्तु विरुद्धार्थप्रतिपादकमिदं वाक्यमिति मन्यते, तत् शीतोष्णपदाभ्याम् अग्निपदसामानाधिकरण्यप्रयोगनिमित्ता भ्रान्तिः; न त्वेव एकस्य वाक्यस्य अनेकार्थत्वं लौकिकस्य वैदिकस्य वा ॥

यच्चोक्तम्—कर्मकाण्डप्रामाण्यविघातकृत् उपनिषद्वाक्यमिति, तन्न, अन्यार्थत्वात् । ब्रह्मैकत्वप्रतिपादनपरा हि उपनिषदः न इष्टार्थप्राप्तौ साधनोपदेशं तस्मिन्वा पुरुषनियोगं वारयन्ति, अनेकार्थत्वानुपपत्तेरेव । न च कर्मकाण्डवाक्यानां स्वार्थे प्रमा नोत्पद्यते । असाधारणे चेत्स्वार्थे प्रमाम् उत्पादयति वाक्यम्, कुतोऽन्येन विरोधः स्यात् । ब्रह्मैकत्वे निर्विषयत्वात् प्रमा नोत्पद्यत एवेति चेत्, न, प्रत्यक्षत्वात्प्रमायाः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवमादिवाक्येभ्यः प्रत्यक्षा प्रमा जायमाना; सा नैव भविष्यति, यद्युपनिषदो ब्रह्मैकत्वं बोधयिष्यन्तीत्यनुमानम्; न च अनुमानं प्रत्यक्षविरोधे प्रामाण्यं लभते; तस्मादसदेवैतद्गीयते—प्रमैव नोत्पद्यत इति । अपि च यथाप्राप्तस्यैव अविद्याप्रत्युपस्थापितस्य क्रियाकारकफलस्य आश्रयणेन इष्टानिष्टप्राप्तिपरिहारोपायसामान्ये प्रवृत्तस्य तद्विशेषमजानतः तदाचक्षाणा श्रुतिः क्रियाकारकफलभेदस्य लोकप्रसिद्धस्य सत्यताम् असत्यतां वा न आचष्टे न च वारयति, इष्टानिष्टफलप्राप्तिपरिहारोपायविधिपरत्वात् । यथा काम्येषु प्रवृत्ता श्रुतिः कामानां मिथ्याज्ञानप्रभवत्वे सत्यपि यथाप्राप्तानेव कामानुपादाय तत्साधनान्येव विधत्ते,

न तु—कामानां मिथ्याज्ञानप्रभवत्वादनर्थरूपत्वं चेति— न विदधाति ; तथा नित्याग्निहोत्रादिशास्त्रमपि मिथ्याज्ञानप्रभवं क्रियाकारकभेदं यथाप्राप्तमेव आदाय इष्टविशेषप्राप्तिम् अनिष्टविशेषपरिहारं वा किमपि प्रयोजनं पश्यत् अग्निहोत्रादीनि कर्माणि विधत्ते, न— अविद्यागोचरासद्वस्तुविषयमिति— न प्रवर्तते— यथा काम्येषु । न च पुरुषा न प्रवर्तेरन् अविद्यावन्तः, दृष्टत्वात्— यथा कामिनः । विद्यावतामेव कर्माधिकार इति चेत्, न, ब्रह्मैकत्वविद्यायां कर्माधिकारविरोधस्योक्तत्वात् । एतेन ब्रह्मैकत्वे निर्विषयत्वात् उपदेशेन तद्ग्रहणफलाभावदोषपरिहार उक्तो वेदितव्यः । पुरुषेच्छारागादिवैचित्र्याच्च— अनेका हि पुरुषाणामिच्छा ; रागादयश्च दोषा विचित्राः ; ततश्च बाह्यविषयरागाद्यपहृतचेतसो न शास्त्रं निवर्तयितुं शक्तम् ; नापि स्वभावतो बाह्यविषयविरक्तचेतसो विषयेषु प्रवर्तयितुं शक्तम् ; किंतु शास्त्रात् एतावदेव भवति— इदमिष्टसाधनम् इदमनिष्टसाधनमिति साध्यसाधनसंबन्धविशेषाभिव्यक्तिः— प्रदीपादिवत् तमसि रूपादिज्ञानम् ; न तु शास्त्रं भृत्यानिव बलात् निवर्तयति नियोजयति वा ; दृश्यन्ते हि पुरुषा रागादिगौरवात् शास्त्रमप्यतिक्रामन्तः । तस्मात् पुरुषमतिवैचित्र्यमपेक्ष्य साध्य-

साधनसंबन्धविशेषान् अनेकधा उपदिशति । तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्तन्ते; शास्त्रं तु सवितृप्रदीपादिवत् उदास्त एव । तथा कस्यचित्परोऽपि पुरुषार्थः अपुरुषार्थवदवभासते; यस्य यथावभासः, स तथारूपं पुरुषार्थं पश्यति; तदनुरूपाणि साधनान्युपादित्सते । तथा च अर्थवादोऽपि—'त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः' इत्यादिः । तस्मात् न ब्रह्मैकत्वं ज्ञापयिष्यन्तो वेदान्ता विधिशास्त्रस्य बाधकाः । न च विधिशास्त्रम् एतावता निर्विषयं स्यात् । नापि उक्तकारकादिभेदं विधिशास्त्रम् उपनिषदां ब्रह्मैकत्वं प्रति प्रामाण्यं निवर्तयति । स्वविषयशूराणि हि प्रमाणानि, श्रोत्रादिवत् ॥

तत्र पण्डितंमन्याः केचित् स्वचित्तवशात् सर्वं प्रमाणमितरेतरविरुद्धं मन्यन्ते, तथा प्रत्यक्षादिविरोधमपि चोदयन्ति ब्रह्मैकत्वे— शब्दादयः किल श्रोत्रादिविषया भिन्नाः प्रत्यक्षत उपलभ्यन्ते; ब्रह्मैकत्वं ब्रुवतां प्रत्यक्षविरोधः स्यात्; तथा श्रोत्रादिभिः शब्दाद्युपलब्धारः कर्तारश्च धर्माधर्मयोः प्रतिशरीरं भिन्ना अनुमीयन्ते संसारिणः; तत्र ब्रह्मैकत्वं ब्रुवतामनुमानविरोधश्च; तथा च आगमविरोधं वदन्ति– 'ग्रामकामो यजेत' 'पशुकामो यजेत' 'स्वर्ग-

कामो यजेत’ इत्येवमादिवाक्येभ्यः ग्रामपशुस्वर्गादिकामाः तत्साधनाद्यनुष्ठातारश्च भिन्ना अवगम्यन्ते । अत्रोच्यते— ते तु कुतर्कदूषितान्तःकरणाः ब्राह्मणादिवर्णापशदाः अनुकम्पनीयाः आगमार्थविच्छिन्नसंप्रदायबुद्धय इति । कथम्? श्रोत्रादिद्वारैः शब्दादिभिः प्रत्यक्षत उपलभ्यमानैः ब्रह्मण एकत्वं विरुध्यत इति वदन्तो वक्तव्याः—किं शब्दादीनां भेदेन आकाशैकत्वं विरुध्यत इति; अथ न विरुध्यते, न तर्हि प्रत्यक्षविरोधः । यच्चोक्तम्— प्रतिशरीरं शब्दाद्युपलब्धारः धर्माधर्मयोश्च कर्तारः भिन्ना अनुमीयन्ते, तथा च ब्रह्मैकत्वेऽनुमानविरोध इति; भिन्नाः कैरनुमीयन्त इति प्रष्टव्याः; अथ यदि ब्रूयुः— सर्वैरस्माभिरनुमानकुशलैरिति—के यूयम् अनुमानकुशला इत्येवं पृष्टानां किमुत्तरम्; शरीरेन्द्रियमनआत्मसु च प्रत्येकमनुमानकौशलप्रत्याख्याने, शरीरेन्द्रियमनःसाधना आत्मानो वयमनुमानकुशलाः, अनेककारकसाध्यत्वात्क्रियाणामिति चेत्—एवं तर्हि अनुमानकौशले भवतामनेकत्वप्रसङ्गः; अनेककारकसाध्या हि क्रियेति भवद्भिरेवाभ्युपगतम्; तत्र अनुमानं च क्रिया; सा शरीरेन्द्रियमनआत्मसाधनैः कारकैः आत्मकर्तृका निर्वर्त्यत इत्येतत्प्रतिज्ञातम्; तत्र वयमनुमानकुशला इत्येवं वदद्भिः—

शरीरेन्द्रियमनःसाधना आत्मानः प्रत्येकं वयमनेके— इत्यभ्युपगतं स्यात्; अहो अनुमानकौशलं दर्शितम् अपुच्छश‍ृङ्गैः तार्किकबलीवर्दैः। यो हि आत्मानमेव न जानाति, स कथं मूढः तद्गतं भेदमभेदं वा जानीयात्; तत्र किमनुमिनोति? केन वा लिङ्गेन? न हि आत्मनः स्वतो भेदप्रतिपादकं किंचिल्लिङ्गमस्ति, येन लिङ्गेन आत्मभेदं साधयेत्; यानि लिङ्गानि आत्मभेदसाधनाय नामरूपवन्ति उपन्यस्यन्ति, तानि नामरूपगतानि उपाधय एव आत्मनः— घटकरकापवरकभूछिद्राणीव आकाशस्य; यदा आकाशस्य भेदलिङ्गं पश्यति, तदा आत्मनोऽपि भेदलिङ्गं लभेत सः; न ह्यात्मनः परतो विशेषमभ्युपगच्छद्भिस्तार्किकशतैरपि भेदलिङ्गमात्मनो दर्शयितुं शक्यते; स्वतस्तु दूरादपनीतमेव, अविषयत्वादात्मनः। यद्यत् परः आत्मधर्मत्वेनाभ्युपगच्छति, तस्य तस्य नामरूपात्मकत्वाभ्युपगमात्, नामरूपाभ्यां च आत्मनोऽन्यत्वाभ्युपगमात्, 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति श्रुतेः, 'नामरूपे व्याकरवाणि' इति च—, उत्पत्तिप्रलयात्मके हि नामरूपे, तद्विलक्षणं च ब्रह्म— अतः अनुमानस्यैवाविषयत्वात् कुतोऽनुमानविरोधः। एतेन

आगमविरोधः प्रत्युक्तः । यदुक्तम्– ब्रह्मैकत्वे यस्मै उपदेशः, यस्य च उपदेशग्रहणफलम्, तदभावात् एकत्वोपदेशानर्थक्यमिति— तदपि न, अनेककारकसाध्यत्वात्क्रियाणां कश्चोद्यो भवति; एकस्मिन्ब्रह्मणि निरुपाधिके नोपदेशः, नोपदेष्टा, न च उपदेशग्रहणफलम्; तस्मादुपनिषदां च आनर्थक्यमित्येतत् अभ्युपगतमेव; अथ अनेककारकविषयानर्थक्यं चोद्यते– न, स्वतोऽभ्युपगमविरोधादात्मवादिनाम् । तस्मान् तार्किकचाटभटराजाप्रवेश्यम् अभयं दुर्गमिदम् अल्पबुद्ध्यगम्यं शास्त्रगुरुप्रसादरहितैश्च— 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' 'देवैरत्रापि विचिकित्सितं पुरा' 'नैषा तर्केण मतिरापनेया'— वरप्रसादलभ्यत्वश्रुतिस्मृतिवादेभ्यश्च; 'तदेजति तन्नैजति तद्दूरे तद्वन्तिके' इत्यादिविरुद्धधर्मसमवायित्वप्रकाशमन्त्रवर्णेभ्यश्च; गीतासु च 'मत्स्थानि सर्वभूतानि' इत्यादि । तस्मात् परब्रह्मव्यतिरेकेण संसारी नाम न अन्यत् वस्त्वन्तरमस्ति । तस्मात्सुष्ठूच्यते 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् अहं ब्रह्मास्मीति'— 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इत्यादिश्रुतिशतेभ्यः । तस्मात् परस्यैव ब्रह्मणः सत्यस्य सत्यं नाम उपनिषत् परा ॥

इति द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥

## द्वितीयं ब्राह्मणम् ॥

'ब्रह्म ज्ञपयिष्यामि' इति प्रस्तुतम्; तत्र यतो जगज्जातम्, यन्मयम्, यस्मिंश्च लीयते, तदेकं ब्रह्म— इति ज्ञापितम्। किमात्मकं पुनः तज्जगत् जायते, लीयते च? पञ्चभूतात्मकम्; भूतानि च नामरूपात्मकानि; नामरूपे सत्यमिति ह्युक्तम्; तस्य सत्यस्य पञ्चभूतात्मकस्य सत्यं ब्रह्म। कथं पुनः भूतानि सत्यमिति मूर्तामूर्तब्राह्मणम्। मूर्तामूर्तभूतात्मकत्वात् कार्यकरणात्मकानि भूतानि प्राणा अपि सत्यम्। तेषां कार्यकरणात्मकानां भूतानां सत्यत्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते सैव उपनिषद्व्याख्या। कार्यकरणसत्यत्वावधारणद्वारेण हि सत्यस्य सत्यं ब्रह्म अवधार्यते। अत्रोक्तम् 'प्राणा वै सत्यं तेषामेष सत्यम्' इति; तत्र के प्राणाः, कियत्यो वा प्राणविषया उपनिषदः का इति च— ब्रह्मोपनिषत्प्रसङ्गेन करणानां प्राणानां स्वरूपमवधारयति— पथिगतकूपारामाद्यवधारणवत् ॥

**यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्वि-**

**षतो भ्रातृव्यानवरुणाद्धि । अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥ १ ॥**

यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद, तस्येदं फलम्; किं तत्? सप्त सप्तसंख्याकान् ह द्विषतः द्वेषकर्तॄन् भ्रातृव्यान् भ्रातृव्या हि द्विविधा भवन्ति, द्विषन्तः अद्विषन्तश्च— तत्र द्विषन्तो ये भ्रातृव्याः तान् द्विषतो भ्रातृव्यान् अवरुणद्धि; सप्त ये शीर्षण्याः प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवा विषयरागाः सहजत्वात् भ्रातृव्याः। ते हि अस्य स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति; तेन ते द्वेष्टारो भ्रातृव्याः, प्रत्यगात्मेक्षणप्रतिषेधकरत्वात्; काठके चोक्तम्— 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इत्यादि; तत्र यः शिश्वादीन्वेद, तेषां याथात्म्यमवधारयति, स एतान् भ्रातृव्यान् अवरुणद्धि अपावृणोति विनाशयति। तस्मै फलश्रवणेनाभिमुखीभूतायाह— अयं वाव शिशुः । कोऽसौ? योऽयं मध्यमः प्राणः, शरीरमध्ये यः प्राणो लिङ्गात्मा, यः पञ्चधा शरीरमाविष्टः— बृहन्पाण्डरवासः सोम राजन्नित्युक्तः, यस्मिन् वाङ्मनःप्रभृतीनि करणानि विषक्तानि—पड्वीशशङ्कुनिदर्शनात्

स एष शिशुरिव, विषयेष्वितरकरणवदपटुत्वात्; शिशुं साधानमित्युक्तम्; किं पुनस्तस्य शिशोः वत्सस्थानीयस्य करणात्मन आधानम् तस्य इदमेव शरीरम् आधानं कार्यात्मकम्—आधीयतेऽस्मिन्नित्याधानम्; तस्य हि शिशोः प्राणस्य इदं शरीरमधिष्ठानम्; अस्मिन्हि करणान्यधिष्ठितानि लब्धात्मकानि उपलब्धिद्वाराणि भवन्ति, न तु प्राणमात्रे विषक्तानि; तथा हि दर्शितमजातशत्रुणा—उपसंहृतेषु करणेषु विज्ञानमयो नोपलभ्यते, शरीरदेशव्यूढेषु तु करणेषु विज्ञानमय उपलभमान उपलभ्यते—तच्च दर्शितं पाणिपेषप्रतिबोधनेन। इदं प्रत्याधानं शिरः; प्रदेशविशेषेषु— प्रति— प्रत्याधीयत इति प्रत्याधानम्। प्राणः स्थूणा अन्नपानजनिता शक्तिः—प्राणो बलमिति पर्यायः; बलावष्टम्भो हि प्राणः अस्मिन् शरीरे— 'स यत्रायमात्माबल्यं न्येत्य संमोहमिव' इति दर्शनात्— यथा वत्सः स्थूणावष्टम्भः एवम्। शरीरपक्षपाती वायुः प्राणः स्थूणेति केचित्। अन्नं दाम— अन्नं हि भुक्तं त्रेधा परिणमते; यः स्थूलः परिणामः, स एतद्द्वयं भूत्वा, इमामप्येति— मूत्रं च पुरीषं च; यो मध्यमो रसः, स रसो लोहितादिक्रमेण स्वकार्यं शरीरं साप्तधातुकमुपचिनोति; स्वयोन्यन्नागमे हि शरीरमुपचीयते, अन्नमय-

त्वात्; विपर्ययेऽपक्षीयते पतति; यस्तु अणिष्ठो रसः— अमृतम् ऊर्क् प्रभावः— इति च कथ्यते, स नाभेरूर्ध्वं हृदयदेशमागत्य, हृदयाद्विप्रसृतेषु द्वासप्ततिनाडीसहस्रेष्वनुप्रविश्य, यत्तत् करणसंघातरूपं लिङ्गं शिशुसंज्ञकम्, तस्य शरीरे स्थितिकारणं भवति बलमुपजनयत् स्थूणाख्यम्; तेन अन्नम् उभयतः पाशवत्सदामवत् प्राणशरीरयोर्निबन्धनं भवति ॥

इदानीं तस्यैव शिशोः प्रत्याधान ऊढस्य चक्षुषि काश्चनोपनिषद उच्यन्ते—

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥**

तमेताः सप्ताक्षितय उपतिष्ठन्ते— तं करणात्मकं प्राणं शरीरेऽन्नबन्धनं चक्षुष्यूढम् एताः वक्ष्यमाणाः सप्त सप्तसं-

ख्याकाः अक्षितयः, अक्षितिहेतुत्वात्, उपतिष्ठन्ते । यद्यपि मन्त्रकरणे तिष्ठतिरुपपूर्वः आत्मनेपदी भवति, इहापि सप्त देवताभिधानानि मन्त्रस्थानीयानि करणानि; तिष्ठतेः अतः अत्रापि आत्मनेपदं न विरुद्धम् । कास्ता अक्षितय इत्युच्यन्ते— तत् तत्र या इमाः प्रसिद्धाः, अक्षन् अक्षणि लोहिन्यः लोहिताः राजयः रेखाः, ताभिः द्वारभूताभिः एनं मध्यमं प्राणं रुद्रः अन्वायत्तः अनुगतः; अथ याः अक्षन् अक्षणि आपः धूमादिसंयोगेनाभिव्यज्यमानाः, ताभिः अद्भिर्द्वारभूताभिः पर्जन्यो देवतात्मा अन्वायत्तः अनुगत उपतिष्ठत इत्यर्थः । स च अन्नभूतोऽक्षितिः प्राणस्य, 'पर्जन्ये वर्षत्यानन्दिनः प्राणा भवन्ति' इति श्रुत्यन्तरात् । या कनीनका दृक्शक्तिः तया कनीनकया द्वारेण आदित्यो मध्यमं प्राणमुपतिष्ठते । यत्कृष्णं चक्षुषि, तेन एनमग्निरुपतिष्ठते । यच्छुक्लं चक्षुषि, तेन इन्द्रः । अधरया वर्तन्या पक्ष्मणा एनं पृथिवी अन्वायत्ता, अधरत्वसामान्यात् । द्यौः उत्तरया, ऊर्ध्वत्वसामान्यात् । एताः सप्त अन्नभूताः प्राणस्य संततमुपतिष्ठन्ते— इत्येवं यो वेद, तस्यैतत्फलम्— नास्यान्नं क्षीयते, य एवं वेद ॥

**तदेष श्लोको भवति । अर्वाग्बिलश्च-**

**मस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥**

तत् तत्र एतस्मिन्नर्थे एष श्लोकः मन्त्रो भवति—अर्वाग्बिलश्चमस इत्यादिः। तत्र मन्त्रार्थमाचष्टे श्रुतिः—अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। कः पुनरसावर्वाग्बिलश्चमस ऊर्ध्वबुध्नः? इदं तत्; शिरः चमसाकारं हि तत्; कथम्? एष हि अर्वाग्बिलः मुखस्य बिलरूपत्वात्, शिरसो बुध्नाकारत्वात् ऊर्ध्वबुध्नः। तस्मिन् यशो निहितं विश्वरूपमिति—यथा सोमः चमसे, एवं तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं स्थितं भवति। किं पुनस्तत्? यशः—

प्राणा वै यशो विश्वरूपम्– प्राणाः, श्रोत्रादयः वायवश्च मरुतः सप्तधा तेषु प्रसृताः यशः—इत्येतदाह मन्त्रः, शब्दादिज्ञानहेतुत्वात् । तस्यासत ऋषयः सप्त तीर इति—प्राणाः परिस्पन्दात्मकाः, त एव च ऋषयः, प्राणानेतदाह मन्त्रः । वागष्टमी ब्रह्मणा संविदानेति— ब्रह्मणा संवादं कुर्वन्ती अष्टमी भवति; तद्धेतुमाह— वाग्घ्यष्टमी ब्रह्मणा संवित्त इति ॥

**इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥**

इति द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥

के पुनस्तस्य चमसस्य तीर आसत ऋषय इति— इमावेव गोतमभरद्वाजौ कर्णौ– अयमेव गोतमः अयं भरद्वाजः दक्षिणश्च उत्तरश्च, विपर्ययेण वा । तथा चक्षुषी

उपदिशन्नुवाच— इमावेव विश्वामित्रजमदग्नी दक्षिणं विश्वामित्रः उत्तरं जमदग्निः, विपर्ययेण वा । इमावेव वासिष्ठकश्यपौ— नासिके उपदिशन्नुवाच ; दक्षिणः पुटो भवति वसिष्ठः ; उत्तरः कश्यपः—पूर्ववत् । वागेव अत्रिः अदनक्रियायोगात् सप्तमः ; वाचा ह्यन्नमद्यते ; तस्मादत्तिर्ह वै प्रसिद्धं नामैतत्— अत्तृत्वादत्तिरिति, अत्तिरेव सन् यदत्रिरित्युच्यते परोक्षेण । सर्वस्य एतस्यान्नजातस्य प्राणस्य, अत्रिनिर्वचनविज्ञानादत्ता भवति । अत्तैव भवति नामुष्मिन्नन्येन पुनः प्रत्यद्यते इत्येतदुक्तं भवति— सर्वमस्यान्नं भवतीति । य एवम् एतत् यथोक्तं प्राणयाथात्म्यं वेद, स एवं मध्यमः प्राणो भूत्वा आधानप्रत्याधानगतो भोक्तैव भवति, न भोज्यम् ; भोज्याद्व्यावर्तत इत्यर्थः ॥

इति द्वितीयाध्यायस्य द्वितीयम् ब्राह्मणम् ॥

## तृतीयं ब्राह्मणम् ॥

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥ १ ॥**

तत्र प्राणा वै सत्यमित्युक्तम् । याः प्राणानामुपनिषदः, ताः ब्रह्मोपनिषत्प्रसङ्गेन व्याख्याताः— एते ते प्राणा इति च । ते किमात्मकाः कथं वा तेषां सत्यत्वमिति च वक्तव्यमिति पञ्चभूतानां सत्यानां कार्यकरणात्मकानां स्वरूपावधारणार्थम् इदं ब्राह्मणमारभ्यते— यदुपाधिविशेषापनयद्वारेण 'नेति नेति' इति ब्रह्मणः सतत्त्वं निर्दिधारयिषितम् । तत्र द्विरूपं ब्रह्म पञ्चभूतजनितकार्यकरणसंबद्धं मूर्तामूर्ताख्यं मर्त्यामृतस्वभावं तज्जनितवासनारूपं च सर्वज्ञं सर्वशक्ति सोपाख्यं भवति । क्रियाकारकफलात्मकं च सर्वव्यवहारास्पदम् । तदेव ब्रह्म विगतसर्वोपाधिविशेषं सम्यग्दर्शनविषयम अजरम् अमृतम् अभयम्, वाङ्मनसयोरप्यविषयम् अद्वैतत्वात् 'नेति नेति' इति निर्दिश्यते । तत्र यदपोहद्वारेण 'नेति नेति' इति निर्दिश्यते ब्रह्म, ते एते

द्वे वाव— वावशब्दोऽवधारणार्थः— द्वे एवेत्यर्थः— ब्रह्मणः परमात्मनः रूपे— रूप्यते याभ्याम् अरूपं परं ब्रह्म अविद्याध्यारोप्यमाणाभ्याम् । के ते द्वे? मूर्तं चैव मूर्तमेव च; तथा अमूर्तं च अमूर्तमेव चेत्यर्थः । अन्तर्णीतस्वात्मविशेषणे मूर्तामूर्ते द्वे एवेत्यवधार्येते; कानि पुनस्तानि विशेषणानि मूर्तामूर्तयोरित्युच्यन्ते— मर्त्यं च मर्त्यं मरणधर्मि, अमृतं च तद्विपरीतम्, स्थितं च—परिच्छिन्नं गतिपूर्वकं यत्स्थास्नु, यच्च— यातीति यत्— व्यापि अपरिच्छिन्नं स्थितविपरीतम्, सच्च— सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्, त्यच्च— तद्विपरीतम् 'त्यत्' इत्येव सर्वदा परोक्षाभिधानार्हम् ॥

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥**

तत्र चतुष्टयविशेषणविशिष्टं मूर्तम्, तथा अमूर्तं च; तत्र कानि मूर्तविशेषणानि कानि चेतराणीति विभज्यते । तदे-

तन्मूर्तं मूर्छितावयवम् इतरेतरानुप्रविष्टावयवं घनं संहतमित्यर्थः । किं तत्? यदन्यत्; कस्मादन्यत्? वायोश्चान्तरिक्षाच्च भूतद्वयात्— परिशेषात्पृथिव्यादिभूतत्रयम्; एतन्मर्त्यम्— यदेतन्मूर्ताख्यं भूतत्रयम् इदं मर्त्यं मरणधर्मि; कस्मात्? यस्मात्स्थितमेतत्; परिच्छिन्नं ह्यर्थान्तरेण संप्रयुज्यमानं विरुध्यते—यथा घटः स्तम्भकुड्यादिना; तथा मूर्तं स्थितं परिच्छिन्नम् अर्थान्तरसंबन्धि ततोऽर्थान्तरविरोधान्मर्त्यम्; एतत्सत् विशेष्यमाणासाधारणधर्मवत्, तस्माद्धि परिच्छिन्नम्, परिच्छिन्नत्वान्मर्त्यम्, अतो मूर्तम्; मूर्तत्वाद्वा मर्त्यम्, मर्त्यत्वात्स्थितम्, स्थितत्वात्सत् । अतः अन्योन्याव्यभिचारात् चतुर्णां धर्माणां यथेष्टं विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च दर्शयितव्यः । सर्वथापि तु भूतत्रयं चतुष्टयविशेषणविशिष्टं मूर्तं रूपं ब्रह्मणः । तत्र चतुर्णामेकस्मिन्गृहीते विशेषणे इतरद्गृहीतमेव विशेषणमित्याह— तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सतः— चतुष्टयविशेषणस्य भूतत्रयस्येत्यर्थः— एष रसः सार इत्यर्थः; त्रयाणां हि भूतानां सारिष्ठः सविता; एतत्साराणि त्रीणि भूतानि, यत एतत्कृतविभज्यमानरूपविशेषणानि भवन्ति; आधिदैविकस्य कार्यस्यै-

तद्रूपम्— यत्सविता यदेतन्मण्डलं तपति; सतो भूतत्रयस्य हि यस्मात् एष रस इति एतद्गृह्यते; मूर्तो ह्येष सविता तपति, सारिष्ठश्च । यत्तु आधिदैविकं करणं मण्डलस्याभ्यन्तरम्, तद्वक्ष्यामः ॥

**अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥ ३ ॥**

अथामूर्तम्— अथाधुना अमूर्तमुच्यते । वायुश्चान्तरिक्षं च यत्परिशेषितं भूतद्वयम्— एतत् अमृतम्, अमूर्तत्वात्, अस्थितम्, अतोऽविरुध्यमानं केनचित्, अमृतम्, अमरणधर्मि; एतत् यत् स्थितविपरीतम्, व्यापि, अपरिच्छिन्नम्; यस्मात् यत् एतत् अन्येभ्योऽप्रविभज्यमानविशेषम्, अतः त्यत् 'त्यत्' इति परोक्षाभिधानार्हमेव— पूर्ववत् । तस्यैतस्यामूर्तस्य एतस्यामृतस्य एतस्य यतः एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्तस्य एष रसः; कोऽसौ? य एष एतस्मिन्मण्डले पुरुषः— करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते यः, स

एषः अमूर्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठः । एतत्पुरुष-सारं चामूर्तं भूतद्वयम्—हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात्; तस्मात् तादर्थ्यात् तत्सारं भूतद्वयम्। त्यस्य ह्येष रसः— यस्मात् यः मण्डलस्थः पुरुषो मण्डलवन्न गृह्यते सारश्च भूतद्वयस्य, तस्मादस्ति मण्डलस्थस्य पुरुषस्य भूतद्वयस्य च साधर्म्यम् । तस्मात् युक्तं प्रसिद्धवद्धेतूपादानम्— त्यस्य ह्येष रस इति ॥

रसः कारणं हिरण्यगर्भविज्ञानात्मा चेतन इति केचित्; तत्र च किल हिरण्यगर्भविज्ञानात्मनः कर्म वाय्वन्तरिक्षयोः प्रयोक्तृ; तत्कर्म वाय्वन्तरिक्षाधारं सत् अन्येषां भूतानां प्रयोक्तृ भवति; तेन स्वकर्मणा वाय्वन्तरिक्षयोः प्रयोक्तेति तयोः रसः कारणमुच्यत इति । तन्न मूर्तरसेन अतुल्यत्वात्; मूर्तस्य तु भूतत्रयस्य रसो मूर्तमेव मण्डलं दृष्टं भूतत्रयसमानजातीयम्; न चेतनः; तथा अमूर्तयोरपि भूतयोः तत्समानजातीयेनैव अमूर्तरसेन युक्तं भवितुम्, वाक्यप्रवृत्तेस्तुल्यत्वात्; यथा हि मूर्तामूर्ते चतुष्टयधर्मवती विभज्येते, तथा रसरसवतोरपि मूर्तामूर्तयोः तुल्येनैव न्यायेन युक्तो विभागः; न त्वर्धवैशसम् । मूर्तरसेऽपि मण्डलोपाधिश्चेतनो विवक्ष्यत इति चेत्— अत्यल्पमिदमुच्यते, सर्व-

त्रैव तु मूर्तामूर्तयोः ब्रह्मरूपेण विवक्षितत्वात् । पुरुषशब्दः अचेतनेऽनुपपन्न इति चेत्, न, पक्षपुच्छादिविशिष्टस्यैव लिङ्गस्य पुरुषशब्ददर्शनात्, 'न वा इत्थं सन्तः शक्ष्यामः प्रजाः प्रजनयितुमिमान्सप्त पुरुषानेकं पुरुषं करवामेति त एतान्सप्त पुरुषानेकं पुरुषमकुर्वन्' इत्यादौ अन्नरसमयादिषु च श्रुत्यन्तरे पुरुषशब्दप्रयोगात् । इत्यधिदैवतमिति उक्तोपसंहारः अध्यात्मविभागोक्त्यर्थः ॥

**अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥**

अथाधुना अध्यात्मं मूर्तामूर्तयोर्विभाग उच्यते । किं तत् मूर्तम्? इदमेव ; किंचेदम्? यदन्यत् प्राणाच्च वायोः, यश्चायम् अन्तः अभ्यन्तरे आत्मन् आत्मनि आकाशः खम्, शरीरस्थश्च यः प्राणः— एतद्द्वयं वर्जयित्वा यदन्यत् शरीरारम्भकं भूतत्रयम् ; एतन्मर्त्यमित्यादि समानमन्यत्पूर्वेण । एतस्य सतो ह्येष रसः— यच्चक्षुरिति ; आध्यात्मिकस्य शरी-

रारम्भकस्य कार्यस्य एष रसः सारः; तेन हि सारेण सारवदिदं शरीरं समस्तम्– यथा अधिदैवतमादित्यमण्डलेन; प्राथम्याच्च– चक्षुषी एव प्रथमे संभवतः संभवत इति, 'तेजो रसो निरवर्तताग्निः' इति लिङ्गात्; तैजसं हि चक्षुः; एतत्सारम् आध्यात्मिकं भूतत्रयम्; सतो ह्येष रस इति मूर्तत्वसारत्वे हेत्वर्थः ॥

**अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥**

अथाधुना अमूर्तमुच्यते । यत्परिशेषितं भूतद्वयं प्राणश्च यश्चायमन्तरात्मन्नाकाशः, एतदमूर्तम् । अन्यत्पूर्ववत् । एतस्य त्यस्य एष रसः सारः, योऽयं दक्षिणेऽक्षन्पुरुषः– दक्षिणेऽक्षन्निति विशेषग्रहणम्, शास्त्रप्रत्यक्षत्वात्; लिङ्गस्य हि दक्षिणेऽक्षिण विशेषतोऽधिष्ठातृत्वं शास्त्रस्य प्रत्यक्षम्, सर्वश्रुतिषु तथा प्रयोगदर्शनात् । त्यस्य ह्येष रस इति पूर्ववत् विशेषतः अग्रहणात् अमूर्तत्वसारत्व एव हेत्वर्थः ॥

**तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥**

इति द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥

ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकरणविभागेन अध्यात्माधिदैवतयोः विभागो व्याख्यातः सत्यशब्दवाच्ययोः । अथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिङ्गस्य रूपं वक्ष्यामः वासनामयं मूर्तामूर्तवासनाविज्ञानमयसंयोगजनितं विचित्रं पटभित्तिचित्रवत् मायेन्द्रजालमृगतृष्णिकोपमं सर्वव्यामोहास्पदम्—एतावन्मात्रमेव आत्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रान्ताः, एतदेव वासनारूपं पटरूपवत् आत्मनो द्रव्यस्य गुण इति नैयायिका वैशेषिकाश्च संप्रतिपन्नाः, इदम् आत्मार्थं त्रिगुणं स्वतन्त्रं प्रधानाश्रयं

पुरुषार्थेन हेतुना प्रवर्तत इति सांख्याः ॥

औपनिषदंमन्या अपि केचित्प्रक्रियां रचयन्ति— मूर्ता-मूर्तराशिरेकः, परमात्मराशिरुत्तमः, ताभ्यामन्योऽयं मध्यमः किल तृतीयः कर्त्रा भोक्त्रा विज्ञानमयेन अजातशत्रुप्रतिबोधितेन सह विद्याकर्मपूर्वप्रज्ञासमुदायः; प्रयोक्ता कर्मराशिः, प्रयोज्यः पूर्वोक्तो मूर्तामूर्तभूतराशिः साधनं चेति । तत्र च तार्किकैः सह संधिं कुर्वन्ति । लिङ्गाश्रयश्च एष कर्मराशिरित्युक्त्वा, पुनस्ततस्त्रस्यन्तः सांख्यत्वभयात्— सर्वः कर्म राशिः— पुष्पाश्रय इव गन्धः पुष्पवियोगेऽपि पुटतैलाश्रयो भवति, तद्वत्— लिङ्गवियोगेऽपि परमात्मैकदेशमाश्रयति, स परमात्मैकदेशः किल अन्यत आगतेन गुणेन कर्मणा सगुणो भवति निर्गुणोऽपि सन् , स कर्ता भोक्ता बध्यते मुच्यते च विज्ञानात्मा— इति वैशेषिकचित्तमप्यनुसरन्ति; स च कर्मराशिः भूतराशेरागन्तुकः, स्वतो निर्गुण एव परमात्मैकदेशत्वात् , स्वत उत्थिता अविद्या अनागन्तुकापि ऊषरवत् अनात्मधर्मः— इत्यनया कल्पनया सांख्यचित्तमनुवर्तन्ते ॥

सर्वमेतत् तार्किकैः सह सामञ्जस्यकल्पनया रमणीयं पश्यन्ति, न उपनिषत्सिद्धान्तं सर्वन्यायविरोधं च पश्य-

न्ति; कथम्? उक्ता एव तावत् सावयवत्वे परमात्मनः संसारित्वसव्रणत्वकर्मफलदेशसंसरणानुपपत्त्यादयो दोषाः; नित्यभेदे च विज्ञानात्मनः परेण एकत्वानुपपत्तिः। लिङ्गमेवेति चेत् परमात्मन उपचरितदेशत्वेन कल्पितं घटकरकभूछिद्राकाशादिवत्, तथा लिङ्गवियोगेऽपि परमात्मदेशाश्रयणं वासनायाः। अविद्यायाश्च स्वत उत्थानम् ऊषरवत्— इत्यादिकल्पनानुपपन्नैव। न च वास्यदेशव्यतिरेकेण वासनाया वस्त्वन्तरसंचरणं मनसापि कल्पयितुं शक्यम्। न च श्रुतयो अवगच्छन्ति— 'कामः संकल्पो विचिकित्सा' 'हृदये ह्येव रूपाणि' 'ध्यायतीव लेलायतीव' 'कामा येऽस्य हृदि श्रिताः' 'तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्य' इत्याद्याः। न च आसां श्रुतीनां श्रुतादर्थान्तरकल्पना न्याय्या, आत्मनः परब्रह्मत्वोपपादनार्थपरत्वादासाम्, एतावन्मात्रार्थोपक्षयत्वाच्च सर्वोपनिषदाम्। तस्मात् श्रुत्यर्थकल्पनाकुशलाः सर्व एव उपनिषदर्थमन्यथा कुर्वन्ति। तथापि वेदार्थश्चेत्स्यात्, कामं भवतु, न मे द्वेषः। न च 'द्वे वाव ब्रह्मणो रूपे' इति राशित्रयपक्षे समञ्जसम्; यदा तु मूर्तामूर्ते तज्जनितवासनाश्च मूर्तामूर्ते द्वे रूपे, ब्रह्म च रूपि तृतीयम्, न चान्यत् चतुर्थमन्तराले—तदा

एतत् अनुकूलमवधारणम्, द्वे एव ब्रह्मणो रूपे इति; अन्यथा ब्रह्मैकदेशस्य विज्ञानात्मनो रूपे इति कल्प्यम्, परमात्मनो वा विज्ञानात्मद्वारेणेति; तदा च रूपे एवेति द्विवचनमसमञ्जसम्; रूपाणीति वासनाभिः सह बहुवचनं युक्ततरं स्यात्– द्वे च मूर्तामूर्ते वासनाश्च तृतीयमिति। अथ मूर्तामूर्ते एव परमात्मनो रूपे, वासनास्तु विज्ञानात्मन इति चेत्—तदा विज्ञानात्मद्वारेण विक्रियमाणस्य परमात्मनः–इतीयं वाचो युक्तिरनर्थिका स्यात्, वासनाया अपि विज्ञानात्मद्वारत्वस्य अविशिष्टत्वात्; न च वस्तु वस्त्वन्तरद्वारेण विक्रियत इति मुख्यया वृत्त्या शक्यं कल्पयितुम्; न च विज्ञानात्मा परमात्मनो वस्त्वन्तरम्, तथा कल्पनायां सिद्धान्तहानात्। तस्मात् वेदार्थमूढानां स्वचित्तप्रभवा एवमादिकल्पना अक्षरबाह्याः; न ह्यक्षरबाह्यो वेदार्थः वेदार्थोपकारी वा, निरपेक्षत्वात् वेदस्य प्रामाण्यं प्रति। तस्मात् राशित्रयकल्पना असमञ्जसा ॥

'योऽयं दक्षिणेऽक्षन्पुरुषः' इति लिङ्गात्मा प्रस्तुतः अध्यात्मे, अधिदैवे च 'य एष एतस्मिन्मण्डले पुरुषः' इति, 'तस्य' इति प्रकृतोपादनात् स एवोपादीयते– योऽसौ त्यस्यामूर्तस्य रसः, न तु विज्ञानमयः। ननु विज्ञान-

मयस्यैव एतानि रूपाणि कस्मान्न भवन्ति, विज्ञानमयस्यापि प्रकृतत्वात्, 'तस्य' इति च प्रकृतोपादानात्— नैवम्, विज्ञानमयस्य अरूपित्वेन विजिज्ञापयिषितत्वात्; यदि हि तस्यैव विज्ञानमयस्य एतानि माहारजनादीनि रूपाणि स्युः, तस्यैव 'नेति नेति' इत्यनाख्येयरूपतया आदेशो न स्यात्। ननु अन्यस्यैव असावादेशः, न तु विज्ञानमयस्येति—न, षष्ठान्ते उपसंहरात्— 'विज्ञातारमरे केन विजानीयात्' इति विज्ञानमयं प्रस्तुत्य 'स एष नेति नेति'— इति; 'विज्ञपयिष्यामि' इति च प्रतिज्ञाया अर्थवत्त्वात्— यदि च विज्ञानमयस्यैव असंव्यवहार्यमात्मस्वरूपं ज्ञापयितुमिष्टं स्यात् प्रध्वस्तसर्वोपाधिविशेषम्, तत इयं प्रतिज्ञा अर्थवती स्यात्— येन असौ ज्ञापितो जानात्यात्मानमेव अहं ब्रह्मास्मीति, शास्त्रनिष्ठां प्राप्नोति, न बिभेति कुतश्चन; अथ पुनः अन्यो विज्ञानमयः, अन्यः 'नेति नेति' इति व्यपदिश्यते— तदा अन्यददो ब्रह्म अन्योऽहमस्मीति विपर्ययो गृहीतः स्यात्, न 'आत्मानमेवावेदहं ब्रह्मास्मि' इति। तस्मात् 'तस्य हैतस्य' इति लिङ्गपुरुषस्यैव एतानि रूपाणि। सत्यस्य च सत्ये परमात्मस्वरूपे वक्तव्ये निरवशेषं सत्यं वक्तव्यम्; सत्यस्य च विशेषरूपाणि वासनाः; तासामिमानि रूपाण्युच्यन्ते ॥

एतस्य पुरुषस्य प्रकृतस्य लिङ्गात्मन एतानि रूपाणि; कानि तानीत्युच्यन्ते—यथा लोके, महारजनं हरिद्रा तया रक्तं माहारजनम् यथा वासो लोके, एवं स्त्र्यादिविषयसंयोगे तादृशं वासनारूपं रञ्जनाकारमुत्पद्यते चित्तस्य, येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत्—यथा च लोके पाण्ड्वाविकम्, अवेरिदम् आविकम् ऊर्णादि, यथा च तत् पाण्डुरं भवति, तथा अन्यद्वासनारूपम्—यथा च लोके इन्द्रगोपः अत्यन्तरक्तो भवति, एवमस्य वासनारूपम्—क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यम्, क्वचित्पुरुषचित्तवृत्त्यपेक्षया—यथा च लोके अग्न्यर्चिः भास्वरं भवति, तथा क्वचित् कस्यचित् वासनारूपं भवति—यथा पुण्डरीकं शुक्लम्, तद्वदपि च वासनारूपं कस्यचिद्भवति—यथा सकृद्विद्युत्तम्, यथा लोके सकृद्विद्योतनं सर्वतः प्रकाशकं भवति, तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचित् वासनारूपम्—उपजायते । न एषां वासनारूपाणाम् आदिः अन्तः मध्यं संख्या वा, देशः कालो निमित्तं वा अवधार्यते—असंख्येयत्वाद्वासनायाः, वासनाहेतूनां च आनन्त्यात् । तथा च वक्ष्यति षष्ठे ‘इदंमयोऽदोमयः’ इत्यादि । तस्मात् न स्वरूपसंख्यावधारणार्था दृष्टान्ताः—‘यथा

माहारजनं वासः' इत्यादयः; किं तर्हि प्रकारप्रदर्शनार्थाः— एवंप्रकाराणि हि वासनारूपाणीति । यत्तु वासनारूपमभिहितमन्ते— सकृद्विद्योतनमिवेति, तत्किल हिरण्यगर्भस्य अव्याकृतात्प्रादुर्भवतः तडिद्वत् सकृदेव व्यक्तिर्भवतीति; तत् तदीयं वासनारूपं हिरण्यगर्भस्य यो वेद तस्य सकृद्विद्युत्तेव, ह वै इत्यवधारणार्थौ, एवमेव अस्य श्रीः ख्यातिः भवतीत्यर्थः, यथा हिरण्यगर्भस्य— एवम् एतत् यथोक्तं वासनारूपमन्त्यम् यो वेद ॥

एवं निरवशेषं सत्यस्य स्वरूपमभिधाय, यत्तत्सत्यस्य सत्यमवोचाम तस्यैव स्वरूपावधारणार्थं ब्रह्मण इदमारभ्यते— अथ अनन्तरं सत्यस्वरूपनिर्देशानन्तरम्, यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मात्— अतः तस्मात्, सत्यस्य सत्यं स्वरूपं निर्देक्ष्यामः; आदेशः निर्देशः ब्रह्मणः; कः पुनरसौ निर्देश इत्युच्यते— नेति नेतीत्येवं निर्देशः ॥

ननु कथम् आभ्यां 'नेति नेति' इति शब्दाभ्यां सत्यस्य सत्यं निर्दिदिक्षितमिति, उच्यते— सर्वोपाधिविशेषापोहेन । यस्मिन्न कश्चिद्विशेषोऽस्ति— नाम वा रूपं वा कर्म वा भेदो वा जातिर्वा गुणो वा; तद्वारेण हि शब्दप्रवृत्तिर्भवति; न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति; अतो न निर्देष्टुं

शक्यते—इदं तदिति—गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते, तथा; अध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते 'विज्ञानमानन्दं ब्रह्म' 'विज्ञानघन एव ब्रह्मात्मा' इत्येवमादिशब्दैः। यदा पुनः स्वरूपमेव निर्दिदिक्षितं भवति निरस्तसर्वोपाधिविशेषम्, तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम्; तदा अयमेवाभ्युपायः—यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण 'नेति नेति' इति निर्देशः॥

इदं च नकारद्वयं वीप्साव्याप्त्यर्थम्; यद्यत्प्राप्तं तत्तत् निषिध्यते; तथा च सति अनिर्दिष्टाशङ्का ब्रह्मणः परिहृता भवति; अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे, यदन्यत् प्रकृतात्प्रतिषिद्धद्वयात् ब्रह्म, तन्न निर्दिष्टम्, कीदृशं नु खलु— इत्याशङ्का न निवर्तिष्यते; तथा च अनर्थकश्च स निर्देशः, पुरुषस्य विविदिषाया अनिवर्तकत्वात्; 'ब्रह्म ज्ञपयिष्यामि' इति च वाक्यम् अपरिसमाप्तार्थं स्यात्। यदा तु सर्वदिक्कालादिविविदिषा निवर्तिता स्यात् सर्वोपाधिनिराकरणद्वारेण, तदा सैन्धवघनवत् एकरसं प्रज्ञानघनम् अनन्तरमबाह्यं सत्यस्य सत्यम् अहं ब्रह्म अस्मीति सर्वतो निवर्तते विविदिषा, आत्मन्येवावस्थिता प्रज्ञा भवति। तस्मात् वीप्सार्थं नेति नेतीति नकारद्वयम्। ननु महता

यत्नेन परिकरबन्धं कृत्वा किं युक्तम् एवं निर्देष्टुं ब्रह्म? बाढम्; कस्मात्? न हि— यस्मात्, 'इति न, इति न' इत्येतस्मात्— इतीति व्याप्तव्यप्रकारा नकार-द्वयविषया निर्दिश्यन्ते, यथा ग्रामो ग्रामो रमणीय इति— अन्यत्परं निर्देशनं नास्ति; तस्मादयमेव निर्देशो ब्रह्मणः। यदुक्तम्— 'तस्योपनिषत्सत्यस्य सत्यम्' इति, एवंप्रकारेण सत्यस्य सत्यं तत् परं ब्रह्म; अतो युक्तमुक्तं नामधेयं ब्रह्मणः, नामैव नामधेयम्; किं तत् सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति॥

इति द्वितीयाध्यायस्य तृतीयं ब्राह्मणम्॥

# चतुर्थं ब्राह्मणम् ॥

आत्मेत्येवोपासीत; तदेव एतस्मिन् सर्वस्मिन् पदनीयम् आत्मतत्त्वम्, यस्मात् प्रेयः पुत्रादेः—इत्युपन्यस्तस्य वाक्यस्य व्याख्यानविषये संबन्धप्रयोजने अभिहिते— 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति; एवं प्रत्यगात्मा ब्रह्मविद्याया विषय इत्येतत् उपन्यस्तम्। अविद्यायाश्च विषयः— 'अन्योऽसावन्योऽहमस्मीति न स वेद' इत्यारभ्य चातुर्वर्ण्यप्रविभागादिनिमित्तपाङ्क्तकर्मसाध्यसाधनलक्षणः बीजाङ्कुरवत् व्याकृताव्याकृतस्वभावः नामरूपकर्मात्मकः संसारः 'त्रयं वा इदं नाम रूपं कर्म' इत्युपसंहृतः शास्त्रीय उत्कर्षलक्षणो ब्रह्मलोकान्तः अधोभावश्च स्थावरान्तोऽशास्त्रीयः, पूर्वमेव प्रदर्शितः—'द्वया ह' इत्यादिना। एतस्मादविद्याविषयाद्विरक्तस्य प्रत्यगात्मविषयब्रह्मविद्यायाम् अधिकारः कथं नाम स्यादिति— तृतीयेऽध्याये उपसंहृतः समस्तोऽविद्याविषयः। चतुर्थे तु ब्रह्मविद्याविषयं प्रत्यगात्मानम् 'ब्रह्म ते ब्रवाणि' इति 'ब्रह्म ज्ञपयिष्यामि' इति च प्रस्तुत्य, तत् ब्रह्म एकम् अद्वयं सर्वविशेषशून्यं क्रियाकार-

कफलस्वभावसत्यशब्दवाच्याशेषभूतधर्मप्रतिषेधद्वारेण 'नेति नेति' इति ज्ञापितम्। अस्या ब्रह्मविद्याया अङ्गत्वेन संन्यासो विधित्सितः, जायापुत्रवित्तादिलक्षणं पाङ्क्तं कर्म अविद्याविषयं यस्मात् न आत्मप्राप्तिसाधनम्; अन्यसाधनं हि अन्यस्मै फलसाधनाय प्रयुज्यमानं प्रतिकूलं भवति; न हि बुभुक्षापिपासानिवृत्त्यर्थं धावनं गमनं वा साधनम्; मनुष्यलोकपितृलोकदेवलोकसाधनत्वेन हि पुत्रादिसाधनानि श्रुतानि, न आत्मप्राप्तिसाधनत्वेन, विशेषितत्वाच्च; न च ब्रह्मविदो विहितानि, काम्यत्वश्रवणात्—'एतावान्वै कामः' इति, ब्रह्मविदश्च आप्तकामत्वात् आप्तकामस्य कामानुपपत्तेः, 'येषां नोऽयमात्मायं लोकः' इति च श्रुतेः। केचित्तु ब्रह्मविदोऽप्येषणासंबन्धं वर्णयन्ति; तैर्बृहदारण्यकं न श्रुतम्; पुत्राद्येषणानामविद्वद्विषयत्वम्, विद्याविषये च— 'येषां नोऽयमात्मायं लोकः' इत्यतः 'किं प्रजया करिष्यामः' इति— एष विभागः तैर्न श्रुतः श्रुत्या कृतः; सर्वक्रियाकारकफलोपमर्दस्वरूपायां च विद्यायां सत्याम्, सह कार्येण अविद्याया अनुपपत्तिलक्षणश्च विरोधः तैर्न विज्ञातः; व्यासवाक्यं च तैर्न श्रुतम्। कर्मविद्यास्वरूपयोः विद्याविद्यात्मकयोः प्रतिकूलवर्तनं विरोधः। 'यदिदं वेदवचनं कुरु कर्म त्यजेति च।

कां गतिं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे । एतावन्योन्यवैरूप्ये वर्तेते प्रतिकूलतः' इत्येवं पृष्टस्य प्रतिवचनेन— 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इत्येवमादि— विरोधः प्रदर्शितः । तस्मात् न साधनान्तरसहिता ब्रह्मविद्या पुरुषार्थसाधनम्, सर्वविरोधात्, साधननिरपेक्षैव पुरुषार्थसाधनम्— इति पारिव्राज्यं सर्वसाधनसंन्यासलक्षणम् अङ्गत्वेन विधित्स्यते; एतावदेवामृतत्वसाधनमित्यवधारणात्, षष्ठसमाप्तौ, लिङ्गाच्च— कर्मी सन्याज्ञवल्क्यः प्रवव्राजेति । मैत्रेय्यै च कर्मसाधनरहितायै साधनत्वेनामृतत्वस्य ब्रह्मविद्योपदेशात्, वित्तनिन्दावचनाच्च; यदि हि अमृतत्वसाधनं कर्म स्यात्, वित्तसाध्यं पाङ्क्तं कर्मेति— तन्निन्दावचनमनिष्टं स्यात्; यदि तु परितित्याजयिषितं कर्म, ततो युक्ता तत्साधननिन्दा । कर्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्दाच्च— 'ब्रह्म तं परादात्' 'क्षत्रं तं परादात्' इत्यादेः; न हि ब्रह्मक्षत्राद्यात्मप्रत्ययोपमर्दे, ब्राह्मणेनेदं कर्तव्यं क्षत्रियेणेदं कर्तव्यमिति विषयाभावात् आत्मानं लभते विधिः; यस्यैव पुरुषस्य उपमर्दितः प्रत्ययः ब्रह्मक्षत्राद्यात्मविषयः, तस्य तत्प्र-

त्ययसंन्यासात् तत्कार्याणां कर्मणां कर्मसाधनानां च अर्थ-प्राप्तश्च संन्यासः । तस्मात् आत्मज्ञानाङ्गत्वेन संन्यासविधित्सयैव आख्यायिकेयमारभ्यते ॥

**मैत्रेयीति होवाच याज्ञवल्क्य उद्या-स्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥ १ ॥**

मैत्रेयीति होवाच याज्ञवल्क्यः— मैत्रेयीं स्वभार्यामामन्त्रितवान् याज्ञवल्क्यो नाम ऋषिः; उद्यास्यन् ऊर्ध्वं यास्यन् पारिव्राज्याख्यमाश्रमान्तरम् वै; 'अरे' इति संबोधनम्; अहम्, अस्मात् गार्हस्थ्यात्, स्थानात् आश्रमात्, ऊर्ध्वं गन्तुमिच्छन् अस्मि भवामि; अतः हन्त अनुमतिं प्रार्थयामि ते तव; किंचान्यत्— ते तव अनया द्वितीयया भार्यया कात्यायन्या अन्तं विच्छेदं करवाणि; पतिद्वारेण युवयोर्मया संबध्यमानयोर्यः संबन्ध आसीत्, तस्य संबन्धस्य विच्छेदं करवाणि द्रव्यविभागं कृत्वा; वित्तेन संविभज्य युवां गमिष्यामि ॥

**सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं**

**तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ २ ॥**

सा एवमुक्ता ह उवाच— यत् यदि, 'नु' इति वितर्के, मे मम इयं पृथिवी, भगोः भगवन्, सर्वा सागरपरिक्षिप्ता वित्तेन धनेन पूर्णा स्यात्; कथम्? न कथंचनेत्याक्षेपार्थः, प्रश्नार्थो वा, तेन पृथिवीपूर्णवित्तसाध्येन कर्मणा अग्निहोत्रादिना—अमृता किं स्यामिति व्यवहितेन संबन्धः। प्रत्युवाच याज्ञवल्क्यः—कथमिति यद्याक्षेपार्थम्, अनुमोदनम्—नेति होवाच याज्ञवल्क्य इति; प्रश्नश्चेत् प्रतिवचनार्थम्; नैव स्याः अमृता, किं तर्हि यथैव लोके उपकरणवतां साधनवतां जीवितं सुखोपायभोगसंपन्नम्, तथैव तद्वदेव तव जीवितं स्यात्; अमृतत्वस्य तु न आशा मनसापि अस्ति वित्तेन वित्तसाध्येन कर्मणेति ॥

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥**

सा होवाच मैत्रेयी । एवमुक्ता प्रत्युवाच मैत्रेयी— यद्येवं येनाहं नामृता स्याम्, किमहं तेन वित्तेन कुर्याम्? यदेव भगवान् केवलम् अमृतत्वसाधनं वेद, तदेव अमृतत्व-साधनं मे मह्यं ब्रूहि ॥

**स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥**

स होवाच याज्ञवल्क्यः । एवं वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते, याज्ञवल्क्यः स्वाभिप्रायसंपत्तौ तुष्ट आह— स होवाच— प्रिया इष्टा, बतेत्यनुकम्प्याह, अरे मैत्रेयि, न अस्माकं पूर्वमपि प्रिया सती भवन्ती इदानीं प्रियमेव चित्तानुकूलं भाषसे । अतः एहि आस्स्व उपविश व्याख्यास्यामि— यत् ते तव इष्टम् अमृतत्वसाधनमात्मज्ञानम् कथयिष्यामि । व्याचक्षाणस्य तु मे मम व्याख्यानं कुर्वतः, निदिध्यासस्व वाक्यानि अर्थतो निश्चयेन ध्यातुमिच्छेति ॥

**स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः**

प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि

**भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥ ५ ॥**

स होवाच— अमृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यो विरागमुत्पादयति तत्संन्यासाय । न वै— वै-शब्दः प्रसिद्धस्मरणार्थः ; प्रसिद्धमेव एतत् लोके ; पत्युः भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति, किं तर्हि आत्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति । तथा न वा अरे जायाया इत्यादि समानमन्यत्, न वा अरे पुत्राणाम्, न वा अरे वित्तस्य, न वा अरे ब्रह्मणः, न वा अरे क्षत्रस्य, न वा अरे लोकानाम्, न वा अरे देवानाम्, न वा अरे भूतानाम्, न वा अरे सर्वस्य । पूर्वं पूर्वं यथासन्ने प्रीतिसाधने वचनम्, तत्र तत्र इष्टतरत्वाद्वैराग्यस्य ; सर्वग्रहणम् उक्तानुक्तार्थम् । तस्मात्

लोकप्रसिद्धमेतत् — आत्मैव प्रियः, नान्यत् । ‘तदेतत्प्रेयः पुत्रात्’ इत्युपन्यस्तम्, तस्यैतत् वृत्तिस्थानीयं प्रपञ्चितम् । तस्मात् आत्मप्रीतिसाधनत्वात् गौणी अन्यत्र प्रीतिः, आत्मन्येव मुख्या । तस्मात् आत्मा वै अरे द्रष्टव्यः दर्शनार्हः, दर्शनविषयमापादयितव्यः; श्रोतव्यः पूर्वम् आचार्यत आगमतश्च; पश्चान्मन्तव्यः तर्कतः; ततो निदिध्यासितव्यः निश्चयेन ध्यातव्यः; एवं ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनसाधनैर्निर्वर्तितैः; यदा एकत्वमेतान्युपगतानि, तदा सम्यग्दर्शनं ब्रह्मैकत्वविषयं प्रसीदति, न अन्यथा श्रवणमात्रेण । यत् ब्रह्मक्षत्रादि कर्मनिमित्तं वर्णाश्रमादिलक्षणम् आत्मन्यविद्याध्यारोपितप्रत्ययविषयं क्रियाकारकफलात्मकम् अविद्याप्रत्ययविषयम् — रज्ज्वामिव सर्पप्रत्ययः, तदुपमर्दनार्थमाह — आत्मनि खलु अरे मैत्रेयि दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं विज्ञातं भवति ॥

**ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो**

**भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ६ ॥**

ननु कथम् अन्यस्मिन्विदिते अन्यद्विदितं भवति? नैष दोषः; न हि आत्मव्यतिरेकेण अन्यत्किंचिदस्ति; यद्यस्ति, न तद्विदितं स्यात्; न त्वन्यदस्ति; आत्मैव तु सर्वम्; तस्मात् सर्वम् आत्मनि विदिते विदितं स्यात्। कथं पुनरात्मैव सर्वमित्येतत् श्रावयति—ब्रह्म ब्राह्मणजातिः तं पुरुषं परादात् परादध्यात् पराकुर्यात्; कम्? यः अन्यत्रात्मनः आत्मस्वरूपव्यतिरेकेण— आत्मैव न भवतीयं ब्राह्मणजातिरिति— तां यो वेद, तं परादध्यात् सा ब्राह्मणजातिः अनात्मस्वरूपेण मां पश्यतीति; परमात्मा हि सर्वेषामात्मा। तथा क्षत्रं क्षत्रियजातिः, तथा लोकाः, देवाः, भूतानि, सर्वम्। इदं ब्रह्मेति— यान्यनुक्रान्तानि तानि सर्वाणि, आत्मैव, यदयमात्मा— योऽयमात्मा द्रष्टव्यः श्रोतव्य इति प्रकृतः— यस्मात् आत्मनो जायते आत्मन्येव लीयत आत्ममयं च स्थितिकाले, आत्मव्यतिरेकेणाग्रहणात्, आत्मैव सर्वम् ॥

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्या-**

**च्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥**

कथं पुनः इदानीम् इदं सर्वमात्मैवेति ग्रहीतुं शक्यते? चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते; तत्र दृष्टान्त उच्यते— यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य, तस्य तदात्मत्वमेव लोके दृष्टम्; स यथा— स इति दृष्टान्तः; लोके यथा दुन्दुभेः भेर्यादेः, हन्यमानस्य ताड्यमानस्य दण्डादिना, न, बाह्यान् शब्दान् बहिर्भूतान् शब्दविशेषान् दुन्दुभिशब्दसामान्यान्निष्कृष्टान दुन्दुभिशब्दविशेषान्, न शक्नुयात् ग्रहणाय ग्रहीतुम्; दुन्दुभेस्तु ग्रहणेन, दुन्दुभिशब्दसामान्यविशेषत्वेन, दुन्दुभिशब्दा एते इति, शब्दविशेषा गृहीता भवन्ति, दुन्दुभिशब्दसामान्यव्यतिरेकेणाभावात् तेषाम्; दुन्दुभ्याघातस्य वा, दुन्दुभेराहननम् आघातः— दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन तद्गता विशेषा गृहीता भवन्ति, न तु त एव निर्भिद्य ग्रहीतुं शक्यन्ते, विशेषरूपेणाभावात् तेषाम्—तथा प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोः न कश्चिद्वस्तुविशेषो गृह्यते; तस्मात् प्रज्ञानव्यतिरेकेण अभावो युक्तस्तेषाम् ॥

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥**

तथा स यथा शङ्खस्य ध्मायमानस्य शब्देन संयोज्यमानस्य आपूर्यमाणस्य न बाह्यान् शब्दान् शक्नुयात्— इत्येवमादि पूर्ववत् ॥

**स यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥**

तथा वीणायै वाद्यमानायै— वीणाया वाद्यमानायाः । अनेकदृष्टान्तोपादानम् इह सामान्यबहुत्वख्यापनार्थम्— अनेके हि विलक्षणाः चेतनाचेतनरूपाः सामान्यविशेषाः—तेषां पारम्पर्यगत्या यथा एकस्मिन् महासामान्ये अन्तर्भावः प्रज्ञानघने, कथं नाम प्रदर्शयितव्य इति ; दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणां यथा शब्दत्वेऽन्तर्भावः, एवं स्थितिकाले तावत् सामान्यविशेषाव्यतिरेकात् ब्रह्मैकत्वं शक्यमवगन्तुम् ॥

**स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥ १० ॥**

एवम् उत्पत्तिकाले प्रागुत्पत्तेः ब्रह्मैवेति शक्यमवगन्तुम्; यथा अग्नेः विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागात् अग्निरेवेति भवत्यग्न्येकत्वम्, एवं जगत् नामरूपविकृतं प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्तं ग्रहीतुम्— इत्येतदुच्यते— स यथा— आर्द्रैधाग्नेः आर्द्रैरेधोभिरिद्धोऽग्निः आर्द्रैधाग्निः, तस्मात्, अभ्याहितात् पृथग्धूमाः, पृथक् नानाप्रकारम्, धूमग्रहणं विस्फुलिङ्गादिप्रदर्शनार्थम्, धूमविस्फुलिङ्गादयः, विनिश्चरन्ति विनिर्गच्छन्ति; एवम्— यथायं दृष्टान्तः; अरे मैत्रेयि अस्य परमात्मनः प्रकृतस्य महतो भूतस्य निश्वसितमेतत्; निश्वसितमिव निश्वसितम्; यथा अप्रयत्नेनैव पुरुषनिश्वासो भवति, एवं वै अरे। किं तन्निश्वसितमिव ततो जा-

तमित्युच्यते— यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः— चतुर्विधं मन्त्रजातम्, इतिहास इति, उर्वशीपुरूरवसोः संवादादिः— 'उर्वशी हाप्सराः' इत्यादि ब्राह्मणमेव, पुराणम्— 'असद्वा इदमग्र आसीत्' इत्यादि, विद्या देवजनविद्या— वेदः सोऽयम्— इत्याद्या, उपनिषदः 'प्रियमित्येतदुपासीत' इत्याद्याः, श्लोकाः ब्राह्मणप्रभवा मन्त्राः 'तदेते श्लोकाः' इत्यादयः, सूत्राणि वस्तुसंग्रहवाक्यानि वेदे यथा— 'आत्मेत्येवोपासीत' इत्यादीनि, अनुव्याख्यानानि मन्त्रविवरणानि, व्याख्यानान्यर्थवादाः, अथवा वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि— यथा चतुर्थाध्याये 'आत्मेत्येवोपासीत' इत्यस्य यथा वा 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्' इत्यस्य अयमेवाध्यायशेषः, मन्त्रविवरणानि व्याख्यानानि— एवमष्टविधं ब्राह्मणम् । एवं मन्त्रब्राह्मणयोरेव ग्रहणम्; नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः पुरुषनिश्वासवत्, न च पुरुषबुद्धिप्रयत्नपूर्वकः; अतः प्रमाणं निरपेक्ष एव स्वार्थे; तस्मात् यत् तेनोक्तं तत्तथैव प्रतिपत्तव्यम्, आत्मनः श्रेय इच्छद्भिः, ज्ञानं वा कर्म वेति । नामप्रकाशवशाद्धि रूपस्य विक्रियावस्था; नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमा-

णयोः सलिलफेनवत् तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्वावस्थयोः संसारत्वम्— इत्यतः नाम्न एव निश्वसितत्वमुक्तम्, तद्वचनेनैव इतरस्य निश्वसितत्वसिद्धेः। अथवा सर्वस्य द्वैतजातस्य अविद्याविषयत्वमुक्तम्—'ब्रह्म तं परादात्- इदं सर्वं यदयमात्मा' इति; तेन वेदस्याप्रामाण्यमाशङ्क्येत; तदाशङ्कानिवृत्त्यर्थमिदमुक्तम्— पुरुषनिश्वासवत् अप्रयत्नोत्थितत्वात् प्रमाणं वेदः, न यथा अन्यो ग्रन्थ इति ॥

**स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ संकल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वे-**

**षां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषा-
मध्वनां पादावेकायनमेवꣳ सर्वेषां वेदा-
नां वागेकायनम् ॥ ११ ॥**

किंचान्यत्; न केवलं स्थित्युत्पत्तिकालयोरेव प्रज्ञान-
व्यतिरेकेणाभावात् जगतो ब्रह्मत्वम्; प्रलयकाले च; जलबु-
द्बुद्फेनादीनामिव सलिलव्यतिरेकेणाभावः, एवं प्रज्ञानव्य-
तिरेकेण तत्कार्याणां नामरूपकर्मणां तस्मिन्नेव लीयमानाना-
मभावः; तस्मात् एकमेव ब्रह्म प्रज्ञानघनम् एकरसं प्रति-
पत्तव्यमित्यत आह । प्रलयप्रदर्शनाय दृष्टान्तः; स इति
दृष्टान्तः; यथा येन प्रकारेण, सर्वासां नदीवापीतडागादि-
गतानामपाम्, समुद्रः अब्धिः एकायनम्, एकगमनम्
एकप्रलयः अविभागप्राप्तिरित्यर्थः; यथा अयं दृष्टान्तः, एवं
सर्वेषां स्पर्शानां मृदुकर्कशकठिनपिच्छिलादीनां वायोरात्म-
भूतानां त्वक् एकायनम्, त्वगिति त्वग्विषयं स्पर्शसामा-
न्यमात्रम्, तस्मिन्प्रविष्टाः स्पर्शविशेषाः— आप इव समु-
द्रम्— तद्व्यतिरेकेणाभावभूता भवन्ति; तस्यैव हि ते संस्था-
नमात्रा आसन् । तथा तदपि स्पर्शसामान्यमात्रं त्व-
क्शब्दवाच्यं मनःसंकल्पे मनोविषयसामान्यमात्रे, त्वग्वि-
षय इव स्पर्शविशेषाः, प्रविष्टं तद्व्यतिरेकेणाभावभूतं भवति;

एवं मनोविषयोऽपि बुद्धिविषयसामान्यमात्रे प्रविष्टः तद्व्यतिरेकेणाभावभूतो भवति; विज्ञानमात्रमेव भूत्वा प्रज्ञानघने परे ब्रह्मणि आप इव समुद्रे प्रलीयते। एवं परम्पराक्रमेण शब्दादौ सह ग्राहकेण करणेन प्रलीने प्रज्ञानघने, उपाध्यभावात् सैन्धवघनवत् प्रज्ञानघनम् एकरसम् अनन्तम् अपारं निरन्तरं ब्रह्म व्यवतिष्ठते। तस्मात् आत्मैव एकमद्वयमिति प्रतिपत्तव्यम्। तथा सर्वेषां गन्धानां पृथिवीविशेषाणाम् नासिके घ्राणविषयसामान्यम्। तथा सर्वेषां रसानामब्विशेषाणाम् जिह्वेन्द्रियविषयसामान्यम्। तथा सर्वेषां रूपाणां तेजोविशेषाणाम् चक्षुः चक्षुर्विषयसामान्यम्। तथा शब्दानां श्रोत्रविषयसामान्यं पूर्ववत्। तथा श्रोत्रादिविषयसामान्यानां मनोविषयसामान्ये संकल्पे; मनोविषयसामान्यस्यापि बुद्धिविषयसामान्ये विज्ञानमात्रे; विज्ञानमात्रं भूत्वा परस्मिन्प्रज्ञानघने प्रलीयते। तथा कर्मेन्द्रियाणां विषया वदनादानगमनविसर्गानन्दविशेषाः तत्तत्क्रियासामान्येष्वेव प्रविष्टा न विभागयोग्या भवन्ति, समुद्र इव अब्विशेषाः; तानि च सामान्यानि प्राणमात्रम्; प्राणश्च प्रज्ञानमात्रमेव— 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः' इति कौषीतकिनोऽधीयते।

ननु सर्वत्र विषयस्यैव प्रलयोऽभिहितः, न तु करणस्य; तत्र कोऽभिप्राय इति— बाढम्; किंतु विषयसमानजातीयं करणं मन्यते श्रुतिः, न तु जात्यन्तरम्; विषयस्यैव स्वात्मग्राहकत्वेन संस्थानान्तरं करणं नाम—यथा रूपविशेषस्यैव संस्थानं प्रदीपः करणं सर्वरूपप्रकाशने, एवं सर्वविषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन संस्थानान्तराणि करणानि, प्रदीपवत्; तस्मात् न करणानां पृथक्प्रलये यत्नः कार्यः; विषयसामान्यात्मकत्वात् विषयप्रलयेनैव प्रलयः सिद्धो भवति करणानामिति ॥

तत्र 'इदं सर्वं यदयमात्मा' इति प्रतिज्ञातम्; तत्र हेतुरभिहितः— आत्मसामान्यत्वम्, आत्मजत्वम्, आत्मप्रलयत्वं च; तस्मात् उत्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात् 'प्रज्ञानं ब्रह्म' 'आत्मैवेदं सर्वम्' इति प्रतिज्ञातं यत्, तत् तर्कतः साधितम् । स्वाभाविकोऽयं प्रलय इति पौराणिका वदन्ति । यस्तु बुद्धिपूर्वकः प्रलयः ब्रह्मविदां ब्रह्मविद्यानिमित्तः, अयम् आत्यन्तिक इत्याचक्षते— अविद्यानिरोधद्वारेण यो भवति; तदर्थोऽयं विशेषारम्भः—

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव**

**स्यात् । यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

तत्र दृष्टान्त उपादीयते— स यथेति । सैन्धवखिल्यः— सिन्धोर्विकारः सैन्धवः, सिन्धुशब्देन उदकमभिधीयते, स्यन्दनात् सिन्धुः उदकम्, तद्विकारः तत्र भवो वा सैन्धवः, सैन्धवश्चासौ खिल्यश्चेति सैन्धवखिल्यः, खिल एव खिल्यः, स्वार्थे यत्प्रत्ययः— उदके सिन्धौ स्वयोनौ प्रास्तः प्रक्षिप्तः, उदकमेव विलीयमानम् अनुविलीयते; यत्तत् भौमतैजससंपर्कात् काठिन्यप्राप्तिः खिल्यस्य स्वयोनिसंपर्कादपगच्छति— तत् उदकस्य विलयनम्, तत् अनु सैन्धवखिल्यो विलीयत इत्युच्यते; तदेतदाह— उदकमेवानुविलीयेतेति । न ह नैव— अस्य खिल्यस्य उद्ग्रहणाय उद्धृत्य पूर्ववद्ग्रहणाय ग्रहीतुम्, नैव समर्थः कश्चित्स्यात् सुनिपुणोऽपि; इव-शब्दोऽनर्थकः । ग्रहणाय नैव समर्थः; कस्मात्? यतो यतः यस्मात् यस्मात् देशात् तदुदकमाददीत, गृहीत्वा आ-

स्वादयेत् लवणास्वादमेव तत् उदकम्, न तु खिल्यभावः । यथा अयं दृष्टान्तः, एवमेव वै अरे मैत्रेयि इदं परमात्माख्यं महद्भूतम्— यस्मात् महतो भूतात् अविद्यया परिच्छिन्ना सती कार्यकरणोपाधिसंबन्धात्खिल्यभावमापन्नासि, मर्त्या जन्ममरणाशनायापिपासादिसंसारधर्मवत्यसि, नामरूपकार्यात्मिका— अमुष्यान्वयाहमिति, स खिल्यभावस्तव कार्यकरणभूतोपाधिसंपर्कभ्रान्तिजनितः महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मनि अजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे निरन्तरे अविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः; तस्मिन्प्रविष्टे स्वयोनिग्रस्ते खिल्यभावे अविद्याकृते भेदभावे प्रणाशिते— इदमेकमद्वैतं महद्भूतम्— महच्च तद्भूतं च महद्भूतं सर्वमहत्तरत्वात् आकाशादिकारणत्वाच्च, भूतम्— त्रिष्वपि कालेषु स्वरूपाव्यभिचारात् सर्वदैव परिनिष्पन्नमिति त्रैकालिको निष्ठाप्रत्ययः; अथवा भूतशब्दः परमार्थवाची, महच्च पारमार्थिकं चेत्यर्थः; लौकिकं तु यद्यपि महद्भवति, स्वप्नमायाकृतं हिमवदादिपर्वतोपमं न परमार्थवस्तु; अतो विशिनष्टि— इदं तु महच्च तद्भूतं चेति । अनन्तम् नास्यान्तो विद्यत इत्यनन्तम्; कदाचिदापेक्षिकं स्यादित्यतो विशिनष्टि अपा-

रमिति । विज्ञप्तिः विज्ञानम्, विज्ञानं च तद्घनश्चेति विज्ञानघनः, घनशब्दो जात्यन्तरप्रतिषेधार्थः—यथा सुवर्णघनः अयोघन इति ; एव-शब्दोऽवधारणार्थः—नान्यत् जात्यन्तरम् अन्तराले विद्यत इत्यर्थः । यदि इदमेकमद्वैतं परमार्थतः स्वच्छं संसारदुःखासंपृक्तम्, किंनिमित्तोऽयं खिल्यभाव आत्मनः—जातो मृतः सुखी दुःखी अहं ममेत्येवमादिलक्षणः अनेकसंसारधर्मोपद्रुत इति उच्यते— एतेभ्यो भूतेभ्यः—यान्येतानि कार्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि स्वच्छस्य परमात्मनः सलिलोपमस्य, येषां विषयपर्यन्तानां प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्तम् नदीसमुद्रवत्—एतेभ्यो हेतुभूतेभ्यः भूतेभ्यः सत्यशब्दवाच्येभ्यः, समुत्थाय सैन्धवखिल्यवत्— यथा अद्भ्यः सूर्यचन्द्रादिप्रतिबिम्बः, यथा वा स्वच्छस्य स्फटिकस्य अलक्तकाद्युपाधिभ्यो रक्तादिभावः, एवं कार्यकरणभूतभूतोपाधिभ्यो विशेषात्मखिल्यभावेन समुत्थाय सम्यगुत्थाय— येभ्यो भूतेभ्य उत्थितः तानि यदा कार्यकरणविषयाकारपरिणतानि भूतानि आत्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत् प्रविलापितानि विनश्यन्ति, सलिलफेनबुद्बुदा-

दिवत् तेषु विनश्यत्सु अन्वेव एष विशेषात्मखिल्यभावो विनश्यति; यथा उदकालक्तकादिहेत्वपनये सूर्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति, चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते, तद्वत् प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठते । न तत्र प्रेत्य विशेषसंज्ञास्ति कार्यकरणसंघातेभ्यो विमुक्तस्य— इत्येवम् अरे मैत्रेयि ब्रवीमि— नास्ति विशेषसंज्ञेति— अहमसौ अमुष्य पुत्रः ममेदं क्षेत्रं धनम् सुखी दुःखीत्येवमादिलक्षणा, अविद्याकृतत्वात्तस्याः; अविद्यायाश्च ब्रह्मविद्यया निरन्वयतो नाशितत्वात् कुतो विशेषसंज्ञासंभवो ब्रह्मविदः चैतन्यस्वभावावस्थितस्य; शरीरावस्थितस्यापि विशेषसंज्ञा नोपपद्यते किमुत कार्यकरणविमुक्तस्य सर्वतः । इति ह उवाच उक्तवान्किल परमार्थदर्शनं मैत्रेय्यै भार्यायै याज्ञवल्क्यः ॥

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥**

एवं प्रतिबोधिता सा ह किल उवाच उक्तवती मैत्रेयी—

अत्रैव एतस्मिन्नेव एकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्मवत्त्वमाचक्षाणेन भगवता मम मोहः कृतः; तदाह— अत्रैव मा भगवान् पूजावान् अमूमुहत् मोहं कृतवान् । कथं तेन विरुद्धधर्मवत्त्वमुक्तमित्युच्यते— पूर्वं विज्ञानघन एवेति प्रतिज्ञाय, पुनः न प्रेत्य संज्ञास्तीति; कथं विज्ञानघन एव? कथं वा न प्रेत्य संज्ञास्तीति? न हि उष्णः शीतश्च अग्निरेवैको भवति; अतो मूढास्मि अत्र । स होवाच याज्ञवल्क्यः— न वा अरे मैत्रेय्यहं मोहं ब्रवीमि— मोहनं वाक्यं न ब्रवीमीत्यर्थः । ननु कथं विरुद्धधर्मत्वमवोचः— विज्ञानघनं संज्ञाभावं च? न मया इदम् एकस्मिन्धर्मिण्यभिहितम्; त्वयैव इदं विरुद्धधर्मत्वेन एकं वस्तु परिगृहीतं भ्रान्त्या; न तु मया उक्तम्; मया तु इदमुक्तम्— यस्तु अविद्याप्रत्युपस्थापितः कार्यकरणसंबन्धी आत्मनः खिल्यभावः, तस्मिन्विद्यया नाशिते, तन्निमित्ता या विशेषसंज्ञा शरीरादिसंबन्धिनी अन्यत्वदर्शनलक्षणा, सा कार्यकरणसंघातोपाधौ प्रविलापिते नश्यति, हेत्वभावात्, उदकाद्याधारनाशादिव चन्द्रादिप्रतिबिम्बः तन्निमित्तश्च प्रकाशादिः; न पुनः परमार्थचन्द्रादित्यस्वरूपवत् असंसारिब्रह्मस्वरूपस्य विज्ञानघनस्य नाशः; तत् विज्ञानघन इत्युक्तम्; स आत्मा

सर्वस्य जगतः; परमार्थतो भूतनाशात् न विनाशी; विनाशी तु अविद्याकृतः खिल्यभावः, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुत्यन्तरात्। अयं तु पारमार्थिकः—अविनाशी वा अरेऽयमात्मा; अतः अलं पर्याप्तम् वै अरे इदं महद्भूतमनन्तमपारं यथाव्याख्यातम् विज्ञानाय विज्ञातुम्; 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति हि वक्ष्यति ॥

**यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात्। येनेदꣳ सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥**

इति द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥

कथं तर्हि प्रेत्य संज्ञा नास्तीत्युच्यते शृणु; यत्र यस्मिन् अविद्याकल्पिते कार्यकरणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे, हि यस्मात्, द्वैतमिव— परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मनः— उपलक्ष्यते— ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति; न, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुत्यन्तरात् 'एकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' इति च— तत् तत्र यस्माद्द्वैतमिव तस्मादेव इतरोऽसौ परमात्मनः खिल्यभूत आत्मा अपरमार्थः, चन्द्रादेरिव उदकचन्द्रादिप्रतिबिम्बः, इतरो घ्राता इतरेण घ्राणेन इतरं घ्रातव्यं जिघ्रति; इतर इतरमिति कारकप्रदर्शनार्थम्, जिघ्रतीति क्रियाफलयोरभिधानम्— यथा छिनत्तीति— यथा उद्यम्य उद्यम्य निपातनम् छेद्यस्य च द्वैधीभावः उभयं छिनत्तीत्येकेनैव शब्देन अभिधीते— क्रियावसानत्वात् क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्; इतरो घ्राता इतरेण घ्राणेन इतरं घ्रातव्यं जिघ्रति— तथा सर्वं पूर्ववत्— विजानाति; इयम् अविद्यावदवस्था। यत्र तु ब्रह्मविद्यया अविद्या नाशमुपगमिता तत्र आत्मव्यतिरेकेण अन्यस्याभावः; यत्र वै अस्य ब्रह्मविदः सर्वं नामरूपादि आत्मन्येव प्रवि-

लापितम् आत्मैव संवृत्तम्— यत्र एवम् आत्मैवाभूत्, तत् तत्र केन करणेन कं घ्रातव्यं को जिघ्रेत्? तथा पश्येत्? विजानीयात्; सर्वत्र हि कारकसाध्या क्रिया; अतः कारकाभावेऽनुपपत्तिः क्रियायाः; क्रियाभावे च फलाभावः। तस्मात् अविद्यायामेव सत्यां क्रियाकारकफलव्यवहारः, न ब्रह्मविदः— आत्मत्वादेव सर्वस्य, न आत्मव्यतिरेकेण कारकं क्रियाफलं वास्ति; न च अनात्मा सन् सर्वमात्मैव भवति कस्यचित्; तस्मात् अविद्यैव अनात्मत्वं परिकल्पितम्; न तु परमार्थत आत्मव्यतिरेकेणास्ति किंचित्; तस्मात् परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिः। अतः विरोधात् ब्रह्मविदः क्रियाणां तत्साधनानां च अत्यन्तमेव निवृत्तिः। केन कमिति क्षेपार्थं वचनं प्रकारान्तरानुपपत्तिदर्शनार्थम्, केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः— केनचित् कंचित् कश्चित् कथंचित् न जिघ्रेदेवेत्यर्थः। यत्रापि अविद्यावस्थायाम् अन्यः अन्यं पश्यति, तत्रापि येनेदं सर्वं विजानाति, तं केन विजानीयात्— येन विजानाति, तस्य करणस्य, विज्ञेये विनियुक्तत्वात्; ज्ञातुश्च ज्ञेय एव हि जिज्ञासा, न आत्मनि; न च अग्नेरिव आत्मा आत्मनो विषयः; न च अविषये ज्ञातुः

ज्ञानमुपपद्यते; तस्मात् येन इदं सर्वं विजानाति, तं विज्ञातारं केन करणेन को वा अन्यः विजानीयात्— यदा तु पुनः परमार्थविवेकिनो ब्रह्मविदो विज्ञातैव केवलोऽद्वयो वर्तते, तं विज्ञातारं अरे केन विजानीयादिति ॥

इति द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥



## पञ्चमं ब्राह्मणम् ॥

यत् केवलं कर्मनिरपेक्षम् अमृतत्वसाधनम्, तद्वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम्; तच्च आत्मज्ञानं सर्वसंन्यासाङ्गविशिष्टम्; आत्मनि च विज्ञाते सर्वमिदं विज्ञातं भवति; आत्मा च प्रियः सर्वस्मात्; तस्मात् आत्मा द्रष्टव्यः; स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च दर्शनप्रकारा उक्ताः; तत्र श्रोतव्यः, आचार्यागमाभ्याम्; मन्तव्यः तर्कतः; तत्र च तर्क उक्तः— 'आत्मैवेदं सर्वम्' इति प्रतिज्ञातस्य हेतुवचनम् आत्मैकसामान्यत्वम् आत्मैकोद्भवत्वम् आत्मैकप्रलयत्वं च; तत्र अयं हेतुः असिद्ध इत्याशङ्क्यते आत्मैकसामान्योद्भवप्रलयाख्यः; तदाशङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते। यस्मात् परस्परोपकार्योपकारकभूतं जगत्सर्वं पृथिव्यादि, यच्च लोके परस्परोपकार्योपकारकभूतं तत् एककारणपूर्वकम् एकसामान्यात्मकम् एकप्रलयं च दृष्टम्, तस्मात् इदमपि पृथिव्यादिलक्षणं जगत् परस्परोपकार्योपकारकत्वात् तथाभूतं भवितुमर्हति—, एष ह्यर्थः अस्मिन्ब्राह्मणे प्रकाश्यते। अथवा 'आत्मैवेदं

सर्वम्' इति प्रतिज्ञातस्य आत्मोत्पत्तिस्थितिलयत्वं हेतुमुक्त्वा, पुनः आगमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्य अर्थस्य निगमनं क्रियते; तथाहि नैयायिकैरुक्तम्—'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्' इति। अन्यैर्व्याख्यातम्—आ दुन्दुभिदृष्टान्तात् श्रोतव्यार्थमागमवचनम्, प्राङ्मधुब्राह्मणात् मन्तव्यार्थम् उपपत्तिप्रदर्शनेन, मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यत इति। सर्वथापि तु यथा आगमेनावधारितम्, तर्कतस्तथैव मन्तव्यम्; यथा तर्कतो मतम्, तस्य तर्कागमाभ्यां निश्चितस्य तथैव निदिध्यासनं क्रियत इति पृथक् निदिध्यासनविधिरनर्थक एव; तस्मात् पृथक् प्रकरणविभागः अनर्थक इत्यस्मदभिप्रायः श्रवणमनननिदिध्यासनानामिति। सर्वथापि तु अध्यायद्वयस्यार्थः अस्मिन्ब्राह्मणे उपसंह्रियते॥

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्॥ १॥**

इयं पृथिवी प्रसिद्धा सर्वेषां भूतानां मधु— सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनाम्, मधु कार्यम्, मध्विव मधु; यथा एको मध्वपूपः अनेकैर्मधुकरैर्निर्वर्तितः, एवम् इयं पृथिवी सर्वभूतनिर्वर्तिता । तथा सर्वाणि भूतानि पृथिव्यै पृथिव्याः अस्याः, मधु कार्यम् । किं च यश्चायं पुरुषः अस्यां पृथिव्यां तेजोमयः चिन्मात्रप्रकाशमयः अमृतमयोऽमरणधर्मा पुरुषः, यश्चायम् अध्यात्मम् शारीरः शरीरे भवः पूर्ववत् तेजोमयोऽमृतमयः पुरुषः, स च लिङ्गाभिमानी— स च सर्वेषां भूतानामुपकारकत्वेन मधु, सर्वाणि च भूतान्यस्य मधु, च-शब्दसामर्थ्यात् । एवम् एतच्चतुष्टयं तावत् एकं सर्वभूतकार्यम्, सर्वाणि च भूतान्यस्य कार्यम्; अतः अस्य एककारणपूर्वकता । यस्मात् एकस्मात्कारणात् एतज्जातम्, तदेव एकं परमार्थतो ब्रह्म, इतरत्कार्यं वाचारम्भणं विकारो नामधेयमात्रम्— इत्येष मधुपर्यायाणां सर्वेषामर्थः संक्षेपतः । अयमेव सः, योऽयं प्रतिज्ञातः— 'इदं सर्वं यदयमात्मा' इति; इदममृतम्— यत् मैत्रेय्याः अमृतत्वसाधनमुक्तम् आत्मविज्ञानम्— इदं तदमृतम्; इदं ब्रह्म— यत् 'ब्रह्म ते ब्रवाणि' 'ज्ञपयिष्यामि' इत्यध्यायादौ प्रकृतम्, यद्विषया च विद्या ब्रह्म-

विद्येत्युच्यते; इदं सर्वम्— यस्मात् ब्रह्मणो विज्ञानात्सर्वं भवति ॥

इमा आपः सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ २ ॥

तथा आपः। अध्यात्मं रेतसि अपां विशेषतोऽवस्थानम् ॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ३ ॥

तथा अग्निः। वाचि अग्नेर्विशेषतोऽवस्थानम् ॥

**अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ४ ॥**

तथा वायुः, अध्यात्मं प्राणः । भूतानां शरीरारम्भकत्वेनोपकारात् मधुत्वम्; तदन्तर्गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वम्; तथा चोक्तम् — 'तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः' इति ॥

**अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ५ ॥**

तथा आदित्यो मधु, चाक्षुषः अध्यात्मम् ॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥

तथा दिशो मधु । दिशां यद्यपि श्रोत्रमध्यात्मम्, शब्दप्रतिश्रवणवेलायां तु विशेषतः संनिहितो भवतीति अध्यात्मं प्रातिश्रुत्कः— प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः ॥

अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ७ ॥

तथा चन्द्रः, अध्यात्मं मानसः ॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चाय-मस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतम-यः पुरुषोऽयमेव स योऽयमात्मेदममृत-मिदं ब्रह्मेदꣳ सर्वम् ॥ ८ ॥

तथा विद्युत्, त्वक्तेजसि भवः तैजसः अध्यात्मम् ॥

अयꣳ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृत-मयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥

तथा स्तनयित्नुः । शब्दे भवः शाब्दः अध्यात्मं यद्यपि, तथापि स्वरे विशेषतो भवतीति सौवरः अध्यात्मम् ॥

अयमाकाशः सर्वेषां भूतानां मध्व-

**स्याकाशस्य सर्वाणि भूतानि मधु यश्चा-यमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरु-षो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोम-योऽमृतमयः पुरुषोऽयमेव स योऽयमा-त्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥**

तथा आकाशः, अध्यात्मं हृद्याकाशः ॥

आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च का-र्यकरणसंघातात्मानः उपकुर्वन्तो मधु भवन्ति प्रतिशरीरि-णमित्युक्तम् । येन ते प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वन्ति, तत् वक्तव्यमिति इदमारभ्यते—

**अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायम-स्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो य-श्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ११ ॥**

अयं धर्मः— 'अयम्' इति अप्रत्यक्षोऽपि धर्मः कार्येण

तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यते— अयं धर्म इति— प्रत्यक्षवत् । धर्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः, क्षत्त्रादीनामपि नियन्ता, जगतो वैचित्र्यकृत् पृथिव्यादीनां परिणामहेतुत्वात्, प्राणिभिरनुष्ठीयमानरूपश्च ; तेन च 'अयं धर्मः' इति प्रत्यक्षेण व्यपदेशः । सत्यधर्मयोश्च अभेदेन निर्देशः कृतः शास्त्राचारलक्षणयोः ; इह तु भेदेन व्यपदेश एकत्वे सत्यपि, दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात् । यस्तु अदृष्टः अपूर्वाख्यो धर्मः, स सामान्यविशेषात्मना अदृष्टेन रूपेण कार्यमारभते— सामान्यरूपेण पृथिव्यादीनां प्रयोक्ता भवति, विशेषरूपेण च अध्यात्मं कार्यकरणसंघातस्य ; तत्र पृथिव्यादीनां प्रयोक्तरि— यश्चायमस्मिन्धर्मे तेजोमयः ; तथा अध्यात्मं कार्यकरणसंघातकर्तरि धर्मे भवो धार्मः ॥

**इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १२ ॥**

तथा दृष्टेनानुष्ठीयमानेन आचाररूपेण सत्याख्यो भवति, स एव धर्मः; सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण— सामान्यरूपः पृथिव्यादिसमवेतः, विशेषरूपः कार्यकरणसंघातसमवेतः; तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये, तथा अध्यात्मं कार्यकरणसंघातसमवेते सत्ये, भवः सात्यः— 'सत्येन वायुरावाति' इति श्रुत्यन्तरात् ॥

**इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १३ ॥**

धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकरणसंघातविशेषः, स येन जातिविशेषेण संयुक्तो भवति, स जातिविशेषो मानुषादिः; तत्र मनुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते; अतो मानुषादिजातिरपि सर्वेषां भूतानां मधु । तत्र मानुषादिजातिरपि बाह्या आध्यात्मिकी चेति उभयथा निर्देशभाक् भवति ॥

**अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १४ ॥**

यस्तु कार्यकरणसंघातो मानुषादिजातिविशिष्टः, सोऽयमात्मा सर्वेषां भूतानां मधु । ननु अयं शारीरशब्देन निर्दिष्टः पृथिवीपर्याय एव— न, पार्थिवांशस्यैव तत्र ग्रहणात्; इह तु सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूताधिदैवादिसर्वविशेषः सर्वभूतदेवतागणविशिष्टः कार्यकरणसंघातः सः 'अयमात्मा' इत्युच्यते । तस्मिन् अस्मिन् आत्मनि तेजोमयोऽमृतमयः पुरुषः अमूर्तरसः सर्वात्मको निर्दिश्यते; एकदेशेन तु पृथिव्यादिषु निर्दिष्टः, अत्र अध्यात्मविशेषाभावात् सः न निर्दिश्यते । यस्तु परिशिष्टो विज्ञानमयः— यदर्थोऽयं देहलिङ्गसंघात आत्मा— सः 'यश्चायमात्मा' इत्युच्यते ॥

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा**

**रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ १५ ॥**

यस्मिन्नात्मनि, परिशिष्टो विज्ञानमयः अन्त्ये पर्याये, प्रवेशितः, सोऽयमात्मा। तस्मिन् अविद्याकृतकार्यकरणसंघातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते, स एव-मुक्तः अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः, स वै— स एव अयमात्मा अव्यवहितपूर्वपर्याये 'तेजोमयः' इत्यादिना निर्दिष्टो विज्ञानात्मा विद्वान्, सर्वेषां भूतानामयमात्मा—सर्वैरुपास्यः— सर्वेषां भूतानामधिपतिः सर्वभूतानां स्वतन्त्रः— न कुमारामात्यवत्— किं तर्हि सर्वेषां भूतानां राजा, राजत्ववि-शेषणम् 'अधिपतिः' इति—. भवति कश्चित् राजोचितवृत्तिमाश्रित्य राजा, न तु अधिपतिः, अतो विशिनष्टि अधि-पतिरिति; एवं सर्वभूतात्मा विद्वान् ब्रह्मवित् मुक्तो भवति। यदुक्तम्— 'ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते, किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्' इतीदम्, तत् व्याख्यातम् एवम्— आत्मानमेव सर्वात्मत्वेन आचार्यागमाभ्यां श्रुत्वा, मत्वा तर्कतः, विज्ञाय साक्षात् एवम्, यथा मधुब्राह्मणे

दर्शितं तथा– तस्मात् ब्रह्मविज्ञानात् एवंलक्षणात् पूर्वमपि, ब्रह्मैव सत् अविद्यया अब्रह्म आसीत्, सर्वमेव च सत् असर्वमासीत्– तां तु अविद्याम् अस्माद्विज्ञानात् तिरस्कृत्य ब्रह्मवित् ब्रह्मैव सन् ब्रह्माभवत्, सर्वः सः सर्वमभवत् । परिसमाप्तः शास्त्रार्थः, यदर्थः प्रस्तुतः; तस्मिन् एतस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वं जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते— तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता इति, प्रसिद्धोऽर्थः, एवमेव अस्मिन् आत्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वे देवाः अग्न्यादयः सर्वे लोकाः भूरादयः सर्वे प्राणाः वागादयः सर्व एत आत्मानो जलचन्द्रवत् प्रतिशरीरानुप्रवेशिनः अविद्याकल्पिताः; सर्वं जगत् अस्मिन्समर्पितम् । यदुक्तम्, ब्रह्मवित् वामदेवः प्रतिपेदे– अहं मनुरभवं सूर्यश्चेति, स एष सर्वात्मभावो व्याख्यातः । स एष विद्वान् ब्रह्मवित् सर्वोपाधिः सर्वात्मा सर्वो भवति; निरुपाधिः निरुपाख्यः अनन्तरः अबाह्यः कृत्स्नः प्रज्ञानघनः अजोऽजरोऽमृतोऽभयोऽचलः नेति नेत्यस्थूलोऽनणुरित्येवंविशेषणः भवति । तमेतमर्थम् अजानन्तस्तार्किकाः केचित् पण्डितंमन्याश्चा-

गमविदः शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति। तमेतमर्थम् एतौ मन्त्रावनुब्रदतः— 'अनेजदेकं मनसो जवीयः' 'तदेजति तन्नैजति' इति। तथा च तैत्तिरीयके—, 'यस्मात्परं नापरमस्ति किंचित्', 'एतत्साम गायन्नास्ते' 'अहमन्नमहमन्नमहमन्नम्' इत्यादि। तथा च च्छान्दोग्ये 'जक्षत्क्रीडन्रममाणः', 'स यदि पितृलोककामः' 'सर्वगन्धः सर्वरसः', 'सर्वज्ञः सर्ववित्' इत्यादि। आथर्वणे च 'दूरात्सुदूरे तदिहान्तिके च'। कठवल्लीष्वपि 'अणोरणीयान्महतो महीयान्' 'कस्तं मदामदं देवम्' 'तद्धावतोऽन्यानत्येति तिष्ठत्' इति च। तथा गीतासु 'अहं क्रतुरहं यज्ञः' 'पिताहमस्य जगतः' 'नादत्ते कस्यचित्पापम्' 'समं सर्वेषु भूतेषु' 'अविभक्तं विभक्तेषु' 'ग्रसिष्णु प्रभविष्णु च' इति— एवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः स्वचित्तसामर्थ्यात् अर्थनिर्णयाय विकल्पयन्तः— अस्त्यात्मा नास्त्यात्मा, कर्ता अकर्ता, मुक्तः बद्धः, क्षणिको विज्ञानमात्रं शून्यं च— इत्येवं विकल्पयन्तः न पारमधिगच्छन्त्यविद्यायाः, विरुद्धधर्मदर्शित्वात्सर्वत्र। तस्मात् तत्र य एव श्रुत्याचार्यदर्शितमार्गानुसारिणः, त एवाविद्यायाः पारमधिगच्छन्ति; त एव च अस्मान्मोहसमु-

द्राद्गाधात् उत्तरिष्यन्ति, नेतरे स्वबुद्धिकौशलानुसारिणः ॥

परिसमाप्ता ब्रह्मविद्या अमृतत्वसाधनभूता, यां मैत्रेयी पृष्टवती भर्तारम् 'यदेव भगवानमृतत्वसाधनं वेद तदेव मे ब्रूहि' इति । एतस्या ब्रह्मविद्यायाः स्तुत्यर्था इयमाख्यायिका आनीता । तस्या आख्यायिकायाः संक्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः; एवं हि मन्त्रब्राह्मणाभ्यां स्तुतत्वात् अमृतत्वसर्वप्राप्तिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं राजमार्गमुपनीतं भवति— यथा आदित्यः उद्यन् शार्वरं तमोऽपनयतीति— तद्वत् । अपि च एवं स्तुता ब्रह्मविद्या— या इन्द्ररक्षिता सा दुष्प्रापा देवैरपि; यस्मात् अश्विभ्यामपि देवभिषग्भ्याम् इन्द्ररक्षिता विद्या महता आयासेन प्राप्ता; ब्राह्मणस्य शिरश्छित्त्वा अश्व्यं शिरः प्रतिसंधाय, तस्मिन्निन्द्रेण च्छिन्ने पुनः स्वशिर एव प्रतिसंधाय, तेन ब्राह्मणस्य स्वशिरसैव उक्ता अशेषा ब्रह्मविद्या श्रुता; यस्मात् ततः परतरं किंचित्पुरुषार्थसाधनं न भूतं न भावि वा, कुत एव वर्तमानम्— इति नातः परा स्तुतिरस्ति । अपि चैवं स्तूयते ब्रह्मविद्या— सर्वपुरुषार्थानां कर्म हि साधनमिति लोके प्रसिद्धम्; तच्च कर्म वित्तसाध्यम्, तेन आशापि नास्त्यमृतत्वस्य; तदिदममृतत्वं केवलया आत्म-

विद्यया कर्मनिरपेक्षया प्राप्यते; यस्मात् कर्मप्रकरणे वक्तुं प्राप्तापि सती प्रवर्ग्यप्रकरणे, कर्मप्रकरणादुत्तीर्य कर्मणा विरुद्धत्वात् केवलसंन्याससहिता अभिहिता अमृतत्वसाधनाय— तस्मात् नातः परं पुरुषार्थसाधनमस्ति । अपि च एवं स्तुता ब्रह्मविद्या— सर्वो हि लोको द्वन्द्वारामः, 'स वै नैव रेमे तस्मादेकाकी न रमते' इति श्रुतेः; याज्ञवल्क्यो लोकसाधारणोऽपि सन आत्मज्ञानबलात् भार्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रज्ञानतृप्त आत्मरतिर्बभूव । अपि च एवं स्तुता ब्रह्मविद्या— यस्मात् याज्ञवल्क्येन संसारमार्गात् व्युत्तिष्ठतापि प्रियायै भार्यायै प्रीत्यर्थमेव अभिहिता, 'प्रियं भाषस एह्यास्स्व' इति लिङ्गात् ।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥**

तत्र इयं स्तुत्यर्था आख्यायिकेत्यवोचाम; का पुनः

सा आख्यायिकेति उच्यते— इदमित्यनन्तरनिर्दिष्टं व्यपदिशति, बुद्धौ संनिहितत्वात्; वै-शब्दः स्मरणार्थः; तदित्याख्यायिकानिर्वृत्तं प्रकरणान्तराभिहितं परोक्षं वै-शब्देन स्मारयन् इह व्यपदिशति; यत् प्रवर्ग्यप्रकरणे सूचितम्, न आविष्कृतं मधु, तदिदं मधु इह अनन्तरं निर्दिष्टम्— 'इयं पृथिवी' इत्यादिना; कथं तत्र प्रकरणान्तरे सूचितम् —दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच; तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति; स होवाचेन्द्रेण वा उक्तोऽस्म्येतच्चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति; तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यात्तद्वामुपनेष्य इति; तौ होचतुरावां त्वा तस्मात्त्रास्यावह इति; कथं मा त्रास्येथे इति; यदा नावुपनेष्यसे; अथ ते शिरश्छित्त्वान्यत्राहृत्योपनिधास्याव:; अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्याव:; तेन नावनुवक्ष्यसि; स यदा नावनुवक्ष्यसि; अथ ते तदिन्द्रः शिरश्छेत्स्यति; अथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति; तथेति तौ होपनिन्ये; तौ यदोपनिन्ये; अथास्य शिरश्छित्त्वा अन्यत्रोपनिदधतुः; अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः; तेन हाभ्यामनूवाच; स यदाभ्यामनूवाच अथास्य तदिन्द्रः शिरश्चिच्छेद; अथास्य

स्वं शिर आहृत्य तद्धास्य प्रतिदधतुरिति। यावत्तु प्रवर्ग्यकर्माङ्गभूतं मधु, तावदेव तत्राभिहितम्; न तु कक्ष्यमात्मज्ञानाख्यम्; तत्र या आख्यायिका अभिहिता, सेह स्तुत्यर्था प्रदर्श्यते; इदं वै तन्मधु दध्यङ्ङाथर्वणः अनेन प्रपञ्चेन अश्विभ्यामुवाच। तदेतदृषिः—तदेतत्कर्म, ऋषिः मन्त्रः, पश्यन् उपलभमानः, अवोचत् उक्तवान्; कथम्? तत् दंसः इति व्यवहितेन संबन्धः, दंस इति कर्मणो नामधेयम्; तच्च दंसः किंविशिष्टम्? उग्रं क्रूरम्, वां युवयोः, हे नरा नराकारावश्विनौ; तच्च कर्म किंनिमित्तम्? सनये लाभाय; लाभलुब्धो हि लोकेऽपि क्रूरं कर्म आचरति, तथैव एतावुपलभ्येते यथा लोके; तत् आविः प्रकाशं कृणोमि करोमि, यत् रहसि भवद्भ्यां कृतम्; किमिवेत्युच्यते—तन्यतुः पर्जन्यः, न इव; नकारस्तु उपरिष्टादुपचारः उपमार्थीयो वेदे, न प्रतिषेधार्थः—यथा 'अश्वं न' अश्वमिवेति यद्वत्; तन्यतुरिव वृष्टिं यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्न्वादिशब्दैः, तद्वत् अहं युवयोः क्रूरं कर्म आविष्कृणोमीति संबन्धः। ननु अश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्याताम्? निन्दावचनौ हीमौ—नैष दोषः; स्तुतिरेवैषा, न निन्दावचनौ; यस्मात् ईदृशमप्यतिक्रूरं कर्म कुर्वतोर्युवयोः न लोम च

मीयत इति—न चान्यत्किंचिद्धीयत एवेति—स्तुतावेतौ भवतः; निन्दां प्रशंसां हि लौकिकाः स्मरन्ति; तथा प्रशंसारूपा च निन्दा लोके प्रसिद्धा। दध्यङ्नाम आथर्वणः; हेत्यनर्थको निपातः; यन्मधु कक्ष्यम् आत्मज्ञानलक्षणम् आथर्वणः वां युवाभ्याम् अश्वस्य शीर्ष्णा शिरसा, प्र यत् ईम् उवाच—यत्प्रोवाच मधु; ईमित्यनर्थको निपातः॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विनौ दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति॥ १७॥**

इदं वै तन्मध्वित्यादि पूर्ववत् मन्त्रान्तरप्रदर्शनार्थम्। तथा अन्यो मन्त्रः तामेव आख्यायिकामनुसरति स्म। आथर्वणो दध्यङ्नाम— आथर्वणोऽन्यो विद्यत इत्यतो विशिनष्टि— दध्यङ्नाम आथर्वणः, तस्मै दधीचे आथर्वणाय, हे अश्विनाविति मन्त्रदृशो वचनम्; अश्व्यम् अश्वस्य स्वभूतम्, शिरः, ब्राह्मणस्य शिरसि छिन्ने अश्वस्य शिरश्छित्त्वा ईदृशमतिक्रूरं कर्म कृत्वा अश्व्यं

शिरः ब्राह्मणं प्रति ऐरयतं गमितवन्तौ, युवाम्; स च आथर्वणः वां युवाभ्याम् तन्मधु प्रवोचत्, यत्पूर्वं प्रतिज्ञातम्— वक्ष्यामीति। स किमर्थमेवं जीवितसंदेहमारुह्य प्रवोचदित्युच्यते— ऋतायन् यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छन्; जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्। किं तन्मधु प्रवोचदित्युच्यते— त्वाष्ट्रम्, त्वष्टा आदित्यः, तस्य संबन्धि— यज्ञस्य शिरश्छिन्नं त्वष्ट्रा अभवत्, तत्प्रतिसंधानार्थं प्रवर्ग्यं कर्म, तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञानं तत् त्वाष्ट्रं मधु— यज्ञस्य शिरश्छेदनप्रतिसंधानादिविषयं दर्शनं तत्त्वाष्ट्रं यन्मधु; हे दस्रौ दस्राविति परबलानामुपक्षपयितारौ शत्रूणां हिंसितारौ; अपि च न केवलं त्वाष्ट्रमेव मधु कर्मसंबन्धि युवाभ्यामवोचत्; अपि च कक्ष्यं गोप्यं रहस्यं परमात्मसंबन्धि यद्विज्ञानं मधु मधुब्राह्मणेनोक्तं अध्यायद्वयप्रकाशितम्, तच्च वां युवाभ्यां प्रवोचदित्यनुवर्तते ॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति।**

**स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् ॥ १८ ॥**

इदं वै तन्मध्विति पूर्ववत् । उक्तौ द्वौ मन्त्रौ प्रवर्ग्यसंबन्ध्याख्यायिकोपसंहर्तारौ ; द्वयोः प्रवर्ग्यकर्मार्थयोरध्याययोरर्थ आख्यायिकाभूताभ्यां मन्त्राभ्यां प्रकाशितः । ब्रह्मविद्यार्थयोस्त्वध्याययोरर्थ उत्तराभ्यामृग्भ्यां प्रकाशयितव्य इत्यतः प्रवर्तते । यत् कक्ष्यं च मधु उक्तवानाथर्वणो युवाभ्यामित्युक्तम्— किं पुनस्तन्मध्वित्युच्यते— पुरश्चक्रे, पुरः पुराणि शरीराणि— यत इयमव्याकृतव्याकरणप्रक्रिया— स परमेश्वरो नामरूपे अव्याकृते व्याकुर्वाणः प्रथमं भूरादीन् लोकान्सृष्ट्वा, चक्रे कृतवान्, द्विपदः द्विपादुपलक्षितानि मनुष्यशरीराणि पक्षिशरीराणि; तथा पुरः शरीराणि चक्रे चतुष्पदः चतुष्पादुपलक्षितानि पशुशरीराणि; पुरः पुरस्तात्, स ईश्वरः पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि— पुरुष आविशदित्यस्यार्थमाचष्टे श्रुतिः— स वा अयं पुरुषः सर्वासु पूर्षु सर्वशरीरेषु पुरिशयः, पुरि शेत इति पुरिशयः सन् पुरुष इत्युच्यते; न एनेन अनेन किंचन किंचिदपि अनावृतम् अनाच्छादितम्;

तथा न एनेन किंचनासंवृतम् अन्तरननुप्रवेशितम्— बाह्यभूतेनान्तर्भूतेन च न अनावृतम्; एवं स एव नामरूपात्मना अन्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितः; पुरश्चक्रे इत्यादिमन्त्रः संक्षेपत आत्मैकत्वमाचष्ट इत्यर्थः ॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । रूपꣳ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥**

इति द्वितीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥

इदं वै तन्मध्वित्यादि पूर्ववत् । रूपं रूपं प्रतिरूपो बभूव— रूपं रूपं प्रति प्रतिरूपः रूपान्तरं बभूवेत्यर्थः; प्रतिरूपोऽनुरूपो वा यादृक्संस्थानौ मातापितरौ तत्सं-

स्थानः तदनुरूप एव पुत्रो जायते; न हि चतुष्पदो द्विपाज्जायते, द्विपदो वा चतुष्पात्; स एव हि परमेश्वरो नामरूपे व्याकुर्वाणः रूपं रूपं प्रतिरूपो बभूव । किमर्थं पुनः प्रतिरूपमागमनं तस्येत्युच्यते—तत् अस्य आत्मनः रूपं प्रतिचक्षणाय प्रतिख्यापनाय; यदि हि नामरूपे न व्याक्रियेते, तदा अस्य आत्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत; यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतः, तदा अस्य रूपं प्रतिख्यायेत । इन्द्रः परमेश्वरः मायाभिः प्रज्ञाभिः नामरूपभूतकृतमिथ्याभिमानैर्वा न तु परमार्थतः, पुरुरूपः बहुरूपः, ईयते गम्यते— एकरूप एव प्रज्ञानघनः सन् अविद्याप्रज्ञाभिः । कस्मात्पुनः कारणात्? युक्ताः रथ इव वाजिनः, स्वविषयप्रकाशनाय, हि यस्मात्, अस्य हरयः हरणात् इन्द्रियाणि, शता शतानि, दश च, प्राणिभेदबाहुल्यात् शतानि दश च भवन्ति; तस्मात् इन्द्रियविषयबाहुल्यात् तत्प्रकाशनायैव च युक्तानि तानि न आत्मप्रकाशनाय; 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति हि काठके । तस्मात् तैरेव विषयस्वरूपैरीयते, न प्रज्ञानघनैकरसेन स्वरूपेण । एवं तर्हि अन्यः परमेश्वरः अन्ये हरय इत्येवं प्राप्ते

उच्यते— अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च; प्राणिभेदस्य आनन्त्यात्। किं बहुना? तदेतद्ब्रह्म य आत्मा, अपूर्वम् नास्य कारणं पूर्वं विद्यत इत्यपूर्वम्, नास्यापरं कार्यं विद्यत इत्यनपरम्, नास्य जात्यन्तरमन्तराले विद्यत इत्यनन्तरम्, तथा बहिरस्य न विद्यत इत्यबाह्यम्; किं पुनस्तत् निरन्तरं ब्रह्म? अयमात्मा; कोऽसौ? यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता सर्वानुभूः— सर्वात्मना सर्वमनुभवतीति सर्वानुभूः— इत्येतदनुशासनम् सर्ववेदान्तोपदेशः; एष सर्ववेदान्तानामुपसंहृतोऽर्थः; एतदमृतमभयम्; परिसमाप्तश्च शास्त्रार्थः ॥

इति द्वितीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥

## षष्ठं ब्राह्मणम् ॥

अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भा-

रद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

घृतकौशिकाद्धृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसाद-

यास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूति-
स्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वा-
ष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्द-
ध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो
मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः
प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्र-
चित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः स-
नारुः सनातनात्सनातनः सनगात्स-
नगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म
स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

इति द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥

अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य वंशः स्तुत्यर्थो ब्रह्मविद्यायाः । मन्त्रश्चायं स्वाध्यायार्थो जपार्थश्च । तत्र वंश इव वंशः— यथा वेणुः वंशः पर्वणः पर्वणो हि भिद्यते तद्वत् अग्रात्प्रभृति आ मूलप्राप्तेः अयं वंशः; अध्यायचतुष्ट-यस्य आचार्यपरम्पराक्रमो वंश इत्युच्यते; तत्र प्रथमान्तः

शिष्यः पञ्चम्यन्त आचार्यः; परमेष्ठी विराट्; ब्रह्मणो हिरण्यगर्भात्; ततः परम् आचार्यपरम्परा नास्ति। यत्पुनर्ब्रह्म, तन्नित्यं स्वयंभु, तस्मै ब्रह्मणे स्वयंभुवे नमः ॥

इति द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

बृहदारण्यकोपनिषद्भाष्ये

द्वितीयोऽध्यायः ॥

नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कृत्स्नाः सर्वाः कृतीः शांकरीः ।
संमुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रान्त्यं परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।
तच्छास्त्रप्रदर्शिसम्यग्विलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाप्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता भूयात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS.

## ॥ विषयाः ॥

॥ श्रीः ॥

# उपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः
विरचितम् ।

## षष्ठो भागः

## ॥ बृहदारण्यकम् ॥

अध्यायौ ३-४.

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

## चतुर्थं शारीरकब्राह्मणम् ... ६०१—६७८

श्रीमच्छंकरभगवत्पादविरचितम्

# बृहदारण्यकोपनिषद्भाष्यम्

---

## तृतीयोऽध्यायः

# ॥ तृतीयोऽध्यायः ॥

‘जनको ह वैदेहः’ इत्यादि याज्ञवल्कीयं काण्डमारभ्यते; उपपत्तिप्रधानत्वात् अतिक्रान्तेन मधुकाण्डेन समानार्थत्वेऽपि सति न पुनरुक्तता; मधुकाण्डं हि आगमप्रधानम्; आगमोपपत्ती हि आत्मैकत्वप्रकाशनाय प्रवृत्ते शक्नुतः करतलगतबिल्वमिव दर्शयितुम्; ‘श्रोतव्यो मन्तव्यः’ इति ह्युक्तम्; तस्मादागमार्थस्यैव परीक्षापूर्वकं निर्धारणाय याज्ञवल्कीयं काण्डमुपपत्तिप्रधानमारभ्यते । आख्यायिका तु विज्ञानस्तुत्यर्था उपायविधिपरा वा; प्रसिद्धो ह्युपायो विद्वद्भिः शास्त्रेषु च दृष्टः— दानम्; दानेन ह्युपनमन्ते प्राणिनः; प्रभूतं हिरण्यं गोसहस्रदानं च इहोपलभ्यते; तस्मात् अन्यपरेणापि शास्त्रेण विद्याप्राप्त्युपायदानप्रदर्शनार्था आख्यायिका आरब्धा । अपि च तद्विद्यसंयोगः तैश्च सह वादकरणं विद्याप्राप्त्युपायो न्यायविद्यायां दृष्टः;

तच्च अस्मिन्नध्याये प्राबल्येन प्रदर्श्यते; प्रत्यक्षा च विद्वत्संयोगे प्रज्ञावृद्धिः। तस्मात् विद्याप्राप्त्युपायप्रदर्शनार्थैव आख्यायिका॥

**ॐ जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति स ह गवाꣳ सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः॥ १॥**

जनको नाम ह किल सम्राट् राजा बभूव विदेहानाम्; तत्र भवो वैदेहः; स च बहुदक्षिणेन यज्ञेन– शाखान्तरप्रसिद्धो वा बहुदक्षिणो नाम यज्ञः, अश्वमेधो वा दक्षिणाबाहुल्यात् बहुदक्षिण इहोच्यते– तेनेजे अयजत्। तत्र तस्मिन्यज्ञे निमन्त्रिता दर्शनकामा वा कुरूणां देशानां पञ्चालानां च ब्राह्मणाः– तेषु हि विदुषां बाहुल्यं प्रसिद्धम्– अभिसमेताः अभिसंगता बभूवुः। तत्र महान्तं विद्वत्समुदायं दृष्ट्वा तस्य ह किल जनकस्य वैदेहस्य यज-

मानस्य, को नु खल्वत्र ब्रह्मिष्ठ इति विशेषेण ज्ञातुमिच्छा विजिज्ञासा, बभूव; कथम्? कःस्वित् को नु खलु एषां ब्राह्मणानाम् अनूचानतमः— सर्वे इमेऽनूचानाः, कः स्वि-देषामतिशयेनानूचान इति । स ह अनूचानतमविषयोत्पन्नजिज्ञासः सन् तद्विज्ञानोपायार्थं गवां सहस्रं प्रथमवयसाम् अवरुरोध गोष्ठेऽवरोधं कारयामास; किंविशिष्टास्ता गावोऽवरुद्धा इत्युच्यते— पलचतुर्थभागः पादः सुवर्णस्य, दश दश पादा एकैकस्या गोः शृङ्गयोः आबद्धा बभूवुः, पञ्च पञ्च पादा एकैकस्मिन् शृङ्गे ॥

**तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेत्यथ ह जनकस्य वैदेहस्य होताश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स हो-**

पन्नं च मृत्युना वशीकृतं च—केन दर्शनलक्षणेन साधनेन यजमानः मृत्योराप्तिमति मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतन्त्रः मृत्योरवशो भवतीत्यर्थः। ननु उद्गीथ एवाभिहितम् येनातिमुच्यते मुख्यप्राणात्मदर्शनेनेति— बाढमुक्तम्; योऽनुक्तो विशेषस्तत्र, तदर्थोऽयमारम्भ इत्यदोषः। होत्रा ऋत्विजा अग्निना वाचा इत्याह याज्ञवल्क्यः। एतस्यार्थं व्याचष्टे— कः पुनर्होता येन मृत्युमतिक्रामतीति उच्यते—वाग्वै यज्ञस्य यजमानस्य, 'यज्ञो वै यजमानः' इति श्रुतेः, यज्ञस्य यजमानस्य या वाक् सैव होता अधियज्ञे; कथम्? तत् तत्र येयं वाक् यज्ञस्य यजमानस्य, सोऽयं प्रसिद्धोऽग्निः अधिदैवतम्; तदेतत्त्र्यन्नप्रकरणे व्याख्यातम्; स चाग्निः होता, 'अग्निर्वै होता' इति श्रुतेः। यदेतत् यज्ञस्य साधनद्वयम्–होता च ऋत्विक् अधियज्ञम्, अध्यात्मं च वाक्, एतदुभयं साधनद्वयं परिच्छिन्नं मृत्युना आप्तं स्वाभाविकाज्ञानासङ्गप्रयुक्तेन कर्मणा मृत्युना प्रतिक्षणमन्यथात्वमापद्यमानं वशीकृतम्; तत् अनेनाधिदैवतरूपेणाग्निना दृश्यमानं यजमानस्य यज्ञस्य मृत्योरतिमुक्तये भवति; तदेतदाह— स मुक्तिः स होता अग्निः मुक्तिः अग्निस्वरूपदर्शनमेव मुक्तिः; यदैव साधनद्वयमग्निरूपेण पश्यति, तदा-

नीमेव हि स्वाभाविकादासङ्गान्मृत्योर्विमुच्यते आध्यात्मिकात्परिच्छिन्नरूपात् आधिभौतिकाच्च; तस्मात् स होता अग्निरूपेण दृष्टः मुक्तिः मुक्तिसाधनं यजमानस्य। सा अतिमुक्तिः— यैव च मुक्तिः सा अतिमुक्तिः अतिमुक्तिसाधनमित्यर्थः। साधनद्वयस्य परिच्छिन्नस्य या अधिदैवतरूपेण अपरिच्छिन्नेन अग्निरूपेण दृष्टिः, सा मुक्तिः; या असौ मुक्तिः अधिदैवतदृष्टिः सैव— अध्यात्माधिभूतपरिच्छेदविषयाङ्गास्पदं मृत्युमतिक्रम्य अधिदेवतात्वस्य अग्निभावस्य प्राप्तिर्या फलभूता सा अतिमुक्तिरित्युच्यते; तस्या अतिमुक्तेर्मुक्तिरेव साधनमिति कृत्वा सा अतिमुक्तिरित्याह। यजमानस्य हि अतिमुक्तिः वागादीनामग्न्यादिभावः इत्युद्गीथप्रकरणे व्याख्यातम्; तत्र सामान्येन मुख्यप्राणदर्शनमात्रं मुक्तिसाधनमुक्तम्, न तद्विशेषः; वागादीनामग्न्यादिदर्शनमिह विशेषो वर्ण्यते; मृत्युप्राप्त्यतिमुक्तिस्तु सैव फलभूता, या उद्गीथब्राह्मणेन व्याख्याता— 'मृत्युमतिक्रान्तो दीप्यते' इत्याद्या॥

**याज्ञवल्क्येति होवाच यदिदꣳ सर्वमहोरात्राभ्यामाप्तꣳ सर्वमहोरात्राभ्याम-भिपन्नं केन यजमानोऽहोरात्रयोराप्तिम-**

**तिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥ ४ ॥**

याज्ञवल्क्येति होवाच । स्वाभाविकात् अज्ञानासङ्गप्रयुक्तात् कर्मलक्षणान्मृत्योः अतिमुक्तिर्व्याख्याता ; तस्य कर्मणः सासङ्गस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालः, तस्मात्कालात् पृथक् अतिमुक्तिर्वक्तव्येतीदमारभ्यते, क्रियानुष्ठानव्यतिरेकेणापि प्राक् ऊर्ध्वं च क्रियायाः साधनविपरिणामहेतुत्वेन व्यापारदर्शनात्कालस्य ; तस्मात् पृथक् कालादतिमुक्तिर्वक्तव्येत्यत आह— यदिदं सर्वमहोरात्राभ्यामाप्तम् , स च कालो द्विरूपः— अहोरात्रादिलक्षणः तिथ्यादिलक्षणश्च ; तत्र अहोरात्रादिलक्षणात्तावदतिमुक्तिमाह— अहोरात्राभ्यां हि सर्वं जायते वर्धते विनश्यति च, तथा यज्ञसाधनं च— यज्ञस्य यजमानस्य चक्षुः अध्वर्युश्च ; शिष्टान्यक्षराणि पूर्ववन्नेयानि ; यजमानस्य चक्षुः अध्वर्युश्च साधनद्वयम् अध्यात्माधिभूतपरिच्छेदं हित्वा आधिदैवतात्मना दृष्टं यत् स मुक्तिः— सोऽध्वर्युः आदित्यभावेन दृष्टो मुक्तिः ; सैव मुक्तिरेव अति-

मुक्तिरिति पूर्ववत्; आदित्यात्मभावमापन्नस्य हि नाहोरात्रे संभवतः ॥

**याज्ञवल्क्येति होवाच यदिदꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः सातिमुक्तिः ॥ ५ ॥**

इदानीं तिथ्यादिलक्षणादतिमुक्तिरुच्यते— यदिदं सर्वम्— अहोरात्रयोरविशिष्टयोरादित्यः कर्ता, न प्रतिपदादीनां तिथीनाम्; तासां तु वृद्धिक्षयोपगमनेन प्रतिपत्प्रभृतीनां चन्द्रमाः कर्ता; अतः तदापत्त्या पूर्वपक्षापरपक्षात्ययः, आदित्यापत्त्या अहोरात्रात्ययवत् । तत्र यजमानस्य प्राणो वायुः, स एवोद्गाता— इत्युद्गीथब्राह्मणेऽवगतम्, 'वाचा च ह्येव स प्राणेन चोदगायत्' इति च निर्धारितम्; अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः' इति च; प्राणवायुचन्द्रमसामेकत्वात् चन्द्रमसा वायुना चोपसंहारे न

कश्चिद्विशेषः— एवंमन्यमाना श्रुतिः वायुना अधिदैवत-रूपेणोपसंहरति । अपि च वायुनिमित्तौ हि वृद्धिक्षयौ चन्द्रमसः; तेन तिथ्यादिलक्षणस्य कालस्य कर्तुरपि कारयिता वायुः । अतो वायुरूपापन्नः तिथ्यादिकालादतीतो भवतीत्युपपन्नतरं भवति । तेन श्रुत्यन्तरे चन्द्ररूपेण दृष्टिः मुक्तिरतिमुक्तिश्च; इह तु काण्वानां साधनद्वयस्य तत्कारणरूपेण वाय्वात्मना दृष्टिः मुक्तिरतिमुक्तिश्चेति—न श्रुत्योर्विरोधः ॥

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ संपदः ॥ ६ ॥**

मृत्योः कालात् अतिमुक्तिर्व्याख्याता यजमानस्य । सोऽतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोति— अतिमुच्यते— इत्युच्यते— यदिदं प्रसि-

द्धम् अन्तरिक्षम् आकाशः अनारम्बणम् अनालम्बनम् इव-शब्दात् अस्त्येव तत्रालम्बनम्, तत्तु न ज्ञायते इत्यभिप्रायः । यत्तु तत् अज्ञायमानमालम्बनम्, तत् सर्वनाम्ना केनेति पृच्छ्यते, अन्यथा फलप्राप्तेरसंभवात्; येनावष्टम्भेन आक्रमेण यजमानः कर्मफलं प्रतिपद्यमानः अतिमुच्यते, किं तदिति प्रश्नविषयः; केन आक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति— स्वर्गं लोकं फलं प्राप्नोति अतिमुच्यत इत्यर्थः । ब्रह्मणा ऋत्विजा मनसा चन्द्रेणेत्यक्षरन्यासः पूर्ववत् । तत्राध्यात्मं यज्ञस्य यजमानस्य यदिदं प्रसिद्धं मनः, सोऽसौ चन्द्रः अधिदैवम्; मनोऽध्यात्मं चन्द्रमा अधिदैवतमिति हि प्रसिद्धम्; स एव चन्द्रमा ब्रह्मा ऋत्विक् तेन— अधिभूतं ब्रह्मणः परिच्छिन्नं रूपम् अध्यात्मं च मनसः एतत् द्वयम् अपरिच्छिन्नेन चन्द्रमसो रूपेण पश्यति; तेन चन्द्रमसा मनसा अवलम्बनेन कर्मफलं स्वर्गं लोकं प्राप्नोति अतिमुच्यते इत्यभिप्रायः । इतीत्युपसंहारार्थं वचनम्; इत्येवंप्रकारा मृत्योरतिमोक्षाः; सर्वाणि हि दर्शनप्रकाराणि यज्ञाङ्गविषयाण्यस्मिन्नवसरे उक्तानीति कृत्वा उपसंहारः— इत्यतिमोक्षाः— एवंप्रकारा अतिमोक्षा इत्यर्थः । अथ संपदः— अथ अधुना संपद उच्यन्ते । संपन्नाम केन-

चित्सामान्येन अग्निहोत्रादीनां कर्मणां फलवतां तत्फलाय संपादनम्, संपत्फलस्यैव वा; सर्वोत्साहेन फलसाधनानुष्ठाने प्रयतमानानां केनचिद्वैगुण्येनासंभवः; तत् इदानीमाहिताग्निः सन् यत्किंचित्कर्म अग्निहोत्रादीनां यथासंभवमादाय आलम्बनीकृत्य कर्मफलविद्वत्तायां सत्यां यत्कर्मफलकामो भवति, तदेव संपादयति; अन्यथा राजसूयाश्वमेधपुरुषमेधसर्वमेधलक्षणानामधिकृतानां त्रैवर्णिकानामपि असंभवः— तेषां तत्पाठः स्वाध्यायार्थ एव केवलः स्यात्, यदि तत्फलप्राप्त्युपायः कश्चन न स्यात्; तस्मात् तेषां संपदैव तत्फलप्राप्तिः, तस्मात्संपदामपि फलवत्त्वम्, अतः संपद आरभ्यन्ते ॥

**याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किंचेदं प्राणभृदिति ॥ ७ ॥**

याज्ञवल्क्येति होवाच अभिमुखीकरणाय । कतिभिरय-

मद्यर्ग्भिर्होतास्मिन्यज्ञे— कतिभिः कतिसंख्याभिः ऋग्भिः ऋग्जातिभिः, अयं होता ऋत्विक्, अस्मिन्यज्ञे करिष्यति शस्त्रं शंसति; आह इतरः-तिसृभिः ऋग्जातिभिः—इति— उक्तवन्तं प्रत्याह इतरः— कतमास्तास्तिस्र इति; संख्येय-विषयोऽयं प्रश्नः, पूर्वस्तु संख्याविषयः । पुरोनुवाक्या च— प्राग्यागकालात् याः प्रयुज्यन्ते ऋचः, सा ऋग्जातिः पुरो-नुवाक्येत्युच्यते; यागार्थं याः प्रयुज्यन्ते ऋचः, सा ऋ-ग्जातिः याज्या; शस्त्रार्थं याः प्रयुज्यन्ते ऋचः सा ऋग्जा-तिः शस्या; सर्वास्तु याः काश्चन ऋचः, ताः स्तोत्रिया वा अन्या वा सर्वाः एतास्वेव तिसृषु ऋग्जातिष्वन्तर्भवन्ति । किं ताभिर्जयतीति यत्किंचेदं प्राणभृदिति—अतश्च संख्या-सामान्यात् यत्किंचित्प्राणभृज्जातम्, तत्सर्वं जयति तत्सर्वं फलजातं संपादयति संख्यादिसामान्येन ॥

याज्ञवल्क्येति होवाच कत्ययमद्याध्व-र्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उ-ज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किं ताभिर्जयतीति या हुता

**उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥ ८ ॥**

याज्ञवल्क्येति होवाचेति पूर्ववत् । कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति– कति आहुतिप्रकाराः? तिस्र इति; कतमास्तास्तिस्र इति पूर्ववत् । इतर आह–या हुता उज्ज्वलन्ति समिदाज्याहुतयः, या हुता अतिनेदन्ते अतीव शब्दं कुर्वन्ति मांसाद्याहुतयः, या हुता अधिशेरते अधि अधो गत्वा भूमेः अधिशेरते पयःसोमाहुतयः । किं ताभिर्जयतीति; ताभिरेवं निर्वर्तिताभिराहुतिभिः किं जयतीति; या आहुतयो हुता उज्ज्वलन्ति उज्ज्वलनयुक्ता आहुतयो निर्वर्तिताः– फलं च देवलोकाख्यं उज्ज्वलमेव; तेन सामान्येन या मयैता उज्ज्वलन्त्य आहुतयो निर्वर्त्यमानाः, ता एताः– साक्षाद्देवलोकस्य कर्मफलस्य रूपं देवलोकाख्यं फलमेव मया निर्वर्त्यते– इत्येवं संपादयति ।

या हुता अतिनेदन्ते आहुतयः, पितृलोकमेव ताभिर्जयति, कुत्सितशब्दकर्तृत्वसामान्येन; पितृलोकसंबद्धायां हि संयमिन्यां पुर्यां वैवस्वतेन यात्यमानानां 'हा हताः स्म, मुञ्च मुञ्च' इति शब्दो भवति; तथा अवदानाहुतयः; तेन पितृलोकसामान्यात्, पितृलोक एव मया निर्वर्त्यते— इति संपादयति । या हुता अधिशेरते, मनुष्यलोकमेव ताभिर्जयति, भूम्युपरिसंबन्धसामान्यात्; अध इव हि अध एव हि मनुष्यलोकः उपरितनान् साध्यान् लोकानपेक्ष्य, अथवा अधोगमनमपेक्ष्य; अतः मनुष्यलोक एव मया निर्वर्त्यते— इति संपादयति पयःसोमाहुतिनिर्वर्तनकाले ॥

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥**

याज्ञवल्क्येति होवाचेति पूर्ववत् । अयम् ऋत्विक् ब्रह्मा दक्षिणतो ब्रह्मा आसने स्थित्वा यज्ञं गोपायति । कतिभिर्देवताभिर्गोपायतीति प्रासङ्गिकमेतद्बहुवचनम्— एकया

हि देवतया गोपायत्यसौ; एवं ज्ञाते बहुवचनेन प्रश्नो नोपपद्यते स्वयं जानतः; तस्मात् पूर्वयोः कण्डिकयोः प्रश्नप्रतिवचनेषु— कतिभिः कति तिसृभिः तिस्रः— इति प्रसङ्गं दृष्ट्वा इहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते; अथवा प्रतिवादिव्यामोहार्थं बहुवचनम् । इतर आह— एकयेति; एका सा देवता, यया दक्षिणतः स्थित्वा ब्रह्म आसने यज्ञं गोपायति । कतमा सैकेति— मन एवेति, मनः सा देवता; मनसा हि ब्रह्मा व्याप्रियते ध्यानेनैव, 'तस्य यज्ञस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा' इति श्रुत्यन्तरात्; तेन मन एव देवता, तया मनसा हि गोपायति ब्रह्मा यज्ञम् । तच्च मनः वृत्तिभेदेनानन्तम्; वै-शब्दः प्रसिद्धावद्योतनार्थः; प्रसिद्धं मनस आनन्त्यम्; तदानन्त्याभिमानिनो देवाः; अनन्ता वै विश्वे देवाः— 'सर्वे देवा यत्रैकं भवन्ति' इत्यादिश्रुत्यन्तरात्; तेन आनन्त्यसामान्यात् अनन्तमेव स तेन लोकं जयति ॥

**याज्ञवल्क्येति होवाच कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कत-**

**मास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्यापानो याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम ॥ १० ॥**

इति प्रथमं ब्राह्मणम् ॥

याज्ञवल्क्येति होवाचेति पूर्ववत्। कति स्तोत्रियाः स्तोष्यतीति अयमुद्गाता। स्तोत्रिया नाम ऋक् सामसमुदायः कतिपयानामृचाम्। स्तोत्रिया वा शस्या वा याः काश्चन ऋचः, ताः सर्वास्तिस्र एवेत्याह; ताश्च व्याख्याताः— पुरोनुवाक्या च याज्या च शस्यैव तृतीयेति। तत्र पूर्वमुक्तम्— यत्किंचेदं प्राणभृत्सर्वं जयतीति तत् केन सामान्येनेति; उच्यते— कतमास्तास्तिस्र ऋचः या अध्यात्मं भवन्तीति; प्राण एव पुरोनुवाक्या, पशब्दसामान्यात्; अपानो याज्या, आनन्तर्यात्— अपानेन हि प्रत्तं हविः देवता ग्रसन्ति, यागश्च प्रदानम्; व्यानः शस्या— 'अप्राणन्ननपानन्नृचमभिव्याहरति' इति श्रुत्यन्तरात्। किं ताभि-

जयतीति व्याख्यातम् । तत्र विशेषसंबन्धसामान्यमनुक्तमिहोच्यते, सर्वमन्यद्व्याख्यातम्; लोकसंबन्धसामान्येन पृथिवीलोकमेव पुरोनुवाक्यया जयति; अन्तरिक्षलोकं याज्यया, मध्यमत्वसामान्यात्; द्युलोकं शस्यया ऊर्ध्वत्वसामान्यात् । ततो ह तस्मात् आत्मनः प्रश्ननिर्णयात् असौ होता अश्वल उपरराम— नायम् अस्मद्गोचर इति ॥

इति तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ॥

# द्वितीयं ब्राह्मणम् ॥

---

आख्यायिकासंबन्धः प्रसिद्ध एव । मृत्योरतिमुक्तिर्व्याख्याता काललक्षणात् कर्मलक्षणाच्च ; कः पुनरसौ मृत्युः, यस्मात् अतिमुक्तिर्व्याख्याता ? स च स्वाभाविकाज्ञानसङ्गास्पदः अध्यात्माधिभूतविषयपरिच्छिन्नः ग्रहातिग्रहलक्षणो मृत्युः । तस्मात्परिच्छिन्नरूपान्मृत्योरतिमुक्तस्य रूपाणि अग्न्यादित्यादीनि उद्गीथप्रकरणे व्याख्यातानि ; अश्वलप्रश्ने च तद्गतो विशेषः कश्चित् ; तच्च एतत् कर्मणां ज्ञानसहितानां फलम् । एतस्मात्साध्यसाधनरूपात्संसारान्मोक्षः कर्तव्य इत्यतः बन्धनरूपस्य मृत्योः स्वरूपमुच्यते ; बद्धस्य हि मोक्षः कर्तव्यः । यदपि अतिमुक्तस्य स्वरूपमुक्तम् , तत्रापि ग्रहातिग्रहाभ्यामविनिर्मुक्त एव मृत्युरूपाभ्याम् ; तथा चोक्तम्— 'अशनाया हि मृत्युः' ; 'एष एव मृत्युः' इति आदित्यस्थं पुरुषमङ्गीकृत्य आह, 'एको मृत्युर्बहवा' इति च ; तदात्मभावापन्नो हि मृत्योराप्तिमतिमुच्यत इत्युच्यते ; न च तत्र ग्रहातिग्रहौ मृत्युरूपौ न स्तः ; 'अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः' 'मनश्च ग्रहः स कामेनातिग्राहेण गृही

तः’ इति वक्ष्यति— ‘प्राणो वै ग्रहः सोऽपानेनातिग्राहेण’ इति, ‘वाग्वै ग्रहः स नाम्नातिग्राहेण’ इति च। तथा च्यन्न-विभागे व्याख्यातमस्माभिः। सुविचारितं चैतत्— यदेव प्रवृत्तिकारणम्, तदेव निवृत्तिकारणं न भवतीति ॥

केचित्तु सर्वमेव निवृत्तिकारणं मन्यन्ते; अतः कारणात्— पूर्वस्मात्पूर्वस्मात् मृत्योर्मुच्यते उत्तरमुत्तरं प्रतिपद्यमानः— व्यावृत्त्यर्थमेव प्रतिपद्यते, न तु तादर्थ्यम्— इत्यतः आ द्वैतक्षयात् सर्वं मृत्युः, द्वैतक्षये तु परमार्थतो मृत्योरात्निम-तिमुच्यते; अतश्च आपेक्षिकी गौणी मुक्तिरन्तराले। सर्व-मेतत् एवम् अबार्हदारण्यकम्। ननु सर्वैकत्वं मोक्षः, ‘त-स्मात्तत्सर्वमभवत्’ इति श्रुतेः— बाढं भवत्येतदपि; न तु ‘ग्रामकामो यजेत’ ‘पशुकमो यजेत’ इत्यादिश्रुतीनां ताद-र्थ्यम्; यदि हि अद्वैतार्थत्वमेव आसाम्, ग्रामपशुस्वर्गा-द्यर्थत्वं नास्तीति ग्रामपशुस्वर्गादयो न गृह्येरन्; गृह्यन्ते तु कर्मफलवैचित्र्यविशेषाः; यदि च वैदिकानां कर्मणां ताद-र्थ्यमेव, संसार एव नाभविष्यत्। अथ तादर्थ्येऽपि अनु-निष्पादितपदार्थस्वभावः संसार इति चेत्, यथा च रूपद-र्शनार्थ आलोके सर्वोऽपि तत्रस्थः प्रकाश्यत एव— न, प्रमाणानुपपत्तेः; अद्वैतार्थत्वे वैदिकानां कर्मणां विद्यासहि-

तानाम्, अन्यस्यानुनिष्पादितत्वे प्रमाणानुपपत्तिः— न प्रत्यक्षम्, नानुमानम्, अत एव च न आगमः। उभयम् एकेन वाक्येन प्रदर्श्यत इति चेत्, कुल्याप्रणयनालोकादिवत्— तन्नैवम्, वाक्यधर्मानुपपत्तेः; न च एकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगन्तुं शक्यते; कुल्याप्रणयनालोकादौ अर्थस्य प्रत्यक्षत्वाददोषः। यदप्युच्यते— मन्त्रा अस्मिन्नर्थे दृष्टा इति— अयमेव तु तावदर्थः प्रमाणागम्यः; मन्त्राः पुनः किमस्मिन्नर्थे आहोस्विदन्यस्मिन्नर्थे इति मृग्यमेतत्। तस्माद्ग्रहातिग्रहलक्षणो मृत्युः बन्धः, तस्मात् मोक्षो वक्तव्य इत्यत इदमारभ्यते। न च जानीमो विषयसंबन्धाविव अन्तरालेऽवस्थानम् अर्धजरतीयं कौशलम्। यत्तु मृत्योरतिमुच्यते इत्युक्त्वा ग्रहातिग्रहावुच्येते, तत्तु अर्थसंबन्धात्; सर्वोऽयं साध्यसाधनलक्षणो बन्धः, ग्रहातिग्रहाविनिर्मोकात्; निगडे हि निर्ज्ञाते निगडितस्य मोक्षाय यत्नः कर्तव्यो भवति। तस्मात् तादर्थ्येन आरम्भः॥

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति। अष्टौ ग्रहा अष्टाव-**

**तिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावति-
ग्रहाः कतमे त इति ॥ १ ॥**

अथ हैनम्—ह-शब्द ऐतिह्यार्थः ; अथ अनन्तरम् अश्वले उपरते प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्रो जारत्कारवः ऋत-भागस्यापत्यम् आर्तभागः पप्रच्छ ; याज्ञवल्क्येति होवाचेति अभिमुखीकरणाय; पूर्ववत्प्रश्नः— कति ग्रहाः कत्यतिग्रहा इति । इति-शब्दो वाक्यपरिसमाप्त्यर्थः । तत्र निर्ज्ञातेषु वा ग्रहातिग्रहेषु प्रश्नः स्यात्, अनिर्ज्ञातेषु वा; यदि तावत् ग्रहा अतिग्रहाश्च निर्ज्ञाताः, तदा तद्गतस्यापि गुणस्य सं-ख्याया निर्ज्ञातत्वात् कति ग्रहाः कत्यतिग्रहा इति संख्या-विषयः प्रश्नो नोपपद्यते; अथ अनिर्ज्ञाताः तदा संख्येयवि-षयप्रश्न इति के ग्रहाः केऽतिग्रहा इति प्रष्टव्यम्, न तु कति ग्रहाः कत्यतिग्रहा इति प्रश्नः; अपि च निर्ज्ञातसामान्य-केषु विशेषविज्ञानाय प्रश्नो भवति— यथा कतमेऽत्र कठाः कतमेऽत्र कालापा इति; न चात्र ग्रहातिग्रहा नाम पदार्थाः केचन लोके प्रसिद्धाः, येन विशेषार्थः प्रश्नः स्यात्; ननु च 'अतिमुच्यते' इत्युक्तम्, ग्रहगृहीतस्य हि मोक्षः, 'स मुक्तिः सातिमुक्तिः' इति हि द्विरुक्तम्, तस्मात्प्राप्ता ग्रहा अतिग्रहाश्च— ननु तत्रापि चत्वारो ग्रहा

अतिग्रहाश्च निर्ज्ञाताः वाक्चक्षुःप्राणमनांसि, तत्र कतीति प्रश्नो नोपपद्यते निर्ज्ञातत्वात्— न, अनवधारणार्थत्वात्; न हि चतुष्ट्वं तत्र विवक्षितम्; इह तु ग्रहातिग्रहदर्शने अष्टत्वगुणविवक्षया कतीति प्रश्न उपपद्यत एव; तस्मात् 'स मुक्तिः सातिमुक्तिः' इति मुक्त्यतिमुक्ती द्विरुक्ते; ग्रहातिग्रहा अपि सिद्धाः । अतः कतिसंख्याका ग्रहाः, कति वा अतिग्रहाः इति पृच्छति । इतर आह— अष्टौ ग्रहा अष्टावतिग्रहा इति । ये ते अष्टौ ग्रहा अभिहिताः, कतमे ते नियमेन ग्रहीतव्या इति ॥

**प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥**

तत्र आह— प्राणो वै ग्रहः— प्राण इति घ्राणमुच्यते, प्रकरणात्; वायुसहितः सः; अपानेनेति गन्धेनेत्येतत्; अपानसचिवत्वात् अपानो गन्ध उच्यते; अपानोपहृतं हि गन्धं घ्राणेन सर्वो लोको जिघ्रति; तदेतदुच्यते— अपानेन हि गन्धाञ्जिघ्रतीति ॥

**वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥**

जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥४॥

चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥

श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्शृणोति ॥६॥

मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥

हस्तौ वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्याँ हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

वाग्वै ग्रहः— वाचा हि अध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया असत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकः अपहृतः, तेन वाक् ग्रहः; स नाम्नाति-

ग्राहेण गृहीतः— सः वागाख्यो ग्रहः, नाम्ना वक्तव्येन विषयेण, अतिग्राहेण अतिग्राहेणेति दैर्घ्यं छान्दसम्; वक्तव्यार्था हि वाक्; तेन वक्तव्येनार्थेन तादर्थ्येन प्रयुक्ता वाक् तेन वशीकृता; तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः; अतः नाम्नातिग्राहेण गृहीता वागित्युच्यते; वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते । समानमन्यत् । इत्येते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्चैते अष्टावतिग्रहा इति ॥

**याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥**

उपसंहृतेषु ग्रहातिग्रहेष्वाह पुनः—याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नम्— यदिदं व्याकृतं सर्वं मत्योरन्नम्, सर्वं जायते विपद्येत च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तम्— का स्वित् का नु स्यात् सा देवता, यस्या देवताया मृत्युरप्यन्नं भवेत्— 'मृत्युर्यस्योपसेचनम्' इति श्रुत्यन्तरात् । अयमभिप्रायः प्रष्टुः— यदि मृत्योर्मृत्युं वक्ष्यति, अनवस्था स्यात्; अथ न वक्ष्यति, अस्माद्ग्रहातिग्रहलक्षणान्मृत्योः

मोक्षः नोपपद्यते; ग्रहातिग्रहमृत्युविनाशे हि मोक्षः स्यात्; स यदि मृत्योरपि मृत्युः स्यात् भवेत् ग्रहातिग्रहलक्षणस्य मृत्योर्विनाशः—अतः दुर्वचनं प्रश्नं मन्वानः पृच्छति 'का स्वित्सा देवता' इति। अस्ति तावन्मृत्योर्मृत्युः; ननु अनवस्था स्यात्– तस्याप्यन्यो मृत्युरिति– नानवस्था, सर्वमृत्योः मृत्यवन्तरानुपपत्तेः; कथं पुनरवगम्यते– अस्ति मृत्योर्मृत्युरिति? दृष्टत्वात्; अग्निस्तावत् सर्वस्य दृष्टो मृत्युः, विनाशकत्वात्, सोऽद्भिर्भक्ष्यते, सोऽग्निः अपामन्नम्, गृहाण तर्हि अस्ति मृत्योर्मृत्युरिति; तेन सर्वं ग्रहातिग्रहजातं भक्ष्यते मृत्योर्मृत्युना; तस्मिन्बन्धने नाशिते मृत्युना भक्षिते संसारान्मोक्ष उपपन्नो भवति; बन्धनं हि ग्रहातिग्रहलक्षणमुक्तम्; तस्माच्च मोक्ष उपपद्यत इत्येतत्प्रसाधितम्। अतः बन्धमोक्षाय पुरुषप्रयासः सफलो भवति; अतोऽपजयति पुनर्मृत्युम्॥

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते॥ ११॥**

परेण मृत्युना मृत्यौ भक्षिते परमात्मदर्शनेन योऽसौ मुक्तः विद्वान्, सोऽयं पुरुषः यत्र यस्मिन्काले म्रियते, उत् ऊर्ध्वम्, अस्मात् ब्रह्मविदो म्रियमाणात्, प्राणाः— वागादयो ग्रहाः नामादयश्चातिग्रहा वासनारूपा अन्तस्थाः प्रयोजकाः— क्रामन्त्यूर्ध्वम् उत्क्रामन्ति, आहोस्विन्नेति । नेति होवाच याज्ञवल्क्यः— नोत्क्रामन्ति; अत्रैव अस्मिन्नेव परेणात्मना अविभागं गच्छन्ति विदुषि कार्याणि करणानि च स्वयोनौ परब्रह्मतत्त्वे समवनीयन्ते, एकीभावेन समवसृज्यन्ते, प्रलीयन्त इत्यर्थः— ऊर्मय इव समुद्रे । तथा च श्रुत्यन्तरं कलाशब्दवाच्यानां प्राणानां परस्मिन्नात्मनि प्रलयं दर्शयति— 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति— परेणात्मना अविभागं गच्छन्तीति दर्शितम् । न तर्हि मृतः— न हि; मृतश्च अयम्— यस्मात् स उच्छ्वयति उच्छूनतां प्रतिपद्यते, आध्मायति बाह्येन वायुना पूर्यते, दृतिवत्, आध्मातः मृतः शेते निश्चेष्टः; बन्धननाशे मुक्तस्य न क्वचिद्गमनमिति वाक्यार्थः ॥

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं**

**वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥**

मुक्तस्य किं प्राणा एव समवनीयन्ते? आहोस्वित् तत्प्रयोजकमपि सर्वम्? अथ प्राणा एव, न तत्प्रयोजकं सर्वम्, प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गः; अथ सर्वमेव कामकर्मादि, ततो मोक्ष उपपद्यते— इत्येवमर्थः उत्तरः प्रश्नः। याज्ञवल्क्येति होवाच— यत्रायं पुरुषो म्रियते किमेनं न जहातीति; आह इतरः— नामेति; सर्वं समवनीयते इत्यर्थः; नाममात्रं तु न लीयते, आकृतिसंबन्धात्; नित्यं हि नाम; अनन्तं वै नाम; नित्यत्वमेव आनन्त्यं नाम्नः। तदानन्त्याधिकृताः अनन्ता वै विश्वे देवाः; अनन्तमेव स तेन लोकं जयति— तन्नामानन्त्याधिकृतान् विश्वान्देवान् आत्मत्वेनोपेत्य तेन आनन्त्यदर्शनेन अनन्तमेव लोकं जयति॥

**याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च नि-**

धीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागावामेवैतस्य वेदिष्यावो न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयांचक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशꣳसतुः कर्म हैव तत्प्रशशꣳसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

ग्रहातिग्रहरूपं बन्धनमुक्तं मृत्युरूपम्; तस्य च मृत्योः मृत्युसद्भावान्मोक्षश्चोपपद्यते; स च मोक्षः ग्रहातिग्रहरूपाणामिहैव प्रलयः, प्रदीपनिर्वाणवत्; यत्तत् ग्रहातिग्रहाख्यं बन्धनं मृत्युरूपम्, तस्य यत्प्रयोजकं तत्स्वरूपनिर्धारणार्थमिदमारभ्यते— याज्ञवल्क्येति होवाच ॥

अत्र केचिद्वर्णयन्ति—ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते; नामावशिष्टः अविद्यया ऊषरस्थानीयया स्वात्मप्रभवया परमात्मनः परिच्छिन्नः भोज्याच्च जगतो व्यावृत्तः उच्छिन्नकामकर्मा अन्तराले व्यवतिष्ठते; तस्य परमात्मैकत्वदर्शनेन द्वैतदर्शनमपनेतव्यमिति— अतः

परं परमात्मदर्शनमारब्धव्यम्— इति; एवम् अपवर्गाख्यामन्तरालावस्थां परिकल्प्य उत्तरग्रन्थसंबन्धं कुर्वन्ति ॥

तत्र वक्तव्यम्— विशीर्णेषु करणेषु विदेहस्य परमात्मदर्शनश्रवणमनननिदिध्यासनानि कथमिति; समवनीतप्राणस्य हि नाममात्रावशिष्टस्येति तैरुच्यते; 'मृतः शेते' इति ह्युक्तम्; न मनोरथेनाप्येतदुपपादयितुं शक्यते। अथ जीवन्नेव अविद्यामात्रावशिष्टो भोज्यादपावृत्त इति परिकल्प्यते, तच्च किं निमित्तमिति वक्तव्यम्; समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्येत, तत् पूर्वमेव निराकृतम्; कर्मसहितेन द्वैतैकत्वात्मदर्शनेन संपन्नो विद्वान् मृतः समवनीतप्राणः जगदात्मत्वं हिरण्यगर्भस्वरूपं वा प्राप्नुयात्, असमवनीतप्राणः भोज्यात् जीवन्नेव वा व्यावृत्तः विरक्तः परमात्मदर्शनाभिमुखः स्यात्। न च उभयम् एकप्रयत्ननिष्पाद्येन साधनेन लभ्यम्; हिरण्यगर्भप्राप्तिसाधनं चेत्, न ततो व्यावृत्तिसाधनम्; परमात्माभिमुखीकरणस्य भोज्याद्व्यावृत्तेः साधनं चेत्, न हिरण्यगर्भप्राप्तिसाधनम्; न हि यत् गतिसाधनम्, तत् गतिनिवृत्तेरपि। अथ मृत्वा हिरण्यगर्भं प्राप्य ततः समवनीतप्राणः नामावशिष्टः परमात्मज्ञानेऽधिक्रियते, ततः अस्मदाद्यर्थं परमात्मज्ञानोपदेशः अनर्थकः स्यात्; सर्वेषां

हि ब्रह्मविद्या पुरुषार्थायोपदिश्यते— 'तद्यो यो देवानाम्' इत्याद्यया श्रुत्या । तस्मात् अत्यन्तनिकृष्टा शास्त्रबाह्यैव इयं कल्पना । प्रकृतं तु वर्तयिष्यामः ॥

तत्र केन प्रयुक्तं ग्रहातिग्रहलक्षणं बन्धनमित्येतन्निर्दिधारयिषया आह— 'यत्रास्य पुरुषस्य असम्यग्दर्शिनः शिरःपाण्यादिमतो मृतस्य— वाक् अग्निमप्येति, वातं प्राणोऽप्येति, चक्षुरादित्यमप्येति— इति सर्वत्र संबध्यते; मनः चन्द्रम्, दिशः श्रोत्रम्, पृथिवीं शरीरम्, आकाशमात्मेत्यत्र आत्मा अधिष्ठानं हृदयाकाशमुच्यते; स आकाशमप्येति; ओषधीरपियन्ति लोमानि; वनस्पतीनपियन्ति केशाः; अप्सु लोहितं च रेतश्च— निधीयते इति— पुनरादानलिङ्गम्; सर्वत्र हि वागादिशब्देन देवताः परिगृह्यन्ते; न तु करणान्येवापक्रामन्ति प्राङ्मोक्षात्; तत्र देवताभिरनधिष्ठितानि करणानि न्यस्तदात्राद्युपमानानि, विदेहश्च कर्ता पुरुषः अस्वतन्त्रः किमाश्रितो भवतीति पृच्छ्यते— कायं तदा पुरुषो भवतीति— किमाश्रितः तदा पुरुषो भवतीति; यम् आश्रयमाश्रित्य पुनः कार्यकरणसंघातमुपादत्ते, येन ग्रहातिग्रहलक्षणं बन्धनं प्रयुज्यते तत् किमिति प्रश्नः । अत्रोच्यते— स्वभावयदृच्छाकालकर्मदैवविज्ञानमात्रशून्यानि

वादिभिः परिकल्पितानि ; अतः अनेकविप्रतिपत्तिस्थानत्वात् नैव जल्पन्यायेन वस्तुनिर्णयः ; अत्र वस्तुनिर्णयं चेदिच्छसि, आहर सोम्य हस्तम् आर्तभाग हे– आवामेव एतस्य त्वत्पृष्टस्य वेदितव्यं यत्, तत् वेदिष्यावः निरूपयिष्यावः ; कस्मात्? न नौ आवयोः एतत् वस्तु सजने जनसमुदाये निर्णेतुं शक्यते ; अत एकान्तं गमिष्यावः विचारणाय । तौ हेत्यादि श्रुतिवचनम् । तौ याज्ञवल्क्यार्तभागौ एकान्तं गत्वा किं चक्रतुरित्युच्यते—तौ ह उत्क्रम्य सजनात् देशात् मन्त्रयांचक्राते ; आदौ लौकिकवादिपक्षाणाम् एकैकं परिगृह्य विचारितवन्तौ । तौ ह विचार्य यदूचतुः अपोह्य पूर्वपक्षान्सर्वानेव– तच्छृणु ; कर्म हैव आश्रयं पुनःपुनः-कार्यकरणोपादानहेतुम् तत् तत्र ऊचतुः उक्तवन्तौ– न केवलम् ; कालकर्मदैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रशशंसतुस्तौ, कर्म हैव तत्प्रशशंसतुः— यस्मान्निर्धारितमेतत् कर्मप्रयुक्तं ग्रहातिग्रहादिकार्यकरणोपादानं पुनः पुनः, तस्मात् पुण्यो वै शास्त्रविहितेन पुण्येन कर्मणा भवति, तद्विपरीतेन विपरीतो भवति पापः पापेन—इति एवं याज्ञवल्क्येन प्रश्नेषु निर्णीतेषु, ततः अशक्यप्रकम्पत्वात् याज्ञवल्क्यस्य, ह जारत्कारव आर्तभाग उपरराम ॥

इति तृतीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥

# तृतीयं ब्राह्मणः ॥

---

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ। ग्रहातिग्रहलक्षणं बन्धनमुक्तम्; यस्मात् सप्रयोजकात् मुक्तः मुच्यते, येन वा बद्धः संसरति, स मृत्युः; तस्माच्च मोक्ष उपपद्यते, यस्मात् मृत्योर्मृत्युरस्ति; मुक्तस्य च न गतिः कचित्– सर्वोत्सादः नाममात्रावशेषः प्रदीपनिर्वाणवदिति चावधृतम्। तत्र संसरतां मुच्यमानानां च कार्यकरणानां स्वकारणसंसर्गे समाने, मुक्तानामत्यन्तमेव पुनरनुपादानम्– संसरतां तु पुनः पुनरुपादानम्–येन प्रयुक्तानां भवति, तत् कर्म— इत्यवधारितं विचारणापूर्वकम्; तत्क्षये च नामावशेषेण सर्वोत्सादो मोक्षः। तच्च पुण्यपापाख्यं कर्म, 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्यवधारितत्वात्; एतत्कृतः संसारः। तत्र अपुण्येन स्थावरजङ्गमेषु स्वभावदुःखबहुलेषु नरकतिर्यक्प्रेतादिषु च दुःखम् अनुभवति पुनः पुनर्जायमानः म्रियमाणश्च इत्येतत् राजवर्त्मवत् सर्वलोकप्रसिद्धम्। यस्तु शास्त्रीयः पुण्यो वै पुण्येन कर्मणा भवति, तत्रैव आदरः क्रियत इह श्रुत्या। पुण्यमेव च कर्म सर्वपुरुषार्थसाधनमिति सर्वे श्रुतिस्मृतिवादाः। मोक्षस्यापि पुरुषार्थत्वात् तत्साध्यता

प्राप्ता; यावत् यावत् पुण्योत्कर्षः तावत् तावत् फलोत्कर्ष-प्राप्तिः; तस्मात् उत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्य-शङ्का स्यात्; सा निवर्तयितव्या। ज्ञानसहितस्य च प्रकृ-ष्टस्य कर्मण एतावती गतिः, व्याकृतनामरूपास्पदत्वात् कर्मणः तत्फलस्य च; न तु अकार्ये नित्ये अव्याकृतधर्मिणि अनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते कर्मणो व्या-पारोऽस्ति; यत्र च व्यापारः स संसार एव इत्यस्यार्थस्य प्रदर्शनाय ब्राह्मणमारभ्यते ॥

यत्तु कैश्चिदुच्यते— विद्यासहितं कर्म निरभिसंधि विषदध्यादिवत् कार्यान्तरमारभत इति— तन्न, अनारभ्य-त्वान्मोक्षस्य; बन्धननाश एव हि मोक्षः, न कार्यभूतः; बन्धनं च अविद्येत्यवोचाम; अविद्यायाश्च न कर्मणा नाश उपपद्यते, दृष्टविषयत्वाच्च कर्मसामर्थ्यस्य; उत्पत्त्याप्तिवि-कारसंस्कारा हि कर्मसामर्थ्यस्य विषयाः; उत्पादयितुं प्रापयितुं विकर्तुं संस्कर्तुं च सामर्थ्यं कर्मणः, न अतो व्य-तिरिक्तविषयोऽस्ति कर्मसामर्थ्यस्य, लोके अप्रसिद्धत्वात्; न च मोक्ष एषां पदार्थानामन्यतमः; अविद्यामात्रव्यवहित इत्यवोचाम। बाढम्; भवतु केवलस्यैव कर्मण एवंस्वभा-वता; विद्यासंयुक्तस्य तु निरभिसंधेः भवति अन्यथा स्व-

भावः ; दृष्टं हि अन्यशक्तित्वेन निर्ज्ञातानामपि पदार्थानां विषद्ध्यादीनां विद्यामन्त्रशर्करादिसंयुक्तानाम् अन्यविषये सामर्थ्यम् ; तथा कर्मणोऽप्यस्त्विति चेत्— न । प्रमाणाभावात् । तत्र हि कर्मण उक्तविषयव्यतिरेकेण विषयान्तरे सामर्थ्यास्तित्वे प्रमाणं न प्रत्यक्षं नानुमानं नोपमानं नार्थापत्तिः न शब्दोऽस्ति । ननु फलान्तराभावे चोदनान्यथानुपपत्तिः प्रमाणमिति ; न हि नित्यानां कर्मणां विश्वजिन्न्यायेन फलं कल्प्यते ; नापि श्रुतं फलमस्ति ; चोद्यन्ते च तानि ; पारिशेष्यात् मोक्षः तेषां फलमिति गम्यते ; अन्यथा हि पुरुषा न प्रवर्तेरन् । ननु विश्वजिन्न्याय एव आयातः, मोक्षस्य फलस्य कल्पितत्वात्— मोक्षे वा अन्यस्मिन्वा फले अकल्पिते पुरुषा न प्रवर्तेरन्निति मोक्षः फलं कल्प्यते श्रुतार्थापत्त्या, यथा विश्वजिति ; ननु एवं सति कथमुच्यते, विश्वजिन्न्यायो न भवतीति ; फलं च कल्प्यते विश्वजिन्न्यायश्च न भवतीति विप्रतिषिद्धमभिधीयते । मोक्षः फलमेव न भवतीति चेत्, न, प्रतिज्ञाहानात् ; कर्म कार्यान्तरं विषद्ध्यादिवत् आरभत इति हि प्रतिज्ञातम् ; स चेन्मोक्षः कर्मणः कार्यं फलमेव न भवति, सा प्रतिज्ञा हीयेत । कर्मकार्यत्वे च मोक्षस्य स्वर्गादिफलेभ्यो विशेषो वक्तव्यः । अथ

कर्मकार्यं न भवति, नित्यानां कर्मणां फलं मोक्ष इत्यस्या वचनव्यक्तेः कोऽर्थ इति वक्तव्यम् । न च कार्यफलशब्दभेदमात्रेण विशेषः शक्यः कल्पयितुम् । अफलं च मोक्षः, नित्यैश्च कर्मभिः क्रियते— नित्यानां कर्मणां फलं न, कार्यम्—इति च एषोऽर्थः विप्रतिषिद्धोऽभिधीयते—यथा अग्निः शीत इति । ज्ञानवदिति चेत्— यथा ज्ञानस्य कार्यं मोक्षः ज्ञानेनाक्रियमाणोऽप्युच्यते, तद्वत् कर्मकार्यत्वमिति चेत्— न, अज्ञाननिवर्तकत्वात् ज्ञानस्य; अज्ञानव्यवधाननिवर्तकत्वात् ज्ञानस्य मोक्षो ज्ञानकार्यमित्युपचर्यते । न तु कर्मणा निवर्तयितव्यमज्ञानम्; न च अज्ञानव्यतिरेकेण मोक्षस्य व्यवधानान्तरं कल्पयितुं शक्यम्— नित्यत्वान्मोक्षस्य साधकस्वरूपाव्यतिरेकाच्च—यत्कर्मणा निवर्त्येत । अज्ञानमेव निवर्तयतीति चेत्, न, विलक्षणत्वात्— अनभिव्यक्तिः अज्ञानम् अभिव्यक्तिलक्षणेन ज्ञानेन विरुध्यते; कर्म तु नाज्ञानेन विरुध्यते; तेन ज्ञानविलक्षणं कर्म । यदि ज्ञानाभावः, यदि संशयज्ञानम्, यदि विपरीतज्ञानं वा उच्यते अज्ञानमिति, सर्वं हि तत् ज्ञानेनैव निवर्त्यते; न तु कर्मणा अन्यतमेनापि विरोधाभावात् । अथ अदृष्टं कर्मणाम् अज्ञाननिवर्तकत्वं कल्प्यमिति चेत्, न, ज्ञानेन अज्ञाननिवृत्तौ

गम्यमानायाम् अदृष्टनिवृत्तिकल्पनानुपपत्तेः; यथा अवघातेन व्रीहीणां तुषनिवृत्तौ गम्यमानायाम् अग्निहोत्रादिनित्यकर्मकार्या अदृष्टा न कल्प्यते तुषनिवृत्तिः, तद्वत् अज्ञाननिवृत्तिरपि नित्यकर्मकार्या अदृष्टा न कल्प्यते। ज्ञानेन विरुद्धत्वं च असकृत् कर्मणामवोचाम। यत् अविरुद्धं ज्ञानं कर्मभिः, तत् देवलोकप्राप्तिनिमित्तमित्युक्तम्—'विद्यया देवलोकः' इति श्रुतेः। किंचान्यत् कल्प्ये च फले नित्यानां कर्मणां श्रुतानाम्, यत् कर्मभिर्विरुध्यते— द्रव्यगुणकर्मणां कार्यमेव न भवति— किं तत् कल्प्यताम्, यस्मिन् कर्मणः सामर्थ्यमेव न दृष्टम्? किं वा यस्मिन् दृष्टं सामर्थ्यम्, यच्च कर्मणां फलमविरुद्धम्, तत्कल्प्यतामिति। पुरुषप्रवृत्तिजननाय अवश्यं चेत् कर्मफलं कल्पयितव्यम्— कर्माविरुद्धविषय एव श्रुतार्थापत्तेः क्षीणत्वात् नित्यो मोक्षः फलं कल्पयितुं न शक्यः, तद्यवघातनाज्ञाननिवृत्तिर्वा, अविरुद्धत्वात् दृष्टसामर्थ्यविषयत्वाच्चेति। पारिशेष्यन्यायात् मोक्ष एव कल्पयितव्य इति चेत्— सर्वेषां हि कर्मणां सर्वं फलम्; न च अन्यत् इतरकर्मफलव्यतिरेकेण फलं कल्पनायोग्यमस्ति; परिशिष्टश्च मोक्षः; स च इष्टः वेदविदां फलम्; तस्मात् स एव कल्पयितव्यः इति चेत्— न, कर्मफलव्यक्तीनाम् आनन्त्यात् पारिशेष्य-

न्यायानुपपत्तेः; न हि पुरुषेच्छाविषयाणां कर्मफलानाम् एतावत्त्वं नाम केनचित् असर्वज्ञेनावधृतम्, तत्साधनानां वा, पुरुषेच्छानां वा अनियतदेशकालनिमित्तत्वात् पुरुषेच्छाविषयसाधनानां च पुरुषेष्टफलप्रयुक्तत्वात्; प्रतिप्राणि च इच्छावैचित्र्यात् फलानां तत्साधनानां च आनन्त्यसिद्धिः; तदानन्त्याच्च अशक्यम् एतावत्त्वं पुरुषैर्ज्ञातुम्; अज्ञाते च साधनफलैतावत्त्वे कथं मोक्षस्य परिशेषसिद्धिरिति। कर्मफलजातिपारिशेष्यमिति चेत्— सत्यपि इच्छाविषयाणां तत्साधनानां च आनन्त्ये, कर्मफलजातित्वं नाम सर्वेषां तुल्यम्; मोक्षस्तु अकर्मफलत्वात् परिशिष्टः स्यात्; तस्मात् परिशेषात् स एव युक्तः कल्पयितुमिति चेत्— न; तस्यापि नित्यकर्मफलत्वाभ्युपगमे कर्मफलसमानजातीयत्वोपपत्तेः परिशेषानुपपत्तिः। तस्मात् अन्यथाप्युपपत्तेः क्षीणा श्रुतार्थापत्तिः; उत्पत्त्याप्तिविकारसंस्काराणामन्यतममपि नित्यानां कर्मणां फलमुपपद्यत इति क्षीणा श्रुतार्थापत्तिः चतुर्णामन्यतम एव मोक्ष इति चेत्— न तावत् उत्पाद्यः, नित्यत्वात्; अत एव अविकार्यः; असंस्कार्यश्च अत एव— असाधनद्रव्यात्मकत्वाच्च— साधनात्मकं हि द्रव्यं संस्क्रियते, यथा पात्राज्यादि प्रोक्षणादिना; न च संस्क्रियमाणः, सं-

स्कारनिर्वर्त्यो वा– यूपादिवत्; पारिशेष्यात् आप्यः स्यात्; न आप्योऽपि, आत्मस्वभावत्वात् एकत्वाच्च । इतरैः कर्मभिर्वैलक्षण्यात् नित्यानां कर्मणाम्, तत्फलेनापि विलक्षणेन भवितव्यमिति चेत्, न– कर्मत्वसालक्षण्यात् सलक्षणं कस्मात् फलं न भवति इतरकर्मफलैः? निमित्तवैलक्षण्यादिति चेत्, न, क्षामवत्यादिभिः समानत्वात्; यथा हि– गृहदाहादौ निमित्ते क्षामवत्यादीष्टिः, यथा– 'भिन्ने जुहोति, स्कन्ने जुहोति' इति— एवमादौ नैमित्तिकेषु कर्मसु न मोक्षः फलं कल्प्यते— तैश्चाविशेषान्नैमित्तिकत्वेन, जीवनादिनिमित्ते च श्रवणात्, तथा नित्यानामपि न मोक्षः फलम् । आलोकस्य सर्वेषां रूपदर्शनसाधनत्वे, उलूकादयः आलोकेन रूपं न पश्यन्तीति उलूकादिचक्षुषो वैलक्षण्यादितरलोकचक्षुर्भिः, न रसादिविषयत्वं परिकल्प्यते, रसादिविषये सामर्थ्यस्यादृष्टत्वात् । सुदूरमपि गत्वा यद्विषयं दृष्टं सामर्थ्यं तत्रैव कश्चिद्विशेषः कल्पयितव्यः । यत्पुनरुक्तम्, विद्यामन्त्रशर्करादिसंयुक्तविषदध्यादिवत् नित्यानि कार्यान्तरमारभन्त इति— आरभ्यतां विशिष्टं कार्यम्, तत् इष्टत्वादविरोधः; निरभिसंधेः कर्मणो विद्यासंयुक्तस्य विशिष्टकार्यान्तरारम्भे न कश्चिद्विरोधः, देवयाज्यात्मयाजिनोः

आत्मयाजिनो विशेषश्रवणात्– 'देवयाजिनः श्रेयानात्मयाजी' इत्यादौ 'यदेव विद्यया करोति' इत्यादौ च। यस्तु परमात्मदर्शनविषये मनुनोक्तः आत्मयाजिशब्दः 'संपश्यन्नात्मयाजी' इत्यत्र– समं पश्यन् आत्मयाजी भवतीत्यर्थः। अथवा भूतपूर्वगत्या— आत्मयाजी आत्मसंस्कारार्थं नित्यानि कर्माणि करोति– 'इदं मेऽनेनाङ्गं संस्क्रियते' इति श्रुतेः; तथा 'गार्भैर्होमैः' इत्यादिप्रकरणे कार्यकरणसंस्कारार्थत्वं नित्यानां कर्मणां दर्शयति; संस्कृतश्च य आत्मयाजी तैः कर्मभिः समं द्रष्टुं समर्थो भवति, तस्य इह जन्मान्तरे वा समम् आत्मदर्शनमुत्पद्यते; समं पश्यन् स्वाराज्यमधिगच्छतीत्येषोऽर्थः; आत्मयाजिशब्दस्तु भूतपूर्वगत्या प्रयुज्यते ज्ञानयुक्तानां नित्यानां कर्मणां ज्ञानोत्पत्तिसाधनत्वप्रदर्शनार्थम्। किंचान्यत्—'ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः' इति च देवसार्ष्टिव्यतिरेकेण भूताप्ययं दर्शयति– 'भूतान्यप्येति पञ्च वै' 'भूतान्यत्येति' इति पाठं ये कुर्वन्ति, तेषां वेदविषये परिच्छिन्नबुद्धित्वाददोषः; न च अर्थवादत्वम्– अध्यायस्य ब्रह्मान्तकर्मविपाकार्थस्य तद्व्यतिरिक्तात्मज्ञानार्थस्य च कर्मकाण्डोपनिषद्भ्यां तुल्यार्थत्वदर्शनात्, विहिताकरणप्रतिषिद्ध-

कर्मणां च स्थावरश्वसूकरादिफलदर्शनात्, वान्ताश्यादिप्रेत-दर्शनाच्च । न च श्रुतिस्मृतिविहितप्रतिषिद्धव्यतिरेकेण विहि-तानि वा प्रतिषिद्धानि वा कर्माणि केनचिदवगन्तुं शक्य-न्ते, येषाम् अकरणादनुष्ठानाच्च प्रेतश्वसूकरस्थावरादीनि कर्मफलानि प्रत्यक्षानुमानाभ्यामुपलभ्यन्ते; न च एषाम् कर्मफलत्वं केनचिदभ्युपगम्यते । तस्मात् विहिताकरणप्रति-षिद्धसेवानां यथा एते कर्मविपाकाः प्रेततिर्यक्स्थावरादयः, तथा उत्कृष्टेष्वपि ब्रह्मान्तेषु कर्मविपाकत्वं वेदितव्यम्; तस्मात् 'स आत्मनो वपामुदखिदत्' 'सोऽरोदीत्' इत्यादि-वत् न अभूतार्थवादत्वम् । तत्रापि अभूतार्थवादत्वं मा भू-दिति चेत्— भवत्वेवम्; न च एतावता अस्य न्यायस्य बाधो भवति; न च अस्मत्पक्षो वा दुष्यति । न च 'ब्रह्मा विश्वसृजः' इत्यादीनां काम्यकर्मफलत्वं शक्यं वक्तुम्, तेषां देवसार्ष्टितायाः फलस्योक्तत्वात् । तस्मात् साभिसंधी-नां नित्यानां कर्मणां सर्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि; येषां पुनः नित्यानि निरभिसंधीनि आत्मसंस्का-रार्थानि, तेषां ज्ञानोत्पत्त्यर्थानि तानि, 'ब्राह्मीयं क्रियते तनुः' इति स्मरणात्; तेषाम् आरादुपकारत्वात् मोक्षसाधनान्यपि कर्माणि भवन्तीति न विरुध्यते; यथा चायमर्थः, षष्ठे ज-

नकाख्यायिकासमाप्तौ वक्ष्यामः । यत्तु विषदध्यादिवदित्युक्तम्, तत्र प्रत्यक्षानुमानविषयत्वाद्विरोधः; यस्तु अत्यन्तशब्दगम्योऽर्थः, तत्र वाक्यस्याभावे तदर्थप्रतिपादकस्य न शक्यं कल्पयितुं विषदध्यादिसाधर्म्यम् । न च प्रमाणान्तरविरुद्धार्थविषये श्रुतेः प्रामाण्यं कल्प्यते, यथा— शीतोऽग्निः क्लेदयतीति; श्रुते तु तादर्थ्ये वाक्यस्य, प्रमाणान्तरस्य आभासत्वम्— यथा 'खद्योतोऽग्निः' इति 'तलमलिनमन्तरिक्षम्' इति बालानां यत्प्रत्यक्षमपि, तद्विषयप्रमाणान्तरस्य यथार्थत्वे निश्चिते, निश्चितार्थमपि बालप्रत्यक्षम् आभासी भवति; तस्माद् वेदप्रामाण्यस्याव्यभिचारात् तादर्थ्ये सति वाक्यस्य तथात्वं स्यात्, न तु पुरुषमतिकौशलम्; न हि पुरुषमतिकौशलात् सविता रूपं न प्रकाशयति; तथा वेदवाक्यान्यपि न अन्यार्थानि भवन्ति । तस्मात् न मोक्षार्थानि कर्माणीति सिद्धम् । अतः कर्मफलानां संसारत्वप्रदर्शनायैव ब्राह्मणमारभ्यते ॥

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच । मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृ-

**च्छाम कोऽसीति सोऽब्रवीत्सुधन्वाङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन्स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥**

अथ अनन्तरम् उपरते जारत्कारवे, भुज्युरिति नामतः, लह्यस्यापत्यं लाह्यः तदपत्यं लाह्यायनिः, प्रपच्छ; याज्ञवल्क्येति होवाच । आदावुक्तम् अश्वमेधदर्शनम्; समष्टिव्यष्टिफलश्चाश्वमेधक्रतुः, ज्ञानसमुच्चितो वा केवलज्ञानसंपादितो वा, सर्वकर्मणां परा काष्ठा; भ्रूणहत्याश्वमेधाभ्यां न परं पुण्यपापयोरिति हि स्मरन्ति; तेन हि समष्टिं व्यष्टीश्च प्राप्नोति; तत्र व्यष्टयो निर्ज्ञाता अन्तरण्डविषया अश्वमेधयागफलभूताः; 'मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति' इत्युक्तम्; मृत्युश्च अशनायालक्षणो बुद्ध्यात्मा समष्टिः प्रथमजः वायुः सूत्रं सत्यं हिरण्यगर्भः; तस्य व्याकृतो विषयः— यदात्मकं सर्वं द्वैतकत्वम्, यः सर्वभूतान्तरात्मा लिङ्गम् अमूर्तरसः यदाश्रितानि सर्वभूतकर्माणि, यः कर्मणां कर्मसंबद्धानां च विज्ञानानां परा गतिः परं फलम् । तस्य कियान् गोचरः कियती व्याप्तिः सर्वतः

परिमण्डलीभूता, सा वक्तव्या; तस्याम् उक्तायाम्, सर्वः संसारो बन्धगोचर उक्तो भवति; तस्य च समष्टिव्यष्ट्यात्मदर्शनस्य अलौकिकत्वप्रदर्शनार्थम् आख्यायिकामात्मनो वृत्तां प्रकुरुते; तेन च प्रतिवादिबुद्धिं व्यामोहयिष्यामीति मन्यते ॥

मद्रेषु— मद्रा नाम जनपदाः तेषु, चरकाः— अध्ययनार्थं व्रतचरणाच्चरकाः अध्वर्यवो वा, पर्यव्रजाम पर्यटितवन्तः; ते पतञ्जलस्य— ते वयं पर्यटन्तः, पतञ्जलस्य नामतः, काप्यस्य कपिगोत्रस्य, गृहान् ऐम गतवन्तः; तस्यासीद्दुहिता गन्धर्वगृहीता— गन्धर्वेण अमानुषेण सत्त्वेन केनचित् आविष्टा; गन्धर्वो वा धिष्ण्योऽग्निः ऋत्विक् देवता विशिष्टविज्ञानत्वात् अवसीयते; न हि सत्त्वमात्रस्य ईदृशं विज्ञानमुपपद्यते। तं सर्वे वयं परिवारिताः सन्तः अपृच्छाम—कोऽसीति—कस्त्वमसि किंनामा किंसतत्त्वः। सोऽब्रवीद्गन्धर्वः—सुधन्वा नामतः, आङ्गिरसो गोत्रतः। तं यदा यस्मिन्काले लोकानाम् अन्तान् पर्यवसानानि अपृच्छाम, अथ एनं गन्धर्वम् अब्रूम— भुवनकोशपरिमाणज्ञानाय प्रवृत्तेषु सर्वेषु आत्मानं श्लाघयन्तः पृष्टवन्तो वयम्; कथम्? क्व पारिक्षिता अभवन्निति। स च गन्धर्वः सर्वमस्मभ्यमब्रवीत्। तेन दिव्येभ्यो मया लब्धं ज्ञानम्; तत् तव नास्ति; अतो नि

गृहीतोऽसि '— इत्यभिप्रायः । सोऽहं विद्यासंपन्नो लब्धागमो गन्धर्वात् त्वा त्वाम् पृच्छामि याज्ञवल्क्य— क्व पारिक्षिता अभवन्— तत् त्वं किं जानासि? हे याज्ञवल्क्य, कथय, पृच्छामि— क्व पारिक्षिता अभवन्निति ॥

स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथाह्न्यान्ययं लोकस्तꣳ समन्तं पृथिवी द्विस्तावत्पर्येति ताꣳ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

स होवाच याज्ञवल्क्यः; उवाच वै सः— वै-शब्दः स्मरणार्थः— उवाच वै स गन्धर्वः तुभ्यम्। अगच्छन्वै ते पारिक्षिताः, तत् तत्र; क? यत्र यस्मिन् अश्वमेधयाजिनो गच्छन्ति— इति निर्णीते प्रश्न आह— क नु कस्मिन् अश्वमेधयाजिनो गच्छन्तीति। तेषां गतिविवक्षया भुवनकोशपरिमाणमाह— द्वात्रिंशतं वै, द्वे अधिके त्रिंशत्, द्वात्रिंशतं वै, देवरथाह्न्यानि— देव आदित्यः तस्य रथो देवरथः तस्य रथस्य गत्या अह्ना यावत्परिच्छिद्यते देशपरिमाणं तत् देवरथाह्न्यम्, तद्द्वात्रिंशद्गुणितं देवरथाह्न्यानि, तावत्परिमाणोऽयं लोकः लोकालोकगिरिणा परिक्षिप्तः— यत्र वैराजं शरीरम्, यत्र च कर्मफलोपभोगः प्राणिनाम्, स एष लोकः; एतावान् लोकः, अतः परम् अलोकः, तं लोकं समन्तं समन्ततः, लोकविस्तारात् द्विगुणपरिमाणविस्तारेण परिमाणेन, तं लोकं परिक्षिप्ता पर्येति पृथिवी; तां पृथिवीं तथैव समन्तम्, द्विस्तावत्— द्विगुणेन परिमाणेन समुद्रः पर्येति, यं घनोदमाचक्षते पौराणिकाः। तत्र अण्डकपालयोर्विवरपरिमाणमुच्यते, येन विवरेण मार्गेण बहिर्निर्गच्छन्तो व्याप्नुवन्ति अश्वमेधयाजिनः; तत्र यावती यावत्परिमाणा क्षुरस्य धारा अग्रम्, यावद्वा सौ-

क्ष्म्येण युक्तं मक्षिकायाः पत्रम्, तावान् तावत्परिमाणः, अन्तरेण मध्येऽण्डकपालयोः, आकाशः छिद्रम्, तेन आकाशेनेत्येतत्; तान् पारिक्षितानश्वमेधयाजिनः प्राप्तान् इन्द्रः परमेश्वरः— योऽश्वमेधेऽग्निश्चितः, सुपर्णः— यद्विषयं दर्शनमुक्तम् 'तस्य प्राची दिक्शिरः' इत्यादिना— सुपर्णः पक्षी भूत्वा, पक्षपुच्छात्मकः सुपर्णो भूत्वा, वायवे प्रायच्छत्— मूर्तत्वान्नास्त्यात्मनो गतिस्तत्रेति । तान् पारिक्षितान् वायुः आत्मनि धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन् अगमयत्; क? यत्र पूर्वे अतिक्रान्ताः पारिक्षिता अश्वमेधयाजिनोऽभवन्निति । एवमिव वै— एवमेव स गन्धर्वः वायुमेव प्रशशंस पारिक्षितानां गतिम् । समाप्ता आख्यायिका; आख्यायिकानिर्वृत्तं तु अर्थम् आख्यायिकातोऽपसृत्य स्वेन श्रुतिरूपेणैव आचष्टेऽस्मभ्यम् । यस्मात् वायुः स्थावरजङ्गमानां भूतानामन्तरात्मा, बहिश्च स एव, तस्मात् अध्यात्माधिभूताधिदैवभावेन विविधा या अष्टिः व्याप्तिः स वायुरेव; तथा समष्टिः केवलेन सूत्रात्मना वायुरेव । एवं वायुमात्मानं समष्टिव्यष्टिरूपात्मकत्वेन उपगच्छति यः— एवं वेद, तस्य किं फलमित्याह—अप पुनर्मृत्युं जयति, सकृन्मृत्वा पुनर्न म्रियते । तत आत्मनः प्रश्ननिर्णयात् भुज्युर्लाह्यायनिरुपरराम ॥

इति तृतीयाध्यायस्य तृतीयं ब्राह्मणम् ॥

## चतुर्थं ब्राह्मणम् ॥

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीतः पुनः पुनः ग्रहातिग्रहान् त्यजन् उपाददत् संसरतीत्युक्तम्; पुण्यस्य च पर उत्कर्षो व्याख्यातः व्याकृतविषयः समष्टिव्यष्टिरूपः द्वैतैकत्वात्मप्राप्तिः । यस्तु ग्रहातिग्रहैर्ग्रस्तः संसरति, सः अस्ति वा, न अस्ति; अस्तित्वे च किंलक्षणः— इति आत्मन एव विवेकाधिगमाय उषस्तप्रश्न आरभ्यते । तस्य च निरुपाधिस्वरूपस्य क्रियाकारकविनिर्मुक्तस्वभावस्य अधिगमात् यथोक्ताद्बन्धनात् विमुच्यते सप्रयोजकात् आख्यायिकासंबन्धस्तु प्रसिद्धः ॥

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानीति स त आत्मा सर्वान्तरो यो व्या-**

**नेन व्यानीति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥ १ ॥**

अथ ह एनं प्रकृतं याज्ञवल्क्यम्, उषस्तो नामतः, चक्रस्यापत्यं चाक्रायणः, पप्रच्छ। यत् ब्रह्म साक्षात् अव्यवहितं केनचित् द्रष्टुः अपरोक्षात्— अगौणम्— न श्रोत्रब्रह्मादिवत्— किं तत्? य आत्मा— आत्मशब्देन प्रत्यगात्मोच्यते, तत्र आत्मशब्दस्य प्रसिद्धत्वात्; सर्वस्याभ्यन्तरः सर्वान्तरः; यद्यःशब्दाभ्यां प्रसिद्ध आत्मा ब्रह्मेति— तम् आत्मानम्, मे मह्यम्, व्याचक्ष्वेति— विस्पष्टं शृङ्गे गृहीत्वा यथा गां दर्शयति तथा आचक्ष्व, सोऽयमित्येवं कथयस्वेत्यर्थः। एवमुक्तः प्रत्याह याज्ञवल्क्यः— एषः ते तव आत्मा सर्वान्तरः सर्वस्याभ्यन्तरः; सर्वविशेषणोपलक्षणार्थं सर्वान्तरग्रहणम्; यत् साक्षात् अव्यवहितम् अपरोक्षात् अगौणम् ब्रह्म बृहत्तमम् आत्मा सर्वस्य सर्वस्याभ्यन्तरः, एतैर्गुणैः समस्तैर्युक्तः एषः, कोऽसौ तवात्मा? योऽयं कार्यकरणसंघातः तव सः येनात्मना आत्मवान् स एष तव आत्मा—तव कार्यकरणसंघातस्येत्यर्थः। तव पिण्डः, तस्याभ्यन्तरे लिङ्गात्मा करणसंघातः, तृतीयो यश्च संदि-

ह्यमानः— तेषु कतमो मम आत्मा सर्वान्तरः त्वया विवक्षित इत्युक्ते इतर आह— यः प्राणेन मुखनासिकासंचारिणा प्राणिति प्राणचेष्टां करोति, येन प्राणः प्रणीयत इत्यर्थः— सः ते तव कार्यकरणसंघातस्य आत्मा विज्ञानमयः; समानमन्यत्; योऽपानेनापानीति यो व्यानेन व्यानीतीति— छान्दसं दैर्घ्यम् । सर्वाः कार्यकरणसंघातगताः प्राणनादिचेष्टा दारुयन्त्रस्येव येन क्रियन्ते— न हि चेतनावदनधिष्ठितस्य दारुयन्त्रस्येव प्राणनादिचेष्टा विद्यन्ते; तस्मात् विज्ञानमयेनाधिष्ठितं विलक्षणेन दारुयन्त्रवत् प्राणनादिचेष्टां प्रतिपद्यते— तस्मात् सोऽस्ति कार्यकरणसंघातविलक्षणः, यश्चेष्टयति ॥

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्मन्तारं मन्वीथा**

**न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥**

इति चतुर्थं ब्राह्मणम् ॥

स होवाचोषस्तश्चाक्रायणः; यथा कश्चित् अन्यथा प्रतिज्ञाय पूर्वम्, पुनर्विप्रतिपन्नो ब्रूयादन्यथा— असौ गौरः असावश्वः यश्चलति धावतीति वा, पूर्वं प्रत्यक्षं दर्शयामीति प्रतिज्ञाय, पश्चात् चलनादिलिङ्गैर्व्यपदिशति— एवमेव एतद्ब्रह्म प्राणनादिलिङ्गैर्व्यपदिष्टं भवति त्वया; किं बहुना? त्यक्त्वा गोतृष्णानिमित्तं व्याजम्, यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति । इतर आह— यथा मया प्रथमं प्रतिज्ञातः तव आत्मा— एवंलक्षण इति— तां प्रतिज्ञामनुवर्त एव; तत् तथैव, यथोक्तं मया । यत्पुनरुक्तम्, तमात्मानं घटादिवत् विषयीकुर्विति— तत् अशक्यत्वान्न क्रियते । कस्मात्पुनः तदशक्यमित्याह— वस्तुस्वाभाव्यात्; किं पुनः तत् वस्तुस्वाभाव्यम्? दृष्ट्यादिद्रष्टृत्वम्; दृष्टेर्द्रष्टा ह्यात्मा; दृष्टिरिति द्विविधा भवति— लौकिकी पारमार्थिकी चेति; तत्र लौकिकी चक्षुःसंयुक्तान्तःकरणवृत्तिः; सा क्रियत इति जायते विनश्यति च;

या तु आत्मनो दृष्टिः अग्न्युष्णप्रकाशादिवत्, सा च द्रष्टुः स्वरूपत्वात्, न जायते न विनश्यति च; सा क्रियमाणया उपाधिभूतया संसृष्टेवेति, व्यपदिश्यते— द्रष्टेति, भेदवच्च— द्रष्टा दृष्टिरिति च; यासौ लौकिकी दृष्टिः चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्यया आत्मदृष्ट्या संसृष्टेव, तत्प्रतिच्छाया— तया व्याप्तैव जायते, तथा विनश्यति च; तेन उपचर्यते द्रष्टा सदा पश्यन्नपि—पश्यति न पश्यति चेति; न तु पुनः द्रष्टुर्दृष्टेः कदाचिदप्यन्यथात्वम्; तथा च वक्ष्यति षष्ठे— 'ध्यायतीव लेलायतीव', 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति च । तमिममर्थमाह— लौकिक्या दृष्टेः कर्मभूतायाः, द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारम्, न पश्येः; यासौ लौकिकी दृष्टिः कर्मभूता, सा रूपोपरक्ता रूपाभिव्यञ्जिका न आत्मानं स्वात्मनो व्याप्तारं प्रत्यञ्चं व्याप्नोति; तस्मात् तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः । तथा श्रुतेः श्रोतारं न शृणुयाः । तथा मतेः मनोवृत्तेः केवलाया व्याप्तारं न मन्वीथाः । तथा विज्ञातेः केवलाया बुद्धिवृत्तेः व्याप्तारं न विजानीयाः । एष वस्तुनः स्वभावः; अतः नैव दर्शयितुं शक्यते गवादिवत् ॥

'न दृष्टेर्द्रष्टारम्' इत्यत्र अक्षराणि अन्यथा व्याचक्षते

केचित्— न दृष्टेर्द्रष्टारम् दृष्टेः कर्तारम् दृष्टिभेदमकृत्वा दृष्टिमात्रस्य कर्तारम्, न पश्येरिति; दृष्टेरिति कर्मणि षष्ठी; सा दृष्टिः क्रियमाणा घटवत् कर्म भवति; द्रष्टारमिति तृजन्तेन द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे; तेन असौ दृष्टेर्द्रष्टा दृष्टेः कर्तेति व्याख्यातॄणामभिप्रायः। तत्र दृष्टेरिति षष्ठ्यन्तेन दृष्टिग्रहणं निरर्थकमिति दोषं न पश्यन्ति; पश्यतां वा पुनरुक्तम् असारः प्रमादपाठ इति वा न आदरः; कथं पुनराधिक्यम्? तृजन्तेनैव दृष्टिकर्तृत्वस्य सिद्धत्वात् दृष्टेरिति निरर्थकम्; तदा 'द्रष्टारं न पश्येः' इत्येतावदेव वक्तव्यम्; यस्माद्धातोः परः तृच् श्रूयते, तद्धात्वर्थकर्तरि हि तृच् स्मर्यते; 'गन्तारं भेत्तारं वा नयति' इत्येतावानेव हि शब्दः प्रयुज्यते; न तु 'गतेर्गन्तारं भिदेर्भेत्तारम्' इति असति अर्थविशेषे प्रयोक्तव्यः; न च अर्थवादत्वेन हातव्यां सत्यां गतौ; न च प्रमादपाठः, सर्वेषामविगानात्; तस्मात् व्याख्यातॄणामेव बुद्धिदौर्बल्यम्, नाध्येतृप्रमादः। यथा तु अस्माभिर्व्याख्यातम्— लौकिकदृष्टेर्विविच्य नित्यदृष्टिविशिष्ट आत्मा प्रदर्शयितव्यः— तथा कर्तृकर्मविशेषणत्वेन दृष्टिशब्दस्य द्विः प्रयोग उपपद्यते आत्मस्वरूपनिर्धारणाय; 'न हि द्रष्टुर्दृष्टेः' इति च प्रदेशान्तरवाक्येन एकवाक्यतोपपन्ना भवति; तथा च 'चक्षूंषि

पश्यति' 'श्रोत्रमिदं श्रुतम्' इति श्रुत्यन्तरेण एकवाक्यता उपपन्ना। न्यायाच्च— एवमेव हि आत्मनो नित्यत्वमुपपद्यते विक्रियाभावे; विक्रियावच्च नित्यमिति च विप्रतिषिद्धम्। 'ध्यायतीव लेलायतीव' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' 'एष नित्यो महिमा ब्राह्मणस्य' इति च श्रुत्यक्षराणि अन्यथा न गच्छन्ति। ननु द्रष्टा श्रोता मन्ता विज्ञाता इत्येवमादीन्यक्षराणि आत्मनोऽविक्रियत्वे न गच्छन्तीति— न, यथाप्राप्तलौकिकवाक्यानुवादित्वात् तेषाम्; न आत्मतत्त्वनिर्धारणार्थानि तानि; 'न दृष्टेर्द्रष्टारम' इत्येवमादीनाम् अन्यार्थासंभवात् यथोक्तार्थपरत्वमवगम्यते। तस्मात् अनवबोधादेव हि विशेषणं परित्यक्तं दृष्टेरिति। एषः ते तव आत्मा सर्वैरुक्तैर्विशेषणैर्विशिष्टः; अतः एतस्मादात्मनः अन्यदार्तम्— कार्यं वा शरीरम्, करणात्मकं वा लिङ्गम; एतदेव एकम् अनार्तम् अविनाशि कूटस्थम्। ततो ह उषस्तश्चाक्रायण उपरराम॥

इति तृतीयाध्यायस्य चतुर्थं ब्राह्मणम्॥

## पञ्चमं ब्राह्मणम् ॥

बन्धनं सप्रयोजकमुक्तम् । यश्च बद्धः, तस्यापि अस्तित्वमधिगतम्, व्यतिरिक्तत्वं च । तस्य इदानीं बन्धमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति कहोलप्रश्न आरभ्यते—

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः । तस्माद्ब्रा-**

**ह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥**

**इति पञ्चमं ब्राह्मणम् ॥**

अथ ह एनं कहोलो नामतः, कुषीतकस्यापत्यं कौषीतकेयः, पप्रच्छ; याज्ञवल्क्येति होवाचेति, पूर्ववत्— यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति— यं विदित्वा बन्धनात्प्रमुच्यते । याज्ञवल्क्य आह— एष ते तव आत्मा ॥

किम् उषस्तकहोलाभ्याम् एक आत्मा पृष्टः, किं वा भिन्नावात्मानौ तुल्यलक्षणाविति । भिन्नाविति युक्तम्, प्रश्नयोरपुनरुक्तत्वोपपत्तेः; यदि हि एक आत्मा उषस्तकहोलप्रश्नयोर्विवक्षितः, तत्र एकेनैव प्रश्नेन अधिगतत्वात् तद्विषयो द्वितीयः प्रश्नोऽनर्थकः स्यात्; न च अर्थवादरूपत्वं वाक्यस्य; तस्मात् भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्यावि-

ति केचिद्व्याचक्षते । तन्न, 'ते' इति प्रतिज्ञानात्; 'एष त आत्मा' इति हि प्रतिवचने प्रतिज्ञातम्; न च एकस्य कार्यकरणसंघातस्य द्वावात्मानौ उपपद्येते; एको हि कार्यकरणसंघातः एकेन आत्मना आत्मवान्; न च उषस्तस्यान्यः कहोलस्यान्यः जातितो भिन्न आत्मा भवति, द्वयोः अगौणत्वात्मत्वसर्वान्तरत्वानुपपत्तेः; यदि एकमगौणं ब्रह्म द्वयोः इतरेण अवश्यं गौणेन भवितव्यम्; तथा आत्मत्वं सर्वान्तरत्वं च— विरुद्धत्वात्पदार्थानाम्; यदि एकं सर्वान्तरं ब्रह्म आत्मा मुख्यः, इतरेण असर्वान्तरेण अनात्मना अमुख्येन अवश्यं भवितव्यम्; तस्मात् एकस्यैव द्विः श्रवणं विशेषविवक्षया । यत्तु पूर्वोक्तेन समानं द्वितीये प्रश्नान्तर उक्तम्, तावन्मात्रं पूर्वस्यैवानुवादः— तस्यैव अनुक्तः कश्चिद्विशेषः वक्तव्य इति । कः पुनरसौ विशेष इत्युच्यते— पूर्वस्मिन्प्रश्ने— अस्ति व्यतिरिक्त आत्मा यस्यायं सप्रयोजको बन्ध उक्त इति द्वितीये तु— तस्यैव आत्मनः अशनायादिसंसारधर्मातीतत्वं विशेष उच्यते—यद्विशेषपरिज्ञानात् संन्याससहितात् पूर्वोक्ताद्बन्धनात् विमुच्यते । तस्मात् प्रश्नप्रतिवचनयोः 'एष त आत्मा' इत्येवमन्तयोः तुल्यार्थतैव । ननु कथम एकस्यैव आत्मनः अशनायाद्यतीतत्वं तद्वत्त्वं चेति

विरुद्धधर्मसमवायित्वमिति—न, परिहृतत्वात्; नामरूपविकारकार्यकरणलक्षणसंघातोपाधिभेदसंपर्कजनितभ्रान्तिमात्रं हि संसारित्वमित्यसकृदवोचाम, विरुद्धश्रुतिव्याख्यानप्रसङ्गेन च; यथा रज्जुशुक्तिकागगनादयः सर्परजतमलिना भवन्ति पराध्यारोपितधर्मविशिष्टाः, स्वतः केवला एव रज्जुशुक्तिकागगनादयः— न च एवं विरुद्धधर्मसमवायित्वे पदार्थानां कश्चन विरोधः। नामरूपोपाध्यस्तित्वे 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' इति श्रुतयो विरुध्येरन्निति चेत्— न, सलिलफेनदृष्टान्तेन परिहृतत्वात् मृदादिदृष्टान्तैश्च; यदा तु परमार्थदृष्ट्या परमात्मतत्त्वात् श्रुत्यनुसारिभिः अन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवत् वस्त्वन्तरे तत्त्वतो न स्तः— सलिलफेनघटादिविकारवदेव, तदा तत् अपेक्ष्य 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' इत्यादिपरमार्थदर्शनगोचरत्वं प्रतिपद्यते; रूपवदेव स्वेन रूपेण वर्तमानं केनचिदस्पृष्टस्वभावमपि सत् नामरूपकृतकार्यकरणोपाधिभ्यो विवेकेन नावधार्यते, नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी, तदा सर्वोऽयं वस्त्वन्तरास्तित्वव्यवहारः। अस्ति चायं भेदकृतो मिथ्याव्यवहारः, येषां ब्रह्मतत्त्वादन्यत्वेन वस्तु विद्यते, येषां च नास्ति; परमार्थवादिभिस्तु

श्रुत्यनुसारेण निरूप्यमाणे वस्तुनि— किं तत्त्वतोऽस्ति वस्तु किं वा नास्तीति, ब्रह्मैकमेवाद्वितीयं सर्वसंव्यवहारशून्यमिति निर्धार्यते; तेन न कश्चिद्विरोधः। न हि परमार्थावधारणनिष्ठायां वस्त्वन्तरास्तित्वं प्रतिपद्यामहे— 'एकमेवाद्वितीयम्' 'अनन्तरमबाह्यम्' इति श्रुतेः; न च नामरूपव्यवहारकाले तु अविवेकिनां क्रियाकारकफलादिसंव्यवहारो नास्तीति प्रतिषिध्यते। तस्मात् ज्ञानाज्ञाने अपेक्ष्य सर्वः संव्यवहारः शास्त्रीयो लौकिकश्च; अतो न काचन विरोधशङ्का। सर्ववादिनामप्यपरिहार्यः परमार्थसंव्यवहारकृतो व्यवहारः॥

तत्र परमार्थात्मस्वरूपमपेक्ष्य प्रश्नः पुनः— कतमो याज्ञवल्क्य सर्वान्तर इति। प्रत्याह इतरः— योऽशनायापिपासे, अशितुमिच्छा अशनाया, पातुमिच्छा पिपासा; ते अशनायापिपासे योऽत्येतीति वक्ष्यमाणेन संबन्धः। अविवेकिभिः तलमलवदिव गगनं गम्यमानमेव तलमले अत्येति-परमार्थतः-ताभ्यामसंसृष्टस्वभावत्वात्— तथा मूढैः अशनायापिपासादिमद्ब्रह्म गम्यमानमपि— क्षुधितोऽहं पिपासितोऽहमिति, ते अत्येत्येव-परमार्थतः-ताभ्यामसंसृष्टस्वभावत्वात्; 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः— अविद्वल्लोकाध्यारोपितदुःखेनेत्यर्थः। प्राणैकधर्मत्वात् समासकरणमश-

नायापिपासयोः । शोकं मोहम्— शोक इति कामः; इष्टं वस्तु उद्दिश्य चिन्तयतो यत् अरमणम्, तत् तृष्णाभिभूतस्य कामबीजम्; तेन हि कामो दीप्यते; मोहस्तु विपरीतप्रत्ययप्रभवः अविवेकः भ्रमः; स च अविद्या सर्वस्यानर्थस्य प्रसवबीजम्; भिन्नकार्यत्वात्तयोः शोकमोहयोः असमासकरणम् । तौ मनोऽधिकरणौ; तथा शरीराधिकरणौ जरां मृत्युं च अत्येति; जरेति कार्यकरणसंघातविपरिणामः वलीपलितादिलिङ्गः; मृत्युरिति तद्विच्छेदः विपरिणामावसानः; तौ जरामृत्यू शरीराधिकरणौ अत्येति । ये ते अशनायादयः प्राणमनःशरीराधिकरणाः प्राणिषु अनवरतं वर्तमानाः अहोरात्रादिवत् समुद्रोर्मिवच्च प्राणिषु संसार इत्युच्यन्ते; योऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः साक्षादव्यवहितः अपरोक्षादगौणः सर्वान्तर आत्मा ब्रह्मादिस्तम्बपर्यन्तानां भूतानाम् अशनायापिपासादिभिः संसारधर्मैः सदा न स्पृश्यते— आकाश इव घनादिमलैः— तम् एतं वै आत्मानं स्वं तत्त्वम्, विदित्वा ज्ञात्वा— अयमहमस्मि परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तमिति, ब्राह्मणाः— ब्राह्मणानामेवाधिकारो व्युत्थाने, अतो ब्राह्मणग्रहणम्— व्युत्थाय वैपरीत्येनोत्थानं कृत्वा; कुत इत्याह— पुत्रैषणायाः पुत्रार्थै-

षणा पुत्रैषणा— पुत्रेणेमं लोकं जयेयमिति लोकजयसाधनं पुत्रं प्रति इच्छा एषणा दारसंग्रहः; दारसंग्रहमकृत्वेत्यर्थः; वित्तैषणायाश्च— कर्मसाधनस्य गवादेरुपदानम्— अनेन कर्म कृत्वा पितृलोकं जेष्यामीति, विद्यासंयुक्तेन वा देवलोकम्, केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकम्। दैवाद्वित्तात् व्युत्थानमेव नास्तीति केचित्, यस्मात् तद्बलेन हि किल व्युत्थानमिति—तदसत्, 'एतावान्वै कामः' इति पठितत्वात् एषणामध्ये दैवस्य वित्तस्य; हिरण्यगर्भादिदेवताविषयैव विद्या वित्तमित्युच्यते, देवलोकहेतुत्वात्; न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः, 'तस्मात्तत्सर्वमभवत्' 'आत्मा ह्येषां स भवति' इति श्रुतेः; तद्बलेन हि व्युत्थानम्, 'एतं वै तमात्मानं विदित्वा' इति विशेषवचनात्। तस्मात् त्रिभ्योऽप्येतेभ्यः अनात्मलोकप्राप्तिसाधनेभ्यः एषणाविषयेभ्यो व्युत्थाय— एषणा कामः, 'एतावान्वै कामः' इति श्रुतेः— एतस्मिन् विविधे अनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः। सर्वा हि साधनेच्छा फलेच्छैव, अतो व्याचष्टे श्रुतिः— एकैव एषणेति; कथम्? या ह्येव पुत्रैषणा सा वित्तैषणा, दृष्टफलसाधनत्वतुल्यत्वात्; या वित्तैषणा सा लोकैषणा; फलार्थैव

सा; सर्वः फलार्थप्रयुक्त एव हि सर्वं साधनमुपादत्ते; अत एकैव एषणा या लोकैषणा सा साधनमन्तरेण संपादयितुं न शक्यत इति, साध्यसाधनभेदेन उभे हि यस्मात् एते एषणे एव भवतः। तस्मात् ब्रह्मविदो नास्ति कर्म कर्मसाधनं वा— अतो येऽतिक्रान्ता ब्राह्मणाः, सर्वं कर्म कर्मसाधनं च सर्वं देवपितृमानुषनिमित्तं यज्ञोपवीतादि— तेन हि दैवं पित्र्यं मानुषं च कर्म क्रियते, 'निवीतं मनुष्याणाम्' इत्यादिश्रुतेः। तस्मात् पूर्वे ब्राह्मणाः ब्रह्मविदः व्युत्थाय कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः, परमहंसपारिव्राज्यं प्रतिपद्य, भिक्षाचर्यं चरन्ति— भिक्षार्थं चरणं भिक्षाचर्यम्, चरन्ति— त्यक्त्वा स्मार्तं लिङ्गं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकम्; विद्वान् लिङ्गवर्जितः— 'तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गोऽव्यक्ताचारः' इत्यादिस्मृतिभ्यः, 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' इत्यादिश्रुतेः, 'सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम्' इति च ॥

ननु 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वर्तमानापदेशात् अर्थवादोऽयम्; न विधायकः प्रत्ययः कश्चिच्छ्रूयते लिङ्लोट्तव्यानामन्यतमोऽपि; तस्मात् अर्थवादमात्रेण श्रुति-

स्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यते परित्यागः कारयितुम्; 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा'। पारिव्राज्ये तावदध्ययनं विहितम्— 'वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत्' इति; 'स्वाध्याय एवोत्सृज्यमानो वाचम्' इति च आपस्तम्बः; 'ब्रह्मोज्झं वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः। गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्'— इति वेदपरित्यागे दोषश्रवणात्। 'उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्' इति परिव्राजकधर्मेषु च गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्मणां श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वात् गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात् तत्परित्यागो नैवावगन्तुं शक्यते। यद्यपि एषणाभ्यो व्युत्थानं विधीयत एव, तथापि पुत्राद्येषणाभ्यस्तिसृभ्य एव व्युत्थानम्, न तु सर्वस्मात्कर्मणः कर्मसाधनाच्च व्युत्थानम्; सर्वपरित्यागे च अश्रुतं कृतं स्यात्, श्रुतं च यज्ञोपवीतादि हापितं स्यात्; तथा च महानपराधः विहिताकरणप्रतिषिद्धाचरणनिमित्तः कृतः स्यात्; तस्मात् यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरम्परैव ॥

न, 'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः' इति श्रुतेः।

अपि च आत्मज्ञानपरत्वात्सर्वस्या उपनिषदः— आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्य इति हि प्रस्तुतम्; स च आत्मैव साक्षादपरोक्षात्सर्वान्तरः अशनायादिसंसारधर्मवर्जित इत्येवं विज्ञेय इति तावत् प्रसिद्धम्; सर्वा हीयमुपनिषत् एवंपरेति विध्यन्तरशेषत्वं तावन्नास्ति, अतो नार्थवादः, आत्मज्ञानस्य कर्तव्यत्वात्। आत्मा च अशनायादिधर्मवान्न भवतीति साधनफलविलक्षणो ज्ञातव्यः; अतोऽव्यतिरेकेण आत्मनो ज्ञानमविद्या— 'अन्योऽसावन्योऽहमस्मीति,' 'न स वेद,' 'मृत्योः स मृत्युमाप्नोति' 'य इह नानेव पश्यति,' 'एकधैवानुद्रष्टव्यम्,' 'एकमेवाद्वितीयम्,' 'तत्त्वमसि' इत्यादिश्रुतिभ्यः। क्रियाफलं साधनं च अशनायादिसंसारधर्मातीतादात्मनोऽन्यत् अविद्याविषयम्— 'यत्र हि द्वैतमिव भवति' 'अन्योऽसावन्योऽहमस्मीति,' 'न स वेद' 'अथ येऽन्यथातो विदुः' इत्यादिवाक्यशतेभ्यः। न च विद्याविद्ये एकस्य पुरुषस्य सह भवतः, विरोधात्— तमःप्रकाशाविव; तस्मात् आत्मविदः अविद्याविषयोऽधिकारो न द्रष्टव्यः क्रियाकारकफलभेदरूपः, 'मृत्योः स मृत्युमाप्नोति' इत्यादिनिन्दितत्वात्, सर्वक्रियासाधनफलानां च अविद्याविषयाणां तद्विपरीतात्मविद्यया

हातव्यत्वेनेष्टत्वात् , यज्ञोपवीतादिसाधनानां च तद्वि-षयत्वात् । तस्मात् असाधनफलस्वभावादात्मनः अन्यवि-षया विलक्षणा एषणा; उभे ह्येते साधनफले एषणे एव भवतः यज्ञोपवीतादेस्तत्साध्यकर्मणां च साधनत्वात्, 'उभे ह्येते एषणे एव' इति हेतुवचनेनावधारणात् । यज्ञोपवीतादि-साधनात् तत्साध्येभ्यश्च कर्मभ्यः अविद्याविषयत्वात् एषणा-रूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थानं विधित्सितमेव । ननूपनिषद आत्मज्ञानपरत्वात् व्युत्थानश्रुतिः तत्स्तुत्यर्था, न विधिः—न, विधित्सितविज्ञानेन समानकर्तृकत्वश्रवणात्; न हि अकर्तव्येन कर्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवणं संभवति; कर्तव्यानामेव हि अभिषवहोमभक्षाणां यथा श्रवणम्— अभिषुत्य हुत्वा भक्षयन्तीति, तद्वत् आत्मज्ञानैष-णाव्युत्थानभिक्षाचर्याणां कर्तव्यानामेव समानकर्तृकत्वश्रवणं भवेत् । अविद्याविषयत्वात् एषणात्वाच्च अर्थप्राप्त आत्मज्ञा-नविधेरेव यज्ञोपवीतादिपरित्यागः, न तु विधातव्य इति चेत्— न; सुतरामात्मनज्ञानविधिनैव विहितस्य समानक-र्तृकत्वश्रवणेन दार्ढ्योपपत्तिः, तथा भिक्षाचर्यस्य च । यत्पुनरुक्तम्, वर्तमानापदेशादर्थवादमात्रमिति— न, औदु-म्बरयूपादिविधिसमानत्वाददोषः ॥

'व्युत्थाय भिक्षाचर्यं चरन्ति' इत्यनेन पारिव्राज्यं विधीयते; पारिव्राज्याश्रमे च यज्ञोपवीतादिसाधनानि विहितानि लिङ्गं च श्रुतिभिः स्मृतिभिश्च; अतः तत् वर्जयित्वा अन्यस्माद्व्युत्थानम् एषणात्वेऽपीति चेत्— न, विज्ञानसमानकर्तृकात्पारिव्राज्यात् एषणाव्युत्थानलक्षणात् पारिव्राज्यान्तरोपपत्तेः; यद्धि तत् एषणाभ्यो व्युत्थानलक्षणं पारिव्राज्यम्, तत् आत्मज्ञानाङ्गम्, आत्मज्ञानविरोध्येषणापरित्यागरूपत्वात्, अविद्याविषयत्वाच्चैषणायाः; तद्व्यतिरेकेण च अस्ति आश्रमरूपं पारिव्राज्यं ब्रह्मलोकादिफलप्राप्तिसाधनम्, यद्विषयं यज्ञोपवीतादिसाधनविधानं लिङ्गविधानं च। न च एषणारूपसाधनोपादानस्य आश्रमधर्ममात्रेण पारिव्राज्यान्तरे विषये संभवति सति, सर्वोपनिषद्विहितस्य आत्मज्ञानस्य बाधनं युक्तम्, यज्ञोपवीताद्यविद्याविषयैषणारूपसाधनोपादित्सायां च अवश्यम् असाधनफलरूपस्य अशनायादिसंसारधर्मवर्जितस्य अहं ब्रह्मास्मीति विज्ञानं बाध्यते। न च तद्बाधनं युक्तम्, सर्वोपनिषदां तदर्थपरत्वात्। 'भिक्षाचर्यं चरन्ति' इत्येषणां ग्राहयन्ती श्रुतिः स्वयमेव बाधत इति चेत्— अथापि स्यादेषणाभ्यो व्युत्थानं विधाय पुनरेषणैकदेशं भिक्षाचर्यं ग्राहयन्ती तत्संबद्धमन्यदपि ग्राह-

यतीति चेत्— न, भिक्षाचर्यस्याप्रयोजकत्वात्– हुत्वोत्तर-कालभक्षणवत्; शेषप्रतिपत्तिकर्मत्वात् अप्रयोजकं हि तत्; असंस्कारकत्वाच्च– भक्षणं पुरुषसंस्कारकमपि स्यात्, न तु भिक्षाचर्यम्; नियमादृष्टस्यापि ब्रह्मविदः अनिष्टत्वात्। नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्येणेति चेत्– न, अन्य-साधनात् व्युत्थानस्य विहितत्वात्। तथापि किं तेनेति चेत्– यदि स्यात्, बाढम् अभ्युपगम्यते हि तत्। यानि पारिव्राज्येऽभिहितानि वचनानि 'यज्ञोपवीत्येवाधीयीत' इत्यादीनि, तानि अविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृ-तानि; इतरथात्मज्ञानबाधः स्यादिति ह्युक्तम्; 'निराशिषम-नारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः' इति सर्वकर्माभावं दर्शयति स्मृतिः विदुषः– 'विद्वाँल्लिङ्गविवर्जितः', 'तस्मादलिङ्गो धर्मज्ञः' इति च। तस्मात् परमहंसपारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येत आत्मवित् सर्वकर्मसाधनपरित्यागरूपमिति॥

यस्मात् पूर्वे ब्राह्मणा एतमात्मानम् असाधनफलस्वभावं विदित्वा सर्वस्मात् साधनफलस्वरूपात् एषणालक्षणात् व्युत्थाय भिक्षाचर्यं चरन्ति स्म, दृष्टादृष्टार्थं कर्म तत्साधनं च हित्वा— तस्मात् अद्यत्वेऽपि ब्राह्मणः ब्रह्मवित्, पा-

ण्डित्यं पण्डितभावम्, एतदात्मविज्ञानं पाण्डित्यम्, तत् निर्विद्य निःशेषं विदित्वा, आत्मविज्ञानं निरवशेषं कृत्वेत्यर्थः—आचार्यत आगमतश्च एषणाभ्यो व्युत्थाय—एषणाव्युत्थानावसानमेव हि तत्पाण्डित्यम्, एषणातिरस्कारोद्भवत्वात् एषणाविरुद्धत्वात्; एषणामतिरस्कृत्य न ह्यात्मविषयस्य पाण्डित्यस्योद्भव इति आत्मज्ञानेनैव विहितमेषणाव्युत्थानम् आत्मज्ञानसमानकर्तृकक्त्वाप्रत्ययोपादानलिङ्गश्रुत्या दृढीकृतम्। तस्मात् एषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत्; साधनफलाश्रयणं हि बलम् इतरेषामनात्मविदाम्; तद्बलं हित्वा विद्वान् असाधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलम् आश्रयेत्, तदाश्रयणे हि करणानि एषणाविषये एनं हृत्वा स्थापयितुं नोत्सहन्ते; ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेव एनं करणानि नियोजयन्ति; बलं नाम आत्मविद्यया अशेषविषयदृष्टितिरस्करणम्; अतः तद्भावेन बाल्येन तिष्ठासेत्, तथा 'आत्मना विन्दते वीर्यम्' इति श्रुत्यन्तरात्, 'नायमात्मा बलहीनेन लभ्यः' इति च। बाल्यं च पाण्डित्यं च निर्विद्य निःशेषं कृत्वा अथ मननान्मुनिः योगी भवति; एतावद्धि ब्राह्मणेन कर्तव्यम्, यदुत

सर्वानात्मप्रत्ययतिरस्करणम्; एतत्कृत्वा कृतकृत्यो योगी भवति। अमौनं च आत्मज्ञानानात्मप्रत्ययतिरस्कारौ पाण्डित्यबाल्यसंज्ञकौ निःशेषं कृत्वा, मौनं नाम अनात्मप्रत्ययतिरस्करणस्य पर्यवसानं फलम्— तच्च निर्विद्य अथ ब्राह्मणः कृतकृत्यो भवति— ब्रह्मैव सर्वमिति प्रत्यय उपजायते। स ब्राह्मणः कृतकृत्यः, अतो ब्राह्मणः; निरुपचरितं हि तदा तस्य ब्राह्मण्यं प्राप्तम्; अत आह— स ब्राह्मणः केन स्यात् केन चरणेन भवेत्? येन स्यात्— येन चरणेन भवेत्, तेन ईदृश एवायम्— येन केनचित् चरणेन स्यात्, तेन ईदृश एव उक्तलक्षण एव ब्राह्मणो भवति; येन केनचिच्चरणेनेति स्तुत्यर्थम्— येयं ब्राह्मण्यावस्था सेयं स्तूयते, न तु चरणेऽनादरः। अतः एतस्माद्ब्राह्मण्यावस्थानात् अशनायाद्यतीतात्मस्वरूपात् नित्यतृप्तात्, अन्यत् अविद्याविषयमेषणालक्षणं वस्त्वन्तरम्, आर्तम् विनाशि आर्तिपरिगृहीतं स्वप्नमायामरीच्युदकसमम् असारम्, आत्मैव एकः केवलो नित्यमुक्त इति। ततो ह कहोलः कौषीतकेयः उपरराम ॥

तृतीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥

———❀———

## षष्ठं ब्राह्मणम् ॥

अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्वि-

न्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

इति षष्ठं ब्राह्मणम् ॥

यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तर आत्मेत्युक्तम् , तस्य सर्वान्तरस्य स्वरूपाधिगमाय आ शाकल्यब्राह्मणात् ग्रन्थ आरभ्यते । पृथिव्यादीनि ह्याकाशान्तानि भूतानि अन्तर्बहिर्भावेन व्यवस्थितानि ; तेषां यत् बाह्यं बाह्यम् , अधिगम्याधिगम्य निराकुर्वन् द्रष्टुः साक्षात्सर्वान्तरोऽगौण आत्मा सर्वसंसारधर्मविनिर्मुक्तो दर्शयितव्य इत्यारम्भः— अथ हैनं गार्गी नामतः, वाचक्नवी वचक्नोर्दुहिता, पप्रच्छ ; याज्ञवल्क्येति होवाच ; यदिदं सर्वं पार्थिवं धातुजातम् अप्सु

उदके ओतं च प्रोतं च— ओतं दीर्घपटतन्तुवत्, प्रोतं तिर्यक्तन्तुवत्, विपरीतं वा— अद्भिः सर्वतोऽन्तर्बहिर्भूताभिर्व्याप्तमित्यर्थः; अन्यथा सक्तुमुष्टिवद्विशीर्येत। इदं तावत् अनुमानमुपन्यस्तम्— यत् कार्यं परिच्छिन्नं स्थूलम्, कारणेन अपरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टम्— यथा पृथिवी अद्भिः; तथा पूर्वं पूर्वम् उत्तरेणोत्तरेण व्यापिना भवितव्यम्— इत्येष आ सर्वान्तरादात्मनः प्रश्नार्थः। तत्र भूतानि पञ्च संहतान्येव उत्तरमुत्तरं सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते; न च परमात्मनोऽर्वाक् तद्व्यतिरेकेण वस्त्वन्तरमस्ति, 'सत्यस्य सत्यम्' इति श्रुतेः; सत्यं च भूतपञ्चकम्, सत्यस्य सत्यं च पर आत्मा। कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति— तासामपि कार्यत्वात् स्थूलत्वात् परिच्छिन्नत्वाच्च क्वचिद्धि ओतप्रोतभावेन भवितव्यम्; क्व तासाम् ओतप्रोतभाव इति। एवमुत्तरोत्तरप्रश्नप्रसङ्गो योजयितव्यः। वायौ गार्गीति; ननु अग्नाविति वक्तव्यम्— नैष दोषः; अग्नेः पार्थिवं वा आप्यं वा धातुमनाश्रित्य इतरभूतवत् स्वातन्त्र्येण आत्मलाभो नास्तीति तस्मिन् ओतप्रोतभावो नोपदिश्यते। कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति। तान्येव भू-

तानि संहतानि अन्तरिक्षलोकाः; तान्यपि— गन्धर्वलोकेषु गन्धर्वलोकाः, आदित्यलोकेषु आदित्यलोकाः, चन्द्रलोकेषु चन्द्रलोकाः नक्षत्रलोकेषु नक्षत्रलोकाः, देवलोकेषु देवलोकाः, इन्द्रलोकेषु इन्द्रलोकाः, विराट्शरीरारम्भकेषु भूतेषु प्रजापतिलोकेषु प्रजापतिलोकाः, ब्रह्मलोकेषु ब्रह्मलोका नाम —अण्डारम्भकाणि भूतानि; सर्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि भूतानि संहतानि तान्येव पञ्चेति बहुवचनभाञ्जि। कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति— स होवाच याज्ञवल्क्यः— हे गार्गि मातिप्राक्षीः स्वं प्रश्नम्, न्यायप्रकारमतीत्य आगमेन प्रष्टव्यां देवताम् अनुमानेन मा प्राक्षीरित्यर्थः; पृच्छन्त्याश्च मा ते तव मूर्धा शिरः व्यपप्तत् विस्पष्टं पतेत्; देवतायाः स्वप्रश्न आगमविषयः; तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्नः, आनुमानिकत्वात्; स यस्या देवतायाः प्रश्नः सा अतिप्रश्न्या, न अतिप्रश्न्या अनतिप्रश्न्या, स्वप्रश्नविषयैव, केवलागमगम्येत्यर्थः; ताम् अनतिप्रश्न्यां वै देवताम् अतिपृच्छसि। अतो गार्गि मातिप्राक्षीः, मर्तुं चेन्नेच्छसि। ततो ह गार्गी वाचक्नव्युपरराम ॥

इति तृतीयाध्यायस्य षष्ठं ब्राह्मणम् ॥

## सप्तमं ब्राह्मणम् ॥

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकँ सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भ-

**गवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाꣳस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥**

इदानीं ब्रह्मलोकानाम् अन्तरतमं सूत्रं वक्तव्यमिति तदर्थ आरम्भः; तच्च आगमेनैव प्रष्टव्यमिति इतिहासेन आगमोपन्यासः क्रियते— अथ हैनम् उद्दालको नामतः, अरुणस्यापत्यम् आरुणिः पप्रच्छ; याज्ञवल्क्येति होवाच; मद्रेषु देशेषु अवसाम उषितवन्तः, पतञ्चलस्य— पतञ्चलो नामतः — तस्यैव कपिगोत्रस्य काप्यस्य गृहेषु यज्ञमधीयानाः यज्ञशास्त्राध्ययनं कुर्वाणाः । तस्य आसीत् भार्या गन्धर्वगृही-

ता; तमपृच्छाम– कोऽसीति। सोऽब्रवीत्– कबन्धो नामतः, अथर्वणोऽपत्यम् आथर्वण इति। सोऽब्रवीद्गन्धर्वः पतञ्जलं काप्यं याज्ञिकांश्च तच्छिष्यान्—वेत्थ नु त्वं हे काप्य जानीषे तत्सूत्रम्; किं तत्? येन सूत्रेण अयं च लोकः इदं च जन्म, परश्च लोकः परं च प्रतिपत्तव्यं जन्म, सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि, संदृब्धानि संग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति येन– तत् किं सूत्रं वेत्थ। सोऽब्रवीत् एवं पृष्टः काप्यः—नाहं तद्भगवन्वेदेति– तत् सूत्रं नाहं जाने हे भगवन्निति संपूजयन्नाह। सोऽब्रवीत् पुनर्गन्धर्वः उपाध्यायमस्मांश्च— वेत्थ नु त्वं काप्य तमन्तर्यामिणम्– अन्तर्यामीति विशेष्यते– य इमं च लोकं परं च लोकं सर्वाणि च भूतानि यः अन्तरः अभ्यन्तरः सन् यमयति नियमयति, दारुयन्त्रमिव भ्रामयति, स्वं स्वमुचितव्यापारं कारयतीति। सोऽब्रवीदेवमुक्तः पतञ्जलः काप्यः— नाहं तं जाने भगवन्निति संपूजयन्नाह। सोऽब्रवीत्पुनर्गन्धर्वः; सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते— यः कश्चिद्वै तत् सूत्रं हे काप्य विद्यात् विजानीयात् तं च अन्तर्यामिणं सूत्रान्तर्गतं तस्यैव सूत्रस्य नियन्तारं विद्यात् यः इत्येवमुक्तेन प्रकारेण– स हि ब्रह्मवित् परमा-

त्मवित्, स लोकांश्च भूरादीनन्तर्यामिणा नियम्यमानान् लोकान् वेत्ति, स देवांश्चाग्न्यादीन् लोकिनः जानाति, वेदांश्च सर्वप्रमाणभूतान्वेत्ति, भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति, स आत्मानं च कर्तृत्वभोक्तृत्वविशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति, सर्वं च जगत् तथाभूतं वेत्ति— इति; एवं स्तुते सूत्रान्तर्यामिविज्ञाने प्रलुब्धः काप्योऽभिमुखीभूतः, वयं च; तेभ्यश्च अस्मभ्यम् अभिमुखीभूतेभ्यः अब्रवीद्गन्धर्वः सूत्रमन्तर्यामिणं च; तदहं सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन्; तच्चेत् याज्ञवल्क्य सूत्रम्, तं चान्तर्यामिणम् अविद्वांश्चेत्, अब्रह्मवित्सन् यदि ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजस उन्नयसि त्वम् अन्यायेन, ततो मच्छापदग्धस्य मूर्धा शिरः ते तव विस्पष्टं पतिष्यति। एवमुक्तो याज्ञवल्क्य आह— वेद जानामि अहम्, हे गौतमेति गोत्रतः, तत्सूत्रम्— यत् गन्धर्वस्तुभ्यमुक्तवान्; यं च अन्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयम्, तं च अन्तर्यामिणं वेद अहम्— इति; एवमुक्ते प्रत्याह गौतमः— यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात्— कथम्? वेद वेदेति— आत्मानं श्लाघयन्, किं तेन गर्जि-

तेन? कार्येण दर्शय; यथा वेत्थ, तथा ब्रूहीति ॥

**स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥**

स होवाच याज्ञवल्क्यः । ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्तमाने काले, यथा पृथिवी अप्सु, तत् सूत्रम् आगमगम्यं वक्तव्यमिति— तदर्थं प्रश्नान्तरमुत्थापितम्; अतस्तन्निर्णयाय आह— वायुर्वै गौतम तत्सूत्रम्; नान्यत्; वायुरिति— सूक्ष्ममाकाशवत् विष्टम्भकं पृथिव्यादीनाम्, यदात्मकं सप्तदशविधं लिङ्गं कर्मवासनासमवायि प्राणिनाम्, यत्तत्समष्टिव्यष्ट्यात्मकम्, यस्य बाह्या भेदाः सप्तसप्त मरुद्गणाः समुद्रस्येवोर्मयः— तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते । वायुना वै गौतम सूत्रेण अयं च लोकः

परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति संग्रथितानि भवन्तीति प्रसिद्धमेतत्; अस्ति च लोके प्रसिद्धिः; कथम्? यस्मात् वायुः सूत्रम्, वायुना विधृतं सर्वम्, तस्माद्वै गौतम पुरुषं प्रेतमाहुः कथयन्ति— व्यस्रंसिषत विस्रस्तानि अस्य पुरुषस्याङ्गानीति; सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टम्; एवं वायुः सूत्रम्; तस्मिन्मणिवत्प्रोतानि यदि अस्याङ्गानि स्युः, ततो युक्तमेतत् वाय्वपगमे अवस्रंसनमङ्गानाम्। अतो वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीति निगमयति। एवमेवैतत् याज्ञवल्क्य, सम्यगुक्तं सूत्रम्; तदन्तर्गतं तु इदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिणं ब्रूहीत्युक्तः आह ॥

**यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ३ ॥**

यः पृथिव्यां तिष्ठन्भवति, सोऽन्तर्यामी। सर्वः पृथिव्यां तिष्ठतीति सर्वत्र प्रसङ्गो मा भूदिति विशिनष्टि— पृथिव्या अन्तरः अभ्यन्तरः। तत्रैतत्स्यात्, पृथिवी देवतैव

अन्तर्यामीति—अत आह— यमन्तर्यामिणं पृथिवी देवतापि न वेद—मय्यन्यः कश्चिद्वर्तत इति । यस्य पृथिवी शरीरम्—यस्य च पृथिव्येव शरीरम्, नान्यत्— पृथिवीदेवताया यच्छरीरम्, तदेव शरीरं यस्य; शरीरग्रहणं च उपलक्षणार्थम्; करणं च पृथिव्याः तस्य; स्वकर्मप्रयुक्तं हि कार्यं करणं च पृथिवीदेवतायाः; तत् अस्य स्वकर्माभावात् अन्तर्यामिणो नित्यमुक्तत्वात्, परार्थकर्तव्यतास्वभावत्वात् परस्य यत्कार्यं करणं च—तदेवास्य, न स्वतः; तदाह— यस्य पृथिवी शरीरमिति । देवताकार्यकरणस्य ईश्वरसाक्षिमात्रसांनिध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्याताम्; य ईदृगीश्वरो नारायणाख्यः, पृथिवीं पृथिवीदेवताम्, यमयति नियमयति स्वव्यापारे, अन्तरः अभ्यन्तरस्तिष्ठन्, एष त आत्मा, ते तव, मम च सर्वभूतानां च इत्युपलक्षणार्थमेतत्, अन्तर्यामी यस्त्वया पृष्टः, अमृतः सर्वसंसारधर्मवर्जित इत्येतत् ॥

**योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ४ ॥**

**योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद**

यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ५ ॥

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ६ ॥

यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ७ ॥

यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ८ ॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ९ ॥

यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो

न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १० ॥

यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ११ ॥

य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १२ ॥

यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥

यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥ १४ ॥

समानमन्यत्। योऽप्सु तिष्ठन्, अग्नौ, अन्तरिक्षे, वायौ, दिवि, आदित्ये, दिक्षु, चन्द्रतारके, आकाशे, यस्तमस्यावरणात्मके बाह्ये तमसि, तेजसि तद्विपरीते प्रकाशसामान्ये—— इत्येवमधिदैवतम् अन्तर्यामिविषयं दर्शनं देवतासु। अथ अधिभूतं भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु अन्तर्यामिदर्शनमधिभूतम्॥

यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम्॥

यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः॥१६॥

यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक्शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः॥१७॥

यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १८ ॥

यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १९ ॥

यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २० ॥

यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ्न वेद यस्य त्वक्शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २१ ॥

यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्त-

र्याम्यमृतः ॥ २२ ॥

यो रेतसि तिष्ठन्रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

अथाध्यात्मम्— यः प्राणे प्राणवायुसहिते घ्राणे, यो वाचि, चक्षुषि, श्रोत्रे, मनसि, त्वचि, विज्ञाने, बुद्धौ, रेतसि प्रजनने । कस्मात्पुनः कारणात् पृथिव्यादिदेवता महाभागाः सत्यः मनुष्यादिवत् आत्मनि तिष्ठन्तम् आत्मनो नियन्तारमन्तर्यामिणं न विदुरित्यत आह— अदृष्टः न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्, स्वयं तु चक्षुषि संनिहितत्वात् दृशिस्वरूप इति द्रष्टा । तथा अश्रुतः श्रोत्रगोचरत्वमनापन्नः कस्यचित्, स्वयं तु अलुप्तश्रवणशक्तिः

सर्वश्रोत्रेषु संनिहितत्वात् श्रोता । तथा अमतः मनःसंकल्पविषयतामनापन्नः; दृष्टश्रुते एव हि सर्वः संकल्पयति; अदृष्टत्वात् अश्रुतत्वादेव अमतः; अलुप्तमननशक्तित्वात् सर्वमनःसु संनिहितत्वाच्च मन्ता । तथा अविज्ञातः निश्चयगोचरतामनापन्नः रूपादिवत् सुखादिवद्वा, स्वयं तु अलुप्तविज्ञानशक्तित्वात् तत्संनिधानाच्च विज्ञाता । तत्र यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुरिति च अन्ये नियन्तव्या विज्ञातारः अन्यो नियन्ता अन्तर्यामीति प्राप्तम्; तदन्यत्वाशङ्कानिवृत्त्यर्थमुच्यते— नान्योऽतः— नान्यः— अतः अस्मात् अन्तर्यामिणः नान्योऽस्ति द्रष्टा; तथा नान्योऽतोऽस्ति श्रोता; नान्योऽतोऽस्ति मन्ता; नान्योऽतोऽस्ति विज्ञाता । यस्मात्परो नास्ति द्रष्टा श्रोता मन्ता विज्ञाता, यः अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, अमृतः सर्वसंसारधर्मवर्जितः सर्वसंसारिणां कर्मफलविभागकर्ता—एष ते आत्मा अन्तर्याम्यमृतः; अस्मादीश्वरादात्मनोऽन्यत् आर्तम् । ततो होद्दालक आरुणिरुपरराम ॥

इति तृतीयाध्यायस्य सप्तमं ब्राह्मणम् ॥

---

## अष्टमं ब्राह्मणम् ॥

अतः परम् अशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्वान्तरं ब्रह्म वक्तव्यमित्यत आरम्भः—

**अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥**

अथ ह वाचक्नव्युवाच। पूर्वं याज्ञवल्क्येन निषिद्धा मूर्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयते हे ब्राह्मणाः भगवन्तः पूजावन्तः शृणुत मम वचः; हन्त अहमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि, यद्यनुमतिर्भवतामस्ति; तौ प्रश्नौ चेत् यदि वक्ष्यति कथयिष्यति मे, कथंचित् न वै जातु कदाचित्, युष्माकं मध्ये इमं याज्ञवल्क्यं कश्चित् ब्रह्मोद्यं ब्रह्मवदनं प्रति जेता—न वै कश्चित् भवेत्—इति। एवमुक्ता ब्राह्मणा अनुज्ञां प्रददुः—पृच्छ गार्गीति ॥

**सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनु-**

**रधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नाति-व्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपादस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥**

लब्धानुज्ञा ह याज्ञवल्क्यं सा ह उवाच— अहं वै त्वा त्वाम् द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते; कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकं तावाह—हे याज्ञवल्क्य यथा लोके काश्यः–काशिषु भवः काश्यः, प्रसिद्धं शौर्यं काश्ये– वैदेहो वा विदेहानां वा राजा, उग्रपुत्रः शूरान्वय इत्यर्थः, उज्ज्यम् अवतारितज्याकम् धनुः पुनरधिज्यम् आरोपितज्याकं कृत्वा, द्वौ बाणवन्तौ– बाणशब्देन शराग्रे यो वंशखण्डः संधीयते, तेन विनापि शरो भवतीत्यतो विशिनष्टि बाणवन्ताविति– द्वौ बाणवन्तौ शरौ, तयोरेव विशेषणम्– सपत्नातिव्याधिनौ शत्रोः पीडाकरावतिशयेन, हस्ते कृत्वा उप उत्तिष्ठेत् समीपत आत्मानं दर्शयेत्— एवमेव अहं त्वा त्वाम् शरस्थानीयाभ्यां प्रश्नाभ्यां द्वाभ्याम् उपोदस्थां उत्थितवत्यस्मि त्वत्समीपे। तौ मे ब्रूहीति– ब्रह्मविच्चेत्। आह इतरः– पृच्छ गार्गीति ॥

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति ॥ ३ ॥**

सा होवाच—यत् ऊर्ध्वम् उपरि दिवः अण्डकपालात्, यच्च अवाक् अधः पृथिव्याः अधोऽण्डकपालात्, यच्च अन्तरा मध्ये द्यावापृथिवी द्यावापृथिव्योः अण्डकपालयोः, इमे च द्यावापृथिवी, यद्भूतं यच्चातीतम्, भवच्च वर्तमानं स्वव्यापारस्थम्, भविष्यच्च वर्तमानादूर्ध्वकालभावि लिङ्गगम्यम्—यत्सर्वमेतदाचक्षते कथयन्त्यागमतः— तत्सर्वं द्वैतजातं यस्मिन्नेकीभवतीत्यर्थः— तत् सूत्रसंज्ञं पूर्वोक्तं कस्मिन ओतं च प्रोतं च पृथिवीधातुरिवाप्सु ॥

**स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥**

स होवाच इतरः— हे गार्गि, यत् त्वयोक्तम् 'ऊर्ध्वं दिवः' इत्यादि, तत्सर्वम्— यत्सूत्रमाचक्षते— तत् सूत्रम्,

आकाशे तत् ओतं च प्रोतं च— यदेतत् व्याकृतं सूत्रात्मकं जगत् अव्याकृताकाशे, अप्स्विव पृथिवीधातुः, त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये च ॥

**सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥**

पुनः सा होवाच; नमस्तेऽस्त्वित्यादिप्रश्नस्य दुर्वचत्वप्रदर्शनार्थम्; यः मे मम एतं प्रश्नं व्यवोचः विशेषेणापाकृतवानसि; एतस्य दुर्वचत्वे कारणम्— सूत्रमेव तावदगम्यम् इतरैर्दुर्वाच्यम; किमुत तत्, यस्मिन्नोतं च प्रोतं चेति; अतो नमोऽस्तु ते तुभ्यम; अपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुरु आत्मानमित्यर्थः। पृच्छ गार्गीति इतर आह ॥

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ६ ॥**

व्याख्यातमन्यत्। सा होवाच यदूर्ध्वं याज्ञवल्क्येत्या-

दिप्रश्नः प्रतिवचनं च उक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते ; न किंचिदपूर्वमर्थान्तरमुच्यते ॥

**स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥**

सर्वं यथोक्तं गार्ग्या प्रत्युच्चार्य तमेव पूर्वोक्तमर्थमवधारितवान् आकाश एवेति याज्ञवल्क्यः । गार्ग्याह— कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । आकाशमेव तावत्कालत्रयातीतत्वात् दुर्वाच्यम्, ततोऽपि कष्टतरम् अक्षरम्, यस्मिन्नाकाशमोतं च प्रोतं च, अतः अवाच्यम्— इति कृत्वा, न प्रतिपद्यते सा अप्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमये; अथ अवाच्यमपि वक्ष्यति, तथापि विप्रतिपत्तिर्नाम निग्रहस्थानम्; विरुद्धा प्रतिपत्तिर्हि सा, यदवाच्यस्य वदनम्; अतो दुर्वचनम् प्रश्नं मन्यते गार्गी ॥

**स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलो-**

**हितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ॥ ८ ॥**

तद्दोषद्वयमपि परिजिहीर्षन्नाह— स होवाच याज्ञवल्क्यः; एतद्वै तत्, यत्पृष्टवत्यसि— कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति; किं तत्? अक्षरम्— यन्न क्षीयते न क्षरतीति वा अक्षरम्— तदक्षरं हे गार्गि ब्राह्मणा ब्रह्मविदः अभिवदन्ति; ब्राह्मणाभिवदनकथनेन, नाहमवाच्यं वक्ष्यामि न च न प्रतिपद्येयमित्येवं दोषद्वयं परिहरति। एवमपाकृते प्रश्ने, पुनर्गार्ग्याः प्रतिवचनं द्रष्टव्यम्— ब्रूहि किं तदक्षरम्, यद्ब्राह्मणा अभिवदन्ति— इत्युक्त आह— अस्थूलम् तत् स्थूलादन्यत्; एवं तर्ह्यणु— अनणु; अस्तु तर्हि ह्रस्वम्— अह्रस्वम्; एवं तर्हि दीर्घम्—नापि दीर्घम् अदीर्घम्; एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मः प्रतिषिद्धः, न द्रव्यं तदक्षरमित्यर्थः। अस्तु तर्हि लोहितो गुणः—ततोऽप्यन्यत् अलोहितम्; आग्नेयो गुणो लोहितः; भवतु तर्ह्यपां स्नेहनम्—न अस्नेहम्; अस्तु तर्हि छाया— सर्वथापि अनिर्देश्यत्वात् छायाया

अप्यन्यत् अच्छायम्; अस्तु तर्हि तमः—अतमः; भवतु वायुस्तर्हि— अवायुः; भवेत्तर्ह्याकाशम्— अनाकाशम्; भवतु तर्हि सङ्गात्मकं जतुवत्—असङ्गम्; रसोऽस्तु तर्हि—अरसम्; तथा गन्धोऽस्तु—अगन्धम्; अस्तु तर्हि चक्षुः—अचक्षुष्कम्, न हि चक्षुरस्य करणं विद्यते, अतोऽचक्षुष्कम्, 'पश्यत्यचक्षुः' इति मन्त्रवर्णात्; तथा अश्रोत्रम, 'स शृणोत्यकर्णः' इति; भवतु तर्हि वाक्—अवाक्; तथा अमनः; तथा अतेजस्कम अविद्यमानं तेजोऽस्य तत् अतेजस्कम्; न हि तेजः अग्न्यादिप्रकाशवत् अस्य विद्यते; अप्राणम्— आध्यात्मिको वायुः प्रतिषिध्यतेऽप्राणमिति; मुखं तर्हि द्वारं तत्— अमुखम्; अमात्रम्— मीयते येन तन्मात्रम्, अमात्रम् मात्रारूपं तन्न भवति, न तेन किंचिन्मीयते; अस्तु तर्हि च्छिद्रवत्— अनन्तरम् नास्यान्तरमस्ति; संभवेत्तर्हि बहिस्तस्य—अबाह्यम्; अस्तु तर्हि भक्षयितृ तत्— न तदश्नाति किंचन; भवेत् तर्हि भक्ष्यं कस्यचित्— न तदश्नाति कश्चन। सर्वविशेषणरहितमित्यर्थः । एकमेवाद्वितीयं हि तत्— केन किं विशिष्यते ॥

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा**

**अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥**

अनेकविशेषणप्रतिषेधप्रयासात् अस्तित्वं तावदक्षरस्योपगमितं श्रुत्या; तथापि लोकबुद्धिमपेक्ष्य आशङ्क्यते यतः, अतोऽस्तित्वाय अनुमानं प्रमाणमुपन्यस्यति— एतस्य वा अक्षरस्य। यदेतदधिगतमक्षरं सर्वान्तरं साक्षादपरोक्षाद्ब्रह्म, य आत्मा अशनायादिधर्मातीतः, एतस्य वा अक्षरस्य प्रशासने— यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्तते, एवमेतस्याक्षरस्य प्रशासने— हे गार्गि सूर्याचन्द्रमसौ, सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ अहोरात्रयोर्लोकप्रदीपौ,

तादर्थ्येन प्रशासित्रा ताभ्यां निर्वर्त्यमानलोकप्रयोजनविज्ञानवता निर्मितौ च, स्याताम्— साधारणसर्वप्राणिप्रकाशोपकारकत्वात् लौकिकप्रदीपवत् । तस्मादस्ति तत्, येन विधृतौ ईश्वरौ स्वतन्त्रौ सन्तौ निर्मितौ तिष्ठतः नियतदेशकालनिमित्तोदयास्तमयवृद्धिक्षयाभ्यां वर्तेते ; तदस्ति एवमेतयोः प्रशासितृ अक्षरम्, प्रदीपकर्तृविधारयितृवत् । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ— द्यौश्च पृथिवी च सावयवत्वात् स्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्वभावे संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधिष्ठितत्वात्स्वतन्त्रे अपि—एतस्याक्षरस्य प्रशासने वर्तेते विधृते तिष्ठतः; एतद्धि अक्षरं सर्वव्यवस्थासेतुः सर्वमर्यादाविधरणम्; अतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यावतिक्रामतः; तस्मात् सिद्धमस्यास्तित्वमक्षरस्य; अव्यभिचारि हि तल्लिङ्गम्, यत् द्यावापृथिव्यौ नियते वर्तेते; चेतनावन्तं प्रशासितारमसंसारिणमन्तरेण नैतद्युक्तम्, 'येन द्यौरुग्रा पृथिवी च दृढा' इति मन्त्रवर्णात् । एतस्य वा अक्षरस्य प्रशासने गार्गि, निमेषाः मुहूर्ताः इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारः— यथा लोके प्रभुणा नियतो गणकः सर्वम् आयं

व्ययं च अप्रमत्तो गणयति, तथा प्रभुस्थानीय एषां कालावयवानां नियन्ता । तथा प्राच्यः प्रागञ्चनाः पूर्वदिग्गमनाः नद्यः स्यन्दन्ते स्रवन्ति, श्वेतेभ्यः हिमवदादिभ्यः पर्वतेभ्यः गिरिभ्यः, गङ्गाद्या नद्यः— ताश्च यथा प्रवर्तिता एव नियताः प्रवर्तन्ते, अन्यथापि प्रवर्तितुमुत्सहन्त्यः ; तदेतल्लिङ्गं प्रशास्तुः । प्रतीच्योऽन्याः प्रतीचीं दिशमञ्चन्ति सिन्ध्वाद्या नद्यः ; अन्याश्च यां यां दिशमनुप्रवृत्ताः, तां तां न व्यभिचरन्ति ; तच्च लिङ्गम् । किंच ददतः हिरण्यादीन्प्रयच्छतः आत्मपीडां कुर्वतोऽपि प्रमाणज्ञा अपि मनुष्याः प्रशंसन्ति ; तत्र यच्च दीयते, ये च ददति, ये च प्रतिगृह्णन्ति, तेषामिहैव समागमो विलयश्च अन्वक्षो दृश्यते ; अदृष्टस्तु परः समागमः ; तथापि मनुष्या ददतां दानफलेन संयोगं पश्यन्तः प्रमाणज्ञतया प्रशंसन्ति ; तच्च, कर्मफलेन संयोजयितरि कर्तुः— कर्मफलविभागज्ञे प्रशास्तरि असति, न स्यात्, दानक्रियायाः प्रत्यक्षविनाशित्वात् ; तस्मादस्ति दानकर्तॄणां फलेन संयोजयिता । अपूर्वमिति चेत्, न, तत्सद्भावे प्रमाणानुपपत्तेः । प्रशास्तुरपीति चेत्, न, आगमतात्पर्यस्य सिद्धत्वात् ; अवोचाम हि आगमस्य वस्तुपरत्वम् । किंचान्यत्—

अपूर्वकल्पनायां च अर्थापत्तेः क्षयः, अन्यथैवोपपत्तेः, सेवाफलस्य सेव्यात्प्राप्तिदर्शनात्; सेवायाश्च क्रियात्वात् तत्सामान्याच्च यागदानहोमादीनां सेव्यात् ईश्वरादेः फलप्राप्तिरुपपद्यते । दृष्टक्रियाधर्मसामर्थ्यमपरित्यज्यैव फलप्राप्तिकल्पनोपपत्तौ दृष्टक्रियाधर्मसामर्थ्यपरित्यागो न न्याय्यः । कल्पनाधिक्याच्च— ईश्वरः कल्प्यः, अपूर्वं वा; तत्र क्रियायाश्च स्वभावः सेव्यात्फलप्राप्तिः दृष्टा, न त्वपूर्वात्; न च अपूर्वं दृष्टम्, तत्र अपूर्वमदृष्टं कल्पयितव्यम्, तस्य च फलदातृत्वे सामर्थ्यम्, सामर्थ्ये च सति दानं च अभ्यधिकमिति; इह तु ईश्वरस्य सेव्यस्य सद्भावमात्रं कल्प्यम्, न तु फलदानसामर्थ्यं दातृत्वं च, सेव्यात्फलप्राप्तिदर्शनात् । अनुमानं च दर्शितम्— 'द्यावापृथिव्यौ विधृते तिष्ठतः' इत्यादि । तथा च यजमानं देवाः ईश्वराः सन्तो जीवनार्थेऽनुगताः चरुपुरोडाशाद्युपजीवनप्रयोजनेन, अन्यथापि जीवितुमुत्सहन्तः कृपणां दीनां वृत्तिमाश्रित्य स्थिताः— तच्च प्रशास्तुः प्रशासनात्स्यात् । तथा पितरोऽपि तदर्थम्, दर्वीम् दर्वीहोमम् अन्वायत्ता अनुगता इत्यर्थः समानं सर्वमन्यत् ॥

**यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्ष-**

**सहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥**

इतश्चास्ति तदक्षरम्, यस्मात् तदज्ञाने नियता संसारोपपत्तिः; भवितव्यं तु तेन, यद्विज्ञानात् तद्विच्छेदः, न्यायोपपत्तेः। ननु क्रियात एव तद्विच्छित्तिः स्यादिति चेत्, न— यो वा एतदक्षरं हे गार्गि अविदित्वा अविज्ञाय अस्मिन् लोके जुहोति यजते तपस्तप्यते यद्यपि बहूनि वर्षसहस्राणि, अन्तवदेवास्य तत्फलं भवति, तत्फलोपभोगान्ते क्षीयन्त एवास्य कर्माणि। अपि च यद्विज्ञानात्कार्पण्यात्ययः संसारविच्छेदः, यद्विज्ञानाभावाच्च कर्मकृत् कृपणः कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः संसरति— तदस्ति अक्षरं प्रशासितृ; तदेतदुच्यते—यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः, पणक्रीत इव दासादिः। अथ य एतदक्षरं गार्गि विदित्वा अस्माल्लोकात्प्रैति स ब्राह्मणः॥

अग्नेर्दहनप्रकाशकत्ववत् स्वाभाविकमस्य प्रशास्तृत्वम् अचेतनस्यैवेत्यत आह—

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतँ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥**

तद्वा एतदक्षरं गार्गि अदृष्टम्, न केनचिद्दृष्टम्, अविषयत्वात् स्वयं तु द्रष्टृ दृष्टिस्वरूपत्वात् । तथा अश्रुतं श्रोत्राविषयत्वात्, स्वयं श्रोतृ श्रुतिस्वरूपत्वात् । तथा अमतं मनसोऽविषयत्वात्, स्वयं मन्तृ मतिस्वरूपत्वात् । तथा अविज्ञातं बुद्धेरविषयत्वात्, स्वयं विज्ञातृ विज्ञानस्वरूपत्वात् । किं च नान्यत् अतः अस्मादक्षरात् अस्ति— नास्ति किंचिद्द्रष्टृ दर्शनक्रियाकर्तृ; एतदेवाक्षरं दर्शनक्रियाकर्तृ सर्वत्र । तथा नान्यदतोऽस्ति श्रोतृ; तदेवाक्षरं श्रोतृ सर्वत्र । नान्यदतोऽस्ति मन्तृ; तदेवाक्षरं मन्तृ सर्वत्र सर्वमनोद्वारेण । नान्यदतोऽस्ति विज्ञातृ विज्ञानक्रियाकर्तृ, तदेवाक्षरं सर्वबुद्धिद्वारेण विज्ञानक्रियाकर्तृ, नाचेतनं प्रधानम् अन्यद्वा । एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति । यदेव साक्षादप-

रोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः अशनायादिसंसारधर्मातीतः, यस्मिन्नाकाश ओतश्च प्रोतश्च— एषा परा काष्ठा, एषा परा गतिः, एतत्परं ब्रह्म, एतत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यम् ॥

**सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥**

**इति अष्टमं ब्राह्मणम् ॥**

सा होवाच— हे ब्राह्मणा भगवन्तः शृणुत मदीयं वचः; तदेव बहुमन्येध्वम्; किं तत्? यदस्मात् याज्ञवल्क्यात् नमस्कारेण मुच्येध्वम्— अस्मै नमस्कारं कृत्वा, तदेव बहुमन्यध्वमित्यर्थः; जयस्त्वस्य मनसापि नाशंसनीयः, किमुत कार्यतः; कस्मात्? न वै युष्माकं मध्ये जातु कदाचिदपि इमं याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेता। प्रश्नौ चेन्मह्यं वक्ष्यति, न वै जेता भविता— इति पूर्वमेव मया प्रतिज्ञातम्; अद्यापि ममायमेव निश्चयः— ब्रह्मोद्यं प्रति एतत्तुल्यो न कश्चिद्विद्यत इति। ततो ह वाचक्नव्युपरराम ॥

अत्र अन्तर्यामिब्राह्मणे एतदुक्तम्— यं पृथिवी न वेद, यं सर्वाणि भूतानि न विदुरिति च, यमन्तर्यामिणं न विदुः, ये च न विदुः, यच्च तदक्षरं दर्शनादिक्रियाकर्तृत्वेन सर्वेषां चेतनाधातुरित्युक्तम्— कस्तु एषां विशेषः, किं वा सामान्यमिति । तत्र केचिदाचक्षते—परस्य महासमुद्रस्थानीयस्य ब्रह्मणः अक्षरस्य अप्रचलितस्वरूपस्य ईषत्प्रचलितावस्था अन्तर्यामी; अत्यन्तप्रचलितावस्था क्षेत्रज्ञः, यः तं न वेद अन्तर्यामिणम्; तथा अन्याः पञ्चावस्थाः परिकल्पयन्ति; तथा अष्टावस्था ब्रह्मणो भवन्तीति वदन्ति । अन्ये अक्षरस्य शक्तय एता इति वदन्ति, अनन्तशक्तिमदक्षरमिति च । अन्ये तु अक्षरस्य विकारा इति वदन्ति । अवस्थाशक्ती तावन्नोपपद्येते, अक्षरस्य अशनायादिसंसारधर्मातीतत्वश्रुतेः; न हि अशनायाद्यतीतत्वम् अशनायादिधर्मवदवस्थावत्त्वं च एकस्य युगपदुपपद्यते; तथा शक्तिमत्त्वं च । विकारावयवत्वे च दोषाः प्रदर्शिताश्चतुर्थे । तस्मात् एता असत्याः सर्वाः कल्पनाः । कस्तर्हि भेद एषाम्? उपाधिकृत इति ब्रूमः; न स्वत एषां भेदः अभेदो वा, सैन्धवघनवत् प्रज्ञानघनैकरसस्वाभाव्यात्, 'अपूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म' इति च श्रुतेः— 'सबाह्याभ्यन्तरो ह्यजः' इति च आथर्वणे ।

तस्मात् निरुपाधिकस्य आत्मनो निरूपाख्यत्वात् निर्विशेषत्वा-त् एकत्वाच्च 'नेति नेति' इति व्यपदेशो भवति; अविद्याकाम-कर्मविशिष्टकार्यकरणोपाधिः आत्मा संसारी जीव उच्यते; नि-त्यनिरतिशयज्ञानशक्त्युपाधिः आत्मा अन्तर्यामी ईश्वर उच्य-ते; स एव निरुपाधिः केवलः शुद्धः स्वेन स्वभावेन अक्षरं पर उच्यते । तथा हिरण्यगर्भाव्याकृतदेवताजातिपिण्डमनु-ष्यतिर्यक्प्रेतादिकार्यकरणोपाधिभिर्विशिष्टः तदाख्यः तद्रूपो भवति । तथा 'तदेजति तन्नैजति' इति व्याख्यातम् । तथा 'एष त आत्मा' 'एष सर्वभूतान्तरात्मा' 'एष सर्वे-षु भूतेषु गूढः' 'तत्त्वमसि' 'अहमेवेदं सर्वम्' 'आत्मै-वेदं सर्वम्' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतयो न वि-रुध्यन्ते । कल्पनान्तरेषु एताः श्रुतयो न गच्छन्ति । त-स्मात् उपाधिभेदेनैव एषां भेदः, नान्यथा, 'एकमेवाद्वि-तीयम्' इत्यवधारणात्सर्वोपनिषत्सु ॥

इति तृतीयाध्यायस्य अष्टमं ब्राह्मणम् ॥

## नवमं ब्राह्मणम् ॥

अथ हैनं विदग्धः शाकल्यः पप्रच्छ । पृथिव्यादीनां सूक्ष्मतारतम्यक्रमेण पूर्वस्य पूर्वस्य उत्तरस्मिन्नुत्तरस्मिन् ओतप्रोतभावं कथयन् सर्वान्तरं ब्रह्म प्रकाशितवान्; तस्य च ब्रह्मणो व्याकृतविषये सूत्रभेदेषु नियन्तृत्वमुक्तम्— व्याकृतविषये व्यक्ततरं लिङ्गमिति । तस्यैव ब्रह्मणः साक्षादपरोक्षत्वे नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्ये इति तदर्थं शाकल्यब्राह्मणमारभ्यते—

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव**

**देवा याज्ञवल्क्येति द्वावित्योमिति हो-वाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञव-ल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सह-स्रेति ॥ १ ॥**

अथ हैनं विदग्ध इति नामतः, शकलस्यापत्यं शाकल्यः, पप्रच्छ— कतिसंख्याका देवाः हे याज्ञवल्क्येति। स याज्ञ-वल्क्यः, ह किल, एतयैव वक्ष्यमाणया निविदा प्रतिपेदे संख्याम्, यां संख्यां पृष्टवान् शाकल्यः; यावन्तः यावत्सं-ख्याका देवाः वैश्वदेवस्य शस्त्रस्य निविदि— निविन्नाम देव-तासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्य-न्ते, तानि निवित्संज्ञकानि; तस्यां निविदि यावन्तो देवाः श्रूयन्ते, तावन्तो देवा इति। का पुनः सा निविदिति तानि निवित्पदानि प्रदर्श्यन्ते— त्रयश्च त्री च शता— त्रयश्च देवाः, देवानां त्री च त्रीणि च शतानि; पुनरप्येवं त्रयश्च, त्री च सहस्रा सहस्राणि— एतावन्तो देवा इति। शाकल्योऽपि ओमिति होवाच। एवमेषां मध्यमा

संख्या सम्यक्तया ज्ञाता; पुनस्तेषामेव देवानां संकोचविषयां संख्यां पृच्छति— कत्येव देवा याज्ञवल्क्येति; त्रयस्त्रिंशत्, षट्, त्रयः, द्वौ, अध्यर्धः, एकः– इति । देवतासंकोचविकासविषयां संख्यां पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति— कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥

**स होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ २ ॥**

स होवाच इतरः—महिमानः विभूतयः, एषां त्रयस्त्रिंशतः देवानाम्, एते त्रयश्च त्री च शतेत्यादयः; परमार्थतस्तु त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदित्युच्यते— अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः– ते एकत्रिंशत्–इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति त्रयस्त्रिंशतः पूरणौ ॥

**कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च**

**नक्षत्राणि चैते वसव एतेषु हीदꣳ सर्वꣳ हितमिति तस्माद्वसव इति ॥ ३ ॥**

कतमे वसव इति तेषां स्वरूपं प्रत्येकं पृच्छ्यते; अग्निश्च पृथिवी चेति– अग्न्याद्या नक्षत्रान्ता एते वसवः— प्राणिनां कर्मफलाश्रयत्वेन कार्यकरणसंघातरूपेण तन्निवासत्वेन च विपरिणमन्तः जगदिदं सर्वं वासयन्ति वसन्ति च; ते यस्माद्वासयन्ति तस्माद्वसव इति ॥

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥**

कतमे रुद्रा इति। दश इमे पुरुषे, कर्मबुद्धीन्द्रियाणि प्राणाः, आत्मा मनः एकादशः– एकादशानां पूरणः; ते एते प्राणाः यदा अस्माच्छरीरात् मर्त्यात् प्राणिनां कर्मफलोपभोगक्षये उत्क्रामन्ति— अथ तदा रोदयन्ति तत्संबन्धिनः। तत् तत्र यस्माद्रोदयन्ति ते संबन्धिनः, तस्मात् रुद्रा इति ॥

**कतम आदित्या इति द्वादश वै मासाः**

**संवत्सरस्यैत आदित्या एते हीदꣳ सर्व-माददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥**

कतम आदित्या इति । द्वादश वै मासाः संवत्सरस्य कालस्य अवयवाः प्रसिद्धाः, एते आदित्याः; कथम्? एते हि यस्मात् पुनः पुनः परिवर्तमानाः प्राणिनामायूंषि कर्म-फलं च आददानाः गृह्णन्तः उपाददतः यन्ति गच्छन्ति—ते यत् यस्मात् एवम् इदं सर्वमाददाना यन्ति, तस्मादा-दित्या इति ॥

**कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति क-तमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥**

कतम इन्द्रः कतमः प्रजापतिरिति, स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति, कतमः स्तनयित्नुरित्यशनिरिति । अ-शनिः वज्रं वीर्यं बलम्, यत् प्राणिनः प्रमापयति, स इन्द्रः; इन्द्रस्य हि तत् कर्म । कतमो यज्ञ इति पशव इति—यज्ञस्य हि साधनानि पशवः; यज्ञस्यारूपत्वात् पशु-साधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्यते ॥

**कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं च आदित्यश्च द्यौश्चैते षडेते हीद्ँ सर्वँ षडिति ॥ ७ ॥**

कतमे षडिति । त एव अग्न्यादयो वसुत्वेन पठिताः चन्द्रमसं नक्षत्राणि च वर्जयित्वा षड्भवन्ति— षट्संख्याविशिष्टाः । एते हि यस्मात्, त्रयस्त्रिंशदादि यदुक्तम् इदं सर्वम्, एत एव षड्भवन्ति; सर्वो हि वस्वादिविस्तर एतेष्वेव षट्सु अन्तर्भवतीत्यर्थः ॥

**कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥**

कतमे ते त्रयो देवा इति; इम एव त्रयो लोका इति— पृथिवीमग्निं च एकीकृत्य एको देवः, अन्तरिक्षं वायुं च एकीकृत्य द्वितीयः, दिवमादित्यं च एकीकृत्य तृतीयः— ते एव त्रयो देवा इति । एषु, हि यस्मात्, त्रिषु देवेषु सर्वे देवा अन्तर्भवन्ति, तेन एत एव देवास्त्रयः— इत्येष नैरुक्तानां केषांचित्पक्षः । कतमौ तौ द्वौ देवाविति— अन्नं

चैव प्राणश्च एतौ द्वौ देवौ; अनयोः सर्वेषामुक्तानामन्तर्भावः। कतमोऽध्यर्ध इति– योऽयं पवते वायुः॥

**तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते॥ ९॥**

तत् तत्र आहुः चोदयन्ति– यदयं वायुः एक इवैव एक एव पवते; अथ कथमध्यर्ध इति। यत् अस्मिन् इदं सर्वमध्यार्ध्नोत्–अस्मिन्वायौ सति इदं सर्वमध्यार्ध्नोत्–अधि ऋद्धिं प्राप्नोति–तेनाध्यर्ध इति। कतम एको देव इति, प्राण इति। स प्राणो ब्रह्म–सर्वदेवात्मकत्वान्महद्ब्रह्म, तेन स ब्रह्म त्यदित्याचक्षते– त्यदिति तद्ब्रह्माचक्षते परोक्षाभिधायकेन शब्देन। देवानामेतत् एकत्वं नानात्वं च—अनन्तानां देवानां निविदसंख्याविशिष्टेष्वन्तर्भावः; तेषामपि त्रयस्त्रिंशदादिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे; प्राणस्यैव चैकस्य सर्वः अनन्तसंख्यातो विस्तरः। एवमेकश्च अनन्तश्च अवान्तरसंख्याविशिष्टश्च प्राण एव। तत्र च देवस्यैकस्य नामरूपकर्मगुणशक्तिभेदः अधिकारभेदात्॥

इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेद उपदिश्यते—

**पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥**

पृथिव्येव यस्य देवस्य आयतनम् आश्रयः; अग्निर्लोको यस्य— लोकयत्यनेनेति लोकः, पश्यतीति— अग्निना पश्यतीत्यर्थः; मनोज्योतिः— मनसा ज्योतिषा संकल्पविकल्पादिकार्यं करोति यः, सोऽयं मनोज्योतिः; पृथिवीशरीरः अग्निदर्शनः मनसा संकल्पयिता पृथिव्यभिमानी कार्यकरणसंघातवान्देव इत्यर्थः । य एवं विशिष्टं वै तं पुरुषं विद्यात् विजानीयात्, सर्वस्य आत्मनः आध्यात्मिकस्य कार्यकरणसंघातस्य आत्मनः परमयनम् पर आश्रयः तं परायणम्— मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन

बीजस्थानीयस्य पितृजस्य अस्थिमज्जाशुक्ररूपस्य परम् अयनम्, करणात्मनश्च—स वै वेदिता स्यात्; य एतदेवं वेत्ति स वै वेदिता पण्डितः स्यादित्यभिप्रायः । याज्ञवल्क्य त्वं तमजानन्नेव पण्डिताभिमानीत्यभिप्रायः । यदि तद्विज्ञाने पाण्डित्यं लभ्यते, वेद वै अहं तं पुरुषम्—सर्वस्य आत्मनः परायणं यमात्थ यं कथयसि— तमहं वेद । तत्र शाकल्यस्य वचनं द्रष्टव्यम्—यदि त्वं वेत्थ तं पुरुषम्, ब्रूहि किंविशेषणोऽसौ । शृणु, यद्विशेषणः सः— य एवायं शारीरः—पार्थिवांशे शरीरे भवः शारीरः मातृजकोशत्रयरूप इत्यर्थः; स एष देवः, यस्त्वया पृष्टः, हे शाकल्य; किंतु अस्ति तत्र वक्तव्यं विशेषणान्तरम्; तत् वदैव पृच्छैवेत्यर्थः, हे शाकल्य । स एवं प्रक्षोभितोऽमर्षवशग आह, तोत्रार्दित इव गजः— तस्य देवस्य शारीरस्य का देवता— यस्मान्निष्पद्यते, यः 'सा तस्य देवता' इत्यस्मिन्प्रकरणे विवक्षितः; अमृतमिति होवाच— अमृतमिति यो भुक्तस्यान्नस्य रसः मातृजस्य लोहितस्य निष्पत्तिहेतुः; तस्माद्धि अन्नरसाल्लोहितं निष्पद्यते स्त्रियां श्रितम्; ततश्च लोहितमयं शरीरं बीजाश्रयम् । समानमन्यत् ॥

काम एव यस्यायतनꣳ हृदयं लोको

**मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्व-स्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व-स्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥**

काम एव यस्यायतनम्। स्त्रीव्यतिकराभिलाषः कामः कामशरीर इत्यर्थः। हृदयं लोकः, हृदयेन बुद्ध्या पश्यति। य एवायं काममयः पुरुषः अध्यात्ममपि काममय एव, तस्य का देवतेति—स्त्रिय इति होवाच; स्त्रीतो हि कामस्य दीप्तिर्जायते ॥

**रूपाण्येव यस्यायतनं चक्षुर्लोको मनो-ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञव-ल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति**

**सत्यमिति होवाच ॥ १२ ॥**

रूपाण्येव यस्यायतनम् । रूपाणि शुक्लकृष्णादीनि । य एवासावादित्ये पुरुषः— सर्वेषां हि रूपाणां विशिष्टं कार्यमादित्ये पुरुषः, तस्य का देवतेति— सत्यमिति होवाच; सत्यमिति चक्षुरुच्यते; चक्षुषो हि अध्यात्मत आदित्यस्याधिदैवतस्य निष्पत्तिः ॥

**आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥**

आकाश एव यस्यायतनम् । य एवायं श्रोत्रे भवः श्रौत्रः, तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कः, तस्य का देवतेति— दिश इति होवाच; दिग्भ्यो ह्यसौ आध्यात्मिको निष्पद्यते ॥

तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥

तम एव यस्यायतनम् । तम इति शार्वराद्यन्धकारः परिगृह्यते; अध्यात्मं छायामयः अज्ञानमयः पुरुषः; तस्य का देवतेति— मृत्युरिति होवाच; मृत्युरधिदैवतं तस्य निष्पत्तिकारणम् ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्यस्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य

**तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥**

रूपाण्येव यस्यायतनम् । पूर्वं साधारणानि रूपाण्युक्तानि इह तु प्रकाशकानि विशिष्टानि रूपाणि गृह्यन्ते; रूपायतनस्य देवस्य विशेषायतनं प्रतिबिम्बाधारमादर्शादि; तस्य का देवतेति— असुरिति होवाच; तस्य प्रतिबिम्बाख्यस्य पुरुषस्य निष्पत्तिः असोः प्राणात् ॥

**आप एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥**

आप एव यस्य आयतनम् । साधारणाः सर्वा आप आयतनम्; वापीकूपतडागाद्याश्रयासु अप्सु विशेषावस्थानम्; तस्य का देवतेति, वरुण इति— वरुणात् संघातकर्त्र्यः अध्यात्मम् आप एव वाप्याद्यपां निष्पत्तिकारणम् ॥

**रेत एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥**

रेत एव यस्यायतनम्; य एवायं पुत्रमयः विशेषायतनं रेतआयतनस्य— पुत्रमय इति च अस्थिमज्जाशुक्राणि पितुर्जातानि; तस्य का देवतेति, प्रजापतिरिति होवाच— प्रजापतिः पितोच्यते, पितृतो हि पुत्रस्योत्पत्तिः ॥

**शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥ १८ ॥**

अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधा आत्मानं प्रविभज्य अवस्थित एकैको देवः प्राणभेद एव उपासनार्थं व्य-

पदिष्टः; अधुना दिग्विभागेन पञ्चधा प्रविभक्तस्य आत्मन्युपसंहारार्थम् आह; तूष्णींभूतं शाकल्यं याज्ञवल्क्यो ग्रहेणेव आवेशयन्नाह— शाकल्येति होवाच याज्ञवल्क्यः; त्वां स्विदिति वितर्के, इमे नूनं ब्राह्मणाः, अङ्गारावक्षयणम्— अङ्गाराः अवक्षीयन्ते यस्मिन् संदंशादौ तत् अङ्गारावक्षयणम्— तत् नूनं त्वाम् अक्रत कृतवन्तः ब्राह्मणाः, त्वं तु तन्न बुध्यसे आत्मानं मया दह्यमानमित्यभिप्रायः ॥

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥**

याज्ञवल्क्येति होवाच शाकल्यः— यदिदं कुरुपञ्चालानां ब्राह्मणान् अत्यवादीः अत्युक्तवानसि— स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति— किं ब्रह्म विद्वान्सन् एवमधिक्षिपसि ब्राह्मणान् । याज्ञवल्क्य आह— ब्रह्मविज्ञानं तावदिदं मम; किं तत्? दिशो वेद दिग्विषयं विज्ञानं जाने; तच्च न केवलं दिश एव, सदेवाः देवैः सह दिगधि-

ष्ठातृभिः, किंच सप्रतिष्ठाः प्रतिष्ठाभिश्च सह । इतर आह— यत् यदि दिशो वेत्थ सदेवाः सप्रतिष्ठा इति, सफलं यदि विज्ञानं त्वया प्रतिज्ञातम् ॥

**किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥**

किंदेवतः का देवता अस्य तव दिग्भूतस्य । असौ हि याज्ञवल्क्यः हृदयमात्मानं दिक्षु पञ्चधा विभक्तं दिगात्मभूतम् , तद्द्वारेण सर्वं जगत् आत्मत्वेनोपगम्य, अहमस्मि दिगात्मेति व्यवस्थितः, पूर्वाभिमुखः— सप्रतिष्ठावचनात् ; यथा याज्ञवल्क्यस्य प्रतिज्ञा तथैव पृच्छति— किंदेवतस्त्व-

मस्यां दिश्यसीति । सर्वत्र हि वेदे यां यां देवतामुपास्ते इहैव तद्भूतः तां तां प्रतिपद्यत इति; तथा च वक्ष्यति—'देवो भूत्वा देवानप्येति' इति । अस्यां प्राच्यां का देवता दिगात्मनस्तव अधिष्ठात्री, कया देवतया त्वं प्राचीदिग्रूपेण संपन्न इत्यर्थः । इतर आह— आदित्यदेवत इति; प्राच्यां दिशि मम आदित्यो देवता, सोऽहमादित्यदेवतः । सदेवा इत्येतत् उक्तम्, सप्रतिष्ठा इति तु वक्तव्यमित्याह— स आदित्यः कस्मिन्प्रतिष्ठित इति, चक्षुषीति; अध्यात्मतश्चक्षुष आदित्यो निष्पन्न इति हि मन्त्रब्राह्मणवादाः— 'चक्षोः सूर्यो अजायत' 'चक्षुष आदित्यः' इत्यादयः; कार्यं हि कारणे प्रतिष्ठितं भवति । कस्मिन्नु चक्षुः प्रतिष्ठितमिति, रूपेष्विति; रूपग्रहणाय हि रूपात्मकं चक्षुः रूपेण प्रयुक्तम्; यैर्हि रूपैः प्रयुक्तं तैरात्मग्रहणाय आरब्धं चक्षुः; तस्मात् सादित्यं चक्षुः सह प्राच्या दिशा सह तत्स्थैः सर्वैः रूपेषु प्रतिष्ठितम् । चक्षुषा सह प्राची दिक्सर्वा रूपभूता; तानि च कस्मिन्नु रूपाणि प्रतिष्ठितानीति; हृदय इति होवाच; हृदयारब्धानि रूपाणि; रूपाकारेण हि हृदयं परिणतम्; यस्मात् हृदयेन हि रूपाणि सर्वो लोको जानाति; हृदयमिति बुद्धिमनसी एकीकृत्य निर्देशः; तस्मात् हृदये

ह्येव रूपाणि प्रतिष्ठितानि; हृदयेन हि स्मरणं भवति रूपाणां वासनात्मनाम्; तस्मात् हृदये रूपाणि प्रतिष्ठितानीत्यर्थः। एवमेवैतद्याज्ञवल्क्य ॥

**किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाᳪं ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥**

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति पूर्ववत्— दक्षिणायां दिशि का देवता तव। यमदेवत इति— यमो देवता मम दक्षिणादिग्भूतस्य। स यमः कस्मिन्प्रतिष्ठित इति, यज्ञ इति— यज्ञे कारणे प्रतिष्ठितो यमः सह दिशा।

कथं पुनर्यज्ञस्य कार्यं यम इत्युच्यते— ऋत्विग्भिर्निष्पादितो यज्ञः; दक्षिणया यजमानस्तेभ्यो यज्ञं निष्क्रीय तेन यज्ञेन दक्षिणां दिशं सह यमेनाभिजायति; तेन यज्ञे यमः कार्यत्वात्प्रतिष्ठितः सह दक्षिणया दिशा । कस्मिन्नु यज्ञः प्रतिष्ठित इति, दक्षिणायामिति— दक्षिणया स निष्क्रीयते; तेन दक्षिणाकार्यं यज्ञः। कस्मिन्नु दक्षिणा प्रतिष्ठितेति, श्रद्धायामिति— श्रद्धा नाम दित्सुत्वम् आस्तिक्यबुद्धिर्भक्तिसहिता । कथं तस्यां प्रतिष्ठिता दक्षिणा? यस्मात् यदा ह्येव श्रद्धत्ते अथ दक्षिणां ददाति, न अश्रद्दधत् दक्षिणां ददाति; तस्मात् श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति, हृदय इति होवाच— हृदयस्य हि वृत्तिः श्रद्धा यस्मात्, हृदयेन हि श्रद्धां जानाति; वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति; तस्माद्धृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति । एवमेवैतद्याज्ञ्यवल्क्य ॥

**किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं**

**जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥**

किं देवतोऽस्यां प्रतीच्यां दिश्यसीति । तस्यां वरुणोऽधिदेवता मम । स वरुणः कस्मिन्प्रतिष्ठित इति, अप्स्विति— अपां हि वरुणः कार्यम्, 'श्रद्धा वा आपः' 'श्रद्धातो वरुणमसृजत' इति श्रुतेः । कस्मिन्न्वापः प्रतिष्ठिता इति, रेतसीति—'रेतसो ह्यापः सृष्टाः' इति श्रुतेः । कस्मिन्नु रेतः प्रतिष्ठितमिति, हृदय इति— यस्मात् हृदयस्य कार्यं रेतः; कामो हृदयस्य वृत्तिः; कामिनो हि हृदयात् रेतोऽधिस्कन्दति; तस्मादपि प्रतिरूपम् अनुरूपं पुत्रं जातमाहुर्लौकिकाः— अस्य पितुर्हृदयादिव अयं पुत्रः सृप्तः विनिःसृतः, हृदयादिव निर्मितो यथा सुवर्णेन निर्मितः कुण्डलः । तस्मात् हृदये ह्येव रेतः प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥

**किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा**

**प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥**

किंदेवतोऽस्यामुदीच्यां दिश्यसीति, सोमदेवत इति—सोम इति लतां सोमं देवतां चैकीकृत्य निर्देशः । स सोमः कस्मिन्प्रतिष्ठित इति, दीक्षायामिति— दीक्षितो हि यजमानः सोमं क्रीणाति; क्रीतेन सोमेन इष्ट्वा ज्ञानवानुत्तरां दिशं प्रतिपद्यते सोमदेवताधिष्ठितां सौम्याम् । कस्मिन्नु दीक्षा प्रतिष्ठितेति, सत्य इति— कथम्? यस्मात्सत्ये दीक्षा प्रतिष्ठिता, तस्मादपि दीक्षितमाहुः— सत्यं वदेति— कारणभ्रेषे कार्यभ्रेषो मा भूदिति । सत्ये ह्येव दीक्षा प्रतिष्ठितेति । कस्मिन्नु सत्यं प्रतिष्ठितमिति; हृदय इति होवाच; हृदयेन हि सत्यं जानाति; तस्मात् हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥

**किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्नि-**

**देवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥**

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति । मेरोः समन्ततो वसतामव्यभिचारात् ऊर्ध्वा दिक् ध्रुवेत्युच्यते । अग्निदेवत इति— ऊर्ध्वायां हि प्रकाशभूयस्त्वम् , प्रकाशश्च अग्निः सोऽग्निः कस्मिन्प्रतिष्ठित इति, वाचीति । कस्मिन्नु वाक्प्रतिष्ठितेति, हृदय इति । तत्र याज्ञवल्क्यः सर्वासु दिक्षु विप्रसृतेन हृदयेन सर्वा दिश आत्मत्वेनाभिसंपन्नः ; सदेवाः सप्रतिष्ठा दिश आत्मभूतास्तस्य नामरूपकर्मात्मभूतस्य याज्ञवल्क्यस्य ; यत् रूपं तत् प्राच्या दिशा सह हृदयभूतं याज्ञवल्क्यस्य ; यत्केवलं कर्म पुत्रोत्पादनलक्षणं च ज्ञानसहितं च सह फलेन अधिष्ठात्रीभिश्च देवताभिः दक्षिणाप्रतीच्युदीच्यः कर्मफलात्मिकाः हृदयमेव आपन्नास्तस्य ; ध्रुवया दिशा सह नाम सर्वं वाग्द्वारेण हृदयमेव आपन्नम् ; एतावद्धीदं सर्वम् ; यदुत रूपं वा कर्म वा नाम वेति तत्सर्वं हृदयमेव ; तत् सर्वात्मकं हृदयं पृच्छ्यते— कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥ २५ ॥**

अहल्लिकेति होवाच याज्ञवल्क्यः— नामान्तरेण संबोधनं कृतवान् । यत्र यस्मिन्काले, एतत् हृदयं आत्मा अस्य शरीरस्य अन्यत्र कचिद्देशान्तरे, अस्मत् अस्मत्तः, वर्तत इति मन्यासै मन्यसे— यद्धि यदि हि एतद्धृदयम् अन्यत्रास्मत् स्यात् भवेत्, श्वानो वा एनत् शरीरम् तदा अद्युः, वयांसि वा पक्षिणो वा एनत् विमथ्नीरन् विलोडयेयुः विकर्षेरन्निति । तस्मात् मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः । शरीरस्यापि नामरूपकर्मात्मकत्वाद्धृदये प्रतिष्ठितत्वम् ॥

**कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित**

इति समान इति स एष नेति नेत्यात्मा-गृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति । एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यति मूर्धा ते विपतिष्यतीति । तꣳ ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥

हृदयशरीरयोरेवमन्योन्यप्रतिष्ठा उक्ता कार्यकरणयोः; अतस्त्वां पृच्छामि— कस्मिन्नु त्वं च शरीरम् आत्मा च तव हृदयं प्रतिष्ठितौ स्थ इति; प्राण इति; देहात्मानौ प्राणे प्रतिष्ठितौ स्यातां प्राणवृत्तौ । कस्मिन्नु प्राणः प्रतिष्ठित इति, अपान इति— सापि प्राणवृत्तिः प्रागेव प्रेयात्, अपानवृत्त्या चेन्न निगृह्येत । कस्मिन्न्वपानः प्रतिष्ठित इति, व्यान इति— साप्यपानवृत्तिः अध एव यायात् प्राणवृ-

त्तिश्च प्रागेव, मध्यस्थया चेत् व्यानवृत्त्या न निगृह्येत । कस्मिन्नु व्यानः प्रतिष्ठित इति, उदान इति— सर्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धाः, विष्वगेवेयुः । कस्मिन्नूदानः प्रतिष्ठित इति, समान इति— समानप्रतिष्ठा ह्येताः सर्वा वृत्तयः । एतदुक्तं भवति—शरीरहृदयवायवोऽन्योन्यप्रतिष्ठाः । संघातेन नियता वर्तन्ते विज्ञानमयार्थप्रयुक्ता इति । सर्वमेतत् येन नियतम् यस्मिन्प्रतिष्ठितम् आकाशान्तम् ओतं च प्रोतं च, तस्य निरुपाधिकस्य साक्षादपरोक्षाद्ब्रह्मणो निर्देशः कर्तव्य इत्ययमारम्भः । स एषः—स यो 'नेति नेति' इति निर्दिष्टो मधुकाण्डे एष सः, सोऽयमात्मा अगृह्यः न गृह्यः; कथम्? यस्मात्सर्वकार्यधर्मातीतः, तस्मादगृह्यः; कुतः? यस्मान्न हि गृह्यते; यद्धि करणगोचरं व्याकृतं वस्तु, तद्ग्रहणगोचरम्; इदं तु तद्विपरीतमात्मतत्त्वम् । तथा अशीर्यः— यद्धि मूर्तं संहतं शरीरादि तच्छीर्यते; अयं तु तद्विपरीतः; अतो न हि शीर्यते । तथा असङ्गः— मूर्तो मूर्तान्तरेण संबध्यमानः सज्यते; अयं च तद्विपरीतः; अतो न हि सज्यते । तथा असितः अबद्धः— यद्धि मूर्तं तत् बध्यते; अयं तु तद्विपरीतत्वात् असितः; अबद्धत्वान्न व्यथते; अतो न रिष्यति— ग्रहणविशरणसङ्गबन्धकार्य-

धर्मरहितत्वान्न रिष्यति न हिंसामापद्यते न विनश्यतीत्यर्थः। क्रममतिक्रम्य औपनिषदस्य पुरुषस्य आख्यायिकातोऽपसृत्य श्रुत्या स्वेन रूपेण त्वरया निर्देशः कृतः; ततः पुनः आख्यायिकामेवाश्रित्याह— एतानि यान्युक्तानि अष्टावायतनानि 'पृथिव्येव यस्यायतनम्' इत्येवमादीनि, अष्टौ लोकाः अग्निलोकादयः, अष्टौ देवाः 'अमृतमिति होवाच' इत्येवमादयः, अष्टौ पुरुषाः 'शरीरः पुरुषः' इत्यादयः— स यः कश्चित् तान्पुरुषान् शारीरप्रभृतीन् निरुह्य निश्चयेनोह्य गमयित्वा अष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य, पुनः प्राचीदिगादिद्वारेण प्रत्युह्य उपसंहृत्य स्वात्मनि हृदये अत्यक्रामत् अतिक्रान्तवानुपाधिधर्मं हृदयाद्यात्मत्वम्; स्वेनैवात्मना व्यवस्थितो य औपनिषदः पुरुषः अशनायादिवर्जितः उपनिषत्स्वेव विज्ञेयः नान्यप्रमाणगम्यः, तं त्वा त्वां विद्याभिमानिनं पुरुषं पृच्छामि। तं चेत् यदि मे न विवक्ष्यसि विस्पष्टं न कथयिष्यसि, मूर्धा ते विपतिष्यतीत्याह याज्ञवल्क्यः। तं त्वौपनिषदं पुरुषं शाकल्यो न मेने ह न विज्ञातवान्किल। तस्य ह मूर्धा विपपात विपतितः। समाप्ता आख्यायिका। श्रुतेर्वचनम्, 'तं ह न मेने' इत्यादि। किं च अपि ह अस्य परिमोषिणः तस्कराः अस्थीन्यपि संस्कारार्थं

शिष्यैर्नीयमानानि गृहान्प्रत्यपजह्रुः अपहृतवन्तः—— किं निमित्तम्— अन्यत् धनं नीयमानं मन्यमानाः । पूर्ववृत्ता ह्याख्यायिकेह सूचिता । अष्टाध्याय्यां किल शाकल्येन याज्ञवल्क्यस्य समानान्त एव संवादो निर्वृत्तः; तत्र याज्ञवल्क्येन शापो दत्तः—— 'पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीनिचन गृहान्प्राप्स्यन्ति' इति 'स ह तथैव ममार; तस्य ह्यप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः; तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवतीति'। सैषा आख्यायिका आचारार्थं सूचिता विद्यास्तुतये च इह ॥

यस्य नेति नेतीत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतः तस्य विधिमुखेन्न कथं निर्देशः कर्तव्य इति पुनराख्यायिकामेवाश्रित्याह मूलं च जगतो वक्तव्यमिति । आख्यायिकासंबन्धस्त्वब्रह्मविदो ब्राह्मणाञ्जित्वा गोधनं हर्तव्यमिति ＋न्यायं मत्वाह——

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥**

अथ होवाच । अथ अनन्तरं तूष्णींभूतेषु ब्राह्मणेषु ह उवाच, हे ब्राह्मणा भगवन्त इत्येवं संबोध्य— यो वः युष्माकं मध्ये कामयते इच्छति— याज्ञवल्क्यं पृच्छामीति, स मा माम् आगत्य पृच्छतु; सर्वे वा मा पृच्छत— सर्वे वा यूयं मा मां पृच्छत; यो वः कामयते— याज्ञवल्क्यो मां पृच्छत्विति, तं वः पृच्छामि; सर्वान्वा वः युष्मान् अहं पृच्छामि । ते ह ब्राह्मणा न दधृषुः— ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भाः संवृत्ताः किंचिदपि प्रत्युत्तरं वक्तुम् ॥

**तान्हैतैः श्लोकैः पप्रच्छ—**

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ १ ॥**

तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान् ह एतैः वक्ष्यमाणैः श्लोकैः पप्रच्छ पृष्टवान् । यथा लोके वृक्षो वनस्पतिः, वृक्षस्य विशेषणं वनस्पतिरिति, तथैव पुरुषोऽमृषा— अमृषा सत्यमेतत्; तस्य लोमानि— तस्य पुरुषस्य लोमानि इतरस्य वनस्पतेः पर्णानि; त्वगस्योत्पाटिका बहिः— त्वक् अस्य पुरुषस्य इतरस्योत्पाटिका वनस्पतेः ॥

**त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः। तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥ २ ॥**

त्वच एव सकाशात् अस्य पुरुषस्य रुधिरं प्रस्यन्दि, वनस्पतेस्त्वचः उत्पटः— त्वच एव उत्स्फुटति यस्मात्; एवं सर्वं समानमेव वनस्पतेः पुरुषस्य च; तस्मात् आतृण्णात् हिंसितात् प्रैति तत् रुधिरं निर्गच्छति, वृक्षादिव आहतात् छिन्नात् रसः ॥

**मा्ँसान्यस्य शकराणि किनाट्ँ स्नाव तत्स्थिरम्। अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३ ॥**

एवं मांसान्यस्य पुरुषस्य, वनस्पतेः तानि शकराणि शकलानीत्यर्थः। किनाटम्, वृक्षस्य किनाटं नाम शकलेभ्योऽभ्यन्तरं वल्कलरूपं काष्ठसंलग्नम्, तत् स्नाव पुरुषस्य; तत्स्थिरम्— तच्च किनाटं स्नाववत् दृढं हि तत्; अस्थीनि पुरुषस्य, स्नाव्नोऽन्तरतः अस्थीनि भवन्ति; तथा किनाटस्याभ्यन्तरतो दारूणि काष्ठानि; मज्जा, मज्जैव वनस्पतेः पुरुषस्य च मज्जोपमा कृता, मज्जाया उपमा मज्जोपमा,

नान्यो विशेषोऽस्तीत्यर्थः; यथा वनस्पतेर्मज्जा तथा पुरुषस्य, यथा पुरुषस्य तथा वनस्पतेः ॥

**यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ४ ॥**

यत् यदि वृक्षो वृक्णः छिन्नः रोहति पुनः पुनः प्ररोहति प्रादुर्भवति मूलात् पुनर्नवतरः पूर्वस्मादभिनवतरः; यदेतस्माद्विशेषणात्प्राक् वनस्पतेः पुरुषस्य च, सर्वं सामान्यमवगतम्; अयं तु वनस्पतौ विशेषो दृश्यते— यत् छिन्नस्य प्ररोहणम्; न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते; भवितव्यं च कुतश्चित्प्ररोहणेन; तस्मात् वः पृच्छामि— मर्त्यः मनुष्यः स्वित् मृत्युना वृक्णः कस्मात् मूलात् प्ररोहति, मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थः ॥

**रेतस इति मा वोचत जीवतस्तत्प्रजायते । धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य संभवः ॥ ५ ॥**

यदि चेदेवं वदथ— रेतसः प्ररोहतीति, मा वोचत मैवं

वक्तुमर्हथ; कस्मात्? यस्मात् जीवतः पुरुषात् तत् रेतः प्रजायते, न मृतात् । अपि च धानारुहः धाना बीजम्, बीजरुहोऽपि वृक्षो भवति, न केवलं काण्डरुह एव; इव-शब्दोऽनर्थकः; वै वृक्षः अञ्जसा साक्षात् प्रेत्य मृत्वा संभवः धानातोऽपि प्रेत्य संभवो भवेत् अञ्जसा पुनर्वनस्पतेः ॥

**यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मन्मूला-त्प्ररोहति ॥ ६ ॥**

यत् यदि सह मूलेन धानया वा आवृहेयुः उद्यच्छेयुः उत्पाटयेयुः वृक्षम्, न पुनराभवेत् पुनरागत्य न भवेत् । तस्माद्वः पृच्छामि—सर्वस्यैव जगतो मूलं मर्त्यः स्वित् मृत्युना वृक्णः कस्मात् मूलात् प्ररोहति ॥

**जात एव न जायते को न्वेनं जनये-त्पुनः । विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥ ७ ॥**

इति नवमं ब्राह्मणम् ॥

जात एवेति, मन्यध्वं यदि, किमत्र प्रष्टव्यमिति— ज-

निष्यमाणस्य हि संभवः प्रष्टव्यः, न जातस्य; अयं तु जात एव अतोऽस्मिन्विषये प्रश्न एव नोपपद्यत इति चेत्— न; किं तर्हि? मृतः पुनरपि जायत एव अन्यथा अकृताभ्यागमकृतनाशप्रसङ्गात्; अतो वः पृच्छामि— को न्वेनं मृतं पुनर्जनयेत्। तत् न विजज्ञुर्ब्राह्मणाः— यतो मृतः पुनः प्ररोहति जगतो मूलं न विज्ञातं ब्राह्मणैः; अतो ब्रह्मिष्ठत्वात् हृता गावः; याज्ञवल्क्येन जिता ब्राह्मणाः। समाप्ता आख्यायिका। यज्जगतो मूलम्, येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म, यत् याज्ञवल्क्यो ब्राह्मणान्पृष्टवान्, तत् स्वेन रूपेण श्रुतिरस्मभ्यमाह— विज्ञानं विज्ञप्तिः विज्ञानम्, तच्च आनन्दम्, न विषयविज्ञानवद्दुःखानुविद्धम्, किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः। किं तत् ब्रह्म उभयविशेषणवद्रातिः रातेः षष्ठ्यर्थे प्रथमा, धनस्येत्यर्थः; धनस्य दातुः कर्मकृतो यजमानस्य परायणं परा गतिः कर्मफलस्य प्रदातृ। किंच व्युत्थायैषणाभ्यः तस्मिन्नेव ब्रह्मणि तिष्ठति अकर्मकृत्, तत् ब्रह्म वेत्तीति तद्विच्च, तस्य— तिष्ठमानस्य च तद्विदः, ब्रह्मविद इत्यर्थः, परायणमिति ॥

अत्रेदं विचार्यते— आनन्दशब्दो लोके सुखवाची प्र-

सिद्धः; अत्र च ब्रह्मणो विशेषणत्वेन आनन्दशब्दः श्रूयते— आनन्दं ब्रह्मेति; श्रुत्यन्तरे च— 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्दं ब्रह्मणो विद्वान्' 'यदेष आकाश आनन्दो न स्यात्' 'यो वै भूमा तत्सुखम्' इति च; 'एष परम आनन्दः' इत्येवमाद्याः; संवेद्ये च सुखे आनन्दशब्दः प्रसिद्धः; ब्रह्मानन्दश्च यदि संवेद्यः स्यात्, युक्ता एते ब्रह्मणि आनन्दशब्दाः। ननु च श्रुतिप्रामाण्यात् संवेद्यानन्दस्वरूपमेव ब्रह्म, किं तत्र विचार्यमिति— न, विरुद्धश्रुतिवाक्यदर्शनात्— सत्यम्, आनन्दशब्दो ब्रह्मणि श्रूयते; विज्ञानप्रतिषेधश्च एकत्वे— 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्, तत्केन कं विजानीयात्' 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद' इत्यादि; विरुद्धश्रुतिवाक्यदर्शनात् तेन कर्तव्यो विचारः। तस्मात् युक्तं वेदवाक्यार्थनिर्णयाय विचारयितुम्। मोक्षवादिविप्रतिपत्तेश्च— सांख्या वैशेषिकाश्च मोक्षवादिनो नास्ति मोक्षे सुखं संवेद्यमित्येवं विप्रतिपन्नाः; अन्ये निरतिशयं सुखं स्वसंवेद्यमिति ॥

किं तावद्युक्तम्? आनन्दादिश्रवणात् 'जक्षत्क्रीडन्रममा-

णः' 'स यदि पितृलोककामो भवति' 'यः सर्वज्ञः सर्ववित्' 'सर्वान्कामान्समश्नुते' इत्यादिश्रुतिभ्यः मोक्षे सुखं संवेद्यमिति । ननु एकत्वे कारकविभागाभावात् विज्ञानानुपपत्तिः, क्रियायाश्चानेककारकसाध्यत्वात् विज्ञानस्य च क्रियात्वात्— नैष दोषः; शब्दप्रामाण्यात् भवेत् विज्ञानमानन्दविषये; 'विज्ञानमानन्दम्' इत्यादीनि आनन्दस्वरूपस्यासंवेद्यत्वेऽनुपपन्नानि वचनानीत्यवोचाम । ननु वचनेनापि अग्नेः शैत्यम् उदकस्य च औष्ण्यं न क्रियत एव, ज्ञापकत्वाद्वचनानाम्; न च देशान्तरेऽग्निः शीत इति शक्यते ज्ञापयितुम्; अगम्ये वा देशान्तरे उष्णमुदकमिति— न, प्रत्यगात्मन्यानन्दविज्ञानदर्शनात्; न 'विज्ञानमानन्दम्' इत्येवमादीनां वचनानां 'शीतोऽग्निरित्यादिवाक्यवत् प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वम् । अनुभूयते तु अविरुद्धार्थता; सुखी अहम् इति सुखात्मकमात्मानं स्वयमेव वेदयते; तस्मात् सुतरां प्रत्यक्षाविरुद्धार्थता; तस्मात् आनन्दं ब्रह्म विज्ञानात्मकं सत् स्वयमेव वेदयते । तथा आनन्दप्रतिपादिकाः श्रुतयः समञ्जसाः स्युः 'जक्षत्क्रीडन्रममाणः' इत्येवमाद्याः पूर्वोक्ताः ॥

न, कार्यकरणाभावे अनुपपत्तेर्विज्ञानस्य— शरीरवियो-

गो हि मोक्ष आत्यन्तिकः; शरीराभावे च करणानुपपत्तिः, आश्रयाभावात्; ततश्च विज्ञानानुपपत्तिः अकार्यकरणत्वात्; देहाद्यभावे च विज्ञानोत्पत्तौ सर्वेषां कार्यकरणोपादानानर्थक्यप्रसङ्गः। एकत्वविरोधाच्च— परं चेद्ब्रह्म आनन्दात्मकम् आत्मानं नित्यविज्ञानत्वात् नित्यमेव विजानीयात्, तन्न; संसार्यपि संसारविनिर्मुक्तः स्वाभाव्यं प्रतिपद्येत; जलाशय इवोदकाञ्जलिः क्षिप्तः न पृथक्त्वेन व्यवतिष्ठते आनन्दात्मकब्रह्मविज्ञानाय; तदा मुक्त आनन्दात्मकमात्मानं वेदयत इत्येतदनर्थकं वाक्यम्। अथ ब्रह्मानन्दम् अन्यः सन् मुक्तो वेदयते, प्रत्यगात्मानं च, अहमस्म्यानन्दस्वरूप इति; तदा एकत्वविरोधः; तथा च सति सर्वश्रुतिविरोधः। तृतीया च कल्पना नोपपद्यते। किंचान्यत्, ब्रह्मणश्च निरन्तरात्मानन्दविज्ञाने विज्ञानाविज्ञानकल्पनानर्थक्यम्; निरन्तरं चेत् आत्मानन्दविषयं ब्रह्मणो विज्ञानम्, तदेव तस्य स्वभाव इति आत्मानन्दं विजानातीति कल्पना अनुपपन्ना; अतद्विज्ञानप्रसङ्गे हि कल्पनाया अर्थवत्त्वम्, यथा आत्मानं परं च वेत्तीति; न हि इष्वाद्यासक्तमनसो नैरन्तर्येण इषुज्ञानाज्ञानकल्पनाया अर्थवत्त्वम्। अथ विच्छिन्नमात्मानन्दं विजानाति— विज्ञानस्य आत्मविज्ञानच्छिद्रे अन्यविषयत्वप्रसङ्गः; आत्मनश्च विक्रि-

यावत्त्वम्, ततश्चानित्यत्वप्रसङ्गः । तस्मात् 'विज्ञानमानन्दम्' इति स्वरूपान्वाख्यानपरैव श्रुतिः, नात्मानन्दसंवेद्यत्वार्था । 'जक्षत्क्रीडन्' इत्यादिश्रुतिविरोधोऽसंवेद्यत्व इति चेन्न, सर्वात्मैकत्वे यथाप्राप्तानुवादित्वात्— मुक्तस्य सर्वात्मभावे सति यत्र क्वचित् योगिषु देवेषु वा जक्षणादि प्राप्तम्; तत् यथाप्राप्तमेवानूद्यते— तत् तस्यैव सर्वात्मभावादिति सर्वात्मभावमोक्षस्तुतये । यथाप्राप्तानुवादित्वे दुःखित्वमपीति चेत्— योग्यादिषु यथाप्राप्तजक्षणादिवत् स्थावरादिषु यथाप्राप्तदुःखित्वमपीति चेत्— न, नामरूपकृतकार्यकरणोपाधिसंपर्कजनितभ्रान्त्यध्यारोपितत्वात् सुखित्वदुःखित्वादिविशेषस्येति परिहृतमेतत्सर्वम् । विरुद्धश्रुतीनां च विषयमवोचाम । तस्मात् 'एषोऽस्य परम आनन्दः' इतिवत् सर्वाण्यानन्दवाक्यानि द्रष्टव्यानि ॥

इति तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
बृहदारण्यकोपनिषद्भाष्ये
तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः ॥

—※—

जनको ह वैदेह आसांचक्रे । अस्य संबन्धः— शारीराद्यानष्टौ पुरुषान्नि-रुह्य, प्रत्युह्य पुनर्हृदये, दिग्भेदेन च पुनः पञ्चधा व्यूह्य, हृदये प्रत्युह्य, हृदयं शरीरं च पुनरन्योन्यप्रतिष्ठं प्राणादिपञ्चवृत्त्यात्मके समानाख्ये जगदात्मनि सूत्र उपसंहृत्य, जगदात्मानं शरीरहृदयसूत्राव-स्थमतिक्रान्तवान् य औपनिषदः पुरुषः नेति नेतीति व्यप-दिष्टः, स साक्षाच्च उपादानकारणस्वरूपेण च निर्दिष्टः 'वि-ज्ञानमानन्दम्' इति । तस्यैव वागादिदेवताद्वारेण पुनरधि-गमः कर्तव्य इति अधिगमनोपायान्तरार्थोऽयमारम्भो ब्राह्म-णद्वयस्य । आख्यायिका तु आचारप्रदर्शनार्था—

**ॐ जनको ह वैदेह आसांचक्रेऽथ ह याज्ञवल्क्य आवव्राज । तँ होवाच या-**

**ज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥ १ ॥**

जनको ह वैदेह आसांचक्रे आसनं कृतवान् आस्थायिकां दत्तवानित्यर्थः, दर्शनकामेभ्यो राज्ञः । अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राज आगतवान् आत्मनो योगक्षेमार्थम्, राज्ञो वा विविदिषां दृष्ट्वा अनुग्रहार्थम् । तमागतं याज्ञवल्क्यं यथावत्पूजां कृत्वा उवाच ह उक्तवान् जनकः— हे याज्ञवल्क्य किमर्थमचारीः आगतोऽसि; किं पशूनिच्छन्पुनरपि आहोस्वित् अण्वन्तान् सूक्ष्मान्तान् सूक्ष्मवस्तुनिर्णयान्तान् प्रश्नान् मत्तः श्रोतुमिच्छन्निति । उभयमेव पशून्प्रश्नांश्च, हे सम्राट्— सम्राडिति वाजपेययाजिनो लिङ्गम्; यश्चाज्ञया राज्यं प्रशास्ति, स सम्राट्; तस्यामन्त्रणं हे सम्राडिति; समस्तस्य वा भारतस्य वर्षस्य राजा ॥

**यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किꣳ**

स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य । वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत । का प्रज्ञता याज्ञवल्क्य । वागेव सम्राडिति होवाच । वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट्प्रज्ञायन्ते वाग्वै सम्राट्परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

किं तु यत् ते तुभ्यम्, कश्चित् अब्रवीत् आचार्यः; अनेकाचार्यसेवी हि भवान्; तच्छृणवामेति। इतर आह— अब्रवीत् उक्तवान् मे मम आचार्यः, जित्वा नामतः, शिलिनस्यापत्यं शैलिनिः— वाग्वै ब्रह्मेति वाग्देवता ब्रह्मेति। आहेतरः— यथा मातृमान् माता यस्य विद्यते पुत्रस्य सम्यगनुशास्त्री अनुशासनकर्त्री स मातृमान्; अत ऊर्ध्वं पिता यस्यानुशास्ता स पितृमान्; उपनयनादूर्ध्वम् आ समावर्तनात् आचार्यो यस्यानुशास्ता स आचार्यवान्; एवं शुद्धित्रयहेतुसंयुक्तः स साक्षादाचार्यः स्वयं न कदाचिदपि प्रामाण्याद्व्यभिचरति; स यथा ब्रूयाच्छिष्याय तथासौ जित्वा शैलिनिरुक्तवान्— वाग्वै ब्रह्मेति; अवदतो हि किं स्यादिति— न हि मूकस्य इहार्थम् अमुत्रार्थं वा किंचन स्यात्। किं तु अब्रवीत् उक्तवान् ते तुभ्यम् तस्य ब्रह्मणः आयतनं प्रतिष्ठां च— आयतनं नाम शरीरम्; प्रतिष्ठा त्रिष्वपि कालेषु य आश्रयः। आहेतरः— न मेऽब्रवीदिति। इतर आह— यद्येवम् एकपात् वै एतत्, एकः पादो यस्य ब्रह्मणः तदिदमेकपाद्ब्रह्म त्रिभिः पादैः शून्यम् उपास्यमानमपि न फलाय भवतीत्यर्थः। यद्येवम्, स त्वं विद्वान्सन् नः अस्मभ्यं ब्रूहि हे याज्ञवल्क्येति। स च आह— वागेव आयतनम्, वाग्देवस्य ब्रह्मणः वागेव करणम् आयतनं

शरीरम्, आकाशः अव्याकृताख्यः प्रतिष्ठा उत्पत्तिस्थितिलयकालेषु। प्रज्ञेत्येनदुपासीत– प्रज्ञेतीयमुपनिषत् ब्रह्मणश्चतुर्थः पादः– प्रज्ञेति कृत्वा एनत् ब्रह्म उपासीत। का प्रज्ञता याज्ञवल्क्य, किं स्वयमेव प्रज्ञा, उत प्रज्ञानिमित्ता– यथा आयतनप्रतिष्ठे ब्रह्मणो व्यतिरिक्ते, तद्वत्किम्। न; कथं तर्हि? वागेव, सम्राट्, इति होवाच; वागेव प्रज्ञेति ह उवाच उक्तवान्, न व्यतिरिक्ता प्रज्ञेति। कथं पुनर्वागेव प्रज्ञेति उच्यते– वाचा वै, सम्राट्, बन्धुः प्रज्ञायते– अस्माकं बन्धुरित्युक्ते प्रज्ञायते बन्धुः; तथा ऋग्वेदादि, इष्टं यागनिमित्तं धर्मजातम्, हुतं होमनिमित्तं च, आशितम् अन्नदाननिमित्तम्, पायितं पानदाननिमित्तम्, अयं च लोकः, इदं च जन्म, परश्च लोकः, प्रतिपत्तव्यं च जन्म, सर्वाणि च भूतानि– वाचैव, सम्राट्, प्रज्ञायन्ते; अतो वाग्वै, सम्राट्, परमं ब्रह्म। नैनं यथोक्तब्रह्मविदं वाग्जहाति; सर्वाण्येनं भूतान्यभिक्षरन्ति बलिदानादिभिः; इह देवो भूत्वा पुनः शरीरपातोत्तरकालं देवानप्येति अपिगच्छति, य एवं विद्वानेतदुपास्ते। विद्यानिष्क्रयार्थं हस्तितुल्य ऋषभो हस्त्यृषभः यस्मिन्गोसहस्रे तत् हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः— अननुशिष्य शिष्यं कृतार्थमकृत्वा शिष्यात् धनं न हरेतेति मे मम पिता— अमन्यत; ममाप्ययमेवाभिप्रायः॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट्कामाय प्राणो वै सम्राट्परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स

**होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥**

यदेव ते कश्चिदब्रवीत् उदङ्को नामतः शुल्बस्यापत्यं शौल्बायनः अब्रवीत्; प्राणो वै ब्रह्मेति, प्राणो वायुर्देवता—पूर्ववत् । प्राण एव आयतनम् आकाशः प्रतिष्ठा ; उपनिषत्—प्रियमित्येनदुपासीत । कथं पुनः प्रियत्वम्? प्राणस्य वै, हे सम्राट्, कामाय प्राणस्यार्थाय अयाज्यं याजयति पतितादिकमपि ; अप्रतिगृह्यस्याप्युग्रादेः प्रतिगृह्णात्यपि ; तत्र तस्यां दिशि वधनिमित्तमाशङ्कम्— वधाशङ्केत्यर्थः— यां दिशमेति तस्कराद्याकीर्णां च, तस्यां दिशि वधाशङ्का ; तच्चैतत्सर्वं प्राणस्य प्रियत्वे भवति, प्राणस्यैव, सम्राट्, कामाय । तस्मात्प्राणो वै, सम्राट्, परमं ब्रह्म ; नैनं प्राणो जहाति ; समानमन्यत् ॥

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति**

**स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट्पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट्परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥**

यदेव ते कश्चित् बर्कुरिति नामतः वृष्णस्यापत्यं वार्ष्णः; चक्षुर्वै ब्रह्मेति— आदित्यो देवता चक्षुषि । उपनिषत्— सत्यम्; यस्मात् श्रोत्रेण श्रुतमनृतमपि स्यात्, न तु चक्षुषा दृष्टम्, तस्माद्वै, सम्राट्, पश्यन्तमाहुः— अद्राक्षीस्त्वं हस्तिनमिति, स चेत् अद्राक्षमित्याह, तत्सत्यमेव भवति; यस्त्वन्यो ब्रूयात्— अहमश्रौषमिति, तद्व्यभिचरति; यत्तु चक्षुषा दृष्टं तत् अव्यभिचारित्वात् सत्यमेव भवति ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्र-वीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य-वान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यश्रृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येक-पाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्र-तिष्ठानन्त इत्येनदुपासीत कानन्तता या-ज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपि यां कां च दिशं ग-च्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रꣳ श्रोत्रं वै सम्राट्परमं ब्रह्म नैनꣳ श्रोत्रं जहाति स-र्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते ह-स्त्यृषभꣳ सहस्रं ददामीति होवाच ज-नको वैदेहः स होवाच याज्ञवल्क्यः पि-ता मेऽमन्यत नाननुशिष्य हरेतेति ॥५॥

यदेव ते गर्दभीविपीत इति नामतः भारद्वाजो गोत्रतः; श्रोत्रं वै ब्रह्मेति— श्रोत्रे दिक् देवता । अनन्त इत्येनदुपासीत; का अनन्तता श्रोत्रस्य? दिश एव श्रोत्रस्य आनन्त्यं यस्मात्, तस्माद्वै, सम्राट्, प्राचीमुदीचीं वा यां कांचिदपि दिशं गच्छति, नैवास्या अन्तं गच्छति कश्चिदपि; अतोऽनन्ता हि दिशः; दिशो वै, सम्राट्, श्रोत्रम्; तस्मात् दिगानन्त्यमेव श्रोत्रस्य आनन्त्यम् ॥

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठानन्द इत्येनदुपासीत कानन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट्स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट्परमं**

ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूता-
न्यभिक्षरन्ति देवो भूत्वा देवानप्येति य
एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं
ददामीति होवाच जनको वैदेहः स हो-
वाच याज्ञवल्क्यः पिता मेऽमन्यत नान-
नुशिष्य हरेतेति ॥ ६ ॥

सत्यकाम इति नामतः जबालाया अपत्यं जाबालः । चन्द्रमा मनसि देवता । आनन्द इत्युपनिषत्; यस्मान्मन एव आनन्दः, तस्मात् मनसा वै, सम्राट्, स्त्रियमभिकामयमानः अभिहार्यते प्रार्थयत इत्यर्थः; तस्मात् यां स्त्रियमभिकामयमानोऽभिहार्यते, तस्यां प्रतिरूपः अनुरूपः पुत्रो जायते; स आनन्दहेतुः पुत्रः; स येन मनसा निर्वर्त्यते, तन्मनः आनन्दः ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्र-
वीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मे-
ति यथा मातृमान्पितृमानाचार्यवान्ब्रूया-
त्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्य-
हृदयस्य हि किꣳ स्यादित्यब्रवीत्तु ते त-
स्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा
एतत्सम्राडिति स वै नो ब्रूहि याज्ञव-

**ल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट्सर्वेषां भूतानामायतनꣳ हृदयं वै सम्राट्सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट्सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट्परमं ब्रह्म नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥**

विदग्धः शाकल्यः—हृदयं वै ब्रह्मेति । हृदयं वै, सम्राट्, सर्वेषां भूतानामायतनम् । नामरूपकर्मात्मकानि हि भूतानि हृदयाश्रयाणीत्यवोचाम शाकल्यब्राह्मणे हृदयप्रतिष्ठानि चेति । तस्मात् हृदये ह्येव, सम्राट्, सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति । तस्मात् हृदयं स्थितिरित्युपासीत; हृदये च प्रजापतिर्देवता ॥

इति चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ॥

## द्वितीयं ब्राह्मणम् ॥

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

जनको ह वैदेहः । यस्मात्सविशेषणानि सर्वाणि ब्रह्माणि जानाति याज्ञवल्क्यः, तस्मात् आचार्यकत्वं हित्वा जनकः कूर्चात् आसनविशेषात् उत्थाय उप समीपम् अवसर्पन्, पादयोर्निपतन्नित्यर्थः, उवाच उक्तवान्—नमः ते तुभ्यम् अस्तु हे याज्ञवल्क्य; अनु मा शाधि अनुशाधि मामि-

त्यर्थः; इति-शब्दो वाक्यपरिसमाप्त्यर्थः । स होवाच याज्ञवल्क्यः— यथा वै लोके, हे सम्राट्, महान्तं दीर्घम् अध्वानम् एष्यन् गमिष्यन्, रथं वा स्थलेन गमिष्यन्, नावं वा जलेन गमिष्यन् समाददीत— एवमेव एतानि ब्रह्माणि एताभिरुपनिषद्भिर्युक्तानि उपासीनः समाहितात्मा असि, अत्यन्तमेताभिरुपनिषद्भिः संयुक्तात्मा असि; न केवलमुपनिषत्समाहितः; एवं वृन्दारकः पूज्यश्च आढ्यश्च ईश्वरः न दरिद्र इत्यर्थः, अधीतवेदः अधीतो वेदो येन स त्वमधीतवेदः, उक्ताश्चोपनिषद आचार्यैस्तुभ्यं स त्वमुक्तोपनिषत्कः; एवं सर्वविभूतिसंपन्नोऽपि सन् भयमध्यस्थ एव परमात्मज्ञानेन विना अकृतार्थ एव तावदित्यर्थः— यावत्परं ब्रह्म न वेत्सि; इतः अस्माद्देहात् विमुच्यमानः एताभिर्नौरथस्थानीयाभिः समाहितः क कस्मिन् गमिष्यसि, किं वस्तु प्राप्स्यसीति । नाहं तद्वस्तु, भगवन् पूजावन्, वेद जाने, यत्र गमिष्यामीति । अथ यद्येवं न जानीषे यत्र गतः कृतार्थः स्याः, अहं वै ते तुभ्यं तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति, यदि प्रसन्नो मां प्रति । शृणु—

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धँसन्तमिन्द्र इत्या-**

**चक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥**

इन्धो ह वै नाम । इन्ध इत्येवंनामा, यः चक्षुर्वै ब्रह्मेति पुरोक्त आदित्यान्तर्गतः पुरुषः स एषः, योऽयं दक्षिणे अक्षन् अक्षणि विशेषेण व्यवस्थितः— स च सत्यनामा ; तं वै एतं पुरुषम्, दीप्तिगुणत्वात् प्रत्यक्षं नाम अस्य इन्ध इति, तम् इन्धं सन्तम् इन्द्र इत्याचक्षते परोक्षेण । यस्मात्परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति । एष त्वं वैश्वानरमात्मानं संपन्नोऽसि ॥

**अथैतद्वामेऽक्षणि पुरुषरूपमेषास्य पत्नी विराट्तयोरेष सꣳस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदय लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रव-**

**दास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥**

अथैतत् वामेऽक्षणि पुरुषरूपम्, एषा अस्य पत्नी— यं त्वं वैश्वानरमात्मानं संपन्नोऽसि तस्यास्य इन्द्रस्य भोक्तुः भोग्या एषा पत्नी, विराट् अन्नं भोग्यत्वादेव; तदेतत् अन्नं च अत्ता च एकं मिथुनं स्वप्ने। कथम्? तयोरेषः— इन्द्राण्याः इन्द्रस्य च एषः संस्तावः, संभूय यत्र संस्तवं कुर्वाते अन्योन्यं स एष संस्तावः; कोऽसौ? य एषोऽन्तर्हृदय आकाशः— अन्तर्हृदये हृदयस्य मांसपिण्डस्य मध्ये; अथैनयोः एतत् वक्ष्यमाणम् अन्नं भोज्यं स्थितिहेतुः; किं तत्? य एषोऽन्तर्हृदये लोहितपिण्डः— लोहित एव पिण्डाकारापन्नो लोहितपिण्डः; अन्नं जग्धं द्वेधा परिणमते; यत्स्थूलं तदधो गच्छति; यदन्यत् तत्पुनरग्निना पच्यमानं द्वेधा परिणमते— यो मध्यमो रसः स लोहितादिक्रमेण पाञ्चभौतिकं पिण्डं शरीरमुपचिनोति; योऽणिष्ठो रसः स एष लोहितपिण्ड इन्द्रस्य लिङ्गात्मनो हृदये मिथुनीभूतस्य, यं तैजसमाचक्षते; स तयोरिन्द्रेन्द्राण्योर्हृदये मिथुनीभूतयोः सूक्ष्मासु नाडीष्वनुप्रविष्टः स्थितिहेतुर्भवति— तदेतदुच्यते— अथैनयोरेतदन्नमित्यादि। किंचान्यत्; अथैनयो-

रेतत्प्रावरणम्— भुक्तवतोः स्वपतोश्च प्रावरणं भवति लोके, तत्सामान्यं हि कल्पयति श्रुतिः ; किं तदिह प्रावरणम्? यदे-तदन्तर्हृदये जालकमिव अनेकनाडीछिद्रबहुलत्वात् जालक-मिव । अथैनयोरेषा सृतिः मार्गः, संचरतोऽनयेति संचरणी, स्वप्नाज्जागरितदेशागमनमार्गः ; का सा सृतिः? यैषा हृदयात् हृदयदेशात् ऊर्ध्वाभिमुखी सती उच्चरति नाडी ; तस्याः परिमाणमिदमुच्यते— यथा लोके केशः सहस्रधा भिन्नः अत्यन्तसूक्ष्मो भवति एवं सूक्ष्मा अस्य देहस्य संबन्धिन्यः हिता नाम हिता इत्येवं ख्याताः नाड्यः, ताश्चान्तर्हृदये मांसपिण्डे प्रतिष्ठिता भवन्ति ; हृदयाद्विप्ररूढास्ताः सर्वत्र कदम्बकेसरवत् ; एताभिर्नाडीभिरत्यन्तसूक्ष्माभिः एतदन्नम् आस्रवत् गच्छत् आस्रवति गच्छति ; तदेतद्देवताशरीरम् अनेनान्नेन दामभूतेनोपचीयमानं तिष्ठति । तस्मात्— य-स्मात् स्थूलेनान्नेन उपचितः पिण्डः, इदं तु देवताशरीरं लिङ्गं सूक्ष्मेणान्नेनोपचितं तिष्ठति, पिण्डोपचयकरमप्यन्नं प्र-विविक्तमेव मूत्रपुरीषादिस्थूलमपेक्ष्य, लिङ्गस्थितिकरं तु अन्नं ततोऽपि सूक्ष्मतरम्—अतः प्रविविक्ताहारः पिण्डः, तस्मा-त्प्रविविक्ताहारादपि प्रविविक्ताहारतर एष लिङ्गात्मा इवैव भवति, अस्माच्छरीरात् शरीरमेव शारीरं तस्माच्छारीरात्, आत्मनः वैश्वानरात्— तैजसः सूक्ष्मान्नोपचितो भवति ॥

तस्य प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्मागृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहोऽभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥

इति द्वितीयं ब्राह्मणम् ॥

स एष हृदयभूतः तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति ; तस्यास्य विदुषः क्रमेण वैश्वानरात् तैजसं प्राप्तस्य हृदयात्मानमापन्नस्य हृदयात्मनश्च प्राणात्मानमापन्नस्य प्राची दिक् प्राञ्चः प्राग्गताः प्राणाः ; तथा

दक्षिणा दिक् दक्षिणे प्राणाः; तथा प्रतीची दिक् प्रत्यञ्चः प्राणाः; उदीची दिक् उदञ्चः प्राणाः; ऊर्ध्वा दिक् ऊर्ध्वाः प्राणाः; अवाची दिक् अवाञ्चः प्राणाः; सर्वा दिशः सर्वे प्राणाः। एवं विद्वान् क्रमेण सर्वात्मकं प्राणमात्मत्वेनोपगतो भवति; तं सर्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेतीत्यात्मानं तुरीयं प्रतिपद्यते; यम् एष विद्वान् अनेन क्रमेण प्रतिपद्यते, स एष नेति नेत्यात्मेत्यादि न रिष्यतीत्यन्तं व्याख्यातमेतत्। अभयं वै जन्ममरणादिनिमित्तभयशून्यम्, हे जनक, प्राप्तोऽसि— इति ह एवं किल उवाच उक्तवान् याज्ञवल्क्यः। तदेतदुक्तम्— अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति। स होवाच जनको वैदेहः— अभयमेव त्वा त्वामपि गच्छतात् गच्छतु, यस्त्वं नः अस्मान् हे याज्ञवल्क्य भगवन् पूजावन् अभयं ब्रह्म वेदयसे ज्ञापयसि प्रापितवान् उपाधिकृताज्ञानव्यवधानापनयनेनेत्यर्थः; किमन्यदहं विद्यानिष्क्रयार्थं प्रयच्छामि, साक्षादात्मानमेव दत्तवते; अतो नमस्तेऽस्तु; इमे विदेहाः तव यथेष्टं भुज्यन्ताम्; अयं चाहमस्मि दासभावे स्थितः; यथेष्टं मां राज्यं च प्रतिपद्यस्वेत्यर्थः ॥

इति चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥

# तृतीयं ब्राह्मणम् ॥

जनकं ह वैदेहं याज्ञवल्क्यो जगामेत्यस्याभिसंबन्धः। विज्ञानमय आत्मा साक्षादपरोक्षाद्ब्रह्म सर्वान्तरः पर एव— 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ' इत्यादिश्रुतिभ्यः। स एष इह प्रविष्टः वदनादिलिङ्गः अस्ति व्यतिरिक्त इति मधुकाण्डे अजातशत्रुसंवादे प्राणादिकर्तृत्वभोक्तृत्वप्रत्याख्यानेनाधिगतोऽपि सन्, पुनः प्राणनादिलिङ्गमुपन्यस्य औषस्तप्रश्ने प्राणनादिलिङ्गो यः सामान्येनाधिगतः 'प्राणेन प्राणिति' इत्यादिना, 'दृष्टेर्द्रष्टा' इत्यादिना अलुप्तशक्तिस्वभावोऽधिगतः। तस्य च परोपाधिनिमित्तः संसारः— यथा रज्जूषरशुक्तिकागगनादिषु सर्पोदकरजतमलिनत्वादि परोपाध्यारोपणनिमित्तमेव, न स्वतः, तथा; निरुपाधिको निरुपाख्यः नेति नेतीति व्यपदेश्यः साक्षादपरोक्षात्सर्वान्तरः आत्मा ब्रह्म अक्षरम् अन्तर्यामी प्रशास्ता औपनिषदः पुरुषः विज्ञानमानन्दं ब्रह्मेत्यधिगतम्। तदेव पुनरिन्धसंज्ञः प्रविविक्ताहारः; ततोऽन्तर्हृदये लिङ्गात्मा प्रविविक्ताहारतरः; ततः परेण जगदात्मा प्राणोपाधिः; ततोऽपि प्रविलाप्य जगदात्मानमुपाधिभूतं रज्ज्वादाविव सर्पादिकं विद्यया, 'स एष नेति नेति—' इति साक्षात्सर्वान्तरं ब्रह्म

अधिगतम् । एवम् अभयं परिप्रापितो जनकः याज्ञवल्क्येन आगमतः संक्षेपतः । अत्र च जाग्रत्स्वप्नसुषुप्ततुरीयाण्युपन्यस्तानि अन्यप्रसङ्गेन— इन्धः, प्रविविक्ताहारतरः, सर्वे प्राणाः, स एष नेति नेतीति । इदानीं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरतोऽधिगमः कर्तव्यः; अभयं प्रापयितव्यम्; सद्भावश्च आत्मनः विप्रतिपत्त्याशङ्कानिराकरणद्वारेण— व्यतिरिक्तत्वं शुद्धत्वं स्वयंज्योतिष्ट्वम् अलुप्तशक्तिस्वरूपत्वं निरतिशयानन्दस्वाभाव्यम् अद्वैतत्वं च अधिगन्तव्यमिति— इदमारभ्यते । आख्यायिका तु विद्यासंप्रदानग्रहणविधिप्रकाशनार्था, विद्यास्तुतये च विशेषतः, वरदानादिसूचनात् ॥

**जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ ह सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥**

जनकं ह वैदेहं याज्ञवल्क्यो जगाम । स च गच्छन् एवं मेने चिन्तितवान्— न वदिष्ये किंचिदपि राज्ञे; गम-

नप्रयोजनं तु योगक्षेमार्थम् । न वदिष्य इत्येवंसंकल्पोऽपि याज्ञवल्क्यः यद्यत् जनकः पृष्टवान् तत्तत् प्रतिपेदे; तत्र को हेतुः संकल्पितस्यान्यथाकरणे— इत्यत्र आख्यायिकामाचष्टे । पूर्वत्र किल जनकयाज्ञवल्क्ययोः संवाद आसीत् अग्निहोत्रे निमित्ते; तत्र जनकस्याग्निहोत्रविषयं विज्ञानमुपलभ्य परितुष्टो याज्ञवल्क्यः तस्मै जनकाय ह किल वरं ददौ; स च जनकः ह कामप्रश्नमेव वरं वव्रे वृतवान्; तं च वरं ह अस्मै ददौ याज्ञवल्क्यः; तेन वरप्रदानसामर्थ्येन अव्याचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव जनकः पूर्वं पप्रच्छ । तत्रैव अनुक्तिः, ब्रह्मविद्यायाः कर्मणा विरुद्धत्वात्; विद्यायाश्च स्वातन्त्र्यात्— स्वतन्त्रा हि ब्रह्मविद्या सहकारिसाधनान्तरनिरपेक्षा पुरुषार्थसाधनेति च ॥

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥**

हे याज्ञवल्क्येत्येवं संबोध्य अभिमुखीकरणाय, किंज्योतिरयं पुरुष इति—किमस्य पुरुषस्य ज्योतिः, येन ज्योतिषा व्यवहरति? सोऽयं किंज्योतिः? अयं प्राकृतः कार्यक-

रणसंघातरूपः शिरःपाण्यादिमान् पुरुषः पृच्छ्यते— किमयं स्वावयवसंघातबाह्येन ज्योतिरन्तरेण व्यवहरति, आहोस्वित् स्वावयवसंघातमध्यपातिना ज्योतिषा ज्योतिष्कार्यम् अयं पुरुषो निर्वर्तयति— इत्येतदभिप्रेत्य— पृच्छति। किंचातः, यदि व्यतिरिक्तेन यदि वा अव्यतिरिक्तेन ज्योतिषा ज्योतिष्कार्यं निर्वर्तयति? शृणु तत्र कारणम्— यदि व्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यनिर्वर्तकत्वम् अस्य स्वभावो निर्धारितो भवति, ततः अदृष्टज्योतिष्कार्यविषयेऽप्यनुमास्यामहे व्यतिरिक्तज्योतिर्निमित्तमेवेदं कार्यमिति; अथाव्यतिरिक्तेनैव स्वात्मना ज्योतिषा व्यवहरति, ततः अप्रत्यक्षेऽपि ज्योतिषि ज्योतिष्कार्यदर्शने अव्यतिरिक्तमेव ज्योतिः अनुमेयम्; अथानियम एव— व्यतिरिक्तम् अव्यतिरिक्तं वा ज्योतिः पुरुषस्य व्यवहारहेतुः, ततः अनध्यवसाय एव ज्योतिर्विषये— इत्येवं मन्वानः पृच्छति जनको याज्ञवल्क्यम्— किंज्योतिरयं पुरुष इति। ननु एवमनुमानकौशले जनकस्य किं प्रश्नेन, स्वयमेव कस्मान्न प्रतिपद्यत इति— सत्यमेतत्; तथापि लिङ्गलिङ्गिसंबन्धविशेषाणामत्यन्तसौक्ष्म्यात् दुरवबोधतां मन्यते बहूनामपि पण्डितानाम्, किमुतैकस्य; अत एव हि धर्मसूक्ष्मनिर्णये परिषद्व्यापार इष्यते, पुरुषविशेषश्चापेक्ष्यते— दशावरा परिषत्, त्रयो वा एको वेति;

तस्मात् यद्यपि अनुमानकौशलं राज्ञः, तथापि तु युक्तो याज्ञवल्क्यः प्रष्टुम्, विज्ञानकौशलतारतम्योपपत्तेः पुरुषाणाम्। अथवा श्रुतिः स्वयमेव आख्यायिकाव्याजेन अनुमानमार्गमुपन्यस्य अस्मान्बोधयति पुरुषमतिमनुसरन्ती; याज्ञवल्क्योऽपि जनकाभिप्रायाभिज्ञतया व्यतिरिक्तमात्मज्योतिर्बोधयिष्यन् जनकं व्यतिरिक्तप्रतिपादकमेव लिङ्गं प्रतिपेदे, यथा— प्रसिद्धमादित्यज्योतिः सम्राट् इति होवाच। कथम्? आदित्येनैव स्वावयवसंघातव्यतिरिक्तेन चक्षुषोऽनुग्राहकेण ज्योतिषा अयं प्राकृतः पुरुषः आस्ते उपविशति, पल्ययते पर्येति क्षेत्रमरण्यं वा, तत्र गत्वा कर्म कुरुते, विपल्येति विपर्येति च यथागतम्। अत्यन्तव्यतिरिक्तज्योतिष्ट्वप्रसिद्धताप्रदर्शनार्थम् अनेकविशेषणम्; बाह्यानेकज्योतिःप्रदर्शनं च लिङ्गस्याव्यभिचारित्वप्रदर्शनार्थम्। एवमेवैतद्याज्ञवल्क्य॥

**अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ ३॥**

तथा अस्तमिते आदित्ये, याज्ञवल्क्य, किंज्योतिरेवायं पुरुष इति— चन्द्रमा एवास्य ज्योतिः ॥

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥**

अस्तमित आदित्ये, चन्द्रमस्यस्तमिते अग्निर्ज्योतिः ॥

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥**

शान्तेऽग्नौ वाक् ज्योतिः ; वागिति शब्दः परिगृह्यते ; शब्देन विषयेण श्रोत्रमिन्द्रियं दीप्यते ; श्रोत्रेन्द्रिये संप्रदीप्ते, मनसि विवेक उपजायते ; तेन मनसा बाह्यां चेष्टां प्रतिप-

द्यते— 'मनसा ह्येव पश्यति मनसा शृणोति' इति ब्राह्मणम् । कथं पुनः वाग्ज्योतिरिति, वाचो ज्योतिष्ट्वमप्रसिद्धमित्यत आह— तस्माद्वै सम्राट्, यस्मात् वाचा ज्योतिषा अनुगृहीतोऽयं पुरुषो व्यवहरति, तस्मात् प्रसिद्धमेतद्वाचो ज्योतिष्ट्वम्; कथम्? अपि— यत्र यस्मिन्काले प्रावृषि प्रायेण मेघान्धकारे सर्वज्योतिःप्रत्यस्तमये स्वोऽपि पाणिः हस्तः न विस्पष्टं निर्ज्ञायते— अथ तस्मिन्काले सर्वचेष्टानिरोधे प्राप्ते बाह्यज्योतिषोऽभावात् यत्र वागुच्चरति, श्वा वा भषति, गर्दभो वा रौति, उपैव तत्र न्येति— तेन शब्देन ज्योतिषा श्रोत्रमनसोर्नैरन्तर्यं भवति, तेन ज्योतिष्कार्यत्वं वाक् प्रतिपद्यते, तेन वाचा ज्योतिषा उपन्येत्येव उपगच्छत्येव तत्र संनिहितो भवतीत्यर्थः; तत्र च कर्म कुरुते, विपल्येति । तत्र वाग्ज्योतिषो ग्रहणं गन्धादीनामुपलक्षणार्थम्; गन्धादिभिरपि हि घ्राणादिष्वनुगृहीतेषु प्रवृत्तिनिवृत्त्यादयो भवन्ति; तेन तैरप्यनुग्रहो भवति कार्यकरणसंघातस्य । एवमेवैतद्याज्ञवल्क्य ॥

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्य-**

**यते कर्म कुरुते विपल्येतीति ॥ ६ ॥**

शान्तायां पुनर्वाचि, गन्धादिष्वपि च शान्तेषु बाह्येष्वनुग्राहकेषु, सर्वप्रवृत्तिनिरोधः प्राप्तोऽस्य पुरुषस्य । एतदुक्तं भवति— जाग्रद्विषये बहिर्मुखानि करणानि चक्षुरादीनि आदित्यादिज्योतिर्भिरनुगृह्यमाणानि यदा, तदा स्फुटतरः संव्यवहारोऽस्य पुरुषस्य भवतीति; एवं तावत् जागरिते स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्य पुरुषस्य दृष्टा; तस्मात् ते वयं मन्यामहे— सर्वबाह्यज्योतिःप्रत्यस्तमयेऽपि स्वप्नसुषुप्तकाले जागरिते च तादृगवस्थायां स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्येति; दृश्यते च स्वप्ने ज्योतिष्कार्यसिद्धिः— बन्धुसंगमनवियोगदर्शनं देशान्तरगमनादि च; सुषुप्ताच्च उत्थानम्— सुखमहमस्वाप्सं न किंचिदवेदिषमिति; तस्मादस्ति व्यतिरिक्तं किमपि ज्योतिः; किं पुनस्तत् शान्तायां वाचि ज्योतिः भवतीति । उच्यते—आत्मैवास्य ज्योतिर्भवतीति । आत्मेति कार्यकरणस्वावयवसंघातव्यतिरिक्तं कार्यकरणावभासकम् आदित्यादिबाह्यज्योतिर्वत् स्वयमन्येनानवभास्यमानम् अभिधीयते ज्योतिः; अन्तःस्थं च तत् पारिशेष्यात्— कार्यकरणव्यतिरिक्तं तदिति तावत्सिद्धम्; यच्च

कार्यकरणव्यतिरिक्तं कार्यकरणसंघातानुग्राहकं च ज्योतिः तत् बाह्यैश्चक्षुरादिकरणैरुपलभ्यमानं दृष्टम्; न तु तथा तत् चक्षुरादिभिरुपलभ्यते, आदित्यादिज्योतिःषु उपरतेषु; कार्यं तु ज्योतिषो दृश्यते यस्मात्, तस्मात् आत्मनैवायं ज्योतिषा आस्ते पल्ययते कर्म कुरुते विपल्येतीति; तस्मात् नूनम् अन्तःस्थं ज्योतिरित्यवगम्यते। किंच आदित्यादिज्योतिर्विलक्षणं तत् अभौतिकं च; स एव हेतुः यत् चक्षुराद्यग्राह्यत्वम्, आदित्यादिवत् ॥

न, समानजातीयेनैवोपकारदर्शनात्— यत् आदित्यादिविलक्षणं ज्योतिरान्तरं सिद्धमिति, एतदसत्; कस्मात्? उपक्रियमाणसमानजातीयेनैव आदित्यादिज्योतिषा कार्यकरणसंघातस्य भौतिकस्य भौतिकेनैव उपकारः क्रियमाणो दृश्यते; यथादृष्टं चेदम् अनुमेयम्; यदि नाम कार्यकरणादर्थान्तरं तदुपकारकम् आदित्यादिवत् ज्योतिः, तथापि कार्यकरणसंघातसमानजातीयमेवानुमेयम्, कार्यकरणसंघातोपकारकत्वात्, आदित्यादिज्योतिर्वत्। यत्पुनः अन्तःस्थत्वादप्रत्यक्षत्वाच्च वैलक्षण्यमुच्यते, तत् चक्षुरादिज्योतिर्भिः अनैकान्तिकम्; यतः अप्रत्यक्षाणि अन्तःस्थानि च चक्षुरादिज्योतींषि भौतिकान्येव। तस्मात् तव मनोरथमात्रम्— विलक्षणमात्मज्योतिः सिद्धमिति। कार्यकरणसंघातभावभावित्वाच्च

संघातधर्मत्वमनुमीयते ज्योतिषः । सामान्यतो दृष्टस्य च अनुमानस्य व्यभिचारित्वादप्रामाण्यम्; सामान्यतो दृष्टबलेन हि भवान् आदित्यादिवत् व्यतिरिक्तं ज्योतिः साधयति कार्यकरणेभ्यः ; न च प्रत्यक्षम् अनुमानेन बाधितुं शक्यते ; अयमेव तु कार्यकरणसंघातः प्रत्यक्षं पश्यति शृणोति मनुते विजानाति च; यदि नाम ज्योतिरन्तरमस्य उपकारकं स्यात् आदित्यादिवत्, न तत् आत्मा स्यात् ज्योतिरन्तरम् आदित्यादिवदेव; य एव तु प्रत्यक्षं दर्शनादिक्रियां करोति, स एव आत्मा स्यात् कार्यकरणसंघातः, नान्यः, प्रत्यक्षविरोधे अनुमानस्याप्रामाण्यात् । ननु अयमेव चेत् दर्शनादिक्रियाकर्ता आत्मा संघातः, कथम् अविकलस्यैवास्य दर्शनादिक्रियाकर्तृत्वं कदाचिद्भवति, कदाचिन्नेति— नैष दोषः, दृष्टत्वात्; न हि दृष्टेऽनुपपन्नं नाम; न हि खद्योते प्रकाशाप्रकाशकत्वेन दृश्यमाने कारणान्तरमनुमेयम्; अनुमेयत्वे च केनचित्सामान्यात् सर्वं सर्वत्रानुमेयं स्यात्; तच्चानिष्टम्; न च पदार्थस्वभावो नास्ति; न हि अग्नेः उष्णस्वाभाव्यम् अन्यनिमित्तम्, उदकस्य वा शैत्यम्; प्राणिधर्माधर्माद्यपेक्षमिति चेत्, धर्माधर्मादेर्निमित्तान्तरापेक्षस्वभावप्रसङ्गः; अस्त्विति चेत्, न, तदनवस्थाप्रसङ्गः; स चानिष्टः ॥

न, स्वप्नस्मृत्योर्दृष्टस्यैव दर्शनात्— यदुक्तं स्वभाववा-

दिना, देहस्यैव दर्शनादिक्रिया न व्यतिरिक्तस्येति, तन्न; यदि हि देहस्यैव दर्शनादिक्रिया, स्वप्ने दृष्टस्यैव दर्शनं न स्यात्; अन्धः स्वप्नं पश्यन् दृष्टपूर्वमेव पश्यति, न शाकद्वीपादिगतमदृष्टरूपम्; ततश्च एतत्सिद्धं भवति— यः स्वप्ने पश्यति दृष्टपूर्वं वस्तु, स एव पूर्वं विद्यमाने चक्षुषि अद्राक्षीत्, न देह इति; देहश्चेत् द्रष्टा, स येनाद्राक्षीत् तस्मिन्नुद्धृते चक्षुषि स्वप्ने तदेव दृष्टपूर्वं न पश्येत्; अस्ति च लोके प्रसिद्धिः— पूर्वं दृष्टं मया हिमवतः शृङ्गम् अद्याहं स्वप्नेऽद्राक्षमिति उद्धृतचक्षुषामन्धानामपि; तस्मात् अनुद्धृतेऽपि चक्षुषि, यः स्वप्नदृक् स एव द्रष्टा, न देह इत्यवगम्यते। तथा स्मृतौ द्रष्टृस्मर्त्रोः एकत्वे सति, य एव द्रष्टा स एव स्मर्ता; यदा चैवं तदा निमीलिताक्षोऽपि स्मरन् दृष्टपूर्वं यद्रूपं तत् दृष्टवदेव पश्यतीति; तस्मात् यत् निमीलितं तन्न द्रष्टृ; यत् निमीलिते चक्षुषि स्मरत् रूपं पश्यति, तदेव अनिमीलितेऽपि चक्षुषि द्रष्टृ आसीदित्यवगम्यते। मृते च देहे अविकलस्यैव च रूपादिदर्शनाभावात्— देहस्यैव द्रष्टृत्वे मृतेऽपि दर्शनादिक्रिया स्यात्। तस्मात् यदपाये देहे दर्शनं न भवति, यद्भावे च भवति, तत् दर्शनादिक्रियाकर्तृ, न देह इत्यवगम्यते। चक्षुरादीन्येव दर्शनादिक्रियाकर्तॄणीति चेत्, न, यदहमद्राक्षं तत्स्पृशामीति भिन्नकर्तृकत्वे प्रतिसंधा-

नानुपपत्तेः । मनस्तर्हीति चेत्, न, मनसोऽपि विषयत्वात् रूपादिवत् द्रष्टृत्वाद्यनुपपत्तिः । तस्मात् अन्तःस्थं व्यतिरिक्तम् आदित्यादिवदिति सिद्धम् । यदुक्तम्— कार्यकरणसंघातसमानजातीयमेव ज्योतिरन्तरमनुमेयम्, आदित्यादिभिः तत्समानजातीयैरेव उपक्रियमाणत्वादिति— तदसत्, उपकार्योपकारकभावस्यानियमदर्शनात्; कथम्? पार्थिवैरिन्धनैः पार्थिवत्वसमानजातीयैस्तृणोलपादिभिः अग्नेः प्रज्वलनोपकारः क्रियमाणो दृश्यते; न च तावता तत्समानजातीयैरेव अग्नेः प्रज्वलनोपकारः सर्वत्रानुमेयः स्यात्, येन उदकेनापि प्रज्वलनोपकारः भिन्नजातीयेन वैद्युतस्याग्नेः जाठरस्य च क्रियमाणो दृश्यते; तस्मात् उपकार्योपकारकभावे समानजातीयासमानजातीयनियमो नास्ति; कदाचित् समानजातीया मनुष्या मनुष्यैरेवोपक्रियन्ते, कदाचित् स्थावरपश्वादिभिश्च भिन्नजातीयैः; तस्मात् अहेतुः कार्यकरणसंघातसमानजातीयैरेव आदित्यादिज्योतिर्भिरुपक्रियमाणत्वादिति । यत्पुनरात्थ— चक्षुरादिभिः आदित्यादिज्योतिर्वत् अदृश्यत्वात् इत्ययं हेतुः ज्योतिरन्तरस्य अन्तःस्थत्वं वैलक्षण्यं च न साधयति, चक्षुरादिभिरनैकान्तिकत्वादिति— तदसत्, चक्षुरादिकरणेभ्योऽन्यत्वे सतीति हेतोर्विशेषणत्वोपपत्तेः । कार्यकरणसंघातधर्मत्वं ज्योतिष इति यदुक्तम्, तन्न, अनु-

मानविरोधात्; आदित्यादिज्योतिर्वत् कार्यकरणसंघाताद्-र्थान्तरं ज्योतिरिति हि अनुमानमुक्तम्; तेन विरुध्यते इयं प्रतिज्ञा— कार्यकरणसंघातधर्मत्वं ज्योतिष इति । तद्भा-वभावित्वं तु असिद्धम्, मृते देहे ज्योतिषः अदर्शनात् । सामान्यतो दृष्टस्यानुमानस्य अप्रामाण्ये सति पानभोजना-दिसर्वव्यवहारलोपप्रसङ्गः; स चानिष्टः; पानभोजनादिषु हि क्षुत्पिपासादिनिवृत्तिमुपलब्धवतः तत्सामान्यात् पान-भोजनाद्युपादानं दृश्यमानं लोके न प्राप्नोति; दृश्यन्ते हि उपलब्धपानभोजनाः सामान्यतः पुनः पानभोजनान्तरैः क्षुत्पिपासादिनिवृत्तिमनुमिन्वन्तः तादर्थ्येन प्रवर्तमानाः । यदुक्तम्— अयमेव तु देहो दर्शनादिक्रियाकर्तेति, तत् प्रथ-ममेव परिहृतम्—स्वप्नस्मृत्योः देहादर्थान्तरभूतो द्रष्टेति । अने-नैव ज्योतिरन्तरस्य अनात्मत्वमपि प्रत्युक्तम् । यत्पुनः ख-द्योतादेः कादाचित्कं प्रकाशाप्रकाशकत्वम्, तदसत्, पक्षाद्य-वयवसंकोचविकासनिमित्तत्वात् प्रकाशाप्रकाशकत्वस्य । य-त्पुनरुक्तम्, धर्माधर्मयोरवश्यं फलदातृत्वं स्वभावोऽभ्युप-गन्तव्य इति— तदभ्युपगमे भवतः सिद्धान्तहानात् । एतेन अनवस्थादोषः प्रत्युक्तः । तस्मात् अस्ति व्यतिरिक्तं च अ-न्तःस्थं ज्योतिः आत्मेति ॥

**कतम आत्मेति योऽयं विज्ञानमयः**

**प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥**

यद्यपि व्यतिरिक्तत्वादि सिद्धम्, तथापि समानजातीयानुग्राहकत्वदर्शननिमित्तभ्रान्त्या करणानामेवान्यतमः व्यतिरिक्तो वा इत्यविवेकतः पृच्छति— कतम इति; न्यायसूक्ष्मताया दुर्विज्ञेयत्वात् उपपद्यते भ्रान्तिः । अथवा शरीरव्यतिरिक्ते सिद्धेऽपि करणानि सर्वाणि विज्ञानवन्तीव, विवेकत आत्मनः अनुपलब्धत्वात्; अतोऽहं पृच्छामि— कतम आत्मेति; कतमोऽसौ देहेन्द्रियप्राणमनःसु, यः त्वयोक्तः आत्मा, येन ज्योतिषास्त इत्युक्तम् । अथवा योऽयमात्मा त्वया अभिप्रेतो विज्ञानमयः, सर्वे इमे प्राणा विज्ञानमया इव, एषु प्राणेषु कतमः— यथा समुदितेषु ब्राह्मणेषु, सर्वे इमे तेजस्विनः कतम एषु षडङ्गविदिति । पूर्वस्मिन्व्याख्याने कतम आत्मेत्येतावदेव प्रश्नवाक्यम्, योऽयं विज्ञानमय इति प्रतिवचनम्; द्वितीये तु व्याख्याने प्राणेष्वित्येवमन्तं प्रश्नवाक्यम् । अथवा सर्वमेव प्रश्नवाक्यम्— विज्ञानमयो हृद्यन्तर्ज्योतिः पुरुषः कतम

इत्येतदन्तम् । योऽयं विज्ञानमय इत्येतस्य शब्दस्य निर्धारितार्थविशेषविषयत्वम्, कतम आत्मेतीतिशब्दस्य प्रश्नवाक्यपरिसमाप्त्यर्थत्वम्— व्यवहितसंबन्धमन्तरेण युक्तमिति कृत्वा, कतम आत्मेतीत्येवमन्तमेव प्रश्नवाक्यम्, योऽयमित्यादि परं सर्वमेव प्रतिवचनमिति निश्चीयते ॥

योऽयमिति आत्मनः प्रत्यक्षत्वान्निर्देशः; विज्ञानमयः विज्ञानप्रायः बुद्धिविज्ञानोपाधिसंपर्काविवेकाद्विज्ञानमय इत्युच्यते— बुद्धिविज्ञानसंपृक्त एव हि यस्मादुपलभ्यते, राहुरिव चन्द्रादित्यसंपृक्तः; बुद्धिर्हि सर्वार्थकरणम्, तमसीव प्रदीपः पुरोवस्थितः; 'मनसा ह्येव पश्यति मनसा शृणोति' इति ह्युक्तम्; बुद्धिविज्ञानालोकविशिष्टमेव हि सर्वं विषयजातमुपलभ्यते, पुरोवस्थितप्रदीपालोकविशिष्टमिव तमसि; द्वारमात्राणि तु अन्यानि करणानि बुद्धेः; तस्मात् तेनैव विशेष्यते— विज्ञानमय इति । येषां परमात्मविज्ञप्तिविकार इति व्याख्यानम्, तेषाम् 'विज्ञानमयः' 'मनोमयः' इत्यादौ विज्ञानमयशब्दस्य अन्यार्थदर्शनात् अश्रौतार्थता अवसीयते; संदिग्धश्च पदार्थः अन्यत्र निश्चितप्रयोगदर्शनात् निर्धारयितुं शक्यः, वाक्यशेषात्, निश्चितन्यायबलाद्वा; सधीरिति चोत्तरत्र पाठात् । 'हृद्यन्तः' इति वचनात् युक्तं विज्ञानप्रायत्वमेव । प्राणेष्विति व्यति-

रेकप्रदर्शनार्था सप्तमी— यथा वृक्षेषु पाषाण इति सामीप्यलक्षणा; प्राणेषु हि व्यतिरेकाव्यतिरेकता संदिह्यत आत्मनः; प्राणेषु प्राणेभ्यो व्यतिरिक्त इत्यर्थः; यो हि येषु भवति, स तद्व्यतिरिक्तो भवत्येव—यथा पाषाणेषु वृक्षः। हृदि—तत्रैतत्स्यात्, प्राणेषु प्राणजातीयैव बुद्धिः स्यादिति, अत आह—हृद्यन्तरिति। हृच्छब्देन पुण्डरीकाकारो मांसपिण्डः, तात्स्थ्यात् बुद्धिः हृत्, तस्याम्, हृदि बुद्धौ। अन्तरिति बुद्धिवृत्तिव्यतिरेकप्रदर्शनार्थम्। ज्योतिः अवभासात्मकत्वात् आत्मा उच्यते। तेन हि अवभासकेन आत्मना ज्योतिषा आस्ते पल्ययते कर्म कुरुते, चेतनावानिव हि अयं कार्यकरणपिण्डः— यथा आदित्यप्रकाशस्थो घटः; यथा वा मरकतादिर्मणिः क्षीरादिद्रव्ये प्रक्षिप्तः परीक्षणाय, आत्मच्छायमेव तत् क्षीरादिद्रव्यं करोति, तादृगेतत् आत्मज्योतिः बुद्धेरपि हृदयात् सूक्ष्मत्वात् हृद्यन्तःस्थमपि हृदयादिकं कार्यकरणसंघातं च एकीकृत्य आत्मज्योतिश्छायं करोति, पारम्पर्येण सूक्ष्मस्थूलतारतम्यात्, सर्वान्तरतमत्वात्। बुद्धिस्तावत् स्वच्छत्वात् आनन्तर्याच्च आत्मचैतन्यज्योतिःप्रतिच्छाया भवति; तेन हि विवेकिनामपि तत्र आत्माभिमानबुद्धिः प्रथमा; ततोऽप्यानन्तर्यात् मनसि चैतन्यावभासता, बुद्धिसंपर्कात्; तत इन्द्रियेषु, मनःसंयोगात्; ततोऽनन्तरं

शरीरे, इन्द्रियसंपर्कात् । एवं पारम्पर्येण कृत्स्नं कार्यकरणसंघातम् आत्मा चैतन्यस्वरूपज्योतिषा अवभासयति । तेन हि सर्वस्य लोकस्य कार्यकरणसंघाते तद्वृत्तिषु च अनियतात्माभिमानबुद्धिः यथाविवेकं जायते । तथा च भगवतोक्तं गीतासु— 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत' 'यदादित्यगतं तेजः—' इत्यादि च । 'नित्योऽनित्यानां चेतनश्चेतनानाम्' इति च काठके, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति च । 'येन सूर्यस्तपति तेजसेद्धः' इति च मन्त्रवर्णः । तेनायं हृद्यन्तर्ज्योतिः । पुरुषः— आकाशवत्सर्वगतत्वात् पूर्ण इति पुरुषः ; निरतिशयं च अस्य स्वयंज्योतिष्ट्वम्, सर्वावभासकत्वात् स्वयमन्यानवभास्यत्वाच्च ; स एष पुरुषः स्वयमेव ज्योतिःस्वभावः, यं त्वं पृच्छसि— कतम आत्मेति ॥

बाह्यानां ज्योतिषां सर्वकरणानुग्राहकाणां प्रत्यस्तमये अन्तःकरणद्वारेण हृद्यन्तर्ज्योतिः पुरुष आत्मा अनुग्राहकः करणानामित्युक्तम् । यदापि बाह्यकरणानुग्राहकाणाम् आदित्यादिज्योतिषां भावः, तदापि आदित्यादिज्योतिषां परार्थत्वात् कार्यकरणसंघातस्याचैतन्ये स्वार्थानुपपत्तेः स्वार्थज्योतिष आत्मनः अनुग्रहाभावे अयं कार्यकरणसंघातः न

व्यवहाराय कल्पते; आत्मज्योतिरनुग्रहेणैव हि सर्वदा सर्वः संव्यवहारः, 'यदेतद्धृदयं मनश्चैतत्संज्ञानम्' इत्यादिश्रुत्यन्तरात्; साभिमानो हि सर्वप्राणिसंव्यवहारः; अभिमानहेतुं च मरकतमणिदृष्टान्तेनावोचाम । यद्यप्येवमेतत्, तथापि जाग्रद्विषये सर्वकरणागोचरत्वात् आत्मज्योतिषः बुद्ध्यादिबाह्याभ्यन्तरकार्यकरणव्यवहारसंनिपातव्याकुलत्वात् न शक्यते तज्ज्योतिः आत्माख्यं मुञ्जेषीकावत् निष्कृष्य दर्शयितुमित्यतः स्वप्ने दिदर्शयिषुः प्रक्रमते— स समानः सन्नुभौ लोकावनुसंचरति । यः पुरुषः स्वयमेव ज्योतिरात्मा, स समानः सदृशः सन्— केन? प्रकृतत्वात् संनिहितत्वाच्च हृदयेन; 'हृदि' इति च हृच्छब्दवाच्या बुद्धिः प्रकृता संनिहिता च; तस्मात् तयैव सामान्यम् । किं पुनः सामान्यम्? अश्वमहिषवत् विवेकतोऽनुपलब्धिः; अवभास्या बुद्धिः, अवभासकं तत् आत्मज्योतिः, आलोकवत्; अवभास्यावभासकयोः विवेकतोऽनुपलब्धिः प्रसिद्धा; विशुद्धत्वाद्धि आलोकः अवभास्येन सदृशो भवति; यथा रक्तमवभासयन् रक्तसदृशो रक्ताकारो भवति, यथा हरितं नीलं लोहितं च अवभासयन् आलोकः तत्समानो भवति, तथा बुद्धिमवभासयन् बुद्धिद्वारेण कृत्स्नं क्षेत्रमवभासयति— इत्युक्तं मरकतमणिनिदर्शनेन । तेन सर्वेण

समानः बुद्धिसामान्यद्वारेण; 'सर्वमयः' इति च अत एव वक्ष्यति। तेन असौ कुतश्चित्प्रविभज्य मुञ्जेषीकावत् स्वेन ज्योतीरूपेण दर्शयितुं न शक्यत इति, सर्वव्यापारं तत्राध्यारोप्य नामरूपगतम्, ज्योतिर्धर्मं च नामरूपयोः, नामरूपे च आत्मज्योतिषि, सर्वो लोकः मोमुह्यते— अयमात्मा नायमात्मा, एवंधर्मा नैवंधर्मा, कर्ता अकर्ता, शुद्धः अशुद्धः, बद्धः मुक्तः, स्थितः गतः आगतः, अस्ति नास्ति— इत्यादिविकल्पैः। अतः समानः सन् उभौ लोकौ प्रतिपन्नप्रतिपत्तव्यौ इहलोकपरलोकौ उपात्तदेहेन्द्रियादिसंघातत्यागान्योपादानसंतानप्रबन्धशतसंनिपातैः अनुक्रमेण संचरति। धीसादृश्यमेवोभयलोकसंचरणहेतुः, न स्वत इति— तत्र नामरूपोपाधिसादृश्यं भ्रान्तिनिमित्तं यत् तदेव हेतुः, न स्वतः— इत्येतदुच्यते— यस्मात् सः समानः सन् उभौ लोकावनुक्रमेण संचरति— तदेतत् प्रत्यक्षम् इत्येतत् दर्शयति— यतः ध्यायतीव ध्यानव्यापारं करोतीव, चिन्तयतीव, ध्यानव्यापारवतीं बुद्धिं सः तत्स्थेन चित्स्वभावज्योतीरूपेण अवभासयन् तत्सदृशः तत्समानः सन् ध्यायति इव, आलोकवदेव— अतः भवति चिन्तयतीति भ्रान्तिर्लोकस्य; न तु परमार्थतो ध्यायति। तथा लेलायतीव अत्यर्थं चलतीव, तेष्वेव करणेषु बुद्ध्यादिषु वायुषु च चलत्सु तदवभासकत्वात् तत्स-

दृशं तदिति— लेलायति इव, न तु परमार्थतः चलनधर्मकं तत् आत्मज्योतिः । कथं पुनः एतदवगम्यते, तत्समानत्व-भ्रान्तिरेव उभयलोकसंचरणादिहेतुः न स्वतः— इत्यस्यार्थस्य प्रदर्शनाय हेतुरुपदिश्यते— सः आत्मा, हि यस्मात् स्वप्नो भूत्वा— सः यया धिया समानः, सा धीः यद्यत् भवति, तत्तत् असावपि भवतीव; तस्मात् यदा असौ स्वप्नो भवति स्वापवृत्तिं प्रतिपद्यते धीः, तदा सोऽपि स्वप्नवृत्तिं प्रतिपद्यते; यदा धीः जिजागरिषति, तदा असावपि; अत आह— स्वप्नो भूत्वा स्वप्नवृत्तिमवभासयन् धियः स्वापवृत्त्याकारो भूत्वा इमं लोकम् जागरितव्यवहारलक्षणं कार्य-करणसंघातात्मकं लौकिकशास्त्रीयव्यवहारास्पदम्, अतिक्रामति अतीत्य क्रामति विविक्तेन स्वेन आत्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन्नवतिष्ठते यस्मात्— तस्मात् स्वयंज्योतिः-स्वभाव एवासौ, विशुद्धः स कर्तृक्रियाकारकफलशून्यः परमार्थतः, धीसादृश्यमेव तु उभयलोकसंचारादिसंव्यवहार-भ्रान्तिहेतुः । मृत्यो रूपाणि— मृत्युः कर्माविद्यादिः, न तस्य अन्यद्रूपं स्वतः, कार्यकरणान्येव अस्य रूपाणि, अतः तानि मृत्यो रूपाणि अतिक्रामति क्रियाफलाश्रयाणि ॥

ननु नास्त्येव धिया समानम् अन्यत् धियोऽवभासकम्

आत्मज्योतिः, धीव्यतिरेकेण प्रत्यक्षेण वा अनुमानेन वा अनुपलम्भात्— यथा अन्या तत्काल एव द्वितीया धीः । यत्तु अवभास्यावभासकयोः अन्यत्वेऽपि विवेकानुपलम्भात् सादृश्यमिति घटाद्यालोकयोः— तत्र भवतु, अन्यत्वेन आलोकस्योपलम्भात् घटादेः, संश्लिष्टयोः सादृश्यं भिन्नयोरेव; न च तथा इह घटादेरिव धियोऽवभासकं ज्योतिरन्तरं प्रत्यक्षेण वा अनुमानेन वा उपलभामहे; धीरेव हि चित्स्वरूपावभासकत्वेन स्वाकारा विषयाकारा च; तस्मात् नानुमानतः नापि प्रत्यक्षतः धियोऽवभासकं ज्योतिः शक्यते प्रतिपादयितुं व्यतिरिक्तम् । यदपि दृष्टान्तरूपमभिहितम्—अवभास्यावभासकयोर्भिन्नयोरेव घटाद्यालोकयोः संयुक्तयोः सादृश्यमिति —तत्र अभ्युपगममात्रमस्माभिरुक्तम्; न तु तत्र घटाद्यवभास्यावभासकौ भिन्नौ; परमार्थतस्तु घटादिरेव अवभासात्मकः सालोकः; अन्यः अन्यः हि घटादिरुत्पद्यते; विज्ञानमात्रमेव सालोकघटादिविषयाकारमवभासते; यदा एवम्, तदा न बाह्यो दृष्टान्तोऽस्ति, विज्ञानस्वलक्षणमात्रत्वात्सर्वस्य । एवं तस्यैव विज्ञानस्य ग्राह्यग्राहकाकारताम् अलं परिकल्प्य, तस्यैव पुनर्विशुद्धिं परिकल्पयन्ति । तत् ग्राह्यग्राहकविनिर्मुक्तं विज्ञानं स्वच्छीभूतं क्षणिकं व्यवतिष्ठत इति केचित् । तस्यापि शान्तिं केचिदिच्छन्ति; तदपि विज्ञानं संवृतं ग्राह्यग्राहकांश-

विनिर्मुक्तं शून्यमेव घटादिबाह्यवस्तुवत् इत्यपरे माध्यमिका आचक्षते ॥

सर्वा एताः कल्पनाः बुद्धिविज्ञानावभासकस्य व्यतिरिक्तस्य आत्मज्योतिषोऽपह्नवात् अस्य श्रेयोमार्गस्य प्रतिपक्षभूता वैदिकस्य। तत्र येषां बाह्योऽर्थः अस्ति, तान्प्रत्युच्यते — न तावत् स्वात्मावभासकत्वं घटादेः; तमसि अवस्थितः घटादिस्तावत् न कदाचिदपि स्वात्मना अवभास्यते, प्रदीपाद्यालोकसंयोगेन तु नियमेनैवावभास्यमानो दृष्टः सालोको घट इति— संश्लिष्टयोरपि घटालोकयोः अन्यत्वमेव, पुनः पुनः संश्लेषे विश्लेषे च विशेषदर्शनात्, रज्जुघटयोरिव; अन्यत्वे च व्यतिरिक्तावभासकत्वम्; न स्वात्मनैव स्वमात्मानमवभासयति। ननु प्रदीपः स्वात्मानमेव अवभासयन् दृष्ट इति—न हि घटादिवत् प्रदीपदर्शनाय प्रकाशान्तरम् उपाददते लौकिकाः; तस्मात् प्रदीपः स्वात्मानं प्रकाशयति—न, अवभास्यत्वाविशेषात्— यद्यपि प्रदीपः अन्यस्यावभासकः स्वयमवभासात्मकत्वात्, तथापि व्यतिरिक्तचैतन्यावभास्यत्वं न व्यभिचरति, घटादिवदेव; यदा चैवम्, तदा व्यतिरिक्तावभास्यत्वं तावत् अवश्यंभावि। ननु यथा घटः चैतन्यावभास्यत्वेऽपि व्यतिरिक्तमालोकान्तरमपेक्षते, न त्वेवं प्रदीपः अन्यमालोकान्तरमपेक्षते; तस्मात् प्रदीपः

अन्यावभास्योऽपि सन् आत्मानं घटं च अवभासयति— न, स्वतः परतो वा विशेषाभावात्— यथा चैतन्यावभास्यत्वं घटस्य, तथा प्रदीपस्यापि चैतन्यावभास्यत्वमविशिष्टम् । यत्तूच्यते, प्रदीप आत्मानं घटं चावभासयतीति, तदसत्; कस्मात्? यदा आत्मानं नावभासयति, तदा कीदृशः स्यात्; न हि तदा प्रदीपस्य स्वतो वा परतो वा विशेषः कश्चिदुपलभ्यते; स हि अवभास्यो भवति, यस्यावभासकसंनिधौ असंनिधौ च विशेष उपलभ्यते; न हि प्रदीपस्य स्वात्मसंनिधिः असंनिधिर्वा शक्यः कल्पयितुम्; असति च कादाचित्के विशेषे, आत्मानं प्रदीपः प्रकाशयतीति मृषैवोच्यते । चैतन्यग्राह्यत्वं तु घटादिभिरविशिष्टं प्रदीपस्य । तस्मात् विज्ञानस्य आत्मग्राह्यग्राहकत्वे न प्रदीपो दृष्टान्तः । चैतन्यग्राह्यत्वं च विज्ञानस्य बाह्यविषयैः अविशिष्टम्; चैतन्यग्राह्यत्वे च विज्ञानस्य, किं ग्राह्यविज्ञानग्राह्यतैव किं वा ग्राहकविज्ञानग्राह्यतेति तत्र संदिह्यमाने वस्तुनि, योऽन्यत्र दृष्टो न्यायः, स कल्पयितुं युक्तः, न तु दृष्टविपरीतः; तथा च सति यथा व्यतिरिक्तेनैव ग्राहकेण बाह्यानां प्रदीपानां ग्राह्यत्वं दृष्टम्, तथा विज्ञानस्यापि चैतन्यग्राह्यत्वात् प्रकाशकत्वे सत्यपि प्रदीपवत् व्यतिरिक्तचैतन्यग्राह्यत्वं युक्तं कल्पयितुम्, न तु अनन्यग्राह्यत्वम्; यश्चान्यः विज्ञानस्य ग्रहीता, स

आत्मा ज्योतिरन्तरं विज्ञानात् । तदा अनवस्थेति चेत्, न; ग्राह्यत्वमात्रं हि तद्ग्राहकस्य वस्त्वन्तरत्वे लिङ्गमुक्तं न्यायतः; न तु एकान्ततो ग्राहकत्वे तद्ग्राहकान्तरास्तित्वे वा कदाचिदपि लिङ्गं संभवति; तस्मात् न तदनवस्थाप्रसङ्गः । विज्ञानस्य व्यतिरिक्तग्राह्यत्वे करणान्तरापेक्षायाम् अनवस्थेति चेत्, न, नियमाभावात्— न हि सर्वत्र अयं नियमो भवति; यत्र वस्त्वन्तरेण गृह्यते वस्त्वन्तरम्, तत्र ग्राह्यग्राहकव्यतिरिक्तं करणान्तरं स्यादिति नैकान्तेन नियन्तुं शक्यते, वैचित्र्यदर्शनात्; कथम्? घटस्तावत् स्वात्मव्यतिरिक्तेन आत्मना गृह्यते; तत्र प्रदीपादिरालोकः ग्राह्यग्राहकव्यतिरिक्तं करणम्; न हि प्रदीपाद्यालोकः घटांशः चक्षुरंशो वा; घटवत् चक्षुर्ग्राह्यत्वेऽपि प्रदीपस्य, चक्षुः प्रदीपव्यतिरेकेण न बाह्यमालोकस्थानीयं किंचित्करणान्तरमपेक्षते; तस्मात् नैव नियन्तुं शक्यते— यत्र यत्र व्यतिरिक्तग्राह्यत्वं तत्र तत्र करणान्तरं स्यादेवेति । तस्मात् विज्ञानस्य व्यतिरिक्तग्राहकग्राह्यत्वे न करणद्वारा अनवस्था, नापि ग्राहकत्वद्वारा कदाचिदपि उपपादयितुं शक्यते । तस्मात् सिद्धं विज्ञानव्यतिरिक्तमात्मज्योतिरन्तरमिति । ननु नास्त्येव बाह्योऽर्थः घटादिः प्रदीपो वा विज्ञानव्यतिरिक्तः; यद्धि यद्व्यतिरेकेण नोपलभ्यते, तत् तावन्मात्रं वस्तु दृष्टम्— यथा

स्वप्नविज्ञानग्राह्यं घटपटादिवस्तु; स्वप्नविज्ञानव्यतिरेकेणानुपलम्भात् स्वप्नघटप्रदीपादेः स्वप्नविज्ञानमात्रता अवगम्यते, तथा जागरितेऽपि घटप्रदीपादेः जाग्रद्विज्ञानव्यतिरेकेण अनुपलम्भात् जाग्रद्विज्ञानमात्रतैव युक्ता भवितुम्; तस्मात् नास्ति बाह्योऽर्थः घटप्रदीपादिः, विज्ञानमात्रमेव तु सर्वम्; तत्र यदुक्तम्, विज्ञानस्य व्यतिरिक्तावभास्यत्वात् विज्ञानव्यतिरिक्तमस्ति ज्योतिरन्तरं घटादेरिवेति, तन्मिथ्या, सर्वस्य विज्ञानमात्रत्वे दृष्टान्ताभावात् । न, यावत् तावदभ्युपगमात्— न तु बाह्योऽर्थः भवता एकान्तेनैव नाभ्युपगम्यते; ननु मया नाभ्युपगम्यत एव— न, विज्ञानं घटः प्रदीप इति च शब्दार्थपृथक्त्वात् यावत्, तावदपि बाह्यमर्थान्तरम् अवश्यमभ्युपगन्तव्यम्; विज्ञानादर्थान्तरं वस्तु न चेदभ्युपगम्यते, विज्ञानं घटः पट इत्येवमादीनां शब्दानाम् एकार्थत्वे पर्यायशब्दत्वं प्राप्नोति; तथा साधनानां फलस्य च एकत्वे, साध्यसाधनभेदोपदेशशास्त्रानर्थक्यप्रसङ्गः; तत्कर्तुः अज्ञानप्रसङ्गो वा । किंचान्यत्— विज्ञानव्यतिरेकेण वादिप्रतिवादिवाददोषाभ्युपगमात्; न हि आत्मविज्ञानमात्रमेव वादिप्रतिवादिवादः तद्दोषो वा अभ्युपगम्यते, निराकर्तव्यत्वात्, प्रतिवाद्यादीनाम्; न हि आत्मीयं विज्ञानं निराकर्तव्यमभ्युपगम्यते, स्वयं वा आत्मा कस्यचित्; तथा

च सति सर्वसंव्यवहारलोपप्रसङ्गः; न च प्रतिवाद्यादयः स्वात्मनैव गृह्यन्त इत्यभ्युपगमः; व्यतिरिक्तग्राह्या हि ते अभ्युपगम्यन्ते; तस्मात् तद्वत् सर्वमेव व्यतिरिक्तग्राह्यं वस्तु, जाग्रद्विषयत्वात्, जाग्रद्वस्तुप्रतिवाद्यादिवत्— इति सुलभो दृष्टान्तः— संतत्यन्तरवत्, विज्ञानान्तरवच्चेति। तस्मात् विज्ञानवादिनापि न शक्यं विज्ञानव्यतिरिक्तं ज्योतिरन्तरं निराकर्तुम्।स्वप्ने विज्ञानव्यतिरेकाभावात् अयुक्तमिति चेत्, न, अभावादपि भावस्य वस्त्वन्तरत्वोपपत्तेः— भवतैव तावत् स्वप्ने घटादिविज्ञानस्य भावभूतत्वमभ्युपगतम्; तत् अभ्युपगम्य तद्व्यतिरेकेण घटाद्यभाव उच्यते; स विज्ञानविषयो घटादिः यद्यभावः यदि वा भावः स्यात्, उभयथापि घटादिविज्ञानस्य भावभूतत्वमभ्युपगतमेव; न तु तत् निवर्तयितुं शक्यते, तन्निवर्तकन्यायाभावात्। एतेन सर्वस्य शून्यता प्रत्युक्ता। प्रत्यगात्मग्राह्यता च आत्मनः अहमिति मीमांसकपक्षः प्रत्युक्तः॥

यत्तूक्तम्, सालोकः अन्यश्च अन्यश्च घटो जायत इति, तदसत्, क्षणान्तरेऽपि स एवायं घट इति प्रत्यभिज्ञानात्। सादृश्यात् प्रत्यभिज्ञानं कृत्तोत्थितकेशनखादिष्विवेति चेत्, न, तत्रापि क्षणिकत्वस्य असिद्धत्वात्, जात्येकत्वाच्च। कृत्तेषु पुनरुत्थितेषु च केशनखादिषु केशनखत्वजातेरेक-

त्वात् केशनखत्वप्रत्ययः तन्निमित्तः अभ्रान्त एव; न हि दृश्यमानलूनोत्थितकेशनखादिषु व्यक्तिनिमित्तः स एवेति प्रत्ययो भवति; कस्यचित् दीर्घकालव्यवहितदृष्टेषु च तुल्यपरिमाणेषु, तत्कालीनबालादितुल्या इमे केशनखाद्या इति प्रत्ययो भवति, न तु त एवेति; घटादिषु पुनर्भवति स एवेति प्रत्ययः; तस्मात् न समो दृष्टान्तः। प्रत्यक्षेण हि प्रत्यभिज्ञायमाने वस्तुनि तदेवेति, न च अन्यत्वम् अनुमातुं युक्तम्, प्रत्यक्षविरोधे लिङ्गस्य आभासत्वोपपत्तेः। सादृश्यप्रत्ययानुपपत्तेश्च, ज्ञानस्य क्षणिकत्वात्; एकस्य हि वस्तुदर्शिनः वस्त्वन्तरदर्शने सादृश्यप्रत्ययः स्यात्; न तु वस्तुदर्शी एकः वस्त्वन्तरदर्शनाय क्षणान्तरमवतिष्ठते, विज्ञानस्य क्षणिकत्वात् सकृद्वस्तुदर्शनेनैव क्षयोपपत्तेः। तेन इदं सदृशमिति हि सादृश्यप्रत्ययो भवति; तेनेति दृष्टस्मरणम्, इदमिति वर्तमानप्रत्ययः; तेनेति दृष्टं स्मृत्वा, यावत् इदमिति वर्तमानक्षणकालम् अवतिष्ठेत, ततः क्षणिकवादहानिः; अथ तेनेत्येव उपक्षीणः स्मार्तः प्रत्ययः, इदमिति च अन्य एव वार्तमानिकः प्रत्ययः क्षीयते, ततः सादृश्यप्रत्ययानुपपत्तेः— तेनेदं सदृशमिति, अनेकदर्शिनः एकस्य अभावात्; व्यपदेशानुपपत्तिश्च— द्रष्टव्यदर्शनेनैव उपक्षयाद्विज्ञानस्य, इदं पश्यामि अदोऽद्राक्षमिति व्यपदेशानुपपत्तिः, दृष्टवतो व्यपदेशक्षणानवस्थानात्;

अथ अवतिष्ठेत, क्षणिकवादहानिः; अथ अदृष्टवतो व्यपदेशः सादृश्यप्रत्ययश्च, तदानीं जात्यन्धस्येव रूपविशेषव्यपदेशः तत्सादृश्यप्रत्ययश्च सर्वमन्धपरम्परेति प्रसज्येत सर्वज्ञशास्त्रप्रणयनादि; न चैतदिष्यते । अकृताभ्यागमकृतविप्रणाशदोषौ तु प्रसिद्धतरौ क्षणवादे । दृष्टव्यपदेशहेतुः पूर्वोत्तरसहित एक एव हि शृङ्खलावत् प्रत्ययो जायत इति चेत्, तेनेदं सदृशमिति च— न, वर्तमानातीतयोः भिन्नकालत्वात्—तत्र वर्तमानप्रत्यय एकः शृङ्खलावयवस्थानीयः, अतीतश्चापरः, तौ प्रत्ययौ भिन्नकालौ; तदुभयप्रत्ययविषयस्पृक् चेत् शृङ्खलाप्रत्ययः, ततः क्षणद्वयव्यापित्वादेकस्य विज्ञानस्य पुनः क्षणवादहानिः । ममतवतादिविशेषानुपपत्तेश्च सर्वसंव्यवहारलोपप्रसङ्गः ॥७

सर्वस्य च स्वसंवेद्यविज्ञानमात्रत्वे, विज्ञानस्य च स्वच्छावबोधावभासमात्रस्वाभाव्याभ्युपगमात्, तद्दर्शिनश्चान्यस्याभावे, अनित्यदुःखशून्यानात्मत्वाद्यनेककल्पनानुपपत्तिः । न च दाडिमादेरिव विरुद्धानेकांशवत्त्वं विज्ञानस्य, स्वच्छावभासस्वाभाव्याद्विज्ञानस्य । अनित्यदुःखादीनां विज्ञानांशत्वे च सति अनुभूयमानत्वात् व्यतिरिक्तविषयत्वप्रसङ्गः । अथ अनित्यदुःखाद्यात्मैकत्वमेव विज्ञानस्य, तदा तद्वियोगात् विशुद्धिकल्पनानुपपत्तिः; संयोगिमलवियोगाद्धि विशुद्धिर्भवति,

यथा आदर्शप्रभृतीनाम्; न तु स्वाभाविकेन धर्मेण कस्यचिद्वियोगो दृष्टः; न हि अग्नेः स्वाभाविकेन प्रकाशेन औष्ण्येन वा वियोगो दृष्टः; यदपि पुष्पगुणानां रक्तत्वादीनां द्रव्यान्तरयोगेन वियोजनं दृश्यते, तत्रापि संयोगपूर्वत्वमनुमीयते— बीजभावनया पुष्पफलादीनां गुणान्तरोत्पत्तिदर्शनात्; अतः विज्ञानस्य विशुद्धिकल्पनानुपपत्तिः। विषयविषय्याभासत्वं च यत् मलं परिकल्प्यते विज्ञानस्य, तदपि अन्यसंसर्गाभावात् अनुपपन्नम्; न हि अविद्यमानेन विद्यमानस्य संसर्गः स्यात्; असति च अन्यसंसर्गे, यो धर्मो यस्य दृष्टः, स तत्स्वभावत्वात् न तेन वियोगमर्हति— यथा अग्नेरौष्ण्यम्, सवितुर्वा प्रभा; तस्मात् अनित्यसंसर्गेण मलिनत्वं तद्विशुद्धिश्च विज्ञानस्येति इयं कल्पना अन्धपरम्परैव प्रमाणशून्येत्यवगम्यते। यदपि तस्य विज्ञानस्य निर्वाणं पुरुषार्थं कल्पयन्ति, तत्रापि फलाश्रयानुपपत्तिः; कण्टकविद्धस्य हि कण्टकवेधजनितदुःखनिवृत्तिः फलम्; न तु कण्टकविद्धमरणे तद्दुःखनिवृत्तिफलस्य आश्रय उपपद्यते; तद्वत् सर्वनिर्वाणे, असति च फलाश्रये, पुरुषार्थकल्पना व्यर्थैव; यस्य हि पुरुषशब्दवाच्यस्य सत्त्वस्य आत्मनो विज्ञानस्य च अर्थः परिकल्प्यते, तस्य पुनः पुरुषस्य निर्वाणे, कस्यार्थः पुरुषार्थ इति स्यात्। यस्य पुनः अस्ति अनेकार्थदर्शी विज्ञानव्यति-

रिक्त आत्मा, तस्य दृष्टस्मरणदुःखसंयोगवियोगादि सर्वमेव उपपन्नम्, अन्यसंयोगनिमित्तं कालुष्यम्, तद्वियोगनिमित्ता च विशुद्धिरिति । शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय न आदरः क्रियते ॥

**स वा अयं पुरुषो जायमानः शरीर-मभिसंपद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥**

यथैव इह एकस्मिन्देहे स्वप्नो भूत्वा मृत्यो रूपाणि कार्यकरणानि अतिक्रम्य स्वप्ने स्वे आत्मज्योतिषि आस्ते, एवं स वै प्रकृतः पुरुषः अयं जायमानः— कथं जायमान इत्युच्यते— शरीरं देहेन्द्रियसंघातमभिसंपद्यमानः, शरीरे आत्मभावमापद्यमान इत्यर्थः, पाप्मभिः पाप्मसमवायिभिर्धर्माधर्माश्रयैः कार्यकरणैरित्यर्थः, संसृज्यते संयुज्यते; स एव उत्क्रामन् शरीरान्तरम् ऊर्ध्वं क्रामन् गच्छन् म्रियमाण इत्येतस्य व्याख्यानमुत्क्रामन्निति, तानेव संश्लिष्टान् पाप्मरूपान् कार्यकरणलक्षणान्, विजहाति तैर्वियुज्यते, तान्परित्यजति । यथा अयं स्वप्नजाग्रद्वृत्त्योः वर्तमाने एव एकस्मिन्देहे पाप्मरूपकार्यकरणोपादानपरित्यागाभ्याम् अनवरतं संचरति धिया समानः सन्, तथा सोऽयं पुरुषः उभावि-

हलोकपरलोकौ, जन्ममरणाभ्यां कार्यकरणोपादानपरित्यागौ अनवरतं प्रतिपद्यमानः, आ संसारमोक्षात् संचरति। तस्मात् सिद्धम् अस्य आत्मज्योतिषः अन्यत्वं कार्यकरणरूपेभ्यः पाप्मभ्यः, संयोगवियोगाभ्याम्; न हि तद्धर्मत्वे सति, तैरेव संयोगः वियोगो वा युक्तः ॥

ननु न स्तः अस्य उभौ लोकौ, यौ जन्ममरणाभ्यामनुक्रमेण संचरति स्वप्नजागरिते इव; स्वप्नजागरिते तु प्रत्यक्षमवगम्येते, न त्विहलोकपरलोकौ केनचित्प्रमाणेन; तस्मात् एते एव स्वप्नजागरिते इहलोकपरलोकाविति। उच्यते—

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च संध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च। अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन**

**भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥**

तस्य एतस्य पुरुषस्य वै द्वे एव स्थाने भवतः, न तृतीयं चतुर्थं वा; के ते? इदं च यत् प्रतिपन्नं वर्तमानं जन्म शरीरेन्द्रियविषयवेदनाविशिष्टं स्थानं प्रत्यक्षतोऽनुभूयमानम्, परलोक एव स्थानम् परलोकस्थानम्— तच्च शरीरादिवियोगोत्तरकालानुभाव्यम् । ननु स्वप्नोऽपि परलोकः; तथा च सति द्वे एवेत्यवधारणमयुक्तम्— न; कथं तर्हि? संध्यं तत्— इहलोकपरलोकयोर्यः संधिः तस्मिन्भवं संध्यम्, यत् तृतीयं तत् स्वप्नस्थानम्; तेन स्थानद्वित्वावधारणम्; न हि ग्रामयोः संधिः तावेव ग्रामावपेक्ष्य तृतीयत्वपरिगणनमर्हति । कथं पुनः तस्य परलोकस्थानस्य अस्तित्वमवगम्यते, यदपेक्ष्य स्वप्नस्थानं संध्यं भवेत्— यतः तस्मिन्संध्ये स्वप्नस्थाने तिष्ठन् भवन् वर्तमानः एते उभे स्थाने पश्यति; के ते उभे? इदं च परलोकस्थानं च । तस्मात् स्तः स्वप्नजागरितव्यतिरेकेण उभौ लोकौ, यौ धिया समानः सन् अनुसंचरति जन्ममरणसंतानप्रबन्धेन । कथं पुनः स्वप्ने स्थितः सन् उभौ लोकौ पश्यति, किमाश्रयः केन विधिना— इत्युच्यते— अथ कथं पश्यतीति शृणु— यथाक्रमः आक्रामति अनेन इत्याक्रमः आश्रयः अव-

ष्टम्भ इत्यर्थः; यादृशः आक्रमोऽस्य, सोऽयं यथाक्रमः; अयं पुरुषः, परलोकस्थाने प्रतिपत्तव्ये निमित्ते, यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवतीत्यर्थः; तम् आक्रमम् परलोकस्थानायोन्मुखीभूतं प्राप्ताङ्कुरीभावमिव बीजं तमाक्रमम् आक्रम्य अवष्टभ्य आश्रित्य उभयान्पश्यति— बहुवचनं धर्माधर्मफलानेकत्वात्— उभयान् उभयप्रकारानित्यर्थः; कांस्तान्? पाप्मनः पापफलानि— न तु पुनः साक्षादेव पाप्मनां दर्शनं संभवति, तस्मात् पापफलानि दुःखानीत्यर्थः— आनन्दांश्च धर्मफलानि सुखानीत्येतत्— तानुभयान् पाप्मनः आनन्दांश्च पश्यति जन्मान्तरदृष्टवासनामयान्; यानि च प्रतिपत्तव्यजन्मविषयाणि क्षुद्रधर्माधर्मफलानि, धर्माधर्मप्रयुक्तो देवतानुग्रहाद्वा पश्यति। तत्कथमवगम्यते परलोकस्थानभावितपाप्मानन्ददर्शनं स्वप्ने— इत्युच्यते— यस्मात् इह जन्मनि अननुभाव्यमपि पश्यति बहु; न च स्वप्नो नाम अपूर्वं दर्शनम्; पूर्वदृष्टस्मृतिर्हि स्वप्नः प्रायेण; तेन स्वप्नजागरितस्थानव्यतिरेकेण स्तः उभौ लोकौ। यत् आदित्यादिबाह्यज्योतिषामभावे अयं कार्यकरणसंघातः पुरुषः येन व्यतिरिक्तेन आत्मना ज्योतिषा व्यवहरतीत्युक्तम्— तदेव नास्ति, यत् आदित्यादिज्योतिषामभावगमनम्, यत्र इदं

विविक्तं स्वयंज्योतिः उपलभ्येत ; येन सर्वदैव अयं कार्यकरणसंघातः संसृष्ट एवोपलभ्यते ; तस्मात् असत्समः असन्नेव वा स्वेन विविक्तस्वभावेन ज्योतीरूपेण आत्मेति । अथ क्वचित् विविक्तः स्वेन ज्योतीरूपेण उपलभ्येत बाह्याध्यात्मिकभूतभौतिकसंसर्गशून्यः, ततः यथोक्तं सर्वं भविष्यतीत्येतदर्थमाह— सः यः प्रकृत आत्मा, यत्र यस्मिन्काले, प्रस्वपिति प्रकर्षेण स्वापमनुभवति ; तदा किमुपादानः केन विधिना स्वपिति संध्यं स्थानं प्रतिपद्यत इत्युच्यते— अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य, सर्वावतः सर्वमवतीति सर्वावान् अयं लोकः कार्यकरणसंघातः विषयवेदनासंयुक्तः ; सर्वावत्त्वम् अस्य व्याख्यातम् अन्नत्रयप्रकरणे 'अथो अयं वा आत्मा' इत्यादिना— सर्वा वा भूतभौतिकमात्राः अस्य संसर्गकारणभूता विद्यन्त इति सर्ववान्, सर्ववानेव सर्वावान्, तस्य सर्वावतः मात्राम् एकदेशम् अवयवम्, अपादाय अपच्छिद्य आदाय गृहीत्वा— दृष्टजन्मवासनावासितः सन्नित्यर्थः, स्वयम् आत्मनैव विहत्य देहं पातयित्वा निःसंबोधमापाद्य— जागरिते हि आदित्यादीनां चक्षुरादिष्वनुग्रहो देहव्यवहारार्थः, देहव्यवहारश्च आत्मनो धर्माधर्मफलोपभोगप्रयुक्तः, तद्धर्माधर्मफलोपभोगोपरमणम् अस्मिन्देहे आत्मकर्मोपरमकृतमिति आत्मा अस्य विहन्तेत्युच्यते— स्वयं नि-

मांय निर्माणं कृत्वा वासनामयं स्वप्नदेहं मायामयमिव, निर्माणमपि तत्कर्मापेक्षत्वात् स्वयंकर्तृकमुच्यते— स्वेन आत्मीयेन, भासा मात्रोपादानलक्षणेन भासा दीप्त्या प्रकाशेन, सर्ववासनात्मकेन अन्तःकरणवृत्तिप्रकाशेनेत्यर्थः— सा हि तत्र विषयभूता सर्ववासनामयी प्रकाशते, सा तत्र स्वयं भा उच्यते— तेन स्वेन भासा विषयभूतेन, स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेण अलुप्तदृक्स्वभावेन तद्भारूपं वासनात्मकं विषयीकुर्वन् प्रस्वपिति। यत् एवं वर्तनम्, तत् प्रस्वपितीत्युच्यते। अत्र एतस्यामवस्थायाम् एतस्मिन्काले, अयं पुरुषः आत्मा, स्वयमेव विविक्तज्योतिर्भवति बाह्याध्यात्मिकभूतभौतिकसंसर्गरहितं ज्योतिः भवति। ननु अस्य लोकस्य मात्रोपादानं कृतम्, कथं तस्मिन् सति अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्युच्यते? नैष दोषः; विषयभूतमेव हि तत्; तेनैव च अत्र अयं पुरुषः स्वयं ज्योतिः दर्शयितुं शक्यः; न तु अन्यथा असति विषये कस्मिंश्चित् सुषुप्तकाल इव; यदा पुनः सा भा वासनात्मिका विषयभूता उपलभ्यमाना भवति, तदा असिः कोशादिव निष्कृष्टः सर्वसंसर्गरहितं चक्षुरादिकार्यकरणव्यावृत्तस्वरूपम् अलुप्तदृक् आत्मज्योतिः स्वेन रूपेण अवभासयत् गृह्यते। तेन अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति सिद्धम्॥

ननु अत्र कथं पुरुषः स्वयं ज्योतिः? येन जागरित इव ग्राह्यग्राहकादिलक्षणः सर्वो व्यवहारो दृश्यते, चक्षुराद्यनुग्राहकाश्च आदित्याद्यालोकाः तथैव दृश्यन्ते यथा जागरिते— तत्र कथं विशेषावधारणं क्रियते– अत्र अयं पुरुषः स्वयं ज्योतिर्भवतीति । उच्यते— वैलक्षण्यात् स्वप्नदर्शनस्य; जागरिते हि इन्द्रियबुद्धिमनआलोकादिव्यापारसंकीर्णमात्मज्योतिः; इह तु स्वप्ने इन्द्रियाभावात् तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति तस्माद्विलक्षणम् । ननु तथैव विषया उपलभ्यन्ते स्वप्नेऽपि, यथा जागरिते; तत्र कथम् इन्द्रियाभावात् वैलक्षण्यमुच्यत इति । शृणु—

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान्पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता ॥**

न तत्र विषयाः स्वप्ने रथादिलक्षणाः; तथा न रथयोगाः, रथेषु युज्यन्त इति रथयोगाः अश्वादयः तत्र न विद्यन्ते; न च पन्थानः रथमार्गाः भवन्ति । अथ रथान्

रथयोगान् पथश्च सृजते स्वयम्। कथं पुनः सृजते रथादि-साधनानां वृक्षादीनामभावे। उच्यते— ननु उक्तम् 'अस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय' इति; अन्तःकरणवृत्तिः अस्य लोकस्य वासना मात्रा, तामपादाय, रथादिवासनारूपान्तःकरणवृत्तिः तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते; तदुच्यते— स्वयं निर्मायेति; तदेव आह— रथादीन्सृजत इति; न तु तत्र करणं वा, करणानुग्राहकाणि वा आदित्यादिज्योतींषि, तदवभास्या वा रथादयो विषयाः विद्यन्ते; तद्वासनामात्रं तु केवलं तदुपलब्धिकर्मनिमित्तचोदितोद्भूतान्तःकरणवृत्त्याश्रय दृश्यते। तत् यस्य ज्योतिषो दृश्यते अलुप्तदृशः, तत् आत्मज्योतिः अत्र केवलम् असिरिव कोशात् विविक्तम्। तथा न तत्र आनन्दाः सुखविशेषाः, मुदः हर्षाः पुत्रादिलाभनिमित्ताः, प्रमुदः ते एव प्रकर्षोपेताः; अथ च आनन्दादीन् सृजते। तथा न तत्र वेशान्ताः पल्वलाः, पुष्करिण्यः तडागाः, स्रवन्त्यः नद्यः भवन्ति; अथ वेशान्तादीन्सृजते वासनामात्ररूपान्। यस्मात् सः हि कर्ता; तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्महेतुत्वेनेति अवोचाम तस्य कर्तृत्वम्; न तु साक्षादेव तत्र क्रिया संभवति, साधनाभावात्; न हि कारकमन्तरेण क्रिया संभवति; न च तत्र हस्तपादादीनि

क्रियाकारकाणि संभवन्ति; यत्र तु तानि विद्यन्ते जागरिते, तत्र आत्मज्योतिरवभासितैः कार्यकरणैः रथादिवासनाश्रयान्तःकरणवृत्त्युद्भवनिमित्तं कर्म निर्वर्त्यते; तेनोच्यते —स हि कर्तेति; तदुक्तम् 'आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते' इति; तत्रापि न परमार्थतः स्वतः कर्तृत्वं चैतन्यज्योतिषः अवभासकत्वव्यतिरेकेण— यत् चैतन्यात्मज्योतिषा अन्तःकरणद्वारेण अवभासयति कार्यकरणानि, तदवभासितानि कर्मसु व्याप्रियन्ते कार्यकरणानि, तत्र कर्तृत्वमुपचर्यते आत्मनः । यदुक्तम् 'ध्यायतीव लेलायतीव' इति, तदेव अनूद्यते— स हि कर्तेति इह हेत्वर्थम् ॥

**तदेते श्लोका भवन्ति । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥**

तदेते— एतस्मिन् उक्तेऽर्थे एते श्लोकाः मन्त्राः भवन्ति । स्वप्नेन स्वप्नभावेन, शारीरम् शरीरम्, अभिप्रहत्य निश्चेष्टमापाद्य असुप्तः स्वयम् अलुप्तदृगादिशक्तिस्वाभाव्यात्, सुप्तान् वासनाकारोद्भूतान् अन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमिताम्

सुप्तान्, अभिचाकशीति अलुप्तया आत्मदृष्ट्या पश्यति अवभासयतीत्यर्थः । शुक्रम् शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपम्, आदाय गृहीत्वा, पुनः कर्मणे जागरितस्थानम् ऐति आगच्छति, हिरण्मयः हिरण्मय इव चैतन्यज्योतिःस्वभावः, पुरुषः, एकहंसः एक एव हन्तीत्येकहंसः— एकः जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहंसः ॥

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥१२॥**

तथा प्राणेन पञ्चवृत्तिना, रक्षन् परिपालयन्— अन्यथा मृतभ्रान्तिः स्यात्, अवरम् निकृष्टम् अनेकाशुचिसंघातत्वादत्यन्तबीभत्सम्, कुलायं नीडं शरीरम्, स्वयं तु बहिस्तस्मात्कुलायात्, चरित्वा— यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तत्संबन्धाभावात् तत्स्थ इव आकाशः बहिश्चरित्वेत्युच्यते, अमृतः स्वयममरणधर्मा, ईयते गच्छति, यत्र कामम्— यत्र यत्र कामः विषयेषु उद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेण उद्भूतं गच्छति ॥

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह**

**मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥**

किंच स्वप्नान्ते स्वप्नस्थाने, उच्चावचम्— उच्चं देवादिभावम् अवचं तिर्यगादिभावं निकृष्टम् तदुच्चावचम्, ईयमानः गम्यमानः प्राप्नुवन्, रूपाणि, देवः द्योतनावान्, कुरुते निर्वर्तयति वासनारूपाणि बहूनि असंख्येयानि । उत अपि, स्त्रीभिः सह मोदमान इव, जक्षदिव हसन्निव वयस्यैः, उत इव अपि भयानि— बिभेति एभ्य इति भयानि सिंहव्याघ्रादीनि, पश्यन्निव ॥

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति । तं नायतं बोधयेदित्याहुः । दुर्भिषज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयं ज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥**

आराममम् आरमणम् आक्रीडाम् अनेन निर्मितां वासनारूपाम् अस्य आत्मनः, पश्यन्ति सर्वे जनाः— ग्रामं नगरं स्त्रियम् अन्नाद्यमित्यादिवासनानिर्मितम् आक्रीडनरूपम्;

न तं पश्यति तं न पश्यति कश्चन । कष्टं भोः! वर्तते अत्यन्तविविक्तं दृष्टिगोचरापन्नमपि— अहो भाग्यहीनता लोकस्य! यत् शक्यदर्शनमपि आत्मानं न पश्यति— इति लोकं प्रति अनुक्रोशं दर्शयति श्रुतिः । अत्यन्तविविक्तः स्वयं ज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायः । तं नायतं बोधयेदित्याहुः— प्रसिद्धिरपि लोके विद्यते, स्वप्ने आत्मज्योतिषो व्यतिरिक्तत्वे; का असौ? तम् आत्मानं सुप्तम्, आयतम् सहसा भृशम्, न बोधयेत्— इत्याहुः एवं कथयन्ति चिकित्सकादयो जना लोके; नूनं ते पश्यन्ति— जाग्रद्देहात् इन्द्रियद्वारतः अपसृत्य केवलो बहिर्वर्तत इति, यत आहुः-तं नायतं बोधयेदिति । तत्र च दोषं पश्यन्ति—भृशं हि असौ बोध्यमानः तानि इन्द्रियद्वाराणि सहसा प्रतिबोध्यमानः न प्रतिपद्यत इति; तदेतदाह— दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते; यम् इन्द्रियद्वारदेशम्— यस्माद्देशात् शुक्रमादाय अपसृतः तम् इन्द्रियदेशम्—एषः आत्मा पुनर्न प्रतिपद्यते, कदाचित् व्यत्यासेन इन्द्रियमात्राः प्रवेशयति, ततः आन्ध्यबाधिर्यादिदोषप्राप्तौ दुर्भिषज्यम् दुःखभिषक्कर्मता ह अस्मै देहाय भवति, दुःखेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः । तस्मात् प्रसिद्धद्यापि स्वप्ने स्वयंज्योतिष्ट्वम् अस्य गम्यते । स्वप्नो भूत्वा अतिक्रान्तो

मृत्यो रूपाणीति तस्मात् स्वप्ने स्वयं ज्योतिरात्मा । अथो अपि खलु अन्ये आहुः—जागरितदेश एवास्य एषः, यः स्वप्नः—न संध्यं स्थानान्तरम् इहलोकपरलोकाभ्यां व्यतिरिक्तम्, किं तर्हि इहलोक एव जागरितदेशः । यद्येवम्, किंच अतः? शृणु अतो यद्भवति—यदा जागरितदेश एवायं स्वप्नः, तदा अयमात्मा कार्यकरणेभ्यो न व्यावृत्तः तैर्मिश्रीभूतः, अतो न स्वयं ज्योतिरात्मा— इत्यतः स्वयंज्योतिष्ट्वबाधनाय अन्ये आहुः— जागरितदेश एवास्यैष इति । तत्र च हेतुमाचक्षते— जागरितदेशत्वे यानि हि यस्मात् हस्त्यादीनि पदार्थजातानि, जाग्रत् जागरितदेशे, पश्यति लौकिकः, तान्येव सुप्तोऽपि पश्यतीति । तदसत्, इन्द्रियोपरमात्; उपरतेषु हि इन्द्रियेषु स्वप्नान्पश्यति; तस्मात् नान्यस्य ज्योतिषः तत्र संभवोऽस्ति; तदुक्तम् 'न तत्र रथा न रथयोगाः' इत्यादि; तस्मात् अत्रायं पुरुषः स्वयं ज्योतिर्भवत्येव । स्वयं ज्योतिः आत्मा अस्तीति स्वप्ननिदर्शनेन प्रदर्शितम्, अतिक्रामति मृत्यो रूपाणीति च; क्रमेण संचरन् इहलोकपरलोकादीन् इहलोकपरलोकादिव्यतिरिक्तः, तथा जाग्रत्स्वप्नकुलायाभ्यां व्यतिरिक्तः, तत्र च क्रमसंचारान्नित्यश्च— इत्येतत् प्रतिपादितं याज्ञवल्क्येन । अतः विद्यानिष्क्रयार्थं सहस्रं ददामीत्याह जनकः; सोऽहम् एवं बोधितः त्वया भगवते तुभ्यम् सहस्रं

ददामि; विमोक्षश्च कामप्रश्नो मया अभिप्रेतः; तदुपयोगी अयं तादर्थ्यात् तदेकदेश एव; अतः त्वां नियोक्ष्यामि समस्तकामप्रश्ननिर्णयश्रवणेन—विमोक्षाय अत ऊर्ध्वं ब्रूहीति, येन संसारात् विप्रमुच्येयं त्वत्प्रसादात्। विमोक्षपदार्थैक-देशनिर्णयहेतोः सहस्रदानम् ॥

यत् प्रस्तुतम्—आत्मनैवायं ज्योतिषास्ते इति, तत् प्रत्यक्ष-तः प्रतिपादितम्— 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति' इति स्वप्ने। यत्तु उक्तम्— 'स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि' इति, तत्र एतत् आशङ्क्यते—मृत्यो रूपाण्येव अतिक्रामति, न मृत्युम्; प्रत्यक्षं ह्येतत् स्वप्ने कार्यकरणव्या-वृत्तस्यापि मोदत्रासादिदर्शनम्; तस्मात् नूनं नैवायं मृत्यु-मतिक्रामति; कर्मणो हि मृत्योः कार्यं मोदत्रासादि दृश्यते; यदि च मृत्युना बद्ध एव अयं स्वभावतः, ततः विमोक्षो नोपपद्यते; न हि स्वभावात्कश्चित् विमुच्यते; अथ स्वभावो न भवति मृत्युः, ततः तस्मात् मोक्ष उपपत्स्यते; यथा असौ मृत्युः आत्मीयो धर्मो न भवति, तथा प्रदर्शनाय— अत ऊर्ध्वं विमोक्षाय ब्रूहीत्येवं जनकेन पर्यनुयुक्तः याज्ञवल्क्यः तद्दिदर्शयिषया प्रववृते—

**स वा एष एतस्मिन्संप्रसादे रत्वा च-रित्वा दृष्ट्वैव पुण्यं च पापं च। पुनः प्रति-**

**न्यायं प्रतियोन्याद्रवति स्वप्नायैव स य-त्तत्र किंचित्पश्यत्यनन्वागतस्तेन भव-त्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥**

स वै प्रकृतः स्वयं ज्योतिः पुरुषः, एषः यः स्वप्ने प्रदर्शितः, एतस्मिन्संप्रसादे—सम्यक् प्रसीदति अस्मिन्निति संप्रसादः ; जागरिते देहेन्द्रियव्यापारशतसंनिपातजं हित्वा कालुष्यं तेभ्यो विप्रमुक्तः ईषत् प्रसीदति स्वप्ने, इह तु सुषुप्ते सम्यक् प्रसीदति– इत्यतः सुषुप्तं संप्रसाद उच्यते ; 'तीर्णो हि तदा सर्वाञ्शोकान्' इति 'सलिल एको द्रष्टा' इति हि वक्ष्यति सुषुप्तस्थम् आत्मानम्—स वै एषः एतस्मिन् संप्रसादे क्रमेण संप्रसन्नः सन् सुषुप्ते स्थित्वा ; कथं संप्रसन्नः ? स्वप्नात् सुषुप्तं प्रविविक्षुः स्वप्नावस्थ एव रत्वा रतिमनुभूय मित्रबन्धुजनदर्श-नादिना, चरित्वा विहृत्य अनेकधा चरणफलं श्रममुपलभ्ये-त्यर्थः, दृष्ट्वैव न कृत्वेत्यर्थः, पुण्यं च पुण्यफलम्, पापं च पापफलम् ; न तु पुण्यपापयोः साक्षाद्दर्शनमस्तीत्यवोचाम ; तस्मात् न पुण्यपापाभ्यामनुबद्धः ; यो हि करोति पुण्यपापे, स ताभ्यामनुबध्यते ; न हि दर्शनमात्रेण तदनुबद्धः स्यात् ।

तस्मात् स्वप्नो भूत्वा मृत्युमतिक्रामत्येव, न मृत्युरूपाण्येव केवलम्। अतः न मृत्योः आत्मस्वभावत्वाशङ्का ; मृत्युश्चेत् स्वभावोऽस्य, स्वप्नेऽपि कुर्यात् ; न तु करोति ; स्वभावश्चेत् क्रिया स्यात् ; अनिर्मोक्षतैव स्यात् ; न तु स्वभावः, स्वप्ने अभावात्, अतः विमोक्षः अस्य उपपद्यते मृत्योः पुण्यपापाभ्याम् । ननु जागरिते अस्य स्वभाव एव— न ; बुद्ध्याद्युपाधिकृतं हि तत् ; तच्च प्रतिपादितं सादृश्यात् 'ध्यायतीव लेलायतीव' इति। तस्मात् एकान्तेनैव स्वप्ने मृत्युरूपातिक्रमणात् न स्वाभाविकत्वाशङ्का अनिर्मोक्षता वा । तत्र 'चरित्वा' इति— चरणफलं श्रममुपलभ्येत्यर्थः, ततः संप्रसादानुभवोत्तरकालं पुनः प्रतिन्यायम् यथान्यायं यथागतम्— निश्चित आयः न्यायः, अयनम् आयः निर्गमनम्, पुनः पूर्वगमनवैपरीत्येन यत् आगमनं स प्रतिन्यायः— यथागतं पुनरागच्छतीत्यर्थः । प्रतियोनि यथास्थानम् ; स्वप्नस्थानाद्धि सुषुप्तं प्रतिपन्नः सन् यथास्थानमेव पुनरागच्छति— प्रतियोनि आद्रवति, स्वप्नायैव स्वप्नस्थानायैव । ननु स्वप्ने न करोति पुण्यपापे तयोः फलमेव पश्यतीति कथमवगम्यते ? यथा जागरिते तथा करोत्येव स्वप्नेऽपि, तुल्यत्वाद्दर्शनस्य— इत्यत आह—सः आत्मा, यत् किंचित् तत्र स्वप्ने पश्यति पुण्यपापफलम्, अनन्वागतः अननुबद्धः तेन दृष्टेन भवति,

नैव अनुबद्धो भवति; यदि हि स्वप्ने कृतमेव तेन स्यात्, तेन अनुबध्येत; स्वप्नादुत्थितोऽपि समन्वागतः स्यात्; न च तत् लोके— स्वप्नकृतकर्मणा अन्वागतत्वप्रसिद्धिः; न हि स्वप्नकृतेन आगसा आगस्कारिणमात्मानं मन्यते कश्चित्; न च स्वप्नदृश आगः श्रुत्वा लोकः तं गर्हति परिहरति वा; अतः अनन्वागत एव तेन भवति; तस्मात् स्वप्ने कुर्वन्निव उपलभ्यते, न तु क्रिया अस्ति परमार्थतः; 'उतेव स्त्रीभिः सह मोदमानः' इति श्लोक उक्तः; आख्यातारश्च स्वप्नस्य सह इव-शब्देन आचक्षते—हस्तिनोऽद्य घटीकृताः धावन्तीव मया दृष्टा इति। अतो न तस्य कर्तृत्वमिति। कथं पुनरस्याकर्तृत्वमिति— कार्यकरणैर्मूर्तैः संश्लेषः मूर्तस्य, स तु क्रियाहेतुर्दृष्टः; न ह्यमूर्तः कश्चित् क्रियावान् दृश्यते; अमूर्तश्च आत्मा, अतोऽसङ्गः; यस्माच्च असङ्गोऽयं पुरुषः, तस्मात् अनन्वागतः तेन स्वप्नदृष्टेन; अत एव न क्रियाकर्तृत्वमस्य कथंचिदुपपद्यते; कार्यकरणसंश्लेषेण हि कर्तृत्वं स्यात्; स च संश्लेषः सङ्गः अस्य नास्ति, यतः असङ्गो ह्ययं पुरुषः; तस्मात् अमृतः। एवमेव एतत् याज्ञवल्क्य; सोऽहं भगवते सहस्रं ददामि; अत ऊर्ध्वं विमोक्षायैव ब्रूहि; मोक्षपदार्थैकदेशस्य कर्मप्रविवेकस्य सम्यग्दर्शितत्वात्; अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥

**स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥**

तत्र 'असङ्गो ह्ययं पुरुषः' इति असङ्गता अकर्तृत्वे हेतुरुक्तः; उक्तं च पूर्वम्— कर्मवशात् स ईयते यत्र काममिति; कामश्च सङ्गः; अतः असिद्धो हेतुरुक्तः—'असङ्गो ह्ययं पुरुषः' इति। न तु एतत् अस्ति; कथं तर्हि? असङ्ग एव इत्येतदुच्यते— स वा एष एतस्मिन्स्वप्ने, स वै एष पुरुषः संप्रसादात्प्रत्यागतः स्वप्ने रत्वा चरित्वा यथाकामम्, दृष्ट्वैव पुण्यं च पापं च— इति सर्वं पूर्ववत्; बुद्धान्तायैव जागरितस्थानाय। तस्मात् असङ्ग एवायं पुरुषः; यदि स्वप्ने सङ्गवान् स्यात् कामी, ततः तत्सङ्गजैर्दोषैः बुद्धान्ताय प्रत्यागतो लिप्येत ॥

यथा असौ स्वप्ने असङ्गत्वात् स्वप्नप्रसङ्गजैर्दोषैः जागरिते प्रत्यागतो न लिप्यते, एवं जागरितसङ्गजैरपि दोषैः न

लिप्यत एव बुद्धान्ते; तदेतदुच्यते—

**स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥**

स वै एषः एतस्मिन् बुद्धान्ते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्। स यत् तत्र बुद्धान्ते किंचित्पश्यति, अनन्वागतः तेन भवति— असङ्गो ह्ययं पुरुष इति। ननु दृष्ट्वैवेति कथमवधार्यते? करोति च तत्र पुण्यपापे; तत्फलं च पश्यति— न, कारकावभासकत्वेन कर्तृत्वोपपत्तेः; 'आत्मनैवायं ज्योतिषास्ते' इत्यादिना आत्मज्योतिषा अवभासितः कार्यकरणसंघातः व्यवहरति; तेन अस्य कर्तृत्वमुपचर्यते, न स्वतः कर्तृत्वम्; तथा चोक्तम् 'ध्यायतीव लेलायतीव' इति— बुद्ध्याद्युपाधिकृतमेव न स्वतः; इह तु परमार्थापेक्षया उपाधिनिरपेक्ष उच्यते— दृष्ट्वैव पुण्यं च पापं च न कृत्वेति; तेन न पूर्वापरव्याघाताशङ्का, यस्मात् निरुपाधिकः परमार्थतो न करोति, न लिप्यते क्रियाफलेन; तथा च भगवतोक्तम्— 'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति। तथा सहस्रदानं तु कामप्रविवेकस्य दर्शितत्वात्। तथा 'स

वा एष एतस्मिन्स्वप्ने' 'स वा एष एतस्मिन्बुद्धान्ते' इत्येताभ्यां कण्डिकाभ्याम् असङ्गतैव प्रतिपादिता; यस्मात् बुद्धान्ते कृतेन स्वप्नान्तं गतः संप्रसन्नः असंबद्धो भवति स्तैन्यादिकार्यादर्शनात्, तस्मात् त्रिष्वपि स्थानेषु स्वतः असङ्ग एव अयम्; अतः अमृतः स्थानत्रयधर्मविलक्षणः। प्रतियोन्याद्रवति स्वप्नान्तायैव, संप्रसादायेत्यर्थः— दर्शनवृत्तेः स्वप्नस्य स्वप्नशब्देन अभिधानदर्शनात्, अन्तशब्देन च विशेषणोपपत्तेः; 'एतस्मा अन्ताय धावति' इति च सुषुप्तं दर्शयिष्यति। यदि पुनः एवमुच्यते— 'स्वप्नान्ते रत्वा चरित्वा' 'एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च' इति दर्शनात्, 'स्वप्नान्तायैव' इत्यत्रापि दर्शनवृत्तिरेव स्वप्न उच्यत इति— तथापि न किंचिद्दुष्यति; असङ्गता हि सिषाधयिषिता सिध्यत्येव; यस्मात् जागरिते दृष्ट्वैव पुण्यं च पापं च रत्वा चरित्वा च स्वप्नान्तमागतः, न जागरितदोषेणानुगतो भवति॥

एवम् अयं पुरुष आत्मा स्वयं ज्योतिः कार्यकरणविलक्षणः तत्प्रयोजकाभ्यां कामकर्मभ्यां विलक्षणः— यस्मात्, असङ्गो ह्ययं पुरुषः, असङ्गत्वात्— इत्ययमर्थः 'स वा एष एतस्मिन्संप्रसादे' इत्याद्याभिस्तिसृभिः कण्डिकाभिः प्रतिपादितः; तत्र असङ्गतैव आत्मनः कुतः— यस्मात्, जाग-

रितात् स्वप्नम्, स्वप्नाच्च संप्रसादम्, संप्रसादाच्च पुनः स्वप्नम्, क्रमेण बुद्धान्तं जागरितम्, बुद्धान्ताच्च पुनः स्वप्नान्तम्— इत्येवम् अनुक्रमसंचारेण स्थानत्रयस्य व्यतिरेकः साधितः । पूर्वमप्युपन्यस्तोऽयमर्थः 'स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि' इति— तं विस्तरेण प्रतिपाद्य, केवलं दृष्टान्तमात्रमवशिष्टम्, तद्वक्ष्यामीत्यारभ्यते—

**तद्यथा महामत्स्य उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥**

तत् तत्र एतस्मिन्, यथा— प्रदर्शितेऽर्थे दृष्टान्तोऽयमुपादीयते— यथा लोके महामत्स्यः, महांश्चासौ मत्स्यश्च, नादेयेन स्रोतसा अहार्य इत्यर्थः, स्रोतश्च विष्टम्भयति, स्वच्छन्दचारी, उभे कूले नद्याः पूर्वं च अपरं च अनुक्रमेण संचरति; संचरन्नपि कूलद्वयं तन्मध्यवर्तिना उदकस्रोतोवेगेन न परवशी क्रियते— एवमेव अयं पुरुषः एतौ उभौ अन्तौ अनुसंचरति; कौ तौ? स्वप्नान्तं च बुद्धान्तं च । दृष्टान्तप्रदर्शनफलं तु— मृत्युरूपः कार्यकरणसंघातः सह तत्प्रयोजकाभ्यां कामकर्मभ्याम् अनात्मधर्मः; अयं च आत्मा एतस्माद्विलक्षणः— इति विस्तरतो व्याख्यातम् ॥

अत्र च स्थानत्रयानुसंचारेण स्वयंज्योतिष आत्मनः कार्यकरणसंघातव्यतिरिक्तस्य कामकर्मभ्यां विविक्तता उक्ता; स्वतः नायं संसारधर्मवान्, उपाधिनिमित्तमेव तु अस्य संसारित्वम् अविद्याध्यारोपितम्—इत्येष समुदायार्थ उक्तः। तत्र च जाग्रत्स्वप्नसुषुप्तस्थानानां त्रयाणां विप्रकीर्णरूपः उक्तः, न पुञ्जीकृत्य एकत्र दर्शितः—यस्मात् जागरिते ससङ्गः समृत्युः सकार्यकरणसंघातः उपलक्ष्यते अविद्यया; स्वप्ने तु कामसंयुक्तः मृत्युरूपविनिर्मुक्त उपलभ्यते; सुषुप्ते पुनः संप्रसन्नः असङ्गो भवतीति असङ्गतापि दृश्यते; एकवाक्यतया तु उपसंह्रियमाणं फलं नित्यमुक्तबुद्धशुद्धस्वभावता अस्य न एकत्र पुञ्जीकृत्य प्रदर्शितेति, तत्प्रदर्शनाय कण्डिका आरभ्यते। सुषुप्ते हि एवंरूपता अस्य वक्ष्यमाणा 'तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपम्' इति; यस्मात् एवंरूपं विलक्षणम्, सुषुप्तं प्रविविक्षति; तत् कथमिति आह— दृष्टान्तेन अस्य अर्थस्य प्रकटीभावो भवतीति तत्र दृष्टान्त उपादीयते—

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति ॥**

तत् यथा— अस्मिन्नाकाशे भौतिके श्येनो वा सुपर्णो वा, सुपर्णशब्देन क्षिप्रः श्येन उच्यते, यथा आकाशेऽस्मिन् विहृत्य विपरिपत्य श्रान्तः नानापरिपतनलक्षणेन कर्मणा परिखिन्नः, संहृत्य पक्षौ संगमय्य संप्रसार्य पक्षौ, सम्यक् लीयते अस्मिन्निति संलयः, नीडः नीडायैव, ध्रियते स्वात्मनैव धार्यते स्वयमेव; यथा अयं दृष्टान्तः, एवमेव अयं पुरुषः, एतस्मा एतस्मै, अन्ताय धावति। अन्तशब्दवाच्यस्य विशेषणम्— यत्र यस्मिन् अन्ते सुप्तः, न कंचन न कंचिदपि, कामं कामयते; तथा न कंचन स्वप्नं पश्यति। 'न कंचन कामम्' इति स्वप्नबुद्धान्तयोः अविशेषेण सर्वः कामः प्रतिषिध्यते, 'कंचन' इत्यविशेषिताभिधानात्; तथा 'न कंचन स्वप्नम्' इति— जागरितेऽपि यत् दर्शनम्, तदपि स्वप्नं मन्यते श्रुतिः, अत आह— न कंचन स्वप्नं पश्यतीति; तथा च श्रुत्यन्तरम् 'तस्य त्रय आवसथास्त्रयः स्वप्नाः' इति। यथा दृष्टान्ते पक्षिणः परिपतनजश्रमापनुत्तये स्वनीडोपसर्पणम्, एवं जाग्रत्स्वप्नयोः कार्यकरणसंयोगजक्रियाफलैः संयुज्यमानस्य, पक्षिणः परिपतनज इव, श्रमो भवति; तच्छ्रमापनुत्तये स्वात्मनो नीडम् आयतनं सर्वसंसारधर्मविलक्षणं सर्वक्रियाकारकफलायासशून्यं स्वमात्मानं प्रविशति॥

यदि अस्य अयं स्वभावः— सर्वसंसारधर्मशून्यता, परोपाधिनिमित्तं च अस्य संसारधर्मित्वम्; यन्निमित्तं च अस्य परोपाधिकृतं संसारधर्मित्वम्, सा च अविद्या— तस्या अविद्यायाः किं स्वाभाविकत्वम्, आहोस्वित् कामकर्मादिवत् आगन्तुकत्वम्; यदि च आगन्तुकत्वम्, ततो विमोक्ष उपपद्यते; तस्याश्च आगन्तुकत्वे का उपपत्तिः, कथं वा न आत्मधर्मः अविद्येति— सर्वानर्थबीजभूताया अविद्यायाः सतत्त्वावधारणार्थं परा कण्डिका आरभ्यते—

**ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥**

ताः वै, अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्य, एताः हिता नाम नाड्यः, यथा केशः सहस्रधा भिन्नः, तावता

तावत्परिमाणेन अणिम्ना अणुत्वेन तिष्ठन्ति ; ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः, एतैः शुक्लत्वादिभिः रसविशेषैः पूर्णा इत्यर्थः ; एते च रसानां वर्णविशेषाः वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषात् विचित्रा बहवश्च भवन्ति । तासु एवंविधासु नाडीषु सूक्ष्मासु वालाग्रसहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु सप्तदशकं लिङ्गं वर्तते ; तदाश्रिताः सर्वा वासना उच्चावचसंसारधर्मानुभवजनिताः ; तत् लिङ्गं वासनाश्रयं सूक्ष्मत्वात् स्वच्छं स्फटिकमणिकल्पं नाडीगतरसोपाधिसंसर्गवशात् धर्माधर्मप्रेरितोद्भूतवृत्तिविशेषं स्त्रीरथहस्त्याद्याकारविशेषैर्वासनाभिः प्रत्यवभासते ; अथ एवं सति, यत्र यस्मिन्काले, केचन शत्रवः अन्ये वा तस्कराः मामागत्य घ्नन्ति— इति मृषैव वासनानिमित्तः प्रत्ययः अविद्याख्यः जायते, तदेतदुच्यते— एनं स्वप्नदृशं घ्नन्तीवेति ; तथा जिनन्तीव वशीकुर्वन्तीव ; न केचन घ्नन्ति, नापि वशीकुर्वन्ति, केवलं तु अविद्यावासनोद्भवनिमित्तं भ्रान्तिमात्रम् ; तथा हस्तीवैनं विच्छाययति विच्छादयति विद्रावयति धावयतीवेत्यर्थः ; गर्तमिव पतति—गर्तं जीर्णकूपादिकमिव पतन्तम् आत्मानमुपलक्षयति ; तादृशी हि अस्य मृषा वासना उद्भवति अत्यन्तनिकृष्टा अधर्मोद्भासितान्तःकरणवृत्त्याश्रया,

दुःखरूपत्वात् । किं बहुना, यदेव जाग्रत् भयं पश्यति हस्त्यादिलक्षणम्, तदेव भयरूपम् अत्र अस्मिन्स्वप्ने विनैव हस्त्यादिरूपं भयम् अविद्यावासनया मृषैव उद्भूतया मन्यते । अथ पुनः यत्र अविद्या अपकृष्यमाणा विद्या चोत्कृष्यमाणा— किंविषया किंलक्षणा चेत्युच्यते— अथ पुनः यत्र यस्मिन्काले, देव इव स्वयं भवति, देवताविषया विद्या यदा उद्भूता जागरितकाले, तदा उद्भूतया वासनया देवमिव आत्मानं मन्यते; स्वप्नेऽपि तदुच्यते— देव इव, राजेव राज्यस्थः अभिषिक्तः, स्वप्नेऽपि राजा अहमिति मन्यते राजवासनावासितः । एवम् अत्यन्तप्रक्षीयमाणा अविद्या उद्भूता च विद्या सर्वात्मविषया यदा, तदा स्वप्नेऽपि तद्भावभावितः— अहमेवेदं सर्वोऽस्मीति मन्यते; स यः सर्वात्मभावः, सोऽस्य आत्मनः परमो लोकः परम आत्मभावः स्वाभाविकः । यत्तु सर्वात्मभावादर्वाक् वालाग्रमात्रमपि अन्यत्वेन दृश्यते— नाहमस्मीति, तदवस्था अविद्या; तया अविद्यया ये प्रत्युपस्थापिताः अनात्मभावा लोकाः, ते अपरमाः स्थावरान्ताः; तान् संव्यवहारविषयान् लोकानपेक्ष्य अयं सर्वात्मभावः समस्तोऽनन्तरोऽबाह्यः, सोऽस्य परमो लोकः । तस्मात् अपकृष्यमाणायाम् अविद्यायाम्, विद्यायां च काष्ठं गतायाम्, सर्वात्मभावो मोक्षः, यथा स्वयंज्योतिष्ट्वं स्वप्ने प्रत्यक्षत उपलभ्यते

तद्वत्, विद्याफलम् उपलभ्यत इत्यर्थः। तथा अविद्याया-मप्युत्कृष्यमाणायाम्, तिरोधीयमानायां च विद्यायाम्, अ-विद्यायाः फलं प्रत्यक्षत एवोपलभ्यते— 'अथ यत्रैनं घ्नन्तीव जिनन्तीव' इति। ते एते विद्याविद्याकार्ये, सर्वात्मभावः परिच्छिन्नात्मभावश्च; विद्यया शुद्धया सर्वात्मा भवति; अ-विद्यया च असर्वो भवति; अन्यतः कुतश्चित्प्रविभक्तो भ-वति; यतः प्रविभक्तो भवति, तेन विरुध्यते; विरुद्धत्वात् हन्यते जीयते विच्छाद्यते च; असर्वविषयत्वे च भिन्नत्वात् एतद्भवति; समस्तस्तु सन् कुतो भिद्यते, येन विरुध्येत; विरोधाभावे, केन हन्यते जीयते विच्छाद्यते च। अत इदम् अविद्यायाः सतत्त्वमुक्तं भवति— सर्वात्मानं सन्तम् अस-र्वात्मत्वेन ग्राहयति, आत्मनः अन्यत् वस्त्वन्तरम् अविद्य-मानं प्रत्युपस्थापयति, आत्मानम् असर्वमापादयति; ततस्त-द्विषयः कामो भवति; यतो भिद्यते कामतः, क्रियामुपादत्ते, ततः फलम्—तदेतदुक्तम्। वक्ष्यमाणं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादि। इदम् अविद्यायाः सतत्त्वं सह कार्येण प्रदर्शितम्; विद्यायाश्च कार्यं सर्वात्मभावः प्रदर्शितः अविद्याया विपर्ययेण। सा चाविद्या न आत्मनः स्वाभाविको धर्मः—यस्मात् विद्यायामुत्कृष्यमाणायां स्वयमप-चीयमाना सती, काष्ठां गतायां विद्यायां परिनिष्ठिते सर्वात्म-

भावे सर्वात्मना निवर्तते, रज्ज्वामिव सर्पज्ञानं रज्जुनिश्चये; तच्चोक्तम्– 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादि; तस्मात् न आत्मधर्मः अविद्या; न हि स्वाभाविकस्योच्छित्तिः कदाचिदप्युपपद्यते, सवितुरिव औष्ण्यप्रकाशयोः। तस्मात् तस्या मोक्ष उपपद्यते ॥

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयꣳ रूपम्। तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥ २१ ॥**

इदानीं योऽसौ सर्वात्मभावो मोक्षः विद्याफलं क्रियाकारकफलशून्यम्, स प्रत्यक्षतो निर्दिश्यते, यत्र अविद्याकामकर्माणि न सन्ति। तत् एतत् प्रस्तुतम्– 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' इति, तदेतत् वै अस्य रूपम्– यः सर्वात्मभावः 'सोऽस्य परमो लोकः' इत्युक्तः– तत्; अतिच्छन्दा अतिच्छन्दमित्यर्थः, रूपपरत्वात्; छन्दः कामः, अतिगतः छन्दः यस्माद्रूपात् तत् अतिच्छन्दं रूपम्;

अन्योऽसौ सान्तः छन्दःशब्दः गायत्र्यादिच्छन्दोवाची ; अयं तु कामवचनः, अतः स्वरान्त एव ; तथापि 'अतिच्छन्दा' इति पाठः स्वाध्यायधर्मो द्रष्टव्यः ; अस्ति च लोके कामवचनप्रयुक्तः छन्दशब्दः 'स्वच्छन्दः' 'परच्छन्दः' इत्यादौ ; अतः 'अतिच्छन्दम्' इत्येवम् उपनेयम्, कामवर्जितमेतद्रूपमित्यस्मिन् अर्थे तथा अपहतपाप्म—पाप्मशब्देन धर्माधर्मावुच्येते, 'पाप्मभिः संसृज्यते' 'पाप्मनो विजहाति' इत्युक्तत्वात् ; अपहतपाप्म धर्माधर्मवर्जितमित्येतत् । किंच, अभयम्— भयं हि नाम अविद्याकार्यम्, 'अविद्यया भयं मन्यते' इति ह्युक्तम् ; तत् कार्यद्वारेण कारणप्रतिषेधोऽयम् ; अभयं रूपमिति अविद्यावर्जितमित्येतत् । यदेतत् विद्याफलं सर्वात्मभावः, तदेतत् अतिच्छन्दापहतपाप्माभयं रूपम्— सर्वसंसारधर्मवर्जितम्, अतः अभयं रूपम् एतत् । इदं च पूर्वमेवोपन्यस्तम् अतीतानन्तरब्राह्मणसमाप्तौ 'अभयं वै जनक प्राप्तोऽसि' इत्यागमतः ; इह तु तर्कतः प्रपञ्चितं दर्शितागमार्थप्रत्ययदार्ढ्याय । अयमात्मा स्वयं चैतन्यज्योतिःस्वभावः सर्वं स्वेन चैतन्यज्योतिषा अवभासयति—स यत्तत्र किंचित्पश्यति, रमते, चरति, जानाति चेत्युक्तम् ; स्थितं चैतत् न्यायतः नित्यं स्वरूपं चैतन्यज्योतिष्ट्वमात्मनः । सः यद्यात्मा अत्र अविनष्टः स्वेनैव रूपेण वर्तते, कस्मात् अयम्— अहमस्मी-

त्यात्मानं वा, बहिर्वा— इमानि भूतानीति, जाग्रत्स्वप्नयोरिव, न जानाति— इत्यत्र उच्यते; शृणु अत्र अज्ञानहेतुम्; एकत्वमेव अज्ञानहेतुः; तत्कथमिति उच्यते; दृष्टान्तेन हि प्रत्यक्षी भवति विवक्षितोऽर्थ इत्याह— तत् तत्र यथा लोके प्रियया इष्टया स्त्रिया संपरिष्वक्तः सम्यक्परिष्वक्तः कामयन्त्या कामुकः सन्, न बाह्यमात्मनः किंचन किंचिदपि वेद— मत्तोऽन्यद्वस्त्विति, न च आन्तरम्— अयमहमस्मि सुखी दुःखी वेति; अपरिष्वक्तस्तु तया प्रविभक्तो जानाति सर्वमेव बाह्यम् आभ्यन्तरं च; परिष्वङ्गोत्तरकालं तु एकत्वापत्तेः न जानाति— एवमेव, यथा दृष्टान्तः अयं पुरुषः क्षेत्रज्ञः भूतमात्रासंसर्गतः सैन्धवखिल्यवत् प्रविभक्तः, जलादौ चन्द्रादिप्रतिबिम्बवत् कार्यकरण इह प्रविष्टः, सोऽयं पुरुषः, प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेन आत्मना परेण ज्योतिषा, संपरिष्वक्तः सम्यक्परिष्वक्तः एकीभूतः निरन्तरः सर्वात्मा, न बाह्यं किंचन वस्त्वन्तरम्, नापि आन्तरम् आत्मनि— अयमहमस्मि सुखी दुःखी वेति वेद। तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यद्प्राक्षीः, तत्र अयं हेतुः मयोक्तः एकत्वम्, यथा स्त्रीपुंसयोः संपरिष्वक्तयोः। तत्र अर्थात् नानात्वं विशेषविज्ञानहेतुरित्युक्तं भवति; नानात्वे च कारणम्— आत्मनो वस्त्वन्तरस्य प्रत्यु-

पस्थापिका अविद्येत्युक्तम् । तत्र च अविद्याया यदा प्रविविक्तो भवति, तदा सर्वेण एकत्वमेव अस्य भवति; ततश्च ज्ञानज्ञेयादिकारकविभागे असति, कुतो विशेषविज्ञानप्रादुर्भावः कामो वा संभवति स्वाभाविके स्वरूपस्थ आत्मज्योतिषि । यस्मात् एवं सर्वैकत्वमेव अस्य रूपम्, अतः तत् वै अस्य आत्मनः स्वयंज्योतिःस्वभावस्य एतत् रूपम् आप्तकामम्— यस्मात् समस्तमेतत् तस्मात् आप्ताः कामा अस्मिन् रूपे तदिदम् आप्तकामम्; यस्य हि अन्यत्वेन प्रविभक्तः कामः, तत् अनाप्तकामं भवति, यथा जागरितावस्थायां देवदत्तादिरूपम्; न त्विदं तथा कुतश्चित्प्रविभज्यते; अतः तत् आप्तकामं भवति । किम् अन्यस्मात् वस्त्वन्तरात् न प्रविभज्यते, आहोस्वित् आत्मैव तत् वस्त्वन्तरम्, अत आह— नान्यदस्ति आत्मनः; कथम्? यत आत्मकामम्—आत्मैव कामाः यस्मिन् रूपे, अन्यत्र प्रविभक्ता इव अन्यत्वेन काम्यमानाः यथा जाग्रत्स्वप्रयोः, तस्य आत्मैव अन्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावात्— आत्मकामम्; अत एव अकाममेतद्रूपम् काम्यविषयाभावात्; शोकान्तरम् शोकच्छिद्रं शोकशून्यमित्येतत्, शोकमध्यमिति वा, सर्वथापि अशोकमेतद्रूपम् शोकवर्जितमित्यर्थः ॥

**अत्र पितापिता भवति मातामाता**

लोका अलोका देवा अदेवा वेदा अवेदाः । अत्र स्तेनोऽस्तेनो भवति भ्रूणहाभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥२२॥

प्रकृतः स्वयंज्योतिरात्मा अविद्याकामकर्मविनिर्मुक्त इत्युक्तम्, असङ्गत्वादात्मनः, आगन्तुकत्वाच्च तेषाम् । तत्र एवमाशङ्का जायते ; चैतन्यस्वभावत्वे सत्यपि एकीभावात् न जानाति स्त्रीपुंसयोरिव संपरिष्वक्तयोरित्युक्तम् ; तत्र प्रासङ्गिकम् एतत् उक्तम्— कामकर्मादिवत् स्वयंज्योतिष्ट्वमपि अस्य आत्मना न स्वभावः, यस्मात् संप्रसादे नोपलभ्यते—इत्याशङ्कायां प्राप्तायाम् , तन्निराकरणाय, स्त्रीपुंसयोर्दृष्टान्तोपादानेन, विद्यमानस्यैव स्वयंज्योतिष्ट्वस्य सुषुप्ते अग्रहणम् एकीभावाद्धेतोः, न तु कामकर्मादिवत् आगन्तुकम्— इत्येतत् प्रासङ्गिकमभिधाय, यत्प्रकृतं तदेवानुप्रवर्तयति । अत्र च एतत् प्रकृतम्— अविद्याकामकर्मविनिर्मुक्तमेव तद्रूपम्, यत् सुषुप्ते आत्मनो गृह्यते प्रत्यक्षत इति ; तदेतत् यथाभूतमेवाभिहितम्—सर्वसंबन्धातीतम् एतद्रूपमिति ; यस्मात् अत्र

एतस्मिन् सुषुप्तस्थाने अतिच्छन्दापहतपाप्माभयम् एतद्रूपम्, तस्मात् अत्र पिता जनकः— तस्य च जनयितृत्वात् यत् पितृत्वं पुत्रं प्रति, तत् कर्मनिमित्तम्; तेन च कर्मणा अयमसंबद्धः अस्मिन्काले; तस्मात् पिता पुत्रसंबन्धनिमित्तात्कर्मणो विनिर्मुक्तत्वात् पितापि अपिता भवति; तथा पुत्रोऽपि पितुरपुत्रो भवतीति सामर्थ्याद्गम्यते; उभयोर्हि संबन्धनिमित्तं कर्म, तत् अयम् अतिक्रान्तो वर्तते; 'अपहतपाप्म' इति हि उक्तम्। तथा माता अमाता; लोकाः कर्मणा जेतव्याः जिताश्च— तत्कर्मसंबन्धाभावात् लोकाः अलोकाः; तथा देवाः कर्माङ्गभूताः— तत्कर्मसंबन्धात्ययात् देवा अदेवाः; तथा वेदाः— साध्यसाधनसंबन्धाभिधायकाः, मन्त्रलक्षणाश्च अभिधायकत्वेन कर्माङ्गभूताः, अधीताः अध्येतव्याश्च— कर्मनिमित्तमेव संबध्यन्ते पुरुषेण; तत्कर्मातिक्रमणात् एतस्मिन्काले वेदा अपि अवेदाः संपद्यन्ते। न केवलं शुभकर्मसंबन्धातीतः, किं तर्हि, अशुभैरपि अत्यन्तघोरैः कर्मभिः असंबद्ध एवायं वर्तते इत्येतमर्थमाह— अत्र स्तेनः ब्राह्मणसुवर्णहर्ता, भ्रूणघ्ना सह पाठादवगम्यते— सः तेन घोरेण कर्मणा एतस्मिन्काले विनिर्मुक्तो भवति, येन अयं कर्मणा महापातकी स्तेन उच्यते। तथा भ्रूणहा अभ्रूणहा। तथा चाण्डालः न केवलं प्रत्युत्पन्नेनैव कर्मणा विनिर्मुक्तः, किं तर्हि सहजेनापि

अत्यन्तनिकृष्टजातिप्रापकेणापि विनिर्मुक्त एव अयम्; चाण्डालो नाम शूद्रेण ब्राह्मण्यामुत्पन्नः, चण्डाल एव चाण्डालः; सः जातिनिमित्तेन कर्मणा असंबद्धत्वात् अचाण्डालो भवति। पौल्कसः, पुल्कस एव पौल्कसः, शूद्रेणैव क्षत्रियायामुत्पन्नः; सोऽपि अपुल्कसो भवति। तथा आश्रमलक्षणैश्च कर्मभिः असंबद्धो भवतीत्युच्यते; श्रमणः परिव्राट्—यत्कर्मनिमित्तो भवति, सः तेन विनिर्मुक्तत्वात् अश्रमणः; तथा तापसः वानप्रस्थः अतापसः; सर्वेषां वर्णाश्रमादीनामुपलक्षणार्थम् उभयोर्ग्रहणम्। किं बहुना? अनन्वागतम्– न अन्वागतम् अनन्वागतम् असंबद्धमित्येतत्, पुण्येन शास्त्रविहितेन कर्मणा, तथा पापेन विहिताकरणप्रतिषिद्धक्रियालक्षणेन; रूपपरत्वात् नपुंसकलिङ्गम्; 'अभयं रूपम्' इति हि अनुवर्तते। किं पुनः असंबद्धत्वे कारणमिति तद्धेतुरुच्यते—तीर्णः अतिक्रान्तः, हि यस्मात्, एवंरूपः, तदा तस्मिन्काले, सर्वान् शोकान्—शोकाः कामाः; इष्टविषयप्रार्थना हि तद्विषयवियोगे शोकत्वमापद्यते; इष्टं हि विषयम् अप्राप्तं वियुक्तं च उद्दिश्य चिन्तयानस्तद्गुणान् संतप्यते पुरुषः; अतः शोको रतिः काम इति पर्यायाः। यस्मात् सर्वकामातीतो हि अत्र अयं भवति—'न कंचन कामं कामयते' 'अतिच्छन्दा' इति ह्युक्तम्, तत्प्रक्रियापतितोऽयं शोकशब्दः

कामवचन एव भवितुमर्हति; कामश्च कर्महेतुः; वक्ष्यति हि 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इति— अतः सर्वकामातितीर्णत्वात् युक्तमुक्तम् 'अनन्वागतं पुण्येन' इत्यादि । हृदयस्य— हृदयमिति पुण्डरीकाकारो मांसपिण्डः, तत्स्थम् अन्तःकरणं बुद्धिः हृदयमित्युच्यते, तात्स्थ्यात्, मञ्चक्रोशनवत्; हृदयस्य बुद्धेः ये शोकाः; बुद्धिसंश्रया हि ते, 'कामः संकल्पो विचिकित्सेत्यादि— सर्वं मन एव' इत्युक्तत्वात्; वक्ष्यति च 'कामा येऽस्य हृदि श्रिताः' इति; आत्मसंश्रयभ्रान्त्यपनोदाय हि इदं वचनम् 'हृदि श्रिताः' 'हृदयस्य शोकाः' इति च । हृदयकरणसंबन्धातीतश्च अयम् अस्मिन्काले 'अतिक्रामति मृत्यो रूपाणि' इति हि उक्तम्; हृदयकरणसंबन्धातीतत्वात्, तत्संश्रयकामसंबन्धातीतो भवतीति युक्ततरं वचनम् ॥

ये तु वादिनः— हृदि श्रिताः कामा वासनाश्च हृदयसंबन्धिनमात्मानमुपसृप्य उपश्लिष्यन्ति, हृदयवियोगेऽपि च आत्मनि अवतिष्ठन्ते पुटतैलस्थ इव पुष्पादिगन्धः— इत्याचक्षते; तेषाम् 'कामः संकल्पः' 'हृदये ह्येव रूपाणि' 'हृदयस्य शोकाः' इत्यादीनां वचनानामानर्थक्यमेव । हृदयकरणोत्पाद्यत्वादिति चेत्, न, 'हृदि श्रिताः' इति विशेष-

णात्; न हि हृदयस्य करणमात्रत्वे 'हृदि श्रिताः' इति वचनं समञ्जसम्, 'हृदये ह्येव रूपाणि प्रतिष्ठितानि' इति च। आत्मविशुद्धेश्च विवक्षितत्वात् हृच्छ्रयणवचनं यथार्थमेव युक्तम्; 'ध्यायतीव लेलायतीव' इति च श्रुतेः अन्यार्थासंभवात्। 'कामा येऽस्य हृदि श्रिताः' इति विशेषणात् आत्माश्रया अपि सन्तीति चेत्, न, अनाश्रितापेक्षत्वात्। न अत्र आश्रयान्तरमपेक्ष्य 'ये हृदि' इति विशेषणम्, किं तर्हि ये हृदि अनाश्रिताः कामाः तानपेक्ष्य विशेषणम्; ये तु अप्ररूढा भविष्यन्तः, भूताश्च प्रतिपक्षतो निवृत्ताः, ते नैव हृदि श्रिताः; संभाव्यन्ते च ते; अतो युक्तं तानपेक्ष्य विशेषणम्— ये प्ररूढा वर्तमाना विषये ते सर्वे प्रमुच्यन्ते इति। तथापि विशेषणानर्थक्यमिति चेत्, न, तेषु यत्नाधिक्यात्, हेयार्थत्वात्; इतरथा अश्रुतमनिष्टं च कल्पितं स्यात् आत्माश्रयत्वं कामानाम्। 'न कंचन कामं कामयते' इति प्राप्तप्रतिषेधात् आत्माश्रयत्वं कामानां श्रुतमेवेति चेत्, न, 'सधीः स्वप्नो भूत्वा' इति परनिमित्तत्वात् कामाश्रयत्वप्राप्तेः; असङ्गवचनाच्च; न हि कामाश्रयत्वे असङ्गवचनमुपपद्यते; सङ्गश्च काम इत्यवोचाम। 'आत्मकामः' इति श्रुतेः आत्मविषयोऽस्य कामो भवतीति चेत्, न, व्यतिरिक्तकामाभावार्थत्वात् तस्याः। वैशेषिकादितन्त्रन्यायोपपन्नम् आ-

त्मनः कामाद्याश्रयत्वमिति चेत्, न, 'हृदि श्रिताः' इत्यादिविशेषश्रुतिविरोधात् अनपेक्ष्याः ताः वैशेषिकादितन्त्रोपपत्तयः; श्रुतिविरोधे न्यायाभासत्वोपगमात् । स्वयंज्योतिष्ट्वबाधनाच्च; कामादीनां च स्वप्ने केवलदृशिमात्रविषयत्वात् स्वयंज्योतिष्ट्वं सिद्धं स्थितं च बाध्येत— आत्मसमवायित्वे दृश्यत्वानुपपत्तेः, चक्षुर्गतविशेषवत्; द्रष्टुर्हि दृश्यम् अर्थान्तरभूतमिति, द्रष्टुः स्वयंज्योतिष्ट्वं सिद्धम्; तत् बाधितं स्यात्, यदि कामाद्याश्रयत्वं परिकल्प्येत । सर्वशास्त्रार्थविप्रतिषेधाच्च— परस्य एकदेशकल्पनायां कामाद्याश्रयत्वे च सर्वशास्त्रार्थजातं कुप्येत; एतच्च विस्तरेण चतुर्थेऽवोचाम; महता हि प्रयत्नेन कामाद्याश्रयत्वकल्पनाः प्रतिषेद्धव्याः, आत्मनः परेणैकत्वशास्त्रार्थसिद्धये; तत्कल्पनायां पुनः क्रियमाणायां शास्त्रार्थ एव बाधितः स्यात् । यथा इच्छादीनामात्मधर्मत्वं कल्पयन्तः वैशेषिका नैयायिकाश्च उपनिषच्छास्त्रार्थेन न संगच्छन्ते, तथा इयमपि कल्पना उपनिषच्छास्त्रार्थबाधनात् न आदरणीया ॥

स्त्रीपुंसयोरिव एकत्वात् न पश्यतीत्युक्तम्, स्वयंज्योतिरिति च; स्वयंज्योतिष्ट्वं नाम चैतन्यात्मस्वभावता; यदि हि अग्न्युष्णत्वादिवत् चैतन्यात्मस्वभाव आत्मा, सः कथम् एकत्वेऽपि हि स्वभावं जह्यात्, न जानीयात्? अथ न जहाति,

कथमिह सुषुप्ते न पश्यति? विप्रतिषिद्धमेतत्— चैतन्यमात्मस्वभावः, न जानाति चेति। न विप्रतिषिद्धम्, उभयमप्येतत् उपपद्यत एव; कथम्—

**यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ २३ ॥**

यद्वै सुषुप्ते तत् न पश्यति, पश्यन्वै तत् तत्र पश्यन्नेव न पश्यति। यत् तत्र सुषुप्ते न पश्यतीति जानीषे, तत् न तथा गृह्णीयाः; कस्मात्? पश्यन्वै भवति तत्र। ननु एवं न पश्यतीति सुषुप्ते जानीमः, यतः न चक्षुर्वा मनो वा दर्शने करणं व्यापृतमस्ति; व्यापृतेषु हि दर्शनश्रवणादिषु, पश्यतीति व्यवहारो भवति, शृणोतीति वा; न च व्यापृतानि करणानि पश्यामः; तस्मात् न पश्यत्येव अयम्। न हि; किं तर्हि पश्यन्नेव भवति; कथम्? न— हि यस्मात् द्रष्टुः दृष्टिकर्तुः या दृष्टिः, तस्या दृष्टेः विपरिलोपः विनाशः, सः न विद्यते। यथा अग्नेरौष्ण्यं यावदग्निभावि, तथा अयं च आत्मा द्रष्टा अविनाशी, अतः अविनाशित्वात् आत्मनो दृष्टिरपि अविनाशिनी, यावद्द्रष्ट-

भाविनी हि सा। ननु विप्रतिषिद्धमिदमभिधीयते— द्रष्टुः सा दृष्टिः न विपरिलुप्यते इति च; दृष्टिश्च द्रष्ट्रा क्रियते; दृष्टिकर्तृत्वात् हि द्रष्टेत्युच्यते; क्रियमाणा च द्रष्ट्रा दृष्टिः न विपरिलुप्यत इति च अशक्यं वक्तुम्; ननु न विपरिलुप्यते इति वचनात् अविनाशिनी स्यात्, न, वचनस्य ज्ञापकत्वात्; न हि न्यायप्राप्तो विनाशः कृतकस्य वचनशतेनापि वारयितुं शक्यते, वचनस्य यथाप्राप्तार्थज्ञापकत्वात्। नैष दोषः, आदित्यादिप्रकाशकत्ववत् दर्शनोपपत्तेः; यथा आदित्यादयः नित्यप्रकाशस्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति; न हि अप्रकाशात्मानः सन्तः प्रकाशं कुर्वन्तः प्रकाशयन्तीत्युच्यन्ते, किं तर्हि स्वभावेनैव नित्येन प्रकाशेन— तथा अयमपि आत्मा अविपरिलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यते। गौणं तर्हि द्रष्टृत्वम्, न, एवमेव मुख्यत्वोपपत्तेः; यदि हि अन्यथापि आत्मनो द्रष्टृत्वं दृष्टम्, तदा अस्य द्रष्टृत्वस्य गौणत्वम्; न तु आत्मनः अन्यो दर्शनप्रकारोऽस्ति; तत् एवमेव मुख्यं द्रष्टृत्वमुपपद्यते, नान्यथा— यथा आदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वाभाविकेन अक्रियमाणेन प्रकाशेन, तदेव च प्रकाशयितृत्वं मुख्यम्, प्रकाशयितृत्वान्तरानुपपत्तेः। तस्मात् न द्रष्टुः दृष्टिः विपरिलुप्यते इति न विप्रतिषेधगन्धोऽप्यस्ति।

ननु अनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययान्तस्य शब्दस्य प्रयोगो दृष्टः— यथा छेत्ता भेत्ता गन्तेति, तथा द्रष्टेत्यत्रापीति चेत्— न, प्रकाशयितेति दृष्टत्वात् । भवतु प्रकाशकेषु, अन्यथा असंभवात्, न त्वात्मनीति चेत्— न, दृष्ट्यविपरिलोपश्रुतेः । पश्यामि— न पश्यामि— इत्यनुभवदर्शनात् नेति चेत्, न, करणव्यापारविशेषापेक्षत्वात्; उद्धृतचक्षुषां च स्वप्ने आत्मदृष्टेरविपरिलोपदर्शनात् । तस्मात् अविपरिलुप्तस्वभावैव आत्मनो दृष्टिः; अतः तया अविपरिलुप्तया दृष्ट्या स्वयंज्योतिःस्वभावया पश्यन्नेव भवति सुषुप्ते ॥

कथं तर्हि न पश्यतीति उच्यते— न तु तदस्ति; किं तत्? द्वितीयं विषयभूतम्; किंविशिष्टम्? ततः द्रष्टुः अन्यत् अन्यत्वेन विभक्तम् यत्पश्येत् यदुपलभेत । यद्धि तद्विशेषदर्शनकारणमन्तःकरणम् चक्षू रूपं च, तत् अविद्यया अन्यत्वेन प्रत्युपस्थापितमासीत्; तत् एतस्मिन्काले एकीभूतम्, आत्मनः परेण परिष्वङ्गात्; द्रष्टुर्हि परिच्छिन्नस्य विशेषदर्शनाय करणम् अन्यत्वेन व्यवतिष्ठते; अयं तु स्वेन सर्वात्मना संपरिष्वक्तः— स्वेन परेण प्राज्ञेन आत्मना, प्रिययेव पुरुषः; तेन न पृथक्त्वेन व्यवस्थितानि करणानि, विषयाश्च; तदभावात् विशेषदर्शनं नास्ति; करणादिकृतं हि तत्, न आत्मकृतम्; आत्मकृतमिव प्रत्यवभासते । तस्मात्

तत्कृता इयं भ्रान्तिः— आत्मनो दृष्टिः परिलुप्यते इति ॥

यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

यद्वै तन्न रसयते रसयन्वै तन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

यद्वै तन्न वदति वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते

न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥

समानमन्यत्— यद्वै तन्न जिघ्रति, यद्वै तन्न रसयते, यद्वै तन्न वदति, यद्वै तन्न शृणोति, यद्वै तन्न मनुते, यद्वै तन्न स्पृशति, यद्वै तन्न विजानातीति । मननविज्ञानयोः दृष्ट्यादिसहकारित्वेऽपि सति चक्षुरादिनिरपेक्षो भूतभविष्यद्वर्तमानविषयव्यापारो विद्यत इति पृथग्ग्रहणम् ॥

किं पुनः दृष्ट्यादीनाम् अग्नेरौष्ण्यप्रकाशनज्वलनादिवत् धर्मभेदः, आहोस्वित् अभिन्नस्यैव धर्मस्य परोपाधिनिमित्तं धर्मान्यत्वमिति । अत्र केचिद्व्याचक्षते— आत्मवस्तुनः स्वत

एव एकत्वं नानात्वं च— यथा गोः गोद्रव्यतया एकत्वम्, सास्नादीनां धर्माणां परस्परतो भेदः; यथा स्थूलेषु एकत्वं नानात्वं च, तथा निरवयवेषु अमूर्तवस्तुषु एकत्वं नानात्वं च अनुमेयम्; सर्वत्र अव्यभिचारदर्शनात् आत्मनोऽपि तद्वदेव दृष्टयादीनां परस्परं नानात्वम्, आत्मना चैकत्वमिति । न, अन्यपरत्वात्—— न हि दृष्ट्यादिधर्मभेदप्रदर्शनपरम् इदं वाक्यम् 'यद्वै तत्' इत्यादि; किं तर्हि, यदि चैतन्यात्मज्योतिः, कथं न जानाति सुषुप्ते? नूनम् अतो न चैतन्यात्मज्योतिः— इत्येवमाशङ्काप्राप्तौ, तन्निराकरणाय एतदारब्धम् 'यद्वै तत' इत्यादि । यत् अस्य जाग्रत्स्वप्नयोः चक्षुराद्यनेकोपाधिद्वारं चैतन्यात्मज्योतिःस्वाभाव्यम् उपलक्षितं दृष्टयाद्यभिधेयव्यवहारापन्नम्, सुषुप्ते उपाधिभेदव्यापारनिवृत्तौ अनुद्भास्यमानत्वात् अनुपलक्ष्यमाणस्वभावमपि उपाधिभेदेन भिन्नमिव—— यथाप्राप्तानुवादेनैव विद्यमानत्वमुच्यते; तत्र दृष्टयादिधर्मभेदकल्पना विवक्षितार्थानभिज्ञतया; सैन्धवघनवत् प्रज्ञानैकरसघनश्रुतिविरोधाच्च; 'विज्ञानमानन्दम्' 'सत्यं ज्ञानम्' 'प्रज्ञानं ब्रह्म' इत्यादिश्रुतिभ्यश्च । शब्दप्रवृत्तेश्च—— लौकिकी च शब्दप्रवृत्तिः— 'चक्षुषा रूपं विजानाति' 'श्रोत्रेण शब्दं विजानाति' 'रसनेनान्नस्य रसं विजानाति' इति च सर्वत्रैव च दृष्टयादिशब्दाभिधेयानां विज्ञानशब्दवाच्यता-

मेव दर्शयति; शब्दप्रवृत्तिश्च प्रमाणम्। दृष्टान्तोपपत्तेश्च— यथा हि लोके स्वच्छस्वाभाव्ययुक्तः स्फटिकः तन्निमित्तमेव केवलं हरितनीललोहिताद्युपाधिभेदसंयोगात् तदाकारत्वं भजते, न च स्वच्छस्वाभाव्यव्यतिरेकेण हरितनीललोहितादिलक्षणा धर्मभेदाः स्फटिकस्य कल्पयितुं शक्यन्ते— तथा चक्षुराद्युपाधिभेदसंयोगात् प्रज्ञानघनस्वभावस्यैव आत्मज्योतिषः दृष्ट्यादिशक्तिभेद उपलक्ष्यते, प्रज्ञानघनस्य स्वच्छस्वाभाव्यात् स्फटिकस्वच्छस्वाभाव्यवत्। स्वयंज्योतिष्ट्वाच्च— यथा च आदित्यज्योतिः अवभास्यभेदैः संयुज्यमानं हरितनीलपीतलोहितादिभेदैरविभाज्यं तदाकाराभासं भवति, तथा च कृत्स्नं जगत् अवभासयत् चक्षुरादीनि च तदाकारं भवति; तथा चोक्तम्— 'आत्मनैवायं ज्योतिषास्ते' इत्यादि। न च निरवयवेषु अनेकात्मता शक्यते कल्पयितुम्, दृष्टान्ताभावात्। यदपि आकाशस्य सर्वगतत्वादिधर्मभेदः परिकल्प्यते, परमाण्वादीनां च गन्धरसाद्यनेकगुणत्वम्, तदपि निरूप्यमाणं परोपाधिनिमित्तमेव भवति; आकाशस्य तावत् सर्वगतत्वं नाम न स्वतो धर्मोऽस्ति; सर्वोपाधिसंश्रयाद्धि सर्वत्र स्वेन रूपेण सत्त्वमपेक्ष्य सर्वगतत्वव्यवहारः; न तु आकाशः कचिद्गतो वा, अगतो वा स्वतः; गमनं हि नाम देशान्तरस्थस्य देशान्तरेण संयोगकारणम्; सा

च क्रिया नैव अविशेषे संभवति; एवं धर्मभेदा नैव सन्त्याकाशे। तथा परमाण्वादावपि। परमाणुर्नाम पृथिव्या गन्धघनाया: परमसूक्ष्म: अवयव: गन्धात्मक एव; न तस्य पुन: गन्धवत्त्वं नाम शक्यते कल्पयितुम्; अथ तस्यैव रसादिमत्त्वं स्यादिति चेत्, न, तत्रापि अबादिसंसर्गनिमित्तत्वात्। तस्मात् न निरवयवस्य अनेकधर्मवत्त्वे दृष्टान्तोऽस्ति। एतेन दृगादिशक्तिभेदानां पृथक् चक्षूरूपादिभेदेन परिणामभेदकल्पना परमात्मनि प्रत्युक्ता॥

**यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात्॥**

जाग्रत्स्वप्नयोरिव यद्विजानीयात्, तत् द्वितीयं प्रविभक्तमन्यत्वेन नास्तीत्युक्तम्; अत: सुषुप्ते न विजानाति विशेषम्। ननु यदि अस्य अयमेव स्वभाव:, किंनिमित्तम् अस्य विशेषविज्ञानं स्वभावपरित्यागेन; अथ विशेषविज्ञानमेव अस्य स्वभाव:, कस्मादेष विशेषं न विजानातीति। उच्यते, शृणु— यत्र यस्मिन् जागरिते स्वप्ने वा अन्यदिव आत्मनो वस्त्वन्तरमिव अविद्यया प्रत्युपस्थापितं भवति, तत्र तस्मा-

दविद्याप्रत्युपस्थापितात् अन्यः अन्यमिव आत्मानं मन्यमानः —असति आत्मनः प्रविभक्ते वस्त्वन्तरे, असति च आत्मनि ततः प्रविभक्तेः, अन्यः अन्यत् पश्येत् उपलभेत; तच्च दर्शितं स्वप्ने प्रत्यक्षतः— 'घ्नन्तीव जिनन्तीव' इति। तथा अन्यः अन्यत् जिघ्रेत् रसयेत् वदेत् शृणुयात् मन्वीत स्पृशेत् विजानीयादिति ॥

**सलिल एको द्रष्टाद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥**

यत्र पुनः सा अविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता, तेन अन्यत्वेन अविद्याप्रविभक्तस्य वस्तुनः अभावात्, तत् केन कं पश्येत् जिघ्रेत् विजानीयाद्वा। अतः स्वेनैव हि प्राज्ञेन आत्मना स्वयंज्योतिःस्वभावेन संपरिष्वक्तः समस्तः संप्रसन्नः आप्तकामः आत्मकामः, सलिलवत् स्वच्छीभूतः— सलिल इव सलिलः, एकः द्वितीयस्याभावात्; अविद्यया हि द्वितीयः प्रविभज्यते; सा च शान्ता

अत्र, अतः एकः ; द्रष्टा दृष्टेरविपरिलुप्तत्वात् आत्मज्योतिः-स्वभावायाः ; अद्वैतः द्रष्टव्यस्य द्वितीयस्याभावात् । एतत् अमृतम् अभयम् ; एष ब्रह्मलोकः, ब्रह्मैव लोकः ब्रह्मलोकः ; पर एव अयम् अस्मिन्काले व्यावृत्तकार्यकरणोपाधिभेदः स्वे आत्मज्योतिषि शान्तसर्वसंबन्धो वर्तते, हे सम्राट्— इति ह एवं ह, एनं जनकम् अनुशशास अनुशिष्टवान् याज्ञवल्क्यः इति श्रुतिवचनमेतत् । कथं वा अनुशशास ? एषा अस्य विज्ञानमयस्य परमा गतिः ; यास्तु अन्याः देहग्रहणलक्षणाः ब्रह्मादिस्तम्बपर्यन्ताः अविद्याकल्पिताः, ता गतयः अतः अपरमाः, अविद्याविषयत्वात् ; इयं तु देवत्वादिगतीनां कर्मविद्यासाध्यानां परमा उत्तमा—यः समस्तात्मभावः, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीति । एषैव च परमा संपत्— सर्वासां संपदां विभूतीनाम् इयं परमा, स्वाभाविकत्वात् अस्याः ; कृतका हि अन्याः संपदः । तथा एषोऽस्य परमो लोकः ; ये अन्ये कर्मफलाश्रया लोकाः, ते अस्मात् अपरमाः ; अयं तु न केनचन कर्मणा मीयते, स्वाभाविकत्वात् ; एषोऽस्य परमो लोकः । तथा एषोऽस्य परम आनन्दः ; यानि अन्यानि विषयेन्द्रियसंबन्धजनितानि आनन्दजातानि, तान्यपेक्ष्य एषोऽस्य परम आनन्दः, नित्यत्वात् ; 'यो वै भूमा तत्सुखम्' इति श्रुत्यन्तरात् ; यत्र अन्यत्प-

श्यति अन्यद्विजानाति, तत् अल्पं मर्त्यम् अमुख्यं सुखम्; इदं तु तद्विपरीतम्; अत एव एषोऽस्य परम आनन्दः। एतस्यैव आनन्दस्य मात्रां कलाम् अविद्याप्रत्युपस्थापितां विषयेन्द्रियसंबन्धकालविभाव्याम् अन्यानि भूतानि उपजीवन्ति; कानि तानि? तत एव आनन्दात् अविद्यया प्रविभज्यमानस्वरूपाणि, अन्यत्वेन तानि ब्रह्मणः परिकल्प्यमानानि अन्यानि सन्ति उपजीवन्ति भूतानि, विषयेन्द्रियसंपर्कद्वारेण विभाव्यमानाम् ॥

**स यो मनुष्याणाँ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनो**

ऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति ॥ ३३ ॥

यस्य परमानन्दस्य मात्रा अवयवाः ब्रह्मादिभिर्मनुष्यपर्यन्तैः भूतैः उपजीव्यन्ते, तदानन्दमात्राद्वारेण मात्रिणं परमानन्दम् अधिजिगमयिषन् आह, सैन्धवलवणशकलैरिव लवणशैलम् । सः यः कश्चित् मनुष्याणां मध्ये, राद्धः संसिद्धः अविकलः समग्रावयव इत्यर्थः, समृद्धः उपभोगोपकरणसंपन्नः भवति ; किं च अन्येषां समानजातीयानाम् अधिपतिः स्वतन्त्रः पतिः, न माण्डलिकः ; सर्वैः समस्तैः, मानुष्यकैरिति दिव्यभोगोपकरणनिवृत्त्यर्थम् , मनुष्याणामेव

यानि भोगोपकरणानि तैः— संपन्नानामपि अतिशयेन संपन्नः संपन्नतमः— स मनुष्याणां परम आनन्दः । तत्र आनन्दानन्दिनोः अभेदनिर्देशात् न अर्थान्तरभूतत्वमित्येतत्; परमानन्दस्यैव इयं विषयविषय्याकारेण मात्रा प्रसृतेति हि उक्तम् 'यत्र वा अन्यदिव स्यात्' इत्यादिवाक्येन; तस्मात् युक्तोऽयम्—'परम आनन्दः' इत्यभेदनिर्देशः । युधिष्ठिरादितुल्यो राजा अत्र उदाहरणम् । दृष्टं मनुष्यानन्दम् आदिं कृत्वा शतगुणोत्तरोत्तरक्रमेण उन्नीय परमानन्दम्, यत्र भेदो निवर्तते तमधिगमयति; अत्र अयमानन्दः शतगुणोत्तरोत्तरक्रमेण वर्धमानः यत्र वृद्धिकाष्ठामनुभवति, यत्र गणितभेदो निवर्तते, अन्यदर्शनश्रवणमननाभावात्, तं परमानन्दं विवक्षन् आह— अथ ये मनुष्याणाम् एवंप्रकाराः शतमानन्दभेदाः, स एकः पितृणाम्; तेषां विशेषणम्— जितलोकानामिति; श्राद्धादिकर्मभिः पितॄन् तोषयित्वा तेन कर्मणा जितो लोको येषाम्, ते जितलोकाः पितरः; तेषां पितृणां जितलोकानां मनुष्यानन्दशतगुणीकृतपरिमाण एक आनन्दो भवति । सोऽपि शतगुणीकृतः गन्धर्वलोके एक आनन्दो भवति । स च शतगुणीकृतः कर्मदेवानाम् एक आनन्दः; अग्निहोत्रादिश्रौतकर्मणा ये देवत्वं प्राप्नुवन्ति, ते कर्मदेवाः । तथैव आजानदेवानाम् एक आनन्दः; आजानत

एव उत्पत्तित एव ये देवाः, ते आजानदेवाः; यश्च श्रोत्रियः अधीतवेदः, अवृजिनः वृजिनं पापम् तद्रहितः यथोक्तकारीत्यर्थः, अकामहतः वीततृष्णः आजानदेवेभ्योऽर्वाक् यावन्तो विषयाः तेषु— तस्य च एवंभूतस्य आजानदेवैः समान आनन्द इत्येतदन्वाकृष्यते च-शब्दात् । तच्छतगुणीकृतपरिमाणः प्रजापतिलोके एक आनन्दो विराट्शरीरे; तथा तद्विज्ञानवान् श्रोत्रियः अधीतवेदश्च अवृजिन इत्यादि पूर्ववत् । तच्छतगुणीकृतपरिमाण एक आनन्दो ब्रह्मलोके हिरण्यगर्भात्मनि; यश्चेत्यादि पूर्ववदेव । अतः परं गणितनिवृत्तिः; एष परम आनन्द इत्युक्तः, यस्य च परमानन्दस्य ब्रह्मलोकाद्यानन्दा मात्राः, उदधेरिव विप्रुषः । एवं शतगुणोत्तरोत्तरवृद्ध्युपेता आनन्दाः यत्र एकतां यान्ति, यश्च श्रोत्रियप्रत्यक्षः, अथ एष एव संप्रसादलक्षणः परम आनन्दः; तत्र हि नान्यत्पश्यति नान्यच्छृणोति; अतो भूमा, भूमत्वादमृतः; इतरे तद्विपरीताः । अत्र च श्रोत्रियत्वावृजिनत्वे तुल्ये; अकामहतत्वकृतो विशेषः आनन्दशतगुणवृद्धिहेतुः; अत्र एतानि साधनानि श्रोत्रियत्वावृजिनत्वाकामहतत्वानि तस्य तस्य आनन्दस्य प्राप्तौ अर्थादभिहितानि, यथा कर्माणि अग्निहोत्रादीनि देवानां देवत्वप्राप्तौ; तत्र च श्रोत्रियत्वावृजिनत्वलक्षणे कर्मणी अधरभूमिष्वपि समाने इति न

उत्तरानन्दप्राप्तिसाधने अभ्युपेयेते; अकामहतत्वं तु वैराग्यतारतम्योपपत्तेः उत्तरोत्तरभूम्यानन्दप्राप्तिसाधनमित्यवगम्यते। स एष परमः आनन्दः वितृष्णश्रोत्रियप्रत्यक्षः अधिगतः। तथा च वेदव्यासः— 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। एष ब्रह्मलोकः, हे सम्राट्— इति ह उवाच याज्ञवल्क्यः। सोऽहम् एवम् अनुशिष्टः भगवते तुभ्यम् सहस्रं ददामि गवाम्; अत ऊर्ध्वं विमोक्षायैव ब्रूहि— इति व्याख्यातमेतत्। अत्र ह विमोक्षायेत्यस्मिन्वाक्ये, याज्ञवल्क्यः बिभयांचकार भीतवान्; याज्ञवल्क्यस्य भयकारणमाह श्रुतिः— न याज्ञवल्क्यो वक्तृत्वसामर्थ्याभावाद्भीतवान्, अज्ञानाद्वा; किं तर्हि मेधावी राजा सर्वेभ्यः, मा माम्, अन्तेभ्यः प्रश्ननिर्णयावसानेभ्यः, उदरौत्सीत् आवृणोत् अवरोधं कृतवानित्यर्थः; यद्यत् मया निर्णीतं प्रश्नरूपं विमोक्षार्थम्, तत्तत् एकदेशत्वेनैव कामप्रश्नस्य गृहीत्वा पुनः पुनः मां पर्यनुयुङ्क्त एव, मेधावित्वात्— इत्येतद्भयकारणम्— सर्वं मदीयं विज्ञानं कामप्रश्नव्याजेन उपादित्सतीति॥

**स वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रति-**

**न्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥**

अत्र विज्ञानमयः स्वयंज्योतिः आत्मा स्वप्ने प्रदर्शितः, स्वप्नान्तबुद्धान्तसंचारेण कार्यकरणव्यतिरिक्तता, कामकर्मप्रविवेकश्च असङ्गतया महामत्स्यदृष्टान्तेन प्रदर्शितः ; पुनश्च अविद्याकार्यं स्वप्न एव 'घ्नन्तीव' इत्यादिना प्रदर्शितम् ; अर्थात् अविद्यायाः सतत्त्वं निर्धारितम् अतद्धर्माध्यारोपणरूपत्वम् अनात्मधर्मत्वं च ; तथा विद्यायाश्च कार्यं प्रदर्शितम्, सर्वात्मभावः, स्वप्ने एव प्रत्यक्षतः— 'सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इति ; तत्र च सर्वात्मभावः स्वभावोऽस्य, एवम् अविद्याकामकर्मादिसर्वसंसारधर्मसंबन्धातीतं रूपमस्य, साक्षात् सुषुप्ते गृह्यते— इत्येतद्विज्ञापितम् ; स्वयंज्योतिरात्मा एषः परम आनन्दः, एष विद्याया विषयः, स एष परमः संप्रसादः, सुखस्य च परा काष्ठा— इत्येतत् एवमन्तेन ग्रन्थेन व्याख्यातम् । तच्च एतत् सर्वं विमोक्षपदार्थस्य दृष्टान्तभूतम्, बन्धनस्य च ; ते च एते मोक्षबन्धने सहेतुके सप्रपञ्चे निर्दिष्टे विद्याविद्याकार्ये, तत्सर्वं दृष्टान्तभूतमेव— इति, तद्दार्ष्टान्तिकस्थानीये मोक्षबन्धने सहेतुके कामप्रश्नार्थभूते त्वया वक्तव्ये इति पुनः पर्यनुयुङ्क्ते जनकः— अत ऊर्ध्वं विमोक्षायैव ब्रूहीति । तत्र महामत्स्यवत् स्वप्नबुद्धान्तौ असङ्गः संचरति एक आत्मा स्वयंज्योति-

रित्युक्तम्; यथा च असौ कार्यकरणानि मृत्युरूपाणि परित्यजन् उपाददानश्च महामत्स्यवत् स्वप्नबुद्धान्तावनुसंचरति, तथा जायमानो म्रियमाणश्च तैरेव मृत्युरूपैः संयुज्यते वियुज्यते च— 'उभौ लोकावनुसंचरति' इति संचरणं स्वप्नबुद्धान्तानुसंचारस्य दार्ष्टान्तिकत्वेन सूचितम् । तदिह विस्तरेण सनिमित्तं संचरणं वर्णयितव्यमिति तदर्थोऽयमारम्भः । तत्र च बुद्धान्तात् स्वप्नान्तम् अयमात्मा अनुप्रवेशितः; तस्मात् संप्रसादस्थानं मोक्षदृष्टान्तभूतम्; ततः प्राच्यव्य बुद्धान्ते संसारव्यवहारः प्रदर्शयितव्य इति तेन अस्य संबन्धः । स वै बुद्धान्तात् स्वप्नान्तक्रमेण संप्रसन्नः एषः एतस्मिन् संप्रसादे स्थित्वा, ततः पुनः ईषत्प्रच्युतः— स्वप्नान्ते रत्वा चरित्वेत्यादि पूर्ववत्— बुद्धान्तायैव आद्रवति ॥

**तद्यथानः सुसमाहितमुत्सर्जद्यायादेवमेवायꣳ शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥**

इत आरभ्य अस्य संसारो वर्ण्यते । यथा अयमात्मा स्वप्नान्तात् बुद्धान्तमागतः; एवम् अयम् अस्माद्देहात् देहान्तरं प्रतिपत्स्यत इति आह अत्र दृष्टान्तम्— तत् तत्र

यथा लोके अनः शकटम्, सुसमाहितं सुष्ठु भृशं वा समाहितम् भाण्डोपस्करणेन उलूखलमुसलशूर्पपिठरादिना अन्नाद्येन च संपन्नम् संभारेण आक्रान्तमित्यर्थः; तथा भाराक्रान्तं सत्, उत्सर्जत् शब्दं कुर्वत्, यथा यायात् गच्छेत् शाकटिकेनाधिष्ठितं सत्; एवमेव यथा उक्तो दृष्टान्तः, अयं शारीरः शरीरे भवः— कोऽसौ? आत्मा लिङ्गोपाधिः, यः स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां पाप्मसंसर्गवियोगलक्षणाभ्याम् इहलोकपरलोकावनुसंचरति, यस्योत्क्रमणमनु प्राणाद्युत्क्रमणम्— सः प्राज्ञेन परेण आत्मना स्वयंज्योतिःस्वभावेन अन्वारूढः अधिष्ठितः अवभास्यमानः— तथा चोक्तम् 'आत्मनैवायं ज्योतिषास्ते पल्ययते' इति—उत्सर्जन्याति। तत्र चैतन्यात्मज्योतिषा भास्ये लिङ्गे प्राणप्रधाने गच्छति, तदुपाधिरप्यात्मा गच्छतीव; तथा श्रुत्यन्तरम्— 'कस्मिन्न्वहम्' इत्यादि, 'ध्यायतीव' इति च; अत एवोक्तम्— प्राज्ञेनात्मनान्वारूढ इति; अन्यथा प्राज्ञेन एकीभूतः शकटवत् कथम् उत्सर्जयन् याति। तेन लिङ्गोपाधिरात्मा उत्सर्जन् मर्मसु निकृत्यमानेषु दुःखवेदनया आर्तः शब्दं कुर्वन् याति गच्छति। तत् कस्मिन्काले इत्युच्यते— यत्र एतद्भवति, एतदिति क्रियाविशेषणम्, ऊर्ध्वोच्छ्वासी, यत्र ऊर्ध्वोच्छ्वासित्वमस्य भवतीत्यर्थः।

दृश्यमानस्याप्यनुवदनं वैराग्यहेतोः; ईदृशः कष्टः खलु अयं संसारः— येन उत्क्रान्तिकाले मर्मसु उत्कृत्यमानेषु स्मृतिलोपः दुःखवेदनार्तस्य पुरुषार्थसाधनप्रतिपत्तौ च असामर्थ्यं परवशीकृतचित्तस्य; तस्मात् यावत् इयमवस्था न आगमिष्यति, तावदेव पुरुषार्थसाधनकर्तव्यतायाम् अप्रमत्तो भवेत्— इत्याह कारुण्यात् श्रुतिः ॥

**स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥**

तदस्य ऊर्ध्वोच्छ्वासित्वं कस्मिन्काले किंनिमित्तं कथं किमर्थं वा स्यादित्येतदुच्यते—सोऽयं प्राकृतः शिरःपाण्यादिमान् पिण्डः, यत्र यस्मिन्काले अयम् अणिमानम् अणोर्भावम् अणुत्वम् कार्श्यमित्यर्थः, न्येति निगच्छति; किंनिमित्तम्? जरया वा स्वयमेव कालपक्वफलवत् जीर्णः कार्श्यं गच्छति; उपतपतीति उपतपन् ज्वरादिरोगः तेन उपतपता वा; उपतप्यमानो हि रोगेण विषमाग्नितया अन्नं भुक्तं न जरयति,

ततः अन्नरसेन अनुपचीयमानः पिण्डः कार्श्यमापद्यते, तदुच्यते— उपतपता वेति; अणिमानं निगच्छति। यदा अत्यन्तकार्श्यं प्रतिपन्नः जरादिनिमित्तैः, तदा ऊर्ध्वोच्छ्वासी भवति; यदा ऊर्ध्वोच्छ्वासी, तदा भृशाहितसंभारशकटवत् उत्सर्जन्याति। जराभिभवः रोगादिपीडनं कार्श्यापत्तिश्च शरीरवतः अवश्यंभाविन एतेऽनर्था इति वैराग्याय इदमुच्यते। यदा असौ उत्सर्जन्याति, तदा कथं शरीरं विमुञ्चतीति दृष्टान्त उच्यते— तत् तत्र यथा आम्रं वा फलम्, उदुम्बरं वा फलम्, पिप्पलं वा फलम्; विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तत्वख्यापनार्थम्; अनियतानि हि मरणस्य निमित्तानि असंख्यातानि च; एतदपि वैराग्यार्थमेव— यस्मात् अयम् अनेकमरणनिमित्तवान् तस्मात् सर्वदा मृत्योरास्ये वर्तत इति। बन्धनात्— बध्यते येन वृन्तेन सह, स बन्धनकारणो रसः, यस्मिन्वा बध्यत इति वृन्तमेव उच्यते बन्धनम्— तस्मात् रसात् वृन्ताद्वा बन्धनात् प्रमुच्यते वाताद्यनेकनिमित्तम्; एवमेव अयं पुरुषः लिङ्गात्मा लिङ्गोपाधिः एभ्योऽङ्गेभ्यः चक्षुरादिदेहावयवेभ्यः, संप्रमुच्य सम्यङ्निर्लेपेन प्रमुच्य— न सुषुप्तगमनकाल इव प्राणेन रक्षन्, किं तर्हि सह वायुना उपसंहृत्य, पुनः प्रतिन्यायम्— पुनःशब्दात् पूर्वमपि अयं

देहात् देहान्तरम् असकृत् गतवान् यथा स्वप्नबुद्धान्तौ पुनः पुनर्गच्छति तथा, पुनः प्रतिन्यायम् प्रतिगमनं यथागतमित्यर्थः, प्रतियोनिं योनिं योनिं प्रति कर्मश्रुतादिवशात् आद्रवति; किमर्थम्? प्राणायैव प्राणव्यूहायैवेत्यर्थः; सप्राण एव हि गच्छति, ततः 'प्राणायैव' इति विशेषणमनर्थकम्; प्राणव्यूहाय हि गमनं देहात् देहान्तरं प्रति; तेन हि अस्य कर्मफलोपभोगार्थसिद्धिः, न प्राणसत्तामात्रेण। तस्मात् तादर्थ्यार्थं युक्तं विशेषणम्— प्राणव्यूहायेति ॥

तत्र अस्य इदं शरीरं परित्यज्य गच्छतः न अन्यस्य देहान्तरस्योपादाने सामर्थ्यमस्ति, देहेन्द्रियवियोगात्; न च अन्ये अस्य भृत्यस्थानीयाः, गृहमिव राज्ञे, शरीरान्तरं कृत्वा प्रतीक्षमाणा विद्यन्ते; अथैवं सति, कथम् अस्य शरीरान्तरोपादानमिति। उच्यते— सर्वं ह्यस्य जगत् स्वकर्मफलोपभोगसाधनत्वाय उपात्तम्; स्वकर्मफलोपभोगाय च अयं प्रवृत्तः देहाद्देहान्तरं प्रतिपित्सुः; तस्मात् सर्वमेव जगत् स्वकर्मणा प्रयुक्तं तत्कर्मफलोपभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव, 'कृतं लोकं पुरुषोऽभिजायते' इति श्रुतेः— यथा स्वप्नात् जागरितं प्रतिपित्सोः। तत्कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते—

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः**

**सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येव ँ हैवंविद ँ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥**

तत् तत्र यथा राजानं राज्याभिषिक्तम् आयान्तं स्वराष्ट्रे, उग्राः जातिविशेषाः क्रूरकर्माणो वा, प्रत्येनसः— प्रति प्रति एनसि पापकर्मणि नियुक्ताः प्रत्येनसः, तस्करादिदण्डनादौ नियुक्ताः, सूताश्च ग्रामण्यश्च सूतग्रामण्यः— सूताः वर्णसंकरजातिविशेषाः, ग्रामण्यः ग्रामनेतारः, ते पूर्वमेव राज्ञ आगमनं बुद्ध्वा, अन्नैः भोज्यभक्ष्यादिप्रकारैः, पानैः मदिरादिभिः, आवसथैश्च प्रासादादिभिः, प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्ते— अयं राजा आयाति अयमागच्छतीत्येवं वदन्तः । यथा अयं दृष्टान्तः, एवं ह एवंविदं कर्मफलस्य वेदितारं संसारिणमित्यर्थः; कर्मफलं हि प्रस्तुतम्, तत् एवंशब्देन परामृश्यते; सर्वाणि भूतानि शरीरकर्तॄणि, करणानुग्रहीतॄणि च आदित्यादीनि, तत्कर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः प्रतीक्षन्ते— इदं ब्रह्म भोक्तृ कर्तृ च अस्माकम् आयाति, तथा इदमागच्छतीति एवमेव च कृत्वा प्रतीक्षन्त इत्यर्थः ॥

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३८॥**

इति तृतीयं ब्राह्मणम् ॥

तमेवं जिगमिषुं के सह गच्छन्ति ; ये वा गच्छन्ति, ते किं तत्क्रियाप्रणुन्नाः, आहोस्वित् तत्कर्मवशात् स्वयमेव गच्छन्ति— परलोकशरीरकर्तॄणि च भूतानीति । अत्रोच्यते दृष्टान्तः— तद्यथा राजानं प्रयियासन्तम् प्रकर्षेण यातुमिच्छन्तम्, उग्राः प्रत्येनसः सूतग्रामण्यः तं यथा अभिसमायन्ति आभिमुख्येन समायन्ति, एकीभावेन तमभिमुखा आयन्ति अनाज्ञप्ता एव राज्ञा केवलं तज्जिगमिषाभिज्ञाः, एवमेव इममात्मानं भोक्तारम् अन्तकाले मरणकाले सर्वे प्राणाः वागादयः अभिसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवतीति व्याख्यातम् ॥

इति चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ॥

## चतुर्थं ब्राह्मणम् ॥

स यत्रायमात्मा । संसारोपवर्णनं प्रस्तुतम्; 'तत्रायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य' इत्युक्तम् । तत्संप्रमोक्षणं कस्मिन्काले कथं वेति सविस्तरं संसरणं वर्णयितव्यमित्यारभ्यते—

**स यत्रायमात्माबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति ॥**

सोऽयम् आत्मा प्रस्तुतः, यत्र यस्मिन्काले, अबल्यम् अबलभावम्, नि एत्य गत्वा— यत् देहस्य दौर्बल्यम्, तत् आत्मन एव दौर्बल्यमित्युपचर्यते 'अबल्यं न्येत्य' इति; न ह्यसौ स्वतः अमूर्तत्वात् अबलभावं गच्छति— तथा संमोहमिव संमूढता संमोहः विवेकाभावः संमूढतामिव न्येति निगच्छति; न चास्य स्वतः संमोहः असंमोहो वा अस्ति, नित्यचैतन्यज्योतिःस्वभावत्वात्; तेन इवशब्दः— संमोहमिव न्येतीति; उत्क्रान्तिकाले हि करणोपसंहारनिमित्तो व्याकु-

लीभाव: आत्मन इव लक्ष्यते लौकिकैः; तथा च वक्तारो भवन्ति— संमूढः संमूढोऽयमिति। अथ वा उभयत्र इवशब्दप्रयोगो योज्यः——अबल्यमिव न्येत्य संमोहमिव न्येतीति, उभयस्य परोपाधिनिमित्तत्वाविशेषात्, समानकर्तृकनिर्देशाच्च। अथ अस्मिन्काले एते प्राणाः वागादयः एनमात्मानमभिसमायन्ति; तदा अस्य शारीरस्यात्मनः अङ्गेभ्यः संप्रमोक्षणम्। कथं पुनः संप्रमोक्षणम्, केन वा प्रकारेण आत्मानमभिसमायन्तीत्युच्यते——सः आत्मा, एतास्तेजोमात्राः तेजसो मात्राः तेजोमात्राः तेजोवयवाः रूपादिप्रकाशकत्वात्, चक्षुरादीनि करणानीत्यर्थः, ता एताः समभ्याददानः सम्यक् निर्लेपेन अभ्याददानः आभिमुख्येन आददानः संहरमाणः; तत् स्वप्नापेक्षया विशेषणं 'सम्' इति; न तु स्वप्ने निर्लेपेन सम्यगादानम्; अस्ति तु आदानमात्रम्; 'गृहीता वाक्' 'गृहीतं चक्षुः' 'अस्य लोकस्य सर्वावतो मात्रामपादाय' 'शुक्रमादाय' इत्यादिवाक्येभ्यः। हृदयमेव पुण्डरीकाकाशम् अन्ववक्रामति अन्वागच्छति, हृदयेऽभिव्यक्तविज्ञानो भवतीत्यर्थः— बुद्ध्यादिविक्षेपोपसंहारे सति; न हि तस्य स्वतश्चलनं विक्षेपोपसंहारादिविक्रिया वा, 'ध्यायतीव लेलायतीव' इत्युक्तत्वात्; बुद्ध्याद्युपाधिद्वारैव हि सर्वविक्रिया अध्यारोप्यते तस्मिन्। कदा पुनः तस्य तेजोमात्रा-

भ्यादानमित्युच्यते — सः यत्र एषः, चक्षुषि भवः चाक्षुषः पुरुषः आदित्यांशः भोक्तुः कर्मणा प्रयुक्तः यावद्देहधारणं तावत् चक्षुषोऽनुग्रहं कुर्वन् वर्तते; मरणकाले तु अस्य चक्षुरनुग्रहं परित्यजति, स्वम् आदित्यात्मानं प्रतिपद्यते; तदेतदुक्तम् — 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' इत्यादि; पुनः देहग्रहणकाले संश्रयिष्यन्ति; तथा स्वप्स्यतः प्रबुध्यतश्च; तदेतदाह — चाक्षुषः पुरुषः यत्र यस्मिन्काले, पराङ् पर्यावर्तते— परि समन्तात् पराङ् व्यावर्तते इति; अथ अत्र अस्मिन्काले अरूपज्ञो भवति, मुमूर्षुः रूपं न जानाति; तदा अयमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवति, स्वप्नकाल इव ॥

**एकी भवति न पश्यतीत्याहुरेकी भवति न जिघ्रतीत्याहुरेकी भवति न रसयत इत्याहुरेकी भवति न वदतीत्याहुरेकी भवति न शृणोतीत्याहुरेकी भवति न मनुत इत्याहुरेकी भवति न स्पृशतीत्याहुरेकी भवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा**

**मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥**

एकी भवति करणजातं स्वेन लिङ्गात्मना, तदा एनं पार्श्वस्था आहुः— पश्यतीति; तथा घ्राणदेवतानिवृत्तौ घ्राणमेकी भवति लिङ्गात्मना, तदा न जिघ्रतीत्याहुः। समानमन्यत्। जिह्वायां सोमो वरुणो वा देवता, तन्निवृत्त्यपेक्षया न रसयते इत्याहुः। तथा न वदति न शृणोति न मनुते न स्पृशति न विजानातीत्याहुः। तदा उपलक्ष्यते देवतानिवृत्तिः, करणानां च हृदय एकीभावः। तत्र हृदये उपसंहृतेषु करणेषु योऽन्तर्व्यापारः स कथ्यते— तस्य ह एतस्य प्रकृतस्य हृदयस्य हृदयच्छिद्रस्येत्येतत्, अग्रम् नाडीमुखं निर्गमनद्वारम्, प्रद्योतते, स्वप्नकाल इव, स्वेन भासा तेजोमात्रादानकृतेन, स्वेनैव ज्योतिषा आत्मनैव च; तेन आत्मज्योतिषा प्रद्योतेन हृदयाग्रेण एष आत्मा विज्ञानमयो लिङ्गोपाधिः निर्गच्छति निष्क्रामति। तथा आथर्वणे 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्या-

मीति स प्राणमसृजत' इति । तत्र च आत्मचैतन्यज्योतिः सर्वदा अभिव्यक्ततरम्; तदुपाधिद्वारा हि आत्मनि जन्ममरणगमनागमनादिसर्वविक्रियालक्षणः संव्यवहारः; तदात्मकं हि द्वादशविधं करणं बुद्ध्यादि, तत् सूत्रम्, तत् जीवनम्, सोऽन्तरात्मा जगतः तस्थुषश्च । तेन प्रद्योतेन हृदयाग्रप्रकाशेन निष्क्रममाणः केन मार्गेण निष्क्रामतीत्युच्यते—चक्षुष्टो वा, आदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा यदि स्यात्; मूर्ध्नो वा ब्रह्मलोकप्राप्तिनिमित्तं चेत्; अन्येभ्यो वा शरीरदेशेभ्यः शरीरावयवेभ्यः यथाकर्म यथाश्रुतम् । तं विज्ञानात्मानम्, उत्क्रामन्तम् परलोकाय प्रस्थितम्, परलोकाय उद्भूताकूतमित्यर्थः, प्राणः सर्वाधिकारिस्थानीयः राज्ञ इव अनूत्क्रामति; तं च प्राणमनूत्क्रामन्तं वागादयः सर्वे प्राणा अनूत्क्रामन्ति । यथाप्रधानान्वाचिख्यासा इयम्, न तु क्रमेण सार्थवत् गमनम् इह विवक्षितम् । तदा एष आत्मा सविज्ञानो भवति स्वप्न इव विशेषविज्ञानवान् भवति कर्मवशात्, न स्वतन्त्रः; स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यात्; नैव तु तत् लभ्यते; अत एवाह व्यासः—'सदा तद्भावभावितः' इति; कर्मणा तु उद्भाव्यमानेन अन्तःकरणवृत्तिविशेषाश्रितवासनात्मकविशेषविज्ञानेन सर्वो लोकः एतस्मिन्काले सविज्ञानो भवति; सविज्ञानमेव च गन्तव्यम् अन्ववक्रामति

अनुगच्छति विशेषविज्ञानोद्भासितमेवेत्यर्थः । तस्मात् तत्काले स्वातन्त्र्यार्थं योगधर्मानुसेवनम् परिसंख्यानाभ्यासश्च विशिष्टपुण्योपचयश्च श्रद्दधानैः परलोकार्थिभिः अप्रमत्तैः कर्तव्य इति । सर्वशास्त्राणां यत्नतो विधेयोऽर्थः— दुश्चरिताच्च उपरमणम् । न हि तत्काले शक्यते किंचित्संपादयितुम् , कर्मणा नीयमानस्य स्वातन्त्र्याभावात् । 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्युक्तम् । एतस्य ह्यनर्थस्य उपशमोपायविधानाय सर्वशास्त्रोपनिषदः प्रवृत्ताः । न हि तद्विहितोपायानुसेवनं मुक्त्वा आत्यन्तिकः अस्य अनर्थस्य उपशमोपायः अस्ति । तस्मात् अत्रैव उपनिषद्विहितोपाये यत्नपरैर्भवितव्यम्— इत्येष प्रकरणार्थः ॥

शकटवत्संभृतसंभार उत्सर्जन्यातीत्युक्तम् , किं पुनः तस्य परलोकाय प्रवृत्तस्य पथ्यदनं शाकटिकसंभारस्थानीयम् , गत्वा वा परलोकं यत् भुङ्क्ते, शरीराद्यारम्भकं च यत् तत्किम् इत्युच्यते— तं परलोकाय गच्छन्तमात्मानम् , विद्याकर्मणी— विद्या च कर्म च विद्याकर्मणी, विद्या सर्वप्रकारा विहिता प्रतिषिद्धा च अविहिता अप्रतिषिद्धा च, तथा कर्म विहितं प्रतिषिद्धं च अविहितमप्रतिषिद्धं च, समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः; पूर्वप्रज्ञा च— पूर्वानुभूतविषया प्रज्ञा पूर्वप्रज्ञा अतीतकर्मफला-

नुभववासनेत्यर्थः; सा च वासना अपूर्वकर्मारम्भे कर्मविपाके च अङ्गं भवति; तेन असावपि अन्वारभते; न हि तया वासनया विना कर्म कर्तुं फलं च उपभोक्तुं शक्यते; न हि अनभ्यस्ते विषये कौशलम् इन्द्रियाणां भवति; पूर्वानुभववासनाप्रवृत्तानां तु इन्द्रियाणाम् इह अभ्यासमन्तरेण कौशलमुपपद्यते; दृश्यते च केषांचित् कासुचित्क्रियासु चित्रकर्मादिलक्षणासु विनैव इह अभ्यासेन जन्मत एव कौशलम्, कासुचित् अत्यन्तसौकर्ययुक्तास्वपि अकौशलं केषांचित्; तथा विषयोपभोगेषु स्वभावत एव केषांचित् कौशलाकौशले दृश्येते; तच्च एतत्सर्वं पूर्वप्रज्ञोद्भवानुद्भवनिमित्तम्; तेन पूर्वप्रज्ञया विना कर्मणि वा फलोपभोगे वा न कस्यचित् प्रवृत्तिरुपपद्यते । तस्मात् एतत् त्रयं शाकटिकसंभारस्थानीयं परलोकपथ्यदनं विद्याकर्मपूर्वप्रज्ञाख्यम् । यस्मात् विद्याकर्मणी पूर्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनम्, तस्मात् विद्याकर्मादि शुभमेव समाचरेत्, यथा इष्टदेहसंयोगोपभोगौ स्याताम्— इति प्रकरणार्थः ॥

एवं विद्यादिसंभारसंभृतो देहान्तरं प्रतिपद्यमानः, मुक्त्वा पूर्वं देहम्, पक्षीव वृक्षान्तरम्, देहान्तरं प्रतिपद्यते; अथवा आतिवाहिकेन शरीरान्तरेण कर्मफलजन्मदेशं नीयते । किंचात्रस्थस्यैव सर्वगतानां करणानां वृत्तिलाभो

भवति, आहोस्वित् शरीरस्थस्य संकुचितानि करणानि मृतस्य भिन्नघटप्रदीपप्रकाशवत् सर्वतो व्याप्य पुनः देहान्तरारम्भे संकोचमुपगच्छन्ति— किंच मनोमात्रं वैशेषिकसमय इव देहान्तरारम्भदेशं प्रति गच्छति, किं वा कल्पनान्तरमेव वेदान्तसमये— इत्युच्यते— 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति श्रुतः सर्वात्मकानि तावत्करणानि, सर्वात्मकप्राणसंश्रयाच्च ; तेषाम् आध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः ; अतः तद्वशात् स्वभावतः सर्वगतानामनन्तानामपि प्राणानां कर्मज्ञानवासनानुरूपेणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः संकुचति विकसति च ; तथा चोक्तम् 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' इति ; तथा च इदं वचनमनुकूलम्— 'स यो हैताननन्तानुपास्ते' इत्यादि, 'तं यथा यथोपासते' इति च । तत्र वासना पूर्वप्रज्ञाख्या विद्याकर्मतन्त्रा जलूकावत् संततैव स्वप्नकाल इव कर्मकृतं देहाद्देहान्तरम् आरभते हृदयस्थैव ; पुनर्देहान्तरारम्भे देहान्तरं पूर्वाश्रयं विमुञ्चति— इत्येतस्मिन्नर्थे दृष्टान्त उपादीयते—

**तद्यथा तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां**

**गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥**

तत् तत्र देहान्तरसंचारे इदं निदर्शनम्— यथा येन प्रकारेण तृणजलायुका तृणजलूका तृणस्य अन्तम् अवसानम्, गत्वा प्राप्य, अन्यं तृणान्तरम्, आक्रमम्— आक्रम्यत इत्याक्रमः— तमाक्रमम्, आक्रम्य आश्रित्य, आत्मानम् आत्मनः पूर्वावयवम् उपसंहरति अन्त्यावयवस्थाने; एवमेव अयमात्मा यः प्रकृतः संसारी इदं शरीरं पूर्वोपात्तम्, निहत्य स्वप्नं प्रतिपित्सुरिव पातयित्वा अविद्यां गमयित्वा अचेतनं कृत्वा स्वात्मोपसंहारेण, अन्यम् आक्रमम् तृणान्तरमिव तृणजलूका शरीरान्तरम्, गृहीत्वा प्रसारितया वासनया, आत्मानमुपसंहरति, तत्र आत्मभावमारभते— यथा स्वप्ने देहान्तरस्थ एव शरीरारम्भदेशे— आरभ्यमाणे देहे जङ्गमे स्थावरे वा । तत्र च कर्मवशात् करणानि लब्धवृत्तीनि संहन्यन्ते; बाह्यं च कुशमृत्तिकास्थानीयं शरीरमारभ्यते; तत्र च करणव्यूहमपेक्ष्य वागाद्यनुग्रहाय अग्न्यादिदेवताः संश्रयन्ते । एष देहान्तरारम्भविधिः ॥

तत्र देहान्तरारम्भे नित्योपात्तमेव उपादानम् उपमृद्य उपमृद्य देहान्तरमारभते, आहोस्वित् अपूर्वमेव पुनः पुनरादत्ते— इत्यत्र उच्यते दृष्टान्तः—

**तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम् ॥ ४ ॥**

तत् तत्र एतस्मिन्नर्थे, यथा पेशस्कारी— पेशः सुवर्णम् तत् करोतीति पेशस्कारी सुवर्णकारः, पेशसः सुवर्णस्य मात्राम्, अप आदाय अपच्छिद्य गृहीत्वा, अन्यत् पूर्वस्मात् रचनाविशेषात् नवतरम् अभिनवतरम्, कल्याणात् कल्याणतरम्, रूपं तनुते निर्मिनोति ; एवमेवायमात्मेत्यादि पूर्ववत्। नित्योपात्तान्येव पृथिव्यादीनि आकाशान्तानि पञ्च भूतानि यानि 'द्वे वाव ब्रह्मणो रूपे' इति चतुर्थे व्याख्यातानि, पेशःस्थानीयानि तान्येव उपमृद्य, उपमृद्य, अन्यदन्यच्च देहान्तरं नवतरं कल्याणतरं रूपं संस्थानविशेषम्, देहान्तरमित्यर्थः, कुरुते— पित्र्यं वा पितृभ्यो हितम्, पितृलोकोपभोगयोग्यमित्यर्थः, गान्धर्वं गन्धर्वाणामुपभोगयोग्यम्, तथा देवानां दैवम्, प्रजापतेः प्राजापत्यम्, ब्रह्मण इदं ब्राह्मं वा,

यथाकर्म यथाश्रुतम्, अन्येषां वा भूतानां संबन्धि— शरीरान्तरं कुरुते इत्यभिसंबध्यते ॥

ये अस्य बन्धनसंज्ञकाः उपाधिभूताः, यैः संयुक्तः तन्मयोऽयमिति विभाव्यते, ते पदार्थाः पुञ्जीकृत्य इह एकत्र प्रतिनिर्दिश्यन्ते—

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते ॥ ५ ॥**

सः वै अयम् यः एवं संसरति आत्मा— ब्रह्मैव पर एव,

यः अशनायाद्यतीतः ; विज्ञानमयः— विज्ञानं बुद्धिः, तेन उपलक्ष्यमाणः, तन्मयः ; 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु' इति हि उक्तम् ; विज्ञानमयः विज्ञानप्रायः, यस्मात् तद्धर्मत्वमस्य विभाव्यते— 'ध्यायतीव लेलायतीव' इति ; तथा मनोमयः मनःसंनिकर्षान्मनोमयः ; तथा प्राणमयः, प्राणः पञ्चवृत्तिः तन्मयः, येन चेतनः चलतीव लक्ष्यते ; तथा चक्षुर्मयः रूपदर्शनकाले ; एवं श्रोत्रमयः शब्दश्रवणकाले । एवं तस्य तस्य इन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति । एवं बुद्धिप्राणद्वारेण चक्षुरादिकरणमयः सन् शरीरारम्भकपृथिव्यादिभूतमयो भवति ; तत्र पार्थिवशरीरारम्भे पृथिवीमयो भवति ; तथा वरुणादिलोकेषु आप्यशरीरारम्भे आपोमयो भवति ; तथा वायव्यशरीरारम्भे वायुमयो भवति ; तथा आकाशशरीरारम्भे आकाशमयो भवति ; एवम् एतानि तैजसानि देवशरीराणि ; तेष्वारभ्यमाणेषु तन्मयः तेजोमयो भवति । अतो व्यतिरिक्तानि पश्वादिशरीराणि नरकप्रेतादिशरीराणि च अतेजोमयानि ; तान्यपेक्ष्य आह— अतेजोमय इति । एवं कार्यकरणसंघातमयः सन् आत्मा प्राप्तव्यं वस्त्वन्तरं पश्यन्— इदं मया प्राप्तम् , अदो मया प्राप्तव्यम्— इत्येवं विपरीतप्रत्ययः तदभिलाषः काममयो भवति । तस्मिन्कामे दोषं पश्यतः तद्विषयाभिलाषप्रशमे

चित्तं प्रसन्नम् अकलुषं शान्तं भवति, तन्मयः अ-
काममयः । एवं तस्मिन्विहते कामे केनचित्, सकामः
क्रोधत्वेन परिणमते, तेन तन्मयो भवन् क्रोधमयः ।
स क्रोधः केनचिदुपायेन निवर्तितो यदा भवति, तदा प्रस-
न्नम् अनाकुलं चित्तं सत् अक्रोध उच्यते, तेन तन्मयः ।
एवं कामक्रोधाभ्याम् अकामक्रोधाभ्यां च तन्मयो भूत्वा,
धर्ममयः अधर्ममयश्च भवति; न हि कामक्रोधादिभिर्विना
धर्मादिप्रवृत्तिरुपपद्यते, 'यद्यद्धि कुरुते कर्म तत्तत्कामस्य
चेष्टितम्' इति स्मरणात् । धर्ममयः अधर्ममयश्च भूत्वा
सर्वमयो भवति— समस्तं धर्माधर्मयोः कार्यम्, यावत्किं-
चिद्व्याकृतम्, तत्सर्वं धर्माधर्मयोः फलम्, तत् प्रतिपद्यमानः
तन्मयो भवति । किं बहुना, तदेतत् सिद्धमस्य— यत्
अयम् इदंमयः गृह्यमाणविषयादिमयः, तस्मात् अयम् अदो-
मयः; अद इति परोक्षं कार्येण गृह्यमाणेन निर्दिश्यते; अ-
नन्ता हि अन्तःकरणे भावनाविशेषाः; नैव ते विशेषतो
निर्देष्टुं शक्यन्ते; तस्मिंस्तस्मिन् क्षणे कार्यतोऽवगम्यन्ते—
इदमस्य हृदि वर्तते, अदः अस्येति; तेन गृह्यमाणकार्येण
इदंमयतया निर्दिश्यते परोक्षः अन्तःस्थो व्यवहारः— अय-
मिदानीमदोमय इति । संक्षेपतस्तु यथा कर्तुं यथा वा च-
रितुं शीलमस्य सोऽयं यथाकारी यथाचारी, सः तथा भव-

ति'; करणं नाम नियता क्रिया विधिप्रतिषेधादिगम्या, चरणं नाम अनियतमिति विशेषः। साधुकारी साधुर्भवतीति यथाकारीत्यस्य विशेषणम्; पापकारी पापो भवतीति च यथाचारीत्यस्य। ताच्छील्यप्रत्ययोपादानात् अत्यन्ततात्पर्यतैव तन्मयत्वम्, न तु तत्कर्ममात्रेण– इत्याशङ्क्याह— पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति; पुण्यपापकर्ममात्रेणैव तन्मयता स्यात्, न तु ताच्छील्यमपेक्षते; ताच्छील्ये तु तन्मयत्वातिशय इत्ययं विशेषः। तत्र कामक्रोधादिपूर्वकपुण्यापुण्यकारिता सर्वमयत्वे हेतुः, संसारस्य कारणम्, देहात् देहान्तरसंचारस्य च; एतत्प्रयुक्तो हि अन्यदन्यद्देहान्तरमुपादत्ते; तस्मात् पुण्यापुण्ये संसारस्य कारणम्; एतद्विषयौ हि विधिप्रतिषेधौ; अत्र शास्त्रस्य साफल्यमिति॥

अथो अपि अन्ये बन्धमोक्षकुशलाः खलु आहुः— सत्यं कामादिपूर्वके पुण्यापुण्ये शरीरग्रहणकारणम्; तथापि कामप्रयुक्तो हि पुरुषः पुण्यापुण्ये कर्मणी उपचिनोति; कामप्रहाणे तु कर्म विद्यमानमपि पुण्यापुण्योपचयकरं न भवति; उपचिते अपि पुण्यापुण्ये कर्मणी कामशून्ये फलारम्भके न भवतः; तस्मात् काम एव संसारस्य मूलम्। तथा चोक्तमाथर्वणे— 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र' इति। तस्मात् काममय एवायं पुरुषः, यत्

अन्यमयत्वं तत् अकारणं विद्यमानमपि— इत्यतः अवधारयति 'काममय एव' इति । यस्मात् स च काममयः सन् यादृशेन कामेन यथाकामो भवति, तत्क्रतुर्भवति— स काम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति, सः अविहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते; क्रतुर्नाम अध्यवसायः निश्चयः, यदनन्तरा क्रिया प्रवर्तते । यत्क्रतुर्भवति— यादृक्कामकार्येण क्रतुना यथारूपः क्रतुः अस्य सोऽयं यत्क्रतुः भवति— तत्कर्म कुरुते— यद्विषयः क्रतुः, तत्फलनिर्वृत्तये यत् योग्यं कर्म, तत् कुरुते निर्वर्तयति । यत् कर्म कुरुते, तत् अभिसंपद्यते— तदीयं फलमभिसंपद्यते । तस्मात् सर्वमयत्वे अस्य संसारित्वे च काम एव हेतुरिति ॥

**तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥ ६ ॥**

तत् तस्मिन्नर्थे एष श्लोकः मन्त्रोऽपि भवति । तदेव एति तदेव गच्छति, सक्त आसक्तः तत्र उद्भूताभिलाषः सन्नित्यर्थः; कथमेति? सह कर्मणा— यत् कर्म फलासक्तः सन् अकरोत्, तेन कर्मणा सहैव तत् एति तत्फलमेति; किं तत्? लिङ्गं मनः— मनःप्रधानत्वाल्लिङ्गस्य मनो लिङ्गमित्युच्यते; अथवा लिङ्ग्यते अवगम्यते— अवगच्छति—येन, तत् लिङ्गम्, तत् मनः— यत्र यस्मिन् निषक्तं निश्चयेन सक्तम् उद्भूताभिलाषम् अस्य संसारिणः; तदभिलाषो हि तत्कर्म कृतवान्; तस्मात्तन्मनोऽभिषङ्गवशादेव अस्य तेन कर्मणा तत्फलप्राप्तिः । तेन एतत्सिद्धं भवति, कामो मूलं संसारस्येति । अतः उच्छिन्नकामस्य विद्यमानान्यपि कर्माणि ब्रह्मविदः वन्ध्याप्रसवानि भवन्ति, 'पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः' इति श्रुतेः । किंच प्राप्यान्तं कर्मणः— प्राप्य भुक्त्वा अन्तम् अवसानं यावत्, कर्मणः फलपरिसमाप्तिं कृत्वेत्यर्थः; कस्य कर्मणोऽन्तं प्राप्येत्युच्यते— तस्य, यत्किंच कर्म इह अस्मिन् लोके करोति निर्वर्तयति अयम्, तस्य कर्मणः फलं भुक्त्वा अन्तं प्राप्य, तस्मात् लोकात् पुनः ऐति आगच्छति, अस्मै लोकाय कर्मणे— अयं हि लोकः कर्मप्रधानः, तेनाह 'कर्मणे' इति— पुनः कर्मकरणाय; पुनः कर्म कृत्वा फला-

सङ्गवशात् पुनरमुं लोकं याति— इत्येवम्। इति नु एवं नु, कामयमानः संसरति। यस्मात् कामयमान एव एवं संसरति, अथ तस्मात्, अकामयमानो न क्वचित्संसरति। फलासक्तस्य हि गतिरुक्ता; अकामस्य हि क्रियानुपपत्तेः अकामयमानो मुच्यत एव। कथं पुनः अकामयमानो भवति? यः अकामो भवति, असौ अकामयमानः। कथमकामतेत्युच्यते— यो निष्कामः यस्मान्निर्गताः कामाः सोऽयं निष्कामः। कथं कामा निर्गच्छन्ति? य आप्तकामः भवति आप्ताः कामा येन स आप्तकामः। कथमाप्यन्ते कामाः? आत्मकामत्वेन, यस्य आत्मैव नान्यः कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति; आत्मैव अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एकरसः नोर्ध्वं न तिर्यक् नाधः आत्मनोऽन्यत् कामयितव्यं वस्त्वन्तरम्— यस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्, शृणुयात्, मन्वीत, विजानीयाद्वा— एवं विजानन्कं कामयेत। ज्ञायमानो ह्यन्यत्वेन पदार्थः कामयितव्यो भवति; न चासावन्यः ब्रह्मविद आप्तकामस्यास्ति। य एवात्मकामतया आप्तकामः, स निष्कामः अकामः अकामयमानश्चेति मुच्यते। न हि यस्य आत्मैव सर्वं भवति, तस्य अनात्मा कामयितव्योऽस्ति। अनात्मा चान्यः कामयितव्यः, सर्वं च आत्मैवाभूदिति विप्रतिषिद्धम्। सर्वात्मद

र्शिनः कामयितव्याभावात्कर्मानुपपत्तिः । ये तु प्रत्यवाय-परिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि, तेषां न आत्मैव सर्वं भवति, प्रत्यवायस्य जिहासितव्यस्य आत्मनोऽन्यस्य अभिप्रेतत्वात् । येन च अशनायाद्यतीतः नित्यं प्रत्य-वायासंबद्धः विदित आत्मा, तं वयं ब्रह्मविदं ब्रूमः; नित्य-मेव अशनायाद्यतीतमात्मानं पश्यति; यस्माच्च जिहासित-व्यमन्यम् उपादेयं वा यो न पश्यति, तस्य कर्म न श-क्यत एव संबन्धुम् । यस्तु अब्रह्मवित्, तस्य भवत्येव प्रत्य-वायपरिहारार्थं कर्मेति न विरोधः । अतः कामाभावात् अकामयमानो न जायते, मुच्यत एव ॥

तस्य एवमकामयमानस्य कर्माभावे गमनकारणाभावात् प्राणा वागादयः, नोत्क्रामन्ति नोर्ध्वं क्रामन्ति देहात् । स च विद्वान् आप्तकामः आत्मकामतया इहैव ब्रह्मभूतः । सर्वात्मनो हि ब्रह्मणः दृष्टान्तत्वेन प्रदर्शितम् एतद्रूपम्— 'तद्वा अस्यैतदाप्तकाममकामं रूपम्' इति; तस्य हि दार्ष्टा-न्तिकभूतोऽयमर्थ उपसंह्रियते— अथाकामयमान इत्यादि-ना । स कथमेवंभूतो मुच्यत इत्युच्यते— यो हि सुषुप्ताव-स्थमिव निर्विशेषमद्वैतम् अलुप्तचिद्रूपज्योतिःस्वभावम् आ-त्मानं पश्यति, तस्यैव अकामयमानस्य कर्माभावे गमन-कारणाभावात् प्राणा वागादयो नोत्क्रामन्ति । किंतु विद्वान्

सः इहैव ब्रह्म, यद्यपि देहवानिव लक्ष्यते; स ब्रह्मैव सन् ब्रह्म अप्येति । यस्मात् न हि तस्य अब्रह्मत्वपरिच्छेदहेतवः कामाः सन्ति, तस्मात् इहैव ब्रह्मैव सन् ब्रह्म अप्येति न शरीरपातोत्तरकालम् । न हि विदुषो मृतस्य भावान्तरापत्तिः जीवतोऽन्यः भावः, देहान्तरप्रतिसंधानाभावमात्रेणैव तु ब्रह्माप्येतीत्युच्यते । भावान्तरापत्तौ हि मोक्षस्य सर्वोपनिषद्विवक्षितोऽर्थः आत्मैकत्वाख्यः स बाधितो भवेत्; कर्महेतुकश्च मोक्षः प्राप्नोति, न ज्ञाननिमित्त इति; स चानिष्टः; अनित्यत्वं च मोक्षस्य प्राप्नोति; न हि क्रियानिर्वृत्तः अर्थः नित्यो दृष्टः; नित्यश्च मोक्षोऽभ्युपगम्यते, 'एष नित्यो महिमा' इति मन्त्रवर्णात् । न च स्वाभाविकात् स्वभावात् अन्यत् नित्यं कल्पयितुं शक्यम् । स्वाभाविकश्चेत् अग्न्युष्णवत् आत्मनः स्वभावः, स न शक्यते पुरुषव्यापारानुभावीति वक्तुम्; न हि अग्नेरौष्ण्यं प्रकाशो वा अग्निव्यापारानन्तरानुभावी; अग्निव्यापारानुभावी स्वाभाविकश्चेति विप्रतिषिद्धम् । ज्वलनव्यापारानुभावित्वम् उष्णप्रकाशयोरिति चेत्, न, अन्योपलब्धिव्यवधानापगमाभिव्यक्त्यपेक्षत्वात्; ज्वलनादिपूर्वकम् अग्निः उष्णप्रकाशगुणाभ्यामभिव्यज्यते, तत् न अग्न्यपेक्षया; किं तर्हि अन्यदृष्टेः अग्नेरौष्ण्यप्रकाशौ धर्मौ व्यवहितौ, कस्यचिद्दृष्ट्या तु असंबध्यमानौ, ज्वलनापे-

क्षया व्यवधानापगमे दृष्टेरभिव्यज्येते; तदपेक्षया भ्रान्तिरुपजायते— ज्वलनपूर्वकौ एतौ उष्णप्रकाशौ धर्मौ जाताविति। यदि उष्णप्रकाशयोरपि स्वाभाविकत्वं न स्यात्— यः स्वाभाविकोऽग्नेर्धर्मः, तमुदाहरिष्यामः; न च स्वाभाविको धर्म एव नास्ति पदार्थानामिति शक्यं वक्तुम् ॥

न च निगडभङ्ग इव अभावभूतो मोक्षः बन्धननिवृत्तिरुपपद्यते, परमात्मैकत्वाभ्युपगमात्, 'एकमेवाद्वितीयम्' इति श्रुतेः; न चान्यो बद्धोऽस्ति, यस्य निगडनिवृत्तिवत् बन्धननिवृत्तिः मोक्षः स्यात्; परमात्मव्यतिरेकेण अन्यस्याभावं विस्तरेण अवादिष्म। तस्मात् अविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति च अवोचाम, यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्तिः ॥

येऽप्याचक्षते— मोक्षे विज्ञानान्तरम् आनन्दान्तरं च अभिव्यज्यत इति, तैर्वक्तव्यः अभिव्यक्तिशब्दार्थः। यदि तावत् लौकिक्येव उपलब्धिविषयव्याप्तिः अभिव्यक्तिशब्दार्थः, ततो वक्तव्यम्—किं विद्यमानमभिव्यज्यते, अविद्यमानमिति वा। विद्यमानं चेत्, यस्य मुक्तस्य तदभिव्यज्यते तस्य आत्मभूतमेव तत् इति, उपलब्धिव्यवधानानुपपत्तेः नित्याभिव्यक्तत्वात्, मुक्तस्य अभिव्यज्यत इति विशेषवचनमनर्थकम्। अथ कदाचिदेव अभिव्यज्यते, उपल-

ब्धिव्यवधानात् अनात्मभूतं तदिति, अन्यतोऽभिव्यक्तिप्रसङ्गः; तथा च अभिव्यक्तिसाधनापेक्षता। उपलब्धिसमानाश्रयत्वे तु व्यवधानकल्पनानुपपत्तेः सर्वदा अभिव्यक्तिः, अनभिव्यक्तिर्वा; न तु अन्तरालकल्पनायां प्रमाणमस्ति। न च समानाश्रयाणाम् एकस्य आत्मभूतानां धर्माणाम् इतरेतरविषयविषयित्वं संभवति। विज्ञानसुखयोश्च प्रागभिव्यक्तेः संसारित्वम्, अभिव्यक्त्युत्तरकालं च मुक्तत्वं यस्य– सोऽन्यः परस्मात् नित्याभिव्यक्तज्ञानस्वरूपात् अत्यन्तवैलक्षण्यात्, शैत्यमिव औष्ण्यात्; परमात्मभेदकल्पनायां च वैदिकः कृतान्तः परित्यक्तः स्यात्। मोक्षस्य इदानीमिव निर्विशेषत्वे तदर्थाधिकयत्नानुपपत्तिः शास्त्रवैयर्थ्यं च प्राप्नोतीति चेत्, न, अविद्याभ्रमापोहार्थत्वात्; न हि वस्तुतो मुक्तामुक्तत्वविशेषोऽस्ति, आत्मनो नित्यैकरूपत्वात्; किंतु तद्विषया अविद्या अपोह्यते शास्त्रोपदेशजनितविज्ञानेन; प्राक्तदुपदेशप्राप्तेः तदर्थश्च प्रयत्न उपपद्यत एव। अविद्यावतः अविद्यानिवृत्त्यनिवृत्तिकृतः विशेषः आत्मनः स्यादिति चेत्, न, अविद्याकल्पनाविषयत्वाभ्युपगमात्, रज्जूषरशुक्तिकागगनानां सर्पोदकरजतमलिनत्वादिवत्, अदोष इत्यवोचाम। तिमिरातिमिरदृष्टिवत् अविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेषः स्यादिति चेत्, न, 'ध्यायतीव लेलायतीव' इति

स्वत: अविद्याकर्तृत्वस्य प्रतिषिद्धत्वात्; अनेकव्यापारसंनिपातजनितत्वाच्च अविद्याभ्रमस्य; विषयत्वोपपत्तेश्च; यस्य च अविद्याभ्रमो घटादिवत् विविक्तो गृह्यते, स: न अविद्याभ्रमवान्। अहं न जाने मुग्धोऽस्मीति प्रत्ययदर्शनात् अविद्याभ्रमवत्त्वमेवेति चेत्, न, तस्यापि विवेकग्रहणात्; न हि यो यस्य विवेकेन ग्रहीता, स तस्मिन्भ्रान्त इत्युच्यते; तस्य च विवेकग्रहणम्, तस्मिन्नेव च भ्रम:—इति विप्रतिषिद्धम्; न जाने मुग्धोऽस्मीति दृश्यते इति ब्रवीषि—तद्दर्शिनश्च अज्ञानं मुग्धरूपता दृश्यत इति च— तद्दर्शनस्य विषयो भवति, कर्मतामापद्यत इति; तत् कथं कर्मभूतं सत् कर्तृस्वरूपदृशिविशेषणम् अज्ञानमुग्धते स्याताम्? अथ दृशिविशेषणत्वं तयो:, कथं कर्म स्याताम्— दृशिना व्याप्येते? कर्म हि कर्तृक्रियया व्याप्यमानं भवति; अन्यश्च व्याप्यम्, अन्यत् व्यापकम्; न तेनैव तत् व्याप्यते; वद, कथम् एवं सति, अज्ञानमुग्धते दृशिविशेषणे स्याताम्? न च अज्ञानविवेकदर्शी अज्ञानम् आत्मन: कर्मभूतमुपलभमान: उपलब्धृधर्मत्वेन गृह्णाति, शरीरे कार्श्यरूपादिवत् तथा। सुखदु:खेच्छाप्रयत्नादीन् सर्वो लोक: गृह्णातीति चेत्, तथापि ग्रहीतुर्लोकस्य विविक्ततैव अभ्युपगता स्यात्। न जानेऽहं त्वदुक्तं मुग्ध एव इति चेत्—— भवतु अज्ञो मुग्ध:,

यस्तु एवंदर्शी, तं ब्रह्म् असुग्धं प्रतिजानीमहे वयम् । तथा व्यासेनोक्तम्— इच्छादि कृत्स्नं क्षेत्रं क्षेत्री प्रकाशयतीति, 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तम्—' इत्यादि शतश उक्तम् । तस्मात् न आत्मनः स्वतः बद्धमुक्तज्ञानाज्ञानकृतो विशेषः अस्ति, सर्वदा समैकरसस्वाभाव्याभ्युपगमात् । ये तु अतोऽन्यथा आत्मवस्तु परिकल्प्य बन्धमोक्षादिशास्त्रं च अर्थवादमापादयन्ति, ते उत्सहन्ते—खेऽपि शाकुनं पदं द्रष्टुम्, खं वा मुष्टिना आक्रष्टुम्, चर्मवद्वेष्टितुम्; वयं तु तत् कर्तुमशक्ताः; सर्वदा समैकरसम् अद्वैतम् अविक्रियम् अजम् अजरम् अमरम् अमृतम् अभयम् आत्मतत्त्वं ब्रह्मैव स्मः— इत्येष सर्ववेदान्तनिश्चितोऽर्थ इत्येवं प्रतिपद्यामहे । तस्मात् ब्रह्माप्येतीति उपचारमात्रमेतत्, विपरीतग्रहवद्देहसंततेः विच्छेदमात्रं विज्ञानफलमपेक्ष्य ॥

स्वप्नबुद्धान्तगमनदृष्टान्तस्य दार्ष्टान्तिकः संसारो वर्णितः । संसारहेतुश्च विद्याकर्मपूर्वप्रज्ञा वर्णिता । यैश्च उपाधिभूतैः कार्यकरणलक्षणभूतैः परिवेष्टितः संसारित्वमनुभवति, तानि चोक्तानि । तेषां साक्षात्प्रयोजकौ धर्माधर्माविति पूर्वपक्षं कृत्वा, काम एवेत्यवधारितम् । यथा च ब्राह्मणेन अयम् अर्थः अवधारितः, एवं मन्त्रेणापीति बन्धं बन्धकारणं

च उक्त्वा उपसंहृतं प्रकरणम्— 'इति नु कामयमानः' इति । 'अथाकामयमानः' इत्यारभ्य सुषुप्तदृष्टान्तस्य दार्ष्टान्तिकभूतः सर्वात्मभावो मोक्ष उक्तः । मोक्षकारणं च आत्मकामतया यत् आप्तकामत्वमुक्तम्, तच्च सामर्थ्यात् न आत्मज्ञानमन्तरेण आत्मकामतया आप्तकामत्वमिति— सामर्थ्यात् ब्रह्मविद्यैव मोक्षकारणमित्युक्तम । अतः यद्यपि कामो मूलमित्युक्तम, तथापि मोक्षकारणविपर्ययेण बन्धकारणम् अविद्या इत्येतदपि उक्तमेव भवति । अत्रापि मोक्षः मोक्षसाधनं च ब्राह्मणेनोक्तम्; तस्यैव दृढीकरणाय मन्त्र उदाह्रियते श्लोकशब्दवाच्यः—

**तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदँ शरीरँ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥**

तत् तस्मिन्नेवार्थे एष श्लोकः मन्त्रो भवति । यदा

यस्मिन्काले सर्वे समस्ताः कामाः तृष्णाप्रभेदाः प्रमुच्यन्ते, आत्मकामस्य ब्रह्मविदः समूलतो विशीर्यन्ते, ये प्रसिद्धा लोके इहामुत्रार्थाः पुत्रवित्तलोकैषणालक्षणाः अस्य प्रसिद्धस्य पुरुषस्य हृदि बुद्धौ श्रिताः आश्रिताः— अथ तदा, मर्त्यः मरणधर्मा सन्, कामवियोगात्समूलतः, अमृतो भवति; अर्थात् अनात्मविषयाः कामा अविद्यालक्षणाः मृत्यवः इत्येतदुक्तं भवति; अतः मृत्युवियोगे विद्वान् जीवन्नेव अमृतो भवति । अत्र अस्मिन्नेव शरीरे वर्तमानः ब्रह्म समश्नुते, ब्रह्मभावं मोक्षं प्रतिपद्यत इत्यर्थः । अतः मोक्षः न देशान्तरगमनादि अपेक्षते । तस्मात् विदुषो नोत्क्रामन्ति प्राणाः, यथावस्थिता एव स्वकारणे पुरुषे समवनीयन्ते; नाममात्रं हि अवशिष्यते— इत्युक्तम् । कथं पुनः समवनीतेषु प्राणेषु, देहे च स्वकारणे प्रलीने, विद्वान् मुक्तः अत्रैव सर्वात्मा सन् वर्तमानः पुनः पूर्ववत् देहित्वं संसारित्वलक्षणं न प्रतिपद्यते— इत्यत्रोच्यते— तत् तत्र अयं दृष्टान्तः; यथा लोके अहिः सर्पः, तस्य निर्ल्वयनी, निर्मोकः, सा अहिनिर्ल्वयनी, वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः, मृता प्रत्यस्ता प्रक्षिप्ता अनात्मभावेन सर्पेण परित्यक्ता, शयीत वर्तेत— एवमेव, यथा अयं दृष्टान्तः, इदं शरीरं सर्पस्थानीयेन मुक्तेन अनात्मभावेन परित्यक्तं मृतमिव शेते । अथ इतरः सर्पस्थानीयो

मुक्तः सर्वात्मभूतः सर्पवत् तत्रैव वर्तमानोऽपि अशरीर एव, न पूर्ववत् पुनः सशरीरो भवति। कामकर्मप्रयुक्तशरीरात्मभावेन हि पूर्वं सशरीरः मर्त्यश्च; तद्वियोगात् अथ इदानीम् अशरीरः, अत एव च अमृतः; प्राणः, प्राणितीति प्राणः— 'प्राणस्य प्राणम्' इति हि वक्ष्यमाणे श्लोके, 'प्राणबन्धनं हि सोम्य मनः' इति च श्रुत्यन्तरे; प्रकरणवाक्यसामर्थ्याच्च पर एव आत्मा अत्र प्राणशब्दवाच्यः; ब्रह्मैव परमात्मैव। किं पुनस्तत्? तेज एव विज्ञानम् ज्योतिः, येन आत्मज्योतिषा जगत् अवभास्यमानं प्रज्ञानेत्रं विज्ञानज्योतिष्मत् सत् अविभ्रंशत् वर्तते। यः कामप्रश्नो विमोक्षार्थः याज्ञवल्क्येन वरो दत्तो जनकाय, सहेतुकः बन्धमोक्षार्थलक्षणः दृष्टान्तदार्ष्टान्तिकभूतः स एष निर्णीतः सविस्तरः जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या; संसारविमोक्षोपाय उक्तः प्राणिभ्यः। इदानीं श्रुतिः स्वयमेवाह— विद्यानिष्क्रयार्थं जनकेनैवमुक्तमिति; कथम्? सोऽहम् एवं विमोक्षितस्त्वया भगवते तुभ्यं विद्यानिष्क्रयार्थं सहस्रं ददामि— इति ह एवं किल उवाच उक्तवान् जनको वैदेहः। अत्र कस्माद्विमोक्षपदार्थे निर्णीते, विदेहराज्यम् आत्मानमेव च न निवेदयति, एकदेशोक्ताविव सहस्रमेव ददाति? तत्र कोऽभिप्राय इति। अत्र केचिद्वर्णयन्ति— अध्यात्मविद्यारसिको जनकः

श्रुतमप्यर्थं पुनर्मन्त्रैः शुश्रूषति ; अतो न सर्वमेव निवेदयति ; श्रुत्वाभिप्रेतं याज्ञवल्क्यात् पुनरन्ते निवेदयिष्यामीति हि मन्यते ; यदि चात्रैव सर्वं निवेदयामि, निवृत्ताभिलाषोऽयं श्रवणादिति मत्वा, श्लोकान् न वक्ष्यति— इति च भयात् सहस्रदानं शुश्रूषालिङ्गज्ञापनायेति । सर्वमप्येतत् असत् , पुरुषस्येव प्रमाणभूतायाः श्रुतेः व्याजानुपपत्तेः ; अर्थशेषोपपत्तेश्च— विमोक्षपदार्थे उक्तेऽपि आत्मज्ञानसाधने, आत्मज्ञानशेषभूतः सर्वैषणापरित्यागः संन्यासाख्यः वक्तव्योऽर्थशेषः विद्यते ; तस्मात् श्लोकमात्रशुश्रूषाकल्पना अनृज्वी ; अगतिका हि गतिः पुनरुक्तार्थकल्पना ; सा च अयुक्ता सत्यां गतौ । न च तत् स्तुतिमात्रमित्यवोचाम । ननु एवं सति ‘ अत ऊर्ध्वं विमोक्षायैव ’ इति वक्तव्यम्— नैष दोषः ; आत्मज्ञानवत् अप्रयोजकः संन्यासः पक्षे, प्रतिपत्तिकर्मवत्– इति हि मन्यते ; ‘ संन्यासेन तनुं त्यजेत् ’ इति स्मृतेः । साधनत्वपक्षेऽपि न ‘ अत ऊर्ध्वं विमोक्षायैव ’ इति प्रश्नमर्हति, मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात् ॥

**तदेते श्लोका भवन्ति । अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥ ८ ॥**

आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणोक्ते, विस्तरप्रतिपादका एते श्लोका भवन्ति । अणुः सूक्ष्मः पन्थाः दुर्विज्ञेयत्वात्, विततः विस्तीर्णः, विस्पष्टतरणहेतुत्वाद्वा 'वितरः' इति पाठान्तरात्, मोक्षसाधनो ज्ञानमार्गः पुराणः चिरंतनः नित्यश्रुतिप्रकाशितत्वात्, न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवत् अर्वाक्कालिकः, मां स्पृष्टः मया लब्ध इत्यर्थः; यो हि येन लभ्यते, स तं स्पृशतीव संबध्यते; तेन अयं ब्रह्मविद्यालक्षणो मोक्षमार्गः मया लब्धत्वात् 'मां स्पृष्टः' इत्युच्यते । न केवलं मया लब्धः, किं तु अनुवित्तो मयैव; अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतानिष्ठा प्राप्तिः, भुजेरिव तृप्त्यवसानता; पूर्वं तु ज्ञानप्राप्तिसंबन्धमात्रमेवेति विशेषः । किम् असावेव मन्त्रदृक् एकः ब्रह्मविद्याफलं प्राप्तः, नान्यः प्राप्तवान्, येन 'अनुवित्तो मयैव' इत्यवधारयति—नैष दोषः, अस्याः फलम् आत्मसाक्षिकमनुत्तममिति ब्रह्मविद्यायाः स्तुतिपरत्वात्; एवं हि कृतार्थात्माभिमानकरम् आत्मप्रत्ययसाक्षिकम् आत्मज्ञानम्, किमतः परम् अन्यत्स्यात्— इति ब्रह्मविद्यां स्तौति; न तु पुनः अन्यो ब्रह्मवित् तत्फलं न प्राप्नोतीति, 'तद्यो यो देवानाम्' इति सर्वार्थश्रुतेः; तदेवाह— तेन ब्रह्मविद्यामार्गेण धीराः प्रज्ञावन्तः अन्येऽपि ब्रह्मविद इत्यर्थः, अपियन्ति अपिगच्छन्ति,

ब्रह्मविद्याफलं मोक्षं स्वर्गं लोकम्; स्वर्गलोकशब्दः त्रिविष्टपवाच्यपि सन् इह प्रकरणात् मोक्षाभिधायकः; इतः अस्माच्छरीरपातात् ऊर्ध्वं जीवन्त एव विमुक्ताः सन्तः ॥

**तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥**

तस्मिन् मोक्षसाधनमार्गे विप्रतिपत्तिर्मुमुक्षूणाम्; कथम्? तस्मिन् शुक्लं शुद्धं विमलम् आहुः केचित् मुमुक्षवः; नीलम् अन्ये, पिङ्गलम् अन्ये, हरितं लोहितं च– यथादर्शनम्। नाड्यस्तु एताः सुषुम्नाद्याः श्लेष्मादिरससंपूर्णाः— शुक्लस्य नीलस्य पिङ्गलस्येत्याद्युक्तत्वात्। आदित्यं वा मोक्षमार्गम् एवंविधं मन्यन्ते— 'एष शुक्ल एष नीलः' इत्यादिश्रुत्यन्तरात्। दर्शनमार्गस्य च शुक्लादिवर्णासंभवात्। सर्वथापि तु प्रकृतात् ब्रह्मविद्यामार्गात् अन्ये एते शुक्लादयः। ननु शुक्लः शुद्धः अद्वैतमार्गः— न, नीलपीतादिशब्दैः वर्णवाचकैः सह अनुद्रवणात्; यान् शुक्लादीन् योगिनो मोक्षपथान् आहुः, न ते मोक्षमार्गाः; संसारविषया एव हि ते— 'चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' इति शरीरदेशान्निःसरणसंबन्धात्, ब्रह्मादिलोकप्रापका हि ते।

तस्मात् अयमेव मोक्षमार्गः— यः आत्मकामत्वेन आप्तकामतया सर्वकामक्षये गमनानुपपत्तौ प्रदीपनिर्वाणवत् चक्षुरादीनां कार्यकरणानाम् अत्रैव समवनयः— इति एषः ज्ञानमार्गः पन्थाः, ब्रह्मणा परमात्मस्वरूपेणैव ब्राह्मणेन त्यक्तसर्वैषणेन, अनुवित्तः । तेन ब्रह्मविद्यामार्गेण ब्रह्मवित् अन्यः अपि एति । कीदृशो ब्रह्मवित् तेन एतीत्युच्यते— पूर्वं पुण्यकृद्भूत्वा पुनस्त्यक्तपुत्राद्येषणः, परमात्मतेजस्यात्मानं संयोज्य तस्मिन्नभिनिर्वृत्तः तैजसश्च— आत्मभूतः इहैव इत्यर्थः; ईदृशो ब्रह्मवित् तेन मार्गेण एति। न पुनः पुण्यादिसमुच्चयकारिणो ग्रहणम्, विरोधादित्यवोचाम; ‘अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः’ इति च स्मृतेः; ‘त्यज धर्ममधर्मं च’ इत्यादि पुण्यापुण्यत्यागोपदेशात्; ‘निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः’ ‘नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः’ इत्यादिस्मृतिभ्यश्च । उपदेक्ष्यति च इहापि तु— ‘एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्’ इति कर्मप्रयोजनाभावे हेतुमुक्त्वा, ‘तस्मादेवंविच्छान्तो दान्तः’ इत्यादिना सर्वक्रियोपरमम् ।

तस्मात् यथाव्याख्यातमेव पुण्यकृत्त्वम् । अथवा यो ब्रह्मवित् तेन एति, स पुण्यकृत् तैजसश्च— इति ब्रह्मवित्स्तुतिरेषा; पुण्यकृति तैजसे च योगिनि महाभाग्यं प्रसिद्धं लोके, ताभ्याम् अतः ब्रह्मवित् स्तूयते प्रख्यातमहाभाग्यत्वाल्लोके ॥

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ १० ॥**

अन्धम् अदर्शनात्मकं तमः संसारनियामकं प्रविशन्ति प्रतिपद्यन्ते; के? ये अविद्यां विद्यातोऽन्यां साध्यसाधनलक्षणाम्, उपासते, कर्म अनुवर्तन्त इत्यर्थः; ततः तस्मादपि भूय इव बहुतरमिव तमः प्रविशन्ति; के? ये उ विद्यायाम् अविद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायाम्, रता अभिरताः; विधिप्रतिषेधपर एव वेदः, नान्योऽस्ति— इति, उपनिषदर्थानपेक्षिण इत्यर्थः ॥

**अनन्दा नाम ते लोका अन्धेन तमसावृताः । ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसोऽबुधो जनाः ॥ ११ ॥**

यदि ते अदर्शनलक्षणं तमः प्रविशन्ति, को दोष इत्यु-

च्यते— अनन्दाः अनानन्दाः असुखा नाम ते लोकाः, तेन अन्धेनादर्शनलक्षणेन तमसा आवृताः व्याप्ताः,— ते तस्य अज्ञानतमसो गोचराः; तान् ते प्रेत्य मृत्वा अभिगच्छन्ति अभियान्ति; के? ये अविद्वांसः; किं सामान्येन अविद्वत्तामात्रेण? नेत्युच्यते— अबुधः, बुधेः अवगमनार्थस्य धातोः क्विप्प्रत्ययान्तस्य रूपम्, आत्मावगमवर्जिता इत्यर्थः; जनाः प्राकृता एव जननधर्माणो वा इत्येतत् ॥

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥**

आत्मानं स्वं परं सर्वप्राणिमनीषितज्ञं हृत्स्थम् अशनायादिधर्मातीतम्, चेत् यदि, विजानीयात् सहस्रेषु कश्चित्; चेदिति आत्मविद्याया दुर्लभत्वं दर्शयति; कथम्? अयम् पर आत्मा सर्वप्राणिप्रत्ययसाक्षी, यः नेति नेतीत्याद्युक्तः, यस्मान्नान्योऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता, समः सर्वभूतस्थो नित्यशुद्धबुद्धमुक्तस्वभावः— अस्मि भवामि— इति; पूरुषः पुरुषः; सः किमिच्छन्— तत्स्वरूपव्यतिरिक्तम् अन्यद्वस्तु फलभूतं किमिच्छन् कस्य वा अन्यस्य आत्मनो व्यतिरिक्तस्य कामाय प्रयोजनाय; न हि तस्य आत्मन

एष्टव्यं फलम्, न चाप्यात्मनोऽन्यः अस्ति, यस्य कामाय इच्छति, सर्वस्य आत्मभूतत्वात्; अतः किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्, भ्रंशेत्, शरीरोपाधिकृतदुःखमनु दुःखी स्यात्, शरीरतापमनुतप्येत। अनात्मदर्शिनो हि तद्व्यतिरिक्तवस्त्वन्तरेप्सोः; 'ममेदं स्यात्, पुत्रस्य इदम्, भार्याया इदम्' इत्येवमीहमानः पुनःपुनर्जननमरणप्रबन्धरूढः शरीररोगमनु रुज्यते; सर्वात्मदर्शिनस्तु तदसंभव इत्येतदाह ॥

**यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन्संदेह्ये गहने प्रविष्टः। स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥**

किं च यस्य ब्राह्मणस्य, अनुवित्तः अनुलब्धः, प्रतिबुद्धः साक्षात्कृतः, कथम्? अहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेनावगतः, आत्मा अस्मिन्संदेह्ये संदेहे अनेकानर्थसंकटोपचये, गहने विषमे अनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे विषमे, प्रविष्टः; स यस्य ब्राह्मणस्यानुवित्तः प्रतिबोधेनेत्यर्थः; स विश्वकृत् विश्वस्य कर्ता; कथं विश्वकृत्त्वम्, तस्य किं विश्वकृदिति नाम इत्याशङ्क्याह— सः हि यस्मात् सर्वस्य कर्ता, न नाममात्रम्; न केवलं विश्वकृत् परप्रयुक्तः सन्,

किं तर्हि तस्य लोकः सर्वः; किमन्यो लोकः अन्योऽसावित्युच्यते— स उ लोक एव; लोकशब्देन आत्मा उच्यते; तस्य सर्वं आत्मा, स च सर्वस्यात्मेत्यर्थः। य एष ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतया अनुवित्तः आत्मा अनर्थसंकटे गहने प्रविष्टः, स न संसारी, किं तु पर एव; यस्मात् विश्वस्य कर्ता सर्वस्य आत्मा, तस्य च सर्वं आत्मा। एक एवाद्वितीयः पर एवास्मीत्यनुसंधातव्य इति श्लोकार्थः॥

**इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः। ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति॥ १४॥**

किं च इहैव अनेकानर्थसंकुले, सन्तः भवन्तः अज्ञानदीर्घनिद्रामोहिताः सन्तः, कथंचिदिव ब्रह्मतत्त्वम् आत्मत्वेन अथ विद्मः विजानीमः, तत् एतद्ब्रह्म प्रकृतम्; अहो वयं कृतार्था इत्यभिप्रायः। यदेतद्ब्रह्म विजानीमः, तत् न चेत् विदितवन्तो वयम्— वेदनं वेदः, वेदोऽस्यास्तीति वेदी, वेदेव वेदिः, न वेदिः अवेदिः, ततः अहम् अवेदिः स्याम्। यदि अवेदिः स्याम्, को दोषः स्यात्? महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिः विनशनम्। अहो वयम् अस्मान्महतो विनाशात् निर्मुक्ताः, यत् अद्वयं ब्रह्म

विदितवन्त इत्यर्थः । यथा च वयं ब्रह्म विदित्वा अस्माद्वि-नशनाद्विप्रमुक्ताः, एवं ये तद्विदुः अमृतास्ते भवन्ति; ये पुनः नैवं ब्रह्म विदुः, ते इतरे ब्रह्मविद्भ्योऽन्ये अब्रह्मविद इत्यर्थः, दुःखमेव जन्ममरणादिलक्षणमेव अपियन्ति प्रति-पद्यन्ते, न कदाचिदपि अविदुषां ततो विनिवृत्तिरित्यर्थः; दुःखमेव हि ते आत्मत्वेनोपगच्छन्ति ॥

**यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥**

यदा पुनः एतम् आत्मानम्, कथंचित् परमकारुणिकं कंचिदाचार्यं प्राप्य ततो लब्धप्रसादः सन्, अनु पश्चात् पश्यति साक्षात्करोति स्वमात्मानम्, देवं द्योतनवन्तम् दा-तारं वा सर्वप्राणिकर्मफलानां यथाकर्मानुरूपम्, अञ्जसा साक्षात्, ईशानं स्वामिनम् भूतभव्यस्य कालत्रयस्येत्ये-तत्— न ततः तस्मादीशानाद्देवात् आत्मानं विशेषेण जु-गुप्सते गोपायितुमिच्छति । सर्वो हि लोक ईश्वराद्गुप्तिमि-च्छति भेददर्शी; अयं तु एकत्वदर्शी न बिभेति कुतश्चन; अतो न तदा विजुगुप्सते, यदा ईशानं देवम् अञ्जसा आ-त्मत्वेन पश्यति । न तदा निन्दति वा कंचित्, सर्वम् आत्मानं हि पश्यति, स एवं पश्यन् कम् असौ निन्द्यात् ॥

**यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥**

किं च यस्मात् ईशानात् अर्वाक्, यस्मादन्यविषय एवेत्यर्थः, संवत्सरः कालात्मा सर्वस्य जनिमतः परिच्छेत्ता, यम् अपरिच्छिन्दन् अर्वागेव वर्तते, अहोभिः स्वावयवैः अहोरात्रैरित्यर्थः; तत् ज्योतिषां ज्योतिः आदित्यादिज्योतिषामप्यवभासकत्वात्, आयुरित्युपासते देवाः, अमृतं ज्योतिः— अतोऽन्यन्म्रियते, न हि ज्योतिः; सर्वस्य हि एतज्ज्योतिः आयुः । आयुर्गुणेन यस्मात् देवाः तत् ज्योतिरुपासते, तस्मात् आयुष्मन्तस्ते । तस्मात् आयुष्कामेन आयुर्गुणेन उपास्यं ब्रह्मेत्यर्थः ॥

**यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥ १७ ॥**

किं च यस्मिन् यत्र ब्रह्मणि, पञ्च पञ्चजनाः— गन्धर्वादयः पञ्चैव संख्याताः गन्धर्वाः पितरो देवा असुरा रक्षांसि— निषादपञ्चमा वा वर्णाः, आकाशश्च अव्याकृताख्यः— यस्मिन् सूत्रम् ओतं च प्रोतं च— यस्मिन्प्रतिष्ठितः; "एत-

स्मिन्नु खल्वक्षरे गार्ग्याकाश:' इत्युक्तम्; तमेव आत्मानम् अमृतं ब्रह्म मन्ये अहम्, न चाहमात्मानं ततोऽन्यत्वेन जाने। किं तर्हि? अमृतोऽहम् ब्रह्म विद्वान्सन्; अज्ञानमात्रेण तु मर्त्योऽहम् आसम्; तदपगमात् विद्वानहम् अमृत एव ॥

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥**

किं च तेन हि चैतन्यात्मज्योतिषा अवभास्यमान: प्राण: आत्मभूतेन प्राणिति, तेन प्राणस्यापि प्राण: स:, तं प्राणस्य प्राणम्; तथा चक्षुषोऽपि चक्षु:; उत श्रोत्रस्यापि श्रोत्रम्; ब्रह्मशक्त्यधिष्ठितानां हि चक्षुरादीनां दर्शनादिसामर्थ्यम्; स्वत: काष्ठलोष्टसमानि हि तानि चैतन्यात्मज्योति:शून्यानि; मनसोऽपि मन:— इति ये विदु:– चक्षुरादिव्यापारानुमितास्तित्वं प्रत्यगात्मानम्, न विषयभूतम् ये विदु:—ते निचिक्यु: निश्चयेन ज्ञातवन्त: ब्रह्म, पुराणं चिरंतनम्, अग्र्यम् अग्रे भवम्। 'तद्यदात्मविदो विदु:' इति ह्याथर्वणे ॥

**मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

तद्ब्रह्मदर्शने साधनमुच्यते— मनसैव परमार्थज्ञानसंस्कृतेन आचार्योपदेशपूर्वकं च अनुद्रष्टव्यम् । तत्र च दर्शनविषये ब्रह्मणि न इह नाना अस्ति किंचन किंचिदपि; असति नानात्वे, नानात्वमध्यारोपयति अविद्यया । सः मृत्योः मरणात्, मृत्युं मरणम् आप्नोति; कोऽसौ? य इह नानेव पश्यति । अविद्याध्यारोपणव्यतिरेकेण नास्ति परमार्थतो द्वैतमित्यर्थः ॥

**एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।**
**विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥ २० ॥**

यस्मादेवम् तस्मात्, एकधैव एकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेण आकाशवन्निरन्तरेण अनुद्रष्टव्यम्; यस्मात् एतद्ब्रह्म अप्रमयम् अप्रमेयम्, सर्वैकत्वात्; अन्येन हि अन्यत् प्रमीयते; इदं तु एकमेव, अतः अप्रमेयम्; ध्रुवं नित्यं कूटस्थम् अविचालीत्यर्थः । ननु विरुद्धमिदमुच्यते— अप्रमेयं ज्ञायत इति च; 'ज्ञायते' इति प्रमाणैर्मीयत इत्यर्थः, 'अप्रमेयम्' इति च तत्प्रतिषेधः— नैष दोषः, अन्यवस्तुवत् अनागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात्; यथा अन्यानि वस्तूनि आगमनिरपेक्षैः प्रमाणैः विषयीक्रियन्ते, न तथा एतत् आत्मतत्त्वं प्रमाणान्तरेण विषयीकर्तुं शक्यते; सर्वस्यात्मत्वे

केन कं पश्येत् विजानीयात्– इति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैव आगमोऽपि विज्ञापयति, न तु अभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन ; तस्मात् न आगमेनापि स्वर्गमेर्वादिवत् तत् प्रतिपाद्यते ; प्रतिपादयित्रात्मभूतं हि तत् ; प्रतिपादयितुः प्रतिपादनस्य प्रतिपाद्यविषयत्वात् , भेदे हि सति तत् भवति । ज्ञानं च तस्मिन् परात्मभावनिवृत्तिरेव ; न तस्मिन् साक्षात् आत्मभावः कर्तव्यः, विद्यमानत्वादात्मभावस्य ; नित्यो हि आत्मभावः सर्वस्य अतद्विषय इव प्रत्यवभासते ; तस्मात् अतद्विषयाभासनिवृत्तिव्यतिरेकेण न तस्मिन्नात्मभावो विधीयते ; अन्यात्मभावनिवृत्तौ, आत्मभावः स्वात्मनि स्वाभाविको यः, स केवलो भवतीति– आत्मा ज्ञायत इत्युच्यते ; स्वतश्चाप्रमेयः प्रमाणान्तरेण न विषयीक्रियते इति उभयमप्यविरुद्धमेव । विरजः विगतरजः, रजो नाम धर्माधर्मादिमलम् तद्रहित इत्येतत् । परः– परो व्यतिरिक्तः सूक्ष्मो व्यापी वा आकाशादपि अव्याकृताख्यात् । अजः न जायते ; जन्मप्रतिषेधात् उत्तरेऽपि भावविकाराः प्रतिषिद्धाः, सर्वेषां जन्मादित्वात् । आत्मा, महान्परिमाणतः, महत्तरः सर्वस्मात् । ध्रुवः अविनाशी ॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २१ ॥**

तम् ईदृशमात्मानमेव, धीरः धीमान् विज्ञाय उपदेशतः शास्त्रतश्च, प्रज्ञां शास्त्राचर्योपदिष्टविषयां जिज्ञासापरिसमाप्तिकरीम्, कुर्वीत ब्राह्मणः—एवं प्रज्ञाकरणसाधनानि संन्यासशमदमोपरमतितिक्षासमाधानानि कुर्यादित्यर्थः । न अनुध्यायात् नानुचिन्तयेत्, बहून् प्रभूतान् शब्दान्; तत्र बहुत्वप्रतिषेधात् केवलात्मैकत्वप्रतिपादकाः स्वल्पाः शब्दा अनुज्ञायन्ते; 'ओमित्येवं ध्यायथ आत्मानम्' 'अन्या वाचो विमुञ्चथ' इति च आथर्वणे । वाचो विग्लापनं विशेषेण ग्लानिकरं श्रमकरम्, हि यस्मात्, तत् बहुशब्दाभिध्यानमिति ॥

**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय**

**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनैतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः । स एष नेति नेत्यात्मागृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥**

सहेतुकौ बन्धमोक्षौ अभिहितौ मन्त्रब्राह्मणाभ्याम्; श्लोकैश्च पुनः मोक्षस्वरूपं विस्तरेण प्रतिपादितम्; एवम् एतस्मिन् आत्मविषये सर्वो वेदः यथा उपयुक्तो भवति,

तत् तथा वक्तव्यमिति तदर्थेयं कण्डिका आरभ्यते। तत्र यथा अस्मिन्प्रपाठके अभिहितं सप्रयोजनम् अनूद्य अत्रैव उपयोगः कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य— इत्येवमर्थ उक्तार्थानुवादः 'स वा एषः' इत्यादिः। स इति उक्तपरामर्शार्थः; कोऽसौ उक्तः परामृश्यते? तं प्रतिनिर्दिशति— य एष विज्ञानमय इति— अतीतानन्तरवाक्योक्तसंप्रत्ययो मा भूदिति, यः एषः; कतमः एषः इत्युच्यते— विज्ञानमयः प्राणेष्विति; उक्तवाक्योल्लिङ्गनं संशयनिवृत्त्यर्थम्; उक्तं हि पूर्वं जनकप्रश्नारम्भे 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु' इत्यादि। एतदुक्तं भवति— योऽयम् 'विज्ञानमयः प्राणेषु' इत्यादिना वाक्येन प्रतिपादितः स्वयं ज्योतिरात्मा, स एषः कामकर्माविद्यानामनात्मधर्मत्वप्रतिपादनद्वारेण मोक्षितः परमात्मभावमापादितः— पर एवायं नान्य इति; एष सः साक्षान्महानज आत्मेत्युक्तः। योऽयं विज्ञानमयः प्राणेष्विति यथाव्याख्यातार्थ एव। य एषः अन्तर्हृदये हृदयपुण्डरीकमध्ये य एष आकाशो बुद्धिविज्ञानसंश्रयः, तस्मिन्नाकाशे बुद्धिविज्ञानसहिते शेते तिष्ठति; अथवा संप्रसादकाले अन्तर्हृदये य एष आकाशः पर एव आत्मा निरुपाधिकः विज्ञानमयस्य स्वस्वभावः, तस्मिन् स्वस्वभावे परमात्मनि आकाशाख्ये शेते; चतुर्थे एतद्व्याख्यातम् 'क्वैष तदाभूत्' इत्यस्य

प्रतिवचनत्वेन । स च सर्वस्य ब्रह्मेन्द्रादेः वशी; सर्वो हि अस्य वशे वर्तते; उक्तं च 'एतस्य वा अक्षरस्य प्रशासने' इति । न केवलं वशी, सर्वस्य ईशानः ईशिता च ब्रह्मेन्द्रप्रभृतीनाम् । ईशितृत्वं च कदाचित् जातिकृतम्, यथा राजकुमारस्य बलवत्तरानपि भृत्यान्प्रति, तद्वन्मा भूदित्याह— सर्वस्याधिपतिः अधिष्ठाय पालयिता, स्वतन्त्र इत्यर्थः; न राजपुत्रवत् अमात्यादिभृत्यतन्त्रः । त्रयमप्येतत् वशित्वादि हेतुहेतुमद्रूपम्— यस्मात् सर्वस्याधिपतिः, ततोऽसौ सर्वस्येशानः; यो हि यमधिष्ठाय पालयति, स तं प्रतीष्ट एवेति प्रसिद्धम्, यस्माच्च सर्वस्येशानः, तस्मात् सर्वस्य वशीति । किंचान्यत् स एवंभूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयः न साधुना शास्त्रविहितेन कर्मणा भूयान्भवति, न वर्धते पूर्वावस्थातः केनचिद्धर्मेण; नो एव शास्त्रप्रतिषिद्धेन असाधुना कर्मणा कनीयान् अल्पतरो भवति, पूर्वावस्थातो न हीयत इत्यर्थः । किं च सर्वो हि अधिष्ठानपालनादि कुर्वन् परानुग्रहपीडाकृतेन धर्माधर्माख्येन युज्यते; अस्यैव तु कथं तदभाव इत्युच्यते— यस्मात् एष सर्वेश्वरः सन् कर्मणोऽपीशितुं भवत्येव शीलमस्य, तस्मात् न कर्मणा संबध्यते । किं च एष भूताधिपतिः ब्रह्मादिस्तम्बपर्यन्तानां भूतानामधिपतिरित्युक्तार्थं पदम् । एष भूतानां तेषामेव पा-

र्लयिता रक्षिता । एष सेतुः; किंविशिष्ट इत्याह– विधरणः वर्णाश्रमादिव्यवस्थाया विधारयिता; तदाह— एषां भूरादीनां ब्रह्मलोकान्तानां लोकानाम् असंभेदाय असंभिन्नमर्यादायै; परमेश्वरेण सेतुवदविधार्यमाणा लोकाः संभिन्नमर्यादाः स्युः; अतो लोकानामसंभेदाय सेतुभूतोऽयं परमेश्वरः, यः स्वयं ज्योतिरात्मैव एवंवित् सर्वस्य वशी– इत्यादि ब्रह्मविद्यायाः फलमेतन्निर्दिष्टम् । 'किंज्योतिरयं पुरुषः' इत्येवमादिषष्ठप्रपाठकविहितायामेतस्यां ब्रह्मविद्यायाम् एवंफलायाम् काम्यैकदेशवर्जितं कृत्स्नं कर्मकाण्डं तादर्थ्येन विनियुज्यते; तत् कथमित्युच्यते— तमेतम् एवंभूतमौपनिषदं पुरुषम्, वेदानुवचनेन मन्त्रब्राह्मणाध्ययनेन नित्यस्वाध्यायलक्षणेन, विविदिषन्ति वेदितुमिच्छन्ति; के? ब्राह्मणाः; ब्राह्मणग्रहणमुपलक्षणार्थम्; अविशिष्टो हि अधिकारः त्रयाणां वर्णानाम्; अथवा कर्मकाण्डेन मन्त्रब्राह्मणेन वेदानुवचनेन विविदिषन्ति; कथं विविदिषन्तीत्युच्यते– यज्ञेनेत्यादि ॥

ये पुनः मन्त्रब्राह्मणलक्षणेन वेदानुवचनेन प्रकाश्यमानं विविदिषन्ति–इति व्याचक्षते, तेषाम् आरण्यकमात्रमेव वेदानुवचनं स्यात्; न हि कर्मकाण्डेन पर आत्मा प्रकाश्यते; 'तं त्वौपनिषदम्' इति विशेषश्रुतेः । वेदानुवचनेनेति च अवि-

शेषितत्वात् समस्तग्राहि इदं वचनम्; न च तदेकदेशोत्सर्गः युक्तः। ननु त्वत्पक्षेऽपि उपनिषद्वर्जमिति एकदेशत्वं स्यात्— न, आद्यव्याख्याने अविरोधात् अस्मत्पक्षे नैष दोषो भवति; यदा वेदानुवचनशब्देन नित्यः स्वाध्यायो विधीयते, तदा उपनिषदपि गृहीतैवेति, वेदानुवचनशब्दार्थैकदेशो न परित्यक्तो भवति। यज्ञादिसहपाठाच्च— यज्ञादीनि कर्माण्येव अनुक्रमिष्यन् वेदानुवचनशब्दं प्रयुङ्क्ते; तस्मात् कर्मैव वेदानुवचनशब्देनोच्यत इति गम्यते; कर्म हि नित्यस्वाध्यायः॥

कथं पुनः नित्यस्वाध्यायादिभिः कर्मभिः आत्मानं विविदिषन्ति? नैव हि तानि आत्मानं प्रकाशयन्ति, यथा उपनिषदः— नैष दोषः, कर्मणां विशुद्धिहेतुत्वात्; कर्मभिः संस्कृता हि विशुद्धात्मानः शक्नुवन्ति आत्मानमुपनिषत्प्रकाशितम् अप्रतिबन्धेन वेदितुम्; तथा ह्याथर्वणे— 'विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति; स्मृतिश्च 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिः। कथं पुनः नित्यानि कर्माणि संस्कारार्थानीत्यवगम्यते? 'स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इत्यादिश्रुतेः; सर्वेषु च स्मृतिशास्त्रेषु कर्माणि संस्कारार्थान्येव आचक्षते 'अष्टाचत्वारिंशत्संस्का-

रा: ' इत्यादिषु । गीतासु च— ' यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा: ' इति । यज्ञेनेति— द्रव्ययज्ञा ज्ञानयज्ञाश्च संस्कारार्था:; संस्कृतस्य च विशुद्धसत्त्वस्य ज्ञानोत्पत्तिरप्रतिबन्धेन भविष्यति; अतो यज्ञेन विविदिषन्ति । दानेन— दानमपि पापक्षयहेतुत्वात् धर्मवृद्धिहेतुत्वाच्च । तपसा, तप इति अविशेषेण कृच्छ्रचान्द्रायणादिप्राप्तौ विशेषणम्— अनाशकेनेति; कामानशनम् अनाशकम्, न तु भोजननिवृत्ति:; भोजननिवृत्तौ म्रियत एव, न आत्मवेदनम् । वेदानुवचनयज्ञदानतप:शब्देन सर्वमेव नित्यं कर्म उपलक्ष्यते; एवं काम्यवर्जितं नित्यं कर्मजातं सर्वम् आत्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपद्यते; एवं कर्मकाण्डेन अस्य एकवाक्यतावगति: । एवं यथोक्तेन न्यायेन एतमेव आत्मानं विदित्वा यथाप्रकाशितम्, मुनिर्भवति, मननान्मुनि:, योगी भवतीत्यर्थ:; एतमेव विदित्वा मुनिर्भवति, नान्यम् । ननु अन्यवेदनेऽपि मुनित्वं स्यात्; कथमवधार्यते— एतमेवेति— बाढम्, अन्यवेदनेऽपि मुनिर्भवेत्; किं तु अन्यवेदने न मुनिरेव स्यात्, किं तर्हि कर्म्यपि भवेत् स:; एतं तु औपनिषदं पुरुषं विदित्वा, मुनिरेव स्यात्, न तु कर्मी; अत: असाधारणं मुनित्वं विवक्षितमस्येति अवधारयति—

एतमेवेति; एतस्मिन्हि विदिते, केन कं पश्येदित्येवं क्रियासंभवात् मननमेव स्यात्। किं च एतमेव आत्मानं स्वं लोकम् इच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति प्रकर्षेण व्रजन्ति, सर्वाणि कर्माणि संन्यस्यन्तीत्यर्थः। 'एतमेव लोकमिच्छन्तः' इत्यवधारणात् न बाह्यलोकत्रयेप्सूनां पारिव्राज्ये अधिकार इति गम्यते; न हि गङ्गाद्वारं प्रतिपित्सुः काशीदेशनिवासी पूर्वाभिमुखः प्रैति। तस्मात् बाह्यलोकत्रयार्थिनां पुत्रकर्मापरब्रह्मविद्याः साधनम्, 'पुत्रेणायं लोको जय्यो नान्येन कर्मणा' इत्यादिश्रुतेः; अतः तदर्थिभिः पुत्रादिसाधनं प्रत्याख्याय, न पारिव्राज्यं प्रतिपत्तुं युक्तम्, अतत्साधनत्वात्पारिव्राज्यस्य। तस्मात् 'एतमेव लोकमिच्छन्तः प्रव्रजन्ति' इति युक्तमवधारणम्। आत्मलोकप्राप्तिर्हि अविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव। तस्मात् आत्मानं चेत् लोकमिच्छति यः, तस्य सर्वक्रियोपरम एव आत्मलोकसाधनं मुख्यम् अन्तरङ्गम्, यथा पुत्रादिरेव बाह्यलोकत्रयस्य, पुत्रादिकर्मण आत्मलोकं प्रति असाधनत्वात्। असंभवेन च विरुद्धत्वमवोचाम। तस्मात् आत्मानं लोकमिच्छन्तः प्रव्रजन्त्येव, सर्वक्रियाभ्यो निवर्तेरन्नेवेत्यर्थः। यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितानि, एवमात्मलोकार्थिनः

सर्वैषणानिवृत्तिः पारिव्राज्यं ब्रह्मविदो विधीयत एव । कुतः पुनः ते आत्मलोकार्थिनः प्रव्रजन्त्येवेत्युच्यते ; तत्र अर्थवादवाक्यरूपेण हेतुं दर्शयति— एतद्ध स्म वै तत् । तदेतत् पारिव्राज्ये कारणमुच्यते— ह स्म वै किल पूर्वे अतिक्रान्तकालीना विद्वांसः आत्मज्ञाः, प्रजां कर्म अपरब्रह्मविद्यां च ; प्रजोपलक्षितं हि त्रयमेतत् बाह्यलोकत्रयसाधनं निर्दिश्यते 'प्रजाम्' इति । प्रजां किम्? न कामयन्ते, पुत्रादिलोकत्रयसाधनं न अनुतिष्ठन्तीत्यर्थः । ननु अपरब्रह्मदर्शनमनुतिष्ठन्त्येव, तद्बलाद्धि व्युत्थानम्— न अपवादात्; 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' 'सर्वं तं परादात्—' इति अपरब्रह्मदर्शनमपि अपवदत्येव, अपरब्रह्मणोऽपि सर्वमध्यान्तर्भावात्; 'यत्र नान्यत्पश्यति' इति च; पूर्वापरबाह्यान्तरदर्शनप्रतिषेधाच्च अपूर्वमनपरमनन्तरमबाह्यमिति; 'तत्केन कं पश्येद्विजानीयात्' इति च; तस्मात् न आत्मदर्शनव्यतिरेकेण अन्यत् व्युत्थानकारणमपेक्षते । कः पुनः तेषामभिप्राय इत्युच्यते— किं प्रयोजनं फलं साध्यं करिष्यामः प्रजया साधनेन ; प्रजा हि बाह्यलोकसाधनं निर्ज्ञाता ; स च बाह्यलोको नास्ति अस्माकम् आत्मव्यतिरिक्तः ; सर्वं हि अस्माकम् आत्मभूतमेव, सर्वस्य च वयम् आत्मभूताः ; आत्मा च नः आत्मत्वादेव न केनचित् साधनेन उत्पाद्यः

आप्यः विकार्यः संस्कार्यो वा। यदपि आत्मयाजिनः सं-स्कारार्थं कर्मेति, तदपि कार्यकरणात्मदर्शनविषयमेव, इदं मे अनेन अङ्गं संस्क्रियते— इति अङ्गाङ्गित्वादिश्रवणात्; न हि विज्ञानघनैकरसनैरन्तर्यदर्शिनः अङ्गाङ्गिसंस्कारोपधानदर्शनं संभवति। तस्मात् न किंचित् प्रजादिसाधनैः करिष्यामः; अविदुषां हि तत् प्रजादिसाधनैः कर्तव्यं फलम्; न हि मृग-तृष्णिकायामुदकपानाय तदुदकदर्शी प्रवृत्त इति, तत्र ऊ-षरमात्रमुदकाभावं पश्यतोऽपि प्रवृत्तिर्युक्ता; एवम् अ-स्माकमपि परमार्थात्मलोकदर्शिनां प्रजादिसाधनसाध्ये मृगतृ-ष्णिकादिसमे अविद्वद्दर्शनविषये न प्रवृत्तिर्युक्तेत्यभिप्रायः। तदेतदुच्यते— येषाम् अस्माकं परमार्थदर्शिनां नः, अय-मात्मा अशनायादिविनिर्मुक्तः साध्वसाधुभ्यामविकार्यः अयं लोकः फलमभिप्रेतम्; न चास्य आत्मनः साध्यसाधनादि-सर्वसंसारधर्मविनिर्मुक्तस्य साधनं किंचित् एषितव्यम्; सा-ध्यस्य हि साधनान्वेषणा क्रियते; असाध्यस्य साधनान्वे-षणायां हि, जलबुद्ध्या स्थल इव तरणं कृतं स्यात्, खे वा शाकुनपदान्वेषणम्। तस्मात् एतमात्मानं विदित्वा प्रव्रजेयुरेव ब्राह्मणाः, न कर्म आरभेरन्नित्यर्थः, यस्मात् पूर्वे ब्राह्मणा एवं विद्वांसः प्रजामकामयमानाः। ते एवं साध्यसाधनसंव्यवहारं निन्दन्तः अविद्वद्विषयोऽय-

मिति कृत्वा, किं कृतवन्त इत्युच्यते— ते ह स्म किल पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यादि व्याख्यातम् ॥

तस्मात् आत्मानं लोकमिच्छन्तः प्रव्रजन्ति प्रव्रजेयुः— इत्येष विधिः अर्थवादेन संगच्छते; न हि सार्थवादस्य अस्य लोकस्तुत्याभिमुख्यम् उपपद्यते; प्रव्रजन्तीत्यस्यार्थवादरूपो हि 'एतद्ध स्म' इत्यादिरुत्तरो ग्रन्थः; अर्थवादश्चेत्, नार्थवादान्तरमपेक्षेत; अपेक्षते तु 'एतद्ध स्म' इत्याद्यर्थवादं 'प्रव्रजन्ति' इत्येतत्। यस्मात् पूर्वे विद्वांसः प्रजादिकर्मभ्यो निवृत्ताः प्रव्रजितवन्त एव, तस्मात् अधुनातना अपि प्रव्रजन्ति प्रव्रजेयुः— इत्येवं संबध्यमानं न लोकस्तुत्यभिमुखं भवितुमर्हति; विज्ञानसमानकर्तृकत्वोपदेशादित्यादिना अवोचाम। वेदानुवचनादिसहपाठाच्च; यथा आत्मवेदनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेव, नार्थवादत्वम्, तथा तैरेव सह पठितस्य पारिव्राज्यस्य आत्मलोकप्राप्तिसाधनत्वेन अर्थवादत्वमयुक्तम्। फलविभागोपदेशाच्च; 'एतमेवात्मानं लोकं विदित्वा' इति अन्यस्मात् बाह्यात् लोकात् आत्मानं फलान्तरत्वेन प्रविभजति, यथा— पुत्रेणैवायं लोको जय्यः नान्येन कर्मणा, कर्मणा पितृलोकः— इति। न च प्रव्रजन्तीत्येतत् प्राप्तवत् लोकस्तुतिपरम्, प्रधानवच्च अर्थ-

वादापेक्षम्– सकृच्छ्रुतं स्यात् । तस्मात् भ्रान्तिरेव एषा– लोकस्तुतिपरमिति । न च अनुष्ठेयेन पारिव्राज्येन स्तुतिरुपपद्यते; यदि पारिव्राज्यम् अनुष्ठेयमपि सत् अन्यस्तुत्यर्थं स्यात्, दर्शपूर्णमासादीनामपि अनुष्ठेयानां स्तुत्यर्थता स्यात् । न च अन्यत्र कर्तव्यता एतस्माद्विषयात् निर्ज्ञाता, यत इह स्तुत्यर्थो भवेत् । यदि पुनः क्वचिद्विधिः परिकल्प्येत पारिव्राज्यस्य, स इहैव मुख्यः नान्यत्र संभवति । यदपि अनधिकृतविषये पारिव्राज्यं परिकल्प्यते, तत्र वृक्षाद्यारोहणाद्यपि पारिव्राज्यवत् कल्प्येत, कर्तव्यत्वेन अनिर्ज्ञातत्वाविशेषात् । तस्मात् स्तुतित्वगन्धोऽपि अत्र न शक्यः कल्पयितुम् ॥

यदि अयमात्मा लोक इष्यते, किमर्थं तत्प्राप्तिसाधनत्वेन कर्माण्येव न आरभेरन्, किं पारिव्राज्येन– इत्यत्रोच्यते— अस्य आत्मलोकस्य कर्मभिरसंबन्धात्; यमात्मानमिच्छन्तः प्रव्रजेयुः, स आत्मा साधनत्वेन फलत्वेन च उत्पाद्यत्वादिप्रकाराणामन्यतमत्वेनापि कर्मभिः न संबध्यते; तस्मात्– स एष नेति नेत्यात्मागृह्यो न हि गृह्यते– इत्यादिलक्षणः; यस्मात् एवंलक्षण आत्मा कर्मफलसाधनासंबन्धी सर्वसंसारधर्मविलक्षणः अशनायाद्यतीतः अस्थूलादिधर्मवान् अजोऽजरोऽमरोऽमृतोऽभयः सैन्धवघनवद्विज्ञानैकरसस्वभावः

स्वयं ज्योतिः एक एवाद्वयः अपूर्वोऽनपरोऽनन्तरोऽबाह्यः— इत्येतत् आगमतस्तर्कतश्च स्थापितम्, विशेषतश्चेह जनकयाज्ञवल्क्यसंवादे अस्मिन्; तस्मात् एवंलक्षणे आत्मनि विदिते आत्मत्वेन नैव कर्मारम्भ उपपद्यते। तस्मादात्मा निर्विशेषः। न हि चक्षुष्मान् पथि प्रवृत्तः अहनि कूपे कण्टके वा पतति; कृत्स्नस्य च कर्मफलस्य विद्याफलेऽन्तर्भावात्; न च अयत्नप्राप्ये वस्तुनि विद्वान् यत्नमातिष्ठति; 'अत्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संप्राप्तौ को विद्वान्यत्नमाचरेत्' 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते—' इति गीतासु। इहापि च एतस्यैव परमानन्दस्य ब्रह्मवित्प्राप्यस्य अन्यानि भूतानि मात्रामुपजीवन्तीत्युक्तम्। अतो ब्रह्मविदां न कर्मारम्भः॥

यस्मात् सर्वैषणाविनिवृत्तः स एष नेति नेत्यात्मानमात्मत्वेनोपगम्य तद्रूपेणैव वर्तते, तस्मात् एतम् एवंविदं नेति नेत्यात्मभूतम्, उ ह एव एते वक्ष्यमाणे न तरतः न प्राप्नुतः— इति युक्तमेवेति वाक्यशेषः। के ते इत्युच्यते—अतः अस्मान्निमित्तात् शरीरधारणादिहेतोः, पापम् अपुण्यं कर्म अकरवं कृतवानस्मि— कष्टं खलु मम वृत्तम्, अनेन पापेन कर्मणा अहं नरकं प्रतिपत्स्ये— इति योऽयं पश्चात् पापं कर्म कृतवतः—परितापः स एनं नेति नेत्यात्मभूतं न

तरति ; तथा अतः कल्याणं फलविषयकामान्निमित्तात् यज्ञदानादिलक्षणं पुण्यं शोभनं कर्म कृतवानस्मि, अतोऽहम् अस्य फलं सुखमुपभोक्ष्ये देहान्तरे— इत्येषोऽपि हर्षः तं न तरति । उभे उ ह एव एषः ब्रह्मवित् एते कर्मणी तरति पुण्यपापलक्षणे । एवं ब्रह्मविदः संन्यासिन उभे अपि कर्मणी क्षीयेते— पूर्वजन्मनि कृते ये ते, इह जन्मनि कृते ये ते च ; अपूर्वे च न आरभ्येते । किं च नैनं कृताकृते, कृतं नित्यानुष्ठानम्, अकृतं तस्यैव अक्रिया, ते अपि कृताकृते एनं न तपतः ; अनात्मज्ञं हि, कृतं फलदानेन, अकृतं प्रत्यवायोत्पादनेन, तपतः ; अयं तु ब्रह्मवित् आत्मविद्याग्निना सर्वाणि कर्माणि भस्मीकरोति, 'यथैधांसि समिद्धोऽग्निः' इत्यादिस्मृतेः ; शरीरारम्भकयोस्तु उपभोगेनैव क्षयः । अतो ब्रह्मवित् अकर्मसंबन्धी ॥

**तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति**

**सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति ॥ २३ ॥**

तदेतद्वस्तु ब्राह्मणेनोक्तम् ऋचा मन्त्रेण अभ्युक्तम् प्रकाशितम् । एषः नेति नेत्यादिलक्षणः नित्यो महिमा ; अन्ये तु महिमानः कर्मकृता इत्यनित्याः ; अयं तु तद्विलक्षणो महिमा स्वाभाविकत्वान्नित्यः ब्रह्मविदः ब्राह्मणस्य त्यक्तसर्वैषणस्य । कुतोऽस्य नित्यत्वमिति हेतुमाह— कर्मणा न वर्धते शुभलक्षणेन कृतेन वृद्धिलक्षणां विक्रियां न प्राप्नोति ; अशुभेन कर्मणा नो कनीयान् नाप्यपक्षयलक्षणां विक्रियां प्राप्नोति ; उपचयापचयहेतुभूता एव हि सर्वा विक्रिया इति एताभ्यां प्रतिषिध्यन्ते ; अतः अविक्रियात्वात् नित्य एष महिमा । तस्मात् तस्यैव महिम्नः, स्यात् भवेत्, पदवित्— पदस्य वेत्ता, पद्यते गम्यते ज्ञायत इति महिम्नः स्वरूपमेव पदम्, तस्य पदस्य वेदिता । किं तत्पदवेदनेन स्यादित्युच्यते— तं विदित्वा महिमानम्, न लिप्यते न संबध्यते कर्मणा पापकेन धर्माधर्मलक्षणेन, उभयमपि पापकमेव विदुषः । यस्मादेवम् अकर्मसंबन्धी

एष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणः, तस्मात् एवंवित् शान्तः बाह्येन्द्रियव्यापारत उपशान्तः, तथा दान्तः अन्तःकरणतृष्णातो निवृत्तः, उपरतः सर्वैषणाविनिर्मुक्तः संन्यासी, तितिक्षुः द्वंद्वसहिष्णुः, समाहितः इन्द्रियान्तःकरणचलनरूपाद्व्यावृत्त्या ऐकाग्र्यरूपेण समाहितो भूत्वा; तदेतदुक्तं पुरस्तात् 'बाल्यं च पाण्डित्यं च निर्विद्य' इति; आत्मन्येव स्वे कार्यकरणसंघाते आत्मानं प्रत्यक्चेतयितारं पश्यति । तत्र किं तावन्मात्रं परिच्छिन्नम्? नेत्युच्यते—सर्वं समस्तम् आत्मानमेव पश्यति, नान्यत् आत्मव्यतिरिक्तं वालाग्रमात्रमप्यस्तीत्येवं पश्यति; मननात् मुनिर्भवति जाग्रत्स्वप्नसुषुप्ताख्यं स्थानत्रयं हित्वा । एवं पश्यन्तं ब्राह्मणं नैनं पाप्मा पुण्यपापलक्षणः तरति, न प्राप्नोति; अयं तु ब्रह्मवित् सर्वं पाप्मानं तरति आत्मभावेनैव व्याप्नोति अतिक्रामति । नैनं पाप्मा कृताकृतलक्षणः तपति इष्टफलप्रत्यवायोत्पादनाभ्याम्; सर्वं पाप्मानम् अयं तपति ब्रह्मवित् सर्वात्मदर्शनवह्निना भस्मीकरोति । स एष एवंवित् विपापः विगतधर्माधर्मः, विरजः विगतरजः, रजः कामः, विगतकामः, अविचिकित्सः छिन्नसंशयः, अहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिः ब्राह्मणो भवति— अयं तु एवंभूतः एतस्यामवस्थायां मुख्यो ब्राह्मणः, प्रागेतस्मात् ब्रह्मस्वरूपावस्थानात् गौणमस्य ब्राह्मण्यम् ।

एष ब्रह्मलोकः— ब्रह्मैव लोको ब्रह्मलोकः मुख्यो निरुपचरितः सर्वात्मभावलक्षणः, हे सम्राट् । एनं ब्रह्मलोकं परिप्रापितोऽसि अभयं नेति नेत्यादिलक्षणम्— इति होवाच याज्ञवल्क्यः । एवं ब्रह्मभूतो जनकः याज्ञवल्क्येन ब्रह्मभावमापादितः प्रत्याह— सोऽहं त्वया ब्रह्मभावमापादितः सन् भगवते तुभ्यम् विदेहान् देशान् मम राज्यं समस्तं ददामि, मां च सह विदेहैः दास्याय दासकर्मणे— ददामीति च-शब्दात्संबध्यते । परिसमापिता ब्रह्मविद्या सह संन्यासेन साङ्गा सेतिकर्तव्यताका; परिसमाप्तः परमपुरुषार्थः; एतावत् पुरुषेण कर्तव्यम्, एषा निष्ठा, एषा परा गतिः, एतन्निःश्रेयसम्, एतत्प्राप्य कृतकृत्यो ब्राह्मणो भवति, एतत् सर्ववेदानुशासनमिति ॥

**स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु य एवं वेद ॥ २४ ॥**

योऽयं जनकयाज्ञवल्क्याख्यायिकायां व्याख्यात आत्मा स वै एषः महान् अजः आत्मा अन्नादः सर्वभूतस्थः सर्वान्नानामत्ता, वसुदानः— वसु धनं सर्वप्राणिकर्मफलम्— तस्य दाता, प्राणिनां यथाकर्म फलेन योजयितेत्यर्थः; तमेतम् अजमन्नादं वसुदानमात्मानम् अन्नादवसुदानगुणाभ्यां युक्तम् यो वेद, सः सर्वभूतेष्वात्मभूतः अन्नमत्ति, विन्दते च वसु

सर्वं कर्मफलजातं लभते सर्वात्मत्वादेव, य एवं यथोक्तं वेद । अथवा दृष्टफलार्थिभिरपि एवंगुण उपास्यः; तेन अन्नादः वसोश्च लब्धा, दृष्टेनैव फलेन अन्नात्तृत्वेन गोश्वादिना च अस्य योगो भवतीत्यर्थः ॥

**स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥**

इति चतुर्थं ब्राह्मणम् ॥

इदानीं समस्तस्यैव आरण्यकस्य योऽर्थ उक्तः, स समुच्चित्य अस्यां कण्डिकायां निर्दिश्यते, एतावान्समस्तारण्यकार्थ इति । स वा एष' महानज आत्मा अजरः न जीर्यत इति, न विपरिणमत इत्यर्थः; अमरः— यस्माच्च अजरः, तस्मात् अमरः, न म्रियत इत्यमरः; यो हि जायते जीर्यते च, स विनश्यति म्रियते वा; अयं तु अजत्वात् अजरत्वाच्च अविनाशी यतः, अत एव अमृतः । यस्मात् जनिप्रभृतिभिः त्रिभिर्भावविकारैः वर्जितः, तस्मात् इतरैरपि भावविकारैस्त्रिभिः तत्कृतैश्च कामकर्ममोहादिभिर्मृत्युरूपैर्वर्जित इत्येतत् । अभयः अत एव; यस्माच्च एवं पूर्वोक्तविशेषणः, तस्माद्भयवर्जितः; भयं च हि नाम अविद्याकार्यम्; तत्कार्यप्रतिषेधेन

भावविकारप्रतिषेधेन च अविद्यायाः प्रतिषेधः सिद्धो वेदितव्यः। अभय आत्मा एवंगुणविशिष्टः किमसौ? ब्रह्म परिवृढं निरतिशयं महदित्यर्थः। अभयं वै ब्रह्म; प्रसिद्धमेतत् लोके — अभयं ब्रह्मेति। तस्माद्युक्तम् एवंगुणविशिष्ट आत्मा ब्रह्मेति। य एवं यथोक्तमात्मानमभयं ब्रह्म वेद, सः अभयं हि वै ब्रह्म भवति। एष सर्वस्या उपनिषदः संक्षिप्तोऽर्थ उक्तः। एतस्यैवार्थस्य सम्यक्प्रबोधाय उत्पत्तिस्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा च आत्मनि कृता; तदपोहेन च नेति नेतीत्यध्यारोपितविशेषापनयद्वारेण पुनः तत्त्वमावेदितम्। यथा एकप्रभृत्यापरार्धसंख्यास्वरूपपरिज्ञानाय रेखाध्यारोपणं कृत्वा— एकेयं रेखा, दशेयम्, शतेयम्, सहस्रेयम्— इति ग्राहयति, अवगमयति संख्यास्वरूपं केवलम्, न तु संख्याया रेखात्मत्वमेव; यथा च अकारादीन्यक्षराणि विजिग्राहयिषुः पत्रमषीरेखादिसंयोगोपायमास्थाय वर्णानां सतत्त्वमावेदयति, न पत्रमष्याद्यात्मतामक्षराणां ग्राहयति—तथा चेह उत्पत्त्याद्यनेकोपायमास्थाय एकं ब्रह्मतत्त्वमावेदितम्, पुनः तत्कल्पितोपायजनितविशेषपरिशोधनार्थं नेति नेतीति तत्त्वोपसंहारः कृतः। तदुपसंहृतं पुनः परिशुद्धं केवलमेव सफलं ज्ञानम् अन्तेऽस्यां कण्डिकायामिति॥

इति चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम्॥

## पञ्चमं ब्राह्मणम् ॥

आगमप्रधानेन मधुकाण्डेन ब्रह्मतत्त्वं निर्धारितम् । पुनः तस्यैव उपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा विगृह्यवादेन विचारितम् । शिष्याचार्यसंबन्धेन च षष्ठे प्रश्नप्रतिवचनन्यायेन सविस्तरं विचार्योपसंहृतम् । अथेदानीं निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते; अयं च न्यायः वाक्यकोविदैः परिगृहीतः— 'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्' इति । अथवा आगमप्रधानेन मधुकाण्डेन यत् अमृतत्वसाधनं ससंन्यासमात्मज्ञानमभिहितम्, तदेव तर्केणापि अमृतत्वसाधनं ससंन्यासमात्मज्ञानमधिगम्यते; तर्कप्रधानं हि याज्ञवल्कीयं काण्डम्; तस्मात् शास्त्रतर्काभ्यां निश्चितमेतत्— यदेतत् आत्मज्ञानं ससंन्यासम् अमृतत्वसाधनमिति; तस्मात् शास्त्रश्रद्धावद्भिः अमृतत्वप्रतिपित्सुभिः एतत् प्रतिपत्तव्यमिति; आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवति अव्यभिचारादिति । अक्षराणां तु चतुर्थे यथा व्याख्यातोऽर्थः, तथा प्रतिपत्तव्योऽत्रापि; यान्यक्षराणि अव्याख्यातानि तानि व्याख्यास्यामः ॥

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥**

अथेति हेतूपदेशानन्तर्यप्रदर्शनार्थः । हेतुप्रधानानि हि वाक्यानि अतीतानि । तदनन्तरम् आगमप्रधानेन प्रतिज्ञातोऽर्थः निगम्यते मैत्रेयीब्राह्मणेन । ह-शब्दः वृत्तावद्योतकः । याज्ञवल्क्यस्य ऋषेः किल द्वे भार्ये पत्न्यौ बभूवतुः आस्ताम्— मैत्रेयी च नामत एका, अपरा कात्यायनी नामतः । तयोर्भार्ययोः मैत्रेयी ह किल ब्रह्मवादिनी ब्रह्मवदनशीला बभूव आसीत्; स्त्रीप्रज्ञा— स्त्रियां या उचिता सा स्त्रीप्रज्ञा— सैव यस्याः प्रज्ञा गृहप्रयोजनान्वेषणालक्षणा, सा स्त्रीप्रज्ञैव तर्हि तस्मिन्काले आसीत् कात्यायनी । अथ एवं सति ह किल याज्ञवल्क्यः अन्यत् पूर्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तात् पारिव्राज्यलक्षणं वृत्तम् उपाकरिष्यन् उपाचिकीर्षुः सन् ॥

**मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥ २ ॥**

हे मैत्रेयीति ज्येष्ठां भार्यामामन्त्रयामास; आमन्त्र्य चोवाच ह— प्रव्रजिष्यन् पारिव्राज्यं करिष्यन् वै अरे मैत्रेयि अस्मात् स्थानात् गार्हस्थ्यात् अहम् अस्मि भवामि। मैत्रेयि अनुजानीहि माम्; हन्त इच्छसि यदि, ते अनया कात्यायन्या अन्तम् करवाणि— इत्यादि व्याख्यातम् ॥

**सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥**

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥**

सा एवमुक्ता उवाच मैत्रेयी— सर्वेयं पृथिवी वित्तेन पूर्णा स्यात्, नु किम् स्याम्, किमहं वित्तसाध्येन कर्मणा अमृता, आहो न स्यामिति। नेति होवाच याज्ञवल्क्य इत्यादि समानमन्यत् ॥

**स होवाच याज्ञवल्क्यः प्रिया वै खलु**

नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

सः ह उवाच— प्रियैव पूर्वं खलु नः अस्मभ्यम् भवती, भवन्ती सती, प्रियमेव अवृधत् वर्धितवती निर्धारितवती असि; अतः तुष्टोऽहम्; हन्त इच्छसि चेत् अमृतत्वसाधनं ज्ञातुम्, हे भवति, ते तुभ्यं तत् अमृतत्वसाधनं व्याख्यास्यामि ॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न

वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भव-
त्यात्मनस्तु कामाय ब्रह्म प्रियं भवति।
न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भ-
वत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति।
न वा अरे लोकानां कामाय लोकाः प्रिया
भवन्त्यात्मनस्तु कामाय लोकाः प्रिया
भवन्ति। न वा अरे देवानां कामाय देवाः
प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रि-
या भवन्ति। न वा अरे वेदानां कामाय
वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वे-
दाः प्रिया भवन्ति। न वा अरे भूतानां
कामाय भूतानि प्रियाणि भवन्त्यात्मन-
स्तु कामाय भूतानि प्रियाणि भवन्ति।
न वा अरे सर्वस्य कामाय सर्वं प्रियं भ-
वत्यात्मनस्तु कामाय सर्वं प्रियं भवति।
आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्त-
व्यो निदिध्यासितव्यो मैत्रेय्यात्मनि ख-
ल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं वि-
दितम् ॥ ६ ॥

आत्मनि खलु अरे मैत्रेयि दृष्टे; कथं दृष्ट आत्मनीति, उच्यते— पूर्वम् आचार्यागमाभ्यां श्रुते, पुनः तर्केणोपपत्त्या मते विचारिते, श्रवणं तु आगममात्रेण, मते उपपत्त्या, पश्चात् विज्ञाते— एवमेतत् नान्यथेति निर्धारिते; किं भवतीत्युच्यते— इदं विदितं भवति; इदं सर्वमिति यत् आत्मनोऽन्यत्, आत्मव्यतिरेकेणाभावात् ॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्त्रं तं परादाद्योऽन्यत्रात्मनः क्षत्त्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्त्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥

तम् अयथार्थदर्शिनं परादात् पराकुर्यात्, कैवल्यासंबन्धिनं कुर्यात्— अयमनात्मस्वरूपेण मां पश्यतीत्यपराधादिति भावः ॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥

स यथा सर्वासामपाँ समुद्र एकाय-

नमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ संकल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणा हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

चतुर्थे शब्दनिश्वासेनैव लोकाद्यर्थनिश्वासः सामर्थ्यात् उक्तो भवतीति पृथक् नोक्तः । इह तु सर्वशास्त्रार्थोपसंहार इति कृत्वा अर्थप्राप्तोऽप्यर्थः स्पष्टीकर्तव्य इति पृथगुच्यते ॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति

**न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥**

सर्वकार्यप्रलये विद्यानिमित्ते, सैन्धवघनवत् अनन्तरः अबाह्यः कृत्स्नः प्रज्ञानघन एक आत्मा अवतिष्ठते; पूर्वं तु भूतमात्रासंसर्गविशेषात् लब्धविशेषविज्ञानः सन्; तस्मिन् प्रविलापिते विद्यया विशेषविज्ञाने तन्निमित्ते च भूतसंसर्गे न प्रेत्य संज्ञा अस्ति— इत्येवं याज्ञवल्क्येनोक्ता ॥

**सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा ॥ १४ ॥**

सा होवाच— अत्रैव मा भगवान् एतस्मिन्नेव वस्तुनि प्रज्ञानघन एव, न प्रेत्य संज्ञास्तीति, मोहान्तं मोहमध्यम्, आपीपिपत् आपीपदत् अवगमितवानसि, संमोहितवानसीत्यर्थः; अतः न वा अहम् इममात्मानम् उक्तलक्षणं विजानामि विवेकत इति । स होवाच— नाहं मोहं ब्रवीमि, अविनाशी वा अरेऽयमात्मा यतः; विनशनं शीलमस्येति विनाशी, न विनाशी अविनाशी, विनाशशब्देन विक्रिया, अ-

विनाशीति अविक्रिय आत्मेत्यर्थः; अरे मैत्रेयि, अयमात्मा प्रकृतः अनुच्छित्तिधर्मा; उच्छित्तिरुच्छेदः, उच्छेदः अन्तः विनाशः, उच्छित्तिः धर्मः अस्य इति उच्छित्तिधर्मा, न उच्छित्तिधर्मा अनुच्छित्तिधर्मा, नापि विक्रियालक्षणः, नाप्युच्छेदलक्षणः विनाशः अस्य विद्यत इत्यर्थः ॥

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ रसयते तदितर इतरमभिवदति तदितर इतरꣳ शृणोति तदितर इतरं मनुते तदितर इतरꣳ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ स्पृशेत्तत्केन कं विजानीयाद्येनेदꣳ सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्मागृह्यो न गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञाता-**

रमेरे केन विजानीयादित्युक्तानुशासना-
सि मैत्रेय्येतावदरे खल्वमृतत्वमिति हो-
क्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥

इति पञ्चमं ब्राह्मणम् ॥

चतुर्ष्वपि प्रपाठकेषु एक आत्मा तुल्यो निर्धारितः परं ब्रह्म; उपायविशेषस्तु तस्याधिगमे अन्यश्चान्यश्च; उपेयस्तु स एव आत्मा, यः चतुर्थे—'अथात आदेशो नेति नेति' इति निर्दिष्टः; स एव पञ्चमे प्राणपणोपन्यासेन शाकल्ययाज्ञवल्क्यसंवादे निर्धारितः, पुनः पञ्चमसमाप्तौ, पुनर्जनकयाज्ञवल्क्यसंवादे, पुनः इह उपनिषत्समाप्तौ। चतुर्णामपि प्रपाठकानाम् एतदात्मनिष्ठता, नान्योऽन्तराले कश्चिदपि विवक्षितोऽर्थः— इत्येतत्प्रदर्शनाय अन्ते उपसंहारः—स एष नेति नेत्यादिः। यस्मात् प्रकारशतेनापि निरूप्यमाणे तत्त्वे, नेति नेत्यात्मैव निष्ठा, न अन्या उपलभ्यते तर्केण वा आगमेन वा; तस्मात् एतदेवामृतत्वसाधनम्, यदेतत् नेति नेत्यात्मपरिज्ञानं सर्वसंन्यासश्च इत्येतमर्थमुपसंजिहीर्षन्नाह— एतावत् एतावन्मात्रम् यदेतत् नेति नेत्यद्वैतात्मदर्शनम्; इदं च अन्यसहकारिकारणनिरपेक्षमेव अरे मैत्रेयि अमृतत्वसाधनम्। यत्पृष्टवत्यसि— यदेव भगवान्वेद तदेव मे ब्रूह्यमृतत्वसाधन-

मिति, तत् एतावदेवेति विज्ञेयं त्वया— इति ह एवं किल अमृतत्वसाधनमात्मज्ञानं प्रियायै भार्यायै उक्त्वा याज्ञवल्क्य:— किं कृतवान्? यत्पूर्वं प्रतिज्ञातम् 'प्रव्रजिष्यन्नस्मि' इति, तच्चकार, विजहार प्रव्रजितवानित्यर्थः । परिसमाप्ता ब्रह्मविद्या संन्यासपर्यवसाना । एतावान् उपदेशः, एतत् वेदानुशासनम्, एषा परमनिष्ठा, एष पुरुषार्थकर्तव्यतान्त इति ॥

इदानीं विचार्यते शास्त्रार्थविवेकप्रतिपत्तये । यत आकुलानि हि वाक्यानि दृश्यन्ते— 'यावज्जीवमग्निहोत्रं जुहुयात्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रम्' इत्यादीनि ऐकाश्रम्यज्ञापकानि; अन्यानि च आश्रमान्तरप्रतिपादकानि वाक्यानि 'विदित्वा व्युत्थाय प्रव्रजन्ति' 'ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्' 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इति, 'द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः, क्रियापथश्चैव पुरस्तात्संन्यासश्च, तयोः संन्यास एवातिरेचयति' इति, 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इत्यादीनि । तथा स्मृतयश्च—'ब्रह्मचर्यवान्प्रव्रजति' 'अविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्' 'तस्याश्रमविकल्पमेके ब्रुवते'; तथा

'वेदानधीत्य ब्रह्मचर्येण पुत्रपौत्रानिच्छेत्पावनार्थं पितॄणाम् । अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत्' । 'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' इत्याद्याः । एवं व्युत्थानविकल्पक्रमयथेष्टाश्रमप्रतिपत्तिप्रतिपादकानि हि श्रुतिस्मृतिवाक्यानि शतश उपलभ्यन्त इतरेतरविरुद्धानि । आचारश्च तद्विदाम् । विप्रतिपत्तिश्च शास्त्रार्थप्रतिपत्तॄणां बहुविदामपि । अतो न शक्यते शास्त्रार्थो मन्दबुद्धिभिर्विवेकेन प्रतिपत्तुम् । परिनिष्ठितशास्त्रन्यायबुद्धिभिरेव हि एषां वाक्यानां विषयविभागः शक्यते अवधारयितुम् । तस्मात् एषां विषयविभागज्ञापनाय यथाबुद्धिसामर्थ्यं विचारयिष्यामः ॥

यावज्जीवश्रुत्यादिवाक्यानामन्यार्थासंभवात् क्रियावसान एव वेदार्थः; 'तं यज्ञपात्रैर्दहन्ति' इत्यन्त्यकर्मश्रवणात्; जरामर्यश्रवणाच्च; लिङ्गाच्च 'भस्मान्तं शरीरम्' इति; न हि पारिव्राज्यपक्षे भस्मान्तता शरीरस्य स्यात् । स्मृतिश्च— 'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित्' इति; समन्त्रकं हि यत्कर्म वेदेन इह विधीयते, तस्य श्मशानान्ततां दर्शयति स्मृतिः; अधिकाराभावप्रदर्शनाच्च— अत्यन्तमेव

श्रुत्यधिकाराभावः अकर्मिणो गम्यते । अग्न्युद्वासनापवादाच्च, 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति । ननु व्युत्थानादिविधानात् वैकल्पिकं क्रियावसानत्वं वेदार्थस्य— न, अन्यार्थत्वात् व्युत्थानादिश्रुतीनाम्; 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादीनां श्रुतीनां जीवनमात्रनिमित्तत्वात् यदा न शक्यते अन्यार्थता कल्पयितुम्, तदा व्युत्थानादिवाक्यानां कर्मानधिकृतविषयत्वसंभवात्; 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति च मन्त्रवर्णात्, जरया वा ह्येवास्मान्मुच्यते मृत्युना वा— इति च जरामृत्युभ्यामन्यत्र कर्मवियोगच्छिद्रासंभवात् कर्मिणां श्मशानान्तत्वं न वैकल्पिकम्; काणकुब्जादयोऽपि कर्मण्यनधिकृता अनुग्राह्या एव श्रुत्येति व्युत्थानाद्याश्रमान्तरविधानं नानुपपन्नम् । पारिव्राज्यक्रमविधानस्य अनवकाशत्वमिति चेत्, न, विश्वजित्सर्वमेधयोः यावज्जीवविध्यपवादत्वात्; यावज्जीवाग्निहोत्रादिविधेः विश्वजित्सर्वमेधयोरेव अपवादः, तत्र च क्रमप्रतिपत्तिसंभवः— 'ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्' इति । विरोधानुपपत्तेः; न हि एवंविषयत्वे पारिव्राज्यक्रमविधानवाक्यस्य, कश्चिद्विरोधः क्रमप्रतिपत्तेः; अ-

न्यविषयपरिकल्पनायां तु यावज्जीवविधानश्रुतिः स्वविषयात्संकोचिता स्यात्; क्रमप्रतिपत्तेस्तु विश्वजित्सर्वमेधविषयत्वात् न कश्चिद्बाधः ॥

न, आत्मज्ञानस्य अमृतत्वहेतुत्वाभ्युपगमात् । यत्तावत् 'आत्मेत्येवोपासीत' इत्यारभ्य स एष नेति नेत्येतदन्तेन ग्रन्थेन यदुपसंहृतम् आत्मज्ञानम्, तत् अमृतत्वसाधनमित्यभ्युपगतं भवता; तत्र एतावदेवामृतत्वसाधनम् अन्यनिरपेक्षमित्येतत् न मृष्यते । तत्र भवन्तं पृच्छामि, किमर्थमात्मज्ञानं मर्षयति भवानिति । शृणु तत्र कारणम्—यथा स्वर्गकामस्य स्वर्गप्राप्त्युपायमजानतः अग्निहोत्रादि स्वर्गप्राप्तिसाधनं ज्ञापयति, तथा इहाप्यमृतत्वप्रतिपित्सोः अमृतत्वप्राप्त्युपायमजानतः 'यदेव भगवान्वेद तदेव मे ब्रूहि' इत्येवमाकाङ्क्षितम् अमृतत्वसाधनम् 'एतावदरे' इत्येवमादौ वेदेन ज्ञाप्यत इति । एवं तर्हि, यथा ज्ञापितमग्निहोत्रादि, स्वर्गसाधनमभ्युपगम्यते, तथा इहापि आत्मज्ञानम्—यथा ज्ञाप्यते तथाभूतमेव अमृतत्वसाधनमात्मज्ञानमभ्युपगन्तुं युक्तम्; तुल्यप्रामाण्यादुभयत्र । यद्येवं किं स्यात्? सर्वकर्महेतूपमर्दकत्वादात्मज्ञानस्य विद्योद्भवे कर्मनिवृत्तिः स्यात्; दाराग्निसंबद्धानां तावत् अग्निहोत्रादिक-

र्मणां भेदबुद्धिविषयसंप्रदानकारकसाध्यत्वम्; अन्यबुद्धि-परिच्छेद्यां हि अन्यादिदेवतां संप्रदानकारकभूतामन्तरेण, न हि तत्कर्म निर्वर्त्यते; यया हि संप्रदानकारकबुद्ध्या संप्रदानकारकं कर्मसाधनत्वेनोपदिश्यते, सा इह विद्यया निवर्त्यते— 'अन्योऽसावन्योऽहमस्मीति न स वेद' 'देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'एकधैवानुद्रष्टव्यं सर्वमात्मानं पश्यति' इत्यादिश्रुतिभ्यः। न च देशकालनिमित्ताद्यपेक्षत्वम्, व्यवस्थितात्मवस्तुविषयत्वात् आत्मज्ञानस्य। क्रियायास्तु पुरुषतन्त्रत्वात् स्यात् देशकालनिमित्ताद्यपेक्षत्वम्; ज्ञानं तु वस्तुतन्त्रत्वात् न देशकालनिमित्तादि अपेक्षते; यथा अग्निः उष्णः, आकाशः अमूर्तः— इति, तथा आत्मविज्ञानमपि। ननु एवं सति प्रमाणभूतस्य कर्मविधेः निरोधः स्यात्; न च तुल्यप्रमाणयोः इतरेतरनिरोधो युक्तः— न, स्वाभाविकभेदबुद्धिमात्रनिरोधकत्वात्; न हि विध्यन्तरनिरोधकम् आत्मज्ञानम्, स्वाभाविकभेदबुद्धिमात्रं निरुणद्धि। तथापि हेत्वपहारात् कर्मानुपपत्तेः विधिनिरोध एव स्यादिति चेत्— न, कामप्रतिषेधात् काम्यप्रवृत्तिनिरोधवत् अदोषात्; यथा 'स्वर्गकामो यजेत' इति स्वर्ग-

साधने यागे प्रवृत्तस्य कामप्रतिषेधविधेः कामे विहते काम्ययागानुष्ठानप्रवृत्तिः निरुध्यते; न च एतावता काम्यविधिर्निरुद्धो भवति । कामप्रतिषेधविधिना काम्यविधेः अनर्थकत्वज्ञानात् प्रवृत्त्यनुपपत्तेः निरुद्ध एव स्यादिति चेत्— भवतु एवं कर्मविधिनिरोधोऽपि । यथा कामप्रतिषेधे काम्यविधेः, एवं प्रामाण्यानुपपत्तिरिति चेत्— अननुष्ठेयत्वे अनुष्ठातुरभावात् अनुष्ठानविध्यानर्थक्यात् अप्रामाण्यमेव कर्मविधीनामिति चेत्—न, प्रागात्मज्ञानात् प्रवृत्त्युपपत्तेः; स्वाभाविकस्य क्रियाकारकफलभेदविज्ञानस्य प्रागात्मज्ञानात् कर्महेतुत्वमुपपद्यत एव; यथा कामविषये दोषविज्ञानोत्पत्तेः प्राक् काम्यकर्मप्रवृत्तिहेतुत्वं स्यादेव स्वर्गादीच्छायाः स्वाभाविक्याः, तद्वत् । तथा सति अनर्थार्थो वेद इति चेत्— न, अर्थानर्थयोः अभिप्रायतन्त्रत्वात्; मोक्षमेकं वर्जयित्वा अन्यस्याविद्याविषयत्वात्; पुरुषाभिप्रायतन्त्रौ हि अर्थानर्थौ, मरणादिकाम्येष्टिदर्शनात् । तस्मात् यावदात्मज्ञानविधेराभिमुख्यम्, तावदेव कर्मविधयः; तस्मात् न आत्मज्ञानसहभावित्वं कर्मणामित्यतः सिद्धम् आत्मज्ञानमेव अमृतत्वसाधनम् 'एतावदरे खल्वमृतत्वम्' इति, कर्मनिरपेक्षत्वात् ज्ञानस्य । अतो विदुषस्तावत् पारिव्राज्यं सिद्धम्, सं-

प्रदानादिकर्मकारकजात्यादिशून्याविक्रियब्रह्मात्मदृढप्रतिपत्तिमात्रेण वचनमन्तरेणापि उक्तन्यायतः । तथा च व्याख्यातमेतत्—'येषां नोऽयमात्माऽयं लोकः' इति हेतुवचनेन, पूर्वे विद्वांसः प्रजामकामयमाना व्युत्तिष्ठन्तीति— पारिव्राज्यम् विदुषाम् आत्मलोकावबोधादेव । तथा च विविदिषोरपि सिद्धं पारिव्राज्यम्, 'एतमेवात्मानं लोकमिच्छन्तः प्रव्रजन्ति' इति वचनात्; कर्मणां च अविद्वद्विषयत्वमवोचाम; अविद्याविषये च उत्पत्त्यादिविकारसंस्कारार्थानि कर्माणीत्यतः— आत्मसंस्कारद्वारेण आत्मज्ञानसाधनत्वमपि कर्मणामवोचाम— यज्ञादिभिर्विविदिषन्तीति । अथ एवं सति अविद्वद्विषयाणाम् आश्रमकर्मणां बलाबलविचारणायाम्, आत्मज्ञानोत्पादनं प्रति यमप्रधानानाम् अमानित्वादीनाम् मानसानां च ध्यानज्ञानवैराग्यादीनाम् संनिपत्योपकारकत्वम्; हिंसारागद्वेषादिबाहुल्यात् बहुक्लिष्टकर्मविमिश्रिता इतरे— इति; अतः पारिव्राज्यं मुमुक्षूणां प्रशंसन्ति— 'त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम् । वैराग्यं पुनरेतस्य मोक्षस्य परमोऽवधिः' 'किं ते धनेन किमु बन्धुभिस्ते किं ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च' । एवं सांख्ययोगशास्त्रेषु च

संन्यासः ज्ञानं प्रति प्रत्यासन्न उच्यते; कामप्रवृत्त्यभावाच्च; कामप्रवृत्तेर्हि ज्ञानप्रतिकूलता सर्वशास्त्रेषु प्रसिद्धा। तस्मात् विरक्तस्य मुमुक्षोः विनापि ज्ञानेन 'ब्रह्मचर्यादेव प्रव्रजेत् इत्यादि उपपन्नम्। ननु सावकाशत्वात् अनधिकृतविषयमेतदित्युक्तम्, यावज्जीवश्रुत्युपरोधात्– नैष दोषः, नितरां सावकाशत्वात् यावज्जीवश्रुतीनाम्; अविद्वत्कामिकर्तव्यतां हि अवोचाम सर्वकर्मणाम्; न तु निरपेक्षमेव जीवननिमित्तमेव कर्तव्यं कर्म; प्रायेण हि पुरुषाः कामबहुलाः; कामश्च अनेकविषयः अनेककर्मसाधनसाध्यश्च; अनेकफलसाधनानि च वैदिकानि कर्माणि दाराग्निसंबन्धपुरुषकर्तव्यानि, पुनः पुनश्च अनुष्ठीयमानानि बहुफलानि कृष्यादिवत्, वर्षशतसमाप्तीनि च गार्हस्थ्ये वा अरण्ये वा; अतः तदपेक्षया यावज्जीवश्रुतयः; 'कुर्वन्नेवेह कर्माणि' इति च मन्त्रवर्णः। तस्मिंश्च पक्षे विश्वजित्सर्वमेधयोः कर्मपरित्यागः, यस्मिंश्च पक्षे यावज्जीवानुष्ठानम्, तदा श्मशानान्तत्वम् भस्मान्तता च शरीरस्य। इतरवर्णापेक्षया वा यावज्जीवश्रुतिः; न हि क्षत्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्ति; तथा 'मन्त्रैर्यस्योदितो विधिः' 'ऐकाश्रम्यं त्वाचार्याः' इत्येवमादीनां क्षत्रियवैश्यापेक्षत्वम्। तस्मात् पुरुषसामर्थ्यज्ञानवैराग्यका-

माद्यपेक्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकारा: न विरुध्यन्ते; अनधिकृतानां च पृथग्विधानात् पारिव्राज्यस्य 'स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा' इत्यादिना; तस्मात् सिद्धानि आश्रमान्तराणि अधिकृतानामेव ॥

इति चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ॥

## षष्ठं ब्राह्मणम् ॥

अथ वंशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः

कौशिकायनिः ॥ २ ॥

घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ

दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

इति षष्ठं ब्राह्मणम् ॥

अथ अनन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते, यथा मधुकाण्डस्य वंशः । व्याख्यानं तु पूर्ववत् । ब्रह्म स्वयंभु ब्रह्मणे नम ओमिति ॥

इति चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
बृहदारण्यकोपनिषद्भाष्ये
चतुर्थोऽध्यायः ॥

TO

HIS HOLINESS SRI JAGADGURU

**SRI SACHCHIDANANDA SIVABHINAVA**

**NRISIMHA BHARATI SWAMI**

WHO ADORNS THE THRONE OF THE SRINGERI MUTT

AS THE WORTHY REPRESENTATIVE OF THE

GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE

TO COME ACROSS A HOLIER PERSONAGE,

A TRUER MAHATMA, A NOBLER SAINT

AND A MORE RIGOROUS ASCETIC,

THIS EDITION IS MOST RESPECTFULLY INSCRIBED

AS A TOKEN OF UNBOUNDED ADMIRATION

BY THE HUMBLEST OF ALL HIS DISCIPLES

T K BALASUBRAHMANYAM

नानाजन्मसु सञ्चितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।
समुद्ध्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः समुद्ध्य साकं बुधैः ।
तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS.

## ॥ विषयाः ॥

THE

# UPANISHAD-BHASHYA

VOL 7

**Brihadaranyaka**
**Chapters V & VI.**
**& Nrisimhapurvatapani.**

॥ श्रीः ॥

# उपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः

विरचितम् ।

## सप्तमो भागः

## बृहदारण्यकाध्यायौ ५-६

## नृसिंहपूर्वतापनी च ॥

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

पृष्ठम्

# पञ्चमोऽध्यायः ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म । खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥

इति प्रथमं ब्राह्मणम् ॥

पूर्णमद इत्यादि खिलकाण्डमारभ्यते । अध्यायचतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः निरुपाधिकः अशनायाद्यतीतः नेति नेतीति व्यपदेश्यः निर्धारितः, यद्विज्ञानं केवलममृतत्वसाधनम्—अधुना तस्यैव आत्मनः सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य पुरस्तादनुक्तानि उपासनानि कर्मभिरविरुद्धानि प्रकृष्टाभ्युदयसाधनानि क्रममुक्तिभाञ्जि च; तानि वक्तव्यानीति परः संदर्भः; सर्वोपासनशेषत्वेन ओंकारो दमं दानं दयाम् इत्येतानि च विधित्सितानि । पूर्णमदः— पूर्णम् न कुतश्चित् व्यावृत्तं व्यापीत्येतत्;

निष्ठा च कर्तरि द्रष्टव्या; अद इति परोक्षाभिधायि सर्वनाम, तत् परं ब्रह्मेत्यर्थः; तत् संपूर्णम् आकाशवद्व्यापि निरन्तरं निरुपाधिकं च; तदेव इदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं पूर्णं स्वेन रूपेण परमात्मना व्याप्त्येव, न उपाधिपरिच्छिन्नेन विशेषात्मना; तदिदं विशेषापन्नं कार्यात्मकं ब्रह्म पूर्णात्कारणात्मनः उदच्यते उद्रिच्यते, उद्गच्छतीत्येतत्। यद्यपि कार्यात्मना उद्रिच्यते तथापि यत्स्वरूपं पूर्णत्वम् परमात्मभावं तन्न जहाति, पूर्णमेव उद्रिच्यते। पूर्णस्य कार्यात्मनो ब्रह्मणः, पूर्णं पूर्णत्वम्, आदाय गृहीत्वा आत्मस्वरूपैकरसत्वमापद्य विद्यया, अविद्याकृतं भूतमात्रोपाधिसंसर्गजम् अन्यत्वावभासं तिरस्कृत्य, पूर्णमेव अनन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्म अवशिष्यते। यदुक्तम्—'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् तस्मात्तत्सर्वमभवत्' इति— एष अस्य मन्त्रस्यार्थः; तत्र 'ब्रह्म' इत्यस्यार्थः 'पूर्णमदः' इति, इदं पूर्णम् इति 'ब्रह्म वा इदमग्र आसीत्' इत्यस्यार्थः; तथा च श्रुत्यन्तरम्— 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति; अतः अदःशब्दवाच्यं पूर्णं ब्रह्म, तदेव इदं पूर्णं कार्यस्थं नामरूपोपाधिसंयुक्तम् अविद्यया उद्रिक्तम् तस्मादेव परमार्थस्वरूपात् अन्य-

दिव प्रत्यवभासमानम्— तत्, यत् आत्मानमेव परं पूर्णं ब्रह्म विदित्वा— अहम् अदः पूर्णं ब्रह्मास्मि इत्येवम्, पूर्णमादाय, तिरस्कृत्य अपूर्णस्वरूपताम् अविद्याकृतां नामरूपोपाधिसंपर्कजाम् एतया ब्रह्मविद्यया पूर्णमेव केवलम् अवशिष्यते; तथा चोक्तम् 'तस्मात्तत्सर्वमभवत्' इति । यः सर्वोपनिषदर्थो ब्रह्म, स एषः अनेन मन्त्रेण अनूद्यते, उत्तरसंबन्धार्थम् । ब्रह्मविद्यासाधनत्वेन हि वक्ष्यमाणानि साधनानि ओंकारदमदानदयाख्यानि विधित्सितानि, खिलप्रकरणसंबन्धात् सर्वोपासनाङ्गभूतानि च ॥

अत्रैके वर्णयन्ति—पूर्णात् कारणात् पूर्णं कार्यम् उद्रिच्यते; उद्रिक्तं कार्यं वर्तमानकालेऽपि पूर्णमेव परमार्थवस्तुभूतं द्वैतरूपेण; पुनः प्रलयकाले पूर्णस्य कार्यस्य पूर्णताम् आदाय आत्मनि धित्वा पूर्णमेव अवशिष्यते कारणरूपम्; एवम् उत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्यकारणयोः पूर्णतैव; सा च एकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते; एवं च द्वैताद्वैतात्मकमेकं ब्रह्म । यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव, यथा च जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्बुदादयः समुद्रात्मभूता एव आविर्भावतिरोभावधर्माणः परमार्थसत्या एव— एवं सर्वमिदं द्वैतं परमार्थसत्य-

मेव जलतरङ्गादिस्थानीयम्, समुद्रजलस्थानीयं तु परं ब्रह्म। एवं च किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यम्, यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृगतृष्णिकावदनृतम्, अद्वैतमेव परमार्थतः, तदा किल कर्मकाण्डं विषयाभावात् अप्रमाणं भवति; तथा च विरोध एव स्यात्। वेदैकदेशभूता उपनिषत् प्रमाणम्, परमार्थाद्वैतवस्तुप्रतिपादकत्वात्; अप्रमाणं कर्मकाण्डम्, असद्वैतविषयत्वात्। तद्विरोधपरिजिहीर्षया श्रुत्या एतदुक्तं कार्यकारणयोः सत्यत्वं समुद्रवत् 'पूर्णमदः' इत्यादिना इति। तदसत्, विशिष्टविषयापवादविकल्पयोरसंभवात्। न हि इयं सुविवक्षिता कल्पना। कस्मात्? यथा क्रियाविषये उत्सर्गप्राप्तस्य एकदेशे अपवादः क्रियते, यथा 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति हिंसा सर्वभूतविषया उत्सर्गेण निवारिता तीर्थे विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते, न च तथा वस्तुविषये इह अद्वैतं ब्रह्म उत्सर्गेण प्रतिपाद्य पुनः तदेकदेशे अपवदितुं शक्यते, ब्रह्मणः अद्वैतत्वादेव एकदेशानुपपत्तेः। तथा विकल्पानुपपत्तेश्च; यथा 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति ग्रहणाग्रहणयोः पुरुषाधीनत्वात् विकल्पो भवति; न त्विह तथा वस्तुविषये द्वैतं वा स्यात् अद्वैतं वेति विक-

ल्पः संभवति, अपुरुषतन्त्रत्वादात्मवस्तुनः, विरोधाच्च द्वैताद्वैतत्वयोरेकस्य । तस्मात् न सुविवक्षिता इयं कल्पना । श्रुतिन्यायविरोधाच्च । सैन्धवघनवत् प्रज्ञानैकरसघनं निरन्तरं पूर्वापरबाह्याभ्यन्तरभेदविवर्जितं सबाह्याभ्यन्तरम् अजं नेति नेति अस्थूलमनण्वह्रस्वमजरमभयममृतम्— इत्येवमाद्याः श्रुतयः निश्चितार्थाः संशयविपर्यासाशङ्कारहिताः सर्वाः समुद्रे प्रक्षिप्ताः स्युः, अकिंचित्करत्वात् । तथा न्यायविरोधोऽपि, सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानुपपत्तेः; नित्यत्वं च आत्मनः स्मृत्यादिदर्शनात् अनुमीयते; तद्विरोधश्च प्राप्नोति अनित्यत्वे; भवत्कल्पनानर्थक्यं च; स्फुटमेव च अस्मिन्पक्षे कर्मकाण्डानर्थक्यम्, अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते; कथमुच्यते भवता एकस्य द्वैताद्वैतत्वं विरुद्धमिति? न, अन्यविषयत्वात्; नित्यनिरवयववस्तुविषयं हि विरुद्धत्वम् अवोचाम द्वैताद्वैतत्वस्य, न कार्यविषये सावयवे । तस्मात् श्रुतिस्मृतिन्यायविरोधात् अनुपपन्नेयं कल्पना । अस्याः कल्पनायाः वरम् उपनिषत्परित्याग एव । अध्येयत्वाच्च न शास्त्रार्था इयं कल्पना; न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं समुद्रवनादि-

वत् सावयवम् अनेकरसं ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्या उपदिश्यते; प्रज्ञानघनतां च उपदिशति; 'एकधैवानुद्रष्टव्यम्' इति च; अनेकधादर्शनापवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति; यच्च श्रुत्या निन्दितम्, तन्न कर्तव्यम्; यच्च न क्रियते, न स शास्त्रार्थः; ब्रह्मणोऽनेकरसत्वम् अनेकधात्वं च द्वैतरूपं निन्दितत्वात् न द्रष्टव्यम्; अतो न शास्त्रार्थः; यत्तु एकरसत्वं ब्रह्मणः तत् द्रष्टव्यत्वात् प्रशस्तम्, प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति। यत्तूक्तं वेदैकदेशस्य अप्रामाण्यं कर्मविषये द्वैताभावात्, अद्वैते च प्रामाण्यमिति– तन्न, यथाप्राप्तोपदेशार्थत्वात्; न हि द्वैतम् अद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म वा ब्रह्मविद्यां वा उपदिशति शास्त्रम्; न च उपदेशार्हं द्वैतम्, जातमात्रप्राणिबुद्धिगम्यत्वात्; न च द्वैतस्य अनृतत्वबुद्धिः प्रथममेव कस्यचित् स्यात्, येन द्वैतस्य सत्यत्वमुपदिश्य पश्चात् आत्मनः प्रामाण्यं प्रतिपादयेत् शास्त्रम्। नापि पाषण्डिभिरपि प्रस्थापिताः शास्त्रस्य प्रामाण्यं न गृह्णीयुः। तस्मात् यथाप्राप्तमेव द्वैतम् अविद्याकृतं स्वाभाविकम् उपादाय स्वाभाविक्यैव अविद्यया युक्ताय रागद्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्म उपदिश-

त्यर्थे, पश्चात् प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते तद्वि-परीतौदासीन्यस्वरूपावस्थानफलार्थिने तदुपायभूताम् आत्मैकत्वदर्शनात्मिकां ब्रह्मविद्याम् उपदिशति । अथैवं सति तदौदासीन्यस्वरूपावस्थाने फले प्राप्ते शास्त्रस्य प्रामाण्यं प्रति अर्थित्वं निवर्तते; तदभावात् शास्त्रस्यापि शास्त्रत्वं तं प्रति निवर्तत एव । तथा प्रतिपुरुषं परिसमाप्तं शास्त्रम् इति न शास्त्रविरोधगन्धोऽपि अस्ति, अद्वैतज्ञानावसानत्वात् शास्त्रशिष्यशासनादिद्वैतभेदस्य; अन्यतमावस्थाने हि विरोधः स्यात् अवस्थितस्य, इतरेतरापेक्षत्वात्तु शास्त्रशिष्यशासनानां नान्यतमोऽपि अवतिष्ठते; सर्वसमाप्तौ तु कस्य विरोध आशङ्क्येत अद्वैते केवले शिवे सिद्धे; नाप्यविरोधता, अत एव । अथापि अभ्युपगम्य ब्रूमः— द्वैताद्वैतात्मकत्वेऽपि शास्त्रविरोधस्य तुल्यत्वात्; यदापि समुद्रादिवत् द्वैताद्वैतात्मकमेकं ब्रह्म अभ्युपगच्छामः नान्यद्वस्त्वन्तरम्, तदापि भवदुक्तात् शास्त्रविरोधात् न मुच्यामहे; कथम्? एकं हि परं ब्रह्म द्वैताद्वैतात्मकम्; तत् शोकमोहाद्यतीतत्वात् उपदेशं न काङ्क्षति; न च उपदेष्टा अन्यः ब्रह्मणः; द्वैताद्वैतरूपस्य ब्रह्मणः एकस्यैव अभ्युपगमात् । अथ द्वैतविषयस्य अनेकत्वात् अन्योन्योपदेशः, न ब्रह्मविषय उपदेश इति चेत्— तदा द्वैताद्वैतात्मकम् एकमेव

ब्रह्म, नान्यदस्ति इति विरुध्यते। यस्मिन्द्वैतविषये अन्योन्योपदेशः, सः अन्यः द्वैतं च अन्यदेव इति समुद्रदृष्टान्तो विरुद्धः। न च समुद्रोदकैकत्ववत् विज्ञानैकत्वे ब्रह्मणः अन्यत्र उपदेशग्रहणादिकल्पना संभवति; न हि हस्तादिद्वैताद्वैतात्मके देवदत्ते वाक्कर्णयोः देवदत्तैकदेशभूतयोः वाक् उपदेष्ट्री कर्णः केवल उपदेशस्य ग्रहीता, देवदत्तस्तु न उपदेष्टा नाप्युपदेशस्य ग्रहीता— इति कल्पयितुं शक्यते, समुद्रैकोदकात्मत्ववत् एकविज्ञानवत्त्वात् देवदत्तस्य। तस्मात् श्रुतिन्यायविरोधश्च अभिप्रेतार्थासिद्धिश्च एवंकल्पनायां स्यात्। तस्मात् यथाव्याख्यात एव अस्माभिः पूर्णमदः इत्यस्य मन्त्रस्य अर्थः॥

ॐ खं ब्रह्म इति मन्त्रः, अयं च अन्यत्र अविनियुक्तः इह ब्राह्मणेन ध्यानकर्मणि विनियुज्यते। अत्र च ब्रह्मेति विशेष्याभिधानम्, खमिति विशेषणम्। विशेषणविशेष्ययोश्च सामानाधिकरण्येन निर्देशः नीलोत्पलवत्— खं ब्रह्मेति ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदः अविशेषितः, अतः विशेष्यते— खं ब्रह्मेति; यत्तत् खं ब्रह्म, तत् ओंशब्दवाच्यम्, ओंशब्दस्वरूपमेव वा; उभयथापि सामानाधिकरण्यम् अविरुद्धम्। इह च ब्रह्मोपासनसाधनत्वार्थम् ओंशब्दः प्रयुक्तः, तथा

च श्रुत्यन्तरात् 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्' 'ओमित्यात्मानं युञ्जीत' 'ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' ओमित्येवं ध्यायथ आत्मानम्' इत्यादेः । अन्यार्थासंभवाच्च उपदेशस्य । यथा अन्यत्र 'ओमिति शंसति' 'ओमित्युद्गायति' इत्येवमादौ स्वाध्यायारम्भापवर्गयोश्च ओंकारप्रयोगः विनियोगादवगम्यते, न च तथा अर्थान्तरम् इह अवगम्यते । तस्मात् ध्यानसाधनत्वेनैव इह ओंकारशब्दस्य उपदेशः । यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकाः, तथापि श्रुतिप्रामाण्यात् ब्रह्मणो नेदिष्ठमभिधानम् ओंकारः । अत एव ब्रह्मप्रतिपत्तौ इदं परं साधनम् । तच्च द्विप्रकारेण, प्रतीकत्वेन अभिधानत्वेन च । प्रतीकत्वेन— यथा विष्णवादिप्रतिमा अभेदेन, एवम् ओंकारः ब्रह्मेति प्रतिपत्तव्यः । तथा ह्योंकारालम्बनस्य ब्रह्म प्रसीदति, 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इति श्रुतेः ॥

तत्र खमिति भौतिके खे प्रतीतिर्मा भूत् इत्याह— खं पुराणं चिरंतनं खं परमात्माकाशमित्यर्थः । यत्तत्परमात्माकाशं पुराणं खम्, तत् चक्षुराद्यविषयत्वात् निरालम्बनम् अशक्यं ग्रहीतुमिति श्रद्धाभक्तिभ्यां भावविशेषेण च ओंकारे

आवेशयति— यथा विष्णवङ्गाङ्कितायां शिलादिप्रतिमायां विष्णुं लोकः, एवम् । वायुरं खम्, वायुः अस्मिन्विद्यत इति वायुरम्, खं खमात्रं खमित्युच्यते, न पुराणं खम्— इत्येवम् आह स्म । कोऽसौ? कौरव्यायणीपुत्रः । वायुरे हि खे मुख्यः खशब्दव्यवहारः ; तस्मान्मुख्ये संप्रत्ययो युक्त इति मन्यते । तत्र यदि पुराणं खं ब्रह्म निरुपाधिस्वरूपम्, यदि वा वायुरं खं सोपाधिकं ब्रह्म, सर्वथापि ओंकारः प्रतीकत्वेनैव प्रतिमावत् साधनत्वं प्रतिपद्यते, 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इति श्रुत्यन्तरात् । केवलं खशब्दार्थे विप्रतिपत्तिः । वेदोऽयम् ओंकारः, वेद विजानाति अनेन यद्वेदितव्यम् तस्माद्वेदः ॐकारः वाचकः अभिधानम्, तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानम् अभिधीयमानं वेद साधको विजानाति उपलभते, तस्मात् वेदोऽयमिति ब्राह्मणा विदुः, तस्मात् ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतम् ओंकारस्य । अथवा वेदोऽयमित्यादि अर्थवादः ; कथम् ओंकारः ब्रह्मणः प्रतीकत्वेन विहितः ; ॐ खं ब्रह्म इति सामानाधिकरण्यात् तस्य स्तुतिः इदानीं वेदत्वेन ; सर्वो हि अयं वेद ॐकार एव ; एतत्प्रभवः एतदात्मकः सर्वः ऋग्यजुःसामादिभेदभिन्नः एष ओंकारः, 'तद्यथा शङ्कुना

सर्वाणि पर्णानि' इत्यादिश्रुत्यन्तरात्; इतश्चायं वेदः ओँकारः, यद्वेदितव्यम्, तत्सर्वं वेदितव्यम् ओंकारेणैव वेद एनेन; अतः अयमोंकारो वेदः; इतरस्यापि वेदस्य वेदत्वम् अत एव; तस्मात् विशिष्टोऽयमोंकारः साधनत्वेन प्रतिपत्तव्य इति । अथवा वेदः सः, कोऽसौ? यं ब्राह्मणा विदु. ओंकारम्; ब्राह्मणानां हि असौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयः; तस्मिन्हि प्रयुज्यमाने साधनत्वेन सर्वो वेदः प्रयुक्तो भवतीति ॥

**इति पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥**

## द्वितीयं ब्राह्मणम् ॥

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासि-ष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यते-ति न आत्थेत्योमिति होवाच व्यज्ञासि-ष्टेति ॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः—त्रयाः, त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः, ते किम्? प्रजापतौ पितरि ब्रह्मचर्यं शिष्यत्ववृत्तेर्ब्रह्मचर्यस्य प्राधान्यात् शिष्याः सन्तो ब्रह्मचर्यम् ऊषुः उषितवन्त इत्यर्थः। के ते? विशेषतः देवा मनुष्या असुराश्च। ते च उषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते— तेषां देवा ऊचुः पितरं प्रजापतिम्। किमिति? ब्रवीतु कथयतु, नः अस्म-भ्यम् यदनुशासनं भवानिति। तेभ्यः एवमर्थिभ्यः ह एत-

दक्षरं वर्णमात्रम् उवाच– द इति । उक्त्वा च तान् पप्रच्छ पिता– किं व्यज्ञासिष्टा३ इति, मया उपदेशार्थमभिहितस्याक्षरस्य अर्थं विज्ञातवन्तः आहोस्विन्नेति । देवा ऊचुः– व्यज्ञासिष्मेति, विज्ञातवन्तो वयम् । यद्येवम्, उच्यतां किं मयोक्तमिति । देवा ऊचुः– दाम्यत, अदान्ता यूयं स्वभावतः अतो दान्ता भवतेति नः अस्मान् आत्थ कथयसि । इतर आह– ओमिति सम्यग्व्यज्ञासिष्टेति ॥

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥**

समानमन्यत् । स्वभावतो लुब्धा यूयम्, अतो यथाशक्ति संविभजत दत्तेति नः अस्मान् आत्थ, किमन्यद्ब्रूयात् नो हितमिति मनुष्याः ॥

**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति हो-**

**चुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳ शिक्षेद्दमं दानं दयामिति ॥ ३ ॥**

इति द्वितीयं ब्राह्मणम् ॥

तथा असुराः दयध्वमिति; क्रूरा यूयं हिंसादिपराः, अतो दयध्वं प्राणिषु दयां कुरुतेति । तदेतत्प्रजापतेरनुशासनम् अद्याप्यनुवर्तत एव । यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्यापि अनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा । कथमेषा श्रूयते दैवी वाक्? कासौ स्तनयित्नुः? द द द इति, दाम्यत दत्त दयध्वमिति— एषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यते अनुकृतिः, न तु स्तनयित्नुशब्दः त्रिरेव, संख्यानियमस्य लोके अप्रसिद्धत्वात् । यस्मात् अद्यापि प्रजापतिः दाम्यत दत्त दयध्वमित्यनुशास्त्येव, तस्मात्कारणात् एतत्त्रयम्; किं तत् त्रयमित्युच्यते— दमं दानं दयामिति शिक्षेत् उपाद्द्यात् प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात् । तथा च स्मृतिः—'त्रिविधं नरकस्येदं

द्वारं नाशनमात्मनः । काम' क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्' इति । अस्य हि विधेः शेषः पूर्वः । तथापि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान प्रजापतिः पृथगनुशासनार्थिभ्यः ; ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारवर्णमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति । अत्रैके आहुः— अदान्तत्वादातृत्वादयालुत्वैः अपराधित्वमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूषुः, किं नो वक्ष्यतीति ; तेषां च दकारश्रवणमात्रादेव आत्माशङ्कावशेन तदर्थप्रतिपत्तिरभूत् ; लोकेऽपि हि प्रसिद्धम्—पुत्राः शिष्याश्चानुशास्याः सन्तो दोषान् निवर्तयितव्या इति ; अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम् ; दमादित्रये च दकारान्वयात् आत्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुं चेति ; फलं तु एतत् आत्मदोषज्ञाने सति दोषात् निवर्तयितुं शक्यते अल्पेनाप्युपदेशेन, यथा देवादयो दकारमात्रेणेति । ननु एतत् त्रयाणां देवादीनामनुशासनं देवादिभिरपि एकैकमेव उपादेयम्, अद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्यमिति । अत्रोच्यते— पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितम् एतत्त्रयम्, तस्मात् मनुष्यैरेव शिक्षितव्यमिति । तत्र दयालुत्वस्याननुष्ठेयत्वं स्यात्, कथम्? असुरैरप्रशस्तैरनुष्ठितत्वादिति

चेत्— न, तुल्यत्वात् त्रयाणाम्; अतः अन्योऽत्राभिप्रायः— प्रजापतेः पुत्रा देवादयस्त्रयः; पुत्रेभ्यश्च हितमेव पित्रा उपदेष्टव्यम्; प्रजापतिश्च हितज्ञः नान्यथा उपदिशति; तस्मात् पुत्रानुशासनं प्रजापतेः परमम् एतत् हितम्; अतो मनुष्यैरेव एतत् त्रयं शिक्षितव्यमिति। अथवा न देवाः असुरा वा अन्ये केचन विद्यन्ते मनुष्येभ्यः; मनुष्याणामेव अदान्ताः ये अन्यैरुत्तमैर्गुणैः संपन्नाः; ते देवाः; लोभप्रधाना मनुष्याः; तथा हिंसापराः क्रूरा असुराः; ते एव मनुष्याः अदान्तत्वादिदोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति, इतरांश्च गुणान् सत्त्वरजस्तमांसि अपेक्ष्य; अतः मनुष्यैरेव शिक्षितव्यम् एतत्त्रयमिति, तदपेक्षयैव प्रजापतिनोपदिष्टत्वात्; तथा हि मनुष्या अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते; तथा च स्मृतिः—'कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्' इति ॥

इति पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

## तृतीयं ब्राह्मणम् ॥

दमादिसाधनत्रयं सर्वोपासनशेषं विहितम्; दान्तः अलुब्धः दयालुः सन् सर्वोपासनेष्वधिक्रियते । तत्र निरुपाधिकस्य ब्रह्मणो दर्शनम् अतिक्रान्तम्, अथ अधुना सोपाधिकस्य तस्यैव अभ्युदयफलानि वक्तव्यानीत्येवमर्थोऽयमारम्भः—

**एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥ १ ॥**

एष प्रजापतिः यद्धृदयं प्रजापतिः अनुशास्तीत्यनन्तरमेवाभिहितम् । कः पुनरसौ अनुशास्ता प्रजापतिरित्युच्यते—एष प्रजापतिः; कोऽसौ? यद्धृदयम्, हृदयमिति हृदयस्था बुद्धिरुच्यते; यस्मिन् शाकल्यब्राह्मणान्ते नामरूपकर्मणामुपसंहार उक्तो दिग्विभागद्वारेण, तदेतत् सर्वभूतप्रतिष्ठं सर्वभूतात्मभूतं हृदयं प्रजापतिः प्रजानां स्रष्टा; एतत् ब्रह्म, बृहत्त्वात् सर्वात्मत्वाच्च ब्रह्म; एतत्सर्वम्; उक्तं पञ्चमाध्याये हृदयस्य सर्वत्वम्; तत्सर्वं यस्मात् तस्मादुपास्यं हृदयं ब्रह्म ।

तत्र हृदयनामाक्षरविषयमेव तावत् उपासनमुच्यते; तदेतत् हृदयमिति नाम त्र्यक्षरम्, त्रीणि अक्षराणि अस्येति त्र्यक्षरम्; कानि पुनस्तानि त्रीण्यक्षराण्युच्यन्ते; हृ इत्येकमक्षरम्; अभिहरन्ति, हृतेराहृतिकर्मणः हृ इत्येतद्रूपमिति यो वेद, यस्मात् हृदयाय ब्रह्मणे स्वाश्च इन्द्रियाणि अन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति, हृदयं च भोक्त्रर्थमभिहरति— अतः हृदयनाम्नः हृ इत्येतदक्षरमिति यो वेद— अस्मै विदुषे अभिहरन्ति स्वाश्च ज्ञातयः अन्ये चासंबद्धाः, बलिमिति वाक्यशेषः। विज्ञानानुरूप्येण एतत्फलम्। तथा द इत्येतदप्येकमक्षरम्; एतदपि दानार्थस्य ददातेः द इत्येतद्रूपं हृदयनामाक्षरत्वेन निबद्धम्। अत्रापि— हृदयाय ब्रह्मणे स्वाश्च करणानि अन्ये च विषयाः स्वं स्वं वीर्यं ददति, हृदयं भोक्त्रे ददाति स्वं वीर्यम्, अतो दकार इत्येवं यो वेद, अस्मै ददति स्वाश्च अन्ये च। तथा यमित्येतदप्येकमक्षरम्; इणो गत्यर्थस्य यमित्येतद्रूपम् अस्मिन्नाम्नि निबद्धमिति यो वेद, स स्वर्गं लोकमेति। एवं नामाक्षरादपि ईदृशं विशिष्टं फलं प्राप्नोति, किमु वक्तव्यं हृदयस्वरूपोपासनात्—इति हृदयस्तुतये नामाक्षरोपन्यासः॥

इति पञ्चमाध्यायस्य तृतीयं ब्राह्मणम्

## चतुर्थं ब्राह्मणम् ॥

तद्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्न्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥ १ ॥

इति चतुर्थं ब्राह्मणम् ॥

तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनं विधित्सन्नाह— तत्, तदिति हृदयं ब्रह्म परामृष्टम्; वै इति स्मरणार्थम्; तत् यत् हृदयं ब्रह्म स्मर्यत इत्येकः तच्छब्दः; तदेतदुच्यते प्रकारान्तरेणेति द्वितीयः तच्छब्दः । किं पुनः तत्प्रकारान्तरम्? एतदेव तदिति एतच्छब्देन संबध्यते तृतीयस्तच्छब्दः; एतदिति वक्ष्यमाणं बुद्धौ संनिधीकृत्य आह; आस बभूव; किं पुनः एतदेव आस? यदुक्तं हृदयं ब्रह्मेति, तत् इति, तृतीयः तच्छब्दो विनियुक्तः । किं तदिति विशेषतो निर्दिशति; सत्यमेव, सच्च त्यच्च मूर्तं

चामूर्तं च सत्यं ब्रह्म, पञ्चभूतात्मकमित्येतत् । स यः कश्चित् सत्यात्मानम् एतम्, महत् महत्त्वात्, यक्षं पूज्यम्, प्रथमजं प्रथमजातम्, सर्वस्मात्संसारिण एतदेवाग्रे जातं ब्रह्म अतः प्रथमजम्, वेद विजानाति सत्यं ब्रह्मेति; तस्येदं फलमुच्यते— यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृता जिताः, एवं सत्यात्मानं ब्रह्म महद्यक्षं प्रथमजं वेद, स जयति इमान् लोकान्; किं च जितो वशीकृतः, इन्नु इत्थम्, यथा ब्रह्मणा असौ शत्रुरिति वाक्यशेषः । असच्च असद्भवेत् असौ शत्रुः जितो भवेदित्यर्थः । कस्य एतत्फलमिति पुनर्निगमयति— य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति । अतो विद्यानुरूपं फलं युक्तम्, सत्यं ह्येव यस्माद्ब्रह्म ॥

इति पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥

## पञ्चमं ब्राह्मणम् ॥

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवं विद्वाꣳसमनृतꣳ हिनस्ति ॥

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह । महद्यक्षं प्रथमजमित्युक्तम्, तत्कथं प्रथमजत्वमित्युच्यते— आप एवेदमग्र आसुः; आप इति कर्मसमवायिन्यः अग्निहोत्राद्याहुतयः; अग्निहोत्राद्याहुतेः द्रवात्मकत्वात् अप्त्वम्, ताश्च आपः अग्निहोत्रादिकर्मापवर्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेण आत्मना कर्मसमवायित्वमपरित्यजन्त्यः इतरभूतसहिता एव न केवलाः, कर्मसमवायित्वात्तु प्राधान्यमपाम्— इति सर्वाण्येव

भूतानि प्रागुत्पत्तेः अव्याकृतावस्थानि कर्तृसहितानि निर्दिश्यन्ते 'आपः' इति ; ता आपः बीजभूता जगतः अव्याकृतात्मना अवस्थिताः ; ता एव इदं सर्वं नामरूपविकृतं जगत् अग्रे आसुः, नान्यत्किंचिद्विकारजातमासीत् ; ताः पुनः आपः सत्यमसृजन्त ; तस्मात्सत्यं ब्रह्म प्रथमजम् ; तदेतत् हिरण्यगर्भस्य सूत्रात्मनो जन्म, यदव्याकृतस्य जगतो व्याकरणम्, तत् सत्यं ब्रह्म कुतः ? महत्त्वात् ; कथं महत्त्वमित्याह— यस्मात् सर्वस्य स्रष्टृ ; कथम् ? यत्सत्यं ब्रह्म, तत् प्रजापतिं प्रजानां पतिं विराजं सूर्यादिकरणम् असृजतेत्यनुषङ्गः ; प्रजापतिः देवान्, स विराट् प्रजापतिः देवानसृजत ; यस्मात् सर्वमेवं क्रमेण सत्याद्ब्रह्मणो जातम्, तस्मान्महत्सत्यं ब्रह्म । कथं पुनर्यक्षमित्युच्यते—ते एवं सृष्टा देवाः पितरमपि विराजमतीत्य, तदेव सत्यं ब्रह्म उपासते ; अत एतत् प्रथमजं महत् यक्षम् ; तस्मात् सर्वात्मना उपास्यं तत् ; तस्यापि सत्यस्य ब्रह्मणो नाम सत्यमिति ; तदेतत् त्र्यक्षरम् ; कानि तान्यक्षराणीत्याह— स इत्येकमक्षरम् ; तीत्येकमक्षरम्, तीति ईकारानुबन्धो निर्देशार्थः ; यमित्येकमक्षरम् ; तत्र तेषां प्रथमोत्तमे अक्षरे सकारयकारौ सत्यम्, मृत्युरूपाभावात् ; मध्यतः मध्ये अनृतम् ; अनृतं हि मृत्युः, मृत्यवनृ-

तयोः तकारसामान्यात् । तदेतत् अनृतं तकाराक्षरं मृत्युरूपम् उभयतः सत्येन सकारयकारलक्षणेन परिगृहीतं व्याप्तम् अन्तर्भावितं सत्यरूपाभ्याम्, अतः अकिंचित्करं तत्, सत्यभूयमेव सत्यबाहुल्यमेव भवति ; एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्य अकिंचित्करत्वं च यो विद्वान्, तमेवं विद्वांसम् अनृतं कदाचित् प्रमादोक्तं न हिनस्ति ॥

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥ २ ॥**

अस्याधुना सत्यस्य ब्रह्मणः संस्थानविशेषे उपासनमुच्यते— तद्यत् ; किं तत् ? सत्यं ब्रह्म प्रथमजम् ; किम् ? असौ सः ; कोऽसौ ? आदित्यः, कः पुनरसावादित्यः ? य एषः ; क एषः ? यः एतस्मिन् आदित्यमण्डले पुरुषः अभिमानी, सोऽसौ सत्यं ब्रह्म । यश्चायम् अध्यात्मम् योऽयं दक्षिणे-

ऽक्षन् अक्षणि पुरुषः ; च-शब्दात् स च सत्यं ब्रह्मेति संबन्धः। तावेतौ आदित्याक्षिस्थौ पुरुषौ एकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ यस्मात्, तस्मात् अन्योन्यस्मिन् इतरेतरस्मिन् आदित्यश्चाक्षुषे चाक्षुषश्च आदित्ये प्रतिष्ठितौ, अध्यात्माधिदैवतयोः अन्योन्योपकार्योपकारकत्वात्; कथं प्रतिष्ठिताविरत्युच्यते— रश्मिभिः प्रकाशेन अनुग्रहं कुर्वन् एष आदित्यः अस्मिंश्चाक्षुषे अध्यात्मे प्रतिष्ठितः, अयं च चाक्षुषः प्राणैरादित्यमनुगृह्णन् अमुष्मिन् आदित्ये अधिदैवे प्रतिष्ठितः ; सः अस्मिन् शरीरे विज्ञानमयो भोक्ता यदा यस्मिन्काले उत्क्रमिष्यन्भवति, तदा असौ चाक्षुष आदित्यपुरुषः रश्मीनुपसंहृत्य केवलेन औदासीन्येन रूपेण व्यवतिष्ठते; तदा अयं विज्ञानमयः पश्यति शुद्धमेव केवलं विरश्मि एतन्मण्डलं चन्द्रमण्डलमिव, तदेतत् अरिष्टदर्शनम् प्रासङ्गिकं प्रदर्श्यते, कथं नाम पुरुषः करणीये यत्नवान्स्यादिति ; न—एनं चाक्षुषं पुरुषमुररीकृत्य तं प्रत्यनुग्रहाय एते रश्मयः स्वामिकर्तव्यवशात्पूर्वमागच्छन्तोऽपि, पुनः तत्कर्मक्षयमनुरुध्यमाना इव नोपयन्ति न प्रत्यागच्छन्ति एनम् । अतोऽवगम्यते परस्परोपकार्योपकारकभावात् सत्यस्यैव एकस्य आत्मनः अंशौ एताविति ॥

**य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥**

तत्र यः, असौ कः? यः एषः एतस्मिन्मण्डले पुरुषः सत्यनामा; तस्य व्याहृतयः अवयवाः; कथम्? भूरिति येयं व्याहृतिः, सा तस्य शिरः, प्राथम्यात्; तत्र सामान्यं स्वयमेवाह श्रुतिः— एकम् एकसंख्यायुक्तं शिरः, तथा एतत् अक्षरम् एकं भूरिति। भुव इति बाहू, द्वित्वसामान्यात्; द्वौ बाहू, द्वे एते अक्षरे। तथा स्वरिति प्रतिष्ठा; द्वे प्रतिष्ठे द्वे एते अक्षरे; प्रतिष्ठे पादौ प्रतितिष्ठत्याभ्यामिति। तस्यास्य व्याहृत्यवयवस्य सत्यस्य ब्रह्मण उपनिषत् रहस्यम् अभिधानम्, येनाभिधानेन अभिधीयमानं तद्ब्रह्म अभिमुखी भवति लोकवत्; कासावित्याह— अहरिति; अहरिति चैतत् रूपं हन्तेर्जहातेश्चेति यो वेद, स हन्ति जहाति च पाप्मानं य एवं वेद ॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥

इति पञ्चमं ब्राह्मणम् ॥

एवं योऽयं दक्षिणेऽक्षन्पुरुषः, तस्य भूरिति शिर इत्यादि सर्वं समानम् । तस्योपनिषत्— अहमिति, प्रत्यगात्मभूतत्वात् । पूर्ववत् हन्तेः जहातेश्चेति ॥

इति पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥

## षष्ठं ब्राह्मणम् ॥

उपाधीनामनेकत्वादनेकविशेषणत्वाच्च तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिविशिष्टस्योपासनं विधित्सन्नाह—

**मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ॥ १ ॥**

मनोमयः मनःप्रायः, मनसि उपलभ्यमानत्वात्; मनसा चोपलभत इति मनोमयोऽयं पुरुषः; भाःसत्यः, भा एव सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाःसत्यः, भास्वर इत्येतत्; मनसः सर्वार्थावभासकत्वात् मनोमयत्वाच्च अस्य भास्वरत्वम्; तस्मिन् अन्तर्हृदये हृदयस्यान्तः तस्मिन्नित्येतत्; यथा व्रीहिर्वा यवो वा परिमाणतः, एवंपरिमाणः तस्मिन्नन्तर्हृदये योगिभिर्दृश्यत इत्यर्थः। स एषः सर्वस्येशानः सर्वस्य स्वभेदजातस्य ईशानः स्वामी; स्वामित्वेऽपि सति कश्चिदमात्यादितन्त्रः, अयं तु न तथा; किं तर्हि अधिपतिः अधिष्ठाय पालयिता; सर्वमिदं प्रशास्ति, यदिदं किंच यत्किंचित्सर्वं जगत्, तत्सर्वं प्रशास्ति। एवं मनोमयस्योपासनात् तथारूपापत्तिरेव फलम्। 'तं यथा यथोपासते तदेव भवति' इति ब्राह्मणम् ॥

इति पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥

## सप्तमं ब्राह्मणम् ॥

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥

इति सप्तमं ब्राह्मणम् ॥

तथैव उपासनान्तरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते— विद्युद्ब्रह्मेत्याहुः । विद्युतो ब्रह्मणो निर्वचनमुच्यते— विदानात् अवखण्डनात् तमसो मेघान्धकारं विदार्य हि अवभासते, अतो विद्युत्; एवंगुणं विद्युत् ब्रह्मेति यो वेद, असौ विद्यति अवखण्डयति विनाशयति पाप्मनः, एनमात्मानं प्रति प्रतिकूलभूताः पाप्मानो ये तान् सर्वान् पाप्मनः अवखण्डयतीत्यर्थः। य एवं वेद विद्युद्ब्रह्मेति तस्यानुरूपं फलम्, विद्युत् हि यस्मात् ब्रह्म ॥

इति पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥

## अष्टमं ब्राह्मणम् ॥

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥

पुनः उपासनान्तरम् तस्यैव ब्रह्मणः वाग्वै ब्रह्मेति; वागिति शब्दः त्रयी ; तां वाचं धेनुम्, धेनुरिव धेनुः, यथा धेनुः चतुर्भिः स्तनैः स्तन्यं पयः क्षरति वत्साय एवं वाग्धेनुः वक्ष्यमाणैः स्तनैः पय इव अन्नं क्षरति देवादिभ्यः । के पुनः ते स्तनाः? के वा ते, येभ्यः क्षरति? तस्याः एतस्या वाचो धेन्वाः, द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीयाः; कौ तौ? स्वाहाकारं च वषट्कारं च; आभ्यां हि हविः दीयते देवेभ्यः । हन्तकारं मनुष्याः; हन्तेति मनुष्येभ्यः अन्नं प्रयच्छन्ति । स्वधाकारं पितरः; स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्ति। तस्या धेन्वा वाचः प्राणः ऋषभः; प्राणेन हि वाक्प्रसूयते ; मनो वत्सः; मनसा हि प्रस्राव्यते; मनसा ह्यालोचिते विषये वाक् प्रवर्तते ; तस्मात् मनः वत्सस्थानीयम् । एवं वाग्धेनूपासकः ताद्भाव्यमेव प्रतिपद्यते ॥

इति पञ्चमाध्यायस्य अष्टमं ब्राह्मणम् ॥

## नवमं ब्राह्मणम् ॥

अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषꣳ शृणोति ॥ १ ॥

इति नवमं ब्राह्मणम् ॥

अयमग्निर्वैश्वानरः, पूर्ववदुपासनान्तरम्; अयम् अग्निः वैश्वानरः; कोऽयमग्निरित्याह—योऽयमन्तः पुरुषे । किं शरीरारम्भकः? नेत्युच्यते—येन अग्निना वैश्वानराख्येन इदमन्नं पच्यते । किं तदन्नम्? यदिदम् अद्यते भुज्यते अन्नं प्रजाभिः, जाठरोऽग्निरित्यर्थः । तस्य साक्षादुपलक्षणार्थमिदमाह—तस्याग्नेः अन्नं पचतः जाठरस्य एष घोषो भवति; कोऽसौ? यं घोषम्, एतदिति क्रियाविशेषणम्, कर्णावपिधाय अङ्गुलीभ्यामपिधानं कृत्वा शृणोति । तं प्रजापतिमुपासीत वैश्वानरमग्निम् । अत्रापि ताद्भाव्यं फलम् । तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते— सोऽत्र शरीरे भोक्ता यदा उत्क्रमिष्यन्भवति, नैनं घोषं शृणोति ॥

इति पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥

## दशमं ब्राह्मणम् ॥

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायु-
मागच्छति तस्मै स तत्र विजिहीते यथा
रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स
आदित्यमागच्छति तस्मै स तत्र विजि-
हीते यथा लम्बरस्य खं तेन स ऊर्ध्व आ-
क्रमते स चन्द्रमसमागच्छति तस्मै स
तत्र विजिहीते यथा दुन्दुभेः खं तेन स
ऊर्ध्व आक्रमते स लोकमागच्छत्यशोक-
महिमं तस्मिन्वसति शाश्वतीः समाः ॥

इति दशमं ब्राह्मणम् ॥

सर्वेषामस्मिन्प्रकरणे उपासनानां गतिरियं फलं चो-
च्यते— यदा वै पुरुषः विद्वान् अस्मात् लोकात् प्रैति श-
रीरं परित्यजति, सः तदा वायुम् आगच्छति, अन्तरिक्षे
तिर्यग्भूतो वायुः स्तिमितः अभेद्यस्तिष्ठति; स वायुः तत्र

स्वात्मनि तस्मै संप्राप्ताय विजिहीते स्वात्मावयवान् विगमयति छिद्रीकरोत्यात्मानमित्यर्थः । किंपरिमाणं छिद्रमित्युच्यते— यथा रथचक्रस्य खं छिद्रं प्रसिद्धपरिमाणम्; तेन छिद्रेण स विद्वान् ऊर्ध्वः आक्रमते ऊर्ध्वः सन् गच्छति । स आदित्यमागच्छति; आदित्यः ब्रह्मलोकं जिगमिषोर्मार्गनिरोधं कृत्वा स्थितः; सोऽपि एवंविदे उपासकाय द्वारं प्रयच्छति; तस्मै स तत्र विजिहीते; यथा लम्बरस्य खं वादित्रविशेषस्य छिद्रपरिमाणम्, तेन स ऊर्ध्व आक्रमते । स चन्द्रमसम् आगच्छति; सोऽपि तस्मै तत्र विजिहीते; यथा दुन्दुभेः खं प्रसिद्धम्; तेन स ऊर्ध्व आक्रमते । स लोकं प्रजापतिलोकम् आगच्छति; किंविशिष्टम्? अशोकं मानसेन दुःखेन विवर्जितमित्येतत्; अहिमं हिमवर्जितं शारीरदुःखवर्जितमित्यर्थः; तं प्राप्य तस्मिन् वसति शाश्वतीः नित्याः समाः संवत्सरानित्यर्थः; ब्रह्मणो बहून्कल्पान् वसतीत्येतत् ॥

इति पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥

## एकादशं ब्राह्मणम् ॥

एतद्वै परमं तपो यद्व्याहितस्तप्यते परमँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यँ हरन्ति परमँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमँ हैव लोकं जयति य एवं वेद ॥ ११ ॥

एतद्वै परमं तपः; किं तत्? यत् व्याहितः व्याधितः ज्वरादिपरिगृहीतः सन् यत् तप्यते तदेतत् परमं तप इत्येवं चिन्तयेत्, दुःखसामान्यात्। तस्य एवं चिन्तयतो विदुषः कर्मक्षयहेतुः तदेव तपो भवति अनिन्दत. अविषीदतः। स एव च तेन विज्ञानतपसा दग्धकिल्बिषः परमं हैव लोकं जयति, य एवं वेद। तथा मुमूर्षुः आदावेव कल्पयति; किम्? एतद्वै परमं तपः, यं प्रेतं मां ग्रामादरण्यं हरन्ति ऋत्विजः अन्त्यकर्मणे, तत् ग्रामादरण्यगमनसामान्यात् परमं मम तत् तपो भविष्यति; ग्रामादरण्यगमनं परमं तप इति हि प्रसिद्धम्। परमं हैव लोकं जयति, य एवं वेद। तथा एतद्वै परमं तपः यं प्रेतमग्नावभ्यादधति, अग्निप्रवेशसामान्यात्। परमं हैव लोकं जयति य एवं वेद ॥

इति पञ्चमाध्यायस्य एकादशं ब्राह्मणम् ॥

## द्वादशं ब्राह्मणम् ॥

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किꣳस्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥ १ ॥

इति द्वादशं ब्राह्मणम् ॥

अन्नं ब्रह्मेति, तथा एतन् उपासनान्तरं विधित्सन्नाह— अन्नं ब्रह्म, अन्नम् अद्यते यत् तत् ब्रह्मेत्येक आचार्या आहुः; तत् न तथा ग्रहीतव्यम् अन्नं ब्रह्मेति । अन्ये चाहुः— प्राणो ब्रह्मेति; तच्च तथा न ग्रहीतव्यम् । किमर्थं पुनः अन्नं ब्रह्मेति न ग्राह्यम्? यस्मात् पूयति क्लिद्यते पूतिभावमापद्यते ऋते प्राणात्, तत्कथं ब्रह्म भवितुमर्हति; ब्रह्म हि नाम तत्, यदविनाशि । अस्तु तर्हि प्राणो ब्रह्म; नैवम्; यस्मात् शुष्यति वै प्राणः शोषमुपैति ऋते अन्नात्; अत्ता हि प्राणः; अतः अन्नेन आद्येन विना न शक्नोति आत्मानं धारयितुम्; तस्मात् शुष्यति वै प्राणः ऋतेऽन्नात्; अतः एकैकस्य ब्रह्मता नोपपद्यते यस्मात्, तस्मात् एते ह तु एव अन्नप्राणदेवते एकधाभूयम् एकधाभावं भूत्वा गत्वा परमतां परमत्वं गच्छतः ब्रह्मत्वं प्राप्नुतः । तदेतत् एवमध्यवस्य ह स्म आह— स्म प्रातृदो नाम पितरमात्मनः; किंस्वित् स्विदिति वितर्के; यथा मया ब्रह्म परिकल्पितम्, एवं विदुषे किंस्वित् साधु कुर्याम्, साधु शोभनं पूजाम्, कां तु अस्मै पूजां कुर्यामित्यभिप्रायः; किमेव अस्मै विदुषे असाधु कुर्याम्, कृतकृत्योऽसौ इत्यभिप्रायः । अन्नप्राणौ सहभूतौ ब्रह्मेति विद्वान् नासौ असाधुकरणेन खण्डितो भवति, नापि साधु-

करणेन महीकृतः। तम् एवंवादिनं स पिता ह स्म आह पाणिना हस्तेन निवारयन्, मा प्रातृद मैवं वोचः। कस्तु एनयोः अन्नप्राणयोः एकधाभूयं भूत्वा परमतां कस्तु गच्छति? न कश्चिदपि विद्वान् अनेन ब्रह्मदर्शनेन परमतां गच्छति; तस्मात् नैवं वक्तुमर्हसि कृतकृत्योऽसाविति; यद्येवम्, ब्रवीतु भवान् कथं परमतां गच्छतीति। तस्मै उ ह एतत् वक्ष्यमाणं वच उवाच। किं तत्? वीति; किं तत् वि इत्युच्यते—अन्नं वै वि; अन्ने हि यस्मात् इमानि सर्वाणि भूतानि विष्टानि आश्रितानि, अतः अन्नं वि इत्युच्यते। किंच रम् इति; रमिति च उक्तवान्पिता; किं पुनस्तत् रम्? प्राणो वै रम्; कुत इत्याह; प्राणे हि यस्मात् बलाश्रये सति सर्वाणि भूतानि रमन्ते, अतो रं प्राणः। सर्वभूताश्रयगुणमन्नम्, सर्वभूतरतिगुणश्च प्राणः। न हि कश्चिदनायतनः निराश्रयः रमते; नापि सत्यप्यायतने अप्राणो दुर्बलो रमते; यदा तु आयतनवान्प्राणी बलवांश्च तदा कृतार्थमात्मानं मन्यमानो रमते लोकः; 'युवा स्यात्साधुयुवाध्यायकः' इत्यादिश्रुतेः। इदानीम् एवंविदः फलमाह—सर्वाणि ह वै अस्मिन् भूतानि विशन्ति अन्नगुणज्ञानात्, सर्वाणि भूतानि रमन्ते प्राणगुणज्ञानात्, य एवं वेद॥

इति पञ्चमाध्यायस्य द्वादशं ब्राह्मणम्॥

## त्रयोदशं ब्राह्मणम् ॥

उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ १ ॥

उक्थम्— तथा उपासनान्तरम्; उक्थं शस्त्रम्; तद्धि प्रधानं महाव्रते क्रतौ; किं पुनस्तदुक्थम्; प्राणो वै उक्थम्; प्राणश्च प्रधान इन्द्रियाणाम्, उक्थं च शस्त्राणाम्, अत उक्थमित्युपासीत । कथं प्राण उक्थमित्याह— प्राणः हि यस्मात् इदं सर्वम् उत्थापयति; उत्थापनात् उक्थं प्राणः; न हि अप्राणः कश्चिदुत्तिष्ठति; तदुपासनफलमाह— उत् ह अस्मात् एवंविदः उक्थवित् प्राणवित् वीरः पुत्रः उत्तिष्ठति ह— दृष्टम् एतत्फलम्; अदृष्टं तु उक्थस्य सायुज्यं सलोकतां जयति, य एवं वेद ॥

यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै

**सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायु-ज्यꣳ सलोकतां जयति य एवं वेद ॥ २ ॥**

यजुरिति चोपासीत प्राणम्; प्राणो वै यजुः; कथं यजुः प्राणः? प्राणे हि यस्मात् सर्वाणि भूतानि युज्यन्ते; न हि असति प्राणे केनचित् कस्यचित् योगसामर्थ्यम्; अतो युनक्तीति प्राणो यजुः। एवंविदः फलमाह— युज्यन्ते उद्यच्छन्ते इत्यर्थः, ह अस्मै एवंविदे, सर्वाणि भूतानि, श्रैष्ठ्यं श्रेष्ठभावः तस्मै श्रैष्ठ्याय श्रेष्ठभावाय, अयं नः श्रेष्ठो भवेदिति; यजुषः प्राणस्य सायुज्यमित्यादि सर्वं समानम् ॥

**साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ३ ॥**

सामेति चोपासीत प्राणम्। प्राणो वै साम; कथं प्राणः साम? प्राणे हि यस्मात् सर्वाणि भूतानि सम्यञ्चि संगच्छन्ते, संगमनात् साम्यापत्तिहेतुत्वात् साम प्राणः, सम्यञ्चि संगच्छन्ते ह अस्मै सर्वाणि भूतानि; न केवलं

संगच्छन्त एव, श्रेष्ठभावाय च अस्मै कल्पन्ते समर्थ्यन्ते; साम्नः सायुज्यमित्यादि पूर्ववत् ॥

**क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमत्र-माप्नोति क्षत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ४ ॥**

इति त्रयोदशं ब्राह्मणम् ॥

तं प्राणं क्षत्रमित्युपासीत । प्राणो वै क्षत्रम्, प्रसिद्धम् एतत्— प्राणो हि वै क्षत्रम् । कथं प्रसिद्धतेत्याह— त्रायते पालयति एनं पिण्डं देहं प्राणः, क्षणितोः शस्त्रादिहिंसितात् पुनः मांसेन आपूरयति यस्मात्, तस्मात् क्षतत्राणात् प्रसिद्धं क्षत्रत्वं प्राणस्य । विद्वत्फलमाह—प्र क्षत्रमत्रम्, न त्रायते अन्येन केनचिदित्यत्रम्, क्षत्रं प्राणः, तम् अत्र क्षत्रं प्राणं प्राप्नोतीत्यर्थः । शाखान्तरे वा पाठात् क्षत्रमात्रं प्राप्नोति, प्राणो भवतीत्यर्थः । क्षत्रस्य सायुज्यं सलोकतां जयति, य एवं वेद ॥

इति पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥

## चतुर्दशं ब्राह्मणम् ॥

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्य उपासनमुक्तम्; अथ इदानीं गायत्र्युपाधिविशिष्टस्य उपासनं वक्तव्यमित्यारभ्यते। सर्वच्छन्दसां हि गायत्रीछन्दः प्रधानभूतम्; तत्प्रयोक्तृगयत्राणात् गायत्रीति वक्ष्यति; न च अन्येषां छन्दसां प्रयोक्तृप्राणत्राणसामर्थ्यम्; प्राणात्मभूता च सा; सर्वच्छन्दसां च आत्मा प्राणः; प्राणश्च क्षतत्राणात् क्षत्रमित्युक्तम्; प्राणश्च गायत्री; तस्मात् तदुपासनमेव विधित्स्यते; द्विजोत्तमजन्महेतुत्वाच्च— 'गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यम्' इति द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तम्; तस्मात् प्रधाना गायत्री; 'ब्राह्मणा व्युत्थाय ब्राह्मणा अभिवदन्ति, स ब्राह्मणो विपापो विरजोऽविचिकित्सो ब्राह्मणो

भवति ' इत्युत्तमपुरुषार्थसंबन्धं ब्राह्मणस्य दर्शयति , तच्च ब्राह्मणत्वं गायत्रीजन्ममूलम् ; अतो वक्तव्यं गायत्र्याः सतत्त्वम् । गायत्र्या हि यः सृष्टो द्विजोत्तमः निरङ्कुश एव उत्तमपुरुषार्थसाधने अधिक्रियते ; अतः तन्मूलः परमपुरुषार्थसंबन्धः । तस्मात् तदुपासनविधानाय आह— भूमिरन्तरिक्षं द्यौरित्येतानि अष्टावक्षराणि ; अष्टाक्षरम् अष्टावक्षराणि यस्य तत् इदमष्टाक्षरम् ; ह वै प्रसिद्धावद्योतकौ ; एकं प्रथमम् , गायत्र्यै गायत्र्याः, पदम् ; यकारेणैव अष्टत्वपूरणम् । एतत् उ ह एव एतदेव अस्या गायत्र्याः पदं पादः प्रथमः भूम्यादिलक्षणः त्रैलोक्यात्मा, अष्टाक्षरत्वसामान्यात् । एवम् एतत् त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद, तस्यैतत्फलम्— स विद्वान् यावत्किंचित् एषु त्रिषु लोकेषु जेतव्यम् , तावत्सर्वं ह जयति, यः अस्यै एतदेवं पदं वेद ॥

**ऋचो यजूꣳषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥**

तथा ऋचः यजूंषि सामानीति त्रयीविद्यानामाक्षराणि

एतान्यपि अष्टावेव; तथैव अष्टाक्षरं ह वै एकं गायत्र्यै पदं द्वितीयम्, एतत् उ ह एव अस्या एतत् ऋग्यजुःसामलक्षणम् अष्टाक्षरत्वसामान्यादेव। सः यावती इयं त्रयी विद्या त्रय्या विद्यया यावत्फलजातम् आप्यते, तावत् ह जयति, योऽस्या एतत् गायत्र्याः त्रैविद्यलक्षणं पदं वेद ॥

**प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपत्येवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ३ ॥**

तथा प्राणः अपानः व्यानः एतान्यपि प्राणाद्यभिधानाक्षराणि अष्टौ; तच्च गायत्र्यास्तृतीयं पदम्; यावदिदं प्राणिजातम्, तावत् ह जयति, योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं

वेद। अथ अनन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यते अभिधेयभूतम्, अस्याः प्रकृतायाः गायत्र्याः एतदेव वक्ष्यमाणं तुरीयं दर्शतं पदं परोरजा य एष तपति; तुरीयमित्यादिवाक्यपदार्थं स्वयमेव व्याचष्टे श्रुतिः— यद्वै चतुर्थं प्रसिद्धं लोके, तदिह तुरीयशब्देनाभिधीयते; दर्शतं पदमित्यस्य कोऽर्थ इत्युच्यते— ददृशे इव दृश्यते इव हि एषः मण्डलान्तर्गत पुरुष ; अतो दर्शतं पदमुच्यते; परोरजा इत्यस्य पदस्य कोऽर्थ इत्युच्यते— सर्वं समस्तम् उ हि एव एषः मण्डलस्थः पुरुषः रजः रजोजातं समस्तं लोकमित्यर्थः, उपर्युपरि आधिपत्यभावेन सर्वं लोकं रजोजातं तपति; उपर्युपरीति वीप्सा सर्वलोकाधिपत्यख्यापनार्था, ननु सर्वशब्देनैव सिद्धत्वात् वीप्सा अनर्थिका– नैष दोषः; येषाम् उपरिष्टात् सविता दृश्यते तद्विषय एव सर्वशब्दः स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा, 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इति श्रुत्यन्तरात्; तस्मात् सर्वावरोधार्था वीप्सा; यथा असौ सविता सर्वाधिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति, एवं हैव श्रिया यशसा च तपति, योऽस्या एतदेवं तुरीयं दर्शतं पदं वेद ॥

**सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे**

**परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोगीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳ सावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥**

सैषा त्रिपदा उक्ता या त्रैलोक्यत्रैविद्यप्राणलक्षणा गायत्री एतस्मिन् चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता, मूर्तामूर्तरसत्वात् आदित्यस्य; रसापाये हि वस्तु नीरसम् अप्रतिष्ठितं भवति, यथा काष्ठादि दग्धसारम्, तद्वत्; तथा

मूर्तामूर्तात्मकं जगत् त्रिपदा गायत्री आदित्ये प्रतिष्ठिता तद्र-सत्वात् सह त्रिभिः पादैः, तद्वै तुरीयं पदं सत्ये प्रतिष्ठितम्; किं पुनः तत् सत्यमित्युच्यते— चक्षुर्वै सत्यम् । कथ चक्षुः सत्यमित्याह— प्रसिद्धमेतत्, चक्षुर्हि वै सत्यम्। कथं प्रसिद्धतेत्याह—तस्मात्—यत् यदि इदानीमेव द्वौ विवदमानौ विरुद्धं वदमानौ एयाताम् आगच्छेयाताम्; अहम् अदर्शं दृष्टवानस्मीति अन्य आह; अहम् अश्रौषम्— त्वया दृष्टं न तथा तद्वस्त्विति; तयोः य एवं ब्रूयात्— अहमद्राक्षमिति, तस्मै एव श्रद्दध्याम; न पुनः यः ब्रूयात् अहमश्रौषमिति; श्रोतुः मृषा श्रवणमपि संभवति; न तु चक्षुषो मृषा दर्शनम्; तस्मात् न अ-श्रौषमित्युक्तवते श्रद्दध्याम; तस्मात् सत्यप्रतिपत्तिहेतुत्वात् सत्यं चक्षुः; तस्मिन् सत्ये चक्षुषि सह त्रिभिः इतरैः पादैः तुरीयं पदं प्रतिष्ठितमित्यर्थः । उक्तं च 'स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति' । तद्वै तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितम्; किं पुनः तत् बलमित्याह— प्राणो वै बलम्; तस्मिन्प्राणे बले प्रतिष्ठितं सत्यम्। तथा चोक्तम्—'सूत्रे तदोतं च प्रोतं च' इति । यस्मात् बले सत्यं प्रतिष्ठितम्, तस्मादाहुः— बलं सत्यादोगीयः ओजीयः ओजस्तरमित्यर्थः;

लोकेऽपि यस्मिन्हि यदाश्रितं भवति, तस्मादाश्रितात् आश्रयस्य बलवत्तरत्वं प्रसिद्धम्; न हि दुर्बलं बलवतः क्वचित् आश्रयभूतं दृष्टम्; एवं उक्तन्यायेन उ एषा गायत्री अध्यात्मम् अध्यात्मे प्राणे प्रतिष्ठिता; सैषा गायत्री प्राणः; अतो गायत्र्यां जगत्प्रतिष्ठितम्; यस्मिन्प्राणे सर्वे देवा एकं भवन्ति, सर्वे वेदाः, कर्माणि फलं च; सैवं गायत्री प्राणरूपा सती जगत आत्मा। सा ह एषा गयान् तत्रे त्रातवती; के पुनर्गयाः? प्राणाः वागादयः वै गयाः, शब्दकरणात्; तान् तत्रे सैषा गायत्री। तत् तत्र यत् यस्मात् गयान् तत्रे, तस्मात् गायत्री नाम; गयत्राणात् गायत्रीति प्रथिता। सः आचार्यः उपनीय माणवकमष्टवर्षं यामेव अमूं गायत्रीं सावित्रीं सवितृदेवताकाम् अन्वाह पच्छः अर्धर्चशः समस्तां च, एषैव स साक्षात् प्राणः जगत आत्मा माणवकाय समर्पिता इह इदानीं व्याख्याता, नान्या; स आचार्यः यस्मै माणवकाय अन्वाह अनुवक्ति, तस्य माणवकस्य गयान् प्राणान् त्रायते नरकादिपतनात्॥

**ताꣳ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह**

**वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं प्रति ॥ ५ ॥**

तामेतां सावित्रीं ह एके शाखिनः अनुष्टुभम् अनुष्टुप्प्रभवाम् अनुष्टुप्छन्दस्काम् अन्वाहुरुपनीताय । तदभिप्रायमाह— वाक् अनुष्टुप्, वाक्च शरीरे सरस्वती, तामेव हि वाचं सरस्वतीं माणवकायानुब्रूम इत्येतद्वदन्तः । न तथा कुर्यात् न तथा विद्यात्, यत् ते आहुः मृषैव तत्; किं तर्हि गायत्रीमेव सावित्रीमनुब्रूयात्; कस्मात्? यस्मात् प्राणो गायत्रीत्युक्तम्; प्राणे उक्ते, वाक्च सरस्वती च अन्ये च प्राणाः सर्वं माणवकाय समर्पितं भवति । किंचेदं प्रासङ्गिकमुक्त्वा गायत्रीविदं स्तौति— यदि ह वै अपि एवंवित् बह्विव— न हि तस्य सर्वात्मनो बहु नामास्ति किंचित्, सर्वात्मकत्वाद्विदुषः— प्रतिगृह्णाति, न हैव तत् प्रतिग्रहजातं गायत्र्या एकंचन एकमपि पदं प्रति पर्याप्तम् ॥

**स य इमांस्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सो-**

**ऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केनचनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ६ ॥**

स य इमांस्त्रीन्— स यः गायत्रीवित् इमान् भूरादीन् त्रीन् गोश्वादिधनपूर्णान् लोकान् प्रतिगृह्णीयात्, स प्रतिग्रहः, अस्या गायत्र्या एतत्प्रथमं पदं यद्व्याख्यातम् आप्नुयात् प्रथमपदविज्ञानफलम्, तेन भुक्तं स्यात्, न त्वधिकदोषोत्पादकः स प्रतिग्रहः । अथ पुनः यावती इयं त्रयी विद्या, यस्तावत् प्रतिगृह्णीयात्, सोऽस्या एतद्द्वितीयं पदमाप्नुयात्, द्वितीयपदविज्ञानफलं तेन भुक्तं स्यात् । तथा यावदिदं प्राणि, यस्तावत्प्रतिगृह्णीयात्, सोऽस्या एतत्तृतीयं पदमाप्नुयात्, तेन तृतीयपदविज्ञानफलं भुक्तं स्यात् । कल्पयित्वेदमुच्यते; पादत्रयसममपि यदि कश्चित्प्रतिगृह्णीयात्, तत्पादत्रयविज्ञानफलस्यैव क्षयकारणम्, न त्वन्यस्य दोषस्य कर्तृत्वे क्षमम्; न चैवं दाता प्रतिग्रहीता वा; गायत्रीविज्ञानस्तुतये कल्प्यते; दाता प्रतिग्रहीता च यद्यप्येवं संभाव्यते, नासौ प्रतिग्रहः अपराधक्षमः; कस्मात्? यतः अभ्यधिकमपि पुरुषार्थविज्ञानम् अवशिष्टमेव चतुर्थपादविषयं गायत्र्याः; तद्-

र्शयति— अथ अस्याः एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति, यद्यैतत् नैव केनचन केनचिदपि प्रतिग्रहेण आप्यं नैव प्राप्यमित्यर्थः, यथा पूर्वोक्तानि त्रीणि पदानि; एतान्यपि नैव आप्यानि केनचित्; कल्पयित्वा एवमुक्तम्; परमार्थतः कुत उ एतावत् प्रतिगृह्णीयात् त्रैलोक्यादिसमम् । तस्मात् गायत्री एवंप्रकारा उपास्येत्यर्थः ॥

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥**

तस्या उपस्थानम्— तस्या गायत्र्याः उपस्थानम् उपेत्य स्थानं नमस्करणम् अनेन मन्त्रेण । कोऽसौ मन्त्र इत्याह— हे गायत्रि असि भवसि त्रैलोक्यपादेन एकपदी, त्रयीविद्यारूपेण द्वितीयेन द्विपदी, प्राणादिना तृतीयेन त्रिपद्यसि, चतुर्थेन तुरीयेण चतुष्पद्यसि; एवं चतुर्भिः पादैः उपासकैः पद्यसे ज्ञायसे; अतः परं परेण निरुपाधिकेन स्वेन आत्मना

अपदसि— अविद्यमानं पदं यस्यास्तव, येन पद्यसे— सा त्वम् अपत् असि, यस्मात् न हि पद्यसे, नेति नेत्यात्मत्वात्। अतो व्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय परोरजसे। असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः, अदः तत् आत्मनः कार्यं यत् त्वत्प्राप्तिविघ्नकर्तृत्वम्, मा प्रापत् मैव प्राप्नोतु; इति-शब्दो मन्त्रपरिसमाप्त्यर्थः; यं द्विष्यात् यं प्रति द्वेषं कुर्यात् स्वयं विद्वान्, तं प्रति अनेनोपस्थानम्; असौ शत्रुः अमुकनामेति नाम गृह्णीयात्; अस्मै यज्ञदत्ताय अभिप्रेतः कामः मा समृद्धि समृद्धिं मा प्राप्नोत्विति वा उपतिष्ठते; न हैवास्मै देवदत्ताय स कामः समृध्यते; कस्मै? यस्मै एवमुपतिष्ठते। अहं अदः देवदत्ताभिप्रेतं प्रापमिति वा उपतिष्ठते। असावदो मा प्रापदित्यादित्रयाणां मन्त्रपदानां यथाकामं विकल्पः॥

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविद्ब्रूथा अथ कथꣳहस्तीभूतो वहसीति मुखꣳह्यस्याः सम्राण्न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधाति सर्वमेव तत्संदहत्येवꣳहैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्व-**

**मेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ॥ ८ ॥**

गायत्र्या मुखविधानाय अर्थवाद उच्यते— एतत् ह किल वै स्मर्यते, तत् तत्र गायत्रीविज्ञानविषये; जनको वैदेहः, बुडिलो नामतः, अश्वतराश्वस्यापत्यम् आश्वतराश्विः, तं किल उक्तवान्; यत् नु इति वितर्के, हो अहो इत्येतत्, तत् यत् त्वं गायत्रीविद्ब्रूथाः, गायत्रीविदस्मीति यद्ब्रूथाः, किमिदं तस्य वचसोऽननुरूपम्; अथ कथम्, यदि गायत्रीवित्, प्रतिग्रहदोषेण हस्तीभूतो वहसीति । स प्रत्याह राज्ञा स्मारितः— मुखं गायत्र्याः हि यस्मात् अस्याः, हे सम्राट्, न विदांचकार न विज्ञातवानस्मि– इति होवाच; एकाङ्गविकलत्वात् गायत्रीविज्ञानं मम अफलं जातम् । शृणु तर्हि; तस्या गायत्र्या अग्निरेव मुखम्; यदि ह वै अपि बह्विवेन्धनम् अग्नावभ्यादधति लौकिकाः, सर्वमेव तत्संदहत्येवेन्धनम् अग्निः—एवं हैव एवंवित् गायत्र्या अग्निर्मुखमित्येवं वेत्तीत्येवंवित् स्यात् स्वयं गायत्र्यात्मा अग्निमुखः सन् । यद्यपि बह्विव पापं कुरुते प्रतिग्रहादिदोषम्, तत्सर्वं पापजातं संप्साय भक्षयित्वा शुद्धः अग्निवत् पूतश्च तस्मात्प्रतिग्रहदोषात् गायत्र्यात्मा अजरोऽमृतश्च संभवति ॥

इति पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥

## पञ्चदशं ब्राह्मणम् ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् । समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥

यो ज्ञानकर्मसमुच्चयकारी सः अन्तकाले आदित्यं प्रार्थयति; अस्ति च प्रसङ्गः; गायत्र्यास्तुरीयः पादो हि सः; तदुपस्थानं प्रकृतम्; अतः स एव प्रार्थ्यते । हिरण्मयेन ज्योतिर्मयेन पात्रेण, यथा पात्रेण-इष्टं वस्तु अपिधीयते, एवमिदं सत्याख्यं ब्रह्म ज्योतिर्मयेन मण्डलेनापिहितमिव असमाहितचेतसामदृश्यत्वात्; तदुच्यते— सत्यस्यापिहितं मुखं मुख्यं स्वरूपम्; तत् अपिधानं पात्रमपिधानमिव दर्शनप्रतिबन्धकारणम्, तत् त्वम्, हे पूषन्, जगतः पोषणात्पूषा

सविता, अपावृणु अपावृतं कुरु दर्शनप्रतिबन्धकारणमपनये-त्यर्थः; सत्यधर्माय सत्यं धर्मोऽस्य मम सोऽहं सत्यधर्मा, तस्मै त्वदात्मभूतायेत्यर्थः; दृष्टये दर्शनाय; पूषन्नित्यादीनि नामानि आमन्त्रणार्थानि सवितुः, एकर्षे, एकश्चासावृषिश्च एकर्षिः, 'दर्शनादृषिः; स हि सर्वस्य जगत आत्मा चक्षुश्च सन् सर्वं पश्यति; एको वा गच्छतीत्येकर्षिः, 'सूर्य एकाकी चरति' इति मन्त्रवर्णात्; यम, सर्वं हि जगतः संयमनं त्वत्कृतम्; सूर्य, सुष्ठु ईरयते रसान् रश्मीन् प्राणान् धियो वा जगत इति; प्राजापत्य, प्रजापतेरीश्वरस्यापत्यं हिरण्यग-र्भस्य वा, हे प्राजापत्य; व्यूह विगमय रश्मीन्; समूह संक्षिप आत्मनस्तेजः, येनाहं शक्नुयां द्रष्टुम्; तेजसा ह्यप-हतदृष्टिः न शक्नुयां त्वत्स्वरूपमञ्जसा द्रष्टुम्, विद्योतन इव रूपाणाम्; अत उपसंहर तेजः; यत् ते तव रूपं सर्वकल्या-णानामतिशयेन कल्याणं कल्याणतमम्, तत् ते तव पश्यामि पश्यामो वयम्, वचनव्यत्ययेन। योऽसौ भूर्भुवःस्वर्व्याहृत्य-वयवः पुरुषः, पुरुषाकृतित्वात्पुरुषः, सोऽहमस्मि भवामि; 'अहरहम्' इति च उपनिषद उक्तत्वादादित्यचाक्षुषयोः तदे-वेदं परामृश्यते; सोऽहमस्म्यमृतमिति संबन्धः; ममामृतस्य सत्यस्य शरीरपाते, शरीरस्थो यः प्राणो वायुः स अनिलं बाह्यं वायुमेव प्रतिगच्छतु; तथा अन्या देवताः स्वां स्वां प्र-

कृतिं गच्छन्तु; अथ इदमपि भस्मान्तं सत् पृथिवीं यातु शरीरम्। अथेदानीम् आत्मनः संकल्पभूतां मनसि व्यवस्थिताम् अग्निदेवतां प्रार्थयते— ॐ क्रतो; ओमिति क्रतो इति च संबोधनार्थावेव; ओंकारप्रतीकत्वात् ओम्; मनोमयत्वाच्च क्रतुः; हे ॐ, हे क्रतो, स्मर स्मर्तव्यम्; अन्तकाले हि त्वत्स्मरणवशात् इष्टा गतिः प्राप्यते; अतः प्रार्थ्यते—यत् मया कृतम्, तत् स्मर; पुनरुक्तिः आदरार्था। किंच हे अग्ने, नय प्रापय, सुपथा शोभनेन मार्गेण, राये धनाय कर्मफलप्राप्तये इत्यर्थः; न दक्षिणेन कृष्णेन पुनरावृत्तियुक्तेन, किं तर्हि शुक्लेनैव सुपथा; अस्मान् विश्वानि सर्वाणि, हे देव, वयुनानि प्रज्ञानानि सर्वप्राणिनां विद्वान्; किंच युयोधि अपनय वियोजय अस्मत् अस्मत्तः, जुहुराणं कुटिलम्, एनः पापं पापजातं सर्वम्; तेन पापेन वियुक्ता वयम् एष्याम उत्तरेण पथा त्वत्प्रसादात्; किं तु वयं तुभ्यम् परिचर्यां कर्तुं न शक्नुमः; भूयिष्ठां बहुतमां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारोक्त्या परिचरेमेत्यर्थः, अन्यत्कर्तुमशक्ताः सन्त इति॥

इति पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
बृहदारण्यकोपनिषद्भाष्ये पञ्चमोऽध्यायः॥

श्रीमच्छंकरभगवत्पादविरचितम्

# बृहदारण्यकोपनिषद्भाष्यम्

---

## षष्ठोऽध्यायः

# षष्ठोऽध्यायः ॥

ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥

ॐ प्राणो गायत्रीत्युक्तम् । कस्मात्पुनः कारणात् प्राणभावः गायत्र्याः, न पुनर्वागादिभाव इति, यस्मात् ज्येष्ठश्च श्रेष्ठश्च प्राणः, न वागादयो ज्यैष्ठ्यश्रैष्ठ्यभाजः; कथं ज्येष्ठत्वं श्रेष्ठत्वं च प्राणस्येति तन्निर्दिधारयिषया इदमारभ्यते । अथवा उक्थयजुःसामक्षत्रादिभावैः प्राणस्यैव उपासनमभिहितम्, सत्स्वपि अन्येषु चक्षुरादिषु; तत्र हेतुमात्रमिह आनन्तर्येण संबध्यते; न पुनः पूर्वशेषता । विवक्षितं तु खिलत्वादस्य काण्डस्य पूर्वत्र यदनुक्तं विशिष्टफलं प्राणविषयमुपासनं तद्वक्तव्यमिति । यः कश्चित्, ह वै इत्यवधारणार्थौ; यो ज्येष्ठश्रेष्ठगुणं वक्ष्यमाणं यो वेद असौ भवत्येव ज्येष्ठश्च श्रेष्ठश्च; एवं फलेन प्रलोभितः सन् प्रश्नाय अभिमुखीभूतः; तस्मै चाह— प्राणो वै ज्येष्ठश्च

श्रेष्ठश्च । कथं पुनरवगम्यते प्राणो ज्येष्ठश्च श्रेष्ठश्चेति, यस्मात् निषेककाल एव शुक्रशोणितसंबन्धः प्राणादिकलापस्याविशिष्टः? तथापि न अप्राणं शुक्रं विरोहतीति प्रथमो वृत्तिलाभः प्राणस्य चक्षुरादिभ्यः; अतो ज्येष्ठो वयसा प्राणः; निषेककालादारभ्य गर्भं पुष्यति प्राणः; प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीनां वृत्तिलाभः; अतो युक्तं प्राणस्य ज्येष्ठत्वं चक्षुरादिषु; भवति तु कश्चित्कुले ज्येष्ठः, गुणहीनत्वात्तु न श्रेष्ठः; मध्यमः कनिष्ठो वा गुणाढ्यत्वात् भवेत् श्रेष्ठः, न ज्येष्ठः, न तु तथा इहेत्याह—प्राण एव तु ज्येष्ठश्च श्रेष्ठश्च । कथं पुनः श्रैष्ठ्यमवगम्यते प्राणस्य? तदिह संवादेन दर्शयिष्यामः । सर्वथापि तु प्राणं ज्येष्ठश्रेष्ठगुणं यो वेद उपास्ते, स स्वानां ज्ञातीनां ज्येष्ठश्च श्रेष्ठश्च भवति, ज्येष्ठश्रेष्ठगुणोपासनसामर्थ्यात्; स्वव्यतिरेकेणापि च येषां मध्ये ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति बुभूषति भवितुमिच्छति, तेषामपि ज्येष्ठश्रेष्ठप्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति । ननु वयोनिमित्तं ज्येष्ठत्वम्, तत् इच्छातः कथं भवतीत्युच्यते—नैष दोषः, प्राणवत् वृत्तिलाभस्यैव ज्येष्ठत्वस्य विवक्षितत्वात् ॥

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भ-**

**वत्यपि च येषां बुभूषति य एवं वेद ॥**

यो ह वै वसिष्ठां वेद वसिष्ठः स्वाना भवति । तद्दर्शनानुरूप्येण फलम् । येषां च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति, तेषां च वसिष्ठो भवति । उच्यतां तर्हि, कासौ वसिष्ठेति; वाग्वै वसिष्ठा; वासयत्यतिशयेन वस्ते वेति वसिष्ठा; वाग्गिमनो हि धनवन्तो वसन्त्यतिशयेन; आच्छादनार्थस्य वा वसेर्वसिष्ठा, अभिभवन्ति हि वाचा वाग्गिमनः अन्यान् । तेन वसिष्ठगुणवत्परिज्ञानान् वसिष्ठगुणो भवतीति दर्शनानुरूपं फलम् ॥

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥**

यो ह वै प्रतिष्ठां वेद, प्रतितिष्ठत्यनयेति प्रतिष्ठा, तां प्रतिष्ठां प्रतिष्ठागुणवतीं यो वेद, तस्य एतत्फलम्; प्रतितिष्ठति समे देशे काले च; तथा दुर्गे विषमे च दुर्गमने च देशे दुर्भिक्षादौ वा काले विषमे । यद्येवमुच्यताम्, कासौ प्रतिष्ठा; चक्षुर्वै प्रतिष्ठा; कथं चक्षुषः प्रतिष्ठात्वमित्याह—चक्षुषा हि समे च दुर्गे च दृष्ट्वा प्रतितिष्ठति । अतोऽनुरूपं

फलम्, प्रतितिष्ठति समे, प्रतितिष्ठति दुर्गे, य एवं वेदेति ॥

**यो ह वै संपदं वेद सꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः सꣳ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥**

यो ह वै संपदं वेद, संपद्गुणयुक्तं यो वेद, तस्य एतत्फलम्; अस्मै विदुषे संपद्यते ह; किम्? यं कामं कामयते, स कामः। किं पुनः संपद्गुणकम्? श्रोत्रं वै संपत्। कथं पुनः श्रोत्रस्य संपद्गुणत्वमित्युच्यते— श्रोत्रे सति हि यस्मात् सर्वे वेदा अभिसंपन्नाः, श्रोत्रेन्द्रियवतोऽध्येयत्वात्; वेदविहितकर्मायत्ताश्च कामाः, तस्मात् श्रोत्रं संपत्। अतो विज्ञानानुरूपं फलम्, सं हास्मै पद्यते, यं कामं कामयते, य एवं वेद ॥

**यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥**

यो ह वा आयतनं वेद; आयतनम् आश्रयः, तत् यो

वेद, आयतनं स्वानां भवति, आयतनं जनानामन्येषामपि । किं पुनः तत् आयतनमित्युच्यते— मनो वै आयतनम् आश्रय. इन्द्रियाणां विषयाणां च; मनआश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते, मनःसंकल्पवशानि च इन्द्रियाणि प्रवर्तन्ते निवर्तन्ते च: अतो मन आयतनम् इन्द्रियाणाम् । अतो दर्शनानुरूप्येण फलम्, आयतनं स्वानां भवति, आयतनं जनानाम्, य एवं वेद ॥

**यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥**

यो ह वै प्रजातिं वेद, प्रजायते ह प्रजया पशुभिश्च संपन्नो भवति । रेतो वै प्रजातिः; रेतसा प्रजननेन्द्रियमुपलक्ष्यते । तद्विज्ञानानुरूपं फलम्, प्रजायते ह प्रजया पशुभिः, य एवं वेद ॥

**ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तद्धोवाच यस्मिन्व उत्क्रान्त इदंशरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥**

ते हेमे प्राणा वागादयः, अहंश्रेयसे अहं श्रेयानित्येतस्मै प्रयोजनाय, विवदमानाः विरुद्धं वदमानाः, ब्रह्म जग्मुः ब्रह्म गतवन्तः, ब्रह्मशब्दवाच्यं प्रजापतिम्; गत्वा च तद्ब्रह्म ह ऊचुः उक्तवन्तः— कः नः अस्माकं मध्ये, वसिष्ठः, कोऽस्माकं मध्ये वसति च वासयति च । तद्ब्रह्म तैः पृष्टं सत् ह उवाच उक्तवत्— यस्मिन् वः युष्माकं मध्ये उत्क्रान्ते निर्गते शरीरात्, इदं शरीरं पूर्वस्मादतिशयेन पापीयः पापतरं मन्यते लोकः; शरीरं हि नाम अनेकाशुचिसंघातत्वात् जीवतोऽपि पापमेव, ततोऽपि कष्टतरं यस्मिन् उत्क्रान्ते भवति; वैराग्यार्थमिदमुच्यते— पापीय इति; स वः युष्माकं मध्ये वसिष्ठो भविष्यति । जानन्नपि वसिष्ठं प्रजापतिः नोवाच अयं वसिष्ठ इति इतरेषाम् अप्रियपरिहाराय ॥

**वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥**

ते एवमुक्ता ब्रह्मणा प्राणाः आत्मनो वीर्यपरीक्षणाय क्रमेण उच्चक्रमु.। तत्र वागेव प्रथमं ह अस्मात् शरीरात् उच्चक्राम उत्क्रान्तवती, सा चोत्क्रम्य, संवत्सरं प्रोष्य प्रोषिता भूत्वा, पुनरागत्योवाच— कथम् अशकत शक्तवन्तः यूयम्, मदृते मां विना, जीवितुमिति। ते एवमुक्ताः ऊचुः— यथा लोके अकलाः मूका', अवदन्तः वाचा, प्राणन्तः प्राणनव्यापारं कुर्वन्तः प्राणेन, पश्यन्तः दर्शनव्यापारं चक्षुषा कुर्वन्तः, तथा शृण्वन्तः श्रोत्रेण, विद्वांसः मनसा कार्याकार्यादिविषयम्, प्रजायमानाः रेतसा पुत्रान् उत्पादयन्त., एवमजीविष्म वयम्— इत्येवं प्राणैः दत्तोत्तरा वाक् आत्मनः अस्मिन् अवसिष्ठत्वं बुद्ध्वा, प्रविवेश ह वाक्॥

**चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथान्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः॥**

श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणान्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना

**रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥**

तथा चक्षुर्होच्चक्रामेत्यादि पूर्ववत् । श्रोत्रं मनः प्रजातिरिति ॥

**अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥ १३ ॥**

अथ ह प्राण उत्क्रमिष्यन् उत्क्रमणं करिष्यन्; तदानीमेव स्वस्थानात्प्रचलिता वागादयः । किमिवेत्याह—यथा लोके, महांश्चासौ सुहयश्च महासुहयः, शोभनो हयः लक्षणोपेतः, महान् परिमाणतः, सिन्धुदेशे भवः सैन्धवः अभिजनतः, पड्वीशशङ्कून् पादबन्धनशङ्कून्, पड्वीशाश्च ते शङ्कवश्च तान्, संवृहेत् उद्यच्छेत् युगपदुत्खनेत् अश्वारोहे आरूढे परीक्षणाय; एवं ह एव इमान् वागादीन् प्राणान् संववर्ह उद्यत-

वान् स्वस्थानात् भ्रंशितवान् । ते वागादयः ह ऊचुः— हे भगवः भगवन् मा उत्क्रमीः, यस्मात् न वै शक्ष्यामः त्वदृते त्वां विना जीवितुमिति । यद्येवं मम श्रेष्ठता विज्ञाता भवद्भिः, अहमत्र श्रेष्ठः, तस्य उ मे मम बलिं करं कुरुत करं प्रयच्छतेति । अयं च प्राणसंवादः कल्पितः विदुषः श्रेष्ठपरीक्षणप्रकारोपदेशः ; अनेन हि प्रकारेण विद्वान् को नु खलु अत्र श्रेष्ठ इति परीक्षणं करोति ; स एष परीक्षणप्रकारः संवादभूतः कथ्यते ; न हि अन्यथा संहत्यकारिणां सताम् एषाम् अञ्जसैव संवत्सरमात्रमेव एकैकस्य निर्गमनादि उपपद्यते ; तस्मात् विद्वानेव अनेन प्रकारेण विचारयति वागादीनां प्रधानबुभुत्सुः उपासनाय ; बलिं प्रार्थिताः सन्तः प्राणाः, तथेति प्रतिज्ञातवन्तः ॥

**सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहꣳ संपदस्मि त्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं**

**किं वास इति यदिदं किंचाश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥**

इति प्रथमं ब्राह्मणम् ॥

सा ह वाक् प्रथमं बलिदानाय प्रवृत्ता ह किल उवाच उक्तवती— यत् वै अहं वसिष्ठास्मि, यत् मम वसिष्ठत्वम्, तत् तवैव; तेन वसिष्ठगुणेन त्वं तद्वसिष्ठोऽसीति । यत् वै अहं प्रतिष्ठास्मि, त्वं तत्प्रतिष्ठोऽसि, या मम प्रतिष्ठा सा त्वमसीति चक्षुः । समानम् अन्यत् । संपदायतनप्रजातित्वगुणान् क्रमेण समर्पितवन्तः । यद्येवम्, साधु बलिं दत्तवन्तो भवन्तः; ब्रूत— तस्य उ मे एवंगुणविशिष्टस्य किमन्नम्, किं वास इति; आहुरितरे— यदिदं लोके किंच किंचित् अन्नं नाम आ श्वभ्यः आ कृमिभ्यः आ कीटपतङ्गेभ्यः, यच्च श्वान्नं कृम्यन्नं कीटपतङ्गान्नं च, तेन सह सर्वमेव यत्किंचित्

प्राणिभिरद्यमानम् अन्नम्, तत्सर्वं तवान्नम्। सर्वं प्राणस्यान्नमिति दृष्टिः अत्र विधीयते ॥

केचित्तु सर्वभक्षणे दोषाभावं वदन्ति प्राणान्नविदः; तत् असत्, शास्त्रान्तरेण प्रतिषिद्धत्वात्। तेनास्य विकल्प इति चेत्, न, अविधायकत्वात्। न ह वा अस्यानन्नं जग्धं भवतीति— सर्वं प्राणस्यान्नमित्येतस्य विज्ञानस्य विहितस्य स्तुत्यर्थमेतत्; तेनैकवाक्यतापत्तेः; न तु शास्त्रान्तरविहितस्य बाधने सामर्थ्यम्, अन्यपरत्वादस्य। प्राणमात्रस्य सर्वमन्नम् इत्येतद्दर्शनम् इह विधित्सितम्, न तु सर्वं भक्षयेदिति। यत्तु सर्वभक्षणे दोषाभावज्ञानम्, तत् मिथ्यैव, प्रमाणाभावात्। विदुषः प्राणत्वात् सर्वान्नोपपत्तेः सामर्थ्यात् अदोष एवेति चेत्, न, अशेषान्नत्वानुपपत्तेः; सत्यं यद्यपि विद्वान् प्राणः, येन कार्यकरणसंघातेन विशिष्टस्य विद्वत्ता तेन कार्यकरणसंघातेन कृमिकीटदेवाद्यशेषान्नभक्षणं नोपपद्यते; तेन तत्र अशेषान्नभक्षणे दोषाभावज्ञापनमनर्थकम्, अप्राप्तत्वादशेषान्नभक्षणदोषस्य। ननु प्राणः सन् भक्षयत्येव कृमिकीटाद्यन्नमपि; बाढम्, किंतु न तद्विषयः प्रतिषेधोऽस्ति; तस्मात्— दैवरक्तं किंशुकम्— तत्र दोषाभावः; अतः तद्रूपेण दोषाभावज्ञापनमनर्थकम्, अप्राप्तत्वात् अशेषान्नभक्षणदोष-

स्य । येन तु कार्यकरणसंघातसंबन्धेन प्रतिषेधः क्रियते, तत्संबन्धेन तु इह नैव प्रतिप्रसवोऽस्ति । तस्मात् तत्प्रतिषेधातिक्रमे दोष एव स्यात्, अन्यविषयत्वात् 'न ह वै' इत्यादेः । न च ब्राह्मणादिशरीरस्य सर्वान्नत्वदर्शनमिह विधीयते, किंतु प्राणमात्रस्यैव । यथा च सामान्येन सर्वान्नस्य प्राणस्य किंचित् अन्नजातं कस्यचित् जीवनहेतुः, यथा विषं विषजस्य क्रिमेः, तदेव अन्यस्य प्राणान्नमपि सन् दृष्टमेव दोषमुत्पादयति मरणादिलक्षणम्— तथा सर्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिदेहसंबन्धात् दोष एव स्यात् । तस्मात् मिथ्याज्ञानमेव अभक्ष्यभक्षणे दोषाभावज्ञानम् ॥

आपो वास इति; आपः भक्ष्यमाणाः वासःस्थानीयास्तव । अत्र च प्राणस्य आपो वास इत्येतद्दर्शनं विधीयते; न तु वासःकार्ये आपो विनियोक्तुं शक्याः; तस्मात् यथाप्राप्ते अब्भक्षणे दर्शनमात्रं कर्तव्यम् । न ह वै अस्य सर्वं प्राणस्यान्नमित्येवंविदः अनन्नम् अनदनीयं जग्धं भुक्तं न भवति ह; यद्यपि अनेन अनदनीयं भुक्तम्, अदनीयमेव भुक्तं स्यात्, न तु तत्कृतदोषेण लिप्यते— इत्येतत् विद्यास्तुतिरित्यवोचाम । तथा न अनन्नं प्रतिगृहीतम्; यद्यपि अप्रतिग्राह्यं

हस्त्यादि प्रतिगृहीतं स्यात् तदपि अन्नमेव प्रतिग्राह्यं प्रतिगृहीतं स्यात्, तत्रापि अप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यत इति स्तुत्यर्थमेव; य एवम् एतत् अनस्य प्राणस्य अन्नं वेद; फलं तु प्राणात्मभाव एव; न त्वेतत् फलाभिप्रायेण, किं तर्हि स्तुत्यभिप्रायेणेति। ननु एतदेव फलं कस्मान्न भवति? न, प्राणात्मदर्शिनः प्राणात्मभाव एव फलम्; तत्र च प्राणात्मभूतस्य सर्वात्मनः अनदनीयमपि आद्यमेव, तथा अप्रतिग्राह्यमपि प्रतिग्राह्यमेव— इति यथाप्राप्तमेव उपादाय विद्या स्तूयते; अतो नैव फलविधिसरूपता वाक्यस्य।

यस्मात् आपो वासः प्राणस्य, तस्मात् विद्वांसः ब्राह्मणाः श्रोत्रिया अधीतवेदाः, अशिष्यन्तः भोक्ष्यमाणाः, आचामन्ति अपः; अशित्वा आचामन्ति भुक्त्वा च उत्तरकालम् अपः भक्षयन्ति; तत्र तेषामाचामतां कोऽभिप्राय इत्याह—एतमेवानं प्राणम् अनग्नं कुर्वन्तो मन्यन्ते; अस्ति चैतत्— यो यस्मै वासो ददाति, स तम् अनग्नं करोमीति हि मन्यते; प्राणस्य च आपो वास इति ह्युक्तम्। यदपः पिबामि तत्प्राणस्य वासो ददामि इति विज्ञानं कर्तव्यमित्येवमर्थमेतत्। ननु भोक्ष्यमाणः भुक्तवांश्च प्रयतो भविष्यामीत्याचामति, तत्र च प्राणस्यानग्नताकरणार्थत्वे च द्विकार्य-

ता आचमनस्य स्यात्; न च कार्यद्वयम् आचमनस्य एकस्य युक्तम्; यदि प्रायत्यार्थम्, न अनग्नतार्थम्; अथ अनग्नतार्थम्, न प्रायत्यार्थम्; यस्मादेवम्, तस्मात् द्वितीयम् आचमनान्तरं प्राणस्यानग्नताकरणाय भवतु— न, क्रियाद्वित्वोपपत्तेः; द्वे ह्येते क्रिये, भोक्ष्यमाणस्य भुक्तवतश्च यत् आचमनं स्मृतिविहितम्, तत् प्रायत्यार्थं भवति क्रियामात्रमेव; न तु तत्र प्रायत्यं दर्शनादि अपेक्षते, तत्र च आचमनाङ्गभूतास्वप्सु वासोविज्ञानं प्राणस्य इतिकर्तव्यतया चोद्यते, न तु तस्मिन्क्रियमाणे आचमनस्य प्रायत्यार्थता बाध्यते, क्रियान्तरत्वादाचमनस्य। तस्मात् भोक्ष्यमाणस्य भुक्तवतश्च यत् आचमनम्, तत्र आपो वासः प्राणस्येति दर्शनमात्रं विधीयते, अप्राप्तत्वादन्यतः॥

इति षष्ठाध्यायस्य प्रथमं ब्राह्मणम्॥

# द्वितीयं ब्राह्मणम् ॥

श्वेतकेतुर्ह वा आरुणेय इत्यस्य संबन्धः। खिलाधिकारोऽयम्; तत्र यदनुक्तं तदुच्यते। सप्तमाध्यायान्ते ज्ञानकर्मसमुच्चयकारिणा अग्नेर्मार्गयाचनं कृतम्— अग्ने नय सुपथेति। तत्र अनेकेषां पथां सद्भावः मन्त्रेण सामर्थ्यात्प्रदर्शितः, सुपथेति विशेषणात्। पन्थानश्च कृतविपाकप्रतिपत्तिमार्गाः; वक्ष्यति च 'यत्कृत्वा' इत्यादि। तत्र च कति कर्मविपाकप्रतिपत्तिमार्गा इति सर्वसंसारगत्युपसंहारार्थोऽयमारम्भः— एतावती हि संसारगतिः, एतावान् कर्मणो विपाकः स्वाभाविकस्य शास्त्रीयस्य च सविज्ञानस्येति। यद्यपि 'द्वया ह प्राजापत्याः' इत्यत्र स्वाभाविकः पाप्मा सूचितः, न च तस्येदं कार्यमिति विपाकः प्रदर्शितः; शास्त्रीयस्यैव तु विपाकः प्रदर्शितः त्र्यन्नात्मप्रतिपत्त्यन्तेन, ब्रह्मविद्यारम्भे तद्वैराग्यस्य विवक्षितत्वात्। तत्रापि केवलेन कर्मणा पितृलोकः, विद्यया विद्यासंयुक्तेन च कर्मणा देवलोक इत्युक्तम्। तत्र केन मार्गेण पितृलोकं प्रतिपद्यते, केन वा देवलोकमिति नोक्तम्। तच्च इह खिलप्रकरणे अशेषतो वक्तव्यमित्यत आरभ्यते। अन्ते च सर्वोपसंहारः शास्त्र-

स्येष्टः । अपि च एतावदमृतत्वमित्युक्तम्, न कर्मणः अमृतत्वाशा अस्तीति च; तत्र हेतुः नोक्तः; तदर्थश्चायमारम्भः । यस्मात् इयं कर्मणो गतिः, न नित्येऽमृतत्वे व्यापारोऽस्ति, तस्मात् एतावदेवामृतत्वसाधनमिति सामर्थ्यात् हेतुत्वं संपद्यते । अपि च उक्तमग्निहोत्रे— न त्वेवैतयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थेति; तत्र प्रतिवचने 'ते वा एते आहुती हुते उत्क्रामतः' इत्यादिना आहुतेः कार्यमुक्तम्; तच्चैतत् कर्तुः आहुतिलक्षणस्य कर्मणः फलम्; न हि कर्तारमनाश्रित्य आहुतिलक्षणस्य कर्मणः स्वातन्त्र्येण उत्क्रान्त्यादिकार्यारम्भ उपपद्यते, कर्त्रर्थत्वात्कर्मणः कार्यारम्भस्य, साधनाश्रयत्वाच्च कर्मणः; तत्र अग्निहोत्रस्तुत्यर्थत्वात् अग्निहोत्रस्यैव कार्यमित्युक्तं षट्प्रकारमपि; इह तु तदेव कर्तुः फलमित्युपदिश्यते षट्प्रकारमपि, कर्मफलविज्ञानस्य विवक्षितत्वात् । तद्द्वारेण च पञ्चाग्निदर्शनम् इह उत्तरमार्गप्रतिपत्तिसाधानं विधित्सितम् । एवम्, अशेषसंसारगत्युपसंहारः, कर्मकाण्डस्य एषा निष्ठा— इत्येतद्द्वयं दिदर्शयिषुः आख्यायिकां प्रणयति ॥

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां**

**परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति स भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥**

श्वेतकेतुः नामतः, अरुणस्यापत्यम् आरुणिः, तस्यापत्यम आरुणेयः ; ह-शब्दः ऐतिह्यार्थः ; वै निश्चयार्थः ; पित्रा अनुशिष्टः सन् आत्मनो यशःप्रथनाय पञ्चालानां परिषदमाजगाम, पञ्चालाः प्रसिद्धा , तेषां परिषदमागत्य, जित्वा, राज्ञोऽपि परिषदं जेष्यामीति गर्वेण स आजगाम ; जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणम् आत्मनः परिचरणं कारयन्तमित्येतत् , स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा, विनेतव्योऽयमिति मत्वा, तमुदीक्ष्य उत्प्रेक्ष्य आगतमात्रमेव अभ्युवाद अभ्युक्तवान् , कुमारा३ इति संबोध्य ; भर्त्सनार्था प्लुतिः । एवमुक्त. सः प्रतिशुश्राव— भो३ इति । भो३ इति अप्रतिरूपमपि क्षत्रियं प्रति उक्तवान् क्रुद्धः सन् । अनुशिष्टः अनुशासितोऽसि भवसि किं पित्रा— इत्युवाच राजा । प्रत्याह इतरः—ओमिति, बाढमनुशिष्टोऽस्मि, पृच्छ यदि संशयस्ते ॥

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच वेत्थो यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता ३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्याꣳ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥ २ ॥

यद्येवम्, वेत्थ विजानासि किम्, यथा येन प्रकारेण इमाः प्रजाः प्रसिद्धाः, प्रयत्यः म्रियमाणाः, विप्रतिपद्यन्ता३ इति विप्रतिपद्यन्ते ; विचारणार्था प्लुतिः ; समानेन मार्गेण

गच्छन्तीनां मार्गद्वैविध्यं यत्र भवति, तत्र काश्चित्प्रजा अन्येन मार्गेण गच्छन्ति काश्चिदन्येनेति विप्रतिपत्तिः; यथा ताः प्रजा विप्रतिपद्यन्ते, तत् किं वेत्थेत्यर्थः । नेति होवाच इतरः । तर्हि वेत्थ उ यथा इमं लोकं पुनः आपद्यन्ता३ इति, पुनरापद्यन्ते, यथा पुनरागच्छन्ति इमं लोकम् । नेति हैवोवाच श्वेतकेतुः । वेत्थ उ यथा असौ लोक एवं प्रसिद्धेन न्यायेन पुनः पुनरसकृत् प्रयद्भिः म्रियमाणैः यथा येन प्रकारेण न संपूर्यता३ इति, न संपूर्यतेऽसौ लोकः, तत्किं वेत्थ । नेति हैवोवाच । वेत्थ उ यतिथ्यां यत्संख्याकायाम् आहुत्याम् आहुतौ हुतायम् आपः पुरुषवाचः, पुरुषस्य या वाक् सैव यासां वाक्, ताः पुरुषवाचो भूत्वा पुरुषशब्दवाच्या वा भूत्वा; यदा पुरुषाकारपरिणताः, तदा पुरुषवाचो भवन्ति; समुत्थाय सम्यगुत्थाय उद्भूताः सत्यः वदन्ती३ इति । नेति हैवोवाच । यद्येवं वेत्थ उ देवयानस्य पथो मार्गस्य प्रतिपदम्, प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपदम्, पितृयाणस्य वा प्रतिपदम्; प्रतिपच्छब्दवाच्यमर्थमाह– यत्कर्म कृत्वा यथाविशिष्टं कर्म कृत्वेत्यर्थः, देवयानं वा पन्थानं मार्गं प्रतिपद्यन्ते, पितृयाणं वा यत्कर्म कृत्वा प्रतिपद्यन्ते, तत्कर्म प्रतिपदुच्यते; तां प्रतिपदं

किं वेत्थ, देवलोकपितृलोकप्रतिपत्तिसाधनं किं वेत्थेत्यर्थः । अप्यत्र अस्यार्थस्य प्रकाशकम् ऋषेः मन्त्रस्य वचः वाक्यम् नः श्रुतमस्ति, मन्त्रोऽपि अस्यार्थस्य प्रकाशको विद्यत इत्यर्थः । कोऽसौ मन्त्र इत्युच्यते— द्वे सृती द्वौ मार्गावश्रृणवं श्रुतवानस्मि; तयोः एका पितृणां प्रापिका पितृलोकसंबद्धा, तया सृत्या पितृलोकं प्राप्नोतीत्यर्थः; अहमश्रृणवमिति व्यवहितेन संबन्धः; देवानाम् उत अपि देवानां संबन्धिनी अन्या, देवान्प्रापयति सा । के पुनः उभाभ्यां सृतिभ्यां पितॄन् देवांश्च गच्छन्तीत्युच्यते— उत अपि मर्त्यानां मनुष्याणां संबन्धिन्यौ; मनुष्या एव हि सृतिभ्यां गच्छन्तीत्यर्थः । ताभ्यां सृतिभ्याम् इदं विश्वं समस्तम् एजत् गच्छन् समेति संगच्छते । ते च द्वे सृती यदन्तरा ययोरन्तरा यदन्तरा, पितरं मातरं च, मातापित्रोः अन्तरा मध्ये इत्यर्थः । कौ तौ मातापितरौ? द्यावापृथिव्यौ अण्डकपाले; 'इयं वै माता असौ पिता' इति हि व्याख्यातं ब्राह्मणेन । अण्डकपालयोर्मध्ये संसारविषये एव एते सृती, न आत्यन्तिकामृतत्वगमनाय । इतर आह— न अहम् अतः अस्मात् प्रश्नसमुदायात् एकंचन एकमपि प्रश्नम्, न वेद, नाहं वेदेति होवाच श्वेतकेतुः ॥

**अथैनं वसत्योपमन्त्रयांचक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳ होवाचेति वाव किल नो भवान्पुरानुशिष्टानवोच इति कथꣳ सुमेध इति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकंचन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥**

अथ अनन्तरम् अपनीय विद्याभिमानगर्वम् एनं प्रकृतं श्वेतकेतुम्, वसत्या वसतिप्रयोजनेन उपमन्त्रयांचक्रे; इह वसन्तु भवन्तः, पाद्यमर्घ्यं च आनीयताम्— इत्युपमन्त्रणं कृतवान्राजा। अनादृत्य तां वसतिं कुमारः श्वेतकेतुः प्रदुद्राव प्रतिगतवान् पितरं प्रति। स च आजगाम पितरम्, आगत्य च उवाच तम्, कथमिति— वाव किल एवं किल, नः अस्मान् भवान् पुरा समावर्तनकाले अनुशिष्टान् सर्वाभिर्विद्याभिः अवोचः अवोचदिति। सोपालम्भं पुत्रस्य वचः श्रुत्वा आह पिता— कथं केन प्रकारेण तव दुःखमुपजातम्, हे सुमेधः, शोभना मेधा यस्येति सुमेधाः। शृणु, मम यथा वृत्तम्; पञ्च पञ्चसंख्याकान् प्रश्नान् मा मां राजन्यबन्धुः

राजन्या बन्धवो यस्येति; परिभववचनमेतत् राजन्यबन्धु-रिति; अप्राक्षीत् पृष्टवान्; ततः तस्मात् न एकंचन एकमपि न वेद न विज्ञातवानस्मि । कतमे ते राज्ञा पृष्टाः प्रश्ना इति पित्रा उक्तः पुत्रः 'इमे ते' इति ह प्रतीकानि मुखानि प्रश्नानाम् उदाजहार उदाहृतवान् ॥

**स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किंच वेद सर्वमहं तत्तुभ्य-मवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं व-त्स्याव इति भवानेव गच्छत्विति स आ-जगाम गौतमो यत्र प्रवाहणस्य जैवले-रास तस्मा आसनमाहृत्योदकमाहार-यांचकाराथ हास्मा अर्घ्यं चकार तँ होवाच वरं भगवते गौतमाय दद्म इति ॥**

स होवाच पिता पुत्रं क्रुद्धमुपशमयन्—तथा तेन प्रकारेण नः अस्मान् त्वम्, हे तात वत्स, जानीथा गृह्णीथाः, यथा यदहं किंच विज्ञानजातं वेद सर्वं तत् तुभ्यम् अवोचम् इत्येव जानीथाः; कोऽन्यो मम प्रियतरोऽस्ति त्वत्तः, यदर्थं रक्षिष्ये; अहमपि एतत् न जानामि, यत् राज्ञा पृष्टम्;

तस्मान् प्रेहि आगच्छ; तत्र प्रतीत्य गत्वा राज्ञि ब्रह्मचर्यं वत्स्यावो विद्यार्थमिति । स आह– भवानेव गच्छत्विति, नाहं तस्य मुखं निरीक्षितुमुत्सहे । स आजगाम, गौतमः गोत्रतो गौतमः, आरुणिः, यत्र प्रवाहणस्य जैवलेरास आसनम् आख्यायिका; षष्ठीद्वयं प्रथमास्थाने; तस्मै गौतमाय आगताय आसनम् अनुरूपम् आहृत्य उदकं भृत्यैराहारयांचकार; अथ ह अस्मै अर्घ्यं पुरोधसा कृतवान् मन्त्रवत्, मधुपर्कं च । कृत्वा चैवं पूजां तं होवाच– वरं भगवते गौतमाय तुभ्यं दद्म इति गोश्वादिलक्षणम् ॥

**स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥**

स होवाच गौतमः– प्रतिज्ञातः मे मम एष वरः त्वया; अस्यां प्रतिज्ञायां दृढीकुरु आत्मानम्; यां तु वाचं कुमारस्य मम पुत्रस्य अन्ते समीपे वाचमभाषथाः प्रश्नरूपाम्, तामेव मे ब्रूहि; स एव नो वर इति ॥

**स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥**

स होवाच राजा— दैवेषु वरेषु तद्वै गौतम, यत् त्वं प्रार्थयसे ; मानुषाणामन्यतमं प्रार्थय वरम् ॥

**स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिदानस्य मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ॥ ७ ॥**

स होवाच गौतमः— भवतापि विज्ञायते ह ममास्ति सः ; न तेन प्रार्थितेन कृत्यं मम, यं त्वं दित्ससि मानुषं वरम् ; यस्मात् ममाप्यस्ति हिरण्यस्य प्रभूतस्य अपात्तं प्राप्तम् ; गोअश्वानाम् अपात्तमस्तीति सर्वत्रानुषङ्गः ; दासीनाम्, प्रवाराणां परिवाराणाम्, परिधानस्य च ; न च यत् मम विद्यमानम्, तत् त्वत्तः प्रार्थनीयम्, त्वया वा देयम् ; प्रतिज्ञातश्च वरः त्वया ; त्वमेव जानीषे, यदत्र युक्तम्, प्रतिज्ञा रक्षणीया तवेति ; मम पुनः अयमभिप्रायः—मा भूत् नः अस्मान् अभि, अस्मानेव केवलान्प्रति, भवान् सर्वत्र वदान्यो

भूत्वा, अवदान्यो मा भून् कदर्यो मा भूदित्यर्थः; बहोः प्रभूतस्य, अनन्तस्य अनन्तफलस्येत्येतत्, अपर्यन्तस्य अपरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्येत्येतत्, ईदृशस्य वित्तस्य, मां प्रत्येव केवलम् अदाता मा भूद्भवान्; न च अन्यत्र अदेयमस्ति भवतः। एवमुक्त आह—स त्वं वै हे गौतम तीर्थेन न्यायेन शास्त्रविहितेन विद्यां मत्तः इच्छासै इच्छ अन्वाप्तुम्; इत्युक्तो गौतम आह— उपैमि उपगच्छामि शिष्यत्वेन अहं भवन्तमिति। वाचा ह स्मैव किल पूर्वे ब्राह्मणाः क्षत्रियान् विद्यार्थिनः सन्तः वैश्यान्वा, क्षत्रिया वा वैश्यान् आपदि उपयन्ति शिष्यवृत्त्या हि उपगच्छन्ति, न उपायनशुश्रूषादिभिः; अतः स गौतमः ह उपायनकीर्त्या उपगमनकीर्तनमात्रेणैव उवास उषितवान्, न उपायनं चकार॥

**स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति॥ ८॥**

एवं गौतमेन आपदन्तरे उक्ते, स होवाच राजा पीडितं

मत्वा क्षामयन्— तथा नः अस्मान् प्रति, मा अपराधाः अपराधं मा कार्षीः, अस्मदीयोऽपराधः न ग्रहीतव्य इत्यर्थः; तव च पितामहाः अस्मत्पितामहेषु यथा अपराधं न जगृहुः, तथा पितामहानां वृत्तम् अस्मास्वपि भवता रक्षणीयमित्यर्थः । यथा इयं विद्या त्वया प्रार्थिता इतः त्वत्संप्रदानात्पूर्वम् प्राक् न कस्मिन्नपि ब्राह्मणे उवास उषितवती, तथा त्वमपि जानीषे; सर्वदा क्षत्रियपरम्परया इयं विद्या आगता; सा स्थितिः मयापि रक्षणीया, यदि शक्यते इति– उक्तम् 'दैवेषु गौतम तद्वरेषु मानुषाणां ब्रूहि' इति; न पुनः तव अदेयो वर इति; इतः परं न शक्यते रक्षितुम्; तामपि विद्याम् अहं तुभ्यं वक्ष्यामि । को हि अन्योऽपि हि यस्मात् एवं ब्रुवन्तं त्वाम् अर्हति प्रत्याख्यातुम्– न वक्ष्यामीति; अहं पुनः कथं न वक्ष्ये तुभ्यमिति ॥

**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥**

असौ वै लोकोऽग्निर्गौतमेत्यादि— चतुर्थः प्रश्नः प्राथम्येन निर्णीयते; क्रमभङ्गस्तु एतन्निर्णयायत्तत्वादितरप्रश्ननिर्णयस्य। असौ द्यौर्लोकः अग्निः हे, गौतम; द्युलोके अग्निदृष्टिः अनग्नौ विधीयते, यथा योषित्पुरुषयोः; तस्य द्युलोकाग्नेः आदित्य एव समित्, समिन्धनात्; आदित्येन हि समिध्यते असौ लोकः; रश्मयो धूमः, समिध उत्थानसामान्यात्; आदित्याद्धि रश्मयो निर्गताः, समिधश्च धूमो लोके उत्तिष्ठति; अहः अर्चिः, प्रकाशसामान्यात्; दिशः अङ्गाराः, उपशमसामान्यात्; अवान्तरदिशो विस्फुलिङ्गाः, विस्फुलिङ्गवद्विक्षेपात्; तस्मिन् एतस्मिन् एवंगुणविशिष्टे द्युलोकाग्नौ, देवाः इन्द्रादयः, श्रद्धां जुह्वति आहुतिद्रव्यस्थानीयां प्रक्षिपन्ति; तस्या आहुत्याः आहुतेः सोमो राजा पितॄणां ब्राह्मणानां च संभवति। तत्र के देवाः कथं जुह्वति किं वा श्रद्धाख्यं हविरित्यतः उक्तमस्माभिः संबन्धे; 'नत्वेवैनयोस्त्वमुत्क्रान्तिम्' इत्यादिपदार्थषट्कनिर्णयार्थम् अग्निहोत्रे उक्तम्; 'ते वा एते अग्निहोत्राहुती हुते सत्यावुत्क्रामतः', 'ते अन्तरिक्षमाविशतः', 'ते अन्तरिक्षमाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिम्', 'ते अन्तरिक्षं तर्पयतः', 'ते तत उत्क्रामतः',

'ते दिवमाविशतः', 'ते दिवमाहवनीयं कुर्वाते आदित्यं समिधम्' इत्येवमादि उक्तम्। तत्र अग्निहोत्राहुती ससाधने एव उत्क्रामतः। यथा इह यैः साधनैर्विशिष्टे ये ज्ञायेते आहवनीयाग्निसमिद्धूमाङ्गारविस्फुलिङ्गाहुतिद्रव्यैः, ते तथैव उत्क्रामतः अस्माल्लोकात् अमुं लोकम्। तत्र अग्निः अग्नित्वेन, समित् समित्त्वेन, धूमो धूमत्वेन, अङ्गाराः अङ्गारत्वेन, विस्फुलिङ्गा विस्फुलिङ्गत्वेन, आहुतिद्रव्यमपि पयआद्याहुतिद्रव्यत्वेनैव सर्गादौ अव्याकृतावस्थायामपि परेण सूक्ष्मेण आत्मना व्यवतिष्ठते। तत् विद्यमानमेव ससाधनम् अग्निहोत्रलक्षणं कर्म अपूर्वेणात्मना व्यवस्थितं सत्, तत्पुनः व्याकरणकाले तथैव अन्तरिक्षादीनाम् आहवनीयाद्यग्न्यादिभावं कुर्वत् विपरिणमते। तथैव इदानीमपि अग्निहोत्राख्यं कर्म। एवम् अग्निहोत्राहुत्यपूर्वपरिणामात्मकं जगत् सर्वमिति आहुत्योरेव स्तुत्यर्थत्वेन उत्क्रान्त्याद्याः लोकं प्रत्युत्थायितान्ताः षट् पदार्थाः कर्मप्रकरणे अधस्तान्निर्णीताः। इह तु कर्तुः कर्मविपाकविवक्षायां द्युलोकाग्न्याद्यारभ्य पञ्चाग्निदर्शनम् उत्तरमार्गप्रतिपत्तिसाधनं विशिष्टकर्मफलोपभोगाय विधित्सितमिति द्युलोकाग्न्यादिदर्शनं प्रस्तूयते। तत्र ये आध्यात्मिकाः प्राणाः इह अग्निहोत्रस्य होतारः, ते एव आ-

धिदैविकत्वेन परिणताः सन्तः इन्द्रादयो भवन्ति; त एव तत्र होतारो द्युलोकाग्नौ; ते च इह अग्निहोत्रस्य फलभोगाय अग्निहोत्रं हुतवन्तः; ते एव फलपरिणामकालेऽपि तत्फलभोक्तृत्वात् तत्र तत्र होतृत्वं प्रतिपद्यन्ते, तथा तथा विपरिणममाना देवशब्दवाच्याः सन्तः। अत्र च यत् पयोद्रव्यम् अग्निहोत्रकर्माश्रयभूतम् इह आहवनीये प्रक्षिप्तम् अग्निना भक्षितम् अदृष्टेन सूक्ष्मेण रूपेण विपरिणतम् सह कर्त्रा यजमानेन अमुं लोकम् धूमादिक्रमेण अन्तरिक्षम् अन्तरिक्षात् द्युलोकम् आविशति; ताः सूक्ष्मा आपः आहुतिकार्यभूता अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्तुः शरीरान्तरारम्भाय द्युलोकं प्रविशन्त्यः हूयन्त इत्युच्यन्ते; ताः तत्र द्युलोकं प्रविश्य सोममण्डले कर्तुः शरीरमारभन्ते। तदेतदुच्यते— 'देवाः श्रद्धां जुह्वति, तस्या आहुत्यै सोमो राजा संभवति' इति, 'श्रद्धा वा आपः' इति श्रुतेः। 'वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ति' इति प्रश्नः; तस्य च निर्णयविषये 'असौ वै लोकोऽग्निः' इति प्रस्तुतम्; तस्मात् आपः कर्मसमवायिन्यः कर्तुः शरीरारम्भिकाः श्रद्धाशब्दवाच्या इति निश्चीयते। भूयस्त्वात् 'आपः पुरुषवाचः' इति व्यपदेशः, न तु

इतराणि भूतानि न सन्तीति; कर्मप्रयुक्तश्च शरीरारम्भ:; कर्म च अप्समवायि; ततश्च अपां प्राधान्यं शरीरकर्तृत्वे; तेन च 'आप: पुरुषवाच:' इति व्यपदेश:; कर्मकृतो हि जन्मारम्भ: सर्वत्र। तत्र यद्यपि अग्निहोत्राहुतिस्तुतिद्वारेण उत्क्रान्त्यादय. प्रस्तुता: षट्पदार्था अग्निहोत्रे, तथापि वैदिकानि सर्वाण्येव कर्माणि अग्निहोत्रप्रभृतीनि लक्ष्यन्ते; दाराग्निसंबद्धं हि पाङ्क्तं कर्म प्रस्तुत्योक्तम्— 'कर्मणा पितृलोक:' इति; वक्ष्यति च— 'अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति' इति ॥

**पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥**

पर्जन्यो वा अग्निर्गौतम, द्वितीय आहुत्याधार: आहुत्योरावृत्तिक्रमेण। पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवतात्मा। तस्य संवत्सर एव समित्; संवत्सरेण हि शरदादिभिर्ग्रीष्मान्तै: स्वावयवैर्विपरिवर्तमानेन पर्जन्योऽग्निर्दीप्यते ।

अभ्राणि धूमः, धूमप्रभवत्वात् धूमवदुपलक्ष्यत्वाद्वा । विद्युत् अर्चिः, प्रकाशसामान्यात् । अशनिः अङ्गाराः, उपशान्तकाठिन्यसामान्याभ्याम् । ह्रादुनयः ह्लादुनयः स्तनयित्नुशब्दाः विस्फुलिङ्गाः, विक्षेपानेकत्वसामान्यात् । तस्मिन्नेतस्मिन्निति आहुत्यधिकरणनिर्देशः । देवा इति, ते एव होतारः सोमं राजानं जुह्वति; योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायामभिनिर्वृत्तः सोमः, स द्वितीये पर्जन्याग्नौ हूयते; तस्याश्च सोमाहुतेर्वृष्टिः संभवति ॥

**अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नꣳ संभवति ॥ ११ ॥**

अयं वै लोकोऽग्निर्गौतम । अयं लोक इति प्राणिजन्मोपभोगाश्रयः क्रियाकारकफलविशिष्टः, स तृतीयोऽग्निः । तस्याग्नेः पृथिव्येव समित्; पृथिव्या हि अयं लोकः अनेकप्राण्युपभोगसंपन्नया समिध्यते । अग्निः धूमः, पृथिव्याश्रयोत्थानसामान्यात्; पार्थिवं हि इन्धनद्रव्यम् आश्रित्य अग्निः

उत्तिष्ठति, यथा समिदाश्रयेण धूमः । रात्रिः अर्चिः, समित्संबन्धप्रभवसामान्यात्; अग्नेः समित्संबन्धेन हि अर्चिः संभवति, तथा पृथिवीसमित्संबन्धेन शर्वरी; पृथिवीछायां हि शार्वरं तम आचक्षते । चन्द्रमा अङ्गाराः, तत्प्रभवत्वसामान्यात्; अर्चिषो हि अङ्गाराः प्रभवन्ति, तथा रात्रौ चन्द्रमाः; उपशान्तत्वसामान्याद्वा । नक्षत्राणि विस्फुलिङ्गाः, विस्फुलिङ्गवद्विक्षेपसामान्यात् । तस्मिन्नेतस्मिन्नित्यादि पूर्ववत् । वृष्टिं जुह्वति, तस्या आहुतेः अन्नं संभवति, वृष्टिप्रभवत्वस्य प्रसिद्धत्वात् व्रीहियवादेरन्नस्य ॥

**पुरुषो वा अग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ॥ १२ ॥**

पुरुषो वा अग्निर्गौतम; प्रसिद्धः शिरःपाण्यादिमान् पुरुषः चतुर्थोऽग्निः तस्य व्यात्तं विवृतं मुखं समित्; विवृतेन हि मुखेन दीप्यते पुरुषः वचनस्वाध्यायादौ, यथा समिधा अग्निः । प्राणो धूमः तदुत्थानसामान्यात्; मुखाद्धि

प्राण उत्तिष्ठति । वाक् शब्दः अर्चिः व्यञ्जकत्वसामान्यात्; अर्चिश्च व्यञ्जकम्, तथा वाक् शब्दः अभिधेयव्यञ्जकः । चक्षुः अङ्गाराः, उपशमसामान्यात् प्रकाशाश्रयत्वाद्वा । श्रोत्रं विस्फुलिङ्गाः, विक्षेपसामान्यात् । तस्मिन् अन्नं जुह्वति । ननु नैव देवा अन्नमिह जुह्वतो दृश्यन्ते— नैष दोषः, प्राणानां देवत्वोपपत्तेः; अधिदैवम् इन्द्रादयो देवाः; ते एव अध्यात्मं प्राणाः; ते च अन्नस्य पुरुषे प्रक्षेप्तारः; तस्या आहुतेः रेतः संभवति; अन्नपरिणामो हि रेतः ॥

**योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः संभवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥**

योषा वा अग्निर्गौतम । योषेति स्त्री पञ्चमो होमाधिकरणम् अग्निः तस्याः उपस्थ एव समित्; तेन हि सा समिध्यते । लोमानि धूमः, तदुत्थानसामान्यात् । योनिः अर्चिः, वर्णसामान्यात् । यदन्तः करोति, तेऽङ्गाराः; अन्तः-

करणं मैथुनव्यापारः, तेऽङ्गाराः, वीर्योपशमहेतुत्वसामान्यात्; वीर्याद्युपशमकारणं मैथुनम्, तथा अङ्गारभावः अग्नेरुपशमकारणम् । अभिनन्दाः सुखलवाः क्षुद्रत्वसामान्यात् विस्फुलिङ्गाः । तस्मिन् रेतो जुह्वति । तस्या आहुतेः पुरुषः संभवति । एवं द्युपर्जन्यायंलोकपुरुषयोषाग्निषु क्रमेण हूयमानाः श्रद्धासोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते । यः प्रश्नः चतुर्थः 'वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३' इति, स एष निर्णीतः— पञ्चम्यामाहुतौ योषाग्नौ हुतायां रेतोभूता आपः पुरुषवाचो भवन्तीति । स पुरुषः एवं क्रमेण जातो जीवति; कियन्तं कालमित्युच्यते— यावज्जीवति यावदस्मिन् शरीरे स्थितिनिमित्तं कर्म विद्यते, तावदित्यर्थः । अथ तत्क्षये यदा यस्मिन्काले म्रियते ॥

**अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥१४॥**

अथ तदा एनं मृतम् अग्नये अग्न्यर्थमेव अन्त्याहुत्यै हरन्ति ऋत्विजः; तस्य आहुतिभूतस्य प्रसिद्धः अग्निरेव होमाधिकरणम्, न परिकल्प्योऽग्निः; प्रसिद्धैव समित् समित्; धूमो धूमः; अर्चिः अर्चिः; अङ्गारा अङ्गाराः; विस्फुलिङ्गा विस्फुलिङ्गाः; यथाप्रसिद्धमेव सर्वमित्यर्थः। तस्मिन् पुरुषम् अन्त्याहुतिं जुह्वति; तस्यै आहुत्यै आहुतेः, पुरुषः भास्वरवर्णः अतिशयदीप्तिमान्, निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिः संस्कृतत्वात्, संभवति निष्पद्यते ॥

**ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १५ ॥**

इदानीं प्रथमप्रश्ननिराकरणार्थमाह— ते; के? ये एवं

यथोक्तं पञ्चाग्निदर्शनमेतत् विदुः; एवंशब्दात् अग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टाः; तान् एवम् एतान् पञ्चाग्नीन् विदुरित्यर्थः ॥

ननु अग्निहोत्राहुतिदर्शनविषयमेव एतद्दर्शनम्; तत्र हि उक्तम् उत्क्रान्त्यादिपदार्थषट्कनिर्णये 'दिवमेवाहवनीयं कुर्वाते' इत्यादि; इहापि अमुष्य लोकस्याग्नित्वम्, आदित्यस्य च समित्त्वमित्यादि बहु साम्यम्; तस्मात् तच्छेषमेव एतद्दर्शनमिति—न, यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहात्; यतिथ्यामित्यस्य प्रश्नस्य प्रतिवचनस्य यावदेव परिग्रहः, तावदेव एवंशब्देन परामष्टुं युक्तम्, अन्यथा प्रश्नानर्थक्यात्; निर्ज्ञातत्वाच्च संख्यायाः अग्नय एव वक्तव्याः; अथ निर्ज्ञातमप्यनूद्यते, यथाप्राप्तस्यैव अनुवदनं युक्तम्, न तु 'असौ लोकोऽग्निः' इति; अथ उपलक्षणार्थः, तथापि आद्येन अन्त्येन च उपलक्षणं युक्तम्। श्रुत्यन्तराच्च; समाने हि प्रकरणे छान्दोग्यश्रुतौ 'पञ्चाग्नीन्वेद' इति पञ्चसंख्याया एवोपादानात् अनग्निहोत्रशेषम् एतत् पञ्चाग्निदर्शनम्। यत्तु अग्निसमिदादिसामान्यम्, तत् अग्निहोत्रस्तुत्यर्थमित्यवोचाम; तस्मात् न उत्क्रान्त्यादिपदार्थषट्कपरिज्ञानात् अर्चिरादिप्रतिपत्तिः, एवमिति प्र-

कृतोपादानेन अर्चिरादिप्रतिपत्तिविधानात् ॥

के पुनस्ते, ये एवं विदुः? गृहस्था एव। ननु तेषां यज्ञादिसाधनेन धूमादिप्रतिपत्तिः विधित्सिता— न, अनेवंविदामपि गृहस्थानां यज्ञादिसाधनोपपत्तेः, भिक्षुवानप्रस्थयोश्च अरण्यसंबन्धेन ग्रहणात्, गृहस्थकर्मसंबद्धत्वाच्च पञ्चाग्निदर्शनस्य। अतः नापि ब्रह्मचारिणः 'एवं विदुः' इति गृह्यन्ते; तेषां तु उत्तरे पथि प्रवेशः स्मृतिप्रामाण्यात्— 'अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम्। उत्तरेणार्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे' इति। तस्मात् ये गृहस्थाः एवम्—अग्निजोऽहम्, अग्न्यपत्यम्— इति, एवम् क्रमेण अग्निभ्यो जातः अग्निरूपः इत्येवम्, ये विदुः, ते च, ये च अमी अरण्ये वानप्रस्थाः परिव्राजकाश्चारण्यनित्याः, श्रद्धां श्रद्धायुक्ताः सन्तः, सत्यं ब्रह्म हिरण्यगर्भात्मानमुपासते, न पुनः श्रद्धां च उपासते, ते सर्वेऽर्चिरभिसंभवन्ति। यावत् गृहस्थाः पञ्चाग्निविद्यां सत्यं वा ब्रह्म न विदुः, तावत् श्रद्धाद्याहुतिक्रमेण पञ्चम्यामाहुतौ हुतायां ततो योषाग्नेर्जाताः, पुनर्लोकं प्रत्युत्थायिनः अग्निहोत्रादिकर्मानुष्ठातारो भवन्ति; तेन कर्मणा धूमादिक्रमेण पुनः पितृलोकम्, पुनः पर्जन्यादिक्रमेण इमम् आवर्तन्ते। ततः पुनर्योषाग्नेर्जाताः पुनः कर्म कृत्वा—इत्येवमेव

घटीयन्त्रवत् गत्यागतिभ्यां पुनः पुनः आवर्तन्ते। यदा तु एवं विदुः, ततो घटीयन्त्रभ्रमणाद्विनिर्मुक्ताः सन्तः अर्चिरभिसंभवन्ति; अर्चिरिति न अग्निज्वालामात्रम्, किं तर्हि अर्चिरभिमानिनी अर्चिःशब्दवाच्या देवता उत्तरमार्गलक्षणा व्यवस्थितैव; तामभिसंभवन्ति; न हि परिव्राजकानाम् अग्न्यर्चिषैव साक्षात्संबन्धोऽस्ति; तेन देवतैव परिगृह्यते अर्चिःशब्दवाच्या। अतः अहर्देवताम्; मरणकालनियमानुपपत्तेः अहःशब्दोऽपि देवतैव; आयुषः क्षये हि मरणम्; न हि एवंविदा अहन्येव मर्तव्यमिति अहः मरणकालो नियन्तुं शक्यते; न च रात्रौ प्रेताः सन्तः अहः प्रतीक्षन्ते, 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति श्रुत्यन्तरात्। अह्न आपूर्यमाणपक्षम्, अहर्देवतया अतिवाहिता आपूर्यमाणपक्षदेवतां प्रतिपद्यन्ते, शुक्लपक्षदेवतामित्येतत्। आपूर्यमाणपक्षात् यान् षण्मासान् उदङ् उत्तरां दिशम् आदित्यः सविता एति, तान्मासान्प्रतिपद्यन्ते शुक्लपक्षदेवतया अतिवाहिताः सन्तः; मासानिति बहुवचनात् संघचारिण्यः षट् उत्तरायणदेवताः; तेभ्यो मासेभ्यः षण्मासदेवताभिरतिवाहिताः देवलोकाभिमानिनीं देवतां प्रतिपद्यन्ते। देवलोकात् आदित्यम्; आदित्यात् वैद्युतं विद्युदभिमानिनीं देवतां

प्रतिपद्यन्ते । विद्युद्देवतां प्राप्तान् ब्रह्मलोकवासी पुरुषः ब्रह्मणा मनसा सृष्टो मानसः कश्चित् एत्य आगत्य ब्रह्मलोकान्गमयति; ब्रह्मलोकानिति अधरोत्तरभूमिभेदेन भिन्ना इति गम्यन्ते, बहुवचनप्रयोगात्, उपासनतारतम्योपपत्तेश्च । ते तेन पुरुषेण गमिताः सन्तः, तेषु ब्रह्मलोकेषु पराः प्रकृष्टाः सन्तः, स्वयं परावतः प्रकृष्टाः समाः संवत्सराननेकान् वसन्ति, ब्रह्मणोऽनेकान्कल्पान्वसन्तीत्यर्थः । तेषां ब्रह्मलोकं गतानां नास्ति पुनरावृत्तिः अस्मिन्संसारे न पुनरागमनम्, 'इह' इति शाखान्तरपाठात्; इहेति आकृतिमात्रग्रहणमिति चेत्, 'श्वोभूते पौर्णमासीम्' इति यद्वत्—न, इहेतिविशेषणानर्थक्यात्, यदि हि नावर्तन्त एव इहग्रहणमनर्थकमेव स्यात्; 'श्वोभूते पौर्णमासीम्' इत्यत्र पौर्णमास्याः श्वोभूतत्वमनुक्तं न ज्ञायत इति युक्तं विशेषयितुम्; न हि तत्र श्वआकृतिः शब्दार्थो विद्यत इति श्वःशब्दो निरर्थक एव प्रयुज्यते; यत्र तु विशेषणशब्दे प्रयुक्ते अन्विष्यमाणे विशेषणफलं चेन्न गम्यते, तत्र युक्तो निरर्थकत्वेन उत्स्रष्टुं विशेषणशब्दः; न तु सत्यां विशेषणफलावगतौ । तस्मात् अस्मात्कल्पादूर्ध्वम् आवृत्तिर्गम्यते ॥

**अथ ये यज्ञेन दानेन तपसा लोकाञ्ज-**

यन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिꣳ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षा-द्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्या-न्नं भवन्ति ताꣳस्तत्र देवा यथा सोमꣳ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाꣳ-स्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेम-मेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्या-न्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान्प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥

अथ पुनः ये नैवं विदुः, उत्क्रान्त्याद्यग्निहोत्रसंबद्धपदा-र्थषट्कस्यैव वेदितारः केवलकर्मिणः, यज्ञेनाग्निहोत्रादिना, दानेन बहिर्वेदि भिक्षमाणेषु द्रव्यसंविभागलक्षणेन, तपसा बहिर्वेद्येव दीक्षादिव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना, लो-कान् जयन्ति; लोकानिति बहुवचनात् तत्रापि फलतार-तम्यमभिप्रेतम् । ते धूममभिसंभवन्ति; उत्तरमार्ग इव इहा-

पि देवता एव धूमादिशब्दवाच्याः, धूमदेवतां प्रतिपद्यन्त इत्यर्थः; आतिवाहिकत्वं च देवतानां तद्वदेव। धूमात् रात्रिं रात्रिदेवताम्, ततः अपक्षीयमाणपक्षम् अपक्षीयमाणपक्ष-देवताम्, ततो यान्षण्मासान् दक्षिणां दिशमादित्य एति तान् मासदेवताविशेषान् प्रतिपद्यन्ते। मासेभ्यः पितृलोकम्, पितृ-लोकाच्चन्द्रम्। ते चन्द्रं प्राप्य अन्नं भवन्ति; तान् तत्रान्नभू-तान्, यथा सोमं राजानमिह यज्ञे ऋत्विजः आप्यायस्व अ-पक्षीयस्वेति भक्षयन्ति, एवम् एनान् चन्द्रं प्राप्तान् कर्मिणः भृत्यानिव स्वामिनः भक्षयन्ति उपभुञ्जते देवाः; 'आप्याय-स्वापक्षीयस्व' इति न मन्त्रः; किं तर्हि आप्याय्य आप्याय्य चमसस्थम्, भक्षणेन अपक्षयं च कृत्वा, पुनः पुनर्भक्षयन्ती-त्यर्थः; एवं देवा अपि सोमलोके लब्धशरीरान् कर्मिणः उप-करणभूतान् पुनः पुनः विश्रामयन्तः कर्मानुरूपं फलं प्रयच्छ-न्तः—तद्धि तेषामाप्यायनं सोमस्य आप्यायनमिव उपभुञ्जते उपकरणभूतान् देवाः। तेषां कर्मिणाम् यदा यस्मिन्काले, तत् यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म, पर्यवैति परि-गच्छति परिक्षीयत इत्यर्थः, अथ तदा इममेव प्रसिद्धमा-काशमभिनिष्पद्यन्ते; यास्ताः श्रद्धाशब्दवाच्या द्युलोकाग्नौ हुता आपः सोमाकारपरिणताः, याभिः सोमलोके कर्मिणामु-

पभोगाय शरीरमारब्धम् अम्मयम्, ताः कर्मक्षयात् हिमपिण्ड इवातपसंपर्कात् प्रविलीयन्ते; प्रविलीनाः सूक्ष्मा आकाशभूता इव भवन्ति; तदिदमुच्यते– 'इममेवाकाशमभिनिष्पद्यन्ते' इति । ते पुनरपि कर्मिणः तच्छरीराः सन्तः पुरोवातादिना इतश्च अमुतश्च नीयन्ते अन्तरिक्षगाः; तदाह— आकाशाद्वायुमिति । वायोर्वृष्टिं प्रतिपद्यन्ते; तदुक्तम्— पर्जन्याग्नौ सोमं राजानं जुह्वतीति । ततो वृष्टिभूता इमां पृथिवीं पतन्ति । ते पृथिवीं प्राप्य व्रीहियवादि अन्नं भवन्ति; तदुक्तम्— अस्मिँल्लोकेऽग्नौ वृष्टिं जुह्वति तस्या आहुत्या अन्नं संभवतीति । ते पुनः पुरुषाग्नौ हूयन्ते अन्नभूता रेतःसिचि; ततो रेतोभूता योषाग्नौ हूयन्ते; ततो जायन्ते; लोकं प्रत्युत्थायिनः ते लोकं प्रत्युत्तिष्ठन्तः अग्निहोत्रादिकर्म अनुतिष्ठन्ति । ततो धूमादिना पुनः पुनः सोमलोकम्, पुनरिमं लोकमिति— ते एवं कर्मिणः अनुपरिवर्तन्ते घटीयन्त्रवत् चक्रीभूता बंभ्रमतीत्यर्थः, उत्तरमार्गाय सद्योमुक्तये वा यावद्ब्रह्म न विदुः; 'इति नु कामयमानः संसरति' इत्युक्तम् । अथ पुनः ये उत्तरं दक्षिणं च एतौ पन्थानौ न विदुः, उत्तरस्य दक्षिणस्य वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानुतिष्ठन्तीत्यर्थः;

ते किं भवन्तीत्युच्यते— ते कीटाः पतङ्गाः, यदिदं यच्चेदं दन्दशूकं दंशमशकमित्येतत्, भवन्ति । एवं हि इयं संसारगतिः कष्टा, अस्यां निमग्नस्य पुनरुद्धार एव दुर्लभः । तथा च श्रुत्यन्तरम्— 'तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्व' इति । तस्मात्सर्वोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानहानेन दक्षिणोत्तरमार्गप्रतिपत्तिसाधनं शास्त्रीयं कर्म ज्ञानं वा अनुतिष्ठेदिति वाक्यार्थः ; तथा चोक्तम्– 'अतो वै खलु दुर्निष्प्रपतरं तस्माज्जुगुप्सेत' इति श्रुत्यन्तरात् मोक्षाय प्रयतेतेत्यर्थः । अत्रापि उत्तरमार्गप्रतिपत्तिसाधन एव महान् यत्नः कर्तव्य इति गम्यते, 'एवमेवानुपरिवर्तन्ते' इत्युक्तत्वात् । एवं प्रश्नाः सर्वे निर्णीताः ; 'असौ वै लोकः' इत्यारभ्य 'पुरुषः संभवति' इति चतुर्थः प्रश्नः 'यतिथ्यामाहुत्याम्' इत्यादिः प्राथम्येन ; पञ्चमस्तु द्वितीयत्वेन देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वेति दक्षिणोत्तरमार्गप्रतिपत्तिसाधनकथनेन ; तेनैव च प्रथमोऽपि—अग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते केचिद्धूममिति विप्रतिपत्तिः ; पुनरावृत्तिश्च द्वितीय. प्रश्नः— आकाशादिक्रमेणेमं लोकमागच्छन्तीति ; तेनैव— असौ लोको न संपूर्यते कीटपतङ्गादिप्रतिपत्तेश्च केषांचिदिति, तृतीयोऽपि प्रश्नो निर्णीतः ॥

इति षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥

## तृतीयं ब्राह्मणम् ॥

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्यावृताज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ संनीय जुहोति । यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् । तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा । या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा ॥ १ ॥

स यः कामयेत । ज्ञानकर्मणोर्गतिरुक्ता; तत्र ज्ञानं स्वतन्त्रम्; कर्म तु दैवमानुषवित्तद्वयायत्तम्; तेन कर्मार्थं वित्तमुपार्जनीयम्; तच्च अप्रत्यवायकारिणोपायेनेति तदर्थं मन्था-

ख्यं कर्म आरभ्यते महत्त्वप्राप्तये; महत्त्वे च सति अर्थसिद्धं हि वित्तम्। तदुच्यते—स यः कामयेत, स यो वित्तार्थी कर्मण्यधिकृतः यः कामयेत; किम्? महन् महत्त्वम् प्राप्नुयाम्, महान्स्यामितीत्यर्थः। तत्र मन्थकर्मणो विधित्सितस्य कालोऽभिधीयते— उदगयने आदित्यस्य; तत्र सर्वत्र प्राप्तौ आपूर्यमाणपक्षस्य शुक्लपक्षस्य; तत्रापि सर्वत्र प्राप्तौ, पुण्याहे अनुकूले आत्मनः कर्मसिद्धिकर इत्यर्थः; द्वादशाहम्, यस्मिन्पुण्येऽनुकूले कर्म चिकीर्षति ततः प्राक् पुण्याहमेवारभ्य द्वादशाहम्, उपसद्व्रती, उपसत्सु व्रतम्, उपसदः प्रसिद्धा ज्योतिष्टोमे, तत्र च स्तनोपचयापचयद्वारेण पयोभक्षणं तद्व्रतम्; अत्र च तत्कर्मानुपसंहारात् केवलमितिकर्तव्यताशून्यं पयोभक्षणमात्रमुपादीयते; ननु उपसदो व्रतमिति यदा विग्रहः, तदा सर्वमितिकर्तव्यतारूपं ग्राह्यं भवति, तत् कस्मात् न परिगृह्यत इत्युच्यते— स्मार्तत्वात्कर्मणः; स्मार्तं हीदं मन्थकर्म। ननु श्रुतिविहितं सत् कथं स्मार्तं भवितुमर्हति— स्मृत्यनुवादिनी हि श्रुतिरियम्; श्रौतत्वे हि प्रकृतिविकारभावः; ततश्च प्राकृतधर्मग्राहित्वं विकारकर्मणः; न तु इह श्रौतत्वम्; अत एव च आवसथ्याग्नौ एतत्कर्म विधीयते, सर्वा च आवृत् स्मार्तैवेति।

उपसद्व्रती भूत्वा पयोव्रती सन्नित्यर्थः औदुम्बरे उदुम्बरवृक्षमये, कंसे चमसे वा, तस्यैव विशेषणम्— कंसाकारे चमसाकरे वा औदुम्बर एव ; आकारे तु विकल्पः, न औदुम्बरत्वे। अत्र सर्वौषधं सर्वासामोषधीनां समूहं यथासंभवं यथाशक्ति च सर्वा ओषधीः समाहृत्य ; तत्र ग्राम्याणां तु दश नियमेन ग्राह्या व्रीहियवाद्या वक्ष्यमाणाः ; अधिकग्रहणे तु न दोषः ; ग्राम्याणां फलानि च यथासंभवं यथाशक्ति च ; इतिशब्दः समस्तसंभारोपचयप्रदर्शनार्थः, अन्यदपि यत्संभरणीयं तत्सर्वं संभृत्येत्यर्थः ; क्रमस्तत्र गृह्योक्तो द्रष्टव्यः। परिसमूहनपरिलेपने भूमिसंस्कारः। अग्निमुपसमाधायेति वचनात् आवसथ्येऽग्नाविति गम्यते, एकवचनात् उपसमाधानश्रवणाच्च ; विद्यमानस्यैव उपसमाधानम् ; परिस्तीर्य दर्भान् ; आवृता— स्मार्तत्वात्कर्मणः स्थालीपाकावृत् परिगृह्यते— तया आज्यं संस्कृत्य ; पुंसा नक्षत्रेण पुंनाम्ना नक्षत्रेण पुण्याहसंयुक्तेन, मन्थं सर्वौषधफलपिष्टं तत्रौदुम्बरे चमसे दधनि मधुनि घृते च उपसिच्य एकया उपमन्थन्या उपसंमथ्य, संनीय मध्ये संस्थाप्य, औदुम्बरेण स्रुवेण आवापस्थाने आज्यस्य जुहोति एतैर्मन्त्रैः 'यावन्तो देवाः' इत्याद्यैः ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति

स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवःस्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्त्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यारभ्य द्वे द्वे आहुती हुत्वा मन्थे संस्रवमवनयति, स्रुवावलेपनमाज्यं मन्थे संस्रावयति । एतस्मादेव ज्येष्ठाय श्रेष्ठायेत्यादिप्राणलिङ्गात् ज्येष्ठश्रेष्ठादिप्राणविद एव अस्मिन् कर्मण्यधिकारः । 'रेतसे' इत्यारभ्य एकैकामाहुतिं हुत्वा मन्थे संस्रवमवनयति, अपरया उपमन्थन्या पुनर्मथ्नाति ॥

अथैनमभिमृशति भ्रमदसि ज्वलद-सि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमस्यु-द्गीयमानमसि श्रावितमसि प्रत्याश्रावि-तमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्य-न्नमसि ज्योतिरसि निधनमसि संवर्गोऽ-सीति ॥ ४ ॥

अथैनमभिमृशति 'भ्रमदसि' इत्यनेन मन्त्रेण ॥

अथैनमुद्यच्छत्यामँस्यामँहि ते म-हि स हि राजेशानोऽधिपतिः स माँ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥

अथैनमुद्यच्छति सह पात्रेण हस्ते गृह्णाति 'आमंस्यामंहि ते महि' इत्यनेन ॥

अथैनमाचामति तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो

मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥ ६ ॥

अथैनम् आचामति भक्षयति, गायत्र्याः प्रथमपादेन मधुमत्या एकया व्याहृत्या च प्रथमया प्रथमग्रासमाचामति ; तथा गायत्रीद्वितीयपादेन मधुमत्या द्वितीयया द्वितीयया च व्याहृत्या द्वितीयं ग्रासम् ; तथा तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया च व्याहृत्या तृतीयं

प्रासम् । सर्वां सावित्रीं सर्वाश्च मधुमतीरुक्त्वा 'अहमेवेदं सर्वं भूयासम्' इति च अन्ते 'भूर्भुवःस्वः स्वाहा' इति समस्तं भक्षयति । यथा चतुर्भिर्ग्रासैः तद्द्रव्यं सर्वं परिसमाप्यते, तथा पूर्वमेव निरूपयेत् । यत् पात्रावलिप्तम्, तत् पात्रं सर्वं निर्णिज्य तूष्णीं पिबेत् । पाणी प्रक्षाल्य आप आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति । प्रातःसंध्यामुपास्य आदित्यमुपतिष्ठते 'दिशामेकपुण्डरीकम्' इत्यनेन मन्त्रेण । यथेतं यथागतम्, एत्य आगत्य जघनेनाग्निम् आसीनो वंशं जपति ॥

**तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥**

**एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥**

**एतमु हैव मधुकः पैङ्ग्यश्चूलाय भाग-**

वित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥

एतमु हैव चूलो भागवित्तिर्जानकाय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥ १२ ॥

'तं हैतमुद्दालकः' इत्यादि । सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वा उवाच— अपि यः एनं शुष्के स्थाणौ निषिञ्चेत्, जायेरन्नेव अस्मिन् शाखाः प्ररोहेयुः पलाशानि— इत्येवमन्तम् एनं मन्थम् उद्दालकात्प्रभृति एकैकाचार्यक्रमागतं सत्यकाम आचार्यो बहुभ्योऽन्तेवासिभ्य उक्त्वोवाच । किमन्यदुवाचेत्युच्यते— अपि यः एनं शुष्के स्थाणौ गतप्राणेऽपि एनं मन्थं भक्षणाय संस्कृतं निषिञ्चेत् प्रक्षिपेत्, जायेरन् उत्पद्येरन्नेव अस्मिन् स्थाणौ शाखा अवयवा वृक्षस्य, प्ररोहेयुश्च पलाशानि पर्णानि, यथा जीवतः स्थाणोः; किमुत अनेन कर्मणा कामः सिध्येदिति; ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतत् । विद्याधिगमे षट् तीर्थानि; तेषामिह सप्राणदर्शनस्य मन्थविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते, पुत्रश्चान्तेवासी च ॥

**चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्तिं व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खल-**

**कुलाश्च नान्पिष्टान्दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥**

**इति तृतीयं ब्राह्मणम् ॥**

चतुरौदुम्बरो भवतीति व्याख्यातम् । दश ग्राम्याणि धान्यानि भवन्ति, ग्राम्याणां तु धान्यानां दश नियमेन ग्राह्या इत्यवोचाम । के त इति निर्दिश्यन्ते— व्रीहि-यवाः, तिलमाषाः, अणुप्रियंगवः अणवश्च अणुशब्दवा-च्याः, कचिद्देशे प्रियंगव. प्रसिद्धाः कङ्गुशब्देन, खल्वा निष्पावाः वल्लशब्दवाच्या लोके, खलकुलाः कुलत्थाः । एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि च— इत्यवोचाम, अयाज्ञिकानि वर्जयित्वा ॥

**इति षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥**

## चतुर्थं ब्राह्मणम् ॥

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

यादृग्जन्मा यथोत्पादितः यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति, तत्संपादनाय ब्राह्मणमारभ्यते। प्राणदर्शिनः श्रीमन्थं कर्म कृतवतः पुत्रमन्थेऽधिकारः। यदा पुत्रमन्थं चिकीर्षति तदा श्रीमन्थं कृत्वा ऋतुकालं पत्न्याः प्रतीक्षत इत्येतत् रेतस ओषध्यादिरसतमत्वस्तुत्या अवगम्यते। एषां वै चराचराणां भूतानां पृथिवी रसः सारभूतः, सर्वभूतानां मध्विति ह्युक्तम्। पृथिव्या आपो रसः, अप्सु हि पृथिव्योता च प्रोता च। अपामोषधयो रसः, कार्यत्वात् रसत्वमोषध्यादीनाम्। ओषधीनां पुष्पाणि। पुष्पाणां फलानि। फलानां पुरुषः। पुरुषस्य रेतः, 'सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्' इति श्रुत्यन्तरात् ॥

**स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥**

यत एवं सर्वभूतानां सारतमम् एतत् रेतः, अतः का नु खल्वस्य योग्या प्रतिष्ठेति स ह स्रष्टा प्रजापतिरीक्षांचक्रे। ईक्षां कृत्वा स स्त्रियं ससृजे। तां च सृष्ट्वा अध उपास्त मैथुनाख्यं कर्म अधउपासनं नाम कृतवान्। तस्मात्स्त्रियमध उपासीत; श्रेष्ठानुश्रयणा हि प्रजाः। अत्र वाजपेयसामान्यक्लृप्तिमाह— स एतं प्राञ्चं प्रकृष्टगतियुक्तम् आत्मनो ग्रावाणं सोमाभिषवोपलस्थानीयं काठिन्यसामान्यात् प्रजननेन्द्रियम्, उदपारयत् उत्पूरितवान् स्त्रीव्यञ्जनं प्रति; तेन एनां स्त्रियम् अभ्यसृजत् अभिसंसर्गं कृतवान् ॥

**तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको**

**भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाꣳ स्त्रीणाꣳ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥**

तस्या वेदिरित्यादि सर्वं सामान्यं प्रसिद्धम् । समिद्धोऽग्निः मध्यतः स्त्रीव्यञ्जनस्य, तौ मुष्कौ अधिषवणफलके इति व्यवहितेन संबध्यते । वाजपेययाजिनो यावान् लोकः प्रसिद्धः, तावान् विदुषः मैथुनकर्मणो लोकः फलमिति स्तूयते । तस्मान् बीभत्सा नो कार्येति । य एवं विद्वानधोपहासं चरति आसां स्त्रीणां सुकृतं वृङ्क्ते आवर्जयति । अथ पुनः यः वाजपेयसंपत्तिं न जानाति अविद्वान् रेतसो रसतमत्वं च अधोपहासं चरति, आ अस्य स्त्रियः सुकृतम् आवृञ्जते अविदुषः ॥

**एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रि-**

**या विसुकृतोऽस्माल्लोकात्प्रयन्ति य इद-मविद्वाꣳसोऽधोपहासं चरन्तीति बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥**

एतद्ध स्म वै तत् विद्वान् उद्दालक आरुणिः आह अधोपहासाख्यं मैथुनकर्म वाजपेयसंपन्नं विद्वानित्यर्थः । तथा नाको मौद्गल्यः कुमारहारितश्च । किं त आहुरित्युच्यते— बह्वो मर्या मरणधर्मिणो मनुष्याः, ब्राह्मणा अयनं येषां ते ब्राह्मणायनाः ब्रह्मबन्धवः जातिमात्रोपजीविन इत्येतत्, निरिन्द्रियाः विश्लिष्टेन्द्रियाः, विसुकृतः विगतसुकृतकर्माणः, अविद्वांसः मैथुनकर्मासक्ता इत्यर्थः; ते किम्? अस्मात् लोकात् प्रयन्ति परलोकात् परिभ्रष्टा इति। मैथुनकर्मणोऽत्यन्तपापहेतुत्वं दर्शयति— य इदमविद्वांसोऽधोपहासं चरन्तीति ॥

श्रीमन्थं कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षते; यदि इदं रेतः स्कन्दति, बहु वा अल्पं वा, सुप्तस्य वा जाग्रतो वा, रागप्राबल्यात्—

**तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसर-**

**ग्यदपः । इदमहं तद्रेत आददे पुनर्मामै-त्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्निर्धि-ष्ण्या यथास्थानं कल्पन्तामित्यनामिका-ङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥**

तदभिमृशेत्, अनुमन्त्रयेत वा अनुजपेदित्यर्थः । यदा अभिमृशति, तदा अनामिकाङ्गुष्ठाभ्यां तद्रेत आदत्ते 'आददे' इत्येवमन्तेन मन्त्रेण; 'पुनर्माम्' इत्येतेन निमृज्यात् अन्तरेण मध्ये भ्रुवौ भ्रुवोर्वा, स्तनौ स्तनयोर्वा ॥

**अथ यद्युदक आत्मानं पश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनी-मभिक्रम्योपमन्त्रयेत ॥ ६ ॥**

अथ यदि कदाचित् उदके आत्मानम् आत्मच्छायां पश्येत्, तत्रापि अभिमन्त्रयेत अनेन मन्त्रेण 'मयि तेजः' इति । श्रीर्ह वा एषा पत्नी स्त्रीणां मध्ये यत् यस्मात् मलो-

द्वासाः उद्गतमलवद्वासाः, तस्मात् तां मलोद्वाससं यशस्विनीं श्रीमतीमभिक्रम्य अभिगत्य उपमन्त्रयेत इदम्— अद्य आवाभ्यां कार्यं यत्पुत्रोत्पादनमिति, त्रिरात्रान्ते आप्लुताम् ॥

**सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्यय' शा एव भवति ॥ ७ ॥**

सा चेदस्मै न दद्यात् मैथुनं कर्तुम्, कामम् एनाम् अवक्रीणीयात् आभरणादिना ज्ञापयेत् । तथापि सा नैव दद्यात्, काममेनां यष्ट्या वा पाणिना वा उपहत्य अतिक्रामेत् मैथुनाय । शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रख्याप्य, तामनेन मन्त्रेणोपगच्छेत्— 'इन्द्रियेण ते यशसा यश आददे' इति । सा तस्मात् तदभिशापात् वन्ध्या दुर्भगेति ख्याता अयशा एव भवति ॥

**सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥**

सा चेदस्मै दद्यात्, अनुगुणैव स्याद्भर्तुः, तदा अनेन मन्त्रेण उपगच्छेत् 'इन्द्रियेण ते यशसा यश आदधामि' इति; तदा यशस्विनावेव उभावपि भवतः ॥

**स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्संभवसि हृदयादधिजायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥ ९ ॥**

स यां स्वभार्यामिच्छेत्— इयं मां कामयेतेति, तस्याम् अर्थं प्रजननेन्द्रियम् निष्ठाय निक्षिप्य, मुखेन मुखं संधाय, उपस्थमस्या अभिमृश्य, जपेदिमं मन्त्रम्— 'अङ्गादङ्गात्' इति ॥

**अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥**

अथ यामिच्छेत्— न गर्भं दधीत न धारयेत् गर्भिणी

मा भूदिति, तस्याम् अर्थमिति पूर्ववत्। अभिप्राण्य अभिप्राणनं प्रथमं कृत्वा, पश्चात् अपान्यात्– 'इन्द्रियेण ते रेतसा रेत आददे' इत्यनेन मन्त्रेण; अरेता एव भवति, न गर्भिणी भवतीत्यर्थः॥

**अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति॥ ११॥**

अथ यामिच्छेत्– दधीत गर्भमिति, तस्यामर्थमित्यादि पूर्ववत्। पूर्वविपर्ययेण अपान्य अभिप्राण्यात् 'इन्द्रियेण ते रेतसा रेत आदधामि' इति; गर्भिण्येव भवति॥

**अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त**

**आददेऽसाविति मम समिद्धेऽहौषीरिष्टा-सुकृते त आददेऽसाविति मम समिद्धे-ऽहौषीराशापराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्मा-ल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति त-स्मादेवंविच्छ्रोत्रियस्य दारेण नोपहास-मिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥**

अथ पुनर्यस्य जायायै जारः उपपतिः स्यात्, तं चेत् द्विष्यात्, अभिचरिष्याम्येनमिति मन्येत, तस्येदं कर्म। आ-मपात्रे अग्निमुपसमाधाय सर्वं प्रतिलोमं कुर्यात्; तस्मिन् अग्नौ एताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषा अक्ताः घृताभ्यक्ताः जुहुयात् 'मम समिद्धेऽहौषीः' इत्याद्या आहुतीः; अन्ते सर्वासाम् असाविति नामग्रहणं प्रत्येकम्; स एषः एवंवित्, यं ब्राह्मणः शपति, सः विसुकृतः विग-तपुण्यकर्मा प्रैति। तस्मात् एवंवित् श्रोत्रियस्य दारेण नो-पहासमिच्छेत् नर्मापि न कुर्यात्, किमुत अधोपहासम्; हि यस्मात् एवंविदपि तावत् परो भवति शत्रुर्भवतीत्यर्थः ॥

**अथ यस्य जायामार्तवं विन्देत्त्र्यहं**

**कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥**

अथ यस्य जायाम् आर्तवं विन्देत् ऋतुभावं प्राप्नुयात्— इत्येवमादिग्रन्थः 'श्रीर्ह वा एषा स्त्रीणाम्' इत्यतः पूर्वं द्रष्टव्यः, सामर्थ्यात् । त्र्यहं कंसेन पिबेत्, अहतवासाश्च स्यात्; नैनां स्नाताम् अस्नातां च वृषलो वृषली वा नोपहन्यात् नोपस्पृशेत् । त्रिरात्रान्ते त्रिरात्रव्रतसमाप्तौ आप्लुत्य स्नात्वा अहतवासाः स्यादिति व्यवहितेन संबन्धः; ताम् आप्लुतां व्रीहीन् अवघातयेत् व्रीह्यवघाताय तामेव विनियुञ्ज्यात् ॥

**स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥**

स य इच्छेत्— पुत्रो मे शुक्लो वर्णतो जायेत, वेदमेकमनुब्रुवीत, सर्वमायुरियात्— वर्षशतं क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् ईश्वरौ समर्थौ जनयितवै जनयितुम् ॥

**अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥**

दध्योदनं दध्ना चरुं पाचयित्वा; द्विवेदं चेदिच्छति पुत्रम्, तदा एवमशननियमः ॥

**अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥**

केवलमेव स्वाभाविकमोदनम् । उदग्रहणम् अन्यप्रसङ्गनिवृत्त्यर्थम् ॥

**अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥**

दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव, वेदेऽनधिकारात् । तिलौदनं कृशरम् ॥

अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्षभेण वा ॥ १८ ॥

विविधं गीतो विगीतः प्रख्यात इत्यर्थः; समितिंगमः सभां गच्छतीति प्रगल्भ इत्यर्थः, पाण्डित्यस्य पृथग्ग्रहणात्; शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रमोदनं मांसौदनम् । तन्मांसनियमार्थमाह— औक्षेण वा मांसेन; उक्षा सेचनसमर्थः पुंगवः, तदीयं मांसम्, ऋषभः ततोऽप्यधिकवयाः, तदीयम् आर्षभं मांसम् ॥

अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्ना-

**ति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सहेति ॥ १९ ॥**

अथाभिप्रातरेव काले अवघातनिर्वृत्तान् तण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिना, आज्यं चेष्टित्वा, आज्यसंस्कारं कृत्वा, चरुं श्रपयित्वा, स्थालीपाकस्य आहुतीः जुहोति, उपघातम् उपहत्योपहत्य 'अग्नये स्वाहा' इत्याद्याः। गार्ह्यः सर्वो विधिः द्रष्टव्यः अत्र ; हुत्वा उद्धृत्य चरुशेषं प्राश्नाति ; स्वयं प्राश्य इतरस्याः पत्न्यै प्रयच्छति उच्छिष्टम् । प्रक्षाल्य पाणी आचम्य उदपात्रं पूरयित्वा तेनोदकेन एनां त्रिरभ्युक्षति अनेन मन्त्रेण 'उत्तिष्ठातः' इति, सकृन्मन्त्रोच्चारणम् ॥

**अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वँ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि संँरभावहै सह रेतो दधावहै पुंँसे पुत्राय वित्तय इति ॥ २० ॥**

अथैनामभिमन्त्र्य क्षीरौदनादि यथापत्यकामं भुक्त्वेति क्रमो द्रष्टव्यः । संवेशनकाले— 'अमोऽहमस्मि' इत्यादि-मन्त्रेणाभिपद्यते ॥

**अथास्या उरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥**

अथास्या ऊरू विहापयति 'विजिहीथां द्यावापृथिवी' इत्यनेन । तस्यामर्थमित्यादि पूर्ववत् । त्रिः एनां शिरःप्रभृति अनुलोमामनुमार्ष्टि 'विष्णुर्योनिम्' इत्यादि प्रतिमन्त्रम् ॥

**हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतये । यथाग्निगर्भा पृथिवी यथा**

द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥

अन्ते नाम गृह्णाति— असाविति तस्याः ॥

सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावराꣳ सहेति ॥

सोष्यन्तीम् अद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थम् अनेन मन्त्रेण— 'यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः । एवा ते गर्भ एजतु' इति ॥

जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्राणाꣳ-

स्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳसुहुतं करोतु नः स्वाहेति ॥ २४ ॥

अथ जातकर्म । जातेऽग्निमुपसमाधाय अङ्के आधाय पुत्रम् , कंसे पृषदाज्यं संनीय संयोज्य दधिघृते, पृषदाज्यस्य उपघातं जुहोति 'अस्मिन्सहस्रम्' इत्याद्यावापस्थाने ॥

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतꣳ संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥२५॥

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखम् 'वाग्वाक्' इति त्रिर्जपेत् । अथ दधि मधु घृतं संनीय अनन्तर्हितेन अव्यवहितेन जातरूपेण हिरण्येन प्राशयति एतैर्मन्त्रैः प्रत्येकम् ॥

अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥

अथास्य नामधेयं करोति 'वेदोऽसि' इति । तदस्य तद्गुह्यं नाम भवति— वेद इति ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥

अथैनं मात्रे प्रदाय स्वाङ्कस्थम्, स्तनं प्रयच्छति 'यस्ते स्तनः' इत्यादिमन्त्रेण ॥

अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति । तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

इति चतुर्थं ब्राह्मणम् ॥

अथास्य मातरमभिमन्त्रयते 'इलासि' इत्यनेन । तं वा एतमाहुरिति— अनेन विधिना जातः पुत्रः पितरं पितामहं च अतिशेते इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापत्— इत्येवं स्तुत्यो भवतीत्यर्थः । यस्य च एवंविदो ब्राह्मणस्य पुत्रो जायते, स च एवं स्तुत्यो भवतीत्यध्याहार्यम् ॥

इति षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥

## पञ्चमं ब्राह्मणम् ॥

अथ वंशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणी-

पुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्त-
भागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृ-
तीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रा-
दालम्बायनीपुत्र आलम्बीपुत्रादालम्बी-
पुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डू-
कायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकी-
पुत्रान्माण्डूकी पुत्रः शाण्डलीपुत्राच्छाण्ड-
लीपुत्रो राथीनरीपुत्राद्राथीनरीपुत्रो भा-
लुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां
क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः
कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयो-
गीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रा-
त्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः
प्राश्नीपुत्र आसुरायणादासुरायण आसु-
रेरासुरिः ॥ २ ॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादु-
द्दालकोऽरुणादरुण उपवेशेरुपवेशिः कु-

श्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वा-
वतो बाध्योगाज्जिह्वावान्बाध्योगोऽसि-
ताद्वार्षगणादसितो वार्षगणो हरिता-
त्कश्यपाद्धरितः कश्यपः शिल्पात्कश्य-
पाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः क-
श्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भि-
ण्यादित्यादादित्यानीमानि शुक्लानि यजू-
ꣳषि वाजसनेयेन याज्ञवल्क्येनाख्या-
यन्ते ॥ ३ ॥

समानमा सांजीवीपुत्रात्सांजीवीपुत्रो
माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्मा-
ण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहि-
त्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डि-
ल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः
कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञव-
चा राजस्तम्बायनस्तुरात्कावषेयात्तुरः

**काविषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥**

इति पञ्चमं ब्राह्मणम् ॥

अथेदानीं समस्तप्रवचनवंशः स्त्रीप्राधान्यात् । गुणवान्पुत्रो भवतीति प्रस्तुतम्; अतः स्त्रीविशेषणेनैव पुत्रविशेषणात् आचार्यपरम्परा कीर्त्यते । तानीमानि शुक्लानीति अव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत् । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रः, तावत् अधोमुखो नियताचार्यपूर्वक्रमो वंशः समानम् आ सांजीवीपुत्रात्; ब्रह्मणः प्रवचनाख्यस्य; तच्चैतत् ब्रह्म प्रजापतिप्रबन्धपरम्परया आगत्य अस्मास्वनेकधा विप्रसृतम् अनाद्यनन्तं स्वयंभु ब्रह्म नित्यम्; तस्मै ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥

इति षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

बृहदारण्यकोपनिषद्भाष्यं संपूर्णम् ॥

ॐ

पूर्णमदः पूर्णमिदं
पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ श्रीः ॥

# उपनिषन्मन्त्राणां

# ॥ वर्णानुक्रमणिका ॥

॥ ॐ ॥

# नृसिंहपूर्वतापनीयोपनिषद्भाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः
विरचितम् ।



S. I. VII. 1

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

# ॥ नृसिंहपूर्वतापनीयोपनिषत् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन भाष्येण सहिता ।

---

यन्नाम्नोपनिषत्ख्याता तपनं तं विभुं गुरुम् ।
प्रणम्योपासनागर्भां तद्व्याख्यां श्रद्धयारभे ॥ १ ॥

आनुष्टुभात्साम्राजान्नारसिंहादिदं जगत् ।
जातं यस्मिन्स्थितं लीनं नमस्तस्मै चिच्छक्तये ॥ २ ॥

'भद्रं कर्णेभिः शृणुयाम देवाः' इति मन्त्रान्तर्गतभद्रपदव्याख्यानपराम् ऋचम् उदितां शान्तौ पठन् अन्याभ्यः श्रौतस्मार्तपौराणिककल्पप्रतिपादिताभ्यः साकारब्रह्मविद्याभ्य

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ १ ॥**

भद्रं कल्याणम्, कर्णेभिरिति च्छान्दसम्, कर्णैः शृणुयाम शृणुम देवाः सन्तो वयम्. भद्रं कल्याणं पश्येम अक्षभिः चक्षुर्भिः यजत्राः यजनशीलाः; स्थिरैरङ्गैः हृदयाद्यैः सामाङ्गप्रणवसावित्रीयजुर्लक्ष्मीनृसिंहगायत्रीरूपैः मूलमन्त्राङ्गव्याख्यानपरैः तनूभिः तनूमन्त्रैः 'यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः' इत्याद्यैः; तुष्टुवांसः इति स्तुतिसाधनत्वेनोक्तत्वात् तनूशब्देन मन्त्रा गृह्यन्ते, तथा अङ्गशब्देन च; तुष्टुवांसः स्तुवानाः स्तुतिं कुर्वाणाः. व्यशेम विगतरोगं विविधैहिकामुष्मिकसुखभोगक्षमम् अशेम प्राप्नुयाम; आयुरिति प्रत्येकं संबध्यते; यद्देवहितं देवः तापनीये उक्तविद्ययोपास्यः तत्तदवसरोचितकरणबुद्ध्या शिक्षन् हितमाचरति यस्मिन्नायुषि तत् तथोक्तमायुर्व्यशेमेति संबन्धः ॥

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरि-**

ष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ २ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

स्वस्ति नः इत्यत्र स्वस्तिपदानां चतुर्णामपौनरुक्त्यं यास्क-वचनात् यथासंख्यम् । स्वस्तीत्यविनाशमायुः नः अस्मभ्यम् इन्द्रः दधातु ; कीदृक्? वृद्धश्रवाः वृद्धात् बृहस्पतेः सद्विद्या-श्रवणं यस्य सः तथोक्तः दधातु । स्वस्तीत्याभिमुख्यमुपासनायां नः अस्मभ्यम् पूषा विश्ववेदाः विश्वानि वेदांसि यस्य सः तथोक्तः, अथवा सर्वे वेदा उपासनायामाभिमुख्यं दधातु स्वस्ति नः अस्मभ्यं पूजार्हतां तार्क्ष्यः देवभक्तो गरुत्मान् अरिष्टनेमिः अहिंसितवज्रः दधातु । स्वस्ति सुशोभनं नः अस्मभ्यं दधातु बृहस्पतिरित्यर्थः । अस्मिन्मन्त्रे अस्मच्छब्दवीप्सया वक्ष्यमाणायां विद्यायामादरं दर्शयति । शान्तिः शान्तिः शान्तिः त्रिधा तु विघ्नोपशान्तिः वक्ष्यमाणविद्यानुष्ठाने ॥

इति शान्तिः ॥

# नृसिंहपूर्वतापनीयोपनिषद्भाष्यम्

## प्रथमोपनिषत्

## प्रथमोपनिषत् ॥

---

'आपो वा इदमासन्' इत्याद्या 'तदेतन्निष्कामस्य भवति' इत्यन्ता तापनीयोपनिषत श्रीनृसिंहाकारब्रह्मविषया सती निराकारब्रह्मप्रतिपत्त्युपायभूता ; अत एव पृथक्संबन्धाभिधेयप्रयोजनानि न वक्तव्यानि ; यान्येव तु उपनिषत्संबन्धाभिधेयप्रयोजनानि तान्येवोपनिषद्व्याचिख्यासुना संक्षेपतो वक्तव्यानि । तत्र प्रयोजनसाधनाभिव्यञ्जकत्वेनाभिधेयसंबन्धशास्त्रं पारम्पर्येण प्रयोजनवत् । किं पुनः प्रयोजनमिति, उच्यते—रोगार्तस्येव रोगनिवृत्तौ स्वस्थता, दुःखात्मकस्य आत्मनो द्वैतप्रपञ्चोपशमे स्वस्थता द्वैताभावः प्रयोजनम्, द्वैतप्रपञ्चस्य च अविद्याकृतत्वाद्विद्यया तदुपशमः स्यादिति ब्रह्मविद्याप्रकाशनाय अस्या आरम्भः । 'यत्र हि द्वैतमिव' 'यत्र च अन्यदिव स्यात् तत्रान्योऽन्यत्पश्येत्...विजानीयात्' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्...विजानीयात्' इत्या-

दिश्रुतिभ्योऽस्यार्थस्य सिद्धिः । तत्र तावदस्यामुपनिषदि इदं परामृश्यते— किं तावद्वेद्यं विद्याभेदः, आहोस्वित् अन्योन्यविशेषणविशेष्यभावाद्विशिष्टस्य च वेद्यस्यैक्यात् विद्यैक्यम् इति । तत्र किं नः प्रतिभाति? विद्याभेद इति । तथा हि—प्रथमोपनिषदि लोकसाङ्गसामशुद्धसामग्र्यादिसामान्तर्गतस्वरविशेषक्षीरोदार्णवशायिनृकेसरिशंकरसच्चिदानन्दमयानामन्योन्यविशेषणविशेष्यभावरहितानां वेद्यानां श्रवणात् तथा प्रणवानुष्टुप्पदपदार्थशक्तिसामबीजसामाङ्गमन्त्रचतुष्टयानां वेद्याना द्वितीयतृतीयचतुर्थोपनिषत्सु यथासंख्यं श्रवणात् । अन्त्योपनिषदि महाचक्रविद्या श्रूयते । नन्वन्योन्यविशेषणविशेष्यभावरहितानामप्यङ्गाङ्गिभावो भवतु । नेति ब्रूमः, 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायवैषम्यात् । तथा हि—लोकादितत्तद्वेद्याना फलसंबन्धेन 'यो जानीते सोऽमृतत्वं च गच्छति' इत्यसकृच्छ्रवणात् । ननु लोकादीनामन्योन्यविशेषणविशेष्यभावरहितानामपि श्रीनृसिंहाकारब्रह्मणा सह विशेषणविशेष्यभावसंभवात् । तथाहि— 'सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्युद्गृह्यते' इत्यादिपदव्याख्याने सर्वेषां वेद्यानां तत्संबन्धश्रवणात् । अतो विशिष्टस्य वेद्यस्यैक्यात् विद्यैक्यमिति । अ-

च्योच्यते—सत्यं श्रूयते संबन्धः । तथापि अर्थवादत्वान्न विवक्ष्यते । अर्थवादश्च विध्यश्रवणात् , 'उद्गृह्णाति' 'विरमति' 'व्याप्नोति' 'ज्वलति' 'पश्यति' 'पलायन्ते' 'ददाति' 'मारयति' 'नमन्ति' इत्येवं वर्तमानोपदेशाच्च । न च वाच्यम् अधस्तात्पदोद्धारे 'तस्य ह वा उग्रं प्रथमं स्थानं जानीयात्' इति विधिः श्रूयते इति । यतः ततः प्रागपि 'प्रत्यक्षरमुभयत ओंकारो भवति' इति विधिबलात् प्रणवाक्षरमिश्रणेन मूलमन्त्राक्षरव्यत्ययात तत्पदाज्ञाने प्राप्ते तत्तत्पदपरिमाणज्ञापनार्थे विधिरुपक्षीणः सन् न तत्पदार्थानां श्रीनृसिंहब्रह्मणा सह संबन्धं विधातुं शक्नोति । अतः यावद्वेद्यं विद्याभेद इत्येवं प्राप्तम् । एवं प्राप्ते, ब्रूमः—सत्य पृथिव्यादिलोकानां परस्परं विशेषणविशेष्यभावो नावगम्यते, प्रत्येकं च वेद्यता श्रूयते 'जानीयात्' इति । तथापि श्रीनृसिंहब्रह्मणा सह संबन्धः तत्र तत्र श्रूयमाणः केन वारयितुं शक्यते? तथा हि— 'य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत्' 'य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात्' इत्यादिमध्ये पुनश्च 'आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रूहि' इति 'मन्त्रराजं नारसिंहमानुष्टुभं भवति' इत्येवं मध्ये श्रावयित्वा अन्ते 'य एतं मन्त्रराजं नारसिंहमानुष्टुभं

नित्यमधीते' इत्यसकृदभ्यस्य आदिमध्यावसानेषु नृसिंहब्रह्म-संबन्धित्वेन संकीर्तनात् विद्याया ऐक्यमिति विनिश्चिते तत्सं-बन्धित्वेन यथायोग्यतया तदन्तर्गतं पदजातं सामसंबन्धि समस्तं यथायोग्यतया वर्णनीयम् । अपि च अन्त्योपनिषदि फलकथनावसरे कृत्स्नां श्रीनृसिंहब्रह्मविद्यामभिधाय 'य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते' इत्येतन्नारसिंहानुष्टु-भशब्दानां कृत्स्ननृसिंहब्रह्मविद्याभिधायकत्वेन निश्चितानाम् असकृच्छ्रुतानामेव आदौ 'एतं मन्त्रराजं नारसिंहमानुष्टुभ-मपश्यत्' इति श्रवणात् तदन्तरालवर्तिपदजातं नृसिंहब्रह्म-विद्यासंबद्धमिति निश्चीयते । तत्संबन्धश्च तत्तत्पदव्याख्या-नावसरे स्पष्टमेव प्रदर्शयिष्यते । अपि च 'वाक्यान्वयात्' इति न्यायेन सर्वमेवेदं प्रकरणं नृसिंहब्रह्मविद्याप्रकरणमिति गम्यते । अथ यदुक्तं पदव्याख्यानवाक्याना नृसिंहब्रह्मवि-द्यासंबन्धसमर्पकाणां विध्यश्रवणात् वर्तमानापदेशाच्च अर्थवा-दत्वमिति, तदयुक्तम् । अधस्तात्पदोद्धारे 'तस्य ह वा उग्रं प्रथमं स्थानं जानीयात्' इति विधिः स्पष्ट एव श्रूयते । तत्र च विधौ तच्छब्देन साङ्गस्य मूलमन्त्रस्य परामर्शात् अङ्गा-नां च द्वैविध्यात् मूलमन्त्राङ्गमन्त्राणां सामाङ्गमन्त्राणां च यथायोग्यतया व्याख्यानव्याख्येयभावेनावस्थिततत्वात् कृत्स्नैव

नृसिंहब्रह्मविद्या अवगम्यते । स च विधिः अनुषङ्गन्यायेन सर्वपदसंबन्धः स्पष्ट इति । ननु तत्राप्युक्तं पदज्ञानार्थं तदिति, तन्न । प्राक् 'प्रत्यक्षरमुभयत ओंकारो भवति' इति वाक्यादर्थाज्ञानेन पदाज्ञाने प्राप्ते, तत्पुरःसरमेव पदज्ञानमिति । नन्वेवं तच्छेषत्वेनोपरिष्टादर्थकथनमनुपपन्नम् । नानुपपन्नम्— उपरिष्टाद्धि 'कस्मादुच्यते' 'कस्मादुच्यते' इत्यर्थपुरःसरमेव पदं स्पष्टार्थमुपसंहरति—'तस्मादिदमुच्यते' इति ; अतः अवगम्यते प्रागप्यर्थज्ञानपुरःसरमेव पदज्ञानमिति । अतः सर्वसंबन्धिविधिश्रवणं स्पष्टमिति । किं च सर्वेषां पदानामर्थमाश्राव्य अन्ते 'य एवं वेद' इति विधिश्रवणात् । 'वेद' इति वर्तमानत्वात्कथं विधिरिति चेत् , न, 'वचनानि त्वपूर्वत्वात्' इति न्यायात् । 'य एवं वेद' इति य एवं प्राक्तनमर्थजातं श्रीनृसिंहब्रह्मसंबद्धं वेद उपास्ते । उपनिषदि साकारब्रह्मविद्याप्रकरणे पठितानां वेदोपासनाज्ञानध्यानपदानाम् उपासनार्थत्वेन निर्णीतत्वात् । अतो नायमर्थवाद इत्यतः पञ्चसूपनिषत्सु न यावद्वेद्यं विद्याभेद इति सिद्धम् । 'आपो वा इदमासन्' इत्यादिना श्रीनृसिंहब्रह्मविद्याप्रकरणमाख्यायिकापूर्वमवतारयति इयमुपनिषत् । तत्र तावत् प्रथमोपनिषदि सामसंबन्धित्वेन पृथिव्यन्तरिक्षद्यु-

ऋग्वेदसाङ्गसामाग्निसूर्यचन्द्रब्रह्मादिदेवानां सामोद्धारपूर्वकं क्षीरोदार्णवशायिन्युपविष्टे वा शेषाभोगमस्तकपरिवृते नृकेसरिणि योगारूढे वरदाभयहस्ते त्रिनेत्रे शंकरे पिनाकहस्ते सच्चिदानन्दमये ब्रह्मविवर्त उपासनम् । तस्मिन्नेव द्वितीयोपनिषदि प्रणवोपासनापूर्वकसामरहितानुष्टुभमन्त्रपञ्चाङ्गपदोद्धारपूर्वकपदव्याख्याकथनगुणविशिष्टोपासनम् । तस्मिन्नेव तृतीयोपनिषदि सामान्वितत्वेन मूलमन्त्रसंबन्धित्वेन शक्तिबीजकथनं तन्निर्णयश्च । तस्मिन्नेव चतुर्थोपनिषदि मूलमन्त्राङ्गमन्त्रसामाङ्गमन्त्रैः प्रणवेन हृदयं सावित्रेण शिरो महालक्ष्मीशिखां व्याख्याय नृसिंहगायत्र्या कवचं व्याचष्टे; महाचक्रद्वात्रिंशद्व्यूहदेवतोद्देशपूर्वकं पुरश्चरणमन्त्रांश्च । पञ्चमोपनिषदि मन्त्रवर्णे द्वात्रिंशद्व्यूहान्महाचक्रे विन्यस्य तत्स्वरूपप्रकथनेन अस्त्रमन्त्रान्व्याख्याय श्रीनृसिंहब्रह्मविद्यानुष्ठातुः फलं व्याचष्टे ॥

**आपो वा इदमासन्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्तस्यान्तर्मनसि कामः समवर्ततेदं सृजेयमिति तस्माद्यत्पुरुषो मनसाभिगच्छति तद्वाचा**

वदति तत्कर्मणा करोति तदेषाभ्युक्ता—कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्य कवयो मनीषेत्युपैनं तदुपनमति यत्कामो भवति स तपोऽतप्यत स तपस्तप्त्वा स एतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत्तेन वै सर्वमिदमसृजत यदिदं किंच तस्मात्सर्वमिदमानुष्टुभमित्याचक्षते यदिदं किंचानुष्टुभो वा इमानि भूतानि जायन्तेऽनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्ति तस्यैषा भवत्यनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा भवति वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचैवोद्यन्ति परमा वा एषा छन्दसां यदनुष्टुबिति ॥ १ ॥

आप: आसन इति संबन्धः । वै प्रसिद्धम् । इदं प्रत्यक्षादिदृष्टं सलिलम अम्ब्वेव स प्रजापतिः । स इति पूर्व-

परामर्शिना तच्छब्देन पुंलिङ्गेन प्रकृतं परामृशति 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुते:। ब्रह्मा प्रजापति: एक: सन् पुष्करपर्णे समभवत् आसीत्। तस्य प्रजापते: मनसि अन्त:करणे अन्तर्वर्ती काम: इच्छा समवर्तत, इदं सृजेयमिति सृष्टिविषय इत्यर्थ:। तस्मात् यत्पुरुषो मनसाभिगच्छति अन्त:करणेनेच्छति तद्वाचा वदति। वाग्वदनपूर्वकं कर्मकरणं लोकप्रसिद्धं दर्शयति— तत्कर्मणा करोतीति। उक्तमेवार्थं द्रढयितुम् ऋचं साक्षित्वेनोद्भावयति— तदेषाभ्युक्तेति। अर्थदार्ढ्ये ऋक् निर्णीतैव; सामयजुषोरर्थशैथिल्यमपि संभाव्यते— 'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढम्' इति श्रुते:। तस्मिन्नेवार्थे एषा ऋक् वक्ष्यमाणा अभ्युक्ता। मनस: काम: तदग्रे समवर्तत रेत उदकं प्रथमम् आदौ सृष्ट्यवसरे यदासीत् यस्मात्कारणादासीत्। अथवा कालनिर्देश: यदा इति, यस्मिन्काले प्रथमम् उदकमासीत्, तदैव मनस: काम: अधीत्युपरि विषये सृष्टिविषये समवर्तत इत्यर्थ:। सत: ब्रह्मणो बन्धुं बन्धनं विवर्तं कवय: विपश्चितो हृदि निरविन्दन्, असति ब्रह्मणि, असच्छब्दस्य नामरूपाव्याकृतत्वेन ब्रह्मणि प्रयुक्तत्वात् 'असद्वा इदमग्र आसीत्' इत्यादौ।

हृदि अन्तःकरणे प्रतीष्य प्रत्यगात्मानमवेक्ष्य मनीषा मनीषया विपश्चिद्बुद्ध्या । ब्रह्मणो बन्धुं बन्धुमिव बन्धुं परं ब्रह्म व्याकर्तारं क्षीरोदार्णवादिविशेषणविशिष्टं भाविसृष्टेः स्रष्टारं मूलमन्त्रसामाद्युपास्यं हृदि निरविन्दन् इत्युत्तरार्धस्य गूढोऽभिप्रायः । इति-शब्दः ऋक्समाप्तिं द्योतयति । उपैनं कामिनं तत्काम्यम् उपनमति यस्मिन् कामो भवति । सः प्रजापतिः, तपः 'मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः' इति स्मरणात् अतप्यत मनसश्चेन्द्रियाणां च ऐकाग्र्यमकरोत् । सः प्रजापतिः, तपस्तप्त्वा पूर्वं व्याख्यातम्, स प्रजापतिः एतं प्रकृतं सर्वनाम्नोपात्तं सतो बन्धुमित्यनेन गूढाभिप्रायेण सूचितम्, 'ज्योतिश्चरणाभिधानात्' इति न्यायेन, मन्त्रराजं प्राकरणिकमन्त्राणां राजानं प्रधानभूतं सामराजं वा । मन्त्र-शब्दस्य 'अहेबुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूꣳषि' इत्यादौ साम्न्यपि प्रयुक्तत्वात् । नारसिंहं नृसिंहसंबन्धि सामादि तद्धितान्; नृसिंहगायत्र्यादिप्राप्तौ तद्व्यावृत्त्यर्थम् आनुष्टुभमिति अनुष्टुप्छन्दउपाधिकम् ऋग्विशेषमाह, 'गायत्रमेतदहर्भवति' इति न्यायात् । अपश्यत् दृष्टवानित्यभिप्रायः । एतदुक्तं भवति— द्वितीयतृतीयचतुर्थपञ्चमोपनिषत्सु मन्त्रराजादित्रयः

शब्दाः प्रयुक्ताः तत्पुरुषबहुव्रीहितद्धितसामर्थ्यात् पूर्वपूर्वोपनिषदर्थमाचक्षाणाः सन्त एव आदौ प्रयुक्ताः कृत्स्नामेव ब्रह्मविद्यां संगृहीतवन्तः; अतश्च वक्ष्यमाणां कृत्स्नामेव ब्रह्मविद्यामपश्यदित्यर्थः। तेन वै प्रागुक्तेन, वै प्रसिद्धम्, सर्वमिदमसृजत प्रत्यक्षादिसिद्धमसृजत। यदिदं किंच स्पष्टम्। तस्मात्सर्वमिदमानुष्टुभमित्याचक्षते यदिदं किच मन्त्रराजनारसिंहशब्दौ। इह आनुष्टुभमिति तद्धितप्रयोगात् द्वात्रिंशदक्षराणामेव तत्साम्नश्च सामर्थ्यं दर्शयत्येव। अत्राप्युपाख्यायिकायां किल प्रजापतिः तपसा लोकत्रयसृष्ट्यर्थमेव कारणाजिज्ञासुः अत्यन्तशुद्धान्तःकरणत्वात् शक्तित्रययुक्तां ब्रह्मस्वरूपिणीं भूतसृष्टिपुरःसरसर्वसृष्टिकारणिकामनुष्टुबृचम् अपश्यदित्याह। अनुष्टुभो वा इमानि भूतानि जायन्ते अनुष्टुभा जातानि जीवन्ति अनुष्टुभं प्रयन्त्यभिसंविशन्ति इति 'जन्माद्यस्य यतः' इत्यस्या ब्रह्मलक्षणलक्षितत्वं दर्शयति। उक्तमेवार्थं द्रढयितुम् ऋचं साक्षित्वेनोद्भावयति— तस्य ब्रह्मस्वरूपस्य साक्षिणी एषा वक्ष्यमाणा ऋक् भवति। अनुष्टुप् प्रथमा भवति सर्वसृष्टेः प्रथमा आद्या भवति। अनुष्टुप् उत्तमा श्रेष्ठा भवति। वाग्वा अनुष्टुप् सर्वो वाक्प्रपञ्चः अनुष्टुभि लीन इति दर्शयति। नामसृष्टिपूर्व-

कत्वाद्रूपसृष्टेः वाग्रूपत्वादनुष्टुभः अनुष्टुबेव मूलकारणम् । वाचैव प्रयन्ति अनुष्टुभैव प्रलयं गच्छन्ति भूतानि । वाचैव अनुष्टुभैव उद्यन्ति उत्पत्तिं गच्छन्ति । परमा वा एषा छन्दसां गायत्र्यादीनाम् , छन्दसां वेदानां वा, परमा उत्कृष्टा। परमत्वं च सामाधारत्वादनुष्टुभः । साम्नश्च परमत्वम् 'देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्येवाश्रयन्त' इति श्रुतेः, 'वेदानां सामवेदोऽस्मि' इति स्मृतेश्च । यदनुष्टुबिति इति-शब्दः ऋक्समाप्तिं द्योतयति ॥

एवं तावदाख्यायिकायामन्ते सकलनृसिंहोपासनसंग्राहकान् मन्त्रराजनारसिंहानुष्टुभशब्दान् विज्ञाय तैरेव शब्दैः सकलोपासनां सृष्ट्यर्थं प्रजापत्यनुष्ठितां संगृह्य इदानीमविशेषेणानुष्ठाने प्राप्ते, तत्र तावत्साम्नः ऋगक्षराभिव्यञ्जकत्वात् अभिव्यञ्जकाभिव्यङ्ग्ययोरभिव्यञ्जकपूर्वकत्वात् साम्नश्च सर्ववेदश्रेष्ठत्वात्—'देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्येवाश्रयन्त' इति श्रुतेः 'वेदानां सामवेदोऽस्मि' इति स्मृतेश्च, अस्य च सामराजत्वात् तदुपासनाया प्राप्तायां क्रमसूचनपूर्विकामाह—

**ससागरां सपर्वतां सप्तद्वीपां वसुंधरां तत्साम्नः प्रथमं पादं जानीयाद्यक्ष-**

**गन्धर्वाप्सरोगणसेवितमन्तरिक्षं तत्साम्नो द्वितीयं पादं जानीयाद्वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयाद्ब्रह्मस्वरूपं निरञ्जनं परमव्योम्निकं तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छत्यृग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्दः क ऋषिरिति ॥ २ ॥**

यथाकथंचिदुपासनारूपे प्राप्ते ससागरामिति प्रथमत एव सागरसंकीर्तनेन सागरपूर्विकामुपासनां द्योतयति । अत एव न पृथ्वीविशेषणं सागर इति केचिद्व्याचक्षते ; ततश्च प्रथमतः सागरं क्षीरोदार्णवं ध्यात्वा तच्छायिन्युपविष्टे वा तस्मिन्पश्चाङ्गन्यासम् ऋक्सामयोः कृत्वा तस्मिन्नेव सपर्वतामित्याद्युपासनां सह सागरेण वर्तनं यस्या उपासनायाः तां ससागरां जानीयादित्यनुषङ्गः— यथा 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यादेरानन्दमयाद्विच्छेदमिवेति, तद्-

युक्तम् । न तावद्विशिष्टामुपासनां ससागरशब्दस्तावदाह, किंतु बद्धक्रमके पदार्थजाते तदादिन्यायेन सूचयति । तदन्यविशेषणत्वेनैकवाक्यत्वेऽपि समानम् । तस्माद्बद्धक्रमकमुपासनं प्रथमत एव सागरशब्दोपादानात्क्षीरोदार्णवपूर्वकं विज्ञेयम् । ततश्चायमर्थः । तत्साम्नः तस्या न्यस्ताया अनुष्टुभो न्यस्तस्य च साम्नः प्रथमं पादं क्षीरोदार्णवशायिनः उपविष्टस्य वा नृकेसरिणः उक्तविशेषणविशिष्टां वसुंधरां हृदयमङ्गं हृदयान्तर्वर्तित्वेन जानीयादित्यर्थः । एवमुत्तरेष्वपि त्रिषु पादेषु यक्षगन्धर्ववसुरुद्रब्रह्मस्वरूपं लोकसाहचर्याद्ब्रह्मलोकं तत्साम्न तस्या न्यस्ताया अनुष्टुभो न्यस्तस्य च साम्नो द्वितीयं तृतीयं चतुर्थं पादं तस्य नृकेसरिणः शिरःशिखाकवचान्तर्वर्तित्वेन जानीयादिति योज्यम् । एवं नृकेसरिणं यो जानीते सोऽमृतत्वं च गच्छतीति गमनोपादानात्कार्यममृतत्वम्, न कैवल्यम्, 'कार्यं बादरिरस्य गत्युपपत्तेः' इति न्यायात् । अथवा देहान्ते देवः परं ब्रह्म निर्गुणं ब्रह्म तारकं तारकमात्राभिः प्रत्यग्ब्रह्मणोरेकत्वं व्याचष्टे इत्यन्ते श्रवणात् अमृतत्वं कैवल्यम् । एवमुपरिष्टात् उभयथा अस्य अमृतत्वं श्रूयमाणं व्याख्येयम् । ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्तीति

महाचक्रं व्याख्यातम् । तस्य नाभ्यां क्षीरोदार्णवशायिन: उपविष्टम्य वा नृकेसरिण: क्रमप्राप्तं पञ्चममङ्गम् अस्त्राख्यं वक्ष्याम: । नन्वेवं साङ्गोपासनामपरिसमाप्य कोऽयं मध्ये ध्येयप्रश्नोपक्रम: पिशाचजल्पितमिव— किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्द: क ऋषिरिति ध्यानदेवताङ्गाङ्गदेवताछन्दर्षीणां प्रश्न:? अत्रोच्यते— अत्र किल आख्यायिकायां प्रजापति: विरतेभ्यो देवेभ्य: सामद्वारिकामेकामुपासनां परिसमाप्य तूष्णीं बभूव श्रोतॄणां बोधं परीक्षितुम्— किं प्रागुक्त एवार्थे अवान्तरविशेषं पृच्छन्ति अन्यदप्यर्थजातं तदुपयोगि, न वेति । अनेनाभिप्रायेण मध्य एव प्रश्नोपक्रम: । तत्र षट्प्रश्ना: । प्रथमप्रश्ने जानीयादिति प्रागुक्तविधौ उपरिष्टाच्चोपनिषत्स्वा समाप्तेर्ज्ञानमात्रं ध्यानं वेति प्रश्न: । जानीयादिति विधावभ्यासस्य ध्यानस्याश्रवणात्तत्रोत्तराप्रदानात् 'अप्रतिषिद्धमनुमतं भवति' इति न्यायाज्जानीयादित्यत्र ध्यायेदित्यर्थ: । ध्यायति: ज्ञानाभ्यासे वर्तते । किं दैवतं किं छन्द क ऋषिरिति प्रश्नत्रये नारसिंहानुष्टुभतद्धितश्रवणात्स्वस्य च ब्रह्मण: प्रजापते: कथकत्वेन दैवतछन्दर्षित्वेनोत्तरम्, 'यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता' इत्याश्वलायनस्मरणात् । इति-शब्द:

प्रश्नसमाप्तिं द्योतयति ॥

स होवाच प्रजापतिः स यो ह वै तत्सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं तत्साम्नोऽङ्गं वेद श्रिया हैवाभिषिच्यते सर्वे वेदाः प्रणवादिकास्तं प्रणवं तत्साम्नोऽङ्गं वेद स त्रीँल्लोकाञ्जयति चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तत्साम्नोऽङ्गं वेद स आयुर्यशःकीर्तिज्ञानैश्वर्यवान्भवति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति द्वात्रिंशदक्षरं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः स मृतोऽधो गच्छति तस्मात्सर्वदा नाचष्टे यद्याचष्टे स आचार्यस्तेनैव मृतोऽधो गच्छति ॥

अत्र किल षट्प्रश्नाः प्रश्नचतुष्टयं नैरपेक्ष्येण अङ्गपूर्वत्वा-

दङ्गिज्ञानस्य पारिशेष्याच्च साम्नोऽङ्गं तद्दैवतं प्रश्नद्वयेन, स प्रजापतिः श्रोतॄणां बोधमर्थितां च अवेक्ष्य हर्षितः, निपातानामनेकार्थत्वात्, उत्तरमुवाच—स यो ह वा इति । वीप्सया हर्षनिर्भरता दर्शयति । सावित्रस्य अष्टाक्षरं पदं श्रिया अभिषिक्तं श्रीबीजेनाभिषिक्तमुपरिष्टाच्छ्रीबीजमित्यर्थः । तत्साम्नोऽङ्गं वेद इत्यभिषिक्तमिति वदन् शिरःपूर्वकत्वादभिषेकस्य तस्मिन्नभिषिक्ते शिरोऽङ्गस्थाने साम्नोऽङ्गं वेद इत्यङ्गतां विधत्ते । श्रिया हैव अभिषिच्यत इत्यङ्गेषु सर्वत्र फलश्रवणम् ‘द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्’ इत्यर्थवादः, ‘अनतिदृश्नं स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति’ इति न्यायेन गुणफलाधिकारो वा । सर्वे वेदाः प्रणवादिकाः तं प्रणवमिति सर्वे वेदा उपवेदाश्च अष्टौ इत्यष्टसंख्यानन्तर तत्स्थाने हृदयाङ्गस्थाने प्रणवं विदधत् सर्ववेदादिभूतात्प्रणवात् सामाक्षराण्यधिकतराणीति दर्शयति । तत्साम्नोऽङ्गं वेद स त्रीँल्लोकाञ्जयतीत्युक्तार्थम् । चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुः तस्मिंश्चतुर्विंशत्यक्षरस्थाने सामतृतीयपादादुपरिष्टात् साम्नोऽङ्गं वेद शिखाङ्गस्थान इत्यर्थः । स आयुः यशः ज्ञानप्रशंसा कीर्तिः जनप्रशंसा ज्ञानैश्वर्यवान्भवतीत्युक्तार्थम् । यस्मादेवं सामा-

ङ्गफलम्, तस्मादिदं साङ्गं साम जानीयात्, यो जानीते सोऽमृतत्वं च गच्छतीत्युक्तार्थम्। सावित्रादिमन्त्राणां हृद-याद्यङ्गस्थाने प्राप्तानाम् अत्र आदावेव अङ्गत्वविधानार्थ-मपकर्षस्तु उपक्रमोपसंहाराभ्यां विद्यैक्ये तात्पर्यं दर्शयति। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय स्त्री च शूद्रश्च स्त्री-शूद्रम् तस्मै स्त्रीशूद्राय नेच्छन्तीति निषेधं कुर्वन् प्रधानो-पासनायां स्त्रीशूद्रस्याप्यधिकारं दर्शयति। द्वात्रिंशदक्षरं साम जानीयादिति द्वात्रिंशदक्षराणां सामसंबन्धं विधत्ते। यो जानीते इत्याद्युक्तार्थम्। सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः, स मृतः अधः नरकं गच्छतीति प्रत्यवायदर्शनेन निषेधमेव द्रढयति। तस्मात्सर्वदा न आचष्टे इति कदाचिदपि न आचष्टे इत्याचार्यस्य निषेधं दर्शयति। यद्याचष्टे स आचार्यः, तेनैव कथनेन मृतः अधः गच्छ-तीति प्रत्यवायदर्शनेन निषेधमेव द्रढयतीति ॥

**स होवाच प्रजापतिरग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि प्राणा वा इन्द्रि-याणि पशवोऽन्नममृतं सम्राट्स्वराड्विरा-ट्तत्साम्नः प्रथमं पादं जानीयादृग्यजुःसा-माथर्वरूपः सूर्योऽन्तरादित्यो हिरण्मयः**

पुरुषस्तत्साम्नो द्वितीयं पादं जानीयाद्य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात्स ब्रह्मा स शिवः स हरिः स इन्द्रः सोऽग्निः सोऽक्षरः परमः स्वराट्तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । ॐ उग्रं प्रथमस्याद्यं ज्वलं द्वितीयस्याद्यं नृसिं तृतीयस्याद्यं मृत्युं चतुर्थस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति तस्मादिदं साम यत्र कुत्रचिन्नाचष्टे यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय चेति ॥

एवं सामाङ्गान्युक्त्वा तदुपासनायां च स्त्रीशूद्रव्यतिरिक्तमधिकारिणमुक्त्वा अन्त्यप्रश्नाङ्गदेवतानि वक्तुं सामदेवतैव तत्तत्स्थाने निपतितस्याङ्गस्य सैव देवतेति स प्रजापतिर्हृ हर्षितः अन्त्यप्रश्न उत्तरमुवाच—अग्निर्वै वेदा इदं सर्वम् इत्यादि यो जानीते सोऽमृतत्वं च गच्छति इत्यन्तं

च ससागराम् इत्यादिना योजनीयम्। एतदुक्तं भवति। क्षीरोदार्णवशायिनि उपविष्टे वा न्यस्तस्य साङ्गस्य साम्नः पादशः उक्तगुणां पृथ्वीं हृदयान्तर्वर्तित्वेन अग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि प्राणा इन्द्रियाणि पशवोऽन्नममृतं सम्राट्स्वराड्विराट्तत्साम्नः प्रथमपादस्य तदङ्गस्य प्रणवस्य हृदयमन्त्रस्य च दैवतं जानीयात् इति पारमेश्वरं हृदयं व्याख्यातम्। तथा यक्षगन्धर्वादिगुणविशिष्टमन्तरिक्षं शिरोऽन्तर्वर्तित्वेन सर्ववेदमयः सूर्यो हिरण्मयः पुरुषस्तत्साम्नो द्वितीयपादस्य शिरोमन्त्रस्य च तदङ्गस्य सावित्रमन्त्रस्य च दैवतमिति पारमेश्वरं शिरो व्याख्यातम्। तथा च वसुरुद्रादित्यैः सेवितं द्युलोकं शिखान्तर्वर्तित्वेन य ओषधीनां प्रभवति तारापतिश्चन्द्रमाः तत्साम्नस्तृतीयपादस्य शिखामन्त्रस्य च लक्ष्मीयजुषश्च दैवतम् इति पारमेश्वरं शिखाङ्गं व्याख्यातम्। तथा च ब्रह्मलोककवचान्तर्वर्तित्वेन स ब्रह्मेत्यादिमन्त्रवर्णात् तत्साम्नश्चतुर्थपादस्य च तदङ्गभूताया नृसिंहगायत्र्याश्च कवचमन्त्रस्य च दैवतम् इति पारमेश्वरं कवचं व्याख्यातम्। तथा, ओमिति प्रणवबहुलेन सामद्वारकेण महाचक्रेण पारमेश्वरमस्त्रं व्याख्यातम्। लोकानामङ्गेष्वन्तर्भावात् सामाङ्गदेवतासाहचर्यात् 'व्यतिषक्ता वा इमे लोकाः

तस्माद्व्यतिषक्तान्यङ्गानि भवन्ति' इति विधायकवचनाच्च इत्येष उपासनाक्रमः। एवं तावन्न्यस्तसामद्वारिकां पारमेश्वरीमुपासनां परिसमाप्य अथेदानीं न्यस्तं साम उद्धरति— उग्रमिति। ननु नायं सामोद्धारः, किंतु मन्त्रोद्धार एव; सामशब्दस्तु यौगिकवृत्त्या तेन सामर्थ्येन सह वर्तत इति साम मूलमन्त्रः। तन्न, 'गीतिषु सामाख्या' इति गीत्यां सामशब्दस्य रूढत्वात्, 'रूढिर्योगमपहरति' इति न्यायात् सामोद्धार एव। ननु वेदेन सामशब्दो यौगिकः कृतः 'सैव नाम त्वमासीरमो नामाहं सोम' इत्युपक्रम्य 'सा चामश्चाभवतां तत्सामाभवत्तत्साम्नः सामत्वम्' इति श्रुतेः। सत्यं भवतु यौगिकः, तथाप्युभयोद्धारे सामोद्धारस्तु सिद्ध एव। एवं रूढेर्वैदिकप्रयोगाच्च सामोद्धारे स्थिते द्वात्रिंशदक्षरं साम जानीयादिति सामान्याकारेण सामसंबन्धे सिद्धे विशेषाकारेण मूलमन्त्राक्षराणां सामसंबन्धं विधातुमाह— उग्रं प्रथमस्याद्यमित्यादिना। अत्र हि सामगानां हस्ते मुखस्वरनिर्णयो द्रष्टव्यः। सप्तधा हि स्वरः षड्जादिभेदेन। तत्र हस्तगतस्वरानुसारेण मुखेन गीत्युच्चारणम्; तत्र हस्ताङ्गुष्ठोत्तमपर्वणः क्रौष्टकसंज्ञ उच्चैर्भावे कृते सर्वोदात्तां त्रिमात्रां चतुर्मात्रां पञ्च-

मात्रां वा कृत्वा विहिताक्षरेषु गीतिं गायेत्; तामाद्यं निरपेक्षं स्वरमित्याचक्षते, ततोऽङ्गुष्ठोत्तमपर्वणः वक्रीभावे कृते पूर्वोदात्तापेक्षया अनुदात्ताम् उत्तरापेक्षया उदात्ताम् एवमेवाङ्गुष्ठेन तर्जनीमध्यमपर्वस्पर्शे कृते तत्संनिहिताङ्गुलिस्पर्शे उपकनिष्ठिकास्पर्शे कनिष्ठिकामध्यमपर्वस्पर्शे कृते पूर्वपूर्वापेक्षया उत्तरोत्तरापेक्षया उदात्तानुदात्तात्मिकां विहिताक्षरेषु गीतिमुच्चार्य अङ्गुष्ठेन कनिष्ठिकामूलपर्वस्पर्शे कृते सर्वानुदात्तां गीतिमुच्चारयेत्; तं त्वन्त्यं स्वरमित्याचक्षते। एवं मुखहस्ताभ्यां षड्जादयो यथाक्रमं सप्त स्वरा निष्पाद्यन्ते। स एष सामगानां सर्वसामसाधारणः स्वरनिर्णयः। ततश्च, उग्रं प्रथमस्य आद्यं सर्वोदात्तं सामपदानुषङ्गात् उक्ते अक्षरद्वये आद्यम् आद्यस्वरात्मकं साम जानीयादिति विधीयते, अन्यथा प्रथमपादस्य आद्यम् अक्षरद्वयं जानीयात् इत्येतस्य द्वितीयोपनिषदुक्तपदोद्धारादेव ज्ञातत्वात् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायो बाधितः स्यात्, सामपदस्य व्यर्थता स्यात्, उभयविधाने च वाक्यभेदः स्यात्। वेदितव्यसामसंबन्धस्वरविशेषे विहिते अनिर्धारितस्वरविशेषकं साम कथं विधातुं शक्येत? तस्मात् मूलमन्त्रोक्तप्रथमपादाक्षरद्वयस्य आद्यशब्दोक्तस्वरविशेषात्मकसामसंबन्ध एव

विधीयते । एवमुत्तरेष्वपि त्रिषु वाक्येषु योजनीयम् । ज्वलं द्वितीयस्य पादस्य आद्यं साम गीतिं जानीयात् । नृसिं तृतीयस्य आद्यमित्युक्तार्थम् । मृत्युं चतुर्थस्य आद्यमित्यादि गच्छतीत्यन्तम् उक्तार्थम् । यस्मादिदं साम परमरहस्यतरम्, तस्मादिदं साम यत्र कुत्रचित्पुंसि न आचष्टे इति कथयितुर्निषेधः । यदि दातुमपेक्षते पुत्राय शुश्रूषवे शुश्रूषारताय आचार्योपसर्पणेन श्रवणेच्छावते दास्यति दद्यादित्यर्थः । अन्यस्मै शिष्याय प्रागुक्तलक्षणाय च इति । इति-शब्दः सामदातृप्रतिग्रहीत्रोः अधिकारसमाप्तिं द्योतयति ॥

एवं तावत्साम्ना सह दातृप्रतिग्रहीत्रोः संबन्धं विधाय श्रीक्षीरोदार्णवशायिनो नृकेसरिणो योगिवदासीनस्य शयानस्य वा ध्येयस्य आश्रयाश्रयिलक्षणसंबन्धविशेषोपासनां कृत्स्नफलवतीं विधातुमाह—

**क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयं परमं पदं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति वीरं प्रथमस्यार्धान्त्यं तंसं द्वितीयस्यार्धान्त्यं हंभी तृतीयस्यार्धान्त्यं मृत्युं चतुर्थस्यार्धान्त्यं**

साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति तस्मादिदं साम येन केनचिदाचार्यमुखेन यो जानीते स तेनैव शरीरेण संसारान्मुच्यते मोचयति मुमुक्षुर्भवति जपात्तेनैव शरीरेण देवतादर्शनं करोति तस्मादिदमेव मुख्यं द्वारं कलौ नान्येषां भवति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते स मुमुक्षुर्भवति ॥ ८ ॥

क्षीरोदार्णवशायिनं ना चासौ केसरी च नृकेसरी तं नृकेसरिणम् । नृकेसरिमिति छान्दसम् । योगिवदासीनं शेषभोगमस्तकपरिवृतं रहस्यकल्पान्तरपर्यालोचनया अस्मिन्नेव स्थाने शाखान्तरश्रुत्यन्तरपर्यालोचनया आसीनं शेषभोगमूर्धावृतम् । द्विशाखगामिनी इयमुपनिषत् भृगुशाखायाम् आङ्गिरसशाखायां च । परमं पदं परमाश्रयभूतम् । जानीयादिति सर्वत्रानुषज्यते । सामेत्यादि गच्छतीत्यन्तम् उक्तार्थं भवति । यत्साम जानीयात् तदुक्तगुणविशिष्टे नृकेसरिणि साङ्गं न्यस्तं जानीयादित्यर्थः । इदा-

र्नीं साम्नो द्वितीयोद्धारमक्षराणां स्वरविशेषसंबन्धार्थमाह— वीर प्रथमस्यार्धान्त्यं प्रथमपदोक्ताक्षरद्वय आद्यार्धे 'प्रथमातिक्रमे कारणाभावात्' इति न्यायेन अन्त्यम् अन्त्यस्वरात्मकं साम जानीयात् इत्यनुषज्यते। अत एव अस्मिन्नेव स्थाने शाखान्तरे पाठान्तरं वीरं प्रथमाद्यार्धस्य अन्त्यमिति। अत्रापि विधानविषये प्रागुक्ते चोद्यसमाधाने। ततो वीरो अनुदात्तात्मिका गीतिः; रं मध्यवर्तिस्वरात्मिका गीतिः; एवमुत्तरेष्वपि तदुद्धारवाक्येषु योजनीयम्। तंसं द्वितीयस्यार्धान्त्यम् इत्युक्तार्थम्। तम् अनुदात्तात्मिका गीतिः, हंभी तृतीयस्यार्धान्त्यम्। तृतीयाद्यार्धस्य अन्त्यमिति पाठान्तरम्। हम् अनुदात्तात्मिका गीतिः; भी मध्यवर्तिस्वरात्मिका गीतिः; मृ अनुदात्तात्मिका गीतिः; त्युं पारिशेष्यान्मध्यवर्तिस्वरात्मिका गीतिः; चतुर्थस्यार्धान्त्यम् इत्युक्तार्थम्। मृत्युं चतुर्थाद्यार्धस्य अन्त्यमिति पाठान्तरम्। सामेत्यादि गच्छतीत्यन्तम् उक्तार्थम्। यस्मात्सामैकदेशपरिज्ञानात् कृत्स्नफलावाप्तिः तत्र कृत्स्नसामपरिज्ञाने किमुतेत्याह— तस्मादिदं विहिताक्षरेषूद्धृतं कृत्स्नं साम येन केनचित् येन केनापि सामोद्धारवाक्यकदम्बकेनापि यो जानीते इत्यनुषङ्गः। आचार्यमुखेन यो जानीते इत्याचार्यमुखोपायान्तर-

योर्विकल्पः । यद्वा आचार्यशब्दो वेदमभिधत्ते, 'तस्मादाचार्यवचः प्रमाणम्' इत्यादौ प्रयोगात्; आचार्यमुखेन वेदमुखेन सामोद्धारवाक्यकदम्बकेनेत्यर्थः । स तेनैव स्वयमेव सामपरिज्ञानेन संसारान्मुच्यते, मोचयति अन्यं वा साम ज्ञापयन् । सामपरिज्ञानात् सरागोऽपि मुमुक्षुर्भवति जपात्, संख्यानुपादानात् सकृदेव सामजपात् । यत्साङ्गेन साम्ना पारमेश्वरं शरीरं क्षीरोदार्णवशायीत्यादिपदकदम्बकव्याकृतम्, तेनैव शरीरेण देवतादर्शनं करोति देवता प्रत्यक्षा भवति । तस्मादिदमेव साङ्गं सामैव मुख्यं द्वारं देवतादर्शने तद्व्याकृतौ च; कलौ पापबाहुल्येन अन्येषां सामरहितानां केवलमूलमन्त्रपरिज्ञातॄणां देवतादर्शनं झटिति न भवतीत्यर्थः । यस्मादिदं साङ्गं साम देवतादर्शने देवताकारव्याकृतौ च मुख्यमेव द्वारम्, तस्मादिदं साङ्गं साम जानीयात्; मुमुक्षुर्भवति मानुषानन्दारूढोऽपि एतत्परिज्ञानात् मानुषानन्दं विहाय मोक्षेप्सुर्भवति । यद्वा मुमुक्षुः एतज्जानीयात् इत्यन्वयः । तस्य भवतीति फलनिर्देशः । भू सत्तायामिति धातोः रूपम् । साकारब्रह्मोपासनाद्वारं सन्मात्रतां प्राप्नोतीत्यर्थः ॥

**ॐ ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहम् । कृष्णपिङ्गलमूर्ध्वरेतं वि-**

रूपाक्षं शंकरं नीललोहितमुमापतिं पशुपतिं पिनाकिनं ह्यमितद्युतिमीशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्यो यजुर्वेदवाच्यस्तं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । महा प्रथमान्तार्धस्याद्यं र्वतो द्वितीयान्तार्धस्याद्यं षणं तृतीयान्तार्धस्याद्यं नमा चतुर्थान्तार्धस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । तस्मादिदं सच्चिदानन्दमयं परं ब्रह्म तमेवं विद्वानमृत इह भवति । तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ६ ॥

एवं तावत् यदङ्गम् उपास्यदेवताकारव्याकृतौ क्षमम्, तदेवाङ्गं निर्दिशन् आह— ओमिति । एतच्चतुर्थोपनिषदि स्पष्टीकरिष्यति— ओमित्येतदक्षरम् इत्यादिना । नृकेसरिविग्रहो व्याख्यातः; स न स्वमायया लीलाविग्रहः, किं तु

कर्मविपाकजन्मानुभवरूपाणां केवलातिर्यग्रूपाणां मत्स्यकूर्मादीनां केवलातिर्यग्रूपाणां वामनादीनां लीलारूपत्वेनैव दृष्टत्वात् अस्य च तद्विलक्षणत्वात् न स्वमायालीलाविग्रहता स्यादिति इमामाशङ्कां मन्त्रवर्णादपनेतुं मन्त्रमाह— ऋतं सत्यं पर ब्रह्म पुरुषं नृकेसरिविग्रहम् । ना च पुरुषश्च केसरी च सिंहश्च नृकेसरी । तत्र पुरुषमित्यनूद्य सत्यं परं ब्रह्म जानीयादिति विधीयते । एतदुक्तं भवति— सत्यस्य परब्रह्मणः स्वमायया लीलाविग्रहं पुरुषाकारम् ऋतमिति परमार्थं जानीयादिति यावत् । यद्वा, ऋत सत्य पर ब्रह्म ब्रह्मात्मकं पुरुषाकारम् ओमित्योंकारेण व्याख्यातम्, ऋतमिति धननाम ऋतमयं हिरण्मयं हिरण्यमयं जानीयादित्यर्थः । अत एव सतो बन्धुमिति बन्धुरिति धननाम ब्रह्मणो विवर्तं हिरण्मयम् असति ब्रह्मणि हृदि निरविन्दन्निति कैश्चिद्व्याख्यातम् । कृष्णपिङ्गलं कृष्णपिङ्गले अक्षिणी यस्य तं तथोक्तम् । ऊर्ध्वरेतमिति छान्दसम् । ऊर्ध्वरेतस्कं योगारूढमासीनं विरूपाक्षं ललाटनेत्रम्. ललाटनेत्रेण रौद्रता प्राप्नोति तद्व्यावृत्त्यर्थं शंकरं सुखकरं वरदाभयहस्तं शंकरसाहचर्यान्नीललोहितमिति नीलकण्ठम् उर्वरितप्रदेशे लोहितम् । नीललोहितौ वर्णौ ललाटनेत्रयोर्यथायोग्यतयास्य धृतौ तथो-

कम् । कल्पान्तरे तु श्वेतवर्णम्; एवं सुवर्णलोहितशुक्लाकाराणां विकल्पः कामनावशाद्व्यवस्थितः । उमापतिं उमा गौरी तस्याः पतिः तम् । 'श्रियं लक्ष्मीम्' इति सप्त शक्तयो वक्ष्यन्ते । पशुपतिः पशूना प्राणिनां पतिः, यद्वा पशूनां वेदानां गायत्र्यादीनाम्, 'पशवो वै छन्दांसि' इति श्रुतेः । पिनाकिनं पिनाकधनुर्हस्तम् । हीति निश्चितार्थः । अमितद्युतिम् अमितप्रकाशम् । ईशानः सर्वविद्यानां प्रभुः । ईश्वरः सर्वभूतानां प्रभुः । ब्रह्माधिपतिः, ब्रह्म तपः मनसो विषयेभ्यो विवर्त्य दर्शनं पूर्वोक्तोपासनं तस्य अधिपतिः अधिष्ठाय पालयिता । ब्रह्मणोऽधिपतिः ब्रह्मणोऽधिष्ठाता । ब्रह्मेत्यन्ननाम अन्नं क्षीरं ततश्च क्षीरस्य अधिष्ठाता । यद्वा ब्रह्मणः अथर्ववेदस्य अधिष्ठाता । एवं यो यजुर्वेदवाच्यः प्रागुक्तेन यजुषा वेदेन वाच्यः यजुर्वेदवाच्यः । प्रागुक्तानां गुणानां प्रथमानिर्दिष्टानां जानीयादित्यनेनान्वयं कर्तुं विशिष्टतया एकत्वाभिप्रायेण द्वितीयान्ततया निर्दिशति— तमिति । सामेत्यादि गच्छतीत्यन्तम् उक्तार्थम् । एवं प्रागुक्तमाकारं नृकेसारिण्येव जानीयात् । अत्र केचित्प्रागुक्तमाकारं मन्त्रवर्णात्पृथक्त्वेन उपास्यमाचक्षते; तदयुक्तम्, एवं तर्हि उपक्रमोपसंहाराभ्यां नृसिंहब्रह्मविद्यैक्यमवगतं बाध्येत । नृसिंहपद-

व्याख्यानावसरे नृसिंह एव आसीत्परमेश्वर इति नृसिंहेश्व-रयोः सामानाधिकरण्यमवगतं बाध्येत । तस्मात् त्रिनेत्राद्या-कारविशिष्टः अस्यां विद्यायां नृसिंह एवोपास्य इति सिद्धम् । अथेदानीं तृतीयं सामोद्धारमाह—म पारिशेष्यान्मध्यस्वरव-र्तिगीतिः ; हा सर्वोदात्तात्मिका गीतिः ; प्रथमान्तार्धस्य आद्य-मिति । प्रथमपादोक्ताक्षरद्वये अन्त्यार्धस्य आद्यस्वरम् आद्य-स्वरयुक्तं साम जानीयात् इत्यनुषज्यते । वं पारिशेष्यान्म-ध्यस्वरवर्तिगीति ; तां सर्वोदात्तात्मिका गीतिः ; द्वितीया-न्तार्धस्य आद्यमित्युक्तार्थम् । ष पारिशेष्यान्मध्यस्वरवर्तिगी-तिः ; णम् , सर्वोदात्तात्मिका गीतिः ; तृतीयान्तार्धस्य आद्य-मित्युक्तार्थम् । न पारिशेष्यान्मध्यस्वरवर्तिगीतिः ; मा सर्वोदा-त्तात्मिका गीतिः ; चतुर्थान्तार्धस्य आद्यमित्युक्तार्थम् । सामे-त्यादि गच्छतीत्यन्तम् उक्तार्थम् । ननु अत्र अक्षरद्वयमध्ये अन्तार्धस्येत्यन्तस्य अक्षरस्यार्धं दीर्घादिमात्रा तस्या आद्यस्व-रसंबन्धः कस्मान्न विधीयते ? तन्न, षष्ठीतत्पुरुषात्कर्मधार-यस्य बलीयस्त्वात् । अन्तं च तदर्धं च अन्तार्धं प्रथमापेक्षया द्वितीयमक्षरम् अन्तं च तदर्धं चेति ; अन्यथा अन्तस्याक्षरस्य मात्रादि अर्धमिति षष्ठीतत्पुरुषः, ‘ एतया निषादस्थपतिं याज-येत् ’ इति न्यायात् । ननु अतितुच्छमेतत् , मात्रायामप्याधा-

रापेक्षया कर्मधारयसंभवात् । सत्यम् । ‘ द्वात्रिंशदक्षरं साम ’ इत्यत्र द्वात्रिंशदक्षराणामेव स्वरात्मकसामसंबन्धः श्रूयते, न मात्राणाम्, तस्मादन्तार्धशब्देन द्वितीयाक्षरस्यैव आद्यस्वरसंबन्धो विधीयत इति सिद्धम् । यस्मात्सामैकदेशोऽपि कृत्स्नफलावाप्तौ क्षमः, किमुत कृत्स्नसामज्ञानम् । तस्मादिदं सच्चिदानन्दमयं परं ब्रह्म, तादृशनृसिंहप्रतिपादकमूलमन्त्राभिव्यञ्जकत्वात् परं ब्रह्म जानीयादित्यनुषज्यते । सामाभिव्यक्तमूलमन्त्रप्रतिपाद्योऽयं नृसिंहाकारसच्चिदानन्दं परं ब्रह्मेत्येकः संबन्धः । यद्वा सच्चिदानन्दमयं ब्रह्मेत्येकः । प्राङ्मन्त्रवर्णात् ब्रह्माकारता प्रतिपादितापि अदृढा स्यादिति शङ्का, तद्व्यावृत्त्यर्थमिदमुच्यते—सच्चिदानन्दमयं ब्रह्म जानीयादिति । तं नृसिंहाकारममुम् एवमुक्तप्रकारेण विद्वान् जानन् अमृते क्षीरे ‘ पञ्चामृतान्यानय ’ इत्यादावमृतशब्दस्य क्षीरे दृष्टत्वात्, इहैव लोके उत्कृष्टो भवतीत्यर्थः । यद्वा एवं पञ्चाङ्गन्यासे कृते इहैव जीवन्मुक्तो भवति आनन्दो भवतीत्यर्थः । यस्मात्साङ्गं साम कृत्स्ननृसिंहब्रह्मविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकम्, तस्मादिदमित्यादि गच्छतीत्यन्तम् उक्तार्थम् ॥

अस्य साम्नः उक्तप्रकारेण विश्वस्रष्टृत्वं दर्शयितुमाह—

**विश्वसृज एतेन वै विश्वमिदमसृजन्त**

यद्विश्वमसृजन्त तस्माद्विश्वसृजो विश्वमेनाननु प्रजायते ब्रह्मणः सायुज्यं सलोकतां यन्ति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । विष्णुं प्रथमस्यान्त्यं मुखं द्वितीयस्यान्त्यं भद्रं तृतीयस्यान्त्यं म्यहं चतुर्थस्यान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति योऽसौ सोऽवेदयदिदं किं चात्मनि ब्रह्मण्यानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । स्त्रीपुंसोर्वा य इहैव स्थातुमपेक्षते स सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियते देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे येनासावमृती भूत्वा सोऽमृतत्वं च गच्छति । तस्मादिदं साममध्यगं जपति तस्मादिदं सामाङ्गं प्रजापतिस्तस्मादिदं सामाङ्गं प्रजापतिर्य एवं वेदेति महोप-

**निषद्य एतां महोपनिषदं वेद स कृतपुरश्चरणोऽपि महाविष्णुर्भवति महाविष्णुर्भवतीति ॥ ७ ॥**

## इति प्रथमोपनिषत् ॥

विश्वसृजः एतेन साम्ना नृसिंहब्रह्मविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकेन, वै प्रसिद्धम्, सर्वमिदमसृजन्त । यत् यस्मात्सर्वमसृजन्त, तस्मात् विश्वसृजः— इति विश्वसृक्शब्दं निर्वक्ति । विश्वमेनानतु प्रजायते । ब्रह्मणः सायुज्यं सलोकतां यन्तीति उपासकानां तादात्म्यभेदोपासनयोः भेदेन फलनिर्देशः । ब्रह्मणः सायुज्यं सलोकतां यन्तीति यस्मात्साङ्गात्साम्नः ईदृशमुपासकानां फलम्, तस्मादिदमित्यादि गच्छतीत्यन्तम उक्तार्थम् । तस्मादिदं साङ्गं सामेत्यसकृदभ्यासस्य अयमभिप्रायः— साङ्गसाम्नैव कृत्स्नब्रह्मविद्याप्रतिपादकमन्त्राभिव्यक्त्या या ब्रह्मविद्या उत्पन्ना सैव फलवती नान्येति । अत एवोक्तम 'तस्मादिदमेव मुख्यं द्वारं कलौ' इति पापभूयिष्ठेऽत्र काले अस्यैव मुख्यता अन्येषां तु गौणतेति । कालान्तरे तु अस्या अन्यस्य वैकल्पिकी मुख्यतेति सर्वमनवद्यम् । अथेदानीं चतुर्थं सामोद्धारमाह—

विष्णुं सर्वानुदात्तात्मिका गीतिः । प्रथमस्य अन्त्यमिति, प्रथमपादोक्ताक्षरद्वयेऽपि अन्त्यम् अन्त्यस्वरयुक्तं जानीयादिति प्राक्तनमनुषज्यते । मुखं सर्वानुदात्तात्मिका गीतिः द्वितीयस्य अन्त्यमिति, द्वितीयपादोक्ताक्षरद्वयेऽपि अन्त्यस्वरयुक्तं सामेति संबन्धः । ननु सर्वोद्धारेषु प्रथमद्वितीयशब्दौ कस्मात्पादाभिप्रायेण व्याख्यायेते, न उक्ताक्षरसंख्यापेक्षया ? तथा हि, प्रथमान्त्यमिति उक्ताक्षरद्वयमध्ये प्रथमस्याक्षरस्य अन्त्यं स्वरं जानीयादिति । तथा द्वितीयान्त्यमिति उक्ताक्षरद्वयमध्ये द्वितीयस्याक्षरस्य अन्त्यं स्वरं जानीयात् । एवं प्रथमोद्धारेऽपि प्रथमस्याक्षरस्य द्वितीयस्याक्षरस्य आद्यस्वरं जानीयादिति कस्मान्न व्याख्यायते ? उच्यते । सर्वत्र हि अक्षरद्वयमुक्त्वैव प्रथमद्वितीयतृतीयचतुर्थशब्दाः श्रूयन्ते । न हि अक्षरद्वयोक्तौ तृतीयचतुर्थशब्दावुपपन्नौ, तृतीयचतुर्थयोरक्षरयोरभावात्, इति पादाभिप्रायेण व्याख्येयाविति निश्चिते, तत्साहचर्यात्प्रथमद्वितीयशब्दावक्षरद्वयोक्तावुपपन्नाविति न अक्षराभिप्रायेण व्याख्येयौ ; किंतु पादाभिप्रायेणैवेति स्थितम् । भद्रम्, सर्वानुदात्तात्मिका गीतिः तृतीयस्य अन्त्यमित्युक्तार्थम् । म्यहम्, सर्वानुदात्तात्मिका गीतिः चतुर्थस्य अन्त्यमित्युक्तार्थम् ।

ननु कस्मान्नैरन्तर्येण सामोद्धाराभावः, नैरन्तर्येण हि उद्धृते साम्नि सौकर्यं स्यात्— द्वितीयोपनिषदुक्तपदोद्धारवत्। उच्यते— सत्यं सौकर्यं स्यात्, किं तु सामद्रष्टा प्रजापतिः सर्वान्देवान्द्रष्टुं शक्तोऽपि मूलमन्त्रवत् नेदं साम अपश्यत्, किं तु तद्दर्शनाय अस्यामुपासनायाम् उपासनैकदेशानुष्ठानात् ईषच्छुद्धान्तःकरणः सन् प्रथमोद्धारमपश्यत्, पुनश्च क्षीरोदार्णवाद्युपास्यमुपास्य द्वितीयमुद्धारमपश्यत्, एवमभ्यधिकोपासनानुष्ठानादभ्यधिकशुद्धान्तःकरणः तृतीयं चतुर्थमपश्यदिति प्रजापतेरपि तद्दर्शने महानायासः; किमुतान्येषाम्— इति नैरन्तर्येण सामोद्धाराभावः साम्नो दुर्लभतां दुर्दर्शनतां च दर्शयति। यः प्रजापतिरसौ स प्रजापतिरवेदयत् निवेदितवान् उपदिष्टवानिदं किंच यदिदं प्रागुक्तमुपासनम् आत्मनि ब्रह्मणीति ब्रह्मण्यात्मनीति ब्रह्मात्मकतां स्वस्मिन् परिज्ञाय आनुष्टुभम् अनुष्टुप्संबन्धि सामद्वारकमुपासनं जानीते यो जानीते सोऽमृतत्वं च गच्छतीत्युक्तार्थम्। स्त्रीपुंसोर्वा स्त्रियां वा पुंसि वा प्रागुक्तमुपासनं प्रजापतिरुपदिष्टवानित्यर्थः। अथवा ब्रह्मणि हिरण्यगर्भे एतदुपासनं स्त्रीपुंसोर्वा। यद्वा आत्मनि ब्रह्मणीति ब्रह्मणि परमेश्वरे आनुष्टुभं साम न्यस्तं जानीते। अस्मि-

न्पक्षे प्रागुक्तो यच्छब्दः उपास्यपरः; न प्रजापतिपरः। स्त्रीपुंसोर्वा स्त्रीपुंसोश्च वा-शब्दः समुच्चयार्थः, 'वायुर्वा त्वा मनुर्वा त्वा' इत्यादौ दृष्टत्वात्। एतदुक्तं भवति— उपास्येश्वरे सामन्यासं कृत्वा उपासकेन आत्मन्यपि सामन्यासः कार्यः। य उपासकः इह लोके उत्कर्षेण स्थातुमपेक्षते, तस्मै सर्वैश्वर्यं ददाति। देहान्ते तु देवः परं ब्रह्म तारकं व्याचष्टे, कामिनं प्रकृत्य देहान्ते इति विशेषणोपादानात् कामित्वेन प्रागधिकाराच्च। निष्कामस्यार्वागपि देवः परं ब्रह्म तारकं प्रणवस्थं सामाङ्गं प्रणवेन व्याख्यातम्, येन प्रणवेन व्याख्यातेन अमृती भूत्वा स श्रोता अमृतत्वं च कैवल्यं प्राप्नोति। यस्मात् तारकस्थं परब्रह्म व्याख्येयम्, तस्मादिदं तारकं साममध्यगं साममध्यवर्ति जपति, सामोपासनाङ्गप्रणवजपो यथाशक्तीति दर्शयति। एतदेव आह— तस्मादिदं तारकं साम्नोऽङ्गं प्रजापतिः ऋषित्वेन। यद्वा इदं तारकं परमेश्वरस्वरूपाख्यानेन, साम च परमेश्वरविषयविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकत्वेन, प्रजापतिरुभयकथनेन—इत्येतत्त्रितयमवश्यमुपासनायामङ्गम्। एतदेव त्रितयमस्यामुपासनायामावश्यकमिति दर्शयितुं द्विरभ्यासः—तस्मादिदं सामाङ्गं प्रजापतिः तस्मादिदं सामाङ्गं प्रजापतिः इति।

यस्मादेवं साम, तस्मादस्य नैरन्तर्येणोद्धारः स्पष्टीक्रियते। तत्र मूलमन्त्रप्रथमपादाक्षरेष्वष्टसु मुखहस्ताभ्यां हस्ताङ्गुष्ठोत्तमपर्वोच्छ्रयेण आद्यमक्षरद्वयं मुखेन प्रागाय तृतीयमक्षरं कनिष्ठिकामूलपर्वस्पर्शेन तथैव मुखेन प्रागाय चतुर्थं पञ्चमं चैकैकं पृथक्पृथगङ्गुष्ठोत्तमपर्वतर्जनीस्पर्शतत्संनिहिताङ्गुल्युपकनिष्ठिकाकनिष्ठिकामध्यमध्यपर्वस्पर्शेन तथैव मुखेन प्रागायेत्। षष्ठमङ्गुष्ठोत्तमपर्वोच्छ्रयेण तथैव मुखेन प्रागायेत्। सप्तमाष्टमाक्षरे कनिष्ठिकामूलपर्वस्पर्शेन यथाविहितस्वरैः आद्याक्षरद्वयाद्यतृतीयाक्षरान्त्यचतुर्थपञ्चमाक्षरमध्यषष्ठाक्षराद्यसप्तमाष्टमाक्षरान्त्यैः अप्रमत्तः तथैव मुखेन गायेत्। तथैव तृतीयषष्ठयोरङ्गुलीभ्यां दीर्घं गृह्णीयात्। एवं द्वितीयतृतीयचतुर्थपादाक्षरेष्वष्टसु साम गेयम्। द्वितीयपादे षष्ठं दीर्घं तृतीये चतुर्थमक्षरं दीर्घं चतुर्थे षष्ठं दीर्घमिति शुद्धं साम; साङ्गं चेत् प्रथमपादान्ते प्रणवं निक्षिप्य द्वितीयपादान्ते सावित्रीं तृतीयपादान्ते यजुर्लक्ष्मीं चतुर्थपादान्ते नृसिंहगायत्रीं गायेत्। स्त्री चेत् शूद्रश्चेत् एतत्त्रितयं विहाय शुद्धं साम गायेत्। एष नैरन्तर्येण सामोद्धारः; उच्चारस्यातिदुर्लभत्वादतिरहस्यत्वाच्च लिखितोऽपि न लिखित्वा प्रदर्श्यते, वाचैव स्पष्टीक्रियत इति। य एवम् उक्तप्रकारेण वेद उपास्ते। इति-

शब्दः अस्या उपासनाया नामकरणं करोति । उपनिषत्सु एष समयः प्रणवगर्भितप्रणवबहुलोपासनानां महोपनिषदिति नाम तत्र तत्र । महोपनिषत् उपनिपूर्वस्य सदेः क्विबन्तस्य गत्यवसादनविशरणार्थत्वात् महद्ब्रह्म गमयति ज्ञापयतीति महोपनिषत्, महान्तं संसारमवसादयति क्लेशयति नाशयतीति वा महोपनिषदिति । 'ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदम्' इति श्रुतेः । य एताम् उक्तप्रकारेण प्रतिपादितां महोपनिषदं वेद उपास्ते, स उपासकः कृतपुरश्चरणः कृतं प्रागुक्तोपासनं येन स तथोक्तः महाविष्णुर्भवति । विष्लृ व्याप्तौ । द्विरभ्यासः प्रथमोपनिषत्समाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**नृसिंहपूर्वतापनीयोपनिषद्भाष्ये**
**प्रथमोपनिषद्भाष्यं संपूर्णम् ॥**

# द्वितीयोपनिषत् ॥

एवं तावत्प्रथमोपनिषदन्ते 'य एतां महोपनिषदं वेद' इत्येतच्छब्दपरामृष्टसामोपनिषदो महोपनिषदश्च सामानाधिकरण्यमुक्तम् । महोपनिषच्च द्वात्रिंशन्नृसिंहलीलाविग्रहस्तुतिमन्त्रालिका, तस्या अन्ते 'य एवं वेदेति महोपनिषत्' इत्युपसंहारात् । तत्र तावत् उभयोपनिषत्सामानाधिकरण्यात् सामाभिव्यक्तमूलमन्त्रद्वात्रिंशदक्षरेषु महाचक्रन्यस्तेषु नृसिंहद्वात्रिंशद्व्यूहानुपास्य, तैरेव मन्त्रैः तां देवतां स्तुत्वा सामोपासनां कुर्यादित्यवगम्यते । अत एव स्तुत्युपनिषदः पुरश्चरणोपासनार्थत्वमाह— 'स कृतपुरश्चरणः' इति । कृतं पुरश्चरणं स्तुत्युपासनं येन स तथोक्तः । एवं पुरश्चरणोपासनायां मुमुक्षोरुपासकस्य अधिकारसंपत्तिमभिधाय तस्यैव तदुपासनास्वीकारेऽन्यदप्यधिकारिविशेषणमाख्यायिकाद्वारेण आह—

**देवा ह वै मृत्योः पाप्मभ्यः संसाराच्चाबिभयुस्ते प्रजापतिमुपाधावंस्तेभ्य एतं**

मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत्तेन वै स मृत्युमजयन्स पाप्मानमतरन्स संसारं चातरंस्तस्माद्यो मृत्योः पाप्मभ्यः संसाराच्च विभीयात्स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात्स मृत्युं जयति स पाप्मानं तरति स संसारं तरति तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा साम्नः प्रथमः पादो भवति द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः सा साम्नो द्वितीयः पादो भवति तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रा आदित्या जगत्याहवनीयः सा साम्नस्तृतीयः पादो भवति यावसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः सोऽथर्वणैर्मन्त्रैरथ-

**वैवेदः संवर्तकोऽग्निर्मरुतो विराडेक ऋ-षिर्भास्वती स्मा साम्नश्चतुर्थः पादो भवति ॥ १ ॥**

देवा अकृतपुरश्चरणा वै मृत्योरबिभयु.। ते उपासका देवाः मृत्योः मरणहेतोर्वैवस्वतात् , स च मृत्युः पाप्मपूर्वक इति पाप्मभ्यः, तच्च पापं संसारपूर्वकमिति संसाराच्च अज्ञान-भयात् समस्ताद्व्यस्ताद्द्वितयात् अबिभयु. भयमागच्छन्– इति प्रत्येकं संबध्यते । द्विविधा हि उपासका देवाः मुमुक्षवः अमुमुक्षवश्चेति; तत्र मुमुक्षूणां त्रितयं समुच्चितं विशेषणम् । अमुमुक्षूणां ह्यकृतपुरश्चरणानां व्यस्तं द्वितयं विशेषणम्, केचन केवलं मृत्योर्जयमेव कामयन्ते, केचन पाप्मन एव जयम् , अन्ये तु त्रितयजयम् । ते द्विविधा देवाः प्रजापतिमुपाधावन् , उपपूर्वको धावतिः पूजामाह, उप स-मीपमेत्य प्रजापतिमपूजयन् स्तुतिशुश्रूषादक्षिणाभिश्च । तेभ्यो देवेभ्यः प्रीतः प्रजापतिः एतं मन्त्रराजमित्याद्यानुष्टुभमित्य-न्तं सर्वमुक्तार्थं प्रायच्छत् प्रादात् । तेन प्रदानेन वै स प्रजा-पतिः मृत्युमजयत् । देवा अपि मृत्युमजयन् । अजयन्निति बहुवचनात् स इत्येकवचनात् उभयत्रापि प्रकृत्यर्थसंबन्धे प्राप्ते, यथायोग्यतया वचनं योज्यम् । तथा तेनेत्यर्थप्राप्तं स्वीकरणं

परामृश्यते। एतदुक्तं भवति—तेन प्रदानेन प्रजापतिः मृत्यु-मजयत्, तेन स्वीकारेण देवा मृत्युमजयन्निति । कैश्चिदेवं व्याख्यातम्—समृत्युमिति समस्तं कृत्वा सह मृत्युना वर्तते यदज्ञानं तत्तथोक्तम्, तन्न, पूर्वं तस्याप्रकृतत्वात्। अथार्थप्राप्तं प्रकृतमिति चेत्, भवतु न कश्चिद्विरोधः; किं तु दातुः फलं न संकीर्तितं स्यादिति दाता कथं प्रवर्तेत? दक्षिणा-दिभिरिति चेत्, न । विरक्ते तु का वार्ता । तस्मादुभयत्रा-पि फलवत्युपासनेयमिति व्याख्या ज्यायसी । एवमुत्तरत्रापि व्याख्येयम्— पाप्मानं स संसारम् अतरत् अतरन्निति च । य-स्मादिदमुभयत्र फलवत्, तस्माद्यः प्रागुक्तः उपासकः मृत्योः पाप्मभ्यः संसाराच्च बिभीयात् समस्ताद्व्यस्ताद्वितयाद्भयं गच्छे-त्, स प्रागुक्त उपासको गुरूपसर्पणेन एतं मन्त्रराजमित्यादि. स संसारं तरतीत्यन्तं स्पष्टार्थम् । प्रतिगृह्णीयात् स्वीकुर्यादित्य-र्थः। अनेनैतद्दर्शयति—मूलमन्त्रमात्रग्रहणे गुरूपसर्पणमावश्य-कम्। सामप्रभृत्युपासनांशे गुरूपसर्पणाच्छ्रुतितः तद्व्याख्या-नाद्वेति विकल्पः, 'तस्मादिदं साम येन केनचिदाचार्यमुखेन' इति श्रुतेः। अत एव एतद्विषयरहस्यकल्पग्रन्थान् असमर्थश्चेत् गुरुमुखाच्छृणुयात् समर्थश्चेत्स्वयमेवावेक्षेत, मूलमन्त्रं सबीजं सशक्तिकं साङ्गं सन्यासं गुरुमुखात्स्वीकृत्य । एवं प्रागुक्त-

स्योपासकस्य मुमुक्षोः प्रागुक्तं त्रितयं विशेषणम् इतरस्य द्वितयं विशेषणम् उभयत्रापि स्तुत्युपनिषत्प्रतिपादितं स्तवनं तेषां व्यूहानामुपासनं साम्ना मूलमन्त्राभिव्यक्तिश्चेति त्रितयमप्येतत् पुरश्चरणरूपत्वात्साधारणम् । एवं विशिष्टमधिकारिणमभिधाय तदुपासनाप्रारम्भस्य प्रणवोपासनापूर्वकत्वात्, प्रणवमात्रानृसिंहव्यूहे— 'ॐ सं ॐ यो वै नृसिंहो देवो भगवान्याश्चतस्रोऽर्धमात्रास्तस्मै वै नमो नमः' इति मन्त्रवर्णात् पुरश्चरणोपासनान्तर्गतत्वेन स्थितेऽपि, अत्रापि मात्राशब्दादर्धशब्दाच्चतुःशब्दाच्च तन्मात्राव्यूहप्रत्यभिज्ञानात् तस्मिन्नेव व्यूहे चतुर्मात्रासंबन्धित्वेन उपासनाविशेषमाह— तस्य प्रागुक्तस्य मन्त्रराजस्य सामाभिव्यक्ताक्षरस्य संपुटितत्वेन स्थितस्य ह निश्चितं सामाभिव्यक्तमूलमन्त्राक्षरसंपुटीकरणेन स्थितत्वात् साम्ना संबन्धः, 'तस्मात्प्रत्यक्षरमुभयत ओंकारो भवति' इति श्रुतेः । प्रणवस्य या पूर्वा मात्रेत्यादि सा साम्नश्चतुर्थः पादो भवतीत्यन्तं स्पष्टार्थम् । अकारोकारमकारार्धमात्रात्मको यथासंख्यं पृथिव्यन्तरिक्षद्युसोमलोकऋग्यजुःसामाथर्वणब्रह्मविष्णुमहेश्वरोंकारवसुरुद्रादित्यमरुद्गायत्रीत्रिष्टुब्जगतीविराड्गार्हपत्यदक्षिणाग्न्याहवनीयसंवर्तकात्मकः प्रणवः तस्मिन्नृसिंहव्यूहे विश्वरूपन्यायेनावस्थितः

उपास्य. । नन्वनेक एव लीलाविग्रहाः कथं न भवन्ति । नेति ब्रूम. 'यः' 'तस्मै' इत्येकवचनात् एक एवायं लीला-विग्रह इत्यवगम्यते ॥

एवं तावत्पुरश्चरणान्तर्गतप्रणवमात्राव्यूहोपासनमभिधाय इदानीं सामाभिव्यक्तमूलमन्त्रेण ब्रह्मोपासनामभिधातुं मूल-मन्त्रस्य प्रणवसपुटीकरणादक्षरसंख्याविवृद्धे. कथं द्वात्रिं-शदक्षरं सामेत्याशङ्क्य पादशः पञ्चाङ्गन्यासं च अभिधातुं पादाक्षरसंख्यापूर्विकां कृत्स्नमूलमन्त्राक्षरसंख्यामाह—

**अष्टाक्षरः प्रथमः पादो भवत्यष्टाक्षरा-स्त्रयः पादा भवन्त्येवं द्वात्रिंशदक्षराणि संपद्यन्ते द्वात्रिंशदक्षरा वा अनुष्टुब्भव-त्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमु-पसंहृतं तस्य हि पञ्चाङ्गानि भवन्ति च-त्वारः पादाश्चत्वार्यङ्गानि भवन्ति सप्र-णवं सर्वं पञ्चमं भवति । ॐ हृदयाय नमः । ॐ शिरसे स्वाहा । ॐ शि-खायै वषट् । ॐ कवचाय हुम् । ॐ**

अस्त्राय फडिति प्रथमं प्रथमेन युज्यते द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन व्यतिषक्ता वा इमे लोकास्तस्माद्व्यतिषक्तान्यङ्गानि भवन्त्योमित्येतदक्षरमिदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीत्यक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः ॥ २ ॥

अष्टाक्षर प्रथमः पादो भवतीत्यादि सप्रणवं सर्वं पञ्चमं भवतीत्यन्तं स्पष्टार्थम् । ॐ हृदयेत्याद्यङ्गमन्त्राणां पञ्चानां सामाङ्गमन्त्रैरेव व्याख्यातत्वात् न पृथग्व्याख्यानापेक्षेति, हृदयेत्यादि पञ्चमेनेत्यन्तं स्पष्टार्थम् । व्यतिषक्ता वा इमे लोकास्तस्माद्व्यतिषक्तान्यङ्गानि भवन्तीति लोकबुद्ध्योपास्यानां हृदयाद्यङ्गानां सामाभिव्यक्तमूलमन्त्रप्रतिपाद्ये नृसिंहब्रह्मव्यूहे क्षीरोदार्णवशायिनि उपविष्टे वा लोकव्यतिषङ्गहेतुकाङ्गव्यतिषक्तता विधीयते । तस्माद्व्यतिषक्तान्यङ्गानि भवन्तीत्यत्र व्यतिषक्तानि यथायोग्यतया अन्योन्यं मिश्रितान्युपास्यानीत्यर्थः । ततश्च अयमर्थः संपद्यते– पारमेश्वरं हृदयाख्यमङ्गं पारमेश्वरशिरोऽङ्गादधःप्रदे-

शान्तःस्थितं हृदयप्रदेशादारभ्य उपास्यम्। अत एव सामाङ्गप्रणवव्याख्यानेन मूलमन्त्रहृदयाङ्गव्याख्यानावसरे पारमेश्वरं हृदयं व्याख्यातम्; इतरथा तद्व्याख्यानमप्रस्तुतं स्यात्; तस्मादङ्गव्यतिषक्तताविधानादेव तद्व्याख्यानं प्रस्तुतमिति सिद्धम्। यत एवं हृदयाङ्गोपासनैव तदन्तर्गतत्वात् नेत्रत्रयोपासना, अत एव नेत्रत्रयाङ्गोपासना न पृथगभिहिता। एवमुत्तरत्रापि शिखाख्यमङ्गं पारमेश्वरं शिरोऽङ्गे मूर्ध्नि च व्यतिषक्तं सामाङ्गलक्ष्मीयजुर्मन्त्रेण व्याख्यातमुपास्यम्। शिरश्च द्वितीयमङ्गं यथोक्तहृदये व्यतिषक्तं सामाङ्गसावित्रीमन्त्रेण व्याख्यातम्। पारमेश्वरं कवचम् यथोक्तहृदयैकदेशे नाभेरूर्ध्वं ग्रीवातोऽधः पृष्ठप्रदेशव्यापि सामाङ्गनृसिंहगायत्र्या व्याख्यातमुपास्यम्। एवं पञ्चममङ्गम् अस्त्राख्यम् उत्तराधरभावेन तन्नाभिमध्यवर्ति क्षीरोदार्णवशायिपारमेश्वरव्यूहचतुष्टयाङ्गव्यापितया व्यवस्थितं व्यतिषक्तमुपास्यमिति यथायोग्यतया व्यतिषक्तशब्दस्याङ्गेषु स्थितिः। पञ्चाङ्गन्यासोपन्यासः न षष्ठमङ्गमिति तस्य हृदयान्तर्गतत्वात् इति प्रागभिहितम्। पञ्चमेऽङ्गे सप्रणवतां विधातुमाह—यस्मादोमित्येतदक्षरमिदं सर्वमिति, यदिदमर्थजातमभिधानाभिधेयभूतं तस्याभिधानाव्यतिरेकादभिधानभेदस्य च

ओंकाराव्यतिरेकात् ओंकार एवेदं सर्वम् । तस्मात्प्रत्यक्षरमुभयत ओंकारो भवति प्रत्यक्षरमेकैकं मूलमन्त्राक्षरं प्रणवेन संपुटितं कुर्यात्—इत्यक्षराणां मूलमन्त्राक्षराणां न्यासम् अक्षाख्येऽङ्गे उपदिशन्ति कथयन्ति ब्रह्मवादिनः ब्रह्मैवोपास्यमिति ये वदन्ति ते ब्रह्मवादिनः । अत्र च उपदिशन्तीति विशेषणोपादानात् मूलमन्त्राङ्गजातमुपदेशगम्यमिति दर्शयति । तमिमं पञ्चाङ्गन्यासं यथोक्तविशेषणे परमेश्वरे यथोक्तविशेषणविशिष्टं विधाय स्वात्मन्यपि विदध्यात्, अस्मिन्हि प्रकरणे तस्यार्थजातस्य प्रायशः परमेश्वरसंबन्धितया श्रुतत्वादिति ॥

एवं तावत् 'तस्मात्प्रत्यक्षरमुभयत ओंकारो भवति' इति विधानात्सामाभिव्यक्तमूलमन्त्राक्षरव्यवधानेन अर्थाप्रतिपादने औपाधिकेन पदाज्ञानेन प्राप्ते, तदव्यवधानेनार्थप्रतिपादनोपाधिना गूढेन पदपरिमाणं ज्ञापयितुं पदोद्धारमाह—

**तस्य ह वा उग्रं प्रथमं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति वीरं द्वितीयं स्थानं महाविष्णुं तृतीयं ज्वलन्तं चतुर्थं सर्वतोमुखं पञ्चमं नृसिंहं षष्ठं भीषणं सप्तमं भद्रमष्टमं मृत्युमृत्युं**

**नवमं नमामि दशममहमित्येकादशं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । एकादशपदा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्मात्सर्वमिदमानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ३ ॥**

तस्य ह वा इत्यादि सर्वमुपसंहृतमित्यन्तं स्पष्टार्थम् । स्थानं जानीयात् पदं जानीयात् । एकादशपदा वा अनुष्टुब्भवतीत्युपसंहारात् प्राक्तनः सर्वोऽपि स्थानशब्दः पदे वर्तते । यस्मादभिधानाभिधेयप्रपञ्चस्याभिधानाव्यतिरेकात् 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः नामप्रपञ्चस्य सामान्यविशेषात्मकस्यानुष्टुब्नामाव्यतिरेकात् अनुष्टुभश्च आद्यब्रह्मविवर्तात्मकत्वात् साकारब्रह्मप्रतिपादकत्वेन ब्रह्मत्वे सिद्धे ब्रह्मणश्च सृष्ट्युपसंहारकारणत्वेनोपादानत्वादित्यनुष्टुबेवोपादानम्, तस्मात्सर्वमानुष्टुभमित्यादि गच्छतीत्यन्तं स्पष्टार्थं व्याख्येयमुक्तार्थम् ॥

**देवा ह वै प्रजापतिमब्रुवन्नथ कस्मादु-**

च्यत उग्रमिति स होवाच प्रजापतिर्य-
स्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवा-
न्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्यज-
स्रं सृजति विसृजति वासयत्युद्ग्राह्यत
उद्गृह्यते । स्तुहि श्रुतं गर्तसदं युवानं मृगं
नभीममुपहत्नुमुग्रम् । मृडा जरित्रे सिंह
स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ।
तस्मादुच्यत उग्रमिति । अथ कस्मादु-
च्यते वीरमिति यस्मात्स्वमहिम्ना सर्वाँ-
ल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि
भूतानि विरमति विरामयत्यजस्रं सृजति
विसृजति वासयति । यतो वीरः कर्म-
ण्यः सुदक्षो युक्तग्रावा जायते देवकामः ।
तस्मादुच्यते वीरमिति । अथ कस्मादुच्यते
महाविष्णुमिति । यः सर्वाँल्लोकान्व्याप्नो-
ति व्यापयति स्नेहो यथा पललपिण्डमो-
तप्रोतमनुप्राप्तं व्यतिषक्तो व्याप्यते व्या-

पयते । यस्मान्न जातः परोऽन्योऽस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशीति । तस्मादुच्यते महाविष्णुमिति । अथ कस्मादुच्यते ज्वलन्तमिति । यः स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते ज्वालयते । सविता प्रसविता दीप्तो दीपयन्दीप्यमानः । ज्वलञ्ज्वलिता तपन्वितपन्संतपन्रोचनो रोचमानः शोभनः शोभमानः कल्याणः । तस्मादुच्यते ज्वलन्तमिति । अथ कस्मादुच्यते सर्वतोमुखमिति । यस्मादनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते सर्वगः सर्वतस्तिष्ठति । एकः पुरस्ताद्य इदं बभूव

यतो वभूव भुवनस्य गोपाः । यमप्येति भुवनं सांपराये नमामि तमहं सर्वतो-मुखम् । तस्मादुच्यते सर्वतोमुखमिति । अथ कस्मादुच्यते नृसिंहमिति । यस्मात्सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत्परमेश्वरो जगद्धितं वा एतद्रूपं यदक्षरं भवति । प्र तद्विष्णुः स्तवते वीर्याय मृगो नभीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा । तस्मादुच्यते नृसिंहमिति । अथ कस्मादुच्यते भीषणमिति यस्मात्स्वमहिम्ना यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्चिन्न बिभेति । भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ।

तस्मादुच्यते भीषणमिति । अथ क-
स्मादुच्यते भद्रमिति । यस्मात्स्वयं भद्रो
भूत्वा सर्वदा भद्रं ददाति रोचनो रोच-
मानः शोभनः शोभमानः कल्याणः ।
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्ये-
माक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्त-
नूभिर्व्यशेम देवहितं यदायुः । तस्मादु-
च्यते भद्रमिति । अथ कस्मादुच्यते मृ-
त्युमृत्युमिति । यस्मात्स्वभक्तानां स्मृत
एव मृत्युमपमृत्युं च मारयति । य
आत्मदा बलदा यस्य विश्व उपासते
प्रशिषं यस्य देवाः । यस्य च्छाया-
मृतं यो मृत्युमृत्युः कस्मै देवाय हवि-
षा विधेम । तस्मादुच्यते मृत्युमृत्युमि-
ति । अथ कस्मादुच्यते नमामीति य-
स्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्म-
वादिनश्च । प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वद

त्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे । तस्मादुच्यते नमामीति । अथ कस्मादुच्यतेऽहमिति । अहमस्मि प्रथमजा ऋता३स्य पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुवर्न ज्योतीः । य एवं वेदेत्युपनिषत् ॥ ४ ॥

इति द्वितीयोपनिषत् ॥

यदर्थप्रतिपादकगूढोपाधिना पदज्ञानमभूत तमेव गूढोपाधिं विवृणोति प्रश्नोत्तराभ्याम् । स च अत्र बहुतरो व्याख्येयः साङ्गसामाभिव्यक्तसाङ्गमूलमन्त्रं प्रतिपाद्य । स च मूलमन्त्रः पदत्रयात्मकः प्रथम पादः पदद्वयात्मको द्वितीयः पदत्रयात्मकस्तृतीयः तत्संख्याकपद एव चतुर्थ इत्येकादशपदात्मकः । एवमेकादशपदात्मके मन्त्रे पञ्चाङ्गन्यासानन्तरमुक्ते मन्त्रे द्वितीयान्तेषु नवसु पदेषु मन्त्रान्त्यं पदद्वयं

तृतीयपादाद्यं च पदमपि त्रितयमपि अधस्तनेषूपरितनेषु च तृतीयपादाद्यपदादन्यत्रानुषज्यते, तृतीयपादाद्यपदे द्वितयमनुषज्यते, एवं क्रियाकारकाद्यन्वयसंबन्धशुद्धिः। तत्र पञ्चाङ्गन्यासानन्तरं पठितत्वात्पदोद्धारतदर्थकथनस्य सर्वेष्वेव पादेषु साङ्गेष्वर्थः कथनीय इत्याद्ये पादे पदत्रयात्मके साङ्गे लोकाद्यग्न्यादिना सामोपनिषद्युपास्ये सामाङ्गप्रणवेन च मूलमन्त्रहृदयाङ्गव्याख्याने प्राप्ते तत्रैकैकं पदं बहुतरेष्वर्थेषु व्याख्येयम्। तथोपरितनऋचः एकादशपदसंबन्धिन्यः प्रश्नोत्तरान्तरालवर्तिब्राह्मणवर्तिन्यः 'तदेषाभ्युक्ता' इत्येवं ब्राह्मणोक्तार्थे साक्षित्वेनोद्भाविता महाचक्रे न्यस्ते द्वात्रिंशद्व्यूहनृसिंहात्मके ब्रह्मणि एकैकमूलमन्त्रपदव्याख्यानपरत्वेन वर्णनीयाः। तथा ब्राह्मणमेकैकमूलमन्त्रपदव्याख्यानपरत्वेन महाचक्रनाभिवर्तिक्षीरोदार्णवसंबन्धिमूलनृसिंहव्यूहे ब्रह्मणि प्रागुक्तगुणविशिष्टे व्याख्येयम्। अत एव तत्र साक्षित्वेनोद्भावनम् ऋग्ब्राह्मणयोः तत्तत्पदव्याख्यानावसरे विभागक्रमं च स्पष्टं प्रदर्शयिष्यामः। तत्र तावदेकैकं पदं धातूपसर्गादियोगेन बहुतरमर्थजातं कथं वदिष्यति प्रजापतिः, कथं च व्याख्यास्यत्यस्मान्व्युत्पन्नान्प्रति – इत्येवं देवाः विस्मयेन ह हर्षिताः वै प्रजापतिमब्रुवन्निति सर्वपदसाधारणं व्याख्यानं पृष्ट्वा अथ अन-

न्तरं कस्मात्प्रकृतिप्रत्ययविभागात् अनाख्याताात्मकं प्रथमपद-मुच्यते व्याख्यायते उभयत्रापि मूलनृसिंहव्यूहे द्वात्रिंशन्नृ-सिंहव्यूहे च उग्रमिति । इति-शब्दः प्रश्नसमाप्तिं द्योतयति । स प्रजापतिः तान्देवान्परमेश्वरोपासनानिष्ठान् विवक्षितार्थ-प्रष्टॄन् दृष्ट्वा हर्षितः उत्तरमुवाच । एवमुत्तरेष्वपि प्रश्नोत्तरेषु योज्यम् । यस्मात्स्वमहिम्ना स्वतन्त्रशक्त्या मायया तस्या आत्मतन्त्रत्वादेव स्वातन्त्र्यम् । स्वमहिम्नेति च वचनं सर्व-शक्तिमत्तृतीयपादाद्यपदानुषङ्गं दर्शयति । एवं तत्तत्पदव्या-ख्यानावसरे । सर्वाँल्लोकान् पृथिव्यादीन्पार्थिवत्वावान्तरजा-तिभेदभिन्नान् सर्वान्देवान् अग्न्यादीन् सप्रणवव्याख्यानपक्षे ऋग्ब्रह्मादिगार्हपत्यान्तान् प्रणवप्रथममात्राप्रतिपादितान् सर्वा-नात्मनः विश्वादीन् सामाङ्गप्रणवव्याख्याने वक्ष्यमाणान् स-र्वाणि भूतानि उद्गृह्णाति, उदित्यव्ययम् उ इत्येतस्य नि-पातस्य स्थाने, वर्णसाम्यात् अन्वित्युपसर्गस्यार्थे, ग्रह इत्ययं गृह्णातीति भावव्युत्पत्त्या, अनुगृह्णातीत्यर्थः । अजस्रम् अ-नवरतं तथा च उत्पूर्वको गृह्णाति-शब्दः सृष्टिविमोचन-वसातिषु वर्तते । उद्ग्राह्यते उद्गृह्यते इत्यात्मनेपदात् प्रयो-जककर्तृत्वं साक्षात्कर्तृत्वं च इत्युक्तमेवार्थं द्रढयति । तत-श्चायमर्थः— पूर्वोक्तार्थानुग्राहकत्वं स्रष्टृत्वं च विपूर्वकस्य

सृजतेरुपसंहारार्थत्वेन तदर्थत्वं विमोचनार्थत्वं वा अव-
स्थितिकारयितृत्वमनुग्रहे प्रयोजकत्वमिति मूलनृसिंहव्यू-
हहृदयान्तर्वर्तित्वेन उपास्यम् । एवं मूलनृसिंहगूढहृदयो-
पासापरत्वेन उग्रपदं व्याख्याय अथेदानीं तदेव पदं द्वात्रिंश-
द्व्यूहोपासनापरत्वेन व्याख्यातुम् ऋचमाह । स्तुहीति स्तोतारं
प्रत्यक्षीकृत्याह परोक्षीकृत्य स्तुत्यम । श्रुतम् 'यो वै नृसिंहः'
इत्यादिमन्त्रवर्णैरेव श्रुतं द्वात्रिंशन्नृसिंहव्यूहम् । गर्तसदं गर्ते
महाचक्रे, गृणातेः स्तुतिकर्मणो गीयते स्तूयते इति व्युत्पत्त्या
गर्तम्, सीदतीति गर्तसदम् । युवानं प्रसिद्धम् । मृगं सिंहरूप-
म् । नभीमम अभयंकरम् । उपहत्नुम् अनुग्रहार्थं सर्वत्रोपगम-
शीलम् । उग्रं द्वात्रिंशन्नृसिंहव्यूहरूपम् । अत्रापि सशक्तिकनृ-
सिंहपदस्यानुषङ्गः । स्तुहीत्येवं संबन्धः । एवं परोक्षतः स्तुते
द्वात्रिंशन्नृसिंहव्यूहे तत्सामर्थ्यादक्षरश्रवणयुक्तत्वाच्च तच्छ्रुत्वा
प्रत्यक्षो हि अभूत स व्यूहः उपासकायेति प्रत्यक्षीकृत्वा आह
उत्तरार्धेन— हे सिंह द्वात्रिंशद्व्यूह स्तवानः स्तूयमानः त्वं मृड
सुखय जरित्रे स्तोत्रकर्त्रे । यद्वा चतुर्थी द्वितीयार्थे । ते तव
सेनाः अस्मन् अस्मत्तः अन्यं निवपन्तु विनाशयन्तु । यद्वा
स्वानुग्रहं लब्ध्वा परानुग्रहं प्रार्थयते— ते तव सेनाः तद्व्यू-
हरूपाः अस्मदन्यं निपूर्वको वपतिरनुग्रहार्थे वर्तते अनुगृ-

ह्वन्त्वित्यर्थः । यस्मादेव प्रागुक्तेन प्रकारेणोभयोपास्ये उग्रपदं क्षमम्, तस्मादुच्यते उग्रमिति । इति-शब्दः उत्तरसमाप्तिं द्योतयति । एवं प्रथमपदमुभयोपासने क्षममिति विज्ञाय अथेदानीं द्वितीयं पदमुभयोपास्ये व्याख्यातुं द्वितीयो देव-प्रश्नः; स च प्रथमदेवप्रश्नेन व्याख्यातः; अथ कस्मादुच्यते वीरमिति । स होवाच प्रजापतिरिति प्रागुक्तमनुषज्य उत्त-रम् । यस्मात्स्वमहिम्नेत्यादि सर्वाणि भूतानीत्यन्तमुक्तार्थम् । विरमति विरामयति विविधप्रकारेण प्रागुक्तान्प्रति रम-ति । रम् क्रीडायाम् । तथैव तानाक्रीडयति । कथं क्रीडयतीत्यपेक्षिते आह— अजस्रमित्यादि वासयतीत्यन्त-मुक्तार्थम् । एतदुक्तं भवति— सृष्टिस्थितिलयविमोचनकर्तृ-स्वरूपाः ब्रह्मादिक्रियाः क्रीडाः प्रागुक्तार्थाः । अतः मूलनृसि-हव्यूहहृदयं क्रीडायुक्तमुपास्यम । एवं मूलनृसिंहोपासनापर-त्वेन द्वितीयं पदं व्याख्याय द्वात्रिंशन्नृसिंहव्यूहोपासनायां तदेव पदं व्याख्यातुमर्धर्चमाह—यतो वीर इति । देवकामः तांस्तान् ब्रह्मादिदेवान् स्वेन रूपेणावतारयितुं कामयते इति देवकामः । यद्वा नृसिंहव्यूहमेव धृत्वा ब्रह्मादिरूपं प्रकटयति क्वचिदायुधैः क्वचिद्विश्वरूपोपपत्तिन्यायेन 'यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा' इत्यादिषु 'यो वै नृसिंहो देवो भग-

वान्ये चाष्टौ वसव' इत्यादिषु च पदेषु। एवं देवकामो जायते यतो वीरः शूरः, यद्वा वीरः विविधावताररूपेण रमणीयसंसार-शीलो वीरः, कर्मण्यः तत्तदवतरणरूपकर्मशीलः उपासकानुग्रहणे। सुदक्षः पूजितबलः, यद्वा पूजितः। युक्तग्रावा युक्तो ग्रावभिर्युक्तग्रावा, सोमे अध्वर्य्वादिरूपः, 'यो वै नृसिंहो देवो भगवान्यश्च सर्वम्' इत्यादिमन्त्रवर्णात्। यस्मादुक्तप्रकारेण उभयोपास्ये वीरपदं क्षमम्, तस्मादुच्यते वीरमिति। इति-शब्दः उत्तरसमाप्तिं द्योतयति। अथेदानीं तृतीयपदं व्याख्यातुं देवप्रश्नः; स च उक्तार्थः। सर्वत्र प्रश्नवाक्येषु अथ-शब्दः तत्तदानन्तर्यार्थः। अथ कस्मादुच्यते महाविष्णुम्। इति-शब्दः अनुषक्तप्रश्नसमाप्तिं द्योतयति। स होवाच प्रजापतिः इत्यनुषज्योत्तरम्। य इत्यत्रापि स्वमहिम्नेत्यनुषङ्गाच्छक्तिमन्नृसिंहपदस्यानुषङ्गः। सर्वाँल्लोकान्व्याप्नोति व्यापयतीत्यत्र सर्वलोकपदाद्देवात्मभूतानां संग्रहः प्राग्बद्धक्रमत्वेनावगतानां तदादिन्यायेन। विष्णुरिति विष्लृ व्याप्ताविति धातोः रूपम्। तच्च व्यापकत्वं निरुपपदत्वेन महत्त्वं प्राप्तमिति महच्छब्देन तदेव दृढीकृतम्। यद्वा मह इति तेजोनाम महो व्यापकम्। व्यापकत्वे दृष्टान्तमाह— स्नेहः तैलादिः यथा पललपिण्डं मांसपिण्डम् ओतम् अनु-

स्यूतं प्रोतं प्रकर्षेणानुस्यूतम् अनुषक्तं तादृशं पिण्डं व्यतिषक्त: अवयवसंभिन्न: व्याप्यते व्यापयते—इति दृष्टान्ते आत्मनेपदोपादानात् व्याप्नोति व्यापयतीति दार्ष्टान्तिके च परस्मैपदोपादानात् उभयपदी अयं धातुरिति दर्शयति । एतदुक्तं भवति—प्रागुक्तसर्वलोकादीन् प्रति साक्षाद्व्यापकत्वं प्रयोजकव्यापकत्वं च मूलनृसिंहहृदये उपास्यमिति । एवं तावत्साङ्गमूलनृसिंहव्यूहोपासनापरत्वेन महाविष्णुपदं तृतीयं व्याख्याय अथेदानीं तदेव पदं द्वात्रिंशन्नृसिंहव्यूहोपास्यपरत्वेन व्याख्यातुम् ऋचमाह— यस्मान् द्वात्रिंशन्नृसिंहव्यूहात् पर: उत्कृष्ट: न जात: जातोऽन्यो नास्ति सर्वस्यैवान्तर्भावात् यो व्यूह: स विश्वा सर्वाणि भुवनानि भूतानि आविवेश प्रविष्ट: । व्याप्तुं तत्तद्रूपधारणेन विश्वरूपावतरणेन आविर्भवति प्रजया आविर्भूत्या सह प्रजापतिरपि संविदान: विजानन् तमुपास्यतया त्रीणि ज्योतींषि गार्हपत्यादीन् सचते सेवते । स प्रजापति: उपासनां कुर्वन् षोडशी कला निराकारब्रह्मतया बभूव । तस्य च आद्यस्योपासकस्य प्रजापते: अन्यस्य वा उपासकस्य अयमुपासनाक्रम:—अत्र च प्रकरणे महाचक्रनाभिवर्तिक्षीरोदार्णवसंबन्ध्युपास्यो मूलनृसिंहव्यूह इति पूर्वाचार्याणां परिभाषा संप्रदायागता ।

तत्र च प्रणवपूर्वकशक्तिबीजोच्चारणपूर्वकं सामाभिव्यक्तद्वात्रिंशदक्षरेषु न्यस्तेषु चक्रे यथासंख्यम् एकैकस्मिन्नक्षरे प्रणवसंपुटिते तत्तद्व्यूहमन्त्रैः तं तं व्यूहं स्तुत्वा तथैवोपास्यः। एवं द्वात्रिंशन्नृसिंहव्यूहोपासनया स्वात्मानं महाविष्णुमुपास्य साङ्गसामाभिव्यक्तसाङ्गमूलमन्त्रेण नृसिंहव्यूहे प्रकरणे श्रुतत्वात् पञ्चाङ्गन्यासं विधाय संप्रदायानुसारेण तस्मिन्महाविष्णौ च तथैव पञ्चाङ्गन्यासं विधाय ततः साङ्गोपासनम् आरभेत । तत्र प्रथमपादे पदत्रयात्मके प्रथमपदव्याख्यानप्रतिपादितगुणविशिष्टं शक्तिमन्नृसिंहपदपूर्वकं नमस्क्रियापदपूर्वकान्त्यपदमुच्चरन् सामाङ्गप्रणवमन्त्रहृदयमन्त्रप्रतिपादितगुणविशिष्टं मूलनृसिंहव्यूहमुपास्य द्वात्रिंशन्नृसिंहव्यूहम् ऋक्प्रतिपादितम् उपासीत । एवं प्रतिपदं मूलनृसिंहव्यूहोपासनपूर्वकं द्वात्रिंशन्नृसिंहव्यूहोपासनम् । अत एव हृदयाद्यङ्गमन्त्राणामर्थं व्याचक्षाणैरस्माभिरुक्तं प्रपञ्चागमशास्त्रे 'हृदयं बुद्धिगम्यत्वात्प्रणामः स्यान्नमःपदम् । क्रियते हृदये नातो बुद्धिगम्या नमस्क्रिया' इति । एवं द्वितीयतृतीयचतुर्थपादेषु तत्तत्पदोपासनां प्रागुक्तां कृत्स्नां विधाय महाविष्णुरूपान्त्यशब्दप्रतिपादितरूपे वा उपास्यरूपे वा सायुज्यतया सच्चिदानन्दरूपे वा अथवा यथान्तःकरणशुद्धियोग्यतया समाधिना

वा तिष्ठेत उपासकः । आद्यद्वितीयोपासनयोः साममूलमन्त्र-प्रणवानां वैकल्पिकजपपूर्वकत्वेनावस्थानम् । तथा यत्र यत्र मूलमन्त्रस्मृतिः तत्र तत्र प्रणवशक्तिबीजसंपुटीकरणम्, तत्रापि ईषन्मूलमन्त्रजपपूर्वकः प्रणवजपः श्रेयान्, तस्य सर्वोत्कृष्टत्वात्सर्वमन्त्रजपप्रत्याम्नायत्वेन विहितत्वात् 'यः प्रणवमधीते स सर्वमधीते' इति श्रुतेः । अन्त्ययोरुपासनयोरन्त्यसामनि निराकारतयावस्थितौ न जपो नान्यचिन्तनं समाधावेवावस्थितिरिति परमरहस्यविवेको न कस्यचित्प्रतिपादनीय इति स्थितम् । यस्मादिदं महाविष्णुपदम् उभयोपास्यप्रतिपादनक्षमम्, तस्मादुच्यते महाविष्णुमिति । इति-शब्दः तृतीयपदप्रश्नोत्तरसमाप्तिं द्योतयति । एवं प्रथमपादः व्याख्यातः । एवं प्रथमपादोपासनां साङ्गां विधाय तथैव द्वितीयपादोपासनां विधातुं तदाद्यं पदम्, मन्त्रापेक्षया चतुर्थं च पदम्, व्याख्यातुं प्रश्नोपक्रमः ; स च उक्तार्थः ; अथ कस्मादुच्यते ज्वलन्तमिति । इति-शब्दो व्याख्यातः । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यः स्वमहिम्ना स्वाधीनमायया सर्वाँल्लोकानन्तरिक्षगतान्पूर्वोक्तान्भाविनश्च सर्वान् लोकान् तदन्तर्गतान्सर्वान्देवान यक्षगन्धर्वादीन् सर्वानात्मनः ऋग्यजुःसामाथर्वरूपान्पुरुषानन्यानृषीन्सामाङ्गसावित्रमन्त्र-

व्याख्यातांश्च सर्वाणि भूतानि एतान्पूर्वोक्तान्वक्ष्यमाणांश्च स्व-तेजसा ज्वलति स्वकीयप्रकाशेन, ज्वालयति एतानपि प्रकाशय-ति, शिरोऽन्तर्गतं तेजो व्याख्यातम्, सर्वाङ्गाङ्गिव्यापितयाङ्गा-नामन्योन्यसंबन्धश्रवणात् 'तस्माद्व्यतिषक्तान्यङ्गानि भवन्ति' इति श्रुतेः। एवं साक्षात्प्रयोजकत्वेन च स्वपरसंबन्धितया शि-रोऽङ्गान्तर्गततेजःसंबन्धे सिद्धेऽपि एतदेव आवेदयितुम् उभ-यपदित्वेन धातुं प्रयुङ्क्ते, प्राक्परस्मैपदम् इदानीमात्मनेपदम्, ज्वाल्यते ज्वालयते इति। एवं मूलनृसिंहव्यूहोपास्ये चतुर्थं पदं व्याख्याय द्वात्रिंशन्नृसिंहव्यूहे व्याख्यातुम् ऋचमाह— सविता सवितृमण्डलवद्वर्तुलतया स्थितत्वात् सवितायं द्वात्रिंशन्नृसिंहव्यूहः; अत एव प्रसविता सर्वकर्मानुष्ठाने अभ्यनुज्ञाता, एतद्व्यूहोपासनपूर्वकत्वात् इतरोपासनस्य। दीप्तः दीपयन्दीप्यमानः यथा अयं सविता रात्रित-मोविनाशनेन दीप्तः प्रकाशमानः कर्मानुष्ठाने अभ्यनु-ज्ञाता, तथा अयं द्वात्रिंशन्नृसिंहव्यूहः उपासितः उपासकाय मूलनृसिंहव्यूहोपासकाज्ञानरात्रितमोविनाशनेन दीप्तः प्रका-शमानः प्रधानोपासनाभ्यनुज्ञाता। दीपयन्दीप्यमानः इति शतृशानच्प्रत्ययौ वर्तमानकालार्थौ उक्तमेवार्थं द्रढयतः। ज्वलञ्ज्वलिता प्रकाशं कुर्वन्प्रकाशयिता। यद्वा उभयत्रापि

ज्वलञ्शब्दो दहनार्थे वर्तमानोऽपि अज्ञानदाहकत्वेन व्याख्येयः । तत्र लोकाद्यज्ञानस्य प्रकाशवत्ताद्दाहकः प्रकृते च उपासकाज्ञानदाहक इति । ज्वलन् प्रकाशनेनाज्ञानदहनं कुर्वन् ज्वलिता अज्ञानदहनकर्ता तपन् तापं कुर्वन् अज्ञानस्य वितपन् स्वयं शान्तः संतपन् संतापं कुर्वन् अज्ञानस्य । एते शतृप्रत्यया वर्तमानकालाः सन्तः यस्मिन्काले एतद्ब्रह्मोपासनं वर्तते तस्मिन्नेव महाविष्णुरुपासकः प्रकाशात्मकोऽधिकारी वर्तत इति दर्शयन्ति । रोचनः अनुद्वेगकरः रोचमानः इच्छाकरः; अत एव शोभनः शोभमानः कल्याणः इति एतदुक्तं भवति—मूलनृसिंहव्यूहस्य शिरोऽङ्के उन्नते स्थितं तेजः सर्वप्रकाशकं सर्वाज्ञानदाहकं च इति सामाङ्गसावित्रमन्त्रेण व्याख्यातमुपास्यमिति । यस्मादुभयोपास्यप्रतिपादनक्षमं ज्वलन्तमिति पदं तस्मादुभयोपास्यपरत्वेनोपसंहरति—तस्मादुच्यते ज्वलन्तमिति । इति-शब्दो व्याख्यातः । अथेदानीं क्रमप्राप्तम्, मूलमन्त्रापेक्षया पञ्चमं पदम्, पादापेक्षया द्वितीयम्, उभयोपास्ये व्याख्यातुं देवप्रश्नः—अथ कस्मादुच्यते सर्वतोमुखमिति; स च उक्तार्थः । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्मात् स्वमहिम्नेति अनुषज्य व्याख्येयम् । अनिन्द्रियोऽपीति सेन्द्रियस्य व्याख्यातविग्रहस्य तद्-

भिमानराहित्यात् अनिन्द्रियत्वम्; अनिन्द्रियोऽप्ययं मूलनृसिंहव्यूहः सर्वतः पश्यति सर्वतः शृणोतीति बुद्धीन्द्रियोपलक्षणम्, सर्वतो गच्छति सर्वत आदत्ते सर्वगः सर्वतस्तिष्ठतीति कर्मेन्द्रियोपलक्षणम्, एवमुभयेन्द्रियाभिमानरहितोऽप्ययं व्यूहः उभयेन्द्रियजन्यकार्यकरणशक्तिमाञ्शिरोऽङ्गे उपास्य इति दर्शयति। एवमिदं सर्वतोमुखपदं मूलनृसिंहोपास्यपरत्वेन व्याख्याय अथेदानीं द्वात्रिंशन्नृसिंहोपायस्परत्वेन ऋचा व्याचष्टे—एकः पुरस्तात् प्राक् ब्रह्मा नृसिंहाकारो बभूव, इदं सर्वं यतो बभूव, भुवनस्य गोपा गोप्ता नृसिंह एव विष्णुर्बभूव। यम् अप्येति लयं गच्छति सांपराये प्रलयकाले भुवनं सर्वं स नृसिंह एव महेश्वरो बभूवेति बद्धक्रमकाणां व्यूहानां त्रयाणां प्रथमत एवोपादानेन तदादिन्यायेन इतरेषामेकोनत्रिंशद्व्यूहानां ग्रहणमस्मिन्मन्त्रे। नमामि नमस्करोमि तं व्यूहम् अहं नमामीत्येतत्पदद्वयमत्र वदन् सर्वपदव्याख्याने अनुषक्तमिति दर्शयति। सर्वत्र स्वमहिम्नेत्युपादानात् तत्र तत्र शक्तिमन्नृसिंहपदमप्येतदनुषक्तम्। सर्वतोमुखमिति सर्वतो नृसिंहाकाराणि मुखानि यस्य स तथोक्तः तं नृसिंहं सर्वतोमुखं नमाम्यहमित्यर्थः। यस्मादिदं पदमुभयोपास्यप्रतिपादने शक्तं तदुभयप्रतिपादकत्वेन तस्मादित्युपसंहर-

ति— तस्मादुच्यते सर्वतोमुखमिति । एतदुक्तं भवति— द्वितीयपादे शिरोऽङ्गविशिष्टः प्रतिपादितसर्वप्रकाशकत्वसर्वाज्ञानदाहकत्वोभयेन्द्रियाभिमानराहित्त्वोभयेन्द्रियकार्यकरणशक्तिमत्त्वगुणविशिष्टः सामाङ्गसवितृमन्त्रव्याख्यातगुणविशिष्टः मूलनृसिंहव्यूहः उपास्यः, तत इतरो व्यूह इति । एवमाद्यादङ्गादुन्नतप्रदेशस्थितत्वाच्छिरसः शिरस्त्वम् उन्नतत्वम् । अत एव शिर आदित्यः सर्वोत्कृष्टः प्रकाशः तस्मै उन्नताय उन्नतस्थायादित्याय सर्वोत्कृष्टाय प्रकाशाय स्वाहेति प्रपञ्चविलापनम्; तस्मात्प्रपञ्चाकारात् तदाकारां बुद्धिं प्रत्याहृत्य नृसिंहाकारमेव उपासीत इत्येवं शिरोऽङ्गमन्त्रस्यार्थः, 'यो वै नृसिंहो देवो भगवान्यश्च सर्वम्' इति श्रुतेः। अत एवोक्तं शिरोऽङ्गमन्त्रार्थं व्याचक्षाणैः अस्माभिः प्रपञ्चागमशास्त्रे—'तुङ्गार्थत्वाच्छिरोऽङ्गस्य विषयाहरणे त्विषः। शिरोमन्त्रेण चोत्तुङ्गविषयाहृतिरीरिता' इति । एवं द्वितीये पादे साङ्गोपासनामभिधाय तथैव तृतीयपादोपासनामभिधातुं तदाद्यं पदम्, षष्ठं च मूलमन्त्रापेक्षया, उक्तोपास्ये व्याख्यातुं देवप्रश्नः—अथ कस्मादुच्यते नृसिंहमिति ; स च उक्तार्थः। स होवाच प्रजापतिरित्यनुषज्योत्तरम् । अत्र च यस्माच्छब्दप्रयोगात् स्वमहिम्नेति अस्य अनुषङ्गं दर्शयति । यस्मात्सर्वेषां

भूतानां मध्ये ना पुरुषाकारो वीर्यवत्तमः ततः सर्वातिशायिनः श्रेष्ठतमश्च सिंहो वीर्यवत्तमः श्रेष्ठतमश्चेत्युक्तार्थम् । तत्तश्च उभयात्मरूपप्रदर्शनेन यद्यद्रूपं कामयते तत्तद्धारणे लीलयैव शक्तोऽयमिति दर्शयति । यस्मादेवं तस्मान्नृसिंहः परमेश्वर आसीदित्यन्वयः । न च नृसिंहे परमेश्वर आसीदित्यन्वयः, वैयधिकरण्यापत्तेः, सामानाधिकरण्यान्वयोपपत्तौ सत्यां वैयधिकरण्यानुपपत्तेः । तस्मान्नृसिंहः परमेश्वरस्त्रिनेत्रो नीलकण्ठः पिनाकीति सिद्धम् । ऋतं सत्यमिति प्राग्व्याख्यातं मन्त्रवर्णाश्च उक्तं जगद्धितं जगतो हितं जगद्धितम् अनिष्टनिरसनेन, वै प्रसिद्धम्, एतद्रूपं प्रागुपास्यत्वेन यदुक्तमक्षरं भवति यदक्षरमविनाशं चिद्रूपं निराकारं तदेव साकारमुपासकानुग्रहाय भवतीत्यन्वयः । एवं नृसिंहपदं षष्ठं मूलनृसिंहव्यूहोपास्ये व्याख्याय तदेव पदम् ऋचा द्वात्रिंशन्नृसिंहव्यूहे व्याचष्टे—विष्णुः मृग· सिंहः प्रस्तवते स्तुतिं प्राप्नोति स्तुतिमन्त्रैः तद्वीर्याय तत्तत्सामर्थ्याय नभीमः न भयंकरः । कुचरः कुत्रायं न चरति सर्वदेवविग्रहेषु लीलया स्वयं विचरति सर्वदेवलीलाविग्रहधारीत्यर्थः । गिरिष्ठाः गिरिः पर्वतः तत्स्थ ईश्वरात्मक इत्यर्थः; यद्वा गिरिषु वाग्रूपासु स्तुतिषु यद्यद्रूपमभिलषन् स्तोता कामयते

तत्तद्रूपं स्वस्मिन्स्थापयतीति गिरिष्ठाः । यस्य त्रिषु विक्रमणेषु विग्रहेषु विविधं क्रमणं विक्रमणं तेषु ब्रह्मविष्णुमहेश्वरात्मकेषु । अधि इत्युपरिभावे । अध्युरुषु बहुलीलाविग्रहेषु । भुवनानि सर्वाणि क्षियन्ति निवसन्ति, स्वभावतः तानि ज्ञानपूर्वकाणि निवसन्ति विनिवसन्ति— एषु लीलाविग्रहेषु वयं तिष्ठाम इति । तर्हि क्षियतिरैश्वर्यकर्म ऐश्वर्यं प्राप्नुवन्तीति । एवं नानाविधविक्रमणावतरणे वीर्याय सामर्थ्याय तद्दर्शनाय विष्णुर्मृगः सिंहः प्रस्तवते प्रकर्षेण स्तुतिं लभत इत्यर्थः । यस्माच्चेदमुभयोपास्ये नृसिंहपदं व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते नृसिंहमिति । एवमुभयापेक्षया आद्यं षष्ठं नृसिंहपदम् उभयोपास्ये व्याख्याय अथेदानीम् उभयापेक्षया द्वितीयं सप्तमं च पदं व्याख्यातुं प्रश्नः—अथ कस्मादुच्यते भीषणमिति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्माच्छब्दोपादानात्स्वमहिम्नेत्यनुषङ्गः । यस्मात्स्वमहिम्ना यस्य मूलनृसिंहव्यूहस्वरूपं साङ्गं शिखाङ्गयुक्तं मौलिप्रदेशे चान्द्रतेजोराशियुक्तं सामाङ्गयजुर्लक्ष्मीमन्त्रव्याख्यातं भूर्भुवःस्वर्महर्लोकचतुष्टयसंपिण्डिततेजोराशियुक्तम् अप्रधृष्यतेजोमयं रूपं दृष्ट्वा सर्वे देवास्तदङ्गनुनिवासिनो वसुरुद्रादित्याः सर्वाणि भूतानीमानि भीत्या भयेन पलायन्ते

पलायनं कुर्वन्ति, स्वयं देवः यस्मात्कस्मादपि न बिभेति निरतिशयाभयगुणविशिष्ट उपास्यः। एवम् उक्तोपास्ये भीषणपदं व्याख्याय तदेव पदं द्वितीये व्यूहे कृत्वा व्याचष्टे— भीषेत्यादि। भीषा भीत्या अस्मान्मूलव्यूहात् वातः वायुः पवते वाति। वातपदोपादानात् पञ्चमहाभूतव्यूहः उपलक्षितः। भीषोदेति सूर्यः इति सोमसूर्यव्यूहौ उपलक्षितौ। भीषास्मादग्निश्च इत्याग्नेयो व्यूहः। इन्द्रश्चेति सर्वव्यूहः। मृत्युर्धावति पञ्चम इति मृत्युव्यूहः। तत्र अस्यामृचि यद्यपि पञ्चानां व्यूहानामुपादानम्, तथापि तदादिन्यायेन सर्वसंकलनतया भियो दर्शनात् वातादित्यादीनां स्वस्वरूपेण भयदर्शनमुखेन सर्वेषां ब्रह्मादीनां संग्रहणात् भयाभावरूपस्य नृसिंहस्य प्रवेशनेन वा तत्तद्रूपधारणेन वा उभयरूपतेति, द्विरूपत्वमस्ति सर्वेषाम्। तत्र एकैकस्य देवस्य तत्तद्रूपधारणेन उभयरूपं दर्शयन् भूतानां देवानां च स्वान्तर्भावेन उभयरूपं प्रदर्शयति। इत्युभयरूपेण सर्वं द्वात्रिंशद्व्यूहं सगृह्णातीयमृगिति तत्त्वार्थः। यस्मादेवमुभयोपास्ये भीषणपदं व्याख्यातं तस्मादित्युपसंहरति— तस्मादुच्यते भीषणमिति। एवमुक्तोपास्ये प्रागुक्तपदं व्याख्याय अथेदानीमुभयापेक्षया तृतीयमष्टमं च पदमुभयोपास्ये व्याख्यातुं देवप्रश्नः— अथ कस्मादुच्यते

भद्रमिति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्मात्पदोपादानात् स्वमहिम्नेत्यनुषङ्गः । स्वयं भद्रो भूत्वा भजनीयो माङ्गलिको भूत्वा सर्वदा भद्रं माङ्गलिकं ददाति भद्रदातृस्वरूपं च मूलव्यूहे उपास्यमिति दर्शयति । रोचनो दीप्तियुक्तः । रोचमानः शिखाङ्गेन रुचिं दीप्तिं कुर्वन्, शानच्प्रत्ययान्तत्वात् । तदङ्गं द्वितीयतेजोरूपादङ्गादधिकतरतेजोरूपम् । अतश्च नानाभरणयुक्तमौलिगतं तेजः तदन्तर्गतानां देवानां च स्वतेजसा अभिभवतीत्येवमुपास्यम् । अत एवोक्तमस्माभिः शिखाङ्गमन्त्रं व्याचक्षाणैः प्रपञ्चागमशास्त्रे— 'शिखा तेजः समुद्दिष्टं वषडित्यङ्गमुच्यते । तत्तेजोऽस्य ततः प्रोक्ता शिखा मन्त्रेण मन्त्रिणः' इति । निरतिशयतेजोऽवयवः शिखेत्यर्थः, 'यस्य ज्ञानमयी शिखा' इति श्रुतेः । शोभनः स्वरूपेण, शोभमानः शिखाङ्गतेजसा, अत एव कल्याणः माङ्गलिकमूलनृसिंहव्यूहः । एवमुक्तोपास्ये अष्टमं पदं व्याख्याय अथेदानीं तेनैव पदेन द्वात्रिंशद्व्यूहम् ऋचा व्याचष्टे—भद्रं कर्णेभिरिति । इयमृक् प्रारम्भे शान्तिपाठे व्याख्याता । तनूभिरेव एभिस्तनूमन्त्रैरेव स्थिरैरङ्गैरिति विशेष. । पञ्चमाङ्गान्तर्भावात्स्तुतिमन्त्राणामेव उभयोपास्ये व्याख्यानं तस्मादित्युपसंहरति— तस्मा-

दुच्यते भद्रमिति । इति-शब्दो व्याख्यातः । एवं तृतीयपादे तत्तत्पदव्याख्यानेन साङ्गोपासनामभिधाय तथैव चतुर्थपादोपासनामभिधातुं तदाद्यपदं मूलमन्त्रापेक्षया नवमं च पदम् उभयोपास्ये व्याख्यातुं देवप्रश्नः— अथ कस्मादुच्यते मृत्युमृत्युमिति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्मात् स्वमहिम्नेत्यनुषङ्गः । स्वभक्तानां भज सेवायां स्वसेवकानाम् अनन्यभावेन स्मृत एव उपासित एव मृत्युं साक्षात्कालप्राप्तम् अपमृत्युं च अवान्तरप्राप्तं जातकर्मणि गणितशास्त्रनिर्णीतायुःपरिमाणात् तदन्तरा मृत्युः अपमृत्युः तं च अनन्यभावेन उपासकानाम् अप्रार्थित एव मारयति विनाशयतीत्येवंरूपं कवचमङ्गमुपास्यम् । तस्य सामाङ्गमन्त्रेण नृसिंहगायत्र्या नृसिंहरूपेण व्याख्यातत्वात् स्वान् तदुपासकान् स्वस्वरूपान्संपाद्य मृत्युमपमृत्युं च मारयतीत्यर्थः, 'यो वै नृसिंहो देवो भगवान्यश्च जीवः' इति मन्त्रवर्णात् । इदं प्रागुक्तं पदं मूलनृसिंहव्यूहोपास्यपरत्वेन व्याख्याय अथेदानीं तेनैव पदेन द्वात्रिंशद्व्यूहम् ऋचा व्याचष्टे । यो द्वात्रिंशन्नृसिंहव्यूह आत्मदाः आत्मानं ददातीत्यात्मदाः स्वस्वरूपदाता सर्वेषां देवानां स्वरूपं दत्वा धारयतीत्यर्थः । बलदाः सामर्थ्यदाता स्वोपासकानां स्वस्वरूपधारणे शक्ति

ददातीत्यर्थः । यस्य प्रशिषं मूलनृसिंहव्यूहस्य अङ्गचतुष्टय-प्रशिषं प्रकर्षेण शिष्यत इति प्रशिषं प्रोर्वरितं द्वात्रिंशद्व्यूहं विश्वे देवाः सर्वे देवा. उपासते उपास्तिं कुर्वन्तीत्यर्थः । यस्य च्छायामृतम्, छायेति गृहनाम, छायैवामृतं छाया-मृतं महाचक्रम्, बदन्तर्भावादस्य व्यूहस्य; यो व्यूहो मृत्यु-मृत्युः मृत्योरपि मृत्युः, 'मृत्युर्यस्योपसेचनम्' इति श्रुतेः । कं प्रजापतिं ब्रह्मणो व्यूहम्, तदादिन्यायेन बद्धक्रमकत्वात् सर्वं संगृह्णाति; देवम्, 'देवो दानाद्वा द्योतनाद्वा दीपनाद्वा' इति यास्कवचनात् । हविषा हविष्प्रदानेन होमेन नैवेद्येन वा अर्चनेन । अत एव वक्ष्यति महाचक्रप्रकरणे—'अनुष्टुभा होमं कुर्यात् अनुष्टुभा अर्चनम्' इति । विधेम परिचरेम । यद्वा 'विधतिर्दानकर्म' इति यास्कवचनात् ब्राह्मव्यूहप्रभृति-व्यूहाय हविर्दद्मः—इति विभक्तिव्यत्ययः क-शब्दे देव-शब्दे च । तस्मिन्पक्षे विधतिः परिचरणकर्मेति तत्त्वार्थः । एवं प्रा-गुक्तोपास्ये मृत्युमृत्युपदं व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते मृत्युमृत्युमिति । एवं प्रागुक्तपदं प्रागु-क्तोपास्ये व्याख्याय अथेदानीमुभयापेक्षया द्वितीयं दशमं च पदं व्याख्यातुं देवप्रश्नः— अथ कस्मादुच्यते नमामीति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्मात् स्वम-

हिम्नेत्यनुषङ्गः । नमामीत्यस्या आख्यातपदत्वात् अस्मदर्थं प्रत्ययार्थं विहाय प्रकृत्यर्थं व्याचष्टे । तथा च अस्य प्राक्तनसर्वपदार्थसंबन्धिनः सर्वत्रानुषङ्गः । यस्माच्छब्दोपादानात् स्वमहिम्नेत्यनुषङ्गः प्रकृत्यर्थेन । यस्मात् यं सर्वे देवाः प्रागुक्तविशेषणं मूलनृसिंहव्यूहं सर्वे पृथिव्यन्तरिक्षब्रह्मलोकनिवासिनः महाचक्रोपासकाश्च नमन्ति नमस्कुर्वन्ति— इति सर्वनमस्कार्यगुणविशिष्टः उपास्यः इति दर्शयति । तथा च द्विविधोपासकानां देवानामधिकारिविशेषणमाह— मुमुक्षवो ब्रह्मवादिनश्च इति, अब्रह्मवादिन इति अन्यथा द्वैविध्यासंभवात् । यद्वा मुमुक्षवो ब्रह्मवादिनो मुक्ताश्च लीलया विग्रहं परिगृह्य नमन्तीत्यनुषङ्गः । एतदुक्तं भवति—ब्रह्मलोके 'स ब्रह्मा स शिवः स हरिः' इत्यादिमन्त्रवर्णोपात्तसामाङ्गनृसिंहगायत्र्या व्याख्यातनृसिंहव्यूहः चतुर्थकवचाङ्गाश्रयत्वेनोपास्यः । तच्च कवचं सर्वानेतानुपास्यान्संगृह्णातीत्यङ्गचतुष्टयान्तर्गतानन्यांश्च । अत एवोक्तमस्माभिः कवचाङ्गमन्त्रार्थं व्याचक्षाणैः प्रपञ्चसारे— 'कवचग्रह इत्यस्माद्धातोः कवचसंभवः । हुं तेजस्तेजसा तेन गृह्यते कवचं ततः' इति । एवं प्रकृत्यर्थसहितेन च पदार्थं प्रतिपाद्य साधारणरूपरूपं सर्वनमस्कार्यत्वगुणमभिधाय अथेदानीं सा-

मादिमन्त्रसाधारणत्वेन पुनः प्रकृत्यर्थम् ऋचा व्याचष्टे—
प्र नूनमिति । उक्थ्यं प्रशस्तं ब्रह्मणस्पतिः ब्रह्मणः साका-
रस्य निराकारस्य च पतिः उपदेशद्वारा पाता पालयिता ।
नूनं निश्चितं मन्त्रं सामराजं स्तुहीत्यादि य आत्मदा
इत्यन्तं द्वात्रिंशद्व्यूहप्रतिपादकं मन्त्रजातम् । यस्मिन्प्रा-
गुक्ते मन्त्रे इन्द्रो मित्रो वरुणोऽर्यमा देवा ओकांसि गृहा-
ण्युपासनाय चक्रिरे कृतवन्त इत्यर्थः । अनेनैतद्दर्शयति—
यथा देवे उपास्ये गुरौ च भक्तिः तथा मन्त्रेऽपीति । तदु-
क्तम्—'गुरौ देवे च मन्त्रे च सदृशी भक्तिरिष्यते' इति ।
तत्र च मन्त्रस्य नमस्कार्यत्वश्रवणात् । एवं नमामी-
त्येतदाख्यातपदमुक्तोपास्ये व्याख्यातं तस्मादित्युपसंहरति—
तस्मादुच्यते नमामीति । एवं नमामीति पदं प्रकृत्यर्थ-
संबन्धित्वेन व्याख्याय अथेदानीमहमिति कर्तृपदं सर्व-
साधारण्येन व्याख्यातुं देवप्रश्नः—अथ कस्मादुच्यतेऽहमि-
ति । तत्र आख्यातोत्तमपुरुषप्रयोगादर्थादेव अहमिति प्राप्ते
पुनः प्रयोगः स च कस्मादिति चोद्याभिप्रायेण । स होवाच
प्रजापतिरित्यनुषज्योत्तरम् । पश्चाङ्गोपासनाकर्तृफलं निर्दि-
श्यते तादात्म्यलक्षणम् । न च मुमुक्षोरेतदनिष्टमिति वाच्यम् ,
ऐश्वर्ये सति एतत्फलावाप्तेः । य इह स्थातुमपेक्षते तस्य

तादात्म्यलक्षणं सर्वैश्वर्यं ददाति देहान्ते देवः परं ब्रह्म तारकमिति श्रुतेः फलपदमिदं न तु उपासकपदम्। तच्च पृथक्सामाभिव्यक्तं मन्त्रेण व्याचष्टे। तच्च सर्वपदेष्वनुषज्यमानं सर्वपदजातं सामाभिव्यक्तमेव व्याख्यातमिति नियमं दर्शयति। तथा च प्रागुक्ता सर्वोपासना सामपूर्विकैवेति। ततश्च प्रागुक्तायामुपासनायाम् उपास्योपासकभावेन प्रवृत्तः उपासकः उपासनातः शुद्धान्तःकरणः प्रत्यगात्मकतयैव उपास्यं साक्षात्कृत्य आह अनेन साम्ना अन्येषामुपासनफलं दर्शयितुम्— अहमस्मि प्रागुक्तमुपास्यम् अहं भवामि प्रथमजाः पुरश्चरणोपासनायाः प्रथमोत्पन्नः। ऋतस्य सत्यमूर्तामूर्तस्य जगतः पूर्वं स्यां देवेभ्यो अमृतस्य क्षीरस्य नाभायि नाभ्यां यो मा ददाति स्वीकरोति धारयति वा, स इदेव इत्थमेव मा माम् अवा रक्षितवान्। तथा च अन्नस्तावकेन मन्त्रेण सामाभिव्यक्तेन फलनिर्देशं कुर्वन् क्षीरोदार्णवसंबन्धिनीयमुपासनेति दर्शयति। अहमन्नं क्षीरम् उपास्याधारम् अहमेव भवामि। अन्नमदन्वा योऽत्ति, तमन्नमदन्तं देवब्राह्मणेभ्यो अन्नमदातारम् अहमद्मि अहं भक्षयामि। यद्वा अन्नमदन्तम् अन्नादनकर्तारं जीवभावापन्नं पञ्चाङ्गोपासनात. अद्मि भक्षयामि संसाररूपं विनाशयामीत्यर्थः। यत

एवम् , अतोऽहं विश्वं सर्वं भुवनम् अभ्यभवाम् अभिभवामि सुवर्न ज्योती: सूर्यज्योतिरिव । यद्वा सुवर्णाकारस्योपास्यस्य ज्योति: प्रकाश: अहमेव भवामीति फलनिर्देश: । इदं च फल-मनुषङ्गात् प्रतिपदं प्रतिपादं च अनुसंधेयम् । असकृत्साकारा-खण्डवाक्यार्थोपदेशे हि दार्ढ्यं स्यात्— तत्त्वमसीति नवकृत्व उपदेशवत् । एवं साकारनिष्ठस्य यद्यन्त:करणं शुद्धं ततोऽपि इदमेव फलं व्याख्यातम् । अत एव नोत्तरोपसंहार: प्राक्त-नवत् तस्मादुच्यत इति, उपासनाभ्यासादद्वैतापत्ते: ; 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुते: । एत-त्सर्वं सामाङ्गप्रणवेन हृदयमन्त्रव्याख्यानावसरे स्पष्टीक्रि-यते । य उपासक: एवं प्रागुक्तमुपास्यम् अहंग्रहोपास-नया अधिकारतरतमभावाद्वा उपास्योपासकभावेन वा वेद उपास्ते । इति-शब्द: प्रागुक्तसफलोपासनसमाप्तिं दर्शयति । उपनिषदिति उपनिषच्छब्दो व्याख्यात: । इदं च सामा-धीतं नैवेद्ये विनियुक्तं तच्च आनुष्टुभं द्रष्टव्यम् । न तु षट्स्वरं साङ्गं वा, यत: प्रथमोपनिषदि यच्छब्दस्य तृतीय-व्याख्यानावसरे तथैव व्याख्याततत्वात् । आनुष्टुभं च अनु-ष्टुप्स्वराभ्यां गेयम् । तौ च प्रथमोत्तमौ, तथा च अनुष्टुभा भूतोत्पत्तिव्याख्यानावसरे साक्षित्वेनोद्भावितायाम् ऋचि 'त-

स्यैषा भवति' इत्यत्र 'अनुष्टुप्प्रथमा भवति अनुष्टुबुत्तमा भवति' इति प्रथमोत्तमयोः स्वरयोः अनुष्टुप्शब्देन व्याख्यातत्वात्, 'वाग्वा अनुष्टुप्' इति गीतिमात्रेऽपि वाक्शब्दस्य प्रयुक्तत्वात्, 'सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या ऋणवे या वीणायाम्' इति श्रुतेः। वाचैव प्रयन्ति गीत्यैव प्रयन्ति प्रथमस्वरेण गायन्ति वाचैवोद्यन्ति गीत्यैवोत्तमस्वरेण गायन्त्यक्षराणीत्यर्थः। परमा वा एषा छन्दसां यदनुष्टुबित्यनुष्टुप्छन्द इति। ततश्च अस्मिन्प्रकरणे अनुष्टुप्शब्देन त्रयोऽर्था उच्यन्ते—क्वचित्प्रथमोत्तमौ स्वरौ क्वचिद्गीतिः क्वचिच्छन्द इति यथायोग्यतया ग्राह्या इत्यनुष्टुप्सामोद्धार इति रहस्यमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**नृसिंहपूर्वतापनीयोपनिषद्भाष्ये**
**द्वितीयोपनिषद्भाष्यं संपूर्णम् ॥**

# तृतीयोपनिषत् ॥

एवं द्वितीयोपनिषदि साङ्गां सफला-
मुपासनामभिधाय अथेदानीं तस्याः
शक्तिबीजनिर्णयपूर्वकत्वात् तन्निर्ण-
यार्थं तृतीयोपनिषदारभ्यते प्रश्नोत्त-
राख्यायिकया । नन्वेवं तर्हि इयं
पूर्वमेव आरब्धव्या, एतत्पूर्वकत्वात्प्रागुक्ताया उपासनायाः ।
सत्यम् । शक्तिबीजद्वयस्य संपुटीकरणेन विवक्षितत्वात् अ-
र्थात्प्राक्प्राप्तस्यार्थस्य पश्चात्संकीर्तने संपुटीकरणं स्यात्; अ-
न्यथा अर्थानुसारेण संकीर्तने पूर्वमेव द्वयं स्यात्, नोपरिष्टा-
त्—इति संपुटीकरणासंभवादिति पाठत उपासनाया ऊर्ध्वं
संबन्धः शक्तिबीजस्य, अर्थाख्येन प्रमाणेन प्राक्संबन्धः ।
न हि अनवधृतशक्तिकस्य उपासनस्य उपास्याकारावधृतिः ।
तथा हि कथमस्यायमाकार इति पर्यनुयुक्ते, स्वसामर्थ्यादिति

वाच्यम् । ततश्च सामर्थ्यावधारणपूर्वकमेव उपास्याकारावधारणमिति अर्थात्प्राक्संबन्धः, पाठश्च अनन्तरमिति—कथं नु संपुटीकरणं स्यादिति प्रजापतेर्हृदयम् । किंच उपासनानन्तरं पठितापि इयमुपनिषत् शक्तिबीजनिर्णयात्मिका तत्र तत्र पदपादसाङ्गोपासनावतरणे 'यस्मात्स्वमहिम्ना' 'यः स्वमहिम्ना' इति वीप्साशब्देन च अपकृष्टा सती पूर्वं संबन्धं लभते— महोपनिषदपकर्षणवत् । अतश्च आरम्भणीयेति सिद्धम् ।

**देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं च नो ब्रूहि भगव इति स होवाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्याद्य एतां मायां शक्तिं वेद स पाप्मानं तरति स संसारं तरति स मृत्युं तरति सोऽमृतत्वं च गच्छति महतीं श्रियमश्नुते मीमांसन्ते ब्रह्मवादिनो ह्रस्वा वा दी-**

र्घा वा प्लुता वेति । यदि ह्रस्वा भवति सर्वं पाप्मानं दहत्यमृतत्वं च गच्छति यदि दीर्घा भवति महतीं श्रियमाप्नुयादमृतत्वं च गच्छति यदि प्लुता भवति ज्ञानवान्भवत्यमृतत्वं च गच्छति तदेतदृषिणोक्तं निदर्शनम्— सङ्गं पाहि य ऋजीषी तरुत्रः श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्युत आहुस्तां विद्यां ब्रह्मयोनिं सरूपां तामिहायुषे शरणं प्रपद्ये । सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते । आकाशादेव जातानि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति तस्मादाकाशं बीजं विद्यात्तदेतदृषिणोक्तं निदर्शनम्— हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमस-

**दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । य एवं वेदेति महोपनिषत् ॥ १ ॥**

इति तृतीयोपनिषत् ॥

देवा ह वै इत्यादि स होवाच प्रजापतिरित्यन्तं स्पष्टार्थम् । मायाविपुरुषाधीना मायेत्युच्यते । लोके हि माया प्रसारकमायाव्यधीना दृष्टा । वै प्रसिद्धम् । एषा नारासिंही नृसिंहाधीना । यस्मादियं नृसिंहाकारब्रह्माधीना सती सर्वमिदं सृजतीत्यादि संहरतीत्यन्तं स्पष्टार्थम् । जगज्जन्मस्थितिलयकारणत्वम् एतदधीनम्, शुद्धस्य ब्रह्मणोऽकारणत्वात् । यस्मादेवं तस्मान्मायामेतां शक्तिं विद्यात् नृसिंहाधीनामुपासीत । य एतां मायां शक्तिं वेद उपास्ते । तदुपासनाफलमाह—स पाप्मानमित्याद्यश्नुत इत्यन्तं स्पष्टार्थम् । मीमांसन्ते विचारयन्ति ब्रह्मवादिनः— ह्रस्वा वा दीर्घा वा प्लुता वा इति । सामान्तर्भावात्प्लुतैवेति प्राप्ते ह्रस्वदीर्घयोः फलविशेषसंबन्धार्थमियं मीमांसा; तामाह । यदि ह्रस्वेत्यादि गच्छतीत्यन्तं स्पष्टार्थम् । ह्रस्वदीर्घप्लुतसंबन्धः सव्यञ्जनस्य स्वरस्य, उत साकाराख्यं व्यञ्जनं विहाय स्वरस्य संबन्ध इति संदेहः । एतस्मिन्संदेहे निर्णयाय एतद्व-

क्ष्यमाणं निदर्शनमुदाहरणम् ऋषिणोक्तं सईमिति । साकार-
व्यञ्जनात् पृथक्करणं सबिन्दुकस्य स्वरस्य । अत: सबिन्दुके स्वरे
ह्रस्वादिसंबन्धो मायाबुद्ध्योपासनं च । सईमिति समास:
सकारश्च ई च सईम् । तस्या: संबोधने ईमिति निपात-
त्वाददोष: । हे सई सबिन्दुकस्वर त्वदालम्बनेन एता.
वक्ष्यमाणा: शक्ती: उपासिता: पाहि रक्ष । यद्वा स इति
व्यस्तं यत्तदोर्नित्यसंबन्ध: । य ऋजीषी ऋजुभावेच्छु:
तरुत्र: तरणशील., स ईं शक्तिं सबिन्दुकं स्वरं श्रियादि-
बुद्ध्योपासितं पा: पालितवान् । पा पालने । पालकाधीन-
त्वात्पालनीयशक्ते: । हीति निश्चितम् । सबिन्दुकस्वराल-
म्बनत्वेनोपास्या: तव व्यूहसंबन्धिनी: शक्तीराह— श्रियं
विष्णुशक्तिं पा: पालितवान् । यद्वा पाहि । एवमुत्तरत्रापि
द्विधा संबन्ध: । लक्ष्मीं नृसिंहशक्तिम् , औपलामम्बिकां
गौरीं महेश्वरशक्तिम् , गां सरस्वतीं ब्रह्मशक्तिम् , षष्ठीं च
स्कन्दशक्तिम् , यामिन्द्रसेनेत्याहु: तामिन्द्रशक्तिमिन्द्राणीम् ,
विद्याम् ईश्वरशक्तिम् , ब्रह्मयोनिं ब्रह्मावाप्त्यै कारणभूतां सरूपां
साकारां तां तां शक्तिम् इह सबिन्दुके स्वरे आयुषे उपा-
सनानुकूलायुरभिवर्धनाय शरणं प्रविशामि । एवं शक्त्यक्षर-
निर्णयं तदाश्रितां सप्तविधशक्त्युपासनां दीर्घादिमात्रोपास-

नां सफलामभिधाय अथेदानीं बीजाक्षरनिर्णयं तदाश्रितां सफलां च उपासनाम् अभिधातुं तन्निर्णयमाह— सर्वेषां वा इत्याद्यभिसंविशन्तीत्यन्तं स्पष्टार्थम् । आकाशशब्दो हकारं वक्ति । सर्वागमशास्त्रप्रसिद्धे. आगमरूपोपनिषत्प्रसिद्धेश्च । यस्मादेवं तस्मादाकाशशब्दवाच्यं हकारं बीजं विद्यात् । बीजं निदानं मूलकारणं तद्बुद्ध्योपासीत तद्वाचकं वा निपातरूपेण । स च अयं वाच्यवाचकसंबन्धो लोकेऽप्रसिद्ध इति मन्त्रागमशास्त्रैकगम्यम् । एवं शक्त्यक्षरमपि शक्तिवाचकत्वाच्छक्तिः तद्बुद्ध्योपास्यत्वाद्वा । शक्तिबीजयोस्तद्बुद्ध्योपास्यत्वं तद्वाचकत्वादेवेति रहस्यम् । यथा प्रणवाक्षरं ब्रह्मवाचकत्वाद्ब्रह्मबुद्ध्योपास्यमभूत तद्वच्छक्तिबीजम; तच्च सस्वरं व्यञ्जनमात्रं वेति संदेहः, तद्व्यावृत्त्यर्थमाह— तदेतत् ऋषिणोक्तं निदर्शनम् । तच्चोक्तार्थम् । हंसः परमात्मा । हं मूलकारणं सद्बृहत् । यद्वा सकारेण संबद्धमजपागायत्रीरूपेण वर्तमानं नासिकापुटाभ्यां निःसृतं ब्राह्मणस्त्रीशूद्राद्यधिकारतया वर्तमानं संकल्पादेव फलदं परमात्मवाचकं स इति । हंसः परमात्मा वक्ष्यमाणं सर्वमभूदिति वाक्यशेषः । शुचौ बुद्धौ सीदतीति शुचिषत् । हंस एव वसुः देवः । स एवान्तरिक्षे सीदतीत्यन्तरिक्षसत् । बृहत् बृंहणत्वादन्तरिक्षा-

श्रितो देवः स एव होता। वेदिषत् वेद्यां सीदतीति वेदिषत्। स एवातिथिः दुरोणसत् दुरोण इति गृहनाम दुर्वा भवन्ति दुस्तर्णः तस्मिन्सीदतीति दुरोणसत् । स एव नरि जीवे सीदतीति नृषत्, 'य आत्मनि तिष्ठन्' इति श्रुतेः । वरसत् वरे वरिष्ठे स्थाने सीदतीति वरसत् । स एव ऋतेन सत्येन सीदतीति ऋतसत्। स एव व्योम्नि हृदयाकाशे उपलभ्यतया सीदतीति व्योमसत् । अब्जा अप्सु क्षीरोदार्णवे उपास्यतया जात इत्यब्जाः। गोषु वा उपास्यतया प्रतिपाद्यत्वेन जात इति गोजाः । 'ऋतं सत्यम्' इति मन्त्रवर्णादुपास्यतया जात इति ऋतजाः । अद्रौ मेघे जात इत्यद्रिजाः । छन्दसि जनिरय सुबन्तप्रयोगे सकारान्तो दृष्ट इति सोपपदो विसर्गान्तो दीर्घश्च सुतेजाः इतिवत्। एवं परमात्मैव बृहन्महानिति । ऋतं सत्यं ज्ञेयमिति शेषः । य उपासकः एवं परमात्मतत्त्वं बीजाक्षरवाच्यं तद्बुद्ध्या च उपास्यं वेद जानाति। इति-शब्दः शक्तिबीजनिर्णयसमाप्तिं द्योतयति । यद्वा इति इत्येवं निपातानामनेकार्थत्वात् इत्येवं महोपनिषत् इति महोपनिषदि पठितानां मन्त्राणाम् एव-शब्दात् एतदेव शक्तिबीजं संबध्नाति । ततश्च मूलमन्त्रे षष्ठपदे त्र्यक्षरे नृकारं सकारं विहाय शिष्टमक्षरद्वयं यथापठितं शक्तिबीजं

द्रष्टव्यं सामर्थ्यात् । परमात्मवाचकमाथर्वणर्चि द्वितीयं हंसर्चि प्रथमं यत्पठितं तदित्येवं स्तुतिमन्त्रेषु सर्वेषु चतुर्थपादे नृकारं सकारं विहाय यच्छिष्टमक्षरद्वयं यथापठितं तच्छक्तिबीजमिति तत्त्वं रहस्यं च इति शक्तिबीजाक्षरनिर्णयः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**नृसिंहपूर्वतापनीयोपनिषद्भाष्ये**
**तृतीयोपनिषद्भाष्यं संपूर्णम् ॥**

# नृसिंहपूर्वतापनीयोपनिषद्भाष्यम्

## चतुर्थोपनिषत्

# चतुर्थोपनिषत् ॥

एवं तावच्छक्तिबीजसंपुटितां साङ्गां नृसिंहब्रह्मोपासनामभिधाय अथेदानीं तदङ्गहृदयादिमन्त्रव्याख्यानाय यथासंख्यं सामाङ्गमूलमन्त्राङ्गमन्त्रोपनिषत् प्रश्नोत्तररूपाख्यायिकया चतुर्थी आरभ्यते। ननु यदि मूलमन्त्राङ्गमन्त्रव्याख्यानाय उपनिषदियं प्रस्तुता, तर्हि तदङ्गव्याख्यावसरे अस्याः प्रस्तावः स्यात्; न त्विदानीं प्रस्तावो युक्तः। किं च मूलमन्त्रपदव्याख्यानावसरे तदुपासनायाः कृत्स्नाया एव उक्तत्वात् अन्ते तत्फलस्य च उक्तत्वात् किमपरमवशिष्टम्, यदर्थमियमुपनिषदारभ्यते— अत्रोच्यते। सत्यम्। तदङ्गव्याख्यानावसरे पञ्चमाङ्गन्यासे च 'प्रत्यक्षरमुभयत ओंकारो भवति' इति वचनात् मूलमन्त्राक्षराणां यथापठितानां व्यत्यासे कृते मूलमन्त्रतत्पदापरिज्ञाने प्राप्ते तत्परिज्ञानस्यैवान्तरङ्गत्वात् तदर्थं पदोद्धारः प्रस्तुतः; तदन-

न्तरं तदर्थज्ञाने प्रस्तुते शक्तिबीजनिर्णयः प्रस्तुतः; इत्येवं पञ्चमाङ्गन्यासमपदोद्धारतदर्थशक्तिबीजनिर्णयानाम् अन्योन्यं बद्धक्रमकत्वादन्तरङ्गत्वाच्च तदन्तराले प्रवेशो अस्य अयुक्त इति इयमुपनिषत् शक्तिबीजनिर्णयानन्तरं पठिता । यथा गुरुमते अधिकारलक्षणं मध्ये एव पठितम्, तथा इयमुपनिषत् उपरिष्टान्महाचक्रोपासनाफलकथनयोर्बद्धक्रमकत्वात् तदन्तराले प्रवेशमलभमाना मध्यस्थैव शोभते । किं च सामाङ्गप्रणवेन शक्तिबीजाक्षरमिश्रितेन हृदयाङ्गमन्त्रो व्याख्येय इति न तदङ्गन्यासावसरे अस्याः प्रवेशो युक्तः, तदानीं शक्तिबीजाक्षरस्याप्रस्तुतत्वेनाशक्यत्वान्मिश्रणस्य । तस्माच्छक्तिबीजनिर्णयानन्तरम् अस्या आरम्भो युक्तः । यदुक्तं कृत्स्नविद्याभिधानात्किमवशिष्टमिति, तन्न । अत्रत्यमेवानागतावेक्षणन्यायेन व्याख्यातृभिरेव तत्रोपसंहृतम्, न तु तत्रत्यं शब्दोपात्तमिति । यदुक्तमन्ते फलस्य च उक्तत्वात्किं शिष्टमिति, तदुक्तमेव प्राक्तनन्यायेन, कृत्स्नत्वाद्विद्यायाः । तस्मात्सूक्तं शक्तिबीजनिर्णयानन्तरमस्या आरम्भः शोभत इति ॥

**देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रू-**

हि भगव इति। स होवाच प्रजापतिः
प्रणवं सावित्रीं यजुर्लक्ष्मीं नृसिंहगाय-
त्रीमित्यङ्गानि जानीयाद्यो जानीते सो-
ऽमृतत्वं च गच्छति । ओमित्येतदक्षर-
मिदं सर्वं तस्योपव्याख्यानं भूतं भव-
द्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रि-
कालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्र-
ह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पा-
ज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एको-
नविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः
पादः स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एको-
नविंशतिमुखः प्रविविक्तभुक्तैजसो द्वि-
तीयः पादो यत्र सुप्तो न कंचन कामं
कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं
सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवान-
न्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृ-
तीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषो-

**ऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां न बहिःप्रज्ञं नान्तःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमलिङ्गमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ १ ॥**

देवा ह वा इत्यादि नारसिंहस्य इत्यन्तं स्पष्टार्थम् । अङ्गमन्त्रान्नो ब्रूहि भगव इति । वेदे रुकारादेशान्तो भगवच्छब्द इति संबोधनं भगव इति । अङ्गेषु हृदयाद्यङ्गेषु व्याख्येयेषु तद्व्याख्यानमन्त्राः अङ्गमन्त्राः, यद्वा अङ्गानि च मन्त्राश्च अङ्गमन्त्राः इत्युभयथापि समास उक्तः, किं तु उभयथाप्येषां मूलमन्त्राङ्गमन्त्रसंबन्धः संख्यातः स्थानाच्च सामर्थ्याच्च प्रतीत नूनं न निवारयितुं शक्यते । स होवाच प्रजापतिरित्यादि गच्छतीत्यन्तमुक्तार्थम् । येनैव क्रमेणाङ्गानामुद्देशः कृतः, तेनैव क्रमेण तद्व्याख्यामाह— ओमित्येतदक्षरमिति । कथं पुनरोंकारनिर्णयः साकारात्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इति । उच्यते— 'ओमित्येतदालम्बनम्' 'एतद्वै

सत्यकाम परं चापरं च यदोंकारः' 'ओमित्यात्मानं युञ्जीत' 'ओमिति ब्रह्म' 'ओंकार एवेदं सर्वम्' इत्यादिश्रुतिभ्यो रज्ज्वादिरिव सर्पादिविकल्पस्य अद्वयात्मा परमार्थः सन् प्राणादिविकल्पास्पदो यथा, तथा सर्वो वाक्प्रपञ्चः प्राणाद्यात्मविषयः ओंकार एव । स च आनुष्टुवङ्क्तं सत्त्वात्मस्वरूपमेव, तदभिधायकत्वात् । ओंकारविकारशब्दाभिधेयश्च सर्वः प्राणादिः आत्मविकल्पः अभिधानव्यतिरेकेण नास्ति, 'वाचारम्भणं विकारो नामधेयम्' 'तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्' 'सर्वं हीदं नामनि' इत्यादिश्रुतिभ्यः । अत आह— ओमित्येतदक्षरमिदं सर्वमिति । यदिदमर्थजातम् अभिधानाभिधेयभूतं तच्चाभिधानाव्यतिरेकात् अभिधानभेदस्य ओंकाराव्यतिरेकात् ओंकार एव इदं सर्वम् । परं च ब्रह्म अभिधानाभिधेयोपायपूर्वकमवगम्यत इति ओंकार एव । तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्य ओमित्येतस्य उपव्याख्यानं ब्रह्मप्रतिपत्त्युपायत्वात् ब्रह्मसमीपतया विस्पष्टम् आख्यानं प्रकटकथनम् उपव्याख्यानं प्रस्तुतं जानीयादिति शेषः । न त्वनुषङ्गः, 'व्यवायान्नानुषज्यते' इति न्यायात् । भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्, तत् ओंकार एव, उक्तन्यायतः । यच्चान्यत् त्रिकाला-

तीतं कार्याधिगम्यं कालत्रयापरिच्छेद्यम् अव्याकृतादि तद-प्योंकार एव— इति अभिधानाभिधेययोरेकत्वे अभिधान-प्राधान्येन निर्देश: कृत: ओमित्येतदक्षरमिदं सर्वमित्यादि । अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देश: अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थम् । इतरथा हि अभि-धानतन्त्रा अभिधेयप्रतिपत्ति: इति अभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यात् । एकत्वप्रतिपत्तेश्च प्रयोजनमभि-धानाभिधेययो: एकेनैव प्रयत्नेन प्रविलापयन् तद्विलक्षणं ब्रह्म प्रतिपद्यते इति । तथा च वक्ष्यति— पादा मात्रा मात्राश्च पादा इति । तदाह । सर्वं हि एतद्ब्रह्म, सर्वं यदुक्तमोंकारमात्रम एतद्ब्रह्म । तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो विशेषेण निर्दिशति— अयमात्मा ब्रह्मेति । अयमिति चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मानं प्रत्य-क्षतया अभिनयेन निर्दिशति— सोऽयमात्मेति । सोऽय-मात्मा ओंकाराभिधेय: परापरत्वेन व्यवस्थित: चतुष्पात् कार्षापणवत् । न गौरिव चतुष्पात् । त्रयाणां विश्वादीनां पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधन: पादशब्द: ; तुरीयस्य तु पद्यत इति कर्मसाधन: पाद-शब्द: । कथं चतुष्पादित्यत्र आह— जागरितं स्थान-

मस्येति जागरितस्थानः । बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य सः बहिःप्रज्ञः, बहिर्विषये यस्य प्रज्ञा विद्याकृता अवभासत इत्यर्थः । तथा सप्ताङ्गः सप्तशक्तयः अङ्गे हृदयाख्ये यस्य स तथोक्तः, विष्णुशक्तीनां विष्णुवक्षःस्थलाश्रयत्वप्रसिद्धेः । 'विष्णोर्वक्षःस्थलाश्रया' इति स्मृतेः, 'विष्णोर्वक्षःस्थले स्थिताम्' इति च, 'करद्वयस्थप्रविकासिपङ्कजां वक्षःस्थलेन श्रियमुद्वहन्विभुः' इति च । तथा एकोनविंशतिमुखो मूलमन्त्रापेक्षया एकोनविंशतितममक्षरं बीजं मुखं यस्य मूलनृसिंहव्यूहस्य स तथोक्तः । तस्य नाभेरूर्ध्वं मूर्धतः प्राक् हृदयाख्यम् अङ्गम्, अत उपास्योपासकयोरैक्ये भेदे वा हृदयाङ्गन्यासादिकमविरुद्धम् । नन्वेवं सप्तान्यङ्गानि मूर्धैव सुतेजा इत्येवमादीनि यस्य स तथोक्तः । तथा एकोनविंशतिर्मुखानि अस्य बुद्धीन्द्रियकर्मेन्द्रियाणि वायवश्च प्राणादयः पञ्च मनो बुद्धिरहंकारश्चित्तमिति मुखानीव तानि उपलब्धिद्वारत्वादित्येवं यथासंख्यं विराड्ढिरण्यगर्भपरत्वेन वाक्यद्वयं माण्डूक्योपनिषत्प्रणवविद्यायां व्याख्यातम्, तथा अत्रापि कस्मान्न व्याख्यायते? उच्यते— अत्र अस्य अपरविद्याप्रकरणाश्रितत्वात् प्रणवविद्यायां तथाङ्गत्वेन च विनियोगात् प्रणवं तत्साम्नोऽङ्गं

जानीयादिति तथा शक्तिबीजनिर्णयानन्तरम् अस्याङ्गस्य पाठात्। माण्डूक्ये प्रणवविद्यायामनारभ्य अधीतत्वात् प्राधान्यम् अङ्गत्वेन विनियोगाभावाच्च तथा तत्र शक्तिबीजयोरप्रस्तुतत्वाच्च विद्याभेदाच्च तथा व्याख्यानभेदेनार्थभेदात् पृथगर्थप्रतीतिर्ज्यायसी। ननु उभयत्राप्यन्यूनानतिरिक्तपाठप्रत्यभिज्ञानेन विद्यैक्यात् अङ्गविद्याया उत्कर्षः प्रधानविद्याया अङ्गविद्याप्रवेशः। अत्रोच्यते—'अन्यथात्वं शब्दादिति चेन् न अविशेषात्' इति न्यायेन विद्याभेदस्यैव युक्तत्वात् आभ्युदयिककाम्येष्टिवाक्यवत्। ननु भेदेऽपि प्रधानविद्याया एव अङ्गत्वेन विनियोगोऽस्तु, प्रत्यभिज्ञानाच्च विद्यैक्यमिति, तन्न, 'प्रकरणान्तरे प्रयोजनान्यत्वम्' इति न्यायेन नैयमिकाग्निहोत्रकौण्डपायिनामयनाग्निहोत्रवत् भेदस्यैव युक्तत्वात्। किं च उभयत्रापि बहुतरपाठसाम्येऽपि क्वचित्पाठभेदोऽपि दृश्यते। तुरीयमात्रानिरूपणावसरे 'एषोऽन्तर्याम्येष ईशान एष प्रभुः' इति माण्डूक्ये पाठः। तापनीये तु 'एषोऽन्तर्याम्येष योनिः' इति ईशानप्रभुपदद्वयं विहाय पाठः। तस्माद्भिन्नत्वात् यद्यत्र योग्यं प्रस्तुतं च, तत् तथा व्याख्येयम्। तथा स्थूलभुक् स्थूलां पृथिवीं हृदयाङ्गान्तर्गतां भुङ्क्ते सेवते इति स्थूलभुक् वि-

श्वेषां नराणां स्वस्मिन्नेव अनेकधानयनात् विश्वानरः विश्वानर एव वैश्वानरः । ननु यथा माण्डूक्ये वैश्वानरशब्दसामर्थ्यात् सप्ताङ्गैकोनविंशतिमुखपदद्वयं यथासंख्यं विराड्ढिरण्यगर्भपरत्वेन व्याख्यातम्, तथात्रापि वैश्वानरशब्दसामर्थ्यात् उभयपरत्वेन व्याख्यायतां किमिति शक्तिबीजपरत्वेन, प्रकरणसंनिधेर्वाक्यसंनिधेर्बलीयस्त्वात् । सत्यम् । यद्यत्र वैश्वानरशब्दो वैश्वानरविद्यापरत्वेनैव वर्तेत, तर्हि एवं स्यात्; न त्वेतत्स्यात्, यौगिक्या वृत्त्या अन्यपरत्वेन व्याख्यातत्वात् । किं च तत्र तत्र विधेयार्थभेदेन वाक्यभेदात् वाक्यसंनिधिर्न निश्चितः । अतः उभयत्रापि प्रकरणसंनिधेरविशिष्टत्वात् प्राग्व्याख्यैव ज्यायसी । प्रथमः पादः तत्र अकारोकारमकाराश्रितत्वेन तद्वाचकत्वेन वा एवंविधविशिष्टबुद्ध्युत्पत्तिरिति प्रथमः पादः । एतत्पूर्वकत्वादुत्तरपादाधिगमस्येति प्राथम्यम् । ननु अयमात्मा ब्रह्म इति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते कथं शक्तिबीजयोरङ्गमुखत्वकीर्तनमिति । नैष दोषः, उपास्योपासकयोरभेदस्यात्र विवक्षितत्वात् । एवं च सति नृसिंहब्रह्माद्वैतसिद्धिः । सर्वभूतस्थश्च आत्मा एको दृष्टः स्यात्, सर्वभूतानि च आत्मनि । 'यस्तु सर्वाणि भूतानि' इत्यादिश्रुत्यर्थश्च एवमुपसंहृ-

तश्च स्यात् । अन्यथा परिच्छिन्न एव प्रत्यगात्मा सांख्यादिभिरिव दृष्टः स्यात् । इष्यते च सर्वोपनिषदां सर्वात्मैकत्वप्रतिपादकत्वम् । अतो युक्तमेव अस्योपासकस्य आत्मनः उपास्येन आत्मना एकत्वमभिप्रेत्य सप्ताङ्गत्ववचनं मुखवचनं च । स्वप्नं स्थानमस्य तैजसस्य स स्वप्नस्थानः । जाग्रत्प्रज्ञा अनेकसाधना बहिर्विषयेव भासमाना मनसः स्पन्दमाना सती तथाभूतसंस्कारं मनस्याधत्ते । तन्मनः तथा संस्कृतं विचित्र इव पटो बाह्यसाधनानपेक्षम् अविद्याकर्मभ्यां प्रेर्यमाणं जाग्रद्वदवभासते । तथा च उक्तम् अस्य लोकस्य सर्वावतो मात्रामपादाय इत्यादि । परे देवे मनस्येकी भवति इति प्रस्तुत्य अत्रैष देवः स्वप्ने महिमानमनुभवति इत्याथर्वणे । इन्द्रियापेक्षया अन्तःस्थत्वान्मनसः तद्वासनारूपान्तर्लब्धा स्वप्ने प्रज्ञा येन इति अन्तःप्रज्ञः । तैजसः विषयशून्यायां प्रज्ञायां केवलप्रकाशरूपायां विषयित्वेन भवतीति तैजसः । विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोग्यत्वम् । इह पुनः केवला वासनामात्रा प्रस्फुटप्रज्ञा भोग्येति प्रविविक्तो भोग इत्युकारमिश्रणं शक्तिबीजयोः । समानमन्यत् । द्वितीयः पादस्तैजसस्त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां सुषुप्तं विभजते—यत्र सुप्तो

न कंचनेत्यादि । न हि सुषुप्ते पूर्वयोरिव अन्यथाग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते । तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः स्थानद्वयप्रविभक्तमनःस्पन्दितं द्वैतजातम् । तद्यथा रूपापरिज्ञानेन अविवेकापन्नं नैशतमोग्रस्तमिवाहः स्फुटप्रपञ्चम् एकीभूतमुच्यते । अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीवेयमवस्था विवेकरूपत्वात्प्रज्ञानघन उच्यते । यथा रात्रौ नैशेन तमसा अविभज्यमानं सर्वं घनमिव तद्वत् प्रज्ञानघनः । एव-शब्दात् जात्यन्तरं नास्तीत्यर्थः । मनसो विषयविषय्याकारस्पन्दनायासदुःखाभावात् आनन्दमयः आनन्दप्रायः न आनन्द एव, अनात्यन्तिकत्वात्– यथा लोके निरायासस्थितौ मुख्यानन्दभुगुच्यते, 'एष परमानन्दः' इति श्रुतेः । स्वप्नादिप्रतिबोधे चेतः प्रति द्वारीभूतत्वात् चेतोमुखः बोधलक्षणं वा चेतो मुखं द्वारमस्य स्वप्नाद्यागमनं प्रति इति चेतोमुखः । भूतभविष्यज्ज्ञातृत्वात् सर्वविषयज्ञातृत्वमस्यैवेति प्राज्ञः । सुप्तो हि भूतपूर्वगत्या प्राज्ञ उच्यते । अथवा प्रज्ञप्तिमात्रमस्यैवासाधारणं रूपमिति प्राज्ञः इतरयोर्विशिष्टमपि ज्ञानमस्ति सोऽयं प्राज्ञः तृतीयः पादः । एष हि स्वरूपावस्थः साधिदैविकस्य भेदजातस्य सर्वस्य ईशिता नैतस्माज्जात्यन्तरभूते अन्ये-

षामिव 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतेः। अत एव हि सर्वेश्वरः। अत एव हि सर्वभेदावस्थाज्ञाता इत्येष सर्वज्ञ एषः अन्तर्यामी अन्तस्तनु प्रविश्य सर्वेषां भूतानां नियन्तापि एष एव। अत एव यथोक्तं सभेदं जाग्रत्प्रसूयत इत्येष योनिः। अत एव प्रभवश्चाप्ययश्च प्रभवाप्ययौ हि भूतानाम् एष एव एतावान् उभयत्रापि समानः पाठः। अत ऊर्ध्वं माण्डूक्ये उक्त एवार्थे श्लोकान्पठित्वा तुरीयः पादः, एतस्मिंस्तापनीये तु तान्विहाय तुरीयः पादः। तस्मिन्नपि कियान्पाठभेदस्तद्व्याख्यानावसरे दर्शित एव तत्रोपयोगी श्लोकः पठ्यते— 'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजस. । आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः'। जागरितावस्थायामेव विश्वादीनां त्रयाणामनुभवप्रदर्शनार्थं श्लोक। दक्षिणमक्ष्येव मुखं यस्य स तथोक्तः तस्मिन्सर्वेषु करणेषु अविशेषेऽपि दक्षिणे अक्षिण्युपलब्धिपाटवदर्शनात् तत्र विशेषनिर्देशे विश्वस्य दक्षिणाक्षिगतो रूपं दृष्ट्वा निमीलिताक्षः तदेव स्मरन् मनसि अन्तः स्वप्न इव वासनारूपमभिव्यक्तं पश्यति यथा अत्र, तथा स्वप्ने; अतः मनस्यन्तस्तु तैजसो विश्व एव आकाशो बाह्यादिस्मरणव्यापारोपरमे प्राज्ञः एकीभूतो घनप्रज्ञ एव भवति, मनोव्यापाराभावात्। दर्शनस्मरणे एव हि

मनःस्पन्दितं तदभावे ह्येवाविशेषेण प्राणात्मना अवस्थानात्प्राणः, 'प्राणो ह्येवैतान्सर्वान्संवृङ्क्ते' इति श्रुतेः । तैजसः हिरण्यगर्भः, मनस्यवस्थितत्वात् । लिङ्गं मनः, 'यत्र मनोमयोऽयं पुरुषः' इत्यादिश्रुतेः । ननु व्याकृतः प्राणः सुषुप्ते तदात्मकानि कारणानि भवन्ति कथमव्याकृतता । नैष दोषः, अव्याकृतस्य देशकालविशेषाभावात् । यद्यपि प्राणाभिमाने सति व्याकृततैव प्राणस्य, तथापि पिण्डपरिच्छिन्नविशेषाभिमाननिरोधः प्राणे भवतीत्यव्याकृत एव प्राणपरिच्छिन्नाभिमानवतां यथा प्राणलये परिच्छिन्नाभिमानिनां प्राणे अव्याकृतता, तथा प्राणाभिमानिनोऽपि अविशेषापन्नत्वात् अव्याकृतता, समाना । प्रणवबीजात्मकत्वं च तदध्यक्षश्च एको व्याकृतावस्थः परिच्छिन्नाभिमानाध्यक्षाणां च तेनैकत्वमिति पूर्वोक्तं विशेषणम् एकीभूतः प्रज्ञानघनः इत्याद्युपपन्नम् । तस्मिन्नुक्तहेतुत्वात् प्राणशब्दत्वमव्याकृतस्य, 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतेः । एवं तावत्प्रभवाप्ययौ हि भूतानामित्यनेन एकविज्ञानेन सर्वविज्ञानं दर्शितम् । तथा माण्डूक्यश्लोके जागरितावस्थायामेवावस्थात्रयमुक्तं तस्यामेवावस्थायां तत्रैविध्ये मनोव्यापारं व्यावृत्य प्रागुक्तोपास्ये मनोव्यापारं प्रवर्तयितुम् उपास्य-

स्वरूपमाह— न बहि.प्रज्ञमिति । बहिर्विषयव्यापारोपरमात् जागरितावस्थाप्रतिषेधान्मनसो हि स्वस्मिन्व्यापारेणान्त:प्रज्ञत्वे तैजसत्वे च प्रत्यगात्मन. प्राप्ते, तन्निषेधति—नान्त:-प्रज्ञमिति । उभयत्र व्यापारप्रतिषेधेन तदन्तरालव्यापारे प्राप्ते, तं निषेधति—नोभयत.प्रज्ञमिति । जाग्रत्स्वप्नान्तराले मनो व्यावृत्त प्रज्ञार्थं न कुर्यादित्यर्थ: । अन्तरालव्यापार-प्रतिषेधेन उभयत्र युगपत्प्रज्ञार्थं व्यापारे प्राप्ते, तं निषे-धति— न प्रज्ञमिति । एवं मर्वतो मनोव्यापारप्रतिषेधात् अव्याकृत मन: अविद्यमानम् असदिव तिष्ठेत तत्प्रतिषेध-ति— नाप्रज्ञमिति । तत्स्थितिप्रतिषेधात् अज्ञानसाक्षिके स्वप्ने प्राप्ते, तं निषेधति—न प्रज्ञानघनमिति । अथ षट्प्र-तिषेधै: प्रणवविद्याङ्गभूतै: उपास्यप्रतिकूलं प्रतिषिध्य व्यावृत्य यदुपास्ये मनोऽव्यावृत्तं कार्यं तदुपास्यं वस्तु निर्दिशति— अदृष्टमिति । न हि ईदृशमुपास्यं क्वचिद्दृष्टं पुरुषाकारमेव वा तिर्यगाकारमेव वा यथा गोपालकूर्मादि । तत्तु उभयरूपं नृसिंहात्मकं त्रिनेत्रं पिनाकहस्तमिति । अत एव अव्यवहा-र्यम् । अत एव अलक्षणमिति । न लक्षणं लिङ्गं विद्यते यस्य तदलक्षणम् । अत एव अचिन्त्यम् अनुमानेन तर्केण वा । अत एव अव्यपदेश्यं नियताकारोपास्यप्रतिपादकै:

शब्दैः । अत एव एकात्मप्रत्ययसारम् एकस्मिन्सर्वेषामात्मनां प्रत्ययः एकात्मप्रत्ययः स एव सारं यस्य तत् तथोक्तम् । अथवा एक एव आत्मा उपास्योपासकयोः इत्येवं प्रत्ययः । शेषं पूर्ववत् । अत एव प्रपञ्चोपशमं प्रागुक्तेन न्यायेन मनसो हि बाह्यदर्शनस्मरणव्यापाराभावात् व्यावृत्तत्वाच्च स्वापाभावादित्युपास्यव्यतिरेकेण प्रपञ्चाप्रतीतेः प्रपञ्चोपशममिति । शिवं शंकरं चतुर्थं तुरीयपादं मन्यन्ते अर्धमात्रानादात्मकमिति तथोपास्यम् । प्रत्यगात्मतया उपास्यमाह— स उपास्य आत्मा प्रत्यगात्मेत्येवं विज्ञेयो द्रष्टव्यः ॥

एवमियं प्रणवविद्या षट्प्रतिषेधवती सप्तशक्तिकहृदयाङ्गबीजमुखवती अङ्गिना मनोव्यापारं स्थिरं कुर्वती अस्यां विद्यायाम् उपकारकवती असकृदावर्तनीया ओमुपासकेनेति तात्पर्यार्थः । एवं तावत्सामाङ्गप्रणवविद्यां नृसिंहब्रह्मविद्योपकारिणीमभिधाय अथेदानीं तदुपकारिणीमेव शिरोऽङ्गव्याख्यात्रीं सामाङ्गसवितृप्रतिपाद्यां विद्यां नृसिंहब्रह्मविद्याङ्गभूतामाह—

**अथ सावित्री गायत्री या यजुषा प्रोक्ता तया सर्वमिदं व्याप्तं घृणिरिति**

द्वे अक्षरे सूर्य इति त्रीण्यादित्य इति त्रीण्येतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं य एवं वेद श्रिया हैवाभिषिच्यते तदेतदृचाभ्युक्तम्— ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति । न ह वा एतस्यर्चा न यजुषा न साम्नार्थोऽस्ति यः सावित्रीं वेदेति । ॐ भूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवःकालकर्णी । तन्नो महालक्ष्मीः प्रचोदयादित्येषा वै महालक्ष्मीर्यजुर्गायत्री चतुर्विंशदक्षरा भवति गायत्री वा इदं सर्वं यदिदं किंच तस्माद्य एतां महालक्ष्मीं याजुषीं वेद महतीं श्रियमश्नुते । ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयादित्येषा वै नृसिंहगायत्री वेदा-

**नां देवानां निदानं भवति य एवं वेद स निदानवान्भवति ॥ २ ॥**

अथ-शब्दः क्रमप्राप्तानन्तर्यार्थः । मन्त्रे सवितृपदाभावेऽपि सावित्रीति वदन् सवितृकालीनप्रकाशवत् सुषुप्तप्रकाशवच्च बाह्याभ्यन्तरतमोनिर्वारकत्वात् अयं शिरोऽङ्गप्रकाशो निबिडाविद्यानिवर्तक इति दर्शयति । गायत्री, अष्टाक्षरत्वात् तां गायत्रीं यजुषा व्याचष्टे; या यजुषा प्रोक्ता तया सर्वमिदं व्याप्तम् । शिरोऽङ्गं व्याख्यातम् उपास्यं च । अक्षराणि गणयति । घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि, पृथग्रेफगणनात् । आदित्य इति त्रीणि । एतद्वै सावित्रस्याष्टाक्षरं पदं श्रिया अभिषिक्तमिति । श्र्यादिभिस्तदादिन्यायेन सप्तभिः शक्तिभिः विग्रहवतीभिः मणिगणखचितैर्हैमकुम्भैरमृतपूर्णैः शिरः अभिषिक्तमित्यर्थः । य उपासकः एवमुपास्ते तस्य फलं निर्दिशति । श्रिया हैव अभिषिच्यते प्रागुक्ताभिः शक्तिभिः प्रागुक्तेन प्रकारेण सोऽप्यभिषिच्यत इत्यर्थः । तदेतदृचा अभ्युक्तम् उक्तार्थम् । ऋचो निषेदुः नितरां सेवनं कृतवत्यः । ऋग्ग्रहणम् उपलक्षणार्थम् । यद्वा ऋच इति षष्ठी । ऋचः सईमित्यादिकाया नयाः प्रतिपादिताः शक्तयः, वेदा वा; न केवलं शक्तयः, अपि तु विश्वे देवाः

सर्वे देवाः अधि इति उपरि शिरसि अक्षरे न क्षरति न विलीनं भवति परमे व्योमन् व्योमनि सर्वाभिषेकद्वारत्वात् परमं मोक्षद्वारत्वाच्च व्योम यस्मिञ्छिरसि । य उपासक. तच्छिरो वेददेवदेवीभिः प्रागुक्तेन प्रकारेण अभिषिक्तं न वेद न जानाति किमृचा ऋग्वेदादिना करिष्यति। यद्वा सईं पाहि इति अनया ऋचा किं करिष्यति। य इत् इत्थमेव तदभिषिक्तं शिरः विदुः उपासते त इमे उपासकाः समासते सम्यक्प्रकारेण आसते सुखिनः इत्यर्थः । ऋग्गतम् ऋक्पदं व्याचष्टे । न ह वै एतस्य ऋचा न यजुषा न साम्ना अर्थः प्रयोजनम् अस्ति यः सावित्रीं शिरःशिखां साधनभूतां वेदेति । ततश्च अयमर्थः । अष्टाक्षरां सावित्रीं पठित्वा प्रागुक्ताः सर्वे वेददेवादयः अभिषिञ्चतीति सावित्रस्य अष्टाक्षरं पदम् अष्टावक्षराण्यभिषेचनाय यस्मिञ्छिरसि तदष्टाक्षरं शिरः तदेव पदम् आश्रयः इति तत्त्वार्थः । एवं तावन्नृसिंहब्रह्मविद्यां शिरोऽङ्गोपकारिणीं सावित्राभिषेचनीं विद्यामभिधाय अथेदानीं तदुपकारिणीं शिखाङ्गद्वारा सामाङ्गमहालक्ष्मीविद्यामाह— ॐ भूर्लक्ष्मीरिति प्रणवविद्यापुरःसरा एताः शक्तयो भूरित्याद्या व्याहृतयः । भूः, भू सत्तायामिति सत्तायामत्र वर्तते । अत एवोक्तमस्माभिः सप्तव्या-

हृतीर्व्याचक्षाणैः प्रपञ्चसारे—‘भूःपदात्तु व्याहृतयो भूःशब्दः सति वर्तते । तत्पदं सदिति प्रोक्तं सन्मात्रत्वाच्च भूरतः ॥ भूतत्वात्कारणत्वाच्च भुवःशब्दस्य संगतिः । सर्वस्य स्वीकरणात्स्वात्मतया स्वरितीरितम् । महत्त्वाच्च महस्त्वाच्च महच्छब्दः समीरितः’ ततश्च यथासंख्यं भूर्लक्ष्मीरिति । सन्मात्रब्रह्मणो व्यापिका शक्तिर्भूर्लक्ष्मीरित्युच्यते । कारणमात्ररूपस्य ब्रह्मणः शक्तिर्भुवर्लक्ष्मीरिति । सर्वत्र स्वात्मतया अवस्थितस्य ब्रह्मणः शक्तिः सुवःकालकर्णीत्युच्यते । महाभूतप्रकाशकात्मकस्य भुवर्ब्रह्मणः शक्तिर्महालक्ष्मीरिति । सैकैका शक्तिः तदङ्गं शिखाख्यं तेजोमयं सुषुम्नामृतमयं सोमरूपेणोपास्यत्वात्तस्य पादस्य, ‘य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात्’ इति श्रुतेः । सोमः चन्द्रः ‘सुषुम्नः सूर्यरश्मिश्चन्द्रमा’ इति श्रुतेः । नः अस्मान् प्रचोदयादिति चुद प्रेरणे प्रेरयतु । तदङ्गमेकैका विग्रहवती शक्तिः अमृतस्रवणाय प्रेरयतु । अभिषेक्त्रीणां शक्तीनां शिखाधिष्ठात्रीः शक्तीः प्रति अनया ऋचा गायत्र्या यजुर्महालक्ष्म्याः प्रार्थनारूपं वचनम् । ततश्च तदङ्गममृतस्रावि अमृतरूपमुपास्यमिति । अथवा सैकैका शक्तिः तदङ्गं नः प्रचोदयादिति नः प्रेरयतु । असंविवादमेवाङ्गं

कुर्यादिति । एषा वै महालक्ष्मीः यजुर्गायत्री महतीनां महालक्ष्म्यादीनां प्रतिपादकत्वात् महालक्ष्मीः सावित्रमन्त्रे अत्र च यजुरिति वदन् सामाङ्गत्वेऽपि गीतिरहितमङ्गद्वयमिति दर्शयति । प्रणवान्तर्भावाय अक्षराणि गणयति चतुर्विंशदक्षरा भवतीति । चतुर्विंशदिति च्छान्दसम् । गायत्री वा इदं तृतीयमङ्गं सर्वं कृत्स्नं यदिदं किंच । यस्मादेवं तस्मात् य एतां शिखां पारमेश्वरीं महालक्ष्मीं याजुषीं प्रागुक्तविग्रहशक्त्युपास्यां वेद उपास्ते, तस्य फलं निर्दिशति— महतीं श्रियमश्नुत इति; महतीं श्रियं प्राप्नोतीत्यर्थः । एतद्गायत्र्युक्ताः शक्तयः विग्रहवत्यः अभिषेचनशक्तीनामुपकाराय अमृतमयीं शिखाम् अमृतस्रवणाय तद्बन्धनाय वा उपास्ते इति तत्त्वार्थः । एवं तावन्नृसिंहब्रह्मविद्योपकारिणीं सामाङ्गतृतीयाङ्गविद्यामभिधाय अथेदानीं सामाङ्गचतुर्थाङ्गविद्यां नृसिंहगायत्रीमाह । ॐ प्रणवः व्याख्यातः तदङ्गं कवचाख्यं पारमेश्वरम् । धीमहीति ध्यायेमहि । किमर्थं वज्रनखाय नृसिंहाय । तादर्थ्ये चतुर्थी । तदर्थं विद्महे जानीमः यतः तदेवाङ्गं नः अस्मान् सिंहः प्रचोदयात् इत्युक्तार्थम् । नरशब्दं विहाय सिंह इति वदन् अस्यां विद्यायां सिंहाकारस्य प्राधान्यं दर्श-

यति। इति-शब्दो मन्त्रसमाप्तिं द्योतयति। एषा वै नृसिंहगायत्री नृसिंहार्थकवचप्रतिपादकत्वाद्गायत्री प्रणवान्तर्भावं दर्शयति। कवचाश्रिततदावृतहृदयान्तर्गतानां वेदानां देवानां यथायोग्यतया निदानं मूलकारणं भवति। उपासकस्य फलं निर्दिशति। य एवं वेद स निदानवान्भवतीति। तत-श्चायमर्थः। पारमेश्वरं कवचाख्यमङ्गं हृत्संबन्धि सर्ववेद-निदानत्वेनोपास्यं तत्प्रतिपादकत्वात् ऋक्संबन्धि सर्ववेददे-वनिदानं गायत्री उच्यते इति तत्त्वार्थः॥

एवं तावन्नृसिंहब्रह्मविद्योपकारिण्यङ्गचतुष्टयव्यापिनी म-हाचक्राख्याम् अभिधातुं तस्मिंश्चक्रे द्वात्रिंशत्पत्रे यथासंख्यं कृतप्रणवसंपुटे न्यस्तमूलमन्त्राक्षरे एकैकस्मिन् तत्तद्देवता नृसिंहव्यूहं स्तुतिमन्त्रवर्णसामर्थ्यलभ्यं च प्रदर्शयितुं तान्म-न्त्रान्प्रश्नोत्तररूपाख्यायिकया आरभते।

**देवा ह वै प्रजपातिमब्रुवन्नथ कैर्म-न्त्रैर्देवः स्तुतः प्रीतो भवति स्वात्मानं द-र्शयति तन्नो ब्रूहि भगव इति स होवाच प्रजापतिः। ॐ उं ॐ यो वै नृसिं-हो देवो भगवान्यश्च ब्रह्मा तस्मै वै**

नमो नमः १ ॐ ग्रं ॐ यो वै नृसिंहो देवो भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ ॐ वीं ॐ यो वै नृसिंहो देवो भगवान्यश्च महेश्वरस्तस्मै वै नमो नमः ३ ॐ रं ॐ यो वै नृसिंहो देवो भगवान्यश्च पुरुषस्तस्मै वै नमो नमः ४ ॐ मं ॐ यो वै नृसिंहो देवो भगवान्यश्चेश्वरस्तस्मै वै नमो नमः ५ ॐ हां ॐ यो वै नृसिंहो देवो भगवान्या सरस्वती तस्मै वै नमो नमः ६ ॐ विं ॐ यो वै नृसिंहो देवो भगवान्या श्रीस्तस्मै वै नमो नमः ७ ॐ ष्णुं ॐ यो वै नृसिंहो देवो भगवान्या गौरी तस्मै वै नमो नमः ८ ॐ ज्वं ॐ यो वै नृसिंहो देवो भगवान्या प्रकृतिस्तस्मै वै नमो नमः ९ ॐ लं ॐ यो वै नृसिंहो देवो भगवान्या विद्या तस्मै वै नमो नमः १० ॐ तं ॐ यो वै नृसिंहो

देवो भगवान्यश्चोंकारस्तस्मै वै नमो नमः ॐ सं ॐ यो वै नृसिंहो देवो भगवान्याश्चतस्रोऽर्धमात्रास्तस्मै वै नमो नमः १२ ॐ वं ॐ यो वै नृसिंहो देवो भगवान्ये च वेदाः साङ्गाः सशाखास्तस्मै वै नमो नमः १३ ॐ तों ॐ यो वै नृसिंहो देवो भगवान्ये पञ्चाग्नयस्तस्मै वै नमो नमः १४ ॐ मुं ॐ यो वै नृसिंहो देवो भगवान्याः सप्तव्याहृतयस्तस्मै वै नमो नमः १५ ॐ खं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ लोकपालास्तस्मै वै नमो नमः ॐ नृं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ वसवस्तस्मै वै नमो नमः १७ ॐ सिं ॐ यो वै नृसिंहो देवो भगवान्ये च रुद्रास्तस्मै वै नमो नमः १८ ॐ हं ॐ यो वै नृसिंहो देवो भगवान्ये च आदित्यास्तस्मै वै नमो नमः १९ ॐ भीं ॐ यो

वै नृसिंहो देवो भगवान्ये चाष्टौ ग्रहा-
स्तस्मै वै नमो नमः २० ॐ षं ॐ यो वै
नृसिंहो देवो भगवान्यानि पञ्च महाभू-
तानि तस्मै वै नमो नमः २१ ॐ णं ॐ यो
वै नृसिंहो देवो भगवान्यश्च कालस्तस्मै
वै नमो नमः २२ ॐ भं ॐ यो वै नृसिंहो
देवो भगवान्यश्च मनुस्तस्मै वै नमो नमः
२३ ॐ द्रं ॐ यो वै नृसिंहो देवो भगवा-
न्यश्च मृत्युस्तस्मै वै नमो नमः २४ ॐ मृं
ॐ यो वै नृसिंहो देवो भगवान्यश्च यम-
स्तस्मै वै नमो नमः २५ ॐ त्युं ॐ यो
वै नृसिंहो देवो भगवान्यश्चान्तकस्तस्मै
वै नमो नमः २६ ॐ मृं ॐ यो वै नृसिं-
हो देवो भगवान्यश्च प्राणस्तस्मै वै नमो
नमः २७ ॐ त्युं ॐ यो वै नृसिंहो देवो
भगवान्यश्च सूर्यस्तस्मै वै नमो नमः २८
ॐ नं ॐ यो वै नृसिंहो देवो भगवान्यश्च

सोमस्तस्मै वै नमो नमः २९ ॐ मां ॐ यो वै नृसिंहो देवो भगवान्यश्च विराट्पुरुषस्तस्मै वै नमो नमः ३० ॐ म्यं ॐ यो वै नृसिंहो देवो भगवान्यश्च जीवस्तस्मै वै नमो नमः ३१ ॐ हं ॐ यो वै नृसिंहो देवो भगवान्यश्च सर्वं तस्मै वै नमो नमः ३२ इति तान्प्रजापतिरब्रवीदेतैर्द्वात्रिंशन्मन्त्रैर्नित्यं देवं स्तुवते ततो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत् ॥

इति चतुर्थोपनिषत् ॥

देवा ह वै प्रजापतिमब्रुवन्नित्यादि स होवाच प्रजापतिरित्यन्तं स्पष्टार्थम् । अत्र हि सर्वे मन्त्राः प्रणवादिकाः तदादिन्यायेन प्रणवं मूलमन्त्राक्षरं पुनः प्रणवं सर्वेषु मन्त्रेषु दर्शयति । अत्र हि मन्त्रेषु यच्छब्दद्वयेन अन्यतः सिद्धमनूद्य कुत्रचिच्छ-

ब्दसामर्थ्यात् कुत्रचित् तस्मै इत्येकवचनसामर्थ्यात् एक एव व्यूहः प्रतीयते । स च द्विविधः क्वचिदसाधारणायुधैः तत्तद्देवतागम्यः प्रतीयते क्वचिच्च विश्वरूपः तेनैव न्यायेन उभयत्रापि नृसिंहाकारः योगारूढः अधस्तनहस्ताभ्यां वरदाभयहस्तः उपरितनाभ्यां तत्तद्देवतायुधधारी क्वचिच्छङ्खचक्रगदाधारी च इत्येतत्सर्वं स्पष्टं करिष्यामः । यथा अत्रैव नृसिंहाकारव्यूहा ब्रह्मविष्णुमहेश्वरात्मकाः स्रुक्स्रुवशङ्खचक्रपिनाकत्रिशूलैरायुधैर्गम्यन्ते नृसिंहात्मकः पुरुषव्यूहः द्विभुजः दश हस्त्या अङ्गुलयः दश पाद्याः यावानेव पुरुषः, इति श्रुतेः । अत ऊर्ध्वं सर्वे नृसिंहव्यूहाश्चतुर्भुजाः नृसिंहात्मकाश्च ईश्वरव्यूहः ईश्वरायुधगम्यः पूर्वेषां पञ्चानां यथासंख्यं पञ्चशक्तिव्यूहः सरस्वतीश्रीगौरीप्रकृतिविद्यात्मिकाः स्त्रियः स्वायुधैर्गम्याः एवं मूलमन्त्राक्षरेषु दशसु ऐशानीं दिशमारभ्य प्रणवसंपुटितेषु सर्वाभरणयुक्ताः श्वेतरूपा उपास्याः । एवं वक्ष्यमाणाः सर्वे व्यूहाः यथासंख्यं मूलमन्त्राक्षरेषु उपास्याः । प्रणवव्यूहः एकेन प्रणवाक्षरेण वक्षसि चिह्नतः प्रणवचतुष्टयमात्रः वासुदेवविग्रहः सशाखवेदविग्रहः पञ्चाग्निविग्रहः सप्तव्याहृतिविग्रहः अष्टलोकपालविग्रहः वसुरुद्रादित्याष्टग्रहपञ्चमहाभूतविग्रहाः एकैकस्मिन्नृसिंहव्यूहे यथासंख्य-

मन्तर्भूताः उपास्याः इति दश व्यूहाः विश्वरूपाः उपास्याः । कालमनुमृत्युयमान्तकप्राणसूर्यसोमविराट्पुरुषजीवरूपचेतनाचेतनसर्वात्मका इत्येते व्यूहाः अविश्वरूपाः तत्तदसाधारणरूपगम्याः एवमेकैकव्यूहः उपास्यः तेन तेन मन्त्रेण स्तुत्यः ततो देवः स्वात्मानं स्वकीयं रूपं विश्वरूपम् अविश्वरूपं च यथायोग्यं दर्शयति । यस्मादेवं तस्मात् य उपासकः एतैर्मन्त्रैः नित्यं नियमेन स्तौति, स देवं विश्वरूपमविश्वरूपं च पश्यति साक्षात्करोति । सोऽमृतत्वमित्यादि महोपनिषदित्यन्तं स्पष्टार्थम् । तत्र अमृतत्वं च गच्छतीति फलस्य द्विरभ्यासः स्तुतिमात्रादेव परमफलावाप्तिं मन्त्राणां च सामर्थ्यं दर्शयति । महोपनिषच्छब्दः प्रणवबाहुल्यमिति सर्वं निर्मलम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
नृसिंहपूर्वतापनीयोपनिषद्भाष्ये
**चतुर्थोपनिषद्भाष्यं संपूर्णम् ॥**

# पञ्चमोपनिषत् ॥

---

एवं तावच्चतुर्थोपनिषदि अन्ते स्तुत्युप-
निषदा महाचक्रस्थद्वात्रिंशत्पत्रेषु य-
थासंख्यं द्वात्रिंशन्नृसिंहस्तुत्योपाख्यान-
भिधाय, अथेदानीं महाचक्रविद्याम-
भिधातुं महाचक्रस्वरूप निरूपयितुं
प्रश्नोत्तररूपाख्यायिकया पञ्चमोपनि-
षदारभ्यते—देवा ह वै प्रजापतिमब्रुवन्निति । नन्वेवं तर्हि स्तुत्युपनिषद्विद्यातो महाचक्रविद्यया प्राग्भवितव्यम् । अत्रोच्यते । सत्यम् । यदीयं प्राक्स्यात् पुरश्चरणार्थं पञ्चमाङ्गन्यासार्थं च कृत्स्नैव प्रतीयेत; न तु द्वात्रिंशद्व्यूहोपासनामात्रं पुरश्चरणार्थम् इतरत् सुदर्शनादिमहाचक्रं सद्वात्रिंशद्व्यूहकं पञ्चमाङ्गम् इत्येवं विभागः प्रतीयेत । अतस्तद्विभागज्ञापनार्थं न प्रागभिहितेयमिति । नन्वेवमपि तदादिन्यायेन महाचक्रविद्या पुरश्चरणार्थं कृत्स्नैव कस्मान्न गृह्येत । तन्न, तत्र तदादिन्यायवैषम्यात् । न हि महाचक्रस्यायमादिर्द्वात्रिंशद्व्यूहो

नामा; अपि तु महाचक्रनाभिवर्तिक्षीरोदार्णवसंबन्धिनृसिंह-व्यूहः। तस्मात्सूक्तमुपनिषद्विद्यातः प्रागभिधानमस्या इति ॥

देवा ह वै प्रजापतिमब्रुवन्महाचक्रं नाम चक्रं नो ब्रूहि भगव इति सार्वकामिकं मोक्षद्वारं यद्योगिन उपदिशन्ति स होवाच प्रजापतिः षडरं वा एतत्सुदर्शनं महाचक्रं तस्मात्षडरं भवति षट्पत्रं चक्रं भवति षड्वा ऋतव ऋतुभिः संमितं भवति मध्ये नाभिर्भवति नाभ्यां वा एतेऽराः प्रतिष्ठिताः। मायया वा एतत्सर्वं वेष्टितं भवति नात्मानं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति। अथाष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा वै गायत्री गायत्र्या संमितं भवति बहिर्मायया वेष्टितं भवति क्षेत्रं क्षेत्रं वा मायैषा संपद्यते। अथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशाक्षरा वै ज-

**गती जगत्या संमितं भवति बहिर्मा-
यया वेष्टितं भवति । अथ षोडशारं षो-
डशपत्रं चक्रं भवति षोडशकलो वै
पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं
भवति मायया बहिर्वेष्टितं भवति । अथ
द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति
द्वात्रिंशदक्षरा वा अनुष्टुबनुष्टुभा संमितं
भवति बहिर्मायया वेष्टितं भवत्यरैर्वा
एतत्सुबद्धं भवति वेदा वा एतेऽराः पत्रै-
र्वा एतत्सर्वतः परिक्रामति च्छन्दांसि
वै पत्राणि ॥ १ ॥**

देवाः प्राक्स्तुतिश्रवणेनात्यन्तहर्षिताः प्रजापतिमब्रुवन्—महाचक्रं नाम एतन्नामधेययुक्तं चक्रम्, यद्वा एतन्नामधेययुक्तमेव चक्रं वर्तुलमुत्तराधरभावेन स्थितं सच्चतुष्टयाङ्कव्यापकमस्त्राख्यमङ्कं नः अस्मभ्यं ब्रूहि भगवः भगवन्निति संबोधनम्। सार्वकामिकं सर्वकामसाधनत्वात् सार्वकामिकम् , अथवा सर्वेषां देवानां ब्रह्मादीनां व्यूहाः स्वात्मतयैव स्वभावतयैव कामिता यस्मिंश्चक्रे नाभिवर्त्याद्यव्यूहेन तत्सार्वकामिकम् । अत एव

मोक्षद्वारं प्रणवबहुलत्वान्मूलमन्त्राक्षरसंख्यातः प्रणवसंपुटीकरणात्प्रणवाक्षरसंख्या द्विगुणा चतुःषष्टिः। अस्यां च विद्याया मोक्षः प्रणवद्वारक एव, 'देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे' इति श्रुतेः। ततश्चायमर्थः—मोक्षस्य प्रणवाख्यं द्वारं यस्मिंस्तत्तथोक्तम्। यच्चक्रं योगिनः उपदिशन्त्युपासकेभ्यः। स होवाच प्रजापतिरित्युक्तार्थम्। षडरं वा एतत्सुदर्शनं महाचक्रं महाचक्रस्यैव नामान्तरं सुदर्शनमन्त्रयोगात् सुदर्शनम्। यद्वा सुष्ठु दर्शनं विद्यते यस्मिंस्तथोक्तम्। एतत्पत्राधोभागे नालरूपः अरशब्दवाच्यः। षडरा विद्यन्ते यस्मिंस्तत् षडरम्, यस्मादेवं तस्मात् षडरं भवति। षट्पत्रं चक्रं भवति अरादुपरिभागः कोणत्रययुक्तः पत्राकृतिः पत्रम्, षट्पत्राणि विद्यन्ते यस्मिंस्तत्तथोक्तम्। एतदेव स्तौति—षड्वा ऋतवः ऋतुभिः संमितं भवति। एतस्मादर्थवादात् अराः पत्राणि च ऋतुबुद्ध्योपास्यानि भवन्ति। अराणां प्रतिष्ठार्थं स्थानमाह— मध्ये चक्रस्य मध्ये नाभिः वर्तुलाकारा भवति। नाभ्यां वै एते अराः प्रतिष्ठिताः प्रागुक्ताः, तदादिन्यायेन पत्राणि च प्रागुक्तानि। मायया प्रागुक्तेन मूलमन्त्रशक्त्यक्षरेण एतत्षडरं षट्पत्रं सर्वं वेष्टितं भवति। यस्मात् न आत्मानं चक्रस्य स्वरूपम् अरपत्रात्मकं

माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति; यद्वा प्रत्यक्चैतन्यमेव केवलं शुद्धं चक्रबुद्ध्योपास्यं यस्मात् तस्मादात्मानं प्रत्यक्चैतन्यं न माया स्पृशति मायाविनमिव । तस्मान्मायया बहिर्वेष्टितं भवति । अष्टारम् अष्टपत्रं चक्रं द्वादशारं द्वादशपत्रं चक्रं षोडशारं षोडशपत्रं चक्रं द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रमिति चतुष्टयं षडरषट्पत्रचक्रेण व्याख्यातम् । तत्रायं विशेषः— आद्यपत्रे अराः पत्राणि च ऋतुबुद्ध्योपास्यानि । द्वितीयतृतीयपञ्चमेषु अराः वेदबुद्ध्या उपास्याः पत्राणि गायत्रीजगत्यनुष्टुब्बुद्ध्या यथासंख्यमुपास्यानि । वेदा एव अराः छन्दांसि वै पत्राणी—इत्यर्थवादात् । चतुर्थे पत्रे षोडशाराः षोडशपत्राणि च षोडशकलाबुद्ध्या उपास्यानि। क्षेत्रं क्षेत्रं वा मायैषा संपद्यते । पुरुष एवेदं सर्वं पुरुषेण संमितं भवतीति प्रत्यक्चैतन्यं शुद्धमाह मायया असंस्पृष्टम्, बहिःशब्दात् । तादृशं चक्रं तस्मिन्प्रकल्प्य तदुपास्यमित्यर्थः । तथा च अरपत्रशब्दात् बहिःशब्दाच्च सबिन्दुकेन शक्त्यक्षरेण यद्वेष्टनं तत् यथासंख्यं पूर्वपूर्वचक्रापरपत्रासंस्पृष्टम् उत्तरोत्तरचक्राणामाश्रयत्वेन नाभिरूपमित्येवं सुदर्शनचक्रपत्रासंस्पृष्टं यद्वेष्टनं मायया तदुपरितनाक्षरनारायणचक्राश्रयत्वेन नाभिरूपम् एवमष्टाक्षरवेष्टनं द्वादशाक्षरस्य ना-

भिरूपं द्वादशाक्षरवेष्टनं सबिन्दुकमातृकाषोडशाक्षरस्य ना-
भिरूपं सबिन्दुकाद्यमातृकाषोडशाक्षरवेष्टनं द्वात्रिंशदक्षरस्य
नाभि: ततो द्वात्रिंशदक्षरवेष्टनम् असंस्पृष्टमनाभिरूपमेव इ-
त्येवं सुदर्शननारायणवासुदेवषोडशारद्वात्रिंशदरचक्राणां य-
थासंख्यं पञ्च नाभय: नाभीनामेवापेक्षया वेष्टनरूपतेत्याद्य:
नाभि: मायाक्षररहित: उपरितना: नाभय: अन्त्यं च
वेष्टनं मायाक्षरेणेति तत्त्वार्थ । नन्वेवं तर्हि अथशब्दस्य
तत्र तत्र प्रयोगात्पूर्वचक्रसंस्पर्शात्पञ्चनाभिकानि पञ्च च-
क्राणि पृथक्प्रयोज्यानि कस्मान्न परिगृह्यन्ते । तथा च एक-
चक्रत्वेऽप्यमायिनो भूतनाभिकल्पनायां वेष्टनव्यतिरिक्तप-
ञ्चनाभिकल्पना कस्मान्न भवति? अत्रोच्यते— 'महाचक्रं
नाम चक्रं नो ब्रूहि' इत्युपक्रम्य 'तद्वा एतन्महाचक्रम्'
इत्युपसंहारात् महाचक्रैकतावगमाच्च चक्रचतुष्टयं तदन्तर्गत-
मेवेत्यवगम्यते । तत्र तत्र अथशब्दप्रयोगस्तु तत्तच्चक्रोद्धारे
माङ्गलिकत्वप्रदर्शनार्थ: । तथा वेष्टनानां नाभिकल्पनायां
प्रतिषेधाभावात् योग्यत्वाच्च कल्पनालाघवाच्च न पृथगुभे
कल्पने इति । यत्र क्वचिद्बहि:शब्दपूर्वको मायाशब्द:
पठ्यते क्वचिद्विपरीत: तत्रायमभिप्राय:— यत्र मायाश-
ब्दाद्बहि शब्द: पूर्व तत्र मायाविशेषणं बहिर्भूतया मायया

बहिर्मायया । यत्र च मायाशब्दात्परः वेष्टनशब्दात्पूर्वः बहिःशब्दः तत्राविशिष्टया मायया तत्र बहिःशब्दो न मायाविशेषणम् , किंतु वेष्टनविशेषणम् । माया हि द्विविधा नारसिंहमूलमन्त्रगता सबिन्दुकेकाररूपा निरुपपदान्माया-शब्दात्प्रतीयते ; अन्या तु रेफहकाराभ्यां मिलितसबिन्दुके-काररूपा सोपपदान्मायाशब्दात्प्रतीयते । ततश्च मूलमन्त्रा-द्बहिर्भूतमायया ह्रीमित्येवंरूपया वेष्टितं भवतीति तत्त्वार्थः । ततः सुदर्शनचक्रे मूलमन्त्रगतमायया वेष्टनं षोडशचक्रेऽप्येव-मेव बहिःशब्दस्य वेष्टनात्पूर्वमुपादानात् वेष्टनविशेषणं बहिः-शब्दो मध्यवेष्टनव्यावृत्त्यर्थः । नारायणवासुदेवनारसिंहच-क्रेषु व्याख्यातबहिर्मायया वेष्टनमिति वेष्टनचक्रोद्धारवि-वेकः ॥

एवं महाचक्रस्य संवेष्टनमुद्धारं च अभिधाय अथेदानी-मुद्धृतचक्रे यथाविहितमन्त्रान् न्यसितुं तन्नाभ्याम् अक्षरन्या-समाह—

**तदेव चक्रं सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं भवति यदक्षरं नार-सिंहमेकाक्षरं तद्भवति षट्सु पत्रेषु षडक्ष-रं सुदर्शनं भवत्यष्टसु पत्रेष्वष्टाक्षरं नारा-**

यणं भवति द्वादशसु पत्रेषु द्वादशाक्षरं वासुदेवं भवति षोडशसु पत्रेषु मातृकाद्याः सबिन्दुकाः षोडश कला भवन्ति द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं मन्त्रराजं नारसिंहमानुष्टुभं भवति तद्वा एतत्सुदर्शनं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयोस्तदेतदृचाभ्युक्तम्— ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति। तदेतन्महाचक्रं बालो वा युवा वा वेद स महान्भवति स गुरुर्भवति स सर्वेषां मन्त्राणामुपदेष्टा भवत्यनुष्टुभा

होमं कुर्यादनुष्टुभार्चनं तदेतद्रक्षोघ्नं मृत्यु-
तारकं गुरुतो लब्धं कण्ठे बाहौ शिखायां
वा बध्नीत सप्तद्वीपवती भूमिर्दक्षिणार्थं
नावकल्पते तस्माच्छ्रद्धया यां कांचिद्-
द्यात्सा दक्षिणा भवति ॥ २ ॥

तच्छब्देन द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रम् एवशब्देन तदे-
वावधृत्य तदेव चक्रं तदादिन्यायेन सुदर्शनादिशब्दैरूर्ध्वं चक्र-
चतुष्टयमपि महाचक्रात्मकमिति दर्शयति। महाचक्रमिति सा-
मानाधिकरण्याच्च । तस्य मध्ये महाचक्रस्य मध्ये मध्यवर्ति-
नाभ्यां वेष्टनरूपा हि नाभयो भूमध्याः ताः व्यावर्तयितुं मध्ये
नाभ्यामित्युक्तम्। तारकं भवति संसारतारकत्वात् तारकं प्रण-
वाक्षरं भवति। यदक्षरं नारसिंहमेकाक्षर तद्भवतीति अक्षरम,
जगद्धितं वा एतद्रूपमक्षरमिति नृसिंहपदव्याख्यानावसरे व्या-
ख्यातं तदक्षरशब्दात्प्रत्यभिज्ञायते । तथा नारसिंहमिति
तद्धितात्सामप्रभृत्युपास्यं सर्वं प्रतीयते । ततः सर्वस्मिन्नुपास्ये
प्रतीते एकमेवोपास्यं मूलनृसिंहव्यूहाख्यं वक्तुं विशिनष्टि—
एकाक्षरं तद्भवतीति । यदक्षरं नारसिंहमुपास्यम् इत्यनूद्य
तदेकं भवतीत्यक्षरं च इति महाचक्रमध्यनाभिवर्तित्वेन क्षीरो-

दार्णवसंबन्धितया उपासनं विधीयत इत्यर्थः । तत्र केचित् नारसिंहमेकाक्षरम् इति विशेषणोपादानात् एकाक्षरनृसिंह-मिश्रितप्रणवो नाभ्यां न्यसनीय इत्याचक्षते; तदपि सांप्र-दायिकत्वान्न विरुद्धम् । तस्मिन्नपि पक्षे नारसिंहमिति त-द्धितात् एकाक्षरो नृसिंहमन्त्रः प्रणवमिश्रितो द्वात्रिंशन्नृसिंह-व्यूहं विहाय यावत्प्राकरणिकं मूलनृसिंहव्यूहगतमुपास्यं प्रती-यत एव । ततश्च एतद्विद्याङ्गमेकाक्षरो नृसिंहमन्त्रो यथो-क्तोपास्याभिधायकत्वात् तस्य केवलः प्रणवेन विकल्पः ए-काक्षरनृसिंहमन्त्रस्य प्रणवस्तु नियत एवेति तत्त्वार्थः । अत ऊर्ध्वं तत्तन्मन्त्रन्यासे तत्तच्चक्रेषु पत्रग्रहणम् अरतद-न्तरालपत्रान्तरालव्यावृत्त्यर्थं द्रष्टव्यम् । षट्सु पत्रेषु सुदर्शनं भवति । ऐशानपत्रमारभ्य षडक्षरः सुदर्शनो मन्त्रो न्यस-नीय इत्यर्थः । एवमुत्तरेषु पत्रेषु योज्यम् । अष्टसु पत्रेष्व-ष्टाक्षरं नारायणं भवति । प्रणवान्तर्भावेनाष्टाक्षरतेति के-चित् । तद्वदेव द्वादशपत्रेषु द्वादशाक्षरं वासुदेवं भवतीति । अत्रापि द्वादशाक्षरता पूर्ववत् । षोडशपत्रेषु मातृकामन्त्रव-र्णस्य आद्या वर्णमातृकाद्याः सबिन्दुका बिन्दुसहिताः षोडश स्वरा भवन्ति । द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं सामाभिव्यक्तं मन्त्रराजमानुष्टुभं भवति । मूलमन्त्रस्यैव एकैकमक्षरम् ।

यत्तु एकैकमक्षरम् एकैकस्मिन्पत्रे तत्प्रणवसंपुटितं कार्यम्, 'प्रत्यक्षरमुभयत ओंकारो भवति' इति श्रुतेः । तदस्त्राख्यमङ्गं महाचक्रमुपासितं तन्निक्षिप्तमनिष्टे वस्तुनि त्रासकारित्वात् तदस्त्रं पञ्चममङ्गम् । अत एव अस्त्राङ्गमन्त्रं व्याचक्षाणैरस्माभिरुक्तं प्रपञ्चसारे—'असुत्रासादिकौ धातू स्तः क्षेपचलनार्थकौ । ताभ्यामनिष्टमाक्षिप्य क्षिप्यते फट्खड्गिना' इति । सार्वकामिकं मोक्षद्वारमित्युक्तार्थम् । ऋङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवतीति पञ्च मयट्प्रत्ययाः प्राचुर्यार्थाः ग्राह्याः । ऋग्यजुःसामाथर्वप्रचुरम् । ब्रह्ममयमिति ब्रह्मशब्देन अथर्ववेदः सोऽयं ब्रह्म वेद इत्येतद्ब्राह्मणाभिधानात् । वेदप्रचुरता अराणां वेदबुद्ध्योपास्यत्वात् । विकारार्थो वा मयट् वेदविकारात्मका इत्यर्थ । अमृतमयं क्षीरप्रचुरनाभिकं क्षीरविकारनाभिकं वा इति । तस्येति तच्छब्दान्नाभिस्थो विष्णुः मूलनृसिंहव्यूहः परामृश्यते । तत्परिचारकान्देवानाह—पुरस्ताद्वसवः परिचारका आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यामिति । एवं दिङ्नाभिपरिचारकानुक्त्वा अथेदानीं पार्श्वपरिचारकानाह—सूर्याचन्द्रमसौ पार्श्वयोः कुक्षिप्रदेशयोरिति यावत् । तदेतन्महाचक्रम् ऋचा अभ्युक्तम् ।

यस्मिन महाचक्रे, अक्षरे, अशू व्याप्ताविस्यस्य रूपं सरो मत्वर्थे, तस्मिन्व्याप्तिमति । परमे उत्कृष्टे व्योमवत्सर्वव्यापकत्वेन स्थिते । अधीत्युपरिभावे । ऋच इति ऋग्ग्रहणम् उपलक्षणार्थम् । ऋचः वेदाः निषेदुः यस्मिन् चक्रे विश्वे सर्वे देवाः नृसिंहरूपेण निषेदुः स्थिताः । यद्वा ऋच इति षष्ठी । अनुष्टुप्संबन्धिनि अक्षरे व्याप्तिमति चक्रे सर्वे वेदाः स्थिताः तत्सुदर्शनमन्त्रादिसंबन्धि चक्रमित्यर्थः । य उपासकः तन्महाचक्रं न वेद नोपास्ते किम् ऋचा ऋग्वेदादिना यदि वा ऋचा अनुष्टुप्छन्दस्कया ऋचा इति । अनेनैतद्दर्शयति— महाचक्रोपासनगर्भितमेव अनुष्टुबुपासनं कुर्यात् न तु तद्रहितमिति । य इत्तद्विदुस्त इमे समासत इत्युक्तार्थम् । इति-शब्दः ऋक्समाप्तिं द्योतयति । तदेतन्महाचक्रं बालो वा युवा वा वेद उपास्ते तस्य इदं फलम्— स महान्भवति । महतीं प्रतिष्ठां जने प्राप्नोति । यदि वा महान् महाविष्णुरिति । स गुरुः सर्वैः देववदाराध्यः । स सर्वेषां मन्त्राणामुपदेष्टा भवत्युपदेशकः । सामाभिव्यक्तानुष्टुभा होमं कुर्यादिति विद्याङ्गोऽयं होमः तस्मिन्द्रव्यानुपादानात् प्रतिदिनं हविष्यमन्नं साज्यं जुहुयाद्दिति । तथा सङ्ख्यानुपादानात्सकृद्द्वादशवारं वा । यदि वा सूत्रागतदशप-

दानां मूलनृसिंहव्यूहे द्वात्रिंशद्व्यूहे च व्याख्यातत्वात् उभयोद्देशेन होमं कुर्यात् । ततश्च क्षीरोदार्णवशायिने नृसिंहाय त्रिनेत्राय पिनाकहस्तायोग्रायेदम् इति हुत्वा ब्रह्मादिद्वात्रिंशद्व्यूहात्मकाय नृसिंहायोग्रायेति जुहुयात् इत्येवं प्रतिपदं मूलमन्त्रावृत्ति. । यद्वा अनुष्टुभा इत्येकवचनात् सकृन्मूलमन्त्रमुच्चार्य स्वाहाकारान्तं जुहुयात् प्रतिपदम् उद्दिश्य त्यागः कार्यः । तथा सामाभिव्यक्तानुष्टुभा अर्चनं षोडशोपचारादि कुर्यादित्यनुषङ्गः । अत्रापि होममन्त्रवन्मन्त्रावृत्त्यनावृत्ती एष्टव्ये । तदेतन्महाचक्रं रक्षोघ्नं मृत्युतारकं गुरुप्रसादाल्लब्धं कण्ठे बाहौ शिखायां वा बध्नीत य. तस्मै गुरवे यस्मात्सप्तद्वीपवती द्विगुणावृत्तापि भूमिः पृथिवी दक्षिणार्थं नावकल्पते, तस्माच्छ्रद्धया भक्त्या या कांचिद्भूमिं यथाशक्त्यनुरूपां दद्यात् सा दक्षिणा भवति । एवं प्रागुक्तं श्रुतित उपासनमवगतं पञ्चाङ्गन्यास उपसंहृतमेकस्मान्मतात् । अथ मतान्तरपर्यालोचनया महाचक्र एवोपसंहृतं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीत्यत्र मूलमन्त्राक्षराणां प्रणव उपसंहृतत्वात् प्रणवप्रधानमेवेदं महाचक्रं तस्मिञ्शक्तिबाहुल्यश्रवणान्मायया बहिर्वेष्टितं भवति । बहिर्मायया वेष्टितं भवतीत्यसकृच्छ्रवणात् उद्धृतपदव्याख्यानावसरे प्रतिपदं

यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानीत्यमकृन्महिमशब्दवाच्याया मायायाः सर्वलोकसर्व-देवात्मभूतानां साधनत्वेन श्रवणात् तद्वेष्टितमायाधारत्वेन यथासंख्यं पृथिव्यादिलोकर्ग्वेदादिवेदाग्न्यादिदेवभूतानामा-त्मनां च साधनत्वश्रवणान्महाचक्रान्तर्गतवेष्टितमायाधारमे-वेदमुपासनम् । न तु मूलनृसिंहगतं पञ्चाङ्गन्यासार्थं च अन्तरङ्गत्वान्महाचक्रमेवेदमुपासनम् । तदपि संप्रदायाग-तमुपादेयमित्युपासनाविकल्पः । तत्रापि बहुतरं संप्रदायानु-कूल्यागतत्वात् अन्त्यमेवोपासनमुपादेयमिति केचित् । तस्मि-न्मते प्रणवसावित्रयजुर्लक्ष्मीनृसिंहगायत्रीति मन्त्रचतुष्टयमङ्गं सामाभिव्यक्तं यथायोग्यतया महाचक्रप्रकाशकत्वेन योज्यं तथैवोपास्यं महाचक्रमिति रहस्यं तत्त्वं च इति ॥

एवं नृसिंहब्रह्मविद्यां सकलमतानुसारिणीं कृत्स्नामभि-धाय, अथेदानीं तदनुष्ठातुः कैमुत्यन्यायेन फलकथनाय प्र-श्नोत्तररूपाख्यायिकामवतारयति—

**देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मन्त्रराजं**

नारसिंहमानुष्टुभं नित्यमधीते सोऽग्नि-
पूतो भवति स वायुपूतो भवति स
आदित्यपूतो भवति स सोमपूतो भवति
स सत्यपूतो भवति स ब्रह्मपूतो भवति
स विष्णुपूतो भवति स रुद्रपूतो भवति
स वेदपूतो भवति स सर्वपूतो भवति
स सर्वपूतो भवति ॥ १ ॥

इति प्रथमोऽध्यायः ॥

अत्र देवा ह वै इत्यारभ्य तदेतन्निष्कामस्य भव-
ति इत्यन्तम् अष्टावध्यायाः; प्रत्यध्यायसमाप्तौ च द्विर-
भ्यासः । देवा ह वै प्रजापतिमब्रुवन्— अस्य मन्त्रस्य
प्रागुक्तोपासनाविशिष्टस्य फलं नो ब्रूहि भगव इति । स
होवाच प्रजापतिरित्युक्तार्थम् । यो द्विविधोपासकः एतम्
इत्येतच्छब्दपरामृष्टं प्रागुक्तविद्यागर्भितं मन्त्रराजं सामराजं
नारसिंहं नृसिंहाकारब्रह्मोपासनागर्भम् आनुष्टुभम् अनुष्टुप्छ-
न्दस्कं नित्यमिति साकारब्रह्मप्रतिपत्तिद्वारेण नित्यभूतनिरा-
कारब्रह्मप्रतिपादकत्वात् नित्यम् अधीते उच्चारयति । यत्र
ईदृशसामोच्चारणमात्रादेव वक्ष्यमाणफलाप्तिः, किं तत्र विद्या-

नुष्ठानात् इत्यभिप्रायेण तत्र तत्र अधीते अधीते इत्यवो-
चन्। अथवा नित्यमधीते इति नियमेनाधीते। अथवा नित्यम्
अधि इत्युपरिभावे इते जानीते। सर्वे गत्यर्था ज्ञानार्थाः।
नित्यं संध्योपासनादि निर्वर्त्योक्तकालं यो विद्यामेतामनुति-
ष्ठतीत्यर्थः। अथवा नित्यमानुष्टुभम् इत्यन्वयात् आनुष्टुभस्य
साम्नो नित्यत्वं दर्शयति नेतरस्य सामरूपम्येति। अथवा
नित्यं संध्योपासनादि कर्माधिकृत्य इते जानीते। एतदुक्तं
भवति। ततो नित्यसंध्योपासनाग्निहोत्राद्युपास्यदेवता नार-
सिंहलीलाविग्रहेत्युपास्ते। एतद्विद्यागर्भितेत्यर्थः। अथवा यः
उपासकः प्रागुक्तविद्यानुष्ठानप्रकारज्ञाने असमर्थ. स केवलं
विद्याप्रतिपादकं ग्रन्थं नित्यं प्रतिदिनं स्वाध्यायधर्मेण अधी-
ते पठति जपति, सोऽपि वक्ष्यमाणं फलं प्राप्नोति। तस्य
तज्जपसामर्थ्यात्परमेश्वर" कारुण्यात् तद्विद्यानुष्ठानप्रकारं
साकारप्रभृति निराकारपर्यन्तमिहैव कथयति। तथा च
अन्ते श्रूयते—'तद्वा एतत्परमं धामैतद्विद्यागर्भितमन्त्रराजा-
ध्यायकस्य पाठकस्य जापकस्य' इत्यादिना। स उपास-
कोऽग्निवाय्वादित्यसोमसत्यब्रह्मविष्णुरुद्रवेदैर्नृसिंहरूपैरुपास्यैः
पूतो भवति पवित्रो भवति। अन्यैश्च सर्वैर्नृसिंहरूपैरुपास्यैः
पूतो भवति। द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति॥

इति प्रथमाध्यायभाष्यम्॥

## द्वितीयोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वं तरति स सर्वं तरति ॥ २ ॥

इति द्वितीयोऽध्यायः ॥

इत:प्रभृति नित्यमेतद्विद्यानुष्ठानेन तत्प्रतिपादकग्रन्थाध्ययनेन जपेन वा आनुषङ्गिकान्येव फलानि काम्यानि तद्रहितानि वा कथयितुमाह । य उपासकः नित्यत्वेन तद्विद्यानुष्ठानेन तज्जपेन वा पापक्षयं कामयते । एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते इत्युक्तार्थम् । तथा इत:प्रभृति आ अन्त्यादध्यायात् तत्र तत्र यच्छब्देन पुंलिङ्गेन प्रागुक्तनृसिंहविद्याया निश्चिततया अनुष्ठानात् तद्विद्याप्रतिपादकग्रन्थजप्ता वा अध्येता वा परामृश्यते । तथा तच्छब्देन पुंलिङ्गेन स एव परामृश्यते । तथा तत्र तत्र पुंलिङ्गात् तच्छब्दाभ्यासात् तस्मिन्नेव नित्यानुष्ठाने जपे वा व्यस्तं समस्तं वा यथायोग्यतया फलं गम्यते । स मृत्युं पाप्मानं ब्रह्महत्यां

भ्रूणहत्या भ्रूणो गर्भः, यद्वा साङ्गवेदार्थव्याख्याता दीक्षितो भ्रूणः, वीरहत्यां वीर पुत्रः सवनस्थः क्षत्रियो वा अन्यच्च पातकं सर्वं तरति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥

इति द्वितीयाध्यायभाष्यम् ॥

---

## तृतीयोऽध्यायः ॥

**य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान्देवान्स्तम्भयति स सर्वान्ग्रहान्स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥**

इति तृतीयोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं वायुमादित्यं सोममुदकं सर्वान्देवान्ग्रहान्विषं स्तम्भयतीति स्तम्भनफलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥

इति तृतीयाध्यायभाष्यम् ॥

## चतुर्थोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वलोकं जयति स सर्वलोकं जयति ॥

इति चतुर्थोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्भुवःस्वर्महर्जनस्तपःसत्यमन्यच्च सर्वं पाताललोकं जयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥

इति चतुर्थाध्यायभाष्यम् ॥

---

## पञ्चमोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यानाकर्षयति स दे-

**वानाकर्षयति स नागानाकर्षयति स यक्षानाकर्षयति स ग्रहानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ॥ ५ ॥**

इति पञ्चमोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यान्देवान्नागान्यक्षान्ग्रहांस्तद्व्यतिरिक्तानन्यांश्च आकर्षयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥

इति पञ्चमाध्यायभाष्यम् ॥

---

## षष्ठोऽध्यायः ॥

**य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स उक्थ्येन यजते स षोडशिना यजते सोऽतिरात्रेण यजते सोऽप्तोर्यामेण यजते सोऽश्वमेधेन यजते स सर्वैः क्रतुभिर्यजते स सर्वैः क्रतुभिर्यजते ॥ ६ ॥**

इति षष्ठोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेनोक्थ्येन षोडशिना वाजपेयेनातिरात्रेणाप्तोर्यामेणात्यग्निष्टोमेनान्यैश्च सर्वैः क्रतुभिर्यजत इति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति । न च वाच्यम् 'अन्यानर्थक्यात्' इति न्यायेन कथं फलनिर्देश इति । यतो मनोव्यापारैकसाध्यत्वादेतद्विद्यानुष्ठानस्य तस्य च कर्मानुष्ठानादत्यन्तदुःसंपादत्वादित्यधिकारभेदेन नान्यानर्थक्यमिति सर्वं निर्मलम् ॥

इति षष्ठाध्यायभाष्यम् ॥

---

## सप्तमोऽध्यायः ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वाणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते यः प्रणवमधीते स सर्वमधीते स सर्वमधीते ॥ ७ ॥

यः एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते, सः ऋचो यजूंषि सामान्यथर्वाणमङ्गिरसम्; एतच्च त्रयीसंपुटीकरणम्, एतदन्तरालवर्तित्वाद्वेदत्रयस्य। तथा च तस्मिन्नेव ब्राह्मणे प्रजापतिः प्रथममथर्वाणमपश्यत् ततस्त्रयीं ततः अङ्गिरसम् इत्यसकृदभिहितत्वात् शाखाः पुराणानि कल्पान्गाथा नाराशंसीः प्रणवमधीते इति फलनिर्देशः। अत्र च यः प्रणवमधीते सः सर्वमधीते इति वदन् मूलमन्त्रप्रणवयोः फलसाम्यादुभयोः साम्यं दर्शयति। ततश्च जपे समाधौ च उभयोर्विकल्पः। तथा च नित्यानुष्ठाने फलकामनायां प्रयोगविशेषः। तत्तत्फलपदोच्चारणं मूलमन्त्रजपान्ते कार्यमिति केचित्; अन्ये तु तद्विनैव केवलं कामनैव कार्येति, सांप्रदायिकमेवान्वेष्यमिति। द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति।

इति सप्तमाध्यायभाष्यम्॥

---

## अष्टमोऽध्यायः॥

**अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यती-**

नां च शतं पूर्णं रुद्रजापकेन तत्समं रुद्रजापिशतमेकमेकेनाथर्वशिरःशिखाध्यायकेन तत्सममथर्वशिरःशिखाध्यायकशतमेकमेकेन मन्त्रराजजापकेन तत्समं तद्वा एतत्परमं धाम मन्त्रराजाध्यायकस्य यत्र सूर्यो न तपति यत्र न वायुर्वाति यत्र न चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनस्तदेतदृचाभ्युक्तम्— तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति तदेतन्निष्कामस्य भवति ॥

एवं नित्यानुष्ठाने आनुषङ्गिकं सर्वं फलमभिधाय, अथेदानीं तद्विद्यानुष्ठातुर्जप्तुः अध्येतुश्च उत्कर्षतरतमभावेन सर्वोत्कृष्टतां सर्वोत्कृष्टं च फलमाह— अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् । उपनीतशतम् उपकुर्वाणकानां न नैष्ठिकाभिप्रायेण तस्य सर्वोत्कृष्टत्वात् । एकमेकेन गृहस्थेन तत्समं गृहस्थशतम् एकम् एकेन वानप्रस्थेन तत्समं वानप्रस्थशतम् एकम् एकेन यतिना तत्समं सोऽयमाश्रमस्वीकारमात्रे तरतमभावः नाश्रमप्रयुक्तानुष्ठानाभिप्रायेण; ततश्च यतीनां च शतं पूर्णं स्वीकृताश्रममात्राणां यस्मिन्कस्मिंश्चित्स्थितरुद्रजाप्येन तत्समं रुद्रजाप्यशतमेकं यस्मिन्कस्मिंश्चिदाश्रमे स्थिताथर्वशिरःशिखाध्यायकेन जापकेन तत्सममथर्वशिरःशिखाध्यायकशतं मन्त्रराजजापकेन तत्समम् इत्युत्कर्षतरतमभावस्य मन्त्रराजजापके एतद्विद्यावति विश्रान्तत्वात् एतद्विद्यावान्सर्वोत्कृष्ट इति गम्यते । यथा आनन्दतरतमभावस्य ब्रह्मणि विश्रान्तत्वात् ब्रह्मानन्द एव सर्वोत्कृष्टः । यस्मादेवं तस्मात् वै प्रसिद्धम् एतत्परमं धाम स्थानम् एतद्विद्यागर्भितमन्त्रराजाध्यायकस्य जापकस्य अनुष्ठातुर्वा । यत्र क्षीरोदार्णवस्थाने सूर्यो न तपति यत्र वायुर्न वाति यत्र न चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति

यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनः तदेतत्स्थानम् ऋचाभ्युक्तं विष्णोर्यत्परमं पदमिति । यच्छब्देन क्षीरोदार्णवस्थानं परामृश्यते, परमपदप्रत्यभिज्ञानात् । सूरयः उपासकाः उपासनाभेदेन तादात्म्यमुपासनाया चेत् सायुज्यं फलं ततश्च विष्णुरेव परमं पदम् । उभयत्रापि विष्णोरिति षष्ठीनिर्देशः शिलापुत्रकस्य शरीरमितिवद्द्रष्टव्यः । अथ उपास्योपासकभावेन चेदनुष्ठुब्विद्या तस्य नृसिंहस्य विष्णोः परमं पदं परमं स्थानं महाचक्रनाभिक्षीरोदार्णवप्रभृति तत्र स्थिताः उपासकाः अनुष्ठातारः जप्तारः अध्येतारो वा सदा सर्वकालं पश्यन्ति । कीदृशं तदित्यपेक्षिते, आह—दिवीव द्युलोक इव चक्षुः ख्यातेः सूर्यमण्डलम् आततम् आ समन्तात् ततं विस्तृतं वर्तुलं प्रकाशात्मकं सर्वप्रकाशाभिभवकारणम् अतः सूर्यचन्द्रनक्षत्रादीनां ब्रह्मणि प्रवेशः प्रतिषिद्धः तपकर्तृता च यत्र सूर्यो न तपतीत्यादिना । एवं तस्मिन् आधिदैवात्मके दुःखे प्रतिषिद्धे आध्यात्मिकदुःखप्राप्तौ तत्प्रतिषेधति— यत्र न दुःखमिति । विदुःखता दुःखाभावमात्रे प्राप्ते, सुषुप्तवज्जडता स्यादिति तद्व्यावृत्त्यर्थं सदानन्दमिति । ब्रह्मादिवन्दितमिति ।

तदादिन्यायेन नाभिस्थब्रह्मविष्णुमहेश्वरैः परिचारकैः वन्द-नीयं महाचक्राख्यं स्थानम् । यत्र गत्वेति । तस्य गन्तव्य-तामाह—तद्विप्रास इति । तत्तादृशं स्थानं विप्रासः विप्रा ब्राह्मणाः उपासकाः विपन्यव. मेधाविनः समाधौ धारण-शक्तियुक्ताः । जागृवांसः जागरितावस्थायामेव अवस्थात्र-यात्प्रच्युत्य समिन्धते समृद्धिं कुर्वन्ति । तादात्म्यपक्षे तु मन्त्रब्राह्मणयोर्यथास्वरूप व्याख्येयम् । इति-शब्दो मन्त्र-समाप्तिं द्योतयति । पदचतुष्टयाभ्यासः सर्वोपनिषत्समाप्तिं द्योतयतीति सर्वं निर्मलं सिद्धम् ॥

इति अष्टमाध्यायभाष्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ

**नृसिंहपूर्वतापनीयोपनिषद्भाष्यं**
**संपूर्णम् ॥**

# MEMORIAL EDITION

OF THE WORKS OF

# SRI SANKARACHARYA.



TO

HIS HOLINESS SRI JAGADGURU

**SRI SACHCHIDANANDA SIVABHINAVA**

**NRISIMHA BHARATI SWAMI**

WHO ADORNS THE THRONE OF THE SRINGERI MUTT

AS THE WORTHY REPRESENTATIVE OF THE

GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE

TO COME ACROSS A HOLIER PERSONAGE,

A TRUER MAHATMA, A NOBLER SAINT

AND A MORE RIGOROUS ASCETIC

THIS EDITION IS MOST RESPECTFULLY INSCRIBED

AS A TOKEN OF UNBOUNDED ADMIRATION

BY THE HUMBLEST OF ALL HIS DISCIPLES

T K BALASUBRAHMANYAM



नानाजन्मसु सञ्चितेन तपसा पूतेन चित्तात्मना

मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।

समुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः

स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा

तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।

तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-

न्कृत्वा चोपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षगान्यसूर्याङ्कतिथ्याश्रितसोमवारे ।

श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता सादरं ।

वाणीनिलयपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

## CONTENTS

THE BHAGAVAD-GITA-BHASHYA

## ॥ विषयाः ॥

### श्रीमद्भगवद्गीताभाष्यम्

श्री

# भगवद्गीताभाष्यम्

श्रीमच्छंकरभगवत्पूज्यपादैः
विरचितम् ।

प्रथमो भागः

॥ श्रीः ॥

# ॥ भगवद्गीताविषयानुक्रमणिका ॥

## १. कर्मसंन्यासात्मकसाधनप्रधाना त्वंपदार्थप्रधाना च आद्या षडध्यायी ।

### प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

श्लोकः

## तृतीयोऽध्यायः ।



## चतुर्थोऽध्यायः ।

श्लोकः

---*---

## २. उपास्यनिष्ठा तत्पदार्थनिष्ठा वा मध्यमा षडध्यायी ।

### सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः ।

## नवमोऽध्यायः ।

## द्वादशोऽध्यायः ।

---*---

## ३. तत्त्वंपदार्थैक्यरूपवाक्यार्थनिष्ठा सम्यग्धीप्रधाना अन्तिमा षडध्यायी ।

### त्रयोदशोऽध्यायः ।

## चतुर्दशोऽध्यायः



## पञ्चदशोऽध्यायः ।

॥ श्रीः ॥

# शांकरभाष्यस्थानां विशेषविषयाणामनुक्रमणिका ॥

पृष्ठम्

## प्रथमोऽध्यायः ।

पृष्ठम्



## द्वितीयोऽध्यायः ।

पृष्ठम्

## तृतीयोऽध्यायः ।



## चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।



## षष्ठोऽध्यायः ।

पृष्ठम्

## चतुर्दशोऽध्यायः ।



## पञ्चदशोऽध्यायः ।



## षोडशोऽध्यायः ।

पृष्ठम्



## सप्तदशोऽध्यायः ।



## अष्टादशोऽध्यायः ।

पृष्ठम्



॥ श्रीमच्छंकरभगवत्पूज्यपादाः ॥

श्रीवाणीविलासमुद्रायन्त्रालये मुद्रितमिदम् ।

॥ ॐ ॥

॥ नमो भगवते वासुदेवाय ॥

# ॥ श्रीमद्भगवद्गीता ॥



## श्रीमच्छंकरभगवत्पादविरचितेन

## भाष्येण सहिता ।

नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोका सप्तद्वीपा च मेदिनी ॥

स भगवान् सृष्ट्वेदं जगत्, तस्य च स्थिति चिकीर्षुः, मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्, प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य, निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च,

जगतः स्थितिकारणम् । प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्य. स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिः अनुष्ठीयमानो दीर्घेण कालेन । अनुष्ठातॄणां कामोद्भवात् हीयमानविवेकविज्ञानहेतुकेन अधर्मेण अभिभूयमाने धर्मे, प्रवर्धमाने च अधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुः भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव । ब्राह्मणत्वस्य हि रक्षणे रक्षितः स्याद्वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमभेदानाम् ॥

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नः त्रिगुणात्मिकां स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्, स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं धर्मद्वयम् अर्जुनाय शोकमोहमहोदधौ निमग्नाय उपदिदेश, गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ॥

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूत दुर्विज्ञेया-

र्थम्, तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमपि अत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्य अहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ॥

तस्य अस्य गीताशास्त्रस्य सक्षेपतः प्रयोजनं पर निःश्रेयसं सहेतुकस्य संसारस्य अत्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपात् धर्मात् भवति । तथा इममेव गीतार्थं धर्ममुद्दिश्य भगवतैवोक्तम्— 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इति अनुगीतासु । तत्रैव चोक्तम्— 'नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी । यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ॥' इति 'ज्ञानं सन्यासलक्षणम्' इति च । इहापि च अन्ते उक्तमर्जुनाय— 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णानाश्रमांश्चोद्दिश्य विहितः, स देवादिस्थानप्राप्तिहेतुरपि सन्, ईश्वरार्पणबुद्ध्या अनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसंधिवर्जितः । शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा चेममर्थमभिसंधाय वक्ष्यति— 'ब्रह्मण्याधाय कर्माणि' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इति ॥

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनम्, परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतः अभिव्यञ्जयत् विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रम्। यतः तदर्थविज्ञाने समस्तपुरुषार्थसिद्धिः, अतः तद्विवरणे यत्नः क्रियते मया ॥

धृतराष्ट्र उवाच—

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥**

संजय उवाच—

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥

भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥

द्रुपदो द्रौपदेयाश्च
सर्वशः पृथिवीपते ।

सौभद्रश्च महाबाहुः
शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥

तत्रापश्यत्स्थितान्पार्थः
पितॄनथ पितामहान्।
आचार्यान्मातुलान्भ्रातॄ-
न्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥

श्वशुरान्सुहृदश्चैव
सेनयोरुभयोरपि।
तान्समीक्ष्य स कौन्तेयः
सर्वान्बन्धूनवस्थितान् ॥ २७ ॥

कृपया परयाविष्टो विषीदन्निदमब्रवीत्।

अर्जुन उवाच—

दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समुपस्थितान्॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥

गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥

न काङ्क्षे विजयं कृष्ण
न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द
किं भोगैर्जीवितेन वा ॥ ३२ ॥

येषामर्थे काङ्क्षितं नो
राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे
प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥

आचार्याः पितरः पुत्रा-
स्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः
स्यालाः संबन्धिनस्तथा ॥ ३४ ॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥४१॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

संजय उवाच—

**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः ॥

संजय उवाच—

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

संजय उवाच—

**एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥**

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

अत्र 'दृष्ट्वा तु पाण्डवानीकम्' इत्यारभ्य यावत् 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजभूतदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः । तथाहि— अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेषु 'अहमेतेषाम्' 'ममैते' इत्येवंप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तौ आत्मन. शोकमोहौ प्रदर्शितौ 'कथं भीष्ममहं संख्ये' इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम, परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते। तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्याग. प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मन.कायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा च भवति । तत्रैवं सति धर्माधर्मोपचयात् इष्टानिष्टज-

न्मसुखदुःखादिप्राप्तिलक्षणः संसारः अनुपरतो भवति । इत्यतः ससारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानात् नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थम् अर्जुनं निमित्तीकृत्य आह भगवान्वासुदेवः— 'अशोच्यान्' इत्यादि ॥

अत्र केचिदाहुः—सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव । किं तर्हि? अग्निहोत्रादिश्रौतस्मार्तकर्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति । ज्ञापकं च आहुरस्यार्थस्य— 'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि' 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव तस्मात्त्वम्' इत्यादि । हिंसादियुक्तत्वात् वैदिकं कर्म अधर्माय इतीयमप्याशङ्का न कार्या । कथम्? क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्त क्रूरमपि स्वधर्म इति कृत्वा न अधर्माय; तदकरणे च 'तत. स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवति— इति ॥

तदसत्; ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोः । 'अशोच्यान्' इत्यादिना भगवता यावत् 'स्वधर्ममपि चावेक्ष्य'

इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपण कृतम् , तत्सां-ख्यम् । तद्विषया बुद्धिः आत्मनो जन्मादिषड्विक्रियाभावादकर्ता आत्मेति प्रकरणार्थनिरूपणात् या जायते, सा सांख्यबुद्धिः । सा येषां ज्ञानिनामुचिता भवति, ते सांख्याः । एतस्या बुद्धेः जन्मन प्राक् आत्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणो योगः । तद्विषया बुद्धिः योगबुद्धिः । सा येषां कर्मिणामुचिता भवति ते योगिनः । तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति 'पुरा वेदात्मना मया प्रोक्ता' इति । तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां वक्ष्यति—'कर्मयोगेन योगिनाम्' इति । एव सांख्यबुद्धि योगबुद्धि च आश्रित्य द्वे निष्ठे विभक्ते भगवतैव उक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोः युगपदेकपुरुषाश्रयत्वासभवं पश्यता । यथा एतद्विभागवचनम्, तथैव दर्शितं शातपथीये ब्राह्मणे—'एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति' इति सर्वकर्मसंन्यास विधाय तच्छेषेण 'कि प्रजया करिष्यामो येषां नोऽयमात्माय लोक.' इति । तत्र च

प्राक् दारपरिग्रहात् पुरुष. आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनम्— पुत्रम्, द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनम्— 'सोऽकामयत' इति अविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि। तेभ्य. 'व्युत्थाय, प्रव्रजन्ति' इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः॥

न च अर्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' इत्यादिः। एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणो. भगवता पूर्वमनुक्तं कथमर्जुन. अश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव 'ज्यायसी चेत्कर्मणस्ते मता बुद्धि.' इति॥

किंच— यदि बुद्धिकर्मणो. सर्वेषां समुच्चय उक्त. स्यात् अर्जुनस्यापि स उक्त एवेति, 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' इति कथमुभयोरुपदेशे सति अन्यतरविषय एव प्रश्नः स्यात्? न हि पित्तप्रशमनार्थिनः वैद्येन मधुरं शीतलं च भोक्तव्यम् इत्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहि इति प्रश्नः संभवति॥

अथ अर्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्त प्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयम्— मया बुद्धिकर्मणोः समुच्चय उक्तः, किमर्थमित्थं त्वं भ्रान्तोऽसि— इति । न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव 'द्वे निष्ठे मया पुरा प्रोक्ते' इति वक्तुं युक्तम् ॥

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चये अभिप्रेते विभागवचनादि सर्वमुपपन्नम् । किंच— क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतः 'तत्किं कर्मणि घोरे मां नियोजयसि' इति उपालम्भोऽनुपपन्नः ॥

तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः । यस्य तु अज्ञानात् रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयम् 'एकमेवेदं सर्वं ब्रह्म अकर्तृ च' इति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्ति, तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात्; यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये, तद्वत् तत्फलाभिसन्ध्यहंकाराभावस्य तुल्यत्वाद्विदुषः । तत्त्वविन्नाहं करोमीति

मन्यते, न च तत्फलमभिसंधत्ते। यथा च स्वर्गादिकामार्थिनः अग्निहोत्रादिकर्मलक्षणधर्मानुष्ठानाय आहिताग्नेः काम्ये एव अग्निहोत्रादौ प्रवृत्तस्य सामि कृते विनष्टेऽपि कामे तदेव अग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति। तथा च दर्शयति भगवान्— 'कुर्वन्नपि न लिप्यते' 'न करोति न लिप्यते' इति तत्र तत्र ॥

यश्च 'पूर्वैः पूर्वतरं कृतम्' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति, तत्तु प्रविभज्य विज्ञेयम्। तत्कथम्? यदि तावत् पूर्वे जनकादय तत्त्वविदोऽपि प्रवृत्तकर्माण. स्यु., ते लोकसंग्रहार्थम् 'गुणा गुणेषु वर्तन्ते' इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिताः, न कर्मसंन्यासं कृतवन्त इत्यर्थः। अथ न ते तत्त्वविद., ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धि सत्त्वशुद्धिम्, ज्ञानोत्पत्तिलक्षणां वा संसिद्धिम्, आस्थिता जनकादय इति व्याख्येयम्। एतमेवार्थं वक्ष्यति भगवान् 'सत्त्वशुद्धये कर्म कुर्वन्ति' इति। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां वक्ष्यति—'सिद्धिं प्राप्तो यथा ब्रह्म' इत्यादिना ॥

तस्माद्गीताशास्त्रे केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः न

कर्मसमुच्चितात् , इति निश्चितोऽर्थः । यथा चायमर्थः, तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः ॥

तत्रैवं धर्मसंमूढचेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्नस्य अर्जुनस्य अन्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान्वासुदेवः तत कृपया अर्जुनमुद्दिधारयिषुः आत्मज्ञानायावतारयन्नाह—

श्रीभगवानुवाच—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥**

अशोच्यान् इत्यादि । न शोच्या अशोच्या. भीष्मद्रोणादयः, सद्वृत्तत्वात् परमार्थस्वरूपेण च नित्यत्वात्, तान् अशोच्यान् अन्वशोचः अनुशोचितवानसि ‘ते म्रियन्ते मन्निमित्तम्, अह तैर्विनाभूत किं करिष्यामि राज्यसुखादिना’ इति । त्वं प्रज्ञावादान् प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतत् मौढ्यं पाण्डित्यं च विरुद्धम् आत्मनि दर्शयसि उन्मत्त इव इत्यभिप्रायः । यस्मात् गतासून् गतप्राणान् मृतान्, अगतासून् अगतप्राणान् जीवतश्च न अनुशोचन्ति पण्डिताः आत्मज्ञा । पण्डा आत्मवि-

षया बुद्धि येषां ते हि पण्डिताः, 'पाण्डित्यं निर्विद्य' इति श्रुतेः। परमार्थतस्तु तान् नित्यान् अशोच्यान् अनुशोचसि, अतो मूढोऽसि इत्यभिप्रायः ॥

कुतस्ते अशोच्याः, यतो नित्याः। कथम्?—

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥**

न तु एव जातु कदाचित् अहं नासम्, किं तु आसमेव। अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्य एव अहमासमित्यभिप्रायः। तथा न त्वं न आसीः, किं तु आसीरेव। तथा न इमे जनाधिपाः न आसन्, किं तु आसन्नेव। तथा न च एव न भविष्यामः, किं तु भविष्याम एव, सर्वे वयम् अतः अस्मात् देहविनाशात् परम् उत्तरकाले अपि। त्रिष्वपि कालेषु नित्या आत्मस्वरूपेण इत्यर्थः। देहभेदानुवृत्त्या बहुवचनम्, नात्मभेदाभिप्रायेण ॥

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

देह· अस्य अस्तीति देही, तस्य देहिनो देहवत: आत्मन. अस्मिन् वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था, यौवनं यूनो भावो मध्यमावस्था, जरा वयोहानि. जीर्णावस्था, इत्येता. तिस्र: अवस्था: अन्योन्यविलक्षणा· । तासां प्रथमावस्थानाशे न नाश:, द्वितीयावस्थोपजने न उपजन आत्मन: । किं तर्हि ? अविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्ति: आत्मनो दृष्टा । तथा तद्वदेव देहान् अन्यो देहो देहान्तरम्, तस्य प्राप्ति: देहान्तरप्राप्ति: अविक्रियस्यैव आत्मन· इत्यर्थ: । धीरो धीमान्, तत्र एवं सति न मुह्यति न मोहमापद्यते ॥

यद्यपि आत्मविनाशनिमित्तो मोहो न सभवति नित्य आत्मा इति विजानत., तथापि शीतोष्णसुखदु:खप्राप्तिनिमित्तो मोहो लौकिको दृश्यते, सुखवियोगनिमित्तो मोह: दु:खसंयोगनिमित्तश्च शोक. । इत्येतदर्जुनस्य वचनमाशङ्क्य भगवानाह——

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥**

मात्रा. आभि· मीयन्ते शब्दादय इति श्रोत्रादीनि इन्द्रि-

याणि। मात्राणां स्पर्शाः शब्दादिभिः संयोगाः। ते शीतोष्णसुखदुःखदाः शीतम् उष्णं सुखं दुःखं च प्रयच्छन्तीति। अथवा स्पृश्यन्त इति स्पर्शाः विषयाः शब्दादयः। मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः। शीतं कदाचित् सुखं कदाचित् दुःखम्। तथा उष्णमपि अनियतस्वरूपम्। सुखदुःखे पुनः नियतरूपे यतो न व्यभिचरतः। अतः ताभ्यां पृथक् शीतोष्णयोः ग्रहणम्। यस्मात् ते मात्रास्पर्शादयः आगमापायिनः आगमापायशीला. तस्मात् अनित्याः। अतः तान् शीतोष्णादीन् तितिक्षस्व प्रसहस्व। तेषु हर्षं विषादं वा मा कार्षीः इत्यर्थः॥

शीतोष्णादीन् सहतः किं स्यादिति शृणु—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥**

यं हि पुरुषं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनात् एते यथोक्ता. शीतोष्णादयः, सः नित्यात्मस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुः अमृतत्वाय अमृतभावाय मोक्षायेत्यर्थः, कल्पते समर्थो भवति॥

इतश्च शोकमोहौ अकृत्वा शीतोष्णादिसहनं युक्तम्, यस्मात्—

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥**

न असत. अविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनम् अस्तिता ॥

न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तुसद्भवति । विकारो हि सः, विकारश्च व्यभिचरति । यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्, तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं च अनुपलब्धेः कार्यस्य घटादेः मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् ॥

तदसत्त्वे सर्वाभावप्रसङ्ग इति चेत्, न, सर्वत्र बुद्धिद्वयोपलब्धे., सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभिचरति, तत् सत्, यद्विषया व्यभिचरति, तदसत्; इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत्, सन् घटः, सन् पट., सन् हस्ती इति । एवं सर्वत्र । तयोर्बुद्ध्योः घटादिबुद्धिः व्यभि-

चरति । तथा च दर्शितम् । न तु सद्बुद्धिः । तस्मात् घटादिबुद्धिविषयः असन्, व्यभिचारात्; न तु सद्बुद्धिविषयः, अव्यभिचारात् ॥

घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत्, न, पटादावपि सद्बुद्धिदर्शनात् । विशेषणविषयैव सा सद्बुद्धि ॥

सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यत इति चेत्, न, पटादौ अदर्शनात् ॥

सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत्, न, विशेष्याभावात् । सद्बुद्धि विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्? न तु पुन· सद्बुद्धेः विषयाभावात् ॥

एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत्, न, 'इदमुदकम्' इति मरीच्यादौ अन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् ॥

तस्माद्देहादे· द्वन्द्वस्य च सकारणस्य असतो न विद्यते भाव इति । तथा सतश्च आत्मन. अभावः अविद्यमानता न विद्यते, सर्वत्र अव्यभिचारात् इति अवोचाम ॥

एवम् आत्मानात्मनो. सदसतो: उभयोरपि दृष्टः उपलब्ध. अन्तो निर्णयः सत् सदेव असत् असदेवेति, तु अनयोः यथोक्तयोः तत्त्वदर्शिभिः । तदिति सर्वनाम, सर्वं च ब्रह्म, तस्य नाम तदिति, तद्भावः तत्त्वम्, ब्रह्मणो याथात्म्यम् । तत् द्रष्टुं शील येषां ते तत्त्वदर्शिन, तै. तत्त्वदर्शिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोक मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वन्द्वानि 'विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासते' इति मनसि निश्चित्य तितिक्षस्व इत्यभिप्राय. ॥

किं पुनस्तत्, यत् सदेव सर्वदा इति, उच्यते—

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

अविनाशि न विनष्टुं शीलं यस्येति । तुशब्दः असतो विशेषणार्थ. । तत् विद्धि विजानीहि । किम्? येन सर्वम् इदं जगत् ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशम्, आकाशेनेव घटादयः । विनाशम् अदर्शनम् अभावम् । अव्ययस्य न व्येति उपचयापचयौ न याति इति अव्ययं तस्य अव्ययस्य । नैतत् सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति, निरवयवत्वात्, देहादिवत् । नाप्यात्मीयेन, आत्मीयाभावात् ।

यथा देवदत्तो धनहान्या व्येति, न तु एवं ब्रह्म व्येति । अतः अव्ययस्य अस्य ब्रह्मणः विनाशं न कश्चित् कर्तुमर्हति, न कश्चित् आत्मानं विनाशयितुं शक्नोति ईश्वरोऽपि । आत्मा हि ब्रह्म, स्वात्मनि च क्रियाविरोधात् ॥

किं पुनस्तदसत्, यत्स्वात्मसत्तां व्यभिचरतीति, उच्यते—

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥**

अन्तः विनाशः विद्यते येषां ते अन्तवन्तः । यथा मृगतृष्णिकादौ सद्बुद्धिः अनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते, स तस्य अन्तः, तथा इमे देहाः स्वप्नमायादेहादिवच्च अन्तवन्तः नित्यस्य शरीरिणः शरीरवत. अनाशिनः अप्रमेयस्य आत्मनः अन्तवन्त इति उक्ताः विवेकिभिरित्यर्थः । 'नित्यस्य' 'अनाशिनः' इति न पुनरुक्तम्, नित्यत्वस्य द्विविधत्वात् लोके, नाशस्य च । यथा देहो भस्मीभूतः अदर्शनं गतो नष्ट उच्यते । विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्र 'नित्यस्य' 'अनाशिन.' इति द्विविधेनापि नाशेन असंबन्धः अस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यात् आत्मन.; तत् मा भूदिति

'नित्यस्य' 'अनाशिनः' इत्याह । अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैः अपरिच्छेद्यस्येत्यर्थः ॥

ननु आगमेन आत्मा परिच्छिद्यते, प्रत्यक्षादिना च पूर्वम् । न; आत्मनः स्वतःसिद्धत्वात् । सिद्धे हि आत्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वम् 'इत्थमहम्' इति आत्मानमप्रमाय पश्चात् प्रमेयपरिच्छेदाय प्रवर्तते । न हि आत्मा नाम कस्यचित् अप्रसिद्धो भवति । शास्त्रं तु अन्त्यं प्रमाणम् अतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वम् आत्मनः प्रतिपद्यते, न तु अज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः— 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति ॥

यस्मादेवं नित्यः अविक्रियश्च आत्मा तस्मात् युध्यस्व, युद्धात् उपरमं मा कार्षीः इत्यर्थः ॥

न हि अत्र युद्धकर्तव्यता विधीयते, युद्धे प्रवृत्त एव हि असौ शोकमोहप्रतिबद्धः तूष्णीमास्ते । अतः तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्मात् 'युध्यस्व' इति अनुवादमात्रम्, न विधिः ॥

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रम्, न प्रवर्तकम् इत्येतस्यार्थस्य साक्षिभूते ऋचौ आनिनाय भगवान् ।

यत्तु मन्यसे 'युद्धे भीष्मादयो मया हन्यन्ते' 'अहमेव तेषां हन्ता' इति, एषा बुद्धिः मृषैव ते। कथम्?—

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥**

य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्तारं यश्च एनम् अन्यो मन्यते हतं देहहननेन 'हतः अहम्' इति हननक्रियायाः कर्मभूतम्, तौ उभौ न विजानीतः न ज्ञातवन्तौ अविवेकेन आत्मानम्। 'हन्ता अहम्' 'हतः अस्मि अहम्' इति देहहननेन आत्मानमहंप्रत्ययविषयं यौ विजानीत तौ आत्मस्वरूपानभिज्ञौ इत्यर्थः। यस्मात् न अयम् आत्मा हन्ति न हननक्रियायाः कर्ता भवति, न च हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥

कथमविक्रिय आत्मेति द्वितीयो मन्त्रः—

**न जायते म्रियते वा कदाचि-**
**न्नायं भूत्वाभविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ॥ २० ॥**

न जायते न उत्पद्यते, जनिलक्षणा वस्तुविक्रिया न आत्मनो विद्यते इत्यर्थः । तथा न म्रियते वा । वाशब्दः चार्थे । न म्रियते च इति अन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधे संबध्यते— न कदाचित् जायते, न कदाचित् म्रियते, इत्येवम् । यस्मात् अयम् आत्मा भूत्वा भवनक्रियामनुभूय पश्चात् अभविता अभाव गन्ता न भूयः पुन , तस्मात् न म्रियते । यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके । वाशब्दात् नशब्दाच्च अयमात्मा अभूत्वा वा भविता देहवन् न भूयः । तस्मात् न जायते । यो हि अभूत्वा भविता स जायत इत्युच्यते । नैवमात्मा । अतो न जायते । यस्मादेव तस्मात् अज., यस्मात् न म्रियते तस्मात् नित्यश्च । यद्यपि आद्यन्तयोर्विक्रिययो· प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति, तथापि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव प्रतिषेधः कर्तव्यः अनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यात् इत्याह— शाश्वत इत्यादिना । शाश्वत इति अपक्षयलक्षणा विक्रिया प्रतिषिध्यते । शश्वद्भव· शाश्वत· । न अपक्षीयते स्वरूपेण, निरवयवत्वात् । नापि गुणक्षयेण अपक्षयः, निर्गुणत्वात् । अपक्षयविपरीतापि

वृद्धिलक्षणा विक्रिया प्रतिषिध्यते— पुराण इति । यो हि अवयवागमेन उपचीयते स वर्धते अभिनव इति च उच्यते । अय तु आत्मा निरवयवत्वात् पुरापि नव एवेति पुराणः, न वर्धते इत्यर्थः । तथा न हन्यते । हन्तिः अत्र विपरिणामार्थे द्रष्टव्यः अपुनरुक्तताये । न विपरिणम्यते इत्यर्थः । हन्यमाने विपरिणम्यमानेऽपि शरीरे । अस्मिन् मन्त्रे षड् भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मा इति वाक्यार्थः । यस्मादेवं तस्मात् 'उभौ तौ न विजानीतः' इति पूर्वेण मन्त्रेण अस्य सबन्धः ॥

'य एनं वेत्ति हन्तारम्' इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवति इति प्रतिज्ञाय, 'न जायते' इत्यनेन अविक्रियत्वं हेतुमुक्त्वा प्रतिज्ञातार्थमुपसहरति—

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥**

वेद विजानाति अविनाशिनम् अन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेद इति संबन्धः । एनं पूर्वेण मन्त्रेणोक्तलक्षणम् अजं जन्मरहितम् अव्ययम् अपक्षयरहितं कथं

केन प्रकारेण स विद्वान् पुरुषः अधिकृत. हन्ति हननक्रिया करोति, कथ वा घातयति हन्तार प्रयोजयति । न कथंचित् कचित् हन्ति, न कथचित् कंचित् घातयति इति उभयत्र आक्षेप एवार्थ., प्रश्नार्थासभवात् । हेत्वर्थस्य च अविक्रियत्वस्य तुल्यत्वात् विदुष सर्वकर्मप्रतिषेध एव प्रकरणार्थ. अभिप्रेतो भगवता । हन्तेस्तु आक्षेप उदाहरणार्थत्वेन कथितः ॥

विदुषः क कर्मासभवहेतुविशेषं पश्यन कर्माण्याक्षिपति भगवान् 'कथ स पुरुष ' इति । ननु उक्त एवात्मन· अविक्रियत्वं सर्वकर्मासंभवकारणविशेषः । सत्यमुक्तः । न तु सः कारणविशेष , अन्यत्वात् विदुषः अविक्रियादात्मनः । न हि अविक्रिय स्थाणु विदितवतः कर्म न संभवति इति चेन्, न , विदुषः आत्मत्वात् । न देहादिसघातस्य विद्वत्ता । अतः पारिशेष्यात् असंहतः आत्मा विद्वान् अविक्रियः इति तस्य विदुष कर्मासंभवात् आक्षेपो युक्त 'कथ स पुरुषः' इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्त्यविवेकविज्ञानेन अविद्यया उपलब्धा आत्मा कल्प्यते, एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतः अविक्रिय एव आत्मा विद्वानुच्यते । विदुषः कर्मासंभववचनात् यानि

कर्माणि शास्त्रेण विधीयन्ते तानि अविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते ॥

ननु विद्यापि अविदुष एव विधीयते, विदितविद्यस्य पिष्टपेषणवत् विद्याविधानानर्थक्यात् । तत्र अविदुषः कर्माणि विधीयन्ते न विदुषः इति विशेषो नोपपद्यते इति चेत्, न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालम् अग्निहोत्रादिकर्म अनेकसाधनोपसंहारपूर्वकमनुष्ठेयम् 'कर्ता अहम्, मम कर्तव्यम्' इत्येवंप्रकारविज्ञानवतः अविदुषः यथा अनुष्ठेयं भवति, न तु तथा 'न जायते' इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति, किं तु 'नाहं कर्ता, नाहं भोक्ता' इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानात् नान्यदुत्पद्यते इति एष विशेष उपपद्यते । यः पुनः 'कर्ता अहम्' इति वेत्ति आत्मानम्, तस्य 'मम इदं कर्तव्यम्' इति अवश्यंभाविनी बुद्धिः स्यात्; तदपेक्षया सः अधिक्रियते इति तं प्रति कर्माणि संभवन्ति । स च अविद्वान्, 'उभौ तौ न विजानीतः' इति वचनात्, विशेषितस्य च विदुषः कर्माक्षेपवचनाच्च 'कथं स पुरुषः' इति । तस्मात् विशेषितस्य अविक्रियात्मदर्शिनः विदुषः मुमुक्षोश्च सर्वकर्मसंन्यासे एव अधिकारः । अत एव

भगवान् नारायणः सांख्यान् विदुष अविदुषश्च कर्मिण. प्रविभज्य द्वे निष्ठे ग्राहयति— 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति । तथा च पुत्राय आह भगवान् व्यासः— 'द्वाविमावथ पन्थानौ' इत्यादि । तथा च क्रियापथश्चैव पुरस्तात् पश्चात्संन्यासश्चेति । एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान्— अतत्त्ववित् 'अहंकारविमूढात्मा कर्ताहमिति मन्यते', तत्त्ववित्तु नाहं करोमि इति । तथा च 'सर्वकर्माणि मनसा संन्यस्यास्ते' इत्यादि ॥

तत्र केचित्पण्डितंमन्या वदन्ति— 'जन्मादिषड्भावविक्रियारहित' अविक्रियः अकर्ता एकः अहमात्मा' इति न कस्यचित् ज्ञानम् उत्पद्यते, यस्मिन् सति सर्वकर्मसंन्यासः उपदिश्यते इति । तन्न, 'न जायते' इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात् । यथा च शास्त्रोपदेशसामर्थ्यात् धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धविज्ञानमुत्पद्यते, तथा शास्त्रात् तस्यैव आत्मनः अविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मात् नोत्पद्यते इति प्रष्टव्याः ते । करणागोचरत्वात् इति चेत्, न, 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः । शास्त्राचार्योपदेशशमदमादिसस्कृतं मनः आत्मदर्शने करणम् । तथा च तदधिगमाय अनुमाने आगमे च सति ज्ञानं नोत्पद्यत इति

साहसमात्रमेतत् । ज्ञानं च उत्पद्यमानं तद्विपरीतमज्ञानम् अवश्यं बाधते इत्यभ्युपगन्तव्यम् । तच्च अज्ञानं दर्शितम् 'हन्ता अहम्, हतः अस्मि' इति 'उभौ तौ न विजानीतः' इति । अत्र च आत्मनः हननक्रियायाः कर्तृत्वं कर्मत्वं हेतु-कर्तृत्वं च अज्ञानकृतं दर्शितम् । तच्च सर्वक्रियास्वपि समा-नं कर्तृत्वादेः अविद्याकृतत्वम्, अविक्रियत्वात् आत्मनः । विक्रियावान् हि कर्ता आत्मनः कर्मभूतमन्यं प्रयोजयति 'कुरु' इति । तदेतत् अविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्वासुदेवः विदुषः कर्माधि-काराभावप्रदर्शनार्थम् 'वेदाविनाशिनं...कथं स पुरुषः' इत्यादिना । क्व पुनः विदुषः अधिकार इति एतदुक्तं पूर्व-मेव 'ज्ञानयोगेन सांख्यानाम्' इति । तथा च सर्वकर्म-संन्यासं वक्ष्यति 'सर्वकर्माणि मनसा' इत्यादिना ॥

ननु मनसा इति वचनात् न वाचिकानां कायिकानां च संन्यासः इति चेत्, न, सर्वकर्माणि इति विशेषि-तत्वात् । मानसानामेव सर्वकर्मणामिति चेत्, न, मनोव्या-पारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुप-पत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वा अन्यानि सर्वकर्माणि मनसा संन्य-

स्येदिति चेत्, न, 'नैव कुर्वन्न कारयन्' इति विशेषणात्। सर्वकर्मसंन्यासः अयं भगवता उक्तः मरिष्यतः न जीवतः इति चेत्, न, 'नवद्वारे पुरे देही आस्ते' इति विशेषणानुपपत्तेः। न हि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति। अकुर्वतः अकारयतश्च देहे संन्यस्य इति संबन्धः न देहे आस्ते इति चेत्, न, सर्वत्र आत्मनः अविक्रियत्वावधारणात्, आसनक्रियायाश्च अधिकरणापेक्षत्वात्, तदनपेक्षत्वाच्च संन्यासस्य। संपूर्वस्तु न्यासशब्दः अत्र त्यागार्थः, न निक्षेपार्थः। तस्मात् गीताशास्त्रे आत्मज्ञानवतः संन्यासे एव अधिकारः, न कर्मणि इति तत्र तत्र उपरिष्टात् आत्मज्ञानप्रकरणे दर्शयिष्यामः॥

प्रकृतं तु वक्ष्यामः। तत्र आत्मनः अविनाशित्वं प्रतिज्ञातम्। तत्किमिवेति, उच्यते—

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही॥ २२॥**

वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके

विहाय परित्यज्य नवानि अभिनवानि गृह्णाति उपादत्ते नरः पुरुषः अपराणि अन्यानि, तथा तद्वदेव शरीराणि विहाय जीर्णानि अन्यानि संयाति संगच्छति नवानि देही आत्मा पुरुषवत् अविक्रिय एवेत्यर्थः ॥

कस्मात् अविक्रिय एवेति, आह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥**

एनं प्रकृतं देहिनं न च्छिन्दन्ति शस्त्राणि, निरवयवत्वात् न अवयवविभागं कुर्वन्ति । शस्त्राणि अस्यादीनि । तथा न एनं दहति पावक., अग्निरपि न भस्मीकरोति । तथा न च एनं क्लेदयन्ति आप. । अपां हि सावयवस्य वस्तुनः आर्द्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यम् । तत् न निरवयवे आत्मनि संभवति । तथा स्नेहवत् द्रव्यं स्नेहशोषणेन नाशयति वायुः । एनं तु आत्मानं न शोषयति मारुतोऽपि ॥

यतः एवं तस्मात्—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥**

यस्मात् अन्योन्यनाशहेतुभूतानि एनमात्मान नाशयितुं नोत्सहन्ते अस्यादीनि तस्मात् नित्यः । नित्यत्वात् सर्वगतः । सर्वगतत्वात् स्थाणुः इव, स्थिर इत्येतत् । स्थिरत्वात् अचलः अयम् आत्मा । अतः सनातनः चिरंतनः, न कारणात्कुतश्चित् निष्पन्नः, अभिनव इत्यर्थः ॥

नैतेषां श्लोकानां पौनरुक्त्यं चोदनीयम्, यतः एकेनैव श्लोकेन आत्मन' नित्यत्वमविक्रियत्वं चोक्तम् 'न जायते म्रियते वा' इत्यादिना । तत्र यदेव आत्मविषयं किंचिदुच्यते, तत् एतस्मात् श्लोकार्थात् न अतिरिच्यते, किंचिच्छब्दतः पुनरुक्तम्, किंचिदर्थत इति । दुर्बोधत्वात् आत्मवस्तुन पुन पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वासुदेवः कथं नु नाम संसारिणामसंसारित्वबुद्धिगोचरतामापन्नं सत् अव्यक्त तत्त्वं संसारनिवृत्तये स्यात् इति ॥

किंच—

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

सर्वकरणाविषयत्वात् न व्यज्यत इति अव्यक्तः अयम्

आत्मा । अत एव अचिन्त्यः अयम् । यद्धि इन्द्रियगोचरः तत् चिन्ताविषयत्वमापद्यते । अयं त्वात्मा अनिन्द्रियगोचरत्वात् अचिन्त्य. । अत एव अविकार्य', यथा क्षीरं दध्यातञ्चनादिना विकारि न तथा अयमात्मा । निरवयवत्वाच्च अविक्रियः । न हि निरवयवं किंचित् विक्रियात्मकं दृष्टम् । अविक्रियत्वात् अविकार्य अयम् आत्मा उच्यते । तस्मात् एव यथोक्तप्रकारेण एनम् आत्मानं विदित्वा त्वं न अनुशोचितुमर्हसि हन्ताहमेषाम . मयैते हन्यन्त इति ॥

आत्मनः अनित्यत्वमभ्युपगम्य इदमुच्यते—

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२६॥**

अथ च इति अभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्ति जातो जात इति मन्यसे तथा प्रतितत्तद्विनाशं नित्य वा मन्यसे मृतं मृतो मृत इति; तथापि तथाभावेऽपि आत्मनि त्व महाबाहो, न एवं शोचितुमर्हसि, जन्मवतो जन्म नाशवतो नाशश्चेत्येताववश्यंभाविनाविति ॥

तथा च सति—

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥**

जातस्य हि लब्धजन्मन: ध्रुव अव्यभिचारी मृत्यु. मरणं ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्योऽयं जन्ममरण-लक्षणोऽर्थ॰ । तस्मिन्नपरिहार्येऽर्थे न त्व शोचितुमर्हसि ॥

कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्त कर्तुम्, यत —

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

अव्यक्तादीनि अव्यक्तम् अदर्शनम् अनुपलब्धि: आदि: येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तानि अव्यक्तादीनि भूतानि प्रागुत्पत्ते, उत्पन्नानि च प्राङ्मरणात् व्यक्तमध्यानि । अव्यक्तनिधनान्येव पुन॰ अव्यक्तम् अदर्शनं निधन मरण येषां तानि अव्यक्तनिधनानि । मरणादूर्ध्वमप्यव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थ: । तथा चोक्तम्— 'अदर्शनादापतित पुनश्चादर्शनं गत. । नासौ तव न तस्य त्व वृथा का परिदेवना' इति । तत्र का परिदेवना को वा प्रलाप: अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थ॰ ॥

दुर्विज्ञेयोऽयं प्रकृत आत्मा; किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते। कथं दुर्विज्ञेयोऽयमात्मा इत्यत आह—

**आश्चर्यवत्पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाप्येनं वेद न चैव कश्चित्॥ २९॥**

आश्चर्यवत् आश्चर्यम् अदृष्टपूर्वम् अद्भुतम् अकस्माद्दृश्यमानं तेन तुल्यं आश्चर्यवत् आश्चर्यमिव एनम् आत्मान पश्यति कश्चित्। आश्चर्यवत् एनं वदति तथैव च अन्यः। आश्चर्यवच्च एनमन्य शृणोति। श्रुत्वा दृष्ट्वा उक्त्वापि एनमात्मानं वेद न चैव कश्चित्। अथवा योऽयमात्मानं पश्यति स आश्चर्यतुल्यः, यो वदति यश्च शृणोति सः अनेकसहस्रेषु कश्चिदेव भवति। अतो दुर्बोध आत्मा इत्यभिप्रायः॥

अथेदानीं प्रकरणार्थमुपसंहरन्ब्रूते—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥**

देही शरीरी नित्यं सर्वदा सर्वावस्थासु अवध्यः निरव-

यवत्वान्नित्यत्वाच्च तत्र अवध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात्स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽपि अयं देही न वध्यः यस्मात्, तस्मात् भीष्मादीनि सर्वाणि भूतानि उद्दिश्य न त्वं शोचितुमर्हसि ॥

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न संभवतीत्युक्तम् । न केवलं परमार्थतत्त्वापेक्षायामेव । किं तु—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥**

स्वधर्ममपि स्वो धर्मः क्षत्रियस्य युद्ध तमपि अवेक्ष्य त्वं न विकम्पितुं प्रचलितुम् नार्हसि क्षत्रियस्य स्वाभाविकाद्धर्मात आत्मस्वाभाव्यादित्यभिप्रायः । तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यम् । तस्मात् धर्म्यात् युद्धात् श्रेय· अन्यत् क्षत्रियस्य न विद्यते हि यस्मात् ॥

कुतश्च तत् युद्धं कर्तव्यमिति, उच्यते—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥**

यदृच्छया च अप्रार्थिततया उपपन्नम् आगतं स्वर्गद्वारम् अपावृतम् उद्घाटितं ये एतत् ईदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ, किं न सुखिनः ते ?

एवं कर्तव्यताप्राप्तमपि—

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥**

अथ चेत् त्वम् इमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत्, ततः तदकरणात् स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापम् अवाप्स्यसि ॥

न केवलं स्वधर्मकीर्तिपरित्यागः —

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

अकीर्तिं चापि युद्धे भूतानि कथयिष्यन्ति ते तव अव्ययां दीर्घकालाम् । धर्मात्मा शूर इत्येवमादिभिः गुणैः संभावितस्य च अकीर्तिः मरणात् अतिरिच्यते, संभावितस्य च अकीर्तेः वरं मरणमित्यर्थः ॥

किंच—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥**

भयात् कर्णादिभ्य रणात् युद्धात् उपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा. दुर्योधनप्रभृतय. । येषां च त्वं दुर्योधनादीना बहुमतो बहुभिः गुणैः युक्त. इत्येवं मत बहुमतः भूत्वा पुनः यास्यसि लाघवं लघुभावम् ॥

किच—

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥**

अवाच्यवादान् अवक्तव्यवादांश्च बहून् अनेकप्रकारान् वदिष्यन्ति तव अहिता शत्रवः निन्दन्त· कुत्सयन्तः तव त्वदीयं सामर्थ्यं निवातकवचादियुद्धनिमित्तम् । ततः तस्मात् निन्दाप्राप्तेर्दुःखात् दु.खतरं नु किम्, ततः कष्टतरं दु ख नास्तीत्यर्थः ॥

युद्धे पुनः क्रियमाणे कर्णादिभि —

**हतो वा प्राप्स्यसि स्वर्गं**
**जित्वा वा भोक्ष्यसे महीम् ।**

**तस्मादुत्तिष्ठ कौन्तेय**
**युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हतो वा प्राप्स्यसि स्वर्गम्, हत सन् स्वर्गं प्राप्स्यसि। जित्वा वा कर्णादीन् शूरान् भोक्ष्यसे महीम्। उभयथापि तव लाभ एवेत्यभिप्रायः। यत एव तस्मात् उत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चय. 'जेष्यामि शत्रून्, मरिष्यामि वा' इति निश्चयं कृत्वेत्यर्थः ॥

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥**

सुखदुःखे समे तुल्ये कृत्वा, रागद्वेषावप्यकृत्वेत्येतत्। तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व। न एव युद्धं कुर्वन् पापम् अवाप्स्यसि। इत्येष उपदेशः प्रासङ्गिक. ॥

शोकमोहापनयनाय लौकिको न्याय· 'स्वधर्ममपि चावेक्ष्य' इत्याद्यैः श्लोकैरुक्तः, न तु तात्पर्येण। परमार्थदर्शनमिह प्रकृतम्। तच्चोक्तमुपसंह्रियते— 'एषा तेऽभिहिता'

इति शास्त्रविषयविभागप्रदर्शनाय । इह हि प्रदर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते, श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्ति इत्यत आह—

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥**

एषा ते तुभ्यम् अभिहिता उक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये नि सङ्गतया द्वन्द्वप्रहाणपूर्वकम् ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमाम् अनन्तरमेवोच्यमानां बुद्धि शृणु । तां च बुद्धि स्तौति प्ररोचनार्थम्—बुद्ध्या यया योगविषयया युक्त. हे पार्थ, कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्ध. कर्मबन्ध. त प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्त्यैव इत्यभिप्रायः ॥

किंच अन्यत्—

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥**

न इह मोक्षमार्गे कर्मयोगे अभिक्रमनाशः अभिक्रमण-मभिक्रमः प्रारम्भः तस्य नाशः नास्ति यथा कृष्यादेः। योगविषये प्रारम्भस्य न अनैकान्तिकफलत्वमित्यर्थः। किंच—नापि चिकित्सावत् प्रत्यवाय. विद्यते भवति। किं तु स्वल्प-मपि अस्य धर्मस्य योगधर्मस्य अनुष्ठितं त्रायते रक्षति महतः भयात् संसारभयात् जन्ममरणादिलक्षणात् ॥

येयं सांख्ये बुद्धिरुक्ता योगे च, वक्ष्यमाणलक्षणा सा—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥**

व्यवसायात्मिका निश्चयस्वभावा एका एव बुद्धि. इतर-विपरीतबुद्धिशाखाभेदस्य बाधिका, सम्यक्प्रमाणजनित-त्वात्, इह श्रेयोमार्गे हे कुरुनन्दन। याः पुनः इतरा विप-रीतबुद्धयः, यासां शाखाभेदप्रचारवशात् अनन्तः अपारः अनुपरतः संसारो नित्यप्रततो विस्तीर्णो भवति, प्रमाणजनि-तविवेकबुद्धिनिमित्तवशाच्च उपरतास्वनन्तभेदबुद्धिषु संसारो-ऽप्युपरमते ता बुद्धयः बहुशाखाः बह्व्यः शाखाः यासां ता बहुशाखाः, बहुभेदा इत्येतत्। प्रतिशाखाभेदेन हि अन-न्ताश्च बुद्धयः। केषाम्? अव्यवसायिनां प्रमाणजनितविवे-कबुद्धिरहितानामित्यर्थः ॥

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥**

याम् इमां वक्ष्यमाणा पुष्पितां पुष्पित इव वृक्षः शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । के? अविपश्चितः अमेधसः अविवेकिन इत्यर्थः । वेदवादरताः बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः हे पार्थ, न अन्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्यः अस्ति इति एवं वादिनः वदनशीलाः ॥

ते च—

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

कामात्मानः कामस्वभावाः, कामपरा इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थः येषां ते स्वर्गपराः स्वर्गप्रधानाः । जन्मकर्मफलप्रदा कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत् प्रददातीति जन्मकर्मफलप्रदा, तां वाचम् । प्रवदन्ति इत्यनुषज्यते । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषाः ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्थाः यया

वाचा बाहुल्येन प्रकाश्यन्ते । भोगैश्वर्यगति प्रति भोगश्च ऐश्वर्यं च भोगैश्वर्ये, तयोर्गति. प्राप्तिः भोगैश्वर्यगतिः, तां प्रति साधनभूताः ये क्रियाविशेषाः तद्बहुलां तां वाचं प्रवदन्त. मूढा. संसारे परिवर्तन्ते इत्यभिप्राय. ॥

तेषां च—

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥**

भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यः ऐश्वर्य च इति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानाम् । तया क्रियाविशेषबहुलया वाचा अपहृतचेतसाम् आच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा बुद्धिः समाधौ समाधीयते अस्मिन् पुरुषोपभोगाय सर्वमिति समाधिः अन्तःकरणं बुद्धिः तस्मिन् समाधौ, न विधीयते न भवति इत्यर्थ. ॥

ये एवं विवेकबुद्धिरहिताः तेषां कामात्मनां यत् फल तदाह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥**

त्रैगुण्यविषयाः त्रैगुण्यं संसारो विषयः प्रकाशयितव्यः येषां ते वेदाः त्रैगुण्यविषयाः। त्वं तु निस्त्रैगुण्यो भव अर्जुन, निष्कामो भव इत्यर्थः। निर्द्वन्द्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ, ततः निर्गत. निर्द्वन्द्वो भव। नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितो भव। तथा निर्योगक्षेमः अनुपात्तस्य उपादानं योगः, उपात्तस्य रक्षणं क्षेम., योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करा इत्यतः निर्योगक्षेमो भव। आत्मवान् अप्रमत्तश्च भव। एष तव उपदेशः स्वधर्ममनुतिष्ठतः॥

सर्वेषु वेदोक्तेषु कर्मसु यान्युक्तान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्, किमर्थं तानि ईश्वरायेत्यनुष्ठीयन्ते इत्युच्यते, शृणु—

**यावानर्थ उदपाने सर्वतःसंप्लुतोदके।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥४६॥**

यथा लोके कूपतडागाद्यनेकस्मिन् उदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानपानादिः अर्थ· फलं प्रयोजनं स सर्वः अर्थः सर्वतःसंप्लुतोदकेऽपि यः अर्थः तावानेव संपद्यते, तत्र अन्तर्भवतीत्यर्थः। एवं तावान् तावत्परिमाण

एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु यः अर्थः यत्कर्मफलं सः अर्थः ब्राह्मणस्य संन्यासिन. परमार्थतत्त्वं विजानतः यः अर्थः यत् विज्ञानफलं सर्वतःसंप्लुतोदकस्थानीयं तस्मिन् तावानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः । 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किंचित् प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति श्रुतेः । 'सर्वं कर्माखिलम्' इति च वक्ष्यति । तस्मात् प्राक् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥

तव च—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

कर्मण्येव अधिकारः न ज्ञाननिष्ठायां ते तव । तत्र च कर्म कुर्वतः मा फलेषु अधिकारः अस्तु, कर्मफलतृष्णा मा भूत् कदाचन कस्यांचिदप्यवस्थायामित्यर्थः । यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तेः हेतु· स्याः, एवं मा कर्मफलहेतु भू । यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मपलस्यैव जन्मनो हेतुर्भवेत् । यदि कर्मफलं

नेष्यते, किं कर्मणा दुःखरूपेण? इति मा ते तव सङ्गः अस्तु अकर्मणि अकरणे प्रीतिर्मा भूत् ॥

यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म, कथं तर्हि कर्तव्यमिति; उच्यते—

**योगस्थः कुरु कर्माणि**
**सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा**
**समत्वं योग उच्यते ॥ ४८ ॥**

योगस्थः सन् कुरु कर्माणि केवलमीश्वरार्थम्; तत्रापि 'ईश्वरो मे तुष्यतु' इति सङ्गं त्यक्त्वा धनंजय । फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः, तद्विपर्ययजा असिद्धिः, तयोः सिद्ध्यसिद्ध्योः अपि समः तुल्यः भूत्वा कुरु कर्माणि । कोऽसौ योगः यत्रस्थः कुरु इति उक्तम्? इदमेव तत्— सिद्ध्यसिद्ध्योः समत्वं योगः उच्यते ॥

यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मोक्तम्, एतस्मात्कर्मणः—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

दूरेण अतिविप्रकर्षेण अत्यन्तमेव हि अवरम् अधमं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मण., जन्ममरणादिहेतुत्वात् । हे धनंजय, यत एवं ततः योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणम् आश्रयमभयप्राप्तिकारणम् अन्विच्छ प्रार्थयस्व, परमार्थज्ञानशरणो भवेत्यर्थः । यतः अवरं कर्म कुर्वाणा कृपणाः दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः, 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुते ॥

समत्वबुद्धियुक्तः सन् स्वधर्ममनुतिष्ठन् यत्फल प्राप्नोति तच्छृणु—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥**

बुद्धियुक्तः कर्मसमत्वविषयया बुद्ध्या युक्तः बुद्धियुक्तः सः जहाति परित्यजति इह अस्मिन् लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतः, तस्मात् समत्वबुद्धियोगाय युज्यस्व घटस्व । योगो हि कर्मसु कौशलम्,

स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिः ईश्वरार्पितचेतस्तया तत् कौशलं कुशलभावः । तद्धि कौशलं यत् बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान् निवर्तन्ते । तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥

यस्मात्—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥**

कर्मजं फलं त्यक्त्वा इति व्यवहितेन संबन्ध. । इष्टानिष्टदेहप्राप्ति. कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्त. हि यस्मात् फलं त्यक्त्वा परित्यज्य मनीषिण ज्ञानिनो भूत्वा, जन्मबन्धविनिर्मुक्ताः जन्मैव बन्ध जन्मबन्धः तेन विनिर्मुक्ताः जीवन्त एव जन्मबन्धात् विनिर्मुक्ताः सन्तः, पदं परमं विष्णोः मोक्षाख्यं गच्छन्ति अनामयं सर्वोपद्रवरहितमित्यर्थः । अथवा 'बुद्धियोगाद्धनंजय' इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतःसंप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिर्दर्शिता, साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यते इत्युच्यते —

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥**

यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येन आत्मानात्मविवेकबोध कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते, तत् तव बुद्धिः व्यतितरिष्यति व्यतिक्रमिष्यति, अतिशुद्धभावमापत्स्यते इत्यर्थः । तदा तस्मिन् काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च, तदा श्रोतव्यं श्रुतं च ते निष्फलं प्रतिभातीत्यभिप्रायः ॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फल परमार्थयोगमवाप्स्यामीति चेत्, तत् शृणु—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥**

श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धि. यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ, समाधीयते चित्तमस्मिन्निति समाधिः आत्मा, तस्मिन् आत्मनि इत्येतत् । अचला तत्रापि विकल्पवर्जिता

इत्येतत् । बुद्धिः अन्तःकरणम् । तदा तस्मिन्काले योगम् अवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥

प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—

अर्जुन उवाच—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥**

स्थिता प्रतिष्ठिता 'अहमस्मि परं ब्रह्म' इति प्रज्ञा यस्य स. स्थितप्रज्ञः तस्य स्थितप्रज्ञस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्थस्य समाधौ स्थितस्य हे केशव । स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत । किम् आसीत व्रजेत किम् आसनं व्रजनं वा तस्य कथमित्यर्थः । स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छ्यते ॥

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्त , यश्च कर्मयोगेन, तयोः 'प्रजहाति' इत्यारभ्य आ अध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात् । यानि यत्नसाध्यानि साध-

नानि लक्षणानि च भवन्ति तानि श्रीभगवानुवाच—

श्रीभगवानुवाच—

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥**

प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ, मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान् । सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्ति प्राप्ता, इत्यत उच्यते— आत्मन्येव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्ट परमार्थदर्शनामृतरसलाभेन अन्यस्मादलंप्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स. स्थितप्रज्ञः विद्वान् तदा उच्यते । त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः ॥

किंच—

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

दुःखेषु आध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं

दु खप्राप्तौ मनो यस्य सोऽयम् अनुद्विग्नमनाः । तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य, न अग्निरिव इन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः । वीतरागभयक्रोध. रागश्च भय च क्रोधश्च वीता विगता यस्मात् स वीतरागभयक्रोधः । स्थितधी स्थितप्रज्ञो मुनि. संन्यासी तदा उच्यते ॥

किच—

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥**

यः मुनि' सर्वत्र देहजीवितादिष्वपि अनभिस्नेह अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभं अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं च प्राप्य न द्वेष्टि इत्यर्थः । तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥

किच—

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥**

यदा संहरते सम्यगुपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो

यतिः कूर्मः अङ्गानि इव यथा कूर्मः भयात् स्वान्यङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्यः उपसंहरते । तस्य प्रज्ञा प्रतिष्ठिता इत्युक्तार्थं वाक्यम् ॥

तत्र विषयाननाहरतः आतुरस्यापि इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः स कथं संह्रियते इति उच्यते—

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा । रसशब्दो रागे प्रसिद्धः, स्वरसेन प्रवृत्तः रसिकः रसज्ञः, इत्यादिदर्शनात् । सोऽपि रसो रञ्जनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य ‘अहमेव तत्’ इति वर्तमानस्य निवर्तते निर्बीज विषयविज्ञानं संपद्यते इत्यर्थः । न असति सम्यग्दर्शने रसस्य उच्छेदः । तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि, यस्मात्तदनवस्थापने दोषमाह—

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥**

यततः प्रयत्नं कुर्वतः हि यस्मात् कौन्तेय पुरुषस्य विपश्चितः मेधाविनः अपि इति व्यवहितेन संबन्धः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः ॥

यतः तस्मात्—

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥**

तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः मत्परः, 'न अन्योऽहं तस्मात्' इति आसीत इत्यर्थः । एवमासीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासबलात् तस्य प्रज्ञा प्रतिष्ठिता ॥

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥**

ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते । सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा । कामात् कुतश्चित् प्रतिहतात् क्रोधः अभिजायते ॥

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥**

क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः । क्रुद्धो हि संमूढः सन् गुरुमप्याक्रोशति । संमोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः । ततः स्मृतिभ्रंशात् बुद्धिनाशः बुद्धेर्नाशः । कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते । बुद्धिनाशात् प्रणश्यति । तावदेव हि पुरुषः यावदन्तःकरणं तदीयं

कार्याकार्यविषयविवेकयोग्यम् । तदयोग्यत्वे नष्ट एव पुरुषो भवति । अत तस्यान्त.करणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः ॥

सर्वानर्थस्य मूलमुक्त विषयाभिध्यानम । अथ इदानीं मोक्षकारणमिदमुच्यते—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥**

रागद्वेषवियुक्तै रागश्च द्वेषश्च रागद्वेषौ, तत्पुरःसरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिः इन्द्रियैः विषयान् अवर्जनीयान् चरन् उपलभमान आत्मवश्यै. आत्मन वश्यानि वशीभूतानि इन्द्रियाणि तै. आत्मवश्यैः विधेयात्मा इच्छात विधेयः आत्मा अन्तःकरणं यस्य सः अयं प्रसादम् अधिगच्छति । प्रसादः प्रसन्नता स्वास्थ्यम् ॥

प्रसादे सति किं स्यात् इत्युच्यते—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

प्रसादे सर्वदुःखानाम् आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते । किंच— प्रसन्नचेतसः स्वस्थान्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तात् अवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः ॥

एवं प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतः, तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेत् इति वाक्यार्थः ॥

सेयं प्रसन्नता स्तूयते—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥**

नास्ति न विद्यते न भवतीत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य । न च अस्ति अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः । तथा— न च अस्ति अभावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिः उपशमः । अशान्तस्य कुतः सुखम्? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिर्या तत्सुखम्, न विषयविषया तृष्णा । दुःखमेव हि सा । न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यते इत्यर्थः ॥

अयुक्तस्य कस्माद्बुद्धिर्नास्ति इत्युच्यते—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

इन्द्रियाणां हि यस्मात् चरतां स्वस्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते तत् इन्द्रियविषयविकल्पनेन प्रवृत्तं मनः अस्य यतेः हरति प्रज्ञाम् आत्मानात्मविवेकजां नाशयति । कथम्? वायुः नावमिव अम्भसि उदके जिगमिषतां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति ॥

'यततो हि' इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा तं चार्थमुपपाद्य उपसंहरति—

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥**

इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्, तस्मात् यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥

योऽयं लौकिको वैदिकश्च व्यवहारः, स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिः, इत्येतमर्थं स्फुटीकुर्वन् आह—

**या निशा सर्वभूतानां**
**तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि**
**सा निशा पश्यतो मुनेः ॥ ६९ ॥**

या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात् सर्वभूतानां सर्वेषां भूतानाम् । किं तत् परमार्थतत्त्व स्थितप्रज्ञस्य विषयः । यथा नक्तंचराणाम् अहरेव सदन्येषां निशा भवति, तद्वत् नक्तंचरस्थानीयानामज्ञाना सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम् । तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्राया. प्रबुद्धो जागर्ति सयमी संयमवान्, जितेन्द्रियो योगीत्यर्थ. । यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इति उच्यन्ते, यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः, सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेः ॥

अत: कर्माणि अविद्यावस्थायामेव चोद्यन्ते, न विद्यावस्थायाम् । विद्यायां हि सत्याम् उदिते सवितरि शार्वरमिव तम: प्रणाशमुपगच्छति अविद्या । प्राक् विद्योत्पत्ते: अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते । न अप्रमाणबुद्ध्या गृह्यमाणाया कर्महेतुत्वोपपत्ति:, 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते, न 'अविद्यामात्रमिदं सर्वं निशेव' इति । यस्य पुन: 'निशेव अविद्यामात्रमिदं सर्वं भेदजातम्' इति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ । तथा च दर्शयिष्यति—'तद्बुद्धयस्तदात्मान:' इत्यादिना ज्ञाननिष्ठायामेव तस्य अधिकारम् ॥

तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिः इति चेत्, न; स्वात्मविषयत्वादात्मविज्ञानस्य । न हि आत्मन: स्वात्मनि प्रवर्तकप्रमाणापेक्षता, आत्मत्वादेव । तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य । न हि आत्मस्वरूपाधिगमे सति पुन: प्रमाणप्रमेयव्यवहार: संभवति । प्रमातृत्वं हि आत्मन: निवर्तयति अन्त्यं प्रमाणम्; निवर्तयदेव च अप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्ति-

हेतुत्वादर्शनात् प्रमाणस्य । तस्मात् न आत्मविदः कर्मण्यधिकार इति सिद्धम् ॥

विदुषः त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न तु असंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह—

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी** ॥ ७० ॥

आपूर्यमाणम् अद्भिः अचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिः यस्य तम् अचलप्रतिष्ठं समुद्रम् आपः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत् कामा विषयसंनिधावपि सर्वतः इच्छाविशेषाः यं पुरुषम्— समुद्रमिव आपः— अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, सः शान्तिं मोक्षम् आप्नोति, न इतरः कामकामी, काम्यन्त इति कामाः विषयाः तान् कामयितुं शीलं यस्य सः कामकामी, नैव प्राप्नोति इत्यर्थः ॥

यस्मादेवं तस्मात्—

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥**

विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः कार्त्स्न्येन चरति, जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः । निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निःस्पृहः सन्, निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदम् इत्यभिनिवेशवर्जित., निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत् । सः एवंभूतः स्थितप्रज्ञः ब्रह्मवित् शान्ति सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्याम् अधिगच्छति प्राप्नोति ब्रह्मभूतो भवति इत्यर्थः ॥

सैषा ज्ञाननिष्ठा स्तूयते—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे साङ्ख्ययोगो नाम
द्वितीयोऽध्यायः ॥

एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानम् इत्येतत्। हे पार्थ, न एनां स्थिति प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति। स्थित्वा अस्यां स्थितौ ब्राह्मयां यथोक्तायां अन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति। किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वाणमृच्छति इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**द्वितीयोऽध्यायः ॥**



# तृतीयोऽध्यायः ॥

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे, सांख्ये बुद्धिः योगे बुद्धिः इति च । तत्र 'प्रजहाति यदा कामान्' इत्यारभ्य आ अध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थता उक्ता— 'एषा ब्राह्मी स्थितिः' इति । अर्जुनाय च 'कर्मण्येवाधिकारस्ते...मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तवान् योगबुद्धिमाश्रित्य, न तत एव श्रेयः-प्राप्तिम् उक्तवान् । तदेतदालक्ष्य पर्याकुलीकृतबुद्धिः अर्जुनः उवाच । कथं भक्ताय श्रेयोर्थिने यत् साक्षात् श्रेयःप्राप्तिसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारंपर्येणापि अनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यात् इति युक्तः पर्याकुलीभावः अर्जुनस्य, तदनुरूपश्च प्रश्नः 'ज्यायसी

चेत्' इत्यादिः, प्रश्नापाकरणवाक्यं च भगवतः युक्तं यथोक्तविभागविषये शास्त्रे ॥

केचित्तु— अर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवत प्रतिवचनं वर्णयन्ति, यथा च आत्मना संबन्धग्रन्थे गीतार्थो निरूपित तत्प्रातिकूलं च इह पुनः प्रश्नप्रतिवचनयोः अर्थं निरूपयन्ति । कथम्? तत्र संबन्धग्रन्थे तावत्— सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयः गीताशास्त्रे निरूपितः अर्थ इत्युक्तम्, पुन. विशेषितं च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानात् मोक्षः प्राप्यते इत्येतत् एकान्तेनैव प्रतिषिद्धमिति । इह तु आश्रमविकल्प दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्त । तत् कथम् ईदृशं विरुद्धमर्थम् अर्जुनाय ब्रूयात् भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत् ॥

तत्रैतत् स्यात्—गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानात् मोक्ष प्रतिषिध्यते, न तु आश्रमान्तराणामिति । एतदपि पूर्वोत्तरविरुद्धमेव । कथम्? सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चित अर्थ. इति प्रतिज्ञाय इह कथं तद्विरुद्धं केवलादेव ज्ञानात् मोक्षं ब्रूयात् आश्रमान्तराणाम् ॥

. अथ मत श्रौतकर्मापेक्षया एतद्वचनम् 'केवलादेव ज्ञानात् श्रौतकर्मरहितात् गृहस्थानां मोक्ष प्रतिषिध्यते' इति; तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्म अविद्यमानवत् उपेक्ष्य 'ज्ञानादेव केवलात्' इत्युच्यते इति। एतदपि विरुद्धम् । कथम्? गृहस्थस्यैव स्मार्तकर्मणा समुच्चितात् ज्ञानात् मोक्ष प्रतिषिध्यते न तु आश्रमान्तराणामिति कथं विवेकिभि. शक्यमवधारयितुम् । किच—यदि मोक्षसाधनत्वेन स्मार्तानि कर्माणि ऊर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापि इष्यतां स्मार्तैरेव समुच्चयो न श्रौतै. ॥

अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयः मोक्षाय, ऊर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चितात् ज्ञानात् मोक्ष इति । तत्रैवं सति गृहस्थस्य आयासबाहुल्यात्, श्रौतं स्मार्तं च बहुदुःखरूप कर्म शिरसि आरोपितं स्यात् ॥

अथ गृहस्थस्यैव आयासबाहुल्यकारणात् मोक्षः स्यात्, न आश्रमान्तराणां श्रौतनित्यकर्मरहितत्वात् इति । तदप्यसत्, सर्वोपनिषत्सु इतिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षो. सर्वकर्मसन्यासविधानात्, आश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्यो ॥

सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः— न, मुमुक्षोः सर्वकर्मसंन्यासविधानात्। 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' 'तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः' 'न्यास एवात्यरेचयत्' इति, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति च। 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्याद्याः श्रुतयः। 'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज। संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः' इति बृहस्पतिः। 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति शुकानुशासनम्। इहापि च 'सर्वकर्माणि मनसा संन्यस्य' इत्यादि॥

मोक्षस्य च अकार्यत्वात् मुमुक्षोः कर्मानर्थक्यम्। नित्यानि प्रत्यवायपरिहारार्थानि इति चेत्, न; असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः। न हि अग्निकार्याद्यकरणात् संन्यासिनः प्रत्यवायः कल्पयितुं शक्यः, यथा ब्रह्मचारिणामसंन्यासिनामपि कर्मिणाम्। न तावत् नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्य उत्पत्तिः कल्पयितुं शक्या, 'कथमसतः

सञ्जायेत' इति असतः सज्जन्मासंभवश्रुतेः । यदि विहिता-करणात् असंभाव्यमपि प्रत्यवायं ब्रूयात् वेदः, तदा अनर्थ-करः वेदः अप्रमाणमित्युक्तं स्यात्, विहितस्य करणाकर-णयोः दुःखमात्रफलत्वात् । तथा च कारकं शास्त्रं न ज्ञाप-कम् इत्यनुपपन्नार्थं कल्पितं स्यात् । न चैतदिष्टम् । तस्मात् न संन्यासिनां कर्माणि । अतो ज्ञानकर्मणोः समुच्चयानुप-पत्तिः; 'ज्यायसी चेत् कर्मणस्ते मता बुद्धि' इति अर्जु-नस्य प्रश्नानुपपत्तेश्च ॥

यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चित्य त्वया अनुष्ठेयम् इत्युक्तं स्यात्, ततः अर्जुनस्य प्रश्नः अनु-पपन्नः 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इति । अर्जु-नाय चेत् बुद्धिकर्मणी त्वया अनुष्ठेये इत्युक्ते, या कर्मणो ज्यायसी बुद्धिः सापि उक्तैव इति 'तत् किं कर्मणि घोरे मां नियोजयसि केशव' इति उपालम्भः प्रश्नो वा न कथंचन उपपद्यते । न च अर्जुनस्यैव ज्यायसी बुद्धिः न अनुष्ठेया इति भगवता उक्त पूर्वम् इति कल्पयितुं युक्तम्, येन 'ज्या-यसी चेत्' इति विवेकतः प्रश्नः स्यात् ॥

यदि पुनः एकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधात् युगपद-नुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं

स्यात्, ततोऽयं प्रश्न उपपन्न 'ज्यायसी चेत्' इत्यादिः। अविवेकत. प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन ज्ञान-कर्मनिष्ठयोः भगवतः प्रतिवचन नोपपद्यते। न च अज्ञान-निमित्तं भगवत्प्रतिवचनं कल्पनीयम्। अस्माच्च भिन्नपुरुषा-नुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोः भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः। तस्मात् केवलादेव ज्ञानात् मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च ॥

ज्ञानकर्मणो· 'एक वद निश्चित्य' इति च एकविषयैव प्रार्थना अनुपपन्ना, उभयो समुच्चयसभवे। 'कुरु कर्मैव तस्मात्त्वम्' इति च ज्ञाननिष्ठासंभवम् अर्जुनस्य अवधारणेन दर्शयिष्यति ॥

अर्जुन उवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥**

ज्यायसी श्रेयसी चेत् यदि कर्मण. सकाशात् ते तव मता अभिप्रेता बुद्धिः ज्ञानं हे जनार्दन। यदि बुद्धिकर्मणी समुच्चिते इष्टे तदा एकं श्रेयःसाधनमिति कर्मणो ज्या-यसी बुद्धिः इति कर्मणः अतिरिक्तकरणं बुद्धेरनुपपन्नम्

अर्जुनेन कृतं स्यात्, न हि तदेव तस्मात् फलतोऽतिरिक्तं स्यात् । तथा च, कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिः, अश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति, तत् किं नु कारणमिति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशव इति च यदाह, तच्च नोपपद्यते । अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवता उक्त. अर्जुनेन च अवधारितश्चेत्, 'तत्किं कर्मणि घोरे मां नियोजयसि' इत्यादि कथं युक्तं वचनम् ॥

किंच—

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥**

व्यामिश्रेणेव, यद्यपि विविक्ताभिधायी भगवान्, तथापि मम मन्दबुद्धेः व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति । तेन मम बुद्धिं मोहयसि इव, मम बुद्धिव्यामोहापनयाय हि प्रवृत्तः त्वं तु कथं मोहयसि? अतः ब्रवीमि बुद्धिं मोहयसि इव मे मम इति । त्वं तु भिन्नकर्तृकयोः ज्ञानकर्मणोः एकपुरुषानुष्ठानासंभवं यदि मन्यसे, तत्रैवं सति तत् तयोः एकं बुद्धिं कर्म वा इदमेव अर्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा

अन्यतरेण श्रेयः अहम् आप्नुयां प्राप्नुयाम्, इति यदुक्तं तदपि नोपपद्यते ॥

यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवता उक्त स्यात्, तत् कथं तयोः 'एकं वद' इति एकविषयैव अर्जुनस्य शुश्रूषा स्यात्। न हि भगवता पूर्वमुक्तम् 'अन्यतरदेव ज्ञानकर्मणोः वक्ष्यामि, नैव द्वयम्' इति, येन उभयप्राप्त्यसंभवम् आत्मनो मन्यमानः एकमेव प्रार्थयेत् ॥

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच—

श्रीभगवानुवाच—

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥**

लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ अपाप। तत्र का सा द्विविधा निष्ठा इत्याह— तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन सांख्यानाम् आत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्त-

विज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येव अवस्थितानां निष्ठा प्रोक्ता । कर्मयोगेन कर्मैव योगः कर्मयोगः तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः । यदि च एकेन पुरुषेण एकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवता इष्टम् उक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तम्, कथमिह अर्जुनाय उपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्? यदि पुनः 'अर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामि इति' मतं भगवतः कल्प्येत, तदा रागद्वेषवान् अप्रमाणभूतो भगवान् कल्पितः स्यात् । तच्चायुक्तम् । तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ॥

यत् अर्जुनेन उक्तं कर्मणो ज्यायस्त्वं बुद्धेः, तच्च स्थितम्, अनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वम्, भिन्नपुरुषानुष्ठेयत्ववचनात् । भगवतः एवमेव अनुमतमिति गम्यते ॥

'मां च बन्धकारणे कर्मण्येव नियोजयसि' इति विषण्णमनसमर्जुनम् 'कर्म नारभे' इत्येवं मन्वानमालक्ष्य आह भगवान्— न कर्मणामनारम्भात् इति । अथवा— ज्ञानकर्म-

निष्ठयोः परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुमशक्यत्वे सति इतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वम्, न स्वातन्त्र्येण, ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा, इत्येतमर्थं प्रदर्शयिष्यन् आह भगवान्—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥**

न कर्मणां क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम् उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम्, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ' इत्यादिस्मरणात्, अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैव अवस्थानमिति यावत् । पुरुषः न अश्नुते न प्राप्नोतीत्यर्थः ॥

कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति वचनात् तद्विपर्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुते इति गम्यते । कस्मात् पुनः कारणात् कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति ?

उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात् । न ह्युपायमन्तरेण उपेयप्राप्तिरस्ति । कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य, श्रुतौ इह च, प्रतिपादनात् । श्रुतौ तावत् प्रकृतस्य आत्मलोकस्य वेद्यस्य वेदनोपायत्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम् । इहापि च— 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इत्यादि प्रतिपादयिष्यति ॥

ननु च 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति । लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरम् । अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेण ? इति प्राप्तम् । अत आह— न च संन्यसनादेवेति । नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥

कस्मात् पुनः कारणात् कर्मसंन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छति इति हेत्वाकाङ्क्षायामाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

न हि यस्मात् क्षणमपि कालं जातु कदाचित् कश्चित् तिष्ठति अकर्मकृत् सन् । कस्मात्? कार्यते प्रवर्त्यते हि यस्मात् अवश एव अस्वतन्त्र एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः । अज्ञ इति वाक्यशेषः, यतो वक्ष्यति 'गुणैर्यो न विचाल्यते' इति । सांख्यानां पृथक्करणात् अज्ञानामेव हि कर्मयोगः, न ज्ञानिनाम् । ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते । तथा च व्याख्यातम् 'वेदाविनाशिनम्' इत्यत्र ॥

यस्त्वनात्मज्ञः चोदितं कर्म नारभते इति तदसदेवेत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥**

कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य यः आस्ते तिष्ठति मनसा स्मरन् चिन्तयन् इन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणः मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

यस्तु पुन. कर्मण्यधिकृतः अज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते अर्जुन कर्मेन्द्रियै. वाक्पाण्यादिभिः । किमारभते इत्याह— कर्मयोगम् असक्तः सन् फलाभिसंधि-वर्जितः सः विशिष्यते इतरस्मात् मिथ्याचारात् ॥

यतः एवम् अतः—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

नियतं नित्यं शास्त्रोपदिष्टम्, यो यस्मिन् कर्मणि अधिकृतः फलाय च अश्रुतं तत् नियतं कर्म, तत् कुरु त्वं हे अर्जुन, यत. कर्म ज्यायः अधिकतरं फलतः, हि यस्मात् अकर्मणः अकरणात् अनारम्भात् । कथम्? शरीरयात्रा शरीरस्थितिः अपि च ते तव न प्रसिध्येत् प्रसिद्धिं न गच्छेत् अकर्मणः अकरणात् । अत· दृष्ट. कर्माकर्मणोर्विशेषो लोके ॥

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यमिति तदप्यसत् । कथम्—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

'यज्ञो वै विष्णुः' इति श्रुतेः यज्ञः ईश्वरः, तदर्थं यत् क्रियते तत् यज्ञार्थं कर्म । तस्मात् कर्मणः अन्यत्र अन्येन कर्मणा लोकः अयम् अधिकृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनः लोकः, न तु यज्ञार्थात् । अतः तदर्थं यज्ञार्थं कर्म कौन्तेय, मुक्तसङ्गः कर्मफलसङ्ग-वर्जितः सन् समाचर निर्वर्तय ॥

इतश्च अधिकृतेन कर्म कर्तव्यम्—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥**

सहयज्ञाः यज्ञसहिताः प्रजाः त्रयो वर्णाः ताः सृष्ट्वा उत्पाद्य पुरा पूर्वं सर्गादौ उवाच उक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रसविष्यध्वं प्रसवः वृद्धिः उत्पत्तिः तं कुरुध्वम् । एष यज्ञः वः युष्माकम् अस्तु भवतु इष्टकामधुक् इष्टान् अभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्ट-कामधुक् ॥

कथम्—

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवान् इन्द्रादीन् भावयत वर्धयत अनेन यज्ञेन । ते देवा भावयन्तु आप्याययन्तु वृष्ट्यादिना वः युष्मान् । एवं परस्परम् अन्योन्यं भावयन्तः श्रेयः परं मोक्षलक्षणं ज्ञानप्राप्तिक्रमेण अवाप्स्यथ । स्वर्गं वा परं श्रेयः अवाप्स्यथ ॥

किंच—

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥**

इष्टान् अभिप्रेतान् भोगान् हि वः युष्मभ्यं देवाः दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविताः यज्ञैः वर्धिताः तोषिताः इत्यर्थः । तैः देवैः दत्तान् भोगान् अप्रदाय अदत्त्वा, आनृण्यमकृत्वा इत्यर्थः, एभ्यः देवेभ्यः, यः भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव सः देवादिस्वापहारी ॥

ये पुनः—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥**

देवयज्ञादीन् निर्वर्त्य तच्छिष्टम् अशनम् अमृताख्यम् अशितु शीलं येषां ते यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः सर्वपापैः चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्च अन्यैः । ये तु आत्मंभरयः, भुञ्जते ते तु अघं पापं स्वयमपि पापाः—ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणात् आत्महेतोः ॥

इतश्च अधिकृतेन कर्म कर्तव्यम् जगच्चक्रप्रवृत्तिहेतुर्हि कर्म । कथमिति उच्यते—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

अन्नात् भुक्तात् लोहितरेतःपरिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि । पर्जन्यात् वृष्टेः अन्नस्य संभवः अन्नसंभवः । यज्ञात् भवति पर्जन्यः, ‘अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः’ इति स्मृतेः । यज्ञः अपूर्वम् । स च यज्ञः कर्मसमुद्भवः

ऋत्विग्यजमानयोश्च व्यापार: कर्म, तत् समुद्भव यस्य यज्ञस्य अपूर्वस्य स यज्ञ. कर्मसमुद्भव ॥

तच्चैवंविधं कर्म कुतो जातमित्याह—

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥**

कर्म ब्रह्मोद्भवं ब्रह्म वेद: स: उद्भव: कारणं प्रकाशको यस्य तत् कर्म ब्रह्मोद्भवं विद्धि विजानीहि । ब्रह्म पुन. वेदाख्यम् अक्षरसमुद्भवम् अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तत् अक्षरसमुद्भवम् । ब्रह्म वेद इत्यर्थ: । यस्मात् साक्षात् परमात्माख्यात् अक्षरात् पुरुषनि:श्वासवत् समुद्भूतं ब्रह्म तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम्, सर्वगतमपि सत् नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् ॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥**

एवम् इत्थम् ईश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं न अनुवर्तयति इह लोके य: कर्मणि अधिकृत. सन् अघायु: अघं पापम् आयु: जीवनं यस्य स: अघायु:, पापजीवन:

इति यावत् । इन्द्रियारामः इन्द्रियैः आरामः आरमणम् आक्रीडा विषयेषु यस्य स. इन्द्रियारामः मोघं वृथा हे पार्थ, स जीवति ॥

तस्मात् अज्ञेन अधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः । प्राक् आत्मज्ञाननिष्ठायोग्यताप्राप्तेः तादर्थ्येन कर्मयोगानुष्ठानम् अधिकृतेन अनात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भात्' इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य, 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकम् अधिकृतस्य अनात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम् । तदकरणे च दोषसंकीर्तनं कृतम् ॥

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयम्, आहोस्वित् पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्याम् अनात्मविदः ज्ञानयोगेनैव निष्ठाम् आत्मविद्भिः सांख्यैः अनुष्ठेयामप्राप्तेनैव, इत्येवमर्थम् अर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थम् 'एतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तः ब्राह्मणाः मिथ्याज्ञानवद्भिः अवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेण अन्यत्

कार्यमस्ति' इत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषित-मिष्कुर्वन् आह भगवान्—

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥**

यस्तु सांख्यः आत्मज्ञाननिष्ठः आत्मरतिः आत्मन्येव रतिः न विषयेषु यस्य सः आत्मरतिरेव स्यात् भवेत् आत्मतृप्तश्च आत्मनैव तृप्तः न अन्नरसादिना सः मानवः मनुष्यः संन्यासी आत्मन्येव च संतुष्टः । संतोषो हि बाह्यार्थलाभे सर्वस्य भवति, तमनपेक्ष्य आत्मन्येव च संतुष्ट सर्वतो वीततृष्ण इत्येतत् । यः ईदृशः आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्ति इत्यर्थः ॥

किंच—

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

नैव तस्य परमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनमस्ति । अस्तु तर्हि अकृतेन अकरणेन प्रत्यवायाख्य अनर्थः, न अकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैव अस्ति । न च अस्य सर्वभूतेषु

ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्य. व्यपाश्रयः व्यपाश्रयणम् आलम्बनं कंचित् भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थः अस्ति, येन तदर्था क्रिया अनुष्ठेया स्यात्। न त्वम् एतस्मिन् सर्वतः-संप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥

यतः एवम्—

**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

तस्मात् असक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय। असक्तो हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परं मोक्षम् आप्नोति पूरुषः सत्त्वशुद्धिद्वारेण इत्यर्थः ॥

यस्माच्च—

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

कर्मणैव हि यस्मात् पूर्वे क्षत्रियाः विद्वांसः संसिद्धि मोक्षं गन्तुम् आस्थिताः प्रवृत्ताः। के? जनकादयः जनका-

श्वपतिप्रभृतय: । यदि ते प्राप्तसम्यग्दर्शना., तत: लोकसंग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैव असंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थ: । अथ अप्राप्तसम्यग्दर्शना जनकादय·, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येय श्लोक । अथ मन्यसे पूर्वैरपि जनकादिभि अजानद्भिरेव कर्तव्यं कर्म कृतम्, तावता नावश्यमन्येन कर्तव्य सम्यग्दर्शनवता कृतार्थेनेति; तथापि प्रारब्धकर्मायत्त: त्वं लोकसंग्रहम् एव अपि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रह., तमेवापि प्रयोजनं संपश्यन् कर्तुम् अर्हसि ॥

लोकसंग्रह: किमर्थं कर्तव्य इत्युच्यते—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

यद्यत् कर्म आचरति करोति श्रेष्ठ: प्रधान: तत्तदेव कर्म आचरति इतर: अन्य: जन. तदनुगत: । किंच स: श्रेष्ठ: यत् प्रमाणं कुरुते लौकिकं वैदिकं वा लोक: तत् अनुवर्तते तदेव प्रमाणीकरोति इत्यर्थ: ॥

यदि अत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्ति: तर्हि मां किं न पश्यसि?—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

न मे मम पार्थ न अस्ति न विद्यते कर्तव्यं त्रिषु अपि लोकेषु किंचन किंचिदपि। कस्मात्? न अनवाप्तम् अप्राप्तम् अवाप्तव्यं प्रापणीयम्, तथापि वर्ते एव च कर्मणि अहम् ॥

**यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥**

यदि हि पुनः अहं न वर्तेय जातु कदाचित् कर्मणि अतन्द्रित अनलस. सन् मम श्रेष्ठस्य सतः वर्त्म मार्गम् अनुवर्तन्ते मनुष्या हे पार्थ, सर्वशः सर्वप्रकारैः ॥

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥**

उत्सीदेयुः विनश्येयु. इमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मण· अभावात् न कुर्यां कर्म चेत् अहम्। किंच, संकरस्य च कर्ता स्याम्। तेन कारणेन उपहन्याम् इमा. प्रजा। प्रजानामनुग्रहाय प्रवृत्त. उपहतिम् उपहननं कुर्याम् इत्यर्थः। मम ईश्वरस्य अननुरूपमापद्येत ॥

यदि पुनः अहमिव त्वं कृतार्थबुद्धिः, आत्मवित् अन्यो वा, तस्यापि आत्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इत्याह—

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥**

सक्ताः कर्मणि 'अस्य कर्मणः फलं मम भविष्यति' इति केचित् अविद्वांसः यथा कुर्वन्ति भारत, कुर्यात् विद्वान् आत्मवित् तथा असक्तः सन् । तद्वत् किमर्थं करोति ? तत् शृणु— चिकीर्षुः कर्तुमिच्छुः लोकसंग्रहम् ॥

एवं लोकसंग्रहं चिकीर्षोः न मम आत्मविदः कर्तव्यमस्ति अन्यस्य वा लोकसंग्रहं मुक्त्वा । ततः तस्य आत्मविदः इदमुपदिश्यते—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥**

बुद्धेर्भेदः बुद्धिभेदः 'मया इदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलम्' इति निश्चयरूपाया बुद्धेः भेदनं चालनं बुद्धिभेदः तं न जनयेत् न उत्पादयेत् अज्ञानाम् अविवेकिनां

कर्मसङ्गिनां कर्मणि आसक्तानां आसङ्गवताम् । किं नु कुर्यात्? जोषयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेव अविदुषां कर्म युक्त. अभियुक्तः समाचरन् ॥

अविद्वानज्ञः कथं कर्मसु सज्जते इत्याह—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥**

प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेः गुणैः विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैः अहंकारविमूढात्मा कार्यकरणसंघातात्मप्रत्ययः अहंकारः तेन विविधं नानाविधं मूढः आत्मा अन्तःकरणं यस्य सः अयं कार्यकरणधर्मा कार्यकरणाभिमानी अविद्यया कर्माणि आत्मनि मन्यमानः तत्तत्कर्मणाम् अहं कर्ता इति मन्यते ॥

यः पुनर्विद्वान्—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

तत्त्ववित् तु महाबाहो । कस्य तत्त्ववित्? गुणकर्मवि-

भागयोः गुणविभागस्य कर्मविभागस्य च तत्त्ववित् इत्यर्थः। गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्तन्ते न आत्मा इति मत्वा न सज्जते सक्तिं न करोति॥

ये पुनः—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत्॥**

प्रकृतेः गुणैः सम्यक् मूढाः संमोहिताः सन्त सज्जन्ते गुणानां कर्मसु गुणकर्मसु 'वयं कर्म कुर्मः फलाय' इति। तान् कर्मसङ्गिनः अकृत्स्नविदः कर्मफलमात्रदर्शिनः मन्दान् मन्दप्रज्ञान् कृत्स्नवित् आत्मवित् स्वयं न विचालयेत् बुद्धि-भेदकरणमेव चालनं तत् न कुर्यात् इत्यर्थः॥

कथं पुनः कर्मण्यधिकृतेन अज्ञेन मुमुक्षुणा कर्म कर्तव्य-मिति, उच्यते—

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥**

मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्मा-णि संन्यस्य निक्षिप्य अध्यात्मचेतसा विवेकबुद्ध्या 'अहं

कर्ता ईश्वराय भृत्यवत् करोमि' इत्यनया बुद्ध्या। किंच, निराशीः त्यक्ताशीः निर्ममः ममभावश्च निर्गतः यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरः विगतसंतापः विगतशोकः सन्नित्यर्थः ॥

यदेतन्मम मतं कर्म कर्तव्यम् इति सप्रमाणमुक्तं तत् तथा—

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥**

ये मे मदीयम् इदं मतं नित्यम् अनुतिष्ठन्ति अनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधाना. अनसूयन्तः असूयां च मयि परमगुरौ वासुदेवे अकुर्वन्त., मुच्यन्ते तेऽपि एवंभूताः कर्मभिः धर्माधर्माख्यै. ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥३२॥**

ये तु तद्विपरीताः एतत् मम मतम् अभ्यसूयन्तः निन्दन्तः न अनुतिष्ठन्ति नानुवर्तन्ते मे मतम्, सर्वेषु ज्ञानेषु विविधं मूढा ते। सर्वज्ञानविमूढान् तान् विद्धि जानीहि नष्टान् नाशं गतान् अचेतसः अविवेकिनः ॥

कस्मात् पुनः कारणात् त्वदीयं मतं नानुतिष्ठन्ति, परधर्मान् अनुतिष्ठन्ति, स्वधर्मं च नानुवर्तन्ते, त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्? तत्राह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥**

सदृशम् अनुरूपं चेष्टते चेष्टां करोति । कस्य? स्वस्याः स्वकीयायाः प्रकृतेः । प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारः वर्तमानजन्मादौ अभिव्यक्तः, सा प्रकृतिः । तस्याः सदृशमेव सर्वो जन्तुः ज्ञानवानपि चेष्टते, कि पुनर्मूर्खः । तस्मात् प्रकृति यान्ति अनुगच्छन्ति भूतानि प्राणिनः । निग्रहः निषेधरूपः कि करिष्यति मम वा अन्यस्य वा ॥

यदि सर्वो जन्तुः आत्मनः प्रकृतिसदृशमेव चेष्टते, न च प्रकृतिशून्यः कश्चित् अस्ति, ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्तौ इदमुच्यते—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥**

इन्द्रियस्येन्द्रियस्य अर्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये

इष्टे रागः अनिष्टे द्वेषः इत्येवं प्रतीन्द्रियार्थं रागद्वेषौ अवश्यंभाविनौ तत्र अयं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते । शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् । या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति । तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति । यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषः भवति, न प्रकृतिवशः । तस्मात् तयोः रागद्वेषयोः वशं न आगच्छेत्, यतः तौ हि अस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्करौ इव पथीत्यर्थः ॥

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा 'परधर्मोऽपि धर्मत्वात् अनुष्ठेय एव' इति, तदसत्—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मः विगुणः अपि विगतगुणोऽपि अनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्गुण्येन संपादितादपि । स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् । कस्मात्? परधर्मः भयावहः नरकादिलक्षणं भयमावहति यतः ॥

यद्यपि अनर्थमूलम् 'ध्यायतो विषयान्पुंसः' इति 'रागद्वेषौ ह्यस्य परिपन्थिनौ' इति च उक्तम्, विक्षिप्तम् अनवधारितं च तदुक्तम् । तत् संक्षिप्तं निश्चितं च इदमेवेति ज्ञातुमिच्छन् अर्जुनः उवाच 'ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्याम्' इति

अर्जुन उवाच—

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥**

अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्यः अयं पापं कर्म चरति आचरति पूरुषः पुरुषः स्वयम् अनिच्छन् अपि हे वार्ष्णेय वृष्णिकुलप्रसूत, बलात् इव नियोजितः राज्ञेव इत्युक्तो दृष्टान्तः ॥

शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि इति भगवान् उवाच—

श्रीभगवानुवाच—

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥**

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्य-

स्याथ मोक्षस्य षण्णां भग इतीङ्गना' ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते, 'उत्पत्ति प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेव. वाच्यः भगवान् इति ॥

काम एष. सर्वलोकशत्रुः यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । स एष कामः प्रतिहतः केनचित् क्रोधत्वेन परिणमते । अतः क्रोधः अपि एष एव रजोगुणसमुद्भवः रजश्च तत् गुणश्च रजोगुणः सः समुद्भवः यस्य सः कामः रजोगुणसमुद्भवः, रजोगुणस्य वा समुद्भवः । कामो हि उद्भूतः रजः प्रवर्तयन् पुरुषं प्रवर्तयति; 'तृष्णया हि अहं कारितः' इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनः महत् अशनं अस्येति महाशनः; अत एव महापाप्मा, कामेन हि प्रेरितः जन्तुः पापं करोति । अतः विद्धि एनं कामम् इह संसारे वैरिणम् ॥

कथं वैरी इति दृष्टान्तैः प्रत्याययति—

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

धूमेन सहजेन आव्रियते वह्निः प्रकाशात्मकः अप्रकाशात्मकेन, यथा वा आदर्शो मलेन च, यथा उल्बेन च जरायुणा गर्भवेष्टनेन आवृतः आच्छादितः गर्भः तथा तेन इदम् आवृतम् ॥

किं पुनस्तत् इदंशब्दवाच्यं यत् कामेनावृतमित्युच्यते—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

आवृतम् एतेन ज्ञानं ज्ञानिन. नित्यवैरिणा, ज्ञानी हि जानाति 'अनेन अहमनर्थे प्रयुक्तः' इति पूर्वमेव । दु.खी च भवति नित्यमेव । अतः असौ ज्ञानिनो नित्यवैरी, न तु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति 'तृष्णया अहं दु.खित्वमापादितः' इति, न पूर्वमेव । अतः ज्ञानिन एव नित्यवैरी । किंरूपेण? कामरूपेण कामः इच्छैव रूपमस्य इति कामरूपः तेन दुष्पूरेण दु·खेन पूरणमस्य इति दुष्पूरः तेन अनलेन न अस्य अलं पर्याप्तिः विद्यते इत्यनलः तेन च ॥

किमधिष्ठानः पुनः कामः ज्ञानस्य आवरणत्वेन वैरी सर्वस्य लोकस्य? इत्यपेक्षायामाह, ज्ञाते हि शत्रोरधिष्ठाने

सुखेन निबर्हणं कर्तुं शक्यत इति—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

इन्द्रियाणि मनः बुद्धिश्च अस्य कामस्य अधिष्ठानम् आश्रयः उच्यते । एतैः इन्द्रियादिभिः आश्रयैः विमोहयति विविधं मोहयति एष कामः ज्ञानम् आवृत्य आच्छाद्य देहिनं शरीरिणम् ॥

यतः एवम्—

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥**

तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनाम् अवबोधः, विज्ञानं विशेषतः तदनुभवः, तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं प्रजहिहि आत्मनः परित्यजेत्यर्थः ॥

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्, तत्र किमाश्रयः काम जह्यात् इत्युच्यते—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥**

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः । तथा इन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् । तथा मनसः तु परा बुद्धि. निश्चयात्मिका । तथा य सर्वदृश्येभ्य. बुद्ध्यन्तेभ्य आभ्यन्तरः, य देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम् । बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा पर आत्मा ॥

ततः किम्——

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम
तृतीयोऽध्यायः ॥

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः । जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य त दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**तृतीयोऽध्यायः ॥**

# चतुर्थोऽध्यायः ॥

योऽयं योगः अध्यायद्वयेनोक्तः ज्ञाननिष्ठालक्षणः, ससंन्यासः कर्मयोगोपायः, यस्मिन् वेदार्थः परिसमाप्तः, प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च, गीतासु च सर्वासु अयमेव योगो विवक्षितो भगवता । अतः परिसमाप्तं वेदार्थं मन्वानः तं वंशकथनेन स्तौति श्रीभगवान्—

श्रीभगवानुवाच—

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

इमम् अध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवान् अहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम् । ब्रह्मक्षत्रे परिपालिते जगत् परिपालयितुमलम् । अव्ययम् अव्ययफलत्वात् । न ह्यस्य योगस्य सम्यग्दर्शननिष्ठालक्षणस्य

मोक्षाख्यं फलं व्येति । स च विवस्वान् मनवे प्राह । मनु. इक्ष्वाकवे स्वपुत्राय आदिराजाय अब्रवीत् ॥

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

एवं क्षत्रियपरम्पराप्राप्तम् इमं राजर्षय: राजानश्च ते ऋषयश्च राजर्षय विदु: इमं योगम् । स योग: कालेन इह महता दीर्घेण नष्ट: विच्छिन्नसंप्रदाय: संवृत्त: । हे परंतप, आत्मन: विपक्षभूता. परा इति उच्यन्ते, तान् शौर्यतेजो-गभस्तिभि. भानुरिव तापयतीति परतप: शत्रुतापन इत्यर्थ· ॥

दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकं च अपुरुषार्थसंबन्धिनम्—

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥**

स एव अयं मया ते तुभ्यम् अद्य इदानी योग: प्रोक्त पुरातन: भक्त: असि मे सखा च असि इति । रहस्यं हि यस्मात् एतत् उत्तमं योग: ज्ञानम् इत्यर्थ: ॥

भगवता विप्रतिषिद्धमुक्तमिति मा भूत् कस्यचित् बुद्धि

इति परिहारार्थं चोद्यमिव कुर्वन् अर्जुन उवाच—

अर्जुन उवाच—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥**

अपरम् अर्वाक् वसुदेवगृहे भवतो जन्म । परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वतः आदित्यस्य । तत् कथम् एतत् विजानीयाम् अविरुद्धार्थतया, यः त्वमेव आदौ प्रोक्तवान् इमं योगं स एव इदानीं मह्यं प्रोक्तवानसि इति ॥

या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणाम्, तां परिहरन् श्रीभगवानुवाच, यदर्थो ह्यर्जुनस्य प्रश्नः—

श्रीभगवानुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन । तानि अहं वेद जाने सर्वाणि न त्वं वेत्थ न जानीषे, धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनः नित्यशुद्धबुद्धमुक्तस्वभावत्वात् अनावरणज्ञानशक्तिरिति वेद अहं हे परंतप ॥

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्म इति, उच्यते—

**अजोऽपि सन्नव्ययात्मा**
**भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय**
**संभवाम्यात्ममायया ॥ ६ ॥**

अजोऽपि जन्मरहितोऽपि सन्, तथा अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन्, तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानाम् ईश्वरः ईशनशीलोऽपि सन्, प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिकाम्, यस्या वशे सर्वं जगत् वर्तते, यया मोहितं सत् स्वमात्मानं वासुदेवं न जानाति, तां प्रकृतिं स्वाम् अधिष्ठाय वशीकृत्य संभवामि देहवानिव भवामि जात इव आत्ममायया आत्मनः मायया, न परमार्थतो लोकवत् ॥

तच्च जन्म कदा किमर्थं च इत्युच्यते—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**

यदा यदा हि धर्मस्य ग्लानिः हानिः वर्णाश्रमादिलक्षणस्य

प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्युत्थानम् उद्भवः अधर्मस्य, तदा तदा आत्मानं सृजामि अहं मायया ॥

किमर्थम्?—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानाम्, विनाशाय च दुष्कृतां पापकारिणाम्, किंच धर्मसंस्थापनार्थाय धर्मस्य सम्यक् स्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम् ॥

तत्—

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥**

जन्म मायारूपं कर्म च साधूनां परित्राणादि मे मम दिव्यम् अप्राकृतम् ऐश्वरम् एवं यथोक्तं यः वेत्ति तत्त्वतः तत्त्वेन यथावत् त्यक्त्वा देहम् इमं पुनर्जन्म पुनरुत्पत्तिं न एति न प्राप्नोति । माम् एति आगच्छति सः मुच्यते हे अर्जुन ॥

नैष मोक्षमार्ग इदानीं प्रवृत्तः; किं तर्हि? पूर्वमपि—

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वीतरागभयक्रोधा. रागश्च भयं च क्रोधश्च वीताः विगता येभ्यः ते वीतरागभयक्रोधाः मन्मयाः ब्रह्मविद्. ईश्वराभेद-दर्शिनः मामेव च परमेश्वरम् उपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः । बहव. अनेके ज्ञानतपसा ज्ञानमेव च परमा-त्मविषयं तपः तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्त मद्भावम् ईश्वरभावं मोक्षम् आगताः समनुप्राप्ता. । इतरतपो-निरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गम् 'ज्ञानतपसा' इति विशे-षणम् ॥

तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेव आत्मभावं प्रयच्छसि न सर्वेभ्यः इत्युच्यते—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥**

ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तान् तथैव तत्फलदानेन भजामि अनुगृह्णामि अहम् इत्येतत् । तेषां मोक्षं प्रति अनर्थित्वात् । न हि एकस्य मुमुक्षुत्वं फलार्थित्व च युगपत् संभवति । अतः ये फला-

र्थिनः तान् फलप्रदानेन, ये यथोक्तकारिणस्तु अफलार्थिनः मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनः मुमुक्षवश्च तान् मोक्षप्रदानेन, तथा आर्तान् आर्तिहरणेन इत्येवं यथा प्रपद्यन्ते ये तान् तथैव भजामि इत्यर्थः। न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा कंचित् भजामि। सर्वथापि सर्वावस्थस्य मम ईश्वरस्य वर्त्म मार्गम् अनुवर्तन्ते मनुष्याः— यत्फलार्थितया यस्मिन् कर्मणि अधिकृताः ये प्रयतन्ते ते मनुष्या अत्र उच्यन्ते— हे पार्थ सर्वशः सर्वप्रकारैः॥

यदि तव ईश्वरस्य रागादिदोषाभावात् सर्वप्राणिषु अनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति 'वासुदेवः सर्वम्' इति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात् त्वामेव सर्वे न प्रतिपद्यन्ते इति? शृणु तत्र कारणम्—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा॥**

काङ्क्षन्तः अभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तः यजन्ते इह अस्मिन् लोके देवताः इन्द्राग्न्याद्याः; 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति श्रुतेः। तेषां हि भिन्नदेवता-

याजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मात् मानुषे लोके, मनुष्यलोके हि शास्त्राधिकारः। 'क्षिप्रं हि मानुषे लोके' इति विशेषणात् अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान्। मानुषे लोके वर्णाश्रमादिकर्माणि इति विशेषः, तेषां च वर्णाश्रमाद्यधिकारिकर्मणां फलसिद्धिः क्षिप्रं भवति। कर्मजा कर्मणो जाता ॥

मानुषे एव लोके वर्णाश्रमादिकर्माधिकारः, न अन्येषु लोकेषु इति नियमः किंनिमित्त इति? अथवा वर्णाश्रमादिप्रविभागोपेताः मनुष्याः मम वर्त्म अनुवर्तन्ते सर्वशः इत्युक्तम्। कस्मात्पुनः कारणात् नियमेन तवैव वर्त्म अनुवर्तन्ते न अन्यस्य इति? उच्यते—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥**

चत्वार एव वर्णाः चातुर्वर्ण्यं मया ईश्वरेण सृष्टम् उत्पादितम्, 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः। गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य 'शमो दमस्तपः' इत्यादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधा-

नस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि, तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म इत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टम् इत्यर्थः । तच्च इदं चातुर्वर्ण्यं न अन्येषु लोकेषु, अतः मानुषे लोके इति विशेषणम् । हन्त तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्मणः कर्तृत्वात् तत्फलेन युज्यसे, अतः न त्वं नित्यमुक्तः नित्येश्वरश्च इति[२] उच्यते—यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्त मा परमार्थत. विद्धि अकर्तारम् । अत एव अव्ययम् असंसारिणं च मां विद्धि ॥

येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतः तेषाम् अकर्ता एवाहम् , यतः—

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥**

न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेन, अहंकाराभावात् । न च तेषां कर्मणां फलेषु मे मम स्पृहा तृष्णा । येषां तु संसारिणाम् ‘अहं कर्ता’ इत्यभिमानः कर्मसु, स्पृहा तत्फलेषु च, तान् कर्माणि लिम्पन्ति इति युक्तम्, तदभावात् न मां कर्माणि लिम्पन्ति । इति एवं यः

अन्योऽपि माम् आत्मत्वेन अभिजानाति 'नाहं कर्ता न मे कर्मफले स्पृहा' इति सः कर्मभिः न बध्यते, तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्ति इत्यर्थः ॥

'नाहं कर्ता न मे कर्मफले स्पृहा' इति—

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवं ज्ञात्वा कृतं कर्म पूर्वैः अपि अतिक्रान्तैः मुमुक्षुभिः । कुरु तेन कर्मैव त्वम्, न तूष्णीमासनं नापि संन्यासः कर्तव्यः, तस्मात् त्वं पूर्वैरपि अनुष्ठितत्वात्, यदि अनात्मज्ञः त्वं तदा आत्मशुद्ध्यर्थम्, तत्त्वविच्चेत् लोकसंग्रहार्थं पूर्वैः जनकादिभिः पूर्वतरं कृतं न अधुनातनं कृतं निर्वर्तितम् ॥

तत्र कर्म चेत् कर्तव्यं त्वद्वचनादेव करोम्यहम्, किं विशेषितेन 'पूर्वैः पूर्वतरं कृतम्' इत्युच्यते, यस्मात् महत् वैषम्यं कर्मणि । कथम्?—

**किं कर्म किमकर्मेति**
**कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि**
**यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

कि कर्म किं च अकर्म इति कवय. मेधाविनः अपि अत्र अस्मिन् कर्मादिविषये मोहिताः मोहं गताः । तत् अतः ते तुभ्यम् अहं कर्म अकर्म च प्रवक्ष्यामि, यत् ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसे अशुभात् संसारात् ॥

न चैतत्त्वया मन्तव्यम्—कर्म नाम देहादिचेष्टा लोकप्रसिद्धम्, अकर्म नाम तदक्रिया तूष्णीमासनम्; किं तत्र बोद्धव्यम्? इति । कस्मात्, उच्यते—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥**

कर्मणः शास्त्रविहितस्य हि यस्मात् अपि अस्ति बोद्धव्यम्, बोद्धव्यं च अस्त्येव विकर्मणः प्रतिषिद्धस्य, तथा अकर्मणश्च तूष्णींभावस्य बोद्धव्यम् अस्ति इति त्रिष्वप्यध्याहारः कर्तव्य । यस्मात् गहना विषमा दुर्ज्ञेया— कर्मणः इति उपलक्षणार्थं कर्मादीनाम्— कर्माकर्मविकर्मणां गतिः याथात्म्यं तत्त्वम् इत्यर्थः ॥

किं पुनस्तत्त्वं कर्मादेः यत् बोद्धव्यं वक्ष्यामि इति प्रतिज्ञातम्? उच्यते—

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥**

कर्मणि, क्रियते इति कर्म व्यापारमात्रम्, तस्मिन् कर्मणि अकर्म कर्माभावं य· पश्येत्, अकर्मणि च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योः—वस्तु अप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारः अविद्याभूमौ एव—कर्म यः पश्येत् पश्यति, सः बुद्धिमान् मनुष्येषु, सः युक्तः योगी च, कृत्स्नकर्मकृत् समस्तकर्मकृच्च स., इति स्तूयते कर्माकर्मणोरितरेतरदर्शी ॥

ननु किमिदं विरुद्धमुच्यते 'कर्मणि अकर्म यः पश्येत्' इति 'अकर्मणि च कर्म' इति, न हि कर्म अकर्म स्यात्, अकर्म वा कर्म। तत्र विरुद्धं कथं पश्येत् द्रष्टा?— न, अकर्म एव परमार्थतः सत् कर्मवत् अवभासते मूढदृष्टेः लोकस्य, तथा कर्मैव अकर्मवत्। तत्र यथाभूतदर्शनार्थमाह भगवान्— 'कर्मण्यकर्म य. पश्येत्' इत्यादि। अतो न विरुद्धम्। बुद्धिमत्त्वाद्युपपत्तेश्च। 'बोद्धव्यम्' इति च यथाभूतदर्शनमुच्यते। न च विपरीतज्ञानात् अशुभात् मोक्षणं स्यात्; 'यत् ज्ञात्वा मोक्ष्यसेऽशुभात्' इति च उक्तम्। तस्मात् कर्माकर्मणी विपर्ययेण गृहीते प्राणिभि

तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनम् 'कर्मण्यकर्म य:' इत्यादि । न च अत्र कर्माधिकरणमकर्म अस्ति, कुण्डे बदराणीव । नापि अकर्माधिकरणं कर्मास्ति, कर्माभावत्वादकर्मण: । अत: विपरीतगृहीते एव कर्माकर्मणी लौकिकै:, यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतम् । ननु कर्म कर्मैव सर्वेषां न क्वचित् व्यभिचरति— तन् न, नौस्थस्य नावि गच्छन्त्यां तटस्थेषु अगतिषु नगेषु प्रतिकूलगतिदर्शनात्, दूरेषु चक्षुषा असंनिकृष्टेषु गच्छत्सु गत्यभावदर्शनात्, एवम् इहापि अकर्मणि कर्मदर्शनं कर्मणि च अकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते 'कर्मण्यकर्म य: पश्येत्' इत्यादि ॥

तदेतत् उक्तप्रतिवचनमपि असकृत् अत्यन्तविपरीतदर्शनभावितया मोमुह्यमानो लोक: श्रुतमपि असकृत तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गम् अवतार्यावतार्य चोदयति इति पुन: पुन: उत्तरमाह भगवान्, दुर्विज्ञेयत्वं च आलक्ष्य वस्तुन: । 'अव्यक्तोऽयमचिन्त्योऽयम्' 'न जायते म्रियते' इत्यादिना आत्मनि कर्माभाव: श्रुतिस्मृतिन्यायप्रसिद्ध. उक्त वक्ष्यमाणश्च । तस्मिन् आत्मनि कर्माभावे अकर्मणि कर्मविपरीतदर्शनम् अत्यन्तनिरूढम्, यत:, 'किं कर्म किमकर्मेति

कवयोऽप्यत्र मोहिताः'। देहाद्याश्रयं कर्म आत्मन्यध्यारोप्य 'अहं कर्ता, मम एतत् कर्म, मया अस्य कर्मणः फलं भोक्तव्यम्' इति च, तथा 'अहं तूष्णीं भवामि, येन अहं निरायासः अकर्मा सुखी स्याम्' इति कार्यकरणाश्रयं व्यापारोपरमं तत्कृतं च सुखित्वम् आत्मनि अध्यारोप्य 'न करोमि किंचित्, तूष्णीं सुखमासे' इति अभिमन्यते लोकः। तत्रेदं लोकस्य विपरीतदर्शनापनयाय आह भगवान्— 'कर्मण्यकर्म यः पश्येत्' इत्यादि ॥

अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयं कर्मरहिते अविक्रिये आत्मनि सर्वैः अध्यस्तम्, यतः पण्डितोऽपि 'अहं करोमि' इति मन्यते। अतः आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येन अकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येत्, अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवत् आत्मनि अध्यारोपिते, 'तूष्णीं अकुर्वन् सुखं आसे' इत्यहंकाराभिसंधिहेतुत्वात्, तस्मिन् अकर्मणि च कर्म यः पश्येत्, यः एवं कर्माकर्मविभागज्ञः सः बुद्धिमान् पण्डितः मनुष्येषु, सः युक्तः योगी कृत्स्नकर्मकृच्च सः अशुभात् मोक्षितः कृतकृत्यो भवति इत्यर्थः ॥

अयं श्लोकः अन्यथा व्याख्यातः कैश्चित् । कथम्? नित्यानां किल कर्मणाम् ईश्वरार्थे अनुष्ठीयमानानां तत्फलाभावात् अकर्माणि तानि उच्यन्ते गौण्या वृत्त्या । तेषां च अकरणम् अकर्म, तच्च प्रत्यवायफलत्वात् कर्म उच्यते गौण्यैव वृत्त्या । तत्र नित्ये कर्मणि अकर्म यः पश्येत् फलाभावात्; यथा धेनुरपि गौः अगौः इत्युच्यते क्षीराख्य फलं न प्रयच्छति इति, तद्वत् । तथा नित्याकरणे तु अकर्मणि च कर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छति इति ॥

नैतत् युक्त व्याख्यानम् । एवं ज्ञानात् अशुभात् मोक्षानुपपत्तेः 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' इति भगवता उक्त वचनं बाध्येत । कथम्? नित्यानामनुष्ठानात् अशुभात् स्यात् नाम मोक्षणम्, न तु तेषां फलाभावज्ञानात् । न हि नित्यानां फलाभावज्ञानम् अशुभमुक्तिफलत्वेन चोदितम्, नित्यकर्मज्ञान वा । न च भगवतैवेहोक्तम् । एतेन अकर्मणि कर्मदर्शनं प्रत्युक्तम् । न हि अकर्मणि 'कर्म' इति दर्शनं कर्तव्यतया इह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम् । न च 'अकरणात् नित्यस्य प्रत्यवायो भवति' इति विज्ञानात् किंचित् फलं स्यात् । नापि नित्याकरणं ज्ञेयत्वेन चोदितम् । नापि 'कर्म

अकर्म' इति मिथ्यादर्शनात् अशुभात् मोक्षणं बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वादि च फलम् उपपद्यते, स्तुतिर्वा । मिथ्याज्ञानमेव हि साक्षात् अशुभरूपम् । कुतः अन्यस्मादशुभात् मोक्षणम्? न हि तमः तमसो निवर्तकं भवति ॥

ननु कर्मणि यत् अकर्मदर्शनम् अकर्मणि वा कर्मदर्शनं न तत् मिथ्याज्ञानम्, किं तर्हि? गौणं फलभावाभावनिमित्तम्— न, कर्माकर्मविज्ञानादपि गौणात् फलस्य अश्रवणात् । नापि श्रुतहान्यश्रुतपरिकल्पनायां कश्चित् विशेष उपलभ्यते । स्वशब्देनापि शक्यं वक्तुम् 'नित्यकर्मणां फलं नास्ति, अकरणाच्च तेषां नरकपातः स्यात्' इति, तत्र व्याजेन परव्यामोहरूपेण 'कर्मण्यकर्म यः पश्येत्' इत्यादिना किम्? तत्र एवं व्याचक्षाणेन भगवतोक्तं वाक्य लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात् । न च एतत् छद्मरूपेण वाक्येन रक्षणीयं वस्तु, नापि शब्दान्तरेण पुनः पुनः उच्यमानं सुबोधं स्यात् इत्येवं वक्तुं युक्तम् । 'कर्मण्येवाधिकारस्ते' इत्यत्र हि स्फुटतर उक्तः अर्थः, न पुनर्वक्तव्यो भवति । सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव । न निष्प्रयोजनं बोद्धव्यमित्युच्यते ॥

न च मिथ्याज्ञानं बोद्धव्यं भवति, तत्प्रत्युपस्थापितं वा वस्त्वाभासम् । नापि नित्यानाम् अकरणात् अभावात् प्रत्य-

वायभावोत्पत्तिः, 'नासतो विद्यते भावः' इति वचनात् 'कथं असतः सज्जायेत' इति च दर्शितम् असतः सज्जन्मप्रतिषेधात् । असतः सदुत्पत्तिं ब्रुवता असदेव सद्भवेत्, सच्चापि असत् भवेत् इत्युक्तं स्यात् । तच्च अयुक्तम्, सर्वप्रमाणविरोधात् । न च निष्फलं विदध्यात् कर्म शास्त्रम्, दुःखस्वरूपत्वात्, दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः। तदकरणे च नरकपाताभ्युपगमात् अनर्थायैव उभयथापि करणे च अकरणे च शास्त्रं निष्फलं कल्पितं स्यात् । स्वाभ्युपगमविरोधश्च 'नित्यं निष्फलं कर्म' इति अभ्युपगम्य 'मोक्षफलाय' इति ब्रुवतः । तस्मात् यथाश्रुत एवार्थ. 'कर्मण्यकर्म यः' इत्यादेः । तथा च व्याख्यात: अस्माभिः श्लोकः ॥

तदेतत् कर्मणि अकर्मदर्शनं स्तूयते—

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥**

यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि, समारभ्यन्ते इति समारम्भाः, कामसंकल्पवर्जिता. कामैः तत्कारणैश्च संकल्पैः वर्जिता. मुधैव चेष्टामात्रा अनु-

क्षीयन्ते; प्रवृत्तेन चेत् लोकसंग्रहार्थम्, निवृत्तेन चेत् जीवनमात्रार्थम्। तं ज्ञानाग्निदग्धकर्माणं कर्मादौ अकर्मादिदर्शनं ज्ञानं तदेव अग्निः तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तम् आहुः परमार्थतः पण्डितं बुधा ब्रह्मविदः॥

यस्तु अकर्मादिदर्शी, सः अकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्तते, यद्यपि प्राक् विवेकतः प्रवृत्तः। यस्तु प्रारब्धकर्मा सन् उत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात्, सः सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव। सः कुतश्चित् निमित्तात् कर्मपरित्यागासंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावात् लोकसंग्रहार्थं पूर्ववत् कर्मणि प्रवृत्तोऽपि नैव किंचित् करोति, ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्म अकर्मैव संपद्यते इत्येतमर्थं दर्शयिष्यन् आह—

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥**

त्यक्त्वा कर्मसु अभिमानं फलासङ्गं च यथोक्तेन ज्ञानेन नित्यतृप्तः निराकाङ्क्षो विषयेषु इत्यर्थः। निराश्रयः आश्रय-

रहितः, आश्रयो नाम यत् आश्रित्य पुरुषार्थं सिसाधयिषति, दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव, तस्य निष्क्रियात्मदर्शनसंपन्नत्वात् । तेन एवंभूतेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेव इति प्राप्ते, ततः निर्गमासंभवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत् कर्मणि अभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात् नैव किंचित् करोति सः ॥

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भात् ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टः यतिः ज्ञाननिष्ठो मुच्यते इत्येतमर्थं दर्शयितुमाह—

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥**

निराशीः निर्गताः आशिषः यस्मात् सः निराशीः, यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा बाह्यः कार्यकरणसंघातः तौ उभावपि यतौ संयतौ येन सः यतचित्तात्मा, त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहः येन सः त्यक्तसर्व-

परिग्रहः, शारीर शरीरस्थितिमात्रप्रयोजनम्, केवलं तत्रापि अभिमानवर्जितम्, कर्म कुर्वन् न आप्नोति न प्राप्नोति किल्बिषम् अनिष्टरूपं पापं धर्मं च। धर्मोऽपि मुमुक्षोः किल्बिषमेव बन्धापादकत्वात्। तस्मात् ताभ्यां मुक्तः भवति, संसारात् मुक्तो भवति इत्यर्थः॥

'शारीरं केवलं कर्म' इत्यत्र किं शरीरनिर्वर्त्यं शारीर कर्म अभिप्रेतम्, आहोस्वित् शरीरस्थितिमात्रप्रयोजनं शारीरं कर्म इति? किं च अतः यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरम् इति? उच्यते—यदा शरीरनिर्वर्त्यं कर्म शारीरम् अभिप्रेतं स्यात्, तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन् नाप्नोति किल्बिषम् इति ब्रुवतो विरुद्धाभिधानं प्रसज्येत। शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन् नाप्नोति किल्बिषम् इत्यपि ब्रुवतः अप्राप्तप्रतिषेधप्रसङ्गः। 'शारीरं कर्म कुर्वन्' इति विशेषणात् केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन् प्राप्नोति किल्बिषम् इत्युक्तं स्यात्। तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धम् आपद्येत। प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रम् अनर्थकं स्यात्। यदा तु शरीरस्थिति-

मात्रप्रयोजनं शारीरं कर्म अभिप्रेतं भवेत्, तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यम् अन्यत् अकुर्वन् तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगात् 'अहं करोमि' इत्यभिमानवर्जित शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन् नाप्नोति किल्बिषम् । एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात् किल्बिषं संसारं न आप्नोति, ज्ञानाग्निदग्धसर्वकर्मत्वात् अप्रतिबन्धेन मुच्यत एव इति पूर्वोक्तसम्यग्दर्शनफलानुवाद एव एषः । एवम् 'शारीरं केवलं कर्म' इत्यस्य अर्थस्य परिग्रहे निरवद्यं भवति ॥

त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेः शरीरस्थितिहेतोः परिग्रहस्य अभावात् याचनादिना शरीरस्थितौ कर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इत्यादिना वचनेन अनुज्ञातं यतेः शरीरस्थितिहेतोः अन्नादेः प्राप्तिद्वारम् आविष्कुर्वन् आह—

**यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥**

यदृच्छालाभसंतुष्टः अप्रार्थितोपनतो लाभो यदृच्छालाभः तेन संतुष्टः संजातालंप्रत्ययः । द्वन्द्वातीतः द्वन्द्वैः

शीतोष्णादिभिः हन्यमानोऽपि अविषण्णचित्तः द्वन्द्वातीतः उच्यते । विमत्सरः विगतमत्सरः निर्वैरबुद्धिः समः तुल्यः यदृच्छालाभस्य सिद्धौ असिद्धौ च । यः एवंभूतो यतिः अन्नादेः शरीरस्थितिहेतोः लाभालाभयोः समः हर्षविषाद-वर्जितः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः सन् शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये 'नैव किंचित् करोम्यहम्, गुणा गुणेषु वर्तन्ते' इत्येवं सदा संपरिचक्षाणः आत्मनः कर्तृत्वाभावं पश्यन्नैव किंचित् भिक्षाटनादिकं कर्म करोति, लोकव्यवहारसामान्यदर्शनेन तु लौकिकैः आरोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणादिजनितेन अकर्तैव । स एवं पराध्यारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षा-टनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वात् इति उक्तानुवाद एव एषः ॥

'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेन श्लोकेन यः प्रारब्ध-कर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात् तदा तस्य आत्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात् तदसंभवे सति पूर्ववत् तस्मिन् कर्मणि अभिप्रवृत्तस्य अपि 'नैव किंचित् करोति सः'

इति कर्माभावः प्रदर्शितः । यस्य एवं कर्माभावो दर्शितः तस्यैव—

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

गतसङ्गस्य सर्वतोनिवृत्तासक्तेः, मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्य, ज्ञानावस्थितचेतसः ज्ञाने एव अवस्थितं चेतः यस्य सोऽयं ज्ञानावस्थितचेताः तस्य, यज्ञाय यज्ञनिर्वृत्त्यर्थम् आचरतः निर्वर्तयतः कर्म समग्रं सह अग्रेण फलेन वर्तते इति समग्रं कर्म तत् समग्रं प्रविलीयते विनश्यति इत्यर्थः ॥

कस्मात् पुनः कारणात् क्रियमाणं कर्म स्वकार्यारम्भम् अकुर्वत् समग्रं प्रविलीयते इत्युच्यते यतः—

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

ब्रह्म अर्पणं येन करणेन ब्रह्मवित् हविः अग्नौ अर्पयति तत् ब्रह्मैव इति पश्यति, तस्य आत्मव्यतिरेकेण अभावं पश्यति, यथा शुक्तिकायां रजताभावं पश्यति, तदुच्यते ब्रह्मैव अर्पणमिति, यथा यद्रजतं तत् शुक्तिकैवेति । 'ब्रह्म

अर्पणम्' इति असमस्ते पदे। यत् अर्पणबुद्ध्या गृह्यते लोके तत् अस्य ब्रह्मविदः ब्रह्मैव इत्यर्थः। ब्रह्म हविः तथा यत् हविर्बुद्ध्या गृह्यमाणं तत् ब्रह्मैव अस्य। तथा 'ब्रह्माग्नौ' इति समस्तं पदम्। अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा, ब्रह्मैव कर्तेत्यर्थः। यत् तेन हुतं हवनक्रिया तत् ब्रह्मैव। यत् तेन गन्तव्यं फलं तदपि ब्रह्मैव ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन् समाधिः यस्य सः ब्रह्मकर्मसमाधिः तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम्॥

एवं लोकसंग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतः अकर्म, ब्रह्मबुद्ध्युपमृदितत्वात्। एवं सति निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादनं ज्ञानस्य सुतरामुपपद्यते, यत् अर्पणादि अधियज्ञे प्रसिद्धं तत् अस्य अध्यात्मं ब्रह्मैव परमार्थदर्शिन इति। अन्यथा सर्वस्य ब्रह्मत्वे अर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानम् अनर्थकं स्यात्। तस्मात् ब्रह्मैव इदं सर्वमिति अभिजानतः विदुषः कर्माभावः। कारकबुद्ध्यभावाच्च। न हि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टम्। सर्वमेव अग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसंप्रदानादिकारकबुद्धिमत् कर्त्रभिमानफलाभिसंधिमच्च दृष्टम्, न उपमृदिताक्रियाकारकफलभेदबुद्धिमत्

कर्तृत्वाभिमानफलाभिसंधिरहितं वा । इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धि कर्म । अतः अकर्मैव तत् । तथा च दर्शितम् 'कर्मण्यकर्म यः पश्येत्' 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः' 'गुणा गुणेषु वर्तन्ते' 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिभिः । तथा च दर्शयन् तत्र तत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति । दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिः । तथा मतिपूर्वकामतिपूर्वकादीनां कर्मणां कार्यविशेषस्य आरम्भकत्वं दृष्टम् । तथा इहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेः बाह्यचेष्टामात्रेण कर्मापि विदुषः अकर्म संपद्यते । अतः उक्तम् 'समग्रं प्रविलीयते' इति ॥

अत्र केचिदाहुः— यत् ब्रह्म तत् अर्पणादीनि, ब्रह्मैव किल अर्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत् तदेव कर्म करोति । तत्र न अर्पणादिबुद्धिः निवर्त्यते, किं तु अर्पणादिषु ब्रह्मबुद्धिः आधीयते; यथा प्रतिमादौ विष्ण्वादिबुद्धिः, यथा वा नामादौ ब्रह्मबुद्धिरिति ॥

सत्यम्, एवमपि स्यात् यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात् । अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितम् अनेकान्

यज्ञशब्दितान् क्रियाविशेषान् उपन्यस्य 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः' इति ज्ञानं स्तौति। अत्र च समर्थमिदं वचनम् 'ब्रह्मार्पणम्' इत्यादि ज्ञानस्य यज्ञत्वसंपादने; अन्यथा सर्वस्य ब्रह्मत्वे अर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। ये तु अर्पणादिषु प्रतिमायां विष्णुदृष्टिवत् ब्रह्मदृष्टिः क्षिप्यते नामादिष्विव चेति ब्रुवते न तेषां ब्रह्मविद्या उक्ता इह विवक्षिता स्यात्, अर्पणादिविषयत्वात् ज्ञानस्य। न च दृष्टिसंपादनज्ञानेन मोक्षफलं प्राप्यते। 'ब्रह्मैव तेन गन्तव्यम्' इति चोच्यते। विरुद्धं च सम्यग्दर्शनम् अन्तरेण मोक्षफलं प्राप्यते इति। प्रकृतविरोधश्च; सम्यग्दर्शनं च प्रकृतम् 'कर्मण्यकर्म यः पश्येत्' इत्यत्र, अन्ते च सम्यग्दर्शनम्, तस्यैव उपसंहारात्। 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः', 'ज्ञानं लब्ध्वा परां शान्तिम्' इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन् उपक्षीणः अध्याय.। तत्र अकस्मात् अर्पणादौ ब्रह्मदृष्टिः अप्रकरणे प्रतिमायामिव विष्णुदृष्टि उच्यते इति अनुपपन्नम्। तस्मात् यथाव्याख्यातार्थ एव अयं श्लोकः ॥

तत्र अधुना सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थम् अन्येऽपि यज्ञा उपक्षिप्यन्ते—

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

दैवमेव देवा इज्यन्ते येन यज्ञेन असौ दैवो यज्ञः तमेव अपरे यज्ञं योगिन कर्मिण पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः' इत्यादिवचनोक्तम् अशनायादिसर्वसंसारधर्मवर्जितम् 'नेति नेति' इति निरस्ताशेषविशेषं ब्रह्मशब्देन उच्यते । ब्रह्म च तत् अग्निश्च सः होमाधिकरणत्वविवक्षया ब्रह्माग्निः । तस्मिन् ब्रह्माग्नौ अपरे अन्ये ब्रह्मविदः यज्ञम्— यज्ञशब्दवाच्य आत्मा, आत्मनामसु यज्ञशब्दस्य पाठात्— तम् आत्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तम् अध्यस्तसर्वोपाधिधर्मकम् आहुतिरूपं यज्ञेनैव आत्मनैव उक्तलक्षणेन उपजुह्वति प्रक्षिपन्ति, सोपाधिकस्य आत्मनः निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमः तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शननिष्ठाः संन्यासिनः इत्यर्थः ॥

सोऽयं सम्यग्दर्शनलक्षणः यज्ञः दैवयज्ञादिषु यज्ञेषु उपक्षिप्यते 'ब्रह्मार्पणम्' इत्यादिश्लोकैः प्रस्तुतः 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप' इत्यादिना स्तुत्यर्थम्—

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥**

श्रोत्रादीनि इन्द्रियाणि अन्ये योगिनः संयमाग्निषु । प्रतीन्द्रियं संयमो भिद्यते इति बहुवचनम् । संयमा एव अग्नयः तेषु जुह्वति इन्द्रियसंयममेव कुर्वन्ति इत्यर्थः । शब्दादीन् विषयान् अन्ये इन्द्रियाग्निषु इन्द्रियाण्येव अग्नयः तेषु इन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥

किंच—

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥**

सर्वाणि इन्द्रियकर्माणि इन्द्रियाणां कर्माणि इन्द्रियकर्माणि, तथा प्राणकर्माणि प्राणो वायुः आध्यात्मिकः तत्कर्माणि आकुञ्चनप्रसारणादीनि तानि च अपरे आत्मसंयमयोगाग्नौ आत्मनि संयमः आत्मसंयमः स एव योगाग्निः तस्मिन् आत्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपे विवेकविज्ञानेन उज्ज्वलभावम् आपादिते जुह्वति प्रविलापयन्ति इत्यर्थः ॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥२८॥**

द्रव्ययज्ञा: तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञा: । तपोयज्ञा: तप: यज्ञ: येषां तपस्विना ते तपोयज्ञा: । योगयज्ञा: प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषा ते योगयज्ञा: । तथा अपरे स्वाध्यायज्ञान-यज्ञाश्च स्वाध्याय: यथाविधि ऋगाद्यभ्यास: यज्ञ: येषां ते स्वाध्याययज्ञा: । ज्ञानयज्ञा: ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञ. येषां ते ज्ञानयज्ञाश्च यतय. यतनशीला: संशितव्रता: सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रता: ॥

किच—

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिम् , पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थ: । प्राणे अपानं तथा अपरे जुह्वति, रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत् । प्राणापानगती मुखनासिकाभ्यां वायो निर्गमनं प्राणस्य

गतिः, तद्विपर्ययेण अधोगमनम् अपानस्य गतिः, ते प्राणापानगती एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः; कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥

किंच—

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

अपरे नियताहाराः नियतः परिमितः आहारः येषां ते नियताहाराः सन्तः प्राणान् वायुभेदान् प्राणेषु एव जुह्वति यस्य यस्य वायोः जयः क्रियते इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति, ते तत्र प्रविष्टा इव भवन्ति । सर्वेऽपि एते यज्ञविदः यज्ञक्षपितकल्मषाः यज्ञैः यथोक्तैः क्षपितः नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषा ॥

एवं यथोक्तान् यज्ञान् निर्वर्त्य—

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥**

यज्ञशिष्टामृतभुजः यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तत् अमृतं च यज्ञशिष्टामृतं तत् भुञ्जते इति यज्ञशिष्टामृतभुजः । यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथावि-

धिचोदितम् अन्नम् अमृताख्यं भुञ्जते इति यज्ञशिष्टामृतभुजः यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत्, कालातिक्रमापेक्षया इति सामर्थ्यात् गम्यते । न अयं लोक सर्वप्राणिसाधारणोऽपि अस्ति यथोक्तानां यज्ञानां एकोऽपि यज्ञः यस्य नास्ति सः अयज्ञः तस्य । कुतः अन्यो विशिष्टसाधनसाध्यः कुरुसत्तम ॥

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥**

एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञाः विततः विस्तीर्णाः ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेण अवगम्यमानाः ब्रह्मणो मुखे वितता उच्यन्ते; तद्यथा 'वाचि हि प्राणं जुहुमः' इत्यादयः । कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि तान् सर्वान् अनात्मजान्, निर्व्यापारो हि आत्मा । अत एवं ज्ञात्वा विमोक्ष्यसे अशुभात् । न मद्व्यापारा इमे, निर्व्यापारोऽहम् उदासीन इत्येवं ज्ञात्वा अस्मात् सम्यग्दर्शनात् मोक्ष्यसे संसारबन्धनात् इत्यर्थः ॥

'ब्रह्मार्पणम्' इत्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितम् । यज्ञाश्च अनेके उपदिष्टाः । तैः सिद्धपुरुषार्थप्रयोजनैः ज्ञानं स्तूयते । कथम्?—

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥**

श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः हे परंतप । द्रव्यमयो हि यज्ञः फलस्यारम्भकः, ज्ञानयज्ञ. न फलारम्भकः, अत. श्रेयान् प्रशस्यतर. । कथम् ? यतः सर्वं कर्म समस्तम् अखिलम् अप्रतिबद्धं पार्थ ज्ञाने मोक्षसाधने सर्वतःसंप्लुतोदकस्थानीये परिसमाप्यते अन्तर्भवतीत्यर्थ. 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किंचित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति श्रुतेः ॥

तदेतत् विशिष्टं ज्ञानं तर्हि केन प्राप्यते इत्युच्यते—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥**

तत् विद्धि विजानीहि येन विधिना प्राप्यते इति । आचार्यान् अभिगम्य, प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातः दीर्घनमस्कारः तेन, 'कथं बन्धः ? कथं मोक्षः? का विद्या ? का चाविद्या ?' इति परिप्रश्नेन, सेवया गुरुशुश्रूषया एवमादिना । प्रश्रयेण आवर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते

ज्ञानं यथोक्तविशेषणं ज्ञानिनः। ज्ञानवन्तोऽपि केचित् यथा-वत् तत्त्वदर्शनशीलाः, अपरे न, अतो विशिनष्टि तत्त्वदर्शिनः इति। ये सम्यग्दर्शिन. तैः उपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरत् इति भगवतो मतम् ॥

तथा च सति इदमपि समर्थ वचनम्—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥**

यत् ज्ञात्वा यत् ज्ञानं तैः उपदिष्टं अधिगम्य प्राप्य पुनः भूयः मोहम् एवं यथा इदानीं मोहं गतोऽसि पुनः एवं न यास्यसि हे पाण्डव। किंच—येन ज्ञानेन भूतानि अशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षात् आत्मनि प्रत्यगात्मनि 'मत्संस्थानि इमानि भूतानि' इति अथो अपि मयि वासुदेवे 'परमेश्वरे च इमानि' इति; क्षेत्रज्ञे-श्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसि इत्यर्थः ॥

किंच एतस्य ज्ञानस्य माहात्म्यम्—

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

अपि चेत् असि पापेभ्यः पापकृद्भ्यः सर्वेभ्यः अति-

शयेन पापकृत् पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापसमुद्रं संतरिष्यसि । धर्मोऽपि इह मुमुक्षोः पापम् उच्यते ॥

ज्ञानं कथं नाशयति पापमिति दृष्टान्त उच्यते—

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥**

यथा एधांसि काष्ठानि समिद्धः सम्यक् इद्धः दीप्तः अग्निः भस्मसात् भस्मीभावं कुरुते हे अर्जुन, ज्ञानमेव अग्निः ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा निर्बीजीकरोतीत्यर्थः । न हि साक्षादेव ज्ञानाग्निः कर्माणि इन्धनवत् भस्मीकर्तुं शक्नोति । तस्मात् सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणम् इत्यभिप्रायः । सामर्थ्यात् येन कर्मणा शरीरम् आरब्धं तत् प्रवृत्तफलत्वात् उपभोगेनैव क्षीयते । अतो यानि अप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि च अतीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते ॥

यतः एवम् अतः—

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥**

न हि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरम् इह विद्यते । तत् ज्ञानं स्वयमेव योगसंसिद्धः योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यताम् आपन्नः सन् मुमुक्षुः कालेन महता आत्मनि विन्दति लभते इत्यर्थः ॥

येन एकान्तेन ज्ञानप्राप्तिः भवति स उपायः उपदिश्यते—

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥**

श्रद्धावान् श्रद्धालुः लभते ज्ञानम् । श्रद्धालुत्वेऽपि भवति कश्चित् मन्दप्रस्थानः, अत आह—तत्परः, गुरूपसदनादौ अभियुक्तः ज्ञानलब्ध्युपाये श्रद्धावान् । तत्परः अपि अजितेन्द्रियः स्यात् इत्यतः आह— संयतेन्द्रियः, संयतानि विषयेभ्यो निवर्तितानि यस्य इन्द्रियाणि स संयतेन्द्रियः । य एवंभूतः श्रद्धावान् तत्परः संयतेन्द्रियश्च सः अवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति, मायावित्वादिसंभवात्, न तु तत् श्रद्धावत्त्वादौ इत्येकान्ततः ज्ञानलब्ध्युपायः । किं पुनः ज्ञानलाभात् स्यात् इत्युच्यते— ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्तिम् उपरतिम्

अचिरेण क्षिप्रमेव अधिगच्छति । सम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितः अर्थः ॥

अत्र संशय. न कर्तव्यः, पापिष्ठो हि संशयः; कथम् इति उच्यते—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥**

अज्ञश्च अनात्मज्ञश्च अश्रद्दधानश्च गुरुवाक्यशास्त्रेषु अविश्वासवांश्च संशयात्मा च संशयचित्तश्च विनश्यति । अज्ञाश्रद्दधानौ यद्यपि विनश्यतः, न तथा यथा संशयात्मा । संशयात्मा तु पापिष्ठः सर्वेषाम् । कथम्? नायं साधारणोऽपि लोकोऽस्ति । तथा न परः लोकः । न सुखम्, तत्रापि संशयोत्पत्तेः संशयात्मनः संशयचित्तस्य । तस्मात् संशयो न कर्तव्यः ॥

कस्मात्?—

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥४१॥**

योगसंन्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं

योगसंन्यस्तकर्माणम् । कथं योगसंन्यस्तकर्मेत्याह— ज्ञान-संछिन्नसंशयं ज्ञानेन आत्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो यस्य स ज्ञानसंछिन्नसंशयः । य एवं योगसंन्यस्त-कर्मा तम् आत्मवन्तम् अप्रमत्तं गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्ति अनिष्टादिरूपं फलं नारभन्ते हे धनंजय ॥

यस्मात् कर्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसंछि-न्नसंशयः न निबध्यते कर्मभिः ज्ञानाग्निदग्धकर्मत्वादेव, यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान् विनश्यति—

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम
चतुर्थोऽध्यायः ॥

तस्मात् पापिष्ठम् अज्ञानसंभूतम् अज्ञानात् अविवेकात् जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोष-हरं सम्यग्दर्शनं ज्ञानं तदेव असिः खड्गः तेन ज्ञानासिना

आत्मनः स्वस्य, आत्मविषयत्वात् संशयस्य । न हि परस्य संशयः परेण च्छेत्तव्यतां प्राप्तः, येन स्वस्येति विशेष्येत । अतः आत्मविषयोऽपि स्वस्यैव भवति । छित्त्वा एनं संशयं स्वविनाशहेतुभूतम्, योगं सम्यग्दर्शनोपायं कर्मानुष्ठानम् आतिष्ठ कुर्वित्यर्थः । उत्तिष्ठ च इदानीं युद्धाय भारत इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**चतुर्थोऽध्यायः ॥**

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

---

## पञ्चमोऽध्यायः

# पञ्चमोऽध्यायः ॥

'कर्मण्यकर्म य· पश्येत्' इत्यारभ्य 'स युक्त. कृत्स्नकर्मकृत्' 'ज्ञानाग्निदग्धकर्माणम्' 'शारीरं केवलं कर्म कुर्वन्' 'यदृच्छालाभसंतुष्ट.' 'ब्रह्मार्पणं ब्रह्म हवि·' 'कर्मजान् विद्धि तान् सर्वान्' 'सर्वं कर्माखिलं पार्थ' 'ज्ञानाग्नि. सर्वकर्माणि' 'योगसंन्यस्तकर्माणम्' इत्येतैः वचनैः सर्वकर्मसंन्यासम् अवोचत् भगवान्। 'छित्त्वैनं संशयं योगमातिष्ठ' इत्यनेन वचनेन योगं च कर्मानुष्ठानलक्षणम् अनुतिष्ठ इत्युक्तवान्। तयोरुभयोश्च कर्मानुष्ठानकर्मसंन्यासयो. स्थितिगतिवत् परस्परविरोधात् एकेन सह कर्तुमशक्यत्वात्, कालभेदेन च अनुष्ठानविधानाभावात्, अर्थात् एतयो. अन्यतरकर्तव्यताप्राप्तौ सत्यां यत् प्रशस्यतरम् एतयोः कर्मानुष्ठानकर्मसंन्यासयोः तत् कर्तव्यं न इतरत् इत्येवं मन्यमान.

प्रशस्यतरबुभुत्सया अर्जुन उवाच—'संन्यासं कर्मणां कृष्ण' इत्यादिना ॥

ननु च आत्मविद. ज्ञानयोगेन निष्ठां प्रतिपिपादयिषन् पूर्वोदाहृतैः वचनै भगवान् सर्वकर्मसंन्यासम् अवोचत्, न तु अनात्मज्ञस्य । अतश्च कर्मानुष्ठानकर्मसन्यासयोः भिन्नपुरुषविषयत्वात् अन्यतरस्य प्रशस्यतरत्वबुभुत्सया अय प्रश्न. अनुपपन्नः । सत्यमेव त्वदभिप्रायेण प्रश्नो न उपपद्यते; प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नः युज्यत एवेति वदामः । कथम्? पूर्वोदाहृतैः वचनै. भगवता कर्मसंन्यासस्य कर्तव्यतया विवक्षितत्वात्, प्राधान्यमन्तरेण च कर्तारं तस्य कर्तव्यत्वासंभवात् अनात्मविदपि कर्ता पक्षे प्राप्त अनूद्यत एव, न पुन. आत्मवित्कर्तृकत्वमेव संन्यासस्य विवक्षितम्, इत्येवं मन्वानस्य अर्जुनस्य कर्मानुष्ठानकर्मसंन्यासयोः अविद्वत्पुरुषकर्तृकत्वमपि अस्तीति पूर्वोक्तेन प्रकारेण तयो. परस्परविरोधात् अन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यम् न इतरत् इति प्रशस्यतरविविदिषया प्रश्नः न अनुपपन्नः ॥

प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुः अभिप्रायः एवमेवेति गम्यते । कथम्? 'संन्यासकर्मयोगौ निःश्रेयसकरौ

तयोस्तु कर्मयोगो विशिष्यते' इति प्रतिवचनम् । एतत् निरूप्यम्— किम् अनेन आत्मवित्कर्तृकयो. संन्यासकर्मयोगयो. नि:श्रेयसकरत्वं प्रयोजनम् उक्त्वा तयोरेव कुतश्चित् विशेषात् कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वम् उच्यते? आहोस्वित् अनात्मवित्कर्तृकयो: सन्यासकर्मयोगयो: तदुभयम् उच्यते? इति । किचात:— यदि आत्मवित्कर्तृकयो: कर्मसन्यासकर्मयोगयो: नि:श्रेयसकरत्वम्, तयोस्तु कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वम् उच्यते; यदि वा अनात्मवित्कर्तृकयो: संन्यासकर्मयोगयो: तदुभयम् उच्यते इति । अत्र उच्यते— आत्मवित्कर्तृकयो: संन्यासकर्मयोगयो. असंभवात् तयो: नि.श्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानम् इत्येतत् उभयम् अनुपपन्नम् । यदि अनात्मविद: कर्मसन्यास: तत्प्रतिकूलश्च कर्मानुष्ठानलक्षण: कर्मयोग. संभवेताम्, तदा तयो: नि:श्रेयसकरत्वोक्ति. कर्मयोगस्य च कर्मसंन्यासात् विशिष्टत्वाभिधानम् इत्येतत् उभयम् उपपद्येत । आत्मविदस्तु संन्यासकर्मयोगयो: असंभवात् तयो: नि.श्रेयसकरत्वाभिधानं कर्मसंन्यासाच्च कर्मयोग: विशिष्यते इति च अनुपपन्नम् ॥

अत्र आह— किम् आत्मविद: संन्यासकर्मयोगयो: उभयोरपि असंभव:? आहोस्वित् अन्यतरस्य असंभव:? यदा च अन्यतरस्य असंभव:, तदा किं कर्मसंन्यासस्य, उत कर्मयोगस्य? इति, असंभवे कारणं च वक्तव्यम् इति। अत्र उच्यते— आत्मविद: निवृत्तमिथ्याज्ञानत्वात् विपर्ययज्ञानमूलस्य कर्मयोगस्य असंभव: स्यात्। जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियम् आत्मानम् आत्मत्वेन यो वेत्ति तस्य आत्मविद: सम्यग्दर्शनेन अपास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसंन्यासम् उक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुर:सरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्य इह गीताशास्त्रे तत्र तत्र आत्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् अभाव: प्रतिपाद्यते यस्मात्, तस्मात् आत्मविद: निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूल: कर्मयोगो न संभवतीति युक्तम् उक्तं स्यात्॥

केषु केषु पुन: आत्मस्वरूपनिरूपणप्रदेशेषु आत्मविद: कर्माभाव: प्रतिपाद्यते इति अत्र उच्यते— 'अविनाशि तु तत्' इति प्रकृत्य 'य एनं वेत्ति हन्तारम्' 'वेदाविनाशिनं नित्यम्' इत्यादौ तत्र तत्र आत्मविद: कर्माभाव: उच्यते॥

ननु च कर्मयोगोऽपि आत्मस्वरूपनिरूपणप्रदेशेषु तत्र तत्र प्रतिपाद्यते एव; तद्यथा— 'तस्माद्युध्यस्व भारत' 'स्वधर्ममपि चावेक्ष्य' 'कर्मण्येवाधिकारस्ते' इत्यादौ। अतश्च कथम् आत्मविद. कर्मयोगस्य असंभवः स्यादिति? अत्र उच्यते— सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात्, 'ज्ञानयोगेन सांख्यानाम्' इत्यनेन सांख्यानाम् आत्मतत्त्वविदाम् अनात्मवित्कर्तृककर्मयोगनिष्ठातः निष्क्रियात्मस्वरूपावस्थानलक्षणायाः ज्ञानयोगनिष्ठाया पृथक्करणात्, कृतकृत्यत्वेन आत्मविदः प्रयोजनान्तराभावात्, 'तस्य कार्यं न विद्यते' इति कर्तव्यान्तराभाववचनाच्च, 'न कर्मणामनारम्भात्' 'संन्यासस्तु महाबाहो दु.खमाप्तुमयोगतः' इत्यादिना च आत्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, 'योगारूढस्य तस्यैव शम. कारणमुच्यते' इत्यनेन च उत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात्, शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्' इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात्, 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मसु आत्मयाथात्म्यविदः 'करोमि' इति प्रत्ययस्य समाहितचेतस्तया सदा अकर्तव्यत्वोपदेशात् आत्मतत्त्वविद· सम्यग्दर्शनविरुद्धो मिथ्याज्ञान-

हेतुकः कर्मयोगः स्वप्नेऽपि न सभवयितुं शक्यते यस्मात्, तस्मात् अनात्मवित्कर्तृकयोरेव संन्यासकर्मयोगयोः निःश्रेयसकरत्ववचनम्, तदीयाच्च कर्मसंन्यासात् पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसंन्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयात् यमनियमादिसहितत्वेन च दुरनुष्ठेयात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानम् इत्येवं प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायः निश्चीयते इति स्थितम् ॥

'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणो. सह असंभवे 'यच्छ्रेय एतयोः तद्ब्रूहि' इत्येवं पृष्टोऽर्जुनेन भगवान् सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार । 'न च संन्यसनादेव केवलात् सिद्धिं समधिगच्छति' इति वचनात् ज्ञानसहितस्य सिद्धिसाधनत्वम् इष्टम्, कर्मयोगस्य च, विधानात् । ज्ञानरहितस्य संन्यास श्रेयान्, किं वा कर्मयोगः श्रेयान्?' इति एतयोः विशेषबुभुत्सया—

अर्जुन उवाच—

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

संन्यासं परित्यागं कर्मणां शास्त्रीयाणाम् अनुष्ठेयविशेषाणां शंससि प्रशंससि कथयसि इत्येतत् । पुन॰ योगं च तेषामेव अनुष्ठानम् अवश्यकर्तव्यं शंससि । अत: मे कतरत् श्रेय. इति संशय — कि कर्मानुष्ठानं श्रेय:, कि वा तद्धानम् इति । प्रशस्यतरं च अनुष्ठेयम् । अतश्च यत् श्रेय प्रशस्यतरम् एतयो: कर्मसंन्यासकर्मयोगयो: यदनुष्ठानात् श्रेयोवाप्ति: मम स्यादिति मन्यसे, तत् एकम् अन्यतरत् सह एकपुरुषानुष्ठेयत्वासंभवात् मे ब्रूहि सुनिश्चितम् अभिप्रेतं तवेति ॥

स्वाभिप्रायम् आचक्षाणो निर्णयाय श्रीभगवानुवाच—

श्रीभगवानुवाच—

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥**

संन्यास. कर्मणां परित्याग: कर्मयोगश्च तेषामनुष्ठानं तौ उभौ अपि नि:श्रेयसकरौ मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेन । उभौ यद्यपि नि:श्रेयसकरौ, तथापि तयोस्तु नि:श्रेयसहेत्वो: कर्मसंन्यासात् केवलात् कर्मयोगो विशिष्यते इति कर्मयोगं स्तौति ॥

कस्मात् इति आह—

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥**

ज्ञेयः ज्ञातव्यः स कर्मयोगी नित्यसंन्यासी इति यो न द्वेष्टि किंचित् न काङ्क्षति दुःखसुखे तत्साधने च । एवंविधो य·, कर्मणि वर्तमानोऽपि स नित्यसंन्यासी इति ज्ञातव्यः इत्यर्थः । निर्द्वन्द्वः द्वन्द्ववर्जितः हि यस्मात् महाबाहो सुखं बन्धात् अनायासेन प्रमुच्यते ॥

संन्यासकर्मयोगयोः भिन्नपुरुषानुष्ठेययोः विरुद्धयोः फलेऽपि विरोधो युक्त, न तु उभयोः निःश्रेयसकरत्वमेव इति प्राप्ते इदम् उच्यते—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥**

सांख्ययोगौ पृथक् विरुद्धभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः । पण्डितास्तु ज्ञानिन एकं फलम् अविरुद्धम् इच्छन्ति । कथम्? एकमपि सांख्ययोगयोः सम्यक् आस्थित. सम्यगनुष्ठितवान् इत्यर्थः, उभयोः विन्दते फलम् । उभयोः तदेव हि निःश्रेयसं फलम्, अतः न फले विरोधः अस्ति ॥

ननु संन्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथम् इह अप्रकृतं ब्रवीति? नैष दोषः— यद्यपि अर्जुनेन संन्यासं कर्मयोगं च केवलम् अभिप्रेत्य प्रश्नः कृतः, भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ 'सांख्ययोगौ' इति । तौ एव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्यौ इति भगवतो मतम् । अतः न अप्रकृतप्रक्रियेति ॥

एकस्यापि सम्यगनुष्ठानात् कथम् उभयोः फलं विन्दते इति उच्यते—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥**

यत् सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यम्, तत् योगैरपि ज्ञानप्राप्त्युपायत्वेन ईश्वरे समर्प्य कर्माणि आत्मनः फलम् अनभिसंधाय अनुतिष्ठन्ति ये ते योगाः योगिनः तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यते इत्यभिप्रायः । अतः एकं सांख्यं च योगं च यः पश्यति फलैकत्वात् स पश्यति सम्यक् पश्यतीत्यर्थः ॥

एवं तर्हि योगात् संन्यास एव विशिष्यते, कथं तर्हि इदमुक्तम् 'तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते' इति? शृणु तत्र कारणम्— त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं च अभिप्रेत्य तयो अन्यतर. क. श्रेयान् इति। तदनुरूपं प्रतिवचनं मया उक्तं कर्मसंन्यासात् कर्मयोग विशिष्यते इति ज्ञानम् अनपेक्ष्य। ज्ञानापेक्षस्तु संन्यास सांख्यमिति मया अभिप्रेतः। परमार्थयोगश्च स एव। यस्तु कर्मयोगः वैदिकः स च तादर्थ्यात् योगः संन्यास इति च उपचर्यते। कथं तादर्थ्यम् इति उच्यते—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥**

संन्यासस्तु पारमार्थिकः हे महाबाहो दुःखम् आप्तुं प्राप्तुम् अयोगत योगेन विना। योगयुक्तः वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः, मुनिः मननात् ईश्वरस्वरूपस्य मुनि., ब्रह्म— परमात्मज्ञाननिष्ठालक्षणत्वात् प्रकृतः संन्यासः ब्रह्म उच्यते, 'न्यास इति ब्रह्मा ब्रह्मा हि परः' इति श्रुतेः— ब्रह्म परमार्थसंन्यासं परमार्थज्ञाननिष्ठालक्षणं नचिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति। अतः मया उक्तम् 'कर्मयोगो विशिष्यते' इति ॥

यदा पुनः अयं सम्यग्ज्ञानप्राप्त्युपायत्वेन—

**योगयुक्तो विशुद्धात्मा**
**विजितात्मा जितेन्द्रियः।**
**सर्वभूतात्मभूतात्मा**
**कुर्वन्नपि न लिप्यते ॥ ७ ॥**

योगेन युक्तः योगयुक्तः, विशुद्धात्मा विशुद्धसत्त्वः, विजितात्मा विजितदेहः, जितेन्द्रियश्च, सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूतः आत्मा प्रत्यक्चेतनो यस्य सः सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः, स तत्रैवं वर्तमानः लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिः बध्यते इत्यर्थः ॥

न च असौ परमार्थतः करोतीत्यतः—

**नैव किंचित्करोमीति**
**युक्तो मन्येत तत्त्ववित्।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्र-**
**न्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥**
**प्रलपन् विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

नैव किंचित् करोमीति युक्तः समाहितः सन् मन्येत चिन्तयेत्, तत्त्ववित् आत्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः ॥

कदा कथं वा तत्त्वमवधारयन् मन्येत इति, उच्यते— पश्यन्निति । मन्येत इति पूर्वेण संबन्धः । यस्य एवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव, पश्यतः सम्यग्दर्शिनः तस्य सर्वकर्मसंन्यासे एव अधिकारः, कर्मणः अभावदर्शनात् । न हि मृगतृष्णिकायाम् उदकबुद्ध्या पानाय प्रवृत्तः उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥

यस्तु पुनः अतत्त्ववित् प्रवृत्तश्च कर्मयोगे—

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्मणि ईश्वरे आधाय निक्षिप्य 'तदर्थं कर्म करोमि' इति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते पद्मपत्रमिव अम्भसा उदकेन । केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य कर्मणः स्यात् ॥

यस्मात्—

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥**

कायेन देहेन मनसा बुद्ध्या च केवलैः ममत्ववर्जितैः 'ईश्वरायैव कर्म करोमि, न मम फलाय' इति ममत्वबुद्धिशून्यैः इन्द्रियैरपि— केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते—सर्वव्यापारेषु ममतावर्जनाय । योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् आत्मशुद्धये सत्त्वशुद्धये इत्यर्थः । तस्मात् तत्रैव तव अधिकारः इति कुरु कर्मैव ॥

यस्माच्च—

**युक्तः कर्मफलं त्यक्त्वा**
**शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण**
**फले सक्तो निबध्यते ॥ १२ ॥**

युक्तः 'ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः । यस्तु पुनः अयुक्तः असमाहितः कामकारेण करणं कारः कामस्य

कारः कामकारः तेन कामकारेण, कामप्रेरिततयेत्यर्थः, 'मम फलाय इदं करोमि कर्म' इत्येवं फले सक्तः निबध्यते । अतः त्वं युक्तो भव इत्यर्थः ॥

यस्तु परमार्थदर्शी स.—

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या, कर्मादौ अकर्मसंदर्शनेन संत्यज्येत्यर्थः, आस्ते तिष्ठति सुखम् । त्यक्तवाङ्मनःकायचेष्टः निरायासः प्रसन्नचित्तः आत्मनः अन्यत्र निवृत्तसर्वबाह्यप्रयोजन. इति 'सुखम् आस्ते' इत्युच्यते । वशी जितेन्द्रिय इत्यर्थः । क कथम् आस्ते इति, आह— नवद्वारे पुरे । सप्त शीर्षण्यानि आत्मन उपलब्धिद्वाराणि, अवाक् द्वे मूत्रपुरीषविसर्गार्थे, तै. द्वारैः नवद्वारं पुरम् उच्यते शरीरम्, पुरमिव पुरम्, आत्मैकस्वामिकम्, तदर्थप्रयोजनैश्च इन्द्रियमनोबुद्धिविषयैः अनेकफलविज्ञानस्य उत्पादकैः पौरैरिव अधिष्ठितम् । तस्मिन् नवद्वारे पुरे देही सर्वं कर्म संन्यस्य आस्ते, किं विशेषणेन? सर्वो हि देही संन्यासी असंन्यासी वा देहे एव आस्ते,

तत्र अनर्थकं विशेषणमिति । उच्यते— यस्तु अज्ञः देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि 'गेहे भूमौ आसने वा आसे' इति मन्यते । न हि देहमात्रात्मदर्शिनः गेहे इव देहे आसे इति प्रत्ययः संभवति । देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु 'देहे आसे' इति प्रत्ययः उपपद्यते । परकर्मणां च परस्मिन् आत्मनि अविद्यया अध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते । उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेहे इव देहे एव नवद्वारे पुरे आसनम् प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः । देहे एव आस्ते इति अस्त्येव विशेषणफलम्, विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् ॥

यद्यपि कार्यकरणकर्माणि अविद्यया आत्मनि अध्यारोपितानि 'संन्यस्यास्ते' इत्युक्तम्, तथापि आत्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यात् इति आशङ्क्य आह— नैव कुर्वन् स्वयम्, न च कार्यकरणानि कारयन् क्रियासु प्रवर्तयन् । किं यत् तत् कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत् संन्यासात् न संभवति, यथा गच्छतो गतिः गमनव्यापारपरित्यागे न स्यात् तद्वत्? किं वा स्वत एव आत्मनः न अस्ति इति? अत्र उच्यते— न अस्ति आत्मनः

स्वत. कर्तृत्वं कारयितृत्वं च। उक्तं हि 'अविकार्योऽय-मुच्यते' 'शरीरस्थोऽपि न करोति न लिप्यते' इति। 'ध्यायतीव लेलायतीव' इति श्रुते ॥

किंच—

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

न कर्तृत्वं स्वतः कुरु इति नापि कर्माणि रथघटप्रासादा-दीनि ईप्सिततमानि लोकस्य सृजति उत्पादयति प्रभुः आ-त्मा। नापि रथादि कृतवतः तत्फलेन संयोगं न कर्मफल-संयोगम्। यदि किंचिदपि स्वतः न करोति न कारयति च देही, कः तर्हि कुर्वन् कारयंश्च प्रवर्तते इति, उच्यते— स्व-भावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिः माया प्रवर्तते 'दैवी हि' इत्यादिना वक्ष्यमाणा ॥

परमार्थतस्तु—

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

न आदत्ते न च गृह्णाति भक्तस्यापि कस्यचित् पापम्। न चैव आदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः। किमर्थं तर्हि भक्तैः

पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यते इत्याह— अज्ञानेन आवृतं ज्ञानं विवेकविज्ञानम्, तेन मुह्यन्ति 'करोमि कारयामि भोक्ष्ये भोजयामि' इत्येवं मोहं गच्छन्ति अविवेकिनः संसारिणो जन्तवः ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥**

ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितम् आत्मनः भवति, तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं रूपजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत् परं परमार्थतत्त्वम् ॥

यत् परं ज्ञानं प्रकाशितम्—

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

तस्मिन् ब्रह्मणि गता बुद्धिः येषां ते तद्बुद्धयः, तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः, तन्निष्ठाः निष्ठा अभिनिवेशः तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः, तत्परायणाश्च तदेव

परम् अयनं परा गतिः येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः। येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते गच्छन्ति एवंविधाः अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषा ते ज्ञाननिर्धूतकल्मषाः यतयः इत्यर्थः॥

येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्ति इत्युच्यते—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥**

विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विनयः उपशमः, ताभ्यां विद्याविनयाभ्यां संपन्नः विद्याविनयसंपन्नः विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिन। विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि, संस्कारहीनायाम् अत्यन्तमेव केवलतामसे हस्त्यादौ च, सत्त्वादिगुणैः तज्जैश्च संस्कारैः तथा राजसैः तथा तामसैश्च संस्कारैः अत्यन्तमेव अस्पृष्टं समम् एकम् अविक्रियं तत् ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः॥

ननु अभोज्यान्नाः ते दोषवन्तः, 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेः । न ते दोषवन्तः । कथम् ? —

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥**

इह एव जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गः जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम् । निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवत् इव विभाव्यते, तथापि तद्दोषैः अस्पृष्टम् इति निर्दोषं दोषवर्जितं हि यस्मात्; नापि स्वगुणभेदभिन्नम्, निर्गुणत्वात् चैतन्यस्य । वक्ष्यति च भगवान् इच्छादीनां क्षेत्रधर्मत्वम्, 'अनादित्वान्निर्गुणत्वात्' इति च । नापि अन्त्या विशेषाः आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः । अतः समं ब्रह्म एकं च । तस्मात् ब्रह्मणि एव ते स्थिताः । तस्मात् न दोषगन्धमात्रमपि तान् स्पृशति, देहादिसंघातात्मदर्शनाभिमानाभावात् तेषाम् । देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत् सूत्रम् 'समासमाभ्यां विषमसमे पूजातः' इति, पूजाविषयत्वेन विशेषणात् । दृश्यते हि ब्रह्मवित् षडङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसंबन्धः कारणम् ।

ब्रह्म तु सर्वगुणदोषसबन्धवर्जितमित्यतः 'ब्रह्मणि ते स्थिता.' इति युक्तम् । कर्मविषयं च 'समासमाभ्याम्' इत्यादि । इद तु सर्वकर्मसन्यासविषयं प्रस्तुतम्, 'सर्वकर्माणि मनसा' इत्यारभ्य आध्यायपरिसमाप्तेः ॥

यस्मात् निर्दोषं समं ब्रह्म आत्मा, तस्मात्—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

न प्रहृष्येत् प्रहर्षं न कुर्यात् प्रियम् इष्टं प्राप्य लब्ध्वा । न उद्विजेत् प्राप्य च अप्रियम् अनिष्टं लब्ध्वा । देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसंभवात् । किंच— 'सर्वभूतेषु एकः समः निर्दोषः आत्मा' इति स्थिरा निर्विचिकित्सा बुद्धिः यस्य सः स्थिरबुद्धिः असंमूढः संमोहवर्जितश्च स्यात् यथोक्तब्रह्मवित् ब्रह्मणि स्थितः, अकर्मकृत् सर्वकर्मसंन्यासी इत्यर्थः

किंच, ब्रह्मणि स्थितः—

**बाह्यस्पर्शेष्वसक्तात्मा**
**विन्दत्यात्मनि यत्सुखम् ।**

**स ब्रह्मयोगयुक्तात्मा**
**सुखमक्षयमश्नुते ॥ २१ ॥**

बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः तेषु बाह्यस्पर्शेषु, असक्तः आत्मा अन्तःकरणं यस्य सः अयम् असक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत् सुखं तत् विन्दति इत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिः ब्रह्मयोगः तेन ब्रह्मयोगेन युक्तः समाहितः तस्मिन् व्यापृतः आत्मा अन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा, सुखम् अक्षयम् अश्नुते व्याप्नोति । तस्मात् बाह्यविषयप्रीतेः क्षणिकायाः इन्द्रियाणि निवर्तयेत् आत्मनि अक्षयसुखार्थी इत्यर्थः ॥

इतश्च निवर्तयेत्—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥**

ये हि यस्मात् संस्पर्शजाः विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगा भुक्तयः दुःखयोनय एव ते, अविद्याकृतत्वात् । दृश्यन्ते हि आध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । यथा इहलोके

तथा परलोकेऽपि इति गम्यते एवशब्दात्। न संसारे सुखस्य गन्धमात्रमपि अस्ति इति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत्। न केवलं दुःखयोनय एव, आद्यन्तवन्तश्च, आदिः विषयेन्द्रियसंयोगो भोगानाम् अन्तश्च तद्वियोग एव; अतः आद्यन्तवन्तः अनित्याः, मध्यक्षणभावित्वात् इत्यर्थः। कौन्तेय, न तेषु भोगेषु रमते बुधः विवेकी अवगतपरमार्थतत्त्वः, अत्यन्तमूढानामेव हि विषयेषु रतिः दृश्यते, यथा पशुप्रभृतीनाम्॥

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवारश्च इति तत्परिहारे यत्नाधिक्यं कर्तव्यम् इत्याह भगवान्—

**शक्नोतीहैव यः सोढुं प्राक्छरीरविमोक्षणात्।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः॥**

शक्नोति उत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् आ मरणात् इत्यर्थः। मरणसीमाकरणं जीवतोऽवश्यंभावि हि कामक्रोधोद्भवो वेगः, अनन्तनिमित्तवान् हि सः इति यावत् मरणं तावत् न विस्रम्भणीय इत्यर्थः। कामः इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्य-

माणे वा अनुभूते सुखहेतौ या गर्धिः तृष्णा स कामः, क्रोधश्च आत्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः सः क्रोधः, तौ कामक्रोधौ उद्भवो यस्य वेगस्य सः कामक्रोधोद्भवः वेगः। रोमाञ्चनप्रहृष्टनेत्रवदनादिलिङ्गः अन्तःकरणप्रक्षोभरूप कामोद्भवो वेगः, गात्रप्रकम्पप्रस्वेदसंदष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः, तं कामक्रोधोद्भवं वेगं यः उत्सहते प्रसहते सोढुं प्रसहितुम्, सः युक्तः योगी सुखी च इह लोके नरः ॥

कथंभूतश्च ब्रह्मणि स्थितः ब्रह्म प्राप्नोति इति आह भगवान्—

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥**

यः अन्तःसुखः अन्तः आत्मनि सुखं यस्य सः अन्तःसुखः, तथा अन्तरेव आत्मनि आरामः आरमणं क्रीडा यस्य सः अन्तरारामः, तथा एव अन्तः एव आत्मन्येव ज्योतिः प्रकाशो यस्य सः अन्तर्ज्योतिरेव, यः ईदृशः सः योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षम् इह जीवन्नेव ब्रह्मभूतः सन् अधिगच्छति प्राप्नोति ॥

किंच—

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥२५॥**

लभन्ते ब्रह्मनिर्वाणं मोक्षम् ऋषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापाः निर्दोषाः छिन्नद्वैधाः छिन्नसंशयाः यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हिते आनुकूल्ये रताः अहिंसका इत्यर्थः ॥

किंच—

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥**

कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानाम् अभितः उभयतः जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनां विदितः ज्ञातः आत्मा येषां ते विदितात्मानः तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यः मुक्तिः उक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदे अब्रवीत्, वक्ष्यति च । अथ इदानीं

ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामि इति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति स्म—

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥**

स्पर्शान् शब्दादीन् कृत्वा बहिः बाह्यान्— श्रोत्रादिद्वारेण अन्तः बुद्धौ प्रवेशिता शब्दादयः विषयाः तान् अचिन्तयतः शब्दादयो बाह्या बहिरेव कृता भवन्ति— तान् एवं बहिः कृत्वा चक्षुश्चैव अन्तरे भ्रुवोः 'कृत्वा' इति अनुषज्यते । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा, यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनः बुद्धिश्च यस्य सः यतेन्द्रियमनोबुद्धिः, मननात् मुनिः संन्यासी, मोक्षपरायणः एवं देहसंस्थानात् मोक्षपरायणः मोक्ष एव परम् अयनं परा गतिः यस्य सः अयं मोक्षपरायणो मुनिः भवेत् । विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः ते विगताः यस्मात् सः विगतेच्छाभयक्रोधः, यः एवं वर्तते सदा संन्यासी, मुक्त एव सः न तस्य मोक्षायान्यः कर्तव्योऽस्ति ॥

एवं समाहितचित्तेन किं विज्ञेयम् इति, उच्यते—

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम

पञ्चमोऽध्यायः ॥

भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तम् ईश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**पञ्चमोऽध्यायः ॥**

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

---

## षष्ठोऽध्यायः

# षष्ठोऽध्यायः ॥

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रति अन्तरङ्गस्य सूत्रभूताः श्लोकाः 'स्पर्शान् कृत्वा बहिः' इत्यादयः उपदिष्टाः। तेषां वृत्तिस्थानीयः अयं षष्ठोऽध्यायः आरभ्यते। तत्र ध्यानयोगस्य बहिरङ्गं कर्म इति, यावत् ध्यानयोगारोहणसमर्थः तावत् गृहस्थेन अधिकृतेन कर्तव्यं कर्म इत्यतः तत् स्तौति— अनाश्रित इति ॥

ननु किमर्थं ध्यानयोगारोहणसीमाकरणम्, यावता अनुष्ठेयमेव विहितं कर्म यावज्जीवम्। न, 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इति विशेषणात्, आरूढस्य च शमेनैव संबन्धकरणात्। आरुरुक्षोः आरूढस्य च शमः कर्म च उभयं कर्तव्यत्वेन अभिप्रेतं चेत्स्यात्, तदा 'आरुरुक्षोः'

'आरूढस्य च' इति शमकर्मविषयभेदेन विशेषणं विभागकरणं च अनर्थकं स्यात् ॥

तत्र आश्रमिणां कश्चित् योगमारुरुक्षुः भवति, आरूढश्च कश्चित्, अन्ये न आरुरुक्षवः न च आरूढाः, तानपेक्ष्य 'आरुरुक्षोः' 'आरूढस्य च' इति विशेषणं विभागकरणं च उपपद्यत एवेति चेत्, न, 'तस्यैव' इति वचनात्, पुन योगग्रहणाच्च 'योगारूढस्य' इति, य आसीत् पूर्वं योगमारुरुक्षुः, तस्यैव आरूढस्य शम एव कर्तव्य. कारण योगफलं प्रति उच्यते इति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः । योगविभ्रष्टवचनाच्च— गृहस्थस्य चेत् कर्मिणो योगो विहितः षष्ठे अध्याये, सः योगविभ्रष्टोऽपि कर्मगति कर्मफलं प्राप्नोति इति तस्य नाशाशङ्का अनुपपन्ना स्यात् । अवश्यं हि कृतं कर्म काम्यं नित्यं वा— मोक्षस्य नित्यत्वात् अनारभ्यत्वे— स्वं फलं आरभत एव । नित्यस्य च कर्मण· वेदप्रमाणावबुद्धत्वात् फलेन भवितव्यम् इति अवोचाम, अन्यथा वेदस्य आनर्थक्यप्रसङ्गात् इति । न च कर्मणि सति उभयविभ्रष्टवचनम्, अर्थवत् कर्मणो विभ्रंशकारणानुपपत्तेः ॥

कर्म कृतम् ईश्वरे संन्यस्य इत्यतः कर्तुः कर्म फलं

नारभत इति चेत्, न, ईश्वरे संन्यासस्य अधिकतरफलहेतुत्वोपपत्तेः ॥

मोक्षायैव इति चेत्, स्वकर्मणां कृतानां ईश्वरे संन्यासो मोक्षायैव, न फलान्तराय योगसहितः, योगाच्च विभ्रष्टः; इत्यतः तं प्रति नाशाशङ्का युक्तैव इति चेत्, न; 'एकाकी यतचित्तात्मा निराशीरपरिग्रह.' 'ब्रह्मचारिव्रते स्थितः' इति कर्मसंन्यासविधानात् । न च अत्र ध्यानकाले स्त्रीसहायत्वाशङ्का, येन एकाकित्वं विधीयते । न च गृहस्थस्य 'निराशीरपरिग्रहः' इत्यादिवचनम् अनुकूलम् । उभयविभ्रष्टप्रश्नानुपपत्तेश्च ॥

अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं च उक्तम्, प्रतिषिद्धं च निरग्नेः अक्रियस्य च संन्यासित्वं योगित्वं चेति चेत्, न, ध्यानयोगं प्रति बहिरङ्गस्य सतः कर्मण फलाकाङ्क्षासंन्यासस्तुतिपरत्वात् । न केवलं निरग्निः अक्रियः एव संन्यासी योगी च । किं तर्हि? कर्म्यपि, कर्मफलासङ्गं संन्यस्य कर्मयोगम् अनुतिष्ठन् सत्त्वशुद्ध्यर्थम्, 'स संन्यासी च योगी च भवति' इति स्तूयते । न च एकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिः चतुर्थाश्रमप्रतिषेधश्च उपपद्यते । न च प्रसिद्धं निरग्नेः अक्रियस्य परमार्थसंन्यासिनः

श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान्। स्ववचनविरोधाच्च— 'सर्वकर्माणि मनसा संन्यस्य...नैव कुर्वन्न कारयन् आस्ते' 'मौनी संतुष्टो येन केनचित् अनिकेतः स्थिरमतिः' 'विहाय कामान्यः सर्वान् पुमांश्चरति निःस्पृहः' 'सर्वारम्भपरित्यागी' इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि, तैः विरुध्येत चतुर्थाश्रमप्रतिषेधः। तस्मात् मुनेः योगम् आरुरुक्षोः प्रतिपन्नगार्हस्थ्यस्य अग्निहोत्रादिकर्म फलनिरपेक्षम् अनुष्ठीयमान ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यते इति 'स संन्यासी च योगी च' इति स्तूयते ॥

श्रीभगवानुवाच—

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥**

अनाश्रित न आश्रितः अनाश्रित.। किम्? कर्मफलं कर्मणां फलं कर्मफलं यत् तदनाश्रितः, कर्मफलतृष्णारहित इत्यर्थः। यो हि कर्मफले तृष्णावान् सः कर्मफलमाश्रितो भवति, अय तु तद्विपरीतः, अतः अनाश्रितः कर्मफलम्। एवंभूतः सन् कार्यं कर्तव्यं नित्यं काम्यविपरीतम् अग्निहो-

त्रादिकं कर्म करोति निर्वर्तयति यः कश्चित् ईदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यते इत्येवमर्थमाह— 'स संन्यासी च योगी च' इति । संन्यासः परित्यागः स यस्यास्ति स संन्यासी च, योगी च योगः चित्तसमाधानं स यस्यास्ति स योगी च इति एवंगुणसंपन्नः अयं मन्तव्यः, न केवलं निरग्निः अक्रिय एव संन्यासी योगी च इति मन्तव्यः । निर्गताः अग्नयः कर्माङ्गभूताः यस्मात् स निरग्निः, अक्रियश्च अनग्निसाधना अपि अविद्यमानाः क्रियाः तपोदानादिकाः यस्य असौ अक्रियः ॥

ननु च निरग्नेः अक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम् । कथम् इह साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं च अप्रसिद्धमुच्यते इति । नैष दोषः, कयाचित् गुणवृत्त्या उभयस्य संपिपादयिषितत्वात् । तत् कथम्? कर्मफलसंकल्पसंन्यासात् संन्यासित्वम्, योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागात् योगित्व च इति गौणमुभयम्, न पुनः मुख्यं संन्यासित्वं योगित्वं च अभिप्रेतमित्येतमर्थं दर्शयितुमाह—

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥**

यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासम् इति प्राहुः श्रुतिस्मृतिविदः, योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव । कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यते इत्यपेक्षायाम् इदमुच्यते— अस्ति हि परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य । यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यति इत्येतमर्थं दर्शयिष्यन् आह— न हि यस्मात् असंन्यस्तसंकल्पः असंन्यस्तः अपरित्यक्तः फलविषयः संकल्पः अभिसंधिः येन सः असंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति न संभवतीत्यर्थः, फलसंकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्मात् यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत् स योगी समाधानवान् अविक्षिप्तचित्तो भवेत्, चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः ॥

एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वम् उक्तम् । ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वा अधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

आरुरुक्षोः आरोढुमिच्छतः, अनारूढस्य, ध्यानयोगे अवस्थातुमशक्तस्यैवेत्यर्थः । कस्य तस्य आरुरुक्षोः? मुनेः, कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षो? योगम् । कर्म कारणं साधनम् उच्यते । योगारूढस्य पुनः तस्यैव शमः उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढस्य साधनम् उच्यते इत्यर्थः । यावद्यावत् कर्मभ्यः उपरमते, तावत्तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्तं व्यासेन—
'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः'
इति ॥

अथेदानीं कदा योगारूढो भवति इत्युच्यते—

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

यदा समाधीयमानचित्तो योगी हि इन्द्रियार्थेषु इन्द्रियाणामर्थाः शब्दादयः तेषु इन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या न अनुषज्जते अनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसंकल्पसंन्यासी सर्वान् संकल्पान् इहामुत्रार्थकामहेतून् संन्यसितुं शीलम् अस्य इति सर्वसंकल्पसंन्यासी, योगारूढः प्राप्तयोग इत्येतत्, तदा तस्मिन् काले उच्यते । 'सर्वसंकल्पसंन्यासी' इति वचनात् सर्वांश्च कामान् सर्वाणि च कर्माणि संन्यस्येदित्यर्थः । संकल्पमूला हि सर्वे कामाः—'संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः । काम जानामि ते मूलं संकल्पात्किल जायसे । न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि' इत्यादिस्मृतेः । सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति, 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इत्यादिश्रुतिभ्यः, 'यद्यद्धि कुरुते जन्तुः तत्तत् कामस्य चेष्टितम्' इत्यादिस्मृतिभ्यश्च; न्यायाच्च— न हि सर्वसंकल्पसंन्यासे कश्चित् स्पन्दितुमपि शक्तः । तस्मात्

'सर्वसंकल्पसंन्यासी' इति वचनात् सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान्॥

यदा एवं योगारूढः, तदा तेन आत्मा उद्धृतो भवति संसारादनर्थजातात्। अतः—

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥५॥**

उद्धरेत् संसारसागरे निमग्नम् आत्मना आत्मानं ततः उत् ऊर्ध्वं हरेत् उद्धरेत्, योगारूढतामापादयेदित्यर्थः। न आत्मानम् अवसादयेत् न अधः नयेत्, न अधः गमयेत्। आत्मैव हि यस्मात् आत्मनः बन्धुः। न हि अन्यः कश्चित् बन्धुः, यः संसारमुक्तये भवति। बन्धुरपि तावत् मोक्षं प्रति प्रतिकूल एव, स्नेहादिबन्धनायतनत्वात्। तस्मात् युक्तमवधारणम् 'आत्मैव ह्यात्मनो बन्धुः' इति। आत्मैव रिपु शत्रुः। यः अन्यः अपकारी बाह्यः शत्रुः सोऽपि आत्मप्रयुक्त एवेति युक्तमेव अवधारणम् 'आत्मैव रिपुरात्मन' इति॥

आत्मैव बन्धुः आत्मैव रिपुः आत्मनः इत्युक्तम्। तत्र किंलक्षण आत्मा आत्मनो बन्धुः, किंलक्षणो वा आत्मा आत्मनो रिपुः इत्युच्यते—

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥**

बन्धुः आत्मा आत्मनः तस्य, तस्य आत्मनः स आत्मा बन्धु येन आत्मना आत्मैव जितः, आत्मा कार्यकरणसंघातो येन वशीकृतः, जितेन्द्रिय इत्यर्थः । अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेत आत्मैव शत्रुवत्, यथा अनात्मा शत्रु आत्मन. अपकारी, तथा आत्मा आत्मन अपकारे वर्तेत इत्यर्थः ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

जितात्मन. कार्यकरणसंघात आत्मा जितो येन सः जितात्मा तस्य जितात्मनः, प्रशान्तस्य प्रसन्नान्तःकरणस्य सत· संन्यासिनः परमात्मा समाहित. साक्षादात्मभावेन वर्तते इत्यर्थः । किंच शीतोष्णसुखदु.खेषु तथा माने अपमाने च मानापमानयो. पूजापरिभवयो· सम. स्यात् ॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥**

ज्ञानविज्ञानतृप्तात्मा ज्ञान शास्त्रोक्तपदार्थानां परिज्ञानम् , विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम् , ताभ्यां ज्ञानविज्ञानाभ्यां तृप्त. संजातालंप्रत्यय. आत्मा अन्त:करणं यस्य स: ज्ञानविज्ञानतृप्तात्मा, कूटस्थ: अप्रकम्प्य·, भवति इत्यर्थ· , विजितेन्द्रियश्च । य ईदृश , युक्त: समाहित. इति स उच्यते कथ्यते । स योगी समलोष्टाश्मकाञ्चन: लोष्टाश्मकाञ्चनानि समानि यस्य स: समलोष्टाश्मकाञ्चन: ॥

किंच—

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

'सुहृत्' इत्यादिश्लोकार्धम् एक पदम् । सुहृत् इति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान् , अरि: शत्रु , उदासीन न कस्यचित् पक्षं भजते, मध्यस्थ. यो विरुद्धयो: उभयो. हितैषी, द्वेष्य: आत्मन: अप्रिय:, बन्धु. संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेषु एतेषु समबुद्धि: 'क: किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थ: । विशिष्यते, 'विमुच्यते' इति वा पाठान्तरम् । योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थ: ॥

अत एवमुत्तमफलप्राप्तये—

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि एकान्ते गिरिगुहादौ स्थितः सन् एकाकी असहायः । 'रहसि स्थित एकाकी च' इति विशेषणात् संन्यासं कृत्वा इत्यर्थः । यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा, निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्चेत्यर्थः । संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः ॥

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते । तत्र आसनमेव तावत् प्रथममुच्यते—

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥**

शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं ना-

तीव उच्छ्रित न अपि अतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं चैलाजिनकुशोत्तरम् । पाठक्रमाद्विपरीतः अत्र क्रमः चैलादीनाम् ॥

प्रतिष्ठाप्य, किम्?—

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥**

तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात् । कथम्? सर्वविषयेभ्य. उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रिय. चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य सः यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इत्याह— आत्मविशुद्धये अन्त.करणस्य विशुद्ध्यर्थमित्येतत् ॥

बाह्यमासनमुक्तम्, अधुना शरीरधारणं कथम् इत्युच्यते—

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥**

समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च । समं धारयतः चलनं

संभवति, अतः विशिनष्टि— अचलमिति । स्थिरः स्थिरो भूत्वा इत्यर्थः । स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेव इति । इवशब्दो लुप्तो द्रष्टव्यः । न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम् । किं तर्हि? चक्षुषो दृष्टिसंनिपातः । स च अन्तःकरणसमाधानापेक्षो विवक्षित । स्वनासिकाग्रसप्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव समाधीयेत, नात्मनि । आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मन. कृत्वा' इति । तस्मात् इवशब्दलोपेन अक्ष्णो दृष्टिसंनिपात एव 'सप्रेक्ष्य' इत्युच्यते । दिशश्च अनवलोकयन् दिशां च अवलोकनमन्तराकुर्वन् इत्येतत् ॥

किंच—

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥**

प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरण यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः, ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः, तदनुष्ठाता भवेदित्यर्थः । किंच, मन. संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः

मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन् आसीत उपविशेत् । मत्परः अहं परो यस्य सोऽयं मत्परो भवति । कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि? राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥

अथेदानीं योगफलमुच्यते—

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥**

युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधानेन सदा आत्मानं सर्वदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्षः तत् परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्, मत्संस्थां मदधीनाम् अधिगच्छति प्राप्नोति ॥

इदानीं योगिनः आहारादिनियम उच्यते—

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥**

न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतः न योगः अस्ति। न च एकान्तम् अनश्नतः योगः अस्ति। 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयोऽन्नं न तदवति' इति श्रुतेः। तस्मात् योगी न आत्मसंमितात् अन्नात् अधिकं न्यूनं वा अश्नीयात्। अथवा, योगिनः योगशास्त्रे परिपठितात् अन्नपरिमाणात् अतिमात्रमश्नतः योगो नास्ति। उक्तं हि—'अर्धं सव्यञ्जनान्नस्य तृतीयमुदकस्य च। वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादिपरिमाणम्। तथा— न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं जाग्रतो भवति च अर्जुन॥

कथं पुनः योगो भवति इत्युच्यते—

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥१७॥**

युक्ताहारविहारस्य आह्रियते इति आहारः अन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अव-

बोधश्च तौ नियतकालौ यस्य तस्य, युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः भवतीत्यर्थः ॥

अथ अधुना कदा युक्तो भवति इत्युच्यते—

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥**

यदा विनियतं विशेषेण नियतं सयतम् एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्ताम् आत्मन्येव केवले अवतिष्ठते, स्वात्मनि स्थिति लभते इत्यर्थः । नि.स्पृहः सर्वकामेभ्यः निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सः युक्त. समाहितः इत्युच्यते तदा तस्मिन्काले ॥

तस्य योगिनः समाहित यत् चित्त तस्योपमा उच्यते—

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥**

यथा दीपः प्रदीपः निवातस्थः निवाते वातवर्जिते देशे स्थितः न इङ्गते न चलति, सा उपमा उपमीयते अनया

इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्—

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥**

यत्र यस्मिन काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्त.करणेन आत्मानं परं चैतन्यं ज्योति.स्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते ॥

किंच—

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥**

सुखम् आत्यन्तिकं अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः, यत् तत् बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम्

अविषयजनितमित्यर्थः, वेत्ति तत् ईदृशं सुखमनुभवति यत्र यस्मिन् काले, न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः ॥

किंच—

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥**

यं लब्ध्वा यम् आत्मलाभं लब्ध्वा प्राप्य च अपरम् अन्यत् लाभं लाभान्तरं ततः अधिकम् अस्तीति न मन्यते न चिन्तयति। किंच, यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते ॥

'यत्रोपरमते' इत्याद्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः—

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥**

तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं

दु:खसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयो' योगसाधनत्वविधानार्थम् । स यथोक्तफलो योग: निश्चयेन अध्यवसायेन योक्तव्य. अनिर्विण्णचेतसा न निर्विण्णम अनिर्विण्णम् । कि तत्? चेत तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥

किंच—

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

संकल्पप्रभवान् संकल्प: प्रभव: येषां कामानां ते संकल्पप्रभवा: कामा: तान् त्यक्त्वा परित्यज्य सर्वान अशेषत: निर्लेपेन । किच, मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्तत. समन्तात् ॥

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥**

शनै: शनै: न सहसा उपरमेत् उपरातिं कुर्यात् । कया? बुद्धया । किंविशिष्टया? धृतिगृहीतया धृत्या धैर्येण गृहीतया

धृतिगृहीतया धैर्येण युक्तया इत्यर्थः । आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वं न ततोऽन्यत् किंचिदस्ति' इत्येवमात्मसंस्थं मन. कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमो विधिः ॥

तत्र एवमात्मसंस्थ मनः कर्तुं प्रवृत्तो योगी—

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

यतो यतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषात् मनः चञ्चलम् अत्यर्थं चलम्, अत एव अस्थिरम्, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मन. आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत् । एवं योगाभ्यासबलात् योगिन· आत्मन्येव प्रशाम्यति मनः ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः

तं प्रशान्तमनसं हि एनं योगिनं सुखम् उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तम् 'ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम् ॥

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

युञ्जन् एव यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति ॥

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते—

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतानि

आत्मनि एकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥

एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते—

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥**

यो मां पश्यति वासुदेवं सर्वस्य आत्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्य एवं आत्मैकत्वदर्शिनः अहम् ईश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति स च विद्वान् मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति, तस्य च मम च एकात्मकत्वात्, स्वात्मा हि नाम आत्मनः प्रिय एव भवति, यस्माच्च अहमेव सर्वात्मैकत्वदर्शी ॥

इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्ष. अभिधीयते—

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥**

सर्वथा सर्वप्रकारै वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव सः, न मोक्षं प्रति केनचित् प्रतिबध्यते इत्यर्थ. ॥

किंच अन्यत्—

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥**

आत्मौपम्येन आत्मा स्वयमेव उपमीयते अनया इत्युपमा तस्या उपमाया भाव: औपम्यं तेन आत्मौपम्येन, सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति य· अर्जुन, स च कि समं पश्यति इत्युच्यते—यथा मम सुखम् इष्टं तथा सर्वप्राणिनां सुखम् अनुकूलम् । वाशब्द चार्थे । यदि वा यच्च दु खं मम प्रतिकूलम् अनिष्टं यथा तथा सर्वप्राणिनां दु·खम् अनिष्टं प्रतिकूलं इत्येवम् आत्मौपम्येन सुखदु.खे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित् प्रतिकूलमाचरति, अहिंसक इत्यर्थः । य: एवमहिंसक· सम्यग्दर्शननिष्ठः स योगी परम: उत्कृष्ट: मत: अभिप्रेत: सर्वयोगिनां मध्ये ॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसं-

पाद्यतामालक्ष्य शुश्रूषुः ध्रुवं तत्प्राप्त्युपायमर्जुन उवाच—

अर्जुन उवाच—

**योऽयं योगस्त्वया प्रोक्तः**
**साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि**
**चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥**

यः अयं योग. त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन एतस्य योगस्य अहं न पश्यामि नोपलभे, चञ्चलत्वात् मनसः । किम् ? स्थिराम् अचलां स्थितिम् ॥

प्रसिद्धमेतत्—

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥**

चञ्चलं हि मनः । कृष्ण इति कृषतेः विलेखनार्थस्य रूपम् । भक्तजनपापादिदोषाकर्षणात् कृष्ण', तस्य संबुद्धिः हे कृष्ण । हि यस्मात् मनः चञ्चलं न केवलमत्यर्थं चञ्चलम्, प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपत् सत् परवशीकरोति । किंच—बलवत् प्रबलम्, न

केनचित् नियन्तु शक्यम्, दुर्निवारत्वात्। किंच—दृढं तन्तुनागवत् अच्छेद्यम्। तस्य एवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोः दुष्करो निग्रहः ततोऽपि दुष्करं मन्ये इत्यभिप्रायः॥

श्रीभगवानुवाच, एवम् एतत् यथा ब्रवीषि—

श्रीभगवानुवाच—

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥**

असंशयं नास्ति संशयः 'मनो दुर्निग्रहं चलम्' इत्यत्र हे महाबाहो। किंतु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित् समानप्रत्ययावृत्तिः चित्तस्य। वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासात् वैतृष्ण्यम्। तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारः चित्तस्य। एवं तत् मनः गृह्यते निगृह्यते निरुध्यते इत्यर्थः॥

यः पुनः असंयतात्मा, तेन—

**असंयतात्मना योगो दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥**

असंयतात्मना अभ्यासवैराग्याभ्यामसंयतः आत्मा अन्त.-करणं यस्य सोऽयम् असंयतात्मा तेन असंयतात्मना योगो दुष्प्रापः दुःखेन प्राप्यत इति मे मतिः। यस्तु पुन. वश्यात्मा अभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनः यस्य सोऽय वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्न कुर्वता शक्यः अवाप्तुं योगः उपायत· यथोक्तादुपायात् ॥

तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि, योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गात् मरणकाले चलितचित्तः इति तस्य नाशमाशङ्क्य अर्जुन उवाच—

अर्जुन उवाच—

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥**

अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या च उपेतः योगात् अन्तकाले च चलितं मानस मनो यस्य स. चलितमानसः भ्रष्टस्मृति. सः अप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गति हे कृष्ण गच्छति ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥**

कच्चित् किं न उभयविभ्रष्टः कर्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं वा न नश्यति अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥

**एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥**

एतत् मे मम संशयं कृष्ण च्छेत्तुम् अपनेतुम् अर्हसि अशेषतः । त्वदन्यः त्वत्तः अन्यः ऋषिः देवो वा च्छेत्ता नाशयिता संशयस्य अस्य न हि यस्मात् उपपद्यते न संभवति । अतः त्वमेव च्छेत्तुमर्हसि इत्यर्थः ॥

श्रीभगवानुवाच—

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥**

हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशः तस्य विद्यते नास्ति । नाशो नाम पूर्वस्मात् हीनजन्मप्राप्तिः

स योगभ्रष्टस्य नास्ति । न हि यस्मात् कल्याणकृत् शुभकृत् कश्चित् दुर्गति कुत्सितां गति हे तात, तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते। पितैव पुत्र इति पुत्रोऽपि तात उच्यते । शिष्योऽपि पुत्र उच्यते । यतो न गच्छति ॥

कि तु अस्य भवति ?—

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥**

योगमार्गे प्रवृत्त संन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृताम् अश्वमेधादियाजिनां लोकान्, तत्र च उषित्वा वासमनुभूय शाश्वती नित्या. समा. संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्ट· अभिजायते ॥

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

अथवा श्रीमतां कुलात् अन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतत् हि जन्म, यत् दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्य-

तरं पूर्वमपेक्ष्य लोके जन्म यत् ईदृशं यथोक्तविशेषणे कुले ॥

यस्मात्—

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्धया सयोगं बुद्धिसयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकम् । यतते च प्रयत्नं च करोति ततः तस्मात् पूर्वकृतात् संस्कारात् भूयः बहुतर संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

यः पूर्वजन्मनि कृतः अभ्यासः स. पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मात् अवशोऽपि स. योगभ्रष्टः ; न कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते , अधर्मश्चेत् बलवत्तरः कृतः, तेन योगजोऽपि संस्कार अभिभूयत एव, तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशः तस्य अस्ति इत्यर्थ ।

अतः जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् अपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात् सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते अतिक्रामति अपाकरिष्यति, किमुत बुद्ध्वा यः योगं तन्निष्ठ अभ्यासं कुर्यात् ॥

कुतश्च योगित्व श्रेयः इति—

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥**

प्रयत्नात् यतमान , अधिकं यतमान इत्यर्थः । तत्र योगी विद्वान् सशुद्धकिल्बिषः विशुद्धकिल्बिष सशुद्धपापः अनेकजन्मसंसिद्ध· अनेकेषु जन्मसु किंचित्किंचित् सस्कारजातम् उपचित्य तेन उपचितेन अनेकजन्मकृतेन संसिद्ध अनेकजन्मसंसिद्ध. ततः लब्धसम्यग्दर्शनः सन् याति परा प्रकृष्टां गतिम् ॥

यस्मादेवं तस्मात्—

**तपस्विभ्योऽधिको योगी**
**ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी**
**तस्माद्योगी भवार्जुन ॥ ४६ ॥**

तपस्विभ्यः अधिकः योगी, ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यम्, तद्वद्भ्योऽपि मतः ज्ञातः अधिकः श्रेष्ठ इति । कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्यः अधिकः योगी विशिष्टः यस्मात् तस्मात् योगी भव अर्जुन ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे ध्यानयोगो नाम
षष्ठोऽध्यायः ॥

योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेन अन्तरात्मना अन्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो माम्, स मे मम युक्ततमः अतिशयेन युक्तः मतः अभिप्रेतः इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**षष्ठोऽध्यायः ॥**

# सप्तमोऽध्यायः ॥

---

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः' इति प्रश्नबीजम् उपन्यस्य, स्वयमेव 'ईदृशं मदीयं तत्त्वम्, एवं मद्गतान्तरात्मा स्यात्' इत्येतत् विवक्षुः श्रीभगवानुवाच—

श्रीभगवानुवाच—

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥**

मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनः यस्य सः मय्यासक्तमनाः, हे पार्थ योगं युञ्जन् मनःसमाधानं कुर्वन्, मदाश्रयः अहमेव परमेश्वरः आश्रयो यस्य सः मदाश्रयः । यो हि कश्चित् पुरुषार्थेन केनचित् अर्थी भवति स तत्साधनं कर्म अग्निहोत्रादि तपः दानं वा किंचित् आश्रयं प्रतिपद्यते, अयं तु योगी मामेव आश्रयं प्रतिपद्यते, हित्वा अन्यत् सा-

धनान्तरं मय्येव आसक्तमनाः भवति। यः त्वं एवंभूत. सन् असंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेण 'एवमेव भगवान्' इति, तत् शृणु उच्यमानं मया ॥

तच्च मद्विषयम्—

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥**

ज्ञानं ते तुभ्यम् अहं सविज्ञानं विज्ञानसहितं स्वानुभवयुक्तम् इदं वक्ष्यामि कथयिष्यामि अशेषतः कार्त्स्न्येन। तत् ज्ञानं विवक्षितं स्तौति श्रोतुः अभिमुखीकरणाय—यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा न इह भूयः पुन अन्यत् ज्ञातव्यं पुरुषार्थसाधनम् अवशिष्यते नावशिष्टं भवति। इति मत्तत्त्वज्ञो यः, सः सर्वज्ञो भवतीत्यर्थ । अतो विशिष्टफलत्वात् दुर्लभ ज्ञानम् ॥

कथमित्युच्यते—

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥**

मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चित् यतति प्रयत्नं

करोति सिद्धये सिद्ध्यर्थम् । तेषां यततामपि सिद्धानाम्, सिद्धा एव हि ते ये मोक्षाय यतन्ते, तेषा कश्चित् एव हि मां वेत्ति तत्त्वतः यथावत् ॥

श्रोतारं प्ररोचनेन अभिमुखीकृत्याह—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

भूमिः इति पृथिवीतन्मात्रमुच्यते, न स्थूला, 'भिन्ना प्रकृतिरष्टधा' इति वचनात् । तथा अबादयोऽपि तन्मात्राण्येव उच्यन्ते—आपः अनलः वायुः खम् । मनः इति मनसः कारणमहंकारो गृह्यते । बुद्धिः इति अहंकारकारणं महत्तत्त्वम् । अहंकारः इति अविद्यासंयुक्तमव्यक्तम् । यथा विषसंयुक्तमन्नं विषमित्युच्यते, एवमहंकारवासनावत् अव्यक्तं मूलकारणमहंकार इत्युच्यते, प्रवर्तकत्वात् अहंकारस्य । अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । इतीयं यथोक्ता प्रकृतिः मे मम ऐश्वरी मायाशक्तिः अष्टधा भिन्ना भेदमागता ॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

अपरा न परा निकृष्टा अशुद्धा अनर्थकरी संसारबन्धनात्मिका इयम् । इत. अस्या· यथोक्तायाः तु अन्यां विशुद्धां प्रकृति मम आत्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो, यया प्रकृत्या इदं धार्यते जगत् अन्त: प्रविष्टया ॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

एतद्योनीनि एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिः येषां भूतानां तानि एतद्योनीनि, भूतानि सर्वाणि इति एवम् उपधारय जानीहि । यस्मात् मम प्रकृती योनिः कारणं सर्वभूतानाम्, अत: अहं कृत्स्नस्य समस्तस्य जगत: प्रभव: उत्पत्ति प्रलय: विनाश: तथा । प्रकृतिद्वयद्वारेण अहं सर्वज्ञः ईश्वर: जगत: कारणमित्यर्थ: ॥

यत: तस्मात्—

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

मत्त: परमेश्वरात् परतरम् अन्यत् कारणान्तरं किंचित् नास्ति न विद्यते, अहमेव जगत्कारणमित्यर्थ:, हे धनंजय ।

यस्मादेवं तस्मात् मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत् प्रोतं अनुस्यूतम् अनुगतम् अनुविद्धं ग्रथितमित्यर्थ, दीर्घतन्तुषु पटवत्, सूत्रे च मणिगणा इव ॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

रसः अहम्, अपां यः सार. स रसः, तस्मिन् रसभूते मयि आपः प्रोता इत्यर्थः । एवं सर्वत्र । यथा अहम् अप्सु रसः, एवं प्रभा अस्मि शशिसूर्ययोः । प्रणवः ओंकारः सर्ववेदेषु, तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दः सारभूतः, तस्मिन् मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावः पौरुषं यतः पुंबुद्धिः नृषु, तस्मिन मयि पुरुषाः प्रोताः ॥

**पुण्यो गन्धः पृथिव्यां च**
**तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु**
**तपश्चास्मि तपस्विषु ॥ ९ ॥**

पुण्यः सुरभिः गन्धः पृथिव्यां च अहम्, तस्मिन् मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितम् अबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गन्धादीनाम् अविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तेजश्च दीप्तिश्च अस्मि विभावसौ अग्नौ । तथा जीवनं सर्वभूतेषु, येन जीवन्ति सर्वाणि भूतानि तत् जीवनम् । तपश्च अस्मि तपस्विषु, तस्मिन् तपसि मयि तपस्विन प्रोताः ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥**

बीज प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरन्तनम् । किंच, बुद्धिः विवेकशक्तिः अन्तःकरणस्य बुद्धिमतां विवेकशक्तिमताम् अस्मि, तेजः प्रागल्भ्यं तद्वता तेजस्विनाम् अहम् ॥

**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥**

बलं सामर्थ्यम् ओजो बलवताम् अहम्, तच्च बलं कामरागविवर्जितम्, कामश्च रागश्च कामरागौ— काम. तृष्णा

असंनिकृष्टेषु विषयेषु, रागो रञ्जना प्राप्तेषु विषयेषु—ताभ्या कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलं सत्त्वमहमस्मि, न तु यत्संसारिणां तृष्णारागकारणम् । किंच— धर्माविरुद्धः धर्मेण शास्त्रार्थेन अविरुद्धो य. प्राणिषु भूतेषु कामः, यथा देहधारणमात्राद्यर्थः अशनपानादिविषयः, स कामः अस्मि हे भरतर्षभ ॥

किंच—

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥**

ये चैव सात्त्विका. सत्त्वनिर्वृत्ताः भावा पदार्था., राजसाः रजोनिर्वृत्ताः, तामसाः तमोनिर्वृत्ताश्च, ये केचिन प्राणिनां स्वकर्मवशात् जायन्ते भावा., तान् मत्त एव जायमानान् इति एवं विद्धि सर्वान् समस्तानेव । यद्यपि ते मत्त. जायन्ते, तथापि न तु अहं तेषु तदधीनः तद्वशः, यथा ससारिण. । ते पुनः मयि मद्वशाः मदधीनाः ॥

एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारण मां नाभिजानाति

जगत् इति अनुक्रोशं दर्शयति भगवान् । तच्च किंनिमित्तं जगत अज्ञानमित्युच्यते—

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥**

त्रिभि गुणमयैः गुणविकारैः रागद्वेषमोहादिप्रकारैः भावै पदार्थैः एभि यथोक्तैः सर्वम् इदं प्राणिजातं जगत् मोहितम् अविवेकितामापादितं सत् न अभिजानानि माम्, एभ्यः यथोक्तेभ्यः गुणेभ्यः परं व्यतिरिक्तं विलक्षणं च अव्ययं व्ययरहितं जन्मादिसर्वभावविकारवर्जितम् इत्यर्थः ॥

कथं पुन. दैवीम् एतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामति इत्युच्यते—

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥**

दैवी देवस्य मम ईश्वरस्य विष्णोः स्वभावभूता हि यस्मात् एषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेन अत्ययः अतिक्रमणं यस्याः सा दुरत्यया । तत्र एवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये

प्रपद्यन्ते ते मायाम् एतां सर्वभूतमोहिनीं तरन्ति अतिक्रामन्ति, ते संसारबन्धनात् मुच्यन्ते इत्यर्थ. ॥

यदि त्वां प्रपन्ना: मायामेतां तरन्ति, कस्मात् त्वामेव सर्वे न प्रपद्यन्ते इत्युच्यते—

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥**

न मां परमेश्वरं नारायणं दुष्कृतिन. पापकारिण. मूढा प्रपद्यन्ते नराधमा: नराणां मध्ये अधमा· निकृष्टा: । ते च मायया अपहृतज्ञाना· संमुषितज्ञाना: आसुर भावं हिसानृतादिलक्षणम् आश्रिता· ॥

ये पुनर्नरोत्तमा: पुण्यकर्माण —

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥**

चतुर्विधा: चतु:प्रकारा भजन्ते सेवन्ते मां जना सुकृतिन: पुण्यकर्माण. हे अर्जुन । आर्त: आर्तिपरिगृहीत: तस्करव्याघ्ररोगादिना अभिभूत: आपन्न:, जिज्ञासु: भगवत्तत्त्व ज्ञातुमिच्छति य:, अर्थार्थी धनकाम:, ज्ञानी विष्णो. तत्त्वविच्च हे भरतर्षभ ॥

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥**

तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित् तत्त्ववित्त्वात् नित्ययुक्त भवति एकभक्तिश्च, अन्यस्य भजनीयस्य अदर्शनात्, अतः स एकभक्तिः विशिष्यते विशेषम् आधिक्यम् आपद्यते, अतिरिच्यते इत्यर्थः । प्रियो हि यस्मात् अहम् आत्मा ज्ञानिनः, अतः तस्य अहम् अत्यर्थं प्रिय., प्रसिद्धं हि लोके 'आत्मा प्रियो भवति' इति । तस्मात् ज्ञानिनः आत्मत्वात् वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्य आत्मैवेति मम अत्यर्थं प्रिय. ॥

न तर्हि आर्तादयः त्रयः वासुदेवस्य प्रियाः? न, किं तर्हि?—

**उदाराः सर्व एवैते**
**ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा**
**मामेवानुत्तमां गतिम् ॥ १८ ॥**

उदाराः उत्कृष्टाः सर्वे एव एते, त्रयोऽपि मम प्रिया एवेत्यर्थः । न हि कश्चित् मद्भक्तः मम वासुदेवस्य अप्रिय

भवति । ज्ञानी तु अत्यर्थं प्रियो भवतीति विशेषः । तत् कस्मात् इत्यत आह—ज्ञानी तु आत्मैव न अन्यो मत्तः इति मे मम मतं निश्चयः । आस्थितः आरोढुं प्रवृत्तः सः ज्ञानी हि यस्मात् 'अहमेव भगवान् वासुदेवः न अन्योऽस्मि' इत्येवं युक्तात्मा समाहितचित्त सन् मामेव परं ब्रह्म गन्तव्यम् अनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥

ज्ञानी पुनरपि स्तूयते—

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥**

बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणाम् अन्ते समाप्तौ ज्ञानवान् प्राप्तपरिपाकज्ञानः मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षत. प्रपद्यते । कथम्? वासुदेवः सर्वम् इति । य. एवं सर्वात्मानं मां नारायणं प्रतिपद्यते, सः महात्मा, न तत्समः अन्यः अस्ति, अधिको वा । अतः सुदुर्लभः, 'मनुष्याणां सहस्रेषु' इति हि उक्तम् ॥

आत्मैव सर्वो वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥**

कामैः तैस्तैः पुत्रपशुस्वर्गादिविषयैः हृतज्ञाना. अपहृतविवेकविज्ञानाः प्रपद्यन्ते अन्यदेवता प्राप्नुवन्ति वासुदेवात् आत्मन. अन्या. देवता , तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमः तं तम् आस्थाय आश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियताः नियमिताः स्वया आत्मीयया ॥

तेषां च कामिनाम्—

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥**

य. य. कामी यां यां देवतातनु श्रद्धया संयुक्तः भक्तश्च सन् अर्चितुं पूजयितुम् इच्छति, तस्य तस्य कामिन अचला स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ॥

यथैव पूर्वं प्रवृत्त. स्वभावतो य. यां देवतातनुं श्रद्धया अर्चितुम इच्छति—

**स तया श्रद्धया युक्त-**
**स्तस्या राधनमीहते ।**
**लभते च ततः कामा-**
**न्मयैव विहितान्हि तान् ॥ २२ ॥**

स तया मद्विहितया श्रद्धया युक्त. सन् तस्याः देवतातन्वाः राधनम् आराधनम् ईहते चेष्टते । लभते च ततः तस्याः आराधितायाः देवतातन्वा. कामान् ईप्सितान् मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान् निर्मितान् तान्, हि यस्मात् ते भगवता विहिताः कामाः तस्मात् तान् अवश्यं लभते इत्यर्थः । 'हितान्' इति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यम्; न हि कामा हिताः कस्यचित् ॥

यस्मात् अन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च ते, अतः—

**अन्तवत्तु फलं तेषां**
**तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति**
**मद्भक्ता यान्ति मामपि ॥ २३ ॥**

अन्तवत् विनाशि तु फलं तेषां तत् भवति अल्पमेधसां अल्पप्रज्ञानाम् । देवान्देवयजो यान्ति देवान् यजन्त इति देवयजः, ते देवान् यान्ति, मद्भक्ता यान्ति मामपि । एवं समाने अपि आयासे मामेव न प्रपद्यन्ते अनन्तफलाय, अहो खलु कष्टं वर्तन्ते, इत्यनुक्रोशं दर्शयति भगवान् ॥

किंनिमित्तं मामेव न प्रपद्यन्ते इत्युच्यते—

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

अव्यक्तम् अप्रकाशं व्यक्तिम् आपन्नं प्रकाश गतम् इदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तम् अबुद्धयः अविवेकिनः परं भावं परमात्मस्वरूपम् अजानन्तः अविवेकिनः मम अव्ययं व्ययरहितम् अनुत्तमं निरतिशयं मदीयं भावमजानन्तः मन्यन्ते इत्यर्थः ॥

तदज्ञानं किंनिमित्तमित्युच्यते—

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥**

न अहं प्रकाशः सर्वस्य लोकस्य, केषांचिदेव मद्भक्तानां प्रकाशः अहमित्यभिप्रायः । योगमायासमावृतः योगः गुणानां युक्तिः घटनं सैव माया योगमाया, तया योगमायया समावृतः, संछन्नः इत्यर्थः । अत एव मूढो लोकः अयं न अभिजानाति माम् अजम् अव्ययम् ॥

यया योगमायया समावृतं मां लोकः नाभिजानाति,

नासौ योगमाया मदीया सती मम ईश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति, यथा अन्यस्यापि मायाविनः मायाज्ञानं तद्वत् ॥

यतः एवम् , अतः—

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥**

अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि, वर्तमानानि च अर्जुन, भविष्याणि च भूतानि वेद अहम् । मां तु वेद न कश्चन मद्भक्तं मच्छरणम् एकं मुक्त्वा , मत्तत्त्ववेदनाभावादेव न मां भजते ॥

केन पुन. मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मां न विदन्ति इत्यपेक्षायामिदमाह—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थः तेन इच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायामिदमाह— द्वन्द्वमोहेन द्वन्द्वनिमित्तः मोहः द्वन्द्वमोहः तेन । तावेव इच्छाद्वेषौ शीतोष्णवत् परस्परविरुद्धौ

सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वन्द्व-शब्देन अभिधीयेते । तत्र यदा इच्छाद्वेषौ सुखदुःखतद्धेतुसं-प्राप्त्या लब्धात्मकौ भवत., तदा तौ सर्वभूतानां प्रज्ञाया. स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्ध-कारणं मोह जनयतः । न हि इच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि, किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इति । अतः तेन इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन, भारत भरतान्वयज, सर्वभूतानि संमोहितानि सन्ति संमोह संमूढतां सर्गे जन्मनि, उत्पत्तिकाले इत्येतत्, यान्ति गच्छन्ति हे परंतप । मोहवशान्येव सर्वभूतानि जायमा-नानि जायन्ते इत्यभिप्राय. । यत. एवम्, अतः तेन द्वन्द्व-मोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्म-भूतं न जानन्ति, अत एव आत्मभावेन मां न भजन्ते ॥

के पुनः अनेन द्वन्द्वमोहेन निर्मुक्ताः सन्तः त्वां विदि-त्वा यथाशास्त्रमात्मभावेन भजन्ते इत्यपेक्षितमर्थं दर्शयितुम् उच्यते—

येषां त्वन्तगतं पापं
जनानां पुण्यकर्मणाम् ।

**ते द्वन्द्वमोहनिर्मुक्ता**
**भजन्ते मां दृढव्रताः ॥ २८ ॥**

येषां तु पुनः अन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्य कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणः तेषां पुण्यकर्मणाम्, ते द्वन्द्वमोहनिर्मुक्ताः यथोक्तेन द्वन्द्वमोहेन निर्मुक्ता. भजन्ते मां परमात्मानं दृढव्रताः । 'एवमेव परमार्थतत्त्वं नान्यथा' इत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञानाः दृढव्रताः उच्यन्ते ॥

ते किमर्थं भजन्ते इत्युच्यते—

**जरामरणमोक्षाय**
**मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्न-**
**मध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

जरामरणमोक्षाय जरामरणयोः मोक्षार्थं मां परमेश्वरम् आश्रित्य मत्समाहितचित्ताः सन्तः यतन्ति प्रयतन्ते ये, ते यत् ब्रह्म परं तत् विदुः कृत्स्नं समस्तम् अध्यात्मं प्रत्यगात्मविषयं वस्तु तत् विदुः, कर्म च अखिलं समस्तं विदुः ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम

सप्तमोऽध्यायः ॥

साधिभूताधिदैवम् अधिभूतं च अधिदैवं च अधिभूताधिदैवम्, सह अधिभूताधिदैवेन वर्तते इति साधिभूताधिदैवं च मां ये विदुः, साधियज्ञं च सह अधियज्ञेन साधियज्ञं ये विदुः, प्रयाणकाले मरणकाले अपि च मां ते विदुः युक्तचेतसः समाहितचित्ता इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

सप्तमोऽध्यायः ॥

# अष्टमोऽध्यायः ॥

'ते ब्रह्म तद्विदु कृत्स्नम्' इत्यादिना भगवता अर्जुनस्य प्रश्नबीजानि उपदिष्टानि । अत तत्प्रश्नार्थम् अर्जुन उवाच—

अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥

एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवानुवाच—

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अक्षरं न क्षरतीति अक्षरं परमात्मा, 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति श्रुतेः । ओंकारस्य च 'ओमित्येकाक्षरं ब्रह्म' इति परेण विशेषणात् अग्रहणम् । परमम् इति च निरतिशये ब्रह्मणि अक्षरे उपपन्नतरम् विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः, स्वो भाव. स्वभावः अध्यात्मम् उच्यते । आत्मानं देहम् अधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावः अध्यात्मम् उच्यते अध्यात्मशब्देन अभिधीयते । भूतभावोद्भवकरः भूतानां भाव. भूतभावः तस्य उद्भव· भूतभावोद्भवः तं करोतीति भूतभावोद्भवकरः, भूतवस्तूत्पत्तिकर इत्यर्थः । विसर्गः विसर्जनं देवतोद्देशेन चरुपुरोडाशादेः द्रव्यस्य परित्यागः; स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत् । एतस्मात् हि बीजभूतात् वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतानि उद्भवन्ति ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

अधिभूतं प्राणिजातम् अधिकृत्य भवतीति । कोऽसौ? क्षरः क्षरतीति क्षरः विनाशी, भावः यत्किंचित् जनिमत् वस्तु इत्यर्थः । पुरुषः पूर्णम् अनेन सर्वमिति, पुरि शयनात्

वा, पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः, सर्वप्राणिकरणानाम् अनुग्राहकः, सः अधिदैवतम् । अधियज्ञः सर्वयज्ञाभिमानिनी विष्णवाख्या देवता, 'यज्ञो वै विष्णुः' इति श्रुतेः । स हि विष्णुः अहमेव, अत्र अस्मिन् देहे यो यज्ञः तस्य अहम् अधियज्ञः, यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायी इति देहाधिकरणो भवति, देहभृतां वर ॥

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥**

अन्तकाले मरणकाले च मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कलेबरं शरीरं यः प्रयाति गच्छति, सः मद्भावं वैष्णवं तत्त्वं याति । नास्ति न विद्यते अत्र अस्मिन् अर्थे संशयः— याति वा न वा इति ॥

न मद्विषय एव अयं नियमः । किं तर्हि ?—

**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

यं यं वापि यं यं भावं देवताविशेषं स्मरन् चिन्तयन् त्यजति परित्यजति अन्ते अन्तकाले प्राणवियोगकाले कलेबर

शरीरं तं तमेव स्मृतं भावमेव एति नान्यं कौन्तेय, सदा सर्वदा तद्भावभावितः तस्मिन् भावः तद्भावः स भावितः स्मर्यमाणतया अभ्यस्तः येन सः तद्भावभावितः सन् ॥

यस्मात् एवम् अन्त्या भावना देहान्तरप्राप्तौ कारणम्—

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

तस्मात् सर्वेषु कालेषु माम् अनुस्मर यथाशास्त्रम् । युध्य च युद्धं च स्वधर्मं कुरु । मयि वासुदेवे अर्पिते मनोबुद्धी यस्य तव स त्वं मयि अर्पितमनोबुद्धिः सन् मामेव यथास्मृतम् एष्यसि आगमिष्यसि; असंशयः न संशयः अत्र विद्यते ॥

किंच—

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूते एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणः विलक्षणप्रत्ययानन्तरितः अभ्यासः स चाभ्यासो योगः तेन युक्तं तत्रैव व्यापृतं योगिनः चेतः तेन, चेतसा नान्यगामिना न अन्यत्र विष-

यान्तरे गन्तु शीलम् अस्येति नान्यगामि तेन नान्यगा-मिना, परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं याति गच्छति हे पार्थ अनुचिन्तयन् शास्त्राचार्योप-देशम् अनुध्यायन् इत्येतत् ॥

किंविशिष्टं च पुरुषं याति इति उच्यते—

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरन्तनम् अनुशासि-तारं सर्वस्य जगतः प्रशासितारम् अणोः सूक्ष्मादपि अणीयांसं सूक्ष्मतरम् अनुस्मरेत् अनुचिन्तयेत् यः कश्चित्, सर्वस्य कर्म-फलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभ-क्तारम्, अचिन्त्यरूपं न अस्य रूपं नियतं विद्यमानमपि केन-चित् चिन्तयितुं शक्यते इति अचिन्त्यरूपः तम्, आदित्य-वर्णम् आदित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तम् आदित्यवर्णम्, तमसः परस्तात् अज्ञानलक्षणात् मोहान्ध-कारात् परं तम् अनुचिन्तयन् याति इति पूर्वेण सम्बन्धः ॥

किच—

**प्रयाणकाले मनसाचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्य-**
**क्स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

प्रयाणकाले मरणकाले मनसा अचलेन चलनवर्जितेन भक्त्या युक्त. भजनं भक्तिः तया युक्तः योगबलेन चैव योगस्य बलं योगबल समाधिजसंस्कारप्रचयजनितचित्तस्थैर्यलक्षणं योगबलं तेन च युक्तः इत्यर्थः, पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं ततः ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोः मध्ये प्राणम् आवेश्य स्थापयित्वा सम्यक् अप्रमत्तः सन्, सः एवं विद्वान् योगी 'कवि पुराणम्' इत्यादिलक्षणं तं परं परतरं पुरुषम् उपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥

पुनरपि वक्ष्यमाणेन उपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्य अभिधानं करोति भगवान्—

**यदक्षरं वेदविदो वदन्ति**
**विशन्ति यद्यतयो वीतरागाः ।**

**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥**

यत् अक्षरं न क्षरतीति अक्षरम् अविनाशि वेदविदः वेदार्थज्ञाः वदन्ति, 'तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुते., सर्वविशेषनिवर्तकत्वेन अभिवदन्ति 'अस्थूलमनणु' इत्यादि । किंच— विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यत् यतयः यतनशीला. संन्यासिनः वीतरागाः वीतः विगतः रागः येभ्य· ते वीतरागाः । यच्च अक्षरमिच्छन्त — ज्ञातुम् इति वाक्यशेषः— ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति, तत् ते पदं तत् अक्षराख्यं पद पदनीयं ते तव संग्रहेण संग्रह. संक्षेपः तेन सक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥

'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत—स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यादिना वचनेन, 'अन्यत्र धर्मादन्यत्राधर्मात्' इति च उपक्रम्य 'सर्वे वेदा यत्पदमामनन्ति । तपांसि सर्वाणि च यद्वदन्ति ।

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत् प्रतीकरूपेण वा, परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्य ओंकारस्य उपासनं कालान्तरे मुक्तिफलम् उक्तं यत्, तदेव इहापि 'कविं पुराणमनुशासितारम्' 'यदक्षरं वेदविदो वदन्ति' इति च उपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्य ओंकारस्य कालान्तरमुक्तिफलम् उपासनं योगधारणासहितं वक्तव्यम्, प्रसक्तानुप्रसक्तं च यत्किंचित्, इत्येवमर्थः उत्तरो ग्रन्थ आरभ्यते—

**सर्वद्वाराणि संयम्य**
**मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राण-**
**मास्थितो योगधारणाम् ॥ १२ ॥**

सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि उपलब्धौ, तानि सर्वाणि संयम्य संयमनं कृत्वा मनः हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निष्प्रचारमापाद्य, तत्र वशीकृतेन मनसा हृदयात् ऊर्ध्वगामिन्या नाड्या ऊर्ध्वमारुह्य

मूर्ध्नि आधाय आत्मनः प्राणम् आस्थितः प्रवृत्त योगधारणां धारयितुम् ॥

तत्रैव च धारयन्——

**ओमित्येकाक्षरं ब्रह्म**
**व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं**
**स याति परमां गतिम् ॥ १३ ॥**

ओमिति एकाक्षरं ब्रह्म ब्रह्मणः अभिधानभूतम् ओंकार व्याहरन् उच्चारयन्, तदर्थभूतं माम् ईश्वरम् अनुस्मरन् अनुचिन्तयन् यः प्रयाति म्रियते, स त्यजन् परित्यजन् देहं शरीरम्— 'त्यजन् देहम्' इति प्रयाणविशेषणार्थम् देहत्यागेन प्रयाणम् आत्मनः, न स्वरूपनाशेनेत्यर्थ — स. एव याति गच्छति परमां प्रकृष्टां गतिम् ॥

किंच—

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥**

अनन्यचेताः न अन्यविषये चेतः यस्य सोऽयम् अनन्य-चेताः, योगी सततं सर्वदा य मां परमेश्वरं स्मरति नित्यश. ।

सततम् इति नैरन्तर्यम् उच्यते, नित्यशः इति दीर्घकालत्वम् उच्यते । न षण्मासं संवत्सरं वा, किं तर्हि? यावज्जीवं नैरन्तर्येण यः मां स्मरतीत्यर्थः । तस्य योगिनः अहं सुलभः सुखेन लभ्यः हे पार्थ, नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनः । यतः एवम्, अतः अनन्यचेताः सन् मयि सदा समाहितः भवेत् ॥

तव सौलभ्येन किं स्यात् इत्युच्यते; शृणु तत् मम सौलभ्येन यत् भवति—

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥**

माम् उपेत्य माम् ईश्वरम् उपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं नाप्नुवन्ति न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति इति, तद्विशेषणमाह— दुःखालयं दुःखानाम् आध्यात्मिकादीनां आलयम् आश्रयम् आलीयन्ते यस्मिन् दुःखानि इति दुःखालयं जन्म । न केवलं दुःखालयम्, अशाश्वतम् अनवस्थितस्वरूपं च । नाप्नुवन्ति ईदृशं पुनर्जन्म महात्मानः यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनः मां न प्राप्नुवन्ति ते पुनः आवर्तन्ते ॥

किं पुनः त्वत्त. अन्यत् प्राप्ताः पुनरावर्तन्ते इति, उच्यते—

**आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

आ ब्रह्मभुवनात् भवन्ति अस्मिन् भूतानि इति भुवनम्, ब्रह्मणो भुवनं ब्रह्मभुवनम्, ब्रह्मलोक इत्यर्थः, आ ब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः हे अर्जुन । माम् एकम् उपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिः न विद्यते ॥

ब्रह्मलोकसहिताः लोकाः कस्मात् पुनरावर्तिन.? कालपरिच्छिन्नत्वात् । कथम्?—

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥**

सहस्रयुगपर्यन्तं सहस्राणि युगानि पर्यन्तः पर्यवसानं यस्य अह्नः तत् अहः सहस्रयुगपर्यन्तम्, ब्रह्मणः प्रजापतेः विराजः विदुः, रात्रिम् अपि युगसहस्रान्तां अहःपरिमाणामेव । के विदुरित्याह— ते अहोरात्रविद. कालसंख्याविदो जनाः इत्यर्थः । यतः एवं कालपरिच्छिन्नाः ते, अतः पुनरावर्तिनो लोकाः ॥

प्रजापतेः अहनि यत् भवति रात्रौ च, तत् उच्यते—

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

अव्यक्तात् अव्यक्तं प्रजापतेः स्वापावस्था तस्मात् अव्यक्तात् व्यक्तयः व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्ति अभिव्यज्यन्ते, अह्न. आगमः अहरागमः तस्मिन् अहरागमे काले ब्रह्मणः प्रबोधकाले । तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वाः व्यक्तयः तत्रैव पूर्वोक्ते अव्यक्तसंज्ञके ॥

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थम् , बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थम् अविद्यादिक्लेशमूलकर्माशयवशाच्च अवशः भूतग्रामः भूत्वा भूत्वा प्रलीयते इत्यतः संसारे वैराग्यप्रदर्शनार्थं च इदमाह—

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

भूतग्राम. भूतसमुदायः स्थावरजङ्गमलक्षणः यः पूर्वस्मिन् कल्पे आसीत् स एव अयं नान्यः । भूत्वा भूत्वा

अहरागमे, प्रलीयते पुनः पुनः रात्र्यागमे अह्नः क्षये अवशः अस्वतन्त्र एव, हे पार्थ, प्रभवति जायते अवश एव अहरागमे ॥

यत् उपन्यस्तम् अक्षरम्, तस्य प्राप्त्युपायो निर्दिष्टः 'ओमित्येकाक्षरं ब्रह्म' इत्यादिना । अथ इदानीम् अक्षरस्यैव स्वरूपनिर्दिदिक्षया इदम् उच्यते, अनेन योगमार्गेण इदं गन्तव्यमिति—

**परस्तस्मात्तु भावोऽन्यो-**
**ऽव्यक्तोऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु**
**नश्यत्सु न विनश्यति ॥ २० ॥**

परः व्यतिरिक्तः भिन्नः, कुत ? तस्मात् पूर्वोक्तात् । तु-शब्दः अक्षरस्य विवक्षितस्य अव्यक्तात् वैलक्षण्यविशेषणार्थः । भावः अक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थम् आह— अन्यः इति । अन्यः विलक्षणः । स च अव्यक्तः अनिन्द्रियगोचरः । 'परस्तस्मात्' इत्युक्तम्, कस्मात् पुनः परः ? पूर्वोक्तात् भूतग्रामबीजभूतात् अविद्यालक्षणात् अव्यक्तात् । अन्यः विल-

क्षण: भाव: इत्यभिप्राय: । सनातन चिरन्तन य. स भाव: सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

योऽसौ अव्यक्त: अक्षर: इत्युक्त:, तमेव अक्षरसंज्ञकम् अव्यक्तं भावम् आहु: परमां प्रकृष्टां गतिम् । यं परं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय, तत् धाम स्थानं परमं प्रकृष्टं मम, विष्णो परमं पदमित्यर्थ: ॥

तल्लब्धे. उपाय: उच्यते—

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥**

पुरुष: पुरि शयनात् पूर्णत्वाद्वा, स पर: पार्थ, पर: निरतिशय:, यस्मात् पुरुषात् न परं किंचित् । स: भक्त्या लभ्यस्तु ज्ञानलक्षणया अनन्यया आत्मविषयया । यस्य पुरुषस्य अन्त:स्थानि मध्यस्थानि भूतानि कार्यभूतानि; कार्यं हि कारणस्य अन्तर्वर्ति भवति । येन पुरुषेण सर्वं इदं जगत् ततं व्याप्तम् आकाशेनेव घटादि ॥

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इति 'यत्र काले' इत्यादि विवक्षितार्थसमर्पणार्थम् उच्यते, आवृत्तिमार्गोपन्यासः इतरमार्गस्तुत्यर्थः—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥**

यत्र काले प्रयाताः इति व्यवहितेन संबन्धः । यत्र यस्मिन् काले तु अनावृत्तिम् अपुनर्जन्म आवृत्तिं तद्विपरीतां चैव । योगिनः इति योगिनः कर्मिणश्च उच्यन्ते, कर्मिणस्तु गुणतः— 'कर्मयोगेन योगिनाम्' इति विशेषणात्— योगिनः । यत्र काले प्रयाताः मृताः योगिनः अनावृत्तिं यान्ति, यत्र काले च प्रयाताः आवृत्तिं यान्ति, तं कालं वक्ष्यामि भरतर्षभ ॥

तं कालमाह—

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥**

अग्निः कालाभिमानिनी देवता । तथा ज्योतिरपि देवतैव कालाभिमानिनी । अथवा, अग्निज्योतिषी यथा-

श्रुते एव देवते। भूयसा तु निर्देशो 'यत्र काले' 'तं कालम्' इति आम्रवणवत्। तथा अहः देवता अहरभिमानिनी, शुक्लः शुक्लपक्षदेवता; षण्मासा उत्तरायणम्, तत्रापि देवतैव मार्गभूता इति स्थित. अन्यत्र अयं न्यायः। तत्र तस्मिन् मार्गे प्रयाताः मृताः गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासकाः ब्रह्मोपासनपरा जनाः। 'क्रमेण' इति वाक्यशेषः। न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिः आगतिर्वा क्वचित् अस्ति, 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः। ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते।

**धूमो रात्रिस्तथा कृष्णः**
**षण्मासा दक्षिणायनम्।**
**तत्र चान्द्रमसं ज्योति-**
**र्योगी प्राप्य निवर्तते॥ २५॥**

धूमो रात्रिः धूमाभिमानिनी रात्र्यभिमानिनी च देवता। तथा कृष्णः कृष्णपक्षदेवता। षण्मासा दक्षिणायनम् इति च पूर्ववत् देवतैव। तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलम् इष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयात् इह पुनः निवर्तते॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥**

शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे, ज्ञानप्रकाशकत्वात् शुक्ला, तदभावात् कृष्णा; एते शुक्लकृष्णे हि गती जगतः इति अधिकृतानां ज्ञानकर्मणोः, न जगतः सर्वस्यैव एते गती संभवतः; शाश्वते नित्ये, संसारस्य नित्यत्वात्, मते अभिप्रेते । तत्र एकया शुक्लया याति अनावृत्तिम्, अन्यया इतरया आवर्तते पुनः भूयः ॥

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥२७॥**

न एते यथोक्ते सृती मार्गौ पार्थ जानन् संसाराय एका, अन्या मोक्षाय इति, योगी न मुह्यति कश्चन कश्चिदपि । तस्मात् सर्वेषु कालेषु योगयुक्तः समाहितो भव अर्जुन ॥

शृणु तस्य योगस्य माहात्म्यम्—

**वेदेषु यज्ञेषु तपःसु चैव**
**दानेषु यत्पुण्यफलं प्रदिष्टम् ।**

अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो नाम अष्टमोऽध्यायः ॥

वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येन अनुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु, एतेषु यत् पुण्यफलं प्रदिष्टं शास्त्रेण, अत्येति अतीत्य गच्छति तत् सर्वं फलजातम्, इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेण उक्तम् अर्थं सम्यक् अवधार्य अनुष्ठाय योगी, परम् उत्कृष्टम् ऐश्वरं स्थानम् उपैति च प्रतिपद्यते आद्यम् आदौ भवम्, कारणं ब्रह्म इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ॥

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

---

## नवमोऽध्यायः

# नवमोऽध्यायः ॥

अष्टमे नाडीद्वारेण धारणायोगः सगुण. उक्त. । तस्य च फलम् अग्न्यर्चिरादि-क्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेव अनावृत्तिरूपं निर्दिष्टम् । तत्र 'अनेनै-व प्रकारेण मोक्षप्राप्तिफलम् अधिग-म्यते, न अन्यथा' इति तदाशङ्काव्या-विवर्तयिषया श्रीभगवान् उवाच—

श्रीभगवानुवाच—

> इदं तु ते गुह्यतमं
> प्रवक्ष्याम्यनसूयवे ।
> ज्ञानं विज्ञानसहितं
> यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

इदं ब्रह्मज्ञानं वक्ष्यमाणम् उक्त च पूर्वेषु अध्यायेषु, तत् बुद्धौ संनिधीकृत्य इदम् इत्याह । तु-शब्दो विशेषनि-

धारणार्थः । इदमेव तु सम्यग्ज्ञानं साक्षात् मोक्षप्राप्तिसाधनम् 'वासुदेवः सर्वमिति' 'आत्मैवेदं सर्वम्' 'एकमेवाद्वितीयम्' इत्यादिश्रुतिस्मृतिभ्यः, नान्यत्, 'अथ ते येऽन्यथातो विदुः अन्यराजान ते क्षय्यलोका भवन्ति' इत्यादिश्रुतिभ्यश्च । ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्यामि अनसूयवे असूयारहिताय । किं तत्? ज्ञानम् । किंविशिष्टम्? विज्ञानसहितम् अनुभवयुक्तम्, यत् ज्ञात्वा प्राप्य मोक्ष्यसे अशुभात् संसारबन्धनात् ॥

तच्च—

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

राजविद्या विद्यानां राजा, दीप्त्यतिशयवत्त्वात्, दीप्यते हि इयम अतिशयेन ब्रह्मविद्या सर्वविद्यानाम् । तथा राजगुह्यं गुह्यानां राजा । पवित्रं पावनं इदम् उत्तमं सर्वेषां पावनानां शुद्धिकारणं ब्रह्मज्ञानम् उत्कृष्टतमम् । अनेकजन्मसहस्रसंचितमपि धर्माधर्मादि समूलं कर्म क्षणमात्रादेव भस्मीकरोति इत्यतः किं तस्य पावनत्वं वक्तव्यम् । किंच—प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिव अवगमो यस्य तत् प्रत्यक्षावगमम् । अनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टम्, न तथा आत्मज्ञानं धर्म-

विरोधि, किंतु धर्म्यं धर्मादनपेतम् । एवमपि, स्याद्दुःखसंपाद्य-मित्यत आह— सुसुखं कर्तुम्, यथा रत्नविवेकविज्ञानम् । तत्र अल्पायासानामन्येषां कर्मणां सुखसंपाद्यानाम् अल्पफलत्वं दुष्कराणां च महाफलत्वं दृष्टमिति, इदं तु सुखसंपाद्यत्वात् फलक्षयात् व्येति इति प्राप्ते, आह—अव्ययम् इति । न अस्य फलतः कर्मवत् व्ययः अस्तीति अव्ययम् । अतः श्रद्धेयम् आत्मज्ञानम् ॥

ये पुनः—

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥**

अश्रद्दधाना श्रद्धाविरहिताः आत्मज्ञानस्य धर्मस्य अस्य स्वरूपे तत्फले च नास्तिकाः पापकारिणः, असुराणाम् उपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्नाः असुतृपः पापाः पुरुषाः अश्रद्दधानाः, परंतप, अप्राप्य मां परमेश्वरम्, मत्प्राप्तौ नैव आशङ्का इति मत्प्राप्तिमार्गभेदभक्तिमात्रमपि अप्राप्य इत्यर्थः । निवर्तन्ते निश्चयेन वर्तन्ते, क्व?—मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारः मृत्युसंसारः तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गः, तस्मिन्नेव वर्तन्ते इत्यर्थः ॥

स्तुत्या अर्जुनमभिमुखीकृत्य आह—

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥**

मया मम यः परो भावः तेन ततं व्याप्तं सर्वम् इदं जगत् अव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिः तेन मया अव्यक्तमूर्तिना, करणागोचर-स्वरूपेण इत्यर्थः । तस्मिन् मयि अव्यक्तमूर्तौ स्थितानि मत्स्थानि, सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि । न हि निरात्मकं किंचित् भूतं व्यवहाराय अवकल्पते । अतः मत्स्थानि मया आत्मना आत्मवत्त्वेन स्थितानि, अतः मयि स्थितानि इति उच्यन्ते । तेषां भूतानाम् अहमेव आत्मा इत्यतः तेषु स्थितः इति मूढबुद्धीनां अवभासते, अतः ब्रवीमि— न च अहं तेषु भूतेषु अवस्थितः, मूर्तवत् संश्लेषाभावेन आकाशस्यापि अन्तरतमो हि अहम् । न हि असंसर्गि वस्तु क्वचित् आधेयभावेन अवस्थितं भवति ॥

अत एव असंसर्गित्वात् मम—

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

न च मत्स्थानि भूतानि ब्रह्मादीनि । पश्य मे योगं युक्तिं घटनं मे मम ऐश्वरम् ईश्वरस्य इमम् ऐश्वरम्, योगम् आत्मनो याथात्म्यमित्यर्थः । तथा च श्रुति असंसर्गित्वात् असङ्गतां दर्शयति— 'असङ्गो न हि सज्जते' इति । इदं च आश्चर्यम् अन्यत् पश्य— भूतभृत् असङ्गोऽपि सन् भूतानि बिभर्ति, न च भूतस्थः, यथोक्तेन न्यायेन दर्शितत्वात् भूतस्थत्वानुपपत्तेः । कथं पुनरुच्यते 'असौ मम आत्मा' इति? विभज्य देहादिसङ्घातं तस्मिन् अहंकारम् अध्यारोप्य लोकबुद्धिम् अनुसरन् व्यपदिशति 'मम आत्मा' इति, न पुनः आत्मनः आत्मा अन्यः इति लोकवत् अजानन् । तथा भूतभावनः भूतानि भावयति उत्पादयति वर्धयतीति वा भूतभावन. ॥

यथोक्तेन श्लोकद्वयेन उक्तम् अर्थं दृष्टान्तेन उपपादयन् आह—

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥**

यथा लोके आकाशस्थित· आकाशे स्थितः नित्यं सदा वायु. सर्वत्र गच्छतीति सर्वत्रगः महान् परिमाणतः, तथा

आकाशवत् सर्वगते मयि असंश्लेषेणैव स्थितानि इत्येवम् उपधारय विजानीहि ॥

एवं वायुः आकाशे इव मयि स्थितानि सर्वभूतानि स्थितिकाले, तानि—

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥**

सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकाम् अपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले । पुनः भूयः तानि भूतानि उत्पत्तिकाले कल्पादौ विसृजामि उत्पादयामि अहं पूर्ववत् ॥

एवम् अविद्यालक्षणाम्—

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

प्रकृतिं स्वां स्वीयाम् अवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायम् इमं वर्तमानं कृत्स्नं समग्रम् अवशम् अस्वतन्त्रम्, अविद्यादिदोषैः परवशीकृतम्, प्रकृतेः वशात् स्वभाववशात् ॥

तर्हि तस्य ते परमेश्वरस्य, भूतग्रामम् इमं विषमं विदधत:, तन्निमित्ताभ्यां धर्माधर्माभ्यां संबन्ध: स्यादिति, इदम् आह भगवान्—

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

न च माम् ईश्वरं तानि भूतग्रामस्य विषमसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय । तत्र कर्मणां असंबन्धित्वे कारणमाह— उदासीनवत् आसीनं यथा उदासीन. उपेक्षक: कश्चित् तद्वत् आसीनम्, आत्मन. अविक्रियत्वात्, असक्तं फलासङ्गरहितम्, अभिमानवर्जितम् 'अहं करोमि' इति तेषु कर्मसु । अत: अन्यस्यापि कर्तृत्वाभिमानाभाव: फलासङ्गाभावश्च असंबन्धकारणम्, अन्यथा कर्मभि: बध्यते मूढ: कोशकारवत् इत्यभिप्राय: ॥

तत्र 'भूतग्राममिमं विसृजामि' 'उदासीनवदासीनम्' इति च विरुद्धम् उच्यते, इति तत्परिहारार्थम् आह—

**मयाध्यक्षेण प्रकृति: सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

मया अध्यक्षेण सर्वतो दृशिमात्रस्वरूपेण अविक्रियात्मना अध्यक्षेण मया, मम माया त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः सूयते उत्पादयति सचराचरं जगत्। तथा च मन्त्रवर्णः— 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति। हेतुना निमित्तेन अनेन अध्यक्षत्वेन कौन्तेय जगत् सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु। दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिः— अहम् इदं भोक्ष्ये, पश्यामि इदम्, शृणोमि इदम्, सुखमनुभवामि, दुःखमनुभवामि, तदर्थमिदं करिष्ये, इदं ज्ञास्यामि, इत्याद्या अवगतिनिष्ठा अवगत्यवसानैव। 'यो अस्याध्यक्षः परमे व्योमन्' इत्यादयश्च मन्त्राः एतमर्थं दर्शयन्ति। ततश्च एकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबन्धिनः अन्यस्य चेतनान्तरस्य अभावे भोक्तुः अन्यस्य अभावात्। किंनिमित्ता इयं सृष्टिः इत्यत्र प्रश्नप्रतिवचने अनुपपन्ने, 'को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः' इत्यादिमन्त्रवर्णेभ्यः। दर्शितं च भगवता— 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति॥

एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वजन्तूनाम् आत्मानमपि सन्तम्—

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

अवजानन्ति अवज्ञां परिभवं कुर्वन्ति मां मूढाः अविवेकिनः मानुषीं मनुष्यसंबन्धिनी तनु देहम् आश्रितम, मनुष्यदेहेन व्यवहरन्तमित्येतत्, परं प्रकृष्टं भावं परमात्मतत्त्वम् आकाशकल्पम् आकाशादपि अन्तरतमम् अजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तम् ईश्वरं स्वात्मानम् । ततश्च तस्य मम अवज्ञानभावनेन आहताः ते वराकाः ॥

कथम् ?—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥**

मोघाशाः वृथा आशाः आशिषः येषां ते मोघाशाः, तथा मोघकर्माणः यानि च अग्निहोत्रादीनि तैः अनुष्ठीयमानानि कर्माणि तानि च, तेषां भगवत्परिभवात्, स्वात्मभूतस्य अवज्ञानात्, मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माण· । तथा मोघज्ञानाः मोघं निष्फलं ज्ञानं

येषां ते मोघज्ञानाः, ज्ञानमपि तेषां निष्फलमेव स्यात् । विचेतसः विगतविवेकाश्च ते भवन्ति इत्यभिप्रायः । किच— ते भवन्ति राक्षसी रक्षसां प्रकृतिं स्वभावम् आसुरीम् असुराणां च प्रकृतिं मोहिनी मोहकरीं देहात्मवादिनीं श्रिताः आश्रिता, छिन्द्धि, भिन्द्धि, पिब, खाद, परस्वमपहर, इत्येवं वदनशीला क्रूरकर्माणो भवन्ति इत्यर्थः, 'असुर्या नाम ते लोकाः' इति श्रुतेः ॥

ये पुनः श्रद्दधानाः भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः—

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥**

महात्मानस्तु अक्षुद्रचित्ताः माम् ईश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणाम् आश्रिताः सन्तः भजन्ति सेवन्ते अनन्यमनस. अनन्यचित्ताः ज्ञात्वा भूतादिं भूतानां वियदादीनां प्राणिनां च आदिं कारणम् अव्ययम् ॥

कथम्?—

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥**

सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तः, यतन्तश्च इन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैः धर्मैः प्रयतन्तश्च, दृढव्रता. दृढं स्थिरम् अचाल्यं व्रतं येषां ते दृढव्रताः नमस्यन्तश्च मां हृदयेशयम् आत्मानं भक्त्या नित्ययुक्ताः सन्तः उपासते सेवन्ते ॥

ते केन केन प्रकारेण उपासते इत्युच्यते—

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥**

ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञः तेन ज्ञानयज्ञेन, यजन्तः पूजयन्तः माम् ईश्वरं च अपि अन्ये अन्याम् उपासनां परित्यज्य उपासते । तच्च ज्ञानम्—एकत्वेन 'एकमेव परं ब्रह्म' इति परमार्थदर्शनेन यजन्तः उपासते । केचिच्च पृथक्त्वेन 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुः अवस्थितः' इति उपासते । केचित् 'बहुधा अवस्थितः स एव भगवान् सर्वतोमुखः विश्वरूपः' इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेण उपासते ॥

यदि बहुभिः प्रकारैः उपासते, कथं त्वामेव उपासते इति, अत आह—

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

अहं क्रतुः श्रौतकर्मभेदः अहमेव । अहं यज्ञः स्मार्तः । किंच स्वधा अन्नम् अहम्, पितृभ्यो यत् दीयते । अहम् औषधं सर्वप्राणिभिः यत् अद्यते तत् औषधशब्दशब्दितं व्रीहियवादिसाधारणम् । अथवा स्वधा इति सर्वप्राणिसाधारणम् अन्नम्, औषधम् इति व्याध्युपशमनार्थं भेषजम् । मन्त्रः अहम्, येन पितृभ्यो देवताभ्यश्च हविः दीयते । अहमेव आज्यं हविश्च । अहम् अग्निः, यस्मिन् हूयते हविः सः अग्निः अहम् । अहं हुतं हवनकर्म च ॥

किंच—

**पिताहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥**

पिता जनयिता अहम् अस्य जगतः, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता, पितामहः पितुः पिता, वेद्यं वेदितव्यम्, पवित्रं पावनम् ओंकारः, ऋक् साम यजुः एव च ॥

किच—

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥**

गतिः कर्मफलम्, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताकृतस्य, निवास. यस्मिन् प्राणिनो निवसन्ति, शरणम् आर्तानाम्, प्रपन्नानामार्तिहरः। सुहृत् प्रत्युपकारानपेक्षः सन् उपकारी, प्रभवः उत्पत्ति जगत., प्रलयः प्रलीयते अस्मिन् इति, तथा स्थानं तिष्ठति अस्मिन् इति, निधानं निक्षेपः कालान्तरोपभोग्य प्राणिनाम्, बीजं प्ररोहकारणं प्ररोहधर्मिणाम्, अव्यय यावत्संसारभावित्वात् अव्ययम, न हि अबीजं किंचित् प्ररोहति, नित्यं च प्ररोहदर्शनात् बीजसंततिः न व्येति इति गम्यते ॥

किच—

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

तपामि अहम् आदित्यो भूत्वा कैश्चित् रश्मिभिः उल्बणैः। अहं वर्ष कैश्चित् रश्मिभि उत्सृजामि। उत्सृज्य पुनः निगृह्णामि कैश्चित् रश्मिभिः अष्टभिः मासैः पुनः उत्सृ-

जामि प्रावृषि । अमृतं चैव देवानाम्, मृत्युश्च मर्त्यानाम् । सत् यस्य यत् संबन्धितया विद्यमानं तत्, तद्विपरीतम् असच्च एव अहम् अर्जुन । न पुनः अत्यन्तमेव असत् भगवान्, स्वयं कार्यकारणे वा सदसती ॥

ये पूर्वोक्तैः निवृत्तिप्रकारैः एकत्वपृथक्त्वादिविज्ञानैः यज्ञैः मां पूजयन्तः उपासते ज्ञानविदः, ते यथाविज्ञानं मामेव प्राप्नुवन्ति । ये पुनः अज्ञाः कामकामाः—

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोक-**
**मश्नन्ति दिव्यान्दिवि देवभोगान् ॥२०॥**

त्रैविद्याः ऋग्यजुःसामविदः मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपाः, तेनैव सोमपानेन पूतपापाः शुद्ध-किल्बिषाः, यज्ञैः अग्निष्टोमादिभिः इष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिः ताम्, प्रार्थयन्ते । ते च पुण्यं पुण्यफलम् आसाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानम् अश्नन्ति भुञ्जते दिव्यान् दिवि भवान् अप्राकृतान् देवभोगान् देवानां भोगान् ॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ॥ २१ ॥**

ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकं विशन्ति आविशन्ति । एवं यथोक्तेन प्रकारेण त्रयी-धर्मं केवलं वैदिकं कर्म अनुप्रपन्ना. गतागतं गतं च आगतं च गतागतं गमनागमनं कामकामाः कामान् कामयन्ते इति कामकामाः लभन्ते गतागतमेव, न तु स्वातन्त्र्यं क्वचित् लभन्ते इत्यर्थः ॥

ये पुनः निष्कामाः सम्यग्दर्शिनः—

**अनन्याश्चिन्तयन्तो मां**
**ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां**
**योगक्षेमं वहाम्यहम् ॥ २२ ॥**

अनन्याः अपृथग्भूताः परं देवं नारायणम् आत्मत्वेन गता सन्तः चिन्तयन्तः मां ये जनाः सन्यासिन. पर्युपासते, तेषां

परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगः अप्राप्तस्य प्रापणं क्षेमः तद्रक्षणं तदुभयं वहामि प्रापयामि अहम्; 'ज्ञानी त्वात्मैव मे मतम्' 'स च मम प्रियः' यस्मात्, तस्मात् ते मम आत्मभूताः प्रियाश्च इति ॥

ननु अन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान्। सत्यं वहत्येव, किंतु अय विशेषः— अन्ये ये भक्ताः ते आत्मार्थं स्वयमपि योगक्षेमम् ईहन्ते, अनन्यदर्शिनस्तु न आत्मार्थं योगक्षेमम् ईहन्ते, न हि ते जीविते मरणे वा आत्मनः गृद्धिं कुर्वन्ति; केवलमेव भगवच्छरणाः ते; अतः भगवानेव तेषां योगक्षेमं वहतीति ॥

ननु अन्या अपि देवताः त्वमेव चेत्, तद्भक्ताश्च त्वामेव यजन्ते। सत्यमेवम्—

**येऽप्यन्यदेवताभक्ता**
**यजन्ते श्रद्धयान्विताः।**
**तेऽपि मामेव कौन्तेय**
**यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

येऽपि अन्यदेवताभक्ताः अन्यासु देवतासु भक्ताः अन्य-

देवताभक्ताः सन्तः यजन्ते पूजयन्ति श्रद्धया आस्तिक्यबुद्ध्या अन्विताः अनुगताः, तेऽपि मामेव कौन्तेय यजन्ति अविधिपूर्वकम् अविधिः अज्ञानं तत्पूर्वकं यजन्ते इत्यर्थः ॥

कस्मात् ते अविधिपूर्वकं यजन्ते इत्युच्यते, यस्मात्—

**अहं हि सर्वयज्ञानां**
**भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति**
**तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुः एव च । मत्स्वामिको हि यज्ञः, 'अधियज्ञोऽहमेवात्र' इति हि उक्तम् । तथा न तु माम् अभिजानन्ति तत्त्वेन यथावत् । अतश्च अविधिपूर्वकम् इष्ट्वा यागफलात् च्यवन्ति प्रच्यवन्ते ते ॥

येऽपि अन्यदेवताभक्तिमत्त्वेन अविधिपूर्वकं यजन्ते, तेषामपि यागफलं अवश्यंभावि । कथम्?—

**यान्ति देवव्रता देवा-**
**न्पितॄन्यान्ति पितृव्रताः ।**

**भूतानि यान्ति भूतेज्या**
**यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥**

यान्ति गच्छन्ति देवव्रताः देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रताः देवान् यान्ति । पितॄन् अग्निष्वात्तादीन् यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ता. । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्याः भूतानां पूजकाः । यान्ति मद्याजिनः मद्यजनशीलाः वैष्णवाः मामेव यान्ति । समाने अपि आयासे मामेव न भजन्ते अज्ञानात्, तेन ते अल्पफलभाजः भवन्ति इत्यर्थः ॥

न केवलं मद्भक्तानाम् अनावृत्तिलक्षणम् अनन्तफलम्, सुखाराधनश्च अहम् । कथम्?—

**पत्रं पुष्पं फलं तोयं**
**यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृत-**
**मश्नामि प्रयतात्मनः ॥ २६ ॥**

पत्रं पुष्पं फलं तोयम् उदकं यः मे मह्यं भक्त्या प्रयच्छति, तत् अहं पत्रादि भक्त्या उपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतम् अश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥

यतः एवम्, अत.—

**यत्करोषि यदश्नासि**
**यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय**
**तत्कुरुष्व मदर्पणम् ॥ २७ ॥**

यत् करोषि स्वतः प्राप्तम्, यत् अश्नासि, यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यत् ददासि प्रयच्छसि ब्राह्मणादिभ्यः हिरण्यान्नाज्यादि, यत् तपस्यसि तपः चरसि कौन्तेय, तत् कुरुष्व मदर्पणं मत्समर्पणम् ॥

एवं कुर्वतः तव यत् भवति, तत् शृणु—

**शुभाशुभफलैरेवं**
**मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा**
**विमुक्तो मामुपैष्यसि ॥ २८ ॥**

शुभाशुभफलै. शुभाशुभे इष्टानिष्टे फले येषां तानि शुभाशुभफलानि कर्माणि तै. शुभाशुभफलैः कर्मबन्धनै. कर्माण्येव बन्धनानि कर्मबन्धनानि तैः कर्मबन्धनै. एवं मदर्पणं कुर्वन्

मोक्ष्यसे । सोऽयं संन्यासयोगो नाम, सन्यासश्च असौ मत्समर्पणतया कर्मत्वात् योगश्च असौ इति, तेन संन्यासयोगेन युक्तः आत्मा अन्तःकरण यस्य तव सः त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनै. जीवन्नेव पतिते चास्मिन् शरीरे माम् उपैष्यसि आगमिष्यसि ॥

रागद्वेषवान् तर्हि भगवान्, यतो भक्तान् अनुगृह्णाति, न इतरान् इति । तत् न—

**समोऽहं सर्वभूतेषु**
**न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या**
**मयि ते तेषु चाप्यहम् ॥ २९ ॥**

समः तुल्यः अहं सर्वभूतेषु । न मे द्वेष्यः अस्ति न प्रियः । अग्निवत् अहम्—दूरस्थानां यथा अग्निः शीतं न अपनयति, समीपम् उपसर्पतां अपनयति, तथा अहं भक्तान् अनुगृह्णामि, न इतरान् । ये भजन्ति तु माम् ईश्वरं भक्त्या मयि ते—स्वभावत एव, न मम रागनिमित्तम्—वर्तन्ते । तेषु च अपि अहं स्वभावत एव वर्ते, न इतरेषु । न एतावता तेषु द्वेषो मम ॥

शृणु मद्भक्तेर्माहात्म्यम्—

अपि चेत्सुदुराचारो
भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः
सम्यग्व्यवसितो हि सः ॥

अपि चेत् यद्यपि सुदुराचारः सुष्ठु दुराचारः अतीव कुत्सिताचारोऽपि भजते माम् अनन्यभाक् अनन्यभक्तिः सन्, साधुरेव सम्यग्वृत्त एव स मन्तव्यः ज्ञातव्यः, सम्यक् यथावत् व्यवसितो हि सः, यस्मात् साधुनिश्चयः सः ॥

उत्सृज्य च बाह्यां दुराचारताम् अन्तः सम्यग्व्यवसायसामर्थ्यात्—

क्षिप्रं भवति धर्मात्मा
शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि
न मे भक्तः प्रणश्यति ॥ ३१ ॥

क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्तः एव । शश्वत् नित्यं शान्तिं च उपशमं निगच्छति प्राप्नोति । शृणु पर-

मार्थम्, कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, न मे मम भक्त मयि समर्पितान्तरात्मा मद्भक्त. न प्रणश्यति इति ॥

किंच—

**मां हि पार्थ व्यपाश्रित्य**
**येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रा-**
**स्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

मां हि यस्मात् पार्थ व्यपाश्रित्य माम् आश्रयत्वेन गृहीत्वा येऽपि स्युः भवेयु पापयोनयः पापा योनिः येषां ते पापयोनय· पापजन्मानः । के ते इति, आह— स्त्रिय. वैश्या. तथा शूद्रा. तेऽपि यान्ति गच्छन्ति परां प्रकृष्टां गतिम् ॥

**किं पुनर्ब्राह्मणाः पुण्या**
**भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोक-**
**मिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

किं पुनः ब्राह्मणाः पुण्याः पुण्ययोनय. भक्ताः राजर्षयः

तथा राजानश्च ते ऋषयश्च इति राजर्षय. । यत एवम्, अतः अनित्यं क्षणभङ्गुरम् असुखं च सुखवर्जितम् इमं लोकं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥

कथम्—

**मन्मना भव मद्भक्तो**
**मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैव-**
**मात्मानं मत्परायणः ॥ ३४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहिताया वैयासिक्या
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्म-
विद्याया योगशास्त्रे श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम
**नवमोऽध्यायः ॥**

मयि वासुदेवे मनः यस्य तव स त्वं मन्मना. भव । तथा मद्भक्तः भव मद्याजी मद्यजनशीलः भव । माम् एव च नमस्कुरु । माम् एव ईश्वरम् एष्यसि आगमिष्यसि

युक्त्वा समाधाय चित्तम् । एवम् आत्मानम्, अहं हि सर्वेषां भूतानाम् आत्मा, परा च गतिः, परम् अयनम्, तं माम् एवंभूतम्, एष्यसि इति अतीतेन संबन्धः, मत्परायणः सन् इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**नवमोऽध्यायः ॥**

नानाजन्मसु सचितेन तपसा पूतेन चित्तात्मना

मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृती. शांकरीः ।

समुद्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः

स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा

तत्प्रीत्यै परिशोध्य पुस्तकचयं. संमुद्य साकं बुधैः ।

तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-

न्कृत्वाद्योपहृति सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।

श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।

बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS.

THE BHAGAVAD-GITA-BHASHYA. PAGE.

## ॥ विषयाः ॥

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

---

## दशमोऽध्यायः

# दशमोऽध्यायः ॥

सप्तमे अध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिताः, नवमे च । अथ इदानीं येषु येषु भावेषु चिन्त्यो भगवान्, ते ते भावा वक्तव्याः, तत्त्वं च भगवतो वक्तव्यम् उक्तमपि, दुर्विज्ञेयत्वात्, इत्यतः श्रीभगवानुवाच—

श्रीभगवानुवाच—

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥**

भूयः एव भूयः पुनः हे महाबाहो शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचः वाक्यं यत् परमं ते तुभ्यं प्रीयमाणाय— मद्वचनात् प्रीयसे त्वम् अतीव अमृतमिव पिबन्, ततः— वक्ष्यामि हितकाम्यया हितेच्छया ॥

किमर्थम् अहं वक्ष्यामि इत्यत आह—

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

न मे विदुः न जानन्ति सुरगणाः ब्रह्मादयः । किं ते न विदुः? मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथवा प्रभवं प्रभवनम् उत्पत्तिम् । नापि महर्षयः भृग्वादयः विदुः । कस्मात् ते न विदुरित्युच्यते— अहम् आदिः कारणं हि यस्मात् देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥

किंच—

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

यः माम् अजम् अनादिं च, यस्मात् अहम् आदिः देवानां महर्षीणां च, न मम अन्यः आदिः विद्यते; अतः अहम् अजः अनादिश्च; अनादित्वम् अजत्वे हेतुः, तं माम् अजम् अनादिं च यः वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तम् ईश्वरं तुरीयम् अज्ञानतत्कार्यवर्जितम् असंमूढः संमोहवर्जितः सः मर्त्येषु मनुष्येषु, सर्वपापैः सर्वैः पापैः मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥

इतश्चाहं महेश्वरो लोकानाम्—

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥**

बुद्धिः अन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम्, तद्वन्तं बुद्धिमानिति हि वदन्ति । ज्ञानम् आत्मादिपदार्थानामवबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु विवेकपूर्विका प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अविकृतचित्तता । सत्यं यथादृष्टस्य यथाश्रुतस्य च आत्मानुभवस्य परबुद्धिसंक्रान्तये तथैव उच्चार्यमाणा वाक् सत्यम् उच्यते । दमः बाह्येन्द्रियोपशमः । शमः अन्तःकरणस्य उपशमः । सुखम् आह्लादः । दुःखं संतापः । भवः उद्भवः । अभावः तद्विपर्ययः । भयं च त्रासः, अभयमेव च तद्विपरीतम् ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥**

अहिंसा अपीडा प्राणिनाम् । समता समचित्तता । तुष्टिः संतोषः पर्याप्तबुद्धिर्लाभेषु । तपः इन्द्रियसंयमपूर्वकं शरीरपीडनम् । दानं यथाशक्ति संविभागः । यशः धर्मनिमित्ता कीर्तिः । अयशस्तु अधर्मनिमित्ता अकीर्तिः । भवन्ति भावाः

यथोक्ताः बुद्ध्यादयः भूतानां प्राणिनां मत्तः एव ईश्वरात् पृथग्विधाः नानाविधाः स्वकर्मानुरूपेण ॥

किंच—

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥**

महर्षयः सप्त भृग्वादयः पूर्वे अतीतकालसंबन्धिनः, चत्वारः मनवः तथा सावर्णा इति प्रसिद्धाः, ते च मद्भावाः मद्गतभावना: वैष्णवेन सामर्थ्येन उपेताः, मानसाः मनसैव उत्पादिताः मया जाताः उत्पन्नाः, येषां मनूनां महर्षीणां च सृष्टिः लोके इमाः स्थावरजङ्गमलक्षणाः प्रजाः ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥**

एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं च आत्मनः घटनम्, अथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योगः उच्यते, मम मदीयं योगं यः वेत्ति तत्त्वतः तत्त्वेन यथावदित्येतत्, सः अविकम्पेन अप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते । न अत्र संशयः न अस्मिन् अर्थे संशयः अस्ति ॥

कीदृशेन अविकम्पेन योगेन युज्यते इत्युच्यते—

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥**

अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभवः उत्पत्तिः । मत्तः एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत् प्रवर्तते । इति एवं मत्वा भजन्ते सेवन्ते मां बुधाः अवगतपरमार्थतत्त्वाः, भावसमन्विताः भावः भावना परमार्थतत्त्वाभिनिवेशः तेन समन्विताः संयुक्ताः इत्यर्थः ॥

किंच—

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥**

मच्चित्ताः, मयि चित्तं येषां ते मच्चित्ताः, मद्गतप्राणाः मां गताः प्राप्ताः चक्षुरादयः प्राणाः येषां ते मद्गतप्राणाः, मयि उपसंहृतकरणाः इत्यर्थः । अथवा, मद्गतप्राणाः मद्गतजीवनाः इत्येतत् । बोधयन्तः अवगमयन्तः परस्परम् अन्योन्यम्, कथयन्तश्च ज्ञानबलवीर्यादिधर्मैः विशिष्टं माम्, तुष्यन्ति च परितोषम् उपयान्ति च रमन्ति च रतिं च

प्राप्नुवन्ति प्रियसंगत्येव ॥

ये यथोक्तैः प्रकारैः भजन्ते मां भक्ताः सन्तः—

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥**

तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानाम् । किम् अर्थित्वादिना कारणेन? नेत्याह— प्रीतिपूर्वकं प्रीतिः स्नेहः तत्पूर्वकं मां भजतामित्यर्थः । ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगः बुद्धियोगः तं बुद्धियोगम्, येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरम् आत्मभूतम् आत्मत्वेन उपयान्ति प्रतिपद्यन्ते । के? ते ये मच्चित्तत्वादिप्रकारैः मां भजन्ते ॥

किमर्थम्, कस्य वा, त्वत्प्राप्तिप्रतिबन्धहेतोः नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासि इत्यपेक्षायामाह—

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥**

तेषामेव कथं नु नाम श्रेयः स्यात् इति अनुकम्पार्थं दया-

हेतोः अहम् अज्ञानजम् अविवेकतः जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमः नाशयामि, आत्मभावस्थः आत्मनः भावः अन्तःकरणाशयः तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥

यथोक्तां भगवतः विभूतिं योगं च श्रुत्वा अर्जुन उवाच—

अर्जुन उवाच—

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥**

परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान् । पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवम् आदिदेवं सर्वदेवानाम् आदौ भवम् आदिदेवम् अजं विभुं विभवनशीलम् ॥

ईदृशम्—

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥**

आहुः कथयन्ति त्वाम् ऋषयः वसिष्ठादयः सर्वे देवर्षिः नारदः तथा । असितः देवलोऽपि एवमेवाह, व्यासश्च, स्वयं चैव त्वं च ब्रवीषि मे ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥**

सर्वमेतत् यथोक्तम् ऋषिभिः त्वया च एतत् ऋतं सत्यमेव मन्ये, यत् मां प्रति वदसि भाषसे हे केशव । न हि ते तव भगवन् व्यक्तिं प्रभवं विदुः न देवाः, न दानवाः ॥

यतः त्वं देवादीनाम् आदिः, अतः—

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

स्वयमेव आत्मना आत्मानं वेत्थ जानासि त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तम् ईश्वरं पुरुषोत्तम। भूतानि भावयतीर्ति भूतभावनः, हे भूतभावन । भूतेश भूतानाम् ईशितः । हे देवदेव जगत्पते ॥

**वक्तुमर्हस्यशेषेण**
**दिव्या ह्यात्मविभूतयः ।**

**याभिर्विभूतिभिर्लोका-**
**निमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

वक्तुं कथयितुम् अर्हसि अशेषेण । दिव्याः हि आत्मविभूतयः । आत्मनो विभूतयो याः ताः वक्तुम् अर्हसि । याभिः विभूतिभिः आत्मनो माहात्म्यविस्तरैः इमान् लोकान् त्वं व्याप्य तिष्ठसि ॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥**

कथं विद्यां विजानीयाम् अहं हे योगिन् त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु वस्तुषु चिन्त्यः असि ध्येयः असि भगवन् मया ॥

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥**

विस्तरेण आत्मनः योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन, अर्दतेः गतिकर्मणः रूपम्, असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वात् जनार्दनः अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैः

जनैः याच्यते इति वा । भूयः पूर्वम् उक्तमपि कथय; तृप्तिः परितोषः हि यस्मात् नास्ति मे मम शृण्वतः त्वन्मुखनिःसृतवाक्यामृतम् ॥

श्रीभगवानुवाच—

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥**

हन्त इदानीं ते तव दिव्याः दिवि भवाः आत्मविभूतयः अत्मनः मम विभूतयः याः ताः कथयिष्यामि इत्येतत् । प्राधान्यतः यत्र यत्र प्रधाना या या विभूतिः तां तां प्रधानां प्राधान्यतः कथयिष्यामि अहं कुरुश्रेष्ठ । अशेषतस्तु वर्षशतेनापि न शक्या वक्तुम्, यतः नास्ति अन्तः विस्तरस्य मे मम विभूतीनाम् इत्यर्थः ॥

तत्र प्रथममेव तावत् शृणु—

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥**

अहम् आत्मा प्रत्यगात्मा गुडाकेश, गुडाका निद्रा तस्याः ईशः गुडाकेशः, जितनिद्रः इत्यर्थः; घनकेश इति वा । सर्वभूताशयस्थितः सर्वेषां भूतानाम् आशये अन्तर्हृदि

स्थितः अहम् आत्मा प्रत्यगात्मा नित्यं ध्येयः । तदशक्तेन च उत्तरेषु भावेषु चिन्त्यः अहम्; यस्मात् अहम् एव आदिः भूतानां कारणं तथा मध्यं च स्थितिः अन्तः प्रलयश्च ॥

एवं च ध्येयोऽहम्—

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

आदित्यानां द्वादशानां विष्णुः नाम आदित्यः अहम् । ज्योतिषां रविः प्रकाशयितॄणाम् अंशुमान् रश्मिमान् । मरीचिः नाम मरुतां मरुद्देवताभेदानाम् अस्मि । नक्षत्राणाम् अहं शशी चन्द्रमाः ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥**

वेदानां मध्ये सामवेदः अस्मि । देवानां रुद्रादित्यादीनां वासवः इन्द्रः अस्मि । इन्द्रियाणाम् एकादशानां चक्षुरादीनां मनश्च अस्मि संकल्पविकल्पात्मकं मनश्चास्मि । भूतानाम् अस्मि चेतना कार्यकरणसंघाते नित्याभिव्यक्ता बुद्धिवृत्तिः चेतना ॥

**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥**

रुद्राणाम् एकादशानां शंकरश्च अस्मि । वित्तेशः कुबेरः यक्षरक्षसां यक्षाणां रक्षसां च । वसूनाम् अष्टानां पावकश्च अस्मि अग्निः । मेरुः शिखरिणां शिखरवताम् अहम् ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥**

पुरोधसां च राजपुरोहितानां च मुख्यं प्रधानं मां विद्धि हे पार्थ बृहस्पतिम् । स हि इन्द्रस्येति मुख्यः स्यात् पुरोधाः । सेनानीनां सेनापतीनाम् अहं स्कन्दः देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरः अस्मि भवामि ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥**

महर्षीणां भृगुः अहम् । गिरां वाचां पदलक्षणानाम् एकम् अक्षरम् ओंकारः अस्मि । यज्ञानां जपयज्ञः अस्मि, स्थावराणां स्थितिमतां हिमालयः ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥**

अश्वत्थः सर्ववृक्षाणाम्, देवर्षीणां च नारदः देवाः एव सन्तः ऋषित्वं प्राप्ताः मन्त्रदर्शित्वात्ते देवर्षयः, तेषां नारदः अस्मि । गन्धर्वाणां चित्ररथः नाम गन्धर्वः अस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥**

उच्चैःश्रवसम् अश्वानां उच्चैःश्रवाः नाम अश्वराजः तं मां विद्धि विजानीहि अमृतोद्भवम् अमृतनिमित्तमथनोद्भवम् । ऐरावतम् इरावत्याः अपत्यं गजेन्द्राणां हस्तीश्वराणाम्, तम् 'मां विद्धि' इति अनुवर्तते । नराणां च मनुष्याणां नराधिपं राजानं मां विद्धि जानीहि ॥

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥**

आयुधानाम् अहं वज्रं दधीच्यस्थिसंभवम् । धेनूनां दोग्ध्रीणाम् अस्मि कामधुक् वसिष्ठस्य सर्वकामानां दोग्ध्री, सामा-

न्या वा कामधुक् । प्रजनः प्रजनयिता अस्मि कंदर्पः कामः सर्पाणां सर्पभेदानाम् अस्मि वासुकिः सर्पराजः ॥

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥**

अनन्तश्च अस्मि नागानां नागविशेषाणां नागराजश्च अस्मि । वरुणो यादसाम् अहम् अब्देवतानां राजा अहम् । पितॄणाम् अर्यमा नाम पितृराजश्च अस्मि । यमः संयमतां संयमनं कुर्वताम् अहम् ॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥**

प्रह्लादो नाम च अस्मि दैत्यानां दितिवंश्यानाम् । कालः कलयतां कलनं गणनं कुर्वताम् अहम् । मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वा अहम् । वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥**

पवनः वायुः पवतां पावयितॄणाम् अस्मि । रामः शस्त्रभृताम्

अहं शस्त्राणां धारयितॄणां दाशरथिः रामः अहम् । झषाणां मत्स्यादीनां मकरः नाम जातिविशेषः अहम् । स्रोतसां स्रवन्तीनाम् अस्मि जाह्नवी गङ्गा ॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥**

सर्गाणां सृष्टीनाम् आदिः अन्तश्च मध्यं चैव अहम् उत्पत्तिस्थितिलयाः अहम् अर्जुन । भूतानां जीवाधिष्ठितानामेव आदिः अन्तश्च इत्याद्युक्तम् उपक्रमे, इह तु सर्वस्यैव सर्गमात्रस्य इति विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात् प्रधानमस्मि । वादः अर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानम्, अतः सः अहम् अस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानाम् इह ग्रहणं प्रवदताम् इति ॥

**अक्षराणामकारोऽस्मि**
**द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो**
**धाताहं विश्वतोमुखः ॥ ३३ ॥**

अक्षराणां वर्णानाम् अकारः वर्णः अस्मि । द्वन्द्वः समासः अस्मि सामासिकस्य च समाससमूहस्य । किंच

अहमेव अक्षयः अक्षीणः कालः प्रसिद्धः क्षणाद्याख्यः, अथवा परमेश्वरः कालस्यापि कालः अस्मि । धाता अहं कर्मफलस्य विधाता सर्वजगतः विश्वतोमुखः सर्वतोमुखः ॥

**मृत्युः सर्वहरश्चाह-**
**मुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक्च नारीणां**
**स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

मृत्युः द्विविधः धनादिहरः प्राणहरश्च; तत्र यः प्राणहरः, स सर्वहरः उच्यते; सः अहम् इत्यर्थः । अथवा, परः ईश्वरः प्रलये सर्वहरणात् सर्वहरः, सः अहम् । उद्भवः उत्कर्षः अभ्युदयः तत्प्राप्तिहेतुश्च अहम् । केषाम्? भविष्यतां भाविकल्याणानाम्, उत्कर्षप्राप्तियोग्यानाम् इत्यर्थः । कीर्तिः श्रीः वाक् च नारीणां स्मृतिः मेधा धृतिः क्षमा इत्येताः उत्तमाः स्त्रीणाम् अहम् अस्मि, यासाम् आभासमात्रसंबन्धेनापि लोकः कृतार्थमात्मानं मन्यते ॥

**बृहत्साम तथा साम्नां**
**गायत्री च्छन्दसामहम् ।**

**मासानां मार्गशीर्षोऽह-**

**मृतूनां कुसुमाकरः ॥ ३५ ॥**

बृहत्साम तथा साम्नां प्रधानमस्मि । गायत्री च्छन्दसाम् अहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्री ऋक् अहम् अस्मि इत्यर्थः । मासानां मार्गशीर्षः अहम्, ऋतूनां कुसुमाकरः वसन्तः ॥

**द्यूतं छलयतामस्मि**

**तेजस्तेजस्विनामहम् ।**

**जयोऽस्मि व्यवसायोऽस्मि**

**सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**

द्यूतम् अक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणाम् अस्मि । तेजस्विनां तेजः अहम् । जयः अस्मि जेतॄणाम्, व्यवसायः अस्मि व्यवसायिनाम्, सत्त्वं सत्त्ववतां सात्त्विकानाम् अहम् ॥

**वृष्णीनां वासुदेवोऽस्मि**

**पाण्डवानां धनंजयः ।**

**मुनीनामप्यहं व्यासः**

**कवीनामुशना कविः ॥ ३७ ॥**

वृष्णीनां यादवानां वासुदेवः अस्मि अयमेव अहं त्वत्सखः। पाण्डवानां धनंजयः त्वमेव। मुनीनां मननशीलानां सर्वपदार्थज्ञानिनाम् अपि अहं व्यासः, कवीनां क्रान्तदर्शिनाम् उशना कविः अस्मि ॥

**दण्डो दमयतामस्मि**
**नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां**
**ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥**

दण्डः दमयतां दमयितॄणाम् अस्मि अदान्तानां दमनकारणम्। नीतिः अस्मि जिगीषतां जेतुमिच्छताम्। मौनं चैव अस्मि गुह्यानां गोप्यानाम्। ज्ञानं ज्ञानवताम् अहम् ॥

**यच्चापि सर्वभूतानां**
**बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्या-**
**न्मया भूतं चराचरम् ॥ ३९ ॥**

यच्चापि सर्वभूतानां बीजं प्ररोहकारणम्, तत् अहम् अर्जुन। प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह— न तत्

अस्ति भूतं चराचरं चरम् अचरं वा, मया विना यत् स्यात् भवेत् । मया अपकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्यात् । अतः मदात्मकं सर्वमित्यर्थः ॥

**नान्तोऽस्ति मम दिव्यानां**
**विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो**
**विभूतेर्विस्तरो मया ॥ ४० ॥**

न अन्तः अस्ति मम दिव्यानां विभूतीनां विस्तराणां परंतप । न हि ईश्वरस्य सर्वात्मनः दिव्यानां विभूतीनाम् इयत्ता शक्या वक्तुं ज्ञातुं वा केनचित् । एष तु उद्देशतः एकदेशेन प्रोक्तः विभूतेः विस्तरः मया ॥

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥४१॥**

यद्यत् लोके विभूतिमत् विभूतियुक्तं सत्त्वं वस्तु श्रीमत् ऊर्जितमेव वा श्रीर्लक्ष्मीः तया सहितम् उत्साहोपेतं वा, तत्तदेव अवगच्छ त्वं जानीहि मम ईश्वरस्य तेजोंशसंभवं तेजसः अंशः एकदेशः संभवः यस्य तत् तेजोंशसंभवमिति अवगच्छ त्वम् ॥

**अथवा बहुनैतेन**
**किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्न-**
**मेकांशेन स्थितो जगत् ॥ ४२ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम
दशमोऽध्यायः ॥

अथवा बहुना एतेन एवमादिना किं ज्ञातेन तव अर्जुन स्यात् सावशेषेण । अशेषतः त्वम् उच्यमानम् अर्थं शृणु— विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वा इदं कृत्स्नं जगत् एकांशेन एकावयवेन एकपादेन, सर्वभूतस्वरूपेण इत्येतत्; तथा च मन्त्रवर्णः— 'पादोऽस्य विश्वा भूतानि' इति; स्थितः अहम् इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**दशमोऽध्यायः ॥**

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

---

## एकादशोऽध्यायः

# एकादशोऽध्यायः ॥

भगवतो विभूतय उक्ताः । तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवता अभिहितं श्रुत्वा, यत् जगदात्मरूपम् आद्यमैश्वरं तत् साक्षात्कर्तुमिच्छन्, अर्जुन उवाच—

अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥**

मदनुग्रहाय ममानुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यम् अध्यात्मसंज्ञितम् आत्मानात्मविवेकविषयं यत् त्वया उक्तं वचः वाक्यं तेन ते वचसा मोहः अयं विगतः मम, अविवेकबुद्धिः अपगता इत्यर्थः ॥

किंच—

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥**

भवः उत्पत्तिः अप्ययः प्रलयः तौ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशः मया, न संक्षेपतः, त्वत्तः त्वत्सकाशात्, कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वत् अक्षिणी यस्य तव स त्वं कमलपत्राक्षः हे कमलपत्राक्ष, महात्मनः भावः माहात्म्यमपि च अव्ययम् अक्षयम् 'श्रुतम्' इति अनुवर्तते ॥

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

एवमेतत् नान्यथा यथा येन प्रकारेण आत्थ कथयसि त्वम् आत्मानं परमेश्वर । तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नम् ऐश्वरं वैष्णवं रूपं पुरुषोत्तम ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥**

मन्यसे चिन्तयसि यदि मया अर्जुनेन तत् शक्यं द्रष्टुम् इति प्रभो, स्वामिन्, योगेश्वर योगिनो योगाः, तेषां ईश्वरः योगेश्वरः, हे योगेश्वर । यस्मात् अहम् अतीव अर्थी द्रष्टुम्, ततः तस्मात् मे मदर्थं दर्शय त्वम् आत्मानम् अव्ययम् ॥

एवं चोदितः अर्जुनेन भगवान् उवाच—

श्रीभगवानुवाच—

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥**

पश्य मे पार्थ, रूपाणि शतशः अथ सहस्रशः, अनेकशः इत्यर्थः । तानि च नानाविधानि अनेकप्रकाराणि दिवि भवानि दिव्यानि अप्राकृतानि नानावर्णाकृतीनि च नाना विलक्षणाः नीलपीतादिप्रकाराः वर्णाः तथा आकृतयश्च अवयवसंस्थानविशेषाः येषां रूपाणां तानि नानावर्णाकृतीनि च ॥

**पश्यादित्यान्वसून्रुद्रा-**
**नश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि**
**पश्याश्चर्याणि भारत ॥ ६ ॥**

पश्य आदित्यान् द्वादश, वसून् अष्टौ, रुद्रान् एकादश, अश्विनौ द्वौ, मरुतः सप्त सप्त गणाः ये तान् । तथा च बहूनि अन्यान्यपि अदृष्टपूर्वाणि मनुष्यलोके त्वया, त्वत्तः अन्येन वा केनचित्, पश्य आश्चर्याणि अद्भुतानि भारत ॥

न केवलम् एतावदेव—

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

इह एकस्थम् एकस्मिन्नेव स्थितं जगत् कृत्स्नं समस्तं पश्य अद्य इदानीं सचराचरं सह चरेण अचरेण च वर्तते मम देहे गुडाकेश । यच्च अन्यत् जयपराजयादि, यत् शङ्कसे, 'यद्वा जयेम यदि वा नो जयेयुः' इति यत् अवोचः, तदपि द्रष्टुं यदि इच्छसि ॥

किं तु—

**न तु मां शक्यसे द्रष्टु-**
**मनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः**
**पश्य मे योगमैश्वरम् ॥ ८ ॥**

न तु मां विश्वरूपधरं शक्यसे द्रष्टुम् अनेनैव प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा । येन तु शक्यसे द्रष्टुं दिव्येन, तत् दिव्यं ददामि ते तुभ्यं चक्षुः । तेन पश्य मे योगम् ऐश्वरम् ईश्वरस्य मम ऐश्वरं योगं योगशक्त्यतिशयम् इत्यर्थः ॥

संजय उवाच—

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

एवं यथोक्तप्रकारेण उक्त्वा ततः अनन्तरं राजन् धृत-राष्ट्र, महायोगेश्वरः महांश्च असौ योगेश्वरश्च हरिः नारा-यणः दर्शयामास दर्शितवान् पार्थाय पृथासुताय परमं रूपं विश्वरूपम् ऐश्वरम् ॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥**

अनेकवक्त्रनयनम् अनेकानि वक्त्राणि नयनानि च य-स्मिन् रूपे तत् अनेकवक्त्रनयनम्, अनेकाद्भुतदर्शनम् अने-कानि अद्भुतानि विस्मापकानि दर्शनानि यस्मिन् रूपे तत् अनेकाद्भुतदर्शनं रूपम्, तथा अनेकदिव्याभरणम् अनेकानि दिव्यानि आभरणानि यस्मिन् तत् अनेकदिव्याभरणम्, तथा दिव्यानेकोद्यतायुधं दिव्यानि अनेकानि अस्यादीनि उद्यतानि आयुधानि यस्मिन् तत् दिव्यानेकोद्यतायुधम्, 'दर्शयामास' इति पूर्वेण संबन्धः ॥

किंच—

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाणि अम्बराणि वस्त्राणि च ध्रियन्ते येन ईश्वरेण तं दिव्यमाल्याम्बरधरम्, दिव्यगन्धानुलेपनं दिव्यं गन्धानुलेपनं यस्य तं दिव्यगन्धानुलेपनम्, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवम् अनन्तं न अस्य अन्तः अस्ति इति अनन्तः तम्, विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मभूतत्वात्, तं दर्शयामास । 'अर्जुनः ददर्श' इति वा अध्याह्रियते ॥

या पुनर्भगवतः विश्वरूपस्य भाः, तस्या उपमा उच्यते—

**दिवि सूर्यसहस्रस्य**
**भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्या-**
**द्भासस्तस्य महात्मनः ॥ १२ ॥**

दिवि अन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य सूर्यसहस्रस्य या युगपदुत्थिता भाः, सा यदि, सदृशी स्यात् तस्य महात्मनः विश्वरूपस्यैव

भासः । यदि वा न स्यात्, ततः विश्वरूपस्यैव भाः अतिरिच्यते इत्यभिप्रायः ॥

किंच—

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

तत्र तस्मिन् विश्वरूपे एकस्मिन् स्थितम् एकस्थं जगत् कृत्स्नं प्रविभक्तम् अनेकधा देवपितृमनुष्यादिभेदैः अपश्यत् दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डवः अर्जुनः तदा ॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

ततः तं दृष्ट्वा सः विस्मयेन आविष्टः विस्मयाविष्टः हृष्टानि रोमाणि यस्य सः अयं हृष्टरोमा च अभवत् धनंजयः । प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिः नमस्कारार्थं संपुटीकृतहस्तः सन् अभाषत उक्तवान् ॥

कथम्? यत् त्वया दर्शितं विश्वरूपम्, तत् अहं पश्यामीति स्वानुभवमाविष्कुर्वन् अर्जुन उवाच—

अर्जुन उवाच—

**पश्यामि देवांस्तव देव देहे**
**सर्वांस्तथा भूतविशेषसंघान् ।**
**ब्रह्माणमीशं कमलासनस्थ-**
**मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

पश्यामि उपलभे हे देव, तव देहे देवान् सर्वान्, तथा भूतविशेषसंघान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां संघाः भूतविशेषसंघाः तान्, किंच— ब्रह्माणं चतुर्मुखम् ईशम् ईशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः, ऋषींश्च वसिष्ठादीन् सर्वान्, उरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥

**अनेकबाहूदरवक्त्रनेत्रं**
**पश्यामि त्वा सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं**
**पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**

अनेकबाहूदरवक्त्रनेत्रम् अनेके बाहवः उदराणि वक्त्राणि नेत्राणि च यस्य तव सः त्वम् अनेकबाहूदरवक्त्रनेत्रः तम् अनेकबाहूदरवक्त्रनेत्रम् । पश्यामि त्वा त्वां सर्वतः सर्वत्र

अनन्तरूपम् अनन्तानि रूपाणि अस्य इति अनन्तरूपः तम् अनन्तरूपम् । न अन्तम्, अन्तः अवसानम्, न मध्यम्, मध्यं नाम द्वयोः कोट्योः अन्तरम्, न पुनः तव आदिम्— न देवस्य अन्तं पश्यामि, न मध्यं पश्यामि, न पुनः आदिं पश्यामि, हे विश्वेश्वर विश्वरूप ॥

किंच—

**किरीटिनं गदिनं चक्रिणं च**
**तेजोराशिं सर्वतोदीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-**
**द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥**

किरीटिनं किरीटं नाम शिरोभूषणविशेषः तत् यस्य अस्ति सः किरीटी तं किरीटिनम्, तथा गदिनं गदा अस्य विद्यते इति गदी तं गदिनम्, तथा चक्रिणं चक्रम् अस्य अस्तीति चक्री तं चक्रिणं च, तेजोराशिं तेजःपुञ्जं सर्वतोदीप्तिमन्तं सर्वतोदीप्तिः अस्य अस्तीति सर्वतोदीप्तिमान्, तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यः दुर्निरीक्ष्यः तं दुर्निरीक्ष्यं समन्तात् समन्ततः सर्वत्र दीप्तानलार्कद्युतिम् अनलश्च अर्कश्च अनलार्कौ दीप्तौ अनलार्कौ

दीप्तानलार्कौ तयोः दीप्तानलार्कयोः द्युतिरिव द्युतिः तेजः यस्य तव स त्वं दीप्तानलार्कद्युतिः तं त्वां दीप्तानलार्कद्युतिम् , अप्रमेयं न प्रमेयम् अशक्यपरिच्छेदम् इत्येतत् ॥

इत एव ते योगशक्तिदर्शनात् अनुमिनोमि—

**त्वमक्षरं परमं वेदितव्यं**
**त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता**
**सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

त्वम् अक्षरं न क्षरतीति, परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । त्वम् अस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयते अस्मिन्निति निधानं परः आश्रयः इत्यर्थः । किंच, त्वम् अव्ययः न तव व्ययो विद्यते इति अव्ययः, शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतः नित्यः धर्मः तस्य गोप्ता शाश्वतधर्मगोप्ता । सनातनः चिरंतनः त्वं पुरुषः परमः मतः अभिप्रेतः मे मम ॥

किंच—

**अनादिमध्यान्तमनन्तवीर्य-**
**मनन्तबाहुं शशिसूर्यनेत्रम् ।**

**पश्यामि त्वां दीप्तहुताशवक्त्रं**
**स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

अनादिमध्यान्तम् आदिश्च मध्यं च अन्तश्च न विद्यते यस्य सः अयम् अनादिमध्यान्तः तं त्वां अनादिमध्यान्तम्, अनन्तवीर्यं न तव वीर्यस्य अन्तः अस्ति इति अनन्तवीर्यः तं त्वाम् अनन्तवीर्यम्, तथा अनन्तबाहुम् अनन्ताः बाहवः यस्य तव सः त्वम्, अनन्तबाहुः तं त्वाम् अनन्तबाहुम्, शशिसूर्य-नेत्रं शशिसूर्यौ नेत्रे यस्य तव सः त्वं शशिसूर्यनेत्रः तं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनम्, पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्च असौ हुताशश्च वक्त्रं यस्य तव सः त्वं दीप्तहुताश-वक्त्रः तं त्वां दीप्तहुताशवक्त्रम्, स्वतेजसा विश्वम् इदं समस्तं तपन्तम् ॥

**द्यावापृथिव्योरिदमन्तरं हि**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाद्भुतं रूपमिदं तवोग्रं**
**लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

द्यावापृथिव्योः इदम् अन्तरं हि अन्तरिक्षं व्याप्तं त्वया एकेन विश्वरूपधरेण दिशश्च सर्वाः व्याप्ताः । दृष्ट्वा उपलभ्य

अद्भुतं विस्मापकं रूपम् इदं तव उग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन् अक्षुद्र-स्वभाव ॥

अथ अधुना पुरा 'यद्वा जयेम यदि वा नो जयेयुः इति अर्जुनस्य यः संशयः आसीत्, तन्निर्णयाय पाण्डवजयम् ऐकान्तिकं दर्शयामि इति प्रवृत्तो भगवान्। तं पश्यन् आह—

किंच—

**अमी हि त्वा सुरसंघा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥**

अमी हि युध्यमाना योद्धारः त्वा त्वां सुरसंघाः ये अत्र भूभारावताराय अवतीर्णाः वस्वादिदेवसंघाः मनुष्यसंस्थानाः त्वां विशन्ति प्रविशन्तः दृश्यन्ते। तत्र केचित् भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वाम् अन्ये पलायनेऽपि अशक्ताः सन्तः। युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तानि उपलक्ष्य स्वस्ति अस्तु जगतः इति उक्त्वा महर्षि-

सिद्धसंघाः महर्षीणां सिद्धानां च संघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥

किंचान्यत्—

**रुद्रादित्या वसवो ये च साध्या**
**विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसंघा**
**वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**

रुद्रादित्याः वसवो ये च साध्याः रुद्रादयः गणाः विश्वेदेवाः अश्विनौ च देवौ मरुतश्च ऊष्मपाश्च पितरः, गन्धर्वयक्षासुरसिद्धसंघाः गन्धर्वाः हाहाहूहूप्रभृतयः यक्षाः कुबेरप्रभृतयः असुराः विरोचनप्रभृतयः सिद्धाः कपिलादयः तेषां संघाः गन्धर्वयक्षासुरसिद्धसंघाः, ते वीक्षन्ते पश्यन्ति त्वां विस्मिताः विस्मयमापन्नाः सन्तः ते एव सर्वे ॥

यस्मात्—

**रूपं महत्ते बहुवक्त्रनेत्रं**
**महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं**
**दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥**

रूपं महत् अतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिन् तत् रूपं बहुवक्त्रनेत्रम्, हे महाबाहो, बहुबाहूरुपादं बहवो बाहवः ऊरवः पादाश्च यस्मिन् रूपे तत् बहुबाहूरुपादम्, किंच, बहूदरं बहूनि उदराणि यस्मिन्निति बहूदरम्, बहुदंष्ट्राकरालं बह्वीभिः दंष्ट्राभिः करालं विकृतं तत् बहुदंष्ट्राकरालम्, दृष्ट्वा रूपम् ईदृशं लोकाः लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिताः भयेन; तथा अहमपि ॥

तत्रेदं कारणम्—

**नभःस्पृशं दीप्तमनेकवर्णं**
**व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा**
**धृतिं न विन्दामि शमं च विष्णो ॥**

नभःस्पृशं द्युस्पर्शम् इत्यर्थः, दीप्तं प्रज्वलितम्, अनेकवर्णम् अनेके वर्णाः भयंकराः नानासंस्थानाः यस्मिन् त्वयि तं त्वाम् अनेकवर्णम्, व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननम्, दीप्तविशाल-नेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि

यस्मिन् त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतः अन्तरात्मा मनः यस्य मम सः अहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमं च उपशमनं मनस्तुष्टिं हे विष्णो ॥

कस्मात्—

**दंष्ट्राकरालानि च ते मुखानि**
**दृष्ट्वैव कालानलसंनिभानि ।**
**दिशो न जाने न लभे च शर्म**
**प्रसीद देवेश जगन्निवास ॥ २५ ॥**

दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैव उपलभ्य कालानलसंनिभानि प्रलयकाले लोकानां दाहकः अग्निः कालानलः तत्सदृशानि कालानलसंनिभानि मुखानि दृष्ट्वेत्येतत् । दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातः अस्मि । अतः न लभे च न उपलभे च शर्म सुखम् । अतः प्रसीद प्रसन्नो भव हे देवेश, जगन्निवास ॥

येभ्यो मम पराजयाशङ्का या आसीत् सा च अपगता । यतः—

**अमी च त्वां धृतराष्ट्रस्य पुत्राः**
**सर्वे सहैवावनिपालसंघैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ**
**सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

अमी च त्वां धृतराष्ट्रस्य पुत्राः दुर्योधनप्रभृतयः—'त्वरमाणाः विशन्ति' इति व्यवहितेन संबन्धः—सर्वे सहैव सहिताः अवनिपालसंघैः अवनिं पृथ्वीं पालयन्तीति अवनिपालाः तेषां संघैः, किंच भीष्मो द्रोणः सूतपुत्रः कर्णः तथा असौ सह अस्मदीयैरपि धृष्टद्युम्नप्रभृतिभिः योधमुख्यैः योधानां मुख्यैः प्रधानैः सह ॥

किंच—

**वक्त्राणि ते त्वरमाणा विशन्ति**
**दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु**
**संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**

वक्त्राणि मुखानि ते तव त्वरमाणाः त्वरायुक्ताः सन्तः विशन्ति, किंविशिष्टानि मुखानि? दंष्ट्राकरालानि भयान-

कानि भयंकराणि । किंच, केचित् मुखानि प्रविष्टानां मध्ये विलग्नाः दशनान्तरेषु मांसमिव भक्षितं संदृश्यन्ते उपलभ्यन्ते चूर्णितैः चूर्णीकृतैः उत्तमाङ्गैः शिरोभिः ॥

कथं प्रविशन्ति मुखानि इत्याह—

**यथा नदीनां बहवोऽम्बुवेगाः**
**समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा**
**विशन्ति वक्त्राण्यभिविज्वलन्ति ॥**

यथा नदीनां स्रवन्तीनां बहवः अनेके अम्बूनां वेगाः अम्बुवेगाः त्वराविशेषाः समुद्रमेव अभिमुखाः प्रतिमुखाः द्रवन्ति प्रविशन्ति, तथा तद्वत् तव अमी भीष्मादयः नरलोकवीराः मनुष्यलोके शूराः विशन्ति वक्त्राणि अभिविज्वलन्ति प्रकाशमानानि ॥

ते किमर्थं प्रविशन्ति कथं च इत्याह—

**यथा प्रदीप्तं ज्वलनं पतङ्गा**
**विशन्ति नाशाय समृद्धवेगाः ।**

**तथैव नाशाय विशन्ति लोका-**
**स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

यथा प्रदीप्तं ज्वलनम् अग्निं पतङ्गाः पक्षिणः विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्धः उद्भूतः वेगः गतिः येषां ते समृद्धवेगाः, तथैव नाशाय विशन्ति लोकाः प्राणिनः तवापि वक्त्राणि समृद्धवेगाः ॥

त्वं पुनः—

**लेलिह्यसे ग्रसमानः समन्ता-**
**ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं**
**भासस्तवोग्राः प्रतपन्ति विष्णो ॥**

लेलिह्यसे आस्वादयसि ग्रसमानः अन्तः प्रवेशयन् समन्तात् समन्ततः लोकान् समग्रान् समस्तान् वदनैः वक्त्रैः ज्वलद्भिः दीप्यमानैः तेजोभिः आपूर्य संव्याप्य जगत् समग्रं सह अग्रेण समस्तम् इत्येतत् । किंच, भासः दीप्तयः तव उग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील ॥

यतः एवमुग्रस्वभावः, अतः—

**आख्याहि मे को भवानुग्ररूपो**
**नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं**
**न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥**

आख्याहि कथय मे मह्यं कः भवान् उग्ररूपः क्रूराकारः, नमः अस्तु ते तुभ्यं हे देववर देवानां प्रधान, प्रसीद प्रसादं कुरु । विज्ञातुं विशेषेण ज्ञातुम् इच्छामि भवन्तम् आद्यम् आदौ भवम् आद्यम्, न हि यस्मात् प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥

श्रीभगवानुवाच—

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो**
**लोकान्समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वा न भविष्यन्ति सर्वे**
**येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥**

कालः अस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धः वृद्धिं गतः । यदर्थं प्रवृद्धः तत् शृणु—

लोकान् समाहर्तुं संहर्तुम् इह अस्मिन् काले प्रवृत्तः । ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे, येभ्यः तव आशङ्का, ये अवस्थिताः प्रत्यनीकेषु अनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेषु अनीकेषु योधाः योद्धारः ॥

यस्मात् एवम्—

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व**
**जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव**
**निमित्तमात्रं भव सव्यसाचिन् ॥३३॥**

तस्मात् त्वम् उत्तिष्ठ 'भीष्मप्रभृतयः अतिरथाः अजेयाः देवैरपि, अर्जुनेन जिताः' इति यशः लभस्व; केवलं पुण्यैः हि तत् प्राप्यते । जित्वा शत्रून् दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धम् असपत्नम् अकण्टकम् । मया एव एते निहताः निश्चयेन हताः प्राणैः वियोजिताः पूर्वमेव । निमित्तमात्रं भव त्वं हे सव्यसाचिन्, सव्येन वामेनापि हस्तेन शराणां क्षेप्ता सव्यसाची इति उच्यते अर्जुनः ॥

**द्रोणं च भीष्मं च जयद्रथं च**
**कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा**
**युध्यस्व जेतासि रणे सपत्नान् ॥३४॥**

द्रोणं च, येषु येषु योधेषु अर्जुनस्य आशङ्का तांस्तान् व्यपदिशति भगवान्, मया हतानिति । तत्र द्रोणभीष्मयोः तावत् प्रसिद्धम् आशङ्काकारणम् । द्रोणस्तु धनुर्वेदाचार्यः दिव्यास्त्रसंपन्नः, आत्मनश्च विशेषतः गुरुः गरिष्ठः । भीष्मश्च स्वच्छन्दमृत्युः दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धम् अगमत्, न च पराजितः । तथा जयद्रथः, यस्य पिता तपः चरति 'मम पुत्रस्य शिरः भूमौ निपातयिष्यति यः, तस्यापि शिरः पतिष्यति' इति । कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनः यतः, अतः तन्नाम्नैव निर्देशः । मया हतान् त्वं जहि निमित्तमात्रेण । मा व्यथिष्ठाः तेभ्यः भयं मा कार्षीः । युध्यस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥

संजय उवाच—

**एतच्छ्रुत्वा वचनं केशवस्य**
**कृताञ्जलिर्वेपमानः किरीटी ।**

**नमस्कृत्वा भूय एवाह कृष्णं**
**सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥**

एतत् श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्वा, भूयः पुनः एव आह उक्तवान् कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात् स्नेहाविष्टस्य च हर्षोद्भवात्, अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः; ततश्च वाचः अपाटवं मन्दशब्दत्वं यत् स गद्गदः तेन सह वर्तत इति सगद्गदं वचनम् आह इति वचनक्रियाविशेषणम् एतत् । भीतभीतः पुनः पुनः भयाविष्टचेताः सन् प्रणम्य प्रह्वः भूत्वा, 'आह' इति व्यवहितेन संबन्धः ॥

अत्र अवसरे संजयवचनं साभिप्रायम् । कथम्? द्रोणादिषु अर्जुनेन निहतेषु अजेयेषु चतुर्षु, निराश्रयः दुर्योधनः निहतः एव इति मत्वा धृतराष्ट्रः जयं प्रति निराशः सन् संधिं करिष्यति, ततः शान्तिः उभयेषां भविष्यति इति । तदपि न अश्रौषीत् धृतराष्ट्रः भवितव्यवशात् ॥

अर्जुन उवाच—

**स्थाने हृषीकेश तव प्रकीर्त्या**
**जगत्प्रहृष्यत्यनुरज्यते च ।**

**रक्षांसि भीतानि दिशो द्रवन्ति**
**सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥**

स्थाने युक्तम् । किं तत्? तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन, हे हृषीकेश, यत् जगत् प्रहृष्यति प्रहर्षम् उपैति, तत् स्थाने युक्तम्, इत्यर्थः । अथवा विषयविशेषणं स्थाने इति । युक्तः हर्षादिविषयः भगवान्, यतः ईश्वरः सर्वात्मा सर्वभूतसुहृच्च इति । तथा अनुरज्यते अनुरागं च उपैति; तच्च विषये इति व्याख्येयम् । किंच, रक्षांसि भीतानि भयाविष्टानि दिशः द्रवन्ति गच्छन्ति; तच्च स्थाने विषये । सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसंघाः सिद्धानां समुदायाः कपिलादीनाम्, तच्च स्थाने ॥

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति—

**कस्माच्च ते न नमेरन्महात्म-**
**न्गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास**
**त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

कस्माच्च हेतोः ते तुभ्यं न नमेरन् नमस्कुर्युः हे महा-

त्मन्, गरीयसे गुरुतराय; यतः ब्रह्मणः हिरण्यगर्भस्य अपि आदिकर्ता कारणम् अतः तस्मात् आदिकर्त्रे । कथम् एते न नमस्कुर्युः? अतः हर्षादीनां नमस्कारस्य च स्थानं त्वं अर्हः विषयः इत्यर्थः । हे अनन्त देवेश हे जगन्निवास त्वम् अक्षरं तत् परम्, यत् वेदान्तेषु श्रूयते । किं तत्? सदसत् इति । सत् विद्यमानम्, असत् च यत्र नास्ति इति बुद्धिः; ते उपधानभूते सदसती यस्य अक्षरस्य, यद्द्वारेण सदसती इति उपचर्यते । परमार्थतस्तु सदसतोः परं तत् अक्षरं यत् अक्षरं वेदविदः वदन्ति । तत् त्वमेव, न अन्यत् इति अभिप्रायः ॥

पुनरपि स्तौति—

**त्वमादिदेवः पुरुषः पुराण-**
**स्त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्तासि वेद्यं च परं च धाम**
**त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥**

त्वम् आदिदेवः, जगतः स्रष्टृत्वात् । पुरुषः, पुरि शयनात् पुराणः चिरंतनः त्वम् एव अस्य विश्वस्य परं प्रकृष्टं निधानं निधीयते अस्मिन् जगत् सर्वं महाप्रलयादौ इति । किंच,

वेत्ता असि, वेदिता असि सर्वस्यैव वेद्यजातस्य । यत् च वेद्यं वेदनार्हं तच्च असि परं च धाम परमं पदं वैष्णवम् । त्वया ततं व्याप्तं विश्वं समस्तम्, हे अनन्तरूप अन्तो न विद्यते तव रूपाणाम् ॥

किंच—

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः**
**प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः**
**पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥**

वायुः त्वं यमश्च अग्निः वरुणः अपां पतिः शशाङ्कः चन्द्रमाः प्रजापतिः त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहः, ब्रह्मणोऽपि पिता इत्यर्थः । नमो नमः ते तुभ्यम् अस्तु सहस्रकृत्वः । पुनश्च भूयोऽपि नमो नमः ते । बहुशो नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वसुचा उच्यते । 'पुनश्च' 'भूयोऽपि' इति श्रद्धाभक्त्यतिशयात् अपरितोषम् आत्मनः दर्शयति ॥

तथा—

**नमः पुरस्तादथ पृष्ठतस्ते**
**नमोऽस्तु ते सर्वत एव सर्व ।**

**अनन्तवीर्यामितविक्रमस्त्वं**
**सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यम् , अथ पृष्ठतः ते पृष्ठतः अपि च ते नमोऽस्तु, ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व । अनन्तवीर्यामितविक्रमः अनन्तं वीर्यम् अस्य, अमितः विक्रमः अस्य । वीर्यं सामर्थ्यं विक्रमः पराक्रमः । वीर्यवानपि कश्चित् शत्रुवधादिविषये न पराक्रमते, मन्दपराक्रमो वा। त्वं तु अनन्तवीर्यः अमितविक्रमश्च इति अनन्तवीर्यामितविक्रमः । सर्वं समस्तं जगत् समाप्नोषि सम्यक् एकेन आत्मना व्याप्नोषि यतः, ततः तस्मात् असि भवसि सर्वः त्वम् , त्वया विनाभूतं न किंचित् अस्ति इति अभिप्रायः ॥

यतः अहं त्वन्माहात्म्यापरिज्ञानात् अपराद्धः, अतः—

**सखेति मत्वा प्रसभं यदुक्तं**
**हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं**
**मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥**

सखा समानवयाः इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्र-

सभम् अभिभूय प्रसह्य यत् उक्तं हे कृष्ण हे यादव हे सखेति च अजानता अज्ञानिना मूढेन; किम् अजानता इति आह— महिमानं माहात्म्यं तव इदम् ईश्वरस्य विश्वरूपम् । 'तव इदं महिमानम् अजानता' इति वैयधिकरण्येन संबन्धः । 'तवेमम्' इति पाठः यदि अस्ति, तदा सामानाधिकरण्यमेव । मया प्रमादात् विक्षिप्तचित्ततया, प्रणयेन वापि, प्रणयो नाम स्नेहनिमित्तः विस्रम्भः, तेनापि कारणेन यत् उक्तवान् अस्मि ॥

**यच्चावहासार्थमसत्कृतोऽसि**
**विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत तत्समक्षं**
**तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

यच्च अवहासार्थं परिहासप्रयोजनाय असत्कृतः परिभूतः असि भवसि; क? विहारशय्यासनभोजनेषु, विहरणं विहारः पादव्यायामः, शयनं शय्या, आसनम् आस्थायिका, भोजनम् अदनम्, इति एतेषु विहारशय्यासनभोजनेषु, एकः परोक्षः सन् असत्कृतः असि परिभूतः असि; अथवापि हे अच्युत, तत् समक्षम्, तच्छब्दः क्रियाविशेषणार्थः, प्रत्यक्षं

वा असत्कृतः असि तत् सर्वम् अपराधजातं क्षामये क्षमां कारये त्वाम् अहम् अप्रमेयं प्रमाणातीतम् ॥

यतः त्वम्—

**पितासि लोकस्य चराचरस्य**
**त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो**
**लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥**

पिता असि जनयिता असि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य । न केवलं त्वम् अस्य जगतः पिता, पूज्यश्च पूजार्हः, यतः गुरुः गरीयान् गुरुतरः । कस्मात् गुरुतरः त्वम् इति आह— न त्वत्समः त्वत्तुल्यः अस्ति । न हि ईश्वरद्वयं संभवति, अनेकेश्वरत्वे व्यवहारानुपपत्तेः । त्वत्सम एव तावत् अन्यः न संभवति; कुतः एव अन्यः अभ्यधिकः स्यात् लोकत्रयेऽपि सर्वस्मिन्? अप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा, न विद्यते प्रतिमा यस्य तव प्रभावस्य सः त्वम् अप्रतिमप्रभावः, हे अप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः ॥

यतः एवम्—

**तस्मात्प्रणम्य प्रणिधाय कायं**
**प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः**
**प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥**

तस्मात् प्रणम्य नमस्कृत्य, प्रणिधाय प्रकर्षेण नीचैः धृत्वा कायं शरीरम्, प्रसादये प्रसादं कारये त्वाम् अहम् ईशम् ईशितारम्, ईड्यं स्तुत्यम् । त्वं पुनः पुत्रस्य अपराधं पिता यथा क्षमते, सर्वं सखा इव सख्युः अपराधम्, यथा वा प्रियः प्रियायाः अपराधं क्षमते, एवम् अर्हसि हे देव सोढुं प्रसहितुम् क्षन्तुम् इत्यर्थः ॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा**
**भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं**
**प्रसीद देवेश जगन्निवास ॥ ४५ ॥**

अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वम् इदं विश्वरूपं तव मया अन्यैर्वा, तत् अहं दृष्ट्वा हृषितः अस्मि । भयेन च प्रव्यथितं मनः मे । अतः तदेव मे मम दर्शय हे देव रूपं

यत् मत्सखम् । प्रसीद देवेश, जगन्निवास जगतो निवासो जगन्निवासः, हे जगन्निवास ॥

**किरीटिनं गदिनं चक्रहस्त-**
**मिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन**
**सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तम् इच्छामि त्वां प्रार्थये त्वां द्रष्टुम् अहं तथैव, पूर्ववत् इत्यर्थः । यतः एवम्, तस्मात् तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन, सहस्रबाहो वार्तमानिकेन विश्वरूपेण, भव विश्वमूर्ते; उपसंहृत्य विश्वरूपम्, तेनैव रूपेण भव इत्यर्थः ॥

अर्जुनं भीतम् उपलभ्य, उपसंहृत्य विश्वरूपम्, प्रियवचनेन आश्वासयन् श्रीभगवान् उवाच—

श्रीभगवानुवाच—

**मया प्रसन्नेन तवार्जुनेदं**
**रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं**
**यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥**

मया प्रसन्नेन, प्रसादो नाम त्वयि अनुग्रहबुद्धिः, तद्वता प्रसन्नेन मया तव हे अर्जुन, इदं परं रूपं विश्वरूपं दर्शितम् आत्मयोगात् आत्मनः ऐश्वर्यस्य सामर्थ्यात् । तेजोमयं तेजःप्रायं विश्वं समस्तम् अनन्तम् अन्तरहितं आदौ भवम् आद्यं यत् रूपं मे मम त्वदन्येन त्वत्तः अन्येन केनचित् न दृष्टपूर्वम् ॥

आत्मनः मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्तः इति तत् स्तौति—

**न वेदयज्ञाध्ययनैर्न दानै-**
**र्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके**
**द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

न वेदयज्ञाध्ययनैः चतुर्णामपि वेदानाम् अध्ययनैः यथावत् यज्ञाध्ययनैश्च— वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथक् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्— तथा न दानैः तुलापुरुषादिभिः, न च क्रियाभिः अग्निहोत्रादिभिः श्रौतादिभिः, न अपि तपोभिः उग्रैः चान्द्रायणादिभिः उग्रैः घोरैः, एवंरूपः यथादर्शितं विश्वरूपं

यस्य सोऽहम् एवंरूपः न शक्यः अहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तः अन्येन कुरुप्रवीर ॥

**मा ते व्यथा मा च विमूढभावो**
**दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं**
**तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

मा ते व्यथा मा भूत् ते भयम्, मा च विमूढभावः विमूढचित्तता, दृष्ट्वा उपलभ्य रूपं घोरम् ईदृक् यथादर्शितं मम इदम् । व्यपेतभीः विगतभयः, प्रीतमनाश्च सन् पुनः भूयः त्वं तदेव चतुर्भुजं रूपं शङ्खचक्रगदाधरं तव इष्टं रूपम् इदं प्रपश्य ॥

संजय उवाच—

**इत्यर्जुनं वासुदेवस्तथोक्त्वा**
**स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं**
**भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥**

इति एवम् अर्जुनं वासुदेवः तथाभूतं वचनम् उक्त्वा,

स्वकं वसुदेवस्य गृहे जातं रूपं दर्शयामास दर्शितवान् भूयः पुनः । आश्वासयामास च आश्वासितवान् भीतम् एनम्, भूत्वा पुनः सौम्यवपुः प्रसन्नदेहः महात्मा ॥

अर्जुन उवाच—

**दृष्ट्वेदं मानुषं रूपं**
**तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः**
**सचेताः प्रकृतिं गतः ॥ ५१ ॥**

दृष्ट्वा इदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन, इदानीम् अधुना अस्मि संवृत्तः संजातः । किम्? सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्च अस्मि ॥

श्रीभगवानुवाच—

**सुदुर्दर्शमिदं रूपं**
**दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य**
**नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

सुदुर्दर्शं सुष्ठु दुःखेन दर्शनम् अस्य इति सुदुर्दर्शम्, इदं

रूपं दृष्टवान् असि यत् मम, देवा: अपि अस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिण: ; दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्त:, न द्रक्ष्यन्ति च इति अभिप्राय: ॥

कस्मात् ?—

**नाहं वेदैर्न तपसा**
**न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं**
**दृष्टवानसि मां यथा ॥ ५३ ॥**

न अहं वेदै: ऋग्यजु:सामाथर्ववेदै: चतुर्भिरपि, न तपसा उग्रेण चान्द्रायणादिना, न दानेन गोभूहिरण्यादिना, न च इज्यया यज्ञेन पूजया वा शक्य: एवंविध: यथादर्शितप्रकार: द्रष्टुं दृष्टवान् असि मां यथा त्वम् ॥

कथं पुन: शक्य: इति उच्यते—

**भक्त्या त्वनन्यया शक्य**
**अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन**
**प्रवेष्टुं च परंतप ॥ ५४ ॥**

भक्त्या तु किंविशिष्टया इति आह— अनन्यया अपृथग्भूतया, भगवतः अन्यत्र पृथक् न कदाचिदपि या भवति सा त्वनन्या भक्तिः । सर्वैरपि करणैः वासुदेवादन्यत् न उपलभ्यते यया, सा अनन्या भक्तिः, तया भक्त्या शक्यः अहम् एवंविधः विश्वरूपप्रकारः हे अर्जुन, ज्ञातुं शास्त्रतः । न केवलं ज्ञातुं शास्त्रतः, द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः, प्रवेष्टुं च मोक्षं च गन्तुं परंतप ॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतः अर्थः निःश्रेयसार्थः अनुष्ठेयत्वेन समुच्चित्य उच्यते—

**मत्कर्मकृन्मत्परमो**
**मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु**
**यः स मामेति पाण्डव ॥ ५५ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्म-
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विश्वरूपदर्शनयोगो नाम
एकादशोऽध्यायः ॥

मत्कर्मकृत् मदर्थं कर्म मत्कर्म, तत् करोतीति मत्कर्मकृत् । मत्परमः— करोति भृत्यः स्वामिकर्म, न तु आत्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते ; अयं तु मत्कर्मकृत् मामेव परमां गतिं प्रतिपद्यते इति मत्परमः, अहं परमः परा गतिः यस्य सोऽयं मत्परमः । तथा मद्भक्तः मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजते इति मद्भक्तः । सङ्गवर्जितः धनपुत्रमित्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहः तद्वर्जितः । निर्वैरः निर्गतवैरः सर्वभूतेषु शत्रुभावरहितः आत्मनः अत्यन्तापकारप्रवृत्तेष्वपि । यः ईदृशः मद्भक्तः सः माम् एति, अहमेव तस्य परा गतिः, न अन्या गतिः काचित् भवति । अयं तव उपदेशः इष्टः मया उपदिष्टः हे पाण्डव इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**एकादशोऽध्यायः ॥**

# द्वादशोऽध्यायः ॥

द्वितीयाध्यायप्रभृतिषु विभूत्यन्तेषु अध्यायेषु परमात्मनः ब्रह्मणः अक्षरस्य विध्वस्तसर्वोपाधिविशेषस्य उपासनम् उक्तम्; सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेः ईश्वरस्य तव च उपासनं तत्र तत्र उक्तम्। विश्वरूपाध्याये तु ऐश्वरम् आद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितम् उपासनार्थमेव त्वया। तच्च दर्शयित्वा उक्तवानसि 'मत्कर्मकृत्' इत्यादि। अतः अहम् अनयोः उभयोः पक्षयोः विशिष्टतरबुभुत्सया त्वां पृच्छामि इति अर्जुन उवाच—

अर्जुन उवाच—

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।**<br>
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥**

एवम् इति अतीतानन्तरश्लोकेन उक्तम् अर्थं परा-

मृशति 'मत्कर्मकृत्' इत्यादिना। एवं सततयुक्ताः, नैर-न्तर्येण भगवत्कर्मादौ यथोक्ते अर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः। ये भक्ताः अनन्यशरणाः सन्तः त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति; ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणः यथाविशेषितं ब्रह्म अक्षरं निरस्तसर्वोपाधित्वात् अव्यक्तम् अकरणगोचरम्। यत् हि करणगोचरं तत् व्यक्तम् उच्यते, अञ्जेः धातोः तत्कर्मक-त्वात्; इदं तु अक्षरं तद्विपरीतम्, शिष्टैश्च उच्यमानैः विशेषणैः विशिष्टम्, तत् ये चापि पर्युपासते, तेषाम् उभयेषां मध्ये के योगवित्तमाः? के अतिशयेन योगविदः इत्यर्थः॥

श्रीभगवान् उवाच—ये तु अक्षरोपासकाः सम्यग्दर्शिनः निवृत्तैषणाः, ते तावत् तिष्ठन्तु; तान् प्रति यत् वक्तव्यम्, तत् उपरिष्टात् वक्ष्यामः। ये तु इतरे—

श्रीभगवानुवाच—

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ २॥**

मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनः, ये

भक्ताः सन्तः, मां सर्वयोगेश्वराणाम् अधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिम्, नित्ययुक्ताः अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्तः उपासते श्रद्धया परया प्रकृष्टया उपेताः, ते मे मम मताः अभिप्रेताः युक्ततमाः इति । नैरन्तर्येण हि ते मच्चित्ततया अहोरात्रम् अतिवाहयन्ति । अतः युक्तं तान् प्रति युक्ततमाः इति वक्तुम् ॥

किमितरे युक्ततमाः न भवन्ति? न; किंतु तान् प्रति यत् वक्तव्यम्, तत् शृणु—

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**

ये तु अक्षरम् अनिर्देश्यम्, अव्यक्तत्वात् अशब्दगोचर इति न निर्देष्टुं शक्यते, अतः अनिर्देश्यम्, अव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तात् उपासते। उपासनं नाम यथाशास्त्रम् उपास्यस्य अर्थस्य विषयीकरणेन सामीप्यम् उपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यत् आसनम्, तत् उपासनमाचक्षते । अक्षरस्य विशेषणमाह उपास्यस्य— सर्वत्रगं व्योमवत् व्यापि अचिन्त्यं च अव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरम्, तत् मनसापि

चिन्त्यम्, तद्विपरीतत्वात् अचिन्त्यम् अक्षरम्, कूटस्थं दृश्यमानगुणम् अन्तर्दोषं वस्तु कूटम्। 'कूटरूपम्' 'कूटसाक्ष्यम्' इत्यादौ कूटशब्दः प्रसिद्धः लोके। तथा च अविद्याद्यनेकसंसारबीजम् अन्तर्दोषवत् मायाव्याकृतादिशब्दवाच्यतया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत् तत् कूटम्, तस्मिन् कूटे स्थितं कूटस्थं तदध्यक्षतया। अथवा, राशिरिव स्थितं कूटस्थम्। अत एव अचलम्। यस्मात् अचलम्, तस्मात् ध्रुवम्, नित्यमित्यर्थः॥

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥ ४॥**

संनियम्य सम्यक् नियम्य उपसंहृत्य इन्द्रियग्रामम् इन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिः येषाम् इष्टानिष्टप्राप्तौ ते समबुद्धयः। ते ये एवंविधाः ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। न तु तेषां वक्तव्यं किंचित् 'मां ते प्राप्नुवन्ति' इति; 'ज्ञानी त्वात्मैव मे मतम्' इति हि उक्तम्। न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम्॥

किं तु—

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

क्लेशः अधिकतरः, यद्यपि मत्कर्मादिपराणां क्लेशः अधिक एव क्लेशः अधिकतरस्तु अक्षरात्मनां परमात्मदर्शिनां देहाभिमानपरित्यागनिमित्तः । अव्यक्तासक्तचेतसाम् अव्यक्ते आसक्तं चेतः येषां ते अव्यक्तासक्तचेतसः तेषाम् अव्यक्तासक्तचेतसाम् । अव्यक्ता हि यस्मात् या गतिः अक्षरात्मिका दुःखं सा देहवद्भिः देहाभिमानवद्भिः अवाप्यते, अतः क्लेशः अधिकतरः ॥

अक्षरोपासकानां यत् वर्तनम्, तत् उपरिष्टाद्वक्ष्यामः—

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

ये तु सर्वाणि कर्माणि मयि ईश्वरे संन्यस्य मत्पराः अहं परः येषां ते मत्पराः सन्तः अनन्येनैव अविद्यमानम् अन्यत् आलम्बनं विश्वरूपं देवम् आत्मानं मुक्त्वा यस्य सः अनन्यः तेन अनन्येनैव; केन? योगेन समाधिना मां ध्यायन्तः चिन्तयन्तः उपासते ॥

तेषां किम्?—

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्॥**

तेषां मदुपासनैकपराणाम् अहम् ईश्वरः समुद्धर्ता। कुतः इति आह— मृत्युसंसारसागरात् मृत्युयुक्तः संसारः मृत्युसंसारः, स एव सागर इव सागरः, दुस्तरत्वात्, तस्मात् मृत्युसंसारसागरात् अहं तेषां समुद्धर्ता भवामि न चिरात्। किं तर्हि? क्षिप्रमेव हे पार्थ, मयि आवेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं चेतः येषां ते मय्यावेशितचेतसः तेषाम्॥

यतः एवम्, तस्मात्—

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥**

मयि एव विश्वरूपे ईश्वरे मनः संकल्पविकल्पात्मकं आधत्स्व स्थापय। मयि एव अध्यवसायं कुर्वतीं बुद्धिम् आधत्स्व निवेशय। ततः ते किं स्यात् इति शृणु— निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं

करिष्यसि एव अतः शरीरपातात् ऊर्ध्वम् । न संशयः संशयः अत्र न कर्तव्यः ॥

**अथ चित्तं समाधातुं**
**न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो**
**मामिच्छाप्तुं धनंजय ॥ ९ ॥**

अथ एवं यथा अवोचं तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरम् अचलं न शक्नोषि चेत्, ततः पश्चात् अभ्यासयोगेन, चित्तस्य एकस्मिन् आलम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनम् अभ्यासः, तत्पूर्वको योगः समाधानलक्षणः तेन अभ्यासयोगेन मां विश्वरूपम् इच्छ प्रार्थयस्व आप्तुं प्राप्तुं हे धनंजय ॥

**अभ्यासेऽप्यसमर्थोऽसि**
**मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि**
**कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

अभ्यासे अपि असमर्थः असि अशक्तः असि, तर्हि मत्क-

र्मपरमः भव मदर्थं कर्म मत्कर्म तत्परमः मत्कर्मपरमः, मत्कर्मप्रधानः इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेण अवाप्स्यसि ॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

अथ पुनः एतदपि यत् उक्तं मत्कर्मपरमत्वम्, तत् कर्तुम् अशक्तः असि, मद्योगम् आश्रितः मयि क्रियमाणानि कर्माणि संन्यस्य यत् करणं तेषाम् अनुष्ठानं सः मद्योगः, तम् आश्रितः सन्, सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततः अनन्तरं कुरु यतात्मवान् संयतचित्तः सन् इत्यर्थः ॥

इदानीं सर्वकर्मफलत्यागं स्तौति—

**श्रेयो हि ज्ञानमभ्यासा-**
**ज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्याग-**
**स्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

श्रेयः हि प्रशस्यतरं ज्ञानम् । कस्मात्? विवेकपूर्वकात् अभ्यासात् । तस्मादपि ज्ञानात् ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानात् अपि कर्मफलत्यागः, 'विशिष्यते' इति अनुषज्यते । एवं कर्मफलत्यागात् पूर्वविशेषणवतः शान्तिः उपशमः सहेतुकस्य संसारस्य अनन्तरमेव स्यात्, न तु कालान्तरम् अपेक्षते ॥

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनम् उपदिष्टम्, न प्रथममेव । अतश्च 'श्रेयो हि ज्ञानमभ्यासात्' इत्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते, संपन्नसाधनानुष्ठानाशक्तौ अनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वम्? 'यदा सर्वे प्रमुच्यन्ते' इति सर्वकामप्रहाणात् अमृतत्वम् उक्तम्; तत् प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तकर्मणां फलानि । तत्त्यागे च विदुषः ध्याननिष्ठस्य अनन्तरैव शान्तिः इति सर्वकामत्यागसामान्यम् अज्ञकर्मफलत्यागस्य अस्ति इति तत्सामान्यात् सर्वकर्मफलत्यागस्तुतिः इयं प्ररोचनार्था । यथा अगस्त्येन ब्राह्मणेन समुद्रः पीतः इति इदानींतनाः अपि ब्राह्मणाः ब्राह्मणत्वसामान्यात् स्तूयन्ते, एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयःसाधनत्वमभिहितम् ॥

अत्र च आत्मेश्वरभेदमाश्रित्य विश्वरूपे ईश्वरे चेतःसमाधानलक्षणः योगः उक्तः, ईश्वरार्थं कर्मानुष्ठानादि च। 'अथैतदप्यशक्तोऽसि' इति अज्ञानकार्यसूचनात् न अभेददर्शिनः अक्षरोपासकस्य कर्मयोगः उपपद्यते इति दर्शयति; तथा कर्मयोगिनः अक्षरोपासनानुपपत्तिम्। 'ते प्राप्नुवन्ति मामेव' इति अक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यम् उक्त्वा, इतरेषां पारतन्त्र्यात् ईश्वराधीनतां दर्शितवान् 'तेषामहं समुद्धर्ता' इति। यदि हि ईश्वरस्य आत्मभूताः ते मताः अभेददर्शित्वात्, अक्षरस्वरूपाः एव ते इति समुद्धरणकर्मवचनं तान् प्रति अपेशलं स्यात्। यस्माच्च अर्जुनस्य अत्यन्तमेव हितैषी भगवान् तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेव उपदिशति। न च आत्मानम् ईश्वरं प्रमाणतः बुद्ध्वा कस्यचित् गुणभावं जिगमिषति कश्चित्, विरोधात्। तस्मात् अक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षात् अमृतत्वकारणं वक्ष्यामीति प्रवर्तते—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥**

अद्वेष्टा सर्वभूतानां न द्वेष्टा, आत्मनः दुःखहेतुमपि न

किंचित् द्वेष्टि, सर्वाणि भूतानि आत्मत्वेन हि पश्यति । मैत्रः मित्रभावः मैत्री मित्रतया वर्तते इति मैत्रः । करुणः एव च, करुणा कृपा दुःखितेषु दया, तद्वान् करुणः, सर्वभूताभयप्रदः, संन्यासी इत्यर्थः । निर्ममः ममप्रत्ययवर्जितः । निरहंकारः निर्गताहंप्रत्ययः । समदुःखसुखः समे दुःखसुखे द्वेषरागयोः अप्रवर्तके यस्य सः समदुःखसुखः । क्षमी क्षमावान्, आक्रुष्टः अभिहतो वा अविक्रियः एव आस्ते ॥

**संतुष्टः सततं योगी**
**यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धि-**
**र्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभे अलाभे च उत्पन्नालंप्रत्ययः । तथा गुणवल्लाभे विपर्यये च संतुष्टः । सततं योगी समाहितचित्तः । यतात्मा संयतस्वभावः । दृढनिश्चयः दृढः स्थिरः निश्चयः अध्यवसायः यस्य आत्मतत्त्वविषये स दृढनिश्चयः । मय्यर्पितमनोबुद्धिः संकल्पविकल्पात्मकं मनः, अध्यवसायलक्षणा बुद्धिः, ते मय्येव अर्पिते स्थापिते यस्य संन्यासिनः सः मय्यर्पितमनोबुद्धिः । यः

ईदृशः मद्भक्तः सः मे प्रियः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमे अध्याये सूचितम्, तत् इह प्रपञ्चयते ॥

**यस्मान्नोद्विजते लोको**
**लोकान्नोद्विजते च यः।**
**हर्षामर्षभयोद्वेगै-**
**र्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

यस्मात् संन्यासिनः न उद्विजते न उद्वेगं गच्छति न संतप्यते न संक्षुभ्यति लोकः, तथा लोकात् न उद्विजते च यः, हर्षामर्षभयोद्वेगैः हर्षश्च अमर्षश्च भयं च उद्वेगश्च तैः हर्षामर्षभयोद्वेगैः मुक्तः; हर्षः प्रियलाभे अन्तःकरणस्य उत्कर्षः रोमाञ्चनाश्रुपातादिलिङ्गः, अमर्षः असहिष्णुता, भयं त्रासः, उद्वेगः उद्विग्नता, तैः मुक्तः यः स च मे प्रियः ॥

**अनपेक्षः शुचिर्दक्ष**
**उदासीनो गतव्यथः।**
**सर्वारम्भपरित्यागी**
**यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

देहेन्द्रियविषयसंबन्धादिषु अपेक्षाविषयेषु अनपेक्षः निः-स्पृहः । शुचिः बाह्येन आभ्यन्तरेण च शौचेन संपन्नः । दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यः यथावत् प्रतिपत्तुं समर्थः । उदासीनः न कस्यचित् मित्रादेः पक्षं भजते यः, सः उदासीनः यतिः । गतव्यथः गतभयः । सर्वारम्भपरित्यागी आरभ्यन्त इति आरम्भाः इहामुत्रफलभोगार्थानि काम-हेतूनि कर्माणि सर्वारम्भाः, तान् परित्यक्तुं शीलम् अस्येति सर्वारम्भपरित्यागी यः मद्भक्तः सः मे प्रियः ॥

किंच—

**यो न हृष्यति न द्वेष्टि**
**न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी**
**भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

यः न हृष्यति इष्टप्राप्तौ, न द्वेष्टि अनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न च अप्राप्तं काङ्क्षति, शुभाशुभे कर्मणी परित्यक्तुं शीलम् अस्य इति शुभाशुभपरित्यागी भक्तिमान् यः सः मे प्रियः ॥

**समः शत्रौ च मित्रे च**
**तथा मानापमानयोः ।**

**शीतोष्णसुखदुःखेषु**
**समः सङ्गविवर्जितः ॥ १८ ॥**

समः शत्रौ च मित्रे च, तथा मानापमानयोः पूजापरिभवयोः, शीतोष्णसुखदुःखेषु समः, सर्वत्र च सङ्गविवर्जितः ॥

किंच—

**तुल्यनिन्दास्तुतिर्मौनी**
**संतुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमति-**
**र्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

तुल्यनिन्दास्तुतिः निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये यस्य सः तुल्यनिन्दास्तुतिः । मौनी मौनवान् संयतवाक् । संतुष्टः येन केनचित् शरीरस्थितिहेतुमात्रेण; तथा च उक्तम्— 'येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदुः' इति । किंच, अनिकेतः निकेतः आश्रयः निवासः नियतः न विद्यते यस्य सः अनिकेतः, 'नागारे' इत्यादिस्मृत्यन्त-

रात् । स्थिरमतिः स्थिरा परमार्थविषया यस्य मतिः सः स्थिरमतिः । भक्तिमान् मे प्रियः नरः ॥

'अद्वेष्टा सर्वभूतानाम्, इत्यादिना अक्षरोपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तम् उपसंह्रियते—

**ये तु धर्म्यामृतमिदं**
**यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा**
**भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम
**द्वादशोऽध्यायः ॥**

ये तु संन्यासिनः धर्म्यामृतं धर्मादनपेतं धर्म्यं च तत् अमृतं च तत्, अमृतत्वहेतुत्वात्, इदं यथोक्तम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिना पर्युपासते अनुतिष्ठन्ति श्रद्दधानाः

सन्तः मत्परमाः यथोक्तः अहं अक्षरात्मा परमः निरतिशया गतिः येषां ते मत्परमाः, मद्भक्ताः च उत्तमां परमार्थज्ञानलक्षणां भक्तिमाश्रिताः, ते अतीव मे प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति यत् सूचितं तत् व्याख्याय इह उपसंहृतम् 'भक्तास्तेऽतीव मे प्रियाः' इति । यस्मात् धर्म्यामृतमिदं यथोक्तमनुतिष्ठन् भगवतः विष्णोः परमेश्वरस्य अतीव प्रियः भवति, तस्मात् इदं धर्म्यामृतं मुमुक्षुणा यत्नतः अनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणा इति वाक्यार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

द्वादशोऽध्यायः ॥

# त्रयोदशोऽध्यायः ॥

सप्तमे अध्याये सूचिते द्वे प्रकृती ईश्वरस्य— त्रिगुणात्मिका अष्टधा भिन्ना अपरा, संसारहेतुत्वात्; परा च अन्या जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मिका— याभ्यां प्रकृतिभ्यामीश्वरः जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते। तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वतः ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्यायः आरभ्यते। अतीतानन्तराध्याये च 'अद्वेष्टा सर्वभूतानाम्' इत्यादिना यावत् अध्यायपरिसमाप्तिः तावत् तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्ते इत्येतत् उक्तम्। केन पुनः ते तत्त्वज्ञानेन युक्ताः यथोक्तधर्माचरणात् भगवतः प्रिया भवन्तीति एवमर्थश्च अयमध्यायः आरभ्यते। प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते। सोऽयं संघातः इदं शरीरम्। तदेतत् भगवान् उवाच—

श्रीभगवानुवाच—

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥**

इदम् इति सर्वनाम्ना उक्तं विशिनष्टि शरिरम् इति । हे कौन्तेय, क्षतत्राणात्, क्षयात्, क्षरणात्, क्षेत्रवद्वा अस्मिन् कर्मफलनिष्पत्तेः क्षेत्रम् इति— इतिशब्दः एवंशब्दपदार्थकः—क्षेत्रम् इत्येवम् अभिधीयते कथ्यते । एतत् शरीरं क्षेत्रं यः वेत्ति विजानाति, आपादतलमस्तकं ज्ञानेन विषयीकरोति, स्वाभाविकेन औपदेशिकेन वा वेदनेन विषयीकरोति विभागशः, तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञः इति— इतिशब्दः एवंशब्दपदार्थकः एव पूर्ववत्— क्षेत्रज्ञः इत्येवम् आहुः । के? तद्विदः तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥

एवं क्षेत्रक्षेत्रज्ञौ उक्तौ । किम् एतावन्मात्रेण ज्ञानेन ज्ञातव्यौ इति? न इति उच्यते—

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरम् असंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञः ब्रह्मादिस्तम्बपर्यन्ताने-

कक्षेत्रोपाधिप्रविभक्तः, तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धि इति अभिप्रायः । हे भारत, यस्मात् क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरम् अन्यत् अवशिष्टम् अस्ति, तस्मात् क्षेत्रक्षेत्रज्ञयोः ज्ञेयभूतयोः यत् ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते, तत् ज्ञानं सम्यग्ज्ञानम् इति मतम् अभिप्रायः मम ईश्वरस्य विष्णोः ॥

ननु सर्वक्षेत्रेषु एक एव ईश्वरः, न अन्यः तद्व्यतिरिक्तः भोक्ता विद्यते चेत्, ततः ईश्वरस्य संसारित्वं प्राप्तम्; ईश्वरव्यतिरेकेण वा संसारिणः अन्यस्य अभावात् संसाराभावप्रसङ्गः । तच्च उभयमनिष्टम्, बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्, प्रत्यक्षादिप्रमाणविरोधाच्च । प्रत्यक्षेण तावत् सुखदुःखतद्धेतुलक्षणः संसारः उपलभ्यते; जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारः अनुमीयते । सर्वमेतत् अनुपपन्नमात्मेश्वरैकत्वे ॥

न; ज्ञानाज्ञानयोः अन्यत्वेनोपपत्तेः— 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' । तथा तयोः विद्याविद्याविषययोः फलभेदोऽपि विरुद्धः निर्दिष्टः— 'श्रेयश्च प्रेयश्च' इति; विद्याविषयः श्रेयः, प्रेयस्तु अविद्याकार्यम् इति । तथा च व्यासः—'द्वाविमावथ पन्थानौ' इत्यादि, 'इमौ

द्वावेव पन्थानौ' इत्यादि च। इह च द्वे निष्ठे उक्ते। अविद्या च सह कार्येण हातव्या इति श्रुतिस्मृतिन्यायेभ्यः अवगम्यते। श्रुतयः तावत्— 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय' 'विद्वान्न बिभेति कुतश्चन'। अविदुषस्तु— 'अथ तस्य भयं भवति, अविद्यायामन्तरे वर्तमानाः' 'ब्रह्म वेद ब्रह्मैव भवति' 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' आत्मवित् यः 'स इदं सर्वं भवति'; 'यदा चर्मवत्' इत्याद्याः सहस्रशः। स्मृतयश्च— 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' 'समं पश्यन् हि सर्वत्र' इत्याद्याः। न्यायतश्च— 'सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति। अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथाविशिष्टम्'। तथा च— देहादिषु आत्मबुद्धिः अविद्वान् रागद्वेषादिप्रयुक्तः धर्माधर्मानुष्ठानकृत जायते म्रियते च इति अवगम्यते; देहादिव्यतिरिक्तात्मदर्शिनः रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमात् मुच्यन्ते इति न केनचित् प्रत्याख्यातुं शक्यं न्यायतः। तत्र एवं सति, क्षेत्रज्ञस्य ईश्वरस्यैव सतः अवि-

द्याकृतोपाधिभेदतः संसारित्वमिव भवति, यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धः देहादिषु अनात्मसु आत्मभावः निश्चितः अविद्याकृतः, यथा स्थाणौ पुरुषनिश्चयः; न च एतावता पुरुषधर्मः स्थाणोः भवति, स्थाणुधर्मो वा पुरुषस्य, तथा न चैतन्यधर्मो देहस्य, देहधर्मो वा चेतनस्य सुखदुःखमोहात्मकत्वादिः आत्मनः न युक्तः; अविद्याकृतत्वाविशेषात्, जरामृत्युवत् ॥

न, अतुल्यत्वात्; इति चेत्— स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रा अन्योन्यस्मिन् अध्यस्तौ अविद्यया; देहात्मनोस्तु ज्ञेयज्ञात्रोरेव इतरेतराध्यासः, इति न समः दृष्टान्तः । अतः देहधर्मः ज्ञेयोऽपि ज्ञातुरात्मनः भवतीति चेत्, न; अचैतन्यादिप्रसङ्गात् । यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छादयः ज्ञातुः भवन्ति, तर्हि, 'ज्ञेयस्य क्षेत्रस्य धर्माः केचित् आत्मनः भवन्ति अविद्याध्यारोपिताः, जरामरणादयस्तु न भवन्ति' इति विशेषहेतुः वक्तव्यः । 'न भवन्ति' इति अस्ति अनुमानम्— अविद्याध्यारोपितत्वात् जरामरणादिवत् इति, हेयत्वात्, उपादेयत्वाच्च इत्यादि । तत्र एवं सति, कर्तृत्वभोक्तृत्वलक्षणः संसारः ज्ञेयस्थः ज्ञातरि अविद्यया अध्यारोपितः इति, न

तेन ज्ञातुः किंचित् दुष्यति, यथा बालैः अध्यारोपितेन आकाशस्य तलमलिनत्वादिना ॥

एवं च सति, सर्वक्षेत्रेष्वपि सतः भगवतः क्षेत्रज्ञस्य ईश्वरस्य संसारित्वगन्धमात्रमपि नाशङ्क्यम् । न हि क्वचिदपि लोके अविद्याध्यस्तेन धर्मेण कस्यचित् उपकारः अपकारो वा दृष्टः ॥

यत्तु उक्तम्— न समः दृष्टान्तः इति, तत् असत् । कथम्? अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम् । तत् न व्यभिचरति । यत्तु ज्ञातरि व्यभिचरति इति मन्यसे, तस्यापि अनैकान्तिकत्वं दर्शितं जरादिभिः ॥

अविद्यावत्त्वात् क्षेत्रज्ञस्य संसारित्वम् इति चेत्, न; अविद्यायाः तामसत्वात् । तामसो हि प्रत्ययः, आवरणात्मकत्वात् अविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा; विवेकप्रकाशभावे तदभावात्, तामसे च आवरणात्मके तिमिरादिदोषे सति अग्रहणादेः अविद्यात्रयस्य उपलब्धेः ॥

अत्र आह— एवं तर्हि ज्ञातृधर्मः अविद्या । न; करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः । यत्तु मन्यसे— ज्ञातृधर्मः

अविद्या, तदेव च अविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम्; तत्र यदुक्तम् 'ईश्वर एव क्षेत्रज्ञः, न संसारी' इत्येतत् अयुक्तमिति— तत् न; यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्। न विपरीतादिग्रहणं तन्निमित्तं वा तैमिरिकत्वादिदोषः ग्रहीतुः, चक्षुषः संस्कारेण तिमिरे अपनीते ग्रहीतुः अदर्शनात् न ग्रहीतुर्धर्मः यथा; तथा सर्वत्रैव अग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचित् भवितुमर्हन्ति, न ज्ञातुः क्षेत्रज्ञस्य। संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवत् न ज्ञातृधर्मत्वम्— संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम्; सर्वकरणवियोगे च कैवल्ये सर्ववादिभिः अविद्यादिदोषवत्त्वानभ्युपगमात्। आत्मनः यदि क्षेत्रज्ञस्य अग्न्युष्णवत् स्वः धर्मः, ततः न कदाचिदपि तेन वियोगः स्यात्। अविक्रियस्य च व्योमवत् सर्वगतस्य अमूर्तस्य आत्मनः केनचित् संयोगवियोगानुपपत्तेः, सिद्धं क्षेत्रज्ञस्य नित्यमेव ईश्वरत्वम्; 'अनादित्वान्निर्गुणत्वात्' इत्यादीश्वरवचनाच्च ॥

ननु एवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति चेत्, न; सर्वैरभ्युपगतत्वात्। सर्वैर्हि आत्मवादिभिः अभ्युपगतः दोषः न एकेन परिहर्तव्यः भवति।

कथम् अभ्युपगतः इति? मुक्तात्मनां हि संसारसंसारित्वव्यवहाराभावः सर्वैरेव आत्मवादिभिः इष्यते। न च तेषां शास्त्रानर्थक्यादिदोषप्राप्तिः अभ्युपगता। तथा नः क्षेत्रज्ञानाम् ईश्वरैकत्वे सति, शास्त्रानर्थक्यं भवतु; अविद्याविषये च अर्थवत्त्वम्— यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वम्, न मुक्तावस्थायाम्, एवम्॥

ननु आत्मनः बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां सर्वेषाम्। अतः हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यात्। अद्वैतिनां पुनः, द्वैतस्य अपरमार्थत्वात्, अविद्याकृतत्वात् बन्धावस्थायाश्च आत्मनः अपरमार्थत्वे निर्विषयत्वात्, शास्त्राद्यानर्थक्यम् इति चेत्, न; आत्मनः अवस्थाभेदानुपपत्तेः। यदि तावत् आत्मनः बन्धमुक्तावस्थे, युगपत् स्याताम्, क्रमेण वा। युगपत् तावत् विरोधात् न संभवतः स्थितिगती इव एकस्मिन्। क्रमभावित्वे च, निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गः। अन्यनिमित्तत्वे च स्वतः अभावात् अपरमार्थत्वप्रसङ्गः। तथा च सति अभ्युपगमहानिः। किंच, बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्या, अनादिमती अन्तवती च; तच्च प्रमाणविरुद्धम्। तथा मोक्षावस्था आदिमती अनन्ता च

प्रमाणविरुद्धैव अभ्युपगम्यते । न च अवस्थावतः अवस्था-
न्तरं गच्छतः नित्यत्वम् उपपादयितुं शक्यम् । अथ अनि-
त्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यते, अतः
द्वैतिनामपि शास्त्रानर्थक्यादिदोषः अपरिहार्य एव; इति
समानत्वात् न अद्वैतवादिना परिहर्तव्यः दोषः ॥

न च शास्त्रानर्थक्यम्, यथाप्रसिद्धाविद्वत्पुरुषविषयत्वात्
शास्त्रस्य । अविदुषां हि फलहेत्वोः अनात्मनोः आत्मदर्शनम्,
न विदुषाम्; विदुषां हि फलहेतुभ्याम् आत्मनः अन्यत्व-
दर्शने सति, तयोः अहमिति आत्मदर्शनानुपपत्तेः । न हि
अत्यन्तमूढः उन्मत्तादिरपि जलाग्न्योः छायाप्रकाशयोर्वा
ऐकात्म्यं पश्यति; किमुत विवेकी । तस्मात् न विधिप्रति-
षेधशास्त्रं तावत् फलहेतुभ्याम् आत्मनः अन्यत्वदर्शिनः
भवति । न हि 'देवदत्त, त्वम् इदं कुरु' इति कस्मिंश्चित्
कर्मणि नियुक्ते, विष्णुमित्रः 'अहं नियुक्तः' इति तत्रस्थः
नियोगं शृण्वन्नपि प्रतिपद्यते । वियोगविषयविवेकाग्रहणात्
तु उपपद्यते प्रतिपत्तिः; तथा फलहेत्वोरपि ॥

ननु प्राकृतसंबन्धापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविष-
या—फलहेतुभ्याम् अन्यात्मविषयदर्शनेऽपि सति—इष्टफल-
हेतौ प्रवर्तितः अस्मि, अनिष्टफलहेतोश्च निवर्तितः अस्मीति;

यथा पितृपुत्रादीनाम् इतरेतरात्मान्यत्वदर्शने सत्यपि अन्यो-न्यनियोगप्रतिषेधार्थप्रतिपत्तिः । न ; व्यतिरिक्तात्मदर्शनप्रति-पत्तेः प्रागेव फलहेत्वोः आत्माभिमानस्य सिद्धत्वात् । प्रति-पन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्याम् आत्मनः अन्यत्वं प्रतिपद्यते, न पूर्वम् । तस्मात् विधिप्रतिषेधशास्त्रम् अवि-द्वद्विषयम् इति सिद्धम् ॥

ननु 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' इत्यादौ आत्मव्यतिरेकदर्शिनाम् अप्रवृत्तौ, केवलदेहाद्यात्मदृष्टीनां च ; अतः कर्तुः अभावात् शास्त्रानर्थक्यमिति चेत्, न; यथाप्र-सिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित् तावत् न प्रवर्तते । तथा नैरात्म्यवाद्यपि नास्ति परलोकः इति न प्रवर्तते । यथाप्रसिद्धितस्तु विधिप्रतिषेध-शास्त्रश्रवणान्यथानुपपत्त्या अनुमितात्मास्तित्वः आत्मविशे-षानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रवर्तते । इति सर्वेषां नः प्रत्यक्षम् । अतः न शास्त्रानर्थक्यम् ॥

विवेकिनाम् अप्रवृत्तिदर्शनात् तदनुगामिनाम् अप्रवृत्तौ शास्त्रानर्थक्यम् इति चेत्, न; कस्यचिदेव विवेकोपपत्तेः । अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्यात्, यथेदानीम् । न च विवेकिनम् अनुवर्तन्ते मूढाः, रागादिदोषतन्त्रत्वात्

प्रवृत्तेः, अभिचरणादौ च प्रवृत्तिदर्शनात्, स्वाभाव्याच्च प्रवृत्तेः— 'स्वभावस्तु प्रवर्तते' इति हि उक्तम् ॥

तस्मात् अविद्यामात्रं संसारः यथादृष्टविषयः एव । न क्षेत्रज्ञस्य केवलस्य अविद्या तत्कार्यं च । न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम् । न हि ऊषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकम् । तथा अविद्या क्षेत्रज्ञस्य न किंचित् कर्तुं शक्नोति । अतश्चेदमुक्तम्— 'क्षेत्रज्ञं चापि मां विद्धि,' 'अज्ञानेनावृतं ज्ञानम्' इति च ॥

अथ किमिदं संसारिणामिव 'अहमेवम्' 'ममैवेदम्' इति पण्डितानामपि? शृणु; इदं तत् पाण्डित्यम्, यत् क्षेत्रे एव आत्मदर्शनम् । यदि पुनः क्षेत्रज्ञम् अविक्रियं पश्येयुः, ततः न भोगं कर्म वा आकाङ्क्षेयुः 'मम स्यात्' इति । विक्रियैव भोगकर्मणी । अथ एवं सति, फलार्थित्वात् अविद्वान् प्रवर्तते । विदुषः पुनः अविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्यकरणसंघातव्यापारोपरमे निवृत्तिः उपचर्यते ॥

इदं च अन्यत् पाण्डित्यं केषांचित् अस्तु— क्षेत्रज्ञः ईश्वर एव। क्षेत्रं च अन्यत् क्षेत्रज्ञस्यैव विषयः । अहं तु संसारी सुखी दुःखी च। संसारोपरमश्च मम कर्तव्यः क्षेत्र-

क्षेत्रज्ञविज्ञानेन, ध्यानेन च ईश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्च एवं बुध्यते, यश्च बोधयति, नासौ क्षेत्रज्ञः इति । एवं मन्वानः यः सः पण्डितापशदः, संसारमोक्षयोः शास्त्रस्य च अर्थवत्त्वं करोमीति; आत्महा स्वयं मूढः अन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वात्, श्रुतहानिम् अश्रुतकल्पनां च कुर्वन् । तस्मात् असंप्रदायवित् सर्वशास्त्रविदपि मूर्खवदेव उपेक्षणीयः ॥

यत्तूक्तम् 'ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति, क्षेत्रज्ञानां च ईश्वरैकत्वे संसारिणः अभावात् संसाराभावप्रसङ्गः' इति, एतौ दोषौ प्रत्युक्तौ 'विद्याविद्ययोः वैलक्षण्याभ्युपगमात्' इति । कथम्? अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति । तथा च दृष्टान्तः दर्शितः— मरीच्यम्भसा ऊषरदेशो न पङ्कीक्रियते इति । संसारिणः अभावात् संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोः अविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः ॥

ननु अविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषः । तत्कृतं च सुखित्वदुःखित्वादि प्रत्यक्षम् उपलभ्यते इति चेत्, न; ज्ञेयस्य क्षेत्रधर्मत्वात्, ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत् किंचित् क्षेत्रज्ञस्य दोषजातम् अविद्यमानम् आसञ्ज-

यसि, तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव, न क्षेत्रज्ञधर्मत्वम् । न च तेन क्षेत्रज्ञः दुष्यति, ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः । यदि हि संसर्गः स्यात्, ज्ञेयत्वमेव नोपपद्येत । यदि आत्मनः धर्मः अविद्यावत्त्वं दुःखित्वादि च कथं भोः प्रत्यक्षम् उपलभ्यते, कथं वा क्षेत्रज्ञधर्मः । 'ज्ञेयं च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञः' इति अवधारिते, 'अविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वम्' इति विरुद्धम् उच्यते अविद्यामात्रावष्टम्भात् केवलम् ॥

अत्र आह—सा अविद्या कस्य इति । यस्य दृश्यते तस्य एव । कस्य दृश्यते इति । अत्र उच्यते— 'अविद्या कस्य दृश्यते? इति प्रश्नः निरर्थकः । कथम्? दृश्यते चेत् अविद्या, तद्वन्तमपि पश्यसि । न च तद्वति उपलभ्यमाने 'सा कस्य?' इति प्रश्नो युक्तः । न हि गोमति उपलभ्यमाने 'गावः कस्य?' इति प्रश्नः अर्थवान् भवति । ननु विषमो दृष्टान्तः । गवां तद्वतश्च प्रत्यक्षत्वात् तत्संबन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः । न तथा अविद्या तद्वांश्च प्रत्यक्षौ, यतः प्रश्नः निरर्थकः स्यात् । अप्रत्यक्षेण अविद्यावता अविद्यासंबन्धे ज्ञाते, किं तव स्यात्? अविद्यायाः अनर्थहेतुत्वात् परिहर्तव्या स्यात् । यस्य अवि-

द्या, सः तां परिहरिष्यति । ननु ममैव अविद्या । जानासि तर्हि अविद्यां तद्वन्तं च आत्मानम् । जानामि, न तु प्रत्यक्षेण । अनुमानेन चेत् जानासि, कथं संबन्धग्रहणम्? न हि तव ज्ञातुः ज्ञेयभूतया अविद्यया तत्काले संबन्धः ग्रहीतुं शक्यते, अविद्याया विषयत्वेनैव ज्ञातुः उपयुक्तत्वात् । न च ज्ञातुः अविद्यायाश्च संबन्धस्य यः ग्रहीता, ज्ञानं च अन्यत् तद्विषयं संभवति; अनवस्थाप्राप्तेः । यदि ज्ञात्रापि ज्ञेयसंबन्धो ज्ञायते, अन्यः ज्ञाता कल्प्यः स्यात्, तस्यापि अन्यः, तस्यापि अन्यः इति अनवस्था अपरिहार्या । यदि पुनः अविद्या ज्ञेया, अन्यद्वा ज्ञेयं ज्ञेयमेव । तथा ज्ञातापि ज्ञातैव, न ज्ञेयं भवति । यदा च एवम्, अविद्यादुःखित्वाद्यैः न ज्ञातुः क्षेत्रज्ञस्य किंचित् दुष्यति ॥

ननु अयमेव दोषः, यत् दोषवत्क्षेत्रविज्ञातृत्वम्; न च विज्ञानस्वरूपस्यैव अविक्रियस्य विज्ञातृत्वोपचारात्; यथा उष्णतामात्रेण अग्नेः तप्तिक्रियोपचारः, तद्वत् । यथा अत्र भगवता क्रियाकारकफलात्मत्वाभावः आत्मनि स्वत एव दर्शितः—अविद्याध्यारोपितः एव क्रियाकारकादिः आत्मनि उपचर्यते; तथा तत्र तत्र 'य एनं वेत्ति हन्तारम्' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' 'नादत्ते कस्यचित्पा-

पम्' इत्यादिप्रकरणेषु दर्शितः । तथैव च व्याख्यातम् अस्माभिः । उत्तरेषु च प्रकरणेषु दर्शयिष्यामः ॥

हन्त! तर्हि आत्मनि क्रियाकारकफलात्मतायाः स्वतः अभावे, अविद्यया च अध्यारोपितत्वे, कर्माणि अविद्वत्कर्तव्यान्येव, न विदुषाम् इति प्राप्तम् । सत्यम् एवं प्राप्तम्, एतदेव च 'न हि देहभृता शक्यम्' इत्यत्र दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' इत्यत्र विशेषतः दर्शयिष्यामः । अलम् इह बहुप्रपञ्चनेन, इति उपसंह्रियते ॥

'इदं शरीरम्' इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकः अयम् उपन्यस्यते 'तत्क्षेत्रं यच्च' इत्यादि, व्याचिख्यासितस्य हि अर्थस्य संग्रहोपन्यासः न्याय्यः इति—

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥**

यत् निर्दिष्टम् 'इदं शरीरम्' इति तत् तच्छब्देन परामृशति । यच्च इदं निर्दिष्टं क्षेत्रं तत् यादृक् यादृशं स्वकीयैः धर्मैः । च-शब्दः समुच्चयार्थः । यद्विकारि यः विकारः

यस्य तत् यद्विकारि, यतः यस्मात् च यत्, कार्यम् उत्पद्यते इति वाक्यशेषः । स च यः क्षेत्रज्ञः निर्दिष्टः सः यत्प्रभावः ये प्रभावाः उपाधिकृताः शक्तयः यस्य सः यत्प्रभावश्च । तत् क्षेत्रक्षेत्रज्ञयोः याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु, श्रुत्वा अवधारय इत्यर्थः ॥

तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

ऋषिभिः वसिष्ठादिभिः बहुधा बहुप्रकारं गीतं कथितम् । छन्दोभिः छन्दांसि ऋगादीनि तैः छन्दोभिः विविधैः नानाभावैः नानाप्रकारैः पृथक् विवेकतः गीतम् । किंच, ब्रह्मसूत्रपदैश्च एव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते इति तानि पदानि उच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयाथात्म्यम् 'गीतम्' इति अनुवर्तते । 'आत्मेत्येवोपासीत' इत्येवमादिभिः ब्रह्मसूत्रपदैः आत्मा ज्ञायते, हेतुमद्भिः युक्तियुक्तैः विनिश्चितैः निःसंशयरूपैः निश्चितप्रत्ययोत्पादकैः इत्यर्थः ॥

स्तुत्या अभिमुखीभूताय अर्जुनाय आह भगवान्—

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥**

महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वात् भूतानि च सूक्ष्माणि । स्थूलानि तु इन्द्रियगोचरशब्देन अभिधायिष्यन्ते अहंकारः महाभूतकारणम् अहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिः अध्यवसायलक्षणा । तत्कारणम् अव्यक्तमेव च, न व्यक्तम् अव्यक्तम् अव्याकृतम् ईश्वरशक्तिः 'मम माया दुरत्यया' इत्युक्तम् । एवशब्दः प्रकृत्यवधारणार्थः एतावत्येव अष्टधा भिन्ना प्रकृतिः । च-शब्दः भेदसमुच्चयार्थः । इन्द्रियाणि दश, श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वात् बुद्धीन्द्रियाणि, वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि; तानि दश । एकं च; किं तत्? मनः एकादशं संकल्पाद्यात्मकम् । पञ्च च इन्द्रियगोचराः शब्दादयो विषयाः । तानि एतानि सांख्याः चतुर्विंशतितत्त्वानि आचक्षते ॥

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

इच्छा, यज्जातीयं सुखहेतुमर्थम् उपलब्धवान् पूर्वम्, पुनः तज्जातीयमुपलभमानः तमादातुमिच्छति सुखहेतुरिति; सा इयं इच्छा अन्तःकरणधर्मः ज्ञेयत्वात् क्षेत्रम् । तथा द्वेषः, यज्जातीयमर्थं दुःखहेतुत्वेन अनुभूतवान्, पुनः तज्जातीयमर्थमुपलभमानः तं द्वेष्टि; सोऽयं द्वेषः ज्ञेयत्वात् क्षेत्रमेव । तथा सुखम् अनुकूलं प्रसन्नसत्त्वात्मकं ज्ञेयत्वात् क्षेत्रमेव । दुःखं प्रतिकूलात्मकम्; ज्ञेयत्वात् तदपि क्षेत्रम् । संघातः देहेन्द्रियाणां संहतिः । तस्यामभिव्यक्तान्तःकरणवृत्तिः, तप्त इव लोहपिण्डे अग्निः आत्मचैतन्याभासरसविद्धा चेतना; सा च क्षेत्रं ज्ञेयत्वात् । धृतिः यया अवसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते; सा च ज्ञेयत्वात् क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थम् इच्छादिग्रहणम् । यत उक्तमुपसंहरति— एतत् क्षेत्रं समासेन सविकारं सह विकारेण महदादिना उदाहृतम् उक्तम् ॥

यस्य क्षेत्रभेदजातस्य संहतिः 'इदं शरीरं क्षेत्रम्' इति उक्तम्, तत् क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् । क्षेत्रज्ञः वक्ष्यमाणविशेषणः— यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानात् अमृतत्वं भवति, तम् 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान् । अधुना तु

स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोधः आत्मविनिग्रहः ॥

किंच—

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम् अनहंकारः अहंकाराभावः एव च जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनम् । जन्मनि गर्भवासयोनिद्वारनिःसरणं दोषः, तस्य अनुदर्शनमालोचनम् । तथा मृत्यौ दोषानुदर्शनम् । तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनम् । तथा दुःखेषु अध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषः दुःखदोषः तस्य जन्मादिषु पूर्ववत् अनुदर्शनम्— दुःखं जन्म, दुःखं मृत्युः, दुःख जरा, दुःखं व्याधयः । दुःखनिमित्तत्वात् जन्मादयः दुःखम्, न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनात् देहेन्द्रियादिविषय-

भोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वात् ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥

किंच—

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**

असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रम्, तदभावः असक्तिः । अनभिष्वङ्गः अभिष्वङ्गाभावः । अभिष्वङ्गो नाम आसक्तिविशेष एव अनन्यात्मभावनालक्षणः; यथा अन्यस्मिन् सुखिनि दुःखिनि वा 'अहमेव सुखी, दुःखी च,' जीवति मृते वा 'अहमेव जीवामि मरिष्यामि च' इति । क इति आह— पुत्रदारगृहादिषु, पुत्रेषु दारेषु गृहेषु आदिग्रहणात् अन्येष्वपि अत्यन्तेष्टेषु दासवर्गादिषु । तच्च उभयं ज्ञानार्थत्वात् ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता । क? इष्टानिष्टोपपत्तिषु इष्टानामनिष्टानां च उपपत्तयः संप्राप्तयः तासु इष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता । इष्टोपपत्तिषु न हृष्यति, न कुप्यति च अनिष्टोपपत्तिषु । तच्च एतत् नित्यं समचित्तत्वं ज्ञानम् ॥

किंच—

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

मयि च ईश्वरे अनन्ययोगेन अपृथक्समाधिना 'न अन्यो भगवतो वासुदेवात् परः अस्ति, अतः स एव नः गतिः' इत्येवं निश्चिता अव्यभिचारिणी बुद्धिः अनन्ययोगः, तेन भजनं भक्तिः न व्यभिचरणशीला अव्यभिचारिणी । सा च ज्ञानम् । विविक्तदेशसेवित्वम्, विविक्तः स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशः, तं सेवितुं शीलमस्य इति विविक्तदेशसेवी, तद्भावः विवक्तदेशसेवित्वम् । विविक्तेषु हि देशेषु चित्तं प्रसीदति यतः ततः आत्मादिभावना विविक्ते उपजायते । अतः विविक्तदेशसेवित्वं ज्ञानमुच्यते । अरतिः अरमणं जनसंसदि, जनानां प्राकृतानां संस्कारशून्यानाम् अविनीतानां संसत् समवायः जनसंसत्; न संस्कारवतां विनीतानां संसत्; तस्याः ज्ञानोपकारकत्वात् । अतः प्राकृतजनसंसदि अरतिः ज्ञानार्थत्वात् ज्ञानम् ॥

किंच—

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥**

अध्यात्मज्ञाननित्यत्वम् आत्मादिविषयं ज्ञानम् अध्यात्मज्ञानम्, तस्मिन् नित्यभावः नित्यत्वम् । अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानम्, तस्य अर्थः मोक्षः संसारोपरमः; तस्य आलोचनं तत्त्वज्ञानार्थदर्शनम्; तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति। एतत् अमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानम् इति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यत् अतः अस्मात् यथोक्तात् अन्यथा विपर्ययेण । मानित्वं दम्भित्वं हिंसा अक्षान्तिः अनार्जवम् इत्यादि अज्ञानं विज्ञेयं परिहरणाय, संसारप्रवृत्तिकारणत्वात् इति ॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किम् इत्याकाङ्क्षायामाह— 'ज्ञेयं यत्तत्' इत्यादि । ननु यमाः नियमाश्च अमानित्वादयः । न तैः ज्ञेयं ज्ञायते । न हि अमानित्वादि कस्यचित् वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न हि अन्यविषयेण

ज्ञानेन अन्यत् उपलभ्यते, यथा घटविषयेण ज्ञानेन अग्निः। नैष दोषः, ज्ञाननिमित्तत्वात् ज्ञानमुच्यते इति हि अवोचाम ; ज्ञानसहकारिकारणत्वाच्च—

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

ज्ञेयं ज्ञातव्यं यत् तत् प्रवक्ष्यामि प्रकर्षेण यथावत् वक्ष्यामि । किंफलं तत् इति प्ररोचनेन श्रोतुः अभिमुखीकरणाय आह— यत् ज्ञेयं ज्ञात्वा अमृतम् अमृतत्वम् अश्नुते, न पुनः म्रियते इत्यर्थः । अनादिमत् आदिः अस्य अस्तीति आदिमत्, न आदिमत् अनादिमत्; किं तत्? परं निरतिशयं ब्रह्म, 'ज्ञेयम्' इति प्रकृतम् ॥

अत्र केचित् 'अनादि मत्परम्' इति पदं छिन्दन्ति, बहुव्रीहिणा उक्ते अर्थे मतुपः आनर्थक्यम् अनिष्टं स्यात् इति । अर्थविशेषं च दर्शयन्ति— अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परम् इति । सत्यमेवमपुनरुक्तं स्यात्, अर्थः चेत् संभवति । न तु अर्थः संभवति, ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात् 'न सत्तन्नासदुच्यते' इति । विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्च इति

विप्रतिषिद्धम् । तस्मात् मतुपः बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः ॥

अमृतत्वफलं ज्ञेयं मया उच्यते इति प्ररोचनेन अभिमुखीकृत्य आह— न सत् तत् ज्ञेयमुच्यते इति न अपि असत् तत् उच्यते ॥

ननु महता परिकरबन्धेन कण्ठरवेण उद्घुष्य 'ज्ञेयं प्रवक्ष्यामि' इति, अननुरूपमुक्तं 'न सत्तन्नासदुच्यते' इति । न, अनुरूपमेव उक्तम् । कथम्? सर्वासु हि उपनिषत्सु ज्ञेयं ब्रह्म 'नेति नेति' 'अस्थूलमनणु' इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते, न 'इदं तत्' इति, वाचः अगोचरत्वात् ॥

ननु न तदस्ति, यद्वस्तु अस्तिशब्देन नोच्यते । अथ अस्तिशब्देन नोच्यते, नास्ति तत् ज्ञेयम् । विप्रतिषिद्धं च—'ज्ञेयं तत्', 'अस्तिशब्देन नोच्यते' इति च । न तावन्नास्ति, नास्तिबुद्ध्यविषयत्वात् ॥

ननु सर्वाः बुद्धयः अस्तिनास्तिबुद्ध्यनुगताः एव । तत्र एवं सति ज्ञेयमपि अस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । न, अतीन्द्रियत्वेन उभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धि इन्द्रियगम्यं वस्तु

घटादिकम्, तत् अस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । इदं तु ज्ञेयम् अतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वात् न घटादिवत् उभयबुद्ध्यनुगतप्रत्ययविषयम् इत्यतः 'न सत्तन्नासत्' इति उच्यते ॥

यत्तु उक्तम्—विरुद्धमुच्यते, 'ज्ञेयं तत्' 'न सत्तन्नासदुच्यते' इति—न विरुद्धम्, 'अन्यदेव तद्विदितादथो अविदितादधि' इति श्रुतेः । श्रुतिरपि विरुद्धार्था इति चेत्—यथा यज्ञाय शालामारभ्य 'यद्यमुष्मिँल्लोकेऽस्ति वा न वेति' इत्येवमिति चेत्, न; विदिताविदिताभ्यामन्यत्वश्रुतेः अवश्यविज्ञेयार्थप्रतिपादनपरत्वात् 'यद्यमुष्मिन्' इत्यादि तु विधिशेषः अर्थवादः । उपपत्तेश्च सदसदादिशब्दैः ब्रह्म नोच्यते इति । सर्वो हि शब्दः अर्थप्रकाशनाय प्रयुक्तः, श्रूयमाणश्च श्रोतृभिः, जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणसव्यपेक्षः अर्थं प्रत्याययति; न अन्यथा, अदृष्टत्वात् । तत् यथा—'गौः' 'अश्वः' इति वा जातितः, 'पचति' 'पठति' इति वा क्रियातः, 'शुक्लः' 'कृष्णः' इति वा गुणतः, 'धनी' 'गोमान्' इति वा संबन्धतः । न तु ब्रह्म जातिमत्, अतः न सदादिशब्दवाच्यम् । नापि गुणवत्, येन

गुणशब्देन उच्येत, निर्गुणत्वात् । नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । न च संबन्धी, एकत्वात् । अद्वयत्वात् अविषयत्वात् आत्मत्वाच्च न केनचित् शब्देन उच्यते इति युक्तम्; 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभिश्च ॥

सच्छब्दप्रत्ययाविषयत्वात् असत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयन् तदाशङ्कानिवृत्त्यर्थमाह—

**सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

सर्वतःपाणिपादं सर्वतः पाणयः पादाश्च अस्य इति सर्वतःपाणिपादं तत् ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञस्य अस्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधितः उच्यते । क्षेत्रं च पाणिपादादिभिः अनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्य, इति तदपनयनेन ज्ञेयत्वमुक्तम् 'न सत्तन्नासदुच्यते' इति । उपाधिकृतं मिथ्यारूपमपि अस्तित्वाधिगमाय ज्ञेयधर्मवत् परिकल्प्य उच्यते 'सर्वतःपाणिपादम्' इत्यादि । तथा हि संप्रदायविदां वचन-

म्—'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयते' इति । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयः ज्ञेयशक्तिसद्भावनिमित्तस्वकार्याः इति ज्ञेयसद्भावे लिङ्गानि 'ज्ञेयस्य' इति उपचारतः उच्यन्ते । तथा व्याख्येयम् अन्यत् । सर्वतःपाणिपादं तत् ज्ञेयम् । सर्वतोक्षिशिरोमुखं सर्वतः अक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतोक्षिशिरोमुखम्; सर्वतःश्रुतिमत् श्रुतिः श्रवणेन्द्रियम्, तत् यस्य तत् श्रुतिमत्, लोके प्राणिनिकाये, सर्वम् आवृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणात् ज्ञेयस्य तद्वत्ताशङ्का मा भूत् इत्येवमर्थः श्लोकारम्भः—

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥**

सर्वेन्द्रियगुणाभासं सर्वाणि च तानि इन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यानि, अन्तःकरणे च बुद्धिमनसी, ज्ञेयोपाधित्वस्य तुल्यत्वात्, सर्वेन्द्रियग्रहणेन गृह्यन्ते । अपि च, अन्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामपि उपाधित्वम् इत्यतः अन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैः

अध्यवसायसंकल्पश्रवणवचनादिभिः अवभासते इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैः व्यापृतमिव तत् ज्ञेयम् इत्यर्थः ; 'ध्यायतीव लेलायतीव' इति श्रुतेः । कस्मात् पुनः कारणात् न व्यापृतमेवेति गृह्यते इत्यत: आह— सर्वेन्द्रियविवर्जितम्, सर्वकरणरहितमित्यर्थः । अतः न करणव्यापारैः व्यापृतं तत् ज्ञेयम् । यस्तु अयं मन्त्रः— 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिः, स सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् तत् ज्ञेयम् इत्येवं प्रदर्शनार्थः, न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः । 'अन्धो मणिमविन्दत्' इत्यादिमन्त्रार्थवत् तस्य मन्त्रस्य अर्थः । यस्मात् सर्वकरणवर्जितं ज्ञेयम्, तस्मात् असक्तं सर्वसंश्लेषवर्जितम् । यद्यपि एवम्, तथापि सर्वभृच्च एव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदाः भवन्ति । अतः सर्वभृत् सर्वं बिभर्ति इति । स्यात् इदं च अन्यत् ज्ञेयस्य सत्त्वाधिगमद्वारम्— निर्गुणं सत्त्वरजस्तमांसि गुणाः तैः वर्जितं तत् ज्ञेयम्, तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ च उपलब्धृ च तत् ज्ञेयम् इत्यर्थः ॥

किंच—

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥**

बहिः त्वक्पर्यन्तं देहम् आत्मत्वेन अविद्याकल्पितम् अपेक्ष्य तमेव अवधिं कृत्वा बहिः उच्यते । तथा प्रत्यगात्मानमपेक्ष्य देहमेव अवधिं कृत्वा अन्तः उच्यते । 'बहिरन्तश्च' इत्युक्ते मध्ये अभावे प्राप्ते, इदमुच्यते— अचरं चरमेव च, यत् चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासः । यदि अचरं चरमेव च स्यात् व्यवहारविषयं सर्वं ज्ञेयम्, किमर्थम् 'इदम्' इति सर्वैः न विज्ञेयम् इति? उच्यते—सत्यं सर्वाभासं तत्; तथापि व्योमवत् सूक्ष्मम् । अतः सूक्ष्मत्वात् स्वेन रूपेण तत् ज्ञेयमपि अविज्ञेयम् अविदुषाम् । विदुषां तु, 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' इत्यादिप्रमाणतः नित्यं विज्ञातम् । अविज्ञाततया दूरस्थं वर्षसहस्रकोट्यापि अविदुषाम् अप्राप्यत्वात् । अन्तिके च तत्, आत्मत्वात् विदुषाम् ॥

किंच—

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥**

अविभक्तं च प्रतिदेहं व्योमवत् तदेकम् । भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वात् । भूतभर्तृ च भूतानि बिभर्तीति तत् ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेः मिथ्याकल्पितस्य ॥

किंच, सर्वत्र विद्यमानमपि सत् न उपलभ्यते चेत्, ज्ञेयं तमः तर्हि? न। किं तर्हि?—

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥**

ज्योतिषाम् आदित्यादीनामपि तत् ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषा इद्धानि हि आदित्यादीनि ज्योतींषि दीप्यन्ते, 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिभ्यः; स्मृतेश्च इहैव— 'यदादित्यगतं तेजः' इत्यादेः । तमसः अज्ञानात् परम् अस्पृष्टम् उच्यते । ज्ञानादेः दुःसंपादनबुद्ध्या प्राप्तावसादस्य उत्तम्भनार्थमाह— ज्ञानम् अमानित्वादि; ज्ञेयम् 'ज्ञेयं यत् तत् प्रवक्ष्यामि' इत्यादिना उक्तम्; ज्ञानगम्यम् ज्ञेयमेव ज्ञातं सत् ज्ञानफ-

लमिति ज्ञानगम्यमुच्यते ; ज्ञायमानं तु ज्ञेयम् । तत् एतत् त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थिम् । तत्रैव हि त्रयं विभाव्यते ॥

यथोक्तार्थोपसंहारार्थः अयं श्लोकः आरभ्यते—

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

इति एवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानम् अमानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च 'ज्ञेयं यत् तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तम् उक्तं समासतः संक्षेपतः । एतावान् सर्वः हि वेदार्थः गीतार्थश्च उपसंहृत्य उक्त. । अस्मिन् सम्यग्दर्शने कः अधिक्रियते इति उच्यते—मद्भक्तः मयि ईश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावः, यत् पश्यति शृणोति स्पृशति वा 'सर्वमेव भगवान् वासुदेवः' इत्येवंग्रहाविष्टबुद्धिः मद्भक्तः स एतत् यथोक्तं सम्यग्दर्शनं विज्ञाय, मद्भावाय मम भावः मद्भावः परमात्मभावः तस्मै मद्भावाय उपपद्यते मोक्षं गच्छति ॥

तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते, परापरे क्षेत्रक्षेत्रज्ञलक्षणे; 'एतद्योनीनि भूतानि' इति च उक्तम् ।

क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामिति अयमर्थः अधुना उच्यते—

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥**

प्रकृतिं पुरुषं चैव ईश्वरस्य प्रकृती तौ प्रकृतिपुरुषौ उभावपि अनादी विद्धि, न विद्यते आदिः ययोः तौ अनादी । नित्येश्वरत्वात् ईश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हि ईश्वरस्य ईश्वरत्वम् । याभ्यां प्रकृतिभ्याम् ईश्वरः जगदुत्पत्तिस्थितिप्रलयहेतुः, ते द्वे अनादी सत्यौ संसारस्य कारणम् ॥

न आदी अनादी इति तत्पुरुषसमासं केचित् वर्णयन्ति । तेन हि किल ईश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगत् न ईश्वरस्य जगतः कर्तृत्वम् । तत् असत्; प्राक् प्रकृतिपुरुषयोः उत्पत्तेः ईशितव्याभावात् ईश्वरस्य अनीश्वरत्वप्रसङ्गात्, संसारस्य निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च । नित्यत्वे पुनः ईश्वरस्य प्रकृत्योः सर्वमेतत् उपपन्नं भवेत् । कथम्?

विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धि जानीहि प्रकृतिसंभवान्, प्रकृतिः ईश्वरस्य विकारकारणशक्तिः त्रिगुणात्मिका माया, सा संभवो येषां विकाराणां गुणानां च तान् विकारान् गुणांश्च विद्धि प्रकृतिसंभवान् प्रकृतिपरिणामान् ॥

के पुनः ते विकाराः गुणाश्च प्रकृतिसंभवाः—

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥**

कार्यकरणकर्तृत्वे—कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्यारम्भकाणि भूतानि पञ्च विषयाश्च प्रकृतिसंभवाः विकाराः पूर्वोक्ताः इह कार्यग्रहणेन गृह्यन्ते । गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात् करणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वम् उत्पादकत्वं यत् तत् कार्यकरणकर्तृत्वं तस्मिन् कार्यकरणकर्तृत्वे हेतुः कारणम् आरम्भकत्वेन प्रकृतिः उच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः । कार्यकारणकर्तृत्वे इत्यस्मिन्नपि पाठे, कार्यं यत् यस्य परिणामः तत् तस्य कार्यं वि-

कारः विकारि कारणं तयोः विकारविकारिणोः कार्यकारणयोः कर्तृत्वे इति । अथवा, षोडश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणम् तान्येव कार्यकारणान्युच्यन्ते तेषां कर्तृत्वे हेतुः प्रकृतिः उच्यते, आरम्भकत्वेनैव । पुरुषश्च संसारस्य कारणं यथा स्यात् तत् उच्यते—पुरुषः जीवः क्षेत्रज्ञः भोक्ता इति पर्यायः, सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुः उच्यते ॥

कथं पुनः अनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यते इति, अत्र उच्यते— कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे, पुरुषस्य च चेतनस्य असति तदुपलब्धृत्वे, कुतः संसारः स्यात्? यदा पुनः कार्यकरणसुखदुःखस्वरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेन अविद्यारूपः संयोगः स्यात्, तदा संसारः स्यात् इति । अतः यत् प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तम्, तत् युक्तम् । कः पुनः अयं संसारो नाम? सुखदुःखसंभोगः संसारः । पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥

यत् पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वम् इति उक्तं तस्य तत् किंनिमित्तमिति उच्यते—

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

पुरुषः भोक्ता प्रकृतिस्थः प्रकृतौ अविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृतिस्थः, प्रकृतिमात्मत्वेन गतः इत्येतत्, हि यस्मात्, तस्मात् भुङ्क्ते उपलभते इत्यर्थः । प्रकृतिजान् प्रकृतितः जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् 'सुखी, दुःखी, मूढः, पण्डितः अहम्' इत्येवम् । सत्यामपि अविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्गः आत्मभावः संसारस्य सः प्रधानं कारणं जन्मनः, 'स: यथाकामो भवति तत्क्रतुर्भवति' इत्यादिश्रुतेः । तदेतत् आह— कारणं हेतुः गुणसङ्गः गुणेषु सङ्गः अस्य पुरुषस्य भोक्तुः सदसद्योनिजन्मसु, सत्यश्च असत्यश्च योनयः सदसद्योनयः तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि, तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गः । अथवा, सदसद्योनिजन्मसु अस्य संसारस्य कारणं गुणसङ्गः इति संसारपदमध्याहार्यम् । सद्योनयः देवादियोनयः ;

असद्योनयः पश्वादियोनयः । सामर्थ्यात् सदसद्योनयः मनुष्ययोनयोऽपि अविरुद्धाः द्रष्टव्याः ॥

एतत् उक्तं भवति— प्रकृतिस्थत्वाख्या अविद्या, गुणेषु च सङ्गः कामः, संसारस्य कारणमिति । तच्च परिवर्जनाय उच्यते । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तात् उपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम् 'यज्ज्ञात्वामृतमश्नुते' इति । उक्तं च अन्यापोहेन अतद्धर्माध्यारोपेण च ॥

तस्यैव पुनः साक्षात् निर्देशः क्रियते—

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥**

उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयम् अव्यापृतः । यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थः अन्यः अव्यापृतः यज्ञविद्याकुशलः ऋत्विग्यजमानव्यापारगुणदोषाणाम् ईक्षिता, तद्वच्च कार्यकरणव्यापारेषु अव्यापृतः अन्यः तद्विलक्षणः तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टा उपद्रष्टा । अथवा, देहचक्षुर्मनोबुद्ध्यात्मानः द्रष्टारः, तेषां बाह्यः द्रष्टा देहः, ततः आरभ्य अन्तरतमश्च प्रत्यक् समीपे

आत्मा द्रष्टा, यतः परः अन्तरतमः नास्ति द्रष्टा; सः अतिशयसामीप्येन द्रष्टृत्वात् उपद्रष्टा स्यात्। यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणात् उपद्रष्टा। अनुमन्ता च, अनुमोदनम् अनुमननं कुर्वत्सु तत्क्रियासु परितोषः, तत्कर्ता अनुमन्ता च। अथवा, अनुमन्ता, कार्यकरणप्रवृत्तिषु स्वयम् अप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलः विभाव्यते, तेन अनुमन्ता। अथवा, प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयति इति अनुमन्ता। भर्ता, भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपधारणम्, तत् चैतन्यात्मकृतमेव इति भर्ता आत्मा इति उच्यते। भोक्ता, अग्न्युष्णवत् नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाः चैतन्यात्मग्रस्ता इव जायमानाः विभक्ता विभाव्यन्ते इति भोक्ता आत्मा उच्यते। महेश्वरः, सर्वात्मत्वात् स्वतन्त्रत्वाच्च महान् ईश्वरश्च इति महेश्वरः। परमात्मा, देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानाम् अविद्यया परमः उपद्रष्टृत्वादिलक्षणः आत्मा इति परमात्मा। सः अतः 'परमात्मा' इत्यनेन शब्देन च अपि उक्तः कथितः श्रुतौ। क असौ? अस्मिन् देहे पुरुषः

परः अव्यक्तात्, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यः वक्ष्यमाणः ॥

'क्षेत्रज्ञं चापि मां विद्धि' इति उपन्यस्तः व्याख्याय उपसंहृतश्च, तमेतं यथोक्तलक्षणम् आत्मानम्—

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥**

यः एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षात् अहमिति प्रकृतिं च यथोक्ताम् अविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तिताम् अभावम् आपादितां विद्यया, सर्वथा सर्वप्रकारेण वर्तमानोऽपि सः भूयः पुनः पतिते अस्मिन् विद्वच्छरीरे देहान्तराय न अभिजायते न उत्पद्यते, देहान्तरं न गृह्णाति इत्यर्थः । अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायते इति अभिप्रायः ॥

ननु, यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः, तथापि प्राक् ज्ञानोत्पत्तेः कृतानां कर्मणाम् उत्तरकालभाविनां च, यानि च अतिक्रान्तानेकजन्मकृतानि तेषां च, फलमदत्त्वा नाशो न युक्त इति, स्युः त्रीणि जन्मानि, कृतविप्रणाशो हि न युक्त इति, यथा फले प्रवृत्तानाम्

आरब्धजन्मनां कर्मणाम् । न च कर्मणां विशेषः अवगम्यते । तस्मात् त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मानि आरभेरन्; संहतानि वा सर्वाणि एकं जन्म आरभेरन् । अन्यथा कृतविनाशे सति सर्वत्र अनाश्वासप्रसङ्गः, शास्त्रानर्थक्यं च स्यात् । इत्यतः इदमयुक्तमुक्तम् 'न स भूयोऽभिजायते' इति । न; 'क्षीयन्ते चास्य कर्माणि' 'ब्रह्म वेद ब्रह्मैव भवति' 'तस्य तावदेव चिरम्' 'इषीकातूलवत् सर्वाणि कर्माणि प्रदूयन्ते' इत्यादिश्रुतिशतेभ्यः उक्तो विदुषः सर्वकर्मदाहः। इहापि च उक्तः 'यथैधांसि' इत्यादिना सर्वकर्मदाहः, वक्ष्यति च । उपपत्तेश्च— अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरम् आरभन्ते; इहापि च 'साहंकाराभिसंधीनि कर्माणि फलारम्भकाणि, न इतराणि' इति तत्र तत्र भगवता उक्तम्। 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति च । अस्तु तावत् ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहः ज्ञानसहभावित्वात् । न तु इह जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानां कर्मणां अतीतजन्मकृतानां च दाहः युक्तः । न; 'सर्वकर्माणि' इति विशेषणात् । ज्ञानोत्तरकालभाविनामेव सर्वकर्मणाम् इति चेत्, न; संकोचे

कारणानुपपत्तेः। यत्तु उक्तम् 'यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने, तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्तः' इति, तत् असत्। कथम्? तेषां मुक्तेषुवत् प्रवृत्तफलत्वात्। यथा पूर्वं लक्ष्यवेधाय मुक्तः इषुः धनुषः लक्ष्यवेधोत्तरकालमपि आरब्धवेगक्षयात् पतनेनैव निवर्तते, एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽपि, आ संस्कारवेगक्षयात् पूर्ववत् वर्तते एव। यथा स एव इषुः प्रवृत्तिनिमित्तानारब्धवेगस्तु अमुक्तो धनुषि प्रयुक्तोऽपि उपसंह्रियते, तथा अनारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्ते इति, पतिते अस्मिन् विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेव उक्तमिति सिद्धम्॥

अत्र आत्मदर्शने उपायविकल्पाः इमे ध्यानादयः उच्यन्ते—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे॥२४॥**

ध्यानेन, ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनसि उपसंहृत्य, मनश्च प्रत्यक्चेतयितरि, एकाग्रतया यत् चिन्तनं तत् ध्यानम्; तथा, ध्यायतीव बकः,

ध्यायतीव पृथिवी, ध्यायन्तीव पर्वताः इति उपमोपादानात् । तैलधारावत् संततः अविच्छिन्नप्रत्ययो ध्यानम्; तेन ध्यानेन आत्मनि बुद्धौ पश्यन्ति आत्मानं प्रत्यक्चेतनम् आत्मना स्वेनैव प्रत्यक्चेतनेन ध्यानसंस्कृतेन अन्तःकरणेन केचित् योगिनः । अन्ये सांख्येन योगेन, सांख्यं नाम 'इमे सत्त्वरजस्तमांसि गुणाः मया दृश्या अहं तेभ्योऽन्यः तद्व्यापारसाक्षिभूतः नित्यः गुणविलक्षणः आत्मा' इति चिन्तनम् एषः सांख्यो योगः, तेन 'पश्यन्ति आत्मानमात्मना' इति वर्तते । कर्मयोगेन, कर्मैव योगः, ईश्वरार्पणबुद्ध्या अनुष्ठीयमानं घटनरूपं योगार्थत्वात् योगः उच्यते गुणतः; तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण च अपरे ॥

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥**

अन्ये तु एषु विकल्पेषु अन्यतमेनापि एवं यथोक्तम् आत्मानम् अजानन्तः अन्येभ्यः आचार्येभ्यः श्रुत्वा 'इदमेव चिन्तयत' इति उक्ताः उपासते श्रद्दधानाः सन्तः चिन्तयन्ति । तेऽपि च अतितरन्त्येव अतिक्रामन्त्येव मृत्युम्, मृत्युयुक्तं संसारम् इत्येतत् । श्रुतिपरायणाः श्रुतिः श्रवणं

परम् अयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः; केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिताः इत्यभिप्रायः। किमु वक्तव्यम् प्रमाणं प्रति स्वतन्त्राः विवेकिनः मृत्युम् अतितरन्ति इति अभिप्रायः ॥

क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनम् 'यज्ज्ञात्वामृतमश्नुते' इत्युक्तम्, तत् कस्मात् हेतोरिति, तद्धेतुप्रदर्शनार्थं श्लोकः आरभ्यते—

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम्।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

यावत् यत् किंचित् संजायते समुत्पद्यते सत्त्वं वस्तु; किम् अविशेषेण? नेत्याह— स्थावरजङ्गमं स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात् तत् जायते इत्येवं विद्धि जानीहि भरतर्षभ ॥

कः पुनः अयं क्षेत्रक्षेत्रज्ञयोः संयोगः अभिप्रेतः? न तावत् रज्ज्वेव घटस्य अवयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवति, आकाशवत् निरवयवत्वात्। नापि समवायलक्षणः तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोः इतरेतरकार्यकारणभावानभ्युपगमात् इति, उच्यते— क्षेत्र-

क्षेत्रज्ञयोः विषयविषयिणोः भिन्नस्वभावयोः इतरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावात् अध्यारोपितसर्परजतादिसंयोगवत् । सः अयं अध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगः मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राक् दर्शितरूपात् क्षेत्रात् मुञ्जादिव इषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यते' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्मस्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत् 'असदेव सदिव अवभासते' इति एवं निश्चितविज्ञानः यः, तस्य यथोक्तसम्यग्दर्शनविरोधात् अपगच्छति मिथ्याज्ञानम् । तस्य जन्महेतोः अपगमात् 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यनेन 'विद्वान् भूयः न अभिजायते' इति यत् उक्तम्, तत् उपपन्नमुक्तम् ॥

'न स भूयोऽभिजायते' इति सम्यग्दर्शनफलम् अविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभावः उक्तः। जन्मकारणं च अविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोगः उक्तः; अतः तस्याः अविद्यायाः निवर्तकं सम्यग्दर्शनम् उक्तमपि पुनः शब्दान्तरेण उच्यते—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥**

समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तम्; क? सर्वेषु समस्तेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु; कम्? परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनः अपेक्ष्य परमेश्वरः, तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्सु इति, तं च परमेश्वरम् अविनश्यन्तम् इति, भूतानां परमेश्वरस्य च अत्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथम्? सर्वेषां हि भावविकाराणां जनिलक्षणः भावविकारो मूलम्; जन्मोत्तरकालभाविनः अन्ये सर्वे भावविकाराः विनाशान्ताः; विनाशात् परो न कश्चित् अस्ति भावविकारः, भावाभावात् । सति हि धर्मिणि धर्माः भवन्ति । अतः अन्त्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धाः भवन्ति सह कार्यैः । तस्मात् सर्वभूतैः वैलक्षण्यम् अत्यन्तमेव परमेश्वरस्य सिद्धम्, निर्विशेषत्वम् एकत्वं च । यः एवं यथोक्तं परमेश्वरं पश्यति, सः पश्यति ॥

ननु सर्वोऽपि लोकः पश्यति, किं विशेषणेन इति । सत्यं पश्यति; किं तु विपरीतं पश्यति । अतः विशिनष्टि—स एव पश्यतीति । यथा तिमिरदृष्टिः अनेकं चन्द्रं पश्यति,

तमपेक्ष्य एकचन्द्रदर्शी विशिष्यते— स एव पश्यतीति; तथा इहापि एकम् अविभक्तं यथोक्तं आत्मानं यः पश्यति, सः विभक्तानेकात्मविपरीतदर्शिभ्यः विशिष्यते—स एव पश्यतीति। इतरे पश्यन्तोऽपि न पश्यन्ति, विपरीतदर्शित्वात् अनेकचन्द्रदर्शिवत् इत्यर्थः ॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्या इति श्लोकः आरभ्यते—

**समं पश्यन्हि सर्वत्र**
**समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं**
**ततो याति परां गतिम् ॥ २८ ॥**

समं पश्यन् उपलभमानः हि यस्मात् सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतया अवस्थितम् ईश्वरम् अतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः । समं पश्यन् किम्? न हिनस्ति हिंसां न करोति आत्मना स्वेनैव स्वमात्मानम् । ततः तदहिंसनात् याति परां प्रकृष्टां गतिं मोक्षाख्याम् ॥

ननु नैव कश्चित् प्राणी स्वयं स्वम् आत्मानं हिनस्ति । कथम् उच्यते अप्राप्तम् 'न हिनस्ति' इति? यथा 'न

पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे' इत्यादि । नैष दोषः, अज्ञानाम् आत्मतिरस्करणोपपत्तेः । सर्वो हि अज्ञः अत्यन्तप्रसिद्धं साक्षात् अपरोक्षात् आत्मानं तिरस्कृत्य अनात्मानम् आत्मत्वेन परिगृह्य, तमपि धर्माधर्मौ कृत्वा उपात्तम् आत्मानं हत्वा अन्यम् आत्मानम् उपादत्ते नवं तं चैवं हत्वा अन्यमेवं तमपि हत्वा अन्यम् इत्येवम् उपात्तमुपात्तम् आत्मानं हन्ति, इति आत्महा सर्वः अज्ञः । यस्तु परमार्थात्मा, असावपि सर्वदा अविद्यया हत इव, विद्यमानफलाभावात्, इति सर्वे आत्महनः एव अविद्वांसः । यस्तु इतरः यथोक्तात्मदर्शी, सः उभयथापि आत्मना आत्मानं न हिनस्ति न हन्ति । ततः याति परां गतिम् यथोक्तं फलं तस्य भवति इत्यर्थः ॥

सर्वभूतस्थम् ईश्वरं समं पश्यन् न हिनस्ति आत्मना आत्मानम्' इति उक्तम् । तत् अनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेषु आत्मसु, इत्येतत् आशङ्क्य आह—

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥**

प्रकृत्या प्रकृतिः भगवतः माया त्रिगुणात्मिका, 'मायां तु प्रकृतिं विद्यात्' इति मन्त्रवर्णात्, तया प्रकृत्यैव च

न अन्येन महदादिकार्यकारणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैः यः पश्यति उपलभते, तथा आत्मानं क्षेत्रज्ञम् अकर्तारं सर्वोपाधिविवर्जितं सः पश्यति, सः परमार्थदर्शी इत्यभिप्रायः; निर्गुणस्य अकर्तुः निर्विशेषस्य आकाशस्येव भेदे प्रमाणानुपपत्तिः इत्यर्थः ॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वम् एकस्मिन् आत्मनि स्थितं एकस्थम् अनुपश्यति शास्त्राचार्योपदेशम्, अनु आत्मानं प्रत्यक्षत्वेन पश्यति 'आत्मैव इदं सर्वम्' इति, तत एव च तस्मादेव च विस्तारं उत्पत्तिं विकासम् 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नम्' इत्येवमादिप्रकारैः विस्तारं यदा पश्यति, ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः ॥

एकस्य आत्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्ते, इदम् उच्यते—

**अनादित्वान्निर्गुणत्वा-**
**त्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय**
**न करोति न लिप्यते ॥ ३१ ॥**

अनादित्वात् अनादेः भावः अनादित्वम्, आदिः कारणम्, तत् यस्य नास्ति तत् अनादि । यद्धि आदिमत् तत् स्वेन आत्मना व्येति; अयं तु अनादित्वात् निरवयव इति कृत्वा न व्येति । तथा निर्गुणत्वात् । सगुणो हि गुणव्ययात् व्येति; अयं तु निर्गुणत्वाच्च न व्येति; इति परमात्मा अयम् अव्ययः; न अस्य व्ययो विद्यते इति अव्ययः । यत एवमतः शरीरस्थोऽपि, शरीरेषु आत्मनः उपलब्धिः भवतीति शरीरस्थः उच्यते; तथापि न करोति । तदकरणादेव तत्फलेन न लिप्यते । यो हि कर्ता, सः कर्मफलेन लिप्यते । अयं तु अकर्ता, अतः न फलेन लिप्यते इत्यर्थः ॥

कः पुनः देहेषु करोति लिप्यते च? यदि तावत् अन्यः परमात्मनो देही करोति लिप्यते च, ततः इदम् अनुपपन्नम् उक्तं क्षेत्रज्ञेश्वरैकत्वम् 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादि ।

[1] S. B. II. 9.

अथ नास्ति ईश्वरादन्यो देही, कः करोति लिप्यते च? इति वाच्यम्; परो वा नास्ति इति सर्वथा दुर्विज्ञेयं दुर्वाच्यं च इति भगवत्प्रोक्तम् औपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च। तत्र अयं परिहारो भगवता स्वेनैव उक्तः 'स्वभावस्तु प्रवर्तते' इति। अविद्यामात्रस्वभावो हि करोति लिप्यते इति व्यवहारो भवति, न तु परमार्थत एकस्मिन् परमात्मनि तत् अस्ति। अतः एतस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्ति इति तत्र तत्र दर्शितं भगवता॥

किमिव न करोति न लिप्यते इति अत्र दृष्टान्तमाह—

**यथा सर्वगतं सौक्ष्म्या-**<br>**दाकाशं नोपलिप्यते।**<br>**सर्वत्रावस्थितो देहे**<br>**तथात्मा नोपलिप्यते॥ ३२॥**

यथा सर्वगतं व्यापि अपि सत् सौक्ष्म्यात् सूक्ष्मभावात् आकाशं खं न उपलिप्यते न संबध्यते, सर्वत्र अवस्थितः देहे तथा आत्मा न उपलिप्यते॥

किंच—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥**

यथा प्रकाशयति अवभासयति एकः कृत्स्नं लोकम् इमं रविः सविता आदित्यः, तथा तद्वत् महाभूतादि धृत्यन्तं क्षेत्रम् एकः सन् प्रकाशयति । कः? क्षेत्री परमात्मा इत्यर्थः । रविदृष्टान्तः अत्र आत्मनः उभयार्थोऽपि भवति—रविवत् सर्वक्षेत्रेषु एक एव आत्मा, अलेपकश्च इति ॥

समस्ताध्यायार्थोपसंहारार्थः अयं श्लोकः—

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्म-
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
प्रकृतिपुरुषविवेकयोगो नाम
त्रयोदशोऽध्यायः ॥

क्षेत्रक्षेत्रज्ञयोः यथाऽव्याख्यातयोः एवं यथाप्रदर्शितप्रकारेण अन्तरम् इतरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितम् आत्मप्रत्ययिकं ज्ञानं चक्षुः, तेन ज्ञानचक्षुषा, भूतप्रकृतिमोक्षं च, भूतानां प्रकृतिः अविद्यालक्षणा अव्यक्ताख्या, तस्याः भूतप्रकृतेः मोक्षणम् अभावगमनं च ये विदुः विजानन्ति, यान्ति गच्छन्ति ते पर परमात्मतत्त्वं ब्रह्म, न पुनः देहं आददते इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**त्रयोदशोऽध्यायः ॥**

# चतुर्दशोऽध्यायः ॥

सर्वम् उत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगात् उत्पद्यते इति उक्तम् । तत् कथमिति, तत्प्रदर्शनार्थम् 'परं भूयः' इत्यादिः अध्यायः आरभ्यते । अथवा, ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोः जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोः इत्येवमर्थम् । प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणम् इति उक्तम् । कस्मिन् गुणे कथं सङ्गः? के वा गुणाः? कथं वा ते बध्नन्ति इति? गुणेभ्यश्च मोक्षणं कथं स्यात्? मुक्तस्य च लक्षणं वक्तव्यम्, इत्येवमर्थं च भगवान् उवाच—

श्रीभगवानुवाच—

**परं भूयः प्रवक्ष्यामि**
**ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे**
**परां सिद्धिमितो गताः ॥ १ ॥**

परं ज्ञानम् इति व्यवहितेन संबन्धः, भूयः पुनः पूर्वेषु सर्वेष्वध्यायेषु असकृत् उक्तमपि प्रवक्ष्यामि । तच्च परं परवस्तुविषयत्वात् । किं तत्? ज्ञानं सर्वेषां ज्ञानानाम् उत्तमम्, उत्तमफलत्वात् । ज्ञानानाम् इति न अमानित्वादीनाम्; किं तर्हि? यज्ञादिज्ञेयवस्तुविषयाणाम् इति । तानि न मोक्षाय, इदं तु मोक्षाय इति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनः मननशीलाः सर्वे परां सिद्धिं मोक्षाख्याम् इतः अस्मात् देहबन्धनात् ऊर्ध्वं गताः प्राप्ताः ॥

अस्याश्च सिद्धेः ऐकान्तिकत्वं दर्शयति—

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥**

इदं ज्ञानं यथोक्तमुपाश्रित्य, ज्ञानसाधनम् अनुष्ठाय इत्येतत्, मम परमेश्वरस्य साधर्म्यं मत्स्वरूपताम् आगताः प्राप्ताः इत्यर्थः । न तु समानधर्मता साधर्म्यम्, क्षेत्रज्ञेश्वरयोः भेदानभ्युपगमात् गीताशास्त्रे । फलवादश्च अयं स्तुत्यर्थम् उच्यते । सर्गेऽपि सृष्टिकालेऽपि न उपजायन्ते । न उत्पद्यन्ते । प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां

तासां मूर्तीनां ब्रह्म महत् सर्वावस्थं योनिः कारणम् अहम् ईश्वरः बीजप्रदः गर्भाधानस्य कर्ता पिता ॥

के गुणाः कथं बध्नन्तीति, उच्यते—

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥**

सत्त्वं रजः तमः इति एवंनामानः । गुणाः इति पारिभाषिकः शब्दः, न रूपादिवत् द्रव्याश्रिताः गुणाः । न च गुणगुणिनोः अन्यत्वमत्र विवक्षितम् । तस्मात् गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति अविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव । तम् आस्पदीकृत्य आत्मानं प्रतिलभन्ते इति निबध्नन्ति इति उच्यते । ते च प्रकृतिसंभवाः भगवन्मायासंभवाः निबध्नन्ति इव हे महाबाहो, महान्तौ समर्थतरौ आजानुप्रलम्बौ बाहू यस्य सः महाबाहुः, हे महाबाहो देहे शरीरे देहिनं देहवन्तम् अव्ययम्, अव्ययत्वं च उक्तम् 'अनादित्वात्' इत्यादिश्लोकेन । ननु 'देही न लिप्यते' इत्युक्तम् । तत् कथम् इह निबध्नन्ति इति अन्यथा उच्यते ? परिहृतम् अस्माभिः इवशब्देन निबध्नन्ति इव इति ॥

तत्र सत्त्वादीनां सत्त्वस्यैव तावत् लक्षणम् उच्यते—

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

निर्मलत्वात् स्फटिकमणिरिव प्रकाशकम् अनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति । कथम्? सुखसङ्गेन 'सुखी अहम्' इति विषयभूतस्य सुखस्य विषयिणि आत्मनि संश्लेषापादनं मृषैव सुखे सञ्जनम् इति । सैषा अविद्या । न हि विषयधर्मः विषयिणः भवति । इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्मः इति उक्तं भगवता । अतः अविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणया अस्वात्मभूते सुखे सञ्जयति इव, आसक्तमिव करोति, असङ्गं सक्तमिव करोति, असुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च, ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैव विषयस्य अन्तःकरणस्य धर्मः, न आत्मनः; आत्मधर्मत्वे सङ्गानुपपत्तेः, बन्धानुपपत्तेश्च । सुखे इव ज्ञानादौ सङ्गः मन्तव्यः । हे अनघ अव्यसन ॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

रजः रागात्मकं रञ्जनात् रागः गैरिकादिवद्रागात्मकं विद्धि जानीहि । तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः, आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः, तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति तत् रजः निबध्नाति कौन्तेय कर्मसङ्गेन, दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गः, तेन निबध्नाति रजः देहिनम् ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

तमः तृतीयः गुणः अज्ञानजम् अज्ञानात् जातम् अज्ञानजं विद्धि मोहनं मोहकरम् अविवेककरं सर्वदेहिनां सर्वेषां देहवताम् । प्रमादालस्यनिद्राभिः प्रमादश्च आलस्यं च निद्रा च प्रमादालस्यनिद्राः ताभिः प्रमादालस्यनिद्राभिः तत् तमः निबध्नाति भारत ॥

पुनः गुणानां व्यापारः संक्षेपतः उच्यते—

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

सत्त्वं सुखे सञ्जयति संश्लेषयति, रजः कर्मणि हे भारत

सञ्जयति इति अनुवर्तते । ज्ञानं सत्त्वकृतं विवेकम् आवृत्य आच्छाद्य तु तमः स्वेन आवरणात्मना प्रमादे सञ्जयति उत प्रमादः नाम प्राप्तकर्तव्याकरणम् ॥

उक्तं कार्यं कदा कुर्वन्ति गुणा इति उच्यते—

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥**

रजः तमश्च उभावपि अभिभूय सत्त्वं भवति उद्भवति वर्धते यदा, तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखादि आरभते हे भारत । तथा रजोगुणः सत्त्वं तमश्च एव उभावपि अभिभूय वर्धते यदा, तदा कर्म कृष्यादि स्वकार्यम् आरभते । तमआख्यो गुणः सत्त्वं रजश्च उभावपि अभिभूय तथैव वर्धते यदा, तदा ज्ञानावरणादि स्वकार्यम् आरभते ॥

यदा यो गुणः उद्भूतः भवति, तदा तस्य किं लिङ्गमिति उच्यते—

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥**

सर्वद्वारेषु, आत्मनः उपलब्धिद्वाराणि श्रोत्रादीनि सर्वा-

णि करणानि, तेषु सर्वद्वारेषु अन्तःकरणस्य बुद्धेः वृत्तिः प्रकाशः देहे अस्मिन् उपजायते । तदेव ज्ञानम् । यदा एवं प्रकाशो ज्ञानाख्यः उपजायते, तदा ज्ञानप्रकाशेन लिङ्गेन विद्यात् विवृद्धम् उद्भूतं सत्त्वम् इति उत अपि ॥

रजस. उद्भूतस्य इदं चिह्नम्—

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**

लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भः; कस्य? कर्मणाम् । अशमः अनुपशमः, हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा— रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

अप्रकाशः अविवेकः, अत्यन्तम् अप्रवृत्तिश्च प्रवृत्त्यभावः तत्कार्यं प्रमादो मोह एव च अविवेकः मूढता इत्यर्थः । तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥

मरणद्वारेणापि यत् फलं प्राप्यते, तदपि सङ्गरागहेतुकं सर्वं गौणमेव इति दर्शयन् आह—

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**

यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृत् आत्मा, तदा उत्तमविदां महदादितत्त्वविदाम् इत्येतत्, लोकान् अमलान् मलरहितान् प्रतिपद्यते प्राप्नोति इत्येतत् ॥

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनः मृतः तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥

अतीतश्लोकार्थस्यैव संक्षेपः उच्यते—

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥**

कर्मणः सुकृतस्य सात्त्विकस्य इत्यर्थः, आहुः शिष्टाः सात्त्विकम् एव निर्मलं फलम् इति । रजसस्तु फलं दुःखं राजसस्य कर्मणः इत्यर्थः, कर्माधिकारात् फलम् अपि दुःखम् एव, कारणानुरूप्यात् राजसमेव । तथा अज्ञानं तमसः तामसस्य कर्मणः अधर्मस्य पूर्ववत् ॥

किंच गुणेभ्यो भवति——

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

सत्त्वात् लब्धात्मकात् संजायते समुत्पद्यते ज्ञानम्, रजसो लोभ एव च, प्रमादमोहौ च उभौ तमसो भवतः, अज्ञानमेव च भवति ॥

किंच——

**ऊर्ध्वं गच्छन्ति सत्त्वस्था**
**मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तस्था**
**अधो गच्छन्ति तामसाः ॥ १८ ॥**

ऊर्ध्वं गच्छन्ति देवलोकादिषु उत्पद्यन्ते सत्त्वस्थाः सत्त्व-

गुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषु उत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्थाः जघन्यश्च असौ गुणश्च जघन्यगुणः तमः, तस्य वृत्तं निद्रालस्यादि, तस्मिन् स्थिताः जघन्यगुणवृत्तस्थाः मूढाः अधः गच्छन्ति पश्वादिषु उत्पद्यन्ते तामसाः ॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु 'सुखी दुःखी मूढः अहम् अस्मि' इत्येवंरूपः यः सङ्गः तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्य इति समासेन पूर्वाध्याये यत् उक्तम्, तत् इह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इति आरभ्य गुणस्वरूपम्, गुणवृत्तम्, स्ववृत्तेन च गुणानां बन्धकत्वम्, गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिः, इत्येतत् सर्वं मिथ्याज्ञानमूलं बन्धकारणं विस्तरेण उक्त्वा, अधुना सम्यग्दर्शनान्मोक्षो वक्तव्यः इत्यत आह भगवान्—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥**

न अन्यं कार्यकरणविषयाकारपरिणतेभ्यः गुणेभ्यः कर्तारम् अन्यं यदा द्रष्टा विद्वान् सन् न अनुपश्यति, गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तारः इत्येवं पश्यति, गुणे-

भ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति, मद्भावं मम भावं सः द्रष्टा अधिगच्छति ॥

कथम् अधिगच्छति इति, उच्यते—

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥**

गुणान् एतान् यथोक्तान् अतीत्य जीवन्नेव अतिक्रम्य मायोपाधिभूतान् त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि तैः जीवन्नेव विमुक्तः सन् विद्वान् अमृतम् अश्नुते, एवं मद्भावम् अधिगच्छति इत्यर्थः ॥

जीवन्नेव गुणान् अतीत्य अमृतम् अश्नुते इति प्रश्नबीजं प्रतिलभ्य, अर्जुन उवाच—

अर्जुन उवाच—

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥**

कैः लिङ्गैः चिह्नैः त्रीन् एतान् व्याख्यातान् गुणान् अतीतः अतिक्रान्तः भवति प्रभो, किमाचारः कः अस्य आचारः इति किमाचारः कथं केन च प्रकारेण एतान् त्रीन् गुणान् अतिवर्तते अतीत्य वर्तते ॥

गुणातीतस्य लक्षणं गुणातीतत्वोपायं च अर्जुनेन पृष्टः अस्मिन् श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवान् उवाच । यत् तावत् 'कैः लिङ्गैः युक्तो गुणातीतो भवति' इति, तत् शृणु—

श्रीभगवानुवाच—

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥**

प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यम् इत्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेन उद्भूतानि—'मम तामसः प्रत्ययो जातः, तेन अहं मूढः; तथा राजसी प्रवृत्तिः मम उत्पन्ना दुःखात्मिका, तेन अहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्; कष्टं मम वर्तते यः अयं मत्स्वरूपावस्थानात् भ्रंशः; तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वम् आपादयन् सुखे च सञ्जयन्

बध्नाति' इति तानि द्वेष्टि असम्यग्दर्शित्वेन । तत् एवं गुणातीतो न द्वेष्टि संप्रवृत्तानि । यथा च सात्त्विकादिपुरुषः सत्त्वादिकार्याणि आत्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति, न तथा गुणातीतो निवृत्तानि काङ्क्षति इत्यर्थः । एतत् न परप्रत्यक्षं लिङ्गम् । किं तर्हि? स्वात्मप्रत्यक्षत्वात् आत्मार्थमेव एतत् लक्षणम् । न हि स्वात्मविषयं द्वेषमाकाङ्क्षां वा परः पश्यति ॥

अथ इदानीम् 'गुणातीतः किमाचारः?' इति प्रश्नस्य प्रतिवचनम् आह—

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥**

उदासीनवत् यथा उदासीनः न कस्यचित् पक्षं भजते, तथा अयं गुणातीतत्वोपायमार्गेऽवस्थितः आसीनः आत्मवित् गुणैः यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत् स्फुटीकरोति—गुणाः कार्यकरणविषयाकारपरिणताः अन्योन्यस्मिन् वर्तन्ते इति यः अवतिष्ठति । छन्दोभङ्गभयात् परस्मैपदप्रयोगः । योऽनुतिष्ठतीति वा पाठान्तरम् । न इङ्गते न चलति, स्वरूपावस्थ एव भवति इत्यर्थः ॥

किंच—

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥**

समदुःखसुखः समे दुःखसुखे यस्य सः समदुःखसुखः, स्वस्थः स्वे आत्मनि स्थितः प्रसन्नः, समलोष्टाश्मकाञ्चनः लोष्टं च अश्मा च काञ्चनं च लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः, तुल्यप्रियाप्रियः प्रियं च अप्रियं च प्रियाप्रिये तुल्ये समे यस्य सोऽयं तुल्यप्रियाप्रियः, धीरः धीमान्, तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च निन्दात्मसंस्तुती, तुल्ये निन्दात्मसंस्तुती यस्य यतेः सः तुल्यनिन्दात्मसंस्तुतिः ॥

किंच—

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥**

मानापमानयोः तुल्यः समः निर्विकारः; तुल्यः मित्रारिपक्षयोः, यद्यपि उदासीना भवन्ति केचित् स्वाभिप्रायेण, तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्ति इति

तुल्यो मित्रारिपक्षयोः इत्याह । सर्वारम्भपरित्यागी, दृष्टादृष्टार्थानि कर्माणि आरभ्यन्ते इति आरम्भाः, सर्वान् आरम्भान् परित्यक्तुं शीलम् अस्य इति सर्वारम्भपरित्यागी, देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागी इत्यर्थः । गुणातीतः सः उच्यते ॥

'उदासीनवत्' इत्यादि 'गुणातीतः स उच्यते' इत्येतदन्तम् उक्तं यावत् यत्नसाध्यं तावत् संन्यासिनः अनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः; स्थिरीभूतं तु स्वसंवेद्यं सत् गुणातीतस्य यतेः लक्षणं भवति इति । अधुना 'कथं च त्रीन्गुणानतिवर्तते?' इत्यस्य प्रश्नस्य प्रतिवचनम् आह—

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥**

मां च ईश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा अव्यभिचारेण न कदाचित् यो व्यभिचरति भक्तियोगेन भजनं भक्तिः सैव योगः तेन भक्तियोगेन सेवते, सः गुणान् समतीत्य एतान् यथोक्तान् ब्रह्मभूयाय, भवनं भूयः, ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवति इत्यर्थः ॥

कुत एतदिति उच्यते—

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे गुणत्रयविभागयोगो नाम
चतुर्दशोऽध्यायः ॥

ब्रह्मणः परमात्मनः हि यस्मात् प्रतिष्ठा अहं प्रतितिष्ठति अस्मिन् इति प्रतिष्ठा अहं प्रत्यगात्मा । कीदृशस्य ब्रह्मणः? अमृतस्य अविनाशिनः अव्ययस्य अविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य धर्मज्ञानस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्य आनन्दरूपस्य ऐकान्तिकस्य अव्यभिचारिणः अमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा, सम्यग्ज्ञानेन परमात्मतया निश्चीयते । तदेतत् 'ब्रह्मभूयाय कल्पते' इति उक्तम् । यया च ईश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते, सा शक्तिः ब्रह्मैव अहम्, शक्तिशक्तिमतोः अनन्यत्वात् इत्यभिप्रायः । अथवा, ब्रह्मश-

ब्दवाच्यत्वात् सविकल्पकं ब्रह्म । तस्य ब्रह्मणो निर्विकल्पकः अहमेव नान्यः प्रतिष्ठा आश्रयः । किंविशिष्टस्य? अमृतस्य अमरणधर्मकस्य अव्ययस्य व्ययरहितस्य । किंच, शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्य ऐकान्तिकस्य एकान्तनियतस्य च, 'प्रतिष्ठा अहम्' इति वर्तते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**चतुर्दशोऽध्यायः ॥**

# पञ्चदशोऽध्यायः ॥

यस्मात् मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलम्, अतः भक्तियोगेन मां ये सेवन्ते ते मम प्रसादात् ज्ञानप्राप्तिक्रमेण गुणातीताः मोक्षं गच्छन्ति । किमु वक्तव्यम् आत्मनः तत्त्वमेव सम्यक् विजानन्तः इति अतः भगवान् अर्जुनेन अपृष्टोऽपि आत्मनः तत्त्वं विवक्षुः उवाच 'ऊर्ध्वमूलम्' इत्यादिना । तत्र तावत् वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति—विरक्तस्य हि संसारात् भगवत्तत्त्वज्ञाने अधिकारः, न अन्यस्येति ॥

श्रीभगवानुवाच—

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥**

ऊर्ध्वमूलं कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्च ऊर्ध्वम्; उच्यते ब्रह्म अव्यक्तं मायाशक्तिमत्,

तत् मूलं अस्येति सोऽयं संसारवृक्षः ऊर्ध्वमूलः। श्रुतेश्च— 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इति। पुराणे च— 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोच्छ्रितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा। धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः। एतद्ब्रह्मवनं चैव ब्रह्माचरति नित्यशः॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः॥' इत्यादि। तम् ऊर्ध्वमूलं संसारं मायामयं वृक्षम् अधःशाखं महदहंकारतन्मात्रादयः शाखा इव अस्य अधः भवन्तीति सोऽयं अधःशाखः, तम् अधःशाखम्। न श्वोऽपि स्थाता इति अश्वत्थः तं क्षणप्रध्वंसिनम् अश्वत्थं प्राहुः कथयन्ति अव्ययं संसारमायायाः अनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षः अव्ययः, अनाद्यन्तदेहादिसंतानाश्रयः हि सुप्रसिद्धः, तम् अव्ययम्। तस्यैव संसारवृक्षस्य इदम् अन्यत् विशेषणम्— छन्दांसि यस्य पर्णानि, छन्दांसि च्छादनात् ऋग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि। यथा वृक्षस्य परिरक्षणार्थानि पर्णानि, तथा वेदाः संसारवृक्षपरिरक्षणार्थाः, धर्माधर्मतद्धेतुफलप्रदर्शनार्थत्वात्। यथाव्या-

ख्यातं संसारवृक्षं समूलं यः तं वेद सः वेदवित्, वेदार्थ-वित् इत्यर्थः । न हि समूलात् संसारवृक्षात् अस्मात् ज्ञेयः अन्यः अणुमात्रोऽपि अवशिष्टः अस्ति इत्यतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति ॥

तस्य एतस्य संसारवृक्षस्य अपरा अवयवकल्पना उच्यते—

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

अधः मनुष्यादिभ्यो यावत् स्थावरम् ऊर्ध्वं च यावत् ब्रह्मणः विश्वसृजो धाम इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि, तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः, गुणप्रवृद्धाः गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृताः उपादानभूतैः, विषयप्रवालाः विषयाः शब्दादयः प्रवालाः इव देहादिकर्मफलेभ्यः शाखाभ्यः अङ्कुरीभवन्तीव, तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परममूलं उपादानकारणं पूर्वम् उक्तम् । अथ इदानीं कर्मफलजनितरागद्वे-

षादिवासनाः मूलानीव धर्माधर्मप्रवृत्तिकारणानि अवान्तरभावीनि तानि अधश्च देवाद्यपेक्षया मूलानि अनुसंततानि अनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणम् अनुबन्धः पश्चाद्भावि, येषाम् उद्भूतिम् अनु उद्भवति, तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतः । अत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥

यस्तु अयं वर्णितः संसारवृक्षः—

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूल-**
**मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

न रूपम् अस्य इह यथा उपवर्णितं तथा नैव उपलभ्यते, स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वात्; दृष्टनष्टस्वरूपो हि स इति अत एव न अन्तः न पर्यन्तः निष्ठा परिसमाप्तिर्वा विद्यते । तथा न च आदिः, 'इतः आरभ्य अयं प्रवृत्तः' इति न केनचित् गम्यते । न च संप्रतिष्ठा स्थितिः मध्यम् अस्य न केनचित् उपलभ्यते । अश्वत्थम् एनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि

सुदृढानि मूलानि यस्य तम् एनं सुविरूढमूलम्, असङ्गश-
स्त्रेण असङ्गः पुत्रवित्तलोकैषणाभ्यः व्युत्थानं तेन असङ्ग-
शस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनः पुनः वि-
वेकाभ्यासाश्मनिशितेन छित्त्वा संसारवृक्षं सबीजम् उद्धृत्य ॥

**ततः पदं तत्परिमार्गितव्यं**
**यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये**
**यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

ततः पश्चात् यत् पदं वैष्णवं तत् परिमार्गितव्यम्, परि-
मार्गणम् अन्वेषणं ज्ञातव्यमित्यर्थः । यस्मिन् पदे गताः
प्रविष्टाः न निवर्तन्ति न आवर्तन्ते भूयः पुनः संसाराय ।
कथं परिमार्गितव्यमिति आह— तमेव च यः पदशब्देन
उक्तः आद्यम् आदौ भवम् आद्यं पुरुषं प्रपद्ये इत्येवं परिमा-
र्गितव्यं तच्छरणतया इत्यर्थः । कः असौ पुरुषः इति,
उच्यते— यतः यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः
प्रसृता निःसृता, ऐन्द्रजालिकादिव माया, पुराणी चिरंतनी ॥

कथंभूताः तत् पदं गच्छन्तीति, उच्यते—

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

निर्मानमोहाः मानश्च मोहश्च मानमोहौ, तौ निर्गतौ येभ्यः ते निर्मानमोहाः मानमोहवर्जिताः । जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः, जितः सङ्गदोषः यैः ते जितसङ्गदोषाः । अध्यात्मनित्याः परमात्मस्वरूपालोचननित्याः तत्पराः । विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामाः येषां ते विनिवृत्तकामा. यतयः संन्यासिनः द्वन्द्वैः प्रियाप्रियादिभिः विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता. गच्छन्ति अमूढाः मोहवर्जिताः पदम् अव्यय तत् यथोक्तम् ॥

तदेव पदं पुनः विशेष्यते—

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

तत् धाम इति व्यवहितेन धाम्ना संबध्यते । तत् धाम तेजोरूपं पदं न भासयते सूर्यः आदित्यः सर्वावभासनशक्ति-

मत्त्वेऽपि सति । तथा न शशाङ्कः चन्द्रः, न पावकः न अग्निरपि । यत् धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते, यच्च सूर्यादिः न भासयते, तत् धाम पदं परमं विष्णोः मम पदम्, यत् गत्वा न निवर्तन्ते इत्युक्तम् ॥

ननु सर्वा हि गतिः आगत्यन्ता, 'संयोगाः विप्रयोगान्ताः' इति प्रसिद्धम् । कथम् उच्यते 'तत् धाम गतानां नास्ति निवृत्तिः' इति? शृणु तत्र कारणम्—

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

ममैव परमात्मनः नारायणस्य, अंशः भागः अवयवः एकदेशः इति अनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतः कर्ता भोक्ता इति प्रसिद्धः सनातनः चिरंतनः; यथा जलसूर्यकः सूर्यांशः जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते च तेनैव आत्मना गच्छति, एवमेव; यथा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते । अतः उपपन्नम् उक्तम् 'यद्गत्वा न निवर्तन्ते' इति । ननु निरवयवस्य परमात्मनः कुतः अवयवः एकदेशः अंशः इति? सावयवत्वे

च विनाशप्रसङ्गः अवयवविभागात् । नैष दोषः, अविद्याकृतोपाधिपरिच्छिन्नः एकदेशः अंश इव कल्पितो यतः । दर्शितश्च अयमर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशत्वेन कल्पितः कथं संसरति उत्क्रामति च इति, उच्यते—मनःषष्ठानि इन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षति आकर्षति ॥

कस्मिन् काले ?—

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥**

यच्चापि यदा चापि उत्क्रामति ईश्वरः देहादिसंघातस्वामी जीवः, तदा 'कर्षति' इति श्लोकस्य द्वितीयपादः अर्थवशात् प्राथम्येन संबध्यते । यदा च पूर्वस्मात् शरीरात् शरीरान्तरम् अवाप्नोति तदा गृहीत्वा एतानि मनःषष्ठानि इन्द्रियाणि संयाति सम्यक् याति गच्छति । किमिव इति, आह—वायुः पवनः गन्धानिव आशयात् पुष्पादेः ॥

कानि पुनः तानि—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं घ्राणमेव च मनश्च षष्ठं प्रत्येकम् इन्द्रियेण सह, अधिष्ठाय देहस्थः विषयान् शब्दादीन् उपसेवते ॥

एवं देहगतं देहात्—

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥**

उत्क्रामन्तं देहं पूर्वोपात्तं परित्यजन्तं स्थितं वापि देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्च उपलभमानं गुणान्वितं सुखदुःखमोहाद्यैः गुणैः अन्वितम् अनुगतं संयुक्तमित्यर्थः । एवंभूतमपि एनम् अत्यन्तदर्शनगोचरप्राप्तं विमूढाः दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तया अनेकधा मूढाः न अनुपश्यन्ति— अहो कष्टं वर्तते इति अनुक्रोशति च भगवान्— ये तु पुनः प्रमाणजनितज्ञानचक्षुषः ते एनं पश्यन्ति ज्ञानचक्षुषः विविक्तदृष्टयः इत्यर्थः ॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥**

यतन्तः प्रयत्नं कुर्वन्तः योगिनश्च समाहितचित्ताः एनं

प्रकृतम् आत्मानं पश्यन्ति 'अयम् अहम् अस्मि' इति उपलभन्ते आत्मनि स्वस्यां बुद्धौ अवस्थितम्। यतन्तोऽपि शास्त्रादिप्रमाणैः, अकृतात्मानः असंस्कृतात्मानः तपसा इन्द्रियजयेन च, दुश्चरितात् अनुपरताः, अशान्तदर्पाः, प्रयत्नं कुर्वन्तोऽपि न एनं पश्यन्ति अचेतसः अविवेकिनः ॥

यत् पदं सर्वस्य अवभासकमपि अग्न्यादित्यादिकं ज्योतिः न अवभासयते, यत् प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखाः न निवर्तन्ते, यस्य च पदस्य उपाधिभेदम् अनु विधीयमानाः जीवाः— घटाकाशादयः इव आकाशस्य— अंशाः, तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुः चतुर्भिः श्लोकैः विभूतिसंक्षेपमाह भगवान्—

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥**

यत् आदित्यगतम् आदित्याश्रयम्। किं तत्? तेजः दीप्तिः प्रकाशः जगत् भासयते प्रकाशयति अखिलं समस्तम्; यत् चन्द्रमसि शशभृति तेजः अवभासकं वर्तते, यच्च अग्नौ हुतवहे, तत् तेजः विद्धि विजानीहि मामकं मदीयं मम विष्णोः तत् ज्योतिः। अथवा, आदित्यगतं तेजः

चैतन्यात्मकं ज्योतिः, यच्चन्द्रमसि, यच्च अग्नौ वर्तते तत् तेजः विद्धि मामकं मदीयं मम विष्णोः तत् ज्योतिः ॥

ननु स्थावरेषु जङ्गमेषु च तत् समानं चैतन्यात्मकं ज्योतिः । तत्र कथम् इदं विशेषणम्—'यदादित्यगतम्' इत्यादि । नैष दोषः, सत्त्वाधिक्यात् आविस्तरत्वोपपत्तेः । आदित्यादिषु हि सत्त्वं अत्यन्तप्रकाशम् अत्यन्तभास्वरम् ; अतः तत्रैव आविस्तरं ज्योतिः इति तत् विशिष्यते, न तु तत्रैव तत् अधिकमिति । यथा हि श्लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखम् आविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येन आविर्भवति ; तद्वत् ॥

किंच—

**गामाविश्य च भूतानि**
**धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः**
**सोमो भूत्वा रसात्मकः ॥ १३ ॥**

गां पृथिवीम् आविश्य प्रविश्य धारयामि भूतानि जगत् अहम् ओजसा बलेन ; यत् बलं कामरागविवर्जितम् ऐश्वरं रूपं जगद्विधारणाय पृथिव्याम् आविष्टं येन पृथिवी गुर्वी न

अधः पतति न विदीर्यते च । तथा च मन्त्रवर्णः— 'येन द्यौरुग्रा पृथिवी च दृढा' इति, 'स दाधार पृथिवीम्' इत्यादिश्च । अतः गामाविश्य च भूतानि चराचराणि धारयामि इति युक्तमुक्तम् । किंच, पृथिव्यां जाताः ओषधीः सर्वाः व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मकः रसस्वभावः । सर्वरसानाम् आकरः सोमः । स हि सर्वरसात्मकः सर्वाः ओषधीः स्वात्मरसान् अनुप्रवेशयन् पुष्णाति ॥

किंच—

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥**

अहमेव वैश्वानरः उदरस्थः अग्निः भूत्वा—'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' इत्यादिश्रुतेः ; वैश्वानरः सन् प्राणिनां प्राणवतां देहम् आश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि अन्नम् अशनं चतुर्विधं चतुष्प्रकारं भोज्यं भक्ष्यं चोष्यं लेह्यं च । 'भोक्ता वैश्वानरः अग्निः, अग्नेः

भोज्यम् अन्नं सोमः, तदेतत् उभयम् अग्नीषोमौ सर्वम्' इति पश्यतः अन्नदोषलेपः न भवति ॥

किंच—

**सर्वस्य चाहं हृदि संनिविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

सर्वस्य च प्राणिजातस्य अहम् आत्मा सन् हृदि बुद्धौ संनिविष्टः । अतः मत्तः आत्मनः सर्वप्राणिनां स्मृतिः ज्ञानं तदपोहनं च अपगमनं च; येषां यथा पुण्यकर्मणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयो. अपोहनं च अपायनम् अपगमनं च । वेदैश्च सर्वैः अहमेव परमात्मा वेद्यः वेदितव्यः । वेदान्तकृत् वेदान्तार्थसंप्रदायकृत् इत्यर्थः, वेदवित् वेदार्थवित् एव च अहम् ॥

भगवतः ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेपः उक्तः विशिष्टोपाधिकृतः 'यदादित्यगतं तेजः' इत्यादिना । अथ अधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य

केवलस्य स्वरूपनिर्दिधारयिषया उत्तरे श्लोकाः आरभ्यन्ते। तत्र सर्वमेव अतीतानागताध्यायार्थजातं त्रिधा राशीकृत्य आह—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥**

द्वौ इमौ पृथग्राशीकृतौ पुरुषौ इति उच्येते लोके संसारे—क्षरश्च क्षरतीति क्षरः विनाशी इति एको राशिः; अपरः पुरुषः अक्षरः तद्विपरीतः, भगवतः मायाशक्तिः, क्षराख्यस्य पुरुषस्य उत्पत्तिबीजम् अनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयः, अक्षरः पुरुषः उच्यते। कौ तौ पुरुषौ इति आह स्वयमेव भगवान्— क्षरः सर्वाणि भूतानि, समस्तं विकारजातम् इत्यर्थः। कूटस्थः कूटः राशी राशिरिव स्थितः। अथवा, कूटः माया वञ्चना जिह्मता कुटिलता इति पर्यायाः, अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः, संसारबीजानन्त्यात् न क्षरति इति अक्षरः उच्यते॥

आभ्यां क्षराक्षराभ्यां अन्यः विलक्षणः क्षराक्षरोपाधिद्वयदोषेण अस्पृष्टः नित्यशुद्धबुद्धमुक्तस्वभावः—

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥**

उत्तमः उत्कृष्टतमः पुरुषस्तु अन्यः अत्यन्तविलक्षणः आभ्यां परमात्मा इति परमश्च असौ देहाद्यविद्याकृतात्मभ्यः, आत्मा च सर्वभूतानां प्रत्यक्चेतनः, इत्यतः परमात्मा इति उदाहृतः उक्तः वेदान्तेषु । स एव विशिष्यते यः लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्या आविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति ; अव्ययः न अस्य व्ययः विद्यते इति अव्ययः । कः ? ईश्वरः सर्वज्ञः नारायणाख्यः ईशनशीलः ॥

यथाव्याख्यातस्य ईश्वरस्य 'पुरुषोत्तमः' इत्येतत् नाम प्रसिद्धम् । तस्य नामनिर्वचनप्रसिद्ध्या अर्थवत्त्वं नाम्नो दर्शयन् 'निरतिशयः अहम् ईश्वरः' इति आत्मानं दर्शयति भगवान्—

**यस्मात्क्षरमतीतोऽह-**
**मक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च**
**प्रथितः पुरुषोत्तमः ॥ १८ ॥**

यस्मात् क्षरम् अतीतः अहं संसारमायावृक्षम् अश्वत्थाख्यम् अतिक्रान्तः अहम् अक्षरादपि संसारमायारूपवृक्षबीजभूतादपि च उत्तमः उत्कृष्टतमः ऊर्ध्वतमो वा, अतः ताभ्यां क्षराक्षराभ्याम् उत्तमत्वात् अस्मि लोके वेदे च प्रथितः प्रख्यातः । पुरुषोत्तमः इत्येवं मां भक्तजनाः विदुः । कवयः काव्यादिषु च इदं नाम निबध्नन्ति । पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥

अथ इदानीं यथानिरुक्तम् आत्मानं यो वेद, तस्य इदं फलम् उच्यते—

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**

यः माम् ईश्वरं यथोक्तविशेषणम् एवं यथोक्तेन प्रकारेण असंमूढः संमोहवर्जितः सन् जानाति 'अयम् अहम् अस्मि' इति पुरुषोत्तमं सः सर्ववित् सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मतया हे भारत ॥

अस्मिन् अध्याये भगवत्तत्त्वज्ञानं मोक्षफलम् उक्त्वा, अथ इदानीं तत् स्तौति—

**इति गुह्यतमं शास्त्र-**
**मिदमुक्तं मयानघ ।**
**एतद्बुद्ध्वा बुद्धिमान्स्या-**
**त्कृतकृत्यश्च भारत ॥ २० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्म-
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम
**पञ्चदशोऽध्यायः ॥**

इति एतत् गुह्यतमं गोप्यतमम्, अत्यन्तरहस्यं इत्येतत्। किं तत्? शास्त्रम्। यद्यपि गीताख्यं समस्तम् 'शास्त्रम्' उच्यते, तथापि अयमेव अध्यायः इह 'शास्त्रम्' इति उच्यते स्तुत्यर्थं प्रकरणात्। सर्वो हि गीताशास्त्रार्थः अस्मिन् अध्याये समासेन उक्तः। न केवलं गीताशास्त्रार्थ एव, किंतु सर्वश्च वेदार्थः इह परिसमाप्तः। 'यस्तं वेद स वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्यः' इति च उक्तम्। इदम् उक्तं कथितं मया हे अनघ अपाप। एतत् शास्त्रं यथादर्शितार्थं बुद्ध्वा

बुद्धिमान् स्यात् भवेत् न अन्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन सः कृतकृत्यः; विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत् कर्तव्यं तत् सर्वं भगवत्तत्त्वे विदिते कृतं भवेत् इत्यर्थः; न च अन्यथा कर्तव्यं परिसमाप्यते कस्यचित् इत्यभिप्रायः। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति च उक्तम्। 'एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति च मानवं वचनम्। यतः एतत् परमार्थतत्त्वं मत्तः श्रुतवान् असि, अतः कृतार्थः त्वं भारत इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

**पञ्चदशोऽध्यायः ॥**

# षोडशोऽध्यायः ॥

दैवी आसुरी राक्षसी इति प्राणिणां प्रकृतयः नवमे अध्याये सूचिताः । तासां विस्तरेण प्रदर्शनाय 'अभयं सत्त्वसंशुद्धिः' इत्यादिः अध्यायः आरभ्यते । तत्र संसारमोक्षाय दैवी प्रकृतिः, निबन्धाय आसुरी राक्षसी च इति दैव्याः आदानाय प्रदर्शनं क्रियते, इतरयोः परिवर्जनाय च ॥

श्रीभगवानुवाच—

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥**

अभयम् अभीरुता । सत्त्वसंशुद्धिः सत्त्वस्य अन्तःकरणस्य संशुद्धिः संव्यवहारेषु परवञ्चनामायानृतादिपरिवर्जनं शुद्धसत्त्वभावेन व्यवहारः इत्यर्थः । ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रतः आचार्यतश्च आत्मादिपदार्थानाम् अवगमः, अवग-

तानाम् इन्द्रियाद्युपसंहारेण एकाग्रतया स्वात्मसंवेद्यतापादनं योग:, तयो: ज्ञानयोगयो. व्यावस्थिति: व्यवस्थानं तन्निष्ठता। एषा प्रधाना दैवी सात्त्विकी संपत्। यत्र येषाम् अधिकृतानां या प्रकृति: संभवति, सात्त्विकी सा उच्यते। दानं यथाशक्ति संविभाग: अन्नादीनाम्। दमश्च बाह्यकरणानाम् उपशम:; अन्त:करणस्य उपशमं शान्तिं वक्ष्यति। यज्ञश्च श्रौत: अग्निहोत्रादि:। स्मार्तश्च देवयज्ञादि:, स्वाध्याय· ऋग्वेदाद्यध्ययनम् अदृष्टार्थम्। तप: वक्ष्यमाणं शारीरादि। आर्जवम् ऋजुत्वं सर्वदा॥

किंच—

**अहिंसा सत्यमक्रोधस्त्याग: शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ २॥**

अहिंसा अहिंसनं प्राणिनां पीडावर्जनम्। सत्यम् अप्रियानृतवर्जितं यथाभूतार्थवचनम्। अक्रोध: परै: आक्रुष्टस्य अभिहतस्य वा प्राप्तस्य क्रोधस्य उपशमनम्। त्याग: संन्यास:, पूर्वं दानस्य उक्तत्वात्। शान्ति: अन्त:करणस्य उपशम:। अपैशुनं अपिशुनता; परस्मै पररन्ध्रप्रकटीकरणं पैशुनम्, तदभाव: अपैशुनम्। दया कृपा भूतेषु दु:खितेषु।

अलोलुप्त्वम् इन्द्रियाणां विषयसंनिधौ अविक्रिया । मार्दवं मृदुता अक्रौर्यम् । ह्रीः लज्जा । अचापलम् असति प्रयोजने वाक्पाणिपादादीनाम् अव्यापारयितृत्वम् ॥

किंच—

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अन्तर्विक्रियानुत्पत्तिः, उत्पन्नायां विक्रियायाम् उपशमनम् अक्रोधः इति अवोचाम । इत्थं क्षमायाः अक्रोधस्य च विशेषः । धृतिः देहेन्द्रियेषु अवसादं प्राप्तेषु तस्य प्रतिषेधकः अन्तःकरणवृत्तिविशेषः, येन उत्तम्भितानि करणानि देहश्च न अवसीदन्ति । शौचं द्विविधं मृज्जलकृतं बाह्यम् आभ्यन्तरं च मनोबुद्ध्योः नैर्मल्यं मायारागादिकालुष्याभावः; एवं द्विविधं शौचम् । अद्रोहः परजिघांसाभावः अहिंसनम् । नातिमानिता अत्यर्थं मानः अतिमानः, सः यस्य विद्यते सः अतिमानी, तद्भावः अतिमानिता, तदभावः नातिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्ति अभयादीनि एतदन्तानि संपदं अभिजातस्य । किं-

विशिष्टां संपदम्? दैवीं देवानां या संपत् ताम् अभिलक्ष्य जातस्य देवविभूत्यर्हस्य भाविकल्याणस्य इत्यर्थः, हे भारत॥

अथ इदानीं आसुरी संपत् उच्यते—

**दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥**

दम्भः धर्मध्वजित्वम् । दर्पः विद्याधनस्वजनादिनिमित्तः उत्सेकः । अतिमानः पूर्वोक्तः । क्रोधश्च । पारुष्यमेव च परुषवचनम्—यथा काणम् 'चक्षुष्मान्' विरूपम् 'रूपवान्' हीनाभिजनम् 'उत्तमाभिजनः' इत्यादि । अज्ञानं च अविवेकज्ञानं कर्तव्याकर्तव्यादिविषयमिथ्याप्रत्ययः । अभिजातस्य पार्थ । किम् अभिजातस्येति, आह— संपदम् आसुरीम् असुराणां संपत् आसुरी ताम् अभिजातस्य इत्यर्थः ॥

अनयोः संपदोः कार्यम् उच्यते—

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥**

दैवी संपत् या, सा विमोक्षाय संसारबन्धनात् । निबन्धाय नियतः बन्धः निबन्धः तदर्थम् आसुरी संपत् मता

अभिप्रेता । तथा राक्षसी च । तत्र एवम् उक्ते सति अर्जुन-स्य अन्तर्गतं भावम् 'किम् अहम् आसुरसंपद्युक्तः? किं वा दैवसंपद्युक्तः?' इत्येवम् आलोचनारूपम् आलक्ष्य आह भगवान्—मा शुचः शोकं मा कार्षीः । संपदं दैवीम् अभिजातः असि अभिलक्ष्य जातोऽसि, भाविकल्याणः त्वम् असि इत्यर्थः, हे पाण्डव ॥

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥**

द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येतेति सर्गौ भूतान्येव सृज्यमानानि दैवासुर-संपद्द्वययुक्तानि इति द्वौ भूतसर्गौ इति उच्यते, 'द्वया ह वै प्राजापत्या देवाश्चासुराश्च' इति श्रुतेः । लोके अस्मिन्, संसारे इत्यर्थः, सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गौ इति, उच्यते— प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनः अनुवादे प्रयोजनम् आह— दैवः भूतसर्गः 'अभयं सत्त्व-संशुद्धिः' इत्यादिना विस्तरशः विस्तरप्रकारैः प्रोक्तः कथितः, न तु आसुरः विस्तरशः; अतः तत्परिवर्जनार्थम् आसुरं पार्थ, मे मम वचनात् उच्यमानं विस्तरशः शृणु अवधारय ॥

आ अध्यायपरिसमाप्तेः आसुरी संपत् प्राणिविशेषणत्वेन प्रदर्श्यते, प्रत्यक्षीकरणेन च शक्यते तस्याः परिवर्जनं कर्तुमिति—

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥**

प्रवृत्तिं च प्रवर्तनं यस्मिन् पुरुषार्थसाधने कर्तव्ये प्रवृत्तिः ताम्, निवृत्तिं च एतद्विपरीतां यस्मात् अनर्थहेतोः निवर्तितव्यं सा निवृत्तिः तां च, जनाः आसुराः न विदुः न जानन्ति। न केवलं प्रवृत्तिनिवृत्ती एव ते न विदुः, न शौचं नापि च आचारः न सत्यं तेषु विद्यते; अशौचाः अनाचाराः मायाविनः अनृतवादिनो हि आसुराः ॥

किंच—

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥**

असत्यं यथा वयम् अनृतप्रायाः तथा इदं जगत् सर्वम् असत्यम्, अप्रतिष्ठं च न अस्य धर्माधर्मौ प्रतिष्ठा अतः अप्रतिष्ठं च, इति ते आसुराः जनाः जगत् आहुः, अनीश्वरम्

न च धर्माधर्मसव्यपेक्षकः अस्य शासिता ईश्वरः विद्यते इति अतः अनीश्वरं जगत् आहुः । किंच, अपरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोः अन्योन्यसंयोगात् जगत् सर्वं संभूतम् । किमन्यत् कामहैतुकं कामहेतुकमेव कामहैतुकम् । किमन्यत् जगतः कारणम्? न किंचित् अदृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः 'काम एव प्राणिनां कारणम्' इति लोकायतिकदृष्टिः इयम् ॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥**

एतां दृष्टिम् अवष्टभ्य आश्रित्य नष्टात्मानः नष्टस्वभावाः विभ्रष्टपरलोकसाधनाः अल्पबुद्धयः विषयविषया अल्पैव बुद्धिः येषां ते अल्पबुद्धयः प्रभवन्ति उद्भवन्ति उग्रकर्माणः क्रूरकर्माणः हिंसात्मकाः । क्षयाय जगतः प्रभवन्ति इति संबन्धः । जगतः अहिताः, शत्रवः इत्यर्थः ॥

ते च—

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥**

कामम् इच्छाविशेषम् आश्रित्य अवष्टभ्य दुष्पूरम् अशक्यपूरणं दम्भमानमदान्विताः दम्भश्च मानश्च मदश्च दम्भमानमदाः तैः अन्विताः दम्भमानमदान्विताः मोहात् अविवेकतः गृहीत्वा उपादाय असद्ग्राहान् अशुभनिश्चयान् प्रवर्तन्ते लोके अशुचिव्रताः अशुचीनि व्रतानि येषां ते अशुचिव्रताः ॥

किंच—

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥**

चिन्ताम् अपरिमेयां च, न परिमातुं शक्यते यस्याः चिन्तायाः इयत्ता सा अपरिमेया, ताम् अपरिमेयाम्, प्रलयान्तां मरणान्ताम् उपाश्रिताः, सदा चिन्तापराः इत्यर्थः । कामोपभोगपरमाः, काम्यन्ते इति कामाः विषयाः शब्दादयः तदुपभोगपरमाः 'अयमेव परमः पुरुषार्थः यः कामोपभोगः' इत्येवं निश्चितात्मानः, एतावत् इति निश्चिताः ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१२॥**

आशापाशशतैः आशा एव पाशाः तच्छतैः बद्धाः निय-

न्त्रिताः सन्तः सर्वतः आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परम् अयनम् आश्रयः येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थम्, अन्यायेन परस्वापहरणादिना इत्यर्थः; किम्? अर्थसंचयान् अर्थप्रचयान् ॥

ईदृशश्च तेषाम् अभिप्रायः——

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

इदं द्रव्यं अद्य इदानीं मया लब्धम् । इदं च अन्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरम् । इदं च अस्ति इदमपि मे भविष्यति आगामिनि संवत्सरे पुनः धनं तेन अहं धनी विख्यातः भविष्यामि इति ॥

**असौ मया हतः शत्रु-**
**र्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी**
**सिद्धोऽहं बलवान्सुखी ॥ १४ ॥**

असौ देवदत्तनामा मया हतः दुर्जयः शत्रुः । हनिष्ये च

अपरान् अन्यान् वराकान् अपि। किम् एते करिष्यन्ति तपस्विनः; सर्वथापि नास्ति मत्तुल्यः। कथम्? ईश्वरः अहम्, अहं भोगी। सर्वप्रकारेण च सिद्ध. अहं संपन्न. पुत्रैः नप्तृभिः, न केवलं मानुषः, बलवान् सुखी च अहमेव; अन्ये तु भूमिभारायावितीर्णाः ॥

**आढ्योऽभिजनवानस्मि**
**कोऽन्योऽस्ति सदृशो मया।**
**यक्ष्ये दास्यामि मोदिष्य**
**इत्यज्ञानविमोहिताः ॥ १५ ॥**

आढ्यः धनेन, अभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसंपन्नः— तेनापि न मम तुल्यः अस्ति कश्चित्। कः अन्यः अस्ति सदृशः तुल्यः मया? किंच, यक्ष्ये यागेनापि अन्यान् अभिभविष्यामि, दास्यामि नटादिभ्यः, मोदिष्ये हर्षं च अतिशयं प्राप्स्यामि, इति एवम् अज्ञानविमोहिताः अज्ञानेन विमोहिताः विविधम् अविवेकभावम् आपन्नाः ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥**

अनेकचित्तविभ्रान्ताः उक्तप्रकारैः अनेकैः चित्तैः विविधं भ्रान्ताः अनेकचित्तविभ्रान्ताः, मोहजालसमावृताः मोहः अविवेकः अज्ञानं तदेव जालमिव आवरणात्मकत्वात्, तेन समावृताः । प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तः तेन उपचितकल्मषाः पतन्ति नरके अशुचौ वैतरण्यादौ ॥

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७**

आत्मसंभाविताः सर्वगुणविशिष्टतया आत्मनैव संभाविताः आत्मसंभाविताः, न साधुभिः । स्तब्धाः अप्रणतात्मानः । धनमानमदान्विताः धननिमित्तः मानः मदश्च, ताभ्यां धनमानमदाभ्याम् अन्विताः । यजन्ते नामयज्ञैः नाममात्रैः यज्ञैः ते दम्भेन धर्मध्वजितया अविधिपूर्वकं विधिविहिताङ्गेतिकर्तव्यतारहितम् ॥

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

अहंकारं अहंकरणम् अहंकारः, विद्यमानैः अविद्यमानैश्च गुणैः आत्मनि अध्यारोपितैः 'विशिष्टमात्मानमहम्

इति मन्यते, सः अहंकारः अविद्याख्यः कष्टतमः, सर्व-दोषाणां मूलं सर्वानर्थप्रवृत्तीनां च, तम्। तथा बलं परा-भिभवनिमित्तं कामरागान्वितम्। दर्पं दर्पो नाम यस्य उद्भवे धर्मम् अतिक्रामति सः अयम् अन्तःकरणाश्रयः दोषविशेषः। कामं स्त्र्यादिविषयम्। क्रोधम् अनिष्टविष-यम्। एतान् अन्यांश्च महतो दोषान् संश्रिताः। किंच ते माम् ईश्वरम् आत्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसा-क्षिभूतं मां प्रद्विषन्तः, मच्छासनातिवर्तित्वं प्रद्वेषः, तं कुर्वन्तः अभ्यसूयकाः सन्मार्गस्थानां गुणेषु असहमानाः ॥

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥**

तान् अहं सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणः द्विषतश्च मां क्रूरान् संसारेषु एव अनेकनरकसंसरणमार्गेषु नरा-धमान् अधर्मदोषवत्त्वात् क्षिपामि प्रक्षिपामि अजस्रं संत-तम् अशुभान् अशुभकर्मकारिणः आसुरीष्वेव क्रूरकर्मप्रा-यासु व्याघ्रसिंहादियोनिषु 'क्षिपामि' इत्यनेन संबन्धः ॥

**आसुरीं योनिमापन्ना**
**मूढा जन्मनि जन्मनि।**

**मामप्राप्यैव कौन्तेय**
**ततो यान्त्यधमां गतिम् ॥ २० ॥**

आसुरी योनिम् आपन्नाः प्रतिपन्नाः मूढाः अविवेकिनः जन्मनि जन्मनि प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना: अधो गच्छन्तो मूढाः माम् ईश्वरम् अप्राप्य अनासाद्य एव हे कौन्तेय, ततः तस्मादपि यान्ति अधमां गतिं निकृष्टतमां गतिम्। 'माम् अप्राप्यैव' इति न मत्प्राप्तौ काचिदपि आशङ्का अस्ति, अतः मच्छिष्टसाधुमार्गम् अप्राप्य इत्यर्थः ॥

सर्वस्या आसुर्याः संपदः संक्षेपः अयम् उच्यते, यस्मिन् त्रिविधे सर्वः आसुरीसंपद्भेदः अनन्तोऽपि अन्तर्भवति । यत्परिहारेण परिहृतश्च भवति, यत् मूलं सर्वस्य अनर्थस्य, तत् एतत् उच्यते—

**त्रिविधं नरकस्येदं**
**द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभ-**
**स्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

त्रिविधं त्रिप्रकारं नरकस्य प्राप्तौ इदं द्वारं नाशनम् आ-

त्मनः, यत् द्वारं प्रविशन्नेव नश्यति आत्मा; कस्मैचित् पुरुषार्थाय योग्यो न भवति इत्येतत्, अतः उच्यते 'द्वारं नाशनमात्मनः' इति। किं तत्? कामः क्रोधः तथा लोभः। तस्मात् एतत् त्रयं त्यजेत्। यतः एतत् द्वारं नाशनम् आत्मनः तस्मात् कामादित्रयमेतत् त्यजेत्॥

त्यागस्तुतिरियम्—

**एतैर्विमुक्तः कौन्तेय**
**तमोद्वारैस्त्रिभिर्नरः।**
**आचरत्यात्मनः श्रेय-**
**स्ततो याति परां गतिम्॥ २२॥**

एतैः विमुक्तः कौन्तेय तमोद्वारैः तमसः नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयः तैः, एतैः त्रिभिः विमुक्तः नरः आचरति अनुतिष्ठति। किम्? आत्मनः श्रेयः। यत्प्रतिबद्धः पूर्वं न आचचार, तदपगमात् आचरति। ततः तदाचरणात् याति परां गतिं मोक्षमपि इति॥

सर्वस्य एतस्य आसुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणम्। शास्त्रप्रमाणात् उभयं शक्यं कर्तुम्, न अन्यथा। अतः—

**यः शास्त्रविधिमुत्सृज्य**
**वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति**
**न सुखं न परां गतिम् ॥ २३ ॥**

यः शास्त्रविधिं शास्त्रं वेदः तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यम् उत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन्, न सः सिद्धिं पुरुषार्थयोग्यताम् अवाप्नोति, न अपि अस्मिन् लोके सुखं न अपि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥

**तस्माच्छास्त्रं प्रमाणं ते**
**कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं**
**कर्म कर्तुमिहार्हसि ॥ २४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुर-
संपद्विभागयोगो नाम
षोडशोऽध्यायः ॥

तस्मात् शास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायाम् । अतः ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिः विधानं शास्त्रमेव विधानं शास्त्रविधानम् 'कुर्यात्, न कुर्यात्' इत्येवंलक्षणम्, तेन उक्तं स्वकर्म यत् तत् कर्तुम् इह अर्हसि, इह इति कर्माधिकारभूमिप्रदर्शनार्थम् इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**षोडशोऽध्यायः ॥**

# सप्तदशोऽध्यायः ॥

तस्माच्छास्त्रं प्रमाणं ते' इति भगवद्वाक्यात् लब्धप्रश्नबीजः अर्जुन उवाच—

अर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य
यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण
सत्त्वमाहो रजस्तमः ॥ १ ॥

ये केचित् अविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनाम् उत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धया अन्विताः श्रद्धया आस्तिक्यबुद्ध्या अन्विताः संयुक्ताः सन्तः— श्रुतिलक्षणं स्मृतिलक्षणं वा कंचित् शास्त्रविधिम् अपश्यन्तः वृद्धव्यवहारदर्शनादेव श्रद्दधानतया

ये देवादीन् पूजयन्ति, ते इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्येवं गृह्यन्ते। ये पुनः कंचित् शास्त्रविधिं उपलभमाना एव तम् उत्सृज्य अयथाविधि देवादीन् पूजयन्ति, ते इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते। कस्मात्? श्रद्धया अन्वितत्वविशेषणात्। देवादिपूजाविधिपरं किंचित् शास्त्रं पश्यन्त एव तत् उत्सृज्य अश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धया अन्विताः प्रवर्तन्ते इति न शक्यं कल्पयितुं यस्मात्, तस्मात् पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते। तेषाम् एवंभूतानां निष्ठा तु का कृष्ण सत्त्वम् आहो रज. तमः, किं सत्त्वं निष्ठा अवस्थानम्, आहोस्वित् रजः, अथवा तमः इति। एतत् उक्तं भवति—या तेषां देवादिविषया पूजा, सा किं सात्त्विकी, आहोस्वित् राजसी, उत तामसी इति॥

सामान्यविषयः अयं प्रश्न. न अप्रविभज्य प्रतिवचनम् अर्हतीति श्रीभगवानुवाच—

श्रीभगवानुवाच—

**त्रिविधा भवति श्रद्धा**
**देहिनां सा स्वभावजा।**

**सात्त्विकी राजसी चैव**
**तामसी चेति तां शृणु ॥ २ ॥**

त्रिविधा त्रिप्रकारा भवति श्रद्धा, यस्यां निष्ठायां त्वं पृच्छसि, देहिनां शरीरिणां सा स्वभावजा; जन्मान्तरकृतः धर्मादिसंस्कारः मरणकाले अभिव्यक्तः स्वभावः उच्यते, ततो जाता स्वभावजा। सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया; राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया; तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया; एवं त्रिविधां ताम् उच्यमानां श्रद्धां शृणु अवधारय ॥

सा इयं त्रिविधा भवति—

**सत्त्वानुरूपा सर्वस्य**
**श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो**
**यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत। यदि एवं ततः किं स्यादिति, उच्यते—श्रद्धामयः अयं श्रद्धाप्रायः पुरुषः संसारी

जीवः । कथम्? यः यच्छ्रद्धः या श्रद्धा यस्य जीवस्य सः यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव सः जीवः ॥

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठा अनुमेया इत्याह—

**यजन्ते सात्त्विका देवा-**
**न्यक्षरक्षांसि राजसाः ।**
**प्रेतान्भूतगणांश्चान्ये**
**यजन्ते तामसा जनाः ॥ ४ ॥**

यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठाः देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्च अन्ये यजन्ते तामसाः जनाः ॥

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे । तत्र कश्चिदेव सहस्रेषु देवपूजादिपरः सत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठाः तमोनिष्ठाश्चैव प्राणिनो भवन्ति । कथम्?—

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥**

अशास्त्रविहितं न शास्त्रविहितम् अशास्त्रविहितं घोरं पीडाकरं प्राणिनाम् आत्मनश्च तपः तप्यन्ते निर्वर्तयन्ति ये जनाः ते च दम्भाहंकारसंयुक्ताः, दम्भश्च अहंकारश्च दम्भाहंकारौ, ताभ्यां संयुक्ताः दम्भाहंकारसंयुक्ताः, कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेन अन्विताः कामरागबलान्विताः ॥

**कर्शयन्तः शरीरस्थं**
**भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं**
**तान्विद्ध्यासुरनिश्चयान्** ॥ ६ ॥

कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायम् अचेतसः अविवेकिनः मां चैव तत्कर्मबुद्धिसाक्षिभूतम् अन्तःशरीरस्थं नारायणं कर्शयन्तः, मदनुशासनाकरणमेव मत्कर्शनम्, तान् विद्धि आसुरनिश्चयान् आसुरो निश्चयो येषां ते आसुरनिश्चयाः तान् परिहरणार्थं विद्धि इति उपदेशः ॥

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनम् इह क्रियते

रस्यस्निग्धादिषु आहारविशेषेषु आत्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानाम् आहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां च उपादानार्थम् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनम् इह 'राजसतामसान् बुद्ध्वा कथं नु नाम परित्यजेत्, सात्त्विकानेव अनुतिष्ठेत्' इत्येवमर्थम् । आह—

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

आहारस्त्वपि सर्वस्य भोक्तुः प्राणिनः त्रिविधो भवति प्रियः इष्टः, तथा यज्ञः, तथा तपः, तथा दानम् । तेषाम् आहारादीनां भेदम् इमं वक्ष्यमाणं शृणु ॥

**आयुःसत्त्वबलारोग्य-**
**सुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या**
**आहाराः सात्त्विकप्रियाः ॥ ८ ॥**

आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च आयुःसत्त्वबलारोग्यसुखप्रीतयः तासां विवर्धनाः आयुःस-

त्त्वबलारोग्यसुखप्रीतिविवर्धनाः, ते च रस्याः रसोपेताः, स्निग्धाः स्नेहवन्तः, स्थिराः चिरकालस्थायिनः देहे, हृद्याः हृदयप्रियाः आहाराः सात्त्विकप्रियाः सात्त्विकस्य इष्टाः ॥

**कट्‍वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥**

कट्‍वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः इत्यत्र अतिशब्दः कट्‍वादिषु सर्वत्र योज्यः, अतिकटुः अतितीक्ष्णः इत्येवम् । कटुश्च अम्लश्च लवणश्च अत्युष्णश्च तीक्ष्णश्च रूक्षश्च विदाही च ते आहाराः राजसस्य इष्टाः, दुःखशोकामयप्रदाः दुःखं च शोकं च आमयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥**

यातयामं मन्दपक्वम्, निर्वीर्यस्य गतरसशब्देन उक्तत्वात् । गतरसं रसवियुक्तम्, पूति दुर्गन्धि, पर्युषितं च पक्वं सत् रात्र्यन्तरितं च यत्, उच्छिष्टमपि भुक्तशिष्टम् उच्छिष्टम्, अमेध्यम् अयज्ञार्हम्, भोजनम् ईदृशं तामसप्रियम् ॥

अथ इदानीं यज्ञः त्रिविधः उच्यते—

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥**

अफलाकाङ्क्षिभिः अफलार्थिभिः यज्ञः विधिदृष्टः शास्त्रचोदनादृष्टो यः यज्ञः इज्यते निर्वर्त्यते, यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यम् इति मनः समाधाय, न अनेन पुरुषार्थो मम कर्तव्यः इत्येवं निश्चित्य, सः सात्त्विकः यज्ञः उच्यते ॥

**अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥**

अभिसंधाय तु उद्दिश्य फलं दम्भार्थमपि चैव यत् इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनं यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तम् अन्नं यस्मिन् यज्ञे सः असृष्टान्नः तम् असृष्टान्नम, मन्त्रहीनं मन्त्रतः स्वरतो वर्णतो वा वियुक्तं मन्त्रहीनम्, अदक्षिणम् उक्तदक्षिणारहितम्, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥

अथ इदानीं तपः त्रिविधम् उच्यते—

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञाः तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनम् , शौचम् , आर्जवम् ऋजुत्वम् , ब्रह्मचर्यम् अहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तपः उच्यते । 'पञ्चैते तस्य हेतवः' इति हि वक्ष्यति ॥

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥**

अनुद्वेगकरं प्राणिनाम् अदुःखकरं वाक्यं सत्यं प्रियहितं च यत् प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिः धर्मैः वाक्यं विशेष्यते । विशेषणधर्मसमुच्चयार्थः च-शब्दः । परप्रत्ययार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि, न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्य इतरेषाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवा-

क्यस्यापि इतरेषाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापि इतरेषाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । किं पुनः तत् तपः? यत् सत्यं वाक्यम् अनुद्वेगकरं प्रियं हितं च, तत् तपः वाङ्मयम्; यथा 'शान्तो भव वत्स, स्वाध्यायं योगं च अनुतिष्ठ, तथा ते श्रेयो भविष्यति' इति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तपः उच्यते ॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

मनःप्रसादः मनसः प्रशान्तिः, स्वच्छतापादनं प्रसादः, सौम्यत्वं यत् सौमनस्यम् आहुः— मुखादिप्रसादादिकार्योन्नेया अन्तःकरणस्य वृत्तिः । मौनं वाङ्नियमोऽपि मनःसंयमपूर्वको भवति इति कार्येण कारणम् उच्यते मनःसंयमो मौनमिति । आत्मविनिग्रहः मनोनिरोधः सर्वतः सामान्यरूपः आत्मविनिग्रहः, वाग्विषयस्यैव मनसः संयमः मौनम् इति विशेषः । भावसंशुद्धिः परैः व्यवहारकाले अमायावित्वं भावसंशुद्धिः । इत्येतत् तपः मानसम् उच्यते ॥

यथोक्तं कायिकं वाचिकं मानसं च तपः तप्तं नरैः सत्त्वादिगुणभेदेन कथं त्रिविधं भवतीति, उच्यते—

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥**

श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तम् अनुष्ठितं तपः तत् प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैः अनुष्ठातृभिः अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः युक्तैः समाहितैः—यत् ईदृशं तपः, तत् सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥**

सत्कारः साधुकारः 'साधुः अयं तपस्वी ब्राह्मणः इत्येवमर्थम्, मानो माननं प्रत्युत्थानाभिवादनादिः तदर्थम्, पूजा पादप्रक्षालनार्चनाशयितृत्वादि. तदर्थं च तपः सत्कारमानपूजार्थम्, दम्भेन चैव यत् क्रियते तपः तत् इह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेन अध्रुवम् ॥

**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥**

मूढग्राहेण अविवेकनिश्चयेन आत्मनः पीडया यत् क्रियते तपः परस्य उत्सादनार्थं विनाशार्थं वा, तत् तामसं तपः उदाहृतम् ॥

इदानीं दानत्रैविध्यम् उच्यते—

**दातव्यमिति यद्दानं**
**दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च**
**तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

दातव्यमिति एवं मनः कृत्वा यत् दानं दीयते अनुपकारिणे प्रत्युपकारासमर्थाय, समर्थायापि निरपेक्षं दीयते, देशे पुण्ये कुरुक्षेत्रादौ, काले संक्रान्त्यादौ, पात्रे च षडङ्गविद्वेदपारग इत्यादौ, तत् दानं सात्त्विकं स्मृतम् ॥

**यत्तु प्रत्युपकारार्थं**
**फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं**
**तद्दानं राजसं स्मृतम् ॥ २१ ॥**

यत्तु दानं प्रत्युपकारार्थं काले तु अयं मां प्रत्युपकरिष्य-

ति इत्येवमर्थम्, फलं वा अस्य दानस्य मे भविष्यति अदृष्टम् इति, तत् उद्दिश्य पुनः दीयते च परिक्लिष्टं खेदसंयुक्तम्, तत् दानं राजसं स्मृतम् ॥

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**

अदेशकाले अदेशे अपुण्यदेशे म्लेच्छाशुच्यादिसंकीर्णे अकाले पुण्यहेतुत्वेन अप्रख्याते संक्रान्त्यादिविशेषरहिते अपात्रेभ्यश्च मूर्खतस्करादिभ्यः, देशादिसंपत्तौ वा असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितम् अवज्ञातं पात्रपरिभवयुक्तं च यत् दानम्, तत् तामसम् उदाहृतम् ॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणाय अयम् उपदेशः उच्यते—

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥**

ॐ तत् सत् इति एवं निर्देशः, निर्दिश्यते अनेनेति निर्देशः, त्रिविधो नामनिर्देशः ब्रह्मणः स्मृतः चिन्तितः वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणाः तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिताः निर्मिताः पुरा पूर्वम् इति निर्दे-

शस्तुत्यर्थम् उच्यते ॥

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥**

तस्मात् 'ओम्' इति उदाहृत्य उच्चार्य यज्ञदानतपःक्रियाः यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥

**तदित्यनभिसंधाय**
**फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः**
**क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

तत् इति अनभिसंधाय, 'तत्' इति ब्रह्माभिधानम् उच्चार्य अनभिसंधाय च यज्ञादिकर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रियाः दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिः मोक्षार्थिभिः मुमुक्षुभिः ॥

ओंतच्छब्दयोः विनियोगः उक्तः । अथ इदानीं सच्छब्दस्य विनियोगः कथ्यते—

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥**

सद्भावे, असतः सद्भावे यथा अविद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावे च असद्वृत्तस्य असाधोः सद्वृत्तता साधुभावः तस्मिन् साधुभावे च सन् इत्येतन् अभिधानं ब्रह्मणः प्रयुज्यते अभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ, युज्यते प्रयुज्यते इत्येतत् ॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञे यज्ञकर्मणि या स्थितिः, तपसि च या स्थितिः, दाने च या स्थितिः, सा सत् इति च उच्यते विद्वद्भिः । कर्म च एव तदर्थीयं यज्ञदानतपोर्थीयम्; अथवा, यस्य अभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोर्थीयम् ईश्वरार्थीयम् इत्येतत्; सत् इत्येव अभिधीयते । तत् एतत् यज्ञदानतप-आदि कर्म असात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणः अभि-धानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्, तस्मात्—

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्या
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्म-
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम
**सप्तदशोऽध्यायः ॥**

अश्रद्धया हुतं हवनं कृतम्, अश्रद्धया दत्तं ब्राह्मणेभ्यः, अश्रद्धया तपः तप्तम् अनुष्ठितम्, तथा अश्रद्धयैव कृतं यत् स्तुतिनमस्कारादि, तत् सर्वम् असत् इति उच्यते, मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ । न च तत् बहुलायासमपि प्रेत्य फलाय नो अपि इहार्थम्, साधुभिः निन्दितत्वात् इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
**सप्तदशोऽध्यायः ॥**

श्रीमच्छंकरभगवत्पादविरचितम्

# श्रीमद्भगवद्गीताभाष्यम्

## अष्टादशोऽध्यायः

# अष्टादशोऽध्यायः ॥

सर्वस्यैव गीताशास्त्रस्य अर्थः अस्मिन् अध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्यः इत्येवमर्थः अयम् अध्यायः आरभ्यते । सर्वेषु हि अतीतेषु अध्यायेषु उक्तः अर्थः अस्मिन् अध्याये अवगम्यते । अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषबुभुत्सुः उवाच--

अर्जुन उवाच—

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

संन्यासस्य संन्यासशब्दार्थस्य इत्येतत्, हे महाबाहो, तत्त्वं तस्य भावः तत्त्वम्, याथात्म्यमित्येतत्, इच्छामि वेदितुं ज्ञातुम्, त्यागस्य च त्यागशब्दार्थस्येत्येतत्, हृषीकेश, पृथक् इतरेतरविभागतः केशिनिषूदन केशिनामा

आहुः । कथम् उच्यते तेषां फलत्यागः, यथा वन्ध्यायाः पुत्रत्यागः? नैष दोषः, नित्यानामपि कर्मणां भगवता फलवत्त्वस्य इष्टत्वात् । वक्ष्यति हि भगवान् 'अनिष्टमिष्टं मिश्रं च' इति 'न तु संन्यासिनाम्' इति च । संन्यासिनामेव हि केवलं कर्मफलासंबन्धं दर्शयन् असंन्यासिनां नित्यकर्मफलप्राप्तिम् 'भवत्यत्यागिनां प्रेत्य' इति दर्शयति ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

त्याज्यं त्यक्तव्यं दोषवत् दोषः अस्य अस्तीति दोषवत् । किं तत्? कर्म बन्धहेतुत्वात् सर्वमेव । अथवा, दोषः यथा रागादिः त्यज्यते, तथा त्याज्यम् इति एके कर्म प्राहुः मनीषिणः पण्डिताः सांख्यादिदृष्टिम् आश्रिताः, अधिकृतानां कर्मिणामपि इति । तत्रैव यज्ञदानतपःकर्म न त्याज्यम् इति च अपरे ॥

कर्मिणः एव अधिकृताः, तान् अपेक्ष्य एते विकल्पाः, न तु ज्ञाननिष्ठान् व्युत्थायिनः संन्यासिनः अपेक्ष्य । 'ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्ता' इति कर्माधिकारात् अपोद्धृताः ये, न तान् प्रति चिन्ता ॥

ननु 'कर्मयोगेन योगिनाम्' इति अधिकृताः पूर्वं विभक्तनिष्ठाः अपि इह सर्वशास्त्रार्थोपसंहारप्रकरणे यथा विचार्यन्ते, तथा सांख्या अपि ज्ञाननिष्ठाः विचार्यन्ताम् इति । न, तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः । न कायक्लेशनिमित्तं दुःखं सांख्याः आत्मनि पश्यन्ति, इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात् । अतः ते न कायक्लेशदुःखभयात् कर्म परित्यजन्ति । नापि ते कर्माणि आत्मनि पश्यन्ति, येन नियतं कर्म मोहात् परित्यजेयुः । गुणानां कर्म 'नैव किंचित्करोमि' इति हि ते संन्यस्यन्ति । 'सर्वकर्माणि मनसा संन्यस्य' इत्यादिभिः तत्त्वविदः संन्यासप्रकारः उक्तः । तस्मात् ये अन्ये अधिकृताः कर्मणि अनात्मविदः, येषां च मोहनिमित्तः त्यागः संभवति कायक्लेशभयाच्च, ते एव तामसाः त्यागिनः राजसाश्च इति निन्द्यन्ते कर्मिणाम् अनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थम्; 'सर्वारम्भपरित्यागी' 'मौनी संतुष्टो येन केनचित् । अनिकेतः स्थिरमतिः' इति गुणातीतलक्षणे च परमार्थसंन्यासिनः विशेषितत्वात् । वक्ष्यति च 'निष्ठा ज्ञानस्य या परा' इति । तस्मात् ज्ञाननिष्ठाः संन्यासिनः न इह विवक्षिताः । कर्मफलत्यागः एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यासः

उच्यते, न मुख्यः सर्वकर्मसंन्यासः ॥

सर्वकर्मसंन्यासासंभवे च 'न हि देहभृता' इति हेतुवचनात् मुख्य एव इति चेत्, न; हेतुवचनस्य स्तुत्यर्थत्वात्। यथा त्यागाच्छान्तिरनन्तरम्' इति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तम् अर्जुनम् अज्ञं प्रति विधानात्; तथा इदमपि 'न हि देहभृता शक्यम्' इति कर्मफलत्यागस्तुत्यर्थम्; न 'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' इत्यस्य पक्षस्य अपवादः केनचित् दर्शयितुं शक्यः। तस्मात् कर्मणि अधिकृतान् प्रत्येव एषः संन्यासत्यागविकल्पः। ये तु परमार्थदर्शिनः सांख्याः, तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायाम् अधिकारः, न अन्यत्र, इति न ते विकल्पार्हाः। तच्च उपपादितम् अस्माभिः 'वेदाविनाशिनम्' इत्यस्मिन्प्रदेशे, तृतीयादौ च ॥

तत्र एतेषु विकल्पभेदेषु—

**निश्चयं शृणु मे तत्र**
**त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र**
**त्रिविधः संप्रकीर्तितः ॥ ४ ॥**

निश्चयं शृणु अवधारय मे मम वचनात्; तत्र त्यागे त्यागसंन्यासविकल्पे यथादर्शिते भरतसत्तम भरतानां साधुतम। त्यागो हि, त्यागसंन्यासशब्दवाच्यो हि यः अर्थः सः एक एवेति अभिप्रेत्य आह— त्यागो हि इति। पुरुषव्याघ्र, त्रिविधः त्रिप्रकारः तामसादिप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक् कथितः यस्मात् तामसादिभेदेन त्यागसंन्यासशब्दवाच्यः अर्थः अधिकृतस्य कर्मिणः अनात्मज्ञस्य त्रिविधः संभवति, न परमार्थदर्शिनः, इत्ययमर्थः दुर्ज्ञानः, तस्मात् अत्र तत्त्वं न अन्यः वक्तुं समर्थः। तस्मात् निश्चयं परमार्थशास्त्रार्थविषयम् अध्यवसायम् ऐश्वरं मे मत्तः शृणु॥

कः पुनः असौ निश्चयः इति, आह—

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥५॥**

यज्ञः दानं तपः इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यम्, कार्यं करणीयम् एव तत्। कस्मात्? यज्ञः दानं तपश्चैव पावनानि विशुद्धिकराणि मनीषिणां फलानभिसंधीनाम् इत्येतत्॥

**एतान्यपि तु कर्माणि**
**सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ**
**निश्चितं मतमुत्तमम् ॥ ६ ॥**

एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनानि उक्तानि सङ्गम् आसक्तिं तेषु त्यक्त्वा फलानि च तेषां परित्यज्य कर्तव्यानि इति अनुष्ठेयानि इति मे मम निश्चितं मतम् उत्तमम् ॥

'निश्चयं शृणु मे तत्र' इति प्रतिज्ञाय, पावनत्वं च हेतुम् उक्त्वा, 'एतान्यपि कर्माणि कर्तव्यानि' इत्येतत् 'निश्चितं मतमुत्तमम्' इति प्रतिज्ञातार्थोपसंहार एव, न अपूर्वार्थं वचनम्, 'एतान्यपि' इति प्रकृतसंनिकृष्टार्थत्वोपपत्तेः । सासङ्गस्य फलार्थिनः बन्धहेतवः एतान्यपि कर्माणि मुमुक्षोः कर्तव्यानि इति अपिशब्दस्य अर्थः । न तु अन्यानि कर्माणि अपेक्ष्य 'एतान्यपि' इति उच्यते ॥

अन्ये तु वर्णयन्ति—नित्यानां कर्मणां फलाभावात् 'सङ्गं त्यक्त्वा फलानि च' इति न उपपद्यते । अतः 'एतान्यपि' इति यानि काम्यानि कर्माणि नित्येभ्यः अन्यानि, एतानि

अपि कर्तव्यानि, किमुत यज्ञदानतपांसि नित्यानि इति। तत् असत्, नित्यानामपि कर्मणाम् इह फलवत्त्वस्य उपपादितत्वात् 'यज्ञो दानं तपश्चैव पावनानि' इत्यादिना वचनेन। नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोः मुमुक्षोः कुतः काम्येषु प्रसङ्गः? 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वात्, 'यज्ञार्थात् कर्मणोऽन्यत्र' इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात्, 'त्रैगुण्यविषया वेदाः' 'त्रैविद्या मां सोमपाः' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति च, दूरव्यवहितत्वाच्च, न काम्येषु 'एतान्यपि' इति व्यपदेशः॥

तस्मात् अज्ञस्य अधिकृतस्य मुमुक्षोः—

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥**

नियतस्य तु नित्यस्य संन्यासः परित्यागः कर्मणः न उपपद्यते, अज्ञस्य पावनत्वस्य इष्टत्वात्। मोहात् अज्ञानात् तस्य नियतस्य परित्यागः—नियतं च अवश्यं कर्तव्यम्, त्यज्यते च, इति विप्रतिषिद्धम्; अतः मोहनिमित्तः परित्यागः तामसः परिकीर्तितः मोहश्च तमः इति॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥**

दुःखम् इति एव यत् कर्म कायक्लेशभयात् शरीरदुःखभयात् त्यजेत्, सः कृत्वा राजसं रजोनिर्वर्त्यं त्यागं नैव त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेत् नैव लभेत ॥

कः पुनः सात्त्विकः त्यागः इति, आह—

**कार्यमित्येव यत्कर्म**
**नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव**
**स त्यागः सात्त्विको मतः ॥ ९ ॥**

कार्यं कर्तव्यम् इत्येव यत् कर्म नियतं नित्यं क्रियते निर्वर्त्यते हे अर्जुन, सङ्गं त्यक्त्वा फलं च एव । एतत् नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणम् अवोचाम । अथवा, यद्यपि फलं न श्रूयते नित्यस्य कर्मणः, तथापि नित्यं कर्म कृतम् आत्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोति आत्मनः इति कल्पयत्येव अज्ञः । तत्र तामपि कल्पनां निवारयति

'फलं त्यक्त्वा' इत्यनेन। अतः साधु उक्तम् 'सङ्गं त्यक्त्वा फलं च' इति। सः त्यागः नित्यकर्मसु सङ्गफलपरित्यागः सात्त्विकः सत्त्वनिर्वृत्तः मतः अभिप्रेतः॥

ननु कर्मपरित्यागः त्रिविधः संन्यासः इति च प्रकृतः। तत्र तामसो राजसश्च उक्तः त्यागः। कथम् इह सङ्गफलत्यागः तृतीयत्वेन उच्यते? यथा त्रयो ब्राह्मणाः आगताः, तत्र षडङ्गविदौ द्वौ, क्षत्रियः तृतीयः इति तद्वत्। नैष दोषः त्यागसामान्येन स्तुत्यर्थत्वात्। अस्ति हि कर्मसंन्यासस्य फलाभिसंधित्यागस्य च त्यागत्वसामान्यम्। तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसंधित्यागः सात्त्विकत्वेन स्तूयते 'स त्यागः सात्त्विको मतः' इति॥

यस्तु अधिकृतः सङ्गं त्यक्त्वा फलाभिसंधिं च नित्यं कर्म करोति, तस्य फलरागादिना अकलुषीक्रियमाणम् अन्तःकरणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुध्यति। तत् विशुद्धं प्रसन्नम् आत्मालोचनक्षमं भवति। तस्यैव नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्य आत्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठा स्यात्, तत् वक्तव्यमिति आह—

**न द्वेष्ट्यकुशलं कर्म**
**कुशले नानुषज्जते।**

**त्यागी सत्त्वसमाविष्टो**
**मेधावी च्छिन्नसंशयः ॥ १० ॥**

न द्वेष्टि अकुशलम् अशोभनं काम्यं कर्म, शरीरारम्भद्वारेण संसारकारणम्, 'किमनेन?' इत्येवम् । कुशले शोभने नित्ये कर्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन 'मोक्षकारणम् इदम्' इत्येवं न अनुषज्जते अनुषङ्गं प्रीतिं न करोति इत्येतत् । कः पुनः असौ? त्यागी पूर्वोक्तेन सङ्गफलत्यागेन तद्वान् त्यागी, यः कर्मणि सङ्गं त्यक्त्वा तत्फलं च नित्यकर्मानुष्ठायी सः त्यागी । कदा पुनः असौ अकुशलं कर्म न द्वेष्टि, कुशले च न अनुषज्जते इति, उच्यते— सत्त्वसमाविष्टः यदा सत्त्वेन आत्मानात्मविवेकविज्ञानहेतुना समाविष्टः संव्याप्तः, संयुक्त इत्येतत् । अत एव च मेधावी मेधया आत्मज्ञानलक्षणया प्रज्ञया संयुक्तः तद्वान् मेधावी । मेधावित्वादेव च्छिन्नसंशयः छिन्नः अविद्याकृतः संशयः यस्य 'आत्मस्वरूपावस्थानमेव परं निःश्रेयससाधनम्, न अन्यत् किंचित्' इत्येवं निश्चयेन च्छिन्नसंशयः ॥

यः अधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियम् आत्मानम् आत्मत्वेन संबुद्धः, सः सर्वकर्माणि मनसा

संन्यस्य नैव कुर्वन् न कारयन् आसीनः नैष्कर्म्यलक्षणां ज्ञाननिष्ठाम् अश्नुते इत्येतत् । पूर्वोक्तस्य कर्मयोगस्य प्रयोजनम् अनेनैव श्लोकेन उक्तम् ॥

यः पुनः अधिकृतः सन् देहात्माभिमानित्वेन देहभृत् अज्ञः अबाधितात्मकर्तृत्वविज्ञानतया 'अहं कर्ता' इति निश्चितबुद्धिः तस्य अशेषकर्मपरित्यागस्य अशक्यत्वात् कर्मफलत्यागेन चोदितकर्मानुष्ठाने एव अधिकारः, न तत्त्यागे इति एतम् अर्थं दर्शयितुम् आह—

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥**

न हि यस्मात् देहभृता, देहं बिभर्तीति देहभृत्, देहात्माभिमानवान् देहभृत् उच्यते, न विवेकी; स हि 'वेदाविनाशिनम्' इत्यादिना कर्तृत्वाधिकारात् निवर्तितः । अतः तेन देहभृता अज्ञेन न शक्यं त्यक्तुं संन्यसितुं कर्माणि अशेषतः निःशेषेण । तस्मात् यस्तु अज्ञः अधिकृतः नित्यानि कर्माणि कुर्वन् कर्मफलत्यागी कर्मफलाभिसंधिमात्रसंन्यासी सः त्यागी इति अभिधीयते कर्मी अपि सन् इति स्तुत्यभिप्रायेण । तस्मात् परमार्थदर्शिनैव अदेहभृता देहात्मभा-

वरहितेन अशेषकर्मसंन्यासः शक्यते कर्तुम् ॥

किं पुनः तत् प्रयोजनम्, यत् सर्वकर्मसंन्यासात् स्यादिति, उच्यते—

**अनिष्टमिष्टं मिश्रं च**
**त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य**
**न तु संन्यासिनां क्वचित् ॥ १२ ॥**

अनिष्टं नरकतिर्यगादिलक्षणम्, इष्टं देवादिलक्षणम्, मिश्रम् इष्टानिष्टसंयुक्तं मनुष्यलक्षणं च, तत् त्रिविधं त्रिप्रकारं कर्मणः धर्माधर्मलक्षणस्य फलं बाह्यानेककारकव्यापारनिष्पन्नं सत् अविद्याकृतम् इन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पि इह—फल्गुतया लयम् अदर्शनं गच्छतीति फलनिर्वचनम्—तत् एतत् एवंलक्षणं फलं भवति अत्यागिनाम् अज्ञानां कर्मिणां अपरमार्थसंन्यासिनां प्रेत्य शरीरपातात् ऊर्ध्वम् । न तु संन्यासिनां परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचित् । न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं न उन्मूलयति कदाचित् इत्यर्थः । अतः परमार्थदर्शिनः एव अशेषकर्मसं-

न्यासित्वं संभवति, अविद्याध्यारोपितत्वात् आत्मनि क्रियाकारकफलानाम्; न तु अज्ञस्य अधिष्ठानादीनि क्रियाकर्तृकारकाणि आत्मत्वेनैव पश्यतः अशेषकर्मसन्न्यासः सभवति ॥

तदेतत् उत्तरैः श्लोकैः दर्शयति—

**पञ्चैतानि महाबाहो**
**कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि**
**सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

पञ्च एतानि वक्ष्यमाणानि हे महाबाहो, कारणानि निर्वर्तकानि । निबोध मे मम इति उत्तरत्र चेतःसमाधानार्थम्, वस्तुवैषम्यप्रदर्शनार्थं च । तानि च कारणानि ज्ञातव्यतया स्तौति— सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिन् शास्त्रे तत् सांख्यं वेदान्तः । कृतान्ते इति तस्यैव विशेषणम् । कृतम् इति कर्म उच्यते, तस्य अन्तः परिसमाप्तिः यत्र सः कृतान्तः, कर्मान्तः इत्येतत् । 'यावानर्थ उदपाने' 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति आत्मज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति । अतः तस्मिन् आत्मज्ञानार्थे

सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥

कानि तानीति, उच्यते—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥**

अधिष्ठानम् इच्छाद्वेषसुखदुःखज्ञानादीनाम् अभिव्यक्तेराश्रयः अधिष्ठानं शरीरम्, तथा कर्ता उपाधिलक्षणः भोक्ता, करणं च श्रोत्रादि शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं तत् द्वादशसंख्यं विविधाश्च पृथक्चेष्टाः वायवीयाः प्राणापानाद्याः दैवं चैव दैवमेव च अत्र एतेषु चतुर्षु पञ्चमं पञ्चानां पूरणम् आदित्यादि चक्षुराद्यनुग्राहकम् ॥

**शरीरवाङ्मनोभिर्य-**
**त्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा**
**पञ्चैते तस्य हेतवः ॥ १५ ॥**

शरीरवाङ्मनोभिः यत् कर्म त्रिभिः एतैः प्रारभते निर्वर्तयति नरः, न्याय्यं वा धर्म्यं शास्त्रीयम्, विपरीतं वा

अशास्त्रीयम् अधर्म्यं यच्चापि निमिषितचेष्टितादि जीवनहेतुः तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतम् , पञ्च एते यथोक्ताः तस्य सर्वस्यैव कर्मणो हेतवः कारणानि ॥

ननु एतानि अधिष्ठानादीनि सर्वकर्मणां निर्वर्तकानि । कथम् उच्यते 'शरीरवाङ्मनोभिः यत् कर्म प्रारभते' इति ? नैष दोषः ; विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानम् ; तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतम् उच्यते शरीरादिभिः आरभ्यते इति । फलकालेऽपि तत्प्रधानैः साधनैः भुज्यते इति पञ्चानामेव हेतुत्वं न विरुध्यते इति ॥

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥**

तत्र इति प्रकृतेन संबध्यते । एवं सति एवं यथोक्तैः पञ्चभिः हेतुभिः निर्वर्त्ये सति कर्मणि । तत्रैवं सति इति दुर्मतित्वस्य हेतुत्वेन संबध्यते । तत्र एतेषु आत्मानन्यत्वेन अविद्यया परिकल्पितैः क्रियमाणस्य कर्मणः 'अहमेव कर्ता' इति कर्तारम् आत्मानं केवलं शुद्धं तु यः पश्यति अविद्वान् ;

कस्मात्? वेदान्ताचार्योपदेशन्यायैः अकृतबुद्धित्वात् असंस्कृतबुद्धित्वात्; योऽपि देहादिव्यतिरिक्तात्मवादी आत्मानमेव केवलं कर्तारं पश्यति, असावपि अकृतबुद्धिः; अतः अकृतबुद्धित्वात् न सः पश्यति आत्मनः तत्त्वं कर्मणो वा इत्यर्थः । अतः दुर्मतिः, कुत्सिता विपरीता दुष्टा अजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिः अस्य इति दुर्मतिः । सः पश्यन्नपि न पश्यति, यथा तैमिरिकः अनेकं चन्द्रम्, यथा वा अभ्रेषु धावत्सु चन्द्रं धावन्तम्, यथा वा वाहने उपविष्टः अन्येषु धावत्सु आत्मानं धावन्तम् ॥

कः पुनः सुमतिः यः सम्यक् पश्यतीति, उच्यते—

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥**

यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनः न भवति अहंकृतः 'अहं कर्ता' इत्येवंलक्षणः भावः भावना प्रत्ययः— एते एव पञ्च अधिष्ठानादयः अविद्यया आत्मनि कल्पिताः सर्वकर्मणां कर्तारः, न अहम्, अहं तु तद्व्यापाराणां साक्षिभूतः 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' केवलः अविक्रियः इत्येवं पश्यतीति एतत्— बुद्धिः अन्तः-

करणं यस्य आत्मनः उपाधिभूता न लिप्यते न अनुशयिनी भवति— 'इदमहमकार्षम्, तेन अहं नरकं गमिष्यामि' इत्येवं यस्य बुद्धिः न लिप्यते— सः सुमतिः, सः पश्यति। हत्वा अपि सः इमान् लोकान्, सर्वान् इमान् प्राणिनः इत्यर्थः, न हन्ति हननक्रियां न करोति, न निबध्यते नापि तत्कार्येण अधर्मफलेन संबध्यते ॥

ननु हत्वापि न हन्ति इति विप्रतिषिद्धम् उच्यते यद्यपि स्तुतिः। नैष दोषः, लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहाद्यात्मबुद्ध्या 'हन्ता अहम्' इति लौकिकीं दृष्टिम् आश्रित्य 'हत्वापि' इति आह। यथादर्शितां पारमार्थिकीं दृष्टिम् आश्रित्य 'न हन्ति न निबध्यते' इति। एतत् उभयम् उपपद्यते एव ॥

ननु अधिष्ठानादिभिः संभूय करोत्येव आत्मा, 'कर्तारमात्मानं केवलं तु' इति केवलशब्दप्रयोगात्। नैष दोषः, आत्मनः अविक्रियस्वभावत्वे अधिष्ठानादिभिः संहतत्वानुपपत्तेः। विक्रियावतो हि अन्यैः संहननं संभवति, संहत्य वा कर्तृत्वं स्यात्। न तु अविक्रियस्य आत्मनः केनचित् संहननम् अस्ति इति न संभूय कर्तृत्वम् उपपद्यते। अतः केवलत्वम् आत्मनः स्वाभाविकमिति केवलशब्दः अनुवा-

दमात्रम् । अविक्रियत्वं च आत्मनः श्रुतिस्मृतिन्यायप्रसिद्धम् । 'अविकार्योऽयमुच्यते' 'गुणैरेव कर्माणि क्रियन्ते' 'शरीरस्थोऽपि न करोति' इत्यादि असकृत् उपपादितं गीतास्वेव तावत् । श्रुतिषु च 'ध्यायतीव लेलायतीव' इत्येवमाद्यासु । न्यायतश्च— निरवयवम् अपरतन्त्रम् अविक्रियम् आत्मतत्त्वम् इति राजमार्गः । विक्रियावत्त्वाभ्युपगमेऽपि आत्मनः स्वकीयैव विक्रिया स्वस्य भवितुम् अर्हति, न अधिष्ठानादीनां कर्माणि आत्मकर्तृकाणि स्युः । न हि परस्य कर्म परेण अकृतम् आगन्तुम् अर्हति । यत्तु अविद्यया गमितम्, न तत् तस्य । यथा रजतत्वं न शुक्तिकायाः; यथा वा तलमलिनत्वं बालैः गमितम् अविद्यया, न आकाशस्य, तथा अधिष्ठानादिविक्रियापि तेषामेव, न आत्मनः । तस्मात् युक्तम् उक्तम् 'अहंकृतत्वबुद्धिलेपाभावात् विद्वान् न हन्ति न निबध्यते' इति । 'नायं हन्ति न हन्यते' इति प्रतिज्ञाय 'न जायते' इत्यादिहेतुवचनेन अविक्रियत्वम् आत्मनः उक्त्वा, 'वेदाविनाशिनम्' इति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपतः उक्त्वा, मध्ये प्रसारितां तत्र तत्र प्रसङ्गं कृत्वा इह उपसंहरति शास्त्रार्थपिण्डीकरणाय 'विद्वान् न हन्ति न निबध्यते' इति । एवं च सति देह-

भृत्त्वाभिमानानुपपत्तौ अविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनाम् अनिष्टादि त्रिविधं कर्मणः फलं न भवति इति उपपन्नम्; तद्विपर्ययाच्च इतरेषां भवति इत्येतच्च अपरिहार्यम् इति एषः गीताशास्त्रार्थः उपसंहृतः । स एषः सर्ववेदार्थसारः निपुणमतिभिः पण्डितैः विचार्य प्रतिपत्तव्यः इति तत्र तत्र प्रकरणविभागेन दर्शितः अस्माभिः शास्त्रन्यायानुसारेण ॥

अथ इदानीं कर्मणां प्रवर्तकम् उच्यते—

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

ज्ञानं ज्ञायते अनेन इति सर्वविषयम् अविशेषेण उच्यते । तथा ज्ञेयं ज्ञातव्यम्, तदपि सामान्येनैव सर्वम् उच्यते । तथा परिज्ञाता उपाधिलक्षणः अविद्याकल्पितः भोक्ता । इति एतत् त्रयम् अविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीनां हि त्रयाणां संनिपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात् । ततः पञ्चभिः अधिष्ठानादिभिः आरब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते इत्येतत् उच्यते—करणं क्रियते

अनेन इति बाह्यं श्रोत्रादि, अन्तःस्थं बुद्ध्यादि, कर्म ईप्सिततमं कर्तुः क्रियया व्याप्यमानम्, कर्ता करणानां व्यापारयिता उपाधिलक्षणः, इति त्रिविधः त्रिप्रकारः कर्मसंग्रहः, संगृह्यते अस्मिन्निति संग्रहः, कर्मणः संग्रहः कर्मसंग्रहः, कर्म एषु हि त्रिषु समवैति, तेन अयं त्रिविधः कर्मसंग्रहः ॥

अथ इदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात् सत्त्वरजस्तमोगुणभेदतः त्रिविधः भेदः वक्तव्य इति आरभ्यते—

**ज्ञानं कर्म च कर्ता च**
**त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने**
**यथावच्छृणु तान्यपि ॥ १९ ॥**

ज्ञानं कर्म च, कर्म क्रिया, न कारकं पारिभाषिकम् ईप्सिततमं कर्म, कर्ता च निर्वर्तकः क्रियाणां त्रिधा एव, अवधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेन इत्यर्थः । प्रोच्यते कथ्यते गुणसंख्याने कापिले शास्त्रे तदपि गुणसंख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव । परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते, तथापि ते हि

कापिलाः गुणगौणव्यापारनिरूपणे अभियुक्ताः इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेन उपादीयते इति न विरोधः । यथावत् यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु, वक्ष्यमाणे अर्थे मनःसमाधिं कुरु इत्यर्थः ॥

ज्ञानस्य तु तावत् त्रिविधत्वम् उच्यते—

**सर्वभूतेषु येनैकं**
**भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु**
**तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

सर्वभूतेषु अव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेन एकं भावं वस्तु— भावशब्दः वस्तुवाची, एकम् आत्मवस्तु इत्यर्थः; अव्ययं न व्येति स्वात्मना स्वधर्मेण वा, कूटस्थम् इत्यर्थः; ईक्षते पश्यति येन ज्ञानेन, तं च भावम् अविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तत् आत्मवस्तु, व्योमवत् निरन्तरमित्यर्थः; तत् ज्ञानं साक्षात् सम्यग्दर्शनम् अद्वैतात्मविषयं सात्त्विकं विद्धि इति ॥

यानि द्वैतदर्शनानि तानि असम्यग्भूतानि राजसानि तामसानि च इति न साक्षात् संसारोच्छित्तये भवन्ति—

**पृथक्त्वेन तु यज्ज्ञानं**
**नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु**
**तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

पृथक्त्वेन तु भेदेन प्रतिशरीरम् अन्यत्वेन यत् ज्ञानं नानाभावान् भिन्नान् आत्मनः पृथग्विधान् पृथक्प्रकारान् भिन्नलक्षणान् इत्यर्थः, वेत्ति विजानाति यत् ज्ञानं सर्वेषु भूतेषु, ज्ञानस्य कर्तृत्वासंभवात् येन ज्ञानेन वेत्ति इत्यर्थः, तत् ज्ञानं विद्धि राजसं रजोगुणनिर्वृत्तम् ॥

**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

यत् ज्ञानं कृत्स्नवत् समस्तवत् सर्वविषयमिव एकस्मिन् कार्ये देहे बहिर्वा प्रतिमादौ सक्तम् 'एतावानेव आत्मा ईश्वरो वा, न अतः परम् अस्ति' इति, यथा नग्नक्षपणकादीनां शरीरान्तर्वर्ती देहपरिमाणो जीवः, ईश्वरो वा पाषा-

णदार्वादिमात्रम्, इत्येवम् एकस्मिन् कार्ये सक्तम् अहैतुकं हेतुवर्जितं निर्युक्तिकम्, अतत्त्वार्थवत् अयथाभूतार्थवत्, यथाभूतः अर्थः तत्त्वार्थः, सः अस्य ज्ञेयभूतः अस्तीति तत्त्वार्थवत्, न तत्त्वार्थवत् अतत्त्वार्थवत्; अहैतुकत्वादेव अल्पं च, अल्पविषयत्वात् अल्पफलत्वाद्वा । तत् तामसम् उदाहृतम् । तामसानां हि प्राणिनाम् अविवेकिनाम् ईदृशं ज्ञानं दृश्यते ॥

अथ इदानीं कर्मणः त्रैविध्यम् उच्यते—

**नियतं सङ्गरहितमरागद्वेषतःकृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥**

नियतं नित्यं सङ्गरहितम् आसक्तिवर्जितम् अरागद्वेषतःकृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतःकृतम्, तद्विपरीतम् अरागद्वेषतःकृतम्, अफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णः तद्विपरीतेन अफलप्रेप्सुना कर्त्रा कृतं कर्म यत्, तत् सात्त्विकम् उच्यते ॥

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

यत्तु कामेप्सुना कर्मफलप्रेप्सुना इत्यर्थः, कर्म साहंकारेण

इति न तत्त्वज्ञानापेक्षया । किं तर्हि ? लौकिकश्रोत्रियनिरहं-कारापेक्षया । यो हि परमार्थनिरहंकारः आत्मवित्, न तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिः अस्ति । सात्त्विकस्यापि कर्मणः अनात्मवित् साहंकारः कर्ता, किमुत राजसतामसयोः । लोके अनात्मविदपि श्रोत्रियो निरहंकारः उच्यते 'निरहंकारः अयं ब्राह्मणः' इति । तस्मात् तदपेक्षयैव 'साहंकारेण वा' इति उक्तम् । पुनःशब्दः पादपूरणार्थः । क्रियते बहुलायासं कर्त्रा महता आयासेन निर्वर्त्यते, तत् कर्म राजसम् उदाहृतम् ॥

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

अनुबन्धं पश्चाद्भावि यत् वस्तु सः अनुबन्धः उच्यते तं च अनुबन्धम्, क्षयं यस्मिन् कर्मणि क्रियमाणे शक्तिक्षयः अर्थक्षयो वा स्यात् तं क्षयम्, हिंसां प्राणिबाधां च; अनपेक्ष्य च पौरुषं पुरुषकारम् 'शक्नोमि इदं कर्म समापयितुम्' इत्येवम् आत्मसामर्थ्यम्, इत्येतानि अनुबन्धादीनि अनपेक्ष्य पौरुषान्तानि मोहात् अविवेकतः आरभ्यते कर्म यत्, तत् तामसं तमोनिर्वृत्तम् उच्यते ॥

इदानीं कर्तृभेदः उच्यते—

**मुक्तसङ्गोऽनहंवादी**
**धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः**
**कर्ता सात्त्विक उच्यते ॥ २६ ॥**

मुक्तसङ्गः मुक्तः परित्यक्तः सङ्गः येन सः मुक्तसङ्गः, अनहंवादी न अहंवदनशीलः, धृत्युत्साहसमन्वितः धृतिः धारणम् उत्साहः उद्यमः ताभ्यां समन्वितः संयुक्तः धृत्युत्साहसमन्वितः, सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धौ असिद्धौ च सिद्ध्यसिद्ध्योः निर्विकारः, केवलं शास्त्रप्रमाणेन प्रयुक्तः न फलरागादिना यः सः निर्विकारः उच्यते । एवंभूतः कर्ता यः सः सात्त्विकः उच्यते ॥

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥**

रागी रागः अस्य अस्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थी इत्यर्थः, लुब्धः परद्रव्येषु संजाततृष्णः, तीर्थादौ स्वद्रव्यापरित्यागी वा, हिंसात्मकः परपीडाकरस्वभावः, अं-

शुचिः बाह्याभ्यन्तरशौचवर्जितः, हर्षशोकान्वितः इष्टप्राप्तौ हर्षः अनिष्टप्राप्तौ इष्टवियोगे च शोकः ताभ्यां हर्षशोकाभ्याम् अन्वितः संयुक्तः, तस्यैव च कर्मणः संपत्तिविपत्तिभ्यां हर्षशोकौ स्याताम्, ताभ्यां संयुक्तो यः कर्ता सः राजसः परिकीर्तितः ॥

**अयुक्तः प्राकृतः स्तब्धः**
**शठो नैकृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च**
**कर्ता तामस उच्यते ॥ २८ ॥**

अयुक्तः न युक्तः असमाहितः, प्राकृतः अत्यन्तासंस्कृतबुद्धिः बालसमः, स्तब्धः दण्डवत् न नमति कस्मैचित्, शठः मायावी शक्तिगूहनकारी, नैकृतिकः परविभेदनपरः, अलसः अप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी विषादवान् सर्वदा अवसन्नस्वभावः, दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणः, सर्वदा मन्दस्वभावः, यत् अद्य श्वो वा कर्तव्यं तत् मासेनापि न करोति, यश्च एवंभूतः, सः कर्ता तामसः उच्यते ॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**

बुद्धेः भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतः त्रिविधं शृणु इति सूत्रोपन्यासः । प्रोच्यमानं कथ्यमानम् अशेषेण निरवशेषतः यथावत् पृथक्त्वेन विवेकतः धनंजय, दिग्विजये मानुषं दैवं च प्रभूतं धनं जितवान्, तेन असौ धनंजयः अर्जुनः ॥

**प्रवृत्तिं च निवृत्तिं च**
**कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति**
**बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥**

प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः शास्त्रविहितविषयः, निवृत्तिं च निवृत्तिः मोक्षहेतुः संन्यासमार्गः—बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गौ इति अवगम्यते— कार्याकार्ये विहितप्रतिषिद्धे लौकिके वैदिके वा शास्त्रबुद्धेः कर्तव्याकर्तव्ये करणाकरणे इत्येतत्; कस्य? देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणाम् । भयाभये बिभेति अस्मादिति भयं चोरव्याघ्रादि, न भयं

अभयम्, भयं च अभयं च भयाभये, दृष्टादृष्टविषययोः भयाभययोः कारणे इत्यर्थः । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिः, सा पार्थ सात्त्विकी । तत्र ज्ञानं बुद्धेः वृत्तिः; बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेषः एव बुद्धेः ॥

**यया धर्ममधर्मं च**
**कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति**
**बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

यया धर्मं शास्त्रचोदितम् अधर्मं च तत्प्रतिषिद्धं कार्यं च अकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावत् न यथावत् सर्वतः निर्णयेन न प्रजानाति, बुद्धिः सा पार्थ, राजसी ॥

**अधर्मं धर्ममिति या**
**मन्यते तमसावृता ।**
**सर्वार्थान्विपरीतांश्च**
**बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

अधर्मं प्रतिषिद्धं धर्मं विहितम् इति या मन्यते जानाति

तमसा आवृता सती, सर्वार्थान् सर्वानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतानेव विजानाति, बुद्धिः सा पार्थ, तामसी ॥

**धृत्या यया धारयते**
**मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या**
**धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥**

धृत्या यया— अव्यभिचारिण्या इति व्यवहितेन संबन्धः, धारयते; किम्? मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्च इन्द्रियाणि च मनःप्राणेन्द्रियाणि, तेषां क्रियाः चेष्टाः, ताः उच्छास्त्रमार्गप्रवृत्तेः धारयते धारयति— धृत्या हि धार्यमाणाः उच्छास्त्रमार्गविषयाः न भवन्ति— योगेन समाधिना, अव्यभिचारिण्या, नित्यसमाध्यनुगतया इत्यर्थः । एतत् उक्तं भवति— अव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रियाः धार्यमाणाः योगेन धारयतीति । या एवंलक्षणा धृतिः, सा पार्थ, सात्त्विकी ॥

**यया तु धर्मकामार्था-**
**न्धृत्या धारयतेऽर्जुन ।**

**प्रसङ्गेन फलाकाङ्क्षी**
**धृतिः सा पार्थ राजसी ॥ ३४ ॥**

यया तु धर्मकामार्थान् धर्मश्च कामश्च अर्थश्च धर्मकामार्थाः तान् धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यमेव कर्तव्यरूपान् अवधारयति हे अर्जुन, प्रसङ्गेन यस्य यस्य धर्मादेः धारणप्रसङ्गः तेन तेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषः, तस्य धृतिः या, सा पार्थ, राजसी ॥

**यया स्वप्नं भयं शोकं**
**विषादं मदमेव च।**
**न विमुञ्चति दुर्मेधा**
**धृतिः सा तामसी मता ॥ ३५ ॥**

यया स्वप्नं निद्रां भयं त्रासं शोकं विषादं विषण्णतां मदं विषयसेवाम् आत्मनः बहुमन्यमानः मत्त इव मदम् एव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन् न विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषः यः, तस्य धृतिः या, सा तामसी मता ॥

गुणभेदेन क्रियाणां कारकाणां च त्रिविधो भेदः उक्तः। अथ इदानीं फलस्य सुखस्य त्रिविधो भेदः उच्यते—

**सुखं त्विदानीं त्रिविधं**
**शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र**
**दुःखान्तं च निगच्छति ॥ ३६ ॥**

सुखं तु इदानीं त्रिविधं शृणु, समाधानं कुरु इत्येतत्, मे मम भरतर्षभ । अभ्यासात् परिचयात् आवृत्तेः रमते रतिं प्रतिपद्यते यत्र यस्मिन् सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ॥

**यत्तदग्रे विषमिव**
**परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्त-**
**मात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

यत् तत् सुखम् अग्रे पूर्वं प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारम्भे अत्यन्तायासपूर्वकत्वात् विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखम् अमृतोपमम्, तत् सुखं सात्त्विकं प्रोक्तं विद्वद्भिः, आत्मनः बुद्धिः आत्मबुद्धिः, आत्मबुद्धेः प्रसादः नैर्मल्यं सलिलस्य इव स्व-

च्छता, ततः जातं आत्मबुद्धिप्रसादजम् । आत्मविषया वा आत्मावलम्बना वा बुद्धिः आत्मबुद्धिः, तत्प्रसादप्रकर्षाद्वा जातमित्येतत् । तस्मात् सात्त्विकं तत् ॥

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥**

विषयेन्द्रियसंयोगात् जायते यत् सुखम् तत् सुखम् अग्रे प्रथमक्षणे अमृतोपमम् अमृतसमम्, परिणामे विषमिव, बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वात् अधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगपरिणामान्ते विषमिव, तत् सुखं राजसं स्मृतम् ॥

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

यत् अग्रे च अनुबन्धे च अवसानोत्तरकाले च सुखं मोहनं मोहकरम् आत्मनः निद्रालस्यप्रमादोत्थं निद्रा च आलस्यं च प्रमादश्च तेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थम्, तत् तामसम् उदाहृतम् ॥

अथ इदानीं प्रकरणोपसंहारार्थः श्लोकः आरभ्यते—

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥**

न तत् अस्ति तत् नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातम् अन्यद्वा अप्राणि, दिवि देवेषु वा पुनः सत्त्वम्, प्रकृतिजैः प्रकृतितः जातैः एभिः त्रिभिः गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं यत् स्यात्, न तत् अस्ति इति पूर्वेण संबन्धः ॥

सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकः अविद्यापरिकल्पितः समूलः अनर्थः उक्तः, वृक्षरूपकल्पनया च 'ऊर्ध्वमूलम्' इत्यादिना, 'तं च असङ्गशस्त्रेण दृढेन च्छित्त्वा ततः पदं तत्परिमार्गितव्यम्' इति च उक्तम् । तत्र च सर्वस्य त्रिगुणात्मकत्वात् संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायाम्, यथा तन्निवृत्तिः स्यात् तथा वक्तव्यम्, सर्वश्च गीताशास्त्रार्थः उपसंहर्तव्यः, एतावानेव च सर्ववेदस्मृत्यर्थः पुरुषार्थम् इच्छद्भिः अनुष्ठेयः इत्येवमर्थम् 'ब्राह्मणक्षत्रियविशाम्' इत्यादिः आरभ्यते—

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥**

ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः, तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च— शूद्राणाम् असमासकरणम् एकजातित्वे सति वेदानधिकारात्— हे परंतप, कर्माणि प्रविभक्तानि इतरेतरविभागेन व्यवस्थापितानि । केन? स्वभावप्रभवैः गुणैः, स्वभावः ईश्वरस्य प्रकृतिः त्रिगुणात्मिका माया सा प्रभवः येषां गुणानां ते स्वभावप्रभवाः, तैः, शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम् । अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणम्, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः, प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनात् चतुर्णाम् । अथवा, जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेन अभिव्यक्तः स्वभावः, सः प्रभवो येषां गुणानां ते स्वभावप्रभवाः गुणाः; गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः । 'स्वभावः कारणम्' इति च कारणविशेषोपादानम् । एवं स्वभावप्रभवैः प्रकृतिभवैः सत्त्वरजस्तमोभिः गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि ॥

ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां

शमादीनि कर्माणि ; कथम् उच्यते सत्त्वादिगुणप्रविभक्तानि इति ? नैष दोषः ; शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुण-विशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि, न गुणानपे-क्षया, इति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानि इति उच्यते ॥

कानि पुनः तानि कर्माणि इति, उच्यते—

**शमो दमस्तपः शौचं**
**क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं**
**ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

शमः दमश्च यथाव्याख्यातार्थौ, तपः यथोक्तं शारीरादि, शौचं व्याख्यातम्, क्षान्तिः क्षमा, आर्जवम् ऋजुता एव च ज्ञानं विज्ञानम्, आस्तिक्यम् आस्तिकभावः श्रद्दधानता आ-गमार्थेषु, ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजम्—यत् उक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानि इति तदेवोक्तं स्वभावजम् इति ॥

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥**

शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यम्, धृतिः धारणम्, सर्वावस्थासु अनवसादः भवति यया धृत्या उत्तम्भितस्य, दाक्ष्यं दक्षस्य भावः, सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तिः, युद्धे चापि अपलायनम् अपराङ्मुखीभावः शत्रुभ्यः, दानं देयद्रव्येषु मुक्तहस्तता, ईश्वरभावश्च ईश्वरस्य भावः, प्रभुशक्तिप्रकटीकरणम् ईशितव्यान् प्रति, क्षात्रं कर्म क्षत्रियजातेः विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥

**कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥**

कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यम्, कृषिः भूमेः विलेखनम्, गौरक्ष्यं गाः रक्षतीति गोरक्षः तस्य भावः गौरक्ष्यम्, पाशुपाल्यम् इत्यर्थः, वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम् । परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुत-

वृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इत्यादिस्मृतिभ्यः; पुराणे च वर्णिनाम् आश्रमिणां च लोकफलभेदविशेषस्मरणात्। कारणान्तरात्तु इदं वक्ष्यमाणं फलम्—

**स्वे स्वे कर्मण्यभिरतः**
**संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं**
**यथा विन्दति तच्छृणु ॥ ४५ ॥**

स्वे स्वे यथोक्तलक्षणभेदे कर्मणि अभिरतः तत्परः संसिद्धिं स्वकर्मानुष्ठानात् अशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरः अधिकृतः पुरुषः; किं स्वकर्मानुष्ठानत एव साक्षात् संसिद्धिः? न; कथं तर्हि? स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति, तत् शृणु ॥

**यतः प्रवृत्तिर्भूतानां**
**येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य**
**सिद्धिं विन्दति मानवः ॥ ४६ ॥**

यतः यस्मात् प्रवृत्तिः उत्पत्तिः चेष्टा वा यस्मात् अन्तर्यामिणः ईश्वरात् भूतानां प्राणिनां स्यात्, येन ईश्वरेण सर्वम् इदं ततं जगत् व्याप्तम् स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तम् ईश्वरम् अभ्यर्च्य पूजयित्वा आराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवः मनुष्यः ॥

यतः एवम्, अतः—

**श्रेयान्स्वधर्मो विगुणः**
**परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म**
**कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मः, विगुणोऽपि इति अपिशब्दो द्रष्टव्यः, परधर्मात् । स्वभावनियतं स्वभावेन नियतम्, यदुक्तं स्वभावजमिति, तदेवोक्तं स्वभावनियतम् इति; यथा विषजातस्य कृमेः विषं न दोषकरम्, तथा स्वभावनियतं कर्म कुर्वन् न आप्नोति किल्बिषं पापम् ॥

स्वभावनियतं कर्म कुर्वाणो विषजः इव कृमिः किल्बिषं न आप्नोतीति उक्तम्; परधर्मश्च भयावहः इति, अनात्मज्ञश्च

'न हि कश्चित्क्षणमपि अकर्मकृत्तिष्ठति' इति । अतः—

**सहजं कर्म कौन्तेय**
**सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण**
**धूमेनाग्निरिवावृताः ॥ ४८ ॥**

सहजं सह जन्मनैव उत्पन्नम् । किं तत्? कर्म कौन्तेय सदोषमपि त्रिगुणात्मकत्वात् न त्यजेत् । सर्वारम्भाः आरभ्यन्त इति आरम्भाः, सर्वकर्माणि इत्येतत्; प्रकरणात् ये केचित् आरम्भाः स्वधर्माः परधर्माश्च, ते सर्वे हि यस्मात्—त्रिगुणात्मकत्वम् अत्र हेतुः— त्रिगुणात्मकत्वात् दोषेण धूमेन सहजेन अग्निरिव, आवृताः । सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषात् नैव मुच्यते; भयावहश्च परधर्मः । न च शक्यते अशेषतः त्यक्तुम् अज्ञेन कर्म यतः, तस्मात् न त्यजेत् इत्यर्थः ॥

किम् अशेषतः त्यक्तुम् अशक्यं कर्म इति न त्यजेत्? किं वा सहजस्य कर्मणः त्यागे दोषो भवतीति? किं च अतः? यदि तावत् अशेषतः त्यक्तुम् अशक्यम् इति न त्याज्यं सहजं कर्म, एवं तर्हि अशेषतः त्यागे गुण एव स्यादिति

सिद्धं भवति । सत्यम् एवम्; अशेषतः त्याग एव न उपपद्यते इति चेत्, किं नित्यप्रचलितात्मकः पुरुषः, यथा सांख्यानां गुणाः? किं वा क्रियैव कारकम्, यथा बौद्धानां स्कन्धाः क्षणप्रध्वंसिनः? उभयथापि कर्मणः अशेषतः त्यागः न संभवति । अथ तृतीयोऽपि पक्षः—यदा करोति तदा सक्रियं वस्तु । यदा न करोति, तदा निष्क्रियं तदेव । तत्र एवं सति शक्यं कर्म अशेषतः त्यक्तुम् । अय तु अस्मिन् तृतीये पक्षे विशेषः— न नित्यप्रचलितं वस्तु, नापि क्रियैव कारकम् । किं तर्हि? व्यवस्थिते द्रव्ये अविद्यमाना क्रिया उत्पद्यते, विद्यमाना च विनश्यति । शुद्धं तत् द्रव्यं शक्तिमत् अवतिष्ठते । इति एवम् आहुः काणादाः । तदेव च कारकम् इति । अस्मिन् पक्षे को दोषः इति । अयमेव तु दोषः—यतस्तु अभागवतं मतम् इदम् । कथं ज्ञायते? यतः आह भगवान् 'नासतो विद्यते भावः' इत्यादि । काणादानां हि असतः भावः, सतश्च अभावः, इति इदं मतम् अभागवतम् । अभागवतमपि न्यायवच्चेत् को दोषः इति चेत्, उच्यते— दोषवत्तु इदम्, सर्वप्रमाणविरोधात् । कथम्? यदि तावत् द्व्यणुकादि द्रव्यं प्राक् उत्पत्तेः अत्यन्तमेव असत्, उत्पन्नं च स्थितं कंचित् कालं पुनः अत्यन्तमेव

असत्त्वम् आपद्यते, तथा च सति असदेव सत् जायते, सदेव असत्त्वम् आपद्यते, अभावः भावो भवति, भावश्च अभावो भवति; तत्र अभावः जायमानः प्राक् उत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणम् अपेक्ष्य जायते इति। न च एवम् अभावः उत्पद्यते, कारणं च अपेक्षते इति शक्यं वक्तुम्, असतां शशविषाणादीनाम् अदर्शनात्। भावात्मकाश्चेत् घटादयः उत्पद्यमानाः, किंचित् अभिव्यक्तिमात्रे कारणम् अपेक्ष्य उत्पद्यन्ते इति शक्यं प्रतिपत्तुम्। किंच, असतश्च सतश्च सद्भावे असद्भावे न क्वचित् प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित् स्यात्, 'सत् सदेव असत् असदेव' इति निश्चयानुपपत्तेः।

किंच, उत्पद्यते इति द्व्यणुकादेः द्रव्यस्य स्वकारणसत्तासंबन्धम् आहुः। प्राक् उत्पत्तेश्च असत्, पश्चात् कारणव्यापारम् अपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन संबन्धेन संबध्यते। संबद्धं सत् कारणसमवेतं सत् भवति। तत्र वक्तव्यं कथम् असतः स्वं कारणं भवेत् संबन्धो वा केनचित् स्यात्? न हि वन्ध्यापुत्रस्य स्वं कारणं संबन्धो वा केनचित् प्रमाणतः कल्पयितुं शक्यते॥

ननु नैवं वैशेषिकैः अभावस्य संबन्धः कल्प्यते। द्व्यणु-

कादीनां हि द्रव्याणां स्वकारणसमवायलक्षणः संबन्ध सतामेव उच्यते इति । न; संबन्धात् प्राक् सत्त्वानभ्युपगमात् । न हि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात् प्राक् घटादीनाम् अस्तित्वम् इष्यते । न च मृद एव घटाद्याकारप्राप्तिम् इच्छन्ति । ततश्च असत एव संबन्धः पारिशेष्यात् इष्टो भवति ॥

ननु असतोऽपि समवायलक्षणः संबन्धः न विरुद्धः । न; वन्ध्यापुत्रादीनाम् अदर्शनात् । घटादेरेव प्रागभावस्य स्वकारणसंबन्धो भवति न वन्ध्यापुत्रादेः, अभावस्य तुल्यत्वेऽपि इति विशेषः अभावस्य वक्तव्यः । एकस्य अभावः, द्वयोः अभावः, सर्वस्य अभावः, प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावः इति लक्षणतो न केनचित् विशेषो दर्शयितुं शक्यः । असति च विशेषे घटस्य प्रागभावः एव कुलालादिभिः घटभावम् आपद्यते संबध्यते च भावेन कपालाख्येन, संबद्धश्च सर्वव्यवहारयोग्यश्च भवति, न तु घटस्यैव प्रध्वंसाभावः अभावत्वे सत्यपि, इति प्रध्वंसाद्यभावानां न क्वचित् व्यवहारयोग्यत्वम्, प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्य उत्पत्त्यादिव्यवहारार्हत्वम् इत्येतत् असमञ्जसम्; अभावत्वाविशेषात् अत्यन्तप्रध्वंसाभावयोरिव ॥

ननु नैव अस्माभिः प्रागभावस्य भावापत्तिः उच्यते । भावस्यैव तर्हि भावापत्तिः; यथा घटस्य घटापत्तिः, पटस्य वा पटापत्तिः । एतदपि अभावस्य भावापत्तिवदेव प्रमाणविरुद्धम् । सांख्यस्यापि यः परिणामपक्षः सोऽपि अपूर्वधर्मोत्पत्तिविनाशाङ्गीकरणात् वैशेषिकपक्षात् न विशिष्यते । अभिव्यक्तितिरोभावाङ्गीकरणेऽपि अभिव्यक्तितिरोभावयोः विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधः । एतेन कारणस्यैव संस्थानम् उत्पत्त्यादि इत्येतदपि प्रत्युक्तम् ॥

पारिशेष्यात् सत् एकमेव वस्तु अविद्यया उत्पत्तिविनाशादिधर्मैः अनेकधा नटवत् विकल्प्यते इति । इदं भागवतं मतम् उक्तम् 'नासतो विद्यते भावः' इत्यस्मिन् श्लोके, सत्प्रत्ययस्य अव्यभिचारात्, व्यभिचाराच्च इतरेषामिति ॥

कथं तर्हि आत्मनः अविक्रियत्वे अशेषतः कर्मणः त्यागः न उपपद्यते इति? यदि वस्तुभूताः गुणाः, यदि वा अविद्याकल्पिताः, तद्धर्मः कर्म, तदा आत्मनि अविद्याध्यारोपितमेव इति अविद्वान् 'न हि कश्चित् क्षणमपि अशेषतः त्यक्तुं शक्नोति' इति उक्तम् । विद्वांस्तु पुनः विद्यया अविद्यायां निवृत्तायां शक्नोत्येव अशेषतः कर्म परित्यक्तुम्, अविद्याध्यारोपितस्य शेषानुपपत्तेः । न हि तैमिरिकदृष्ट्या

अध्यारोपितस्य द्विचन्द्रादेः तिमिरापगमेऽपि शेषः अवतिष्ठते । एवं च सति इदं वचनम् उपपन्नम् 'सर्वकर्माणि मनसा' इत्यादि, 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति च ॥

या कर्मजा सिद्धिः उक्ता ज्ञाननिष्ठायोग्यतालक्षणा, तस्याः फलभूता नैष्कर्म्यसिद्धिः ज्ञाननिष्ठालक्षणा च वक्तव्येति श्लोकः आरभ्यते—

**असक्तबुद्धिः सर्वत्र**
**जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां**
**संन्यासेनाधिगच्छति ॥ ४९ ॥**

असक्तबुद्धिः असक्ता सङ्गरहिता बुद्धिः अन्तःकरणं यस्य सः असक्तबुद्धिः सर्वत्र पुत्रदारादिषु आसक्तिनिमित्तेषु, जितात्मा जितः वशीकृतः आत्मा अन्तःकरणं यस्य सः जितात्मा, विगतस्पृहः विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात् सः विगतस्पृहः, यः एवंभूतः आत्मज्ञः सः नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मात् निष्क्रियब्रह्मात्मसंबोधात्

सः निष्कर्मा तस्य भावः नैष्कर्म्यम्, नैष्कर्म्यं च तत् सिद्धिश्च सा नैष्कर्म्यसिद्धिः, निष्कर्मत्वस्य वा निष्क्रियात्मरूपावस्थानलक्षणस्य सिद्धिः निष्पत्तिः, तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेन, अधिगच्छति प्राप्नोति। तथा च उक्तम्— 'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' इति ॥

पूर्वोक्तेन स्वकर्मानुष्ठानेन ईश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्य उत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिः येन क्रमेण भवति, तत् वक्तव्यमिति आह—

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥**

सिद्धिं प्राप्तः स्वकर्मणा ईश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः— सिद्धिं प्राप्तः इति तदनुवादः उत्तरार्थः। किं तत् उत्तरम्, यदर्थः अनुवादः इति, उच्यते— यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानम् आप्नोति, तथा तं प्रकारं ज्ञान-

निष्ठाप्राप्तिक्रमं मे मम वचनात् निबोध त्वं निश्चयेन अवधारय इत्येतत् । किं विस्तरेण? न इति आह— समासेनैव संक्षेपेणैव हे कौन्तेय, यथा ब्रह्म प्राप्नोति तथा निबोधेति । अनेन या प्रतिज्ञाता ब्रह्मप्राप्तिः, ताम् इदंतया दर्शयितुम् आह— 'निष्ठा ज्ञानस्य या परा' इति । निष्ठा पर्यवसानं परिसमाप्तिः इत्येतत् । कस्य? ब्रह्मज्ञानस्य या परा । कीदृशी सा? यादृशम् आत्मज्ञानम् । कीदृक् तत्? यादृशः आत्मा । कीदृशः सः? यादृशो भगवता उक्तः, उपनिषद्वाक्यैश्च न्यायतश्च ॥

ननु विषयाकारं ज्ञानम् । न ज्ञानविषयः, नापि आकारवान् आत्मा इष्यते क्वचित् । ननु 'आदित्यवर्णम्' 'भारूपः' 'स्वयंज्योतिः' इति आकारवत्त्वम् आत्मनः श्रूयते । न; तमोरूपत्वप्रतिषेधार्थत्वात् तेषां वाक्यानाम्—द्रव्यगुणाद्याकारप्रतिषेधे आत्मनः तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि 'आदित्यवर्णम्' इत्यादीनि वाक्यानि । 'अरूपम्' इति च विशेषतः रूपप्रतिषेधात् । अविषयत्वाच्च—'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' 'अशब्दमस्पर्शम्' इत्यादेः । तस्मात् आत्माकारं ज्ञानम् इति अनुपपन्नम् ॥

कथं तर्हि आत्मनः ज्ञानम्? सर्वं हि यद्विषयं यत् ज्ञान-

म्, तत् तदाकारं भवति । निराकारश्च आत्मा इत्युक्तम् । ज्ञानात्मनोश्च उभयोः निराकारत्वे कथं तद्भावनानिष्ठा इति? न; अत्यन्तनिर्मलत्वातिस्वच्छत्वातिसूक्ष्मत्वोपपत्तेः आत्मनः । बुद्धेश्च आत्मवत् नैर्मल्याद्युपपत्तेः आत्मचैतन्याकाराभासत्वोपपत्तिः । बुद्ध्याभासं मनः, तदाभासानि इन्द्रियाणि, इन्द्रियाभासश्च देहः । अतः लौकिकैः देहमात्रे एव आत्मदृष्टिः क्रियते ॥

देहचैतन्यवादिनश्च लोकायतिकाः 'चैतन्यविशिष्टः कायः पुरुषः' इत्याहुः । तथा अन्ये इन्द्रियचैतन्यवादिनः, अन्ये मनश्चैतन्यवादिनः, अन्ये बुद्धिचैतन्यवादिनः । ततोऽपि आन्तरम् अव्यक्तम् अव्याकृताख्यम् अविद्यावस्थम् आत्मत्वेन प्रतिपन्नाः केचित् । सर्वत्र बुद्ध्यादिदेहान्ते आत्मचैतन्याभासता आत्मभ्रान्तिकारणम् इत्यतश्च आत्मविषयं ज्ञानं न विधातव्यम् । किं तर्हि? नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव कार्या, आत्मचैतन्यविज्ञानं कार्यम्, अविद्याध्यारोपितसर्वपदार्थाकारैः अविशिष्टतया दृश्यमानत्वात् इति । अत एव हि विज्ञानवादिनो बौद्धाः विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः, प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाभ्युपगमेन । तस्मात् अविद्याध्यारोपितनिराकरणमात्रं

ब्रह्मणि कर्तव्यम् , न तु ब्रह्मविज्ञाने यत्नः, अत्यन्तप्रसिद्धत्वात् । अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनाम् अत्यन्तप्रसिद्धं सुविज्ञेयम् आसन्नतरम् आत्मभूतमपि, अप्रसिद्धं दुर्विज्ञेयम् अतिदूरम् अन्यदिव च प्रतिभाति अविवेकिनाम् । बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां न अतः परं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नतरम् अस्ति । तथा चोक्तम्—'प्रत्यक्षावगमं धर्म्यम्' इत्यादि ॥

केचित्तु पण्डितंमन्याः 'निराकारत्वात् आत्मवस्तु न उपैति बुद्धिः । अतः दुःसाध्या सम्यग्ज्ञाननिष्ठा' इत्याहुः । सत्यम् ; एवं गुरुसंप्रदायरहितानाम् अश्रुतवेदान्तानाम् अत्यन्तबहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेषु अकृतश्रमाणाम् । तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिः नितरां दुःसंपादा, आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्य अनुपलब्धेः, यथा च 'एतत् एवमेव, न अन्यथा' इति अवोचाम ; उक्तं च भगवता 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः'. इति । तस्मात् बाह्याकारभेदबुद्धिनिवृत्तिरेव आत्मस्वरूपावलम्बनकारणम् । न हि आत्मा नाम कस्यचित् कदाचित् अप्रसिद्धः प्राप्यः हेयः उपादेयो वा ; अप्रसिद्धे हि तस्मिन् आत्मनि स्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्ये-

रन् । न च देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । न च सुखार्थं सुखम् , दुःखार्थं दुःखम् । आत्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्मात् यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा, ततोऽपि आत्मनः अन्तरतमत्वात् तदवगतिं प्रति न प्रमाणान्तरापेक्षा ; इति आत्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धा इति सिद्धम् ॥

येषामपि निराकारं ज्ञानम् अप्रत्यक्षम् , तेषामपि ज्ञानवशेनैव ज्ञेयावगतिरिति ज्ञानम् अत्यन्तप्रसिद्धं सुखादिवदेव इति अभ्युपगन्तव्यम् । जिज्ञासानुपपत्तेश्च— अप्रसिद्धं चेत् ज्ञानम् , ज्ञेयवत् जिज्ञास्येत । यथा ज्ञेयं घटादिलक्षण ज्ञानेन ज्ञाता व्याप्तुम् इच्छति, तथा ज्ञानमपि ज्ञानान्तरेण ज्ञातव्यम् आप्तुम् इच्छेत् । न एतत् अस्ति । अतः अत्यन्तप्रसिद्धं ज्ञानम् , ज्ञातापि अत एव प्रसिद्धः इति । तस्मात् ज्ञाने यत्नो न कर्तव्यः, किं तु अनात्मनि आत्मबुद्धिनिवृत्तावेव । तस्मात् ज्ञाननिष्ठा सुसंपाद्या ॥

सा इयं ज्ञानस्य परा निष्ठा उच्यते, कथं कार्या इति—

**बुद्ध्या विशुद्धया युक्तो**
**धृत्यात्मानं नियम्य च ।**

**शब्दादीन्विषयांस्त्यक्त्वा**
**रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

बुद्ध्या अध्यवसायलक्षणया विशुद्धया मायारहितया युक्तः संपन्नः, धृत्या धैर्येण आत्मानं कार्यकरणसंघातं नियम्य च नियमनं कृत्वा वशीकृत्य, शब्दादीन् शब्दः आदिः येषां तान् विषयान् त्यक्त्वा, सामर्थ्यात् शरीरस्थितिमात्रहेतुभूतान् केवलान् मुक्त्वा ततः अधिकान् सुखार्थान् त्यक्त्वा इत्यर्थः, शरीरस्थित्यर्थत्वेन प्राप्तेषु रागद्वेषौ व्युदस्य च परित्यज्य च ॥

ततः—

**विविक्तसेवी लघ्वाशी**
**यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं**
**वैराग्यं समुपाश्रितः ॥ ५२ ॥**

विविक्तसेवी अरण्यनदीपुलिनगिरिगुहादीन् विविक्तान् देशान् सेवितुं शीलम् अस्य इति विविक्तसेवी, लघ्वाशी लघ्वशनशीलः— विविक्तसेवालघ्वशनयोः निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वात् ग्रहणम्; यतवाक्कायमानसः

वाक् च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य सः ज्ञाननिष्ठः यतिः यतवाक्कायमानसः स्यात् । एवम् उपरतसर्वकरणः सन् ध्यानयोगपरः ध्यानम् आत्मस्वरूपचिन्तनम्, योगः आत्मविषये एकाग्रीकरणम् तौ परत्वेन कर्तव्यौ यस्य सः ध्यानयोगपरः नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम्, वैराग्यं विरागस्य भावः दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितः सम्यक् उपाश्रितः नित्यमेव इत्यर्थः ॥

किंच—

**अहंकारं बलं दर्पं**
**कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो**
**ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

अहंकारम् अहंकरणम् अहंकारः देहादिषु तम्, बलं सामर्थ्यं कामरागसंयुक्तम्—न इतरत् शरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्य अशक्यत्वात्—दर्पं दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात्; तं च, कामम् इच्छां क्रोधं द्वेषं प-

रिग्रहम् इन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तः, तं च विमुच्य परित्यज्य, परमहंसपरिव्राजको भूत्वा, देहजीवनमात्रेऽपि निर्गतममभावः निर्ममः, अत एव शान्तः उपरतः, यः संहृतहर्षायासः यतिः ज्ञाननिष्ठः ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥

अनेन क्रमेण—

**ब्रह्मभूतः प्रसन्नात्मा**
**न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु**
**मद्भक्तिं लभते पराम् ॥ ५४ ॥**

ब्रह्मभूतः ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावः न शोचति, किंचित् अर्थवैकल्यम् आत्मनः वैगुण्यं वा उद्दिश्य न शोचति न संतप्यते; न काङ्क्षति, न हि अप्राप्तविषयाकाङ्क्षा ब्रह्मविदः उपपद्यते; अतः ब्रह्मभूतस्य अयं स्वभावः अनूद्यते— न शोचति न काङ्क्षति इति । 'न हृष्यति' इति वा पाठान्तरम् । समः सर्वेषु भूतेषु, आत्मौपम्येन सर्वभूतेषु सुखं दुःखं वा सममेव पश्यति इत्यर्थः ।

न आत्मसमदर्शनम् इह, तस्य वक्ष्यमाणत्वात् 'भक्त्या मामभिजानाति' इति । एवंभूतः ज्ञाननिष्ठः, मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं पराम् उत्तमां ज्ञानलक्षणां चतुर्थीं लभते, 'चतुर्विधा भजन्ते माम्' इति हि उक्तम् ॥

ततः ज्ञानलक्षणया—

**भक्त्या मामभिजानाति**
**यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा**
**विशते तदनन्तरम् ॥ ५५ ॥**

भक्त्या माम् अभिजानाति यावान् अहम् उपाधिकृतविस्तरभेदः, यश्च अहम् अस्मि विध्वस्तसर्वोपाधिभेदः उत्तमः पुरुषः आकाशकल्पः, तं माम् अद्वैतं चैतन्यमात्रैकरसम् अजरम् अभयम् अनिधनं तत्त्वतः अभिजानाति । ततः माम् एवं तत्त्वतः ज्ञात्वा विशते तदनन्तरं मामेव ज्ञानानन्तरम् । नात्र ज्ञानप्रवेशक्रिये भिन्ने विवक्षिते 'ज्ञात्वा विशते तदनन्तरम्' इति । किं तर्हि? फलान्तराभावात् ज्ञानमात्रमेव, 'क्षेत्रज्ञं चापि मां विद्धि' इति उक्तत्वात् ।

ननु विरुद्धम् इदम् उक्तम् 'ज्ञानस्य या परा निष्ठा तया माम् अभिजानाति' इति। कथं विरुद्धम् इति चेत्, उच्यते— यदैव यस्मिन् विषये ज्ञानम् उत्पद्यते ज्ञातुः, तदैव तं विषयम् अभिजानाति ज्ञाता इति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणाम् अपेक्षते इति; अतश्च ज्ञानेन न अभिजानाति, ज्ञानावृत्त्या तु ज्ञाननिष्ठया अभिजानातीति । नैष दोषः; ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यत् आत्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापात् । शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिहेतुं सहकारिकारणं बुद्धिविशुद्धत्वादि अमानित्वादिगुणं च अपेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यत् अवस्थानम्, सा परा ज्ञाननिष्ठा इति उच्यते । सा इयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरिति उक्ता । तया परया भक्त्या भगवन्तं तत्त्वतः अभिजानाति, यदनन्तरमेव ईश्वरक्षेत्रज्ञभेदबुद्धिः अशेषतः निवर्तते । अतः ज्ञाननिष्ठालक्षणया भक्त्या माम् अभिजानातीति वचनं न विरुध्यते । अत्र च सर्वं निवृत्तिविधायि शास्त्रं वेदान्तेतिहासपुराणस्मृतिलक्षणं न्यायप्रसिद्धम् अर्थवत् भवति— 'विदित्वा...व्युत्थायाथ

भिक्षाचर्यं चरन्ति' 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' 'न्यास एवात्यरेचयत्' इति । 'संन्यासः कर्मणां न्यासः' 'वेदानिमं च लोकममुं च परित्यज्य' 'त्यज धर्ममधर्मं च' इत्यादि । इह च प्रदर्शितानि वाक्यानि । न च तेषां वाक्यानाम् आनर्थक्यं युक्तम्; न च अर्थवादत्वम्, स्वप्रकरणस्थत्वात्, प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य । न हि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रजिगमिषुणा समानमार्गत्वं संभवति । प्रत्यगात्मविषयप्रत्ययसंतानकरणाभिनिवेशश्च ज्ञाननिष्ठा; सा च प्रत्यक्समुद्रगमनवत् कर्मणा सहभावित्वेन विरुध्यते । पर्वतसर्षपयोरिव अन्तरवान् विरोधः प्रमाणविदां निश्चितः । तस्मात् सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्या इति सिद्धम् ॥

स्वकर्मणा भगवतः अभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिफलं ज्ञाननिष्ठायोग्यता, यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना । सः भगवद्भक्तियोगः अधुना स्तूयते शास्त्रार्थोपासंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥**

सर्वकर्माण्यपि प्रतिषिद्धान्यपि सदा कुर्वाणः अनुतिष्ठन् मद्व्यपाश्रयः अहं वासुदेवः ईश्वरः व्यपाश्रयो व्यपाश्रयणं यस्य सः मद्व्यपाश्रयः मय्यर्पितसर्वभावः इत्यर्थः । सोऽपि मत्प्रसादात् मम ईश्वरस्य प्रसादात् अवाप्नोति शाश्वतं नित्यं वैष्णवं पदम् अव्ययम् ॥

यस्मात् एवम्—

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमपाश्रित्य मच्चित्तः सततं भव ॥५७॥**

चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयि ईश्वरे संन्यस्य 'यत् करोषि यदश्नासि' इति उक्तन्यायेन, मत्परः अहं वासुदेवः परो यस्य तव सः त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः बुद्धियोगं समाहितबुद्धित्वं बुद्धियोगः तं बुद्धियोगम् अपाश्रित्य अपाश्रयः अनन्यशरणत्वं मच्चित्तः मय्येव चित्तं यस्य तव सः त्वं मच्चित्तः सततं सर्वदा भव ॥

**मच्चित्तः सर्वदुर्गाणि**
**मत्प्रसादात्तरिष्यसि ।**

**अथ चेत्त्वमहंकारा-**
**न्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥**

मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात् तरिष्यसि अतिक्रमिष्यसि । अथ चेत् यदि त्वं मदुक्तम् अहंकारात् 'पण्डितः अहम्' इति न श्रोष्यसि न ग्रहीष्यसि, ततः त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि ॥

इदं च त्वया न मन्तव्यम् 'स्वतन्त्रः अहम्, किमर्थं परोक्तं करिष्यामि?' इति—

**यदहंकारमाश्रित्य**
**न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते**
**प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥**

यदि चेत् त्वम् अहंकारम् आश्रित्य न योत्स्ये इति न युद्धं करिष्यामि इति मन्यसे चिन्तयसि निश्चयं करोषि, मिथ्या एषः व्यवसायः निश्चयः ते तव; यस्मात् प्रकृतिः क्षत्रियस्वभावः त्वां नियोक्ष्यति ॥

यस्माच्च—

**स्वभावजेन कौन्तेय**
**निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहा-**
**त्करिष्यस्यवशोऽपि तत् ॥ ६० ॥**

स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय निबद्धः निश्चयेन बद्धः स्वेन आत्मीयेन कर्मणा कर्तुं न इच्छसि यत् कर्म, मोहात् अविवेकत. करिष्यसि अवशोऽपि परवश एव तत् कर्म ॥

यस्मात्—

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥**

ईश्वरः ईशनशीलः नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशे अर्जुन शुक्लान्तरात्मस्वभावः विशुद्धान्तःकरणः— 'अहश्च कृष्णमहरर्जुनं च' इति दर्शनात्— तिष्ठति स्थितिं लभते । तेषु सः कथं तिष्ठतीति, आह— भ्रामयन् भ्रमणं कारयन् सर्वभूतानि यन्त्रारूढानि यन्त्राणि

आरूढानि अधिष्ठितानि इव— इति इवशब्दः अत्र द्रष्टव्यः— यथा दारुकृतपुरुषादीनि यन्त्रारूढानि। मायया छद्मना भ्रामयन् तिष्ठति इति संबन्धः ॥

**तमेव शरणं गच्छ**
**सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं**
**स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥**

तमेव ईश्वरं शरणम् आश्रयं संसारार्तिहरणार्थं गच्छ आश्रय सर्वभावेन सर्वात्मना हे भारत। ततः तत्प्रसादात् ईश्वरानुग्रहात् परां प्रकृष्टां शान्तिम् उपरतिं स्थानं च मम विष्णोः परमं पदं प्राप्स्यसि शाश्वतं नित्यम् ॥

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**

इति एतत् ते तुभ्यं ज्ञानम् आख्यातं कथितं गुह्यात् गोप्यात् गुह्यतरम् अतिशयेन गुह्यं रहस्यम् इत्यर्थः, मया सर्वज्ञेन ईश्वरेण। विमृश्य विमर्शनम् आलोचनं कृत्वा एतत् यथोक्तं शास्त्रम् अशेषेण समस्तं यथोक्तं च अर्थजातं यथा इच्छसि तथा कुरु ॥

भूयोऽपि मया उच्यमानं शृणु—

**सर्वगुह्यतमं भूयः**
**शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति**
**ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

सर्वगुह्यतमं सर्वेभ्यः गुह्येभ्यः अत्यन्तगुह्यतमम् अत्यन्त-रहस्यम्, उक्तमपि असकृत् भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचः वाक्यम् । न भयात् नापि अर्थकारणाद्वा वक्ष्यामि ; किं तर्हि ? इष्टः प्रियः असि मे मम दृढम् अव्य-भिचारेण इति कृत्वा ततः तेन कारणेन वक्ष्यामि कथ-यिष्यामि ते तव हितं परमं ज्ञानप्राप्तिसाधनम्, तद्धि सर्व-हितानां हिततमम् ॥

किं तत् इति, आह—

**मन्मना भव मद्भक्तो**
**मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते**
**प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

मन्मना: भव मच्चित्त: भव। मद्भक्त: भव मद्भजनो भव। मद्याजी मद्यजनशीलो भव। मां नमस्कुरु नमस्कारम् अपि ममैव कुरु। तत्र एवं वर्तमान: वासुदेवे एव समर्पितसाध्यसाधनप्रयोजन: मामेव एष्यसि आगमिष्यसि। सत्यं ते तव प्रतिजाने, सत्यां प्रतिज्ञां करोमि एतस्मिन् वस्तुनि इत्यर्थ:; यत: प्रिय: असि मे। एवं भगवत: सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्ते: अवश्यंभावि मोक्षफलम् अवधार्य भगवच्छरणैकपरायण: भवेत् इति वाक्यार्थ.॥

कर्मयोगनिष्ठाया: परमरहस्यम् ईश्वरशरणताम् उपसंहृत्य, अथ इदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं वक्तव्यमिति आह—

**सर्वधर्मान्परित्यज्य**
**मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो**
**मोक्षयिष्यामि मा शुच:॥ ६६॥**

सर्वधर्मान् सर्वे च ते धर्माश्च सर्वधर्मा: तान्—धर्मशब्देन अत्र अधर्मोऽपि गृह्यते, नैष्कर्म्यस्य विवक्षितत्वात्, 'ना-

विरतो दुश्चरितात्' 'त्यज धर्ममधर्मं च' इत्यादिश्रुतिस्मृतिभ्यः— सर्वधर्मान् परित्यज्य संन्यस्य सर्वकर्माणि इत्येतत् । माम् एकं सर्वात्मानं समं सर्वभूतस्थितम् ईश्वरम् अच्युतं गर्भजन्मजरामरणवर्जितम् 'अहमेव' इत्येवं शरणं व्रज, न मत्तः अन्यत् अस्ति इति अवधारय इत्यर्थः । अहं त्वा त्वाम् एवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यः मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन । उक्तं च 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति । अतः मा शुचः शोकं मा कार्षीः इत्यर्थः ॥

अस्मिन्गीताशास्त्रे परमनिःश्रेयससाधनं निश्चितं किं ज्ञानम्, कर्म वा, आहोस्वित् उभयम्? इति । कुतः संशयः? 'यज्ज्ञात्वामृतमश्नुते' 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यादीनि वाक्यानि केवलाज्ज्ञानात् निःश्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव' इत्येवमादीनि कर्मणामवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः कर्तव्यत्वोपदेशात् समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यात् इति भवेत् संशयः कस्यचित् । किं पुनरत्र मीमांसाफलम्? ननु एतदेव—एषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणम्; अतः विस्तीर्णतरं मीमांस्यम् एतत् ॥

आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वम्, भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसायित्वात्। क्रियाकारकफलभेदबुद्धिः अविद्यया आत्मनि नित्यप्रवृत्ता— 'मम कर्म, अहं कर्तामुष्मै फलायेदं कर्म करिष्यामि' इति इयम् अविद्या अनादिकालप्रवृत्ता। अस्या अविद्यायाः निवर्तकम् 'अयमहमस्मि केवलोऽकर्ता अक्रियोऽफलः; न मत्तोऽन्योऽस्ति कश्चित्' इत्येवंरूपम् आत्मविषयं ज्ञानम् उत्पद्यमानम्, कर्मप्रवृत्तिहेतुभूतायाः भेदबुद्धेः निवर्तकत्वात्। तु-शब्दः पक्षव्यावृत्त्यर्थः—न केवलेभ्यः कर्मभ्यः, न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिः इति पक्षद्वयं निवर्तयति। अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः। न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते। केवलं ज्ञानमपि अनर्थकं तर्हि? न, अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात्। अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वम्, रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत्। विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलम्; तथा ज्ञानम्। दृष्टार्थानां च च्छिदिक्रियाग्निमन्थनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलात् अन्यफले कर्मान्तरे वा व्यापारानुपपत्तिः यथा, तथा दृष्टार्थायां ज्ञान-

निष्ठाक्रियायां व्यापृतस्य ज्ञात्रादिकारकस्य आत्मकैवल्यफलात् कर्मान्तरे प्रवृत्तिः अनुपपन्ना इति न ज्ञाननिष्ठा कर्मसहिता उपपद्यते। भुज्यग्निहोत्रादिक्रियावत्स्यात् इति चेत्, न; कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः। कैवल्यफले हि ज्ञाने प्राप्ते, सर्वतःसंप्लुतोदकफले कूपतटाकादिक्रियाफलार्थित्वाभाववत्, फलान्तरे तत्साधनभूतायां वा क्रियायाम् अर्थित्वानुपपत्तिः। न हि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारः उपपद्यते, तद्विषयं वा अर्थित्वम्। तस्मात् न कर्मणोऽस्ति निःश्रेयससाधनत्वम्। न च ज्ञानकर्मणोः समुच्चितयोः। नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा, अविद्यानिवर्तकत्वेन विरोधात्। न हि तमः तमसः निवर्तकम्। अतः केवलमेव ज्ञानं निःश्रेयससाधनम् इति। न; नित्याकरणे प्रत्यवायप्राप्तेः, कैवल्यस्य च नित्यत्वात्। यत् तावत् केवलाज्ज्ञानात् कैवल्यप्राप्तिः इत्येतत्, तत् असत्; यतः नित्यानां कर्मणां श्रुत्युक्तानाम् अकरणे प्रत्यवायः नरकादिप्राप्तिलक्षणः स्यात्। ननु एवं तर्हि कर्मभ्यो मोक्षो नास्ति इति अनिर्मोक्ष एव। नैष दोषः; नित्यत्वात् मोक्षस्य। नित्यानां कर्मणाम् अनुष्ठानात् प्रत्यवायस्य अप्राप्तिः, प्रतिषिद्धस्य च अकरणात् अनिष्टशरीरानुपपत्तिः,

काम्यानां च वर्जनात् इष्टशरीरानुपपत्तिः, वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतिते अस्मिन शरीरे देहान्तरोत्पत्तौ च कारणाभावात् आत्मनः रागादीनां च अकरणे स्वरूपावस्थानमेव कैवल्यमिति अयत्नसिद्धं कैवल्यम् इति । अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्य अनारब्धकार्यस्य उपभोगानुपपत्तेः क्षयाभावः इति चेत्, न; नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः । प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थं नित्यं कर्म । आरब्धानां च कर्मणाम् उपभोगेनैव क्षीणत्वात् अपूर्वाणां च कर्मणाम् अनारम्भे अयत्नसिद्धं कैवल्यमिति । न; 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति विद्याया अन्यः पन्थाः मोक्षाय न विद्यते इति श्रुतेः, चर्मवदाकाशवेष्टनासंभववत् अविदुषः मोक्षासंभवश्रुतेः, 'ज्ञानात्कैवल्यमाप्नोति' इति च पुराणस्मृतेः; अनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च । यथा पूर्वोपात्तानां दुरितानाम् अनारब्धफलानां संभवः, तथा पुण्यानाम् अनारब्धफलानां स्यात्संभवः । तेषां च देहान्तरम् अकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः । धर्माधर्महेतूनां च रागद्वेषमोहानाम् अन्यत्र आत्मज्ञानात् उच्छे-

दानुपपत्तेः धर्माधर्मोच्छेदानुपपत्तिः । नित्यानां च कर्मणां पुण्यफलत्वश्रुतेः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः' इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः ॥

ये तु आहुः— नित्यानि कर्माणि दुःखरूपत्वात् पूर्वकृतदुरितकर्मणां फलमेव, न तु तेषां स्वरूपव्यतिरेकेण अन्यत् फलम् अस्ति, अश्रुतत्वात्, जीवनादिनिमित्ते च विधानात् इति । न, अप्रवृत्तानां कर्मणां फलदानासंभवात्; दुःखफलविशेषानुपपत्तिश्च स्यात् । यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति, तदसत् । न हि मरणकाले फलदानाय अनङ्कुरीभूतस्य कर्मणः फलम् अन्यकर्मारब्धे जन्मनि उपभुज्यते इति उपपत्तिः । अन्यथा स्वर्गफलोपभोगाय अग्निहोत्रादिकर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिः न स्यात् । तस्य दुरितस्य दुःखविशेषफलत्वानुपपत्तेश्च— अनेकेषु हि दुरितेषु संभवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वन्द्वरोगादिबाधनं निर्निमित्तं न हि शक्यते कल्पयितुम्, नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति । अप्रकृतं च इदम् उच्यते— नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरित-

कर्मफलम् इति। कथम्? अप्रसूतफलस्य हि पूर्वकृतदुरितस्य क्षयः न उपपद्यत इति प्रकृतम्। तत्र प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखम् आह भवान्, न अप्रसूतफलस्येति। अथ सर्वमेव पूर्वकृतं दुरितं प्रसूतफलमेव इति मन्यते भवान्, ततः नित्यकर्मानुष्ठानायासदुःखमेव फलम् इति विशेषणम् अयुक्तम्। नित्यकर्मविध्यानर्थक्यप्रसङ्गश्च, उपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः। किंच, श्रुतस्य नित्यस्य कर्मणः दुःखं चेत् फलम्, नित्यकर्मानुष्ठानायासादेव तत् दृश्यते व्यायामादिवत्; तत् अन्यस्य इति कल्पनानुपपत्तिः। जीवनादिनिमित्ते च विधानात्, नित्यानां कर्मणां प्रायश्चित्तवत् पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन् पापकर्मणि निमित्ते यत् विहितं प्रायश्चित्तम् न तु तस्य पापस्य तत् फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलम्, जीवनादिनिमित्तेऽपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव फलं प्रसज्येत, नित्यप्रायश्चित्तयोः नैमित्तिकत्वाविशेषात्। किंच अन्यत्— नित्यस्य काम्यस्य च अग्निहोत्रादेः अनुष्ठानायासदुःखस्य तुल्यत्वात् नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलम्, न तु काम्यानुष्ठानायासदुःखम् इति विशेषो नास्तीति तदपि पूर्व-

कृतदुरितफलं प्रसज्येत । तथा च सति नित्यानां फलाश्रवणात् तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलम् इति अर्थापत्तिकल्पना च अनुपपन्ना, एवं विधानान्यथानुपपत्तेः अनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम् । विरोधाच्च; विरुद्धं च इदम् उच्यते— नित्यकर्मणा अनुष्ठीयमानेन अन्यस्य कर्मणः फलं भुज्यते इति अभ्युपगम्यमाने स एव उपभोगः नित्यस्य कर्मणः फलम् इति, नित्यस्य कर्मणः फलाभाव इति च विरुद्धम् उच्यते । किंच, काम्याग्निहोत्रादौ अनुष्ठीयमाने नित्यमपि अग्निहोत्रादि तन्त्रेणैव अनुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलम् उपक्षीणं स्यात्, तत्तन्त्रत्वात् । अथ काम्याग्निहोत्रादिफलम् अन्यदेव स्वर्गादि, तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत । न च तदस्ति, दृष्टविरोधात्; न हि काम्यानुष्ठानायासदुःखात् केवलनित्यानुष्ठानायासदुःखं भिन्नं दृश्यते । किंच अन्यत्— अविहितमप्रतिषिद्धं च कर्म तत्कालफलम्, न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेत् । तदा स्वर्गादिष्वपि अदृष्टफलाशासनेन उद्यमो न स्यात्— अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषे अनुष्ठानायासदुःखमात्रेण उपक्षयः नित्यानाम्; स्वर्गादिमहाफलत्वं

काम्यानाम्, अङ्गेतिकर्तव्यताद्याधिक्ये तु असति, फलकामित्वमात्रेणेति। तस्माच्च न नित्यानां कर्मणाम् अदृष्टफलाभावः कदाचिदपि उपपद्यते। अतश्च अविद्यापूर्वकस्य कर्मणः विद्यैव शुभस्य अशुभस्य वा क्षयकारणम् अशेषतः, न नित्यकर्मानुष्ठानम्। अविद्याकामबीजं हि सर्वमेव कर्म। तथा च उपपादितमविद्वद्विषयं कर्म, विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा— 'उभौ तौ न विजानीतः' 'वेदाविनाशिनं नित्यम्' 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' 'अज्ञानां कर्मसङ्गिनाम्' 'तत्त्ववित्तु महाबाहो....गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते' 'सर्वकर्माणि मनसा संन्यस्यास्ते' 'नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित्', अर्थात् अज्ञः करोमि इति; आरुरुक्षोः कर्म कारणम्, आरूढस्य योगस्थस्य शम एव कारणम्; उदाराः त्रयोऽपि अज्ञाः, 'ज्ञानी त्वात्मैव मे मतम्' 'अज्ञाः कर्मिणः गतागतं कामकामाः लभन्ते'; अनन्याश्चिन्तयन्तो मां नित्ययुक्ताः यथोक्तम् आत्मानम् आकाशकल्पम् उपासते; 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते', अर्थात् न कर्मिणः अज्ञाः उपयान्ति। भगवत्कर्मकारिणः ये युक्ततमा अपि कर्मिणः अज्ञाः, ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः; अनिर्देश्याक्षरोपा-

सकास्तु 'अद्वेष्टा सर्वभूतानाम्' इति आध्यायपरिसमाप्ति उक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च। अधिष्ठानादिपञ्चकहेतुकसर्वकर्मसंन्यासिनां आत्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदाम् अनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति; भवत्येव अन्येषामज्ञानां कर्मिणामसंन्यासिनाम् इत्येष गीताशास्त्रोक्तकर्तव्यार्थस्य विभागः ॥

अविद्यापूर्वकत्वं सर्वस्य कर्मणः असिद्धमिति चेत्, न; ब्रह्महत्यादिवत्। यद्यपि शास्त्रावगतं नित्यं कर्म, तथापि अविद्यावत एव भवति। यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्म अनर्थकारणम् अविद्याकामादिदोषवतः भवति, अन्यथा प्रवृत्त्यनुपपत्तेः, तथा नित्यनैमित्तिककाम्यान्यपीति। देहव्यतिरिक्तात्मनि अज्ञाते प्रवृत्तिः नित्यादिकर्मसु अनुपपन्ना इति चेत्, न; चलनात्मकस्य कर्मणः अनात्मकर्तृकस्य 'अहं करोमि' इति प्रवृत्तिदर्शनात्। देहादिसंघाते अहंप्रत्ययः गौणः, न मिथ्या इति चेत्, न; तत्कार्येष्वपि गौणत्वोपपत्तेः। आत्मीये देहादिसंघाते अहंप्रत्ययः गौणः; यथा आत्मीये पुत्रे 'आत्मा वै पुत्रनामासि' इति, लोके च 'मम प्राण

एव अयं गौः’ इति, तद्वत्। नैवायं मिथ्याप्रत्ययः। मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोः अगृह्यमाणविशेषयोः। न गौणप्रत्ययस्य मुख्यकार्यार्थता, अधिकरणस्तुत्यर्थत्वात् लुप्तोपमाशब्देन। यथा ‘सिंहो देवदत्तः’ ‘अग्निर्माणवकः’ इति सिंह इव अग्निरिव क्रौर्यपैङ्गल्यादिसामान्यवत्त्वात् देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यम् अग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किंचित्साध्यते; मिथ्याप्रत्ययकार्यं तु अनर्थमनुभवति इति; गौणप्रत्ययविषयं जानाति ‘नैष सिंहः देवदत्तः’, तथा ‘नायमग्निर्माणवकः’ इति। तथा गौणेन देहादिसंघातेन आत्मना कृतं कर्म न मुख्येन अहंप्रत्ययविषयेण आत्मना कृतं स्यात्। न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यात्। न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किंचित् क्रियते, स्तुत्यर्थत्वेन उपक्षीणत्वात्। स्तूयमानौ च जानीतः ‘न अहं सिंहः’ ‘न अहम् अग्निः’ इति; न हि ‘सिंहस्य कर्म मम अग्नेश्च’ इति। तथा ‘न संघातस्य कर्म मम मुख्यस्य आत्मनः’ इति प्रत्ययः युक्ततरः स्यात्; न पुनः ‘अहं कर्ता मम कर्म’ इति। यच्च आहुः ‘आत्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिरात्मा कर्म करोति’ इति, न; तेषां मिथ्याप्रत्ययपूर्वकत्वात्। मिथ्याप्रत्ययनिमि-

त्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वकाः हि स्मृतीच्छाप्रयत्नादयः । यथा अस्मिन् जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथा अतीते अतीततरेऽपि जन्मनि इति अनादिरविद्याकृतः संसारः अतीतोऽनागतश्च अनुमेयः । ततश्च सर्वकर्मसंन्याससहितज्ञाननिष्ठया आत्यन्तिकः संसारोपरम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य, तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः । देहादिसंघाते आत्माभिमानः अविद्यात्मकः । न हि लोके 'गवादिभ्योऽन्योऽहम्, मत्तश्चान्ये गवादयः' इति जानन् तान् 'अहम्' इति मन्यते कश्चित् । अजानंस्तु स्थाणौ पुरुषविज्ञानवत् अविवेकतः देहादिसंघाते कुर्यात् 'अहम्' इति प्रत्ययम्, न विवेकतः जानन् । यस्तु 'आत्मा वै पुत्र नामासि' इति पुत्रे अहंप्रत्ययः, स तु जन्यजनकसंबन्धनिमित्तः गौणः । गौणेन च आत्मना भोजनादिवत् परमार्थकार्यं न शक्यते कर्तुम्, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् ॥

अदृष्टविषयचोदनाप्रामाण्यात् आत्मकर्तव्यं गौणैः देहेन्द्रियात्मभिः क्रियत एव इति चेत्, न; अविद्याकृतात्मत्वात्तेषाम् । न च गौणाः आत्मानः देहेन्द्रियादयः; किं तर्हि ? मिथ्या-

प्रत्ययेनैव अनात्मानः सन्तः आत्मत्वमापाद्यन्ते, तद्भावे भावात्, तदभावे च अभावात्। अविवेकिनां हि अज्ञानकाले बालानां दृश्यते 'दीर्घोऽहम्' 'गौरोऽहम्' इति देहादिसंघाते अहंप्रत्ययः। न तु विवेकिनाम् 'अन्योऽहं देहादिसंघातात्' इति जानतां तत्काले देहादिसंघाते अहंप्रत्ययः भवति। तस्मात् मिथ्याप्रत्ययाभावे अभावात् तत्कृत एव, न गौणः। पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोः अग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यात्, न अगृह्यमाणविशेषसामान्ययोः। यत्तु उक्तम् 'श्रुतिप्रामाण्यात्' इति, तत् न; तत्प्रामाण्यस्य अदृष्टविषयत्वात्। प्रत्यक्षादिप्रमाणानुपलब्धे हि विषये अग्निहोत्रादिसाध्यसाधनसंबन्धे श्रुतेः प्रामाण्यम्, न प्रत्यक्षादिविषये, अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य। तस्मात् न दृष्टमिथ्याज्ञाननिमित्तस्य अहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यम्। न हि श्रुतिशतमपि 'शीतोऽग्निरप्रकाशो वा' इति ब्रुवत् प्रामाण्यमुपैति। यदि ब्रूयात् 'शीतोऽग्निरप्रकाशो वा' इति, तथापि अर्थान्तरं श्रुतेः विवक्षितं कल्प्यम्, प्रामाण्यान्यथानुपपत्तेः; न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा। कर्मणः मिथ्याप्रत्ययवत्कर्तृकत्वात् कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत्,

न ; ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः ॥

कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरपि अप्रामाण्यप्रसङ्ग इति चेत्, न ; बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्याविधिश्रुत्या आत्मनि अवगते देहादिसंघाते अहंप्रत्ययः बाध्यते, तथा आत्मन्येवं आत्मावगतिः न कदाचित् केनचित् कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकादवगतेः, यथा अग्निः उष्णः प्रकाशश्च इति । न च एवं कर्मविधिश्रुतेरप्रामाण्यम्, पूर्वपूर्वप्रवृत्तिनिरोधेन उत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेऽपि उपायस्य उपेयसत्यतया सत्यत्वमेव स्यात्, यथा अर्थवादानां विधिशेषाणाम्; लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यं सिद्धम्, प्रागात्मज्ञानात् देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् । यत्तु मन्यसे— स्वयमव्याप्रियमाणोऽपि आत्मा संनिधिमात्रेण करोति, तदेव मुख्यं कर्तृत्वमात्मनः ; यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति, तथा सेनापतिः वाचैव करोति ; क्रियाफलसंबन्धश्च राज्ञः सेनापतेश्च दृष्टः । यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्म

आत्मकृतं स्यात्, फलस्य आत्मगामित्वात् । यथा वा भ्रामकस्य लोहभ्रामयितृत्वात् अव्यापृतस्यैव मुख्यमेव कर्तृत्वम्, तथा च आत्मनः इति । तत् असत्; अकुर्वतः कारकत्वप्रसङ्गात्। कारकमनेकप्रकारमिति चेत्, न ; राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत् स्वव्यापारेणापि युध्यते; योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वम्, तथा जयपराजयफलोपभोगे । यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम् । तस्मात् अव्यापृतस्य कर्तृत्वोपचारो यः, सः गौणः इति अवगम्यते । यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनाम्, तदा संनिधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत; यथा भ्रामकस्य लोहभ्रमणेन, न तथा राजयजमानादीनां स्वव्यापार नोपलभ्यते । तस्मात् संनिधिमात्रेण कर्तृत्वं गौणमेव । तथा च सति तत्फलसंबन्धोऽपि गौण एव स्यात् । न गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मात् असदेव एतत् गीयते 'देहादीनां व्यापारेण अव्यापृतः आत्मा कर्ता भोक्ता च स्यात्' इति । भ्रान्तिनिमित्तं तु सर्वम् उपपद्यते, यथा स्वप्ने; मायायां च एवम् । न च देहाद्यात्मप्रत्ययभ्रान्तिसंतानविच्छेदेषु सुषुप्तिसमाध्यादिषु क-

वति अनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे वाच्यं शास्त्रम् इति सामर्थ्यात् गम्यते । तत्र 'मेधाविने तपस्विने वा' इति अनयोः विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम् । शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम् । भगवति असूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् । गुरुशुश्रूषाभक्तिमते च वाच्यम् इत्येषः शास्त्रसंप्रदायविधिः ॥

संप्रदायस्य कर्तुः फलम् इदानीम् आह—

**य इमं परमं गुह्यं**
**मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा**
**मामेवैष्यत्यसंशयः ॥ ६८ ॥**

यः इमं यथोक्तं परमं परमनिःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यतमं मद्भक्तेषु मयि भक्तिमत्सु अभिधास्यति वक्ष्यति, ग्रन्थतः अर्थतश्च स्थापयिष्यतीत्यर्थः, यथा त्वयि मया । भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । कथम् अभिधास्यति इति, उच्यते— भक्तिं मयि परां कृत्वा

'भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियते' इत्येवं कृत्वेत्यर्थः । तस्य इदं फलम्— मामेव एष्यति मुच्यते एव । असंशयः अत्र संशयः न कर्तव्यः ॥

किंच—

**न च तस्मान्मनुष्येषु**
**कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मा-**
**दन्यः प्रियतरो भुवि ॥ ६९ ॥**

न च तस्मात् शास्त्रसंप्रदायकृतः मनुष्येषु मनुष्याणां मध्ये कश्चित् मे मम प्रियकृत्तमः अतिशयेन प्रियकरः, अन्यः प्रियकृत्तमः, नास्त्येव इत्यर्थः वर्तमानेषु । न च भविता भविष्यत्यपि काले तस्मात् द्वितीयः अन्यः प्रियतरः प्रियकृत्तरः भुवि लोकेऽस्मिन् न भविता ॥

योऽपि—

**अध्येष्यते च य इमं**
**धर्म्यं संवादमावयोः ।**

**ज्ञानयज्ञेन तेनाह-**

**मिष्टः स्यामिति मे मतिः ॥ ७०॥**

अध्येष्यते च पठिष्यति यः इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थं आवयोः, तेन इदं कृतं स्यात्। ज्ञानयज्ञेन— विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञः मानसत्वात् विशिष्टतमः इत्यतः तेन ज्ञानयज्ञेन गीताशास्त्रस्य अध्ययनं स्तूयते; फलविधिरेव वा, देवतादिविषयज्ञानयज्ञफलतुल्यम् अस्य फलं भवतीति— तेन अध्ययनेन अहम् इष्टः पूजितः स्यां भवेयम् इति मे मम मतिः निश्चयः ॥

अथ श्रोतुः इदं फलम्—

**श्रद्धावाननसूयश्च**

**शृणुयादपि यो नरः।**

**सोऽपि मुक्तः शुभाँल्लोका-**

**न्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥**

श्रद्धावान् श्रद्दधानः अनसूयश्च असूयावर्जितः सन् इमं ग्रन्थं शृणुयादपि यो नरः, अपिशब्दात् किमुत अर्थज्ञान-

वान्, सोऽपि पापात् मुक्तः शुभान प्रशस्तान् लोकान् प्राप्नुयात् पुण्यकर्मणाम् अग्निहोत्रादिकर्मवताम् ॥

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति । तदग्रहणे ज्ञाते पुनः ग्राहयिष्यामि उपायान्तरेणापि इति प्रष्टुः अभिप्रायः । यत्नान्तरं च आस्थाय शिष्यस्य कृतार्थता. कर्तव्या इति आचार्यधर्मः प्रदर्शितो भवति—

**कच्चिदेतच्छ्रुतं पार्थ**
**त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः**
**प्रणष्टस्ते धनंजय ॥ ७२ ॥**

कच्चित् किम् एतत् मया उक्तं श्रुतं श्रवणेन अवधारितं पार्थ, त्वया एकाग्रेण चेतसा चित्तेन? किं वा अप्रमादत.? कच्चित् अज्ञानसंमोहः अज्ञाननिमित्तः संमोहः अविविक्तभावः अविवेकः स्वाभाविकः किं प्रणष्टः? यदर्थः अयं शास्त्रश्रवणायासः तव, मम च उपदेष्टृत्वायासः प्रवृत्तः, ते तुभ्यं हे धनंजय ॥

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा**
**त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसंदेहः**
**करिष्ये वचनं तव ॥ ७३ ॥**

नष्टः मोहः अज्ञानजः समस्तसंसारानर्थहेतुः, सागर इव दुरुत्तरः । स्मृतिश्च आत्मतत्त्वविषया लब्धा, यस्याः लाभात् सर्वहृदयग्रन्थीनां विप्रमोक्षः; त्वत्प्रसादात् तव प्रसादात् मया त्वत्प्रसादम् आश्रितेन अच्युत । अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलम् एतावदेवेति निश्चितं दर्शितं भवति, यतः ज्ञानात् मोहनाशः आत्मस्मृतिलाभश्चेति । तथा च श्रुतौ 'अनात्मवित् शोचामि' इति उपन्यस्य आत्मज्ञानेन सर्वग्रन्थीनां विप्रमोक्षः उक्तः; 'भिद्यते हृदयग्रन्थिः' 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' इति च मन्त्रवर्णः । अथ इदानीं त्वच्छासने स्थितः अस्मि गतसंदेहः मुक्तसंशयः । करिष्ये वचनं तव । अहं त्वत्प्रसादात् कृतार्थः, न मे कर्तव्यम् अस्ति इत्यभिप्रायः ॥

परिसमाप्तः शास्त्रार्थः । अथ इदानीं कथासंबन्धप्रदर्शनार्थं संजयः उवाच—

संजय उवाच—

**इत्यहं वासुदेवस्य**
**पार्थस्य च महात्मनः ।**
**संवादमिममश्रौष-**
**मद्भुतं रोमहर्षणम् ॥ ७४ ॥**

इति एवम् अहं वासुदेवस्य पार्थस्य च महात्मनः संवादम् इमं यथोक्तम् अश्रौषं श्रुतवान् अस्मि अद्भुतम् अत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥

तं च इमम्—

**व्यासप्रसादाच्छ्रुतवा-**
**निमं गुह्यतमं परम् ।**
**योगं योगेश्वरात्कृष्णा-**
**त्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

व्यासप्रसादात् ततः दिव्यचक्षुर्लाभात श्रुतवान् इमं संवादं गुह्यतमं परं योगम्, योगार्थत्वान् ग्रन्थोऽपि योगः, संवादम् इमं योगमेव वा योगेश्वरात् कृष्णात् साक्षात कथयतः स्वयम्, न परम्परया ॥

**राजन् संस्मृत्य संस्मृत्य**
**संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं**
**हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

हे राजन् धृतराष्ट्र, संस्मृत्य संस्मृत्य प्रतिक्षण संवादम् इमम् अद्भुतं केशवार्जुनयोः पुण्यम इमं श्रवणेनापि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥

**तच्च संस्मृत्य संस्मृत्य**
**रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्**
**हृष्यामि च पुनः पुनः ॥ ७७ ॥**

तच्च संस्मृत्य संस्मृत्य रूपम् अत्यद्भुतं हरेः विश्वरूपं विस्मयो मे महान् राजन्, हृष्यामि च पुनः पुनः ॥

किं बहुना—

**यत्र योगेश्वरः कृष्णो**
**यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूति-**
**र्ध्रुवा नीतिर्मतिर्मम** ॥ ७८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षयोगो नाम

अष्टादशोऽध्यायः ॥

यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानाम् ईश्वरः, तत्प्रभवत्वात् सर्वयोगबीजस्य, कृष्णः, यत्र पार्थः यस्मिन्

पक्षे धनुर्धरः गाण्डीवधन्वा, तत्र श्रीः तस्मिन् पाण्डवानां पक्षे श्रीः विजय, तत्रैव भूतिः श्रियो विशेषः विस्तार. भूतिः, ध्रुवा अव्यभिचारिणी नीति. नयः, इत्येवं मतिः मम इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
अष्टादशोऽध्यायः ॥

॥ श्रीमद्भगवद्गीताशास्त्रं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

पृष्ठम्

CONTENTS.

# ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

॥ श्रीः ॥

# शांकरभाष्यस्थानां विशेषविषयाणामनुक्रमणिका ॥

---

## विष्णुसहस्रनामभाष्यम्

## सनत्सुजातीयभाष्यम्

॥ श्रीः ॥

# विष्णुसहस्रनामभाष्यम्

श्रीमच्छंकरभगवत्पादैः

विरचितम् ।

॥ श्रीः ॥

# विष्णुसहस्रनामस्तोत्रम्

## श्रीमच्छंकरभगवत्पादविरचितेन

## भाष्येण सहितम् ।

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥

कृष्णद्वैपायनं व्यासं सर्वभूतहिते रतम् ।
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ॥ २ ॥

सहस्रमूर्तेः पुरुषोत्तमस्य सहस्रनेत्राननपादबाहोः ।
सहस्रनाम्नां स्तवनं प्रशस्तं निरुच्यते जन्मजरादिशान्त्यै ॥ ३ ॥

श्रीवैशम्पायन उवाच—

**श्रुत्वा धर्मानशेषेण**
**पावनानि च सर्वशः ।**

**युधिष्ठिरः शांतनवं**
**पुनरेवाभ्यभाषत ॥ १ ॥**

श्रीवैशम्पायनः जनमेजयं प्रत्युवाच— धर्मान् अभ्युद-दयनिःश्रेयसोत्पत्तिहेतुभूतान् चोदनालक्षणान् अशेषेण कात्स्न्र्येन पावनानि पापक्षयकराणि धर्मरहस्यानि च सर्वशः सर्वैः प्रकारैः श्रुत्वा युधिष्ठिरो धर्मपुत्रः शांतनवं शंतनुपुत्रं भीष्मं सकलपुरुषार्थसाधनं सुखसंपाद्यम् अल्पप्रयासम् अनल्पफलम् अनुक्तमिति कृत्वा पुनः भूय एव अभ्यभाषत प्रश्नं कृतवान् ॥

युधिष्ठिर उवाच—

**किमेकं दैवतं लोके**
**किं वाप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्चन्तः**
**प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥**

किमेकं दैवतं देव इत्यर्थः, स्वार्थे तद्धितप्रत्ययविधानात्, लोके लोकनहेतुभूते समस्तविद्यास्थाने उक्तमिति प्रथमः प्रश्नः । किं वाप्येकं परायणं तस्मिन् लोके एकं परायणं च किम्?

परम् अयनं प्राप्तव्यं स्थानं परायणम् । यदाज्ञया प्रवर्तन्ते सर्वे; यस्मिन्नधिगते हृदयग्रन्थिर्भिद्यते, 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतेः; यस्य विज्ञानमात्रेण आनन्दलक्षणो मोक्षः प्राप्यते; यद्विद्वान्न बिभेति कुतश्चन; यत्प्रविष्टस्य न विद्यते पुनर्भवः; यस्य च वेदनात्तदेव भवति, 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः; यद्विहायापरः पन्थाः नृणां नास्ति, 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः; तदुक्तम् एकं परायणम् । लोके तत्किम् इति द्वितीयः प्रश्नः । कं कतमं देवं स्तुवन्तः गुणकीर्तनं कुर्वन्तः, कं कतमं देवम् अर्चन्तः बाह्यमाभ्यन्तरं वा अर्चनं बहुविधं कुर्वन्तः मानवाः मनुसुताः शुभं कल्याणं स्वर्गापवर्गादि फलं प्राप्नुयुः लभेरन् इति पुनः प्रश्नद्वयम् ॥

**को धर्मः सर्वधर्माणां**
**भवतः परमो मतः ।**
**किं जपन्मुच्यते जन्तु-**
**र्जन्मसंसारबन्धनात् ॥ ३ ॥**

को धर्मः पूर्वोक्तलक्षणः सर्वधर्माणां सर्वेषां धर्माणां

मध्ये भवतः परमः प्रकृष्टो धर्मः मतः अभिप्रेतः इति पञ्चमः प्रश्नः। किं जप्यं जपन् उच्चोपांशुमानसलक्षणं जपं कुर्वन् जन्तुः जननधर्मा। अनेन जन्तुशब्देन जपार्चनस्तवनादिषु यथायोग्यं सर्वप्राणिनामधिकारं सूचयति। जन्मसंसारबन्धनात् जन्म अज्ञानविजृम्भितानामविद्याकार्याणाम् उपलक्षणम्, संसारः अविद्या, ताभ्यां जन्मसंसाराभ्यां यत् बन्धनं तस्मात् मुच्यते मुक्तो भवति इति षष्ठः प्रश्नः। मुच्यते जन्मसंसारबन्धनात् इति इदमुपलक्षणम् इतरेषां फलानामपि। एतद्ग्रहणं तु मोक्षस्य प्राधान्यख्यापनार्थम्॥

षट् प्रश्नाः कथिताः। तेषु पाश्चात्योऽनन्तरो जप्यविषयः षष्ठः प्रश्नः अनेन श्लोकेन परिह्रियते—

श्रीभीष्म उवाच—

**जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्।**
**स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः॥ ४॥**

सर्वेषां बहिरन्तःशत्रूणां भयहेतुः भीष्मः मोक्षधर्मादीनां प्रवक्ता सर्वज्ञः॥

जगत् जङ्गमाजङ्गमात्मकम् तस्य प्रभुः स्वामी तम्, देवदेवं

देवानां ब्रह्मादीनां देवम्, अनन्तं देशतः कालतः वस्तुतश्चापरिच्छिन्नम्, पुरुषोत्तमं क्षराक्षराभ्यां कार्यकारणाभ्यामुत्कृष्टम्, नामसहस्रेण नाम्नां सहस्रेण स्तुवन् गुणसंकीर्तनं कुर्वन् सततोत्थितः निरन्तरमुद्युक्तः पुरुषः— पुरे शयनाद्वा पूर्णत्वाद्वा पुरुषः— 'सर्वदुःखातिगो भवेत्' इति सर्वत्र संबध्यते ॥

उत्तरेण श्लोकेन चतुर्थः प्रश्नः परिह्रियते—

**तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।**
**ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥**

तमेव चार्चयन् बाह्यम् अभ्यर्चनं कुर्वन् नित्यं सर्वेषु कालेषु भक्तिः भजनं तात्पर्यं तया भक्त्या पुरुषम् अव्ययं विनाशविक्रियारहितम्, तमेव च ध्यायन् आभ्यन्तरार्चनं कुर्वन्, स्तुवन्, पूर्वोक्तरीत्या भक्त्या नमस्यंश्च नमस्कारं कुर्वन्,—पूजाशेषभूतमुभयं स्तुतिनमस्कारलक्षणम्— यजमानः पूजकः फलभोक्ता । अथवा, अर्चयन्नित्यनेनोभयविधमर्चनमुच्यते । ध्यायन्स्तुवन्नमस्यंश्चेत्यनेन मानसं वाचिकं कायिकं चोच्यते ॥

तृतीयं प्रश्नं परिहरति त्रिभिरुत्तरैः पादैः—

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।**
**लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥**

अनादिनिधनं षड्भावविकारशून्यम्, विष्णुं व्यापकम्, सर्वस्य लोक्यत इति लोकः दृश्यवर्गो लोकः तस्य नियन्तॄणां ब्रह्मादीनामपि ईश्वरत्वात् सर्वलोकमहेश्वरम्, लोकं दृश्यवर्गं स्वाभाविकेन बोधेन साक्षात्पश्यतीति लोकाध्यक्षः, तं नित्यं निरन्तरं स्तुवन्, सर्वदुःखातिगो भवेत् इति त्रयाणां साधारणं फलवचनम् । सर्वाण्याध्यात्मिकादीनि दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगः भवेत् स्यात् ॥

पुनरपि तमेव स्तुत्यं विशिनष्टि—

**ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।**
**लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥**

ब्रह्मण्यं ब्रह्मणे स्रष्ट्रे ब्राह्मणाय तपसे श्रुतये वा हितम्, सर्वान् धर्मान् जानातीति सर्वधर्मज्ञः तम्, लोकानां प्राणिनां कीर्तयो यशांसि ताः स्वशक्त्यनुप्रवेशेन वर्धयतीति तम्, लोकैर्नाथ्यते याच्यते लोकानुपतपति आशास्ते लोकानामीष्टे

इति वा लोकनाथः तम्, महत् ब्रह्म—विश्वोत्कर्षेण वर्तमानत्वात्, भूतं परमार्थसत्यम्, सर्वभूतभवोद्भवं सर्वभूतानां भवः संसारः यत्सकाशादुद्भवति तम् ॥

पञ्चमं प्रश्नं परिहरति—

**एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥**

सर्वेषां चोदनालक्षणानां धर्माणाम् एषः वक्ष्यमाणो धर्मः अधिकतमः इति मे मम मतः अभिप्रेतः, यद्भक्त्या तात्पर्येण पुण्डरीकाक्षं हृदयपुण्डरीके प्रकाशमानं वासुदेवं स्तवैः गुणसंकीर्तनलक्षणैः स्तुतिभिः सदा अर्चेत् सत्कारपूर्वकमर्चनं करोति नरः मनुष्यः इति यत् एष धर्मः इति संबन्धः ॥

अस्य स्तुतिलक्षणस्यार्चनस्य आधिक्ये किं कारणम्? उच्यते— हिंसादिपुरुषान्तरद्रव्यान्तरदेशकालादिनियमानपेक्षत्वम् आधिक्ये कारणम् । 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्' इति विष्णुपुराणवचनात् । 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते'

इति मनुवचनात्। 'जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते। अहिंसया च भूतानां जपयज्ञः प्रवर्तते' इति महाभारते। 'यज्ञानां जपयज्ञोऽस्मि' इति भगवद्वचनम्। एतत्सर्वमभिप्रेत्य 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इत्युक्तम्॥

द्वितीयं प्रश्नं समाधत्ते—

**परमं यो महत्तेजः परमं यो महत्तपः।**
**परमं यो महद्ब्रह्म परमं यः परायणम्॥ ९॥**

परमं प्रकृष्टं महत् बृहत् तेजः चैतन्यलक्षणं सर्वावभासकम्, 'येन सूर्यस्तपति तेजसेद्धः' 'तं देवा ज्योतिषां ज्योतिः' 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इत्यादिश्रुतेः; 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च। परमं तपः तपति आज्ञापयतीति तपः। 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्यन्तर्यामिब्राह्मणे सर्वनियन्तृत्वं श्रूयते। 'भीषास्माद्वातः पवते' इत्यादि तैत्तिरीयके। तपति ईष्टे इति वा तपः। तस्यैश्वर्यमनवच्छिन्नमिति महत्त्वम्, 'एष सर्वेश्वरः' इत्यादिश्रुतेः। परमं सत्यादिलक्षणं परं ब्रह्म महनीयतया महत्। परमं प्रकृष्टं पुनरावृत्तिशङ्कावर्जितम्। परायणं परम् अयनं परायणम्। परमग्रहणात् सर्वत्र

अपरं तेजः आदित्यादिकं व्यावर्त्यते । सर्वत्र यो देवः इति विशेष्यते— यो देवः परमं तेजः परमं तपः परमं ब्रह्म परमं परायणम्, स एकः सर्वभूतानां परायणमिति वाक्यार्थः ॥

प्रथमप्रश्नस्योत्तरमाह—

**पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।**
**दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥**

पवित्राणां पावनानां तीर्थादीनां पवित्रम् । परमस्तु पुमान् ध्यातो दृष्टः कीर्तितः स्तुतः संपूजितः स्मृतः प्रणतः पाप्मनः सर्वानुन्मूलयतीति परमं पवित्रम् । संसारबन्धहेतु-भूतं पुण्यापुण्यात्मकं कर्म तत्कारणं च अज्ञानं सर्वं नाशयति स्वयाथात्म्यज्ञानेनेति वा पवित्राणां पवित्रम् ॥

रूपमारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायतो नित्यमपवर्गप्रदो हरिः ॥

चिन्त्यमानः समस्तानां क्लेशानां हानिदो हि यः ।
समुत्सृज्याखिलं चिन्त्यं सोऽच्युतः किं न चिन्त्यते ॥

ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।
प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः ॥

संसारसर्पसंदष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥

अतिपातकयुक्तोऽपि ध्यायन्निमिषमच्युतम् ।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।

यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।

मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥

शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
शान्तिः कलौ ह्यघौघस्य नामसंकीर्तनं हरेः ॥

हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः ।
विष्णोः संपूजनान्नित्यं सर्वपापं प्रणश्यति ॥

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥

नित्यं संचिन्तयेद्देवं योगयुक्तो जनार्दनम् ।
सास्य मन्ये परा रक्षा को हिनस्त्यच्युताश्रयम् ॥

गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु ।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥

मुहूर्तमपि यो ध्यायेन्नारायणमनामयम् ।
सोऽपि सिद्धिमवप्नोति किं पुनस्तत्परायणः ।

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥

कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥

सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ।
पापराशिं दहत्याशु तूलराशिमिवानलः ॥

यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥

एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥

जनार्दनं भूतपतिं जगद्गुरुं
स्मरन्मनुष्यः सततं महामुने ।
दुःखानि सर्वाण्यपहन्ति साधय-
त्यशेषकार्याणि च यान्यभीप्सते ॥

एवमेकाग्रचित्तः सन्संस्मरन्मधुसूदनम् ।
जन्ममृत्युजराग्राहं संसाराब्धिं तरिष्यति ॥

कलावत्रापि दोषाढ्ये विषयासक्तमानसः ।
कृत्वापि सकलं पापं गोविन्दं संस्मरञ्शुचिः ॥

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥

लोकत्रयाधिपतिमप्रतिमप्रभाव-
मीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् ।
जन्मान्तरप्रलयकल्पसहस्रजात-
माशु प्रणाशमुपयाति नरस्य पापम् ॥

एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥

शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये ।
संसारमूलबन्धानामुद्वेजनकरो हि सः ॥

इत्यादिश्रुतिस्मृतीतिहासपुराणवचनेभ्यः ।

मङ्गलानां च मङ्गलं मङ्गलं सुखं तत्साधनं तज्ज्ञापकं च, तेषामपि परमानन्दलक्षणं परं मङ्गलमिति मङ्गलानां च मङ्गलम् । दैवतं देवतानां च देवानां देवः, द्योतनादिभिः समुत्कर्षेण वर्तमानत्वात् । भूतानां यः अव्ययः व्यय-रहितः पिता जनकः यो देवः, सः एकं दैवतं लोके इति वाक्यार्थः ॥

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥

यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।

तꣳ ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति श्वेताश्वतराणां मन्त्रोपनिषदि ।

'सेयं देवतैक्षत' 'एकमेवाद्वितीयम्' इति च्छान्दोग्ये ॥

ननु कथम् एको देवः, जीवपरयोर्भेदात्? न; 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' इत्यादिश्रुतिभ्योऽविकृतस्य परस्य बुद्धितद्वृत्तिसाक्षित्वेन प्रवेशश्रवणादभेदः ॥

प्रविष्टानामितरेतरभेदात् परात्मैकत्वं कथमिति चेत्, न; 'एको देवो बहुधा संनिविष्टः' 'एकः सन्बहुधा विचारः' 'त्वमेकोऽसि बहूननुप्रविष्टः' इत्येकस्यैव बहुधा प्रवेशश्रवणात् प्रविष्टानां परस्य च न भेदः । 'हिरण्यगर्भः' इत्यष्टौ मन्त्राः 'कस्मै देवाय' इत्यत्र एकारलोपेन एकदेवत्वप्रतिपादकाः तैत्तिरीयके ।

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥

वायुर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभून्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥

सूर्यो यथा सर्वलोकस्य चक्षु-
र्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥

एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥

इति कठवल्लीषु ।

'ब्रह्म वा इदमग्र आसीत्तदेकं सन्न व्यभवत्' 'नान्यो-ऽतोऽस्ति द्रष्टा' इत्यादि बृहदारण्यके । 'अनेजदेकं मनसो जवीयः....तत्र को मोहः कः शोक एकत्वमनुपश्यतः'

इतीशावास्ये । 'सर्वेषां भूतानामान्तरः पुरुषः सम आत्मेति विद्यात्' 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन' 'एकं सद्विप्रा बहुधा वदन्ति' 'एकं सन्तं बहुधा कल्पयन्ति' 'एको विममे त्रिभिरित्पदेभिः' 'एको दाधार भुवनानि विश्वा' 'एक एवाग्निर्बहुधा समिद्धः' इति ऋग्वेदे । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति च्छान्दोग्ये ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इति भगवद्गीतासु ।

हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ॥

आश्चर्यं खलु देवानामेकस्त्वं पुरुषोत्तम ।
धन्यश्चासि महाबाहो लोके नान्योऽस्ति कश्चन ॥

इति हरिवंशे ।

मनुना चोक्तम्—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥ इति ॥

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥

तस्मान्न विज्ञानमृतेऽस्ति किंचि-
त्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदा-
द्विभिन्नचित्तैर्बहुधाभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादिनिरस्तसङ्गम् ।
एकः सदैकः परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥

यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्सोऽहमित्येतद्विफलं वचः ॥

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन्पृथक्पृथक् ॥

एकः समस्तं यदिहास्ति किंचि-
त्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्य-
स्तत्याज भेदं परमार्थदृष्टिः ॥

सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥

यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥

विभूतयस्तु यास्तस्य तासामेव परस्परम् ।
आधिक्यन्यूनता बाध्यबाधकत्वेन वर्तते ॥

भवानहं च विश्वात्मन्नेक एव हि कारणम् ।
जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥

त्वया यदभयं दत्तं तद्दत्तमभयं मया ।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शंकर ॥

सोऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदृष्टयः ॥

इति श्रीविष्णुपुराणे ॥

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव वा ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च ततस्तस्मात् ब्रह्महत्यासमं त्वघम् ॥

इति भविष्यत्पुराणे श्रीमहेश्वरवचनम् ।

आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः समभवद्विश्वं त्वयि सर्वं प्रलीयते ॥

अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वदुपासा जगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि भो देव स मां द्वेष्टि न संशयः ॥

त्वद्विस्तारो यतो देव ह्यहं भूतपतिस्ततः ।
न तदस्ति विना देव यत्ते विरहितं क्वचित् ॥

यदासीद्वर्तते यच्च यच्च भावि जगत्पते ।
सर्वं त्वमेव देवेश विना किंचित्त्वया न हि ॥

इति हरिवंशे कैलासयात्रायां महेश्वरवचनम् ।

अपि च— 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'

आत्मेत्येवं शास्त्रोक्तलक्षणः परमात्मा प्रतिपत्तव्यः । तथा हि परमात्मप्रक्रियायां जाबाला आत्मत्वेनैवैनमभ्युपगच्छन्ति—'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति । तथान्येऽपि— 'यदेवेह तदमुत्र यदमुत्र तदन्विह' । 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' 'तदात्मानमेवावेदहं ब्रह्मास्मीति' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म' 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' इत्येवमादयः आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति च बोधयन्ति चात्मत्वेनेश्वरं वेदान्तवाक्यानि— 'एष त आत्मान्तर्याम्यमृतः' 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' 'तत्सत्यं स आत्मा तत्त्वमसि' इत्येवमादीनि ॥

ननु प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यति— तदयुक्तम्, गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च । यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति । यथा— 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इति । इह पुनः 'त्वमहमस्मि अहं वै त्वमसि' इत्याह । अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः । भेददृष्ट्यपवादाच्च । तथा हि— 'अथ योऽन्यां

देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति' 'द्वितीयाद्वै भयं भवति' 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषो मन्वानस्य' 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्येवमाद्या भूयसी श्रुतिर्भेददृष्टिमपवदति । तथा 'आत्मैवेदं सर्वम्' 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदं सर्वम्' इति श्रुतिः । तथा स्मृतिरपि 'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः । 'सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्' इति अद्वैतात्मज्ञानं सम्यग्दर्शनमित्युक्तं भगवतापि । तस्मादात्मन्येवेश्वरे मनो दधीत ॥

'आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः' इति च ।

'अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥' इति च ।

अविद्योपाधिपक्षेऽपि प्रमाणवादः समस्ति—

एक एव महानात्मा सोऽहंकारोऽभिधीयते ।
स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥

तथा श्रीविष्णुपुराणे—

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

परात्मनो मनुष्येन्द्र विभागोऽज्ञानकल्पितः ।
क्षये तस्यात्मपरयोर्विभागोऽभाग एव हि ॥ इति ।

विष्णुधर्मे—

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित्क्वचित् ॥

तथा द्वन्द्वैरनेकैस्तु जीवे च मलिने कृते ।
एकस्मिन्नापरे जीवा मलिनाः सन्ति कुत्रचित् ॥ इति ।

ब्रह्मयाज्ञवल्क्ये—

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैकोऽप्यनेकेषु जलाधारेष्विवांशुमान् ॥

'क्षरात्मानावीशते देव एकः' इति श्वेताश्वतरे । छान्दोग्ये—'स एकधा भवति' इत्यादि । 'स तत्र पर्येति' 'स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते'

'परो विकृत एवात्मा स्वात्मायं जीवः' इति श्रुतेः । 'स एष इह प्रविष्टः' इति बृहदारण्यकश्रुतिः । 'आत्मेत्येवोपासीत' इति । 'तदेतद्ब्रह्मापूर्वम्' इत्यादि । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता' इत्यादि । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' इत्यादि । 'अथ योऽन्यां देवतामुपास्ते,' 'ऐतदात्म्यमिदं सर्वम्' इति । 'क्षेत्रज्ञं चापि मां विद्धि' इति ।

निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वत्प्रभवन्ति जगन्ति हि ॥

योगयाज्ञवल्क्ये ।

अजः शरीरग्रहणात्स जात इति कीर्त्यते । इति ब्राह्मे ।
सर्पवद्रज्जुखण्डस्तु निशायां वेश्ममध्यगः ।
एको हि चन्द्रो द्वौ व्योम्नि तिमिराहतचक्षुषः ॥
आभाति परमात्मा च सर्वोपाधिषु संस्थितः ।
नित्योदितः स्वयंज्योतिः सर्वगः पुरुषः परः ॥
अहंकाराविवेकेन कर्ताहमिति मन्यते । इति ।

'एवमेवायं पुरुषः प्राज्ञेनात्मना' इति । 'सता सोम्य तदा संपन्नो भवति' इति ।

स्वमायया स्वमात्मानं मोहयन्द्वैतमायया ।
गुणाहतं स्वमात्मानं लभते च स्वयं हरिः ॥ इति ।

'उत्क्रामन्तं स्थितं वापि' इति। 'अज्ञानेनावृतं ज्ञानम्' इति। 'अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम्' 'आसीदिदं तमोभूतम्' इति।

'वाचारम्भणम्' इत्यादि। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् तत्केन कं जिघ्रेत्' 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥'

'यत्र नान्यत्पश्यति नान्यत्' इत्यादि। 'भेदोऽयमज्ञाननिबन्धनः' इति। 'नेह नानास्ति किंचन'। 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति।. 'विश्वतश्चक्षुः' इत्यादि। 'यो योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः' इति च। 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादि। 'अजो ह्येको जुषमाणोऽनुशेते' 'देवात्मशक्तिं विदधे' इति। 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादि। 'एक एव रुद्रो न द्वितीयाय तस्थे'।

मनोविजृम्भितं चैतद्यत्किंचित्सचराचरम्।
मनसो ह्यात्मनीभावे द्वैताभावात्तदाप्नुयात्॥

यद्यद्द्वैतं प्रपञ्चस्य तन्निवर्त्यं हि चेतसा ।
मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः ॥
यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥

इत्यादि गौडपादे ।

तर्केणापि प्रपञ्चस्य मनोमात्रत्वमिष्यताम् ।
दृश्यत्वात्सर्वभूतानां स्वप्नादिविषयो यथा ॥

'द्वितीयाद्वै भयं भवति' इति च । 'ज्ञाते त्वात्मनि नास्त्येतत् कार्यकारणतात्मनः' इति च । 'एको देवः सर्वभूतेषु गूढः' इतिं । 'असङ्गो ह्ययं पुरुषः' इति च ।

विस्तारः सर्वभूतस्य विष्णोः संर्वमिदं जगत् ।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥

सर्वत्र दैत्याः समतामुपेत्य समत्वमाराधनमच्युतस्य ॥

सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'इदं सर्वं यदयमात्मा' 'अयमात्मा ब्रह्म' 'तरति शोकमात्मवित्' इति । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिश्रुतिस्मृतीतिहासपुराणलौकिकेभ्यश्च ।

सिद्धेऽर्थेऽपि वेदस्य प्रामाण्यमेष्टव्यम्—'स्वपक्षसाधनै-रकार्यमर्थजातमाह चेत् । तथा परोऽपि वेद चेच्छ्रुतिः परा-त्मदृङ् न किम् ।' इत्यभियुक्तैरुक्तम् । अन्यान्वितस्वार्थे पदा-नां सामर्थ्यं न कार्यान्वितस्वार्थे, तथा सत्यर्थवादानामनन्व-यप्रसङ्गात् अन्वयबुद्धेः स्तुतित्वात् । न हि भवति 'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता' इति । राग-स्यैव प्रवर्तकत्वम्, न नियोगस्य । तथा च श्रुतिः—'अथो खल्वाहुः काममय एवायं पुरुषः इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म तदभिसंप-द्यते' । तथा च स्मृतिरपि—'अकामतः क्रिया काचिद्दृश्य-ते नेह कस्यचित् । यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टित-म् ।' इति । 'काम एष क्रोध एषः' इति । अन्यपराणामपि मन्त्रार्थवादानां प्रामाण्यमङ्गीकर्तव्यम् । तेषामप्रामाण्यकथनेन उरगत्वं गतवान्नहुषः । तत्कथम्?—

ऋषयस्तु परिश्रान्ता वाह्यमाना दुरात्मना ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥

पप्रच्छुः संशयं ते तु नहुषं पापचेतसम् ।
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ॥

एते प्रमाणं भवत उताहो नेति वासव ।
नहुषो नेति तानाह सहसा मूढचेतनः ॥

ऋषय ऊचुः—

अधर्मे संप्रवृत्तस्त्वं धर्मं च विजिघृक्षसि ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥

अगस्त्य उवाच—

ततो विवदमानः सन् ऋषिभिः सह पार्थिवः ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥

तेनाभूद्धतचेताः सन्निःश्रीकश्च शचीपते ।
ततस्तमहमुद्विग्नमवोचं भयपीडितम् ॥

यस्मात्पूर्वैः कृतं मार्गं महर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा ॥

यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् ।
वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥

त्वं स्वपापपरिभ्रष्टः क्षीणपुण्यो महीपते ।
दश वर्षसहस्राणि सर्परूपधरो महीम् ॥

विचरिष्यसि तीर्णश्च पुनः स्वर्गमवाप्स्यसि ।
दृष्ट्वा युधिष्ठिरं नाम तव वंशसमुद्भवम् ॥

इति श्रीमहाभारते ।

अतः श्रद्धेयमात्मज्ञानम्—'अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ' इति श्रीभ-

गवद्वचनात् । ऐतरेयके च 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन्पूर्वे येऽत्यायंस्ते पराबभूवुः' । तदुक्तमृषिणा— 'प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश' इति ।

'प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजाः तिस्रोऽत्यायमीयुस्तानीमानि वयांसि वङ्गा वगधाश्चेरपादाः' इति श्रुतम् । वङ्गा वनगाः वृक्षाः । वगधाः ओषधयश्च । इरपादा उरःपादाः सर्पादयः । तथा च ईशावास्ये अविद्वन्निन्दार्थो मन्त्रः— 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तां्स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' इति तैत्तिरीये । तथा शकुन्तलोपाख्याने— 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥' इत्यलमतिप्रसङ्गेन ॥

सहस्रनामजपस्य अनुरूपं मानसस्नानमुच्यते—

यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।
व्रजेत्तन्मानसं तीर्थं तत्र स्नात्वामृतो भवेत् ॥

ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ।
सरस्वती रजोरूपा तमोरूपा कलिन्दजा ।
सत्त्वरूपा च गङ्गा च न यान्ति ब्रह्म निर्गुणम् ॥

आत्मा नदी संयमतोयपूर्णा
　सत्यह्रदा शीलतटा दयोर्मिः ।
तत्रावगाहं कुरु पाण्डुपुत्र
　न वारिणा शुध्यति चान्तरात्मा ॥ इति महाभारते ।

'मानसं स्नानं विष्णुचिन्तनम्' इति विष्णुस्मृतौ ।
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

इति मानवं वचनम् ।

जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ॥ इति ।

'यज्ञानां जपयज्ञोऽस्मि ।' इति श्रीगीतासु ।
'अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः' इत्यादि ।
यदेकं दैवतं प्रस्तुतं तस्योपलक्षणम् उच्यते—

**यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।**
**यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

यतः यस्मात् सर्वाणि भूतानि भवन्ति उद्भवन्ति आदि-युगागमे । यस्मिंश्च प्रलयं विनाशं यान्ति पुनः भूयः एव इत्यवधारणार्थः; नान्यस्मिन्नित्यर्थः । युगक्षये महाप्रलये । चकारात् मध्येऽपि यस्मिन् तिष्ठन्ति, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः ॥

**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।**
**विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥१२॥**

तस्य एवंलक्षणलक्षितस्य एकस्य दैवतस्य लोकप्रधानस्य लोकनहेतुभिः विद्यास्थानैः प्रतिपाद्यमानस्य जगन्नाथस्य जगतां नाथः स्वामी मायाशबलः परमात्मा निर्लेपश्च तस्य भूपते महीपाल, विष्णोः व्यापनशीलस्य नामसहस्रं नाम्नां सहस्रं पापं भयं चापहन्तीति पापभयापहं त्वं मे मम मत्तः शृणु एकाग्रमना भूत्वा अवधारय ॥

एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम ।
नाम्नां सहस्रं लोकानामुपकारकरं शृणु ॥
निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् ।
विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम ॥
यच्छक्ति नाम यत्तस्य तत्तस्मिन्नेव वस्तुनि ।
साधकं पुरुषव्याघ्र सौम्यक्रूरेषु वस्तुषु ॥ इति विष्णुधर्मे ।

यद्यपि परस्य ब्रह्मणः षष्ठीगुणक्रियाजातिरूढीनां शब्दप्रवृत्तिहेतुभूतानां निमित्तशक्तीनां चासंभवः, तथापि सगुणे ब्रह्मणि सविकारे च सर्वात्मकत्वात् तेषां शब्दप्रवृत्तिहेतूनां संभवात् सर्वे शब्दाः परस्मिन् पुंसि प्रवर्तन्ते ॥

तत्र—

**यानि नामानि गौणानि**
**विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि**
**तानि वक्ष्यामि भूतये ॥ १३ ॥**

यानि नामानि गौणानि गुणसंबन्धीनि गुणयोगात् प्रवृत्तानि तेषु च यानि विख्यातानि प्रसिद्धानि ऋषिभिः मन्त्रैः तद्दर्शिभिश्च परिगीतानि परितः समन्ततः परमेश्वराख्यानेषु तत्र तत्र गीतानि । महांश्चासावात्मा चेति महात्मा—'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते' इति वचनात् । अयमेव महानात्मेति महात्मा । तस्याचिन्त्यप्रभावस्य तानि वक्ष्यामि भूतये पुरुषार्थचतुष्टयसिद्धये पुरुषार्थचतुष्टयार्थिनामिति ॥

अत्र नामसहस्रे आदित्यादिशब्दानाम् अर्थान्तरे प्रसि-

द्धानां आदित्याद्यर्थानां तद्विभूतित्वेन तदभेदात् तस्यैव स्तुतिरिति प्रसिद्धार्थग्रहणेऽपि तत्स्तुतित्वम् ।

भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥
ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥

इति विष्णुपुराणे ।

'आदित्यानामहं विष्णुः' इत्यारभ्य 'एकांशेन स्थितो जगत्' इतिपर्यन्तं गीतासु । 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इत्यादिश्रुतिश्च । विष्णवादिशब्दानां पुनरुक्तानामपि वृत्तिभेदेनार्थभेदात् न पौनरुक्त्यम् । 'श्रीपतिर्माधवः' इत्यादीनां वृत्त्येकत्वेऽपि शब्दभेदान्न पौनरुक्त्यम् । अर्थैकत्वेऽपि न पौनरुक्त्यं दोषाय, 'नाम्नां सहस्रस्य किमेकं दैवतम्' इति प्रश्नेः एकदेवताविषयत्वात् ॥

यत्र पुंलिङ्गशब्दप्रयोगः, तत्र विष्णुर्विशेष्यः; यत्र स्त्रीलिङ्गशब्दः तत्र देवता विशेष्यते; यत्र नपुंसकलिङ्गशब्दः तत्र ब्रह्मेति विशेष्यते ॥

'यतः सर्वाणि भूतानि' इत्यारभ्य जगदुत्पत्तिस्थितिलयकारणस्य ब्रह्मण एकदेवतात्वेनाभिहितत्वादादावुभयविधं

ब्रह्म विश्वशब्देनोच्यते—

**विश्वं विष्णुर्वषट्कारो**
**भूतभव्यभवत्प्रभुः ।**
**भूतकृद्भूतभृद्भावो**
**भूतात्मा भूतभावनः ॥ १४ ॥**

विश्वस्य जगतः कारणत्वेन विश्वम् इत्युच्यते ब्रह्म । आदौ तु विश्वमिति कार्यभूतविश्वशब्देन कारणग्रहणं कार्यभूतविरिञ्च्यादिनामभिरपि उपपन्ना स्तुतिर्विष्णोः इति दर्शयितुम् । यद्वा, परस्मात् पुरुषात् न भिन्नमिदं विश्वं परमार्थतः तेन विश्वमित्यभिधीयते ब्रह्म, 'ब्रह्मैवेदं विश्वम्' 'पुरुष एवेदं विश्वम्' 'विश्वमेवेदम्' इत्यादिश्रुतिभ्यः । तद्भिन्नं न किंचित् परमार्थतः सदस्ति । अथवा, विशतीति विश्वं ब्रह्म, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । किंच, संहृतौ विशन्ति विश्वानि भूतानि अस्मिन्निति विश्वं ब्रह्म, 'यत् प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । तथा हि— सकलं जगत्कार्यभूतमेष विशति, अत्र अखिलं विश्वं विशतीत्युभयथापि विश्वं ब्रह्म इति, श्रुतेः । 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यारभ्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च

यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि । ओमित्येतत् । एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' इति काठके । 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति प्रश्नोपनिषदि । 'ओमिति ब्रह्म । ओमितीदं सर्वम्' इति यजुर्वेदारण्यके । 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णा । ओंकार एवेदं सर्वम् ।' इति च्छान्दोग्ये । 'ओमित्येतदक्षरम्' इत्युपक्रम्य

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्वोऽनन्तरो बाह्यो न परः प्रणवोऽव्ययः ॥

सर्वस्य प्रणवो ह्यादिः मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥

प्रणवं हीश्वरं विन्द्यात्सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोंकारं ज्ञात्वा धीरो न शोचति ॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ इति ।

'ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तत्स-

त्यम्' इत्यादिभ्यः श्रुतिभ्यः ।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥

.....................गिरामस्म्येकमक्षरम् ॥

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ।
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ॥

ओंकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत । विकथां चान्यां कृत्वा एवं लौकिकया वाचा व्यावर्तते ब्रह्म'। 'प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः । वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत्' इत्यादिस्मृतिभ्यश्च विश्वशब्देन ओंकारोऽभिधीयते । वाच्यवाचकयोरत्यन्तभेदाभावात् विश्वमित्योंकार एव ब्रह्मेत्यर्थः । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्म तज्जत्वात् तल्लत्वात् तद-

नत्वाच्च । न च सर्वस्यैकात्मत्वे रागादयः संभवन्ति । 'तस्माच्छान्त उपासीत' इति श्रुतेः,

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

निर्गुणः परमात्मात्र देहे व्याप्य व्यवस्थितः ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥

यद्यागमैर्न विन्देयं तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चेमं हनुमानिव सागरम् ॥

बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यहोऽतिमोहेन व्याप्तानीति मनीषिणाम् ।
एते भिन्नदृशां दैत्या विकल्पाः कथिता मया ॥

कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ।
विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत् ॥

द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ।
समुत्सृज्यासुरं भावं तस्माद्यूयं तथा वयम् ॥

तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ।
सर्वत्र दैत्याः समतामुपेताः समत्वमाराधनमच्युतस्य ॥

न मन्त्रादिकृतस्तात न च नैसर्गिको मम ।
प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥

अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा ।
तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥

कर्मणा मनसा वाचा परपीडां करोति यः ।
तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम् ॥

सोऽहं न पापमिच्छामि न करोमि वदामि वा ।
चिन्तयन्सर्वभूतस्थमात्मन्यपि च केशवम् ॥

शारीरं मानसं वाग्जं दैवं भूतभवं तथा ।
सर्वत्र समचित्तस्य तस्य मे जायते कुतः ॥

एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥

साम चोपप्रदानं च भेददण्डौ तथापरौ ।
उपायाः कथिता ह्येते मित्रादीनां च साधने ॥

तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुधः ।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥

सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

जडानामविवेकानामशूराणामपि प्रभो ।
भाग्यभोग्यानि राज्यानि सन्त्यनीतिमतामपि ॥

तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ।
यतितव्यं समत्वेन निर्वाणमपि चेच्छता ॥

देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥

एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक ॥

एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतो यस्मिन्प्रसन्ने क्लेशसंक्षयः ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

इत्यादिवचनैश्च हिंसादिरहितेन स्तुतिनमस्कारादि कर्तव्यमिति दर्शयितुं विश्वशब्देन ब्रह्माभिधीयत इति वा ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ इति ।

न चलति निजवर्णधर्मतो यः
समम‍तिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किंचिदुच्चैः
सितमनसं तमवेहि विष्णुभक्तम् ॥

विमलमतिरमत्सरः प्रशान्तः
शुभचरितोऽखिलसत्त्वमित्रभूतः ।

प्रियहितवचनोऽस्तमानमायो
वसति सदा हृदि तस्य वासुदेवः ॥

वसति हृदि सनातने च तस्मि-
न्भवति पुमाञ्जगतोऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव सालपोतः ॥

सकलमिदमहं च वासुदेवः
परमपुमान्परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान्विहाय दूरात् ॥

यमनियमविधूतकल्मषाणा-
मनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां
व्रज भट दूरतरेण मानवानाम् ॥

इत्यादिवचनैर्वैष्णवलक्षणस्य एवंप्रकारत्वाच्च हिंसादिरहि-
विष्णोः स्तुतिनमस्कारादि कर्तव्यमिति । 'श्रद्धया दे-
अश्रद्धयादेयम्' 'श्रद्धयाग्निः समिध्यते' इति श्रुतेः,

मश्रोत्रियं श्राद्धमधीतमव्रत-
मदक्षिणं यज्ञमनृत्विजा हुतम् ।

अश्रद्धया दत्तमसंस्कृतं हवि-
भागाः षडेते तव दैत्यसत्तम ॥

पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा ।
क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणाम् ॥

अश्रद्धया च यद्दानं यजतां ददतां तथा ।
तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥

इत्यादिस्मृतिभ्यश्च श्रद्धया स्तुतिनमस्कारादि कर्तव्यम्, नाश्रद्धया । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात् स्तुतिनमस्कारादिकं कर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति । आत्मानं विष्णुं ध्यात्वा स्तुतिनमस्कारादि कर्तव्यम् ।

नाविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् ।
नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात् ॥

इति महाभारते कर्मकाण्डे ।

सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ।
एवमेतानि नामानि देवदेवस्य कीर्तयेत् ॥

यं यं काममभिध्यायेत्तं तमाप्नोत्यसंशयम् ।
सर्वान्कामानवाप्नोति समाराध्य जगद्गुरुम् ॥

तन्मयत्वेन गोविन्दमित्येतद्दाल्भ्य नान्यथा ।
तन्मयो वाञ्छितान्कामान्पदमाप्नोति मानवः ॥

इति विष्णुधर्मे ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥

इति भगवद्गीतासु ।

अहं हरिः सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो
भवोद्भवा द्वन्द्वगदा भवन्ति ॥ इति विष्णुपुराणे ।

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

'तस्माद्ब्रह्मैवाचार्यरूपेणावतिष्ठते' इति व्यासस्मृतेः ।
वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥

इति कात्यायनवचनात् यत्र देशे वासुदेवनिन्दा तत्र वासो न कर्तव्यः । एतदुक्तं भवति—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्वेताश्वतरोपनिषन्मन्त्रवर्णात् हरौ गुरौ च परा भक्तिः कार्येति ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥

कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥

सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ।
पापराशिं दहत्याशु तूलराशिमिवानलः ॥

सेयं वदनवल्मीकवासिनी रसनोरगी ।
या न गोविन्द गोविन्द गोविन्देति प्रभाषते ॥

पापवल्ली मुखे तस्य जिह्वारूपेण तिष्ठति ।
या न वक्ति दिवारात्रौ गुणान्गोविन्दसंभवान् ॥

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥

एकोऽपि कृष्णे सुकृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।

दशाश्वमेधी पुनरेति जन्म
　कृष्णप्रणामी न पुनर्भवाय ॥

इत्यादिवचनैः श्रद्धाभक्त्योरभावेऽपि नामसंकीर्तनं समस्तं दुरितं नाशयतीत्युक्तम् । किमुत श्रद्धादिपूर्वकं सहस्रनाम-संकीर्तनं नाशयतीति ।

'मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति', 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति श्रुतिभ्यां स्मरणं ध्यानं च नामसंकीर्तनेऽन्तर्भूतम् ।

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
　विघ्नो यत्र निवेशिते च मनसि ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
　किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥
इति विष्णुपुराणे श्रीपराशरेणोपसंहृतम् ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥
इति महाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् ।

हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।
ओमित्येवं सदा विप्राः पठत ध्यात केशवम् ॥

इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं

श्रीमहेश्वरेणापि। एतत्सर्वमभिप्रेत्य 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इत्याधिक्यमुक्तम्। 'किमेकं दैवतम्' इत्यारभ्य 'किं जपन्मुच्यते जन्तुः' इति षट्प्रश्नेषु 'यतः सर्वाणि' इति प्रश्नोत्तराभ्यां यद्ब्रह्मोक्तं तद्विश्वशब्देनोच्यत इति व्याख्यातं **विश्वम्**। तत्किमित्याकाङ्क्षायामाह— विष्णुः इति। तथा च ऋग्वेदे— 'आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे' इत्यादिवाक्यैर्विष्णोः नामसंकीर्तनेन सम्यग्ज्ञानप्राप्तिर्विहिता। वेवेष्टि व्याप्नोतीति **विष्णुः**। विषेर्व्याप्त्यभिधायिनो नुक्प्रत्ययान्तस्य रूपम्। देशकालवस्तुपरिच्छेदशून्य इत्यर्थः। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतेः। विशतेर्वा नुक्प्रत्ययस्य रूपं विष्णुरिति।

यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।
तस्माद्विष्णुरिति ख्यातो विशेर्धातोः प्रवेशनात्॥

इति विष्णुपुराणे।

व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका स्थिता।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः॥

इति महाभारते।

यदुद्देशेनाध्वरे वषट्क्रियते सः **वषट्कारः**। यस्मिन्

यज्ञे वा वषट्क्रिया, 'यज्ञो वै विष्णुः' इति श्रुतेः । येन वषट्कारादिमन्त्रात्मना वा देवान् प्रीणयति स वषट्कारः । देवता वा, 'प्रजापतिश्च वषट्कारश्च' इति श्रुतेः । 'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु' इत्यादिस्मृतेश्च । **भूतभव्यभवत्प्रभुः** भूतं भव्यं भवच्चेति भूतभव्यभवन्ति तेषां प्रभुः । कालभेदमनादृत्य सन्मात्रप्रतियोगिकमैश्वर्यं तस्येति प्रभुत्वम् । रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति **भूतकृत्** ; तमोगुणमास्थाय स रुद्रात्मना भूतानि कृन्तति कृणोति हिनस्तीति **भूतकृत्** । सत्त्वगुणमधिष्ठाय भूतानि बिभर्ति पालयति धारयति पोषयतीति वा **भूतभृत्** । प्रपञ्चरूपेण भवतीति, केवलं भवतीत्येव वा **भावः** । भवनं भावः सत्तात्मको वा । **भूतात्मा** भूतानामात्मा अन्तर्यामी, 'एष त आत्मा अन्तर्याम्यमृतः' इति श्रुतेः । भूतानि भावयति जनयति वर्धयतीति वा **भूतभावनः** ॥

भूतकृदित्यादिभिः गुणतन्त्रत्वं प्राप्तं प्रतिषिध्यते—

**पूतात्मा परमात्मा च**
**मुक्तानां परमा गतिः ।**

**अव्ययः पुरुषः साक्षी**
**क्षेत्रज्ञोऽक्षर एव च ॥ १५ ॥**

पूत आत्मा यस्य सः **पूतात्मा**, 'केवलो निर्गुणश्च' इति श्रुतेः। गुणोपरागः स्वेच्छातः पुरुषस्येति कल्प्यते। परमश्चासावात्मा चेति **परमात्मा** कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः। मुक्तानां परमा प्रकृष्टा गतिर्गन्तव्या देवता पुनरावृत्त्यसंभवात्तद्गतस्येति **मुक्तानां परमा गतिः**; 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति भगवद्वचनम्। नास्य व्ययो विनाशो विकारो वा विद्यत इति **अव्ययः**, 'अजरोऽमरोऽव्ययः' इति श्रुतेः। पुरं शरीरं तस्मिन् शेते इति **पुरुषः**। 'नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्। व्याप्य शेते महात्मा यस्तस्मात्पुरुष उच्यते' इति महाभारते। यद्वा, अस्तेर्व्यत्यस्ताक्षरयोगात् आसीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः **पुरुषः**, 'पूर्वमेवाहमिहासमिति, तत्पुरुषस्य पुरुषत्वम्' इति श्रुतेः। अथवा पुरुषु उत्कर्षशालिषु सीदतीति, पुरूणि फलानि सनोति ददातीति वा, पूरूणि भुवनानि संहारसमये स्यति अन्तं करोतीति वा पूरणात्सदनाद्वा **पुरुषः**। 'पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः' इति पञ्चमवेदे। साक्षादव्यवधानेन

स्वरूपबोधेन ईक्षते पश्यति सर्वमिति **साक्षी** । 'साक्षाद्द्रष्टरि संज्ञायाम्' इति पाणिनिवचनादिनिप्रत्ययः । क्षेत्रं शरीरं जानातीति **क्षेत्रज्ञः**; 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । 'क्षेत्रज्ञं चापि मां विद्धि' इति भगवद्वचनात् । 'क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम् । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इति ब्रह्मपुराणे । स एव न क्षरतीति **अक्षरः** परमात्मा । अश्नोतेर्वा सरप्रत्ययान्तस्य रूपमक्षर इति । एवकारात् क्षेत्रज्ञाक्षरयोरभेदः परमार्थतः, 'तत्त्वमसि' इति श्रुतेः । चकाराद्व्यावहारिको भेदश्च, प्रसिद्धेरप्रमाणत्वात् ॥

**योगो योगविदां नेता**
**प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुः श्रीमा-**
**न्केशवः पुरुषोत्तमः** ॥ १६ ॥

'ज्ञानेन्द्रियाणि सर्वाणि निगृह्य मनसा सह । एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः' तदवाप्यतया **योगः** इति योगविदो विदुः । योगं विदन्ति विचारयन्ति, जानन्ति, लभन्त इति वा योगविदः । तेषां नेता ज्ञानिनां योगक्षेमवहनादि-

नेति **योगविदां नेता**, 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' इति भगवद्वचनात्। प्रधानं प्रकृतिर्माया; पुरुषो जीवः; तयोरीश्वरः **प्रधानपुरुषेश्वरः**। नरस्य सिंहस्य चावयवा यस्मिन् लक्ष्यन्ते तद्वपुर्यस्य सः **नारसिंहवपुः**। यस्य वक्षसि नित्य वसति श्रीः सः **श्रीमान्**। अभिरूपाः केशाः यस्य सः **केशवः**। 'केशाद्वोऽन्यतरस्याम्' इति वप्रत्ययः प्रशंसायाम्। यद्वा, कश्च अश्च ईशश्च त्रिमूर्तयः केशाः ते यद्वशे वर्तन्ते सः **केशवः**। केशिवधाद्वा **केशवः**। 'यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन। तस्मात्केशवनाम्ना त्वं लोके ख्यातिं गमिष्यसि' इति विष्णुपुराणे श्रीकृष्णं प्रति नारदवचनम्। पृषोदरादित्वाच्छब्दसाधुत्वकल्पना। पुरुषाणामुत्तमः **पुरुषोत्तमः**। अत्र 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधो न भवति, जात्याद्यनपेक्षया समर्थत्वात्। यत्र पुनः जातिगुणक्रियापेक्षया पृथक्क्रिया तत्रासमर्थत्वान्निषेधः प्रवर्तते; यथा—मनुष्याणां क्षत्रियः शूरतमः, गवां कृष्णा संपन्नक्षीरतमा, अध्वगानां धावन् शीघ्रतम इति। अथवा पञ्चमीसमासः। तथा च भगवद्वचनम्— 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति॥

**सर्वः शर्वः शिवः स्थाणु-**
**र्भूतादिर्निधिरव्ययः ।**
**संभवो भावनो भर्ता**
**प्रभवः प्रभुरीश्वरः ॥ १७ ॥**

'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् । सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते' इति भगवद्व्यासवचनात् **सर्वः**। शृणाति संहारसमये संहरति संहारयति सकलाः प्रजाः इति **शर्वः** । निस्त्रैगुण्यतया शुद्धत्वात् **शिवः** । 'स ब्रह्मा स शिवः' इत्यभेदोपदेशात् शिवादिनामभिः हरिरेव स्तूयते । स्थिरत्वात् **स्थाणुः** । भूतानामादिकारणत्वात् **भूतादिः** । प्रलयकाले अस्मिन् सर्वं निधीयते इति **निधिः** । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । स एव निधिर्विशेष्यते— **अव्ययः** अनश्वरो निधिरित्यर्थः । स्वेच्छया समीचीनं भवनमस्येति **संभवः**, 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति भगवद्वचनात् । 'अथ दुष्टविनाशाय साधूनां रक्षणाय च । स्वेच्छया संभवाम्येवं गर्भदुःखविवर्जितः' इति च । सर्वेषां भोक्तॄणां फलानि भावयतीति **भावनः** । सर्वफलदातृत्वम् 'फलमत उपपत्तेः' इत्यत्र उपपादितम् । प्रपञ्चस्याधि-

ष्ठानत्वेन भरणात् **भर्ता** । प्रकर्षेण महाभूतानि अस्माज्जायन्त इति **प्रभवः**; प्रकृष्टो भवो जन्मास्येति वा । सर्वासु क्रियासु सामर्थ्यातिशयात् **प्रभुः** । निरुपाधिकमैश्वर्यमस्येति **ईश्वरः**, 'एष सर्वेश्वरः' इति श्रुतेः ॥

**स्वयंभूः शंभुरादित्यः**
**पुष्कराक्षो महास्वनः ।**
**अनादिनिधनो धाता**
**विधाता धातुरुत्तमः ॥ १८ ॥**

स्वयमेव भवतीति **स्वयंभूः** । 'स एव स्वयमुद्बभौ' इति मानवं वचनम् । सर्वेषामुपरि भवति, स्वयं भवतीति वा स्वयंभूः । येषामुपरि भवति यश्चोपरि भवति तदुभयात्मना स्वयमेव भवतीति वा, 'परिभूः स्वयंभूः' इति मन्त्रवर्णात् । अथवा, **स्वयंभूः** परमेश्वरः स्वयमेव स्वतन्त्रो भवति न परतन्त्रः, 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति मन्त्रवर्णात् । शं सुखं भक्तानां भावयतीति **शंभुः** । आदित्यमण्डलान्तःस्थो हिरण्मयः पुरुषः **आदित्यः** । द्वादशादित्येषु विष्णुर्वा, 'आदित्यानामहं विष्णुः' इत्युक्तः । अदितेरखण्डिताया मह्या अयं पतिरिति वा, 'इयं वा अदितिः'

'महीं देवीं विष्णुपत्नीम्' इति श्रुतेः। यथा आदित्य एक एवानेकेषु जलभाजनेषु अनेकवत्प्रतिभासते, एवमनेकेषु शरीरेषु एक एव आत्मा अनेकवत्प्रतिभासत इति आदित्यसाधर्म्याद्वा **आदित्यः** । पुष्करेणोपमिते अक्षिणी यस्येति **पुष्कराक्षः** । महान्पूजितः स्वनो नादो वा श्रुतिलक्षणो यस्य सः **महास्वनः** । 'सन्महत्' इत्यादिना समासे कृते 'आन्महतः समानाधिकरणजातीययोः' इत्यादिना आत्त्वम् । 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः' इति श्रुतेः । आदिर्जन्म; निधनं विनाशः; तद्द्वयं यस्य न विद्यते सः **अनादिनिधनः** । अनन्तादिरूपेण विश्वं बिभर्तीति **धाता** । कर्मणां तत्फलानां च कर्ता **विधाता**; अनन्तादीनामपि धारकत्वाद्विशेषेण दधातीति वा । **धातुरुत्तमः** इति नामैकं सविशेषणं सामानाधिकरण्येन; धातुर्विरिञ्चादुत्कृष्ट इति वा वैयधिकरण्येन; नामद्वयं वा; सर्वधातुभ्यः पृथिव्यादिभ्यः उत्कृष्टश्चिद्धातुरित्यर्थः । कार्यकारणप्रपञ्चधारणाच्चिदेव **धातुः** । **उत्तमः** सर्वेषामुद्गतानाम् अतिशयेनोद्गतत्वादुत्तमः ॥

**अप्रमेयो हृषीकेशः**
**पद्मनाभोऽमरप्रभुः ।**

**विश्वकर्मा मनुस्त्वष्टा**
**स्थविष्ठः स्थविरो ध्रुवः ॥ १९ ॥**

शब्दादिरहितत्वान्न प्रत्यक्षगम्यः । नाप्यनुमानगम्यः, तद्व्याप्तलिङ्गाभावात् । नाप्युपमानसिद्धः, निर्भागत्वेन सादृश्याभावात् । नाप्यर्थापत्तिग्राह्यः, तद्विनानुपपद्यमानस्यासंभवात् । नाप्यभावगोचरः, भावरूपत्वात्, अभावसाक्षित्वाच्च । नापि शास्त्रप्रमाणवेद्यः, प्रमाणजन्यातिशयाभावात् । यद्येवम्, शास्त्रयोनित्वं कथम्? उच्यते— प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वेऽपि अध्यस्तातद्रूपनिवर्तकत्वेन शास्त्रप्रमाणकत्वमिति **अप्रमेयः**, साक्षिरूपत्वात् । हृषीकाणि इन्द्रियाणि; तेषामीशः क्षेत्रज्ञरूपभाक् । यद्वा, इन्द्रियाणि यस्य वशे वर्तन्ते स परमात्मा **हृषीकेशः** । यस्य वा सूर्यरूपस्य चन्द्ररूपस्य च जगत्प्रीतिकरा हृष्टाः केशा रश्मयः सः **हृषीकेशः**, 'सूर्यरश्मिर्हरिकेशः पुरस्तात्' इति श्रुते. । पृषोदरादित्वात्साधुत्वम् । यथोक्तं मोक्षधर्मे—

सूर्याचन्द्रमसौ शश्वदंशुभिः केशसंज्ञितैः ।
बोधयन्स्वापयंश्चैव जगदुत्तिष्ठते पृथक् ॥

बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत् ।
अग्नीषोमकृतैरेवं कर्मभिः पाण्डुनन्दन ॥

हृषीकेशोऽहमीशानो वरदो लोकभावनः । इति ।

सर्वजगत्कारणं पद्मं नाभौ यस्य सः **पद्मनाभः**, 'अजस्य नाभावध्येकमर्पितम्' इति श्रुतेः । अमराणां प्रभुः **अमर-प्रभुः** । विश्वं कर्म क्रिया यस्य सः **विश्वकर्मा** । क्रियते इति जगत् कर्म विश्वं कर्म यस्येति वा विचित्रनिर्माणशक्तिमत्त्वाद्वा **विश्वकर्मा**; त्वष्ट्रा सादृश्याद्वा । मननात् **मनुः** । 'नान्योऽतोऽस्ति मन्ता' इति श्रुतेः । मन्त्रो वा, प्रजापतिर्वा **मनुः** । संहारसमये सर्वभूततनूकरणत्वात् **त्वष्टा** । त्वक्षतेस्तनूकरणार्थात् तृच्प्रत्ययः । अतिशयेन स्थूलः **स्थविष्ठः** । पुराणः स्थविरः 'त्वेषं ह्यस्य स्थविरस्य नाम' इति बह्वृचाः; वयोवचनो वा । स्थिरत्वात् ध्रुवः । **स्थविरो ध्रुव** इत्येकं नाम सविशेषणम् ॥

**अग्राह्यः शाश्वतः कृष्णो**
**लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुब्धाम**
**पवित्रं मङ्गलं परम् ॥ २० ॥**

कर्मेन्द्रियैः न गृह्यत इति **अग्राह्यः**, 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति श्रुतेः । शश्वत् सर्वेषु

कालेषु भवतीति **शाश्वतः**, 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । सच्चिदानन्दात्मकः **कृष्णः**, 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः' इति व्यासवचनात्; कृष्णवर्णात्मकत्वाद्वा, 'कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन' इति महाभारते । लोहिते अक्षिणी यस्येति **लोहिताक्षः**, 'स मा वृषभो लोहिताक्षः' इति श्रुतेः । प्रलये भूतानि प्रतर्दयति हिनस्तीति **प्रतर्दनः** । ज्ञानैश्वर्यादिगुणैः संपन्नः **प्रभूतः** । ऊर्ध्वाधोमध्यभेदेन तिसृणां ककुभामपि धामेति **त्रिककुब्धाम** इत्येकं नाम । येन पुनाति यो वा पुनाति ऋषिर्देवता वा तत् **पवित्रम्** । 'पुवः संज्ञायाम्' 'कर्तरि चर्षिदेवतयोः' इति पाणिनिस्मरणात् इत्रप्रत्ययः । 'अशुभानि निराचष्टे तनोति शुभसंततिम । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः' इति विष्णुपुराणवचनात्, कल्याणरूपत्वाद्वा मङ्गलम् । परं सर्वभूतेभ्यः उत्कृष्टं ब्रह्म । **मङ्गलं परम्** इत्येकमिदं नाम सविशेषणम ॥

**ईशानः प्राणदः प्राणो**
**ज्येष्ठः श्रेष्ठः प्रजापतिः ।**

**हिरण्यगर्भो भूगर्भो**
**माधवो मधुसूदनः ॥ २१ ॥**

सर्वभूतनियन्तृत्वात् **ईशानः** । प्राणान् ददाति चेष्टयतीति **प्राणदः**, 'को ह्येवान्यात्कः प्राण्यात्' इति श्रुतेः । यद्वा, प्राणान् कालात्मना द्यति खण्डयतीति, प्राणान् दापयति शोधयतीति वा, प्राणान् दाति लुनातीति वा, **प्राणदः** । प्राणितीति **प्राणः** क्षेत्रज्ञः परमात्मा वा, 'प्राणस्य प्राणम्' इति श्रुतेः मुख्यप्राणो वा । वृद्धतमो **ज्येष्ठः** 'ज्य च' इत्यधिकारे 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशविधानात् । प्रशस्यतमः **श्रेष्ठः**, 'प्रशस्यस्य श्रः' इति श्रादेशविधानात् । 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतेः मुख्यप्राणो वा, 'श्रेष्ठश्च' इत्यधिकरणसिद्धत्वात् । सर्वकारणत्वाद्वा **ज्येष्ठः** । सर्वातिशयत्वाद्वा **श्रेष्ठः** । ईश्वरत्वेन सर्वासां प्रजानां पतिः **प्रजापतिः** । हिरण्मयाण्डान्तर्वर्तित्वात् **हिरण्यगर्भो** ब्रह्मा विरिञ्चिः तदात्मा, 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुतेः । भूः गर्भे यस्य सः **भूगर्भः** । मायाः श्रियाः धवः पतिः **माधवः** ; मधुविद्यावबोध्यत्वाद्वा । 'मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्' इति व्यास-

वचनाद्वा माधवः । मधुनामानमसुरं सूदितवानिति **मधुसूदनः** ।

> कर्णमिश्रोद्भवं चापि मधुनाममहासुरम् ।
> ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥
> तस्य तात वधादेव देवदानवमानवाः ।
> मधुसूदन इत्याहुर्ऋषयश्च जनार्दनम् ॥

इति महाभारते ॥

**ईश्वरो विक्रमी धन्वी**
**मेधावी विक्रमः क्रमः ।**
**अनुत्तमो दुराधर्षः**
**कृतज्ञः कृतिरात्मवान् ॥ २२ ॥**

सर्वशक्तिमत्तया **ईश्वरः** । विक्रमः शौर्यम्, तद्योगात् **विक्रमी** । धनुरस्यास्तीति **धन्वी** । व्रीह्यादित्वात् इनिः । 'रामः शस्त्रभृतामहम्' इति भगवद्वचनम् । मेधा बहुग्रन्थधारणसामर्थ्यम्, सा यस्यास्ति सः **मेधावी** । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । विचक्रमे जगद्विश्वं तेन **विक्रमः**; विना गरुडेन पक्षिणा क्रमाद्वा । क्रमणात्, क्रमहेतुत्वाद्वा **क्रमः**, 'क्रान्ते विष्णुम्' इति मनुवचनात् । अवि-

द्यमानः उत्तमो यस्मात् सः **अनुत्तमः** । 'यस्मात्परं नापरमस्ति किंचित्' इति श्रुतेः, 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति स्मृतेश्च । दैत्यादिभिः धर्षयितुं न शक्यत इति **दुराधर्षः** । प्राणिनां पुण्यापुण्यात्मकं कर्म कृतं जानातीति **कृतज्ञः** । पत्रपुष्पाद्यल्पमपि प्रयच्छतां मोक्षं ददातीति वा । पुरुषप्रयत्नः **कृतिः**, क्रिया वा; सर्वात्मत्वात्तदाधारतया वा लक्ष्यते कृत्येति वा **कृतिः** । स्वमहिमप्रतिष्ठितत्वात् **आत्मवान्** । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः ॥

**सुरेशः शरणं शर्म**
**विश्वरेताः प्रजाभवः ।**
**अहः संवत्सरो व्यालः**
**प्रत्ययः सर्वदर्शनः ॥ २३ ॥**

सुराणां देवानामीशः **सुरेशः** । सूपपदो वा राधातुः शोभनदातॄणाम् ईशः **सुरेशः** । आर्तानामार्तिहरणत्वात् **शरणम्** । परमानन्दरूपत्वात् **शर्म** । विश्वस्य कारणत्वात् **विश्वरेताः** । सर्वाः प्रजा यत्सकाशादुद्भवन्ति स **प्रजाभवः** । प्रकाशरूपत्वात् **अहः** । कालात्मना स्थितो विष्णुः **संवत्स-**

र: इत्युक्त.। व्यालवद्ग्रहीतुमशक्यत्वात् **व्यालः**। प्रतीतिः प्रज्ञा **प्रत्ययः**, 'प्रज्ञानं ब्रह्म' इति श्रुतेः। सर्वाणि दर्शनात्मकानि अक्षीणि यस्य सः **सर्वदर्शनः**। सर्वात्मकत्वात् 'विश्वतश्चक्षुः' 'विश्वाक्षम्' इति श्रुतेः॥

**अजः सर्वेश्वरः सिद्धः**
**सिद्धिः सर्वादिरच्युतः।**
**वृषाकपिरमेयात्मा**
**सर्वयोगविनिःसृतः॥ २४॥**

न जायत इति **अजः**, 'न जातो न जनिष्यते' इति श्रुतेः। 'न हि जातो न जायेय न जनिष्ये कदाचन। क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः' इति महाभारते। सर्वेषामीश्वराणामीश्वरः **सर्वेश्वरः**, 'एष सर्वेश्वरः' इति श्रुतेः। नित्यनिष्पन्नरूपत्वात् **सिद्धः**। सर्ववस्तुषु संविद्रूपत्वात्, निरतिशयरूपत्वाद्वा **सिद्धिः**। स्वर्गादीनां विनाशित्वादफलत्वम्। सर्वभूतानामादिकारणत्वात् **सर्वादिः**। स्वरूपसामर्थ्यात् न च्युतो न च्यवते न च्यविष्यते इति **अच्युतः**, 'शाश्वतꣳ शिवमच्युतम्' इति श्रुतेः। तथा

च भगवद्वचनम्— 'यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा' इति ॥

इति नाम्नां प्रथमं शतं विवृतम् ॥

वर्षणात् सर्वकामाणां धर्मो वृषः; कात् तोयात् भूमिमपादिति कपिर्वराहः; वृषरूपत्वात्कपिरूपत्वाच्च **वृषाकपिः** । 'कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते । तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः' इति महाभारते । इयानिति मातुं परिच्छेत्तुं न शक्यते आत्मा अस्येति **अमेयात्मा** । सर्वसंबन्धविनिर्गतः **सर्वयोगविनिःसृतः**, 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । नानाशास्त्रोक्ताद्योगादपगतत्वाद्वा ॥

**वसुर्वसुमनाः सत्यः**
**समात्मासंमितः समः ।**
**अमोघः पुण्डरीकाक्षो**
**वृषकर्मा वृषाकृतिः ॥ २५ ॥**

वसन्ति सर्वभूतानि अत्र, तेषु अयमपि वसतीति वा **वसुः**; 'वसूनां पावकश्चास्मि' इत्युक्तो वा **वसुः** । वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते । प्रशस्तं मनो

यस्य सः **वसुमनाः** । रागद्वेषादिभिः क्लेशैर्मदादिभिरुपक्लेशैश्च यतो न कलुषितं चित्तं ततस्तन्मनः प्रशस्तम् । अवितथरूपत्वात्परमात्मा **सत्यः**, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । मूर्तामूर्तात्मकत्वाद्वा, 'सच्च त्यच्चाभवत्' इति श्रुतेः । सदिति प्राणः, तीत्यन्नम्, यमिति दिवाकरः, तेन प्राणान्नादित्यरूपाद्वा **सत्यः**, 'सदिति प्राणास्तीत्यन्नं यमित्यसावादित्यः' इति श्रुतेः । सत्सु साधुत्वाद्वा **सत्यः** । सम आत्मा मनो यस्य रागद्वेषादिभिरदूषितः सः **समात्मा** । सर्वभूतेषु सम एक आत्मा वा, 'सम आत्मेति विद्यात्' इति श्रुतेः । सर्वैरप्यर्थजातैः परिच्छिन्नो मितः; सर्वैरपरिच्छिन्नोऽमित इति **असंमितः**; सर्वकालेषु सर्वविकाररहितत्वात् **समः**; मया लक्ष्म्या सह वर्तत इति वा **समः** । पूजितः स्तुतः संस्मृतो वा सर्वफलं ददाति न वृथा करोतीति **अमोघः** । अवितथसंकल्पाद्वा, 'सत्यकाम. सत्यसंकल्पः' इति श्रुतेः । हृदयस्थं पुण्डरीकमश्नुते व्याप्नोति तत्रोपलक्षित इति **पुण्डरीकाक्षः**, 'यत्पुण्डरीकं पुरमध्यसंस्थम्' इति श्रुतेः; पुण्डरीकाकारे उभे अक्षिणी अस्येति वा । धर्मलक्षणं कर्मास्येति **वृषकर्मा** । धर्मार्थमाकृतिः शरीरं यस्य सः **वृषाकृतिः** । 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति भगवद्वचनात् ॥

**रुद्रो बहुशिरा बभ्रु-**
**र्विश्वयोनिः शुचिश्रवाः ।**
**अमृतः शाश्वतस्थाणु-**
**र्वरारोहो महातपाः ॥ २६ ॥**

संहारकाले प्रजाः संहरन् रोदयतीति **रुद्रः** । रुदं राति ददातीति वा, रुर्दुःखं दुःखकारणं वा, द्रावयतीति वा **रुद्रः** । रोदनाद्द्रावणाद्वापि रुद्र इत्युच्यते, 'रुर्दुःखं दुःखहेतुं वा विद्रावयति स प्रभुः । रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्' इति लिङ्गपुराणवचनात् । बहूनि शिरांसि यस्येति **बहुशिराः**, 'सहस्रशीर्षा पुरुषः' इति मन्त्रवर्णात् । बिभर्ति लोकानिति **बभ्रुः** । विश्वस्य कारणत्वात् **विश्वयोनिः** । शुचीनि श्रवांसि नामानि श्रवणीयान्यस्येति **शुचिश्रवाः** । न विद्यते मृतं मरणमस्येति **अमृतः**, 'अजरोऽमरः' इति श्रुतेः । शाश्वतश्चासौ स्थाणुश्चेति **शाश्वतस्थाणुः** । वर आरोहोऽङ्कोऽस्येति **वरारोहः** । वरमारोहणं यस्मिन्निति वा, आरूढानां पुनरावृत्त्यसंभवात्, 'न च पुनरावर्तते' इति श्रुतेः, 'यं प्राप्य न निवर्तन्ते' इति स्मृतेश्च । महत्सृज्यविषयं तपो ज्ञानमस्येति **महातपाः**, 'यस्य ज्ञानमयं तपः

इति श्रुतेः। ऐश्वर्यं प्रतापो वा तपो महदस्येति वा **महातपाः** ॥

**सर्वगः सर्वविद्भानु-**
**र्विष्वक्सेनो जनार्दनः।**
**वेदो वेदविदव्यङ्गो**
**वेदाङ्गो वेदवित्कविः ॥ २७ ॥**

सर्वत्र गच्छतीति **सर्वगः**, कारणत्वेन व्याप्तत्वात् सर्वत्र। सर्वं वेत्ति विन्दतीति वा सर्ववित्; भातीति भानुः, 'तमेव भान्तमनु भाति सर्वम्' इति श्रुतेः। 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च; सर्वविच्चासौ भानुश्चेति **सर्वविद्भानुः**। विष्वगञ्चति पलायते दैत्यसेना यस्य रणोद्योगमात्रेणेति **विष्वक्सेनः**। जनान् दुर्जनानर्दयति हिनस्ति, नरकादीन्गमयतीति वा **जनार्दनः**; जनैः पुरुषार्थमभ्युदयनिःश्रेयसलक्षणं याच्यते इति **जनार्दनः**। वेदयतीति **वेदः**, 'तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति भगवद्वचनात्। यथावत् वेदार्थं वेत्तीति वेदवित्, 'वेदान्तकृद्वेदविदेव चाहम्' इति भगवद्वचनात्।

सर्वे वेदाः सर्वविद्याः सशास्त्राः
सर्वे यज्ञाः सर्व इज्याश्च कृष्णः ।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन्सर्वयज्ञाः समाप्ताः ॥

इति महाभारते ।

**अव्यङ्गः** ज्ञानादिभिः परिपूर्णोऽविकल उच्यते; व्यङ्गो व्यक्तिर्न विद्यत इति वा **अव्यङ्गः**, 'अव्यक्तोऽयम्' इति भगवद्वचनात् । वेदा अङ्गभूता यस्य सः **वेदाङ्गः** । वेदान्विन्ते विचारयतीति **वेदवित्** । क्रान्तदर्शी **कविः** सर्वदृक्, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः, 'कविर्मनीषी' इत्यादिमन्त्रवर्णात् ॥

**लोकाध्यक्षः सुराध्यक्षो**
**धर्माध्यक्षः कृताकृतः ।**
**चतुरात्मा चतुर्व्यूह-**
**श्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥**

लोकानध्यक्षयतीति **लोकाध्यक्षः** सर्वेषां लोकानां प्राधान्येनोपद्रष्टा । लोकपालादिसुराणामध्यक्षः **सुराध्यक्षः** । धर्माधर्मौ साक्षादीक्षतेऽनुरूपं फलं दातुं तस्मात् **धर्माध्यक्षः** । कृतश्च कार्यरूपेण अकृतश्च कारणरूपेणेति **कृताकृतः** ।

सर्गादिषु पृथग्विभूतयश्चतस्रः आत्मनः यस्य सः **चतुरात्मा** ।

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥
रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥

इति वैष्णवपुराणे ।

'व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः । सृष्ट्यादीन्प्रकरोत्येष विश्रुतात्मा जनार्दनः' इति व्यासवचनात् **चतुर्व्यूहः** । दंष्ट्राश्चतस्रो यस्येति **चतुर्दंष्ट्रः** नृसिंहविग्रहः । सादृश्याद्वा शृङ्गं दंष्ट्रेत्युच्यते, 'चत्वारि शृङ्गा' इति श्रुतेः । चत्वारो भुजा अस्येति **चतुर्भुजः** ॥

**भ्राजिष्णुर्भोजनं भोक्ता**
**सहिष्णुर्जगदादिजः ।**
**अनघो विजयो जेता**
**विश्वयोनिः पुनर्वसुः ॥ २९ ॥**

प्रकाशैकरसत्वात् **भ्राजिष्णुः** । भोज्यरूपतया प्रकृतिर्माया **भोजनम्** इत्युच्यते । पुरुषरूपेण तां भङ्क्ते इति **भोक्ता** । हिरण्याक्षादीन् सहते अभिभवतीति **सहिष्णुः** । हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्वयमिति **जगदादिजः** । अघं न विद्यतेऽस्येति **अनघः**, 'अपहतपाप्मा' इति श्रुतेः । विजयते ज्ञानवैराग्यैश्वर्यादिभिर्गुणैः विश्वमिति **विजयः** । यतोऽतिशेते सर्वभूतानि स्वभावतः अतः **जेता** । विश्वं योनिरस्येति, विश्वश्चासौ योनिश्चेति वा **विश्वयोनिः** । पुनः पुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति पुनर्वसुः ॥

**उपेन्द्रो वामनः प्रांशु-**
**रमोघः शुचिरूर्जितः ।**
**अतीन्द्रः संग्रहः सर्गो**
**धृतात्मा नियमो यमः ॥ ३० ॥**

इन्द्रमुपगतोऽनुजत्वेनेति **उपेन्द्रः**, यद्वा, उपरि इन्द्र. **उपेन्द्रः** । 'ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण त्वां गास्यन्ति भुवि देवताः' इति हरिवंशे । बलिं वामनरूपेण याचितवानिति **वामनः** । संभजनीय इति वा, 'मध्ये वामनमासीनं विश्वे देवा उपासते' इति

मन्त्रवर्णात् । स एव जगत्रयं क्रममाणः प्रांशुरभूदिति **प्रांशुः** । 'तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्वदेवमयं रूपं दर्शयामास वै प्रभुः ॥ भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी' इत्यादि विश्वरूपं दर्शयित्वा 'तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य नाभ्यां तौ समवस्थितौ ॥ दिवमाक्रममाणस्य जानुमूले व्यवस्थितौ ।' इति प्रांशुत्वं दर्शितं हरिवंशे । न मोघं चेष्टितं यस्य सः **अमोघः** । स्मरतां स्तुवताम् अर्चयतां च पावनत्वात् **शुचिः** । 'अस्पर्शश्च महाञ्शुचिः' इति मन्त्रवर्णात् । बलप्रकर्षशालित्वात् **ऊर्जितः** । अतीत्येन्द्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरिति **अतीन्द्रः** । सर्वेषां प्रतिसंहारात् **संग्रहः** । सृज्यरूपतया, सर्गहेतुत्वाद्वा **सर्गः** । एकरूपेण जन्मादिरहिततया धृत आत्मा येन सः **धृतात्मा** । स्वेषु स्वेष्वधिकारेषु प्रजा नियमयतीति **नियमः** । अन्तर्यच्छतीति **यमः** ॥

**वेद्यो वैद्यः सदायोगी**
**वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो**
**महोत्साहो महाबलः ॥ ३१ ॥**

निःश्रेयसार्थिभिः वेदनार्हत्वात् **वेद्यः** । सर्वविद्यानां वेदितृत्वात् **वैद्यः** । सदा आविर्भूतस्वरूपत्वात् **सदायोगी** । धर्मत्राणाय वीरान् असुरान् हन्तीति **वीरहा** । मायाः विद्यायाः पतिः **माधवः** । 'मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीति शब्दितः' इति हरिवंशे । यथा मधु परां प्रीतिमुत्पादयति अयमपि तथेति **मधुः** । 'अशब्दमस्पर्शम्' इति श्रुतेः शब्दादिरहितत्वात् इन्द्रियाणामविषय इति **अतीन्द्रियः** । मायाविनामपि मायाकारित्वात् **महामायः**, 'मम माया दुरत्यया' इति भगवद्वचनात् । जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वात् **महोत्साहः** । बलिनामपि बलवत्त्वात् **महाबलः** ॥

**महाबुद्धिर्महावीर्यो**
**महाशक्तिर्महाद्युतिः ।**
**अनिर्देश्यवपुः श्रीमा-**
**नमेयात्मा महाद्रिधृक् ॥ ३२ ॥**

बुद्धिमतामपि बुद्धिमत्त्वात् **महाबुद्धिः** । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्येति **महावीर्यः** । महती शक्तिः सामर्थ्यमस्येति **महाशक्तिः** । महती द्युतिर्बाह्याभ्यन्तरा चास्ये-

ति **महाद्युतिः**; 'स्वयं ज्योतिः' इति श्रुतेः, 'ज्योतिषां ज्योतिः' इत्यादेश्च । इदं तदिति निर्देष्टुं यन्न शक्यते परस्मै स्वसंवेद्यत्वात् तत् अनिर्देश्यं वपुरस्येति **अनिर्देश्यवपुः** । ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य सः **श्रीमान्** । सर्वैः प्राणिभिरमेया बुद्धिरात्मा यस्य सः **अमेयात्मा** । महान्तमद्रिं मन्दरं गोवर्धनं च अमृतमथने गोरक्षणे च धृतवानिति **महाद्रिधृक्** ॥

**महेष्वासो महीभर्ता**
**श्रीनिवासः सतां गतिः ।**
**अनिरुद्धः सुरानन्दो**
**गोविन्दो गोविदां पतिः ॥ ३३ ॥**

महानिष्वास इषुक्षेपो यस्य सः **महेष्वासः** । एकार्णवाप्लुतां देवीं महीं बभारेति **महीभर्ता** । यस्य वक्षस्यनपायिनी श्रीर्वसति सः **श्रीनिवासः** । सतां वैदिकानां साधूनां पुरुषार्थसाधनहेतुः **सतां गतिः** । न केनापि प्रादुर्भावेषु निरुद्ध इति **अनिरुद्धः** । सुरानानन्दयतीति **सुरानन्दः** । 'नष्टां वै धरणीं पूर्वमविन्दं वै गुहागताम् । गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः' इति मोक्षधर्मवचनात् **गो-**

**विन्दः** । 'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्' इति । 'गौरेषा तु तथा वाणी तां च विन्दयते भवान् । गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान्' इति च हरिवंशे । गौर्वाणी, तां विन्दतीति गोविदः, तेषां पतिर्विशेषेणेति **गोविदां पतिः** ॥

**मरीचिर्दमनो हंसः**
**सुपर्णो भुजगोत्तमः ।**
**हिरण्यनाभः सुतपाः**
**पद्मनाभः प्रजापतिः ॥ ३४ ॥**

तेजस्विनामपि तेजस्त्वात् **मरीचिः**, 'तेजस्तेजस्विनामहम्' इति भगवद्वचनात् । स्वाधिकारात्प्रमाद्यतीः प्रजा दमयितुं शीलं यस्य वैवस्वतादिरूपेण इति **दमनः** । अहं स इति तादात्म्यभाविनः संसारभयं हन्तीति **हंसः** । पृषोदरादित्वाच्छब्दसाधुत्वम् । हन्ति गच्छति सर्वशरीरेष्विति वा, 'हꣳसः शुचिषत्' इति मन्त्रवर्णात् । शोभनपर्णत्वात् **सुपर्णः**, 'द्वा सुपर्णा' इति मन्त्रवर्णात् । भुजेन गच्छतामुत्तमो **भुजगोत्तमः** । हिरण्यमिव कल्याणी नाभिरस्येति

**हिरण्यनाभः**; हितरमणीयनाभित्वाद्वा। बदरिकाश्रमे नर-नारायणरूपेण शोभनं तपश्चरतीति **सुतपाः**। 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति स्मृतेः पद्ममिव सुवर्तुला नाभिरस्येति, हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा **पद्मनाभः**। पृषोदरादित्वात्साधुत्वम्। प्रजानां पतिः पिता **प्रजापतिः** ॥

**अमृत्युः सर्वदृक्सिंहः**
**संधाता संधिमान्स्थिरः।**
**अजो दुर्मर्षणः शास्ता**
**विश्रुतात्मा सुरारिहा ॥ ३९ ॥**

मृत्युर्विनाशस्तद्धेतुर्वा अस्य न विद्यते इति **अमृत्युः**। प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति **सर्वदृक्**। हिनस्तीति **सिंहः**। पृषोदरादित्वात्साधुत्वम् ॥

इति नाम्नां द्वितीयं शतं विवृतम् ॥

कर्मफलैः पुरुषान संधत्त इति **संधाता**। ... च स एवेति **संधिमान्**। सदैकरूपत्वात् **स्थिरः**। ... गच्छति क्षिपति इति वा **अजः**।

भिर्न शक्यते इति **दुर्मर्षणः** । श्रुतिस्मृत्यादिभिः सर्वेषाम-नुशिष्टिं करोतीति **शास्ता** । विशेषेण श्रुतः सत्यज्ञानादि-लक्षणः आत्मा अतो **विश्रुतात्मा** । सुरारीणां निहन्तृत्वात् **सुरारिहा** ॥

**गुरुर्गुरुतमो धाम**
**सत्यः सत्यपराक्रमः ।**
**निमिषोऽनिमिषः स्रग्वी**
**वाचस्पतिरुदारधीः ॥ ३६ ॥**

समस्तविद्यानामुपदेष्टृत्वात् , सर्वेषां जनकत्वाद्वा **गुरुः** । विरिञ्च्यादीनामपि ब्रह्मविद्यासंप्रदायकत्वात् **गुरुतमः**, 'यो ब्रह्माणम्' इति मन्त्रवर्णात् । **धाम** ज्योतिः, 'नारयणपरो ज्योतिः' इति मन्त्रवर्णात् । सर्वकामाणामास्पदत्वाद्वा **धाम**, 'परमं ब्रह्म परं धाम' इति श्रुतेः । सत्यवचनधर्मरूपत्वात् **सत्यः**, 'तस्मात्सत्यं परमं वदन्ति' इति श्रुतेः ; सत्यस्य सत्यमिति वा, 'प्राणा वै सत्यं तेषामेव सत्यम्' इति श्रुतेः । सत्यः अवितथः पराक्रमो यस्य सः **सत्यपराक्रमः** । निमी-लिते यतो नेत्रे योगनिद्रारतस्य अतो **निमिषः** । नित्यप्रबु-द्धस्वरूपत्वात् **अनिमिषः**; मत्स्यरूपतया वा आत्मरूपतया

वा **अनिमिषः**। भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं विभर्तीति **स्रग्वी**। वाचो विद्यायाः पतिः वाचस्पतिः; सर्वार्थविषया धीर्बुद्धिरस्य इति उदारधीः; **वाचस्पतिरुदारधीः** इत्येकं नाम ॥

**अग्रणीर्ग्रामणीः श्रीमा-**
**न्न्यायो नेता समीरणः।**
**सहस्रमूर्धा विश्वात्मा**
**सहस्राक्षः सहस्रपात् ॥ ३७ ॥**

अग्रं प्रकृष्टं पदं नयति मुमुक्षून् इति **अग्रणीः**। भूतग्रामस्य नेतृत्वात् **ग्रामणीः**। श्रीः कान्तिः सर्वातिशयिता अस्येति **श्रीमान्**। प्रमाणानुग्राहकोऽभेदकारकस्तर्को **न्यायः**। जगद्यन्त्रनिर्वाहको **नेता**। श्वसनरूपेण भूतानि चेष्टयतीति **समीरणः**। सहस्राणि मूर्धानोऽस्येति **सहस्रमूर्धा**। विश्वस्यात्मा **विश्वात्मा**। सहस्राण्यक्षीणि यस्य सः **सहस्राक्षः**। सहस्राणि पादा अस्येति **सहस्रपात्**। 'सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्' इति श्रुतेः ॥

**आवर्तनो निवृत्तात्मा**
**संवृतः संप्रमर्दनः।**

**अहःसंवर्तको वह्नि-**
**रनिलो धरणीधरः ॥ ३८ ॥**

आवर्तयितुं संचारचक्रं शीलमस्येति **आवर्तनः** । संसारबन्धान्निवृत्त आत्मा स्वरूपमस्येति **निवृत्तात्मा** । आच्छादिकया अविद्यया संवृतत्वात् **संवृतः** । सम्यक् प्रमर्दयति रुद्रकालाद्याभिः विभूतिभिरिति **संप्रमर्दनः** । सम्यगह्नां प्रवर्तनात् सूर्यः **अहःसंवर्तकः** । वहनात् **वह्निः** । अनिलयः **अनिलः**, अनादित्वात् **अनिलः**, अनादानाद्वा, अननाद्वा **अनिलः** । शेषरूपेण वराहरूपेण च धरणीं धत्त इति **धरणीधरः** ॥

**सुप्रसादः प्रसन्नात्मा**
**विश्वधृग्विश्वभुग्विभुः ।**
**सत्कर्ता सत्कृतः साधु-**
**र्जह्नुर्नारायणो नरः ॥ ३९ ॥**

शोभनः प्रसादो यस्य अपकारवतामपि शिशुपालादीनां मोक्षप्रदातृत्वादिति **सुप्रसादः** । रजस्तमोभ्यामकलुषित आत्मा अन्तःकरणमस्येति **प्रसन्नात्मा** ; यद्वा, प्रसन्नस्वभावः

कारुणिक इत्यर्थः; अवाप्तसर्वकामत्वाद्वा । विश्वं धृष्णोतीति **विश्वधृक्** । ञि धृषा प्रागल्भ्ये । विश्वं भुङ्क्ते भुनक्ति पालयतीति वा **विश्वभुक्** । हिरण्यगर्भादिरूपेण विविधं भवतीति **विभुः**, 'नित्यं विभुम्' इति मन्त्रवर्णात् । सत्करोति पूजयतीति **सत्कर्ता** । पूजितैरपि पूजितः **सत्कृतः** । न्यायप्रवृत्ततया **साधुः**; साधयतीति वा; साध्यभेदानुपादानात् साध्यमात्रसाधको वा । जनान् संहारसमये अपह्नुते अपनयतीति **जह्नुः**; जहात्यविदुषोऽभक्तान् अपनयति परमिति वा । नर आत्मा, ततो जातान्याकाशादीनि नाराणि कार्याणि तानि कार्याणि अयं कारणात्मना व्याप्नोति; अतश्च तान्ययनमस्येति **नारायणः**, 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति मन्त्रवर्णात् ।

नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥

इति महाभारते ।

नाराणां जीवानामयनत्वात् प्रलये इति वा, 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । 'नाराणामयनं यस्मात्तस्मान्नारायणः स्मृतः' इति ब्रह्मवैवर्तात्, 'आपो नारा इति प्रोक्ता

आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तस्मान्नारायण.
स्मृतः' इति मनुवचनाद्वा **नारायणः** ।

> नारायणाय नम इत्ययमेव सत्यः
> संसारघोरविषसंहरणाय मन्त्रः ।
> शृण्वन्तु भव्यमतयो यतयोऽस्तरागा
> उच्चैस्तरामुपदिशाम्यहमूर्ध्ववाहुः ॥
>
> इति श्रीनारसिंहपुराणे ।

> नयतीति नरः प्रोक्तः परमात्मा सनातनः ।
>
> इति व्यासवचनम् ॥

**असंख्येयोऽप्रमेयात्मा**
**विशिष्टः शिष्टकृच्छुचिः ।**
**सिद्धार्थः सिद्धसंकल्पः**
**सिद्धिदः सिद्धिसाधनः ॥ ४० ॥**

यस्मिन् संख्यानामरूपभेदादिः न विद्यत इति **असंख्येयः** । अप्रमेय आत्मा स्वरूपमस्येति **अप्रमेयात्मा** । अतिशेते सर्वम् अतो **विशिष्टः** । शिष्टं शासनं करोतीति **शिष्टकृत्** ; शिष्टान् करोति पालयतीति वा । सामान्यवचनो धातुर्विशेषवचनो दृष्टः कुरु काष्ठानीत्याहरणे यथा, तद्वदिति वा शि-

ष्टकृत् । निरञ्जनः **शुचिः** । सिद्धो निर्वृत्त अभ्यर्थमानोऽर्थोऽस्येति **सिद्धार्थः**, 'सत्यकामः' इति श्रुतेः । सिद्धो निष्पन्नः संकल्पोऽस्येति **सिद्धसंकल्पः**, 'सत्यसंकल्पः' इति श्रुतेः । सिद्धिं फलं कर्तृभ्यः स्वाधिकारानुरूपतो ददातीति **सिद्धिदः** । सिद्धेः साधकत्वात् **सिद्धिसाधनः** ॥

**वृषाही वृषभो विष्णु-**
**र्वृषपर्वा वृषोदरः ।**
**वर्धनो वर्धमानश्च**
**विविक्तः श्रुतिसागरः ॥ ४१ ॥**

वृषो धर्मः पुण्यम्, तदेव अहः द्वादशाहादिः क्रतुः वृषाहः; सोऽस्यास्तीति **वृषाही** । वृषाह इत्यत्र 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः समासान्तः । वर्षत्येष भक्तेभ्यः कामानिति **वृषभः** । **विष्णुः** 'विष्णुर्विक्रमणात्' इति व्यासेनोक्तेः । वृषरूपाणि सोपानपर्वाणि आहुः परं धामारुरुक्षोः इत्यतो **वृषपर्वा** । प्रजाः वर्षतीव उदरमस्येति **वृषोदरः** । वर्धयतीति **वर्धनः** । प्रपञ्चरूपेण वर्धत इति **वर्धमानः** । इत्थं वर्धमानोऽपि पृथगेव तिष्ठतीति **विविक्तः** । श्रुतयः सागरे इव अत्र निधीयन्ते इति **श्रुतिसागरः** ॥

**सुभुजो दुर्धरो वाग्ग्मी**
**महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपः**
**शिपिविष्टः प्रकाशनः ॥ ४२ ॥**

शोभना भुजाः जगद्रक्षाकरा अस्येति **सुभुजः** । पृथिव्यादीन्यपि लोकधारकाण्यन्यैः धारयितुमशक्यानि धारयन न केनचिद्धारयितुं शक्यत इति **दुर्धरः** ; दुःखेन ध्यानसमये मुमुक्षुभिः हृदये धार्यत इति वा **दुर्धरः** । यतो निःसृता ब्रह्ममयी वाक् तस्मात् **वाग्ग्मी** । महांश्चासाविन्द्रश्चेति **महेन्द्रः**, ईश्वराणामपीश्वरः । वसु धनं ददातीति **वसुदः**, 'अन्नादो वसुदानः' इति श्रुतेः । दीयमानं तद्वस्वपि स एवेति **वसुः**, आच्छादयत्यात्मनः स्वरूपं माययेति वा **वसुः**; अन्तरिक्षे एव वसति नान्यत्रेति असाधारणेन वसनेन वायुर्वा **वसुः**, 'वसुरन्तरिक्षसत्' इति श्रुतेः । एकं रूपमस्य न विद्यत इति **नैकरूपः**, 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः, 'ज्योतींषि विष्णुः' इत्यादिस्मृतेश्च । बृहत् महत् वराहादिरूपम् अस्येति **बृहद्रूपः** । शिपयः पशवः, तेषु विशति प्रतितिष्ठति

यज्ञरूपेणेति **शिपिविष्टः**. 'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति' इति श्रुतेः । शिपयो रश्मयः, तेषु निविष्ट इति वा ।

शैत्याच्छयनयोगाच्च शीति वारि प्रचक्षते ।
तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः ॥

तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते ।

सर्वेषां प्रकाशनशीलत्वात् **प्रकाशनः** ॥

**ओजस्तेजोद्युतिधरः**
**प्रकाशात्मा प्रतापनः ।**
**ऋद्धः स्पष्टाक्षरो मन्त्र-**
**श्चन्द्रांशुर्भास्करद्युतिः ॥ ४३ ॥**

ओजः प्राणबलम्, तेजः शौर्यादयो गुणाः, द्युतिः दीप्तिः, ताः धारयतीति **ओजस्तेजोद्युतिधरः** । अथवा, **ओजः तेजः** इति नामद्वयम्, 'बलं बलवतां चाहं तेजस्तेजस्विनामहम्' इति भगवद्वचनात् । द्युतिं ज्ञानलक्षणां दीप्तिं धारयतीति **द्युतिधरः** । प्रकाशस्वरूपः आत्मा यस्य सः **प्रकाशात्मा** । सवित्रादिविभूतिभिः विश्वं प्रतापयतीति **प्रतापनः** ।

धर्मज्ञानवैराग्यादिभिः उपेतत्वात् **ऋद्धः** । स्पष्टम् उदात्तम् ओंकारलक्षणम् अक्षरम् अस्येति **स्पष्टाक्षरः** । ऋग्यजुःसामलक्षणो **मन्त्रः**; मन्त्रबोध्यत्वाद्वा **मन्त्रः** । संसारतापतिग्मांशुतापतापितचेतसां चन्द्रांशुरिवाह्लादकत्वात् **चन्द्रांशुः** । भास्करद्युतिसाधर्म्यात् **भास्करद्युतिः** ॥

**अमृतांशूद्भवो भानुः**
**शशबिन्दुः सुरेश्वरः ।**
**औषधं जगतः सेतुः**
**सत्यधर्मपराक्रमः ॥ ४४ ॥**

मथ्यमाने पयोनिधौ अमृतांशोश्चन्द्रस्य उद्भवो यस्मात् सः **अमृतांशूद्भवः** । भातीति **भानुः**, 'तमेव भान्तम्' इत्यादिश्रुतेः । शश इव बिन्दुर्लाञ्छनमस्येति शशबिन्दुः चन्द्रः तद्वत्प्रजाः पुष्णातीति **शशबिन्दुः**, 'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः' इति भगवद्वचनात् । सुराणां देवानां शोभनदातॄणां च ईश्वरः **सुरेश्वरः** । संसाररोगभेषजत्वात् **औषधम्** । जगतां समुत्तारणहेतुत्वात् असभेदकारणत्वाद्वा सेतुवत् वर्णाश्रमादीनां जगतः सेतुः, 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति श्रुतेः । सत्या अवि-

तथा धर्मा: ज्ञानादयो गुणा: पराक्रमश्च यस्य सः **सत्यधर्मपराक्रमः** ॥

**भूतभव्यभवन्नाथः**
**पवनः पावनोऽनलः ।**
**कामहा कामकृत्कान्तः**
**कामः कामप्रदः प्रभुः ॥ ४९ ॥**

भूतभव्यभवतां भूतग्रामाणां नाथ:, तैर्याच्यते तानुपतपति तेषामीष्टे शास्तीति वा **भूतभव्यभवन्नाथः** । पवत इति **पवनः**, 'पवन: पवतामस्मि' इति भगवद्वचनात् । पावयतीति **पावनः**, 'भीषास्माद्वात: पवते' इति श्रुते: । अनान् प्राणान् आत्मत्वेन लातीति जीव: **अनलः**; णलतेर्गन्धवाचिनो नञ्पूर्वाद्वा, 'अगन्धमरसम्' इति श्रुते:; न अलं पर्याप्तमस्य विद्यत इति वा । कामान् हन्ति मुमुक्षूणां भक्तानां हिंसकानां चेति **कामहा** । सात्त्विकानां कामान् करोतीति **कामकृत्**; कामस्य प्रद्युम्नस्य जनकत्वाद्वा । अभिरूपतम: **कान्तः** । काम्यते पुरुषार्थाभिकाङ्क्षिभिरिति **कामः** । भक्तेभ्य: कामान् प्रकर्षेण ददातीति **कामप्रदः** । प्रकर्षेण भवनात् **प्रभुः** ॥

**युगादिकृद्युगावर्तो**
**नैकमायो महाशनः ।**
**अदृश्यो व्यक्तरूपश्च**
**सहस्रजिदनन्तजित् ॥ ४६ ॥**

युगादेः कालभेदस्य कर्तृत्वात् **युगादिकृत्**; युगानामादिमारम्भं करोति इति वा ॥

इति नाम्नां तृतीयं शतं विवृतम् ॥

युगानि कृतादीन्यावर्तयति कालात्मनेति **युगावर्तः** । एका माया न विद्यते बह्वीर्माया वहतीति **नैकमायः** । 'नलोपो नञः' इति नकारलोपो न भवति, ञकारानुबन्धरहितस्यापि नकारस्य प्रतिषेधवाचिनो विद्यमानत्वात् । कल्पान्ते सर्वग्रसनात् महदशनमस्येति **महाशनः** । सर्वेषां बुद्धीन्द्रियाणामगम्य. **अदृश्यः** । स्थूलरूपेण व्यक्तं रूपमस्येति **व्यक्तरूपः**, स्वयं प्रकाशमानत्वात् योगिनां **व्यक्तरूपः** इति वा । सहस्राणि असुराणां युद्धे जयतीति **सहस्रजित्** । सर्वभूतानि युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीति **अनन्तजित्** ॥

**इष्टोऽविशिष्टः शिष्टेष्टः**
**शिखण्डी नहुषो वृषः ।**
**क्रोधहा क्रोधकृत्कर्ता**
**विश्वबाहुर्महीधरः ॥ ४७ ॥**

परमानन्दात्मकत्वेन प्रियः **इष्टः**; यज्ञेन पूजित इति वा **इष्टः** । सर्वेषामन्तर्यामित्वेन **अविशिष्टः** । शिष्टानां विदुषामिष्टः **शिष्टेष्टः**; शिष्टा इष्टा अस्येति वा, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति भगवद्वचनात्; शिष्टैरिष्टः पूजित इति वा **शिष्टेष्टः** । शिखण्डः कलापोऽलंकारोऽस्येति **शिखण्डी** गोपवेषधरः । यतो नह्यति भूतानि मायया अतो **नहुषः** । कामानां वर्षणात् **वृषः** धर्मः । 'वृषो हि भगवान्धर्मः स्मृतो लोकेषु भारत । नैघण्टुकपदाख्यानैर्विद्धि मां वृष इत्युत' इति महाभारते । साधूनां क्रोधं हन्तीति **क्रोधहा** । असाधुषु क्रोधं करोतीति **क्रोधकृत्** । क्रियत इति कर्म जगत्, तस्य **कर्ता**, 'एतेषां पुरुषाणां यः कर्ता यस्य वै तत्कर्म स वै वेदितव्यः' इति श्रुतेः । क्रोधकृतां दैत्यादीनां कर्ता च्छेदक इत्येकं वा नाम । विश्वेषामालम्बनत्वेन, विश्वे बाहवोऽस्येति वा **विश्वबाहुः**, 'विश्वतो-

बाहुः' इति श्रुतेः । महीं पूजां धरणीं वा धरति इति **महीधरः** ॥

**अच्युतः प्रथितः प्राणः**
**प्राणदो वासवानुजः ।**
**अपां निधिरधिष्ठान-**
**मप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥**

षड्भावविकारशून्यत्वात् **अच्युतः**, 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । जगदुत्पत्त्यादिकर्मभिः प्रख्यातः **प्रथितः** । सूत्रात्मना प्रजाः प्राणयतीति **प्राणः** । 'प्राणो वा अहमस्मि' इति बह्वृचाः । सुराणामसुराणां च प्राणं बलं ददाति द्यति वेति **प्राणदः** । अदित्यां कश्यपाद्वासवस्यानुजो जात इति **वासवानुजः** । आपो यत्र निधीयन्ते सः **अपां निधिः**, 'सरसामस्मि सागरः' इति भगवद्वचनात् । अधितिष्ठन्ति भूतानि उपादानकारणत्वेन ब्रह्म इति **अधिष्ठानम्**, 'मत्स्थानि सर्वभूतानि' इति भगवद्वचनात् । अधिकारिभ्यः कर्मानुरूपं फलं प्रयच्छन् न प्रमाद्यतीति **अप्रमत्तः** । स्वे महिम्नि स्थितः **प्रतिष्ठितः**, 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः ॥

**स्कन्दः स्कन्दधरो धुर्यो**
**वरदो वायुवाहनः ।**
**वासुदेवो बृहद्भानु-**
**रादिदेवः पुरंदरः ॥ ४० ॥**

स्कन्दत्यमृतरूपेण स्रवति वायुरूपेण शोषयतीति वा **स्कन्दः** । स्कन्द धर्मपथं धारयतीति वा **स्कन्दधरः** । धुरं वहति समस्तभूतजन्मादिलक्षणामिति **धुर्यः** । अभिमतान् वरान् ददातीति, वरं दक्षिणां ददाति यजमानरूपेणेति वा **वरदः**, 'गौर्वै वरः' इति श्रुतेः । वहतः सप्त आवहादीन् वाहयतीति **वायुवाहनः** । वसति वासयत्याच्छादयति सर्वमिति वा वासुः, दीव्यति क्रीडते विजिगीषते व्यवहरति द्योतते सूयते गच्छतीति वा देवः, वासुश्चासौ देवश्चेति **वासुदेवः** ।

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः ॥
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः ॥

इति उद्योगपर्वणि ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥

इति च विष्णुपुराणे ।

बृहन्तो भानवो यस्य चन्द्रसूर्यादिगामिनः । तैर्विश्वं भासयति यः सः **बृहद्भानुः** उच्यते । आदिः कारणम्, स चासौ देवश्चेति **आदिदेवः**; द्योतनादिगुणवान्देवः । सुरशत्रूणां पुरदारणात् **पुरंदरः**, 'वाचंयमपुरंदरौ च' इति पाणिनिना निपातनात् ॥

**अशोकस्तारणस्तारः**
**शूरः शौरिर्जनेश्वरः ।**
**अनुकूलः शतावर्तः**
**पद्मी पद्मनिभेक्षणः** ॥ ५० ॥

शोकादिषडूर्मिवर्जितः **अशोकः** । संसारसागरात्तारयतीति **तारणः** । गर्भजन्मजरामृत्युलक्षणात् भयात् तारयतीति **तारः** । विक्रमणात् **शूरः** । शूरस्यापत्यं वसुदेवस्य सुतः **शौरिः** । जनानां जन्तूनामीश्वरो **जनेश्वरः** । आत्मत्वेन हि सर्वेषाम् **अनुकूलः** । न हि स्वस्मिन्प्रातिकूल्यं स्वय-

माचरति । धर्मत्राणाय शतमावर्तनानि प्रादुर्भावा अस्येति **शतावर्तः**; नाडीशते प्राणरूपेण वर्तत इति वा । पद्मं हस्ते विद्यते इति **पद्मी** । पद्मनिभे ईक्षणे दृशावस्येति **पद्मनिभेक्षणः** ॥

**पद्मनाभोऽरविन्दाक्षः**
**पद्मगर्भः शरीरभृत् ।**
**महर्द्धिर्ऋद्धो वृद्धात्मा**
**महाक्षो गरुडध्वजः ॥ ५१ ॥**

पद्मस्य नाभौ मध्ये कर्णिकायां स्थित इति **पद्मनाभः** । अरविन्दसदृशे अक्षिणी अस्येति **अरविन्दाक्षः** । पद्मस्य हृदयाख्यस्य मध्ये उपास्यत्वात् **पद्मगर्भः** । पोषयन्नन्नरूपेण प्राणरूपेण वा शरीरिणां शरीराणि धारयतीति **शरीरभृत्**; स्वमायया शरीराणि बिभर्तीति वा । महती ऋद्धिर्विभूतिरस्येति **महर्द्धिः** । प्रपञ्चरूपेण वर्धमानत्वात् **ऋद्धः** । वृद्धः पुरातन आत्मा यस्येति **वृद्धात्मा** । महती अक्षिणी महान्त्यक्षीणि वा अस्येति **महाक्षः** । गरुडाङ्कः ध्वजो यस्येति **गरुडध्वजः** ॥

**अतुलः शरभो भीमः**
**समयज्ञो हविर्हरिः ।**
**सर्वलक्षणलक्षण्यो**
**लक्ष्मीवान्समितिंजयः ॥ ९२ ॥**

तुला उपमानमस्य न विद्यते इति **अतुलः**, 'न तस्य प्रतिमास्ति यस्य नाम महद्यशः' इति श्रुतेः, 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति स्मृतेश्च । शराः शरीराणि, शीर्यमाणत्वात्, तेषु प्रत्यगात्मतया भातीति **शरभः** । बिभेत्यस्मात्सर्वमिति **भीमः**, 'भीमादयोऽपादाने' इति पाणिनिस्मृतेः । सन्मार्गवर्तिनाम् **अभीमः** इति वा । सृष्टिस्थितिसंहारसमयवित्, षट् समयान् जानातीति वा **समयज्ञः** ; सर्वभूतेषु समत्वं यजनमस्येति वा, 'समत्वमाराधनमच्युतस्य' इति प्रह्लादवचनात् । यज्ञेषु हविर्भागं हरतीति **हविर्हरिः**, 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति भगवद्वचनात् । अथवा, हूयते हविषा असाविति **हविः**, 'अवध्नन्पुरुषं पशुम्' इति हविष्ट्वं श्रूयते । स्मृतिमात्रेण पापं संसारं वा पुंसां हरतीति, हरितवर्णत्वाद्वा **हरिः**, 'हराम्यघं च स्मर्तॄणां हविर्भागं क्रतुष्वहम् । वर्णश्च मे हरिर्वेति

तस्माद्धरिरहं स्मृतः' इति भगवद्वचनात् । सर्वैर्लक्षणैः प्रमाणैः लक्षणं ज्ञानं जायते यत्तद्विनिर्दिष्टं सर्वलक्षणलक्षणम्, तत्र साधुः **सर्वलक्षणलक्षण्यः**, तस्यैव परमार्थत्वात् । लक्ष्मी-रस्य वक्षसि नित्यं वसतीति **लक्ष्मीवान्** । समितिं युद्धं जयतीति **समितिंजयः** ॥

**विक्षरो रोहितो मार्गो**
**हेतुर्दामोदरः सहः ।**
**महीधरो महाभागो**
**वेगवानमिताशनः ॥ ५३ ॥**

विगतः क्षरो नाशो यस्यासौ **विक्षरः** । स्वच्छन्दतया रोहितां मूर्तिं मत्स्यमूर्तिं वा वहन् **रोहितः** । मुमुक्षवः तं देवं मार्गयन्ति इति **मार्गः**; परमानन्दो येन प्राप्यते स **मार्गः** इति वा । उपादानं निमित्तं च कारणं स एवेति **हेतुः** । दमादिसाधनेन उदरः उत्कृष्टा मतिर्या, तया गम्यत इति **दामोदरः** । 'दमाद्दामोदरं विदुः' इति महाभारते । यशोदया दाम्नोदरे बद्ध इति वा । 'तयोर्मध्यगतं बद्धं दाम्ना गाढं तयोदरे । ततश्च दामोदरतां स ययौ दामबन्धनात्' इति ब्रह्मपुराणे । 'दामानि लोकनामानि तानि यस्योदरा-

न्तरे । तेन दामोदरो देवः' इति व्यासवचनाद्वा दामोदरः । सर्वानभिभवति क्षमत इति वा **महः** । मही गिरिरूपेण धरति इति **महीधरः** । 'वनानि विष्णुर्गिरयो दिशश्च' इति विष्णुपुराणे । स्वेच्छया धारयन्देहं महान्ति उत्कृष्टानि भोजनानि भागजन्यानि भुङ्क्ते इति **महाभागः**; महान् भागः भाग्यमस्यावतारेष्विति वा **महाभागः** । वेगो जवः तद्वान् **वेगवान्**, 'अनेजदेकं मनसो जवीयः' इति श्रुतेः । संहारसमये विश्वमश्नातीति **अमितशनः** ॥

**उद्भवः क्षोभणो देवः**
**श्रीगर्भः परमेश्वरः ।**
**करणं कारणं कर्ता**
**विकर्ता गहनो गुहः ॥ ५४ ॥**

प्रपञ्चोत्पत्त्युपादानकारणत्वात् **उद्भवः** । उद्गतो भवात् संसारादिति वा । सर्गकाले प्रकृतिं पुरुषं च प्रविश्य क्षोभयामासेति **क्षोभणः** । 'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास भगवान्सर्गकाले व्ययाव्ययौ' इति विष्णुपुराणे । यतो दीव्यति क्रीडति सर्गादिभिः, विजिगीषते सुरादीन्, व्यवहरति सर्वभूतेषु, आत्मतया द्योतते, स्तूयते

स्तुत्यैः, सर्वत्र गच्छति तस्मात् **देवः**, 'एको देवः' इति मन्त्रवर्णात्। श्रीर्विभूतिर्यस्योदरान्तरे जगद्रूपा यस्य गर्भे स्थिता सः **श्रीगर्भः**। परमश्चासौ ईशनशीलश्चेति **परमेश्वरः**, 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति भगवद्वचनात्। जगदुत्पत्तौ साधकतमं **करणम्**। उपादानं निमित्तं च **कारणम्**। **कर्ता** स्वतन्त्रः। विचित्रं भुवनं क्रियत इति **विकर्ता** स एव भगवान्विष्णुः। स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यत इति **गहनः**। गूहते संवृणोति स्वरूपादि निजमाययेति **गुहः**॥

**व्यवसायो व्यवस्थानः**
**संस्थानः स्थानदो ध्रुवः।**
**परर्द्धिः परमस्पष्ट-**
**स्तुष्टः पुष्टः शुभेक्षणः॥ ५८॥**

संविन्मात्रस्वरूपत्वात् **व्यवसायः**। अस्मिन् व्यवस्थितिः सर्वस्येति **व्यवस्थानः**; लोकपालाद्यधिकारजरायुजाण्डजोद्भिज्जब्राह्मणक्षत्रियवैश्यशूद्रावान्तरवर्णब्रह्मचारिगृहस्थवानप्रस्थसंन्यासलक्षणाश्रमतद्धर्मादिकान् विभज्य करोति इति वा **व्यवस्थानः**। 'कृत्यल्युटो बहुलम्' इति

बहुलग्रहणात् कर्तरि ल्युट् प्रत्ययः । अत्र भूतानां संस्थितिः प्रलयात्मिका, समीचीनं स्थानमस्येति वा **संस्थानः** । ध्रुवादीनां कर्मानुरूपं स्थानं ददातीति **स्थानदः** । अविनाशित्वात् ध्रुवः । परा ऋद्धिर्विभूतिरस्येति **परर्द्धिः** । परा मा शोभा अस्येति परमः, सर्वोत्कृष्टो वा अनन्याधीनसिद्धित्वात्, संविदात्मतया स्पष्टः **परमस्पष्टः** । परमानन्दैकरूपत्वात् **तुष्टः** । सर्वसंपूर्णत्वात् **पुष्टः** । ईक्षणं दर्शनं यस्य शुभं शुभकरं मुमुक्षूणां मोक्षदं भोगार्थिनां भोगदं सर्वसंदेहविच्छेदकारणं पापिनां पावनं हृदयग्रन्थेर्विच्छेदकरं सर्वकर्मणां क्षपणम् अविद्यायाश्च निवर्तकं सः **शुभेक्षणः**, 'भिद्यते हृदयग्रन्थिः' इत्यादिश्रुतेः ॥

**रामो विरामो विरतो**
**मार्गो नेयो नयोऽनयः ।**
**वीरः शक्तिमतां श्रेष्ठो**
**धर्मो धर्मविदुत्तमः ॥ ५६ ॥**

नित्यानन्दलक्षणेऽस्मिन् योगिनो रमन्त इति **रामः**; 'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनैतत्परं ब्रह्माभिधीयते' इति पद्मपुराणे; स्वेच्छया

रमणीयं वपुर्वहन्वा दाशरथी **रामः**। विरामोऽवसानं प्राणिनामस्मिन्निति **विरामः**। विगतं रतमस्य विषयसेवायामिति **विरतः**। यं विदित्वा अमृतत्वाय कल्पन्ते योगिनो मुमुक्षवः स एव पन्था **मार्गः**, 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः। मार्गेण सम्यग्ज्ञानेन जीवः परमात्मतया नीयत इति **नेयः**। नयतीति **नयः** नेता। मार्गो नेयो नयः इति त्रिरूपः परिकल्प्यते। नास्य नेता विद्यते इति **अनयः**॥

इति नाम्नां चतुर्थं शतं विवृतम्॥

विक्रमशालित्वात् **वीरः**। शक्तिमतां विरिञ्च्यादीनामपि शक्तिमत्त्वात् **शक्तिमतां श्रेष्ठः**। सर्वभूतानां धारणात् **धर्मः**, 'अणुरेष धर्मः' इति श्रुतेः; धर्मैराराध्यत इति वा **धर्मः**। श्रुतयः स्मृतयश्च यस्याज्ञाभूताः स एव सर्वधर्मविदामुत्तमः इति **धर्मविदुत्तमः**॥

**वैकुण्ठः पुरुषः प्राणः**
**प्राणदः प्रणवः पृथुः।**
**हिरण्यगर्भः शत्रुघ्नो**
**व्याप्तो वायुरधोक्षजः॥ ५७॥**

विविधा कुण्ठा गतेः प्रतिहतिः विकुण्ठा, विकुण्ठायाः कर्तेति **वैकुण्ठः**, जगदारम्भे विश्लिष्टानि भूतानि परस्परं

संश्लेषयन् तेषां गतिं प्रतिबध्नातीति । 'मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम' इति शान्तिपर्वणि । सर्वस्मात्पुरा सदनात्सर्वपापस्य सादनाद्वा **पुरुषः**; 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः' इति श्रुतेः; पुरि शयनाद्वा **पुरुषः**, 'स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयः' इति श्रुतेः । प्राणिति क्षेत्रज्ञरूपेण प्राणात्मना चेष्टयन्वा **प्राणः** । 'चेष्टां करोति श्वसनस्वरूपी' इति विष्णुपुराणे । खण्डयति प्राणिनां प्राणान प्रलयादिष्विति **प्राणदः** । प्रणौतीति **प्रणवः**, 'तस्मादोमिति प्रणौति' इति श्रुतेः । प्रणम्यते इति वा **प्रणवः**, 'प्रणमन्तीह यं वेदास्तस्मात्प्रणव उच्यते' इति सनत्कुमारवचनात् । प्रपञ्चरूपेण विस्तृतत्वात् **पृथुः** । हिरण्यगर्भसंभूतिकारणं हिरण्मयमण्डं यद्वीर्यसंभूतम्, तदस्य गर्भ इति **हिरण्यगर्भः** । त्रिदशशत्रून्हन्तीति **शत्रुघ्नः** । कारणत्वेन सर्वकार्याणां व्यापनात् **व्याप्तः** । वाति गन्धं करोतीति **वायुः**, 'पुण्यो गन्धः पृथिव्यां च' इति भगवद्वचनात् । 'अधो न क्षीयते जातु यस्मात्तस्मात् **अधोक्षजः**' इति उद्योगपर्वणि; द्यौरक्षम् पृथिवी चाधः, तयोर्यस्मादजायत मध्ये वैराजरूपेण इति वा **अधोक्षजः**; अधोभूते ह्यक्षगणे प्रत्यग्रूपप्रवाहिते । जायते तस्य वै ज्ञानं तेन **अधोक्षजः** उच्यते ॥

**ऋतुः सुदर्शनः कालः**
**परमेष्ठी परिग्रहः ।**
**उग्रः संवत्सरो दक्षो**
**विश्रामो विश्वदक्षिणः ॥ ५८ ॥**

कालात्मना ऋतुशब्देन लक्ष्यत इति **ऋतुः** । शोभनं निर्वाणफलं दर्शनं ज्ञानमस्येति, शुभे दर्शने ईक्षणे पद्मपत्रायते अस्येति, सुखेन दृश्यते भक्तैरिति वा **सुदर्शनः** । कलयति सर्वमिति **कालः**, 'कालः कलयतामहम्' इति भगवद्वचनात् । परमे प्रकृष्टे स्वे महिम्नि हृदयाकाशे स्थातुं शीलमस्येति **परमेष्ठी**, 'परमेष्ठी विभ्राजते' इति मन्त्रवर्णात् । शरणार्थिभिः परितो गृह्यते सर्वगतत्वात्, परितो ज्ञायते इति वा, पत्रपुष्पादिकं भक्तैरर्पितं परिगृह्णातीति वा **परिग्रहः** । सूर्यादीनामपि भयहेतुत्वात् **उग्रः**, 'भीषोदेति सूर्यः' इति श्रुतेः । संवसन्ति भूतान्यस्मिन्निति **संवत्सरः** । जगद्रूपेण वर्धमानत्वात् सर्वकर्माणि क्षिप्रं करोतीति वा **दक्षः** । संसारसागरे क्षुत्पिपासादिषडूर्मिभिस्तरङ्गिते अविद्याद्यैर्महाक्लेशैः मदादिभिरुपक्लेशैश्च वशीकृतानां विश्रान्तिं काङ्क्षमाणानां विश्रामं मोक्षं करोतीति **विश्रामः** । विश्वस्मात् दक्षिणः शक्तः, विश्वेषु कर्मसु दाक्षिण्याद्वा **विश्वदक्षिणः** ॥

**विस्तारः स्थावरस्थाणुः**
**प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो**
**महाभोगो महाधनः ॥ ५९ ॥**

विस्तीर्यन्ते समस्तानि जगन्त्यस्मिन्निति **विस्तारः** । स्थितिशीलत्वात् स्थावरः; स्थितिशीलानि पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति स्थाणुः; स्थावरश्चासौ स्थाणुश्च **स्थावर-स्थाणुः** । संविदात्मना **प्रमाणम्** । अन्यथाभावव्यतिरेकेण कारणमिति **बीजमव्ययम्**, सविशेषणमेकं नाम । सुखरूपत्वात्सर्वैरर्थ्यत इति **अर्थः** । न विद्यते प्रयोजनम् आप्तकामत्वात् अस्येति **अनर्थः** । महान्तः कोशा अन्नमयादयः आच्छादका अस्येति **महाकोशः** । महान् भोगः सुखरूपोऽस्येति **महाभोगः** । महत् भोगसाधनलक्षणं धनमस्येति **महाधनः** ॥

**अनिर्विण्णः स्थविष्ठोऽभू-**
**र्धर्मयूपो महामखः ।**
**नक्षत्रनेमिर्नक्षत्री**
**क्षमः क्षामः समीहनः ॥ ६० ॥**

आप्तकामत्वात् निर्वेदोऽस्य न विद्यत इति **अनिर्विण्णः**। वैराजरूपेण स्थितः **स्थविष्ठः** 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतेः । अजन्मा **अभूः**; अथवा 'भू सत्तायाम्' इत्यस्य संपदादित्वात् क्विप्; मही वा । यूपे पशुवत् तत्समाराधनात्मका धर्माः तत्र बध्यन्त इति **धर्मयूपः**। यस्मिन्नर्पिता मखा यज्ञा निर्वाणलक्षणफलं प्रयच्छन्तो महान्तो जायन्ते सः **महामखः**। 'नक्षत्रतारकैः सार्धं चन्द्रसूर्यादयो ग्रहाः । वायुपाशमयैर्बन्धैर्निबद्धा ध्रुवसंज्ञिते' स ज्योतिषां चक्रं भ्रामयंस्तारामयस्य शिंशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुवः । तस्य शिंशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत्प्रवर्तकः स्थितो विष्णुरिति **नक्षत्रनेमिः**, शिंशुमारवर्णने 'विष्णुर्हृदयम' इति स्वाध्यायब्राह्मणे श्रूयते । चन्द्ररूपेण **नक्षत्री**, 'नक्षत्राणामहं शशी' इति भगवद्वचनात् । समस्तकार्येषु समर्थः **क्षमः**; क्षमत इति वा, 'क्षमया पृथिवीसमः' इति वाल्मीकिवचनात् । सर्वविकारेषु क्षपितेषु स्वात्मनावस्थित इति **क्षामः**। 'क्षायो मः' इति निष्ठातकारस्य मकारादेशः । सृष्ट्याद्यर्थं सम्यगीहत इति **समीहनः**॥

**यज्ञ इज्यो महेज्यश्च**
**क्रतुः सत्रं सतां गतिः ।**

**सर्वदर्शी विमुक्तात्मा**
**सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥**

सर्वयज्ञस्वरूपत्वात् **यज्ञः**; सर्वेषां देवानां तुष्टिकारको यज्ञाकारेण प्रवर्तत इति वा, 'यज्ञो वै विष्णुः' इति श्रुतेः । यष्टव्योऽप्ययमेवेति **इज्यः** । 'ये यजन्ति मखैः पुण्यैर्देवतादीन्पितॄनपि । आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते' इति हरिवंशे । सर्वासु देवतासु यष्टव्यासु प्रकर्षेण यष्टव्यो मोक्षफलदातृत्वादिति **महेज्यः** । यूपसहितो यज्ञः **क्रतुः** । आसत्युपैतिचोदनालक्षणं **सत्रम्**; सतस्त्रायत इति वा । सतां मुमुक्षूणां नान्या गतिरिति **सतां गतिः** । सर्वेषां प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति **सर्वदर्शी** । स्वभावेन विमुक्त आत्मा यस्येति, विमुक्तश्चासावात्मा चेति वा **विमुक्तात्मा**, 'विमुक्तश्च विमुच्यते' इति श्रुतेः । सर्वश्चासौ ज्ञश्चेति **सर्वज्ञः**, 'इदं सर्वं यदयमात्मा' इति श्रुतेः । ज्ञानमुत्तममित्येतत्सविशेषणमेकं नाम, ज्ञानं प्रकृष्टमजन्यम् अनवच्छिन्नं सर्वस्य साधकतममिति **ज्ञानमुत्तमं** ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः ॥

**सुव्रतः सुमुखः सूक्ष्मः**
**सुघोषः सुखदः सुहृत् ।**

**मनोहरो जितक्रोधो**
**वीरबाहुर्विदारणः ॥ ६२ ॥**

शोभनं व्रतमस्येति **सुव्रतः** । 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम' इति श्रीरामायणे रामवचनम् । शोभनं मुखमस्येति **सुमुखः** । 'प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम्' इति श्रीविष्णुपुराणे । वनवाससुमुखत्वाद्वा दाशरथी रामः **सुमुखः** ॥

स्वपितुर्वचनं श्रीमानभिषेकात्परं प्रियम् ।
मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥

इमानि तु महारण्ये विहृत्य नव पञ्च च ॥
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥

√न वनं गन्तुकामस्य त्यजतश्च वसुंधराम् ।
सर्वलोकातिगस्यैव मनो रामस्य विव्यथे ॥

इति रामायणे ।

सर्वविद्योपदेशेन वा **सुमुखः**, 'यो ब्रह्माणम्' इत्यादिश्रुतेः । शब्दादिस्थूलकारणरहितत्वात्— शब्दादयो ह्याकाशादीनामुत्तरोत्तरस्थूलत्वकारणानि, तदभावात्— **सूक्ष्मः**, 'सर्वगतं सुसूक्ष्मम्' इति श्रुतेः । शोभनो घोषो वेदात्मकोऽस्येति, मेघगम्भीरघोषत्वाद्वा **सुघोषः** । सद्वृत्तानां सुखं ददाति,

असद्वृत्तानां सुखं द्यति खण्डयतीति वा **सुखदः** । प्रत्युपकारनिरपेक्षतयोपकारित्वात् **सुहृत्** । निरतिशयानन्दरूपत्वात् मनो हरतीति **मनोहरः**, 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' इति श्रुतेः । जितः क्रोधो येन सः **जितक्रोधः**; वेदमर्यादास्थापनार्थं सुरारीन् हन्ति, न तु कोपवशादिति । त्रिदशशत्रून्निघ्नन्वेदमर्यादां स्थापयन् विक्रमशाली बाहुरस्येति **वीरबाहुः** । अधार्मिकान् विदारयतीति **विदारणः** ॥

**स्वापनः स्ववशो व्यापी**
**नैकात्मा नैककर्मकृत् ।**
**वत्सरो वत्सलो वत्सी**
**रत्नगर्भो धनेश्वरः ॥ ६३ ॥**

प्राणिनः स्वीयान् आत्मसंबोधविधुरान् मायया कुर्वन् **स्वापनः** । स्वतन्त्रः **स्ववशः**, जगदुत्पत्तिस्थितिलयहेतुत्वात् । आकाशवत्सर्वगतत्वात् **व्यापी**, 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः; कारणत्वेन सर्वकार्याणां व्यापनाद्वा **व्यापी** । जगदुत्पत्त्यादिषु आविर्भूतनिमित्तशक्तिभिर्विभूतिभिरनेकधा तिष्ठन् **नैकात्मा** । जगदुत्पत्तिसंपत्तिविपत्तिप्रभृतिकर्माणि करोतीति **नैककर्मकृत्** । वसत्यत्राखिलमिति **वत्सरः** । भक्तस्ने-

हित्वात् **वत्सलः**; 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः। वत्सानां पालनात् **वत्सी**, जगत्पितुस्तस्य वत्सभूताः प्रजा इति वा **वत्सी**। रत्नानि गर्भभूतानि अस्येति समुद्रः **रत्नगर्भः**। धनानामीश्वरः **धनेश्वरः**॥

**धर्मगुब्धर्मकृद्धर्मी**
**सदसत्क्षरमक्षरम्।**
**अविज्ञाता सहस्रांशु-**
**र्विधाता कृतलक्षणः॥ ६४॥**

धर्मं गोपयतीति **धर्मगुप्**, 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति भगवद्वचनात्। धर्माधर्मविहीनोऽपि धर्ममर्यादास्थापनार्थं धर्ममेव करोतीति **धर्मकृत्**। धर्मान् धारयतीति **धर्मी**। अवितथं परं ब्रह्म **सत्**, 'सदेव सोम्येदम्' इति श्रुतेः। अपरं ब्रह्म **असत्**, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुते.। सर्वाणि भूतानि **क्षरम्**। कूटस्थः **अक्षरम्**, 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति भगवद्वचनात्। आत्मनि कर्तृत्वादिविकल्पविज्ञानं कल्पितमिति तद्वासनावगुण्ठितो जीवो विज्ञाता, तद्विलक्षणो

विष्णुः **अविज्ञाता** । आदित्यादिगता अंशवोऽस्येत्ययमेव मुख्यः **सहस्रांशुः**, 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुते, 'यदादित्यगतं तेजः' इति स्मृतेश्च । विशेषेण शेषदिग्गज-भूधरान् सर्वभूतानां धातॄन् दधातीति **विधाता** । नित्य-निष्पन्नचैतन्यरूपत्वान् **कृतलक्षणः**; कृतानि लक्षणानि शास्त्राण्यनेनेति वा; 'वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्' इत्यत्रैव वक्ष्यति; सजातीयविजातीयव्यवच्छे-दकं लक्षणं सर्वभावाना कृतमनेनेति वा; आत्मनः श्रीव-त्सलक्षणं वक्षसि तेन कृतमिति वा **कृतलक्षणः** ॥

**गभस्तिनेमिः सत्त्वस्थः**
**सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवो**
**देवेशो देवभृद्गुरुः ॥ ६५ ॥**

गभस्तिचक्रस्य मध्ये सूर्यात्मना स्थित इति **गभस्ति-नेमिः** । सत्त्वं गुणं प्रकाशकं प्राधान्येनाधितिष्ठतीति, सर्वप्रा-णिषु तिष्ठतीति वा **सत्त्वस्थः** । विक्रमशालित्वात्सिंहवत् **सिंहः**; नृशब्दलोपेन 'सत्यभामा भामा' इतिवद्वा **सिंहः** । भू-तानां महानीश्वरः, भूतेन सत्येन स एव परमो महानीश्वर

इति वा **भूतमहेश्वरः** । सर्वभूतान्यादीयन्तेऽनेनेति आदिः, आदिश्चासौ देवश्चेति **आदिदेवः** । सर्वान्भावान्परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते, तस्मादुच्यते **महादेवः** । प्राधान्येन देवानामीशो **देवेशः** । देवान् बिभर्तीति देवभृत् शक्रः, तस्यापि शासितेति **देवभृद्गुरुः**; देवानां भरणात्, सर्वविद्यानां च निगरणाद्वा **देवभृद्गुरुः** ॥

**उत्तरो गोपतिर्गोप्ता**
**ज्ञानगम्यः पुरातनः ।**
**शरीरभूतभृद्भोक्ता**
**कपीन्द्रो भूरिदक्षिणः** ॥ ६६ ॥

जन्मसंसारबन्धनादुत्तरतीति **उत्तरः**; सर्वोत्कृष्ट इति वा, 'विश्वस्मादिन्द्र उत्तरः' इति श्रुतेः । गवां पालनाद्गोपवेषधरो **गोपतिः**; गौर्मही, तस्याः पतित्वाद्वा । समस्तभूतानि पालयन रक्षको जगतः इति **गोप्ता** । न कर्मणा न ज्ञानकर्मभ्यां वा गम्यते, किंतु ज्ञानेन गम्यते इति **ज्ञानगम्यः** । कालेनापरिच्छिन्नत्वात् पुरापि भवतीति **पुरातनः** । शरीरारम्भकभूतानां भरणात् प्राणरूपधरः **शरीरभूतभृत्** । पालकत्वात् **भोक्ता**; परमानन्दसंदोहसंभोगाद्वा **भोक्ता** ॥

इति नाम्नां पञ्चमं शतं विवृतम् ॥

कपिश्चासाविन्द्रश्चेति कपिर्वराहः, वाराहं वपुरास्थितः **कपीन्द्रः**; कपीनां वानराणामिन्द्रः **कपीन्द्रः** राघवो वा । भूरयो बह्वयः यज्ञदक्षिणाः धर्ममर्यादां दर्शयतो यज्ञं कुर्वतो विद्यन्त इति **भूरिदक्षिणः** ॥

**सोमपोऽमृतपः सोमः**
**पुरुजित्पुरुसत्तमः ।**
**विनयो जयः सत्यसंधो**
**दाशार्हः सात्त्वतां पतिः ॥ ६७ ॥**

सोमं पिबति सर्वयज्ञेषु यष्टव्यदेवतारूपेणेति **सोमपः**; धर्ममर्यादां दर्शयन्यजमानरूपेण वा **सोमपः** । स्वात्मामृतरसं पिबन् **अमृतपः**; असुरैः ह्रियमाणममृतं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबदिति वा । सोमरूपेणौषधीः पोषयन् **सोमः**; उमया सहितः शिवो वा । पुरून् बहून् जयतीति **पुरुजित्** । विश्वरूपत्वात् पुरुः, उत्कृष्टत्वात् सत्तमः, पुरुश्चासौ सत्तमश्चेति **पुरुसत्तमः** । विनयं दण्डं करोति दुष्टानामिति **विनयः** । समस्तानि भूतानि जयतीति **जयः** । सत्या संधा संकल्पः अस्येति **सत्यसंधः**, 'सत्यसंकल्पः' इति श्रुतेः । दाशो दानं तमर्हतीति **दाशार्हः**; दशार्हकु-

लोद्भवाद्वा । सात्त्वतं नाम तन्त्रम्, 'तत्करोति तदाचष्टे' इति णिचि कृते क्विप्प्रत्यये णिलोपे च कृते पदं सात्त्वत्, तेषां पतिः योगक्षेमकर इति **सात्त्वतां पतिः** ॥

**जीवो विनयितासाक्षी**
**मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा**
**महोदधिशयोऽन्तकः ॥ ६८ ॥**

प्राणान् क्षेत्रज्ञरूपेण धारयन्, **जीवः** उच्यते । विनयित्वं विनयिता, तां च साक्षात्पश्यति प्रजानामिति **विनयितासाक्षी**; अथवा, नयतेर्गतिवाचिनो रूपं **विनयिता**, **असाक्षी** असाक्षाद्द्रष्टा आत्मातिरिक्तं वस्तु न पश्यतीत्यर्थः । मुक्तिं ददातीति **मुकुन्दः** । पृषोदरादित्वात्साधुत्वम् । अक्षरसाम्यान्निरुक्तिवचनात् नैरुक्तानां मुकुन्द इति निरुक्तिः । अमिता अपरिच्छिन्ना विक्रमास्त्रयः पादविक्षेपा अस्य, अमितं विक्रमणं शौर्यमस्येति वा **अमितविक्रमः** । अम्भांसि देवादयोऽस्मिन्निधीयन्त इति **अम्भोनिधिः**, 'तानि वा एतानि चत्वार्यम्भांसि । देवा मनुष्याः पितरोऽसुराः' इति श्रुतेः ; सागरो वा, 'सरसामस्मि सागरः' इति भगवद्वच-

नात् । देशतः कालतः वस्तुतश्चापरिच्छिन्नत्वात् **अनन्तात्मा** । संहृत्य सर्वभूतान्येकार्णवं जगत्कृत्वा अधिशेते महोदधिमिति **महोदधिशयः** । अन्तं करोति भूतानामिति **अन्तकः** । 'तत्करोति तदाचष्टे' इति णिचि ण्वुलि अकादेशः ॥

**अजो महार्हः स्वाभाव्यो**
**जितामित्रः प्रमोदनः ।**
**आनन्दो नन्दनोऽनन्दः**
**सत्यधर्मा त्रिविक्रमः ॥ ६० ॥**

आत् विष्णोः अजायत इति कामः **अजः** । महः पूजा तदर्हत्वात् **महार्हः** । स्वभावेनैवाभाव्यो नित्यनिष्पन्नरूपत्वात् इति **स्वाभाव्यः** । जिता अमित्रा अन्तर्वर्तिनो रागद्वेषादयो बाह्याश्च रावणकुम्भकर्णशिशुपालादयः येनासौ **जितामित्रः**, । स्वात्मामृतरसास्वादान्नित्यं प्रमोदते, ध्यायिनां ध्यानमात्रेण प्रमोदं करोतीति वा **प्रमोदनः** । आनन्दः स्वरूपमस्येति **आनन्दः**, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । नन्दयतीति **नन्दनः** । सर्वाभिरुपपत्तिभिः समृद्धो **नन्दः** । सुखं वैषयिकं नास्य

विद्यत इति **अनन्दः**, 'यो वै भूमा तत्सुखं नाल्पे सुख-मस्ति' इति श्रुतेः । सत्या धर्मज्ञानादयोऽस्येति **सत्यधर्मा** । त्रयो विक्रमास्त्रिषु लोकेषु क्रान्ता यस्य सः **त्रिविक्रमः**, 'त्रीणि पदा विचक्रमे' इति श्रुतेः; त्रयो लोकाः क्रान्ता येनेति वा **त्रिविक्रमः** । 'त्रिरित्येव त्रयो लोकाः कीर्तिता मुनिसत्तमैः । क्रमते तांस्त्रिधा सर्वांस्त्रिक्रमोऽसि जनार्दन' इति हरिवंशे ॥

**महर्षिः कपिलाचार्यः**
**कृतज्ञो मेदिनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो**
**महाश्रृङ्गः कृतान्तकृत् ॥ ७० ॥**

**महर्षिः कपिलाचार्यः** इति सविशेषणमेकं नाम । महां-श्चासावृषिश्चेति महर्षिः, कृत्स्नस्य वेदस्य दर्शनात्; अन्ये तु वेदैकदेशदर्शनात् ऋषयः । कपिलश्चासौ सांख्यस्य शुद्धतत्त्वविज्ञानस्याचार्यश्चेति कपिलाचार्यः, 'शुद्धात्मतत्त्व-विज्ञानं सांख्यमित्यभिधीयते' इति व्यासस्मृतेः, 'ऋषि प्रसूतं कपिलं महान्तम्' इति श्रुतेश्च, 'सिद्धानां कपिलो मुनिः' इति स्मृतेश्च । कृतं कार्यं जगत्, ज्ञ आत्मा, कृतं

च तत् ज्ञश्चेति **कृतज्ञः** । मेदिन्याः भूम्याः पतिः **मेदिनी-पतिः** । त्रीणि पदान्यस्येति **त्रिपदः**, 'त्रीणि पदा विचक्रमे' इति श्रुतेः । गुणावेशेन संजातास्तिस्रो दशा अवस्था जाग्र-दादयः, तासामध्यक्ष इति **त्रिदशाध्यक्षः** । मत्स्यरूपी महति शृङ्गे प्रलयाम्भोधौ नावं बद्ध्वा चिक्रीड इति **महाशृङ्गः** । कृतस्यान्तं संहारं करोतीति, कृतान्तं मृत्युं कृन्ततीति वा **कृतान्तकृत्** ॥

**महावराहो गोविन्दः**
**सुषेणः कनकाङ्गदी ।**
**गुह्यो गभीरो गहनो**
**गुप्तश्चक्रगदाधरः ॥ ७१ ॥**

महांश्चासौ वराहश्चेति **महावराहः** । गोभिर्वाणीभिः विन्दते, वेत्ति वेदान्तवाक्यैरिति वा **गोविन्दः** । 'गोभि-रेव यतो वेद्यो गोविन्दः समुदाहृतः' इति श्रीविष्णुतिलके । शोभना सेना गणात्मिका यस्येति **सुषेणः** । कनकमयान्य-ङ्गदानि अस्येति **कनकाङ्गदी** । रहस्योपनिषद्वेद्यत्वाद्गुहायां हृदयाकाशे निहित इति वा **गुह्यः** । ज्ञानैश्वर्यबलवीर्यादिभि-र्गम्भीरो **गभीरः** । दुष्प्रवेशत्वात् **गहनः**; अवस्थात्रयभावा-

भावसाक्षित्वात् **गहनो** वा । वाङ्मनसागोचरत्वात् **गुप्तः**, 'एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते' इति श्रुतेः । मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयन् लोकरक्षार्थमुक्तः **चक्रगदाधरः** ॥

**वेधाः स्वाङ्गोऽजितः कृष्णो**
**दृढः संकर्षणोऽच्युतः ।**
**वरुणो वारुणो वृक्षः**
**पुष्कराक्षो महामनाः ॥ ७२ ॥**

विधाता **वेधाः** । पृषोदरादित्वात्साधुत्वम् । स्वयमेव कार्यकरणे अङ्गं सहकारीति **स्वाङ्गः** । न केनाप्यवतारेषु जित इति **अजितः** । **कृष्णः** कृष्णद्वैपायनः, 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम । को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इति विष्णुपुराणवचनात् । स्वरूपसामर्थ्यादिः प्रच्युत्यभावात् **दृढः** । संहारसमये युगपत्प्रजाः संकर्षतीति संकर्षणः, न च्योतति स्वरूपादित्यच्युतः, **संकर्षणोऽच्युतः** इति नामैकं सविशेषणम् । स्वरश्मीनां संवरणात्सायंगतः सूर्यो **वरुणः**, 'इमं मे वरुण श्रुधी हवम्' इति मन्त्रवर्णात् । वरुणस्यापत्यं वसिष्ठोऽगस्त्यो वा **वारुणः** ।

वृक्ष इवाचलतया स्थित इति **वृक्षः**, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति श्रुतेः । व्याप्त्यर्थादक्षतेर्धातोः पुष्करोपपदादण्प्रत्यये **पुष्कराक्षः**; हृदयपुण्डरीके चिन्तितः, स्वरूपेण प्रकाशत इति वा **पुष्कराक्षः** । सृष्टिस्थित्यन्तकर्माणि मनसैव करोतीति **महामनाः**; 'मनसैव जगत्सृष्टिं संहारं च करोति यः' इति विष्णुपुराणे ॥

**भगवान्भगहानन्दी**
**वनमाली हलायुधः ।**
**आदित्यो ज्योतिरादित्यः**
**सहिष्णुर्गतिसत्तमः ॥ ७३ ॥**

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा' सोऽस्यास्तीति **भगवान्** । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इति विष्णुपुराणे । ऐश्वर्यादिकं संहारसमये हन्तीति **भगहा** । सुखस्वरूपत्वात् **आनन्दी**; सर्वसंपत्समृद्धत्वात् **आनन्दी** वा । भूततन्मात्ररूपां वैजयन्त्याख्यां वनमालां वहन् **वनमाली** । हलमायुधमस्येति **हलायुधो** बलभद्राकृतिः । अदित्यां कश्यपाद्वामनरूपेण जात

**आदित्यः** । ज्योतिषि सवितृमण्डले स्थितो **ज्योतिरादित्यः** । द्वन्द्वानि शीतोष्णादीनि सहत इति **सहिष्णुः** । गतिश्चासौ सत्तमश्चेति **गतिसत्तमः** ॥

**सुधन्वा खण्डपरशु-**
**र्दारुणो द्रविणप्रदः ।**
**दिवःस्पृक्सर्वदृग्व्यासो**
**वाचस्पतिरयोनिजः ॥ ७४ ॥**

शोभनमिन्द्रियादिमयं शार्ङ्गं धनुरस्यास्तीति **सुधन्वा** । शत्रूणां खण्डनात् खण्डः परशुरस्य जामदग्न्याकृतेरिति **खण्डपरशुः**; अखण्डः परशुरस्येति वा । सन्मार्गविरोधिनां दारुणत्वात् **दारुणः** । द्रविणं वाञ्छितं भक्तेभ्यः प्रददातीति **द्रविणप्रदः** । दिवः स्पर्शनात् **दिवःस्पृक्** । सर्वदृशां सर्वज्ञानां विस्तारकृद्व्यासः **सर्वदृग्व्यासः** । अथवा, सर्वा च सा दृक्चेति **सर्वदृक्** सर्वाकारं ज्ञानम्; सर्वस्य दृष्टित्वाद्वा **सर्वदृक्** । ऋग्वेदादिविभागेन चतुर्धा वेदा व्यस्ताः कृताः, आद्यो वेद एकविंशतिधा कृतः, द्वितीयः एकोत्तरशतधा कृतः, सामवेदः सहस्रधा कृतः, अथर्ववेदो नवधा शाखाभेदेन कृतः । एवम् अन्यानि च पुराणानि व्यस्तान्यनेनेति **व्यासः**

ब्रह्मा । **वाचस्पतिरयोनिजः**; वाचः विद्यायाः पतिः वाचस्पतिः, जनन्यां न जायत इति अयोनिजः; इति सविशेषणमेकं नाम ॥

**त्रिसामा सामगः साम**
**निर्वाणं भेषजं भिषक् ।**
**संन्यासकृच्छमः शान्तो**
**निष्ठा शान्तिः परायणम् ॥ ७९ ॥**

देवव्रतसमाख्यातैः त्रिभिः सामभिः सामगैः स्तुत इति **त्रिसामा**। साम गायतीति **सामगः**, 'वेदानां सामवेदोऽस्मि' इति भगवद्वचनात् । सामवेदः **साम** । सर्वदुःखोपशमलक्षणं परमानन्दरूपं **निर्वाणम्** । संसाररोगस्यौषधं **भेषजम्** । संसाररोगनिर्मोक्षकारिणीं परां विद्यामुपदिदेश गीतास्विति **भिषक्**, 'भिषक्तमं त्वा भिषजां शृणोमि' इति श्रुतेः । मोक्षार्थं चतुर्थमाश्रमं कृतवानिति **संन्यासकृत्** । संन्यासिनां प्राधान्येन ज्ञानसाधनं शममाचष्ट इति **शमः**, 'यतीनां प्रशमो धर्मो नियमो वनवासिनाम् । दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्' इति स्मृतेः । 'तत्करोति तदाचष्टे' इति णिचि पचाद्यचि कृते रूपं शम इति । सर्वभूतानां श-

मयितेति वा **शमः** । विषयसुखेष्वसङ्गतया **शान्तः**, 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । प्रलये नितरां तत्रैव तिष्ठन्ति भूतानीति **निष्ठा** । समस्ताविद्यानिवृत्तिः **शान्तिः** । सा ब्रह्मैव परमुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति **परायणम्** । पुंलिङ्गपक्षे बहुव्रीहिः ॥

**शुभाङ्गः शान्तिदः स्रष्टा**
**कुमुदः कुवलेशयः ।**
**गोहितो गोपतिर्गोप्ता**
**वृषभाक्षो वृषप्रियः ॥ ७६ ॥**

सुन्दरां तनुं धारयन् **शुभाङ्गः** । रागद्वेषादिनिर्मोक्षलक्षणां शान्तिं ददातीति **शान्तिदः** । सर्गादौ सर्वभूतानि ससर्जेति **स्रष्टा** । कौ भूम्यां मोदत इति **कुमुदः** । कोः क्षितेर्वलनात् संसरणात् कुवलं जलम्, तस्मिन् शेत इति **कुवलेशयः**; 'शयवासवासिष्वकालात्' इति अलुक् सप्तम्याः; कुवलयस्य बदरीफलस्य मध्ये शेते तक्षकः, सोऽपि तस्य विभूतिरिति वा हरिः **कुवलेशयः**; कौ भूम्यां वलते संश्रयते इति सर्पाणामुदरं कुवलम्, तस्मिन् शेषोदरे शेते इति **कुवलेशयः** । गवां वृद्ध्यर्थं गोवर्धनं धृतवानिति गोभ्यो

हितः **गोहितः**; गोर्भूमेः भारावतरणेच्छया शरीरग्रहणं कुर्वन्वा **गोहितः**। गोर्भूम्याः पतिः **गोपतिः**। रक्षको जगत इति **गोप्ता**। स्वमायया स्वमात्मानं संवृणोतीति वा **गोप्ता**। सकलान् कामान् वर्षुके अक्षिणी अस्येति, वृषभो धर्मः स एव वा दृष्टिरस्येति **वृषभाक्षः**। वृषो धर्मः प्रियो यस्य सः **वृषप्रियः**; 'वा प्रियस्य' इति पूर्वनिपातविकल्पविधानात् परनिपातः; वृषश्चासौ प्रियश्चेति वा ॥

**अनिवर्ती निवृत्तात्मा**
**संक्षेप्ता क्षेमकृच्छिवः ।**
**श्रीवत्सवक्षाः श्रीवासः**
**श्रीपतिः श्रीमतां वरः ॥ ७७ ॥**

देवासुरसंग्रामान्न निवर्तत इति **अनिवर्ती**; वृषप्रियत्वाद्धर्मान्न निवर्तत इति वा। स्वभावतो विषयेभ्यो निवृत्त आत्मा मनः अस्येति **निवृत्तात्मा**। विस्तृतं जगत् संसारसमये सूक्ष्मरूपेण संक्षिपन् **संक्षेप्ता**। उपात्तस्य परिरक्षणं करोतीति **क्षेमकृत्**। स्वनामस्मृतिमात्रेण पावयन् **शिवः**॥

**इति नाम्नां षष्ठं शतं विवृतम् ॥**

श्रीवत्ससंज्ञं चिह्नमस्य वक्षसि स्थितमिति **श्रीवत्स**-

**वक्षाः**। अस्य वक्षसि श्रीरनपायिनी वसतीति **श्रीवासः**। अमृतमथने सर्वान् सुरासुरादीन् विहाय श्रीरेनं पतित्वेन वरयामासेति **श्रीपतिः**। श्रीः परा शक्तिः, तस्याः पतिरिति वा, 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः। ऋग्यजुःसामलक्षणा श्रीर्येषां तेषां सर्वेषां श्रीमतां विरिञ्चयादीनां प्रधानभूतः **श्रीमतां वरः**, 'ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सताम्' इति श्रुतेः॥

**श्रीदः श्रीशः श्रीनिवासः**
**श्रीनिधिः श्रीविभावनः।**
**श्रीधरः श्रीकरः श्रेयः**
**श्रीमाँल्लोकत्रयाश्रयः॥ ७८॥**

श्रियं ददाति भक्तानामिति **श्रीदः**। श्रिय ईशः **श्रीशः**। श्रीमत्सु नित्यं वसतीति **श्रीनिवासः**। श्रीशब्देन श्रीमन्तो लक्ष्यन्ते। सर्वशक्तिमये अस्मिन् अखिलाः श्रियो निधीयन्ते इति **श्रीनिधिः**। कर्मानुरूपेण विविधाः श्रियः सर्वभूतानां विभावयतीति **श्रीविभावनः**। सर्वभूतानां जननीं श्रियं वक्षसि वहन् **श्रीधरः**। स्मरतां स्तुवताम् अर्चयतां च भक्तानां श्रियं करोतीति **श्रीकरः**। अनपायिसुखावा-

निरलक्षणं श्रेयः, तच्च परस्यैव रूपमिति **श्रेयः**। श्रियोऽस्य सन्तीति **श्रीमान्**। त्रयाणां लोकानाम् आश्रयत्वात् **लोकत्रयाश्रयः**॥

**स्वक्षः स्वङ्गः शतानन्दो**
**नन्दिर्ज्योतिर्गणेश्वरः।**
**विजितात्माविधेयात्मा**
**सत्कीर्तिश्छिन्नसंशयः॥ ७९॥**

शोभने पुण्डरीकाभे अक्षिणी अस्येति **स्वक्षः**। शोभनान्यङ्गानि अस्येति **स्वङ्गः**। एक एव परमानन्द उपाधिभेदाच्छतधा भिद्यत इति **शतानन्दः** 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः। परमानन्दविग्रहो **नन्दिः**। ज्योतिर्गणानामीश्वरः **ज्योतिर्गणेश्वरः**। 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः, 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च। विजित आत्मा मनः येन सः **विजितात्मा**। न केनापि विधेयः आत्मा स्वरूपमस्येति **अविधेयात्मा**। सती अवितथा कीर्तिरस्येति **सत्कीर्तिः**। करतलामलकवत्सर्वं साक्षात्कृतवतः क्वापि संशयो नास्तीति **छिन्नसंशयः**॥

**उदीर्णः सर्वतश्चक्षु-**
**रनीशः शाश्वतस्थिरः ।**
**भूशयो भूषणो भूति-**
**र्विशोकः शोकनाशनः ॥ ८० ॥**

सर्वभूतेभ्यः समुद्रिक्तत्वात् **उदीर्णः** । सर्वतः सर्वं स्वचैतन्येन पश्यतीति **सर्वतश्चक्षुः**, 'विश्वतश्चक्षुः' इति श्रुतेः । न विद्यतेऽस्येश इति **अनीशः**, 'न तस्येशे कश्चन' इति श्रुतेः । शश्वद्भवन्नपि न विक्रियां कदाचिदुपैति इति **शाश्वतस्थिरः** इति नामैकम् । लङ्कां प्रति मार्गमन्वेषयन् सागरं प्रति भूमौ शेते इति **भूशयः** । स्वेच्छावतारैः बहुभिः भूमिं भूषयन् **भूषणः** । **भूतिः** भवनं सत्ता, विभूतिर्वा ; सर्वविभूतीनां कारणत्वाद्वा **भूतिः** । विगतः शोकोऽस्य परमानन्दैकरूपत्वादिति **विशोकः** । स्मृतिमात्रेण भक्तानां शोकं नाशयतीति **शोकनाशनः** ॥

**अर्चिष्मानर्चितः कुम्भो**
**विशुद्धात्मा विशोधनः ।**

**अनिरुद्धोऽप्रतिरथः**
**प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥**

अर्चिष्मन्तो यदीयेनार्चिषा चन्द्रसूर्यादयः, स एव मुख्यः **अर्चिष्मान्** । सर्वलोकार्चितैः विरिञ्चयादिभिरप्यर्चितः इति **अर्चितः** । कुम्भवदस्मिन् सर्वं प्रतिष्ठितमिति **कुम्भः** । गुणत्रयातीततया विशुद्धश्चासावात्मेति **विशुद्धात्मा** । स्मृतिमात्रेण पापानां क्षपणात् **विशोधनः** । चतुर्व्यूहेषु चतुर्थो व्यूहः **अनिरुद्धः**; न निरुध्यते शत्रुभिः कदाचिदिति वा । प्रतिरथः प्रतिपक्षोऽस्य न विद्यत इति **अप्रतिरथः** । प्रकृष्टं द्रविणं द्युम्नमस्येति **प्रद्युम्नः**; चतुर्व्यूहात्मा वा । अमितोऽतुलितो विक्रमोऽस्य इति **अमितविक्रमः**, अहिंसितविक्रमो वा ॥

**कालनेमिनिहा वीरः**
**शौरिः शूरजनेश्वरः ।**
**त्रिलोकात्मा त्रिलोकेशः**
**केशवः केशिहा हरिः ॥ ८२ ॥**

कालनेमिमसुरं निजघानेति **कालनेमिनिहा** । **वीरः** शूरः । शूरकुलोद्भवत्वात **शौरिः** । शूरजनानां वासवादीनां

शौर्यातिशयेनेष्टे इति **शूरजनेश्वरः**। त्रयाणां लोकानाम् अन्तर्यामितया आत्मेति, त्रयो लोका अस्मात्परमार्थतो न भिद्यन्ते इति वा **त्रिलोकात्मा**। त्रयो लोकाः तदाज्ञप्ताः स्वेषु स्वेषु कर्मसु वर्तन्त इति **त्रिलोकेशः**। केशसंज्ञिताः सूर्यादिसंक्रान्ता अंशवः, तद्वत्तया **केशवः**; 'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः। सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः' इति महाभारते। ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः; तद्वत्तया वा **केशवः**। 'त्रयः केशिनः' इति श्रुतेः। 'मत्केशौ वसुधातले' इति केशशब्दः शक्तिपर्यायत्वेन प्रयुक्तः। 'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम्। आवां तवांशसंभूतौ तस्मात्केशवनामवान्' इति हरिवंशे। केशिनामानमसुरं हतवानिति **केशिहा**। सहेतुकं संसारं हरतीति **हरिः**॥

**कामदेवः कामपालः**
**कामी कान्तः कृतागमः।**
**अनिर्देश्यवपुर्विष्णु-**
**र्वीरोऽनन्तो धनंजयः॥ ८३॥**

धर्मादिपुरुषार्थचतुष्टयं वाञ्छद्भिः काम्यत इति कामः;

स चासौ देवश्चेति **कामदेवः** । कामिनां कामान् पालयतीति **कामपालः** । पूर्णकामस्वभावत्वात् **कामी** । अभिरूपतमं देहं वहन् **कान्तः** । द्विपरार्धान्ते कस्य ब्रह्मणोऽप्यन्तोऽस्मादिति वा **कान्तः** । कृतः आगमः श्रुतिस्मृत्यादिलक्षणो येन सः **कृतागमः**, 'श्रुतिस्मृती ममैवाज्ञे' इति भगवद्वचनात्, 'वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्' इत्यत्रैव वक्ष्यति । इदं तदीदृशं वेति निर्देष्टुं यन्न शक्यते गुणाद्यतीतत्वात् तदेव रूपमस्येति **अनिर्देश्यवपुः** । रोदसी व्याप्य कान्तिरभ्यधिका स्थितास्येति **विष्णुः**; 'व्याप्य मे रोदसी नाथ कान्तिरभ्यधिका स्थिता । क्रमणाद्वाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' इति महाभारते । गत्यादिमत्त्वात् वीरः, 'वी गतिप्रजनकान्त्यसनखादनेषु' इति धातुपाठात् । व्यापित्वान्नित्यत्वात्सर्वात्मत्वाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नः **अनन्तः**, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः; 'गन्धर्वाप्सरसः सिद्धाः किंनरोरगचारणाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः' इति विष्णुपुराणवचनाद्वा **अनन्तः** । यद्दिग्विजये प्रभूतं धनमजयत्तेन **धनंजयः** अर्जुनः, 'पाण्डवानां धनंजयः' इति भगवद्वचनात् ॥

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा**
**ब्रह्म ब्रह्मविवर्धनः ।**
**ब्रह्मविद्ब्राह्मणो ब्रह्मी**
**ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४ ॥**

'तपो वेदाश्च विप्राश्च ज्ञानं च ब्रह्मसंज्ञितम्' तेभ्यो हितत्वात् **ब्रह्मण्यः** । तपआदीनां कर्तृत्वात् **ब्रह्मकृत्** । ब्रह्मात्मना सर्वं सृजतीति **ब्रह्मा** । बृहत्त्वाद्बृंहणत्वाच्च सत्यादिलक्षणं **ब्रह्म**, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः; 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्' इति विष्णुपुराणे । तपआदीनां विवर्धनात् **ब्रह्मविवर्धनः** । वेदं वेदार्थं च यथावद्वेत्तीति **ब्रह्मवित्** । ब्राह्मणात्मना समस्तानां लोकानां प्रवचनं कुर्वन् वेदख्यायमिति **ब्राह्मणः** । ब्रह्मसंज्ञितास्तच्छेषभूता इति **ब्रह्मी** । वेदान् स्वात्मभूतान् जानातीति **ब्रह्मज्ञः** । ब्राह्मणानां प्रियो **ब्राह्मणप्रियः**; ब्राह्मणाः प्रिया अस्येति वा । 'घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथार्हम् । स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दण्ड्यश्च न चास्मदीयः' इति भगवद्वचनात् । 'यं देवं देवकी देवी वसुदेवादजीजनत् ।

भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः' इति च महाभारते ॥

**महाक्रमो महाकर्मा**
**महातेजा महोरगः ।**
**महाक्रतुर्महायज्वा**
**महायज्ञो महाहविः ॥ ८५ ॥**

महान्तः क्रमाः पादविक्षेपा अस्येति **महाक्रमः**, 'शं नो विष्णुरुरुक्रमः' इति श्रुतेः । महत् जगदुत्पत्त्यादि कर्मास्येति **महाकर्मा** । यदीयेन तेजसा तेजस्विनो भास्करादयः तत्तेजो महदस्येति **महातेजाः**, 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः, 'यदादित्यगतं तेजः' इति भगवद्वचनाच्च । क्रौर्यशौर्यादिभिर्धर्मैर्महद्भिः समलंकृत इति वा **महातेजाः** । महांश्चासावुरगश्चेति **महोरगः**, 'सर्पाणामस्मि वासुकिः' इति भगवद्वचनात् । महांश्चासौ क्रतुश्चेति **महाक्रतुः**, 'यथाश्वमेधः क्रतुराट्' इति मनुवचनात्; सोऽपि स एवेति स्तुतिः । महांश्चासौ यज्वा चेति लोकसंग्रहार्थं यज्ञान् निर्वर्तयन् **महायज्वा** । महांश्चासौ यज्ञश्चेति **महायज्ञः**, 'यज्ञानां जपयज्ञोऽस्मि' इति भगवद्वचनात् । महच्च तद्धविश्चेति ब्र[illegible]

त्मनि सर्वं जगत्तदात्मतया हूयत इति **महाहविः** । महाक्रतु-रित्यादयो वहुव्रीहयो वा ॥

**स्तव्यः स्तवप्रियः स्तोत्रं**
**स्तुतिः स्तोता रणप्रियः ।**
**पूर्णः पूरयिता पुण्यः**
**पुण्यकीर्तिरनामयः ॥ ८६ ॥**

सर्वैः स्तूयते न स्तोता कस्यचित् इति **स्तव्यः** । अत एव **स्तवप्रियः** । येन स्तूयते तत् **स्तोत्रम्**, गुणसंकीर्तनात्मकं तद्धरिरेवेति । **स्तुतिः** स्तवनक्रिया । **स्तोता** अपि स एव । प्रियो रणः यस्य यतः पञ्च महायुधानि धत्ते सततं लोकरक्षणार्थम् अतो **रणप्रियः** । सकलैः कामैः सकलाभिः शक्तिभिश्च संपन्न इति **पूर्णः** । न केवलं पूर्ण एव; **पूरयिता** च सर्वेषां संपद्भिः । स्मृतिमात्रेण कल्मषाणि क्षपयतीति **पुण्यः** । पुण्या कीर्तिरस्य यतः पुण्यमावहत्यस्य कीर्तिः नृणामिति **पुण्यकीर्तिः** । आन्तरैर्बाह्यैर्व्याधिभिः कर्मजैर्न पीड्यत इति **अनामयः** ॥

**मनोजवस्तीर्थकरो**
**वसुरेता वसुप्रदः ।**

## वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७ ॥

मनसो वेग इव वेगोऽस्य सर्वगतत्वात् **मनोजवः** । चतुर्दशविद्यानां बाह्यविद्यासमयानां च प्रणेता प्रवक्ता चेति **तीर्थकरः** । हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चाय सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपदिशन् वेदबाह्या विद्याः सुरवैरिणां वञ्चनाय चोपदिदेशेति पौराणिका कथयन्ति । वसु सुवर्णं रेतोऽस्येति **वसुरेताः**, 'देवः पूर्वमपः सृष्ट्वा तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं ब्रह्मणः कारणं परम्' इति व्यासवचनात् । वसु धनं प्रकर्षेण ददाति साक्षाद्धनाध्यक्षोऽयम्, इतरस्तु तत्प्रसादाद्धनाध्यक्ष इति **वसुप्रदः** । वसु प्रकृष्टं मोक्षाख्यं फलं भक्तेभ्यः प्रददातीति द्वितीयो **वसुप्रदः**, 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः' इति श्रुतेः; सुरारीणां वसूनि प्रकर्षेण खण्डयन् वा **वसुप्रदः** । वसुदेवस्यापत्यं **वासुदेवः** । वसन्ति भूतानि तत्र, तेष्वयमपि वसतीति **वसुः** । अविशेषेण सर्वेषु विषयेषु वसतीति वसु, तादृशं मनोऽस्येति **वसुमनाः** । 'ब्रह्मार्पणं ब्रह्म हविः' इति भगवद्वचनात् **हविः** ॥

**सद्गतिः सत्कृतिः सत्ता**
**सद्भूतिः सत्परायणः ।**
**शूरसेनो यदुश्रेष्ठः**
**सन्निवासः सुयामुनः ॥ ८८ ॥**

'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः ब्रह्मास्तीति ये विदुस्ते सन्तः, तैः प्राप्यत इति **सद्गतिः**; सती गतिर्बुद्धिः समुत्कृष्टा अस्येति वा **सद्गतिः**। सती कृतिः जगद्रक्षणलक्षणा अस्य यस्मात्तेन **सत्कृतिः**।

**इति नाम्नां सप्तमं शतं विवृतम् ॥**

सजातीयविजातीयस्वगतभेदरहिता अनुभूतिः **सत्ता**, 'एकमेवाद्वितीयम्' इति श्रुतेः। सन्नेव परमात्मा चिदात्मकः अबाधात् भासमानत्वाच्च **सद्भूतिः**; नान्यः प्रतीतेः बाध्यमानत्वाच्च न सन्नाप्यसन्। श्रौतो यौक्तिको वा बाधः प्रपञ्चस्य विवक्षितः। सतां तत्त्वविदां परं प्रकृष्टमयनमिति **सत्परायणम्**। हनूमत्प्रमुखाः सैनिकाः शौर्यशालिनो यस्यां सेनायाम्, सा शूरसेना यस्य स **शूरसेनः**। यदूनां प्रधानत्वात् **यदुश्रेष्ठः**। सतां विदुषामाश्रयः **सन्निवासः**। शोभना यामुनाः यमुनासंबन्धिनः देवकीवसुदेवनन्दयशोदाबलभद्र-

सुभद्रादय. परिवेष्टारोऽस्येति **सुयामुनः**; गोपवेषधरा यामुनाः परिवेष्टारः पद्मासनादयः शोभना अस्येति वा **सुयामुनः** ॥

**भूतावासो वासुदेवः**
**सर्वासुनिलयोऽनलः ।**
**दर्पहा दर्पदो दृप्तो**
**दुर्धरोऽथापराजितः ॥ ८९ ॥**

भूतान्यत्राभिमुख्येन वसन्तीति **भूतावासः**, 'वसन्ति त्वयि भूतानि भूतावासस्ततो भवान्' इति हरिवंशे । जगदाच्छादयति माययेति वासुः, स एव देव इति **वासुदेवः**; 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः' इति भगवद्वचनात् । सर्वे एवासवः प्राणा जीवात्मके यस्मिन्नाश्रये निलीयन्ते **सर्वासुनिलयः** । अलं पर्याप्तिः शक्तिसंपदां नास्य विद्यत इति **अनलः** । धर्मविरुद्धे पथि तिष्ठतां दर्पं हन्तीति **दर्पहा** । धर्मवर्त्मनि वर्तमानानां दर्पं ददातीति **दर्पदः** । स्वात्मामृतरसास्वादनात् नित्यप्रमुदितो **दृप्तः** । न शक्या धारणा यस्य प्रणिधानादिषु सर्वोपाधिविनिर्मुक्तत्वात्, तथापि तत्प्रसादतः कैश्चिद्दुःखेन धार्यते

हृदये जन्मान्तरसहस्रेषु भावनायोगात्, तस्मात् **दुर्धरः** । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इति भगवद्वचनात् । न आन्तरैः रागादिभिर्बाह्यैरपि दानवादिभिः शत्रुभिः पराजित इति **अपराजितः** ॥

**विश्वमूर्तिर्महामूर्ति-**
**र्दीप्तमूर्तिरमूर्तिमान् ।**
**अनेकमूर्तिरव्यक्तः**
**शतमूर्तिः शताननः ॥ ९० ॥**

विश्वं मूर्तिरस्य सर्वात्मकत्वात् इति **विश्वमूर्तिः** । शेषपर्यङ्कशायिनोऽस्य महती मूर्तिरिति **महामूर्तिः** । दीप्ता ज्ञानमयी मूर्तिः यस्येति, स्वेच्छया गृहीता तैजसी मूर्तिः दीप्ता अस्येति वा **दीप्तमूर्तिः** । कर्मनिबन्धना मूर्तिरस्य न विद्यत इति **अमूर्तिमान्** । अवतारेषु स्वेच्छया लोकानामुपकारिणीः बह्वीर्मूर्तीर्भजत इति **अनेकमूर्तिः** । यद्यप्यनेकमूर्तित्वमस्य, तथाप्ययमीदृश एवेति न व्यज्यत इति **अव्यक्तः** । नानाविकल्पजा मूर्तयः संविदाकृतेः सन्तीति **शतमूर्तिः** । विश्वादिमूर्तित्वं यतः अत एव **शताननः** ॥

**एको नैकः सवः कः किं**
**यत्तत्पदमनुत्तमम् ।**
**लोकबन्धुर्लोकनाथो**
**माधवो भक्तवत्सलः ॥ ९१ ॥**

परमार्थतः सजातीयविजातीयस्वगतभेदविनिर्मुक्तत्वात् **एकः**, 'एकमेवाद्वितीयम्' इति श्रुतेः । मायया बहूरूपत्वात् **नैकः**, 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः । सोमो यत्राभिषूयते सोऽध्वरः **सवः** । कशब्दः सुखवाचकः, तेन स्तूयत इति **कः**, 'कं ब्रह्म' इति श्रुतेः । सर्वपुरुपार्थरूपत्वाद्ब्रह्मैव विचार्यमिति ब्रह्म **किम्** । यच्छब्देन स्वतःसिद्धवस्तूद्देशवाचिना ब्रह्म निर्दिश्यते इति ब्रह्म **यत्**, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । तनोतीति ब्रह्म **तत्**, 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात् । पद्यते गम्यते मुमुक्षुभिरिति पदम् । यस्मादुत्कृष्टं नास्ति तत् अनुत्तमम् । सविशेषणमेकं नाम **पदमनुत्तमम्** इति । आधारभूतेऽस्मिन्सकला लोका बध्यन्त इति लोकानां बन्धुः **लोकबन्धुः**; लोकानां जनकत्वाज्जनकोपमो बन्धुर्नास्तीति वा, लोकानां बन्धुकृत्यं हिता-

हितोपदेशं श्रुतिस्मृतिलक्षणं कृतवानिति वा **लोकबन्धुः** । लोकैर्नाथ्यते याच्यते लोकानुपतपति आशास्ते लोकानामीष्टे इति वा **लोकनाथः** । मधुकुले जातत्वान् **माधवः** । भक्तस्नेहवान् **भक्तवत्सलः** ।

**सुवर्णवर्णो हेमाङ्गो**
**वराङ्गश्चन्दनाङ्गदी ।**
**वीरहा विषमः शून्यो**
**घृताशीरचलश्चलः ॥ ९२ ॥**

सुवर्णस्येव वर्णोऽस्येति **सुवर्णवर्णः**, 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतेः । हेमेवाङ्गं वपुरस्येति **हेमाङ्गः**, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेः । वराणि शोभनान्यङ्गान्यस्येति **वराङ्गः** । चन्दनैराह्लादनैरङ्गदैः केयूरैर्भूषित इति **चन्दनाङ्गदी** । धर्मत्राणाय वीरान् असुरमुख्यान हन्तीति **वीरहा** । समो नास्य विद्यते सर्वविलक्षणत्वादिति **विषमः**, 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति भगवद्वचनात् । सर्वविशेषरहितत्वात् शून्यवत् **शून्यः** । घृताः विगलिताः आशिषः प्रार्थनाः अस्येति **घृताशीः** । न स्वरूपान्न सामर्थ्यान्न च ज्ञानादिकाद्गुणात् । चलनं विद्यतेऽस्येति

अचलः । वायुरूपेण चलतीति **चलः** ॥

**अमानी मानदो मान्यो**
**लोकस्वामी त्रिलोकधृक् ।**
**सुमेधा मेधजो धन्यः**
**सत्यमेधा धराधरः ॥ ९३ ॥**

अनात्मवस्तुष्वात्माभिमानो नास्त्यस्य स्वच्छसंवेदनाकृतेरिति **अमानी** । स्वमायया सर्वेषामनात्मस्वात्माभिमानं ददाति, भक्तानां सत्कारं मानं ददातीति, तत्त्वविदामनात्मस्वात्माभिमानं खण्डयतीति वा **मानदः** । सर्वैर्माननीयः पूजनीयः सर्वेश्वरत्वात् इति **मान्यः** । चतुर्दशानां लोकानामीश्वरत्वात् **लोकस्वामी** । त्रीन् लोकान धारयतीति **त्रिलोकधृक्** । शोभना मेधा प्रज्ञास्येति **सुमेधाः** । 'नित्यमसिच्प्रजामेधयोः' इति समासान्तोऽसिच् । मेधेऽध्वरे जायत इति **मेधजः** । कृतार्थो **धन्यः** । सत्या अवितथा मेधा अस्येति **सत्यमेधाः** । अंशैरशेषैः शेषाद्यैरशेषां धरां धारयन् **धराधरः** ॥

**तेजोवृषो द्युतिधरः**
**सर्वशस्त्रभृतां वरः ।**

**प्रग्रहो निग्रहो व्यग्रो**
**नैकशृङ्गो गदाग्रजः ॥ ९४ ॥**

तेजसामम्भसां सर्वदा आदित्यरूपेण वर्षणात् **तेजोवृषः**। द्युतिमङ्गगतां कान्तिं धारयन् **द्युतिधरः**। सर्वशस्त्रभृतां श्रेष्ठः **सर्वशस्त्रभृतां वरः**। भक्तैरुपहृतं पत्रपुष्पादिकं प्रगृह्णातीति **प्रग्रहः**, धावतो विषयारण्ये दुर्दान्तेन्द्रियवाजिनः तत्प्रसादेन रश्मिनेव बध्नातीति वा प्रग्रहवत् **प्रग्रहः**; 'रश्मौ च' इति पाणिनिवचनात् प्रग्रहशब्दस्य साधुत्वम्। स्ववशेन सर्वं निगृह्णातीति **निग्रहः**। विगतमग्रमन्तो विनाशोऽस्येति **व्यग्रः**; भक्तानामभीष्टप्रदानेषु **व्यग्रः** इति वा। चतुःशृङ्गो **नैकशृङ्गः**, 'चत्वारि शृङ्गा' इति मन्त्रवर्णात्। निगदेन मन्त्रेणाग्रे जायते इति निशब्दलोपं कृत्वा **गदाग्रजः**; यद्वा गदो नाम श्रीवासुदेवावरजः; तस्मादग्रे जायत इति **गदाग्रजः**॥

**चतुर्मूर्तिश्चतुर्बाहु-**
**श्चतुर्व्यूहश्चतुर्गतिः।**
**चतुरात्मा चतुर्भाव-**
**श्चतुर्वेदविदेकपात् ॥ ९५ ॥**

चतस्रो मूर्तयो विराट्सूत्राव्याकृततुरीयात्मानोऽस्येति **चतुर्मूर्तिः**; सिता रक्ता पीता कृष्णा चेति चतस्रो मूर्तयोऽस्येति वा । चत्वारो बाहवोऽस्येति **चतुर्बाहुः** इति नाम वासुदेवे रूढम् । 'शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष.' इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा अस्येति **चतुर्व्यूहः** । आश्रमाणां वर्णानां चतुर्णां यथोक्तकारिणां गतिः **चतुर्गतिः** । रागद्वेषादिरहितत्वात् चतुरः आत्मा मनोऽस्येति, मनोबुद्ध्यहंकारचित्ताख्यान्तःकरणचतुष्टयात्मकत्वाद्वा **चतुरात्मा** । धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयं भवत्युत्पद्यते अस्मादिति **चतुर्भावः** । यथावद्वेत्ति चतुर्णां वेदानामर्थमिति **चतुर्वेदवित्** । एकः पादोऽस्येति **एकपात्** ; 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः, 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवद्वचनाच्च ॥

**समावर्तोऽनिवृत्तात्मा**
**दुर्जयो दुरतिक्रमः ।**
**दुर्लभो दुर्गमो दुर्गो**
**दुरावासो दुरारिहा ॥ ९६ ॥**

संसारचक्रस्य सम्यगावर्तक इति **समावर्तः** । सर्वत्र

वर्तमानत्वात् न निवर्तते आत्मा विषयेभ्योऽस्येति **अनिवृत्तात्मा**। जेतुं न शक्यत इति **दुर्जयः**। भयहेतुत्वादस्याज्ञां सूर्यादयो नातिक्रामन्तीति **दुरतिक्रमः**, 'भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति मन्त्रवर्णात्, 'महद्भयं वज्रमुद्यतम्' इति च। दुर्लभया भक्त्या लभ्यत्वात् **दुर्लभः**, 'जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति व्यासवचनात्, 'भक्त्या लभ्यस्त्वनन्यया' इति भगवद्वचनाच्च। दुःखेन गम्यते ज्ञायत इति **दुर्गमः**। अन्तरायप्रतिहतैर्दुःखादवाप्यत इति **दुर्गः**। दुःखेनावास्यते चित्ते योगिभिः समाधाविति **दुरावासः**। दुरारिणो दानवादयः तान् हन्तीति **दुरारिहा**॥

**शुभाङ्गो लोकसारङ्गः**
**सुतन्तुस्तन्तुवर्धनः।**
**इन्द्रकर्मा महाकर्मा**
**कृतकर्मा कृतागमः॥ ९७॥**

शोभनैरङ्गैः ध्येयत्वात् **शुभाङ्गः**। लोकानां सारं सारङ्गवत् भृङ्गवद्गृह्णातीति **लोकसारङ्गः**, 'प्रजापतिर्लोकानभ्य-

तपत्' इति श्रुते.; लोकसारः प्रणवः, तेन प्रतिपत्तव्य इति वा; पृषोदरादित्वात्साधुत्वम् । शोभनस्तन्तुर्विस्तीर्णः प्रपञ्चोऽस्येति **सुतन्तुः** । तमेव तन्तुं वर्धयति च्छेदयतीति वा **तन्तुवर्धनः** । इन्द्रस्य कर्मेव कर्मास्येति **इन्द्रकर्मा**, ऐश्वर्य-कर्मेत्यर्थः । महान्ति वियदादीनि भूतानि कर्माणि कार्या-ण्यस्येति **महाकर्मा** । कृतमेव सर्वं कृतार्थत्वात्, न कर्तव्यं किंचिदपि कर्मास्य विद्यत इति **कृतकर्मा**; धर्मात्मकं कर्म कृतवानिति वा । कृतः वेदात्मक आगमो येनेति **कृतागमः**, 'अस्य महतो भूतस्य निःश्वसितमेतत्' इत्यादिश्रुतेः ॥

**उद्भवः सुन्दरः सुन्दो**
**रत्नाभः सुलोचनः ।**
**अर्को वाजसनः शृङ्गी**
**जयन्तः सर्वविज्जयी ॥ ९८ ॥**

उत्कृष्टं भवं जन्म स्वेच्छया भजति इति, उद्गतमपगतं जन्मास्य सर्वकारणत्वादिति वा **उद्भवः** । विश्वातिशायिसौ-भाग्यशालित्वात् **सुन्दरः** । सुष्ठु उनत्तीति **सुन्दः**, उन्दी क्लेद-ने इत्यस्य धातोः पचाद्यच्; आर्द्रीभावस्य वाचकः करुणाकर इत्यर्थः; पृषोदरादित्वात्पररूपत्वम् । रत्नशब्देन शोभा ल-

क्ष्यते; रत्नवत्सुन्दरा नाभिरस्येति **रत्ननाभः**। शोभनं लोचनं नयनं ज्ञानं वा अस्येति **सुलोचनः**। ब्रह्मादिभिः पूज्यतमैरपि अर्चनीयत्वात् **अर्कः**। वाजमन्नमर्थिनां सनोति ददातीति **वाजसनः**। प्रलयाम्भसि शृङ्गवन्मत्स्यविशेषरूपः शृङ्गी; मत्वर्थीयोऽतिशायने इनिप्रत्ययः। अरीन् अतिशयेन जयति, जयहेतुर्वा **जयन्तः**। सर्वविषयं ज्ञानमस्येति सर्ववित्; आभ्यन्तरान् रागादीन् बाह्यान् हिरण्याक्षादींश्च दुर्जयान् जेतुं शीलमस्येति जयी; तच्छीलाधिकारे 'जिदृक्षि' इत्यादिपाणिनीयवचनात् इनिप्रत्ययः; सर्वविच्चासौ जयी चेति **सर्वविज्जयी** इत्येकं नाम ॥

**सुवर्णबिन्दुरक्षोभ्यः**
**सर्ववागीश्वरेश्वरः।**
**महाह्रदो महागर्तो**
**महाभूतो महानिधिः ॥ ९९ ॥**

बिन्दवोऽवयवाः सुवर्णसदृशा अस्येति **सुवर्णबिन्दुः**, 'आप्रणखात्सर्व एव सुवर्णः' इति श्रुतेः; शोभनो वर्णोऽक्षरं बिन्दुश्च यस्मिन्मन्त्रे तन्मन्त्रात्मा वा **सुवर्णबिन्दुः** ॥

इति नाम्नामष्टमं शतं विवृतम् ॥

रागद्वेषादिभिः शब्दादिविषयैश्च त्रिदशारिभिश्च न क्षोभ्यत इति **अक्षोभ्यः**। सर्वेषां वागीश्वराणां ब्रह्मादीनामपीश्वरः **सर्ववागीश्वरेश्वरः**। अवगाह्य तदानन्दं विश्रम्य सुखमासते योगिन इति महाह्रद इव **महाह्रदः**। गर्तवदस्य माया महती दुरत्ययेति **महागर्तः**, 'मम माया दुरत्यया' इति भगवद्वचनात् ; यद्वा, गर्तशब्दो रथपर्यायो नैरुक्तैरुक्तः, तस्मान्महारथो **महागर्तः** ; महारथत्वमस्य प्रसिद्धं भारतादिषु। कालत्रयानवच्छिन्नस्वरूपत्वात् **महाभूतः**। सर्वभूतानि अस्मिन्निधीयन्ते इति निधिः, महांश्चासौ निधिश्चेति **महानिधिः** ॥

**कुमुदः कुन्दरः कुंदः**
**पर्जन्यः पावनोऽनिलः ।**
**अमृताशोऽमृतवपुः**
**सर्वज्ञः सर्वतोमुखः ॥ १०० ॥**

कुं धरणिं भारावतरणं कुर्वन् मोदयतीति **कुमुदः**। मुदिरत्रान्तर्भावितणिजर्थः। कुन्दपुष्पतुल्यानि शुद्धानि फलानि राति ददाति, लात्यादत्ते इति वा **कुन्दरः**, रलयोर्वृत्त्येकत्वस्मरणात् ; 'कुं धरां दारयामास हिरण्याक्षजिघांसया। वाराहं रूपमास्थाय' इति वा **कुन्दरः**। कुन्दोपमसुन्दराङ्गत्वात्

स्वच्छतया स्फटिकनिर्मलः **कुन्दः** ; कुं पृथ्वीं कश्यपाया-दादिति वा **कुंदः** ; 'सर्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान् । तस्मिन्यज्ञे महादाने दक्षिणां भृगुनन्दनः ॥ मारीचाय ददौ प्रीतः कश्यपाय वसुंधराम्' इति हरिवंशे ; कुं पृथ्वीं द्यति खण्डयतीति वा **कुंदः** । कुशब्देन पृथ्वीश्वरा लक्ष्यन्ते ;

> निःक्षत्रियां यश्च चकार मेदिनी-
> मनेकशो बाहुवनं तथाच्छिनत् ।
> यः कार्तवीर्यस्य स भार्गवोत्तमो
> ममास्तु माङ्गल्यविवृद्धये हरिः ॥

इति विष्णुधर्मे ।

पर्जन्यवदाध्यात्मिकादितापत्रयं शमयति, सर्वान्कामा-नभिवर्षतीति वा **पर्जन्यः** । स्मृतिमात्रेण पुनातीति **पावनः** । इलति प्रेरणं करोतीति इलः, तद्रहितत्वात् **अनिलः** ; इलति स्वपिति इत्यज्ञ इलः, तद्विपरीतः नित्यप्रबुद्धस्वरू-पत्वादिति वा ; अथवा निलतेर्गहनार्थात्कप्रत्ययान्ताद्रूपम् ; अगहनः **अनिलः**, भक्तेभ्यः सुलभः इति । स्वात्मामृत-मश्नातीति **अमृताशः** । मथितममृतं सुरान् पाययित्वा स्वयं चाश्नातीति वा **अमृताशः** ; अमृता अनश्वरफलत्वा-

दाशा वाञ्छा अस्येति वा । मृतं मरणम् , तद्रहितं वपुरस्येति **अमृतवपुः** । सर्वं जानातीति **सर्वज्ञः** । 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः । 'सर्वतोक्षिशिरोमुखम्' इति भगवद्वचनात् **सर्वतोमुखः** ॥

**सुलभः सुव्रतः सिद्धः**
**शत्रुजिच्छत्रुतापनः ।**
**न्यग्रोधोदुम्बरोऽश्वत्थ-**
**श्चाणूरान्ध्रनिषूदनः ॥ १०१ ॥**

पत्रपुष्पफलादिभिः भक्तिमात्रसमर्पितैः सुखेन लभ्यत इति **सुलभः** । 'पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै कथं न क्रियते प्रयत्नः' इति महाभारते । शोभनं व्रतयति भुङ्क्ते भोजनान्निवर्तत इति वा **सुव्रतः** । अनन्याधीनसिद्धित्वात् **सिद्धः** । सुरशत्रव एवास्य शत्रवः ; तान् जयतीति **शत्रुजित्** । सुरशत्रूणां तापनः **शत्रुतापनः** । न्यक् अर्वाक् रोहति सर्वेषामुपरि वर्तत इति **न्यग्रोधः** ; पृषोदरादित्वात् हकारस्य धकारादेशः; सर्वाणि भूतानि न्यक्कृत्य निजमायां वृणोति निरुणद्धीति वा । अम्बरादुद्गतः कारणत्वेनेति

**उदुम्बरः**; पृषोदरादित्वादेवोकारादेशः; यद्वा. उदुम्बरमन्नाद्यम्; तेन तदात्मना विश्वं पोषयन् **उदुम्बरः**, 'ऊर्ग्वा अन्नाद्यमुदुम्बरम्' इति श्रुतेः; न्यग्रोधोदुम्बर इत्यत्र विसर्गलोपे संधिरार्षः। श्वोऽपि न स्थातेति **अश्वत्थः**। पृषोदरादित्वादेव सकारस्य तकारादेशः; 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इति श्रुतेः, 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति स्मृतेश्च। चाणूरनामानमन्ध्रं निषूदितवानिति **चाणूरान्ध्रनिषूदनः**॥

**सहस्रार्चिः सप्तजिह्वः**
**सप्तैधाः सप्तवाहनः।**
**अमूर्तिरनघोऽचिन्त्यो**
**भयकृद्भयनाशनः॥ १०२॥**

सहस्राणि अनन्तानि अर्चींषि यस्य सः **सहस्रार्चिः**, 'दिवि सूर्यसहस्रस्य' इति गीतावचनात्। सप्त जिह्वा अस्य सन्तीति **सप्तजिह्वः**, 'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' इति श्रुतेः। सप्त एधांसि दीप्तयोऽस्येति **सप्तैधाः** अग्निः, 'सप्त ते अग्ने स-

मिधः सप्त जिह्वाः' इति मन्त्रवर्णान् । सप्त अश्वा वाहनान्यस्येति **सप्तवाहनः**; सप्तनामैकोऽश्वो वाहनमस्येति वा. 'एकोऽश्वो वहति सप्तनामा' इति श्रुते. । मूर्तिर्घनरूपं धारणसमर्थं चराचरलक्षणम्, 'ताभ्योऽभितप्ताभ्यो मूर्तिरजायत' इति श्रुतेः; तद्रहित इति **अमूर्तिः**; अथवा, देहसंस्थानलक्षणा मूर्छिताङ्गावयवा मूर्ति., तद्रहितः इति **अमूर्तिः** । अघं दु.खं पापं चास्य न विद्यते इति **अनघः** । प्रमात्रादिसाक्षित्वेन सर्वप्रमाणागोचरत्वात् **अचिन्त्यः**; अयमीदृश इति विश्वप्रपञ्चविलक्षणत्वेन चिन्तयितुमशक्यत्वात् **अचिन्त्यः** । असन्मार्गवर्तिनां भयं करोति, भक्तानां भयं कृन्तति कृणोतीति वा **भयकृत्** । वर्णाश्रमाचारवतां भयं नाशयतीति **भयनाशनः**; 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः' इति पराशरवचनात् ॥

**अणुर्बृहत्कृशः स्थूलो**
**गुणभृन्निर्गुणो महान् ।**
**अधृतः स्वधृतः स्वास्यः**
**प्राग्वंशो वंशवर्धनः ॥ १०३ ॥**

सौक्ष्म्यातिशयशालित्वात् **अणुः**, 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति श्रुतेः। बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म **बृहत्**, 'महतो महीयान्' इति श्रुतेः। 'अस्थूलम्' इत्यादिना द्रव्यत्वप्रतिषेधात् **कृशः**। **स्थूलः** इति उपचर्यते सर्वात्मत्वात्। सत्त्वरजस्तमसां सृष्टिस्थितिलयकर्मस्वधिष्ठातृत्वात् **गुणभृत्**। वस्तुतो गुणाभावात् **निर्गुणः**, 'केवलो निर्गुणश्च' इति श्रुतेः। शब्दादिगुणरहितत्वात् निरतिशयसूक्ष्मत्वात् नित्यशुद्धसर्वगतत्वादिना च प्रतिबन्धकं धर्मजातं तर्कतोऽपि यतो वक्तुं न शक्यम् अत एव **महान्**। 'अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः' इति आपस्तम्बः। पृथिव्यादीनां धारकाणामपि धारकत्वान्न केनचिद्ध्रियत इति **अधृतः**। यद्येवमयं केन धार्यत इत्याशङ्क्याह— स्वेनैव आत्मना धार्यत इति **स्वधृतः**, 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः। शोभनं पद्मोदरतलताम्रमभिरूपतममस्यास्यमिति **स्वास्यः**; वेदात्मको महान् शब्दराशिः तस्य मुखान्निर्गतः पुरुषार्थोपदेशार्थमिति वा **स्वास्यः**, 'अस्य महतो भूतस्य' इत्यादिश्रुतेः। अन्यस्य वंशिनो वंशाः पाश्चात्याः; अस्य वंशः प्रपञ्चः प्रागेव, न पाश्चात्य इति **प्राग्वंशः**। वंशं प्रपञ्चं वर्धयन् छेदयन् वा **वंशवर्धनः**॥

**भारभृत्कथितो योगी**
**योगीशः सर्वकामदः ।**
**आश्रमः श्रमणः क्षामः**
**सुपर्णो वायुवाहनः ॥ १०४ ॥**

अनन्तादिरूपेण भुवो भारं बिभ्रत् **भारभृत्** । वेदादिभिरयमेव परत्वेन कथितः, सर्वैः वेदैः कथित इति वा **कथितः**, 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' 'वेदे रामायणे पुण्ये भारते भरतर्षभ । आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते' इति श्रुतिस्मृत्यादिवचनेभ्यः; 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्याद्युक्तम्; किं तदध्वनो विष्णोर्व्यापनशीलस्य परमं पदं सतत्त्वमित्याकाङ्क्षायाम् इन्द्रियादिभ्य. सर्वेभ्यः परत्वेन प्रतिपाद्यते 'इन्द्रियेभ्यः परा ह्यर्था.' इत्यारभ्य, 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यन्तेन यः कथितः सः **कथितः** । योगो ज्ञानम्, तेनैव गम्यत्वात् **योगी**; योगः समाधिः, स हि स्वात्मनि सर्वदा समाधत्ते स्वमात्मानम्, तेन वा **योगी** । अन्ये योगिनो योगान्तरायैः हन्यन्ते स्वरूपात्प्रमाद्यन्ति; अयं तु तद्रहितत्वात्तेषामीशः **योगीशः** । सर्वान् कामान्

सदा ददातीति **सर्वकामदः**, 'फलमत उपपत्तेः' इति व्यासेनाभिहितत्वात् । आश्रमवत् सर्वेषां संसारारण्ये भ्रमतां विश्रमस्थानत्वात् **आश्रमः** । अविवेकिनः सर्वान्संतापयतीति **श्रमणः** । क्षामाः क्षीणाः सर्वाः प्रजाः करोतीति **क्षामः**, 'तत्करोति तदाचष्टे' इति णिचि पचाद्यचि कृते संपन्नः क्षाम इति । शोभनानि पर्णानि च्छन्दांसि संसारतरुरूपिणोऽस्येति **सुपर्णः**, 'छन्दांसि यस्य पर्णानि' इति भगवद्वचनात् । वायुर्वहति यद्भीत्या भूतानीति सः **वायुवाहनः**, 'भीषास्माद्वातः पवते' इति श्रुतेः ॥

**धनुर्धरो धनुर्वेदो**
**दण्डो दमयिता दमः ।**
**अपराजितः सर्वसहो**
**नियन्ता नियमोऽयमः ॥ १०९ ॥**

श्रीमान् रामो महद्धनुर्धारयामासेति **धनुर्धरः** । स एव दाशरथिः धनुर्वेदं वेत्तीति **धनुर्वेदः** । दमनं दमयतां **दण्डः** 'दण्डो दमयतामस्मि' इति भगवद्वचनात् । वैवस्वतनरेन्द्रादिरूपेण प्रजा दमयतीति **दमयिता** । दमः दम्येषु दण्डकार्यं फलम्, तच्च स एवेति **दमः** । शत्रुभिः न पराजित

इति **अपराजितः** । सर्वकर्मसु समर्थ इति, सर्वान् शत्रून् सहत इति वा **सर्वसहः** । सर्वान् स्वेषु स्वेषु कृत्येषु व्यवस्थापयतीति **नियन्ता** । न नियमो नियतिस्तस्य विद्यत इति **अनियमः**, सर्वनियन्तुः नियन्त्रन्तराभावात् । नास्य विद्यते यमो मृत्युरिति **अयमः** । अथवा. यमनियमौ योगाङ्गे; तद्गम्यत्वात्स एव **नियमः यमः** ॥

**सत्त्ववान्सात्त्विकः सत्यः**
**सत्यधर्मपरायणः ।**
**अभिप्रायः प्रियार्होऽर्हः**
**प्रियकृत्प्रीतिवर्धनः ॥ १०६ ॥**

शौर्यवीर्यादिकं सत्त्वमस्येति **सत्त्ववान्** । सत्त्वे गुणे प्राधान्येन स्थित इति **सात्त्विकः** । सत्सु साधुत्वात् **सत्यः** । सत्ये यथाभूतार्थकथने धर्मे च चोदनालक्षणे नियत इति **सत्यधर्मपरायणः** । अभिप्रेयते पुरुषार्थकाङ्क्षिभिः, आभिमुख्येन प्रलयेऽस्मिन्प्रैति जगदिति वा **अभिप्रायः** । प्रियाणि इष्टान्यर्हतीति **प्रियार्हः**, 'यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता' इति स्मरणात् । स्वागतासनप्रशंसार्घ्यपाद्यस्तुतिनमस्कारादिभिः पूजासाधनैः

पूजनीय इति **अर्हः**। न केवलं प्रियार्ह एव, किंतु स्तुत्यादिभिः भजतां प्रियं करोतीति **प्रियकृत्**। तेषामेव प्रीतिं वर्धयतीति **प्रीतिवर्धनः** ॥

**विहायसगतिर्ज्योतिः**
**सुरुचिर्हुतभुग्विभुः ।**
**रविर्विरोचनः सूर्यः**
**सविता रविलोचनः ॥ १०७ ॥**

विहायसं गतिराश्रयोऽस्येति **विहायसगतिः**, विष्णुपदम्, आदित्यो वा। स्वत एव द्योतत इति **ज्योतिः**, 'नारायणः परं ज्योतिः' इति मन्त्रवर्णात्। शोभना रुचिर्दीप्तिरिच्छा वा अस्येति **सुरुचिः**। समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु हुतं भुङ्क्ते भुनक्तीति वा **हुतभुक्**। सर्वत्र वर्तमानत्वात्, त्रयाणां लोकानां प्रभुत्वाद्वा **विभुः**। रसानादत्त इति **रविः** आदित्यात्मा। विविधं रोचत इति **विरोचनः**। सूतेः सुवतेर्वा सूर्यशब्दो निपात्यते, 'राजसूयसूर्य' इति पाणिनिवचनात् **सूर्यः**। सर्वस्य जगतः प्रसविता **सविता**; 'रसानां च तथादानाद्रविरित्यभिधीयते। प्रजानां तु प्रसवनात्सवितेति निगद्यते' इति विष्णुधर्मोत्तरे। रविर्लोचनं चक्षुरस्येति

रविलोचनः, 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतेः ॥

**अनन्तो हुतभुग्भोक्ता**
**सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदामर्षी**
**लोकाधिष्ठानमद्भुतः ॥ १०८ ॥**

नित्यत्वात्सर्वगतत्वात् देशकालपरिच्छेदाभावात् **अनन्तः**; शेषरूपो वा । हुतं भुनक्तीति **हुतभुक्** । प्रकृतिं भोग्याम् अचेतनां भुङ्क्ते इति, जगत्पालयतीति वा **भोक्ता** । भक्तानां सुखं मोक्षलक्षणं ददातीति **सुखदः**; असुखं द्यति खण्डयतीति वा **असुखदः** । धर्मगुप्तये असकृज्जायमानत्वात् **नैकजः** । अग्रे जायत इति **अग्रजः** हिरण्यगर्भः, 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतेः । अवाप्तसर्वकामत्वादप्राप्तिहेत्वभावान्निर्वेदोऽस्य नास्तीति **अनिर्विण्णः** । सतः साधून् आभिमुख्येन मृष्यते क्षमत इति **सदामर्षी** । तमनाधारमाधारमधिष्ठाय त्रयो लोकास्तिष्ठन्ति इति **लोकाधिष्ठानं** ब्रह्म । अद्भुतत्वात् **अद्भुतः**, 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति श्रुतेः ।

'आश्चर्यवत्पश्यति कश्चिदेनम्' इति भगवद्वचनाच्च । स्वरूपशक्तिव्यापारकार्यैः अद्भुतत्वाद्वा **अद्भुतः** ॥

**सनात्सनातनतमः**
**कपिलः कपिरप्ययः ।**
**स्वस्तिदः स्वस्तिकृत्स्वस्ति**
**स्वस्तिभुक्स्वस्तिदक्षिणः ॥ १०९ ॥**

सनात् इति निपातः चिरार्थवचनः । कालश्च परस्यैव विकल्पना कापि । 'परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज । व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम्' इति विष्णुपुराणे । सर्वकारणत्वात् विरिञ्चयादीनामपि सनातनानामतिशयेन सनातनत्वात् **सनातनतमः** । वडबानलस्य कपिलो वर्ण इति तद्रूपी **कपिलः** । कं जलं रश्मिभिः पिबन् **कपिः** सूर्यः; **कपिः** वराहो वा, 'कपिर्वराहः श्रेष्ठश्च' इति वचनात् । प्रलये अस्मिन्नपियन्ति जगन्तीति **अप्ययः** ।

इति नाम्नां नवमं शतं विवृतम् ॥

भक्तानां स्वस्ति मङ्गलं ददातीति **स्वस्तिदः** । तदेव करोतीति **स्वस्तिकृत्** । मङ्गलस्वरूपमात्मीयं परमानन्दल-

क्षणं **स्वस्ति** । तदेव भुङ्क्त इति **स्वस्तिभुक्**; भक्तानां मङ्गलं स्वस्ति भुनक्तीति वा **स्वस्तिभुक्** । स्वस्तिरूपेण दक्षते वर्धते, स्वस्ति दातुं समर्थ इति वा **स्वस्तिदक्षिणः** । अथवा, दक्षिणशब्द आशुकारिणि वर्तते; शीघ्रं स्वस्ति दातुम् अयमेव समर्थ इति, यस्य स्मरणादेव सिध्यन्ति सर्वसिद्धयः, 'स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ स्मरणादेव कृष्णस्य पापसंघातपञ्जरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा' इत्यादिवचनेभ्यः ॥

**अरौद्रः कुण्डली चक्री**
**विक्रम्यूर्जितशासनः ।**
**शब्दातिगः शब्दसहः**
**शिशिरः शर्वरीकरः ॥ ११० ॥**

कर्म रौद्रम्, रागश्च रौद्रः, कोपश्च रौद्रः; यस्य रौद्रत्रयं नास्ति अवाप्तसर्वकामत्वेन रागद्वेषादेरभावात् **अरौद्रः** । शेषरूपभाक् **कुण्डली** सहस्रांशुमण्डलोपमकुण्डलधारणाद्वा; यद्वा, सांख्ययोगात्मके कुण्डले मकराकारे अस्य स्त इति **कुण्डली** । समस्तलोकरक्षार्थं मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रं

धत्त इति **चक्री**, 'चलस्वरूपमत्यन्तं जवेनान्तरितानिलम् । चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम्' इति विष्णुपुराणवचनात् । विक्रमः पादविक्षेपः, शौर्यं वा; द्वयं चाशेषपुरुषेभ्यो विलक्षणमस्येति **विक्रमी** । श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येति **ऊर्जितशासनः** 'श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः' इति भगवद्वचनात् । शब्दप्रवृत्तिहेतूनां जात्यादीनामसंभवात् शब्देन वक्तुमशक्यत्वात् **शब्दातिगः**, 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'न शब्दगोचरे यस्य योगिध्येयं परं पदम्' इत्यादिश्रुतिस्मृतिभ्यः । सर्वे वेदाः तात्पर्येण तमेव वदन्तीति **शब्दसहः**; 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्मृतेश्च । तापत्रयाभितप्तानां विश्रामस्थानत्वात् **शिशिरः** । संसारिणामात्मा शर्वरीव शर्वरी; ज्ञानिनां पुनः संसारः शर्वरी; तामुभयेषां करोतीति **शर्वरीकरः**, 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति भगवद्वचनात् ॥

**अक्रूरः पेशलो दक्षो**
**दक्षिणः क्षमिणां वरः ।**

**विद्वत्तमो वीतभयः**
**पुण्यश्रवणकीर्तनः ॥ १११ ॥**

क्रौर्यं नाम मनोधर्मः प्रकोपजः आन्तरः संतापः साभिनिवेशः; अवाप्तसमस्तकामत्वात्कामाभावादेव कोपाभावः; तस्मात्क्रौर्यमस्य नास्तीति **अक्रूरः**। कर्मणा मनसा वाचा वपुषा च शोभनत्वात् **पेशलः**। प्रवृद्धः शक्तः शीघ्रकारी च दक्षः, त्रयं चैतत् परस्मिन्नियतमिति **दक्षः**। दक्षिणशब्दस्यापि दक्ष एवार्थः, पुनरुक्तिदोषो नास्ति, शब्दभेदात्; अथवा, दक्षते गच्छति, हिनस्तीति वा **दक्षिणः**, 'दक्ष गतिहिंसनयोः' इति धातुपाठात्। क्षमावतां योगिनां च पृथिव्यादीनां भारधारकाणां च श्रेष्ठ इति **क्षमिणां वरः**। 'क्षमया पृथिवीसमः' इति वाल्मीकिवचनात्; ब्रह्माण्डमखिलं वहन् पृथिवीव भारेण नार्दित इति पृथिव्या अपि वरो वा; क्षमिणः शक्ताः; अयं तु सर्वशक्तिमत्त्वात्सकलाः क्रियाः कर्तुं क्षमत इति वा **क्षमिणां वरः**। निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेषामिति **विद्वत्तमः**। वीतं विगतं भयं सांसारिकं संसारलक्षणं वा अस्येति **वीतभयः**, सर्वेश्वरत्वान्नित्यमुक्तत्वाच्च। पुण्यं पुण्यकरं श्रवणं कीर्तनं चास्येति **पुण्यश्रवणकीर्तनः**, 'य इदं शृणुयान्नित्यं यश्चापि

परिकीर्तयेत् । नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः' इति श्रवणादिफलवचनात् ॥

**उत्तारणो दुष्कृतिहा**
**पुण्यो दुःस्वप्ननाशनः ।**
**वीरहा रक्षणः सन्तो**
**जीवनः पर्यवस्थितः ॥ ११२ ॥**

संसारसागरादुत्तारयतीति **उत्तारणः** । दुष्कृतीः पापसंज्ञिताः हन्तीति **दुष्कृतिहा**, पापकारिणस्तान्हन्तीति वा **दुष्कृतिहा** । स्मरणादि कुर्वतां सर्वेषां पुण्यं करोतीति, सर्वेषां श्रुतिस्मृतिलक्षणया वाचा पुण्यमाचष्ट इति वा **पुण्यः** । भाविनोऽनर्थस्य सूचकान् दुःस्वप्नान् नाशयति ध्यातः स्तुतः कीर्तितः पूजितश्चेति **दुःस्वप्ननाशनः** । विविधाः संसारिणां गतीः मुक्तिप्रदानेन हन्तीति **वीरहा** । सत्त्वं गुणमधिष्ठाय जगत्त्रयं रक्षन् **रक्षणः**; नन्द्यादित्वात्कर्तरि ल्युः । सन्मार्गवर्तिनः सन्तः; तद्रूपेण विद्याविनयवृद्धये स एव वर्तत इति **सन्तः** । सर्वाः प्रजाः प्राणरूपेण जीवयन् **जीवनः** । परितः सर्वतो विश्वं व्याप्यावस्थित इति **पर्यवस्थितः** ॥

**अनन्तरूपोऽनन्तश्री-**
**र्जितमन्युर्भयापहः ।**
**चतुरश्रो गभीरात्मा**
**विदिशो व्यादिशो दिशः ॥ ११३ ॥**

अनन्तानि रूपाण्यस्य विश्वप्रपञ्चरूपेण स्थितस्येति **अनन्तरूपः** । अनन्ता अपरिमिता श्रीः परशक्तिरस्येति **अनन्तश्रीः**, 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । मन्युः क्रोधो जितो येन सः **जितमन्युः** । भयं संसारजं पुंसामपघ्नन् **भयापहः** । न्यायसमवेतः **चतुरश्रः**, पुंसां कर्मानुरूपं फलं प्रयच्छतीति । आत्मा स्वरूपं चित्तं वा गभीरं परिच्छेत्तुमशक्यमस्येति **गभीरात्मा** । विविधानि फलानि अधिकारिभ्यो विशेषेण दिशतीति **विदिशः** । विविधामाज्ञां शक्रादीनां कुर्वन् **व्यादिशः** । समस्तानां कर्मणां फलानि दिशन् वेदात्मना **दिशः** ॥

**अनादिर्भूर्भुवो लक्ष्मीः**
**सुवीरो रुचिराङ्गदः ।**
**जननो जनजन्मादि-**
**र्भीमो भीमपराक्रमः ॥ ११४ ॥**

आदिः कारणमस्य न विद्यत इति **अनादिः**, सर्वकारणत्वात् । भूराधारः, भुवः सर्वभूताश्रयत्वेन प्रसिद्धाया भूम्याः, भुवोऽपि भूरिति **भूर्भुवः** । अथवा, न केवलमसौ भूः भुवः, लक्ष्मीः शोभा चेति **भुवो लक्ष्मीः** । अथवा, **भूः** भूलोकः ; **भुवः** भुवर्लोकः ; **लक्ष्मीः** आत्मविद्या, 'आत्मविद्या च देवि त्वम्' इति श्रीस्तुतौ । भूम्यन्तरिक्षयोः शोभेति वा **भूर्भुवो लक्ष्मीः** । शोभना विविधा ईरा गतयो यस्य सः **सुवीरः** ; शोभनं विविधम् ईर्ते इति वा **सुवीरः** । रुचिरे कल्याणे अङ्गदे अस्येति **रुचिराङ्गदः** । जन्तून् जनयन् **जननः** ; ल्युड्विधौ बहुलग्रहणात्कर्तरि ल्युट् प्रत्ययः प्रयोगवचनादिवत् । जनस्य जनिमतो जन्म उद्भवः तस्यादिः मूलकारणमिति **जनजन्मादिः** । भयहेतुत्वात् **भीमः**, 'भीमादयोऽपादाने' इति निपातनात्, 'महद्भयं वज्रमुद्यतम्' इति श्रुतेः । असुरादीनां भयहेतुः पराक्रमोऽस्यावतारेष्विति **भीमपराक्रमः** ॥

**आधारनिलयोऽधाता**
**पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः**
**प्राणदः प्रणवः पणः ॥ ११९ ॥**

पृथिव्यादीनां पञ्चभूतानामाधाराणामाधारत्वात् **आधारनिलयः** । स्वात्मना धृतस्यास्यान्यो धाता नास्तीति **अधाता**; 'नद्यृतश्च' इति 'समासान्तविधिरनित्यः' इति कप्प्रत्ययाभावः । संहारसमये सर्वाः प्रजाः धयति पिबतीति वा **धाता**; धेट् पाने, इति धातुः । मुकुलात्मना स्थितानां पुष्पाणां हासवत् प्रपञ्चरूपेण विकासोऽस्येति **पुष्पहासः** । नित्यप्रबुद्धस्वरूपत्वात् प्रकर्षेण जागर्तीति **प्रजागरः** । सर्वेषामुपरि तिष्ठन् **ऊर्ध्वगः** । सतां कर्माणि सत्पथाः; तानाचरत्येष इति **सत्पथाचारः** । मृतान् परिक्षित्प्रभृतीन् जीवयन् **प्राणदः** । प्रणवो नाम परमात्मनो वाचक ओंकारः; तदभेदोपचारेणायं **प्रणवः** । पणतिर्व्यवहारार्थः; तं कुर्वन् **पणः**, 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति श्रुतेः; पुण्यानि सर्वाणि कर्माणि पणं संगृह्याधिकारिभ्यः तत्फलं प्रयच्छतीति वा लक्षणया **पणः** ॥

**प्रमाणं प्राणनिलयः**
**प्राणभृत्प्राणजीवनः ।**
**तत्त्वं तत्त्वविदेकात्मा**
**जन्ममृत्युजरातिगः ॥ ११६ ॥**

प्रमितिः संवित्स्वयंप्रभा **प्रमाणम्**, 'प्रज्ञानं ब्रह्म' इति श्रुतेः । 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थ-स्वरूपेण भ्रान्तिदर्शनतः स्थितम्' इति विष्णुपुराणे । प्राणा इन्द्रियाणि यत्र जीवे निलीयन्ते तत्परतन्त्रत्वात्, देहस्य धारकाः प्राणापानादयो वा तस्मिन्निलीयन्ते, प्राणितीति प्राणो जीवः परे पुंसि निलीयत इति वा प्राणान् जीवांश्च संहरन्निति वा **प्राणनिलयः** । पोषयन्नन्नरूपेण प्राणान् **प्राण-भृत्** प्राणिनो जीवयन् प्राणाख्यैः पवनैः **प्राणजीवनः**, 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति मन्त्रवर्णात् । **तत्त्वं** तथ्यममृतं सत्यं परमार्थः सतत्त्वमित्येते एकार्थवाचिनः परमार्थसतो ब्रह्मणो वाचकाः शब्दाः । तत्त्वं स्वरूपं यथावद्वेत्तीति **तत्त्ववित्** । एकश्चासावात्मा चेति **एकात्मा**, 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतेः, 'यच्चाप्नोति यदादत्ते यच्चात्ति विषया-निह । यच्चास्य संततो भावस्तस्मादात्मेति गीयते' इति स्मृतेश्च । 'जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति' इति षड्भावविकारानतीत्य गच्छतीति **जन्ममृत्यु-जरातिगः**, 'न जायते म्रियते वा विपश्चित्' इति मन्त्र-वर्णात् ॥

**भूर्भुवःस्वस्तरुस्तारः**
**सविता प्रपितामहः ।**
**यज्ञो यज्ञपतिर्यज्वा**
**यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥**

भूर्भुवःस्वःसमाख्यानि त्रीणि व्याहृतिरूपाणि शुक्राणि त्रयीसाराणि बह्वृचा आहुः; तैर्होमादिना जगत्त्रयं तरति. प्लवते वेति **भूर्भुवःस्वस्तरुः** 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति मनुवचनात्; अथवा, भूर्भुवःस्वःसमाख्यलोकत्रयसंसारवृक्ष **भूर्भुवःस्वस्तरुः**; भूर्भुवःस्वराख्यं लोकत्रय वृक्षवद्व्याप्य तिष्ठतीति वा **भूर्भुवःस्वस्तरुः** । संसारसागरं तारयन् **तारः**, प्रणवो वा । सर्वस्य लोकस्य जनक इति **सविता** । पितामहस्य ब्रह्मणोऽपि पितेति **प्रपितामहः** । संगन्ता **यज्ञः**, यज्ञानां पाता, स्वामी वा **यज्ञपतिः**, 'अयं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति भगवद्वचनात् । यजमानात्मना तिष्ठन् **यज्वा** । यज्ञा अङ्गान्यस्येति वराहमूर्तिः **यज्ञाङ्गः**,

वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥

अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान ॥

धर्मसत्यमयः श्रीमान्क्रमविक्रमसत्क्रियः ।
प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः ॥

उद्गात्रन्त्रो होमलिङ्गः फलबीजमहौषधिः ।
बाह्यान्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥

वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः ॥

दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥

नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मेरुशृङ्ग इवोच्छ्रितः ॥

इति हरिवंशे ।

फलहेतुभूतान्यज्ञान् वाहयतीति **यज्ञवाहनः** ॥

**यज्ञभृद्यज्ञकृद्यज्ञी**
**यज्ञभुग्यज्ञसाधनः ।**
**यज्ञान्तकृद्यज्ञगुह्य-**
**मन्नमन्नाद एव च ॥ ११८ ॥**

यज्ञं बिभर्ति पातीति वा **यज्ञभृत्** । जगदादौ तदन्ते च यज्ञं करोति, कृन्ततीति वा **यज्ञकृत्** । यज्ञानां तत्समाराधनात्मनां शेषीति **यज्ञी** । यज्ञं भुङ्क्ते, भुनक्तीति वा **यज्ञभुक्** । यज्ञाः साधनं तत्प्राप्ताविति **यज्ञसाधनः** । यज्ञस्यान्तं फलप्राप्तिं कुर्वन् **यज्ञान्तकृत्**; वैष्णवीऋक्शंसनेन पूर्णाहुत्या पूर्णं कृत्वा यज्ञसमाप्तिं करोतीति वा **यज्ञान्तकृत्** । यज्ञानां गुह्यं ज्ञानयज्ञः, फलाभिसंधिरहितो वा यज्ञः; तदभेदोपचारात् ब्रह्म **यज्ञगुह्यम्** । अद्यते अत्ति च भूतानीति **अन्नम्** । अन्नमत्तीति **अन्नादः** । सर्वं जगदन्नादिरूपेण भोक्तृभोग्यात्मकमेवेति दर्शयितुमेवकारः; च-शब्दः सर्वनाम्नामेकस्मिन्परस्मिन्पुंसि समुच्चित्य वृत्तिं दर्शयितुम् ॥

**आत्मयोनिः स्वयंजातो**
**वैखानः सामगायनः ।**
**देवकीनन्दनः स्रष्टा**
**क्षितीशः पापनाशनः ॥ ११० ॥**

आत्मैव योनिरुपादानकारणं नान्यदिति **आत्मयोनिः** । निमित्तकारणमपि स एवेति दर्शयितुं **स्वयंजातः** इति; 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यत्र स्थापितमुभ-

यकारणत्वं हरेः । विशेषेण खननात् **वैखानः**, धरणीं विशेषेण खनित्वा पातालवासिनं हिरण्याक्षं वाराहं रूपमास्थाय जघानेति पुराणे प्रसिद्धम् । सामानि गायतीति **सामगायनः** । देवक्याः सुतो **देवकीनन्दनः** । 'ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपालास्त्रयी च । त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव' इति महाभारते । **स्रष्टा** सर्वलोकस्य । क्षितेर्भूमेरीशः **क्षितीशः** दशरथात्मजः । कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं नाशयन् **पापनाशनः**; 'पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति । प्राणायामशतेनैव तत्पापं नश्यते नृणाम् ॥ प्राणायामसहस्रेण यत्पापं नश्यते नृणाम् । क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति' इति वृद्धशातातपे ॥

**शङ्खभृन्नन्दकी चक्री**
**शार्ङ्गधन्वा गदाधरः ।**
**रथाङ्गपाणिरक्षोभ्यः**
**सर्वप्रहरणायुधः ।**
**सर्वप्रहरणायुधों नमः ॥ १२० ॥**

पाञ्चजन्याख्यं भूताद्यहंकारात्मकं शङ्खं बिभ्रत् शङ्ख-

**भृत्** । विद्यामयो नन्दकाख्योऽसिरस्येति **नन्दकी** । मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्यास्तीति, संसारचक्रमस्याज्ञया परिवर्तत इति वा **चक्री** । इन्द्रियाद्यहंकारात्मकं शार्ङ्गं नाम धनुरस्यास्तीति **शार्ङ्गधन्वा** । 'धनुषश्च' इति अनङ् समासान्तः । बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां वहन् **गदाधरः** । रथाङ्गं चक्रमस्य पाणौ स्थितमिति **रथाङ्गपाणिः** । अत एव अशक्यक्षोभणः इति **अक्षोभ्यः** । केवलम् एतावन्त्यायुधान्यस्येति न नियम्यते, अपि तु सर्वाण्येव प्रहरणान्यायुधान्यस्येति **सर्वप्रहरणायुधः**, आयुधत्वेनाप्रसिद्धान्यपि करजादीन्यस्यायुधानि भवन्तीति । अन्ते सर्वप्रहरणायुध इति वचनं सत्यसंकल्पत्वेन सर्वेश्वरत्वं दर्शयितुम्, 'एष सर्वेश्वरः' इति श्रुतेः । द्विर्वचनं समाप्तिं द्योतयति । ॐकारश्च मङ्गलार्थः, ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' इति वचनात् । अन्ते 'नमः' इत्युक्त्या परिचरणं कृतवान्, 'भूयिष्ठां ते नमउक्तिं विधेम' इति मन्त्रवर्णात् । 'धन्यं तदेव लग्नं तन्नक्षत्रं तदेव पुण्यमहः । करणस्य च सा सिद्धिर्यत्र हरिः प्राङ् नमस्क्रियते' इति च । प्रागित्युपलक्षणम्, अन्तेऽपि नमस्कारस्य शिष्टैराचरणात् । नमस्कार-

फलं प्रागेव दर्शितम्—

एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

अतसीपुष्पसंकाशं पीतवाससमच्युतम्।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥

लोकत्रयाधिपतिमप्रतिमप्रभाव-
मीषत्प्रणम्य शिरसा प्रभविष्णुमीशम्।
जन्मान्तरप्रलयकल्पसहस्रजात-
माशु प्रशान्तिमुपयाति नरस्य पापम् ॥ इति ॥

इति नाम्नां दशमं शतं विवृतम् ॥

**इतीदं कीर्तनीयस्य केशवस्य महात्मनः।**
**नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥**

इतीदम् इत्यनेन नामसहस्रन्यूनानतिरिक्तमुक्तमिति दर्शयति दिव्यानामप्राकृतानां नाम्नां सहस्रं प्रकीर्तितमिति वदता प्रकारान्तरेणापि संख्योपपत्तिर्दर्शिता। प्रक्रमे 'किं जपन्मुच्यते जन्तुः' इति जपशब्दोपादानात् कीर्तयेत् इत्यनेनापि त्रिविधजपो लक्ष्यते। उच्चोपांशुमानसलक्षणस्त्रिविधो जपः ॥

**य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।**
**नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥**

य इदं शृणुयान् इत्यादिः स्पष्टार्थः । परलोकप्राप्तस्यापि ययातिनहुषादिवदशुभप्राप्त्यभावं सूचयितुम् अमुत्र इत्युक्तम् ॥

**वेदान्तगो ब्राह्मणः स्या-**
**त्क्षत्रियो विजयी भवेत् ।**
**वैश्यो धनसमृद्धः स्या-**
**च्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥**

वेदान्तानामुपनिषदामर्थं ब्रह्म गच्छत्यवगच्छतीति वेदान्तगः । 'किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्' इति वचनात् जपकर्मणा साक्षान्मुक्तिशङ्कायां कर्मणां साक्षान्मुक्तिहेतुत्वं नास्ति, ज्ञानेनैव मोक्ष इति दर्शयितुं वेदान्तगो ब्राह्मणः स्यात् इत्युक्तम् । कर्मणां त्वन्तःकरणशुद्धिद्वारेण मोक्षहेतुत्वम्,

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥

नित्यं ज्ञानं समासाद्य नरो बन्धात्प्रमुच्यते ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।
कर्मणा वध्यते जन्तुर्विद्ययैव विमुच्यते ॥
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।
यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ॥
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
तपसा कल्मषं हन्ति विद्ययामृतमश्नुते । इति ॥
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥

इत्यादिस्मृतिभ्यः, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' 'येन केन च यजेतापि वा दर्विहोमेनानुपहतमना एव भवति' इत्यादिश्रुतिभ्यः । ज्ञानादेव मोक्षो भवति, 'ज्ञानादेव तु कैवल्यं प्राप्यते तेन मुच्यते' 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्येति' 'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'वेदान्तविज्ञानसुनिश्चितार्थाः

संन्यासयोगाद्यतयः शुद्धसत्त्वाः' 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इत्यादिश्रुतिभ्यः । शूद्रः सुखमवाप्नुयात् श्रवणेनैव, न तु जपयज्ञेन, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः । 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इति महाभारते श्रवणमनुज्ञायते । 'सुगतिमियाच्छ्रवणाच्च शूद्रयोनिः' इति हरिवंशे । यः शूद्रः शृणुयात् स सुखमवाप्नुयात् इति व्यवहितेन संबन्धः ; त्रैवर्णिकानां कीर्तयेदित्यनेन ॥

**धर्मार्थी प्राप्नुयाद्धर्म-**
**मर्थार्थी चार्थमाप्नुयात् ।**
**कामानवाप्नुयात्कामी**
**प्रजार्थी चाप्नुयात्प्रजाम् ॥ १२४ ॥**

चक्षुरादीनामात्मयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यात् प्रवृत्तिः कामः । प्रजायत इति प्रजा संततिः ॥

भक्तिमानित्यादिना भक्तिमतः शुचेः सततमेवमुद्युक्तस्यैकाग्रचित्तस्य श्रद्धालोः विशिष्टाधिकारिणः फलविशेषं दर्शयति—

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥

यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥१३१॥

**इमं स्तवमधीयानः**
**श्रद्धाभक्तिसमन्वितः ।**
**युज्येतात्मसुखक्षान्ति-**
**श्रीधृतिस्मृतिकीर्तिभिः ॥ १३२ ॥**

श्रद्धा आस्तिकयबुद्धिः । भक्तिः भजनं तात्पर्यम् । आत्मनः सुखम् आत्मसुखम् । तेन च क्षान्त्यादिभिश्च युज्यते ॥

**नक्रोधो न च मात्सर्यं**
**नलोभो नाशुभा मतिः ।**
**भवन्ति कृतपुण्यानां**
**भक्तानां पुरुषोत्तमे ॥ १३३ ॥**

नक्रोधः नलोभः नाशुभा मतिः इति अकारानुबन्धरहितेन नकारेण समस्तं पदत्रयम्; क्रोधादयो न भवन्ति, मात्सर्यं च न भवतीत्यर्थः ॥

**द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।**
**वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१३४॥**

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारयणोद्भवम् ॥ १३८ ॥

योगो ज्ञानं तथा सांख्यं
विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञान-
मेतत्सर्वं जनार्दनात् ॥ १३९ ॥

एको विष्णुर्महद्भूतं
पृथग्भूतान्यनेकशः ।

**त्रीँल्लोकान्व्याप्य भूतात्मा**
**भुङ्क्ते विश्वभुगव्ययः ॥ १४० ॥**

'द्यौः सचन्द्रार्कनक्षत्रा' इत्यादिना स्तुत्यस्य वासुदेवस्य माहात्म्यकथनेनोक्तानां फलानां प्राप्तिवचनं यथार्थकथनं नार्थवाद इति दर्शयति । 'सर्वागमानामाचारः' इत्यनेनावान्तरवाक्येन सर्वधर्माणामाचारवत एवाधिकार इति दर्शयति ॥

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥**

इमं स्तवम् इत्यादिना सहस्रशाखाज्ञानेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैरेव अर्थिभिः सादरं पठितव्यं सर्वफलसिद्धय इति दर्शयति ॥

**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥**

इति श्रीमहाभारते आनुशासनिके भीष्मयुधिष्ठिरसंवादे
विष्णोर्दिव्यसहस्रनामस्तोत्रं नाम
एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

'विश्वेश्वरम्' इत्यादिना विश्वेश्वरोपासनादेव स्तोतारस्ते धन्याः कृतार्थाः कृतकृत्या इति दर्शयति ।

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥

इति व्यासवचनम् ॥

सहस्रनामसंबन्धिव्याख्या सर्वसुखावहा ।
श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**विष्णुसहस्रनामस्तोत्रभाष्यम्**
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ सनत्सुजातीयभाष्यम् ॥

श्रीमच्छंकरभगवत्पादैः

विरचितम् ।

॥ श्रीः ॥

# ॥ सनत्सुजातीयम् ॥

## श्रीमच्छंकरभगवत्पादविरचितेन भाष्येण सहितम् ।

नमः पुंसे पुराणाय पूर्णानन्दाय विष्णवे ।
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ॥

नम आचार्येभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यः ॥

**सनत्सुजातीयविवरणं** संक्षेपतो ब्रह्मजिज्ञासूनां सुखावबोधायारभ्यते ॥

स्वतश्चित्सदानन्दाद्वितीयब्रह्मस्वरूपोऽप्यात्मा स्वाश्रयया स्वविषयया अविद्यया स्वानुभवगम्यया साभासया स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मभावात्प्रच्युतः अनात्मनि देहादावात्मभावमापन्नः अप्राप्ताशे-

षपुरुषार्थः प्राप्ताशेषानर्थः अविद्याकर्मपरिकल्पितैरेव साधनैरि-ष्टप्राप्तिमनिष्टपरिहृतिं चाकाङ्क्षन् लौकिकवैदिकसाधनैरनुष्ठि-तैरपि परमपुरुषार्थं मोक्षाख्यमलभमानो मकरादिभिरिव राग-द्वेषादिभिरितस्तत आकृष्यमाणः सुरनरतिर्यगादिप्रभेदभिन्नासु नानायोनिषु परिवर्तमानो मुह्यमानः संसरन् कथंचित्पुण्यव-शाद्वेदोदितेन ईश्वरार्थकर्मानुष्ठानेनापगतरागादिमलः अनित्या-दिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागः वेदान्तेभ्यः प्रतीय-मानं ब्रह्मात्मभावं बुभुत्सुः वेदोदितशमदमादिसाधनसंपन्नः ब्रह्मविदमाचार्यमुपेत्य आचार्यानुसारेण वेदान्तश्रवणादिना 'अहं ब्रह्मास्मि' इति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानत-त्कार्यः ब्रह्मरूपोऽवतिष्ठत इतीयं वेदान्तानां मर्यादा । एत-त्सर्वं क्रमेण दर्शयिष्यति भगवान् सनत्सुजातः ॥

धृतराष्ट्रः शोकमोहाभितप्तः 'तरति शोकमात्मवित्' इति वेदान्तवादमुपश्रुत्य ब्रह्मविद्यया विना शोकापनयनमशक्यं मन्वानः 'अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते । तन्मे शुश्रूषवे ब्रूहि विचित्राणीह भाषसे' इति विदुरायोक्तवान । स च श्रुतवाक्योऽपि परमकारुणिकः सर्वज्ञः सन् ब्रह्म-विद्यां विशिष्टाधिकारिविषयां मन्वानः 'शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे' इति शूद्रयोनिजत्वादौपनिषदब्रह्मात्म-

तत्त्वज्ञाने नाहमधिकृत इत्युक्त्वा कथमेनं ब्रह्मविद्यया परमे पदे परमात्मनि पूर्णानन्दे स्वाराज्ये स्थापयिष्यामीति मन्वानः छान्दोग्योपनिषत्प्रसिद्धमितिहासं स्मृत्वा नान्योऽस्मादस्मै भूमानं तमसः परं परमात्मानं दर्शयितुं शक्नुयादिति मत्वा तमेव भगवन्तं सनत्सुजातं योगबलेनाहूय प्रत्युत्थानादिभिर्भगवन्तं पूजयित्वा 'भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसे । यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥ श्रुत्वायं यं मनुष्येन्द्रः सर्वदुःखातिगो भवेत् । लाभालाभौ प्रियद्वेष्यौ तथैव च जरान्तकौ ॥ विषहेत मदोन्मादौ क्षुत्पिपासे भयाभये । अरतिं चैव तन्द्रीं च कामक्रोधौ क्षयोदयौ' इति भगवन्. येनासौ सकलसंसारकारणधर्माधर्मविवर्जितः सुखदुःखातिगो मुक्तो भवेत् तमस्मै धृतराष्ट्राय वक्तुमर्हसीत्युक्तवान्—

**वैशम्पायन उवाच—**

**ततो राजा धृतराष्ट्रो मनीषी**
**संपूज्य वाक्यं विदुरेरितं तत् ।**
**सनत्सुजातं रहिते महात्मा**
**पप्रच्छ बुद्धिं परमां बुभूषन् ॥ १ ॥**

ततः एतद्वाक्यसमनन्तरं विदुरेण सनत्सुजातं प्रति

ईरितम् उक्तं यत् वाक्यं तत् संपूज्य संमान्य सनत्सुजातं सनदिति सनातनं ब्रह्मोच्यते हिरण्यगर्भाख्यम्, तस्मात्सनातनात् ब्रह्मणो मानसात् ज्ञानवैराग्यादिसमन्वितः सुष्ठु जात इति सनत्सुजातः इत्युक्तो भगवान् सनत्कुमारः; तं रहिते रहसि प्राकृतजनवर्जिते देशे महात्मा महाबुद्धिः पप्रच्छ पृष्टवान् बुद्धिं परमाम् उत्तमां पूर्णानन्दाद्वितीयविषयाम्। किमर्थम्? बुभूषन् भवितुमिच्छन्, ब्रह्मविद्यया अपहृतमात्मानं लब्धुमिच्छन्नित्यर्थः ॥

धृतराष्ट्र उवाच—

**सनत्सुजात यदिदं शृणोमि**
**मृत्युर्हि नास्तीति तवोपदेशम्।**
**देवासुरा आचरन्ब्रह्मचर्य-**
**ममृत्यवे तत्कतरन्नु सत्यम्** ॥ २ ॥

हे सनत्सुजात, यत् मृत्युर्हि नास्तीति शिष्यान्प्रति उपदिष्टमिति विदुरः प्राह, देवासुराः पुनः अमृत्यवे मृत्योरभावाय अमृतत्वप्राप्तये ब्रह्मचर्यमाचरन् इन्द्रविरोचनादयः गुरौ वासं कृतवन्तः। श्रूयते च छान्दोग्ये— 'तद्धोभये देवा असुरा अनुबुबुधिरे' इत्याद्यारभ्य 'तौ ह द्वात्रिंशतं वर्षाणि

ब्रह्मचर्यमूषतुः' इत्यन्तेनेन्द्रविरोचनयोः प्रजापतौ ब्रह्मचर्यचरणम् 'एकशतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवास' इति च। यदि मृत्युर्नास्तीति तव पक्षः, कथं तर्हि देवासुराणाममृत्यवे ब्रह्मचर्यचरणम्; तत् तयोर्मृत्युसद्भावासद्भावपक्षयोः कतरन्नु सत्यम्, यत्सत्यं तद्वक्तुमर्हसीत्यभिप्रायः ॥

श्रीसनत्सुजात उवाच—

**अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।**
**शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ॥**

एवं पृष्टः प्राह भगवान् सनत्सुजातः— केचित् पुनरविद्याधिरूढाः परमार्थतो मृत्युसद्भावं मन्यमानाः वेदोक्तेन कर्मणा अमृत्युः अमृतत्वं भवतीति मत्वा अमृत्यवे अमृतत्वप्राप्तये वेदोक्तं कर्माचरन्ति; तथा अन्ये विषयविषान्धाः विषयव्यतिरेकेण निर्विषयं मोक्षममन्यमानाः कर्मणैव अमृत्युम् अमरणत्वं देवादिभावं वर्णयन्ति; तत्रैव च रागिगीतं श्लोकमुदाहरन्ति— 'अपि बृन्दावने शून्ये सृगालत्वं स इच्छतु । न तु निर्विषयं मोक्षं कदाचिदपि गौतम' इति । तथैव च परमात्मव्यतिरेकेण द्वितीयमपश्यन्तो ज्ञानकर्मभ्याममृतत्वं वर्णयन्ति ।

अपरे पुनरद्वितीयात्मदर्शिनः आत्मव्यतिरेकेण द्वितीयमपश्यन्तो मृत्युर्नास्तीति वर्णयन्ति हे राजन्ः यथा एतत्पक्षयोरविरोधः संभवति, तथा ब्रुवतो मे मम वाक्यं शृणु मा विशङ्किथाः मयोक्तेऽर्थे शङ्कां मा कृथाः ॥

कथम् ?—

**उभे सत्ये क्षत्रियाद्यप्रवृत्ते**
**मोहो मृत्युः संमतो यः कवीनाम् ।**
**प्रमादं वै मृत्युमहं ब्रवीमि**
**सदाप्रमादममृतत्वं ब्रवीमि ॥ ४ ॥**

ये पूर्वोक्ते मृत्योरस्तित्वनास्तित्वे ते उभे हे क्षत्रिय, आद्यप्रवृत्ते य आदिसर्गस्तमारभ्य प्रवृत्ते । अथवा, क्षत्रियाद्य क्षत्रियप्रधान, प्रवृत्ते वर्तमाने । कथं पुनरुभयोः परस्परविरुद्धयोः अस्तित्वनास्तित्वयोः सत्यत्वमिति ? तत्राह— मोहो मृत्युः संमतो यः कवीनाम् इति । भवेदयं विरोधः अस्तित्वनास्तित्वयोः, यदि परमार्थरूपो मृत्युः स्यात् । कस्तर्हि मृत्युः ? यो मोहो मिथ्याज्ञानम् अनात्मन्यात्माभिमानः, स मृत्युः केषांचित् कवीनां मतः ; अहं तु न तथा मृत्युं ब्रवीमि । कथं तर्हि ? प्रमादं वै मृत्युम् अहं ब्रवीमि । प्रमादः प्रच्युतिः

स्वाभाविकब्रह्मभावात् । तं प्रमादं मिथ्याज्ञानस्यापि कारणम् आत्मानवधारणमात्माज्ञानं मृत्युं जननमरणादिसर्वानर्थबीजम् अहं ब्रवीमि । तथा सदाप्रमादं स्वाभाविकस्वरूपेणावस्थानम् अमृतत्वं ब्रवीमि । तथा च श्रुतिः स्वरूपावस्थानमेव मोक्षपदं दर्शयति— 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति । तथा अनुगीतासु स्पष्टमाह— 'एको यज्ञो नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । यस्मिन्निष्ट्वा सर्वमिदं ग्रसित्वा स्वरूपसंस्थाश्च भवन्ति मर्त्याः' इति । यत एवं स्वरूपावस्थानलक्षणो मोक्षः, अत एव चतुर्विधक्रियाफलविलक्षणत्वादेव न कर्मसाध्यममृतत्वम्; नापि समुच्चिताभ्यां ज्ञानकर्मभ्यामिति 'अमृत्युः कर्मणा केचित्' इत्येतदनुपपन्नमेवेत्युक्तं भवति । वक्ष्यति चास्य पक्षस्य स्वयमेव निराकरणम्— 'कर्मोदये कर्मफलानुरागात्तत्रानुयान्ति न तरन्ति मृत्युम् । ज्ञानेन विद्वांस्तेजोऽभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्थाः' इति ॥

कथमेतदवगम्यते 'प्रमादो मृत्युरप्रमादोऽमृतत्वम्' इति? तत्राह—

**प्रमादाद्वा असुराः पराभव-**
**न्नप्रमादाद्ब्रह्मभूताः सुराश्च ।**

**न वै मृत्युर्व्याघ्र इवात्ति जन्तू-**
**न्नाप्यस्य रूपमुपलभ्यते हि ॥ ९ ॥**

प्रमादात् स्वाभाविकब्रह्मभावप्रच्यवनात् अनात्मनि देहादावात्मभावात् असुराः विरोचनप्रभृतयः पराभवन् पराभूताः । तथा च श्रुतिः— 'अनुपलभ्यात्मानम्' इत्यारभ्य 'देवा वा असुरा वा ते पराभविष्यन्ति' इत्यन्तेन । तथा अप्रमादात् स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मना अवस्थानात् ब्रह्मभूताः सुराश्च इन्द्रादयः । तथा च श्रुतिः— 'तं वा एतं देवा आत्मानमुपासते तस्मात्त्तेषां सर्वे लोका आप्ताः सर्वे च कामाः' इत्यादिना । अथवा, असुषु प्राणेषु इन्द्रियेष्वेव रमन्त इत्यसुराः अनात्मविदो वैषयिकाः प्राणिनोऽसुराः । ते स्वाभाविकब्रह्मभावमतिक्रम्य अनात्मनि देहादावात्मभावमापन्नाः पराभवन् तिर्यगादियोनिमापन्नाः । तथा च बह्वृचब्राह्मणोपनिषत्— 'तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन्पूर्वे येऽत्यायंस्ते पराबभूवुः' इत्यारभ्य 'या वै ता इमाः प्रजास्तिस्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः' इति । तथा स्वस्मिन्नात्मन्येव रमन्ति इत्यात्मविदः सुराः । तथा चोक्तम्— 'आत्मन्येव रतिर्येषां स्वस्मिन्ब्रह्मणि चाचले । ते सुरा इति विख्याताः सूरयश्च सुरा

मताः' इति । ते अप्रमादात् स्वाभाविकब्रह्मात्मना अवस्थानात् ब्रह्मभूताः निवृत्तमिथ्याज्ञानतत्कार्याः ब्रह्मैव संवृत्ता इत्यर्थः ॥

नन्वन्य एव सर्वजन्तूनामुपसंहारको मृत्युः प्रसिद्धः, कथमुच्यते 'प्रमादं वै मृत्युमहं ब्रवीमि' इति? तत्राह—न वै मृत्युरिति । न वै मृत्युर्व्याघ्र इव अत्ति भक्षयति प्राणिनः । यदि भक्षयेत् व्याघ्रस्येव अस्य रूपमुपलभ्येत; न च उपलभ्यते । तस्मान्नास्त्येव मृत्युः ॥

ननूपलभ्यते सावित्र्युपाख्याने— 'अथ सत्यवतः कायात्पाशबद्धं वशं गतम । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति । कथमुच्यते नास्य रूपमुपलभ्यत इति? तत्राह—

**यमं त्वेके मृत्युमतोऽन्यमाहु-**
**रात्मावासममृतं ब्रह्मचर्यम् ।**
**पितृलोके राज्यमनुशास्ति देवः**
**शिवः शिवानामशिवोऽशिवानाम् ॥**

सत्यमुपलभ्यते; तथापि नासौ साक्षान्मृत्युः । कस्तर्हि? यः प्रमादाख्यो मृत्युः अज्ञानं स एव, साक्षाद्विनाशहेतुत्वात् । तथा अज्ञानस्य विनाशहेतुत्वं श्रूयते 'न चेदिहावेदीन्महती

विनष्टिः' इति । बृहदारण्यके प्रमादाख्यस्याज्ञानस्य साक्षान्मृत्युत्वं दर्शितम्—'मृत्युर्वै तमो ज्योतिरमृतम्' इति । यस्मात्प्रमाद एव साक्षात्सर्वानर्थबीजम्, तस्मान्न प्रमाद्येत चित्सदानन्दाद्वितीयब्रह्मभावेनावतिष्ठेत इत्यर्थः । तथा चाज्ञानस्य बन्धहेतुत्वं विज्ञानस्य मोक्षहेतुत्वमुक्तं भगवता—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति । यस्मात्प्रमाद एव मृत्युः अप्रमादोऽमृतत्वम्, अत एव न कर्मसाध्यं नापि कर्मप्राप्यम्; नित्यसिद्धत्वात्, नित्यप्राप्तत्वाच्च । तथा च श्रुतिः—'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन' इति । तथा—'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति ज्ञानस्यैव मोक्षसाधनत्वं दर्शितम् । तथा—'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति । वक्ष्यति च भगवान् ज्ञानस्यैव मोक्षसाधनत्वम्—'अन्तवन्तः क्षत्रिय ते जयन्ति लोकाञ्जनाः कर्मणा निर्मितेन' इति, 'एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इति च । तथा च मोक्षधर्मे—'कर्मणा बध्यते जन्तुर्विद्यया

च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति । 'ज्ञानं विशिष्टं न तथा हि यज्ञा ज्ञानेन दुर्गं तरते न यज्ञैः' इति च । तथा च ज्ञानस्यैव मोक्षसाधनत्वं मन्यमानः सर्वकर्मपरित्यागमाह भगवान वेदाचार्यो मनुः—'यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान' इति । तथाह भगवान्परमेश्वरः— 'ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम् । तस्माद्भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ॥ विज्ञातव्यं प्रयत्नेन श्रोतव्यं द्रश्यमेव च । एकः सर्वत्रगो ह्यात्मा केवलश्चितिमात्रकः ॥ आनन्दो निर्मलो नित्यः स्यादेतत्सांख्यदर्शनम् । एतदेव परं ज्ञानमेतन्मोक्षोऽनुगीयते ॥ एतत्कैवल्यममलं ब्रह्मभावश्च वर्णितः । आश्रित्यैतत्परं तत्त्वं तन्निष्ठास्तत्परायणाः ॥ गच्छन्ति मां महात्मानो यतयो वीतमत्सराः' इति । ननु एवं चेत्तर्हि कर्माणि नानुष्ठेयानि? न नानुष्ठेयानि, किंतु ज्ञानिना अननुष्ठेयान्येव । तथा चाह भगवान्वासुदेवः— 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति । तथा च ब्रह्माण्डपुराणे कावषेयाः— 'किमद्य नश्चाध्ययनेन कार्यं किमर्थवन्तश्च मखैर्यजामः । प्राणं हि वाप्यनले जोहवीमः प्राणानले जुहवीमीति वाचम्' इति । तथा

च बह्वृचब्राह्मणोपनिषत्— 'किमर्थं वयमध्येष्यामहे' इति । तथा च बृहदारण्यके विदुषः कर्मसंन्यासं दर्शयति— 'एतद्ध स्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति । तथा लैङ्गे— 'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्' इति । तथा च आथर्वणी श्रुतिः— 'नैतद्विद्वानृषिणा विधेये न रुन्ध्यते विधिना शब्दकारः' इति । केन तर्ह्यनुष्ठेयानि? अज्ञानिना आरुरुक्षुणा सर्वकर्माणि सर्वदा अनुष्ठेयानि; न ज्ञानिना । तथा चाह भगवान्— 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते' इति च । तथा चाह भगवान्सत्यवतीसुतः— 'द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः' इति ॥

नन्वेवमारुरुक्षूणामपि कर्माणि नानुष्ठेयानि, कर्मणां बन्धहेतुत्वात् । तथा चोक्तम्— 'कर्मणा बध्यते जन्तुर्विद्यया

च विमुच्यते' इति । सत्यम्, तथापि ईश्वरार्थतया फलनिरपेक्षमनुष्ठीयमानानि न बन्धहेतूनि । तथा चोक्तं भगवता—'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर' इति । किमर्थं तर्हि तेषामनुष्ठानम्? सत्त्वशुद्ध्यर्थमिति ब्रूमः । तथा चोक्तं भगवता—'कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इति, 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति, 'गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयते' इति च । तथा च—'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति । ननु कर्मणामपि मोक्षहेतुत्वं श्रूयते— 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति च। तथा च मनुः—'तपो विद्या च विप्रस्य निःश्रेयसकरे उभे' इति। नैतत्, पूर्वापराननुसंधाननिबन्धनोऽयं भ्रमः। तथा हि—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्युक्त्वा 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति विद्याविद्ययोर्भिन्नविषयत्वेन समुच्चयाभावः श्रुत्यैव दर्शितः। इममेवार्थं स्पष्टयन् भगवान्मनुः— 'तपो विद्या च विप्रस्य निःश्रेयसकरे उभे'

इत्युक्ते समुच्चयाशङ्का मा भूदिति 'तपसा कल्मषं हन्ति विद्यामृतमश्नुते' इति तपसो नित्यनैमित्तिकलक्षणस्य कर्मणः अन्तःकरणशुद्धावेव विनियोगं दर्शितवान । तथा 'ईशावास्यमिदं सर्वम्' इति सर्वस्य तावन्मात्रत्वमुक्त्वा तदात्मभूतस्य सर्वस्य तावन्मात्रत्वं पश्यतस्तद्दर्शनेनैव कृतार्थस्य साध्यान्तरमपश्यतः 'तेन त्यक्तेन भुञ्जीथाः' इति त्यागेनैवात्मपरिपालनमुक्त्वा अतदात्मवेदिनः केन तर्हि आत्मपरिपालनमित्याशङ्क्याह— 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति । एवंभूते त्वयि नरमात्राभिमानिन्यज्ञे अविद्यानिमित्तोत्तरपूर्वाघयोरश्लेषविनाशाभावात् कुर्वन्नेव सदा यावज्जीवं कर्म जिजीविषेदित्यज्ञस्य नरमात्राभिमानिनः शुद्ध्यर्थं यावज्जीवं कर्माणि दर्शयति । अत एभिरपि वाक्यैः शुद्धिसाधनत्वमेवावगम्यते, न मोक्षसाधनत्वम । यदप्युक्तम्— 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इति च-शब्दात्समुच्चयोऽवगम्यते इति— तदपि प्रसिद्धश्रुतिविनियोगानुसारेणैव योजयितव्यम् । तथा च अनुगीतासु स्पष्टमाह भगवान कर्मणां शुद्धिद्वारेणैव मोक्षसाधनत्वम्— 'नित्यनैमित्तिकैः शुद्धैः फलसङ्गविवर्जितैः । सत्त्वशुद्धिमवाप्याथ योगारूढो भविष्यति ॥ योगारूढस्ततो

याति तद्विष्णोः परमं पदम् ॥ गुरुभक्त्या च धृत्या च धर्मभक्त्या श्रुतेन च । विष्णुभक्त्या च सततं ज्ञानमुत्पद्यतेऽमलम् ॥ तस्माद्धर्मपरो भूत्वा वेदास्तिक्यसमन्वितः । कुर्वन्वै नित्यकर्माणि यथाशक्ति स बुद्धिमान ॥ फलानि पर आसाद्य वासुदेवे परात्मनि । शुद्धसत्त्वो भवत्येव योगारूढश्च जायते इति । वक्ष्यति च भगवान सनत्सुजातः शुद्धिद्वारेणैव मोक्षसाधनत्वम्— 'तदर्थमुक्तं तपसैव कर्मणा ताभ्यामसौ पुण्यमुपैति विद्वान । पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा' 'ज्ञानेन चात्मानमुपैति विद्वान' इति । ननु कथं सत्त्वशुद्धिद्वारेणैव मोक्षसाधनत्वम ? विनापि सत्त्वशुद्धि ज्ञानेनैव मोक्षः सिध्यत्येव । सत्यम् । ज्ञानेनैव मोक्षः सिध्यति; किंतु तदेव ज्ञानं सत्त्वशुद्धिं विना नोत्पद्यत इति वयं ब्रूमः । तथा चोक्तम्— 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति । तथा—'अनेकजन्मसंसारचिते पापसमुच्चये । नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः ॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति । तथा चोक्तं भगवता— 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम । तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ कर्मिभ्यश्चाधिको योगी तस्मा-

योगी भवार्जुन' इति । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः इति । तथा चाह याज्ञवल्क्यः— 'तथाविपक्वकरण आत्मज्ञानस्य न क्षमः' इति । यस्मात् विशुद्धसत्त्वस्यैव नित्यानित्यविवेकद्वारेण मोक्षसाधनज्ञाननिष्पत्तिः, तस्मात्सत्त्वशुद्ध्यर्थं सर्वेश्वरमुद्दिश्य सर्वाणि वाङ्मनःकायलक्षणानि श्रौतस्मार्तानि कर्माणि समाचरेत् यावद्विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति । तथा चाह भगवान्— 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते इति, 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इति । तस्य लक्षणमुक्तम्— 'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते' इति । यस्तु पुनरेवं यज्ञदानादिना विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति, तस्य शम एव कारणं न कर्म । तथा चोक्तम्— 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति । यस्माद्योगारूढस्य शम एव कारणं न कर्म, तस्माच्छमदमादिसाधनसंपन्नः श्रवणादिसमन्वितः 'योगी युञ्जीत सततमात्मानं रहसि स्थितः । निराशीर्यतचित्ता-

त्मा त्यक्तसर्वपरिग्रहः ॥' कथं तर्हि योगानुष्ठानम् ? शृणु— समे देशे शर्करावह्निवालुकाशब्दजलाशयादिवर्जिते मनोनुकूले शुचौ नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरं स्थिरमासनं प्रतिष्ठाप्य, तत्रोपविश्यासनं स्वस्तिकं पद्मासनं वा लब्ध्वा, समं कायशिरोग्रीवं धारयन्, विश्वादीन् क्रमेण कार्यकारणविनिर्मुक्ते पूर्णात्मनि उपसंहृत्य, पूर्णात्मना स्थित्वा, ध्यायेत्पुरिशयं देवं पूर्णानन्दं निरञ्जनम् अपूर्वमनपरं ब्रह्म नेति नेत्यादिलक्षणम् अशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनावस्थितं परमात्मानमोमिति । तथा चोक्तं ब्रह्माण्डपुराणे कावषेयगीतासु— 'तस्माद्विमोक्षाय कुरु प्रयत्नं दुःखाद्विमुक्तो भवितासि येन । ॐ ब्रह्म शून्यं परमं प्रधानमानन्दमात्रं प्रणवं जुषस्व' इति । एवं युञ्जन् सदात्मानं परमात्मत्वेन यदा साक्षाज्जानाति, तदा निरस्ताज्ञानतत्कार्यो वीतशोकः कृतकृत्यो भवति । तथा च बृहदारण्यके— 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत्' इति । तथा च ईशावास्ये— 'यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति । तथा च कठवल्लीषु— 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्या-

त्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' 'नि-चाय्य तं मृत्युमुखात्प्रमुच्यते' इति। 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' इति। 'भिद्यते हृदयग्रन्थि-श्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'। तथा चाह भगवान्— 'अव्यक्तोऽयमचिन्त्योऽय-मविकार्योऽयमुच्यते। तस्मादेवं विदित्वैनं नानुशोचितुमर्ह-सि' 'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' इति। तथा च कावषेयगीतासु— 'आत्मनः शोकसंतीर्णो न बिभेति कुतश्चन। मृत्योः सकाशान्मरणादथवान्यकृताद्भयात्॥ न जायते न म्रियते न वध्यो न च घातकः। न बद्धो बद्ध-कारी वा न मुक्तो न च मोक्षदः॥ पुरुषः परमात्मायं यत्त-तोऽन्यदसच्च तत्। अज्ञानपाशे निर्भिन्ने छिन्ने महति संशये॥ शुभाशुभे च संकीर्णे दग्धे बीजे च जन्मनाम्। प्रयाति परमानन्दं तद्विष्णोः परमं पदम्' इति। तथा चाह भगवा-न्मनुः— 'सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्। तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः' 'एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति। यस्मात्तद्विज्ञानादेव परमपुरुषार्थप्राप्तिः, त-स्मात्तमेव च परमात्मानं पूर्णानन्दमात्मत्वेन जानीयात्

'अहमस्मि' इति; न किंचिदन्यच्चिन्तयेत् । तथा च श्रुतिः— 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' इति । 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ' इति । 'एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित्' इति । तथा च भगवान्वासुदेवः— 'संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः । मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया । आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्' इति । एवं प्रसङ्गात्सर्वशास्त्रार्थः संक्षेपतः प्रदर्शितः ॥

अथेदानीं प्रकृतमनुसरामः— यस्मात्प्रमाद एव सर्वानर्थबीजं तस्मात्प्रमादं वे मृत्युमहं ब्रवीमि, न यमम् । यमं तु पुनः एके विषयविषान्धाः अविद्यारूढाः स्वात्मव्यतिरेकेण द्वितीयं पश्यन्तो मृत्युम् अतो मयोक्तान्मृत्योः प्रमादाख्यात् अन्यं मृत्य्वन्तरं वैवस्वतम् आहुः आत्मावासम् आत्मनि बुद्धौ वसतीत्यात्मावासः तम् । तथा चाह मनुः— 'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः' इति । अमृतम् अमरणधर्माणं ब्रह्मचर्यं ब्रह्मणि स्वात्मभूते रममाणं ब्रह्मनिष्ठमित्यर्थः । श्रूयते

कठवल्लीषु— 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ' इति । किंच, पितृलोके राज्यमनुशास्ति देवः । कथमनुशास्ति? शिवः सुखप्रदः शिवानां पुण्यकर्मणाम्, अशिवः असुखप्रदः अशिवानां पापकर्मणाम् ॥

एवं तावत् 'प्रमादं वै मृत्युम्' इति मृत्योः स्वरूपं निर्धारितम् । अथेदानीं तस्यैव कार्यात्मनावस्थानं दर्शयति—

**आस्यादेष निःसरते नराणां**
**क्रोधः प्रमादो मोहरूपश्च मृत्युः ।**
**अहंगतेनैव चरन्विमार्गा-**
**न्न चात्मनो योगमुपैति किंचित् ॥ ७ ॥**

यः प्रमादाख्यः अज्ञानमृत्युः स प्रथममास्यात्मना परिणमते । आस्यः अभिमानात्मकोऽहंकारः । तथा चोक्तम्—'सर्वार्थाक्षेपसंयोगादसुधातुसमन्वयात् । आस्य इत्युच्यते घोरो ह्यहंकारो गुणो महान्' इति । एवमहंकारात्मना स्थित्वा ततोऽहंकारात् निःसरते निर्गच्छति कामात्मना । ततः कामः स्वविषये प्रवर्तमानः प्रतिहतः क्रोधः प्रमादो मोहरूपश्च भवति । ततः अहंगतेन अहंरूपमापन्नेनाहंकाराद्यात्मना अवस्थितेनाज्ञानेन तदात्मभावमापन्नः 'ब्राह्मणोऽहं क्षत्रियोऽहं

कृशोऽहं स्थूलोऽहम् अमुष्य पुत्रोऽस्य नप्ता' इत्येवमात्मको रागद्वेषादिसमन्वितः चरन् विमार्गान् श्रौतस्मार्तविपरीतमार्गान् न चात्मनः परमात्मनो योगं समाधिलक्षणम् उपैति किंचिदपि । अथवा, अविद्याकामकर्माणि संसारस्य प्रयोजकभूतानि । पूर्वत्र मोहो मृत्युः संमतो यः इत्यनेनाग्रहणान्यथाग्रहणात्मिका अविद्योक्ता: उत्तरत्र कर्मोदये इति कर्म वक्ष्यति । अथेदानीं कामोऽभिधीयते— अस्यन्ते क्षिप्यन्तेऽनेन संसारे प्राणिन इत्यास्यः कामः । अथवा, आस्यवदास्यं सर्वजग्धृत्वात् । तथा चोक्तं भगवता— 'काम एष क्रोध एषः' इति । एष मृत्युरास्यात्मना कामात्मना स्थित्वा ततः क्रोधात्मना परिणमते । उक्तं च— 'कामात्क्रोधोऽभिजायते' इति । ततः अहंगतेन अहंकारमापन्नेनाज्ञानेन अहंकारममकारफलकारूढेन चिदाभासेन चरन्विमार्गान्न चात्मनो योगमुपैति किंचित् ॥

किंच—

**ते मोहितास्तद्वशे वर्तमाना**
**इतः प्रेतास्तत्र पुनः पतन्ति ।**
**ततस्तं देवा अनु परिप्लवन्ते**
**अतो मृत्युं मरणादभ्युपैति ॥ ८ ॥**

तेन अहंकारादिरूपेण परिणताज्ञानेन ते मोहिताः देहादिष्वात्मभावमापादिताः तद्वशे अहंकाराद्यात्मना परिणतप्रमादाख्यमृत्युवशे वर्तमाना इतः अस्मात् प्रेता धूमादिमार्गेण गत्वा तत्र परलोके यावत्संपातमुषित्वा पुनः आकाशवायुवृष्टिसस्यान्नशुक्लशोणितादिक्रमेण देहग्रहणाय पतन्ति निपतन्ति । श्रूयते च— 'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति । ततः अनन्तरं पुनः देहग्रहणावस्थायां तं देवा इन्द्रियाणि अनुसृत्य कर्माणि परि समन्तात् प्लवन्ते समन्ततः परिवर्तन्त इत्यर्थः । अतः अस्मात्कारणादिन्द्रियगुणानुसरणात् मृत्युं मरणं याति । ततो मरणात् जन्मान्तरम् अभ्युपैति ततो मृत्युम् । एवं जननमरणप्रबन्धाधिरूढो न कदाचिद्विमुच्यत इत्यर्थः । आत्माज्ञाननिमित्तत्वात्संसारस्य यावत् परमात्मानमात्मत्वेन साक्षान्न विजानाति तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणः मोमुह्यमानः संसरन्नवतिष्ठत इत्यर्थः ॥

एवं तावदविद्याकामयोः बन्धहेतुत्वमभिहितम् । अथेदानीं कर्मणां बन्धहेतुत्वमाह—

**कर्मोदये कर्मफलानुरागा-**

**स्तत्रानुयान्ति न तरन्ति मृत्युम् ।**

**सदर्थयोगानवगमात्समन्ता-**
**त्प्रवर्तते भोगयोगेन देही ॥ ९ ॥**

अमृत्युः कर्मणा केचिन् इति कर्मणा अमृतत्वं भवतीति यन्मतान्तरमुपन्यस्तम्, तन्निराकरोति— न केवलं कर्मणा अमृतत्वं भवति, अपि तु कर्मोदये कर्मणामुत्पत्तौ कर्मफलानुरागाः सन्तः तत्र तस्मिन्कर्मफले अनुयान्ति । यस्मात्तत्रैवानुयान्ति, अतो न तरन्ति मृत्युं पुनः पुनः जननमरणात्मके संसारे परिवर्तन्त इत्यर्थः । कस्मात्पुनः कर्मोदये कर्मफलानुरागाः तत्रैव परिवर्तन्ते? सदर्थयोगानवगमात् सदर्थेन योगः सदर्थयोगः परमात्मना योगः तस्य सदर्थयोगस्य एकत्वस्य अनवगमात् स्वात्मनश्चिदानन्दाद्वितीयब्रह्मभावानवगमादित्यर्थः । समन्तात् समन्ततः प्रवर्तते भोगयोगेन विषयरसबुद्ध्या देही । यथा ह्यन्धो निम्नोन्नतकण्टकस्थलादिषु परिभ्रमति एवमसावपि विवेकहीनः सर्वत्र विषयसुखाकाङ्क्षया परिभ्रमति ॥

किंच—

**तद्वै महामोहनमिन्द्रियाणां**
**मिथ्यार्थयोगेऽस्य गतिर्हि नित्या ।**

**मिथ्यार्थयोगाभिहतान्तरात्मा**
**स्मरन्नुपास्ते विषयान्समन्तात् ॥**

यद्रागाभिभूतस्य इन्द्रियाणां विषयेषु वर्तनं तन् महामोहनम् । एतदुक्तं भवति—यस्य विषयेषु अवास्तवबुद्धिः तस्येन्द्रियाणि विषयेषु न प्रवर्तन्ते । तस्य विषयेषु प्रवृत्त्यभावात् प्रत्यगात्मन्येव प्रवृत्तिः, ततश्च मोहननिवृत्तिः । यस्य विषयेषु वास्तवबुद्धिः तस्येन्द्रियाणां पराग्भूतेषु विषयेषु प्रवृत्तत्वात् न स इमं सदद्वितीयं प्रत्यग्भूतं परमात्मानमात्मत्वेन साक्षाज्जानाति । तथा चोक्तम्—'स्त्रीपिण्डसंपर्ककलुषीकृतचेतसो विषयविषान्धा ब्रह्म न जानन्ति' इति । ततश्च महामोहनं पुनः पुनः विषयेषु प्रवृत्तिः । तथा चाह भगवान्मनुः—'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति । ततश्च मिथ्यार्थैरविद्यापरिकल्पितैः शब्दादिविषयैः योगो भवति; तस्मिन् मिथ्यार्थयोगे अस्य देहिनो गतिः संसारगतिः नित्या नियता । प्रसिद्धं ह्येतत्— स्वात्मभूतं परमात्मानमनवगम्य विषयेषु प्रवर्तमानाः पराग्भूतास्तिर्यगादियोनिं प्राप्नुवन्तीति । तथा च बह्वृचब्राह्मणोपनिषत्— 'या वै ता इमाः प्रजास्ति-

स्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः' इति । वक्ष्यति च— 'कामानुसारी पुरुषः कामाननु विनश्यति' इति । कस्मात्पुनः मिथ्यार्थयोगेऽस्य गतिर्हि नित्या इति? तत्राह— मिथ्यार्थयोगाभिहतान्तरात्मा इति । मिथ्याभूतविषयसंयोगेन अभिहतान्तरात्मा अभिहतस्वाभाविकब्रह्मात्मभावः स्मरन् स्त्र्यादिविषयान् तानेव उपास्ते, न परमात्मानं समन्तात् समन्ततः ॥

ततः किमिति चेन् तत्र यद्भवति तन् शृणु—

**अभिध्या वै प्रथमं हन्ति चैनं**
**कामक्रोधौ गृह्य चैनं तु पश्चात् ।**
**एते बालान्मृत्यवे प्रापयन्ति**
**धीरास्तु धैर्येण तरन्ति मृत्युम् ॥ ११ ॥**

अभिध्या विषयाभिध्यानं प्रथमं हन्ति विनाशयति स्वरूपात्प्रच्युतिं करोति । ततो विषयध्यानाभिहतम् एनं विषयसंनिधौ शीघ्रं प्रगृह्य कामश्च हन्ति, ततः कामाभिहतमेनं प्रगृह्य क्रोधश्च हन्ति । तत एते अभिध्यादयः तानभिध्याकामक्रोधवशं गतान् बालान् विवेकहीनान्मूढान् मृत्यवे प्रापयन्ति प्रक्षिपन्ति । श्रूयते च कठवल्लीषु— 'पराचः कामाननुयन्ति बाला-

स्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते' इति । धीरास्तु पुनः धैर्येण विषयान् जित्वा परमात्मानमात्मत्वेनावगम्य तरन्ति मृत्युम् । श्रूयते च— 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति ॥

कथं पुनर्धीरास्तु धैर्येण विषयान् जित्वा मृत्युं तरन्तीत्याह—

**योऽभिध्यायन्नुत्पतिष्णून्निहन्या-**
**दनाचारेणाप्रतिबुध्यमानः ।**
**स वै मृत्युं मृत्युरिवात्ति भूत्वा**
**ह्येवं विद्वान्योऽभिहन्तीह कामान् ॥**

योऽभिध्यायन् अनित्याशुचिदुःखानुविद्धतया चिन्तयन् उत्पतिष्णून् उत्पत्योत्पत्य पतन्तीत्युत्पतनशीला उत्पतिष्णवो विषयाः तान् निहन्यात् परित्यजेत् अनाचारेण अनादरेण औदासीन्येनामेध्यदर्शन इव अप्रतिबुध्यमानः पुनरचिन्तयन् स वै पुरुषो मृत्योरपि मृत्युर्भूत्वा मृत्युरिवात्ति मृत्युम् । उक्तं च— 'विषयप्रतिसंहारं यः करोति विवेकतः । मृत्योर्मृत्युरिति ख्यातः स विद्वानात्मवित्कविः' इति ॥

एवमनित्यादिरूपेण विद्वाननादरादिना अभिहन्ति कामान् । यस्तु पुनरनादरादिना नाभिहन्ति स किं करोतीत्याह—

**कामानुसारी पुरुषः कामाननु विनश्यति ।**
**कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः ॥**

यस्तु पुनर्विषयाभिध्यानेन कामानुसारी भवति स कामाननु विनश्यति कामविषये नष्टे कामाननु कामैः सह विनश्यति, अनित्याः कामगुणाः प्रतिक्षणं विनाशान्विताः, तद्वत्कामी विशीर्णो भवति । यस्तु पुनर्विषयदोषदर्शनेन कामान्परित्यजति स कामान्व्युदस्य परित्यज्य धुनुते विवेकबुद्ध्या ध्वंसयति यत्किंचित् इह जन्मनि जन्मान्तरे वा उपार्जितं रजः पुण्यपापादिलक्षणं कर्म ॥

कथं पुनरस्य देहस्य काम्यमानस्य हेयत्वमित्याशङ्क्याह—

**देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।**
**गृध्यन्त एव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः ॥**

यः अयं भूतानां देहो दृश्यते सः अप्रकाशः तमोऽचिद्घनः केवलं नरकः श्लेष्मासृक्पूयक्रिमिविण्मूत्रपरिपूर्णत्वात् । तन्नाह भगवान्मनुः— 'अस्थिस्थूणं स्नायुबद्धं मांसशोणितवेष्टितम् । चर्मापिनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यं च भूतावासमिमं त्यजेत्' इति । एवमत्यन्तबीभत्सितमपि स्त्र्यादिदेहं

कमनीयबुद्ध्या गृध्यन्तः अभिकाङ्क्षन्त एव धावन्ति अनुधावन्ति । गच्छन्तः श्वभ्रमुन्मुखाः यथा अन्धाः कूपादिकं विवेक्तुमशक्ताः कूपादिपून्मुखाः पतन्ति एवं स्त्र्यादिकमभिकाङ्क्षन्तो विषयविषान्धाः उन्मुखाः नरकेष्वेव पतन्तीत्यर्थः ॥

य एवं गृध्यन्त एव धावन्ति तेषां देहो निरर्थक इत्याह—

**अमन्यमानः क्षत्रिय कश्चिदन्यं**
**नाधीयते तार्ण इवास्य व्याघ्रः ।**
**क्रोधाल्लोभान्मोहभयान्तरात्मा**
**स वै मृत्युस्त्वच्छरीरे य एषः ॥ १७ ॥**

यः स्त्र्यादिकमभिकाङ्क्षन् अनुधावति स विषयविषान्धः तद्व्यतिरिक्तं स्वात्मभूतं परमात्मानम् अमन्यमानः अप्रतिबुध्यमानः नाधीयते तद्विषयमध्यात्मशास्त्रं नाधिगच्छति । तस्य अस्य विषयविषान्धस्य षडङ्गवेदविदुषोऽपि देहस्तृणनिर्मितो व्याघ्र इव निरर्थको भवति । तथा चाह भगवान्वसिष्ठः—
'चतुर्वेद्यपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः' इति । न केवलं देहो निरर्थकः, य एवंभूतः स एव तस्य मृत्युरित्याह— क्रोधाल्लोभान्मोह-

भयान्तरात्मा इति । क्रोधलोभाभ्यां हेतुभ्यां मोहभयसमन्वितः अन्तरात्मा त्वच्छरीरे य एष तवात्मा दृश्यते स एव तव मृत्युः । यस्तु पुनः अजितेन्द्रियः क्रोधलोभादिसमन्वितो विषयेषु प्रवर्तते स एव तस्य मृत्युः विनाशहेतुत्वात् । उक्तं च— 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' इति ॥

केन तर्ह्युपायेन मृत्योर्विनाश इत्याह—

**एवं मृत्युं जायमानं विदित्वा**
**ज्ञानेन तिष्ठन्न बिभेति मृत्योः ।**
**विनश्यते विषये यस्य मृत्यु-**
**र्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥ १६ ॥**

एवं क्रोधादिरूपेण जायमानं प्रमादाख्यं मृत्युं जननमरणादिसर्वानर्थबीजं विदित्वा क्रोधादीन् भूतदाहीयान् दोषान् परित्यज्य अक्रोधादीन् संपाद्य ज्ञानेन चित्सदानन्दाद्वितीयब्रह्मात्मना तिष्ठन्न बिभेति मृत्योः । तथा च श्रुतिः— 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' इति । कस्मात्पुनर्ज्ञानेन तिष्ठन्न बिभेति मृत्योरिति ? तत्राह— विनश्यते तस्य ज्ञानिनो विषये गोचरे परमात्मनि साक्षात्क्रियमाणे प्रमादाख्योऽज्ञानमृत्युः । यथा मृत्योः विषयं संसारमागतो मृत्युना

अभिभूतो नष्टो भवति मर्त्यः एवमात्मवेदिनो विषयमागतो-ऽज्ञानमृत्युर्नष्टो भवति । उक्तं च नाममहोदधौ— 'ज्ञानसं-स्थानसद्भावो ज्ञानाग्निर्ज्ञानवज्रभृत् । मृत्युहन्तेति विख्यातः स वीरो वीतमत्सरः' इति ॥

एवं तावत् 'कर्मोदये' इत्यादिना कर्मणां बन्धहेतुत्वमु-क्त्वा 'ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इति ज्ञानस्यैव मोक्ष-साधनत्वमभिहितम् । तत्र चोदयति धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**यानेवाहुरिज्यया साधुलोका-**
**न्द्विजातीनां पुण्यतमान्सनातनान् ।**
**तेषां परार्थं कथयन्तीह वेदा**
**एतद्विद्वान्नैति कथं नु कर्म ॥ १७ ॥**

ननु कथं कर्मणां बन्धहेतुत्वम् ? यावता यानेवाहुरिज्यया ज्योतिष्टोमादिना साधुलोकान् साधुभिः धार्मिकैरारूढान् पुण्यतमान् पवित्रान् सनातनान् । तेषां ब्रह्मलोकपर्यन्तानां लोकानां परार्थं परमपुरुषार्थत्वं कथयन्ति इह अस्मिन् संसारमण्डले वेदाः । एतत् लोकानां परमपुरुषार्थत्वं विद्वान् कथं नु साधनं कर्म नैति नानुतिष्ठति । अथवा, एतत्

ब्रह्मलोकपर्यन्तानां लोकानां साधनभूतं कर्म विद्वान ब्रह्मविन् कथं नैति न गच्छति ॥

एवं पृष्टः प्राह भगवान—

सनत्सुजात उवाच—

**एवं ह्यविद्वान्परियाति तत्र**
**तथार्थजातं च वदन्ति वेदाः ।**
**स नेहायाति परं परात्मा**
**प्रयाति मार्गेण निहन्त्यमार्गान् ॥ १८ ॥**

सत्यम् एवं ब्रह्मलोकादिसाध्यं सुखं मन्यमानो विषयविषान्धो ह्यविद्वान् परियाति तत्र तस्मिन् ब्रह्मलोकादिसाधनभूते कर्मणि न विद्वान; अविद्यादिदोषदर्शनात् । तथा च बृहदारण्यके— 'अनन्दा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः' इति । तथा अर्थजातं प्रयोजनजातं च तस्यैव अविदुषो वदन्ति वेदाः । यस्मादविदुष एव वदन्ति न विदुषः, तस्मात् नेह सः विद्वान् ब्रह्मलोकाद्यनित्यसुखे तत्साधने वा कर्मणि आयाति प्रवर्तते । किं तर्हि करोति? परमात्मानमात्मत्वेनावगम्य परात्मा सन् ब्रह्मैव सन परं प्रयाति । मार्गेण निहन्ति

च अमार्गान् संसारहेतुभूतानात्मनो विरुद्धमार्गान् धर्माधर्मोपासनारूपान् । अथवा, 'एवं हि विद्वान्परियाति तत्र' इति पाठे सगुणं ब्रह्म विद्वान तत्र ब्रह्मलोकादावुपासनफलं परियाति प्राप्नोति । तथा अर्थजातं च अस्य वदन्ति वेदाः । कीदृशं वदन्ति ? स नेहायाति स विद्वानिह अस्मिन् लोके कर्मिवन्नायाति न जायते, किंतु ब्रह्मोपासनया अमार्गान् विरुद्धमार्गान् निहन्ति । एवं तत्र गत्वा संसारहेतूनमार्गान्निहत्य परात्मा सन कालेन परं ब्रह्म प्रयातीत्यर्थः ॥

एवं तावत्प्रमादाख्यस्याज्ञानस्य मृत्युत्वम् अप्रमादस्य स्वरूपावस्थानलक्षणस्यामृतत्वम् 'प्रमादं वै मृत्युमहं ब्रवीमि' इत्यादिना दर्शयित्वा 'आस्यादेष निःसरते' इत्यादिना 'स वै मृत्युस्त्वच्छरीरे य एषः' इत्यन्तेन तस्यैव कार्यात्मना परिणतस्य सर्वानर्थहेतुत्वं दर्शयित्वा, कथमस्य मृत्योर्विनाश इत्याशङ्क्य, 'एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इत्यात्मज्ञानेन मृत्युविनाशं दर्शयित्वा, 'यानेवाहुरिज्यया' इत्यादिना ब्रह्मलोकादेः पुरुषार्थत्वमाशङ्क्य, 'एवं ह्यविद्वान' इत्यादिना तेषामविद्यावद्विषयत्वेनापुरुषार्थत्वमुक्त्वा, 'परं परात्मा प्रयाति मार्गेण' इति ज्ञानमार्गेण मोक्षः उपदिष्टः । तत्र 'परं परात्मा प्रयाति' इति

जीवपरयोरेकत्वमुक्तम् । तदसहमानश्चोदयति धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**कोऽसौ नियुङ्क्ते नमजं पुराणं**
**स चेदिदं सर्वमनुक्रमेण ।**
**किं वास्य कार्यमथवासुखं च**
**तन्मे विद्वन्ब्रूहि सर्वं यथावत् ॥ १० ॥**

ननु यदि स एव सत्यादिलक्षणः परमात्मा क्रमेणाकाशादि धरित्र्यन्तं जगत्सृष्ट्वा तदनुप्रविश्यान्नमयाद्यात्मना अवस्थितः संसरति चेत्, कोऽसौ तं सत्यादिलक्षणं पुराणमजं संसारे नियुङ्क्ते प्रेरयति । किमन्येन, स्वयमेवेति चेत्, कि वास्य नानायोनिषु वर्तमानस्य कार्यं प्रयोजनम्? अथवा, नानायोनिष्वप्रवर्तमानस्य तूष्णींभूतस्य स्वे महिम्नि व्यवस्थितस्य संसारानुप्रवेशे असुखम् अनर्थजातं वा कि भवति? हे विद्वन्, मे ब्रूहि सर्वं यथावत् । तथा च ब्रह्मविदामेकः पुण्डरीको भगवान्याज्ञवल्क्यः तत एव सर्वस्य सृष्टिमुक्त्वा तस्यैव जीवत्वमभ्युपगम्य—'यद्येवं स कथं ब्रह्म पापयोनिषु जायते । स ईश्वरः कथं भावैरनिष्टैः संप्रयुज्यते' इति। 'कोऽसौ नियुङ्क्ते' इत्यनेन भगवतोक्तमेव ब्रह्मजीववादपक्षे वावदूकचोद्यं स्पष्टमुक्तवान् ॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच—

**दोषो महानत्र विभेदयोगे**
**ह्यनादियोगेन भवन्ति नित्याः ।**
**तथास्य नाधिक्यमपैति किंचि-**
**दनादियोगेन भवन्ति पुंसः ॥ २० ॥**

यद्येवं चोदयत एषोऽभिप्रायः—नियोज्यनियोजकत्वादिभेददर्शनादेकस्य कूटस्थस्य तदसंभवात् भेदेन भवितव्यमिति । तत्र यदि ब्रह्मण एव नानात्वमभ्युपगम्यते, तदा अत्र अस्मिन विभेदयोगे ब्रह्मणो नानात्वयोगे दोषो महान्; को दोषः? अद्वैतिनो ह्यतथ्यवादिनोऽवैदिका भवेयुः, वेदहृदयं परमार्थमद्वैतं च बाध्यं स्यात् । किंच—नानारूपेण परिणतत्वादनित्यत्वादिदोषः, अस्थूलादिवाक्यविरोधश्च प्रसज्येत ।

अथोच्यते—ब्रह्मणो नानात्वं नास्माभिरभ्युपगम्यते, अपि तु जीवपरयोर्भेदोऽभ्युपगम्यते इति । तत्रापि महान् दोषो विनाशः प्राप्नोति । श्रूयते च, 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'अथ योऽन्यां देवतामुपास्ते

परमात्मनो मायया बहुरूपत्वमुपपद्यत एवेत्यर्थः । श्रूयते च एकस्य मायया बहुरूपत्वम्— 'रूपं रूपं प्रतिरूपो बभूव' 'इन्द्रो मायाभिः पुरुरूप ईयते' 'एको देवः सर्वभूतेषु गूढः' 'एकं सद्विप्रा बहुधा वदन्ति' 'एकं सन्तं बहुधा कल्पयन्ति' 'एको देवो बहुधा निविष्टः' 'एकः सन् बहुधा विचारः' 'त्वमेकोऽसि बहूननुप्रविष्टः' 'अजायमानो बहुधा विजायते' इति । तथा च मोक्षधर्मे— 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति । तथा च याज्ञवल्क्यः— 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमान्' इति । तथा च कावषेयगीतासु— 'एकश्च सूर्यो बहुधा जलाधारेषु दृश्यते । आभाति परमात्मापि सर्वोपाधिषु संस्थितः ॥ ब्रह्म सर्वशरीरेषु बाह्ये चाभ्यन्तरे स्थितम् । आकाशमिव कुम्भेषु बुद्धिगम्यो न चान्यथा' इति । तथा चाह परमेश्वरः—'नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन्भिद्यते शक्त्या मायया सर्वभावतः' इति । यस्मादेकस्यैव मायया बहुरूपत्वम्, तस्मात्स एव कारणात्मा परमेश्वरः कार्यात्मानं जीवात्मानं नियुङ्क्ते कृतप्रयत्नापेक्षः सन्मायया, न परमार्थतः संसरति संसारयति वा । तथा चोक्तं

अभिमुखीभवेदित्यर्थः। श्रूयते च— 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति। अनन्तरं आविर्भूतस्वरूपः सन् बहु भ्रमानं तमसः पारं परम आत्मानं आप्नुयात् इत्यर्थः॥

मुनिरप्येष एवेत्याह—

**मौनाद्धि मुनिर्भवति**
**नारण्यवसनान्मुनिः।**
**अक्षरं तं तु यो वेद**
**स मुनिश्रेष्ठ उच्यते॥ ४८॥**

मौनात् पूर्वोक्तात् तूष्णींभावादेव मुनिर्भवति, न पुनः अरण्यवसनमात्रात् मुनिः भवति। तेषामपि तूष्णींभूतानां मध्ये यस्तु पुनः अक्षरं अविनाशिनं तं परमात्मानं वेद 'अयमहमस्मि' इति साक्षाज्जानाति, स मुनिश्रेष्ठ उच्यते। श्रूयते च— 'एतमेव विदित्वा मुनिर्भवति' इति॥

वैयाकरणोऽप्येष एवेत्याह—

**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥**

सर्वार्थानां व्याकरणात् वैयाकरण उच्यते । न पुनः शब्दैकदेशव्याकरणात वैयाकरणो भवति । भवतु सर्वार्थानां व्याकरणात् वैयाकरणत्वम्, ततः किमिति चेत्. तन्मूलतो व्याकरणं पूर्वोक्तादक्षराद्धि सर्वस्य नामरूपप्रपञ्चस्य व्याकरणम । श्रूयते च— 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति । तस्माद्ब्रह्मण एव साक्षाद्वैयाकरणत्वम् । व्याकरोतीति तत्तथा असावपि विद्वान तत ब्रह्म तथैव व्याकरोतीति वैयाकरणः ॥

सर्वज्ञोऽप्येष एवेत्याह—

**प्रत्यक्षदर्शी लोकानां**
**सर्वदर्शी भवेन्नरः ।**
**सत्ये वै ब्रह्मणि तिष्ठं-**
**स्तद्विद्वान्सर्वविद्भवेत् ॥ ५० ॥**

प्रत्यक्षदर्शी लोकानां यः प्रत्यक्षेण भूरादीन लोकान् पश्यति, स सर्वदर्शी नरो भवेत् सर्वरूपं परमात्मानं पश्यति । असौ पुनः सत्ये सत्यादिलक्षणे ब्रह्मणि तिष्ठन् मनः समादधाति । तद्विद्वान सत्यादिलक्षणं ब्रह्म विद्वान् आत्मत्वेन जानन सर्वविद्भवेन् सर्वं जानातीत्यर्थः । तस्मादेष एव

साक्षात् सर्वज्ञः, न अनात्ममात्रदर्शी ॥

'यस्त्वेतेभ्यः' इत्यादिना उक्तमेवार्थं पुनरपि दर्शयति अवश्यकर्तव्यत्वप्रदर्शनार्थम्—

**ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।**
**वेदानां चारपूर्वेण चैतद्विद्वन्ब्रवीमि ते ॥ ५१ ॥**

**इति श्रीमत्सनत्सुजातीयभाष्ये द्वितीयोऽध्यायः ॥**

ज्ञानादिषु 'ज्ञानं च' इत्यादिना पूर्वोक्तेषु स्थितोऽप्येवं यथा सत्ये तिष्ठन् ब्रह्म पश्यति एवमेव ब्रह्म पश्यति । वेदानां चारपूर्वेण वेदान्तश्रवणपूर्वकमित्यर्थः । अथवा, गुणान्तरविधानमेतत्— ज्ञानादिषु स्थितोऽपि न केवलं तावन्मात्रेण पश्यति; अपि तु एवमेव वक्ष्यमाणप्रकारेण वेदान्तविचारपूर्वेण वेदान्तश्रवणादिपूर्वकमेव पश्यति ब्रह्म । एतत् वेदान्तानां विचारप्रकारं हे विद्वन्, ब्रवीमि ते वक्ष्यामीत्यभिप्रायः ॥

इति सनत्सुजातीयभाष्ये द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः ॥

---

इदानीं ब्रह्मचर्यादिसाधनानन्तरं तत्प्राप्यं च ब्रह्म प्रतिपादयितुं तृतीयचतुर्थावारभ्येते । तत्र तावद्ब्रह्मचर्यादि साधनं श्रुत्वा तद्ब्रह्मवेदनाकाङ्क्षी प्राह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**सनत्सुजात यदिमां परार्थां**
**ब्राह्मीं वाचं वदसि हि विश्वरूपाम् ।**
**परां हि कार्येषु सुदुर्लभां कथां**
**प्रब्रूहि मे वाक्यमेवं कुमार ॥ १ ॥**

हे सनत्सुजात, यत् यस्मात् इमां परार्थाम उत्कृष्टार्थां ब्राह्मीं ब्रह्मसंबन्धिनीं वाचं वदसि हि विश्वरूपां नानारूपां पराम् उत्तमां कार्येषु कार्यवर्गेषु प्रपञ्चेषु सुदुर्लभां श्रवणायाप्यशक्यां कथां प्रब्रूहि मे वाक्यमेवंभूतं कुमार, यस्मात्त्वं ब्राह्मीं वाचं परमपुरुषार्थसाधनभूतां सुदुर्लभां वदसि, तस्मात्त्वमेव वक्तुमर्हसीत्यभिप्रायः ॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच—

**नैतद्ब्रह्म त्वरमाणेन लभ्यं**
**यन्मां पृच्छस्यभिषङ्गेण राजन् ।**
**बुद्धौ प्रलीने मनसि प्रचिन्त्या**
**विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २ ॥**

नैतद्ब्रह्म त्वरमाणेन पुरुषेण लभ्यं यत् ब्रह्म मां पृच्छस्यभिषङ्गेण राजन । कथं तर्हि लभ्यमित्याह—बुद्धौ अध्यवसायात्मिकायां प्रलीने मनसि प्रचिन्त्या विद्या हि सा, यदा पुनः संकल्पविकल्पात्मकं मनो विषयेभ्यः परावृत्य स्वात्मन्येव निश्चलं भवतीत्यर्थः । येयं बुद्धौ प्रलीने मनसि प्रचिन्त्या, सा विद्या ब्रह्मचर्येण वक्ष्यमाणेन लभ्या ॥

किं च—

**आद्यां विद्यां वदसि हि सत्यरूपां**
**या प्राप्यते ब्रह्मचर्येण सद्भिः ।**
**यां प्राप्यैनं मर्त्यभावं त्यजन्ति**
**या वै विद्या गुरुवृद्धेषु नित्या ॥ ३ ॥**

आद्यां सर्वादिभूतब्रह्मविषयां विद्यां वदसि हि सत्यरूपां

परमार्थरूपां मे ब्रूहीति । यद्वा, आद्याम् अकार्यभूतां असत्यप्रपञ्चाविषयां विद्यां वदसि । तस्मादत्वरमाणेन ब्रह्मचर्यादिसाधनोपेतेन उपसंहृतान्तःकरणेनैव लभ्येत्यर्थः । या प्राप्यते ब्रह्मचर्येण सद्भिः यां प्राप्यैनं मर्त्यभावं त्यजन्ति या वै विद्यागुरुवृद्धेषु गुरुणा विद्याप्रदानादिना वर्धितेषु शिष्येषु नित्या नियता ॥

एवमुक्ते ब्रह्मचर्यविज्ञानायाह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।**
**तत्कथं ब्रह्मचर्यं स्यादेतद्विद्वन्ब्रवीहि मे ॥ ४ ॥**

या विद्या ब्रह्मचर्येण वेदितुं शक्या, तत् साधनभूतं ब्रह्मचर्यं कथं स्यात् । एतत् ब्रह्मचर्यं विद्वन्, ब्रवीहि मे ॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच—

**आचार्ययोनिमिह ये प्रविश्य**
**भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।**
**इहैव ते शास्त्रकारा भवन्ति**
**विहाय देहं परमं यान्ति सत्यम् ॥ ५ ॥**

आचार्ययोनिमिह ये प्रविश्य आचार्यसमीपं गत्वेत्यर्थः । भूत्वा गर्भम् उपसदनादिना शिष्या भूत्वा ब्रह्मचर्यं गुरुशुश्रूषादिकं चरन्ति कुर्वन्ति, इहैव अस्मिन् लोके ते शास्त्रकारा भवन्ति; शास्त्रकर्तारः पण्डिताः; ततो बाल्यादिकं निर्विद्य ब्राह्मणा भूत्वा आरब्धकर्मक्षये विहाय देहं परमं यान्ति सत्यं सत्यादिलक्षणं परमात्मानं प्राप्नुवन्ति ॥

किंच—

**अस्मिँल्लोके विजयन्तीह कामा-**
**न्ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।**
**त आत्मानं निर्हरन्तीह देहा-**
**न्मुञ्जादिषीकामिव धीरभावात् ॥ ६ ॥**

अस्मिन लोके विजयन्तीह कामान् ब्राह्मीमेव स्थितिं ब्रह्मण्येव स्थितिम् अनुतितिक्षमाणाः अनुदिनं क्षममाणाः ते आत्मानं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं चिन्मात्रं निर्हरन्ति पृथक्कुर्वन्ति । किमिव? मुञ्जादिषीकामिव यथा मुञ्जादिषीकामन्तःस्थां निर्हरन्ति, एवं कोशपञ्चकेभ्यो निष्कृष्य सर्वात्मानं प्रतिपद्यन्त इत्यर्थः । केन—धीरभावात् धैर्येण । श्रूयते च कठवल्लीषु—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा

जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्' इति ॥

'आचार्ययोनिमिह' इत्यत्र आचार्यस्य योनित्वं दर्शितम् । तत्कथं मातापितृव्यतिरेकेणाचार्यस्य योनित्वमित्याशङ्क्य स एव साक्षाज्जनयितेत्याह—

**शरीरमेतौ कुरुतः पिता माता च भारत ।**
**आचार्यतस्तु यज्जन्म तत्सत्यं वै तथामृतम् ॥**

शरीरम् इह अस्य एतौ मातापितरौ कुरुतः, नात्मानं स्वरूपेण जनयतः । यदिदं देहद्वयात्मना जन्म तदसत्यम् । आचार्यतः तु यत् इदं चित्सदानन्दाद्वितीयब्रह्मात्मना जन्म, तत्सत्यं परमार्थभूतं तथा एव अमृतं विनाशवर्जितम् । तस्मात्स एव जनयितेत्यर्थः । श्रूयते च प्रश्नोपनिषदि—'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इति । तथा चाहापस्तम्बः—'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' इति ॥

यस्मादाचार्याधीना परमपुरुषार्थसिद्धिः, तस्मात्—

**स आवृणोत्यमृतं संप्रयच्छं-**
**स्तस्मै न द्रुह्येत्कृतमस्य जानन् ।**

**गुरुं शिष्यो नित्यमभिवादयीत**
**स्वाध्यायमिच्छेच्च सदाप्रमत्तः ॥ ८ ॥**

स आवृणोति आपूरयति अमृतं पूर्णानन्दं ब्रह्म आत्मत्वेन संप्रयच्छन तस्मै आचार्याय न द्रुह्येत् द्रोहं नाचरेत् । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' । तथा चापस्तम्बः—'तस्मै न द्रुह्येत्कदाचन । स हि विद्यातस्तं जनयति' इति । कृतमस्य जानन—अस्येति तृतीयार्थे षष्ठी—अनेनात्मनः कृतमुपकारं विजानन । किं तर्हि कर्तव्यमित्याह—गुरुं शिष्यो नित्यमभिवादयीत देवमिवाचार्यमुपासीत । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति । तथा—स्वाध्यायमिच्छेच्च श्रवणादिपरो भवेत् सदा अप्रमत्तः अप्रमादी सन ॥

इदानीं चतुष्पाद्ब्रह्मचर्यमाह श्लोकचतुष्टयेन—

**शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।**
**ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ९ ॥**

शिष्यवृत्तिक्रमेणैव 'आचार्ययोनिमिह' इत्यादिनोक्तक्रमेण शुचिः विद्यामाप्नोति यत्, तत् ब्रह्मचर्यं तस्यास्य प्रथमः

पाद उच्यते ॥

**यथा नित्यं गुरौ वृत्तिर्गुरुपत्न्यां तथाचरेत् ।**
**तत्पुत्रे च तथा कुर्वन्द्वितीयः पाद उच्यते ॥**

स्पष्टार्थः श्लोकः । तथा चोक्तम्— 'आचार्यवदाचार्यदारेषु वृत्तिः' 'आचार्यवदाचार्यपुत्रे वृत्तिश्च' इति ॥

**आचार्येणात्मकृतं विजान-**
**ञ्ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।**
**यन्मन्यते तं प्रति हृष्टबुद्धिः**
**स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ११ ॥**

आचार्येणात्मकृतम आत्मनः कृतम उपकारं विजानन् ज्ञात्वा अर्थं वेदार्थं परमपुरुषार्थं ज्ञात्वा च अवगम्य भावितोऽस्मीत्यनेन भावितोऽस्मीति स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मना यथावदुत्पादितोऽस्मीति चिन्तयन तम आचार्यं प्रति हृष्टबुद्धिः सन यत् आत्मनः कृतार्थत्वं मन्यते, स वै तृतीयो ब्रह्मचर्यस्य पादः ॥

**आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि ।**
**कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ॥**

इदानीं चतुष्पदीं विद्यां दर्शयति—

**कालेन पादं लभते तथार्थं**
**तथैव पादं गुरुयोगतश्च ।**
**उत्साहयोगेन च पादमृच्छे-**
**च्छास्त्रेण पादं च ततोऽभियाति ॥**

अत्र क्रमो न विवक्षितः । प्रथमं गुरुयोगतः ततः उत्साहयोगेन बुद्धिविशेषप्रादुर्भावेन ततः कालेन बुद्धिपरिपाकेण ततः शास्त्रेण सहाध्यायिभिस्तत्त्वविचारेण । तथा चोक्तम्— 'आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया । कालेन पादमादत्ते पादं सब्रह्मचारिभिः' इति ॥

ज्ञानादीनामाचार्यसंनिधाने फलसिद्धिरित्याह—

**ज्ञानादयो द्वादश यस्य रूप-**
**मन्यानि चाङ्गानि तथा बलं च ।**
**आचार्ययोगे फलतीति चाहु-**
**र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ १४ ॥**

ज्ञानादयः 'ज्ञानं च' इत्यादिना पूर्वोक्ता द्वादश गुणा यस्य पुरुषस्य, सः ज्ञानादयः रूपं अन्यानि चाङ्गानि 'श्रेयांस्तु षड्विधस्त्यागः' 'सत्यं ध्यानम्' इति श्लोकद्वयोक्तानि,

तथा बलं च तद्धर्मपरिपालनसामर्थ्यं च सर्वम् आचार्ययोगे एव फलति, नाचार्ययोगं विना फलति । श्रूयते च—'आचार्याद्धैव विद्या विदिता' इति, 'आचार्यवान्पुरुषो वेद' इति च । ब्रह्मार्थयोगेन च ब्रह्मचर्यं यदिदं गुरुसंनिधौ शुश्रूषाद्याचरणम् , तद्ब्रह्मचर्यं ब्रह्मार्थयोगेन फलति स्वात्मनः चित्सदानन्दाद्वितीयब्रह्मैक्यसंपादनद्वारेण फलतीत्यर्थः ॥

ब्रह्मचर्यस्तुतिं करोति द्वाभ्याम्—

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।**
**ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ॥१७॥**
**एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् ।**
**एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ १८ ॥**

देवा देवत्वमेतेन प्राप्नुवन । ऋषयोऽपीह ऋषित्वमेतेन प्राप्ताः । सगन्धर्वाः गन्धर्वैः सह वर्तमानाः रूपमप्सरसोऽजयन् रूपाणि रमणीयानि एतेन ब्रह्मचर्येण अजयन । अह्नो दीप्तिसमूहः, अह्नाय जगतां द्योतनाय सूर्यश्च जायते । उक्तं च— 'अह्नो दीप्तिश्च कथ्यते' इति ॥

कथमेकस्य ब्रह्मचर्यस्यानेकविधफलसाधकत्वमित्यत आह—

**आकाङ्क्षार्थस्य संयोगाद्रसभेदार्थिनामिव ।**
**एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ॥१७॥**

यथा चिन्तामण्यादयो रसभेदार्थिनामिव आकाङ्क्षार्थस्य संयोगात् तत्तदाकाङ्क्षितमर्थं प्रयच्छन्ति, एवम् एतत् ब्रह्मचर्यमाकाङ्क्षार्थस्य संयोगात्तत्तदाकाङ्क्षितं प्रयच्छतीति ज्ञात्वा तत्तत्फलार्थं ब्रह्मचर्यं चरित्वा तादृग्भावं तादृशं भावं गतास्तु इमे देवादयः । यस्मादाचार्यसंनिध्यनुष्ठितात् ब्रह्मचर्यात् परमपुरुषार्थप्राप्तिः, तस्मादाचार्ययोनिं प्रविश्य गर्भो भूत्वा ब्रह्मचर्यं चरेदित्यर्थः ॥

नन्वेवं ज्ञाननिष्ठता यदि ज्ञानस्यैव पुरुषार्थत्वं भवेत्; अपि तु कर्मण एवेत्याशङ्क्याह—

**अन्तवन्तः क्षत्रिय ते जयन्ति**
**लोकाञ्जनाः कर्मणा निर्मितेन ।**
**ज्ञानेन विद्वांस्तेज अभ्येति नित्यं**
**न विद्यते ह्यन्यथा तस्य पन्थाः ॥१८॥**

हे क्षत्रिय, अन्तवन्तः अन्तवतो लोकान् पितृलोकदेवलोकादीन् ते जयन्ति, नानन्तं स्वात्मभूतं परमात्मानं लोकं जयन्ति । केन तर्ह्यनन्तलोकप्राप्तिरित्याशङ्क्याह— ज्ञानेन

विद्वान तेज अभ्येति नित्यं नित्यमविनाश्यात्मभूतमेव अ-भ्येति तेजः ज्योतिः, न कर्मणा । कस्मात्पुनर्ज्ञानेनैवाभ्येति ? तत्राह— न विद्यते ह्यन्यथा तस्य पन्थाः तस्य पूर्णानन्द-ज्योतिषो ज्ञानमेकं मुक्त्वा अन्यः पन्था मार्गो नास्त्येव । श्रूयते च— 'तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥

ज्ञानेन विद्वान यद्ब्रह्म पश्यति, तत्किमिवाभातीति प्राह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

**आभाति शुक्लमिव लोहितमिवाथो**
**कृष्णमथार्जुनं काद्रवं वा ।**
**यद्ब्राह्मणः पश्यति यत्र विद्वा-**
**न्कथंरूपं तदमृतमक्षरं परम् ॥ १० ॥**

ज्ञानेन यद्विद्वान पश्यति ब्रह्म, तत् किं शुक्लमिव आभाति, लोहितमिव आभाति, कृष्णमिव अर्जुनं काद्रवमिव आभाति ; यत्र देशे भाति कथंरूपं तदमृतमक्षरं परं ब्रह्म ॥

एवं पृष्टः प्राह भगवान—

सनत्सुजात उवाच—

**नाभाति शुक्लमिव लोहितमिवाथो**
**कृष्णमथार्जुनं वा काद्रवं वा ।**
**न पृथिव्यां तिष्ठति नान्तरिक्षे**
**नैतत्समुद्रे सलिलं बिभर्ति ॥ २० ॥**

न एतत् ब्रह्म शुक्लादिरूपत्वेन अवभासते, अरूपत्वाद्ब्रह्मणः । श्रूयते च— 'ततो यदुत्तरतरं तदरूपमनामयम्' इति, 'अशब्दमस्पर्शमरूपम्' इति च । तथा न पृथिव्यां तिष्ठति नान्तरिक्षे । तथा च श्रुतिरन्यत्रानवस्थानं दर्शयति— 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति । कस्मात्पुनः कारणात्पृथिव्यादिषु न तिष्ठतीति? तत्राह— नैतत्समुद्रे सलिलं बिभर्ति पञ्चभूतात्मकं देहं बिभर्ति । सलिलशब्दो भूतपञ्चकोपलक्षणार्थः, यथा— 'अप एव ससर्जादौ तासु वीर्यमपासृजत्' इत्यत्र अप्शब्दो भूतपञ्चकोप लक्षणार्थः । श्रूयते च— 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति अपामेव पुरुषशब्दवाच्यत्वम् । एतदुक्तं भवति—यदि ब्रह्मणः संसारान्तर्वर्तित्वं भवेत्, तदा संसारानुप्रविष्टत्वात् घटादिवदीदृग्रूपादिमत्त्वमन्यस्मिंश्चावस्थानं भवेत् । इदं पुनरपूर्वादिलक्षणत्वात्संसाराननुप्रविष्टमेव ब्रह्म.

तस्माद्रूपादिरहितमेव तदिति ॥

तर्हि न कस्य कुत्राप्युपलभ्यते इत्याह—

**नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु**
**न दृश्यते वै विमलेषु सामसु ।**
**रथन्तरे बार्हते वापि राजन्**
**महाव्रतस्यात्मनि दृश्यते तत् ॥ २१ ॥**

'ज्ञानं च सत्यं च' इत्युपक्रम्य 'महाव्रता द्वादश ब्राह्मणस्य' इति ये गुणा उक्ताः, तत्संयुक्तस्यात्मनि दृश्यते तत् परं ब्रह्म । न घटादिवदिदंतया सिध्यति, अपि त्वात्मन्येवात्मतया सिध्यतीत्यर्थः ॥

इदानीं तत्स्वरूपं तद्दर्शनं तत्फलं च निर्दिशति श्लोकद्वयेन—

**अवारणीयं तमसः परस्ता-**
**त्तदन्ततोऽभ्येति विनाशकाले ।**
**अणीयरूपं च तथाप्यणीयसां**
**महत्स्वरूपं त्वपि पर्वतेभ्यः ॥ २२ ॥**
**तदेतदह्ना संस्थितं भाति सर्वं**
**तदात्मवित्पश्यति ज्ञानयोगात् ।**

तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं
य एतद्विदुरमृतास्ते भवन्ति ॥ २३ ॥

इति श्रीमत्सनत्सुजातीये तृतीयोऽध्यायः ॥

यदिदं महाव्रतस्यात्मनि दृश्यते, तत् अवारणीयं ब्रह्म, सर्वगतत्वात् । तमसः अज्ञानात् परस्तात् । तत् ब्रह्म अन्ततः अभ्येति जगत् विनाशकाले प्रलयकाले—अणीयरूपं च तथाप्यणीयसां महत्स्वरूपं त्वपि पर्वतेभ्यः । श्रूयते च—'अणोरणीयान् महतो महीयान' इति । दृश्यन्ते च येऽणुत्वमहत्त्वादयो लोके तदेतत् सर्वं जगत् अह्ना अह्नो रूपेण प्रकाशरूपेण ब्रह्मणि संस्थितं तदात्मनैव भाति । श्रूयते च— 'तस्य भासा सर्वमिदं विभाति' इति, 'येन सूर्यस्तपति तेजसेद्धः' इति च । तत् ब्रह्म आत्मवित्पश्यति ज्ञानयोगात् न कर्मयोगेन । तस्मिन् एव परमात्मनि जगत्सर्वमिदं प्रतिष्ठितम् । य एतद्विदुः अमृतास्ते भवन्ति ॥

इति श्रीसनत्सुजातीयभाष्ये तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥

‘अवारणीयं तमसः परस्तात्’ इत्यादिना ब्रह्मणो रूपं निर्धार्य ‘तदात्मवित्पश्यंति ज्ञानयोगात्’ इति ज्ञानयोगेनात्मदर्शनमुक्तम् । पुनरपि तस्य स्वरूपं दर्शयित्वा योगिनस्तद्रूपं पश्यन्तीत्याह—

**यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।**<br>
**यद्वै देवा उपासते यस्मादर्को विराजते ॥**<br>
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१॥**

यत् ब्रह्मवित्पश्यति ज्ञानयोगात्, यत् ज्ञात्वा अमृता भवन्ति, तत् शुक्रं शुद्धम् अविद्यादिदोषरहितं महज्ज्योतिः सर्वावभासकत्वात्; श्रूयते च—‘तस्य भासा सर्वमिदं विभाति’ इति । दीप्यमानं भ्राजमानं महद्यशः । श्रूयते च—‘तस्य नाम महद्यशः’ इति । यद्वै ब्रह्म देवाः इन्द्रादयः उपासते । श्रूयते च—‘तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्’

इति । यस्मात् परज्योतिषो ब्रह्मणः अर्कः आदित्यो विराजते, 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः । एवंभूतं परमात्मानं भगवन्तं सनातनं योगिन एव पश्यन्ति, न पुनर्ज्ञानयोगरहिताः ॥

इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भाद्युत्पत्तिं दर्शयति—

**शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।**
**तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२॥**

शुक्रात् शुद्धात् पूर्वोक्तात् ब्रह्मणो हिरण्यगर्भाख्यं ब्रह्म प्रभवति उत्पद्यते । अथोत्पन्नं ब्रह्म शुक्रेण वर्धते विराडात्मना । तच्छुक्रं शुद्धं ब्रह्म ज्योतिषाम् आदित्यादीनां मध्ये तैः अतप्तम् अप्रकाशितं सत् तपति स्वयमेव प्रकाशते, तेषामपि तापनं प्रकाशकम् । योऽन्यानवभास्यः सर्वावभासकः स्वयमेवावभासते, तं भगवन्तं योगिन एव पश्यन्ति ॥

इदानीं पूर्णवाक्यार्थं कथयति—

**पूर्णात्पूर्णमुद्धरन्ति पूर्णात्पूर्णं प्रचक्षते ।**
**हरन्ति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥३॥**

पूर्णात् देशतः कालतो वस्तुतश्चापरिच्छिन्नात् परमात्मनः पूर्णमेव उद्धरन्ति जीवरूपेण । यत् पूर्णात् पूर्णमुद्धृतं जीवात्मना अतः पूर्णात् उद्धृतत्वादेव इदमपि जीवस्वरूपं पूर्णमेव प्रचक्षते विद्वांसः । तथा हरन्ति पूर्णान् जीवात्मनावस्थितान् पूर्णम् आत्मस्वरूपमात्रं देहेन्द्रियाद्यनुप्रविष्टं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्तीत्यर्थः । ततः उद्धृतेनैव मूलभूतेन पूर्णानन्देन अवशिष्यते तेनैव पूर्णानन्देन ब्रह्मणा संयुज्यते चित्सदानन्दाद्वितीयब्रह्मात्मना अवतिष्ठत इत्यर्थः । 'पूर्णमेवावशिष्यते' इति वा पाठः; यदा देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्ति, तदा पूर्णमेवावशिष्यत इत्यर्थः । तथा च श्रुतिः—'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति । अस्यायमर्थः—पूर्णम् अदः तच्छब्दवाच्यं जगत्कारणं ब्रह्म । पूर्णमिदं त्वंशब्दनिर्दिष्टं प्रत्यगात्मस्वरूपम् । अनयोस्तत्त्वंपदार्थयोः कथं पूर्णत्वमिति चेत्, तत्राह—पूर्णात् अनवच्छिन्नात् पूर्णमेवोदच्यते उद्रिच्यते जीवेश्वररूपेण यस्मात्, तस्मादनयोः पूर्णत्वमित्यर्थः । पूर्णस्य तत्त्वमात्मनावस्थितस्य पूर्णं रूपमादाय तत्त्वंपदार्थशोधनं कृत्वा शोधितपदार्थः सन्नित्यर्थः । पूर्णमेव ब्रह्म अवशिष्यते पूर्णमेव ब्रह्म

भवतीत्यर्थः । यः पूर्णस्वरूपः, तं परमात्मानं योगिन एव पश्यन्ति ॥

इदानीं द्वा सुपर्णेति मन्त्रार्थं कथयति—

**आपोऽथाद्भ्यः सलिलं तस्य मध्ये**
**उभौ देवौ शिश्रियातेऽन्तरिक्षे ।**
**आदध्रीचीः सविषूचीर्वसाना-**
**वुभौ बिभर्ति पृथिवीं दिवं च ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

अस्मात्परमात्मनः आपः प्रथमं सृष्टाः । तथा चाह मनुः — 'अप एव ससर्जादौ' इति । भूतपञ्चकोपलक्षणार्थः अप्छब्दः । अनेन सूक्ष्मसृष्टिरभिहिता । अथ अनन्तरम् अद्भ्यः पूर्वसृष्टाभ्यः सलिलं भूतपञ्चकात्मकं स्थूलदेहादिकं सृष्टम् । तस्य सलिलस्य देहात्मनावस्थितस्य मध्ये अन्तरिक्षे हृदयाकाशे उभौ जीवपरमात्मानौ देवौ द्योतनस्वभावौ शिश्रियाते वर्तेते । न केवलमन्तरिक्ष एव शिश्रियाते आदध्रीचीः सविषूचीः वसानौ आभिमुख्येन ध्रियमाणा वा स्थिता वा अञ्चन्तीति आदध्रीच्यो दिशः; विषूच्य उपदिशः, विष्वग्गमनात्; ताभिः सह वर्तन्त इति सविषूच्यः प्राच्याद्याः

सर्वा दिशः वसानौ आच्छादयन्तौ उभौ बिभर्ति पृथिवीं दिवं च एको जीवः आत्मनः स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मतत्त्वमनवगम्यानात्मनि देहादावात्मभावमापन्नः पृथिवीं भूतभौतिकलक्षणं कर्मफलानुरूपं सुखदुःखात्मकदेहादिकं बिभर्ति । अपरो दिवं द्योतनात्मकं स्वात्मरूपं बिभर्ति । श्रूयते च— 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति । यः स्वात्ममायया स्वमात्मानं प्राणाद्यनन्तभेदं कृत्वान्तरानुप्रविश्य अभिपश्यन् आस्ते, तं भगवन्तं योगिन एव पश्यन्ति ॥

इदानीं ज्ञानिनः स्वात्मन्यवस्थानं दर्शयति—

**चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः ।**
**केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

ध्रुवस्याव्ययकर्मणः परमेश्वरस्य चेश्वरात्मनावस्थितस्य रथस्य शरीरस्य त्रैलोक्यात्मनावस्थितस्य चक्रे चङ्क्रमणात्मके देहे तिष्ठन्तं केतुमन्तं प्रज्ञावन्तम् अत एव च दिव्यम् अप्राकृतं जरामरणादिविवर्जितं दिवि द्योतनात्मके अनुदितान-

स्तमितज्ञानात्मनावस्थिते पूर्णानन्दे ब्रह्मणि वहन्त्यश्वाः इन्द्रियाणि । एतदुक्तं भवति— यद्यपीन्द्रियाणि स्वभावतो विषयेष्वेव वर्तन्ते, तथापि विज्ञानसारथिना समाकृष्यमाणानि केतुमन्तं पुरुषं दिव्येव वहन्ति, न पराग्विषय इति । तदुक्तं कठवल्लीषु— 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इत्यादिना । यत्र परमात्मनि वहन्ति तपसा, तं भगवन्तं योगिन एव पश्यन्ति ॥

नानेन सदृशं किंचिद्विद्यत इत्याह—

**न सादृश्ये तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**मनीषयाथो मनसा हृदा च**
**य एनं विदुरमृतास्ते भवन्ति ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

अस्य परमात्मनो रूपं न सादृश्ये तिष्ठति नान्येन सादृश्ये वर्तते, नानेन सदृशं किंचिद्वर्तत इत्यर्थः । श्रूयते च— 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' इति । अत

एव उपमानाद्यविषयत्वम् । तथा न चक्षुषा पश्यति कश्चित् अपि एनं सर्वान्तरं परमात्मानम् । कथं तर्हि पश्यन्ति? मनीषया अध्यवसायात्मिकया मनसा संकल्पविकल्पात्मकेन हृदा च हृदयेन च साधनभूतेन । हृदयं विना नान्यत्र परमात्मन उपलब्धिः संभवतीति मत्वा हृदा चेत्युक्तम् । अथवा, न केवलं मनोबुद्धिमात्रेण, अपि तु हृदा च हृदयस्थेन च परमेश्वरेणानुगृहीताः सन्तः । य एनं परमात्मानं विदुः अयमहमस्मीति, ते अमृताः अमरणधर्माणो भवन्ति । अथवा, हृदा हृदयेन परमात्मना । तथा च हृत्स्थे परमात्मनि हृदयशब्दं निर्वक्ति—'स एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति अहरहर्वा एवंवित्स्वर्गं लोकमेति' इति । तथा च श्रुतिः तदधीनात्मसिद्धिं दर्शयति—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति । एवं यं विदित्वा अमृता भवन्ति, तं योगिन एव पश्यन्ति ॥

इदानीमिन्द्रियाणां विषयेषु प्रवृत्तिरनर्थाय भवतीत्याह—

**द्वादश पूगाः सरितो देवरक्षिता मध्वीशते ।**
**तदनुविधायिनस्तदा संचरन्ति घोरम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

ये द्वादश पूगाः कर्मज्ञानेन्द्रियाणि, एकादशं मनः, द्वादशी बुद्धिः, तेषामनेकपुरुषापेक्षया एकैकस्य पूगत्वमुच्यते। सरितः सरणशीलाः देवरक्षिताः देवेन परमात्मना रक्षिताः मधुवत् विषयं मधु ईशते नियमयन्ति असांकर्येण स्वं स्वं विषयमनुभवन्तीत्यर्थः। यदैवमनुभवन्ति, तदा तदनुविधायिनो विषयपराः संचरन्ति घोरं संसारम्। तस्मादिन्द्रियाणि विषयेभ्यः उपसंहृत्य स्वात्मन्येव वशं नयेदित्यर्थः। येन रक्षिता मध्वीशते, तं देवं योगिन एव पश्यन्ति ॥

किंच, दृष्टान्तदार्ष्टान्तिकयोस्तत्राभिधानम्—

**तदर्धमासं पिबति संचितं भ्रमरो मधु।**
**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥८॥**

यथा मधुकरो भ्रमरः अर्धमासोपार्जितम् अर्धमासं संचितं मधु अर्धमासं पिबति, एवमसावपि भ्रमरः भ्रमणशील*त्वात्संसारी तद्विषयं मधु अर्धमाससंचितमर्धमासं पिबति; पूर्वजन्मसंचितं कर्म अन्यस्मिन् जन्मनि भुङ्क्ते इति यावत्। भवेदप्यैहिकफलात्कर्मणः फलसिद्धिः, कर्मानन्तरभावित्वात्; कथं पुनरामुष्मिकफलात्कर्मणः फलसिद्धिः स्यात्, कर्मणो वि-

नाशित्वादित्याशङ्क्याह—ईशान इति । भवेदयं दोषः यदि केवलात्कर्मणः फलसिद्धिः स्यात्; ईशानः परमेश्वरः कृतप्रयत्नापेक्षः सन् सर्वेषु प्राणिषु प्राणाग्निहोत्रस्येतरस्य च तत्कर्मानुसारेण हविर्भूतम् अन्नादिकम् अकल्पयत् । य ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्, तं भगवन्तं योगिन एव पश्यन्ति ॥

किंच, किमेते मध्वाशिनो बम्भ्रम्यमाणाः परिवर्तन्त एव सर्वदा, किं वा ज्ञानं लब्ध्वा मुक्ता भवन्ति, इत्याशङ्क्याह—

**हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः ।**
**तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथासुखम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥९॥**

ये अपक्षकाः ज्ञानपक्षरहिताः मध्वाशिनः परिवर्तन्ते, ते हिरण्यपर्णमश्वत्थं हितं च रमणीयं चेति हिरण्यं हितं रमणीयं च पर्णं यस्याश्वत्थस्य । तथा च भगवान्वासुदेवः— 'छन्दांसि यस्य पर्णानि' इति । ते हिरण्यपर्णमश्वत्थम् अभिपत्य आरुह्य वेदसंयोगिब्राह्मणादिदेहं प्राप्येत्यर्थः । तत्रैव ब्राह्मणादिदेहे पक्षिणो ज्ञानिनो भूत्वा । तथा च ब्राह्मणम्— 'ये वै विद्वांसस्ते पक्षिणो ये अविद्वांसस्ते अपक्षाः' इति । प्रपतन्ति तथा सुखं मुक्ता भवन्तीत्यर्थः । यं ज्ञात्वा प्रपतन्ति,

तं योगिन एव पश्यन्ति ॥

इदानीं योगं दर्शयति—

**अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।**
**आदित्यो गिरते चन्द्रमादित्यं गिरते परः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

अपानं गिरति उपसंहरति प्राणः । प्राणं गिरति चन्द्रमाः मनः उपसंहरति । मनसश्चन्द्रमा अधिदैवतम्; तस्माच्चन्द्रमः-शब्देन मन उच्यते । तं चन्द्रं मन आदित्यो बुद्धिः गिरते । बुद्धेश्चादित्योऽधिदैवतम् । तम् आदित्यं बुद्धिं गिरते परः परं ब्रह्म । एतदुक्तं भवति— समाधिवेलायामपानं प्राणे उपसंहृत्य प्राणं मनसि मनश्च बुद्धौ बुद्धिं परमात्मन्युपसंहृत्य स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः ॥

इदानीं परस्य जीवात्मनावस्थानं दर्शयति—

**एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।**
**तं चेत्सततमुत्क्षिपेन्न मृत्युर्नामृतं भवेत् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

हन्त्यविद्यां तत्कार्यं चेति हंसः परमात्मा भूतभौतिकलक्षणात्संसारात् सलिलात् उच्चरन ऊर्ध्वं चरन् संसाराद्बहिरेव

वर्तमानः एकं जीवाख्यं पादं नोत्क्षिपति नोद्धरति नोपसंहरति रूपं रूपं प्रतिरूपोऽवतिष्ठत इत्यर्थः । श्रूयते च कठवल्लीषु—'एकस्तथा सर्वभूतान्तरात्मा' इति । कस्मात्पुनरेकं पादं नोत्क्षिपतीत्यत आह—तं जीवाख्यं पादं सततं संततयायिनं यदि उत्क्षिपेत् स्वमायया स्वमात्मानं प्राणाद्यनन्तभेदं कृत्वा तेष्वनुप्रविश्य जीवात्मना यदि नावतिष्ठेत्, तदा न मृत्युः न जननमरणादिलक्षणोऽनर्थः संसारो भवेत् संसारिणो जीवस्याभावात् । तथा अमृतम् अमृतत्वं मोक्षो न भवेत् अननुप्रविष्टस्य दर्शनासंभवात् । तथा च तदर्थमेव अनुप्रवेशं दर्शयति—'रूपं रूपम्' इति । तथा चाथर्वणी श्रुतिः—'एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् । स चेदुत्क्षिपेत्पादं न मृत्युर्नामृतं भवेत्' इति, 'एकं रूपं बहुधा यः करोति' इति च । यः पादरूपेण जीवात्मना त्रिपादरूपेण चित्सदानन्दाद्वितीयेन ब्रह्मात्मनावस्थितः, तं परमात्मानं योगिन एव पश्यन्ति ॥

केन तर्ह्युपाधिना परः पादात्मना अवतिष्ठत इत्याशङ्क्य परस्यैव लिङ्गोपाधिकं जीवात्मानं दर्शयति—

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**लिङ्गस्य योगेन स याति नित्यम् ।**

**तमीशमीड्यमनुकल्पमाद्यं**
**पश्यन्ति मूढा न विराजमानम् ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

स एव सच्चिदानन्दाद्वितीयः अन्तरात्मा सर्वभूतान्तरात्मा पुरुषः पूर्णः परमात्मा लिङ्गस्य योगेन अङ्गुष्ठमात्रः अङ्गुष्ठमात्रपरिमाणपरिच्छिन्नः सन् याति संसरति नित्यम् । कस्मात्पुनः कारणात् लिङ्गयोगेन अङ्गुष्ठमात्रः संसरति? तत्राह—यो लिङ्गस्य योगेनाङ्गुष्ठमात्रः संसरति, तम् ईशं सर्वस्येशितारम् ईड्यं स्तुत्यम् अनुकल्पं सर्वमनुप्रविश्य आत्मना कल्पयतीत्यनुकल्पम् आद्यम् आदौ भवं विराजमानं दीप्यमानं यस्मात् मूढाः अविवेकिनो देहद्वयात्माभिमानिनो न पश्यन्ति, तस्मादेवात्मनो ब्रह्मभावानवगमात्संसरन्तीति । यमात्मानमपश्यन्तः संसरन्ति, तं योगिन एव पश्यन्ति ॥

इदानीम् इन्द्रियाणां च विषयाणां च अनर्थहेतुत्वं दर्शयति—

**गूहन्ति सर्पा इव गह्वरेषु**
**क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् ।**

**ते विप्रमुह्यन्ति जना विमूढा-**
**स्तैर्दत्ता भोगा मोहयन्ते भवाय ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

यथा सर्पा गह्वरेभ्यो निष्क्रम्य स्वेन वृत्तेन विषप्रदानेन मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति स्वमात्मानं प्रच्छादयन्ति, एवमिन्द्रियसर्पाः श्रोत्रादिषु शयानाः श्रोत्रादिभ्यो निर्गत्य स्वेन वृत्तेन विषयविषप्रदानेन मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति स्वमात्मानं प्रच्छादयन्ति ; ते विप्रमुह्यन्ति विषयविषाभिभूताः विशेषेण मुह्यन्ति, व्यतिरिक्तं किंचिन्न जानन्तीत्यर्थः । तथा च श्रुतिः— 'यथा प्रियया स्त्रिया संपरिष्वक्तः' इति । तैः इन्द्रियसर्पैः दत्ताः भोगाः विषकल्पाः विषयाः मर्त्यान् मोहयन्ते पुनः पुनर्मोहहेतवो भवन्ति । यदिदं विषयैर्मोहनम्, तत् भवाय गर्भजन्मजरामरणसंसाराय भवति । यमनवद्यम् अनुकल्पमाद्यम् अदृष्ट्वा विषयविषान्धाः मुह्यन्ति, तं योगिन एव पश्यन्ति ॥

ज्ञानिनां मोक्षस्वरूपमाह—

**असाधना वापि ससाधना वा**
**समानमेतद्दृश्यते मानुषेषु ।**

**समानमेतदमृतस्येतरस्य**
**युक्तास्तत्र मध्व उत्सं समापुः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

ये असाधनाः शमदमादिसाधनरहिताः, ये च शमादिसाधनयुक्ताः ससाधनाः, तेषु समानं साधारणम् आत्मस्वरूपं दृश्यते मानुषेषु । तथा समानम् अमृतस्य मोक्षस्य इतरस्य संसारस्य सति चासति च तेषां मध्ये ये युक्ताः शमदमादिसाधनयुक्ताः, ते तस्मिन् विष्णोः परमे पदे मध्वः मधुनः उत्सं समापुः पूर्णानन्दं ब्रह्म समाप्नुवन्तीत्यर्थः । यमुत्सं संपूर्णानन्दं युक्ताः प्राप्नुवन्ति, तं योगिन एव पश्यन्ति ॥

किंच—

**उभौ लोकौ विद्यया व्याप्य यान्ति**
**तदाहुतं चाहुतमग्निहोत्रम् ।**
**मा ते ब्राह्मी लघुतामादधीत**
**प्रज्ञानं स्यान्नाम धीरा लभन्ते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

उभौ लोकौ इहलोकपरलोकौ विद्यया ब्रह्मात्मत्वविषयया व्याप्य याति तत् पूर्णानन्दं ब्रह्म । यस्मादुभौ लोकौ विद्यया

व्याप्य याति, तस्मात् अहुतं चाग्निहोत्रम् अनेन आत्मज्ञानेन आहुतम् आभिमुख्येन हुतं भवति, सर्वमग्निहोत्रादिकर्मफल-मनेनैव संपादितं भवतीत्यर्थः । यस्मादुभौ लोकौ विद्यया व्याप्य याति, यस्मादहुतं चाग्निहोत्रं हुतं भवति, तस्मात् मा ते तव ब्राह्मी ब्रह्मविषया विद्या लघुतां लघुत्वं मर्त्यभावं कर्मवत् आदधीत न करोति, अपि तु प्रज्ञानं तमसः पारं परमात्मानमात्मत्वेन संपादयति यदा ब्रह्मविद्याव्यापृतस्य परमात्मानमात्मत्वेनावगच्छतः प्रज्ञानम् इति नाम स्यात् ब्रह्मेति नाम भवतीत्यर्थः । तथा च श्रुतिः— 'प्रज्ञानं ब्रह्म' इति । तत्प्रज्ञानं ब्रह्म धीरा धीमन्तो लभन्ते । यत्प्रज्ञानं ब्रह्म धीरा लभन्ते, तं योगिन एव पश्यन्ति ॥

किंच—

**एवंरूपो महानात्मा पावकं पुरुषो गिरन् ।**
**यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

य एवंरूपः प्रज्ञानैकरसब्रह्मस्वरूपः सन्नास्ते, स आत्मा महान् संपद्यते ब्रह्मैव संपद्यत इत्यर्थः । पावकम् अग्निं सर्वो-पसंहर्तृरूपं कारणं सकारणं कार्यं गिरन् स्वात्मन्युपसंहरन् यो वै तं पुरुषं ज्ञानैकरसं पुरुषं पूर्णं पुरिशयं वेद 'अयमह-

मस्मि' इति साक्षाज्जानाति, तस्य प्रज्ञानरूपं परमात्मानम् आत्मत्वेनावगच्छतः इह अस्मिन्नेव देहे आत्मा न रिष्यते न विनश्यति, विदुष उत्क्रान्तेरभावात्, उत्क्रान्तिनिमित्तत्वाद्विनाशस्य । तथा च श्रुतिः प्रश्नपूर्वकमुत्क्रान्त्यभावं दर्शयति — 'उदस्मात्प्राणाः क्रामन्ति आहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते' 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति च । यं विदित्वा न रिष्यते, तं योगिन एव पश्यन्ति ॥

यस्मात्तद्विज्ञानादेव नात्मनो विनाशः—

**तस्मात्सदा सत्कृतः स्या-**
**न्न मृत्युरमृतं कुतः ।**
**सत्यानृते सत्यसमानुबन्धिनी**
**सतश्च योनिरसतश्चैक एव ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

सदा सर्वदा अहर्निशं सत्कृतः स्यात् सच्चिदानन्दाद्वितीयब्रह्मात्मत्वेनाभिमन्येत यः, स सदा सत्कृतो भवति; तस्य न मृत्युः जननमरणलक्षणः संसारो न भवेत् । अमृतं कुतः मृत्युसापेक्षत्वादमृतत्वस्य तदभावे कुतः प्रसक्तिः । तथा च

श्रुतिः—'मृत्युर्नास्त्यमृतं कुतः' इति । सत्यानृते च वर्तेते सत्यसमानुबन्धिनी परमार्थसत्यमेकमधिष्ठानमनुबध्य वर्तेते रज्ज्वामिव सर्पः । कथमेतदवगम्यते—सत्यानृते सत्यसमानुबन्धिनी इति ? तत्राह—सतश्च लौकिकस्य योनिः कारणम् असतश्च व्यावहारिकस्य रजतादेः एकमेव अद्वितीयं ब्रह्म यस्मात्प्रवदन्ति, तस्मात् सत्यानृते स्वकारणभूतसत्यसमानुबन्धिनी इति । यदात्मतत्त्वज्ञानात्मकारणान्मृत्योर्विनाशः, यमनुबध्य सत्यानृते प्रवर्तेते, तं योगिन एव पश्यन्ति ॥

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**न दृश्यतेऽसौ हृदये निविष्टः ।**
**अजश्चरो दिवारात्रमतन्द्रितश्च**
**स तं मत्वा कविरास्ते प्रसन्नः ॥ १८ ॥**

आकाशादिदेहान्तं जगत्सृष्ट्वा हृदये निविष्टः अजः चरः चराचरात्मा सन् न दृश्यते स्वेनात्मना चित्सदानन्दाद्वितीयेन । तम् अहोरात्रम् अतन्द्रितो भूत्वा कोशपञ्चकेभ्यो निष्क्रम्य सर्वान्तरात्मानं मत्वा कविरास्ते प्रसन्नः कृतार्थः सन्नित्यर्थः ॥

**तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा ।**
**तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः ॥**

**तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।**
**भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ॥**

सर्वमिदं ब्रह्मणः सकाशादुद्भूतं तत्रैव लीयत इति श्लोकद्वयेनोक्तम्; तदेव विवृणोति—

**उभौ च देवौ पृथिवीं दिवं च**
**दिशश्च शुक्रं भुवनं बिभर्ति ।**
**तस्माद्दिशः सरितश्च स्रवन्ति**
**तस्मात्समुद्रा विहिता महान्तः ॥२१॥**

स्पष्टः श्लोकार्थः ॥

इदानीं ब्रह्मणोऽनन्तत्वं कथयति—

**यः सहस्रं सहस्राणां पक्षानाहृत्य संपतेत् ।**
**नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥**

यः पुरुषः सहस्राणां सहस्रं पक्षानाहृत्य आत्मनः पक्षान कृत्वा संपतेत् अनेकशः कोटिकल्पमपि पुरुषो नान्तं गच्छेत् कारणस्य सर्वकारणस्य परमात्मनः, यद्यपि असौ मनोजवः स्यात्, तथापि तस्यान्तं न गच्छेत् । यस्मादन्तं न गच्छेत्, तस्मादनन्तः परमात्मेत्यर्थः । योऽनन्तः परमात्मा, तं योगि-

न एव पश्यन्ति ॥

किंच—

**अदर्शने तिष्ठति रूपमस्य**
**पश्यन्ति चैनं सुसमिद्धसत्त्वाः ।**
**ह्रीनो मनीषी मनसाभिपश्ये-**
**य एनं विदुरमृतास्ते भवन्ति ॥ २३ ॥**

अदर्शने दर्शनायोग्ये विषये तिष्ठति रूपमस्य परमात्मनः। तथा च श्रुतिः—'न संदृशे तिष्ठति रूपमस्य' इति। पश्यन्ति चैनं सुसमिद्धसत्त्वाः यद्यपि दर्शनायोग्ये तिष्ठति, तथापि परमात्मानं पश्यन्ति ते। के? सुसमिद्धसत्त्वाः सुष्ठु समिद्धं सम्यग्दीप्तं यदन्तःकरणं यज्ञादिभिः विमलीकरणद्वारेण येषाम्, ते सुसमिद्धसत्त्वाः। यस्मादेवं तस्मात् ह्रीनो रागद्वेषादिमलरहितो विशुद्धसत्त्वो मनीषी मनसाभिपश्येत्। ये एनं परमात्मानं विदुः अहमस्मीति, अमृता अमरणधर्माणो भवन्ति ते ॥

**इमं यः सर्वभूतेषु आत्मानमनुपश्यति ।**
**अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ॥**

इमं सर्वान्तरं सर्वभूतेषु सर्वप्राणिषु आत्मानं यः अनुप-

श्यति । कथंभूतेष्वनुपश्यति— अन्यत्रान्यत्र देहेन्द्रियादियु-क्तेषु शरीराद्यभिमानिषु । सः किं शोचेत् ततः परं सर्वभूतेषु स्वात्मानं पश्यन् ततः परं किमर्थमनुशोचति सर्वभूतस्थमात्मानमनुपश्यन् कृतार्थत्वान्नानुशोचतीत्यर्थः । तथा च श्रुतिः—'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति ॥

तदेवाह—

**यथोदपाने महति सर्वतःसंप्लुतोदके ।**
**एवं भूतेषु सर्वेषु ब्राह्मणस्य विशेषतः ॥ २९ ॥**

यथा सर्वतःसंप्लुतोदके महत्युदपाने कृतकृत्यस्य अर्थो नास्ति, एवं सर्वेषु भूतेषु आत्मानं पश्यतः ब्राह्मणस्य विशेषतः न किंचिदपि प्रयोजनं विद्यत इत्यर्थः । तथा चाह भगवान् वासुदेवः—'न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' इति ॥

इदानीम् उक्तस्यार्थस्य द्रढिम्ने वामदेवादिवत्स्वानुभवं दर्शयति—

**अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।**
**आत्माहमस्मि सर्वस्य यच्च नास्ति यदस्ति च ॥**

हे धृतराष्ट्र, अहमेवास्मि वो युष्माकं माता जनयित्री

पिता अपि अहमेव । युष्माकं पुत्रोऽस्मि दुर्योधनादिरहम-स्मि । किं बहुना? आत्माहमस्मि सर्वस्य प्राणिजातस्य यच्च नास्ति यदस्ति च, तस्याहमेवात्मा ॥

एवं तावदाधिभौतिकपित्रादिकं दर्शितम् । अथेदानीमा-धिदैविकपित्रादिभावं दर्शयति—

**पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।**
**ममैव यूयमात्मस्था न मे यूयं न चाप्यहम् ॥**

पितामहोऽस्मि स्थविरः वृद्ध इन्द्रादेः पितामहः अनादि-सिद्धः परमात्मा सोऽप्यहमेव । यः पिता इन्द्रादेः हिरण्यगर्भः, सोऽप्यहमेव । तथा ममैव यूयमात्मस्थाः । एवं यूयं सर्वे प-रमार्थतो न मे आत्मनि व्यवस्थिताः; न चाप्यहं युष्मासु व्यवस्थितः । तथा चाह भगवान—'मत्स्थानि सर्वभूतानि' इति ॥

यद्यपि न ममात्मनि यूयं व्यवस्थिताः, न चाप्यहं युस्मासु व्यवस्थितः, तथापि—

**आत्मैव स्थानं मम जन्म चात्मा**
**ओतप्रोतोऽहमजरप्रतिष्ठः ।**

अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ २८ ॥

अणोरणीयान्सुमनाः सर्वभूतेष्ववस्थितः ।
पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ २९ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्या-
मुद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे

श्रीमत्सनत्सुजातीये चतुर्थोऽध्यायः ॥

आत्मैव स्थानम् आत्मैवाश्रयः जन्म चात्मा अस्मादेवा-त्मनः सर्वं समुत्पन्नम् । तथा च श्रुतिः—'आत्मैवेदं सर्वम्' इति । ओतप्रोतोऽहमेव ओतप्रोतरूपेण व्यवस्थितः जगदा-त्मा युष्माकं जनयिता अजरप्रतिष्ठः अजरे जरामरणवर्जिते स्वे महिम्नि तिष्ठतीत्यजरप्रतिष्ठः । तथा च श्रुतिः—'स भ-गवः कस्मिन्प्रतिष्ठितः स्वे महिम्नीति यदि वा न महिम्नि' इति ॥

अणोः सूक्ष्मात् अणीयान् सूक्ष्मतरः सुमनाः शोभनं राग-द्वेषमदमात्सर्यशोकमोहादिधर्मवर्जितं केवलं चित्सदानन्दाद्वि-तीयब्रह्मात्माकारं मनो यस्येति सुमनाः, सर्वभूतेषु सर्वेषु प्रा-

णिषु हृदयकमलमध्ये अहमेव अवस्थित आत्मतया ॥

एवं तावत्स्वानुभवो दर्शितः । इदानीं न केवलमस्माकमनुभव एवात्र प्रमाणम्; अन्येऽप्येवमेवावगच्छन्तीत्याह—पितरं सर्वभूतानां पुष्करे निहितं विदुः इति । येऽन्ये सनकसनन्दनवामदेवादयो ब्रह्मविदः, तेऽपि पितरं सर्वभूतानां सर्वप्राणिनां पिता जनयिता यः परमेश्वरः, तं पुष्करे हृत्पुण्डरीकमध्ये निहितं विदुः; परमात्मानमात्मत्वेनावगच्छन्तीत्यर्थः । तथा च श्रुतिस्तेषामनुभवं दर्शयति— 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति बृहदारण्यके । 'एतत्साम गायन्नास्ते' इति तैत्तिरीयके सामगानेन स्वानुभवो दर्शित आत्मनः कृतार्थत्वद्योतनार्थम् । तथा च्छान्दोग्येऽपि— 'तद्धास्य विजज्ञाविति' इति । तलवकारे च 'अहमन्नम्' इत्यादिना विदुषः स्वानुभवो दर्शितः । तत्रैते श्लोका भवन्ति—

नित्यशुद्धबुद्धमुक्तभावमीशमात्मना ।
भावयन्षडिन्द्रियाणि संनियम्य निश्चलः ॥ १॥

अस्ति वस्तु चिद्घनं जगत्प्रसूतिकारणम् ।
न नश्वरं तदुद्भवं जगत्तमोनुदं च यत् ॥ २ ॥

तत्पदैकवाचकं सदामृतं निरञ्जनम ।
चित्तवृत्तिदृक्सुखं तदस्म्यहं तदस्म्यहम् ॥ ३ ॥

इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमत्सनत्सुजातीयभाष्ये चतुर्थोऽध्यायः ॥

**इति श्रीमत्सनत्सुजातीयभाष्यं संपूर्णम ॥**

॥ श्रीः ॥

# ॥ नामानुक्रमणिका ॥

द

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

नानाजन्मसु सचितेन तपसा पूतेन चित्तात्मना
ामत्रण प्रतिश्राधितेन कुतुकात्सर्वा कृती शाकरी ।
समुद्र्य प्रथम जगद्गुरुपदे भक्त्या मयाद्यार्पिता
स्वाकृत्योपहृति करोतु गुरुराड् धन्य तथेम जनम् ॥

श्रीमच्छकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्य परिशोध्य पुस्तकचयै समुद्र्य साक बुधै ।
तच्छाग्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता
न्कृत्वाद्योपहृति सभक्तिविनय नून कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशकरार्यप्रतिमाप्रतिष्ठाकाल मयैषोपहृतिर्व्यधायि ॥

श्रीशकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मादात् ।
बालादिमपदभाजा सुब्रह्मण्येन अकिनक्षेण ॥ ४ ॥

## CONTENTS

# ॥ विषयाः ॥

॥ श्री ॥

# ॥ विषयानुक्रमणिका ॥

—❋—

पृष्ठम

# उपदेशसहस्री (गद्यप्रबन्धः) ११३–१५०

## १ शिष्यानुशासनप्रकरणम् ११५—१२९

## २ कूटस्थाद्वयात्मबोधप्रकरणम् १३०—१४७

॥ श्रीः ॥

# ॥ विवेकचूडामणिः ॥

*Gourishunker Ganeriwala*

सर्ववेदान्तसिद्धान्तगोचर तमगोचरम् ।
गोविन्द परमानन्द मद्गुरु प्रणतोऽस्म्यहम् ॥ १ ॥

जन्तूना नरजन्म दुर्लभमत पुस्त्व ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचन स्वनुभवो ब्रह्मात्मना सस्थिति
र्मुक्तिर्नो शतकोटिजन्मसु कृतै पुण्यैर्विना लभ्यते ॥

दुर्लभ त्रयमेवैतद्देवानुग्रहहेतुकम् ।
मनुष्यत्व मुमुक्षुत्व महापुरुषसश्रय ॥ ३ ॥

लब्ध्वा कथचिन्नरजन्म दुर्लभ
तत्रापि पुस्त्व श्रुतिपारदर्शनम् ।
य स्वात्ममुक्त्यै न यतेत मूढधी
स आत्महा स्व विनिहन्त्यसद्ग्रहात् ॥ ४ ॥

इत को न्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभ मानुष देह प्राप्य तत्रापि पौरुषम् ॥ ५ ॥

पठन्तु शास्त्राणि यजन्तु देवा
न्कुर्वन्तु कर्माणि भजन्तु देवता ।
आत्मैक्यबोधेन विना विमुक्ति
र्न सिध्यति ब्रह्मशतान्तरेऽपि ॥ ६ ॥

अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुति ।
ब्रवीति कर्मणो मुक्तेरहेतुत्व स्फुट यत ॥ ७ ॥

अतो विमुक्त्यै प्रयतेत विद्वा-
न्सन्यस्तबाह्यार्थसुखस्पृह सन् ।
सन्त महान्त समुपेत्य देशिक
तेनोपदिष्टार्थसमाहितात्मा ॥ ८ ॥

उद्धरेदात्मनात्मान मग्न ससारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥ ९ ॥

सन्यस्य सर्वकर्माणि भवबन्धविमुक्तये ।
यत्यता पण्डितैर्धीरैरात्माभ्यास उपस्थितै ॥ १० ॥

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभि ॥ ११ ॥

सम्यग्विचारत सिद्धा रज्जुतत्त्वावधारणा ।
भ्रान्त्योदितमहासर्पभवदु खविनाशनी ॥ १२ ॥

अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तित ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥ १३ ॥

अधिकारिणमाशास्ते फलसिद्धिर्विशेषत ।
उपाया देशकालाद्या सन्त्यस्मिन्सहकारिण ॥ १४ ॥

अतो विचार कर्तव्यो जिज्ञासोरात्मवस्तुन ।
समासाद्य दयासिन्धु गुरु ब्रह्मविदुत्तमम् ॥ १५ ॥

मेधावी पुरुषो विद्वानूहापोहविचक्षण ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षित ॥ १६ ॥

विवेकिनो विरक्तस्य शमादिगुणशालिन ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥ १७ ॥

साधनान्यत्र चत्वारि कथितानि मनीषिभि ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिध्यति ॥ १८ ॥

आदौ नित्यानित्यवस्तुविवेक परिगण्यते ।
इहामुत्रफलभोगविरागस्तदनन्तरम् ॥ १९ ॥

शमादिषट्कसपत्तिर्मुमुक्षुत्वमिति स्फुटम् ।
ब्रह्म सत्य जगन्मिथ्येत्येवरूपो विनिश्चय ॥ २० ॥

सोऽय नित्यानित्यवस्तुविवेक समुदाहृतः ।
तद्वैराग्य जुगुप्सा या दर्शनश्रवणादिभि ॥ २१ ॥

देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ।
विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहु ॥ २२ ॥

स्वलक्ष्ये नियतावस्था मनस शम उच्यते ।
विषयेभ्य परावर्त्य स्थापन स्वस्वगोलके ॥ २३ ॥

उभयेषामिन्द्रियाणा स दम परिकीर्तित ।
बाह्यानालम्बन वृत्तेरेषोपरतिरुत्तमा ॥ २४ ॥

सहन सर्वदु खानामप्रतीकारपूर्वकम् ।
चिन्ताविलापरहित सा तितिक्षा निगद्यते ॥ २५ ॥

शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यावधारणा ।
सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥ २६ ॥

सम्यगास्थापन बुद्धे शुद्धे ब्रह्मणि सर्वदा ।
तत्समाधानमित्युक्त न तु चित्तस्य लालनम् ॥ २७ ॥

अहकारादिदेहान्तान्बन्धानज्ञानकल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥ २८ ॥

मन्दमध्यमरूपापि वैराग्येण शमादिना ।
प्रसादेन गुरो सेय प्रवृद्धा सूयते फलम् ॥ २९ ॥

वैराग्य च मुमुक्षुत्व तीव्र यस्य तु विद्यते ।
तस्मिन्नेवार्थवन्त स्यु फलवन्त शमादय ॥ ३० ॥

एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयो ।
मरौ सलिलवत्तत्र शमादेर्भानमात्रता ॥ ३१ ॥

मोक्षकारणसामग्र्या भक्तिरेव गरीयसी ।
स्वस्वरूपानुसधान भक्तिरित्यभिधीयते ॥ ३२ ॥

स्वात्मतत्त्वानुसधान भक्तिरित्यपरे जगु ।
उक्तसाधनसंपन्नस्तत्त्वजिज्ञासुरात्मन ॥ ३३ ॥

उपसीदेद्गुरु प्राज्ञ यस्माद्बन्धविमोक्षणम् ।
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तम ॥ ३४ ॥

ब्रह्मण्युपरत शान्तो निरिन्धन इवानल ।
अहेतुकदयासिन्धुर्बन्धुरानमता सताम् ॥ ३५ ॥

तमाराध्य गुरु भक्त्या प्रह्व प्रश्रयसेवनै ।
प्रसन्न तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मन ॥ ३६ ॥

स्वामिन्नमस्ते नतलोकबन्धो
कारुण्यसिन्धो पतित भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या
ऋज्व्यातिकारुण्यसुधाभिवृष्ट्या ॥ ३७ ॥

दुर्वारससारदवाग्नितप्त
दोधूयमान दुरदृष्टवातै ।
भीत प्रपन्न परिपाहि मृत्यो
शरण्यमन्य यदह न जाने ॥ ३८ ॥

शान्ता महान्तो निवसन्ति सन्तो
वसन्तवल्लोकहित चरन्त ।
तीर्णा स्वय भीमभवार्णव जना
नहेतुनान्यानपि तारयन्त ॥ ३९ ॥

अय स्वभाव स्वत एव यत्पर-
श्रमापनोदप्रवण महात्मनाम् ।
सुधाशुरेष स्वयमर्ककर्कश
प्रभाभितप्तामवति क्षिति किल ॥ ४० ॥

ब्रह्मानन्दरसानुभूतिकलितै पूतै सुशीतै सितै-
र्युष्मद्वाक्कलशोज्झितै श्रुतिसुखैर्वाक्यामृतै सेचय ।
सतप्त भवतापदावदहनज्वालाभिरेन प्रभो
धन्यास्ते भवदीक्षणक्षणगते पात्रीकृता स्वीकृता ॥

कथ तरेय भवसिन्धुमेत
का वा गतिर्मे कतमोऽस्त्युपाय ।
जाने न किंचित्कृपयाव मा प्रभो
ससारदु खक्षतिमातनुष्व ॥ ४२ ॥

तथा वदन्त शरणागत स्व
ससारदावानलतापतप्तम् ।
निरीक्ष्य कारुण्यरसार्द्रदृष्ट्या
दद्यादभीति सहसा महात्मा ॥ ४३ ॥

विद्वान्स तस्मा उपसत्तिमीयुषे
मुमुक्षवे साधु यथोक्तकारिणे ।

प्रशान्तचित्ताय शमान्विताय
　तत्त्वोपदेश कृपयैव कुर्यात् ॥ ४४ ॥

मा भैष्ट विद्वस्तव नास्त्यपाय
　ससारसिन्धोस्तरणेऽस्त्युपाय ।
येनैव याता यतयोऽस्य पार
　तमेव मार्ग तव निर्दिशामि ॥ ४५ ॥

अस्त्युपायो महान्कश्चित्ससारभयनाशन ।
तेन तीर्त्वा भवाम्भोधि परमानन्दमाप्स्यसि ॥ ४६ ॥

वेदान्तार्थविचारेण जायते ज्ञानमुत्तमम् ।
तेनात्यन्तिकससारदु खनाशो भवत्यलम् ॥ ४७ ॥

श्रद्धाभक्तिध्यानयोगान्मुमुक्षो
　र्मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गी ।
यो वा एतेष्वेव तिष्ठत्यमुष्य
　मोक्षोऽविद्याकल्पिताद्देहबन्धात् ॥ ४८ ॥

अज्ञानयोगात्परमात्मनस्तव
　ह्यनात्मबन्धस्तत एव ससृति ।

तयोर्विवेकोदितबोधवह्नि
रज्ञानकार्य प्रदहेत्समूलम् ॥ ४९ ॥

शिष्य उवाच—

कृपया श्रूयतां स्वामिन् प्रश्नोऽय क्रियते मया ।
यदुत्तरमह श्रुत्वा कृतार्थ स्या भवन्मुखात् ॥ ५० ॥

को नाम बन्ध कथमेष आगत
कथ प्रतिष्ठास्य कथ विमोक्ष ।
कोऽसावनात्मा परम क आत्मा
तयोर्विवेक कथमेतदुच्यताम् ॥ ५१ ॥

श्रीगुरुरुवाच—

धन्योऽसि कृतकृत्योऽसि पावित ते कुल त्वया ।
यदविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि ॥ ५२ ॥

ऋणमोचनकर्तार पितु सन्ति सुतादय ।
बन्धमोचनकर्ता तु स्वस्मादन्यो न कश्चन ॥ ५३ ॥

मस्तकन्यस्तभारादेर्दु खमन्यैर्निवार्यते ।
क्षुधादिकृतदु ख तु विना स्वेन न केनचित् ॥ ५४ ॥

पथ्यमौषधसेवा च क्रियते येन रोगिणा ।
आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ॥ ५५ ॥

वस्तुस्वरूप स्फुटबोधचक्षुषा
स्वेनैव वेद्य न तु पण्डितेन ।
चन्द्रस्वरूप निजचक्षुषैव
ज्ञातव्यमन्यैरवगम्यते किम् ॥ ५६ ॥

अविद्याकामकर्मादिपाशबन्ध विमोचितुम् ।
क शक्नुयाद्विनात्मान कल्पकोटिशतैरपि ॥ ५७ ॥

न योगेन न सांख्येन कर्मणा नो न विद्यया ।
ब्रह्मात्मैकत्वबोधेन मोक्ष सिध्यति नान्यथा ॥ ५८ ॥

वीणाया रूपसौन्दर्य तन्त्रीवादनसौष्ठवम् ।
प्रजारञ्जनमात्र तन्न साम्राज्याय कल्पते ॥ ५९ ॥

वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ।
वैदुष्य विदुषा तद्वद्भुक्तये न तु मुक्तये ॥ ६० ॥

अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥ ६१ ॥

शब्दजाल महारण्य चित्तभ्रमणकारणम् ।
अत प्रयत्नाज्ज्ञातव्य तत्त्वज्ञात्तत्त्वमात्मन ॥ ६२ ॥

अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषध विना ।
किमु वेदैश्च शास्त्रैश्च किमु मन्त्रै किमौषधै ॥ ६३ ॥

न गच्छति विना पान व्याधिरौषधशब्दत ।
विनापरोक्षानुभव ब्रह्मशब्दैर्न मुच्यते ॥ ६४ ॥

अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मन ।
बाह्यशब्दै कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥ ६५ ॥

अकृत्वा शत्रुसहारमगत्वाखिलभूश्रियम् ।
राजाहमिति शब्दान्नो राजा भवितुमर्हति ॥ ६६ ॥

आप्तोक्तिं खनन तथोपरिशिलापाकर्षण स्वीकृतिं
निक्षेप समपेक्षते न हि बहि शब्दैस्तु निर्गच्छति ।
तद्वद्ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते
मायाकार्यतिरोहित स्वममल तत्त्व न दुर्युक्तिभि ॥

तस्मात्सर्वप्रयत्नेन भवबन्धविमुक्तये ।
स्वैरेव यत्न कर्तव्यो रोगादेरिव पण्डितै ॥ ६८ ॥

यस्त्वयाद्य कृत प्रश्नो वरीयाञ्शास्त्रविन्मत ।
सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभि ॥ ६९ ॥

शृणुष्वावहितो विद्वन् यन्मया समुदीर्यते ।
तदेतच्छ्रवणात्सद्यो भवबन्धाद्विमोक्ष्यसे ॥ ७० ॥

मोक्षस्य हेतु प्रथमो निगद्यते
वैराग्यमत्यन्तमनित्यवस्तुषु ।
तत शमश्चापि दमस्तितिक्षा
न्यास प्रसक्ताखिलकर्मणा भृशम् ॥ ७१ ॥

तत श्रुतिस्तन्मनन सतत्त्व-
ध्यान चिर नित्यनिरन्तर मुने ।
ततोऽविकल्प परमेत्य विद्वा-
निहैव निर्वाणसुख समृच्छति ॥ ७२ ॥

यद्बोद्धव्य तवेदानीमात्मानात्मविवेचनम् ।
तदुच्यते मया सम्यक्छ्रुत्वात्मन्यवधारय ॥ ७३ ॥

मज्जास्थिमेद पलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् ।
पादोरुवक्षोभुजपृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत् ॥ ७४ ॥

अह ममेति प्रथित शरीर
मोहास्पद स्थूलमितीर्यते बुधै ।
नभोनभस्वद्दहनाम्बुभूमय
सूक्ष्माणि भूतानि भवन्ति तानि ॥ ७५ ॥

परस्पराशैर्मिलितानि भूत्वा
स्थूलानि च स्थूलशरीरहेतव ।
मात्रास्तदीया विषया भवन्ति
शब्दादय पञ्च सुखाय भोक्तु ॥ ७६ ॥

य एषु मूढा विषयेषु बद्धा
रागोरुपाशेन सुदुर्दमेन ।
आयान्ति निर्यान्त्यध ऊर्ध्वमुच्चै
स्वकर्मदूतेन जवेन नीता ॥ ७७ ॥

शब्दादिभिः पञ्चभिरेव पञ्च
पञ्चत्वमापु स्वगुणेन बद्धा ।
कुरङ्गमातङ्गपतङ्गमीन-
भृङ्गा नर पञ्चभिरञ्चित किम् ॥ ७८ ॥

दोषेण तीव्रो विषय कृष्णसर्पविषादपि ।
विष निहन्ति भोक्तार द्रष्टार चक्षुषाप्ययम् ॥ ७९ ॥

विषयाशामहापाशाद्यो विमुक्त सुदुस्त्यजात् ।
स एव कल्पते मुक्त्यै नान्य षट्शास्त्रवेद्यपि ॥ ८० ॥

आपातवैराग्यवतो मुमुक्षू
न्भवाब्धिपार प्रतियातुमुद्यतान् ।
आशाग्रहो मज्जयतेऽन्तराले
निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ ८१ ॥

विषयाख्यग्रहो येन सुविरक्त्यासिना हत ।
स गच्छति भवाम्बोधे पार प्रत्यूहवर्जित ॥ ८२ ॥

विषमविषयमार्गे गच्छतोऽनच्छबुद्धे
प्रतिपदमभिघातो मृत्युरप्येष सिद्ध ।
हितसुजनगुरूक्त्या गच्छत स्वस्य युक्त्या
प्रभवति फलसिद्धि सत्यमित्येव विद्धि ॥ ८३ ॥

मोक्षस्य काङ्क्षा यदि वै तवास्ति
त्यजातिदूराद्विषयान्विष यथा ।
पीयूषवत्तोषदयाक्षमार्जव-
प्रशान्तिदान्तीर्भज नित्यमादरात् ॥ ८४ ॥

अनुक्षण यत्परिहृत्य कृत्य-
मनाद्यविद्याकृतबन्धमोक्षणम् ।

देह परार्थोऽयममुष्य पोषणे
य सज्जते स स्वमनेन हन्ति ॥ ८५ ॥

शरीरपोषणार्थी सन्य आत्मान दिदृक्षते ।
ग्राह दारुधिया धृत्वा नदीं तर्तुं स इच्छति ॥ ८६ ॥

मोह एव महामृत्युर्मुमुक्षोर्वपुरादिषु ।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति ॥ ८७ ॥

मोह जहि महामृत्यु देहदारसुतादिषु ।
य जित्वा मुनयो यान्ति तद्विष्णो परम पदम् ॥ ८८ ॥

त्वङ्मासरुधिरस्नायुमेदोमज्जास्थिसकुलम् ।
पूर्ण मूत्रपुरीषाभ्या स्थूल निन्द्यमिद वपु ॥ ८९ ॥

पञ्चीकृतेभ्यो भूतेभ्य स्थूलेभ्य पूर्वकर्मणा ।
समुत्पन्नमिद स्थूल भोगायतनमात्मन ।
अवस्था जागरस्तस्य स्थूलार्थानुभवो यत ॥ ९० ॥

बाह्येन्द्रियै स्थूलपदार्थसेवा
स्रक्चन्दनस्त्र्यादिविचित्ररूपाम् ।
करोति जीव स्वयमेतदात्मना
तस्मात्प्रशस्तिर्वपुषोऽस्य जागरे ॥ ९१ ॥

सर्वोऽपि बाह्य ससार पुरुषस्य यदाश्रय ।
विद्धि देहमिद स्थूल गृहवद्गृहमेधिन ॥ ९२ ॥

स्थूलस्य सभवजरामरणानि धर्मा
स्थौल्यादयो बहुविधा शिशुताद्यवस्था ।
वर्णाश्रमादिनियमा बहुधामया स्यु
पूजावमानबहुमानमुखा विशेषा ॥ ९३ ॥

बुद्धीन्द्रियाणि श्रवण त्वगक्षि
घ्राण च जिह्वा विषयावबोधनात् ।
वाक्पाणिपादा गुदमप्युपस्थ
कर्मेन्द्रियाणि प्रवणानि कर्मसु ॥ ९४ ॥

निगद्यतेऽन्त करण मनो धी
रहकृतिश्चित्तमिति स्ववृत्तिभि ।
मनस्तु सकल्पविकल्पनादिभि
र्बुद्धि पदार्थाध्यवसायधर्मत ॥ ९५ ॥

अत्राभिमानादहमित्यहकृति
स्वार्थानुसधानगुणेन चित्तम् ॥ ९६ ॥

प्राणापानव्यानोदानसमाना भवत्यसौ प्राण ।
स्वयमेव वृत्तिभेदाद्विकृतेर्भेदात्सुवर्णसलिलमिव ॥

वागादिपञ्च श्रवणादिपञ्च
प्राणादिपञ्चाभ्रमुखाणि पञ्च ।
बुद्ध्याद्यविद्यापि च कामकर्मणी
पुर्यष्टक सूक्ष्मशरीरमाहु ॥ ९८ ॥

इद शरीर शृणु सूक्ष्मसञ्ज्ञित
लिङ्ग त्वपञ्चीकृतभूतसभवम् ।
सवासन कर्मफलानुभावक
स्वाज्ञानतोऽनादिरुपाधिरात्मन ॥ ९९ ॥

स्वप्नो भवत्यस्य विभक्त्यवस्था
स्वमात्रशेषेण विभाति यत्र ।
स्वप्ने तु बुद्धि स्वयमेव जाग्र
त्कालीननानाविधवासनाभि ।
कर्त्रादिभाव प्रतिपद्य राजते
यत्र स्वयज्योतिरय परात्मा ॥ १०० ॥

धीमात्रकोपाधिरशेषसाक्षी
न लिप्यते तत्कृतकर्मलेपै ।
यस्मादसङ्गस्तत एव कर्मभि
र्न लिप्यते किंचिदुपाधिना कृतै ॥ १०१ ॥

सर्वव्यापृतिकरण लिङ्गमिद स्याच्चिदात्मन पुस ।
वास्यादिकमिव तक्ष्णस्तेनैवात्मा भवत्यसङ्गोऽयम् ॥

अन्धत्वमन्दत्वपटुत्वधर्मा
सौगुण्यवैगुण्यवशाद्धि चक्षुष ।
बाधिर्यमूकत्वमुखास्तथैव
श्रोत्रादिधर्मा न तु वेत्तुरात्मन ॥ १०३ ॥

उच्छ्वासनि श्वासविजृम्भणक्षुत
प्रस्पन्दनाद्युत्क्रमणादिका क्रिया ।
प्राणादिकर्माणि वदन्ति तज्ज्ञा
प्राणस्य धर्मावशनापिपासे ॥ १०४ ॥

अन्त करणमेतेषु चक्षुरादिषु वर्ष्मणि ।
अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥ १०५ ॥

अहकार स विज्ञेय कर्ता भोक्ताभिमान्ययम् ।
सत्त्वादिगुणयोगेनावस्थात्रितयमश्नुते ॥ १०६ ॥

विषयाणामानुकूल्ये सुखी दु खी विपर्यये ।
सुख दु ख च तद्धर्म सदानन्दस्य नात्मन ॥ १०७ ॥

आत्मार्थत्वेन हि प्रेयान्विषयो न स्वत प्रिय ।
स्वत एव हि सर्वेषामात्मा प्रियतमो यत ॥ १०८ ॥

तत आत्मा सदानन्दो नास्य दु ख कदाचन ।
यत्सुषुप्तौ निर्विषय आत्मानन्दोऽनुभूयते ।
श्रुति प्रत्यक्षमैतिह्यमनुमान च जाग्रति ॥ १०९ ॥

अव्यक्तनाम्नी परमेशशक्ति
रनाद्यविद्या त्रिगुणात्मिका परा ।
कार्यानुमेया सुधियैव माया
यया जगत्सर्वमिद प्रसूयते ॥ ११० ॥

सन्नाप्यसन्नाप्युभयात्मिका नो
भिन्नाप्यभिन्नाप्युभयात्मिका नो ।

साङ्गाप्यनङ्गाप्युभयात्मिका नो
महाद्भुतानिर्वचनीयरूपा ॥ १११ ॥

शुद्धाद्वयब्रह्मविबोधनाश्या
सर्पभ्रमो रज्जुविवेकतो यथा ।
रजस्तम सत्त्वमिति प्रसिद्धा
गुणास्तदीया प्रथितै स्वकार्यै ॥ ११२ ॥

विक्षेपशक्ती रजस क्रियात्मिका
यत प्रवृत्ति प्रसृता पुराणी।
रागादयोऽस्या प्रभवन्ति नित्य
दु खादयो ये मनसो विकारा ॥ ११३ ॥

काम क्रोधो लोभदम्भाभ्यसूया
हकारेर्ष्यामत्सराद्यास्तु घोरा ।
धर्मा एते राजसा पुप्रवृत्ति-
र्यस्मादेतत्तद्रजो बन्धहेतु ॥ ११४ ॥

एषावृतिर्नाम तमोगुणस्य
शक्तिर्यया वस्त्ववभासतेऽन्यथा ।

सैषा निदान पुरुषस्य ससृते
विक्षेपशक्ते प्रसरस्य हेतु ॥ ११५ ॥

प्रज्ञावानपि पण्डितोऽपि चतुरोऽप्यत्यन्तसूक्ष्मार्थदृ-
ग्व्यालीढस्तमसा न वेत्ति बहुधा सबोधितोऽपि स्फुटम्।
भ्रान्त्यारोपितमेव साधु कलयत्यालम्बते तद्गुणान्
हन्तासौ प्रबला दुरन्ततमस शक्तिर्महत्यावृति ॥

अभावना वा विपरीतभावना
सभावना विप्रतिपत्तिरस्या ।
ससर्गयुक्त न विमुञ्चति ध्रुव
विक्षेपशक्ति क्षपयत्यजस्रम् ॥ ११७ ॥

अज्ञानमालस्यजडत्वनिद्रा-
प्रमादमूढत्वमुखास्तमोगुणा ।
एतै प्रयुक्तो न हि वेत्ति किंचि
न्निद्रालुवत्स्तम्भवदेव तिष्ठति ॥ ११८ ॥

सत्त्व विशुद्ध जलवत्तथापि
ताभ्या मिलित्वा सरणाय कल्पते ।

यत्रात्मबिम्ब प्रतिबिम्बित स
न्प्रकाशयत्यर्क इवाखिल जडम् ॥ ११९ ॥

मिश्रस्य सत्त्वस्य भवन्ति धर्मा
स्त्वमानिताद्या नियमा यमाद्या ।
श्रद्धा च भक्तिश्च मुमुक्षुता च
दैवी च सपत्तिरसन्निवृत्ति ॥ १२० ॥

विशुद्धसत्त्वस्य गुणा प्रसाद
स्वात्मानुभूति परमा प्रशान्ति ।
तृप्ति प्रहर्ष परमात्मनिष्ठा
यया सदानन्दरस समृच्छति ॥ १२१ ॥

अव्यक्तमेतत्त्रिगुणैर्निरुक्त
तत्कारण नाम शरीरमात्मन ।
सुषुप्तिरेतस्य विभक्त्यवस्था
प्रलीनसर्वेन्द्रियबुद्धिवृत्ति ॥ १२२ ॥

सर्वप्रकारप्रमितिप्रशान्ति-
र्बीजात्मनावस्थितिरेव बुद्धे ।

सुषुप्तिरत्रास्य किल प्रतीति
किंचिन्न वेद्मीति जगत्प्रसिद्धे ॥ १२३ ॥

देहेन्द्रियप्राणमनोहमादय
सर्वे विकारा विषया सुखादय ।
व्योमादिभूतान्यखिल च विश्व-
मव्यक्तपर्यन्तमिद ह्यनात्मा ॥ १२४ ॥

माया मायाकार्यं सर्वं महदादि देहपर्यन्तम् ।
असदिदमनात्मतत्त्व विद्धि त्व मरुमरीचिकाकल्पम् ॥

अथ ते सप्रवक्ष्यामि स्वरूप परमात्मन ।
यद्विज्ञाय नरो बन्धान्मुक्त कैवल्यमश्नुते ॥ १२६ ॥

अस्ति कश्चित्स्वय नित्यमहप्रत्ययलम्बन ।
अवस्थात्रयसाक्षी सन्पञ्चकोशविलक्षण ॥ १२७ ॥

यो विजानाति सकल जाग्रत्स्वप्नसुषुप्तिषु ।
बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥ १२८ ॥

य पश्यति स्वय सर्वं य न व्याप्नोति किंचन ।
यश्चेतयति बुद्ध्यादि न तद्य चेतयत्ययम् ॥ १२९ ॥

येन विश्वमिद व्याप्त य न व्याप्नोति किंचन ।
अभारूपमिद सर्व य भान्तमनुभात्ययम् ॥ १३० ॥

यस्य सनिधिमात्रेण देहेन्द्रियमनोधिय ।
विषयेषु स्वकीयेषु वर्तन्ते प्रेरिता इव ॥ १३१ ॥

अहकारादिदेहान्ता विषयाश्च सुखादय ।
वेद्यन्ते घटवद्येन नित्यबोधस्वरूपिणा ॥ १३२ ॥

एषोऽन्तरात्मा पुरुष पुराणो
निरन्तराखण्डसुखानुभूति ।
सदैकरूप प्रतिबोधमात्रो
येनेषिता वागसवश्चरन्ति ॥ १३३ ॥

अत्रैव सत्त्वात्मनि धीगुहाया
मव्याकृताकाश उरुप्रकाश ।
आकाश उच्चै रविवत्प्रकाशते
स्वतेजसा विश्वमिद प्रकाशयन् ॥ १३४ ॥

ज्ञाता मनोहकृतिविक्रियाणा
देहेन्द्रियप्राणकृतक्रियाणाम् ।

अयोग्निवत्तानतु वर्तमानो
न चेष्टते नो विकरोति किंचन ॥ १३५ ॥

न जायते नो म्रियते न वर्धते
न क्षीयते नो विकरोति नित्य ।
विलीयमानेऽपि वपुष्यमुष्मि
न्न लीयते कुम्भ इवाम्बर स्वयम् ॥ १३६ ॥

प्रकृतिविकृतिभिन्न शुद्धबोधस्वभाव
सदसदिदमशेष भासयन्निर्विशेष ।
विलसति परमात्मा जाग्रदादिष्ववस्था-
स्वहमहमिति साक्षात्साक्षिरूपेण बुद्धे ॥ १३७ ॥

नियमितमनसामु त्व स्वमात्मानमात्म
न्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ।
जनिमरणतरङ्गापारससारसिन्धु
प्रतर भव कृतार्थो ब्रह्मरूपेण सस्थ ॥ १३८ ॥

अनात्मन्यहमिति मतिर्बन्ध एषोऽस्य पुस
प्राप्तोऽज्ञानाज्जननमरणक्लेशसपातहेतु ।

सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७० ॥

घटत्वेन यथा पृथ्वी पटत्वेनैव तन्तवः ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७१ ॥

कनकं कुण्डलत्वेन तरङ्गत्वेन वै जलम् ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७२ ॥

पुरुषत्वेन वै स्थाणुर्जलत्वेन मरीचिका ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७३ ॥

गृहत्वेनैव काष्ठानि खड्गत्वेनैव लोहता ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७४ ॥

यथा वृक्षविपर्यासो जलाद्भवति कस्यचित् ।
तद्वदात्मनि हेहत्वं पश्यत्यज्ञानयोगतः ॥ ६५ ॥

पोतेन गच्छतः पुंसः सर्वं भातीव चञ्चलम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७६ ॥

पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७७ ॥

चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७८ ॥

अलातं भ्रमणेनैव वर्तुलं भाति सूर्यवत् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७९ ॥

महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८० ॥

सूक्ष्मत्वे सर्ववस्तूनां स्थूलत्वं चोपनेत्रतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८१ ॥

काचभूमौ जलत्वं वा जलभूमौ हि काचता ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८२ ॥

यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८३ ॥

अभ्रेषु सत्सु धावत्सु धावन्निव यथा शशी ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८४ ॥

यथैव दिग्विपर्यासो मोहाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८५ ॥

यथा शशी जले भाति चञ्चलत्वेन कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८६ ॥

एवमात्मनि नज्ञाते देहाध्यासो हि जायते ।
स एवात्मा परिज्ञातो लीयते च परात्मनि ॥ ८७ ॥

सर्वमात्मतया ज्ञातं जगत्स्थावरजङ्गमम् ।
अभावात्सर्वभावानां देहानां चात्मता कुतः ॥ ८८ ॥

आत्मानं सततं जानन्कालं नय महामते ।
प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि ॥ ८९ ॥

उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुञ्चति ।
इति यच्छ्रूयते शास्त्रात्तन्निराक्रियतेऽधुना ॥ ९० ॥

तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ।
देहादीनामसत्यत्वाद्यथा स्वप्नः प्रबोधतः ॥ ९१ ॥

कर्म जन्मान्तरकृतं प्रारब्धमिति कीर्तितम् ।
तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ॥ ९२ ॥

स्वप्नदेहो यथाध्यस्तस्तथैवायं हि देहकः ।
अध्यस्तस्य कुतो जन्म जन्माभावे स्थितिः कुतः ॥ ९३ ॥

उपादानं प्रपञ्चस्य मृद्भाण्डस्येव कथ्यते ।
अज्ञानं चैव वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ॥ ९४ ॥

यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।
तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥

रज्जुरूपे परिज्ञाते सर्पभ्रान्तिर्न तिष्ठति ।
अधिष्ठाने तथा ज्ञाते प्रपञ्चः शून्यतां व्रजेत् ॥ ९६ ॥

देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ।
अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥ ९७ ॥

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।
बहुत्वं तन्निषेधार्थं श्रुत्या गीतं च वै स्फुटम् ॥ ९८ ॥

उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः ।
वेदान्तमतहानं च यतो ज्ञानमिति श्रुतिः ॥ ९९ ॥

त्रिपञ्चाङ्गान्यथो वक्ष्ये पूर्वोक्तस्यैव सिद्धये ।
तैश्च सर्वैः सदा कार्यं निदिध्यासनमेव तु ॥ १०० ॥

नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदात्मनः ।
तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥ १०१ ॥

यमो हि नियमस्त्यागो मौनं देशश्च कालतः ।
आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १०२ ॥

प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥१०३॥

सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १०४ ॥

सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ १०५ ॥

त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ १०६ ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भजेत्सर्वदा बुधः ॥ १०७ ॥

वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥ १०८ ॥

इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् ।
गिरा मौनं तु बालानां प्रयुक्तं ब्रह्मवादिभिः ॥ १०९ ॥

आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥ ११० ॥

कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः ॥ १११ ॥

सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥ ११२ ॥

सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् ।
यस्मिन्सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ ११३ ॥

यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनम् ।
मूलबन्धः सदा सेव्यो योगोऽसौ राजयोगिनाम् ॥११४॥

अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते ।
नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ ११५ ॥

दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकनी ॥ ११६ ॥

द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकनी ॥ ११७ ॥

चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ११८ ॥

निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः ।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥ ११९ ॥

ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।
अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥ १२० ॥

विषयेष्वात्मतां दृष्ट्वा मनसश्चिति मज्जनम् ।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥ १२१ ॥

यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।
मनसो धारणायैव धारणा सा परा मता ॥ १२२ ॥

ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥ १२३ ॥

निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिर्ज्ञानसंज्ञकः ॥ १२४ ॥

एवं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ।
वश्यो यावत्क्षणात्पुंसः प्रयुक्तः स भवेत्स्वयम् ॥ १२५ ॥

ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
तत्स्वरूपं न चैकस्य विषयो मनसो गिराम् ॥ १२६ ॥

समाधौ क्रियमाणे तु विघ्ना आयान्ति वै बलात् ।
अनुसंधानराहित्यमालस्यं भोगलालसम् ॥ १२७ ॥

लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता ।
एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥ १२८ ॥

भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।
ब्रह्मवृत्त्या हि पूर्णत्वं तथा पूर्णत्वमभ्यसेत् ॥ १२९ ॥

ये हि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ।
वृथैव ते तु जीवन्ति पशुभिश्च समा नराः ॥ १३० ॥

ये हि वृत्तिं विजानन्ति ये ज्ञात्वा वर्धयन्त्यपि ।
ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥ १३१ ॥

येषां वृत्तिः समावृद्धा परिपक्वा च सा पुनः ।
ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ १३२ ॥

कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।
तेऽप्यज्ञानितमा नूनं पुनरायान्ति यान्ति च ॥ १३३ ॥

निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ १३४ ॥

कार्ये कारणतायाता कारणे न हि कार्यता ।
कारणत्वं स्वतो गच्छेत्कार्याभावे विचारतः ॥ १३५ ॥

अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरः ।
द्रष्टव्यं मृद्घटेनैव दृष्टान्तेन पुनः पुनः ॥ १३६ ॥

अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् ।
उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ १३७ ॥

कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ।
अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥ १३८ ॥

कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् ।
कारणत्वं स्वतो नश्येदवशिष्टं भवेन्मुनिः ॥ १३९ ॥

भावितं तीव्रवेगेण वस्तु यन्निश्चयात्मना ।
पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ १४० ॥

अदृश्यं भावरूपं च सर्वमेतच्चिदात्मकम् ।
सावधानतया नित्यं स्वात्मानं भावयेद्बुधः ॥ १४१ ॥

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।
विद्वान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ १४२ ॥

एभिरङ्गैः समायुक्तो राजयोग उदाहृतः ।
किंचित्पक्वकषायाणां हठयोगेन संयुतः ॥ १४३ ॥

परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः ।
गुरुदैवतभक्तानां सर्वेषां सुलभो जवात् ॥ १४४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**अपरोक्षानुभूतिः समाप्ता ॥**

॥ श्रीः ॥

# ॥ वाक्यवृत्तिः ॥

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं
विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं
श्रीवल्लभं विमलबोधघनं नमामि ॥ १ ॥

यस्य प्रसादादहमेव विष्णु-
र्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं
तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २ ॥

तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः ।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३ ॥

अनायासेन येनास्मान्मुच्येय भवबन्धनात् ।
तन्मे संक्षिप्य भगवन्केवलं कृपया वद ॥ ४ ॥

साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते ।
इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥

तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६ ॥

को जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः ।
तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥

अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि ।
यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि न संशयः ॥ ८ ॥

पदार्थमेव जानामि नाद्यापि भगवन्स्फुटम् ।
अहं ब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥

सत्यमाह भवानत्र विगानं नैव विद्यते ।
हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १० ॥

अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः ।
आनन्दरूपः सत्यः सन्किं नात्मानं प्रपद्यसे ॥ ११ ॥

सत्यानन्दस्वरूपं धीसाक्षिणं ज्ञानविग्रहम् ।
चिन्तयात्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२ ॥

रूपादिमान्यतः पिण्डस्ततो नात्मा घटादिवत् ।
वियदादिमहाभूतविकारत्वाच्च कुम्भवत् ॥ १३ ॥

अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः ।
करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४ ॥

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।
देहद्रष्टा तथा देहो नाहमित्यवधारय ॥ १५ ॥

एवमिन्द्रियदृङ् नाहमिन्द्रियाणीति निश्चिनु ।
मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६ ॥

संघातोऽपि तथा नाहमिति दृश्यविलक्षणम् ।
द्रष्टारमनुमानेन निपुणं संप्रधारय ॥ १७ ॥

देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ।
यस्य संनिधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥

अनापन्नविकारः सन्नयस्कान्तवदेव यः ।
बुद्ध्यादींश्चालयेत्प्रत्यक्सोऽहमित्यवधारय ॥ १९ ॥

अजडात्मवदाभान्ति यत्सांनिध्याज्जडा अपि ।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २० ॥

अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् ।
एवं यो वेद धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥

स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा ।
यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२ ॥

घटावभासको दीपो घटादन्यो यथेष्यते ।
देहावभासको देही तथाहं बोधविग्रहः ॥ २३ ॥

पुत्रवित्तादयो भावा यस्य शेषतया प्रियाः ।
द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय ॥ २४ ॥

परप्रेमास्पदतया मा न भूवमहं सदा ।
भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥

यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते ।
साक्षित्वमपि बोद्धृत्वमविकारितयात्मनः ॥ २६ ॥

देहेन्द्रियमनःप्राणाहंकृतिभ्यो विलक्षणः ।
प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः ॥ २७ ॥

त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८ ॥

निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः ।
अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥

निरस्तातिशयानन्दः सत्यः प्रज्ञानविग्रहः ।
सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते ॥ ३० ॥

सर्वज्ञत्वं परेशत्वं तथा संपूर्णशक्तिता ।
वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१ ॥

यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ।
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ॥ ३२ ॥

यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ ।
तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥ ३३ ॥

विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः ।
समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४ ॥

जीवात्मना प्रवेशश्च नियन्तृत्वं च तान्प्रति ।
श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ॥ ३५ ॥

कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ ।
जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६ ॥

तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना ।
तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥ ३७ ॥

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥

प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९ ॥

इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४० ॥

तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥

तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने ।
लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥ ४२ ॥

हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने ।
यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥

आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।
अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४ ॥

मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥

प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।
विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ४६ ॥

मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥

तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥

अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।
शमादिसहितस्तावदभ्यस्येच्छ्रवणादिकम् ॥ ४९ ॥

श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् ।
निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥ ५० ॥

विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः ।
विमुक्तकर्मनिगलः सद्य एव विमुच्यते ॥ ५१ ॥

प्रारब्धकर्मवेगेण जीवन्मुक्तो यदा भवेत् ।
किंचित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२ ॥

निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥ ५३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
वाक्यवृत्तिः समाप्ता ॥

॥ श्रीः ॥

# ॥ स्वात्मनिरूपणम् ॥

---

श्रीगुरुचरणद्वन्द्वं वन्देऽहं मथितदुःसहद्वन्द्वम् ।
भ्रान्तिग्रहोपशान्तिं पांसुमयं यस्य भसितमातनुते ॥ १ ॥

देशिकवरं दयालुं वन्देऽहं निहतनिखिलसंदेहम् ।
यच्चरणद्वयमद्वयमनुभवमुपदिशति तत्पदस्यार्थम् ॥ २ ॥

संसारदावपावकसंतप्तः सकलसाधनोपेतः ।
स्वात्मनिरूपणनिपुणैर्वाक्यैः शिष्यः प्रबोध्यते गुरुणा ॥

अस्ति स्वयमित्यस्मिन्नर्थे कस्यास्ति संशयः पुंसः ।
अत्रापि संशयश्चेत्संशयिता यः स एव भवसि त्वम् ॥

नाहमिति वेत्ति योऽसौ सत्यं ब्रह्मैव वेत्ति नास्तीति ।
अहमस्मीति विजानन्ब्रह्मैवासौ स्वयं विजानाति ॥ ५ ॥

ब्रह्म त्वमेव तस्मान्नाहं ब्रह्मेति मोहमात्रमिदम् ।
मोहेन भवति भेदः क्लेशाः सर्वे भवन्ति तन्मूलाः ॥ ६ ॥

न क्लेशपञ्चकमिदं भजते कृतकोशपञ्चकविवेकः ।
अत एव पञ्च कोशान्कुशलधियः संततं विचिन्वन्ति ॥

अन्नप्राणमनोमयविज्ञानानन्दपञ्चकोशानाम् ।
एकैकान्तरभाजां भजति विवेकात्प्रकाशतामात्मा ॥ ८ ॥

वपुरिदमन्नमयाख्यः कोशो नात्मा जडो घटप्रायः ।
प्रागुत्पत्तेः पश्चात्तदभावस्यापि दृश्यमानत्वात् ॥ ९ ॥

कोशः प्राणमयोऽयं वायुविशेषो वपुष्यवच्छिन्नः ।
अस्य कथमात्मता स्यात्क्षुत्तृष्णाभ्यामुपेयुषः पीडाम् ॥

कुरुते वपुष्यहंतां गेहादौ यः करोति ममतां च ।
रागद्वेषविधेयो नासावात्मा मनोमयः कोशः ॥ ११ ॥

सुप्तौ स्वयं विलीना बोधे व्याप्ता कलेबरं सकलम् ।
विज्ञानशब्दवाच्या चित्प्रतिबिम्बो न बुद्धिरप्यात्मा ॥

सुप्तिगतैः सुखलेशैरभिमनुते यः सुखी भवामीति ।
आनन्दकोशनामा सोऽहंकारः कथं भवेदात्मा ॥ १३ ॥

यः स्फुरति बिम्बभूतः स भवेदानन्द एव सकलात्मा ।
प्रागूर्ध्वमपि च सत्त्वादविकारित्वादबाध्यमानत्वात् ॥

अन्नमयादेरस्मादपरं यदि नानुभूयते किंचित् ।
अनुभवितान्नमयादेरस्तीत्यस्मिन्न कश्चिदपलापः ॥ १५ ॥

स्वयमेवानुभवत्वाद्यद्यप्येतस्य नानुभाव्यत्वम् ।
सकृदप्यभावशङ्का न भवेद्बोधस्वरूपसत्तायाः ॥ १६ ॥

अनुभवति विश्वमात्मा विश्वेनासौ न चानुभूयेत ।
न खलु प्रकाश्यतेऽसौ विश्वमशेषं प्रकाशयन्भानुः ॥

तदिदं तादृशमीदृशमेतावत्तावदिति च यन्न भवेत् ।
ब्रह्म तदित्यवधेयं नो चेद्विषयो भवेत्परोक्षं च ॥ १८ ॥

इदमिदमिति प्रतीते वस्तुनि सर्वत्र बाध्यमानेऽपि ।
अनिदमबाध्यं तत्त्वं सत्त्वादेतस्य न च परोक्षत्वम् ॥

नावेद्यमपि परोक्षं भवति ब्रह्म स्वयंप्रकाशत्वात् ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्येतस्य लक्षणं प्रथते ॥ २० ॥

सति कोशशक्त्युपाधौ संभवतस्तस्य जीवतेश्वरते ।
नो चेत्तयोरभावाद्विगतविशेषं विभाति निजरूपम् ॥

सति सकलदृश्यबाधे न किमप्यस्तीति लोकसिद्धं चेत् ।
यन्न किमपीति सिद्धं ब्रह्म तदेवेति वेदतः सिद्धम् ॥ २२ ॥

एवं मतिरहितानां तत्त्वमसीत्यादिवाक्यचिन्तनया ।
प्रतिभात्येष परोक्षवदात्मा प्रत्यक्प्रकाशमानोऽपि ॥ २३ ॥

तस्मात्पदार्थशोधनपूर्वं वाक्यस्य चिन्तयन्नर्थम् ।
देशिकदयाप्रभावादपरोक्षयति क्षणेन चात्मानम् ॥ २४ ॥

देहेन्द्रियादिधर्मानात्मन्यारोपयन्नभेदेन ।
कर्तृत्वाद्यभिमानी बोधः स्यात्त्वंपदस्य वाच्योऽर्थः ॥

देहस्य चेन्द्रियाणां साक्षी तेभ्यो विलक्षणत्वेन ।
प्रतिभाति योऽवबोधः प्रोक्तोऽसौ त्वंपदस्य लक्ष्योऽर्थः ॥

वेदावसानवाचा संवेद्यं सकलजगदुपादानम् ।
सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योऽर्थः ॥ २७ ॥

विविधोपाधिविमुक्तं विश्वातीतं विशुद्धमद्वैतम् ।
अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योऽर्थः ॥ २८ ॥

सामानाधिकरण्यं तदनु विशेषणविशेष्यता चेति ।
अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मनां च संबन्धः ॥

एकत्र वृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनाम् ।
सामानाधिकरण्यं भवतीत्येवं वदन्ति लाक्षणिकाः ॥ ३० ॥

प्रत्यक्त्वपरोक्षत्वे परिपूर्णत्वं च सद्वितीयत्वम् ।
इतरेतरं विरुद्धं तत इह भवितव्यमेव लक्षणया ॥ ३१ ॥

मानान्तरोपरोधान्मुख्यार्थस्यापरिग्रहे जाते ।
मुख्याविनाकृतेऽर्थे या वृत्तिः सैव लक्षणा प्रोक्ता ॥ ३२ ॥

निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे ।
जहतीति लक्षणा स्याद्गङ्गायां घोषवदिह न ग्राह्या ॥

वाच्यार्थमत्यजन्त्या यस्या वृत्तेः प्रवृत्तिरन्यार्थे ।
इयमजहतीति कथिता शोणो धावतिवदत्र न ग्राह्या ॥

जहदजहतीति सा स्याद्या वाच्यार्थैकदेशमपहाय ।
बोधयति चैकदेशं सोऽयं द्विज इतिवदाश्रयेदेनाम् ॥

सोऽयं द्विज इति वाक्यं त्यक्त्वा प्रत्यक्परोक्षदेशाद्यम् ।
द्विजमात्रलक्षकत्वात्कथयत्यैक्यं पदार्थयोरुभयोः ॥ ३६ ॥

तद्वत्तत्त्वमसीति त्यक्त्वा प्रत्यक्परोक्षतादीनि ।
चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदेनैक्यम् ॥

इत्थं बोधितमर्थं महता वाक्येन दर्शितैक्येन ।
अहमित्यपरोक्षयतां वेदो वेदयति वीतशोकत्वम् ॥ ३८ ॥

प्रायः प्रवर्तकत्वं विधिवचसां लोकवेदयोर्दृष्टम् ।
सिद्धं बोधयतोऽर्थं कथमिव तद्भवति तत्त्वमस्यादेः ॥

विधिरेव न प्रवृत्तिं जनयत्यभिलषितवस्तुबोधोऽपि ।
राजा याति सुतोऽभूदिति बोधेन प्रवर्तते लोकः ॥ ४० ॥

ऐक्यपरैः श्रुतिवाक्यैरात्मा शश्वत्प्रकाश्यमानोऽपि ।
देशिकदयाविहीनैरपरोक्षयितुं न शक्यते पुरुषैः ॥ ४१ ॥

विरहितकाम्यनिषिद्धो विहितानुष्ठाननिर्मलस्वान्तः ।
भजति निजमेव बोधं गुरुणा किमिति त्वया न मन्तव्यम् ॥

कर्मभिरेव न बोधः प्रभवति गुरुणा विना दयानिधिना ।
आचार्यवान्हि पुरुषो वेदेत्यर्थस्य वेदसिद्धत्वात् ॥ ४३ ॥

वेदोऽनादितया वा यद्वा परमेश्वरप्रणीततया ।
भवति परमं प्रमाणं बाधो नास्ति स्वतश्च परतो वा ॥

नापेक्षते यदन्यद्यदपेक्षन्तेऽखिलानि मानानि ।
वाक्यं तन्निगमानां मानं ब्रह्माद्यतीन्द्रियावगतौ ॥ ४५ ॥

मानं प्रबोधयन्तं बोधं मानेन ये बुभुत्सन्ते ।
एधोभिरेव दहनं दग्धुं वाञ्छन्ति ते महात्मानः ॥ ४६ ॥

वेदोऽनादिरमुष्य व्यञ्जक ईशः स्वयंप्रकाशात्मा ।
तदभिव्यक्तिमुदीक्ष्य प्रोक्तोऽसौ सूरिभिः प्रमाणमिति ॥

रूपाणामवलोके चक्षुरिवान्यन्न कारणं दृष्टम् ।
तद्वददृष्टावगतौ वेदवदन्यो न वेदको हेतुः ॥ ४८ ॥

निगमेषु निश्चितार्थं तन्त्रे कश्चिद्यदि प्रकाशयति ।
तदिदमनुवादमात्रं प्रामाण्यं तस्य सिध्यति न किंचित् ॥

अंशद्वयवति निगमे साधयति द्वैतमेव कोऽप्यंशः ।
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंऽशः ॥ ५० ॥

अद्वैतमेव सत्यं तस्मिन्द्वैतं न सत्यमध्यस्तम् ।
रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥

आरोपितं यदि स्यादद्वैतं वस्त्ववस्तुनि द्वैते ।
तदयुक्तमेव यस्मात्सत्येऽध्यासो भवत्यसत्यानाम् ॥ ५२ ॥

यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावात् ।
आरोपणं न शून्ये तस्मादद्वैतसत्यता ग्राह्या ॥ ५३ ॥

प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ।
द्वैतं न प्रतिपाद्यं तस्य स्वत एव लोकसिद्धत्वात् ॥ ५४ ॥

अद्वैतं सुखरूपं दुःसहदुःखं सदा भवेद्द्वैतम् ।
यत्र प्रयोजनं स्यात्प्रतिपादयति श्रुतिस्तदेवासौ ॥ ५५ ॥

निगमगिरा प्रतिपाद्यं वस्तु यदानन्दरूपमद्वैतम् ।
स्वाभाविकं स्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ ५६ ॥

स्वाभाविकं यदि स्याज्जीवत्वं तस्य विशदविज्ञप्तेः ।
सकृदपि न तद्विनाशं गच्छेदुष्णप्रकाशवद्वह्नेः ॥ ५७ ॥

यद्वदयो रसविद्धं काञ्चनतां याति तद्वदेवासौ ।
जीवः साधनशक्त्या परतां यातीति केचिदिच्छन्ति ॥

तदिदं भवति न युक्तं गतवति तस्मिंश्चिरेण रसवीर्ये ।
प्रतिपद्यते प्रणाशं हैमो वर्णोऽप्ययःसमारूढः ॥ ५९ ॥

जीवत्वमपि तथेदं बहुविधसुखदुःखलक्षणोपेतम् ।
गतमिव साधनशक्त्या प्रतिभात्येव प्रयाति न विनाशम् ॥

तस्मात्स्वतो यदि स्याज्जीवः सततं स एव जीवः स्यात् ।
एवं यदि परमात्मा परमात्मैवायमिति भवेद्युक्तम् ॥

यदि वा परेण साम्यं जीवश्चेद्व्रजति साधनबलेन ।
कालेन तदपि कियता नश्यत्येवेति निश्चितं सकलैः ॥

तस्मात्परं स्वकीयं देहं मोहात्मकं च संसारम् ।
स्वज्ञानेन ग्रसित्वा पूर्णः स्वयमेव शिष्यते नान्यत् ॥

सत्यं ज्ञानमनन्तं प्रकृतं परमात्मरूपमद्वैतम् ।
अवबोधयन्ति निखिलाः श्रुतयः स्मृतिभिः समं समस्ताभिः॥

अद्वैतबोधकानां निखिलानां निगमवाक्यजालानाम् ।
वाक्यान्तराणि सकलान्यभिधीयन्तेऽस्य शेषभूतानि ॥

यस्मिन्मिहिरवदुदिते तिमिरवदपयान्ति कर्तृतादीनि ।
ज्ञानं विरहितभेदं कथमिव तद्भवति तत्त्वमस्यादेः ॥

कर्मप्रकरणनिष्ठं ज्ञानं कर्माङ्गमिष्यते प्राज्ञैः ।
भिन्नप्रकरणभाजः कर्माङ्गत्वं कथं भवेज्ज्ञप्तेः ॥ ६७ ॥

अधिकारिविषयभेदौ कर्मज्ञानात्मकावुभौ काण्डौ ।
एवं सति कथमनयोरङ्गाङ्गित्वं परस्परं घटते ॥ ६८ ॥

ज्ञानं कर्मणि न स्याज्ज्ञाने कर्मेदमपि तथा न स्यात् ।
तत्कथमनयोरुभयोस्तपनतमोवत्समुच्चयो घटते ॥ ६९ ॥

तस्मान्मोहनिवृत्तौ ज्ञानं न सहायमन्यदर्थयते ।
यद्वद्घनतरतिमिरप्रकरपरिध्वंसने सहस्रांशुः ॥ ७० ॥

ज्ञानं तदेवममलं साक्षी विश्वस्य भवति परमात्मा ।
संबध्यते न धर्मैः साक्षी तैरेव सच्चिदानन्दः ॥ ७१ ॥

रज्ज्वादेरुरगाद्यैः संबन्धवदस्य दृश्यसंबन्धः ।
सततमसङ्गोऽयमिति श्रुतिरप्यमुमर्थमेव साधयति ॥

कर्तृ च कर्म च यस्य स्फुरति ब्रह्मैव तन्न जानाति ।
यस्य न कर्तृ न कर्म स्फुटतरमयमेव वेदितुं क्रमते ॥

कर्तृत्वादिकमेतन्मायाशक्त्या प्रपद्यते निखिलम् ।
इति केचिदाहुरेषा भ्रान्तिर्ब्रह्मातिरेकतो नान्यत् ॥ ७४ ॥

तस्मिन्ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम् ।
कारणमृदि विदितायां घटकरकाद्या यथावगम्यन्ते ॥

तदिदं कारणमेकं विगतविशेषं विशुद्धचिद्रूपम् ।
तस्मात्सदेकरूपान्मायोपहितादभूदिदं विश्वम् ॥ ७६ ॥

कारणमसदिति केचित्कथयन्त्यसतो भवेन्न कारणता ।
अङ्कुरजननी शक्तिः सति खलु बीजे समीक्ष्यते सकलैः ॥

कारणमसदिति कथयन्वन्ध्यापुत्रेण निर्वहेत्कार्यम् ।
किं च मृगतृष्णिकाम्भः पीत्वोदन्यां महीयसीं शमयेत् ॥

यस्मान्न सोऽयमसतो वादः संभवति शास्त्रयुक्तिभ्याम् ।
तस्मात्सदेव तत्त्वं सर्वेषां भवति कारणं जगताम् ॥ ७९ ॥

जगदाकारतयापि प्रथते गुरुशिष्यविग्रहतयापि ।
ब्रह्माकारतयापि प्रतिभातीदं परात्परं तत्त्वम् ॥ ८० ॥

सत्यं जगदिति भानं संसृतये स्यादपक्वचित्तानाम् ।
तस्मादसत्यमेतन्निखिलं प्रतिपादयन्ति निगमान्ताः ॥

परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः ।
ब्रह्मैवेदं सर्वं जगदिति भूयः प्रबोधयत्येषः ॥ ८२ ॥

अनवगतकाञ्चनानां भूषणधीरेव भूषणे हैमे ।
एवमविवेकभाजां जगति जनानां न तात्त्विकी धिषणा ॥

अहमालम्बनसिद्धं कस्य परोक्षं भवेदिदं ब्रह्म ।
तदपि विचारविहीनैरपरोक्षयितुं न शक्यते मुग्धैः ॥

अहमिदमिति च मतिभ्यां सततं व्यवहरति सर्वलोकोऽपि ।
प्रथमा प्रतीचि चरमा निवसति वपुरिन्द्रियादिबाह्यार्थे ॥

वपुरिन्द्रियादिविषये याहंबुद्धिर्महत्यसौ भ्रान्तिः ।
तद्बुद्धिरतस्मिन्नित्यध्यासत्वेन शास्यमानत्वात् ॥ ८६ ॥

तस्मादशेषसाक्षी परमात्मैवाहमर्थ इत्युचितम् ।
अजडवदेव जडोऽयं सत्संबन्धाद्भवत्यहंकारः ॥ ८७ ॥

तस्मात्सर्वशरीरेष्वहमहमित्येव भासते स्पष्टः ।
यः प्रत्ययो विशुद्धस्तस्य ब्रह्मैव भवति मुख्योऽर्थः ॥ ८८ ॥

गोशब्दार्थो गोत्वं तदपि व्यक्तिः प्रतीयतेऽर्थतया ।
अहमर्थः परमात्मा तद्वद्भ्रान्त्या भवत्यहंकारः ॥ ८९ ॥

दग्धृत्वादिकमयसः पावकसङ्गेन भासते यद्वत् ।
तद्वच्चेतनसङ्गादहमि प्रतिभान्ति कर्तृतादीनि ॥ ९० ॥

देहेन्द्रियादिदृश्यव्यतिरिक्तं विमलमतुलमद्वैतम् ।
अहमर्थ इति विदित्वा तद्व्यतिरिक्तं न कल्पयेत्किंचित् ॥

यद्वत्सुखदुःखानामवयवभेदादनेकता देहे ।
तद्वदिहासति भेदेऽप्यनुभववैविध्यमात्मनामेषाम् ॥ ९२ ॥

किमिदं किमस्य रूपं कथमिदमासीदमुष्य को हेतुः ।
इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ॥

दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ।
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते ॥

आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् ।
स्वयमेव केवलमसौ पश्यन्प्रमुदं प्रयाति परमात्मा ॥ ९५ ॥

चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् ।
ब्रह्मैवास्ति तदन्यन्न किमप्यस्तीति निश्चयो विदुषाम् ॥

व्यवहारस्य दशेयं विद्याविद्येति भेदपरिभाषा ।
नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव नान्यदस्त्यस्मात् ॥ ९७ ॥

अस्त्यन्यदिति मतं चेत्तदपि ब्रह्मैतदस्तितारूपम् ।
व्यतिरिक्तमस्तितायां नास्तितया शून्यमेव तत्सिद्धम् ॥

तत्त्वावबोधशक्त्या सुस्थितया बाधितापि सा माया ।
आदेहपातमेषामाभात्यात्मानमपि निजं विदुषाम् ॥ ९९ ॥

एष विशेषो विदुषां पश्यन्तोऽपि प्रपञ्चसंसारम् ।
पृथगात्मनो न किंचित्पश्येयुः सकलनिगमनिर्णीतात् ॥

किं चिन्त्यं किमचिन्त्यं किं कथनीयं किमप्यकथनीयम् ।
किं कृत्यं किमकृत्यं निखिलं ब्रह्मेति जानतां विदुषाम् ॥

निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां विदुषाम् ।
बन्धो नापि न मुक्तिर्न परात्मत्वं न चापि जीवत्वम् ॥

असकृदनुचिन्तितानामव्याहततरनिजोपदेशानाम् ।
प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम् ॥

इति बोधितः स गुरुणा शिष्यो हृष्टः प्रणम्य तं पदयोः ।
स्वानुभवसिद्धमर्थं स्वयमेवान्तर्विचारयामास ॥ १०४ ॥

अजरोऽहमक्षरोऽहं प्राज्ञोऽहं प्रत्यगात्मबोधोऽहम् ।
परमानन्दमयोऽहं परमशिवोऽहं भवामि परिपूर्णः ॥

आद्योऽहमात्मभाजामात्मानन्दानुभूतिरसिकोऽहम् ।
आबालगोपमखिलैरहमित्यनुभूयमानमहिमाहम् ॥ १०६ ॥

इहपरसुखविमुखोऽहं निजसुखबोधानुभूतिभरितोऽहम् ।
इतिमतिदूरतरोऽहं भावेतरसुखनिषक्तचित्तोऽहम् ॥

ईशोऽहमीश्वराणामीर्ष्याद्वेषानुषङ्गरहितोऽहम् ।
ईक्षणविषयमतीनामीप्सितपुरुषार्थसाधनपरोऽहम् ॥

उदयोऽहमेव जगतामुपनिषदुद्यानकृतविहारोऽहम् ।
उद्वेलशोकसागरबाडबमुखहव्यवाहनार्चिरहम् ॥ १०९ ॥

ऊर्जस्वलनिजविभवैरूर्ध्वमधस्तिर्यगश्नुवानोऽहम् ।
ऊहापोहविचारैरुररीकृतवत्प्रतीयमानोऽहम् ॥ ११० ॥

ऋषिरहमृष्यगणोऽहं द्रष्टिरहं दृश्यमानमहमेव ।
ऋद्धिरहं वृद्धिरहं तृप्तिरहं तृप्तिदीपदीप्तिरहम् ॥ १११ ॥

एकोऽहमेतदीदृशमेवमितिस्फुरितभेदरहितोऽहम् ।
एष्टव्योऽहमनीहैरन्तः सुकृतानुभूतिभूतोऽहम् ॥ ११२ ॥

ऐक्यावभासकोऽहं वाक्यपरिज्ञानपावनमतीनाम् ।
ऐशमहमेव तत्त्वं नैशतमःप्रायमोहमिहिरोऽहम् ॥ ११३ ॥

ओजोऽहमोषधीनामोतप्रोतायमानभुवनोऽहम् ।
ओंकारसारसोल्लसदात्मसुखामोदमत्तभृङ्गोऽहम् ॥ ११४ ॥

औषधमहमशुभानामौपाधिकधर्मजालरहितोऽहम् ।
औदार्यातिशयोऽहं विविधचतुर्वर्गवितरणपरोऽहम् ॥

अङ्कुशमहमखिलानां महत्तया मत्तवारणेन्द्राणाम् ।
अम्बरमिव विमलोऽहं शम्बररिपुजातविकृतिरहितोऽहम् ॥

अस्तविकल्पमतीनामस्खलदुपदेशगम्यमानोऽहम् ।
अस्थिरसुखविमुखोऽहं सुस्थिरसुखबोधसंपदुचितोऽहम् ॥

करुणारसभरितोऽहं कबलितकमलासनादिलोकोऽहम् ।
कलुषाकृतिविधुरोऽहं कल्मषसुकृतोपलेपरहितोऽहम् ॥

खानामगोचरोऽहं खातीतोऽहं खपुष्पभवगोऽहम् ।
खलजनदुरासदोऽहं खण्डज्ञानापनोदनपरोऽहम् ॥ ११९॥

गलितद्वैतकथोऽहं देहीभवदखिलमूलहृदयोऽहम् ।
गन्तव्योऽहमनीहैर्गत्यागतिरहितपूर्णबोधोऽहम् ॥ १२० ॥

घनतरविमोहतिमिरप्रकरप्रध्वंसभानुनिकरोऽहम् ।
घटिकावासररजनीवत्सरयुगकल्पकालभेदोऽहम् ॥१२१॥

चरदचरदात्मकोऽहं चतुरमतिश्लाघनीयचरितोऽहम् ।
चपलजनदुर्गमोऽहं चञ्चलभवजलधिपारदेशोऽहम् ॥

छन्दःसिन्धुनिगूढज्ञानसुखास्वादमोदमानोऽहम् ।
छलपदविहितमतीनां छन्नोऽहं शान्तिमार्गगम्योऽहम् ॥

जलजासनादिगोचरपञ्चमहाभूतमूलभूतोऽहम् ।
जगदानन्दकरोऽहं जन्मजरामरणरोगरहितोऽहम् ॥

झंकृतिहुंकृतिशिञ्जितबृंहितमुखविविधनादभेदोऽहम् ।
झटितिघटितात्मवेदनदीपपरिस्फुरितहृदयभवनोऽहम् ॥

ज्ञानमहं ज्ञेयमहं ज्ञाताहं ज्ञानसाधनगणोऽहम् ।
ज्ञातृज्ञानज्ञेयविनाकृतमस्तित्वमात्रमेवाहम् ॥ १२६ ॥

तत्त्वातीतपदोऽहं तनुरहमस्मीति भावरहितोऽहम् ।
तामसदुरधिगमोऽहं तत्त्वंपदबोधबोध्यहृदयोऽहम् ॥

दैवतदैत्यनिशाचरमानवतिर्यङ्महीधरादिरहम् ।
देहेन्द्रियरहितोऽहं दक्षिणपूर्वादिदिग्विभागोऽहम् ॥

धर्माधर्ममयोऽहं धर्माधर्मादिबन्धरहितोऽहम् ।
धार्मिकजनसुलभोऽहं धन्योऽहं धातुरादिभूतोऽहम् ॥

नामादिविरहितोऽहं नरकस्वर्गापवर्गरहितोऽहम् ।
नादान्तवेदितोऽहं नानाविधनिखिलनिगमसारोऽहम् ॥

परजीवभेदबाधकपरमार्थज्ञानशुद्धचित्तोऽहम् ।
प्रकृतिरहं विकृतिरहं परिणतिरहमस्मि भागधेयानाम् ॥

फणधरभूधरवारणविग्रहविधृतप्रपञ्चसारोऽहम् ।
फालतलोदितलोचनपावकपरिभूतपञ्चबाणोऽहम् ॥ १३२ ॥

बद्धो भवामि नाहं बन्धान्मुक्तस्तथापि नैवाहम् ।
बोध्यो भवामि नाहं बोधोऽहं नैव बोधको नाहम् ॥

भक्तिरहं भजनमहं भुक्तिरहं भुक्तिमुक्तिरहमेव ।
भूतानुशासनोऽहं भूतभवद्भव्यमूलभूतोऽहम् ॥ १३४ ॥

मान्योऽहमस्मि महतां मन्दमतीनाममाननीयोऽहम् ।
मदरागमानमोहितमानसदुर्वासनादुरापोऽहम् ॥ १३५ ॥

यजनयजमानयाजकयागमयोऽहं यमादिरहितोऽहम् ।
यमवरुणयक्षवासवराक्षसमरुदीशवह्निरूपोऽहम् ॥ १३६ ॥

रक्षाविधानशिक्षावीक्षितलीलावलोकमहिमाहम् ।
रजनीदिवसविरामस्फुरदनुभूतिप्रमाणसिद्धोऽहम् ॥

लक्षणलक्ष्यमयोऽहं लाक्षणिकोऽहं लयादिरहितोऽहम ।
लाभालाभमयोऽहं लब्धव्यानामलभ्यमानोऽहम् ॥ १३८ ॥

वर्णाश्रमरहितोऽहं वर्णमयोऽहं वरेण्यगण्योऽहम् ।
वाचामगोचरोऽहं वचसामर्थेन गम्यमानोऽहम् ॥ १३९ ॥

शमदमविरहितमनसां शास्त्रशतैरप्यगम्यमानोऽहम् ।
शरणमहमेव विदुषां शकलीकृतविविधसंशयगणोऽहम् ॥

षड्भावविरहितोऽहं षड्गुणरहितोऽहमहितरहितोऽहम् ।
षट्कोशविरहितोऽहं षट्त्रिंशत्तत्त्वजालरहितोऽहम ॥

संवित्सुखात्मकोऽहं समाधिसंकल्पकल्पवृक्षोऽहम् ।
संसारविरहितोऽहं साक्षात्कारोऽहमात्मविद्यायाः ॥

हव्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम् ।
हरिरहमस्मि हरोऽहं विधिरहमेवास्मि कारणं तेषाम् ॥

क्षालितकलुषभयोऽहं क्षपितभवक्लेशजालहृदयोऽहम् ।
क्षान्ताद्यक्षरसुघटितविविधव्यवहारमूलमहमेव ॥ १४४ ॥

बहुभिः किमेभिरुक्तैरहमेवेदं चराचरं विश्वम् ।
शीकरफेनतरङ्गाः सिन्धोरपराणि न खलु वस्तूनि ॥

शरणं न भवति जननी न पिता न सुता न सोदरा नान्ये ।
परमं शरणमिदं स्याच्चरणं मम मूर्ध्नि देशिकन्यस्तम् ॥

आस्ते देशिकचरणं निरवधिरास्ते तदीक्षणे करुणा ।
आस्ते किमपि तदुक्तं किमतः परमस्ति जन्मसाफल्यम् ॥

कारुण्यसारसान्द्राः काङ्क्षितवरदानकल्पकविशेषाः ।
श्रीगुरुचरणकटाक्षाः शिशिराः शमयन्ति चित्तसंतापम् ॥

कबलितचञ्चलचेतोगुरुतरमण्डूकजातपरितोषा ।
शेते हृदयगुहायां चिरतरमेकैव चिन्मयी भुजगी ॥

मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् ।
मायामयेन मरुता भूत्वा भूत्वा मुहुस्तिरोधत्ते ॥ १५० ॥

गुरुकरुणयैव नावा प्राक्तनभाग्यानुकूलमारुतया ।
दुःसहदुःखतरङ्गैस्तुङ्गः संसारसागरस्तीर्णः ॥ १५१ ॥

सति तमसि मोहरूपे विश्वमपश्यं तदेतदित्यखिलम् ।
उदितवति बोधभानौ किमपि न पश्यामि किं न्विदं चित्रम् ॥

इत्यात्मबोधलाभं मुहुरनुचिन्त्य प्रमोदमानेन ।
प्रारब्धकर्मणोऽन्ते परं पदं प्राप्यते हि कैवल्यम् ॥ १५३ ॥

मोहान्धकारहरणं संसारोद्वेलसागरोत्तरणम् ।
स्वात्मनिरूपणमेतत्प्रकरणमन्तर्विचिन्त्यतां सद्भिः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**स्वात्मनिरूपणं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ आत्मबोधः ॥

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥ १ ॥

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥ २ ॥

अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसंघवत् ॥ ३ ॥

अवच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥

संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः ।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत् ॥ ६ ॥

तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ७ ॥

उपादानेऽखिलाधारे जगन्ति परमेश्वरे ।
सर्गस्थितिलयान्यान्ति बुद्बुदानीव वारिणि ॥ ८ ॥

सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥ ९ ॥

यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशे केवलो भवेत् ॥ १० ॥

नानोपाधिवशादेव जातिनामाश्रमादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ ११ ॥

पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ १२ ॥

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १३ ॥

अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १४ ॥

पञ्चकोशादियोगेन तत्तन्मय इव स्थितः ।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १५ ॥

वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यवघाततः ।
आत्मानमान्तरं शुद्धं विविञ्च्यात्तण्डुलं यथा ॥ १६ ॥

सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते ।
बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥ १७ ॥

देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १८ ॥

व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १९ ॥

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ २० ॥

देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि ।
अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २१ ॥

अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाम्भसः ॥ २२ ॥

रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २३ ॥

प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।
स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २४ ॥

आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।
संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २५ ॥

आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति ।
जीवः सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति ॥ २६ ॥

रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ।
नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ २७ ॥

आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि ।
दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २८ ॥

स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः ।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २९ ॥

निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः ।
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥ ३० ॥

आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् ।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३१ ॥

देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः ।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥ ३२ ॥

अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥ ३३ ॥

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३४ ॥

अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमः सिद्धो निःसङ्गो निर्मलोऽचलः ॥ ३५ ॥

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३६ ॥

एवं निरन्तरकृता ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान्रोगानिव रसायनम् ॥ ३७ ॥

विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।
भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३८ ॥

आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३९ ॥

रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ४० ॥

ज्ञातृज्ञानज्ञेयभेदः परे नात्मनि विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ४१ ॥

एवमात्मारणौ ध्यानमथने सततं कृते ।
उदितावगतिज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४२ ॥

अरुणेनेव बोधेन पूर्वं संतमसे हृते ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४३ ॥

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४४ ॥

स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे तस्मिन्दृष्टे निवर्तते ॥ ४५ ॥

तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ।। ४६ ।।

सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् ।
एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ।। ४७ ।।

आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न किंचन ।
मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्षते ।। ४८ ।।

जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत् ।
स सच्चिदादिधर्मत्वं भेजे भ्रमरकीटवत् ।। ४९ ।।

तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी शान्तिसमायुक्त आत्मा रामो विराजते ।। ५० ।।

बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवच्छश्वदन्तरेव प्रकाशते ।। ५१ ।।

उपाधिस्थोऽपि तद्धर्मैरलिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ।। ५२ ।।

उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ।। ५३ ।।

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥

यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥

तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥

अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽव्ययम् ।
अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५७ ॥

अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः ॥ ५८ ॥

तद्युक्तमखिलं वस्तु व्यवहारश्चिदन्वितः ।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥ ५९ ॥

अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥

यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६१ ॥

स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६२ ॥

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६३ ॥

दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् ।
तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥ ६४ ॥

सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६५ ॥

श्रवणादिभिरुद्दीप्त-
ज्ञानाग्निपरितापितः ।
जीवः सर्वमलान्मुक्तः
स्वर्णवद्द्योतते स्वयम् ॥ ६६ ॥

हृदाकाशोदितो ह्यात्मा
बोधभानुस्तमोपहृत् ।
सर्वव्यापी सर्वधारी
भाति भासयतेऽखिलम् ॥ ६७ ॥

दिग्देशकालाद्यनपेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव-
त्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
आत्मबोधः संपूर्णः ॥

॥ श्रीः ॥

# ॥ शतश्लोकी ॥

---

दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः

स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णतामश्मसारम् ।

न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये

स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वालौकिकोऽपि ॥

यद्वच्छ्रीखण्डवृक्षप्रसृतपरिमलेनाभितोऽन्येऽपि वृक्षाः

शश्वत्सौगन्ध्यभाजोऽप्यतनुतनुभृतां तापमुन्मूलयन्ति ।

आचार्याल्लब्धबोधा अपि विधिवशतः संनिधौ संस्थितानां

त्रेधा तापं च पापं सकरुणहृदयाः स्वोक्तिभिः क्षालयन्ति ॥

आत्मानात्मप्रतीतिः प्रथममभिहिता सत्यमिथ्यात्वयोगा-

द्द्वेधा ब्रह्मप्रतीतिर्निगमनिगदिता स्वानुभूत्योपपत्त्या ।

आद्या देहानुबन्धाद्भवति तदपरा सा च सर्वात्मकत्वा-

दादौ ब्रह्माहमस्मीत्यनुभव उदिते खल्विदं ब्रह्म पश्चात् ॥

आत्मा चिद्वित्सुखात्मानुभवपरिचितः सर्वदेहादियन्ता
सत्येवं मूढबुद्धिर्भजति ननु जनोऽनित्यदेहात्मबुद्धिम् ।
बाह्योऽस्थिस्नायुमज्जापलरुधिरवसाचर्ममेदोयुगन्त-
र्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो संविदित्वापि भूयः ॥ ४ ॥

देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषहेतुर्ममेत्थं
सर्वे स्वायुर्नयन्ति प्रथितमलममी मांसमीमांसयेह ।
एते जीवन्ति येन व्यवहृतिपटवो येन सौभाग्यभाज-
स्तं प्राणाधीशमन्तर्गतममृतममुं नैव मीमांसयन्ति ॥ ५ ॥

कश्चित्कीटः कथंचित्पटुमतिरभितः कण्टकानां कुटीरं
कुर्वंस्तेनैव साकं व्यवहृतिविधये चेष्टते यावदायुः ।
तद्वज्जीवोऽपि नानाचरितसमुदितैः कर्मभिः स्थूलदेहं
निर्मायात्रैव तिष्ठन्ननुदिनममुना साकमभ्येति भूमौ ॥ ६ ॥

स्वीकुर्वन्व्याघ्रवेषं स्वजठरभृतये भीषयन्यश्च मुग्धा-
न्मत्वा व्याघ्रोऽहमित्थं स नरपशुमुखान्बाधते किं नु सत्त्वान् ।
मत्वा स्त्रीवेषधारी स्त्र्यहमिति कुरुते किं नटो भर्तुरिच्छां
तद्वच्छारीर आत्मा पृथगनुभवतो देहतो यत्स साक्षी ॥ ७ ॥

स्वं बालं रोदमानं चिरतरसमयं शान्तिमानेतुमग्रे
द्राक्षं खार्जूरमाम्रं सुकदलमथवा योजयत्यम्बिकास्य ।
तद्वच्चेतोऽतिमूढं बहुजननभवान्मौढ्यसंस्कारयोगा-
द्बोधोपायैरनेकैरवशमुपनिषद्बोधयामास सम्यक् ॥ ८ ॥

यत्प्रीत्या प्रीतिमात्रं तनुयुवतितनूजार्थमुख्यं स तस्मा-
त्प्रेयानात्माथ शोकास्पदमितरदतः प्रेय एतत्कथं स्यात् ।
भार्याद्यं जीवितार्थी वितरति च वपुः स्वात्मनः श्रेय इच्छं-
स्तस्मादात्मानमेव प्रियमधिकमुपासीत विद्वान्न चान्यत् ॥

यस्माद्यावत्प्रियं स्यादिह हि विषयतस्तावदस्मिन्प्रियत्वं
यावद्दुःखं च यस्माद्भवति खलु ततस्तावदेवाप्रियत्वम् ।
नैकस्मिन्सर्वकालेऽस्त्युभयमपि कदाप्यप्रियोऽपि प्रियः स्या-
त्प्रेयानप्यप्रियो वा सततमपि ततः प्रेय आत्माख्यवस्तु ॥

श्रेयः प्रेयश्च लोके द्विविधमभिहितं काम्यमात्यन्तिकं च
काम्यं दुःखैकबीजं क्षणलवविरसं तच्चिकीर्षन्ति मन्दाः ।
ब्रह्मैवात्यन्तिकं यन्निरतिशयसुखस्यास्पदं संश्रयन्ते
तत्त्वज्ञास्तच्च काठोपनिषदभिहितं षड्विधायां च वल्ल्याम् ॥

आत्माम्भोधेस्तरङ्गोऽस्म्यहमिति गमने भावयन्नासनस्थः
संवित्सूत्रानुविद्धो मणिरहमिति वास्मीन्द्रियार्थप्रतीतौ ।
दृष्टोऽस्म्यात्मावलोकादिति शयनविधौ मग्न आनन्दसिन्धा-
वन्तर्निष्ठो मुमुक्षुः स खलु तनुभृतां यो नयत्येवमायुः ॥

वैराजव्यष्टिरूपं जगदखिलमिदं नामरूपात्मकं स्या-
दन्तःस्थप्राणमुख्यात्प्रचलति च पुनर्वेत्ति सर्वान्पदार्थान् ।
नायं कर्ता न भोक्ता सवितृवदिति यो ज्ञानविज्ञानपूर्णः
साक्षादित्थं विजानन्व्यवहरति परात्मानुसंधानपूर्वम् ॥

नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्यमाद्यं
प्रायो दुःखावलोकाद्भवति गृहसुहृत्पुत्रवित्तैषणादेः ।
अन्यज्ज्ञानोपदेशाद्यदुदितविषये वान्तवद्धेयता स्या-
त्प्रव्रज्यापि द्विधा स्यान्नियमितमनसां देहतो गेहतश्च ॥

यः कश्चित्सौख्यहेतोस्त्रिजगति यतते नैव दुःखस्य हेतो-
र्देहेऽहंता तदुत्था स्वविषयममता चेति दुःखास्पदे द्वे ।
जानन्रोगाभिघाताद्यनुभवति यतो नित्यदेहात्मबुद्धि-
र्भार्यापुत्रार्थनाशे विपदमथ परामेति नारातिनाशे ॥१५॥

तिष्ठन्गेहे गृहेशोऽप्यतिथिरिव निजं धाम गन्तुं चिकीर्षु-
   र्देहस्थं दुःखसौख्यं न भजति सहसा निर्ममत्वाभिमानः ।
आयात्रायास्यतीदं जलदपटलवद्यातृ यास्यत्यवश्यं
   देहाद्यं सर्वमेवं प्रविदितविशयो यश्च तिष्ठत्ययत्नः ॥ १६ ॥

शक्त्या निर्मोकतः स्वाद्बहिरहिरिव यः प्रव्रजन्स्वीयगेहा-
   च्छायां मार्गद्रुमोत्थां पथिक इव मनाक्संश्रयेद्देहसंस्थाम् ।
क्षुत्पर्याप्तं तरुभ्यः पतितफलमयं प्रार्थयेद्भैक्षमन्नं
   स्वात्मारामं प्रवेष्टुं स खलु सुखमयं प्रव्रजेद्देहतोऽपि ॥

कामो बुद्धावुदेति प्रथममिह मनस्युद्दिशत्यर्थजातं
   तद्गृह्णातीन्द्रियास्यैस्तदनधिगमतः क्रोध आविर्भवेच्च ।
प्राप्तावर्थस्य संरक्षणमतिरुदितो लोभ एतत्रयं स्या-
   त्सर्वेषां पातहेतुस्तदिह मतिमता त्याज्यमध्यात्मयोगात् ॥

दानं ब्रह्मार्पणं यत्क्रियत इह नृभिः स्यात्क्षमाक्रोधसंज्ञा
   श्रद्धास्तिक्यं च सत्यं सदिति परमतः सेतुसंज्ञं चतुष्कम् ।
तत्स्याद्बन्धाय जन्तोरिति चतुर इमान्दानपूर्वैश्चतुर्भि-
   स्तीर्त्वा श्रेयोऽमृतं च श्रयत इह नरः स्वर्गतिं ज्योतिराप्तिम् ॥

अन्नं देवातिथिभ्योऽर्पितममृतमिदं चान्यथा मोघमन्नं
यश्चात्मार्थं विधत्ते तदिह निगदितं मृत्युरूपं हि तस्य ।
लोकेऽसौ केवलाघो भवति तनुभृतां केवलादी च यः स्या-
त्त्यक्त्वा प्राणाग्निहोत्रं विधिवदनुदिनं योऽश्नुते सोऽपि मर्त्यः ॥

लोके भोजः स एवार्पयति गृहगतायार्थिनेऽन्नं कृशाय
यस्तस्मै पूर्णमन्नं भवति मखविधौ जायतेऽजातशत्रुः ।
सख्ये नान्नार्थिने योऽर्पयति न स सखा सेवमानाय नित्यं
संसक्तायान्नमस्माद्विमुख इव परावृत्तिमिच्छेत्कदर्यात् ॥

स्वाज्ञानज्ञानहेतू जगदुदयलयौ सर्वसाधारणौ स्तो
जीवेष्वास्वर्णगर्भं श्रुतय इति जगुर्हूयते स्वप्रबोधे ।
विश्वं ब्रह्मण्यबोधे जगति पुनरिदं हूयते ब्रह्म यद्व-
च्छुक्तौ रौप्यं च रौप्येऽधिकरणमथवा हूयतेऽन्योन्यमोहात् ॥

तुच्छत्वान्नासदासीद्गगनकुसुमवद्भेदकं नो सदासी-
त्किं त्वाभ्यामन्यदासीद्व्यवहृतिगतिसन्नास लोकस्तदानीम् ।
किं त्वर्वागेव शुक्तौ रजतवदपरो नो विराड् व्योमपूर्वः
शर्मण्यात्मन्यथैतत्कुहकसलिलवत्किं भवेदावरीवः ॥ २३ ॥

बन्धो जन्मात्ययात्मा यदि न पुनरभूत्तर्हि मोक्षोऽपि नासी-
यद्वद्रात्रिर्दिनं वा न भवति तरणौ किं तु दृग्दोष एषः ।
अप्राणं शुद्धमेकं समभवदथ तन्मायया कर्तृसंज्ञं
तस्मादन्यच्च नासीत्परिवृतमजया जीवभूतं तदेव ॥ २४ ॥

प्रागासीद्भावरूपं तम इति तमसा गूढमस्मादतर्क्यं
क्षीरान्तर्यद्वदम्भो जनिरिह जगतो नामरूपात्मकस्य ।
कामाद्धातुः सिसृक्षोरनुगतजगतः कर्मभिः संप्रवृत्ता-
द्रेतोरूपैर्मनोभिः प्रथममनुगतैः संततैः कार्यमाणैः ॥२५॥

चत्वारोऽस्याः कपर्दा युवतिरथ भवेन्नूतना नित्यमेषा
माया वा पेशला स्यादघटनघटनापाटवं याति यस्मात् ।
स्यादारम्भे घृतास्या श्रुतिभववयुनान्येवमाच्छादयन्ती
तस्यामेतौ सुपर्णाविव परपुरुषौ तिष्ठतोऽर्थप्रतीत्या ॥२६॥

एकस्तत्रास्त्यसङ्गस्तदनु तदपरोऽज्ञानसिन्धुं प्रविष्टो
विस्मृत्यात्मस्वरूपं स विविधजगदाकारमाभासमैक्षत् ।
बुद्ध्यान्तर्यावदैक्षद्विसृजति तमजा सोऽपि तामेवमेक-
स्तावद्विप्रास्तमेकं कथमपि बहुधा कल्पयन्ति स्ववाग्भिः ॥

नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यन्तकाले
यत्सोऽखण्डोऽस्ति लैङ्गं मन इह विशति प्रव्रजत्यूर्ध्वमर्वाक् ।
तत्कार्श्यं स्थूलतां वा न भजति वपुषः किंतु संस्कारजाते
तेजोमात्रा गृहीत्वा व्रजति पुनरिहायाति तैस्तैः सहैव ॥

आसीत्पूर्वं सुबन्धुर्भृशमवनिसुरो यः पुरोधाः सनाते-
र्ब्राह्मथात्कूटाभिचारात्स खलु मृतिमितस्तन्मनोऽगात्कृतान्तम् ।
तद्भ्राता श्रौतमन्त्रैः पुनरनयदिति प्राह सूक्तेन वेद-
स्तस्मादात्माभियुक्तं व्रजति ननु मनः कर्हिचिन्नान्तरात्मा ॥

एको निष्कम्प आत्मा प्रचलति मनसा धावमानेन तस्मिं-
स्तिष्ठन्नग्रेऽथ पश्चान्न हि तमनुगतं जानते चक्षुराद्याः ।
यद्वत्पाथस्तरङ्गैः प्रचलति परितो धावमानैस्तदन्तः
प्राक्पश्चादस्ति तेषां पवनसमुदितैस्तैः प्रशान्तैर्यथावत् ॥

एकाक्यासीत्स पूर्वं मृगयति विषयानानुपूर्व्यान्तरात्मा
जाया मे स्यात्प्रजा वा धनमुपकरणं कर्म कुर्वंस्तदर्थम् ।
क्लेशैः प्राणावशेषैर्महदपि मनुते नान्यदस्माद्वरीय-
स्त्वेकालाभेऽप्यकृत्स्नो मृत इव विरमत्येकहान्याकृतार्थः ॥

नासीत्पूर्वं न पश्चादतनुदिनकराच्छादको वारिवाहो
दृश्यः किं त्वन्तरासौ स्थगयति स दृशं पश्यतो नार्कबिम्बम् ।
नो चेदेवं विनार्कं जलधरपटलं भासते तर्हि कस्मा-
त्तद्वद्विश्वं पिधत्ते दृशमथ न परं भासकं चालकं स्वम् ॥

भुञ्जानः स्वप्नराज्यं ससकलविभवो जागरं प्राप्य भूयो
राज्यभ्रष्टोऽहमित्थं न भजति विषमं तन्मृषा मन्यमानः ।
स्वप्ने कुर्वन्नगम्यागमनमुखमघं तेन न प्रत्यवायी
तद्वज्जाग्रद्दशायां व्यवहृतिमखिलां स्वप्नवद्विस्मरेच्चेत् ॥ ३३

स्वप्नावस्थानुभूतं शुभमथ विषमं तन्मृषा जागरे स्या-
ज्जाग्रत्यां स्थूलदेहव्यवहृतिविषयं तन्मृषा स्वापकाले ।
इत्थं मिथ्यात्वसिद्धावनिशमुभयथा सज्जते तत्र मूढः
सत्ये तद्भासकेऽस्मिन्निह हि कुत इदं तन्न विद्मो वयं हि ॥

जीवन्तं जाग्रतीह स्वजनमथ मृतं स्वप्नकाले निरीक्ष्य
निर्वेदं यात्यकस्मान्मृतममृतमसुं वीक्ष्य हर्षं प्रयाति ।
स्मृत्वाप्येतस्य जन्तोर्निधनमसुयुतिं भाषते तेन साकं
सत्येवं भाति भूयोऽल्पकसमयवशात्सत्यता वा मृषात्वम् ॥

स्वाप्नस्त्रीसङ्गसौख्यादपि भृशमसतो या च रेतश्च्युतिः स्या-
त्सा दृश्या तद्वदेतत्स्फुरति जगदसत्कारणं सत्यकल्पम् ।
स्वप्ने सत्यः पुमान्स्याद्युवतिरिह मृषैवानयोः संयुतिश्च
प्रातः शुक्रेण वस्त्रोपहतिरिति यतः कल्पनामूलमेतत् ॥

पश्यन्त्यारामभस्य प्रतिदिवसममी जन्तवः स्वापकाले
पश्यत्येनं न कश्चित्करणगणमृते मायया क्रीडमानम् ।
जाग्रत्यर्थव्रजानामथ च तनुभृतां भासकं चालकं वा
नो जानीते सुषुप्तौ परमसुखमयं कश्चिदाश्चर्यमेतत् ॥

स्वप्ने मन्त्रोपदेशः श्रवणपरिचितः सत्य एष प्रबोधे
स्वाप्नादेव प्रसादादभिलषितफलं सत्यतां प्रातरेति ।
सत्यप्राप्तिस्त्वसत्यादपि भवति तथा किं च तत्स्वप्रकाशं
येनेदं भाति सर्वं चरमचरमथोच्चावचं दृश्यजातम् ॥३८॥

मध्यप्राणं सुषुप्तौ स्वजनिमनुविशन्त्यग्निसूर्यादयोऽमी
वागाद्याः प्राणवायुं तदिह निगदिता ग्लानिरेषां न वायोः ।
तेभ्यो दृश्यावभासो भ्रम इति विदितः शुक्तिकारौप्यकल्पः
प्राणायामव्रतं तच्छ्रुतिशिरसि मतं स्वात्मलब्धौ न चान्यत् ॥

नोऽकस्मादार्द्रमेधः स्पृशति च दहनः किं तु शुष्कं निदाघा-
दार्द्रं चेतोऽनुबन्धैः कृतसुकृतमपि स्वोक्तकर्मप्रजार्थैः ।
तद्वज्ज्ञानाग्निरेतत्स्पृशति न सहसा किं तु वैराग्यशुष्कं
तस्माच्छुद्धो विरागः प्रथममभिहितस्तेन विज्ञानसिद्धिः ॥

यत्किंचिन्नामरूपात्मकमिदमसदेवोदितं भाति भूमौ
येनानेकप्रकारैर्व्यवहरति जगद्येन तेनेश्वरेण ।
तद्वत्प्रच्छादनीयं निभृतरशनया यद्वदेष द्विजिह्व-
स्तेन त्यक्तेन भोज्यं सुखमनतिशयं मा गृधोऽन्यद्धनाद्यम् ॥

जीवन्मुक्तिर्मुमुक्षोः प्रथममथ ततो मुक्तिरात्यन्तिकी च
तेऽभ्यासज्ञानयोगाद्गुरुचरणकृपापाङ्गसङ्गेन लब्धात् ।
अभ्यासोऽपि द्विधा स्यादधिकरणवशाद्दैहिको मानसश्च
शारीरस्त्वासनाद्यो ह्युपरतिरपरो ज्ञानयोगः पुरोक्तः ॥

सर्वानुन्मूल्य कामान्हृदि कृतनिलयान्क्षिप्तशङ्कूनिवोच्चै-
र्धीर्यैर्देहाभिमानस्त्यजति चपलतामात्मदत्तावधानः ।
यात्यूर्ध्वस्थानमुच्चैः कृतसुकृतभरो नाडिकाभिर्विचित्रं
नीलश्वेतारुणाभिः स्रवदमृतभरं गृह्यमाणात्मसौख्यः ॥

प्रापश्यद्विश्वमात्मेत्ययमिह पुरुषः शोकमोहाद्यतीतः
　शुक्रं ब्रह्माध्यगच्छत्स खलु सकलवित्सर्वसिद्ध्यास्पदं हि ।
विस्मृत्य स्थूलसूक्ष्मप्रभृतिवपुरसौ सर्वसंकल्पशून्यो
　जीवन्मुक्तस्तुरीयं पदमधिगतवान्पुण्यपापैर्विहीनः ।। ४४ ।।

यः सत्त्वाकारवृत्तौ प्रतिफलति युवा देहमात्रावृतोऽपि
　तद्धर्मैर्बाल्यवार्द्धक्यादिभिरनुपहतः प्राण आविर्बभूव ।
श्रेयान्साध्यस्तमेतं सुनिपुणमतयः सत्यसंकल्पभाजो
　ह्यभ्यासाद्देवयन्तः परिणतमनसा साकमूर्ध्वं नयन्ति ।।

प्रायोऽकामोऽस्तकामो निरतिशयसुखायात्मकामस्तदासौ
तत्प्राप्तावाप्तकामः स्थितचरमदशस्तस्य देहावसाने ।
प्राणा नैवोत्क्रमन्ति क्रमविरतिमिताः स्वस्वहेतौ तदानीं
क्वायं जीवो विलीनो लवणमिव जलेऽखण्ड आत्मैव पश्चात् ।।

पिण्डीभूतं यदन्तर्जलनिधिसलिलं याति तत्सैन्धवाख्यं
　भूयः प्रक्षिप्तमस्मिन्विलयमुपगतं नामरूपे जहाति ।
प्राज्ञस्तद्वत्परात्मन्यथ भजति लयं तस्य चेतो हिमांशौ
　वागग्नौ चक्षुरर्के पयसि पुनरसृग्रेतसी दिक्षु कर्णौ ।।४७।।

क्षीरान्तर्यद्वदाज्यं मधुरिमविदितं तत्पृथग्भूतमस्मा-
द्भूतेषु ब्रह्म तद्वद्व्यवहृतिविदितं श्रान्तविश्रान्तिबीजम् ।
यं लब्ध्वा लाभमन्यं तृणमिव मनुते यत्र नोदेति भीतिः
सान्द्रानन्दं यदन्तः स्फुरति तदमृतं विद्ध्यतो ह्यन्यदार्तम् ॥

ओतः प्रोतश्च तन्तुष्विह विततपटश्चित्रवर्णेषु चित्र-
स्तस्मिञ्जिज्ञास्यमाने ननु भवति पटः सूत्रमात्रावशेषः ।
तद्वद्विश्वं विचित्रं नगनगरनरग्रामपश्वादिरूपं
प्रोतं वैराजरूपे स वियति तदपि ब्रह्मणि प्रोतमोतम् ॥

रूपं रूपं प्रतीदं प्रतिफलनवशात्प्रातिरूप्यं प्रपेदे
ह्येको द्रष्टा द्वितीयो भवति च सलिले सर्वतोऽनन्तरूपः ।
इन्द्रो मायाभिरास्ते श्रुतिरिति वदति व्यापकं ब्रह्म तस्मा-
ज्जीवत्वं यात्यकस्मादतिविमलतरे बिम्बितं बुद्ध्युपाधौ ॥

तज्ज्ञाः पश्यन्ति बुद्ध्या परमबलवतो माययाक्तं पतङ्गं
बुद्धावन्तःसमुद्रे प्रतिफलितमरीच्यास्पदं वेधसस्तम् ।
यादृग्यावानुपाधिः प्रतिफलति तथा ब्रह्म तस्मिन्यथास्यं
प्राप्तादर्शानुरूपं प्रतिफलति यथावस्थितं सत्सदैव ॥ ५१ ॥

एको भानुस्तदस्थः प्रतिफलनवशाद्यस्त्वनेकोदकान्त-
र्नानात्वं यात्युपाधिस्थितिगतिसमतां चापि तद्वत्परात्मा ।
भूतेषूच्चावचेषु प्रतिफलित इवाभाति तावत्स्वभावा-
वच्छिन्नो यः परं तु स्फुटमनुपहतो भाति तावत्स्वभावैः ॥

यद्वत्पीयूषरश्मौ दिनकरकिरणैर्बिम्बितैरेति सान्द्रं
नाशं नैशं तमिस्रं गृहगतमथवा मूर्छितैः कांस्यपात्रे ।
तद्वद्बुद्धौ परात्मद्युतिभिरनुपदं बिम्बिताभिः समन्ता-
द्भासन्ते हीन्द्रियास्यप्रसृतिभिरनिशं रूपमुख्याः पदार्थाः ॥

पूर्णात्मानात्मभेदात्त्रिविधमिह परं बुद्ध्यवच्छिन्नमन्य-
त्तत्रैवाभासमात्रं गगनमिव जले त्रिप्रकारं विभाति ।
अम्भोवच्छिन्नमस्मिन्प्रतिफलितमतः पाथसोऽन्तर्बहिश्च
पूर्णावच्छिन्नयोगे व्रजति लयमविद्या स्वकार्यैः सहैव ॥

दृश्यन्ते दारुनार्यो युगपदगणिताः स्तम्भसूत्रप्रयुक्ताः
संगीतं दर्शयन्त्यो व्यवहृतिमपरां लोकसिद्धां च सर्वाम् ।
सर्वत्रानुप्रविष्टादभिनवविभवाद्यावदर्थानुबन्धा-
त्तद्वत्सूत्रात्मसंज्ञाद्व्यवहरति जगद्भूर्भुवःस्वर्महान्तम् ॥५५॥

तत्सत्यं यत्त्रिकालेष्वनुपहतमदः प्राणदिग्व्योममुख्यं
यस्मिन्विश्रान्तमास्ते तदिह निगदितं ब्रह्म सत्यस्य सत्यम् ।
नास्त्यन्यत्किंच यद्वत्परमधिकमतो नाम सत्यस्य सत्यं
सच्च त्यच्चेति मूर्ताद्युपहितमवरं सत्यमस्यापि सत्यम ॥

यत्किंचिद्भात्यसत्यं व्यवहृतिविषये रौप्यसर्पाम्बुमुख्यं
तद्वै सत्याश्रयेणेत्ययमिह नियमः सावधिर्लोकसिद्धः ।
तद्वै सत्यस्य सत्ये जगदखिलमिदं ब्रह्मणि प्राविरासी-
न्मिथ्याभूतं प्रतीतं भवति खलु यतस्तच्च सत्यं वदन्ति ॥

यत्राकाशावकाशः कलयति च कलामात्रतां यत्र कालो
यत्रैवाशावसानं बृहदिह हि विराट्पूर्वमर्वागिवास्ते ।
सूत्रं यत्राविरासीन्महदपि महतस्ताद्धि पूर्णाच्च पूर्णं
संपूर्णादर्णवादेरपि भवति यथा पूर्णमेकार्णवाम्भः ॥ ५८ ॥

अन्तः सर्वौषधीनां पृथगमितरसैर्गन्धवीर्यैर्विपाकै-
रेकं पाथोदपाथः परिणमति यथा तद्वदेवान्तरात्मा ।
नानाभूतस्वभावैर्वहति वसुमती येन विश्वं पयोदो
वर्षत्युच्चैर्हुताशः पचति दहति वा येन सर्वान्तरोऽसौ ॥

भूतेष्वात्मानमात्मन्यनुगतमखिलं भूतजातं प्रपश्ये-
त्प्रायः पाथस्तरङ्गान्वयवदथ चिरं सर्वमात्मैव पश्येत् ।
एकं ब्रह्माद्वितीयं श्रुतिशिरसि मतं नेह नानास्ति किंचि-
न्मृत्योराप्नोति मृत्युं स इह जगदिदं यस्तु नानेव पश्येत् ॥

प्राक्पश्चादस्ति कुम्भाद्गगनमिदमिति प्रत्यये सत्यपीदं
कुम्भोत्पत्तावुदेति प्रलयमुपगते नश्यतीत्यन्यदेशम् ।
नीते कुम्भेन साकं व्रजति भजति वा तत्प्रमाणानुकारा-
वित्थं मिथ्याप्रतीतिः स्फुरति तनुभृतां विश्वतस्तद्वदात्मा ॥

यावान्पिण्डो गुडस्य स्फुरति मधुरिमैवास्ति सर्वोऽपि तावा-
न्यावान्कर्पूरपिण्डः परिणमति सदामोद एवात्र तावान् ।
विश्वं यावद्विभाति द्रुमनगनगरारामचैत्याभिरामं
तावच्चैतन्यमेकं प्रविकसति यतोऽन्ते तदात्मावशेषम् ॥

वाद्यान्नादानुभूतिर्यदपि तदपि सा नूनमाघातगम्या
वाद्याघातध्वनीनां न पृथगनुभवः किं तु तत्साहचर्यात् ।
मायोपादानमेतत्सहचरितमिव ब्रह्मणाभाति तद्व-
त्तस्मिन्प्रत्यक्प्रतीते न किमपि विषयीभावमाप्नोति यस्मात् ॥

दृष्टः साक्षादिदानीमिह खलु जगतामीश्वरः संविदात्मा
विज्ञातः स्थाणुरेको गगनवदभितः सर्वभूतान्तरात्मा ।
दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूपमाभासमात्रं
शुद्धं ब्रह्माहमस्मीत्यविरतमधुनातैव तिष्ठेदनीहः ॥ ६४ ॥

इन्द्रेन्द्राण्योः प्रकामं सुरतसुखजुषोः स्याद्रतान्तः सुषुप्ति-
स्तस्यामानन्दसान्द्रं पदमतिगहनं यत्स आनन्दकोशः ।
तस्मिन्नो वेद किंचिन्निरतिशयसुखाभ्यन्तरे लीयमानो
दुःखी स्याद्बोधितः सन्निति कुशलमतिर्बोधयेन्नैव सुप्तम् ॥

सर्वे नन्दन्ति जीवा अधिगतयशसा गृह्णता चक्षुरादी-
नन्तः सर्वोपकर्त्रा बहिरपि च सुषुप्तौ यथा तुल्यसंस्थाः ।
एतेषां किल्बिषस्पृग्जठरभृतिकृते यो बहिर्वृत्तिरास्ते
त्वक्चक्षुःश्रोत्रनासारसनवशमितो याति शोकं च मोहम् ॥

जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान्विधास्य-
ञ्श्राम्यत्सर्वेन्द्रियौघोऽधिगतमपि सुखं विस्मरन्याति निद्राम् ।
विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि
सुखं सर्वोत्तमं स्यात् परिणतिविरसादिन्द्रियोत्थात्सुखाच्च ॥

पक्षावभ्यस्य पक्षी जनयति मरुतं तेन यात्युच्चदेशं
लब्ध्वा वायुं महान्तं श्रममपनयति स्वीयपक्षौ प्रसार्य ।
दुःसंकल्पैर्विकल्पैर्विषयमनु कदर्थीकृतं चित्तमेत-
त्खिन्नं विश्रामहेतोः स्वपिति चिरमहो हस्तपादान्प्रसार्य ॥

आश्लिष्यात्मानमात्मा न किमपि सहसैवान्तरं वेद बाह्यं
यद्वत्कामी विदेशात्सदनमुपगतो गाढमाश्लिष्य कान्ताम् ।
यात्यस्तं तत्र लोकव्यवहृतिरखिला पुण्यपापानुबन्धः
शोको मोहो भयं वा समविषममिदं न स्मरत्येव किंचित् ॥

अल्पानल्पप्रपञ्चप्रलय उपरतिश्चेन्द्रियाणां सुखाप्ति-
र्जीवन्मुक्तौ सुषुप्तौ त्रितयमपि समं किं तु तत्रास्ति भेदः ।
प्राक्संस्कारात्प्रसुप्तः पुनरपि च परावृत्तिमेति प्रबुद्धो
नश्यत्संस्कारजातो न स किल पुनरावर्तते यश्च मुक्तः ॥

आनन्दान्यश्च सर्वाननुभवति नृपः सर्वसंपत्समृद्ध-
स्तस्यानन्दः स एकः स खलु शतगुणः सन्प्रदिष्टः पितृणाम् ।
आदेवब्रह्मलोकं शतशतगुणितास्ते यदन्तर्गताः स्यु-
र्ब्रह्मानन्दः स एकोऽस्त्यथ विषयसुखान्यस्य मात्रा भवन्ति ॥

यत्रानन्दाश्च मोदाः प्रमुद इति मुदश्चासते सर्व एते
यत्राप्ताः सर्वकामाः स्युरखिलविरमात्केवलीभाव आस्ते ।
मां तत्रानन्दसान्द्रे कृधि चिरममृतं सोम पीयूषपूर्णां
धारामिन्द्राय देहीत्यपि निगमगिरो भ्रूयुगान्तर्गताय ॥

आत्माकम्पः सुखात्मा स्फुरति तदपरा त्वन्यथैव स्फुरन्ती
स्थैर्यं वा चञ्चलत्वं मनसि परिणतिं याति तत्रत्यमस्मिन् ।
चाञ्चल्यं दुःखहेतुर्मनस इदमहो यावदिष्टार्थलब्धि-
स्तस्यां यावत्स्थिरत्वं मनसि विषयजं स्यात्सुखं तावदेव ॥

यद्वत्सौख्यं रतान्ते निमिषमिह मनस्येकताने रसे स्या-
त्स्थैर्यं यावत्सुषुप्तौ सुखमनतिशयं तावदेवाथ मुक्तौ ।
नित्यानन्दः प्रशान्ते हृदि तदिह सुखस्थैर्ययोः साहचर्यं
नित्यानन्दस्य मात्रा विषयसुखमिदं युज्यते तेन वक्तुम् ॥

श्रान्तं स्वान्तं स बाह्यव्यवहृतिभिरिदं ताः समाकृष्य सर्वा-
स्तत्तत्संस्कारयुक्तं ह्युपरमति परावृत्तमिच्छन्निदानम् ।
स्वाप्नान्संस्कारजातप्रजनितविषयान्स्वाप्नदेहेऽनुभूता-
न्प्रोज्झ्यान्तः प्रत्यगात्मप्रवणमिदमगाद्भूरि विश्राममस्मिन् ॥

स्वप्ने भोगः सुखादेर्भवति ननु कुतः साधने मूर्छमाने
स्वाप्नं देहान्तरं तद्व्यवहृतिकुशलं नव्यमुत्पद्यते चेत् ।
तत्सामग्र्या अभावात्कुत इदमुदितं तद्धि सांकल्पिकं चे-
त्तत्किं स्वाप्ने रतान्ते वपुषि निपतिते दृश्यते शुक्रमोक्षः ॥

भीत्या रोदित्यनेन प्रवदति हसति श्लाघते नूनमस्मा-
त्स्वप्नेऽप्यङ्गेऽनुबन्धं त्यजति न सहसा मूर्छितेऽप्यन्तरात्मा ।
पूर्वं ये येऽनुभूतास्तनुयुवतिहयव्याघ्रदेशादयोऽर्था-
स्तत्संस्कारस्वरूपान्सृजति पुनरमून्श्रित्य संस्कारदेहम् ॥

संधौ जाग्रत्सुषुप्त्योरनुभवविदिता स्वाप्न्यवस्था द्वितीया
तत्रात्मज्योतिरास्ते पुरुष इह समाकृष्य सर्वेन्द्रियाणि ।
संवेश्य स्थूलदेहं समुचितशयने स्वीयभासान्तरात्मा
पश्यन्संस्काररूपानभिमतविषयान्याति कुत्रापि तद्वत् ॥

रक्षन्प्राणैः कुलायं निजशयनगतं श्वासमात्रावशेषै-
र्मा भूत्तत्प्रेतकल्पाकृतिकमिति पुनः सारमेयादिभक्ष्यम् ।
स्वप्ने स्वीयप्रभावात्सृजति हयरथान्निम्नगाः पल्वलानि
क्रीडास्थानान्यनेकान्यपि सुहृदबलापुत्रमित्रानुकारान् ॥

मातङ्गव्याघ्रदस्युद्विषदुरगकपीन्कुत्रचित्प्रेयसीभिः
क्रीडन्नास्ते हसन्वा विहरति कुहचिन्मृष्टमश्नाति चान्नम् ।
म्लेच्छत्वं प्राप्तवानस्म्यहमिति कुहचिच्छङ्कितः स्वीयलोका-
दास्ते व्याघ्रादिभीत्या प्रचलति कुहचिद्रोदिति ग्रस्यमानः ॥

यो यो दृग्गोचरोऽर्थो भवति स स तदा तद्गतात्मस्वरूपा-
विज्ञानोत्पद्यमानः स्फुरति ननु यथा शुक्तिकाज्ञानहेतुः ।
रौप्याभासो मृषैव स्फुरति च किरणाज्ञानतोऽम्भो भुजङ्गो
रज्ज्वज्ञानान्निमेषं सुखभयकृदतो दृष्टिसृष्टं किलेदम् ॥

मायाध्यासाश्रयेण प्रविततमखिलं यन्मया तेन मत्स्था-
न्येतान्येतेषु नाहं यदपि हि रजतं भाति शुक्तौ न रौप्ये ।
शुक्त्यंशस्तेन भूतान्यपि मयि न वसन्तीति विष्वग्विनेता
प्राहास्माद्दृश्यजातं सकलमपि मृषैवेन्द्रजालोपमेयम् ॥

हेतुः कर्मैव लोके सुखतदितरयोरेवमज्ञोऽविदित्वा
मित्रं वा शत्रुरित्थं व्यवहरति मृषा याज्ञवल्क्यार्तभागौ ।
यत्कर्मैवोचतुः प्राग्जनकनृपगृहे चक्रतुस्तत्प्रशंसां
वंशोत्तंसो यदूनामिति वदति न कोऽप्यत्र तिष्ठत्यकर्मा ॥

वृक्षच्छेदे कुठारः प्रभवति यदपि प्राणिनोद्यस्तथापि
प्रायोऽन्नं तृप्तिहेतुस्तदपि निगदितं कारणं भोक्तृयत्नः ।
प्राचीनं कर्म तद्वद्विषमसमफलप्राप्तिहेतुस्तथापि
स्वातन्त्र्यं नश्वरेऽस्मिन्न हि खलु घटते प्रेरकोऽस्यान्तरात्मा ॥

स्मृत्या लोकेषु वर्णाश्रमविहितमदो नित्यकाम्यादि कर्म
सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः संगिरन्तेऽतिरम्यम् ।
यन्नासानेत्रजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेन
तुष्येदङ्गीव साक्षात्तरुरिव सकलो मूलसंतर्पणेन ॥ ८५ ॥

यः प्रैत्यात्मानभिज्ञः श्रुतिविदपि तथाकर्मकृत्कर्मणोऽस्य
नाशः स्यादल्पभोगात्पुनरवतरणे दुःखभोगो महीयान् ।
आत्माभिज्ञस्य लिप्सोरपि भवति महान्शाश्वतः सिद्धिभोगो
ह्यात्मा तस्मादुपास्यः खलु तदधिगमे सर्वसौख्यान्यलिप्सोः ॥

सूर्याद्यैरर्थभानं न हि भवति पुनः केवलैर्नात्र चित्रं
सूर्यात्सूर्यप्रतीतिर्न भवति सहसा नापि चन्द्रस्य चन्द्रात् ।
अग्नेरग्नेश्च किं तु स्फुरति रविमुखं चक्षुषश्चित्प्रयुक्ता-
दात्मज्योतिस्ततोऽयं पुरुष इह महो देवतानां च चित्रम् ॥

प्राणेनाम्भांसि भूयः पिबति पुनरसावन्नमश्नाति तत्र
तत्पाकं जाठरोऽग्निस्तदुपहितबलो द्राक्छनैर्वा करोति ।
व्यानः सर्वाङ्गनाडीष्वथ नयति रसं प्राणसंतर्पणार्थं
निःसारं पूतिगन्धं त्यजति बहिरयं देहतोऽपानसंज्ञः ॥८८॥

व्यापारं देहसंस्थः प्रतिवपुरखिलं पञ्चवृत्त्यात्मकोऽसौ
प्राणः सर्वेन्द्रियाणामधिपतिरनिशं सत्तया निर्विवादम् ।
यस्येत्थं चिद्घनस्य स्फुटमिह कुरुते सोऽस्मि सर्वस्य साक्षी
प्राणस्य प्राण एषोऽप्यखिलतनुभृतां चक्षुषश्चक्षुरेषः ॥८९॥

यं भान्तं चिद्घनैकं क्षितिजलपवनादित्यचन्द्रादयो ये
भासा तस्यैव चानु प्रविरलगतयो भान्ति तस्मिन्वसन्ति ।
विद्युत्पुञ्जोऽग्निसंघोऽप्युडुगणविततिर्भासयेत्किं परेशं
ज्योतिः शान्तं ह्यनन्तं कविमजममरं शाश्वतं जन्मशून्यम् ॥

तद्ब्रह्मैवाहमस्मीत्यनुभव उदितो यस्य कस्यापि चेद्वै
पुंसः श्रीसद्गुरूणामतुलितकरुणापूर्णपीयूषदृष्ट्या ।
जीवन्मुक्तः स एव भ्रमविधुरमना निर्गतेऽनाद्युपाधौ
नित्यानन्दैकधाम प्रविशति परमं नष्टसंदेहवृत्तिः ॥ ९१ ॥

नो देहो नेन्द्रियाणि क्षरमतिचपलं नो मनो नैव बुद्धिः
प्राणो नैवाहमस्मीत्यखिलजडमिदं वस्तुजातं कथं स्याम् ।
नाहंकारो न दारा गृहसुतसुजनक्षेत्रवित्तादि दूरं
साक्षी चित्प्रत्यगात्मा निखिलजगदधिष्ठानभूतः शिवोऽहम् ॥

दृश्यं यद्रूपमेतद्भवति च विशदं नीलपीताद्यनेकं
सर्वस्यैतस्य दृग्वै स्फुरदनुभवतो लोचनं चैकरूपम् ।
तद्दृश्यं मानसं दृक्परिणतविषयाकारधीवृत्तयोऽपि
दृश्या दृग्रूप एव प्रभुरिह स तथा दृश्यते नैव साक्षी ॥

रज्ज्वज्ञानाद्भुजङ्गस्तदुपरि सहसा भाति मन्दान्धकारे
स्वात्माज्ञानात्तथासौ भृशमसुखमभूदात्मनो जीवभावः ।
आप्तोक्त्याहिभ्रमान्ते स च खलु विदिता रज्जुरेका तथाहं
कूटस्थो नैव जीवो निजगुरुवचसा साक्षिभूतः शिवोऽहम् ॥

किं ज्योतिस्ते वदस्वाहनि रविरिह मे चन्द्रदीपादि रात्रौ
स्यादेवं भानुदीपादिकपरिकलने किं तव ज्योतिरस्ति ।
चक्षुस्तन्मीलने किं भवति च सुतरां धीर्धियः किं प्रकाशे
तत्रैवाहं ततस्त्वं तदसि परमकं ज्योतिरस्मि प्रभोऽहम् ॥

कंचित्कालं स्थितः कौ पुनरिह भजते नैव देहादिसंघं
यावत्प्रारब्धभोगं कथमपि स सुखं चेष्टतेऽसङ्गबुद्ध्या ।
निर्द्वन्द्वो नित्यशुद्धो विगलितममताहंकृतिर्नित्यतृप्तो
ब्रह्मानन्दस्वरूपः स्थिरमतिरचलो निर्गताशेषमोहः ॥

जीवात्मब्रह्मभेदं दलयति सहसा यत्प्रकाशैकरूपं
विज्ञानं तच्च बुद्धौ समुदितमतुलं यस्य पुंसः पवित्रम् ।
माया तेनैव तस्य क्षयमुपगमिता संसृतेः कारणं या
नष्टा सा कायकर्त्री पुनरपि भविता नैव विज्ञानमात्रात् ॥

विश्वं नेति प्रमाणाद्विगलितजगदाकारभानस्त्यजेद्वै
पीत्वा यद्वत्फलाम्भस्त्यजति च सुतरां तत्फलं सौरभाढ्यम् ।
सम्यक्सच्चिद्घनैकामृतसुखकबलास्वादपूर्णो हृदासौ
ज्ञात्वा निःसारमेवं जगदखिलमिदं स्वप्रभः शान्तचित्तः ॥

क्षीयन्ते चास्य कर्माण्यपि खलु हृदयग्रन्थिरुद्भिद्यते वै
छिद्यन्ते संशया ये जनिमृतिफलदा दृष्टमात्रे परेशे ।
तस्मिंश्चिन्मात्ररूपे गुणमलरहिते तत्त्वमस्यादिलक्ष्ये
कूटस्थे प्रत्यगात्मन्यखिलविधिमनोगोचरे ब्रह्मणीशे ॥

आदौ मध्ये तथान्ते जनिमृतिफलदं कर्ममूलं विशालं
ज्ञात्वा संसारवृक्षं भ्रममदमुदिताशोकतानेकपत्रम् ।
कामक्रोधादिशाखं सुतपशुवनिताकन्यकापक्षिसंघं
छित्वासङ्गासिनैनं पटुमतिरभितश्चिन्तयेद्वासुदेवम् ॥१००॥

जातं मय्येव सर्वं पुनरपि मयि तत्संस्थितं चैव विश्वं
सर्वं मय्येव याति प्रविलयमिति तद्ब्रह्म चैवाहमस्मि ।
यस्य स्मृत्या च यज्ञाद्यखिलशुभविधौ सुप्रयातीह कार्ये
न्यूनं संपूर्णतां वै तमहमतिमुदैवाच्युतं संनतोऽस्मि ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव-
त्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**शतश्लोकी समाप्ता ॥**

॥ श्रीः ॥

# ॥ दशश्लोकी ॥

न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः ।
अनेकान्तिकत्वात्सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥

न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहं ममाध्यासहाना-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

न सांख्यं न शैवं न तत्पाञ्चरात्रं
न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं
न मध्यं न तिर्यङ् न पूर्वापरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूप-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥

न शुक्लं न कृष्णं न रक्तं न पीतं
न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णु-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥

न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीय-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥

अपि व्यापकत्वाद्धि तत्त्वप्रयोगा-
त्स्वतः सिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्य-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥

न चैकं तदन्यद्द्वितीयं कुतः स्या-
न्न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वा-
त्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
दशश्लोकी समाप्ता ॥

॥ श्रीः ॥

# सर्ववेदान्तसिद्धान्त-सारसंग्रहः ॥

अखण्डानन्दसंबोधो वन्दनाद्यस्य जायते ।
गोविन्दं तमहं वन्दे चिदानन्दतनुं गुरुम् ॥ १ ॥

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ २ ॥

यदालम्बो दरं हन्ति सतां प्रत्यूहसंभवम् ।
तदालम्बे दयालम्बं लम्बोदरपदाम्बुजम् ॥ ३ ॥

वेदान्तशास्त्रसिद्धान्तसारसंग्रह उच्यते ।
प्रेक्षावतां मुमुक्षूणां सुखबोधोपपत्तये ॥ ४ ॥

अस्य शास्त्रानुसारित्वादनुबन्धचतुष्टयम् ।
यदेव मूलं शास्त्रस्य निर्दिष्टं तदिहोच्यते ॥ ५ ॥

अधिकारी च विषयः संबन्धश्च प्रयोजनम् ।
शास्त्रारम्भफलं प्राहुरनुबन्धचतुष्टयम् ॥ ६ ॥

चतुर्भिः साधनैः सम्यक्संपन्नो युक्तिदक्षिणः ।
मेधावी पुरुषो विद्वानधिकार्यत्र संमतः ॥ ७ ॥

विषयः शुद्धचैतन्यं जीवब्रह्मैक्यलक्षणम ।
यत्रैव दृश्यते सर्ववेदान्तानां समन्वयः ॥ ८ ॥

एतदैक्यप्रमेयस्य प्रमाणस्यापि च श्रुतेः ।
संबन्धः कथ्यते सद्भिर्बोध्यबोधकलक्षणः ॥ ९ ॥

ब्रह्मात्मैकत्वविज्ञानं सन्तः प्राहुः प्रयोजनम् ।
येन निःशेषसंसारबन्धात्सद्यः प्रमुच्यते ॥ १० ॥

प्रयोजनं संप्रवृत्तेः कारणं फललक्षणम् ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥ ११ ॥

साधनचतुष्टयसंपत्तिर्यस्यास्ति धीमतः पुंसः ।
तस्यैवैतत्फलसिद्धिर्नान्यस्य किंचिदूनस्य ॥ १२ ॥

चत्वारि साधनान्यत्र वदन्ति परमर्षयः ।
मुक्तिर्येषां तु सद्भावे नाभावे सिध्यति ध्रुवम् ॥ १३ ॥

आद्यं नित्यानित्यवस्तुविवेकः साधनं मतम् ।
इहामुत्रार्थफलभोगविरागो द्वितीयकम् ॥ १४ ॥

शमादिषट्कसंपत्तिस्तृतीयं साधनम् मतम् ।
तुरीयं तु मुमुक्षुत्वं साधनं शास्त्रसंमतम् ॥ १५ ॥

ब्रह्मैव नित्यमन्यत्तु ह्यनित्यमिति वेदनम् ।
सोऽयं नित्यानित्यवस्तुविवेक इति कथ्यते ॥ १६ ॥

मृदादिकारणं नित्यं त्रिषु कालेषु दर्शनात् ।
घटाद्यनित्यं तत्कार्यं यतस्तन्नाश ईक्ष्यते ॥ १७ ॥

तथैवैतज्जगत्सर्वमनित्यं ब्रह्मकार्यतः ।
तत्कारणं परं ब्रह्म भवेन्नित्यं मृदादिवत् ॥ १८ ॥

सर्गं वक्त्यस्य तस्माद्वा एतस्मादित्यपि श्रुतिः ।
सकाशाद्ब्रह्मणस्तस्मादनित्यत्वे न संशयः ॥ १९ ॥

सर्वस्यानित्यत्वे सावयवत्वेन सर्वतःसिद्धे ।
वैकुण्ठादिषु नित्यत्वमतिर्भ्रम एव मूढबुद्धीनाम् ॥ २० ॥

अनित्यत्वं च नित्यत्वमेवं यच्छ्रुतियुक्तिभिः ।
विवेचनं नित्यानित्यविवेक इति कथ्यते ॥ २१ ॥

ऐहिकामुष्मिकार्थेषु ह्यनित्यत्वेन निश्चयात् ।
नैःस्पृह्यं तुच्छबुध्द्या यत्तद्वैराग्यमितीर्यते ॥ २२ ॥

नित्यानित्यपदार्थविवेकात्पुरुषस्य जायते सद्यः ।
स्रक्चन्दनवनितादौ सर्वत्रानित्यवस्तुनि विरक्तिः ॥ २३ ॥

काकस्य विष्ठावदसह्यबुद्धि-
भोग्येषु सा तीव्रविरक्तिरिष्यते ।
विरक्तितीव्रत्वनिदानमाहु-
र्भोग्येषु दोषेक्षणमेव सन्तः ॥ २४ ॥

प्रदृश्यते वस्तुनि यत्र दोषो
न तत्र पुंसोऽस्ति पुनः प्रवृत्तिः ।
अन्तर्महारोगवतीं विजान-
न्को नाम वेश्यामपि रूपिणीं व्रजेत् ॥ २५ ॥

अत्रापि चान्यत्र च विद्यमान-
पदार्थसंमर्शनमेव कार्यम् ।
यथाप्रकारार्थगुणाभिमर्शनं
संदर्शयत्येव तदीयदोषम् ॥ २६ ॥

कुक्षौ स्वमातुर्मलमूत्रमध्ये
स्थितिं तदा विट्क्रिमिदंशनं च ।
तदीयकौक्षेयकवह्निदाहं
विचार्य को वा विरतिं न याति ॥ २७ ॥

स्वकीयविण्मूत्रविसर्जनं त-
थोत्तानगत्या शयनं तदा यत् ।
बालग्रहाद्याहतिभाक्च शैशवं
विचार्य को वा विरतिं न याति ॥ २८ ॥

स्वीयैः परैस्ताडनमज्ञभाव-
मत्यन्तचापल्यमसत्क्रियां च ।
कुमारभावे प्रतिषिद्धवृत्तिं
विचार्य को वा विरतिं न याति ॥ २९ ॥

मदोद्धतिं मान्यतिरस्कृतिं च
कामातुरत्वं समयातिलङ्घनम् ।
तां तां युवत्योदितदुष्टचेष्टां
विचार्य को वा विरतिं न याति ॥ ३० ॥

विरूपतां सर्वजनादवज्ञां
सर्वत्र दैन्यं निजबुद्धिहैन्यम् ।
वृद्धत्वसंभावितदुर्दशां तां
विचार्य को वा विरतिं न याति ॥ ३१ ॥

पित्तज्वरार्शःक्षयगुल्मशूल-
श्लेष्मादिरोगोदिततीव्रदुःखम् ।
दुर्गन्धमस्वास्थ्यमनूनचिन्तां
विचार्य को वा विरतिं न याति ॥ ३२ ॥

यमावलोकोदितभीतिकम्प-
मर्मव्यथोच्छ्वासगतीश्च वेदनाम् ।
प्राणप्रयाणे परिदृश्यमानां
विचार्य को वा विरतिं न याति ॥ ३३ ॥

अङ्गारनद्यां तपने च कुम्भी-
पाकेऽपि वीच्यामसिपत्रकानने ।
दूतैर्यमस्य क्रियमाणबाधां
विचार्य को वा विरतिं न याति ॥ ३४ ॥

पुण्यक्षये पुण्यकृतो नभःस्थै-
निपात्यमानान्शिथिलीकृताङ्गान् ।
नक्षत्ररूपेण दिवश्च्युतांस्ता-
न्विचार्य को वा विरतिं न याति ॥ ३५ ॥

वाय्वर्कवह्नीन्द्रमुखान्सुरेन्द्रा-
नीशोग्रभीत्या ग्रथितान्तरङ्गान् ।
विपक्षलोकैः परिदूयमाना-
न्विचार्य को वा विरतिं न याति ॥ ३६ ॥

श्रुत्या निरुक्तं सुखतारतम्यं
ब्रह्मान्तमारभ्य महीमहेशम् ।
औपाधिकं तत्तु न वास्तवं चे-
दालोच्य को वा विरतिं न याति ॥ ३७ ॥

सालोक्यसामीप्यसरूपतादि-
भेदस्तु सत्कर्मविशेषसिद्धः ।
न कर्मसिद्धस्य तु नित्यतेति
विचार्य को वा विरतिं न याति ॥ ३८ ॥

यत्रास्ति लोके गतितारतम्यं
उच्चावचत्वान्वितमल तत्कृतम् ।
यथेह तद्वत्खलु दुःखमस्ती-
त्यालोच्य को वा विरतिं न याति ॥ ३९ ॥

को नाम लोके पुरुषो विवेकी
विनश्वरे तुच्छसुखे गृहादौ ।
कुर्याद्रतिं नित्यमवेक्षमाणो
वृथैव मोहान्म्रियमाणजन्तून् ॥ ४० ॥

सुखं किमस्त्यत्र विचार्यमाणे
गृहेऽपि वा योषिति वा पदार्थे ।
मायातमोऽन्धीकृतचक्षुषो ये
त एव मुह्यन्ति विवेकशून्याः ॥ ४१ ॥

अविचारितरमणीयं
सर्वमुदुम्बरफलोपमं भोग्यम् ।
अज्ञानामुपभोग्यं
न तु तज्ज्ञानां योषिति वा पदार्थे ॥ ४२ ॥

गतेऽपि तोये सुषिरं कुलीरो
हातुं ह्यशक्तो म्रियते विमोहात् ।
यथा तथा गेहसुखानुषक्तो
विनाशमायाति नरो भ्रमेण ॥ ४३ ॥

कोशक्रिमिस्तन्तुभिरात्मदेह-
मावेष्ट्य चावेष्ट्य च गुप्तिमिच्छन् ।
स्वयं विनिर्गन्तुमशक्त एव
संस्ततस्तदन्ते म्रियते च लग्नः ॥ ४४ ॥

यथा तथा पुत्रकलत्रमित्र-
स्नेहानुबन्धैर्ग्रथितो गृहस्थः ।
कदापि वा तान्परिमुच्य गेहा-
द्गन्तुं न शक्तो म्रियते मुधैव ॥ ४५ ॥

कारागृहस्यास्य च को विशेषः
प्रदृश्यते साधु विचार्यमाणे ।
मुक्तेः प्रतीपत्वमिहापि पुंसः
कान्तासुखाभ्युत्थितमोहपाशैः ॥ ४६ ॥

गृहस्पृहा पादनिबद्धशृङ्खला
कान्तासुताशा पटुकण्ठपाशः ।
शीर्षे पतद्वर्षशनिर्हि साक्षा-
त्प्राणान्तहेतुः प्रबला धनाशा ॥ ४७ ॥

आशापाशशतेन पाशितपदो नोत्थातुमेव क्षमः
कामक्रोधमदादिभिः प्रतिभटैः संरक्ष्यमाणोऽनिशम् ।
संमोहावरणेन गोपनवतः संसारकारागृहा-
न्निर्गन्तुं त्रिविधेषणापरवशः कः शक्नुयाद्रागिषु ॥

कामान्धकारेण निरुद्धदृष्टि-
र्मुह्यत्यसत्यप्यबलास्वरूपे ।
न ह्यन्धदृष्टेरसतः सतो वा
सुखत्वदुःखत्वविचारणास्ति ॥ ४९ ॥

श्लेष्मोद्गारि मुखं स्रवन्मलवती नासाश्रुमल्लोचनं
स्वेदस्राावि मलाभिपूर्णमभितो दुर्गन्धदुष्टं वपुः ।
अन्यद्वक्तुमशक्यमेव मनसा मन्तुं क्वचिन्नार्हति
स्त्रीरूपं कथमीदृशं सुमनसां पात्रीभवेन्नेत्रयोः ॥ ५० ॥

दूराद्वेक्ष्याग्निशिखां पतङ्गो
रम्यत्वबुद्ध्या विनिपत्य नश्यति ।
यथा तथा नष्टदृगेष सूक्ष्मं
कथं निरीक्षेत विमुक्तिमार्गम् ॥ ५१ ॥

कामेन कान्तां परिगृह्य तद्व-
ज्जनोऽप्ययं नश्यति नष्टदृष्टिः ।
मांसास्थिमज्जामलमूत्रपात्रं
स्त्रियं स्वयं रम्यतयैव पश्यति ॥ ५२ ॥

काम एव यमः साक्षात्कान्ता वैतरणी नदी ।
विवेकिनां मुमुक्षूणां निलयस्तु यमालयः ॥ ५३ ॥

यमालये वापि गृहेऽपि नो नृणां
तापत्रयक्लेशनिवृत्तिरस्ति ।
किंचित्समालोक्य तु तद्विरामं
सुखात्मना पश्यति मूढलोकः ॥ ५४ ॥

यमस्य कामस्य च तारतम्यं
विचार्यमाणे महदस्ति लोके ।

हितं करोत्यस्य यमोऽप्रियः स-
न्कामस्त्वनर्थं कुरुते प्रियः सन् ॥ ५५ ॥

यमोऽसतामेव करोत्यनर्थं
सतां तु सौख्यं कुरुते हितः सन् ।
कामः सतामेव गतिं निरुन्ध-
न्करोत्यनर्थं ह्यसतां नु का कथा ॥ ५६ ॥

विश्वस्य वृद्धिं स्वयमेव कांक्ष-
न्प्रवर्तकं कामिजनं ससर्ज ।
तेनैव लोकः परिमुह्यमानः
प्रवर्धते चन्द्रमसेव चाब्धिः ॥ ५७ ॥

कामो नाम महाञ्जगद्भ्रमयिता स्थित्वान्तरङ्गे स्वयं
स्त्रीपुंसावितरेतराङ्गकगुणैर्हासैश्च भावैः स्फुटम् ।
अन्योन्यं परिमोह्य नैजतमसा प्रेमानुबन्धेन तौ
बद्ध्वा भ्रामयति प्रपञ्चरचनां संवर्धयन्ब्रह्महा ॥ ५८ ॥

अतोऽन्तरङ्गस्थितकामवेगा-
द्भोग्ये प्रवृत्तिः स्वत एव सिद्धा ।

सर्वस्य जन्तोर्ध्रुवमन्यथा चे-
दबोधितार्थेषु कथं प्रवृत्तिः ॥ ५९ ॥

तेनैव सर्वजन्तूनां कामना बलवत्तरा ।
जीर्यत्यपि च देहेऽस्मिन्कामना नैव जीर्यते ॥ ६० ॥

अवेक्ष्य विषये दोषं बुद्धियुक्तो विचक्षणः ।
कामपाशेन यो मुक्तः स मुक्तेः पथिगोचरः ॥ ६१ ॥

कामस्य विजयोपायं सूक्ष्मं वक्ष्याम्यहं सताम् ।
संकल्पस्य परित्याग उपायः सुलभो मतः ॥ ६२ ॥

श्रुते दृष्टेऽपि वा भोग्ये यस्मिन्कस्मिंश्च वस्तुनि ।
समीचीनत्वधीत्यागात्कामो नोदेति कर्हिचित् ॥ ६३ ॥

कामस्य बीजं संकल्पः संकल्पादेव जायते ।
बीजे नष्टेऽङ्कुर इव तस्मिन्नष्टे विनश्यति ॥ ६४ ॥

न कोऽपि सम्यक्त्वधिया विनैव
भोग्यं नरः कामयितुं समर्थः ।

यतस्ततः कामजयेच्छुरेतां
सम्यक्त्वबुद्धिं विषये निहन्यात् ॥ ६५ ॥

भोग्ये नरः कामजयेच्छुरेतां
सुखत्वबुद्धिं विषये निहन्यात् ।
यावत्सुखत्वभ्रमधीः पदार्थे
तावन्न जेतुं प्रभवेद्धि कामम् ॥ ६६ ॥

संकल्पानुदये हेतुर्यथाभूतार्थदर्शनम् ।
अनर्थचिन्तनं चाभ्यां नावकाशोऽस्य विद्यते ॥ ६७ ॥

रत्ने यदि शिलाबुद्धिर्जायते वा भयं ततः ।
समीचीनत्वधीर्नैति नोपादेयत्वधीरपि ॥ ६८ ॥

यथार्थदर्शनं वस्तुन्यनर्थस्यापि चिन्तनम् ।
संकल्पस्यापि कामस्य तद्वधोपाय इष्यते ॥ ६९ ॥

धनं भयनिबन्धनं सततदुःखसंवर्धनं
प्रचण्डतरकर्दनं स्फुटितबन्धुसंवर्धनम् ।
विशिष्टगुणबाधनं कृपणधीसमाराधनं
न मुक्तिगतिसाधनं भवति नापि हृच्छोधनम् ॥ ७० ॥

राज्ञो भयं चोरभयं प्रमादा-
द्भयं तथा ज्ञातिभयं च वस्तुतः ।
धनं भयग्रस्तमनर्थमूलं
यतः सतां नैव सुखाय कल्पते ॥ ७१ ॥

आर्जने रक्षणे दाने व्यये वापि च वस्तुतः ।
दुःखमेव सदा नृणां न धनं सुखसाधनम् ॥ ७२ ॥

सतामपि पदार्थस्य लाभाल्लोभः प्रवर्धते ।
विवेको लुप्यते लोभात्तस्मिँल्लुप्ते विनश्यति ॥ ७३ ॥

दहत्यलाभे निःस्वत्वं लाभे लोभो दहत्यमुम् ।
तस्मात्संतापकं वित्तं कस्य सौख्यं प्रयच्छति ॥

भोगेन मत्तता जन्तोर्दानेन पुनरुद्भवः ।
वृथैवोभयथा वित्तं नास्त्येव गतिरन्यथा ॥ ७५ ॥

धनेन मदवृद्धिः स्यान्मदेन स्मृतिनाशनम् ।
स्मृतिनाशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ७६ ॥

सुखयति धनमेवेत्यन्तराशापिशाच्या
दृढतरमुपगूढो मूढलोको जडात्मा ।
निवसति तदुपान्ते संततं प्रेक्षमाणो
व्रजति तदपि पश्चात्प्राणमेतस्य हृत्वा ॥ ७७ ॥

संपन्नोऽन्धवदेव किंचिदपरं नो वीक्षते चक्षुषा
सद्भिर्वर्जितमार्ग एव चरति प्रोत्सारितो बालिशैः ।
तस्मिन्नेव मुहुः स्खलन्प्रतिपदं गत्वान्धकूपे पत-
त्यस्यान्धत्वनिवर्तकौषधमिदं दारिद्र्यमेवाञ्जनम् ॥७८॥

लोभः क्रोधश्च डम्भश्च मदो मत्सर एव च ।
वर्धते वित्तसंप्राप्त्या कथं तच्चित्तशोधनम् ॥ ७९ ॥

अलाभाद्द्विगुणं दुःखं वित्तस्य व्ययसंभवे ।
ततोऽपि त्रिगुणं दुःखं दुर्व्यये विदुषामपि ॥ ८० ॥

नित्याहितेन वित्तेन
भयचिन्तानपायिना ।
चित्तस्वास्थ्यं कुतो जन्तो-
र्गृहस्थेनाहिना यथा ॥ ८१ ॥

कान्तारे विजने वने जनपदे सेतौ निरीतौ च वा
चोरैर्वापि तथेतरैर्नरवरैर्युक्तो वियुक्तोऽपि वा ।
निःस्वः स्वस्थतया सुखेन वसति ह्यादृीयमाणो जनैः
क्लिश्नात्येव धनी सदाकुलमतिर्भीतश्च पुत्रादपि ॥ ८२ ॥

तस्मादनर्थस्य निदानमर्थः
पुमर्थसिद्धिर्न भवत्यनेन ।
ततो वनान्ते निवसन्ति सन्तः
संन्यस्य सर्वं प्रतिकूलमर्थम् ॥ ८३ ॥

श्रद्धाभक्तिमतीं सतीं गुणवतीं पुत्राञ्श्रुतान्संमता-
नक्षय्यं वसुधानुभोगविभवैः श्रीसुन्दरं मन्दिरम् ।
सर्वं नश्वरमित्यवेत्य कवयः श्रुत्युक्तिभिर्युक्तिभिः
संन्यस्यन्त्यपरे तु तत्सुखमिति भ्राम्यन्ति दुःखार्णवे ॥

सुखमिति मलराशौ ये रमन्तेऽत्र गेहे
क्रिमय इव कलत्रक्षेत्रपुत्रानुषक्त्या ।
सुरपद इव तेषां नैव मोक्षप्रसङ्ग-
स्त्वपि तु निरयगर्भावासदुःखप्रवाहः ॥ ८५ ॥

येषामाशा निराशा स्या-
द्दारापत्यधनादिषु ।
तेषां सिध्यति नान्येषां
मोक्षाशाभिमुखी गतिः ॥ ८६ ॥

सत्कर्मक्षयपाप्मनां श्रुतिमतां सिद्धात्मनां धीमतां
नित्यानित्यपदार्थशोधनमिदं युक्त्या मुहुः कुर्वताम् ।
तस्मादुत्थमहाविरक्त्यसिमतां मोक्षैककाङ्क्षावतां
धन्यानां सुलभं स्त्रियादिविषयेष्वाशालताच्छेदनम् ॥

संसारमृत्योर्बलिनः प्रवेष्टुं
द्वाराणि तु त्रीणि महान्ति लोके ।
कान्ता च जिह्वा कनकं च तानि
रुणद्धि यस्तस्य भयं न मृत्योः ॥ ८८ ॥

मुक्तिश्रीनगरस्य दुर्जयतरं द्वारं यदस्त्यादिमं
तस्य द्वे अररे धनं च युवती ताभ्यां पिनद्धं दृढम् ।
कामाख्यार्गलदारुणा बलवता द्वारं तदेतत्त्रयं
धीरो यस्तु भिनत्ति सोऽर्हति सुखं भोक्तुं विमुक्तिश्रियः ॥

आरूढस्य विवेकाश्वं तीव्रवैराग्यखड्गिनः ।
तितिक्षावर्मयुक्तस्य प्रतियोगी न दृश्यते ॥ ९० ॥

विवेकजां तीव्रविरक्तिमेव मुक्तेर्निदानं निगदन्ति सन्तः ।
तस्माद्विवेकी विरतिं मुमुक्षुः संपादयेत्तां प्रथमं प्रयत्नात् ॥

पुमानजातनिर्वेदो देहबन्धं जिहासितुम् ।
न हि शक्नोति निर्वेदो बन्धभेदो महानसौ ॥ ९२ ॥

वैराग्यरहिता एव यमालय इवालये ।
क्लिश्नन्ति त्रिविधैस्तापैर्मोहिता अपि पण्डिताः ॥ ९३ ॥

शमो दमस्तितिक्षोपरतिः श्रद्धा ततः परम् ।
समाधानमिति प्रोक्तं षडेवैते शमादयः ॥ ९४ ॥

एकवृत्त्यैव मनसः स्वलक्ष्ये नियतस्थितिः ।
शम इत्युच्यते सद्भिः शमलक्षणवेदिभिः ॥ ९५ ॥

उत्तमो मध्यमश्चैव जघन्य इति च त्रिधा ।
निरूपितो विपश्चिद्भिः तत्तल्लक्षणवेदिभिः ॥ ९६ ॥

स्वविकारं परित्यज्य वस्तुमात्रतया स्थितिः ।
मनसः सोत्तमा शान्तिर्ब्रह्मनिर्वाणलक्षणा ॥ ९७ ॥

प्रत्यक्प्रत्ययसंतानप्रवाहकरणं धियः ।
यदेषा मध्यमा शान्तिः शुद्धसत्त्वैकलक्षणा ॥ ९८ ॥

विषयव्यापृतिं त्यक्त्वा श्रवणैकमनस्थितिः ।
मनसश्चेतरा शान्तिर्मिश्रसत्त्वैकलक्षणा ॥ ९९ ॥

प्राच्योदीच्याङ्गसद्भावे शमः सिध्यति नान्यथा ।
तीव्रा विरक्तिः प्राच्याङ्गमुदीच्याङ्गं दमादयः ॥ १०० ॥

कामः क्रोधश्च लोभश्च मदो मोहश्च मत्सरः ।
न जिताः षडिमे येन तस्य शान्तिर्न सिध्यति ॥ १०१ ॥

शब्दादिविषयेभ्यो यो विषवन्न निवर्तते ।
तीव्रमोक्षेच्छया भिक्षोस्तस्य शान्तिर्न सिध्यति ॥ १०२ ॥

येन नाराधितो देवो यस्य नो गुर्वनुग्रहः ।
न वश्यं हृदयं यस्य तस्य शान्तिर्न सिध्यति ॥ १०३ ॥

मनःप्रसादसिद्ध्यर्थं साधनं श्रूयतां बुधैः ।
मनःप्रसादो यत्सत्त्वे यदभावे न सिध्यति ॥ १०४ ॥

ब्रह्मचर्यमहिंसा च दया भूतेष्ववक्रता ।
विषयेष्वतिवैतृष्ण्यं शौचं दम्भविवर्जनम् ॥ १०५ ॥

सत्यं निर्ममता स्थैर्यमभिमानविसर्जनम् ।
ईश्वरध्यानपरता ब्रह्मविद्भिः सहस्थितिः ॥ १०६ ॥

ज्ञानशास्त्रैकपरता समता सुखदुःखयोः ।
मानानासक्तिरेकान्तशीलता च मुमुक्षुता ॥ १०७ ॥

यस्यैतद्विद्यते सर्वं तस्य चित्तं प्रसीदति ।
न त्वेतद्धर्मशून्यस्य प्रकारान्तरकोटिभिः ॥ १०८ ॥

स्मरणं दर्शनं स्त्रीणां गुणकर्मानुकीर्तनम् ।
समीचीनत्वधीस्तासु प्रीतिः संभाषणं मिथः ॥ १०९ ॥

सहवासश्च संसर्गोऽष्टधा मैथुनं विदुः ।
एतद्विलक्षणं ब्रह्मचर्यं चित्तप्रसादकम् ॥ ११० ॥

अहिंसा वाङ्मनःकायैः प्राणिमात्राप्रपीडनम् ।
स्वात्मवत्सर्वभूतेषु कायेन मनसा गिरा ॥ १११ ॥

अनुकम्पा दया सैव प्रोक्ता वेदान्तवेदिभिः ।
करणत्रितयेष्वेकरूपतावक्रता मता ॥ ११२ ॥

ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ।
यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ ११३ ॥

बाह्यमाभ्यन्तरं चेति द्विविधं शौचमुच्यते ।
मृज्जलाभ्यां कृतं शौचं बाह्यं शारीरकं स्मृतम् ॥ ११४ ॥

अज्ञानदूरीकरणं मानसं शौचमान्तरम् ।
अन्तःशौचे स्थिते सम्यग्बाह्यं नावश्यकं नृणाम् ॥११५॥

ध्यानपूजादिकं लोके द्रष्टर्येव करोति यः ।
पारमार्थिकधीहीनः स दम्भाचार उच्यते ॥ ११६ ॥

पुंसस्तथानाचरणमदम्भित्वं विदुर्बुधाः ।
यत्स्वेन दृष्टं सम्यक्च श्रुतं तस्यैव भाषणम् ॥ ११७ ॥

सत्यमित्युच्यते ब्रह्म सत्यमित्यभिभाषणम् ।
देहादिषु स्वकीयत्वदृढबुद्धिविसर्जनम् ॥ ११८ ॥

निर्ममत्वं स्मृतं येन कैवल्यं लभते बुधः ।
गुरुवेदान्तवचनैर्निश्चितार्थे दृढस्थितिः ॥ ११९ ॥

तदेकवृत्त्या तत्स्थैर्यं नैश्चल्यं न तु वर्ष्मणः ।
विद्यैश्वर्यतपोरूपकुलवर्णाश्रमादिभिः ॥ १२० ॥

संजाताहंकृतित्यागस्त्वभिमानविसर्जनम् ।
त्रिभिश्च करणैः सम्यग्हित्वा वैषयिकीं क्रियाम् ॥ १२१ ॥

स्वात्मैकचिन्तनं यत्तदीश्वरध्यानमीरितम् ।
छायेव सर्वदा वासो ब्रह्मविद्भिः सह स्थितिः ॥ १२२ ॥

यद्यदुक्तं ज्ञानशास्त्रे श्रवणादिकमेषु यः ।
निरतः कर्मधीहीनः ज्ञाननिष्ठः स एव हि ॥ १२३ ॥

धनकान्ताज्वरादीनां प्राप्तकाले सुखादिभिः ।
विकारहीनतैव स्यात्सुखदुःखसमानता ॥ १२४ ॥

श्रेष्ठं पूज्यं विदित्वा मां मानयन्तु जना भुवि ।
इत्यासक्त्या विहीनत्वं मानानासक्तिरुच्यते ॥ १२५ ॥

सच्चिन्तनस्य संबाधो विघ्नोऽयं निर्जने ततः ।
स्थेयमित्येक एवास्ति चेत्सैवैकान्तशीलता ॥ १२६ ॥

संसारबन्धनिर्मुक्तिः कदा झटिति मे भवेत् ।
इति या सुदृढा बुद्धिरीरिता सा मुमुक्षुता ॥ १२७ ॥

ब्रह्मचर्यादिभिर्धर्मैर्बुद्धेर्दोषनिवृत्तये ।
दण्डनं दम इत्याहुर्दमशब्दार्थकोविदाः ॥ १२८ ॥

तत्तद्वृत्तिनिरोधेन बाह्येन्द्रियविनिग्रहः ।
योगिनो दम इत्याहुर्मनसः शान्तिसाधनम् ॥ १२९ ॥

इन्द्रियेष्विन्द्रियार्थेषु प्रवृत्तेषु यदृच्छया ।
अनुधावति तान्येव मनो वायुमिवानलः ॥ १३० ॥

इन्द्रियेषु निरुद्धेषु त्यक्त्वा वेगं मनः स्वयम् ।
सत्त्वभावमुपादत्ते प्रसादस्तेन जायते ॥ १३१ ॥

प्रसन्ने सति चित्तेऽस्य
मुक्तिः सिध्यति नान्यथा ।
मनःप्रसादस्य निदानमेव
निरोधनं यत्सकलेन्द्रियाणाम् ।
बाह्येन्द्रिये साधु निरुध्यमाने
बाह्यार्थभोगो मनसो वियुज्यते ॥ १३२ ॥

तेन स्वदौष्ट्यं परिमुच्य चित्तं
शनैः शनैः शान्तिमुपाददाति ।
चित्तस्य बाह्यार्थविमोक्षमेव
मोक्षं विदुर्मोक्षणलक्षणज्ञाः ॥ १३३ ॥

दमं विना साधु मनःप्रसाद-
हेतुं न विद्मः सुकरं मुमुक्षोः ।

दमेन चित्तं निजदोषजातं
विसृज्य शान्तिं समुपैति शीघ्रम् ॥ १३४ ॥

प्राणायामाद्भवति मनसो निश्चलत्वं प्रसादो
यस्याप्यस्य प्रतिनियतदिग्देशकालाद्यवेक्ष्य ।
सम्यग्दृष्ट्या क्वचिदपि तया नो दमो हन्यते त-
त्कुर्याद्धीमान्दममनलसश्चित्तशान्त्यै प्रयत्नात् ॥

सर्वेन्द्रियाणां गतिनिग्रहेण
भोग्येषु दोषाद्यवमर्शनेन ।
ईशप्रसादाच्च गुरोः प्रसादा-
च्छान्तिं समायात्यचिरेण चित्तम् ॥ १३६ ॥

आध्यात्मिकादि यद्दुःखं प्राप्तं प्रारब्धवेगतः ।
अचिन्तया तत्सहनं तितिक्षेति निगद्यते ॥ १३७ ॥

रक्षा तितिक्षासदृशी मुमुक्षो-
र्न विद्यतेऽसौ पविना न भिद्यते ।
यामेव धीराः कवचीव विघ्ना-
न्सर्वांस्तृणीकृत्य जयन्ति मायाम् ॥ १३८ ॥

क्षमावतामेव हि योगसिद्धिः
स्वाराज्यलक्ष्मीसुखभोगसिद्धिः ।
क्षमाविहीना निपतन्ति विघ्नै-
र्वातैर्हताः पर्णचया इव द्रुमात् ॥ १३९ ॥

तितिक्षया तपो दानं यज्ञस्तीर्थं व्रतं श्रुतम् ।
भूतिः स्वर्गोऽपवर्गश्च प्राप्यते तत्तदर्थिभिः ॥ १४० ॥

ब्रह्मचर्यमहिंसा च साधूनामप्यगर्हणम् ।
पराक्षेपादिसहनं तितिक्षोरेव सिध्यति ॥ १४१ ॥

साधनेष्वपि सर्वेषु तितिक्षोत्तमसाधनम् ।
यत्र विघ्नाः पलायन्ते दैविका अपि भौतिकाः ॥ १४२ ॥

तितिक्षोरेव विघ्नेभ्यस्त्वनिवर्तितचेतसः ।
सिध्यन्ति सिद्धयः सर्वा अणिमाद्याः समृद्धयः ॥ १४३ ॥

तस्मान्मुमुक्षोरधिका तितिक्षा
संपादनीयेप्सितकार्यसिद्ध्यै ।

तीव्रा मुमुक्षा च महत्युपेक्षा
चोभे तितिक्षा सहकारि कारणम् ॥ १४४ ॥

तत्तत्कालसमागतामयततेः शान्त्यै प्रवृत्तो यदि
स्यात्तत्तत्परिहारकौषधरतस्तच्चिन्तने तत्परः ।
तद्भिक्षुः श्रवणादिधर्मरहितो भूत्वा मृतश्चेत्ततः
किं सिद्धं फलमाप्नुयादुभयथा भ्रष्टो भवेत्स्वार्थतः ॥

योगमभ्यस्यतो भिक्षोर्योगाच्चलितचेतसः ।
प्राप्य पुण्यकृताँल्लोकानित्यादि प्राह केशवः ॥ १४६ ॥

न तु कृत्वैव संन्यासं तूष्णीमेव मृतस्य हि ।
पुण्यलोकगतिं ब्रूते भगवान्न्यासमात्रतः ॥ १४७ ॥

न च संन्यसनादेव सिद्धिं समधिगच्छति ।
इत्यनुष्ठेयसंत्यागात्सिद्ध्यभावमुवाच च ॥ १४८ ॥

तस्मात्तितिक्षया सोढ्वा तत्तद्दुःखमुपागतम् ।
कुर्याच्छक्त्यनुरूपेण श्रवणादि शनैः शनैः ॥ १४९ ॥

प्रयोजनं तितिक्षायाः साधितायाः प्रयत्नतः ।
प्राप्तदुःखासहिष्णुत्वे न किंचिदपि दृश्यते ॥ १५० ॥

साधनत्वेन दृष्टानां सर्वेषामपि कर्मणाम् ।
विधिना यः परित्यागः स संन्यासः सतां मतः ॥ १५१ ॥

उपरमयति कर्माणीत्युपरतिशब्देन कथ्यते न्यासः ।
न्यासेन हि सर्वेषां श्रुत्या प्रोक्तो विकर्मणां त्यागः ॥१५२॥

कर्मणा साध्यमानस्यानित्यत्वं श्रूयते यतः ।
कर्मणानेन किं नित्यफलेप्सोः परमार्थिनः ॥ १५३ ॥

उत्पाद्यमाप्यं संस्कार्यं विकार्यं परिगण्यते ।
चतुर्विधं कर्मसाध्यं फलं नान्यदितः परम् ॥ १५४ ॥

नैतदन्यतरं ब्रह्म कदा भवितुमर्हति ।
स्वतःसिद्धं सर्वदाप्तं शुद्धं निर्मलमक्रियम् ॥ १५५ ॥

न चास्य कश्चिज्जनितेत्यागमेन निषिध्यते ।
कारणं ब्रह्म तत्तस्माद्ब्रह्म नोत्पाद्यमिष्यते ॥ १५६ ॥

आप्त्राप्ययोस्तु भेदश्चेदाप्त्रा चाप्यमवाप्यते ।
आप्तृस्वरूपमेवैतद्ब्रह्म नाप्यं कदाचन ॥ १५७ ॥

मलिनस्यैव संस्कारो दर्पणादेरिहेष्यते ।
व्योमवन्नित्यशुद्धस्य ब्रह्मणो नैव संस्क्रिया ॥ १५८ ॥

केन दुष्टेन युज्येत वस्तु निर्मलमक्रियम् ।
यद्योगादागतं दोषं संस्कारो विनिवर्तयेत् ॥ १५९ ॥

निर्गुणस्य गुणाधानमपि नैवोपपद्यते ।
केवलो निर्गुणश्चेति नैर्गुण्यं श्रूयते यतः ॥ १६० ॥

सावयवस्य क्षीरादेर्वस्तुनः परिणामिनः ।
येन केन विकारित्वं स्यान्नो निष्कर्मवस्तुनः ॥ १६१ ॥

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
इत्येव वस्तुनस्तत्त्वं श्रुतियुक्तिव्यवस्थितम् ॥ १६२ ॥

तस्मान्न कर्मसाध्यत्वं ब्रह्मणोऽस्ति कुतश्चन ।
कर्मसाध्यं त्वनित्यं हि ब्रह्म नित्यं सनातनम् ॥ १६३ ॥

देहादिः क्षीयते लोको यथैवं कर्मणा चितः ।
तथैवामुष्मिको लोको संचितः पुण्यकर्मणा ॥ १६४ ॥

कृतकत्वमनित्यत्वे हेतुर्जागर्ति सर्वदा ।
तस्मादनित्ये स्वर्गादौ पण्डितः को नु मुह्यति ॥ १६५ ॥

जगद्धेतोस्तु नित्यत्वं सर्वेषामपि संमतम् ।
जगद्धेतुत्वमस्यैव वावदीति श्रुतिर्मुहुः ॥ १६६ ॥

ऐतदात्म्यमिदं सर्वं तत्सत्यमिति च श्रुतिः ।
अस्यैव नित्यतां ब्रूते जगद्धेतोः सतः स्फुटम् ॥ १६७ ॥

न कर्मणा न प्रजया धनेनेति स्वयं श्रुतिः ।
कर्मणो मोक्षहेतुत्वं साक्षादेव निषेधति ॥ १६८ ॥

प्रत्यग्ब्रह्मविचारपूर्वमुभयोरेकत्वबोधाद्विना
कैवल्यं पुरुषस्य सिध्यति परब्रह्मात्मतालक्षणम् ।
न स्नानैरपि कीर्तनैरपि जपैर्नो कृच्छ्रचान्द्रायणै-
र्नो वाप्यध्वरयज्ञदाननिगमैर्नो मन्त्रतन्त्रैरपि ॥ १६९॥

ज्ञानादेव तु कैवल्यमिति श्रुत्या निगद्यते ।
ज्ञानस्य मुक्तिहेतुत्वमन्यव्यावृत्तिपूर्वकम् ॥ १७० ॥

विवेकिनो विरक्तस्य ब्रह्मनित्यत्ववेदिनः ।
तद्भावेच्छोरनित्यार्थे तत्सामग्र्ये कुतोऽरतिः ॥ १७१ ॥

तस्मादनित्ये स्वर्गादौ साधनत्वेन चोदितम् ।
नित्यं नैमित्तिकं चापि सर्वं कर्म ससाधनम् ॥ १७२ ॥

मुमुक्षुणा परित्याज्यं ब्रह्मभावमभीप्सुना ।
मुमुक्षोरपि कर्मास्तु श्रवणं चापि साधनम् ॥ १७३ ॥

हस्तवद्द्वयमेतस्य स्वकार्यं साधयिष्यति ।
यथा विजृम्भते दीपो ऋजूकरणकर्मणा ॥ १७४ ॥

तथा श्रवणजो बोधः पुंसो विहितकर्मणा ।
अतः सापेक्षितं ज्ञानमथवापि समुच्चयम् ॥ १७५ ॥

मोक्षस्य साधनमिति वदन्ति ब्रह्मवादिनः ।
मुमुक्षोर्युज्यते त्यागः कथं विहितकर्मणः ॥ १७६ ॥

इति शङ्का न कर्तव्या मूढवत्पण्डितोत्तमैः ।
कर्मणः फलमन्यत्तु श्रवणस्य फलं पृथक् ॥ १७७ ॥

वैलक्षण्यं च सामग्र्योश्चोभयत्राधिकारिणोः ।
कामी कर्मण्यधिकृतो निष्कामी श्रवणे मतः ॥ १७८ ॥

अर्थी समर्थ इत्यादि लक्षणं कर्मिणो मतम् ।
परीक्ष्य लोकानित्यादि लक्षणं मोक्षकाङ्क्षिणः ॥ १७९ ॥

मोक्षाधिकारी संन्यासी गृहस्थः किल कर्मणि ।
कर्मणः साधनं भार्यास्रुक्स्रुवादिपरिग्रहः ॥ १८० ॥

नैवान्यसाधनापेक्षा शुश्रूषोस्तु गुरुं विना ।
उपर्युपर्यहंकारो वर्धते कर्मणा भृशम् ॥ १८१ ॥

अहंकारस्य विच्छित्तिः श्रवणेन प्रतिक्षणम् ।
प्रवर्तकं कर्मशास्त्रं ज्ञानशास्त्रं निवर्तकम् ।। १८२ ।।

इत्यादिवैपरीत्यं तत्साधने चाधिकारिणोः ।
द्वयोः परस्परापेक्षा विद्यते न कदाचन ।। १८३ ।।

सामग्र्योश्चोभयोस्तद्वदुभयत्राधिकारिणोः ।
ऊर्ध्वं नयति विज्ञानमधः प्रापयति क्रिया ।। १८४ ।।

कथमन्योन्यसापेक्षा कथं वापि समुच्चयः ।
यथाग्नेस्तृणकूटस्य तेजसस्तिमिरस्य च ।। १८५ ।।

सहयोगो न घटते तथैव ज्ञानकर्मणोः ।
किमूपकुर्याज्ज्ञानस्य कर्मस्वप्रतियोगिनः ।।
यस्य संनिधिमात्रेण स्वयं न स्फूर्तिमृच्छति ।। १८६ ।।

कोटीन्धनाद्रिज्वलितोऽपि वह्निरर्कस्य नार्हत्युपकर्तुमीषत् ।
यथा तथा कर्मसहस्रकोटिर्ज्ञानस्य किं नु स्वयमेव लीयते ।।

एककर्त्राश्रयौ हस्तौ कर्मण्यधिकृतावुभौ ।
सहयोगस्तयोर्युक्तो न तथा ज्ञानकर्मणोः ।। १८८ ।।

कर्त्रा कर्तुमकर्तुं वाप्यन्यथा कर्म शक्यते ।
न तथा वस्तुनो ज्ञानं कर्तृतन्त्रं कदाचन ॥ १८९ ॥

यथा वस्तु तथा ज्ञानं प्रमाणेन विजायते ।
नापेक्षते च यत्किंचित्कर्म वा युक्तिकौशलम् ॥ १९० ॥

ज्ञानस्य वस्तुतन्त्रत्वे संशयाद्युदयः कथम् ।
अतो न वास्तवं ज्ञानमिति नो शङ्क्यतां बुधैः ॥ १९१ ॥

प्रमाणासौष्ठवकृतं संशयादि न वास्तवम् ।
श्रुतिप्रमाणसुष्ठुत्वे ज्ञानं भवति वास्तवम् ॥ १९२ ॥

वस्तु तावत्परं ब्रह्म नित्यं सत्यं ध्रुवं विभु ।
श्रुतिप्रमाणे तज्ज्ञानं स्यादेव निरपेक्षकम् ॥ १९३ ॥

रूपज्ञानं यथा सम्यग्दृष्टौ सत्यां भवेत्तथा ।
श्रुतिप्रमाणे सत्येव ज्ञानं भवति वास्तवम् ॥ १९४ ॥

न कर्म यत्किंचिदपेक्षते हि रूपोपलब्धौ पुरुषस्य चक्षुः ।
ज्ञानं तथैव श्रवणादिजन्यं वस्तुप्रकाशे निरपेक्षमेव ॥

कर्तृतन्त्रं भवेत्कर्म कर्मतन्त्रं शुभाशुभम् ।
प्रमाणतन्त्रं विज्ञानं मायातन्त्रमिदं जगत् ॥ १९६ ॥

विद्यां चाविद्यां चेति सहोक्तिरियमुपकृता सद्भिः ।
सत्कर्मोपासनयोर्न त्वात्मज्ञानकर्मणोः क्वापि ॥ १९७ ॥

नित्यानित्यपदार्थबोधरहितो यश्चोभयत्र स्रगा-
द्यर्थानामनुभूतिलग्नहृदयो निर्विण्णबुद्धिर्जनः ।
तस्यैवास्य जडस्य कर्म विहितं श्रुत्या विरज्याभितो
मोक्षेच्छोर्न विधीयते तु परमानन्दार्थिनो धीमतः ॥ १९८ ॥

मोक्षेच्छया यदहरेव विरज्यतेऽसौ
न्यासस्तदैव विहितो विदुषो मुमुक्षोः ।
श्रुत्या तयैव परया च ततः सुधीभिः
प्रामाणिकोऽयमिति चेतसि निश्चितव्यः ॥ १९९ ॥

स्वापरोक्षस्य वेदादेः साधनत्वं निषेधति ।
नाहं वेदैर्न तपसेत्यादिना भगवानपि ॥ २०० ॥

प्रवृत्तिश्च निवृत्तिश्च द्वे एते श्रुतिगोचरे ।
प्रवृत्त्या बध्यते जन्तुर्निवृत्त्या तु विमुच्यते ॥ २०१ ॥

यन्न स्वबन्धोऽभिमतो मूढस्यापि क्वचित्ततः ।
निवृत्तिः कर्मसंन्यासः कर्तव्यो मोक्षकाङ्क्षिभिः ॥२०२॥

न ज्ञानकर्मणोर्यस्मात्सहयोगस्तु युज्यते ।
तस्मात्त्याज्यं प्रयत्नेन कर्म ज्ञानेच्छुना ध्रुवम् ॥ २०३ ॥

इष्टसाधनताबुद्ध्या गृहीतस्यापि वस्तुनः ।
विज्ञाय फल्गुतां पश्चात्कः पुनस्तत्प्रतीक्षते ॥ २०४ ॥

उपरतिशब्दार्थो ह्युपरमणं पूर्वदृष्टवृत्तिभ्यः ।
सोऽयं मुख्यो गौणश्चेति च वृत्त्या द्विरूपतां धत्ते ॥२०५॥

वृत्तेर्दृश्यपरित्यागो मुख्यार्थ इति कथ्यते ।
गौणार्थः कर्मसंन्यासः श्रुतेरङ्गतया मतः ॥ २०६ ॥

पुंसः प्रधानसिद्ध्यर्थमङ्गस्याश्रयणं ध्रुवम् ।
कर्तव्यमङ्गहीनं चेत्प्रधानं नैव सिध्यति ॥ २०७ ॥

संन्यसेत्सुविरक्तः सन्निहामुत्रार्थतः सुखात् ।
अविरक्तस्य संन्यासो निष्फलोऽयाज्ययागवत् ॥ २०८ ॥

संन्यस्य तु यतिः कुर्यान्न पूर्वविषयस्मृतिम् ।
तां तां तत्स्मरणे तस्य जुगुप्सा जायते यतः ॥ २०९ ॥

गुरुवेदान्तवाक्येषु बुद्धिर्या निश्चयात्मिका ।
सत्यमित्येव सा श्रद्धा निदानं मुक्तिसिद्धये ॥ २१० ॥

श्रद्धावतामेव सतां पुमर्थः
समीरितः सिध्यति नेतरेषाम् ।
उक्तं सुसूक्ष्मं परमार्थतत्त्वं
श्रद्धत्स्व सोम्येति च वक्ति वेदः ॥ २११ ॥

श्रद्धाविहीनस्य तु न प्रवृत्तिः
प्रवृत्तिशून्यस्य न साध्यसिद्धिः ।
अश्रद्धयैवाभिहताश्च सर्वे
मज्जन्ति संसारमहासमुद्रे ॥ २१२ ॥

दैवे च वेदे च गुरौ च मन्त्रे
तीर्थे महात्मन्यपि भेषजे च ।
श्रद्धा भवत्यस्य यथा यथान्त-
स्तथा तथा सिद्धिरुदेति पुंसाम् ॥ २१३ ॥

अस्तीत्येवोपलब्धव्यं वस्तुसद्भावनिश्चयात् ।
सद्भावनिश्चयस्तस्य श्रद्धया शास्त्रसिद्धया ॥ २१४ ॥

तस्माच्छ्रद्धा सुसंपाद्या गुरुवेदान्तवाक्ययोः ।
मुमुक्षोः श्रद्दधानस्य फलं सिध्यति नान्यथा ॥ २१५ ॥

यथार्थवादिता पुंसां श्रद्धाजननकारणम् ।
वेदस्येश्वरवाक्यत्वाद्यथार्थत्वे न संशयः ॥ २१६ ॥

मुक्तस्येश्वररूपत्वाद्गुरोर्वागपि तादृशी ।
तस्मात्तद्वाक्ययोः श्रद्धा सतां सिध्यति धीमताम् ॥२१७॥

श्रुत्युक्तार्थावगाहाय विदुषा ज्ञेयवस्तुनि ।
चित्तस्य सम्यगाधानं समाधानमितीर्यते ॥ २१८ ॥

चित्तस्य साध्यैकपरत्वमेव
पुमर्थसिद्धेर्नियमेन कारणम् ।
नैवान्यथा सिध्यति साध्यमीष-
न्मनःप्रमादे विफलः प्रयत्नः ॥ २१९ ॥

चित्तं च दृष्टिं करणं तथान्य-
देकत्र बध्नाति हि लक्ष्यभेत्ता ।
किंचित्प्रमादे सति लक्ष्यभेत्तु-
र्बाणप्रयोगो विफलो यथा तथा ॥ २२० ॥

सिद्धेश्चित्तसमाधानमसाधारणकारणम् ।
यतस्ततो मुमुक्षूणां भवितव्यं सदामुना ॥ २२१ ॥

अत्यन्ततीव्रवैराग्यं फललिप्सा महत्तरा ।
तदेतदुभयं विद्यात्समाधानस्य कारणम् ॥ २२२ ॥

बहिरङ्गं श्रुतिः प्राह ब्रह्मचर्यादिमुक्तये ।
शमादिषट्कमेवैतदन्तरङ्गं विदुर्बुधाः ॥ २२३ ॥

अन्तरङ्गं हि बलवद्बहिरङ्गाद्यतस्ततः ।
शमादिषट्कं जिज्ञासोरवश्यं भाव्यमान्तरम् ॥ २२४ ॥

अन्तरङ्गविहीनस्य कृतश्रवणकोटयः ।
न फलन्ति यथा योद्धुरधीरस्यास्त्रसंपदः ॥ २२५ ॥

ब्रह्मात्मैकत्वविज्ञानाद्यद्विद्वान्मोक्तुमिच्छति ।
संसारपाशबन्धं तन्मुमुक्षुत्वं निगद्यते ॥ २२६ ॥

साधनानां तु सर्वेषां मुमुक्षा मूलकारणम् ।
अनिच्छोरप्रवृत्तस्य क्व श्रुतिः क्व नु तत्फलम् ॥ २२७ ॥

तीव्रमध्यममन्दातिमन्दभेदाश्चतुर्विधाः ।
मुमुक्षा तत्प्रकारोऽपि कीर्त्यते श्रूयतां बुधैः ॥ २२८ ॥

तापैस्त्रिभिर्नित्यमनेकरूपैः संतप्यमानो क्षुभितान्तरात्मा ।
परिग्रहं सर्वमनर्थबुद्ध्या जहाति सा तीव्रतरा मुमुक्षा ॥

तापत्रयं तीव्रमवेक्ष्य वस्तु
दृष्ट्वा कलत्रं तनयान्विहातुम् ।
मध्ये द्वयोर्लोडनमात्मनो य-
त्सैषा मता माध्यमिकी मुमुक्षा ॥ २३० ॥

मोक्षस्य कालोऽस्ति किमद्य मे त्वरा
भुक्त्वैव भोगान्कृतसर्वकार्यः ।
मुक्त्यै यतिष्येऽहमथेति बुद्धि-
रेषैव मन्दा कथिता मुमुक्षा ॥ २३१ ॥

मार्गे प्रयातुर्मणिलाभवन्मे
लभेत मोक्षो यदि तर्हि धन्यः ।
इत्याशया मूढधियां मतिर्या
सैषातिमन्दाभिमता मुमुक्षा ॥ २३२ ॥

जन्मानेकसहस्रेषु तपसाराधितेश्वरः ।
तेन निःशेषनिर्धूतहृदयस्थितकल्मषः ॥ २३३ ॥

शास्त्रविद्गुणदोषज्ञो भोग्यमात्रे विनिस्पृहः ।
नित्यानित्यपदार्थज्ञो मुक्तिकामो दृढव्रतः ॥ २३४ ॥

निष्टप्तमग्निना पात्रमुद्वास्य त्वरया यथा ।
जहाति गेहं तद्वच्च तीव्रमोक्षेच्छया द्विजः ॥ २३५ ॥

स एव सद्यस्तरति संसृतिं गुर्वनुग्रहात् ।
यस्तु तीव्रमुमुक्षुः स्यात्स जीवन्नेव मुच्यते ॥ २३६ ॥

जन्मान्तरे मध्यमस्तु तदन्यस्तु युगान्तरे ।
चतुर्थः कल्पकोट्यां वा नैव बन्धाद्विमुच्यते ॥ २३७ ॥

नृजन्म जन्तोरतिदुर्लभं विदु-
स्ततोऽपि पुंस्त्वं च ततो विवेकः ।
लब्ध्वा तदेतत्त्रितयं महात्मा
यतेत मुक्त्यै सहसा विरक्तः ॥ २३८ ॥

पुत्रमित्रकलत्रादिसुखं जन्मनि जन्मनि ।
मर्त्यत्वं पुरुषत्वं च विवेकश्च न लभ्यते ॥ २३९ ॥

लब्ध्वा सुदुर्लभतरं नरजन्म जन्तु-
स्तत्रापि पौरुषमतः सदसद्विवेकम् ।
संप्राप्य चैहिकसुखाभिरतो यदि स्या-
द्धिक्तस्य जन्म कुमतेः पुरुषाधमस्य ॥ २४० ॥

खादते मोदते नित्यं शुनकः सूकरः खरः ।
तेषामेषां विशेषः को वृत्तिर्येषां तु तैः समा ॥ २४१ ॥

यावन्नाश्रयते रोगो यावन्नाक्रमते जरा ।
यावन्न धीर्विपर्येति यावन्मृत्युं न पश्यति ॥ २४२ ॥

तावदेव नरः स्वस्थः सारग्रहणतत्परः ।
विवेकी प्रयतेताशु भवबन्धविमुक्तये ॥ २४३ ॥

देवर्षिपितृमर्त्यर्णबन्धमुक्तास्तु कोटिशः ।
भवबन्धविमुक्तस्तु यः कश्चिद्ब्रह्मवित्तमः ॥ २४४ ॥

अन्तर्बन्धेन बद्धस्य किं बहिर्बन्धमोचनैः ।
तदन्तर्बन्धमुक्त्यर्थं क्रियतां कृतिभिः कृतिः ॥ २४५ ॥

कृतिपर्यवसानैव मता तीव्रमुमुक्षुता ।
अन्या तु रञ्जनामात्रा यत्र नो दृश्यते कृतिः ॥ २४६ ॥

गेहादिसर्वमपहाय लघुत्वबुद्ध्या
सौख्येच्छया स्वपतिनानलमाविविक्षोः ।
कान्ताजनस्य नियता सुदृढा त्वरा या
सैषा फलान्तगमने करणं मुमुक्षोः ॥ २४७ ॥

नित्यानित्यविवेकश्च देहक्षणिकतामतिः ।
मृत्योर्भीतिश्च तापश्च मुमुक्षावृद्धिकारणम् ॥ २४८ ॥

शिरो विवेकस्त्वत्यन्तं वैराग्यं वपुरुच्यते ।
शमादयः षडङ्गानि मोक्षेच्छा प्राण इष्यते ॥ २४९ ॥

ईदृशाङ्गसमायुक्तो जिज्ञासुर्युक्तिकोविदः ।
शूरो मृत्युं निहन्त्येव सम्यग्ज्ञानासिना ध्रुवम् ॥ २५० ॥

उक्तसाधनसंपन्नो जिज्ञासुर्यतिरात्मनः ।
जिज्ञासायै गुरुं गच्छेत्समितपाणिर्नयोज्ज्वलः ॥ २५१ ॥

श्रोत्रियो ब्रह्मनिष्ठो यः प्रशान्तः समदर्शनः ।
निर्ममो निरहंकारो निर्द्वन्द्वो निष्परिग्रहः ॥ २५२ ॥

अनपेक्षः शुचिर्दक्षः करुणामृतसागरः ।
एवंलक्षणसंपन्नः स गुरुर्ब्रह्मवित्तमः ।
उपासाद्यः प्रयत्नेन जिज्ञासोः स्वार्थसिद्धये ॥ २५३ ॥

जन्मानेकशतैः सदादरयुजा भक्त्या समाराधितो
भक्तैर्वैदिकलक्षणेन विधिना संतुष्ट ईशः स्वयम् ।

साक्षाच्छ्रीगुरुरूपमेत्य कृपया दृग्गोचरः सन्प्रभुः
तत्त्वं साधु विबोध्य तारयति तान्संसारदुःखार्णवात् ॥

अविद्याहृदयग्रन्थिविमोक्षोऽपि भवेद्यतः ।
तमेव गुरुरित्याहुर्गुरुशब्दार्थवेदिनः ॥ २५५ ॥

शिव एव गुरुः साक्षात् गुरुरेव शिवः स्वयम् ।
उभयोरन्तरं किंचिन्न द्रष्टव्यं मुमुक्षुभिः ॥ २५६ ॥

बन्धमुक्तं ब्रह्मनिष्ठं कृतकृत्यं भजेद्गुरुम् ।
यस्य प्रसादात्संसारसागरो गोष्पदायते ॥ २५७ ॥

शुश्रूषया सदा भक्त्या प्रणामैर्विनयोक्तिभिः ।
प्रसन्नं गुरुमासाद्य प्रष्टव्यं ज्ञेयमात्मनः ॥ २५८ ॥

भगवन्करुणासिन्धो भवसिन्धोर्भवांस्तरिः ।
यमाश्रित्याश्रमेणैव परं पारं गता बुधाः ॥ २५९ ॥

जन्मान्तरकृतानन्तपुण्यकर्मफलोदयः ।
अद्य संनिहितो यस्मात्त्वत्कृपापात्रमस्म्यहम् ॥ २६० ॥

संप्रीतिमक्ष्णोर्वदनप्रसाद-
मानन्दमन्तःकरणस्य सद्यः ।

विलोकनं ब्रह्मविदस्तनोति
छिनत्ति मोहं सुगतिं व्यनक्ति ॥ २६१ ॥

हुताशनानां शशिनामिनाना-
मप्यर्बुदं वापि न यन्निहन्तुम् ।
शक्नोति तद्ध्वान्तमनन्तमान्तरं
हन्त्यात्मवेत्ता सकृदीक्षणेन ॥ २६२ ॥

दुष्पारे भवसागरे जनिमृतिव्याध्यादिदुःखोत्कटे
घोरे पुत्रकलत्रमित्रबहुलग्राहाकरे भीकरे ।
कर्मोत्तुङ्गतरङ्गभङ्गनिकरैराकृष्यमाणो मुहुः
यातायातगतिभ्रमेण शरणं किंचिन्न पश्याम्यहम् ॥

केन वा पुण्यशेषेण तव पादाम्बुजद्वयम् ।
दृष्टवानस्मि मामार्तं मृत्योस्त्राहि दयादृशा ॥ २६४ ॥

वदन्तमेवं तं शिष्यं दृष्ट्वैव दयया गुरुः ।
दद्यादभयमेतस्मै मा भैष्टेति मुहुर्मुहुः ॥ २६५ ॥

विद्वन्मृत्युभयं जहीहि भवतो नास्त्येव मृत्युः क्वचि-
न्नित्यस्य द्वयवर्जितस्य परमानन्दात्मनो ब्रह्मणः ।

भ्रान्त्या किंचिदवेक्ष्य भीतमनसा मिथ्या त्वया कथ्यते
मां त्राहीति हि सुप्तवत्प्रलपनं शून्यात्मकं ते मृषा ॥२६६॥

निद्रागाढतमोवृतः किल जनः स्वप्ने भुजङ्गादिना
ग्रस्तं स्वं समवेक्ष्य यत्प्रलपति त्रासाद्धतोऽस्मीत्यलम् ।
आप्तेन प्रतिबोधितः करतलेनाताड्य पृष्टः स्वयं
किंचिन्नेति वदत्यमुष्य वचनं स्यात्तत्किमर्थं वद ॥ २६७ ॥

रज्जोस्तु तत्त्वमनवेक्ष्य गृहीतसर्प-
भावः पुमानयमहिर्वसतीति मोहात् ।
आक्रोशति प्रतिबिभेति च कम्पते त-
न्मिथ्यैव नात्र भुजगोऽस्ति विचार्यमाणे ॥ २६८ ॥

तद्वत्त्वयाप्यात्मन उक्तमेत-
ज्जन्माप्ययव्याधिजरादिदुःखम् ।
मृषैव सर्वं भ्रमकल्पितं ते
सम्यग्विचार्यात्मनि मुञ्च भीतिम् ॥ २६९ ॥

भवाननात्मनो धर्मानात्मन्यारोप्य शोचति ।
तदज्ञानकृतं सर्वं भयं त्यक्त्वा सुखी भव ॥ २७० ॥

शिष्य:—

श्रीमद्भिरुक्तं सकलं मृषेति
दृष्टान्त एव ह्युपपद्यते तत् ।
दार्ष्टान्तिके नैव भवादिदुःखं
प्रत्यक्षतः सर्वजनप्रसिद्धम् ॥ २७१ ॥

प्रत्यक्षेणानुभूतार्थः कथं मिथ्यात्वमर्हति ।
चक्षुषो विषयं कुम्भं कथं मिथ्या करोम्यहम् ॥ २७२ ॥

विद्यमानस्य मिथ्यात्वं कथं नु घटते प्रभो ।
प्रत्यक्षं खलु सर्वेषां प्रमाणं प्रस्फुटार्थकम् ॥ २७३ ॥

मर्त्यस्य मम जन्मादिदुःखभाजोऽल्पजीविनः ।
ब्रह्मत्वमपि नित्यत्वं परमानन्दता कथम् ॥ २७४ ॥

क आत्मा कस्त्वनात्मा च किमु लक्षणमेतयोः ।
आत्मन्यनात्मधर्माणामारोपः क्रियते कथम् ॥ २७५ ॥

किमज्ञानं तदुत्पन्नभयत्यागोऽपि वा कथम् ।
किमु ज्ञानं तदुत्पन्नसुखप्राप्तिश्च वा कथम् ॥ २७६ ॥

सर्वमेतद्यथापूर्वं करामलकवत्स्फुटम् ।
प्रतिपादय मे स्वामिन् श्रीगुरो करुणानिधे ॥ २७७ ॥

श्रीगुरुः—

धन्यः कृतार्थस्त्वमहो विवेकः
　शिवप्रसादस्तव विद्यते महान् ।
विसृज्य तु प्राकृतलोकमार्गं
　ब्रह्मावगन्तुं यतसे यतस्त्वम् ॥ २७८ ॥

शिवप्रसादेन विना न सिद्धिः
　शिवप्रसादेन विना न बुद्धिः ।
शिवप्रसादेन विना न युक्तिः
　शिवप्रसादेन विना न मुक्तिः ॥ २७९ ॥

यस्य प्रसादेन विमुक्तसङ्गाः
　शुकादयः संसृतिबन्धमुक्ताः ।
तस्य प्रसादो बहुजन्मलभ्यो
　भक्त्यैकगम्यो भवमुक्तिहेतुः ॥ २८० ॥

विवेको जन्तूनां प्रभवति जनिष्वेव बहुषु
　प्रसादादेवैशाद्बहुसुकृतपाकोदयवशात् ।

यतस्तस्मादेव त्वमपि परमार्थावगमने
　कृतारम्भः पुंसामिदमिह विवेकस्य तु फलं ॥२८१॥

मर्त्यत्वसिद्धेरपि पुंस्त्वसिद्धे-
　र्विप्रत्वसिद्धेश्च विवेकसिद्धेः ।
वदन्ति मुख्यं फलमेव मोक्षं
　व्यर्थं समस्तं यदि चेन्न मोक्षः ॥ २८२ ॥

प्रश्नः समीचीनतरस्तवायं
　यदात्मतत्त्वावगमे प्रवृत्तिः ।
ततस्तवैतत्सकलं समूलं
　निवेदयिष्यामि मुदा शृणुष्व ॥ २८३ ॥

मर्त्यत्वं त्वयि कल्पितं भ्रमवशात्तेनैव जन्मादयः
　तत्संभावितमेव दुःखमपि ते नो वस्तुतस्तन्मृषा ।
निद्रामोहवशादुपागतसुखं दुःखं च किं नु त्वया
　सत्यत्वेन विलोकितं क्वचिदपि ब्रूहि प्रबोधागमे ॥ २८४ ॥

नाशेषलोकैरनुभूयमानः
　प्रत्यक्षतोऽयं सकलप्रपञ्चः ।

कथं मृषा स्यादिति शङ्कनीयं
विचारशून्येन विमुह्यता त्वया ॥ २८५ ॥

दिवान्धदृष्टेस्तु दिवान्धकारः
प्रत्यक्षसिद्धोऽपि स किं यथार्थः ।
तद्वद्भ्रमेणावगतः पदार्थो
भ्रान्तस्य सत्यः सुमतेर्मृषैव ॥ २८६ ॥

घटोऽयमित्यत्र घटाभिधानः
प्रत्यक्षतः कश्चिदुदेति दृष्टेः ।
विचार्यमाणे स तु नास्ति तत्र
मृदस्ति तद्भावविलक्षणा सा ॥ २८७ ॥

प्रादेशमात्रः परिदृश्यतेऽर्कः
शास्त्रेण संदर्शितलक्षयोजनः ।
मानान्तरेण क्वचिदेति बाधां
प्रत्यक्षमप्यत्र हि न व्यवस्था ॥ २८८ ॥

तस्मात्त्वयीदं भ्रमतः प्रतीतं
मृषैव नो सत्यमवेहि साक्षात् ।

ब्रह्म त्वमेवासि सुखस्वरूपं
त्वत्तो न भिन्नं विचिनुष्व बुद्धौ ॥ २८९ ॥

लोकान्तरे वात्र गुहान्तरे वा
तीर्थान्तरे कर्मपरम्परान्तरे ।
शास्त्रान्तरे नास्त्यनुपश्यतामिह
स्वयं परं ब्रह्म विचार्यमाणे ॥ २९० ॥

तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु पश्यति ।
गोपः कक्षगतं छागं यथा कूपेषु दुर्मतिः ॥ २९१ ॥

स्वमात्मानं परं मत्वा परमात्मानमन्यथा ।
विमृग्यते पुनः स्वात्मा बहिः कोशेषु पण्डितैः ॥ २९२ ॥

विस्मृत्य वस्तुनस्तत्त्वमध्यारोप्य च वस्तुनि ।
अवस्तुतां च तद्धर्मान्मुधा शोचति नान्यथा ॥ २९३ ॥

आत्मानात्मविवेकं ते वक्ष्यामि शृणु सादरम् ।
यस्य श्रवणमात्रेण मुच्यतेऽनात्मबन्धनात् ॥ २९४ ॥

इत्युक्त्वाभिमुखीकृत्य शिष्यं करुणया गुरुः ।
अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयन् ॥ २९५ ॥

सम्यक्प्राबोधयत्तत्त्वं शास्त्रदृष्टेन वर्त्मना ।
सर्वेषामुपकाराय तत्प्रकारोऽत्र दर्श्यते ॥ २९६ ॥

वस्तुन्यवस्त्वारोपो यः सोऽध्यारोप इतीर्यते ।
असर्पभूते रज्ज्वादौ सर्पत्वारोपणं यथा ॥ २९७ ॥

वस्तु तावत्परं ब्रह्म सत्यज्ञानादिलक्षणम् ।
इदमारोपितं यत्र भाति खे नीलतादिवत् ॥ २९८ ॥

तत्कारणं यदज्ञानं सकार्यं सद्विलक्षणम् ।
अवस्त्वित्युच्यते सद्भिर्यस्य बाधा प्रदृश्यते ॥ २९९ ॥

अवस्तु तत्प्रमाणैर्यद्बाध्यते शुक्तिरौप्यवत् ।
न बाध्यते यत्तद्वस्तु त्रिषु कालेषु शुक्तिवत् ॥ ३०० ॥

शुक्तेर्बाधा न खल्वस्ति रजतस्य यथा तथा ।
अवस्तुसंज्ञितं यत्तज्जगदध्यासकारणम् ॥ ३०१ ॥

सदसद्भ्यामनिर्वाच्यमज्ञानं त्रिगुणात्मकम् ।
वस्तु तत्त्वाववबोधैकबाध्यं तद्भावलक्षणम् ॥ ३०२ ॥

मिथ्यासंबन्धतस्तत्र ब्रह्मण्याश्रित्य तिष्ठति ।
मणौ शक्तिर्यथा तद्वन्नैतदाश्रयदूषकम् ॥ ३०३ ॥

सद्भावे लिङ्गमेतस्य कार्यमेतच्चराचरम् ।
मानं श्रुतिः स्मृतिश्चाज्ञोऽहमित्यनुभवोऽपि च ॥ ३०४ ॥

अज्ञानं प्रकृतिः शक्तिरविद्येति निगद्यते ।
तदेतत्सन्न भवति नासद्वा शुक्तिरौप्यवत् ॥ ३०५ ॥

सतो भिन्नमभिन्नं वा न दीपस्य प्रभा यथा ।
न सावयवमन्यद्वा बीजस्याङ्कुरवत्क्वचित् ॥ ३०६ ॥

अत एतदनिर्वाच्यमित्येव कवयो विदुः ।
समष्टिव्यष्टिरूपेण द्विधाज्ञानं निगद्यते ॥ ३०७ ॥

नानात्वेन प्रतीतानामज्ञानानामभेदतः ।
एकत्वेन समष्टिः स्याद्भूरुहाणां वनं यथा ॥ ३०८ ॥

इयं समष्टिरुत्कृष्टा सत्त्वांशोत्कर्षतः पुरा ।
मायेति कथ्यते तज्ज्ञैः शुद्धसत्त्वैकलक्षणा ॥ ३०९ ॥

मायोपहितचैतन्यं साभासं सत्त्वबृंहितम् ।
सर्वज्ञत्वादिगुणकं सृष्टिस्थित्यन्तकारणम् ॥ ३१० ॥

अव्याकृतं तदव्यक्तमीश इत्यपि गीयते ।
सर्वशक्तिगुणोपेतः सर्वज्ञानावभासकः ॥ ३११ ॥

स्वतन्त्रः सत्यसंकल्पः सत्यकामः स ईश्वरः ।
तस्यैतस्य महाविष्णोर्महाशक्तेर्महीयसः ॥ ३१२ ॥

सर्वज्ञत्वेश्वरत्वादिकारणत्वान्मनीषिणः ।
कारणं वपुरित्याहुः समष्टिं सत्त्वबृंहितम् ॥ ३१३ ॥

आनन्दप्रचुरत्वेन साधकत्वेन कोशवत् ।
सैषानन्दमयः कोश इतीशस्य निगद्यते ॥ ३१४ ॥

सर्वोपरमहेतुत्वात्सुषुप्तिस्थानमिष्यते ।
प्राकृतः प्रलयो यत्र श्राव्यते श्रुतिभिर्मुहुः ॥ ३१५ ॥

अज्ञानं व्यष्ट्यभिप्रायादनेकत्वेन भिद्यते ।
अज्ञानवृत्तयो नाना तत्तद्गुणविलक्षणाः ॥ ३१६ ॥

वनस्य व्यष्ट्यभिप्रायाद्भूरुहा इत्यनेकता ।
यथा तथैवाज्ञानस्य व्यष्टितः स्यादनेकता ॥ ३१७ ॥

व्यष्टिर्मलिनसत्त्वैषा रजसा तमसा युता ।
ततो निकृष्टा भवति योपाधिः प्रत्यगात्मनः ॥ ३१८ ॥

चैतन्यं व्यष्ट्यवच्छिन्नं प्रत्यगात्मेति गीयते ।
साभासं व्यष्ट्युपहितं सत्तादात्म्येन तद्गुणैः ॥ ३१९ ॥

अभिभूतः स एवात्मा जीव इत्यभिधीयते ।
किंचिज्ज्ञत्वानीश्वरत्वसंसारित्वादिधर्मवान् ॥ ३२० ॥

अस्य व्यष्टिरहंकारकारणत्वेन कारणम् ।
वपुस्तत्राभिमान्यात्मा प्राज्ञ इत्युच्यते बुधैः ॥ ३२१ ॥

प्राज्ञत्वमस्यैकाज्ञानभासकत्वेन संमतम् ।
व्यष्टेर्निकृष्टत्वेनास्य नानेकाज्ञानभासकम् ॥ ३२२ ॥

स्वरूपाच्छादकत्वेनाप्यानन्दप्रचुरत्वतः ।
कारणं वपुरानन्दमयः कोश इतीर्यते ॥ ३२३ ॥

अस्यावस्था सुषुप्तिः स्याद्यत्रानन्दः प्रकृष्यते ।
एषोऽहं सुखमस्वाप्सं न तु किंचिदवेदिषम् ॥ ३२४ ॥

इत्यानन्दसमुत्कर्षः प्रबुद्धेषु प्रदृश्यते ।
समष्टेरपि च व्यष्टेरुभयोर्वनवृक्षवत् ॥ ३२५ ॥

अभेद एव नो भेदो जात्येकत्वेन वस्तुतः ।
अभेद एव ज्ञातव्यस्तथेशप्राज्ञयोरपि ॥ ३२६ ॥

सत्युपाध्योरभिन्नत्वे क्व भेदस्तद्विशिष्टयोः ।
एकीभावे तरङ्गाब्ध्योः को भेदः प्रतिबिम्बयोः ॥ ३२७ ॥

अज्ञानतदवच्छिन्नाभासयोरुभयोरपि ।
आधारं शुद्धचैतन्यं यत्तत्तुर्यमितीर्यते ॥ ३२८ ॥

एतदेवाविविक्तं सदुपाधिभ्यां च तद्गुणैः ।
महावाक्यस्य वाच्यार्थो विविक्तं लक्ष्य इष्यते ॥ ३२९ ॥

अनन्तशक्तिसंपन्नो मायोपाधिक ईश्वरः ।
ईक्षामात्रेण सृजति विश्वमेतच्चराचरम् ॥ ३३० ॥

अद्वितीयस्वमात्रोऽसौ निरुपादान ईश्वरः ।
स्वयमेव कथं सर्वं सृजतीति न शङ्क्यताम् ॥ ३३१ ॥

निमित्तमप्युपादानं स्वयमेव भवन्प्रभुः ।
चराचरात्मकं विश्वं सृजत्यवति लुम्पति ॥ ३३२ ॥

स्वप्राधान्येन जगतो निमित्तमपि कारणम् ।
उपादानं ततोपाधिप्राधान्येन भवत्ययम् ॥ ३३३ ॥

यथालूता निमित्तं च स्वप्रधानतया भवेत् ।
स्वशरीरप्रधानत्वेनोपादानं तथेश्वरः ॥ ३३४ ॥

तमःप्रधानप्रकृतिविशिष्टात्परमात्मनः ।
अभूत्सकाशादाकाशमाकाशाद्वायुरुच्यते ॥ ३३५ ॥

वायोरग्निस्तथैवाग्नेरापोऽद्भ्यः पृथिवी क्रमात् ।
शक्तेस्तमःप्रधानत्वं तत्कार्ये जाड्यदर्शनात् ॥ ३३६ ॥

आरम्भन्ते कार्यगुणान्ये कारणगुणा हि ते ।
एतानि सूक्ष्मभूतानि भूतमात्रा अपि क्रमात् ॥ ३३७ ॥

एतेभ्यः सूक्ष्मभूतेभ्यः सूक्ष्मदेहा भवन्त्यपि ।
स्थूलान्यपि च भूतानि चान्योन्यांशविमेलनात् ॥ ३३८ ॥

अपञ्चीकृतभूतेभ्यो जातं सप्तदशाङ्ककम् ।
संसारकारणं लिङ्गमात्मनो भोगसाधनम् ॥ ३३९ ॥

श्रोत्रादिपञ्चकं चैव वागादीनां च पञ्चकम् ।
प्राणादिपञ्चकं बुद्धिमनसी लिङ्गमुच्यते ॥ ३४० ॥

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च जातानि ।
आकाशादीनां सत्त्वांशेभ्यो धीन्द्रियाण्यनुक्रमतः ॥३४१॥

आकाशादिगताः पञ्च सात्त्विकांशाः परस्परम् ।
मिलित्वैवान्तःकरणमभवत्सर्वकारणम् ॥ ३४२ ॥

प्रकाशकत्वादेतेषां सात्त्विकांशत्वमिष्यते ।
प्रकाशकत्वं सत्त्वस्य स्वच्छत्वेन यतस्ततः ॥ ३४३ ॥

तदन्तःकरणं वृत्तिभेदेन स्याच्चतुर्विधम् ।
मनो बुद्धिरहंकारश्चित्तं चेति तदुच्यते ॥ ३४४ ॥

संकल्पान्मन इत्याहुर्बुद्धिरर्थस्य निश्चयात् ।
अभिमानादहंकारश्चित्तमर्थस्य चिन्तनात् ॥ ३४५ ॥

मनस्यपि च बुद्धौ च चित्ताहंकारयोः क्रमात् ।
अन्तर्भावोऽत्र बोद्धव्यो लिङ्गलक्षणसिद्धये ॥ ३४६ ॥

चिन्तनं च मनोधर्मः संकल्पादिर्यथा तथा ।
अन्तर्भावो मनस्यैव सम्यक्चित्तस्य सिध्यति ॥ ३४७ ॥

देहादावहमित्येव भावो दृढतरो धियः ।
दृश्यतेऽहंकृतेस्तस्मादन्तर्भावोऽत्र युज्यते ॥ ३४८ ॥

तस्मादेव तु बुद्धेः कर्तृत्वं तदितरस्य करणत्वम् ।
सिध्यत्यात्मन उभयाद्विद्यात्संसारकारणं मोहात् ॥ ३४९ ॥

विज्ञानमयकोशः स्यात् बुद्धिर्ज्ञानेन्द्रियैः सह ।
विज्ञानप्रचुरत्वेनाप्याच्छादकतयात्मनः ॥ ३५० ॥

विज्ञानमयकोशोऽयमिति विद्वद्भिरुच्यते ।
अयं महानहंकारवृत्तिमान्कर्तृलक्षणः ॥
सर्वसंसारनिर्वोढा विज्ञानमयशब्दभाक् ॥ ३५१ ॥

अहं ममेत्येव सदाभिमानं
देहेन्द्रियादौ कुरुते गृहादौ ।
जीवाभिमानः पुरुषोऽयमेव
कर्ता च भोक्ता च सुखी च दुःखी ॥ ३५२ ॥

स्ववासनाप्रेरित एव नित्यं
करोति कर्मोभयलक्षणं च ।
भुङ्क्ते तदुत्पन्नफलं विशिष्टं
सुखं च दुःखं च परत्र चात्र ॥ ३५३ ॥

नानायोनिसहस्रेषु जायमानो मुहुर्मुहुः ।
म्रियमाणो भ्रमत्येष जीवः संसारमण्डले ॥ ३५४ ॥

मनो मनोमयः कोशो भवेज्ज्ञानेन्द्रियैः सह ।
प्राचुर्यं मनसो यत्र दृश्यतेऽसौ मनोमयः ॥ ३५५ ॥

चिन्ताविषादहर्षाद्याः कामाद्या अस्य वृत्तयः ।
मनुते मनसैवैष फलं कामयते बहिः ।
यतते कुरुते भुङ्क्ते तन्मनः सर्वकारणम् ॥ ३५६ ॥

मनो ह्यमुष्य प्रवणस्य हेतु-
रन्तर्बहिश्चार्थमनेन वेत्ति ।

शृणोति जिघ्रत्यमुनैव चेक्षते
वक्ति स्पृशत्यत्ति करोति सर्वम् ॥ ३५७ ॥

बन्धश्च मोक्षो मनसैव पुंसा-
मर्थोऽप्यनर्थोऽप्यमुनैव सिध्यति ।
शुद्धेन मोक्षो मलिनेन बन्धो
विवेकतोऽर्थोऽप्यविवेकतोऽन्यः ॥ ३५८ ॥

रजस्तमोभ्यां मलिनं त्वशुद्ध-
मज्ञानजं सत्त्वगुणेन रिक्तम् ।
मनस्तमोदोषसमन्वितत्वा-
ज्जडत्वमोहालसताप्रमादैः ।
तिरस्कृतं सन्न तु वेत्ति वास्तवं
पदार्थतत्त्वं ह्युपलभ्यमानम् ॥ ३५९ ॥

रजोदोषैर्युक्तं यदि भवति विक्षेपकगुणैः
प्रतीपैः कामाद्यैरनिशमभिभूतं व्यथयति ।
कथंचित्सूक्ष्मार्थावगतिमदपि भ्राम्यति भृशं
मनोदीपो यद्वत्प्रबलमरुता ध्वस्तमहिमा ॥ ३६० ॥

ततो मुमुक्षुर्भवबन्धमुक्त्यै
रजस्तमोभ्यां च तदीयकार्यैः ।
वियोज्य चित्तं परिशुद्धसत्त्वं
प्रियं प्रयत्नेन सदैव कुर्यात् ॥ ३६१ ॥

गर्भावासजनिप्रणाशनजराव्याध्यादिषु प्राणिनां
यद्दुःखं परिदृश्यते च नरके तच्चिन्तयित्वा मुहुः ।
दोषानेव विलोक्य सर्वविषयेष्वाशां विमुच्याभित-
श्चित्तग्रन्थिविमोचनाय सुमतिः सत्त्वं समालम्बताम् ॥

यमेषु निरतो यस्तु नियमेषु च यत्नतः ।
विवेकिनस्तस्य चित्तं प्रसादमधिगच्छति ॥ ३६३ ॥

आसुरीं संपदं त्यक्त्वा भजेद्यो दैवसंपदम् ।
मोक्षैककाङ्क्षया नित्यं तस्य चित्तं प्रसीदति ॥ ३६४ ॥

परद्रव्यपरद्रोहपरनिन्दापरस्त्रियः ।
नालम्बते मनो यस्य तस्य चित्तं प्रसीदति ॥ ३६५ ॥

आत्मवत्सर्वभूतेषु यः समत्वेन पश्यति ।
सुखं दुःखं विवेकेन तस्य चित्तं प्रसीदति ॥ ३६६ ॥

अत्यन्तं श्रद्धया भक्त्या गुरुमीश्वरमात्मनि ।
यो भजत्यनिशं क्षान्तस्तस्य चित्तं प्रसीदति ॥ ३६७ ॥

शिष्टान्नमीशार्चनमार्यसेवां
तीर्थाटनं स्वाश्रमधर्मनिष्ठाम् ।
यमानुषक्तिं नियमानुवृत्तिं
चित्तप्रसादाय वदन्ति तज्ज्ञाः ॥ ३६८ ॥

कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविधायिनाम् ।
पूतिपर्युषितादीनां त्यागः सत्त्वाय कल्पते ॥ ३६९ ॥

श्रुत्या सत्त्वपुराणानां सेवया सत्त्ववस्तुनः ।
अनुवृत्त्या च साधूनां सत्त्ववृत्तिः प्रजायते ॥ ३७० ॥

यस्य चित्तं निर्विषयं हृदयं यस्य शीतलम् ।
तस्य मित्रं जगत्सर्वं तस्य मुक्तिः करस्थिता ॥ ३७१ ॥

हितपरिमितभोजी नित्यमेकान्तसेवी
सकृदुचितहितोक्तिः स्वल्पनिद्राविहारः ।
अनुनियमनशीलो यो भजत्युक्तकाले
स लभत इह शीघ्रं साधु चित्तप्रसादम् ॥ ३७२ ॥

चित्तप्रसादेन विनावगन्तुं
बन्धं न शक्नोति परात्मतत्त्वम् ।
तत्त्वावगत्या तु विना विमुक्ति-
र्न सिध्यति ब्रह्मसहस्रकोटिषु ॥ ३७३ ॥

मनःप्रसादः पुरुषस्य बन्धो
मनःप्रसादो भवबन्धमुक्तिः ।
मनःप्रसादाधिगमाय तस्मा-
न्मनोनिरासं विदधीत विद्वान् ॥ ३७४ ॥

पञ्चानामेव भूतानां रजोंशेभ्योऽभवन् क्रमात् ।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्यनु ॥ ३७५ ॥

समस्तेभ्यो रजोंशेभ्यो व्योमादीनां क्रियात्मकाः ।
प्राणादयः समुत्पन्नाः पञ्चाप्यान्तरवायवः ॥ ३७६ ॥

प्राणः प्राग्गमनेन स्यादपानोऽवाग्गमनेन च ।
व्यानस्तु विष्वग्गमनादुत्क्रान्त्योदान इष्यते ॥ ३७७ ॥

अशितान्नरसादीनां समीकरणधर्मतः ।
समान इत्यभिप्रेतो वायुर्यस्तेषु पञ्चमः ॥ ३७८ ॥

क्रियैव दिश्यते प्रायः प्राणकर्मेन्द्रियेष्वलम् ।
ततस्तेषां रजोंशेभ्यो जनिरङ्गीकृता बुधैः ॥ ३७९ ॥

राजसीं तु क्रियाशक्तिं तमःशक्तिं जडात्मिकाम् ।
प्रकाशरूपिणीं सत्त्वशक्तिं प्राहुर्महर्षयः ॥ ३८० ॥

एते प्राणादयः पञ्च पञ्चकर्मेन्द्रियैः सह ।
भवेत्प्राणमयः कोशः स्थूलो येनैव चेष्टते ॥ ३८१ ॥

यद्यन्निष्पाद्यते कर्म पुण्यं वा पापमेव वा ।
वागादिभिश्च वपुषा तत्प्राणमयकर्तृकम् ॥ ३८२ ॥

वायुनोच्चालितो वृक्षो नानारूपेण चेष्टते ।
तस्मिन्विनिश्चले सोऽपि निश्चलः स्याद्यथा तथा ॥३८३॥

प्राणकर्मेन्द्रियैर्देहः प्रेर्यमाणः प्रवर्तते ।
नानाक्रियासु सर्वत्र विहिताविहितादिषु ॥ ३८४ ॥

कोशत्रयं मिलित्वैतद्वपुः स्यात्सूक्ष्ममात्मनः ।
अतिसूक्ष्मतया लीनस्यात्मनो गमकत्वतः ॥ ३८५ ॥

लिङ्गमित्युच्यते स्थूलापेक्षया सूक्ष्ममिष्यते ।
सर्वं लिङ्गवपुर्जातमेकधीविषयत्वतः ॥ ३८६ ॥

समष्टिः स्यात्तरुगणः सामान्येन वनं यथा ।
एतत्समष्ट्युपहितं चैतन्यं सफलं जगुः ॥ ३८७ ॥

हिरण्यगर्भः सूत्रात्मा प्राण इत्यपि पण्डिताः ।
हिरण्मये बुद्धिगर्भे प्रचकास्ति हिरण्यवत् ॥ ३८८ ॥

हिरण्यगर्भ इत्यस्य व्यपदेशस्ततो मतः ।
समस्तलिङ्गदेहेषु सूत्रवन्मणिपङ्क्तिषु ।
व्याप्य स्थितत्वात्सूत्रात्मा प्राणनात्प्राण उच्यते ॥ ३८९ ॥

नैकधीविषयत्वेन लिङ्गं व्यष्टिर्भवत्यथ ।
यदेतद्व्यष्ट्युपहितं चिदाभाससमन्वितम् ॥ ३९० ॥

चैतन्यं तैजस इति निगदन्ति मनीषिणः ।
तेजोमयान्तःकरणोपाधित्वेनैष तैजसः ॥ ३९१ ॥

स्थूलात्सूक्ष्मतया व्यष्टिरस्य सूक्ष्मवपुर्मतम् ।
अस्य जागरसंस्कारमयत्वाद्वपुरुच्यते ॥ ३९२ ॥

स्वप्ने जागरकालीनवासनापरिकल्पितान् ।
तैजसो विषयान्भुङ्क्ते सूक्ष्मार्थान्सूक्ष्मवृत्तिभिः ॥ ३९३ ॥

समष्टेरपि च व्यष्टेः सामान्येनैव पूर्ववत् ।
अभेद एव ज्ञातव्यो जात्यैकत्वे कुतो भिदा ॥ ३९४ ॥

द्वयोरुपाध्योरेकत्वे तयोरप्यभिमानिनोः ।
सूत्रात्मनस्तैजसस्याप्यभेदः पूर्ववन्मतः ॥ ३९५ ॥

एवं सूक्ष्मप्रपञ्चस्य प्रकारः शास्त्रसंमतः ।
अथ स्थूलप्रपञ्चस्य प्रकारः कथ्यते शृणु ॥ ३९६ ॥

तान्येव सूक्ष्मभूतानि व्योमादीनि परस्परम् ।
पञ्चीकृतानि स्थूलानि भवन्ति शृणु तत्क्रमम् ॥ ३९७ ॥

खादीनां भूतमेकैकं सममेव द्विधा द्विधा ।
विभज्य भागं तत्राद्यं त्यक्त्वा भागं द्वितीयकम् ॥ ६९८ ॥

चतुर्धा सुविभज्याथ तमेकैकं विनिक्षिपेत् ।
चतुर्णां प्रथमे भागे क्रमेण स्वार्धमन्तरा ॥ ३९९ ॥

ततो व्योमादिभूतानां भागाः पञ्च भवन्ति ते ।
स्वस्वार्धभागेनान्येभ्यः प्राप्तं भागचतुष्टयम् ॥ ४०० ॥

संयोज्य स्थूलतां यान्ति व्योमादीनि यथाक्रमम् ।
अमुष्य पञ्चीकरणस्याप्रामाण्यं न शङ्क्यताम् ॥ ४०१ ॥

उपलक्षणमस्यापि तत्त्रिवृत्करणश्रुतिः ।
पञ्चानामपि भूतानां श्रूयतेऽन्यत्र संभवः ॥ ४०२ ॥

ततः प्रामाणिकं पञ्चीकरणं मन्यतां बुधैः ।
प्रत्यक्षादिविरोधः स्यादन्यथा क्रियते यदि ॥ ४०३ ॥

आकाशवाय्वोर्धर्मस्तु वह्नयादावुपलभ्यते ।
यथा तथाकाशवाय्वोर्नाग्न्यादेर्धर्म ईक्ष्यते ॥ ४०४ ॥

अतोऽप्रामाणिकमिति न किंचिदपि चिन्त्यताम् ।
खांशव्याप्तिश्च खव्याप्तिर्विद्यते पावकादिषु ॥ ४०५ ॥

तेनोपलभ्यते शब्दः कारणस्यातिरेकतः ।
तथा नभस्वतो धर्मोऽप्यग्न्यादावुपलभ्यते ॥ ४०६ ॥

न तथा विद्यते व्याप्तिर्वह्नयादेः खनभस्वतोः ।
सूक्ष्मत्वादंशकव्याप्तेस्तद्धर्मो नोपलभ्यते ॥ ४०७ ॥

कारणस्यानुरूपेण कार्यं सर्वत्र दृश्यते ।
तस्मात्प्रामाण्यमेष्टव्यं बुधैः पञ्चीकृतेरपि ॥ ४०८ ॥

अनेनोद्भूतगुणकं भूतं वक्ष्येऽवधारय ।
शब्दैकगुणमाकाशं शब्दस्पर्शगुणोऽनिलः ॥ ४०९ ॥

तेजः शब्दस्पर्शरूपैर्गुणवत्कारणं क्रमात् ।
आपश्चतुर्गुणः शब्दस्पर्शरूपरसैः क्रमात् ॥ ४१० ॥

एतैश्चतुर्भिर्गन्धेन सह पञ्चगुणा मही ।
आकाशांशतया श्रोत्रं शब्दं गृह्णाति तद्गुणम् ॥ ४११ ॥

त्वङ्मारुतांशकतया स्पर्शं गृह्णाति तद्गुणम् ।
तेजोंशकतया चक्षू रूपं गृह्णाति तद्गुणम् ॥ ४१२ ॥

अबंशकतया जिह्वा रसं गृह्णाति तद्गुणम् ।
भूम्यंशकतया घ्राणं गन्धं गृह्णाति तद्गुणम् ॥ ४१३ ॥

करोति खांशकतया वाक्शब्दोच्चारणक्रियाम् ।
वाय्वंशकतया पादौ गमनादिक्रियापरौ ॥ ४१४ ॥

तेजोंशकतया पाणी वह्न्याद्यर्चनतत्परौ ।
जलांशकतयोपस्थो रेतोमूत्रविसर्गकृत् ॥ ४१५ ॥

भूम्यंशकतया पायुः कठिनं मलमुत्सृजेत् ।
श्रोत्रस्य दैवतं दिक्स्यात्त्वचो वायुर्दृशो रविः ॥ ४१६ ॥

जिह्वाया वरुणो दैवं घ्राणस्य त्वश्विनावुभौ ।
वाचोऽग्निर्हस्तयोरिन्द्रः पादयोस्तु त्रिविक्रमः ॥ ४१७ ॥

पायोर्मृत्युरुपस्थस्य त्वधिदैवं प्रजापतिः ।
मनसो दैवतं चन्द्रो बुद्धेर्दैवं बृहस्पतिः ॥ ४१८ ॥

रुद्रस्त्वहंकृतेर्दैवं क्षेत्रज्ञश्चित्तदैवतम् ।
दिगाद्या देवताः सर्वाः खादिसत्त्वांशसंभवाः ॥ ४१९ ॥

संमिता इन्द्रियस्थानेष्विन्द्रियाणां समन्ततः ।
निगृह्णन्त्यनुगृह्णन्ति प्राणिकर्मानुरूपतः ॥ ४२० ॥

शरीरकरणग्रामा प्राणाहमधिदेवताः ।
पञ्चैते हेतवः प्रोक्ता निष्पत्तौ सर्वकर्मणाम् ॥ ४२१ ॥

कर्मानुरूपेण गुणोदयो भवे-
द्गुणानुरूपेण मनःप्रवृत्तिः ।
मनोनुवृत्तैरुभयात्मकेन्द्रियै-
र्निवर्त्यते पुण्यमपुण्यमत्र ॥ ४२२ ॥

करोति विज्ञानमयोऽभिमानं
कर्ताहमेवेति तदात्मना स्थितः ।
आत्मा तु साक्षी न करोति किंचि-
न्न कारयत्येव तटस्थवत्सदा ॥ ४२३ ।

द्रष्टा श्रोता वक्ता कर्ता भोक्ता भवत्यहंकारः ।
स्वयमेतद्विकृतीनां साक्षी निर्लेप एवात्मा ॥ ४२४ ॥

आत्मनः साक्षिमात्रत्वं न कर्तृत्वं न भोक्तृता ।
रविवत्प्राणिभिर्लोके क्रियमाणेषु कर्मसु ॥ ४२५ ॥

न ह्यर्कः कुरुते कर्म न कारयति जन्तवः ।
स्वस्वभावानुरोधेन वर्तन्ते स्वस्वकर्मसु ॥ ४२६ ॥

तथैव प्रत्यगात्मापि रविवन्निष्क्रियात्मना ।
उदासीनतयैवास्ते देहादीनां प्रवृत्तिषु ॥ ४२७ ॥

अज्ञात्वैवं परं तत्त्वं मायामोहितचेतसः ।
स्वात्मन्यारोपयन्त्येतत्कर्तृत्वाद्यन्यगोचरम् ॥ ४२८ ॥

आत्मस्वरूपमविचार्य विमूढबुद्धि-
रारोपयत्यखिलमेतदनात्मकार्यम् ।
स्वात्मन्यसङ्गचितिनिष्क्रिय एव चन्द्रे
दूरस्थमेघकृतधावनवद्भ्रमेण ॥ ४२९ ॥

आत्मानात्मविवेकं स्फुटतरमग्रे निवेदयिष्यामः ।
इममाकर्णय विद्वन् जगदुत्पत्तिप्रकारमावृत्त्या ॥ ४३० ॥

पञ्चीकृतेभ्यः खादिभ्यो भूतेभ्यस्त्वीक्षयेशितुः ।
समुत्पन्नमिदं स्थूलं ब्रह्माण्डं सचराचरम् ॥ ४३१ ॥

व्रीह्याद्योषधयः सर्वा वायुतेजोम्बुभूमयः ।
सर्वेषामप्यभूदन्नं चतुर्विधशरीरिणाम् ॥ ४३२ ॥

केचिन्मारुतभोजनाः खलु परे चन्द्रार्कतेजोशनाः
केचित्तोयकणाशिनोऽपरिमिताः केचित्तु मृद्भक्षकाः ।
केचित्पर्णशिलातृणादनपराः केचित्तु मांसाशिनः
केचिद्व्रीहियवान्नभोजनपरा जीवन्त्यमी जन्तवः ॥

जरायुजाण्डजस्वेदजोद्भिज्जाद्याश्चतुर्विधाः ।
स्वस्वकर्मानुरूपेण जातास्तिष्ठन्ति जन्तवः ॥ ४३४ ॥

यत्र जाता जरायुभ्यस्ते नराद्या जरायुजाः ।
अण्डजास्ते स्युरण्डेभ्यो जाता ये विहगादयः ॥ ४३५ ॥

स्वेदाज्जाताः स्वेदजास्ते यूका लूक्षादयोऽपि च ।
भूमिमुद्भिद्य ये जाता उद्भिज्जास्ते द्रुमादयः ॥ ४३६ ॥

इदं स्थूलवपुर्जातं भौतिकं च चतुर्विधम् ।
सामान्येन समष्टिः स्यादेकधीविषयत्वतः ॥ ४३७ ॥

एतत्समष्ट्यवच्छिन्नं चैतन्यं फलसंयुतम् ।
प्राहुर्वैश्वानर इति विराडिति च वैदिकाः ॥ ४३८ ॥

वैश्वानरो विश्वनरेष्वात्मत्वेनाभिमानतः ।
विराट् स्याद्विविधत्वेन स्वयमेव विराजनात् ॥ ४३९ ॥

चतुर्विधं भूतजातं तत्तज्जातिविशेषतः ।
नैकधीविषयत्वेन पूर्ववद्व्यष्टिरिष्यते ॥ ४४० ॥

साभासं व्यष्ट्युपहितं तत्तादात्म्यमुपागतम् ।
चैतन्यं विश्व इत्याहुर्वेदान्तनयकोविदाः ॥ ४४१ ॥

विश्वोऽस्मिन्स्थूलदेहेऽत्र स्वाभिमानेन तिष्ठति ।
यतस्ततो विश्व इति नाम्ना सार्थो भवत्ययम् ॥ ४४२ ॥

व्यष्टिरेषास्य विश्वस्य भवति स्थूलविग्रहः ।
उच्यतेऽन्नविकारित्वात्कोशोऽन्नमय इत्ययम् ॥ ४४३ ॥

देहोऽयं पितृभुक्तान्नविकाराच्छुक्लशोणितात् ।
जातः प्रवर्धतेऽन्नेन तदभावे विनश्यति ॥ ४४४ ॥

तस्मादन्नविकारित्वेनायमन्नमयो मतः ।
आच्छादकत्वादेतस्याप्यसेः कोशवदात्मनः ॥ ४४५ ॥

आत्मनः स्थूलभोगाना-
मेतदायतनं विदुः ।
शब्दादिविषयान्भुङ्क्ते
स्थूलान्स्थूलात्मनि स्थितः ॥ ४४६ ॥

बहिरात्मा ततः स्थूलभोगायतनमुच्यते ।
इन्द्रियैरुपनीतानां शब्दादीनामयं स्वयम् ।
देहेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः ॥ ४४७ ॥

एकादशद्वारवतीह देहे
सौधे महाराज इवाक्षवर्गैः ।
संसेव्यमानो विषयोपभोगा-
नुपाधिसंस्थो बुभुजेऽयमात्मा ॥ ४४८ ॥

ज्ञानेन्द्रियाणि निजदैवतचोदितानि
कर्मेन्द्रियाण्यपि तथा मनआदिकानि ।
स्वस्वप्रयोजनविधौ नियतानि सन्ति
यत्नेन किंकरजना इव तं भजन्ते ॥ ४४९ ॥

यत्रोपभुङ्क्ते विषयान्स्थूलानेष महामतिः ।
अहं ममेति सैषास्यावस्था जाग्रदितीर्यते ॥ ४५० ॥

एतत्समष्टिव्यष्ट्योश्चोभयोरप्यभिमानिनोः ।
तद्विश्ववैश्वानरयोरभेदः पूर्ववन्मतः ॥ ४५१ ॥

स्थूलसूक्ष्मकारणाख्याः प्रपञ्चा ये निरूपिताः ।
ते सर्वेऽपि मिलित्वैकः प्रपञ्चोऽपि महान्भवेत् ॥ ४५२ ॥

महाप्रपञ्चावच्छिन्नं विश्वप्राज्ञादिलक्षणम् ।
विराडादीशपर्यन्तं चैतन्यं चैकमेव तत् ॥ ४५३ ॥

यदनाद्यन्तमव्यक्तं चैतन्यमजमक्षरम् ।
महाप्रपञ्चेन सहाविविक्तं सदयोऽग्निवत् ॥ ४५४ ॥

तत्सर्वं खल्विदं ब्रह्मेत्यस्य वाक्यस्य पण्डितैः ।
वाच्यार्थ इति निर्णीतं विविक्तं लक्ष्य इत्यपि ॥ ४५५ ॥

स्थूलाद्यज्ञानपर्यन्तं कार्यकारणलक्षणम् ।
दृश्यं सर्वमनात्मेति विजानीहि विचक्षण ॥ ४५६ ॥

अन्तःकरणतद्वृत्तिद्रष्टृ नित्यमविक्रियम् ।
चैतन्यं यत्तदात्मेति बुद्ध्या बुध्यस्व सूक्ष्मया ॥ ४५७ ॥

एष प्रत्यक्स्वप्रकाशो निरंशो-
ऽसङ्गः शुद्धः सर्वदैकस्वभावः ।

नित्याखण्डानन्दरूपो निरीहः
साक्षी चेता केवलो निर्गुणश्च ॥ ४५८ ॥

नैव प्रत्यग्जायते वर्धते नो
किंचिन्नापक्षीयते नैव नाशम् ।
आत्मा नित्यः शाश्वतोऽयं पुराणो
नासौ हन्यो हन्यमाने शरीरे ॥ ४५९ ॥

जन्मास्तित्वविवृद्धयः परिणतिश्चापक्षतिर्नाशनं
दृश्यस्यैव भवन्ति षड्विकृतयो नानाविधा व्याधयः ।
स्थूलत्वादि च नीलताद्यपि मितिर्वर्णाश्रमादिप्रथा
दृश्यन्ते वपुषो न चात्मन इमे तद्विक्रियासाक्षिणः ॥

अस्मिन्नात्मन्यनात्मत्वमनात्मन्यात्मतां पुनः ।
विपरीततयाध्यस्य संसरन्ति विमोहतः ॥ ४६१ ॥

भ्रान्त्या मनुष्योऽहमहं द्विजोऽहं
तज्ज्ञोऽहमज्ञोऽहमतीव पापी ।
भ्रष्टोऽस्मि शिष्टोऽस्मि सुखी च दुःखी-
त्येवं विमुह्यात्मनि कल्पयन्ति ॥ ४६२ ॥

अनात्मनो जन्मजरामृतिक्षुधा-
तृष्णासुखक्लेशभयादिधर्मान् ।
विपर्ययेण ह्यतथाविधेऽस्मि-
न्नारोपयन्त्यात्मनि बुद्धिदोषात् ॥ ४६३ ॥

भ्रान्त्या यत्र यदध्यासस्तत्कृतेन गुणेन वा ।
दोषेणाप्यणुमात्रेण स न संबध्यते क्वचित् ॥ ४६४ ॥

किं मरुन्मृगतृष्णाम्बुपूरेणार्द्रत्वमृच्छति ।
दृष्टिसंस्थितपीतेन शङ्खः पीतायते किमु ॥ ४६५ ॥

बालकल्पितनैल्येन व्योम किं मलिनायते ।

शिष्यः—

प्रत्यगात्मन्यविषयेऽनात्माध्यासः कथं प्रभो ॥ ४६६ ॥

पुरा दृष्टे हि विषयेऽध्यस्यन्ति विषयान्तरम् ।
तद्दृष्टं शुक्तिरज्ज्वादौ सादृश्याद्यनुबन्धतः ॥ ४६७ ॥

परत्र पूर्वदृष्टस्यावभासः स्मृतिलक्षणः ।
अध्यासः स कथं स्वामिन् भवेदात्मन्यगोचरे ॥ ४६८ ॥

नानुभूतः कदाप्यात्मानानुभूतस्य वस्तुनः ।
सादृश्यं सिध्यति कथमनात्मनि विलक्षणे ॥ ४६९ ॥

अनात्मन्यात्मताध्यासः कथमेष समागतः ।
निवृत्तिः कथमेतस्य केनोपायेन सिध्यति ॥ ४७० ॥

उपाधियोग उभयोः सम एवेशजीवयोः ।
जीवस्यैव कथं बन्धो नेश्वरस्यास्ति तत्कथम् ॥ ४७१ ॥

एतत्सर्वं दयादृष्ट्या करामलकवत्स्फुटम् ।
प्रतिपादय सर्वज्ञ श्रीगुरो करुणानिधे ॥ ४७२ ॥

श्रीगुरुः—

न सावयव एकस्य नात्मा विषय इष्यते ।
अस्यास्मत्प्रत्ययार्थत्वादपरोक्षाच्च सर्वशः ॥ ४७३ ॥

प्रसिद्धिरात्मनोऽस्त्येव न कस्यापि च दृश्यते ।
प्रत्ययो नाहमस्मीति न ह्यस्ति प्रत्यगात्मनि ॥ ४७४ ॥

न कस्यापि स्वसद्भावे प्रमाणमभिकाङ्क्ष्यते ।
प्रमाणानां च प्रामाण्यं यन्मूलं किं तु बोधयेत् ॥ ४७५ ॥

मायाकार्यैस्तिरोभूतो नैष आत्मानुभूयते ।
मेघवृन्दैर्यथा भानुस्तथायमहमादिभिः ॥ ४७६ ॥

पुरस्थ एव विषये वस्तुन्यध्यस्यतामिति ।
नियमो न कृतः सद्भिर्भ्रान्तिरेवात्र कारणम् ॥ ४७७ ॥

दृगग्राह्यविषये व्योम्नि नीलतादि यथाबुधाः ।
अध्यस्यन्ति तथैवास्मिन्नात्मन्यपि मतिभ्रमान् ॥ ४७८ ॥

अनात्मन्यात्मताध्यासे न सादृश्यमपेक्षते ।
पीतोऽयं शङ्ख इत्यादौ सादृश्यं किमपेक्षितम् ॥ ४७९ ॥

निरुपाधिभ्रमेष्वस्मिन्नैवापेक्षा प्रदृश्यते ।
सोपाधिष्वेव तद्दृष्टं रज्जुसर्पभ्रमादिषु ॥ ४८० ॥

तथापि किंचिद्वक्ष्यामि सादृश्यं शृणु तत्परः ।
अत्यन्तनिर्मलः सूक्ष्म आत्मायमतिभास्वरः ॥ ४८१ ॥

बुद्धिस्तथैव सत्त्वात्मा साभासा भास्वरामला ।
सांनिध्यादात्मवद्भाति सूर्यवत्स्फटिको यथा ॥ ४८२ ॥

आत्माभासं ततो बुद्धिर्बुद्ध्याभासं ततो मनः ।
अक्षाणि मनआभासान्यक्षाभासमिदं वपुः ।
अत एवात्मताबुद्धिर्देहाक्षादावनात्मनि ॥ ४८३ ॥

मूढानां प्रतिबिम्बादौ बालानामिव दृश्यते ।
सादृश्यं विद्यते बुद्धावात्मनोऽध्यासकारणम् ॥ ४८४ ॥

अनात्मन्यहमित्येव योऽयमध्यास ईरितः ।
स्यादुत्तरोत्तराध्यासे पूर्वपूर्वस्तु कारणम् ॥ ४८५ ॥

सुप्तिमूर्छोत्थितेष्वेव दृष्टः संसारलक्षणः ।
अनादिरेषाविद्यातः संस्कारोऽपि च तादृशः ॥ ४८६ ॥

अध्यासबाधागमनस्य कारणं
श‍ृणु प्रवक्ष्यामि समाहितात्मा ।
यस्मादिदं प्राप्तमनर्थजातं
जन्माप्ययव्याधिजरादिदुःखम् ॥ ४८७ ॥

आत्मोपाधेरविद्याया अस्ति शक्तिद्वयं महत् ।
विक्षेप आवृतिश्चेति याभ्यां संसार आत्मनः ॥ ४८८ ॥

आवृतिस्तमसः शक्तिस्तद्ध्यावरणकारणम् ।
मूलाविद्येति सा प्रोक्ता यया संमोहितं जगत् ॥ ४८९ ॥

विवेकवानप्यतियौक्तिकोऽपि
श्रुतात्मतत्त्वोऽपि च पण्डितोऽपि ।

शक्त्या यया संवृतबोधदृष्टि-
रात्मानमात्मस्थमिमं न वेद ॥ ४९० ॥

विक्षेपनाम्नी रजसस्तु शक्तिः
प्रवृत्तिहेतुः पुरुषस्य नित्यम् ।
स्थूलादिलिङ्गान्तमशेषमेत-
द्यया सदात्मन्यसदेव सूयते ॥ ४९१ ॥

निद्रा यथा पुरुषमप्रमत्तं
समावृणोतीयमपि प्रतीचम् ।
तथावृणोत्यावृतिशक्तिरन्त-
र्विक्षेपशक्तिं परिजृम्भयन्ती ॥ ४९२ ॥

शक्त्या महत्यावरणाभिधानया
समावृते सत्यमलस्वरूपे ।
पुमाननात्मन्यहमेष एवे-
त्यात्मत्वबुद्धिं विदधाति मोहात् ॥ ४९३ ॥

यथा प्रसुप्तिप्रतिभासदेहे
स्वात्मत्वधीरेष तथा ह्यनात्मनः ।

जन्माप्ययक्षुद्भयतृड्भ्रमादी-
नारोपयत्यात्मनि तस्य धर्मान् ॥ ४९४ ॥

विक्षेपशक्त्या परिचोद्यमानः
करोति कर्माण्युभयात्मकानि ।
भुञ्जान एतत्फलमप्युपात्तं
परिभ्रमत्येव भवाम्बुराशौ ॥ ४९५ ॥

अध्यासदोषात्समुपागतोऽयं
संसारबन्धः प्रबलप्रतीचः ।
यद्योगतः क्लिश्यति गर्भवास-
जन्माप्ययक्लेशभयैरजस्रम् ॥ ४९६ ॥

अध्यासो नाम खल्वेष वस्तुनो योऽन्यथाग्रहः ।
स्वाभाविकभ्रान्तिमूलं संसृतेरादिकारणम् ॥ ४९७ ॥

सर्वानर्थस्य तद्बीजं योऽन्यथाग्रह आत्मनः ।
ततः संसारसंपातः संततक्लेशलक्षणः ॥ ४९८ ॥

अध्यासादेव संसारो नष्टेऽध्यासे न दृश्यते ।
तदेतदुभयं स्पष्टं पश्य त्वं बद्धमुक्तयोः ॥ ४९९ ॥

बद्धं प्रवृत्तितो विद्धि मुक्तं विद्धि निवृत्तितः ।
प्रवृत्तिरेव संसारो निवृत्तिर्मुक्तिरिष्यते ॥ ५०० ॥

आत्मनः सोऽयमध्यासो मिथ्याज्ञानपुरःसरः ।
असत्कल्पोऽपि संसारं तनुते रज्जुसर्पवत् ॥ ५०१ ॥

उपाधियोगसाम्येऽपि जीववत्परमात्मनः ।
उपाधिभेदान्नो बन्धस्तत्कार्यमपि किंचन ॥ ५०२ ॥

अस्योपाधिः शुद्धसत्त्वप्रधाना
माया यत्र त्वस्य नास्त्यल्पभावः ।
सत्त्वस्यैवोत्कृष्टता तेन बन्धो
नो विक्षेपस्तत्कृतो लेशमात्रः ॥ ५०३ ॥

सर्वज्ञोऽप्रतिबद्धबोधविभवस्तेनैव देवः स्वयं
मायां स्वामवलम्ब्य निश्चलतया स्वच्छन्दवृत्तिः प्रभुः ।
सृष्टिस्थित्यदनप्रवेशयमनव्यापारमात्रेच्छया
कुर्वन्क्रीडति तद्रजस्तम उभे संस्तभ्य शक्त्या स्वया ॥

तस्मादावृतिविक्षेपौ किंचित्कर्तुं न शक्नुतः ।
स्वयमेव स्वतन्त्रोऽसौ तत्प्रवृत्तिनिरोधयोः ॥ ५०५ ॥

तमेव सा धीकर्मेति श्रुतिर्वक्ति महेशितुः ।
निग्रहानुग्रहे शक्तिरावृतिक्षेपयोर्यतः ॥ ५०६ ॥

रजसस्तमसश्चैव प्राबल्यं सत्त्वहानतः ।
जीवोपाधौ तथा जीवे तत्कार्यं बलवत्तरम् ॥ ५०७ ॥

तेन बन्धोऽस्य जीवस्य संसारोऽपि च तत्कृतः ।
संप्राप्तः सर्वदा यत्र दुःखं भूयः स ईक्षते ॥ ५०८ ॥

एतस्य संसृतेर्हेतुरध्यासोऽर्थविपर्ययः ।
अध्यासमूलमज्ञानमाहुरावृतिलक्षणम ॥ ५०९ ॥

अज्ञानस्य निवृत्तिस्तु ज्ञानेनैव न कर्मणा ।
अविरोधितया कर्म नैवाज्ञानस्य बाधकम् ॥ ५१० ॥

कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।
कर्मणः कार्यमेवैषा जन्ममृत्युपरम्परा ॥ ५११ ॥

नैतस्मात्कर्मणः कार्यमन्यदस्ति विलक्षणम् ।
अज्ञानकार्यं तत्कर्म यतोऽज्ञानेन वर्धते ॥ ५१२ ॥

यद्येन वर्धते तेन नाशस्तस्य न सिध्यति ।
येन यस्य सहावस्था निरोधाय न कल्पते ॥ ५१३ ॥

नाशकत्वं तदुभयोः को नु कल्पयितुं क्षमः ।
सर्वं कर्माविरोध्येव सदाज्ञानस्य सर्वदा ॥ ५१४ ॥

ततोऽज्ञानस्य विच्छित्तिः कर्मणा नैव सिध्यति ।
यस्य प्रध्वस्तजनको यत्संयोगोऽस्ति तत्क्षणे ॥ ५१५ ॥

तयोरेव विरोधित्वं युक्तं भिन्नस्वभावयोः ।
तमःप्रकाशयोर्यद्वत्परस्परविरोधिता ॥ ५१६ ॥

अज्ञानज्ञानयोस्तद्वदुभयोरेव दृश्यते ।
न ज्ञानेन विना नाशस्तस्य केनापि सिध्यति ॥ ५१७ ॥

तस्मादज्ञानविच्छित्त्यै ज्ञानं संपादयेत्सुधीः ।
आत्मानात्मविवेकेन ज्ञानं सिध्यति नान्यथा ॥ ५१८ ॥

युक्त्यात्मानात्मनोस्तस्मात्करणीयं विवेचनम् ।
अनात्मन्यात्मताबुद्धिग्रन्थिर्येन विदीर्यते ॥ ५१९ ॥

आत्मानात्मविवेकार्थं विवादोऽयं निरूप्यते ।
येनात्मानात्मनोस्तत्त्वं विविक्तं प्रस्फुटायते ॥ ५२० ॥

मूढा अश्रुतवेदान्ताः स्वयं पण्डितमानिनः ।
ईशप्रसादरहिताः सद्गुरोश्च बहिर्मुखाः ॥ ५२१ ॥

विवदन्ति प्रकारं तं शृणु वक्ष्यामि सादरम् ।
अत्यन्तपामरः कश्चित्पुत्र आत्मेति मन्यते ॥ ५२२ ॥

आत्मनीव स्वपुत्रेऽपि प्रबलप्रीतिदर्शनात् ।
पुत्रे तु पुष्टे पुष्टोऽहं नष्टे नष्टोऽहमित्यतः ॥ ५२३ ॥

अनुभूतिबलाच्चापि युक्तितोऽपि श्रुतेरपि ।
आत्मा वै पुत्रनामासीत्येवं च वदति श्रुतिः ॥ ५२४ ॥

दीपाद्दीपो यथा तद्वत्पितुः पुत्रः प्रजायते ।
पितुर्गुणानां तनये बीजाङ्कुरवदीक्षणात् ॥ ५२५ ॥

अतोऽयं पुत्र आत्मेति मन्यते भ्रान्तिमत्तमः ।
तन्मतं दूषयत्यन्यः पुत्र आत्मा कथं त्विति ॥ ५२६ ॥

प्रीतिमात्रात्कथं पुत्र आत्मा भवितुमर्हति ।
अन्यत्रापीक्ष्यते प्रीतिः क्षेत्रपात्रधनादिषु ॥ ५२७ ॥

पुत्राद्विशिष्टा देहेऽस्मिन्प्राणिनां प्रीतिरिष्यते ।
प्रदीप्ते भवने पुत्रं त्यक्त्वा जन्तुः पलायते ॥ ५२८ ॥

तं विक्रीणाति देहार्थं प्रतिकूलं निहन्ति च ।
स्मादात्मा तु तनयो न भवेच्च कदाचन ॥ ५२९ ॥

गुणरूपादिसादृश्यं दीपवन्न सुते पितुः ।
अव्यङ्गाज्जायते व्यङ्गः सुगुणादपि दुर्गुणः ॥ ५३० ॥

आभासमात्रास्ताः सर्वा युक्तयोऽप्युक्तयोऽपि च ।
पुत्रस्य पितृवद्देहे सर्वकार्येषु वस्तुषु ॥ ५३१ ॥

स्वामित्वद्योतनायास्मिन्नात्मत्वमुपचर्यते ।
श्रुत्या तु मुख्यया वृत्त्या पुत्र आत्मेति नोच्यते ॥ ५३२ ॥

औपचारिकमात्मत्वं पुत्रे तस्मान्न मुख्यतः ।
अहंपदप्रत्ययार्थो देह एव न चेतरः ॥ ५३३ ॥

प्रत्यक्षः सर्वजन्तूनां देहोऽहमिति निश्चयः ।
एष पुरुषोऽन्नरसमय इत्यपि च श्रुतिः ॥ ५३४ ॥

पुरुषत्वं वदत्यस्य स्वात्मा हि पुरुषस्ततः ।
आत्मायं देह एवेति चार्वाकेण विनिश्चितम् ॥ ५३५ ॥

तन्मतं दूषयत्यन्योऽसहमानः पृथग्जनः ।
देह आत्मा कथं नु स्यात्परतन्त्रो ह्यचेतनः ॥ ५३६ ॥

इन्द्रियैश्चाल्यमानोऽयं चेष्टते न स्वतः क्वचित् ।
आश्रयश्चक्षुरादीनां गृहवद्गृहमेधिनाम् ॥ ५३७ ॥

बाल्यादिनानावस्थावाञ्शुक्लशोणितसंभवः ।
अतः कदापि देहस्य नात्मत्वमुपपद्यते ॥ ५३८ ॥

बधिरोऽहं च काणोऽहं मूक इत्यनुभूतितः ।
इन्द्रियाणि भवन्त्यात्मा येषामस्त्यर्थवेदनम् ॥ ५३९ ॥

इन्द्रियाणां चेतनत्वं देहे प्राणाः प्रजापतिम् ।
एतमेत्येत्यूचुरिति श्रुत्यैव प्रतिपाद्यते ॥ ५४० ॥

यतस्तस्मादिन्द्रियाणां युक्तमात्मत्वमित्यमुम् ।
निश्चयं दूषयत्यन्योऽसहमानः पृथग्जनः ॥ ५४१ ॥

इन्द्रियाणि कथं त्वात्मा करणानि कुठारवत् ।
करणस्य कुठारादेश्चेतनत्वं न हीक्ष्यते ॥ ५४२ ॥

श्रुत्याधिदेवतामेवेन्द्रियेषूपचर्यते ।
न तु साक्षादिन्द्रियाणां चेतनत्वमुदीर्यते ॥ ५४३ ॥

अचेतनस्य दीपादेरर्थाभासकता यथा ।
तथैव चक्षुरादीनां जडानामपि सिध्यति ॥ ५४४ ॥

इन्द्रियाणां चेष्टयिता प्राणोऽयं पञ्चवृत्तिकः ।
सर्वावस्थास्ववस्थावान्सोऽयमात्मत्वमर्हति ।
अहं क्षुधावांस्तृष्णावानित्याद्यनुभवादपि ॥ ५४५ ॥

श्रुत्यान्योऽन्तर आत्मा प्राणमय इतीर्यते यस्मात् ।
तस्मात्प्राणस्यात्मत्वं युक्तं नो करणसंज्ञानां क्वापि ॥५४६॥

इति निश्चयमेतस्य दूषयत्यपरो जडः ।
भवत्यात्मा कथं प्राणो वायुरेवैष आन्तरः ॥ ५४७ ॥

बहिर्यात्यन्तरायाति भस्त्रिकावायुवन्मुहुः ।
न हितं वाहितं वा स्वमन्यद्वा वेद किंचन ॥ ५४८ ॥

जडस्वभावश्चपलः कर्मयुक्तश्च सर्वदा ।
प्राणस्य भानं मनसि स्थिते सुप्ते न दृश्यते ॥ ५४९ ॥

मनस्तु सर्वं जानाति सर्ववेदनकारणम् ।
यत्तस्मान्मन एवात्मा प्राणस्तु न कदाचन ॥ ५५० ॥

संकल्पवानहं चिन्तावानहं च विकल्पवान् ।
इत्याद्यनुभवादन्योऽन्तर आत्मा मनोमयः ॥ ५५१ ॥

इत्यादिश्रुतिसद्भावाद्युक्ता मनस आत्मता ।
इति निश्चयमेतस्य दूषयत्यपरो जडः ॥ ५५२ ॥

कथं मनस आत्मत्वं करणस्य दृगादिवत् ।
कर्तृप्रयोज्यं करणं न स्वयं तु प्रवर्तते ॥ ५५३ ॥

करणप्रयोक्ता यः कर्ता तस्यैवात्मत्वमर्हति ।
आत्मा स्वतन्त्रः पुरुषो न प्रयोज्यः कदाचन ॥ ५५४ ॥

अहं कर्तास्म्यहं भोक्ता सुखीत्यनुभवादपि ।
बुद्धिरात्मा भवत्येव बुद्धिधर्मो ह्यहंकृतिः ॥ ५५५ ॥

अन्योऽन्तर आत्मा विज्ञानमय इति वदति निगमः ।
मनसोऽपि च भिन्नं विज्ञानमयं कर्तृरूपमात्मानम् ॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
इत्यस्य कर्तृता श्रुत्या मुखतः प्रतिपाद्यते ।
तस्माद्युक्तात्मता बुद्धेरिति बौद्धेन निश्चितम् ॥ ५५७ ॥

प्राभाकरस्तार्किकश्च तावुभावप्यमर्षया ।
तन्निश्चयं दूषयतो बुद्धिरात्मा कथं न्विति ॥ ५५८ ॥

बुद्धेरज्ञानकार्यत्वाद्विनाशित्वात्प्रतिक्षणम् ।
बुद्ध्यादीनां च सर्वेषामज्ञाने लयदर्शनात् ॥ ५५९ ॥

अज्ञोऽहमित्यनुभवादास्त्रीबालादिगोचरात् ।
भवत्यज्ञानमेवात्मा न तु बुद्धिः कदाचन ॥ ५६० ॥

विज्ञानमयादन्यं त्वानन्दमयं परं तथात्मानम् ।
अन्योऽन्तर आत्मानन्दमय इति वदति वेदोऽपि ॥५६१॥

दुःखप्रत्ययशून्यत्वादानन्दमयता मता ।
अज्ञाने सकलं सुप्तौ बुद्ध्यादि प्रविलीयते ॥ ५६२ ॥

दुःखिनोऽपि सुषुप्तौ त्वानन्दमयता ततः ।
सुप्तौ किंचिन्न जानामीत्यनुभूतिश्च दृश्यते ॥ ५६३ ॥

यत एवमतो युक्ता ह्यज्ञानस्यात्मता ध्रुवम् ।
इति तन्निश्चयं भाट्टा दूषयन्ति स्वयुक्तिभिः ॥ ५६४ ॥

कथमज्ञानमेवात्मा ज्ञानं चाप्युपलभ्यते ।
ज्ञानाभावे कथं विद्युरज्ञोऽहमिति चाज्ञताम् ।
अस्वाप्सं सुखमेवाहं न जानाम्यत्र किंचन ॥ ५६५ ॥

इत्यज्ञानमपि ज्ञानं प्रबुद्धेषु प्रदृश्यते ।
प्रज्ञानघन एवानन्दमय इत्यपि श्रुतिः ॥ ५६६ ॥

प्रब्रवीत्युभयात्मत्वमात्मनः स्वयमेव सा ।
आत्मातश्चिज्जडतनुः खद्योत इव संमतः ॥ ५६७ ॥

न केवलाज्ञानमयो घटकुड्यादिवज्जडः ।
इति निश्चयमेतेषां दूषयत्यपरो जडः ॥ ५६८ ॥

ज्ञानाज्ञानमयस्त्वात्मा कथं भवितुमर्हति ।
परस्परविरुद्धत्वात्तेजस्तिमिरवत्तयोः ॥ ५६९ ॥

सामानाधिकरण्यं वा संयोगो वा समाश्रयः ।
तमःप्रकाशवज्ज्ञानाज्ञानयोर्न हि सिध्यति ॥ ५७० ॥

अज्ञानमपि विज्ञानं बुद्धिर्वापि च तद्गुणाः ।
सुषुप्तौ नोपलभ्यन्ते यत्किंचिदपि वापरम् ॥ ५७१ ॥

मात्रादिलक्षणं किं नु शून्यमेवोपलभ्यते ।
सुषुप्तौ नान्यदस्त्येव नाहमप्यासमित्यनु ॥ ५७२ ॥

सुप्तोत्थितजनैः सर्वैः शून्यमेवानुस्मर्यते ।
यत्ततः शून्यमेवात्मा न ज्ञानाज्ञानलक्षणः ॥ ५७३ ॥

वेदेनाप्यसदेवेदमग्र आसीदिति स्फुटम् ।
निरुच्यते यतस्तस्माच्छून्यस्यैवात्मता मता ॥ ५७४ ॥

असन्नेव घटः पूर्वं जायमानः प्रदृश्यते ।
न हि कुम्भः पुरैवान्तः स्थित्वोदेति बहिर्मुखः ॥ ५७५ ॥

यत्तस्मादसतः सर्वं सदिदं समजायत ।
ततः सर्वात्मना शून्यस्यैवात्मत्वं समर्हति ॥ ५७६ ॥

इत्येवं पण्डितंमन्यैः परस्परविरोधिभिः ।
तत्तन्मतानुरूपाल्पश्रुतियुक्त्यनुभूतिभिः ॥ ५७७ ॥

निर्णीतमतजातानि खण्डितान्येव पण्डितैः ।
श्रुतिभिश्चाप्यनुभवैर्बाधकैः प्रतिवादिनाम् ॥ ५७८ ॥

यतस्तस्मात्तु पुत्रादेः शून्यान्तस्य विशेषतः ।
सुसाधितमनात्मत्वं श्रुतियुक्त्यनुभूतिभिः ॥ ५७९ ॥

न हि प्रमाणान्तरबाधितस्य
याथार्थ्यमङ्गीक्रियते महद्भिः ।
पुत्रादिशून्यान्तमनात्मतत्त्व-
मित्येव विस्पष्टमतः सुजातम् ॥ ५८० ॥

शिष्यः—

सुषुप्तिकाले सकले विलीने
शून्यं विना नान्यदिहोपलभ्यते ।
शून्यं त्वनात्मा न ततः परः को-
ऽप्यात्माभिधानस्त्वनुभूयतेऽर्थः ॥ ५८१ ॥

यद्यास्ति चात्मा किमु नोपलभ्यते
सुप्तौ यथा तिष्ठति किं प्रमाणम् ।
किंलक्षणोऽसौ स कथं न बाध्यते
प्रबाध्यमानेष्वहमादिषु स्वयम् ॥ ५८२ ॥

एतत्संशयजातं मे हृदयग्रन्थिलक्षणम् ।
छिन्धि युक्तिमहाखड्गधारया कृपया गुरो ॥ ५८३ ॥

श्रीगुरुः—

अतिसूक्ष्मतरः प्रश्नस्तवायं सदृशो मतः ।
सूक्ष्मार्थदर्शनं सूक्ष्मबुद्धिष्वेव प्रदृश्यते ॥ ५८४ ॥

शृणु वक्ष्यामि सकलं यद्यत्पृष्टं त्वयाधुना ।
रहस्यं परमं सूक्ष्मं ज्ञातव्यं च मुमुक्षुभिः ॥ ५८५ ॥

बुद्ध्यादि सकलं सुप्तावनुलीनं स्वकारणे ।
अव्यक्ते वटवद्बीजे तिष्ठत्यविकृतात्मना ॥ ५८६ ॥

तिष्ठत्येव स्वरूपेण न तु शून्यायते जगत् ।
क्वचिदङ्कुररूपेण क्वचिद्बीजात्मना वटः ।
कार्यकारणरूपेण यथा तिष्ठत्यदस्तथा ॥ ५८७ ॥

अव्याकृतात्मनावस्थां जगतो वदति श्रुतिः ।
सुषुप्त्यादिषु तद्वेदं तर्ह्यव्याकृतमित्यसौ ॥ ५८८ ॥

इममर्थमविज्ञाय निर्णीतं श्रुतियुक्तिभिः ।
जगतो दर्शनं शून्यमिति प्राहुरतद्विदः ॥ ५८९ ॥

नासतः सत उत्पत्तिः श्रूयते न च दृश्यते ।
उदेति नरशृङ्गात्किं खपुष्पात्किं भविष्यति ॥ ५९० ॥

प्रभवति न हि कुम्भोऽविद्यमानो मृदश्चे-
त्प्रभवतु सिकताया वाथवा वारिणो वा ।
न हि भवति च ताभ्यां सर्वथा क्वापि तस्मा-
द्यत उदयति योऽर्थोऽस्त्यत्र तस्य स्वभावः ॥५९१॥

अन्यथा विपरीतं स्यात्कार्यकारणलक्षणम् ।
नियतं सर्वशास्त्रेषु सर्वलोकेषु सर्वतः ॥ ५९२ ॥

कथमसतः सज्जायेतेति श्रुत्या निषिध्यते तस्मात् ।
असतः सज्जननं नो घटते मिथ्यैव शून्यशब्दार्थः ॥

अव्यक्तशब्दिते प्राज्ञे सत्यात्मन्यत्र जाग्रति ।
कथं सिध्यति शून्यत्वं तस्य भ्रान्तशिरोमणे ॥ ५९४ ॥

सुषुप्तौ शून्यमेवेति केन पुंसा तवेरितम् ।
हेतुनानुमितं केन कथं ज्ञातं त्वयोच्यताम् ॥ ५९५ ॥

इति पृष्टो मूढतमो वदिष्यति किमुत्तरम् ।
नैवानुरूपकं लिङ्गं वक्ता वा नास्ति कश्चन ।
सुषुप्तिस्थितशून्यस्य बोद्धा कोऽन्वात्मनः परः ॥ ५९६ ॥

स्वेनानुभूतं स्वयमेव वक्ति
स्वसुप्तिकाले स्थितशून्यभावम् ।
तत्र स्वसत्तामनवेक्ष्य मूढः
स्वस्यापि शून्यत्वमयं ब्रवीति ॥ ५९७ ॥

अवेद्यमानः स्वयमन्यलोकैः
सौषुप्तिकं धर्ममवैति साक्षात् ।
बुद्ध्याद्यभावस्य च योऽत्र बोद्धा
स एष आत्मा खलु निर्विकारः ॥ ५९८ ॥

यस्येदं सकलं विभाति महसा तस्य स्वयंज्योतिषः
सूर्यस्येव किमस्ति भासकमिह प्रज्ञादि सर्वं जडम् ।
न ह्यर्कस्य विभासकं क्षितितले दृष्टं तथैवात्मनो
नान्यः कोऽप्यनुभासकोऽनुभविता नातः परः कश्चन ॥

येनानुभूयते सर्वं जाग्रत्स्वप्नसुषुप्तिषु ।
विज्ञातारमिमं को नु कथं वेदितुमर्हति ॥ ६०० ॥

सर्वस्य दाहको वह्निर्वह्नेर्नान्योऽस्ति दाहकः ।
यथा तथात्मनो ज्ञातुर्ज्ञाता कोऽपि न दृश्यते ॥ ६०१ ॥

उपलभ्येत केनायं ह्युपलब्धा स्वयं ततः ।
उपलब्ध्यन्तराभावान्नायमात्मोपलभ्यते ॥ ६०२ ॥

बुद्ध्यादिवेद्यविलयादयमेक एव
सुप्तौ न पश्यति शृणोति न वेत्ति किंचित् ।
सौषुप्तिकस्य तमसः स्वयमेव साक्षी
भूत्वात्र तिष्ठति सुखेन च निर्विकल्पः ॥ ६०३ ॥

सुषुप्तावात्मसद्भावे प्रमाणं पण्डितोत्तमाः ।
विदुः स्वप्रत्यभिज्ञानमाबालवृद्धसंमतम् ॥ ६०४ ॥

प्रत्यभिज्ञायमानत्वाल्लिङ्गमात्रानुमापकम् ।
स्मर्यमाणस्य सद्भावः सुखमस्वाप्समित्ययम् ॥ ६०५ ॥

पुरानुभूतो नो चेत्तु स्मृतेरनुदयो भवेत् ।
इत्यादितर्कयुक्तिश्च सद्भावे मानमात्मनः ॥ ६०६ ॥

यत्रात्मनोऽकामयितृत्वबुद्धिः
स्वप्नानपेक्षापि च तत्सुषुप्तम् ।
इत्यात्मसद्भाव उदीर्यतेऽत्र
श्रुत्यापि तस्माच्छ्रुतिरत्र मानम् ॥ ६०७ ॥

अकामयितृता स्वप्नादर्शनं घटते कथम् ।
अविद्यमानस्य तत आत्मास्तित्वं प्रतीयते ॥ ६०८ ॥

एतैः प्रमाणैरस्तीति ज्ञातः साक्षितया बुधैः ।
आत्मायं केवलः शुद्धः सच्चिदानन्दलक्षणः ॥ ६०९ ॥

सत्त्वचित्त्वानन्दतादिलक्षणं प्रत्यगात्मनः ।
कालत्रयेऽप्यबाध्यत्वं सत्यं नित्यस्वरूपतः ॥ ६१० ॥

शुद्धचैतन्यरूपत्वं चित्त्वं ज्ञानस्वरूपतः ।
अखण्डसुखरूपत्वादानन्दत्वमितीर्यते ॥ ६११ ॥

अनुस्यूतात्मनः सत्ता जाग्रत्स्वप्नसुषुप्तिषु ।
अहमस्मीत्यतो नित्यो भवत्यात्मायमव्ययः ॥ ६१२ ॥

सर्वदाप्यासमित्येवाभिन्नप्रत्यय ईक्ष्यते ।
कदापि नासमित्यस्मादात्मनो नित्यता मता ॥ ६१३ ॥

आयातासु गतासु शैशवमुखावस्थासु जाग्रन्मुखा-
स्वन्यास्वप्यखिलासु वृत्तिषु धियो दुष्टास्वदुष्टास्वपि ।
गङ्गाभङ्गपरम्परासु जलवत्सत्तानुवृत्तात्मन-
स्तिष्ठत्येव सदा स्थिराहमहमित्येकात्मता साक्षिणः ॥

प्रतिपदमहमादयो विभिन्नाः
क्षणपरिणामितया विकारिणस्ते ।
न परिणतिरमुष्य निष्कलत्वा-
दयमविकार्यत एव नित्य आत्मा ॥ ६१५ ॥

यः स्वप्नमद्राक्षमहं सुखं यो-
ऽस्वाप्सं स एवास्म्यथ जागरूकः ।
इत्येवमच्छिन्नतयानुभूयते
सत्तात्मनो नास्ति हि संशयोऽत्र ॥ ६१६ ॥

श्रुत्युक्ताः षोडशकलाश्चिदाभासस्य नात्मनः ।
निष्कलत्वान्नास्य लयस्तस्मान्नित्यत्वमात्मनः ॥ ६१७ ॥

जडप्रकाशकः सूर्यः प्रकाशात्मैव नो जडः ।
बुद्ध्यादिभासकस्तस्माच्चित्स्वरूपस्तथा मतः ॥ ६१८ ॥

कुड्यादेस्तु जडस्य नैव घटते भानं स्वतः सर्वदा
सूर्यादिप्रभया विना क्वचिदपि प्रत्यक्षमेतत्तथा ।
बुद्ध्यादेरपि न स्वतोऽस्त्यणुरपि स्फूर्तिर्विनैवात्मना
सोऽयं केवलचिन्मयश्रुतिमतो भानुर्यथा रुङ्मयः ॥ ६१९ ॥

स्वभासने वान्यपदार्थभासने
नार्कः प्रकाशान्तरमीषदिच्छति ।
स्वबोधने वाप्यहमादिबोधने
तथैव चिद्धातुरयं परात्मा ॥ ६२० ॥

अन्यप्रकाशं न किमप्यपेक्ष्य
यतोऽयमाभाति निजात्मनैव ।
ततः स्वयंज्योतिरयं चिदात्मा
न ह्यात्मभाने परदीप्त्यपेक्षा ॥ ६२१ ॥

यं न प्रकाशयति किंचिदिनोऽपि चन्द्रः
नो विद्युतः किमुत वह्निरयं मिताभः ।
यं भान्तमेतमनुभाति जगत्समस्तं
सोऽयं स्वयं स्फुरति सर्वदशासु चात्मा ॥ ६२२ ॥

आत्मनः सुखरूपत्वादानन्दत्वं स्वलक्षणम् ।
परप्रेमास्पदत्वेन सुखरूपत्वमात्मनः ॥ ६२३ ॥

सुखहेतुषु सर्वेषां प्रीतिः सावधिरीक्ष्यते ।
कदापि नावधिः प्रीतेः स्वात्मनि प्राणिनां क्वचित् ॥

क्षीणेन्द्रियस्य जीर्णस्य संप्राप्तोत्क्रमणस्य वा ।
अस्ति जीवितुमेवाशा स्वात्मा प्रियतमो यतः ॥ ६२५ ॥

आत्मातः परमप्रेमास्पदः सर्वशरीरिणाम् ।
यस्य शेषतया सर्वमुपादेयत्वमृच्छति ॥ ६२६ ॥

एष एव प्रियतमः पुत्रादपि धनादपि ।
अन्यस्मादपि सर्वस्मादात्मायं परमान्तरः ॥ ६२७ ॥

प्रियत्वेन मतं यत्तु तत्सदा नाप्रियं नृणाम् ।
विपत्तावपि संपत्तौ यथात्मा न तथापरः ॥ ६२८ ॥

आत्मा खलु प्रियतमोऽसुभृतां यदर्था
भार्यात्मजाप्तगृहवित्तमुखाः पदार्थाः ।
वाणिज्यकर्षणगवावनराजसेवा-
भैषज्यकप्रभृतयो विविधाः क्रियाश्च ॥ ६२९ ॥

प्रवृत्तिश्च निवृत्तिश्च यच्च यावच्च चेष्टितम् ।
आत्मार्थमेव नान्यार्थं नातः प्रियतमः परः ॥ ६३० ॥

तस्मादात्मा केवलानन्दरूपो
य: सर्वस्माद्वस्तुनः प्रेष्ठ उक्तः ।
यो वा अस्मान्मन्यतेऽन्यं प्रियं यं
सोऽयं तस्माच्छोकमेवानुभुङ्क्ते ॥ ६३१ ॥

शिष्यः—

अपरः क्रियते प्रश्नो मयायं क्षम्यतां प्रभो ।
अज्ञवागपराधाय कल्पते न महात्मनाम् ॥ ६३२ ॥

आत्मान्यः सुखमन्यच्च नात्मनः सुखरूपता ।
आत्मनः सुखमाशास्यं यतते सकलो जनः ॥ ६३३ ॥

आत्मनः सुखरूपत्वे प्रयत्नः किमु देहिनाम् ।
एष मे संशयः स्वामिन् कृपयैव निरस्यताम् ॥ ६३४ ॥

श्रीगुरुः—

आनन्दरूपमात्मानमज्ञात्वैव पृथग्जनः ।
बहिःसुखाय यतते न तु कश्चिद्विदन्बुधः ॥ ६३५ ॥

अज्ञात्वैव हि निक्षेपं
भिक्षामटाति दुर्मतिः ।
स्ववेश्मनि निधिं ज्ञात्वा
को नु भिक्षामटेत्सुधीः ॥ ६३६ ॥

स्थूलं च सूक्ष्मं च वपुः स्वभावतो
दुःखात्मकं स्वात्मतया गृहीत्वा ।
विस्मृत्य च स्वं सुखरूपमात्मनः
दुःखप्रदेभ्यः सुखमज्ञ इच्छति ॥ ६३७ ॥

न हि दुःखप्रदं वस्तु सुखं दातुं समर्हति ।
किं विषं पिबतो जन्तोरमृतत्वं प्रयच्छति ॥ ६३८ ॥

आत्मान्यः सुखमन्यच्चेत्येवं निश्चित्य पामरः ।
बहिःसुखाय यतते सत्यमेव न संशयः ॥ ६३९ ॥

इष्टस्य वस्तुनो ध्यानदर्शनाद्युपभुक्तिषु ।
प्रतीयते य आनन्दः सर्वेषामिह देहिनाम् ॥ ६४० ॥

स वस्तुधर्मो नो यस्मान्मनस्येवोपलभ्यते ।
वस्तुधर्मस्य मनसि कथं स्यादुपलम्भनम् ॥ ६४१ ॥

अन्यत्र त्वन्यधर्माणामुपलम्भो न दृश्यते ।
तस्मान्न वस्तुधर्मोऽयमानन्दस्तु कदाचन ॥ ६४२ ॥

नाप्येष धर्मो मनसोऽसत्यर्थे तददर्शनात् ।
असति व्यञ्जके व्यङ्ग्यं नोदेतीति न मन्यताम् ॥६४३॥

सत्यर्थेऽपि च नोदेति ह्यानन्दस्तूक्तलक्षणः ।
सत्यपि व्यञ्जके व्यङ्ग्यानुदयो नैव संमतः ॥ ६४४ ॥

दुरदृष्टादिकं नात्र प्रतिबन्धः प्रकल्प्यताम् ।
प्रियस्य वस्तुनो लाभे दुरदृष्टं न सिध्यति ॥ ६४५ ॥

तस्मान्न मानसो धर्मो निर्गुणत्वान्न चात्मनः ।
किं तु पुण्यस्य सांनिध्यादिष्टस्यापि च वस्तुनः ॥ ६४६ ॥

सत्त्वप्रधाने चित्तेऽस्मिंस्त्वात्मैव प्रतिबिम्बति ।
आनन्दलक्षणः स्वच्छे पयसीव सुधाकरः ॥ ६४७ ॥

सोऽयमाभास आनन्दश्चित्ते यः प्रतिबिम्बितः ।
पुण्योत्कर्षापकर्षाभ्यां भवत्युच्चावचः स्वयम् ॥ ६४८ ॥

सार्वभौमादिब्रह्मान्तं श्रुत्या यः प्रतिपादितः ।
स क्षयिष्णुः सातिशयः प्रक्षीणे कारणे लयम् ॥ ६४९ ॥

यात्येष विषयानन्दो यस्तु पुण्यैकसाधनः ।
ये तु वैषयिकानन्दं भुञ्जते पुण्यकारिणः ॥ ६५० ॥

दुःखं च भोगकालेऽपि तेषामन्ते महत्तरम् ।
सुखं विषयसंपृक्तं विषसंपृक्तभक्तवत् ॥ ६५१ ॥

भोगकालेऽपि भोगान्ते दुःखमेव प्रयच्छति ।
सुखमुच्चावचत्वेन क्षयिष्णुत्वभयेन च ॥ ६५२ ॥

भोगकाले भवेन्नॄणां ब्रह्मादिपदभाजिनाम् ।
राजस्थानप्रविष्टानां तारतम्यं मतं यथा ॥ ६५३ ॥

तथैव दुःखं जन्तूनां ब्रह्मादिपदभाजिनाम् ।
न काङ्क्षणीयं विदुषा तस्माद्वैषयिकं सुखम् ॥ ६५४ ॥

यो बिम्बभूत आनन्दः स आत्मानन्दलक्षणः ।
शाश्वतो निर्द्वयः पूर्णो नित्य एकोऽपि निर्भयः ॥ ६५५ ॥

लक्ष्यते प्रतिबिम्बेनाभासानन्देन बिम्बवत् ।
प्रतिबिम्बो बिम्बमूलो विना बिम्बं न सिध्यति ॥ ६५६ ॥

यत्ततो बिम्ब आनन्दः प्रतिबिम्बेन लक्ष्यते ।
युक्त्यैव पण्डितजनैर्न कदाप्यनुभूयते ॥ ६५७ ॥

अविद्याकार्यकरणसंघातेषु पुरोदितः ।
आत्मा जाग्रत्यपि स्वप्ने न भवत्येष गोचरः ॥ ६५८ ॥

स्थूलस्यापि च सूक्ष्मस्य दुःखरूपस्य वर्ष्मणः ।
लये सुषुप्तौ स्फुरति प्रत्यगानन्दलक्षणः ॥ ६५९ ॥

न ह्यत्र विषयः कश्चिन्नापि बुद्ध्यादि किंचन ।
आत्मैव केवलानन्दमात्रस्तिष्ठति निर्द्वयः ॥ ६६० ॥

प्रत्यभिज्ञायते सर्वैरेष सुप्तोत्थितैर्जनैः ।
सुखमात्रतया नात्र संशयं कर्तुमर्हसि ॥ ६६१ ॥

त्वयापि प्रत्यभिज्ञातं सुखमात्रत्वमात्मनः ।
सुषुप्तादुत्थितवता सुखमस्वाप्समित्यनु ॥ ६६२ ॥

दुःखाभावः सुखमिति यदुक्तं पूर्ववादिना ।
अनाघ्रातोपनिषदा तदसारं मृषा वचः ॥ ६६३ ॥

दुःखाभावस्तु लोष्टादौ विद्यते नानुभूयते ।
सुखलेशोऽपि सर्वेषां प्रत्यक्षं तदिदं खलु ॥ ६६४ ॥

सदयं ह्येष एवेति प्रस्तुत्य वदति श्रुतिः ।
सद्घनोऽयं चिद्घनोऽयमानन्दघन इत्यपि ॥ ६६५ ॥

आनन्दघनतामस्य स्वरूपं प्रत्यगात्मनः ।
धन्यैर्महात्मभिर्धीरैर्ब्रह्मविद्भिः सदुत्तमैः ॥ ६६६ ॥

अपरोक्षतयैवात्मा समाधावनुभूयते ।
केवलानन्दमात्रत्वेनैवमत्र न संशयः ॥ ६६७ ॥

स्वस्वोपाध्यनुरूपेण ब्रह्माद्याः सर्वजन्तवः ।
उपजीवन्त्यमुष्येव मात्रामानन्दलक्षणाम् ॥ ६६८ ॥

आस्वाद्यते यो भक्ष्येषु सुखकृन्मधुरो रसः ।
स गुडस्यैव नो तेषां माधुर्यं विद्यते क्वचित् ॥ ६६९ ॥

तद्वद्विषयसांनिध्यादानन्दो यः प्रतीयते ।
बिम्बानन्दांशविस्फूर्तिरेवासौ न जडात्मनाम् ॥ ६७० ॥

यस्य कस्यापि योगेन यत्र कुत्रापि दृश्यते ।
आनन्दः स परस्यैव ब्रह्मणः स्फूर्तिलक्षणः ॥ ६७१ ॥

यथा कुवलयोल्लासश्चन्द्रस्यैव प्रसादतः ।
तथानन्दोदयोऽप्येषां स्फुरणादेव वस्तुनः ॥ ६७२ ॥

सत्त्वं चित्त्वं तथानन्दस्वरूपं परमात्मनः ।
निर्गुणस्य गुणायोगाद्गुणास्तु न भवन्ति ते ॥ ६७३ ॥

विशेषणं तु व्यावृत्त्यै भवेद्व्यान्तरे सति ।
परमात्माद्वितीयोऽयं प्रपञ्चस्य मृषात्वतः ॥ ६७४ ॥

वस्त्वन्तरस्याभावेन न व्यावृत्त्यः कदाचन ।
केवलो निर्गुणश्चेति निर्गुणत्वं निरुच्यते ॥ ६७५ ॥

श्रुत्यैव न ततस्तेषां गुणत्वमुपपद्यते ।
उष्णत्वं च प्रकाशश्च यथा वह्नेस्तथात्मनः ॥ ६७६ ॥

सत्त्वचित्त्वानन्दतादि स्वरूपमिति निश्चितम् ।
अत एव सजातीयविजातीयादिलक्षणः ॥ ६७७ ॥

भेदो न विद्यते वस्तुन्यद्वितीये परात्मनि ।
प्रपञ्चस्यापवादेन विजातीयकृता भिदा ॥ ६७८ ॥

नेष्यते तत्प्रकारं ते वक्ष्यामि शृणु सादरम् ।
अहेर्गुणविवर्तस्य गुणमात्रस्य वस्तुतः ॥ ६७९ ॥

विवर्तस्यास्य जगतः सन्मात्रत्वेन दर्शनम् ।
अपवाद इति प्राहुरद्वैतब्रह्मदर्शिनः ॥ ६८० ॥

व्युत्क्रमेण तदुत्पत्तेर्द्रष्टव्यं सूक्ष्मबुद्धिभिः ।
प्रतीतस्यास्य जगतः सन्मात्रत्वं सुयुक्तिभिः ॥ ६८१ ॥

चतुर्विधं स्थूलशरीरजातं
तद्भोज्यमन्नादि तदाश्रयादि ।
ब्रह्माण्डमेतत्सकलं स्थविष्ठ-
मीक्षेत पञ्चीकृतभूतमात्रम् ॥ ६८२ ॥

यत्कार्यरूपेण यदीक्ष्यते त-
त्तन्मात्रमेवात्र विचार्यमाणे ।
मृत्कार्यभूतं कलशादि सम्य-
ग्विचारितं सन्न मृदो विभिद्यते ॥ ६८३ ॥

अन्तर्बहिश्चापि मृदेव दृश्यते
मृदो न भिन्नं कलशादि किंचन ।
ग्रीवादिमद्यत्कलशं तदित्थं
न वाच्यमेतच्च मृदेव नान्यत् ॥ ६८४ ॥

स्वरूपतस्तत्कलशादिनाम्ना
मृदेव मूढैरभिधीयते ततः ।
नाम्नो हि भेदो न तु वस्तुभेदः
प्रदृश्यते तत्र विचार्यमाणे ॥ ६८५ ॥

तस्माद्धि कार्यं न कदापि भिन्नं
स्वकारणादस्ति यतस्ततोऽङ्ग ।
यद्भौतिकं सर्वमिदं तथैव
तद्भूतमात्रं न ततोऽपि भिन्नम् ॥ ६८६ ॥

तच्चापि पञ्चीकृतभूतजातं
शब्दादिभिः स्वस्वगुणैश्च सार्धम् ।
वपूंषि सूक्ष्माणि च सर्वमेत-
द्भवत्यपञ्चीकृतभूतमात्रम् ॥ ६८७ ॥

तदप्यपञ्चीकृतभूतजातं
रजस्तमःसत्त्वगुणैश्च सार्धम् ।
अव्यक्तमात्रं भवति स्वरूपतः
साभासमव्यक्तमिदं स्वयं च ॥ ६८८ ॥

आधारभूतं यदखण्डमाद्यं
शुद्धं परं ब्रह्म सदैकरूपम् ।
सन्मात्रमेवास्त्यथ नो विकल्पः
सतः परं केवलमेवं वस्तु ॥ ६८९ ॥

एकश्चन्द्रः सद्वितीयो यथा स्या-
दृष्टेर्दोषादेव पुंसस्तथैकम्।
ब्रह्मास्त्येतद्बुद्धिदोषेण नाना
दोषे नष्टे भाति वस्त्वेकमेव ॥ ६९० ॥

रज्जोः स्वरूपाधिगमे न सर्पधी
रज्ज्वां विलीना तु यथा तथैव ।
ब्रह्मावगत्या तु जगत्प्रतीति-
स्तत्रैव लीना तु सह भ्रमेण ॥ ६९१ ॥

भ्रान्त्योदितद्वैतमतिप्रशान्त्या
सदैकमेवास्ति सदाद्वितीयम् ।
ततो विजातीयकृतोऽत्र भेदो
न विद्यते ब्रह्मणि निर्विकल्पे ॥ ६९२ ॥

यदास्त्युपाधिस्तदभिन्न आत्मा
तदा सजातीय इवावभाति ।
स्वप्नार्थतस्तस्य मृषात्मकत्वा-
त्तदप्रतीतौ स्वयमेष आत्मा ।

ब्रह्मैक्यतामेति पृथङ् न भाति
ततः सजातीयकृतो न भेदः ॥ ६९३ ॥

घटाभावे घटाकाशो महाकाशो यथा तथा ।
उपाध्यभावे त्वात्मैष स्वयं ब्रह्मैव केवलम् ॥ ६९४ ॥

पूर्ण एव सदाकाशो घटे सत्यप्यसत्यपि ।
नित्यपूर्णस्य नभसो विच्छेदः केन सिध्यति ॥ ६९५ ॥

अच्छिन्नश्छिन्नवद्भाति पामराणां घटादिना ।
ग्रामक्षेत्राद्यवधिभिर्भिन्नेव वसुधा यथा ॥ ६९६ ॥

तथैव परमं ब्रह्म महतां च महत्तमम् ।
परिच्छिन्नमिवाभाति भ्रान्त्या कल्पितवस्तुना ॥ ६९७ ॥

तस्माद्ब्रह्मात्मनोर्भेदः कल्पितो न तु वास्तवः ।
अत एव मुहुः श्रुत्याप्येकत्वं प्रतिपाद्यते ॥ ६९८ ॥

ब्रह्मात्मनोस्तत्त्वमसीत्यद्वयत्वोपपत्तये ।
प्रत्यक्षादिविरोधेन वाच्ययोर्नोपयुज्यते ।
तत्त्वंपदार्थयोरैक्यं लक्ष्ययोरेव सिध्यति ॥ ६९९ ॥

शिष्यः—

स्यात्तत्त्वंपदयोः स्वामिन्नर्थः कतिविधो मतः ।
पदयोः को नु वाच्यार्थो लक्ष्यार्थ उभयोश्च कः ॥ ७०० ॥

वाच्यैकत्वविवक्षायां विरोधः कः प्रतीयते ।
लक्ष्यार्थयोरभिन्नत्वे स कथं विनिवर्तते ॥ ७०१ ॥

एकत्वकथने का वा लक्षणात्रोररीकृता ।
एतत्सर्वं करुणया सम्यक्त्वं प्रतिपादय ॥ ७०२ ॥

श्रीगुरुः—

शृणुष्वावहितो विद्वन् अद्य ते फलितं तपः ।
वाक्यार्थश्रुतिमात्रेण सम्यग्ज्ञानं भविष्यति ॥ ७०३ ॥

यावन्न तत्त्वंपदयोरर्थः सम्यग्विचार्यते ।
तावदेव नृणां बन्धो मृत्युसंसारलक्षणः ॥ ७०४ ॥

अवस्था सच्चिदानन्दाखण्डैकरसरूपिणी ।
मोक्षः सिध्यति वाक्यार्थापरोक्षज्ञानतः सताम् ॥ ७०५ ॥

वाक्यार्थ एव ज्ञातव्यो मुमुक्षोर्भवमुक्तये ।
तस्मादवहितो भूत्वा शृणु वक्ष्ये समासतः ॥ ७०६ ॥

अर्था बहुविधाः प्रोक्ता वाक्यानां पण्डितोत्तमैः ।
वाच्यलक्ष्यादिभेदेन प्रस्तुतं श्रूयतां त्वया ॥ ७०७ ॥

वाक्ये तत्त्वमसीत्यत्र विद्यते यत्पदत्रयम् ।
तत्रादौ विद्यमानस्य तत्पदस्य निगद्यते ॥ ७०८ ॥

शास्त्रार्थकोविदैरर्थो वाच्यो लक्ष्य इति द्विधा ।
वाच्यार्थं ते प्रवक्ष्यामि पण्डितैर्य उदीरितः ॥ ७०९ ॥

समष्टिरूपमज्ञानं साभासं सत्त्वबृंहितम् ।
वियदादिविराडन्तं स्वकार्येण समन्वितम् ॥ ७१० ॥

चैतन्यं तदवच्छिन्नं सत्यज्ञानादिलक्षणम् ।
सर्वज्ञत्वेश्वरत्वान्तर्यामित्वादिगुणैर्युतम् ॥ ७११ ॥

जगत्स्रष्टृत्वपातृत्वसंहर्तृत्वादिधर्मकम् ।
सर्वात्मना भासमानं यदमेयं गुणैश्च तत् ॥ ७१२ ॥

अव्यक्तमपरं ब्रह्म वाच्यार्थ इति कथ्यते ।
नीलमुत्पलमित्यत्र यथा वाक्यार्थसंगतिः ॥ ७१३ ॥

तथा तत्त्वमसीत्यत्र नास्ति वाक्यार्थसंगतिः ।
पटाद्व्यावर्तते नील उत्पलेन विशेषितः ॥ ७१४ ॥

शौक्ल्याद्व्यावर्तते नीलेनोत्पलं तु विशेषितम् ।
इत्थमन्योन्यभेदस्य व्यावर्तकतया तयोः ॥ ७१५ ॥

विशेषणविशेष्यत्वसंसर्गस्येतरस्य वा ।
वाक्यार्थत्वे प्रमाणान्तरविरोधो न विद्यते ॥ ७१६ ॥

अतः संगच्छते सम्यग्वाक्यार्थो बाधवर्जितः ।
एवं तत्त्वमसीत्यत्र वाक्यार्थो न समञ्जसः ॥ ७१७ ॥

तदर्थस्य परोक्षत्वादिविशिष्टचितेरपि ।
त्वमर्थस्यापरोक्षत्वादिविशिष्टचितेरपि ॥ ७१८ ॥

तथैवान्योन्यभेदस्य व्यावर्तकतया तयोः ।
विशेषणविशेष्यस्य संसर्गस्येतरस्य वा ॥ ७१९ ॥

वाक्यार्थत्वे विरोधोऽस्ति प्रत्यक्षादिकृतस्ततः ।
संगच्छते न वाक्यार्थस्तद्विरोधं च वच्मि ते ॥ ७२० ॥

सर्वेशत्वस्वतन्त्रत्वसर्वज्ञत्वादिभिर्गुणैः ।
सर्वोत्तमः सत्यकामः सत्यसंकल्प ईश्वरः ॥ ७२१ ॥

तत्पदार्थस्त्वमर्थस्तु किंचिज्ज्ञो दुःखजीवनः ।
संसार्ययं तद्गतिको जीवः प्राकृतलक्षणः ॥ ७२२ ॥

कथमेकत्वमनयोर्घटते विपरीतयोः ।
प्रत्यक्षेण विरोधोऽयमुभयोरुपलभ्यते ॥ ७२३ ॥

विरुद्धधर्माक्रान्तत्वात्परस्परविलक्षणौ ।
जीवेशौ वह्नितुहिनाविव शब्दार्थतोऽपि च ॥ ७२४ ॥

प्रत्यक्षादिविरोधः स्यादित्यैक्ये तयोः परित्यक्ते ।
श्रुतिवचनविरोधो भवति महान्स्मृतिवचनविरोधश्च ॥

श्रुत्याप्येकत्वमनयोस्तात्पर्येण निगद्यते ।
मुहुस्तत्त्वमसीत्यस्मादङ्गीकार्यं श्रुतेर्वचः ॥ ७२६ ॥

वाक्यार्थत्वे विशिष्टस्य संसर्गस्य च वा पुनः ।
अयथार्थतया सोऽयं वाक्यार्थो न मतः श्रुतेः ॥ ७२७ ॥

अखण्डैकरसत्वेन वाक्यार्थः श्रुतिसंमतः ।
स्थूलसूक्ष्मप्रपञ्चस्य सन्मात्रत्वं पुनः पुनः ॥ ७२८ ॥

दर्शयित्वा सुषुप्तौ तद्ब्रह्माभिन्नत्वमात्मनः ।
उपपाद्य सदैकत्वं प्रदर्शयितुमिच्छया ॥ ७२९ ॥

ऐतदात्म्यमिदं सर्वमित्युक्त्यैव सदात्मनोः ।
ब्रवीति श्रुतिरेकत्वं ब्रह्मणोऽद्वैतसिद्धये ॥ ७३० ॥

सति प्रपञ्चे जीवे वाद्वैतत्वं ब्रह्मणः कुतः ।
अतस्तयोरखण्डत्वमेकत्वं श्रुतिसंमतम् ॥ ७३१ ॥

विरुद्धांशपरित्यागात्प्रत्यक्षादिर्न बाधते ।
अविरुद्धांशग्रहणान्न श्रुत्यापि विरुध्यते ॥ ७३२ ॥

लक्षणा ह्युपगन्तव्या ततो वाक्यार्थसिद्धये ।
वाच्यार्थानुपपत्त्यैव लक्षणाभ्युपगम्यते ॥ ७३३ ॥

संबन्धानुपपत्त्या च लक्षणेति जगुर्बुधाः ।
गङ्गायां घोष इत्यादौ या जहल्लक्षणा मता ॥ ७३४ ॥

न सा तत्त्वमसीत्यत्र वाक्य एषा प्रवर्तते ।
गङ्गाया अपि घोषस्याधाराधेयत्वलक्षणम् ॥ ७३५ ॥

सर्वो विरुद्धवाक्यार्थस्तत्र प्रत्यक्षतस्ततः ।
गङ्गासंबन्धवत्तीरे लक्षणा संप्रवर्तते ॥ ७३६ ॥

तथा तत्त्वमसीत्यत्र चैतन्यैकत्वलक्षणे ।
विवक्षिते तु वाक्यार्थेऽपरोक्षत्वादिलक्षणः ॥ ७३७ ॥

विरुध्यते भागमात्रो न तु सर्वो विरुध्यते ।
तस्माज्जहल्लक्षणायाः प्रवृत्तिर्नात्र युज्यते ॥ ७३८ ॥

वाक्यार्थस्य तु सर्वस्य त्यागे न फलमीक्ष्यते ।
नालिकेरफलस्येव कठिनत्वधिया नृणाम् ॥ ७३९ ॥

गङ्गापदं यथा स्वार्थं त्यक्त्वा लक्षयते तटम् ।
तत्पदं त्वंपदं वापि त्यक्त्वा स्वार्थं यथाखिलम् ॥ ७४० ॥

तदर्थं वा त्वमर्थं वा यदि लक्षयति स्वयम् ।
तदा जहल्लक्षणायाः प्रवृत्तिरुपपद्यते ॥ ७४१ ॥

न शङ्कनीयमित्यार्यैर्ज्ञातार्थे न हि लक्षणा ।
तत्पदं त्वंपदं वापि श्रूयते च प्रतीयते ॥ ७४२ ॥

तदर्थे च कथं तत्र संप्रवर्तेत लक्षणा ।
अत्र शोणो धावतीति वाक्यवन्न प्रवर्तते ॥ ७४३ ॥

अजहल्लक्षणा वापि सा जहल्लक्षणा यथा ।
गुणस्य गमनं लोके विरुद्धं द्रव्यमन्तरा ॥ ७४४ ॥

अतस्तमपरित्यज्य तद्गुणाश्रयलक्षणः ।
लक्ष्यादिर्लक्ष्यते तत्र लक्षणासौ प्रवर्तते ॥ ७४५ ॥

वाक्ये तत्त्वमसीत्यत्र ब्रह्मात्मैकत्वबोधके ।
परोक्षत्वापरोक्षत्वादिविशिष्टचितोर्द्वयोः ॥ ७४६ ॥

एकत्वरूपवाक्यार्थो विरुद्धांशाविवर्जनात् ।
न सिध्यति यतस्तस्मान्नाजहल्लक्षणा मता ॥ ७४७ ॥

तत्पदं त्वंपदं चापि स्वकीयार्थविरोधिनम् ।
अंशं सम्यक्परित्यज्य स्वाविरुद्धांशसंयुतम् ॥ ७४८ ॥

तदर्थं वा त्वमर्थं वा सम्यग्लक्षयतः स्वयम् ।
भागलक्षणया साध्यं किमस्तीति न शङ्क्यताम् ॥ ७४९ ॥

अविरुद्धं पदार्थान्तरांशं स्वांशं च तत्कथम् ।
एकं पदं लक्षणया संलक्षयितुमर्हति ॥ ७५० ॥

पदान्तरेण सिद्धायां पदार्थप्रमितौ स्वतः ।
तदर्थप्रत्ययापेक्षा पुनर्लक्षणया कुतः ॥ ७५१ ॥

तस्मात्तत्त्वमसीत्यत्र लक्षणा भागलक्षणा ।
वाक्यार्थसत्त्वाखण्डैकरसतासिद्धये मता ॥ ७५२ ॥

भागं विरुद्धं संत्यज्याविरोधो लक्ष्यते यदा ।
सा भागलक्षणेत्याहुर्लक्षणज्ञा विचक्षणाः ॥ ७५३ ॥

सोऽयं देवदत्त इति वाक्यं वाक्यार्थ एव वा ।
देवदत्तैक्यरूपस्ववाक्यार्थानवबोधकम् ॥ ७५४ ॥

देशकालादिवैशिष्ट्यं विरुद्धांशं निरस्य च ।
अविरुद्धं देवदत्तदेहमात्रं स्वलक्षणम् ॥ ७५५ ॥

भागलक्षणया सम्यग्लक्षयत्यनया यथा ।
तथा तत्त्वमसीत्यत्र वाक्यं वाक्यार्थ एव वा ॥ ७५६ ॥

परोक्षत्वापरोक्षत्वादिविशिष्टचितोर्द्वयोः ।
एकत्वरूपवाक्यार्थविरुद्धांशमुपस्थितम् ॥ ७५७ ॥

परोक्षत्वापरोक्षत्वसर्वज्ञत्वादिलक्षणम् ।
बुद्ध्यादिस्थूलपर्यन्तमाविद्यकमनात्मकम् ॥ ७५८ ॥

परित्यज्य विरुद्धांशं शुद्धचैतन्यलक्षणम् ।
वस्तु केवलसन्मात्रं निर्विकल्पं निरञ्जनम् ॥ ७५९ ॥

लक्षयत्यनया सम्यग्भागलक्षणया ततः ।
सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दमद्वयम् ॥ ७६० ॥

निर्विशेषं निराभासमतादृशमनीदृशम् ।
अनिर्देश्यमनाद्यन्तमनन्तं शान्तमच्युतम् ।
अप्रतर्क्यमविज्ञेयं निर्गुणं ब्रह्म शिष्यते ॥ ७६१ ॥

उपाधिवैशिष्ट्यकृतो विरोधो
ब्रह्मात्मनोरेकतयाधिगत्या ।
उपाधिवैशिष्ट्य उदस्यमाने
न कश्चिदप्यस्ति विरोध एतयोः ॥ ७६२ ॥

तयोरुपाधिश्च विशिष्टता च
तद्धर्मभाक्त्वं च विलक्षणत्वम् ।
भ्रान्त्या कृतं सर्वमिदं मृषैव
स्वप्नार्थवज्जाग्रति नैव सत्यम् ॥ ७६३ ॥

निद्रासूतशरीरधर्मसुखदुःखादिप्रपञ्चोऽपि वा
जीवेशादिभिदापि वा न च ऋतं कर्तुं क्वचिच्छक्यते ।
मायाकल्पितदेशकालजगदीशादिभ्रमस्तादृशः
को भेदोऽस्त्यनयोर्द्वयोस्तु कतमः सत्योऽन्यतः को भवेत् ॥

न स्वप्नजागरणयोरुभयोर्विशेषः
संदृश्यते क्वचिदपि भ्रमजैर्विकल्पैः ।
यद्दृष्टदर्शनमुखैरत एव मिथ्या
स्वप्नो यथा ननु तथैव हि जागरोऽपि ॥ ७६५ ।

अविद्याकार्यतस्तुल्यौ द्वावपि स्वप्नजागरौ ।
दृष्टदर्शनदृश्यादिकल्पनोभयतः समा ॥ ७६६ ॥

अभाव उभयोः सुप्तौ सर्वैरप्यनुभूयते ।
न कश्चिदनयोर्भेदस्तस्मान्मिथ्यात्वमर्हतः ॥ ७६७ ॥

भ्रान्त्या ब्रह्मणि भेदोऽयं सजातीयादिलक्षणः ।
कालत्रयेऽपि हे विद्वन् वस्तुतो नैव कश्चन ॥ ७६८ ॥

यत्र नान्यत्पश्यतीति श्रुतिर्द्वैतं निषेधति ।
कल्पितस्य भ्रमाद्भूम्नि मिथ्यात्वावगमाय तत् ॥ ७६९ ॥

यतस्ततो ब्रह्म सदाद्वितीयं
विकल्पशून्यं निरुपाधि निर्मलम् ।
निरन्तरानन्दघनं निरीहं
निरास्पदं केवलमेकमेव ॥ ७७० ॥

नैवास्ति काचन भिदा न गुणप्रतीति-
र्नो वाक्प्रवृत्तिरपि वा न मनःप्रवृत्तिः ।
यत्केवलं परमशान्तमनन्तमाद्य-
मानन्दमात्रमवभाति सदद्वितीयम् ॥ ७७१ ॥

यद्दिदं परमं सत्यं तत्त्वं सच्चित्सुखात्मकम् ।
अजरामरणं नित्यं सत्यमेतद्वचो मम ॥ ७७२ ॥

न हि त्वं देहोऽसावसुरपि च वाप्यक्षनिकरो
मनो वा बुद्धिर्वा क्वचिदपि तथाहंकृतिरपि ।
न चैषां संघातस्त्वमु भवति विद्वन् शृणु परं
यदेतेषां साक्षी स्फुरणममलं तत्त्वमसि हि ॥७७३॥

यज्जायते वस्तु तदेव वर्धते
तदेव मृत्युं समुपैति काले ।
जन्मैव तेनास्ति तथैव मृत्यु-
र्नास्त्येव नित्यस्य विभोरजस्य ॥ ७७४ ॥

य एष देहो जनितः स एव
समेधते नश्यति कर्मयोगात् ।
त्वमेतदीयास्वखिलास्ववस्था-
स्ववस्थितः साक्ष्यसि बोधमात्रः ॥ ७७५ ॥

यत्स्वप्रकाशमखिलात्मकमासुषुप्ते-
रेकात्मनाहमहमित्यवभाति नित्यम् ।

बुद्धेः समस्तविकृतेरविकारि बोद्धृ
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७७६ ॥

स्वात्मन्यनस्तमयसंविदि कल्पितस्य
व्योमादिसर्वजगतः प्रददाति सत्ताम् ।
स्फूर्तिं स्वकीयमहसा वितनोति साक्षा-
द्यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७७७ ॥

सम्यक्समाधिनिरतैर्विमलान्तरङ्गे
साक्षादवेक्ष्य निजतत्त्वमपारसौख्यम् ।
संतुष्यते परमहंसकुलैरजस्रं
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७७८ ॥

अन्तर्बहिः स्वयमखण्डितमेकरूप-
मारोपितार्थवदुदञ्चति मूढबुद्धेः ।
मृत्स्नादिवद्विगतविक्रियमात्मवेद्यं
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७७९ ॥

श्रुत्युक्तमव्ययमनन्तमनादिमध्य-
मव्यक्तमक्षरमनाश्रयमप्रमेयम् ।

आनन्दसद्घनमनामयमद्वितीयं
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७८० ॥

शरीरतद्योगतदीयधर्मा-
द्यारोपणं भ्रान्तिवशात्त्वयीदम् ।
न वस्तुतः किंचिदतस्त्वजस्त्वं
मृत्योर्भयं क्वास्ति तवासि पूर्णः ॥ ७८१ ॥

यद्यदृष्टं भ्रान्तिमत्या स्वदृष्ट्या
तत्तत्सम्यग्वस्तुदृष्ट्या त्वमेव ।
त्वत्तो नान्यद्वस्तु किंचित्तु लोके
कस्माद्भीतिस्ते भवेदद्वयस्य ॥ ७८२ ॥

पश्यतस्त्वहमेवेदं सर्वमित्यात्मनाखिलम् ।
भयं स्याद्विदुषः कस्मात्स्वस्मान्न भयमिष्यते ॥ ७८३ ॥

तस्मात्त्वमभयं नित्यं केवलानन्दलक्षणम् ।
निष्कलं निष्क्रियं शान्तं ब्रह्मैवासि सदाद्वयम् ॥ ७८४ ॥

ज्ञातृज्ञानज्ञेयविहीनं ज्ञातुरभिन्नं ज्ञानमखण्डम् ।
ज्ञेयाज्ञेयत्वादिविमुक्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७८५ ॥

अन्तःप्रज्ञत्वादिविकल्पैरस्पृष्टं यत्तद्दृशिमात्रम् ।
सत्तामात्रं समरसमेकं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥७८६॥

सर्वाकारं सर्वमसर्वं सर्वनिषेधावधिभूतं यत् ।
सत्यं शाश्वतमेकमनन्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥७८७॥

नित्यानन्दाखण्डैकरसं निष्कलमक्रियमस्तविकारम् ।
प्रत्यगभिन्नं परमव्यक्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥७८८॥

त्वं प्रत्यस्ताशेषविशेषं व्योमेवान्तर्बहिरपि पूर्णम् ।
ब्रह्मानन्दं परमद्वैतं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७८९ ॥

ब्रह्मैवाहमहं ब्रह्म निर्गुणं निर्विकल्पकम् ।
इत्येवाखण्डया वृत्त्या तिष्ठ ब्रह्मणि निष्क्रिये ॥ ७९० ॥

अखण्डामेवैतां घटितपरमानन्दलहरीं
परिध्वस्तद्वैतप्रमितिममलां वृत्तिमनिशम् ।
अमुञ्चानः स्वात्मन्यनुपमसुखे ब्रह्मणि परे
रमस्व प्रारब्धं क्षपय सुखवृत्त्या त्वमनया ॥

ब्रह्मानन्दरसास्वादतत्परेणैव चेतसा ।
समाधिनिष्ठितो भूत्वा तिष्ठ विद्वन्सदा मुने ॥ ७९२ ॥

शिष्यः—

अखण्डाख्या वृत्तिरेषा वाक्यार्थश्रुतिमात्रतः ।
श्रोतुः संजायते किं वा क्रियान्तरमपेक्षते ॥ ७९३ ॥

समाधिः कः कतिविधस्तत्सिद्धेः किमु साधनम् ।
समाधेरन्तरायाः के सर्वमेतन्निरूप्यताम् ॥ ७९४ ॥

श्रीगुरुः—

मुख्यगौणादिभेदेन विद्यन्तेऽत्राधिकारिणः ।
तेषां प्रज्ञानुसारेणाखण्डा वृत्तिरुदेष्यते ॥ ७९५ ॥

श्रद्धाभक्तिपुरःसरेण विहितेनैवेश्वरं कर्मणा
संतोष्यार्जिततत्प्रसादमहिमा जन्मान्तरेष्वेव यः ।
नित्यानित्यविवेकतीव्रविरतिन्यासादिभिः साधनै-
र्युक्तः सः श्रवणे सतामभिमतो मुख्याधिकारी द्विजः ॥

अध्यारोपापवादक्रममनुसरता देशिकेनात्र वेत्रा
वाक्यार्थे बोध्यमाने सति सपदि सतः शुद्धबुद्धेरमुष्य ।
नित्यानन्दाद्वितीयं निरुपमममलं यत्परं तत्त्वमेकं
तद्ब्रह्मैवाहमस्मीत्युदयति परमाखण्डताकारवृत्तिः ॥

अखण्डाकारवृत्तिः सा चिदाभाससमन्विता ।
आत्माभिन्नं परं ब्रह्म विषयीकृत्य केवलम् ॥ ७९८ ॥

बाधते तद्गताज्ञानं यदावरणलक्षणम् ।
अखण्डाकारया वृत्त्या त्वज्ञाने बाधिते सति ॥ ७९९ ॥

तत्कार्यं सकलं तेन समं भवति बाधितम् ।
तन्तुदाहे तु तत्कार्यपटदाहो यथा तथा ॥ ८०० ॥

तस्य कार्यतया जीववृत्तिर्भवति बाधिता ।
उपप्रभा यथा सूर्यं प्रकाशयितुमक्षमा ॥ ८०१ ॥

तद्वदेव चिदाभासचैतन्यं वृत्तिसंस्थितम् ।
स्वप्रकाशं परं ब्रह्म प्रकाशयितुमक्षमम् ॥ ८०२ ॥

प्रचण्डातपमध्यस्थदीपवन्नष्टदीधितिः ।
तत्तेजसाभिभूतं सल्लीनोपाधितया ततः ॥ ८०३ ॥

बिम्बभूतपरब्रह्ममात्रं भवति केवलम् ।
यथापनीते त्वादर्शे प्रतिबिम्बमुखं स्वयम् ॥ ८०४ ॥

मुखमात्रं भवेत्तद्वदेतच्चोपाधिसंक्षयात् ।
घटाज्ञाने यथा वृत्त्या व्याप्तया बाधिते सति ॥ ८०५ ॥

घटं विस्फुरयत्येष चिदाभासः स्वतेजसा ।
न तथा स्वप्रभे ब्रह्मण्याभास उपयुज्यते ॥ ८०६ ॥

अत एव मतं वृत्तिव्याप्यत्वं वस्तुनः सताम् ।
न फलव्याप्यता तेन न विरोधः परस्परम् ॥ ८०७ ॥

श्रुत्योदितस्ततो ब्रह्म ज्ञेयं बुद्ध्यैव सूक्ष्मया ।
प्रज्ञामान्द्यं भवेद्येषां तेषां न श्रुतिमात्रतः ॥ ८०८ ॥

स्यादखण्डाकारवृत्तिर्विना तु मननादिना ।
श्रवणान्मननाद्ध्यानात्तात्पर्येण निरन्तरम् ॥ ८०९ ॥

बुद्धेः सूक्ष्मत्वमायाति ततो वस्तूपलभ्यते ।
मन्दप्रज्ञावतां तस्मात्करणीयं पुनः पुनः ॥ ८१० ॥

श्रवणं मननं ध्यानं सम्यग्वस्तूपलब्धये ।
सर्ववेदान्तवाक्यानां षड्भिर्लिङ्गैः सदद्वये ॥ ८११ ॥

परे ब्रह्मणि तात्पर्यनिश्चयं श्रवणं विदुः ।
श्रुतस्यैवाद्वितीयस्य वस्तुनः प्रत्यगात्मनः ॥ ८१२ ॥

वेदान्तवाक्यानुगुणयुक्तिभिस्त्वनुचिन्तनम् ।
मननं तच्छ्रुतार्थस्य साक्षात्करणकारणम ॥ ८१३ ॥

विजातीयशरीरादिप्रत्ययत्यागपूर्वकम् ।
सजातीयात्मवृत्तीनां प्रवाहकरणं यथा ॥ ८१४ ॥

तैलधारावदच्छिन्नवृत्त्या तद्ध्यानमिष्यते ।
तावत्कालं प्रयत्नेन कर्तव्यं श्रवणं सदा ॥ ८१५ ॥

प्रमाणसंशयो यावत्स्वबुद्धेर्न निवर्तते ।
प्रमेयसंशयो यावत्तावत्तु श्रुतियुक्तिभिः ॥ ८१६ ॥

आत्मयाथार्थ्यनिश्चित्यै कर्तव्यं मननं मुहुः ।
विपरीतात्मधीर्यावन्न विनश्यति चेतसि ।
तावन्निरन्तरं ध्यानं कर्तव्यं मोक्षमिच्छता ॥ ८१७ ॥

यावन्न तर्केण निरासितोऽपि
　दृश्यप्रपञ्चस्त्वपरोक्षबोधात् ।
विलीयते तावदमुष्य भिक्षो-
　र्ध्यानादि सम्यक्करणीयमेव ॥ ८१८ ॥

सविकल्पो निर्विकल्प इति द्वेधा निगद्यते ।
समाधिः सविकल्पस्य लक्षणं वच्मि तच्छृणु ॥ ८१९ ॥

ज्ञात्राद्यविलयेनैव ज्ञेये ब्रह्मणि केवले ।
तदाकाराकारितया चित्तवृत्तेरवस्थितिः ॥ ८२० ॥

सद्भिः स एव विज्ञेयः समाधिः सविकल्पकः ।
मृद एवावभानेऽपि मृण्मयद्विपभानवत् ॥ ८२१ ॥

सन्मात्रवस्तुभानेऽपि त्रिपुटी भाति सन्मयी ।
समाधिरत एवायं सविकल्प इतीर्यते ॥ ८२२ ॥

ज्ञात्रादिभावमुत्सृज्य ज्ञेयमात्रस्थितिर्दृढा ।
मनसो निर्विकल्पः स्यात्समाधिर्योगसंज्ञितः ॥ ८२३ ॥

जले निक्षिप्तलवणं जलमात्रतया स्थितम् ।
पृथङ् न भाति किं त्वम्भ एकमेवावभासते ॥ ८२४ ॥

यथा तथैव सा वृत्तिर्ब्रह्ममात्रतया स्थिता ।
पृथङ् न भाति ब्रह्मैवाद्वितीयमवभासते ॥ ८२५ ॥

ज्ञात्रादिकल्पनाभावान्मतोऽयं निर्विकल्पकः ।
वृत्तेः सद्भावबाधाभ्यामुभयोर्भेद इष्यते ॥ ८२६ ॥

समाधिसुप्तयोर्ज्ञानं चाज्ञानं सुप्तयात्र नेष्यते ।
सविकल्पो निर्विकल्पः समाधिर्द्वाविमौ हृदि ॥ ८२७ ॥

मुमुक्षोर्यत्नतः कार्यौ विपरीतनिवृत्तये ।
कृतेऽस्मिन्विपरीताया भावनाया निवर्तनम ॥ ८२८ ॥

ज्ञानस्याप्रतिबद्धत्वं सदानन्दश्च सिध्यति ।
दृश्यानुविद्धः शब्दानुविद्धश्चेति द्विधा मतः ॥ ८२९ ॥

सविकल्पस्तयोर्यत्तल्लक्षणं वच्मि तच्छृणु ।
कामादिप्रत्ययैर्दृश्यैः संसर्गो यत्र दृश्यते ॥ ८३० ॥

सोऽयं दृश्यानुविद्धः स्यात्समाधिः सविकल्पकः ।
अहंममेदमित्यादिकामक्रोधादिवृत्तयः ॥ ८३१ ॥

दृश्यन्ते येन संदृष्टा दृश्याः स्युरहमादयः ।
कामादिसर्ववृत्तीनां द्रष्टारमविकारिणम् ॥ ८३२ ॥

साक्षिणं स्वं विजानीयाद्यस्ताः पश्यति निष्क्रियः ।
कामादीनामहं साक्षी दृश्यन्ते ते मया ततः ॥ ८३३ ॥

इति साक्षितयात्मानं जानात्यात्मनि साक्षिणम् ।
दृश्यं कामादि सकलं स्वात्मन्येव विलापयेत् ॥ ८३४ ॥

नाहं देहो नाप्यसुर्नाक्षवर्गो
नाहंकारो नो मनो नापि बुद्धिः ।
अन्तस्तेषां चापि तद्विक्रियाणां
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८३५ ॥

वाचः साक्षी प्राणवृत्तेश्च साक्षी
बुद्धेः साक्षी बुद्धिवृत्तेश्च साक्षी ।
चक्षुःश्रोत्रादीन्द्रियाणां च साक्षी
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८३६ ॥

नाहं स्थूलो नापि सूक्ष्मो न दीर्घो
नाहं बालो नो युवा नापि वृद्धः ।
नाहं काणो नापि मूको न षण्डः
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८३७ ॥

नास्म्यागन्ता नापि गन्ता न हन्ता
नाहं कर्ता न प्रयोक्ता न वक्ता ।
नाहं भोक्ता नो सुखी नैव दुःखी
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८३८ ॥

नाहं योगी नो वियोगी न रागी
नाहं क्रोधी नैव कामी न लोभी ।
नाहं बद्धो नापि युक्तो न मुक्तः
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८३९ ॥

नान्तःप्रज्ञो नो बहिःप्रज्ञको वा
नैव प्रज्ञो नापि चाप्रज्ञ एषः ।
नाहं श्रोता नापि मन्ता न बोद्धा
साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ८४० ॥

न मेऽस्ति देहेन्द्रियबुद्धियोगो
न पुण्यलेशोऽपि न पापलेशः ।
क्षुधापिपासादिषडूर्मिदूरः
सदा विमुक्तोऽस्मि चिदेव केवलः ॥ ८४१ ॥

अपाणिपादोऽहमवागचक्षुषी
अप्राण एवास्म्यमना ह्यबुद्धिः ।
व्योमेव पूर्णोऽस्मि विनिर्मलोऽस्मि
सदैकरूपोऽस्मि चिदेव केवलः ॥ ८४२ ॥

इति स्वमात्मानमवेक्षमाणः
प्रतीतदृश्यं प्रविलापयन्सदा ।
जहाति विद्वान्विपरीतभावं
स्वाभाविकं भ्रान्तिवशात्प्रतीतम् ॥ ८४३ ॥

विपरीतात्मतास्फूर्तिरेव मुक्तिरितीर्यते ।
सदा समाहितस्यैव सैषा सिध्यति नान्यथा ॥ ८४४ ॥

न वेषभाषाभिरमुष्य मुक्तिर्या
केवलाखण्डचिदात्मना स्थितिः ।
तत्सिद्धये स्वात्मनि सर्वदा स्थितो
जह्यादहंतां ममतामुपाधौ ॥ ८४५ ॥

स्वात्मतत्त्वं समालम्ब्य कुर्यात्प्रकृतिनाशनम् ।
तेनैव मुक्तो भवति नान्यथा कर्मकोटिभिः ॥ ८४६ ॥

ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहानिः ।
इत्येवैषा वैदिकी वाग्ब्रवीति
क्लेशक्षत्यां जन्ममृत्युप्रहानिम् ॥ ८४७ ॥

भूयो जन्माद्यप्रसक्तिर्विमुक्तिः
क्लेशक्षत्यां भाति जन्माद्यभावः ।
क्लेशक्षत्या हेतुरात्मैकनिष्ठा
तस्मात्कार्या ह्यात्मनिष्ठा मुमुक्षोः ॥ ८४८ ॥

क्लेशाः स्युर्वासना एव जन्तोर्जन्मादिकारणम् ।
ज्ञाननिष्ठाग्निना दाहे तासां नो जन्महेतुता ॥ ८४९ ॥

बीजान्यग्निप्रदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ ८५० ॥

तस्मान्मुमुक्षोः कर्तव्या ज्ञाननिष्ठा प्रयत्नतः ।
निःशेषवासनाक्षत्यै विपरीतनिवृत्तये ॥ ८५१ ॥

ज्ञाननिष्ठातत्परस्य नैव कर्मोपयुज्यते ।
कर्मणो ज्ञाननिष्ठाया न सिध्यति सहस्थितिः ॥ ८५२ ॥

परस्परविरुद्धत्वात्तयोर्भिन्नस्वभावयोः ।
कर्तृत्वभावनापूर्वं कर्म ज्ञानं विलक्षणम् ॥ ८५३ ॥

देहात्मबुद्धेर्विच्छित्त्यै ज्ञानं कर्म विवृद्धये ।
अज्ञानमूलकं कर्म ज्ञानं तूभयनाशकं ॥ ८५४ ॥

ज्ञानेन कर्मणो योगः कथं सिध्यति वैरिणा ।
सहयोगो न घटते यथा तिमिरतेजसोः ॥ ८५५ ॥

निमेषोन्मेषयोर्वापि तथैव ज्ञानकर्मणोः ।
प्रतीचीं पश्यतः पुंसां कुतः प्राचीविलोकनम् ।
प्रत्यक्प्रवणचित्तस्य कुतः कर्मणि योग्यता ॥ ८५६ ॥

ज्ञानैकनिष्ठानिरतस्य भिक्षो-
नैंवावकाशोऽस्ति हि कर्मतन्त्रे ।
तदेव कर्मास्य तदेव संध्या
तदेव सर्वं न ततोऽन्यदस्ति ॥ ८५७ ॥

बुद्धिकल्पितमालिन्यक्षालनं स्नानमात्मनः ।
तेनैव शुद्धिरेतस्य न मृदा न जलेन च ॥ ८५८ ॥

स्वस्वरूपे मनःस्थानमनुष्ठानं तदिष्यते ।
करणत्रयसाध्यं यत्तन्मृषा तदसत्यतः ॥ ८५९ ॥

विनिषिध्याखिलं दृश्यं स्वस्वरूपेण या स्थितिः ।
सा संध्या तदनुष्ठानं तद्दानं तद्धि भोजनम् ॥ ८६० ॥

विज्ञातपरमार्थानां शुद्धसत्त्वात्मनां सताम् ।
यतीनां किमनुष्ठानं स्वानुसंधिं विनापरम् ॥ ८६१ ॥

तस्मात्क्रियान्तरं त्यक्त्वा ज्ञाननिष्ठापरो यतिः ।
सदात्मनिष्ठया तिष्ठेन्निश्चलस्तत्परायणः ॥ ८६२ ॥

कर्तव्यं स्वोचितं कर्म योगमारोढुमिच्छता ।
आरोहणं कुर्वतस्तु कर्म नारोहणं मतम् ॥ ८६३ ॥

योगं समारोहति यो मुमुक्षुः
क्रियान्तरं तस्य न युक्तमीषत् ।
क्रियान्तरासक्तमनाः पतत्यसौ
तालद्रुमारोहणकर्तृवद्ध्रुवम् ॥ ८६४ ॥

योगारूढस्य सिद्धस्य कृतकृत्यस्य धीमतः ।
नास्त्येव हि बहिर्दृष्टिः का कथा तत्र कर्मणाम् ।
दृश्यानुविद्धः कथितः समाधिः सविकल्पकः ॥ ८६५ ॥

शुद्धोऽहं बुद्धोऽहं प्रत्यग्रूपेण नित्यसिद्धोऽहम् ।
शान्तोऽहमनन्तोऽहं सततपरानन्दसिन्धुरेवाहम् ॥८६६॥

आद्योऽहमनाद्योऽहं वाङ्मनसा साध्यवस्तुमात्रोऽहम् ।
निगमवचोवेद्योऽहमनवद्याखण्डबोधरूपोऽहम् ॥ ८६७ ॥

विदिताविदितान्योऽहं मायातत्कार्यलेशशून्योऽहम् ।
केवलदृगात्मकोऽहं संविन्मात्रः सकृद्विभातोऽहम् ॥८६८॥

अपरोऽहमनपरोऽहं बहिरन्तश्चापि पूर्ण एवाहम् ।
अजरोऽहमक्षरोऽहं नित्यानन्दोऽहमद्वितीयोऽहम् ॥८६९॥

प्रत्यगभिन्नमखण्डं सत्यज्ञानादिलक्षणं शुद्धम् ।
श्रुत्यवगम्यं तथ्यं ब्रह्मैवाहं परं ज्योतिः ॥ ८७० ॥

एवं सन्मात्रगाहिन्या वृत्त्या तन्मात्रगाहकैः ।
शब्दैः समर्पितं वस्तु भावयेन्निश्चलो यतिः ॥ ८७१ ॥

कामादिदृश्यप्रविलापपूर्वकं
शुद्धोऽहमित्यादिकशब्दमिश्रः ।
दृश्येव निष्ठस्य य एष भावः
शब्दानुविद्धः कथितः समाधिः ॥ ८७२ ॥

दृश्यस्यापि च साक्षित्वात्समुल्लेखनमात्मनि ।
निवर्तकमनोवस्था निर्विकल्प इतीर्यते ॥ ८७३ ॥

सविकल्पसमाधिं यो दीर्घकालं निरन्तरम् ।
संस्कारपूर्वकं कुर्यान्निर्विकल्पोऽस्य सिध्यति ॥ ८७४ ॥

निर्विकल्पकसमाधिनिष्ठया
तिष्ठतो भवति नित्यता ध्रुवम् ।
उद्भवाद्यपगतिर्निरर्गला
नित्यनिश्चलनिरन्तनिर्वृतिः ॥ ८७५ ॥

विद्वानहमिदमिति वा किंचि-
द्बाह्याभ्यन्तरवेदनशून्यः ।

स्वानन्दामृतसिन्धुनिमग्न-
स्तूष्णीमास्ते कश्चिदनन्यः ॥ ८७६ ॥

निर्विकल्पं परं ब्रह्म यत्तस्मिन्नेव निष्ठिताः ।
एते धन्या एव मुक्ता जीवन्तोऽपि बहिर्दृशाम् ॥ ८७७ ॥

यथा समाधित्रितयं यत्नेन क्रियते हृदि ।
तथैव बाह्यदेशेऽपि कार्यं द्वैतनिवृत्तये ॥ ८७८ ॥

तत्प्रकारं प्रवक्ष्यामि निशामय समासतः ।
अधिष्ठानं परं ब्रह्म सच्चिदानन्दलक्षणम् ॥ ८७९ ॥

तत्राध्यस्तमिदं भाति नामरूपात्मकं जगत् ।
सत्त्वं चित्त्वं तथानन्दरूपं यद्ब्रह्मणस्त्रयम् ॥ ८८० ॥

अध्यस्तजगतो रूपं नामरूपमिदं द्वयम् ।
एतानि सच्चिदानन्दनामरूपाणि पञ्च च ॥ ८८१ ॥

एकीकृत्योच्यते मूर्खैरिदं विश्वमिति भ्रमात् ।
शैत्यं श्वेतं रसं द्राव्यं तरङ्ग इति नाम च ॥ ८८२ ॥

एकीकृत्य तरङ्गोऽयमिति निर्दिश्यते यथा ।
आरोपिते नामरूपे उपेक्ष्य ब्रह्मणः सतः ॥ ८८३ ॥

स्वरूपमात्रग्रहणं समाधिर्बाह्य आदिमः ।
सच्चिदानन्दरूपस्य सकाशाद्ब्रह्मणो यतिः ॥ ८८४ ॥

नामरूपे पृथक्कृत्वा ब्रह्मण्येव विलापयन् ।
अधिष्ठानं परं ब्रह्म सच्चिदानन्दमद्वयम् ।
यत्तदेवाहमित्येव निश्चितात्मा भवेद्ध्रुवम् ॥ ८८५ ॥

इयं भूर्न सन्नापि तोयं न तेजो
न वायुर्न खं नापि तत्कार्यजातम् ।
यदेषामधिष्ठानभूतं विशुद्धं
सदेकं परं सत्तदेवाहमस्मि ॥ ८८६ ॥

न शब्दो न रूपं न च स्पर्शको वा
तथा नो रसो नापि गन्धो न चान्यः ।
यदेषामधिष्ठानभूतं विशुद्धं
सदेकं परं सत्तदेवाहमस्मि ॥ ८८७ ॥

न सद्द्रव्यजातं गुणा न क्रिया वा
न जातिर्विशेषो न चान्यः कदापि ।

यदेषामधिष्ठानभूतं विशुद्धं
सदेकं परं सत्तदेवाहमस्मि ॥ ८८८ ॥

न देहो न चाक्षाणि न प्राणवायु-
र्मनो नापि बुद्धिर्न चित्तं ह्यहंधीः ।
यदेषामधिष्ठानभूतं विशुद्धं
सदेकं परं सत्तदेवाहमस्मि ॥ ८८९ ॥

न देशो न कालो न दिग्वापि सत्स्या-
न्न वस्त्वन्तरं स्थूलसूक्ष्मादिरूपम् ।
यदेषामधिष्ठानभूतं विशुद्धं
सदेकं परं सत्तदेवाहमस्मि ॥ ८९० ॥

एतद्दृश्यं नामरूपात्मकं यो-
ऽधिष्ठानं तद्ब्रह्म सत्यं सदेति ।
गच्छंस्तिष्ठन्वा शयानोऽपि नित्यं
कुर्याद्विद्वान्बाह्यदृश्यानुविद्धम् ॥ ८९१ ॥

अध्यस्तनामरूपादिप्रविलापेन निर्मलम् ।
अद्वैतं परमानन्दं ब्रह्मैवास्मीति भावयेत् ॥ ८९२ ॥

निर्विकारं निराकारं निरञ्जनमनामयम् ।
आद्यन्तरहितं पूर्णं ब्रह्मैवाहं न संशयः ॥ ८९३ ॥

निष्कलङ्कं निरातङ्कं त्रिविधच्छेदवर्जितम् ।
आनन्दमक्षरं मुक्तं ब्रह्मैवास्मीति भावयेत् ॥ ८९४ ॥

निर्विशेषं निराभासं नित्यमुक्तमविक्रियम् ।
प्रज्ञानैकरसं सत्यं ब्रह्मैवास्मीति भावयेत् ॥ ८९५ ॥

शुद्धं बुद्धं तत्त्वसिद्धं परं प्रत्यगखण्डितम् ।
स्वप्रकाशं पराकाशं ब्रह्मैवास्मीति भावयेत् ॥ ८९६ ॥

सुसूक्ष्ममस्तितामात्रं निर्विकल्पं महत्तमम् ।
केवलं परमाद्वैतं ब्रह्मैवास्मीति भावयेत् ॥ ८९७ ॥

इत्येवं निर्विकारादिशब्दमात्रसमर्पितम् ।
ध्यायतः केवलं वस्तु लक्ष्ये चित्तं प्रतिष्ठति ॥ ८९८ ॥

ब्रह्मानन्दरसावेशादेकीभूय तदात्मना ।
वृत्तेर्या निश्चलावस्था स समाधिरकल्पकः ॥

उत्थाने वाप्यनुत्थानेऽप्यप्रमत्तो जितेन्द्रियः ।
समाधिषट्कं कुर्वीत सर्वदा प्रयतो यतिः ॥ ९०० ॥

विपरीतार्थधीर्यावन्न निःशेषं निवर्तते ।
स्वरूपस्फुरणं यावन्न प्रसिध्यत्यनिर्गलम् ।
तावत्समाधिषट्केन नयेत्कालं निरन्तरम् ॥ ९०१ ॥

न प्रमादोऽत्र कर्तव्यो विदुषा मोक्षमिच्छता ।
प्रमादे जृम्भते माया सूर्यापाये तमो यथा ॥ ९०२ ॥

स्वानुभूतिं परित्यज्य न तिष्ठन्ति क्षणं बुधाः ।
स्वानुभूतौ प्रमादो यः स मृत्युर्न यमः सताम् ॥

अस्मिन्समाधौ कुरुते प्रयासं
यस्तस्य नैवास्ति पुनर्विकल्पः ।
सर्वात्मभावोऽप्यमुनैव सिध्ये-
त्सर्वात्मभावः खलु केवलत्वम् ॥ ९०४ ॥

सर्वात्मभावो विदुषो ब्रह्मविद्याफलं विदुः ।
जीवन्मुक्तस्य तस्यैव स्वानन्दानुभवः फलम् ॥

योऽहं ममेत्याद्यसदात्मगाहको
ग्रन्थिर्लयं याति स वासनामयः ।

समाधिना नश्यति कर्मबन्धो
ब्रह्मात्मबोधोऽप्रतिबन्ध इष्यते ॥ ९०६ ॥

एष निष्कण्टकः पन्था मुक्तेर्ब्रह्मात्मना स्थितेः ।
शुद्धात्मनां मुमुक्षूणां यत्सदेकत्वदर्शनम् ॥ ९०७ ॥

तस्मात्त्वं चाप्यप्रमत्तः समाधी-
न्कृत्वा ग्रन्थिं साधु निर्दह्य युक्तः ।
नित्यं ब्रह्मानन्दपीयूषसिन्धौ
मज्जन्क्रीडन्मोदमानो रमस्व ॥ ९०८ ॥

निर्विकल्पसमाधिर्यो वृत्तिनैश्चल्यलक्षणा ।
तमेव योग इत्याहुर्योगशास्त्रार्थकोविदाः ॥ ९०९ ॥

अष्टावङ्गानि योगस्य यमो नियम आसनम् ।
प्राणायामस्तथा प्रत्याहारश्चापि च धारणा ॥ ९१० ॥

ध्यानं समाधिरित्येव निगदन्ति मनीषिणः ।
सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ॥ ९११ ॥

यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ।
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ॥ ९१२ ॥

नियमो हि परानन्दो नियमात्क्रियते बुधैः ।
सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ॥ ९१३ ॥

आसनं तद्विजानीयादितरत्सुखनाशनम् ।
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ॥ ९१४ ॥

निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ।
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः ॥ ९१५ ॥

ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ।
ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ॥ ९१६ ॥

अयं चापि प्रबुद्धानामज्ञानां प्राणपीडनम् ।
विषयेष्वात्मतां त्यक्त्वा मनसश्चितिमज्जनम् ॥ ९१७ ॥

प्रत्यहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ।
यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ॥ ९१८ ॥

मनसो धारणं चैव धारणा सा परा मता ।
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ॥

ध्यानशब्देन विख्याता परमानन्ददायिनी ।
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ ९२० ॥

वृत्तिविस्मरणं सम्यक्समाधिर्ध्यानसंज्ञिकः ।
समाधौ क्रियमाणे तु विघ्ना ह्यायान्ति वै बलात् ॥९२१॥

अनुसंधानराहित्यमालस्यं भोगलालसम् ।
भयं तमश्च विक्षेपस्तेजस्पन्दश्च शून्यता ॥ ९२२ ॥

एवं यद्विघ्नबाहुल्यं त्याज्यं तद्ब्रह्मविज्जनैः ।
विघ्नानेतान्परित्यक्त्वा प्रमादरहितो वशी ।
समाधिनिष्ठया ब्रह्म साक्षाद्भवितुमर्हसि ॥ ९२३ ॥

इति गुरुवचनाच्छ्रुतिप्रमाणा-
त्परमवगम्य स्वतत्त्वमात्मयुक्त्या ।
प्रशमितकरणः समाहितात्मा क्वचि-
दचलाकृतिरात्मनिष्ठितोऽभूत् ॥ ९२४ ॥

बहुकालं समाधाय स्वस्वरूपे तु मानसम् ।
उत्थाय परमानन्दाद्गुरुमेत्य पुनर्मुदा ॥ ९२५ ॥

प्रमाणपूर्वकं धीमान्सगद्गदमुवाच ह ।
नमो नमस्ते गुरवे नित्यानन्दस्वरूपिणे ॥ ९२६ ॥

मुक्तसङ्गाय शान्ताय त्यक्ताहंताय ते नमः ।
दयाधाम्ने नमो भूम्ने महिम्नः पारमस्य ते ।
नैवास्ति यत्कटाक्षेण ब्रह्मैवाभवमद्वयम् ॥ ९२७ ॥

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ९२८ ॥

मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् ।
मायामयेन मरुता भूत्वा भूत्वा पुनस्तिरोधत्ते ॥

नित्यानन्दस्वरूपोऽहमात्माहं त्वदनुग्रहात् ।
पूर्णोऽहमनवद्योऽहं केवलोऽहं च सद्गुरो ॥ ९३० ॥

अकर्ताहमभोक्ताहमविकारोऽहमक्रियः ।
आनन्दघन एवाहमसङ्गोऽहं सदाशिवः ॥ ९३१ ॥

त्वत्कटाक्षवरचान्द्रचन्द्रिकापातधूतभवतापजः श्रमः ।
प्राप्तवानहमखण्डवैभवानन्दमात्मपदमक्षयं क्षणात् ॥

छायया स्पृष्टमुष्णं वा शीतं वा दुष्टु सुष्टु वा ।
न स्पृशत्येव यत्किंचित्पुरुषं तद्विलक्षणम् ॥ ९३३ ॥

न साक्षिणं साक्ष्यधर्मा न स्पृशन्ति विलक्षणम् ।
अविकारमुदासीनं गृहधर्माः प्रदीपवत् ॥ ९३४ ॥

रवेर्यथा कर्मणि साक्षिभावो
वह्नेर्यथा वायसि दाहकत्वम् ।
रज्जोर्यथारोपितवस्तुसङ्ग-
स्तथैव कूटस्थचिदात्मनो मे ॥ ९३५ ॥

इत्युक्त्वा स गुरुं स्तुत्वा प्रश्रयेण कृतानतिः ।
मुमुक्षोरुपकाराय प्रष्टव्यांशमपृच्छत ॥ ९३६ ॥

जीवन्मुक्तस्य भगवन्ननुभूतेश्च लक्षणम् ।
विदेहमुक्तस्य च मे कृपया ब्रूहि तत्त्वतः ॥ ९३७ ॥

श्रीगुरुः—

वक्ष्ये तुभ्यं ज्ञानभूमिकाया लक्षणमादितः ।
ज्ञाते यस्मिंस्त्वया सर्वं ज्ञातं स्यात्पृष्टमद्य यत् ॥ ९३८ ॥

ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा समुदीरिता ।
विचारणा द्वितीया तु तृतीया तनुमानसी ॥ ९३९ ॥

सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ ९४० ॥

स्थितः किं मूढ एवास्मि प्रेक्ष्योऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छा चोच्यते बुधैः ॥ ९४१ ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ९४२ ॥

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वरक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ९४३ ॥

भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ ९४४ ॥

दशाचतुष्टयाभ्यासादसंसर्गफला तु या ।
रूढसत्त्वचमत्कारा प्रोक्तासंसक्तिनामिका ॥ ९४५ ॥

भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ ९४६ ॥

परप्रयुक्तेन चिरप्रयत्नेनावबोधनम् ।
पदार्थाभावना नाम षष्ठी भवति भूमिका ॥ ९४७ ॥

षड्भूमिकाचिराभ्यासाद्भेदस्यानुपलम्भनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ९४८ ॥

इदं ममेति सर्वेषु दृश्यभावेष्वभावना ।
जाग्रज्जाग्रदिति प्राहुर्महान्तो ब्रह्मवित्तमाः ॥ ९४९ ॥

विदित्वा सच्चिदानन्दे मयि दृश्यपरम्पराम् ।
नामरूपपरित्यागो जाग्रत्स्वप्नः समीर्यते ॥ ९५० ॥

परिपूर्णचिदाकाशे मयि बोधात्मतां विना ।
न किंचिदन्यदस्तीति जाग्रत्सुप्तिः समीर्यते ॥ ९५१ ॥

मूलाज्ञानविनाशेन कारणाभासचेष्टितैः ।
बन्धो न मेऽतिस्वल्पोऽपि स्वप्नजाग्रदितीर्यते ॥ ९५२ ॥

कारणाज्ञाननाशाद्यद्द्रष्टृदर्शनदृश्यता ।
न कार्यमस्ति तज्ज्ञानं स्वप्नस्वप्नः समीर्यते ॥ ९५३ ॥

अतिसूक्ष्मविमर्शेन स्वधीवृत्तिरचञ्चला ।
विलीयते यदा बोधे स्वप्नसुप्तिरितीर्यते ॥ ९५४ ॥

चिन्मयाकारमतयो धीवृत्तिप्रसरैर्गतः ।
आनन्दानुभवो विद्वन् सुप्तिजाग्रदितीर्यते ॥ ९५५ ॥

वृत्तौ चिरानुभूतान्तरानन्दानुभवस्थितौ ।
समात्मतां यो यात्येष सुप्तिस्वप्न इतीर्यते ॥ ९५६ ॥

दृश्यधीवृत्तिरेतस्य केवलीभावभावना ।
परं बोधैकतावाप्तिः सुप्तिसुप्तिरितीर्यते ॥ ९५७ ॥

परब्रह्मवदाभाति निर्विकारैकरूपिणी ।
सर्वावस्थासु धारैका तुर्याख्या परिकीर्तिता ॥ ९५८ ॥

इत्यवस्थासमुल्लासं विमृशन्मुच्यते सुखी ।
शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् ॥ ९५९ ॥

यथावद्भेदबुद्ध्येदं जगज्जाग्रदितीर्यते ।
अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥ ९६० ॥

पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ।
पञ्चमीं भूमिमारुह्य सुषुप्तिपदनामिकाम् ॥ ९६१ ॥

शान्ताशेषविशेषांशस्तिष्ठेदद्वैतमात्रके ।
अन्तर्मुखतया नित्यं षष्ठीं भूमिमुपाश्रितः ॥ ९६२ ॥

परिश्रान्ततया गाढनिद्रालुरिव लक्ष्यते ।
कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ॥ ९६३ ॥

तुर्यावस्थां सप्तभूमिं क्रमात्प्राप्नोति योगिराट् ।
विदेहमुक्तिरेवात्र तुर्यातीतदशोच्यते ॥ ९६४ ॥

यत्र नासन्न सच्चापि नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥ ९६५ ॥

अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ ९६६ ॥

यथास्थितमिदं सर्वं व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ९६७ ॥

नोदेति नास्तमायाति सुखदुःखे मनः प्रभा ।
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ९६८ ॥

यो जागर्त्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥

रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९७१ ॥

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ ९७२ ॥

द्वैतवर्जितचिन्मात्रे पदे परमपावने ।
अक्षुब्धचित्तविश्रान्तः स जीवन्मुक्त उच्यते ॥ ९७३ ॥

इदं जगदयं सोऽयं दृश्यजातमवास्तवम् ।
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ ९७४ ॥

चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ।
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ ९७५ ॥

देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ।
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ ९७६ ॥

यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ।
परमानन्दपूर्णो यः स जीवन्मुक्त उच्यते ॥ ९७७ ॥

अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ।
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥ ९७८ ॥

जीवन्मुक्तिपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तित्वं पवनोऽस्पन्दतामिव ॥ ९७९ ॥

ततस्तत्संबभूवासौ यद्गिरामप्यगोचरम् ।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ ९८० ॥

विज्ञानं विज्ञानविदां मलानां च मलात्मकम् ।
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ ९८१ ॥

शिवः शैवागमस्थानां कालः कालैकवादिनाम् ।
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम ।
यत्सर्वं सर्वगं वस्तु तत्तत्त्वं तदसौ स्थितः ॥ ९८२ ॥

ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ।
चिन्मात्रेव यस्तिष्ठेद्विदेहो मुक्त एव सः ॥ ९८३ ॥

यस्य प्रपञ्चभानं न ब्रह्माकारमपीह न ।
अतीतातीतभावो यो विदेहो मुक्त एव सः ॥ ९८४ ॥

चित्तवृत्तेरतीतो यश्चित्तवृत्त्यावभासकः ।
चित्तवृत्तिविहीनो यो विदेहो मुक्त एव सः ॥ ९८५ ॥

जीवात्मेति परमात्मेति सर्वचिन्ताविवर्जितः ।
सर्वसंकल्पहीनात्मा विदेहो मुक्त एव सः ॥ ९८६ ॥

ओंकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ।
अवस्थात्रयहीनात्मा विदेहो मुक्त एव सः ॥ ९८७ ॥

अहिनिर्ल्वयनीसर्पनिर्मोको जीववर्जितः ।
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ ९८८ ॥

एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ।
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥

नेति नेतीत्यरूपत्वादशरीरो भवत्ययम् ।
विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयम् ॥ ९९० ॥

विराड् हिरण्यगर्भश्च ईश्वरश्चेति च ते त्रयम् ।
ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥

स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ।
तूष्णीमेव ततस्तूष्णीं तूष्णीं सत्यं न किंचन ॥ ९९२ ॥

कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ।
किंचिद्भेदं न तस्यास्ति किंचिद्वापि न विद्यते ॥

जीवेश्वरेति वाक्ये च वेदशास्त्रेष्वहं त्विति ।
इदं चैतन्यमेवेत्यहं चैतन्यमित्यपि ॥ ९९४ ॥

इति निश्चयशून्यो यो विदेहो मुक्त एव सः ।
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ॥

तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखात्मकम् ।
शान्तं च तदतीतं च परं ब्रह्म तदुच्यते ॥ ९९६ ॥

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मैव तद्विना ॥ ९९७ ॥

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ ९९८ ॥

यावद्यावच्च सद्बुद्धे स्वयं संत्यज्यतेऽखिलम् ।
तावत्तावत्परानन्दः परमात्मैव शिष्यते ॥ ९९९ ॥

यत्र यत्र मृतो ज्ञानी परमाक्षरवित्सदा ।
परे ब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ॥ १००० ॥

यद्यत्स्वाभिमतं वस्तु तत्त्यजन्मोक्षमश्नुते ।
असंकल्पेन शस्त्रेण छिन्नं चित्तमिदं यदा ॥ १००१ ॥

सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ।
इति श्रुत्वा गुरोर्वाक्यं शिष्यस्तु छिन्नसंशयः ॥ १००२ ॥

ज्ञातज्ञेयः संप्रणम्य सद्गुरोश्चरणाम्बुजम् ।
स तेन समनुज्ञातो ययौ निर्मुक्तबन्धनः ॥ १००३ ॥

गुरुरेष सदानन्दसिन्धौ निर्मग्नमानसः ।
पावयन्वसुधां सर्वां विचचार निरुत्तरः ॥ १००४ ॥

इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥ १००५ ॥

सर्ववेदान्तसिद्धान्तसारसंग्रहनामकः ।
ग्रन्थोऽयं हृदयग्रन्थिविच्छित्त्यै रचितः सताम् ॥१००६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
सर्ववेदान्तसिद्धान्तसारसंग्रहः संपूर्णः ॥

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

THE WORKS OF

# SRI SANKARACHARYA

VOLUME

**16**

TO

HIS HOLINESS SRI JAGADGURU

**SRI SACHCHIDANANDA SIVABHINAVA NRISIMHA BHARATI SWAMI**

WHO ADORNS THE THRONE OF THE SRINGERI MUTT AS THE WORTHY REPRESENTATIVE OF THE GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE TO COME ACROSS A HOLIER PERSONAGE, A TRUER MAHATMA, A NOBLER SAINT AND A MORE RIGOROUS ASCETIC,

THIS EDITION IS MOST RESPECTFULLY INSCRIBED AS A TOKEN OF UNBOUNDED ADMIRATION BY THE HUMBLEST OF ALL HIS DISCIPLES

T. K. BALASUBRAHMANYAM.

नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।
संमुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।
तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS.

# ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ प्रबोधसुधाकरः ॥

## देहनिन्दाप्रकरणम् ।

नित्यानन्दैकरसं सच्चिन्मात्रं स्वयंज्योतिः ।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशम् ॥ १ ॥

यं वर्णयितुं साक्षाच्छ्रुतिरपि मूकेव मौनमाचरति ।
सोऽस्माकं मनुजानां किं वाचां गोचरो भवति ॥ २ ॥

यद्यप्येवं विदितं तथापि परिभाषितो भवेदेव ।
अध्यात्मशास्त्रसारैर्हरिचिन्तनकीर्तनाभ्यासैः ॥ ३ ॥

क्लृप्तैर्बहुभिरुपायैरभ्यासज्ञानभक्त्याद्यैः ।
पुंसो विना विरागं मुक्तेरधिकारिता न स्यात् ॥ ४ ॥

वैराग्यमात्मबोधो भक्तिश्चेति त्रयं गदितम् ।
मुक्तेः साधनमादौ तत्र विरागो वितृष्णता प्रोक्ता ॥ ५ ॥

सा चाहंममताभ्यां प्रच्छन्ना सर्वदेहेषु ।
तत्राहंता देहे ममता भार्यादिविषयेषु ॥ ६ ॥

देहः किमात्मकोऽयं कः संबन्धोऽस्य वा विषयैः ।
एवं विचार्यमाणेऽहंताममते निवर्तेते ॥ ७ ॥

स्त्रीपुंसोः संयोगात्संपाते शुक्रशोणितयोः ।
प्रविशञ्जीवः शनकैः स्वकर्मणा देहमाधत्ते ॥ ८ ॥

मातृगुरूदरदर्यां कफमूत्रपुरीषपूर्णायाम् ।
जठराग्निज्वालाभिर्नवमासं पच्यते जन्तुः ॥ ९ ॥

दैवात्प्रसूतिसमये शिशुस्तिरश्चीनतां यदा याति ।
शस्त्रैर्विखण्ड्य स तदा बहिरिह निष्कास्यतेऽतिबलात्

अथवा यन्त्रच्छिद्राद्यदा तु निःसार्यते प्रबलैः ।
प्रसवसमीरैश्च तदा यः क्लेशः सोऽप्यनिर्वाच्यः ॥ ११

आधिव्याधिवियोगात्मीयविपत्कलहदीर्घदारिद्र्यैः ।
जन्मानन्तरमपि यः क्लेशः किं शक्यते वक्तुम् ॥ १२

नरपशुविहंगतिर्यग्योनीनां चतुरशीतिलक्षाणाम् ।
कर्मनिबद्धो जीवः परिभ्रमन्यातना भुङ्क्ते ॥ १३ ॥

चरमस्तत्र नृदेहस्तत्रोज्जन्मान्वयोत्पत्तिः ।
स्वकुलाचारविचारः श्रुतिप्रचारश्च तत्रापि ॥ १४ ॥

आत्मानात्मविवेको नो देहस्य च विनाशिताज्ञानम् ।
एवं सति स्वमायुः प्राज्ञैरपि नीयते मिथ्या ॥ १५ ॥

आयुःक्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि ।
तच्चेद्गच्छति सर्वं मृषा ततः काधिका हानिः ॥ १६ ॥

नरदेहातिक्रमणात्प्राप्तौ पश्वादिदेहानाम् ।
स्वतनोरप्यज्ञाने परमार्थस्यात्र का वार्ता ॥ १७ ॥

सततं प्रवाह्यमानैर्वृषभैरश्वैः खरैर्गजैर्महिषैः ।
हा कष्टं क्षुत्क्षामैः श्रान्तैर्नो शक्यते वक्तुम् ॥ १८ ॥

रुधिरत्रिधातुमज्जामेदोमांसास्थिसंहतिर्देहः ।
स बहिस्त्वचा पिनद्धस्तस्मान्नो भक्ष्यते काकैः ॥ १९ ॥

नासाग्राद्वदनाद्वा कफं मलं पायुतो विसृजन् ।
स्वयमेवैति जुगुप्सामन्तः प्रसृतं च नो वेत्ति ॥ २० ॥

पथि पतितमस्थि दृष्ट्वा स्पर्शभयादन्यमार्गतो याति ।
नो पश्यति निजदेहं चास्थिसहस्रावृतं परितः ॥ २१ ॥

केशावधि नखराग्रादिदमन्तः पूतिगन्धसंपूर्णम् ।
बहिरपि चागरुचन्दनकर्पूराद्यैर्विलेपयति ॥ २२ ॥

यत्नादस्य पिधत्ते स्वाभाविकदोषसंघातम् ।
औपाधिकगुणनिवहं प्रकाशयञ्श्लाघते मूढः ॥ २३ ॥

क्षतमुत्पन्नं देहे यदि न प्रक्षाल्यते त्रिदिनम् ।
तत्रोत्पतन्ति बहवः क्रिमयो दुर्गन्धसंकीर्णाः ॥ २४ ॥

यो देहः सुप्तोऽभूत्सुपुष्पशय्योपशोभिते तल्पे ।
संप्रति स रज्जुकाष्ठैर्नियन्त्रितः क्षिप्यते वह्नौ ॥ २५ ॥

सिंहासनोपविष्टं दृष्ट्वा यं मुदमवाप लोकोऽयम् ।
तं कालाकृष्टतनुं विलोक्य नेत्रे निमीलयति ॥ २६ ॥

एवंविधोऽतिमलिनो देहो यत्सत्तया चलति ।
तं विस्मृत्य परेशं वहत्यहंतामनित्येऽस्मिन् ॥ २७ ॥

क्वात्मा सच्चिद्रूपः क मांसरुधिरास्थिनिर्मितो देहः ।
इति यो लज्जति धीमानितरशरीरं स किं मनुते ॥ २८ ॥

## विषयनिन्दाप्रकरणम् ।

मूढः कुरुते विषयजकर्दमसंमार्जनं मिथ्या ।
दुरदृष्टवृष्टिविरसो देहो गेहं पतत्येव ॥ २९ ॥

भार्या रूपविहीना मनसः क्षोभाय जायते पुंसाम् ।
अत्यन्तं रूपाढ्या सा परपुरुषैर्वशीक्रियते ॥ ३० ॥

यः कश्चित्परपुरुषो मित्रं भृत्योऽथवा भिक्षुः ।
पश्यति हि साभिलाषं विलक्षणोदाररूपवतीम् ॥ ३१ ॥

यं कंचित्पुरुषवरं स्वभर्तुरतिसुन्दरं दृष्ट्वा ।
मृगयति किं न मृगाक्षी मनसेव परस्त्रियं पुरुषः ॥ ३२ ॥

एवं सुरूपनार्या भर्ता कोपात्प्रतिक्षणं क्षीणः ।
नो लभते सुखलेशं बलिमिव बलिभुग्बहुष्वेकः ॥ ३३ ॥

वनिता नितान्तमज्ञा स्वाज्ञामुल्लङ्घ्य वर्तते यदि सा ।
शत्रोरप्यधिकतरा पराभिलाषिण्यसौ किमुत ॥ ३४ ॥

लोको नापुत्रस्यास्तीति श्रुत्यास्य कः प्रभाषितो लोकः ।
मुक्तिः संसरणं वा तदन्यलोकोऽथवा नाद्यः ॥ ३५ ॥

सर्वेऽपि पुत्रभाजस्तन्मुक्तौ संसृतिर्भवति ।
श्रवणादयोऽप्युपाया मृषा भवेयुस्तृतीयेऽपि ॥ ३६ ॥

तत्प्राप्त्युपायसत्त्वाद्द्वितीयपक्षेऽप्यपुत्रस्य ।
पुत्रेष्ट्यादिकयागप्रवृत्तये वेदवादोऽयम् ॥ ३७ ॥

नानाशरीरकष्टैर्धनव्ययैः साध्यते पुत्रः ।
उत्पन्नमात्रपुत्रे जीवितचिन्ता गरीयसी तस्य ॥ ३८ ॥

जीवन्नपि किं मूर्खः प्राज्ञः किं वा सुशीलभाग्भविता ।
जारश्चौरः पिशुनः पतितो द्यूतप्रियः क्रूरः ॥ ३९ ॥

पितृमातृबन्धुघाती मनसः खेदाय जायते पुत्रः ।
चिन्तयति तातनिधनं पुत्रो द्रव्याद्यधीशताहेतोः ॥ ४० ॥

सर्वगुणैरुपपन्नः पुत्रः कस्यापि कुत्रचिद्भवति ।
सोऽल्पायू रुग्णो वा ह्यनपत्यो वा तथापि खेदाय ॥४१॥

पुत्रात्सद्गतिरिति चेत्तदपि प्रायोऽस्ति युक्त्यसहम् ।
इत्थं शरीरकष्टैर्दुःखं संप्रार्थ्यते मूढैः ॥ ४२ ॥

पितृमातृबन्धुभगिनीपितृव्यजामातृमुख्यानाम् ।
मार्गस्थानामिव युतिरनेकयोनिभ्रमात्क्षणिका ॥ ४३ ॥

दैवं यावद्विपुलं यावत्प्रचुरः परोपकारश्च ।
तावत्सर्वे सुहृदो व्यत्ययतः शत्रवः सर्वे ॥ ४४ ॥

अश्नन्ति चेदनुदिनं वन्दिन इव वर्णयन्ति संतृप्ताः ।
तच्चेद्द्वित्रदिनान्तरमभिनिन्दन्तः प्रकुप्यन्ति ॥ ४५ ॥

दुर्भरजठरनिमित्तं समुपार्जयितुं प्रवर्तते चित्तम् ।
लक्षावधि बहुवित्तं तथाप्यलभ्यं कपर्दिकामात्रम् ॥ ४६ ॥

लब्धश्चेदधिकोऽर्थः पत्न्यादीनां भवेत्स्वार्थः ।
नृपचौरतोऽप्यनर्थस्तस्माद्द्रव्योद्यमो व्यर्थः ॥ ४७ ॥



अन्यायमर्थभाजं पश्यति भूपोऽध्वगामिनं चौरः ।
पिशुनो व्यसनप्राप्तिं दायादानां गणः कलहम् ॥ ४८ ॥

पातकभरैरनेकैरर्थं समुपार्जयन्ति राजानः ।
अश्वमतङ्गजहेतोः प्रतिक्षणं नाश्यते सोऽर्थः ॥ ४९ ॥

राज्यान्तराभिगमनाद्रणभङ्गान्मन्त्रिभृत्यदोषाद्वा ।
विषशस्त्रगुप्तघातान्मग्नाश्चिन्तार्णवे भूपाः ॥ ५० ॥



## मनोनिन्दाप्रकरणम् ।

हसति कदाचिद्रौति भ्रान्तं सद्दश दिशो भ्रमति ।
हृष्टं कदापि रुष्टं शिष्टं दुष्टं च निन्दति स्तौति ॥ ५१ ॥

किमपि द्वेष्टि सरोषं ह्यात्मानं श्लाघते कदाचिदपि ।
चित्तं पिशाचमभवद्राक्षस्या तृष्णया व्याप्तम् ॥ ५२ ॥

दम्भाभिमानलोभैः कामक्रोधोरुमत्सरैश्चैतः ।
आकृष्यते समन्ताच्छ्वभिरिव पतितास्थिवन्मार्गे ॥ ५३ ।

तस्माच्छुद्धविरागो मनोऽभिलषितं त्यजेदर्थम् ।
तदनभिलषितं कुर्यान्निर्व्यापारं ततो भवति ॥ ५४ ॥

## विषयनिग्रहप्रकरणम् ।

संसृतिपारावारे ह्यगाधविषयोदकेन संपूर्णे ।
नृशरीरमम्बुतरणं कर्मसमीरैरितस्ततश्चलति ॥ ५५ ॥

छिद्रैर्नवभिरुपेतं जीवो नौकापतिर्महानलसः ।
छिद्राणामनिरोधाज्जलपरिपूर्णं पतत्यधः सततम् ॥ ५६ ॥

छिद्राणां तु निरोधात्सुखेन पारं परं याति ।
तस्मादिन्द्रियनिग्रहमृते न कश्चित्तरत्यनृतम् ॥ ५७ ॥

पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते ।
ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजोऽतिपापभाग्भवति ॥ ५८ ।

पिशुनैः प्रकाममुदितां परस्य निन्दां शृणोति कर्णाभ्याम्
तेन परः किं म्रियते व्यर्थं मनुजोऽतिपापभाग्भवति ॥५९।

अनृतं परापवादं रसना वदति प्रतिक्षणं तेन ।
परहानिर्लब्धिः का व्यर्थं मनुजोऽतिपापभाग्भवति ॥६०॥

विषयेन्द्रिययोर्योगे निमेषसमयेन यत्सुखं भवति ।
विषये नष्टे दुःखं यावज्जीवं च तत्तयोर्मध्ये ॥ ६१ ॥

हेयमुपादेयं वा प्रविचार्य सुनिश्चितं तस्मात् ।
अल्पसुखस्य त्यागादनल्पदुःखं जहाति सुधीः ॥ ६२ ॥

धीवरदत्तमहामिषमश्नन्वैसारिणो म्रियते ।
तद्वद्विषयान्भुञ्जन्कालाकृष्टो नरः पतति ॥ ६३ ॥

उरगग्रस्तार्धतनुर्भेकोऽश्नातीह मक्षिकाः शतशः ।
एवं गतायुरपि सन्विषयान्समुपार्जयत्यन्धः ॥ ६४ ॥

## मनोनिग्रहप्रकरणम् ।

स्वीयोद्गमतोयवहा सागरमुपयाति नीचमार्गेण ।
सा चेदुद्गम एव स्थिरा सती किं न याति वार्धित्वम् ॥

एवं मनः स्वहेतुं विचारयत्सुस्थिरं भवेदन्तः ।
न बहिर्वोदेति तदा किं नात्मत्वं स्वयं याति ॥ ६६ ॥

वर्षास्वम्भःप्रचयात्कूपे गुरुनिर्झरे पयः क्षारम् ।
ग्रीष्मेणैव तु शुष्के माधुर्यं भजति तत्राम्भः ॥ ६७ ॥

तद्वद्विषयोद्रिक्तं तमःप्रधानं मनः कलुषम् ।
तस्मिन्विरागशुष्के शनकैराविर्भवेत्सत्त्वम् ॥ ६८ ॥

यं विषयमपि लषित्वा धावति बाह्येन्द्रियद्वारा ।
तस्याप्राप्तौ खिद्यति तथा यथा स्वं गतं किंचित् ॥ ६९ ॥

नगनगरदुर्गदुर्गमसरितः परितः परिभ्रमच्चेतः ।
यदि नो लभते विषयं विषयन्त्रितमिव खिन्नमायाति ॥

तुम्बीफलं जलान्तर्बलादधः क्षिप्तमप्युपैत्यूर्ध्वम् ।
तद्वन्मनः स्वरूपे निहितं यत्नाद्बहिर्याति ॥ ७१ ॥

इह वा पूर्वभवे वा स्वकर्मणैवार्जितं फलं यद्यत् ।
शुभमशुभं वा तत्तद्भोगोऽप्यप्रार्थितो भवति ॥ ७२ ॥

चेतःपशुमशुभपथं प्रधावमानं निराकर्तुम् ।
वैराग्यमेकमुचितं गलकाष्ठं निर्मितं धात्रा ॥ ७३ ॥

निद्रावसरे यत्सुखमेतत्किं विषयजं यस्मात् ।
न हि चेन्द्रियप्रदेशावस्थानं चेतसो निद्रा ॥ ७४ ॥

अद्वारतुङ्गकुड्ये गृहेऽवरुद्धो यथा व्याघ्रः ।
बहुनिर्गमप्रयत्नैः श्रान्तस्तिष्ठति पतञ्श्वसंश्च तथा ॥ ७५ ॥

सर्वेन्द्रियावरोधादुद्योगशतैरनिर्गमं वीक्ष्य ।
शान्तं तिष्ठति चेतो निरुद्यमत्वं तदा याति ॥ ७६ ॥

प्राणस्पन्दनिरोधात्सत्सङ्गाद्वासनात्यागात् ।
हरिचरणभक्तियोगान्मनः स्ववेगं जहाति शनैः ॥ ७७ ॥

## वैराग्यप्रकरणम् ।

परगृहगृहिणीपुत्रद्रविणानामागमे विनाशे वा ।
कथितौ हर्षविषादौ किं वा स्यातां क्षणं स्थातुः ॥ ७८ ॥

दैवात्स्थितं गतं वा यं कंचिद्विषयमीड्यमल्पं वा ।
नो तुष्यन्न च सीदन्वीक्ष्य गृहेष्वतिथिवन्निवसेत् ॥ ७९ ॥

ममताभिमानशून्यो विषयेषु पराङ्मुखः पुरुषः ।
तिष्ठन्नपि निजसदने न बाध्यते कर्मभिः क्वापि ॥ ८० ॥

कुत्राप्यरण्यदेशे सुनीलतृणवालुकोपचिते ।
शीतलतरुतलभूमौ सुखं शयानस्य पुरुषस्य ॥ ८१ ॥

तरवः पत्रफलाढ्याः सुगन्धशीतानिलाः परितः ।
कलकूजितवरविहगाः सरितो मित्राणि किं न स्युः ॥

वैराग्यभाग्यभाजः प्रसन्नमनसो निराशस्य ।
अप्रार्थितफलभोक्तुः पुंसो जन्मनि कृतार्थतेह स्यात् ॥

द्रव्यं पल्लवतश्च्युतं यदि भवेत्क्वापि प्रमादात्तदा
शोकायाथ तदर्पितं श्रुतवते तोषाय च श्रेयसे ।
स्वातन्त्र्याद्विषयाः प्रयान्ति यदमी शोकाय ते स्युश्चिरं
संत्यक्ताः स्वयमेव चेत्सुखमयं निःश्रेयसं तन्वते ॥ ८४ ॥

विस्मृत्यात्मनिवासमुत्कटभवाटव्यां चिरं पर्यट-
न्संतापत्रयदीर्घदावदहनज्वालावलीव्याकुलः ।
वल्गन्फल्गुषु सुप्रदीप्तनयनश्चेतःकुरङ्गो बला-
दाशापाशवशीकृतोऽपि विषयव्याघ्रैर्मृषा हन्यते ॥ ८५ ॥

## आत्मसिद्धिप्रकरणम् ।

उत्पन्नेऽपि विरागे विना प्रबोधं सुखं न स्यात् ।
स भवेद्गुरूपदेशात्तस्माद्गुरुमाश्रयेत्प्रथमम् ॥ ८६ ॥

यद्यपि जलधेरुदकं यद्यपि वा प्रेरकोऽनिलस्तत्र ।
तदपि पिपासाकुलितः प्रतीक्षते चातको मेघम् ॥ ८७ ॥

त्रेधा प्रतीतिरुक्ता शास्त्राद्गुरुतस्तथात्मनस्तत्र ।
शास्त्रप्रतीतिरादौ यद्वन्मधुरो गुडोऽस्तीति ॥ ८८ ॥

अग्रे गुरुप्रतीतिर्दूराद्गुडदर्शनं यद्वत् ।
आत्मप्रतीतिरस्माद्गुडभक्षणजं सुखं यद्वत् ॥ ८९ ॥

रसगन्धरूपशब्दस्पर्शा अन्ये पदार्थाश्च ।
कस्मादनुभूयन्ते नो देहान्नेन्द्रियग्रामात् ॥ ९० ॥

मृतदेहेन्द्रियवर्गो यतो न जानाति दाहजं दुःखम् ।
प्राणश्चेन्निद्रायां तस्करबाधां स किं वेत्ति ॥ ९१ ॥

मनसो यदि वा विषयस्तद्युगपत्किं न जानाति ।
तस्य पराधीनत्वाद्यतः प्रमादस्य कस्त्राता ॥ ९२ ॥

गाढध्वान्तगृहान्ततः क्षितितले दीपं निधायोज्ज्वलं
पञ्चच्छिद्रमधोमुखं हि कलशं तस्योपरि स्थापयेत् ।
तद्बाह्ये परितोऽनुरन्ध्रममलां वीणां च कस्तूरिकां
सद्रत्नं व्यजनं न्यसेच्च कलशच्छिद्राध्वनिर्गच्छताम् ॥९३॥

तेजोंशेन पृथक्पदार्थनिवहज्ञानं हि यज्जायते
तद्रन्ध्रैः कलशेन वा किमु मृदो भाण्डेन तैलेन वा ।
किं सूत्रेण न चैतदस्ति रुचिरं प्रत्यक्षबाधादतो
दीपज्योतिरिहैकमेव शरणं देहे तथात्मा स्थितः ॥ ९४ ॥

## मायासिद्धिप्रकरणम् ।

चिन्मात्रः परमात्मा ह्यपश्यदात्मानमात्मतया ।
अभवत्सोऽहंनामा तस्मादासीद्भिदो मूलम् ॥ ९५ ॥

द्वेधैव भाति तस्मात्पतिश्च पत्नी च तौ भवेतां वै ।
तस्मादयमाकाशस्त्रियैव परिपूर्यते सततम् ॥ ९६ ॥

सोऽयमपीक्षां चक्रे ततो मनुष्या अजायन्त ।
इत्युपनिषदः प्राहुर्दयितां प्रति याज्ञवल्क्योक्त्या ॥ ९७ ॥

चिरमानन्दानुभवात्सुषुप्तिरिव काप्यवस्थाभूत् ।
परमात्मनस्तु तस्मात्स्वप्नवदेवोत्थिता माया ॥ ९८ ॥

सदसद्विलक्षणासौ परमात्मसदाश्रयानादिः ।
सा च गुणत्रयरूपा सूते सचराचरं विश्वम् ॥ ९९ ॥

माया तावददृश्या दृश्यं कार्यं कथं जनयेत् ।
तन्तुभिरदृश्यरूपैः पटोऽत्र दृश्यः कथं भवति ॥ १०० ॥

स्वप्ने सुरतानुभवाच्छुक्रद्रावो यथा शुभे वसने ।
अनृतं रतं प्रबोधे वसनोपहतिर्भवेत्सत्या ॥ १०१ ॥

स्वप्ने पुरुषः सत्यो योषिदसत्या तयोर्युतिश्च मृषा ।
शुक्रद्रावः सत्यस्तद्वत्प्रकृतेऽपि संभवति ॥ १०२ ॥

एवमदृश्या माया तत्कार्यं जगदिदं दृश्यम् ।
माया तावदियं स्याद्या स्वविनाशेन हर्षदा भवति ॥१०३॥

रजनीवातिदुरन्ता न लक्ष्यतेऽत्र स्वभावोऽस्याः ।
सौदामिनीव नश्यति मुनिभिः संप्रेक्ष्यमाणैव ॥ १०४ ॥

माया ब्रह्मोपगताविद्या जीवाश्रया प्रोक्ता ।
चिदचिद्ग्रन्थिश्चेतस्तदक्षयं ज्ञेयमा मोक्षात् ॥ १०५ ॥

घटमठकुड्यैरावृतमाकाशं तत्तदाह्वयं भवति ।
तद्वदविद्यावृतमिह चैतन्यं जीव इत्युक्तः ॥ १०६ ॥

ननु कथमावरणं स्यादज्ञानं ब्रह्मणो विशुद्धस्य ।
सूर्यस्येव तमिस्रं रात्रिभवं स्वप्रकाशस्य ॥ १०७ ॥

दिनकरकिरणोत्पन्नैर्मेघैराच्छाद्यते यथा सूर्यः ।
न खलु दिनस्य दिनत्वं तैर्विकृतैः सान्द्रसंघातैः ॥१०८॥

अज्ञानेन तथात्मा शुद्धोऽपि च्छाद्यते सुचिरम् ।
न परं तु लोकसिद्धा प्राणिषु तच्चेतनाशक्तिः ॥ १०९ ॥

## लिङ्गदेहादिनिरूपणप्रकरणम् ।

स्थूलशरीरस्यान्तर्लिङ्गशरीरं च तस्यान्तः ।
कारणमस्याप्यन्तस्ततो महाकारणं तुर्यम् ॥ ११० ॥

स्थूलं निरूपितं प्रागधुना सूक्ष्मादितो ब्रूमः ।
अङ्गुष्ठमात्रः पुरुषः श्रुतिरिति यत्प्राह तत्सूक्ष्मम् ॥ १११॥

सूक्ष्माणि महाभूतान्यसवः पञ्चेन्द्रियाणि पञ्चैव ।
षोडशमन्तःकरणं तत्संघातो हि लिङ्गतनुः ॥ ११२ ॥

तत्कारणं स्मृतं यत्तस्यान्तर्वासनाजालम् ।
तस्य प्रवृत्तिहेतुर्बुद्ध्याश्रयमत्र तुर्यं स्यात् ॥ ११३ ॥

तत्सारभूतबुद्धौ यत्प्रतिफलितं तु शुद्धचैतन्यम् ।
जीवः स उक्त आद्यैर्योऽहमिति स्फूर्तिकृद्वपुषि ॥ ११४ ॥

चरतरतरङ्गसङ्गात्प्रतिबिम्बं भास्करस्य च चलं स्यात् ।
अस्ति तथा चञ्चलता चैतन्ये चित्तचाञ्चल्यात् ॥ ११५॥

नन्वर्कप्रतिबिम्बः सलिलादिषु यः स चावभासयति ।
किमितरपदार्थनिवहं प्रतिबिम्बोऽप्यात्मनस्तद्वत् ॥ ११६ ॥

प्रतिफलितं यत्तेजः सवितुः कांस्यादिपात्रेषु ।
तदनु प्रविष्टमन्तर्गृहमन्यार्थान्प्रकाशयति ॥ ११७ ॥

चित्प्रतिबिम्बस्तद्वद्बुद्धिषु यो जीवतां प्राप्तः ।
नेत्रादीन्द्रियमार्गैर्बहिरर्थान्सोऽवभासयति ॥ ११८ ॥

## अद्वैतप्रकरणम् ।

तदिदं य एवमार्यो वेद ब्रह्माहमस्मीति ।
स इदं सर्वं च स्यात्तस्य हि देवाश्च नेशते भूत्या ॥११९॥

येषां स भवत्यात्मा योऽन्यामथ देवतामुपास्ते यः ।
अहमन्योऽसावन्यश्चेत्थं यो वेद पशुवत्सः ॥ १२० ॥

इत्युपनिषदामुक्तिस्तथा श्रुतिर्भगवदुक्तिश्च ।
ज्ञानी त्वात्मैवेयं मतिर्ममेत्यत्र युक्तिरपि ॥ १२१ ॥

ऋजु वक्रं वा काष्ठं हुताशदग्धं सदग्नितां याति ।
तत्किं हस्तग्राह्यं ऋजुवक्राकारसत्त्वेऽपि ॥ १२२ ॥

एवं य आत्मनिष्ठो ह्यात्माकारश्च जायते पुरुषः ।
देहीव दृश्यतेऽसौ परं त्वसौ केवलो ह्यात्मा ॥ १२३ ॥

प्रतिफलति भानुरेकोऽनेकशरावोदकेषु यथा ।
तद्वदसौ परमात्मा ह्येकोऽनेकेषु देहेषु ॥ १२४ ॥

दैवादेकशरावे भग्ने किं वा विलीयते सूर्यः ।
प्रतिबिम्बचञ्चलत्वादर्कः किं चञ्चलो भवति ॥ १२५ ॥

स्वव्यापारं कुरुते यथैकसवितुः प्रकाशेन ।
तद्वच्चराचरमिदं ह्येकात्मसत्तया चलति ॥ १२६ ॥

येनोदकेन कदलीचम्पकजात्यादयः प्रवर्धन्ते ।
मूलकपलाण्डुलशुनास्तेनैवैते विभिन्नरसगन्धाः ॥ १२७ ॥

एको हि सूत्रधारः काष्ठप्रकृतीरनेकशो युगपत् ।
स्तम्भाग्रपट्टिकायां नर्तयतीह प्रगूढतया ॥ १२८ ॥

गुडखण्डशर्कराद्या भिन्नाः स्युर्विकृतयो यथैकेक्षोः ।
केयूरकङ्कणाद्या यथैकहेम्नो भिदाश्च पृथक् ॥ १२९ ॥

एवं पृथक्स्वभावं पृथगाकारं पृथग्वृत्ति ।
जगदुच्चावचमुच्चैरेकेनैवात्मना चलति ॥ १३० ॥

स्कन्धधृतसिद्धमन्नं यावन्नाश्नाति मार्गगस्तावत् ।
स्पर्शभयक्षुत्पीडे तस्मिन्भुक्ते न ते भवतः ॥ १३१ ॥

मानुषमतङ्गमहिषश्वसूकरादिष्वनुस्यूतम् ।
यः पश्यति जगदीशं स एव भुङ्क्तेऽद्वयानन्दम् ॥ १३२ ॥

## कर्तृत्वभोक्तृत्वप्रकरणम् ।

यद्वत्सूर्येऽभ्युदिते स्वव्यवहारं जनः कुरुते ।
तं न करोति विवस्वान्न कारयति तद्वदात्मापि ॥ १३३ ॥

लोहे हुतभुग्व्याप्ते लोहान्तरताड्यमानेऽपि ।
तस्यान्तर्गतवह्नेः किं स्यान्निर्घातजं दुःखम् ॥ १३४ ॥

निष्ठुरकुठारघातैः काष्ठे संछेद्यमानेऽपि ।
अन्तर्वर्ती वह्निः किं घातैश्छेद्यते तद्वत् ॥ १३५ ॥

तनुसंबन्धाज्जातैः सुखदुःखैर्लिप्यते नात्मा ।
ब्रूते श्रुतिरपि भूयोऽनश्नन्नन्योऽभिचाकशीत्यादि ॥ १३६ ॥

निशि वेश्मनि प्रदीपे दीप्यति चौरस्तु वित्तमपहरति ।
ईरयति वारयति वा तं दीपः किं तथात्मापि ॥ १३७ ॥

गेहान्ते दैववशात्कस्मिंश्चित्समुदिते विपन्ने वा ।
दीपस्तुष्यत्यथवा खिद्यति किं तद्वदात्मापि ॥ १३८ ॥

## स्वप्रकाशताप्रकरणम् ।

रविचन्द्रवह्निदीपप्रमुखाः स्वपरप्रकाशाः स्युः ।
यद्यपि तथाप्यमीभिः प्रकाश्यते क्वापि नैवात्मा ॥ १३९ ॥

चक्षुर्द्वारैव स्यात्परात्मना भानमेतेषाम् ।
यद्वा तेऽपि पदार्था न ज्ञायन्तेऽथ केवलालोकात् ॥१४०॥

तत्राप्यक्षिद्वारा सहायभूतो न चेदात्मा ।
नो चेत्सत्यालोके पश्यत्यन्धः कथं नार्थान् ॥ १४१ ॥

सत्यात्मन्यपि किं नो ज्ञानं तच्चेन्द्रियान्तरेण स्यात् ।
अन्धे दृक्प्रतिबन्धे करसंबन्धे पदार्थभानं हि ॥ १४२ ॥

जानाति येन सर्वं केन च तं वा विजानीयात् ।
इत्युपनिषदामुक्तिर्बध्यत आत्मात्मना तस्मात् ॥ १४३ ॥

## नादानुसंधानप्रकरणम् ।

यावत्क्षणं क्षणार्धं स्वरूपपरिचिन्तनं क्रियते ।
तावद्दक्षिणकर्णे त्वनाहतः श्रूयते शब्दः ॥ १४४ ॥

सिद्ध्यारम्भस्थिरताविश्रमविश्वासबीजशुद्धीनाम् ।
उपलक्षणं हि मनसः परमं नादानुसंधानम् ॥ १४५ ॥

भेरीमृदङ्गशङ्खाद्याहतनादे मनः क्षणं रमते ।
किं पुनरनाहतेऽस्मिन्मधुमधुरेऽखण्डिते स्वच्छे ॥ १४६ ॥

चित्तं विषयोपरमाद्यथा यथा याति नैश्चल्यम् ।
वेणोरिव दीर्घतरस्तथा तथा श्रूयते नादः ॥ १४७ ॥

नादाभ्यन्तर्वर्ति ज्योतिर्यद्वर्तते हि चिरम् ।
तत्र मनो लीनं चेन्न पुनः संसारबन्धाय ॥ १४८ ॥

परमानन्दानुभवात्सुचिरं नादानुसंधानात् ।
श्रेष्ठश्चित्तलयोऽयं सत्स्वन्यलयेष्वनेकेषु ॥ १४९ ॥

## मनोलयप्रकरणम् ।

संसारतापतप्तं नानायोनिभ्रमात्परिश्रान्तम् ।
लब्ध्वा परमानन्दं न चलति चेतः कदा कापि ॥ १५० ॥

अद्वैतानन्दभरात्किमिदं कोऽहं च कस्याहम् ।
इति मन्थरतां यातं यदा तदा मूर्छितं चेतः ॥ १५१ ॥

चिरतरमात्मानुभवादात्माकारं प्रजायते चेतः ।
सरिदिव सागरयाता समुद्रभावं प्रयात्युच्चैः ॥ १५२ ॥

आत्मन्यनुप्रविष्टं चित्तं नापेक्षते पुनर्विषयान् ।
क्षीरादुद्धृतमाज्यं यथा पुनः क्षीरतां न यातीह ॥ १५३ ॥

दृष्टौ द्रष्टरि दृश्ये यदनुस्यूतं च भानमात्रं स्यात् ।
तत्रोपक्षीणं चेच्चित्तं तन्मूर्छितं भवति ॥ १५४ ॥

याति स्वसंमुखत्वं दृङ्मात्रं वा यदा तदा भवति ।
दृश्यद्रष्टृविभेदो ह्यसंमुखेऽस्मिन्न तद्भवति ॥ १५५ ॥

एकस्मिन्दृङ्मात्रे त्रेधा द्रष्ट्रादिकं हि समुदेति ।
त्रिविधे तस्मिँल्लीने दृङ्मात्रं शिष्यते पश्चात् ॥

दर्पणतः प्राक्पश्चादस्ति मुखं प्रतिमुखं तदाभाति ।
आदर्शेऽपि च नष्टे मुखमस्ति मुखे तथैवात्मा ॥ १५७ ॥

## प्रबोधप्रकरणम् ।

माधुर्यं गुडपिण्डे यत्तत्तस्यांशकेऽणुमात्रेऽपि ।
एवं न पृथग्भावो गुडत्वमधुरत्वयोरस्ति ॥ १५८ ॥

अथवा न भिन्नभावः कर्पूरामोदयोरेवम् ।
आत्मस्वरूपमनसां पुंसां जगदात्मतां याति ॥ १५९ ॥

यद्भावानुभवः स्यान्निद्रादौ जागरस्यान्ते ।
अन्तः स चेत्स्थिरः स्याल्लभते हि तदाद्वयानन्दम् ॥१६०॥

अतिगम्भीरेऽपारे ज्ञानचिदानन्दसागरे स्फारे ।
कर्मसमीरणतरला जीवतरङ्गावलिः स्फुरति ॥ १६१ ॥

खरतरकरैः प्रदीप्तेऽभ्युदिते चैतन्यतिग्मांशौ ।
स्फुरति मृषैव समन्तादनेकविधजीवमृगतृष्णा ॥ १६२ ॥

अन्तरदृष्टे यस्मिञ्जगदिदमारात्परिस्फुरति ।
दृष्टे यस्मिन्सकृदपि विलीयते क्वाप्यसद्रूपम् ॥ १६३ ॥

बाह्याभ्यन्तरपूर्णः परमानन्दार्णवे निमग्नो यः ।
चिरमाप्लुत इव कलशो महाह्रदे जह्नुतनयायाः ॥ १६४॥

पूर्णात्पूर्णतरे परात्परतरेऽप्यज्ञातपारे हरौ
संवित्स्फारसुधार्णवे विरहिते वीचीतरङ्गादिभिः ।
भास्वत्कोटिविकासितोज्ज्वलदिगाकाशप्रकाशे परे
स्वानन्दैकरसे निमग्नमनसां न त्वं न चाहं जगत् ॥

## द्विधाभक्तिप्रकरणम् ।

चित्ते सत्त्वोत्पत्तौ तटिदिव बोधोदयो भवति ।
तर्ह्येव स स्थिरः स्याद्यदि चित्तं शुद्धिमुपयाति ॥ १६६ ॥

शुद्धयति हि नान्तरात्मा कृष्णपदाम्भोजभक्तिमृते ।
वसनमिव क्षारोदैर्भक्त्या प्रक्षाल्यते चेतः ॥ १६७ ॥

यद्वत्समलादर्शे सुचिरं भस्मादिना शुद्धे ।
प्रतिफलति वक्त्रमुच्चैः शुद्धे चित्ते तथा ज्ञानम् ॥ १६८ ॥

जानन्तु तत्र बीजं हरिभक्त्या ज्ञानिनो ये स्युः ।
मूर्तं चैवामूर्तं द्वे एव ब्रह्मणो रूपे ॥ १६९ ॥

इत्युपनिषत्तयोर्वा द्वौ भक्तौ भगवदुपदिष्टौ ।
क्लेशादक्लेशाद्वा मुक्तिः स्यादेतयोर्मध्ये ॥ १७० ॥

स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुद्दिष्टा ।
प्रारम्भे स्थूला स्यात्सूक्ष्मा तस्याः सकाशाच्च ॥ १७१ ॥

स्वाश्रमधर्माचरणं कृष्णप्रतिमार्चनोत्सवो नित्यम् ।
विविधोपचारकरणैर्हरिदासैः संगमः शश्वत् ॥ १७२ ॥

कृष्णकथासंश्रवणे महोत्सवः सत्यवादश्च ।
परयुवतौ द्रविणे वा परापवादे पराङ्मुखता ॥ १७३ ॥

ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम् ।
यदुपतिकथावियोगे व्यर्थं गतमायुरिति चिन्ता ॥ १७४ ॥

एवं कुर्वति भक्तिं कृष्णकथानुग्रहोत्पन्ना ।
समुदेति सूक्ष्मभक्तिर्यस्या हरिरन्तराविशति ॥ १७५ ॥

स्मृतिसत्पुराणवाक्यैर्यथाश्रुतायां हरेर्मूर्तौ ।
मानसपूजाभ्यासो विजननिवासेऽपि तात्पर्यम् ॥ १७६ ॥

सत्यं समस्तजन्तुषु कृष्णस्यावस्थितेर्ज्ञानम् ।
अद्रोहो भूतगणे ततस्तु भूतानुकम्पा स्यात् ॥ १७७ ॥

प्रमितयदृच्छालाभे संतुष्टिर्दारपुत्रादौ ।
ममताशून्यत्वमतो निरहंकारत्वमक्रोधः ॥ १७८ ॥

मृदुभाषिता प्रसादो निजनिन्दायां स्तुतौ समता ।
सुखदुःखशीतलोष्णद्वन्द्वसहिष्णुत्वमापदो न भयम् ॥

निद्राहारविहारेष्वनादरः सङ्गराहित्यम् ।
वचने चानवकाशः कृष्णस्मरणेन शाश्वती शान्तिः ॥

केनापि गीयमाने हरिगीते वेणुनादे वा ।
आनन्दाविर्भावो युगपत्स्यादष्टसात्त्विकोद्रेकः ॥ १८१ ॥

तस्मिन्ननुभवति मनः प्रगृह्यमाणं परात्मसुखम् ।
स्थिरतां याते तस्मिन्याति मदोन्मत्तदन्तिदशाम् ॥१८२॥

जन्तुषु भगवद्भावं भगवति भूतानि पश्यति क्रमशः ।
एतादृशी दशा चेत्तदैव हरिदासवर्यः स्यात् ॥ १८३ ॥

## ध्यानविधिप्रकरणम् ।

यमुनातटनिकटस्थितवृन्दावनकानने महारम्ये ।
कल्पद्रुमतलभूमौ चरणं चरणोपरि स्थाप्य ॥ १८४ ॥

तिष्ठन्तं घननीलं स्वतेजसा भासयन्तमिह विश्वम् ।
पीताम्बरपरिधानं चन्दनकर्पूरलिप्तसर्वाङ्गम् ॥ १८५ ॥

आकर्णपूर्णनेत्रं कुण्डलयुगमण्डितश्रवणम् ।
मन्दस्मितमुखकमलं सुकौस्तुभोदारमणिहारम् ॥ १८६ ॥

वलयाङ्गुलीयकाद्यानुज्ज्वलयन्तं स्वलंकारान् ।
गलविलुलितवनमालं स्वतेजसापास्तकलिकालम् ॥ १८७ ॥

गुञ्जारवालिकलितं गुञ्जापुञ्जान्विते शिरसि ।
भुञ्जानं सह गोपैः कुञ्जान्तरवर्तिनं हरिं स्मरत ॥ १८८ ॥

मन्दारपुष्पवासितमन्दानिलसेवितं परानन्दम् ।
मन्दाकिनीयुतपदं नमत महानन्ददं महापुरुषम् ॥

सुरभीकृतदिग्वलयं सुरभिशतैरावृतं सदा परितः ।
सुरभीतिक्षपणमहासुरभीमं यादवं नमत ॥ १९० ॥

कंदर्पकोटिसुभगं वाञ्छितफलदं दयार्णवं कृष्णम् ।
त्यक्त्वा कमन्यविषयं नेत्रयुगं द्रष्टुमुत्सहते ॥ १९१ ॥

पुण्यतमामतिसुरसां मनोऽभिरामां हरेः कथां त्यक्त्वा ।
श्रोतुं श्रवणद्वन्द्वं ग्राम्यं कथमादरं भवति ॥ १९२ ॥

दौर्भाग्यमिन्द्रियाणां कृष्णे विषये हि शाश्वतिके ।
क्षणिकेषु पापकरणेष्वपि सज्जन्ते यदन्यविषयेषु ॥ १९३ ॥

## सगुणनिर्गुणयोरैक्यप्रकरणम् ।

श्रुतिभिर्महापुराणैः सगुणगुणातीतयोरैक्यम् ।
यत्प्रोक्तं गूढतया तदहं वक्ष्येऽतिविशदार्थम् ॥ १९४ ॥

भूतेष्वन्तर्यामी ज्ञानमयः सच्चिदानन्दः ।
प्रकृतेः परः परात्मा यदुकुलतिलकः स एवायम् ॥ १९५ ॥

ननु सगुणो दृश्यतनुस्तथैकदेशाधिवासश्च ।
स कथं भवेत्परात्मा प्राकृतवद्रागरोषयुतः ॥ १९६ ॥

इतरे दृश्यपदार्था लक्ष्यन्तेऽनेन चक्षुषा सर्वे ।
भगवाननया दृष्ट्या न लक्ष्यते ज्ञानदृग्गम्यः ॥ १९७ ॥

यद्विश्वरूपदर्शनसमये पार्थाय दत्तवान्भगवान् ।
दिव्यं चक्षुस्तस्माददृश्यता युज्यते नृहरौ ॥ १९८ ॥

साक्षाद्यथैकदेशे वर्तुलमुपलभ्यते रवेर्बिम्बम् ।
विश्वं प्रकाशयति तत्सर्वैः सर्वत्र दृश्यते युगपत् ॥ १९९ ॥

यद्यपि साकारोऽयं तथैकदेशी विभाति यदुनाथः ।
सर्वगतः सर्वात्मा तथाप्ययं सच्चिदानन्दः ॥ २०० ॥

एको भगवान्रेमे युगपद्गोपीष्वनेकासु ।
अथवा विदेहजनकश्रुतदेवभूदेवयोर्हरिर्युगपत् ॥ २०१ ॥

अथवा कृष्णाकारां स्वचमूं दुर्योधनोऽपश्यत् ।
तस्माद्व्यापक आत्मा भगवान्हरिरीश्वरः कृष्णः ॥ २०२ ॥

वक्षसि यदा जघान श्रीवत्सः श्रीपतेः स किं द्वेष्यः ।
भक्तानामसुराणामन्येषां वा फलं सदृशम् ॥ २०३ ॥

तस्मान्न कोऽपि शत्रुर्नो मित्रं नाप्युदासीनः ।
नृहरिः सन्मार्गस्थः सफलः शाखीव यदुनाथः ॥ २०४ ॥

लोहशलाकानिवहैः स्पर्शाश्मनि भिद्यमानेऽपि ।
स्वर्णत्वमेति लौहं द्वेषादपि विद्विषां तथा प्राप्तिः ॥ २०५ ॥

नन्वात्मनः सकाशादुत्पन्ना जीवसंततिश्चेयम् ।
जगतः प्रियतर आत्मा तत्प्रकृते नैव संभवति ॥ २०६ ॥

वत्साहरणावसरे पृथग्वयोरूपवासनाभूषान् ।
हरिरजमोहं कर्तुं सवत्सगोपान्विनिर्ममे स्वस्मात् ॥२०७॥

अग्नेर्यथा स्फुलिङ्गाः क्षुद्रास्तु व्युच्चरन्तीति ।
श्रुत्यर्थं दर्शयितुं स्वतनोरतनोत्स जीवसंदोहम् ॥ २०८ ॥

यमुनातीरनिकुञ्जे कदाचिदपि वत्सकांश्च चारयति ।
कृष्णे तथार्यगोपेषु च वरगोष्ठेषु चारयत्स्वारात् ॥ २०९ ॥

वत्सं निरीक्ष्य दूराद्गावः स्नेहेन संभ्रान्ताः ।
तदभिमुखं धावन्त्यः प्रययुर्गोपैश्च दुर्वाराः ॥ २१० ॥

प्रस्रवभरेण भूयः स्रुतस्तनाः प्राप्य पूर्ववद्वत्सान् ।
पृथुरसनया लिहन्त्यस्तर्णकवत्यः प्रपाययन्प्रमुदा ॥२११॥

गोपा अपि निजबालाञ्जगृहुर्मूर्धानमाघ्राय ।
इत्थमलौकिकलाभस्तेषां तत्र क्षणं ववृधे ॥ २१२ ॥

गोपा वत्साश्चान्या पूर्वं कृष्णात्मका ह्यभवन् ।
तेनात्मनः प्रियत्वं दर्शितमेतेषु कृष्णेन ॥ २१३ ॥

प्रेयः पुत्राद्वित्तात्प्रेयोऽन्यस्माच्च सर्वस्मात् ।
अन्तरतरं यदात्मेत्युपनिषदः सत्यताभिहिता ॥ २१४ ॥

नन्वुच्चावचभूतेष्वात्मा सम एव वर्ततेऽथ हरिः ।
दुर्योधनेऽर्जुने वा तरतमभावं कथं नु गतवान्सः ॥२१५॥

बधिरान्धपङ्गुमूका दीर्घाः खर्वाः सरूपाश्च ।
सर्वे विधिना दृष्टाः सवत्सगोपाश्चतुर्भुजास्तेन ॥ २१६ ॥

भूतसमत्वं नृहरेः समो हि मशकेन नागेन ।
लोकैः समस्त्रिभिर्वेत्युपनिषदा भाषितः साक्षात् ॥ २१७ ॥

आत्मा तावदभोक्ता तथैव ननु वासुदेवश्चेत् ।
नानाकैतवयत्नैः पररमणीभिः कथं रमते ॥ २१८ ॥

सुन्दरमभिनवरूपं कृष्णं दृष्ट्वा विमोहिता गोप्यः ।
तमभिलषन्त्यो मनसा कामाद्विरहव्यथां प्रापुः ॥ २१९ ॥

गच्छन्त्यस्तिष्ठन्त्यो गृहकृत्यपराश्च भुञ्जानाः ।
कृष्णं विनान्यविषयं समक्षमपि जातु नाविन्दन् ॥२२०॥

दुःसहविरहभ्रान्त्या स्वपतीन्ददृशुस्तरून्नरांश्च पशून् ।
हरिरयमिति सुप्रीताः सरभसमालिङ्गयांचक्रुः ॥ २२१ ॥

कापि च कृष्णायन्ती कस्याश्चित्पूतनायन्त्याः ।
अपिबत्स्तनमिति साक्षाद्व्यासो नारायणः प्राह ॥ २२२ ॥

तस्मान्निजनिजदयितान्कृष्णाकारान्व्रजस्त्रियो वीक्ष्य ।
स्वपरनृपतिपत्नीनामन्तर्यामी हरिः साक्षात् ॥ २२३ ॥

परमार्थतो विचारे गुडतन्मधुरत्वदृष्टान्तात् ।
नश्वरमपि नरदेहं परमात्माकारतां याति ॥ २२४ ॥

किं पुनरनन्तशक्तेर्लीलावपुरीश्वरस्येह ।
कर्माण्यलौकिकानि स्वमायया विदधतो नृहरेः ॥ २२५ ॥

मृद्भक्षणेन कुपितां विकसितवदनां स्वमातरं वक्त्रे ।
विश्वमदर्शयदखिलं किं पुनरथ विश्वरूपोऽसौ ॥ २२६ ॥

## आनुग्रहिकप्रकरणम् ।

विषविषमस्तनयुगलं पाययितुं पूतना गृहं प्राप्ता ।
तस्याः पृथुभाग्याया आसीत्कृष्णार्पणो देहः ॥ २२७ ॥

अनयत्पृथुतरशकटं निजनिकटं वा कृतापराधमपि ।
कण्ठाश्लेषविशेषादवधीद्बाल्येऽसुरं कृष्णः ॥ २२८ ॥

यमलार्जुनौ तरू उन्मूल्योलूखलगतश्चिरं खिन्नौ ।
रिङ्गन्नङ्गणभूमौ स्वमालयं प्रापयन्नृहरिः ॥ २२९ ॥

नित्यं त्रिदशद्वेषी येन च मृत्योर्वशीकृतः केशी ।
काकः कोऽपि वराको बकोऽप्यशोकं गतो लोकम् ॥

गोगोपीगोपानां निकरमहिं पीडयन्तमतिवेगात् ।
अनघमघासुरमकरोत्पृथुतरमुरगेश्वरं भगवान् ॥ २३१ ॥

पीत्वारण्यहुताशनमसह्यतत्तेजसो हेतोः ।
दग्धान्मुग्धानखिलाञ्जुगोप गोपान्कृपासिन्धुः ॥ २३२ ॥

पातुं गोकुलमाकुलमशनितटिद्वर्षणैः कृष्णः ।
असहाय एकहस्ते गोवर्धनमुद्दधारोच्चैः ॥ २३३ ॥

वासोलोभाकलितं धावद्रजकं शिलातलैर्हत्वा ।
विस्मृत्य तदपराधं विकुण्ठवासोऽर्पितस्तस्मै ॥ २३४ ॥

त्रेधा वक्रशरीरामतिलम्बोष्ठीं स्खलद्वपुर्वचनात् ।
स्रक्चन्दनपरितोषात्कुब्जामृज्वाननामकरोत् ॥ २३५ ॥

निहतः पपात हरिणा हरिचरणाग्रेण कुवलयापीडः ।
तुङ्गोन्मत्तमतङ्गः पतङ्गवद्दीपकस्याग्रे ॥ २३६ ॥

युद्धमिषात्सह रङ्गे श्रीरङ्गेनाङ्गसंगमं प्राप्य ।
मुष्टिकचाणूराख्यौ ययतुर्निःश्रेयसं सपदि ॥ २३७ ॥

देहकृतादपराधाद्वैकुण्ठोत्कण्ठितान्तरात्मानम् ।
यदुवरकुलावतंसः कंसं विध्वंसयामास ॥ २३८ ॥

हरिसंदर्शनयोगात्पृथुरणतीर्थे निमज्जते तस्मै ।
भगवान्नु प्रददाद्यः सद्यश्चैद्याय सायुज्यम् ॥ २३९ ॥

मीनादिभिरवतारैर्निहताः सुरविद्विषो बहवः ।
नीतास्ते निजरूपं तव च मोक्षस्य का वार्ता ॥ २४० ॥

ये यदुनन्दननिहतास्ते तु न भूयः पुनर्भवं प्रापुः ।
तस्मादवताराणामन्तर्यामी प्रवर्तकः कृष्णः ॥ २४१ ॥

ब्रह्माण्डानि बहूनि पङ्कजभवान्प्रत्यण्डमत्यद्भुता-
न्गोपान्वत्सयुतानदर्शयदजं विष्णूनशेषांश्च यः ।
शंभुर्यच्चरणोदकं स्वशिरसा धत्ते च मूर्तित्रया-
त्कृष्णो वै पृथगस्ति कोऽप्यविकृतः सच्चिन्मयो नीलिमा ॥

कृपापात्रं यस्य त्रिपुररिपुरम्भोजवसतिः
सुता जह्नोः पूता चरणनखनिर्णेजनजलम् ।
प्रदानं वा यस्य त्रिभुवनपतित्वं विभुरपि
निदानं सोऽस्माकं जयति कुलदेवो यदुपतिः ॥ २४३ ॥

मायाहस्तेऽर्पयित्वा भरणकृतिकृते मोहमूलोद्भवं मां
मातः कृष्णाभिधाने चिरसमयमुदासीनभावं गतासि ।
कारुण्यैकाधिवासे सकृदपि वदनं नेक्षसे त्वं मदीयं
तत्सर्वज्ञे न कर्तुं प्रभवसि भवती किं नु मूलस्य शान्तिम् ॥

उदासीनः स्तब्धः सततमगुणः सङ्गरहितो
भवांस्तातः कातः परमिह भवेज्जीवनगतिः ।
अकस्मादस्माकं यदि न कुरुते स्नेहमथ त-
द्वसस्व स्वीयान्तर्विमलजठरेऽस्मिन्पुनरपि ॥ २४५ ॥

लोकाधीशे त्वयीशे किमिति भवभवा वेदना स्वाश्रितानां
संकोचः पङ्कजानां किमिह समुदिते मण्डले चण्डरश्मेः ।
भोगः पूर्वार्जितानां भवति भुवि नृणां कर्मणां चेदवश्यं
तन्मे दृष्टैर्नृपुष्टैर्ननु दनुजनृपैरूर्जितं निर्जितं ते ॥ २४६ ॥

नित्यानन्दसुधानिधेरधिगतः सन्नीलमेघः सता-
मौत्कण्ठ्यप्रबलप्रभञ्जनभरैराकर्षितो वर्षति ।
विज्ञानामृतमद्भुतं निजवचो धाराभिराराादिदं
चेतश्चातक चेन्न वाञ्छति मृषाक्रान्तोऽसि सुप्तोऽसि किम् ॥

चेतश्चञ्चलतां विहाय पुरतः संधाय कोटिद्वयं
तत्रैकत्र निधेहि सर्वविषयानन्यत्र च श्रीपतिम् ।
विश्रान्तिर्हितमप्यहो क नु तयोर्मध्ये तदालोच्यतां
युक्त्या वानुभवेन यत्र परमानन्दश्च तत्सेव्यताम् ॥२४८॥

पुत्रान्पौत्रमथ स्त्रियोऽन्ययुवतीर्वित्तान्यथोऽन्यद्धनं
भोज्यादिष्वपि तारतम्यवशतो नालं समुत्कण्ठया ।
नैतादृग्यदुनायके समुदिते चेतस्यनन्ते विभौ
सान्द्रानन्दसुधार्णवे विहरति स्वैरं यतो निर्भयम् ॥२४९॥

काम्योपासनयार्थयन्त्यनुदिनं किंचित्फलं सेप्सितं
किंचित्स्वर्गमथापवर्गमपरैर्योगादियज्ञादिभिः ।
अस्माकं यदुनन्दनाङ्घ्रियुगलध्यानावधानार्थिनां
किं लोकेन दमेन किं नृपतिना स्वर्गापवर्गैश्च किम् ॥२५०॥

आश्रितमात्रं पुरुषं
स्वाभिमुखं कर्षति श्रीशः ।
लोहमपि चुम्बकाश्मा
संमुखमात्रं जडं यद्वत् ॥ २५१ ॥

अयमुत्तमोऽयमधमो
जात्या रूपेण संपदा वयसा ।
श्लाघ्योऽश्लाघ्यो वेत्थं
न वेत्ति भगवाननुग्रहावसरे ॥ २५२ ॥

अन्तःस्थभावभोक्ता
ततोऽन्तरात्मा महामेघः ।
खदिरश्चम्पक इव वा
प्रवर्षणं किं विचारयति ॥ २५३ ॥

यद्यपि सर्वत्र समस्तथापि नृहरिस्तथाप्येते ।
भक्ताः परमानन्दे रमन्ति सदयावलोकेन ॥ २५४ ॥

सुतरामनन्यशरणाः क्षीराद्याहारमन्तरा यद्वत् ।
केवलया स्नेहदृशा कच्छपतनयाः प्रजीवन्ति ॥ २५५ ॥

यद्यपि गगनं शून्यं तथापि जलदामृतांशुरूपेण ।
चातकचकोरनाम्नोर्दृढभावात्पूरयत्याशाम् ॥ २५६ ॥

तद्वद्व्रजतां पुंसां दृग्वाङ्मनसामगोचरोऽपि हरिः ।
कृपया फलत्यकस्मात्सत्यानन्दामृतेन विपुलेन ॥ २५७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
प्रबोधसुधाकरः समाप्तः ॥

|| श्रीः ||

# || स्वात्मप्रकाशिका ||

जगत्कारणमज्ञानमेकमेव चिदन्वितम् ।
एक एव मनः साक्षी जानात्येवं जगत्त्रयम् ॥ १ ॥

विवेकयुक्तबुद्ध्याहं जानाम्यात्मानमद्वयम् ।
तथापि बन्धमोक्षादिव्यवहारः प्रतीयते ॥ २ ॥

विवर्तोऽपि प्रपञ्चो मे सत्यवद्भाति सर्वदा ।
इति संशयपाशेन बद्धोऽहं छिन्द्धि संशयम् ॥ ३ ॥

एवं शिष्यवचः श्रुत्वा गुरुराहोत्तरं स्फुटम् ।
नाज्ञानं न च बुद्धिश्च न जगन्न च साक्षिता ॥ ४ ॥

बन्धमोक्षादयः सर्वे कृताः सत्येऽद्वये त्वयि ।
भातीत्युक्ते जगत्सर्वं सद्रूपं ब्रह्म तद्भवेत् ॥ ५ ॥

सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम् ।
प्रपञ्चाधाररूपेण वर्तते तज्जगन्न हि ॥ ६ ॥

यथेक्षुमभिसंव्याप्य शर्करा वर्तते तथा ।
आश्चर्यब्रह्मरूपेण त्वं व्याप्तोऽसि जगत्त्रयम् ॥ ७ ॥

मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ।
जगत्त्रयमिदं सर्वं चिन्मात्रं सुविचारतः ॥ ८ ॥

ब्रह्मादिस्तम्बपर्यन्ताः प्राणिनस्त्वयि कल्पिताः ।
बुद्बुदादितरङ्गान्ता विकाराः सागरे यथा ॥ ९ ॥

तरङ्गत्वं ध्रुवं सिन्धुर्न वाञ्छति यथा तथा ।
विषयानन्दवाञ्छा ते महदानन्दरूपतः ॥ १० ॥

पिष्टं व्याप्य गुडं यद्वन्माधुर्यं न हि वाञ्छति ।
पूर्णानन्दो जगद्व्याप्य तदानन्दं न वाञ्छति ॥ ११ ॥

दारिद्र्याशा यथा नास्ति संपन्नस्य तथा तव ।
ब्रह्मानन्दनिमग्नस्य विषयाशा न संभवेत् ॥ १२ ॥

विषं दृष्ट्वामृतं दृष्ट्वा विषं त्यजति बुद्धिमान् ।
आत्मानमपि दृष्ट्वा त्वं त्यजानात्मानमादरात् ॥ १३ ॥

घटावभासको भानुर्घटनाशे न नश्यति ।
देहावभासकः साक्षी देहनाशे न नश्यति ॥ १४ ॥

निराकारं जगत्सर्वं निर्मलं सच्चिदात्मकम् ।
द्वैताभावात्कथं कस्माद्भयं पूर्णस्य मे वद ॥ १५ ॥

ब्रह्मादिकं जगत्सर्वं त्वय्यानन्दे प्रकल्पितम् ।
त्वय्येव लीनं जगत्त्वं कथं लीयसे वद ॥ १६ ॥

न हि प्रपञ्चो न हि भूतजातं
न चेन्द्रियं प्राणगणो न देहः ।
न बुद्धिचित्तं न मनो न कर्ता
ब्रह्मैव सत्यं परमात्मरूपम् ॥ १७ ॥

सर्वं सुखं विद्धि सुदुःखनाशा-
त्सर्वं च सद्रूपमसत्यनाशात् ।
चिद्रूपमेव प्रतिभानयुक्तं
तस्मादखण्डं परमात्मरूपम् ॥ १८ ॥

चिदेव देहस्तु चिदेव लोका-
श्चिदेव भूतानि चिदिन्द्रियाणि ।

कर्ता चिदन्तःकरणं चिदेव
चिदेव सत्यं परमार्थरूपम् ॥ १९ ॥

न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ।
मायामात्रविलासो हि मायातीतोऽहमद्वयः ॥ २० ॥

राज्यं करोतु विज्ञानी भिक्षामटतु निर्भयः ।
दोषैर्न लिप्यते शुद्धः पद्मपत्रमिवाम्भसा ॥ २१ ॥

पुण्यानि पापकर्माणि स्वप्नगानि न जाग्रति ।
एवं जाग्रत्पुण्यपापकर्माणि न हि मे प्रभोः ॥ २२ ॥

कायः करोतु कर्माणि वृथा वागुच्यतामिह ।
राज्यं ध्यायतु वा बुद्धिः पूर्णस्य मम का क्षतिः ॥ २३ ॥

प्राणाश्चरन्तु तद्धर्मैः कामैर्वा हन्यतां मनः ।
आनन्दामृतपूर्णस्य मम दुःखं कथं भवेत् ॥ २४ ॥

आनन्दाम्बुधिमग्नोऽसौ देही तत्र न दृश्यते ।
लवणं जलमध्यस्थं यथा तत्र लयं गतम् ॥ २५ ॥

इन्द्रियाणि मनः प्राणा अहंकारः परस्परम् ।
जाड्यसंगतिमुत्सृज्य मग्ना मयि चिदर्णवे ॥ २६ ॥

आत्मानमञ्जसा वेद्मि त्वज्ञानं प्रपलायितम् ।
कर्तृत्वमद्य मे नष्टं कर्तव्यं वापि न क्वचित् ॥ २७ ॥

चिदमृतसुखराशौ चित्तफेनं विलीनं
क्षयमधिगत एव वृत्तिचञ्चत्तरङ्गः ।
स्तिमितसुखसमुद्रो निर्विचेष्टः सुपूर्णः
कथमिह मम दुखं सर्वदैकोऽहमस्मि ॥ २८ ॥

आनन्दरूपोऽहमखण्डबोधः
परात्परोऽहं घनचित्प्रकाशः ।
मेघा यथा व्योम न च स्पृशन्ति
संसारदुःखानि न मां स्पृशन्ति ॥ २९ ॥

अस्थिमांसपुरीषान्त्रचर्मलोमसमन्वितः ।
अन्नादः स्थूलदेहः स्यादतोऽहं शुद्धचिद्घनः ॥ ३० ॥

स्थूलदेहाश्रिता एते स्थूलाद्भिन्नस्य मे न हि ।
लिङ्गं जडात्मकं नाहं चित्स्वरूपोऽहमद्वयः ॥ ३१ ॥

क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ।
लिङ्गदेहाश्रिता ह्येते नैवालिङ्गस्य मे विभोः ॥ ३२ ॥

अनाद्यज्ञानमेवात्र कारणं देहमुच्यते ।
नाहं कारणदेहोऽपि स्वप्रकाशो निरञ्जनः ॥ ३३ ॥

जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ।
न सन्ति मम नित्यस्य निर्विकारस्वरूपिणः ॥ ३४ ॥

जीवाद्भिन्नः परेशोऽस्ति परेशत्वं कुतस्तव ।
इत्यज्ञजनसंवादो विचारः क्रियतेऽधुना ॥ ३५ ॥

अधिष्ठानं चिदाभासो बुद्धिरेतत्त्रयं यदा ।
अज्ञानादेकवद्भाति जीव इत्युच्यते तदा ॥ ३६ ॥

अधिष्ठानं न जीवः स्यात्प्रत्येकं निर्विकारतः ।
अवस्तुत्वाच्चिदाभासो नास्ति तस्य च जीवता ॥ ३७ ॥

प्रत्येकं जीवता नास्ति बुद्धेरपि जडत्वतः ।
जीव आभासकूटस्थबुद्धित्रयमतो भवेत् ॥ ३८ ॥

मायाभासो विशुद्धात्मा त्रयमेतन्महेश्वरः ।
मायाभासोऽप्यवस्तुत्वात्प्रत्येकं नेश्वरो भवेत् ॥ ३९ ॥

पूर्णत्वान्निर्विकारत्वाद्विशुद्धत्वान्महेश्वरः ।
जडत्वहेतोर्मायायामीश्वरत्वं नु दुर्घटम् ॥ ४० ॥

तस्मादेतत्त्रयं मिथ्या तदर्थो नेश्वरो भवेत् ।
इति जीवेश्वरौ भातः स्वाज्ञानान्न हि वस्तुतः ॥ ४१ ॥

घटाकाशमठाकाशौ महाकाशे प्रकल्पितौ ।
एवं मयि चिदाकाशे जीवेशौ परिकल्पितौ ॥ ४२ ॥

मायातत्कार्यविलये नेश्वरत्वं च जीवता ।
ततः शुद्धचिदेवाहं चिद्व्योमनिरुपाधितः ॥ ४३ ॥

सत्यचिद्घनमनन्तमद्वयं
सर्वदृश्यरहितं निरामयम् ।
यत्पदं विमलमद्वयं शिवं
तत्सदाहमिति मौनमाश्रये ॥ ४४ ॥

पूर्णमद्वयमखण्डचेतनं
विश्वभेदकलनादिवर्जितम् ।
अद्वितीयपरसंविदंशकं
तत्सदाहमिति मौनमाश्रये ॥ ४५ ॥

जन्ममृत्युसुखदुःखवर्जितं
जातिनीतिकुलगोत्रदूरगम् ।

चिद्विवर्तजगतोऽस्य कारणं
तत्सदाहमिति मौनमाश्रये ॥ ४६ ॥

उलूकस्य यथा भानावन्धकारः प्रतीयते ।
स्वप्रकाशे परानन्दे तमो मूढस्य भासते ॥ ४७ ॥

यथा दृष्टिनिरोधार्तो सूर्यो नास्तीति मन्यते ।
तथाज्ञानावृतो देही ब्रह्म नास्तीति मन्यते ॥ ४८ ॥

यथामृतं विषाद्भिन्नं विषदोषैर्न लिप्यते ।
न स्पृशामि जडाद्भिन्नो जडदोषान्प्रकाशयन् ॥ ४९ ॥

स्वल्पापि दीपकणिका बहुलं नाशयेत्तमः ।
स्वल्पोऽपि बोधो महतीमविद्यां शमयेत्तथा ॥ ५० ॥

चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ।
आनन्दत्वान्न मे दुःखमज्ञानाद्भाति तत्त्रयम् ॥ ५१ ॥

कालत्रये यथा सर्पो रज्जौ नास्ति तथा मयि ।
अहंकारादि देहान्तं जगन्नास्त्यहमद्वयः ॥ ५२ ॥

भानौ तमःप्रकाशत्वान्नाङ्गीकुर्वन्ति सज्जनाः ।
तमस्तत्कार्यसाक्षीति भ्रान्तबुद्धिरहो मयि ॥ ५३ ॥

यथा शीतं जलं वह्निसंबन्धादुष्णवद्भवेत् ।
बुद्धितादात्म्यसंबन्धात्कर्तृत्वं वस्तुतो न हि ॥ ५४ ॥

जलबिन्दुभिराकाशं न सिक्तं न च शुध्यति ।
तथा गङ्गाजलेनायं न शुद्धो नित्यशुद्धतः ॥ ५५ ॥

वृक्षोत्पन्नफलैर्वृक्षो यथा तृप्तिं न गच्छति ।
मय्यध्यस्तान्नपानाद्यैस्तथा तृप्तिर्न विद्यते ॥ ५६ ॥

स्थाणौ प्रकल्पितश्चोरः स स्थाणुत्वं न बाधते ।
स्वस्मिन्कल्पितजीवश्च स्वं बाधितुमशक्यते ॥ ५७ ॥

अज्ञाने बुद्धिविलये निद्रा सा भण्यते बुधैः ।
विलीनाज्ञानतत्कार्ये मयि निद्रा कथं भवेत् ॥ ५८ ॥

बुद्धेः पूर्णविकासोऽयं जागरः परिकीर्त्यते ।
विकारादिविहीनत्वाज्जागरो मे न विद्यते ॥ ५९ ॥

सूक्ष्मनाडीषु संचारो बुद्धेः स्वप्नः प्रजायते ।
संचारधर्मरहिते स्वप्नो नास्ति तथा मयि ॥ ६० ॥

परिपूर्णस्य नित्यस्य शुद्धस्य ज्योतिषो मम ।
आगन्तुकमलाभावात्किं स्नानेन प्रयोजनम् ॥ ६१ ॥

देशाभावात्क गन्तव्यं स्थानाभावात्क वा स्थितिः ।
पूर्णे मयि स्थानदेशौ कल्पितावहमद्वयः ॥ ६२ ॥

प्राणसंचारसंशोषात्पिपासा जायते खलु ।
शोषणानर्हचिद्रूपे मय्येषा जायते कथम् ॥ ६३ ॥

नाडीषु पीड्यमानासु वाय्वग्निभ्यां भवेत्क्षुधा ।
तयोः पीडनहेतुत्वात्संविद्रूपे कथं मयि ॥ ६४ ॥

शरीरस्थितिशैथिल्यं श्वेतलोमसमन्वितम् ।
जरा भवति सा नास्ति निरंशे मयि सर्वगे ॥ ६५ ॥

योषित्क्रीडा सुखस्यान्तर्गर्वाढ्यं यौवनं किल ।
आत्मानन्दे परे पूर्णे मयि नास्ति हि यौवनम् ॥ ६६ ॥

मूढबुद्धिपरिव्याप्तं दुःखानामालयं सदा ।
बाल्यं कोपनशीलान्तं न मे सुखजलाम्बुधेः ॥ ६७ ॥

एवं तत्त्वविचाराब्धौ निमग्नानां सदा नृणाम् ।
परमाद्वैतविज्ञानमपरोक्षं न संशयः ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्य-
पादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**स्वात्मप्रकाशिका संपूर्णा ॥**

॥ श्रीः ॥

# ॥ मनीषापञ्चकम् ॥

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते

या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।

सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चे-

च्चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं

सर्वं चैतदविद्यया त्रिगुणया शेषं मया कल्पितम् ।

इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले

चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-

र्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।

भूतं भाति च दुष्कृतं प्रदहता संविन्मये पावके

प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावय-
न्योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ४ ॥

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवि-
द्यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**मनीषापञ्चकं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ अद्वैतपञ्चरत्नम् ॥

नाहं देहो नेन्द्रियाण्यन्तरङ्गो

नाहंकारः प्राणवर्गो न बुद्धिः ।

दारापत्यक्षेत्रवित्तादिदूरः

साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥ १ ॥

रज्ज्वज्ञानाद्भाति रज्जौ यथाहिः

स्वात्माज्ञानादात्मनो जीवभावः ।

आप्तोक्त्याहिभ्रान्तिनाशे स रज्जु-

र्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥ २ ॥

आभातीदं विश्वमात्मन्यसत्यं

सत्यज्ञानानन्दरूपे विमोहात् ।

निद्रामोहात्स्वप्नवत्तन्न सत्यं

शुद्धः पूर्णो नित्य एकः शिवोऽहं ॥ ३ ॥

नाहं जातो न प्रवृद्धो न नष्टो
　देहस्योक्ताः प्राकृताः सर्वधर्माः ।
कर्तृत्वादिश्चिन्मयस्यास्ति नाहं-
　कारस्यैव ह्यात्मनो मे शिवोऽहम् ॥ ४ ॥

मत्तो नान्यत्किंचिदत्रास्ति विश्वं
　सत्यं बाह्यं वस्तु मायोपक्लृप्तम् ।
आदर्शान्तर्भासमानस्य तुल्यं ।
　मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
अद्वैतपञ्चरत्नं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ निर्वाणषट्कम् ॥

मनोबुद्ध्यहंकारचित्तानि नाहं
न कर्णं न जिह्वा न च घ्राणनेत्रे ।
न च व्योम भूमिर्न तेजो न वायु-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥

न च प्राणसंज्ञो न वै पञ्चवायु-
र्न वा सप्तधातुर्न वा पञ्चकोशः ।
न वाक्पाणिपादौ न चोपस्थपायू
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ २ ॥

न मे द्वेषरागौ न मे लोभमोहौ
मदो नैव मे नैव मात्सर्यभावः ।
न धर्मो न चार्थो न कामो न मोक्ष-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ३ ॥

न पुण्यं न पापं न सौख्यं न दुःखं
न मन्त्रो न तीर्थं न वेदा न यज्ञाः ।
अहं भोजनं नैव भोज्यं न भोक्ता
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ४ ॥

न मृत्युर्न शङ्का न मे जातिभेदः
पिता नैव मे नैव माता च जन्म ।
न बन्धुर्न मित्रं गुरुर्नैव शिष्य-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ५ ॥

अहं निर्विकल्पो निराकाररूपो
विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम् ।
न चासंगतं नैव मुक्तिर्न बन्ध-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**निर्वाणषट्कं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ अद्वैतानुभूतिः ॥

—*—

अहमानन्दसत्यादिलक्षणः केवलः शिवः ।
सदानन्दादिरूपं यत्तेनाहमचलोऽद्वयः ॥ १ ॥

अक्षिदोषाद्यथैकोऽपि द्वयवद्भाति चन्द्रमाः ।
एकोऽप्यात्मा तथा भाति द्वयवन्मायया मृषा ॥ २ ॥

अक्षिदोषविहीनानामेक एव यथा शशी ।
मायादोषविहीनानामात्मैवैकस्तथा सदा ॥ ३ ॥

द्वित्वं भात्यक्षिदोषेण चन्द्रे स्वे मायया जगत् ।
द्वित्वं मृषा यथा चन्द्रे मृषा द्वैतं तथात्मनि ॥ ४ ॥

आत्मनः कार्यमाकाशो विनात्मानं न संभवेत् ।
कार्यस्य पूर्णता सिद्धा किं पुनः पूर्णतात्मनः ॥ ५ ॥

कार्यभूतो यथाकाश एक एव न हि द्विधा ।
हेतुभूतस्तथात्मायमेक एव विजानतः ॥ ६ ॥

एकोऽपि द्वयवद्भाति यथाकाश उपाधितः ।
एकोऽपि द्वयवत्पूर्णस्तथात्मायमुपाधितः ॥ ७ ॥

कारणोपाधिचैतन्यं कार्यसंस्थाच्चितोऽधिकम् ।
न घटाभ्रान्मृदाकाशः कुत्रचिन्नाधिको भवेत् ॥ ८ ॥

निर्गतोपाधिराकाश एक एव यथा भवेत् ।
एक एव तथात्मायं निर्गतोपाधिकः सदा ॥ ९ ॥

आकाशादन्य आकाश आकाशस्य यथा न हि ।
एकत्वादात्मनो नान्य आत्मा सिध्यति चात्मनः ॥ १० ॥

मेघयोगाद्यथा नीरं करकाकारतामियात् ।
मायायोगात्तथैवात्मा प्रपञ्चाकारतामियात् ॥ ११ ॥

वर्षोपल इवाभाति नीरमेवाभ्रयोगतः ।
वर्षोपलविनाशेन नीरनाशो यथा न हि ॥ १२ ॥

आत्मैवायं तथा भाति मायायोगात्प्रपञ्चवत् ।
प्रपञ्चस्य विनाशेन स्वात्मनाशो न हि क्वचित् ॥ १३ ॥

जलादन्य इवाभाति जलोत्थो बुद्बुदो यथा ।
तथात्मनः पृथगिव प्रपञ्चोऽयमनेकधा ॥ १४ ॥

यथा बुद्बुदनाशेन जलनाशो न कर्हिचित् ।
तथा प्रपञ्चनाशेन नाशः स्यादात्मनो न हि ॥ १५ ॥

अहिनिर्ल्वयनीजातः शुच्यादिर्नाहिमाप्नुयात् ।
तथा स्थूलादिसंभूतः शुच्यादिर्नाप्नुयादिमम् ॥ १६ ॥

त्यक्तां त्वचमहिर्यद्वदात्मत्वेन न मन्यते ।
आत्मत्वेन सदा ज्ञानी त्यक्तदेहत्रयं तथा ॥ १७ ॥

अहिनिर्ल्वयनीनाशादहेर्नाशो यथा न हि ।
देहत्रयविनाशेन नात्मनाशस्तथा भवेत् ॥ १८ ॥

तक्रादिलवणोपेतमज्ञैर्लवणवद्यथा ।
आत्मा स्थूलादिसंयुक्तो दृष्यते स्थूलकादिवत् ॥ १९ ॥

अयःकाष्ठादिकं यद्वद्वह्निवद्वह्नियोगतः ।
भाति स्थूलादिकं सर्वमात्मवत्स्वात्मयोगतः ॥ २० ॥

दाहको नैव दाह्यं स्याद्दाह्यं तद्वन्न दाहकः ।
नैवात्मायमनात्मा स्यादनात्मायं न चात्मकः ॥ २१ ॥

प्रमेयादित्रयं सार्थं भानुना घटकुड्यवत् ।
येन भाति स एवाहं प्रमेयादिविलक्षणः ॥ २२ ॥

भानुस्फुरणतो यद्वत्स्फुरतीव घटादिकम् ।
स्फुरतीव प्रमेयादिरात्मस्फुरणतस्तथा ॥ २३ ॥

पिष्टादिगुलसंपर्काद्गुलवत्प्रीतिमान्यथा ।
आत्मयोगात्प्रमेयादिरात्मवत्प्रीतिमान्भवेत् ॥ २४ ॥

घटनीरान्नपिष्टानामुष्णत्वं वह्नियोगतः ।
वह्निं विना कथं तेषामुष्णता स्याद्यथा क्वचित् ॥ २५ ॥

भूतभौतिकदेहानां स्फूर्तिता स्वात्मयोगतः ।
विनात्मानं कथं तेषां स्फूर्तिता स्यात्तथा क्वचित् ॥ २६ ॥

नानाविधेषु कुम्भेषु वसत्येकं नभो यथा ।
नानाविधेषु देहेषु तद्वदेको वसाम्यहम् ॥ २७ ॥

नानाविधत्वं कुम्भानां न यात्येव यथा नभः ।
नानाविधत्वं देहानां तद्वदेव नयाम्यहम् ॥ २८ ॥

यथा घटेषु नष्टेषु घटाकाशो न नश्यति ।
तथा देहेषु नष्टेषु नैव नश्यामि सर्वगः ॥ २९ ॥

उत्तमादीनि पुष्पाणि वर्तन्ते सूत्रके यथा ।
उत्तमाद्यास्तथा देहा वर्तन्ते मयि सर्वदा ॥ ३० ॥

यथा न संस्पृशेत्सूत्रं पुष्पाणामुत्तमादिता ।
तथा नैकं सर्वगं मां देहानामुत्तमादिता ॥ ३१ ॥

पुष्पेषु तेषु नष्टेषु यद्वत्सूत्रं न नश्यति ।
तथा देहेषु नष्टेषु नैव नश्याम्यहं सदा ॥ ३२ ॥

पर्यङ्करज्जुरन्ध्रेषु नानेवैकापि सूर्यभा ।
एकोऽप्यनेकवद्भाति तथा क्षेत्रेषु सर्वगः ॥ ३३ ॥

रज्जुरन्ध्रस्थदोषादि सूर्यभां न स्पृशेद्यथा ।
तथा क्षेत्रस्थदोषादि सर्वगं मां न संस्पृशेत् ॥ ३४ ॥

तद्रज्जुरन्ध्रनाशेषु नैव नश्यति सूर्यभा ।
तथा क्षेत्रविनाशेषु नैव नश्यामि सर्वगः ॥ ३५ ॥

देहो नाहं प्रदृश्यत्वाद्भौतिकत्वान्न चेन्द्रियम् ।
प्राणो नाहमनेकत्वान्मनो नाहं चलत्वतः ॥ ३६ ॥

बुद्धिर्नाहं विकारित्वात्तमो नाहं जडत्वतः ।
देहेन्द्रियादिकं नाहं विनाशित्वाद्घटादिवत् ॥ ३७ ॥

देहेन्द्रियप्राणमनोबुद्ध्यज्ञानानि भासयन् ।
अहंकारं तथा भामि चैतेषामभिमानिनम् ॥ ३८ ॥

सर्वं जगदिदं नाहं विषयत्वादिदंधियः ।
अहं नाहं सुषुप्त्यादौ अहमः साक्षितः सदा ॥ ३९ ॥

सुप्तौ यथा निर्विकारस्तथावस्थाद्वयेऽपि च ।
द्वयोर्मात्राभियोगेन विकारीव विभाम्यहम् ॥ ४० ॥

उपाधिनीलरक्ताद्यैः स्फटिको नैव लिप्यते ।
तथात्मा कोशजैः सर्वैः कामाद्यैर्नैव लिप्यते ॥ ४१ ॥

कालेन भ्राम्यमाणेन भ्रमतीव यथा मही ।
अगोऽप्यात्मा विमूढेन चलतीव प्रदृश्यते ॥ ४२ ॥

देहत्रयमिदं नित्यमात्मत्वेनाभिमन्यते ।
यावत्तावदयं मूढो नानायोनिषु जायते ॥ ४३ ॥

निद्रादेहजदुःखादि जाग्रद्देहं न संस्पृशेत् ।
जाग्रद्देहजदुःखादिस्तथात्मानं न संस्पृशेत् ॥ ४४ ॥

जाग्रद्देहवदाभाति निद्रादेहस्तु निद्रया ।
निद्रादेहविनाशेन जाग्रद्देहो न नश्यति ॥ ४५ ॥

तथायमात्मवद्भाति जाग्रद्देहस्तु जागरात् ।
जाग्रद्देहविनाशेन नात्मा नश्यति कर्हिचित् ॥ ४६ ॥

हित्वायं स्वाप्निकं देहं जाग्रद्देहमपेक्षते ।
जाग्रद्देहप्रबुद्धोऽयं हित्वात्मानं यथा तथा ॥ ४७ ॥

स्वप्नभोगे यथैवेच्छा प्रबुद्धस्य न विद्यते ।
असत्स्वर्गादिके भोगे नैवेच्छा ज्ञानिनस्तथा ॥ ४८ ॥

भोक्त्रा बहिर्यथा भोग्यः सर्पो दृषदि कल्पितः ।
रूपशीलादयश्चात्मभोगा भोग्यस्वरूपकाः ॥ ४९ ॥

ज्ञस्य नास्त्येव संसारो यद्वदज्ञस्य कर्मिणः ।
जानतो नैव भीर्यद्वद्रज्जुसर्पमजानतः ॥ ५० ॥

सैन्धवस्य घनो यद्वज्जलयोगाज्जलं भवेत् ।
स्वात्मयोगात्तथा बुद्धिरात्मैव ब्रह्मवेदिनः ॥ ५१ ॥

तोयाश्रयेषु सर्वेषु भानुरेकोऽप्यनेकवत् ।
एकोऽप्यात्मा तथा भाति सर्वक्षेत्रेष्वनेकवत् ॥ ५२ ॥

भानोरन्य इवाभाति जलभानुर्जले यथा ।
आत्मनोऽन्य इवाभासो भाति बुद्धौ तथात्मनः ॥ ५३ ॥

बिम्बं विना यथा नीरे प्रतिबिम्बो भवेत्कथम् ।
विनात्मानं तथा बुद्धौ चिदाभासो भवेत्कथम् ॥ ५४ ॥

प्रतिबिम्बचलत्वाद्या यथा बिम्बस्य कर्हिचित् ।
न भवेयुस्तथाभासकर्तृत्वाद्यास्तु नात्मनः ॥ ५५ ॥

जले शैत्यादिकं यद्वज्जलभानुं न संस्पृशेत् ।
बुद्धेः कर्मादिकं तद्वच्चिदाभासं न संस्पृशेत् ॥ ५६ ॥

बुद्धेः कर्तृत्वभोक्तृत्वदुःखित्वाद्यैस्तु संयुतः ।
चिदाभासो विकारीव शरावस्थाम्बुभानुवत् ॥ ५७ ॥

शरावस्थोदके नष्टे तत्स्थो भानुर्विनष्टवत् ।
बुद्धेर्लये तथा सुप्तौ नष्टवत्प्रतिभात्ययम् ॥ ५८ ॥

जलस्थार्कं जलं चोर्मिं भासयन्भाति भास्करः ।
आत्माभासं धियं बुद्धेः कर्तृत्वादीनयं तथा ॥ ५९ ॥

मेघावभासको भानुर्मेघच्छन्नोऽवभासते ।
मोहावभासकस्तद्वन्मोहच्छन्नो विभात्ययम् ॥ ६० ॥

भास्यं मेघादिकं भानुर्भासयन्प्रतिभासते ।
तथा स्थूलादिकं भास्यं भासयन्प्रतिभात्ययम् ॥ ६१ ॥

सर्वप्रकाशको भानुः प्रकाश्यैर्नैव दृष्यते ।
सर्वप्रकाशको ह्यात्मा सर्वैस्तद्वन्न दृष्यते ॥ ६२ ॥

मुकुरस्थं मुखं यद्वन्मुखवत्प्रथते मृषा ।
बुद्धिस्थाभासकस्तद्वदात्मवत्प्रथते मृषा ॥ ६३ ॥

मुकुरस्थस्य नाशेन मुखनाशो भवेत्कथम् ।
बुद्धिस्थाभासनाशेन नाशो नैवात्मनः क्वचित् ॥ ६४ ॥

ताम्रकल्पितदेवादिस्ताम्रादन्य इव स्फुरेत् ।
प्रतिभास्यादिरूपेण तथात्मोत्थमिदं जगत् ॥ ६५ ॥

ईशजीवात्मवद्भाति यथैकमपि ताम्रकम् ।
एकोऽप्यात्मा तथैवायमीशजीवादिवन्मृषा ॥ ६६ ॥

यथेश्वरादिनाशेन ताम्रनाशो न विद्यते ।
तथेश्वरादिनाशेन नाशो नैवात्मनः सदा ॥ ६७ ॥

अध्यस्तो रज्जुसर्पोऽयं सत्यवद्रज्जुसत्तया ।
तथा जगदिदं भाति सत्यवत्स्वात्मसत्तया ॥ ६८ ॥

अध्यस्ताहेरभावेन रज्जुरेवावशिष्यते ।
तथा जगदभावेन सदात्मैवावशिष्यते ॥ ६९ ॥

स्फटिके रक्तता यद्वदुपाधेर्नीलताम्बरे ।
यथा जगदिदं भाति तथा सत्यमिवाद्वये ॥ ७० ॥

स्फटिके रक्तता मिथ्या मृषा खे नीलता यथा
तथा जगदिदं मिथ्या एकस्मिन्नद्वये मयि ॥ ७१ ॥

जीवेश्वरादिभावेन भेदं पश्यति मूढधीः ।
निर्भेदे निर्विशेषेऽस्मिन्कथं भेदो भवेद्ध्रुवम् ॥ ७२ ॥

लिङ्गस्य धारणादेव शिवोऽयं जीवतां व्रजेत् ।
लिङ्गनाशे शिवस्यास्य जीवतावेशता कुतः ॥ ७३ ॥

शिव एव सदा जीवो जीव एव सदा शिवः ।
वेत्त्यैक्यमनयोर्यस्तु स आत्मज्ञो न चेतरः ॥ ७४ ॥

क्षीरयोगाद्यथा नीरं क्षीरवद्दृश्यते मृषा ।
आत्मयोगादनात्मायमात्मवद्दृश्यते तथा ॥ ७५ ॥

नीरात्क्षीरं पृथक्कृत्य हंसो भवति नान्यथा ।
स्थूलादेः स्वं पृथक्कृत्य मुक्तो भवति नान्यथा ॥ ७६ ॥

क्षीरनीरविवेकज्ञो हंस एव न चेतरः ।
आत्मानत्मविवेकज्ञो यतिरेव न चेतरः ॥ ७७ ॥

अध्यस्तचोरजः स्थाणोर्विकारः स्यान्न हि क्वचित् ।
नात्मनो निर्विकारस्य विकारो विश्वजस्तथा ॥ ७८ ॥

ज्ञाते स्थाणौ कुतश्चोरश्चोराभावे भयं कुतः ।
ज्ञाते स्वास्मिन्कुतो विश्वं विश्वाभावे कुतोऽखिलम् ॥ ७९ ॥

गुणवृत्तित्रयं भाति परस्परविलक्षणम् ।
सत्यात्मलक्षणे यस्मिन्स एवाहं निरंशकः ॥ ८० ॥

देहत्रयमिदं भाति यस्मिन्ब्रह्मणि सत्यवत् ।
तदेवाहं परं ब्रह्म देहत्रयविलक्षणः ॥ ८१ ॥

जाग्रदादित्रयं यस्मिन्प्रत्यगात्मनि सत्यवत् ।
स एवाहं परं ब्रह्म जाग्रदादिविलक्षणः ॥ ८२ ॥

विश्वादिकत्रयं यस्मिन्परमात्मनि सत्यवत् ।
स एव परमात्माहं विश्वादिकविलक्षणः ॥ ८३ ॥

विराडादित्रयं भाति यस्मिन्साक्षिणि सत्यवत् ।
स एव सच्चिदानन्दलक्षणोऽहं स्वयंप्रभः ॥ ८४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**अद्वैतानुभूतिः संपूर्णा ॥**

॥ श्रीः ॥

# ॥ ब्रह्मानुचिन्तनम् ॥

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥ १ ॥

अहमेव परं ब्रह्म निश्चितं चित्त चिन्त्यताम् ।
चिद्रूपत्वादसङ्गत्वादबाध्यत्वात्प्रयत्नतः ॥ २ ॥

अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥ ३ ॥

सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम् ।
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥ ४ ॥

अहं ब्रह्मास्मि यो वेद स सर्वं भवति त्विदम् ।
नाभूत्या ईशते देवास्तेषामात्मा भवेद्धि सः ॥ ५ ॥

अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम् ।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥ ६ ॥

अहमात्मा न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥ ७ ॥

आत्मानं सततं ब्रह्म संभाव्य विहरन्ति ये ।
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥ ८ ॥

आत्मानं सततं ब्रह्म संभाव्य विहरेत्सुखम् ।
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥ ९ ॥

तन्महापातकं हन्ति तमः सूर्योदयो यथा ।
अज्ञानाद्ब्रह्मणो जातमाकाशं बुद्बुदोपमम् ॥ १० ॥

आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ।
अद्भ्यश्च पृथिवी जाता ततो व्रीहियवादिकम् ॥ ११ ॥

पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ।
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽस्म्यहं हरिः ॥ १२ ॥

अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ।
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥ १३ ॥

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ॥ १४ ॥

नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं पञ्चकोशातिगोऽस्म्यहम् ॥ १५ ॥

अकर्ताहमभोक्ताहमसङ्गः परमेश्वरः ।
सदा मत्संनिधानेन चेष्टते सर्वमिन्द्रियम् ॥ १६ ॥

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥ १७ ॥

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाभ्यसेत् ॥ १८ ॥

यदभ्यासेन तद्भावो भवेद्भ्रमरकीटवत् ।
अत्रापहाय संदेहमभ्यसेत्कृतनिश्चयः ॥ १९ ॥

ध्यानयोगेन मासैकाद्ब्रह्महत्त्यां व्यपोहति ।
संवत्सरं सदाभ्यासात्सिद्ध्यष्टकमवाप्नुयात् ॥ २० ॥

यावज्जीवं सदाभ्यासाज्जीवन्मुक्तो भवेद्यतिः ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥ २१ ॥

न मनोऽहं न बुद्धिश्च नैव चित्तमहंकृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथानिलः ॥ २२ ॥

न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
नाहं गन्धो न रूपं च न मायाहं न संसृतिः ॥ २३ ॥

सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ २४ ॥

मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् ।
सर्वज्ञोऽहमनन्तोऽहं सर्वेशः सर्वशक्तिमान् ॥ २५ ॥

आनन्दः सत्यबोधोऽहमिति ब्रह्मानुचिन्तनम् ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ॥ २६ ॥

अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ।
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ॥ २७ ॥

नाहं देहो न मे देहः केवलोऽहं सनातनः ।
एकमेवाद्वितीयं वै ब्रह्मणो नेह किंचन ॥ २८ ॥

हृदयकमलमध्ये दीपवद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।
हरिगुरुशिवयोगं सर्वभूतस्थमेकं
सकृदपि मनसा वै चिन्तयेद्यः स मुक्तः ॥ २९ ॥

———*———

॥ श्रीः ॥

# प्रश्नोत्तर-
# रत्नमालिका ॥

———※———

कः खलु नालंक्रियते
    दृष्टादृष्टार्थसाधनपटीयान् ।
अमुया कण्ठस्थितया
    प्रश्नोत्तररत्नमालिकया ॥ १ ॥

भगवन्किमुपादेयं
    गुरुवचनं हेयमपि च किमकार्यम् ।
को गुरुरधिगततत्त्वः
    शिष्यहितायोद्यतः सततम् ॥ २ ॥

त्वरितं किं कर्तव्यं
विदुषां संसारसंततिच्छेदः ।
किं मोक्षतरोर्बीजं
सम्यक्ज्ञानं क्रियासिद्धम् ॥ ३ ॥

कः पथ्यतरो धर्मः
कः शुचिरिह यस्य मानसं शुद्धम् ।
कः पण्डितो विवेकी
किं विषमवधीरणा गुरुषु ॥ ४ ॥

किं संसारे सारं
बहुशोऽपि विचिन्त्यमानमिदमेव ।
किं मनुजेष्विष्टतमं
स्वपरहितायोद्यतं जन्म ॥ ५ ॥

मदिरेव मोहजनकः
कः स्नेहः के च दस्यवो विषयाः ।
का भववल्ली तृष्णा
को वैरी यस्त्वनुद्योगः ॥ ६ ॥

कस्माद्भयमिह मरणा-
दन्धादिह को विशिष्यते रागी ।
कः शूरो यो ललना-
लोचनबाणैर्न च व्यथितः ॥ ७ ॥

पातुं कर्णाञ्जलिभिः
किममृतमिह युज्यते सदुपदेशः ।
किं गुरुताया मूलं
यदेतदप्रार्थनं नाम ॥ ८ ॥

किं गहनं स्त्रीचरितं
कश्चतुरो यो न खण्डितस्तेन ।
किं दुःखमसंतोषः
किं लाघवमधमतो याच्ञा ॥ ९ ॥

किं जीवितमनवद्यं
किं जाड्यं पाठतोऽप्यनभ्यासः ।
को जागर्ति विवेकी
का निद्रा मूढता जन्तोः ॥ १० ॥

नलिनीदलगतजलव-
त्तरलं किं यौवनं धनं चायुः ।
कथय पुनः के शशिनः
किरणसमाः सज्जना एव ॥ ११ ॥

को नरकः परवशता
किं सौख्यं सर्वसङ्गविरतिर्या ।
किं सत्यं भूतहितं
प्रियं च किं प्राणिनामसवः ॥ १२ ॥

कोऽनर्थफलो मानः
का सुखदा साधुजनमैत्री ।
सर्वव्यसनविनाशे
को दक्षः सर्वथा त्यागी ॥ १३ ॥

किं मरणं मूर्खत्वं
किं चानर्घं यदवसरे दत्तम् ।
आमरणात्किं शल्यं
प्रच्छन्नं यत्कृतं पापम् ॥ १४ ॥

कुत्र विधेयो यत्नो
  विद्याभ्यासे सदौषधे दाने ।
अवधीरणा क्व कार्या
  खलपरयोषित्परधनेषु ॥ १५ ॥

काहर्निशमनुचिन्त्या
  संसारासारता न तु प्रमदा ।
का प्रेयसी विधेया
  करुणा दीनेषु सज्जने मैत्री ॥ १६ ॥

कण्ठगतैरप्यसुभिः
  कस्य ह्यात्मा न शक्यते जेतुम् ।
मूर्खस्य शङ्कितस्य च
  विषादिनो वा कृतघ्नस्य ॥ १७ ॥

कः साधुः सद्वृत्तः
  कमधममाचक्षते त्वसद्वृत्तम् ।
केन जितं जगदेत-
  त्सत्यतितिक्षावता पुंसा ॥ १८ ॥

कस्मै नमांसि देवाः
 कुर्वन्ति दयाप्रधानाय ।
कस्मादुद्वेगः स्या-
 त्संसारारण्यतः सुधियः ॥ १९ ॥

कस्य वशे प्राणिगणः
 सत्यप्रियभाषिणो विनीतस्य ।
क स्थातव्यं न्याय्ये
 पथि दृष्टादृष्टलाभाढ्ये ॥ २० ॥

कोऽन्धो योऽकार्यरतः
 को बधिरो यो हितानि न शृणोति ।
को मूको यः काले
 प्रियाणि वक्तुं न जानाति ॥ २१ ॥

किं दानमनाकाङ्क्षं
 किं मित्रं यो निवारयति पापात् ।
कोऽलंकारः शीलं
 किं वाचां मण्डनं सत्यम् ॥ २२ ॥

विद्युद्विलसितचपलं
  किं दुर्जनसंगतिर्युवतयश्च ।
कुलशीलनिष्प्रकम्पाः
  के कलिकालेऽपि सज्जना एव ॥ २३ ॥

चिन्तामणिरिव दुर्लभ-
  मिह किं कथयामि तच्चतुर्भद्रम् ।
किं तद्वदन्ति भूयो
  विधूततमसो विशेषेण ॥ २४ ॥

दानं प्रियवाक्सहितं
  ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं
  दुर्लभमेतच्चतुर्भद्रम् ॥ २५ ॥

किं शोच्यं कार्पण्यं
  सति विभवे किं प्रशस्तमौदार्यम् ।
कः पूज्यो विद्वद्भिः
  स्वभावतः सर्वदा विनीतो यः ॥ २६ ॥

क: कुलकमलदिनेश:

सति गुणविभवेऽपि यो नम्र: ।

कस्य वशे जगदेत-

त्प्रियहितवचनस्य धर्मनिरतस्य ॥ २७ ॥

विद्वन्मनोहरा का

सत्कविता बोधवनिता च ।

कं न स्पृशति विपत्ति:

प्रवृद्धवचनानुवर्तिनं दान्तम् ॥ २८ ॥

कस्मै स्पृहयति कमला

त्वनलसचित्ताय नीतिवृत्ताय ।

त्यजति च कं सहसा द्विज-

गुरुसुरनिन्दाकरं च सालस्यम् ॥ २९ ॥

कुत्र विधेयो वास:

सज्जननिकटेऽथवा काश्याम् ।

क: परिहार्यो देश:

पिशुनयुतो लुब्धभूपश्च ॥ ३० ॥

केनाशोच्यः पुरुषः
प्रणतकलत्रेण धीरविभवेन ।
इह भुवने कः शोच्यः
सत्यपि विभवे न यो दाता ॥ ३१ ॥

किं लघुताया मूलं
प्राकृतपुरुषेषु या याच्ञा ।
रामादपि कः शूरः
स्मरशरनिहतो न यश्चलति ॥ ३२ ॥

किमहर्निशमनुचिन्त्यं
भगवच्चरणं न संसारः ।
चक्षुष्मन्तोऽप्यन्धाः
के स्युर्ये नास्तिका मनुजाः ॥ ३३ ॥

कः पङ्गुरिह प्रथितो
व्रजति च यो वार्धके तीर्थम् ।
किं तीर्थमपि च मुख्यं
चित्तमलं यन्निवर्तयति ॥ ३४ ॥

किं स्मर्तव्यं पुरुषै-
हरिनाम सदा न यावनी भाषा ।
को हि न वाच्यः सुधिया
परदोषश्चानृतं तद्वत् ॥ ३५ ॥

किं संपाद्यं मनुजै-
र्विद्या वित्तं बलं यशः पुण्यम् ।
कः सर्वगुणविनाशी
लोभः शत्रुश्च कः कामः ॥ ३६ ॥

का च सभा परिहार्या
हीना या वृद्धसचिवेन ।
इह कुत्रावहितः स्या-
न्मनुजः किल राजसेवायाम् ॥ ३७ ॥

प्राणादपि को रम्यः
कुलधर्मः साधुसङ्गश्च ।
का संरक्ष्या कीर्तिः
पतिव्रता नैजबुद्धिश्च ॥ ३८ ॥

का कल्पलता लोके
सच्छिष्यायार्पिता विद्या ।
कोऽक्षयवटवृक्षः स्या-
द्विधिवत्सत्पात्रदत्तदानं यत् ॥ ३९ ॥

किं शस्त्रं सर्वेषां
युक्तिर्माता च का धेनुः ।
किं नु बलं यद्धैर्यं
को मृत्युर्यदवधानरहितत्वम् ॥ ४० ॥

कुत्र विषं दुष्टजने
किमिहाशौचं भवेदृणं नृणाम् ।
किमभयमिह वैराग्यं
भयमपि किं वित्तमेव सर्वेषाम् ॥ ४१ ॥

का दुर्लभा नराणां
हरिभक्तिः पातकं च किं हिंसा ।
को हि भगवत्प्रियः स्या-
द्योऽन्यं नोद्वेजयेदनुद्विग्नः ॥ ४२ ॥

कस्मात्सिद्धिस्तपसो
　　बुद्धिः क्व नु भूसुरे कुतो बुद्धिः ।
वृद्धोपसेवया के
　　वृद्धा ये धर्मतत्त्वज्ञाः ॥ ४३ ॥

संभावितस्य मरणा-
　　दधिकं किं दुर्यशो भवति ।
लोके सुखी भवेत्को
　　धनवान्धनमपि च किं यतश्चेष्टम ॥ ४४ ॥

सर्वसुखानां बीजं
　　किं पुण्यं दुःखमपि कुतः पापात् ।
कस्यैश्वर्यं यः किल
　　शंकरमाराधयेद्भक्त्या ॥ ४५ ॥

को वर्धते विनीतः
　　को वा हीयेत यो दृप्तः ।
को न प्रत्येतव्यो
　　ब्रूते यश्चानृतं शश्वत् ॥ ४६ ॥

कुत्रानृतेऽप्यपापं
यच्चोक्तं धर्मरक्षार्थम् ।
को धर्मोऽभिमतो यः
शिष्टानां निजकुलीनानाम् ॥ ४७ ॥

साधुबलं किं दैवं
कः साधुः सर्वदा तुष्टः ।
दैवं किं यत्सुकृतं
कः सुकृती श्लाघ्यते च यः सद्भिः ॥ ४८ ॥

गृहमेधिनश्च मित्रं
किं भार्या को गृही च यो यजते ।
को यज्ञो यः श्रुत्या
विहितः श्रेयस्करो नृणाम् ॥ ४९ ॥

कस्य क्रिया हि सफला
यः पुनराचारवाञ्शिष्टः ।
कः शिष्टो यो वेद-
प्रमाणवान्को हतः क्रियाभ्रष्टः ॥ ५० ॥

को धन्यः संन्यासी
 को मान्यः पण्डितः साधुः ।
कः सेव्यो यो दाता
 को दाता योऽर्थितृप्तिमातनुते ॥

किं भाग्यं देहवता-
 मारोग्यं कः फली कृषिकृत् ।
कस्य न पापं जपतः
 कः पूर्णो यः प्रजावान्स्यात् ॥ ५

किं दुष्करं नराणां
 यन्मनसो निग्रहः सततम् ।
को ब्रह्मचर्यवान्स्या-
 द्यश्चास्खलितोर्ध्वरेतस्कः ॥ ५३

का च परदेवतोक्ता
 चिच्छक्तिः को जगत्भर्ता ।
सूर्यः सर्वेषां को
 जीवनहेतुः स पर्जन्यः ॥ ५४ ॥

क: शूरो यो भीत-
    त्राता त्राता च क: स गुरु: ।
को हि जगद्गुरुरुक्त:
    शंभुर्ज्ञानं कुत: शिवादेव ॥ ५५ ॥

मुक्तिं लभेत कस्मा-
    न्मुकुन्दभक्तेर्मुकुन्द: क: ।
यस्तारयेदविद्यां
    का चाविद्या यदात्मनोऽस्फूर्ति: ॥ ५६ ॥

कस्य न शोको य: स्या-
    दक्रोध: किं सुखं तुष्टि: ।
को राजा रञ्जनकृ-
    त्कश्च श्वा नीचसेवको य: स्यात् ॥ ५७ ॥

को मायी परमेश:
    क इन्द्रजालायते प्रपञ्चोऽयम् ।
क: स्वप्ननिभो जाग्र-
    द्व्यवहार: सत्यमपि च किं ब्रह्म ॥ ५८ ॥

किं मिथ्या यद्विद्या-
नाश्यं तुच्छं तु शशविषाणादि ।
का चानिर्वचनीया
माया किं कल्पितं द्वैतम् ॥ ५९ ॥

किं पारमार्थिकं स्या-
दद्वैतं चाज्ञता कुतोऽनादिः ।
वपुषश्च पोषकं किं
प्रारब्धं चान्नदायि किं चायुः ॥ ६० ॥

को ब्राह्मणैरुपास्यो
गायत्र्यर्काग्निगोचरः शंभुः ।
गायत्र्यामादित्ये
चाग्नौ शंभौ च किं नु तत्त्वम् ॥ ६१ ॥

प्रत्यक्षदेवता का
माता पूज्यो गुरुश्च कस्तातः ।
कः सर्वदेवतात्मा
विद्याकर्मान्वितो विप्रः ॥ ६२ ॥

कश्च कुलक्षयहेतुः
संतापः सज्जनेषु योऽकारि ।
केषाममोघवचनं
ये च पुनः सत्यमौनशमशीलाः ॥ ६३ ॥

किं जन्म विषयसङ्गः
किमुत्तरं जन्म पुत्रः स्यात् ।
कोऽपरिहार्यो मृत्युः
कुत्र पदं विन्यसेच्च दृक्पूते ॥ ६४ ॥

पात्रं किमन्नदाने
क्षुधितं कोऽर्च्यो हि भगवदवतारः ।
कश्च भगवान्महेशः
शंकरनारायणात्मैकः ॥ ६५ ॥

फलमपि भगवद्भक्तेः
किं तल्लोकस्वरूपसाक्षात्त्वम् ।
मोक्षश्च को ह्यविद्या-
स्तमयः कः सर्ववेदभूरथ चोम् ॥ ६६ ॥

इत्येषा कण्ठस्था
प्रश्नोत्तररत्नमालिका येषाम् ।
ते मुक्ताभरणा इव
विमलाश्चाभान्ति सत्समाजेषु ॥ ६७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**प्रश्नोत्तररत्नमालिका संपूर्णा ॥**

॥ श्रीः ॥

# ॥ सदाचारानुसंधानम् ॥

सच्चिदानन्दकन्दाय जगदङ्कुरहेतवे ।
सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥ १ ॥

सर्ववेदान्तसिद्धान्तैर्ग्रथितं निर्मलं शिवम् ।
सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥ २ ॥

प्रात:स्मरामि देवस्य सवितुर्भर्ग आत्मन: ।
वरेण्यं तद्धियो यो नश्चिदानन्दे प्रचोदयात् ॥ ३ ॥

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
यदेकं केवलं ज्ञानं तदेवास्मि परं बृहत् ॥ ४ ॥

ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ज्ञाने च शाम्यति ।
ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥ ५ ॥

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
असङ्गोऽहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥ ६ ॥

मन्मनो मीनवन्नित्यं क्रीडत्यानन्दवारिधौ ।
सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥ ७ ॥

अथाघमर्षणं कुर्यात्प्राणापाननिरोधतः ।
मनः पूर्णे समाधाय मग्नकुम्भो यथार्णवे ॥ ८ ॥

लयविक्षेपयोः संधौ मनस्तत्र निरामिषम् ।
स संधिः साधितो येन स मुक्तो नात्र संशयः ॥ ९ ॥

सर्वत्र प्राणिनां देहे जपो भवति सर्वदा ।
हंसः सोऽहमिति ज्ञात्वा सर्वबन्धैर्विमुच्यते ॥ १० ॥

तर्पणं स्वसुखेनैव स्वेन्द्रियाणां प्रतर्पणम् ।
मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥ ११ ॥

आत्मनि स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत् ।
अग्निहोत्री स विज्ञेयश्चेतरा नामधारकाः ॥ १२ ॥

देहो देवालयः प्रोक्तो देही देवो निरञ्जनः ।
अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥ १३ ॥

मौनं स्वाध्ययनं ध्यानं ध्येयं ब्रह्मानुचिन्तनम् ।
ज्ञानेनेति तयोः सम्यङ्निषेधात्तत्त्वदर्शनम् ॥ १४ ॥

अतीतानागतं किंचिन्न स्मरामि न चिन्तये ।
रागद्वेषं विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥ १५ ॥

देहाभ्यासो हि संन्यासो नैव काषायवाससा ।
नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥ १६ ॥

अभयं सर्वभूतानां दानमाहुर्मनीषिणः ।
निजानन्दे स्पृहा नान्ये वैराग्यस्यावधिर्मता ॥ १७ ॥

वेदान्तश्रवणं कुर्यान्मननं चोपपत्तिभिः ।
योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ १८ ॥

शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः ।
प्रसुप्तः पुरुषो यद्वच्छब्देनैवावबुद्ध्यते ॥ १९ ॥

आत्मानात्मविवेकेन ज्ञानं भवति निश्चलम् ।
गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥ २० ॥

न त्वं देहो नेन्द्रियाणि न प्राणो न मनो न धीः ।
विकारित्वाद्विनाशित्वाद्दृश्यत्वाच्च घटो यथा ॥ २१ ॥

विशुद्धं केवलं ज्ञानं निर्विशेषं निरञ्जनम् ।
यदेकं परमानन्दं तत्त्वमस्यद्वयं परम् ॥ २२ ॥

शब्दस्याद्यन्तयोः सिद्धं मनसोऽपि तथैव च ।
मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥ २३ ॥

स्थूलवैराजयोरैक्यं सूक्ष्महैरण्यगर्भयोः ।
अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥ २४ ॥

चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके ।
भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥ २५ ॥

तार्किकाणां तु जीवेशौ वाच्यावेतौ विदुर्बुधाः ।
लक्ष्यौ च सांख्ययोगाभ्यां वेदान्तैरैक्यता तयोः ॥

कार्यकारणवाच्यांशौ जीवेशौ यौ जहच्च तौ ।
अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥ २७ ॥

कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः ।
सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥

अन्ये पाषण्डिनः सर्वे ज्ञानवार्तासुदुर्लभाः ।
एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥ २९ ॥

अहं ममेत्ययं बन्धो ममाहं नेति मुक्तता ।
बन्धमोक्षौ गुणैर्भाति गुणाः प्रकृतिसंभवाः ॥ ३० ॥

ज्ञानमेकं सदा भाति सर्वावस्थासु निर्मलम् ।
मन्दभाग्या न जानन्ति स्वरूपं केवलं बृहत् ॥ ३१ ॥

संकल्पसाक्षि यज्ज्ञानं सर्वलोकैकजीवनम् ।
तदेवास्मीति यो वेद स मुक्तो नात्र संशयः ॥ ३२ ॥

प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
यस्य भासावभासन्ते मानं ज्ञानाय तस्य किम् ॥ ३३ ॥

अर्थाकारा भवेद्वृत्तिः फलेनार्थः प्रकाशते ।
अर्थज्ञानं विजानाति स एवार्थः प्रकाशते ॥ ३४ ॥

वृत्तिव्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् ।
स्वप्रकाशस्वरूपत्वात्सिद्धत्वाच्च चिदात्मनः ॥ ३५ ॥

चित्तं चैतन्यमात्रेण संयोगाच्चेतना भवेत् ।
अर्थादर्थान्तरे वृत्तिर्गन्तुं चलति चान्तरे ॥ ३६ ॥

निराधारा निर्विकारा या दशा सोन्मनी स्मृता ।
चित्तं चिदिति जानीयात्तकाररहितं यदा ॥ ३७ ॥

तकारो विषयाध्यासो जपारागो यथा मणौ ।
ज्ञेयवस्तु परित्यागाज्ज्ञानं तिष्ठति केवलम् ॥ ३८ ॥

त्रिपुटी क्षीणतामेति ब्रह्मनिर्वाणमृच्छति ।
मनोमात्रमिदं सर्वं तन्मनो ज्ञानमात्रकम् ॥ ३९ ॥

अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम् ।
अज्ञानं चान्यथाज्ञानं मायामेतां वदन्ति ते ॥ ४० ॥

ईश्वरं मायिनं विद्यान्मायातीतं निरञ्जनम् ।
सदानन्दे चिदाकाशे मायामेघस्तटिन्मनः ॥ ४१ ॥

अहंता गर्जनं तत्र धारासारा हि वृत्तयः ।
महामोहान्धकारेऽस्मिन्देवो वर्षति लीलया ॥ ४२ ॥

तस्या वृष्टेर्विरामाय प्रबोधैकसमीरणः ।
ज्ञानं दृग्दृश्ययोर्भावं विज्ञानं दृश्यशून्यता ॥ ४३ ॥

एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते ॥ ४४ ॥

विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ।
परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम् ॥ ४५ ॥

आत्मनो ब्रह्मणः सम्यगुपाधिद्वयवर्जितम् ।
त्वमर्थविषयं ज्ञानं विज्ञानं तत्पदाश्रयम् ॥ ४६ ॥

पदयोरैक्यबोधस्तु ज्ञानविज्ञानसंज्ञितम् ।
आत्मानात्मविवेकस्य ज्ञानमाहुर्मनीषिणः ॥ ४७ ॥

अज्ञानं चान्यथा लोके विज्ञानं तन्मयं जगत् ।
अन्वयव्यतिरेकाभ्यां सर्वत्रैकं प्रपश्यति ॥ ४८ ॥

यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम् ।
अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम् ॥ ४९ ॥

ज्ञानविज्ञाननिष्ठोऽयं तत्सद्ब्रह्मणि चार्पणम् ।
भोक्ता सत्त्वगुणः शुद्धो भोगानां साधनं रजः ॥ ५० ॥

भोग्यं तमोगुणः प्राहुरात्मा चैषां प्रकाशकः ।
ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यारतः सदा ॥ ५१ ॥

सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते ।
गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते ॥ ५२ ॥

गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बुद्धिमान् ।
किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः ॥ ५३ ॥

हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ।
स गृही यो गृहातीतः शरीरं गृहमुच्यते ॥ ५४ ॥

सदाचारमिमं नित्यं योऽनुसंदधते बुधः ।
संसारसागराच्छीघ्रं स मुक्तो नात्र संशयः ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
सदाचारानुसंधानं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ योगतारावली ॥

वन्दे गुरूणां चरणारविन्दे

संदर्शितस्वात्मसुखावबोधे ।

जनस्य ये जाङ्गलिकायमाने

संसारहालाहलमोहशान्त्यै ॥ १ ॥

सदाशिवोक्तानि सपादलक्ष-

लयावधानानि वसन्ति लोके ।

नादानुसंधानसमाधिमेकं

मन्यामहे मान्यतमं लयानाम् ॥ २ ॥

सरेचपूरैरनिलस्य कुम्भैः

सर्वासु नाडीषु विशोधितासु ।

अनाहताख्यो बहुभिः प्रकारै-

रन्तः प्रवर्तेत सदा निनादः ॥ ३ ॥

नादानुसंधान नमोऽस्तु तुभ्यं
त्वां साधनं तत्त्वपदस्य जाने ।
भवत्प्रसादात्पवनेन साकं
विलीयते विष्णुपदे मनो मे ॥ ४ ॥

जालन्धरोड्याणनमूलबन्धा-
ञ्जल्पन्ति कण्ठोदरपायुमूलान् ।
बन्धत्रयेऽस्मिन्परिचीयमाने
बन्धः कुतो दारुणकालपाशात् ॥ ५ ॥

ओड्याणजालन्धरमूलबन्धै-
रुन्निद्रितायामुरगाङ्गनायाम् ।
प्रत्यङ्मुखत्वात्प्रविशन्सुषुम्नां
गमागमौ मुञ्चति गन्धवाहः ॥ ६ ॥

उत्थापिताधारहुताशनोल्कै-
राकुञ्चनैः शश्वदपानवायोः ।
संतापिताच्चन्द्रमसः पतन्तीं
पीयूषधारां पिबतीह धन्यः ॥ ७ ॥

बन्धत्रयाभ्यासविपाकजातां
विवर्जितां रेचकपूरकाभ्याम् ।
विशोषयन्तीं विषयप्रवाहं
विद्यां भजे केवलकुम्भरूपाम् ॥ ८ ॥

अनाहते चेतासि सावधानै-
रभ्यासशूरैरनुभूयमाना ।
संस्तम्भितश्वासमनःप्रचारा
सा जृम्भते केवलकुम्भकश्रीः ॥ ९ ॥

सहस्रशः सन्तु हठेषु कुम्भाः
संभाव्यते केवलकुम्भ एव ।
कुम्भोत्तमे यत्र तु रेचपूरौ
प्राणस्य न प्राकृतवैकृताख्यौ ॥ १० ॥

त्रिकूटनाम्नि स्तिमितेऽन्तरङ्गे
खे स्तम्भिते केवलकुम्भकेन ।
प्राणानिलो भानुशशाङ्कनाड्यौ
विहाय सद्यो विलयं प्रयाति ॥ ११ ॥

प्रत्याहृतः केवलकुम्भकेन
प्रबुद्धकुण्डल्युपभुक्तशेषः ।
प्राणः प्रतीचीनपथेन मन्दं
विलीयते विष्णुपदान्तराले ॥ १२ ॥

निरङ्कुशानां श्वसनोद्गमानां
निरोधनैः केवलकुम्भकाख्यैः ।
उदेति सर्वेन्द्रियवृत्तिशून्यो
मरुल्लयः कोऽपि महामतीनाम् ॥ १३ ॥

न दृष्टिलक्ष्याणि न चित्तबन्धो
न देशकालौ न च वायुरोधः ।
न धारणाध्यानपरिश्रमो वा
समेधमाने सति राजयोगे ॥ १४ ॥

अशेषदृश्योज्झितदृङ्मयाना-
मवस्थितानामिह राजयोगे ।
न जागरो नापि सुषुप्तिभावो
न जीवितं नो मरणं विचित्रम् ॥ १५ ॥

अहंममत्वाद्यपहाय सर्वं
श्रीराजयोगे स्थिरमानसानाम् ।
न द्रष्टृता नास्ति च दृश्यभावः
सा जृम्भते केवलसंविदेव ॥ १६ ॥

नेत्रे ययोन्मेषनिमेषशून्ये
वायुर्यया वर्जितरेचपूरः ।
मनश्च संकल्पविकल्पशून्यं
मनोन्मनी सा मयि संनिधत्ताम् ॥ १७ ॥

चित्तेन्द्रियाणां चिरनिग्रहेण
श्वासप्रचारे शमिते यमीन्द्राः ।
निवातदीपा इव निश्चलाङ्गाः
मनोन्मनीमग्नधियो भवन्ति ॥ १८ ॥

उन्मन्यवस्थाधिगमाय विद्वन्
उपायमेकं तव निर्दिशामः ।
पश्यन्नुदासीनतया प्रपञ्चं
संकल्पमुन्मूलय सावधानः ॥ १९ ॥

प्रसह्य संकल्पपरंपराणां
संभेदने संततसावधानम् ।
आलम्बनाशादपचीयमानं
शनैः शनैः शान्तिमुपैति चेतः ॥ २० ॥

निश्वासलोपैर्निभृतैः शरीरै-
र्नेत्राम्बुजैरर्धनिमीलितैश्च ।
आविर्भवन्तीममनस्कमुद्रा-
मालोकयामो मुनिपुंगवानाम् ॥ २१ ॥

अमी यमीन्द्राः सहजामनस्का-
दहंममत्वे शिथिलायमाने ।
मनोतिगं मारुतवृत्तिशून्यं
गच्छन्ति भावं गगनावशेषम् ॥ २२ ॥

निवर्तयन्तीं निखिलेन्द्रियाणि
प्रवर्तयन्तीं परमात्मयोगम् ।
संविन्मयीं तां सहजामनस्कां
कदा गमिष्यामि गतान्यभावः ॥ २३ ॥

प्रत्यग्विमर्शातिशयेन पुंसां
प्राचीनगन्धेषु पलायितेषु ।
प्रादुर्भवेत्काचिदजाड्यनिद्रा
प्रपञ्चचिन्तां परिवर्जयन्ती ॥ २४ ॥

विच्छिन्नसंकल्पविकल्पमूले
निःशेषनिर्मूलितकर्मजाले ।
निरन्तराभ्यासनितान्तभद्रा
सा जृम्भते योगिनि योगनिद्रा ॥ २५ ॥

विश्रान्तिमासाद्य तुरीयतल्पे
विश्वाद्यवस्थात्रितयोपरिस्थे ।
संविन्मयीं कामपि सर्वकालं
निद्रां सखे निर्विश निर्विकल्पाम् ॥ २६ ॥

प्रकाशमाने परमात्मभानौ
नश्यत्यविद्यातिमिरे समस्ते ।
अहो बुधा निर्मलदृष्टयोऽपि
किंचिन्न पश्यन्ति जगत्समग्रम् ॥ २७ ॥

सिद्धिं तथाविधमनोविलयां समाधौ
श्रीशैलशृङ्गकुहरेषु कदोपलप्स्ये ।
गात्रं यदा मम लताः परिवेष्टयन्ति
कर्णे यदा विरचयन्ति खगाश्च नीडान् ॥ २८ ॥

विचरतु मतिरेषा निर्विकल्पे समाधौ
कुचकलशयुगे वा कृष्णसारेक्षणानाम् ।
चरतु जडमते वा सज्जनानां मते वा
मतिकृतगुणदोषा मां विभुं न स्पृशन्ति ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
योगतारावली संपूर्णा ॥

॥ श्रीः ॥

# ॥ उपदेशपञ्चकम् ॥

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।
सद्विद्वानुपसृप्यतां प्रतिदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम् ।
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥३॥

क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यता-
मौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
उपदेशपञ्चकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ धन्याष्टकम् ॥

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां
तज्ज्ञेयं यदुपनिषत्सुनिश्चितार्थम् ।
ते धन्या भुवि परमार्थनिश्चितेहाः
शेषास्तु भ्रमनिलये परिभ्रमन्तः ॥ १ ॥

आदौ विजित्य विषयान्मदमोहराग-
द्वेषादिशत्रुगणमाहृतयोगराज्याः ।
ज्ञात्वा मतं समनुभूय परात्मविद्या-
कान्तासुखं वनगृहे विचरन्ति धन्याः ॥ २ ॥

त्यक्त्वा गृहे रतिमधोगतिहेतुभूता-
मात्मेच्छयौपनिषदर्थरसं पिबन्तः ।
वीतस्पृहा विषयभोगपदे विरक्ता
धन्याश्चरन्ति विजनेषु विरक्तसङ्गाः ॥ ३ ॥

त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे
मानावमानसदृशाः समदर्शिनश्च ।
कर्तारमन्यमवगम्य तदर्पितानि
कुर्वन्ति कर्मपरिपाकफलानि धन्याः ॥ ४ ॥

त्यक्त्वैषणात्रयमवेक्षितमोक्षमार्गा
भैक्षामृतेन परिकल्पितदेहयात्राः ।
ज्योतिः परात्परतरं परमात्मसंज्ञं
धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥ ५ ॥

नासन्न सन्न सदसन्न महन्न चाणु
न स्त्री पुमान्न च नपुंसकमेकबीजम् ।
यैर्ब्रह्म तत्समनुपासितमेकचित्तै-
र्धन्या विरेजुरितरे भवपाशबद्धाः ॥ ६ ॥

अज्ञानपङ्कपरिमग्नमपेतसारं
दुःखालयं मरणजन्मजरावसक्तम् ।
संसारबन्धनमनित्यमवेक्ष्य धन्या
ज्ञानासिना तदवशीर्य विनिश्चयन्ति ॥ ७ ॥

शान्तैरनन्यमतिभिर्मधुरस्वभावै-

रेकत्वनिश्चितमनोभिरपेतमोहैः ।

साकं वनेषु विदितात्मपदस्वरूपं

तद्वस्तु सम्यगनिशं विमृशन्ति धन्याः ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

धन्याष्टकं संपूर्णम् ॥



॥ श्रीः ॥

# ॥ जीवन्मुक्तानन्दलहरी ॥

पुरे पौरान्पश्यन्नरयुवतिनामाकृतिमयां-

न्सुवेषान्स्वर्णालंकरणकलितांश्चित्रसदृशान् ।

स्वयं साक्षाद्दृष्टेत्यपि च कलयंस्तैः सह रम-

न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १ ॥

वने वृक्षान्पश्यन्दलफलभरान्नम्रसुशिखा-

न्घनच्छायाच्छन्नान्बहुलकलकूजद्द्विजगणान् ।

भजन्घस्रोरात्रादवनितलकल्पैकशयनो

मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ २ ॥

कदाचित्प्रासादे क्वचिदपि च सौधेषु धनिनां

कदा काले शैले क्वचिदपि च कूलेषु सरिताम् ।

कुटीरे दान्तानां मुनिजनवराणामपि वस-

न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ३ ॥

क्वचिद्बालैः सार्धं करतलगतालैः सहसितैः
कचित्तारुण्यालंकृतनरवधूभिः सह रमन् ।
क्वचिद्वृद्धैश्चिन्ताकुलितहृदयैश्चापि विलप-
न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ४ ॥

कदाचिद्विद्वद्भिर्विविदिषुभिरत्यन्तनिरतैः
कदाचित्काव्यालंकृतिरसरसालैः कविवरैः ।
कदाचित्सत्तर्कैरनुमितिपरैस्तार्किकवरै-
र्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५ ॥

कदा ध्यानाभ्यासैः क्वचिदपि सपर्यां विकसितैः
सुगन्धैः सत्पुष्पैः क्वचिदपि दलैरेव विमलः ।
प्रकुर्वन्देवस्य प्रमुदितमनाः संनतिपरो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ६ ॥

शिवायाः शंभोर्वा क्वचिदपि च विष्णोरपि कदा
गणाध्यक्षस्यापि प्रकटितवरस्यापि च कदा ।
पठन्वै नामालिं नयनरचितानन्दसरितो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ७ ॥

कदा गङ्गाम्भोभिः क्वचिदपि च कूपोत्थसलिलैः
क्वचित्कासारोत्थैः क्वचिदपि सदुष्णैश्च शिशिरैः ।
भजन्स्नानं भूत्या क्वचिदपि च कर्पूरनिभया
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ८ ॥

कदाचिज्जागर्त्यां विषयकरणैः सव्यवहर-
न्कदाचित्स्वप्नस्थानपि च विषयानेव च भजन् ।
कदाचित्सौषुप्तं सुखमनुभवन्नेव सततं
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ९ ॥

कदाप्याशावासाः क्वचिदपि च दिव्याम्बरधरः
क्वचित्पञ्चास्योत्थां त्वचमपि दधानः कटितटे ।
मनस्वी निःसङ्गः सुजनहृदयानन्दजनको
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १० ॥

कदाचित्सत्त्वस्थः क्वचिदपि रजोवृत्तिसुगत-
स्तमोवृत्तिः क्वापि त्रितयरहितः क्वापि च पुनः ।
कदाचित्संसारी श्रुतिपथविहारी क्वचिदहो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ११ ॥

कदाचिन्मौनस्थः क्वचिदपि च वाग्वादनिरतः
कदाचित्सानन्दं हसितरभसस्त्यक्तवचनः ।
कदाचिल्लोकानां व्यवहृतिसमालोकनपरो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १२ ॥

कदाचिच्छक्तीनां विकचमुखपद्मेषु कमलं
क्षिपंस्तासां क्वापि स्वयमपि च गृह्णन्स्वमुखतः ।
तदद्वैतं रूपं निजपरविहीनं प्रकटय-
न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १३ ॥

क्वचिच्छैवैः सार्धं क्वचिदपि च शाक्तैः सह वस-
न्कदा विष्णोर्भक्तैः क्वचिदपि च सौरैः सह वसन् ।
कदा गाणापत्यैर्गतसकलभेदोऽद्वयतया
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १४ ॥

निराकारं क्वापि क्वचिदपि च साकारममलं
निजं शैवं रूपं विविधगुणभेदेन बहुधा ।
कदाश्चर्यं पश्यन्किमिदमिति हृष्यन्नपि कदा
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १५ ॥

कदाद्वैतं पश्यन्नखिलमपि सत्यं शिवमयं
महावाक्यार्थानामवगतिसमभ्यासवशतः ।
गतद्वैताभासः शिव शिव शिवेत्येव विलप-
न्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १६ ॥

इमां मुक्तावस्थां परमशिवसंस्थां गुरुकृपा-
सुधापाङ्गव्याप्यां सहजसुखवाप्यामनुदिनम् ।
मुहुर्मज्जन्मज्जन्भजति सुकृतैश्चेन्नरवरः
सदा त्यागी योगी कविरिति वदन्तीह कवयः ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव-
त्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
जीवन्मुक्तानन्दलहरी संपूर्णा ॥

॥ श्रीः ॥

# ॥ अनात्मश्रीविगर्हणप्रकरणम् ॥

---

लब्धा विद्या राजमान्या ततः किं
प्राप्ता संपत्प्राभवाढ्या ततः किम् ।
भुक्ता नारी सुन्दराङ्गी ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १ ॥

केयूराद्यैर्भूषितो वा ततः किं
कौशेयाद्यैरावृतो वा ततः किम् ।
तृप्तो मृष्टान्नादिना वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ २ ॥

दृष्टा नाना चारुदेशास्ततः किं
पुष्टाश्चेष्टा बन्धुवर्गास्ततः किम् ।
नष्टं दारिद्र्यादिदुःखं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ३ ॥

स्नातस्तीर्थे जह्नुजादौ ततः किं
दानं दत्तं द्व्यष्टसंख्यं ततः किम् ।
जप्ता मन्त्राः कोटिशो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ४ ॥

गोत्रं सम्यग्भूषितं वा ततः किं
गात्रं भस्माच्छादितं वा ततः किम् ।
रुद्राक्षादिः सद्धृतो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ५ ॥

अन्नैर्विप्रास्तर्पिता वा ततः किं
यज्ञैर्देवास्तोषिता वा ततः किम् ।
कीर्त्या व्याप्ताः सर्वलोकास्ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ६ ॥

कायः क्लिष्टश्चोपवासैस्ततः किं
लब्धाः पुत्राः स्वीयपत्न्यास्ततः किम् ।
प्राणायामः साधितो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ७ ॥

युद्धे शत्रुर्निर्जितो वा ततः किं
भूयो मित्रैः पूरितो वा ततः किम् ।
योगैः प्राप्ताः सिद्धयो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ८ ॥

अब्धिः पद्भ्यां लङ्घितो वा ततः किं
वायुः कुम्भे स्थापितो वा ततः किम् ।
मेरुः पाणावुद्धृतो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ९ ॥

क्ष्वेलः पीतो दुग्धवद्वा ततः किं
वह्निर्जग्धो लाजवद्वा ततः किम् ।
प्राप्तश्चारः पक्षिवत्खे ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १० ॥

बद्धाः सम्यक्पावकाद्यास्ततः किं
साक्षाद्विद्धा लोहवर्यास्ततः किम् ।
लब्धो निक्षेपोऽञ्जनाद्यैस्ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ११ ॥

भूपेन्द्रत्वं प्राप्तमुर्व्यां ततः किं
देवेन्द्रत्वं संभृतं वा ततः किम् ।
मुण्डीन्द्रत्वं चोपलब्धं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १२ ॥

मन्त्रैः सर्वैः स्तम्भितो वा ततः किं
बाणैर्लक्ष्यो भेदितो वा ततः किम् ।
कालज्ञानं चापि लब्धं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १३ ॥

कामातङ्कः खण्डितो वा ततः किं
कोपावेशः कुण्ठितो वा ततः किम् ।
लोभाश्लेषो वर्जितो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १४ ॥

मोहध्वान्तः पेषितो वा ततः किं
जातो भूमौ निर्मदो वा ततः किम् ।
मात्सर्यार्तिर्मीलिता वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १५ ॥

धातुर्लोकः साधितो वा ततः किं
    विष्णोर्लोको वीक्षितो वा ततः किम् ।
शंभोर्लोकः शासितो वा ततः किं
    येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १६ ॥

यस्येदं हृदये सम्यगनात्मश्रीविगर्हणम् ।
सदोदेति स एवात्मसाक्षात्कारस्य भाजनम् ॥ १७ ॥

अन्ये तु मायिकजगद्भ्रान्तिव्यामोहमोहिताः ।
न तेषां जायते क्वापि स्वात्मसाक्षात्कृतिर्भुवि ॥ १८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
अनात्मश्रीविगर्हणप्रकरणं
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ स्वरूपानुसंधानाष्टकम् ॥

तपोयज्ञदानादिभिः शुद्धबुद्धि-
र्विरक्तो नृपादेः पदे तुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥

दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं
समाराध्य मत्या विचार्य स्वरूपम् ।
यदाप्नोति तत्त्वं निदिध्यास्य विद्वा-
न्परं ब्रह्म नित्यं तदेवाहमस्मि ॥ २ ॥

यदानन्दरूपं प्रकाशस्वरूपं
निरस्तप्रपञ्चं परिच्छेदहीनम् ।
अहंब्रह्मवृत्त्यैकगम्यं तुरीयं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ३ ॥

यदज्ञानतो भाति विश्वं समस्तं
विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ४ ॥

निषेधे कृते नेति नेतीति वाक्यैः
समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ५ ॥

यदानन्दलेशैः समानन्दि विश्वं
यदाभाति सत्त्वे तदाभाति सर्वम् ।
यदालोकने रूपमन्यत्समस्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ६ ॥

अनन्तं विभुं निर्विकल्पं निरीहं
शिवं संगहीनं यदोंकारगम्यम् ।
निराकारमत्युज्ज्वलं मृत्युहीनं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ७ ॥

यदानन्दसिन्धौ निमग्नः पुमान्स्या-
दविद्याविलासः समस्तप्रपञ्चः ।
तदा नः स्फुरत्यद्भुतं यन्निमित्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ८ ॥

स्वरूपानुसंधानरूपां स्तुतिं यः
पठेदादराद्भक्तिभावो मनुष्यः ।
शृणोतीह वा नित्यमुद्युक्तचित्तो
भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
स्वरूपानुसंधानाष्टकम्
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ यतिपञ्चकम् ॥

वेदान्तवाक्येषु सदा रमन्तो
भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकवन्तः करणैकवन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥

मूलं तरोः केवलमाश्रयन्तः
पाणिद्वयं भोक्तुममन्त्रयन्तः ।
कन्थामिव श्रीमपि कुत्सयन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ २ ॥

देहादिभावं परिमार्जयन्त
आत्मानमात्मन्यवलोकयन्तः ।
नान्तं न मध्यं न बहिः स्मरन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ३ ॥

स्वानन्दभावे परितुष्टिमन्तः
संशान्तसर्वेन्द्रियदृष्टिमन्तः ।
अहर्निशं ब्रह्मणि ये रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ४ ॥

पञ्चाक्षरं पावनमुच्चरन्तः
पतिं पशूनां हृदि भावयन्तः ।
भिक्षाशना दिक्षु परिभ्रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
यतिपञ्चकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ हस्तामलकीयभाष्यम् ॥

---*---

यस्मिन्ज्ञाते भवेत्सर्वं विज्ञातं परमात्मनि ।
तं वन्दे नित्यविज्ञानमानन्दमजमव्ययम् ॥

यदज्ञानादभूद्द्वैतं ज्ञाते यस्मिन्निवर्तते ।
रज्जुसर्पवदत्यन्तं तं वन्दे पुरुषोत्तमम् ॥

यस्योपदेशदीधित्या चिदात्मा नः प्रकाशते ।
नमः सद्गुरवे तस्मै स्वाविद्याध्वान्तभानवे ॥

इह हि सर्वस्य जन्तोः सुखं मे भूयाद्दुःखं मे मा भूयात् इति स्वरसत एव सुखोपादित्सादुःखजिहासे भवतः । तत्र यः कश्चित् पुण्यातिशयशाली अवश्यंभाविदुःखाविनाभूतत्वादनित्यत्वाच्च विषयजं सुखं दुःखमेवेति ज्ञात्वा यत्नेन ससाधनात्संसारात्त्यक्तासक्तिरत्यन्तं विरज्यते । विरक्तश्च संसारहानौ यतते । संसारस्य च आत्मस्वरूपापरिज्ञानकृतत्वात् आत्मज्ञानान्निवृत्तिरिति तं प्रत्यात्मज्ञानमाचार्य उपदिशति—

निमित्तं मनश्चक्षुरादिप्रवृत्तौ
निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥

ननु सर्वत्र ग्रन्थादौ शिष्टानामिष्टदेवतास्तुतिनमस्कारपूर्विका प्रवृत्तिरुपलब्धा; अयं च विना स्तुतिनमस्कारौ प्रवर्तमानोऽशिष्टत्वात् अनादरणीयवचनः प्रसज्येतेति चेत्— न; स्तुतिनमस्कारयोस्त्रैविध्यात्; त्रिविधौ हि स्तुतिनमस्कारौ— कायिकौ वाचिकौ मानसिकौ चेति । तत्र कायिकवाचिकयोरभावेऽपि परमशिष्टत्वादाचार्यस्य ग्रन्थस्य अविघ्नेन परिसमाप्तेश्च मानसिकौ स्तुतिनमस्कारावकरोदयमाचार्य इत्यवगम्यते; यत्किंचिदेतत् । प्रकृतमनुसरामः— मनश्च चक्षुश्च मनश्चक्षुषी, ते आदिर्येषां तानि मनश्चक्षुरादीनि; आदिशब्दः प्रत्येकमभिसंबध्यते; ततश्च अयमर्थो भवति— मनआदीनां मनोऽहंकारबुद्धिचित्तानां चतुर्णामन्तःकरणानाम्, तथा चक्षुरादीनां चक्षुस्त्वक्श्रोत्रजिह्वाघ्राणानां पञ्चबुद्धीन्द्रियाणाम्, एवं वाक्पाणिपादपायूपस्थानां पञ्चकर्मेन्द्रियाणाम्, प्रवृत्तौ स्वस्वव्यापारे, निमित्तं हेतुः यः, सोऽहमात्मेति

संबन्धः । स कीदृश इत्याकाङ्क्षायामाह— नित्योपलब्धि-रिति । नित्या च असावुपलब्धिश्चेति नित्योपलब्धिः, सा स्वरूपं यस्य स तथोक्तः । रविः आदित्यः यथा येन प्रकारेण प्रकाशकत्वेन लोकानां चेष्टायां स्पन्दने निमित्तं हेतुः, तथैव अधिष्ठातृत्वेन यो निमित्तं सोऽहमात्मेत्यर्थः– इति इयं दृष्टिः आत्मज्ञानोपायत्वेन दर्शिता । परमार्थतस्तु निरस्ताः निराकृताः अखिलाः निरवशेषाः उपाधयो बुद्ध्यादिलक्षणाः यस्य स तथोक्तः । निरस्ताखिलोपाधित्वादेव अयमाकाश-कल्पः आकाशवद्विशुद्ध इत्यर्थः ॥

ननु मनश्चक्षुरादिप्रवृत्तौ किमर्थमधिष्ठाता इष्यते? स्व-यमेव कस्मान्न प्रवर्तन्ते? कथं च नित्योपलब्धिस्वरूपत्वम् अधिष्ठातुरिष्यते? इत्यत आह—

यमग्न्युष्णवन्नित्यबोधस्वरूपं
मनश्चक्षुरादीन्यबोधात्मकानि ।
प्रवर्तन्त आश्रित्य निष्कम्पमेकं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ २ ॥

यं नित्यबोधस्वरूपमात्मानम् आश्रित्य मनश्चक्षुरादीनि प्रवर्तन्ते, सोऽहमात्मेति संबन्धः । ननु कथं बोधस्य नित्य-

त्वम् ? बोधो हि नाम ज्ञानम्; तच्च इन्द्रियार्थसंनिकर्षादिना जायते समुत्पद्यते; उत्पन्नं च ज्ञानं स्वकार्येण संस्कारेण विरोधिना ज्ञानान्तरेण वा विनश्यति; अतः उत्पत्तिनाशधर्मवत्त्वात् न नित्यं भवितुमर्हति; नापि बोधस्वरूपत्वमात्मन उपपद्यते, नित्यत्वादात्मनः, अनित्यत्वाच्च बोधस्य; न हि नित्यानित्ययोरेकस्वभावत्वम्, विरोधात् इति । अत्रोच्यते— बोधो हि नाम चैतन्यमभिप्रेतम्; न च ज्ञानं चैतन्यम्, जन्यज्ञानस्य ज्ञेयत्वेन घटादिवज्जडत्वात् । ज्ञेयं हि ज्ञानम्, घटज्ञानं मे जातं पटज्ञानं मे जातमिति साक्षादनुभूयमानत्वात् । अतः तस्य अनित्यत्वेन अनात्मस्वरूपत्वेऽपि, नित्यबोधस्वरूपत्वम् आत्मन उपपद्यते । ननु आत्मनः चेतनत्वे किं प्रमाणमिति चेत्, जगत्प्रकाश इति ब्रूमः । जगत् प्रकाशत इति सर्वजनसिद्धम्; तत्र ज्ञानादीनां ज्ञेयत्वेन जडत्वात्, आत्मप्रकाशेनैव जगत् प्रकाशत इति निश्चितं भवति । आत्मा च स्वपरप्रकाशवान् सवितृप्रकाशवत्— यथा सविता स्वयं प्रकाशमानो जगदपि प्रकाशयति, तथा आत्मापीति । अस्तु तर्हि चिद्धर्मा पुरुषः, कथमयं चित्स्वभाव इति; न, धर्मधर्मिभावस्य अनुपपत्तेः । तथा हि—

आत्मनश्चैतन्यं भिन्नम्, अभिन्नं वा, भिन्नाभिन्नं वा। तत्र न तावद्भिन्नम्; भिन्नं चेत्, घटवदात्मधर्मत्वानुपपत्तेः। ननु घटः असंबन्धात् आत्मधर्मो न भवति, चैतन्यं तु आत्मसंबन्धीति युक्तमात्मधर्मत्वम् इत्यपि न, संबन्धानुपपत्तेः। संबन्धो हि तावत् संयोगो वा समवायो वा स्यात्, संबन्धान्तरस्य अत्र असंभवात्। न तावत्संयोगः, तस्य द्रव्यमात्रधर्मत्वात्, अद्रव्यत्वाच्चैतन्यस्य। नापि समवायः, अनवस्थापातात्। समवायो हि संबद्धः समवायिनौ संबध्नाति, असंबद्धो वा? न तावदसंबद्धः, घटादिवदकिंचित्करत्वात्। संबद्धश्चेत्, संयोगादेरभावेन समवायस्यापि समवायान्तरमभ्युपगन्तव्यम्। एवं परंपरापेक्षायाम् अनवस्थापात इति यत्किंचिदेतत्। तस्माद्भिन्नत्वपक्षे धर्मधर्मिभावः सर्वथा नोपपद्यते। अभिन्नत्वपक्षे तु बोधस्य आत्मरूपत्वेन सुतरां धर्मधर्मिभावो नास्त्येव। न हि तस्य तदेव धर्मो भवति; न हि शुक्लं शुक्लस्य धर्मो भवतीति। तस्मात् भिन्नाभिन्नत्वपक्ष एव अवशिष्यते। स च विरोधान्न युज्यते– न ह्येकमेवैकस्मात् भिन्नमभिन्नं च भवितुमर्हति, विरोधात्। अथोच्यते– प्रत्यक्षसिद्धत्वात् भेदाभेदौ अविरुद्धौ। तथाहि —गौरियमिति पिण्डाव्यतिरेकेण गोत्वं प्रतीयते; तदेव

पिण्डान्तरे प्रत्यभिज्ञायमानत्वात् भेदेनावगम्यते; अतः प्रत्यक्षेणैव भेदाभेदयोः प्रतीयमानत्वात् अविरोध इति—नैतत्साधु मन्यामहे, प्रत्यक्षस्य अन्यथासिद्धत्वात्– भिन्नमपि हि वस्तु प्रत्यक्षेण अत्यन्तसंनिधानादिदोषात् अभिन्नवत्प्रतीयते– यथा दीपज्वाला भिन्नापि कुतश्चित्कारणादभिन्नवत्प्रतिभासन्ते, तथा अभिन्नमपि वस्तु भिन्नमिव प्रतिभासते– यथा एकस्माच्चन्द्राद्द्वितीयश्चन्द्र इति– अतः प्रत्यक्षस्य अन्यथासिद्धत्वात् न तेन प्रत्यक्षेण प्रमाणसिद्धस्य भेदाभेदविरोधस्य प्रतिक्षेपो युक्त इति । अथैवमुच्यते—चैतन्यस्य द्वे रूपे स्तः, आत्मस्वरूपता चैतन्यस्वरूपता चेति । तत्र आत्मस्वरूपतया आत्मनो न भिद्यते; भिद्यते च चैतन्यस्वरूपतया । अतः उभयरूपाभ्यां भिन्नाभिन्नत्वमविरुद्धमिति– तदपि न, धर्मधर्मित्वाभावात् । तथा हि– येन रूपेण तदभिन्नं न तेन रूपेण धर्मत्वम् अभिन्नत्वादवोचाम । येन रूपेण भिन्नम्, तेनापि न धर्मः, भिन्नत्वाद्घटादिवदित्युक्तम् । यच्चोक्तम् उभयरूपाभ्यां भिन्नाभिन्नत्वमिति, तदपि विचारं न सहते । ते रूपे किं चैतन्याद्भिन्ने, अभिन्ने, भिन्नाभिन्ने वा । तत्र न तावद्भिन्ने, भिन्नत्वे घटादिवदकिंचित्करत्वात्; अभिन्नत्वे चैतन्यमात्रमेवेति न ताभ्यां भिन्नाभिन्नत्वम् । भिन्नाभिन्नत्वं

च विरोधादेव न युक्तम् । तयोरपि रूपान्तराभ्यां भिन्ना-भिन्नत्वाभ्युपगमे अनवस्थापात इत्यलमतिविस्तरेण । तस्मा-न्नात्मा सर्वथा चिद्धर्मा; किं तर्हि? चित्स्वरूप एवेति । एतेन सदानन्दयोरपि आत्मस्वरूपत्वं व्याख्यातम् । नित्यश्च आत्मा, सदकारणवत्त्वात् परमाणुवत्; सन् आत्मा, अहम-स्मीति प्रतीतेः । अकारणवांश्च; न हि अस्य कारणं वस्तु प्रत्यक्षादिभिरुपलभ्यते, नापि श्रूयते; किं तु त्रैलोक्यै-ककारणता हि आत्मनः श्रूयते 'तस्माद्वा एतस्मादा-त्मन आकाशः संभूतः' इत्यादिश्रुतिभ्यः । न त्वात्मनो-ऽपि कारणान्तरम् । अतः सदकारणवत्त्वात् नित्य आत्मेति सिद्धम् । तस्मात् साधूक्तं नित्यबोधस्वरूपमिति । तत्रैव दृष्टान्तमाह— अग्न्युष्णवदिति । यथा उष्णत्वमग्नेर्न व्य-तिरिच्यते । व्यतिरेके हि कदाचिदग्नेरन्यत्राप्युपलभ्ये-त— यथा पुरुषाद्दण्डादि; न चैवमस्ति; तस्मादग्निस्व-रूपमेव अग्नेरुष्णत्वम् । एवमात्मनोऽपि चैतन्यं स्वरूपमेवे-त्यर्थः। तथा च उक्तम्– 'निरंशत्वाद्विभुत्वाच्च तथानश्वरभा-वतः । ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम्' इति । यच्चोक्तं मनश्चक्षुरादीनां प्रवृत्तौ किमर्थमधिष्ठाता इष्यते, स्वयमेव कस्मान्न प्रवर्तन्ते इति, तत्राह– अबोधा-

त्मकानीति । हेतुगर्भमिदं विशेषणम्; अतश्च अयमर्थः सेत्स्यति–अबोधात्मकत्वात् अचेतनत्वाच्च घटादिवच्चेतनमधिष्ठातारमाश्रित्यैव प्रवर्तन्त इति । तदचेतनत्वं चैषां तज्ज्ञेयत्वात् घटादिवदिति । श्रुतिरपि 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना आत्मव्यतिरिक्तस्य चेतनत्वं प्रतिषेधति । अतो युक्तमुक्तं चेतनमात्मानमाश्रित्य प्रवर्तन्त इति । निष्कम्पं निस्तरङ्गं निःसंशयमित्यर्थः । तथा च श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । एकम् अद्वितीयं देवतिर्यङ्मनुष्यादिशरीरेषु एकम्, न तु सांख्यादिपरिकल्पितवत् नानाभूतमित्यर्थः ॥

ननु आत्मन एकत्वे सुखदुःखादिव्यवस्था न स्यात् । तथा हि—सर्वशरीरेषु यदि एक आत्मा भवेत् तदा एकस्मिन् सुखिनि सर्व एव सुखिनः प्रसज्येरन्, सर्वस्य अविशेषात्; एवमेकस्मिन् दुःखिनि सर्व एव दुःखिनो भवेयुः; एवमेकस्मिञ्जानति सर्व एव जानीयुः; तथैव एकस्मिञ्जायमाने म्रियमाणे वा सर्व एव जायेरन् म्रियेरन्; एवमेकस्मिन्बद्धे मुक्ते वा सर्व एव बद्ध्येरन् मुच्येरन् इति । न चैवमस्ति । तस्मादेकत्वमात्मनो न भवितुमर्हति

इत्यत आह—

मुखाभासको दर्पणे दृश्यमानो
मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु ।
चिदाभासको धीषु जीवोऽपि तद्व-
त्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥

मुखाभासकः मुखप्रतिबिम्बः दर्पणादौ नानाकारेषु दर्पणेषु इति यावत् दृश्यमानः मुखत्वान् परमार्थतः मुखस्वरूपत्वात् पृथक्त्वेन भेदेन न विद्यते । यद्यपि मुखाभासको नाम वस्तु नास्त्येव, तथापि उपाधिभेदात् परमार्थसतो मुखात् परस्परं च ते मुखाभासका भिन्नाः प्रतीयन्ते । तथा च उपाधिगतमलिनत्वादिधर्मैः मलिनत्वादिधर्मकाः प्रतीयन्ते । तद्वत् मुखाभासकवत् चिदाभासकः आत्मनः प्रतिबिम्बो धीषु बुद्धिषु दृश्यमानो जीव इत्युच्यते यः, सोऽहमात्मा जीवास्ते उपाधिभेदात् भिन्नाः प्रतिभासन्ते । उपाधिगतसुखदुःखादिभिश्च सुखदुःखादिमन्तश्च प्रतिभासन्ते । उपाधयश्च व्यवस्थितरूपा एवेति सुखदुःखादीनामैकात्म्यपक्षे व्यवस्था युक्तैवेति नायमात्मभेदः शक्यो व्यवस्थापयितुम् । श्रुतिश्चैकात्म्यमेव प्रतिपादयति— ‘एक-

मेवाद्वितीयं ब्रह्म' इति । आत्मभेदपक्षे तु इयं सुखदुःखादिव्यवस्था नोपपद्यते । तथा हि— प्रतिशरीरम् आत्मानो भिन्नाः ते च सर्वे प्रत्येकं सर्वगता इति आत्मभेदवादिनो मन्यन्ते । तत्र सर्वेषां सर्वगतत्वात् सर्वसंनिधौ सुखादिकमुत्पद्यमानं विशेषहेतोरभावात् कथमेकस्यैव तत् सुखादिकम्, न सर्वेषाम् इत्यवधारयितुं शक्यते । अथ यत्संबन्धिना कार्यकरणसंघातेन सुखादिकं जन्यते, तस्यैव तदित्यभिधीयते इति; तन्न, कायकरणसंघातस्यापि सर्वात्मसंनिधावुत्पद्यमानस्य विशेषहेतोरभावादेव कथमेकात्मसंबन्धित्वमिति । अथ यत्कर्मवशात्कार्यकरणसंघातस्योत्पत्तिः, तस्यैव असौ कार्यकरणसंघात इति विशेषहेतुरिति चेत्; न, कर्मणोऽपि सर्वात्मसंनिधावुत्पद्यमानस्य सर्वात्मसंबन्धित्वेन तज्जनितकार्यकरणसंघातस्यापि सर्वात्मसंबन्धित्वात् तज्जनितस्य सुखदुःखादेरपि सर्वात्मसंबन्धित्वमिति सुखादिकस्य नानात्मपक्ष एव न व्यवस्थितिः । पूर्वपूर्वकार्यकरणसंघातस्य कर्मापेक्षायां च अनवस्थादोषः । अनादित्वेन अनवस्थादोषपरिहारश्च अन्धपरम्परेति । श्रुतिरपि नानात्मपक्षं प्रतिषेधति— 'नेह नानास्ति किंचन' इति । अतः साधूक्तम् एकमिति ॥

नन्वेवं सति आत्मनः सुखदुःखादिसंबन्धाभावात् बन्धो नास्ति; बन्धाभावाच्च मोक्षाभावः; बद्धो हि मुच्यते नाबद्ध इति; तथा चिदाभासस्यापि बन्धमोक्षौ न विद्येते, अवस्तुत्वात्; तस्य बुद्धेरपि विनाशित्वात् बन्धमोक्षयोरभावः; ततश्च मोक्षशास्त्रमनर्थकमापन्नम् इत्यत आह—

यथा दर्पणाभाव आभासहानौ
मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥

यथा दर्पणाभावे सति आभासस्य मुखप्रतिबिम्बस्य हानौ सत्यां मुखं परमार्थसत् कल्पनाहीनं मिथ्याज्ञानरहितम् एकमेव परं नापरं विद्यते, तथा तेनैव प्रकारेण धीवियोगे बुद्धेरभावे निराभासको अप्रतिबिम्बः परमार्थतः सन् एक एव यः, सोऽहमात्मेति योजना । अयमभिप्रायः आत्माज्ञानकृतोऽयं बुद्ध्यादिप्रपञ्चः । तत्र बुद्ध्यादौ प्रतिबिम्बरूपेण आत्मानमध्यस्य तद्गतसुखदुःखादिकम् आत्मन्यध्यस्यति । सोऽयमध्यासो बन्धः । आत्मज्ञानेन अज्ञान-

निवृत्त्या बुद्ध्यादिप्रपञ्चनिवृत्तौ अध्यासनिवृत्तिर्मोक्षः पुनः पारमार्थिकौ बन्धमोक्षौ अस्य विद्येते इति सर्वं श्वसमिति ॥

केचित् बुद्ध्यादीनामात्मत्वं मन्यन्ते; तान्प्रत्याह—

मनश्चक्षुरादेर्वियुक्तः स्वयं यो
मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥

मनश्चक्षुरादेः मनआदेः चक्षुरादेश्च वियुक्तः पृथग्भूतः सोऽहमात्मेति संबन्धः । मनश्चक्षुराद्युपादानेन तदन्तर्गतत्व शरीरमपि उपात्तं द्रष्टव्यम् । एतेन शरीरादपि वियुक्त इ लक्ष्यते । तथा च गुरुः— 'बुद्धीन्द्रियशरीरेभ्यो भिन्न आत विभुर्ध्रुवः । नानारूपः प्रतिक्षेत्रमात्मा वृत्तिषु भासते' इति कथं मनश्चक्षुरादिकस्य प्रकाशकस्य उपरि अयमात्मा प्रका कः, मनआदेः चक्षुरादेः कथं वियुक्तः इत्यत आह— स्व मिति । स्वयं य आत्मा मनश्चक्षुरादेः मनश्चक्षुरादिः मनश्चक्षु दिकस्य प्रकाशकस्य मनश्चक्षुरादिः प्रकाशकः, प्रकाशकत्व णयोगात्; अयमर्थः—यथा बाह्यस्य घटादेः प्रकाशको मनः

क्षुरादिः ततो व्यतिरिच्यते, तथा, आन्तरस्यापि मनश्चक्षुरादेः प्रकाशकः आत्मा ततो व्यतिरिच्यत इति निश्चीयते । अत एव मनश्चक्षुरादीनाम् अनात्मत्वमिति सिद्धं ज्ञेयादन्यो ज्ञाता भवति । ननु आत्मनोऽपि ज्ञेयत्वात् अनात्मत्वं प्रसज्यते इत्यत आह— मनश्चक्षुरादेरगम्यस्वरूपः प्रकाशस्वभावः । तथा च श्रुतिः— 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ॥

ननु यद्यात्मा मनश्चक्षुरादेरगम्यः, कथं तर्हि अस्य सिद्धिः ? घटपटादयो हि मनश्चक्षुराद्यधीनसिद्धयो दृष्टाः । ततः आत्मनोऽपि तदधीनसिद्धिर्युक्ता । यदा तस्य तदधीना सिद्धिर्न भवति, तदा अस्य सिद्धिरेव न स्यात् शशविषाणवत् इत्यत आह—

**य एको विभाति स्वतः शुद्धचेताः**
**प्रकाशस्वरूपोऽपि नानेव धीषु ।**
**शरावोदकस्थो यथा भानुरेकः**
**स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥**

य इति स्वतःसिद्धतामाह । एकः अद्वितीयः विभाति विशेषेण प्रकाशते स्वतः स्वयमेव न परतः शुद्धं निर्मलं

चेतो मनो यस्य सः स्वतःशुद्धचेताः ; शुद्धचित्तस्य हि आत्मा स्वयमेव स्फुरतीत्यर्थः । अत एव सत्त्वशुद्ध्यर्थं वेदेऽपि वेदानुवचनादयो विहिताः— 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति । घटपटादयश्च जडत्वात् प्रकाशान्तरापेक्षत्वाच्च न प्रकाशन्त इति युक्तम् । आत्मा तु प्रकाशस्वरूपत्वात् प्रकाशान्तरानपेक्षः प्रकाशते सवितृवत्— यथा सविता स्वप्रकाशः प्रकाशान्तरं नापेक्षते अथ च प्रकाशते, तद्वदात्मापीति भावः । एवमुत्पन्नात्मज्ञानो अद्वयो जीवन्मुक्तः स्वयं प्रकाशरूपोऽपि परमार्थतो नानाविधासु धीषु उपाधिषु नानेव भाति यः, सोऽहमात्मेति संबन्धः । शरावोदकेषु उपाधिषु अवस्थितो भानुः आदित्यः प्रकाशस्वरूपोऽपि एक एव सन् नानेव भाति, तद्वदात्मापीति भावः । ननु कथं जीवन्मुक्तः ? देहवांस्तावत् जीवान्नित्युच्यते ; तस्य जीवतोऽपि यदि देहाभावो मुक्तिरभिप्रेयते, नासावुपपद्यते, विरोधात् । न हि जीवतो देहाभावः संभवति । अथ सत्यपि देहे भोगविच्छेदो मुक्तिरिति, तदपि न चतुरश्रम् । सकलभोगकारणेन्द्रियसंपत्तौ भोगविच्छेदस्य असंभावितत्वात् । मिथ्याज्ञाननिबन्धनो हि भोगः ; तस्य च संयग्ज्ञानेन निवृ-

त्तत्वात् भोगविच्छेद इति चेत्; न, बाधितस्यापि मिथ्याज्ञानस्य द्विचन्द्रादिज्ञानवत् अनुवृत्त्यभ्युपगमात् । अन्यथा देहवानेव न स्यात् । अत एव विदुषां जनकादीनां राज्यादिकं श्रूयते । श्रुतिरपि देहवतो भोगविच्छेदं प्रतिषेधति— 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति । तस्मादयुक्ता जीवन्मुक्तिरिति । अत्रोच्यते— जीवतस्तावत् तत्त्वज्ञानमुत्पद्यते न तु मृतस्य; शमदमादेः श्रवणमननादेश्च ज्ञानहेतोः मृतस्यासंभवात् । अत एव हि विदुषां याज्ञवल्क्यादीनां संन्यासः श्रूयते । न च मृतस्य संन्यासः श्रूयते संभवति वा । तस्मात् जीवतस्तत्त्वज्ञानमुत्पद्यत इति सिद्धम् । आत्मज्ञानादेव मुक्तिरिति सिद्धा जीवन्मुक्तिः 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिभ्यः । ननु ज्ञानस्य मोक्षफलकत्वे श्रुतिषु सहकार्यन्तरं प्रतीयते इति चेत्, न, ज्ञानमात्रस्य श्रवणात्— 'भिद्यते हृदयग्रन्थिः' इति; 'नान्यः पन्था विद्यतेऽयनाय' इति सहकार्यन्तरप्रतिषेधाच्च । ननु श्रुतिरेव मरणसहकारिणो ज्ञानान्मोक्षं दर्शयति 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति; न, पूर्वोत्पन्नस्य ज्ञानस्य चिरप्रवृत्तत्वात् मरणकाले तस्य संनिधापयितुम-

शक्तेः । तत्कालमेवोत्पन्नात् ज्ञानान्तरान्मुक्तिरिति चेत्, न, 'यदेव भगवान्वेद तदेव मे ब्रूहि' इति 'आचार्यवान्पुरुषो वेद' इत्यादिश्रुतिपर्यालोचनया प्रथमज्ञानादेव मुक्तेः श्रूयमाणत्वात् । एतेन वचनान्तरमनुगृहीतं भवति— जीवन्नेव हि विद्वान् हर्षामर्षाभ्यां विमुच्यते इति । न च 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्यन्तरविरोधो वाच्यः, श्रुत्यन्तरस्य सामान्यविषयत्वात्, अत्र 'विद्वान' इति विशेषनिर्देशात् । 'तस्य तावदेव चिरम्' इति श्रुतिस्त्यक्ता स्यादिति चेत्, न, व्यवस्थया उपपत्तेः । तथा हि— मुक्तिः खलु स्वाभाविकी सर्वेषाम्, न सा ज्ञानेन जन्यते । किं तर्हि? अविद्यातिमिरतिरोहिताया मुक्तेः तिमिरमात्रं निराक्रियते । तच्च प्रथमज्ञानेनैव निराकृतम् । तथापि अविद्याकार्यस्य देहस्य अविनाशात् पुनःपुनः महान्धकारवदुत्सारितमपि तिरस्करोति । तस्य तिरस्कारप्रतिभासस्य देहविच्छेदाद्विच्छेदो भवति । एवं च सति प्राचीनमेव महान्धकारोत्सारणं ज्ञानमात्रनिबन्धनमवतिष्ठते— यथा सूर्योदयेन महातिमिरोत्सारणे कृतेऽपि छत्रादिकृतस्य तिमिराभासस्य छत्रादिविगमे विगमः । ततश्च प्राचीनमेव महातिमिरोत्सारणं सूर्योदयमात्रनिबन्धनमव-

तिष्ठत इति । तस्मान् न ज्ञानान्तरान्मुक्तिः । अपि तु पूर्वोत्पन्नज्ञानादेव मुक्तिरिति सिद्धम् । ननु यदि पारमार्थिकम् अद्वैतं मिथ्याज्ञानविजृम्भितश्च प्रपञ्च इति श्रुत्यर्थो अवधारितः, तत्कथं सत्यपि बाधके प्रपञ्चानुवृत्तिः ; न हि सत्येव शुक्तिकाज्ञाने रजतादिप्रपञ्चो अनुवर्तते ; उच्यते— 'नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' 'नेह नानास्ति किंचन' इत्यादिवाक्यसहितात् तत्त्वमस्यादिवाक्यात् प्रपञ्चविलयद्वारेण असंदिग्धमबाधितं च अद्वैतज्ञानं तावदुत्पद्यते । न च तत् प्रपञ्चप्रत्ययेन बाध्यत इति युक्तम्, तत्प्रविलयेनैव उत्पत्तेः । यत्पुनरुक्तं कथं प्रपञ्चप्रत्ययानुवृत्तिरिति, अत्रोच्यते— द्विविधं हि बाधकं भवति— यथा सत्येव मिथ्याज्ञानहेतुभूते पित्तादौ जाग्रत्येव पीतः शङ्खः इति ज्ञाने निमित्तान्तरात् नायं पीत इति मिथ्याज्ञानकारणापगमे, वा यथा मन्दालोकप्रभवस्य शुक्तिकारजतज्ञानस्य महत्यालोके नेदं रजतमिति ज्ञानम्, तद्वदिहापि पीतः शङ्ख इति ज्ञानबाधकवत् सत्येव मिथ्याज्ञाने हेतुभूते शरीरे प्रपञ्चप्रत्ययस्य बाधकमद्वैतज्ञानमुत्पद्यते । अत एव स्वकारणाद्बाधितमपि प्रपञ्चज्ञानं पीतशङ्खज्ञानवत् पुनः पुनः जायत इति । ननु देहस्यापि प्रपञ्चान्तर्गतत्वात् उच्छित्तिरेव

प्रसज्यते इति चेत्; न, प्रारब्धकर्मवशात् अनुवृत्तेः । कर्मणश्च कुलालचक्रभ्रमणवत्संस्कारादनुवृत्तिरिति सिद्धा जीवन्मुक्तिरिति । कर्मसंस्कारक्षयश्च देहपाते सति सर्वस्यैव प्रपञ्चप्रत्ययस्यापि प्रविलयः । कर्मान्तराणां च ज्ञानेन क्षपितत्वात् देहान्तरानुत्पत्तिरिति परममुक्तिः । एवं च सति ज्ञानमात्रान्मुक्तिरिति प्रतिपादनादेव कर्मणो मुक्तिहेतुत्वमपास्तं वेदितव्यम् । तथा हि—न तावत्केवलात्कर्मणो मुक्तिश्रवणम् । नापि तत एव ज्ञानसहितात्, अश्रुतेरेव । ननु 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति विद्याकर्मणोः सहभावः श्रूयते; सत्यम्, संसारविषयं तच्छ्रवणं न मुक्तिविषयम् इति । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिचोदनाप्राप्तानां नित्यनैमित्तिककर्मणां ज्ञानस्य च अर्थात्समुच्चय इति चेत्; न, विनियोजकप्रमाणाभावात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इत्यत्र तृतीयाश्रुतिः विनियोजिका इति चेत्; न, विविदिषासंबन्धात् कर्मणां ज्ञानार्थत्वप्रतीतेः मोक्षार्थत्वं नावगम्यते इति । किं च, न हि ज्ञानम् अज्ञाननिवृत्तौ उपकारकमपेक्षते, उत्पन्नादेव तस्मात् अज्ञाननिवृत्तेरवश्यंभावात् । तथा च श्रुतिः— 'तमेव विदित्वाति-

मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । अपि च यदि कर्मफलं मोक्षो भवेत्, तदा अनित्यत्वं प्रसज्यते घटादिवत्स्वर्गादिवच्चेति । अमुमेवार्थं श्रुतिरप्याह— तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति । 'अग्निहोत्रादि तु तत्कार्यायैव' इति सूत्रकारेण परम्परया कर्मणां मुक्तिहेतुत्वमभिहितं प्रयाजादिवत् । अतः ज्ञानार्थत्वेन कर्मणामुपयोगोऽस्त्येव । ज्ञानोत्पत्तेस्तु परं कर्मणामुपयोगाभावेऽपि लोकसंग्रहार्थमनुष्ठानं कर्तव्यमेवेति सर्वं समञ्जसम् ॥

ननु कथम् एक एव आत्मा युगपत् अनेकां बुद्धिम् अधितिष्ठति? न ह्येक एव अश्वसादी युगपदनेकानश्वानधितिष्ठन्नुपलभ्यते । क्रमेण त्वधिष्ठानं युक्तम् । तच्चेह नास्ति; युगपदेव सर्वबुद्धीनां स्वव्यापारे प्रवृत्तिदर्शनात् । अनधिष्ठितानां च प्रवृत्त्यसंभवाच्च । अतः नैक आत्मा इत्यत आह—

**यथानेकचक्षुःप्रकाशो रविर्न**
**क्रमेण प्रकाशीकरोति प्रकाश्यम् ।**
**अनेका धियो यस्तथैकप्रबोधः**
**स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७ ॥**

यथा येन प्रकाशकत्वप्रकारेण रविः आदित्यः एक एव अनेकेषां चक्षुषां प्रकाशको युगपदेव अनेकानि चक्षूंषि अधितिष्ठति न च क्रमेण एकैकस्मै चक्षुषे प्रकाश्यं प्रकाशीकरोति, तथा तेनैव प्रकारेण एकश्चासौ प्रबोधश्च एकप्रबोधः सः अधिष्ठाता अनेका धियो बुद्धीः युगपदधितिष्ठति न क्रमेणैकैकस्यै धियै प्रकाश्यं प्रकाशीकरोति यः सोऽहमात्मेति संबन्धः ॥

नन्वस्तु तर्हि रविरेव बुद्धीनां प्रेरकः अधिष्ठाता, किमात्माभ्युपगमेन? तथा च श्रुतिः— 'धियो यो नः प्रचोदयात्' इति, अत आह—

विवस्वत्प्रभातं यथारूपमक्षं
प्रगृह्णाति नाभातमेवं विवस्वान् ।
यदाभात आभासयत्यक्षमेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥

विस्वता सूर्येण प्रभातं प्रकाशितं रूपं यथा येन प्रकारेण अक्षं चक्षुः प्रगृह्णाति प्रकर्षेण जानाति, नाभातं न अप्रकाशितम्, अन्धकारे घटाद्यनुपलम्भात् एवं विवस्वानपि एकः तथा तेनैव प्रकारेण यदाभातः येनाधितिष्ठितः सन् आभास-

यति अधितिष्ठति अक्षं यथा विवस्वान् अधिष्ठाता, तथा विवस्वतोऽप्यधिष्ठाता यः, सोऽहमात्मेति संबन्धः। स चाहंबुद्धीनामधिष्ठाता ; श्रुत्या तु चक्षुरधिष्ठातृत्वमभिप्रेत्य विवस्वतो बुद्धिप्रेरकत्वमभिहितम् । यस्माद्विवस्वदधिष्ठितं चक्षुः बुद्धिवृद्धिमुत्पादयति ; अधिष्ठातुरात्मनो वा स्वरूपमभिप्रेत्योक्तः ; तथा च 'सूर्य आत्मा जगतस्तस्थुषश्च' इति । नन्वपि तर्हि प्रकाशान्तरेणैव अधिष्ठातव्यम्, न, तस्य स्वप्रकाशत्वात् । 'नान्यदतोऽस्ति द्रष्टा' इति च श्रुत्या तदितरप्रतिषेधाच्च ॥

किंच—

**यथा सूर्य एकोऽप्स्वनेकश्चलासु**
**स्थिरास्वप्यनन्वग्विभाव्यस्वरूपः ।**
**चलासु प्रभिन्नासु धीष्वेवमेकः**
**स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ९ ॥**

यथा येन प्रकारेण आदित्यः एकः अप्सु वारिषु चलासु स्थिरासु च अनेकोऽपि नानापि एकः सन् प्रतिभासते अनन्वग्विभाव्यस्वरूपः अनु पश्चात् अञ्चति गच्छतीति अन्वक् न अन्वक् अनन्वक् अननुगत इति यावत् ।

यद्वा अनन्वक्त्वेन विभाव्यं स्वरूपं यस्य स तथोक्तः । एवं बहुव्रीहिसमासं कृत्वा पश्चात् नञ्समासः । ततश्चायमर्थो भवति— न वारिषु रविरनुगतो भवति । किं तर्हि तथैव नभसि देदीप्यमानो भ्रान्त्या वारिषु दृश्यत इत्यर्थः । एवं एक आत्मा चलासु प्रभिन्नासु नानाभूतासु धीषु बुद्धिषु अनेकः सन् अनन्वग्विभाव्यस्वरूपो न बुद्धीरनुगतो भवति । किं तर्हि, पृथगेव देदीप्यते यः सोऽहमात्मेत्यर्थः ॥

किं च—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १० ॥

घनेन मेघेन छन्ना तिरोहिता दृष्टिः दर्शनं यस्य सः घनच्छन्नदृष्टिः पुरुषः घनच्छन्नम् अर्कम् आदित्यं यथा येन घनच्छन्नत्वप्रकारेण मन्यते जानाति निष्प्रभं प्रभारहितम् अप्रकाशस्वभावमिति यावत् । मूढो मन्यते घनच्छन्नदृष्टित्वात् प्रकाशस्वभावमपि रविम् अप्रकाशम् पश्यतीत्याह— अतिमूढ इति । अतिमूर्खत्वात् स्वात्मनो दृष्टिविघात-

मगणयन् सूर्यमेव अप्रकाशं मन्यते । पादपूरणे चकारः । तथा तेन प्रकारेण अविद्याच्छन्नदृष्टिः बुद्धिमात्मत्वेन गृहीत्वा तद्गतदुःखादिकम् आत्मन्यध्यारोप्य बद्ध इव आभाति यः मूढदृष्टेः सोऽहमात्मेति संबन्धः ॥

किं च—

समस्तेषु वस्तुष्वनुस्यूतमेकं
समस्तानि वस्तूनि यं न स्पृशन्ति ।
वियद्वत्सदा शुद्धमच्छस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११ ॥

समस्तेषु निरवशेषेषु प्रपञ्चात्मकेषु सदात्मना अनुस्यूतम् अनुगतं सर्वतो व्याप्तम् एकं हि नाना समस्तानि वस्तूनि प्रपञ्चात्मकानि यं सद्रूपं न स्पृशन्ति । कुतः ? वियद्वत् आकाशमिव सदा सर्वदा शुद्धं निर्मलं रागादिदोषरहितम् अच्छस्वरूपम् अमृतरूपं यत् परं ब्रह्म सोऽहमात्मेति संबन्धः ॥

व्युत्पादितमर्थमुपसंहरति—

उपाधौ यथा भेदता सन्मणीनां
तथा भेदता बुद्धिभेदेषु तेऽपि ।

यथा चन्द्रिकाणां जले चञ्चलत्वं
तथा चञ्चलत्वं तवापीह विष्णो ॥ १२ ॥

उपाधौ सति उपाधिभेदसंबन्धे सति यथा भेदता भेद एव भेदता, स्वार्थे तल्, सन्मणीनां विशुद्धमणीनां स्फटिकादीनां लोहितकृष्णादिभेदेन भेदता भेदः । तथा बुद्धिभेदेषु नानाबुद्धिषु ते तवापि नानात्वं हे विष्णो परमार्थतस्तु तव भेदो नास्त्येव बुद्ध्युपाधिकृतस्तु विद्यत इत्यर्थः । यथा चन्द्रिकाणां चन्द्रा एव चन्द्रिकाः, स्वार्थे कप्रत्ययः, निर्मलितानां जले प्रतिबिम्बितस्वरूपेण दृश्यमानानां जलस्य चञ्चलत्वात् चञ्चलत्वम् औपाधिकं न पारमार्थिकम्, तथा बुद्धीनां चञ्चलत्वात् तवापि चञ्चलत्वमौपाधिकं न पारमार्थिकमित्यर्थः । इह बुद्धिषु हे विष्णो व्यापनशील ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**हस्तामलकीयभाष्यं**
**संपूर्णम् ॥**

॥ ॐ ॥

# ॥ पञ्चीकरणम् ॥

अथातः परमहंसानां समाधिविधिं व्याख्यास्यामः ॥

सच्छब्दवाच्यमविद्याशबलं ब्रह्म । ब्रह्मणोऽव्यक्तम् । अव्यक्तान्महत् । महतोऽहंकारः । अहंकारात्पञ्चतन्मात्राणि । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि । पञ्चमहाभूतेभ्योऽखिलं जगत् ॥

पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्धभागं विहायार्धभागं चतुर्धा विभज्येतरेषु योजिते पञ्चीकरणं मायारूपदर्शनमध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥

ओं पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं सर्वं विराडित्युच्यते । एतत्स्थूलशरीरमात्मनः । इन्द्रियैरर्थोपलब्धिजागरितम् । एतदुभयाभिमान्यात्मा विश्वः । एतत्त्रयमकारः ॥

अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्राणि, तत्कार्यं च पञ्चप्राणाः दशेन्द्रियाणि मनो बुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते । एतत्सूक्ष्मशरीरमात्मनः । करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न

इत्युच्यते । तदुभयाभिमान्यात्मा तैजसः । एतत्त्रयमुकारः ॥

शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते । एतत्कारणशरीरमात्मनः । तच्च न सत्, नासत् । नापि सदसत् । न भिन्नम्, नाभिन्नम्, नापि भिन्नाभिन्नं कुतश्चित् । न निरवयवम्, न सावयवम्, नोभयम् । किं तु केवलब्रह्मैकत्वज्ञानापनोद्यम् । सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणात्मनावस्थानं सुषुप्तिः । तदुभयाभिमान्यात्मा प्राज्ञः । एतत्त्रयं मकारः ॥

अकार उकारे, उकारो मकारे, मकार ओंकारेऽहम्येव ॥

अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः, नाज्ञानम्, नापि तत्कार्यम् । किं तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः । 'तत्त्वमसि' 'ब्रह्माहमस्मि' 'प्रज्ञानमानन्दं ब्रह्म' 'अयमात्मा ब्रह्म' इत्यादिश्रुतिभ्यः ॥ इति पञ्चीकरणं भवति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**पञ्चीकरणं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ तत्त्वोपदेशः ॥

तत्त्वंपदार्थशुद्ध्यर्थं गुरुः शिष्यं वचोऽब्रवीत् ।
वाक्ये तत्त्वमसीत्यत्र त्वंपदार्थं विवेचय ॥ १ ॥

न त्वं देहोऽसि दृश्यत्वादुपजात्यादिमत्त्वतः ।
भौतिकत्वादशुद्धत्वादनित्यत्वात्तथैव च ॥ २ ॥

अदृश्यो रूपहीनस्त्वं जातिहीनोऽप्यभौतिकः ।
शुद्धनित्योऽसि दृग्रूपो घटो यद्वन्न दृग्भवेत् ॥ ३ ॥

न भवानिन्द्रियाण्येषां करणत्वेन या श्रुतिः ।
प्रेरकस्त्वं पृथक्तेभ्यो न कर्ता करणं भवेत् ॥ ४ ॥

नानैतान्येकरूपस्त्वं भिन्नस्तेभ्यः कुतः शृणु ।
न चैकेन्द्रियरूपस्त्वं सर्वत्राहंप्रतीतितः ॥ ५ ॥

न तेषां समुदायोऽसि तेषामन्यतमस्य च ।
विनाशेऽप्यात्मधीस्तावदस्ति स्यान्नैवमन्यथा ॥ ६ ॥

प्रत्येकमपि तान्यात्मा नैव तत्र नयं शृणु ।
नानास्वामिकदेहोऽयं नश्येद्भिन्नमताश्रयः ॥ ७ ॥

नानात्माभिमतं नैव विरुद्धविषयत्वतः ।
स्वाम्यैक्ये तु व्यवस्था स्यादेकपार्थिवदेशवत् ॥ ८ ॥

न मनस्त्वं न वा प्राणो जडत्वादेव चैतयोः ।
गतमन्यत्र मे चित्तमित्यन्यत्वानुभूतितः ॥ ९ ॥

क्षुत्तृड्भ्यां पीडितः प्राणो ममायं चेति भेदतः ।
तयोर्द्रष्टा पृथक्ताभ्यां घटद्रष्टा घटाद्यथा ॥ १० ॥

सुप्तौ लीनास्ति या बोधे सर्वं व्याप्नोति देहकम् ।
चिच्छायया च संबद्धा न सा बुद्धिर्भवान्द्विज ॥ ११ ॥

नानारूपवती बोधे सुप्तौ लीनातिचञ्चला ।
यतो दृगेकरूपस्त्वं पृथक्तस्य प्रकाशकः ॥ १२ ॥

सुप्तौ देहाद्यभावेऽपि साक्षी तेषां भवान्यतः ।
स्वानुभूतिस्वरूपत्वान्नान्यस्तस्यास्ति भासकः ॥ १३ ॥

प्रमाणं बोधयन्तं तं बोधं मानेन ये जनाः ।
बुभुत्स्यन्ते त एधोभिर्दग्धुं वाञ्छन्ति पावकम् ॥ १४ ॥

विश्वमात्मानुभवति तेनासौ नानुभूयते ।
विश्वं प्रकाशयत्यात्मा तेनासौ न प्रकाश्यते ॥ १५ ॥

ईदृशं तादृशं नैतन्न परोक्षं सदेव यत् ।
तद्ब्रह्म त्वं न देहादिदृश्यरूपोऽसि सर्वदृक् ॥ १६ ॥

इदंत्वेनैव यद्भाति सर्वं तच्च निषिध्यते ।
अवाच्यतत्त्वमनिदं न वेद्यं स्वप्रकाशतः ॥ १७ ॥

सत्यं ज्ञानमनन्तं च ब्रह्मलक्षणमुच्यते ।
सत्यत्वाज्ज्ञानरूपत्वादनन्तत्वात्त्वमेव हि ॥ १८ ॥

सति देहाद्युपाधौ स्याज्जीवस्तस्य नियामकः ।
ईश्वरः शक्त्युपाधित्वाद्द्वयोर्बाधे स्वयंप्रभः ॥ १९ ॥

अपेक्ष्यतेऽखिलैर्मानैर्न यन्मानमपेक्षते ।
वेदवाक्यं प्रमाणं तद्ब्रह्मात्मावगतौ मतम् ॥ २० ॥

अतो हि तत्त्वमस्यादिवेदवाक्यं प्रमाणतः ।
ब्रह्मणोऽस्ति यया युक्त्या सास्माभिः संप्रकीर्त्यते ॥ २१ ॥

शोधिते त्वंपदार्थे हि तत्त्वमस्यादि चिन्तितम् ।
संभवेन्नान्यथा तस्माच्छोधनं कृतमादितः ॥ २२ ॥

देहेन्द्रियादिधर्मान्यः स्वात्मन्यारोपयन्मृषा ।
कर्तृत्वाद्यभिमानी च वाच्यार्थस्त्वंपदस्य सः ॥ २३ ॥

देहेन्द्रियादिसाक्षी यस्तेभ्यो भाति विलक्षणः ।
स्वयं बोधस्वरूपत्वाल्लक्ष्यार्थस्त्वंपदस्य सः ॥ २४ ॥

वेदान्तवाक्यसंवेद्यविश्वातीताक्षराद्वयम् ।
विशुद्धं यत्स्वसंवेद्यं लक्ष्यार्थस्तत्पदस्य सः ॥ २५ ॥

सामानाधिकरण्यं हि पदयोस्तत्त्वमोर्द्वयोः ।
संबन्धस्तेन वेदान्तैर्ब्रह्मैक्यं प्रतिपाद्यते ॥ २६ ॥

भिन्नप्रवृत्तिहेतुत्वे पदयोरेकवस्तुनि ।
वृत्तित्वं यत्तथैवैक्यं विभक्त्यन्तकयोस्तयोः ॥ २७ ॥

सामानाधिकरण्यं तत्संप्रदायिभिरीरितम् ।
तथा पदार्थयोरेव विशेषणविशेष्यता ॥ २८ ॥

अयं सः सोऽयमितिवत्संबन्धो भवति द्वयोः ।
प्रत्यक्त्वं सद्वितीयत्वं परोक्षत्वं च पूर्णता ॥ २९ ॥

परस्परविरुद्धं स्यात्ततो भवति लक्षणा ।
लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनोः ॥ ३० ॥

मानान्तरोपरोधाच्च मुख्यार्थस्यापरिग्रहे ।
मुख्यार्थस्याविनाभूते प्रवृत्तिर्लक्षणोच्यते ॥ ३१ ॥

त्रिविधा लक्षणा ज्ञेया जहत्यजहती तथा ।
अन्योभयात्मिका ज्ञेया तत्राद्या नैव संभवेत् ॥ ३२ ॥

वाच्यार्थमखिलं त्यक्त्वा वृत्तिः स्याद्या तदन्विते ।
गङ्गायां घोष इतिवज्जहती लक्षणा हि सा ॥ ३३ ॥

वाच्यार्थस्यैकदेशस्य प्रकृते त्याग इष्यते ।
जहती संभवेन्नैव संप्रदायविरोधतः ॥ ३४ ॥

वाच्यार्थमपरित्यज्य वृत्तिरन्यार्थके तु या ।
कथितेयमजहती शोणोऽयं धावतीतिवत् ॥ ३५ ॥

न संभवति साप्यत्र वाच्यार्थेऽतिविरोधतः ।
विरोधांशपरित्यागो दृश्यते प्रकृते यतः ॥ ३६ ॥

वाच्यार्थस्यैकदेशं च परित्यज्यैकदेशकम् ।
या बोधयति सा ज्ञेया तृतीया भागलक्षणा ॥ ३७ ॥

सोऽयं विप्र इदं वाक्यं बोधयत्यादितस्तथा ।
तत्कालत्वविशिष्टं च तथैतत्कालसंयुतम ॥ ३८ ॥

अतस्तयोर्विरुद्धं तत्तत्कालत्वादिधर्मकम् ।
त्यक्त्वा वाक्यं यथा विप्रपिण्डं बोधयतीरितम ॥ ३९ ॥

तथैव प्रकृते तत्त्वमसीत्यत्र श्रुतौ शृणु ।
प्रत्यक्त्वादीन्परित्यज्य जीवधर्मांस्त्वमःपदात् ॥ ४० ॥

सर्वज्ञत्वपरोक्षादीन्परित्यज्य ततःपदात् ।
शुद्धं कूटस्थमद्वैतं बोधयत्यादरात्परम् ॥ ४१ ॥

तत्त्वमोः पदयोरैक्यमेव तत्त्वमसीत्यलम् ।
इत्थमैक्यावबोधेन सम्यग्ज्ञानं दृढं नयैः ॥ ४२ ॥

अहं ब्रह्मेति विज्ञानं यस्य शोकं तरत्यसौ ।
आत्मा प्रकाशमानोऽपि महावाक्यैस्तथैकता ॥ ४३ ॥

तत्त्वमोर्बोध्यतेऽथापि पौर्वापर्यानुसारतः ।
तथापि शक्यते नैव श्रीगुरोः करुणां विना ॥ ४४ ॥

अपरोक्षयितुं लोके मूढैः पण्डितमानिभिः ।
अन्तःकरणसंशुद्धौ स्वयं ज्ञानं प्रकाशते ॥ ४५ ॥

वेदवाक्यैरतः किं स्याद्गुरुणेति न सांप्रतम् ।
आचार्यवान्पुरुषो हि वेदेत्येवं श्रुतिर्जगौ ॥ ४६ ॥

अनादाविह संसारे बोधको गुरुरेव हि ।
अतो ब्रह्मात्मवस्त्वैक्यं ज्ञात्वा दृश्यमसत्तया ॥ ४७ ॥

अद्वैते ब्रह्मणि स्थेयं प्रत्यग्ब्रह्मात्मना सदा ।
तत्प्रत्यक्षात्परिज्ञातमद्वैतब्रह्मचिद्घनम् ॥ ४८ ॥

प्रतिपाद्यं तदेवात्र वेदान्तैर्न द्वयं जडम् ।
सुखरूपं चिदद्वैतं दुःखरूपमसज्जडम् ॥ ४९ ॥

वेदान्तैस्तद्द्वयं सम्यङ्निर्णीतं वस्तुतो नयात् ।
अद्वैतमेव सत्यं त्वं विद्धि द्वैतमसत्सदा ॥ ५० ॥

शुद्धे कथमशुद्धः स्याद्दृश्यं मायामयं ततः ।
शुक्तौ रूप्यं मृषा यद्वत्तथा विश्वं परात्मनि ॥ ५१ ॥

विद्यते न स्वतः सत्त्वं नासतः सत्त्वमस्ति वा ।
बाध्यत्वान्नैव सद्द्वैतं नासत्प्रत्यक्षभानतः ॥ ५२ ॥

सदसन्न विरुद्धत्वादतोऽनिर्वाच्यमेव तत् ।
यः पूर्वमेक एवासीत्सृष्ट्वा पश्चादिदं जगत् ॥ ५३ ॥

प्रविष्टो जीवरूपेण स एवात्मा भवान्परः ।
सच्चिदानन्द एव त्वं विस्मृत्यात्मतया परम् ॥ ५४ ॥

जीवभावमनुप्राप्तः स एवात्मासि बोधतः ।
अद्वयानन्दचिन्मात्रः शुद्धः साम्राज्यमागतः ॥ ५५ ॥

कर्तृत्वादीनि यान्यासंस्त्वयि ब्रह्माद्वये परे ।
तानीदानीं विचार्य त्वं किंस्वरूपाणि वस्तुतः ॥ ५६ ॥

अत्रैव शृणु वृत्तान्तमपूर्वं श्रुतिभाषितम् ।
कश्चिद्गान्धारदेशीयो महारत्नविभूषितः ॥ ५७ ॥

स्वगृहे स्वाङ्गणे सुप्तः प्रमत्तः सन्कदाचन ।
रात्रौ चौरः समागत्य भूषणानां प्रलोभितः ॥ ५८ ॥

बद्ध्वा देशान्तरं चौरैर्नीतः सन्गहने वने ।
भूषणान्यपहृत्यापि बद्धाक्षकरपादकः ॥ ५९ ॥

निक्षिप्तो विपिनेऽतीव कुशकण्टकवृश्चिकैः ।
व्यालव्याघ्रादिभिश्चैव संकुले तरुसंकटे ॥ ६० ॥

व्यालादिदुष्टसत्त्वेभ्यो महारण्ये भयातुरः ।
शिलाकण्टकदर्भाद्यैर्देहस्य प्रतिकूलकैः ॥ ६१ ॥

क्रियमाणे विलुठने विशीर्णाङ्गोऽसमर्थकः ।
क्षुत्तृडातपवाय्वग्न्यादिभिस्तप्तोऽतितापकैः ॥ ६२ ॥

बन्धमुक्तौ तथा देशप्राप्तावेव सुदुःखधीः ।
ददृशे कंचिदाक्रोशन्नेकं तत्रैव तस्थिवान् ॥ ६३ ॥

तथा रागादिभिर्वर्गैः शत्रुभिर्दुःखदायिभिः ।
चौरैर्देहाभिमानाद्यैः स्वानन्दधनहारिभिः ॥ ६४ ॥

ब्रह्मानन्दे प्रमत्तः स्वाज्ञाननिद्रावशीकृतः ।
बद्धस्त्वं बन्धनैर्भोगतृष्णाज्वरादिभिर्दृढम् ॥ ६५ ॥

अद्वयानन्दरूपात्त्वां प्रच्याव्यातीव धूर्तकैः ।
दूरनीतोऽसि देहेषु संसारारण्यभूमिषु ॥ ६६ ॥

सर्वदुःखनिदानेषु शरीरादित्रयेषु च ।
नानायोनिषु कर्मान्धवासनानिर्मितासु च ॥ ६७ ॥

प्रवेशितोऽसि सृष्टोऽसि बद्धः स्वानन्ददृष्टितः ।
अनादिकालमारभ्य दुःखं चानुभवन्मदा ॥ ६८ ॥

जन्ममृत्युजरादोषनरकादिपरम्पराम् ।
निरन्तरं विषण्णोऽनुभवन्नत्यन्तशोकवान् ॥ ६९ ॥

अविद्याभूतबन्धस्य निवृत्तौ दुःखदस्य च ।
स्वरूपानन्दसंप्राप्तौ सत्योपायं न लब्धवान् ॥ ७० ॥

यथा गान्धारदेशीयश्चिरं दैवाद्दयालुभिः ।
कैश्चित्पान्थैः परिप्राप्तैर्मुक्तदृष्ट्यादिबन्धनः ॥ ७१ ॥

सः स्वस्थैरुपदिष्टश्च पण्डितो निश्चितात्मकः ।
ग्रामाद्ग्रामान्तरं गच्छेन्मेधावी मार्गतत्परः ॥ ७२ ॥

गत्वा गान्धारदेशं स स्वगृहं प्राप्य पूर्ववत् ।
बान्धवैः संपरिष्वक्तः सुखी भूत्वा स्थितोऽभवत् ॥ ७३ ॥

त्वमप्येवमनेकेषु दुःखदायिषु जन्मसु ।
भ्रान्तो दैवाच्छुभे मार्गे जातश्रद्धः सुकर्मकृत् ॥ ७४ ॥

वर्णाश्रमाचारपरोऽवाप्तपुण्यमहोदयः ।
ईश्वरानुग्रहाल्लब्धो ब्रह्मविद्गुरुसत्तमः ॥ ७५ ॥

विधिवत्कृतसंन्यासो विवेकादियुतः सुधीः ।
प्राप्तो ब्रह्मोपदेशोऽद्य वैराग्याभ्यासतः परम् ॥ ७६ ॥

पण्डितस्तत्र मेधावी युक्त्या वस्तु विचारयन् ।
निदिध्यासनसंपन्नः प्राप्नो हि त्वं परं पदम् ॥ ७७ ॥

अतो ब्रह्मात्मविज्ञानमुपदिष्टं यथाविधि ।
मयाचार्येण ते धीर सम्यक्तत्र प्रयत्नवान् ॥ ७८ ॥

भूत्वा विमुक्तबन्धस्त्वं छिन्नद्वैतात्मसंशयः ।
निर्द्वन्द्वो निःस्पृहो भूत्वा विचरस्व यथासुखम् ॥ ७९ ॥

वस्तुतो निष्प्रपञ्चोऽसि नित्यमुक्तः स्वभावतः ।
न ते बन्धविमोक्षौ स्तः कल्पितौ तौ यतस्त्वयि ॥ ८० ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ८१ ॥

श्रुतिसिद्धान्तसारोऽयं तथैव त्वं स्वया धिया ।
संविचार्य निदिध्यास्य निजानन्दात्मकं परम् ॥ ८२ ॥

साक्षात्कृत्वा परिच्छिन्नाद्वैतब्रह्माक्षरं स्वयम् ।
जीवन्नेव विनिर्मुक्तो विश्रान्तः शान्तिमाश्रय ॥ ८३ ॥

विचारणीया वेदान्ता वन्दनीयो गुरुः सदा ।
गुरूणां वचनं पथ्यं दर्शनं सेवनं नृणाम् ॥ ८४ ॥

गुरुर्ब्रह्म स्वयं साक्षात्सेव्यो वन्द्यो मुमुक्षुभिः ।
नोद्वेजनीय एवायं कृतज्ञेन विवेकिना ॥ ८५ ॥

यावदायुस्त्वया वन्द्यो वेदान्तो गुरुरीश्वरः ।
मनसा कर्मणा वाचा श्रुतिरेवैष निश्चयः ॥ ८६ ॥

भावाद्वैतं सदा कुर्यात्क्रियाद्वैतं न कर्हिचित् ।
अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह ॥ ८७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**तत्त्वोपदेशः संपूर्णः ॥**



॥ श्रीः ॥

# ॥ एकश्लोकी ॥

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने
किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**एकश्लोकी संपूर्णा ॥**

॥ श्रीः ॥

# ॥ मायापञ्चकम् ॥

निरुपमनित्यनिरंशकेऽप्यखण्डे

मयि चिति सर्वविकल्पनादिशून्ये ।

घटयति जगदीशजीवभेदं

त्वघटितघटनापटीयसी माया ॥ १ ॥

श्रुतिशतनिगमान्तशोधकान-

प्यहह धनादिनिदर्शनेन सद्यः ।

कलुषयति चतुष्पदाद्यभिन्ना-

नघटितघटनापटीयसी माया ॥ २ ॥

सुखचिदखण्डविबोधमद्वितीयं

वियदनलादिविनिर्मिते नियोज्य ।

भ्रमयति भवसागरे नितान्तं

त्वघटितघटनापटीयसी माया ॥ ३ ॥

अपगतगुणवर्णजातिभेदे
सुखचिति विप्रविडाद्यहंकृतिं च ।
स्फुटयति सुतदारगेहमोहं
त्वघटितघटनापटीयसी माया ॥ ४ ॥

विधिहरिहरविभेदमप्यखण्डे
बत विरचय्य बुधानपि प्रकामम् ।
भ्रमयति हरिहरभेदभावा-
नघटितघटनापटीयसी मया ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**मायापञ्चकं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ प्रौढानुभूतिः ॥

प्रौढप्रौढनिजानुभूतिगलितद्वैतेन्द्रजालो गुरु-

गूढं गूढमघौघदुष्टकुधियां स्पष्टं सुधीशालिनाम् ।

स्वान्ते सम्यगिहानुभूतमपि सच्छिष्यावबोधाय त-

त्सत्यं संस्मृतवान्समस्तजगतां नैजं निजालोकनात् ॥

द्वैतं मय्यखिलं समुत्थितमिदं मिथ्या मनःकल्पितं

तोयं तोयविवर्जिते मरुतले भ्रान्त्यैव सिद्धं न हि ।

यद्येवं खलु दृश्यमेतदखिलं नाहं न वा तन्मम

प्रौढानन्दचिदेकसन्मयवपुः शुद्धोऽस्म्यखण्डोऽस्म्यहम् ॥

देहो नाहमचेतनोऽयमनिशं कुड्यादिवन्निश्चितो

नाहं प्राणमयोऽपि वा दृतिधृतो वायुर्यथा निश्चितः ।

सोऽहं नापि मनोमयः कपिचलः कार्पण्यदुष्टो न वा

बुद्धिर्बुद्धकुवृत्तिकेव कुहना नाज्ञानमन्धंतमः ॥ ३ ॥

नाहं खादिरपि स्फुटं मरुतलभ्राजत्पयःसाम्यत-
स्तेभ्यो नित्यविलक्षणोऽखिलदृशिः सौरप्रकाशो यथा ।
दृश्यैः सङ्गविवर्जितो गगनवत्संपूर्णरूपोऽस्म्यहं
वस्तुस्थित्यनुरोधतस्त्वहमिदं वीच्यादि सिन्धुर्यथा ॥ ४ ॥

निर्द्वैतोऽस्म्यहमस्मि निर्मलचिदाकाशोऽस्मि पूर्णोऽस्म्यहं
निर्देहोऽस्मि निरिन्द्रियोऽस्मि नितरां निष्प्राणवर्गोऽस्म्यहम् ।
निर्मुक्ताशुभमानसोऽस्मि विगलद्विज्ञानकोशोऽस्म्यहं
निर्मायोऽस्मि निरन्तरोऽस्मि विपुलप्रौढप्रकाशोऽस्म्यहम् ॥

मत्तोऽन्यन्न हि किंचिदस्ति यदि चिद्भास्यं ततस्तन्मृषा
गुञ्जावह्निवदेव सर्वकलनाधिष्ठानभूतोऽस्म्यहम् ।
सर्वस्यापि दृगस्म्यहं समरसः शान्तोऽस्म्यपापोऽस्म्यहं
पूर्णोऽस्मि द्वयवर्जितोऽस्मि विपुलाकाशोऽस्मि नित्योऽस्म्यहम् ॥

मय्यस्मिन्परमार्थके श्रुतिशिरोवेद्ये स्वतो भासने
का वा विप्रतिपत्तिरेतदखिलं भात्येव यत्संनिधेः ।
सौरालोकवशात्प्रतीतमखिलं पश्यन्न तस्मिञ्जनः
संदिग्धोऽस्त्यत एव केवलशिवः कोऽपि प्रकाशोऽस्म्यहम् ॥

नित्यस्फूर्तिमयोऽस्मि निर्मलसदाकाशोऽस्मि शान्तोऽस्म्यहं
नित्यानन्दमयोऽस्मि निर्गतमहामोहान्धकारोऽस्म्यहम् ।
विज्ञातं परमार्थतत्त्वमखिलं नैजं निरस्ताशुभं
मुक्तप्राप्यमपास्तभेदकलनाकैवल्यसंज्ञोऽस्म्यहम् ॥ ८ ॥

स्वाप्नद्वैतवदेव जाग्रतमपि द्वैतं मनोमात्रकं
मिथ्येत्येव विहाय सच्चिदमलस्वान्तैकरूपोऽस्म्यहम् ।
यद्वा वेद्यमशेषमेतदनिशं मद्रूपमेवेत्यपि
ज्ञात्वा त्यक्तमरुन्महोदधिरिव प्रौढो गभीरोऽस्म्यहम् ॥

गन्तव्यं किमिहास्ति सर्वपरिपूर्णस्याप्यखण्डाकृतेः
कर्तव्यं किमिहास्ति निष्क्रियतनोर्मोक्षैकरूपस्य मे ।
निर्द्वैतस्य न हेयमन्यदपि वा नो वाप्युपेयान्तरं
शान्तोऽद्यास्मि विमुक्ततोयविमलो मेघो यथा निर्मलः ॥

किं नः प्राप्तमितः पुरा किमधुना लब्धं विचारादिना
यस्मात्तत्सुखरूपमेव सततं जाज्वल्यमानोऽस्म्यहम् ।
किं वापेक्ष्यमिहापि मय्यतितरां मिथ्याविचारादिकं
द्वैताद्वैतविवर्जिते समरसे मौनं परं संमतम् ॥ ११ ॥

श्रोतव्यं च किमस्ति पूर्णसुदृशो मिथ्यापरोक्षस्य मे
मन्तव्यं च न मेऽस्ति किंचिदपि वा निःसंशयज्योतिषः ।
ध्यातृध्येयविभेदहानिवपुषो न ध्येयमस्त्येव मे
सर्वात्मैकमहारसस्य सततं नो वा समाधिर्मम ॥ १२ ॥

आत्मानात्मविवेचनापि मम नो विद्वत्कृता रोचते-
ऽनात्मा नास्ति यदस्ति गोचरवपुः को वा विवेक्तुं क्षमी ।
मिथ्यावादविचारचिन्तनमहो कुर्वन्त्यदृष्टात्मका
भ्रान्ता एव न पारगा दृढधियस्तूष्णीं शिलावत्स्थिताः ॥

वस्तुस्थित्यनुरोधतस्त्वहमहो कश्चित्पदार्थो न चा-
प्येवं कोऽपि विभामि संततदृशी वाङ्मानसागोचरः ।
निष्पापोऽस्म्यभयोऽस्म्यहं विगतदुःशङ्काकलङ्कोऽस्म्यहं
संशान्तानुपमानशीतलमहःप्रौढप्रकाशोऽस्म्यहम् ॥१४॥

योऽहं पूर्वमितः प्रशान्तकलनाशुद्धोऽस्मि बुद्धोऽस्म्यहं
यस्मान्मत्त इदं समुत्थितमभूदेतन्मया धार्यते ।
मय्येव प्रलयं प्रयाति निरधिष्ठानाय तस्मै सदा
सत्यानन्दचिदात्मकाय विपुलप्रज्ञाय मह्यं नमः ॥ १५ ॥

सत्ताचित्सुखरूपमस्ति सततं नाहं च न त्वं मृषा
नेदं वापि जगत्प्रदृष्टमखिलं नास्तीति जानीहि भो ।
यत्प्रोक्तं करुणावशात्त्वयि मया तत्सत्यमेतत्स्फुटं
श्रद्धत्स्वानघ शुद्धबुद्धिरसि चेन्मात्रास्तु ते संशयः ॥

स्वारस्यैकसुबोधचारुमनसे प्रौढानुभूतिस्त्वियं
दातव्या न तु मोहदुग्धकुधिये दुष्टान्तरङ्गाय च ।
येयं रम्यविदर्पितोत्तमशिरः प्राप्ता चकास्ति स्वयं
सा चेन्मर्कटहस्तदेशपतिता किं राजते केतकी ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
प्रौढानुभूतिः संपूर्णा ॥

॥ श्रीः ॥

# ॥ ब्रह्मज्ञानावलीमाला ॥

सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् ।
ब्रह्मज्ञानावलीमाला सर्वेषां मोक्षसिद्धये ॥ १ ॥

असङ्गोऽहमसङ्गोऽहमसङ्गोऽहं पुनः पुनः ।
सच्चिदानन्दरूपोऽहमहमेवाहमव्ययः ॥ २ ॥

नित्यशुद्धविमुक्तोऽहं निराकारोऽहमव्ययः ।
भूमानन्दस्वरूपोऽहमहमेवाहमव्ययः ॥ ३ ॥

नित्योऽहं निरवद्योऽहं निराकारोऽहमच्युतः ।
परमानन्दरूपोऽहमहमेवाहमव्ययः ॥ ४ ॥

शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च ।
अखण्डानन्दरूपोऽहमहमेवाहमव्ययः ॥ ५ ॥

प्रत्यक्चैतन्यरूपोऽहं शान्तोऽहं प्रकृतेः परः ।
शाश्वतानन्दरूपोऽहमहमेवाहमव्ययः ॥ ६ ॥

तत्त्वातीतः परात्माहं मध्यातीतः परः शिवः ।
मायातीतः परंज्योतिरहमेवाहमव्ययः ॥ ७ ॥

नानारूपव्यतीतोऽहं चिदाकारोऽहमच्युतः ।
सुखरूपस्वरूपोऽहमहमेवाहमव्ययः ॥ ८ ॥

मायातत्कार्यदेहादि मम नास्त्येव सर्वदा ।
स्वप्रकाशैकरूपोऽहमहमेवाहमव्ययः ॥ ९ ॥

गुणत्रयव्यतीतोऽहं ब्रह्मादीनां च साक्ष्यहम् ।
अनन्तानन्तरूपोऽहमहमेवाहमव्ययः ॥ १० ॥

अन्तर्यामिस्वरूपोऽहं कूटस्थः सर्वगोऽस्म्यहम् ।
परमात्मस्वरूपोऽहमहमेवाहमव्ययः ॥ ११ ॥

निष्कलोऽहं निष्क्रियोऽहं सर्वात्माद्यः सनातनः ।
अपरोक्षस्वरूपोऽहमहमेवाहमव्ययः ॥ १२ ॥

द्वन्द्वादिसाक्षिरूपोऽहमचलोऽहं सनातनः ।
सर्वसाक्षिस्वरूपोऽहमहमेवाहमव्ययः ॥ १३ ॥

प्रज्ञानघन एवाहं विज्ञानघन एव च ।
अकर्ताहमभोक्ताहमहमेवाहमव्ययः ॥ १४ ॥

निराधारस्वरूपोऽहं सर्वाधारोऽहमेव च ।
आप्तकामस्वरूपोऽहमहमेवाहमव्ययः ॥ १५ ॥

तापत्रयविनिर्मुक्तो देहत्रयविलक्षणः ।
अवस्थात्रयसाक्ष्यस्मि चाहमेवाहमव्ययः ॥ १६ ॥

दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ।
दृग्ब्रह्म दृश्यं मायेति सर्ववेदान्तडिण्डिमः ॥ १७ ॥

अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः ।
स एव मुक्तः सो विद्वानिति वेदान्तडिण्डिमः ॥ १८ ॥

घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ।
तद्वद्ब्रह्म जगत्सर्वमिति वेदान्तडिण्डिमः ॥ १९ ॥

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
अनेन वेद्यं सच्छास्त्रमिति वेदान्तडिण्डिमः ॥ २० ॥

अन्तर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः ।
ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
ब्रह्मज्ञानावलीमाला संपूर्णा ॥

॥ श्रीः ॥

# ॥ लघुवाक्यवृत्तिः ॥

स्थूलो मांसमयो देहो
सूक्ष्मः स्याद्वासनामयः ।
ज्ञानकर्मेन्द्रियैः सार्धं
धीप्राणौ तच्छरीरगौ ॥ १ ॥

अज्ञानं कारणं साक्षी
बोधस्तेषां विभासकः ।
बोधाभासो बुद्धिगतः
कर्ता स्यात्पुण्यपापयोः ॥ २ ॥

स एव संसरेत्कर्म-
वशाल्लोकद्वये सदा ।
बोधाभासाच्छुद्धबोधं
विविच्यादतियत्नतः ॥ ३ ॥

जागरस्वप्नयोरेव
बोधाभासविडम्बना ।
सुप्तौ तु तल्लये बोधः
शुद्धो जाड्यं प्रकाशयेत् ॥ ४ ॥

जागरेऽपि धियस्तूष्णीं-
भावः शुद्धेन भास्यते ।
धीव्यापाराश्च चिद्भास्या-
श्चिदाभासेन संयुताः ॥ ५ ॥

वह्नितप्तजलं ताप-
युक्तं देहस्य तापकम् ।
चिद्भास्या धीस्तदाभास-
युक्तान्यं भासयेत्तथा ॥ ६ ॥

रूपादौ गुणदोषादि-
विकल्पा बुद्धिगाः क्रियाः ।
ताः क्रिया विषयैः सार्धं
भासयन्ती चितिर्मता ॥ ७ ॥

रूपाच्च गुणदोषाभ्यां
विविक्ता केवला चितिः ।
सैवानुवर्तते रूप-
रसादीनां विकल्पने ॥ ८ ॥

क्षणे क्षणेऽन्यथाभूता
धीविकल्पाश्चितिर्न तु ।
मुक्तासु सूत्रवद्बुद्धि-
विकल्पेषु चितिस्तथा ॥ ९ ॥

मुक्ताभिरावृतं सूत्रं
मुक्तयोर्मध्य ईक्ष्यते ।
तथा वृत्तिविकल्पैश्चि-
त्स्पष्टा मध्ये विकल्पयोः ॥ १० ॥

नष्टे पूर्वविकल्पे तु
यावदन्यस्य नोदयः ।
निर्विकल्पकचैतन्यं
स्पष्टं तावद्विभासते ॥ ११ ॥

एकद्वित्रिक्षणेष्वेवं
विकल्पस्य निरोधनम् ।
क्रमेणाभ्यस्यतां यत्ना-
द्ब्रह्मानुभवकाङ्क्षिभिः ॥ १२ ॥

सविकल्पकजीवोऽयं
ब्रह्म तन्निर्विकल्पकम् ।
अहं ब्रह्मेति वाक्येन
सोऽयमर्थोऽभिधीयते ॥ १३ ॥

सविकल्पकचिद्योऽहं
ब्रह्मैकं निर्विकल्पकम् ।
स्वतःसिद्धा विकल्पास्ते
निरोद्धव्याः प्रयत्नतः ॥ १४ ॥

शक्यः सर्वनिरोधेन
समाधिर्योगिनां प्रियः ।
तदशक्तौ क्षणं रुद्ध्वा
श्रद्धालुर्ब्रह्मतात्मनः ॥ १५ ॥

श्रद्धालुर्ब्रह्मतां स्वस्य
चिन्तयेद्बुद्धिवृत्तिभिः ।
वाक्यवृत्त्या यथाशक्ति
ज्ञात्वाद्धाभ्यस्यतां सदा ॥ १६ ॥

तच्चिन्तनं तत्कथन-
मन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च
ब्रह्माभ्यासं विदुर्बुधाः ॥ १७ ॥

देहात्मधीवद्ब्रह्मात्म-
धीदार्ढ्ये कृतकृत्यता ।
यदा तदायं म्रियतां
मुक्तोऽसौ नात्र संशयः ॥ १८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
लघुवाक्यवृत्तिः संपूर्णा ॥

---

॥ श्रीः ॥

# ॥ निर्वाणमञ्जरी ॥

अहं नामरो नैव मर्त्यो न दैत्यो
न गन्धर्वयक्षः पिशाचप्रभेदः ।
पुमान्नैव न स्त्री तथा नैव षण्डः
प्रकृष्टः प्रकाशस्वरूपः शिवोऽहम् ॥ १ ॥

अहं नैव बालो युवा नैव वृद्धो
न वर्णी न च ब्रह्मचारी गृहस्थः ।
वनस्थोऽपि नाहं न संन्यस्तधर्मा
जगज्जन्मनाशैकहेतुः शिवोऽहम् ॥ २ ॥

अहं नैव मेयस्तिरोभूतमाया
तथैवेक्षितुं मां पृथङ्नास्त्युपायः ।
समाश्लिष्टकायत्रयोऽप्यद्वितीयः
सदातीन्द्रियः सर्वरूपः शिवोऽहम् ॥ ३ ॥

अहं नैव मन्ता न गन्ता न वक्ता
न कर्ता न भोक्ता न मुक्ताश्रमस्थः ।
यथाहं मनोवृत्तिभेदस्वरूप-
स्तथा सर्ववृत्तिप्रदीपः शिवोऽहम् ॥ ४ ॥

न मे लोकयात्राप्रवाहप्रवृत्ति-
र्न मे बन्धबुद्ध्या दुरीहानिवृत्तिः ।
प्रवृत्तिर्निवृत्त्यास्य चित्तस्य वृत्ति-
र्यतस्त्वन्वहं तत्स्वरूपः शिवोऽहम् ॥ ५ ॥

निदानं यदज्ञानकार्यस्य कार्यं
विना यस्य सत्त्वं स्वतो नैव भाति ।
यदाद्यन्तमध्यान्तरालान्तराल-
प्रकाशात्मकं स्यात्तदेवाहमस्मि ॥ ६ ॥

यतोऽहं न बुद्धिर्न मे कार्यसिद्धि-
र्यतो नाहमङ्गं न मे लिङ्गभङ्गम् ।
हृदाकाशवर्ती गताङ्गत्रयार्तिः
सदा सच्चिदानन्दमूर्तिः शिवोऽहम् ॥ ७ ॥

यदासीद्विलासाद्विकारं जगद्य-
द्विकाराश्रयं नाद्वितीयत्वत: स्यात् ।
मनोबुद्धिचित्ताहमाकारवृत्ति-
प्रवृत्तिर्यत: स्यात्तदेवाहमस्मि ॥ ८ ॥

यदन्तर्बहिर्व्यापकं नित्यशुद्धं
यदेकं सदा सच्चिदानन्दकन्दम् ।
यत: स्थूलसूक्ष्मप्रपञ्चस्य भानं
यतस्तत्प्रसूतिस्तदेवाहमस्मि ॥ ९ ॥

यदर्केन्दुविद्युत्प्रभाजालमाला-
विलासास्पदं यत्स्वभेदादिशून्यम् ।
समस्तं जगद्यस्य पादात्मकं स्या-
द्यत: शक्तिभानं तदेवाहमस्मि ॥ १० ॥

यत: कालमृत्युर्बिभेति प्रकामं
यतश्चित्तबुद्धीन्द्रियाणां विलास: ।
हरिब्रह्मरुद्रेन्द्रचन्द्रादिनाम-
प्रकाशो यत: स्यात्तदेवाहमस्मि ॥ ११ ॥

यदाकाशवत्सर्वगं शान्तरूपं
  परं ज्योतिराकारशून्यं वरेण्यम् ।
यदाद्यन्तशून्यं परं शंकराख्यं
  यदन्तर्विभाव्यं तदेवाहमस्मि ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**निर्वाणमञ्जरी संपूर्णा ॥**

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

पृष्ठम्

पृष्ठम्

न

पृष्ठम्

पृष्ठम्

# MEMORIAL EDITION

OF THE WORKS OF

# SRI SANKARACHARYA.

# CONTENTS.

## ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

॥ श्रीः ॥

*Gourishunker Ganeriwala.*

# ॥ गणेशपञ्चरत्नम् ॥

---

मुदा करात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरक्षकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १ ॥

नतेतरातिभीकरं नवोदितार्कभास्वरं
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २ ॥

समस्तलोकशंकरं निरस्तदैत्यकुञ्जरं
दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं
मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३ ॥

अकिंचनार्तिमार्जनं चिरंतनोक्तिभाजनं
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनंजयादिभूषणं
कपोलदानवारणं भजे पुराणवारणम् ॥ ४ ॥

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजम्
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेव तं विचिन्तयामि संततम् ॥ ५ ॥

महागणेशपञ्चरत्नमादरेण योऽन्वहं
प्रजल्पति प्रभातके हृदि स्मरन्गणेश्वरम् ।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६ ॥

॥ श्रीः ॥

# ॥ गणेशभुजंगम् ॥

---

रणत्क्षुद्रघण्टानिनादाभिरामं

चलत्ताण्डवोद्दण्डवत्पद्मतालम् ।

लसत्तुन्दिलाङ्गोपरिव्यालहारं

गणाधीशमीशानसूनुं तमीडे ॥ १ ॥

ध्वनिध्वंसवीणालयोल्लासिवक्त्रं

स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् ।

गलद्दर्पसौगन्ध्यलोलालिमालं

गणाधीशमीशानसूनुं तमीडे ॥ २ ॥

प्रकाशज्जपारक्तरत्नप्रसून-

प्रवालप्रभातारुणज्योतिरेकम् ।

प्रलम्बोदरं वक्रतुण्डैकदन्तं

गणाधीशमीशानसूनुं तमीडे ॥ ३ ॥

विचित्रस्फुरद्रत्नमालाकिरीटं
किरीटोल्लसच्चन्द्ररेखाविभूषम् ।
विभूषैकभूषं भवध्वंसहेतुं
गणाधीशमीशानसूनुं तमीडे ॥ ४ ॥

उदञ्चद्भुजावल्लरीदृश्यमूलो-
च्चलद्भ्रूलताविभ्रमभ्राजदक्षम् ।
मरुत्सुन्दरीचामरैः सेव्यमानं
गणाधीशमीशानसूनुं तमीडे ॥ ५ ॥

स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं
कृपाकोमलोदारलीलावतारम् ।
कलाबिन्दुगं गीयते योगिवर्यै-
र्गणाधीशमीशानसूनुं तमीडे ॥ ६ ॥

यमेकाक्षरं निर्मलं निर्विकल्पं
गुणातीतमानन्दमाकारशून्यम् ।
परं पारमोंकारमाम्नायगर्भं
वदन्ति प्रगल्भं पुराणं तमीडे ॥ ७ ॥

चिदानन्दसान्द्राय शान्ताय तुभ्यं
नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।
नमोऽनन्तलीलाय कैवल्यभासे
नमो विश्वबीज प्रसीदेशसूनो ॥ ८ ॥

इमं सुस्तवं प्रातरुत्थाय भक्त्या
पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् ।
गणेशप्रसादेन सिध्यन्ति वाचो
गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९ ॥

॥ श्रीः ॥

# ॥ सुब्रह्मण्यभुजंगम् ॥

सदा बालरूपापि विघ्नाद्रिहन्त्री
महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे
विधत्तां श्रियं कापि कल्याणमूर्तिः ॥ १ ॥

न जानामि शब्दं न जानामि चार्थं
न जानामि पद्यं न जानामि गद्यम् ।
चिदेका षडास्या हृदि द्योतते मे
मुखान्निःसरन्ते गिरश्चापि चित्रम् ॥ २ ॥

मयूराधिरूढं महावाक्यगूढं
मनोहारिदेहं महच्चित्तगेहम् ।
महीदेवदेवं महावेदभावं
महादेवबालं भजे लोकपालम् ॥ ३ ॥

यदा संनिधानं गता मानवा मे
भवाम्भोधिपारं गतास्ते तदैव ।
इति व्यञ्जयन्सिन्धुतीरे य आस्ते
तमीडे पवित्रं पराशक्तिपुत्रम् ॥ ४ ॥

यथाब्धेस्तरङ्गा लयं यान्ति तुङ्गा-
स्तथैवापदः संनिधौ सेवतां मे ।
इतीवोर्मिपङ्क्तीर्नृणां दर्शयन्तं
सदा भावये हृत्सरोजे गुहं तम् ॥ ५ ॥

गिरौ मन्निवासे नरा येऽधिरूढा-
स्तदा पर्वते राजते तेऽधिरूढाः ।
इतीव ब्रुवन्गन्धशैलाधिरूढः
स देवो मुदे मे सदा षण्मुखोऽस्तु ॥ ६ ॥

महाम्भोधितीरे महापापचोरे
मुनीन्द्रानुकूले सुगन्धाख्यशैले ।
गुहायां वसन्तं स्वभासा लसन्तं
जनार्तिं हरन्तं श्रयामो गुहं तम् ॥ ७ ॥

लसत्स्वर्णगेहे नृणां कामदोहे
सुमस्तोमसंछन्नमाणिक्यमञ्चे ।
समुद्यत्सहस्रार्कतुल्यप्रकाशं
सदा भावये कार्तिकेयं सुरेशम् ॥ ८ ॥

रणद्धंसके मञ्जुलेऽत्यन्तशोणे
मनोहारिलावण्यपीयूषपूर्णे ।
मनःषट्पदो मे भवक्लेशतप्तः
सदा मोदतां स्कन्द ते पादपद्मे ॥ ९ ॥

सुवर्णाभदिव्याम्बरैर्भासमानां
क्वणत्किङ्किणीमेखलाशोभमानाम् ।
लसद्धेमपट्टेन विद्योतमानां
कटिं भावये स्कन्द ते दीप्यमानाम् ॥ १० ॥

पुलिन्देशकन्याघनाभोगतुङ्ग-
स्तनालिङ्गनासक्तकाश्मीररागम् ।
नमस्याम्यहं तारकारे तवोरः
स्वभक्तावने सर्वदा सानुरागम् ॥ ११ ॥

विधौ क्लृप्तदण्डान्स्वलीलाधृताण्डा-
न्निरस्तेभशुण्डान्द्विषत्कालदण्डान् ।
हतेन्द्रारिषण्डाञ्जगत्राणशौण्डा-
न्सदा ते प्रचण्डाञ्श्रये बाहुदण्डान् ॥ १२ ॥

सदा शारदाः षण्मृगाङ्का यदि स्युः
समुद्यन्त एव स्थिताश्चेत्समन्तात् ।
सदा पूर्णबिम्बाः कलङ्कैश्च हीना-
स्तदा त्वन्मुखानां ब्रुवे स्कन्द साम्यम् ॥ १३ ॥

स्फुरन्मन्दहासैः सहंसानि चञ्च-
त्कटाक्षावलीभृङ्गसंघोज्ज्वलानि ।
सुधास्यन्दिबिम्बाधराणीशसूनो
तवालोकये षण्मुखाम्भोरुहाणि ॥ १४ ॥

विशालेषु कर्णान्तदीर्घेष्वजस्रं
दयास्यन्दिषु द्वादशस्वीक्षणेषु ।
मयीषत्कटाक्षः सकृत्पातितश्चे-
द्भवेत्ते दयाशील का नाम हानिः ॥ १५ ॥

सुताङ्गोद्भवो मेऽसि जीवेति षड्धा
  जपन्मन्त्रमीशो मुदा जिघ्रते यान् ।
जगद्भारभृद्भ्यो जगन्नाथ तेभ्यः
  किरीटोज्ज्वलेभ्यो नमो मस्तकेभ्यः ॥ १६ ॥

स्फुरद्रत्नकेयूरहाराभिराम-
  श्चलत्कुण्डलश्रीलसद्गण्डभागः ।
कटौ पीतवासाः करे चारुशक्तिः
  पुरस्तान्ममास्तां पुरारेस्तनूजः ॥ १७ ॥

इहायाहि वत्सेति हस्तान्प्रसार्या-
  ह्वयत्यादराच्छंकरे मातुरङ्कात् ।
समुत्पत्य तातं श्रयन्तं कुमारं
  हराश्लिष्टगात्रं भजे बालमूर्तिम् ॥ १८ ॥

कुमारेशसूनो गुह स्कन्द सेना-
  पते शक्तिपाणे मयूराधिरूढ ।
पुलिन्दात्मजाकान्त भक्तार्तिहारिन्
  प्रभो तारकारे सदा रक्ष मां त्वम् ॥ १९ ॥

प्रशान्तेन्द्रिये नष्टसंज्ञे विचेष्टे
कफोद्गारिवक्त्रे भयोत्कम्पिगात्रे ।
प्रयाणोन्मुखे मय्यनाथे तदानीं
द्रुतं मे दयालो भवाग्रे गुह त्वम् ॥ २० ॥

कृतान्तस्य दूतेषु चण्डेषु कोपा-
द्दह च्छिन्द्धि भिन्द्धीति मां तर्जयत्सु ।
मयूरं समारुह्य मा भैरिति त्वं
पुरः शक्तिपाणिर्ममायाहि शीघ्रम् ॥ २१ ॥

प्रणम्यासकृत्पादयोस्ते पतित्वा
प्रसाद्य प्रभो प्रार्थयेऽनेकवारम् ।
न वक्तुं क्षमोऽहं तदानीं कृपाब्धे
न कार्यान्तकाले मनागप्युपेक्षा ॥ २२ ॥

सहस्राण्डभोक्ता त्वया शूरनामा
हतस्तारकः सिंहवक्त्रश्च दैत्यः ।
ममान्तर्हृदिस्थं मनःक्लेशमेकं
न हंसि प्रभो किं करोमि क्व यामि ॥ २३ ॥

अहं सर्वदा दुःखभारावसन्नो
भवान्दीनबन्धुस्त्वदन्यं न याचे ।
भवद्भक्तिरोधं सदा क्लृप्तबाधं
ममाधिं द्रुतं नाशयोमासुत त्वम् ॥ २४ ॥

अपस्मारकुष्ठक्षयार्शःप्रमेह-
ज्वरोन्मादगुल्मादिरोगा महान्तः ।
पिशाचाश्च सर्वे भवत्पत्रभूतिं
विलोक्य क्षणात्तारकारे द्रवन्ते ॥ २५ ॥

दृशि स्कन्दमूर्तिः श्रुतौ स्कन्दकीर्ति-
र्मुखे मे पवित्रं सदा तच्चरित्रम् ।
करे तस्य कृत्यं वपुस्तस्य भृत्यं
गुहे सन्तु लीना ममाशेषभावाः ॥ २६ ॥

मुनीनामुताहो नृणां भक्तिभाजा-
मभीष्टप्रदाः सन्ति सर्वत्र देवाः ।
नृणामन्त्यजानामपि स्वार्थदाने
गुहाद्देवमन्यं न जाने न जाने ॥ २७ ॥

कलत्रं सुता बन्धुवर्गः पशुर्वा
नरो वाथ नारी गृहे ये मदीयाः ।
यजन्तो नमन्तः स्तुवन्तो भवन्तं
स्मरन्तश्च ते सन्तु सर्वे कुमार ॥ २८ ॥

मृगाः पक्षिणो दंशका ये च दुष्टा-
स्तथा व्याधयो बाधका ये मदङ्गे ।
भवच्छक्तितीक्ष्णाग्रभिन्नाः सुदूरे
विनश्यन्तु ते चूर्णितक्रौञ्चशैल ॥ २९ ॥

जनित्री पिता च स्वपुत्रापराधं
सहेते न किं देवसेनाधिनाथ ।
अहं चातिबालो भवान् लोकतातः
क्षमस्वापराधं समस्तं महेश ॥ ३० ॥

नमः केकिने शक्तये चापि तुभ्यं
नमश्छाग तुभ्यं नमः कुक्कुटाय ।
नमः सिन्धवे सिन्धुदेशाय तुभ्यं
पुनः स्कन्दमूर्ते नमस्ते नमोऽस्तु ॥ ३१ ॥

जयानन्दभूमञ्जयापारधाम-
    ञ्जयामोघकीर्ते जयानन्दमूर्ते ।
जयानन्दसिन्धो जयाशेषबन्धो
    जय त्वं सदा मुक्तिदानेशसूनो ॥ ३२ ॥

भुजङ्गाख्यवृत्तेन क्लृप्तं स्तवं यः
    पठेद्भक्तियुक्तो गुहं संप्रणम्य ।
स पुत्रान्कलत्रं धनं दीर्घमायु-
    र्लभेत्स्कन्दसायुज्यमन्ते नरः सः ३३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**श्रीसुब्रह्मण्यभुजंगं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ शिवभुजंगम् ॥

गलद्दानगण्डं मिलद्भृङ्गषण्डं
चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
कनद्दन्तकाण्डं विपद्भङ्गचण्डं
शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥ १ ॥

अनाद्यन्तमाद्यं परं तत्त्वमर्थं
चिदाकारमेकं तुरीयं त्वमेयम् ।
हरिब्रह्ममृग्यं परब्रह्मरूपं
मनोवागतीतं महःशैवमीडे ॥ २ ॥

स्वशक्त्यादिशक्त्यन्तसिंहासनस्थं
मनोहारिसर्वाङ्गरत्नोरुभूषम् ।
जटाहीन्दुगङ्गास्थिशम्याकमौलिं
पराशक्तिमित्रं नुमः पञ्चवक्त्रम् ॥ ३ ॥

शिवेशानतत्पूरुषाघोरवामा-
दिभिः पञ्चभिर्हृन्मुखैः षड्भिरङ्गैः ।
अनौपम्य षट्त्रिंशतं तत्त्वविद्या-
मतीतं परं त्वां कथं वेत्ति को वा ॥ ४ ॥

प्रवालप्रवाहप्रभाशोणमर्धं
मरुत्वन्मणिश्रीमहःश्याममर्धम् ।
गुणस्यूतमेतद्वपुः शैवमन्तः
स्मरामि स्मरापत्तिसंपत्तिहेतोः ॥ ५ ॥

स्वसेवासमायातदेवासुरेन्द्रा-
नमन्मौलिमन्दारमालाभिषक्तम् ।
नमस्यामि शंभो पदाम्भोरुहं ते
भवाम्भोधिपोतं भवानीविभाव्यम् ॥ ६ ॥

जगन्नाथ मन्नाथ गौरीसनाथ
प्रपन्नानुकम्पिन्विपन्नार्तिहारिन् ।
महःस्तोममूर्ते समस्तैकबन्धो
नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ ७ ॥

विरूपाक्ष विश्वेश विश्वादिदेव
त्रयीमूल शंभो शिव त्र्यम्बक त्वम् ।
प्रसीद स्मर त्राहि पश्यावमुक्त्यै
क्षमां प्राप्नुहि त्र्यक्ष मां रक्ष मोदात् ॥ ८ ॥

महादेव देवेश देवादिदेव
स्मरारे पुरारे यमारे हरेति ।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं
ततो मे दयाशील देव प्रसीद ॥ ९ ॥

त्वदन्यः शरण्यः प्रपन्नस्य नेति
प्रसीद स्मरन्नेव हन्यास्तु दैन्यम् ।
न चेत्ते भवेद्भक्तवात्सल्यहानि-
स्ततो मे दयालो सदा संनिधेहि ॥ १० ॥

अयं दानकालस्त्वहं दानपात्रं
भवानेव दाता त्वदन्यं न याचे ।
भवद्भक्तिमेव स्थिरां देहि मह्यं
कृपाशील शंभो कृतार्थोऽस्मि तस्मात् ॥ ११ ॥

पशुं वेत्सि चेन्मां तमेवाधिरूढः
कलङ्कीति वा मूर्ध्नि धत्से तमेव ।
द्विजिह्वः पुनः सोऽपि ते कण्ठभूषा
त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः ॥ १२ ॥

न शक्नोमि कर्तुं परद्रोहलेशं
कथं प्रीयसे त्वं न जाने गिरीश ।
तथाहि प्रसन्नोऽसि कस्यापि कान्ता-
सुतद्रोहिणो वा पितृद्रोहिणो वा ॥ १३ ॥

स्तुतिं ध्यानमर्चां यथावद्विधातुं
भजन्नप्यजानन्महेशावलम्बे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डो-
र्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ १४ ॥

शिरोदृष्टिहृद्रोगशूलप्रमेह-
ज्वरार्शोजरायक्ष्महिक्काविषार्तान् ।
त्वमाद्यो भिषग्भेषजं भस्म शंभो
त्वमुल्लाघयास्मान्वपुर्लाघवाय ॥ १५ ॥

दरिद्रोऽस्म्यभद्रोऽस्मि भग्नोऽस्मि दूये
विषण्णोऽस्मि सन्नोऽस्मि खिन्नोऽस्मि चाहम् ।
भवान्प्राणिनामन्तरात्मासि शंभो
ममाधिं न वेत्सि प्रभो रक्ष मां त्वम् ॥ १६ ॥

त्वदक्ष्णोः कटाक्षः पतेत्त्र्यक्ष यत्र
क्षणं क्ष्मा च लक्ष्मीः स्वयं तं वृणाते ।
किरीटस्फुरच्चामरच्छत्रमाला-
कलाचीगजक्षौमभूषाविशेषैः ॥ १७ ॥

भवान्यै भवायापि मात्रे च पित्रे
मृडान्यै मृडायाप्यघघ्न्यै मखघ्ने ।
शिवाङ्ग्यै शिवाङ्गाय कुर्मः शिवायै
शिवायाम्बिकायै नमस्त्र्यम्बकाय ॥ १८ ॥

भवद्गौरवं मल्लघुत्वं विदित्वा
प्रभो रक्ष कारुण्यदृष्ट्यानुगं माम् ।
शिवात्मानुभावस्तुतावक्षमोऽहं
स्वशक्त्या कृतं मेऽपराधं क्षमस्व ॥ १९ ॥

यदा कर्णरन्ध्रं व्रजेत्कालवाह-
द्विषत्कण्ठघण्टाघणात्कारनादः ।
वृषाधीशमारुह्य देवौपवाह्यं
तदा वत्स मा भीरिति प्रीणय त्वम् ॥ २० ॥

यदा दारुणाभाषणा भीषणा मे
भविष्यन्त्युपान्ते कृतान्तस्य दूताः ।
तदा मन्मनस्त्वत्पदाम्भोरुहस्थं
कथं निश्चलं स्यान्नमस्तेऽस्तु शंभो ॥ २१ ॥

यदा दुर्निवारव्यथोऽहं शयानो
लुठन्निःश्वसन्निःसृताव्यक्तवाणिः ।
तदा जह्नुकन्याजलालंकृतं ते
जटामण्डलं मन्मनोमन्दिरं स्यात् ॥ २२ ॥

यदा पुत्रमित्रादयो मत्सकाशे
रुदन्त्यस्य हा कीदृशीयं दशेति ।
तदा देवदेवेश गौरीश शंभो
नमस्ते शिवायेत्यजस्रं ब्रवाणि ॥ २३ ॥

यदा पश्यतां मामसौ वेत्ति नास्मा-
नयं श्वास एवेति वाचो भवेयुः ।
तदा भूतिभूषं भुजंगावनद्धं
पुरारे भवन्तं स्फुटं भावयेयम ॥ २४ ॥

यदा यातनादेहसंदेहवाही
भवेदात्मदेहे न मोहो महान्मे ।
तदा काशशीतांशुसंकाशमीश
स्मरारे वपुस्ते नमस्ते स्मराणि ॥ २५ ॥

यदापारमच्छायमस्थानमद्भि-
र्जनैर्वा विहीनं गमिष्यामि मार्गम् ।
तदा तं निरुन्धन्कृतान्तस्य मार्गं
महादेव मह्यं मनोज्ञं प्रयच्छ ॥ २६ ॥

यदा रौरवादि स्मरन्नेव भीत्या
व्रजाम्यत्र मोहं महादेव घोरम् ।
तदा मामहो नाथ कस्तारयिष्य-
त्यनाथं पराधीनमर्धेन्दुमौले ॥ २७ ॥

यदा श्वेतपत्रायतालङ्घ्यशक्तेः
कृतान्ताद्भयं भक्तवात्सल्यभावात् ।
तदा पाहि मां पार्वतीवल्लभान्यं
न पश्यामि पातारमेतादृशं मे ॥ २८ ॥

इदानीमिदानीं मृतिर्मे भवित्री-
त्यहो संततं चिन्तया पीडितोऽस्मि ।
कथं नाम मा भून्मृतौ भीतिरेषा
नमस्ते गतीनां गते नीलकण्ठ ॥ २९ ॥

अमर्यादमेवाहमाबालवृद्धं
हरन्तं कृतान्तं समीक्ष्यास्मि भीतः ।
मृतौ तावकाङ्घ्र्यब्जदिव्यप्रसादा-
द्भवानीपते निर्भयोऽहं भवानि ॥ ३० ॥

जराजन्मगर्भाधिवासादिदुःखा-
न्यसह्यानि जह्यां जगन्नाथ देव ।
भवन्तं विना मे गतिर्नैव शंभो
दयालो न जागर्ति किं वा दया ते ॥ ३१ ॥

शिवायेति शब्दो नमःपूर्व एष
स्मरन्मुक्तिकृन्मृत्युहा तत्त्ववाची ।
महेशान मा गान्मनस्तो वचस्तः
सदा मह्यमेतत्प्रदानं प्रयच्छ ॥ ३२ ॥

त्वमप्यम्ब मां पश्य शीतांशुमौलि-
प्रिये भेषजं त्वं भवव्याधिशान्तौ ।
बहुक्लेशभाजं पदाम्भोजपोते
भवाब्धौ निमग्नं नयस्वाद्य पारम् ॥ ३३ ॥

अनुद्यल्ललाटाक्षिवह्निप्ररोहै-
रवामस्फुरच्चारुवामोरुशोभैः ।
अनङ्गभ्रमद्भोगिभूषाविशेषै-
रचन्द्रार्धचूडैरलं दैवतैर्नः ॥ ३४ ॥

अकण्ठेकलङ्कादनङ्गेभुजङ्गा-
दपाणौकपालादफालेनलाक्षात् ।
अमौळौशशाङ्कादवामेकलत्रा-
दहं देवमन्यं न मन्ये न मन्ये ॥ ३५ ॥

महादेव शंभो गिरीश त्रिशूलिं-
स्त्वयीदं समस्तं विभातीति यस्मात् ।
शिवादन्यथा दैवतं नाभिजाने
शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहम् ॥ ३६ ॥

यतोऽजायतेदं प्रपञ्चं विचित्रं
स्थितिं याति यस्मिन्यदेकान्तमन्ते ।
स कर्मादिहीनः स्वयंज्योतिरात्मा
शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहम् ॥ ३७ ॥

किरीटे निशेशो ललाटे हुताशो
भुजे भोगिराजो गले कालिमा च ।
तनौ कामिनी यस्य तत्तुल्यदेवं
न जाने न जाने न जाने न जाने ॥ ३८ ॥

अनेन स्तवेनादरादम्बिकेशं
परां भक्तिमासाद्य यं ये नमन्ति ।
मृतौ निर्भयास्ते जनास्तं भजन्ते
हृदम्भोजमध्ये सदासीनमीशम् ॥ ३९ ॥

भुजंगप्रियाकल्प शंभो मयैवं
भुजंगप्रयातेन वृत्तेन क्लृप्तम् ।
नरः स्तोत्रमेतत्पठित्वोरुभक्त्या
सुपुत्रायुरारोग्यमैश्वर्यमेति ॥ ४० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शिवभुजंगं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ शिवानन्दलहरी ॥

कलाभ्यां चूडालंकृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥ १ ॥

गलन्ती शंभो त्वच्चरितसरितः किल्बिषरजो
दलन्ती धीकुल्यासरणिषु पतन्ती विजयताम् ।
दिशन्ती संसारभ्रमणपरितापोपशमनं
वसन्ती मच्चेतोह्रदभुवि शिवानन्दलहरी ॥ २ ॥

त्रयीवेद्यं हृद्यं त्रिपुरहरमाद्यं त्रिनयनं
जटाभारोदारं चलदुरगहारं मृगधरम् ।
महादेवं देवं मयि सदयभावं पशुपतिं
चिदालम्बं साम्बं शिवमतिविडम्बं हृदि भजे ॥ ३ ॥

सहस्रं वर्तन्ते जगति विबुधाः क्षुद्रफलदा
न मन्ये स्वप्ने वा तदनुसरणं तत्कृतफलम् ।
हरिब्रह्मादीनामपि निकटभाजामसुलभं
चिरं याचे शंभो शिव तव पदाम्भोजभजनम् ॥ ४ ॥

स्मृतौ शास्त्रे वैद्ये शकुनकवितागानफणितौ
पुराणे मन्त्रे वा स्तुतिनटनहास्येष्वचतुरः ।
कथं राज्ञां प्रीतिर्भवति मयि कोऽहं पशुपते
पशुं मां सर्वज्ञ प्रथित कृपया पालय विभो ॥ ५ ॥

घटो वा मृत्पिण्डोऽप्यणुरपि च धूमोऽग्निरचलः
पटो वा तन्तुर्वा परिहरति किं घोरशमनम् ।
वृथा कण्ठक्षोभं वहसि तरसा तर्कवचसा
पदाम्भोजं शंभोर्भज परमसौख्यं व्रज सुधीः ॥ ६ ॥

मनस्ते पादाब्जे निवसतु वचः स्तोत्रफणितौ
करौ चाभ्यर्चायां श्रुतिरपि कथाकर्णनविधौ ।
तव ध्याने बुद्धिर्नयनयुगलं मूर्तिविभवे
परग्रन्थान्कैर्वा परमशिव जाने परमतः ॥ ७ ॥

यथा बुद्धिः शुक्तौ रजतमिति काचाश्मनि मणि-
 जले पैष्टे क्षीरं भवति मृगतृष्णासु सलिलम् ।
तथा देवभ्रान्त्या भजति भवदन्यं जडजनो
 महादेवेशं त्वां मनसि च न मत्वा पशुपते ॥ ८ ॥

गभीरे कासारे विशति विजने घोरविपिने
 विशाले शैले च भ्रमति कुसुमार्थं जडमतिः ।
समर्प्यैकं चेतःसरसिजमुमानाथ भवते
 सुखेनावस्थातुं जन इह न जानाति किमहो ॥ ९ ॥

नरत्वं देवत्वं नगवनमृगत्वं मशकता
 पशुत्वं कीटत्वं भवतु विहगत्वादि जननम् ।
सदा त्वत्पादाब्जस्मरणपरमानन्दलहरी-
 विहारासक्तं चेद्धृदयमिह किं तेन वपुषा ॥ १० ॥

वटुर्वा गेही वा यतिरपि जटी वा तदितरो
 नरो वा यः कश्चिद्भवतु भव किं तेन भवति ।
यदीयं हृत्पद्मं यदि भवदधीनं पशुपते
 तदीयस्त्वं शंभो भवसि भवभारं च वहसि ॥ ११ ॥

गुहायां गेहे वा बहिरपि वने वाद्रिशिखरे
　　जले वा वह्नौ वा वसतु वसतेः किं वद फलम् ।
सदा यस्यैवान्तःकरणमपि शंभो तव पदे
　　स्थितं चेद्योगोऽसौ स च परमयोगी स च सुखी ॥

असारे संसारे निजभजनदूरे जडधिया
　　भ्रमन्तं मामन्धं परमकृपया पातुमुचितम् ।
मदन्यः को दीनस्तव कृपणरक्षातिनिपुण-
　　स्त्वदन्यः को वा मे त्रिजगति शरण्यः पशुपते ॥१३॥

प्रभुस्त्वं दीनानां खलु परमबन्धुः पशुपते
　　प्रमुख्योऽहं तेषामपि किमुत बन्धुत्वमनयोः ।
त्वयैव क्षन्तव्याः शिव मदपराधाश्च सकलाः
　　प्रयत्नात्कर्तव्यं मदवनमियं बन्धुसरणिः ॥ १४ ॥

उपेक्षा नो चेत्किं न हरसि भवद्ध्यानविमुखां
　　दुराशाभूयिष्ठां विधिलिपिमशक्तो यदि भवान् ।
शिरस्तद्वैधात्रं ननखलु सुवृत्तं पशुपते
　　कथं वा निर्यत्नं करनखमुखेनैव लुलितम् ॥ १५ ॥

विरिञ्चिर्दीर्घायुर्भवतु भवता तत्परशिर-
श्चतुष्कं संरक्ष्यं स खलु भुवि दैन्यं लिखितवान् ।
विचारः को वा मां विशद कृपया पाति शिव ते
कटाक्षव्यापारः स्वयमपि च दीनावनपरः ॥ १६ ॥

फलाद्वा पुण्यानां मयि करुणया वा त्वयि विभो
प्रसन्नेऽपि स्वामिन् भवदमलपादाब्जयुगलम् ।
कथं पश्येयं मां स्थगयति नमःसंभ्रमजुषां
निलिम्पानां श्रेणिर्निजकनकमाणिक्यमकुटैः ॥ १७ ॥

त्वमेको लोकानां परमफलदो दिव्यपदवीं
वहन्तस्त्वन्मूलां पुनरपि भजन्ते हरिमुखाः ।
कियद्वा दाक्षिण्यं तव शिव मदाशा च कियती
कदा वा मद्रक्षां वहसि करुणापूरितदृशा ॥ १८ ॥

दुराशाभूयिष्ठे दुरधिपगृहद्वारघटके
दुरन्ते संसारे दुरितनिलये दुःखजनके ।
मदायासं किं न व्यपनयसि कस्योपकृतये
वदेयं प्रीतिश्चेत्तव शिव कृतार्थाः खलु वयम् ॥ १९ ॥

सदा मोहाटव्यां चरति युवतीनां कुचगिरौ
नटत्याशाशाखास्वटति झटिति स्वैरमभितः ।
कपालिन् भिक्षो मे हृदयकपिमत्यन्तचपलं
दृढं भक्त्या बद्ध्वा शिव भवदधीनं कुरु विभो ॥ २० ॥

धृतिस्तम्भाधारां दृढगुणनिबद्धां सगमनां
विचित्रां पद्माढ्यां प्रतिदिवससन्मार्गघटिताम् ।
स्मरारे मच्चेतःस्फुटपटकुटीं प्राप्य विशदां
जय स्वामिन् शक्त्या सह शिव गणैः सेवित विभो ॥

प्रलोभाद्यैरर्थाहरणपरतन्त्रो धनिगृहे
प्रवेशोद्युक्तः सन्भ्रमति बहुधा तस्करपते ।
इमं चेतश्चोरं कथमिह सहे शंकर विभो
तवाधीनं कृत्वा मयि निरपराधे कुरु कृपाम् ॥ २२ ॥

करोमि त्वत्पूजां सपदि सुखदो मे भव विभो
विधित्वं विष्णुत्वं दिशसि खलु तस्याः फलमिति ।
पुनश्च त्वां द्रष्टुं दिवि भुवि वहन्पक्षिमृगता-
मदृष्ट्वा तत्खेदं कथमिह सहे शंकर विभो ॥ २३ ॥

कदा वा कैलासे कनकमणिसौधे सह गणै-
र्वसञ्शंभोरग्रे स्फुटघटितमूर्धाञ्जलिपुटः ।
विभो साम्ब स्वामिन्परमशिव पाहीति निगद-
न्विधातॄणां कल्पान्क्षणमिव विनेष्यामि सुखतः ॥ २४ ॥

स्तवैर्ब्रह्मादीनां जयजयवचोभिर्नियमिनां
गणानां केलीभिर्मदकलमहोक्षस्य ककुदि ।
स्थितं नीलग्रीवं त्रिनयनमुमाश्लिष्टवपुषं
कदा त्वां पश्येयं करधृतमृगं खण्डपरशुम् ॥ २५ ॥

कदा वा त्वां दृष्ट्वा गिरिश तव भव्याङ्घ्रियुगलं
गृहीत्वा हस्ताभ्यां शिरसि नयने वक्षसि वहन् ।
समाश्लिष्याघ्राय स्फुटजलजगन्धान्परिमला-
नलभ्यां ब्रह्माद्यैर्मुदमनुभविष्यामि हृदये ॥ २६ ॥

करस्थे हेमाद्रौ गिरिश निकटस्थे धनपतौ
गृहस्थे स्वर्भूजामरसुरभिचिन्तामणिगणे ।
शिरःस्थे शीतांशौ चरणयुगलस्थेऽखिलशुभे
कमर्थं दास्येऽहं भवतु भवदर्थं मम मनः ॥ २७ ॥

सारूप्यं तव पूजने शिव महादेवेति संकीर्तने
सामीप्यं शिवभक्तिधुर्यजनतासांगत्यसंभाषणे ।
सालोक्यं च चराचरात्मकतनुध्याने भवानीपते
सायुज्यं मम सिद्धमत्र भवति स्वामिन्कृतार्थोऽस्म्यहम् ॥

त्वत्पादाम्बुजमर्चयामि परमं त्वां चिन्तयाम्यन्वहं
त्वामीशं शरणं व्रजामि वचसा त्वामेव याचे विभो ।
वीक्षां मे दिश चाक्षुषीं सकरुणां दिव्यैश्चिरं प्रार्थितां
शंभो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ २९ ॥

वस्त्रोद्धूतविधौ सहस्रकरता पुष्पार्चने विष्णुता
गन्धे गन्धवहात्मतान्नपचने बर्हिर्मुखाध्यक्षता ।
पात्रे काञ्चनगर्भतास्ति मयि चेद्बालेन्दुचूडामणे
शुश्रूषां करवाणि ते पशुपते स्वामिंस्त्रिलोकीगुरो ॥

नालं वा परमोपकारकमिदं त्वेकं पशूनां पते
पश्यन्कुक्षिगतांश्चराचरगणान्बाह्यस्थितान्रक्षितुम् ।
सर्वामर्त्यपलायनौषधमतिज्वालाकरं भीकरं
निक्षिप्तं गरलं गले न गिलितं नोद्गीर्णमेव त्वया ॥

ज्वालोग्रः सकलामरातिभयदः क्ष्वेलः कथं वा त्वया
दृष्टः किं च करे धृतः करतले किं पक्वजम्बूफलम् ।
जिह्वायां निहितश्च सिद्धघुटिका वा कण्ठदेशे भृतः
किं ते नीलमणिर्विभूषणमयं शंभो महात्मन्वद ॥ ३२ ॥

नालं वा सकृदेव देव भवतः सेवा नतिर्वा नुतिः
पूजा वा स्मरणं कथाश्रवणमप्यालोकनं मादृशाम् ।
स्वामिन्नस्थिरदेवतानुसरणायासेन किं लभ्यते
का वा मुक्तिरितः कुतो भवति चेत्किं प्रार्थनीयं तदा ॥

किं ब्रूमस्तव साहसं पशुपते कस्यास्ति शंभो भव-
द्धैर्यं चेदृशमात्मनः स्थितिरियं चान्यैः कथं लभ्यते ।
भ्रश्यद्देवगणं त्रसन्मुनिगणं नश्यत्प्रपञ्चं लयं
पश्यन्निर्भय एक एव विहरत्यानन्दसान्द्रो भवान् ॥

योगक्षेमधुरंधरस्य सकलश्रेयःप्रदोद्योगिनो
दृष्टादृष्टमतोपदेशकृतिनो बाह्यान्तरव्यापिनः ।
सर्वज्ञस्य दयाकरस्य भवतः किं वेदितव्यं मया
शंभो त्वं परमान्तरङ्ग इति मे चित्ते स्मराम्यन्वहम् ॥

भक्तो भक्तिगुणावृते मुदमृतापूर्णे प्रसन्ने मनः-
कुम्भे साम्ब तवाङ्घ्रिपल्लवयुगं संस्थाप्य संवित्फलम् ।
सत्त्वं मन्त्रमुदीरयन्निजशरीरागारशुद्धिं वह-
न्पुण्याहं प्रकटीकरोमि रुचिरं कल्याणमापादयन् ॥

आम्नायाम्बुधिमादरेण सुमनःसंघाः समुद्यन्मनो
मन्थानं दृढभक्तिरज्जुसहितं कृत्वा मथित्वा ततः ।
सोमं कल्पतरुं सुपर्वसुरभिं चिन्तामणिं धीमतां
नित्यानन्दसुधां निरन्तररमासौभाग्यमातन्वते ॥ ३७ ॥

प्राक्पुण्याचलमार्गदर्शितसुधामूर्तिः प्रसन्नः शिवः
सोमः सद्गणसेवितो मृगधरः पूर्णस्तमोमोचकः ।
चेतःपुष्करलक्षितो भवति चेदानन्दपाथोनिधिः
प्रागल्भ्येन विजृम्भते सुमनसां वृत्तिस्तदा जायते ॥

धर्मो मे चतुरङ्घ्रिकः सुचरितः पापं विनाशं गतं
कामक्रोधमदादयो विगलिताः कालाः सुखाविष्कृताः ।
ज्ञानानन्दमहौषधिः सुफलिता कैवल्यनाथे सदा
मान्ये मानसपुण्डरीकनगरे राजावतंसे स्थिते ॥ ३९ ॥

धीयन्त्रेण वचोघटेन कविताकुल्योपकुल्याक्रमै-
रानीतैश्च सदाशिवस्य चरिताम्भोराशिदिव्यामृतैः ।
हृत्केदारयुताश्च भक्तिकलमाः साफल्यमातन्वते
दुर्भिक्षान्मम सेवकस्य भगवन्विश्वेश भीतिः कुतः ॥

पापोत्पातविमोचनाय रुचिरैश्वर्याय मृत्युंजय
स्तोत्रध्याननतिप्रदक्षिणसपर्यालोकनाकर्णने ।
जिह्वाचित्तशिरोङ्घ्रिहस्तनयनश्रोत्रैरहं प्रार्थितो
मामाज्ञापय तन्निरूपय मुहुर्मामेव मा मेऽवचः ॥ ४१ ॥

गाम्भीर्यं परिखापदं घनधृतिः प्राकार उद्यद्गुण-
स्तोमश्चाप्तबलं घनेन्द्रियचयो द्वाराणि देहे स्थितः ।
विद्या वस्तुसमृद्धिरित्यखिलसामग्रीसमेते सदा
दुर्गातिप्रियदेव मामकमनोदुर्गे निवासं कुरु ॥ ४२ ॥

मा गच्छ त्वमितस्ततो गिरिश भो मय्येव वासं कुरु
स्वामिन्नादिकिरात मामकमनःकान्तारसीमान्तरे ।
वर्तन्ते बहुशो मृगा मदजुषो मात्सर्यमोहादय-
स्तान्हत्वा मृगयाविनोदरुचितालाभं च संप्राप्स्यसि ॥

करलग्नमृगः करीन्द्रभङ्गो
घनशार्दूलविखण्डनोऽस्तजन्तुः ।
गिरिशो विशदाकृतिश्च चेतः-
कुहरे पञ्चमुखोऽस्ति मे कुतो भीः ॥ ४४ ॥

छन्दःशाखिशिखान्वितैर्द्विजवरैः संसेविते शाश्वते
सौख्यापादिनि खेदभेदिनि सुधासारैः फलैर्दीपिते ।
चेतःपक्षिशिखामणे त्यज वृथासंचारमन्यैरलं
नित्यं शंकरपादपद्मयुगलीनीडे विहारं कुरु ॥ ४५ ॥

आकीर्णे नखराजिकान्तिविभवैरुद्यत्सुधावैभवै-
राधौतेऽपि च पद्मरागललिते हंसव्रजैराश्रिते ।
नित्यं भक्तिवधूगणैश्च रहसि स्वेच्छाविहारं कुरु
स्थित्वा मानसराजहंस गिरिजानाथाङ्घ्रिसौधान्तरे ॥

शंभुध्यानवसन्तसङ्गिनि हृदारामेऽघजीर्णच्छदाः
स्रस्ता भक्तिलताच्छटा विलसिताः पुण्यप्रवालश्रिताः ।
दीप्यन्ते गुणकोरका जपवचःपुष्पाणि सद्वासना
ज्ञानानन्दसुधामरन्दलहरी संवित्फलाभ्युन्नतिः ॥ ४७ ॥

नित्यानन्दरसालयं सुरमुनिस्वान्ताम्बुजाताश्रयं
स्वच्छं सद्द्विजसेवितं कलुषहृत्सद्वासनाविष्कृतम् ।
शंभुध्यानसरोवरं व्रज मनोहंसावतंस स्थिरं
किं क्षुद्राश्रयपल्वलभ्रमणसंजातश्रमं प्राप्स्यसि ॥ ४८ ॥

आनन्दामृतपूरिता हरपदाम्भोजालवालोद्यता
स्थैर्योपघ्नमुपेत्य भक्तिलतिका शाखोपशाखान्विता ।
उच्चैर्मानसकायमानपटलीमाक्रम्य निष्कल्मषा
नित्याभीष्टफलप्रदा भवतु मे सत्कर्मसंवर्धिता ॥ ४९ ॥

संध्यारम्भविजृम्भितं श्रुतिशिरःस्थानान्तराधिष्ठितं
सप्रेमभ्रमराभिराममसकृत्सद्वासनाशोभितम् ।
भोगीन्द्राभरणं समस्तसुमनःपूज्यं गुणाविष्कृतं
सेवे श्रीगिरिमल्लिकार्जुनमहालिङ्गं शिवालिङ्गितम् ॥५०॥

भृङ्गीच्छानटनोत्कटः करिमदग्राही स्फुरन्माधवा-
ह्लादो नादयुतो महासितवपुः पञ्चेषुणा चादृतः ।
सत्पक्षः सुमनोवनेषु स पुनः साक्षान्मदीये मनो-
राजीवे भ्रमराधिपो विहरतां श्रीशैलवासी विभुः ॥५१॥

कारुण्यामृतवर्षिणं घनविपद्ग्रीष्मच्छिदाकर्मठं
विद्यासस्यफलोदयाय सुमनःसंसेव्यमिच्छाकृतिम् ।
नृत्यद्भक्तमयूरमद्रिनिलयं चञ्चज्जटामण्डलं
शंभो वाञ्छति नीलकंधर सदा त्वां मे मनश्चातकः ॥

आकाशेन शिखी समस्तफणिनां नेत्रा कलापी नता-
नुग्राहिप्रणवोपदेशनिनदैः केकीति यो गीयते ।
श्यामां शैलसमुद्भवां घनरुचिं दृष्ट्वा नटन्तं मुदा
वेदान्तोपवने विहाररसिकं तं नीलकण्ठं भजे ॥ ५३ ॥

संध्या घर्मदिनात्ययो हरिकराघातप्रभूतानक-
ध्वानो वारिदगर्जितं दिविषदां दृष्टिच्छटा चञ्चला ।
भक्तानां परितोषबाष्पविततिर्वृष्टिर्मयूरी शिवा
यस्मिन्नुज्ज्वलताण्डवं विजयते तं नीलकण्ठं भजे ॥ ५४ ॥

आद्यायामिततेजसे श्रुतिपदैर्वेद्याय साध्याय ते
विद्यानन्दमयात्मने त्रिजगतः संरक्षणोद्योगिने ।
ध्येयायाखिलयोगिभिः सुरगणैर्गेयाय मायाविने
सम्यक्ताण्डवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥

नित्याय त्रिगुणात्मने पुरजिते कात्यायनीश्रेयसे
सत्यायादिकुटुम्बिने मुनिमनःप्रत्यक्षचिन्मूर्तये ।
मायासृष्टजगत्त्रयाय सकलाम्नायान्तसंचारिणे
सायंताण्डवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥ ५६ ॥

नित्यं स्वोदरपूरणाय सकलानुद्दिश्य वित्ताशया
व्यर्थं पर्यटनं करोमि भवतः सेवां न जाने विभो ।
मज्जन्मान्तरपुण्यपाकबलतस्त्वं शर्व सर्वान्तर-
स्तिष्ठस्येव हि तेन वा पशुपते ते रक्षणीयोऽस्म्यहम् ॥

एको वारिजबान्धवः क्षितिनभोव्याप्तं तमोमण्डलं
भित्त्वा लोचनगोचरोऽपि भवति त्वं कोटिसूर्यप्रभः ।
वेद्यः किं न भवस्यहो घनतरं कीदृग्भवेन्मत्तम-
स्तत्सर्वं व्यपनीय मे पशुपते साक्षात्प्रसन्नो भव ॥ ५८ ॥

हंसः पद्मवनं समिच्छति यथा नीलाम्बुदं चातकः
कोकः कोकनदप्रियं प्रतिदिनं चन्द्रं चकोरस्तथा ।
चेतो वाञ्छति मामकं पशुपते चिन्मार्गमृग्यं विभो
गौरीनाथ भवत्पदाब्जयुगलं कैवल्यसौख्यप्रदम् ॥ ५९ ॥

रोधस्तोयहृत: श्रमेण पथिकश्छायां तरोर्वृष्टितो
भीत: स्वस्थगृहं गृहस्थमतिथिर्दीन: प्रभुं धार्मिकम् ।
दीपं संतमसाकुलश्च शिखिनं शीतावृतस्त्वं तथा
चेत: सर्वभयापहं व्रज सुखं शंभो: पदाम्भोरुहम् ॥

अङ्कोलं निजबीजसंततिरयस्कान्तोपलं सूचिका
साध्वी नैजविभुं लता क्षितिरुहं सिन्धु: सरिद्वल्लभम् ।
प्राप्नोतीह यथा तथा पशुपते: पादारविन्दद्वयं
चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते ॥६१॥

आनन्दाश्रुभिरातनोति पुलकं नैर्मल्यतश्छादनं
वाचाशङ्खमुखे स्थितैश्च जठरापूर्तिं चरित्रामृतै: ।
रुद्राक्षैर्भसितेन देव वपुषो रक्षां भवद्भावना-
पर्यङ्के विनिवेश्य भक्तिजननी भक्तार्भकं रक्षति ॥ ६२ ॥

मार्गावर्तितपादुका पशुपतेरङ्गस्य कूर्चायते
गण्डूषाम्बुनिषेचनं पुररिपोर्दिव्याभिषेकायते ।
किंचिद्भक्षितमांसशेषकबलं नव्योपहारायते
भक्ति: किं न करोत्यहो वनचरो भक्तावतंसायते ॥ ६३ ॥

वक्षस्ताडनमन्तकस्य कठिनापस्मारसंमर्दनं
भूभृत्पर्यटनं नमत्सुरशिरःकोटीरसंघर्षणम् ।
कर्मेदं मृदुलस्य तावकपदद्वन्द्वस्य किं वोचितं
मच्चेतोमणिपादुकाविहरणं शंभो सदाङ्गीकुरु ॥ ६४ ॥

वक्षस्ताडनशङ्कया विचलितो वैवस्वतो निर्जराः
कोटीरोज्ज्वलरत्नदीपकलिकानीराजनं कुर्वते ।
दृष्ट्वा मुक्तिवधूस्तनोति निभृताश्लेषं भवानीपते
यच्चेतस्तव पादपद्मभजनं तस्येह किं दुर्लभम् ॥ ६५ ॥

क्रीडार्थं सृजसि प्रपञ्चमखिलं क्रीडामृगास्ते जना
यत्कर्माचरितं मया च भवतः प्रीत्यै भवत्येव तत् ।
शंभो स्वस्य कुतूहलस्य करणं मच्चेष्टितं निश्चितं
तस्मान्मामकरक्षणं पशुपते कर्तव्यमेव त्वया ॥ ६६ ॥

बहुविधपरितोषबाष्पपूर-
स्फुटपुलकाङ्कितचारुभोगभूमिम् ।
चिरपदफलकाङ्क्षिसेव्यमानां
परमसदाशिवभावनां प्रपद्ये ॥ ६७ ॥

अमितमुदमृतं मुहुर्दुहन्तीं
विमलभवत्पदगोष्ठमावसन्तीम् ।
सदय पशुपते सुपुण्यपाकां
मम परिपालय भक्तिधेनुमेकाम् ॥ ६८ ॥

जडता पशुता कलङ्किता
कुटिलचरत्वं च नास्ति मयि देव ।
अस्ति यदि राजमौले
भवदाभरणस्य नास्मि किं पात्रम् ॥ ६९ ॥

अरहसि रहसि स्वतन्त्रबुद्ध्या
वरिवसितुं सुलभः प्रसन्नमूर्तिः ।
अगणितफलदायकः प्रभुर्मे
जगदधिको हृदि राजशेखरोऽस्ति ॥ ७० ॥

आरूढभक्तिगुणकुञ्चितभावचाप-
युक्तैः शिवस्मरणबाणगणैरमोघैः ।
निर्जित्य किल्बिषरिपून्विजयी सुधीन्द्रः
सानन्दमावहति सुस्थिरराजलक्ष्मीम् ॥ ७१ ॥

ध्यानाञ्जनेन समवेक्ष्य तमःप्रदेशं
भित्त्वा महाबलिभिरीश्वरनाममन्त्रैः ।
दिव्याश्रितं भुजगभूषणमुद्वहन्ति
ये पादपद्ममिह ते शिव ते कृतार्थाः ॥ ७२ ॥

भूदारतामुदवहद्यदपेक्षया श्री-
भूदार एव किमतः सुमते लभस्व ।
केदारमाकलितमुक्तिमहौषधीनां
पादारविन्दभजनं परमेश्वरस्य ॥ ७३ ॥

आशापाशक्लेशदुर्वासनादि-
भेदोद्युक्तैर्दिव्यगन्धैरमन्दैः ।
आशाशाटीकस्य पादारविन्दं
चेतःपेटीं वासितां मे तनोतु ॥ ७४ ॥

कल्याणिनं सरसचित्रगतिं सवेगं
सर्वेङ्गितज्ञमनघं ध्रुवलक्षणाढ्यम् ।
चेतस्तुरङ्गमधिरुह्य चर स्मरारे
नेतः समस्तजगतां वृषभाधिरूढ ॥ ७५ ॥

भक्तिर्महेशपदपुष्करमावसन्ती
कादम्बिनीव कुरुते परितोषवर्षम् ।
संपूरितो भवति यस्य मनस्तटाक-
स्तज्जन्मसस्यमखिलं सफलं च नान्यत् ॥ ७६ ॥

बुद्धिः स्थिरा भवितुमीश्वरपादपद्म-
सक्ता वधूर्विरहिणीव सदा स्मरन्ती ।
सद्भावनास्मरणदर्शनकीर्तनादि
संमोहितेव शिवमन्त्रजपेन विन्ते ॥ ७७ ॥

सदुपचारविधिष्वनुबोधितां
सविनयां सुहृदं समुपाश्रिताम् ।
मम समुद्धर बुद्धिमिमां प्रभो
वरगुणेन नवोढवधूमिव ॥ ७८ ॥

नित्यं योगिमनःसरोजदलसंचारक्षमस्त्वत्क्रमः
शंभो तेन कथं कठोरयमराड्वक्षःकवाटक्षतिः ।
अत्यन्तं मृदुलं त्वदङ्घ्रियुगलं हा मे मनश्चिन्तय-
त्येतल्लोचनगोचरं कुरु विभो हस्तेन संवाहये ॥ ७९ ॥

एष्यत्येष जनिं मनोऽस्य कठिनं तस्मिन्नटानीति म-
द्रक्षायै गिरिसीम्नि कोमलपदन्यासः पुराभ्यासितः ।
नो चेद्दिव्यगृहान्तरेषु सुमनस्तल्पेषु वेद्यादिषु
प्रायः सत्सु शिलातलेषु नटनं शंभो किमर्थं तव ॥

कंचित्कालमुमामहेश भवतः पादारविन्दार्चनैः
कंचिद्ध्यानसमाधिभिश्च नतिभिः कंचित्कथाकर्णनैः ।
कंचित्कंचिदवेक्षणैश्च नुतिभिः कंचिद्दशामीदृशीं
यः प्राप्नोति मुदा त्वदर्पितमना जीवन्स मुक्तः खलु ॥

बाणत्वं वृषभत्वमर्धवपुषा भार्यात्वमार्यापते
घोणित्वं सखिता मृदङ्गवहता चेत्यादि रूपं दधौ ।
त्वत्पादे नयनार्पणं च कृतवांस्त्वद्देहभागो हरिः
पूज्यात्पूज्यतरः स एव हि न चेत्को वा तदन्योऽधिकः ॥

जननमृतियुतानां सेवया देवतानां
न भवति सुखलेशः संशयो नास्ति तत्र ।
अजनिममृतरूपं साम्बमीशं भजन्ते
य इह परमसौख्यं ते हि धन्या लभन्ते ॥ ८३ ॥

शिव तव परिचर्यासंनिधानाय गौर्या
    भव मम गुणधुर्यां बुद्धिकन्यां प्रदास्ये ।
सकलभुवनबन्धो सच्चिदानन्दसिन्धो
    सदय हृदयगेहे सर्वदा संवस त्वम् ॥ ८४ ॥

जलधिमथनदक्षो नैव पातालभेदी
    न च वनमृगयायां नैव लुब्धः प्रवीणः ।
अशनकुसुमभूषावस्त्रमुख्यां सपर्यां
    कथय कथमहं ते कल्पयानीन्दुमौले ॥ ८५ ॥

पूजाद्रव्यसमृद्धयो विरचिताः पूजां कथं कुर्महे
    पक्षित्वं न च वा किटित्वमपि न प्राप्तं मया दुर्लभम् ।
जाने मस्तकमङ्घ्रिपल्लवमुमाजाने न तेऽहं विभो
    न ज्ञातं हि पितामहेन हरिणा तत्त्वेन तद्रूपिणा ॥८६॥

अशनं गरलं फणी कलापो
    वसनं चर्म च वाहनं महोक्षः ।
मम दास्यसि किं किमस्ति शंभो
    तव पादाम्बुजभक्तिमेव देहि ॥ ८७ ॥

यदा कृताम्भोनिधिसेतुबन्धनः
करस्थलाधःकृतपर्वताधिपः ।
भवानि ते लङ्घितपद्मसंभव-
स्तदा शिवार्चास्तवभावनक्षमः ॥ ८८ ॥

नतिभिर्नुतिभिस्त्वमीश पूजा-
विधिभिर्ध्यानसमाधिभिर्न तुष्टः ।
धनुषा मुसलेन चाश्मभिर्वा
वद ते प्रीतिकरं तथा करोमि ॥ ८९ ॥

वचसा चरितं वदामि शंभो-
रहमुद्योगविधासु तेऽप्रसक्तः ।
मनसाकृतिमीश्वरस्य सेवे
शिरसा चैव सदाशिवं नमामि ॥ ९० ॥

आद्याविद्या हृद्गता निर्गतासी-
द्विद्या हृद्या हृद्गता त्वत्प्रसादात् ।
सेवे नित्यं श्रीकरं त्वत्पदाब्जं
भावे मुक्तेर्भाजनं राजमौले ॥ ९१ ॥

दूरीकृतानि दुरितानि दुरक्षराणि
दौर्भाग्यदुःखदुरहंकृतिदुर्वचांसि ।
सारं त्वदीयचरितं नितरां पिबन्तं
गौरीश मामिह समुद्धर सत्कटाक्षैः ॥ ९२ ॥

सोमकलाधरमौलौ
कोमलघनकंधरे महामहसि ।
स्वामिनि गिरिजानाथे
मामकहृदयं निरन्तरं रमताम् ॥ ९३ ॥

सा रसना ते नयने
तावेव करौ स एव कृतकृत्यः ।
या ये यौ यो भर्गं
वदतीक्षेते सदार्चतः स्मरति ॥ ९४ ॥

अतिमृदुलौ मम चरणा-
वतिकठिनं ते मनो भवानीश ।
इति विचिकित्सां संत्यज
शिव कथमासीद्गिरौ तथा वेशः ॥ ९५ ॥

धैर्याङ्कुशेन निभृतं
रभसादाकृष्य भक्तिशृङ्खलया ।
पुरहर चरणालाने
हृदयमदेभं बधान चिद्यन्त्रैः ॥ ९६ ॥

प्रचरत्यभितः प्रगल्भवृत्त्या
मदवानेष मनःकरी गरीयान् ।
परिगृह्य नयेन भक्तिरज्ज्वा
परम स्थाणु पदं दृढं नयामुम् ॥ ९७ ॥

सर्वालंकारयुक्तां सरलपदयुतां साधुवृत्तां सुवर्णां
सद्भिः संस्तूयमानां सरसगुणयुतां लक्षितां लक्षणाढ्याम् ।
उद्यद्भूषाविशेषामुपगतविनयां द्योतमानार्थरेखां
कल्याणीं देव गौरीप्रिय मम कविताकन्यकां त्वं गृहाण ॥

इदं ते युक्तं वा परमशिव कारुण्यजलधे
गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।
हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ
कथं शंभो स्वामिन्कथय मम वेद्योऽसि पुरतः ॥ ९९ ॥

स्तोत्रेणालमहं प्रवच्मि न मृषा देवा विरिञ्चादयः
स्तुत्यानां गणनाप्रसङ्गसमये त्वामग्रगण्यं विदुः ।
माहात्म्याग्रविचारणप्रकरणे धानातुषस्तोमव-
द्धूतास्त्वां विदुरुत्तमोत्तमफलं शंभो भवत्सेवकाः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शिवानन्दलहरी संपूर्णा ॥

॥ श्रीः ॥

# शिवपादादिकेशान्त-वर्णनस्तोत्रम् ॥

---

कल्याणं नो विधत्तां कटकतटलसत्कल्पवाटीनिकुञ्ज-

क्रीडासंसक्तविद्याधरनिकरवधूगीतरुद्रापदानः ।

तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी

कैलासः शर्वनिर्वृत्यभिजनकपदः सर्वदा पर्वतेन्द्रः ॥ १ ॥

यस्य प्राहुः स्वरूपं सकलदिविषदां सारसर्वस्वयोगं

यस्येषुः शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरूकः ।

मौर्वी दर्वीकराणामपि च परिबृढः पूस्त्रयी सा च लक्ष्यं

सोऽव्यादव्याजमस्मानशिवभिदनिशं नाकिनां श्रीपिनाकः ॥

आतङ्कावेगहारी सकलदिविषदामङ्घ्रिपद्माश्रयाणां
मातङ्गाद्युग्रदैत्यप्रकरतनुगलद्रक्तधाराक्तधारः ।
क्रूरः सूरायुतानामपि च परिभवं स्वीयभासा वितन्व-
न्घोराकारः कुठारो दृढतरदुरिताख्याटवीं पाटयेन्नः ॥

कालारातेः कराग्रे कृतवसतिरुरःशाणशातो रिपूणां
काले काले कुलाद्रिप्रवरतनयया कल्पितस्नेहलेपः ।
पायान्नः पावकार्चिःप्रसरसखमुखः पापहन्ता नितान्तं
शूलः श्रीपादसेवाभजनरसजुषां पालनैकान्तशीलः ॥४॥

देवस्याङ्काश्रयायाः कुलगिरिदुहितुर्नेत्रकोणप्रचार-
प्रस्तारानत्युदारान्पिपठिषुरिव यो नित्यमत्यादरेण ।
आधत्ते भङ्गितुङ्गैरनिशमवयवैरन्तरङ्गं समोदं
सोमापीडस्य सोऽयं प्रदिशतु कुशलं पाणिरङ्गः कुरङ्गः ॥

कण्ठप्रान्तावसज्जत्कनकमयमहाघण्टिकाघोरघोषैः
कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवालान्तरालः ।
चण्डः प्रोद्दण्डशृङ्गः ककुदकबलितोत्तुङ्गकैलासशृङ्गः
कण्ठेकालस्य वाहः शमयतु शमलं शाश्वतः शाक्वरेन्द्रः ॥

निर्यद्दानाम्बुधारापरिमलतरलीभूतरोलम्बपाली-
झंकारैः शंकराद्रेः शिखरशतदरीः पूरयन्भूरिघोषैः ।
शार्वः सौवर्णशैलप्रतिमपृथुवपुः सर्वविघ्नापहर्ता
शर्वाण्याः पूर्वसूनुः स भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ॥

यः पुण्यैर्देवतानां समजनि शिवयोः श्लाघ्यवीर्यैकमत्या-
यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते ।
भूयात्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैलः
संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥ ८ ॥

आरूढः प्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तुरङ्गं
चेलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः ।
रागद्वेषादिनानाविधमृगपटलीभीतिकृद्भूतभर्ता
कुर्वन्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥ ९ ॥

अम्भोजाभ्यां च रम्भारथचरणलताद्वन्द्वकुम्भीन्द्रकुम्भै-
र्बिम्बेनेन्दोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् ।
अम्भोदेनापि संभावितमुपजनिताडम्बरं शम्बरारेः
शंभोः संभोगयोग्यं किमपि धनमिदं संभवेत्संपदे नः ॥

वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासा-
न्वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् ।
एणीनेत्रान्तभङ्गीनिरसननिपुणापाङ्गकोणानुपासे
शोणान्प्राणानुदूढप्रतिनवसुषमाकन्दलानिन्दुमौले: ॥

नृत्तारम्भेषु हस्ताहतमुरजधिमिद्धिंकृतैरत्युदारै-
श्चित्तानन्दं विधत्ते सदसि भगवत: संततं य: स नन्दी ।
चण्डीशाद्यास्तथान्ये चतुरगुणगणप्रीणितस्वामिसत्का-
रोत्कर्षोद्यत्प्रसादा: प्रमथपरिबृढा: पान्तु संतोषिणो न: ॥

मुक्तामाणिक्यजालै: परिकलितमहासालमालोकनीयं
प्रत्युप्तानर्घरत्नैर्दिशि दिशि भवनै: कल्पितैर्दिक्पतीनाम् ।
उद्यानैरद्रिकन्यापरिजनवनितामाननीयै: परीतं
हृद्यं हृद्यस्तु नित्यं मम भुवनपतेर्धाम सोमार्धमौले: ॥

स्तम्भैर्जम्भारिरत्नप्रवरविरचितै: संभृतोपान्तभागं
शुम्भत्सोपानमार्गं शुचिमणिनिचयैर्गुम्भितानल्पशिल्पम् ।
कुम्भै: संपूर्णशोभं शिरसि सुघटितै: शातकुम्भैरपङ्कै:
शंभो: संभावनीयं सकलमुनिजनै: स्वस्तिदं स्यात्सदो न: ॥

न्यस्तो मध्ये सभायाः परिसरविलसत्पादपीठाभिरामो
हृद्यः पादैश्चतुर्भिः कनकमणिमयैरुच्चकैरुज्ज्वलात्मा ।
वासोरत्नेन केनाप्यधिकमृदुतरेणास्तृतो विस्तृतश्रीः
पीठः पीडाभरं नः शमयतु शिवयोः स्वैरसंवासयोग्यः ॥

आसीनस्याधिपीठं त्रिजगदधिपतेरङ्घ्रिपीठानुषक्तौ
पाथोजाभोगभाजौ परिमृदुलतलोल्लासिपद्मादिरेखौ ।
पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीर-
श्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥

यन्नादो वेदवाचां निगदति निखिलं लक्षणं पक्षिकेतु-
र्लक्ष्मीसंभोगसौख्यं विरचयति ययोश्चापरे रूपभेदे ।
शंभोः संभावनीये पदकमलसमासङ्गतस्तुङ्गशोभे
माङ्गल्यं नः समग्रं सकलसुखकरे नूपुरे पूरयेताम् ॥

अङ्गे शृङ्गारयोनेः सपदि शलभतां नेत्रवह्नौ प्रयाते
शत्रोरुद्धृत्य तस्मादिषुधियुगमधो न्यस्तमग्रे किमेतत् ।
शङ्कामित्थं नतानाममरपरिषदामन्तरङ्कूरयत्त-
त्संघातं चारु जङ्घायुगमखिलपतेरंहसां संहरेन्नः ॥ १८ ॥

जानुद्वन्द्वेन मीनध्वजनृवरसमुद्गोपमानेन साकं
राजन्तौ राजरम्भाकरिकरकनकस्तम्भसंभावनीयौ ।
ऊरू गौरीकराम्भोरुहसरससमामर्दनानन्दभाजौ
चारू दूरीक्रियास्तां दुरितमुपचितं जन्मजन्मान्तरे नः ॥

आमुक्तानर्घरत्नप्रकरकरपरिष्वक्तकल्याणकाञ्ची-
दाम्ना बद्धेन दुग्धद्युतिनिचयमुषा चीनपट्टाम्बरेण ।
संवीते शैलकन्यासुचरितपरिपाकायमाणे नितम्बे
नित्यं नर्नर्तु चित्तं मम निखिलजगत्स्वामिनः सोममौलेः ॥

संध्याकालानुरज्यद्दिनकरसरुचा कालधौतेन गाढं
व्यानद्धः स्निग्धमुग्धः सरसमुदरबन्धेन वीतोपमेन ।
उद्दीप्रैः स्वप्रकाशैरुपचितमहिमा मन्मथारेरुदारो
मध्यो मिथ्यार्थसध्र्यङ्मम दिशतु सदा संगतिं मङ्गलानाम् ॥

नाभीचक्रालवालान्नवनवसुषमादोहदश्रीपरीता-
दुद्गच्छन्ती पुरस्तादुदरपथमतिक्रम्य वक्षः प्रयान्ती ।
श्यामा कामागमार्थप्रकथनलिपिवद्भासते या निकामं
सा मा सोमार्धमौलेः सुखयतु सततं रोमवल्लीमतल्ली ॥

आश्लेषेष्वद्रिजायाः कठिनकुचतटीलिप्तकाश्मीरपङ्क-
व्यासङ्गादुद्यदर्कद्युतिभिरुपचितस्पर्धमुद्दामहृद्यम
दक्षारातेरुदूढप्रतिनवमणिमालावलीभासमानं
वक्षो विक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः ॥

वामाङ्के विस्फुरन्त्या करतलविलसच्चारुरक्तोत्पलायाः
कान्ताया वामवक्षोरुहभरशिखरोन्मर्दनव्यग्रमेकम् ।
अन्यांस्त्रीनप्युदारान्वरपरशुमृगालंकृतानिन्दुमौले-
र्बाहूनाबद्धहेमाङ्गदमणिकटकानन्तरालोकयामः ॥ २४ ॥

संभ्रान्तायाः शिवायाः पतिविलयभिया सर्वलोकोपतापा-
त्संविग्नस्यापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्याम् ।
मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा
सोऽयं सर्वापदां नः शमयतु निचयं नीलकण्ठस्य कण्ठः ॥

हृद्यैरद्रीन्द्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री-
रुद्द्योतन्त्या नितान्तं धवलधवलया मिश्रितो दन्तकान्त्या ।
मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः
सद्योजातस्य दद्यादधरमणिरसौ संपदां संचयं नः ॥

कर्णालंकारनानामणिनिकररुचां संचयैरञ्चितायां
वर्ण्यायां स्वर्णपद्मोदरपरिविलसत्कर्णिकासंनिभायाम् ।
पद्धत्यां प्राणवायोः प्रणतजनहृदम्भोजवासस्य शंभो-
र्नित्यं नश्चित्तमेतद्विरचयतु सुखेनासिकां नासिकायाम् ॥

अत्यन्तं भासमाने रुचिरतररुचां संगमात्सन्मणीना-
मुद्यच्चण्डांशुधामप्रसरनिरसनस्पष्टदृष्टापदाने ।
भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलम्बे
भक्तालीभालसज्जज्जनिमरणलिपेः कुण्डले कुण्डले ते ॥

याभ्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां
येषामाहुः स्वरूपं जगति मुनिवरा देवतानां त्रयीं ताम् ।
रुद्राणीवक्त्रपङ्केरुहसततविहारोत्सुकेन्दिन्दिरेभ्य-
स्तेभ्यस्त्रिभ्यः प्रणामाञ्जलिमुपरचये त्रीक्षणस्येक्षणेभ्यः ॥

वामं वामाङ्कगाया वदनसरसिजे व्यावलद्वल्लभाया
व्यानम्रेष्वन्यदन्यत्पुनरलिकभवं वीतनिःशेषरौक्ष्यम् ।
भूयो भूयोऽपि मोदान्निपतदतिदयाशीतलं चूतबाणे
दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ३० ॥

यस्मिन्नर्धेन्दुमुग्धद्युतिनिचयतिरस्कारनिस्तन्द्रकान्तौ
काश्मीरक्षोदसंकल्पितमिव रुचिरं चित्रकं भाति नेत्रम् ।
तस्मिन्नुल्लीलचिल्लीनटवरतरुणीलास्यरङ्गायमाणे
कालारेः फालदेशे विहरतु हृदयं वीतचिन्तान्तरं नः ॥

स्वामिन्गङ्गामिवाङ्गीकुरु तव शिरसा मामपीत्यर्थयन्तीं
धन्यां कन्यां खरांशोः शिरसि वहति किं न्वेष कारुण्यशाली ।
इत्थं शङ्कां जनानां जनयदतिघनं कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥

शृङ्गाराकल्पयोग्यैः शिखरिवरसुतासत्सखीहस्तलूनैः
सूनैराबद्धमालावलिपरिविलसत्सौरभाकृष्टभृङ्गम् ।
तुङ्गं माणिक्यकान्त्या परिहसितसुरावासशैलेन्द्रशृङ्गं
संघं नः संकटानां विघटयतु सदा काङ्कटीकं किरीटम् ॥

वक्राकारः कलङ्की जडतनुरहमप्यङ्घ्रिसेवानुभावा-
दुत्तंसत्वं प्रयातः सुलभतरघृणास्यन्दिनश्चन्द्रमौलेः ।
तत्सेवन्तां जनौघाः शिवमिति निजयावस्थयैव ब्रुवाणं
वन्दे देवस्य शंभोर्मुकुटसुघटितं मुग्धपीयूषभानुम् ॥

कान्त्या संफुल्लमल्लीकुसुमधवलया व्याप्य विश्वं विराज-
　न्वृत्ताकारो वितन्वन्मुहुरपि च परां निर्वृतिं पादभाजाम् ।
सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः
　श्वेतच्छत्राख्यशीतद्युतिरपहरतादापदस्तापदा नः ॥ ३५ ॥

दिव्याकल्पोज्ज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रितानां
　रुद्राणीसत्सखीनां मदतरलकटाक्षाञ्चलैरञ्चितानाम् ।
उद्वेल्लद्बाहुवल्लीविलसनसमये चामरान्दोलनीना-
　मुद्भूतः कङ्कणालीवलयकलकलो वारयेदापदो नः ॥

स्वर्गौकःसुन्दरीणां सुललितवपुषां स्वामिसेवापराणां
　वल्गद्भूषाणि वक्त्राम्बुजपरिविगलन्मुग्धगीतामृतानि ।
नित्यं नृत्तान्युपासे भुजविधुतिपदन्यासभावावलोक-
　प्रत्युद्यत्प्रीतिमाद्यत्प्रमथनटनटीदत्तसंभावनानि ॥ ३७ ॥

स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणा-
　स्वानावच्छिन्नतालक्रमममृतमिवास्वाद्यमानं शिवाभ्याम् ।
नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं
　गानं वीणामहर्षेः कलमतिललितं कर्णपूरायतां नः ॥

चेतो जातप्रमोदं सपदि विदधती प्राणिनां वाणिनीनां
पाणिद्वन्द्वाग्रजाग्रत्सुललितरणितस्वर्णतालानुकूला ।
स्वीयारावेण पाथोधररवपटुना नादयन्ती मयूरीं
मायूरीं मन्दभावं मणिमुरजभवा मार्जना मार्जयेन्नः ॥

देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः ।
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये सन्ति तेभ्यः
सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥

ध्यायन्नित्थं प्रभाते प्रतिदिवसमिदं स्तोत्ररत्नं पठेद्यः
किं वा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समासात् ।
संपज्जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं
संप्राप्यायुःशतान्ते पदमयति परब्रह्मणो मन्मथारेः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**शिवपादादिकेशान्तवर्णनस्तोत्रम्**
संपूर्णम् ॥

। श्रीः ॥

# शिवकेशादिपादान्त-वर्णनस्तोत्रम् ॥

देयासुर्मूर्ध्नि राजत्सरससुरसरित्पारपर्यन्तनिर्य-

त्प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्तशालीलता वः ।

दुर्वारापत्तिगर्तश्रितनिखिलजनोत्तारणे रज्जुभूता

घोराघोर्वीरुहालीदहनशिखिशिखाः शर्म शार्वाः कपर्दाः ॥

कुर्वन्निर्वाणमार्गप्रगमपरिलसद्रूप्यसोपानशङ्कां

शक्रारीणां पुराणां त्रयविजयकृतस्पष्टरेखायमाणम् ।

अव्यादव्याजमुच्चैरलिकहिमधराधित्यकान्तस्त्रिधोद्य-

ज्जाह्नव्याभं मृडानीकमितुरुडुपरुक्पाण्डरं वस्त्रिपुण्ड्रम् ॥

क्रुध्यद्गौरीप्रसादानतिसमयपदाङ्गुष्ठसंक्रान्तलाक्षा-
बिन्दुस्पर्धि स्मरारेः स्फटिकमणिदृषन्मग्नमाणिक्यशोभम् ।
मूर्ध्न्युद्यद्दिव्यसिन्धोः पतितशफरिकाकारि वो भालकं स्ता-
दस्तोकापत्तिकृत्त्यै हुतवहकणिकामोक्षरूक्षं सदाक्षि ॥

भूत्यै दृग्भूतयोः स्याद्यदहिमहिमरुग्बिम्बयोः स्निग्धवर्णो
दैत्यौघध्वंसशंसी स्फुट इव परिवेषावशेषो विभाति ।
सर्गस्थित्यन्तवृत्तिर्मयि समुपगतेतीव निर्वृत्तगर्वं
शर्वाणीभर्तुरुच्चैर्युगलमथ दधद्विभ्रमं तद्भ्रुवोर्वः ॥ ४ ॥

युग्मे रुक्माब्जपिङ्गे ग्रह इव पिहिते द्रागयोः प्राग्दुहित्रा
शैलस्य ध्वान्तनीलाम्बररचितबृहत्कञ्चुकोऽभूत्प्रपञ्चः ।
ते त्रैनेत्रे पवित्रे त्रिदशवरघटामित्रजैत्रोग्रशस्त्रे
नेत्रे नेत्रे भवेतां द्रुतमिह भवतामिन्द्रियाश्वान्नियन्तुम् ॥

चण्डीवक्त्रार्पणेच्छोस्तदनु भगवतः पाण्डुरुक्पाण्डुगण्ड-
प्रोद्यत्कण्डूं विनेतुं वितनुत इव ये रत्नकोणैर्विघृष्टिम् ।
चण्डार्चिर्मण्डलाभे सततनतजनध्वान्तखण्डातिशौण्डे
चाण्डीशे ते श्रिये स्तामधिकमवनताखण्डले कुण्डले वः ॥

खट्वाङ्गोदग्रपाणेः स्फुटविकटपुटो वक्त्ररन्ध्रप्रवेश-
प्रेप्सूदञ्चत्फणोरुश्वसदतिधवलाहीन्द्रशङ्कां दधानः ।
युष्माकं कम्रवक्त्राम्बुरुहपरिलसत्कर्णिकाकारशोभः
शश्वत्त्राणाय भूयादलमतिविमलोत्तुङ्गकोणः स घोणः ॥

क्रुध्यत्यद्धा ययोः स्वां तनुमतिलसतोर्बिम्बितां लक्षयन्ती
भर्त्रे स्पर्धातिनिघ्ना मुहुरितरवधूशङ्कया शैलकन्या ।
युष्मांस्तौ शश्वदुच्चैरबहुलदशमीशर्वरीशातिशुभ्रा-
वव्यास्तां दिव्यसिन्धोः कमितुरवनमल्लोकपालौ कपोलौ ॥

यो भासा भात्युपान्तस्थित इव निभृतं कौस्तुभो द्रष्टुमिच्छ-
न्सोत्थस्नेहान्नितान्तं गलगतगरलं पत्युरुच्चैः पशूनाम् ।
प्रोद्यत्प्रेम्णा यमार्द्रा पिबति गिरिसुता संपदः सातिरेका
लोकाः शोणीकृतान्ता यदधरमहसा सोऽधरो वो विधत्ताम् ॥

अत्यर्थं राजते या वदनशशधरादुद्गलच्चारुवाणी-
पीयूषाम्भःप्रवाहप्रसरपरिलसत्फेनबिन्द्वावलीव ।
देयात्सा दन्तपङ्क्तिश्चिरमिह दनुदायाददौवारिकस्य
द्युत्या दीप्तेन्दुकुन्दच्छविरमलतरप्रोन्नताग्रा मुदं वः ॥

न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्धुष्टमेघौघघोषं
स्फूर्जद्वाध्युत्थितोरुध्वनितमपि परब्रह्मभूतो गभीरः ।
सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरणः प्राणनाथस्य सत्याः
प्रीत्या वः संविदध्यात्फलविकलमलं जन्म नादः स नादः ॥

भासा यस्य त्रिलोकी लसति परिलसत्फेनबिन्द्वर्णवान्त-
र्व्यामग्नेवातिगौरस्तुलितसुरसरिद्वारिपूरप्रसारः ।
पीनात्मा दन्तभाभिर्भृशमहहहहकारातिभीमः सदेष्टां
पुष्टां तुष्टिं कृषीष्ट स्फुटमिह भवतामट्टहासोऽष्टमूर्तेः ॥

सद्योजाताख्यमाप्यं यदुविमलमुदग्वर्ति यद्वामदेवं
नाम्ना हेम्ना सदृक्षं जलदनिभमघोराह्वयं दक्षिणं यत् ।
यद्बालार्कप्रभं तत्पुरुषनिगदितं पूर्वमीशानसंज्ञं
यद्दिव्यं तानि शंभोर्भवदभिलषितं पञ्च दद्युर्मुखानि ॥

आत्मप्रेम्णो भवान्या स्वयमिव रचिताः सादरं सांवनन्या
मष्या तिस्रः सुनीलाञ्जननिभगररेखाः समाभान्ति यस्याम् ।
आकल्पानल्पभासा भृशरुचिरतरा कम्बुकल्पाम्बिकायाः
पत्युः सात्यन्तमन्तर्विलसतु सततं मन्थरा कंधरा वः ॥

वक्रेन्दोर्दन्तलक्ष्म्याश्चिरमधरमहाकौस्तुभस्याप्युपान्ते
सोत्थानां प्रार्थयन्य: स्थितिमचलभुवे वारयन्त्यै निवेशम् ।
प्रायुङ्क्तेवाशिषो य: प्रतिपदममृतत्वे स्थित: कालशत्रो:
कालं कुर्वन्गलं वो हृदयमयमलं क्षालयेत्कालकूट: ॥

प्रौढप्रेमाकुलाया दृढतरपरिरम्भेषु पर्वेन्दुमुख्या:
पार्वत्याश्चारुचामीकरवलयपदैरङ्कितं कान्तिशालि ।
रङ्गन्नागाङ्गदाढ्यं सततमविहितं कर्म निर्मूलयेत्त-
द्दोर्मूलं निर्मलं यद्धृदि दुरितमपास्यार्जितं धूर्जटेर्व: ॥

कण्ठाश्लेषार्थमाप्ता दिव इव कमितु: स्वर्गसिन्धो: प्रवाहा:
क्रान्त्यै संसारसिन्धो: स्फटिकमणिमहासंक्रमाकारदीर्घा: ।
तिर्यग्विष्कम्भभूतास्त्रिभुवनवसतेर्भिन्नदैत्येभदेहा
बाहा वस्ता हरस्य द्रुतमिह निवहानंहसां संहरन्तु ॥

वक्षो दक्षद्विषोऽलं स्मरभरविनमद्दक्षजाक्षीणवक्षो-
जान्तर्निक्षिप्तशुम्भन्मलयजमिलितोद्भासि भस्मोक्षितं यत् ।
क्षिप्रं तद्रूक्षचक्षु:श्रुतिगणफणरत्नौघभाभीक्ष्णशोभं
युष्माकं शश्वदेन: स्फटिकमणिशिलामण्डलाभं क्षिणोतु ॥

मुक्तामुक्ते विचित्राकुलवलिलहरीजालशालिन्यवाञ्च-
न्नाभ्यावर्ते विलोलद्भुजगवरयुते कालशत्रोर्विशाले ।
युष्मच्चित्तत्रिधामा प्रतिनवरुचिरे मन्दिरे कान्तिलक्ष्म्याः
शेतां शीतांशुगौरे चिरतरमुदरक्षीरसिन्धौ सलीलम् ॥

वैयाघ्री यत्र कृत्तिः स्फुरति हिमगिरेर्विस्तृतोपत्यकान्तः
सान्द्रावश्यायमिश्रा परित इव वृता नीलजीमूतमाला ।
आबद्धाहीन्द्रकाञ्चीगुणमतिपृथुलं शैलजाक्रीडभूमि-
स्तद्वो निःश्रेयसे स्याज्जघनमतिघनं बालशीतांशुमौलेः ॥

पुष्टावष्टम्भभूतौ पृथुतरजघनस्यापि नित्यं त्रिलोक्याः
सम्यग्वृत्तौ सुरेन्द्रद्विरदवरकरोदारकान्तिं दधानौ ।
सारावूरू पुरारेः प्रसभमरिघटाघस्मरौ भस्मशुभ्रौ
भक्तैरत्यार्द्रचित्तैरधिकमवनतौ वाञ्छितं वो विधत्ताम् ॥

आनन्दायेन्दुकान्तोपलरचितसमुद्गायिते ये मुनीनां
चित्तादर्शं निधातुं विदधति चरणे ताण्डवाकुञ्चनानि ।
काञ्चीभोगीन्द्रमूर्ध्नां प्रतिमुहुरुपधानायमाने क्षणं ते
कान्ते स्तामन्तकारेर्द्युतिविजितसुधाभानुनी जानुनी वः ॥

मञ्जीरीभूतभोगिप्रवरगणफणामण्डलान्तर्नितान्त-
व्यादीर्घानर्घरत्नद्युतिकिसलयिते स्तूयमाने द्युसद्भिः ।
बिभ्रत्यौ विभ्रमं वः स्फटिकमणिबृहद्दण्डवद्भासिते ये
जङ्घे शङ्खेन्दुशुभ्रे भृशमिह भवतां मानसे शूलपाणेः ॥

अस्तोकस्तोमशस्त्रैरपचितिममलां भूरिभावोपहारैः
कुर्वद्भिः सर्वदोच्चैः सततमभिवृतौ ब्रह्मविद्देवलाद्यैः ।
सम्यक्संपूज्यमानाविह हृदि सरसीवानिशं युष्मदीये
शर्वस्य क्रीडतां तौ प्रपदवरबृहत्कच्छपावच्छभासौ ॥

याः स्वस्यैकांशपातादतिबहलगलद्रक्तवक्त्रं प्रणुन्न-
प्राणं प्राक्रोशयन्प्राङ्निजमचलवरं चालयन्तं दशास्यम् ।
पादाङ्गुल्यो दिशन्तु द्रुतमयुगदृशः कल्मषप्लोषकल्याः
कल्याणं फुल्लमाल्यप्रकरविलसिता वः प्रणद्धाहिवल्ल्यः ॥

प्रह्वप्राचीनबर्हिःप्रमुखसुरवरप्रस्फुरन्मौलिसक्त-
ज्यायोरत्नोत्करोस्रैरविरतममला भूरिनीराजिता या ।
प्रोदग्राग्रा प्रदेयात्ततिरिव रुचिरा तारकाणां नितान्तं
नीलग्रीवस्य पादाम्बुरुहविलसिता सा नखाली सुखं वः ॥

सत्याः सत्याननेन्दावपि सविधगते ये विकासं दधाते
स्वान्ते स्वां ते लभन्ते श्रियमिह सरसीवामरा ये दधानाः ।
लोलं लोलम्बकानां कुलमिव सुधियां सेवते ये सदा स्तां
भूत्यै भूत्यैणपाणेर्विमलतररुचस्ते पदाम्भोरुहे वः ॥ २७ ॥

येषां रागादिदोषाक्षतमति यतयो यान्ति मुक्तिं प्रसादा-
द्ये वा नम्रात्ममूर्तिद्युसदृषिपरिषन्मूर्ध्नि शेषायमाणाः ।
श्रीकण्ठस्यारुणोद्यच्चरणसरसिजप्रोत्थितास्ते भावाख्या-
त्पारावाराच्चिरं वो दुरितहतिकृतस्तारयेयुः परागाः ॥

भूम्ना यस्यास्तसीम्ना भुवनमनुसृतं यत्परं धाम धाम्नां
साम्नामाम्नायतत्त्वं यदपि च परमं यद्गुणातीतमाद्यम् ।
यच्चांहोहन्निरीहं गहनमिति मुहुः प्राहुरुच्चैर्महान्तो
माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शिवकेशादिपादान्तवर्णनस्तोत्रम्
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ वेदसारशिवस्तोत्रम् ॥

———*———

पशूनां पतिं पापनाशं परेशं
गजेन्द्रस्य कृत्तिं वसानं वरेण्यम् ।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं
महादेवमेकं स्मरामि स्मरारिम् ॥ १ ॥

महेशं सुरेशं सुरारातिनाशं
विभुं विश्वनाथं विभूत्यङ्गभूषम् ।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं
सदानन्दमीडे प्रभुं पञ्चवक्त्रम् ॥ २ ॥

गिरीशं गणेशं गले नीलवर्णं
गवेन्द्राधिरूढं गुणातीतरूपम् ।
भवं भास्वरं भस्मना भूषिताङ्गं
भवानीकलत्रं भजे पञ्चवक्त्रम् ॥ ३ ॥

शिवाकान्त शंभो शशाङ्कार्धमौले
महेशान शूलिञ्जटाजूटधारिन् ।
त्वमेको जगद्व्यापको विश्वरूप:
प्रसीद प्रसीद प्रभो पूर्णरूप ॥ ४ ॥

परात्मानमेकं जगद्बीजमाद्यं
निरीहं निराकारमोंकारवेद्यम् ।
यतो जायते पाल्यते येन विश्वं
तमीशं भजे लीयते यत्र विश्वम् ॥ ५ ॥

न भूमिर्न चापो न वह्निर्न वायु-
र्न चाकाशमास्ते न तन्द्रा न निद्रा ।
न चोष्णं न शीतं न देशो न वेषो
न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥ ६ ॥

अजं शाश्वतं कारणं कारणानां
शिवं केवलं भासकं भासकानाम् ।
तुरीयं तम:पारमाद्यन्तहीनं
प्रपद्ये परं पावनं द्वैतहीनम् ॥ ७ ॥

नमस्ते नमस्ते विभो विश्वमूर्ते
नमस्ते नमस्ते चिदानन्दमूर्ते ।
नमस्ते नमस्ते तपोयोगगम्य
नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥ ८ ॥

प्रभो शूलपाणे विभो विश्वनाथ
महादेव शंभो महेश त्रिनेत्र ।
शिवाकान्त शान्त स्मरारे पुरारे
त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥ ९ ॥

शंभो महेश करुणामय शूलपाणे
गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतदेक-
स्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥१०॥

त्वत्तो जगद्भवति देव भव स्मरारे
त्वय्येव तिष्ठति जगन्मृड विश्वनाथ ।
त्वय्येव गच्छति लयं जगदेतदीश
लिङ्गात्मके हर चराचरविश्वरूपिन् ॥ ११ ॥

॥ श्रीः ॥

# शिवापराध-क्षमापणस्तोत्रम् ॥

आदौ कर्मप्रसङ्गात्कलयति कलुषं मातृकुक्षौ स्थितं मां
विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ।
यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासु-
र्नो शक्तश्चेन्द्रियेभ्यो भव मलजनिता जन्तवो मां तुदन्ति ।
नानारोगातिदुःखाद्रुदितपरवशः शंकरं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसंधौ
दष्टो नष्टो विवेकः सुतधनयुवतिस्वादसौख्ये निषण्णः ।
शैवे चिन्ताविहीनं मम हृदयमहो मानगर्वाधिरूढं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

वार्धक्ये चेन्द्रियाणां विकलगतिमतश्चाधिदैवादितापैः
प्राप्तै रोगैर्वियोगैर्व्यसनकृशतनोर्ज्ञप्तिहीनं च दीनम् ।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गाङ्गतोयं
पूजार्थं वा कदाचिद्बहुतरगहनेऽखण्डबिल्वीदलं वा ।
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पैस्त्वदर्थं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

दुग्धैर्मध्वाज्ययुक्तैर्दधिगुडसहितैः स्नापितं नैव लिङ्गं
नो लिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः ।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

नो शक्यं स्मार्तकर्म प्रतिपदगहने प्रत्यवायाकुलाढ्ये
श्रौते वार्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गानुसारे ।
तत्त्वेऽज्ञाते विचारे श्रवणमननयोः किं निदिध्यासितव्यं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

ध्यात्वा चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो
हव्यं ते लक्षसंख्यैर्हुतवहवदने नार्पितं बीजमन्त्रैः ।
नो तप्तं गाङ्गतीरे व्रतजपनियमै रुद्रजाप्यं न जप्तं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

नग्नो निःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो
नासाग्रन्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ।
उन्मन्यावस्थया त्वां विगतगतिमतिः शंकरं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुम्भिते सूक्ष्ममार्गे
शान्ते स्वान्ते प्रलीने प्रकटितविभवे दिव्यरूपे शिवाख्ये ।
लिङ्गाग्रे ब्रह्मवाक्ये सकलतनुगतं शंकरं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

ध्येयं वेदान्तवेद्यं हृदयसरसिजे दीप्तमुद्यत्प्रकाशं
सत्यं शान्तस्वरूपं सकलमुनिमनःपद्मषण्डैकवेद्यम् ।
जाग्रत्स्वप्ने सुषुप्तौ त्रिगुणविरहितं शंकरं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शंकरे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्त वृत्तिममलामन्यैस्तु किं कर्मभिः ॥

किं यानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।
ज्ञात्वैतत्क्षणभङ्गुरं सपदि रे त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥ १३

पौरोहित्यं रजनिचरितं ग्रामणीत्वं नियोगो
माठापत्यं ह्यनृतवचनं साक्षिवादः परान्नम् ।
ब्रह्मद्वेषः खलजनरतिः प्राणिनां निर्दयत्वं
मा भूदेवं मम पशुपते जन्मजन्मान्तरेषु ॥ १४ ॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं करुणया त्वं रक्ष रक्षाधुना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शिवापराधक्षमापणस्तोत्रं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ सुवर्णमालास्तुतिः ॥

अथ कथमपि मद्रसनां त्वद्गुण-
लेशैर्विशोधयामि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १ ॥

आखण्डलमदखण्डनपण्डित
तण्डुप्रिय चण्डीश विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २ ॥

इभचर्माम्बर शम्बररिपुवपु-
रपहरणोज्ज्वलनयन विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३ ॥

ईश गिरीश नरेश परेश म-<br>
　　हेश बिलेशयभूषण भो ।<br>
साम्ब सदाशिव शंभो शंकर<br>
　　शरणं मे तव चरणयुगम् ॥ ४ ॥

उमया दिव्यसुमङ्गलविग्रह-<br>
　　यालिङ्गितवामाङ्ग विभो ।<br>
साम्ब सदाशिव शंभो शंकर<br>
　　शरणं मे तव चरणयुगम् ॥ ५ ॥

ऊरीकुरु मामज्ञमनाथं<br>
　　दूरीकुरु मे दुरितं भो ।<br>
साम्ब सदाशिव शंभो शंकर<br>
　　शरणं मे तव चरणयुगम् ॥ ६ ॥

ऋषिवरमानसहंस चराचर-<br>
　　जननस्थितिलयकारण भो ।<br>
साम्ब सदाशिव शंभो शंकर<br>
　　शरणं मे तव चरणयुगम् ॥ ७ ॥

ऋक्षाधीशकिरीट महोक्षा-
रूढ विधृतरुद्राक्ष विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ८ ॥

ऌवर्णद्वन्द्वमवृन्तसुकुसुममि-
वाङ्घ्रौ तवार्पयामि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ९ ॥

एकं सदिति श्रुत्या त्वमेव
सदसीत्युपास्महे मृड भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १० ॥

ऐक्यं निजभक्तेभ्यो वितरसि
विश्वंभरोऽत्र साक्षी भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ११ ॥

ओमिति तव निर्देष्ट्री माया-
स्माकं मृडोपकर्त्री भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम ॥ १२ ॥

औदास्यं स्फुटयति विषयेषु दि-
गम्बरता च तवैव विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम ॥ १३ ॥

अन्तःकरणविशुद्धिं भक्तिं
च त्वयि सतीं प्रदेहि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १४ ॥

अस्तोपाधिसमस्तव्यस्तै
रूपैर्जगन्मयोऽसि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १५ ॥

करुणावरुणालय मयि दास उ-
दासस्तवोचितो न हि भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १६ ॥

खलसहवासं विघटय घटय स-
तामेव सङ्गमनिशं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १७ ॥

गरलं जगदुपकृतये गिलितं
भवता समोऽस्ति कोऽत्र विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १८ ॥

घनसारगौरगात्र प्रचुरज-
टाजूटबद्धगङ्ग विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ १९ ॥

ज्ञप्तिः सर्वशरीरेष्वखण्डि-
ता या विभाति सा त्वं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २० ॥

च्चपलं मम हृदयकपिं विषय-
द्रुचरं दृढं बधान विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २१ ॥

छाया स्थाणोरपि तव तापं
नमतां हरत्यहो शिव भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २२ ॥

जय कैलासनिवास प्रमथग-
णाधीश भूसुरार्चित भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २३ ॥

झणुतकझङ्किणुझणुतत्किंटतक-
शब्दैर्नटसि महानट भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २४ ॥

ज्ञानं विक्षेपावृतिरहितं
कुरु मे गुरुस्त्वमेव विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २५ ॥

टङ्कारस्तव धनुषो दलयति
हृदयं द्विषामशनिरिव भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २६ ॥

ठाकृतिरिव तव माया बहिर-
न्तः शून्यरूपिणी खलु भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २७ ॥

ड्म्बरमम्बुरुहामपि दलय-
त्यनघं त्वदङ्घ्रियुगलं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २८ ॥

ढक्काक्षसूत्रशूलद्रुहिणक-
रोटीसमुल्लसत्कर भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ २९ ॥

णाकारगर्भिणी चेच्छुभदा
ते शरगतिर्नृणामिह भो
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३० ॥

तव मन्वतिसंजपतः सद्य-
स्तरति नरो हि भवाब्धिं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३१ ॥

थूत्कारस्तस्य मुखे भूया-
त्ते नाम नास्ति यस्य विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३२ ॥

दयनीयश्च दयालुः कोऽस्ति म-
दन्यस्त्वदन्य इह वद भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३३ ॥

धर्मस्थापनदक्ष त्र्यक्ष गु-
रो दक्षयज्ञशिक्षक भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३४ ॥

ननु ताडितोऽसि धनुषा लुब्धधि-
या त्वं पुरा नरेण विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३५ ॥

परिमातुं तव मूर्तिं नालम-
जस्तत्परात्परोऽसि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३६ ॥

फलमिह नृतया जनुषस्त्वत्पद-
सेवा सनातनेश विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३७ ॥

बलमारोग्यं चायुस्त्वद्गुण-
रुचितां चिरं प्रदेहि विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३८ ॥

भगवन्भर्ग भयापह भूतप-
ते भूतिभूषिताङ्ग विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ३९ ॥

महिमा तव न हि माति श्रुतिषु हि-
मानीधरात्मजाधव भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४० ॥

यमनियमादिभिरङ्गैर्यमिनो
हृदये भजन्ति स त्वं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४१ ॥

रज्जावहिरिव शुक्तौ रजतमि-
व त्वयि जगन्ति भान्ति विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४२ ॥

लब्ध्वा भवत्प्रसादाच्चक्रं
विधुरवति लोकमखिलं भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४३ ॥

वसुधातद्धरतच्छयरथमौ-
वींशर पराकृतासुर भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४४ ॥

शार्व देव सर्वोत्तम सर्वद
दुर्वृत्तगर्वहरण विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४५ ॥

षड्रिपुषडूर्मिषड्विकारहर
सन्मुख षण्मुखजनक विभो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४६ ॥

सत्यं ज्ञानमनन्तं ब्रह्मे-
त्येतल्लक्षणलक्षित भो ।
साम्ब सदाशिव शंभो शंकर
शरणं मे तव चरणयुगम् ॥ ४७ ॥

ह्राहाहूहूमुखसुरगायक-
　गीतापदानपद्य विभो ।
साम्ब सदाशिव शंभो शंकर
　शरणं मे तव चरणयुगम् ॥ ४८ ॥

ळादिर्न हि प्रयोगस्तदन्त-
　मिह मङ्गळं सदास्तु विभो ।
साम्ब सदाशिव शंभो शंकर
　शरणं मे तव चरणयुगम् ॥ ४९ ॥

क्षणमिव दिवसान्नेष्यति त्वत्पद-
　सेवाक्षणोत्सुकः शिव भो ।
साम्ब सदाशिव शंभो शंकर
　शरणं मे तव चरणयुगम् ॥ ५० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
सुवर्णमालास्तुतिः संपूर्णा ॥

॥ श्रीः ॥

# ॥ दशश्लोकीस्तुतिः ॥

---*---

साम्बो नः कुलदैवतं पशुपते साम्ब त्वदीया वयं
साम्बं स्तौमि सुरासुरोरगगणाः साम्बेन संतारिताः ।
साम्बायास्तु नमो मया विरचितं साम्बात्परं नो भजे
साम्बस्यानुचरोऽस्म्यहं मम रतिः साम्बे परब्रह्मणि ॥

विष्णवाद्याश्च पुरत्रयं सुरगणा जेतुं न शक्ताः स्वयं
यं शंभुं भगवन्वयं तु पशवोऽस्माकं त्वमेवेश्वरः ।
स्वस्वस्थाननियोजिताः सुमनसः स्वस्था बभूवुस्तत-
स्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ २ ॥

क्षोणी यस्य रथो रथाङ्गयुगलं चन्द्रार्कबिम्बद्वयं
कोदण्डः कनकाचलो हरिरभूद्बाणो विधिः सारथिः ।
तूणीरो जलधिर्हयाः श्रुतिचयो मौर्वी भुजंगाधिप-
स्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ३ ॥

येनापादितमङ्गजाङ्गभसितं दिव्याङ्गरागैः समं
येन स्वीकृतमब्जसंभवशिरः सौवर्णपात्रैः समम् ।
येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैः समं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ४ ॥

गोविन्दादधिकं न दैवतमिति प्रोच्चार्य हस्तावुभा-
वुद्धृत्याथ शिवस्य संनिधिगतो व्यासो मुनीनां वरः ।
यस्य स्तम्भितपाणिरानतिकृता नन्दीश्वरेणाभव-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ५ ॥

आकाशश्चिकुरायते दशदिशाभोगो दुकूलायते
शीतांशुः प्रसवायते स्थिरतरानन्दः स्वरूपायते ।
वेदान्तो निलयायते सुविनयो यस्य स्वभावायते
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ६ ॥

विष्णुर्यस्य सहस्रनामनियमादम्भोरुहाण्यर्चय-
न्नेकोनोपचितेषु नेत्रकमलं नैजं पदाब्जद्वये ।
संपूज्यासुरसंहतिं विदलयंस्त्रैलोक्यपालोऽभव-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ७ ॥

शौरिं सत्यगिरं वराहवपुषं पादाम्बुजादर्शने
चक्रे यो दयया समस्तजगतां नाथं शिरोदर्शने ।
मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ८ ॥

यस्यासन्धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेचनी श्रुतिरियं चाचष्ट तुर्यं शिवं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ९ ॥

विष्णुब्रह्मसुराधिपप्रभृतयः सर्वेऽपि देवा यदा
संभूताज्जलधेर्विषात्परिभवं प्राप्तास्तदा सत्वरम् ।
तानार्ताञ्शरणागतानिति सुरान्योऽरक्षदर्धक्षणा-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥१०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
दशश्लोकीस्तुतिः संपूर्णा ॥

॥ श्रीः ॥

# दक्षिणामूर्ति-वर्णमालास्तोत्रम् ॥

ओमित्येतद्यस्य बुधैर्नाम गृहीतं
यद्भासेदं भाति समस्तं वियदादि ।
यस्याज्ञातः स्वस्वपदस्था विधिमुख्या-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १ ॥

नम्राङ्गाणां भक्तिमतां यः पुरुषार्था-
न्दत्वा क्षिप्रं हन्ति च तत्सर्वविपत्तीः ।
पादाम्भोजाधस्तनितापस्मृतिमीशं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २ ॥

मोहध्वस्त्यै वैणिकवैयासिकिमुख्याः
संविन्मुद्रापुस्तकवीणाक्षगुणान्यम् ।
हस्ताम्भोजैर्बिभ्रतमाराधितवन्त-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ३ ॥

भद्रारूढं भद्रदमाराधयितॄणां
भक्तिश्रद्धापूर्वकमीशं प्रणमन्ति ।
आदित्या यं वाञ्छितसिद्ध्यै करुणाब्धिं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ४ ॥

गर्भान्तःस्थाः प्राणिन एते भवपाश-
च्छेदे दक्षं निश्चितवन्तः शरणं यम् ।
आराध्याङ्घ्रिप्रस्फुरदम्भोरुहयुग्मं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ५ ॥

वक्त्रं धन्याः संसृतिवार्धेरतिमात्रा-
द्भीताः सन्तः पूर्णशशाङ्कद्युति यस्य ।
सेवन्तेऽध्यासीनमनन्तं वटमूलं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ६ ॥

तेजःस्तोमैरङ्गदसंघट्टितभास्व-
न्माणिक्योत्थैर्भासितविश्वो रुचिरैर्यः ।
तेजोमूर्तिं खानिलतेजःप्रमुखाब्धिं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ७ ॥

दध्याज्यादिद्रव्यककर्माण्यखिलानि
त्यक्त्वा काङ्क्षां कर्मफलेष्वत्र करोति ।
यज्जिज्ञासां रूपफलार्थी क्षितिदेव-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ८ ॥

क्षिप्रं लोके यं भजमानः पृथुपुण्यः
प्रध्वस्ताधिः प्रोज्झितसंसृत्यखिलार्तिः
प्रत्यग्भूतं ब्रह्म परं सन्रमते य-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ९ ॥

णानेत्येवं यन्मनुमध्यास्थितवर्णा-
न्भक्ताः काले वर्णगृहीत्यै प्रजपन्तः ।
मोदन्ते संप्राप्तसमस्तश्रुतितन्त्रा-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १० ॥

मूर्तिश्छायानिर्जितमन्दाकिनिकुन्द-
प्रालेयाम्भोराशिसुधाभूतिसुरेभा ।
यस्याभ्राभा हासविधौ दक्षशिरोधि-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ११ ॥

तप्तस्वर्णच्छायजटाजूटकटाह-
प्रोद्यद्वीचीवल्लिविराजत्सुरसिन्धुम् ।
नित्यं सूक्ष्मं नित्यनिरस्ताखिलदोषं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १२ ॥

येन ज्ञातेनैव समस्तं विदितं स्या-
द्यस्मादन्यद्वस्तु जगत्यां शशशृङ्गम् ।
यं प्राप्तानां नास्ति परं प्राप्यमनादिं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १३ ॥

मत्तो मारो यस्य ललाटाक्षिभवाग्नि-
स्फूर्जत्कीलप्रोषितभस्मीकृतदेहः ।
तद्भस्मासीद्यस्य सुजातः पटवास-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १४ ॥

ह्यम्भोराशौ संसृतिरूपे लुठतां त-
त्पारं गन्तुं यत्पदभक्तिर्दृढनौका ।
सर्वाराध्यं सर्वगमानन्दपयोधिं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १५ ॥

मेधावी स्यादिन्दुवतंसं धृतवीणं
कर्पूराभं पुस्तकहस्तं कमलाक्षम् ।
चित्ते ध्यायन्यस्य वपुर्द्राङ्निमिषार्धं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १६ ॥

धाम्नां धाम प्रौढरुचीनां परमं य-
त्सूर्यादीनां यस्य स हेतुर्जगदादेः ।
एतावान्यो यस्य न सर्वेश्वरमीड्यं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १७ ॥

प्रत्याहारप्राणनिरोधादिसमर्थै-
र्भक्तैर्दान्तैः संयतचित्तैर्यतमानैः ।
स्वात्मत्वेन ज्ञायत एव त्वरया य-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १८ ॥

ज्ञांशीभूतान्प्राणिन एतान्फलदाता
चित्तान्तःस्थः प्रेरयति स्वे सकलेऽपि ।
कृत्ये देवः प्राक्तनकर्मानुसरः सं-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १९ ॥

प्रज्ञामात्रं प्रापितसंविन्निजभक्तं
प्राणाक्षादेः प्रेरयितारं प्रणवार्थम् ।
प्राहुः प्राज्ञा यं विदितानुश्रवतत्त्वा-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २० ॥

यस्याज्ञानादेव नृणां संसृतिबोधो
यस्य ज्ञानादेव विमोक्षो भवतीति ।
स्पष्टं ब्रूते वेदशिरो देशिकमाद्यं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २१ ॥

छन्नेऽविद्यारूपपटेनैव च विश्वं
यत्राध्यस्तं जीवपरेशत्वमपीदम् ।
भानोर्भानुष्वम्बुवदस्ताखिलभेदं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २२ ॥

स्वापस्वप्नौ जाग्रदवस्थापि न यत्र
प्राणश्चेतः सर्वगतो यः सकलात्मा ।
कूटस्थो यः केवलसच्चित्सुखरूप-
स्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २३ ॥

**हा** हेत्येवं विस्मयमीयुर्मुनिमुख्या
    ज्ञाते यस्मिन्स्वात्मतयानात्मविमोहः ।
प्रत्यग्भूते ब्रह्मणि यातः कथमित्थं
    तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २४ ॥

यैषा रम्यैर्मत्तमयूराभिधवृत्तै-
    रादौ क्लृप्ता यन्मनुवर्णैर्मुनिभङ्गी ।
तामेवैतां दक्षिणवक्त्रः कृपयासा-
    वूरीकुर्याद्देशिकसम्राट् परमात्मा ॥ २५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**श्रीदक्षिणामूर्तिवर्णमालास्तोत्रं**
**संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ श्रीदक्षिणामूर्त्यष्टकम् ॥

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १ ॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २ ॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थगं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३ ॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग-
त्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४ ॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५ ॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादना-
त्सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६ ॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७ ॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८ ॥

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किंचन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९ ॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे
तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
श्रीदक्षिणामूर्त्यष्टकम् संपूर्णम् ॥

॥ श्रीः ॥

# श्रीमृत्युंजयमानसिक-पूजास्तोत्रम् ॥

कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं
    कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् ।
गङ्गातुङ्गतरङ्गरञ्जितजटाभारं कृपासागरं
    कण्ठालंकृतशेषभूषणममुं मृत्युंजयं भावये ॥ १ ॥

आगत्य मृत्युंजय चन्द्रमौले
    व्याघ्राजिनालंकृत शूलपाणे ।
स्वभक्तसंरक्षणकामधेनो
    प्रसीद विश्वेश्वर पार्वतीश ॥ २ ॥

भास्वन्मौक्तिकतोरणे मरकतस्तम्भायुतालंकृते
    सौधे धूपसुवासिते मणिमये माणिक्यदीपाञ्चिते ।

ब्रह्मेन्द्रामरयोगिपुंगवगणैर्युक्ते च कल्पद्रुमैः
श्रीमृत्युंजय सुस्थिरो भव विभो माणिक्यसिंहासने ॥

मन्दारमल्लीकरवीरमाधवी-
पुंनागनीलोत्पलचम्पकान्वितैः ।
कर्पूरपाटीरसुवासितैर्जलै-
राधत्स्व मृत्युंजय पाद्यमुत्तमम् ॥ ४ ॥

सुगन्धपुष्पप्रकरैः सुवासितै-
र्वियन्नदीशीतलवारिभिः शुभैः ।
त्रिलोकनाथार्तिहरार्घ्यमादरा-
द्गृहाण मृत्युंजय सर्ववन्दित ॥ ५ ॥

हिमाम्बुवासितैस्तोयैः शीतलैरतिपावनैः ।
मृत्युंजय महादेव शुद्धाचमनमाचर ॥ ६ ॥

गुडदधिसहितं मधुप्रकीर्णं
सुघृतसमन्वितधेनुदुग्धयुक्तम् ।
शुभकर मधुपर्कमाहर त्वं
त्रिनयन मृत्युहर त्रिलोकवन्द्य ॥ ७ ॥

पञ्चास्त्र शान्त पञ्चास्य पञ्चपातकसंहर ।
पञ्चामृतस्नानमिदं कुरु मृत्युंजय प्रभो ॥ ८ ॥

जगत्त्रयीख्यात समस्ततीर्थ-
समाहृतैः कल्मषहारिभिश्च ।
स्नानं सुतोयैः समुदाचर त्वं
मृत्युंजयानन्तगुणाभिराम ॥ ९ ॥

आनीतेनातिशुभ्रेण कौशेयेनामरद्रुमात् ।
मार्जयामि जटाभारं शिव मृत्युंजय प्रभो ॥ १० ॥

नानाहेमविचित्राणि चीरचीनाम्बराणि च ।
विविधानि च दिव्यानि मृत्युंजय सुधारय ॥ ११ ॥

विशुद्धमुक्ताफलजालरम्यं
मनोहरं काञ्चनहेमसूत्रम् ।
यज्ञोपवीतं परमं पवित्र-
माधत्स्व मृत्युंजय भक्तिगम्य ॥ १२ ॥

श्रीगन्धं घनसारकुङ्कुमयुतं कस्तूरिकापूरितं
कालेयेन हिमाम्बुना विरचितं मन्दारसंवासितम् ।

दिव्यं देवमनोहरं मणिमये पात्रे समारोपितं
सर्वाङ्गेषु विलेपयामि सततं मृत्युंजय श्रीविभो ॥

अक्षतैर्धवलैर्दिव्यैः सम्यक्तिलसमन्वितैः ।
मृत्युंजय महादेव पूजयामि वृषध्वज ॥ १४ ॥

चम्पकपङ्कजकुरवक-
कुन्दैः करवीरमल्लिकाकुसुमैः ।
विस्तारय निजमकुटं
मृत्युंजय पुण्डरीकनयनाप्त ॥ १५ ॥

माणिक्यपादुकाद्वन्द्वे मौनिहृत्पद्ममन्दिरे ।
पादौ सत्पद्मसदृशौ मृत्युंजय निवेशय ॥ १६ ॥

माणिक्यकेयूरकिरीटहारैः
काञ्चीमणिस्थापितकुण्डलैश्च ।
मञ्जीरमुख्याभरणैर्मनोज्ञै-
रङ्गानि मृत्युंजय भूषयामि ॥ १७ ॥

गजवदनस्कन्दधृते-
नातिस्वच्छेन चामरयुगेन ।

गलद्‌लकाननपद्मं
    मृत्युंजय भावयामि हृत्पद्मे ॥ १८ ॥

मुक्तातपत्रं शशिकोटिशुभ्रं
    शुभप्रदं काञ्चनदण्डयुक्तम् ।
माणिक्यसंस्थापितहेमकुम्भं
    सुरेश मृत्युंजय तेऽर्पयामि ॥ १९ ॥

मणिमुकुरे निष्पटले
    त्रिजगद्गाढान्धकारसप्ताश्वे ।
कंदर्पकोटिसदृशं
    मृत्युंजय पश्य वदनमात्मीयम् ॥ २० ॥

कर्पूरचूर्णं कपिलाज्यपूतं
    दास्यामि कालेयसमन्वितैश्च ।
समुद्भवं पावनगन्धधूपितं
    मृत्युंजयाङ्गं परिकल्पयामि ॥ २१ ॥

वर्तित्रयोपेतमखण्डदीप्त्या
    तमोहरं बाह्यमथान्तरं च ।

साज्यं समस्तामरवर्गहृद्यं
सुरेश मृत्युंजय वंशदीपम् ॥ २२ ॥

राजान्नं मधुरान्वितं च मृदुलं माणिक्यपात्रे स्थितं
हिङ्गूजीरकसन्मरीचिमिलितैः शाकैरनेकैः शुभैः ।
शाकं सम्यगपूपसूपसहितं सद्योघृतेनाप्लुतं
श्रीमृत्युंजय पार्वतीप्रिय विभो सापोशनं भुज्यताम् ॥

कूश्माण्डवार्ताकपटोलिकानां
फलानि रम्याणि च कारवल्ल्या ।
सुपाकयुक्तानि ससौरभाणि
श्रीकण्ठ मृत्युंजय भक्षयेश ॥ २४ ॥

शीतलं मधुरं स्वच्छं पावनं वासितं लघु ।
मध्ये स्वीकुरु पानीयं शिव मृत्युंजय प्रभो ॥ २५ ॥

शर्करामिलितं स्निग्धं दुग्धान्नं गोघृतान्वितम् ।
कदलीफलसंमिश्रं भुज्यतां मृत्युसंहर ॥ २६ ॥

केवलमतिमाधुर्यं
दुग्धैः स्निग्धैश्च शर्करामिलितैः ।

एलामरीचिमिलितं
मृत्युंजय देव भुङ्क्ष्व परमान्नम् ॥ २७ ॥

रम्भाचूतकपित्थकण्टकफलैर्द्राक्षारसस्वादुम-
त्खर्जूरैर्मधुरेक्षुखण्डशकलैः सन्नारिकेलाम्बुभिः ।
कर्पूरेण सुवासितैर्गुडजलैर्माधुर्ययुक्तैर्विभो
श्रीमृत्युंजय पूरय त्रिभुवनाधारं विशालोदरम् ॥

मनोज्ञरम्भावनखण्डखण्डिता-
न्रुचिप्रदान्सर्षपजीरकांश्च ।
ससौरभान्सैन्धवसेवितांश्च
गृहाण मृत्युंजय लोकवन्द्य ॥ २९ ॥

हिङ्गूजीरकसहितं
विमलामलकं कपित्थमतिमधुरम् ।
बिसखण्डाँल्लवणयुता-
न्मृत्युंजय तेऽर्पयामि जगदीश ॥ ३० ॥

एलाशुण्ठीसहीतं
दध्यन्नं चारुहेमपात्रस्थम् ।

अमृतप्रतिनिधिमाढ्यं
मृत्युंजय भुज्यतां त्रिलोकेश ॥ ३१ ॥

जम्बीरनीराञ्चितशृङ्गबेरं
मनोहरानम्लशलाटुखण्डान् ।
मृदूपदंशान्सहसोपभुङ्क्ष्व
मृत्युंजय श्रीकरुणासमुद्र ॥ ३२ ॥

नागररामठयुक्तं
सुललितजम्बीरनीरसंपूर्णम् ।
मथितं सैन्धवसहितं
पिब हर मृत्युंजय क्रतुध्वंसिन् ॥ ३३ ॥

मन्दारहेमाम्बुजगन्धयुक्तै-
र्मन्दाकिनीनिर्मलपुण्यतोयैः ।
गृहाण मृत्युंजय पूर्णकाम
श्रीमत्परापोशनमभ्रकेश ॥ ३४ ॥

गगनधुनीविमलजलै-
र्मृत्युंजय पद्मरागपात्रगतैः ।

मृगमदचन्दनपूर्णं
प्रक्षालय चारु हस्तपदयुग्मम् ॥ ३५ ॥

पुंनागमल्लिकाकुन्दवासितैर्जाह्नवीजलैः ।
मृत्युंजय महादेव पुनराचमनं कुरु ॥ ३६ ॥

मौक्तिकचूर्णसमेतै-
र्मृगमदघनसारवासितैः पूगैः ।
पर्णैः स्वर्णसमानै-
र्मृत्युंजय तेऽर्पयामि ताम्बूलम् ॥ ३७ ॥

नीराजनं निर्मलदीप्तिमद्भि-
र्दीपाङ्कुरैरुज्ज्वलमुच्छ्रितैश्च ।
घण्टानिनादेन समर्पयामि
मृत्युंजयाय त्रिपुरान्तकाय ॥ ३८ ॥

विरिञ्चिमुख्यामरवृन्दवन्दिते
सरोजमत्स्याङ्कितचक्रचिह्निते ।
ददामि मृत्युंजय पादपङ्कजे
फणीन्द्रभूषे पुनरर्घ्यमीश्वर ॥ ३९ ॥

पुंनागनीलोत्पलकुन्दजाजी-
मन्दारमल्लीकरवीरपङ्कजैः ।
पुष्पाञ्जलिं बिल्वदलैस्तुलस्या
मृत्युंजयाङ्घ्रौ विनिवेशयामि ॥ ४० ॥

पदे पदे सर्वतमोनिकृन्तनं
पदे पदे सर्वशुभप्रदायकम् ।
प्रदक्षिणं भक्तियुतेन चेतसा
करोमि मृत्युंजय रक्ष रक्ष माम् ॥ ४१ ॥

नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो
नमो लोकेशाय स्तुतविबुधलोकाय च नमः ।
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो
नमः फालाक्षाय स्मरमदविनाशाय च नमः ॥ ४२ ॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
श्रीमृत्युंजय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥

सौधे रत्नमये नवोत्पलदलाकीर्णे च तल्पान्तरे
　　कौशेयेन मनोहरेण धवलेनाच्छादिते सर्वशः ।
कर्पूराञ्चितदीपदीप्तिमिलिते रम्योपधानद्वये
　　पार्वत्याः करपद्मलालितपदं मृत्युंजयं भावये ॥४४॥

चतुश्चत्वारिंशद्विलसदुपचारैरभिमतै-
　　र्मनःपद्मे भक्त्या बहिरपि च पूजां शुभकरीम् ।
करोति प्रत्यूषे निशि दिवसमध्येऽपि च पुमा-
　　न्प्रयाति श्रीमृत्युंजयपदमनेकाद्भुतपदम् ॥ ४५ ॥

प्रातर्लिङ्गमुमापतेरहरहः संदर्शनात्स्वर्गदं
　　मध्याह्ने हयमेधतुल्यफलदं सायंतने मोक्षदम् ।
भानोरस्तमये प्रदोषसमये पञ्चाक्षराराधनं
　　तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्यं दृढम् ॥४६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
श्रीमृत्युंजयमानसिकपूजास्तोत्रं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ शिवनामावल्यष्टकम् ॥

हे चन्द्रचूड मदनान्तक शूलपाणे
स्थाणो गिरीश गिरिजेश महेश शंभो ।
भूतेश भीतभयसूदन मामनाथं
संसारदुःखगहनाज्जगदीश रक्ष ॥ १ ॥

हे पार्वतीहृदयवल्लभ चन्द्रमौले
भूताधिप प्रमथनाथ गिरीशचाप ।
हे वामदेव भव रुद्र पिनाकपाणे
संसारदुःखगहनाज्जगदीश रक्ष ॥ २ ॥

हे नीलकण्ठ वृषभध्वज पञ्चवक्त्र
लोकेश शेषवलय प्रमथेश शर्व ।
हे धूर्जटे पशुपते गिरिजापते मां
संसारदुःखगहनाज्जगदीश रक्ष ॥ ३ ॥

हे विश्वनाथ शिव शंकर देवदेव
　　गङ्गाधर प्रमथनायक नन्दिकेश ।
बाणेश्वरान्धकरिपो हर लोकनाथ
　　संसारदुःखगहनाज्जगदीश रक्ष ॥ ४ ॥

वाराणसीपुरपते मणिकर्णिकेश
　　वीरेश दक्षमखकाल विभो गणेश ।
सर्वज्ञ सर्वहृदयैकनिवास नाथ
　　संसारदुःखगहनाज्जगदीश रक्ष ॥ ५ ॥

श्रीमन्महेश्वर कृपामय हे दयालो
　　हे व्योमकेश शितिकण्ठ गणाधिनाथ ।
भस्माङ्गराग नृकपालकलापमाल
　　संसारदुःखगहनाज्जगदीश रक्ष ॥ ६ ॥

कैलासशैलविनिवास वृषाकपे हे
　　मृत्युंजय त्रिनयन त्रिजगन्निवास ।
नारायणप्रिय मदापह शक्तिनाथ
　　संसारदुःखगहनाज्जगदीश रक्ष ॥ ७ ॥

विश्वेश विश्वभवनाशक विश्वरूप
विश्वात्मक त्रिभुवनैकगुणाधिकेश ।
हे विश्वनाथ करुणामय दीनबन्धो
संसारदुःखगहनाज्जगदीश रक्ष ॥ ८ ॥

गौरीविलासभवनाय महेश्वराय
पञ्चाननाय शरणागतकल्पकाय ।
शर्वाय सर्वजगतामधिपाय तस्मै
दारिद्र्यदुःखदहनाय नमः शिवाय ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शिवनामावल्यष्टकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ शिवपञ्चाक्षरस्तोत्रम् ॥

नागेन्द्रहाराय विलोचनाय
भस्माङ्गरागाय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय
तस्मै नकाराय नमः शिवाय ॥ १ ॥

मन्दाकिनीसलिलचन्दनचर्चिताय
नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारमुख्यबहुपुष्पसुपूजिताय
तस्मै मकारमहिताय नमः शिवाय ॥ २ ॥

शिवाय गौरीवदनाब्जबृन्द-
सूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय
तस्मै शिकाराय नमः शिवाय ॥ ३ ॥

वसिष्ठकुम्भोद्भवगौतमार्य-
मुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय
तस्मै वकाराय नमः शिवाय ॥ ४ ॥

यक्षस्वरूपाय जटाधराय
पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय
तस्मै यकाराय नमः शिवाय ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**शिवपञ्चाक्षरस्तोत्रं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ उमामहेश्वरस्तोत्रम् ॥

नमः शिवाभ्यां नवयौवनाभ्यां
परस्पराश्लिष्टवपुर्धराभ्यां ।
नगेन्द्रकन्यावृषकेतनाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ १ ॥

नमः शिवाभ्यां सरसोत्सवाभ्यां
नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ २ ॥

नमः शिवाभ्यां वृषवाहनाभ्यां
विरिञ्चिविष्ण्वन्द्रसुपूजिताभ्याम् ।
विभूतिपाटीरविलेपनाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ३ ॥

नमः शिवाभ्यां जगदीश्वराभ्यां
जगत्पतिभ्यां जयविग्रहाभ्याम्
जम्भारिमुख्यैरभिवन्दिताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ४ ॥

नमः शिवाभ्यां परमौषधाभ्यां
पञ्चाक्षरीपञ्जररञ्जिताभ्याम् ।
प्रपञ्चसृष्टिस्थितिसंहृताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ५ ॥

नमः शिवाभ्यामतिसुन्दराभ्या-
मत्यन्तमासक्तहृदम्बुजाभ्याम् ।
अशेषलोकैकहितंकराभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ६ ॥

नमः शिवाभ्यां कलिनाशनाभ्यां
कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ७ ॥

नमः शिवाभ्यामशुभापहाभ्या-
मशेषलोकैकविशेषिताभ्याम् ।
अकुण्ठिताभ्यां स्मृतिसंभृताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ८ ॥

नमः शिवाभ्यां रथवाहनाभ्यां
रवीन्दुवैश्वानरलोचनाभ्याम् ।
राकाशशाङ्काभमुखाम्बुजाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ९ ॥

नमः शिवाभ्यां जटिलंधराभ्यां
जरामृतिभ्यां च विवर्जिताभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ १० ॥

नमः शिवाभ्यां विषमेक्षणाभ्यां
बिल्वच्छदामल्लिकदामभृद्भ्याम् ।
शोभावतीशान्तवतीश्वराभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ ११ ॥

नमः शिवाभ्यां पशुपालकाभ्यां
जगत्त्रयीरक्षणबद्धहृद्भ्याम् ।
समस्तदेवासुरपूजिताभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ १२ ॥

स्तोत्रं त्रिसंध्यं शिवपार्वतीभ्यां
भक्त्या पठेद्द्वादशकं नरो यः ।
स सर्वसौभाग्यफलानि भुङ्क्ते
शतायुरन्ते शिवलोकमेति ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
उमामहेश्वरस्तोत्रं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ सौन्दर्यलहरी ॥

---

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः संचिन्वन्विरचयति लोकानविकलम् ।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥

अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी
जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥ ३ ॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-
स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं
पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपा-
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान्पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ८ ॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥ ९ ॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शंभोर्नवभिरपि मूलप्रकृतिभिः ।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥ ११ ॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति मनसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया
हठात्त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ॥ १३ ।

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।
दिवि द्विःषट्त्रिंशन्मनसि च चतुःषष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥

शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां
वरत्रासत्राणस्फटिकघटिकापुस्तककराम् ।
सकृन्न त्वा नत्वा कथमिव सतां संनिदधते
मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः ॥ १५ ॥

कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरी-
गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥ १६ ॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभि-
र्वशिन्याद्याभिस्त्वां सह जननि संचिन्तयति यः ।
स कर्ता काव्यानां भवति महतां भङ्गिरुचिभि-
र्वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥

तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभि-
र्दिवं सर्वामुर्वीमरुणिमनि मग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥ १८ ॥

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरुम्बामृतरसं
हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टान्दृष्ट्या सुखयति सुधाधारसिरया ॥ २० ॥

तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २१ ॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥ २२ ॥

त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्धं शंभोरपरमपि शङ्के हृतमभूत् ।
यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥ २३ ॥

जगत्सूते धाता हरिरवति रुद्रः क्षपयते
तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति ।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिव-
स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥

त्रयाणां देवानां त्रिगुणजनितानां तव शिवे
भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः ॥ २५ ॥

विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्री माहेन्द्री विततिरपि संमीलितदृशा
महासंहारेऽस्मिन्विहरति सति त्वत्पतिरसौ ॥ २६ ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत्क्ष्वेलं कबलितवतः कालकलना
न शंभोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥ २८ ॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमकुटम् ।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ २९ ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ३० ॥

चतुःषष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ ३२ ॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो-
र्निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः
शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥

शरीरं त्वं शंभोः शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति नवात्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः संबन्धो वां समरसपरानन्दपरयोः ॥ ३४ ॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवति भावेन बिभृषे ॥ ३५ ॥

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शंभुं वन्दे परिमिलितपार्श्वं परचिता ।
यमाराध्यन्भक्त्या रविशशिशुचीनामविषये
निरालोकेऽलोके निवसति हि भालोकभुवने ॥ ३६ ॥

विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यवसिताम् ।
ययोः कान्त्या यान्त्याः शशिकिरणसारूप्यसरणे-
र्विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥

समुन्मीलत्संवित्कमलमकरन्दैकरसिकं
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणति-
र्यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥

तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं
तमीडे संवर्तं जननि महतीं तां च समयाम् ।
यदालोके लोकान्दहति महति क्रोधकलिते
दयार्द्रा या दृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥

तटित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव श्यामं मेघं कमपि मणिपूरैकशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम ॥ ४० ॥

तवाधारे मूले सह समयया लास्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।
स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं
धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ॥ ४२ ॥

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं
घनस्निग्धश्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन्मन्ये वलमथनवाटीविटपिनाम् ॥ ४३ ॥

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
 परीवाहः स्रोतःसरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
 द्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥ ४४ ॥

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
 परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन्दशनरुचिकिञ्जल्करुचिरे
 सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ॥ ४५ ॥

ललाटं लावण्यद्युतिविमलमाभाति तव य-
 द्द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमपि संभूय च मिथः
 सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥

भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि
 त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम् ।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः
 प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥ ४७ ॥

अहः सूते सव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥

विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपाधाराधारा किमपि मधुराभोगवतिका ।
अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥

कवीनां संदर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-
वसूयासंसर्गादलिकनयनं किंचिदरुणम् ॥ ५० ॥

शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ ५१ ॥

गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती
पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥

विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।
पुनः स्रष्टुं देवान्द्रुहिणहरिरुद्रानुपरता-
न्रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ ५३ ।

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि संभेदमनघम् ॥ ५४ ॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥

तवापर्णे कर्णेजपनयनपैशुन्यचकिता
    निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
    जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५६ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
    दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
    वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥

अरालं ते पालीयुगलमगराजन्यतनये
    न केषामाधत्ते कुसुमशरकोदण्डकुतुकम ।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-
    न्नपाङ्गव्यासङ्गो दिशति शरसंधानधिषणाम् ॥ ५८ ॥

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
    चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
    महावीरो मारः प्रमथपतये सज्जितवते ॥ ५९ ॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम् ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥

असौ नासावंशस्तुहिनगिरिवंशध्वजपटि
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहत्यन्तर्मुक्ताः शिशिरकरनिश्वासगलितं
समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥

प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।
न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं
तुलामध्यारोढुं कथमिव विलज्जेत कलया ॥ ६२ ॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा ।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः
पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया ॥

अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजपा
जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ ६४ ॥

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-
र्निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकला
विलीयन्ते मातस्तव वदनताम्बूलकबलाः ॥ ६५ ॥

विपञ्च्या गायन्ती विविधमपदानं पशुपते-
स्त्वयारब्धे वक्तुं चलितशिरसा साधुवचने ।
तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥६६॥

कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शंभोर्मुखमुकुरवृन्तं गिरिसुते
कथंकारं ब्रूमस्तव चुबुकमौपम्यरहितम् ॥ ६७ ॥

भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका ॥ ६८ ॥

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥

मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः ।
नखेभ्यः संत्रस्यन्प्रथममथनादन्धकरिपो-
श्चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥

नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणां ते कान्तिं कथय कथयामः कथमुमे ।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥ ७१ ॥

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं
　　तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
　　स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झडिति ॥ ७२ ॥

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
　　न संदेहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ
　　कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
　　समारब्धां मुक्तामणिभिरमलां हारलतिकाम ।
कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां
　　प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते ॥ ७४ ॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
　　पयःपारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव य-
　　त्कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥ ७६ ॥

यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे
कृशे मध्ये किंचिज्जननि तव यद्भाति सुधियाम् ।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७७ ॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-
कलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७८ ॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेर्नारीतिलक शनकैस्त्रुट्यत इव ।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥ ७९ ॥

कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता ।
तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव ॥ ८० ॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजा-
न्नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ८१ ॥

करीन्द्राणां शुण्डान्कनककदलीकाण्डपटली-
मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि ॥ ८२ ॥

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-
नखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः ॥ ८३ ॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ८५ ॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणकमले ताडयति ते ।
चिरादन्तःशल्यं दहनकृतमुन्मूलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ॥ ८६ ॥

हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ
निशायां निद्राणं निशि चरमभागे च विशदौ ।
वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥ ८७ ॥

पदं ते कीर्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥

नखैर्नाकस्त्रीणां करकमलसंकोचशशिभि-
स्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।
फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८९ ॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशी-
ममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ॥ ९० ॥

पदन्यासक्रीडापरिचयमिवारब्धुमनसः
स्खलन्तस्ते खेलं भवनकलहंसा न जहति ।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥ ९१ ॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ९२ ॥

अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे ।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
जगत्त्रातुं शंभोर्जयति करुणा काचिदरुणा ॥ ९३ ॥

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥ ९४ ॥

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादा तरलकरणानामसुलभा ।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९५ ॥

कलत्रं वैधात्रं कतिकति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९६ ॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९७ ॥

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ९८ ॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरं जीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ ९९ ॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१००॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**सौन्दर्यलहरी संपूर्णा ॥**

॥ श्रीः ॥

# ॥ देवीभुजंगस्तोत्रम् ॥

विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः
    समूढे महानन्दपीठे निषण्णम् ।
धनुर्बाणपाशाङ्कुशप्रोतहस्तं
    महस्त्रैपुरं शंकराद्वैतमव्यात् ॥ १ ॥

यदन्नादिभिः पञ्चभिः कोशजालैः
    शिरःपक्षपुच्छात्मकैरन्तरन्तः ।
निगूढे महायोगपीठे निषण्णं
    पुरारेरथान्तःपुरं नौमि नित्यम् ॥ २ ॥

विरिञ्चादिरूपैः प्रपञ्चे विहृत्य
    स्वतन्त्रा यदा स्वात्मविश्रान्तिरेषा ।
तदा मानमातृप्रमेयातिरिक्तं
    परानन्दमीडे भवानि त्वदीयम् ॥ ३ ॥

विनोदाय चैतन्यमेकं विभज्य
द्विधा देवि जीवः शिवश्चेति नाम्ना ।
शिवस्यापि जीवत्वमापादयन्ती
पुनर्जीवमेनं शिवं वा करोषि ॥ ४ ॥

समाकुञ्च्य मूलं हृदि न्यस्य वायुं
मनो भ्रूबिलं प्रापयित्वा निवृत्ताः ।
ततः सच्चिदानन्दरूपे पदे ते
भवन्त्यम्ब जीवाः शिवत्वेन केचित् ॥ ५ ॥

शरीरेऽतिकष्टे रिपौ पुत्रवर्गे
सदाभीतिमूले कलत्रे धने वा ।
न कश्चिद्विरज्यत्यहो देवि चित्रं
कथं त्वत्कटाक्षं विना तत्त्वबोधः ॥ ६ ॥

शरीरे धनेऽपत्यवर्गे कलत्रे
विरक्तस्य सद्देशिकादिष्टबुद्धेः ।
यदाकस्मिकं ज्योतिरानन्दरूपं
समाधौ भवेत्तत्त्वमस्यम्ब सत्यम् ॥ ७ ॥

मृषान्यो मृषान्यः परो मिश्रमेनं
  परः प्राकृतं चापरो बुद्धिमात्रम् ।
प्रपञ्चं मिमीते मुनीनां गणोऽयं
  तदेतत्त्वमेवेति न त्वां जहीमः ॥ ८ ॥

निवृत्तिः प्रतिष्ठा च विद्या च शान्ति-
  स्तथा शान्त्यतीतेति पञ्चीकृताभिः ।
कलाभिः परे पञ्चविंशात्मिकाभि-
  स्त्वमेकैव सेव्या शिवाभिन्नरूपा ॥ ९ ॥

अगाधेऽत्र संसारपङ्के निमग्नं
  कलत्रादिभारेण खिन्नं नितान्तम् ।
महामोहपाशौघबद्धं चिरान्मां
  समुद्धर्तुमम्ब त्वमेकैव शक्ता ॥ १० ॥

समारभ्य मूलं गतो ब्रह्मचक्रं
  भवद्दिव्यचक्रेश्वरीधामभाजः ।
महासिद्धिसंघातकल्पद्रुमाभा-
  नवाप्याम्ब नादानुपास्ते च योगी ॥ ११ ॥

गणेशैर्ग्रहैरम्ब नक्षत्रपङ्क्त्या
  तथा योगिनीराशिपीठैरभिन्नम् ।
महाकालमात्मानमामृश्य लोकं
  विधत्से कृतिं वा स्थितिं वा महेशि ॥ १२ ॥

लसत्तारहारामतिस्वच्छचेलां
  वहन्तीं करे पुस्तकं चाक्षमालाम् ।
शरच्चन्द्रकोटिप्रभाभासुरां त्वां
  सकृद्भावयन्भारतीवल्लभः स्यात् ॥ १३ ॥

समुद्यत्सहस्रार्कबिम्बाभवक्त्रां
  स्वभासैव सिन्दूरिताजाण्डकोटिम् ।
धनुर्बाणपाशाङ्कुशान्धारयन्तीं
  स्मरन्तः स्मरं वापि संमोहयेयुः ॥ १४ ॥

मणिस्यूतताटङ्कशोणास्यबिम्बां
  हरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् ।
हृदा भावयंस्तप्तहेमप्रभां त्वां
  श्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥ १५ ॥

महामन्त्रराजान्तबीजं पराख्यं
स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं
स्वरूपं सकृद्भावयेत्स त्वमेव ॥ १६ ॥

तथान्ये विकल्पेषु निर्विण्णचित्ता-
स्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः
पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥ १७ ॥

त्वदुन्मेषलीलानुबन्धाधिकारा-
न्विरिञ्च्यादिकांस्त्वद्गुणाम्भोधिबिन्दून् ।
भजन्तस्तितीर्षन्ति संसारसिन्धुं
शिवे तावकीना सुसंभावनेयम् ॥ १८ ॥

कदा वा भवत्पादपोतेन तूर्णं
भवाम्भोधिमुत्तीर्य पूर्णान्तरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौ
समालोक्य लोकं कथं पर्युदास्से ॥ १९ ॥

कदा वा हृषीकाणि साम्यं भजेयुः
कदा वा न शत्रुर्न मित्रं भवानि ।
कदा वा दुराशाविषूचीविलोपः
कदा वा मनो मे समूलं विनश्येत् ॥ २० ॥

नमोवाकमाशास्महे देवि युष्म-
त्पदाम्भोजयुग्माय तिग्माय गौरि ।
विरिञ्च्यादिभास्वत्किरीटप्रतोली-
प्रदीपायमानप्रभाभास्वराय ॥ २१ ॥

कचे चन्द्ररेखं कुचे तारहारं
करे स्वादुचापं शरे षट्पदौघम् ।
स्मरामि स्मरारेरभिप्रायमेकं
मदाघूर्णनेत्रं मदीयं निधानम् ॥ २२ ॥

शरेष्वेव नासा धनुष्वेव जिह्वा
जपापाटले लोचने ते स्वरूपे ।
त्वगेषा भवच्चन्द्रखण्डे श्रवो मे
गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥ २३ ॥

जगत्कर्मधीरान्वचोधूतकीरान्
कुचन्यस्तहारान्कृपासिन्धुपूरान् ।
भवाम्भोधिपारान्महापापदूरान्
भजे वेदसाराञ्शिवप्रेमदारान् ॥ २४ ॥

सुधासिन्धुसारे चिदानन्दनीरे
समुत्फुल्लनीपे सुरत्नान्तरीपे ।
मणिव्यूहसाले स्थिते हैमशाले
मनोजारिवामे निषण्णं मनो मे ॥ २५ ॥

दृगन्ते विलोला सुगन्धीषुमाला
प्रपञ्चेन्द्रजाला विपत्सिन्धुकूला ।
मुनिस्वान्तशाला नमल्लोकपाला
हृदि प्रेमलोलामृतस्वादुलीला ॥ २६ ॥

जगज्जालमेतत्त्वयैवाम्ब सृष्टं
त्वमेवाद्य यासीन्द्रियैरर्थजालम् ।
त्वमेकैव कर्त्री त्वमेकैव भोक्त्री
न मे पुण्यपापे न मे बन्धमोक्षौ ॥ २७ ॥

इति प्रेमभारेण किञ्चिन्मयोक्तं
न बुध्वैव तत्त्वं मदीयं त्वदीयम ।
विनोदाय बालस्य मौर्ख्यं हि मात-
स्तदेतत्प्रलापस्तुतिं मे गृहाण ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
देवीभुजंगस्तोत्रम् संपूर्णम् ॥

॥ श्रीः ॥

# ॥ आनन्दलहरी ॥

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि ।
न षड्भिः सेनानीर्दशशतमुखैरप्यहिपति-
स्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ १ ॥

घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदै-
र्विशिष्यानाख्येयो भवति रसनामात्रविषयः ।
तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः
कथंकारं ब्रूमः सकलनिगमागोचरगुणे ॥ २ ॥

मुखे ते ताम्बूलं नयनयुगले कज्जलकला
ललाटे काश्मीरं विलसति गले मौक्तिकलता ।
स्फुरत्काञ्ची शाटी पृथुकटितटे हाटकमयी
भजामि त्वां गौरीं नगपतिकिशोरीमविरतम् ॥ ३ ॥

विराजन्मन्दारद्रुमकुसुमहारस्तनतटी-
नदद्वीणानादश्रवणविलसत्कुण्डलगुणा ।
नताङ्गी मातङ्गी रुचिरगतिभङ्गी भगवती
सती शंभोरम्भोरुहचटुलचक्षुर्विजयते ॥ ४ ॥

नवीनार्कभ्राजन्मणिकनकभूषापरिकरै-
र्वृताङ्गी सारङ्गीरुचिरनयनाङ्गीकृतशिवा ।
तटित्पीता पीताम्बरललितमञ्जीरसुभगा
ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ॥ ५ ॥

हिमाद्रेः संभूता सुललितकरैः पल्लवयुता
सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः ।
कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा
रुजां हन्त्री गन्त्री विलसति चिदानन्दलतिका ॥ ६ ॥

सपर्णामाकीर्णां कतिपयगुणैः सादरमिह
श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति ।
अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः
पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥ ७ ॥

विधात्री धर्माणां त्वमसि सकलाम्नायजननी
त्वमर्थानां मूलं धनदनमनीयाङ्घ्रिकमले ।
त्वमादिः कामानां जननि कृतकन्दर्पविजये
सतां मुक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८ ॥

प्रभूता भक्तिस्ते यदपि न ममालोलमनस-
स्त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना ।
पयोदः पानीयं दिशति मधुरं चातकमुखे
भृशं शङ्के कैर्वा विधिभिरनुनीता मम मतिः ॥ ९ ॥

कृपापाङ्गालोकं वितर तरसा साधुचरिते
न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते ।
न चेदिष्टं दद्यादनुपदमहो कल्पलतिका
विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥ १० ॥

महान्तं विश्वासं तव चरणपङ्केरुहयुगे
निधायान्यन्नैवाश्रितमिह मया दैवतमुमे ।
तथापि त्वच्चेतो यदि मयि न जायेत सदयं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ११ ॥

अयः स्पर्शे लग्नं सपदि लभते हेमपदवीं
यथा रथ्यापाथः शुचि भवति गङ्गौघमिलितम् ।
तथा तत्तत्पापैरतिमलिनमन्तर्मम यदि
त्वयि प्रेम्णा सक्तं कथमिव न जायेत विमलम् ॥ १२ ॥

त्वदन्यस्मादिच्छाविषयफललाभे न नियम-
स्त्वमज्ञानामिच्छाधिकमपि समर्था वितरणे ।
इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मन-
स्त्वदासक्तं नक्तंदिवमुचितमीशानि कुरु तत् ॥ १३ ॥

स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफल-
त्त्वदाकारं चञ्चच्छशधरकलासौधशिखरम् ।
मुकुन्दब्रह्मेन्द्रप्रभृतिपरिवारं विजयते
तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥ १४ ॥

निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः
कुटुम्बं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः ।
महेशः प्राणेशस्तदवनिधराधीशतनये
न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥ १५ ॥

वृषो वृद्धो यानं विषमशनमाशा निवसनं
श्मशानं क्रीडाभूर्भुजगनिवहो भूषणविधिः ।
समग्रा सामग्री जगति विदितैव स्मररिपो-
र्यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ॥ १६ ॥

अशेषब्रह्माण्डप्रलयविधिनैसर्गिकमतिः
श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः ।
दधौ कण्ठे हालाहलमखिलभूगोलकृपया
भवत्याः संगत्याः फलमिति च कल्याणि कलये ॥ १७ ॥

त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया
भियैवासीद्गङ्गा जलमयतनुः शैलतनये ।
तदेतस्यास्तस्माद्वदनकमलं वीक्ष्य कृपया
प्रतिष्ठामातन्वन्निजशिरसि वासेन गिरिशः ॥ १८ ॥

विशालश्रीखण्डद्रवमृगमदाकीर्णघुसृण-
प्रसूनव्यामिश्रं भगवति तवाभ्यङ्गसलिलम् ।
समादाय स्रष्टा चलितपदपांसून्निजकरैः
समाधत्ते सृष्टिं विबुधपुरपङ्केरुहदृशाम् ॥ १९ ॥

वसन्ते सानन्दे कुसुमितलताभिः परिवृते
स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे ।
सखीभिः खेलन्तीं मलयपवनान्दोलितजले
स्मरेद्यस्त्वां तस्य ज्वरजनितपीडापसरति ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**आनन्दलहरी संपूर्णा ॥**

॥ श्रीः ॥

# ॥ त्रिपुरसुन्दरीवेदपादस्तोत्रम् ॥

वेदपादस्तवं वक्ष्ये देव्याः प्रियचिकीर्षया ।
यथामति मतिं देवस्तन्नो दन्तिः प्रचोदयात् ॥ १ ॥

अकिंचित्करकर्मभ्यः प्रत्याहृत्य कृपावशात् ।
सुब्रह्मण्यः स्तुतावस्यां तन्नः षण्मुखः प्रचोदयात् ॥ २ ॥

अकारादिक्षकारान्तवर्णावयवशालिनी ।
वीणापुस्तकहस्ताव्यात्प्रणो देवी सरस्वती ॥ ३ ॥

या वर्णपदवाक्यार्थगद्यपद्यस्वरूपिणी ।
वाचि नर्तयतु क्षिप्रं मेधां देवी सरस्वती ॥ ४ ॥

उपास्यमाना विप्रेन्द्रैः सन्ध्यासु च तिसृष्वपि ।
सद्यः प्रसीद मे मातः सन्ध्याविद्ये सरस्वती ॥ ५ ॥

मन्दा निन्दालोलुपाहं स्वभावा-
देतत्स्तोत्रं पूर्यते किं मयेति ।
मा ते भीतिर्हे मते त्वादृशाना-
मेषा नेत्री राधसा सूनृतानाम् ॥ ६ ॥

तरङ्गभ्रुकुटीकोटिभङ्ग्या तर्जयते जराम् ।
सुधामयाय शुभ्राय सिन्धूनां पतये नमः ॥ ७ ॥

तस्य मध्ये मणिद्वीपः कल्पकाराममूषितः ।
अस्तु मे ललितावासः स्वस्तिदा अभयंकरः ॥ ८ ॥

कदम्बमञ्जरीनिर्यद्वारुणीपारणोन्मदैः ।
द्विरेफैर्वर्णनीयाय वनानां पतये नमः ॥ ९ ॥

तत्र वप्रावली लीला गगनोल्लङ्घिगोपुरम् ।
मातः कौतूहलं दद्यात्सस्पृहार्यं नगरं तव ॥ १० ॥

मकरन्दझरीमज्जन्मिलिन्दकुलसंकुलाम् ।
महापद्माटवीं वन्दे यशसा संपरीवृताम् ॥ ११ ॥

तत्रैव चिन्तामणिधोरणार्चिभि-
र्विनिर्मितं रोपितरत्नशृङ्गम् ।

भजे भवानीभवनावतंस-
मादित्यवर्णं तमसः परस्तात् ॥ १२ ॥

मुनिभिः स्वात्मलाभाय यच्चक्रं हृदि सेव्यते ।
तत्र पश्यामि बुद्ध्या तदक्षरे परमे व्योमन् ॥ १३ ॥

पञ्चब्रह्ममयो मञ्चस्तत्र यो बिन्दुमध्यगः ।
तव कामेशि वासोऽयमायुष्मन्तं करोतु माम् ॥ १४ ॥

नानारत्नगुलुच्छालीकान्तिकिम्मीलितोदरम् ।
विमृशामि वितानं तेऽतिश्लक्ष्णमतिलोमशम् ॥ १५ ॥

पर्यङ्कतल्पोपरि दर्शनीयं
सबाणचापाङ्कुशपाशपाणिम् ।
अशेषभूषारमणीयमीडे
त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ १६ ॥

जटारुणं चन्द्रकलाललामं
उद्वेललावण्यकलाभिरामम् ।
कामेश्वरं कामशरासनाङ्कं
समस्तसाक्षिं तमसः परस्तात् ॥ १७ ॥

तत्र कामेशवामाङ्के खेलन्तीमलिकुन्तलाम् ।
सच्चिदानन्दलहरीं महालक्ष्मीमुपास्महे ॥ १८ ॥

चारुगोरोचनापङ्कजम्बालितघनस्तनीम् ।
नमामि त्वामहं लोकमातरं पद्ममालिनीम् ॥ १९ ॥

शिवे नमन्निर्जरकुञ्जरासुर-
प्रतोलिकामौलिमरीचिवीचिभिः ।
इदं तव क्षालनजातसौभगं
चरणं नो लोके सुधितां दधातु ॥ २० ॥

कल्पस्यादौ कारणेशानपि त्री-
न्स्रष्टुं देवि त्रीन्गुणानादधानाम् ।
सेवे नित्यं श्रेयसे भूयसे त्वा-
मजामेकां लोहितशुक्लकृष्णाम् ॥ २१ ॥

केशोद्भूतैरद्भुतामोदपूरै-
राशावृन्दं सान्द्रमापूरयन्तीम् ।
त्वामानम्य त्वत्प्रसादात्स्वयंभू-
रस्मान्मायी सृजते विश्वमेतत् ॥ २२ ॥

अर्धोन्मीलद्यौवनोद्दामदर्पां
दिव्याकल्पैरर्पयन्तीं मयूखान् ।
देवि ध्यात्वा त्वां पुरा कैटभारि-
र्विश्वं बिभर्ति भुवनस्य नाभिः ॥ २३ ॥

कल्हारश्रीमञ्जरीपुञ्जरीतिं
धिक्कुर्वन्तीमम्ब ते पाटलिम्ना ।
मूर्तिं ध्यात्वा शाश्वतीं भूतिमाय-
न्निन्द्रो राजा जगतो य ईशे ॥ २४ ॥

देवतान्तरमन्त्रौघजपश्रीफलभूतया ।
जापकस्तव देव्यन्ते विद्यया विन्दतेऽमृतम् ॥ २५ ॥

पुंस्कोकिलकलक्काणकोमलालापशालिनि ।
भद्राणि कुरु मे मातर्दुरितानि परासुव ॥ २६ ॥

अन्तेवासिन्नस्ति चेत्ते मुमुक्षा
वक्ष्ये युक्तिं मुक्तसर्वैषणः सन् ।
सद्यः साक्षात्सुन्दरीं ज्ञप्तिरूपां
श्रद्धाभक्तिध्यानयोगादवेहि ॥ २७ ॥

षोढान्यासादिदेवैश्च सेविता चक्रमध्यगा ।
कामेशमहिषी भूयः षोडशी शर्म यच्छतु ॥ २८ ॥

शान्तो दान्तो देशिकेन्द्रं प्रणम्य
तस्यादेशात्तारकं मन्त्रतत्त्वम् ।
जानीते चेदम्ब धन्यः समानं
नातः परं वेदितव्यं हि किंचित् ॥ २९ ॥

त्वमेव कारणं कार्यं क्रिया ज्ञानं त्वमेव च ।
त्वामम्ब न विना किंचित्त्वयि सर्वं प्रतिष्ठितम् ॥ ३० ॥

परागमद्रीन्द्रसुते तवाङ्घ्रि-
सरोजयोरम्ब दधामि मूर्ध्ना ।
अलंकृतं वेदवधूशिरोभि-
र्यतो जातो भुवनानि विश्वा ॥ ३१ ॥

दुष्टान्दैत्यान्हन्तुकामां महर्षी-
न्शिष्टानन्यान्पातुकामां कराब्जैः ।
अष्टाभिस्त्वां सायुधैर्भासमानां
दुर्गां देवीँ शरणमहं प्रपद्ये ॥ ३२ ॥

देवि सर्वानवद्याङ्गि त्वामनादृत्य ये क्रियाः ।
कुर्वन्ति निष्फलास्तेषामदुग्धा इव धेनवः ॥ ३३ ॥

नाहं मन्ये दैवतं मान्यमन्य-
त्वत्पादाब्जादम्बिके कुम्भजाद्याः ।
ये ध्यातारो भक्तिसंशुद्धचित्ताः
परामृतात्परिमुच्यन्ति सर्वे ॥ ३४ ॥

कुर्वाणोऽपि दुरारम्भांस्तव नामानि शांभवि ।
प्रजपन्नेति मायान्तमति मृत्युं तराम्यहम् ॥ ३५ ॥

कल्याणि त्वं कुन्दहासप्रकाशै-
रन्तर्ध्वान्तं नाशयन्ती क्षणेन ।
हन्तास्माकं ध्यायतां त्वत्पदाब्ज-
मुच्चातिष्ठ महते सौभगाय ॥ ३६ ॥

तितीर्षया भवाम्भोधेर्हयग्रीवादयः पुरा ।
अप्रमत्ता भवत्पूजां सुविद्वाँसो वितेनिरे ॥ ३७ ॥

मद्वश्या ये दुराचारा ये च सन्मार्गगामिनः ।
भवत्याः कृपया सर्वे सुवर्यन्तु यजमानाः ॥ ३८ ॥

श्रीचक्रस्थां शाश्वतैश्वर्यदात्रीं
पौण्ड्रं चापं पुष्पबाणान्दधानाम् ।
बन्धूकाभां भावयामि त्रिनेत्रां
तामग्निवर्णां तपसा ज्वलन्तीम् ॥ ३९ ॥

भवानि तव पादाब्जनिर्णेजनपवित्रताः ।
भवामयप्रशान्त्यै त्वामपो याचामि भेषजम् ॥ ४० ॥

चिदानन्दसुधाम्भोधेस्तवानन्दलवोऽस्ति यः ।
कारणेशैस्त्रिभिः साकं तद्विश्वमुपजीवति ॥ ४१ ॥

नो वा यागैर्नैव पूर्तादिकृत्यै-
र्नो वा जप्यैर्नो महद्भिस्तपोभिः ।
नो वा योगैः क्लेशकृद्भिः सुमेधा
निचाय्येमां शान्तिमत्यन्तमेति ॥ ४२ ॥

प्रातः पाहि महाविद्ये मध्याह्ने तु मृडप्रिये ।
सायं पाहि जगद्वन्द्ये पुनर्नः पाहि विश्वतः ॥ ४३ ॥

बन्धूकाभैर्भानुभिर्भासयन्ती
विश्वं शश्वत्तुङ्गपीनस्तनार्धा ।

लावण्याब्धेः सुन्दरि त्वं प्रसादा-
दायुः प्रजाऽऽ रयिमस्मासु धेहि ॥ ४४ ॥

कर्णाकर्णय मे तत्त्वं या चिच्छक्तिरितीर्यते ।
त्रिर्वदामि मुमुक्षूणां सा काष्ठा सा परा गतिः ॥ ४५ ॥

वाग्देवीति त्वां वदन्त्यम्ब केचि-
ल्लक्ष्मीर्गौरीत्येवमन्येऽप्युशन्ति ।
शश्वन्मातः प्रत्यगद्वैतरूपां
शंसन्ति केचिन्निविदो जनाः ॥ ४६ ॥

ललितेति सुधापूरमाधुरीचोरमम्बिके ।
तव नामास्ति यत्तेन जिह्वा मे मधुमत्तमा ॥ ४७ ॥

ये संपन्नाः साधनैस्तैश्चतुर्भिः
शुश्रूषाभिर्देशिकं प्रीणयन्ति ।
सम्यग्विद्वाञ्शुद्धसत्त्वान्तराणां
तेषामेवैतां ब्रह्मविद्यां वदेत ॥ ४८ ॥

अभिचारादिभिः कृत्यां यः प्रेरयति मय्युमे ।
तव हुंकारसंत्रस्ता प्रत्यक्कर्तारमृच्छतु ॥ ४९ ॥

जगत्पवित्रि मामिकामपाहराशु दुर्जराम् ।
प्रसीद मे दयाधुने प्रशस्तिमम्ब नः स्कृधि ॥ ५० ॥

कदम्बारुणमम्बाया रूपं चिन्तय चित्त मे ।
मुञ्च पापीयसीं निष्ठां मा गृधः कस्य स्विद्धनम् ॥ ५१ ॥

भण्डभण्डनलीलायां रक्तचन्दनपङ्किलः ।
अङ्कुशस्तव तं हन्याद्यश्च नो द्वेषते जनः ॥ ५२ ॥

रे रे चित्त त्वं वृथा शोकसिन्धौ
मज्जस्यन्तर्वच्म्युपायं विमुक्त्यै ।
देव्याः पादौ पूजयैकाक्षरेण
तत्ते पदं संग्रहेण ब्रवीम्योम् ॥ ५३ ॥

चञ्चद्बालातपज्योत्स्नाकलामण्डलशालिने ।
ऐक्षवाय नमो मातर्बाहुभ्यां तव धन्वने ॥ ५४ ॥

तामेवाद्यां ब्रह्मविद्यामुपासे
मूर्तैर्वेदैः स्तूयमानां भवानीम् ।
हन्त स्वात्मत्वेन यां मुक्तिकामो
मत्वा धीरो हर्षशोकौ जहाति ॥ ५५ ॥

शरणं करवाण्यम्ब चरणं तव सुन्दरि ।
शपे त्वत्पादुकाभ्यां मे नान्यः पन्था अयनाय ॥ ५६ ॥

रत्नच्छत्रैश्चामरैर्दर्पणाद्यै-
श्चक्रेशानीं सर्वदोपाचरन्त्यः ।
योगिन्योऽन्याः शक्तयश्चाणिमाद्या
यूयं पात स्वस्तिभिः सदा नः ॥ ५७ ॥

दरिद्रं मां विजानीहि सर्वज्ञासि यतः शिवे ।
दूरीकृत्याशु दुरितमथा नो वर्धया रयिम् ॥ ५८ ॥

महेश्वरि महामन्त्रकूटत्रयकलेबरे ।
कादिविद्याक्षरश्रेणिमुशन्तस्त्वा हवामहे ॥ ५९ ॥

मूलाधारादूर्ध्वमन्तश्चरन्तीं
भित्त्वा ग्रन्थीन्मूर्ध्नि निर्यत्सुधार्द्राम् ।
पश्यन्तस्त्वां ये च तृप्तिं लभन्ते
तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ६० ॥

मह्यं द्रुह्यन्ति ये मातस्त्वद्ध्यानासक्तचेतसे ।
तानम्ब सायकैरेभिरव ब्रह्मद्विषो जहि ॥ ६१ ॥

त्वद्भक्तानामम्ब शान्तैषणानां
ब्रह्मिष्ठानां दृष्टिपातेन पूतः ।
पापीयानप्यावृतः स्वर्वधूभिः
शोकातिगो मोदते स्वर्गलोके ॥ ६२ ॥

सन्तु विघ्ना जगत्यस्मिन्संसारभ्रमहेतवः ।
भजेऽहं त्वां यया विद्वान्विद्ययामृतमश्नुते ॥ ६३ ॥

विद्वन्मुख्यैर्विद्रुमाभं विशाल-
श्रोणीशिञ्जन्मेखलाकिङ्किणीकम् ।
चन्द्रोत्तंसं चिन्मयं वस्तु किंचि-
द्विद्धि त्वमेतन्निहितं गुहायाम् ॥ ६४ ॥

न विस्मरामि चिन्मूर्तिमिक्षुकोदण्डशालिनीम् ।
मुनयः सनकप्रेष्ठास्तामाहुः परमां गतिम् ॥ ६५ ॥

चक्षुःप्रेङ्खत्प्रेमकारुण्यधारां
हंसज्योत्स्नापूरहृष्यच्चकोराम् ।
यामाश्लिष्यन्मोदते देवदेवः
सा नो देवी सुहवा शर्म यच्छतु ॥ ६६ ॥

मुञ्च वञ्चकतां चित्त पामरं चापि दैवतम् ।
गृहाण पदमम्बाया एतदालम्बनं परम् ॥ ६७ ॥

का मे भीतिः का क्षतिः किं दुरापं
कामेशाङ्कोत्तुङ्गपर्यङ्कसंस्थाम् ।
तत्त्वातीतामच्युतानन्ददात्रीं
देवीमहं निर्ऋतिं वन्दमानः ॥ ६८ ॥

चिन्तामणिमयोत्तंसकान्तिकञ्चुकिताननेे ।
ललिते त्वां सकृन्नत्वा न बिभेति कुतश्चन ॥ ६९ ॥

तारुण्योत्तुङ्गितकुचे लावण्योल्लासितेक्षणे ।
तवाज्ञयैव कामाद्या मास्मान्प्रापन्नरातयः ॥ ७० ॥

आकर्णाकृष्टकामास्त्रसंजातं तापमम्ब मे ।
आचामतु कटाक्षस्ते पर्जन्यो वृष्टिमानिव ॥ ७१ ॥

कुर्वे गर्वेणापचारानपारा-
न्यद्यप्यम्ब त्वत्पदाब्जं तथापि ।
मन्ये धन्ये देवि विद्यावलम्बं
मातेव पुत्रं बिभृतास्वेनम् ॥ ७२ ॥

यथोपास्तिक्षतिर्न स्यात्तव चक्रस्य सुन्दरि ।
कृपया कुरु कल्याणि तथा मे स्वस्तिरायुषी ॥ ७३ ॥

चक्रं सेवे तारकं सर्वसिध्यै
श्रीमन्मातः सिद्धयश्चाणिमाद्याः ।
नित्या मुद्रा शक्तयश्चाङ्गदेव्यो
यस्मिन्देवा अधि विश्वे निषेदुः ॥ ७४ ॥

सुकुमारे सुखाकारे सुनेत्रे सूक्ष्ममध्यमे ।
सुप्रसन्ना भव शिवे सुमृडीका सरस्वती ॥ ७५ ॥

विद्युद्वल्लीकन्दलीं कल्पयन्तीं
मूर्तिं स्फूर्त्या पङ्कजं धारयन्तीम् ।
ध्यायन्हि त्वां जायते सार्वभौमो
विश्वा आशाः पृतनाः संजयञ्जयन् ॥ ७६ ॥

अविज्ञाय परां शक्तिमात्मभूतां महेश्वरीम् ।
अहो पतन्ति निरयेष्वेके चात्महनो जनाः ॥ ७७ ॥

सिन्दूराभैः सुन्दरैरंशुवृन्दै-
र्लाक्षालक्ष्म्यां मज्जयन्तीं जगन्ति ।

हेरम्बाम्ब त्वां हृदा लम्बते य-
स्तस्मै विश: स्वयमेवानमन्ते ॥ ७८ ॥

तव तत्त्वं विमृशतां प्रत्यगद्वैतलक्षणम् ।
चिदानन्दघनादन्यन्नेह नानास्ति किंचन ॥ ७९ ॥

कण्ठात्कुण्डलिनीं नीत्वा सहस्रारं शिवे तव ।
न पुनर्जायते गर्भे सुमेधा अमृतोक्षितः ॥ ८० ॥

त्वत्पादुकानुसंधानप्राप्तसर्वात्मतादृशि ।
पूर्णाहंकृतिमत्यास्मिन्न कर्म लिप्यते नरे ॥ ८१ ॥

तवानुग्रहनिर्भिन्नहृदयग्रन्थिरद्रिजे ।
स्वात्मत्वेन जगन्मत्वा ततो न विजुगुप्सते ॥ ८२ ॥

कदा वसुदलोपेते त्रिकोणनवकान्विते ।
आवाहयामि चक्रे त्वां सूर्याभां श्रियमैश्वरीम् ॥ ८३ ॥

ह्रीमित्येकं तावकं वाचकार्णं
यज्जिह्वाग्रे देवि जागर्ति किंचित् ।
को वायं स्यात्कामकामस्त्रिलोक्यां
सर्वेऽस्मै देवा बलिमावहन्ति ॥ ८४ ॥

नाकस्त्रीणां किन्नरीणां नृपाणा-
मप्याकर्षी चेतसा चिन्तनीयम् ।
त्वत्पाणिस्थं कुङ्कुमाभं शिवे यं
द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् ॥ ८५ ॥

नूनं सिंहासनेश्वर्यास्तवाज्ञां शिरसा वहन् ।
भयेन पवमानोऽयं सर्वा दिशोऽनुविधावति ॥ ८६ ॥

त्रिकलाढ्यां विह्नलेखां द्विहंसस्वरभूषिताम् ।
यो जपत्यम्ब ते विद्यां सोऽक्षरः परमः स्वराट् ॥ ८७ ॥

दारिद्र्याब्धौ देवि मग्नोऽपि शश्व-
द्वाचा याचे नाहमम्ब त्वदन्यम् ।
तस्मादस्मद्वाञ्छितं पूरयैत-
दुषा सा नक्ता सुदुघेव धेनुः ॥ ८८ ॥

यो वा यद्यत्कामनाकृष्टचित्तः
स्तुत्वोपास्ते देवि ते चक्रविद्याम् ।
कल्याणानामालयः कालयोगा-
त्तं तं लोकं जयते तांश्च कामान् ॥ ८९ ॥

साधकः सततं कुर्यादैक्यं श्रीचक्रदेहयोः ।
तथा देव्यात्मनोरैक्यमेतावदनुशासनम् ॥ ९० ॥

हस्ताम्भोजप्रोल्लसच्चामराभ्यां
श्रीवाणीभ्यां पार्श्वयोर्वीज्यमानाम् ।
श्रीसंम्राज्ञि त्वां सदालोकयेयं
सदा सद्भिः सेव्यमानां निगूढाम् ॥ ९१ ॥

इष्टानिष्टप्राप्तिविच्छित्तिहेतुः
स्तोतुं वाचां क्लृप्तिरित्येव मन्ये ।
त्वद्रूपं हि स्वानुभूत्यैकवेद्यं
न चक्षुषा गृह्यते नापि वाचा ॥ ९२ ॥

हरस्वरैश्चतुर्वर्गपदं मन्त्रं सबिन्दुकम् ।
देव्या जपत विप्रेन्द्रा अन्या वाचो विमुञ्चथ ॥ ९३ ॥

यस्ते राकाचन्द्रबिम्बासनस्थां
पीयूषाब्धिं कल्पयन्तीं मयूखैः ।
मूर्तिं भक्त्या ध्यायते हृत्सरोजे
न तस्य रोगो न जरा न मृत्युः ॥ ९४ ॥

तुभ्यं मातर्योऽञ्जलिं मूर्ध्नि धत्ते
मौलिश्रेण्या भूभुजस्तं नमन्ति ।
यः स्तौति त्वामम्ब चिद्वल्लिवाचा
तं धीरासः कवय उन्नयन्ति ॥ ९५ ॥

वैरिञ्चोघैर्विष्णुरुद्रेन्द्रबृन्दै-
र्दुर्गाकालीभैरवीशक्तिसंघैः ।
यन्त्रेशि त्वं वर्तसे स्तूयमाना
न तत्र सूर्यो भाति न चन्द्रतारकम् ॥ ९६ ॥

भूत्यै भवानि त्वां वन्दे सुराः शतमखादयः ।
त्वामानम्य समृद्धाः स्युरायो धामानि दिव्यानि ॥९७॥

पुष्पवत्पुल्लताटङ्कां प्रातरादित्यपाटलाम् ।
यस्त्वामन्तः स्मरत्यम्ब तस्य देवा असन्वशे ॥ ९८ ॥

वश्ये विद्रुमसंकाशां विद्यायां विशदप्रभाम् ।
त्वामम्ब भावयेद्भूत्यै सुवर्णां हेममालिनीम् ॥ ९९ ॥

वामाङ्कस्थामीशितुर्दीप्यमानां
भूषावृन्दैरिन्दुरेखावतंसाम् ।
यस्त्वां पश्यन्संततं नैव तृप्तः
तस्मै च देवि वषडस्तु तुभ्यम् ॥ १०० ॥

नवनीपवनीवासलालसोत्तरमानसे ।
शृङ्गारदेवते मातः श्रियं वासय मे कुले ॥ १०१ ॥

भक्त्याभक्त्या वापि पद्यावसान-
श्रुत्या स्तुत्या चैतया स्तौति यस्त्वाम् ।
तस्य क्षिप्रं त्वत्प्रसादेन मातः
सत्याः सन्तु यजमानस्य कामाः ॥ १०२ ॥

बालिशेन मया प्रोक्तमपि वात्सल्यशालिनोः ।
आनन्दमादिदंपत्योरिमा वर्धन्तु वाङ्गिरः ॥ १०३ ॥

माधुरीसौरभावासचापसायकधारिणीम् ।
देवीं ध्यायन्पठेदेतत्सर्वकामार्थसिद्धये ॥ १०४ ॥

स्तोत्रमेतत्प्रजपतस्तव त्रिपुरसुन्दरि ।
अनुद्वीक्ष्य भयाद्दूरं मृत्युर्धावति पञ्चमः ॥ १०५ ॥

यः पठति स्तुतिमेतां
विद्यावन्तं तमम्ब धनवन्तम ।
कुरु देवि यशस्वन्तं
वर्चस्वन्तं मनुष्येषु ॥ १०६ ॥

ये शृण्वन्ति स्तुतिमिमां तव देव्यनसूयकाः ।
तेभ्यो देहि श्रियं विद्यामुद्वर्च उत्तनूबलम ॥ १०७ ॥

त्वामेवाहं स्तौमि नित्यं प्रणौमि
श्रीविद्येशां वच्मि संचिन्तयामि ।
अध्यास्ते या विश्वमाता विराजो
हृत्पुण्डरीकं विरजं विशुद्धम ॥ १०८ ॥

शंकरेण रचितं स्तवोत्तमं
यः पठेज्जगति भक्तिमान्नरः ।
तस्य सिद्धिरतुला भवेद्ध्रुवा
सुन्दरी च सततं प्रसीदति ॥ १०९ ॥

यत्रैव यत्रैव मनो मदीयं
　　तत्रैव तत्रैव तव स्वरूपम् ।
यत्रैव यत्रैव शिरो मदीयं
　　तत्रैव तत्रैव पदद्वयं ते ॥ ११० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
त्रिपुरसुन्दरीवेदपादस्तोत्रं
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ त्रिपुरसुन्दरीमानसपूजास्तोत्रम् ॥

मम न भजनशक्तिः पादयोस्ते न भक्ति-
र्न च विषयविरक्तिर्ध्यानयोगे न सक्तिः ।
इति मनसि सदाहं चिन्तयन्नाद्यशक्ते
रुचिरवचनपुष्पैरर्चनं संचिनोमि ॥ १ ॥

व्याप्तं हाटकविग्रहैर्जलचरैरारूढदेवव्रजैः
पोतैराकुलितान्तरं मणिधरैर्भूमीधरैर्भूषितम् ।
आरक्तामृतसिन्धुमुद्धुरचलद्वीचीचयव्याकुल-
व्योमानं परिचिन्त्य संततमहो चेतः कृतार्थीभव ॥ २ ॥

तस्मिन्नुज्ज्वलरत्नजालविलसत्कान्तिच्छटाभिः स्फुटं
कुर्वाणं वियदिन्द्रचापनिचयैराच्छादितं सर्वतः ।
उच्चैःश्रृङ्गनिषण्णदिव्यवनिताबृन्दाननप्रोल्लस-
द्गीताकर्णननिश्चलाखिलमृगं द्वीपं नमस्कुर्महे ॥ ३ ॥

जातीचम्पकपाटलादिसुमनःसौरभ्यसंभावितं
　　ह्रींकारध्वनिकण्ठकोकिलकुहूप्रोल्लासिचूतद्रुमम् ।
आविर्भूतसुगन्धिचन्दनवनं दृष्टिप्रियं नन्दनं
　　चञ्चच्चञ्चलचञ्चरीकचटुलं चेतश्चिरं चिन्तय ॥ ४ ॥

परिपतितपरागैः पाटलक्षोणिभागो
　　विकसितकुसुमोच्चैः पीतचन्द्रार्करश्मिः ।
अलिशुकपिकराजीकूजितैः श्रोत्रहारी
　　स्फुरतु हृदि मदीये नूनमुद्यानराजः ॥ ५ ॥

रम्यद्वारपुरप्रचारतमसां संहारकारिप्रभ
　　स्फूर्जत्तोरणभारहारकमहाविस्तारहारद्युते ।
क्षोणीमण्डलहेमहारविलसत्संसारपारप्रद
　　प्रोद्यद्भक्तमनोविहार कनकप्राकार तुभ्यं नमः ॥ ६ ॥

उद्यत्कान्तिकलापकल्पितनभःस्फूर्जद्वितानप्रभः
　　सत्कृष्णागरुधूपवासितवियत्काष्ठान्तरे विश्रुतः ।
सेवायातसमस्तदैवतगणैरासेव्यमानोऽनिशं
　　सोऽयं श्रीमणिमण्डपोऽनवरतं मच्चेतसि द्योतताम् ॥ ७ ॥

क्वापि प्रोद्भटपद्मरागकिरणव्रातेन संध्यायितं
कुत्रापि स्फुटविस्फुरन्मरकतद्युत्या तमिस्रायितम् ।
मध्यालम्बिविशालमौक्तिकरुचा ज्योत्स्नायितं कुत्रचि-
न्मातः श्रीमणिमन्दिरं तव सदा वन्दामहे सुन्दरम् ॥

उत्तुङ्गालयविस्फुरन्मरकतप्रोद्यत्प्रभामण्डला-
न्यालोक्याङ्कुरितोत्सवैर्नवतृणाकीर्णस्थलीशङ्कया ।
नीतो वाजिभिरुत्पथं बत रथः सूतेन तिग्मद्युते-
र्वल्गावल्गितहस्तमस्तशिखरं कष्टैरितः प्राप्यते ॥ ९ ॥

मणिसदनसमुद्यत्कान्तिधारानुरक्ते
वियति चरमसंध्याशङ्किनो भानुरथ्याः ।
शिथिलितगतकुप्यत्सूतहुंकारनादैः
कथमपि मणिगेहादुच्चकैरुच्चलन्ति ॥ १० ॥

भक्त्या किं नु समर्पितानि बहुधा रत्नानि पाथोधिना
किं वा रोहणपर्वतेन सदनं यैर्विश्वकर्माकरोत् ।
आ ज्ञातं गिरिजे कटाक्षकलया नूनं त्वया तोषिते
शंभौ नृत्यति नागराजफणिना कीर्णा मणिश्रेणयः ॥

विदूरमुक्तवाहनैर्विनम्रमौलिमण्डलै-
निबद्धहस्तसंपुटैः प्रयत्नसंयतेन्द्रियैः ।
विरिञ्चिविष्णुशंकरादिभिर्मुदा तवाम्बिके
प्रतीक्ष्यमाणनिर्गमो विभाति रत्नमण्डपः ॥ १२ ॥

ध्वनन्मृदङ्गकाहलः प्रगीतकिंनरीगणः
प्रनृत्तदिव्यकन्यकः प्रवृत्तमङ्गलक्रमः ।
प्रकृष्टसेवकव्रजः प्रहृष्टभक्तमण्डलो
मुदे ममास्तु संततं त्वदीयरत्नमण्डपः ॥ १३ ॥

प्रवेशनिर्गमाकुलैः स्वकृत्यरक्तमानसै-
र्बहिःस्थितामरावलीविधीयमानभक्तिभिः ।
विचित्रवस्त्रभूषणैरुपेतमङ्गनाजनैः
सदा करोतु मङ्गलं ममेह रत्नमण्डपः ॥ १४ ॥

सुवर्णरत्नभूषितैर्विचित्रवस्त्रधारिभि-
र्गृहीतहेमयष्टिभिर्निरुद्धसर्वदैवतैः ।
असंख्यसुन्दरीजनैः पुरःस्थितैरधिष्ठितो
मदीयमेतु मानसं त्वदीयतुङ्गतोरणः ॥ १५ ॥

इन्द्रादींश्च दिगीश्वरान्सहपरीवारानथो सायुधा-
न्योषिद्रूपधरान्स्वदिक्षु निहितान्संचिन्त्य हृत्पङ्कजे ।
शङ्खे श्रीवसुधारया वसुमतीयुक्तं च पद्मे स्मर-
न्कामं नौमि रतिप्रियं सहचरं प्रीत्या वसन्तं भजे ॥

गायन्तीः कलवीणयातिमधुरं हुंकारमातन्वती-
र्द्वाराभ्यासकृतस्थितीरिह सरस्वत्यादिकाः पूजयन् ।
द्वारे नौमि मदोन्मदं सुरगणाधीशं मदेनोन्मदां
मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ॥ १७ ॥

कस्तूरिकाश्यामलकोमलाङ्गीं
कादम्बरीपानमदालसाङ्गीम् ।
वामस्तनालिङ्गितरत्नवीणां
मातङ्गकन्यां मनसा स्मरामि ॥ १८ ॥

विकीर्णचिकुरोत्करे विगलिताम्बराडम्बरे
मदाकुलितलोचने विमलभूषणोद्भासिनि ।
तिरस्करिणि तावकं चरणपङ्कजं चिन्तय-
न्करोमि पशुमण्डलीमलिकमोहदुग्धाशयाम् ॥ १९ ॥

प्रमत्तवारुणीरसैर्विघूर्णमानलोचनाः
प्रचण्डदैत्यसूदनाः प्रविष्टभक्तमानसाः ।
उपोढकज्जलच्छविच्छटाविराजिविग्रहाः
कपालशूलधारिणीः स्तुवे त्वदीयदूतिकाः ॥ २० ॥

स्फूर्जन्नव्ययवाङ्कुरोपलसिताभोगैः पुरः स्थापितै-
र्दीपोद्भासिशरावशोभितमुखैः कुम्भैर्नवैः शोभिना ।
स्वर्णाबद्धविचित्ररत्नपटलीचञ्चत्कपाटश्रिया
युक्तं द्वारचतुष्टयेन गिरिजे वन्दे मणीमन्दिरम् ॥ २१ ॥

आस्तीर्णारुणकम्बलासनयुतं पुष्पोपहारान्वितं
दीप्तानेकमणिप्रदीपसुभगं राजद्वितानोत्तमम् ।
धूपोद्गारिसुगन्धिसंभ्रममिलद्भृङ्गावलीगुञ्जितं
कल्याणं वितनोतु मेऽनवरतं श्रीमण्डपाभ्यन्तरम् ॥२२॥

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमले प्रादुर्भूतां भजे परदेवताम् ॥ २३ ॥

सर्वाङ्गस्थितिरम्यरूपरुचिरां प्रातः समभ्युत्थितां
जृम्भामञ्जुमुखाम्बुजां मधुमदव्याघूर्णदक्षित्रयाम् ।
सेवायातसमस्तसंनिधिसखीः संमानयन्तीं दृशा
संपश्यन्परदेवतां परमहो मन्ये कृतार्थं जनुः ॥ २४ ॥

उच्चैस्तोरणवर्तिवाद्यनिवहध्वाने समुज्जृम्भिते
भक्तैर्भूमिविलग्नमौलिभिरलं दण्डप्रणामे कृते ।
नानारत्नसमूहनद्धकथनस्थालीसमुद्भासितां
प्रातस्ते परिकल्पयामि गिरिजे नीराजनामुज्ज्वलाम् ॥

पाद्यं ते परिकल्पयामि पदयोरर्घ्यं तथा हस्तयोः
सौधीभिर्मधुपर्कमम्ब मधुरं धाराभिरास्वादय ।
तोयेनाचमनं विधेहि शुचिना गाङ्गेन मत्कल्पितं
साष्टाङ्गं प्रणिपातमीशदयिते दृष्ट्या कृतार्थी कुरु ॥

मातः पश्य मुखाम्बुजं सुविमले दत्ते मया दर्पणे
देवि स्वीकुरु दन्तधावनमिदं गङ्गाजलेनान्वितम् ।
सुप्रक्षालितमाननं विरचयन्स्निग्धाम्बरप्रोञ्छनं
द्रागङ्गीकुरु तत्त्वमम्ब मधुरं ताम्बूलमास्वादय ॥ २७ ॥

निधेहि मणिपादुकोपरि पदाम्बुजं मज्जना-
लयं व्रज शनैः सखीकृतकराम्बुजालम्बनम् ।
महेशि करुणानिधे तव दृगन्तपातोत्सुका-
न्विलोकय मनागमूनुभयसंस्थितान्दैवतान् ॥ २८ ॥

हेमरत्नवरणेन वेष्टितं
विस्तृतारुणवितानशोभितम् ।
सज्जसर्वपरिचारिकाजनं
पश्य मज्जनगृहं मनो मम ॥ २९ ॥

कनककलशजालस्फाटिकस्नानपीठा-
द्युपकरणविशालं गन्धमत्तालिमालम् ।
स्फुरदरुणवितानं मञ्जुगन्धर्वगानं
परमशिवमहेले मज्जनागारमेहि ॥ ३० ॥

पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्रानना
रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बरप्रावृताः ।
हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं
तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ॥

तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालंकृति-
नीचैरुज्झितकञ्चुकोपरिहितारक्तोत्तरीयाम्बरा ।
वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मना-
क्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ॥

अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन संपादितं
काश्मीरैरगरुद्रवैर्मलयजैरुद्वर्तनं कारय ।
गीते किंनरकामिनीभिरभितो वाद्ये मुदा वादिते
नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ॥

कृतपरिकरबन्धास्तुङ्गपीनस्तनाढ्या
मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः ।
सुरभिसलिलनिर्यद्गन्धलुब्धालिमालाः
सविनयमुपतस्थुः सर्वतः स्नानदास्यः ॥ ३४ ॥

उद्गन्धैरगरुद्रवैः सुरभिणा कस्तूरिकावारिणा
स्फूर्जत्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि ।
पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरपाथोभरैः
स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ॥

प्रत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ।
आलीबृन्दविनिर्मितां यवनिकामास्थाप्य रत्नप्रभं
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ॥ ३६ ॥

पीतं ते परिकल्पयामि निबिडं चण्डातकं चण्डिके
सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् ।
मुक्तारत्नविचित्रहेमरचनाचारुप्रभाभास्वरं
नीलं कञ्चुकमर्पयामि गिरिशप्राणप्रिये सुन्दरि ॥

विलुलितचिकुरेण च्छादितांसप्रदेशे
मणिनिकरविराजत्पादुकान्यस्तपादे ।
सुललितमवलम्ब्य द्राक्सखीमंसदेशे
गिरिशगृहिणि भूषामण्टपाय प्रयाहि ॥ ३८ ॥

लसत्कनककुट्टिमस्फुरदमन्दमुक्तावली-
समुल्लसितकान्तिभिः कलितशक्रचापव्रजे ।
महाभरणमण्डपे निहितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ कात्यायनि ॥ ३९ ॥

स्निग्धं कङ्कतिकामुखेन शनकैः संशोध्य केशोत्करं
सीमन्तं विरचय्य चारु विमलं सिन्दूररेखान्वितम् ।
मुक्ताभिर्ग्रथितालकां मणिचितैः सौवर्णसूत्रैः स्फुटं
प्रान्ते मौक्तिकगुच्छकोपलतिकां ग्रथ्नामि वेणीमिमाम् ॥

विलम्बिवेणीभुजगोत्तमाङ्ग-
स्फुरन्मणिभ्रान्तिमुपानयन्तम् ।
स्वरोचिषोल्लासितकेशपाशं
महेशि चूडामणिमर्पयामि ॥ ४१ ॥

त्वामाश्रयद्भिः कबरीतमिस्रै-
र्बन्दीकृतं द्रागिव भानुबिम्बम् ।
मृडानि चूडामणिमादधानं
वन्दामहे तावकमुत्तमाङ्गम् ॥ ४२ ॥

स्वमध्यनद्धहाटकस्फुरन्मणिप्रभाकुलं
विलम्बिमौक्तिकच्छटाविराजितं समन्ततः ।
निबद्धलक्षचक्षुषा भवेन भूरि भावितं
समर्पयामि भास्वरं भवानि फालभूषणम् ॥ ४३ ॥

मीनाम्भोरुहखञ्जरीटसुषमाविस्तारविस्मारके
कुर्वाणे किल कामवैरिमनसः कंदर्पबाणप्रभाम् ।
माध्वीपानमदारुणेऽतिचपले दीर्घे दृगम्भोरुहे
देवि स्वर्णशलाकयोर्जितमिदं दिव्याञ्जनं दीयताम् ॥

मध्यस्थारुणरत्नकान्तिरुचिरां मुक्तामुगोद्भासितां
दैवाद्भार्गवजीवमध्यगरवेर्लक्ष्मीमधः कुर्वतीम् ।
उत्सिक्ताधरबिम्बकान्तिविसरैर्भौमीभवन्मौक्तिकां
मद्दत्तामुररीकुरुष्व गिरिजे नासाविभूषामिमाम् ॥ ४५ ॥

उडुकृतपरिवेषस्पर्धया शीतभानो-
रिव विरचितदेहद्वन्द्वमादित्यबिम्बम् ।
अरुणमणिसमुद्यत्प्रान्तविभ्राजिमुक्तं
श्रवसि परिनिधेहि स्वर्णताटङ्कयुग्मम् ॥ ४६ ॥

मरकतवरपद्मरागहीरो-
त्थितगुलिकात्रितयावनद्धमध्यम् ।
विततविमलमौक्तिकं च
कण्ठाभरणमिदं गिरिजे समर्पयामि ॥ ४७ ॥

नानादेशसमुत्थितैर्मणिगणप्रोद्यत्प्रभामण्डल-
व्याप्तैराभरणैर्विराजितगलां मुक्ताच्छटालंकृताम् ।
मध्यस्थारुणरत्नकान्तिरुचिरां प्रान्तस्थमुक्ताफल-
व्रातामम्ब चतुष्किकां परशिवे वक्षःस्थले स्थापय ॥

अन्योन्यं प्लावयन्ती सततपरिचलत्कान्तिकल्लोलजालैः
कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी ।
मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानै-
र्नित्यं हारत्रयी ते परशिवरसिके चेतसि द्योततां नः ॥

करसरसिजनाले विस्फुरत्कान्तिजाले
विलसदमलशोभे चञ्चदीशाक्षिलोभे ।
विविधमणिमयूखोद्भासितं देवि दुर्गे
कनककटकयुग्मं बाहुयुग्मे निधेहि ॥ ५० ॥

व्यालम्बमानसितपट्टकगुच्छशोभि
स्फूर्जन्मणीघटितहारविरोचमानम् ।
मातर्महेशमहिले तव बाहुमूले
केयूरकद्वयमिदं विनिवेशयामि ॥ ५१ ॥

वितननिजमयूखैर्निर्मितामिन्द्रनीलै-
विजितकमलनालालीनमत्तालिमालाम् ।
मणिगणखचिताभ्यां कङ्कणाभ्यामुपेतां
कलय वलयराजीं हस्तमूले महेशि ॥ ५२ ॥

नीलपट्टमृदुगुच्छशोभिता-
बद्धनैकमणिजालमञ्जुलाम् ।
अर्पयामि वलयात्पुरःसरे
विस्फुरत्कनकतैतृपालिकाम् ॥ ५३ ॥

आलवालमिव पुष्पधन्वना
बालविद्रुमलतासु निर्मितम् ।
अङ्गुलीषु विनिधीयतां शनै-
रङ्गुलीयकमिदं मदर्पितम् ॥ ५४ ॥

विजितहरमनोभूमत्तमातङ्गकुम्भ-
स्थलविलुलितकूजत्किङ्किणीजालतुल्याम् ।
अविरतकलनादैरीशचेतो हरन्तीं
विविधमणिनिबद्धां मेखलामर्पयामि ॥ ५५ ॥

व्यालम्बमानवरमौक्तिकगुच्छशोभि
विभ्राजिहाटकपुटद्वयरोचमानम् ।
हेम्ना विनिर्मितमनेकमणिप्रबन्धं
नीवीनिबन्धनगुणं विनिवेदयामि ॥ ५६ ॥

विनिहतनवलाक्षापङ्कबालातपौघे
मरकतमणिराजीमञ्जुमञ्जीरघोषे ।
अरुणमणिसमुद्यत्कान्तिधाराविचित्र-
स्तव चरणसरोजे हंसकः प्रीतिमेतु ॥ ५७ ॥

निबद्धशितिपट्टकप्रवरगुच्छसंशोभितां
कलक्कणितमञ्जुलां गिरिशचित्तसंमोहनीम् ।
अमन्दमणिमण्डलीविमलकान्तिकिर्मीरितां
निधेहि पदपङ्कजे कनकघुङ्घुरूमम्बिके ॥ ५८ ॥

विस्फुरत्सहजरागरञ्जिते
शिञ्जितेन कलितां सखीजनैः ।
पद्मरागमणिनूपुरद्वयी-
मर्पयामि तव पादपङ्कजे ॥ ५९ ॥

पदाम्बुजमुपासितुं परिगतेन शीतांशुना
कृतां तनुपरम्परामिव दिनान्तरागारुणाम् ।
महेशि नवयावकद्रवभरेण शोणीकृतां
नमामि नखमण्डलीं चरणपङ्कजस्थां तव ॥ ६० ॥

आरक्तश्वेतपीतस्फुरदुरुकुसुमैश्चित्रितां पट्टसूत्रै-
र्देवस्त्रीभिः प्रयत्नादगरुसमुदितैर्धूपितां दिव्यधूपैः ।
उद्यद्गन्धान्धपुष्पंधयनिवहसमारब्धझांकारगीतां
चञ्चत्कह्लारमालां पराशिवरसिके कण्ठपीठेऽर्पयामि ॥

गृहाण परमामृतं कनकपात्रसंस्थापितं
समर्पय मुखाम्बुजे विमलवीटिकामम्बिके ।
विलोकय मुखाम्बुजं मुकुरमण्डले निर्मले
निधेहि मणिपादुकोपरि पदाम्बुजं सुन्दरि ॥ ६२ ॥

आलम्ब्य स्वसखीं करेण शनकैः सिंहासनादुत्थिता
कूजन्मन्दमरालमञ्जुलगतिप्रोल्लासिभूषाम्बरा ।
आनन्दप्रतिपादकैरुपनिषद्वाक्यैः स्तुता वेधसा
मच्चित्ते स्थिरतामुपैतु गिरिजा यान्ती सभामण्डपम् ॥

चलन्त्यामम्बायां प्रचलति समस्ते परिजने
सवेगं संयाते कनकलतिकालंकृतिभरे ।
समन्तादुत्तालस्फुरितपदसंपातजनितै-
र्झणत्कारैस्तारैर्झणझणितमासीन्मणिगृहम् ॥ ६४ ॥

चञ्चद्वेत्रकराभिरङ्गविलसद्भूषाम्बराभिः पुरो-
यान्तीभिः परिचारिकाभिरमरव्राते समुत्सारिते ।
रुद्धे निर्जरसुन्दरीभिरभितः कक्षान्तरे निर्गतं
वन्दे नन्दितशंभु निर्मलचिदानन्दैकरूपं महः ॥ ६५ ॥

वेधाः पादतले पतत्ययमसौ विष्णुर्नमत्यग्रतः
शंभुर्देहि दृगञ्चलं सुरपतिं दूरस्थमालोकय ।
इत्येवं परिचारिकाभिरुदिते संमाननां कुर्वती
दृग्द्वन्द्वेन यथोचितं भगवती भूयाद्विभूत्यै मम ॥ ६६ ॥

मन्दं चारणसुन्दरीभिरभितो यान्तीभिरुत्कण्ठया
नामोच्चारणपूर्वकं प्रतिदिशं प्रत्येकमावेदितान् ।
वेगादक्षिपथं गतान्सुरगणानालोकयन्ती शनै-
र्दित्सन्ती चरणाम्बुजं पथि जगत्पायान्महेशप्रिया ॥

अग्रे केचन पार्श्वयोः कतिपये पृष्ठे परे प्रस्थिता
आकाशे समवस्थिताः कतिपये दिक्षु स्थिताश्चापरे ।
संमर्दं शनकैरपास्य पुरतो दण्डप्रणामान्मुहुः
कुर्वाणाः कतिचित्सुरा गिरिसुते दृक्पातमिच्छन्ति ते ॥

अग्रे गायति किंनरी कलपदं गन्धर्वकान्ताः शनै-
रातोद्यानि च वादयन्ति मधुरं सव्यापसव्यस्थिताः ।
कूजन्नूपुरनादमञ्जु पुरतो नृत्यन्ति दिव्याङ्गना
गच्छन्तः परितः स्तुवन्ति निगमस्तुत्या विरिञ्च्यादयः ॥

कस्मैचित्सुचिरादुपासितमहामन्त्रौघसिद्धिं क्रमा-
देकस्मै भवनिःस्पृहाय परमानन्दस्वरूपां गतिम् ।
अन्यस्मै विषयानुरक्तमनसे दीनाय दुःखापहं
द्रव्यं द्वारसमाश्रिताय ददतीं वन्दामहे सुन्दरीम् ॥ ७० ॥

नम्रीभूय कृताञ्जलिप्रकटितप्रेमप्रसन्नानने
मन्दं गच्छति संनिधौ सविनयात्सोत्कण्ठमोघत्रये ।
नानामन्त्रगणं तदर्थमखिलं तत्साधनं तत्फलं
व्याचक्षाणमुदग्रकान्ति कलये यत्किंचिदाद्यं महः ॥

तव दहनसदृक्षैरीक्षणैरेव चक्षु-
निखिलपशुजनानां भीषयद्भीषणास्यम् ।
कृतवसति परेशप्रेयसि द्वारि नित्यं
शरभमिथुनमुच्चैर्भक्तियुक्तो नतोऽस्मि ॥ ७२ ॥

कल्पान्ते सरसैकदासमुदितानेकार्कतुल्यप्रभां
रत्नस्तम्भनिबद्धकाञ्चनगुणस्फूर्जद्वितानोत्तमाम् ।
कर्पूरागरुगर्भवर्तिकलिकाप्राप्तप्रदीपावलीं
श्रीचक्राकृतिमुल्लसन्मणिगणां वन्दामहे वेदिकाम् ॥

स्वस्थानस्थितदेवतागणवृते बिन्दौ मुदा स्थापितं
नानारत्नविराजिहेमविलसत्कान्तिच्छटादुर्दिनम् ।
चञ्चत्कौसुमतूलिकासनयुतं कामेश्वराधिष्ठितं
नित्यानन्दनिदानमम्ब सततं वन्दे च सिंहासनम् ॥

वदद्भिरभितो मुदा जय जयेति वृन्दारकैः
कृताञ्जलिपरम्परा विदधती कृतार्था दृशा ।
अमन्दमणिमण्डलीखचितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ दाक्षायणि ॥ ७५ ॥

कर्पूरादिकवस्तुजातमखिलं सौवर्णभृङ्गारकं
तांबूलस्य करण्डकं मणिमयं चैलाञ्चलं दर्पणम् ।
विस्फूर्जन्मणिपादुके च दधतीः सिंहासनस्याभित-
स्तिष्ठन्तीः परिचारिकास्तव सदा वन्दामहे सुन्दरि ॥

त्वदमलवपुरुद्यत्कान्तिकल्लोलजालैः
स्फुटमिव दधतीभिर्बाहुविक्षेपलीलाम् ।
मुहुरपि च विधूते चामरग्राहिणीभिः
सितकरकरशुभ्रे चामरे चालयामि ॥ ७७ ॥

प्रान्तस्फुरद्विमलमौक्तिकगुच्छजालं
चञ्चन्महामणिविचित्रितहेमदण्डम् ।
उद्यत्सहस्रकरमण्डलचारु हेम-
च्छत्रं महेशमहिले विनिवेशयामि ॥ ७८ ॥

उद्यत्तावकदेहकान्तिपटलीसिन्दूरपूरप्रभा-
शोणीभूतमुदग्रलोहितमणिच्छेदानुकारिच्छवि ।
दूरादादरनिर्मिताञ्जलिपुटैरालोक्यमानं सुर-
व्यूहैः काञ्चनमातपत्रमतुलं वन्दामहे सुन्दरम् ॥

संतुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पौघैरभिपूजितां भगवतीं त्वां वन्दमाना मुदा ।
स्फूर्जत्तावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थिताः सविनयं वन्दामहे देवताः ॥

आधारशक्त्यादिकमाकलय्य
मध्ये समस्ताधिकयोगिनीं च ।
मित्रेशनाथादिकमत्र नाथ-
चतुष्टयं शैलसुते नतोऽस्मि ॥ ८१ ॥

त्रिपुरासुधार्णवासन-
मारभ्य त्रिपुरमालिनी यावत् ।
आवरणाष्टकसंस्थित-
मासनषट्कं नमामि परमेशि ॥ ८२ ॥

ईशाने गणपं स्मरामि विचरद्विघ्नान्धकारच्छिदं
वायव्ये वटुकं च कज्जलरुचिं व्यालोपवीतान्वितम् ।
नैरृत्ये महिषासुरप्रमथिनीं दुर्गां च संपूजय-
न्नाग्नेयेऽखिलभक्तरक्षणपरं क्षेत्राधिनाथं भजे ॥८३॥

उड्यानजालंधरकामरूप-
　पीठानिमान्पूर्णगिरिप्रसक्तान् ।
त्रिकोणदक्षाग्रिमसव्यभाग-
　मध्यस्थितान्सिद्धिकरान्नमामि ॥ ८४ ॥

लोकेशः पृथिवीपतिर्निगदितो विष्णुर्जलानां प्रभु-
　स्तेजोनाथ उमापतिश्च मरुतामीशस्तथा चेश्वरः ।
आकाशाधिपतिः सदाशिव इति प्रेताभिधामागता-
　नेतांश्चक्रबहिःस्थितान्सुरगणान्वन्दामहे सादरम् ॥

तारानाथकलाप्रवेशनिगमव्याजाद्गतासुप्रथं
　त्रैलोक्ये तिथिषु प्रवर्तितकलाकाष्ठादिकालक्रमम् ।
रत्नालंकृतिचित्रवस्त्रललितं कामेश्वरीपूर्वकं
　नित्याषोडशकं नमामि लसितं चक्रात्मनोरन्तरे ॥

हृदि भावितदैवतं प्रयत्ना-
　भ्युपदेशानुगृहीतभक्तसंघम् ।
स्वगुरुक्रमसंज्ञचक्रराज-
　स्थितमोघत्रयमानतोऽस्मि मूर्ध्ना ॥ ८७ ॥

हृदयमथ शिरः शिखाखिलाद्ये
कवचमथो नयनत्रयं च देवि ।
मुनिजनपरिचिन्तितं तथास्त्रं
स्फुरतु सदा हृदये षडङ्गमेतत् ॥ ८८ ॥

त्रैलोक्यमोहनमिति प्रथिते तु चक्रे
चञ्चद्विभूषणगणत्रिपुराधिवासे ।
रेखात्रये स्थितवतीरणिमादिसिद्धी-
र्मुद्रा नमामि सततं प्रकटाभिधास्ताः ॥ ८९ ॥

सर्वाशापरिपूरके वसुदलद्वन्द्वेन विभ्राजिते
विस्फूर्जत्त्रिपुरेश्वरीनिवसतौ चक्रे स्थिता नित्यशः ।
कामाकर्षणिकादयो मणिगणभ्राजिष्णुदिव्याम्बरा
योगिन्यः प्रदिशन्तु काङ्क्षितफलं विख्यातगुप्ताभिधाः ॥

महेशि वसुभिर्दलैर्लसति सर्वसंक्षोभणे
विभूषणगणस्फुरत्त्रिपुरसुन्दरीसद्मनि ।
अनङ्गकुसुमादयो विविधभूषणोद्भासिता
दिशन्तु मम काङ्क्षितं तनुतराश्च गुप्ताभिधाः ॥९१॥

लसद्युगदृशारके स्फुरति सर्वसौभाग्यदे
शुभाभरणभूषितत्रिपुरवासिनीमन्दिरे ।
स्थिता दधतु मङ्गलं सुभगसर्वसंक्षोभिणी-
मुखाः सकलसिद्धयो विदितसंप्रदायाभिधाः ॥९२॥

बहिर्दशारे सर्वार्थसाधके त्रिपुराश्रयाः ।
कुलकौलाभिधाः पान्तु सर्वसिद्धिप्रदायिकाः ॥ ९३ ॥

अन्तःशोभिदशारकेऽतिललिते सर्वादिरक्षाकरे
मालिन्या त्रिपुराद्यया विरचितावासे स्थितं नित्यशः ।
नानारत्नविभूषणं मणिगणभ्राजिष्णु दिव्याम्बरं
सर्वज्ञादिकशक्तिबृन्दमनिशं वन्दे निगर्भाभिधम् ॥९४॥

सर्वरोगहरेऽष्टारे त्रिपुरासिद्धयान्विते ।
रहस्ययोगिनीर्नित्यं वशिन्याद्या नमाम्यहम् ॥ ९५ ॥

चूताशोकविकासिकेतकरजःप्रोद्भासिनीलाम्बुज-
प्रस्फूर्जन्नवमल्लिकासमुदितैः पुष्पैः शरान्निर्मितान् ।
रम्यं पुष्पशरासनं सुललितं पाशं तथा चाङ्कुशं
वन्दे तावकमायुधं परशिवे चक्रान्तराले स्थितम् ॥९६॥

त्रिकोण उदितप्रभे जगति सर्वसिद्धिप्रदे
  युते त्रिपुरयाम्बया स्थितवती च कामेश्वरी ।
तनोतु मम मङ्गलं सकलशर्म वज्रेश्वरी
  करोतु भगमालिनी स्फुरतु मामके चेतसि ॥ ९७ ॥

सर्वानन्दमये समस्तजगतामाकाङ्क्षिते बैन्दवे
  भैरव्या त्रिपुराद्यया विरचितावासे स्थिता सुन्दरी ।
आनन्दोल्लसितेक्षणा मणिगणभ्राजिष्णुभूषाम्बरा
  विस्फूर्जद्वदना परापररहः सा पातु मां योगिनी ॥ ९८॥

उल्लसत्कनककान्तिभासुरं
  सौरभस्फुरणवासिताम्बरम् ।
दूरतः परिहृतं मधुव्रतै-
  रर्पयामि तव देवि चम्पकम् ॥ ९९ ॥

वैरमुद्धतमपास्य शंभुना
  मस्तके विनिहितं कलाच्छलात् ।
गन्धलुब्धमधुपाश्रितं सदा
  केतकीकुसुममर्पयामि ते ॥ १०० ॥

चूर्णीकृतं द्रागिव पद्मजेन
त्वदाननस्पर्धिसुधांशुबिम्बम् ।
समर्पयामि स्फुटमञ्जलिस्थं
विकासिजातीकुसुमोत्करं ते ॥ १०१ ॥

अगरुबहलधूपाजस्रसौरभ्यरम्यां
मरकतमणिराजीराजिहारिस्रगाभाम् ।
दिशि विदिशि विसर्पद्गन्धलुब्धालिमालां
वकुलकुसुममालां कण्ठपीठेऽर्पयामि ॥ १०२ ॥

ईकारोर्ध्वगबिन्दुराननमधोबिन्दुद्वयं च स्तनौ
त्रैलोक्ये गुरुगम्यमेतदखिलं हार्दं च रेखात्मकम् ।
इत्थं कामकलात्मिकां भगवतीमन्तः समाराधय-
न्नानन्दाम्बुधिमज्जने प्रलभतामानन्दथुं सज्जनः ॥१०३॥

धूपं तेऽगरुसंभवं भगवति प्रोल्लासिगन्धोद्धुरं
दीपं चैव निवेदयामि महसा हार्दान्धकारच्छिदम् ।
रत्नस्वर्णविनिर्मितेषु परितः पात्रेषु संस्थापितं
नैवेद्यं विनिवेदयामि परमानन्दात्मिके सुन्दरि ॥१०४॥

जातीकोरकतुल्यमोदनमिदं सौवर्णपात्रे स्थितं
शुद्धान्नं शुचि मुद्गमाषचणकोद्भूतास्तथा सूपकाः ।
प्राज्यं माहिषमाज्यमुत्तममिदं हैयंगवीनं पृथ-
क्पात्रेषु प्रतिपादितं परशिवे तत्सर्वमङ्गीकुरु ॥ १०५ ॥

शिम्बीसूरणशाकबिम्बबृहतीकूश्माण्डकोशातकी-
वृन्ताकानि पटोलकानि मृदुना संसाधितान्यग्निना ।
संपन्नानि च वेसवारविसरैर्दिव्यानि भक्त्या कृता-
न्यग्रे ते विनिवेदयामि गिरिजे सौवर्णपात्रव्रजे ॥१०६॥

निम्बूकार्द्रकचूतकन्दकदलीकौशातकीकर्कटी-
धात्रीबिल्वकरीरकैर्विरचितान्यानन्दचिद्विग्रहे ।
राजीभिः कटुतैलसैन्धवहरिद्राभिः स्थितान्पातये
संधानानि निवेदयामि गिरिजे भूरिप्रकाराणि ते ॥

सितयाञ्चितलड्डुकव्रजा-
न्मृदुपूपान्मृदुलाश्च पूरिकाः ।
परमान्नमिदं च पार्वति
प्रणयेन प्रतिपादयामि ते ॥ १०८ ॥

दुग्धमेतदनले सुसाधितं
चन्द्रमण्डलनिभं तथा दधि ।
फाणितं शिखरिणीं सितासितां
सर्वमम्ब विनिवेदयामि ते ॥ १०९ ॥

अग्रे ते विनिवेद्य सर्वममितं नैवेद्यमङ्गीकृतं
ज्ञात्वा तत्त्वचतुष्टयं प्रथमतो मन्ये सुतृप्तां ततः ।
देवीं त्वां परिशिष्टमम्ब कनकामत्रेषु संस्थापितं
शक्तिभ्यः समुपाहारामि सकलं देवेशि शंभुप्रिये ॥

वामेन स्वर्णपात्रीमनुपमपरमान्नेन पूर्णां दधाना-
मन्येन स्वर्णदर्वीं निजजनहृदयाभीष्टदां धारयन्तीम् ।
सिन्दूरारक्तवस्त्रां विविधमणिलसद्भूषणां मेचकाङ्गीं
तिष्ठन्तीमग्रतस्ते मधुमदमुदितामन्नपूर्णां नमामि ॥

पङ्क्त्योपविष्टान्परितस्तु चक्रं
शक्त्या स्वयालिङ्गितवामभागान् ।
सर्वोपचारैः परिपूज्य भक्त्या
तवाम्बिके पारिषदान्नमामि ॥ ११२ ॥

परमामृतमत्तसुन्दरी-
गणमध्यस्थितमर्कभासुरम् ।
परमामृतघूर्णितेक्षणं
किमपि ज्योतिरुपास्महे परम् ॥ ११३ ॥

दृश्यते तव मुखाम्बुजं शिवे
श्रूयते स्फुटमनाहतध्वनिः ।
अर्चने तव गिरामगोचरे
न प्रयाति विषयान्तरं मनः ॥ ११४ ॥

त्वन्मुखाम्बुजविलोकनोल्लस-
त्प्रेमनिश्चलविलोचनद्वयीम् ।
उन्मनीमुपगतां सभामिमां
भावयामि परमेशि तावकीम् ॥ ११५ ॥

चक्षुः पश्यतु नेह किंचन परं घ्राणं न वा जिघ्रतु
श्रोत्रं हन्त शृणोतु न त्वगपि न स्पर्शं समालम्बताम् ।
जिह्वा वेत्तु न वा रसं मम परं युष्मत्स्वरूपामृते
नित्यानन्दविघूर्णमाननयने नित्यं मनो मज्जतु ॥११६॥

यस्त्वां पश्यति पार्वति प्रतिदिनं ध्यानेन तेजोमयीं
मन्ये सुन्दरि तत्त्वमेतदखिलं वेदेषु निष्ठां गतम् ।
यस्तस्मिन्समये तवार्चनविधावानन्दसान्द्राशयो
यातोऽहं तदभिन्नतां परशिवे सोऽयं प्रसादस्तव ॥

गणाधिनाथं वटुकं च योगिनीः
क्षेत्राधिनाथं च विदिक्चतुष्टये ।
सर्वोपचारैः परिपूज्य भक्तितो
निवेदयामो बलिमुक्तयुक्तिभिः ॥ ११८ ॥

वीणामुपान्ते खलु वादयन्त्यै
निवेद्य शेषं खलु शेषिकायै ।
सौवर्णभृङ्गारविनिर्गतेन
जलेन शुद्धाचमनं विधेहि ॥ ११९ ॥

ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका-
जातीपूगलवङ्गचूर्णखदिरैर्भक्त्या समुल्लासितम् ।
स्फूर्जद्रत्नसमुद्गकप्रणिहितं सौवर्णपात्रे स्थितै-
र्दीपैरुज्ज्वलमन्नचूर्णरचितैरारार्तिकं गृह्यताम् ॥ १२० ॥

काचिद्गायति किंनरी कलपदं वाद्यं दधानोर्वशी
रम्भा नृत्यति केलिमञ्जुलपदं मातः पुरस्तात्तव ।
कृत्यं प्रोज्झ्य सुरस्त्रियो मधुमदव्याघूर्णमानेक्षणं
नित्यानन्दसुधाम्बुधिं तव मुखं पश्यन्ति हृष्यन्ति च ॥

ताम्बूलोद्भासिवक्त्रैस्त्वदमलवदनालोकनोल्लासिनेत्रै-
श्चक्रस्थैः शक्तिसंघैः परिहृतविषयासङ्गमाकर्ण्यमानम् ।
गीतज्ञाभिः प्रकामं मधुरसमधुरं वादितं किंनरीभि-
र्वीणाझंकारनादं कलय परशिवानन्दसंधानहेतोः ॥

अर्चाविधौ ज्ञानलवोऽपि दूरे
दूरे तदापादकवस्तुजातम् ।
प्रदक्षिणीकृत्य ततोऽर्चनं ते
पञ्चोपचारात्मकमर्पयामि ॥ १२३ ॥

यथेप्सितमनोगतप्रकटितोपचारार्चितां
निजावरणदेवतागणवृतां सुरेशस्थिताम् ।
कृताञ्जलिपुटो मुहुः कलितभूमिरष्टाङ्गकै-
र्नमामि भगवत्यहं त्रिपुरसुन्दरि त्राहि माम् ॥ १२४ ॥

विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते संनिधिं
प्राप्तं मामिह कांदिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरेद्दृग्वाक्च मे जातु चे-
त्तत्सौम्ये स्वगुणैर्बधान न यथा भूयो विनिर्गच्छति ॥

क्वाहं मन्दमतिः क्व चेदमखिलैरेकान्तभक्तैः स्तुतं
ध्यातं देवि तथापि ते स्वमनसा श्रीपादुकापूजनम् ।
कादाचित्कमदीयचिन्तनविधौ संतुष्टया शर्मदं
स्तोत्रं देवतया तया प्रकटितं मन्ये मदीयानने ॥

नित्यार्चनमिदं चित्ते भाव्यमानं सदा मया ।
निबद्धं विविधैः पद्यैरनुगृह्णातु सुन्दरी ॥ १२७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
त्रिपुरसुन्दरीमानसपूजास्तोत्रं
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ देवीचतुःषष्ट्युपचारपूजास्तोत्रम् ॥

उषसि मागधमङ्गलगायनै-

झटिति जागृहि जागृहि जागृहि ।

अतिकृपार्द्रकटाक्षनिरीक्षणै-

र्जगदिदं जगदम्ब सुखीकुरु ॥ १ ॥

कनकमयवितर्दिशोभमानं

दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम् ।

मणिमयमण्टपमध्यमेहि मात-

र्मयि कृपयाशु समर्चनं ग्रहीतुम् ॥ २ ॥

कनककलशशोभमानशीर्षं

जलधरलम्बि समुल्लसत्पताकम् ।

भगवति तव संनिवासहेतो-

र्मणिमयमन्दिरमेतदर्पयामि ॥ ३ ॥

तपनीयमयी सुतूलिका
कमनीया मृदुलोत्तरच्छदा ।
नवरत्नविभूषिता मया
शिबिकेयं जगदम्ब तेऽर्पिता ॥ ४ ॥

कनकमयवितर्दिस्थापिते तूलिकाढ्ये
विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।
भगवति रमणीये रत्नसिंहासनेऽस्मि-
न्नुपविश पदयुग्मं हेमपीठे निधाय ॥ ५ ॥

मणिमौक्तिकनिर्मितं महान्तं
कनकस्तम्भचतुष्टयेन युक्तम् ।
कमनीयतमं भवानि तुभ्यं
नवमुल्लोचमहं समर्पयामि ॥ ६ ॥

दूर्वया सरसिजान्वितविष्णु-
क्रान्तया च सहितं कुसुमाढ्यम् ।
पद्मयुग्मसदृशे पदयुग्मे
पाद्यमेतदुररीकुरु मातः ॥ ७ ॥

गन्धपुष्पयवसर्षपदूर्वा-
संयुतं तिलकुशाक्षतमिश्रम् ।
हेमपात्रनिहितं सह रत्नै-
रर्घ्यमेतदुररीकुरु मातः ॥ ८ ॥

जलजद्युतिना करेण जाती-
फलतक्कोलवङ्गगन्धयुक्तैः ।
अमृतैरमृतैरिवातिशीतै-
र्भगवत्याचमनं विधीयताम् ॥ ९ ॥

निहितं कनकस्य संपुटे
पिहितं रत्नपिधानकेन यत् ।
तदिदं जगदम्ब तेऽर्पितं
मधुपर्कं जननि प्रगृह्यताम् ॥ १० ॥

एतच्चम्पकतैलमम्ब विविधैः पुष्पैर्मुहुर्वासितं
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम् ।
सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं ते मया
केशेषु भ्रमरभ्रमेषु सकलेष्वङ्गेषु चालिप्यते ॥ ११ ॥

मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं
भक्त्याहं कलयामि हेमरजसा संमिश्रितं केसरैः ।
केशानामलकैर्विशोध्य विशदान्कस्तूरिकोदञ्चितैः
स्नानं ते नवरत्नकुम्भसहितैः संवासितोष्णोदकैः ॥१२॥

दधिदुग्धघृतैः समाक्षिकैः
सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादरा-
ज्जननि त्वां पुनरुष्णवारिभिः ॥ १३ ॥

एलोशीरसुवासितैः सकुसुमैर्गङ्गादितीर्थोदकै-
र्माणिक्यामलमौक्तिकामृतरसैः स्वच्छैः सुवर्णोदकैः ।
मन्त्रान्वैदिकतान्त्रिकान्परिपठन्सानन्दमत्यादरा-
त्स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥

बालार्कद्युति दाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ।
मुक्ताभिर्ग्रथितं सुकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥ १५ ॥

नवरत्नमये मयार्पिते
कमनीये तपनीयपादुके ।
सविलासमिदं पदद्वयं
कृपया देवि तयोर्निधीयताम् ॥ १६ ॥

बहुभिरगरुधूपैः सादरं धूपयित्वा
भगवति तव केशान्कङ्कतैर्मार्जयित्वा ।
सुरभिभिररविन्दैश्चम्पकैश्चार्चयित्वा
झटिति कनकसूत्रैर्जूटयन्वेष्टयामि ॥ १७ ॥

सौवीराञ्जनमिदमम्ब चक्षुषोस्ते
विन्यस्तं कनकशलाकया मया यत् ।
तन्न्यूनं मलिनमपि त्वदक्षिसङ्गात्
ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥ १८ ॥

मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।
केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमा-
त्ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥१९॥

धम्मिल्ले तव देवि हेमकुसुमान्याधाय फालस्थले
मुक्ताराजिविराजमानतिलकं नासापुटे मौक्तिकम् ।
मातर्मौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः
कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥२०॥

मातः फालतले तवातिविमले काश्मीरकस्तूरिका-
कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पद्रवं
पादौ चन्दनलेपनादिभिरहं संपूजयामि क्रमात् ॥ २१ ॥

रत्नाक्षतैस्त्वां परिपूजयामि
मुक्ताफलैर्वा रुचिरैरविद्धैः ।
अखण्डितैर्देवि यवादिभिर्वा
काश्मीरपङ्काङ्किततण्डुलैर्वा ॥ २२ ॥

जननि चम्पकतैलमिदं पुरो
मृगमदोपयुतं पटवासकम् ।
सुरभिगन्धमिदं च चतुःसमं
सपदि सर्वमिदं परिगृह्यताम् ॥ २३ ॥

सीमन्ते ते भगवति मया सादरं न्यस्तमेत-
त्सिन्दूरं मे हृदयकमले हर्षवर्षं तनोति ।
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्ती-
रन्तर्ध्वान्तं हरति सकलं चेतसा चिन्तयैव ॥ २४ ॥

मन्दारकुन्दकरवीरलवङ्गपुष्पै-
स्त्वां देवि संततमहं परिपूजयामि ।
जातीजपावकुलचम्पककेतकादि-
नानाविधानि कुसुमानि च तेऽर्पयामि ॥ २५ ॥

मालतीवकुलहेमपुष्पिका-
काञ्चनारकरवीरकैतकैः ।
कर्णिकारगिरिकर्णिकादिभिः
पूजयामि जगदम्ब ते वपुः ॥ २६ ॥

पारिजातशतपत्रपाटलै-
र्मल्लिकावकुलचम्पकादिभिः ।
अम्बुजैः सुकुसुमैश्च सादरं
पूजयामि जगदम्ब ते वपुः ॥ २७ ॥

लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः
कर्पूराकलितैः शिरैर्मधुयुतैर्गोसर्पिषा लोडितैः ।
श्रीखण्डागरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभि-
र्धूपं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥ २८ ॥

रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषा लोडितै-
र्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः ।
आताम्रज्वलदुज्ज्वलप्रविलसद्रत्नप्रदीपैस्तथा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥

मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसंतानिकाः
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः ।
एलाजीरकहिङ्गुनागरनिशाकुस्तुम्भरीसंस्कृतैः
शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यर्चयन् ॥

सापूपसूपदधिदुग्धसिताघृतानि
सुस्वादुभक्तपरमान्नपुरःसराणि ।
शाकोल्लसन्मरिचिजीरकबाह्लिकानि
भक्ष्याणि भुङ्क्ष्व जगदम्ब मयार्पितानि ॥ ३१ ॥

क्षीरमेतदिदमुत्तमोत्तमं
प्राज्यमाज्यमिदमुज्ज्वलं मधु ।
मातरेतदमृतोपमं पयः
संभ्रमेण परिपीयतां मुहुः ॥ ३२ ॥

उष्णोदकैः पाणियुगं मुखं च
प्रक्षाल्य मातः कलधौतपात्रे ।
कर्पूरमिश्रेण सकुङ्कुमेन
हस्तौ समुद्वर्तय चन्दनेन ॥ ३३ ॥

अतिशीतमुशीरवासितं
तपनीये कलशे निवेशितम् ।
पटपूतमिदं जितामृतं
शुचि गङ्गाजलमम्ब पीयताम् ॥ ३४ ॥

जम्ब्वाम्ररम्भाफलसंयुतानि
द्राक्षाफलक्षौद्रसमन्वितानि ।
सनारिकेलानि सदाडिमानि
फलानि ते देवि समर्पयामि ॥ ३५ ॥

कूश्माण्डकोशातकिसंयुतानि
जम्बीरनारङ्गसमन्वितानि ।
सबीजपूराणि सबादराणि
फलानि ते देवि समर्पयामि ॥ ३६ ॥

कर्पूरेण युतैर्लवङ्गसहितैस्तक्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ।
मातः कैतकपत्रपाण्डुरुचिभिस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनार्थमतुलं ताम्बूलमङ्गीकुरु ॥ ३७ ॥

एलालवङ्गादिसमन्वितानि
तक्कोलकर्पूरविमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि
पूगानि ते देवि समर्पयामि ॥ ३८ ॥

ताम्बूलनिर्जितसुतप्तसुवर्णवर्णं
स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ।
सौवर्णपात्रनिहितं खदिरेण सार्धं
ताम्बूलमम्ब वदनाम्बुरुहे गृहाण ॥ ३९ ॥

महति कनकपात्रे स्थापयित्वा विशालान्
डमरुसदृशरूपान्बद्धगोधूमदीपान् ।
बहुघृतमथ तेषु न्यस्य दीपान्प्रकृष्टा-
न्भुवनजननि कुर्वे नित्यमारार्तिकं ते ॥ ४० ॥

सविनयमथ दत्वा जानुयुग्मं धरण्यां
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ।
मुखकमलसमीपे तेऽम्ब सार्धं त्रिवारं
भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ॥ ४१ ॥

अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ ४२ ॥

मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं
नानारत्नविशोभिहेमकलशं लोकत्रयाह्लादकम् ।
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं
छत्रं ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम् ॥

शरदिन्दुमरीचिगौरवर्णै-
मणिमुक्ताविलसत्सुवर्णदण्डैः ।
जगदम्ब विचित्रचामरैस्त्वा-
महमानन्दभरेण वीजयामि ॥ ४४ ॥

मार्ताण्डमण्डलनिभो जगदम्ब योऽयं
भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते ।
पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीय-
मस्मिन्विलोकय विलोलविलोचने त्वम् ॥ ४५ ॥

इन्द्रादयो नतिनतैर्मकुटप्रदीपै-
र्नीराजयन्ति सततं तव पादपीठम् ।
तस्मादहं तव समस्तशरीरमेत-
न्नीराजयामि जगदम्ब सहस्रदीपैः ॥ ४६ ॥

प्रियगतिरतितुङ्गो रत्नपल्याणयुक्तः
कनकमयविभूषः स्निग्धगम्भीरघोषः ।
भगवति कलितोऽयं वाहनार्थं मया ते
तुरगशतसमेतो वायुवेगस्तुरंगः ॥ ४७ ॥

मधुकरवृतकुम्भन्यस्तसिन्दूररेणुः
कनककलितघण्टाकिङ्किणीशोभिकण्ठः ।
श्रवणयुगलचञ्चच्चामरो मेघतुल्यो
जननि तव मुदे स्यान्मत्तमातङ्ग एषः ॥ ४८ ॥

द्रुततरतुरगैर्विराजमानं
मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयममुं वितानवन्तं
भगवति ते हि रथं समर्पयामि ॥ ४९ ॥

हयगजरथपत्तिशोभमानं
दिशि दिशि दुन्दुभिमेघनादयुक्तम् ।
अतिबहु चतुरङ्गसैन्यमेत-
द्भगवति भक्तिभरेण तेऽर्पयामि ॥ ५० ॥

परिघीकृतसप्तसागरं
बहुसंपत्सहितं मयाम्ब ते विपुलम् ।
प्रबलं धरणीतलाभिधं
दृढदुर्गं निखिलं समर्पयामि ॥ ५१ ॥

शतपत्रयुतैः स्वभावशीतै-
　रतिसौरभ्ययुतैः परागपीतैः ।
भ्रमरीमुखरीकृतैरनन्तै-
　र्व्यजनैस्त्वां जगदम्ब वीजयामि ॥ ५२ ॥

भ्रमरलुलितलोलकुन्तलाली-
　विगलितमाल्यविकीर्णरङ्गभूमिः ।
इयमतिरुचिरा नटी नटन्ती
　तव हृदये मुदमातनोतु मातः ॥ ५३ ॥

मुखनयनविलासलोलवेणी-
　विलसितनिर्जितलोलभृङ्गमालाः ।
युवजनसुखकारिचारुलीला
　भगवति ते पुरतो नटन्ति बालाः ॥ ५४ ॥

भ्रमदलिकुलतुल्यालोलधम्मिल्लभाराः
　स्मितमुखकमलोद्यद्दिव्यलावण्यपूराः ।
अनुपमितसुवेषा वारयोषा नटन्ति
　परभृतकलकण्ठ्यो देवि दैन्यं धुनोतु ॥ ५५ ॥

डमरुडिण्डिमजर्झरझल्लरी-
मृदुरवद्रगडद्रगडादयः ।
झटिति झाङ्कृतझाङ्कृतझाङ्कृतै-
र्बहुदयं हृदयं सुखयन्तु ते ॥ ५६ ॥

विपञ्चीषु सप्तस्वरान्वादयन्त्य-
स्तव द्वारि गायन्ति गन्धर्वकन्याः ।
क्षणं सावधानेन चित्तेन मातः
समाकर्णय त्वं मया प्रार्थितासि ॥ ५७ ॥

अभिनयकमनीयैर्नर्तनैर्नर्तकीनां
क्षणमपि रमयित्वा चेत एतत्त्वदीयम् ।
स्वयमहमतिचित्रैर्नृत्तवादित्रगीतै-
र्भगवति भवदीयं मानसं रञ्जयामि ॥ ५८ ॥

तव देवि गुणानुवर्णने
चतुरा नो चतुराननादयः ।
तदिहैकमुखेषु जन्तुषु
स्तवनं कस्तव कर्तुमीश्वरः ॥ ५९ ॥

पदे पदे यत्परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तत्सर्वपापक्षयहेतुभूतं प्रदक्षिणं ते परितः करोमि ॥ ६० ॥

रक्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा
कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते
हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६२ ॥

अथ मणिमयमञ्चकाभिरामे
कनकमयवितानराजमाने ।
प्रसरदगरुधूपधूपितेऽस्मि-
न्भगवति भवनेऽस्तु ते निवासः ॥ ६३ ॥

एतस्मिन्मणिखचिते सुवर्णपीठे
त्रैलोक्याभयवरदौ निधाय हस्तौ ।
विस्तीर्णे मृदुलतरोत्तरच्छदेऽस्मि-
न्पर्यङ्के कनकमये निषीद मातः ॥ ६४ ॥

तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः ।
अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥ ६५ ॥

अथ मातरुशीरवासितं निजताम्बूलरसेन रञ्जितम् ।
तपनीयमये हि पट्टके मुखगण्डूषजलं विधीयताम् ॥ ६६ ॥

क्षणमथ जगदम्ब मञ्चकेऽस्मि-
न्मृदुतलतूलिकया विराजमाने ।
अतिरहसि मुदा शिवेन सार्धं
सुखशयनं कुरु तत्र मां स्मरन्ती ॥ ६७ ॥

मुक्ताकुन्देन्दुगौरां मणिमयमकुटां रत्नताटङ्कयुक्ता-
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ।
नानालंकारयुक्तां सुरमकुटमणिद्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥

एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान्क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ६९ ॥

पूजामिमां यः पठति प्रभाते
　मध्याह्नकाले यदि वा प्रदोषे ।
धर्मार्थकामान्पुरुषोऽभ्युपैति
　देहावसाने शिवभावमेति ॥ ७० ॥

पूजामिमां पठेन्नित्यं पूजां कर्तुमनीश्वरः ।
पूजाफलमवाप्नोति वाञ्छितार्थं च विन्दति ॥ ७१ ॥

प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत् ।
वाग्वादिन्याः प्रसादेन वत्सरात्स कविर्भवेत् ॥ ७२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
देवीचतुःषष्ट्युपचारपूजास्तोत्रं
संपूर्णम् ॥

॥ श्रीः ॥

# ॥ त्रिपुरसुन्दर्यष्टकम् ॥

कदम्बवनचारिणीं मुनिकदम्बकादम्बिनीं
नितम्बजितभूधरां सुरनितम्बिनीसेविताम् ।
नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ १ ॥

कदम्बवनवासिनीं कनकवल्लकीधारिणीं
महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम् ।
दयाविभवकारिणीं विशदरोचनाचारिणीं
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ २ ॥

कदम्बवनशालया कुचभरोल्लसन्मालया
कुचोपमितशैलया गुरुकृपालसद्वेलया ।
मदारुणकपोलया मधुरगीतवाचालया
कयापि घननीलया कवचिता वयं लीलया ॥ ३ ॥

कदम्बवनमध्यगां कनकमण्डलोपस्थितां
षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम् ।
विडम्बितजपारुचिं विकचचन्द्रचूडामणिं
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ४ ॥

कुचाञ्चितविपञ्चिकां कुटिलकुन्तलालंकृतां
कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् ।
मदारुणविलोचनां मनसिजारिसंमोहिनीं
मतङ्गमुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥

स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दुनीलाम्बरां
गृहीतमधुपात्रिकां मदविघूर्णनेत्राञ्चलाम् ।
घनस्तनभरोन्नतां गलितचूलिकां श्यामलां
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६ ॥

सकुङ्कुमविलेपनामलकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥ ७ ॥

पुरंदरपुरन्ध्रिकाचिकुरबन्धसैरन्ध्रिकां
पितामहपतिव्रतापटुपटीरचर्चारताम् ।
मुकुन्दरमणीमणीलसदलंक्रियाकारिणीं
भजामि भुवनाम्बिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
त्रिपुरसुन्दर्यष्टकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ ललितापञ्चरत्नम् ॥

प्रातः स्मरामि ललितावदनारविन्दं
बिम्बाधरं पृथुलमौक्तिकशोभिनासम् ।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं
मन्दस्मितं मृगमदोज्ज्वलफालदेशम् ॥ १ ॥

प्रातर्भजामि ललिताभुजकल्पवल्लीं
रक्ताङ्गुलीयलसदङ्गुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयाङ्गदशोभमानां
पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ॥ २ ॥

प्रातर्नमामि ललिताचरणारविन्दं
भक्तेष्टदाननिरतं भवसिन्धुपोतम् ।
पद्मासनादिसुरनायकपूजनीयं
पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ॥ ३ ॥

प्रातः स्तुवे परशिवां ललितां भवानीं
त्र्यन्तवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां
विद्येश्वरीं निगमवाङ्मनसातिदूराम् ॥ ४ ॥

प्रातर्वदामि ललिते तव पुण्यनाम
कामेश्वरीति कमलेति महेश्वरीति ।
श्रीशाम्भवीति जगतां जननी परेति
वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥ ५ ॥

यः श्लोकपञ्चकमिदं ललिताम्बिकायाः
सौभाग्यदं सुललितं पठति प्रभाते ।
तस्मै ददाति ललिता झटिति प्रसन्ना
विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**ललितापञ्चरत्नं संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ कल्याणवृष्टिस्तवः ॥

कल्याणवृष्टिभिरिवामृतपूरिताभि-

लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः ।

सेवाभिरम्ब तव पादसरोजमूले

नाकारि किं मनसि भाग्यवतां जनानाम् ॥ १ ॥

एतावदेव जननि स्पृहणीयमास्ते

त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे ।

सांनिध्यमुद्यदरुणायुतसोदरस्य

त्वद्विग्रहस्य परया सुधयाप्लुतस्य ॥ २ ॥

ईशत्वनामकलुषाः कति वा न सन्ति

ब्रह्मादयः प्रतिभवं प्रलयाभिभूताः ।

एकः स एव जननि स्थिरसिद्धिरास्ते

यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥

लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कंदर्पकोटिसुभगास्त्वयि भक्तिभाजः
संमोहयन्ति तरुणीर्भुवनत्रयेऽपि ॥ ४ ॥

ह्रींकारमेव तव नाम गृणन्ति वेदा
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
त्वत्संस्मृतौ यमभटाभिभवं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥

हन्तुः पुरामधिगलं परिपीयमानः
क्रूरः कथं न भविता गरलस्य वेगः ।
नाश्वासनाय यदि मातरिदं तवार्धं
देहस्य शश्वदमृताप्लुतशीतलस्य ॥ ६ ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किं च स्फुरन्मकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महतीं वसुधां ददाति ॥ ७ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
　　कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
　　त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ॥ ८ ॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
　　भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसा समनुस्मरामि
　　त्वामेव नौमि शरणं जननि त्वमेव ॥ ९ ॥

लक्ष्येषु सत्स्वपि कटाक्षनिरीक्षणाना-
　　मालोकय त्रिपुरसुन्दरि मां कदाचित् ।
नूनं मया तु सदृशः करुणैकपात्रं
　　जातो जनिष्यति जनो न च जायते वा ॥ १० ॥

ह्रींह्रीमिति प्रतिदिनं जपतां तवाख्यां
　　किं नाम दुर्लभमिह त्रिपुराधिवासे ।
मालाकिरीटमदवारणमाननीया
　　तान्सेवते वसुमती स्वयमेव लक्ष्मीः ॥ ११ ॥

संपत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदाननिरतानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥ १२ ॥

कल्पोपसंहृतिषु कल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥ १३ ॥

लग्नं सदा भवतु मातरिदं तवार्धं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्ये त्रिकोणनिलयं परमामृतार्द्रम् ॥ १४ ॥

ह्रींकारमेव तव नाम तदेव रूपं
त्वन्नाम दुर्लभमिह त्रिपुरे गृणन्ति ।
त्वत्तेजसा परिणतं वियदादिभूतं
सौख्यं तनोति सरसीरुहसंभवादेः ॥ १५ ॥

ह्रींकारत्रयसंपुटेन महता मन्त्रेण संदीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित् ।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी
वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥१६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
कल्याणवृष्टिस्तवः संपूर्णः ॥

॥ श्रीः ॥

# ॥ नवरत्नमालिका ॥

हारनूपुरकिरीटकुण्डलविभूषितावयवशोभिनीं
कारणेशवरमौलिकोटिपरिकल्प्यमानपदपीठिकाम् ।
कालकालफणिपाशबाणधनुरङ्कुशामरुणमेखलां
फालभूतिलकलोचनां मनसि भावयामि परदेवताम् ॥१॥

गन्धसारघनसारचारुनवनागवल्लिरसवासिनीं
सान्ध्यरागमधुराधराभरणसुन्दराननशुचिस्मिताम् ।
मन्धरायतविलोचनाममलबालचन्द्रकृतशेखरीं
इन्दिरारमणसोदरीं मनसि भावयामि परदेवताम् ॥ २ ॥

स्मेरचारुमुखमण्डलां विमलगण्डलम्बिमणिमण्डलां
हारदामपरिशोभमानकुचभारभीरुतनुमध्यमाम् ।
वीरगर्वहरनूपुरां विविधकारणेशवरपीठिकां
मारवैरिसहचारिणीं मनसि भावयामि परदेवताम् ॥३॥

भूरिभारधरकुण्डलीन्द्रमणिबद्धभूवलयपीठिकां
वारिराशिमणिमेखलावलयवह्निमण्डलशरीरिणीम् ।
वारिसारवहकुण्डलां गगनशेखरीं च परमात्मिकां
चारुचन्द्ररविलोचनां मनसि भावयामि परदेवताम् ॥४॥

कुण्डलत्रिविधकोणमण्डलविहारषड्दलसमुल्लस-
त्पुण्डरीकमुखभेदिनीं च प्रचण्डभानुभासमुज्ज्वलाम् ।
मण्डलेन्दुपरिवाहितामृततरङ्गिणीमरुणरूपिणीं
मण्डलान्तमणिदीपिकां मनसि भावयामि परदेवताम् ॥

वारणाननमयूरवाहमुखदाहवारणपयोधरां
चारणादिसुरसुन्दरीचिकुरशेखरीकृतपदाम्बुजाम् ।
कारणाधिपतिपञ्चकप्रकृतिकारणप्रथममातृकां
वारणान्तमुखपारणां मनसि भावयामि परदेवताम् ॥

पद्मकान्तिपदपाणिपल्लवपयोधराननसरोरुहां
पद्मरागमणिमेखलावलयनीविशोभितनितम्बिनीम् ।
पद्मसंभवसदाशिवान्तमयपञ्चरत्नपदपीठिकां
पद्मिनीं प्रणवरूपिणीं मनसि भावयामि परदेवताम् ॥

आगमप्रणवपीठिकाममलवर्णमङ्गलशरीरिणीं
आगमावयवशोभिनीमखिलवेदसारकृतशेखरीम् ।
मूलमन्त्रमुखमण्डलां मुदितनादबिन्दुनवयौवनां
मातृकां त्रिपुरसुन्दरीं मनसि भावयामि परदेवताम् ॥

कालिकातिमिरकुन्तलान्तघनभृङ्गमङ्गलविराजिनीं
चूलिकाशिखरमालिकावलयमल्लिकासुरभिसौरभाम् ।
वालिकामधुरगण्डमण्डलमनोहराननसरोरुहां
कालिकामखिलनायिकां मनसि भावयामि परदेवताम् ॥

नित्यमेव नियमेन जल्पतां
भुक्तिमुक्तिफलदामभीष्टदाम् ।
शंकरेण रचितां सदा जपे-
न्नामरत्ननवरत्नमालिकाम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**नवरत्नमालिका संपूर्णा ॥**

॥ श्रीः ॥

# ॥ मन्त्रमातृकापुष्पमालास्तवः ॥

कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्मणि-
द्वीपे कल्पकवाटिकापरिवृते कादम्बवाटयुज्ज्वले ।
रत्नस्तम्भसहस्रनिर्मितसभामध्ये विमानोत्तमे
चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ॥ १ ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्ये स्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् ।
चापं बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥ २ ॥

ईशानादिपदं शिवैकफलदं रत्नासनं ते शुभं
पाद्यं कुङ्कुमचन्दनादिभरितैरर्घ्यं सरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं
कारुण्यामृतवारिधे तदखिलं संतुष्टये कल्पताम् ॥ ३ ॥

लक्ष्ये योगिजनस्य रक्षितजगज्जाले विशालेक्षणे
प्रालेयाम्बुपटीरकुङ्कुमलसत्कर्पूरमिश्रोदकैः ।
गोक्षीरैरपि नारिकेलसलिलैः शुद्धोदकैर्मन्त्रितैः
स्नानं देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ४ ॥

ह्रींकाराङ्कितमन्त्रलक्षिततनो हेमाचलात्संचितै
रत्नैरुज्ज्वलमुत्तरीयसहितं कौसुम्भवर्णांशुकम् ।
मुक्तासंततियज्ञसूत्रममलं सौवर्णतन्तूद्भवं
दत्तं देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ५ ॥

हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलां
हिन्दोलद्युतिहीरपूरिततरे हेमाङ्गदे कङ्कणे ।
मञ्जीरौ मणिकुण्डले मकुटमप्यर्धेन्दुचूडामणिं
नासामौक्तिकमङ्गुलीयकटकौ काञ्चीमपि स्वीकुरु ॥ ६ ॥

सर्वाङ्गे घनसारकुङ्कुमघनश्रीगन्धपङ्काङ्कितं
कस्तूरीतिलकं च फालफलके गोरोचनापत्रकम् ।
गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं तेऽञ्चितं
कण्ठाब्जे मृगनाभिपङ्कममलं त्वत्प्रीतये कल्पताम् ॥ ७ ॥

कह्लारोत्पलमल्लिकामरुवकैः सौवर्णपङ्केरुहै-
र्जातीचम्पकमालतीवकुलकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः क्लृप्ताः स्रजो मालिकाः
संकल्पेन समर्पयामि वरदे संतुष्टये गृह्यताम् ॥ ८ ॥

हन्तारं मदनस्य नन्दयसि यैरङ्गैरनङ्गोज्ज्वलै-
र्यैर्भृङ्गावलिनीलकुन्तलभरैर्बध्नासि तस्याशयम् ।
तानीमानि तवाम्ब कोमलतराण्यामोदलीलागृहा-
ण्यामोदाय दशाङ्गगुग्गुलुघृतैर्धूपैरहं धूपये ॥ ९ ॥

लक्ष्मीमुज्ज्वलयामि रत्ननिवहोद्भास्वत्तरे मन्दिरे
मालारूपविलम्बितैर्मणिमयस्तम्भेषु संभावितैः ।
चित्रैर्हाटकपुत्रिकाकरधृतैर्गव्यैर्घृतैर्वर्धितै-
र्दिव्यैर्दीपगणैर्धिया गिरिसुते संतुष्टये कल्पताम् ॥

ह्रींकारेश्वरि तप्तहाटककृतैः स्थालीसहस्रैर्भृतं
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदं तथा ।
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रे स्थितं
माषापूपसहस्रमम्ब सफलं नैवेद्यमावेदये ॥ ११ ॥

सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः
पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरखण्डोज्ज्वलैः ।
मुक्ताचूर्णविराजितैर्बहुविधैर्वक्त्राम्बुजामोदनैः
पूर्णा रत्नकलाचिका तव मुदे न्यस्ता पुरस्तादुमे ॥१२॥

कन्याभिः कमनीयकान्तिभिरलंकारामलारार्तिका
पात्रे मौक्तिकचित्रपङ्क्तिविलसत्कर्पूरदीपालिभिः ।
तत्तत्तालमृदङ्गगीतसहितं नृत्यत्पदाम्भोरुहं
मन्त्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम् ॥

लक्ष्मीमौक्तिकलक्षकल्पितसितच्छत्रं तु धत्ते रसा-
दिन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती ।
वीणामेणविलोचनाः सुमनसां नृत्यन्ति तद्रागव-
द्भावैराङ्गिकसात्त्विकैः स्फुटरसं मातस्तदाकर्ण्यताम् ॥

ह्रींकारत्रयसंपुटेन मनुनोपास्ये त्रयीमौलिभि-
र्वाक्यैर्लक्ष्यतनो तव स्तुतिविधौ को वा क्षमेताम्बिके ।
सल्लापाः स्तुतयः प्रदक्षिणशतं संचार एवास्तु ते
संवेशो नमसः सहस्रमखिलं त्वत्प्रीतये कल्पताम् ॥

श्रीमन्त्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा
संध्यासु प्रतिवासरं सुनियतस्तस्यामलं स्यान्मनः ।
चित्ताम्भोरुहमण्टपे गिरिसुता नृत्तं विधत्ते रसा-
द्वाणी वक्त्रसरोरुहे जलधिजा गेहे जगन्मङ्गला ॥ १६ ॥

इति गिरिवरपुत्रीपादराजीवभूषा
भुवनममलयन्ती सूक्तिसौरभ्यसारैः ।
शिवपदमकरन्दस्यन्दिनीयं निबद्धा
मदयतु कविभृङ्गान्मातृकापुष्पमाला ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**मन्त्रमातृकापुष्पमालास्तवः संपूर्णः ॥**

॥ श्रीः ॥

# ॥ गौरीदशकम् ॥

लीलालब्धस्थापितलुप्ताखिललोकां
लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥

प्रत्याहारध्यानसमाधिस्थितिभाजां
नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् ।
सत्यज्ञानानन्दमयीं तां तनुरूपां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ २ ॥

चन्द्रापीडानन्दितमन्दस्मितवक्त्रां
चन्द्रापीडालंकृतनीलालकभाराम् ।
इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ३ ॥

आदिक्षान्तामक्षरमूर्त्या विलसन्तीं
भूते भूते भूतकदम्बप्रसवित्रीम् ।
शब्दब्रह्मानन्दमयीं तां तटिदाभां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ४ ॥

मूलाधारादुत्थितवीथ्या विधिरन्ध्रं
सौरं चान्द्रं व्याप्य विहारज्वलिताङ्गीम् ।
येयं सूक्ष्मात्सूक्ष्मतनुस्तां सुखरूपां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ५ ॥

नित्यः शुद्धो निष्कल एको जगदीशः
साक्षी यस्याः सर्गविधौ संहरणे च ।
विश्वत्राणक्रीडनलोलां शिवपत्नीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ६ ॥

यस्याः कुक्षौ लीनमखण्डं जगदण्डं
भूयो भूयः प्रादुरभूदुत्थितमेव ।
पत्या सार्धं तां रजताद्रौ विहरन्तीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ७ ॥

यस्यामोतं प्रोतमशेषं मणिमाला-
सूत्रे यद्वत्क्वापि चरं चाप्यचरं च ।
तामध्यात्मज्ञानपदव्या गमनीयां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ८ ॥

नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति येयं स्वयमेका ।
कल्याणीं तां कल्पलतामानतिभाजां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ९ ॥

आशापाशक्लेशविनाशं विदधानां
पादाम्भोजध्यानपराणां पुरुषाणाम् ।
ईशामीशार्धाङ्गहरां तामभिरामां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १० ॥

प्रातःकाले भावविशुद्धः प्रणिधाना-
द्भक्त्या नित्यं जल्पति गौरीदशकं यः ।
वाचां सिद्धिं संपदमग्र्यां शिवभक्तिं
तस्यावश्यं पर्वतपुत्री विदधाति ॥ ११ ॥

॥ श्रीः ॥

# ॥ भवानीभुजंगम् ॥

षडाधारपङ्केरुहान्तर्विराज-
त्सुषुम्नान्तरालेऽतितेजोल्लसन्तीम् ।
सुधामण्डलं द्रावयन्तीं पिबन्तीं
सुधामूर्तिमीडे चिदानन्दरूपाम् ॥ १ ॥

ज्वलत्कोटिबालार्कभासारुणाङ्गीं
सुलावण्यशृङ्गारशोभाभिरामाम् ।
महापद्मकिञ्जल्कमध्ये विराज-
त्त्रिकोणे निषण्णां भजे श्रीभवानीम् ॥ २ ॥

क्वणत्किङ्किणीनूपुरोद्भासिरत्न-
प्रभालीढलाक्षार्द्रपादाब्जयुग्मम् ।
अजेशाच्युताद्यैः सुरैः सेव्यमानं
महादेवि मन्मूर्ध्नि ते भावयामि ॥ ३ ॥

सुशोणाम्बराबद्धनीवीविराज-
न्महारत्नकाञ्चीकलापं नितम्बम् ।
स्फुरद्दक्षिणावर्तनाभिं च तिस्रो
वलीरम्ब ते रोमराजिं भजेऽहम् ॥ ४ ॥

लसद्वृत्तमुत्तुङ्गमाणिक्यकुम्भो-
पमश्रि स्तनद्वन्द्वमम्बाम्बुजाक्षि ।
भजे दुग्धपूर्णाभिरामं तवेदं
महाहारदीप्तं सदा प्रस्नुतास्यम् ॥ ५ ॥

शिरीषप्रसूनोल्लसद्बाहुदण्डै-
र्ज्वलद्बाणकोदण्डपाशाङ्कुशैश्च ।
चलत्कङ्कणोदारकेयूरभूषो-
ज्ज्वलद्भिर्लसन्तीं भजे श्रीभवानीम् ॥ ६ ॥

शरत्पूर्णचन्द्रप्रभापूर्णबिम्बा-
धरस्मेरवक्त्रारविन्दां सुशान्ताम् ।
सुरत्नावलीहारताटङ्कशोभां
महासुप्रसन्नां भजे श्रीभवानीम् ॥ ७ ॥

सुनासापुटं सुन्दरभ्रूललाटं
तवौष्ठश्रियं दानदक्षं कटाक्षम् ।
ललाटे लसद्गन्धकस्तूरिभूषं
स्फुरच्छ्रीमुखाम्भोजमीडेऽहमम्ब ॥ ८ ॥

चलत्कुन्तलान्तर्भ्रमद्भृङ्गबृन्दं
घनस्निग्धधम्मिल्लभूषोज्ज्वलं ते ।
स्फुरन्मौलिमाणिक्यबद्धेन्दुरेखा-
विलासोल्लसद्दिव्यमूर्धानमीडे ॥ ९ ॥

इति श्रीभवानि स्वरूपं तवेदं
प्रपञ्चात्परं चातिसूक्ष्मं प्रसन्नम् ।
स्फुरत्वम्ब डिम्भस्य मे हृत्सरोजे
सदा वाङ्मयं सर्वतेजोमयं च ॥ १० ॥

गणेशाभिमुख्याखिलैः शक्तिबृन्दै-
र्वृतां वै स्फुरच्चक्रराजोल्लसन्तीम् ।
परां राजराजेश्वरि त्रैपुरि त्वां
शिवाङ्कोपरिस्थां शिवां भावयामि ॥ ११ ॥

त्वमर्कस्त्वमिन्दुस्त्वमग्निस्त्वमाप-
स्त्वमाकाशभूवायवस्त्वं महत्त्वम् ।
त्वदन्यो न कश्चित्प्रपञ्चोऽस्ति सर्वं
त्वमानन्दसंवित्स्वरूपां भजेऽहम् ॥ १२ ॥

श्रुतीनामगम्ये सुवेदागमज्ञा
महिम्नो न जानन्ति पारं तवाम्ब ।
स्तुतिं कर्तुमिच्छामि ते त्वं भवानि
क्षमस्वेदमत्र प्रमुग्धः किलाहम् ॥ १३ ॥

गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव
त्वमेवासि माता पिता च त्वमेव ।
त्वमेवासि विद्या त्वमेवासि बन्धु-
र्गतिर्मे मतिर्देवि सर्वं त्वमेव ॥ १४ ॥

शरण्ये वरेण्ये सुकारुण्यमूर्ते
हिरण्योदराद्यैरगण्ये सुपुण्ये ।
भवारण्यभीतेश्च मां पाहि भद्रे
नमस्ते नमस्ते नमस्ते भवानि ॥ १५ ॥

इतीमां महच्छ्रीभवानीभुजंगं
स्तुतिं यः पठेद्भक्तियुक्तश्च तस्मै ।
स्वकीयं पदं शाश्वतं वेदसारं
श्रियं चाष्टसिद्धिं भवानी ददाति ॥ १६ ॥

भवानी भवानी भवानी त्रिवार-
मुदारं मुदा सर्वदा ये जपन्ति ।
न शोकं न मोहं न पापं न भीतिः
कदाचित्कथंचित्कुतश्चिज्जनानाम् ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**भवानीभुजंगं संपूर्णम् ॥**



॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥



TO

HIS HOLINESS SRI JAGADGURU

**SRI SACHCHIDANANDA SIVABHINAVA**

**NRISIMHA BHARATI SWAMI**

WHO ADORNS THE THRONE OF THE SRINGERI MUTT

AS THE WORTHY REPRESENTATIVE OF THE

GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE

TO COME ACROSS A HOLIER PERSONAGE

A TRUER MAHATMA A NOBLER SAINT

AND A MORE RIGOROUS ASCETIC

THIS EDITION IS MOST RESPECTFULLY INSCRIBED

AS A TOKEN OF UNBOUNDED ADMIRATION

BY THE HUMBLEST OF ALL HIS DISCIPLES

T K BALASUBRAHMANYAM

नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
ऽमन्त्रेण प्रतिबोधितेन कुतुकात्सर्वा कृती शांकरी ।
संमुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिता
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।
तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिं यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

# CONTENTS

## ॥ विषया ॥

॥ श्री ॥

# ॥ विषयानुक्रमणिका ॥



॥ श्रीमहाविष्णु. ॥

॥ श्री ॥

# ॥ हनुमत्पञ्चरत्नम् ।

Gourishunker Ganeriwala

वीताखिलविषयेच्छं
जातानन्दाश्रुपुलकमत्यच्छम् ।
सीतापतिदूताद्यं
वातात्मजमद्य भावये हृद्यम् ॥ १ ॥

तरुणारुणमुखकमलं
करुणारसपूरपूरितापाङ्गम् ।
सञ्जीवनमाशासे
मञ्जुलमहिमानमञ्जनाभाग्यम् ॥ २

शम्बरवैरिशरातिग-
मम्बुजदलविपुललोचनोदारम् ।
कम्बुगलमनिलदिष्टं
बिम्बज्वलितोष्ठमेकमवलम्बे ॥ ३ ॥

दूरीकृतसीतार्तिः
  प्रकटीकृतरामवैभवस्फूर्तिः ।
दारितदशमुखकीर्तिः
  पुरतो मम भातु हनुमतो मूर्तिः ॥ ४ ॥

वानरनिकराध्यक्षं
  दानवकुलकुमुदरविकरसदृक्षम् ।
दीनजनावनदीक्षं
  पवनतपःपाकपुञ्जमद्राक्षम् ॥ ५ ॥

एतत्पवनसुतस्य
  स्तोत्रं यः पठति पञ्चरत्नाख्यम् ।
चिरमिह निखिलान्भोगा-
  न्भुक्त्वा श्रीरामभक्तिभाग्भवति ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
हनुमत्पञ्चरत्नं संपूर्णम् ॥

॥ श्री ॥

# ॥ श्रीरामभुजंगप्रयातस्तोत्रम् ॥

विशुद्ध पर सच्चिदानन्दरूप
गुणाधारमाधारहीन वरेण्यम् ।
महान्त विभान्त गुहान्त गुणान्त
सुखान्त स्वय धाम राम प्रपद्ये ॥ १ ॥

शिव नित्यमक विभु तारकाख्य
सुखाकारमाकारशून्य सुमान्यम् ।
महेश कलेश सुरेश परेश
नरेश निरीश महीश प्रपद्ये ॥ २ ॥

यदावर्णयत्कर्णमूलेऽन्तकाले
शिवो राम रामेति रामेति काश्याम् ।
तदेक पर तारकब्रह्मरूप
भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥ ३ ॥

महारत्नपीठे शुभे कल्पमूले
सुखासीनमादित्यकोटिप्रकाशम् ।
सदा जानकीलक्ष्मणोपेतमेकं
सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥ ४ ॥

क्वणद्रत्नमञ्जीरपादारविन्दं
लसन्मेखलाचारुपीताम्बराढ्यम् ।
महारत्नहारोल्लसत्कौस्तुभाङ्गं
नदच्चञ्चरीमञ्जरीलोलमालम् ॥ ५ ॥

लसच्चन्द्रिकास्मेरशोणाधराभं
समुद्यत्पतङ्गेन्दुकोटिप्रकाशम् ।
नमद्ब्रह्मरुद्रादिकोटीररत्न
स्फुरत्कान्तिनीराजनाराधिताङ्घ्रिम् ॥ ६ ॥

पुरः प्राञ्जलीनाञ्जनेयादिभक्ता-
न्स्वचिन्मुद्रया भद्रया बोधयन्तम् ।
भजेऽहं भजेऽहं सदा रामचन्द्रं
त्वदन्यं न मन्ये न मन्ये न मन्ये ॥ ७ ॥

यदा मत्समीपं कृतान्तः समेत्य
प्रचण्डप्रकोपैर्भटैर्भीषयेन्माम् ।
तदाविष्करोषि त्वदीयं स्वरूपं
सदापत्प्रणाशं सकोदण्डबाणम् ॥ ८ ॥

निजे मानसे मन्दिरे सन्निधेहि
प्रसीद प्रसीद प्रभो रामचन्द्र ।
ससौमित्रिणा कैकयीनन्दनेन
स्वशक्त्यानुभक्त्या च संसेव्यमान ॥ ९ ॥

स्वभक्ताग्रगण्यैः कपीशैर्महीशै-
रनीकैरनेकैश्च राम प्रसीद ।
नमस्ते नमोऽस्त्वीश राम प्रसीद
प्रशाधि प्रशाधि प्रकाशं प्रभो माम् ॥ १० ॥

त्वमेवासि दैवं परं मे यदेकं
सुचैतन्यमेतत्त्वदन्यं न मन्ये ।
यतोऽभूदमेयं वियद्वायुतेजो
जलोर्व्यादिकार्यं चरं चाचरं च ॥ ११ ॥

नमः सच्चिदानन्दरूपाय तस्मै
नमो देवदेवाय रामाय तुभ्यम् ।
नमो जानकीजीवितेशाय तुभ्यं
नमः पुण्डरीकायताक्षाय तुभ्यम् ॥ १२ ॥

नमो भक्तियुक्तानुरक्ताय तुभ्यं
नमः पुण्यपुञ्जैकलभ्याय तुभ्यम् ।
नमो वेदवेद्याय चाद्याय पुंसे
नमः सुन्दरायेन्दिरावल्लभाय ॥ १३ ॥

नमो विश्वकर्त्रे नमो विश्वहर्त्रे
नमो विश्वभोक्त्रे नमो विश्वमात्रे ।
नमो विश्वनेत्रे नमो विश्वजेत्रे
नमो विश्वपित्रे नमो विश्वमात्रे ॥ १४ ॥

नमस्ते नमस्ते समस्तप्रपञ्च
प्रभोगप्रयोगप्रमाणप्रवीण ।
मदीयं मनस्त्वत्पदद्वन्द्वसेवां
विधातुं प्रवृत्तं सुचैतन्यसिद्ध्यै ॥ १५ ॥

शिलापि त्वदङ्घ्रिक्षमासङ्गिरेणु
　　प्रसादाद्धि चैतन्यमाधत्त राम ।
नरस्त्वत्पदद्वन्द्वसेवाविधाना-
　　त्सुचैतन्यमेतीति किं चित्रमत्र ॥ १६ ॥

पवित्रं चरित्रं विचित्रं त्वदीयं
　　नरा ये स्मरन्त्यन्वहं रामचन्द्र ।
भवन्तं भवान्तं भरन्तं भजन्तो
　　लभन्ते कृतान्तं न पश्यन्त्यतोऽन्ते ॥ १७ ॥

स पुण्यः स गण्यः शरण्यो ममायं
　　नरो वेद यो देवचूडामणिं त्वाम् ।
सदाकारमेकं चिदानन्दरूपं
　　मनोवागगम्यं परं धाम राम ॥ १८ ॥

प्रचण्डप्रतापप्रभावाभिभूत-
　　प्रभूतारिवीर प्रभो रामचन्द्र ।
बलं ते कथं वर्ण्यतेऽतीव बाल्ये
　　यतोऽखण्डि चण्डीशकोदण्डदण्डम् ॥ १९ ॥

दशग्रीवमुग्रं सपुत्रं समित्रं
सरिद्दुर्गमध्यस्थरक्षोगणेशम् ।
भवन्तं विना राम वीरो नरो वा
सुरो वामरो वा जयेत्कस्त्रिलोक्याम् ॥ २० ॥

सदा राम रामेति रामामृतं ते
सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्तं नमन्तं सुदन्तं हसन्तं
हनूमन्तमन्तर्भजे तं नितान्तम् ॥ २१ ॥

सदा राम रामेति रामामृतं ते
सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्नन्वहं नन्वहं नैव मृत्यो
र्बिभेमि प्रसादादसादात्तवैव ॥ २२ ॥

असीतासमेतैरकोदण्डभूषै
रसौमित्रिवन्द्यैरचण्डप्रतापैः ।
अलङ्केशकालैरसुग्रीवमित्रै-
ररामाभिधेयैरलं दैवतैर्नः ॥ २३ ॥

अवीरासनस्थैरचिन्मुद्रिकाढ्यै
रभक्ताञ्जनेयादितत्त्वप्रकाशै ।
अमन्दारमूलैरमन्दारमालै
ररामाभिधेयैरलं दैवतैर्न ॥ २४ ॥

असिन्धुप्रकोपैरवन्द्यप्रतापै
रबन्धुप्रयाणैरमन्दस्मिताढ्यै ।
अदण्डप्रवासैरखण्डप्रबोधै
ररामाभिधेयैरलं दैवतैर्न ॥ २५ ॥

हरे राम सीतापते रावणारे
खरारे मुरारेऽसुरारे परेति ।
लपन्तं नयन्तं सदाकालमेवं
समालोकयालोकयाशेषबन्धो ॥ २६ ॥

नमस्ते सुमित्रासुपुत्राभिवन्द्य
नमस्ते सदा कैकयीनन्दनेड्य ।
नमस्ते सदा वानराधीशवन्द्य
नमस्ते नमस्ते सदा रामचन्द्र ॥ २७ ॥

प्रसीद प्रसीद प्रचण्डप्रताप
  प्रसीद प्रसीद प्रचण्डारिकाल ।
प्रसीद प्रसीद प्रपन्नानुकम्पिन्
  प्रसीद प्रसीद प्रभो रामचन्द्र ॥ २८ ॥

भुजङ्गप्रयात पर वेदसार
  मुदा रामचन्द्रस्य भक्त्या च नित्यम् ।
पठन्सन्तत चिन्तयन्स्वान्तरङ्ग
  स एव स्वय रामचन्द्र स धन्य ॥ २९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
श्रीरामभुजङ्गप्रयातस्तोत्रम्
सपूर्णम् ॥

॥ श्री ॥

# ॥ लक्ष्मीनृसिंहपञ्चरत्नम् ॥

---

त्वत्प्रभुजीवप्रियमिच्छसि चेन्नरहरिपूजा कुरु सतत
  प्रतिबिम्बालङ्कृतिधृतिकुशलो बिम्बालङ्कृतिमातनुते ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसाया
  भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥

शुक्तौ रजतप्रतिभा जाता कटकाद्यर्थसमर्था चें
  दु खमयी ते ससृतिरेषा निर्वृतिदाने निपुणा स्यात् ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसाया
  भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥

आकृतिसाम्याच्छाल्मलिकुसुमे स्थलनलिनत्वभ्रममकरो
गन्धरसाविह किमु विद्येते विफल भ्राम्यसि भृशविरसेऽस्मिन् ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसाया
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ ३ ॥

स्रक्चन्दनवनितादीन्विषयान्सुखदान्मत्वा तत्र विहरसे
गन्धफलीसदृशा ननु तेऽमी भोगानन्तरदु खकृत स्यु ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसाया
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥४॥

तव हितमेक वचन वक्ष्ये शृणु सुखकामो यदि सतत
स्वप्ने दृष्ट सकल हि मृषा जाग्रति च स्मर तद्वदिति ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसाया
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥५॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
लक्ष्मीनृसिंहपञ्चरत्न सपूर्णम् ॥

॥ श्री ॥

# ॥ लक्ष्मीनृसिंहकरुणारसस्तोत्रम् ॥

---

श्रीमत्पयोनिधिनिकेतनचक्रपाण
भोगीन्द्रभोगमणिराजितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १ ॥

ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि
सघट्टिताङ्घ्रिकमलामलकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहस
लक्ष्मीनृसिंह मम दहि करावलम्बम् ॥ २ ॥

ससारदावदहनाकरभीकरोरु-
ज्वालावलीभिरतिदग्धतनूरुहस्य ।
त्वत्पादपद्मसरसीरुहमागतस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ३ ॥

संसारजालपतितस्य जगन्निवास
सर्वेन्द्रियार्थबडिशाग्रझषोपमस्य ।
प्रोत्कम्पितप्रचुरतालुकमस्तकस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ४ ॥

संसारकूपमतिघोरमगाधमूलं
संप्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपया पदमागतस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ५ ॥

संसारभीकरकरीन्द्रकराभिघात
निष्पीड्यमानवपुषः सकलार्तिनाश ।
प्राणप्रयाणभवभीतिसमाकुलस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ६ ॥

संसारसर्पविषदिग्धमहोग्रतीव्र
दंष्ट्राग्रकोटिपरिदष्टविनष्टमूर्तेः ।
नागारिवाहन सुधाब्धिनिवास शौरे
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ७ ॥

संसारवृक्षमघबीजमनन्तकर्म-
शाखायुतं करणपत्रमनङ्गपुष्पम् ।
आरुह्य दुःखफलितं चकितं दयालो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ८ ॥

संसारसागरविशालकरालकाल
नक्रग्रहग्रसितनिग्रहविग्रहस्य ।
व्यग्रस्य रागनिचयोर्मिनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ९ ॥

संसारसागरनिमज्जनमुह्यमानं
दीनं विलोकय विभो करुणानिधे माम् ।
प्रह्लादखेदपरिहारपरावतार
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १० ॥

संसारघोरगहने चरतो मुरारे
मारोग्रभीकरमृगप्रचुरार्दितस्य ।
आर्तस्य मत्सरनिदाघसुदुःखितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ११ ॥

बद्ध्वा गले यमभटा बहु तर्जयन्त
कर्षन्ति यत्र भवपाशशतैर्युत माम् ।
एकाकिन परवश चकित दयालो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १२ ॥

लक्ष्मीपते कमलनाभ सुरेश विष्णो
यज्ञेश यज्ञ मधुसूदन विश्वरूप ।
ब्रह्मण्य केशव जनार्दन वासुदेव
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १३ ॥

एकेन चक्रमपरेण करेण शङ्ख-
मन्येन सिन्धुतनयामवलम्ब्य तिष्ठन् ।
वामेतरेण वरदाभयपद्मचिह्न
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १४ ॥

अन्धस्य मे हृतविवेकमहाधनस्य
चोरैर्महाबलिभिरिन्द्रियनामधेयै ।
मोहान्धकारकुहरे विनिपातितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १५ ॥

प्रह्लादनारदपराशरपुण्डरीक-
व्यासादिभागवतपुगवहृन्निवास ।
भक्तानुरक्तपरिपालनपारिजात
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १६ ॥

लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन
स्तोत्र कृत शुभकर भुवि शकरेण ।
ये तत्पठन्ति मनुजा हरिभक्तियुक्ता
स्ते यान्ति तत्पदसरोजमखण्डरूपम ॥ १७ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
लक्ष्मीनृसिंहकरुणारसस्तोत्र सपूर्णम् ॥

॥ श्रीः ॥

# ॥ श्रीविष्णुभुजंगप्रयातस्तोत्रम् ॥

---

चिदश विभु निर्मल निर्विकल्प
  निरीह निराकारमोंकारगम्यम् ।
गुणातीतमव्यक्तमेक तुरीय
  पर ब्रह्म य वेद तस्मै नमस्ते ॥ १ ॥

विशुद्ध शिव शान्तमाद्यन्तशून्य
  जगज्जीवन ज्योतिरानन्दरूपम् ।
अदिग्दशकालव्यवच्छदनीय
  त्रयी वक्ति य वेद तस्मै नमस्तै ॥ २ ॥

महायागपीठे परिभ्राजमाने
  धरण्यादितत्त्वात्मके शक्तियुक्त ।
गुणाहस्करे वह्निबिम्बार्धमध्ये
  समामीनमोंकर्णिकेऽष्टाक्षराब्जे ॥ ३ ॥

समानोदितानेकसूर्येन्दुकोटि-
प्रभापूरतुल्यद्युतिं दुर्निरीक्षम् ।
न शीतं न चोष्णं सुवर्णावदात-
प्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४ ॥

सुनासापुटं सुन्दरभ्रूललाटं
किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत्पुण्डरीकाभिरामायताक्षं
समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५ ॥

लसत्कुण्डलामृष्टगण्डस्थलान्तं
जपारागचोराधरं चारुहासम् ।
अलिव्याकुलामोदिमन्दारमालं
महोरस्फुरत्कौस्तुभोदारहारम् ॥ ६ ॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डै-
श्चतुर्भिश्चलत्कङ्कणालंकृताग्रैः ।
उदारोदरालंकृतं पीतवस्त्रं
पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥ ७ ॥

स्वभक्तेषु सदर्शिताकारमेव
सदा भावयन्सनिरुद्धेन्द्रियाश्व ।
दुराप नरो याति ससारपार
परस्मै परेभ्योऽपि तस्मै नमस्ते ॥ ८ ॥

श्रिया शातकुम्भद्युतिस्निग्धकान्त्या
धरण्या च दूर्वादलश्यामलाङ्ग्या ।
कलत्रद्वयेनामुना तोषिताय
त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥ ९ ॥

शरीर कलत्र सुत बन्धुवर्ग
वयस्य धन सद्म भृत्य भुव च ।
समस्त परित्यज्य हा कष्टमेको
गमिष्यामि दु खेन दूर किलाहम् ॥ १० ॥

जरेय पिशाचीव हा जीवतो मे
वसामत्ति रक्त च मास बल च ।
अहो देव सीदामि दीनानुकम्पि
न्किमद्यापि हन्त त्वयोदासितव्यम् ॥ ११ ॥

कफव्याहतोष्णोल्बणश्वासवेग
व्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामसंख्यामवस्था
बिभेमि प्रभो किं करोमि प्रसीद ॥ १२ ॥

लपन्नच्युतानन्त गोविन्द विष्णो
मुरारे हरे नाथ नारायणेति ।
यथानुस्मरिष्यामि भक्त्या भवन्त
तथा मे दयाशील देव प्रसीद ॥ १३ ॥

भुजगप्रयात पठेद्यस्तु भक्त्या
समाधाय चित्ते भवन्त मुरारे ।
स मोह विहायाशु युष्मत्प्रसादा
त्समाश्रित्य योग व्रजत्यच्युत त्वाम् ॥ १४ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्दभग
वत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
श्रीविष्णुभुजगप्रयातस्तोत्र सपूर्णम् ॥

॥ श्री ॥

# ॥ विष्णुपादादिकेशान्तस्तोत्रम् ॥

लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सित यस्य रूप विशाल

नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्ब विभाति ।

पायान्न पाञ्चजन्य स दितिसुतकुलत्रासनै पूरयन्स्वै

र्निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बर कम्बुराज ॥ १ ॥

आहुर्यस्य स्वरूप क्षणमुखमखिल सूरय कालमेत

ध्वान्तस्यैकान्तमन्त यदपि च परम सर्वधाम्ना च धाम ।

चक्र तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधार

शश्वन्नो विश्ववन्द्य वितरतु विपुल शर्म घर्मांशुशोभम् ॥

अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्ते

रस्मान्विस्मेरनेत्रत्रिदशनुतिवच साधुकारै सुतार ।

सर्व सहर्तुमिच्छोररिकुलभुवन स्फारविष्फारनाद

सयत्कल्पान्तसिन्धौ शरसलिलघटावार्मुच कार्मुकस्य ॥

जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयन्ती
　युद्धेषूद्धूयमाना झटिति तटिदिवालक्ष्यते यस्य मूर्तिः ।
सोऽसिस्त्रासाकुलाक्षत्रिदशरिपुवपुः शोणितास्वादतृप्तो
　नित्यानन्दाय भूयान्मधुमथनमनोनन्दनो नन्दको नः ॥

कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता
　सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम् ।
राजन्ती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा
　कामं दीप्तांशुकान्ता प्रदिशतु दयितेवास्य कौमोदकी नः ॥

यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो
　यं संचिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति ।
चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
　वन्दे छन्दोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६ ॥

विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता
　सोऽनन्तः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः ।
पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता
　सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो या यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः ।
कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं
वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ॥

या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो
धत्ते या तत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् ।
धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं
विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गै-
र्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलया पांसवः पापपङ्कम् ॥

रेखा लेखादिवन्द्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः
स्निग्धाः सूक्ष्माः सुजाताः मृदुललिततरक्षौमसूत्रायमाणाः ।
दद्युर्नो मङ्गलानि भ्रमरभरजुषा कोमलेनाब्जजाया
कम्रेणाम्रेड्यमाना किसलयमृदुना पाणिना चक्रपाणेः ॥

यस्मादाक्रामतो द्या गरुडमणिशिलाकेतुदण्डायमाना
दाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता ।
भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तम्भशोभा दधौ न
पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥

आक्रामद्भ्या त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ
याभ्या वैरोचनीन्द्रौ युगपदपि विपत्सपदोरेकधाम ।
ताभ्या ताम्रोदराभ्या मुहुरहमजितस्याञ्चिताभ्यामुभाभ्या
प्राज्यैश्वर्यप्रदाभ्या प्रणतिमुपगत पादपङ्केरुहाभ्याम् ॥

येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजाना
साहस्री चापि सख्या प्रकटमभिहिता सर्ववेदेषु येषाम् ।
प्राप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो
विष्णोस्तेभ्यो महद्भ्य सततमपि नमोऽस्त्वङ्घ्रिपङ्केरुहेभ्य ॥

विष्णो पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या
राजीवस्येव रम्या हिमजलकणिकालकृताग्रा दलाली ।
अस्माक विस्मयार्हाण्यखिलजनमन प्रार्थनीया हि सेय
दद्यादाद्यानवद्या ततिरतिरुचिरा मङ्गलान्यङ्गुलीनाम् ॥

यस्या दृष्ट्वामलाया प्रतिकृतिममरा सभवन्त्यानमन्त
सेन्द्रा सान्द्रीकृतैश्वर्यास्स्वपरसुरकुलाशङ्कयातङ्कवन्त ।
सा सद्य सातिरेका सकलसुखकरीं सपद साधयेन्न
श्श्वच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥

पादाम्भोजन्मसेवासमवनतसुरव्रातभास्वत्किरीट-
प्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रित यद्विभाति ।
नम्राङ्गाना हरेर्नो हरिदुपलमहाकूर्मसौन्दर्यहारि-
च्छाय श्रेय प्रदायि प्रपदयुगमिद प्राप त्पापमन्तम् ॥

श्रीमत्यौ चारुवृत्ते करपरिमलनानन्दहृष्टे रमाया
सौन्दर्याढ्येन्द्रनीलोपलरचितमहादण्डयो कान्तिचोरे ।
सूरीन्द्रै स्तूयमाने सुरकुलसुखदे सूदितारातिसघे
जङ्घे नारायणीये मुहुरपि जयतामस्मदहो हरन्त्यौ ॥

सम्यक्साह्य विधातु सममिव सतत जङ्घयो खिन्नयोर्ये
भारीभूतोरुदण्डद्वयभरणकृतोत्तम्भभाव भजेते ।
चित्तादर्शं निधातु महितमिव सता ते समुद्गायमान
वृत्ताकारे विधत्ता हृदि मुदमजितस्यानिश जानुनी न ॥

देवो भीतिं विधातु सपदि विदधतौ कैटभाख्य मधु चा
प्यारोप्यारूढगर्वावधिजलधि ययोरादिदैत्यौ जघान ।
वृत्तावन्योन्यतुल्यौ चतुरमुपचय बिभ्रतावभ्रनीला
वूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥

पीतेन द्योतते यच्चतुरपरिहितेनाम्बरेणात्युदार
जाताल्ङ्कारयोग जलमिव जलधेर्बाडवाग्निप्रभाभि ।
एतत्पातित्यदाम्नो जघनमतिघनादेनसो माननीय
सातत्येनैव चेतोविषयमवतरत्पातु पीताम्बरस्य ॥ २१ ॥

यस्या दाम्ना त्रिधाम्नो जघनकलितया भ्राजतेऽङ्ग यथाब्धे-
र्मध्यस्थो मन्दराद्रिभुजगपतिमहाभागसनद्धमध्य ।
काञ्ची सा काञ्चनाभा मणिवरकिरणैरुल्लसद्भि प्रदीप्ता
कल्या कल्याणदात्री मम मतिमनिश कम्ररूपा करोतु ॥

उन्नम्र कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रै
पूर्व गीर्वाणपूज्य कमलजमधुपस्यास्पद तत्पयोजम् ।
यस्मिन्नीलाश्मनीलैस्तरलरुचिजलै पूरिते केलिबुद्ध्या
नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहसश्चिराय ॥

पातालं यस्य नालं वलयमपि दिशां पत्रपङ्क्तीर्नगेन्द्रा-
न्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् ।
भूयाद्गायत्स्वयंभूमधुकरभवनं भूमयं कामदं नो
नालीकं नाभिपद्माकरभवमुरु तन्नागशय्यस्य शौरेः ॥

आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पै
कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च ।
अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे
तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥

कान्त्यम्भःपूरपूर्णे लसदसितवलीभङ्गभास्वत्तरङ्गे
गम्भीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे ।
क्रीडत्वानद्धहेमोदरनहनमहाबाडबाग्निप्रभाढ्ये
कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥

नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां
माला नीलेव यान्ती स्फुरति रुचिमती वक्त्रपद्मोन्मुखी या ।
रम्या सा रोमराजिर्महितरुचिकरी मध्यभागस्य विष्णो-
श्चित्तस्था मा विरंसीच्चिरतरमुचितां साधयन्ती श्रियं नः ॥

सस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्य
श्रीवत्सोल्लासि फुल्लप्रतिनववनमालाङ्कि राजद्भुजान्तम् ।
वक्ष श्रीवृक्षकान्त मधुकरनिकरश्यामल शार्ङ्गपाणे
ससाराध्वश्रमार्तैरुपवनमिव यत्सेवित तत्प्रपद्ये ॥ २८ ॥

कान्त वक्षो नितान्त विदधदिव गल कालिमा कालशत्रो
रिन्दोर्बिम्ब यथाङ्को मधुप इव तरोर्मञ्जरीं राजत य ।
श्रीमाश्रित्य विधेयादविरलमिलित कौस्तुभश्रीप्रतानै
श्रीवत्स श्रीपत स श्रिय इव दयितो वत्स उच्चै श्रिय न ॥

सभूयाम्भोधिमध्यात्सपदि सहजया य श्रिया सनिधत्ते
नीले नारायणोर स्थलगगनतले हारतारोपसेव्ये ।
आशा सर्वा प्रकाशा विदधदपिदधच्चात्मभासान्यतेजा
स्याश्चर्यस्याकरो नो द्युमणिरिव मणि कौस्तुभ सोऽस्तु भूत्यै ॥

या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना
साक साकम्पमसे वसति विदधती वासुभद्र सुभद्रम् ।
सार सारङ्गसघैर्मुखरितकुसुमा मेचकान्ता च कान्ता
माला मालालितास्मान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥

हारस्योरुप्रभाभि प्रतिनववनमालाशुभि प्राशुरूपै
श्रीभिश्चाप्यङ्गदाना कबलितरुचि यन्निष्कभाभिश्च भाति ।
बाहुल्येनैव बद्धाञ्जलिपुटमजितस्याभियाचामहे त
द्वन्धार्तिं बाधता नो बहुविहतिकरीं बन्धुर बाहुमूलम् ॥

विश्वत्राणैकदीक्षास्तदनुगुणगुणक्षत्रनिर्माणदक्षा
कर्तारो दुर्निरूपस्फुटगुणयशसा कर्मणामद्भुतानाम् ।
शार्ङ्गं बाण कृपाण फलकमरिगदे पद्मशङ्खौ सहस्र
बिभ्राणा शस्त्रजाल मम दधतु हरर्बाहवो मोहहानिम् ॥

कण्ठाकल्पोद्गतैर्य कनकमयलसत्कुण्डलोत्थैरुदारै
रुद्योतै कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति ।
कण्ठाश्लेषे रमाया करवलयपदैर्मुद्रिते भद्ररूपे
वैकुण्ठीयेऽत्र कण्ठे वसतु मम मति कुण्ठभाव विहाय ॥

पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभाग
काले काले च कम्बुप्रवरशशधरापूरणे य प्रवीण ।
वक्त्राकाशान्तरस्थस्तिरयति नितरा दन्ततारौघशोभा
श्रीभर्तुर्दन्तवासोद्युमणिरघतमोनाशनायास्त्वसौ न ॥

नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा या
वक्त्रेन्दोरन्तराले कृतवसतिरिवाभाति नक्षत्रराजिः ।
लक्ष्मीकान्तस्य कान्ताकृतिरतिविलसन्मुग्धमुक्तावलिश्री-
र्दन्तालीं सततं सा नतिनुतिनिरतानक्षतान्रक्षतान्नः ॥

ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां
शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्नं
स्यास्येन्दोरास्रवन्ती वरवचनसुधाह्लादयेन्मानसं नः ॥

कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुण्डलप्रोतदीप्य-
न्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत् ।
प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारे-
र्गाढामागामिनीं नः शमयतु विपदं गण्डयोर्मण्डलं तत् ॥

वक्त्राम्भोजे लसन्तं मुहुरधरमणिं पक्वबिम्बाभिरामं
दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुण्डदण्डायते यः ।
घोणः शोणीकृतात्मा श्रवणयुगलसत्कुण्डलोस्रैर्मुरारेः
प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्यात् ॥

दिक्कालौ वेदयन्तौ जगति मुहुरिमौ सञ्चरन्तौ रवीन्दू
त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनीन्द्राः ।
अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे
पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥४०॥

पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं
येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः ।
नृत्यल्लालाटरङ्गे रजनिकरतनोरर्धखण्डावदाते
कालव्यालद्वयं वा विलसति समया वालिकामातरं नः ॥

लक्ष्माकारालकालिस्फुरदलिकशशाङ्कार्धसंदर्शमील-
न्नेत्राम्भोजप्रबोधोत्सुकनिभृततरालीनभृङ्गच्छटाभम् ।
लक्ष्मीनाथस्य लक्ष्यीकृतविबुधगणापाङ्गबाणासनार्ध-
च्छाये नो भूरिभूतिप्रसवकुशलते भ्रूलते पालयेताम् ॥

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-
प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकैशानलिङ्गम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्या-
दुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥

पीठीभूतालकान्त कृतमकुटमहादेवलिङ्गप्रतिष्ठे
लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय ।
प्रोद्घाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्ती स्फुटाङ्ग
पट्वीय भावनाख्या चटुलमतिनटी नाटिका नाटयेन्न ॥

मालालीवालिधाम्न कुवलयकलिता श्रीपते कुन्तलाली
कालिन्द्यारुह्य मूर्ध्नो गलति हरशिर स्वर्धुनीस्पर्धया नु ।
राहुर्वा याति वक्त्र सकलशशिकलाभ्रान्तिलोलान्तरात्मा
लोकैरालोक्यते या प्रदिशतु सतत साखिल मङ्गल न ॥

सुप्ताकारा प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा
व्याप्तव्योमान्तरालास्तरलमणिरुचा रञ्जिता स्पष्टभास ।
देहच्छायोद्गमाभा रिपुवपुरगरुप्लोषरोषाग्निधूम्या
केशा केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥

यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिष्प्रतान-
स्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या ।
कुर्वत्पारेपयोधि ज्वलदकृशशिखाभास्वदौर्वाग्निशङ्का
शश्वन्न शर्म दिश्यात्कलिकलुषतम पाटन तत्किरीटम् ॥

भ्रान्त्वा भ्रान्त्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेका
गन्तु नान्त समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।
उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपर निममे तत्सदृक्ष
देहाम्भोधि स देयान्निरवधिरमृत दैत्यविद्वेषिणो न ॥

मत्स्य कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्य
काकुत्स्थ कसघाती मनसिजविजयी यश्च कल्किर्भविष्यन् ।
विष्णोरशावतारा भुवनहितकरा धर्मसस्थापनाथा
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥४९॥

यस्माद्वाचो निवृत्ता सममपि मनसा लक्षणामीक्षमाणा
स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादा ।
नित्यानन्द स्वसविन्निरवधिविमलस्वान्तसक्रान्तबिम्ब
च्छायापत्त्यापि नित्य सुखयति यमिनो यत्तदव्यान्महो न ॥

आपादादा च शीर्षाद्वपुरिदमनघ वैष्णव य स्वचित्ते
धत्ते नित्य निरस्ताखिलकलिकलुष सततान्त प्रमोदम् ।
जुह्वज्जिह्वाकृशानौ हरिचरितहवि स्तोत्रमन्त्रानुपाठै
स्तत्पादाम्भोरुहाभ्या सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥

मोदात्पादादिकेशस्तुतिमितिरचिता कीर्तयित्वा त्रिधाम्न
पादाब्जद्वन्द्वसेवासमयनतमतिर्मस्तकेनानमेद्य ।
उन्मुक्त्यैवात्मनैनोनिचयकवचक पञ्चतामेत्य भानो-
र्बिम्बान्तर्गोचर स प्रविशति परमानन्दमात्मस्वरूपम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
विष्णुपादादिकेशान्तस्तोत्र
सपूर्णम् ॥

॥ श्री ॥

# ॥ पाण्डुरङ्गाष्टकम् ॥

---

महायोगपीठे तटे भीमरथ्या
  वरं पुण्डरीकाय दातुं मुनीन्द्रैः ।
समागत्य तिष्ठन्तमानन्दकन्दं
  परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ १ ॥

तटिद्वाससं नीलमेघावभासं
  रमामन्दिरं सुन्दरं चित्प्रकाशम् ।
वरं त्विष्टकायां समन्यस्तपादं
  परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ २ ॥

प्रमाणं भवाब्धेरिदं मामकानां
  नितम्बः कराभ्यां धृतो येन तस्मात् ।
विधातुर्वसत्यै धृतो नाभिकोशः
  परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३ ॥

स्फुरत्कौस्तुभालकृत कण्ठदेशे
　श्रिया जुष्टकेयूरक श्रीनिवासम् ।
शिव शन्तमीड्य वर लोकपाल
　परब्रह्मलिङ्ग भजे पाण्डुरङ्गम् ॥ ४ ॥

शरच्चन्द्रबिम्बानन चारुहास
　लसत्कुण्डलाक्रान्तगण्डस्थलान्तम् ।
जपारागबिम्बाधर कञ्जनेत्र
　परब्रह्मलिङ्ग भजे पाण्डुरङ्गम् ॥ ५ ॥

किरीटोज्ज्वलत्सर्वदिक्प्रान्तभाग
　सुरैरर्चित दिव्यरत्नैरनर्घै ।
त्रिभङ्गाकृतिं बर्हमाल्यावतस
　परब्रह्मलिङ्ग भजे पाण्डुरङ्गम् ॥ ६ ॥

विभु वेणुनाद चरन्त दुरन्त
　स्वय लीलया गोपवेष दधानम् ।
गवा बृन्दकानन्दद चारुहास
　परब्रह्मलिङ्ग भजे पाण्डुरङ्गम् ॥ ७ ॥

अज रुक्मिणीप्राणसजीवन त
पर धाम कैवल्यमेक तुरीयम् ।
प्रसन्न प्रपन्नार्तिह देवदेव
परब्रह्मलिङ्ग भजे पाण्डुरङ्गम् ॥ ८ ॥

स्तव पाण्डुरङ्गस्य वै पुण्यद ये
पठन्त्येकचित्तेन भक्त्या च नित्यम् ।
भवाम्भोनिधि ते वितीर्त्वान्तकाले
हरेरालय शाश्वत प्राप्नुवन्ति ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
पाण्डुरङ्गाष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ अच्युताष्टकम् ॥

---

अच्युत केशव रामनारायण
  कृष्णदामोदर वासुदेव हरिम् ।
श्रीधर माधव गोपिकावल्लभ
  जानकीनायक रामचन्द्र भजे ॥ १ ॥

अच्युत केशव सत्यभामाधव
  माधव श्रीधर राधिकाराधितम ।
इन्दिरामन्दिर चेतसा सुन्दर
  देवकीनन्दन नन्दज सदधे ॥ २ ॥

विष्णवे जिष्णवे शङ्खिने चक्रिणे
  रुक्मणीरागिणे जानकीजानये ।
वल्लवीवल्लभायार्चितायात्मने
  कसविध्वसिने वशिने ते नम ॥ ३ ॥

कृष्ण गोविन्द हे राम नारायण
श्रीपते वासुदेवाजित श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज
द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥

राक्षसक्षोभित सीतया शोभितो
दण्डकारण्यभूपुण्यताकारणम् ।
लक्ष्मणेनान्वितो वानरै सेवितो
ऽगस्त्यसपूजितो राघव पातु माम् ॥ ५ ॥

धेनुकारिष्टहानिष्टकृद्द्वेषिणा
केशिहा कंसहृद्वंशिकावादक ।
पूतनाकापक सूरजाखेलनो
बालगोपालक पातु मा सर्वदा ॥ ६ ॥

विद्युदुद्योतवत्प्रस्फुरद्वाससं
प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थल
लोहिताङ्घ्रिद्वय वारिजाक्ष भजे ॥ ७ ॥

कुञ्चितै कुन्तलैर्भ्राजमानानन
   रत्नमौलिं लसत्कुण्डल गण्डयो ।
हारकेयूरक कङ्कणप्रोज्ज्वल
   किंकिणीमञ्जुल श्यामल त भजे ॥ ८ ॥

अच्युतस्याष्टक य पठेदिष्टद
   प्रेमत प्रत्यह पूरुष सस्पृहम् ।
वृत्तत सुन्दर वेद्यविश्वभर
   तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥

इति श्रीमत्परमहसपरिव्रजकाचायस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
अच्युताष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ कृष्णाष्टकम् ॥

श्रियाश्लिष्टो विष्णु स्थिरचरगुरुर्वेदविषयो
धिया साक्षी शुद्धो हरिरसुरहन्ताब्जनयन ।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचि
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषय ॥१॥

यत सर्व जात वियदनिलमुख्य जगदिद
स्थितौ नि शेष योऽवति निजसुखांशेन मधुहा ।
लये सर्व स्वस्मिन्हरति कलया यस्तु स विभु
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषय ॥२॥

असूनायम्यादौ यमनियममुख्यै सुकरणै
निरुद्धयेद चित्त हृदि विलयमानीय सकलम् ।
यमीड्य पश्यन्ति प्रवरमतयो मायिनमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषय ॥

पृथिव्या तिष्ठन्यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥

महेन्द्रादिर्देवो जयति दितिजान्यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते ।
बलारातेर्गर्वं परिहरति योऽसौ विजयिनः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥

विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता ।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥६॥

नरातङ्कोट्टङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः ।
स्वयंभूर्भूतानां जनक उचिताचारसुखदः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥७॥

यदा धर्मग्लानिर्भवति जगता क्षोभकरणी
तदा लोकस्वामी प्रकटितवपु सेतुधृदज ।
सता धाता स्वच्छो निगमगणगीतो व्रजपति
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषय ॥८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवत कृतौ
कृष्णाष्टक सपूर्णम् ॥



॥ श्री ॥

# ॥ हरिस्तुतिः ॥

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं
यस्मिन्नेतत्ससृतिचक्र भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्ससृतिचक्र
त ससारध्वान्तविनाश हरिमीडे ॥ १ ॥

यस्यैकाशादित्थमशेष जगदेत-
त्प्रादुर्भूत येन पिनद्ध पुनरित्थम् ।
येन व्याप्त येन विबुद्ध सुखदु खै
स्त ससारध्वान्तविनाश हरिमीडे ॥ २ ॥

सर्वज्ञो यो यश्च हि सर्व सकलो यो
यश्चानन्दोऽनन्तगुणो यो गुणधामा ।
यश्चाव्यक्तो व्यस्तसमस्त सदसद्य
स्त ससारध्वान्तविनाश हरिमीडे ॥ ३ ॥

यस्मादन्यन्नास्त्यपि नैव परमार्थं
दृश्यादन्यो निर्विषयज्ञानमयत्वात् ।
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञ
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ ४ ॥

आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा
वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना ।
भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ५ ॥

प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा
नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य ।
क्षीणे चित्ते भादृशिरस्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ६ ॥

यं ब्रह्माख्यं देवमनन्यं परिपूर्णं
हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् ।
ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ७ ॥

मात्रातीत स्वात्मविकासात्मविबोध
  ज्ञेयातीत ज्ञानमय हृद्युपलभ्य ।
भावग्राह्यानन्दमनन्य च विदुर्य
  त ससारध्वान्तविनाश हरिमीडे ॥ ८ ॥

यद्यद्वेद्य वस्तुसतत्त्व विषयाख्य
  तत्तद्ब्रह्मैवेति विदित्वा तदह च ।
ध्यायन्त्येव य सनकाद्या मुनयोऽज
  त ससारध्वान्तविनाश हरिमीडे ॥ ९ ॥

यद्यद्वेद्य तत्तदह नेति विहाय
  स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य ।
तस्मिन्नस्मीत्यात्मविदो य विदुरीश
  त ससारध्वान्तविनाश हरिमीडे ॥ १० ॥

हित्वाहित्वा दृश्यमशेष सविकल्प
  मत्वा शिष्ट भादृशिमात्र गगनाभम् ।
त्यक्त्वा देह य प्रविशन्त्यच्युतभक्ता-
  स्त ससारध्वान्तविनाश हरिमीडे ॥ ११ ॥

सर्वत्रास्त सर्वशरीरी न च सर्वे
सर्वं वेत्त्येवेह न य वेत्ति च सव ।
सर्वत्रान्तर्यामितयेत्थ यमयन्य-
स्त ससारध्वान्तविनाश हरिमीडे ॥ १२ ॥

सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेत-
दृष्ट्वात्मान चैवमज सर्वजनेषु ।
सर्वात्मैकोऽस्मीति विदुर्य जनहृत्स्थ
त ससारध्वान्तविनाश हरिमीडे ॥ १३ ॥

सर्वत्रैक पश्यति जिघ्रत्यथ भुङ्क्ते
स्प्रष्टा श्रोता बुध्यति चेत्याहुरिम यम् ।
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये
त ससारध्वान्तविनाश हरिमीडे ॥ १४ ॥

पश्यञ्छृण्वन्नत्र विजानन्रसयन्स
जिघ्रद्बिभ्रद्देहमिम जीवतयेत्थम् ।
इत्यात्मान य विदुरीश विषयज्ञ
त ससारध्वान्तविनाश हरिमीडे ॥ १५ ॥

जाग्रद्दृष्ट्वा स्थूलपदार्थानथ माया
　दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम ।
इत्यात्मान वीक्ष्य मुदास्त च तुरीये
　त ममारध्वान्तविनाश हरिमीडे ॥ १६ ॥

पश्यञ्शुद्धोऽप्यक्षर एका गुणभेदा
　न्नानाकारान्स्फाटिकवद्भाति विचित्र ।
भिन्नश्छिन्नश्चायमज कर्मफलैर्य
　स्त ससारध्वान्तविनाश हरिमीडे ॥ १७ ॥

ब्रह्मा विष्णू रुद्रहुताशौ रविचन्द्रा
　विन्द्रो वायुर्यज्ञ इतीत्थ परिकल्प्य ।
एक सन्त य बहुधाहुर्मतिभेदा
　त्त ससारध्वान्तविनाश हरिमीडे ॥ १८ ॥

सत्य ज्ञान शुद्धमनन्त व्यतिरिक्त
　शान्त गूढ निष्कलमानन्दमनन्यम् ।
इत्याहादौ य वरुणोऽसौ भृगवेऽज
　त ससारध्वान्तविनाश हरिमीडे ॥ १९ ॥

कोशानेतान्पञ्च रसादीनतिहाय
ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थम् ।
पित्रा शिष्टो वेद भृगुर्यं यजुरन्ते
तं संसारध्वान्तविनाशं हरिमीडे ॥ २० ॥

येनाविष्टो यस्य च शक्त्या यदधीनः
क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः ।
कर्ता भोक्तात्मात्र हि यच्छक्त्यधिरूढ-
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ २१ ॥

सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं
व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम् ।
सच्च त्यच्चाभूत्परमात्मा स य एक-
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ २२ ॥

वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः
शास्त्रैश्चान्यैः सात्त्वततन्त्रैश्च यमीशम् ।
दृष्ट्वाथान्तश्चेतसि बुद्ध्वा विविशुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २३ ॥

श्रद्धाभक्तिध्यानशमाद्यैर्यतमानै-
र्ज्ञातु शक्यो देव इहैवाशु य ईश ।
दुर्विज्ञेयो जन्मशतैश्चापि विना तै-
स्त संसारध्वान्तविनाश हरिमीडे ॥ २४ ॥

यस्यातर्क्य स्वात्मविभूत परमार्थ
सर्वं खल्वित्यत्र निरुक्त श्रुतिविद्भि ।
तज्जातित्वादब्धितरङ्गाभमभिन्न
त संसारध्वान्तविनाश हरिमीडे ॥ २५ ॥

दृष्ट्वा गीतास्वक्षरतत्त्व विधिनाज
भक्त्या गुर्व्या लभ्य हृदिस्थ दृशिमात्रम् ।
ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्य
त संसारध्वान्तविनाश हरिमीडे ॥ २६ ॥

क्षेत्रज्ञत्व प्राप्य विभु पञ्चमुखैर्यो
भुङ्क्तेऽजस्र भोग्यपदार्थान्प्रकृतिस्थ ।
क्षेत्रे क्षेत्रेऽप्स्विन्दुवदेको बहुधास्ते
त संसारध्वान्तविनाश हरिमीडे ॥ २७ ॥

युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्य
क्षेत्रक्षेत्रज्ञान्तरविद्भि पुरुषार्थ ।
योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २८ ॥

एकाकृत्यानेकशरीरस्थमिमं ज्ञं
यं विज्ञायेहैव स एवाशु भवन्ति ।
यस्मिँल्लीना नेह पुनर्जन्म लभन्ते
तं संसारध्वान्तविनाशं हरिमीडे ॥ २९ ॥

द्वन्द्वैकत्वं यच्च मधुब्राह्मणवाक्यै
कृत्वा शक्रोपासनमासाद्य विभूत्या ।
योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३० ॥

योऽयं देहे चेष्टयितान्तःकरणस्थ
सूर्ये चासौ तापयिता सोऽस्म्यहमेव ।
इत्यात्मैक्योपासनया यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३१ ॥

विज्ञानांशो यस्य सत शक्त्यधिरूढा
बुद्धिर्बुध्यत्यत्र बाहबोध्यपदार्थान ।
नैवान्त स्थ बुध्यति य बोधयितार
त ससारध्वान्तविनाश हरिमीडे ॥ ३२ ॥

कोऽय देह देव इतीत्थ सुविचार्ये
ज्ञाता श्रोता मन्तयिता चैष हि देव ।
इत्यालोच्य ज्ञाश इहास्मीति विदुर्य
त ससारध्वान्तविनाश हरिमीडे ॥ ३३ ॥

को ह्येवान्यादात्मनि न स्यादयमेष
ह्येवानन्द प्राणिति चापानिति चेति ।
इत्यस्तित्व वक्त्युपपत्त्या श्रुतिरेषा
त ससारध्वान्तविनाश हरिमीडे ॥ ३४ ॥

प्राणो वाह वाक्छ्रवणादीनि मनो वा
बुद्धिर्वाह व्यस्त उताहोऽपि समस्त ।
इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्य
त ससारध्वान्तविनाश हरिमीडे ॥ ३५ ॥

नाह प्राणो नैव शरीर न मनोऽह
  नाह बुद्धिर्नाहमहकारधियौ च ।
योऽत्र ज्ञाश सोऽस्म्यहमेवेति विदुर्य
  त ससारध्वान्तविनाश हरिमीडे ॥ १६ ॥

सत्तामात्र केवलविज्ञानमज स-
  त्सूक्ष्म नित्य तत्त्वमसीत्यात्मसुताय ।
साम्नामन्ते प्राह पिता य विभुमाद्य
  त ससारध्वान्तविनाश हरिमीडे ॥ १७ ॥

मूर्तामूर्ते पूर्वमपोह्याथ समाधौ
  दृश्य सर्व नेति च नेतीति विहाय ।
चैतन्याशे स्वात्मनि सन्त च विदुर्य
  त ससारध्वान्तविनाश हरिमीडे ॥ १८ ॥

ओत प्रोत यत्र च सर्व गगनान्त
  योऽस्थूलानण्वादिषु सिद्धोऽक्षरसज्ञ ।
ज्ञातातोऽन्यो नेत्युपलभ्यो न च वेद्य
  स्त ससारध्वान्तविनाश हरिमीडे ॥ १९ ॥

तावत्सर्वं सत्यमिवाभाति यदेत-
यावत्सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः ।
दृष्टे यस्मिन्सर्वमसत्यं भवतीदं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४० ॥

रागामुक्तं लोहयुतं हेम यथाग्नौ
योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ ।
दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४१ ॥

यं विज्ञानज्योतिषमाद्यं सुविभान्तं
हृद्यर्केन्द्वग्न्योकसमीड्यं तटिदाभम् ।
भक्त्याराध्येहैव विशन्त्यात्मनि सन्तं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४२ ॥

पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो
भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम् ।
इत्यात्मानं स्वात्मनि संहृत्य सदैक-
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
हरिस्तुतिः संपूर्णा ॥

॥ श्री ॥

# ॥ गोविन्दाष्टकम् ॥

❀

सत्य ज्ञानमनन्त नित्यमनाकाश परमाकाश
गोष्ठप्राङ्गणरिङ्खणलोलमनायास परमायासम् ।
मायाकल्पितनानाकारमनाकार भुवनाकार
क्ष्मामानाथमनाथ प्रणमत गोविन्द परमानन्दम् ॥ १ ॥

मृत्स्नामत्सीहेति यशोदाताडनशैशवसन्त्रास
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।
लोकत्रयपुरमूलस्तम्भ लोकालोकमनालोक
लोकेश परमेश प्रणमत गोविन्द परमानन्दम् ॥ २ ॥

त्रैविष्टपरिपुवीरघ्न क्षितिभारघ्न भवरोगघ्न
कैवल्य नवनीताहारमनाहार भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभास
शैव केवलशान्त प्रणमत गोविन्द परमानन्दम् ॥ ३ ॥

गोपाल प्रभुलीलाविग्रहगोपाल कुलगोपाल
गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् ।
गोभिर्निगदितगोविन्दस्फुटनामान बहुनामान
गोधीगोचरदूर प्रणमत गोविन्द परमानन्दम् ॥ ४ ॥

गोपीमण्डलगोष्ठीभेद भेदावस्थमभेदाभ
शश्वद्गोखुरनिर्धूतोद्गतधूलीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्य चिन्तितसद्भाव
चिन्तामणिमहिमान प्रणमत गोविन्द परमानन्दम् ॥

स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढ
व्यादित्सन्तीरथ दिग्वस्त्रा दातुमुपाकर्षन्त ता ।
निर्धूतद्वयशोकविमोह बुद्ध बुद्धेरन्त स्थ
सत्तामात्रशरीर प्रणमत गोविन्द परमानन्दम् ॥ ६ ॥

कान्त कारणकारणमादिमनादिं कालघनाभास
कालिन्दीगतकालियशिरसि सुनृत्यन्त मुहुरत्यन्तम ।
काल कालकलातीत कलिताशेष कलिदोषघ्न
कालत्रयगतिहेतु प्रणमत गोविन्द परमानन्दम् ॥ ७ ॥

वृन्दावनभुवि वृन्दारकगणवृन्दाराधितवन्द्याया

कुन्दाभामलमन्दस्मेरसुधानन्द सुमहानन्दम ।

वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्व

नन्द्याशेषगुणाब्धि प्रणमन गोविन्द परमानन्दम् ॥८॥

गोविन्दाष्टकमेतदधीत गोविन्दार्पितचेता या

गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेति ।

गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघा

गोविन्द परमानन्दामृतमन्तस्थ स तमभ्येति ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य

श्रीगोवि दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छकरभगवत कृतौ

गाविन्दाष्टक सपूर्णम ॥

॥ श्रीः ॥

# ॥ भगवन्मानसपूजा ॥

---*---

हृदम्भोजे कृष्ण सजलजलदश्यामलतनु

सरोजाक्ष स्रग्वी मकुटकटकाद्याभरणवान् ।

शरद्राकानाथप्रतिमवदन श्रीमुरलिका

वहन्ध्येयो गोपीगणपरिवृत कुङ्कुमचित ॥ १ ॥

पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगव

न्मणिव्रातभ्राजत्कनकवरपीठ भज हरे ।

सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलै

र्गृहाणेद दूर्वाफलजलवदर्घ्यं मुररिपो ॥ २ ॥

त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिर

भजस्वेम पञ्चामृतफलरसाप्लावमघहन् ।

द्युनद्या कालिन्द्या अपि कनककुम्भस्थितमिद

जल तेन स्नान कुरु कुरु कुरुष्वाचमनकम् ॥ ३ ॥

तटिद्वर्णे वस्त्रं भज विजयकान्ताधिहरण
   प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले ।
ललाटे पाटीरं मृगमदयुतं धारय हरे
   गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥

दशाङ्गं धूपं सद्वरद चरणाग्रेऽर्पितमदं
   मुखं दीपेनेन्दुप्रभविरजसं त्वं कलय ।
इमौ पाणी वाणीपतिनुत सकर्पूररजसा
   विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५ ॥

सदा तृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं
   सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् ।
यशोदासूनो तत्परमदययाशान सखिभिः
   प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥

सचूर्णं ताम्बूलं मुखशुचिकरं भक्षय हरे
   फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम् ।
सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं
   प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ७ ॥

विजातीयै पुष्पैरतिसुरभिभिर्बिल्वतुलसी

युतैश्चेम पुष्पाञ्जलिमजित त मूर्ध्नि निदधे ।

तव प्रादक्षिण्यक्रमणमघविध्वसि रचित

चतुर्वार विष्णो जनिपथगतश्रान्तविदुषा ॥ ८ ॥

नमस्कारोऽष्टाङ्ग सकलदुरितध्वसनपटु

कृत नृत्य गीत स्तुतिरपि रमाकान्त त इयम् ।

तव प्रीत्यै भूयादहमपि च दासस्तव विभो

कृत छिद्र पूर्ण कुरु कुरु नमस्तेऽस्तु भगवन ॥ ९ ॥

सदा सेव्य कृष्ण सजलघननील करतले

दधाना दध्यन्न तदनु नवनीत मुरलिकाम् ।

कदाचित्कान्ताना कुचकलशपत्रालिरचना

समासक्त स्निग्धै सह शिशुविहार विरचयन् ॥१०॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छकरभगवत कृतौ

**भगवन्मानसपूजा सपूर्णा ॥**

॥ श्री ॥

# ॥ मोहमुद्गरः ॥

भज गोविन्द भज गोविन्द

भज गोविन्द मूढमते ।

सम्प्राप्ते सन्निहिते काले

न हि न हि रक्षति डुकृञ्करणे ॥ १ ॥

मूढ जहीहि धनागमतृष्णां

कुरु सद्बुद्धिं मनसि वितृष्णाम् ।

यल्लभसे निजकर्मोपात्तं

वित्तं तेन विनोदय चित्तम् ॥ २ ॥

नारीस्तनभरनाभीदेशं

दृष्ट्वा मा गा मोहावेशम् ।

एतन्मांसवसादिविकारं

मनसि विचिन्तय वारं वारम् ॥ ३ ॥

नलिनीदलगतजलमतितरल
    तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याध्यभिमानग्रस्त
    लोक शोकहत च समस्तम् ॥ ४ ॥

यावद्वित्तोपार्जनसक्त
    स्तावन्निजपरिवारो रक्त ।
पश्चाज्जीवति जर्जरदेह
    वार्त्तां कोऽपि न पृच्छति गेहे ॥ ५ ॥

यावत्पवनो निवसति देहे
    तावत्पृच्छति कुशल गेहे ।
गतवति वायौ देहापाये
    भार्या बिभ्यति तस्मिन्काये ॥ ६ ॥

बालस्तावत्क्रीडासक्त
    स्तरुणस्तावत्तरुणीसक्त ।
वृद्धस्तावच्चिन्तासक्त
    परे ब्रह्मणि कोऽपि न सक्त ॥ ७ ॥

का ते कान्ता कस्त पुत्र
  ससारोऽयमतीव विचित्र ।
कस्य त्व क कुत आयात
  स्तत्त्व चिन्तय यदिद भ्रान्त ॥ ८ ॥

सत्सङ्गत्वे नि सङ्गत्व
  नि सङ्गत्व निर्मोहत्वम् ।
निर्मोहत्व निश्चलितत्व
  निश्चलितत्व जीव मुक्ति ॥ ९ ॥

वयसि गते क कामविकार
  शुष्के नीरे क कासार ।
क्षीणे वित्ते क परिवारो
  ज्ञाते तत्त्वे क ससार ॥ १० ॥

मा कुरु धनजनयौवनगर्व
  हरति निमेषात्काल सर्वम् ।
मायामयमिदमखिल हित्वा
  ब्रह्मपद त्व प्रविश विदित्वा ॥ ११ ॥

दिनयामिन्यौ साय प्रात

शिशिरवसन्तौ पुनरायात ।

काल क्रीडति गच्छत्यायु

स्तदपि न मुञ्चत्याशावायु ॥ १२ ॥

का ते कान्ताधनगतचिन्ता

वातुल किं तव नास्ति नियन्ता ।

त्रिजगति सज्जनसगतिरेका

भवति भवार्णवतरणे नौका ॥ १३ ॥

जटिली मुण्डी लुञ्चितकेश

काषायाम्बरबहुकृतवेष ।

पश्यन्नपि च न पश्यति मूढो

ह्युदरनिमित्त बहुकृतवेष ॥ १४ ॥

अङ्ग गलित पलित मुण्ड

दशनविहीन जात तुण्डम् ।

वृद्धो याति गृहीत्वा दण्ड

तदपि न मुञ्चत्याशापिण्डम् ॥ १५ ॥

अग्रे वह्निः पृष्ठे भानू

रात्रौ चुबुकसमर्पितजानु ।

करतलभिक्षस्तरुतलवास

स्तदपि न मुञ्चत्याशापाश ॥ १६ ॥

कुरुत गङ्गासागरगमन

व्रतपरिपालनमथवा दानम् ।

ज्ञानविहीन सर्वमतेन

मुक्तिं न भजति जन्मशतेन ॥ १७ ॥

सुरमन्दिरतरुमूलनिवास

शय्या भूतलमजिन वास ।

सर्वपरिग्रहभोगत्याग

कस्य सुख न करोति विराग ॥ १८ ॥

योगरतो वा भोगरतो वा

सगरतो वा सगविहीन ।

यस्य ब्रह्मणि रमते चित्त

नन्दति नन्दति नन्दत्येव ॥ १९ ॥

भगवद्गीता किंचिदधीता
गङ्गाजललवकणिका पीता ।
सकृदपि येन मुरारिसमर्चा
क्रियते तस्य यमेन न चर्चा ॥ २० ॥

पुनरपि जनन पुनरपि मरण
पुनरपि जननीजठरे शयनम् ।
इह ससारे बहुदुस्तारे
कृपयापारे पाहि मुरारे ॥ २१ ॥

रथ्याकर्पटविरचितकन्थ
पुण्यापुण्यविवर्जितपन्थ ।
योगी योगनियोजितचित्तो
रमते बालोन्मत्तवदेव ॥ २२ ॥

कस्त्व कोऽह कुत आयात
का मे जननी को मे तात ।
इति परिभावय सर्वमसार
विश्व त्यक्त्वा स्वप्नविचारम् ॥ २३ ॥

त्वयि मयि चान्यत्रैको विष्णु
र्व्यर्थं कुप्यसि मय्यसहिष्णु ।
सर्वस्मिन्नपि पश्यात्मानं
सर्वत्रोत्सृज भेदाज्ञानम् ॥ २४ ॥

शत्रौ मित्रे पुत्रे बन्धौ
मा कुरु यत्नं विग्रहसन्धौ ।
भव समचित्तः सर्वत्र त्वं
वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥ २५ ॥

कामं क्रोधं लोभं मोहं
त्यक्त्वात्मानं भावय कोऽहम् ।
आत्मज्ञानविहीना मूढा
स्ते पच्यन्ते नरकनिगूढाः ॥ २६ ॥

गेयं गीतानामसहस्रं
ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसङ्गे चित्तं
देयं दीनजनाय च वित्तम् ॥ २७ ॥

सुखत क्रियते रामाभोग
पश्चाद्धन्त शरीरे रोग ।
यद्यपि लोके मरण शरण
तदपि न मुञ्चति पापाचरणम् ॥ २८ ॥

अर्थमनर्थं भावय नित्य
नास्ति तत सुखलेश सत्यम् ।
पुत्रादपि धनभाजा भीति
सर्वत्रैषा विहिता रीति ॥ २९ ॥

प्राणायाम प्रत्याहार
नित्यानित्यविवेकविचारम् ।
जाप्यसमेतसमाधिविधान
कुर्ववधान महदवधानम् ॥ ३० ॥

गुरुचरणाम्बुजनिर्भरभक्त
ससारादचिराद्भव मुक्त ।
सेन्द्रियमानसनियमादेव
द्रक्ष्यसि निजहृदयस्थ देवम् ॥ ३१ ॥

इति मोहमुद्गर सपूर्ण ॥

॥ श्री ॥

# ॥ कनकधारास्तोत्रम् ॥

अङ्गं हरे पुलकभूषणमाश्रयन्ती
    भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
    माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ १ ॥

मुग्धा मुहुर्विदधती वदने मुरारेः
    प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या
    सा मे श्रियं दिशतु सागरसंभवायाः ॥ २ ॥

विश्वामरेन्द्रपदविभ्रमदानदक्ष
    मानन्दहेतुरधिकं मुरविद्विषोऽपि ।
ईषन्निषीदतु मयि क्षणमीक्षणार्द्ध
    मिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ३ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्द
मानन्दकन्दमनिमेषमनङ्गतन्त्रम् ।
आकेकरस्थितकनीनिकपक्ष्मनेत्र
भूत्यै भवेन्मम भुजगशयाङ्गनाया ॥ ४ ॥

बाह्वन्तरे मधुजित श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति ।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयाया ॥ ५ ॥

कालाम्बुदालिललितोरसि कैटभार-
र्धाराधरे स्फुरति यत्तटिदङ्गनेव ।
मातु समस्तजगता महनीयमूर्ति
र्भद्राणि मे दिशतु भार्गवनन्दनाया ॥ ६ ॥

प्राप्त पद प्रथमत खलु यत्प्रभावा-
न्माङ्गल्यभाजि मधुमाथिनि मन्मथेन ।
मय्यापतेत्तदिह मन्थरमीक्षणार्धं
मन्दालस च मकरालयकन्यकाया ॥ ७ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारा

मस्मिन्न किंचन विहगशिशौ विषण्णे ।

दुष्कर्मघर्ममपनीय चिराय दूरं

नारायणप्रणयिनीनयनाम्बुवाहः ॥ ८ ॥

इष्टाविशिष्टमतयोऽपि यया दयार्द्र-

दृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते ।

दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां

पुष्टिं कृषीष्ट मम पुष्करविष्टराया ॥ ९ ॥

गीर्देवतेति गरुडध्वजसुन्दरीति

शाकंभरीति शशिशेखरवल्लभेति ।

सृष्टिस्थितिप्रलयकेलिषु संस्थितायै

तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै

रत्यै नमोऽस्तु रमणीयगुणार्णवायै ।

शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै

पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥

नमोऽस्तु नालीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूम्यै ।
नमोऽस्तु सोमामृतसोदरायै
नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानविभवानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु मान्ये ॥ १३ ॥

यत्कटाक्षसमुपासनाविधि
सेवकस्य सकलार्थसम्पदः ।
सन्तनोति वचनाङ्गमानसैः
त्वां मुरारिहृदयेश्वरीं भजे ॥ १४ ॥

सरसिजनिलये सरोजहस्ते
धवलतमांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १५ ॥

दिग्घस्तिभि कनककुम्भमुखावसृष्ट
स्वर्वाहिनीविमलचारुजलप्लुताङ्गीम् ।
प्रातर्नमामि जगता जननीमशष
लोकाधिनाथगृहिणीममृताब्धिपुत्रीम् ॥ १६ ॥

कमल कमलाक्षवल्लभ त्व
करुणापूरतरङ्गितैरपाङ्गै ।
अवलोकय मामकिंचनाना
प्रथम पात्रमकृत्रिम दयाया ॥ १७ ॥

स्तुवन्ति ये स्तुतिभिरमीभिरन्वह
त्रयीमयीं त्रिभुवनमातर रमाम् ।
गुणाधिका गुरुतरभाग्यभाजिनो
भवन्ति त भुवि बुधभाविताशया ॥ १८ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोवि दभग-
वत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ
कनकधारास्तोत्र सपूर्णम् ॥

॥ श्री ॥

# ॥ अन्नपूर्णाष्टकम् ॥

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
　　निर्धूताखिलदोषपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालयाचलवशपावनकरी काशीपुराधीश्वरी
　　भिक्षा दहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १ ॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
　　मुक्ताहारविडम्बमानविलमद्वक्षोजकुम्भान्तरी ।
काश्मीरागरुवासिताङ्गरुचिर काशीपुराधीश्वरी
　　भिक्षा दाह कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ २ ॥

योगानन्दकरी रिपुक्षयकरी धर्मैकनिष्ठाकरी
　　चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी ।
सर्वैश्वर्यकरी तप फलकरी काशीपुराधीश्वरी
　　भिक्षा देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ३ ॥

कैलासाचलकन्दरालयकरी गौरी ह्युमाशाकरी
कौमारी निगमार्थगोचरकरी ह्योंकारबीजाक्षरी ।
मोक्षद्वारकवाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ४ ॥

दृश्यादृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रखेलनकरी विज्ञानदीपाङ्कुरी ।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ५ ॥

आदिक्षान्तसमस्तवर्णनकरी शम्भुप्रिया शांकरी
काश्मीरत्रिपुरेश्वरी त्रिनयनी विश्वेश्वरी शर्वरी ।
स्वर्गद्वारकवाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६ ॥

उर्वीसर्वजनेश्वरी जयकरी माता कृपासागरी ।
नारीनीलसमानकुन्तलधरी नित्यान्नदानेश्वरी
साक्षान्मोक्षकरी सदा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ७ ॥

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामा स्वादुपयोधरा प्रियकरी सौभाग्यमाहेश्वरी ।
भक्ताभीष्टकरी सदा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ८ ॥

चन्द्रार्कानलकोटिकोटिसदृशी चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुण्डलधरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ९ ॥

क्षत्रत्राणकरी महाभयहरी माता कृपासागरी
सर्वानन्दकरी सदा शिवकरी विश्वेश्वरी श्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १० ॥

अन्नपूर्णे सदापूर्णे
शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं
भिक्षां देहि च पार्वति ॥ ११ ॥

माता च पार्वतीदेवी

पिता देवो महेश्वर ।

बान्धवा शिवभक्ताश्च

स्वदेशो भुवनत्रयम् ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवत कृतौ
अन्नपूर्णाष्टक संपूर्णम् ॥



॥ श्रीः ॥

# ॥ मीनाक्षीपञ्चरत्नम् ॥

उद्यद्भानुसहस्रकोटिसदृशां केयूरहारोज्ज्वलां
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालङ्कृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्त्वस्वरूपां शिवां
मीनाक्षीं प्रणतोऽस्मि सततमहं कारुण्यवारानिधिम् ॥

मुक्ताहारलसत्किरीटरुचिरां पूर्णेन्दुवक्त्रप्रभां
शिञ्जन्नूपुरकिंकिणीमणिधरां पद्मप्रभाभासुराम् ।
सर्वाभीष्टफलप्रदां गिरिसुतां वाणीरमासेवितां
मीनाक्षीं प्रणतोऽस्मि सततमहं कारुण्यवारानिधिम् ॥

श्रीविद्यां शिववामभागनिलयां ह्रींकारमन्त्रोज्ज्वलां
श्रीचक्राङ्कितबिन्दुमध्यवसतिं श्रीमत्सभानायकीम् ।
श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीं
मीनाक्षीं प्रणतोऽस्मि सततमहं कारुण्यवारानिधिम् ॥

श्रीमत्सुन्दरनायकीं भयहरां ज्ञानप्रदां निर्मलां
 श्यामाभां कमलासनार्चितपदां नारायणस्यानुजाम् ।
वीणावेणुमृदङ्गवाद्यरसिकां नानाविधाडम्बिकां
 मीनाक्षीं प्रणतोऽस्मि सततमहं कारुण्यवारांनिधिम् ॥

नानायोगिमुनीन्द्रहृन्निवसतीं नानार्थसिद्धिप्रदां
 नानापुष्पविराजिताङ्घ्रियुगलां नारायणेनार्चिताम् ।
नादब्रह्ममयीं परात्परतरां नानार्थतत्त्वात्मिकां
 मीनाक्षीं प्रणतोऽस्मि सततमहं कारुण्यवारांनिधिम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
मीनाक्षीपञ्चरत्नं संपूर्णम् ॥

॥ श्री ॥

# ॥ मीनाक्षीस्तोत्रम् ॥

---

श्रीविद्ये शिववामभागनिलये श्रीराजराजार्चिते
श्रीनाथादिगुरुस्वरूपविभवे चिन्तामणीपीठिके ।
श्रीवाणीगिरिजानुताङ्घ्रिकमले श्रीशाभवि श्रीशिवे
मध्याह्ने मलयध्वजाधिपसुते मा पाहि मीनाम्बिके ॥१॥

चक्रस्थेऽचपले चराचरजगन्नाथे जगत्पूजिते
आर्तालीवरदे नताभयकर वक्षोजभारान्विते ।
विद्ये वेदकलापमौलिविदिते विद्युल्लताविग्रहे
मात पूर्णसुधारसार्द्रहृदये मा पाहि मीनाम्बिके ॥ २ ॥

कोटीराङ्गदरत्नकुण्डलधरे कादण्डबाणाञ्चिते
कोकाकारकुचद्वयोपरिलसत्प्रालम्बहाराञ्चिते ।
शिञ्जन्नूपुरपादसारसमणीश्रीपादुकालङ्कृते
मद्दारिद्र्यभुजङ्गगारुडखगे मा पाहि मीनाम्बिके ॥ ३ ॥

ब्रह्मेशाच्युतगीयमानचरिते प्रेतासनान्तस्थिते
पाशोदङ्कुशचापबाणकलिते बालेन्दुचूडाञ्चिते ।
बाले बालकुरङ्गलोलनयने बालार्ककोट्युज्ज्वले
मुद्राराधितदैवते मुनिसुते मां पाहि मीनाम्बिके ॥ ४ ॥

गन्धर्वामरयक्षपन्नगनुते गङ्गाधरालिङ्गिते
गायत्रीगरुडासने कमलजे सुश्यामले सुस्थिते ।
खातीते खलदारुपावकशिखे खद्योतकोट्युज्ज्वले
मन्त्राराधितदैवते मुनिसुते मां पाहि मीनाम्बिके ॥ ५ ॥

नादे नारदतुम्बुराद्यविनुते नादान्तनादात्मिके
नित्ये नीललतात्मिके निरुपमे नीवारशूकोपमे ।
कान्ते कामकले कदम्बनिलये कामेश्वराङ्कस्थिते
मद्विद्ये मदभीष्टकल्पलतिके मां पाहि मीनाम्बिके ॥६॥

वीणानादनिमीलितार्धनयने विस्रस्तचूलीभरे
ताम्बूलारुणपल्लवाधरयुते ताटङ्कहारान्विते ।
श्यामे चन्द्रकलावतंसकलिते कस्तूरिकाफालिके
पूर्णे पूर्णकलाभिरामवदने मां पाहि मीनाम्बिके ॥ ७ ॥

शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी
नित्यानन्दमयी निरञ्जनमयी तत्त्वमयी चिन्मयी ।
तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी
सर्वैश्वर्यमयी सदाशिवमयी मा पाहि मीनाम्बिके ॥८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग
वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
मीनाक्षीस्तोत्रं संपूर्णम् ॥

॥ श्री ॥

# ॥ दक्षिणामूर्तिस्तोत्रम् ॥

उपासकाना यदुपासनीय

मुपात्तवास वटशाखिमूले ।

तद्धाम दाक्षिण्यजुषा स्वमूर्त्या

जागर्तु चित्ते मम बोधरूपम ॥ १ ॥

अद्राक्षमक्षीणदयानिधान-

माचार्यमाद्य वटमूलभागे ।

मौनेन मन्दस्मितभूषितन

महाषलोकस्य तमो नुदन्तम ॥ २ ॥

विद्राविताशषतमोगणन

मुद्राविशेषण मुहुमुनीनाम ।

निरस्य माया दयया विधत्ते

देवो महास्तत्त्वमसीति बोधम् ॥ ३ ॥

अपारकारुण्यसुधातरङ्गै
रपाङ्गपातैरवलोकयन्तम् ।
कठोरससारनिदाघतप्ता
न्मुनीनह नौमि गुरु गुरूणाम् ॥ ४ ॥

ममाद्यदेवो वटमूलवासी
कृपाविशेषात्कृतसनिधान ।
ओंकाररूपामुपदिश्य विद्या
माविद्यकध्वान्तमपाकरोतु ॥ ५ ॥

कलाभिरिन्दोरिव कल्पिताङ्ग
मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेय
मनाद्यविद्यातिमिरप्रभातम ॥ ६ ॥

स्वदक्षजानुस्थितवामपाद
पादोदरालकृतयोगपट्टम् ।
अपस्मृतेराहितपादमङ्गे
प्रणौमि देव प्रणिधानवन्तम् ॥ ७ ॥

तत्त्वार्थमन्तेवसतामृषीणा
युवापि य सन्नुपदेष्टुमीष्टे ।
प्रणौमि त प्राक्तनपुण्यजाले
राचार्यमाश्चर्यगुणाधिवासम् ॥ ८ ॥

एकेन मुद्रा परशु करेण
करेण चान्येन मृग दधान ।
स्वजानुविन्यस्तकर पुरस्ता
दाचार्यचूडामणिराविरस्तु ॥ ९ ॥

आलेपवन्त मदनाङ्गभूत्या
शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कचन देशिकेन्द्र
मज्ञानवाराकरवाडवाग्निम् ॥ १० ॥

चारुस्थित सोमकलावतस
वीणाधर व्यक्तजटाकलापम् ।
उपासते केचन योगिनस्त्व
मुपात्तनादानुभवप्रमोदम् ॥ ११ ॥

उपासते य मुनय शुकाद्या
निराशिषो निर्ममताधिवासा ।
त दक्षिणामूर्तितनु महेश
मुपास्महे मोहमहार्तिशान्त्यै ॥ १२ ॥

कान्त्या निन्दितकुन्दकदलवपुर्न्यग्रोधमूले वस
न्कारुण्यामृतवारिभिर्मुनिजन सभावयन्वीक्षितै ।
मोहध्वान्तविभेदन विरचयन्बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मा मुद्रावता पाणिना ॥१३॥

अगौरनेत्रैरललाटनेत्रै
रशान्तवेषैरभुजगभूषै ।
अबोधमुद्रैरनपास्तनिद्रै
रपूरकामैरमरैरल न ॥ १४ ।

दैवतानि कति सन्ति चावनौ
नैव तानि मनसो मतानि मे ।
दीक्षित जडधियामनुग्रहे
दक्षिणाभिमुखमव दैवतम् ॥ १५ ॥

मुदिताय मुग्धशशिनावतंसिने
भसितावलेपरमणीयमूर्तये ।
जगदिन्द्रजालरचनापटीयसे
महसे नमोऽस्तु वटमूलवासिने ॥ १६ ॥

व्यालम्बिनीभि परितो जटाभि
कलावशेषेण कलाधरेण ।
पश्यल्ललाटेन मुखेन्दुना च
प्रकाशसे चेतसि निर्मलानाम् ॥ १७ ॥

उपासकाना त्वमुमासहाय
पूर्णेन्दुभाव प्रकटीकरोषि ।
यदद्य ते दर्शनमात्रतो मे
द्रवत्यहो मानसचन्द्रकान्त ॥ १८ ॥

यस्त प्रसन्नामनुसदधानो
मूर्ति मुदा मुग्धशशाङ्कमौले ।
ऐश्वर्यमायुर्लभते च विद्या
मन्ते च वेदान्तमहारहस्यम् ॥ १९ ॥

इति दक्षिणामूर्तिस्तोत्र संपूर्णम् ॥

॥ श्री ॥

# ॥ कालभैरवाष्टकम् ॥

देवराजसेव्यमानपावनाङ्घ्रिपङ्कज
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥

भानुकोटिभास्वरं भवाब्धितारकं परं
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमम्बुजाक्षमक्षशूलमक्षरं
काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥

शूलटङ्कपाशदण्डपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम् ।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं
काशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥

भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं
भक्तवत्सलं स्थिरं समस्तलोकविग्रहम् ।
निक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं
काशिकापुराधिनाथकालभैरवं भजे ॥ ४ ॥

धर्मसेतुपालकं त्वधर्ममार्गनाशकं
कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णकेशपाशशोभिताङ्गनिर्मलं
काशिकापुराधिनाथकालभैरवं भजे ॥ ५ ॥

रत्नपादुकाप्रभाभिरामपादयुग्मकं
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रभूषणं
काशिकापुराधिनाथकालभैरवं भजे ॥ ६ ॥

अट्टहासभिन्नपद्मजाण्डकोशसंततिं
दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकाधरं
काशिकापुराधिनाथकालभैरवं भजे ॥ ७ ॥

भूतसङ्घनायक विशालकीर्तिदायक
  काशिवासिलोकपुण्यपापशोधक विभुम् ।
नीतिमार्गकोविद पुरातन जगत्पर्ति
  काशिकापुराधिनाथकालभैरव भजे ॥ ८ ॥

कालभैरवाष्टक पठन्ति ये मनोहर
  ज्ञानमुक्तिसाधक विचित्रपुण्यवर्धनम् ।
शोकमोहलोभदैन्यकोपतापनाशन
  ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं ध्रुवम् ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
कालभैरवाष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ नर्मदाष्टकम् ॥

सबिन्दुसिन्धुसुस्खलत्तरङ्गभङ्गरञ्जित
  द्विषत्सु पापजातजातकादिवारिसंयुतम् ।
कृतान्तदूतकालभूतभीतिहारिवर्मदे
  त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ १ ॥

त्वदम्बुलीनदीनमीनदिव्यसंप्रदायकं
  कलौ मलौघभारहारिसर्वतीर्थनायकम् ।
सुमच्छकच्छनक्रचक्रवाकचक्रशर्मदे
  त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ २ ॥

महागभीरनीरपूरपापधूतभूतलं
  ध्वनत्समस्तपातकारिदारितापदाचलम् ।
जगल्लये महाभये मृकण्डुसूनुहर्म्यदे
  त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ३ ॥

गत तदैव मे भय त्वदम्बु वीक्षित यदा
    मृकण्डुसूनुशौनकासुरारिसेवित सदा ।
पुनर्भवाब्धिजन्मज भवाब्धिदु खवर्मदे
    त्वदीयपादपङ्कज नमामि देवि नर्मदे ॥ ४ ॥

अलक्ष्यलक्षकिन्नरामरासुरादिपूजित
    सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् ।
वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मद
    त्वदीयपादपङ्कज नमामि दवि नर्मदे ॥ ५ ॥

सनत्कुमारनाचिकेतकश्यपात्रिषट्पदै
    र्धृत स्वकीयमानसेषु नारदादिषट्पदै ।
रवीन्दुरन्तिदेवदेवराजकर्मशर्मद
    त्वदीयपादपङ्कज नमामि देवि नर्मद ॥ ६ ॥

अलक्षलक्षलक्षपापलक्षसारसायुध
    ततस्तु जीवजन्तुतन्तुभुक्तिमुक्तिदायकम् ।
विरिञ्चिविष्णुशकरस्वकीयधामवर्मदे
    त्वदीयपादपङ्कज नमामि देवि नर्मदे ॥ ७ ॥

अहो धृत स्वन श्रुत महेशिकेशजातट
किरातसूतबाडवेषु पण्डित शठ नटे ।
दुरन्तपापतापहारि सर्वजन्तुशर्मद
त्वदीयपादपङ्कज नमामि देवि नर्मद ॥ ८ ॥

इद तु नर्मदाष्टक त्रिकालमेव ये सदा
पठन्ति ते निरन्तर न यन्ति दुर्गतिं कदा ।
सुलभ्यदेहदुर्लभ महेशधामगौरव
पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
नर्मदाष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ यमुनाष्टकम् ॥

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु नो मनामल कलिन्दनन्दिनी सदा ॥ १ ॥

मलापहारिवारिपूरिभूरिमण्डितामृता
भृशं प्रवातकप्रपञ्चनातिपण्डितानिशा ।
सुनन्दनन्दिनाङ्गसङ्गरागरञ्जिता हिता
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ २ ॥

लसत्तरङ्गसङ्गधूतभूतजातपातका
नवीनमाधुरीधुरीणभक्तिजातचातका ।
तटान्तवासदासहंससंवृताह्निकामदा
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ ३ ॥

विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरे यदीयनीरचारुता ।
प्रवाहसाहचर्यपूतमेदिनीनदीनदा
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ ४ ॥

तरङ्गसङ्गसैकतान्तरातित सदासिता
शरन्निशाकरांशुमञ्जुमञ्जरी सभाजिता ।
भवार्चनाप्रचारुणाम्बुनाधुना विशारदा
धुनातु नो मनोमल कलिन्दनन्दिनी सदा ॥ ५ ॥

जलान्तकेलिकारिचारुराधिकाङ्गरागिणी
स्वभर्तुरन्यदुर्लभाङ्गताङ्गतांशभागिनी
स्वदत्तसुप्तसप्तसिन्धुभेदिनातिकोविदा
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ ६ ॥

जलच्युताच्युताङ्गरागलम्पटालिशालिनी
विलोलराधिकाकचान्तचम्पकालिमालिनी ।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ ७ ॥

सदैव नन्दिनन्दकेलिशालिकुञ्जमञ्जुला
तटोत्थफुल्लमल्लिकाकदम्बरेणुसूज्ज्वला ।
जलावगाहिना नृणा भवाब्धिसिन्धुपारदा
धुनोतु नो मनोमल कलिन्दनन्दिनी सदा ॥ ८ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
यमुनाष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ यमुनाष्टकम् ॥

कृपापारावारां तपनतनयां तापशमनीं
मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम् ।
वियज्ज्वालोन्मुक्तां श्रियमपि सुखाप्तेः परिदिनं
सदा धीरो नूनं भजति यमुनां नित्यफलदाम् ॥ १ ॥

मधुवनचारिणि भास्करवाहिनि जाह्नविसङ्गिनि सिन्धुसुते
मधुरिपुभूषणि माधवतोषिणि गोकुलभीतिविनाशकृते ।
जगदघमोचिनि मानसदायिनि केशवकेलिनिदानगते
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

अयि मधुरे मधुमोदविलासिनि शैलविदारिणि वेगपरे
परिजनपालिनि दुष्टनिषूदिनि वाञ्छितकामविलासधरे ।
व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

अतिविपदाम्बुधिमग्नजनं भवतापशताकुलमानसकं
गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम् ।
ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुञ्जतरं
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

नवजलदद्युतिकोटिलसत्तनुहेमभयाभररञ्जितके
तडिदवहेलिपदाञ्चलचञ्चलशोभितपीतसुचेलधरे ।
मणिमयभूषणचित्रपटासनरञ्जितगञ्जितभानुकरे
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे
उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके ।
नवमणिकोटिकभास्करकञ्चुकिशोभिततारकहारयुते
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

करिवरमौक्तिकनासिकभूषणवातचमत्कृतचञ्चलके
मुखकमलामलसौरभचञ्चलमत्तमधुव्रतलोचनिके ।
मणिगणकुण्डललोलपरिस्फुरदाकुलगण्डयुगामलके
जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥

कलरवनूपुरहेममयाचितपादसरोरुहसारुणिके
धिमिधिमिधिमिधिमितालविनोदितमानसमञ्जुलपादगते ।
तव पदपङ्कजमाश्रितमानवचित्तसदाखिलतापहर
जय यमुने जय भीतिनिवारिणि सकटनाशिनि पावय माम् ॥

भवोत्तापाम्भोधौ निपतितजनो दुर्गतियुता
यदि स्तौति प्रात प्रतिदिनमनन्याश्रयतया ।
हयाह्रेषै काम करकुसुमपुञ्जै रविसुता
सदा भोक्ता भोगान्मरणसमये याति हरिताम् ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
यमुनाष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ गङ्गाष्टकम् ॥

भगवति भवलीलामौलिमाल तवाम्भ
कणमणुपरिमाण प्राणिनो य स्पृशन्ति ।
अमरनगरनारीचामरग्राहिणीना
विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥ १ ॥

ब्रह्माण्ड खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्खलन्ती ।
क्षोणीपृष्ठे लुठन्ती दुरितचयचमूनिर्भर भर्त्सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित्पावनी न पुनातु ॥२॥

मज्जन्मातङ्गकुम्भच्युतमदमदिरामादमत्तालिजाल
स्नानै सिद्धाङ्गनाना कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गम् ।
साय प्रातर्मुनीना कुशकुसुमचयैश्छिन्नतीरस्थनीर
पायान्नो गाङ्गमम्भ करिकरमकराक्रान्तरहस्तरङ्गम् ॥

आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी पातु माम् ॥

शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।
शेषाङ्गैरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥५॥

कुतो वीची वीचिस्तव यदि गता लोचनपथं
त्वमापीता पीताम्बरपुरनिवासं वितरसि ।
त्वदुत्सङ्गे गङ्गे पतति यदि कायस्तनुभृतां
तदा मातः शान्तक्रतवपदलाभोऽप्यतिलघुः ॥ ६ ॥

भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि ।
सकलकलुषभङ्गे स्वर्गसोपानसङ्गे
तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥ ७ ॥

मातर्जाह्नवि शंभुसङ्गमिलिते मौलौ निधायाञ्जलिं
त्वत्तीरे वपुषोऽवसानसमये नारायणाङ्घ्रिद्वयम् ।
सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे
भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥ ८ ॥

गङ्गाष्टकमिदं पुण्यं
यः पठेत्प्रयतो नरः ।
सर्वपापविनिर्मुक्तो
विष्णुलोकं स गच्छति ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
गङ्गाष्टकं संपूर्णम् ॥

॥ श्री ॥

# ॥ मणिकर्णिकाष्टकम् ॥

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादन्तौ कुरुत परस्परमुभौ जन्तो प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्त शिवस्तत्क्षणा
त्तन्मध्याद्भृगुलाञ्छनो गरुडग पीताम्बरो निगत ॥

इन्द्राद्यास्त्रिदशा पतन्ति नियत भोगक्षये ये पुन
र्जायन्त मनुजास्ततोपि पशव कीटा पतङ्गादय ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति निष्कल्मषा
सायुज्यऽपि किरीटकौस्तुभधरा नारायणा स्युनरा ॥

काशी धन्यतमा विमुक्तनगरी सालङ्कृता गङ्गया
तत्रेय मणिकर्णिका सुखकरी मुक्तिर्हि तत्किंकरी ।
स्वर्लोकस्तुलित सहैव विबुधै काश्या सम ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुत्व गत ॥

गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा
　तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः ।
देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं
　पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः प्राप्यते ॥ ४ ॥

दुःखाम्भोधिगतो हि जन्तुनिवहस्तेषां कथं निष्कृतिः
　ज्ञात्वा तद्धि विरिञ्चिना विरचिता वाराणसी शर्मदा ।
लोकाः स्वर्गसुखास्ततोऽपि लघवो भोगान्तपातप्रदाः
　काशी मुक्तिपुरी सदा शिवकरी धर्मार्थमोक्षप्रदा ॥ ५ ॥

एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरः
　योऽप्येकः किल शंकरो विषधरो गङ्गाधरो माधवः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति ते मानवाः
　रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥ ६ ॥

त्वत्तीरे मरणं तु मङ्गलकरं देवैरपि श्लाघ्यते
　शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा तत्परः ।
आयान्तं सविता सहस्रकिरणैः प्रत्युद्गतोऽभूत्सदा
　पुण्योऽसौ वृषगोऽथवा गरुडगः किं मन्दिरं यास्यति ॥

मध्याह्ने मणिकर्णिकास्नपनज पुण्य न वक्तु क्षम
स्वीयैरब्धशतैश्चतुर्मुखधरो वेदार्थदीक्षागुरु ।
योगाभ्यासबलेन चन्द्रशिखरस्तत्पुण्यपारगत
स्त्वत्तीरे प्रकरोति सुप्तपुरुष नारायण वा शिवम् ॥ ८ ॥

कृच्छ्रै कोटिशतै स्वपापनिधन यच्चाश्वमेधै फल
तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्ट भवेत् ।
स्नात्वा स्तोत्रमिद नर पठति चेत्ससारपाथोनिधिं
तीर्त्वा पल्वलवत्प्रयाति सदन तेजोमय ब्रह्मण ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
मणिकर्णिकाष्टक सपूर्णम ॥

॥ श्री ॥

# ॥ निर्गुणमानसपूजा ॥

शिष्य उवाच—

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।
स्थितेऽद्वितीयभावेऽपि कथ पूजा विधीयते ॥ १ ॥

पूर्णस्यावाहन कुत्र सर्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमन कुत ॥ २ ॥

निर्मलस्य कुत स्नान वासो विश्वोदरस्य च ।
अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥ ३ ॥

निर्लेपस्य कुता गन्ध पुष्प निर्वासनस्य च ।
निर्विशेषस्य का भूषा कोऽलकारो निराकृते ॥ ४ ॥

निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिण
निजानन्दैकतृप्तस्य नैवेद्य किं भवेदिह ॥ ५ ॥

विश्वानन्दयितुस्तस्य किं ताम्बूल प्रकल्पते ।
स्वयप्रकाशचिद्रूपा योऽसावर्कादिभासक ॥ ६ ॥

गीयते श्रुतिभिस्तस्य नीराजनविधि कुत ।
प्रदक्षिणमनन्तस्य प्रमाणोऽद्वयवस्तुन ॥ ७ ॥

वेदवाचामवेद्यस्य किं वा स्तोत्र विधीयते ।
अन्तर्बहि सस्थितस्योद्वासनविधि कुत ॥ ८ ॥

श्रीगुरुरुवाच—

आराधयामि मणिसनिभमात्मलिङ्ग
मायापुरीहृदयपङ्कजसनिविष्टम् ।
श्रद्धानदीविमलचित्तजलाभिषेकै
र्नित्य समाधिकुसुमैरपुनर्भवाय ॥ ९ ॥

अयमेकोऽवशिष्टोऽस्मीत्येवमावाहयेच्छिवम् ।
आसन कल्पयेत्पश्चात्स्वप्रतिष्ठात्मचिन्तनम् ॥ १० ॥

पुण्यपापरज सङ्गो मम नास्तीति वेदनम् ।
पाद्य समर्पयेद्विद्वान्सवकल्मषनाशनम् ॥ ११ ॥

अनादिकल्पविधृतमूलाज्ञानजलाञ्जलिम् ।
विसृजेदात्मलिङ्गस्य तदेवार्घ्यसमर्पणम् ॥ १२ ॥

ब्रह्मानन्दाब्धिकल्लोलकणकोट्यंशलेशकम् ।
पिबन्तीन्द्रादय इति ध्यानमाचमन मतम् ॥ १३ ॥

ब्रह्मानन्दजलेनैव लोका सर्वे परिप्लुता ।
अच्छेद्योऽयमिति ध्यानमभिषचनमात्मन ॥ १४ ॥

निरावरणचैतन्य प्रकाशाऽस्मीति चिन्तनम ।
आत्मलिङ्गस्य सद्वस्त्रमित्येव चिन्तयेन्मुनि ॥ १५ ॥

त्रिगुणात्माशेषलोकमालिकासूत्रमस्म्यहम् ।
इति निश्चयमेवात्र ह्युपवीत पर मतम् ॥ १६ ॥

अनेकवासनामिश्रप्रपञ्चोऽय धृतो मया ।
नान्येनेत्यनुसधानमात्मनश्चन्दन भवेत् ॥ १७ ॥

रज सत्त्वतमोवृत्तित्यागरूपैस्तिलाक्षतै ।
आत्मालिङ्ग यजेन्नित्य जीवन्मुक्तिप्रसिद्धये ॥ १८ ॥

ईश्वरो गुरुरात्मेति भेदत्रयविवर्जितै ।
बिल्वपत्रैरद्वितीयैरात्मलिङ्ग यजेच्छिवम् ॥ १९ ॥

समस्तवासनात्याग धूप तस्य विचिन्तयेत् ।
ज्योतिर्मयात्मविज्ञान दीप सदर्शयेद्बुध ॥ २० ॥

नैवेद्यमात्मलिङ्गस्य ब्रह्माण्डाख्य महोदनम् ।
पिबानन्दरस स्वादु मृत्युरस्यापसचनम् ॥ २१ ॥

अज्ञानोच्छिष्टकरस्य क्षालनं ज्ञानवारिणा ।
विशुद्धस्यात्मलिङ्गस्य हस्तप्रक्षालनं स्मरेत् ॥ २२ ॥

रागादिगुणशून्यस्य शिवस्य परमात्मनः ।
सरागविषयाभ्यासत्यागस्ताम्बूलचर्वणम् ॥ २३ ॥

अज्ञानध्वान्तविध्वंसप्रचण्डमतिभास्करम् ।
आत्मनो ब्रह्मताज्ञानं नीराजनमिहात्मनः ॥ २४ ॥

विविधब्रह्मसद्दृष्टिमालिकाभिरलंकृतम् ।
पूर्णानन्दात्मतादृष्टिं पुष्पाञ्जलिमनुस्मरेत् ॥ २५ ॥

परिभ्रमन्ति ब्रह्माण्डसहस्राणि मयीश्वरे ।
कूटस्थाचलरूपोऽहमिति ध्यानं प्रदक्षिणम् ॥ २६ ॥

विश्ववन्द्योऽहमेवास्मि नास्ति वन्द्यो मदन्यतः ।
इत्यालोचनमेवात्र स्वात्मलिङ्गस्य वन्दनम् ॥ २७ ॥

आत्मनः सत्क्रिया प्रोक्ता कर्तव्याभावभावना ।
नामरूपव्यतीतात्मचिन्तनं नामकीर्तनम् ॥ २८ ॥

श्रवणं तस्य देवस्य श्रोतव्याभावचिन्तनम् ।
मननं त्वात्मलिङ्गस्य मन्तव्याभावचिन्तनम् ॥ २९ ॥

ध्यातव्याभावविज्ञान निदिध्यासनमात्मन ।
समस्तभ्रान्तिविक्षेपराहित्येनात्मनिष्ठता ॥ ३० ॥

समाधिरात्मनो नाम नान्यच्चित्तस्य विभ्रम ।
तत्रैव ब्रह्मणि सदा चित्तविश्रान्तिरिष्यते ॥ ३१ ॥

एव वेदान्तकल्पोक्तस्वात्मलिङ्गप्रपूजनम् ।
कुर्वन्ना मरण वापि क्षण वा सुसमाहित ॥ ३२ ॥

सर्वदुर्वासनाजाल पदपासुमिव त्यजेत् ।
विधूयाज्ञानदु खौघ मोक्षानन्द समश्नुते ॥ ३३ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
निगुणमानसपूजा सपूर्णा ॥

॥ श्री ॥

# ॥ प्रातःस्मरणस्तोत्रम् ॥

प्रात स्मरामि हृदि सस्फुरदात्मतत्त्व
सच्चित्सुख परमहसगतिं तुरीयम् ।
यस्तु प्रजागरसुषुप्तमवैति नित्य
तद्ब्रह्म निष्कलमह न च भूतसङ्घ ॥ १ ॥

प्रातर्भजामि मनसा वचसामगम्य
वाचो विभान्ति निखिला यदनुग्रहेण ।
यन्नेति नेति वचनैर्निगमा अवोच
स्त देवदेवमजमच्युतमाहुरग्र्यम् ॥ २ ॥

प्रातर्नमामि तमस परमर्कवर्णं
पूर्णं सनातनपद पुरुषोत्तमाख्यम् ।
यस्मिन्निद जगदशेषमशेषमूर्तौ
रज्ज्वा भुजगम इव प्रतिभासित वै ॥ ३ ॥

श्लोकत्रयमिद पुण्य
लोकत्रयविभूषणम् ।
प्रात काले पठेद्यस्तु
स गच्छेत्परम पदम् ॥ ४ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
प्रात स्मरणस्तोत्र सपूर्णम् ॥

॥ श्रीः ॥

# ॥ जगन्नाथाष्टकम् ॥

कदाचित्कालिन्दीतटविपिनसगीतकवरो
 मुदा गापीनारीवदनकमलास्वादमधुप ।
रमाशभुब्रह्मामरपतिगणशार्चितपदो
 जगन्नाथ स्वामी नयनपथगामा भवतु मे ॥ १ ॥

भुजे सव्ये वेणु शिरसि शिखिपिञ्छ कटितटे
 दुकूल नेत्रान्त सहचरकटाक्ष विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
 जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ २ ॥

महाम्भोधेस्तीरे कनकरुचिर नीलशिखरे
 वसन्प्रासादान्त सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थ सकलसुरसेवावसरदो
 जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ३ ॥

कृपापारावार सजलजलदश्रेणिरुचिरो
रमावाणीसोमस्फुरदमलपद्मोद्भवमुखैः ।
सुरेन्द्रैराराध्य श्रुतिगणशिखागीतचरितो
जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ४ ॥

रथारूढो गच्छन्पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदय ।
दयासिन्धुर्बन्धु सकलजगतां सिन्धुसुतया
जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ५ ॥

परब्रह्मापीड कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दो राधासरसवपुरालिङ्गनसुखो
जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ६ ॥

न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवे
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ७ ॥

हर त्व ससार द्रुततरमसार सुरपते
हर त्व पापाना विततिमपरा यादवपते ।
अहो दीनानाथ निहितमचल पातुमनिश
जगन्नाथ स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
जगन्नाथाष्टक सपूर्णम् ॥



॥ श्री ॥

# ॥ षट्पदीस्तोत्रम् ॥

अविनयमपनय विष्णो
  दमय मन शमय विषयमृगतृष्णाम् ।
भूतदया विस्तारय
  तारय ससारसागरत ॥ १ ॥

दिव्यधुनीमकरन्दे
  परिमलपरिभोगसच्चिदानन्द ।
श्रीपतिपदारविन्दे
  भवभयखेदच्छिदे वन्दे ॥ २ ॥

सत्यपि भेदापगमे
  नाथ तवाह न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्ग
  क्वचन समुद्रो न तारङ्ग ॥ ३ ॥

उद्धृतनग नगभिदनुज
　　दनुजकुलामित्र मित्रशशिदृष्टे ।
दृष्टे भवति प्रभवति
　　न भवति किं भवतिरस्कार ॥ ४ ॥

मत्स्यादिभिरवतारै-
　　रवतारवतावता सदा वसुधाम् ।
परमेश्वर परिपाल्यो
　　भवता भवतापभीतोऽहम् ॥ ५ ॥

दामोदर गुणमन्दिर
　　सुन्दरवदनारविन्द गोविन्द ।
भवजलधिमथनमन्दर
　　परम दरमपनय त्व मे ॥ ६ ॥

नारायण करुणामय
　　शरण करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये
　　वदनसरोजे सदा वसतु ॥ ७ ॥

इति षट्पदीस्तोत्र सपूर्णम् ॥

॥ श्री ॥

# ॥ भ्रमराम्बाष्टकम् ॥

चाञ्चल्यारुणलोचनाञ्चितकृपाचन्द्राकचूडामणिं
चारुस्मेरमुखां चराचरजगत्संरक्षणीं तत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ १ ॥

कस्तूरीतिलकाञ्चितेन्दुविलसत्प्रोद्भासिफालस्थलीं
कर्पूरद्रवमिश्रचूर्णखदिरामोदोल्लसद्वीटिकाम् ।
लोलापाङ्गतरङ्गितैरधिकृपासारैर्नतानन्दिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ २ ॥

राजन्मत्तमरालमन्दगमनां राजीवपत्रेक्षणां
राजीवप्रभवादिदेवमकुटै राजत्पदाम्भोरुहाम् ।
राजीवायतमन्दमण्डितकुचां राजाधिराजेश्वरीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ३ ॥

षट्तारा गणदीपिका शिवसती षड्वैरिवर्गापहा
　　षट्चक्रान्तरसंस्थिता वरसुधा षड्योगिनीवेष्टिताम् ।
षट्चक्राञ्चितपादुकाञ्चितपदा षड्भावगा षोडशीं
　　श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ४ ॥

श्रीनाथादृतपालितत्रिभुवना श्रीचक्रसंचारिणीं
　　ज्ञानासक्तमनोजयौवनलसद्गन्धर्वकन्यादृताम् ।
दीनानामतिवेलभाग्यजननीं दिव्याम्बरालंकृता
　　श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ५ ॥

लावण्याधिकभूषिताङ्गलतिका लाक्षालसद्रागिणीं
　　सेवायातसमस्तदेववनिता सीमन्तभूषान्विताम् ।
भावोल्लासवशीकृतप्रियतमा भण्डासुरच्छेदिनीं
　　श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ६ ॥

धन्या सोमविभावनीयचरिता धाराधरश्यामला
　　मुन्याराधनमेधिनीं सुमवता मुक्तिप्रदानव्रताम् ।
कन्यापूजनसुप्रसन्नहृदया काञ्चीलसन्मध्यमा
　　श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ७ ॥

कर्पूरागरुकुङ्कुमाङ्कितकुचा कर्पूरवर्णस्थिता
कृष्टोत्कृष्टसुकृष्टकर्मदहना कामेश्वरीं कामिनीम् ।
कामाक्षीं करुणारसार्द्रहृदया कल्पान्तरस्थायिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ८ ॥

गायत्रीं गरुडध्वजा गगनगा गान्धर्वगानप्रिया
गम्भीरा गजगामिनीं गिरिसुता गन्धाक्षतालङ्कृताम् ।
गङ्गागौतमगर्गसंनुतपदा गा गौतमीं गोमतीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
भ्रमराम्बाष्टकं संपूर्णम् ॥

॥ श्री ॥

# ॥ शिवपञ्चाक्षरनक्षत्रमालास्तोत्रम् ॥

श्रीमदात्मने गुणैकसिन्धवे नमः शिवाय
धामलेशधूतकोकबन्धवे नमः शिवाय ।
नामशेषितानमद्भवान्धवे नमः शिवाय
पामरेतरप्रधानबन्धवे नमः शिवाय ॥ १ ॥

कालभीतविप्रबालपाल ते नमः शिवाय
शूलभिन्नदुष्टदक्षफाल ते नमः शिवाय ।
मूलकारणाय कालकाल ते नमः शिवाय
पालयाधुना दयालवाल ते नमः शिवाय ॥ २ ॥

इष्टवस्तुमुख्यदानहेतवे नमः शिवाय
दुष्टदैत्यवंशधूमकेतवे नमः शिवाय ।
सृष्टिरक्षणाय धर्मसेतवे नमः शिवाय
अष्टमूर्तये वृषेन्द्रकेतवे नमः शिवाय ॥ ३ ॥

आपदद्रिभेदटङ्कहस्त ते नम शिवाय
　　पापहारिदिव्यसिन्धुमस्त ते नम शिवाय ।
पापदारिणे लसन्नमस्तते नम शिवाय
　　शापदोषखण्डनप्रशस्त ते नम शिवाय ॥ ४ ॥

व्योमकेश दिव्यभव्यरूप ते नम शिवाय
　　हेममेदिनीधरेन्द्रचाप ते नम शिवाय ।
नाममात्रदग्धसर्वपाप ते नम शिवाय
　　कामनैकतानहृद्दुराप ते नम शिवाय ॥ ५ ॥

ब्रह्ममस्तकावलीनिबद्ध ते नम शिवाय
　　जिह्मगेन्द्रकुण्डलप्रसिद्ध ते नम शिवाय ।
ब्रह्मणे प्रणीतवेदपद्धते नम शिवाय
　　जिंह्कालदेहदत्तपद्धते नम शिवाय ॥ ६ ॥

कामनाशनाय शुद्धकर्मणे नम शिवाय
　　सामगानजायमानशर्मणे नम शिवाय ।
हेमकान्तिचाकचक्यवर्मणे नम शिवाय
　　सामजासुराङ्गलब्धचर्मणे नम शिवाय ॥ ७ ॥

जन्ममृत्युघोरदुःखहारिणे नमः शिवाय
चिन्मयैकरूपदेहधारिणे नमः शिवाय ।
मन्मनोरथावपूर्तिकारिणे नमः शिवाय
सन्मनोगताय कामवैरिणे नमः शिवाय ॥ ८ ॥

यक्षराजबन्धवे दयालवे नमः शिवाय
दक्षपाणिशोभिकाञ्चनालवे नमः शिवाय ।
पक्षिराजवाहहृच्छयालवे नमः शिवाय
अक्षिफाल वेदपूततालवे नमः शिवाय ॥ ९ ॥

दक्षहस्तनिष्ठजातवेदसे नमः शिवाय
अक्षरात्मने नमद्बिडौजसे नमः शिवाय ।
दीक्षितप्रकाशितात्मतेजसे नमः शिवाय
उक्षराजवाह ते सतां गते नमः शिवाय ॥ १० ॥

राजताचलेन्द्रसानुवासिने नमः शिवाय
राजमाननित्यमन्दहासिने नमः शिवाय ।
राजकोरकावतंसभासिने नमः शिवाय
राजराजमित्रताप्रकाशिने नमः शिवाय ॥ ११ ॥

दीनमानवालिकामधेनवे नम शिवाय
सूनबाणदाहकृत्कृशानवे नम शिवाय ।
स्वानुरागभक्तरत्नसानवे नम शिवाय
दानवान्धकारचण्डभानवे नम शिवाय ॥ १२ ॥

सर्वमङ्गलाकुचाग्रशायिने नम शिवाय
सवदेवतागणातिशायिन नम शिवाय
पूर्वदेवनाशसविधायिने नम शिवाय
सर्वमन्मनोजभङ्गदायिने नम शिवाय ॥ १३ ॥

स्तोकभक्तितोऽपि भक्तपोषिणे नम शिवाय
माकरन्दसारवर्षिभाषिणे नम शिवाय ।
एकबिल्वदानतोऽपि तोषिणे नम शिवाय
नैकजन्मपापजालशोषिणे नम शिवाय ॥ १४ ॥

सर्वजीवरक्षणैकशीलिने नम शिवाय
पार्वतीप्रियाय भक्तपालिने नम शिवाय ।
दुर्विदग्धदैत्यसैन्यदारिण नम शिवाय
शर्वरीशधारिणे कपालिने नम शिवाय ॥ १५ ॥

पाहि मामुमामनोज्ञदेह ते नमः शिवाय
देहि मे वरं सिताद्रिगेह ते नमः शिवाय ।
मोहितर्षिकामिनीसमूह ते नमः शिवाय
स्वेहितप्रसन्न कामदोह ते नमः शिवाय ॥ १६ ॥

मङ्गलप्रदाय गोतुरंग ते नमः शिवाय
गङ्गया तरङ्गितोत्तमाङ्ग ते नमः शिवाय ।
सङ्गरप्रवृत्तवैरिभङ्ग ते नमः शिवाय
अङ्गजारये करेकुरङ्ग ते नमः शिवाय ॥ १७ ॥

ईहितक्षणप्रदानहेतवे नमः शिवाय
आहिताग्निपालकोक्षकेतवे नमः शिवाय ।
देहकान्तिधूतरौप्यधातवे नमः शिवाय
गेहदुःखपुञ्जधूमकेतवे नमः शिवाय ॥ १८ ॥

त्र्यक्ष दीनसत्कृपाकटाक्ष ते नमः शिवाय
दक्षसप्ततन्तुनाशदक्ष ते नमः शिवाय ।
ऋक्षराजभानुपावकाक्ष ते नमः शिवाय
रक्ष मां प्रपन्नमात्ररक्ष ते नमः शिवाय ॥ १९ ॥

न्यङ्कुपाणये शिवकराय ते नमः शिवाय
सङ्कटाब्धितीर्णकिंकराय ते नमः शिवाय ।
पङ्कभीषिताभयकराय ते नमः शिवाय
पङ्कजाननाय शंकराय ते नमः शिवाय ॥ २० ॥

कर्मपाशनाश नीलकण्ठ ते नमः शिवाय
शर्मदाय नर्यभस्मकण्ठ ते नमः शिवाय ।
निर्ममर्षिसेवितोपकण्ठ ते नमः शिवाय
कुर्महे नतीर्नमद्विकुण्ठ ते नमः शिवाय ॥ २१ ॥

विष्टपाधिपाय नम्रविष्णवे नमः शिवाय
शिष्टविप्रहृद्गुहाचरिष्णवे नमः शिवाय ।
इष्टवस्तुनित्यतुष्टजिष्णवे नमः शिवाय
कष्टनाशनाय लोकजिष्णवे नमः शिवाय ॥ २२ ॥

अप्रमेयदिव्यसुप्रभाव ते नमः शिवाय
सत्प्रपन्नरक्षणस्वभाव ते नमः शिवाय ।
स्वप्रकाश निस्तुलानुभाव ते नमः शिवाय
विप्रडिम्भदर्शितार्द्रभाव ते नमः शिवाय ॥ २३ ॥

सेवकाय मे मृड प्रसीद ते नम शिवाय
भावलभ्य तावकप्रसाद ते नम शिवाय ।
पावकाक्ष देवपूज्यपाद ते नम शिवाय
तावकाङ्घ्रिभक्तदत्तमोद ते नम शिवाय ॥ २४ ॥

भुक्तिमुक्तिदिव्यभोगदायिने नम शिवाय
शक्तिकल्पितप्रपञ्चभागिने नम शिवाय ।
भक्तसकटापहारयोगिने नम शिवाय
युक्तसन्मन सरोजयोगिने नम शिवाय ॥ २५ ॥

अन्तकान्तकाय पापहारिण नम शिवाय
शान्तमायदन्तिचर्मधारिणे नम शिवाय ।
सतताश्रितव्यथाविदारिणे नम शिवाय
जन्तुजातनित्यसौख्यकारिणे नम शिवाय ॥ २६ ॥

शूलिने नमो नम कपालिने नम शिवाय
पालिने विरिञ्चितुण्डमालिने नम शिवाय ।
लीलिने विशेषरुण्डमालिने नम शिवाय
शीलिने नम प्रपुण्यशालिने नम शिवाय ॥ २७ ॥

शिवपञ्चाक्षरमुद्रा
चतुष्पदोल्लासपद्यमणिघटिताम् ।
नक्षत्रमालिकामिह
दधदुपकण्ठ नरो भवेत्सोम ॥ २८ ॥

इति श्रीमत्परमहसपरिव्राजकाचायस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
शिवपञ्चाक्षरनक्षत्रमालास्तोत्र सपूर्णम् ॥

8 8 II 9

॥ श्री ॥

# ॥ द्वादशलिङ्गस्तोत्रम् ॥

सौराष्ट्रदेशे वसुधावकाशे

ज्योतिमय चन्द्रकलावतसम् ।

भक्तिप्रदानाय कृतावतार

त सोमनाथ शरण प्रपद्ये ॥ १ ॥

श्रीशैलशृङ्गे विविधप्रसङ्गे

शेषाद्रिशृङ्गेऽपि सदा वसन्तम् ।

तमर्जुन मल्लिकपूर्वमेन

नमामि ससारसमुद्रसेतुम् ॥ २ ॥

अवन्तिकाया विहितावतार

मुक्तिप्रदानाय च सज्जनानाम् ।

अकालमृत्यो परिरक्षणार्थ

वन्दे महाकालमह सुरेशम् ॥ ३ ॥

कावेरिकानर्मदयो पवित्रे
    समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्त
    मोंकारमीश शिवमेकमीडे ॥ ४ ॥

पूर्वोत्तरे पारलिकाभिधाने
    सदाशिव त गिरिजासमेतम् ।
सुरासुराराधितपादपद्म
    श्रीवैद्यनाथ सतत नमामि ॥ ५ ॥

आमर्दसञ्ज्ञे नगरे च रम्ये
    विभूषिताङ्ग विविधैश्च भोगै ।
सद्भुक्तिमुक्तिप्रदमीशमेक
    श्रीनागनाथ शरण प्रपद्ये ॥ ६ ॥

सानन्दमानन्दवने वसन्त
    मानन्दकन्द हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथ
    श्रीविश्वनाथं शरणं प्रपद्ये ॥ ७ ॥

यो डाकिनीशाकिनिकासमाजे
निषेव्यमाण पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्ध
त शकर भक्तहित नमामि ॥ ८ ॥

श्रीताम्रपर्णीजलराशियोगे
निबद्ध्य सेतु निशि बिल्वपत्रै ।
श्रीरामचन्द्रेण समर्चित त
रामेश्वराख्य सतत नमामि ॥ ९ ॥

सिंहाद्रिपार्श्वेऽपि तट रमन्त
गोदावरीतीरपवित्रदेशे ।
यद्दर्शनात्पातकजातनाश
प्रजायते त्र्यम्बकमीशमीडे ॥ १० ॥

हिमाद्रिपार्श्वेऽपि तटे रमन्त
सपूज्यमान सतत मुनीन्द्रै ।
सुरासुरैर्यक्षमहोरगाद्यै
केदारसज्ञ शिवमीशमीडे ॥ ११ ॥

एलापुरीरम्यशिवालयेऽस्मि
न्समुल्लसन्त त्रिजगद्वरेण्यम् ।
वन्दे महोदारतरस्वभाव
सदाशिव त धिषणेश्वराख्यम् ॥ १२ ॥

एतानि लिङ्गानि सदैव मर्त्या
प्रात पठन्तोऽमलमानसाश्च ।
ते पुत्रपौत्रैश्च धनैरुदारै
सत्कीर्तिभाज सुखिनो भवन्ति ॥ १३ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोवि दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
द्वादशलिङ्गस्तोत्र सपूर्णम् ।

॥ श्री ॥

# ॥ अर्धनारीश्वरस्तोत्रम् ॥

चाम्पेयगौरार्धशरीरकायै
कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय
नमः शिवायै च नमः शिवाय ॥ १ ॥

कस्तूरिकाकुङ्कुमचर्चितायै
चितारजःपुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय
नमः शिवायै च नमः शिवाय ॥ २ ॥

झणत्क्वणत्कङ्कणनूपुरायै
पादाब्जराजत्फणिनूपुराय ।
हेमाङ्गदायै भुजगाङ्गदाय
नमः शिवायै च नमः शिवाय ॥ ३ ॥

विशालनीलोत्पललोचनायै
विकासिपङ्करुहलोचनाय ।
समेक्षणायै विषमेक्षणाय
नमः शिवायै च नमः शिवाय ॥ ४ ॥

मन्दारमालाकलितालकायै
कपालमालाङ्कितकन्धराय ।
दिव्याम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय ॥ ५ ॥

अम्भोधरश्यामलकुन्तलायै
तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय
नमः शिवायै च नमः शिवाय ॥ ६ ॥

प्रपञ्चसृष्ट्युन्मुखलास्यकायै
समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे
नमः शिवायै च नमः शिवाय ॥ ७ ॥

प्रदीप्तरत्नोज्ज्वलकुण्डलायै
  स्फुरन्महापन्नगभूषणाय ।
शिवान्वितायै च शिवान्विताय
  नम शिवायै च नम शिवाय ॥ ८ ॥

एतत्पठेदष्टकमिष्टद यो
  भक्त्या स मान्यो भुवि दीर्घजीवी ।
प्राप्नोति सौभाग्यमनन्तकाल
  भूयात्सदा तस्य समस्तसिद्धि ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
अर्धनारीश्वरस्तोत्रम् सपूर्णम् ॥

॥ श्री ॥

# ॥ शारदाभुजंगप्रयाताष्टकम् ॥

सुवक्षोजकुम्भा सुधापूर्णकुम्भा
प्रसादावलम्बा प्रपुण्यावलम्बाम् ।
सदास्येन्दुबिम्बा सदानोष्ठबिम्बा
भजे शारदाम्बामजस्र मदम्बाम् ॥ १ ॥

कटाक्षे दयार्द्रा करे ज्ञानमुद्रा
कलाभिर्विनिद्रा कलापै सुभद्राम् ।
पुरस्त्रीं विनिद्रा पुरस्तुङ्गभद्रा
भजे शारदाम्बामजस्र मदम्बाम् ॥ २ ॥

ललामाङ्कफाला लसद्गानलोला
स्वभक्तैकपाला यश श्रीकपोलाम् ।
करे त्वक्षमाला कनत्प्रत्नलोला
भजे शारदाम्बामजस्र मदम्बाम् ॥ ३ ॥

सुसीमन्तवेणीं दृशा निर्जितैणीं
रमत्कीरवाणीं नमद्वज्रपाणीम् ।
सुधामन्थरास्या मुदा चिन्त्यवेणीं
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ४ ॥

सुशान्ता सुदेहा दृगन्ते कचान्ता
लसत्सल्लताङ्गीमनन्तामचिन्त्याम् ।
स्मरेत्तापसैः सङ्गपूर्वस्थिता ता
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ५ ॥

कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे
मराले मदेभे महोक्षेऽधिरूढाम् ।
महत्यां नवम्यां सदा सामरूपां
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ६ ॥

ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीं
भजे मानसाम्भोजसुभ्रान्तभृङ्गीम् ।
निजस्तोत्रसंगीतनृत्यप्रभाङ्गीं
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ७ ॥

भवाम्भोजनेत्राजसपूज्यमाना
लसन्मन्दहासप्रभावक्त्रचिह्नाम् ।
चलच्चञ्चलाचारुताटङ्ककर्णां
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
शारदाभुजगप्रयाताष्टकं संपूर्णम् ॥

॥ श्री ॥

# ॥ गुर्वष्टकम् ॥

शरीर सुरूप तथा वा कलत्र

यशश्चारु चित्र धन मेरुतुल्यम् ।

मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे

तत किं तत किं तत किं तत किम् ॥ १ ॥

कलत्र धन पुत्रपौत्रादि सर्व

गृह बान्धवा सर्वमेतद्धि जातम् ।

मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे

तत किं तत किं तत किं तत किम् ॥ २ ॥

षडङ्गादिवेदो मुखे शास्त्रविद्या

कवित्वादि गद्य सुपद्य करोति ।

मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे

तत किं तत किं तत किं तत किम् ॥ ३ ॥

विदेशेषु मान्य स्वदेशेषु धन्य
सदाचारवृत्तेषु मत्तो न चान्य ।
मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे
तत किं तत किं तत किं तत किम् ॥ ४ ॥

क्ष्मामण्डले भूपभूपालवृन्दै
सदा सेवित यस्य पादारविन्दम् ।
मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे
तत किं तत किं तत किं तत किम् ॥ ५ ॥

यशो मे गत दिक्षु दानप्रतापा
ज्जगद्वस्तु सर्व करे यत्प्रसादात् ।
मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे
तत किं तत किं तत किं तत किम् ॥ ६ ॥

न भोगे न योगे न वा वाजिराजौ
न कान्तामुखे नैव वित्तेषु चित्तम् ।
मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे
तत किं तत किं तत किं तत किम् ॥ ७ ॥

अरण्ये न वा स्वस्य गेहे न कार्ये
न देहे मनो वर्तते मे त्वनर्घ्ये ।
मनश्चेन्न लग्न गुरोरङ्घ्रिपद्मे
तत किं तत किं तत किं तत किम् ॥ ८ ॥

गुरोरष्टक य पठेत्पुण्यदेही
यतिर्भूपतिर्ब्रह्मचारी च गेही ।
लभेद्वाञ्छितार्थं पद ब्रह्मसज्ञ
गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥ ९ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
गुर्वष्टक सपूर्णम् ॥

॥ श्री ॥

# ॥ काशीपञ्चकम् ॥

मनो निवृत्ति परमोपशान्ति
  सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगङ्गा
  सा काशिकाह निजबोधरूपा ॥ १ ॥

यस्यामिद कल्पितमिन्द्रजाल
  चराचर भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा
  सा काशिकाह निजबोधरूपा ॥ २ ॥

कोशेषु पञ्चस्वधिराजमाना
  बुद्धिर्भवानी प्रतिदेहगेहम् ।
साक्षी शिव सर्वगतोऽन्तरात्मा
  सा काशिकाह निजबोधरूपा ॥ ३ ॥

काश्या हि काशत काशी
 काशी सर्वप्रकाशिका ।
सा काशी विदिता येन
 तेन प्राप्ता हि काशिका ॥ ४ ॥

काशीक्षेत्र शरीर त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
 भक्ति श्रद्धा गयेय निजगुरुचरणध्यानयोग प्रयाग ।
विश्वेशोऽय तुरीय सकलजनमन साक्षिभूतोऽन्तरात्मा
 देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ
**काशीपञ्चक संपूर्णम् ॥**

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

॥ श्री ॥

# ललितात्रिशतीभाष्यम्

श्रीमच्छकरभगवत्पूज्यपादै.
विरचितम् ।

॥ श्री ॥

# ॥ ललितात्रिशतीभाष्यम् ॥

वन्दे विघ्नेश्वरं देवं सर्वसिद्धिप्रदायिनम् ।
वामाङ्कारूढवामाक्षीकरपल्लवपूजितम् ॥ १ ॥

पाशाङ्कुशेक्षुसुमराजितपञ्चशाखां
पाटल्यशालिसुषुमाञ्चितगात्रवल्लीम् ।
प्राचीनवाक्स्तुतपदां परदेवतां त्वां
पञ्चायुधार्चितपदां प्रणमामि देवीम् ॥ २ ॥

लोपामुद्रापतिं नत्वा हयग्रीवमपीश्वरम् ।
श्रीविद्याराजसंसिद्धिकारिपङ्कजवीक्षणम् ॥ ३ ॥

विस्तारिता बहुविधा बहुभिः कृता च
टीकां विलोकयितुमक्षमता जनानाम् ।
तत्तत्यसत्वपदयोगविवेकभानु
तुष्ट्यै करामि ललितापदभक्तियोगात् ॥ ४ ॥

अगस्त्य उवाच—

हयग्रीव दयासिन्धो भगवन् शिष्यवत्सल ।
त्वत्त• श्रुतमशेषेण श्रोतव्य यद्यदस्ति तत् ॥

रहस्यनामसाहस्रमपि त्वत्त' श्रुत मया ।
इत' पर मे नास्त्येव श्रोतव्यमिति निश्चय' ॥

तथापि मम चित्तस्य पर्याप्तिर्नैव जायते ।
कार्त्स्न्यार्थं प्राप्य इत्येव शोचयिष्याम्यह प्रभो ॥

किमिद कारण ब्रूहि ज्ञातव्याशोऽस्ति वा पुन ।
अस्ति चेन्मम तद्ब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम् ॥

सूत उवाच—

समाललम्बे तत्पादयुगल कलशोद्भव' ।
हयाननो भीतभीत किमिद किमिद त्विति ॥

मुञ्च मुञ्चेति त चोक्त्वा चिन्ताक्रान्तो बभूव सः।
चिर विचार्य निश्चिन्वन्वक्तव्य न मयेत्यसौ ॥

तूष्णीं स्थित स्मरन्नाज्ञां ललिताम्बाकृता पुरा ।

प्रणम्य विप्र स मुनिस्तत्पादावत्यजन्स्थित ॥ ७ ॥

वर्षत्रयावधि तथा गुरुशिष्यौ तथा स्थितौ ।
तच्छृण्वन्तश्च पश्यन्त सर्वे लोका सुविस्मिता ॥

तत श्रीललितादेवी कामेश्वरसमन्विता ।
प्रादुर्भूय हयग्रीव रहस्येवमचोदयत् ॥ ९ ॥

श्रीदेव्युवाच—

अश्वाननावयो प्रीति शास्त्रविश्वासिनि त्वयि ।
राज्य देय शिरो देय न देया षोडशाक्षरी ॥१०॥

स्वमातृजारवद्गोप्या विद्यैषेत्यागमा जगु ।
ततोऽतिगोपनीया मे सर्वपूर्तिकरी स्तुति ॥

मया कामेश्वरेणापि कृता सगोपिता भृशम् ।
मदाज्ञया वचो देव्यश्चक्रुर्नामसहस्रकम् ॥ १२ ॥

आवाभ्या कथिता मुख्या सर्वपूर्तिकरी स्तुतिः ।
सर्वक्रियाणा वैकल्यपूर्तिर्यज्जपतो भवेत् ॥ १३ ॥

सर्वपूर्तिकर तस्मादिद नाम कृत मया ।

तद्ब्रूहि त्वमगस्त्याय पात्रमेव न संशय ॥ १४ ॥

पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः ।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत् ॥

अभुञ्जमानस्त्वत्पादौ वर्षत्रयमसौ स्थितः ।
एतज्ज्ञातुमतो भक्त्या ह्रीदमेव निदर्शनम् ॥

चित्तपर्याप्तिरेतस्य नान्यथा संभविष्यति ।
सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद ॥ १७ ॥

सूत उवाच—

इत्युक्त्वान्तरधादम्बा कामेश्वरसमन्विता ।
अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसंभवम् ॥

संस्थाप्य निकटे वाचमुवाच भृशविस्मितः ।

हयग्रीव उवाच—

कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव ॥

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये ।
येनागस्त्य स्वयं देवी तव वक्तव्यमन्वशात् ॥

सच्छिष्येण त्वया चाहं द्रष्टवानस्मि तां शिवाम्।
यतन्ते दर्शनार्थाय ब्रह्मविष्ण्वीशपूर्वका' ॥

अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम् ।
यस्य स्मरणमात्रेण पर्याप्तिस्ते भवेद्धृदि ॥ २२ ॥

रहस्यनामसाहस्रादपि गुह्यतमं मुने ।
आवश्यकं ततोऽप्येतल्ललितां समुपासितुम् ॥

तदहं संप्रवक्ष्यामि ललिताम्बानुशासनात् ।
श्रीमत्पञ्चदशाक्षर्याः कादिवर्णान्क्रमान्मुने ॥

पृथग्विंशतिनामानि कथितानि घटोद्भव ।
आहत्य नाम्नां त्रिशती सर्वसपूर्तिकारिणी ॥

रहस्यातिरहस्यैषा गोपनीया प्रयत्नतः ।
तां शृणुष्व महाभाग सावधानेन चेतसा ॥

केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज ।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ॥

**तस्मादेकाग्रमनसा श्रोतव्य च त्वया सदा ।**

सूत उवाच—

**इत्युक्त्वा त हयग्रीव प्रोचे नामशतत्रयम् ॥**

बहुकाल सुभक्तिमहिम्ना गुरुपादाम्बुजमवलम्ब्य स्थिताय कुम्भयोनिमुनये शिवदपतिकृतनामशतत्रयोक्त्या प्रेरितो हय ग्रीव उवाच—

**ककाररूपा कल्याणी कल्याणगुणशालिनी ।**
**कल्याणशैलनिलया कमनीया कलावती ॥**

ककाररूपेति । ककार कवर्ण रूप ज्ञापकविशेषण यस्या सा, कादिविद्याविग्रहइत्यर्थ । अथवा ककार रूप वाचक येषा त ककाररूपा हिरण्यगर्भ उदकम् उत्तमाङ्ग सुखादयश्च । हिरण्यगर्भनिष्ठजगद्धारकजगत्कर्तृत्वादिगुण वत्त्व ककारस्य व्यञ्जनादिमवर्णत्वेन वतत इति तद्वाच्य तया तथा । उदकनिष्ठान्नादिद्वारा जगत्सजीवनहेतुत्वमपि ककारस्य विद्याग्रिमवर्णतयास्तीति तद्रूपा वा । सर्वेषा प्राणिना शिरस्यमृतमस्तीति योगमार्गेण कुण्डलिनीगमने तत्रत्यतत्प्रवाहाप्लुतयोगिनामीश्वरसाम्य जायत इति योगशा स्त्रेषु प्रसिद्धम् । तद्वत् कवर्ण मन्त्रादिमभागस्थ तत्पु-

रश्वर्यापरायणाना शिवभावमेव यच्छतीति वा तद्रूपत्यर्थ, 'क ब्रह्म ख ब्रह्म' इति श्रुते । दहराकाशस्य सुखस्वरूपत्वेन परमप्रेमास्पदतया अभिलाषविषयत्ववत् ककारोऽप्यतिप्रीतिविषयमूलमन्त्रादिमाक्षरतया अभ्यर्हितत्वाद्वा तद्रूपेत्यर्थ ॥ ॐ **ककाररूपायै नम** ॥

कल्याणी । कल्याणानि सुखानि । युवसार्वभौमानन्दादारभ्य ब्रह्मानन्दपर्यन्त तैत्तिरीयकादौ प्रतिपादितानि । तत्तदुपाधिभेदेष्ववच्छिन्नस्वरूपतया तानि कल्याणशब्दवाच्यानि, 'एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुते । समष्टिव्यष्टिवस्त्वमुपहितस्वरूपेण सभवतीति मतुप्समासोपपत्ति । तथा च राहो शिर इतिवत् समासान्तर्गतषष्ठ्यर्थभेदस्याविवक्षिततया आनन्दैकविग्रहवतीत्यर्थ, 'विज्ञानमानन्द ब्रह्म' इति श्रुत्युक्तब्रह्मस्वरूपलक्षणवतीत्यर्थ ॥ ॐ **कल्याण्यै नम** ॥

कल्याणगुणशालिनी । कल्याणा सुखकर्तार ये गुणा सत्यकामसत्यसकल्पसर्वाधिपत्यसर्वेशानत्ववामनीत्वसयद्वामत्वादय, ते अस्या शालयन्त इति, तथा एना शोभयन्तीति वा, तै शाल्यत इति वा कल्याणगुणशालिनी । तथा च कल्याणाश्च ते गुणाश्च कल्याणगुणा शालयन्त्येनामिति

कल्याणगुणशालिनी, अस्मिन समासे देवताया पराधीन गुणवत्त्व स्वत शुद्धचैतन्यत्व च स्फुरितम् । कल्याणगुणै शाल्यत इत्यत्र गुणवत्त्वमात्र देवताया द्योत्यते । तच्चौपाधिकत्व वैदकमपि स्तुतौ तदप्रकटन न दोषाय । यदि गुणानामारोपितत्वेन तत्सकीर्तनस्य भेदबुद्धिसमये तत्कृपाप्राप्तिहेतुत्वेनावश्यकत्वम्, तथापि तदपवादपुर सर शुद्ध चैतन्याभेदध्यानरूपमुख्यभजन मुख्यमवति सपादयितु स्व-गुरूपदिष्टमार्गेण सुकरमेवेति नातिविस्तार्यते ॥ ॐ कल्याणगुणशालिन्यै नम ॥

कल्याणशैलनिलया । शिलाना विकार शैल शिलाघन इत्यर्थ, कल्याण सुखमेव शैल घनीभूत इत्यर्थ, तस्मिन् कल्याणशैले स्वस्वरूप आनन्दघने निलयति तिष्ठतीति कल्याणशैलनिलया, 'स भगव कस्मिन प्रतिष्ठित इति स्वे महिम्नीति होवाच' इति श्रुते, देवदत्त स्वस्मिन्नेव स्वय वर्तते इति लौकिकप्रयागाच्च, देवताया स्वस्वरूपे स्वावस्थान युज्यत इति । कल्याणमेव शैलवत् घनीभूत कल्याणशैल आनन्दमयकोश कल्याणशैलो निलय यस्या सा इति बहुव्रीहिसमास न विरुद्ध, 'ब्रह्म पुच्छ प्रतिष्ठा' इति उक्त श्रुतिप्रामाण्यात् । अथवा कल्याणशैल महामेरु निलय गृह

यस्या सा तथा, सुमेरुमध्यशृङ्गस्थेत्यर्थ ॥ ॐ कल्याणशैलनिलयायै नम ॥

कमनीया । परमानन्दस्वरूपत्वेन परमप्रेमास्पदा, 'को ह्येवान्यात्क प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' इति श्रुते । सुखस्य मनोहरत्वेन सर्वेप्साविषयत्ववत् मायावृताना सुखप्रापकत्वेन स्वस्वेष्टदेवतासु प्रीत्यतिशयेन तत्पूजादौ प्रवर्तता तत्फलदानेन मनोहरत्वाद्वा कमनीया । ज्ञानिनामानन्दघनीभावात्मकसुन्दरमूर्तिमत्तया वा कमनीया ॥ ॐ कमनीयायै नम ॥

कलावती । कला शिर पाण्याद्यवयवा , चतु षष्टिकला विद्यारूपा वा, चन्द्रकला वा, भक्तध्यानाय अस्या सन्तीति कलावती ॥ ॐ कलावत्यै नम ॥

**कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।**
**कदम्बकाननावासा कदम्बकुसुमप्रिया ॥**

कमलाक्षी । कमले इव अक्षिणी यस्या सा तथा । कमलाया लक्ष्म्या अक्षिशब्देन तन्निमित्तक ज्ञान लक्ष्यते विषयतासब धेन तद्वतीति वा । कमलाया ऐहिकामुष्मिकश्रिय हेतुभूते अक्षिणी यस्या सा— इति स्वकीयेक्षणमा

लेण महदैश्वर्यप्रापिकेति भाव ॥ ॐ **कमलाक्ष्यै नम** ॥

कल्मषघ्नी । कल्मषाणि पापानि हन्ति नाशयतीति कल्मषघ्नी, 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' इति भगवद्वचनात् । अथवा वेदान्तमहावाक्यजन्यसाक्षात्काररूपब्रह्मविद्या 'ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुते तथा' इति स्मृते, 'न स पापं श्लोकं शृणोति' इति श्रुतेश्च ॥ ॐ **कल्मषघ्न्यै नम.** ॥

करुणामृतसागरा । करुणया कृपया जात यदमृत मोक्षरूप तस्य सागर इव सागरा । यथा अमृतसमुद्र स्वयममृतस्वरूप सन् अन्यानपि लोकान् अमृतपायिमेघाद्विमुक्तामृतेन सजीवयति, तथा 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुत्या स्वयममृतस्वरूपा सती । 'लभते च तत कामान्मयैव विहितान्हितान्' इति भगवद्वचनेन तत्तदधिकारिकृतकर्मोपासनादिफलस्य देवताप्रापणीयस्य सप्राप्तौ तत्तदधिकारिणा तत्तत्फल स्थितमिति सभाव्यत इति सागरोपमा । अमृतवत्सर्वसजीवनी करुणामृतस्य अभिन्नाश्रयत्वात् सागरा, करुणा च भक्तविषयकपरिपाल्यताबुद्धि । यद्वा, करुणया कृपया अमृता शाश्वतकीर्तिमत्त्वेन ब्रह्मादिलोकगता सागरा सगरराजवश्या यस्या सा तथा, यद्वा,

करुणया दयया हेतुना अमृताय प्राप्त सागर समुद्रो यया सा भागीरथी, करुणामृतसागरा ॥ ॐ **करुणामृतसागरायै नम** ॥

कदम्बकाननावासा । कदम्बनामककल्पवृक्षयुक्त यत्कानन वन तत्रावासो गृह यस्या सा तथा ॥ ॐ **कदम्बकाननावासायै नम॰** ॥

कदम्बकुसुमप्रिया । कदम्बाना कुसुमानि कदम्बकुसुमानि तेषु प्रिया प्रीतिमतीति यावत् । यद्यपि प्रियशब्द प्रीतिविषयवाचक, तथापि कुसुमजन्यप्रीतरभावेन तद्विषयताया वक्तमशक्यत्वात् तथोक्तम ॥ ॐ **कदम्बकुसुमप्रियायै नम** ॥

**कदर्पविद्या कदर्पजनकापाङ्गवीक्षणा ।**
**कर्पूरवीटीसौरभ्यकल्लोलितककुसटा ॥ ३ ॥**

कदर्पविद्या । कदर्पस्य विद्या तन्निष्ठप्रत्यग्ब्रह्मैक्यज्ञानमित्यर्थ । अथवा विद्याप्रापकत्वात्तदृष्टमूलमन्त्रवर्णममुग्यायो विद्येत्युच्यत वेदवाक्येषु उपनिषत्पदवत् । तद्वान्यार्थत्वात् तथा देवी सून्यते ॥ ॐ **कदर्पविद्यायै नम** ॥

कदर्पजनकापाङ्गवीक्षणा । अपाङ्गाभ्या वीक्षणमपाङ्गवीक्षणम्, ईषद्दर्शनमिति यावत् । कदर्पस्य जनक अपाङ्ग

वीक्षण यस्या सा । अनेन नाम्ना येषा जडानामपि कुरूपिणा जनाना उपरि सकृदीषद्वीक्षणमभिजायते, ते कदर्पवद्रूपयौवनसामर्थ्यलक्ष्मीभाजो भवन्तीति ध्वनितम् । यद्वा कदर्पस्य जनक श्रीनारायण स यस्या अपाङ्गवीक्षणे ईषद्भ्रूवल्लिचलन वर्तते, यस्या आज्ञामात्रवश्यतया महा विष्णु जगद्रक्षादिकार्य करोतीति सा तथा इति । अथवा, कदर्पजनका महालक्ष्मी यस्या अपाङ्गवीक्षणे प्रर्थतया व र्तते सा तथा । कदपस्य मन्मथस्य जनका उत्पादका स्रक्चन्दनादिभोग्यविषया ते यस्या अपाङ्गवीक्षणात् भवन्ति सा तथा । अथवा, चन्द्रस्य वामनेत्रतया अपाङ्ग वीक्षण चन्द्रिकोच्यते । कदपजनक अपाङ्गवीक्षण यस्या सा तथा । कदर्पजनकाशब्देन लक्ष्मीनिवासकमल ल क्ष्यते, तद्वत् अपाङ्ग कमलाक्षीत्यथ तन्निरूपितवीक्षण लोकसजीवन यस्या सा तथा ॥ ॐ **कदर्पजनकापाङ्ग वीक्षणायै नम** ॥

कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटा । कर्पूरयुक्ताश्च ता वीटयश्च ताम्बूलकबलानि तासा सौरभ्य सौगन्ध्य तै कल्लोलितानि असकृत्परिमलितानि ककुभा दिशा तटानि प्रदेशा यस्या सा । मुखवासितपरिमलेन जगन्मात्र सुर-

भीकृतमिति स्वरूपातिशयोक्ति अस्मिन्नाम्नि व्यज्यत , महा राजभोगवतीत्यर्थ । ॐ **कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटायै नम ॥**

## कलिदोषहरा कञ्जलोचना कम्रविग्रहा । कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ॥ ४ ॥

कलिदोषहरा । कले निन्द्या जायमानाना पुरुषाणा जन्ममात्रेण ये दोषा पापानि आयान्ति, तान् दृष्टा श्रुता कीर्तिता सस्तुता पूजिता ध्याता सती हरतीति तथा । कले अन्योन्यवादिना कलहात्तत्तन्मताभिनिवेशवशाज्जायमाना ये दोषा परब्रह्मविषये अस्तित्वनास्तित्वदेहादिव्यतिरिक्तत्वभिन्नत्वाभिन्नत्वगुणित्वादिसाधकयुक्त्याभासतदनुगुणसमत्याभासश्रुतितात्पर्यविघटनान्यथाकरणदुराग्रहजन्यकामक्रोधपरुषपरवशक्रियमाणनिन्दासहनादिरूपा बहुविधा दोषा , तान्-द्वैतब्रह्मज्ञानसाधनमुक्तिरूपेण हरतीति कलिदोषहरा ॥ ॐ **कलिदोषहरायै नम ॥**

कञ्जलोचना । केभ्य जायन्त इति कञ्जानि, कञ्जशब्देन अरविन्दनीलोत्पलानि लक्ष्यन्ते तद्वल्लोचने यस्या सा तथा । अथवा कञ्ज ब्रह्माण्डम् । 'अप पूर्वमप सृष्ट्वा तासु वीर्यम

पासृजत् तदण्डमभवद्धैमम्' इति वचनात् कजानि अनेक कोटिब्रह्माण्डानि लोचनयो लोचनकृतवीक्षणात् यस्या सा तथा, 'सेय देवतैक्षत' इति श्रुते ॥ ॐ **कजलोचनायै नम** ॥

कम्रविग्रहा । कम्र अतिमनोज्ञ, गाम्भीर्यधैर्यमाधुर्यादि-बहुगुणोदितत्वात्, विग्रह मूर्ति यस्या सा तथा, 'आनन्दरूपममृत यद्विभाति' इति श्रुते । आनन्दस्वरूपत्वाद्वा कम्रविग्रहा, ललितारूपेत्यर्थ ॥ ॐ **कम्रविग्रहायै नम** ॥

कर्मादिसाक्षिणी । कर्म आदिर्येषा तानि कर्मादीनि उपासनायोगश्रवणमनननिदिध्यासनानि । तेषा साक्षिणी अ-सबन्धी द्रष्ट्री, 'साक्षी चेता' इति श्रुते । अथवा कर्मादय साक्षिभूता जीवनिष्ठा तदनाश्रयतया आत्मदर्शन साधनानि सृज्यमानजगदुपादानभूतानि यस्या सा तथा ॥ ॐ **कर्मादिसाक्षिण्यै नमः** ॥

कारयित्री कारयितृत्व नाम कुर्वित्याज्ञापयितृत्व जायमानकार्यगोचरकृत्युत्पत्तिहेतुकर्मोद्बोधकत्वरूपलिङ्लोट्तव्य प्रत्ययाना धर्म विधिनिष्ठभावनेत्युच्यते । तेषा शब्दात्मकतया जडाना तथात्वासभवात्तदधिष्ठानचैतन्यरूपतया

'सर्वे वेदा यत्रैक भवन्ति' इति श्रुत्या वेदस्यात्माभेदेन स्व प्रकाशकतया अर्थप्रकाशनद्वारा प्रामाण्यविधीनामपि वेदैक देशतया प्रेरणरूपत्वात् तदधिष्ठानचैतन्यात्मनाकारयतीति तथा, 'एष ह्येव साधु कर्म कारयति' इति श्रुते ॥ ॐ **कारयित्र्यै नम** ॥

कर्मफलप्रदा । कृताना कर्मणा कालान्तरभाविफलप्रदाने अदृष्ट कारणमित्यनीश्वरमीमासकादिमतम्, तन्न । जडाना सूक्ष्माणामदृष्टाना चतनधर्मकर्मफलप्रदानसामर्थ्यायोगात् कृताना कर्मणा फलावश्यभावे 'कर्माध्यक्ष' इति श्रुते, 'मयैव विहितान्हितान्' इति स्मृतेश्च, 'फलमत उपपत्ते' इति न्यायाच्च परदेवता कर्मफलप्रदा ॥ ॐ **कर्मफलप्रदायै नम** ॥

**एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः ।**
**एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः ।**

एकाररूपा । एकार रूप मन्त्रद्वितीयावयवसज्ञापक यस्या सा तथा ॥ ॐ **एकाररूपायै नम** ॥

एकाक्षरी । एक मुख्यम् ईश्वरोपाधित्वेन । न क्षरति आत्मज्ञानेन विनामुक्ते न नश्यतीति अक्षर कूटस्थशब्दवाच्य

माया । तत्प्रतिबिम्बनिष्ठसर्वज्ञत्वाद्याधायकविशेषणत्वेन अ स्या अस्तीति एकाक्षरी । एकम् अक्षर सवप्रकृतित्वात्परा-परब्रह्मप्रतीकतया तदुपासनया तदुभयप्राप्तिसाधनत्वेन शब्द ब्रह्मरूपलक्षितलक्षकशब्द प्रणव अस्या अस्तीति वा । एक अखण्डैकचैतन्यरूप अक्षर अनश्वर अविनाशी परमश्वर अर्धशरीरत्वन अस्यामस्तीति वा । एकान्यक्ष राणि मायाबीजादीनि तदुपासनाप्रतीकत्वेन अस्या सन्ती ति वा । 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुत अखण्डाकारवृत्तिप्रतिफलनयोग्यचैतन्यरूपतया तद्वृत्तिव्याप्ति मात्रेण अक्षरपदलक्ष्यचैतन्य विषयतासबन्धेन अस्या अस्तीति एकाक्षरी । चकार निर्गुणब्रह्मणोऽपि सगुणब्रह्मविशेषणसद्भा वसमुच्चयपर सर्वत्रापि द्रष्टव्य । 'सच्चिन्मय शिव सा क्षात्तस्यानन्दमयी शिवा' इति वचनेन, 'स्त्रीरूपा चिन्त येद्देवीं पुरूपामथवेश्वरीं । अथवा निष्कल ध्यायत्सच्चिदान न्दविग्रहाम्' इति स्मृत्या च, 'त्व स्त्री त्व पुमान्' इति श्वेताश्वतरोपनिषदि उपाधिकृतनानारूपसभवोक्तेश्च । अत एव 'सेय देवतैक्षत' इत्यादौ 'तत्सत्य स आत्मा' इत्यन्ते च श्रुतौ स्त्रीलिङ्गान्तदेवतादिपदाना तत्सत्यमिति नपुसका-न्तस्य स आत्मेति पुँल्लिङ्गात्मशब्दस्य एकार्थत्वम् अविवक्षि

तापाधिमत्तया तत्त्वपदलक्ष्यार्थस्यैकत्वात् । तस्मात् तत्त्व पदलक्ष्यार्थे सर्वेऽपि गुणा वर्णितु सभवन्तीति हय ग्रीवेण अस्या त्रिशत्या बहव चकारा उपात्ता । तेन वय सर्वेषा सर्वत्र न पार्थक्यन प्रयोजनान्तर पश्याम ॥

ॐ एकाक्षर्यै नम. ॥

एकानेकाक्षराकृति । एकम् ईश्वरप्रतिबिम्बोपाधितया शु द्धसत्त्वप्रधानम् अक्षरमज्ञानम् । अनेकानि मलिनसत्त्वप्रधान तया जीवोपाधिभूतान्यक्षराणि अज्ञानानि, 'माया चाविद्या च स्वयमेव भवति' इति श्रुते । एक चानेकानि च एकानकानि तानि च अक्षराणि च तानि तथा 'माया तु प्रकृतिम्' इति श्रुते । तेष्वाकृतय प्रतिबिम्बान्यवच्छिन्नानि वा चैतन्यानि घटस्थोदकावच्छिन्नप्रतिबिम्बिताकाशवद्यस्या सा तथा । अथवा एकानि च प्रणवाद्यानि अनेकानि च अकारादि क्षकारान्तानि अक्षराणि वर्णा आकृति स्वरूप यस्या सा, मातृकास्वरूपत्वेन वा । 'अकारादिक्षकारान्ता मा तृकेत्यभिधीयते' इति वचनात् । अथवा एच कश्च एकार- ककारौ तौ चेतराण्यनेकाक्षराणि च सर्वं मिलित्वा पञ्चद शवर्णात्मिका मूलविद्या आकृति स्वरूप यस्या सा । साक्षि तया एकीभूता अनेकाक्षरेषु अनेकाज्ञानेषु आकृति स्वरूप

शोधिततत्त्वपदार्थसामरस्यात्मक यस्या सा तथा ॥ ॐ एकानेकाक्षराकृतये नम ॥

एतत्तदित्यनिर्देश्या । एतत् एतत्कालेऽपि इयत्तापरिच्छेद्यवद्वस्तु तत् परोक्षमनिश्चितस्वरूपम् । एतच्च तच्च एतत्तत् । इतिकार इत्थभावे तृतीयार्थे । तथा च एतत्त्वतत्त्वाभ्यामित्यर्थ । एतत्तदित्यनेन निर्देष्टु निर्वक्तु योग्या निर्देश्या सा न भवतीति अनिर्देश्या । लोके सविशेषो हि पदार्थ परोक्षत्वापरोक्षत्वादिधर्मविशेषेण तद्गतेन निर्वक्तु शक्य । शब्दप्रवृत्तिनिमित्तजातिगुणक्रियाषष्ठ्यर्थाना यत्र सबन्धो नास्ति, 'अशब्दमस्पर्शमरूपमव्ययम्', 'निर्गुण निष्कलम्' इत्यादिश्रुत्या, तादृग्वस्तु केन करणेन केन वा वचनेन निर्देष्टु शक्यम् । 'यद्वाचानभ्युदितम्' इति श्रुते । अत एतत्तदित्यनिर्देश्या वाङ्मनसातीतेत्यर्थ । अथवा, एतत् प्रत्यक्षादिप्रमाणसिद्ध कार्य पश्चाद्भावि । तत् परोक्षत्वादिविशिष्ट पूर्वकालसबन्धि व्यवहित कारणमुच्यते । इतिशब्द उभयत्र सबन्धनीय । कार्यमिति कारणमित्यपि शुद्धचैतन्यरूपा अनिर्देश्या, कार्यत्वकारणत्वघटकोपाधिविरहितत्वेन कार्यकारणभावाभावे तद्वाचकशब्दैर्विषयीकर्तुमशक्यत्वात् । अथवा, एतत् अपरोक्षतया अहमिति प्रती

यमान जीवचैतन्य त्वपदवाच्यार्थ । तत् परोक्षतया प्रती यमानमीश्वरचैतन्य तत्पदवाच्यार्थ । इति शब्द एव कारार्थ । तथा च वादिभेदसिद्धान्त अनूदित । साख्यमते प्रकृतिर्जगत्कर्त्री, जीवो नानाचतन भोक्ता इत्यत ईश्वर एव नास्तीत्यङ्गीकृतम् । भागवतमते तु 'गुणी सर्ववित्' इति श्रुत नित्यगुणविशिष्टात् परमेश्वराद्भिण्णो जीवानामुत्पत्तिविनाशवत्त्वेन अनित्यत्वात् स एव भगवान् पारमार्थिक एक इत्यङ्गीकृतम् । तदुभयवादिसिद्धान्तस्य औपनिषदमते निरस्तत्वात् तदुभयविधया अनिर्देश्या । परमार्थसच्चिदानन्दरूपतया छान्दाग्यगतदेवता शब्दार्थस्य प्रतिपादनादिति भाव । अथवा, तटस्थेश्वरवादिकाणाद‌ादिसिद्धान्तवत् व्यवस्थितभेदवज्जीवेश्वररूपतया अनिर्देश्या । भेदव्यवस्थाया एव साधितुमशक्यत्वादिति एतत्तदित्यनिर्देश्या ॥ ॐ **एतत्तदित्यनिर्देश्यायै नम** ॥

एकानन्दचिदाकृति । एका मुख्या मोक्षरूपत्वेन प्रार्पितसिता । आनन्द सुखम् । चिन् चैतन्य प्रकाशज्ञानम् । आनन्दश्चासौ चिच्च आनन्दचित् एका चासावानन्दचिच्च एकानन्दचित् आकृति स्वरूप यस्या सा । सच्चिदानन्द

ब्रह्मरूपलक्षणवतीत्यर्थं । 'विज्ञानमानन्द ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुते 'आनन्दादय प्रधानस्य' इति न्यायाच्च दीप्तिस्वरूपप्रकाशात्मकपरमानन्दस्वरूपस्य जीव न्मुक्त्यवस्थाया परमात्मज्ञानवन् पुरुषानुभवरूपप्रत्यक्षप्रमा णगोचरत्वमस्या इति वा तथा । अथवा, एकेषा आनुभा विकाना योगिनामानन्दसाक्षात्काररूपा आकृति निरावर णप्रकाशरूपा यस्या सा तथा । अथवा, आनन्द शिवा, चित् परमेश्वर, एके मूर्तिभेदरहिते आनन्दचितौ आकृति र्यस्या सा तथा ॥ ॐ **एकानन्दचिदाकृतये नम.** ॥

**एवमित्यागमाबोध्या चैकभक्तिमदर्चिता ।**
**एकाग्रचित्तनिर्ध्याता चैषणारहिताद्दता ॥**

एवमित्यागमाबोध्या । ननु आनन्दशब्दस्य लक्षणया आनन्दमयो वाच्य । 'य एको जालवानीशत इशनीभि' इति श्रुत्युक्तैकत्वमपि जीवे सिध्यति । तथा च एकश्चासा वानन्दश्च तस्य चिन् अधिष्ठानप्रकाशकचैतन्यमाकृति यस्या सेति विग्रह सभवति । 'ब्रह्म पुच्छ प्रतिष्ठा' इति तत्प्रका शकचैतन्यस्य पुच्छशब्देन परामर्शात् । एव च सति प्रका शकनित्यत्वस्य प्रकाश्यनित्यत्वापेक्षत्वात् । 'सत्य ज्ञानम-

नन्त ब्रह्म' इत्यादिब्रह्मस्वरूपलक्षणवाक्येषु वाच्यार्थप्राधा न्येन विधिमुखेनैव ब्रह्मप्रतिपादने अतद्व्यावृत्तिरूपनिषेधमु खेन लक्षणार्थप्राधान्येन ब्रह्मस्वरूपलक्षणप्रतिपादनायोगेन तत्त्वमसिवाक्ये वैशिष्ट्य वाक्यार्थ सभवतीति चेत्, नेत्या- ह—एवमित्यागमाबोध्येति । एवविशिष्टतया—इति प्रत्यक्ष सिद्धत्वेन आगमैर्वेदै ज्ञापनीया न भवति । आनन्द शब्दस्यानन्दमात्रवाचकस्य तत्प्रचुरे सभावितेषदु ख जीवे लक्षणाया त्रयो दोषा । पारमार्थिकभिन्नसत्ताकवस्त्व न्तराभावेन तत्त्वपदवाच्यार्थनिष्ठविशेषणद्वयस्य अन्योन्य विरोधवत्तया तम प्रकाशवद्वैशिष्ट्यायोगे अखण्डार्थो वा क्याथ सपद्यते । तथा च स्वरूपलक्षणवाक्येषु वाच्यार्थस्य 'अतोऽन्यदार्तम्' इति श्रुत्या मिथ्यात्वप्रतिपादनात् निषेध मुखेनैव अतद्व्यावृत्तिस्वरूपप्रतिपादनेन लक्षणवाक्यानि सम ञ्जसानि भव तीति भाव ॥ ॐ **एवमित्यागमाबोध्यायै नम ॥**

एकभक्तिमदर्चिता । एकस्मिन्नभेदे जीवब्रह्मणो भक्ति भजनीयत्वबुद्धि तत्परिजिज्ञासा येषा सन्ति, तैरर्चिता पूजिता इत्येतदुपलक्षण स्तुता ध्याता नमस्कृतेत्येवमादी नाम्, 'यन्मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति'

इति श्रुते मानसिकव्यापारपूर्वकानि हि इतरेन्द्रिय कर्माणि भवन्तीत्यभिप्राय । अथवा, अस्मिन् ससारमण्डले तत्स्वरूपपरिज्ञातार ये केचन, तेषा भजनीयत्वाध्यवसायो भक्ति तदेकप्रवणता सगुणब्रह्मविषया अष्टविधा, तैरेकभक्तिमद्भिरर्चिता अन्तर्यागबहिर्यागमहायागप्रकारै पूजिता इत्यर्थ ॥ ॐ **एकभक्तिमदर्चितायै नम** ॥

एकाग्रचित्तनिर्ध्याता । एकम् ऐक्यरूपम् अग्रम् आलम्बन विषय विजातीयप्रत्ययतिरस्कारपूर्वकसजातीयवृत्तिकाभि निरन्तरव्याप्तिविषयीकृतचैतन्य यस्य तत्तादृश चित्तमन्त करण येषा तै । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीना परिपाकातिशयेन पश्चात्सपद्यमाना सप्रज्ञातसमाधे त्रिविधा भूमिका— ऋतभरा, प्रज्ञालोका, प्रशान्तवाहिता चेति । ऋत यथाभूत सच्चिदानन्दलक्षण ब्रह्म भरति वृत्तिव्याप्त्या विषयीकरोतीति प्रथमा तथा, 'आत्मन्येव वश नयेत्' इति भगवद्वचनात् । प्रज्ञालोका । प्रज्ञाया अखण्डाकारवृत्तौ नित्यनिरन्तराभ्यासेन परिपाक नीताया ब्रह्मविषयिण्या आवरणाभिभव कुर्वन्त्या सत्याम्, 'प्रज्ञा प्रतिष्ठा' इत्यादिश्रुते, प्रज्ञाया ब्रह्मस्वरूपाया आलोक अभिव्यक्ति साक्षात्कार यस्या सपद्यत सा का

रणविज्ञानम् । यस्मिन्विज्ञाते सर्वमिद विज्ञात भवतीत्येक विज्ञानेन सर्वविज्ञानरूपम् । प्रारब्धवशात्तदा चित्त तदध्य स्त सर्वजगद्द्रष्टुमिच्छति यदि, तदानीं चैतन्यप्रकाशेनैव प्रकाशित जगत्स्वाप्नपदार्थवदशेष भासते । इद च भरद्वाजा दीनामस्तीति पुराणादिप्रमाणवेद्यमस्माकम् । तथा च तस्या भूमिकाया निरुद्धसामर्थ्ये सदन्त करण साकारस्वरूप नि र्वासन यदा नश्यति, तदा प्रशान्तवाहिता भवति । वह प्रवाह सततवृत्ति धारा अस्य अस्तीति वाही, वाहिनो भाव वाहिता प्रशान्ता च सा वाहिता च प्रशान्तवाहिता । अथवा, प्रशान्त वाह अस्य अस्तीति प्रशान्तवाही । प्रशान्तवाहिनो भाव प्रशान्तवाहिता, 'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थिति । असम्प्रज्ञातनामेति समाधिर्योगिना प्रिय ' इति वचनात्, 'प्रशान्तमनस ह्येनम ' इति भगव द्वचनात्, 'पृथ्व्यप्तेजाऽनिलखे समुत्थित पञ्चात्मके याग गुणे प्रवृत्ते । न तस्य रागो न जरा न मृत्यु प्राप्तस्य योगाग्निमय शरीरम् ' इति श्रुत्या उक्तलक्षणसाधनपरिपाकव शाद्भवति । तैर्निर्ध्याता, ध्यानस्य निर्गतत्वात् । भेदास्फूर्तौ ध्यानविषयो न भवति ध्यातु स्वरूपमेव प्रकाशते, 'ब्रह्म वेद ब्रह्मैव भवति ' इति श्रुते । निर्ध्याता इति पाठ नितरा

श्रवणमननिदिध्यासनेन साक्षात्कृता इत्यर्थ ॥ ॐ एकाग्रचित्तनिर्ध्यातायै नम ॥

एषणारहिताद्दता । एषणा इच्छा । सा त्रिविधा । एत ल्लोकजयाय पुत्रैषणा । पितृलोकजयसाधनकर्मसपादनाय वित्तैषणा । उपासनादिना जयसाधन देवलोक, तस्मिन्ने षणा लोकैषणा । आभि रहितै अनाकृष्टचित्तै, 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति श्रुते । एषणारहिता ये परमहस परिव्राजका सन्यासिन तै आदरेण अतिशयप्रेम्णा स्वस्व रूपेण आदृता अङ्गीकृता निरन्तरध्यानेन साक्षात्कृता सती मोक्षरूपतया प्राप्तत्यर्थ ॥ ॐ एषणारहिताद्दतायै नम ॥

एलासुगन्धिचिकुरा चैन कूटविनाशिनी ।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी ॥ ७ ॥

एलासुगन्धिचिकुरा । एलावदिति दृष्टान्तप्रदर्शन सौग न्ध्यमात्रसद्भावप्रदर्शनेनाकल्पितदिव्यपरिमलसद्भावे हेतु, न तु प्राकृतत्वदर्शनपरम्, ब्रह्मण स्वाधीनमायत्वात् । तद्व त्सुगन्ध इति साजात्यमात्र व्यज्यते, गुणमात्रादानेन सर्वत्र पदार्थान्तरस्य दृष्टान्तीकरणात् । सुगन्धा येषा

सन्तीति सुगन्धिन तादृशा चिकुरा कुन्तला यस्या सा तथा । स्वभावसिद्धदिव्यपरिमलशालिसर्वाङ्गसौरभ्यवती, चिकुरपदस्य उपलक्षणत्वादिति भाव ॥ ॐ एला सुगन्धिचिकुरायै नम ॥

एन कूटविनाशिनी । एनसा पापाना कूट समुदाय । आगामिसञ्चितप्रारब्धभेदेन समष्टिरूपेण दृढतर तत्त्वज्ञानेन विना अन्यस्य भोगमात्रस्य तद्विनाशकत्वावगमात् तेषा च कल्पकोटिकाल क्रमिकभोगप्रदान विनोपायान्तरेण क्षयेप्सूनामात्मब्रह्माभेदज्ञानविषयतया चैतन्य नाशयतीति तथा । एवविदि पाप कर्म न श्लिष्यते, 'अशरीर वाव सन्त प्रियाप्रिये न स्पृशत' इत्यादिश्रुते, 'अह त्वा सर्वपापेभ्यो मोक्षयिष्यामि' इति स्मृतेश्च । अथवा एनासि च तत्कारणीभूत कूट कपटवचनाभिधान च तत्कारण माया च नाशयतीति तथा ॥ ॐ एन कूटविनाशिन्यै नम ॥

एकभोगा । एकेन कामेश्वरेण साक भोग भुक्ति । भोग स्वस्वरूपानन्दानुभव यस्या सा तथा । अथवा, एकस्य अज्ञानतत्कार्यस्य कार्यकारणरूपेण अभिन्नस्य तदधिष्ठानतया स्वसत्ताधायकत्वेन भोग परिपालन यस्या सा । प्रपञ्चो

त्पत्तिस्थितिनाशहेतुमायोपाधिकचैतन्यमित्यर्थः । 'एकाकी न रमते तत पतिश्च पत्नीश्चाभवताम्' इति पुरुषविधब्राह्मणवचनात्, दंपत्योरैच्छिकभेदकत्वावगमेन परमार्थत एतत्स्वरूपस्यैकचैतन्यरूपतावगमात्, तदुभयभोगस्यापि एकभोगत्वात् तद्वतीति वा ॥ ॐ एकभोगायै नमः ॥

एकरसा । एकः अभिन्नः रसः सामरस्यं यस्याः सा, 'रसꣳ ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतेः । एकः नवरसेषु मुख्यः शृङ्गाररसः यस्याः सा तथा । अथवा, एकेन परमेश्वरेण अस्याः क्रियमाणः प्रीत्यतिशयरूपः रसः एतद्विषयकः यस्याः सा । अथवा एकस्मिन्नेव स्वभर्तरि रसः निरतिशयप्रीतिः अनुरागसञ्ज्ञा यस्याः सा । अथवा, षड्रसेषु मुख्यः मधुररसः प्रियत्वेन यस्याः सा, सत्त्वगुणप्रधानमायोपाधिकचैतन्यस्वरूपत्वात् । 'रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः' इति भगवद्वचनात् ॥ ॐ एकरसायै नमः ॥

एकैश्वर्यप्रदायिनी । ईष्टे प्रेरयति अन्तर्यामित्वेन सर्वाणीति ईश्वरः । 'यः सर्वेषु भूतेषु तिष्ठन्यः सर्वाणि भूतान्यन्तरो यमयति' इति श्रुतेः । तत्प्रेर्यमाणानां जीवानां भूतशब्दवाच्यानां अज्ञानतत्कार्यान्तःकरणोपहितप्रतिबिम्ब

चैतन्यरूपाणा जाग्रदाद्यवस्थाभिमानिना अखण्डब्रह्मसाक्षा त्कारवेलायाम् अभेदानुभवात्, 'तत्त्वमसि' इति श्रुतेश्च 'ए कमेवाद्वितीयम्' इति विशेषितत्वाच्च, एकश्चासावीश्वरश्च ए केश्वर तस्य भाव तदैक्य तन् प्रददातीति तथा। बहुषु वि द्याधनवत्सु तेष्वेको विद्याधनवानित्युक्ते, तत्रत्यजननिष्ठविद्या भावे तदतिशयप्रतीतिवन् एक च निरतिशयमणिमादिकमैश्व र्यं नि श्रेयस प्रददातीति वा । यद्वा एक मानुष सर्वोत्कृष्ट सार्वभौमत्वादिलक्षणमभ्युदयसामान्यमैश्वर्यं प्रददातीति वा तथा ॥ ॐ **एकैश्वर्यप्रदायिन्यै नम** ॥

**एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता ।**
**एधमानप्रभा चैजदनेकजगदीश्वरी ॥ ८ ॥**

एकातपत्रसाम्राज्यप्रदा । आतपान् आ समन्तात् अध्या त्माधिदैवताधिभूतानि आ शब्दार्थ । तभ्या जाता तापा आतपा । तपन्ति शापयन्तीति तपा, आतपभ्य त्रायति रक्षतीति आतपत्र सर्वससारदु खोपशमात्मकमात्मज्ञानम् । 'यज्ज्ञात्वा न पुनर्मोहमेव यास्यसि इति भगवद्वचनात् । अखिलदु खनिदानाज्ञाननिवर्तक एक लक्षणया अभिन्नब्रह्म विषयकमित्यर्थ । एक च तत् आतपत्र च अखण्डाकार ज्ञानम्, तेन जायमान यत्साम्राज्य सम्राजो भाव सर्वोत्तम

त्व तत्प्रदद्दातीति । अथवा, एकातपत्रसाम्राज्य चक्रवर्तित्व तत्प्रददातीति वा ॥ ॐ **एकातपत्रसाम्राज्यप्रदायै नम ॥**

एकान्तपूजिता । एकस्य अद्वितीयस्य शोधितत्वपदार्थ-स्य अन्ते उपाधौ हृदि परिच्छेदकत्वात् पूजिता अहमित्य परोक्षीकृता, 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुते । एकस्य ब्रह्मण अन्ते उप पूजिता षद् गत्यवसानार्थयोरिति धातुपा-ठात् उपनिषद्ब्रह्ममात्रतया पर्यवस्यतीत्यर्थ । एकान्तपूजि तति नाम्नोपनिषदित्यर्थ । अथवा, एकान्ते 'गुहानिवाता श्रयेण प्रयोजयेत्' इति श्रुत एकान्तस्थल ध्यानादिना योगिभिर्विषयीकृतेत्यर्थ । अथवा, कामेश्वरेण एकान्ते स्त्री लिङ्गे पूजिता । सप्रदायप्रवृत्त्यर्थमादौ ईश्वरेण बहिर्यागक्र मण आदिमसाधनेन सर्गाद्यकाले पूजादिना सतोषितत्वात् भूतार्थव्यपदेश । एकान्ते सर्वप्रविलापनसमये पूजिता ध्यानादिना सपादिता साक्षात्कृतेत्यर्थ । 'कश्चिद्धीर प्रत्य-गात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति श्रुतेरिति वा ॥ **ॐ एकान्तपूजितायै नम** ॥

एधमानप्रभा । एधमाना विवर्धमाना सर्वातिशायिनी प्रभा कान्तिर्यस्या सा, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिद विभाति' इति श्रुते । **ॐ एधमानप्रभायै नमः** ॥

एजदनेकजगदीश्वरी । एजन्ति कम्पमानानि चेष्टमाना नि प्राणवन्ति जीवन्ति अनेकानि नानोपाधिकानि जगन्ति जङ्गमानि विचरत्प्राणिन इत्यर्थ । ईष्टे प्रेरयतीति ईश्वरी । स्थावराणा सुखदु खप्राप्तिपरिहारोपायानभिज्ञत्वेऽपि स्वजी वनहेतुभूतोदकपानादिप्रवृत्तिदर्शनाच्चेष्टावत्त्व तत्राप्यस्तीति जगच्छब्दो निर्विशेषप्रपञ्चमात्रपरो वक्तव्य , अन्यथा 'सर्वे षु भूतेषु ' इति श्रुतौ चरप्राणिमात्रपरत्वे सकोचापत्ते । अस ति विरोधे सामान्यवाचकस्य शब्दस्य विशेषलक्षणाङ्गीका रस्य न्याय्यत्वात् । अन्यथा ब्रह्मण प्रपञ्चमात्रोत्पत्त्यादिहे तुत्व सकुचित भवेत् । अत एव आकरे एजत्पद उपात्तम् । यथाकथचित् क्रियाश्रयत्वेन प्राणवत्त्वमात्रस्य समष्टिहिर ण्यगर्भाश्रयत्वेन सर्वेषा प्रेर्यत्व सभवतीति भाव ॥ ॐ **एज दनेकजगदीश्वर्यै नम॰ ॥**

**एकवीरादिससेव्या चैकप्राभवशालिनी ।**
**ईकाररूपा चेशित्री चेप्सितार्थप्रदायिनी** ॥ ९ ॥

एकवीरादिससेव्या । एक अनितरसाधारण वीर पुरश्चर्यादिना कृतमन्त्रदेवतासाक्षात्कारलब्धपुरुषार्थ पुमान् विजयप्राप्ताभ्युदयशाली । राजराजनिष्ठधैर्यगाम्भीर्यादिगुण वत्त्वेन तत्तद्देवतोपासका पुरुषा वीरा इत्युच्यन्ते । यासा

शक्तीनामादयो यथा प्राणिकोटीना ता एकवीरादय तासा कदम्बै ससेव्या ससेवितु योग्या । यदा ईश्वरी भक्तान-नुगृह्णाति सगुणविग्रहवती स्यात् तदा अनेकपरिवारदेवताप रिसेविता मन्त्रदेवतात्वेनोपासनीयेत्यर्थ । अथवा, एकवीरा रेणुका, तदादय शक्तय श्यामलाप्रमुखा, ताभिस्तत्काल-प्रपञ्चे स्वस्वपीठे स्थिता सत्य उपासकानामभीष्टवरप्रदा-ञ्यो दृश्यन्ते । ता अस्या परिसेवकत्वेन स्वयमभीष्टवर कामा इत्यस्या प्रकृताया महिमातिशयोक्ति ॥ ॐ **एक-वीरादिसंसेव्यायै नमः ॥**

एकप्राभवशालिनी । प्रभोर्भाव प्राभव रक्षकत्व एक-मनितरसाधारण च तत्प्राभव च तच्छालक इति तथा । अथवा, प्राभवस्य सापेक्षकधमत्वादेकपदस्य चानन्यगामित्वा र्थस्य सामानाधिकरण्येन स्वारस्येन पर्यालोच्यमानेन अय मर्थं सूच्यत । प्राभव च नियम्यलोकोद्भव विना अनुपपद्य मान तदन्तर्गततत्कार्यमर्थापत्त्या सिध्यति । तथा च वटबीजव त्त्वन्तर्गतपञ्चाद्भाविकार्यवत्कूटस्थचैतन्यमिति भाव । अथवा, प्राभव नामेश्वरत्व तदाकल्पनियम्यजगच्चोपलक्षणविधया य स्यैकस्याखण्डचैतन्यस्य तदेकप्राभवम् । 'पादोऽस्य सर्वा भू तानि' 'एकाशन स्थितो जगत्' इति श्रुतिस्मृतिभ्या भूतपूर्व

गत्या प्राभवोपलक्षितमेकं सच्चिचैतन्यरूपं शालते आविष्करोति तथा । अथवा एकं च तत् प्राभवं च एकप्राभवं मुख्यं सार्वभौमत्वमिति यावत् । प्रभुत्वपरंपरायाः सविशेषायाः कुत्रचित् पर्यवसानावश्यभावे 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' इति श्रुत्या अन्तर्यामितया साक्षात्कृत्युत्पादकत्वयुक्त्या च इतरवागाद्यवयवप्रेरणातिशयानां पर्याप्तिरत्रैवास्तीत्यभिप्रायः । तथा च निरङ्कुशस्वतन्त्रजगत्कारणत्वरूपतटस्थलक्षणलक्षितवेदान्तसमन्वयविषयीभूता अखण्डसच्चिदानन्दस्वरूपा परदेवता अवश्यं स्वस्वरूपेणैव ध्यातव्येति निष्कृष्टार्थः ॥ ॐ **एकप्राभवशालिन्यै नमः** ॥

ईकाररूपा । ईकारः रूपं तृतीयावयवः यद्वाचकमन्त्रस्य यस्याः सा तथा ॥ ॐ **ईकाररूपायै नमः** ॥

ईशित्री । इच्छति ईष्टे इति ईशित्री सर्वप्रेरिका इत्यर्थः ॥ ॐ **ईशित्र्यै नमः** ॥

ईप्सितार्थप्रदायिनी । अर्थ्यन्ते प्रार्थ्यन्ते इत्यर्थाः अभ्युदयनिःश्रेयसरूपाः, आप्तुं गन्तुं प्राप्तुं इच्छाविषयीभूता ईप्सिताः, ते च ते अर्थाश्चेति कर्मधारयः, ईप्सितार्थान् प्रददातीति तथा । केवलकर्मणामदृष्टद्वारा कालान्तरभावि

फलदातृत्वमचेतनत्वान्नोपपद्यते । तादृशाना कस्मिन्नप्यर्थे सामर्थ्यादर्शनात् । चेतनाधिष्ठिताना तु कर्मणा भृत्यकृतपराक्रमादितुष्टराजवत्तदाराधितपरमेश्वर कर्माध्यक्ष , इति श्रुत्या सर्वज्ञस्य तत्तदधिकारिकृतपुण्यापुण्यानुरूपतया फलप्रदाने समर्थस्य सत्त्वकल्पने तदन्यस्य चेतनस्य जीवादेस्तत्र सामर्थ्यविरहात् स एव तत्तदनुगुणविषयेच्छोत्पादनेन तत्साधनानुष्ठापयिता सन् तत्फलकामना पूरयतीत्यनीश्वरमीमासकमतनिरासो द्रष्टव्य । अथवा, ईप्सिता जिज्ञासिता, तथा च स्वस्वरूपप्रतिपादकवेदान्तश्रवणमनननिदिध्यासनविषयीकृता सती अर्थं प्रार्थ्यमान सर्वाभ्यर्हितमोक्षरूप पुरुषार्थं प्रददातीति तथा ॥ ॐ **ईप्सितार्थप्रदायिन्यै नम** ॥

**ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी ।**
**ईशानादिब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा ॥**

ईदृगित्यविनिर्देश्या । ईदृक् एतल्लक्षणलक्षित एतादृश परिमाण एवस्वरूप एतादृशधर्मवानिति प्रत्यक्षसिद्धार्थो विनिर्देष्टु शक्यते । ‘यच्चक्षुषा न पश्यति’ इत्यादिश्रुत्या सर्वेन्द्रियगोचरत्वनिराकरणात् विनिर्देश्या न भवति । औपनिषदाना मते तु उपनिषदा वेदैकदेशत्वेन इतरप्रमाणा

नपेक्षतया अज्ञातार्थज्ञापकत्वेन प्रामाण्यमुररीकृतम् । इद मेव एतादृगेवेति प्रत्यक्षसिद्धार्थज्ञापने तासामनुवादकत्वेन सापेक्षत्वरूपमप्रामाण्य प्रसज्येतेत्यभिप्राय । ॐ ईदृगि त्यविनिर्देश्यायै नम ॥

ईश्वरत्वविधायिनी । ईश्वरस्य भाव तद्यैक्य विदधाति, आवरणविक्षेपशक्तिमदज्ञाननिवर्तकाखण्डाकारचैतन्यस्वरूपा सती भेदबुद्धिमात्रसपादितैश्वर्यैक्यायोगभ्रम निवर्तयती त्यर्थ , 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुते । अथवा, ईश्वरत्व नाम नानादेशविद्याधनोत्कर्षादिमत्त्व तत्तत्प्राणिनि कायपुण्यप्रारब्धानुसारेण कर्मफल प्रयच्छतीति वा । ॐ ईश्वरत्वविधायिन्यै नमः ॥

ईशानादिब्रह्ममयी । ईशानतत्पुरुषाघोरवामदेवसद्योजाताख्यानि पञ्च ब्रह्माणि, तानि मय स्वरूपमस्या अस्तीति सा तथा । अथवा, ईशान आदिर्येषा ते तथा अधिकारिपुरुषा विष्णुब्रह्मेन्द्रादय , तेषामपि तत्तन्नामरूपविशिष्टानाम् अहबुद्धिमताम् अन्तर्यामिस्वरूपेण बुद्धिप्रेरकसच्चिदानन्दस्वरूपपरब्रह्मानन्दप्रकाशात्मना स्फुरतीति तथा । ॐ ईशानादि ब्रह्ममय्यै नमः ॥

ईशित्वाद्यष्टसिद्धिदा । ईशित्वमादिर्यासा तास्तथा । 'अ

णिमा महिमा लघ्वी गरिमा प्राप्तिरीशिता । प्राकाम्य च वशित्व च यत्र कामा परागता ' इति वचनात् । ता सिद्धीरष्टौ ददातीति तथा । अणिमा क्षणमात्रेण अतिसूक्ष्मभाव । महिमा महतो भाव । लघ्वी लाघव । गरिमा गुरोर्भाव, जडतरपर्वतादिवत् भारवशेनाप्रकम्पित्वमित्यर्थ । क्षणमात्रेण विराडाकृतिमत्त्व प्राप्ति । हस्तेन चन्द्रमण्डलादिस्पर्श इशिता, इन्द्रादीनामपि प्रेरकता । प्राकाम्य अप्रतिहतकामनावत्त्वम्, वाञ्छितार्थफलप्राप्तिरित्यर्थ । वशित्व सर्वलोकवशीकरणसामर्थ्यम् । यत्र कामा परागता, काम्यन्त इति कामा विषया यत्र यस्मिन् ऐश्वर्ये सति परागता बहिर्भूता भवन्ति, विषयाणामनुभवाभावेऽपि तज्जन्यसुखवत्त्व आप्तकामत्वमित्यर्थ । एता अष्ट सिद्धय । ॐ ईशित्वाद्यष्टसिद्धिदायै नम ॥

**ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।**
**ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता ॥**

ईक्षित्री । उदासीनद्रष्ट्री साक्षिणी असङ्गोदासीनज्ञानस्वरूपेत्यर्थ, 'साक्षी चेता' इति श्रुते, 'आवि सन्निहित गुहायाम्' इति श्रुते । ॐ ईक्षित्र्यै नम ॥

ईक्षणसृष्टाण्डकोटि । अण्डाना ब्रह्माण्डाना कोटय असख्याता, भूतभाविकालभेदेन बहुवचन कोटिशब्दस्य, अनादित्वात् ससारमण्डलस्य, ईक्षणेन भाविकार्यालोचनेन सृष्टा अण्डकोटयो यया सा तथा, 'तदैक्षत बहु स्या प्रजायेयेति' 'स ईक्षाचक्रे' 'आत्मा वा इदमेकमग्र आसीत् नान्यत्किंचन मिषत् स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत' इत्यादिश्रुते, बाह्यकारणमनपेक्ष्य ऊर्णनाभ्यादिदृष्टान्तप्रदर्शनेन चेतनस्याभिन्ननिमित्तोपादानप्रदर्शनयुक्ते, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादेश्चेति भाव । ॐ ईक्षणसृष्टाण्डकोटये नम ॥

ईश्वरवल्लभा । ईश्वर कामेश्वर वल्लभ पति यस्या सा तथा । ईश्वराणा ब्रह्मविष्णुरुद्रादीना तत्तन्निष्ठमहिमोत्कर्षरूपेण प्रीत्यतिशयविषयत्वेन अभ्यर्हितेत्यर्थो वा । ॐ ईश्वरवल्लभायै नमः ॥

ईडिता । ईड स्तुताविति धातुपाठात् स्तुतिभि विषयीकृता, वेदान्तैरिति शेष, 'एष नित्यो महिमा ब्राह्मणस्य' इत्यादिश्रुते । ॐ ईडितायै नम ॥

ईश्वरार्धाङ्गशरीरा । ईश्वरस्य सच्चिदानन्दात्मकस्य शिवस्य अर्धं च तत् अङ्ग च अर्धाङ्गम् । आनन्दस्वरूपता शरीर

शरीरवत्स्वरूपलक्षण यस्या सा तथा । 'सच्चिन्मय शिव साक्षात्तस्यान दमयी शिवा' इति स्मृते । अथवा, ईश्वरस्यार्धाङ्ग वामभाग शरीर मूर्तिर्यस्या सा । अथवा, ईश्वरस्य इकारस्य अर्धाङ्ग शक्तिबीज शरीर मन्त्रात्मिका मूर्तिर्यस्या सा तथा । ॐ **ईश्वरार्धाङ्गशरीरायै नम** ॥

ईशाधिदेवता । ईशस्येत्युपलक्षण जीवस्यापि, ईशस्य तत्पदवाच्यार्थस्य मायोपाधिकस्य विशिष्टस्य अधि उपरि विशेषणद्वयस्य परित्यागे देवता द्योतमाना कूटस्थचिन्मात्रशोधिततत्त्वपदार्थरूपेत्यर्थ । अथवा, ईश कामेश्वर अधि देवता पूज्या यस्या सा तथा । परमपतिव्रतेत्यर्थ ॥ ॐ **ईशाधिदेवतायै नमः** ॥

**ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।**
**ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥**

ईश्वरप्रेरणकरी । ईश्वरस्य बिम्बचैतन्यस्य स्वरूपा सती जगत्सर्जनादिकार्यप्रेरयित्री प्रेरणकरी आज्ञापकेत्यर्थ । इच्छाज्ञानक्रियाशक्त्यावरणविक्षेपशक्तिप्रतिफलितचित्स्वरूपा भाविकार्यानुकूलप्रारब्धाध्यक्षपरमेश्वरेक्षणनामधेयप्रकाशात्मिका भवतीति भाव । ईश्वरप्रेरण तदाज्ञामनुल्लङ्घनेन क-

रोतीति वा, तदीयभार्यात्वेन नितरां तद्वश्येति यावत् ॥ ॐ ईश्वरप्रेरणकर्यै नमः ॥

ईशताण्डवसाक्षिणी । ईशस्य तत्पदवाच्यार्थस्य ताण्डव नर्तनवदप्रयत्नसपाद्य लीलामात्रमित्यर्थं, जगत्सर्जनादिरूपा क्रिया चलनरूपकर्मत्वसामान्यात्, तस्य साक्षिणी अस सर्गप्रकाशरूपिणीत्यथ, 'असगो न हि सज्जते' इति श्रुते । अथवा, ईशताण्डवस्य परमेश्वरनृत्यनाट्याभिव्यञ्जितचतु ष ष्टिकलोपदेशस्य साक्षिणी । तदुक्तम्— 'नर्तनाद्धि परेशस्य चतु षष्टिकलाजनि' इति प्रदोषस्तोत्रे ईशताण्डवनर्तनवर्णन मतिस्फुटमिति नेह लिख्यते ॥ ॐ ईशताण्डवसाक्षिण्यै नम ॥

ईश्वरोत्सगनिलया । ईश्वरस्य स्वभर्तु उत्सग ऊरू तौ निलय यस्या सा तथा ॥ ॐ ईश्वरोत्सगनिलयायै नम ॥

ईतिबाधाविनाशिनी । ईतिबाधा दैवाद्युपद्रव, क्षुद्र जन्तुपीडा वा, ता विनाशयतीति तथा ॥ ॐ ईतिबाधा विनाशिन्यै नम ॥

**ईहाविरहिता चेशशक्तिरीषत्स्मितानना ।**
**लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ।**

ईहाविरहिता । अप्राप्तप्राप्तिं प्रति इच्छा ईहा, तया विरहिता, आप्तकामत्वात् तद्विरहितेत्यर्थ ॥ ॐ **ईहाविरहितायै नमः ॥**

ईशशक्ति । ईशस्य शक्ति सर्वज्ञत्वादिस्वरूपसामर्थ्यं यस्या सा तथा, 'देवात्मशक्तिम्' इति श्रुते ॥ ॐ **ईशशक्त्यै नम ॥**

ईषत्स्मितानना । ईषत् स्मित मन्दहास यस्य तत् तथा, तादृगानन यस्या सा तथा, पर्याप्तकामत्वेन सर्वदा प्रसन्न मुखीत्यर्थ । दु खास्पर्शिपरमानन्दरूपतया वा तथा ॥ ॐ **ईषत्स्मिताननायै नम ॥**

लकाररूपा । रूप्यत इति रूप मन्त्रस्य चतुर्थवर्णत्वेन ज्ञापक यस्या सा तथा ॥ ॐ **लकाररूपायै नम ॥**

ललिता 'ललित त्रिषु सुन्दरम् इति वचनात् अत्यन्तसौन्दर्यवतीत्यर्थ । अनुपमसौन्दर्या वा ॥ ॐ **ललितायै नम ॥**

लक्ष्मीवाणीनिषेविता । लक्ष्मी रमा सर्वैश्वर्यशक्ति , वाणी सरस्वती सर्वज्ञानशक्ति , ताभ्या नितरा अकृत्रिमप्रेम्णा अनन्यभूता सती सेविता । सेवानाम उन्मीलिताज्ञाप्रतीक्षा, तद्वत्त्वादित्यर्थ ॥ ॐ **लक्ष्मीवाणीनिषेवितायै नम ॥**

**लाकिनी ललनारूपा लसद्दाडिमपाटला ।**
**ललन्तिकालसत्फाला ललाटनयनार्चिता ॥**

लाकिनी । क सुखम्, 'क ब्रह्म इति श्रुते, तत्र भवतीत्यक ब्रह्मभिन्नतया प्रतीयमान दु खात्मक जगत् अकम्, लीयत इति लम्, उपलक्षणमुत्पत्त्यादे, लमक मस्यास्तीति लाकिनी, अनृतजडदु खरूपजगत्कारणतद्व्यावृत्तस्वरूपब्रह्मभूता इत्यर्थ ॥ ॐ **लाकिन्यै नम ॥**

ललनारूपा । रूप्यते ज्ञाप्यते अनेनेति रूप ज्ञापक तद्व्याप्यलिङ्ग चिह्नमिति वा, ललनाना स्त्रीणा रूप वेष आभरणाद्यलकारो वा आकृतिर्वा यस्या सा तथा, ललना स्त्रिय रूपाणि भूतय यस्या सा तथा, 'लिङ्गाङ्कितमिद पश्य जगदेतद्भगाङ्कितम' इति पुराणवचनात् ॥ ॐ लल**नारूपायै नम ॥**

लसद्दाडिमपाटला । दाडिमशब्देन विकसित तत्पुष्प लक्ष्यते, लसत् सद्या विकसनप्रकाश च तद्दाडिम च, इद उपलक्षण बन्धूकादीनाम्, तद्वत्पाटला श्वेतमिश्ररक्तवर्ण प्रधानमूर्तिमतीत्यथ, 'श्वेतरक्त तु पाटलम्' इति वचनात् । ॐ **लसद्दाडिमपाटलायै नम ॥**

ललन्तिकालसत्फाला । ललन्तिकया परित मुक्ताफल खचितनवरत्नमध्यया ललाटमध्यदेशभूषया, इदमुपलक्षण ललाटपट्टादीनाम्, लसत् फाल यस्या सा तथा ॥ ॐ ललन्तिकालसत्फालायै नमः ॥

ललाटनयनार्चिता । ललाटे नयन येषा ते, अत्र ललाटशब्देन भ्रूमध्य लक्ष्यते, नयनशब्देन ज्ञानमपि, तथा चोर्ध्वदृष्टिभि खेचरीमुद्रया विलीनचित्तै असिवरुणयोर्मध्यदेशाभिधानाविमुक्तकृतपरमेश्वराराधनपरपुरुषप्राप्यत्वाभिधायकात्रिप्रश्नोत्तरजाबालश्रुतिगतयाज्ञवल्क्योत्तरवाक्यनिर्दिष्टभूमिकाजयसिद्धिमत्पुरुषै अर्चिता साक्षात्कृतेत्यर्थ । अथवा, तृतीयनेत्रवता शिवेन तत्स्वरूपरुद्रैर्वा पूजितेत्यर्थ । ॐ ललाटनयनार्चितायै नम ॥

**लक्षणोज्ज्वलदिव्याङ्गी लक्षकोट्यण्डनायिका ।**
**लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनु ॥**

लक्षणोज्ज्वलदिव्याङ्गी । दीप्यते प्रकाशत इति दिव्य लक्षणै स्वरूपतटस्थनामकै उज्ज्वल शोभित शुद्धम् अङ्ग स्वरूप विग्रहो वा । घृताकठिन्यन्यायेन 'तदात्मान स्वयमकुरुत' इति श्रुत सच्चिदानन्दघनीभूतजीवात्मको विग्रहो

यस्या सा तथा । अथवा, सामुद्रिकशास्त्रोक्तदिव्यलक्षणै रुज्ज्वलानि सपूर्णानि दिव्यानि यानि अङ्गान्यवयवा शिर पाण्यादय अस्या सन्तीति वा तथा ॥ ॐ लक्षणोज्ज्वल दिव्याङ्ग्यै नमः ॥

लक्षकोट्यण्डनायिका । लक्षानि च कोट्यश्च असख्या तापरिमितानीत्यर्थं , ससारस्यानादित्वेन भूतभविष्यदा दिभेदेन बहुसख्यावस्वमण्डानाम् , तानि च तान्यण्डानि च हिरण्यगर्भविराड्रूपाणि समष्टिव्यष्ट्यात्मना विश्वतैजसापा धिभूतानि , तेषाम् अधिष्ठानबिम्बचैतन्यात्मना नयति स्वस त्तामापादयतीति नायिका ॥ ॐ लक्षकोट्यण्डनायिकायै नम ॥

लक्ष्यार्था । लक्षणया शोधनया जहदजहल्लक्षणया वा प्रतिपाद्यते वेदान्तमहावाक्याना योऽर्थ तत्स्वरूपा । अथ वा, योगशास्त्रप्रसिद्धबहिरन्तरूर्ध्वाध प्रदेशविशेषरूपभूमिका सु स्वस्वमनोवाञ्छाविषयविशेषणत्वेन निर्गुणत्वेन वा मनो विलयरूपहठराजयोगादिसाधनपरिपाकवशेन साक्षात्कृत चै तन्य लक्ष्य इत्युच्यते, अर्थ्यते याच्यते गुरु प्रति इति अर्थ , लक्ष्यो योऽर्थ चित्स्वरूपपरमानन्दरूप सोऽपि सैवेति तथा, 'ब्रह्मैवेदममृत पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्त

रेण' इति श्रुते ॥ ॐ **लक्ष्यार्थायै नम** ॥

लक्षणागम्या । लक्षणानाम शक्यार्थे वाचकस्य पदस्य अन्वयाद्यनुपपत्त्या तत्सबन्धिपदार्थान्तरज्ञानहेतु शक्य सबन्धादिपदजन्यपदार्थान्तरज्ञानहेतु शब्दवृत्तिरित्युच्यते, तस्या वाच्यवाचकतत्सबन्धादिभेदज्ञानपूर्विकाया परिच्छिन्नसावयवपदार्थसबन्धज्ञानहेतो केवलचिन्मात्रे निरुपाधिके वस्तुनि षष्ठीजात्यादीना लक्ष्यतावच्छेदकधर्माणामभावे प्रवृत्त्ययोगात् तया अगम्या, गन्तु ज्ञातु योग्य गम्य तन्न भवतीत्यगम्या । वेदान्तमते जहदजहल्लक्षणया विशेषण-मात्रपरित्यागस्य अन्यान्यतादात्म्यानुपपत्त्या बोधितत्वात् तदर्थं सा अवश्यमङ्गीकर्तव्या । विशेष्यस्य ज्ञानस्वरूपत्वेन नित्यतया लक्षणाजन्यत्वात् तदर्थं सा न अपेक्ष्यत इति भाव । तथा च प्रकृताया देवताया शुद्धचैतन्यमात्रस्वरूपतया स्वय प्रकाशत्वेन लक्षणागोचरत्वात् लक्षणागम्येति नाम युक्तमिति भाव ॥ ॐ **लक्षणा-गम्यायै नम** ॥

लब्धकामा । लब्धा काम्यन्त इति कामा ऐहिकामुष्मिकसुखसाधनानि, लक्षणया तत्तज्जन्यसुखानि वा तथाभूता कामा यया सा तथा पर्याप्तकामेत्यर्थ ,

'पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामा' इति श्रुते ॥ ॐ लब्धकामायै नम ॥

लतातनु । लता इव लता कल्पादिवल्लय सकलपुरुषार्थप्रदत्वेन जगति प्रसिद्धा, ता इव सुकुमारत्वाद्याश्रया तनु मूर्ति यस्या सा तथा ॥ ॐ लतातनवे नम ॥

**ललामराजदलिका लम्बिमुक्तालताञ्चिता ।**
**लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥**

ललामराजदलिका । ललाम्ना कस्तूरीतिलकेन कस्तूरीपत्रेण वा राजत् विभ्राजत् परमशोभि अलिक ललाट यस्या सा तथा ॥ ॐ ललामराजदलिकायै नम ॥

लम्बिमुक्तालताञ्चिता । लम्बिन्य लम्बमाना अध प्रसृता मुक्तालता हारा मुक्ताफलानि वा यस्या सा तथा । नवरत्नखचितसुवर्णमुक्तागुच्छै सर्वाङ्गेषु प्रलम्बमानै ललाटपर्यन्त लम्बमानकिरीटप्रथमभागललाटपट्टनासाग्रताटङ्काध कर्णदेशकण्ठप्रदेशहस्तचतुष्टयाङ्गदसमानप्रदेशकूर्पासपरित पदकाग्रदेशकटिनिबद्धकाञ्च्यादिषु परिलम्बमानैरित्यर्थ ॥ ॐ लम्बिमुक्तालताञ्चितायै नम ॥

लम्बोदरप्रसू । लम्बोदरस्य महागणेशस्य प्रसू जनयित्री मातेत्यर्थ । लम्बोदर प्रसूत इति वा ॥ ॐ लम्बोदरप्रसवे नम ॥

लभ्या । ससारदशायामावारकाज्ञानेन स्फुटमप्रकाशमाना सती श्रवणादिसस्कृतान्त करणवृत्तावखण्डाकारज्ञानभूमिकाया प्रतिफलितस्वरूपेण विस्मृतकण्ठगतकनकभूषणवत् प्राप्तप्राप्तिरूपतया लब्धु योग्येति तथा ॥ ॐ लभ्यायै नम ॥

लज्जाढ्या । लज्जया, उपलक्षणमन्त करणधर्माणा सर्वेषाम्, आढ्या तद्रूत्वेन आकारवतीत्यर्थ । तिरोधानादिना अन्तर्हिता सती वरादि प्रयच्छतीति लज्जाढ्या भवतीति च उपचर्यते ॥ ॐ लज्जाढ्यायै नम ॥

लयवर्जिता । 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' इत्यादिश्रुत, लयो विनाश, तेन रहिता वर्जितेत्यर्थ । इदमुपलक्षण षड्भावविकाराणाम्, सत्य ज्ञानमनन्त ब्रह्म' इत्यादिश्रुते ॥ ॐ लयवर्जितायै नमः ॥

ह्रींकाररूपा ह्रींकारनिलया ह्रींपदप्रिया ।
ह्रींकारबीजा ह्रींकारमन्त्रा ह्रींकारलक्षणा ॥

ह्रींकाररूपा । ह्रींकार रूप्यते निरूप्यते निर्दिश्यत इति रूप मन्त्रपञ्चमावयव यस्या सा तथा । ॐ ह्रींकार रूपायै नम ॥

ह्रींकारनिलया । ह्रीमक्षर निलय गृहवदवच्छेदक यस्या सा तथा । स्वीयवाचकत्वारोपितवाच्यतावच्छेदकधर्माव-च्छिन्नतादिसपादनेन गृहवर्तिपुरुषवत् व्यावृत्तस्वरूपेण ज्ञा पक भवति । अन्यथा, नाम्नो वाच्यार्थे प्रवृत्त्ययोगादिति भाव । ॐ ह्रींकारनिलयायै नमः ॥

ह्रींपदप्रिया । पद्यते गम्यते ज्ञायते अनेनेति पदम्, पद्यत गम्यते प्राप्यत इति वा पदम्, ह्रींकारस्य मन्त्रावयवतया तद्देवताप्रकाशकत्वेन तस्या शक्तत्वात्—' शक्त पदम् ' इति तल्लक्षणत्वात् तथा प्रथम व्याख्यानम् । हकाररेफेकारानुस्वारा णा वर्णाना समष्टिस्वरूपेण समुदायात्मकत्वात् ' वर्णसमुदाय पदम्' इत्यपि पदलक्षणवत्त्वमस्य घटते । पुरश्चर्यावता स्वदेव तासाक्षात्कारद्वारा सकलपुरुषार्थप्रापकत्वात् द्वितीयव्याख्यान तथा कृतम् । तस्मिन् प्रिया प्रीतिमतीत्यर्थ ॥ ॐ ह्रींपदप्रि-यायै नमः ॥

ह्रींकारबीजा । ह्रींकार एव बीज स्ववाचकमन्त्रभाग, ' ज्ञापक देवताना यत् बीजमक्षरमुच्यते ' इति वचनात् ह्रीं-

कारस्य मायाप्रकाशकत्वेन, वटधानादि स्वनिष्ठवृक्षाभिव्य ञ्जकत्वेन कारणतया यथा बीजमित्युच्यते— सत्कार्यवादिना-मव्यक्तनामरूपकारण बीजम् , अभिव्यक्तनामरूपात्मक पश्चा- द्भावि कार्यमित्यङ्गीकार , सकलकारणसमवधाने विशेषनाम-रूपवत्तया कारणस्याभिव्यक्तिरुत्पत्ति , तथा चोक्तबीजस्य मायावच्छिन्नचैतन्याभिव्यञ्जकत्वेनापि बीजत्वम् , तादृश ह्रींकारबीज यस्या सा तथा ॥ ॐ ह्रींकारबीजायै नम॰ ॥

ह्रींकारमन्त्रा । ह्रींकारस्य मननात् त्रायत रक्षति वाच्य-वाचकयोरभेदादिति तथा । ह्रींकारघटितो मन्त्रो वा यस्या सा इति वा तथा ॥ ॐ ह्रींकारमन्त्रायै नमः ॥

ह्रींकारलक्षणा । हकार शिव , आकाशबीजत्वादाकाश-वन्निर्लेप , रेफ वह्निबीज कार्योत्पादसनिहितशक्तिमदी श्वरवाचकम् , तथा च हकारयुक्तरेफ शुद्धचैतन्यमेव कारणतावच्छिन्नम्— इति वदति । ईकार मन्मथबीज तत्कारणलक्षकतया स्थितिहेतु विष्णुरूपचैतन्यमभिदधाति । अनुस्वारस्तस्मिन्नेव पदार्थे अभिन्ननिमित्तोपादाने लय वक्ति । तथा च ह्रीमित्युक्ते जगदुत्पत्तिस्थितिलयकारण चैतन्य शक्त्या वाच्यार्थं प्रतीयते । तस्यैवोपाधिपरित्यागरूपलक्षण यस्या सा तथा । ह्रींकार लक्षण तटस्थलक्षण यस्या

सेति वा तथा ॥ ॐ ह्रींकारलक्षणायै नमः ॥

**ह्रींकारजपसुप्रीता ह्रींमती ह्रींविभूषणा ।**
**ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥**

ह्रींकारजपसुप्रीता । ह्रींकारस्य जपः ह्रींकारजपः, तेन सुप्रीता ॥ ॐ ह्रींकारजपसुप्रीतायै नमः ॥

ह्रींमती । वाचकत्वेन लक्षकत्वेन वा लक्ष्यपदार्थरूपेण वा वाच्यवाचकयोरभेदेन वा अस्या अस्तीति ह्रींमती ॥ ॐ ह्रींमत्यै नमः ॥

ह्रींविभूषणा । केवलजडमायावाचकः ह्रींकारः, तथा हि– हकारः श्वेतवाचकः, रेफः रोहितार्थकः, ईकारः नीलार्थकः, तथा च विशिष्टस्य शुक्लरक्तनीलवत्पदार्थवाचकतया सत्त्वरजस्तमोगुणवत्प्रकृतिवाचकत्वेन परिच्छिन्नानृतजडदुःखस्वरूपवाच्यार्थकतया प्रकाशराहित्येन अनुपादेयतायां सत्यां तदवच्छिन्नस्वप्रकाशचैतन्याकारतया विशिष्टार्थस्य आपादमस्तकभूषिततरुणीवदानन्दस्वरूपतया तद्वाचकह्रींपदस्य अष्टैश्वर्यसिद्धिप्रदानशक्त्याधायकतया शोभायमानं भूषणवत्, 'कुण्डली पुरुषः' इत्यत्र कुण्डलस्योपलक्षणतया इतरसजातीयादिव्यावर्तकत्वम्, तथास्यापि बीजस्येतरव्यावृत्तवाच्यार्थगोचरप्रमाजनकत्वेन भूषणवत् यस्याः सा

तथा ॥ ॐ ह्रींविभूषणायै नम ॥

ह्रींशीला । ह्रीमित्यनन तद्वाच्यार्था ब्रह्मविष्णुरुद्रा लक्ष्यन्ते, तेषा शील स्वभाव पारमार्थिक रूप सच्चिदान न्दात्मकता यस्या सा तथा, तन्निष्ठधर्मा सत्त्वरजस्तमा गुणादयो वा यस्या सा तथा, 'शील स्वभावे धर्मे च' इति वचनात् ॥ ॐ ह्रींशीलायै नमः ॥

ह्रींपदाराध्या । ह्रीपदन एकाक्षरबीजमन्त्रेण आराधितु योग्या तथा । 'ह्रींकारेणैव ससिद्धो भुक्तिं मुक्तिं च विन्द ति' इति भुवनेश्वरीकल्पवचनादिति यावत् ॥ ॐ ह्रींप दाराध्यायै नम ॥

ह्रींगर्भा । ह्रींशब्दार्था सगुणमूर्तयस्तिस्र गर्भे स्वस्व रूपे सशक्तिका अविनाभावसबन्धेन यस्या सा तथा, 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वचनात् ॥ ॐ ह्रींगर्भायै नम ॥

ह्रींपदाभिधा । ह्रींकार अभिधा नाम यस्या सा तथा । समष्टिरूपाया समष्टिशब्दवाच्यत्वनियमादित्यभिसधि ॥ ॐ ह्रींपदाभिधायै नम ॥

**ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका ।**
**ह्रींकारवेद्या ह्रींकाराचिन्त्या ह्रीं ह्रींशरीरिणी ॥**

ह्रींकारवाच्या । मायोपाधिकब्रह्मणि कल्पितधर्मेण शब्दप्रवृत्त्युपपत्त ह्रींपदस्य वाच्या रूढयेत्यर्थ ॥ ॐ ह्रींकारवाच्यायै नम. ॥

ह्रींकारपूज्या । 'मूलमन्त्रेण पूजयेत्' इति पूजाङ्गत्वेन मूलमनोर्विनियोग श्रूयते । मूलमनुश्च देवताया स्वक नामेति वचनात् । अन्तमुखानामेव मन्त्रशास्त्रेषु तन्नाम्ना व्युत्पन्नत्वान् । ह्रींकार नमोऽन्तमुच्चार्य यथागुरुसम्प्रदाय श्रीचक्रादौ मूलदेवता पूजनीयेत्यागमरहस्यात् ह्रींबीजेनैव पूजयितु योग्या । अतिप्रियबीजनामत्वादित्यभिप्राय ॥ ॐ ह्रींकारपूज्यायै नम ॥

ह्रींकारपीठका । अत्र पीठशब्द आधारलक्षक । वाच्यार्थो हि वाचकशब्दस्य सत्ताप्रदत्वेन आधारो भवति । मन्त्रदेवतयारभेदेऽपि अर्थनिष्ठमहिम्न तद्वाचकपदेऽदृश्यमानत्वात् कल्पितभेद सपाद्येदमुच्यते । ह्रींकारस्य पीठिका वृत्तिस्थान शक्त्या गोचरतया विषयीभूतत्यर्थ ॥ ॐ ह्रींकारपीठिकायै नम ॥

ह्रींकारवेद्या । स्वरूपत निर्गुणब्रह्मतया अज्ञानविषयत्वाश्रयत्वाभ्यामप्राप्तपुरुषार्थरूपतया सम्यग्दशाया प्रतीयमानत्वात् गुरूपसदनश्रवणादिरूपविध्यप्रामाण्यनिरासाय लक्ष-

णया शुद्धस्वरूपपरमानन्दतया प्रेप्सितत्वात् श्रवणादिजन्य-वृत्तिव्याप्यत्वरूपवेदनाविषयत्वम् । 'ब्रह्मण्यज्ञाननाशाय वृत्ति व्याप्तिरितीर्यते' 'मामेव ये प्रपद्यन्ते मायामेताम्' इत्यादि वचनात् भगवताप्यङ्गीकृतमिति । ह्रींकारेण गुरुमुखोद्भूतेन वेद्या वेदितु योग्या । तत्स्वरूपपरिज्ञानद्वारा तत्प्राप्तिरूपपु रुषार्थहेतुत्वादिति तात्पर्यम् ॥ ॐ **ह्रींकारवेद्यायै नमः** ॥

ह्रींकारचिन्त्या । अस्य बीजस्य पञ्चप्रणवान्तर्गतत्वेन ओंकारभेदे ब्रह्मप्रतीकत्वाविशेषात् । प्रणवे यथा परापरब्र-ह्मोपासनहेतुवदस्मिन् वा प्रतीके तद्भवतीति विकल्प । यदा भक्तिपार्थक्येन मन्त्रविशेषेषु भवतीति योगवेदमार्गरहस्य न वादजल्पाद्यवकाश । ह्रींकारे उभयविधब्रह्मस्वरूपतया चि-न्तितु योग्या । ध्यानस्य साक्षात्कार प्रत्यारादुपकारकत्वेन ध्यातव्येत्यर्थ ॥ ॐ **ह्रींकारचिन्त्यायै नमः** ॥

ह्रीं । ह्रञ् हरण इति धातुपाठात् समस्तविद्यैश्वर्यप्रदा नादिशक्त्यारोपाधिष्ठानत्वे सत्यपवादावशेषितपरमानन्दरूप मुक्तिरित्यथ ॥ ॐ **ह्रीं नम** ॥

ह्रींशरीरिणी । मूलमन्त्रात्मिकेति यावत् ह्रीमेव शरीर मूर्तिरस्या अस्तीति ह्रींशरीरिणी ॥ ॐ **ह्रींशरीरिण्यै नम** ॥

**हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।**
**हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ॥**

हकाररूपा । हकार रूप षष्ठावयव यस्या सा, मूलविद्यावाच्यार्थवाचक यस्या सा, तथा ॥ **ॐ हकाररूपायै नम ॥**

हलधृक्पूजिता । हल युग धरति इति हलधृक् बलराम , तेन पूजिता ध्यानादिभिराराधितेत्यर्थ ॥ **ॐ हलधृक्पूजितायै नम॰ ॥**

हरिणेक्षणा । हरिण्या एण्या ईक्षणमिव ईक्षण यस्या सा तथा, अतिसतोषेण कातराक्षीति भाव । सर्वत्र सर्वदा सर्वद्रष्ट्रीति वा । भक्तेष्वादरहेतुदर्शनवतीति भाव ॥ **ॐ हरिणेक्षणायै नम ॥**

हरप्रिया । हरस्य प्रिया शिववल्लभेत्यर्थ । हर प्रियो यस्या सा इति वा ॥ **ॐ हरप्रियायै नम॰ ॥**

हराराध्या । हरेण स्वभर्त्रा आराधितु योग्या, केवलसच्चिदानन्दस्वरूपत्वात् ॥ **ॐ हराराध्यायै नमः ॥**

हरिब्रह्मेन्द्रवन्दिता । हरि रमेश । ब्रह्मा वाणीश ।

इन्द्रो देवश्च उपलक्षणं सर्वदेवभेदानाम् । तैर्वन्दिता नमस्कृता ॥ ॐ **हरिब्रह्मेन्द्रवन्दितायै नमः ॥**

**हयारूढासेविताङ्घ्रिर्हयमेधसमर्चिता ।**
**हर्यक्षवाहना हंसवाहना हतदानवा ॥**

हयारूढासेविताङ्घ्रिः । हयारूढानाम अश्वमात्रसेनानी शक्तिः वश्यकरी । तया सेवितौ अङ्घ्री यस्याः सा तथा ॥ **ॐ हयारूढासेविताङ्घ्र्यै नमः ॥**

हयमेधसमर्चिता । हयमेधेन अश्वमेधेन समर्चिता पूजिता । पुरुषत्वादिप्राप्त्यै इलादिभिरित्यर्थः ॥ **ॐ हयमेधसमर्चितायै नमः ॥**

हर्यक्षवाहना । वाहयतीति वाहनम्, हर्यक्षः केसरी वाहनं यस्याः सा तथा । महालक्ष्मीरूपदुर्गेत्यर्थः ॥ **ॐ हर्यक्षवाहनायै नमः ॥**

हंसवाहना । हन्ति गच्छतीति हंसः सूर्यः प्राणो वा, वाहनवत् आधारभूतप्रतीकमित्यर्थः, अभिव्यक्तिस्थानमिति यावत्, 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इति श्रुतेः । अथवा, हंसवाहना ब्राह्मीरूपेणेत्यर्थः ॥ **ॐ हंसवाहनायै नमः ॥**

हतदानवा । हता दानवा अनेकप्रकारशक्तिरूपधरया भण्डासुरादय यया सा तथा ॥ ॐ **हतदानवायै नम.** ॥

**हत्यादिपापशमनी हरिदश्वादिसेविता ।**
**हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥**

हत्यादिपापशमनी । हत्या ब्रह्महत्या आदिर्येषा तानि तथा पापानि शमयतीति तथा, 'हरिर्हरति पापानि' इति वचनात् ॥ ॐ **हत्यादिपापशमन्यै नमः** ॥

हरिदश्वादिसेविता । हरित् हरिद्वर्ण मरकत इव अश्वो यस्येन्द्रस्य स तथा आदिर्येषा ।दक्पतीना तै सविता चरणारविन्दसंनिधिं किंकरतयाश्रितेत्यथ ॥ ॐ **हरिदश्वादिसेवितायै नम** ॥

हस्तिकुम्भोत्तुङ्गकुचा । हस्त अस्यास्तीति हस्ती, तस्य कुम्भौ तद्वदुन्नतौ कुचौ सान्द्रौ यस्या सा तथा ॥ ॐ **हस्तिकुम्भोत्तुङ्गकुचायै नम** ॥

हस्तिकृत्तिप्रियाङ्गना । हस्तिन कृत्तौ चर्मणि प्रिय प्रीतिमान् शिव , तस्याङ्गना भामिनीत्यथ ॥ ॐ **हस्तिकृत्तिप्रियाङ्गनायै नमः** ॥

**हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।**
**हरिकेशसखी हादिविद्या हालामदोल्लसा ॥**

हरिद्राकुङ्कुमादिग्धा । हरिद्राकुङ्कुमाभ्या उपलक्षण कस्तूरीपत्रादीनाम् । दिग्धा लिप्तेत्यर्थ ॥ ॐ **हरिद्राकुङ्कुमादिग्धायै नम** ॥

हर्यश्वाद्यमरार्चिता । हर्यश्व सुरेश आदिर्येषाम् अमराणा तैरर्चिता किंकरतया नियामकत्वेन पूजितेत्यर्थ ॥ **ॐ हर्यश्वाद्यमरार्चितायै नमः** ॥

हरिकेशसखी । हरय हरिद्वर्णा केशा शिरोरुहा यस्य, ‘ हिरण्यश्मश्रुर्हिरण्यकेश ’ इति श्रुते । तस्य सखी प्रयोजनमनपेक्ष्योपकारिणीत्यर्थ । यद्वा वर्णेन नीलेन हरिणा विष्णुना समा केशा अस्य सन्तीति सर्वाङ्गसुन्दरनित्ययौवनचिद्रूपसहितकामेश्वर , तस्य सखी ॥ ॐ **हरिकेशसख्यै नमः** ॥

हादिविद्या । लोपामुद्रापासितमनुरूपत्यर्थ ॥ ॐ **हादिविद्यायै नम** ॥

हालामदालसा । हालाया अमृतमथनाद्भूतवारुण्या मदेन उल्लासेन अलसा आरक्तनेत्रान्तरोमाञ्चादिचिह्नवतीत्यर्थ ॥ ॐ **हालामदालसायै नमः** ॥

**सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।**
**सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातना ॥**

सकाररूपा । द्वितीयखण्डद्वितीयावयवत्वेन ज्ञापक यस्या सा तथा ॥ **ॐ सकाररूपायै नमः ॥**

सर्वज्ञा । अलुप्तनित्यज्ञानस्वरूपेण सामान्यरूपेण सर्व जानातीति सर्वज्ञा, 'य सर्वज्ञ सर्ववित्' इति श्रुते ॥ **ॐ सर्वज्ञायै नम ॥**

सर्वेशी । सर्वस्य कार्यस्य अन्तर्यामिरूपेण ईष्टे प्रेरयतीति तथा ॥ **ॐ सर्वेश्यै नम ॥**

सर्वमङ्गला । सर्वप्रकारेण शुद्धविशिष्टचैतन्यरूपेण मङ्गला परमानन्दस्वरूपा । अत्र बहुव्रीहेरविवक्षितत्वात् विवक्षिताया वा सुन्दरकायो राजत्यादिवत् समासार्थ । अथवा, सर्वेषा मङ्गल यस्या सा तथा । सर्वै प्रकारै ध्यानकीर्तनपूजानमस्काराद्यर्चनभक्तिजन्यकैङ्कर्यै जडानामपि मङ्गल सुख यस्या जायत सा तथा । सर्वेषामात्मरूपतया प्रतीयमान मङ्गल सुखस्वरूप यस्या सेति वा । सर्वशब्दवाच्य सर्वकारण शिव , तस्य मङ्गल सुख यस्या जायते सा तथा, 'चिन्मय शिव साक्षात्तस्यानन्दमयी शिवा' इति च

चनात् । अथवा, मङ्गलशब्देन मङ्गलहेतुभूताः स्त्रियो लक्ष्यन्ते । सर्वेषां प्राणिनां मङ्गलं मङ्गलसाधनभूता योषा स्वाभिन्नसच्चिदानन्दवत्त्वेन यस्याः सा तथा, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेरित्यर्थः । 'अशुभानि निराचष्टे तनोति शुभसंततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः । अतिकल्याणरूपत्वात् नित्यकल्याणसंश्रयात् । स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः' इत्यादिवचनात् ॥ ॐ **सर्वमङ्गलायै नमः** ॥

सर्वकर्त्री । सर्वं समस्तं स्वशक्त्या मायारूपया करोतीति तथा, 'ईशत ईशनीभिः' इति श्रुतेः ॥ ॐ **सर्वकर्त्र्यै नमः** ॥

सर्वभर्त्री । सर्वं बिभर्तीति तथा, 'एष विधृतिरेषां लोकानाम्' इति श्रुतेः ॥ ॐ **सर्वभर्त्र्यै नमः** ॥

सर्वहन्त्री । सर्वं हरतीति तथा । एभिर्नामत्रयैः 'यतो वा' इत्यादिश्रुत्युक्ततटस्थलक्षणत्रयमभिहितमिति वेदितव्यम् । ॐ **सर्वहन्त्र्यै नमः** ॥

सनातनी । 'अजो नित्यः शाश्वतोऽयं पुराणः' इति श्रुतेः नित्यसिद्धस्वरूपेत्यर्थः ॥ ॐ **सनातन्यै नमः** ॥

**सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।**
**सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥**

सर्वानवद्या । सर्वैर्ज्ञानैश्वर्यादिगुणैरनवद्या । अवद्यानाम विद्यया हीना जडप्रकृति मिथ्या बाध्यमानत्वात् । तद्विलक्षणा सत्यज्ञानानन्दरूपत्वादनवद्या । सर्वेषा सर्वाभीष्टप्रापकत्वेन स्तुत्या वा ॥ ॐ **सर्वानवद्यायै नम** ॥

सर्वाङ्गसुन्दरी । सर्वाणि च तानि अङ्गानि च अवयवा शिर पाण्यादय , तेष्वन्यूनातिरिक्तभाववत्त्वात यथासामुद्रिकलक्षण तद्वत्त्वन सर्वाङ्गसुन्दरी । अथवा, सर्वेषामङ्गेषु शरीरेषु ब्रह्मस्वरूपतया अत्यन्तप्रेमविषयत्वेन सुन्दरपदार्थवदविनाभाववाञ्छाविषयत्वात तथा ॥ ॐ **सर्वाङ्गसुन्दर्यै नम** ॥

सर्वसाक्षिणी । सर्वेषा जडाना कार्याणा स्फूर्त्याधायकत्वेन प्रकाशकर्त्री तथा । सर्व साक्षादीक्षत इति वा तथा ॥ ॐ **सर्वसाक्षिण्यै नम** ॥

सर्वात्मिका । सर्वेषामात्मस्वरूपत्वात् । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सततं भावस्तस्मादात्मेति गीयते' इति वचनात्तथा ॥ ॐ **सर्वात्मिकायै नम** ॥

सर्वसौख्यदात्री । सुखिन भाव सौख्यम्, सर्वाणि च तानि प्रियमोदप्रमोदानन्दशब्दवाच्यानि । इष्टदर्शनजन्य सुख प्रिय । तल्लाभजन्य मोद । तदनुभवजन्य प्रमोद । आनन्द समष्टि । जीव भोक्ता । तानि ददातीति तथा । सर्वप्रकारै स्मरणादिभि सौख्य ददातीति वा । सर्वेषा माब्रह्मस्तम्बपर्यन्ताना यथाकर्मोपासन प्रत्यक्षेण दृश्यमान ज्ञानैश्वर्यादिसहित सुख ददातीति वा तथा । 'एष ह्येवानन्द याति' इति श्रुते ॥ ॐ **सर्वसौख्यदात्र्यै नम** ॥

सर्वविमोहिनी । सर्वान विमोहयतीति अन्यथा ग्राहयतीति वा तथा । 'अज्ञानेनावृत ज्ञान तेन मुह्यन्ति जन्तव' 'अनृतेन हि प्रत्यूढा' इति श्रुतिस्मृतिभ्या अज्ञानावरणशक्तिकार्यं मोहनादिसत्ताप्रकाशादिप्रधानाधिष्ठानत्वेन उपचारात् सर्वं मोहयतीत्युच्यते । अयो दहतीतिवत् ॥ ॐ **सर्वविमोहिन्यै नम** ॥

**सर्वाधारा सर्वगता सर्वावगुणवर्जिता ।**
**सर्वारुणा सर्वमाता सर्वभूषणभूषिता ॥**

सर्वाधारा । सर्वस्याधारा 'ब्रह्म पुच्छ प्रतिष्ठा' इति श्रुते । सर्वेषा हृदयानि आधार अभिव्यक्तिस्थान उपासनार्थ

यस्या सेति तथा ॥ ॐ सर्वाधारायै नम ॥

सर्वगता । सर्वं गच्छतीति तथा । 'अनेन जीवेनात्म नानुप्रविश्य' इति श्रुते ॥ ॐ सर्वगतायै नम ॥

सर्वावगुणवर्जिता । अवमानहतवश्च ते गुणाश्च तथा, आध्यात्मिकसबन्धन आरोपिता सत्त्वादय समष्टौ, अन्त करणधर्मा कामादय व्यष्टौ, सर्वे च ते अवगुणाश्च तथा। सर्वान्तर्यामित्वेन सर्वानुस्यूतत्वेऽपि तत्तदुपाधिनिष्ठोत्तमाधम धर्मैं न सबध्यत— घटादिनिष्ठाकाशवत् कोशान्तर्गतखड्गव द्वा, 'सूर्यो यथा सर्वलोकस्य चक्षु न लिप्यते चाक्षुषैर्बाह्य दोषै । एकस्तथा सर्वभूतान्तरात्मा न लिप्यत लोकदु खेन बाह्य ' इति श्रुते ॥ ॐ सर्वावगुणवर्जितायै नम. ॥

सर्वारुणा । सर्वेष्वङ्गेष्वरुणा आरक्तवती, 'असौ यस्ता म्रो अरुण ' इति श्रुते ॥ ॐ सर्वारुणायै नम ॥

सर्वमाता । सर्वेण कार्येण मीयते अनुमीयतेऽभदनेति तथा । तथा हि— इद जगत् ब्रह्माभिन्न तत्सत्तास्फूर्तिनिय तसत्ताप्रकाशज्ञानविषयत्वात्, यन् यन्नियतसत्ताप्रकाशवान् स तदभिन्न — यथा तन्तुकार्य पट इति । सर्वान् मिनाति स्वाभेदेन जानातीति तथा ॥ ॐ सर्वमात्रे नमः ॥

सर्वभूषणभूषिता । सर्वात्मकत्वेन ये ये प्राणिनः यानि यानि भूषणालंकारभोजनादीनि भोग्यवस्तून्यात्मार्थं संपादयन्ति, तेषां सर्वेषां प्रत्यक्तया तैः सर्वैर्भूषिता उपकृतेत्यर्थः, 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेः । अथवा, सर्वदेवात्मकत्वेन सर्वभक्तजनस्य स्वस्वेष्टदेवताप्रीत्यर्थं भूषणभूषितत्वेन तथा । अथवा सर्वैर्भक्तजनैः तत्तदवयवेषु भूषणैरारोपिता, स्वस्याः महाराज्ञीत्वेन असंगोदासीनस्वभावत्वादिति भावः । यद्वा, सर्वदेशकाललोकेषु भूषणैः तत्र तत्र भवैः उच्चावचैर्भूषणैरारोपिता, हस्त्यश्वादिदहोपाधिका सती तत्तदीयालंकारादिषु जुगुप्सारहितेत्यर्थः । भूषयन्ति सर्वोत्तमत्वेन प्रतिपादयन्तीति भूषणानि वेदान्तमहावाक्यानि, सर्वैः समस्तैः गतिसामान्यात् एकतात्पर्येण भूषिता लक्षणया पर्यवसिता समन्विता वेत्यर्थः ॥ ॐ **सर्वभूषणभूषितायै नमः ॥**

## ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
## कामसंजीवनी कल्या कठिनस्तनमण्डला ॥

ककारार्था । 'कं ब्रह्म' इति श्रुत्या ककारस्य ब्रह्मार्थकत्वेन तद्व्यतिरिक्तस्यातदर्थस्य बाधितत्वात् ॥ ॐ **ककारार्थायै नमः ॥**

कालहन्त्री । अजपारूपेण प्राणापाननामकचन्द्रसूर्यनि-यमन पुरुषाणा नियमितपरिमितायु स्वरूपैकविंशतिषट्शताधिकसहस्रसख्याकनिर्गमनरूपण क्षपयन्ति अवशेषायुषो युगकल्पाद्यविशिष्टस्य वृद्धौ पुन सयमने तथा तथा वृद्धौ सयुञ्जानस्य सर्वप्राणेन्द्रियस्य वृत्तिलये मनोन्मन्यवस्था निष्पद्यते । तथा च श्रुति — 'पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मक यागगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्यु प्राप्तस्य योगाग्निमय शरीरम्' इति 'अध्यात्मयागाधिगमेन देव मत्वा धीरा हर्षशोकौ जहाति' इति च । तथा च तदानीमाविर्भूतब्रह्मस्वरूपेण 'तत सवत्सरोऽजायत' इति श्रुत्या क्रियाशक्त्यात्मककालोत्पत्तिश्रवणात् तस्मिन ब्रह्मण्येव लये काल हन्ति नाशयतीति तथा नामनिर्वचन युक्त वक्तुमिति भाव ॥ ॐ **कालहन्त्र्यै नम.** ॥

कामेशी । कामाना भोग्यपदार्थाना यथादृष्ट ईष्टे प्रेरयतीति तथा ॥ ॐ **कामेश्यै नम** ॥

कामितार्थदा । कामितानर्थान् ददातीति तथा, 'आप्त काम' इति श्रुते । ससारदशायामावृतानन्दस्य अनाप्तवद् वभासमानस्य आत्यन्तिकसुखात्मिका मुक्तिर्मे स्यादिति का

न्यमानत्वादात्मन कामितत्वम् । कामितश्चासावर्थश्चेति तस्यैव ज्ञानस्यावरणाभिभावकत्वेन प्राप्तप्राप्तिरूपतया त ददाति प्रयच्छतीति प्रकाशस्वरूपेण अनुभावयतीत्यर्थ ॥ ॐ **कामितार्थदायै नमः** ॥

कामसजीवनी । काम मन्मथ परमेश्वरनेत्राग्निविप्लुष्ट भण्डासुरात्मना अनेककालदेवलोकविपक्ष कामशास्त्रप्रयोग समये रतिदेवीप्रार्थनसमीचीनतदीयपूर्वकाय तपश्चर्यादिपरिपाकफलभूत करुणारसपूरितापाङ्गावलोकनेन सजीवयति सप्राण कृत्वा तस्मै वरादि प्रयच्छति तेन त हर्षयतीति तथा ॥ ॐ **कामसजीवन्यै नम** ॥

कल्या । कलयितु ध्यातु योग्या । अथवा, सर्वोत्तमदेवत्वेन ध्यातु योग्या कल्या । कले कामधेनुत्वेन यथा वाञ्छितार्थकारणम् ॥ ॐ **कल्यायै नमः** ॥

कठिनस्तनमण्डला । स्तनयो मण्डले आदिमभागौ सान्त प्रदेशौ कठिने अप्रकम्पे अतिस्थिरे वा यस्या तथा ॥ ॐ **कठिनस्तनमण्डलायै नमः** ॥

**करभोरु कलानाथमुखी कचजिताम्बुदा ।**
**कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका ॥**

करभोरु । करभ इव ऊरू यस्या सा तथा । ‘मणि बन्धादाकनिष्ठ करस्य करभो बहि’ इति प्रमाणादिति भाव ॥ ॐ **करभोरवे नमः** ॥

कलानाथमुखी । कला चतु षष्टिकला नाथयति प्रेरयतीति कलानाथ, ‘निश्वसितमेतदृग्वेदो यजुर्वेद सामवेद’ इत्यादिश्रुते, ‘शास्त्रयोनित्वात्’ इति न्यायाच्च । तादृशमुख वदन यस्या सेति तथा । कलानाथश्चन्द्र इव मुख यस्या सेति वा ॥ ॐ **कलानाथमुख्यै नम** ॥

कचजिताम्बुदा । कचेन कशभारेण कबरेण वेत्यर्थ । जिता अधरीकृता अम्बुदा मेघा यया सा तथा, मेघमण्डलापेक्षया ऊर्ध्वगामिशिरोरुहभारा व्योमकेशीति भाव । अथवा, केशवृत्तिनीलरूपेण सादृश्यासहत्वेन धिक्कृता मेघा यया सा तथा ॥ ॐ **कचजिताम्बुदायै नम** ॥

कटाक्षस्यन्दिकरुणा । यद्यपि दीनेषु परिपाल्यताबुद्धिर्देवाना महता करुणेत्युच्यते, तथापि तस्या आन्तरत्वेन अज्ञायमानतया तेषु भक्त्यतिशयेन प्रवृत्त्यर्थ सेवादौ तद्वृत्ता ज्ञानस्यावश्यकफलप्रदानादिहेतुतया निश्चयेन तदनुरूपकसास्विकवीक्षणस्मेरसभाषणादिसत्त्व तत्रावश्य भवतीति कार्यसत्त्वप्रसञ्जितकारणसत्त्ववत्त्वात्, करुणाया नवरसेष्व-

न्तर्भावात्, रसशब्दस्य मधुरादौ रूढत्वात् तेषामनिर्वचनी यत्वेऽपि अनुभवगोचरतायामिक्ष्वादिसारद्रव्यपदार्थनिष्ठत्वा-पलब्धे तत्सम्बन्धवशात् परम्परया द्रवद्रव्यवृत्तिस्यन्दनरूप-क्रियाश्रयत्वमुपचर्यते । तथा च कटाक्षस्यन्दिनी करुणा परिपाल्यताबुद्धिरूपा यस्या सा तथा ।। ॐ **कटाक्षस्य-न्दिकरुणायै नम ॥**

कपालिप्राणनायिका । कपालमस्य अस्तीति कपाली आन-न्दभैरव, तस्य प्राणनायिका प्राणस्येत्युपलक्षण पञ्चानाम् । नायिका अधिष्ठानत्वेन प्रेरका । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति श्रुते । तस्यापि हृदयान्तर्वर्तिपरमेश्वररूपेति यावत् । प्राणवल्लभेति वा, प्रियेति भाव । ॐ **कपालिप्राणना यिकायै नमः ॥**

**कारुण्यविग्रहा कान्ता कान्तिधूतजपावलि ।**
**कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥**

कारुण्यविग्रहा । कारुण्य पूर्वोक्तकृपा, करुणस्य भाव, तत् विग्रह मूर्तिर्यस्या सति तथा । कारुण्यस्या-न्त करणपरिणामबुद्धिरूपत्वेन नत्रान्तवीक्षासस्मितभाषादि नानुमीयमानत्वेऽपि साक्षात्तज्जन्यमनोवाञ्छितवरप्रदाना

दीना शरीरावयवविशेषजन्यतया कारुण्य विग्रहो यस्या सेति समासोपपत्ति । मायोपाधिकस्य ब्रह्मण जगत्सृष्ट्य नुकरणहेतुभूतस्वेच्छामात्रनिमित्तककर्मानधीनसच्चिदानन्दघ नीभूतात्मकभक्तानुग्राहकविग्रहवत्ता विना देवताया बुद्ध्या वनारोपेण सगुणोपासनमनुपपद्यमान स्यात्, तदर्थ देवताधिकरण मन्त्रप्रकाशिता देवा 'वज्रहस्त पुर न्दर' इत्यादिस्वत प्रमाणवेदवाक्यवशात् बाधकाभावे विग्रहवन्त अङ्गीकर्तव्या इति प्रतिष्ठापितम् । तथा 'बहु शोभमानामुमा हैमवतीम्' इति केनोपनिषद्भाष्ये हैमानि हेमविकाराणि भूषणानि यस्या सेति वा तथा, हिमवत अपत्य स्त्रीति च तथेति परदेवताया दिव्यविग्रहवत्त्व प्रति ष्ठापितम् । तथा च महानुभावाना स्वप्रकाशचैतन्यरूपाणा मेवभूताना सर्वात्मना सर्वोत्तमाना मूर्तित्रयदेवाना ध्याना द्युपकाराय तादृशमूर्तिमत्त्वम् अस्तीति न किंचिदनीश्व रवादप्रसङ्गावकाश इति आस्ता विस्तर ॥ ॐ कारु ण्यविग्रहायै नम ॥

कान्ता । 'कन दीप्तौ' इति धातो अत्यन्तमनोहरतमे त्यर्थ । मदनगोपालविग्रहा वा । 'कदाचिदाद्या ललिता पु रूपा कृष्णविग्रहा । वशनादविनोदेन करोति विवश जगत्'

इति त्रिपुरतापनीये ॥ ॐ कान्तायै नमः ॥

कान्तिधूतजपावलि । जपाना जपापुष्पाणाम् , उपलक्षणम् अन्येषामारक्तवर्णानाम् , आवलि पङ्क्ति दृष्टान्तत्वेन कविभि रुत्प्रेक्षिता । कान्त्या अप्राकृतस्वच्छपरमानन्दचिद्भासा धूता परित्यक्ता प्राकृतत्वेन अल्पकान्तिमत्तया उपमायोग्यतया यया सा, 'न हि महान्तो नीचैरुपमीयन्ते' इति न्याया दिति भाव ॥ ॐ कान्तिधूतजपावल्यै नम ॥

कलालापा । कला चतु षष्टिकला आलापो व्यावहा-रिकशब्द यस्या सा तथा, 'वेदशास्त्रमयी वाणी यस्या सा परदेवता' इति वचनात् । कल अव्यक्तमधुर सम्प्रयो जन आलाप सलापो यस्या सेति वा तथा, 'अव्यक्ता भारती तथा' इति महापुरुषसामुद्रिकवचनात् ॥ ॐ कलालापायै नमः ॥

कम्बुकण्ठी । कम्बुशब्दन अत्र शङ्खनिष्ठरेखात्रय लक्ष्य ते । तद्वान्कण्ठो यस्या सेति तथा गुणनामेदम् ॥ ॐ कम्बुकण्ठ्यै नम ॥

करनिर्जितपल्लवा । करशब्देन करतल लक्ष्यते । पल्ल वशब्देन तन्निष्ठपाटल्य स्निग्धता लक्षणया इत्यर्थ । तथा

च अन्योन्यगुणयोर्जयपराजये, अर्थात्तद्वतोरपि तौ सिद्धाविति तन्नामोपपत्ति । 'विवाहश्च विवादश्च समयोरेव शोभते' इति वचनात् करतल तत्साम्यध्वनिरनेन नाम्ना कृत । करेण निर्जिता पल्लवा यस्या सा तथा॥ ॐ **करनिर्जित पल्लवायै नम ॥**

**कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता ।**
**हकारार्था हसगतिर्हाटकाभरणोज्ज्वला ॥**

कल्पवल्लीसमभुजा । यथा दिव्यवृक्षा नन्दनोद्याने प्रसिद्धा तथा तदलकाराय वल्ल्यादयोऽपि कल्पयन्ति सपादयन्तीति कल्पा , कल्पाश्च ता वल्ल्यश्च व्रतत्य , ताभि समा भुजा हस्ता यस्या सा तथा । कविसप्रदायप्राप्त्या स्त्रीभुजाना वल्लीसाम्योक्तिरिति मन्तव्यम् । अत्र समपद स्वारस्येन तेषामपि तदवच्छिन्नचैतन्यद्वारा यथाप्रारब्ध चेतनवल्लोकवाञ्छितफलकतृत्वमिति ध्वनितम् । 'एकस्तथा सर्वभूतान्तरात्मा रूप रूप प्रतिरूपो बहिश्च' इति श्रुते , 'तत्तदेवावगच्छ त्व मम तेजोंशसभवम्' इति स्मृतौ च भगवता स्वकीयसच्चिदानन्दस्वरूपावस्थितिरेवोक्ता । अत एव परदेवीभुजाना नैव साम्योक्तिरिति शङ्का निरस्ता वेदि

तव्या, औपाधिकचैतन्येन तथाभूतचैतन्यस्य साम्योपपत्ते ॥ ॐ कल्पवल्लीसमभुजायै नम ॥

कस्तूरीतिलकाञ्चिता । कस्तूरीतिलकेन ललाटदेशसंस्थापितबिन्द्वाकारमृगनाभिना अञ्चिता चिह्निता अलङ्कृतेत्यर्थ ॥ ॐ कस्तूरीतिलकाञ्चितायै नमः ॥

हकारार्था । हकारस्य आकाशबीजस्य अर्था, अर्थ स्वरूपचैतन्यम् आकाशविग्रहेत्यर्थ , 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति श्रुते ॥ ॐ हकारार्थायै नम ॥

हसगति । हन्ति गच्छतीति हस प्राण आदित्यो वा । हसस्य प्राणस्य गति गमनागमन लक्षणया तज्जाप्याजपा मन्त्ररूपा यस्या सा तथा, 'हकारेण बहिर्याति सकारेण पुनर्विशेत्' इति वचनात् । यद्वा, तदभिमानिदेवतारूपाग्नीषोमात्मकसूर्यचन्द्रगती अहोरात्रात्मककालस्वरूपाया यस्या सा । अथवा, हन्ति देहाद्देहान्तर गच्छति स्वकर्मवशेनेति हसा जीव , तस्य गति प्राप्यस्थान मुक्तिरित्यर्थ , 'ब्रह्मविदाप्नोति परम्' 'यद्गत्वा न निवर्तन्ते' इति श्रुतिस्मृतिवचनात् । अथवा हन्ति स्वकार्यभूत जगत्प्रविशतीति हस । 'हसस्तु परमेश्वर ' इति नृसिंहता

पनीये । गम्यते प्राप्यते शरणत्वेन प्रपद्यते चतुर्विधभक्तैरि ति गति । हंसश्चासौ गतिश्चेति सामानाधिकरण्यसमास , 'हंस शुचिषत्' इति श्रुते । आहोस्वित्, हंसस्य ब्रह्मवाह नस्य गतिरिव गमन यस्या सा तथा । उताहो, हंसशब्देन नामैकदेशेन हंसक पादकटकमुच्यते, गम्यते अनेनेति गति चरणम्, हंसयुक्ते गती पादारविन्दे यस्या सा तथा । यद्वा, हंसशब्देन नित्यानित्यसारासारजडाजडादिव स्तुविवेकसमर्था , हन्ति गच्छन्ति प्रतिग्राम प्रतिदेशम् इति हंसा परिव्राजका चतुर्थाश्रमिण निष्कामा , तेषा गति गम्यते ज्ञायते साक्षात्क्रियत इति गति , 'सन्न्यासयो गाद्यतय शुद्धसत्वा ' इति श्रुते । 'ये पूर्व देवा ऋषयश्च तद्विदु ते तन्मया अमृता वै बभूवु ' इति श्रुते । जीवन्मु क्तपुरुषानुभूयमानपरमानन्दमुक्तिस्वरूपेत्यथ ॥ ॐ हंस गत्यै नम ॥

हाटकाभरणोज्ज्वला । हाटकस्य सुवर्णस्य कार्याणि च तानि आभरणानि च हाटकाभरणानि तैरुज्ज्वला तथा, प्रकाशिता अलङ्कृतेत्यर्थ । हाटकस्य सुवर्णरूपब्रह्माण्डस्य आभरणवदुज्ज्वला प्रकाशकरी सत्तास्फूर्तिकरीत्यर्थ । यद्वा, तस्मिन्नाभरणै मङ्गलसूत्रादिभि सनाथस्त्रीमण्डलस्वरूपैरु

ज्ज्वलतीति । आहोस्वित्, कार्यकारणद्वयरूपवसुदानेन वसु स्वरूपेण वा उज्ज्वलति प्रकाशत इति तथा, 'वसुरन्तरिक्ष सत्' इति श्रुते ॥ ॐ **हाटकाभरणोज्ज्वलायै नम** ॥

**हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।**
**हरित्पतिसमाराध्या हठात्कारहतासुरा ॥**

हारहारिकुचाभोगा । हरस्य परमेश्वरस्य इमे सबन्धिन हारा ईश्वरत्वाप्तकामत्वनित्यतृप्तत्वादयो गुणा , तान् हरति तद्विपरीताविद्याद्याधानेन उत्सादयतीति हारहारी, कुचयोराभोग पर्यन्तभूमि यस्या सा तथा । परमेश्वरस्य तद्विषयकवाञ्छया तदेकसक्तमनस्त्वेन तत्कारणीभूताविद्या वशवृत्तित्वेन वशीकृतमायत्वस्वरूपेश्वरत्वसमानाधिकरणा प्तकामत्वादय अपहृता , जीवेश्वरयोरेकत्व तेषा तद्गुणाना च सामानाधिकरण्यायोगादित्यर्थं । तथा च ईश्वरस्य मादिष्टसाधनमित्यन्यत्र पदार्थे बुद्धिमत्त्वस्यैव बहुभवनरूपत या तस्य जगदाकारत्वाधायका—इत्यधिकगुणोत्प्रेक्षाविषयत्वेन भोगस्यातिशयोक्तिरिति द्रष्टव्यम् । अथवा, हारान् मुक्तास्र ज हरति आदत्ते इति हारहारी कुचाभोगो यस्या सेति तथा षट्प्रकारेण मुक्ताहारेण यथोचितकाल भूषितवतीति भाव ॥ ॐ **हारहारिकुचाभोगायै नमः** ॥

ह्राकिनी । ह्राकयति जन्ममरणयो छेदयतीति ह्रा किनी, 'ह्राक् च्छेदे' इति धातुपाठात् ।। ॐ ह्राकिन्यै नम ।।

हल्यवर्जिता । हलसबन्धि हल्य कृष्यादिद्वारा जनक त्वम्, तद्वर्जिता, कामादिविहीनशुद्धचैतन्यस्वरूपत्वात् । हल्य कपट मित्रेष्वप्यन्यथा स्वान्त करणाविष्कृति तेन व र्जिता । अविद्याविरहिततत्त्वपदलक्ष्यार्थभूतत्वादिति यावत् ।। ॐ हल्यवर्जितायै नम ।।

हरित्पतिसमाराध्या । हरिता दिशा पतय महेन्द्रादय, तै सम्यक् श्रद्धाभक्तिपूर्वकम् आराधितु योग्या । तद्विपक्ष निबर्हणनेष्टप्रापकदैवतत्वादित्यभिसधि ।। ॐ हरित्पतिस माराध्यायै नम ।।

हठात्कारहतासुरा । हठात्कारेण अतिशीघ्रतया हता पराभूता असुरा असुरपक्षा महिषादयो यया सा तथा, समबलयो किल लोके सामाद्युपाय बलाबलविचारणा च भवति । प्रबलस्य तु दुर्बलेषु वैरिषु सिंहस्य मेषेष्विव तदयोगेन अतित्वरयाविचारेणैव देवलोकसुखप्रदा—इति ना मार्थविचारणायामितरेषु कैमुतिकन्यायेन तत्कारणत्व ध्व नितमिति योजनीयम् ।। ॐ हठात्कारहतासुरायै नम ।।

**हर्षप्रदा हविर्भोक्त्री हार्दसतमसापहा ।**
**हल्लीसलास्यसंतुष्टा हंसमन्त्रार्थरूपिणी ॥**

हर्षप्रदा । हर्षं आनन्दकारकं मुखविकासादिकार्योन्नेयः स्वात्मसंभावनेतरपरिभवनिमित्तचित्तवृत्तिविशेषः, कार्यस्य कारणाविनाभावितया तत्प्रदानं तद्धेतोरप्याक्षिपतीति सुखप्रदेत्यर्थः । प्रददातीति प्रदा । अथवा, हर्षं धनयौवनादि सुखं पुत्रबन्धुवर्गादिरूपेण परिहृत्य प्रकर्षेण द्यति खण्डयतीति वा तथा ॥ ॐ हर्षप्रदायै नमः ॥

हविर्भोक्त्री । 'स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' इति श्रुतेः वसुरुद्रादित्याकारेण हवींषि यजमानेन अग्नौ प्रक्षिप्तानि स्वाहामुखेन भुङ्क्ते इति तथा । यद्वा हवींषि कालान्तरभाविफलानि अदृष्टात्मना सूक्ष्मरूपाणि तत्तद्यजमानजीवगतानि भूतसूक्ष्माभिधानानि समष्टिव्यष्ट्यात्मनेश्वरजीवोपाधिभूतानि मायाविद्याशब्दितानि मुक्तिपर्यन्तं भुनक्ति पालयतीति वा तथा । अन्यथा संसारस्यानादित्वाभावेन आदिमशरीराद्युत्पत्तौ अङ्गीक्रियमाणायाम् प्रपञ्चस्याकस्मिकत्वमकृताभ्यागमप्रसङ्गश्च स्यादिति भावः ॥ ॐ हविर्भोक्त्र्यै नमः ॥

हार्दसतमसापहा । हृदयावच्छिन्न हार्दे, 'यो वेद निहित गुहायाम्' इति श्रुते । अस्मिन् यत्सतमस आवारकत्वात् 'तम आसीत्' इति श्रुत्या च आत्मविषयक तदाश्रयमज्ञानम् अनर्थकरम् अव्याकृताकाशमित्युच्यते, महावाक्यश्रवणजन्यधीवृत्तिप्रतिफलिताकारेणापहन्तीति सा तथा । नाह ब्रह्मास्मि ससारी ब्रह्म नास्ति न भाति च—इत्यज्ञानस्य सोऽह ब्रह्मास्मि सच्चिदानन्दलक्षण —इति एकाकारवृत्तिबाध्यत्वनियमेन बाधाधिष्ठानम् 'नेह नाना' इति श्रुतिसिद्ध ब्रह्मरूपेति यावत् ॥ ॐ हार्दसतमसापहायै नमः ॥

हल्लीसलास्यसतुष्टा । हल्लीसै चित्रदण्डै कुमारिकाभि एकतालादियुक्तगीतपूर्वक यल्लास्य नर्तन तस्मिन् सतुष्टा प्रीतिमतीत्यर्थ । 'नारीणा मण्डलीनृत्य बुधा हल्लीसक विदु' इति हारावलीकोशात् मण्डलाकारनृत्यसतुष्टेत्यर्थ ॥ ॐ हल्लीसलास्यसतुष्टायै नम ॥

हसमन्त्रार्थरूपिणी । हसै परमहसै उपास्यो यो मन्त्र प्रणव तस्य शास्त्रबोधिततत्त्वार्थरूपिणी । वाच्यलक्ष्यार्थस्वरूपेण ज्ञायमानेत्यर्थ । अथवा, हसमन्त्र अजपा । हकारसकारौ शोधिततत्त्वपदार्थौ, हकारस्य परोक्षवाचिन सकारस्य तादृशस्य च भागत्यागलक्षणया निष्प्रपञ्चनित्यशुद्धमु

क्तबुद्धसच्चिदानन्दस्वरूपेत्यर्थ ॥ ॐ हसमन्त्रार्थरूपिण्यै नमः ॥

**हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।**
**हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥**

हानोपादाननिर्मुक्ता । अनिष्टसाधने हान परित्यागक्रिया । इष्टसाधने उपादान स्वीकारक्रिया । परिजिहीर्षा आदित्सा वा । 'अप्राणो ह्यमना शुभ्र ' 'अकायम्' 'अ शरीर वाव सन्त न प्रियाप्रिये स्पृशत ' इति बहुश्रुते अशरीरस्य ब्रह्मणोऽन्त करणादिधर्माणामसभवात् ताभ्या निर्मुक्ता नि सङ्गेत्यर्थ , 'विमुक्तश्च विमुच्यते ' इति श्रुते ॥ ॐ **हानोपादाननिर्मुक्तायै नम॰** ॥

हर्षिणी । 'एष ह्येवानन्दयाति ' इति श्रुते हर्षयति सतोषयतीति तथा ॥ ॐ **हर्षिण्यै नम॰** ॥

हरिसोदरी । हरिणा कृष्णेन समान एक उदरम् उत् ईषत् अर भेदक अवच्छेदकमित्यर्थं । उच्चैरर कूटो वा अत्यल्पमि थ्याभूतमायोपाधिकचैतन्यावस्थाविशेषरूपा । 'अपरेयमि तस्त्वन्या प्रकृतिं विद्धि मे पराम् । जीवभूता महाबाहो ययेद धार्यते जगत् ' 'देवात्मशक्तिं स्वगुणैर्निगूढाम् ' इत्या

दिस्मृतिश्रुतिभ्याम् ईश्वरस्य रूपभेदवत्त्वावगमादिति मन्तव्यम् ॥ ॐ **हरिसोदर्यै नमः** ॥

हाहाहूहूमुखस्तुत्या । हाहाहूहूनामकगन्धर्वौ मुख्यौ येषां जनानां तैस्तथा । स्तुत्या गुणिनिष्ठगुणाभिधानं स्तुतिः । तदाश्रयत्वेन प्रतिपादनीयेत्यर्थः ॥ ॐ **हाहाहूहूमुखस्तुत्यायै नमः** ॥

हानिवृद्धिविवर्जिता । अवयवोपचयरूपा वृद्धिः, तदपचयरूपा हानिः, ताभ्यां वर्जिता, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः । उपलक्षणम्, षड्भावविकाराणां शरीरधर्मत्वेन कर्मनिमित्तत्वादीश्वरे तदभावेन निर्विकारेत्यर्थः ॥ ॐ **हानिवृद्धिविवर्जितायै नमः** ॥

**हय्यङ्गवीनहृदया हरिगोपारुणांशुका ।**
**लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ॥**

हय्यङ्गवीनहृदया । हय्यङ्गवीनवत् नवनीतसदृशविरलमृद्ववयवपरिणामद्रवत्वसादृश्ययोगिहृदयकृपारसरूपपरिणामवतीति सा तथा । हृदयाभावेऽपि सर्वात्मकतया तद्वत्त्वम् । ईक्षणादिवन्मायापरिणामरूपा दया वा हृदयशब्देन उच्यते । 'अवागमनाः' इति श्रुत्या सर्वनिषेधात् ॥ ॐ **हय्यङ्गवीनहृदयायै नमः** ॥

हरिगोपारुणांशुका । हरिगोप इन्द्रगोप आर्द्रामघा-नक्षत्रे वर्षासूद्भवा अष्टपादा रक्तवर्णा मृदङ्गा कीटविशेषा , तथा शोणमशुक अम्बरम् , स्वार्थे कप्रत्यय , किरणानि वा यस्या सा तथा । ॐ **हरिगोपारुणांशुकायै नम** ॥

लकाराख्या । लकारयुक्त मूलमन्त्र आख्या वाचक शब्द यस्या सा तथा । लकारस्य शक्रबीजस्य वार्थे , 'सेन्द्र' इति श्रुते । लकारयुक्तस्य मायाबीजस्य वा स्त-ब्धमायेत्यर्थ ॥ ॐ **लकाराख्यायै नम** ॥

लतापूज्या । लवन्ति विनमन्ति अत्यन्तनम्रा भवन्तीति लता परमपतिव्रता अरुन्धत्यादय स्त्रिय , ताभि स्थिरमाङ्गल्याय स्वेष्टदेवतात्वेन पूज्या पूजनीया। तदुक्तम्– 'समाराध्य महेशानीं भुक्तिं मुक्तिं च विन्दति' इति । अथवा, केदारादिगौरीविशेषमूर्तौ लताभि उपलक्षण वन्यपूजोपकरणै पूज्या अलकृता । शबरी वा वनदुर्गा वेति भाव ॥ ॐ **लतापूज्यायै नमः** ॥

लयस्थित्युद्भवेश्वरी । वैपरीत्येन विशेषण योज्यम् । उद्भ-वतीत्युद्भव कार्यात्मना अभिव्यक्ति । स्थिति ज्ञानविषय तायोग्यकालावच्छेद अनुभवसत्तावत्त्वमिति यावत् । लय

उत्पन्नकार्यस्य कारणात्मना अवस्थिति वाचारम्भणयोग्यते त्यर्थ । तासा क्रियाणाम् अचेतनकार्यत्वायोगेन घटादिकार्ये चेतनस्य निमित्ततादर्शनात् एकतटस्थेश्वरत्व वा, गोपुरादौ नानाचेतनदर्शनात्तादृशनानेश्वरत्व वेति विशये, 'यतो वा इ मानि भूतानि जायन्ते' इति श्रुतौ 'यत' इत्येकवचनपञ्च म्या नानात्वतटस्थत्वे, 'जनिकर्तु प्रकृति' इति सूत्रम् । जनि- कर्तु कार्यस्य प्रकृतिरुपादानमपादानसज्ञा स्यात् । 'अपादाने पञ्चमी' इति शासनात् अभिन्ननिमित्तोपादनत्वमीश्वरत्वमिति सिद्धान्त । तटस्थलक्षणमेतत्, ज्ञायमानस्य ब्रह्मण लक्षण प्रमाणयो अवश्यवाक्यत्वादित्यभिप्राय । आदौ लयशब्दो पादानेन अनादित्व प्रपञ्चस्य सूचितम् । जगत इति शब्द पूरणन नाम योजनीयम् । तथा च जगत लयश्च स्थितिश्च उद्भवश्च तेषामीश्वरी । कूटस्थचैतन्यमात्रसच्चिदानन्दाधायक तया विवर्तकारणमित्यर्थ ॥ ॐ लयस्थित्युद्भवेश्वर्यै नमः ॥

**लास्यदर्शनसतुष्टा लाभालाभविवर्जिता ।**
**लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥**

लास्यदर्शनसतुष्टा । यथा राजा सपूर्णकाम प्रयोजनम

नुद्दिश्यापि मृगयादिलीलाविशेषान् पश्यति बालकादिनृत्य वा, तथा अज्ञानाम् इष्टानिष्टमिश्रोदासीनपदार्थचतुष्टयानुभवजन्यहर्षशोकादिसभवन्मदोद्रेकशोकातिरेकहेतुकविहिता दिकरणाकरणरूपचरणाद्यङ्गपरिस्पन्दरूपनानाविधप्राणिकाय निकायजन्यलास्यदर्शनेन अनुद्दिश्यापि प्रयोजन सतुष्टा त त्तत्कर्मानुसारेण फलप्रापकेश्वरतया सर्वसमानत्वात्, 'नादत्ते कस्यचित्पाप न चैव सुकृत विभु ' इति भगवद्वचनात्। लास्य दवतादिवारवनितादिभि क्रियमाण तालगीतयुक्त नृत्य तद्दर्शनेन सतुष्टा । तदीयफलप्रदानोन्मुखकृपारसवती त्यर्थ ॥ ॐ **लास्यदर्शनसतुष्टायै नम** ॥

लाभालाभविवर्जिता । अप्राप्तप्राप्तिर्लाभ , कृतेऽपि यत्ने तदप्राप्तिरलाभ , ताभ्या विवर्जिता, पर्याप्तकामत्वेन नित्यतृप्तत्वात्, 'न मे पार्थास्ति कर्तव्य त्रिषु लोकेषु किंचन' इति भगवद्वचनात् ॥ ॐ **लाभालाभविवर्जितायै नम** ॥

लङ्घ्येतराज्ञा । इतरेषा जीवभ्रान्तिकल्पिताना गुणमूर्त्या दीनाम् उपासनाविधिरूपा वा, कर्मविधिरूपा वा आज्ञा प्रेरणा लङ्घ्या अविषयीकृता यया सा तथा । शुद्धचैतन्यस्य विशि ष्टक्रियाद्यात्मकत्वाभावेन विध्यविषयत्वादिति यावत् । अथ वा, किंकरीत्वाभावेन इतरेषा देवतानाम् आज्ञा प्रेरणा लङ्घ्या

उपेक्षणीया यया सा तथा, 'सर्वस्याधिपति सर्वस्येशान' इति श्रुते । ईश्वरस्य सर्वनियन्तृत्वेन स्वेतरानियम्यत्वादिति ज्ञातव्यम् ॥ ॐ लङ्घ्येतराज्ञायै नम ॥

लावण्यशालिनी । लावण्य मौन्दर्य परमानन्दस्वरूपतया अतिशयप्रीतिविषयत्व शालत इति तथा । सर्वावयवसाधारणसु दरभाववतीति वा ॥ ॐ लावण्यशालिन्यै नमः ॥

लघुसिद्धिदा । लघुना उपायेन सिद्धिं वाञ्छितार्थप्राप्तिं ददातीति तथा, लघुशब्द लक्षणया लघिमासिद्धिपर । तथा च लघिमाद्यष्टैश्वर्यप्रदेति वा । अथवा, लघूना अत्यन्ताल्पज्ञानभाग्यशरीररूपचरणवतामप्यतिनिकृष्टाना तिर्यगादीनामपि सिद्धिं मुक्तियोग्यताहेतुज्ञानादिसाधनसपत्तिं तत्कार्यमहिमातिशयोन्नेया ददातीति सा तथा ॥ ॐ लघुसिद्धिदायै नम ॥

**लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता ।**
**लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥**

लाक्षारससवर्णाभा । लाक्षारसेन लाक्षाद्रवेण समानो वर्णो यस्या सा तथाभूता शोभा कान्तिर्यस्या सा तथा । अतिपाटलविग्रहप्रभेत्यर्थ ॥ ॐ लाक्षारससवर्णाभायै नम ॥

लक्ष्मणाग्रजपूजिता । अग्रे जायेते इत्यग्रजौ रामभरतौ लक्ष्मणस्यापि ज्येष्ठभूतरामाचारानुकारित्वेन चतुर्भिरपि दाशरथिभि पूजितेत्यर्थ । रामस्य शिवलिङ्गप्रतिष्ठाता— इति नामवत्त्वान्यथानुपपत्त्या शिवद्पतिपूजकत्वेन तदितरेषा तद्व्रशस्त्रीपुरुषाणा तत्सिद्धिरिति ध्वनितोऽर्थ ॥ ॐ **लक्ष्मणाग्रजपूजितायै नम ॥**

लभ्येतरा । लभ्यानि लब्धव्यानि कर्मोपासनाविशेषाणा फलत्वेन साध्यानि भव्यानीत्यर्थ । तेभ्य इतरा विलक्षणा । 'तत्सत्य स आत्मा' 'नित्यो नित्याना चेतनश्चेतनानामेको बहूना यो विदधाति कामान् । तमात्मस्थम्' इति 'यत्साक्षाद् परोक्षाद्ब्रह्म' इत्यादिभि श्रुतिभि आत्मन नित्यप्राप्तस्वरूप त्वेन प्राप्तप्राप्तव्यरूपतया मोक्षरूपत्वेन चतुर्विधक्रियाफलत्वाभावादिति मन्तव्यम् । अथवा, इतराणि धर्मार्थकामरूपत्रिवर्गरूपाणि फलानि लब्धव्यानि प्राप्तव्यानि यस्या सकाशादिति सा तथा, उक्तश्रुते ॥ ॐ **लभ्येतरायै नम ॥**

लब्धभक्तिसुलभा । भक्ति सामान्यविशेषाकारेण द्विविधा । तत्राद्या आर्तजिज्ञास्वर्थार्थिभि यैर्लब्धा तत्तत्फलोद्देशेन समयविशेषे विच्छिद्य विच्छिद्य प्राप्ता तेषा सुलभा तत्तत्प्रारब्धानुसारेण फलदानोन्मुखस्वात्मरूपतया सनिहित

त्वात् । द्वितीया भक्तिस्तु ब्रह्मसाक्षात्कारवता पुरुषेण येनैकभक्तितया लब्धा, 'एकभक्तिर्विशिष्यते' इति स्मृते, तस्य सुलभा, स्वात्मरूपतया सदा ज्ञायमानत्वात् । 'ज्ञानी त्वात्मैव मे मतम्' इति गीतासु । अथवा, लब्धा प्राप्ता सत्यपि कण्ठगतचामीकरवत् लब्धभक्तीना सुलभा सुखनानायासेन कष्टेन विना साध्यतया लाभ प्राप्तिर्यस्या सा तथा, 'भक्त्या मामभिजानाति' इति स्मृते ॥ ॐ **लब्धभक्तिसुलभायै नमः ॥**

लाङ्गलायुधा । शेषरूपतया हलायुधेत्यर्थ, 'अनन्तश्चास्मि नागानाम्' इति श्रीभगवद्वचनात् ॥ ॐ **लाङ्गलायुधायै नमः ॥**

**लग्नचामरहस्तश्रीशारदापरिवीजिता ।**
**लज्जापदसमाराध्या लपटा लकुलेश्वरी ॥**

लग्नचामरहस्तश्रीशारदापरिवीजिता । लग्नौ करसवद्धौ धृतावित्यर्थ, लग्नौ चामरौ ययोस्तौ तादृशौ हस्तौ ययोस्ते श्रीश्च महालक्ष्मी शारदा च ते ताभ्या वीजिता परिवीजिता । अनादिकालादारभ्य परिचर्यया वीज्यमानेत्यर्थ ॥ ॐ **लग्नचामरहस्तश्रीशारदापरिवीजितायै नमः ॥**

लज्जापदसमाराध्या । लज्जानाम अन्तःकरणधर्मः जुगुप्साहेतुः गूहनसाधनम्, उपलक्षणं मनोधर्माणाम्, तस्य पदम् आश्रयः, 'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेः । तस्मिन् समाराध्या चिन्तनीयेत्यर्थः 'य आत्मनि तिष्ठन्नन्तरो यमयति' 'गुहाहितं गह्वरेष्ठं पुराणम्' 'तमात्मस्थं येऽनुपश्यन्ति धीराः' इत्यादिश्रुतिभ्यः । अथवा, लज्जापदं जीवचक्रम्, तस्मिन् तदधिष्ठानानन्दाभिव्यक्तिहेतुतया बहिर्यागक्रमेण पूजनीयेत्यर्थः ॥ ॐ लज्जापदसमाराध्यायै नमः ॥

लम्पटा । लमिति पृथ्वीवाचकबीजेन तदुपलक्षितं जगल्लक्ष्यते, पटशब्देन आवारकत्वधर्मवत्तया अविद्या लक्ष्यते, लमः जगतः पटः कारणीभूता अविद्या यस्याः सा तथा, 'मायिनं तु महेश्वरम्' 'य एको जालवान्' इति श्रुतेः । 'अज्ञानेनावृतं ज्ञानम्' इति स्मृतेश्च । अथवा, लम्पटो नाम तन्द्री आलस्यम्, कर्मोपासनाबाहुल्येऽपि प्रतिबन्धकभूयस्त्वे शीघ्रतया परमेश्वरस्य फलदानोन्मुखतायाः राजादिवच्चिरविलम्बितसेवाफलदानवैमुख्ये तद्वत्तोपचारात्, लम्पटो यस्याः सा तथा । अथवा, लम्पटादीनामन्तःकरणधर्माणामध्यासवशेन तदवच्छिन्ने चैतन्ये सत्त्वरजस्तमःकार्याणामुपलब्धेः

स्तद्वत्त्व वा ।। ॐ लपटायै नमः ।।

लकुलेश्वरी । कु पृथिव्युपलक्षितजगत् लीयते अस्मिन्निति कुलम्, मायोपाधिकचैतन्यम्, प्रलयाधिष्ठानम् । 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । लीयमानं कुलं लकुलं निरुपाधिकमित्यर्थः । तच्च सा ईश्वरी च सा तथा । अथवा, लकुलं स्थानविशेषः स्वाधिष्ठानं मणिपूरकं वा, तस्येश्वरी, विष्णुरुद्रात्मिकेत्यर्थः, भूतसृष्टिश्रुतौ पृथिव्या उदके तस्य तेजसि तस्य परमात्मनि लयश्रवणात् । 'सदायतनाः सत्प्रतिष्ठा' इति । तस्येश्वरी विभूतिविशेषो वा ।। ॐ लकुलेश्वर्यै नमः ।।

**लब्धमाना लब्धरसा लब्धसंपत्समुन्नतिः ।**
**ह्रींकारिणी च ह्रींकारी ह्रींमध्या ह्रींशिखामणिः ।।**

लब्धमाना । सर्वैः प्राणिभिः लब्धः मानः अध्यस्ताहंकारः, 'अभिमानात्मकस्तद्वदहंकारः प्रकीर्त्यते' इति स्मरणात् । अध्यासेनाहंकाराधिष्ठानेत्यर्थः । अथवा, 'मान पूजायाम्' इति स्मरणात् यैर्यैः प्राणिभिः विद्यैश्वर्यकुलसौन्दर्यातिशयादिवशात् पूजा लभ्यते सुखहेतुः सा तदन्तर्यामिणा पूर्वमेव लब्धा, पूजादिजन्योपकारस्य सुखादेः स्वस्वरूपतया लब्ध-

त्वात् । यद्वा मान परिमाण अणुमहद्दीर्घह्रस्वभेदेन प्रसिद्ध । 'स वा एष महानज आत्मा महान प्रभुर्वै पुरुष ' 'अणोरणीयान् महता महीयान् ' इत्यादिवेदवाक्यैर्जलसूर्यादिवदुपाधिधर्माणामुपहिते गजस्तम्भमत्कुणसर्पादौ प्रतीयमानत्वात्, लब्ध मान परिमाण उपहिततया जगत यया सा तथा ॥ ॐ **लब्धमानायै नम** ॥

लब्धरसा । 'रसो वै स ' इति श्रुते रसवत् रस्यते सबध्यत इति अत्यन्तप्रीतिविषय आनन्द , स स्वस्वरूपत्वन लब्धो यया सा तथा । शृङ्गाररसो वा, तद्व्यञ्जकमङ्गलाभरणपुष्पालकारवस्त्वादिति भाव । शुद्धसत्त्वप्रधान-मायोपाधिकतया, 'रस्या स्निग्धा स्थिरा हृद्या आहारा सात्त्विकप्रिया ' इति गीतावचनात् नैवेद्यादौ कट्वाम्ललवणादीना देवादिविषये निषेधाच्च प्रीतिविषयत्वेन मधुररसो लब्धो ययेति वा तथा ॥ ॐ **लब्धरसायै नम** ॥

लब्धसपत्समुन्नति । लब्धा स्वस्वरूपतया स्वत सिद्धा या सपद सत्यकामत्वादय सच्चिदानन्दादयो वा ताभि समुन्नति सर्वोत्कृष्टता यस्या सेति तथा । ब्रह्मण मायामात्रोपाधिना अभिव्यज्यमाना गुणा कर्मानुद्भूतत्वा

दनाकास्मिका सन्त सर्वोत्कृष्टभाव ब्रह्मण ज्ञापयन्ति । 'तमीश्वराणा परम महेश्वर त देवताना परम च दैवत । पतिं पतीना परम पुरस्ताद्विदाम देव भुवनेशमीड्यम्' 'सत्यकाम सत्यसकल्प' 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनि सर्वस्य' इति 'गतिर्भर्ता प्रभु साक्षी' इत्यादिश्रुतिस्मृतिशतेभ्य 'एष नित्यो महिमा ब्राह्मणस्य' इति प्रसिद्धनित्योत्कर्षवत्त्व ब्रह्मस्वरूपमेवेति नात्र विचारणीय किंचिदस्तीत्यभिप्राय ॥ **ॐ लब्धसपत्समुन्नत्यै नमः** ॥

ह्रींकारिणी । ह्रींकार द्वितीयखण्डसमाप्त्यवयवतया वा च्यवाचकसबन्धन अस्या अस्तीति तथा ॥ **ॐ ह्रींकारिण्यै नम** ॥

ह्रींकाराद्या । अत्र ह्रींकारशब्देन तत्कार्यभूता वेदा, तेषामप्यर्थतया कारणतया वा आद्या आदौ भवा पूर्वभावीत्यर्थ । शब्दस्य अर्थविषयत्वेन प्रवृत्ते शक्तिग्रहादौ काव्यादिकृतौ च अर्थज्ञानपूर्वकशब्दप्रयोगदर्शनादर्थस्य पूर्वभावित्वमुक्तमिति भाव ॥ **ॐ ह्रींकाराद्यायै नमः** ॥

ह्रींमध्या । अस्य बीजस्य जगदभिन्ननिमित्तोपादानभूतमायाविशिष्टचैतन्यवाचकतया तत्प्रतीकत्वेन तन्निष्ठयावद्गुणवत्त्व तदुपासनातिशयमहिम्नाभिव्यज्यते । अन्यथा मन्त्रपुर

अर्थासिक्लिष्टसिद्ध्यभावप्रसङ्ग स्यात् । अव्यवहितपूर्वनाम्नान-भिव्यक्तस्वरूपस्यापि शब्दजालस्य एतद्बीजमात्रात्मनैवाङ्कु-रितबीजार्थवत्तया पूर्वभावित्वमुक्तम् । इदानीमभिव्यक्ता त्मकस्वार्थकतया विवर्तवादमाश्रित्य वाचारम्भणाकारेण ना मरूपद्वयवत्त्वमुच्यते । ह्रींकारबीजार्थे तेन शब्देन लक्ष्यते। मध्ये व्यवहारकाले ह्रीं यस्या सा तथा । घटादिषु वस्तुषु सच्चिदानन्दप्रतीत्या व्यवहारकालेऽपि प्रपञ्चकारण ब्रह्मानु-स्यूततया भासमान जगत्कारणमिति सिद्धान्त । अनेनाचे-तनपरिणामारम्भादिवादा निष्प्रमाणतया युक्त्याद्याभासक त्वेन निरस्ता वेदितव्या ॥ ॐ ह्रींमध्यायै नम ॥

ह्रींशिखामणि । लोके यथा चूडामणि सर्वाङ्गरचिता भरणापेक्षया तद्विजातीयप्रकाशसत्ताद्याश्रयवान् उत्तमाङ्ग-स्थानविशेषे स्थापित महदैश्वर्यादि तद्वत पुरुषस्य ज्ञाप यति, तथा सर्वशब्दजालतद्वाच्यार्थभूतचिज्जडसंबन्धरूप-प्रपञ्चवाचकातिसूक्ष्मह्रींवर्णात्मकश्रीविद्याराजबीजस्य सत्य ज्ञानानन्दात्मकलक्ष्यार्थभूता सती ह्रींबीजजापकाना सर्वार्थ प्रदानेन पारमैश्वर्यं व्यञ्जयतीति गुणयोगकृतनामेदम् । तथा च ह्रीम शिखामणि परमतात्पर्येण ज्ञापयतीत्यर्थ ॥ ॐ ह्रींशिखामणये नम ॥

**ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।**
**ह्रींकारभास्कररुचिर्ह्रींकाराम्भोदचञ्चला ॥**

ह्रींकारकुण्डाग्निशिखा । ह्रींकार एव कुण्ड वाच्यवाच कसबन्धेन परब्रह्मावच्छेदकतया आहवनीयादिसदृशम् , त स्याग्निशिखा, 'उद्दीप्तेऽग्नौ जुहोति'– इति प्रमाणेन 'आ हवनीये जुहोति'– इति विधिवाक्यावगतहोमाधारताया केवलाहवनीयस्यायोग्यतया साग्निज्वालस्य होमाधारताया ज्ञायमानायामदृष्टद्वारा स्वर्गसबन्धेन स्वार्थकतया तज्ज्ञा पकवेदवाक्यस्यापि पुरुषार्थसबन्धित्वमाहवनीयनिष्ठहोमा धिकरणदीप्ताग्निज्वालास्वाधारभूतकुण्डसार्थक्यसपादकेवा भा ति । तथा स्ववाचकबीजस्यापि 'मन्त्रैरुपासीत' इति वि धिगतदेवतोपासनकरणाना मन्त्राणामपि स्ववाचकतया सा र्थक्यसपादनात्तथोच्यते ॥ ॐ ह्रींकारकुण्डाग्निशिखायै नम ॥

ह्रींकारशशिचन्द्रिका । ह्रींकार एव शशी चन्द्र तस्य स्वरूपाभेदभूतप्रकाशचैतन्य चन्द्रिकापदेनोपमीयते । यथा चन्द्रस्वरूपभूतामृतप्रसारभूता ज्योत्स्ना देवादिसर्वलोकाना सजीवकतयोपकरोति, तथा दृढतरभक्तिपरवशपुरुषधौरेया

दीना ह्रींकारवाच्यार्थतया तदभिन्नत्वेऽपि जगद्विवर्तकारण तथा सच्चिदानन्दाधायकत्वेन सजीवयतीति भाव ॥ ॐ **ह्रींकारशशिचन्द्रिकायै नम** ॥

ह्रींकारभास्कररुचि । भास कान्ती करोति प्रसारयति लाकोपकारायेति तथा सूर्य , तस्य रुचि प्रचण्डभानु । यथा लाके सूर्य वर्षास्वतिगाढतरस्रवदुदकधारासव्याप्तदिगन्तरासु दिवा विद्यमानोऽपि सूर्य साक्षादयमिति चाक्षुष ज्ञानगाचरो न भवति, तदभावे शिष्टाना भोजनादिसजीवकव्यवहाराभावन तदुपायासिद्ध्याप्रसन्नमनासि भवन्ति, तथा ज्ञानमार्गानधिकारिणा मोक्षमार्गोपायभूताविदितदेवतारूपह्रींकाराणा जनाना बहुतरपुण्यमहिम्ना महावातनेव मेघावलौ दूरीकृताया चण्डभानुरिव सुखसाधन गुरुकृपापाङ्गावलोकनरूपदीक्षावशेन प्रतिबन्धकदुरितापगमे परदेवतारूप ह्रींकार पुरश्चर्यया साक्षाद्वाच्यार्थापरोक्षज्ञानहेतुर्भवति । चिरकालनैरन्तर्यभावनाप्रकर्षेण तस्मिन्नभिमुखे सति तल्लक्ष्यार्थरूपपरमानन्दचित्कला स्वयमेवाभिव्यक्ता सत्यानन्दानुभवामृतेन सुखयतीति तथोच्यते ॥ ॐ **ह्रींकारभास्कररुचये नमः** ॥

ह्रींकाराम्भोदचञ्चला । अम्भासि अमृतानि ददतीत्य

म्भादा , ह्रींकारोऽपि कामवर्षित्वेन तैरुपमीयते । तेषु चञ्च ला विद्युल्लता विद्यमाना तदभिन्नप्रकाशमाना सती वर्षोद कद्वारा सस्याद्युत्पादकत्वं यथा व्यनक्ति तथा ह्रींकारवाच्य तया तदभिन्नापि तत्स्वरूपविचारणाया शुद्धलक्ष्यार्थस्वरूपा सत्यपि अनिर्वचनीयस्ववाचकमन्त्रप्रकाशितदेवतात्वेन स्वा भीष्टपुरुषार्थप्राप्तिहेतुभूतेत्यभिसंधि ॥ ॐ **ह्रींकाराम्भोद चञ्चलायै नम** ॥

**ह्रींकारकन्दाङ्कुरिका ह्रींकारैकपरायणा ।**
**ह्रींकारदीर्घिकाहंसी ह्रींकारोद्यानकेकिनी ॥**

ह्रींकारकन्दाङ्कुरिका । ह्रींकार एव कन्दम् दृढतरबीज भाव तस्य अङ्कुरिका आदिप्रसव नूतनाभिव्यक्तिरित्यर्थ । यथा लोके अङ्कुरादिक कन्दादिनिष्ठोत्पादकशक्तिमनभिभू यैव स्वयं स्कन्धशाखापत्रपुष्पफलाद्यात्मना यथा विवर्तमा- न तत्सामर्थ्यप्रकटनकारणं भवति, तथा ह्रींकारस्य वेदैकदे- शत्वेन इतरप्रमाणानपेक्षतया स्ववाच्यार्थज्ञापनेन स्वत प्रा माण्ये स्थितेऽपि तज्जन्यज्ञानविषयतावच्छेदकधर्मरूपनाना प्रकारजगत्परिणामहेतुत्वसाधकाघटितघटनापटीयसीमायोपा- धिकत्वेन तदर्थद्वयरूपा सती तन्मात्रप्रमाणवेद्येत्यर्थ ॥ ॐ

ह्रींकारकन्दाङ्कुरिकायै नमः ॥

ह्रींकारैकपरायणा । ह्रींकार एव एकः अनितरसाधारणः चतुर्विधपुरुषार्थसाधकतया परम् अयनं ज्ञापकं प्रमाणं यस्याः सा तथा। अस्य बीजस्य वाच्यार्थो माया, सा निरधिष्ठाना न सिध्यतीति तदाश्रयत्वविषयत्वाभ्यां तद्रहितं तेन ज्ञाप्यत इति भावः ॥ ॐ ह्रींकारैकपरायणायै नमः ॥

ह्रींकारदीर्घिकाहंसी । ह्रींकार एव दीर्घिका राजोद्यानवनक्रीडावापी । संसारकाननसंचारिलोकविश्रान्तिकारणत्वेन ह्रींकारः तयोपमीयते, 'आराममस्य पश्यन्ति न तं पश्यति कश्चन' इति श्रुतेः । आ समन्ताद्रमत्यस्मिन् इत्यारामः अथवा जगत् । तत्रोपासनादिना परमानन्दप्रापकतया वा ह्रींकारः उपमीयते । तस्मिन् हंसी स्त्रीहंसः । यथा लोके सारासारविवेकिहंस्या आधारसुवर्णकमलादिमती वापिका महाराजसंबन्धिनी विज्ञाप्यते, तद्वद्धान्यार्थरूपतया प्रकाशमाना सती स्वसंबन्धिबीजस्य सुखोत्पादकत्वमोक्षहेतुत्वं द्योतयतीत्यभिप्रायः ॥ ॐ ह्रींकारदीर्घिकाहंस्यै नमः ॥

ह्रींकारोद्यानकेकिनी । ह्रींकार एव उद्यानवत् फलानुभावकत्वात् तथोच्यते तस्य केकिनी मयूरी । यथा लोके

बहुषु पक्षिषु आरण्यकेषु सत्स्वपि तस्या रूपध्वनिभ्या सुखतया दर्शनश्रवणादिजन्यप्रमोदसाधकतया उद्यानालक रिष्णुत्वम, तथा ह्रींकाररूपदेवताध्वने सच्चिदानन्दरूपत द्वाच्यार्थस्य च परमपुरुषार्थसाधकत्वेन अविशिष्टत्वेऽपि ब्र ह्मविष्णुरुद्रादिमूर्तिषु उद्यानतरुवल्लिकक्षगुल्मादिवदुत्तमनीच देवतिर्यङ्मनुष्यादिषु च मयूरीव स्वेच्छया सर्वव्यापकत्वेन तदात्मरूपतया शरीरेन्द्रियप्राणाद्याधारपरमप्रेमास्पदपरमा नन्दरूपप्रत्यग्गोचराहवृत्तिव्याप्यतयैतद्बीजप्रकाश्या भवती त्यर्थ ॥ ॐ ह्रींकारोद्यानकेकिन्यै नमः ॥

**ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी ।**
**ह्रींकारपञ्जरशुकी ह्रींकाराङ्गणदीपिका ॥**

ह्रींकारारण्यहरिणी । ह्रीकारवाच्यार्थैकदेशभूतमायावि द्यातत्कार्याणा बन्धरूपतया गहने व्याघ्रादीनामिव भयहे तूना सद्भावेन दुष्प्रवेशत्वरूपधर्मसाम्येन ह्रींकारस्य अरण्यो पमितत्वम् । तथा च अरण्यमिव ह्रींकार इति सर्वत्रोपमा नोत्तरपदसमास । तत्रैव सति यथारण्यगतपुरुषस्य शीघ्र दृष्टिपथ गता हरिणी एणी व्याघ्राद्यभावनिश्चयेन तदधिगम फलप्राप्तिसाधनतामवगमयति धीरपुरुषस्य, तथा निरन्तरभ

क्तिभजनपरप्राणिलोकस्य उपासनापरिपाकमहिम्ना अपरोक्षी-
कृताज्ञाननिवृत्तिपूर्वक भयापकरणेनानन्द प्रापयतीति तयो
पमितेति भाव । 'तमेव विदित्वातिमृत्युमेति' इति श्रुत ॥
**ॐ ह्रींकारारण्यहरिण्यै नम ॥**

ह्रींकारावालवल्लरी । ह्रींकारमन्त्रवाचकतानिरूपितवा
च्यतानामकसबन्धावच्छिन्नपरदेवतास्वरूपत्वन तदुपासना
विषयफलदानसमर्था सती आवालमात्रप्ररोहद्विवृद्धवल्लयों
पमीयते । तथा च तत्सबन्धितया ह्रींकार जपादिना आ
वाल इव सर्वदा सरक्षणीय इति तात्पर्यार्थे परिनिष्पन्न
इति यावत् ॥ **ॐ ह्रींकारावालवल्लयै नम ॥**

ह्रींकारपञ्जरशुकी । मन्दाधिकारिणामप्युपासनाकारण
साधारणपार्वतीप्रतीकतया ह्रींकारस्य बालकादिलालनविषय
त्वधर्मपुरस्कारण पञ्जरोपमा । तथा च तत्रत्यशुकीव सला
पादिना मनुष्यादिचित्तरञ्जिनी । एव तत्तद्दृष्टान्तानुसारेण फ-
लदात्री सती तयोपमितेति द्रष्टव्यम् । ह्रींकार पञ्जरमिव
यस्य शुकी तत्सार्थक्यकारिणीत्यभिप्राय ॥ **ॐ ह्रींकारप
ञ्जरशुक्यै नमः ॥**

ह्रींकाराङ्गणदीपिका । अङ्गणवत् सर्वसाधारणविश्रान्ति
स्थानतया ह्रींकारस्य तदुपमा तस्य दीपिका । यथाङ्गणारो

पितदीप बाह्याभ्यन्तरवस्तुजात प्रकाशयन तत्रत्यलोकाना मन्धकारादिनिवर्तनपूर्वकमभीष्टव्यवहारहेतुतया सर्वान् श्ला घयति स्वयमपि तै सरक्ष्यते, तथा ह्रींकारबीजार्थश्रवणम ननिदिध्यासननिरन्तराभ्यासादपरोक्षीकृतस्वयप्रकाशानन्द रूपा सती स्वसेवकान् सर्वोत्कर्षयतीति तदुपमिता सती तथोच्यते ॥ ॐ ह्रीकाराङ्गणदीपिकायै नम ॥

**ह्रींकारकन्दरासिंही ह्रींकाराम्भोजभृङ्गिका ।**
**ह्रींकारसुमनोमाध्वी ह्रींकारतरुमञ्जरी ॥**

ह्रींकारकन्दरासिंही । पर्वतशिखाग्रवर्तिगुहा कन्दरा द-रीत्यर्थ । वेदमौलिपठितह्रींकारस्य ग्राम्यविषयलिप्सुप्राणि प्रवेशयोग्यताविकलतया कन्दरापमा । तत्र यथा सिंही स्वेतरक्षुद्रमृगप्रवेशभयहेतुसटादिस्वव्याप्यचिह्नानुमिता तस्या स्वाश्रयमात्रता धीरस्य तत्परिसरनखनिर्घातमुक्ताफलादि प्राप्तिं च नयति, तथा मन्दभाक्तितन्द्रीबुभुक्षादिकलुषित-परिच्छिन्नाभिमानदेवतान्तरप्रतिपादकबीजतया स्वदेवतैक भाव कामितार्थं च प्रापयतीति सिंह्युपमिता सती तथो च्यते ॥ ॐ ह्रींकारकन्दरासिंह्यै नम ॥

ह्रींकाराम्भोजभृङ्गिका । ह्रींकारस्य अष्टैश्वर्यात्मकपुरुषा

र्थसाधकनानाशक्तिमत्तया नानाप्रकारवर्णान्तरघटितत्वेन प-
रागपरिमलादिमत्कमलोपमितत्वमिति याजनीयम् । कमले
यथा मधुमात्रसारग्राहिणी भृङ्गी रमते सर्वपुष्परसमधुपा-
नस्वाभाव्येन सर्वसमापि मध्वाधिक्यविविदिषया प्रभूतम
धुवत्त्वेन च तस्मिन्नेव विशिष्यासक्तिमती, तथा सर्वमन्त्र
बीजवाच्यदेवतात्मना सर्वानुगतापि ह्रींकारस्य विशिष्टगुण
वत्त्वेन सर्वोपादानसगुणब्रह्मप्रतिपादकतया तदीयस्वरूपत
टस्थलक्षणवत्त्वेन तदभिन्नस्वरूपतया सर्वशब्दजालप्रकृति-
त्वेन च रूढ्या लक्षणया वा तत्सबन्धिनी सती तदुपास
काना तदधिष्ठानतया च तैलक्ष्यत इति भृङ्ग्युपमया व
र्णितेति तात्पर्यम् ॥ ॐ ह्रींकाराम्भोजभृङ्गिकायै नम ॥

ह्रींकारसुमनोमाध्वी । ह्रींकारस्य वाञ्छितफलप्रदानसा-
धकतया सुमन सादृश्यम् । अथवा, पुष्पाणि व्यवहारसमये
बहुसावधानतया व्यवहर्तव्यानि परममार्दवाधिकरणत्वेन बहु
मान्यत्वात्, तथा ह्रींकारोऽप्युपासनवेलाया परब्रह्मवाचकत्वेन
प्रयत्नपूर्वकमेकाग्रमनसा देवताभिन्नत्वेन ध्यातव्य इति निय
मसपादनार्थं पुष्पोपममिति विभावनीयम् । तथा च वा-
य्वादिना शुष्काणि पुष्पाणि निर्मधुत्वेन फलान्यजनयित्वा
परिपतन्ति फलजनकशक्तेरभावेन, तदितराणि तु तद्वत्त्वेन

तज्जनकानि लोके दृष्टानि, पुष्परसश्च पृथिवीकारणभूतादक तन्मात्रस्वरूपमधुररसात्मकत्वात् पुष्पाणां फलजनकशक्तिज्ञापको भवति, तथा ह्रींकारस्यापि सर्वजनकताशक्त्याधायकतदधिष्ठानसच्चिदानन्दपरब्रह्मस्वरूपा सती तन्मन्त्रप्राप्त्या यथोक्तफलहेतुतया तदर्थरूपेण तद्वृत्तिर्भवतीति माध्वीसमानधर्मवत्त्वमस्या उपपद्यत इति विवेचनीयमिति यावत् ॥ ॐ ह्रींकारसुमनोमाध्व्यै नमः ॥

ह्रींकारतरुमञ्जरी । फलार्थिनः स्वारूढजनान् पतनादिभ्यः प्रतिबन्धकेभ्यस्तारयति पारं प्रापयति फललाभेन संतोषयतीति तरुः । ह्रींकारश्च कल्पादितरुर्दृष्टान्तीकृतः । प्रेक्षावतां सर्वादिप्रवृत्तिजनकत्वेन शाखोपशाखाग्रगता पुष्पमञ्जरी फलकारणयोग्यतां ज्ञापयतीव पुरुषार्थार्थिनां असंशयप्रवर्तकत्वेन प्रत्यक्स्वरूपा सती गुरूपदिष्टमन्त्रदेवतात्मकतया मन्त्रोपासनायामभिमुखीकरणेन पुरुषार्थान् प्रापयतीति मञ्जरीसादृश्यं प्राप्ता परदेवताया इति विवेचनीयम् ॥ ॐ ह्रींकारतरुमञ्जर्यै नमः ॥

**सकाराख्या समरसा सकलागमसंस्तुता ।**
**सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ॥**

सकाराख्या । सकारयुक्ता श्रीविद्यानामिका आख्या

वाचकशब्द यस्या सा तथा ।। ॐ सकाराख्यायै नम ।।

समरसा । सम एक रस मधुरादिरसवद्गुडपिण्डादा वेकरूपेण कार्ये व्यवस्थितेत्यर्थ । अथवा, ससारदशाया सर्वज्ञत्वकिंचिज्ज्ञत्वादिविशेषणभेदेन भिन्नरसवत् भिन्नस्वभाववत् प्रतीयमानयोरीश्वरजीवयोर्वेदान्तश्रवणादिना जन्या-खण्डाकारवृत्तिव्याप्त्या अह ब्रह्मास्मि— इत्यभेदानुभवदशा-यामेकरूपतया साक्षात्क्रियते इति सा तथोच्यते, 'रसो वै स' इति श्रुते, रसशब्दार्थ परब्रह्म सम अभिन्न यस्या सा तथा । तैत्तिरीयोपनिषत्प्रतिपाद्येत्यर्थ ।। ॐ समरसायै नम ।।

सकलागमसस्तुता । आ समन्तात् गमयन्तीति आगमा, सकलपदार्थगोचरसविकल्पकप्रमाजनकवेदा इत्यर्थ । सकलै रन्यूनानतिरेकेणेतिहासपुराणसहितयावदङ्गोपाङ्गरहस्यादियो गित्व सकलशब्दार्थ । तै सस्तुता सम्यक् नात पर किंचि दस्तीति निश्चयपूर्वक स्तुता गुणिनिष्ठगुणाभिधानविषयतया तदुपजीवकेत्यर्थ । सर्वार्थप्रकाशकवेदाना सर्वज्ञत्वेनैदपर्येण तदीयस्तुतिविषयतया शुद्धचैतन्यात्मकतया मोक्षकारणीभू तज्ञानस्वरूपत्वेन जिज्ञास्येति ध्वनितोऽर्थ ।। ॐ सकला गमसस्तुतायै नम ।।

सर्ववेदान्ततात्पर्यभूमि । वेदानामन्त अवसान तत्त्वम स्यादिमहावाक्यानि, तेषा तात्पर्यं समन्वय सामानाधिक रण्यमित्यर्थं । तस्य भूमि विषय ज्ञाप्यमिति यावत् । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्ग तात्पर्यनिर्णये' इति वचनोक्ततात्पर्यनिर्णायकप्रमा णबलेनातीन्द्रियधर्मादिगोचरवाक्यवत् सर्वेषा वेदान्ता नामुपासनाज्ञानविधिं विनाकर्मशेषतया अज्ञातज्ञापकत्वेन शसनादेव शास्त्रशब्दवाक्यानामद्वैते ब्रह्मणि गतिसामान्येन कर्मोपासनाकाण्डद्वयार्थोपकार्यत्वेन मोक्षहेतुज्ञानजनकत्वेन पर्यवसानमिति तात्पर्यविषयता अखण्डचैतन्यस्येति सि द्धान्तार्थ इत्यभिसधि । 'सामानाधिकरण्य च विशेषण विशेष्यता । लक्ष्यलक्षणभावश्च पदार्थप्रत्यगात्मनाम्' इति न्यायेन सबन्धत्रयेण अखण्डार्थं वेदान्ता बोधयन्तीति 'तत्तु समन्वयात्' इत्यधिकरणे प्रतिष्ठापितमित्यलमतिवि स्तरेण ॥ ॐ सर्ववेदान्ततात्पर्यभूमये नम. ॥

सदसदाश्रया । अपरोक्षतया सन्निति प्रतीतिविषयतया व्यवह्रियमाण सत्कार्यं रूपादिवत्तया व्यावहारिकसत्ताश्रय पृथिव्यप्तेजोभूतत्रय सदित्युच्यते । असत् सद्भिन्नतया परो क्षज्ञानगोचर वाय्वाकाशादि तत्कार्यं च रूपादिभिन्नगुणाश्र

यमुच्यत इत्यर्थ । तयोराश्रया उपादानत्वेन तदधिष्ठानभूते त्यर्थ । आरोपितस्याधिष्ठानमत्तातिरिक्तसत्ताशून्यतया सत्ता स्फूर्तिप्रदत्वेन सर्वदा तदनुस्यूतेति ध्येयम ॥ **ॐ सदसदाश्रयायै नम** ॥

**सकला सच्चिदानन्दा साध्या सद्गतिदायिनी ।**
**सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥**

सकला । आरोपितकलाभि उपासनार्थं कल्पिताभि जाबालिना सत्यकाम प्रत्युक्तषोडशकलायुक्तपुरुषोपासनप्रतिपादकच्छान्दोग्यवचनरीत्या कलाशब्दितावयवै सह वर्तते इति सा तथा । चतु षष्टिचन्द्रकलाभ्या वा सहिता । अथवा, कलाशब्द सुखादिकान्तिवचन तया सहितेति वा ॥ ॐ **सकलायै नमः** ॥

सच्चिदानन्दा । सच्चासौ चिच्च सच्चित् सच्चिच्चासौ आनन्दश्च, कालत्रयाबाध्यत्व सत्त्वम्, स्वेतरप्रकाशाप्रकाश्यत्व चित्त्वम्, परमप्रेमास्पदत्वमानन्दत्वम्, 'सत्य ज्ञानमनन्तम्' 'विज्ञानमानन्दम्' 'सदेव सोम्येदमग्र आसीत्' 'प्रज्ञा प्रतिष्ठा प्रज्ञान ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्द ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इत्यादिश्रुतिभ्य ।

ते स्वरूप यस्या सा तथोक्ता । वेदान्तशास्त्रोक्तब्रह्मस्वरूप लक्षणलक्षितेत्यर्थ ॥ ॐ सच्चिदानन्दायै नम. ॥

साध्या । कर्मोपासनादिभि महावाक्यश्रवणजन्यब्रह्म विद्यात्वेन साधनचतुष्टयसपन्नाधिकारिणा अपरोक्षतया साधितु प्राप्तुमर्हा, फलस्वरूपत्वादित्यर्थ । साध्वीति वा पाठ साध्वी स्त्री, सत्त्वगुणसपन्नत्वात् साधु , सकल-विद्यापारगत्वे सति सदाचारसपन्न दैवीसपत्तिमानित्य थ । तदेकनिष्ठा परमपतिव्रता सती स्त्रीणा पातिव्रत्यसप्रदा यप्रवर्तकेति यावत् ॥ ॐ साध्यायै नमः ॥

सद्गतिदायिनी । समीचीना पुनरावृत्तिरहिता सुखमात्र रूपा गति , गम्यते ज्ञायते प्राप्यते इति वा गति । यत् ज्ञायते तदेव गति , तदन्यस्याज्ञातत्वात् गतित्वानुपपत्ते । ज्ञाते फले इच्छया तत्साधनेषु पुरुष प्रवर्तते, न त्व ज्ञातफलसाधने— इत्यन्वयव्यतिरेकाभ्याम् , 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' 'ये पूर्व देवा ऋषयश्च तद्विदु ते तन्मया अमृता वै बभूवु' इत्यादिश्रुत्या च परदेवतास्वरूपमेव मुक्तिस्वरूपतया सद्गति । तदावार-काज्ञानाभिभवेन स्वरूपानन्दमभिव्यञ्जयतीति दायिनी । अभेदेऽपि गतिदानयो कर्मकर्तृप्रयोग उपपद्यते । 'तदा

त्मानꣳ स्वयमकुरुत’ इत्यान्विदित्यर्थ । सतीं वा सत्त्वगुणयुक्ता देवयानादिगतिं वा ददातीति सा तथा ॥ ॐ सद्गतिदायिन्यै नम ॥

सनकादिमुनिध्येया । मननशीला मुनय , मननशब्दन लक्षणया तत्साक्षात्कारवन्त इत्यर्थ , ब्रह्मण मानसिकपुत्रा ज्ञानवैराग्यादिबहुला मोक्षमार्गप्रवर्तका , सनक आदि येषा त मुनय सनन्दनसनातनसनत्कुमारप्रमुखा निरैषणा निश्चिन्ता , तैर्ध्येया अत्यादरेण स्वात्माभदज्ञानेन सर्वदा विषयीकृतेत्यर्थ , ‘त्व वा अहमस्मि भगवो देवत अह वै त्वमसि’ ‘क्षत्रज्ञ चापि मा विद्धि’ ‘आत्मान चेद्वि जानीयादहमस्मीति पूरुष ’ ‘अथ योऽन्या देवतामुपास्त ऽन्याऽसावन्याऽहमस्मीति न स वद यथा पशु ’ ‘मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति’ इत्यादिश्रुतिस्मृतिशतेभ्य ॥ ॐ सनकादिमुनिध्येयायै नम ॥

सदाशिवकुटुम्बिनी । सदाशिव कुटुम्बम अस्या अस्तीति तथा ॥ ॐ सदाशिवकुटुम्बिन्यै नम ॥

**सकलाधिष्ठानरूपा सत्यरूपा समाकृति. ।**
**सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ॥**

सकलाधिष्ठानरूपा । 'अथात आदेशो नेति नेति' 'नेह नानास्ति किंचन' इत्यादिनिषेधश्रुतिभ्य प्रतिपन्ना । 'सर्वं खल्विद ब्रह्म' इत्यादिबाधाया सामानाधिकरण्य मवगम्यते । कार्यस्य कारणाभेदज्ञान बाधा । तद्भिन्नता ज्ञानस्य भ्रमरूपत्वात् । तथा च श्रुतिनिषेधस्यात्रभ्यपेक्षाया प्रकृत्यादीनामपि तत्त्वज्ञानेन निवृत्तौ भूतपूर्वगत्या सर्वाधि ष्ठानत्वेन अनुभूयते इति भाव ॥ ॐ **सकलाधिष्ठान-रूपायै नम** ॥

सत्यरूपा । सत्य जडानृतपरिच्छिन्नव्यावृत्तत्व सच्चिदान-न्दरूप यस्या सा तथा । परिणामवादमाश्रित्य सत् अपरोक्ष-ज्ञानयोग्यानि पृथिव्यप्तेजासि, त्यत्तु परोक्षज्ञानविषया नि त्यानुमेया इत्यर्थ , 'सच्च त्यच्चाभवत्' इति श्रुते । सत्य रूप यस्या सा तथा ॥ ॐ **सत्यरूपायै नमः** ॥

समाकृति । समा अभिन्ना सच्चिदानन्दरूपैकरसा आ कृति मूर्ति स्वरूप यस्या सा तथोक्ता । समा अन्यूना नतिरिक्ता यथाशास्त्रप्रमाण मूर्तिर्विग्रहो यस्या सेति वा । समा सदाशिवेन गुणसौन्दर्यबलवीर्ययशोगाम्भीर्यधैर्येङ्गि-तादिपरिज्ञानसर्वज्ञत्वादिबहुलधर्मविशेषै मूर्तिर्यस्या सेति वा । चतुर्विधभूतग्रामेषु तत्तत्प्रारब्धानुसारेण समा

तत्र तत्र निवासयोग्या मूर्तिर्यस्याः सति वा । कर्माध्यक्ष तया तत्तत्फलविशेषदानेषु समा पक्षपातरहिता मूर्तिर्यस्या सा । समा बाल्यस्थविरत्वादिभावविकारवर्जिता एक प्रकारा नित्ययौवनशालिनी मूर्तिर्यस्या सा । 'मम सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' अङ्गुष्ठमात्र पुरुषोऽन्तरात्मा सदा जनाना हृदये सनिविष्ट' इति स्मृतिश्रुतिभ्यामे-करूपत्वावगमादित्याशय ॥ ॐ **समाकृतये नम** ॥

सर्वप्रपञ्चनिर्मात्री । ससारस्यानादितया मोक्षस्थायित्वेन च भूतभविष्यद्वर्तमानगत्या सर्वशब्दवाच्यत्व प्रपञ्चस्य, प्रप ञ्च्यते विस्तार्यते विवर्तते इति प्रपञ्च, 'एक बीज बहुधा य करोति' इति श्रुते । तस्य निर्मात्री निर्माणमभिव्यक्ति तन्निमित्ततया तत्तत्कर्तृत्वमुपचर्यते, देवदत्त पचतीतिवत् ॥ ॐ **सर्वप्रपञ्चनिर्मात्र्यै नम** ॥

समानाधिकवर्जिता । कुलशीलजातिगुणादिभि तुल्य समान, तै श्रेयानधिक, तैर्वर्जिता । 'न तस्य प्रति-मास्ति' 'विश्वाधिको रुद्रो महर्षि' इति श्रुते, 'सर्वाधि पत्य कुरुते महात्मा' इति 'एकमेवाद्वितीयम्' 'न त्वत्स मोऽस्त्यभ्यधिक कुतोऽन्यो लोकत्रये' इत्यादिश्रुतिस्मृति-भ्या चेति भाव । एतदृष्ट्या समाननीय समान पूजनी

योऽधिक तद्द्वयेन वर्जिता । 'एकमेवाद्वितीय ब्रह्म' इत्यादिश्रुतेरिति वार्थ ॥ ॐ **समानाधिकवर्जितायै नमः** ॥

## सर्वोत्तुङ्गा सगहीना सगुणा सकलेश्वरी ।
## ककारिणी काव्यलोला कामेश्वरमनोहरा ॥

सर्वोत्तुङ्गा । कार्यापेक्षया कारणस्याधिकत्वात् सर्वापेक्षया उत्तुङ्गा उन्नता, 'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृत दिवि' इति श्रुते ॥ ॐ **सर्वोत्तुङ्गायै नमः** ॥

सगहीना । निरवयवत्वेन निष्कारणत्वन वा निर्गुणत्वेन वा निराश्रयत्वेन वा नित्यशुद्धबुद्धमुक्तस्वरूपत्वेन सबन्धरहिता वा, 'असगो न हि सज्जते' 'न चास्य कश्चिज्जनिता न चाधिप' इत्यादिश्रतेरित्याशय ॥ ॐ **सगहीनायै नम** ॥

सगुणा । समा एकप्रकारा गुणा सत्यकामत्वादय यस्या सा तथा । 'गुणी सर्वविद्य' 'सत्यकाम सत्यसकल्प' इत्यादिश्रुते । त्रिमूर्तिस्वरूपतया सत्त्वरजस्तमोगुणै सह वर्तते इति वा तथा ॥ ॐ **सगुणायै नमः** ॥

सकलेष्टदा । इच्छाविषयभूतानि इष्टानि काम्यानीत्यर्थ , सकलानि च तानीत्यभेदसमास , अन्यथा जीवादि-

वत् कस्मिंश्चिद्विषये असामर्थ्यशङ्का स्यात् । एकस्य पदार्थस्य बहूनामिच्छाविषयत्वदर्शनात्, एकत्र कामनायामपि तत्स-हभावित्वेन सर्वप्रापकत्वोक्तौ परदेवताया बहुफलप्रदातृत्वेन अत्यन्तविश्वसनीयतया अतिशयप्रतिभानाद्वेत्यर्थ । अथवा, परिच्छिन्नपरिमितभाग्यवत्प्राणिन सर्वस्य सर्वत्र इच्छाया मपि, यानि सर्वाणि स्वबुद्धया शास्त्राविरोधेनेष्टानि एषित-व्यानि वाञ्छितव्यानि, तान्येव प्रयच्छति ददाति, न तद धिकानि, लोकेच्छाया बहुप्रकारत्वेन दुष्पूरणीयत्वादिति भाव । सर्वेषा प्राणिनामिष्ट्या इज्यया पूजया विषयीकृता, यज्ञेन वा समाराधिता तस्य फलप्रदेत्यर्थ । 'अह च स र्वयज्ञाना भोक्ता च प्रभुरेव च' 'एष ह्यव साधु कर्म का रयति यमेभ्यो लोकेभ्य उन्निनीषति' इति स्मृतिश्रुतिभ्या परमेश्वरार्पणबुद्धया क्रियमाणस्यैव कर्मण शुभफलत्वात् मुक्तिहेतुत्वेन, काम्यफलार्थिना जन्ममरणादिबन्धकत्वेन स्व-ल्पफलतया अनादरणीयत्वादित्यर्थ । अथवा, कलाभि अ-वयवै तरतमभावैरित्यर्थ । तै सहितानि इष्टानि फ-लानि मनुष्यानन्दादिब्रह्मानन्दपर्यन्तानि फलानि आनन्द स्वरूपाणि ददातीति तथा ॥ ॐ सकलेष्टदायै नम ॥

ककारिणी । तृतीयखण्डद्वितीयवर्णरूप ककारावयव

वाचक अस्या अस्तीति तथा । ॐ **ककारिण्यै नमः** ॥

काव्यलोला । वाल्मीकिवेदव्यासादिकृतेषु काव्येषु लोला, वाच्यलक्ष्यार्थभेदेन तत्र सक्तेत्यर्थः । अथवा, कविभि कृतेषु स्तुतिविशेषेषु प्रीतिमतीत्यर्थः ॥ ॐ **काव्यलोलायै नमः** ॥

कामेश्वरमनोहरा । कामेश्वरस्य मन हरतीति तथा । ॐ **कामेश्वरमनोहरायै नम** ॥

**कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।**
**कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥**

कामेश्वरप्राणनाडी । कामेश्वरस्य प्राणनाडी यथा नाड्या प्राण सचरति सा तथा, जीवनाडीत्यर्थः । 'इडया तु बहिर्याति' इति लयखण्डवचनात । लोके विशस्यमाने पशौ हृदयपुण्डरीकाकार मासखण्डात्मकान्त सुषिराष्टदलोपेतमङ्गुष्ठपरिमाणसुषिरयुताधाभागकर्णिकामध्य दृश्यते, तस्या कर्णिकाया कसरायमाना एकशत नाडीनामङ्कुरा तद्वेष्टनपुरीतन्नामकनाडीसुषिरविन्यस्तमूला भवन्ति । तत्र सुषुम्नानामकनाडी मूलाधारादारभ्य ब्रह्मर ध्रपर्यन्त गता । तस्या षट् चक्राणि मूलाधारादीनि तत्तन्मातृकावर्णसहितयोगशास्त्रोक्तदलसयु

तानि सनद्धानि वर्तन्त । तस्या मूल पृथ्वीदेवता बिसतन्तुत नीयसी कुण्डलिन्यधोमुखावरणशक्तिर्निद्राति । तस्या दक्षिणभागे इलानामनाडी भ्रूमध्यपर्यन्त प्रसृता । वामे पिङ्गला तथा । तथा च जाग्रदवस्थाया नेत्रयो दपत्यात्मना श्रुतिप्रतिपादित , स्वप्ने मनउपाधिक , सुषुप्तावज्ञानोपाधिक , जाग्रति स्थूलशरीराभिमानी विश्व इत्युच्यत, स्वप्ने सूक्ष्माभिमानी तैजस , सुषुप्तौ कारणाभिमानी प्राज्ञ । सुषुप्तौ कारणात्मना स्थितानि स्थूलसूक्ष्मशरीरजन्यभोगसाधन प्रारब्धकर्मवशेन पुरीतद्द्वारा नाडीमार्गेण तत्तद्गोलकानि प्रविशन्ति इन्द्रियाणि । तदुपरमप्रारब्धोद्बोधे आन्दोलिकाया विद्यमानो राजा गृहान्तरे सोपानमार्गद्वारा प्रासादे विहृत्य तदवच्छिन्नान्त पुरपर्यङ्के शयान इव नाडीद्वारा पुरीतत्प्रविश्य तदवच्छिन्नहृदयोपाधिक परमात्मान यदा प्रविशति तदा सुप्त इत्युच्यते । लिङ्गशरीर कारणात्मना लीयत । तदा प्राणादिवायव प्रलीनवृत्तय सन्त आयु स्वरूपेण शरीर रक्षन्ति । तथा च भाविजाग्रत्स्वप्नभोगानुकूलकर्मानुबन्धप्राणधारण सुषुप्तौ सोपाधिकचैतन्यस्यैव दृश्यते । तत्सत्तया च नाडीना प्राणसञ्चारयोग्यतापि । एव च सति ‘ न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपा-

श्रितौ ' इति श्रुत्या ' जीव प्राणधारणे ' इति धातुपाठाच्च प्राण नाडीशब्दस्य लक्षणया परमात्मैवोच्यते । कामेश्वरस्यैव प्रारब्धकर्मजन्यशरीरमात्राभावेऽपि घृतकाठिन्यन्यायेन मूर्ति मत्तया तदन्तर्यामिसभावनया एतन्नाम । कामेश्वरस्य प्राण नाडी तदधिष्ठानचैतन्यमिति फलितोऽर्थ ॥ ॐ **कामेश्वर प्राणनाड्यै नम** ॥

कामशोत्सगवासिनी । कामेशस्य उत्सगे वामाङ्के वसती ति तथा । ' अनेकमन्मथाकारकामेशोत्सगवासिनी ' इति ललितातापनीये ॥ ॐ **कामेशोत्सगवासिन्यै नम** ॥

कामेश्वरालिङ्गिताङ्गी । तेन आलिङ्गितम् अङ्गीकृतम् अङ्ग यस्या सा तथा ॥ ॐ **कामेश्वरालिङ्गिताङ्ग्यै नम** ॥

कामेश्वरसुखप्रदा । कामेश्वराय सुख प्रददातीति वा । कामेश्वरस्य यत्सुख ब्रह्मस्वरूपसच्चिदानन्दसाक्षात्कारात्म कम् , ' देवो भूत्वा देवानप्येति ' इति श्रुत्युक्तन्यायात् स्व कीयभक्ताना कामेश्वराभेदरूप सच्चिदानन्दघनात्मक मोक्ष ददातीत्यर्थ ॥ ॐ **कामेश्वरसुखप्रदायै नम** ॥

**कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।**
**कामेश्वरतप सिद्धि· कामेश्वरमन'प्रिया ॥**

कामेश्वरप्रणयिनी । कामेश्वरस्य स्वस्वरूपे परमानन्दघने या प्रीति तद्विषयभूतेत्यर्थ ॥ ॐ **कामेश्वरप्रणयिन्यै नम** ॥

कामेश्वरविलासिनी । कामेश्वरस्य विलास कार्यात्मना विवर्तोऽस्या अस्तीति तथा ॥ ॐ **कामेश्वरविलासिन्यै नमः** ॥

कामेश्वरतप सिद्धि । कामेश्वरस्य तप जगदालोचनात्मकम्, सिध्यत्यनयेति सिद्धि, तपस साधनभूतेत्यर्थ । स्त्रीपुरुषात्मना कल्पितभेदवशात् जगत्सर्जनसाधनभूतत्यर्थ ॥ ॐ **कामेश्वरतप सिद्ध्यै नमः** ॥

कामेश्वरमन प्रिया । मनस प्रिया तथा, निरवधिकप्रेमास्पदत्यर्थ ॥ ॐ **कामेश्वरमन'प्रियायै नम** ॥

**कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।**
**कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥**

कामेश्वरप्राणनाथा । कामेश्वरस्य प्राण हिरण्यगभ त नाथयति पालयतीति तथा । कामेश्वर प्राणनाथो वल्लभो यस्या सेति वा तथा ॥ ॐ **कामेश्वरप्राणनाथायै नम** ॥

कामेश्वरविमोहिनी । विमोहयति स्वय भिन्नविग्रहवती

सती आवा दंपती—इति द्विप्रकारकज्ञानवन्त करोतीति सा तथा । अभेदज्ञानवत तद्विपरीतज्ञानवत्त्व मोह तत्करोतीति सा तथा । अथवा, मोहो नाम बुद्धेरेकालम्बनतया तदन्याविषयकत्वम् परमेश्वरस्य स्वस्वरूपपरदेवतापरमानन्द साक्षात्कारेण स्थाणुवन्निश्चलतया उपचारेण मोहवत्तया तदितरप्रपञ्चाकारकृत्याद्याश्रयतादर्शनेन मोहयतीत्युपचारनाम । मोहयतीवेत्यर्थ । अन्त पुरगत राजान स्त्रियासक्तमितिवदित्यर्थ ॥ ॐ **कामेश्वरविमोहिन्यै नम** ॥

कामश्वरब्रह्मविद्या । कामेश्वरस्य तत्त्वपदार्थसाक्षात्कारभूतेत्यर्थ, 'य साक्षादपरोक्षाद्ब्रह्म' इति श्रुते ॥ ॐ **कामेश्वरब्रह्मविद्यायै नम** ॥

कामेश्वरगृहेश्वरी । गृह्यत इति ग्रह सर्वज्ञानम् तस्य ईश्वरी विषयाधिष्ठानभूतत्वेन नियामिकेत्यर्थ । अथवा, 'गृहिणी गृहमुच्यते' इति न्यायात् कामेश्वर गृहेश्वर स्वस्या अधिपति अस्या अस्तीति सा तथा ॥ **कामेश्वरगृहेश्वर्यै नम** ॥

**कामेश्वराह्लादकरी कामेश्वरमहेश्वरी ।**
**कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा ॥**

कामेश्वराह्लादकरी । आह्लाद तृप्तिजन्यसुख परमेश्वरस्य

नित्यतृप्तस्वरूपा शक्ति , परदेवतात्मकतया त करोतीति तथा ॥ ॐ **कामेश्वराह्लादकर्यै नम** ॥

कामेश्वरमहेश्वरी । महती च सा इश्वरी निरुपाधिकैश्वर्यवती, 'महान्प्रभुर्वै पुरुष ' इति श्रुते । कामेश्वरस्य महदैश्वर्यम् अस्या अस्तीति तथा, भगवतीत्यर्थ । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय । ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा 'तमीश्वराणा परम महेश्वरम' इति श्रुते ॥ ॐ **कामेश्वरमहेश्वर्यै नमः** ॥

कामेश्वरी । मन्मथोपासितकादिविद्यारूपेत्यर्थ ॥ ॐ **कामेश्वर्यै नमः** ॥

कामकोटिनिलया । षण्णवतिपीठेषु मध्य कामकोटि श्रीचक्रमित्यर्थ । निलय गृह यस्या सा तथा ॥ ॐ **कामकोटिनिलयायै नम** ॥

काङ्क्षितार्थदा । काङ्क्षितान् काङ्क्षाविषयीभूतान , अप्राप्तजातीयेच्छा काङ्क्षा, तद्गोचरान् पदार्थान ददातीति तथा । काङ्क्षिता सती उपास्यदेवता मे प्रसन्ना भूयादितीच्छया चिरकालोपासिता सती पुरुषार्थान् अप्रार्थयमानस्यापि स्वयमेव ददातीत्यर्थ ॥ ॐ **काङ्क्षितार्थदायै नम** ॥

**लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।**
**लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ॥**

लकारिणी तृतीयखण्डतृतीयवर्णत्वेन वाचकतया अस्या अस्तीति सा तथा ॥ ॐ **लकारिण्यै नम** ॥

लब्धरूपा । रूप्यते ज्ञाप्यत एभिरिति रूपाणि लक्षणानि स्वरूपतटस्थभेदेन सगुणनिर्गुणपराणि, लब्धानि यया सा तथा । रूप्यते ज्ञाप्यत इति रूपम् अर्थ , उपलक्षण नाम्नोऽपि, लब्धे नामरूपे यया सा तथा । आदौ स्वय मायोपाधिना शब्दार्थभावमापद्य पश्चात् व्याकरणमकरोदिति भाव ॥ ॐ **लब्धरूपायै नम** ॥

लब्धधी । निश्चयात्मिका सविकल्पनामका अन्त करणवृत्तयो धिय , ता उपाधित्वेन प्रतिबिम्बाधिष्ठानत्वेन लब्धा यया सा तथा । वृत्त्यारूढ चैतन्य ज्ञानमिति वा, चैतन्यव्याप्ता वृत्तिर्वेति वेदान्तसिद्धान्त । जडाना विषयाणा ग्रहणे तादृशीना वृत्तीना असामर्थ्ये जगदान्ध्यप्रसङ्गेन स्वरूपचैतन्यमन्त करणाद्युपहित फलचैतन्यतया प्रकाशयति । तथा च 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते' इति न्यायेन लब्धा धी तत्त्वमस्यादिमहावाक्यश्रवणजन्यवृत्तिव्याप्तिर्यया

सत्यर्थः । अथवा, धीशब्देन सर्वज्ञत्वादिकमुच्यते, तत् लब्धं ययेति वा, 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः ॥ ॐ **लब्धधियै नमः ॥**

लब्धवाञ्छिता । वाञ्छाया विषयीभूतं वाञ्छितम् इष्टफलमित्यर्थः । लब्धं पूर्वमेव प्राप्तं तद्ययेति तथा । आप्तकामेति यावत् ॥ ॐ **लब्धवाञ्छितायै नमः ॥**

लब्धपापमनोदूरा । पापप्रधानानि च तानि मनांसि च पापमनांसि लब्धानि पापमनांसि यैस्ते सदा पापचिन्तका इत्यर्थः । तेषां दूरा अवेद्येत्यर्थः, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्' इति श्रुतेः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति श्रुत्या विहितानां तत्तद्वर्णाश्रमधर्माणामीश्वरार्पणबुद्ध्या क्रियमाणानामात्मज्ञानसाधनतया श्रूयमाणत्वात् तदन्येषां दुःखप्राप्तिसाधनत्वेन पापवासनाप्रधानत्वेन दुरधिगमेत्यर्थः ॥ ॐ **लब्धपापमनोदूरायै नमः ॥**

लब्धाहङ्कारदुर्गमा । अहङ्कारोऽभिमानः उपलक्षणं तत्कार्याणामासुरसंपत्तिविशेषाणाम् । लब्धः अहङ्कारः राजसतामसात्मकः यैस्तैः दुःखेनाप्यधिकप्रयत्नेन क्रियमाणसाधनकलापेन अधिगन्तुं ज्ञातुमशक्या । सत्त्वगुणाभावे देहे

न्द्रियादौ सुखप्रकाशाव्याप्तौ मन स्थैर्याभावेन रजस प्रवर्त कस्य विक्षेपकस्य तमसश्चावरणप्रधानस्य विवेकज्ञानप्रतिब न्धकस्य निद्रालस्यादिसमुद्भवस्य कार्येण जामित्वादिरूपेण श्रेयोमार्गसाधनानुष्ठाने गुरुवेदयो श्रद्धाक्षये बाह्यविषयस पादनव्यग्र मनसि लाभालाभहेतुकहर्षशोकजन्यरागद्वेषपर तन्त्रे अनात्मज्ञासुरसपत्तिमता चित्ते न भातीत्याशय । प्रत्युत जननमरणप्रवाहरूपससारमेवानुभवन्ति, 'तानह द्विषत क्रूरान्' इति भगवद्वचनात् । अतो निरभिमानपुरु षेण स्वाभीष्टलाभाय चित्त मदा चिन्तनीयेत्यर्थ । 'यतय शुद्धसत्त्वा' इत्यादिप्रमाणेभ्य इति द्रष्टव्यम् ॥ ॐ लब्धा हकारदुर्गमायै नम ॥

**लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नति ।**
**लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ॥**

लब्धशक्ति । लब्धा शक्ति सकलसामर्थ्यहेतुभूता मा यात्मिका यया सा तथा, 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुते ॥ ॐ लब्धश क्त्यै नम ॥

लब्धदेहा । लब्ध देह विग्रह यया सा तथा । स्वे

च्छावलम्बितमूर्ति घृतकाठिन्यन्यायेन जीवत्वाभावेन कर्माधीनत्वाभावात् । तथा च नति अध्यस्तमायाशक्ते भेदकत्वस्वाभाव्येन 'पतिश्च पत्नी चाभवताम्' इति श्रुत्या च दंपतिमूर्तिमती बभूवेत्यभिप्राय ॥ ॐ लब्धदेहायै नम ॥

लब्धैश्वर्यसमुन्नति । ऐश्वर्याणा समुन्नति आधिक्य पर्यवसानमित्यर्थ , लब्धा ऐश्वर्यसमुन्नति यया सा तथा, 'तमीश्वराणा परम महेश्वरम्' इति श्रुते 'नान्तोऽस्ति मम दिव्याना विभूतीना परतप' इति स्मृतेश्च । 'सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनि सर्वस्य' इति श्रुतौ निरुपाधिकमहदैश्वर्यसंपत्ते तदुपासकानामगस्त्यादिमहर्षीणा दर्शनात् तदीयमहदैश्वर्यस्य निरवधिकत्वमिति किमु वक्तव्यमिति ज्ञायते इत्यभिप्राय ॥ ॐ लब्धैश्वर्यसमुन्नत्यै नम ॥

लब्धवृद्धि । वृद्धिर्नाम व्याप्ति परिपूर्णतेत्यर्थ , अवयवोपचयात्मका न, तस्या कर्मजन्यत्वेन विनाशहेतुत्वात् , 'स वा एष महानज आत्मा न वर्धते कर्मणा' इति श्रुतिवचनात्, 'निष्क्रिय निष्कलम्' इति अवयवभासनिषेधाच्च, तथा च लब्धा वृद्धि सर्वव्यापकता स्वस्वरूपैव सती उपाधिभिर्जन्यैस्तदाश्रयभूतै अभिव्यज्यत । न

त्वविद्यमानारोपिता इति निष्कर्षार्थ ॥ ॐ **लब्धसमृद्ध्यै नम** ॥

लब्धलीला । लीला अन्यप्रयोजनार्थव्यापारा स्वहर्ष मात्रहेतुका वा, तत्तत्कालोचितशृङ्गारादिनवरसाङ्गीकारसमये तदुचितभङ्गीविशेषा वा लब्धा यया सा तथा ॥ ॐ **लब्ध लीलायै नम** ॥

लब्धयौवनशालिनी । अस्तित्वजननवर्धनभावविकारा वस्था बाल्यम्, परिणाम अपक्षयो नाश उत्तरावस्था जरा, तदुभावेन तदुभयनिषेधे अर्थाद्यौवनम्, यौति गच्छतीति युवा दृढबलवीर्य, तस्य भाव यौवन तदुभ यवयोऽवस्थाराहित्येनैकस्वरूपता, तल्लब्ध प्राप्त यौवन यया सा तथा, 'अजरोऽमृतोऽभयो ब्रह्म' इति श्रुते सर्वदा एकप्रकारस्वरूपवतीति भाव ॥ ॐ **लब्धयौवनशालिन्यै नमः** ॥

**लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।**
**लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः ॥**

लब्धातिशयसर्वाङ्गसौन्दर्या । सुन्दरो रुचिर तस्य भाव सौन्दर्यम्, अवयवाना सर्वेषा सौन्दर्यमतिशायि सर्वाङ्गेषु सर्वावयवेषु लब्ध यया सा तथा, यथाशास्त्रोक्त

वयवविन्यासविशेषत्वेन सर्वमनोहरमूर्तिवत्सीत्यर्थ, 'न तस्य प्रतिमास्ति' इति श्रुते ॥ ॐ **लब्धातिशयसर्वाङ्गसौन्दर्यायै नम** ॥

लब्धविभ्रमा । विभ्रमो बालक्रीडा लब्धा यया सा तथा, सर्वात्मकतया सर्वकर्तृत्वादिति भाव ॥ ॐ **लब्धविभ्रमायै नम** ॥

लब्धरागा । लब्ध सजातीयो राग काम, 'सोऽकामयत' इति श्रुत्या जगत्सर्जनस्य कामनापूर्वकत्वप्रतिपादनात्, लब्धो रागो यया सा तथा इत्यर्थ ॥ ॐ **लब्धरागायै नम** ॥

लब्धपति । लब्ध स्वेच्छयैव स्वयवरे पति कामेश्वरो यया सा तथा ॥ ॐ **लब्धपतये नम.** ॥

लब्धनानागमस्थिति । आ समन्तात् नानाप्रकारै कर्मोपासनाज्ञानकाण्डतदङ्गत्वादिभि गमयन्ति स्वार्थान् प्रकाशयन्तीत्यागमा वेदा नाना अनेकशाखाप्रभिन्नसामाद्य तेषा स्थिति परिपालन लब्धा यया सा तथा । नानागमस्थिति वेदचतुष्टयोक्तमर्यादा काण्डत्रयविषया लब्धा यया सेति वा । ससारस्यानादित्वेन निरपेक्षप्रमाणभूतान् वेदान् 'सर्वे वदा यत्रैक भवन्ति' इति श्रुते स्वस्वरूपभूतान्

महाप्रलये संरक्ष्य सर्गादौ जायमानहिरण्यगर्भस्यान्यूनानति रेकेण तानेव प्रतिभासयति स्वयं दंपती भूत्वा तदुक्तधर्मा ननुष्ठाय परेषामप्यनुष्ठापयतीति च । 'वेदशास्त्रे ममैवाज्ञे वर्त एव च कर्मणि । यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रित । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' इत्यादि भगवद्वचनादिति द्रष्टव्यम् ॥ **ॐ लब्धनानागमस्थित्यै नमः ॥**

**लब्धभोगा लब्धसुखा लब्धहर्षाभिपूजिता ।**
**ह्रींकारमूर्तिर्ह्रींकारसौधशृङ्गकपोतिका ॥ ५४ ॥**

लब्धभोगा । भोगः सुखमात्रानुभवः दुःखानुभवे उच्य माने जीवाविशेषप्रसङ्गात् । लब्धः भोगः यया सा तथा । जीववत् क्रमिकस्वेष्टपदार्थानुभवानन्तरकालीनं सुखं न भवति, स्वस्या आनन्दरूपत्वेन सिद्धस्वरूपत्वात्, साधनभूत-भोगोऽप्येतद्विषये सिद्ध इत्युपचर्यते इति लब्धभोगेत्युच्यते ॥ **ॐ लब्धभोगायै नमः ॥**

लब्धसुखा । लब्धं सुखं अनुकूलवेदनीयं स्वस्वरूपभूतं सुखं तत्साधनं च धर्मं यया सा तथा ॥ **ॐ लब्धसुखायै नमः ॥**

लब्धहर्षाभिपूरिता । लब्ध या हर्ष तृप्तिनिमित्तकचित्तोल्लासविशेष मुखप्रसादशरीरपुष्ट्यादिकार्योन्नेय जगत्या स्वाभीष्टपदार्थानुभवादिजन्य सतोष इति प्रसिद्ध , तेनाभिपूरिता अभित समन्तादन्यूनानतिरेकेणाविच्छिन्नरूपतया पूरिता भरिता । तद्विपरीतदु खाद्यनुत्पादेन तन्मात्रसमाश्रया नित्यप्रसन्नमुखीत्यर्थ ॥ ॐ लब्धहर्षाभिपूरितायै नमः ॥

ह्रींकारमूर्ति । वाच्यवाचकताभेदसबन्धेन ह्रींकार मूर्ति विग्रहो यस्या सा तथा ॥ ॐ ह्रींकारमूर्त्यै नम ॥

ह्रींकारसौधशृङ्गकपोतिका । सुधामय सौधम , सुधाविकार अट्टालिकेत्यर्थ , तस्य शृङ्ग शिखर चन्द्रशालादिभित्त्युपरिभाग , निरुपाधिकविश्रान्तिजन्यसुखानुभवहेतु तया ह्रींकारस्य सौधोपमा , तत्र हकारस्य श्वेतवर्णतया अट्टालिकसादृश्यम , रेफस्य लोहितरूपतया इष्टकादिकृता धोभित्त्युपमा , हकारोपरि ईकारस्य शृङ्गोपमा, ऊर्ध्वगत्वसाम्यात् , तदुपरितनबिन्दु सर्वप्रकृतिभूतशब्दार्थात्मकतया तदवयवत्वेन विचित्रस्वरूपोऽपि सूक्ष्मतया अपवरकगतकपोतकान्तेव जागरूक दृश्यत इति तदर्थत्वेन परद्वतोपमानशब्देनाभिधीयत इति भाव ॥ ॐ ह्रींकारसौधशृङ्गकपोतिकायै नमः ॥

**ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा ।**
**ह्रींकारमणिदीपार्चिर्ह्रींकारतरुशारिका ॥**

ह्रींकारदुग्धाब्धिसुधा । दोहान्निष्पन्नं दुग्धम् । स्तनग तस्य पयस स्वीयतापादनहस्तक्रियाविशेषो दोह । उपल क्षण चोषणादीनाम् , तथा च प्रदीपालकार सिद्ध , अनन्तो दकप्रसारितनिम्नभूप्रदेश अब्धिरुच्यते । आप धीयन्ते अस्मिन्निति तथा । तस्मिन् सजीवकत्व धर्म । डिम्भक सजीवने स्तन्यादौ दर्शनात् । ह्रींकारस्यापि हकारयुक्ततया श्वेतवर्णत्वादमृतहेतोश्च तत्सादृश्यम् । तस्य सुधेव सुधा तदभिव्यक्त्वाविशेषात्तत्सेवकाना नित्यत्वे सति बहुविधम हिमशालितया दर्शनादिति भाव ॥ **ॐ ह्रींकारदुग्धाब्धि सुधायै नमः ॥**

ह्रींकारकमलेन्दिरा । ह्रींकारबीजस्य विचित्रवर्णतया पर मप्रीतिविषयतया च कमलोपमा । तस्य वाच्यार्थतया तदु परितनत्वेन सर्वपुरुषार्थप्रदातृत्वाच्च कमलशब्देनाभिधीयते । तस्या पद्मालयत्वात् ह्रींकारकमलस्य इन्दिरा तदधीनब्रह्म- विद्येत्यर्थ ॥ **ॐ ह्रींकारकमलेन्दिरायै नमः ॥**

ह्रींकारमणिदीपार्चि । आधिदैविकाद्युपद्रवानभिभूतत्वे

सति चिरकालावस्थायित्वं मणिदीपसादृश्यम् ह्रींकारस्य । तस्य प्रकाशः अनितरसाधारणमहातिशयवत्त्वेन अनर्घत्व मावेदयति । तदुपासकस्य निरवधिकमहत्त्वापादकह्रींकार वाच्यतया तत्प्रकाशकेत्यर्थः । तथा च निरन्तरनमोऽपाकर णेन स्वेष्टपदार्थोपादनेन च सुखयतीति फलितोऽर्थः ॥ ॐ ह्रींकारमणिदीपार्चिषे नमः ॥

ह्रींकारतरुशारिका । तारयति फलार्थिनः स्वारूढान् पतनादेः रक्षतीति तरुः, तस्य शारिका पिङ्गतुण्डनेत्रचरणा शारिका अभ्यासातिशयेन मनुष्यभाषायामपि भाषते । भूतभविष्यद्वर्तमानलोकयात्रापरिज्ञात्री सती शुभाशुभफल प्राप्तिं च स्वभाषया वदति । अस्य बीजस्य वाच्यार्थतया तत्सबन्धिनी सती वेदवाचा सर्वं प्रकाशयतीत्यर्थः ॥ ॐ ह्रींकारतरुशारिकायै नमः ॥

**ह्रींकारपेटकमणिर्ह्रींकारादर्शबिम्बिता ।**
**ह्रींकारकोशासिलता ह्रींकारास्थाननर्तकी ॥**

ह्रींकारपेटकमणिः । गूहनसाधनतया ह्रींकारः पेटकेन दृष्टान्तीक्रियते । तस्य मणिः वैडूर्यमित्यर्थः । यथा हीरा दिमणिः पेटकादौ गोपितोऽपि स्वकान्त्या बाह्याभ्यन्तरं तस्य

प्रकाशयन्नितरपेटकेभ्य त व्यावर्तयति, तथेदमपि बीज स्ववाचकतयेतरवर्णेभ्य निरतिशयमहिम्ना भेदयतीति भाव ॥ ॐ ह्रींकारपेटकमणये नम' ॥

ह्रींकारादर्शबिम्बिता । अस्य बीजस्य इतरप्रमाणानपेक्ष वेदान्तर्गततया निर्दोषत्वादादर्शसाम्यम् । तस्मिन् बिम्बिता प्रतिबिम्बिता, मायाप्रतिबिम्बचैतन्यस्यैव जगत्कारणतया सर्वत्र दर्पणे मुखमिव प्रतिफलतीति तात्पर्यार्थ ॥ ॐ ह्रींकारादर्शबिम्बितायै नमः ॥

ह्रींकारकोशासिलता । ह्रींकार एव कोश तस्यासिलता अतिदीर्घखड्गमित्यथ । सर्ववैर्यादिजन्यदु खनिवर्तकत्वमसि लताया इव परदेवताया अपि । तथात्वेन बहि प्रकटनायो ग्यतामाहश्येन आच्छादकापेक्षया ह्रींकारस्य वाचकशब्द तया अर्थावारकत्वौपम्यादसिकोशतुल्यता । तथा च ह्रींकार काशे विद्यमाना असिलतेव दु खनिवारकत्वे सति भक्ताभय करीति भाव । सर्वेषामायुधविशेषाणाम् असिपदमुपलक्ष णम् । 'महद्भय वज्रमुद्यतम्' 'भीषास्माद्वात पवते' इत्या दिश्रुते ॥ ॐ ह्रींकारकोशासिलतायै नमः ॥

ह्रींकारास्थाननर्तकी । ह्रींकार एव आस्थान सभामण्डप सर्वाश्रयत्वात् । तस्य नर्तकी नटनसबन्धभूसयोगाचरणवि

न्यासोपलक्षिततालानुसारिहस्ताद्यङ्गचेष्टा नर्तनम्, तत्कर्त्री नर्तकी । ह्रींकारवाच्यार्थतया मायादिसबन्धासबन्धनिमित्त कविचित्रतरकार्योत्पादनव्यापारानुकारविकार्यविकारिस्वरूप वत्तया द्रष्टृलोकमनोवृत्तिभेदेन तीव्रमन्दमन्दतरप्रीतिरूपभ क्तिविषयतयाभिव्यक्तानभिव्यक्तेष्टफलसाधनतया स्वकीयपु-ण्यादितारतम्येन बुद्धिशुद्धिभेदात्प्रतिभातीत्यर्थ ॥ ॐ ह्रीं कारास्थाननर्तक्यै नम ॥

**ह्रींकारशुक्तिकामुक्तामणिर्ह्रींकारबोधिता ।**
**ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥**

ह्रींकारशुक्तिकामुक्तामणि । ह्रींकार एव शुक्तिका नील पृष्ठत्रिकोणाकारा, तस्या मुक्तिकेव मुक्ताफलाभवाभिव्यज्य-माना— यथा स्वातीमहानक्षत्र सर्वदेशेषु मघसघात्पतज्जल बिन्दु शुक्तिकान्त पतित समुद्रदेशविशेषे मुक्ताकारेण परिणमते, तथा सत्त्वरजस्तमोगुणात्मकह्रीबीजावच्छेदेन म नोहरवाचामगोचरसुन्दरतरपरदेवतामूर्त्या सर्वगतमपि चै-तन्य विशिष्याभिव्यज्यते । तथा च मौक्तिकार्थिना शुक्त्यु पादानवत् परदेवतासाक्षात्कारेप्सुना ह्रींकारोपादानमाव श्यकमिति भाव ॥ ॐ **ह्रींकारशुक्तिकामुक्तामणये नमः** ॥

ह्रींकारबोधिता । सिद्धे पदार्थे इन्द्रियादिसबन्धे सति स्वत एव ज्ञानोत्पत्तिदर्शनान्न ज्ञाने विधिरपेक्षित , क्रियाफलत्वाभावात् । तर्हि नित्यापरोक्षधर्मादिज्ञानवत् शुद्धब्रह्माभेद वेदैकदेशह्रींकारेणैव बोध्यते, अज्ञातज्ञापकत्वेन वदस्य स्वत प्रामाण्याभ्युपगमात्, परचैतन्यस्य च ज्ञायमानस्य परमानन्दरूपतया पुरुषार्थरूपत्वात् । अत ह्रींकारेणैव मूलमन्त्रात्मना बोधिता ज्ञापिता । हकाररेफेकाराणा व्यस्तत्व दशाया भिन्नभिन्नार्थकाना मेलने ह्रींकारात्मना परिणामे सच्चिदानन्दस्वरूपश्रीत्रिपुरसुन्दर्या तदर्थत्वेन अद्वैतस्वरूप तथा प्रतिभानात् । 'नान्योऽतोऽस्ति द्रष्टा' 'इद सर्व यदयमात्मा' 'एक एव तु भूतात्मा भूते भूते व्यवस्थित । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिश्रुते । 'आत्मा वा अरे द्रष्टव्य' 'तद्विजिज्ञासस्व' 'आत्मान पश्येत्' इत्यादिलिङ्लोट्तव्यप्रत्ययानामर्हतार्थकतया न विधित्वमिति सिद्धान्त ॥ ॐ **ह्रींकारबोधितायै नमः** ॥

ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका । पिङ्गलपृथ्वीरेणु सुवर्णमित्युच्यते । अनुच्छिद्यमानद्रवत्वस्य नैमित्तिकत्वेऽपि तैजसान्तर प्रदीपप्रभादावदर्शनात् । पदार्थान्तरसयोगे रज तादिवदतितेज सयोगात् भस्मभावापत्तेश्च हीरमणौ लोहले

रूपत्वाभाववत्त्वेऽपि पार्थिवत्ववदत्र पार्थिवत्वे बाधाभावात् । द्रवत्वस्यादकस्वभावत्वेन तत्कार्यपृथिव्यामपि उपलम्भोपपत्तेश्च । तद्विकार, सौवर्णश्चासौ स्तम्भश्च । सौवर्णस्तम्भस्य नवरत्नमण्डपभारवाहित्वे सति तदभिन्नत्वेन तदलंकारभूतत्वस्येव साधर्म्यस्य ह्रींकारेऽपि जगदाश्रयत्वे सति तत्कारणत्वे सति तदन्तर्भूतत्वे सति परमानन्दजनकत्वस्य सत्त्वेन ह्रींकारमय इत्यभेदोपचार प्रदीपालंकारद्योतनार्थ इति ज्ञातव्यम् । ह्रींकारे उपमेये मयशब्देनोपमानाभेदकल्पनात् । तस्मिन्विचित्रपिङ्गप्रधानरूपे तत्सम्बन्धितया विद्रुमपुत्रिकेव प्रतीयमाना विद्रुमेन प्रवालेन कृता पुत्रिका सालभञ्जिका । सौवर्णस्तम्भशब्द उपलक्षणं भित्त्यादीनाम्, प्रायस्त्वदर्शनात् तदुपादानं स्वत मनोज्ञस्य स्तम्भस्यातिशयदर्शनीयतायै । दुर्लभतरप्रवालपुत्रिका स्तम्भमण्टपं तत्स्वामिनं तद्देशं च प्रकृष्टीकरोति तथा श्रीपरदेवतापि रूढ्यैतद्बीजाथतया तदवच्छिन्ना सती तदादीन् सर्वान् भूषयति सफलीकरोतीत्यर्थ ॥

ॐ ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिकायै नमः ॥

**ह्रींकारवेदोपनिषद्ह्रींकाराध्वरदक्षिणा ।**
**ह्रींकारनन्दनारामनवकल्पकवल्लरी ॥ ८७ ॥**

ह्रींकारवेदोपनिषत् । वेद्यन्ते ज्ञायन्ते सर्वे पदार्था अनेनेति वेद । जात्येकवचनम् । ह्रींकार एव वद । ज्ञापकत्वाविशेषान् । तस्य उपनिषद्वेदान्तभाग लक्ष्यार्थो वा, तत् ब्रह्मोपनिषत्परमिति श्रुत । कर्मोपासनाज्ञानकाण्डभेदेन चत्वारोऽपि वेदा त्रिप्रकारा । 'तमेत वदानुव चनेन ब्राह्मणा विविदिषन्ति' इति वाक्येन ज्ञानसाधनतया कर्मोपासनयो विनियुक्तत्वात्, 'अन्धतम प्रविशन्ति ये ऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्याया रता' इति श्रुत्या तदुभयो ससारफलकत्वेन निन्दितत्वाच्च, 'आत्मान चेद्विजानीयादयमस्मीति पुरुष । किमिच्छन् क स्य कामाय शरीरमनुसञ्ज्वरेत्' 'आत्मकाम आप्तकाम' इत्यादिश्रुतिभ्य अद्वैतज्ञानोत्पादकवेदभागस्योपनिषच्छब्द वाच्यस्य मोक्षफलकत्वेन फलप्रतिपादनात्तदुभयप्रतिपादक वदभागापेक्षया श्रेष्ठत्वम् , लोके साधनापेक्षया फलस्य श्रेष्ठत्व नात्तमत्वप्रसिद्धे । तथा च पूर्वकाण्डद्वयार्थस्य जन्यतया तत्प्रतिपादकवेदभागस्योपनिषच्छेषत्ववत् ह्रींकारस्यापि परदेवताप्रकाशकत्वेन तच्छेषत्वात्तस्या प्राधान्यमुक्तमिति द्रष्ट व्यम् । वेदान्तेषूपनिषच्छब्द तज्जन्यतारूपशक्यसम्बन्धेन प्र वर्तते । मुख्यया वृत्त्या तु ब्रह्मविद्यायामेव । तथा हि—उप

शब्द समीपदेशार्थक । ब्रह्मण्यध्यस्तमायासमीपदेशक तत्पदार्थप्रतिबिम्बितमविद्योपाधिकचैतन्य जीवशब्दवाच्यमुप शब्दार्थ लक्षणया प्रतिपाद्यते । नि शब्द षद् इति पदस्य विशेषणम् । सद् इति पद सदनगत्यवसादनेषु भवति । तथा च उपशब्दवाच्यो जीव अविद्या निहत्य त्यक्त्वा ब्रह्मस्वरूपेण निषीदति वर्तत इति उपनिषदित्येकोऽर्थ । जीव ब्रह्म स्वरूपत्वेन निगच्छति जानातीत्यन्योऽर्थ । जीव ब्रह्मस्वरूपेण अवसीदति परिसमाप्नोतीति तृतीयोऽथ । एवमुपनिषच्छब्दस्य ब्रह्मविद्यावाचकत्वेन प्रसिद्धस्य तद्वाच कवेदभागे लक्षणवत्त्वेऽप्युपनिषच्छब्दवाच्यो भवति । तथा च ह्रींकार एव वेद तस्य उपानषत्प्रधानभूता ब्रह्मविद्ये त्यर्थ । ॐ ह्रींकारवेदोपनिषदे नम ॥

ह्रींकाराध्वरदक्षिणा । ह्रींकार एव अध्वर यज्ञ तस्य दक्षिणा समाप्तिसाधनम्, दक्षिणाया दत्ताया यज्ञसमाप्ति दर्शनात् । ह्रींकारस्यापि जप यजनात्मकतया अध्वान राति गच्छतीत्यध्वर मार्गसाधक इत्यर्थ । दक्षिणापद फलवाचि ऋत्विग्व्यापाराणा दक्षिणाफलत्वदर्शनात् । ह्रीं काराध्वरस्य ह्रींकारजपयज्ञस्य दक्षिणा फलसाधनीभूतपुरु षार्थरूपा । अथवा ह्रींकाराध्वरस्य दक्षिणा पत्नी, ' मखस्य

दक्षिणा पत्नी ' इति वचनात् । ' ज्ञानयज्ञेन तेनाहमिष्ट स्या मिति मे मति ' इति भगवद्वचनात् । ह्रींकारलक्ष्यार्थज्ञानमेव ह्रींकाराध्वर ह्रींकारज्ञानयज्ञ , ' प्रधान दक्षिणा मखे ' इति वचनात् दक्षिणावत्फलभूतत्वेन प्रधानभूतेति वा । देवतोद्देशेन द्रव्यत्यागो याग इत्युच्यते । त्यक्तद्रव्यस्य अग्नौ प्रक्षेपा होम । ऋत्विगुद्देशन वद्यामथविभागो दक्षिणा । अर्थिभ्य वेदिबहिर्देशेऽर्थविभागो दानमिति तेषा भेद ॥ ॐ ह्रींकाराध्वरदक्षिणायै नम ॥

ह्रींकारनन्दनारामनवकल्पकवल्लरी । नन्दयत्यानन्दयतीति नन्दन स चासौ आरामश्च तथा । देवेन्द्रोद्यान विचित्रस्वरूपतया विजातीयार्थकत्वात् । ह्रींकार एव नन्दनाराम सुखकर्तृविश्रामभूमि , तस्य नवा नूतना अतिकोमले त्यर्थ । कल्पयतीति कल्पका कल्पका च सा वल्लरी चेति तथा । देवोद्याने विद्यमानाना वृक्षगुल्मलतातृणादीनाम् ग्तल्लोकातिशायिपुष्पफलादिमत्त्वेऽपि न सर्वोत्तमताप्रसिद्धि । कल्पवल्ल्यास्तु यथाकर्म यथासेवमुपासकना सर्वार्थप्रदानशक्तिमत्त्वेन सर्वोत्कृष्टता । तथा ब्रह्मविष्णुरुद्राणा तद्वाचकवर्णभेदानाम् अन्योन्यसबन्धतया एकत्र प्रतीयमानत्वेन चिरजीवित्वफलादिप्रदानेन आनन्दकतया ससारता

पशामकत्वेन च ह्रींकारस्य नन्दनोपमा । तत्र सर्वार्थप्रदा तृत्वेन कामेश्वरालिङ्गितकोमलतरसुन्दरमूर्त्या विशिष्टपुरुषार्थचतुष्टयकल्पनेन सगुणनिर्गुणोपासकानां तद्देवतात्मना प्राधान्येन समष्टिरूपतया सादृश्येन नवकल्पकवल्लरीत्युच्यत इति भावः ॥ ॐ ह्रींकारनन्दनारामनवकल्पकवल्लर्यै नमः ॥

**ह्रींकारहिमवद्गङ्गा ह्रींकारार्णवकौस्तुभा ।**
**ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदा ॥**

ह्रींकारहिमवद्गङ्गा । हिमान्यस्मिन् सन्तीति हिमवान् शीतलपर्वतराजः । ह्रींकारस्य अमृतादिसाधकतया शीतलता बोध्या । तस्माद्गङ्गेव पावनी सर्वपुरुषार्थप्रदा मन्त्रदेवतात्मनाभिव्यक्तेत्यर्थः ॥ ॐ ह्रींकारहिमवद्गङ्गायै नमः ॥

ह्रींकारार्णवकौस्तुभा । कौस्तुभः क्षीराब्धिजन्मसु चतुर्दशरत्नेषु यथा श्रेष्ठः सर्वाधिकप्रकाशादिगुणतया, तथा परदेवतापि अपारमहिमापरिच्छिन्नह्रींकारमन्त्रवेद्यत्वेन तन्निष्पन्ना सती 'अत्रायं पुरुषः स्वयं ज्योतिः' इति श्रुतेः स्वयंप्रकाशतया विद्योतत इत्यर्थः । अत्र कौस्तुभहृदयस्य लक्ष्मी

पतित्वसर्वदेवोत्तमत्वसकलसुन्दरतमत्वगुणा इव विष्णो ह्रीं कारार्णवविद्योतमानह्रींकारदेवतोपासकस्यापि नारायणाभेदेन श्रीकान्तत्वादिधर्मा स्वत एव सिध्यन्तीति कौस्तुभपदेन ध्वनितमिति द्रष्टव्यम ॥ ॐ **ह्रींकारार्णवकौस्तुभायै नम** ॥

ह्रींकारमन्त्रसर्वस्वा । सर्वाणि च तानि स्वानि च धनानि अणिमाद्यष्टैश्वर्यजनकत्वादीनि तानि तथा । ह्रींकारघटिता ह्रींकारो वा तेषा सर्वस्वा सकलसपत् सर्वार्थसाधकशक्तिरित्यर्थ ॥ ॐ **ह्रींकारमन्त्रसर्वस्वायै नम.** ॥

ह्रींकारपरसौख्यदा । ह्रींकारपरा ह्रींकारमन्त्रजपपरा ह्रींकारघटितश्रीविद्याजपपरा वा । तेषा सौख्य चतुर्विधपुरुषार्थप्राप्तिजन्यानन्द तद्ददातीति तथा । ह्रींकाराणा व्यष्टिरूपेण वाच्यार्थेना त्रिमूर्तीना पर सौख्य सामरस्यसुख एकीभावानन्द ददातीति वार्थे । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' 'नाल्पे सुखमस्ति' इति, 'आनन्द ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय प्रतिष्ठा विन्दते । अथ सोऽभय गतो भवति', 'विज्ञानमानन्द ब्रह्म रातिर्दातु परायणम्' इत्यादिबहुश्रुतिभ्य अखण्डसंविदा

नन्दब्रह्मस्वरूपतया सैव फल भवति, अन्यज्ञानादन्यफल प्राप्तेरयोगात् । 'ब्रह्म वद ब्रह्मैव भवति' 'तरति शोकमा त्मवित्', 'येन मामुपयान्ति ते । तषामह समुद्धर्ता मृत्यु ससारसागरात' 'ब्रह्मैव सन ब्रह्माप्यति' इत्यादिश्रुतिस्मृ तिशतेभ्य स्वस्वरूपप्राप्तेरेव पुरुषार्थस्य प्रदातृत्व सिद्धम् ॥

ॐ ह्रींकारपरसौख्यदायै नम ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्दभगव

त्पूज्यपादशिष्यस्य श्रीमच्छकरभगवत कृतौ

श्रीललितात्रिशतीभाष्यम् सपूर्णम् ॥

इत्येव ते मयाख्यात देव्या नामशतत्रयम् ।
रहस्यातिरहस्यत्वाद्गोपनीय त्वया मुने ॥

शिववर्णानि नामानि श्रीदेव्या कथितानि हि ।
शक्त्यक्षराणि नामानि कामेशकथितानि च ॥

उभयाक्षरनामानि ह्युभाभ्या कथितानि वै ।
तदन्यैर्ग्रथित स्तोत्रमेतस्य सदृश किमु ॥ ३ ॥

नानेन सदृश स्तोत्र श्रीदेवीप्रीतिदायकम् ।
लोकत्रयेऽपि कल्याण सभवेन्नात्र सशय ॥

इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य ।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तं
पुनरधिकरहस्यं ज्ञातुमेवं जगाद ॥ ५ ॥

अगस्त्य उवाच—

अश्वानन महाभाग रहस्यमपि मे वद ।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि ॥

उभयोरपि वर्णानि कानि वा वद देशिक ।
इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः ॥ ७ ॥

तव गोप्यं किमस्तीह साक्षादम्बानुशासनात् ।
इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज ॥

एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत् ।
कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः ॥ ९ ॥

शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः ।
एवं विभागमज्ञात्वा ये विद्याजपशालिनः ॥

न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि ।
चतुर्भि शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभि ॥

नवचक्रैश्च ससिद्ध श्रीचक्र शिवयार्वपु ।
त्रिकोणमष्टकोण च दशकोणद्वग तथा ॥ १२ ॥

चतुर्दशार चैतानि शक्तिचक्राणि पञ्च च ।
बिन्दुश्चाष्टदल पद्म पद्म षोडशपत्रकम् ॥ १३ ॥

चतुरश्र च चत्वारि शिवचक्राण्यनुक्रमात् ।
त्रिकोणे बैन्दव श्लिष्ट अष्टारेष्टदलाम्बुजम् ॥

दशारयो षोडशार भूगृह भुवनाश्रके ।
शैवानामपि शाक्तानां चक्राणा च परस्परम् ॥

अविनाभावसबन्ध यो जानाति स चक्रवित् ।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपपर शिव ॥

अविनाभावसबन्ध तस्माद्बिन्दुत्रिकोणयो ।
एव विभागमज्ञात्वा श्रीचक्र य: समर्चयेत् ॥

न तत्फलमवाप्नोति ललिताम्बा न तुष्यति ।
ये च जानन्ति लोकेऽस्मिन्श्रीविद्याचक्रवेदिनः ॥

सामान्यवेदिनः सर्वे विशेषज्ञोऽतिदुर्लभः ।
स्वयविद्याविशेषज्ञो विशेषज्ञं समर्चयेत् ॥१९॥

तस्मै देयं ततो ग्राह्यमशक्तस्तस्य दापयेत् ।
अन्धतमः प्रविशन्ति येऽविद्या मसुपासते ॥

इति श्रुतिरपाहैतानविद्योपासकान्पुनः ।
विद्यान्योपासकानेव निन्दत्यारुणिकी श्रुतिः ॥

अश्रुता सश्रुतासश्च यज्वानो येऽप्ययज्वनः ।
स्वर्यन्तो नापेक्षन्ते इन्द्रमग्निं च ये विदुः ॥

सिकता इव मयन्ति रश्मिभिः समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्याह चारण्यकश्रुतिः ॥

यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥

इति मन्त्रेषु बहुधा विद्याया महिमोच्यते ।
मोक्षैकहेतुविद्या तु श्रीविद्या नात्र संशयः ॥

न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।
मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः ॥

तस्माद्विद्याविदेवात्र विद्वान्विद्वानितीर्यते ।
स्वयं विद्याविदे दद्यात्ख्यापयंस्तद्गुणान्सुधीः ॥

स्वयंविद्यारहस्यज्ञो विद्यामाहात्म्यवेद्यपि ।
विद्याविदं नार्चयेच्चेत्को वा तं पूजयेज्जनः ॥२८॥

प्रसङ्गादिदमुक्तं ते प्रकृतं शृणु कुम्भज ।
यः कीर्तयेत्सकृद्भक्त्या दिव्यनामशतत्रयम् ॥

तस्य पुण्यमहं वक्ष्ये शृणु त्वं कुम्भसंभव ।
रहस्यनामसाहस्रपाठे यत्फलमीरितम् ॥ ३० ॥

तत्फलं कोटिगुणितमेकनामजपाद्भवेत् ।
कामेश्वरीकामेशाभ्यां कृतं नामशतत्रयम् ॥

नान्येन तुलयेदेतत्स्तोत्रेणान्यकृतेन च ।
श्रिय परम्परा यस्य भावि वा चोत्तरोत्तरम् ॥

तेनैव लभ्यते चैतत्पश्चाच्छ्रेय परीक्षयेत् ।
अस्या नाम्ना त्रिशत्यास्तु महिमा केन वर्ण्यते ॥

या स्वय शिवयोर्वक्त्रपद्माभ्या परिनि.सृता ।
नित्य षोडशसख्याकान्विप्रानादौ तु भोजयेत् ॥

अभ्यक्तास्तिलतैलेन स्नातानुष्णेन वारिणा ।
अभ्यर्च्य गन्धपुष्पाद्यै कामेश्वर्यादिनामभि. ॥

सूपापूपै शर्कराद्यै पायसै फलसयुतै ।
विद्याविदो विशेषेण भोजयेत्षोडश द्विजान् ॥

एव नित्यार्चन कुर्यादादौ ब्राह्मणभोजनम् ।
त्रिशतीनामभि. पश्चाद्ब्राह्मणान्क्रमशोऽर्चयेत् ॥

तैलाभ्यङ्गादिक दत्वा विभवे सति भक्तित ।
शुक्लप्रतिपदारभ्य पौर्णमास्यवधि क्रमात् ॥

दिवसे दिवसे विप्रा भोज्या विंशतिसङ्ख्यया ।
दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिने ॥

त्रिंशत्षष्टि शतविप्रा सभोज्यास्त्रिशत क्रमात्
एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नर ॥

तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिरा ।
रहस्यनामसाहस्रभोजनेऽप्येवमेव हि ॥ ४१ ॥

आदौ नित्यबलिं कुर्यात्पश्चाद्ब्राह्मणभोजनम् ।
रहस्यनामसाहस्रमहिमा यो मयोदित. ॥ ४२ ॥

सशीकराणुरत्रैकनाम्नो महिमवारिधेः ।
वाग्देवीरचिते नामसाहस्रे यद्यदीरितम् ॥४३॥

तत्फल कोटिगुणित नाम्नोऽप्येकस्य कीर्तनात् ।
एतदन्यैर्जपै स्तोत्रैरर्चनैर्यत्फल भवेत ॥ ४४ ॥

तत्फल कोटिगुणित भवेन्नामशतत्रयात् ।
वाग्देवीरचितास्तोत्रे तादृशो महिमा यदि ॥

साक्षात्कामेशकामेशीकृतेऽस्मिन्गृह्यतामिति ।
सकृत्संकीर्तनादेव नाम्नामस्मिञ्शतत्रये ॥४६॥

भवेच्चित्तस्य पर्याप्तिर्न्यूनमन्यानपेक्षिणी ।
न ज्ञातव्यमितोऽप्यन्यन्न जप्तव्य च कुम्भज ॥

यद्यत्साध्यतम कार्य तत्तदर्थमिद जपेत् ।
तत्तत्फलमवाप्नोति पश्चात्कार्य परीक्षयेत् ॥

ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलम् ।
तत्सर्व सिध्यति क्षिप्र नामत्रिशतकीर्तनात् ॥

आयुष्कर पुष्टिकर पुत्रद वश्यकारकम् ।
विद्याप्रद कीर्तिकर सुकवित्वप्रदायकम् ॥५०॥

सर्वसपत्प्रद सर्वभोगद सर्वसौख्यदम् ।
सर्वाभीष्टप्रद चैव देव्या नामशतत्रयम् ॥५१॥

एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन ।
एतत्कीर्तनसतुष्टा श्रीदेवी ललिताम्बिका ॥

भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम् ।
तस्मात्कुम्भोद्भव मुने कीर्तय त्वमिदं सदा ॥

नापरं किंचिदपि ते बोद्धव्यं नावशिष्यते ।
इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम् ॥

नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ॥

यो ब्रूयात्त्रिशतीं नाम्ना तस्यानर्थो महान्भवेत् ।
इत्याज्ञा शांकरी प्रोक्ता तस्माद्गोप्यमिदं त्वया ॥

ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम् ।
रहस्यनामसाहस्रादपि गोप्यमिदं मुने ॥ ५७ ॥

एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ।
स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम् ॥
आनन्दलहरीमग्नमानसः समवर्तत ॥ ५९ ॥

इति श्रीललितात्रिशतीस्तोत्रं संपूर्णम् ॥

—— * ——

॥ श्री ॥

# ॥ नामानुक्रमणिका ॥

---

THE WORKS OF

# SRI SANKARACHARYA

VOLUME

19

SRI VANI VILAS PRESS

SRIRANGAM

TO

HIS HOLINESS SRI JAGADGURU

SRI SACHCHIDANANDA S[illegible]

NRISIMHA BHARATI SWAMI

WHO ADORNS THE THRONE OF THE SRINGERI MUTT

AS THE WORTHY REPRESENTATIVE OF THE

GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE

TO COME ACROSS A HOLIER PERSONAGE,

A TRUER MAHATMA, A NOBLER [illegible]NT

AND A MORE RIGOROUS ASCETIC,

THIS EDITION IS MOST RESPECTFULLY INSCRIBED

AS A TOKEN OF UNBOUNDED ADMIRATION

BY THE HUMBLEST OF ALL HIS DISCIPLES

T. K. BALASUBRAHMANYAM.

## CONTENTS.

## ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ प्रपञ्चसारविषयविवेकः ॥

# ॥ प्रपञ्चसारः ॥

अकचटतपयाद्यैः सप्तभिर्वर्णवर्गै-
र्विरचितमुखबाहापादमध्याख्यहृत्का[1] ।
सकलजगदधीशा शाश्वता विश्वयोनि-
र्वितरतु परिशुद्धिं चेतसः शारदा वः ॥ १ ॥

अथाभवन्ब्रह्महरीश्वराख्याः
पुरा प्रधानात्प्रलयावसाने ।
गुणप्रभिन्ना जगतोऽस्य सृष्टि-
स्थितिक्षयस्पष्टनिविष्टचेष्टाः ॥ २ ॥

स्वनिष्पत्तिं च कृत्यं च ते विचिन्त्य समाविदन् ।
वक्तारमजमव्यक्तमरूपं मायिनं विभुम् ॥ ३ ॥

---

1. ...हृत्कुक्षिमध्या.

मूर्त्याभासेन दुग्धाब्धौ झषशङ्खसमाकुले ।
मरुत्संघट्टनोत्कीर्णलहरीकणशीतले ॥ ४ ॥

उद्यदादित्यकिरणप्रशान्तशिशिरोदये ।
पूर्णचन्द्रकरामर्शप्रतिक्षुब्धजलाशये ॥ ५ ॥

अनन्तभोगे विमले फणायुतविराजिते ।
शयितं शार्ङ्गिणं शर्वशौरिपद्मभुवस्तदा ॥ ६ ॥

तुष्टुवुर्हृष्टमनसो विष्टरश्रवसं विभुम् ।
सूक्तिभिः स्तुतिभिः प्रीतः स्वमूर्तिं स व्यदर्शयन् ॥

नीलोत्पलदलप्रख्यां नीलकुञ्चितमूर्धजाम् ।
अष्टमीचन्द्रविभ्राजल्ललाटामायतभ्रुवम् ॥ ८ ॥

रक्तारविन्दनयनामुन्नसीमरुणाधराम् ।
मन्दस्मिताधरमुखीं लसन्मकरकुण्डलाम् ॥ ९ ॥

कम्बुग्रीवां पृथुद्व्यंसविसरद्भुजमण्डलाम्[1] ।
अनेकरत्नप्रत्युप्तवलयाङ्गदमुद्रिकाम् ॥ १० ॥

हारतारावलीराजत्पृथूरोव्योममण्डलाम् ।
कौस्तुभोद्भासितोरस्कां श्रीवत्सद्युतिदीपिताम् ॥

1. ...विलसद्भुजमण्डलाम्.

लसदौदरिकाबन्धभास्वरां संभृतोदरीम् ।
गम्भीरनाभिं विपुलजघनां पीतावाससम् ॥ १२ ॥

पृथुवृत्तोरुमापूर्णजानुमण्डलबन्धुराम् ।
वृत्तजङ्घां गूढगुल्फां प्रपदाजितकच्छपाम् ॥ १३ ॥

तनुदीर्घाङ्गुलीभास्वन्नखराजिविराजिताम् ।
चक्रस्वस्तिकशङ्खाब्जध्वजाङ्कितपदद्वयाम् ॥ १४ ॥

तां दृष्ट्वा तरलात्मानो विध्यधोक्षजशंकराः ।
अतिष्ठन्नितिकर्तव्यमूढास्तत्राब्रवीदजः ॥ १५ ॥

स्वामिन्प्रसीद विश्वेश के वयं केन भाविताः ।
किंमूलाः किंक्रियाः सर्वमस्मभ्यं वक्तुमर्हसि ॥

इति पृष्टः परं ज्योतिरुवाच प्रमिताक्षरम् ।
यूयमक्षरसंभूताः सृष्टिस्थित्यन्तहेतवः ॥ १७ ॥

तैरेव विकृतिं यातास्तेषु वो जायते लयः ।
इति तस्य वचः श्रुत्वा तमपृच्छत्सरोजभूः ॥ १८ ॥

अक्षरं नाम किं नाथ कुतो जातं किमात्मकम् ।
इति पृष्टो हरिस्तेन सरोजोदरयोनिना ॥ १९ ॥

मूलार्णमर्णविकृतीर्विकृतेर्विकृतीरपि[1] ।
तत्प्रभिन्नानि मन्त्राणि प्रयोगांश्च पृथग्विधान् ॥ २० ॥

वैदिकांस्तान्त्रिकांश्चैव सर्वानित्थमुवाच ह ।
प्रकृतिः पुरुषश्चेति नित्यौ कालश्च सत्तम ॥ २१ ॥

अणोरणीयसी स्थूलात्स्थूला व्याप्तचराचरा[2] ।
आदित्येन्द्वादितेजोमद्यद्यत्तत्तन्मयी विभुः ॥ २२ ॥

न श्वेतरक्तपीतादिवर्णैर्निर्धार्य सोच्यते ।
न गुणेषु न भूतेषु विशेषेण व्यवस्थिता ॥ २३ ॥

अन्तरान्तर्बहिश्चैव देहिनां देहपूरणी ।
स्वसंवेद्यस्वरूपा सा दृश्या देशिकदर्शितैः ॥ २४ ॥

यथाकाशस्तमो वापि लब्धा या नोपलभ्यते ।
पुंनपुंसकयोस्तुल्याप्यङ्गनासु विशिष्यते ॥ २५ ॥

प्रधानमिति यामाहुर्या शक्तिरिति कथ्यते ।
या युष्मानपि मां नित्यमवष्टभ्यातिवर्तते ॥ २६ ॥

साहं यूयं तथैवान्यद्यद्वेद्यं तत्तु सा स्मृता ।
प्रलये व्याप्यते तस्यां चराचरमिदं जगत् ॥ २७ ॥

---

1. ...विकृतिविकृतिं विकृतेरपि; 2. ...स्थूलव्याप्त...

सैवं स्वां वेत्ति परमा तस्या नान्योऽस्ति वेदिता ।
सा तु कालात्मना सम्यज्ञयैव ज्ञायते सदा ॥ २८ ॥

लवादिप्रलयान्तोऽयं कालः प्रस्तूयते ह्यज ।
नलिनीपत्रसंहत्यां सूक्ष्मसूच्यभिवेधने ॥॥ २९ ॥

दले दले तु यः कालः स कालो लववाचकः ।
लवैस्त्रुटिः स्यात्त्रिंशद्भिः कलां तावत्त्रुटिं विदुः ॥ ३० ॥

काष्ठा तावत्कला ज्ञेया तावत्काष्ठो निमेषकः ।
सोऽङ्गुलिस्फोटतुल्यश्च मात्राष्टाभिस्तु तैः स्मृता ॥

कालेन यावता स्वीयो हस्तः स्वं जानुमण्डलम् ।
पर्येति मात्रा सा तुल्या स्वयैकश्वासमात्रया ॥ ३२ ॥

षष्ट्युत्तरैस्तु त्रिशतैर्निश्वासैर्नाडिका स्मृता ।
द्विनाडिका मुहूर्तः स्यात्त्रिंशद्भिस्तैरहर्निशम् ॥ ३३ ॥

त्रिंशद्भिरप्यहोरात्रैर्मासो द्वादशभिस्तु तैः ।
संवत्सरो मानुषोऽयमहोरात्रं दिवौकसाम् ॥ ३४ ॥

तथा दिव्यैरहोरात्रैस्त्रिशतैः षष्टिसंयुतैः ।
दिव्यः संवत्सरो ज्ञेयो दिव्यैः संवत्सरैस्तु तैः ॥

भवेद्द्वादशसाहस्रैर्भिन्नैरेकं चतुर्युगम् ।
तैः सहस्रैः शतानन्द तवैकं दिनमिष्यते ॥ ३६ ॥

तावती तव रात्रिश्च कथिता कालवेदिभिः ।
तथाविधैरहोरात्रैस्त्रिंशद्भिर्मासमृच्छति ॥ ३७ ॥

तथाविधैर्द्वादशभिर्मासैरब्दस्तव स्मृतः ।
तथाविधानामब्दानां शतं त्वमपि जीवसि ॥ ३८ ॥

तवायुर्मम निश्वासः कालेनैवं प्रचोद्यते ।
स जानाति विपाकांश्च तस्यां सम्यग्व्यवस्थितान् ॥

सोऽन्वीक्ष्य त्वादृशामायुः परिपाकं प्रदास्यति ।
प्रकृतेश्च क्वचित्कालो विकृतिं प्रतिपादयेत् ॥ ४० ॥

सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः संनिधेस्तथा[1] ।
विचिकीर्षुर्घनीभूत्वा क्वचिदभ्येति बिन्दुताम् ॥ ४१ ॥

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥ ४२ ॥

स बिन्दुनादबीजत्वभेदेन च निगद्यते ।
बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मको भवेत् ॥ ४३ ॥

1. संनिधेस्तदा.

स एवः श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते ।
तद्विस्तारप्रकारोऽयं यथा वक्ष्यामि सांप्रतम् ॥ ४४ ॥

अव्यक्तादन्तरुदितविभेदगहनात्मकम्[1] ।
महन्नाम भवेत्तत्त्वं महतोऽहंकृतिस्तथा ॥ ४५ ॥

भूतादिकवैकारिकतैजसभेदक्रमादहंकारात् ।
कालप्रेरितया गुणघोषयुजा शब्दसृष्टिरथ शक्त्या ॥

शब्दाद्व्योम स्पर्शतस्तेन वायु-
स्ताभ्यां रूपाद्वह्निरेतै रसाच्च ।
[2]आपस्त्वेभिर्गन्धतोऽभूद्धराद्या
भूताः पञ्च स्युर्गुणानां[3] क्रमेण ॥ ४७ ॥

खमपि सुषिरचिह्नमीरणः स्या-
च्चलनपरः परिपाकवान्कृशानुः ।
जलमपि रसवद्धना धरा ते
सितशितिपाटलशुभ्रपीतभासः ॥ ४८ ॥

वृत्तं व्योम्नो बिन्दुषट्काञ्चितं
तद्वायोरग्नेः स्वस्तिकोद्यत्त्रिकोणम् ।

---

1. ...त्रिभेदगहनात्मकम्; 2. अम्भांस्येभिर्गन्धतो ;
3. स्युर्गुणोनाः.

अब्जोपेतार्धेन्दुमाद्बिम्बमाप्यं
स्याद्यज्ञोद्यच्चातुरश्रं धरायाः ॥ ४९ ॥

निवृत्तिसंज्ञा च तथा प्रतिष्ठा
विद्याह्वया शान्तिसशान्त्यतीते ।
स्युः शक्तयः पञ्च धरादिभूत-
प्रोत्थाः क्रमान्नादकलादिभूताः ॥ ५० ॥

पुटयोरुभयोश्च दण्डसंस्था
पृथिवी तोयमधः कृशानुरूर्ध्वम् ।
पवनस्त्वथ पार्श्वगोऽपि मध्ये
गगनं भूतगतिस्तनूद्भवेयम् ॥ ५१ ॥

व्योम्नि मरुदत्र दहनस्तत्रापस्तासु संस्थिता पृथिवी ।
सचराचरात्मकानि च तस्यां जातानि सर्वभूतानि ॥

श्रोत्रत्वगक्षिजिह्वाघ्राणान्यपि चेन्द्रियाणि बुद्धेः स्युः ।
वाक्पाणिपादपायूपस्थानि च कर्मसंज्ञानि तथा ॥ ५३ ॥

वचनादाने सगती सविसर्गानन्दकौ च संप्रोक्ताः ।
वागाद्यर्थाः समना बुद्धिरहंकाराश्चित्तमपि करणम् ॥

भूतेन्द्रियेन्द्रियार्थैरुद्दिष्टस्तत्त्वपञ्चविंशतिकः ।
व्यानन्दकैश्च तैरपि तत्त्वचतुर्विंशतिस्तथा प्रोक्ताः ॥ ५५ ॥

करणोपेतैरेतैस्तत्त्वान्युक्तानि रहितवचनाद्यैः ।
भूतानीन्द्रियदशकं समनः प्रोक्तो विकारषोडशकः ॥

अव्यक्तमहदहंकृतिभूतानि प्रकृतयः स्युरष्टौ च ।
तन्मात्राहंकाराः समहान्तः प्रकृतिविकृतयः सप्त ॥ ५७ ॥

सत्त्वं रजस्तम इति संप्रोक्ताश्च त्रयोगुणास्तस्याः ।
तत्संबन्धाद्विकृतैर्भेदत्रितयैस्ततं जगत्सकलम् ॥ ५८ ॥

देवाः सश्रुतयः स्वराः समरुतो लोकाश्च वैश्वानराः
कालाः शक्तियुतास्त्रिवर्गसहितास्तिस्रस्तथा वृत्तयः ।
नाड्योऽन्यच्च जगत्त्रयेऽत्र नियतं यद्वस्तु संबध्यते
विश्वेषां स्थितये चरन्त्यविरतं सूर्येन्दुवैश्वानराः ॥५९॥

एष सर्गः समुत्पन्न इत्थं विश्वं प्रतीयते ।
विश्वप्रतीतौ हि यतः प्रपञ्चस्त्ववगम्यते ॥ ६० ॥

शब्दब्रह्मेति यत्प्रोक्तं तदुद्देशः प्रवर्त्यते ।
अतः परमवाच्यं हि स्वसंवेद्यस्वरूपतः ॥ ६१ ॥

शब्दब्रह्मेति शब्दावगम्यमर्थं विदुर्बुधाः ।
स्वतोऽर्थानवबोधत्वात्प्रोक्तो नैतादृशो रवः ॥ ६२ ॥

स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः ।
आविर्भवति देहेषु प्राणिनामर्थविस्मृतः ॥ ६३ ॥

प्रकृतौ कालनुन्नायां गुणान्तःकरणात्मनि ।
देहश्चतुर्विधो ज्ञेयो जन्तोरुत्पत्तिभेदतः ॥ ६४ ॥

औद्भिदः स्वेदजोऽण्डोत्थश्चतुर्थस्तु जरायुजः ।
उद्भिद्य भूमिमुद्गच्छत्यौद्भिदः स्थावरस्तु सः ॥ ६५ ॥

निर्दिष्टस्कन्धविटपपत्रपुष्पफलादिभिः ।
पञ्चभूतात्मकः सर्वः क्ष्मामधिष्ठाय जायते ॥ ६६ ॥

अम्बुयोन्यग्निपवननभसां समवायतः ।
स्वेदजःऽस्विद्यमानेभ्यो भूवह्न्यद्भ्यः प्रजायते ॥ ६७ ॥

यूकमत्कुणकीटाणुस्त्रुट्याद्याः क्षणभङ्गुराः ।
अण्डजो वर्तुलीभूताच्छुक्लशोणितसंपुटात् ॥ ६८ ॥

कालेन भिन्नात्पूर्णात्मा निर्गच्छन्प्रक्रमिष्यति ।
आहिगोधावयोभेदशिंशुमारादिकश्च सः[1] ॥ ६९ ॥

1. अहिगोधावयोभेदाः शिंशुमारादिकच्छपाः.

जरायुजस्तु ग्राम्यातः क्रियातः स्त्र्यतिसंभवः ।
स जायते चतुर्विंशत्तत्त्वसंयुक्तदेहवान् ॥ ७० ॥

स्वस्थानतश्च्युताच्छुक्काद्बिन्दुमादाय मारुतः ।
गर्भाशयं प्रविशति यदा तुल्यं तदापरः ॥ ७१ ॥

आर्तवात्परमं बीजमादायास्याश्च मूलतः ।
यदा गर्भाशयं नेष्यत्यथ संमिश्रयेन्मरुत् ॥ ७२ ॥

मायीयं नाम योषोत्थं पौरुषं कार्मणं मलम् ।
आणवं नाम संपृक्तं मिलितं तन्मलद्वयम् ॥ ७३ ॥

सूक्ष्मरूपाणि तत्त्वानि चतुर्विंशन्मलद्वये ।
तत्र युक्तिं नयत्याशु ततस्तद्गर्भमारुतः ॥ ७४ ॥

संक्षोभ्य संवर्धयति तन्मलं शोणिताधिकम् ।
स्त्री स्याच्छुक्राधिकं ना स्यात्समभागं[1] नपुंसकम् ॥ ७५ ॥

स्वगाभिर्मरुदग्न्याद्भिः क्लेद्यते क्वाथ्यते च तत् ।
सान्द्रीभूतं तदह्नैव मातुरङ्गुष्ठसंमितम् ॥ ७६ ॥

आयामि बुद्बुदाकारं परेऽहनि विजृम्भते ।
पक्षेण चतुरश्रं स्यान्मातुर्भुक्तरसात्मवत् ॥ ७७ ॥

1. समबन्धं.

मिलितादपि तस्मात्तु पृथगेव मलद्वयात् ।
किट्टभूतद्वयं पूर्वं बीजयुग्मं समुन्नमेत् ॥ ७८ ॥

ऊर्ध्वं तु मरुता नुन्नं तस्मादपि फलद्वयात् ।
उभयात्मिक्यधोवृत्ता नाडी दीर्घा भवेदृजुः ॥ ७९ ॥

अवाङ्मुखी सा तस्याश्च भवेत्पक्षद्वये द्वयम् ।
नाड्योस्तत्संधिबन्धाः स्युः सप्तान्या नाडयो मताः ॥

ततो या प्रथमा नाडी सा सुषुम्नेति कथ्यते ।
या वामेडेति सा ज्ञेया दक्षिणा पिङ्गला स्मृता ॥ ८१ ॥

या वाममुष्कसंबन्धा सा श्लिष्यन्ती सुषुम्नया ।
दक्षिणवृक्कमाश्रित्य धनुर्वक्रा हृदि स्थिता ॥ ८२ ॥

वामांसजत्र्वन्तरगा दक्षिणां नाडिकामियात् ।
तथा दक्षिणमुष्कोत्था नाडी या वामरन्ध्रगा ॥ ८३ ॥

अन्या धमन्यो याः प्रोक्ता गान्धारीहस्तिजिह्विका ।
सपूषालंबुषा चैव यशस्विन्यपि शङ्खिनी ॥ ८४ ॥

कुहूरिति च विद्वद्भिः प्रधाना व्यापिकास्तनौ ।
काचिन्नाडी बहिर्वक्त्रा या मातुर्हृदि बध्यते ॥ ८५ ॥

यथा तत्पुष्टिमाप्नोति केदार इव कुल्यया ।
मातुराहाररसजैर्धातुभिः पुष्यते क्रमात् ॥ ८६ ॥

क्रमवृद्धौ परंज्योतिष्कला क्षेत्रज्ञतामियात् ।
सक्षेत्रज्ञं मलं तत्तु सभूतं सगुणं पुनः ॥ ८७ ॥

सदोषं दूष्यसंपन्नं जन्तुरित्यभिधीयते ।
फलकोशद्वयं तत्तु व्यक्तं पुंसो न तु स्त्रियः ॥ ८८ ॥

नपुंसकस्य किंचित्तु व्यक्तिरत्रोपलक्ष्यते ।
मध्यस्थायाः सुषुम्नायाः पर्वपञ्चकसंभवाः ॥ ८९ ॥

शाखोपशाखतां प्राप्ताः सिरालक्षत्रयात्परम् ।
अर्धलक्षमिति प्राहुः शरीरार्थविशारदाः ॥ ९० ॥

तद्भेदांश्च बहूनाहुस्ताभिः सर्वाभिरेव च ।
व्याप्नोति सर्वतो वायुर्येन देहः प्रवर्त्यते[1] ॥ ९१ ॥

देहेऽपि मूलाधारे तु समुदेति समीरणः ।
नाडीभ्यामस्तमभ्येति प्राणतो द्विषडङ्गुले ॥ ९२ ॥

अहोरात्रमिनेन्दुभ्यामूर्ध्वाधोवृत्तिरुच्यते ।
वामदक्षिणनाडीभ्यां स्यादुदग्दक्षिणायनम् ॥ ९३ ॥

1. भेदः प्रवर्तते.

अत्रापि चेतनायातोरागतिं बहुधा विदुः ।
रेतःशोणितजं प्राहुरेकेऽन्ये मातुराहृतान् ॥ ९४ ॥

आहाराद्रसजं प्राहुः केचित्कर्मफलं विदुः ।
कश्चिदस्य परं धाम्नो व्याप्तिमेव विवक्षति ॥ ९५ ॥

कश्चित्कर्मप्रकारज्ञः पितुर्देहात्मनासकृत् ।
[1]संबध्य मथनोद्रेकविधिना शुक्लधातुतः ॥ ९६ ॥

तत्परंधाम सौजस्कं संक्रान्तं मारुतेन तु ।
ब्रूते रक्तव्यतिकृताद्दीपाद्दीपान्तरं यथा ॥ ९७ ॥

कश्चित्तु भौतिकव्याप्ते जन्मकाले वपुष्यथ ।
कुतश्चिदेत्य जीवात्मा निष्पन्न इति शंसति ॥ ९८ ॥

बहुना किं पुनः[2] पुंसः सांनिध्यात्प्रविजृंभिता ।
प्रकृतिर्गुणसंभिन्ना त्रिदोषात्मा[1] महीयसी ॥ ९९ ॥

पञ्चभूतमयी सप्तधातुभिन्ना च भौतिकैः ।
पञ्चभिश्च गुणैर्युक्ता पञ्चेन्द्रियविचारिणी ॥ १०० ॥

पञ्चेन्द्रियार्थगा भूयः पञ्चबुद्धिप्रभाविनी ।
पञ्चकर्मेन्द्रियगता पञ्चत्वादा प्रवर्तते ॥ १०१ ॥

1. त्रिसध्यमथनोद्रेकविलीनाः; 2. परं. 3. त्रिदोषा सा.

परेण धाम्ना समनुप्रबद्धा
मनस्तदा सा तु महाप्रभावा ।
यदा तु संकल्पविकल्पकृत्या
यदा पुनर्निश्चिनुते तदा सा ॥ १०२ ॥

स्याद्बुद्धिसंज्ञा च यदा प्रवेत्ति
ज्ञातारमात्मानमहंकृतिः स्यात् ।
तदा यदा सा त्वभिलीयतेऽन्त-
श्चित्तं च निर्धारितमर्थमेषा ॥ १०३ ॥

यदा स्वयं व्यञ्जयितुं यतेत
महीयसी सा करणैः क्रमेण ।
तदा तु बिन्दुस्फुटनोद्भवस्य
रवस्य सम्यक्प्रविजृम्भितं स्यात् ॥ १०४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे प्रथमः पटलः ॥**

# द्वितीयः पटलः ॥

अथ व्यवस्थिते त्वेवं मासात्पक्षाद्दिनादपि ।
मुहूर्तान्नाडिकायाश्च क्षणादपि च वर्धते ॥ १ ॥

जन्तुः षडङ्गी पूर्वं स्याच्छिरः पादौ करावपि ।
अन्तराधिश्चेति पुनः षडङ्गेषु प्रवर्तते ॥ २ ॥

अक्षिनासास्यकर्णभ्रूकपोलचिबुकादिकम् ।
प्रकोष्ठकोर्परांसाद्यं कट्यूरूप्रपदादिकम् ॥ ३ ॥

उरः कुक्षिस्तनाद्यं च ततः सर्वाङ्गवान्विभुः ।
कालेन जन्तुर्भवति दोषास्त्वनुगुणा यदि ॥ ४ ॥

प्रसूतिसमये सोऽथ जनित्रीं क्लेशयन्मुहुः ।
संवृतास्यसुषुम्नाख्योऽवाङ्मुखोऽनिलचोदितः ॥ ५ ॥

तस्यां ग्रहिण्यां शकृतिमग्नवक्त्राक्षिनासिकः ।
पुराकृतानां पापानामयुतं संस्मरन्मुहुः ॥ ६ ॥

तस्याः कायाग्निना दग्धः क्लेदैः क्लिन्नाङ्गबन्धनः ।
प्रत्युद्वारपरीतश्च तत्पायुद्वारगोचरः ॥ ७ ॥

तदा प्रक्षुभितैः स्वीयवायुभिर्दशतां[1] गतैः ।
संपिण्डितशरीरस्तु मोक्षमेव किलेच्छति ॥ ८ ॥

प्राणाद्या वायवस्तत्र पूर्वमेव कृतास्पदाः ।
परस्परमपानश्च प्राणश्च प्रतिबध्यते[2] ॥ ९ ॥

प्रयात्यूर्ध्वं यदा प्राणस्तदापानोऽप्यधस्तथा ।
यदा समानः कायाग्निं संधुक्षयति पाचितुम् ॥ १० ॥

तदा तत्पाकमुक्तं तु रसमादाय धावति ।
व्यानो जन्तोस्तु तद्देहमापादतलमस्तकम् ॥ ११ ॥

उदानः प्राणसहितो निमेषोन्मेषकारकः ।
उद्गारकारको नाग उन्मीलयति कूर्मकः ॥ १२ ॥

क्षुतकृत्कृकलो देवदत्तो जृम्भणकर्मकृत् ।
धनंजयाख्यो देहेऽस्मिन्कुर्याद्बहुविधान्रवान् ॥ १३ ॥

स तु लौकिकवायुत्वान्मृतं च न विमुञ्चति ।
इत्यमी मारुताः प्रोक्ता दश देहाधिगामिनः ॥ १४ ॥

वह्नयश्च दशान्ये स्युस्तेषां सप्त तु धातुगाः ।
त्रयस्त्रिदोषगाः प्रोक्ताः स्वेदक्लेदान्त्रगाश्च ते ॥ १५ ॥

1. दशधागतैः; 2 प्रतिबाध्यते.

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः ।
ते दूष्याः कफपित्तेरा दोषास्तत्प्रेरको मरुत् ॥ १६ ॥

समवायी स विश्वात्मा विश्वगो विश्वकर्मकृत् ।
[1]स दोषो वा स वा दूष्यः क्रियातः संप्रधार्यते ॥ १७ ॥

बुभुक्षा च पिपासा च शोकमोहौ जरामृती ।
षडूर्मयः प्राणबुद्धिदेहधर्मे व्यवस्थिताः[2] ॥ १८ ॥

मज्जास्थिस्नायवः शुक्लाद्रक्तात्त्वङ्मांसशोणिताः ।
इति षाट्कौशिकं नाम देहे भवति देहिनाम् ॥ १९ ॥

रसादितः क्रमात्पाकः शुक्लान्तेषु तु धातुषु ।
शुक्लपाकात्स्वयं भिद्येदोजो नामाष्टमी दशा ॥ २० ॥

क्षेत्रज्ञस्य तदोजस्तु केवलाश्रयमिष्यते ।
यथा स्नेहः प्रदीपस्य यथाभ्रमशनित्विषः ॥ २१ ॥

बहुद्वारेण कुम्भेन संवृतस्य हविर्भुजः ।
यथा तेजः प्रसरति समीपालोकशक्तिमत् ॥ २२ ॥

तथा देहावृतस्यापि क्षेत्रज्ञस्य महात्विषः ।
इन्द्रियैः संप्रवर्तन्ते स्वं स्वमर्थग्रहं प्रति ॥ २३ ॥

1. स दोषोऽथवा दूष्यः; 2. देहधर्मेष्ववस्थिताः.

नभः श्रोत्रेऽनिलश्चर्मण्यग्निश्चक्षुष्यथो रसः ।
जिह्वायामवनिर्घ्राण इत्थमर्थप्रवर्तनम् ॥ २४ ॥

यदा पित्तं मरुन्नुन्नं विलीनं प्रविलापयेत्[1] ।
धातूंस्तदा क्रमाद्रक्तं लसीकां द्रावयेत्क्षणात् ॥ २५ ॥

[2]द्रुता सा तु लसीकाह्वा रोमकूपैः प्रवर्तते ।
बहिः सर्वत्र कणशस्तदा स्वेदः प्रतीयते ॥ २६ ॥

यदा कफो मरुत्पित्तं नुन्नोमीन(?) प्रवर्तते ।
[3]ऊर्ध्वीभूतं दृढो बाष्पं प्रसेकं च प्रवर्तयेत् ॥ २७ ॥

कफात्मिकास्तु विकृतीः कर्णशष्कुलिपूर्विकाः ।
गण्डमालादिका वापि कुर्याज्जन्तोस्तु कर्मजाः ॥ २८ ॥

ग्रहणी नाम सा पात्री प्रसृताञ्जलिसंनिभा ।
अधस्तस्याः प्रधानाग्निः स समानेन नुद्यते ॥ २९ ॥

तस्याधस्तात्त्रिकोणाभं ज्योतिराधारमुत्तमम् ।
विद्यते स्थानमेतद्धि मूलाधारं विदुर्बुधाः ॥ ३० ॥

अथाहृतं षड्रसं वाप्याहारं कण्ठमार्गगम् ।
श्लेष्मणानुगतं तस्य प्रभावान्मधुरीभवेत् ॥ ३१ ॥

---

1. प्रविचालयेत्; 2. एका सा तु लसीकाह्वाद्रोमकूपैः ;
3. ऊर्ध्वभूतान्तको बाष्पं.

तत्र स्वाद्वम्ललवणतिक्तोषणकषायकाः ।
षड्रसाः कथिता भूतविकृत्या द्रव्यमाश्रिताः ॥ ३२ ॥

तथैवामाशयगतं पश्चात्पित्ताशयं व्रजेत् ।
तदा तस्यानुगमनात्कटुकत्वं प्रपद्यते ॥ ३३ ॥

तत्रान्त्रान्तरसंश्लिष्टं पच्यते पित्तवारिणा ।
पच्यमानाद्रसं भिन्नं वायू रक्तादिकां नयेत् ॥ ३४ ॥

तत्र किट्टं पृथग्भिन्नं ग्रहण्यां चिनुतेऽनिलः ।
तच्चीयमानं विण्णाम ग्रहणीं पूरयेन्मुहुः ॥ ३५ ॥

सा तेन शकृता पूर्णा वलिता प्रतिमुञ्चति ।
पुरीषं पायुमार्गेण तत्पाकेऽच्छांभसा ततः[1] ॥ ३६ ॥

अङ्गं स्वेदवदभ्यन्तर्व्याप्तैः सूक्ष्मैः सिरामुखैः ।
वस्तिमापूरयेद्वायुः पूर्णे मुञ्चति धारया ॥ ३७ ॥

मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयते ।
मूत्रमित्याहुरुदकं वस्तेर्मेहननिर्गतम् ॥ ३८ ॥

अपथ्यभाजामनयोर्मार्गयोर्दोषदुष्टयोः ।
प्रमेहमूत्रकृच्छ्रादेर्ग्रहण्यादेश्च संभवः ॥ ३९ ॥

---

1. अच्छांभसस्ततः.

इत्थंभूतः स जन्तुस्तु जरायुच्छन्नगात्रवान् ।
अपत्यवर्त्म संगम्य सज्यते वायुना मुहुः ॥ ४० ॥

जायतेऽधिकसंविग्नो जृम्भतेऽङ्गैः प्रकम्पितैः ।
मूर्त्योद्घूर्णं न श्वसिति भीत्या च परिरोदिति ॥ ४१ ॥

अथ पापकृतां शरीरभाजा-
मुदरान्निष्क्रमितुं महान्प्रयासः ।
नलिनोद्भवधीविचित्रवृत्ता
नितरां कर्मगतिस्तु मानुषाणाम् ॥ ४२ ॥

जायते पुनरसौ निजाङ्गकै-
र्जृम्भते जनितभीति कम्पते ।
उल्बणं श्वसिति रोदिति ज्वरा-
त्प्रागनेकशतदुःखभावितः ॥ ४३ ॥

मूलाधारात्प्रथममुदितो यस्तु भावः पराख्यः
पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।
वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना
बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः ॥ ४४ ॥

स्रोतोमार्गस्याविभक्तत्वहेतो-
स्तत्रार्णानां जायते न प्रकाशः ।
तावद्यावत्कण्ठमूर्धादिभेदो
वर्णव्यक्तिस्थानसंस्था यतोऽतः ॥ ४५ ॥

ज्ञातास्मीति यदा भावो मनोऽहंकारबुद्धिमान् ।
जातश्चित्पूर्वको जन्तोः स भावः क्रमवर्धितः ॥ ४६ ॥

बध्नाति मातापित्रोस्तु पूर्वं बन्धुषु च क्रमात् ।
स पीत्वा बहुशः स्तन्यं मातरं स्तन्यदायिनीम् ॥ ४७

इच्छन्नोदिति तां वीक्ष्य तत्र स्यादितरेतरम् ।
बन्धस्तत्राधिकर्तारमतिस्निग्धमनन्यगम् ॥ ४८ ॥

पितरं वीक्ष्य तत्रापि तथा भ्रातरमेव च ।
पितृव्यमातुलादींश्च समुद्वीक्ष्य प्रमोदते ॥ ४९ ॥

एवं [1]संबन्धसंसारबान्धवो विस्मरिष्यति ।
पूर्वकर्म च गर्भस्थित्युद्भूतक्लेशमेव च ॥ ५० ॥

अथ स्वमुत्तारयितुमाह्वयेज्जननीं मुहुः ।
अवैशद्यान्मुखस्रोतो मार्गस्याविशदाक्षरम् ॥ ५१ ॥

---

1. संबन्धिसंसारबान्धवो.

अप्यव्यक्तं प्रलपति यदा कुण्डलिनी तदा ।
मूलाधाराद्विसरति सुषुम्ना वेष्टनी मुहुः ॥ ५२ ॥

त्रिचतुःपञ्चषट्सप्ताष्टमो दशम एव च ।
तथा द्वादशपञ्चाशद्भेदेन गुणयेत्क्रमात् ॥ ५३ ॥

यदा त्रिंशोऽथ गुणयेत्तदा [1]त्रिगुणिता विभुः ।
शक्तिः कामाग्निनादात्मा गूढमूर्तिः प्रतीयते ॥ ५४ ॥

तदा तां तारमित्याहुरोमात्मेति बहुश्रुताः ।
तामेव शक्तिं ब्रुवते हरेरात्मेति चापरे ॥ ५५ ॥

त्रिगुणा सा त्रिदोषा सा त्रिवर्णा सा त्रयी च सा ।
त्रिलोका सा त्रिमूर्तिः सा त्रिरेखा सा विशिष्यते ॥ ५६ ॥

एतेषां तारणात्तारः शक्तिस्तद्भूतशक्तितः ।
यदा चतुर्धा गुणिता सूक्ष्मादिस्थानवाचिका ॥ ५७ ॥

वाचिका जाग्रदादीनां करणानां च सा तदा ।
यदा सा पञ्चगुणिता पञ्चपञ्चविभेदिनी ॥ ५८ ॥

पञ्चानामक्षराणां च वर्णानां मरुतां तथा ।
गुणिता सा यदा षोढा कोशोर्मिरसभेदिनी ॥ ५९ ॥

1. द्विगुणिता.

तदा षड्गुणिताख्यस्य यन्त्रस्य च विभेदिनी ।
यदा सा सप्तगुणिता तारहृल्लेखयोस्तदा ॥ ६० ॥

भेदैरहाद्यैः शान्तान्तैर्भिद्यते सप्तभिः पृथक् ।
अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ॥ ६१ ॥

नादः शक्तिश्च शान्तश्च तारभेदाः समीरिताः ।
हकाररेफमायाश्च बिन्दुनादौ तथैव च ॥ ६२ ॥

शक्तिशान्तौ च संप्रोक्ताः शक्तेर्भेदाश्च सप्तधा ।
अङ्गेभ्योऽस्यास्तु सप्तभ्यः सप्तधा भिद्यते जगत् ॥ ६३

लोकाद्रिद्वीपपातालसिन्धुग्रहमुनिस्वरैः ।
धात्वादिभिस्तथान्यैश्च सप्तसंख्याप्रभेदकैः ॥ ६४ ॥

यदाष्टधा सा गुणिता तदा प्रकृतिभेदिनी ।
अष्टाक्षरा हि वस्वाशा मातृका मूर्तिभेदिनी ॥ ६५ ॥

दशधा गुणिता नाडी मर्मांशादिविभेदिनी ।
द्वादशात्मिक्यपि यदा तदा राश्यर्कमूर्तियुक् ॥ ६६ ॥

मन्त्रं च द्वादशार्णाख्यमभिधत्ते स्वरानपि ।
तत्संख्यं च तदा यन्त्रं शक्तेस्तद्गुणितात्मकम् ॥ ६७ ॥

पञ्चाशदंशगुणिताथ यदा भवेत्सा
देवी तदात्मविनिवेशितदिव्यभावा ।
सौषुम्नवर्त्मसुषिरोदितनादसंगा-
त्पञ्चाशदीरयति पङ्क्तिश एव वर्णान् ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे द्वितीयः पटलः ॥**

# तृतीयः पटलः ॥

अथोभयात्मका वर्णाः स्युरग्नीषोमात्मभेदतः ।
त एव स्युस्त्रिधा भूयः सोमेनाग्निविभागशः ॥ १ ॥

स्वराख्याः षोडश प्रोक्ताः स्पर्शाद्याः पञ्चविंशतिः ।
व्यापकाश्च दशैते स्युः सोमेनाग्न्यात्मकाः क्रमात् ॥ २ ॥

एषु स्वरा ह्रस्वदीर्घभेदेन द्विविधा मताः ।
पूर्वो ह्रस्वः परो दीर्घो बिन्दुसर्गान्तिकौ च तौ ॥ ३ ॥

आद्यन्तस्वरषट्कस्य मध्यगं यच्चतुष्टयम ।
वर्णानामागमधनैस्तन्नपुंसकमीरितम् ॥ ४ ॥

तच्चतुष्कं सुषुम्नास्थे कुर्यात्प्राणेऽयनस्थितिम् ।
दक्षोत्तरस्थे प्राणाख्ये स्यातां दक्षोत्तरायणे ॥ ५ ॥

दक्षः सव्यस्थिते ह्रस्वदीर्घाः पञ्चोदयन्ति च ।
भूतभूतकलाभिस्तदुदयः प्रागुदीरितः ॥ ६ ॥

बिन्दुसर्गौ तु यौ प्रोक्तौ तौ सूर्यशशिनौ क्रमात् ।
तयोर्विकारविस्तारः परस्तात्संप्रवक्ष्यते ॥ ७ ॥

स्पर्शाख्या अपि ये वर्णाः पञ्चपञ्चविभेदतः ।
भवन्ति पञ्चवर्गास्तदन्त्य आत्मा रविः स्मृतः ॥ ८ ॥

चतुर्विंशतितत्त्वस्थास्तस्माद्वर्णाः परे क्रमात् ।
तेन स्पर्शाह्वयाः सौराः प्राणाग्नीळाम्बुखात्मकाः ॥ ९ ॥

व्यापकाश्च द्विवर्गाः स्युस्तथा पञ्चविभेदतः ।
शशीनाग्न्युत्थिता यस्मात्स्वरस्पृग्व्यापकाक्षराः ॥ १० ॥

तात्रिभेदसमुद्भूता अष्टत्रिंशत्कलाः स्मृताः ।
स्वरैः सौम्याः स्पर्शयुग्मैः सौरा याद्यैश्च वह्निजाः ॥ ११ ॥

षोडशद्वादशदशसंख्याः स्युः क्रमशः कलाः ।
वर्णेभ्य एव तारस्य पञ्चभेदैस्तु भूतगैः ॥ १२ ॥

सर्वगाश्च समुत्पन्नाः पञ्चाशत्संख्यकाः कलाः[1] ।
ताभ्य एव तु तावत्यः शक्तिभिर्विष्णुमूर्तयः ॥ १३ ॥

तावत्यो मातृभिः सार्धं तेभ्यः स्यू रुद्रमूर्तयः ।
तेभ्य एव तु पञ्चाशत्स्युरोषधय ईरिताः ॥ १४ ॥

याभिस्तु मन्त्रिणः सिद्धिं प्राप्नुयुर्वाञ्छितार्थदाम् ।
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ॥ १५ ॥

---

1. पञ्चाशद्वर्णसंख्यकाः.

शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गना[1] ।
पूर्णापूर्णामृताकामदायिन्यः सस्वराः कलाः ॥ १६ ॥

तपिनी तापिनी धूम्रा मरीची ज्वालिनी रुचिः ।
सुषुम्नाभोगदाविश्वाबोधिनीधारिणीक्षमाः ॥ १७ ॥

[2]कामाद्या वसुदाः सौराः षडान्ता द्वादशेरिताः ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी ॥ १८ ॥

सुश्रीः सुरूपा कपिला[3] हव्यकव्यवहे अपि ।
याद्यर्णयुक्ता वह्नेस्तथा दश धर्मप्रदाः कलाः ॥ १९ ॥

सृष्टि ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ।
स्थितिः सिद्धिरकारोत्थाः कला दश समीरिताः ॥ २० ॥

अकारप्रभवा ब्रह्मजाताः स्युः सृष्टये कलाः ।
जरा च पालिनी शान्तिरैश्वरी रतिकामिके ॥ २१ ॥

वरदा ह्लादिनी प्रीतिर्दीर्घा चोकारजाः कलाः ।
उकारप्रभवा विष्णुजाताः स्युः स्थितये कलाः ॥ २२ ॥

तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत्क्रोधिनी[4] क्रिया ।
उत्कारी चैव मृत्युश्च मकाराक्षरजाः कलाः ॥ २३ ॥

---

1. प्रीतिरङ्गदा. 2. कभाद्याः ससुधाः सौर्याः षडान्ता ; 3. कमला; 4. क्रोधनी.

मकारप्रभवा रुद्रजाताः संहृतये कलाः ।
बिन्दोरपि चतस्रः स्युः पीतश्वेतारुणाः सिताः ॥ २४ ॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
इन्धिका दीपिका चैव रेचिका मोचिका परा ॥ २५ ॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा ।
व्यापिनी व्योमरूपा चेत्यनन्ता नादसंभवाः ॥ २६ ॥

नादजाः षोडश प्रोक्ता भुक्तिमुक्तिप्रदायकाः ।
केशवनारायणमाधवगोविन्दविष्णवः ॥ २७ ॥

मधुसूदनसंज्ञश्च सप्तमः स्यात्त्रिविक्रमः ।
वामनः श्रीधरश्चैव हृषीकेशस्त्वनन्तरः ॥ २८ ॥

पद्मनाभस्तथा दामोदराह्वो वासुदेवयुक् ।
संकर्षणश्च प्रद्युम्नः सानिरुद्धः स्वरोद्भवाः ॥ २९ ॥

ततश्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली तथा ।
मुसली शूलिसंज्ञश्च भूयः पाशी च साङ्कुशी ॥ ३० ॥

मुकुन्दो [1]नन्दजो नन्दी नरो नरकजिद्धरिः ।
कृष्णः सत्यः सात्वतश्च शौरिः शूरो जनार्दनः ॥ ३१ ॥

---

1. नन्दनो.

भूधरो विश्वमूर्तिश्च वैकुण्ठः पुरुषोत्तमः ।
बली बलानुजो वालो वृषघ्नश्च वृषस्तथा ॥ ३२ ॥

हंसो वराहो विमलो नृसिंहो मूर्तयो हलाम् ।
कीर्तिः कान्तिस्तुष्टिपुष्टी धृतिः क्षान्तिः क्रिया दया ॥३३॥

मेधा च हर्षा श्रद्धाह्वा लज्जा लक्ष्मीः सरस्वती ।
प्रीती रतिश्च संप्रोक्ताः क्रमेण स्वरशक्तयः ॥ ३४ ॥

जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ।
विजया विरजा विश्वा विनदा सुनदा[1] स्मृतिः ॥ ३५ ॥

ऋद्धिः समृद्धिः शुद्धिश्च बुद्धिर्भक्तिर्मतिः क्षमा ।
[2]रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधापरा ॥ ३६ ॥

[3]परा परायणा सूक्ष्मा संध्या प्रज्ञा प्रभा निशा ।
अमोघा विद्युता चेति मूर्त्याद्याः सर्वकामदाः ॥ ३७ ॥

एकपञ्चाशदुद्दिष्टा नमोऽन्ता वर्णपूर्विकाः ।
सधातुप्राणशक्त्यात्मयुक्ता यादिषु मूर्तयः ॥ ३८ ॥

श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्तिरमरेश्वरः ।
अर्घीशो भारभूतिश्च स्थितीशः[4] स्थाणुको हरः ॥ ३९ ॥

1. च तथा; 2. रमा मा; 3. पारा; 4. निधीशः, तिथीशः, अतिथीशः.

झण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः स्युरेताः स्वरमूर्तयः ॥ ४० ॥

ततः [1]क्रोधीशचण्डीशपञ्चान्तकशिवोत्तमाः ।
तथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः ॥ ४१ ॥

अजेशशर्वसोमेशास्तथा लाङ्गलिदारुकौ ।
अर्धनारीश्वरश्चोमाकान्तश्चाषाढिदण्डिनौ ॥ ४२ ॥

आत्रिर्मीनश्च मेषश्च लोहितश्च शिखी तथा ।
छगलण्डद्विरण्डौ च समहाकालचालिनौ[2] ॥ ४३ ॥

भुजङ्गेशः पिनाकी च खड्गीशश्च बकस्तथा ।
श्वेतो भृगुश्च लकुलिः शिवः संवर्तकः स्मृतः ॥ ४४ ॥

पूर्णोदरी च विरजा तृतीया शाल्मली तथा ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा तथैव च ॥ ४५ ॥

[3]सुदीर्घमुखिगोमुख्यौ नवमी दीर्घजिह्विका ।
कुण्डोदर्यूर्ध्वकेशी[4] च मुखी विकृतपूर्विका ॥ ४६ ॥

सज्वालोल्काश्रियाविद्यामुख्यः[5] स्युः स्वरशक्तयः ।
महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विता ॥ ४७ ॥

---

1. क्रोडीशः; 2. समहाकालपालिनौ; 3. सुदीर्घा सुमुखी चैव, सुदीपा सुमुखी चैव. 4. कुण्डोदर्यूर्ध्वकेश्यौ च; 5. ...मुखाः.

गीरी त्रैलोक्यविद्या च तथा मन्त्रार्णशक्तिका[1] ।
भूतमाता लम्बोदरी द्राविणी नागरी तथा ॥ ४८ ॥

खेचरी मञ्जरी चैव रूपिणी वीरिणी तथा ।
कोदरी पूतना भद्रकालीयोगिन्य एव च ॥ ४९ ॥

शङ्खिनी गर्जिनी कालरात्री कुर्दिन्य[2] एव च ।
कपर्दिनी तथा वज्रा जया च सुमुखेश्वरी ॥ ५० ॥

रेवती माधवी चैव वारुणी वायवी तथा ।
रक्षोऽवधारिणी चान्या तथैव सहजाह्वया ॥ ५१ ॥

लक्ष्मीश्च व्यापिनी [3]मायेत्याख्याता वर्णशक्तयः ।
इत्युक्तस्त्रिविधो न्यासः क्रमात्सर्वसमृद्धिदः ॥ ५२ ॥

चन्दनकुचन्दनागरुकर्पूरोशीररोगजलघुसृणाः ।
तक्कोलजातिमांसीमुरचोरग्रन्थिरोचनापत्राः ॥ ५३ ॥

पिप्पलबिल्वगुहारुणतृणकलवङ्काह्वकुम्भिवन्दिन्यः ।
सौदुम्बरीकाष्मरिकास्थिराब्जदरपुष्पिकामयूरशिखाः ॥

प्लक्षाग्निमन्थसिह्मीकुशाह्वदर्भाश्च कृष्णदरपुष्पी ।
रोहिणडुण्डुमबृहतीपाटलचित्रातुलस्यपामार्गाः ॥ ५५ ॥

---

1. मन्त्रात्मशक्तिके ; 2. कूर्दिन्य ; 3. शैवेत्याख्याता.

शतमखलताद्विरेफो विष्णुक्रान्ती मुसल्यथाञ्जलिनी ।
दूर्वा श्रीदेविसहे तथैव लक्ष्मी सदाभद्रे ॥ ५६ ॥

आदीनामिति कथिता वर्णानां क्रमवशादथौषधयः ।
गुलिकाकषायभस्मप्रभेदतो निखिलसिद्धिदायिन्यः ॥

यथा भवन्ति देहान्तरमी पञ्चाशदक्षराः ।
येन येन प्रकारेण तथा वक्ष्यामि तत्त्वतः ॥ ५८ ॥

समीरिताः समीरेण सुषुम्नारन्ध्रनिर्गताः ।
व्यक्तिं प्रयान्ति वदने कण्ठादिस्थानघट्टिताः ॥ ५९ ॥

उच्चैरुन्मार्गगो वायुरुदात्तं कुरुते स्वरम् ।
नीचैर्गतोऽनुदात्तं च तिर्यक् स्वरितविस्तृतिः[1] ॥ ६० ॥

अर्धैकद्वित्रिसंख्याभिर्मात्राभिर्लिपयः क्रमात् ।
सव्यञ्जना ह्रस्वदीर्घप्लुतसंज्ञा भवन्ति ताः ॥ ६१ ॥

अकारेकारयोर्योगादेकारो वर्ण इष्यते ।
तस्यैवैकारयोगेन स्यादैकाराक्षरस्तथा ॥ ६२ ॥

---

1. स्वरिसमीरितः.

उकारयोगात्तस्यैव स्यादोकाराह्वयोऽक्षरः ।
तस्यैवौकारयोगेन स्यादौकाराक्षरस्तथा ॥ ६३ ॥

संध्यक्षराः स्युश्चत्वारो मन्त्राः सर्वार्थसाधकाः ।
ऌवर्णर्वर्णयोर्व्यक्तिर्लॄरोः सम्यक् प्रदृश्यते[1] ॥ ६४ ॥

बिन्दुसर्गात्मनोर्व्यक्तिममसोरजपा वदेत् ।
कण्ठात्तु निःसरन्सर्गः प्रायोऽचामेकतः परः ॥ ६५ ॥

नश्वरः सर्ग एव स्यात्सोष्मा सप्राणकस्तु हः ।
स सर्गः श्लेषितः कण्ठे वायुनाकादिमीरयेत् ॥ ६६ ॥

सर्गस्पर्शनमात्रेण कं खरस्पर्शनात्तु खम् ।
स्तोकगम्भीरसंस्पर्शाद्गघौ ङश्च बहिर्गतः ॥ ६७ ॥

ससर्गस्तालुगः सौष्म्यः शं च वर्गं च यं तथा ।
ऋटुरेफषकारांश्च मूर्धगो दन्तगस्तथा ॥ ६८ ॥

ऌतवर्गलसानोष्ठादुपूपध्मानसंज्ञकान् ।
दन्तोष्ठाभ्यां च वं तत्तत्स्थानगोऽर्णान्समीरयेत् ॥ ६९ ॥

---

1. प्रदिश्यते.

ह्रस्वाः पञ्च परे च संधिविकृताः पञ्चाथ बिन्द्वन्तिकाः
काद्याः प्राणहुताशभूकखमया याद्याश्च शार्णान्तिकाः ।
ह्रान्ताः षक्षळसाः क्रमेण कथिता भूतात्मकास्ते पृथ-
क्तैस्तैः पञ्चभिरेव वर्णदशकैः स्युः स्तम्भनाद्याः क्रियाः ॥

ऊदद्वादिलळाः कोर्णसौ चतुर्थार्णकावसौवारः ।
दृष्ट्वैव द्वितीयरक्षा वह्नेरद्वन्द्वयोनिकादिवर्षाः ॥ ७१ ॥

मरुतः कपोलबिन्दुकपञ्चमवर्णाः शह्रौ तथा व्योम्नः ।
मनुषु परेष्वपि मन्त्री करोतु कर्माणि तस्य संसिध्यै ॥

स्तम्भनाद्यमथ पार्थिवैरपा-
मक्षरैश्च परिवर्षणादिकम् ।
दाहशोषणसशून्यतादिका-
न्वह्निवायुवियदुत्थितैश्चरेत् ॥ ७३ ॥

दशभिर्दशभिरमीभि-
र्नमोऽन्तिकैर्द्वन्द्वशश्च बिन्दुयुतैः ।
योनेर्मध्ये कोण-
त्रितये मध्ये च संयजेन्मन्त्री ॥ ७४ ॥

पूर्वोक्ताद्बिन्दुमात्रात्स्वयमथ खतन्मात्रतामभ्युपैता-
कारादीन्व्यष्टकादीनपि तदनुगतान्पञ्चविंशत्तथैव ।
यादीन्संयुक्तधातूनपि गुणसहितैः पञ्चभूतैश्च ताभि-
स्तन्मात्राभिर्व्यतीत्य प्रकृतिरथ हसंज्ञा भवेद्व्याप्य विश्वम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे तृतीयः पटलः ॥**

# चतुर्थः पटलः ॥

अथ व्यवस्थिते त्वेवमस्य शक्तित्वमिष्यते ।
कृतकृत्यस्य जगति सततं रूढसंस्थितेः ॥ १ ॥

प्राणात्मकं हकाराख्यं बीजं तेन तदुद्भवाः ।
षडूर्मयः स्यू रेफोत्था गुणाश्चत्वार एव च ॥ २ ॥

पवनाद्याः पृथिव्यन्ताः स्पर्शाद्यैश्च गुणैः सह ।
करणान्यपि चत्वारि सङ्घातश्चेतनेति च ॥ ३ ॥

ईकारस्य गुणाः प्रोक्ताः षडिति क्रमतो[1] बुधैः ।
ऊकारान्तास्त्वकाराद्याः षड्वर्णाः षड्भ्य एव तु ॥ ४ ॥

प्रभेदेभ्यः समुत्पन्ना हकारस्य महात्मनः ।
ऋकाराद्यास्तु चत्वारो रेफोत्था लपराः स्मृताः ॥ ५ ॥

एकारादिविसर्गान्तं वर्णानां षट्कमुद्गतम् ।
ईकारस्य षडङ्गेभ्य इतीदं षोडशांशवत् ॥ ६ ॥

येभ्यः संजज्ञिरेंशेभ्यः स्वराः षोडश सर्वगाः ।
तेभ्यो वर्णान्तराः सर्वे ततो मूलमिदं विदुः ॥ ७ ॥

---

1. क्रमते.

गतो वो बीजतामेष प्राणिष्वेव व्यवस्थितः ।
ब्रह्माण्डं ग्रस्तमेतेन व्याप्तस्थावरजङ्गमम् ॥ ८ ॥

नादः प्राणश्च जीवश्च घोषश्चेत्यादि कथ्यते ।
एष पुंस्त्रीनियमितैर्लिङ्गैश्च सनपुंसकैः ॥ ९ ॥

रेफो मायाबीजमिति त्रिधा समभिधीयते ।
[1]शक्तिः श्रीः संनतिः कान्तिर्लक्ष्मीर्मेधा सरस्वती ॥ १० ॥

क्षान्तिः पुष्टिः स्मृतिः शान्तिरित्याद्यैः स्वार्थवाचकैः ।
नानाविकारतां प्राप्तैः स्वैः स्वैर्भावैर्विकल्पितैः ॥ ११ ॥

तामेनां कुण्डलीत्येते सन्तो हृदयगां विदुः ।
सा रौति सततं देवी भृङ्गी संगीतकध्वनिः ॥ १२ ॥

आकृतिं स्वेन भावेन पिण्डितां बहुधा विदुः ।
कुण्डली सर्वथा ज्ञेया सुषुम्नानुगतैव सा ॥ १३ ॥

चराचरस्य जगतो बीजत्वान्मूलमेव तत् ।
मूलस्य बिन्दुयोगेन शतानन्द त्वदुद्भवः ॥ १४ ॥

रेफान्वितेकाराकारयोगादुत्पत्तिरेतयोः ।
हंकाराख्यो भवांस्तेन हरिरित्येष शब्द्यते ॥ १५ ॥

1. सक्तिश्रीः.

इत्त्वमस्य तेनैव सर्वात्मत्वं ममापि च ।
अस्य बिन्दोः समुद्भूत्या तदन्तो हं स उच्यते[1] ॥ १६ ॥

स हंकारः पुमान्प्रोक्तः स इति प्रकृतिः स्मृता ।
अजपेयं मता शक्तिस्तथा दक्षिणवामगा ॥ १७ ॥

बिन्दुर्दक्षिणभागस्तु वामभागो विसर्गकः ।
तेन दक्षिणवामाख्यौ भागौ[2] पुंस्त्रीविशेषितौ ॥ १८ ॥

बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता ।
पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगत् ॥ १९ ॥

पुंरूपं सा विदित्वा स्वं सोऽहंभावमुपागता ।
स एष परमात्माख्यो मनुरस्य महामनोः ॥ २० ॥

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
संधिं वै पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥ २१ ॥

तारािद्वभक्ताचरमांशतः स्यु-
भूतानि खादीन्यथ मध्यमांशात् ।
इनादितेजांसि च पूर्वभागा-
च्छब्दाः समस्ताः प्रभवन्ति लोके ॥ २२ ॥

---

1. तदन्तोऽसौ हमुच्यते, तदन्तः सोऽहमुच्यते ; 2. भागौ

एवमेषा जगत्सूतिः सवितेत्यभिधीयते ।
यदा तदैति स्वैस्तत्त्वैश्चतुर्विंशतिधा भिदाम् ॥ २३ ॥

तद्वर्णभिन्ना गायत्री गायकत्राणनाद्भवेत् ।
सप्तग्रहात्मिका प्रोक्ता यदेयं सप्तभेदिनी ॥ २४ ॥

तदा स्वरेशः सूर्योऽयं कवर्गेशस्तु लोहितः ।
चवर्गप्रभवः काव्यष्टवर्गाद्बुधसंभवः ॥ २५ ॥

तवर्गोत्थः सुरगुरुः पवर्गोत्थः शनैश्चरः ।
यवर्गजोऽयं शीतांशुरिति सप्तगुणा त्वियम् ॥ २६ ॥

यथा स्वरेभ्यो नान्ये स्युर्वर्णाः षड्वर्गभेदिताः ।
तथा सवित्रनुस्यूतं गृहषट्कं न संशयः ॥ २७ ॥

इति संलीनसूर्यांशे वर्गषट्के तु षड्गुणाः ।
हृल्लेखेयं तथा यन्त्रं स्मर्यते स्मृतिकोविदैः ॥ २८ ॥

सर्वव्याप्ता हि सा शक्तिः शश्वद्भास्कररूपिणी ।
स्वभासा क्रमते यत्र तत्रास्या स्थितिरिष्यते ॥ २९ ॥

अस्यास्तु रजसा चैव तमसा च दिवानिशम् ।
सत्त्वावष्टब्धबिन्द्वात्मा मेरुं चरति[1] भास्करः ॥ ३० ॥

---

1. मेरुश्चरति.

अस्या विकाराद्वर्णेभ्यो जाता द्वादशराशयः ।
लवादिकालोपचितैस्तैः स्याच्चक्रगतिस्त्रिधा ॥ ३१ ॥

ऋक्षराश्यादियुतया चक्रगत्या जगत्स्थितिः ।
वक्ष्यामि चक्ररूपं च प्रबन्धं राशिभिर्यथा ॥ ३२ ॥

अन्तर्बहिर्विभागेन रचयेद्राशिमण्डलम् ।
भूचक्र एष मेषादिः प्रविज्ञेयोऽथ मानुषः ॥ ३३ ॥

आद्यैर्मेषाह्वयो राशिरीकारान्तैः प्रजायते ।
ऋकारान्तैरुकाराद्यैर्वृषो युग्मं ततस्त्रिभिः ॥ ३४ ॥

एदैतोः कर्कटो राशिरोदौतोः सिंहसंभवः ।
अमः शवर्गलेभ्यश्च संजाता कन्यका मता ॥ ३५ ॥

षड्भ्यः कचटतेभ्यश्च पयाभ्यां च प्रजज्ञिरे ।
वणिगाद्यास्तु मीनान्ता राशयः शक्तिजृम्भणात् ॥ ३६ ॥

चतुर्भिर्यादिभिः सार्धं स्यात्क्षकारस्तु मीनगः ।
[1]स्यातामर्धाधिके पञ्चनाडिकौ चापकर्कटौ ॥ ३७ ॥

पादाधिका मकरयुक्सिंहवृश्चिकसंज्ञकाः ।
पादोनौ कुम्भवृषभौ वणिक्कन्ये च पञ्चके ॥ ३८ ॥

---

1. स्यातामर्धादिकौ.

त्रिपादोनौ मीनमेषौ संख्योक्ता राशिसंश्रिता ।
चापनीरजयुक्कन्याः पीताः स्युरुभयास्त्वमी ॥ ३९ ॥

वणिङ्मकरमेषाह्वकुलीरा रक्तरोचिषः ।
चरावशिष्टाश्चत्वारः स्थिराः श्वेताः पृथङ्मताः ॥ ४० ॥

स्युः कर्कटो वृश्चिकमीनराशी
विप्रा नृपाः सिंहकधन्वमेषाः ।
तुला सकुम्भा मिथुनं च वैश्याः
कन्या वृषोऽथो मकरश्च शूद्राः ॥ ४१ ॥

अङ्गारावजवृश्चिकौ वृषतुले शुक्रस्य युक्कन्यके
बौधे कर्कटकाह्वयो हिमरुचः सिंहस्तथा गोपतेः ।
चापाब्जावपि धैषणौ मकरकुम्भाख्यौ च मान्दौ ग्रहाः
प्रोक्ता राश्यधिपा बलौ च कलशे सोऽयं क्रमो दर्शितः ॥

लग्नो धनभ्रातृबन्धुपुत्रशत्रुकलत्रकाः ।
मरणं धर्मकर्मायव्यया द्वादशराशयः ॥ ४३ ॥

ततस्तदूर्ध्वभागस्थो भुवश्चक्रः समस्तथा ।
स तु सिंहादिको यस्मिन्पैतृकी नियता गतिः ॥ ४४ ॥

तदूर्ध्वभागसंस्थः स्यात्स्वश्चक्रश्चापि तादृशः ।
स तु चापादिको दैवश्चक्रस्तैनाभिकस्त्वयम् ॥ ४५ ॥

धनुस्तु देवलग्नत्वात्समासाल्लग्नमुच्यते ।
वेध्या धनुर्मेषसिंहमकरर्षभकन्यकाः ॥ ४६ ॥

सकुम्भयुग्मवणिजो मीनकर्कटवृश्चिकाः ।
अयं तु राशिवेधः स्यादतो वेधस्तु भात्मकः ॥ ४७ ॥

मूलाश्विनीमघज्येष्ठारेवत्याश्लेषकास्तथा ।
याम्यपूर्वानुपूर्वाहिर्बुध्निपुष्यानुराधकाः ॥ ४८ ॥

स्वातीशतभिषार्द्रा च श्रोणारोहिणिहस्तकाः ।
पादं पादत्रये बुध्याद्योजयेदर्धमर्धकैः ॥ ४९ ॥

चरस्थिरोभयात्मानश्चातुर्वर्ण्यगुणात्मकाः ।
राशिं राश्यधिपास्त्वेवं बुध्युर्वेधविधानतः ॥ ५० ॥

एभ्य एव तु राशिभ्यो नक्षत्राणां च संभवः ।
स चाप्यक्षरभेदेन सप्तविंशतिधा भवेत् ॥ ५१ ॥

आभ्यामश्वयुगेर्जाता[1] भरणी कृत्तिका पुनः ।
लिपित्रयाद्रोहिणी च तत्परस्ताच्चतुष्टयात् ॥ ५२ ॥

---

1. आभ्यामश्वयुजेर्जाता.

एदैतोर्मृगशीर्षार्द्रे तदन्ताभ्यां पुनर्वसू ।
अमसोः केवलो योगो रेवत्यर्थं पृथग्गतः ॥ ५३ ॥

कतस्तिष्यस्तथाश्लेषा खगयोर्घङयोर्मघाः ।
चतः पूर्वाथ छजयोरुत्तरा झञयोस्तथा ॥ ५४ ॥

हस्तश्चित्रा च टठयोः स्वाती डादक्षराद्भूत् ।
विशाखास्तु ढणोद्भूतास्तथा देऽभ्योऽनुराधकाः ॥ ५५ ॥

ज्येष्ठा धकारान्मूलाख्यो नपफेभ्यो बतस्तथा ।
पूर्वाषाढा भतोऽन्या च संजाता श्रवणो मतः ॥ ५६ ॥

श्रविष्ठा चापि यरयोस्तथा शतभिषग्लतः ।
वशयोः प्रोष्ठपात्संज्ञा षसहेभ्यः परा स्मृता ॥ ५७ ॥

ताभ्याममोभ्यां लार्णोऽयं यदा वै सह वत्स्यते ।
तदेन्दुसूर्ययोर्योगादमावास्या प्रतीयते ॥ ५८ ॥

कषतो भुवनं मत्तः कषयोः संगमो भवेत् ।
ततः क्षकारः संजातो नृसिंहस्तस्य देवता ॥ ५९ ॥

स पुनः षसहैः सार्धं परप्रोष्ठपदं गतः ।
कारस्कराख्यामलकोदुंबरो जम्बुसंज्ञकः ॥ ६० ॥

खदिरः कृष्णवंशौ च पिप्पलो नागरोहिणौ ।
पलाशः प्लक्षकाम्बष्ठबिल्वार्जुनविकङ्कताः ॥ ६१ ॥

वकुलः शबरः सर्जो वञ्जुलः पनसार्ककौ ।
शमीकदम्बनिम्बाम्रौ मधूकान्ता दिनाङ्घ्रिपाः ॥ ६२ ॥

आयुष्कामः स्वकं वृक्षं छेदयेन्न कदाचन ।
सेचयेद्वर्धयेच्चापि पूजयेत्प्रणमेदपि ॥ ६३ ॥

तिथिनक्षत्रवारेषु स्वेषु मन्त्रजपो वरः ।
तस्मादेषां दिनादीनां वक्ष्यन्ते देवता अपि ॥ ६४ ॥

अश्वियमानलधाता शशिरुद्रादितिसुरेड्यसर्पाश्च
पित्रर्यमभगदिनकृत्त्वष्टारो मारुतस्तथेन्द्राग्नी ।
मित्रेन्द्रौ निर्ऋतिर्जाले विश्वे देवा हरिस्तथा वसवः
वारुणोऽजैकपादहिर्बुध्निः पूषा च देवता भानाम् ॥

अश्वेभाजभुजङ्गसर्पसरमा मार्जारकाजा बिली
मूषा मूषिकरुद्रयानमहिषी व्याघ्रो यमारोहणम् ।
व्याघ्रचैणी हरिणी श्ववानरपशुः शाखामृगी स्त्री हयो
मर्त्यो गौः करिणीति साधु कथिता नक्षत्रयोन्यः क्रमात् ॥

एभ्योऽमावास्यान्ता
 वर्तन्ते प्रतिपदादिकास्तिथयः ।
राशिभ्योऽथ तिथीना-
 मध्यर्धयुगं तु राशिरेकं स्यात् ॥ ६७ ॥

तेन त्रिंशत्तिथयो
 द्वादशधा वर्णतो भिन्नाः ।
ता एव स्युर्द्विविधाः
 पुनरपि पूर्वान्त्यपक्षभेदेन ॥ ६८ ॥

पक्षः पञ्चदशाहः
 स्यात्पूर्वः प्रतिपदादिकः शुक्लः ।
तद्वज्ज्ञेयोऽप्यपरः
 कृष्णः प्रतिपदादिकः प्रोक्तः ॥ ६९ ॥

संज्ञासाम्ये सत्यपि
 सौम्यात्तु ह्रासवृद्धितस्तिथयः ।
न समाः पक्षद्वितये
 त्रिंशद्भेदास्तथा हि संप्रोक्ताः ॥ ७० ॥

अग्न्यश्व्युमा सविघ्ना
नागा गुहसवितृमातरो दुर्गा ।
ककुभो धनपतिविष्णू
यमहरचन्द्राः क्रमेण तिथ्यधिपाः ॥ ७१ ॥

राशिभ्यः सदिनेभ्यः स-
तिथिभ्यः शक्तिजृम्भणसमुत्थानात् ।
अक्षरभेदविकारा-
त्करणान्यपि सप्तभेदकान्यभवन् ॥ ७२ ॥

सिंहव्याघ्रवराहाः
खरगजवृषकुक्कुटाः प्रतिपदर्धात् ।
अन्त्यां तिथ्यर्धेऽर्धे
तिष्ठन्त्याः कृष्णगोश्चतुर्दश्याः ॥ ७३ ॥

एवं संग्रहराशिक
दिनातिथिकरणप्रभेदकाः कथिताः ।
अस्मात्पञ्चाविभेदा-
द्विज्ञेया पञ्चवर्णनिष्पत्तिः ॥ ७४ ॥

वर्णाः पीतश्वेता-

रुणासितश्यामकास्तथा काद्याः ।

इति मूलाक्षरविकृतिं

कथितमिदं वर्णविकृतिबाहुल्यम् ॥ ७५ ॥

सचराचरस्य जगतो

मूलत्वान्मूलतास्य बीजस्य ॥ ७६ ॥

यां ज्ञात्वा सकलमपास्य कर्मबन्धं

तद्विष्णोः परमपदं प्रयाति लोकः ।

तामेनां त्रिजगति जन्तुजीवभूतां

हृल्लेखां जपत च नित्यमर्चयीत ॥ ७७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

**प्रपञ्चसारे चतुर्थः पटलः ॥**

## पञ्चमः पटलः ॥

अथ प्रवक्ष्ये विधिवन्मनूनां
  दीक्षाविधानं जगतो हिताय ।
येनोपलब्धेन समाप्नुवन्ति
  सिद्धिं परत्रेह च साधकेशाः ॥ १ ॥

दद्याच्च दिव्यभावं
  क्षिणुयाद्दुरितान्यतो भवेद्दीक्षा ।
मननात्तत्त्वपदस्य
  त्रायत इति मन्त्र उच्यते भयतः ॥ २ ॥

दैवादिकस्याप्यथ मानुषादेः
  पैत्रादिकस्याप्यथ वत्सरस्य ।
आदिं समारभ्य समग्रसंप-
  द्यत्नेन दीक्षाविधिमारभेत ॥ ३ ॥

*P. 4

शुभकर्मणि दीक्षायां
मण्टपकरणे गृहादिविधिषु तथा ।
विहितो वास्तुबलिः स्या-
द्रक्षाविघ्नोपशान्तिसंपद्भयः ॥ ४ ॥

अभवत्पुराथ किल वास्तुपुमा-
निति विश्रुतो जगदुपद्रवकृत् ।
चतुरश्रसंस्थितिरसौ निहितो
[1]निहतः क्षितौ सुरगणैर्दितिजः ॥ ५ ॥

तद्देहसंस्थिता ये
देवास्ते विश्रुतास्त्रिपञ्चाशत् ।
मण्डलमध्याद्यर्च्या
यथा तथोक्तक्रमेण कथ्यन्ते ॥ ६ ॥

कृत्वावनिं समतलां चतुरश्रसंस्था-
मष्टाष्टकोद्यतपदां च सकोणसूत्राम् ।
तस्यां चतुष्पदसमन्वितमध्यकोष्ठे
ब्रह्मा तु साधकवरेण समर्चनीयः ॥ ७ ॥

---

1. निहितः.

प्राग्याम्यवारुणोद-
  ग्दिक्कोष्ठचतुष्पदेषु समभियजेत् ।
[1]आर्याख्यं सविवस्व-
  त्संज्ञं मित्रं महीधरं क्रमशः ॥ ८ ॥

कोणद्वयार्धकोष्ठे-
  ष्वर्च्याः सावित्रसावितृशक्राह्वाः ।
सेन्द्रजयरुद्रतज्जय-
  सापश्च तथापवत्सकोऽग्न्याद्याः ॥ ९ ॥

अग्नेः पार्श्वोत्थपद-
  द्वन्द्वे शर्वं गुहार्यमणौ च तथा ।
जम्भकपिलिपिञ्छाख्यौ
  चरकिविदार्यौ च पूतनाः प्रोक्ताः ॥ १० ॥

अर्धपदाद्यन्तासु च
  चतसृषु दिक्षु क्रमेण बहिरर्च्याः ।
वासवयमजलशशिना-
  मष्टावष्टौ च मन्त्रिणा विधिना ॥ ११ ॥

---

1. आर्यकं.

ईशानाख्यः स पर्जन्यो जयन्तः शक्रभास्करौ ।
सत्यो वृषान्तरिक्षौ च देवताः प्रागुदीरिताः ॥ १२ ॥

अग्निः पूषा च वितथो यमश्च ग्रहरक्षकः ।
गन्धर्वो भृङ्गराजश्च मृगो दक्षदिगाश्रिताः ॥ १३ ॥

निर्ऋतिर्दौवारिकश्चैव सुग्रीवो वरुणस्तथा ।
पुष्पदन्तासुरौ शोषरोगौ प्रत्यग्दिगाश्रिताः ॥ १४ ॥

वायुर्नागश्च मुख्यश्च सोमो भल्लाट एव च ।
अर्गलाख्योऽदितिस्तद्वद्दितिः सौम्यदिगाश्रिताः ॥ १५ ॥

इतीरितानामपि देवतानां
चित्राणि कृत्वा रजसा पदानि ।
पयोऽन्धसा साधुबलिर्विधेयो
द्रव्यैश्च वा तन्त्रविशेषसिद्धैः ॥ १६ ॥

भूयो भूमितले समे विरहिते लोमास्थिलोष्टादिभिः
कर्तव्यं नवसप्तपञ्चकमितैर्हस्तैः परीणाहतः ।
युक्तं द्वारचतुष्ककल्पितपयोभूरुद् चतुस्तोरणं
दर्भस्रक्परिवीतमुज्ज्वलतलं स्यात्संवृतं मण्डपम् ॥१७॥

सप्ताहतो वा नवरात्रतो वा
प्रागेव दीक्षादिवसाद्यथावत् ।
सपालिकापञ्चमुखीशराव-
चतुष्टये बीजनिवापमुक्तम् ॥ १८ ॥

अन्यस्मिन्भवने सुसंवृततरे शुद्धे स्थले मण्डलं
कुर्यात्प्राग्वरुणायतं पदचतुष्कोपेतभानूदरम् ।
पीतारक्तसितासितं प्रतिपदं वह्न्यादिशर्वान्तिकं
याम्योदीच्यसमायतं प्रणिगदन्त्यन्ये च तन्मन्त्रिणः ॥

वैष्णव्यस्त्वथ पालिका अपि चतुर्विंशाङ्गुलोच्छ्रायकाः
वैरिञ्च्यो घटिकास्तु पञ्चवदना व्यष्टाङ्गुलोच्छ्रायकाः ।
शैवाः स्युर्द्विषडङ्गुला अपि शरावाह्वा जलक्षालिताः
सूत्रैश्च प्रकलय्य पङ्क्तिषु च ताः प्रोक्तक्रमाद्विन्यसेत् ॥

पृथगपि शालीतण्डुल-
पूर्णासु सदर्भबद्धकूर्चासु ।
मृद्वालुकाकरीषैः
क्रमेण पूर्णानि तानि पात्राणि ॥ २१ ॥

शालीकङ्कुश्यामा-

तिलसर्षपमुद्गमाषनिष्पावाः ।

खल्वाढकीसमेता

बीजानि विदुः प्ररोहयोग्यानि ॥ २२ ॥

प्रक्षाल्य तानि निवपेदभिमन्त्र्य मूल-

बीजेन साधकवरस्त्वपि पात्रकेषु ।

विप्राशिषा च विधिवत्प्रतिपाद्यमान-

शङ्खादिमुख्यतरपञ्चमहास्वनैश्च ॥ २३ ॥

हारिद्राद्भिः सम्यगभ्युक्ष्य वस्त्रै-

राच्छाद्याद्भिः सिञ्चतां पञ्चघोषैः ।

सायंप्रातः शर्वरीषु प्रदद्या-

दुक्तैर्द्रव्यैस्तद्बलिं साधकेशः ॥ २४ ॥

भूतपितृयक्षनाग-

ब्रह्मशिवा देवताश्च विष्णवन्ताः ।

ताभ्यः क्रमेण रात्रिषु

सप्तसु वा नवसु बलिर्देयः ॥ २५ ॥

लाजतिलनक्तरजो
  दधिसक्त्वन्नानि भूतकूराख्यम् ।
पित्र्यं तिलतण्डुलकं
  सोडुम्बिकधानलाजकं याक्षम् ॥ २६ ॥

केरोदसक्तुपिष्टं
  नागं पद्माक्षतं च वैरिञ्च्यम् ।
अन्नापूपं शैवं
  गुलोदनं वैष्णवं च दुग्धान्नम् ॥ २७ ॥

कृसरं च वैष्णवेयं
  यदि नवरात्रं क्रमेण बलिरुक्तः ।
तारादिकैर्नमोऽन्तैः
  स्वैः स्वैरपि नामभिश्च बलिमन्त्रः ॥ २८ ॥

पात्राणि त्रिविधान्यपि
  परितः पुनरष्टदिक्षु बलिक्लृप्तिः ।
बीजारोपणकर्म
  प्रथितमिदं सार्वकामिकं भवति ॥ २९ ॥

प्रागेव लक्षणयुतानि च मण्टपेऽस्मि-
न्कुण्डानि कारयतु सम्यगथो दिशासु ।
आखण्डलार्कभववारिपभाधिपानां
दोर्मात्रकाणि विलसद्गुणमेखलानि ॥ ३० ॥

चतुरश्रमर्धशशिबिम्बविलसितमथ त्रिकोणकम् ।
पद्मदलरुचिरवृत्तमिति ब्रुवते सुधाविधिषु[1] कुण्डलक्षणम् ॥

विंशद्भिश्चतुरधिकाभिरङ्गलीभिः
सूत्रेणाप्यथ परिसूत्र्य भूमिभागम् ।
ताभिश्च प्रखनतु तावतीभिरेकां
त्यक्त्वा चाङ्गुलिमपि मेखलाश्च कार्याः ॥ ३२ ॥

सत्त्वपूर्विकगुणान्विताः क्रमा-
द्द्वादशाष्टचतुरङ्गुलोच्छ्रिताः ।
सर्वतोऽङ्गुलिचतुष्कविस्तृता
मेखलाः सकलसिद्धिदा मताः ॥ ३३ ॥

---

1. बुधा विधिषु

योनिस्तत्पश्चिमस्यामथ दिशि चतुरश्रस्थलारब्धनाळा
तन्मध्योल्लासि रन्ध्रोपरिपरि वितताश्वत्थपत्रानुकारा ।
उत्सेधायामकाभ्यां प्रकृतिविकृतिसंज्ञाङ्गुलाष्टाङ्गुला स्या-
द्विस्तृत्या द्वादशार्धाङ्गुलमितनमिताग्रा निविष्टेव कुण्डे ॥

अथवा दिशि कुण्डमुत्तरस्यां
प्रविदध्याच्चतुरश्रमेकमेव ।
गदितैरपि लक्षणैः समेता-
पघनं दृष्टिमनोहरं च कान्त्या ॥ ३५ ॥

ततो मण्टपमध्ये तु स्थण्डिलं गोमयाम्बुना ।
उपलिप्य यथान्यायं तस्य मध्ये निधापयेत् ॥ ३६ ॥

सूत्रं प्राक् प्रत्यगात्ताग्रं[1] विप्राशीर्वचनैः सह ।
गुणितेनाभितो मत्स्यौ मध्यादारभ्य विन्यसेत् ॥ ३७ ॥

तन्मध्यस्थितयाम्योदगग्रं सूत्रं निधापयेत्
ततो मध्यात्सपद्धस्तमानेन च दिशं प्रति ॥ ३८ ॥

सूत्रेषु मकरान्न्यस्येत्स्पष्टानन्योन्यतः समात्[2] ।
सूत्राग्रमकरेभ्यस्तु न्यसेत्कोणेषु मत्स्यकान् ॥ ३९ ॥

---

1. प्रत्यगाशाग्रं; 2. क्रमात्.

कोणमत्स्यास्थिताग्राणि दिक्षु सूत्राणि [1]पातयेत् ।
ततो भवेच्चतुष्कोष्ठं चतुरश्रं च मण्डलम् ॥ ४० ॥

तत्राग्निमारुतं सूत्रं नैर्ऋतेशं निपातयेत् ।
प्राग्याम्यवारुणोदीच्यसूत्राग्रमकरेषु च ॥ ४१ ॥

[2]निहिताग्रयुगं सूत्रं चतुष्कं प्रतिपातयेत् ।
कृत एवं भवेयुस्ते कोणकोष्ठेषु मत्स्यकाः ॥ ४२ ॥

एषु प्राग्वारुणात्सूत्रान्याम्योदीच्यां निपातयेत् ।
षट्पञ्चाशत्पदानि स्युरधिकानि शतद्वयात् ॥ ४३ ॥

यदा [3]तदाजो विभजेत्पदानि क्रमशः सुधीः ।
पदैः षोडशभिर्मध्ये पद्मं वृत्तत्रयान्वितम् ॥ ४४ ॥

तैरष्टचत्वारिंशद्भी राशिः स्याद्वीथ्यशीतिभिः ॥
सद्वादशैः शतपदैः शोभायुग्द्वारकोणकम् ॥ ४५ ॥

द्वाराणि पदषट्काणि शोभाख्याः स्युश्चतुष्पदाः ।
चतुष्पदाश्चोपशोभाः षट्पदं कोणकं भवेत् ॥ ४६ ॥

वृत्तवीथ्योरारचयेन्मध्ये सूत्रचतुष्टयम् ।
प्राग्याम्यवारुणोदीच्यसूत्राग्रमकरेषु च ॥ ४७ ॥

---

1. सूत्रान्निपातयेत्; 2. निहतं च युगं सूत्रचतुष्कं. 3. तथो.

[1]निहिताग्रयुगं सूत्रं तद्भवेद्राशिमण्डलम् ।
कर्णिकायाः केसराणां दलसंधेर्दलस्य च ॥ ४८ ॥

दलाग्रवृत्तराशीनां वीथ्याः शोभोपशोभयोः ।
वृत्तानि चतुरश्राणि व्यक्तास्थानानि कल्पयेत् ॥ ४९ ॥

भवेन्मण्डलमध्यार्धे कर्णिका चतुरङ्गुला ।
त्र्यङ्गुलाः केसराश्च स्युः संधिश्च चतुरङ्गुला ॥ ५० ॥

तथा दलानां मानं तदग्रव्यङ्गुलकं भवेत् ।
अन्तरालं पृथग्वृत्तत्रयस्य[2] व्यङ्गुलं भवेत् ॥ ५१ ॥

ततश्च राशिचक्रं स्यात्स्वं स्वं वर्णविभूषितम् ।
राशिमङ्गुलकैः कुर्यात्षड्भिर्नवभिरेव[3] वा ॥ ५२ ॥

द्वात्रिंशदङ्गुलं ह्येतत्परस्तात्तावदिष्यते ।
वृत्तचक्रमुशन्त्येके चतुरश्रं च तद्विदः ॥ ५३ ॥

यदि वा वर्तुलमराः स्युश्च द्वादशराशयः ।
ते स्युः पिपीलिकामध्या मातुलङ्गनिभा अपि ॥ ५४ ॥

चक्रं च चतुरश्रं च त्र्यश्रा द्वादशराशयः ।
भवेयुः पङ्कजदलनिभा वा कथिता बुधैः ॥ ५५ ॥

---

1. निहताग्रयुतं; 2. पृथग्वृत्ते त्रयस्य; 3. षड्भिरष्टाभिरेव वा.

तद्बही रुचिरान्कुर्याच्चतुरान्कल्पशाखिनः ।
ललितान्रूढकुसुमान्फलपल्लवशोभितान् ॥ ५६ ॥

जलजैः स्थलजैर्वापि सुमनोभिः समन्वितान् ।
हंससारसकारण्डशुकभ्रमरकोकिलैः ॥ ५७ ॥

मयूरचक्रवाकाद्यैरारूढविटपानतान् ।
[1]सर्वर्तुनिष्कृतिकरान्विलोचनमनोहरान् ॥ ५८ ॥

तद्बहिः पार्थिवं कुर्यान्मण्डलं कृष्णकोणकम् ।
मण्डलानि तु तत्त्वज्ञो राश्यन्तान्येव कारयेत् ॥ ५९ ॥

राशेरन्यत्र रचयेत्प्रमोहादन्यमण्डलम् ।
आवाह्य देवतामन्यामर्चयेदन्यदेवताम् ॥ ६० ॥

उभाभ्यां लभते शापं मन्त्री तरलदुर्मतिः ।
कालात्मकस्य देवस्य राशिव्याप्तिमजानता ॥ ६१ ॥

कृतं समस्तं व्यर्थं स्यादज्ञेन ज्ञानमानिना ।
तस्मात्सर्वप्रयत्नेन राशीन्साधिपतीन्क्रमात् ॥ ६२ ॥

अवगम्यानुरूपाणि [2]मण्डलानि च मान्यधीः ।
उपक्रमेदर्चयितुं होतुं वा सर्वदेवताः ॥ ६३ ॥

1. सर्वर्तुनिर्वृतिकरान्; 2. मण्डलानिव.

रजांसि पञ्चवर्णानि पञ्चद्रव्यात्मकानि च ।
पीतशुक्लारुणशितिश्यामान्येतानि भूतशः ॥ ६४ ॥

हारिद्रं स्याद्रजः पीतं तण्डुलं च सितं भवेत् ।
तथा दोषा रजःक्षारसंयुक्तं रक्तमुच्यते ॥ ६५ ॥

कृष्णं दग्धपुलाकोत्थं श्यामं बिल्वदलादिजम् ।
सितेन रजसा कार्याः सीमा रेखा विपश्चिता ॥ ६६ ॥

अङ्गुलोत्सेधविस्ताराः[1] सर्वमण्डलकर्मसु ।
पीताः स्यात्कर्णिका रक्तशुक्लपीताश्च केसराः ॥ ६७ ॥

दलान्यच्छान्यन्तरालं श्यामचूर्णेन पूरयेत्[2] ।
सितरक्तासितैर्वर्णैर्वृत्तत्रयमुदीरितम् ॥ ६८ ॥

नानावर्णविचित्रा स्युश्चित्राकाराश्च वीथयः ।
द्वारशोभोपशोभाश्राः सितरक्तनिशासिताः ॥ ६९ ॥

राशिचक्रावशिष्टानि कोणानि शृणु यानि वै ।
पीठपादानि तानि स्युररुणान्यपि तानि वा ।
तत्तत्पादोक्तवर्णानि तत्तदाकारवन्ति वा ॥ ७० ॥

---

1. अङ्गुलोत्सेधविटपाः; 2. श्यामं चूर्णेन पूरयेत्; श्यामचूर्णेन कारयेत्.

अथवारुणानि च दलानि तथा
दलसंधिरप्यसितरुग्भवति[1] ।
असितारुणाच्छरजसा
विहितान्यपि वर्तुलानि कथयन्त्यपरे ॥ ७१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे पञ्चमः पटलः ॥**

1. दलसंधिरप्यसितयुग्भवति.

# षष्ठः पटलः ॥

अथ पुनराचम्य गुरुः
प्राग्वदनो विष्टरोपविष्टः सन् ।
प्राणायामं सलिपिन्यासं
कृत्वा न्यसेत्तदृष्यादीन् ॥ १ ॥

ऋषिर्गुरुत्वाच्छिरसैव धार्य-
श्छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियावगन्तव्यतया सदैव
हृदि प्रदिष्टा मनुदेवता च ॥ २ ॥

ऋषिवर्णादिकौ धातू स्तो गत्या प्रापणेन च ।
यात्याभ्यां यत्स्वरूपं स गुरुः स्यादृषिवाचकः ॥ ३ ॥

इच्छादानार्थकौ धातू स्तश्छदाद्यश्च दादिकः ।
तयोरिच्छां ददातीति छन्दो मन्त्रार्णवाचकम् ॥ ४ ॥

आत्मनो देवताभावप्रधानाद्देवतेति च ।
पदं समस्तमन्त्रेषु विद्वद्भिः समुदीरितम् ॥ ५ ॥

हृदयशिरसोः शिखायां कवचाक्ष्यस्त्रेषु सह चतुर्थीषु ।
नत्याहुत्या च वषड्ढुं वौषट्फट्पदैः षडङ्गविधिः ॥ ६ ॥

हृदयं बुद्धिगम्यत्वात्प्रणामः स्यान्नमःपदम् ।
क्रियते हृदयेनातो बुद्धिगम्यनमस्क्रिया ॥ ७ ॥

तुङ्गार्थत्वाच्छिरः स्वे स्वे विषयाहरणे द्विठः ।
शिरोमन्त्रेण चोत्तुङ्गविषयाहृतिरीरिता ॥ ८ ॥

[1]शिखादेशसमुद्दिष्टा वषडित्यङ्गमुच्यते ।
तत्तेजोऽस्य तनुः प्रोक्ता शिखामन्त्रेण मन्त्रिणः ॥ ९ ॥

[2]कचग्रहण इत्यस्माद्धातोः कवचसंभवः ।
हुंतेजस्तेजसां देहो गृह्यते कवचं ततः ॥ १० ॥

नेत्रदृष्टिः समुद्दिष्टा वौषड् दर्शनमुच्यते ।
दर्शनं दृशि येन स्यात्तत्तेजो नेत्रवाचकम् ॥ ११ ॥

असुत्रसादिकौ धातू स्तः क्षेपचलनार्थकौ ।
ताभ्यामनिष्टमाक्षिप्य चालयेत्फट्पदाग्निना ॥ १२ ॥

प्रोक्तानीत्यङ्गमन्त्राणि सर्वमन्त्रेषु सूरिभिः ।
पञ्चैव यस्य मन्त्रस्य भवन्त्यङ्गानि मन्त्रिणः ॥ १३ ॥

---

1. शिखातेजः समुद्दिष्टा; 2. कवग्रहण.

सर्वेष्वपि च [1]मन्त्रेषु नेत्रलोपो विधीयते ।
अङ्गुलीषु क्रमादङ्गैरङ्गुष्ठादिषु विन्यसेत् ॥ १४ ॥

कनिष्ठान्तासु तद्बाह्यतलयोः करयोः सुधीः ।
अस्त्रेण तालत्रितयं कृत्वा तेनैव बन्धयेत् ॥ १५ ॥

दिशो दश क्रमादङ्गषट्कं वा पञ्चकं न्यसेत् ।
जपारम्भे मनूनां तु सामान्येयं प्रकल्पना ॥ १६ ॥

शङ्खं सगन्धपुष्पाक्षततोयं वामतः प्रविन्यस्य ।
साङ्गं मन्त्रं पूजामूर्तेर्न्यस्येद्गुरूपदेशेन ॥ १७ ॥

न्यस्येच्च दक्षभागे सुमनःपात्रं तथाभितो दीपान् ।
अन्यत्साधनमखिलं पुरतो गन्धाक्षतादिकं मन्त्री ॥ १८ ॥

प्रथमं निजसव्यतो यथाव-
त्प्रयजेद्देवमयान्महागुरून्स्वान् ।
गणनाथमन्यतश्च पाशा-
ङ्कुशदन्ताभयहस्तमुज्ज्वलाङ्गम् ॥ १९ ॥

रक्तं धर्मं वृषतनुमथाग्नौ हरिं श्यामवर्णं
ज्ञानं रक्षोदिशि मरुति पीतं च वैराग्यसंज्ञम् ।

---

1. तन्त्रेषु.

*P. 5

भूताकारं द्विरदतनुमैश्वर्यमीशे च कृष्णं
नञ्पूर्वैस्तैर्यजतु दिशि चित्राणि गात्राणि पीठे ॥ २० ॥

मध्येऽनन्तं पद्ममस्मिंश्च सूर्यं
सोमं वह्निं तारवर्णैर्विभक्तैः ।
सत्त्वादींश्च त्रीन्गुणानात्मयुक्ता-
ञ्शक्तिः किंजल्केषु मध्ये यजेच्च ॥ २१ ॥

श्वेता कृष्णा रक्ता
पीता श्यामानलोपमा[1] शुक्ला ।
अञ्जनजपासमाने
तेजोरूपाश्च शक्तयः प्रोक्ताः ॥ २२ ॥

विन्यस्य कर्णिकोपरि शाली-
स्तदुपरि च तण्डुलानि तथा ।
तेषामुपरि च दर्भा-
न्पूर्वोपरि कूर्चमक्षतोपेतम् ॥ २३ ॥

त्रिगुणेन च तन्तुरूपभाजा
परितोऽसौ परिवेष्टितं यथावत् ।

---

1. ...नवोपमा.

लघुनालघुधूपितं च कूर्चौ
परिकुम्भं निदधातु तारजापी ॥ २४ ॥

न्यस्य दर्भमयं कूर्चमक्षता-
द्यायुतं सनवरत्नकं घटे ।
पूरयेत्सह कषादिकान्तगै-
रक्षरौषधिविपाचितैर्जलैः ॥ २५ ॥

अथवा दशमूलपुष्पदुग्धा-
ङ्घ्रिपचर्मोत्कथितैः कषायतोयैः ।
स्तनजद्रुमचर्मसाधितैर्वा
सलिलैः संयतधीः शुभोदकैर्वा ॥ २६ ॥

शङ्खे कषायोदकपूरिते च
विलोड्य सम्यग्विधिना सगन्धम् ।
कलाः समावाह्य विनिक्षिपेत्त-
त्काथोदकापूर्णमुखे च कुम्भे ॥ २७ ॥

त्रिविधं गन्धाष्टकमपि
शाक्तेयं वैष्णवं च शैवमिति ।

गन्धाष्टकेन शक्तिः
स्यात्कलशे मन्त्रिणा कृतेऽनन्ता ॥ २८ ॥

चन्दनकर्पूरागरु-
कुङ्कुमकपिमांसिरोचनाचोराः ।
गन्धाष्टकमपि शक्तेः
सांनिध्यकरं च लोकरञ्जनकृत् ॥ २९ ॥

चन्दनह्रीबेरागरु-
कुष्ठासृगुशीरमांसिमुरमपरम् ।
चन्दनकर्पूरागरु-
दलरुधिरकुशीतरोगजलमपरम्[1] ॥ ३० ॥

अष्टत्रिंशत्प्रभेदेन याः कलाः प्रागुदीरिताः ।
गुरूपदेशक्रमतस्ता विद्वान्विनियोजयेत् ॥ ३१ ॥

याः पञ्चाशत्कलास्तारपञ्चभेदसमुत्थिताः ।
पञ्चपञ्चकसंभिन्ना विदुस्तास्तत्त्ववेदिनः ॥ ३२ ॥

सप्तात्मकस्य तारस्य परौ द्वौ तु वरौ यतः ।
ततस्तु शक्तिशान्ताख्यौ न पठ्येते परैः सह ॥ ३३ ॥

1. ...रोगजमपरम्.

प्रथमप्रकृतेर्हंसः प्रतद्विष्णुरनन्तरः ।
त्रियम्बकस्तृतीयः स्याच्चतुर्थस्तत्पदादिकः ॥ ३४ ॥

विष्णुर्योनिमथेत्यादिः पञ्चमः कल्प्यतां मनुः ।
चतुर्नवतिमन्त्रात्मदेवमावाह्य[1] पूर्यताम् ॥ ३५ ॥

अत्र याः पञ्च संप्रोक्ता ऋचस्तारस्य पञ्चभिः ।
कलाप्रभेदैश्च मिथो युज्यन्ते ताः पृथक्क्रमात् ॥ ३६ ॥

कुर्यात्प्राणप्रतिष्ठां च तत्र तत्र समाहितः ।
प्राणप्रतिष्ठामन्त्रेण पुनस्तोयं कलात्मकम् ।
उच्चारयन्मूलमन्त्रं कलशे संनिधापयेत् ॥ ३७ ॥

अश्वत्थचूतपनस-
स्तबकैः सुत्रामवल्लरीयुक्तैः ।
सुरतरुधिया पिधाय
कुम्भमुखं वेष्टयीत वासोभ्याम् ॥ ३८ ॥

पुनस्तोयगतं देवं साध्यमन्त्रानुरूपतः ।
सकलीकृत्य च गुरुरुपचारान्समाचरेत् ॥ ३९ ॥

---

1. ...देवतावाह्य.

आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ॥ ४० ॥

सुगन्धसुमनोधूपदीपनैवेद्यवन्दनान् ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ ४१ ॥

अर्घ्यपाद्याचमनकमधुपर्काचमान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥ ४२ ॥

गन्धादयो निवेद्यान्ता पूजा पञ्चोपचारिकी ।
सपर्यास्त्रिविधाः प्रोक्तास्तासामेकां समाश्रयेत् ॥ ४३ ॥

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥ ४४ ॥

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ।
जातीलवङ्गतक्कोलैर्मतमाचमनीयकम् ॥ ४५ ॥

मधुपर्कं च सक्षौद्रं दधि प्रोक्तं मनीषिभिः ।
शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ॥ ४६ ॥

चन्दनागरुकर्पूरपङ्कं गन्धमिहोच्यते ।
अथवा लघुकाश्मीरपटीरमृगनाभिजम् ॥ ४७ ॥

तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ ।
शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ॥ ४८ ॥

उत्पलानि च नीलानि कुमुदानि च मालती ।
मल्लिकाकुन्दमन्दारनन्द्यावर्तादिकानि च ॥ ४९ ॥

पलाशपाटलीपार्थपारन्त्यावर्तकानि च ।
चम्पकानि सनागानि रक्तमन्दारकानि च ॥ ५० ॥

अशोकोद्भवबिल्वाब्जकर्णिकारोद्भवानि च ।
सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि वै ॥ ५१ ॥

मुकुलैः पतितैर्म्लानैर्जीर्णैर्वा जन्तुदूषितैः ।
आघ्रातैरङ्गसंस्पृष्टैरुषितैश्चापि[1] नार्चयेत् ॥ ५२ ॥

सगुग्गुल्वगरूशीरसिताज्यमधुचन्दनैः ।
साराङ्गारविनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत् ॥ ५३ ॥

गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ।
दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदापयेत् ॥ ५४ ॥

सुसितेन सुशुद्धेन पायसेन[2] सुसर्पिषा ।
सितोपदंशकदलीदध्याद्यैश्च निवेदयेत् ॥ ५५ ॥

---

1. ...संस्पृष्टैः पर्युषितैश्च; 2. यायतेन.

वर्णैर्मनुप्रपुटितैः क्रमशः शतार्धै-
न्यार्सक्रमादभियजेत्सकलासु मन्त्री ।
गन्धादिभिः प्रथमतो मनुदेवतासु
त्रैलोक्यमोहनमिति प्रथितः प्रयोगः ॥ ५६ ॥

हृदयं सशिरस्तथा शिखाथो
कवचं चेत्यनलादिकाश्रिषु ।
पुरतो नयनं दिशां क्रमात्स्या-
त्पुनरस्त्रं च समर्पयेत्क्रमात् ॥ ५७ ॥

हारस्फटिककलाया-
ञ्जनपिङ्गलवह्निरोचिषो ललनाः ।
अभयवरोद्यतहस्ताः
प्रधानतनवोऽङ्गदेवताः कथिताः ॥ ५८ ॥

आदावङ्गावरणं
सकलविधानेषु पूजनीयं स्यात् ।
अन्ते च लोकपाला-
वृतिरथ कुलिशादिकान्तं वा ॥ ५९ ॥

इन्द्राग्नियमनिशाचर-
वरुणानिलशशिशिवाहिपतिविधयः ।
जात्यधिपहेतिवाहन-
परिवारान्ताः क्रमेण यष्टव्याः ॥ ६० ॥

पीतः पिङ्गः कृष्णो
धूमः शुक्लश्च धूम्रसितशुक्लाः ।
काशारुणाम्बुजाभा
लोकेशा वासवादयः प्रोक्ताः ॥ ६१ ॥

वज्रः सशक्तिदण्डः
खड्गः पाशाङ्कुशौ गदाशूले ।
रथचरणनलिनसंज्ञे
प्रोक्तान्यस्त्राणि लोकपालानाम् ॥ ६२ ॥

पीतहिमजलदगगना-
चिरप्रभारक्तकुन्दनीलरुचः ।
[1]करवन्दारुणवर्णाः
प्रोक्ताः स्युर्वर्णतोऽपि वज्राद्याः ॥ ६३ ॥

---

1. अरविन्दारुण...

कृते निवेद्ये च ततो मण्डलं परितः क्रमात् ।
मङ्गलाङ्कुरपत्राणि स्थापनीयानि मन्त्रिणा ॥ ६४ ॥

उपलिप्य कुण्डमत्र
स्वचरणयोग्या विलिख्य रेखाश्च ।
अभ्युक्ष्य प्रणवजपेन[1]
प्रकल्पयेद्योगविष्टरं मन्त्री ॥ ६५ ॥

अथवा षट्कोणावृत-
त्रिकोणके गुरुजनोपदेशेन ।
प्राणाग्निहोत्रविधिना-
प्यावसथीयाह्वयेऽनलस्थाने ॥ ६६ ॥

तत्राथो सद्दतुमतीमथेन्द्रियाभां
स्मृत्वा तां सकलजगन्मयीं च शक्तिम् ।
तद्योनौ मणिभवमारणेयकं वा
तारेण क्षिपतु गृहोत्थमेव वाग्निम् ॥ ६७ ॥

चितिपिङ्गलपदमुक्त्वा
हनदहपचयुग्मकानि सर्वज्ञम् ।

1. प्रणवजलेन.

आज्ञापयाग्निजाये
प्रभाष्य मनुनानलं ज्वलयेत् ॥ ६८ ॥

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥ ६९ ॥

अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्धुताशनम् ।
ततः प्रविन्यसेद्देहे जिह्वामन्त्रैर्विभावसोः ॥ ७० ॥

सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ।
सर्वाङ्गेषु च जिह्वाश्च वक्ष्यन्ते त्रिविधात्मकाः ॥ ७१ ॥

हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपातिरक्ता च जिह्वाः सप्तेति सात्त्विकाः ॥ ७२ ॥

पद्मरागा सुवर्णा च तृतीया भद्रलोहिता ।
लोहिताख्या तथा श्वेता धूम्रिणी सकरालिका ॥ ७३ ॥

राजस्यः कथिता ह्येताः क्रमात्कल्याणरेतसः ।
विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥ ७४ ॥

लोहिता च करालाख्या काली तामसजिह्विका ।
अनलेरार्घिबिन्द्वन्तसादिवान्ताक्षरान्विताः ॥ ७५ ॥

सात्त्विक्यो दिव्यपूजासु राजस्यः काम्यकर्मसु ।
तामस्यः क्रूरकार्येषु प्रयोक्तव्या विपश्चिता ॥ ७६ ॥

सुराः सपितृगन्धर्वयक्षनागपिशाचिकाः ।
राक्षसाश्च क्रमादग्नेराश्रिता रसनास्वमी ॥ ७७ ॥

जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये ।
जुहुयाद्वाञ्छितां सिद्धिं दद्युस्ता देवतामयाः ॥ ७८ ॥

स्वनामसदृशाकाराः प्रायो जिह्वा हविर्भुजः ।
मन्त्री प्रविन्यसेद्भूयो वह्नेरङ्गानि वै क्रमात् ॥ ७९ ॥

सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरिताः ॥ ८० ॥

अङ्गमन्त्राः क्रमादष्टमूर्तिश्चाथ प्रविन्यसेत् ।
मूर्धा सपार्श्वकट्यन्धुकटिपार्श्वांसकेषु च ॥ ८१ ॥

प्रादक्षिण्येन विन्यस्येद्यथावद्देशिकोत्तमः ।
जातवेदाः सप्तजिह्वो हव्यवाहन एव च ॥ ८२ ॥

अश्वोदरजसंज्ञश्च स वैश्वानर एव च ।
कौमारतेजाश्च तथा [1]विश्वेदेवमुखाह्वयौ ॥ ८३ ॥

---

1. विश्वदेवमुखाह्वयौ.

स्युरष्टमूर्तयो वह्नेरग्नये पदपूर्विकाः ।
प्रणवादिनमोऽन्ताश्च पुनर्दर्भचतुष्टयैः ॥ ८४ ॥

दिक्क्रमात्संपरिस्तीर्य सम्यग्गन्धादिभिर्यजेत् ।
मध्ये च कोणषट्के च जिह्वाभिः केसरेषु च ॥ ८५ ॥

अङ्गमन्त्रैस्ततो बाह्ये अष्टाभिर्मूर्तिभिः क्रमात् ।
ततोऽग्निमनुनानेन मन्त्री मध्ये च संयजेत् ॥ ८६ ॥

वैश्वानरं जातवेदमुक्त्वा चेहावहेति च ।
लोहिताक्षपदं सर्वकर्माणीति समीरयेत् ।
ब्रूयाच्च साधयेत्यन्ते वह्निजायान्तिको मनुः ॥ ८७ ॥

त्रिणयनमरुणाब्जबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालंकृतांसं कृशानुम् ॥ ८८ ॥

जिह्वा ज्वालारुचः प्रोक्ता वराभययुतानि च ।
अङ्गानि मूर्तयः शक्तिस्वस्तिकोद्यतदोर्द्वयाः ॥ ८९ ॥

संस्कृतेन घृतेनाभिद्योतनोद्योतितेन[1] च ।
व्याहृत्यनन्तरं तेन जुहुयान्मनुना त्रिशः ॥ ९० ॥

---

1. अभिद्योतितोद्योतितेन.

गर्भाधानादिका वह्नेः समुद्वाहावसानिकाः ।
क्रियास्तारेण वै कुर्यादाज्याहुत्यष्टकैः पृथक् ॥ ९१ ॥

जिह्वाङ्गमूर्तिमनुभिरेकावृत्या हुनेत्तथा ।
जिह्वायां मध्यसंस्थायां मन्त्री ज्वालावली तनौ ॥ ९२ ॥

[1]ताराद्यैर्दशभिर्भेदैः पूर्वैः पूर्वैः समन्वितः ।
मनुना गाणपत्येन [2]हुनेत्पूर्वं दशाहुतीः ॥ ९३ ॥

जुहुयाच्च चतुर्वारं समस्तेनैव तेन तु ।
आज्येन संध्यमनुना पञ्चविंशतिसंख्यकम् ॥ ९४ ॥

जुहुयात्सर्वहोमेषु[3] सुधीरनलतृप्तये ।
तान्त्रिकाणामयं न्यायो हुतानां समुदीरितः ॥ ९५ ॥

पुनः साध्येन मनुना हुनेदष्टसहस्रकम् ।
अथवाष्टशतं सर्पिः संयुक्तेन पयोन्धसा ॥ ९६ ॥

द्रव्यैर्विधानप्रोक्तैर्वा महाव्याहृतिपश्चिमम् ।
पुनः समापयेद्धोमं परिषेकावसानिकम् ॥ ९७ ॥

भूर्भुवःस्वर्भूर्भुवस्वःपूर्वं स्वाहान्तमेव च ।
अग्नये च पृथिव्यै च महते च समन्वितम् ॥ ९८ ॥

---

1. ताराभिर्दशभिः प्रोक्तैः; 2. जुहुयात्; 3. जुहुयात्सर्वधर्मेषु.

वायवे चान्तरिक्षाय महते च समन्वितम् ।
आदित्याय च दिवे च महते च समन्वितम् ॥ ९९ ॥

चन्द्रमसे च दिग्भ्यश्च महते च समन्वितम् ।
महाव्याहृतयस्त्वेताः सर्वशो देवतामयाः ॥ १०० ॥

ब्रह्मार्पणाख्यमनुना पुनरष्टावथाहुतीः ।
जुहुयान्मन्त्रवर्येण कर्मबन्धविमुक्तये ॥ १०१ ॥

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ।
जाग्रत्स्वप्नसुषुप्तीनामन्तेऽवस्थास्वितीरयेत् ॥ १०२ ॥

ततश्च मनसा वाचा कर्मणेति प्रभाषयेत् ।
हस्ताभ्यां च तथा पद्भ्यामुदरेण तु भाषयेत् ॥ १०३ ॥

शिश्ना च यत्कृतं प्रोक्त्वा यदुक्तं यत्स्मृतं तथा ।
तत्सर्वमिति संभाष्य ब्रह्मार्पणपदं वदेत् ॥ १०४ ॥

भवत्वन्ते द्विठश्चायं ब्रह्मार्पणमनुर्मतः ।
हुते तु देशिकः पश्चान्मण्डले बलिमारभेत् ॥ १०५ ॥

नक्षत्राणां सराशीनां सवाराणां यथाक्रमम् ।
दद्याद्बलिं गन्धपुष्पधूपपूर्वकमादरात् ॥ १०६ ॥

ताराणामश्विनादीनां राशीः पादाधिकद्वयम् ।
मेषादिमुक्त्वा नक्षत्रसंज्ञां पूर्वमनन्तरम् ॥ १०७ ॥

देवताभ्यः पदं प्रोक्त्वा दिवानक्तपदं तथा ।
चारिभ्यश्चाथ सर्वेभ्यो भूतेभ्यश्च नमो वदेत् ॥ १०८ ॥

एवं राशौ तु संपूर्णे तस्मिंस्तद्वत्प्रयोजयेत् ।
तथा राश्यधिपानां च ग्रहाणां तत्र तत्र तु ॥ १०९ ॥

सप्तानां करणानां च दद्यान्मीनाह्वमेषयोः ।
अन्तराले बलिस्त्वेवं संप्रोक्तः कलशात्मकः ॥ ११० ॥

पुनर्निवेद्यमुद्धृत्य पुरोवत्परिपूज्य च ।
मुखवासादिकं दत्त्वा स्तुत्या तद्युक्तया पुनः ।
स्तुत्वा यथावत्प्रणमेद्भक्तियुक्तस्तु साधकः ॥ १११ ॥

दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥ ११२ ॥

बाहुभ्यां च सजानुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात्पूजासु प्रवराविमौ ॥ ११३ ॥

गुर्वाद्यास्तारादिका यागमन्त्रा
लोकेशान्तास्ते चतुर्थीनमोऽन्ताः ।

पूजायामप्यग्निकार्ये द्विठान्ता
 बीजैः पूजा स्याद्विभक्त्या वियुक्तैः ॥ ११४ ॥

वाससी च पुनरङ्गुलिभूषां
 होमकृत्सु मुखजप्रवरेषु ।
ईश्वरार्पणमिति प्रतिदत्त्वा
 वर्धितो द्विजमुखेरितवाग्भिः ॥ ११५ ॥

नत्त्वा ततस्तनुभृते परमात्मने स्वं
 द्रव्यार्धमेव गुरवे चतुरंशकं वा ।
दत्त्वा दशांशमथवापि च वित्तशाठ्यं
 हित्वार्पयेन्निजतनुं तदधीनचेताः ॥ ११६ ॥

अथ पटुरवमुख्यवाद्यघोषै-
 र्द्विजमुखनिष्पतदाशिषां रवेण ।
सुनियतमपि सुस्थितं च शिष्यं
 कलशजलैरभिषेचयेद्यथावत् ॥ ११७ ॥

यथा पुरा पूरितमक्षरैर्घटैः
 सुधामयैः शिष्यतनौ तथैव तैः ।

प्रपूरयन्मन्त्रवरोऽभिषेचये-
दवाप्तये मङ्क्षु यथेष्टसंपदाम् ॥ ११८ ॥

विमले परिधाय वाससी
पुनराचम्य गुरुं प्रणम्य च ।
निकटे समुपासतो वदे-
दथ शिष्यस्य मनुं त्रिशो गुरुः ॥ ११९ ॥

गुरुणा समनुगृहीतं
मन्त्रं सद्यो जपेच्छतावृत्त्या ।
गुरुदेवतामनूना-
मैक्यं संभावयन्धिया शिष्यः ॥ १२० ॥

मन्त्रे मन्त्रगुरावपि
मन्त्री मन्त्रस्य देवतायां च ।
त्रिषु विहितसततभक्तिः
प्रेत्येह निजेप्सितं फलं लभते ॥ १२१ ॥

संक्षेपादिति गदिता हिताय दीक्षा
जन्तूनां प्रवरफलप्रदा चिराय ।

प्राप्यैनां जपविधिरादरेण कार्यो
विद्वद्भिः सहुतविधिं निजेष्टसिद्ध्यै ॥ १२२ ॥

प्रोक्तेनैवं कलशविधिनैकेन वानेककुम्भै-
र्भक्त्या यो वा सुमतिरभिषिञ्चेन्नरो मन्त्रजापी ।
कामान्प्राप्नोत्ययमिह परत्रापि किं तत्र चित्रं
लोकैश्चिन्त्यो न खलु मणिमन्त्रौषधीनां प्रभावः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे षष्ठः पटलः ॥**

## सप्तमः पटलः ॥

अथाक्षराणामधिदेवतायाः
समस्तबोधस्थितिदीपिकायाः ।
अशेषदुःखप्रशमाय नृणां
वक्ष्येऽजपादेः प्रवरं विधानम् ॥ १ ॥

ब्रह्मा स्यादृषिरीरितः सुमतिभिर्गायत्रमुक्तं च त-
च्छन्दस्त्वेऽपि सरस्वती निगदिता तन्त्रेषु तद्देवता ।
आद्यन्तस्वरषट्कलघ्वपरयोरन्तस्थितैः कादिभि-
र्वर्गैर्यान्तगतैः क्रमेण कथितान्यस्याः षडङ्गानि च ॥२॥

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां[1] भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥३॥

---

1. देहां.

कानननवृत्तद्वयक्षि
श्रुतिनोगण्डोष्ठदन्तमूर्धास्ये ।
दोःपत्संध्यग्रेषु च
पार्श्वद्वयपृष्ठनाभिजठरेषु ॥ ४ ॥

हृद्दोर्मूलापरगल-
कक्षेषु हृदादिपाणिपादयुगे ।
जठराननयोर्व्यापक-
संज्ञा न्यस्येदथाक्षरान्क्रमशः ॥ ५ ॥

संदीक्षितो विमलधीर्गुरुणानुशिष्टो
लक्षं न्यसेत्सुनियतः प्रजपेच्च तावत् ।
अन्ते हुतं प्रतिहुनेन्मधुरत्रयाक्तैः
शुद्धैस्तिलैरभियजेद्दिनशोऽक्षरेशीम् ॥ ६ ॥

व्योमाविः स चतुर्दशस्वरविसर्गार्णस्फुरत्कर्णिकं
किञ्जल्कालिखितस्वरं प्रतिदलप्रारब्धवर्गाष्टकम् ।
क्ष्माबिम्बेन च सप्तमार्णवयुजाश्राशासु संवेष्टितं
वर्णाब्जं शिरसि स्मृतं विषगदप्रध्वंसि मृत्युंजयम् ॥ ७ ॥

प्रविधाय पद्ममिति पीठमथो
कथितक्रमेण विधिनाभियजेत् ।
नवभिश्च शक्तिभिरमुत्र समा-
वरणैः समर्चयतु वर्णतनुम् ॥ ८ ॥

मेधा प्रज्ञा प्रभा विद्या
धीर्धृतिस्मृतिबुद्धयः ।
विद्येश्वरीति संप्रोक्ता
भारत्या नव शक्तयः ॥ ९ ॥

अङ्गान्यादौ तदनु च कलायुग्मशश्चाष्टवर्गा-
न्ब्रह्माण्यादीञ्छतमखमुखानप्यथो लोकपालान् ।
मुख्यैर्गन्धैः प्रवरकुसुमैर्धूपदीपैर्निवेद्यै-
र्वर्णाश्चापी यजतु दिनशो भारतीं भक्तिनम्रः ॥ १० ॥

ब्रह्माणी माहेशी
कौमारी वैष्णवी च वाराही ।
इन्द्राणी चामुण्डी
समहालक्ष्मीति मातरः प्रोक्ताः ॥ ११ ॥

वर्गस्वरयाद्यंशाः
क्रमेण कलधौतरजतताम्राः स्युः ।
इति रचितं रुचकमिदं
साधकसर्वार्थदायि सततं स्यात् ॥ १२ ॥

त्रिवारमम्भः परिजप्तमेतया
पिबेद्दिनादावपि विद्यया सुधीः ।
अनेडमूकोऽपि कवित्वगर्वितः
परां च कीर्तिं लभतेऽर्कमासतः ॥ १३ ॥

कमलोद्भवौषधिरसेव च या
पयसा च पक्वमथ सर्पिरपि ।
अयुताभिजप्तममुना दिनशो
लिहतां कविर्भवति वत्सरतः ॥ १४ ॥

वर्णौषध्याश्रिताभिः कलशममलधीरद्भिरापूरयित्वा
प्रातस्तेनाभिषिञ्चेद्दशशतपरिजप्तेन यं वापि मासम् ।
स स्यान्मेधेन्दिरायुःप्रशमकवियशो विश्वसंवादयुक्तो
नारी वन्ध्यापि नानागुणगणनिलयं पुत्रवर्यं प्रसूते ॥१५॥

आधारोद्यच्छक्तिबिन्दूत्थिताया
वक्त्रे मूर्धेन्दुप्रसन्त्याः प्रभायाः ।
क्षाद्यान्तार्णान्पातयेद्वह्निसोम-
प्रोतान्मन्त्री मुच्यते रोगजातैः ॥ १६ ॥

विन्यासैरथ सजपैर्हुताशनाद्यै-
र्ध्यानैश्च प्रभजति भारतीं नरो यः ।
स श्रीमान्भवति च मङ्क्षु काव्यकर्ता
क्ष्वेलादीञ्जयति जरापमृत्युरोगान् ॥ १७ ॥

कलाः कलानादभवा वदन्त्यजाः
कचादिवर्णानुभवाष्टतादिकान् ।
पयादिकान्माक्षरजाश्च बिन्दुजाः
क्रमादनन्तावधिकास्तु षादिकान् ॥ १८ ॥

कुर्यात्कलाभिराभि-
र्मन्त्री दिनशस्तनौ तथा न्यासम् ।
सांनिध्यकृत्समर्थः
प्रतिमाकलशादिषु प्रविज्ञेयः ॥ १९ ॥

मन्त्रोद्धारविधाने
वर्णव्यत्यासक्लृप्तिरुद्दिष्टा ।
आभिः श्रीकण्ठादि-
प्रोक्तैर्वा नामभिर्विशेषज्ञैः ॥ २० ॥

अष्टाक्षरोक्तमनुवर्यविशिष्टमूर्ति
संस्मृत्य विष्णुमपि मन्त्रितमो यथावत् ।
वर्णैर्न्यसेदपि पुरैव च केशवादि-
मूर्त्या युतैर्वपुषि भक्तिभरावनम्रः ॥ २१ ॥

रुद्रादीञ्छक्तियुतान्न्यस्ये-
द्याद्यांस्त्वगादिधातुयुगान् ।
श्रीकण्ठादौ विद्वा-
न्वर्णान्प्राग्बीजसंयुतान्वापि ॥ २२ ॥

सिन्दूरकाञ्चनसमोभयभागमर्ध-
नारीश्वरं गिरिसुताहरभूषचिह्नम् ।
पाशाभयाक्षवलयेष्टदहस्तमेवं
स्मृत्वा न्यसेत्सकलवाञ्छितवस्तुसिद्ध्यै ॥ २३ ॥

शक्त्या शक्तिश्रीभ्यां
　　शक्तिश्रीक्लीभिरन्वितैर्वर्णैः ।
श्रीशक्तियुगशराद्यै-
　　रथवाभिहितः समृद्धये न्यासः ॥ २४ ॥

अथानया पञ्चविभेदभिन्नया
　　प्रपञ्चयागस्य विधिः प्रवक्ष्यते ।
कृते तु यस्मिन्निह साधकोत्तमाः
　　प्रयान्ति निर्वाणपदं तदव्ययम् ॥ २५ ॥

पूर्वं महागणपतिं स्वविधानसिद्ध-
　　रूपं च साङ्गमपि सावरणं विचिन्त्य ।
बीजेन संयुतमृचा प्रजपेत[1] माला-
　　मन्त्रं निजेष्टविधयेऽवहितो यथावत् ॥ २६ ॥

स चतुश्चत्वारिंश-
　　द्वारं बीजं तथैकवारमृचम् ।
प्रजपेच्चतुरावृत्त्या
　　मालापूर्वं मनुं च मन्त्रितमः ॥ २७ ॥

---

1. प्रजपेन.

स मुनिश्छन्दोदैवत-
मपि साङ्गं मातृकां च विन्यस्येत् ।
प्रागभिहितेन विधिना
वारत्रितयं गृहांश्च सप्त तथा ॥ २८ ॥

वदने च बाहुपाद-
द्वितये जठरे च वक्षसि यथावत् ।
अर्काद्यान्विन्यस्ये-
त्क्रमेण मन्त्री स्वरादिवर्गेशान् ॥ २९ ॥

तारश्च शक्तिरजपा परमात्मबीजं
वह्नेःप्रिया च गदिता इति पञ्चमन्त्राः ।
एभिस्त्रितीयलिपिभिः कथितः प्रपञ्च-
यागाह्वयो हुतविधिः सकलार्थदायी ॥ ३० ॥

ब्रह्मा स्यादृषिरस्य
च्छन्दः परमान्विता च गायत्री ।
सकलपदार्थसदर्थे
परिपूर्णं देवता परंज्योतिः ॥ ३१ ॥

जायाग्नेर्हृदयमथो शिरश्च सोऽहं
हंसात्मा त्वथ च शिखा स्वयं च वर्म ।
ताराख्यं स्वमुदितमीक्षणं तथास्त्रं
प्रोक्तं स्याद्धरिहरवर्णमङ्गमेवम् ॥ ३२ ॥

अत्राकारहकाराद्यावाद्यौ शान्तान्त्यकौ मनू ।
हकारश्चाप्यकारश्च बिन्दुः सर्गी च साक्षरः ॥ ३३ ॥

साकारश्चात्ममन्त्रः षडिन्द्रियात्मक उच्यते ।
सकारौकारहकारा बिन्दुः पञ्चार्णको मनुः ॥ ३४ ॥

करणात्मसमायुक्तः परमात्माह्वयो मनुः ।
स्वाकारैर्हृदीर्घाभ्यां वह्निजायामनुर्मतः ।
वागादीन्द्रियसंभिन्नः सोऽयं पञ्चाक्षरात्मकः ॥ ३५ ॥

ब्रह्मा बृहत्तया स्या-
त्परमपदेन प्रकाशितः प्रवरः ।
गायकसंत्राणनतो
गायत्रं समुनिनिगदितं छन्दः ॥ ३६ ॥

परमन्यदतिशयं वा
ज्योतिस्तेजो निरूपितेऽन्यद्यत् ।

अतिशायि च नितरामिति
कथितैवं देवता परंज्योतिः ॥ ३७ ॥

स्वेति स्वर्गः स्वेति चात्मा समुक्तो
हेत्याहुतिर्हेति विद्याद्गतिं च ।
स्वर्गात्मावध्यातता धामशाखा[1]
वह्नेर्जाया यत्र हूयेत सर्वम् ॥ ३८ ॥

स इति परततं परं तु तेज-
स्त्वहमिति मय्युदिते मनोऽस्य यत्र ।
तदिति सकलचित्प्रकाशरूपं
कथितमिदं शिरसोऽपि मन्त्रमेवम् ॥ ३९ ॥

हमिति प्रकाशितोऽहं
स इति च सकलप्रकाशनिर्वाणम् ।
अतुलमनुष्णमशीतं
यत्तदितीत्थं प्रकाशितेह शिखा ॥ ४० ॥

प्रतिमध्य गुणत्रयानुबद्धं
सकलं स्थावरजङ्गमाभिपूर्णम् ।

1. स्वस्वर्गात्मास्याततधामशाखा.

स्वगुणैर्निजबिन्दुसन्ततात्मा-
खिललोकस्थितिवर्ममन्त्रमुक्तम् ॥ ४१ ॥

आद्यैस्त्रिभेदैस्तपनान्तिकैर्य-
त्सृजत्यजस्रं जगतोऽस्य भावम् ।
तेजस्तदेतन्मनुवर्यकस्य
नेत्रत्रयं सन्त उदाहरन्ति ॥ ४२ ॥

हुंकाराख्या धातु-
र्हरणार्थे साधकानभीष्टानि ।
संहरतीह यदेत-
त्तेजोरूपं तदस्त्रमन्त्रं स्यात् ॥ ४३ ॥

यदा लिपिविहीनोऽयं तदात्माष्टाक्षरः स्मृतः ।
एतत्सर्वप्रपञ्चस्य मूलमष्टाक्षरं स्मृतम् ॥ ४४ ॥

प्रपञ्चयागस्त्वमुना कृतो न्यासविधिः स्मृतः ।
वर्णैर्देहेऽनले द्रव्यैः कुर्याद्धुतविधिं द्विधा ॥ ४५ ॥

मातृकान्यासवत्सार्थं लिपिनाष्टाक्षरेण तु ।
नित्यं न्यसेत्संयतात्मा पञ्चाशद्वारमुत्तमम् ॥ ४६ ॥

पञ्चज्ञानेन्द्रियाबद्धाः सर्वास्तु लिपयो मताः ।
नाभिराराात्तनं सर्वं तत्तदिन्द्रियगोचरम् ॥ ४७ ॥

मर्तव्याशेषलोकान्तर्वर्ति यत्तेज ऐश्वरम् ।
ाह्माग्नौ जुहुयात्तस्मिन्सदा सर्वत्र वर्तिनि ॥ ४८ ॥

ाह्मात्मभिर्महामन्त्रैर्ब्रह्मविद्भिः समाहितैः ।
ाह्माग्नौ ब्रह्महविषा हुतं ब्रह्मार्पणं स्मृतम् ॥ ४९ ॥

वं वर्णविभेदभिन्नमदृढं मांसान्त्रमज्जावृतं
देहं तत्क्षरमक्षरे सुविशदे सर्वत्र वर्तिन्यथ ।
त्वा ब्रह्महुताशने विमलधीस्तेजःस्वरूपी स्वयं
भूत्वा सर्वमनुं जपेदभियजेद्ध्यायेत्तथा तर्पयेत् ॥५०॥

ुद्धश्चापि सबिन्दुकस्त्वथ कलायुक्केशवाद्यस्तथा
श्रीकण्ठादियुतश्च शक्तिकमलामारैस्तथैकैकशः ।
यासास्ते दशधा पृथङ् निगदिताः स्युर्ब्रह्मयागान्तिकाः
सर्वे साधकसिद्धिसाधनविधौ संकल्पकल्पद्रुमाः ॥

प्रपञ्चयागस्तु विशेषतो विप-
त्प्रपञ्चसंसारविशेषयापकः ।

परश्च नित्यं भजतामयत्नतः
परस्य चार्थस्य निवेदकस्तथा ॥ ५२ ॥

द्रव्यैर्यथा यैः क्रियते प्रपञ्च-
यागक्रिया तानि तथैव संपत् ।
यास्वप्यवस्थासु च ताश्च कृत्वा
प्राप्नोति यत्तत्कथयामि सर्वम् ॥ ५३ ॥

प्रोक्तक्रमेण विघ्ना-
दिकमपि हुत्वा क्रमेण मन्त्रितमः ।
एकावृत्त्या जुहुया-
त्प्रपञ्चयागाह्वयं घृतेन ततः ॥ ५४ ॥

अश्वत्थोदुम्बरजाः
प्लक्षन्यग्रोधसंभवाः समिधः ।
तिलसर्षपदौग्धघृता-
न्यष्ट द्रव्याणि संप्रदिष्टानि ॥ ५५ ॥

एतैर्जुहोति नियुताधिकलक्षसंख्यं
मन्त्री ततोऽर्धमथवापि तदर्धकं यः ।

स त्वैहिकीं सकलसिद्धिमवाप्य वाञ्छा-
योग्यां [1]पुनः परतरां च परत्र याति ॥ ५६ ॥

एकद्विकत्रिकचतुष्कशताभिवृत्त्या
तांस्तान्समीक्ष्य विकृतिं प्रजुहोतु मन्त्री ।
क्षुद्रग्रहारिविषमज्वरभूतयक्ष-
रक्षःपिशाचजनिते महति प्रकोपे ॥ ५७ ॥

द्वादशसहस्रमथवा
तद्द्विगुणं वा चतुर्गुणं वाथ ।
जुहुयात्क्षुद्रग्रहरिपु-
विषमज्वरभूतसंभवे कोपे ॥ ५८ ॥

अयथाप्रतिपत्तिमन्त्रकाणां
प्रजपात्स्यादिह विस्मृतिर्नराणाम् ।
शमयेदचिरात्सहस्रवृत्त्या
मतिमान्वस्तुभिरेभिरेव जुह्वन् ॥ ५९ ॥

---

1. पदं परतरं.

*P. 7

एतैः सहस्रद्वितयाभिवृत्त्या
 जुहोति यस्तु क्रमशो यथावत् ।
जयेत्क्षणेनैव स विस्मृतीश्च
 सापस्मृतीः शापभवांश्च दोषान् ॥ ६० ॥

मधुरत्रयावसिक्तै-
 रेतैर्लक्षं जुहोति यो मन्त्री ।
तस्य सुराधिपविभवो
 महदृद्ध्या तृणलवायते नाचिरात् ॥ ६१ ॥

लक्षं तदर्धकं वा
 मधुरत्रयसंयुतैर्हुनेदेतैः ।
अब्दत्रयादथार्वा-
 क्त्रिभुवनमखिलं वशे कुरुते ॥ ६२ ॥

वश्यादीन्यपि कर्मा-
 ण्यभिकाङ्क्षन्नेभिरेव सद्द्रव्यैः ।
जुहुयात्कार्ये गुरुता-
 लाघवमभिवीक्ष्य योग्यपरिमाणम् ॥ ६३ ॥

लक्षं तिलानां जुहुयाद्यवानां
शान्त्यै श्रियेऽथो नलिनैश्च तावत् ।
दौग्ध्येन पुष्ट्यै यशसे घृतेन
वश्याय जातीकुसुमैश्च लोणैः ॥ ६४ ॥

शालीतण्डुलचूर्णकैस्त्रिमधुरासिक्तैः स्वसाध्याकृतिं
कृत्वाष्टोर्ध्वशताख्यमस्य शितधीः प्राणान्प्रतिष्ठाप्य च ।
न्यासोक्तक्रमतो निशासु जुहुयात्तां सप्तरात्रं नरो
नारीं वा वशमेति मङ्क्षु विधिना तेनैव लोणेन वा ॥

पञ्चाशदौषधिविपाचितपञ्चगव्य-
जाते घृतेन शतवृत्ति हुनेद्धुटाग्नौ ।
तावत्प्रजप्य विधिनाभिसमर्च्य सिद्धं
भस्माददीत सकलाभ्युदयावहं तत् ॥ ६६ ॥

अनुदिनमनुलिंम्पेत्तेन किंचित्समद्या-
त्तिलकमपि विदध्यादुत्तमाङ्गे क्षिपेच्च ।
अनुततदुरितापस्मारभूतापमृत्यु-
ग्रहविषरहितः स्यात्प्रीयते च प्रजाभिः ॥ ६७ ॥

एकादशार्धकणिकां वरकाञ्चनस्य
दद्यात्तदैव गुरवेऽथ सहस्रहोमे ।
अर्धोर्ध्वपञ्चकणिका द्विकणा च सार्धा
स्याद्दक्षिणेह कथिता मुनिभिस्त्रिधैव ॥ ६८ ॥

निजेप्सितं दिव्यजनैः सुरद्रुमा-
त्समस्तमेव प्रतिलभ्यते यथा ।
प्रपञ्चयागादपि साधकैस्तथा
करप्रचेयाः सकलार्थसंपदः ॥ ६९ ॥

अथ हितविधये विदुषां
वक्ष्ये प्राणाग्निहोत्रविहितविधिम् ।
बद्ध्वा पद्मासनमृजु-
कायो मन्त्री विशेत्पुरोवदनः ॥ ७० ॥

शक्तेः सत्त्वनिबद्धमध्यमथ तन्मायारजोवेष्टितं
प्राग्रक्षोऽनिलदिग्गताश्रजठरं मध्ये च नाभेरधः ।
मध्यप्राग्वरुणेन्द्रयाम्यलसितैः कुण्डैर्ज्वलद्वह्निभिः
मूलाधारमनारतं समतलं योगी स्मरेत्सिद्धये ॥ ७१ ॥

मध्येन्द्रवरुणशशियम-
दिग्गतानि क्रमेण कुण्डानि ।
आवसथजसभ्याहवनी-
यान्वाहार्यगार्हपत्यानि ॥ ७२ ॥

चिद्रूपात्सकलप्रभाप्रभवकान्मूलप्रकृत्यात्मनः
कल्पार्कात्प्रतिलोमतोऽमृतमयीं ज्योतीरुचाच्छां धिया ।
स्पृष्टामक्षरमालिकां तु जुहुयात्कुण्डेषु तेषु क्रमा-
त्कल्पान्ताग्निशिखास्फुरत्कुहरकेष्वास्रावितां[1] वर्णशः ॥

क्षाद्यास्ते सप्तवर्गा मरकतपशुमेदाह्वनीलाभवर्णा
भूयः स्युर्विद्रुमाभाः कुलिशसमरुचः पुष्यवैडूर्यभासः ।
सर्वे ते पञ्चशोभी स्रवदमृतमया व्यापकाः स्पर्शसंज्ञा
मुक्तामाणिक्यरूपाः सुमतिभिरुदिताश्चाष्टशः स्युः स्वराख्यः ॥

एतानि केतोरमृताकरारे
र्मन्दस्य रक्तस्य च भार्गवस्य ।
गुरुज्ञसोमांशुमतां क्रमेण
नवानि रत्नानि विदुर्नवानाम् ॥ ७५ ॥

1. ...आश्रावितां.

इत्येवं हुतविधिमन्वहं दिनादौ
ये सम्यग्विदधति मन्त्रिणः शतार्धम् ।
ते रत्नैरपि कनकांशुकैः सधान्यैः
संपन्नाः सकलजगत्प्रिया भवन्ति ॥ ७६ ॥

अन्त्यशवर्गान्त्यासे[1]
वामश्रवणान्यथावसथजाते ।
असितपवर्गचतुर्थी-
सूक्ष्माः[2] सभ्याह्वये च सश्रोत्राः[3] ॥ ७७ ॥

इलयुतवर्गतृतीयौ
पराः सशान्तीश्च पश्चिमे वह्नौ ।
भृगुरेफफादिपञ्चक-
सद्यातिथिलोचनानि सव्येऽग्नौ ॥ ७८ ॥

मज्जात्वग्वर्गादिक-
भौतिकभाराह्वयप्रतिष्ठांश्च ।
गार्हपत्ये जुहुया-
दित्युक्तं होमकर्मवर्णानाम् ॥ ७९ ॥

---

1. अन्त्यशवर्गान्त्यासो; 2. सूक्ष्मान्; 3. सश्रोत्रान्.

व्योम्नो मध्ये स्थितेऽग्नावखिलमविरतं शब्दमैन्द्रेऽनिलेन
स्पर्शं स्वेनैव रूपं पुनरपरभवे सौम्यजेऽब्धौ रसं च ।
याम्ये गन्धं पृथिव्योभयरुचिरुचिरैरक्षरौघैर्हुनेद्यो[1]
मन्त्री स्यात्सर्ववेद्यप्रतिमथनसमुद्भासितप्रत्यगात्मा ॥

सतारशक्त्याद्यजपान्तमेवं
हुत्वा महात्माथ शतार्धसंख्यम् ।
विन्यस्य तावच्च तथैव सूत्र-
मात्राकृतिर्नित्यतनुश्च भूयात् ॥ ८१ ॥

कल्पादित्यमुखस्वमूलविलसत्कल्पानलान्तस्फुर-
च्चन्द्रार्कग्रहकालभूतभुवनब्रह्मेशविष्णवादिकः ।
अव्यक्तोऽक्षरसंज्ञकोऽमृतमयस्तेजोद्वयोद्यत्प्रभो
नित्यानन्दमयस्त्वनादिनिधनो यः स्यात्स हंसात्मकः ॥

अनुदिनममुना भजतां
विधिनाहारक्रियासु मन्त्रविदाम् ।
प्राणाद्याः स्युर्मरुतो
गार्हपत्यादिकानि कुण्डानि ॥ ८३ ॥

1. ...रुचिरैष्वक्षरौघै...

सप्तम्यन्तां च कुण्डाख्यामाख्यां च मरुतामपि ।
हिरण्या गगना रक्ता कृष्णाभिर्वर्णमीरयेत् ॥ ८४ ।

सुप्रभाभिः सहिताः शुचयः पावका इति ।
अग्निं विहृत्य चेत्येवमात्मानमुपचर्य च ॥ ८५ ॥

ऊर्ध्वाधस्तिर्यगूर्ध्वाधस्तिर्यक्समथो वदेत् ।
गच्छतूक्त्वा ठयुग्मं च पञ्चाग्नीन्संस्मरेत्ततः ॥ ॥ ८६ ॥

हुताहुतिसमुद्दीप्तशिखासंयुक्तरोचिषः ।
गार्हपत्यादिकं भूय उपचर्यान्तमेव च ॥ ८७ ॥

मन्त्रं सर्वमनुक्रम्य जिह्वाः संस्मृत्य सर्वशः ।
बहुरूपां तु संकल्प्य पञ्चानलशिखायुताम् ॥ ८८ ॥

अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधम् ।
पचाम्येवं विधानेनेत्यापूर्णं संयतेन्द्रियः ॥ ८९ ॥

तूष्णीं हुत्वा पिधायाद्भिरुपस्पृश्य विधानतः ।
आरभ्य मूलाधारं स्वमामस्तकमनुस्मरेत् ॥ ९० ॥

क्षेत्रज्ञसंज्ञकममुं प्रकृतिस्थमाद्यं
व्याप्तद्विसप्तभुवनान्तमनन्तमेकम् ।
पञ्चाननाग्निरसनापरिदत्तशुद्ध-
सांनाय्यतर्पितमतर्कितमात्मरूपम् ॥ ९१ ॥

संचिन्त्य क्षुरितामृताक्षरशतार्धाम्भोऽवसिक्तं हवि-
स्तैर्जप्त्वा कुटिलान्तराधिरधिकं संदीप्तपञ्चानलः ।
सायंप्रातरनेन होमविधिना भोज्यानि नित्यं भज-
न्प्राणी न प्रमदोदरं प्रविशति प्राणाग्निहोत्री पुनः ॥ ९२ ॥

इति तव सषडङ्गवेदशास्त्रा-
द्युपहितसर्वविकारसंघमाहुः ।
तनुरियमुदिता विरिञ्चविश्व-
स्थितिलयसृष्टिकरीह वर्णमाला ॥ ९३ ॥

इति जगदनुषक्तां तामिमां वर्णमालां
न्यसत जपत भक्त्या जुहुताभ्यर्चयीत ।
निरुपमकवितायुःकीर्तिकान्तीन्दिराप्त्यै
सकलदुरितरोगोच्छित्तये मुक्तये च ॥ ९४ ॥

इतीरिता सकलजगत्प्रभाविनी
क्रमोत्क्रमक्रमगुणितार्णमालिका ।
अभीष्टसाधनविषये च मन्त्रिणां
भवेन्मनुप्रतिपुटिताक्षमालिका ॥ ९५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे सप्तमः पटलः ॥**

## अष्टमः पटलः ॥

---

अथ प्रवक्ष्यामि सुदुर्लभास्थै
विद्यां विशिष्टां त्रिपुराभिधानाम् ।
[1]धात्रीप्रभेदापि जगत्यवाप्त-
त्रिंशत्प्रकारा[2] त्रिदशाभिवन्द्या ॥ १ ॥

त्रिमूर्तिसर्गाच्च पुराभवत्वा-
त्त्रयीमयत्वाच्च पुरैव देव्याः ।
लये त्रिलोक्या अपि पूरणत्वा-
त्प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥ २ ॥

व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्य-
द्रक्ताच्छकेन्द्रशिखिभिः सरमार्धचन्द्रैः ।
अन्यद्द्यु शीतकरपावकमन्वमन्तै-
र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ॥ ३ ॥

---

1. सा त्रिभेदापि ; 2. त्रिंशत्प्रभेदा.

वागैश्वर्यातिशयदतया वाग्भवं बीजमुक्तं
त्रैलोक्यक्षोभणवशताकृष्टिदं कामराजम् ।
शाक्तं क्ष्वेलापहरणकविताकारकं मन्त्रमेत-
त्प्रोक्तं धर्मद्रविणसुखमोक्षप्रदं साधकानाम् ॥ ४ ॥

नाभेरथाचरणमाहृदयाच्च नाभिं
मूर्ध्नस्तथा हृदयमित्यमुना क्रमेण ।
बीजैस्त्रिभिर्न्यसतु हस्ततले च सव्ये
दक्षाह्वये द्वितयमप्युभये तृतीयम् ॥ ५ ॥

मूर्धनि गुह्यहृदोरपि
नेत्रत्रितये च कर्णयोरास्ये ।
अंसद्वये च पृष्ठे
कूर्परयोर्नाभिमण्डले न्यस्येत् ॥ ६ ॥

वाग्भवेन पुनरङ्गुलीष्वथो
विन्यसेच्च पुनरुक्तमार्गतः ।
अङ्गषट्कममुना विधाय त-
द्देवतां विशदधीर्विचिन्तयेत् ॥ ७ ।

आताम्राकायुताभां कलितशशिकलाराञ्जितप्रां त्रिणेत्रां
देवीं पूर्णेन्दुवक्त्रां विधृतजपपटीपुस्तकाभीत्यभीष्टाम् ।
पीनोत्तुङ्गस्तनार्तां वलिलसितविलग्नामसृक्पङ्कराज-
न्मुण्डस्रङ्मण्डिताङ्गीमरुणतरदुकूलानुलेपां नमामि ॥ ८ ॥

दीक्षां प्राप्य विशिष्टलक्षणयुजः सत्संप्रदायाद्गुरो-
र्लब्ध्वा मन्त्रममुं जपेत्सुनियतस्तत्त्वार्धलक्षावधि ।
स्वाद्वक्तैश्च नवैः पलाशकुसुमैः सम्यक् समिद्धेऽनले
मन्त्री भानुसहस्रकं प्रति हुनेदश्वारिसूनैरपि ॥ ९ ॥

प्राणायामैः पवित्रीकृततनुरथ मन्त्री निजाधारराज-
द्योनिस्थां दिव्यरूपां प्रमुदितमनसाभ्यर्चयित्वोपचारैः ।
आबद्ध्वा योनिमुद्रामपि निजगुदलिङ्गान्तरस्थां प्रदीप्तां
भूयो द्रव्यैः सुशुद्धैररुणरुचिभिरित्यारभेद्बाह्यपूजाम् ॥१०॥

वामादिशक्तिसहितं परिपूज्य पीठं
तत्र प्रकल्प्य विधिवन्नवयोनिचक्रम् ।
योनौ निधाय कलशं त्वथ मध्यगाया-
मावाह्य तां भगवतीं प्रयजेत्क्रमेण ॥ ११ ॥

वह्नेः पुरद्वितयवासवयोनिमध्य-
संबद्धवह्निवरुणेशसमाश्रिताश्री ।
देव्यर्चनाय विहितं मुनिभिः पुरैव
लोके सुदुर्लभमिदं नवयोनिचक्रम् ॥ १२ ॥

वामा ज्येष्ठा रौद्रिका साम्बिकेच्छा-
ज्ञानाभिख्या सक्रिया कुब्जिकाह्वा ।
वह्नी चान्या स्याद्विषघ्नी च दूत-
र्याह्वा सर्वानन्दका शक्तयः स्युः ॥ १३ ॥

प्राङ्मध्ययोन्योः पुनरन्तराले
संपूजयेत्प्राग्गुरुपादपङ्क्तिम् ।
पराभिधानामपराह्वयां च
परापराख्यामपि वाग्भवादिम् ॥ १४ ॥

तेनैव चाङ्गानि विदिग्दिशासु
मन्त्री यथोक्तक्रमतः प्रपूज्य ।
तन्मध्ययोनेरभितः शरांश्च
संपूजयेत्पश्चममग्रभागे ॥ १५ ॥

सुभगा भगा[1] भगान्ते
सर्पिणि भगमालिनी[2] अनङ्गाह्वा ।
तत्पूर्वकुसुमसंज्ञा
तदादिके चाथ मेखलामदने ॥ १६ ॥

संपूज्य योनिषु च मातृगणं सचण्डि-
कान्तर्दलेष्वभियजेदसिताङ्गकाद्यैः ।
तैर्भैरवैः सह सुगन्धसुपुष्पधूप-
दीपादिकैर्भगवतीं प्रवरैर्निवेद्यैः ॥ १७ ॥

असिताङ्गाख्यो रुरुरपि
चण्डः क्रोधाह्वयस्तथोन्मत्तः ।
सकपालिभीषणाख्यः
संहारश्चाष्टभैरवाः कथिताः ॥ १८ ॥

इति क्रमात्या विहिताभिषेकः
संप्रीणयित्वा द्रविणैर्गुरुं च ।
जप्त्वार्चयित्वोक्ततयाथ हुत्वा
युञ्जीत योगांश्च गुरूपदिष्टान् ॥ १९ ॥

---

1. भगां; 2. भगमालिनीमनङ्गाह्वा.

अच्छाभः स्वच्छवेषो[1] धरणिमयगृहे वाग्भवं लक्षमेकं
योजप्यात्तद्दशांशं विहितहुतविधिर्मन्त्रजप्राञ्जनादिः ।
काव्यैर्नानार्थवृत्तैस्त्रिभुवनमखिलं पूरयेन्मन्त्रजापी[2]
मारार्ता विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः ॥

रक्ताकल्पोऽरुणतरदुकूलार्तवालेपनाढ्यो[3]
मौनी भूसद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
बीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसाने
योऽसौ लोके स सुरमनुजैः पूज्यते सेव्यते च ॥

ससुरासुरसिद्धयक्ष-
विद्याधरगन्धर्वभुजंगचारणानाम् ।
प्रमदामदवेगतो विकीर्णा-
भरणाः स्रस्तदुकूलकेशजालाः ॥ २२ ॥

[4]अतिदुःसहमन्मथव्यथाभिः
प्रथितान्तःपरितापवेपिताङ्गयः ।
घनघर्मजतोयबिन्दुमुक्ता-
फलसक्तोरुकुचान्तबाहुमूलाः ॥ २३ ॥

---

1. स्वच्छभूषो; 2. पूरयेच्च स्वकीयैः; 3. ...लेपहृद्यो.
4. अतिदुःसहमन्मथाभिघातव्यथिता...

रोमाञ्चकञ्चुकितगात्रलताघनोद्य-
　दुत्तुङ्गपीनकुचकुम्भनिपीडिताङ्ग्यः ।
औत्सुक्यभारपृथुवेपथुखेदसन्न-
　पादारविन्दचलनस्खलनाभियाताः ॥ २४ ॥

मारसायकनिपातदारिता
　रागसागरनिमग्नमूर्तयः ।
श्वासमारुततरङ्गिताधरा
　बाष्पपूरभरविह्वलेक्षणाः ॥ २५ ॥

मस्तकारचितदोर्द्वयाञ्जलि-
　प्राभृता हरिणशावलोचनाः ।
वाञ्छितार्थकरणोद्यताश्च त-
　दृष्टिपातमभि संनमन्ति ताः ॥ २६ ॥

धरापवरके तथा जपतु लक्षमन्यं मनुं
　सुशुक्लकुसुमांशुकाभरणलेपनाढ्यो वशी ।
अमुष्य वदनादनारततयोच्चरेद्भारती
　विचित्रपदपद्धतिर्भवति चास्य लोको वशे ॥ २७ ॥

*P. 8

पलाशपुष्पैर्मधुरत्रयाक्तै-
होमं विदध्यादयुतावधिं यः ।
सरस्वतीमन्दिरमाशु भूया-
त्सौभाग्यलक्ष्म्योश्च स मन्त्रजापी ॥ २८ ॥

राजीकरञ्जाह्वशमीवटोत्थैः
समिद्वरैर्बिल्वभवैः प्रसूनैः ।
त्रिस्वादुयुक्तैर्हवनक्रियाशु
नरेन्द्रनारीनररञ्जनी स्यात् ॥ २९ ॥

मालतीवकुलजैर्दलैर्दलै-
श्चन्दनाम्भसि घने निमज्जितैः ।
श्रीकरीकुसुमकैर्हुतक्रिया
सैव चासु कविताकरी मता ॥ ३० ॥

अनुलोमविलोममन्त्वमध्य-
स्थितसाध्याह्वयुतं प्रजप्य मन्त्री ।
पटुसंयुतया जुहोतु राज्या
नरनारीनरपान्वशे विधातुम् ॥ ३१ ॥

मधुरत्रयेण सह विल्वजैः फलै-
र्हवनक्रियाशु जनतानुरञ्जनी ।
अपि सैव साधकसमृद्धिदायिनी
दिनशो विशिष्टकमलाकरी मता ॥ ३२ ॥

खण्डैः सुधालतोत्थै-
स्त्रिमधुरयुक्तैर्जुहोतु मन्त्रितमः ।
सकलोपद्रवशान्त्यै
जरापमृत्युप्रणोदनाय वशी ॥ ३३ ॥

फुल्लैर्बिल्वप्रसूनैस्तदभिनवदलै रक्तवाराहिपुष्पैः
प्रत्यग्रैर्बन्धुजीवैररुणसरसिजैरुत्पलैः कैरवाह्वैः ।
नन्द्यावर्तैः सकुन्दैर्नृपतरुकुसुमैः पाटलीनागपुष्पैः
स्वाद्वक्तैरिन्दिराप्त्यै जुहुत च दिनशः सर्पिषा पायसेन ॥

मूलाधारात्स्फुरन्तीं शिखिपुरपुटवीतां प्रभां विद्युदाभा-
माक्रान्तन्मध्यगेन्दोः स्रवदमृतमुचा धारया मन्त्रमय्या ।
सद्यः संपूर्यमाणां त्रिभुवनमखिलं तन्मयत्वेन मन्त्री
ध्यायन्मुच्येत वैरूप्यकदुरितजरारोगदारिद्र्यदोषैः ॥ ३५ ॥

वह्नेर्बिम्बद्वयपरिवृताधारसंस्थं समुद्य-
द्बालार्काभं स्वरगणसमावेष्टितं वाग्भवाख्यम् ।
वाण्या स्वीयाद्वदनकुहरात्संततं निःसरन्त्या
ध्यायेन्मन्त्री प्रततकिरणप्रावृतं दुःखशान्त्यै ॥ ३६ ॥

हृत्पद्मस्थितभानुबिम्बविलसद्योन्यन्तरालोदितं
मध्याह्नार्कसमप्रभं परिवृतं वर्णैः कभाद्यन्तगैः ।
ध्यायेन्मन्मथराजबीजमखिलब्रह्माण्डविक्षोभकं
राज्यैश्वर्यविनिन्दिनीमपि रमां दत्त्वा जगद्रञ्जयेत् ॥३७॥

मूर्ध्नोऽथ द्वादशान्तोदितशशधरबिम्बस्थयोनौ स्फुरन्तं
संवीतं व्यापकार्णैर्धवलरुचि मकारस्थितं बीजमन्त्यम् ।
ध्यात्वा सारस्वताच्छामृतजललुलितं दिव्यकाव्यादिकर्ता
नित्यं क्ष्वेलापमृत्युग्रहदुरितविकारान्निहन्त्याशु मन्त्री ॥

योनेः परिभ्रमितकुण्डलिरूपिणीं तां
रक्तामृतद्रवमुचा निजतेजसैव ।
व्योमस्थलं सकलमप्यभिपूर्य तस्मि-
न्नावेश्य मङ्क्षु वशयेद्वनिता नरांश्च ॥ ३९ ॥

गुह्यस्थितं वा मदनस्य बीजं
जपारुणं रक्तसुधाः [1]स्रवन्तम् ।
विचिन्त्य तस्मिन्विनिवेश्य साध्यां
वशीकरोत्येव [2]विदग्धलोकम् ॥ ४० ॥

अन्त्यं बीजमथेन्दुकुन्दधवलं[3] संचिन्त्य चित्ताम्बुजे
तद्भूतां धृतपुस्तकाक्षवलयां देवीं मुहुस्तन्मुखात् ।
उद्यन्तं निखिलाक्षरं निजमुखे नानारसस्रोतसा
निर्यान्तं च निरस्तसंहृतिभयो भूयात्स वाग्वल्लभः ॥४१॥

संक्षेपतो निगदिता त्रिपुराभिधाना
विद्या सजापहवना सविधानपूजा ।
सोपासना च सकलाभ्युदयप्रसिद्ध्यै
वाणीरमाप्तिविधये जगतो हिताय ॥ ४२ ॥

विद्येशीं त्रिपुरामिति [4]प्रतिजपन्यो वा भवेन्नित्यश-
स्तद्वक्त्रादथ नूतनार्थविशदा वाणी सदा निःसरेत् ।
संपत्त्या नृपनन्दिनी ततयशःपूरा भवेदिन्दिरा
तस्यासौ प्रतियाति सर्वमुनिभिः संप्रार्थनीयं पदम् ॥४३॥

---

1. द्रवन्तम्; 2. विदग्धलोकः; 3. ०विशदं; 4. प्रतिभजन्;

मध्ये वद्यक्षरयोः
 सद्वद्वाग्वक्षरा निचन्द्रयुगे ।
प्रोक्ता दशाक्षरीयं
 कण्वविराजौ च [1]वागृषिप्रभवाः ॥ ४४ ॥

कश्रोत्रनयननासा-
 वदनान्धुगुदेषु विन्यसेद्वर्णान् ।
स्वरपुटितैरथ हल्भिः
 कुर्यादङ्गानि षट् क्रमान्मन्त्री ॥ ४५ ॥

अमलकमलसंस्था लेखिनीपुस्तकोद्य-
 त्करयुगलसरोजा कुन्दमन्दारगौरा ।
धृतशशधरखण्डोल्लासिकोटीरचूडा[2]
 भवतु भवभयानां भञ्जिनी भारती वः ॥ ४६ ॥

अक्षरलक्षजपान्ते
 जुहुयात्कमलैः सितैः पयोभ्यक्तैः ।
त्रिमधुरयुतैः सुशुद्धै-
 र्युतं नियतात्मकस्तिलैरथ वा ॥ ४७ ॥

1. वागृषिप्रमुखाः. 2. कोटीरजूटा.

मातृकोक्तविधिनाक्षराम्बुजे
शक्तिभिश्च विनियुज्य पूर्ववत् ।
पीठमन्त्रवचसा महेश्वरीं
पूजयेत्प्रथममङ्गमन्त्रकैः ॥ ४८ ॥

योगा सत्या विमला
ज्ञाना बुद्धिः स्मृतिस्तथा मेधा ।
प्रज्ञेत्याभिर्मातृभि-
रपि लोकेशैः प्रपूजयेत्क्रमशः ॥ ४९ ॥

इति सिद्धमनुर्मनोजदूरो
नचिरादेव कविर्भवेन्मनस्वी ।
जपहोमरतः सदावगच्छे-
द्वनितां वागधिपेति गौरवेण ॥ ५० ॥

न्यासान्वितो निशितधीः प्रजपेत्सहस्र-
मह्नो मुखेऽनुदिवसं प्रपिबेत्तदापः ।
तन्मन्त्रिताः [1]पुनरयन्त्रत एव वाचः
सिद्धिर्भवेदभिमता परिवत्सरेण ॥ ५१ ॥

1. अयन्त्रितमेव.

हृदयद्वयसे स्थितोऽथ तोये
रविबिम्बे प्रतिपद्य वागधीशाम् ।
जपतस्त्रिसहस्रसंख्यमर्वा-
क्कविता मण्डलतो भवेत्प्रभूता ॥ ५२ ॥

पलाशबिल्वप्रसवैस्तयोश्च
समिद्वरैः स्वादुयुतैश्च होमः ।
कवित्वसौभाग्यकरः समृद्ध-
लक्ष्मीप्रदो रञ्जनकृच्चिराय ॥ ५३ ॥

चतुरङ्गुलजैः समित्प्रसूनै-
र्जुहुयाद्यो मधुरत्रयावसिक्तैः ।
मनुजः समवाप्य धीविलासा-
नचिरात्काव्यकृतां भवेत्पुरोगः ॥ ५४ ॥

सुविमलनखदन्तपाणिपादो
मुदितमनाः परदूषणेषु मौनी ।
हरिहरकमलोद्भवाङ्घ्रिभक्तो
भवति चिराय सरस्वतीनिवासः ॥ ५५ ॥

आद्यन्तप्रणवगशक्तिमध्यसंस्था
वाग्भूयो भवति सरस्वतीचङेन्ता ।
नत्यन्तो मनुरयमीशसंख्यवर्णः
संप्रोक्तो भुवि भजमानपारिजातः ॥ ५६ ॥

[1]स सुषुम्नाग्रे भ्रूयुग-
मध्ये नवके तथैव रन्ध्राणाम् ।
विन्यस्य मन्त्रवर्णा-
न्कुर्यादङ्गानि षट्[2]क्रमाद्वाचा ॥ ५७ ॥

हंसारूढा [3]हरहसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुलेखा ।
विद्या वीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

दिनकरलक्षं प्रजपे-
न्मन्त्रमिमं संयतेन्द्रियो मन्त्री ।
द्वादशसहस्रकमथो
सितसरसिजनागचम्पकैर्जुहुयात् ॥ ५९ ॥

1. सौषुम्नाग्रे ; 2. क्रमान्मन्त्री ; 3. भसितहरहारेन्दु०

पूजायां पार्श्वयुगे
ससंस्कृता प्राकृता च वाग्देव्याः ।
केवलवाङ्मयरूपा
संपूज्याङ्गैश्च शक्तिभिस्तदनु ॥ ६० ॥

प्रज्ञा मेधा श्रुतिरपि
शक्तिः स्मृत्याह्वया च वागीशी ।
[1]सुमतिः स्वस्तिरिहाभि-
र्मातृभिराशेश्वरैः क्रमात्प्रयजेत् ॥ ६१ ॥

इति निगदितो वागीश्वर्याः सहोमजपार्चना-
विधिरनुदिनं मन्त्री त्वेनां भजन्परिमुच्यते ।
सकलदुरितैर्मेधालक्ष्मीयशोभिरवाप्यते
परमपरमां भक्तिं प्राप्योभयत्र च मोदते ॥ ६२ ॥

इति मातृकाविभेदा-
न्प्रभजन्मन्त्रत्रयं च मन्त्रितमः ।
प्रजपेदेनां स्तुतिमपि
दिनशो वाग्देव्यनुग्रहाय बुधः ॥ ६३ ॥

---

1. सुमतिस्वस्तिभिराभिः

अमलकमलाधिवासिनि
मनसो वैमल्यदायिनि मनोज्ञे ।
सुन्दरगात्रि सुशीले
तव चरणाम्भोरुहं नमामि सदा ॥ ६४ ॥

अचलात्मजा च दुर्गा
कमला त्रिपुरेति भेदिता जगति ।
या सा त्वमेव वाचा-
मीश्वरि सर्वात्मना प्रसीद मम ॥ ६५ ॥

त्वच्चरणाम्भोरुहयोः
प्रणामहीनः पुनर्द्विजातिरपि ।
भूयादनेडमूक-
स्त्वद्भक्तो भवति देवि सर्वज्ञः ॥ ६६ ॥

[1]मूलाधारमुखोद्गत-
बिसतन्तुनिभप्रभाप्रभावतया ।
विधृतलिपिव्राताहित-
मुखकरचरणादिके प्रसीद मम ॥ ६७ ॥

---

1. अयं श्लोकः प्रक्षिप्त इति कश्चिद्व्याख्याता.

वर्णतनोऽमृतवर्णे
नियतमनिर्वर्णितेऽपि योगीन्द्रैः ।
निर्णीतिकरणदूरे
वर्णयितुं देवि देहि सामर्थ्यम् ॥ ६८ ॥

ससुरासुरमौलिलस-
न्मणिप्रभादीपिताङ्घ्रियुगनलिने ।
सकलागमस्वरूपे
सर्वेश्वरि संनिधिं विधेहि मयि ॥ ६९ ॥

पुस्तकजपवटहस्ते
वरदाभयचिह्नचारुबाहुलते ।
कर्पूरामलदेहे
वागीश्वरि शोधयाशु मम चेतः ॥ ७० ॥

क्षौमाम्बरपरिधाने
मुक्तामणिभूषणे मुदावासे ।
स्मितचन्द्रिकाविकासित-
मुखेन्दुबिम्बेऽम्बिके प्रसीद मम ॥ ७१ ॥

विद्यारूपेऽविद्या-

नाशिनि विद्योतितेऽन्तरात्मविदाम् ।

गद्यैः सपद्यजातै-

राद्यैर्मुनिभिः स्तुते प्रसीद मम ॥ ७२ ॥

त्रिमुखि त्रयीस्वरूपे

त्रिपुरे त्रिदशाभिवन्दिताङ्घ्रियुगे ।

त्रीक्षणविलसितवक्त्रे

त्रिमूर्तिमूलात्मिके प्रसीद मम ॥ ७३ ॥

वेदात्मिके निरुक्त-

ज्योतिर्व्याकरणकल्पशिक्षाभिः ।

सच्छन्दोभिः संतत-

क्लृप्तषडङ्गेन्द्रिये प्रसीद मम ॥ ७४ ॥

त्वच्चरणसरसिजन्म-

स्थितिमहितधियां न लिप्यते दोषः ।

भगवति भक्तिमतस्त्वयि

परमां परमेश्वरि प्रसीद मम ॥ ७५ ॥

बोधात्मिके बुधानां
हृदयाम्बुजचारुरङ्गनटनपरे ।
भगवति भवभङ्गकरीं
भक्तिं भद्रार्थदे प्रसीद मम ॥ ७६ ॥

वागीशीस्तवमिति यो
जपार्चनाहवनवृत्तिषु प्रजपेत् ।
स तु विमलचित्तवृत्ति-
र्देहापदि नित्यशुद्धमेति पदम् ॥ ७७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे अष्टमः पटलः ॥**

## नवमः पटलः ॥

[1]अथाभिवक्ष्ये सकलप्रपञ्च-
मूलात्मिकायाः प्रकृतेर्यथावत् ।
मन्त्रं तु साङ्गं सहुताभिषेक-
जपार्चनाद्यं सकलार्थसिद्ध्यै ॥ १ ॥

घनवर्त्मकृष्णगतिशान्तिबिन्दुभिः
कथितः परः प्रकृतिवाचको मनुः ।
दुरितापहोऽर्थसुखधर्ममोक्षदो
भजतामशेषजनरञ्जनक्षमः ॥ २ ॥

शक्तिः स्यादृषिरस्य तु
गायत्री चोदिता मनोश्छन्दः ।
बोधस्वरूपवाची
संवित्प्रोक्ता च देवता गुरुभिः ॥ ३ ॥

---

1. अथ प्रवक्ष्ये

नेत्रकरणर्तुदिनकर-

भुवनविकारस्वराग्निबिन्दुयुजा ।

व्योम्नाङ्गषट्कक्लृप्त-

जातिविभिन्नेन चापि संप्रोक्ता ॥ ४ ॥

अग्नीन्दुयोगविकृता लिपयो हि सृष्टा-

स्ताभिः प्रलोमपठिताभिरिदं शरीरम् ।

भूतात्मकं त्वगसृगादियुतं समस्तं

संव्यापयेन्निशितधीर्विधिना यथावत् ॥ ५ ॥

अन्त्यावूष्मस्वमून्वादिषु खलिपिषु[1] तांस्तांश्चतुर्वर्गवर्णे-

ष्वेतानश्यम्यदस्तद्दति तदपि परेषु स्वरेषु क्रमेण ।

संहृत्य स्थानयुक्तं क्षपितसकलदेहो [2]ललाटस्थितान्तः-

प्राप्तिव्याप्तद्विसप्तादिकभुवनतलो [3]यातु मद्भावमेव ॥ ६ ॥

मूलाधारात्स्फुरिततटिदाभा प्रभा सूक्ष्मरूपो-

द्गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।

सौषुम्नाध्वाचरणनिपुणा सा सवित्रानुबद्धा

ध्याता सद्योऽमृतमथ रवेः स्रावयेत्सार्धसोमात् ॥ ७ ॥

---

1. मलिपिषु. 2. ललाटस्थितस्तं प्राप्य व्याप्त० 3. याति.

शिरसि निपतिता या बिन्दुधारा सुधाया
भवति लिपिमयी सा ताभिरङ्गं मुखाद्यम् ।
विरचयतु समस्तं पातितान्तश्च तेज-
स्यनल इव घृतस्योद्दीपयेदात्मतेजः ॥ ८ ॥

संहृत्य चोत्पाद्य शरीरमेवं
तेजोमयं व्याप्तसमस्तलोकम् ।
संकल्प्य शक्त्यात्मकमात्मरूपं
तच्चिह्नमात्मन्यपि[1] संदधीत ॥ ९ ॥

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्ध-
द्योतन्मौलिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मगां च ।
हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्या-
मम्बां पाशाङ्कुशेष्टाभयकरकमलामम्बिकां तां नम

धातू द्वौ स्तो रक्षणव्यापकार्थौ
पाद्योऽशाद्यस्तत्प्रभावात्तयोश्च ।
सर्वं संरक्ष्याथ सर्वात्मना यो
व्याप्नोत्यंशं स्यादसौ पाशवाची ॥ ११ ।

1. ०न्यथ.

*P. 9

अं स्यादात्मा कुर्धरा कुस्तनुर्वा
भागार्थः स्याच्छोऽथ वा वृत्तिवाची ।
भूश्चेद्भूतान्यन्यथा चेच्छरीरा-
ण्याकृष्यात्मन्याहरेदङ्कुशाख्यः ॥ १२ ॥

स्मृते यथा संसृतिचक्रचङ्क्रमो-
द्भवाद्घनापायसमुत्थितादपि ।
वियोजयत्यात्मतनुं नरं भया-
त्तथाभयस्याभयसंज्ञिता विभोः ॥ १३ ॥

मुख्यार्थवाची वरशब्द उक्तः
स्याद्वाञ्छितार्थश्च वराभिधानम् ।
मुख्यं त्वभीष्टं स्मृतिमात्रकेण
ददाति योऽसौ वरदोऽवगम्यः ॥ १४ ॥

दीक्षाक्लृप्त्यै पुरोक्ते रचयतु विधिवन्मण्डलं मण्डपे त-
द्व्यक्तं युक्तं च कान्त्या त्रिगुणितविलसत्कर्णिकं [1]वर्णकीर्णम् ।
आपीतं केसरेष्वारचितहरिहरार्णैश्च मध्ये समायै-
स्तैरग्रे माययाढ्यं कमलमथ बहिः प्रोक्तचिह्नैरुपेतम् ॥१५॥

---

1. वर्णवीतम्.

शक्त्याविःसाध्यमिन्द्रानिलनिऋतिगबीजाभिबद्धं पुरोऽग्ने-
स्तत्कोणोल्लासिमायं हरिहरविलसद्दण्डमेभिः समायैः ।
वर्णैश्चावेष्टितं तत्त्रिगुणितमिति विख्यातमेतत्सुयन्त्रं
स्यादायुष्यं च वश्यं धनकरममितश्रीपदं कीर्त्तिदं च ॥

हृल्लेखाख्यां गगनां
रक्तां च करालिकां महोच्छुष्माम् ।
मूर्धनि वदने गुह्ये
पदयोर्न्यस्येत्तदङ्गैश्च ॥ १७ ॥

गायत्रीं न्यसतु गले स्तनेऽथ सव्ये
सावित्रीं पुनरपरे सरस्वतीं च ।
सव्यांसे सरसिजसंभवं मुकुन्दं
हृद्देशे पुनरपरांसके शिवं च ॥ १८ ॥

अलिकांसपार्श्वकुक्षिषु
पार्श्वांसापरगलहृत्सु च क्रमशः ।
ब्रह्माण्याद्या विधिव-
न्न्यस्तव्या मातरोऽष्ट मन्त्रितमैः ॥ १९ ॥

सजया विजया च तथा-

[1]जिताह्वया चापराजिता नित्या ।

तदनु विलासिनिदोग्ध्र्यौ

[2]साघोरा मङ्गला नव प्रोक्ताः ॥ २० ॥

एवं संपूज्य पीठं तदनु नव घटान्पञ्च वा कर्णिकायां

पत्राग्रेषु न्यसेत्काञ्चनरजतताम्रोद्भवान्मार्त्तिकान्वा ।

एकं वा कर्णिकायां सुमतिरथ विनिक्षिप्य कुम्भं यथाव-

[3]त्संपूर्यावाहयेत्त्रिष्वपि विधिषु पुनर्वक्ष्यमाणक्रमेण ॥२१॥

मधुनाथ महारवैश्च साकं

विधिना मध्यगतं प्रपूर्य कुम्भम् ।

अभिवाह्य कलाः प्रवेष्टयीत

प्रवराभ्यामथ[4] तन्नवांशुकाभ्याम् ॥ २२ ॥

ऐन्द्रं घृतेन यमदिक्प्रभवं च दध्ना

क्षीरेण वारुणमथो तिलजेन सौम्यम् ।

क्षीरद्रुचर्मदशमूलकपुष्पसिद्ध-

क्वाथेन कोणनिलयानपि पूरयेच्च ॥ २३ ॥

---

1. जितापरा; 2. साघोषा; 3. त्संभूया०; 4. ०मपि.

मूत्रेणैन्द्रं गोमयेनापि याम्यं
क्षीरेणाप्यं सौम्यजं चैव दध्ना ।
[1]मध्यप्रोक्तं सर्पिषा [2]पञ्च कुम्भा-
न्संस्थाप्यापः पूरणीयाः क्रमेण ॥ २४ ॥

गोमूत्रगोमयोदक-
पयोदधिघृतांशकाः क्रमात्प्रोक्ताः ।
एकार्धधातुसत्त्वा-
द्येके सर्वाणि वा समानि स्युः ॥ २५ ॥

तारभवाभिरथर्गिभः
क्रमेण संयोजयेच्च गव्यानि ।
आत्माष्टाक्षरमन्त्रै-
रथ वा योज्यानि पञ्चभिः पञ्च ॥ २६ ॥

यद्येककलशक्लृप्तौ
विधिरपि पञ्चाशदोषधिक्वाथैः ।
पूरयतु पञ्चभिर्वा
गव्यैस्तोयात्मकेऽष्टगन्धाप्तिः ॥ २७ ॥

1. मध्यप्रोत्थं; 2. पञ्च कुम्भाः स्युश्चेदेवं.

[1]अत्रोत्तरस्यां दिशि पङ्कजे च
पलाशचर्मोत्कथितैः पयोभिः ।
संपूरणीयः कलशो यथाव-
त्सुवर्णवस्त्रादियुतः सुशुद्धः ॥ २८ ॥

द्वारेषु मण्डपस्य
द्वौ द्वौ [2]कलशौ सुशुद्धजलपूर्णौ ।
संस्थाप्य च वसनाद्यैः
प्रवेष्टयित्वाभिपूजनीयाः स्युः ॥ २९ ॥

ऊर्ध्वेन्द्रयाम्यसौम्य-
प्रत्यक्षु च भूतवर्णकाः क्रमशः ।
हृल्लेखाद्यास्तदनु च
पूर्ववदङ्गानि पूजनीयानि ॥ ३० ॥

गायत्रीं शतमखजे निशाचरोत्थे
सावित्रीं पवनगते सरस्वतीं च ।
ब्रह्माणं हुतभुजि वारुणे च विष्णुं
[3]बीजेऽग्रे समभियजेदथेशमैशे ॥ ३१ ॥

---

1. अस्यो०; 2. कुम्भौ; 3 बीजेश्रेः.

रक्ता रक्ताकल्पा
चतुर्मुखी कुण्डिकाक्षमालेऽब्जे ।
दधती प्राग्बीजस्य
गायत्री तादृशोऽग्निगो ब्रह्मा ॥ ३२ ॥

अरिदरगदाब्जहस्ता
किरीटकेयूरहारसंभिन्ना ।
[1]निशिचरबीजसमुत्था
सावित्री वरुणगस्तथा विष्णुः ॥ ३३ ॥

टङ्काक्षाल्यभयवरा-
न्दधती च त्रीक्षणेन्दुकलितजटा ।
वाणी वायव्यस्था
विशदाकल्पा तथेश्वरस्त्वैशे ॥ ३४ ॥

ब्रह्माण्याद्यास्तद्बहि-
रनन्तरं वासवादिकाशेशाः ।
पूज्याः पूर्वोक्तैरुप-
चारैः सम्यङ्निजेष्टाप्त्यै ॥ ३५ ॥

---

1. निशि वा.

यदि नवकलशास्तेष्वथ
संपूज्या मातरोऽष्टदिक्क्रमशः ।
हृल्लेखाद्याः पूज्या
मध्यादिषु पञ्च चेद्भवन्ति घटाः ॥ ३६ ॥

प्रथमं घृतजं ततः कषायं
दधि पश्चात्कथितं पयः कषायम् ।
अथ तैलकषायकामधूत्थं
द्विजवृक्षोत्कथितं ततोऽभिषिञ्चेत् ॥ ३७ ॥

द्वारगकुम्भघृतैरथ
सलिलैः पुनरन्तरासेकम् ।
कुर्यान्मुखकरचरण-
क्षालनमपि साचमादिकं मन्त्री ॥ ३८ ॥

विधिवत्कृताभिषेको
द्वात्रिंशल्लक्षमथ जपेन्मन्त्रम् ।
निजकरदत्ताघ्यमृत-
जलपोषितभानुमत्प्रभोऽनुदिनम् ॥ ३९ ॥

भूत्वा शक्तिः स्वयमथ दिनेशेन्दुवैश्वानराणा-
मैक्यं कुर्वन्प्रणवमनुना शक्तिबीजेन भूयः ।
आकृष्यान्तर्बहिरपि समाधाय बुद्ध्यैव तेजो
जप्यान्मन्त्री ज्वलनहुतशिष्टान्नभुक्प्रोक्तसंख्यम् ॥ ४० ॥

अथ तु हविष्यप्राशी
नक्ताशी वा जपेन्मनुं त्वेवम् ।
परिपूर्णायां नियमित-
जपसंख्यायां समारभेद्धोमम् ॥ ४१ ॥

जपाद्दशांशं जुहुयादथाष्ट-
द्रव्यैर्गुडक्षौद्रघृतावसिक्तैः ।
वर्णौषधीसिद्धजलाभिषेकं
कृत्वा द्विजानभ्यवहारयेच्च ॥ ४२ ॥

ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतोऽमुना ।
अधिष्ठितं निश्यदीपं निस्तमिस्रं गृहं भवेत् ॥ ४३ ॥

ततः कृत्वा जपह्रासं समुपासीत शक्तितः ।
युक्तात्मा नित्ययोगेन प्रागुक्तविधिनार्चयेत् ॥ ४४ ॥

अश्वत्थविप्राङ्घ्रिपबिल्वनाम्नां
तर्कारिकप्लक्षकसेव्यकानाम् ।
प्रसारिणीकाष्मरिरोहिणाना-
मुदुम्बरीपाटलडुण्डुकानाम् ।। ४५ ।।

पलं पलार्धं त्वथ कर्षमर्धं
तेषां तु [1]भागः कथितः क्रमेण ।
एतैः श्रितेनाथ जलेन वासौ
संपूरणीयः कलशो यथावत् ।। ४६ ।।

प्रत्यब्दसेकाद्भविता शतायु-
र्मेधेन्दिरावान्रहितश्च रोगैः ।
मासेषु जन्मस्वभिषेकतः स्या-
दुर्वीपतिर्मङ्क्षु महापृथिव्याः ।। ४७ ।।

अर्काभस्तेजसासौ भवति नलिनजा संततं किंकरी स्या-
द्रोगा नश्यन्ति दृष्ट्वा तमथ च धनधान्याकुलं तत्समीपम् ।
देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दंशन्ति पुत्राः
संपन्नाः स्युः सपुत्रास्तनुविपदि परं धाम विष्णोः स भूयात् ।।

1. भागाः कथिताः.

शक्तिप्रग्रस्तसाध्यं हरशरकलमायावृतं वह्निगेह-
द्वन्द्वाश्रिप्राप्तमायं प्रतिविवरलसच्छक्तिबद्धं बहिश्च ।
कोणोद्यद्दण्डदण्डि त्रिलिपि हरिहराबद्धगण्डं विलोमा-
र्णावीतं कोर्युगाष्टोदरनरहरिचिन्तात्मकं षड्गुणाख्यम् ॥

षडङ्गुलप्रमाणेन वर्तुलं कर्तुरालिखेत् ।
षडङ्गुलावकाशेन तद्बहिश्च प्रवर्तयेत् ॥ ५० ॥

वर्तुलं तावता भूयस्तद्बहिश्च तृतीयकम् ।
मध्यवर्तुलमध्ये तु हृल्लेखाबीजमालिखेत् ॥ ५१ ॥

द्वितीयवर्तुलाश्लिष्टमीषच्छ्लिष्टषडश्रकम् ।
पुटितं मण्डलं वह्नेरस्पृशन्मध्यवर्तुलम् ॥ ५२ ॥

इन्द्राग्निरक्षोवरुणवाय्वीशान्ताश्रकं लिखेत् ।
षट्सु कोणान्तरालेषु हृल्लेखाषट्कमालिखेत् ॥ ५३ ॥

एकैकान्तरितास्तास्तु संबध्युरितरेतरम् ।
शिखाभिरान्तराभिस्तु बाह्याबाह्याभिरान्तराः ॥ ५४ ॥

मध्यवर्तुलसंस्थाया हृल्लेखायाः कपोलयोः ।
अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ॥ ५५ ॥

अन्तराग्निश्रियोः कर्म साधकांशे समालिखेत् ।
हरमायाः पञ्चकृत्वः स्युर्बहिर्गर्भवर्तुलम् ॥ ५६ ॥

तद्बहिः शरमायाश्च कलमायाश्च तद्बहिः ।
लिखेन्मायां बिन्दुमतीं वह्नेः कोणेषु षट्स्वपि ॥ ५७ ॥

वह्नेः कोणत्रये श्रीमत्पक्षीये त्रितयं लिखेत् ।
शक्तिश्रीकामबीजानां सदण्डं साधकार्णवत् ॥ ५८ ॥

[1]वह्निस्तु वह्निपक्षीये तान्येवादण्डवन्ति च ।
संसाध्य नामवर्णानि स्पष्टनिष्टानभाञ्जि च ॥ ५९ ॥

बाह्यरेखामन्तरा स्युर्वर्णाः क्रमगताः शुभाः ।
तद्बहिः प्रतिलोमाश्च ताः [2]स्युर्लेखकपाटवात् ॥ ६० ॥

ततो विदर्भितं भूमेर्मण्डलद्वयमालिखेत् ।
महादिक्स्थनृसिंहार्णं चिन्तारत्नाश्रिताश्रकम् ॥ ६१ ॥

बहिः षोडशशूलाङ्कं शोभनं व्यक्तवर्णवत् ।
एतद्यन्त्रं समालिख्य पद्ममारचयेत्ततः ॥ ६२ ॥

[3]रुचिरद्वादशदलं [4]षट्त्रिंशत्केसरोज्ज्वलम् ।
पूर्वोक्तलक्षणोपेतं शुभं दृष्टिमनोहरम् ॥ ६३ ॥

---

1. वह्नेस्तु; 2. स्युर्लेखाकपाटवत्; 3. रुचिरं; 4. षड्विंशत्.

अभ्यर्च्य पीठं नवशक्तिकान्त-
मङ्गानि बीजेषु च षट्सु भूयः ।
गायत्रिसावित्रिसरस्वतीश्च
यजेदथ श्रीरतिपुष्टिसंज्ञाः ॥ ६४ ॥

ब्रह्माणमथ च विष्णुं
महेश्वरं धनदमदनगणनाथान् ।
अभ्यर्चयेच्च षट्स्वपि
वह्नेः कोणेषु तद्बहिः क्रमशः ॥ ६५ ॥

रक्तामनङ्गकुसुमां कुसुमातुरां च
नित्यामनङ्गमदनां मदनातुरां च ।
गौरीं तथैव गगनां गगनस्य रेखां
पद्मां भवप्रमथिनीं शशिशेखरां च ॥ ६६ ॥

एता द्विषट् प्रतिदलं प्रतिपूज्य शक्ती-
स्तद्बाह्यतो यजतु मातृगणं क्रमेण ।
इन्द्रादिकान्बहिरतश्च तदायुधानि
संपूज्य पूर्वविधिनामुमथाभिषिञ्चेत् ॥ ६७ ॥

योऽमुमर्चयति मुख्यविधानं
सिद्धशक्तिरपि सञ्जपहोमैः ।
स श्रियो निलयनं त्रिदशानां
वन्द्यतां व्रजति विष्णुसमानः ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे नवमः पटलः ॥**

## दशमः पटलः ॥

अथ वक्ष्ये संग्रहतो

द्वादशगुणिताख्यमद्य यन्त्रवरम् ।

संपूज्य येन शक्तिं

भुक्तेर्मुक्तेर्व्रजेन्नरोऽनुभवम् ॥ १ ॥

व्याहृत्यावीतशक्तिज्वलनपुरयुगद्वन्द्वसंध्युत्थशक्त्या-

वीतं कोणात्तदुर्बीजकमनु च कपोलात्तगायत्रिमन्त्रम् ।

आग्नेयावीतमर्णैर्वृतमनुविगतैर्भूपुराभ्यां च रन्ध्रे

क्ष्रौंचिन्तारत्नकं द्वादशगुणितमिदं यन्त्रमिष्टार्थदायि ॥

पूर्वोक्तमानक्लृप्त्या

मन्त्री त्रितयं विलिख्य वृत्तानाम् ।

विलिखेदन्तर्वर्तुल-

मनु शक्तिं स्पष्टबिन्दुनिष्ठानाम् ॥ ३ ॥

द्वादशमध्यमवर्तुल-

रेखा बहिरालिखेच्च शक्तीनाम् ।

हरियमवरुणधनाधिप-
दिक्षु द्वे द्वे च ताः क्रमेण स्युः ॥ ४ ॥

ईशाग्निनिरृतिमरुतां
दिक्ष्वेकैकं विलिख्य भूयश्च ।
बीजान्तरालनिर्गत-
शूलाङ्कितकोणषट्कयुगमग्नेः ॥ ५ ॥

मण्डलयुगयुगलं स्या-
दस्पृशदान्तरितवर्तुलं विशदम् ।
शक्तिं प्रवेष्टयेच्च
प्रतिलोमव्याहृतीभिरन्तःस्थाम् ॥ ६ ॥

रविकोणेषु दुरन्तां
मायां विलिखेदथाग्रबिन्दुमतीम् ।
एकैकान्तरितास्ताः
परस्परं शक्तयश्च संबध्युः ॥ ७ ॥

गायत्रीं प्रतिलोमतः प्रविलिखेदग्नेः कपोलं बहि-
र्द्वे द्वे चैव लिपी बहिश्च रचयेद्भूयस्तथा त्रिष्टुभम् ।

वर्णान्प्रानुगतांश्च भूपुरयुगे सिंहाख्यचिन्तामणिं
लिख्याद्यन्त्रमशेषदुःखशमनायोक्तं पुरा देशिकैः ॥ ८ ॥

बहिरपि षोडशपत्रं
वृत्तविचित्रं च राशिवीथियुतम् ।
रचयेन्मण्डलमेवं
पुनर्यथोक्तं निधापयेत्कलशम् ॥ ९ ॥

आदावङ्गावरणमनु हृल्लेखिकाद्याश्चतस्रो
ब्रह्माण्याद्याः षोडशविकृतिद्वन्द्वसंख्याक्रमेण ।
सार्धं भूयश्चतसृभिरथो षष्टिभिर्लोकपालै-
र्वज्राद्यैरष्टममपि समभ्यर्चयेद्भक्तिनम्रः ॥ १० ॥

कराली विकराली च उमा देवी सरस्वती ।
दुर्गा शची उषा लक्ष्मीः श्रुतिः स्मृतिधृती तथा ॥ ११ ॥

श्रद्धा मेधा मतिः कान्तिरार्या षोडश शक्तयः ।
विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहूस्तथा ॥ १२ ॥

रुद्रवीर्या प्रभानन्दा पोषणी ऋद्धिदा शुभा ।
कालरात्री महारात्री भद्रकाली कपालिनी ॥ १३ ॥

*P. 10

विकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी ।
निसुम्भसुम्भमथनी महिषासुरमर्दिनी ॥ १४ ॥

इन्द्राणी चैव रुद्राणी शंकरार्धशरीरिणी ।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ॥ १५ ॥

अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तयो मताः ।
पिङ्गलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च ॥ १६ ॥

श्रद्धा स्वाहा स्वधाख्या च मायाभिख्या वसुंधरा ।
त्रिलोकधात्री गायत्री सावित्री त्रिदशेश्वरी ॥ १७ ॥

सुरूपा बहुरूपा च स्कन्दमाताच्युतप्रिया ।
विमला सामला चैव अरुणी वारुणी तथा ॥ १८ ॥

प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेव च ।
संध्या माता सती हंसा मर्दिका वज्रिका परा ॥ १९ ॥

देवमाता भगवती देवकी कमलासना ।
त्रिमुखीसप्तमुख्यौ च सुरासुरविमर्दिनी ॥ २० ॥

सलम्बोष्ठ्यूर्ध्वकेश्यौ च बहुशिरा वृकोदरी ।
रथरेखाह्वया चैव शशिरेखा तथापरा ॥ २१ ॥

पुनर्गगनवेगाख्या वेगा च पवनादिका ।
भूयो भुवनवेगाख्या तथैव मदनातुरा ॥ २२ ॥

अनङ्गानङ्गमदना भूयश्चानङ्गमेखला ।
अनङ्गकुसुमा विश्वरूपासुरभयंकरी ॥ २३ ॥

अक्षोभ्यासत्यवादिन्यौ वज्ररूपा शुचिव्रता ।
वरदा चैव वागीशी चतुःषष्टिः प्रकीर्तिताः ॥ २४ ॥

इष्ट्वा यथोक्तमिति तं कलशं निजं वा
पुत्रं तथाप्तमपि शिष्यमथाभिषिञ्चेत् ।
आस्तिक्ययुक्तमथ सत्यरतं वदान्यं
विप्रप्रियं कुलकरं च नृपोत्तमं वा ॥ २५ ॥

विधानमेतत्सकलार्थसिद्धि-
करं परं पावनमिन्दिराढ्यम् ।
आयुष्करं वश्यकरं रिपूणां
प्रध्वंसनं मुक्तिफलप्रदं च ॥ २६ ॥

पाशाङ्कुशमध्यगया
शक्त्याथ जपार्चनाहुतादियुतम् ।

वक्ष्ये यन्त्रविधानं
त्रैलोक्यप्राभृतायमानमिदम् ॥ २७ ॥

[1]अष्टाशात्तार्गलाविर्हृगलयवरगाच्पूर्वपाश्चात्त्यषट्कं
कोष्ठोद्यत्साङ्कसाष्टाक्षरयुगयुगलाष्टाक्षराख्यं बहिश्च ।
मायोपेतात्मयुग्मस्वरमिलितलसत्केसरं साष्टपत्रं
पद्मं तन्मध्यवर्तित्रितयपरिलसत्पाशशक्त्यङ्कुशार्णम् ॥

पाशाङ्कुशावृतमनुप्रतिलोमगैश्च
वर्णैः सरोजपुटितेन घटेन चापि ।
आवीतमिष्टफलभद्रघटं तदेत-
द्यन्त्रोत्तमं भुवि घटार्गलनामधेयम् ॥ २९ ॥

प्राक्प्रत्यगर्गले हल-
मथ पुनराग्नेयमारुते च ह्यम् ।
दक्षोत्तरे ह्वार्णं
नैर्ऋतशैवे ह्रं द्विपङ्क्ति लिखेत् ॥ ३० ॥

विलिखेच्च कर्णिकायां
पाशाङ्कुशसाध्यसंयुतां शक्तिम् ।

---

1. अष्टाशात्तार्गलाविर्हृलयवरयुताच्पूर्व०

अभ्यन्तराष्टकोष्ठे-

ष्वङ्गान्यवशेषितेषु चाष्टार्णौ ॥ ३१ ॥

कोष्ठेषु षोडशस्वथ

षोडशवर्णं तथा मनुं मन्त्री ।

पद्मस्य केसरेष्वथ

युगस्वरात्मान्वितां तथा मायाम् ॥ ३२ ॥

एकैकेषु दलेषु

त्रिशस्त्रिशः कर्णिकागतान्वर्णान् ।

पाशाङ्कुशबीजाभ्यां

प्रवेष्टयेद्बाह्यतश्च नलिनस्य ॥ ३३ ॥

अनुलोमविलोमगतैः

प्रवेष्टयेदक्षरैश्च तद्बाह्ये ।

तदनु घटेन सरोज-

स्थितेन तद्बाह्यकेऽम्बुजं च लिखेत् ॥ ३४ ॥

बिन्द्वन्तिका प्रतिष्ठा

संदिष्टा पाशबीजमिति मुनिभिः ।

निजभूर्दहनाप्यायिनि-
शशधरखण्डान्वितोऽङ्कुशो भवति ॥ ३५ ॥

पाशश्रीशक्तिस्वर-
मन्मथशक्तीन्दिराङ्कुशाश्चेति ।
एकं कामिनिरञ्जिनि
ठद्वयमपरं त्विहाष्टवर्णं स्यात् ॥ ३६ ॥

अथ गौरि रुद्रदयिते
योगेश्वरि सकवचास्त्रठद्वितयैः ।
बीजादिकमिदमुक्तं
शाक्तेयं षोडशाक्षरं मन्त्रम् ॥ ३७ ॥

इति कृतदलसुविभूषित-
मतिरुचिरं लोकनयनचित्तहरम् ।
कृतोज्ज्वलं मण्डलमपि
पीठाद्यं पुरेव परिपूज्य ॥ ३८ ॥

पूर्वप्रोक्तैः काथै-
रेकेनापूर्य पूरयेत्कलशम् ।

हृल्लेखाद्यङ्गाख्यौ
मात्रसुरेशादिकौ च कुलिशादिम् ॥ ३९ ॥

एवं संपूज्य देवीं कलशमनुशुभैर्गन्धपुष्पादिकैस्ता-
न्दध्याज्यक्षौद्रसिक्तैस्त्रिशतमथ पृथग्दुग्धवीरुत्समिद्भिः ।
हुत्वा दत्वा सुवर्णांशुकपशुधरणीर्दक्षिणार्थं द्विजेभ्यः
संपूज्याचार्यवर्यं वसुभिरमलधीः संयतात्माभिषिञ्चेत् ॥

इति कृतकलशोऽयं सिच्यते येन पुंसा
स भवति कविरेनं नित्यमालिङ्गति श्रीः ।
धनदिनरजनीशैस्तुल्यतेजा महिम्ना
निरुपमचरितोऽसौ देहिनां स्यात्पुरोगः ॥ ४१ ॥

जपेच्चतुर्विंशतिलक्षमेवं
सुयन्त्रितो मन्त्रवरं यथावत् ।
हविष्यभोजी परिपूर्णसंख्ये
जपे पुनर्होमविधिर्विधेयः ॥ ४२ ॥

पयोद्रुमाणां च समित्सहस्र-
षट्कैर्दधिक्षौद्रघृतावसिक्तैः ।

तिलैश्च तावज्जुहुयात्पयोक्तै-
र्द्विजोत्तमानभ्यवहारयेच्च ॥ ४३ ॥

गुरुमपि परिपूज्य काञ्चनाद्यै-
र्जपति च मन्त्रमथो सहस्रमात्रम् ।
भजति च दिनशोऽमुमर्चनायां
विधिविहितं विधिमादरेण भूयः ॥ ४४ ॥

संक्षेपतो निगदितो विधिरर्चनायाः
शक्तेरमुं भजतु संसृतिमोचनाय ।
कान्त्यै श्रियै च यशसे जनरञ्जनाय
सिद्ध्यै प्रसिद्धमहसोऽस्य परस्य धाम्नः ॥ ४५ ॥

गजमृगमदकाश्मीरै-
र्मन्त्रितमः सुरभिरोचनोपेतैः ।
विलिखेदलक्तकरसा-
लुलितैर्यन्त्राणि सकलकार्यार्थी ॥ ४६ ॥

राज्या पटुसंयुतया
सपाशशक्त्यङ्कुशेन मन्त्रेण ।

स्वाद्भक्तयाभिजुह्व-
  न्निश्युर्वीशांस्तथोर्वशीं वशयेत् ॥ ४७ ॥

एभिर्विधानैर्भुवनेश्वरीं तां
  समर्चयित्वाथ जपंश्च मन्त्री ।
स्तुत्यानयाभिष्टुवतां समग्र-
  प्रीत्यै समस्तार्तिविभञ्जिकायाः ॥ ४८ ॥

प्रसीद प्रपञ्चस्वरूपे प्रधाने
  प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणोतुं प्रभो प्रारभे प्राञ्जलिस्त्वां
  प्रकृत्याप्रतर्क्ये प्रकामप्रवृत्ते ॥ ४९ ॥

स्तुतिर्वाक्यबद्धा पदात्मैव वाक्यं
  पदं त्वक्षरात्माक्षरस्त्वं महेशि ।
ध्रुवं त्वां त्वमेवाक्षरैस्त्वन्मयैस्तो-
  ष्यसि त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥ ५० ॥

अजाधोक्षजत्रीक्षणाश्चापि रूपं
  परं नाभिजानन्ति मायामयं ते ।

स्तुवन्तीशि तां त्वाममी स्थूलरूपां
तदेतावदम्बेह युक्तं ममापि ॥ ५१ ॥

नमस्ते समस्तेशि बिन्दुस्वरूपे
नमस्ते रवत्वेन तत्त्वाभिधाने ।
नमस्ते महत्त्वं प्रपन्ने प्रधाने
नमस्ते त्वहंकारतत्त्वस्वरूपे ॥ ५२ ॥

नमः शब्दरूपे नमो व्योमरूपे
नमः स्पर्शरूपे नमो वायुरूपे ।
नमो रूपतेजोरसांभःस्वरूपे
नमस्तेऽस्तु गन्धात्मिके भूस्वरूपे ॥ ५३ ॥

नमः श्रोत्रत्वचर्माक्षिजिह्वाख्यनासा-
सवाक्पाणिपत्पायुसोपस्थरूपे ।
मनोबुद्ध्यहंकारचित्तस्वरूपे
विरूपे नमस्ते विभो विश्वरूपे ॥ ५४ ॥

रवित्वेन भूत्वान्तरात्मा दधासि
प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।

दहस्यग्निमूर्तिं वहन्त्याहृतं वा
महादेवि तेजस्त्रयं त्वत्त एव ॥ ५५ ॥

चतुर्वक्त्रयुक्ता लसद्धंसवाहा
रजः संश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्यं जगन्मातृभूते
परं तत्पदं ध्यायसीशि त्वमेव ॥ ५६ ॥

विराजत्किरीटा लसच्चक्रशङ्खा
वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः
करोतीह सोंऽशोऽपि देवि त्वमेव ॥ ५७ ॥

जटाबद्धचन्द्राहिगङ्गा त्रिणेत्रा
जगत्संहरन्ती च कल्पावसाने ।
तमः संश्रिता रुद्रसंज्ञां दधाना
वहन्ती परश्वक्षमाले विभासि ॥ ५८ ॥

सचिन्ताक्षमाला सुधाकुम्भलेखा-
धरा त्रीक्षणार्धेन्दुराजत्कपर्दा ।

सुशुक्लांशुकाकल्पदेहा सरस्व-
त्यपि त्वन्मयैवेशि वाचामधीशा ॥ ५९ ॥

लसच्चक्रशङ्खा चलत्खड्गभीमा
नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः ।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसंघा
त्वमेवेशि दुर्गा विसर्गाविहीने ॥ ६० ॥

पुरारातिदेहार्धभागो भवानी
गिरीन्द्रात्मजात्वेन यैषा विभासि ।
महायोगिवन्द्यां महेशासुनाथा
महेश्यंबिका तत्त्वतस्त्वन्मयैव ॥ ६१ ॥

लसत्कौस्तुभोद्भासिते व्योमनीले
वसन्ती च वक्षःस्थले कैटभारेः ।
जगद्वल्लभां सर्वलोकैकनाथां
श्रियं तां महादेव्यहं त्वामवैमि ॥ ६२ ॥

अजाद्रीगुहाब्जाक्षपोत्रीन्द्रकाणां
महाभैरवस्यापि चिह्नं वहन्त्यः ।

विभो मातरः सप्ततद्रूपरूपाः
स्फुरन्त्यस्त्वदंशा महादेवि ताश्च ॥ ६३ ॥

समुद्यद्दिवाकृत्सहस्रप्रभासा
सदा संतताशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुरेखे सपाशा-
ङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते ॥ ६४ ॥

प्रभाकीर्त्तिकान्तीन्दिरारात्रिसंध्या-
क्रियाशातमिस्राक्षुधाबुद्धिमेधाः ।
स्तुतिर्वाङ् मतिः संनतिः श्रीश्च शक्ति-
स्त्वमेवेशि येऽन्ये च शक्तिप्रभेदाः ॥ ६५ ॥

हरे बिन्दुनादैः सशक्त्याख्यशान्तै-
र्नमस्तेऽस्तु भेदैः प्रभिन्नैरभिन्ने ।
सदा सप्तपातालवलोकाचलाब्धि-
ग्रहद्वीपधातुंस्वरादिस्वरूपे ॥ ६६ ॥

नमस्ते नमस्ते समस्तस्वरूपे
समस्तेषु वस्तुष्वनुस्यूतशक्ते ।

अतिस्थूलसूक्ष्मस्वरूपे महेशि
स्मृते बोधरूपेऽप्यबोधस्वरूपे ॥ ६७ ॥

मनोवृत्तिरस्तु स्मृतिस्ते समस्ता
तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्या-
त्प्रसीद क्षमस्व प्रभो संततं मे ॥ ६८ ॥

हृल्लेखाजपविधिमर्चनाविशेषा-
नेतांस्तां स्तुतिमपि नित्यमादरेण ।
योऽभ्यस्येत्स खलु परां श्रियं च गत्वा
शुद्धं तद्व्रजति पदं परस्य धाम्नः ॥ ६९ ॥

इति हृल्लेखाविहितो
विधिरुक्तः संग्रहेण सकलोऽयम् ।
अस्मिन्निष्णातमना
मन्त्री योगी स एव भोगी च ॥ ७० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
प्रपञ्चसारे दशमः पटलः ॥

## एकादशः पटलः ॥

अथ श्रियो मन्त्रविधिः समासतो
जगद्धिताय प्रतिवक्ष्यतेऽधुना ।
सहाङ्गभेदैः सजपार्चनाहुत-
क्रमैः समभ्युद्धरणाय दुर्गतेः ॥ १ ॥

वियत्तुरीयस्तु विलोमतोऽनल-
प्रदीपितो वामविलोचनाश्रितः ।
सचन्द्रखण्डः कथितो रमामनु-
र्मनोरथावाप्तिमहासुरद्रुमः ॥ २ ॥

ऋषिर्भृगुश्छन्दसि चोदिता निचृ-
त्समीरिता श्रीरपि देवता पुनः ।
दृगक्षिकर्णेनमनुस्वरानला-
न्वितेन चास्थ्ना विहितं षडङ्गकम् ॥ ३ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयधृतकरकुम्भाद्भिरासिच्यमाना ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये वः ।

संदीक्षितोऽथ गुरुणा मनुवर्यमेनं
सम्यग्जपेन्निशितधीर्दिननाथलक्षम् ।
अभ्यर्चयन्नहरहः श्रियमादरेण
मन्त्री सुशुद्धचरितो रहितो वधूभिः ॥ ५ ॥

जपावसाने दिनकृत्सहस्र-
संख्यैः सरोजैर्मधुरत्रयाक्तैः ।
हुनेत्तिलैर्वा विधिनाथ बैल्वैः
समिद्वरैर्मन्त्रिवरोऽभिर्वा ॥ ६ ॥

रुचिराष्टपत्रमथ वारिरुहं
गुणवृत्तराशिचतुरश्रयुतम् ।
प्रविधाय पीठमपि तत्र यजे-
न्नवशक्तिभिः सह रमां तु ततः ॥ ७ ॥

विभूतिरुन्नतिः कान्तिर्हृष्टिः[1] कीर्त्तिश्च संनतिः ।
पुष्टिराकृष्टिर्ऋद्धिश्च रमाया नव शक्तयः ॥ ८ ॥

आवाह्य सम्यक्कलशे यथाव-
त्समर्चनीया विधिना रमासौ ।
जप्त्वा यथाशक्ति पुनर्गुरुस्तु
संसेचयेत्संयतमात्मशिष्यम् ॥ ९ ॥

अङ्गैः प्रथमावृतिरपि
मूर्तीभचतुष्कनिधियुगैरपरा ।
शक्त्यष्टकेन चान्या
चरमा ककुबीश्वरैः समभ्यर्च्या ॥ १० ॥

वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
दमकः शललश्चैव गुग्गुलुश्च कुरण्डकः ॥ ११ ॥

बलाकी विमला चैव कमला वनमालिका ।
विभीषिका द्राविका च शांकरी वसुमालिका ॥ १२ ॥

1. कान्तिः सृष्टिः.

*P. 11

अयनैव च पूर्वसेवया
परितुष्टा कमला प्रसीदति ।
धनधान्यसमृद्धिसंकुला-
मचिरादेव च मन्त्रिणे श्रियम् ॥ १३ ॥

अम्भस्युरोजद्वयसे हि तिष्ठं-
स्त्रिलक्षमेनं प्रजपेच्च मन्त्री ।
श्रियं विचिन्त्यार्कगतां यथाव-
द्दरिद्रताया भवति प्रमुक्तः ॥ १४ ॥

वसतावुपविश्य कैटभारेः
कमलावृक्षतलेऽथ वा त्रिलक्षम् ।
जपतोऽपि भवेच्च काङ्क्षितार्था-
दधिकं वत्सरतो वसुप्रपञ्चः ॥ १५ ॥

जुहुयादशोकदहने
सघृतैरपि तण्डुलैः सकलवश्यतमम् ।
खदिरानले त्रिमधुरै-
रपि तैर्धनदं च राजकुलवश्यमपि ॥ १६ ॥

समधुरनलिनानां लक्षहोमादलक्ष्मी-
परिगतमपि जन्तुं प्राप्नुयाच्छ्रीः समग्रा ।
घनविभवसमृद्ध्या नित्यमाह्लादयन्ती
त्यजति न करुणार्द्रा तस्य सा संततिं च ॥ १७ ॥

बिल्वं श्रीसूक्तजापी निजभुवि मुखजो वर्धयित्वास्य पूर्वं
पत्रैस्त्रिस्वादुयुक्तैः कुसुमफलसमिद्भिस्ततस्कन्धभेदैः ।
तन्मूलैर्मण्डलात्प्राक्सुनियतचरितोऽसौ हुताग्निर्मलात्मा
रूपं पश्येद्रमायाः कथमपि न पुनस्तत्कुले स्यादलक्ष्मीः ॥

हृदयकमलवर्णतः परस्ता-
दमृतमनन्तयुगं ततश्च सिन्यै ।
हुतवहदयितेत्यसौ रमायाः
प्रवरधनार्थिभिरर्थितो हि मन्त्रः ॥ १९ ॥

दक्षोऽस्य स्यादृषिश्छन्दसि सुमतिभिरुक्तो विराड्देवता च
श्रीदेवीपद्मिनीभ्यां हृदयकशिरसी विष्णुपत्न्या शिखा च ।
मेदोरेफाह्वदार्णैरपि च कमलरूपाक्षरैवर्मसास्त्रां
ताराद्याभिर्नमोन्ताभिरिति निगदितं जातियुक्ताभिरङ्गम् ॥

पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोःसरोजा
देहोत्थाभिः प्रभाभिस्त्रिभुवनमखिलं भासुरा भासयन्ती ।
मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमञ्जीरकाञ्ची-
ग्रैवेयोर्म्यङ्गदाढ्या धृतमणिमकुटा श्रेयसे श्रीर्भवेद्वः ॥ २१ ॥

ध्यात्वैवं श्रियमपि पूर्वक्लृप्तपीठे
पद्मादौ प्रथममथार्चयेत्तदङ्गैः ।
अष्टाभिर्दलमनुशक्तिभिस्तदन्ते
लोकेशैरिति विधिनार्चयेत्समृद्ध्यै ॥ २२ ॥

दीक्षातो जपतु रमारमेशभक्तो
लक्षाणां दशकममुं मनुं नियत्या ।
स श्रीमान्बहुधनधान्यसंकुलः स-
न्मेधावी भवति च वत्सरेण मन्त्री ॥ २३ ॥

इति मन्त्रजपादृतधीर्मधुर-
त्रितयैरयुतं जुहुयात्कमलैः ।
परिशुद्धमना नचिरात्स पुन-
र्लभते निजवाञ्छितमर्थचयम् ॥ २४ ॥

समुद्रगायामवतीर्य नद्यां
　　स्वकण्ठमात्रे पयसि स्थितः सन् ।
त्रिलक्षजाप्याढ्यतमोऽब्दमात्रा-
　　न्मन्त्री भवेन्नात्र विचारणीयम् ॥ २५ ॥

नन्द्यावर्तैर्जुहुत भगभेऽभ्यर्च्य लक्ष्मीं सहस्रं
　　तावद्बैल्वैस्त्रिमधुरयुतैर्वा फलैः पौर्णमास्याम् ।
पञ्चम्यां वा सितसरसिजैः शुक्रवारेऽच्छपुष्पै-
　　रन्यैर्मासं प्रतिहुतविधिर्वत्सरैः स्याद्धनाढ्यः ॥ २६ ॥

ताररमामायाश्रीः
　　कमले कमलालये प्रसीदयुगम् ।
बीजानि तानि पुनरपि
　　समहालक्ष्मीहृदिन्दिरामन्त्रः ॥ २७ ॥

त्रिभिस्तु वर्णैर्हृदयं शिरोभिः
　　स्यात्पञ्चभिश्चाथ शिखा त्रिवर्णा ।
त्रिभिस्तथा वर्म चतुर्भिरस्त्रं
　　पृथक् त्रिबीजापुटितैस्तदङ्गम् ॥ २८ ॥

हस्तोद्यद्वसुपात्रपङ्कजयुगादर्शा स्फुरन्नूपुर-
ग्रैवेयाङ्गदहारकङ्कणमहामौलिज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका
देवी दिव्यगणानता भवदघप्रध्वंसिनी स्याद्रमा ॥२९॥

लक्षं जपेन्मनुमिमं मधुरत्रयाक्तै-
र्बैल्वैः फलैः प्रतिहुनेदयुतं तदन्ते ।
आराधयेदनुदिनं प्रतिवक्ष्यमाण-
मार्गेण दुर्गतिभयाद्रहितो भवेत्सः ॥ ३० ॥

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपकः ।
वासुदेवादयश्चाङ्गावरणात्समनन्तरम् ॥ ३१ ॥

भारतीपार्वतीचान्द्रीशचीभिरपि संयुता ।
दमकादिस्तृतीयानुरागाद्यैश्च चतुर्थ्यपि ॥ ३२ ॥

अनुरागो विसंवादो विजयो वल्लभो मदः ।
हर्षो बलश्च तेजश्चेत्यष्टौ बाणा महाश्रियः ॥ ३३ ॥

अनन्तब्रह्मपर्यन्तैः पञ्चमीन्द्रादिभिर्मता ।
चक्रपद्मान्तिकैः षष्ठीवज्राद्यैरावृतिः श्रियः ॥ ३४ ॥

संपूज्यैवं श्रियमनुदिनं यो जपेन्मन्त्रमेनं
प्रोक्तां संख्यां सहुतविधिमप्युच्छ्रितां प्राप्य लक्ष्मीम् ।
द्वित्रादर्वाग्भवति पशुपुत्रादिभोगैः समृद्धो
वर्षाद्देहापदि च पदमभ्येति नित्यं स विष्णोः ॥ ३५ ॥

श्रीमन्त्रेष्विति गदितेषु भक्तियुक्तः
श्रीसूक्तान्यपि च जपेद्यजेद्धुनेच्च ।
सूक्ते तु प्रथमतरे स्वयं मुनिः स्या-
दन्येषां मुनय [1]इमे भवन्ति भूयः ॥ ३६ ॥

आनन्दः कर्दमश्चैव चिक्लीतश्चेन्दिरासुतः ।
ऋचामथो तदन्यासामृषयः समुदीरिताः ॥ ३७ ॥

आद्ये सूक्तत्रये च्छन्दोऽनुष्टुप्कांसे बृहत्यपि ।
तदन्त्ययोस्त्रिष्टुबाख्यां परस्तादष्टके पुनः ॥ ३८ ॥

अनुष्टुबन्त्ये प्रस्तारपङ्क्तिश्छन्दांसि वै क्रमात् ।
श्र्यग्नी स्यातां देवते च न्यासाङ्गविधिरुच्यते ॥ ३९ ॥

1. अमी.

मूर्धाक्षिकर्णनासा-
मुखगलदोर्हृदयनाभिगुह्येषु ।
पायूरुजानुजङ्घा-
चरणेषु न्यसतु सूक्तकैः क्रमशः ॥ ४० ॥

सहिरण्मयी च चन्द्रा-
रजतहिरण्यस्रजे हिरण्याख्या ।
अङ्गानि जातियुञ्ज्यथ
हिरण्यवर्णाह्वया तथास्त्रं स्यात् ॥ ४१ ॥

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।
मणिमकुटविचित्रालंकृताकल्पजातै-
र्भवतु भुवनमाता संततं श्रीः श्रिये वः ॥ ४२ ॥

प्रारभ्याच्छां प्रतिपदमथ प्राप्तदीक्षो विमुक्त-
स्तन्वङ्गीभिस्तनुविमलवासाः सुधौतद्विजाद्यः ।
एकादश्यामपि परिसमाप्यार्कसाहस्रिकान्तं
जापं मन्त्री प्रयजतु रमां प्राक्तनप्रोक्तपीठे ॥ ४३ ॥

पद्मा सपद्मवर्णा

पद्मस्थार्द्रा च तर्पयन्त्यभिधा ।

तृप्ता ज्वलन्त्यभिख्या

स्वर्णप्राकारसंज्ञका चेति ॥ ४४ ॥

मध्ये दिशाधिपाङ्गा-

वृत्योरेतास्ततश्च वज्रादीन् ।

प्रयजेच्चतुरावरणं

निगदितमिति सूक्तकल्पितविधानम् ॥ ४५ ॥

अन्नघृताभ्यां जुहुया-

दर्चास्वष्टोत्तरं शतं मन्त्री ।

आवाहनासनार्घ्यक-

पाद्याचमनमधुपर्कसेकानि ॥ ४६ ॥

वासोभूषणगन्धा-

न्सुमनोयुतधूपदीपभोज्यानि ।

सोद्वासनानि कुर्या-

द्भक्तियुतः पञ्चदशभिरथ मनुभिः ॥ ४७ ॥

व्यस्तैरपि च समस्तैः
पूजायां संयतात्मकः सिद्ध्यै ।
[1]पक्वैर्बिल्वसमिद्भिः
पयोन्धसा सर्पिषा क्रमाज्जुहुयात् ॥ ४८ ॥

एकैकं त्रित्रिशतं
द्वादश्यां भोजयीत विप्रांश्च ।
मन्दारकुन्दकुमुदक-
नन्द्यावर्ताह्वमालतीजात्यः ॥ ४९ ॥

कह्लारपद्मरक्तो-
त्पलकेतकचम्पकादयो ग्राह्याः ।
परिषिञ्चेत्त्रिशो नित्यं
सूक्तैस्तैः स्नानकर्मणि ॥ ५० ॥

आदित्याभिमुखो जप्यात्तावत्तावच्च तर्पयेत् ।
अर्चयेद्विधिना तेन दिनशो जुहुयात्त्रिशः ॥ ५१ ॥

एवं करोति षण्मासं योऽसौ स्यादिन्दिरापतिः ।
उद्बुद्धमात्रे नलिने नवनीतं विनिक्षिपेत् ॥ ५२ ॥

---

1. पक्वै०

सकर्णिके सकिञ्जल्कोदरे पत्रान्तरालके ।
पुनः पद्मं तदुद्धृत्य समिद्धे तु हुताशने ॥ ५३ ॥

जुहुयादन्त्ययाथर्चा शतमष्टोत्तरं जपेत् ।
चत्वारिंशच्छुक्रवारैर्महाश्रीस्तस्य जायते ॥ ५४ ॥

कांसोऽस्मीत्यनया सम्यगेकादश घृताहुतीः ।
षण्मासं जुह्वतो नित्यं भूयात्प्रायो महेन्दिरा ॥ ५५ ॥

सूक्तैरेतैर्जुहुत जपताभ्यर्चयीतावगाहे-
त्सिञ्चेद्वर्के दिनमनु तथा संयतस्तर्पयीत ।
संशुद्धात्मा विविधधनधान्याकुलाभ्यन्तरोऽसौ
मन्त्री सर्वैर्भुवि बहुमतः श्रीमतां स्यात्पुरोगः ॥

श्रीलक्ष्मीर्वरदा विष्णुपत्नी च सवसुप्रदा ।
हिरण्यरूपा सस्वर्णमालिनी रजतस्रजा ॥ ५७ ॥

ससुवर्णप्रभा स्वर्णप्राकारा पद्मवासिनी ।
पद्महस्ता पद्मपूर्वप्रिया मुक्तापदादिका ॥ ५८ ॥

अलंकारा तथा सूर्या चन्द्रा बिल्वप्रियेश्वरी ।
भुक्तिः प्रपूर्वा मुक्तिश्च विभूत्यृद्धिसमृद्धयः ॥ ५९ ॥

तुष्टिः पुष्टिश्च धनदा तथान्या तु धनेश्वरी ।
श्रद्धा सभोगीनी भोगदात्री धातृविधातृके ॥ ६० ॥

द्वात्रिंशदेताः श्रीदेव्या ये मन्त्राः समुदीरिताः ।
तारादिका नमोन्ताश्च तैरर्चासु बलिं हरेत् ।
तर्पयेच्च महादेवीं दिनादौ मन्त्रवित्तमः ॥ ६१ ॥

नाभ्यक्तोऽद्यान्न नग्नः सलिलमवतरेन्न स्वपेद्वाशुचिः स-
न्नाभ्यज्यान्नैव चाद्यात्तिलरुहलवणे केवले नैव दोषाम् ।
वक्के लिम्पेद्वदेन्नानृतमपि मलिनः स्यान्न बिम्बाम्बुजन्म-
द्रोणान्नो धारयेत्के भुवमपि न वृथैवालिखेदिन्दिरार्थी ॥

सुविमलचरितः स्याच्छुद्धमाल्यानुलेपा-
भरणवसनदेहो मुख्यगन्धोत्तमाङ्गः ।
सुविशदनखदन्तः शुद्धधीर्विष्णुभक्तो
विमलरुचिरशय्यः स्याच्चिरायेन्दिरार्थी ॥ ६३ ॥

दुष्टां कष्टान्ववायां कलहकलुषितां मार्गदृष्टामनिष्टा-
मन्यासक्तामसक्तामतिविपुलकृशाङ्गीमतिह्रस्वदीर्घाम् ।

रोगार्तां भोगलोलां प्रतिपुरुषचलां राजकान्तामकान्तां
काकाक्षीमेकचारां ग्रहकुसुमयुतां न स्पृशेदिन्दिरार्थी ॥

शान्तः शश्वत्स्मितमधुरपूर्वाभिभाषी दयार्द्रो
देवाचार्यातिथिदहनपूजारतः पुण्यशीलः ।
नित्यस्नायी नियमनिरतः प्रत्यगाशामुखाशी
मन्त्री वर्णाश्रमदृढरतिः स्याच्चिरायेन्दिरार्थी ॥ ६५ ॥

श्रीमन्त्रभक्तः श्रितविष्णुदीक्षः
श्रीसूक्तजापी शितधीः सुशीलः ।
स्वदारतुष्टो मितभाषणाशी
लोकप्रियः स्याच्चिरमिन्दिरार्थी ॥ ६६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
प्रपञ्चसारे एकादशः पटलः ॥

# द्वादशः पटलः ॥

अथ रमाभुवनेशिमनोभवै-
त्रिपुटसंज्ञकमन्त्रमुदीरितम् ।
सकलवर्गफलाप्तियशस्करं
जगति रञ्जनकृत्कविताकरम् ॥ १ ॥

बीजैस्त्रिभिर्द्विरुक्तैः
कुर्यादङ्गानि साधकः सिद्ध्यै ।
पूर्वतरेरितयोर्वा
द्वयोरथैकं तदङ्गयोः प्रभजेत् ॥ २ ॥

नवकनकभासुरोर्वी-
विरचितमणिकुट्टिमे सकल्पतरौ ।
रत्नवरबद्धसिंहा-
सननिहितसरोरुहे समासीनाम् ॥ ३ ॥

आबद्धरत्नमकुटां मणिकुण्डलोद्य-
त्केयूरकोर्मिरशनाह्वयनूपुराढ्याम् ।
ध्यायेद्धृताब्जयुगपाशकशाङ्कुरेक्षु-
चापां सपुष्पविशिखां नवहेमवर्णाम् ॥ ४ ॥

चामरमुकुरसमुद्गक-
ताम्बूलकरङ्कवाहिनीभिश्च ।
दूतीभिः समभिवृतां
पश्यन्तीं साधकं प्रसन्नदृशा ॥ ५ ॥

[1]योगेश्वरीमिति विचिन्त्य जपेच्च मन्त्र-
मादित्यलक्षमथ मन्त्रितमो जपान्ते ।
श्रीराजवृक्षसमिधां सजपार्तवानां
तावत्सहस्रसमितं मधुरैर्जुहोतु ॥ ६ ॥

अङ्गैर्लक्ष्मीहरिगिरिसुताशर्वरत्यङ्गजातैः
षट्कोणस्थैर्निधियुगयुतैस्तद्बहिर्मातृभिश्च ।
योषिद्रूपैर्बहिरपि यजेल्लोकपालैस्तदेत-
त्प्रोक्तं देव्या अपि सुरगणैः पूजनीयं विधानम् ॥ ७ ॥

1. लोके०

लक्ष्मीगौरीमनसिशयबीजानि कृत्वा कलायां
तां वा बिन्दौ तमपि गगने तच्च सिन्दूरवर्णम् ।
स्मृत्वा बुद्ध्या भुवनमखिलं तन्मयत्वेन मन्त्री
देवान्वश्यानपि वितनुते किं पुनर्मर्त्यजातीन् ॥ ८ ॥

य इमं भजते मनुं मनस्वी
विधिना वा पुनरर्चयेद्विधानम् ।
स तु सम्यगवाप्य हृष्टभोगा-
न्परतस्तत्पदमैशमेति धाम ॥ ९ ॥

सहृदयभगवत्यै दान्तरण्यै धराणां
सणिधरशिवधार्णारे द्विठान्ता ध्रुवाद्याः ।
गदितामिति धराया मन्त्रमुत्कृष्टधात्री-
सुखसुतधनधान्यप्राप्तिदं कीर्त्तिदं च ॥ १० ॥

ऋषिरपि वराह उक्त-
श्छन्दो निचृदस्य देवता धरणी ।
मनुनामुनैव च पदैः
षोढा भिन्नेन निगदितोऽङ्गविधिः ॥ ११ ॥

मुख्याम्भोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
चञ्चच्छाल्यग्रचुम्बच्छुकलसितकरा प्राप्तनीलोत्पला च ।
रत्नाकल्पाभिरामा मणिमयमकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद्विश्वंभरा वः सततमभिमतं वल्लभा कैटभारेः ॥

लक्षायता च सदृशांशहुतावसाना
प्रोक्ता धराहृदयमन्त्रजपक्रिया स्यात् ।
सर्पिष्मता सुविमलेन पयोन्धसास्य
होमो विधिः सकलसिद्धिकरः किलायम् ॥ १३ ॥

पीठे विष्णोः पूजयेत्पूर्वमन्त्रै-
र्भूवह्न्यम्बुप्राणसंज्ञैश्च भूतैः ।
शान्त्यन्ताभिः शक्तिभिः साकमाशा-
पालैः पृथ्वीं संयतात्मोपचारैः ॥ १४ ॥

पुष्पैः प्रियङ्गोर्मधुरत्रयाक्तै-
र्नीलोत्पलैर्वापि तथारुणैस्तैः ।
सहस्रमानं प्रतिजुह्वतः स्या-
द्वौर्गोमती सस्यकुलाकुला च ॥ १५ ॥

पिङ्गलां पृथुलशालिमञ्जरीं
यो जुहोति मधुरत्रयोक्षिताम् ।
नित्यशः शतमथास्य मण्डला-
द्धस्तगा भवति विस्तृता मही ॥ १६ ॥

भृगोस्तु वारे निजसाध्यभूभृ-
द्विलोलिताम्भःपरिपक्वमन्धः ।
पयोघृताक्तं जुहुयात्सहस्रं
दुग्धेन वा तेन दिनावतारे ॥ १७ ॥

षण्मासादनुभृगुवारमेष होमः
संपन्नान्समुपनयेद्धराप्रदेशान् ।
पुत्रान्वा पशुमहिषेष्टजुष्टपुष्टा-
मिष्टामप्यनुदिनमिन्दिरां समग्राम् ॥ १८ ॥

संक्षेपतो हृदयमन्त्रविधिर्धरायाः
प्रोक्तो हिताय जगतां रहितक्षमाणाम् ।
एनं भजन्निति धराकमलासमृद्धः
स्यादत्र सिद्धिमपरत्र परां प्रयाति ॥ १९ ॥

अथ पुरुषार्थचतुष्टय-
सिद्धिकरी मन्त्रजापनिरतानाम् ।
त्वरिताख्येयं विद्या
निगद्यते जपहुतार्चनाविधिभिः ॥ २० ॥

भक्तियुतानां त्वरया
सिद्धिकरी चेति मन्त्रिणां सततम् ।
देव्यास्त्वरिताख्या स्या-
त्त्वरितं क्ष्वेलग्रहादिहरणतया ॥ २१ ॥

वर्मद्वयं च तदन्त्यः
शिवयुक्चरमेऽङ्गनाद्युसाधिलवम् ।
अन्त्यः स योनिरस्त्रा-
न्तिकः सतारो मनुर्दशार्णयुतः ॥ २२ ॥

तारान्तेऽस्त्रादावपि
मायाबीजं प्रयोजयेन्मन्त्री ।
तेन हि काङ्क्षितसिद्धि-
र्भूयादचिरेण मन्त्रविदाम् ॥ २३ ॥

कूर्मादिभ्यां द्वाभ्यां
द्वाभ्यामपि पूर्वपूर्वहीनाभ्याम् ।
कुर्यात्सप्तभिरर्णै-
रङ्गानि च षट् क्रमेण मन्त्रज्ञः ॥ २४ ॥

कालिकगलहृन्नाभिक-
गुह्योरुषु जानुजङ्घयोः पदयोः ।
देहे न्यासं कुर्या-
न्मन्त्रेण व्यापकं समस्तेन ॥ २५ ॥

श्यामतनुमरुणपङ्कज-
चरणतलां वृषलनागमञ्जीराम् ।
स्वर्णांशुकपरिधानां
वैश्याहिद्वन्द्वमेखलाकलिताम् ॥ २६ ॥

तनुमध्यलतां पृथुल-
स्तनयुगलां करविराजदभयवराम् ।
शिखिपिञ्छनालवलयां
गुञ्जाफलगुणितभूषणारुणिताम् ॥ २७ ॥

नृपफणिकेयूरां तां
गलविलसद्विविधमणियुताभरणाम् ।
द्विजनागविहितकुण्डल-
मण्डितगण्डद्वयीमुकुरशोभाम् ॥ २८ ॥

शोणतराधरपल्लव-
विद्रुममणिभासुरां प्रसन्नां च ।
पूर्णशशिबिम्बवदना-
मरुणायतलोचनत्रयीनलिनाम् ॥ २९ ॥

कुञ्चितकुन्तलविलस-
न्मकुटाघटिताहिवैरिपिञ्छयुताम् ।
कैरातीं वनकुसुमो-
ज्ज्वलां मयूरातपत्रकेतनिकाम् ॥ ३० ॥

सुरुचिरसिंहस्कन्धगां
विभ्रमसमुदायमन्दिरां तरुणीम् ।
तामेनां त्वरिताख्यां
ध्यात्वा कुर्याज्जपार्चनाहोमान् ॥ ३१ ॥

दीक्षां प्राप्य गुरोरथ

लक्षं जप्याद्दशांशकं जुहुयात् ।

बिल्वसमिद्भिस्त्रिमधुर-

युक्ताभिः साधकः सुसंयतधीः ॥ ३२ ॥

अष्टहरिविधृतसिंहा-

सने समावाह्य सरसिजे देवीम् ।

अङ्गैः सह प्रणीतां

गायत्रीं पूजयेद्दिशां क्रमतः ॥ ३३ ॥

हुङ्काराख्या खेचरि

चण्डेसच्छेदनी तथा क्षपणी ।

भूयः स्त्रियाह्वया हुं-

कारीसक्षेमकारिकाः पूज्याः ॥ ३४ ॥

सश्रीबीजा लोके-

शायुधभूषान्विता दलाग्रेषु ।

फट्कारी चाप्यग्रे

शरासशरधारिणी च तद्बाह्ये ॥ ३५ ॥

सस्वर्णवेत्रयष्ट्यौ
द्वाःस्थे पूज्ये पुनर्जयाविजये ।
कृष्णो बर्बरकेशो
लगुडधरः किंकरश्च तत्पुरतः ॥ ३६ ॥

अरुणैश्चन्दनकुसुमै-
र्वनजैरपि धूपदीपनैवेद्यैः ।
प्रवरैश्च नृत्तगीतैः
समर्चयेद्भक्तिभारनम्रतनुः ॥ ३७ ॥

जपहुतपूजाभेदै-
रिति सिद्धे मन्त्रजापिनो मन्त्रे ।
नारीनरनरपतयः
कुर्वन्ति सदा नमस्क्रियामस्मै ॥ ३८ ॥

विद्याधर्यो यक्ष्यः
ससुरासुरसिद्धचारणप्रमदाः ।
अप्सरसश्च विशिष्टाः
साधकसक्तेन चेतसाकुलिताः ॥ ३९ ॥

स्मरशरविह्वलिताङ्ग्यो
रोमाञ्चितगात्रवल्लरीललिताः ।
घनघर्मबिन्दुमौक्तिक-
विलसत्कुचगण्डमण्डलद्वितयाः ॥ ४० ॥

विस्पष्टजघनवक्षो-
रुहदोर्मूलाः स्खलत्पदन्यासाः ।
मुकुलितनयनसरोजाः
प्रस्पन्दितदशनवसनसंभिन्नाः ॥ ४१ ॥

श्लथमानांशुकचिकुरा
मदविवशस्खलितमन्दभाषिण्यः ।
मृदुतरमस्तकविरचित-
नत्यञ्जलयः प्रसादकाङ्क्षिण्यः ॥ ४२ ॥

वीक्षस्व देहि वाचं
परिरम्भणपरमसौख्यमस्माकम् ।
एहि सुरोद्यानादिषु
रंस्यामः स्वेच्छया निरातङ्कम् ॥ ४३ ॥

इत्यादि [1]वाणिनीभि-
  र्विलोभ्यमानो यदा न विक्रियते ।
मन्त्री तदेत्य वाञ्छित-
  मखिलं तस्मै ददाति सा देवी ॥ ४४ ॥

योनिं कुण्डस्यान्तः
  प्रकल्प्य तत्रानलं समाधाय ।
संपूज्य पूर्वविधिना
  जुहुयात्सर्वार्थसिद्धये मन्त्री ॥ ४५ ॥

इक्षुशकलैः समृद्ध्यै
  दूर्वाभिः स्वायुषे श्रिये धान्यैः ।
धान्याय यवैः पुष्ट्यै
  गोधूमैर्ऋद्धये तिलैर्जुहुयात् ॥ ४६ ॥

जम्बूभिः स्वर्णाप्त्यै
  राजीभिः शत्रुशान्तयेऽक्षतकैः ।
अक्षयसिद्ध्यै वकुलैः
  कीर्त्यै कुन्दैर्महोदयाय तथा ॥ ४७ ॥

---

1. वादिनीभि-

अरुणोत्पलैश्च पुष्ट्यै
मधूकजैरिष्टसिद्धयेऽशोकैः ।
पुत्राप्त्यै पाटलजैः
स्त्रीसिद्ध्यै निम्बजैश्च विद्विष्ट्यै ॥ ४८ ॥

नीलोत्पलकैस्तुष्ट्यै
चम्पकजैः कनकसिद्धये पद्मैः ।
सह किंशुकैश्च सर्वो-
पद्रवशान्त्यै स साधको जुहुयात् ॥ ४९ ॥

हुतसंख्यासाहस्री
नियुता वाथायुतान्तिकी भवति ।
यावत्संख्यो होम-
स्तावज्जप्यश्च मन्त्रिणा मन्त्रः ॥ ५० ॥

अनुमन्त्रितैश्च वारिभि-
रासेकः क्ष्वेलशान्तिकृद्भवति ।
तज्जप्तयष्टिघातो
मन्त्रितचुलुकोदकाहृतिश्च तथा ॥ ५१ ॥

तत्कर्णरन्ध्रजापा-
त्सद्यो नश्युर्विषग्रहादिरुजः ।
तद्यन्त्रस्थापनमपि
विषभूतादिप्रशान्तिकृद्भवति ॥ ५२ ॥

आख्यां मध्ये सतारे मनुमथ शतसंयुक्तविंशत्पुटेषु
प्रादक्षिण्येन शर्वादिकमनुविलिखेद्व्याप्त्यावृत्ति मन्त्री ।
विंशद्वन्द्वाष्टशूलाकलितविरचितं यन्त्रमेतत्सुजप्तं
बद्धं क्ष्वेलग्रहार्तिं हरति विजयलक्ष्मीप्रदं कीर्त्तिदं च ॥

आख्यां मध्यगतानले लिखतु दिक्पङ्क्तिष्वथ स्युः सहूं
क्षूं च्रूं छ्रूं [1]करणद्विषष्टिपदके शैवादि कालीमनुम् ।
नैर्ऋत्यादि तथा [2]क्रमाक्रमवृतं बाह्येऽनलैरावृतं
प्रोक्तं निग्रहचक्रमन्तकपुरप्राप्तिप्रदं वैरिणाम् ॥ ५४ ॥

कालीमाररमालीका
लीनमोक्षक्षमोनली ।
मामोदेततदेमोमा
रक्षतत्वत्वतक्षरः ॥ ५५ ॥

1. करणाद्य० 2. क्रमाद्यम०

यमापाटटपामाय·
माटमोटटमोटमा ।
वामो भूरिरिभूमोवा
टररीस्त्वस्त्वरीरट ॥ ५६ ॥

वह्नेर्विंण्णिम्बनिर्यासकविषमषिभिः सीसपट्टेंशुके वा
शावे पाषाणके वा विलिखतु मतिमान्काकपत्रेण यन्त्रम् ।
वल्मीके चत्वरे वा क्षततरुविवरे वा निदध्यादराति-
र्मृत्युं प्राप्नोति भूयादवयवविकलो व्याधितः पातितो वा ॥

चक्रे चाष्टाष्टपदे
कालीशिवयातुधानखण्डाद्यम् ।
यमदहनानिलवीतं
विलिख्य विषदण्डिमर्कटीलिप्तम् ॥ ५८ ॥

जप्तमधोमुखमेत-
द्यत्र तु देशे विनिक्षिपेन्मन्त्री ।
तत्रोपद्रवमखिलं
दिनशः सर्वात्मना भवति ॥ ५९ ॥

खण्डेष्वेकाशीतिषु मध्येन्दुगसाध्यं
जुंसः पूर्वं दिक्स्थचतुष्पङ्क्तिषु शैखम् ।
लिख्याल्लक्ष्मीं शिष्टचतुःषष्टिषु विद्या-
नीशाद्यं कन्यादि च बाह्ये त्वरिताख्याम् ॥ ६० ॥

दिग्दिक्संस्थामस्त्रपदाभिर्वषडन्तां
मेदोमालावेष्टितबिम्बं घटवीतम् ।
पद्मस्थं तत्पङ्कजराजद्वदनान्तं
प्रोक्तं चक्रं सम्यगिहानुग्रहसंज्ञम् ॥ ६१ ॥

श्रीसामायायामासाश्री
सानोयाज्ञज्ञेयानोसा ।
मायालीलालालीयामा
याज्ञेलालीलीलाज्ञेया ॥ ६२ ॥

लाक्षाभिः कुङ्कुमैर्वा विलिखतु धवले वांशुके स्वर्णपट्टे
लेखिन्या स्वर्णमय्या दृढमपि गुलिकीकृत्य संधारयेद्यः ।
कृत्याभ्यो मृत्युतो वा ग्रहविषदुरितेभ्यो विमुक्तः स धन्यो
जीवेत्स्वैः पुत्रपौत्रैरपरिमितमहासंपदा दीर्घकालम् ॥६३॥

चतुःषष्ट्यंशे वा क्रमविदथ लक्ष्मीमनुममुं
शिवाद्यं नैर्ऋत्यादिकमपि चतुर्णामृतवृतम् ।
बहिः स्वच्छे पट्टे कनकविहिते पूर्वविधिना
लिखित्वा जप्त्वा निक्षिपतु शितधीर्यत्र तदिदम् ॥६४॥

चक्रमनुग्रहसंज्ञं
मन्त्री देशेऽत्र संपदो विरतम् ।
शुभतरफलदायिन्यो
भवन्ति सस्यर्द्धिकालवृष्ट्याद्याः ॥ ६५ ॥

हुंकारे साध्यसंज्ञां विलिखतु तदधः कर्णिकायां च शिष्टा-
नष्टौ वर्णान्दलेष्वारचयतु हरमायां त्रिशो [1]वेष्टयित्वा ।
कुम्भस्थं यन्त्रमेतत्सरसिजपुटितं सर्वरक्षाप्रसिद्ध्यै
क्लृप्तं सर्वोपसर्गप्रशमनफलदं श्रीकरं वश्यकारि ॥ ६६ ॥

इति निगदितक्लृप्त्या पूजयेत्तोतलायां
मनुमनुदिनमेनं मानयन्मानवो यः ।
स तु जगति समग्रां संपदं प्राप्य देहा-
पदि मुदिततरात्मा युक्तधीर्मुक्तिमेति ॥ ६७ ॥

1. वेष्टयीत ।

स्मरदीर्घैधरकाग्न्यों-

[1]दीर्घाभ्यक्ष्वेलदद्रलान्ताशिवाः ।

अभितः शक्तिनिरुद्धो

द्वादशवर्णोऽयमीरितो मन्त्रः ॥ ६८ ॥

द्वाभ्यां वा चैकेन

द्वाभ्यां द्वाभ्यां तथा पुनर्द्वाभ्याम् ।

मन्त्राक्षरैर्विदध्या-

दङ्गविधिं जातिसंयुतैर्मन्त्री ॥ ६९ ॥

इन्दुकलाकलितोज्ज्वलमौलि-

र्मारमदाकुलितायुगनेत्रा ।

शोणितसिन्धुतरङ्गितपोत-

द्योतितभानुदलाम्बुजसंस्था ॥ ७० ॥

दोर्धृतदाडिमसायकपाशा

साङ्कुशचापकपालसमेता ।

शोणदुकूलविलेपनमाल्या

शोणतरा भवतोऽवतु देवी ॥ ७१ ॥

1. दीर्घेल्य०

स्मृत्वा नित्यां देवी-
मेवं प्रजपेन्मनुं शतसहस्रम् ।
अयुतं जुहुयादन्ते
नृपतरुसमिधां घृतेन वा सिद्ध्यै ॥ ७२ ॥

शाक्ते पीठे पूज्या
देवी कुसुमानुलेपनैररुणैः ।
स्वयमप्यलंकृताङ्गः
सधूपदीपैर्निवेद्यताम्बूलैः ॥ ७३ ॥

हृल्लेखा क्लेदनी नन्दा क्षोभणी मदनातुरा ।
निरञ्जना रागवती तथान्या मदनावती ॥ ७४ ॥

मेखला द्राविणी चैव भूयोऽन्या वेगवत्यपि ।
सस्मारा द्वादश प्रोक्ताः शक्तयः पत्रसंस्थिताः ॥ ७५ ॥

अङ्गैः शक्तिभिराभि-
र्मातृभिराशाधिपैः क्रमात्पूज्या ।
भक्तिभरानतवपुषा
भवभयभङ्गाय मन्त्रिणाहरहः ॥ ७६ ॥

दारिद्र्यरोगदुःखै-
दौर्भाग्यजरापमृत्युदोषैश्च ।
अस्पृष्टो निरपायो
जीवति मन्त्रं भजन्नमुं मनुजः ॥ ७७ ॥

इतीरिता लोकहिताय वज्र-
प्रस्तारिणी मन्दिरमिन्दिरायाः ।
या सर्वनारीनरराजवर्ग-
संमोहनी मोहनबाणभूता ॥ ७८ ॥

निद्रयोरन्तरा त्यक्लिन्ने मदाः स्युश्च वेशिरः ।
मायादिकस्तया वर्णद्वन्द्वैश्चाङ्गविधिः स्मृतः ॥ ७९ ॥

[1]रक्तारक्तांशुककुसुमविलेपादिका सेन्दुमौलिः
स्विद्यद्वक्त्रा मदविवशसमाघूर्णितत्रीक्षणा च ।
[2]दोःसत्पाशाङ्कुशयुतकपालाभया पद्मसंस्था
देवी पायादमितफलदा नित्यशः पार्वती वः ॥ ८० ॥

दीक्षितः प्रजपेल्लक्षं मनुमेनं हुनेत्ततः ।
मधूकपुष्पैः स्वाद्वक्तैरयुतं हविषा तथा ॥ ८१ ॥

---

1. रक्ताङ्गरागांशुक॰ 2. दोःस्थ॰

*P. 13

पीठं पूर्ववदभ्यर्च्य तत्रावाह्यापि पूजयेत् ।
अङ्गैश्च शक्तिभिर्लोकपालैर्देवीं समाहितः ॥ ८२ ॥

नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।
मदद्रवा द्राविणी च द्रविणा शक्तयो मताः ॥ ८३ ॥

प्रजपेत्प्रमदां विचिन्त्य यां वा
शयनस्थो मनुवित्सहस्रमानम् ।
निशि मारशिलीमुखाहताङ्गी
नचिरात्सा मदविह्वला समेति ॥ ८४ ॥

नित्याभिः सदृशतरा न सन्ति लोके
लक्ष्मीदा जगदनुरञ्जनाश्च मन्त्राः ।
तस्मात्ताञ्शुभमतयो[1] भजन्तु नित्यं
जापार्चाहुतसमुपासनाविशेषैः ॥ ८५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे द्वादशः पटलः ॥**

1. ञ्छितमतयो

## त्रयोदशः पटलः ॥

अथ वक्ष्यामि दुर्गाया मन्त्रान्साङ्गान्सदेवतान् ।
सजपार्चाहुतविधीन्प्रीत्यर्थं मन्त्रजापिनाम् ॥ १ ॥

तारो मायामरेयोऽत्रिपीठो बिन्दुसमन्वितः ।
स एव च विसर्गान्तो गायै नत्यन्तिको मनुः ॥ २ ॥

दुर्गास्य देवता च्छन्दो गायत्रं नारदो मुनिः ।
तारो माया च दुर्गायै ह्रामाद्यन्ताङ्गकल्पना ॥ ३ ॥

शङ्खारिचापशरभिन्नकरां त्रिणेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनुतां च दुर्गां
दूर्वानिभां दुरितवर्गहरीं नमामि ॥ ४ ॥

कृताभिषेकदीक्षस्तु वसुलक्षं जपेन्मनुम् ।
तदन्ते जुहुयात्सर्पिःसंयुक्तेन पयोन्धसा ॥ ५ ॥

अष्टसाहस्रसंख्यैस्तु तिलैर्वा मधुराप्लुतैः ।
पीठार्चायां प्रयष्टव्याः क्रमात्तच्छक्तयो नव ॥ ६ ॥

प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा ।
सुप्रभा विजया सर्वसिद्धिदा नवमी तथा ॥ ७ ॥

अर्च्या ह्रस्वत्रयक्लीबरहितैश्च स्वरैरिमाः ।
तारान्ते वज्रमाभाष्य नखदंष्ट्रायुधानि च ॥ ८ ॥

महासिंहाय चेत्युक्त्वा वर्मास्त्रनतयः क्रमात् ।
सिंहमन्त्रोऽयमित्येवं संप्रोक्ता पीठकल्पना ॥ ९ ॥

अङ्गैः स्यादावृतिः पूर्वा द्वितीया शक्तिभिः स्मृता ।
अष्टायुधैस्तृतीया स्याल्लोकपालैश्चतुर्थ्यपि ॥ १० ॥

तदायुधैः पञ्चमी च दुर्गायजनमीदृशम् ।
जया च विजया कीर्त्तिः प्रीतिश्चाथ प्रभाह्वया ॥ ११ ॥

श्रद्धा मेधा श्रुतिरपि शक्तयः स्वाक्षरादिकाः ।
चक्रशङ्खगदाखड्गपाशाङ्कुशशरा धनुः ॥ १२ ॥

क्रमादष्टायुधाः प्रोक्ता दौर्गा दुर्गतिहारिणः ।
इत्थं दुर्गामनौ जापहुतार्चाभिः प्रसाधिते ॥ १३ ॥

मन्त्रीन्दिरावान्भवति दीर्घायुर्दुरिताञ्जयेत् ।
यान्यानिच्छति कामान्स्वांस्तांस्तान्प्राप्नोति यत्नतः ॥ १४ ॥

विधाय विधिनानेन कलशं चाभिषेचयेत् ।
यमसौ भूतवेतालपिशाचाद्यैर्विमुच्यते[1] ।
राजाभिषिक्तो विधिना सपत्नानमुना जयेत् ॥ १५ ॥

अमुना विधिना कृताभिषेका
ललना पुत्रमवाप्नुयाद्विनीतम् ।
हवनात्तिलसर्षपैः सहस्र-
द्वितयैराशु भवेच्च गर्भरक्षा ॥ १६ ॥

अनयैव जपाभिषेकहोम-
क्रियया स्यादनुरञ्जनं जनानाम् ।
भजतां सकलार्थसाधनार्थं
मुनिवर्यैः परिकल्पितोऽयमादौ ॥ १७ ॥

उत्तिष्ठपदं प्रथमं
पुरुषि ततः किंपदं स्वपिषियुक्तम् ।
भयमपि मेऽन्ते समुप-
स्थितमित्युच्चार्य यदिपदं प्रवदेत् ॥ १८ ॥

---

1. वियुज्यते ।

शक्यमशक्यं वोक्त्वा
तन्मे भगवति निगद्य शमयपदम् ।
प्रोक्त्वा ठद्वितययुतं
सप्तत्रिंशाक्षरो मनुः प्रोक्तः ॥ १९ ॥

आरण्यकोऽस्यनुष्टु-
ब्वनदुर्गाख्याः क्रमेण भगवत
ऋष्यादिकाः स्वमनुना
विहितान्यङ्गानि वाक्यभिन्नेन ॥ २० ॥

षड्भिश्चतुर्भिरष्टभि-
रष्टार्णैः षड्भिरपि च पञ्चार्णैः ।
जातियुतैश्च विदध्या-
दङ्गानि च षट् क्रमेण विशदमतिः ॥ २१ ॥

पद्द्वयसंधिगुदान्ध्वा-
धारोदरपार्श्वहृत्स्तनेषु गले ।
दोःसंधिवदननासा-
कपोलदृक्कर्णयुग्भ्रुके न्यस्येत् ॥ २२ ॥

हेमप्रख्यामिन्दुखण्डात्तमौलिं
शङ्खारिष्टाभीतिहस्तां त्रिणेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां
देवीं दुर्गां दिव्यरूपां नमामि ॥ २३ ॥

अरिशङ्खकृपाणखेटबाणा-
न्सधनुःशूलकतर्जिनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था
नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ २४ ॥

चक्रदरखड्गखेटक-
शरकार्मुकशूलसंज्ञककपालैः ।
ऋष्टिमुसलकुन्तनन्दक-
वलयगदाभिण्डिपालशक्त्याख्यैः ॥ २५ ॥

उद्यद्विकृतिभुजाढ्या
[1]महिषाङ्के सजलजलदसंकाशा ।
सिंहस्था वाग्निनिभा
पद्मस्था वाथ मरकतप्रख्या ॥ २६ ॥

---

1. माहिषके.

व्याघ्रत्वक्परिधाना
सर्वाभरणान्विता त्रिणेत्रा च ।
अहिकलितनीलकुञ्चित-
कुन्तलविलसत्किरीटशशिशकला ॥ २७ ॥

सर्पमयवलयनूपुर-
काञ्चीकेयूरहारसंपन्ना[1] ।
सुरदितिजाभयभयदा
ध्येया कात्यायनी प्रयोगविधौ ॥ २८ ॥

संयतचित्तो लक्षच-
तुष्कं जप्त्वा हुनेद्दशांशेन ।
व्रीहितिलाज्यहविर्भिः
सम्यक्संचिन्त्य भगवतीमनले ॥ २९ ॥

पीठे पूर्वप्रोक्ते
पूज्याङ्गैः शक्तिभिस्तथाष्टाभिः ।
अष्टायुधैश्च मातृभि-
राशेशैः क्रमश एव दुर्गेयम् ॥ ३० ॥

1. ०संभिन्ना ।

आर्या दुर्गा भद्रा
　सभद्रकाली तथाम्बिकाख्या च ।
क्षेम्या सवेदगर्भा
　क्षेमकरी चेति शक्तयः प्रोक्ताः ॥ ३१ ॥

अरिदरकृपाणखेटक-
　बाणधनुःशूलसंयुतकपालाः ।
अष्टायुधाः क्रमोक्ताः
　पूर्वविधानवद्यथोदितं शेषम् ॥ ३२ ॥

इत्थं जपार्चनाहुत-
　सिद्धमनोर्मन्त्रिणः प्रयोगविधिः ।
विहितो जपः प्रतिदिनं
　निजरक्षायै शतं सहस्रं वा ॥ ३३ ॥

उद्दिश्य यद्यदेनं
　मनुं जपेदथ सहस्रमयुतं वा ।
तत्तन्मन्त्री लभ्ये-
　दचिरात्तदनुग्रहादसाध्यमपि ॥ ३४ ॥

*P. 13*a*

स्नात्वार्काभिमुखः स-
न्नाभिद्वयसेऽम्भसि स्थितो मन्त्री ।
अष्टोर्ध्वशतं प्रजपे-
न्निजवाञ्छितसिद्धये च लक्ष्म्यै च ॥ ३५ ॥

ध्यात्वा त्रिशूलहस्तां
ज्वरसर्पग्रहविपत्सु जन्तूनाम् ।
संस्पृश्य शिरसि जप्या-
त्तज्जन्योपद्रवं शमयेत् ॥ ३६ ॥

अयुतं तिलैर्वनोत्थै
राजीभिर्वा हुनेत्समिद्भिर्वा ।
मायूरिकीभिरचिरा-
त्सोऽपस्मारादिकांश्च नाशयति ॥ ३७ ॥

जुहुयाद्रोहिणसमिधा-
मयुतं मन्त्री पुनः सशुङ्गानाम् ।
सर्वापदां विमुक्त्यै
सर्वसमृद्ध्यै ग्रहादिशान्त्यै च ॥ ३८ ॥

आर्कैः समित्सहस्रैः
प्रतिजुहुयादर्कवारमारभ्य ।
दशदिनतोऽर्वाग्वाञ्छित-
सिद्धिर्देव्याः प्रसादतो भवति ॥ ३९ ॥

शुद्धैः सारैरिध्मै-
स्त्रिदिनं वा सप्तरात्रकं वापि ।
प्रतिशकलं प्रतिजुहुया-
न्मनुना निजवाञ्छिताप्तये मन्त्री ॥ ४० ॥

विशिखानां त्रिंशत्कं
पुरो निधायाथ तीक्ष्णतैलेन ।
जुहुयात्सहस्रकं वा-
युतमपि संख्यासु पूरितासु पुनः ॥ ४१ ॥

संपातिततैलेन च
शरान्समभ्यज्य पूर्ववज्जप्यात् ।
तानथ शूरो धन्वी
शुद्धाचारः प्रवेधयेद्बाणान् ॥ ४२ ॥

प्रतिसेनाया मध्ये
सा धावति सद्य एव संभ्रान्ता ।
भूयो गुरुं धनैरपि
धान्यैः परिपूजयेच्च कारयिता ॥ ४३ ॥

अष्टोत्तरशतजप्तं
यच्छिरसि प्रक्षिपेच्चिताभस्म ।
स तु विद्विष्टो लोकै-
र्देशाद्देशान्तरं परिभ्रमति ॥ ४४ ॥

कारस्करस्य पत्रै-
रष्टसहस्रैर्निपातितैर्मरुता ।
जुहुयात्सपादपांसुभि-
रुच्चाटकरं भवेद्रिपोः सद्यः ॥ ४५ ॥

सेनां संस्तम्भयितुं
विषतरुसुमनःसहस्रकं जुहुयात् ।
तावद्भिस्तत्पत्रै-
र्जुहुयान्मन्त्री च तां निवर्तयितुम् ॥ ४६ ॥

विषतरुमयीं च शत्रोः
   प्रतिकृतिमसकृत्प्रतिष्ठितप्राणाम् ।
छित्त्वा च्छित्त्वा काको-
   लूकवसाक्तैः सहस्रमष्टौ च ॥ ४७ ॥

असितचतुर्दश्यां त-
   द्गात्रैर्जुहुयादरण्यकेऽर्धनिशि ।
त्रिचतुर्दशीप्रयोगा-
   दर्वाङ् म्रियते रिपुर्न संदेहः ॥ ४८ ॥

[1]स्ववसारक्तोपेतै-
   र्जुहुयात्पत्रैरुलूकवायसयोः ।
म्रियतेऽरातिर्मत्त-
   स्तून्मत्तसमित्सहस्रहोमेन ॥ ४९ ॥

संस्थापितानिलां तां
   प्रतिकृतिमुष्णोदके विनिक्षिप्य ।
प्रजपेदुन्मादः स्या-
   च्छत्रोर्दुग्धाभिषेकतः शान्तिः ॥ ५० ॥

1. श्ववसा०

रविबिम्बगतामरुणां
करयुगपरिक्लृप्तशूलतर्जनिकाम् ।
ध्यात्वायुतं प्रजप्या-
न्मारयितुं सद्य एव रिपुनिवहम् ॥ ५१ ॥

असिखेटकरार्कस्था
क्रुद्धा मारयति सैव जपविधिना ।
सिंहस्था बाणधनु-
ष्करा समुच्चाटयेदरीनचिरात् ॥ ५२ ॥

विषतरुसमिद्युतहुता-
द्थ करिणो रोगिणो भवन्त्यचिरात् ।
तत्पर्णैश्च विनाश-
स्तेषामुच्चाटनं च तत्पुष्पैः ॥ ५३ ॥

आनित्यसमिद्धोमा-
द्रोगा नश्यन्ति दन्तिनामचिरात् ।
तत्पुष्पैर्मधुराक्तै-
र्होमाच्च वशीभवन्ति मातङ्गाः ॥ ५४ ॥

त्रिमधुरयुतैरनित्यक-
पत्रैर्मत्ता भवन्ति ते सद्यः ।
रक्षाकरस्तु करिणां
तज्जापितपञ्चगव्यलेपः स्यात् ॥ ५५ ॥

आज्यतिलराज्यनित्यक-
दुग्धोदकपञ्चगव्यतण्डुलकैः ।
सघृतैश्च प्रत्येकं
सहस्रहवनं गजाश्ववर्धनकृत् ॥ ५६ ॥

द्विजभूरुहं महान्तं
छित्त्वा निर्भिद्य पञ्चधा भूयः ।
आशाक्रमेण पञ्चा-
युधा विधेयाश्च साधुशिल्पविदा ॥ ५७ ॥

शङ्खः सनन्दकोऽरिः
शार्ङ्गः कौमोदकी दिशाक्रमतः ।
पञ्चेति पञ्चगव्ये
निधाय जप्याच्च पञ्चसाहस्रम् ॥ ५८ ॥

तावद्धृतेन जुहुया-
स्तेष्वथ संपात्य साधु संपातम् ।
पुनरपि तावज्जप्त्वा
मध्याद्यवटेषु पञ्चगव्ययुतम् ॥ ५९ ॥

संस्थाप्य समीकृत्य च
बलिं हरेत्तत्र तत्र तन्मन्त्रैः ।
पुरराष्ट्रग्रामाणां
कार्या रक्षैवमेव मन्त्रविदा ॥ ६० ॥

यस्मिन्देशे विहिता
रक्षेयं तत्र वर्धते महालक्ष्मीः ।
धनधान्यसमृद्धिः स्या-
द्रिपुचोराद्याश्च नैव बाधन्ते ॥ ६१ ॥

पद्मोत्पलकुमुदहुतै-
र्नृपपत्नीब्राह्मणान्वशीकुरुते ।
कह्लारलोणहोमै-
र्विट्छूद्राञ्जातिभिस्तथा ग्रामम् ॥ ६२ ॥

अथ वारिदरगदाम्बुज-
करं मुकुन्दं विचिन्त्य रविबिम्बे ।
व्यत्यस्तपुरुषभगवति-
पदं मनुं जपतु सर्वसिद्धिकरम् ॥ ६३ ॥

साध्याख्याक्षरगर्भितं मनुममुं पत्रे लिखित्वा च त-
च्चक्रीहस्तमृदा कृतप्रतिकृतेर्विन्यस्य मन्त्री हृदि ।
सप्ताहं त्वथ पुत्तलीमभिमुखे संस्थाप्य संध्यात्रये
जप्यादष्टशतं चिराय वशतां गच्छत्यसौ निश्चयः ॥ ६४ ॥

व्रीहीणां जुहुयान्नरोऽष्टशतकं संवत्सराद्व्रीहिमा-
न्गोदुग्धैः पशुमान्घृतैः कनकवान्दध्ना च सर्वर्द्धिमान् ।
अन्नैरन्नसमृद्धिमांश्च मधुभिः स्याद्रत्नवान्दूर्वया-
प्यायुष्मान्प्रतिपद्धुतेन महतीं सद्यः श्रियं प्राप्नुयात् ॥

छान्तं मरुत्तुरीयवर्णयुतं सवाद्यं
संवीप्स्य शूलिनिपदं च सदुष्टशब्दम् ।
पश्चान्तकं सदहनं परिभाष्य हान्तं
हुंफड्द्विठान्तामिति शूलिनिमन्त्रमेतत् ॥ ६५ ॥

ऋषिर्दीर्घतमाश्छन्दः ककुब्दुर्गा च देवता ।
दुर्गा हृद्वरदा शीर्षं शिखा स्याद्विन्ध्यवासिनी ॥ ६६ ॥

वर्म चासुरमर्दिन्या युद्धपूर्वप्रिये तथा ।
त्रासयद्वितयं चास्त्रं देवसिद्धसुपूजिते ॥ ६७ ॥

नन्दिन्यन्ते रक्षयुगं महायोगेश्वरीति च ।
शूलिन्याद्यं तु पञ्चाङ्गं हुंफडन्तमितीरितम् ।
अङ्गकर्मैव रक्षाकृत्प्रोक्तं ग्रहनिवारणम् ॥ ६८ ॥

बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान्कराब्जै-
मेंघश्यामा [1]किरीटोल्लिखितजलधरा भीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसनी शूलिनी वः ॥

एवं विचिन्त्य पुनरक्षरलक्षमेनं
मन्त्री जपेत्प्रतिजुहोतु दशांशतोऽन्ते ।
आज्येन साज्यहविषा प्रयजेच्च देवी-
मङ्गाष्टशक्तिनिजहेतिदिशाधिनाथैः ॥ ७० ॥

---

1. किरीटोल्लसितशशिकलोल्लासिता

दुर्गा च वरदा विन्ध्यवासिन्यसुरमर्दिनी ।
युद्धप्रिया देवसिद्धपूजिता नन्दिनी तथा ॥ ७१ ॥

महायोगेश्वरी चाष्ट शक्तयः समुदीरिताः ।
रथाङ्गशङ्खासिगदाबाणकार्मुकसंज्ञिताः ॥ ७२ ॥

सशूलपाशा यष्टव्या दिक्क्रमादष्ट हेतयः ।
दीक्षाजपहुतार्चाभिः सिद्धिः कर्म समाचरेत् ।
आमयोन्मादभूतापस्मारक्ष्वेलशमादिकम् ॥ ७३ ॥

उद्घूर्णैः प्रहरणकैरुदीर्णवेगैः
शूलाद्यैर्निजमथ शूलिनीं विचिन्त्य ।
आविश्य क्षणमिव जप्यमानमन्त्र-
स्यावृत्त्या द्रुतमपयान्ति भूतसंघाः ॥ ७४ ॥

अन्तराथ पुनरात्मरोगिणा-
मम्बिकामपि निजायुधाकुलाम् ।
संविचिन्त्य जपतोऽरिमुद्रया
विद्रवन्त्यवशविग्रहा ग्रहाः ॥ ७५ ॥

अहिमूषिकवृश्चिकादिजं वा
बहुपात्कुक्कुरलूतिकोद्भवं वा ।

विषमाशु विनाशयेन्नराणां
प्रतिपत्त्यैव च विन्ध्यवासिनी सा ॥ ७६ ॥

आधाय बाणे निशितेऽथ देवीं
क्षेमंकरीं मन्त्रमिमं जपित्वा ।
तद्वेधनादेव विपक्षसेना
दिशो दशाधावति नष्टसंज्ञा ॥ ७७ ॥

[1]आत्मानमार्यां प्रतिपद्य शूल-
पाशान्वितां वैरिबलं प्रविश्य ।
मन्त्रं जपन्नाशु परायुधानि
गृह्णाति मुष्णाति च बोधमेषाम् ॥ ७८ ॥

तिलसिद्धार्थैर्जुहुया-
ल्लक्षं मन्त्री सपत्ननामयुतम् ।
स तु रोगाभिहतात्मा
मृतिमेति न तत्र संदेहः ॥ ७९ ॥

त्रिमधुरयुक्तैश्च तिलै-
रष्टसहस्रं जुहोति योऽनुदिनम् ।

---

1. आत्मानमम्बां

अप्रतिहतास्य शक्ति-
भूयात्प्रागेव वत्सरतः ॥ ८० ॥

सर्पिषाष्टशतहोमतोऽमुना
वाञ्छितं सकलमब्दतो भवेत् ।
दूर्वया त्रिकयुजेप्सितं लभे-
त्सम्यगष्टशतसंख्यया हुतात् ॥ ८१ ॥

क्षुरिकाकृपाणनखरा
मन्त्रेणानेन साधु संजप्ताः ।
संपाताज्यसुसिक्ता
अप्रतिहतशक्तयो भवन्ति युधि ॥ ८२ ॥

गोमयविहिताङ्गुलिकां
जुहुयाच्छतमष्टपूर्वकं मन्त्री ।
दिवसैः सप्तभिरिष्टौ
द्विष्टौ च मिथो वियोगिनौ भवतः ॥ ८३ ॥

अस्पृष्टकुं गोमयमन्तरिक्षे
संगृह्य जप्त्वा त्रिसहस्रमानम् ।

धियासतां वै निखनेन्नराणां
संस्तम्भनं द्वारि चमूमुखे च ॥ ८४ ॥

पानीयान्धःपाणिमार्यां प्रसन्नां
ध्यात्वा ग्रामं वा पुरं वापि गच्छन् ।
जप्त्वा मन्त्रं तर्पयित्वा प्रविष्टो
मृष्टं भोज्यं प्राप्नुयाद्भृत्यवर्गैः ॥ ८५ ॥

आर्कैर्मन्त्री त्रिमधुरयुतैरर्कसाहस्रमिध्मै-
राश्वत्थैर्वा त्वतिविशदचेतास्तिलैर्वा जुहोतु ।
यानुद्दिश्यावहितमनसा तन्मये सम्यगग्नौ
ते वश्याः स्युर्विधुरितधियो नात्र कार्यो विचारः ॥ ८६ ॥

कुर्यात्प्रयोगानपि दावदुर्गा-
कल्पोदितान्वै मनुनामुना च ।
मन्त्री जपार्चाहुतितर्पणाद्या-
न्नाल्पो हि मन्वोरनयोर्विशेषः ॥ ८७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
प्रपञ्चसारे त्रयोदशः पटलः ॥

## चतुर्दशः पटलः ॥

अथ कथयिष्ये मन्त्रं
चतुरक्षरसंज्ञकं समासेन ।
प्रणवो भुवनाधीशो
दण्डिखमस्यादिको विसर्गान्तः ॥ १ ॥

ऋषिरस्याजश्छन्दो
गायत्रं देवता च भुवनेशी ।
अङ्गानि षट् क्रमेण
प्रोक्तानि प्रणवशक्तिबीजाभ्याम् ॥ २ ॥

भास्वद्रत्नौघमौलिस्फुरदमृतरुचो रञ्जयन्चारु रेखां
सम्यक्संतप्तकार्तस्वरकमलजपाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदशिशिरं धर्तृ पाशाङ्कुशेष्टा-
भीतीनां भङ्गितुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्वः ॥

संदीक्षितोऽथ प्रजपेच्च मन्त्रं
मन्त्री पुनर्लक्षचतुष्कमेनम् ।
पुष्पैस्तदन्ते द्विजवृक्षजातैः
स्वादुप्लुतैर्वा जुहुयात्सरोजैः ॥ ४ ॥

मनोरथार्कात्मतया त्वनेन
प्रवर्त्यतेऽर्घ्योपहिता प्रपूजा ।
समे सुमृष्टे रचयेद्विविक्ते
शुद्धे तले स्थण्डिलमङ्गणस्य ॥ ५ ॥

प्रयजेदथ प्रभूतां
विमलां साराह्वयां समाराध्याम् ।
परमसुखामग्न्यादि-
ष्वश्रिषु मध्ये च पीठक्लृप्तेः प्राक् ॥ ६ ॥

ह्रस्वत्रयक्लीबवियोजिताभिः
क्रमात्कृशान्विन्दुयुताभिरद्भिः ।
सहाभिपूज्या नव शक्तयः स्युः
प्रोद्योतनाः प्राज्यतरप्रभावाः ॥ ७ ॥

दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चैव नवमी सर्वतोमुखी ॥ ८ ॥

ब्रह्माविष्णुशिवात्मकं
समीर्य सौराय योगपीठाय ।
प्रोक्त्वेति नतिमपि पुनः
समापयेत्पीठमन्त्रमहिमरुचेः ॥ ९ ॥

आवाह्य हार्लेखिकमर्कमर्घ्य-
पाद्याचमाद्यैर्मधुपर्कयुक्तैः ।
प्रपूजयेदावरणैः समस्त-
संपत्त्यवाप्त्यै तदधीनचेताः ॥ १० ॥

हृल्लेखाद्याः पञ्च च
षड्भिरङ्गैस्तदनु मातृभिः पश्चात् ।
[1]ओंकाराद्यैराशा-
पालैरभ्यर्चयेत्क्रमान्मन्त्री ॥ ११ ॥

---

1. अंकाराद्यै०

*P. 14a

प्रतिपूज्य शक्तिमिति तत्र पुरः
प्रणिधाय ताम्ररचितं चषकम् ।
प्रजपन्मनुं प्रतिगतक्रमतः
प्रतिपूरयेत्सुविमलैः सलिलैः ॥ १२ ॥

अक्षतकुशयवदूर्वा-
तिलसर्षपकुसुमचन्दनोपेतैः ।
प्रस्थग्राह्यच्छिद्रं
स्वैक्यं संभावयन्समाहितधीः ॥ १३ ॥

इष्ट्वा दिनेशमथ पीठगतं तथैव
व्योमस्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरं शतमथ प्रजपेन्मनुं तं
पूर्वोत्तरं निजकरेण पिधाय पात्रम् ॥ १४ ॥

भूयोऽभ्यर्च्य सुधामयं जलमथो तद्गन्धपुष्पादिभि-
र्जानुभ्यामवनिं गतश्चषकमप्यामस्तकं प्रोद्धरन् ।
दद्यान्मण्डलबद्धदृष्टिहृदयो भक्त्यार्घ्यमोजोबल-
ज्योतिर्दीप्तियशोधृतिस्मृतिकरं लक्ष्मीप्रदं भास्वते ॥ १५ ।

अथ कृतपुष्पाञ्जलिरपि
　पुनरष्टशतं जपेन्मनुं मन्त्री ।
यावद्रश्मिषु भानो-
　र्व्याप्नोत्यम्भः सुधामयं तदपि ॥ १६ ॥

अमृतमयजलावसिक्तगात्रो
　दिनपतिरप्यमृतत्वमातनोति ।
धनविभवसुदारमित्रपुत्रं
　पशुगणजुष्टमनन्तभोगयोगि ॥ १७ ॥

तस्मादिनाय दिनशो ददताद्दिनादौ
　दैन्यापनोदितनवे दिनवल्लभाय ।
अर्घ्यं समग्रविभवस्त्वथ वार्कवारे
　पारं स गच्छति भवाह्वयवारिराशेः ॥ १८ ॥

अनुदिनमर्चयितव्यः
　पुंसा विधिनामुनाथ वा रवये ।
दद्यादर्घ्यद्वयमपि
　कुर्याद्वा वाञ्छितार्थसमवाप्त्यै ॥ १९ ॥

एकीकृत्य समस्तवस्त्वनुगतानादित्यचन्द्रानला-
न्वेदाद्येन गुणात्मकेन सगुणानाकृष्य हृल्लेखया ।
सर्वं तत्प्रतिमथ्य तावपि समावष्टभ्य हंसात्मना
नित्यं शुद्धमनन्यमक्षरपदं मन्त्री भवेद्योगतः ॥ २० ॥

अथ वदाम्यजपामनुमुत्तमं
सकलसंसृतियापनसाधनम् ।
दुरितरोगविषापहरं नृणा-
मिह परत्र च वाञ्छितसिद्धिदम् ॥ २१ ॥

विष्णुपदं ससुधाकरखण्डं
चन्द्रयुगावधिकं वतुरीयम् ।
क्षेत्रविदो मनुरेष समुक्तो
यं प्रजपत्यपि संततमात्मा ॥ २२ ॥

ऋष्याद्या ब्रह्मदैव्यादिगायत्रीपरमात्मकः ।
हंसाक्षीबकलादीर्घयुजाङ्गानि समाचरेत् ॥ २३ ॥

अरुणकनकवर्णं पद्मसंस्थं च गौरी-
हरनियमितचिह्नं सौम्य तानूनपातम् ।

भवतु भवदभीष्टावाप्तये पाशाटङ्का-
भयवरदविचित्रं रूपमर्धाम्बिकेशम् ॥ २४ ॥

प्रजपेद्द्वादशलक्षं
मनुमिममाज्यान्वितैश्च दौग्धान्नैः ।
तावत्सहस्रमानं
जुहुयात्सौरे समर्चनापीठे ॥ २५ ॥

निक्षिप्य कलशमस्मि-
न्पूर्वोक्तानामपामथैकेन ।
आपूर्य चोपचर्य च
विद्वानङ्गैः प्रपूजयेत्पूर्वम् ॥ २६ ॥

ऋतवसुवरनरसंज्ञा-
स्तथर्तवो वह्निपूर्विकाजान्ताः ।
आशोपाशास्थेया-
स्ततो दिशांपास्ततश्च वज्राद्याः ॥ २७ ॥

इति परिपूज्य च कलशं
पुनरभिषिच्याथ नियमितोऽर्घ्यमपि ।

दृग्यादिनाथ चैहिक-
पारत्रिकसिद्धये चिरं मन्त्री ॥ २८ ॥

इन्दुद्वयोदितसुधारसपूर्णसार्ण-
संबद्धबिन्दुसुसमेधितमादिबीजम् ।
संचिन्त्य यो मनुमिमं भजते मनस्वी
स्वात्मैक्यतोऽथ दुरितैः परिमुच्यतेऽसौ ॥ २९ ॥

व्योमानुगेन च सुधाम्बुमुचा सुदामा
प्रद्योतमानसविनिःसृतशीतरुग्भ्याम् ।
आबाधिता दहनचन्द्रलसन्महोभ्यां
रोगापमृत्युविषदाहरुजः प्रयान्ति ॥ ३० ॥

हंसाण्डाकाररूपं स्रुतपरमसुधं मूर्ध्नि चन्द्रं ज्वलन्तं
नीत्वा सौषुम्नमार्गे निशितमतिरथ व्याप्तदेहोपगात्रम् ।
स्मृत्वा संजप्य मन्त्रं पलितविषशिरोरुग्ज्वरोन्मादभूता-
पस्मारादींश्च मन्त्री हरति दुरितदौर्भाग्यदारिद्र्यदोषैः ॥

विधाय लिपिपङ्कजं मनुयुतोल्लसत्कर्णिकं
निधाय घटमत्र पूरयतु वारिणा तन्मुखम् ।

विधाय शशिनात्ममन्त्रयुतवामदोष्णा पुनः
सुधायितरसैः स्वसाध्यमभिषेचयेत्तज्जलैः ॥ ३२ ॥

नारी नरो वा विधिनाभिषिक्तो
मन्त्रेण तेनेति विषद्वयोढैः ।
रोगैस्तदाधिप्रभवैर्वियुक्त-
श्चिराय जीवेत्करणैः सुशुद्धैः ॥ ३३ ॥

करेण तेनैव जलाभिपूर्णं
प्रजप्य मन्त्री करकं पिधाय ।
सुधायितैस्तैर्विषिणं निषिञ्चे-
द्विषं निहन्यादपि कालकूटम् ॥ ३४ ॥

गदितं निजपाणितलं विषिणः
शिरसि प्रविधाय जलैः शितधीः ।
अचिरात्प्रतिमोचयते विषतो
मतिमानथ तक्षकदष्टमपि ॥ ३५ ॥

इत्यजपामन्त्रविधिः
संप्रोक्तः संग्रहेण मन्त्रिवराः ।

यं प्राप्य सकलवसुसुख-
धर्मयशोभुक्तिमुक्तिभाजः स्युः ॥ ३६ ॥

अरुणा शिखिदीर्घयुता
हृल्लेखा श्वेतया युतानन्ता ।
प्रोक्तः प्रयोजनानां
तिलकस्तु यथार्थवाचको मन्त्रः ॥ ३७ ॥

गुह्यादाचरणतलं
कण्ठादागुह्यमागलं कान्तान् ।
विन्यस्य मन्त्रबीजा-
न्क्रमेण मन्त्री करोतु चाङ्गानि ॥ ३८ ॥

मन्त्रस्य मध्यमनुना
दीर्घयुजाङ्गानि चेह कथितानि ।
ध्यायेत्पुनरहिमकरं
मन्त्री निजवाञ्छितार्थलाभाय ॥ ३९ ॥

अरुणसरोरुहसंस्थ-
स्त्रिदगरुणोऽरुणसरोजयुगलधरः ।

कलिताभयवरदो द्युति-
  बिम्बोऽमितभूषणस्त्विनोऽवतु वः ॥ ४१ ॥

कृतसंदीक्षो मन्त्री
  दिनकरलक्षं जपेन्मनुं जुहुयात् ।
तावत्सहस्रमन्त्रैः
  सघृतैर्मधुराप्लुतैस्तिलैरथ वा ॥ ४२ ॥

प्रागभिहितेन विधिना
  पीठाद्यं प्रतिविधाय तत्र पुनः ।
विन्यस्य कलशमस्मि-
  न्प्रपूजयेत्तरणिमपि च सावरणम् ॥ ४३ ॥

अङ्गैः प्रथमावरणं
  ग्रहैर्द्वितीयं तृतीयमाशेशैः ।
मुख्यतरगन्धसुमनो-
  धूपाद्यैरात्तभक्तिनम्रमनाः ॥ ४४ ॥

प्रागादिदिशासंस्थाः
  शशिबुधगुरुभार्गवाः क्रमेण स्युः ।

आग्नेयादिष्वश्रिषु
धरणिजमन्दाहिकेतवः पूज्याः ॥ ४५ ॥

शुभ्रासितपीतशुक्ला
रक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ता
वामोरुन्यस्तवामकरलसिताः ॥ ४६ ॥

अपरकराभयमुद्रा-
विकृतमुखोऽहिः कराहिताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः
सुवर्णसदृशांशुकादिभूषश्च ॥ ४७ ॥

संपूज्यैवं विधिना
विधिवद्गोरोचनादिभिर्द्रव्यैः ।
दद्यादर्घ्यं रवये
मन्त्री निजवाञ्छितार्थलाभाय ॥ ४८ ॥

गोरोचनाम्रतिलवैणवराजिरक्त-
शीताख्यशालिकरवीरजपाकुशाग्रान् ।

श्यामाकतण्डुलयुतांश्च यथाप्रलाभा-
न्संयोज्य भक्तिभरतोऽर्घ्यविधिर्विधेयः ॥ ४९ ॥

कृत्वा मण्डलमष्टपत्त्रलसितं तत्कर्णिकायां तथा
पत्राग्रेषु निधाय कुम्भनवकं तत्पूरयित्वा जलैः ।
आवाह्य क्रमशो ग्रहान्नव समाराध्याभिषेकक्रियां
कुर्याद्यो ग्रहवैकृतादि विलयं यान्त्यस्य लक्ष्मीर्भवेत् ॥

गृहपरिमितमिष्ट्वा पूर्वक्लृप्त्या दिनेशं
प्रतिजुहुत निजर्क्षे वैकृते वा ग्रहाणाम् ।
शुभमतिरुपरागे चन्द्रभान्वोः स्वभे वा
रिपुनृपजभये वा घोररूपे गदे वा ॥ ५१ ॥

अर्कद्विजाङ्घ्रिपमयूरकपिप्पलाश्च
सोदुम्बराः खदिरशम्याभिधाः सदूर्वाः ।
दर्भाह्वयाश्च समिधोऽष्टशतं क्रमेण
[1]सव्याहृतीनि घृतहव्यघृतानि होमः ॥ ५२ ॥

---

1. सर्पिर्हविर्घृतयुताः पृथगेव च स्युः ॥ ५२ ॥
आज्याहुत्या त्वादा-
वन्ते च व्याहृतीभिरपि जुहुयात् ।

सोमादीनां दिशि दिशि समाधाय वह्निं यथाव-
द्धोमे सम्यक्कृतवति मुदं यान्ति सर्वे ग्रहाश्च ।
युद्धे सम्यग्जयमपि रुजः शान्तिमायुश्च दीर्घं
कृत्वा शान्तिं व्रजति पुनरकत्र वा सर्वहोमः ॥ ५३ ॥

अमुना [1]विधिना हुतार्चनाद्यैः
प्रभजेद्यो दिनशो नरो दिनेशम् ।
मणिभिः स धनैश्च धान्यवर्यैः
परिपूर्णावसथो भवेच्चिराय ॥ ५४ ॥

त्यद्यन्त आर्यसूर्यर्णा मेधारेचिकया गुणः ।
व्यत्ययोऽष्टाक्षरः प्रोक्तः सौरः सर्वार्थसाधकः ॥ ५५ ॥

देवभाग ऋषिः प्रोक्तो गायत्री च्छन्द उच्यते ।
आदित्यो देवता चास्य कथ्यन्तेऽङ्गान्यतो मनोः ॥ ५६ ॥

सत्यब्रह्माविष्णुरुद्रैः साग्निभिः सर्वसंयुतैः ।
तेजोज्वालामणिं हुंफट्स्वाहान्तैरङ्गमाचरेत् ॥ ५७ ॥

---

1. विधिनार्चनाहुताद्यैः.

आदित्यं रविभानू
भास्करसूर्यौ न्यसेत्स्वरैर्लघुभिः ।
सशिरोमुखहृद्गुह्यक-
चरणेषु क्रमश एव मन्त्रितमः ॥ ५८ ॥

सशिरोमुखगलहृदयो-
दरनाभिशिवाङ्घ्रिषु प्रविन्यस्येत् ।
प्रणवाद्यैरष्टार्णैः
क्रमेण सोऽयं तदक्षरन्यासः ॥ ५९ ॥

अरुणोरुणपङ्कजे निषण्णः
कमलेऽभीतिवरौ करैर्दधानः ।
स्वरुचाहितमण्डलस्त्रिणेत्रो
रविराकल्पशताकुलोऽवताद्वः ॥ ६० ॥

संदीक्षितस्तु मन्त्री
मन्त्रं प्रजपेत्तु वर्णलक्षं तम् ।
जुहुयात्त्रिमधुरसिक्तै-
र्दुग्धतरुसमिद्भिरैर्वसुसहस्रम् ॥ ६१ ॥

अथ वा सघृतैरन्नैः

समर्चयेन्नित्यशोऽर्घ्यमपि दद्यात् ।

पूर्वोक्त एव पीठे

कुम्भं प्रणिधाय साधु संपूर्य ॥ ६२ ॥

शुद्धाद्भिररुणवासो-

युगेन संवेष्ट्य पूजयेत्क्रमशः ।

अङ्गावृतैः परस्ता-

दादित्याद्यैरुषादिशक्तियुतैः ॥ ६३ ॥

मातृभिररुणान्ताभि-

र्ग्रहैः सुरैश्चान्तसूर्यपरिषद्भिः ।

सोषा सप्रज्ञा च

प्रभा च संध्या च शक्तयः प्रोक्ताः ॥ ६४ ॥

संपूज्यैवं दिनेशं पटुमतिरथ जप्त्वा च हुत्वाऽभिषेकं

कृत्वा दत्तेन संख्यां वसुमपि गुरवे सांशुकं भोजयेच्च ॥

विप्रानादित्यसंख्यानिति विदितमनुं नित्यशोऽर्घ्यं च दद्या-

द्वारे वा भास्करीये शुभतरचरितो वल्लभाय ग्रहाणाम् ॥

इतीह दिनकृन्मनुं भजति नित्यशो भक्तिमा-
न्य एष निचितेन्द्रियो भवति नीरुजो वत्सरात् ।
समस्तदुरितापमृत्युरिपुभूतपीडादिका-
नपास्य सुसुखी च जीवति परं च भूयात्पदम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे चतुर्दशः पटलः ॥**

# पञ्चदशः पटलः ॥

अथ चन्द्रमनुं वक्ष्ये सजपार्चाहुतादिकम् ।
हिताय मन्त्रिणां साध्यविधानं च समासतः ॥ १ ॥

भृगुः ससद्यः सार्धेन्दुर्बिन्दुहीनः पुनश्च सः ।
विषानन्तौ मान्तनती मन्त्रोऽयं सोमदैवतः ॥ २ ॥

दीर्घभाजा स्वबीजेन कुर्यादङ्गानि वै क्रमान् ।
विचिन्तयेत्पुनर्मन्त्री यथावन्मन्त्रदेवताम् ॥ ३ ॥

अमलकमलसंस्थः सुप्रसन्नाननेन्दु-
र्वरदकुमुदहस्तश्चारुहारादिभूषः ।
स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो
भवतु भवदभीष्टोद्द्योतिताङ्कः शशाङ्कः ॥ ४ ॥

दीक्षितः प्रजपेन्मन्त्री रसलक्षं मनुं वशी ।
पञ्चमीदशमीपञ्चदशीषु तु विशेषतः ॥ ५ ॥

अयुतं प्रजपेन्मन्त्री सायाह्नेऽभ्यर्च्य भाधिपम् ।
पयोन्नेन हुनेद्भूयः सघृतेन सहस्रकम् ॥ ६ ॥

ससर्पिषा पायसेन षट्सहस्रं हुनेत्ततः ।
पीठक्लृप्तौ तु सोमान्तं परिपूज्यार्चयेद्विधुम् ॥ ७ ॥

केसरेष्वङ्गपूजा स्याच्छक्तीस्तद्बहिरर्चयेत् ।
रोहिणीं कृत्तिकाख्यां च रेवतीं भरणीं तथा ॥ ८ ॥

रात्रिमार्द्राह्वयां ज्योत्स्नां कलां च क्रमतोऽर्चयेत् ।
दलाग्रेषु ग्रहानष्टौ दिशानाथाननन्तरम् ॥ ९ ॥

सुसितैर्गन्धकुसुमैः पात्रैः रूप्यमयैस्तथा ।
शक्तयः फुल्लकुन्दाभास्तारहारविभूषणाः ॥ १० ॥

सितमाल्याम्बरालेपा रचिताञ्जलयो मताः ।
इति सिद्धमनुर्मन्त्री शशिनं मूर्ध्नि चिन्तयेत् ॥ ११ ॥

त्रिसहस्रं जपेद्रात्रौ मासान्मृत्युंजयो भवेत् ।
हृदयाम्भोजसंस्थं तं भावयन्प्रजपन्मनुम् ॥ १२ ॥

राज्यैश्वर्यं वत्सरेण प्राप्नुयादप्यकिंचनः ।
आहाराचारनिरतो जपेल्लक्षचतुष्टयम् ॥ १३ ॥

असंशयतरं तेन [1]निधानमुपलभ्यते ।
घोरा ज्वरा गराः शीर्षरोगाः कृत्याश्च कामिलाः ॥ १४ ॥

तन्मन्त्रायुतजापेन नश्यन्ति सकलापदः ।
नित्यशः प्रजपेन्मन्त्रं पूर्णासु विजितेन्द्रियः ॥ १५ ॥

जपेन्मनुं यथाशक्ति लक्ष्मीसौभाग्यसिद्धये ।
त्रितयं मण्डलानां तु कृत्वा पाश्चात्त्यपौर्विकम् ॥

आसीनः पश्चिमे [2]मध्ये संस्थे द्रव्याणि विन्यसेत् ।
पूर्वस्मिन्पङ्कजोपेते पूर्ववत्सोममर्चयेत् ॥ १७ ॥

राकायामुदये राज्ञो निजकार्यं विचिन्तयेत् ।
संस्थाप्य राजतं तत्र चषकं परिपूरयेत् ॥ १८ ॥

गव्येन शुद्धपयसा स्पृष्टपात्रो जपेन्मनुम् ।
अष्टोत्तरशतावृत्त्या दद्यादर्घ्यमथेन्दवे ॥ १९ ॥

विद्यामन्त्रेण मन्त्रज्ञो यथावत्तद्गतात्मना ।
विद्याविद्यापदे प्रोक्त्वा मालिनीति च चन्द्रिणी ॥ २० ॥

चन्द्रमुख्यनिजायां च निगदेत्प्रणवादिकम् ।
प्रतिमासं च षण्मासात्सिद्धिमेष्यति काङ्क्षितम् ॥ २१ ॥

---

1. निधानमपि लभ्यते । 2. मध्यसंस्थे.

इष्टाय दीयते कन्या कन्यां विन्देन्निजेप्सिताम् ।
अमितां श्रियमाप्नोति कान्तिं पुत्रान्यशः पशून् ।
सोमार्घ्यदाता लभते दीर्घमायुश्च विन्दति ॥ २२ ॥

इति सोममन्त्रसिद्धिं
प्रणिगदितः संग्रहेण मन्त्रविदाम् ।
उपकृतयेऽमितलक्ष्म्यै
मेधायै प्रेत्य चेह संपत्त्यै ॥ २३ ॥

अथाग्निमन्त्रान्सकलार्थसिद्धि-
करान्प्रवक्ष्ये जगतो हिताय ।
सप्तार्चिकल्पीनपि साङ्गभेदा-
न्सार्चाविशेषान्सजपादिकांश्च ॥ २४ ॥

वियतो दशमोऽर्घिसर्गयुक्तो
भुवसर्गौ भृगुलान्तषोडशाचः ।
हुतभुग्दयिता ध्रुवादिकोऽयं
मनुरुक्तः सुसमृद्धिदः कृशानोः ॥ २५ ॥

भृगुरपि तद्दृषिश्छन्दो
गायत्री देवताग्निरुद्दिष्टः ।
प्राक्प्रोक्तान्यङ्गानि
[1]विशः समुक्तैश्च मन्त्रवाक्यैर्वा ॥ २६ ॥

शक्तिस्वस्तिकपाशा-
न्साङ्कुशवरदाभयान्दधात्रिमुखः ।
मकुटादिविविधभूषो-
ऽवताच्चिरं पावकः प्रसन्नो वः ॥ २७ ॥

जपेदिमं मनुमृतुलक्षमादरा-
द्दशांशतः प्रतिजुहुयात्पयोन्धसा ।
ससर्पिषाप्यसिततरैश्च षाष्टिकैः
समर्चयेदथ विधिवद्विभावसुम ॥ २८ ॥

पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ।
रुचिरा [2]कालिनी चेति कृशानोर्नव शक्तयः ॥ २९ ॥

---

1. द्विशः; 2. ज्वालिनी.

पीठे तनूनपातः
　प्रागङ्गैरष्टमूर्तिभिस्तदनु ।
भूयश्च शतमखाद्यै-
　र्विधिनाथ हिरण्यरेतसं प्रयजेत् ॥ ३० ॥

आज्यैरष्टोर्ध्वशतं
　प्रतिपदमारभ्य मन्त्रविद्दिनशः ।
चतुरो मासाञ्जुहुया-
　ल्लक्ष्मीरत्यायता भवेत्तस्य ॥ ३१ ॥

शुद्धाभिः शालीभि-
　र्दिनमनुजुहुयात्तथाऽब्दमात्रेण ।
शालीशालि गृहं स्या-
　द्गोमहिषाद्यैश्च संकुलं तस्य ॥ ३२ ॥

शुद्धान्नैर्घृतसिक्तैः
　प्रतिदिनमग्नौ समेधिते जुहुयात् ।
अन्नसमृद्धिर्महती
　स्यादस्य निकेतनेऽब्दमात्रेण ॥ ३३ ॥

जुहुयात्तिलैः सुशुद्धैः
षण्मासाज्जायते महालक्ष्मीः ।
कुमुदैः कह्लारैरपि
जातीकुसुमैश्च जायते सिद्धिः ॥ ३४ ॥

पालाशैः पुनरिध्मकैः सरसिजैर्बिल्वैश्च रक्तोत्पलै-
र्दुग्धोर्वीरुहसंभवैः खदिरजैर्व्याघातवृक्षोद्भवैः ।
दूर्वाख्यैश्च शमीविकङ्कतभवैरष्टोर्ध्वयुक्तं शतं
नित्यं वा जुहुयात्प्रतिप्रतिपदं मन्त्री महासिद्धये ॥

तारं व्याहृतयश्चाग्निर्जातवेद इहावह ।
सर्वकर्माणि चेत्युक्त्वा साधयाग्निवधूर्मनुः ॥ ३६ ॥

ऋष्याद्याः पूर्वोक्ता
मन्त्रेणाङ्गानि वर्णभिन्नेन ।
भूतर्तुकरणसेन्द्रिय-
गुणयुग्मैर्जातिभेदितैस्तदपि ॥ ३७ ॥

अथ वा शक्तिस्वस्तिक-
दर्भाक्षस्रक्स्रुवस्रुगभयवरान् ।

दधदमिताकल्पो यो
वसुखतात्कनकमालिकालसितः ॥ ३८ ॥

वत्सरादेश्चतुर्दश्यां दिनादावेव दीक्षितः ।
मन्त्रं द्वादशसाहस्रं जपेत्सम्यगुपोषितः ॥ ३९ ॥

अर्चयेदङ्गमूर्तीश्च लोकेशकुलिशादिभिः ।
समिदाद्यममावास्यां परिशोध्य यथाविधि ॥ ४० ॥

ब्राह्मणान्भोजयित्वा च स्वयं भुक्त्वा समाहितः ।
परेऽह्नि प्रतिपद्येतैर्जुहुयादर्चितेऽनले ॥ ४१ ॥

मन्त्री वटसमिद्व्रीहितिलराजिहविर्घृतैः ।
अष्टोत्तरशतावृत्त्या हुनेदेकैकशः क्रमात् ॥ ४२ ॥

दशाहमेवं कृत्वा तु पुनरेकादशीतिथौ ।
शक्त्या प्रतर्प्य विप्रांश्च प्रदद्याद्गुरुदक्षिणाम् ॥ ४३ ॥

सुवर्णवासोधान्यानि शोणां गां च सतर्णकाम् ।
पुनरष्टोत्तरं मन्त्री सहस्रं दिनशो जपेत् ॥ ४४ ॥

विधिनेति विधातुरग्निपूजा-
मचिरेणैव भवेन्महासमृद्धिः ।

धनधान्यसुवर्णरत्नपूर्णा
धरणी गोवृषपुत्रमित्रकीर्णा ॥ ४५ ॥

प्रजपदथ वा सहस्रसंख्यं
दिनशो वत्सरतो भवेन्महाश्रीः ।
जुहुयात्प्रतिवासरं शताख्यं
हविषाब्देन भवेन्महासमृद्धिः ॥ ४६ ॥

पालाशैः कुसुमैर्हुनेद्दधिघृतक्षौद्राप्लुतैर्मण्डलं
नित्यं साष्टशतं तथैव करवीरोत्थैः समृद्धयै हुनेत् ।
षण्मासं कपिलाघृतेन दिनशोऽप्यष्टौ सहस्रं तथा
होतव्यं लभते स राजसदृशीं लक्ष्मीं यशो वा महत् ॥

उत्पूर्वात्तिष्ठशब्दात्पुरुषहरिपदे पिङ्गलान्ते निगद्य
प्रोच्याथो लोहिताक्षं पुनरपि च वदेद्देहि मेदान्क्रमेण ।
भूयो ब्रूयात्तथा दापय शशियुगलार्णाश्चतुर्विंशदर्णः
प्रोक्तो मन्त्रोऽखिलेष्टप्रतरणसुरसद्माङ्घ्रिपः स्यात्कृशानोः ।

ऋष्याद्याः स्युः पूर्वव-
दृतुभूतदिशाक्षिकरणयुगलार्णैः ।

मूलमनुनाथ कुर्या-
दङ्गानि क्रमश एव मन्त्रितमः ॥ ४९ ॥

हैमाश्वत्थसुरद्रुमोदरभुवो निर्यान्तमश्वाकृतिं
वर्षन्तं धनधान्यरत्ननिचयान्रन्ध्रैः स्वकैः संततम् ।
ज्वालापल्लवितस्वरोमविवरं भक्तार्तिसंभेदनं
वन्दे धर्मसुखार्थमोक्षसुखदं[1] दिव्याकृतिं पावकम् ॥ ५० ॥

जप्याच्च लक्षमानं
मन्त्री संदीक्षितोऽथ मनुमेनम् ।
जुहुयाच्च तदवसाने
घृतसिक्तैः पायसैर्दशांशेन ॥ ५१ ॥

अङ्गैर्हुतवहमूर्तिभि-
राशेशैः संयजेत्तदस्त्रैश्च ।
पावकमिति मन्त्रितमो
गन्धाद्यैरनुदिनं तदुपहारैः ॥ ५२ ॥

दिनावतारे मनुमेनमन्वहं
जपेत्सहस्रं नियमेन मन्त्रवित् ।

1. ०फलदं

*P. 16

अधृष्यतायै यशसे श्रिये रुजां
विमुक्तये युक्तमतिस्तथायुषे ॥ ५३ ॥

शालीतण्डुलकैः सितैश्च पयसा कृत्वा हविः पावकं
गन्धाद्यैः परिपूज्य तेन हविषा संवर्त्य पिण्डं महत् ।
आज्यालोलितमेकमेव जुहुयाज्जप्त्वा मनुं मन्त्रवि-
त्साष्टोर्ध्वं प्रतिपद्यथो शतमतः स्यादिन्दिरा वत्सरान् ॥

अष्टोत्तरं शतमथो मृगमुद्रयैव
मन्त्री प्रतिप्रतिपदं जुहुयात्पयोन्नैः ।
साज्यैर्भवेन्न खलु तत्र विचारणीयं
संवत्सरात्स च निकेतनमिन्दिरायाः ॥ ५५ ॥

अष्टोर्ध्वशतं हविषा
मन्त्रेणानेन नित्यशो जुहुयात् ।
षण्मासादाढ्यतमो
भवति नरो नात्र संदेहः ॥ ५६ ॥

शालीभिः शुद्धाभिः
प्रतिदिनमष्टोत्तरं शतं जुहुयात् ।

धनधान्यसमृद्धः स्या-
न्मन्त्री संवत्सरार्धमात्रेण ॥ ५७ ॥

आज्यैरयुतं जुहुया-
त्प्रतिमासं प्रतिपदं समारभ्य ।
अतिमहती लक्ष्मीः स्या-
दस्य तु षण्मासतो न संदेहः ॥ ५८ ॥

अरुणैः पुनरुत्पलैः शतं यो
मधुराक्तैः प्रजुहोति वत्सरार्धम् ।
मनुनाप्यमुना दशाधिकं स
प्रलभेन्मङ्क्षु महत्तरां च लक्ष्मीम् ॥ ५९ ॥

जातीपलाशकरवीरजपाख्यबिल्व-
व्याघातकेसरकुरण्डभवैः प्रसूनैः ।
एकैकशः शतमथो मधुरत्रयाक्तै-
र्जुह्वत्प्रतिप्रतिपदं श्रियमेति वर्षात् ॥ ६० ॥

खण्डैश्च सप्तदिनमप्यमृतालतोत्थै-
र्मन्त्री हुनेद्गुणसहस्रमथो पयोक्तैः ।

सम्यक्समर्च्य दहनं नचिरेण जन्तु-
श्चातुर्थिकादिविषमज्वरतो वियुज्यात् ॥ ६१ ॥

क्षीरद्रुमत्वगभिपक्वजलैर्यथाव-
त्संपूर्य कुम्भमभिपूज्य कृशानुमत्र ।
जप्त्वा मनुं पुनरमुं त्रिसहस्रमानं
सेकक्रिया ज्वरहरी ग्रहवैकृतघ्नी ॥ ६२ ॥

पयसि हृदयदघ्ने भानुमालोक्य तिष्ठ-
न्प्रजपतु च सहस्रं नित्यशो मन्त्रमेनम् ।
स दुरितमपमृत्युं रोगजातांश्च हित्वा
व्रजति नियतसौख्यं वत्सराद्दीर्घमायुः ॥ ६३ ॥

मनुनामुनाष्टशतजप्तमथ
प्रपिबेज्जलं ज्वलनदीपनकृत् ।
गुरु भुक्तमप्युदरगं त्वमुना
परिजापितं पचति कुक्ष्यनलः ॥ ६४ ॥

हुनेदरुणपङ्कजैस्त्रिमधुराप्लुतैर्नित्यशः
सहस्रमृतुमासतः पृथुतरा रमा जायते ।

प्रतिप्रतिपदं हुनेदिति बुधो धिया वत्सरा-

द्विनष्टवसुरप्यसौ भवति चेन्दिरामन्दिरम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

**प्रपञ्चसारे पञ्चदशः पटलः ॥**

## षोडशः पटलः ॥

अथ संग्रहेण कथयामि
मनुमपि महागणेशितुः ।
यमवहितधियः समुपास्य
सिद्धिमधिकां प्रपेदिरे ॥ १ ॥

तारश्रीशक्तिमारावनिगणपतिबीजानि दण्डीनि चोक्त्वा
पश्चाद्विघ्नं चतुर्थ्यां वरवरदमथो सर्वयुक्तं जनं च ।
आभाष्य क्ष्वेलमेन्तं वशमिति च तथैवानयेति द्विठान्तः
प्रोक्तोऽयं गाणपत्यो मनुरखिलविभूतिप्रदः कल्पशास्त्री ॥

ऋषिरपि गणकोऽस्य स्या-
च्छन्दोनिचृदन्विता च गायत्री ।
सकलसुरासुरवन्दित-
चरणयुगो देवता महागणपः ॥ ३ ॥

प्रणवादिबीजपीठ-

स्थितेन दीर्घस्वरान्वितेन सता ।

अङ्गानि षड्विदध्या-

न्मन्त्री विघ्नेश्वरस्य बीजेन ॥ ४ ॥

मन्दाराद्यैः कल्पक-

वृक्षविशेषैर्विशिष्टतरफलदैः ।

शिशिरितचतुराशेऽन्त-

र्बालातपचन्द्रिकाकुले च तले ॥ ५ ॥

ऐक्षवजलनिधिलहरी-

कणजालकवाहिना च गन्धवहेन ।

संसेविते च सुरतरु-

सुमनःश्रितमधुपपक्षचलनपरेण ॥ ६ ॥

रत्नमये मणिवज्र-

प्रवालफलपुष्पपल्लवस्य सतः ।

महतोऽधस्तादृतुभि-

र्युगपत्संसेवितस्य कल्पतरोः ॥ ७ ॥

सिंहमुखपादपीठग-
लिपिमयपद्मे त्रिषट्कोणोल्लसिते ।
आसीनस्त्वेकरदो
बृहदुदरो दशभुजोऽरुणतनुश्च गजवदनः ॥ ८ ॥

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरयाश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥

करपुष्करधृतकलश-
स्रुतमणिमुक्ताप्रवालवर्षेण ।
अविरतधारां विकिर-
न्परितः साधकसमग्रसंपत्त्यै ॥ १० ॥

मदजललोलुपमधुकर-
मालां निजकर्णतालताडनया ।
निर्वासयन्मुहुर्मुहु-
रमरैरसुरैश्च सेवितो युगपत् ॥ ११ ॥

अग्रेऽथ बिल्वमभितश्च रमारमेशौ
तद्दक्षिणे वटजुषौ गिरिजावृषाङ्कौ ।
पृष्ठेऽथ पिप्पलजुषौ रतिपुष्पबाणौ
सव्ये प्रियङ्गुमभितश्च महीवराहौ ॥ १२ ॥

ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ
पाशाङ्कुशाख्यपरशुत्रिशिखैरथान्यौ ।
युग्मोत्पलेक्षुमयचापधरौ[1] तृतीया-
वन्यौ शुकाह्वकलमाग्रगदारथाङ्गैः ॥ १३ ॥

ध्येयाः षट्कोणाश्रिषु
परितः पाशाङ्कुशाभयेष्टकराः ।
सप्रमदा गणपतयो
रक्ताकाराः प्रभिन्नमदविवशाः ॥ १४ ॥

अग्राश्रावामोदः
प्रमोदसुमुखौ च तदभितोऽश्रियुगे ।
पृष्ठे च दुर्मुखाख्य-
स्त्वमुमभितो विघ्नविघ्नकर्तारौ ॥ १५ ॥

1. ०शरौ

सव्यापसव्यभागे
तस्य ध्येयौ च शङ्खपद्मनिधी ।
मौक्तिकमाणिक्याभौ
वर्षन्तौ धारया धनानि सदा ॥ १६ ॥

सिद्धिसमृद्धी चान्या
कान्तिर्मदनावती मदद्रवया ।
द्राविणिवसुधाराख्ये
वसुमत्यपि विघ्ननिधियुगप्रमदाः ॥ १७ ॥

ध्यात्वैवं विघ्नपतिं
चत्वारिंशत्सहस्रसंयुक्तम् ।
प्रजपेल्लक्षचतुष्कं
चतुःसहस्रं च दीक्षितो मन्त्री ॥ १८ ॥

दिनशः स चतुश्चत्वा-
रिंशत्संख्यं प्रतर्पयेद्विघ्नम् ।
उक्तजपान्ते मन्त्री
जुहुयाच्च दशांशतोऽष्टाभिर्द्रव्यैः ॥ १९ ॥

मोदकपृथुका लाजाः
 ससक्तवः सेक्षुनालिकेरतिलाः ।
कदलीफलसहितानी-
 त्यष्ट द्रव्याणि संप्रदिष्टानि ॥ २० ॥

अनुदिनमर्चयितव्यो
 जपता मनुमपि च मन्त्रिणा गणपः ।
प्राक्प्रोक्तपद्मपीठे
 सशक्तिके साधिका मनौ विधिना ॥ २१ ॥

तीव्रा ज्वालिनिनन्दे
 सभोगदा कामरूपिणी चोग्रा ।
तेजोवती च नित्या
 संप्रोक्ता विघ्ननाशिनी नवमी ॥ २२ ॥

सर्वयुतं शक्तिपदं
 प्रोक्त्वा कमलासनाय नम इति च ।
आसनमन्त्रः प्रोक्तो
 नवशक्त्यन्ते समर्चयेदमुना ॥ २३ ॥

आद्या मिथुनैरावृति-
  रपरा सनिधिभिरपि च षड्विघ्नैः ।
अङ्गैरन्या मातृभि-
  रपरेन्द्राद्यैश्च पञ्चमी पूज्या ॥ २४ ॥

दीक्षाभिषेकयुक्तः
  प्रजपेत्संपूजयेदिति गणेशम् ।
अभिधीयतेऽस्य च पुन-
  र्गुर्वादेशेन मन्त्रिणो दीक्षा ॥ २५ ॥

मध्ये च दिग्दलानां
  चतुष्टयाग्रे प्रविन्यसेत्कलशान् ।
क्षीरद्रुबिल्वरोहिण-
  पिप्पलफलिनीत्वगुद्भवैः कथितैः ॥ २६ ॥

संपूजयेद्यथाव-
  त्क्रमात्समावाह्य गणपमिथुनानि ।
अभ्यर्च्य चोपचारै-
  र्हुत्वा विधिवत्पुनः समभिषिञ्चेत् ॥ २७ ॥

इति जपहुतार्चनाद्यैः
　　सिद्धो मन्त्रेण कर्म कुर्वीत ।
अष्टद्रव्यैर्वान्यै-
　　र्हुनेच्च तत्तत्प्रयोजनावाप्त्यै ॥ २८ ॥

स्वर्णाप्त्यै मधुना च गव्यपयसा गोसिद्धये सर्पिषा
　　लक्ष्म्यै शर्करया जुहोतु यशसे दध्ना च सर्वर्द्धये ।
अन्नैरन्नसमृद्धये च सतिलैर्द्रव्याप्तये तण्डुलै-
　　र्लाजाभिर्यशसे कुसुम्भकुसुमैः साश्वारिजैर्वाससे ॥

पद्मैर्भूपतिमुत्पलैर्नृपवधूं तन्मन्त्रिणः कैरवै-
　　रश्वत्थादिसमिद्भिरग्रजमुखान्वर्णान्वधूः पिष्टजैः ।
पुत्तल्यादिभिरन्वहं च वशयेज्जुह्वन्ननावृष्टये
　　लोणैर्वृष्टिसमृद्धये च जुहुयान्मन्त्री पुनर्वेतसैः ॥ ३० ॥

मन्त्रेणाथ पुरामुनैव चतुरावृत्त्या समातर्प्य च
　　श्रीशक्तिस्मरभूविनायकरतीनाम्नैव बीजादिकम् ।
आमोदादिनिधिद्वयं च सचतुःपूर्वं चतुर्वारकं
　　मन्त्री तर्पणतत्परोऽभिलषितं संप्राप्नुयान्मण्डलात् ॥

अथ गजलिप्सुर्नृपति-
गजवनमध्ये प्रसाधयेद्धारि ।
तन्निकटे तु विशालं
चतुरश्रं कारयेच्च गृहवर्यम् ॥ ३२ ॥

परिवीतदृढावरणं
तच्च चतुर्द्वारतोरणोल्लसितम् ।
तस्मिन्मण्डपवर्ये
चतुरश्रामुन्नतां स्थलीं कृत्वा ॥ ३३ ॥

उत्तरभागे तस्याः
कुण्डं रचयेद्यथा पुरा तत्र ।
चापजहरिभवमानुष-
चक्रप्रोक्तानथाक्षरान्मन्त्री ॥ ३४ ॥

ऊर्ध्वादिमेखलासु
क्रमेण विलिखेन्निजेष्टसमवाप्त्यै ।
संप्रोक्तलक्षणयुतं
प्रविरचयेन्मण्डलं स्थलीमध्ये ॥ ३५ ॥

आवाह्य विघ्नेश्वरमर्चयित्वा
प्रागुक्तया तत्र विधानक्लृप्त्या ।
निवेदयित्वा सह भक्ष्यलेह्यैः
प्राज्यैश्च साज्यैरपि भोज्यजातैः ॥ ३६ ॥

आधाय वैश्वानरमत्र कुण्डे
समर्च्य मन्त्रैः क्रमशः कृशानोः ।
तैरेव पूर्वं जुहुयाद्धुतेन
मन्त्री समृद्ध्या च ततस्त्रिवारम् ॥ ३७ ॥

तारेण लक्ष्म्यद्रिसुतास्मरक्ष्मा-
विघ्नेशबीजैः क्रमशोऽनुबद्धैः ।
पदत्रयेणापि च मन्त्रराजं
विभज्य मन्त्री नवधा जुहोतु ॥ ३८ ॥

पुनः समस्तेन च मन्त्रवर्ण-
संख्यं प्रजुह्वन्नपि सर्पिषैव ।
पूर्वप्रदिष्टैर्जुहुयादथाष्ट-
द्रव्यैः प्रसिक्तैर्मधुरत्रयेण ॥ ३९ ॥

सचतुश्चत्वारिंश-
त्सहस्रसंख्यैश्चतुःशतैः श्रुतिभिः ।
दशकचतुष्कैर्हुत्वा
चत्वारिंशद्भिरन्तरेण दिनैः ॥ ४० ॥

करिकलभाः करिणीभिः
संपात्यन्तेऽवटेऽत्र गणपतिना ।
प्रतिदिनमभ्यवहार्य च
विप्रान्संवर्धितस्तदाशीर्भिः ॥ ४१ ॥

तेषां मातङ्गानां
दद्यात्पञ्चांशदक्षिणां गुरवे ।
तद्विक्रीतं वसु वा
प्रसादितायाथ तद्दशांशं वा ॥ ४२ ॥

मिथुनानां गणपानां
निध्योश्च तथाङ्गमातृलोकेशानाम् ।
मन्त्री घृतेन हुत्वा-
भ्यर्च्य च होमं समापयेत्सम्यक् ॥ ४३ ॥

पुनरुद्धृत्य निवेद्या-
　　दिकं समभ्यर्च्य गणपतिं सावरणम् ।
उद्वास्य स्वे हृदये
　　विहरेदित्यर्चना क्रमोद्दिष्टा ॥ ४४ ॥

प्रोक्तस्त्वेवं दशभुजमनुः संग्रहेणात्र भक्तो
　दीक्षां प्राप्तो विधिवदभिजस्वाथ हुत्वार्चयित्वा ।
नुत्वा नत्वा दिनमनु तथा तर्पयित्वा स्वकामा-
　ँल्लब्ध्वा चान्ते व्रजति मुनिभिः प्रार्थनीयं पदं तत् ॥

स्मृतिपीठः पिनाकी सानुग्रहो बिन्दुसंयुतः ।
बीजमेतद्भवः प्रोक्तं संस्तम्भनकरं परम् ॥ ४६ ॥

चतुरीयो विलोमेन तारादिर्बिन्दुसंयुतः ।
वैघ्नो मन्त्रो हृदन्तोऽर्चाविधौ होमे द्विठान्तकः ॥ ४७ ॥

गणकः स्यादृषिश्छन्दो निचृद्विघ्नश्च देवता ।
बीजेन दीर्घयुक्तेन दण्डिनाङ्गक्रियेरिता ॥ ४८ ॥

रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलि-
　र्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः ।

हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो [1]नागयज्ञाभिभूषो
देवः पद्मासनो वो भवतु नतसुरो भूतये विघ्नराजः ॥

दीक्षितः प्रजपेल्लक्षचतुष्कं प्राक्समीरितैः ।
जुहुयादष्टभिर्द्रव्यैर्यथापूर्वं दशांशतः ॥ ५० ॥

पीठे तीव्रादिभिः पद्मकर्णिकायां विनायकम् ।
आवाह्य पूजयेद्दिक्षु चतुर्ष्वपि यजेत्पुनः ॥ ५१ ॥

गणाधिपगणेशौ च गणनायकमेव च ।
गणक्रीडं कर्णिकायामङ्गैः किञ्जल्कसंस्थितैः ॥ ५२ ॥

वक्रतुण्डैकदंष्ट्रौ च महोदरगजाननौ ।
लम्बोदरश्च विकटो विघ्नराड्धूमवर्णकौ ॥ ५३ ॥

समर्चयेन्मातृवर्गं बाह्ये लोकेश्वरानपि ।
इति प्रोक्ता संग्रहेण गाणेशीयं समर्चना ॥ ५४ ॥

नालिकेरान्वितैर्मन्त्री सक्तुलाजतिलैर्हुनेत् ।
आरभ्याच्छां प्रतिपदं चतुर्थ्यन्तं चतुःशतम् ॥ ५५ ॥

दिनशः सर्ववश्यं स्यात्सर्वकामप्रदं नृणाम् ।
तिलतण्डुलकैर्लक्ष्मीवश्यकृच्च यशस्करम् ॥ ५६ ॥

---

1. नागवक्त्रोऽहिभूषो.

मधुरत्रयसिक्ताभिर्लाजाभिः सप्तवासरम् ।
जुहुयात्कन्यकार्थी वा कन्यका वा वरार्थिनी ॥ ५७ ॥

चतुर्थ्यां नालिकेरैस्तु होमः सद्यः श्रियावहः ।
हविषा घृतसिक्तेन सर्वकार्यार्थदो हुतः ॥ ५८ ॥

[1]दध्यन्नलोणमुद्राभिर्हुनेन्निशि चतुर्दिनम् ।
इष्टार्थसिद्ध्यै मतिमान्सद्यः संवादसिद्धये ॥ ५९ ॥

ईदृशं गणपं ध्यात्वा मन्त्री तोयैः सुधामयैः ।
दिनादौ दिनशस्तस्य तर्पयेन्मस्तके सुधीः ॥ ६० ॥

चत्वारिंशच्चतुःपूर्वं तत्पूर्वं वा चतुःशतम् ।
चत्वारिंशद्दिनात्तस्य काङ्क्षिता सिद्धिरेष्यति ॥ ६१ ॥

नवनीते नवे लिख्यादनुलोमविलोमकम् ।
उदरस्थितसाध्याख्यं तद्बीजं [2]तत्प्रतिष्ठितम् ॥ ६२ ॥

समीरणं प्रतिष्ठाप्य जप्त्वाष्टशतसंख्यकम् ।
तूष्णीं प्रभक्षयेदेतत्सप्तरात्राद्वशीकरम् ॥ ६३ ॥

अन्त्यासनोऽथ सूक्ष्मो
लोहितगोऽग्निः पुनः स एव स्यात् ।

---

1. दध्यक्त॰ 2. तत्प्रवेष्टितम्.

सादान्तेनायार्णौ
 नत्यन्तो मनुरयं स्वबीजाद्यः ॥ ६४ ॥

ऋषिदेवते तु पूर्वे
 च्छन्दस्तु विराडमुष्य संप्रोक्ता ।
बीजेन दीर्घभाजा
 कथितोऽङ्गविधिः क्रमेण बिन्दुमता ॥ ६५ ॥

धृतपाशाङ्कुशकल्पक-
 लतिकास्वरदश्च बीजपूरयुतः ।
शशिशकलकलितमौलि-
 स्त्रिलोचनोऽरुणतनुश्च गजवदनः ॥ ६६ ॥

भासुरभूषणदीप्तो
 बृहदुदरः पद्मविष्टरो ललितः ।
ध्येयोऽनायतदोःपद्-
 सरसिरुहः संपदे सदा मनुजैः ॥ ६७ ॥

दीक्षायुक्तः प्रजपे-
 ल्लक्षं मनुमेनमथ तिलैर्युतम् ।

त्रिमधुरसिक्तैर्जुहुया-
त्पूर्वोक्तैर्वाथ वाष्टभिर्द्रव्यैः ॥ ६८ ॥

विघ्नविनायकवीराः
सशूलवरदेभवक्त्रकैकरदाः ।
लम्बोदरश्च मात-
ङ्गावृत्योरन्तरा च लोकेशाः ॥ ६९ ॥

पूज्याः सितघृतपायस-
हवनात्संजायते महालक्ष्मीः ।
केवलघृतहुतमुदितो
विघ्नः सद्यो वशीकरोति जगत् ॥ ७० ॥

एकमपि नालिकेरं
सचर्मलोष्टेन्धनं हुनेन्मन्त्री ।
दिनशश्चत्वारिंश-
द्दिनतः स तु वाञ्छितार्थमभ्येति ॥ ७१ ॥

सह पृथुकसक्तुलाजै-
स्तिलैरभीष्टार्थसिद्धये जुहुयात् ।

सापूपनालिकेरे-
क्षुककदलीभिस्तथा सुमधुराभिः ॥ ७२ ॥

अष्टभिरेतैर्विहितो
होमः सर्वार्थसाधको भवति ।
दिनशः सघृतान्नहुतो
गृहयात्रायापको गृहस्थानाम् ॥ ७३ ॥

अन्वहमन्वहमादौ
गणपं संतर्पयेच्चतुःपूर्वम् ।
चत्वारिंशद्वारैः
शुद्धजलैरिन्दिराप्तये मन्त्री ॥ ७४ ॥

समहागणपतियुक्तै-
र्विघ्नाद्यैर्दशभिराह्वयैर्दिनशः ।
तर्पणपूजाहुतविधि-
रपि वाञ्छितसिद्धिदायको भवति ॥ ७५ ॥

बिम्बादम्बुदवत्समेत्य सवितुः सोपानकै राजतै-
स्तोयं तोयजविष्टरं भ्रतलतादन्तं सपाशाङ्कुशम् ।

जासां साध्यनृके निधाय सुधया तद्रन्ध्रनिर्यातया
सिञ्चन्तं वपुरन्वहं गणपतिं स्मृत्वामृतैस्तर्पयेत् ॥

प्राग्भाषितानपि विधीन्विधिवद्विदध्या-
न्मन्त्री विशेषविदथान्वहमादरेण ।
एकत्र वा गणपतौ मनुजाः स्वरुच्या
नामानुरूपमनुमेनममी भजन्तु ॥ ७७ ॥

इति जपहुतपूजातर्पणैर्विघ्नराजं
प्रभजति मनुजो यस्तस्य शुद्धिर्विशाला ।
भवति सधनधान्या पुत्रमित्रादियुक्ता
विगतसकलविघ्ना विश्वसंवादिनी च ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे षोडशः पटलः ॥**

## सप्तदशः पटलः ॥

---

अथ मन्मथमन्त्रविधिं विधिना
कथयामि सहोमविधिं सजपम् ।
मथनस्य पुरामपि मोहकरं
व्यथिताखिलसिद्धसुरादिगणम् ॥ १ ॥

अजकलाप्रथमावनिशान्तिभि-
र्युतसुधाकरखण्डविकासिभिः ।
निगदितो मनुरेष मनोभुवः
सकलधर्मयशोर्थसुखावहः ॥ २ ॥

ऋष्यादिकाश्च संमो-
हनगायत्रीमनोभवाः प्रोक्ताः ।
बीजेन दीर्घभाजा
कथितान्यङ्गान्यमुष्य जातियुजा ॥ ३ ॥

अरुणमरुणवासोमाल्यदामाङ्गरागं
स्वकरकलितपाशं साङ्कुशास्त्रेषुचापम् ।
मणिमयमकुटाद्यैर्दीप्तमाकल्पजातै-
ररुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ॥ ४ ॥

तरणिलक्षममुं मनुमादरा-
त्समभिजप्य हुनेच्च दशांशकैः ।
तदनु किंशुकजैः प्रसवैः शुभै-
स्त्रिमधुरार्द्रतरैर्निजसिद्धये ॥ ५ ॥

मोहिनी क्षोभिणी त्रासी स्तम्भिन्याकर्षिणी तथा ।
द्राविणीह्लादिनीक्लिन्नाक्लेदिन्यः स्मरशक्तयः ॥ ६ ॥

आशान्तिद्वयवाम-
श्रुतिसर्गैर्द्रयुगकलबलैश्च समैः ।
शोषणमोहनसंदी-
पनतापनमादनान्यजेत्क्रमशः ॥ ७ ॥

अनङ्गरूपा सानङ्गमदनानङ्गमन्मथा ।
अनङ्गकुसुमानङ्गकुसुमातुरसंज्ञका ॥ ८ ॥

अनङ्गशिशिरानङ्गमेखलानङ्गदीपिका ।
अङ्गाशापालयोर्मध्ये बाणानङ्गावृतीर्यजेत् ॥ ९ ॥

आलिख्यात्कर्णिकायामनलपुरपुटे मारबीजं ससाध्यं
तद्रन्ध्रेष्वङ्गषट्कं बहिरपि गुणशो मारणाय त्रिवर्णान् ।
मालामन्त्रं दलाग्रेष्वपि गुहमुखशः पार्थिवाश्रिष्वनङ्गं
कुर्याद्यन्त्रं तदेतद्भुवनमपि वशे का कथा मानवेषु ॥ १० ॥

प्रोक्त्वाथ कामदेवा-
य विद्महे तदनु पुष्पबाणाय ।
तथा च धीमह्यन्ते
तन्नोऽनङ्गः प्रचोदयाद्गायत्री ॥ ११ ॥

नत्यन्ते कामदेवाय प्रोक्त्वा सर्वजनं वदेत् ।
प्रियायेति तथा सर्वजनसंमोहनाय च ॥ १२ ॥

वीप्सयित्वा ज्वलपदं प्रज्वलं च प्रभाषयेत् ।
पुनः सर्वजनस्येति हृदयं मम चेत्यथ ॥ १३ ॥

वशमुक्त्वा कुरु वीप्स्य कथयेद्वह्निवल्लभाम् ।
प्रोक्तो मदनमन्त्रोऽष्टचत्वारिंशद्भिरक्षरैः ॥ १४ ॥

इति यन्त्रक्लृप्तकलशो बहुशः
कतमं नरं न परिमोहयति ।
प्रमदावनीश्वरसभानगरा-
दिकमाश्वरीनपि वशे कुरुते ॥ १५ ॥

वक्ष्ये विधानमन्य-
न्मनोभवस्याथ मोहनं जगतः ।
येनार्चितः स देवो
वाञ्छितमखिलं करोति मन्त्रविदाम् ॥ १६ ॥

अमृतोद्भवौ मकरके-
तनश्च संकल्पजाह्वयाक्षररूपौ[1] ।
इक्षुधनुर्धरपुष्पश-
राख्यावङ्गानि वह्निजायान्तानि ॥ १७ ॥

अरुणतरवसनमाल्या-
नुलेपनाभरणमिषुशरासधरम् ।
न्यस्तशरबीजदेहो
ध्यायेदात्मानमङ्गजं रुचिरम् ॥ १८ ॥

1. क्षतरूपौ.

अङ्गबाणावृतेरूर्ध्वे पूज्याः षोडश शक्तयः ।
युवतिर्विप्रलम्भा च ज्योत्स्ना सुभ्रूर्मदद्रवा ॥ १९ ॥

सुरता वारुणी लोला कान्तिः सौदामिनी तथा ।
कामच्छत्रा चन्द्रलेखा शुकी च मदनाह्वया ॥ २० ॥

[1]योनिर्मायावती चेति शक्तयः स्युर्मनोभुवः ।
शोको मोहो विलासश्च विभ्रमो मदनातुरः ॥ २१ ॥

अपत्रपो युवा कामी चूतपुष्पो रतिप्रियः ।
ग्रीष्मस्तपान्त ऊर्जश्च हेमन्तः शिशिरो मदः ॥ २२ ॥

चतुर्थ्यामावृतौ पूज्याः स्युर्मारपरिचारकाः ।
परभृत्सारसौ चैव शुकमेघाह्वयौ तथा ॥ २३ ॥

अपाङ्गभ्रूविलासौ द्वौ हावभावौ स्मरप्रियाः ।
माधवी मालती चैव हरिणाक्षी मदोत्कटा ।
एताश्चामरहस्ताः स्युः पूज्याः कोणेषु संस्थिताः ॥ २४ ॥

हृल्लेखया स्वनाम्ना च शक्त्यादीनां समर्चनम् ।
इन्द्राद्यैः सप्तमी पूज्या स्मरार्चाविधिरीदृशः ॥ २५ ॥

1. मायामयी

मदनविधानमितीत्थं
प्रोक्तं योऽनेन पूजयेद्विधिना ।
स तु सकललोकपूज्यो
भवेन्मनोज्ञश्च मन्दिरं लक्ष्म्याः ॥ २६ ॥

विलसदहंकारतनु-
र्मनःशिवो विभ्रमास्पदीभूतः ।
बुद्धिशरीरां नारीं
नरः सदा चित्तयोनिमभिगच्छेत् ॥ २७ ॥

इति मदनयोगरत्या[1]
यो रमयेन्नित्यशो निजां वनिताम् ।
स तु भुक्तिमुक्तिकामी
वनिताजनहृदयमोहनो भवति ॥ २८ ॥

आत्मानं मदनं ध्यायेदाशुशुक्षणिरूपिणम् ।
तद्बीजाग्रं शिवज्वालातनुं तन्वीतनुं तथा ॥ २९ ॥

सुधामयीं च तद्योनिं नवनीतमयं स्मरेत् ।
संगच्छेच्च शिवज्वालालीढं तद्धृदयादिकम् ॥ ३० ॥

1. ०क्लृप्त्या.

आलिङ्गेदग्निसंस्पर्शद्रुततद्रूपकामृतम् ।
रसनाशिखया कर्षेत्तद्दन्तवसनामृतम् ॥ ३१ ॥

कुसुमास्त्रधिया बाह्ये स्पृशेत्कररुहैरपि ।
हानिं न कुर्याज्जीवस्य मन्त्री विशदमानसः ॥ ३२ ॥

एतावथोऽधोमध्योर्ध्वक्रमेणैवं समाहितम् ।
निजप्रियां भजेदेवं सा मारशरविह्वला ।
छायेवानपगा तस्य भवेदेवं भवान्तरे ॥ ३३ ॥

साध्याख्या कामवर्णैः प्रतिपुटितलसत्कर्णिकं पत्रराज-
त्तारत्विक्पक्षजाष्टादशसमिदृतुगण्डान्तगान्ताक्षराढ्यम् ।
आशाशूलाङ्कितं तद्द्विपतिरिपुदले सम्यगालिख्य सेरं
मारं जप्त्वास्य यामाशयति वशगता सा भवेत्सद्य एव ॥

हंसारूढो मदन-
त्रैलोक्यक्षोभको भवेदाशु ।
द्युयुतो रञ्जनकृत्स्या-
ज्जीवोपेतस्तथायुषे शस्तः ॥ ३५ ॥

तारयुजा त्वमुनाग्नौ
हुत्वा संपातितेन चाज्येन ।
संभोजयेत्पतिं स्वं
वनिता स नितान्तरञ्जितो भवति ॥ ३६ ॥

दध्यक्ताभिर्जुहुया-
ल्लाजाभिः कन्यकां समाकाङ्क्षन् ।
कन्यापि वरं लभते
विधिना नित्यानुरक्तममुनैव ॥ ३७ ॥

अभिनवैः सुमनोभिरशोकजै-
र्दधितिलैर्विहिता हवनक्रिया ।
परमवश्यकरी परिकाङ्क्षिता-
[1]मपि लभेदचिरादिव कन्यकाम् ॥ ३८ ॥

अभीष्टदायी स्मरणादपि स्मर-
स्तथा जपादर्चनया विशेषतः ।
प्रसादतोऽस्याखिललोकवर्तिन-
श्चिराय वश्याश्च भवन्ति मन्त्रिणः ॥ ३९ ॥

1. मभिवहे०

कृष्णा मध्यगताः ष्णायगोव्यर्णा यह्ममध्यगाः ।
गोपीजनवकाराः स्युर्भायस्वाहास्मरादिकाः ॥ ४० ॥

ऋषिस्तु नारदोऽस्य स्याद्गायत्रं छन्द इष्यते ।
मन्त्रस्य देवता कृष्णस्तदङ्गविधिरुच्यते ॥ ४१ ॥

मूलमन्त्रचतुर्वर्णचतुष्केण द्विकेन च ।
प्रोक्तान्यङ्गानि भूयोऽमुं चिन्तयेद्देवकीसुतम् ॥ ४२ ॥

अव्यान्मीलत्कलापद्युतिरहिरिपुपिञ्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः ।
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥

अयुतद्वितयावधिर्जपः स्या-
दरुणैरम्बुरुहैर्हुतो दशांशैः ।
मुरजिद्विहिते तु पीठवर्ये
दिनशो नन्दसुतः समर्चनीयः ॥ ४४ ॥

अङ्गाशेङ्गाद्यैः
परिवृत्य च पायसेन सुसितेन ।

हैयङ्गवीनकदली-

फलदधिभिः प्रीणयेच्च गोविन्दम् ॥ ४५ ॥

जुहुयाद्दुग्धहविर्भि-

र्विमलैः सर्पिःसितोपलोपेतैः ।

इष्टां तुष्टो लक्ष्मीं

समावहेत्सद्य एव गोविन्दः ॥ ४६ ॥

बालं नीलाम्बुदाभं नवमणिविलसत्किङ्किणीजालनद्ध-

श्रोणीजङ्घान्तयुग्मं विपुलरुरुनखप्रोल्लसत्कण्ठभूषम् ।

फुल्लाम्भोजाभवक्त्रं हतशकटपतत्पूतनाद्यं प्रसन्नं

गोविन्दं वन्दितेन्द्राद्यमरवरमजं पूजयेद्वासरादौ ॥

वन्द्यं देवैर्मुकुन्दं विकसितकरवन्दाभमिन्दीवराक्षं

गोपीगोवृन्दवीतं जितरिपुनिवहं कुन्दमन्दारहासम् ।

नीलग्रीवाग्रपिञ्छाकलनसुविलसत्कुन्तलं भानुमन्तं

देवं पीताम्बराढ्यं* यजतु च दिनशो मध्यमेऽह्नो रमायै ॥

विक्रान्त्या ध्वस्तवैरिव्रजमजितमपास्तावनीभारमाद्यै-

रावीतं नारदाद्यैर्मुनिभिरनुदिनं तत्त्वनिर्णीतिहेतोः ।

*P. 18

सायाह्ने निर्मलं तं निरुपममजरं पूजयेन्नीलभासं
मन्त्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं वासुदेवम् ॥ ४९ ॥

त्रिकालमेवं प्रविचिन्त्य शार्ङ्गिणं
प्रपूजयेद्यो मनुजो महामनाः ।
स धर्ममर्थं सुसुखं श्रियं परा-
मवाप्य देहापदि मुक्तिमाप्नुयात् ॥ ५० ॥

ग्रामं गच्छन्नगरमपि वा मन्त्रजापी मनुष्यो
देवेशं तं मुखमनु मुहुस्तर्पयेद्दुग्धबुद्ध्या ।
शुद्धैस्तोयैः स तु बहुरसोपेतमाहारजातं
दद्यान्नित्यं प्रचुरधनधान्यांशुकाद्यैर्मुकुन्दः ॥ ५१ ॥

भिक्षावृत्तिर्दिनमनु तमेवं विचिन्त्यात्मरूपं
गोपस्त्रीभ्यो मुहुरपहरन्तं मनोभिः सहैव ।
लीलावृत्त्या ललितललितैश्चेष्टितैर्दुग्धसर्पि-
र्दध्याद्यं वा स पुनरमितामेति भिक्षां गृहेभ्यः ॥ ५२ ॥

ध्यानी मन्त्री मन्त्रजापी च नित्यं
यद्यद्वाञ्छन्यत्र यत्र प्रयाति ।

तत्तत्प्राप्त्वा तत्र तत्र प्रकामं
  प्रीतः क्रीडेद्देववन्मानुषेषु ॥ ५३ ॥

एवं देवं पूजयन्मन्त्रमेनं
  जप्यान्मन्त्री सर्वलोकप्रियः स्यात् ।
इष्टान्कामान्प्राप्य संपन्नवृत्ति-
  र्नित्यं शुद्धं तत्परं धाम भूयात् ॥ ५४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे सप्तदशः पटलः ॥**

## अष्टादशः पटलः ॥

अथ प्रणवसंज्ञकं प्रतिवदामि मन्त्रं परं
सजापमपि सार्चनं सहुतक्लृप्ति सोपासनम् ।
अशेषदुरितापहं विविधकामकल्पद्रुमं
विमुक्तिफलसिद्धिदं विमलयोगिसंसेवितम ॥ १ ॥

आद्यस्वरः समेतो-
ऽमरेण सधसप्तमश्च बिन्दुयुतः ।
प्रोक्तः स्यात्प्रणवमनु-
स्त्रिमात्रिकः सर्वमन्त्रसमवायी ॥ २ ॥

मन्त्रस्यास्य मुनिः प्रजापतिरथ च्छन्दश्च देव्यादिका
गायत्री गदिता जगत्सु परमात्माख्यस्तथा देवता ।
अङ्गीबैर्युगमध्यगध्रुवयुतैरङ्गानि कुर्यात्स्वरै-
र्मन्त्री जातियुतैश्च सत्यरहितैर्वा व्याहृतीभिः क्रमात् ॥३॥

विष्णुं भास्वत्किरीटाङ्गदवलययुगाकल्पहारोदराङ्घ्रि-
[1]श्रोणीरूपं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ ४ ॥

दीक्षितो मनुमिमं शतलक्षं
संजपेत्प्रतिहुनेच्च दशांशम् ।
पायसैर्घृतयुतैश्च तदन्ते
विप्रभूरुहभवाः समिधो वा ॥ ५ ॥

सर्पिःपायसशाली-
तिलसमिदाद्यैरनेन यो जुहुयात् ।
ऐहिकपारत्रिकमपि
स तु लभते वाञ्छितं फलं नचिरात् ॥ ६ ॥

अभ्यर्च्य वैष्णवमथो विधिनैव पीठ-
मावाह्य तत्र सकलार्थकरं मुकुन्दम् ।
अङ्गैः समूर्तियुगशक्तियुगैः सुरेन्द्र-
वज्रादिकैर्यजतु मन्त्रिवरः क्रमेण ॥ ७ ॥

1. श्रोणीभूषं.

वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
स्फटिकस्वर्णदूर्वेन्द्रनीलाभा वर्णतो मताः ॥ ८ ॥

चतुर्भुजाश्चक्रशङ्खगदापङ्कजधारिणः ।
किरीटकेयूरिणश्च पीताम्बरधरा अपि ॥ ९ ॥

सशान्तिश्रीसरस्वत्यौ रतिश्चाश्रिदलाश्रिताः ।
अच्छपद्मरजोदुग्धदूर्वावर्णाः स्वलंकृताः ॥ १० ॥

आत्मान्तरात्मपरमज्ञानात्मानस्तु मूर्तयः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च शक्तयः ॥ ११ ॥

ज्वलज्ज्वालासमाभाः स्युरात्माद्या [1]मूर्तिशक्तयः ।
इति पञ्चावरणकं विधानं प्रणवोद्भवम् ॥ १२ ॥

इत्थं मन्त्री तारममुं जापहुतार्चा-
भेदैरङ्गीकृत्य च योगानपि युञ्ज्यात् ।
यैः संलब्ध्वा चेह समग्रां श्रियमन्ते
शुद्धं विष्णोर्धाम परं प्राप्स्यति योगी ॥ १३ ॥

---

1. शक्तिमूर्तयः.

करपादमुखादिविहीनमना-
रतदृश्यमनन्यगमात्मपदम् ।
यमिहात्मनि पश्यति तत्त्वविद-
स्तमिमं किल योगमिति ब्रुवते ॥ १४ ॥

योगाप्तिदूषणपरं त्वथ कामकोप-
लोभप्रमोहमदमत्सरतेति षट्कम् ।
वैरिं जयेत्सपदि योगविदेनमङ्गै-
र्योगस्य धीरमतिरष्टभिरिष्टदैश्च ॥ १५ ॥

यमनियमासनपवना-
यामाः प्रत्याहृतिश्च धारणया ।
ध्यानं चापि समाधिः
प्रोक्तान्यङ्गानि योगयोग्यानि ॥ १६ ॥

सत्यमहिंसा स्मता
धृतिरस्तेयं क्षमार्जवं च तथा ।
वैराग्यमिति यमः स्या-
त्स्वाध्यायतपोऽर्चनाव्रतानि तथा ॥ १७ ॥

संतोषश्च सशौचो
नियमः स्यादासनं च पञ्चविधम् ।
पद्मस्वस्तिकभद्रक-
वज्रकवीराह्वयं क्रमात्तदपि ॥ १८ ॥

रेचकपूरककुम्भक-
भेदात्त्रिविधः प्रभञ्जनायामः ।
मुञ्चेद्दक्षिणयानिल-
मथानयेद्वामया च मध्यमया ॥ १९ ॥

संस्थापयेच्च नाड्ये-
त्येवं प्रोक्तानि रेचकादीनि ।
षोडशतद्द्विगुणचतुः-
षष्टिकमात्राणि तानि च क्रमशः ॥ २० ॥

चित्तात्मैक्यधृतस्य
प्राणस्य स्थानसंहृतिः स्थानात् ।
प्रत्याहारो ज्ञेय-
श्चैतन्ययुतस्य सम्यगनिलस्य ॥ २१ ॥

स्थानस्थापनकर्म

प्रोक्ता स्याद्धारणेति तत्त्वज्ञैः ।

यो मनसि देवताया

भावः स्यात्तस्य मन्त्रिणः सम्यक् ॥ २२ ॥

संस्थापयेच्च तत्रे-

त्येवं ध्यानं वदन्ति तत्त्वविदः ।

सत्तामात्रं नित्यं

शुद्धमपि निरञ्जनं च यत्प्रोक्तम् ॥ २३ ॥

तत्प्रविचिन्त्य स तस्मि-

श्चित्तलयः स्यात्समाधिरुद्दिष्टः ।

अष्टाङ्गैरिति कथितैः

पुनराशु निगृह्यतेऽरिरात्मविदा ॥ २४ ॥

अथ वा शोषणदहन-

प्लावनभेदेन शोधिते देहे ।

पञ्चाशद्भिर्मात्रा-

भेदैर्विधिवत्समायमेत्प्राणान् ॥ २५ ॥

*P. 18*a*

पञ्चाशदात्मकोऽपि च
कलाप्रभेदेन तार उद्दिष्टः ।
तावन्मात्रायमना-
त्कलाश्च विधृता भवन्ति तत्त्वविदा ॥ २६ ॥

पूर्वमिडाया वदने
विचिन्तयेद्धूम्रमानिलं बीजम् ।
तेनागतेन देहं
प्रशोषयेत्सान्तराधिकरचरणम् ॥ २७ ॥

पिङ्गलया प्रतिमुञ्चे-
त्तथैव कार्शानवेन रक्तरुचा ।
प्रतिदह्य पूर्वविधिना
मुञ्चेन्नैशाकरेण सुसितेन ॥ २८ ॥

संपूरयेत्सुधामय-
जलशीकरवर्षिणा तनुं सकलाम् ।
निर्माय मानसेन च
परिपूर्णमनाश्चिरं भूयात् ॥ २९ ॥

सुजीर्णमितभोजनः सुखसमात्तनिद्रादिकः
    सुशुद्धतलसद्गृहे विरहिते च शीतादिभिः ।
पटाजिनकुशोत्तरे सुविशदे च मृद्वासने
    निमीलितविलोचनः प्रतिविशेत्सुखं प्राङ्मुखः ॥ ३० ॥

प्रसारितं वामकरं निजाङ्के
    निधाय तस्योपरि दक्षिणं च ।
ऋजुः प्रसन्नो विजितेन्द्रियः स-
    न्नाधारमत्यन्तसमं स्मरेत्स्वम् ॥ ३१ ॥

तन्मध्यगतं प्रणवं
    प्रणवस्थं बिन्दुमपि च बिन्दुगतम् ।
नादं विचिन्त्य तारं
    यथावदुच्चारयेत्सुषुम्नान्तम् ॥ ३२ ॥

तन्मध्यगतं शुद्धं
    शब्दब्रह्मातिसूक्ष्मतन्तुनिभम् ।
तेजः स्मरेच्च तारा-
    त्मकमपि मूलं चराचरस्य सदा ॥ ३३ ॥

ओंकारो गुणबीजं
प्रणवस्तारो ध्रुवश्च वेदादिः ।
आदिरुमध्यो मपरो
नामन्यस्य त्रिमात्रिकश्च तथा ॥ ३४ ॥

अस्य तु वेदादित्वा-
त्सर्वमनूनां प्रयुज्यतेऽथादौ ।
योनिश्च सर्वदेहे
भवति च स ब्रह्म सर्वसंवादे ॥ ३५ ॥

ऋक् च तदाद्यादिः स्या-
त्तन्मध्यान्तं यजुश्च [1]मान्तादिः ।
सामापि तस्य भेदा
बहवः प्रोक्ता हि लोकवेदेषु ॥ ३६ ॥

उच्चार्योच्चार्य च तं
क्रमान्नयेदुपरि षड्द्वयान्तान्तम् ।
मनसा स्मृते यदास्मि-
न्मनो लयं याति तावदभ्यस्येत् ॥ ३७ ॥

1. ०मान्तानि । सामानि.

अथ वा बिन्दुं वर्तुल-
मावर्तैस्त्रिभिरुपेतमेवमिव ।
प्रोतं रविबिम्बेन च
समभ्यसेत्स्रुतसुधामयं तेजः ॥ ३८ ॥

अपमृत्युरोगपापजि-
द्चिरेण सुसिद्धिदो नृणां योगः ।
अथ वा मूलाधारो-
त्थिता प्रभा बिसविभेदतन्तुनिभा ॥ ३९ ॥

वदनामृतकरबिम्ब-
स्यूता ध्यातामृताम्बुलवलुलिता ।
स्थावरजङ्गमविषहृ-
द्योगोऽयं नात्र संदेहः ॥ ४० ॥

अथ वा त्रिवलयबिन्दुग-
धाम प्रणवेन संनयेदूर्ध्वम्
पीतोर्णातन्तुनिभं
सौषुम्नेनैव वर्त्मना योगी ॥ ४१ ॥

तस्मिन्निधाय चित्तं
विलयं गमयेद्दिनेशसंख्यान्ते ।
पुनरावृत्तिविहीनं
निर्वाणपदं व्रजेत्तदभ्यासात् ॥ ४२ ॥

अथ वादिबीजमौ पुन-
रुमापि विषे तमपि संहरेद्बिन्दौ ।
बिन्दुं नादे तमपि च
शक्तौ शक्तिं तथैव शान्ताख्ये ॥ ४३ ॥

तेजस्यनन्यगे चिति
निर्द्वन्द्वे निष्कले सदानन्दे ।
सूक्ष्मे च सर्वतो मुख-
करपदनयनादिलक्षणालक्ष्ये ॥ ४४ ॥

स्वात्मनि संहृत्यैवं
करणेन्द्रियवर्गनिर्गमापेतः ।
निर्लीनपुण्यपापो
निरुच्छ्वसन्ब्रह्मभूत एव स्यात् ॥ ४५ ॥

अथ वा योगोपेताः
पञ्चावस्थाः क्रमेण विज्ञाय ।
ताभिर्युञ्जीत सदा
योगी सद्यः प्रसिद्धये मुक्तेः ॥ ४६ ॥

जाग्रत्स्वप्नसुषुप्ती
तुरीयतदतीतकौ पुनस्तासु ।
स्वैरिन्द्रियैर्यदात्मा
भुङ्क्ते भोगान्स जागरो भवति ॥ ४७ ॥

संज्ञारहितैरपि तै-
स्तस्यानुभवो भवेत्पुनः स्वप्नः ।
आत्मनिरुद्युक्ततया
नैराकुल्यं भवेत्सुषुप्तिरपि ॥ ४८ ॥

पश्यति परं यदात्मा
निस्तमसा तेजसा तुरीयं तत् ।
आत्मपरमात्मपदयो-
रभेदतो व्याप्नुयाद्यदा योगी ॥ ४९ ॥

तच्च तुरीयातीतं
तस्यापि भवेन्न दूरतो मुक्तिः ।
अथ वा सूक्ष्माख्यायां
पश्यन्त्यां मध्यमाख्यवैखर्योः ॥ ५० ॥

ससुषुम्नाग्रकयोरपि
युञ्जीयाज्जाग्रदादिभिः पवनम् ।
बीजोच्चारो जाग्र-
द्बिन्दुः स्वप्नः सुषुप्तिरपि नादः ॥ ५१ ॥

शक्त्यात्मना तुरीयः
शान्ते लय आत्मनस्तुरीयान्तम् ।
अङ्गुष्ठगुल्फजङ्घा-
जानुद्वितयं च सीवनी मेढ्रम् ॥ ५२ ॥

नाभिर्हृदयं ग्रीवा
सलम्बिकाग्रं तथैव नासाग्रम् ।
भ्रूमध्यललाटाग्रसु-
षुम्नाग्रं द्वादशान्तमित्येवम् ॥ ५३ ॥

उत्क्रान्तौ परकाय-
प्रवेशने चागतौ पुनः स्वतनौ ।
स्थानानि धारणायाः
प्रोक्तानि मरुत्प्रयोगविधिनिपुणैः ॥ ५४ ॥

स्थानेष्वेष्वात्ममनः-
समीरसंयोगकर्मणोऽभ्यासात् ।
अचिरेणोत्क्रान्त्याद्या
भवन्ति संसिद्धयः प्रसिद्धतराः ॥ ५५ ॥

कण्ठे भ्रूमध्ये हृदि
नाभौ सर्वाङ्गके स्मरेत्क्रमशः ।
ळवरसमीरखवर्णै-
रनिलमहाकालवश्चनेयं स्यात् ॥ ५६ ॥

अवनिजलानलमारुत-
विहायसां शक्तिभिश्च तद्बिम्बैः ।
सारूप्यमात्मनश्च
प्रतिनीत्वा तत्तदाशु जयति सुधीः ॥ ५७ ॥

एवं प्रोक्तैर्योगै-
रायोजयतोऽन्वह तथात्मानम् ।
अचिरेण भवति सिद्धिः
समस्तसंसारमोचनी नित्या ॥ ५८ ॥

इति योगमार्गभेदैः
प्रतिदिनमारूढयोगयुक्तधियः ।
सिद्धय उपलक्ष्यन्ते
मोक्षपुरीसंप्रवेशनद्वाराः ॥ ५९ ॥

कम्पः पुलकानन्दौ
वैमल्यस्थैर्यलाघवानि तथा ।
सकलप्रकाशवित्ते-
त्यष्टावस्थाः प्रसूचकाः सिद्धेः ॥ ६० ॥

त्रैकाल्यज्ञानोहौ
मनोज्ञता च्छन्दतो मरुद्रोधः ।
नाडीसंक्रमणविधि-
र्वाक्सिद्धिर्देहतश्च देहाप्तिः ॥ ६१ ॥

ज्योतिःप्रकाशनं चे-
त्यष्टौ स्युः प्रत्ययायुजः सिद्धेः ।
अणिमा महिमा च तथा
लघिमा गरिमेशिता वशित्वं च ॥ ६२ ॥

प्राप्तिः प्राकाम्यं चे-
त्यष्टैश्वर्याणि योगयुक्तस्य ।
अष्टैश्वर्यसमेतो
जीवन्मुक्तः प्रवक्ष्यते योगी ।
योगानुभवमहामृत-
रसपानानन्दनिर्भरः सततम् ॥ ६३ ॥

इत्येवं प्रणवविधिः समीरितोऽयं
भक्त्या तं प्रभजति यो जपादिभेदैः ।
संप्राप्नोत्यनुततनित्यशुद्धबुद्धं
तद्विष्णोः परमतरं पदं नराग्र्यः ॥ ६४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
प्रपञ्चसारे अष्टादशः पटलः ॥

## एकोनविंशः पटलः ॥

---*---

अथ पुनरभिवक्ष्ये मन्त्रमष्टाक्षराख्यं

सकलदुरितदुःखध्वान्तसंभेदभानुम् ।

प्रणवहृदयनारावर्णतोऽन्ते यणार्णौ

मपर इति समुद्दिष्टोऽयमिष्टार्थदायी ॥ १ ॥

तारः शक्त्युत्थतया

निर्दिष्टः सोऽहमर्थकः पूर्वम् ।

नार्णः प्रतिषेधार्थो

मोकारश्चायमर्थको भवति ॥ २ ॥

सलिलानलपवनधराः

क्रमेण नारायणाक्षराः प्रोक्ताः ।

चरमेरस्तु विभक्ति-

व्यक्त्यर्थे दर्शितस्तदर्थार्थे ॥ ३ ॥

ऋषिरस्य मनोः साध्यनारायण इतीरितः ।
छन्दश्च देवी गायत्री परमात्मा च देवता ॥ ४ ॥

अथ क्रुद्धमहावीरद्युसहस्रपदादिकैः ।
उल्कैर्जातियुतैः कुर्यात्पञ्चाङ्गानि मनोः क्रमात् ॥ ५ ॥

अष्टाक्षरेण व्यस्तेन कुर्याद्वाष्टाङ्गकं सुधीः ।
सहृच्छिरःशिखावर्मनेत्रास्त्रोदरपृष्ठके ॥ ६ ॥

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराज-
त्केयूरं कौस्तुभाभाशबलरुचिरहारं सपीताम्बरं च ।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥

संदीक्षितो मनुममुं प्रतिजप्तुमिच्छ-
न्कुर्यान्निजेन वपुषैव तु योगपीठम् ।
अंसोरुयुग्मपदमाननाभिमूल-
पार्श्वद्वयैर्विहितगात्रसमुज्ज्वलं च ॥ ८ ॥

मध्येऽनन्ताद्यैरपि
संज्ञानात्मान्तिकैर्यजेन्मन्त्री ।

पीठाख्यमन्त्रपाश्चिम-
मथ गन्धाद्यैश्च सम्यगुपचारैः ॥ ९ ॥

प्रणवं हृदयं चैव प्रोक्त्वा भगवतेपदम् ।
विष्णवे च समाभाष्य सर्वभूतात्मनेपदम् ॥ १० ॥

वासुदेवाय सर्वात्मसंयोगपदमुच्चरेत् ।
योगपद्मपदं प्रोक्त्वा ततः पीठात्मने नमः ॥ ११ ॥

अथ मन्त्रप्रबद्धाशो मन्त्रवर्णास्तनौ न्यसेत् ।
विन्यस्तैर्यैर्भवेन्मन्त्री मन्त्रवर्णात्मको हरिः ॥ १२ ॥

आधारहृद्वदनदोःपदमूलनाभौ
कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।
कास्येक्षणश्रवणगन्धवहे च दोःप-
त्संध्यङ्गुलीषु हृदि धातुषु सानिलेषु ॥ १३ ॥

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्ख-
श्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ १४ ॥

ततोऽष्टाक्षरपूर्त्यर्थं स्मर्तव्यो द्वादशाक्षरः ।
मन्त्रो द्वादशमूर्तीस्तु तत्प्रभिन्नास्तनौ न्यसेत् ॥ १५ ॥

अष्टप्रकृत्यात्मकश्च संप्रोक्तोऽष्टाक्षरो मनुः ।
अष्टानां प्रकृतीनां च चतुर्णामात्मनामपि ॥ १६ ॥

द्वादशानां तु संयोगो मन्त्रः स्याद्द्वादशाक्षरः ।
आदित्या द्वादश प्रोक्ता युक्ता द्वादशमूर्तिभिः ॥ १७ ॥

केशवादिप्रदिष्टानां मूर्तीनां द्वादशादितः ।
आदिस्वरयुता न्यस्येत्ताः स्युर्द्वादश मूर्तयः ॥ १८ ॥

ललाटोदरहृत्कण्ठदक्षपार्श्वांसतद्गले ।
तथा वामत्रये पृष्ठे ककुदोश्च यथाक्रमम् ॥ १९ ॥

द्वादशाक्षरमन्त्रं च मन्त्रविन्मूर्ध्नि विन्यसेत् ।
मूर्धस्थो वासुदेवस्तु व्याप्नोति सकलां तनुम् ॥ २० ॥

पुनस्तत्प्रतिपत्त्यर्थं किरीटादिमनुं जपेत् ।
किरीटकेयूरहारपदान्याभाष्य मन्त्रवित् ॥ २१ ॥

मकरान्ते कुण्डलं च चक्रशङ्खगदादिकम् ।
अब्जहस्तपदं प्रोक्त्वा पीताम्बरधरेति च ॥ २२ ॥

श्रीवत्साङ्कितमाभाष्य वक्षःस्थलमथो वदेत् ।
श्रीभूमिसहितं स्वात्मज्योतिर्द्वयमथो वदेत् ॥ २३ ॥

[1]दीप्तिमुक्ताकरायेति सहस्रादित्यतेजसे ।
हृदन्तः प्रणवादिः स्यात्किरीटादिमनुः स्वयम् ॥ २४

कृत्वा स्थण्डिलमस्मि-
न्निक्षिप्य निजासिकां समुपविश्य ।
पीठादिकं निजाङ्गं
प्रपूज्य गन्धादिभिः सुशुद्धमनाः ॥ २५ ॥

सद्वादशाक्षरान्तं
प्रपूज्य विधिवत्किरीटमन्त्रेण ।
कुर्यात्पुष्पाञ्जलिमपि
निजदेहे पञ्चशोऽथ वा त्रयशः ॥ २६ ॥

इति दीक्षितविहितविधिः
संप्रोक्तोऽष्टाक्षरस्य मन्त्रस्य ।
शुद्धानां विमलधियां
दीक्षा प्रतिवक्ष्यतेऽथ संक्षेपात् ॥ २७ ॥

1. दीप्तिमुक्त्वाधरायेति

कृत्वा त्रिगुणितादीनामेकं मण्डलमुज्ज्वलम् ।
आत्मार्चनोक्तविधिना शक्तिभिः पीठमर्चयेत् ॥ २८ ॥

विमलोत्कर्षिणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशानानुग्रहा नवमी तथा ॥ २९ ॥

निधाय कलशं तत्र पञ्चगव्येन पूरयेत् ।
पयोभिर्वा गवां प्रोक्तैः [1]क्वथितैर्वाष्टगन्धकैः ॥ ३० ॥

अष्टाक्षराङ्गैरष्टाष्टवर्णैरष्टाक्षरान्वितैः ।
दलमूले यजेद्भूयो वासुदेवादिकान्क्रमात् ।
सशक्तिकांस्ततो बाह्ये संपूज्या हरिहेतयः ॥ ३१ ॥

चक्रसशङ्खगदाम्बुज-
कौस्तुभशार्ङ्गाः सखड्गवनमालाः ।
रक्ताच्छपीतकनक-
श्यामलकृष्णद्युशुक्लभासः स्युः ॥ ३२ ॥

ध्वजश्च वैनतेयश्च शङ्खपद्मौ दिगाश्रिताः ।
विघ्नार्यकौ तथा दुर्गाविष्वक्सेनौ विदिग्गताः ॥ ३३ ॥

1. क्वाथैर्वा शोधितोदकैः.

ध्वजः श्यामो विपो रक्तो निधी शुक्लारुणप्रभौ ।
अरुणश्यामलश्यामपीता विघ्नादयो मताः ॥ ३४ ॥

इन्द्रादयस्तद्बहिश्च पूज्या गन्धादिभिः क्रमात् ।
इति विष्णोर्विधानं तु पञ्चावरणमुच्यते ॥ ३५ ॥

एवमभ्यर्चिते विष्णावुपचारैस्तु पूर्ववत् ।
अग्निमाधाय कुण्डे तु ब्रह्मयागसमीरितैः ॥ ३६ ॥

जुहुयादष्टभिर्द्रव्यैर्मनुनाष्टाक्षरेण तु ।
पृथगष्टशतावृत्त्या हुत्वा दत्वा बलिं ततः ॥ ३७ ॥

अभिषिच्य गुरुः शिष्यं प्रवदेत्पूर्ववन्मनुम् ।
द्वात्रिंशल्लक्षमानेन स तु मन्त्रं जपेत्ततः ।
तदर्धसंख्यकं वापि शुद्धाचारो जितेन्द्रियः ॥ ३८ ॥

पद्मासनः प्राग्वदनोऽप्रलापी
तन्मानसस्तर्जनिवर्जिताभिः ।
अक्षस्रजो वाङ्गुलिभिर्जपेत
नातिद्रुतं नातिविलम्बितं च ॥ ३९ ॥

प्रागीरितैरपि जुहोतु दशांशकं वा
गव्यैः शुभैः सरसिजैर्मधुराप्लुतैर्वा ।
रत्नांशुकप्रवरकाञ्चनगोमहीभि-
र्धान्यैर्यथाविभवतः प्रयजेद्गुरूंश्च ॥ ४० ॥

विप्रान्प्रतर्प्य विभवैरथ मन्त्रजापी
संह्लादयेज्जपविधिं च ततः क्रमेण ।
नित्यार्चना च विहिता विधिनामुनैव
प्रोक्तक्रमेण विदधात्वथ वात्मपूजाम् ॥ ४१ ॥

इति जपहुतार्चनाद्यै-
र्मन्त्री योऽष्टाक्षरं समभ्यस्येत् ।
स त्वैहिकीं च सिद्धिं
संप्राप्यान्ते प्रयाति परमपदम् ॥ ४२ ॥

अङ्गानि पूर्वं त्वथ मूर्तिशक्तीः
सकेशवादींश्च पुरंदरादीन् ।
समर्चयेद्यस्तु विधानमेत-
न्नरोऽचिरात्काङ्क्षितमेति कामम् ॥ ४३ ॥

यष्टव्यः स्याद्वासुदेवादिरादौ
चक्राद्याः केत्वादिकाः केशवाद्याः
इन्द्राद्याश्चेत्येवमेव प्रदिष्टं
तुष्ट्यायुःश्रीकीर्त्तिसिद्ध्यै विधानम् ॥ ४४ ॥

स वासुदेवादिकमर्चयित्वा
भूयो ध्वजादींश्च पुरंदरादीन् ।
क्रमेण विद्वान्विधिनार्चयीते-
त्ययं क्रमश्च त्रिदशाभिपूज्यः ॥ ४५ ॥

इत्युक्तविधिचतुष्कं
पूजयितुरथैकमपि यथाशक्ति ।
अचिरेण भवति लक्ष्मी-
र्हस्तगता सकलवर्गसिद्धिकरी ॥ ४६ ॥

अष्टाक्षराक्षराष्टक-
मूर्तिविधानानि भेदभिन्नानि ।
वक्ष्याम्यर्चयितॄणां
वाञ्छितसकलार्थसाधनानि सदा ॥ ४७ ॥

सिन्दूरकुन्दकरविन्दकबन्धुजीवं-
  कश्मीरपद्ममकरन्दरुचः क्रमेण ।
नीलोत्पलाम्बुरुहरागसमानवर्णाः
  स्युर्मूर्तयोऽष्ट कथिता मनुवर्णजाताः ॥ ४८ ॥

अरिदरगदाब्जहस्ताः
  सर्वास्तु नकारमोर्णयोर्मन्त्री ।
शङ्खारिगदाब्जकरे
  लक्षणमन्यत्समानरूपं स्यात् ॥ ४९ ॥

या मूर्तिरर्च्यतेऽस्य
  व्रजन्ति परिवारितां तदवशिष्टाः ।
अवशिष्टेऽन्येऽथांशे
  स्वयं च परिवारितां प्रयाति तदा ॥ ५० ॥

इयमेवावृतिरश्रिका
  ध्रुवजे ध्रुवजात्पुरा समुद्दिष्टात् ।
भवति विधानादिति पुन-
  रेषां प्रथमं विधानमुद्दिष्टम् ॥ ५१ ॥

अथ द्वितीयाक्षरतोऽङ्गतोऽन्ते[1]
वर्णाष्टमूर्तीरपि मूर्तिशक्तीः ।
यजेद्विधाने च सकेतुलोक-
पालादिकानुक्तविधानक्लृप्त्या ॥ ५२ ॥

मोकारजे रतिधृती च सकान्तितुष्टि-
पुष्टिस्मृतीरपि च दीप्त्यभिधां च कीर्त्तिम् ।
केत्वादिकं च सशतक्रतुपूर्वकं च
संपूजयेद्विमलधीः पुनरन्वितोऽन्ते ॥ ५३ ।

नाकारजेऽङ्गतोऽन्ते
प्रपूजयेन्मूर्तिशक्तिलोकेशान ।
रावर्णजेऽङ्गमूर्ति-
श्रीभूमायामनोन्मनीस्तदनु ॥ ५४ ॥

ह्रीः श्री रतिः सपुष्टि-
र्मोहिनिमाये महादियोगाद्ये ।
माये च तृतीयावृति-
रन्यदशेषं पुरैव निर्दिष्टम् ॥ ५५ ॥

1. ०जेऽङ्गतो.

यकारजेऽरिशङ्खौ च सगदाहलशार्ङ्गकाः ।
मुसल[illegible]ङ्कशूलौ च तृतीया साक्षरोद्भवे ॥ ५६ ॥

शेषो वासुकितक्षक-
कार्कोटकपङ्कजमहापद्माः ।
वरपालगुलिकसंज्ञा-
स्तृतीयमन्यत्समं विधानेऽन्त्ये ॥ ५७ ॥

अङ्गैः प्रथमावरणं
मूर्तिभिरपि शक्तिभिर्द्वितीयमपि ।
अन्यैः केशवकेत्वा-
दिभ्यां स्यात्पञ्चमं च मत्स्याद्यैः ॥ ५८ ॥

मत्स्यः कूर्मवराहौ
नृसिंहकुब्जत्रिरामकृष्णाश्च ।
कल्किः सानन्तात्मा
पुनरमृतात्मा च षष्ठमहिपाद्यैः ॥ ५९ ॥

सप्तममपि लोकेशै-
रष्टममपि तदायुधैश्च संप्रोक्तम् ।

प्रागुक्तेषु विधाने-
ष्वालक्ष्यं नोक्तमत्र यत्तदपि ॥ ६० ॥

अष्टाक्षराक्षरविधानचतुष्कयुग्मं
प्रोक्तक्रमेण विधिनाभियजेद्य एनम् ।
भक्त्या मुकुन्दमनुजापरतो नराग्र्यः
प्राप्नोति वाञ्छितमयत्नत एव कामम् ॥ ६१

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे एकोनविंशः पटलः ॥**

# CONTENTS.

# ॥ विषयाः ॥

पृष्ठम्

॥ श्रीः ॥

# ॥ प्रपञ्चसारविषयविवेकः ॥

पृष्ठम्

# ॥ प्रपञ्चसारः ॥

## विंशः पटलः ॥

अथ प्रवक्ष्यामि च मासभेद-

भिन्नानि यन्त्राण्यपि संग्रहेण ।

रेखाक्रमद्युन्ति विचित्रवर्ण-

लसन्ति विष्णोश्च विधानभाञ्जि ॥ १ ॥

यैः कुर्युरिष्टाभिनिविष्टचेष्टा

धरण्यनन्तादिकसंज्ञकानि ।

व्रतान्यभीष्टार्थदकल्पवृक्षै-

रनारतेनैव च साधकेशाः ॥ २ ॥

मेषादिकं यच्च चतुष्कमादौ
मासेषु तद्वायुगृहावृतं स्यात् ।
सिंहादिकं भूगृहसंवृतं च
चापादिकं पार्थिवयुग्मवीतम् ॥ ३ ॥

मेषादिकेषु त्रिगुणात्मकानि
चराणि भास्वद्गुणितात्मकानि ।
स्थिराण्यतो षड्गुणितानि तज्ज्ञै-
रुक्तानि यन्त्राण्युभयात्मकानि ॥ ४ ॥

तानि त्रिषड्द्वादशकात्मकोक्तैः
स्युर्लक्षणैरप्यभिलक्षितानि ।
स्वैः स्वैश्च नामप्रविभक्तरूप-
भेदैर्बहिर्वेष्टितबिम्बकानि ॥ ५ ॥

त्रिगुणितमपि यन्त्रमष्टपत्रा-
वृतमथ [1]षड्गुणितं हि षड्दलाभ्याम् ।
स्थिरगतमपि चाष्टयुग्मपत्रं
तदपि च षड्युगपत्रशोभितं वा ॥ ६ ॥

1. षड्गुणितद्विषड्दलाभ्याम्.

पद्मं चरोभस्थिरसंज्ञकेषु
रक्तप्रपीताच्छदलादिवर्णम् ।
मासेषु यन्त्रोदरक्लप्ततत्त-
न्मासाभिधामूर्त्यभिधाक्षराढ्यम् ॥ ७ ॥

केशवमेषादीनां
ये दीर्घा मुक्तिराशिवर्णानाम् ।
ते वृत्तानि भवन्ति च
निगदितमिति यन्त्रक्लप्तिसामान्यम् ॥ ८ ॥

सुवर्णगोक्षीरजपाशिलाल-
पीतेन्द्रनीलारुणकैरवाभाः ।
काश्मीरमेघाञ्जनरोचिषश्च
क्रमेण वर्णैरपि केशवाद्याः ॥ ९ ॥

इतीरिताश्चारुकिरीटहार-
केयूरपीताम्बरकादितुल्याः ।
सचक्रशङ्खाः सगदाम्बुजाश्च
संपूजनीयास्तपनैः क्रमेण ॥ १० ॥

धात्रर्यममित्राख्या
 वरुणांशभगा विवस्वदिन्दुयुताः ।
पूषाह्वयपर्जन्यौ
 त्वष्टा विष्णुश्च भानवः प्रोक्ताः ॥ ११ ॥

प्रथमं केशवधातृक-
 मितरन्नारायणार्यमाख्यं च ।
अन्या माधवमैत्रं
 परमपि गोविन्दवारुणं प्रोक्तम् ॥ १२ ॥

पञ्चममपि विष्ण्वशं
 मधुसूदनभगवपञ्च षष्ठमपि ।
त्रिविक्रमविवस्वदाख्यं
 सप्तममन्यञ्च वामनैन्द्रमपि ॥ १३ ॥

श्रीधरपौष्णं नवमं
 दशमं च हृषीकनाथपर्जन्यम् ।
अम्बुजनाभं त्वाष्ट्रं
 दामोदरवैष्णवं विधानमिति ॥ १४ ॥

आदौ विधानेषु समेतमूर्ति-
　शक्तीश्चतस्त्रोऽभियजेद्यथावत् ।
राशिष्वथो भानुयुताश्च मूर्तीः
　प्रवक्ष्यमाणं च निरूप्य मन्त्री ॥ १५ ॥

वृषहरिवृश्चिककलशा-
　ख्यकेष्वथो केतुकेशवाद्यैश्च ।
मत्स्यादिकशेषाद्ये
　समभियजेदन्तरा समावरणे ॥ १६ ॥

प्रानुप्रोद्यत्स्वराष्टद्वितयवृतमहाबीजकं शक्तिलक्ष्मी-
　कामैरात्ताग्निकोणं बहिरभिवृतसिंहान्वितक्रोडमन्त्रम् ।
बिन्दूनामन्तरालेष्वपि च विलिखितैः कादिवर्गैश्च युक्तं
　षड्भिर्वाय्व्यगेहावृतमभिमतकामप्रदं मेषयन्त्रम् ॥

गौरीन्दिरा रतिधृती
　वसुधा पुष्टिक्षमासरस्वत्यः ।
मूर्त्योश्च मध्यमावृति-
　राशेशात्प्राग्ध्वजादिरपि कथिता ॥ १८ ॥

हयरथगजभृत्यादी-
नरिभवशौर्यादिसिद्धिं च ।
तेजो यशश्च विपुलं
पूजयितुर्वितनुते विधानमिदम् ॥ १९ ॥

वर्णैराद्यैरमन्तैः समभिवृतमहाबीजमक्ममध्यराज-
त्पान्तक्षाद्यक्षराढ्यं गुहनयनहुताश्रिराजन्मथार्णम् ।
अश्रेर्गण्डद्वयोद्यत्पचलिपिपरिवीतं च नाद्यैः सकान्तैः
काद्यैर्नान्तैश्च यन्त्रं बहुविधफलदं पूजितं स्याद्वृषोत्थम् ॥

नित्यानन्दा व्यापिनी व्योमरूपा
शान्तिर्विद्यारूपिणी च प्रतिष्ठा ।
कल्यामोघा चण्डिका दीप्तजिह्वे-
त्येवं प्रोक्ताथावृतिः स्यात्तृतीया ॥ २१ ॥

सुरभिहयमहिषदासी-
दासाभरणांशुकादिसिद्धिकरम् ।
वृषजं विधानमेत-
द्देहान्ते सिद्धिदं परस्य सतः ॥ २२ ॥

आगच्छन्मात्रभिख्यालिपिपरिवृतबीजं स्वरावीतवृत्तं
शाद्यैः क्षान्तैस्तदाद्यैरपि परिवृतगण्डं तदश्रात्तजुंसम् ।
भाद्यैः कान्तैः प्रवीतं मयरलवहयुग्बिन्दुकं वायुगेहा-
वीतं वाञ्छाप्रदानप्रसवगुणयुतं युग्मजं यन्त्रमेतत् ॥

इन्द्राणी कौमारिका ब्रह्मजाता
वाराह्याख्या वैष्णवी चाथ लक्ष्मीः ।
चामुण्डा माहेश्वरी स्यात्तृतीया
रक्षाप्रज्ञाश्रीप्रदं स्याद्विधानम् ॥ २४ ॥

पाशाद्यष्टाक्षरार्णप्रतिपुटितमहाष्टाक्षरावेष्टितान्त-
र्बीजं शाखान्तरूढे गगननृहरिबीजात्तकोणं बहिश्च ।
कामिन्यष्टाक्षराद्यन्तगहरिहरबीजावृतं प्रत्यनूग्र
द्वर्णाढ्यं वायुगेहस्थितमिति गदितं कर्कटोत्थं च यन्त्रम् ॥

रक्ता रमा कराली
कमला चण्डेन्द्रिरा महोच्छुष्मा ।
श्रीरिति मूर्तियुगलयो-
र्मध्यगता चावृतीरियं चापि ॥ २६ ॥

भूतिर्विभूतिरुन्नति-
नतिधृतिरतयश्च संयतिद्युतयः ।
आवृतिरेका प्रोक्ता
श्रीवश्यकरं विधानमिति कथितम् ॥ २७ ॥

ऊष्माणाष्टाक्षरावेष्टितहृदयमथ द्वादशार्णात्तकोणं
सान्तःस्थात्माष्टवर्णैः क्रमगतविगतैरुल्लसत्तत्त्वगण्डम् ।
सिंहानुष्टुब्द्वयार्णान्तरितवृतकलालंकृतं चाथ वह्नि-
प्राणेशानक्षपाटाश्रितकचटतपत्वच्छलं[1] सिंहयन्त्रम् ॥

पुष्टिस्तुष्टिर्धृतिरपि कृतिः शान्तिकान्तिप्रमोदा
मेधा हर्षा स्मृतिरभिमता कान्तिका स्यात्तृतीया ।
कृष्णः सत्यो नृहरिवरदौ विश्वमूर्तिर्वरेण्यः
शौरिः शूरो नरमुरजितौ विष्णुजिष्णू चतुर्थी ॥ २९ ॥

विपक्षनिग्रहं तेजो यशश्च धनसंगमम् ।
करोत्यर्चयितॄणां च विधानमिति सिंहजम् ॥ ३० ॥

सर्गाद्यान्ताद्यमन्त्रैरभिवृतहृदयं दण्डिभिश्चापि ह्राह्री-
हूहैहौहोभिरात्ताश्रिकमथ तु शिखाद्योतिवर्गान्त्यवर्णम् ।

1. यशलं.

वर्णैः प्रत्यन्वितैः प्रावृतमवनिपुराश्रोल्लसत्कामबीजं
क्लिन्ने स्वाहार्णयुक्तं महिततरफलं कन्यकोत्थं च यन्त्रम् ॥

अत्राच्र्यो मधुसूदनस्त्वथ हृषीकेशाह्वयो मोहिनी
वैकुण्ठो विरजा हरिः सरसिजा शार्ङ्गी तमोहारिणी ।
अब्जाख्यः कमलावती च समुकुन्दाख्यो रमेति क्रमा-
न्मत्स्याद्यैश्च सुताश्च गोमहिषसौभाग्यप्रदं पावनम् ॥

आद्यैरावीतबीजं ग्रहवलययुतं हुंफडायुक्तकोणं
बाह्ये पाशाङ्कुशार्णावृतमथ युगषण्मूर्तिनामार्णमर्णैः[1] ।
प्रत्यन्वेष्यद्भिरुद्यद्धरियुतहरवर्णैश्च वीतं धरायाः
कोणेषूद्यन्नृसिंहाक्षरमिति कथितं स्यात्तुलायन्त्रमेतत् ॥

प्राक्प्रोक्तैश्चक्राद्यै-
रुक्तास्य समावृतिस्तृतीया स्यात् ।
प्रोतोपलब्धिमेत-
त्करोति वाणिज्यलाभं च ॥ ३४ ॥

अक्लीबद्वादशाब्द्वादशलिपिवृतहृल्लेखमश्रिद्विषट्क-
प्रोल्लास्यष्टाक्षरोष्मार्णकमपि लिपिभिः कादिभिश्चाभिवीतम् ॥

1. ०मन्त्रैः.

तद्बाह्ये चन्द्रबिम्बप्रपुटितवसुधामण्डलाश्रिप्रराज-
त्क्लीबार्णं वृश्चिकोत्थं प्रवरतरफलप्राप्तिदं यन्त्रमेतत् ॥ ३५ ॥

चिद्रूपा चिन्मया चिन्ता-
मणिः श्रीः क्षोणिसंज्ञिता ।
रतिश्च पावनी धारा
धरणी तारणी तथा ॥ ३६ ॥

द्राविणी मोहिनी चेति तृतीयेयं समावृतिः ।
अन्वयाप्तिं धर्मरतिं प्राप्नुयादस्य चार्चनात् ॥ ३७ ॥

षट्कोणाबद्धबाणासनविवरलसन्मारसिंहं तदन्तः
शक्तेर्बाह्ये परानुप्ररचितलघुसंध्यर्णयुक्पञ्चकाढ्यम् ।
अश्रिष्वाबद्धशिष्टस्वरमुपरिलसच्छूलकं चात्तवर्गं
भूम्योरष्टाश्रकोद्यद्दुजुहुलवकं चापयन्त्रं तदेतत् ॥३८॥

हर्षाह्वा सुनदारुणा सगगना घोरा रमा द्राविणी
वीरा वीरिणिहारिणी सहरिणी मन्दारिका द्वादश ।
प्रोक्तेयं च समावृतिः पुनरिदं संपूजयन्प्राप्नुया-
ल्लक्ष्मीसंततिबुद्धिवश्यपटुताकान्तीश्च भक्तिं शुभाम् ॥

मध्यस्थायाः परीतौ विलसदनुपरात्तस्वरप्राक्पराधें
सिंहार्णान्ताश्रि गण्डस्फुरितहरिहरार्णं ग्रहार्णावृतं च ।
तद्बाह्ये षोडशार्णाक्षरवृतमुभकुंद्योतितं कोणराज-
त्सोऽहं हंसाक्षराढ्यं मकरभवमिदं यन्त्रमिष्टार्थदायि ॥

मेधा हर्षा श्रद्धा
कृपा रतिर्वा सरस्वती प्रीतिः ।
वाणी चेति तृतीया
वृतिरुक्ता मकरजे विधानेऽस्मिन् ॥ ४१ ॥

स्वक्षेत्रवर्तिनः स्यु-
र्ग्रहाः क्रमात्केशवादिमूर्तियुताः ।
अर्चयितॄणामेत-
द्धनधान्यसमृद्धिदं विधानं स्यात् ॥ ४२ ॥

शक्तिश्रीकामबीजैः पुटितहरिहरब्रह्मभिश्चावृतान्त-
र्बीजं कोणद्विषट्कस्फुरितनृहरिबीजप्रतिद्योतितं च ।
आदिक्षान्तैश्च वर्णैर्वृतमवनिपुरद्वन्द्वकोणान्तकाम-
श्रीशक्तिक्ष्मार्णचिन्तामणिमनु तदिदं श्रीकरं कुम्भयन्त्रम् ॥

[1]अच्युतकामिनिभानुमनोज्ञा
विश्वतनुर्विमला हरिभद्रे ।
सूक्ष्मसरस्वतिनन्दनसंध्या
स्यादिति मध्यगता वृतिरेषा ॥ ४४ ॥

अवनिपशुपुत्रसंपद-
मपि पितृसौख्यं च हृत्प्रबोधं च ।
कुरुते विधानमेत-
त्प्रयोक्तुरन्ते च निर्वृतिं परमाम् ॥ ४५ ॥

व्यन्वेष्यद्र्ह्रस्वदीर्घोच्चसमभिवृतमहाबीजमश्रेषु षट्सु
[2]द्योतत्सौमारलक्ष्मीगिरिदुहितृधराबीजकप्रोंसमेतम् ।
वीतं काद्यैः कषान्तैर्बहिरपि च कुकोणाष्टकोल्लासिहंसं
सर्वार्थान्साधकेभ्यो वितरति विधिवत्कल्पितं मीनयन्त्रम् ॥

हृष्टिर्वृष्टिस्तुष्टिरिष्टा सुपुष्टिः
कान्तिर्मेधा मङ्गला वामसंज्ञा ।
दुर्गा प्रज्ञा भारती मध्यसंस्था
वाक्सामर्थ्यं श्रीकरं स्याद्विधानम् ॥ ४७ ॥

1. अच्युतभामिनि. 2. द्योतद्वाङ्मार.

एभिर्विधानैर्धरणीव्रतादि-
दीक्षाविधीन्ये विधिना प्रकुर्युः ।
ते पुण्यभाजो नितरां समृद्धाः
सपुत्रदाराः सुखिनो भवन्ति ॥ ४८ ॥

दीर्घायुषो मुख्यतरेन्दिराश्च
महाप्रभावाः स्वसमानवीर्याः ।
कलेवरान्ते विगताधयस्ते
विष्णोरनन्यं पदमाप्नुवन्ति ॥ ४९ ॥

एभिर्विधेयाः कलशाश्च तत्त-
न्मासोक्तयन्त्रेषु नरैर्यथावत् ।
निजेप्सितं प्राप्य मनोरथान्ते
भुक्तेश्च मुक्तेरनुभावकाः स्युः ॥ ५० ॥

कर्षोन्मिते च हाटक-
पट्टे पत्रं विलिख्य चतुरश्रे ।
तद्वित्र्यंशकृते वा
कलशेषु विनिक्षिपेच्च दीक्षासु ॥ ५१ ॥

अभिषिच्य यन्त्रकनकं
गुरवे प्रददातु संयतः सुमतिः ।
दुरितापनोदविधये द्युतये
यशसे श्रिये च मतिसंयतये ॥ ५२ ॥

एषां यागविधीना-
मेकेन तु पूजयंस्तदवसाने ।
तत्तन्मूर्तिप्रीत्यै
संस्तोतव्योऽनया हरिः स्तुत्या ॥ ५३ ॥

प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने ।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥ ५४ ॥

अज प्रसीद भगवन्नमितद्युतिपञ्जर ।
अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥ ५५ ॥

स्वसंवेद्यस्वरूपात्मदानन्दात्मन्ननामय ।
अचिन्त्यसार विश्वात्मन्प्रसीदेश निरञ्जन ॥ ५६ ॥

प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन ।
प्रसीद स्पष्ट गम्भीर गम्भीराणां महाद्युते ॥ ५७ ॥

प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामणोरणो ।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम् ॥ ५८ ॥

गुरोर्गरीयः सर्वेश प्रसीदानन्य देहिनाम् ।
जय माधव मायात्मञ्जय केशव केशिहन् ॥ ५९ ॥

जय सुन्दर सौम्यात्मञ्जय शाश्वत शङ्खभृत् ।
जय शार्ङ्गधर श्रीमञ्जय नन्दकनन्दन ॥ ६० ॥

जय चक्रगदापाणे जयाजय्य जनार्दन ।
जय रत्नाकराबन्ध किरीटाक्रान्तमस्तक ॥ ६१ ॥

जय पक्षिपतिच्छायानिरुद्धार्ककराकर ।
नमस्ते नरकाराते नमस्ते मधुसूदन ॥ ६२ ॥

नमस्ते नलिनापाङ्ग नमस्ते नयनाञ्जन ।
नमः पापहरेशान नमः सर्वभयापह ॥ ६३ ॥

नमः संभृतसर्वात्मन्नमः संभृतकौस्तुभ ।
नमस्ते नयनातीत नमो विक्रान्तवाक्पथ ॥ ६४ ॥

नमो विभिन्नज्ञेयांश नमः स्मृतिपथातिग ।
नमस्त्रिमूर्तिभेदेन सर्गस्थित्यन्तहेतवे ॥ ६५ ॥

विष्णवे त्रिदशारातिजिष्णवे परमात्मने ।
चक्रभिन्नारिचक्राय चक्रिणे चक्रबन्धवे ॥ ६६ ॥

विश्वाय विश्ववन्द्याय विश्वभूतात्मने नमः ।
नमोऽस्तु योगिध्येयाय नमोऽस्त्वध्यात्मरूपिणे ॥ ६७ ॥

भुक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ।
मनोवाक्कायचेष्टाः स्युर्ध्यानस्तुतिनमस्क्रियाः ॥ ६८ ॥

देवेश कर्म सर्वं मे भवेदाराधनं तव ।
विषयेष्वपि सङ्गो मे हुतं विष्णो तवाच्युत ॥ ६९ ॥

इति हवनजपार्चाभेदतो विष्णुपूजा-
निरतहृदयकर्मा यस्तु मन्त्री चिराय ।
स खलु सकलकामान्प्राप्य हृष्टान्तरात्मा
जननमृतिवियुक्तामुत्तमां मुक्तिमेति ॥ ७० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे विंशः पटलः ॥**

## एकविंशः पटलः ॥

—※—

अथोच्यते द्वादशवर्णसंज्ञो
मन्त्रस्तु साङ्गः सजपः सहोमः ।
विधानतो यं प्रतिजप्य भक्ता
भुक्तेश्च मुक्तेश्च पदं भवेयुः ॥ १ ॥

तारं सहृदयं मध्ये गवते स्युर्भवार्णयोः ।
सुयर्योश्च तथा देवा मन्त्रोऽयं द्वादशाक्षरः ॥ २ ॥

ऋषिः प्रजापतिश्छन्दो [1]गायत्रं विष्णुरुच्यते ।
देवता हृद्ध्रुवेण स्यान्नमसा शिर उच्यते ॥ ३ ॥

चतुर्भिश्च शिखावर्णैः पञ्चभिः कवचं भवेत् ।
प्रोक्तमस्त्रं समस्तेन पञ्चाङ्गविधिरीदृशः ॥ ४ ॥

सपादजानुयुगललिङ्गनाभ्युदरेषु च ।
हृद्दोर्गलास्यदृङ्मस्तशिखास्वक्षरतो[2] न्यसेत् ॥ ५ ॥

1. गायत्री ; 2. ०क्षरशो.

*P. II. 2

शिखाललाटनेत्रास्यगलदोर्हृदयेषु च ।
सकुक्षिनाभिलिङ्गाख्यजानुपादेषु विन्यसेत् ॥ ६ ॥

हृत्कुक्षिनाभिषु तथा गुह्यजानुपदेष्वधः ।
करकण्ठास्यहृद्धस्तशिखासूर्ध्वं च विन्यसेत् ॥ ७ ॥

संहृतेर्दोषसंहारः सृष्टेश्च शुभपुष्टयः ।
स्थितेश्च शान्तिविन्यासस्तस्मात्कार्यस्त्रिधा मतः ॥ ८ ॥

हरिमुज्ज्वलचक्रदराब्जगदा-
कुलदोः परिधं सितपद्मगतम् ।
वलयाङ्गदहारकिरीटधरं
नवकुन्दरुचं प्रणमामि सदा ॥ ९ ॥

विधिवदथ विहितदीक्षो
जपेन्मनुं वर्णलक्षमानममुम् ।
शुद्धैश्च तिलैर्जुहुया-
द्द्वादशसाहस्रकं तथा मन्त्री ॥ १० ॥

पीठे हरेरथाङ्गैः
सशक्तिभिर्मूर्तिभिस्तदनु यजेत् ।

केशवसुरनाथाद्यै-
　　रपि देवं भक्तिपूर्वतो विद्वान् ॥ ११ ॥

समिधामथ दुग्धवृक्षजानां
　　जुहुयादर्कसहस्रकं सदुग्धम् ।
मनसः परिशुद्धये मनस्वी
　　सघृतेनापि पयोन्धसा सितेन ॥ १२ ॥

द्वादशाक्षरजपं तु सार्चनं
　　यो भजेत्सुनियतो दिने दिने ।
ऐहिकं समुपलभ्य वाञ्छितं
　　प्रेत्य याति [1]पदमक्षयं हरेः ॥ १३ ॥

अथ प्रवक्ष्यामि सुदर्शनस्य
　　विधिं मनोज्ञं ग्रहतेजपाद्यैः ।
यत्सिद्धितः सिद्धिमवाप्य रम्यां
　　सिद्धा मुनीन्द्रा अपि सद्य एव ॥ १४ ॥

अन्त्यतुरीयतदादिक-
　　भृगुदहनानन्तवह्निवर्मास्त्रैः ।

---

1. पदमक्षरं

तारादिर्मनुरुक्तः
स्यादभिमतसिद्धिदो रथाङ्गाख्यः ॥ १५ ॥

ऋषिरस्याहिर्बुध्न्य-
श्छन्दोऽनुष्टुप्च्च देवता विष्णुः ।
चक्रपदैरावसुधी
सज्वालाद्यैः शिरोन्वितैरङ्गम् ॥ १६ ॥

ऐन्द्रीं समारभ्य दिशं त्वधस्ता-
दन्तं समुक्त्वा क्रमशो दशानाम् ।
चक्रेण बध्नामि नमस्तथोक्त्वा
चक्राय शीर्षं च दिशां प्रबन्धः ॥ १७ ॥

त्रैलोक्यं रक्ष रक्षेति हुंफट्स्वाहेति चोदितः ।
तारादिकोऽयं मन्त्रः स्यादग्निप्राकारसंज्ञकः ॥ १८ ॥

तारं तु मूर्ध्न्यथ सितारुणकृष्णवर्णं
मध्ये भ्रुवोश्च समथो वदने हकारम् ।
हृद्गुह्यजानुपदसंधिषु चावशिष्टा-
न्वर्णान्न्यसेदिति तनौ पुनरग्निवर्णान् ॥ १९ ॥

अव्याद्भास्करसप्रभाभिरखिला भाभिर्दिशो भासय-
न्भीमाक्षः क्षरदट्टहासविकसद्दंष्ट्राग्रदीप्ताननः ।
दोर्भिश्चक्रदरौ गदाब्जमुसलाब्जासींश्च पाशाङ्कुशौ
बिभ्रत्पिङ्गशिरोरुहोऽथ भवतश्चक्राभिधानो हरिः ॥२०॥

प्रोक्त्वा सुदर्शनायेति विद्महेऽन्ते महापदम् ।
ज्वालाय धीमहे चोक्त्वा तन्नश्चक्रः प्रचोदयात् ॥ २१ ॥

सौदर्शनीयं गायत्री जप्तव्या जप्तुमिच्छता ।
सांनिध्यकारिणीं मुद्रां दर्शयेदनया सुधीः ॥ २२ ॥

नमो भगवते प्रोक्त्वा महासुदर्शनाय च ।
महाचक्राय च तथा महाज्वालाय चेत्यथ ॥ २३ ॥

दीप्तिरूपाय चेत्युक्त्वा सर्वतो रक्ष रक्ष माम् ।
महाबलाय स्वाहेति प्रोक्तस्तारादिको मनुः ।
रक्षाकरः प्रसिद्धोऽयं क्रियमाणेषु कर्मसु ॥ २४ ॥

षट्कोणान्तःस्थतारं विवरलिखितमन्त्राक्षरं [1]सिद्धिराज-
त्स्वाङ्कं बाह्ये कलाकेसरमुदरगताष्टाक्षरं चाष्टपत्रम् ।

---

1. संधिराजत्

पद्मं वर्णैर्विराजद्विकृतिदललसत्षोडशार्णं त्रिवीतं
व्योमान्त्यार्णं स्वनाम्ना विरचितगुणपाशाङ्कुशं चक्रयन्त्रम् ॥

प्रणवहृद्भगवद्युतङे महा-
दिकरथाङ्गचतुर्थिहुमस्त्रकैः ।
निगदितस्त्विह षोडशवर्णको
मनुवरो मुनिभिर्विहितादरः ॥ २६ ॥

क्वाथैः पयोभूरुहचर्मसिद्धै-
र्दुग्धेन गव्यैरपि पञ्चभिर्वा ।
मूत्रैः पशोर्वा प्रतिपूर्य कुम्भं
समर्चयेच्चक्रहरिं यथावत् ॥ २७ ॥

अङ्गैः प्रथमावृतिरपि
पूज्या चक्रादिभिर्द्वितीया च ।
लक्ष्म्यादिभिस्तृतीया
क्रमात्तथेन्द्रादिभिश्चतुर्थी स्यात् ॥ २८ ॥

चक्रशङ्खगदापद्ममुसला धनुरेव च ।
पाशाङ्कुशौ पीतरक्तसितश्यामा द्विजस्त्विमाः ॥ २९ ॥

लक्ष्मीः सरस्वती चाथ रतिः प्रीत्याह्वया तथा ।
कीर्त्तिः कान्तिस्तुष्टिपुष्टी क्रमेणैव तु शक्तयः ॥ ३० ॥

संपूज्य चैवं विधिना हरिं तु
शिष्यं गुरुः प्रीततमोऽभिषिञ्चेत् ।
भक्त्या स्वशक्त्या विभवैर्द्विजाती-
न्संतर्प्य भूयो गुरुणानुशिष्टः ॥ ३१ ॥

एकाग्रचित्तो रविलक्षसंख्यं
जपेन्मनुं नित्यकृताभिपूजः ।
तावत्सहस्रं [1]किल सर्षपाश्च
बिल्वाज्यदौग्धानि जुहोतु सम्यक् ॥ ३२ ॥

समुद्रतीरेऽप्यथ वाद्रिशृङ्गे
समुद्रगानां सरितां च तीरे ।
जपेद्विविक्ते निज एव गेहे
विष्णोर्गृहे वा पुरुषो मनस्वी ॥ ३३ ॥

यथोक्तसंख्यं विधिवत्प्रजप्ते
मन्त्रे यथोक्तैश्च हुते हुताशे ।

---

1. ॰तिलसर्षपाश्च.

द्रव्यैरथ स्वार्थपरार्थहेतोः
कुर्यात्प्रयोगान्विधिना यथावत् ॥ ३४ ॥

पीताभा कर्णिका स्यादरुणतरमरं श्यामलं चान्तरालं
नेमि श्वेतं च बाह्ये [1]विरचितशितिरेखाकुलं पार्थिवान्तम् ।
चक्रद्वन्द्वं लिखित्वा विशदमतिरथो सौम्ययाम्यं च मन्त्री
कुम्भं संपूर्य सौम्ये प्ररचयतु तथा दक्षिणे होमकर्म ॥

षड्विंशच्छतसंमितैरथ घृतापामार्गजेध्माक्षतैः
सद्राजीतिलपायसैश्च सकलैर्द्रव्यैर्घृतान्तैः क्रमात् ।
हुत्वा तद्धुतशिष्टमत्र विधिवत्क्षिप्त्वा प्रतिद्रव्यकं
प्रस्थार्धान्नकृतं च पिण्डममलं कुम्भोदके मन्त्रवित् ॥

संस्थाप्य दक्षिणस्यां
साध्यं कुम्भेन तेन नीराज्य ।
तमथ घटं सद्रव्यं
बहिरारादष्टमे क्षिपेद्राशौ ॥ ३७ ॥

अग्न्यादिकमपि सर्वं
क्षिपेदथ घटस्य दक्षिणे भागे ।

---

1. ०शिखिरेखाकुलं.

हुतशिष्टान्नेन बलिं
मन्त्रेणानेन मन्त्रवित्कुर्यात् ॥ ३८ ॥

हृदयान्ते विष्णुपदं
प्रोक्त्वाथ गणेभ्य उच्चरेत्सर्वम् ।
शान्तिकरेभ्यश्च बलिं
गृह्णन्त्विति शान्तये नमोन्तं स्यात् ॥ ३९ ॥

ज्वरादिकां रोगपरम्परां वा
विस्मृत्यपस्मारभवां रुजं वा ।
रक्षःपिशाचग्रहवैकृतं वा
विधिस्त्वयं मङ्क्षु हरेद्विकारम् ॥ ४० ॥

पालाशैर्वा स्तनज-
द्रुमजैर्वा पञ्जरे कृते फलकैः ।
संपूर्य पञ्चगव्यै-
स्तत्र तु संस्थाप्य शुद्धमपि गदिनम् ॥ ४१ ॥

पूर्वोद्दिष्टैर्दिक्ष्वपि
सजपं जुहुयुः पृथग्द्विजा वशिनः ।

द्रव्यैः स दक्षिणान्ता-
नभ्यर्च्य विमुच्यते रुजो जन्तुः ॥ ४२ ॥

विप्रक्षीरद्रुमत्वङ्नलयजपुरकाश्मीरकुष्ठत्रियामा[1]
बिल्वापामार्गराजीतिलतुलसियुगक्रान्तिदूर्वायवार्कैः ।
लक्ष्मीदेवीकुशागोमयकमलवचारोचनापञ्चगव्यैः
सिद्धेऽग्नौ कुम्भसिद्धं मनुजपमहितं भस्म सर्वार्थदायि ॥

लक्ष्म्यायुष्करमतुलं पिशाचभूता-
पस्मारादिकमचिरेण नाशयेच्च ।
क्षुद्रादीनपि विविधांस्तथोपसर्गा-
नेतस्मान्न परतरा समस्ति रक्षा ॥ ४४ ॥

जुहुयाद्गुग्गुलुगुळिका-
सहस्रकं साष्टकं च मन्त्रितमः ।
त्रिदिनं चतुर्दिनं वा
सर्वोपद्रवनिवारणं भवति ॥ ४५ ॥

खरमञ्जर्याः समिधा-
मयुतं वा मन्त्रवित्तमो जुहुयात् ।

---

1. ०त्रिधामा.

ज्वरभूतामयविस्मृ-

त्यपस्मृतीः शमयितुं नियतचित्तः ॥ ४६ ॥

आज्याक्तैर्जुहुयाच्छ्रिये सरसिजैर्दूर्वाभिरप्यायुषे

मेधायै द्विजभूरुहैश्च कुमुदैः श्वेतैस्तथा वाससे ।

शुद्धाज्यैः पशवेऽप्युदुम्बरभवैः पुत्राय चाश्वत्थजै-

रेकाब्दं विधिवत्सहस्रसमितैरष्टोत्तरं मुक्तये ॥ ४७ ॥

चक्रस्य नाभिसंस्थं

[1]कृत्वात्मानं मनुं जपेन्मन्त्री ।

स्वयमेकोऽपि न युद्धे

मर्त्यो बहुभिः पराजितो भवति ॥ ४८ ॥

मन्त्री सुनियतचित्त-

श्चक्रस्थं भ्रामयेद्धिया प्रस्तम् ।

आविश्य सकलमुक्त्वा

मुञ्चति दग्धोऽग्निना शुनाभिभुवा ॥ ४९ ॥

दीप्तं करालदहनप्रतिमं च चक्रं

यस्य स्मरेच्छिरसि कस्यचिदप्रियस्य ।

---

1. स्मृत्वात्मानम्.

सप्ताहतोऽस्य दहनप्रतिमो ज्वरः स्या-
त्रिंशद्दिनैश्च स परेतपुरं प्रयाति ॥ ५० ॥

कलावृतं चाहिपदाभिवेष्टितं
समक्षरं यच्छिरसि स्मरेत्सदा ।
दशाहतोऽसौ प्रति चाश्यते रिपु-
र्मृतिं तथा मण्डलतः प्रयाति ॥ ५१ ॥

सान्तं वायसवर्णं
शत्रोः शिरसि स्मरेच्च सप्ताहम् ।
उच्चाटयति क्षिप्रं
[1]मारयतोवाधिवोऽस्य नैशित्यात् ॥ ५२ ॥

स्रवत्सुधावर्षिणमिन्दुसप्रभं
समुज्ज्वलं यच्छिरसि प्रचिन्तयेत् ।
क्षणात्समाप्यायितसर्वविग्रहो
भवेत्स मर्त्यः सुचिरं च जीवति ॥ ५३ ॥

मध्ये तारं तदनु च मनुं वर्णशः कोणषट्के
बाह्ये चाङ्कं लिखतु करके रूप्यके वापि ताम्रे ।

1. मारयतेवाधियो.

पाषाणे वा विधिवदथ जप्याथ संस्थापितं त-
च्चक्रं चोरग्रहरिपुभयध्वंसि रक्षाकरं च ॥ ५४ ॥

स्थाने हृषीकेशविदर्भितं च
स्पष्टाक्षरं चाप्यभिजप्तमेतत् ।
रक्षां ग्रहादेः सततं विधत्ते
यन्त्रं सुक्लृप्तं च मनुत्रयेण ॥ ५५ ॥

अष्टाक्षरान्तरितपादचतुष्ककोष्ठं
कोष्ठत्रयालिखितसाध्यसुदर्शनं च ।
रेखाभिरप्युभयतः श्रुतिशः प्रबद्धं
तत्सप्तकोष्ठमिति यन्त्रमिदं प्रशस्तम् ॥ ५६ ॥

भूर्जे वा क्षौमपट्टे तनुमसृणतरे कर्पटे वास्य यन्त्रं
मन्त्री सम्यग्लिखित्वा पुनरपि गुलिकीकृत्य लाक्षाभिवीतम् ।
कृत्वा भस्मादिहोमप्रविहितघृतसंपातपातात्तशक्तिं
जप्तं सम्यङ्निदध्यात्प्रतिशममुपयान्त्येव सर्वे विकाराः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे एकविंशः पटलः ॥**

# द्वाविंशः पटलः ॥

अथोच्यते श्रीकरनामधेय-
मष्टाक्षरं लोकहिताय तावत् ।
येन प्रजप्तेन समर्चितेन
हुतेन सिद्धिं समुपैति मन्त्री ॥ १ ॥

सर्गादर्कः क्षतो विंशतियुगमयुतं शान्तगं चन्द्रबिम्बं
श्रीबाहुः शुक्रमेदोहरिशयनहकारा मनुः श्रीकराख्यः ।
ऋष्याद्या वामपङ्क्तीरहरिपि पुनरङ्गानि यान्तैर्हुमन्तै-
र्भीषत्रासप्रमर्दप्रसहितगदितध्वंसरक्षैर्द्विरुक्तैः ॥ २ ॥

मूर्धाक्षिकण्ठहृदयोदरसोरुजानु-
पादद्वयेषु लिपिशो न्यसतु स्वदेहे ।
विप्रादिकान्मुखकरोरुपदेषु वर्णा-
श्चक्रादिकानपि करेषु ततस्तदस्त्रान् ॥ ३ ॥

दुग्धाब्धिद्वीपवर्यप्रविलसितसुरोद्यानकल्पद्रुमाधो
भद्राम्भोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः ।
दोर्भिर्बिभ्रद्रथाङ्गं सदरमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रिये वो मुकुन्दः ॥

दिक्पत्रेषु श्रीरति-
धृतिकान्तीः कोणकेषु मूर्तीश्च ।
इष्ट्वाभितो निधीशौ
विष्वक्सेनं च दिक्पतीन्प्रयजेत् ॥ ५ ॥

आराध्य चैवं विधिना च विष्णुं
मन्त्री पुनर्होमविधिं करोतु ।
[1]श्रीदुग्धवृक्षोत्थसमिद्भिरब्जैः
साज्येन दौग्धेन च सर्पिषा च ॥ ६ ॥

पृथगष्टशतं क्रमेण हुत्वा
कनकाद्यैरपि तर्पिते गुरौ च ।
अभिषिच्य तथाभिपूज्य विप्रा-
न्मनुमेनं प्रजपेदथाष्टलक्षम् ॥ ७ ॥

---

1. श्रीवृक्षदुग्धोत्थ०

द्रव्यैस्तैः प्रतिजुहुयाद्दशांशमानै-
राचार्यं पुनरपि पूजयेज्जपान्ते ।
संप्राप्नोत्यपरिमितां श्रियं च कीर्त्तिं
कान्तिं वा चिरमनुरज्यते च लोकैः ॥ ८ ॥

दूर्वां घृतप्रसिक्तां
जुहुयादयुतं नरस्तु हुतशिष्टैः ।
आज्यैश्चरूमुपयुञ्ज्या-
द्दद्याद्गुरवे च दक्षिणां शक्त्या ॥ ९ ॥

परिपूजयेच्च विप्रां-
स्तेषु दिनेषु स्वशक्तितो भक्त्या ।
अपमृत्युरोगपापा-
न्विजित्य स तु दीर्घमायुराप्नोति ॥ १० ॥

अनुदिनमादित्यमुखः
प्रजपेदूर्ध्वीकृतस्वबाहुयुगः ।
तस्य गृहेऽन्नसमृद्धि-
श्चिराय संजायते सुपुष्टतरा ॥ ११ ॥

एवं प्रोक्तैः प्रतिजपहुतार्चादिभिर्मन्त्रमेनं
　　भक्त्या यो वा भजति मनुजो नित्यशः सोऽचिरेण ।
इष्टैः पुत्रैर्धरणिधनधान्यादिभिर्हृष्टचेताः
　　स्यादप्यन्ते परमपरिशुद्धं परं धाम विष्णोः ॥ १२ ॥

　　अथ कथयामि विधानं
　　　　महावराहाभिधानमन्त्रस्य ।
　　साङ्गं सजपं सहुता-
　　　　राधनमपि मन्त्रिणामभीष्टाप्त्यै ॥ १३ ॥

वाक्यं प्रोक्त्वा हृदाख्यं तदनु भगवतेयुग्वराहं च रूपा-
　　येत्युक्त्वा व्याहृतीनामुपरि च पतये भूपतित्वं च मेऽन्ते ।
देहीत्याभाष्य दान्तः सुमतिरथ पुनर्दापयस्वेति हान्तं
　　प्रोक्त्वा तारादिकं प्रोद्धरतु मनुवरं तत्र यस्त्रिंशदर्णम् ॥

　ऋषिस्तु भार्गवः प्रोक्तोऽथानुष्टुप्छन्द ईरितम् ।
　वराहो देवता चास्य कथ्यन्तेऽङ्गान्यतः परम् ॥ १५ ॥

　　अस्यैकश्रृङ्गो हृदयं शिरश्च
　　　　व्योमोल्कतेजोऽधिपतिः शिखा च ।

*P II. 3

स्याद्विश्वरूपं कवचं महाद्यो
दंष्ट्रोत्थमुक्तं स्वयमेव चाङ्गम् ॥ १६ ॥

सप्तभिश्च पुनः षड्भिः सप्तभिश्चाथ पञ्चभिः ।
अष्टभिर्मूलमन्त्रार्णैर्विदध्यादङ्गकल्पनाम् ॥ १७ ॥

जान्वोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानु नाभेः
कण्ठादानाभि वह्निप्रभमथ शिरसश्चागलं नीलवर्णम् ।
मौलेर्व्योमाभमाकं करलसदरिशङ्खासिखेटं गदा श-
क्त्याख्येष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ॥

सजलाम्बुवाहनिभमुद्धतदोः-
परिघं धराधरसमानतनुम् ।
सितदंष्ट्रिकाधृतभुवं त्वथ वा
प्रविचिन्तयेत्सपदि कोलमुखम् ॥ १९ ॥

हेमप्रख्यं पार्थिवे मण्डले वा
नीहाराभं नीरजेऽम्भस्तदाभम् ।
वायोः कृष्णं द्युप्रभं वा दिविस्थं
क्रोडं ध्यात्वं सत्यसंस्थं यजेद्वा ॥ २० ॥

अष्टपत्रमथ पद्ममुल्लस-
त्कर्णिकं विधिवदारचय्य च ।
मण्डले रविसहस्रसंनिभं
सूकरं यजतु तत्र सिद्धये ॥ २१ ॥

प्राग्दक्षिणप्रत्यगुदग्दिशासु
चत्वारि चाङ्गानि यजेत्क्रमेण ।
अस्त्रं विदिक्षूर्ध्वमधश्च चक्रा-
द्यस्त्राणि पूज्यानि वराहमूर्तेः ॥ २२ ॥

अरिशङ्खकृपाणखेटसंज्ञा-
न्सगदाशक्तिवराभयाह्वयांश्च ।
अभिपूज्य दिशाधिपान्यथाव-
द्वरगन्धाक्षतपुष्पधूपदीपैः ॥ २३ ॥

दंष्ट्रायां वसुधां सशैलनगरारण्यापगां हुंकृतौ
वागीशीं श्वसितेऽनिलं रविशशी बाह्वोश्च दक्षान्ययोः ।
कुक्षौ स्युर्वसवो दिशः श्रुतिपथे दस्रौ दृशोः पादयोः
पद्मोत्थो हृदये हरिः पृथगमी पूज्या मुखे शंकरः ॥

एवं काले कोलमभ्यर्चयित्वा
जप्यो मन्त्रोऽसौ पुनर्लक्षसंख्यम् ।
होमं कृत्वा तद्दशांशैश्च पद्मै-
स्त्रिस्वाद्वक्तैः प्राप्नुयाद्भूसमृद्धिम् ॥ २५ ॥

ध्यानादपि धनसिद्धि-
र्मन्त्रजपाच्चाधरो भवेत्सधरः ।
जपपूजाहुतविधिभि-
र्मङ्क्षु नरो धनधरेन्दिरावान्स्यात् ॥ २६ ॥

ध्यातः सन्भूगृहेऽसौ भुवमतुलतरां वारुणे शान्तिमुच्चै-
राग्नेये वश्यकीर्त्यादिकमनिलपुरस्थोऽयमुच्चाटनादीन् ।
रक्षां व्योम्नोऽरिभूतग्रहविषदुरितेभ्योऽनिलाग्न्योश्च पीडां
युद्धे वह्नीरयोर्वै जयमपि नितरां संनिधत्ते वराहः ॥

हरिस्थेऽर्केऽष्टम्यामथ सितरुचौ कोलवपुषा
सितां गन्धैः सर्वैर्युतमयुतजप्तामपि शिलाम् ।
उदग्वक्त्रो मन्त्री मनुजपरतः स्थापयतु ता-
मयत्नं क्षेत्रेषु द्रुतमरिनिरोधं शमयति ॥ २८ ॥

भौमे वारेऽथ भानूदयमनु जपवान्संगृहीत्वा मृदंशं
कोलात्मा वैरिरुद्धादपि च कुतलतस्तं च कृत्वा गुणांशम् ।
एकं जातौ विलिप्यात्पुनरपरतरं पाकपाके तथान्यं
तोये तस्मिन्सदुग्धे प्रतिपचतु हविः संस्कृते हव्यवाहे ॥

आराध्य चाष्टोर्ध्वशतप्रमाणं
साज्येन मन्त्री हविषाथ तेन ।
सप्तारवारं जुहुयाद्यथाव-
त्क्षेत्रोत्थितापत्प्रशमं प्रयाति ॥ ३० ॥

भृगुवारे च मुखेऽह्नः
संगृह्य मृदं हविः समापाद्य ।
जुहुयादीरितविधिना
बलिमपि दद्यान्महाविरोधेषु ॥ ३१ ॥

हुतक्रियैवं दिवसैश्च सप्तभि-
र्विनाशयेद्भूमिविवादसंकटम् ।
परेतवेतालपिशाचडाकिनी-
समुत्थितां वा विकृतिं विधिस्त्वयम् ॥ ३२ ॥

विलोड्य तामेव मृदं च दुग्धे
हुनेद्धृते वाष्टयुतं सहस्रकम् ।
द्विमण्डलादेव मही महार्घ्या
स्यान्मन्त्रिणोऽस्यैव तु निःसपत्ना ॥ ३३ ॥

नृपतरुसमिधामयुतं
मन्त्रेणानेन यो हुनेन्मन्त्री ।
गृहयात्रास्य न सीदे-
त्क्षेत्रादिकमपि च वर्धते क्रमशः ॥ ३४ ॥

अष्टोर्ध्वशतं मन्त्री
दिनशो यो वा जुहोति शालीभिः ।
स तु वत्सरेण मन्त्री
विराजते व्रीहिपुञ्जपूर्णगृहः ॥ ३५ ॥

मन्त्रेणानेन सर्पिर्जुहुत दशशतं मण्डलात्स्वर्णसिद्धिः
स्याद्रक्तेनाञ्जलिन्या अपि कुसुमसहस्रेण वा वाससां च ।
लाजानां कन्यकाया अपि च मधुमतां होमतो वाञ्छितायाः
सिद्धी रक्तोत्पलानामपि मधुरयुजां स्याद्धुताच्छ्रीः समग्रा ॥

दण्ड्यर्घीशो व्योमा-
सनस्तु वाराहमुच्यते बीजम् ।
अमुना तु साधितेन
प्राप्स्यन्ति नराः समृद्धिमतुलतराम् ॥ ३७ ॥

[1]तारेऽमुमपि लिखित्वा
तद्बाह्येऽनलपुरं समापुटितम् ।
तद्बाह्ये च चतुर्दल-
मब्जं स्यात्तद्बहिस्तथाष्टदलम् ॥ ३८ ॥

बाह्ये षोडशपत्रं
मण्डलमाखण्डलीयमपि बाह्ये ।
मध्ये सूकरबीजे
साध्यक्षेत्राख्यमन्त्रमश्रिषु च ॥ ३९ ॥

रन्ध्रेष्वङ्गमनूनपि
दलमूलेऽष्टार्णकेसराणि लिखेत् ।
अष्टावष्टौ दलमनु
सूकरमन्त्रस्य चाक्षरान्क्रमशः ॥ ४० ॥

1. तार इमं विलिखित्वा

अन्त्येऽवशिष्टमक्षर-
मथाष्टपत्रे स्वराख्यकिञ्जल्के ।
वर्णांश्चतुश्चतुरपि
तथाष्टमे पञ्च चालिखेत्पत्रे ॥ ४१ ॥

व्यञ्जनकिञ्जल्केऽन्त्ये
द्वौ द्वौ त्रयमन्त्यके दले विलिखेत् ।
तारमहीकोलार्णैः
प्रवेष्टयेत्साध्यवर्णपरिपुटितैः ॥ ४२ ॥

तद्बाह्ये मनुवर्णै-
र्विदर्भिताभिश्च साध्यपदलिपिभिः ।
क्ष्माबिम्बचतुष्कोणे
गर्भगसाध्याक्षरं [1]चतुर्बीजम् ॥ ४३ ॥

अष्टसु शूलेषु तथा
वाराहं [2]वासुसेनसंवृत्तम् ।
लाक्षाकुङ्कुमचन्दन-
लघुकर्पूरैः सरोचनैर्विलिखेत् ॥

1. च भूबीजम् 2. वासुधेनसंपृक्तम्

गोशकृदम्भोयुक्तै-
लेखिन्या हैमया दिने प्रवरे ॥ ४४ ॥

सौवर्णे राज्यसिद्धिं रजतकफलके ग्रामसिद्धिं च ताम्रे
साहस्रस्वर्णसिद्धिं भुजदललिखितं चाशु संसारयात्राम् ।
क्षौमे लाभं धरायाः पिचुतरुफलके कार्यसिद्धिं निजेष्टां
यन्त्रं संजप्तक्लृप्तं घृतहुतकृतसंपातपातं करोति ॥ ४५ ॥

मन्त्री समास्थाय वराहरूपं
साध्यप्रदेशे निखनेच्च यन्त्रम् ।
स्थिराख्यराशावभिवाह्य कोल-
मङ्गानि दिक्षु क्षिपतां यथावत् ॥ ४६ ॥

यन्त्रमिदं रक्षायै
रोगग्रहवैकृतेषु जन्तूनाम् ।
संजप्य शिरसि बन्ध्या-
त्स तु नीरोगस्त्वयत्नतो भवति ॥ ४७ ॥

इत्येवं प्रणिगदितो वराहमन्त्रो
यस्त्वेनं प्रभजति नित्यशो जपाद्यैः ।

स प्राप्नोत्यखिलमहीसमृद्धिमस्मि-
न्देहान्ते व्रजति हरेः परं पदं तत् ॥ ४८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे द्वाविंशः पटलः ॥**

## त्रयोविंशः पटलः ॥

अथ प्रवक्ष्यामि नृसिंहमन्त्र-

स्यानुष्टुभः संग्रहतो विधानम् ।

साङ्गं सजापं सहुतक्रमं च

सार्चाविधानं निजवाञ्छिताप्त्यै ॥ १ ॥

उग्रं वीरयुतं महान्तिकमथो विष्णुं ज्वलन्तान्वितं

संप्रोक्त्वाथ च सर्वतोमुखनृसिंहार्णं तथा भीषणम् ।

भद्रं मृत्युयुतं च मृत्युमपि च प्रोक्त्वा नमाम्या युतं

भूयोऽहंपदमुद्धरेन्मनुमिमं मन्त्री समस्तार्थकम् ॥ २ ॥

ब्रह्मा प्रजापतिर्वा

प्रोक्त ऋषिर्नारदश्च विद्वद्भिः ।

छन्दोऽनुष्टुबुदाहृत-

मथ विष्णुर्देवता नृसिंहाख्यः ॥ ३ ॥

वर्णैश्चतुर्भिरुदितं हृदयं शिरश्च
तावद्भिरष्टभिरथास्य शिखा प्रदिष्टा ।
षड्भिश्च वर्म नयनं च चतुर्भिरस्त्रं
प्रोक्तं क्रमेण मनुनाक्षरशः षडङ्गम् ॥ ४ ॥

सशिरोललाटदृग्युग-
मुखकरपदसंधिकेषु साग्रेषु ।
उदरहृदोर्गलपार्श्वे-
ष्वपरे ककुदि क्रमान्न्यसेद्वर्णान् ॥ ५ ॥

प्रतिपत्तिरस्य चोक्ता
प्रसन्नता क्रूरता विशेषेण ।
द्विविधा प्रसन्नया स्या-
त्साधनपूजान्यया प्रयोगविधिः ॥ ६ ॥

जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद्बाहुसंस्पृष्टकेश-
श्चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमपि वहन्पातु वो नारसिंहः ॥ ७ ॥

उद्यद्भास्वत्सहस्रप्रभमशनिनिभत्रीक्षणैर्विक्षरन्तं
वह्नीनह्नाय विद्युत्ततिविततसटाभीषणं भूषणैश्च ।
दिव्यैरादीप्तदेहं निशितनखलसद्बाहुदण्डैरनेकैः
संभिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥ ८ ॥

नरसिंहममुं धियैव पूर्वं
प्रणिपत्यार्घ्यकपाद्यसाचमाद्यैः ।
प्रयजेत्सहगन्धपुष्पधूपा-
दिभिरेवं प्रवरैश्च नृत्तगीतैः ॥ ९ ॥

सुविशदमतिरथ बहिरपि
सम्यक्संपूज्य वैष्णवं पीठम् ।
तत्रावाह्य च नरहरि-
मुपचारैः सम्यगर्चयेत्प्रवरैः ॥ १० ॥

अङ्गैः प्रथमावृतिरपि
पक्षीन्द्रानन्तशर्वकमलभवैः ।
सश्रीह्रीधृतिपुष्टिभि-
रपरोक्ता लोकपालकैरन्या ॥ ११ ॥

प्राक्प्रत्यग्यमशशिनां
  दिगाश्रया मूर्तयोऽनलादिषु च ।
स्युः शक्तय इत्येवं
  भक्त्या परया युतोऽर्चयेद्देवम् ॥ १२ ॥

द्वात्रिंशके सहस्रै-
  रधिकृतिरयुतैर्भवेत्पुरश्चरणम् ।
तावद्भिस्तावद्भि-
  र्लक्षैः सिद्धिः समीरितास्य मनोः ॥ १३ ॥

विकृतिद्विगुणसहस्रै-
  र्जुहुयादाज्यान्वितैश्च दुग्धान्नैः ।
जपसंपूर्तौ मन्त्री
  दिनशः संपूजयेच्च नरसिंहम् ॥ १४ ॥

विधाय तद्बीजविशिष्टकर्णिकं
  चतुश्चतुर्वर्णलसद्दलाष्टकम् ।
सुलक्षितं मण्डलमन्यलक्षणै-
  र्निधाय तस्मिन्कलशं प्रपूर्य च ॥ १५ ॥

यथोक्तमार्गेण समर्च्य साष्टकं
 सहस्रसंख्यं प्रजपेन्मनुं ततः ।
त्रिरुच्चरन्मन्त्रमथाभिषेचये-
 द्यमेष मृत्योर्विनिवर्तते मुखात् ॥ १६ ॥

वर्णान्तानलभुवना-
 [1]र्धेन्दुभिरुक्तं नृसिंहबीजमिदम् ।
तन्नास्ति सम्यगमुना
 मन्त्रविदा साधितेन यदसाध्यम् ॥ १७ ॥

विभवानुरूपतोऽस्मै
 दातव्या दक्षिणा च निजगुरवे ।
प्राणप्रदानकर्त्रे
 न तु कार्यं वित्तशाठ्यममलधिया ॥ १८ ॥

संप्रीणयित्वा गुरुमात्मशक्त्या
 संभोजयेद्द्विप्रवरान्यथावत् ।
स त्वैहिकीं सिद्धिमवाप्य शुद्धं
 परं परत्रापि पदं समेति ॥ १९ ॥

---

1. बिन्दुभिरुक्तं

दूर्वात्रिकैरष्टसहस्रसंख्यै-
राराध्य मन्त्री जुहुयादथाप्सु ।
शान्तिं प्रयान्त्येव तदोपसर्गा
आपो हि शान्ता इति च श्रुतिः स्यात् ॥ २० ॥

उत्पाते महति सति ह्युपद्रवाणां
होमोऽयं भवति च शान्तिदो नराणाम् ।
यद्वान्यन्निजमनसेप्सितं च कामं
तच्चाप्नोत्यखिलनृणां प्रियश्च भूयात् ॥ २१ ॥

दुःस्वप्नेष्वपि दृष्टे-
ष्ववशिष्टा जाग्रता निशा नेया ।
जपमानमन्त्रशक्त्या
सुस्वप्नो भवति तत्क्षणादेव ॥ २२ ॥

चरन्वने दुष्टमृगाहिचोर-
व्यालाकुले मन्त्रममुं जपेद्यः ।
असाधितं साधितमेव तस्य
न विद्यते भीर्बहुरूपजाता ॥ २३ ॥

जप्तेनाष्टसहस्रं
कलशेनाप्यहिविषार्तमभिषिञ्चेत् ।
अतिविषमेण विषेणा-
प्यसौ विमुक्तः सुखी भवति ॥ २४ ॥

[1]मूषिकलूतावृश्चिक-
बहुपादाद्युत्थितं विषं शमयेत् ।
अष्टोत्तरशतजापा-
न्मनुरयमभिमन्त्रितं च भस्माद्यम् ॥ २५ ॥

[2]सशिरोक्षिकण्ठदद्रुल-
कुक्षिरुजाज्वरविसर्पवमिहिक्काः ।
मन्त्रौषधाभिचारक-
कृतान्विकारानयं मनुः शमयेत् ॥ २६ ॥

नरहरिवपुषात्मना गृहीतं
हरिणशिशुं निजवैरिणं विचिन्त्य ।
क्षिपतु गगनतः क्षितौ सुदूरं
यमनुदिनं प्रतिचाट्यते समासात् ॥ २७ ॥

1. मूर्तिक० 2. ०कर्णदद्रुल

यां च दिशं प्रति मनुना
क्षिप्तोऽसौ तां दिशं प्रयात्यचिरात् ।
पुत्रकलत्रंधनादीं-
स्त्यक्त्वा त्वपुनर्निवृत्तये सहसा ॥ २८ ॥

नरहरिवपुषात्मना निजारिं
नखरखराग्रसमग्रभिन्नदेहम् ।
क्षणमिव निहतं विचिन्त्य खाद-
न्निव जपतां मनुमेष नाशमेति ॥ २९ ॥

पूर्वतरे मृत्युपदे
विधाय निजसाध्यनाम मन्त्रितमः ।
क्रूरेण चक्षुषा तं
दहन्निवालोक्य जपतु सप्तदिनम् ॥ ३० ॥

दिनशोऽष्टोर्ध्वसहस्रं
म्रियते रिपुरस्य नात्र संदेहः ।
मारणकर्म न शस्तं
क्रियते यद्ययुतमथ जपेच्छान्त्यै ॥ ३१ ॥

वश्याकृष्टिद्वेषण-
मोहोच्चाटादिकानि यदि वाञ्छेत् ।
तदर्हया प्रतिपत्त्या
तत्तत्कर्म प्रसाधयेन्मन्त्री ॥ ३२ ॥

दिनमनु दिननाथं पूजयित्वा दिनादौ
नरहरिमपि सम्यक्प्रोक्तमार्गेण मन्त्री ।
तदनु तदनुमत्या भस्मना मन्त्रितेन
प्रतिरचयतु राज्ञे वाप्यभीष्टाय रक्षाम् ॥ ३३ ॥

न्यासोक्तेषु स्थाने-
ष्वपि न्यसेद्भस्मना समन्त्रार्णम् ।
अखिलोपद्रवशान्त्यै
संपत्त्यै वाञ्छितार्थसंसिद्ध्यै ॥ ३४ ॥

अथ परराष्ट्रजयेच्छो
राज्ञः कुर्यात्प्रयोगविधिमेवम् ।
नरहरिमपि विधिना तं
हिरण्यकशिपुद्विषं समभ्यर्च्य ॥ ३५ ॥

तस्य पुरस्ताद्विधिव-
न्निधाय वह्निं बिभीततरुकाष्ठैः ।
उज्ज्वलिते च ज्वलने
समूलतूलैः शरेध्मदशशतकैः ॥
खादन्निवोच्चरन्मनु-
मरींश्च भिन्दन्निव क्षिपेत्समिधः ॥ ३६ ॥

हुत्वा परराष्ट्रेभ्यः
पृतनां संनाह्य च पुरस्तस्याः ।
निघ्नन्तं रिपुसेनां
स्मरन्नृसिंहं पुरेव दितितनयात् ॥ ३७ ॥

यावज्जितारिरेष्यति
नृपतिस्तावज्जपेत्स्मरन्नेवम् ।
सेन्द्रसुरासुररक्षो-
यक्षानपि जयति का कथा मनुजे ॥ ३८ ॥

श्रीकामः श्रीप्रसूनैर्दशकमथ शतानां हुनेद्बिल्वकाष्ठै-
स्तत्पत्रैर्वा प्रसूनैः सुमतिरथ समिद्भिः फलैर्वा तदीयैः ।

पुत्रेप्सुः पुत्रजीवेन्धनचितदहने तत्फलैर्वा सहस्रं
दूर्वाभिस्त्वायुषेऽब्दादभिमतमखिलं प्राप्नुयान्मन्त्रजापी ॥

ब्राह्मीं वचां वाष्टशताभिजप्तां
प्रातः समद्यान्नृहरिं विचिन्त्य ।
संप्राप्य मेधां स तु वेदशास्त्र-
निष्णातधीः स्यादपि वासरेण ॥ ४० ॥

उक्तैः किमत्र बहुभिर्मनुनामुनैव
संप्रार्थितं सकलमेव लभेद्विधिज्ञः ।
तस्मादमुं भजत तत्प्रतिपन्नचित्ताः
संसारसागरसमुत्तरणार्थिनो ये ॥ ४१ ॥

पाशाङ्कुशान्तरितशक्तिनृसिंहबीजै[1]-
र्वर्मास्त्रयुङ्मनुरयं कथितः षडर्णः ।
ऋष्यादिकाः स्वभवपङ्क्तिकनारसिंहा
वर्णैश्च मन्त्रनिहितैः कथितं षडङ्गम् ॥ ४२ ॥

अव्यान्निर्व्याजरौद्राकृतिरभिविवृतास्योल्लसत्तीक्ष्णदंष्ट्र-
श्चक्रं शङ्खं च पाशाङ्कुशकुलिशगदादारणाख्यान्दधानः ।

---

1. ०बीजौ

रक्ताकारश्च नाभेरध उपरि सितो दिव्यभूषाविशेषो
देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥

हृल्लेखान्तःस्थसाध्यं दहनपुरयुगाश्रिस्थमन्त्रार्णमन्तः-
सिंहानुष्टुप्चतुर्वर्णकलसितदलाढ्यं कलाकेसरं च ।
वृत्तोद्यद्व्यञ्जनावेष्टितमवनिपुराश्रस्थचिन्तोपलं त-
द्यन्त्रं रक्षःपिशाचामयविषयरिपुध्वंसनं[1] नारसिंहम् ॥

इति विरचितयन्त्रप्रोज्ज्वले मण्डले प्रा-
क्समभिहितकषायाम्भोभिरापूर्य कुम्भम् ।
प्रतियजतु तदङ्गैरस्त्रभेदैस्तदीयै-
स्तदनु मखशताद्यैः साधुवज्रादिकैश्च ॥ ४५ ॥

रथचरणशङ्खपाशा-
ङ्कुशकुलिशगदाह्वयानि चास्त्राणि ।
दारुणमुद्राकरयो-
र्ययोस्तदीयौ कृपाणखेटाख्यौ ॥ ४६ ॥

इति कृतदीक्षः प्रजपे-
दक्षरलक्षप्रमाणकं मन्त्रम् ।

1. ०विषरिपु०

जुहुयाच्च षट्सहस्रं
जपावसाने घृतेन शुद्धेन ॥ ४७ ॥

खरमञ्जरीसमुत्थं
जुहुयादथ मञ्जरीसहस्रत्रयम् ।
प्रस्नातपञ्चगव्यं
सप्तदिनं भूतशान्तये मन्त्री ॥ ४८ ॥

छिन्नरुहां समिधां त्रिसहस्रं
यश्च जुहोति चतुर्दिनमात्रम् ।
दुग्धयुजं नचिरान्मनुजानां
होमविधिर्ज्वरशान्तिकरः स्यात् ॥ ४९ ॥

अस्य यन्त्रमभिलिख्य भूर्जके
साधु चाथ तृणराजपत्रके ।
मन्त्रजप्तमपि शीर्षबन्धना-
ज्जूर्तिविभ्रमशिरोरुजापहम् ॥ ५० ॥

रक्तोत्पलैः प्रतिदिनं मधुरत्रयाक्तै-
र्यो वा जुहोति नियमेन सहस्रसंख्यैः ।

मासेन वाञ्छितमवाप्स्यति मन्त्रजापी
स्याद्वत्सरेण धनधान्यसमृद्धगेहः ॥ ५१ ॥

आरक्तैस्तरणिसहस्रकं प्रफुल्लै-
रम्भोजैस्त्रिमधुरसंयुतैर्जुहोति ।
लक्ष्मीः स्यादथ महती महत्तथायुः
संप्राप्तः सकलजगत्प्रियश्च[1] भूयात् ॥ ५२ ॥

लाजाभिस्त्रिमधुरसंयुताभिरह्नो
मासार्धं प्रतिजुहुयान्मुखे सहस्रम् ।
कन्यार्थी प्रतिलभते वरोऽथ कन्यां
कन्या वा भवति वरार्थिनी वराढ्या ॥ ५३ ॥

तिलैः सराजीखरमञ्जरीसमि-
द्धविर्घृतैश्च द्विसहस्रसंख्यकैः ।
प्रजुह्वतो नैव रुजा ग्रहोद्भवा
न चाभिचारक्षतिरस्य जायते ॥ ५४ ॥

दशाधिकशतैः पयोघृतयुतैश्च दूर्वात्रयै-
र्हुनेद्दिनमुखेऽपि यो नरहरिं विचिन्त्यानले ।

1. ०जगद्धितश्च.

अवाप्य स तु दीर्घमायुरखिलैर्वियुक्तो गदैः
सुखी भवति मानवो निजकलत्रपुत्रादिभिः ॥

विस्तारैः किं प्रतिजपति यो मन्त्रमेनं यथोक्तं
लब्ध्वा कामान्समभिलषितानाशु मन्त्री स भूयः ।
द्रव्यैराढ्यो द्विजनृपवरैः पूजितः शान्तचेताः
स्यादप्यन्ते परमपरिशुद्धं परं धाम विष्णोः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे त्रयोविंशः पटलः ॥**

# चतुर्विंशः पटलः ॥

अथ संप्रति विष्णुपञ्जरस्य

प्रतिवक्ष्यामि समासतो विधानम् ।

जितवांस्त्रिपुरं हरोऽपि येन

त्रिदशानामधिपो वलासुरं च ॥ १ ॥

शक्तेर्द्वादशगुणिते

यन्त्रे मन्त्राणि मण्डलान्यपि च ।

बीजानि यानि चोक्ता-

न्यैभिः क्लृप्तं तु पञ्जरं विष्णोः ॥ २ ॥

विष्णुं लिखेन्मध्यगशक्तिबिन्दौ

कपोलयोः सिंहवराहबीजे ।

तद्विश्वरूपाह्वयमन्त्रवीतं

प्रवेष्टयेत्षोडशमन्त्रवर्णैः ॥ ३ ॥

तारं हृदयं भगव-
त्पदं महाविष्णुवासुदेवौ ङेन्तौ ।
विश्वादिरूप शरणं
भव मे प्रभविष्णवे [1]नमस्यामन्त्रः ॥ ४ ॥

द्वादशाक्षरमन्त्रान्ते भवेतां कवचास्त्रकौ ।
[2]स्वाहान्तषोडशार्णोऽयं मन्त्रः सर्वार्थसाधकः ॥ ५ ॥

क्रमेण तद्वर्णविकारजाता-
श्चक्रादिकाः षोडश मूर्तयः स्युः ।
याभिस्तु विष्णोरिह पञ्जरस्य
प्रवर्तते शक्तिरनेकरूपा ॥ ६ ॥

यन्त्रस्य बीजेषु चतुर्षु पूर्वं
प्राग्दक्षिणप्रत्यगुदग्गतेषु ।
विद्वांस्तु चक्रं च गदां च शार्ङ्गं
खड्गं च मन्त्रैः सहितं विलिख्यात् ॥ ७ ॥

शङ्खहलमुसलशूला-
न्यग्न्याद्यश्रिष्वथाष्टबीजेषु ।

1. नमस्येमन्त्रः.  2. स्वाहान्ते.

विलिखेद्दण्डं कुन्तं शक्तिं
पाशाङ्कुशं कुलिशशतमुखवह्नीन् ॥ ८ ॥

सप्रणवहृदयभगव-
द्विष्णुस्वाख्यानमूर्तिधरयुक्ताः ।
सेनापतिसहिता निज-
मन्त्रान्ता मूर्तयोऽत्र लिखितव्याः ॥ ९ ॥

सहस्रारपदं पूर्वं कौमोदकि ततो भवेत् ।
महाशार्ङ्गपदं पश्चान्महाखड्गपदं पुनः ॥ १० ॥

प्रोक्तानि वर्मास्त्रान्तानि निजमन्त्राणि वै क्रमात् ।
पूर्वं महापाञ्चजन्यं महाहलमनन्तरम् ॥ ११ ॥

ततो महामुसलकं महाशूलं ततः परम् ।
स्वाहान्तानि च मन्त्राणि शङ्खादीनां क्रमाद्विदुः ॥१२॥

दण्डादीनामथाष्टानामन्ते युञ्ज्यान्नमःपदम् ।
पोत्रोद्धृतधरं विद्वान्वाराहे विष्णवभिख्ययोः ॥ १३ ॥

अन्तरा योजयेन्मन्त्री नारसिंहं पुनः सुधीः ।
नखं च दलितं चैव रिपुविग्रहमेव च ॥ १४ ॥

योजयित्वा नृसिंहात्प्राक् सिंहमन्त्रं समापयेत् ।
विष्णोरन्ते महापक्षिराजाय च गरुत्मते ॥ १५ ॥

हरिपूर्वं वाहनाय प्राणात्मन इतीरयेत् ।
नमोऽन्तोऽसौ तु विद्वद्भिर्मन्त्रो गारुत्मतो मतः ॥१६॥

स त्रिष्टुभा वह्निगृहेण पूर्वं
सानुष्टुभेन्दोर्निलयेन चापि ।
गायत्रिमन्त्रोल्लसितेन भूयः
प्रवेष्टयेदर्कनिकेतनेन ॥ १७ ॥

अनुलोमविलोमगैश्च वर्णै-
रभिवीतं वसुधापुरद्वयेन ।
नलिनं बहिरष्टयुग्मपत्रं
प्रविदध्यादथ मूर्तिमन्त्रयुक्तम् ॥ १८ ॥

तद्बहिर्मण्डलं सर्वलक्षणैरभिलक्षितम् ।
तस्मिन्नावाह्य विधिवद्विश्वरूपहरिं यजेत् ॥ १९ ॥

अग्नीषोमात्मकमरिगदाशार्ङ्गखड्गैः सशङ्खै-
रुद्यद्बाहुं हलमुसलशूलैः सकुन्तैः सदण्डैः ।

शक्त्या पाशाङ्कुशकुलिशटङ्काग्निभिश्चार्कवह्नि-
द्योतद्वक्त्राङ्घ्रिकसरसिजं तप्तकार्तस्वराभम् ॥

विष्णुं भास्वत्किरीटं [1]मणिमकुटकटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासिदिव्याङ्गरागम् ।
विश्वाकाशावकाशप्रविततमयुतादित्यनीकाशमुद्य-
द्वाह्वग्र्यव्यग्रनानायुधनिकरकरं विश्वरूपं नमामि ॥

अभ्यर्च्य पूर्ववत्पीठं नवशक्तिसमन्वितम् ।
अर्चयेत्क्रमशो विद्वान्मूर्तिशक्तिचतुष्टयम् ॥ २२ ॥

चक्रं च चक्राङ्ककिरीटमौलिं
सचक्रशङ्खं सगदं सशार्ङ्गम् ।
रक्ताम्बरं रक्ततनुं कराल-
दंष्ट्राननं प्राग्दलकेऽर्चयीत ॥ २३ ॥

पूज्या गदा गदाङ्कित-
मौलिः सगदा सचक्रशङ्खधनुः ।
पीताम्बरानुलेपा
पीता क्रुद्धा च याम्यसंस्थदले ॥ २४ ॥

---

1. मणिकटक०

श्यामं शार्ङ्गाङ्कितकं
शार्ङ्गं शार्ङ्गारिदरगदाहस्तम् ।
रक्तांशुकानुलेपन-
माल्यर्दिं वारुणे यजेत्पत्रे ॥ २५ ॥

खड्गं सखड्गशिरसं
खड्गारिगदाधनुष्करं धूम्रम् ।
विकृताम्बरानुलेप-
स्रजं समभ्यर्चयेदुदक्पत्रे ॥ २६ ॥

शङ्खं सशङ्खशिरसं
शङ्खारिगदाधनुष्करं सुसितम् ।
सितवसनमाल्यभूषं
यजेन्महानादमग्निसंस्थदले ॥ २७ ॥

शङ्खोक्तचिह्नभूषा-
न्स्वास्त्रादिकधरचतुर्भुजानपरान् ।
हलमुसलशूलसंज्ञा-
न्यजेन्निशाटादिकेषु पत्रेषु ॥ २८ ॥

दण्डादिकांस्तथाष्टौ
च्छिद्रदलेष्वर्चयीत रक्ताभान् ।
स्वस्वायुधप्रधानां-
श्चतुर्भुजाञ्शतमुखानलान्तांश्च ॥ २९ ॥

दंष्ट्राग्रलग्नवसुधं सजलाम्बुवाह-
[1]घोरार्चिषं त्वभियजेदधरेऽष्टबाहुम् ।
चक्रासिबाणसगदादरचर्मशार्ङ्ग-
शक्त्याख्यकान्दधतमादिमहावराहम् ॥ ३० ॥

अर्कानलोज्ज्वलमुखं नयनैस्त्रिभिश्च
वह्निं क्षरन्तमवधूतसटाकलापम् ।
शुक्लाभभूषमरिशङ्खगदासिबाहुं
भूयोऽभिराधयतु खे च महानृसिंहम् ॥ ३१ ॥

अग्रे समग्रबलमुग्रतनुं स्वपक्ष-
विक्षेपविक्षतविलक्षविपक्षपक्षम् ।
खण्डाग्रतुण्डममुमण्डजदण्डनाथ-
माराधयेदथ च पञ्जरगस्य विष्णोः ॥ ३२ ॥

---

1. घोरत्विषं.

भूयोऽपि केशवेन्द्रा-
दिकौ समभ्यर्चयेच्च वज्रादीन् ।
गन्धादिभिरुपचारैः
पञ्चाभिरथ संयतात्मको मन्त्री ॥ ३३ ॥

निवेदिते होमविधिश्च कार्यो
दीक्षाविधानाभिहितश्च वह्नौ ।
ससर्पिषान्नेन तु वह्निमूर्तिं
हुत्वा तु विष्णोर्मनुना तथैव ॥ ३४ ॥

जुहुयाच्च [1]वामदेवा-
दिकशान्त्यादींश्च रुद्रसंख्येन ।
दुग्धतरूत्थाः समिधः
क्रमेण चक्रादिभिश्चतुर्मन्त्रैः ॥ ३५ ॥

जुहुयादष्टोर्ध्वशतं
संख्यातैर्द्वादशभिरथ मनुभिः ।
तिलसिद्धार्थैर्जुहुया-
द्विकारसंख्यं पृथक्पृथङ्मन्त्री ॥ ३६ ॥

---

1. वासुदेवा.

त्रिष्टुबनुष्टुप्सप्तपद-
मन्त्रैर्मन्त्रार्णसंख्यकं हविषा ।
सघृतेन केशवाद्यै-
र्दिनकरसंख्यं तथेन्द्रवज्राद्यैः ॥
जुहुयात्पृथगपि वसुमित-
मथ च महाव्याहृतीर्हुनेन्मतिमान् ॥ ३७ ॥

आराध्य च विसृज्याग्निमभिषिच्य सुसंयतः ।
विष्णोस्तु पञ्जरं कुर्यादृषिर्ब्रह्मबृहस्पती ॥ ३८ ॥

छन्दस्त्वनुष्टुप् त्रिष्टुप् च मुनिभिः समुदाहृते ।
विश्वरूपादिको विष्णुर्विष्णुपञ्जरदेवता ॥ ३९ ॥

अष्टार्णचक्रमनुमध्यगतैश्च पादै-
र्न्यस्तैस्तथा सुमतिरारचयेत्समस्तैः ।
गीतामनोः क्रमश एव च जातियुञ्जि
पञ्चाङ्गकानि हरिपञ्जरकल्पितानि ॥ ४० ॥

वेष्णुः प्राच्यादिकमथ जपेन्नारसिंहोऽम्बरान्तं
त्रिस्त्रिर्मन्त्रान्पुनरपि तथा पञ्चशस्त्वेकविंशत् ।

बुद्धिस्वास्थ्यप्रभृति च तथा पञ्चवारं त्रिगाधा
भूयो जप्याद्विमलशितधीश्चक्रमन्त्राभिधानम् ॥ ४१ ॥

नमो भगवते सर्वविष्णवे विश्वरूपिणे ।
वासुदेवाय चक्रादिसर्वायुधभृते नमः ॥ ४२ ॥

अर्केन्दुवह्निनिलयस्फुरितत्रिमन्त्र-
[1]शक्तिप्रबन्धमहसः परमस्य विष्णोः ।
पादारविन्दगलितामृतासिक्तगात्रं
साध्यं स्मरेज्जपविधावपि साधकेशः ॥ ४३ ॥

विष्णोः सांनिध्यलब्धोल्लसितबलचलद्धस्तदण्डोद्यतास्त्रै-
श्चक्राद्यैर्भीषणास्येक्षणचरणवचोहासहुंकारघोरैः ।
उत्क्षिप्ताक्षिप्तकृत्तस्फुटितविगलिताघूर्णितध्वस्तशान्ता
ध्यायेद्वेतालभूतग्रहदुरितपिशाचारिनागारिरोगान् ॥

पूर्वं स्थाने हृषीकेशमन्त्रयुक्तं विधानवित् ।
विश्वरूपात्मकं जप्याद्वैष्णवं मूलमन्त्रकम् ॥ ४५ ॥

योजयित्वा जपेत्पश्चाच्चक्रादिषु यथाक्रमम् ।
चतुर्षु चतुरः पादान्गीतात्रिष्टुप्समुद्भवान् ॥ ४६ ॥

---

1. शक्तिप्रवृद्ध०

पूर्णेषु षोडशेष्वेवमाद्यं पादे वराहके ।
द्वितीयान्नारसिंहे च द्वितीयं गारुडे पुनः ॥ ४७ ॥

चतुर्थं च क्रमं ते च योजयित्वा जपेत्सुधीः ।
मन्त्रं सुदर्शनं चेत्थमिष्टमष्टादशं मनुम् ॥ ४८ ॥

संयोज्य कृच्छ्रे महति जपेन्मन्त्री विधानवित् ।
आग्नेये वक्ष्यमाणेन विधानेन समाहितः ॥ ४९ ॥

सिकतोपलसर्वादीन्साधयेदथ तैः क्रियाः ।
वास्तौ पुरे वा ग्रामे वा विदध्याद्विषयेऽपि वा ॥ ५० ॥

मध्ये च षोडशाशान्ते खनेदष्टादशावटान् ।
अष्टादशं तु शक्रस्य विदध्यात्पुरतोऽवटम् ॥ ५१ ॥

हस्तागाधांस्तथायामांश्चतुरश्रान्समन्ततः ।
अन्योन्यतश्चङ्क्रमार्थं शुद्धान्मार्गान्विधाय च ॥ ५२ ॥

गोमयेनोपलिप्येत नारीयस्थाप्यवस्त्वपि ।
शुष्कपुष्करपत्रेषु विदध्याद्विंशतिष्वपि ॥ ५३ ॥

ततो मध्यमकुण्डस्य प्रविश्य पुरतो गुरुः ।
तादन्तरिष्ट्वा पीठं च तत्र यन्त्रमनुस्मरन् ॥ ५४ ॥

स्थापयेद्वैष्णवे स्थाने विश्वरूपधिया सुधीः ।
ततः क्रमेण चक्रादीन्दिक्कुण्डेषु चतुर्ष्वपि ॥ ५५ ॥

पुनः शङ्खादिकांस्तद्वत्कुण्डेष्वश्राश्रितेष्वपि ।
तथा दण्डादिकानष्टौ च्छिद्राशासु प्रकल्पयेत् ॥ ५६ ॥

मध्ये पुनरधश्चोर्ध्वं कोलकेसरिणौ यजेत् ।
चक्रस्य प्राक्तने कुण्डे स्थापयेद्विनतासुतम् ॥ ५७ ॥

ततः समस्थलीकृत्य क्रमात्समुपलिप्य च ।
प्रत्यगानन आसीनो मध्यगस्थाण्डिलस्थिते ॥ ५८ ॥

यज्ञे काञ्चनपत्रस्थे पूजयेत्पूर्ववत्प्रभुम् ।
वादित्रघोषबहुलं निवेद्यान्तं यथाक्रमम् ॥ ५९ ॥

हुनेच्च पूर्वसंदिष्टैर्द्रव्यैः पूर्वोक्तमार्गतः ।
आशोपाशान्तराशासु बलिं दद्यात्त्रिशस्त्रिशः ॥ ६० ॥

क्रमाच्चक्रादिमूर्तीनां पञ्चपूरान्धसा सुधीः ।
तत उद्वास्य देवेशं पूजां प्रतिसमाप्य च ॥ ६१ ॥

दत्वा सुवर्णं वासांसि गुरवे ब्राह्मणानपि ।
संतर्प्य विभवैः सम्यग्भोजयेद्देवताधिया ॥ ६२ ॥

तत्रोपसर्गा नश्यन्ति नरनारीमहीभृताम् ।
ग्रहक्षुद्रपिशाचाद्या नेक्षन्ते तां दिशं भयात् ॥ ६३ ॥

अश्मपातादिका ये च भया नश्यन्ति ते चिरात् ।
सस्यर्द्धिर्गोसमृद्धिश्च प्रजावृद्धिश्च जायते ॥ ६४ ॥

धनधान्यसमृद्धिश्च वर्धते तत्कुलं क्रमात् ।
दारिद्र्यरोगनिर्मुक्तं सुखमाभूतसंप्लवम् ॥ ६५ ॥

रक्षोभिरक्षितबलैरसुरैश्च दैत्यैः
सर्वैः समुद्धृतमहास्त्रकरैः परीतम् ।
विष्णोस्तु पञ्जरमिदं प्रभजन्तमव्या-
त्साक्षादपीन्द्रमपरत्र नरे कथा का ॥ ६६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे चतुर्विंशः पटलः ॥**

## पञ्चविंशः पटलः ॥

अथाभिधास्यामि मनुं समासा-
त्प्रासादसंज्ञं जगतो हिताय ।
येन प्रजप्तेन तथार्चितेन
हुतेन सिद्धिं लभते यथेष्टम् ॥ १ ॥

प्रसादनत्वान्मनसो यथाव-
त्प्रासादसंज्ञास्य मनोः प्रदिष्टा ।
अन्त्यात्तृतीयः प्रतिलोमतः स्या-
दनुग्रहार्धेन्दुयुतश्च मन्त्रः ॥ २ ॥

ऋषिरस्य वामदेवः
पङ्क्तिश्छन्दोऽस्य देवतेशः स्यात् ।
तेनैवाक्लीबकला-
दीर्घयुजाङ्गानि तस्य बीजेन ॥ ३ ॥

शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं
दोर्भिः शीतांशुखण्डप्रतिघटितजटाभारमौलिं त्रिणेत्रम् ।
नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं
पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

ईशानादीन्मन्त्रवित्पञ्च मन्त्रा-
नङ्गुष्ठादिष्वङ्गुलीषु क्रमेण ।
न्यस्येदब्भिर्व्युत्क्रमाद्व्योमगाभि-
र्ह्रस्वाख्याभिस्ताभिरेवाङ्गुलीभिः ॥ ५ ॥

ईशानस्तत्पुरुषो-
ऽघोराख्यो वामदेवसंज्ञश्च ।
सद्योजाताह्वय इति
मन्त्राणां देवताः क्रमात्पञ्च ॥ ६ ॥

मूर्धाननहृद्गुह्यक-
पादेषु च नामभिः स्वबीजाद्यैः ।
ऊर्ध्वप्राग्दक्षोद-
क्पश्चिमगेष्वाननेषु विन्यस्येत् ॥ ७ ॥

प्रतिपाद्य निजं शरीरमेवं
प्रजपेदिन्द्रियलक्षकं शिवात्मा ।
जुहुयाच्च दशांशतस्तदन्ते
मधुराक्तैः करवीरजप्रसूनैः ॥ ८ ॥

अथ वा कुसुमैर्जपासमुत्थैः
कमलैर्वा विमलेन पायसेन ।
नृपवृक्षभवैः समिद्वरैर्वा
जुहुयात्साधकसत्तमः समृद्ध्यै ॥ ९ ॥

अष्टपत्रगुणवृत्तराशिभि-
र्वीथिकल्पतरुभिः समावृतम् ।
मण्डलं प्रतिविधाय शूलिनः
पीठमत्र नवशक्तिभिर्यजेत् ॥ १० ॥

वामा ज्येष्ठा रौद्री
काल्या कलबलाद्यविकलिन्यौ ।
सबलप्रमथिनिसर्वभूत-
दमन्यौ मनोन्मनीं च यजेत् ॥ ११ ॥

तारादिकं नतिमपि
प्रोक्त्वा भगवत्पदं चतुर्थ्यन्तम् ।
सकलगुणात्मपदान्ते
शक्ति युक्ताय चेति संभाष्य ॥ १२ ॥

भूयोऽनन्तायेति च
योगान्ते पीठमात्मने चेति ।
नमसा युक्तं ब्रूया-
त्पीठाख्योऽयं मनुः समुद्दिष्टः ॥ १३ ॥

न्यासक्रमेण देहे
मन्त्री गन्धादिकमपि पूज्य ।
पूर्वोक्तदिक्षु मूर्तीर्विदिक्षु
सनिवृत्तिपूर्विकाश्च यजेत् ॥ १४ ॥

सद्यो वेदाक्षमालाभयवरदकरः कुन्दमन्दारगौरो
वामः काश्मीरवर्णोऽभयवरदपरश्वाक्षमालाविलासी ।
अक्षस्रग्वेदपाशाङ्कुशडमरुकखट्वाङ्गशूलान्कपालं
बिभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनुर्भीतिदश्चाप्यघोरः ॥

विद्युद्वर्णोऽथ वेदाभयवरदकुठारान्दधत्पूरुषाख्य:
प्रोक्ता: सर्वे त्रिणेत्रा विधृतमुखचतुष्काश्चतुर्बाहवश्च ।
मुक्तागौरोऽभयेष्टाधिककरकमलोऽघोरत: पञ्चवक्त्र-
स्त्वीशो ध्येयोऽम्बुजन्मोद्भवमुररिपुरुद्रेश्वरा: स्यु: शिवान्ता: ॥

भूतानां शक्तित्वा-
द्व्याप्तित्वाज्जगति वा निवृत्त्याद्या: ।
तेजोरूपा: करपद-
वर्णविहीना मनीषिभि: प्रोक्ता: ॥ १७ ॥

अनन्तसूक्ष्मौ च शिवोत्तमश्च
तथैकपूर्वावपि नेत्ररुद्रौ ।
त्रिमूर्तिश्रीकण्ठशिखण्डिनश्च
प्रागादिपत्रेषु समर्चनीया: ॥ १८ ॥

शूलाशनिशरचापो-
ल्लासितदोर्दण्डभीषणा: सर्वे ।
पद्मासनाश्च नाना-
विधभूषणभूषितास्त्रिणेत्रा: स्यु: ॥ १९ ॥

पाटलपीतसितारुण-
शितिरक्तशशिप्रभाश्च धूम्रान्ताः ।
कोटीरघटितविलस-
च्छशिशकलयुताश्च मूर्तयः क्रमशः ॥ २० ॥

उमा चण्डेश्वरो नन्दी महाकालो गणेश्वरः ।
वृषो भृङ्गिरिटिः स्कन्दः संपूज्याश्चोत्तरादितः ॥ २१ ॥

कनकविडूरजविद्रुम-
मरतकमुक्तासिताच्छरक्ताभाः ।
पद्मासनसंस्थाश्च
क्रमादुमाद्या गुणान्तिकाः प्रोक्ताः ॥ २२ ॥

पुनराशेशास्तदनु च
कुलिशाद्यादिक्रमेण संपूज्याः ।
प्रासादविधानमिदं
निगदितमिति सकलवर्गसिद्धिकरम् ॥ २३ ॥

अमुना विधिना महेशपूजां
दिनशो यः कुरुते समाहितात्मा ।

स तु सम्यगवाप्य दृष्टभोगा-
न्परमन्ते परिपूर्णमेति धाम ॥ २४ ॥

वक्ष्यामि शैवागमसारमष्ट-
त्रिंशत्कलान्यासविधिं यथावत् ।
सपञ्चभिर्ब्रह्महरीशपूर्वैः
सप्र्यादिकैः साङ्गविशेषकैश्च ॥ २५ ॥

ईशोऽनुष्टुब्भूरी-
श्वराः स तत्पुरुषसंज्ञगायत्र्यापः ।
पुनरग्न्यनुष्टुबापो वामदेवः
कतिभर्गहरस्त्वनुष्टुब्भगयुक् ॥ २६ ॥

इन्द्रियतारसमेतं
सर्वज्ञायेति हृच्छिरस्त्वमृते ।
तेजोमालिनिपूर्वं
तृप्ताय ब्रह्मशिरस इति कथितम् ॥ २७ ॥

ज्वलितशिखिशिखेत्य-
नादिबोधाय चान्वितेति शिखा ।

वज्रिणे वज्रधराय
स्वाहास्वतन्त्राय वर्म नेत्रं च ।
[1]सौ सौ हौ बिन्दुयुतं
संप्रोक्त्वा लुप्तशक्तये च तथा ॥ २८ ॥

सश्रीपशुहुंफ-
डनन्तशक्तये तथास्त्रं स्यात् ।
समुनिच्छन्दोदैवत-
युक्तं तदङ्गषट्कमिति कथितम् ॥ २९ ॥

करदेहमुखन्यासं मन्त्रैः पूर्ववदाचरेत् ।
कलाः प्रविन्यसेद्देहे वक्ष्यमाणक्रमेण तु ॥ ३० ॥

ताः स्युः पञ्च चतस्रोऽष्टौ त्रयोदश चतुर्द्वयम् ।
अष्टत्रिंशत्कलाः सम्यङ् न्यस्तव्या मन्त्रवित्तमैः ॥३१॥

दिक्षु प्राग्याम्यवारीवसुपनिजभुवामैन्द्रवारार्किराज्ञां[2]
हृद्ग्रीवांसद्वयीनाभ्युदरचरमवक्षःसु गुह्याङ्घ्रयोश्च ।
स्वोर्वोर्जान्वोः सजङ्घास्फिगुभयकटीपार्श्वपद्दोस्तलेषु
घ्राणे कं बाहुयुग्मेष्वतिविशदमतिर्विन्यसेदङ्गुलीभिः ॥

1. सौ चौ. 2. ०वारार्किराज्ञां

विन्यासः प्रतिमाकृतौ च नितरां सांनिध्यकृत्स्यादयं
देहे चापि शरीरिणां निगदितः सामर्थ्यकारीति च ।
आस्ते यत्र तथामुनैव दिनशो विन्यस्तदेहः पुमा-
न्क्षेत्रं देशममुं च योजनमितं शैवागमज्ञा विदुः ॥

न्यस्यैवं पञ्चभिर्ब्रह्मभिरथ शिवमाराधयेद्दग्भिराभि-
र्मध्यप्राग्याम्यसौम्यापरदिशि पुनरङ्गैरनन्तादिभिश्च ।
अन्यो माद्यैर्दिशापैः पुनरपि कुलिशाद्यैर्यजेदेवमुक्तं
पाञ्चब्रह्मं विधानं सकलसुखयशोभुक्तिमुक्तिप्रदं च ॥

पञ्चाक्षरविहितविधिं
वक्ष्ये जपतामभीष्टसिद्धिकरम् ।
सिद्धेन येन देही
प्रेत्येह च वाञ्छितं फलं लभते ॥ ३५ ॥

[1]मेषो विषो विसर्गी
मृत्युः साक्षी सवाक्षरः पवनः ।
ताराद्भवति यदस्मा-
त्तदादिरभिधीयते मनुप्रवरः ॥ ३६ ॥

1. दीर्घाविषो

अस्याक्षराण्यमूनि च
पञ्च स्युः पञ्चभूतगानि तथा ।
जगदपि भूतारब्धं
तेन हि जगदात्मतोदितास्य मनोः ॥ ३७ ॥

प्रोक्तमृष्यादिकं पूर्वमङ्गवर्णैस्तु मन्त्रकैः ।
अङ्गुलीदेहवक्त्रेषु मूलमन्त्राक्षरादिकान् ॥ ३८ ॥

न्यसेत्तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ।
सतर्जनीमध्यमान्त्यानामिकाङ्गुष्ठकेषु च ॥ ३९ ॥

वक्त्रहृत्पादगुह्याख्यमूर्धस्वपि च नामभिः ।
प्राग्याम्यवारुणोदीच्यवक्त्रेष्वपि च मूर्धसु ॥ ४० ॥

बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालंकारदीप्रः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्र-
स्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलोत्तुङ्गमौलिः ॥

अक्षरलक्षचतुष्कं
जप्यात्तावत्सहस्रमपि जुहुयात् ।

शुद्धैस्तिलैर्घृतैर्वा
दुग्धान्नैर्दुग्धभूरुहेध्मैर्वा ॥ ४२ ॥

तत्पुरुषाद्याः सर्वे
प्रधानसंप्रोक्तबाहुहेतियुताः ।
चझासिमुखचतुष्का-
स्तेजोरूपो विलक्षणस्त्वीशः ॥ ४३ ॥

आवृतिराद्या मूर्तिभि-
रङ्गैरन्या पराप्यनन्ताद्यैः ।
अपरोमादिभिरपरे-
न्द्राद्यैरपरा तदायुधैः प्रोक्ता ॥ ४४ ॥

कथयामि मनोविधानमन्य-
न्मुनिपूज्यं प्रवरं पिनाकपाणेः ।
स्वतनौ परिकल्प्य पीठमङ्गा-
न्यपि विन्यस्य तथैव मन्त्रवर्णान् ॥ ४५ ॥

हृन्मुखांसोरुयुग्मेषु षड्वर्णान्क्रमतो न्यसेत् ।
[1]कर्णमूले तथा नाभौ पार्श्वयुक्पृष्ठहृत्सु च ॥ ४६ ॥

1. कण्ठमूले.

मूर्धास्यनेत्रघ्राणेषु दो:पत्संध्यग्रकेषु च ।
सशिरोवक्त्रहृदयजठरोरुपदेष्वपि ॥ ४७ ॥

हृदाननपरश्वेणाभीत्याख्यवरदेषु च ।
मुखांसहृदयेषु त्रीन्पदान्पादोरुकुक्षिषु ॥ ४८ ॥

ऊर्ध्वाधःक्रमतो[1] न्यस्येद्गोलकान्यासमुत्तमम् ।
पुनस्तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ॥ ४९ ॥

ललाटव्यंसजठरहृदयेषु क्रमान्न्यसेत् ।
पुनस्तत्प्रतिपत्त्यर्थं जपेन्मन्त्रमिमं सुधीः ॥ ५० ॥

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शंभवे ॥ ५१ ॥

कुर्यादनेन मन्त्रेण निजदेहे समाहितः ।
मन्त्री पुष्पाञ्जलिं सम्यक्त्रिशः पञ्चश एव वा ॥ ५२ ॥

पूर्वोक्त एव पीठे
प्रागङ्गैर्मूर्तिशक्तिभिस्तदनु ।

1. क्रमशः कुर्यात्.

वृषपालचण्डदुर्गा-
गुहनन्दिगणपसैन्यपाः पूज्याः ॥ ५३ ॥

अन्या च वासवाद्यैः
पुनरुपहारैः क्रमेण भक्तिमता ।
अभ्यर्चिते हुते च
स्तोतव्यः संस्तवेन पुनरीशः ॥ ५४ ॥

नमो विरिञ्चविष्ण्वीशभेदेन परमात्मने ।
सर्गसंस्थितिसंहारव्यावृत्तिव्यक्तवृत्तये ॥ ५५ ॥

नमश्चतुर्धा प्रोद्भूतभूतभूतात्मने भुवः ।
भूरिभारार्तिसंहर्त्रे भूतनाथाय शूलिने ॥ ५६ ॥

विश्वग्रासाय विलसत्कालकूटविषाशिने ।
तत्कलङ्काङ्कितग्रीवनीलकण्ठाय ते नमः ॥ ५७ ॥

नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मने ।
ध्वस्तस्मरनिरस्ताधियोगिध्याताय शंभवे ॥ ५८ ॥

नमो देहार्धकान्ताय दग्धदक्षाध्वराय च ।
चतुर्वर्गेष्वभीष्टार्थदायिने मायिनेऽणवे ॥ ५९ ॥

स्थूलाय मूलभूताय शूलदारितविद्विषे ।
कालहन्त्रे नमश्चन्द्रखण्डमण्डितमौलये ॥ ६० ॥

विवाससे कपर्दान्तभ्रान्ताहिसरिदिन्दवे ।
देवदैत्यासुरेन्द्राणां मौलिघृष्टाङ्घ्रये नमः ॥ ६१ ॥

भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने ।
व्यक्ताव्यक्तस्वरूपाय शंकराय नमो नमः ॥ ६२ ॥

नमोऽन्धकान्तकरिपवे पुरद्विषे
नमोऽस्तु ते द्विरदवराहभेदिने ।
विषोल्लसत्फणिकुलबद्धमूर्तये
नमः सदा वृषवरवाहनाय ते ॥ ६३ ॥

वियन्मरुद्धुतवहवार्वसुंधरा-
मखेशरव्यमृतमयूखमूर्तये ।
नमः सदा नरकभयावभेदिने
भवेह नो भवभयभङ्गकृद्विभो ॥ ६४ ॥

स्तुत्वेन्दुखण्डपरिमण्डितमौलिमेव-
मुद्वासयेत्पुनरमुं हृदयाम्बुजे स्वे ।

अभ्यर्च्य देवमभिसंयतचित्तवृत्ति-
भूत्वा शिवो जपतु मन्त्रमहेशमेनम् ॥ ६५ ॥

संतर्प्य विप्रान्पुनरेवमेव
संपूजयेदिन्दुकलावतंसम् ।
जपेद्यथाशक्ति शिवस्वरूपी
भूत्वा ततोऽन्ते च शिवः स भूयात् ॥ ६६ ॥

अमुमेव मनुं लक्षं
मन्त्री हृल्लेखयाभिसंरुद्धम् ।
जप्त्वा नृपतरुसमिधां
मधुरयुजां मनुसहस्रकं जुहुयात् ॥ ६७ ॥

वन्दे हरं वरदशूलकपालहस्तं
साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।
वामोरुपीठगतया निजवामहस्त-
न्यस्तारुणोत्पलरुचा परिरब्धदेहम् ॥ ६८ ॥

आवृतिरङ्गैराद्या
हृल्लेखाद्याभिरनु वृषाद्यैश्च ।

मात्राशेशैरुक्तं
पञ्चावरणं विधानमीशस्य ॥ ६९ ॥

आप्यायिनी शशियुताप्यरुणाग्निमाया
बिन्द्वन्तिका चलकुलीभुवनेन्दुयुक्ता ।
दीर्घाकलायुतशिवश्च शिवायवर्णा-
स्याच्छूलिनो मनुरयं वसुवर्णयोगी ॥ ७० ॥

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-
न्यस्तारक्तोत्पलाया: स्तनविधृतिलसद्वामबाहु: प्रियाया: ।
सर्वाकल्पाभिरामो धृतपरशुमृगेष्ट: करै: काञ्चनाभो
ध्येय: पद्मासनस्थ: स्मरललिततनु: संपदे पार्वतीश: ॥

पञ्चार्णोक्ताङ्गाद्य:
पञ्चब्रह्मप्रदिष्टपूजश्च ।
वसुमितलक्षजपोऽयं
मन्त्रस्तावत्सहस्रहोमश्च ॥ ७२ ॥

इति जपहुतपूजाध्यानकैरीशयाजी
प्रियतरचरित: स्यात्सर्वतो देहभाजाम् ।

धनविभवयशःश्रीसंपदा दीर्घजीवी
तनुविपदि च शैवं तत्परं धाम भूयात् ॥ ७३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे पञ्चविंशः पटलः ॥**

## षड्विंशः पटलः ॥

अथ प्रवक्ष्यते मन्त्रो दक्षिणामूर्तिसंज्ञकः ।
जपतामिष्टसंसिद्धिविधानसुरपादपः ॥ १ ॥

अत्रिः क्षिणा कालकर्णकामिकायुग्रयेक्षराः ।
तुध्यामध्यगताः स्युर्भ्यं वटमूलनिवासिने ॥ २ ॥

नैधातृनिरताङ्गाय नमो रुद्राय शंभवे ।
तारशक्तिनिरुद्धोऽयं मन्त्रः षट्त्रिंशदक्षरः ॥ ३ ॥

शुकः प्रोक्तो मुनिश्छन्दोऽनुष्टुप्च समुदाहृतम् ।
दक्षिणामूर्तिरुद्रोऽस्य देवता समुदीरिता ॥ ४ ॥

तारशक्त्यादिकैर्ह्राङाद्यन्तैर्मन्त्राक्षरैः क्रमात् ।
ऋत्वक्षिवसुवस्वग्निगुणवर्णैर्विभागशः ॥ ५ ॥

मन्त्री कुर्यात्षडङ्गानि जातियुञ्जि समाहितः ।
कालिकश्रुतिदृग्गण्डद्वयनासास्यके दश ॥ ६ ॥

दोःसंधिकण्ठस्तनहृन्नाभिकट्यन्धुषु क्रमात् ।
पत्संधिषु पुनर्द्वाभ्यां मन्त्रविद्व्यापकं न्यसेत् ॥
एवं न्यस्तशरीरोऽथ चिन्तयेन्मन्त्रदेवताम् ॥ ७ ॥

मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिणेत्रो
दद्यादाद्यैः शुकाद्यैर्मुनिभिरभिनुतो भावशुद्धिं भवो वः ॥

प्राक्प्रोक्तविधानेन च
सम्यक्संपूज्य साधु कलशाद्यैः ।
कृतसंदीक्षो मन्त्री
जप्यादेनं मनुं समाहितधीः ॥ ९ ॥

द्वात्रिंशदयुतमानं
जप्यान्ते जुहोतु तद्दशांशमितैः ।
दुग्धाप्लुतैस्तिलैर्वा
साज्येन पयोन्धसा द्वयेनापि ॥ १० ॥

जप्त्वैवं मन्त्रमेनं दिनमनु गिरिशं पूजयित्वा च हुत्वा
नत्वा स्तुत्वा मनोवाक्तनुभिरवहितः प्राप्य कामानशेषान् ।
व्याख्याता चागमानां भुवि कविषु वरः साधु वेदान्तवेदी
वादीट् सोऽद्वैतविद्याविमलतरमतिर्याति शैवं पदं तत् ॥

जीवशिखिकर्णरेफा-
न्प्रतिवीप्स्य प्रादिकांश्च पुनरपि तान् ।
मेधाप्यायिनियान्तां-
स्तानेव तरान्तिकान्सततनुरूपान् ॥ १२ ॥

आभाष्य चटप्रचटौ
सकहवमौ बन्धघातयौ वीप्स्य ।
प्रोक्त्वा वर्मास्त्रावधि
समुद्धरेच्छक्तिपूर्वकं मन्त्रम् ॥ १३ ॥

ऋषिरस्याघोराख्यः
संप्रोक्तस्त्रिष्टुबुच्यते छन्दः ।
रुद्रोऽप्यघोरपूर्वः
समीरितो देवता तथास्य मनोः ॥ १४ ॥

हृत्पञ्चभिस्तदर्णैः
शिरो हि षड्भिः शिखा तथा दशभिः ।
तावद्भिरेव कवचं
दृगष्टभिर्द्वादशभिरपि चास्त्रम् ॥ १५ ॥

कदृगास्यकण्ठहृन्ना-
भ्यन्धूरुषु जानुजङ्घयोः पदयोः ।
एकादशधा भिन्नै-
र्मन्त्रार्णैर्न्यसतु विग्रहे मन्त्री ॥ १६ ॥

पञ्चभिरथो सषड्भि-
र्द्वाभ्यामप्यष्टभिश्चतुर्भिश्च ।
षड्भिश्चतुस्त्रयेण च
षड्भिर्द्वाभ्यां च भेदितैः क्रमशः ॥ १७ ॥

कालाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिणेत्रः ।
रक्ताकाराम्बरो हि प्रवरघटितगात्रोऽरिनागग्रहादी-
न्खादन्निष्टार्थदायी भवदनभिमतच्छित्तये स्यादघोरः ॥

स्वच्छो मुमुक्षोस्तु भवेदघोरः
  काम्यक्रियायामपि रक्तवर्णः ।
कृष्णोऽभिचारे ग्रहवैकृते च
  प्रोक्तो जपः स्यादपि लक्षमानम् ॥ १९ ॥

घृतावसिक्तैस्तिलतण्डुलैश्च
  जयावसाने जुहुयाद्दशांशम् ।
घृतप्लुतैर्वाथ हविर्भिरेवं
  तावत्प्रजुह्वन्समुपैति कामान् ॥ २० ॥

हृल्लेखास्थितसाध्या-
  क्षरविलसत्कर्णिकं कलावीतम् ।
वर्गाष्टकात्तकेसर-
  मन्त्ये सहळक्षयाक्षरोल्लसितम् ॥ २१ ॥

मन्त्राक्षरत्रयोद्य-
  द्दलमध्यदलाग्रकं च तद्बाह्ये ।
वह्निपुटाश्रिसामाश्रित-
  कवचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ॥ २२ ॥

कृत्वा समाप्य मण्डल-
मत्र विनिक्षिप्य पूरयेत्कलशम ।
पीठे पिनाकपाणे-
र्गन्धैर्वा क्वाथकल्पतोयैर्वा ॥ २३ ॥

अङ्गावृतेरनु च हेतिभिरीरिताभिः
पश्चाच्च मातृभिरथापि दिशाधिनाथैः ।
संपूजयीत विधिनेति षडक्षरोक्त-
मार्गेण वा मनुपरिस्फुरणाय मन्त्री ॥ २४ ॥

आज्यापामार्गसमि-
त्तिलसर्षपपायसाज्यकैश्च पृथक् ।
रात्रौ सहस्रहोमा-
द्भूतद्रोहादिशान्तिरुद्दिष्टा ॥ २५ ॥

सितकिंशुकनिर्गुण्डी-
कनकापामार्गजन्मनां समिधाम् ।
पृथगपि सहस्रहोमा-
न्निग्रहमोक्षोऽचिराद्ग्रहाणां स्यात् ॥ २६ ॥

गव्याक्तैर्जुहुयात्पृथग्दशशतं मन्त्री मयूरेध्मकै-
भूयस्तैश्चतुरङ्गुलैश्च शिवपञ्चम्यां निशायां हुनेत् ।
सर्पिर्मार्गसपञ्चगव्यचरुसर्पिः ससंपातकं
हुत्वा तत्प्रतिभोजयेत्प्रतिशमं यान्त्येव सर्वे ग्रहाः ॥

षट्कोणे कर्णिकायां स्फुरयुगलवृतां साध्यगर्भां च शक्तिं
कोणाग्रे प्रस्फुरद्वन्द्वकमथ विलिखेन्मन्त्रवर्णान्दलेषु ।
षड्वेदद्वन्द्वषड्वेदकचतुर्युगषट्संख्यकान्बाह्यषट्के
वर्मास्त्रार्णां तदेतद्ग्रहगदभयहृद्यन्त्रमाघोरमाहुः ॥ २८ ॥

न च रिपवो न च रोगा
न ग्रहपीडा न शस्त्रबाधा च ।
न क्ष्वेलरुजा मर्त्या-
न्स्पृशन्त्यघोरास्त्रमन्त्रजापपरान् ॥ २९ ॥

तस्मादघोरास्त्रमनुं प्रजप्या-
त्समर्चयेत्तद्विहितं यथावत् ।
हुनेच्च तेनैव समस्तवाञ्छा-
संसिद्धये चाथ विमुक्तये च ॥ ३० ॥

खसप्तमः कर्णयुतोऽर्धचन्द्रवा-
ल्ँलपञ्चमो द्वीन्दुयुतो ध्रुवादिकः ।
मनुः स्वयं मृत्युजयात्मकः स्फुटं
समीरितः साधकरक्षणक्षमः ॥ ३१ ॥

ऋषिरस्य कहोलाख्य-
श्छन्दो देव्यादिका च गायत्री ।
स्याद्देवता च मृत्युं-
जयरुद्रोऽङ्गान्यथाचरेद्भृगुणा ॥ ३२ ॥

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा-
गलदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रापाशवेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि ॥ ३३ ॥

जप्तव्योऽयं मन्त्रवर्यस्त्रिलक्षं
दीक्षापूर्वं होमकृत्स्याद्दशांशैः ।
दुग्धाज्याक्तैः शुद्धखण्डैर्गलूच्या
गुर्वादेशात्साधको हव्यवाहे ॥ ३४ ॥

अर्चा कार्या नित्यशः शैवपीठे
स्यादप्यङ्गैर्लोकपालैस्तदस्त्रैः ।
सम्यक्पूजावस्तुभिर्मन्त्रजापैः
प्रोक्तं ह्येतन्मृत्युभेत्तुर्विधानम् ॥ ३५ ॥

इति जपहुतार्चनाद्यैः
सिद्धो मन्त्रोक्तमूर्तिविहितमनुः ।
संभावयेन्निजान्त-
र्योगं कृत्यापमृत्युनाशकरम् ॥ ३६ ॥

तारनालमथ मध्यपत्रकं
हाद्यकर्णिकयुतं क्रमोत्क्रमात् ।
चिन्तयेन्नियतमन्तरा शिवं
नीरुजे च नियतायुषेऽब्जयोः ॥ ३७ ॥

ऊर्ध्वाधःप्रोतपद्मद्वयदलनिचितैरक्षराद्यैर्ध्रुवाद्यै-
राद्यन्तैर्मन्दमन्दप्रतिगलितसुधापूरसंसिच्यमानम् ।
ईशानं सूक्ष्मरूपं विमलतरसुषुम्नान्तरा संनिषण्णं
ध्यायन्नाप्नोति रोगैर्नियतपरिहृतः संजपाद्दीर्घमायुः ॥

आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां
दिक्पत्रेष्वप्यपरमपरं चापि तत्कोणकेषु ।
भूयो भूमेः पुरमनु मृगाङ्कं तदश्रेषु टान्तं
जप्त्वा बन्धं ग्रहगदविषध्वंसि यन्त्रं तदेतत् ॥ ३८ ॥

इति कृतयन्त्रविभूषित-
मण्डलमध्ये निधाय कलशमपि ।
आपूर्य चाभिषिञ्चे-
च्छ्रीवश्यकरं ग्रहाभिचारहरम् ॥ ३९ ॥

ततश्छिन्नोद्भवानां तु समिद्भिश्चतुरङ्गुलैः ।
दुग्धसिक्तैः समिद्धेऽग्नौ षट्सहस्रद्वयं हुनेत् ॥ ४० ॥

यस्तु वह्नौ जुहोत्येवं यावत्संख्येन साधकः ।
तावत्संख्यैः सुधाकुम्भैरग्निः प्रीणाति शंकरम् ॥ ४१ ॥

आप्यायितोऽग्निना शर्वः साधकस्येप्सितान्वरान् ।
प्रदद्यादायुराद्यांश्च दुरन्तान्प्रलयान्तिकान् ॥ ४२ ॥

मन्त्रान्ते साध्याख्यां
पालययुगलं प्रतीपमपि मन्त्रम् ।

प्रोक्त्वा समापयेन्मनु-
मयमपि मृत्युंजयाह्वयो मन्त्रः ॥ ४३ ॥

अथ वामलकमलपुटा-
न्तरितं शिशुवेषभूषणं रुद्रम् ।
ध्यात्वा जपेद्यथाव-
द्धुतक्लृप्त्या मृत्युनाशनं दृष्टम् ॥ ४४ ॥

चतुरङ्गुलपरिमाणै-
रमृताखण्डैरथार्कसाहस्रम् ।
जुहुयाच्च दुग्धसिक्तै-
रारोग्यायायुषे च लक्ष्म्यै च ॥ ४५ ॥

अमृतावटातिलदूर्वाः
पयो घृतं पायसं क्रमेणेति ।
सप्तद्रव्याण्युक्ता-
न्येतैर्जुहुयात्पृथक्सहस्रतयम् ॥ ४६ ॥

तीव्रे ज्वरे घोरतरेऽभिचारे
सोन्मादके दाहगदे च मोहे ।

तनोति शान्तिं नचिरेण होमः
संजीवनं चाब्दशतप्रमाणम् ॥ ४७ ॥

संभोजयेद्धोमदिने च विप्रा-
न्सप्ताधिकान्स्वादुभिरन्नजातैः ।
सतर्णका गाश्च हुतावसाने
दद्याद्द्विजेभ्यो हुतकर्मकृद्भ्यः ॥ ४८ ॥

निजजन्मदिने शतं शतं यो
जुहुयाद्द्रव्यवरैः ससप्तसंख्यैः ।
मधुरैरपि भोजयेच्च विप्रा-
नभिवाञ्छन्नियमेन दीर्घमायुः ॥ ४९ ॥

अथ वा सप्तभिरेतै-
र्द्रव्यैरेकेन वा सहस्रत्रयम् ।
जन्मर्क्षे होममात्रा-
न्निरुपद्रवमुत्तमं व्रजेदायुः ॥ ५० ॥

दूर्वात्रितयैर्जुहुया-
न्मन्त्रविदेकादशाहुतीर्दिनशः ।

जित्वापमृत्युरोगा-
न्प्रयात्यसावायुषश्च दैर्घ्यमपि ॥ ५१ ॥

जन्मर्क्षाणां त्रितये
च्छिन्नाकाश्मर्यवकुलकैरिध्मैः ।
क्रमशो हुनेत्सहस्रं
नश्यन्त्यपमृत्युरोगदुरितानि ॥ ५२ ॥

सितसिद्धार्थसहस्रा-
हुत्या नश्यन्त्युपद्रवा ज्वरजाः ।
तद्वदपामार्गहुता
मृत्युंजयमप्यरोगतां लभते ॥ ५३ ॥

प्रोक्तैर्ध्यानजपार्चनाहुतविधानाद्यैश्च मृत्युंजयं
यो मन्त्री प्रभजन्मनुं प्रतिदिनं प्रातः प्रसन्नाशयः
तस्येष्टानि भवन्ति संसृतिरपि स्फीता च पुत्रादयः
संपन्नः सुसुखी च जीवति चिरं देहापदि स्याच्छिवः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे षड्विंशः पटलः ॥**

## सप्तविंशः पटलः ॥

अथ सजपहुताद्यो वक्ष्यते साधुचिन्ता-
मणिरभिमतकामप्राप्तिकल्पद्रुमोऽयम् ।
अनलकषमरेफप्राणसद्यान्तवाम-
[1]श्रुतिहिमधरखण्डैर्मण्डितो मन्त्रराजः ॥ १ ॥

ऋषिरपि काश्यप उक्त-
श्छन्दोऽनुष्टुप्च देवतोमेशः ।
[2]यान्तैः षड्भिर्वर्णै-
रङ्गं वा देवतार्धनारीशः ॥ २ ॥

अहिशशधरगङ्गाबद्धतुङ्गात्ममौलि-
स्त्रिदशगणनताङ्घ्रिस्त्रीक्षणः स्त्रीविलासी ।
भुजगपरशुशूलान्खड्गवह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ॥ ३ ॥

---

1. श्रुतिशश० 2. स्वान्तैः

हावभावललितार्धनारिकं
भीषणार्धमपि[1] वा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं
चिन्तयेज्जपविधौ विभूतये ॥ ४ ॥

अथ वा षोडशशूल-
व्यग्रभुजा त्रिणयनाभिनद्धाङ्गी ।
अरुणांशुकानुलेपन-
वर्णाभरणा च भगवती ध्येया ॥ ५ ॥

विहितार्चनाविधिरथानुदिनं
प्रजपेद्दशायुतमितं मतिमान् ।
अयुतं हुनेत्त्रिमधुरार्द्रतरै-
स्तिलतण्डुलैस्तदवसानविधौ ॥ ६ ॥

शैवोक्तपीठेऽङ्गपदैर्यथाव-
द्वृक्षेचदुर्गुनगशैर्मुखाद्यैः ।
समातृभिर्दिक्पतिभिर्महेशं
पञ्चोपहारैर्विधिनार्चयीत ॥ ७ ॥

---

1. भीषणार्धमथ

आरभ्यादिज्वलनं
दिक्संस्थैरष्टभिर्मनोरर्णैः ।
आराधयेच्च मातृभि-
रिति संप्रोक्तः प्रयोगविधिरपरः ॥ ८ ॥

कात्पूर्वं हसलिपिसंयुतं जपादौ
जप्तृणां प्रवरमितीह केचिदाहुः ।
प्रासादाद्ययुतजपेन मङ्क्षु कुर्या-
दावेशादिकमपि नीरुजां च मन्त्री ॥ ९ ॥

शिरसोऽवतरन्निशेशबिम्ब-
स्थितमब्भिर्वृतमागलत्सुधार्द्रम् ।
अपमृत्युहरं विषज्वराप-
स्मृतिविभ्रान्तिशिरोरुजापहं च ॥ १० ॥

निजवर्णविकीर्णकोणवैश्वा-
नरगेहद्वितयावृतत्रिकोणे ।
विगतस्वरवीतमुत्तमाङ्गे
स्मृतमेतत्क्षपयेत्क्षणाद्ग्रहार्तिम् ॥ ११ ॥

वह्नेर्बिम्बे वह्निवत्प्रज्वलन्तं
न्यस्त्वा बीजं मस्तके ग्रस्तजन्तोः ।
ध्यात्वावेशं कारयेद्बन्धुजीवं
तज्जप्तं वा सम्यगाघ्राणनेन ॥ १२ ॥

शुक्लादिः शुक्लभाः पौष्टिकशमनविधौ कृष्टिवश्येषु रक्तो
रक्तादिः क्षोभसंस्तोभनविधिषु हकारादिको हेमवर्णः ।
धूम्रोऽङ्गामर्दनोच्चाटनविधिषु समीरादिकोऽदादिरुक्तः[1]
पीताभः स्तम्भनादौ मनुरतिविमलो भुक्तिभाजामदादिः ॥

कृष्णाभः प्राणगेहस्थितमथ नयने ध्यातमान्ध्यं विधत्ते
बाधिर्यं कर्णरन्ध्रेऽर्दितमपि वदने कुक्षिगं शूलमाशु ।
मर्मस्थाने समीरं सपदि शिरसि वा दुःसहं शीर्षरोगं
वाग्रोधं कण्ठनालेऽवनिवृतमथ तन्मण्डले [2]पीतमेतत् ॥

प्रालेयत्विषि च स्वरावृतमिदं नेत्रे स्मृतं तद्रुजं
योनौ वामदृशोऽस्रविस्रुतिमथो कुक्षौ च शूलं [3]जपेत् ।
विस्फोटे सविषे ज्वरे तृषि तथा रक्तामये विभ्रमे
दाहे शीर्षगदे स्मरेद्विधिरिमं संतृप्तये मन्त्रवित् ॥ १५ ॥

1. अलादिरुक्तः 2. बीजमेतत् 3. जयेत्

साध्याया हृदयकुशेशयोदरस्थं
प्राणाख्यं दृढमवबध्य बीजवर्णैः ।
तेजस्तच्छिरसि विधुं विधाय वाते
नाकर्षेदपि निजवाञ्छयैव मन्त्री ॥ १६ ॥

पारिभद्रसुमनोदलभद्रं
वह्निबिम्बगतमक्षरमेतत् ।
संस्मरेच्छिरसि यस्य स वश्यो
जायते न खलु तत्र विचारः ॥ १७ ॥

निजनामगर्भमथ बीजमिदं
प्रविचिन्त्य योनिसुषिरे सुदृशः ।
वशयेत्क्षणाच्छिततया मनसः
स्रवयेच्च शुक्रमथ वा रुधिरम् ॥ १८ ॥

निजशिवशिरःश्रितं त-
[1]द्बिम्बं स्मृत्वा प्रवेशयेद्योनौ
यस्यास्तत्संपर्का-
त्तां च क्षरयेत्क्षणेन वशयेच्च ॥ १९ ॥

---

1. द्बीजं

परेफगर्भधृतसाध्यपदं
त्रिकगं हुताशयुतषट्कवृतम् ।
विगतस्वरावृतमगारभुवि
स्थितमेतदाशु वशयेद्रमणान् ॥ २० ॥

मधुरत्रयसंयुतेन शाली-
रजसा पुत्तलिकां विधाय तेन ।
मनुना जुहुयात्तया विभज्य
त्रिदिनं यस्य कृते वशो भवेत्स: ॥ २१ ॥

विषपावकोद्यदभिधानगदं
ठगतं कुकोणयुतलाङ्गलिकम्[1] ।
अहिपत्रक्लृप्तपरिजप्तमिदं
शिरसो रुजं प्रशमयेददनात् ॥ २२ ॥

कण्ठे केनावनद्धार्पितदहनयुजा मज्जया मेन वामं
दक्षं संवेष्ट्य वक्षोरुहमनलसमीरौभिरंसद्वयं च ।
वक्त्रे नाभौ च दीर्घं सुमतिरथ विनिक्षिप्य बिन्दुं निशेशं
वक्षस्याधाय बद्धा चिरमिव विहरेत्कन्दुकैरात्मसाध्यै: ॥

1. ०लिनम्

कृत्वा वह्नेः पुरमनु मनुं बन्धुजीवेन तस्मि-
न्नाधायाग्निं विधिवदभिसंपूज्य चाज्यैः शताख्यम् ।
त्रैलोहाख्ये प्रतिविहितसंपातमष्टोत्तरं त-
द्धुत्वा जप्तं दुरितविषवेतालभूतादिहारि ॥ २४ ॥

साध्याख्यागर्भमेनं लिख दहनपुरे कर्णिकायां षडश्रं
बाह्येऽश्रिष्वङ्गमन्त्रान्दलमनु परितो बीजवर्णान्विभज्य ।
भूयोऽचः कादियादींस्त्रिषु वृतिषु कुगेहाश्रके नारसिंहं
तस्मिन्कार्यो यथावत्कलशविधिरयं सर्वरक्षाकरः स्यात् ॥

टान्ते लिख्यात्कलाभिर्वृतमनुमनलावासयुग्मेन वह्नि-
द्योतत्कोणेन बाह्ये तदनु सवितृबिम्बेन काद्यार्णभाजा ।
तद्बाह्ये क्ष्मापुराभ्यां लिखितनृहरियुक्ताश्रकाभ्यां तदेत-
द्यन्त्रं रक्षाकरं स्याद्ग्रहगदविषमक्ष्वेलजूर्त्यादिरोगे ॥२६॥

बिम्बद्वन्द्वे कृशानोर्विलिखतु मणिमेनं ससाध्यं तदश्रि-
ष्वग्न्यादीन्व्यञ्जनार्णान्स्वरयुगलमथो संधिषट्के यथावत् ।
तारावीतं च बाह्ये कुगृहपरिवृतं गोमयाद्रोचनाभ्यां
लाक्षाबद्धं निबध्याज्जपमहितमिदं साधु साध्योत्तमाङ्गे ॥

लक्ष्म्यायुःपुष्टिकरं
परं च सौभाग्यवश्यकृत्सततम् ।
चोरव्यालमहोरग-
भूतापस्मारहारि यन्त्रमिदम् ॥ २८ ॥

साध्याख्याकर्मयुक्तं दहनपुरयुगे मन्त्रमेनं तदश्रि-
ष्वग्निज्वालाश्च बाह्ये विषतरुविटपे साग्रशाखे लिखित्वा ।
जप्त्वाष्टोर्ध्वं सहस्रं नृहरिकृतधिया स्वापयेत्तत्र शत्रु-
व्याघ्रादिक्रोडचोरादिभिरपि च पिशाचादयो न व्रजन्ति ॥

ससिद्धसुरपूजितः सकलवर्गसंसाधको
ग्रहज्वररुजापहो विषविसर्पदोषापहः ।
किमत्र बहुनार्थिनामभिमतार्थचिन्तामणिः
समुक्त इह संग्रहान्मनुवरस्तु चिन्तामणिः ॥

षष्ठस्वरो हुतवहस्तययोस्तुरीया-
वाद्यस्वरो मनुरयं कथितः फडन्तः ।
अस्य त्रिको निगदितो मनुरप्यनुष्टु-
प्छन्दश्च चण्डसहितो मनुदेवतेशः ॥ ३१ ॥

सप्तज्वलज्ज्वालिनिभिस्तटेन च हतेन च ।
सर्वज्वालिनिसंयुक्तैः फडन्तैरङ्गमाचरेत् ॥ ३२ ॥

अव्यात्कपर्दकलितेन्दुकरः करात्त-
शूलाक्षसूत्रककमण्डलुटङ्क ईशः ।
रक्ताभवर्णवसनोऽरुणपङ्कजस्थो
नेत्रत्रयोल्लासितवक्त्रसरोरुहो वः ॥ ३३ ॥

कृतसंदीक्षो मन्त्री
जप्याल्लक्षत्रयं च मन्त्रमिमम् ।
जुहुयात्रिमधुरसिक्तैः
सतिलैरपि तण्डुलैर्दशांशेन ॥ ३४ ॥

व्याघातसमिद्भिर्वा
मनुजापी तावतीभिरथ जुहुयात् ।
[1]पूर्वोक्तार्चापीठे
गन्धाद्यैरर्चयेच्च चण्डेशम् ॥ ३५ ॥

चण्डचण्डाय चेत्युक्त्वा प्रवदेद्विद्महेपदम् ।
चण्डेश्वराय च प्रोक्त्वा [2]धीमहीपदमुच्चरेत् ॥ ३६ ॥

---

1. पूर्वोक्त एव पीठे. 2. धीमहे०

तन्नश्चण्ड इति प्रोक्त्वा भूयो ब्रूयात्प्रचोदयात् ।
एषा तु चण्डगायत्री जपात्सांनिध्यकारिणी ॥ ३७ ॥

अङ्गैः समातृभिर्मन्त्री लोकेशैः संप्रपूजयेत् ।
कूर्मो विष्णुयुतो दण्डी बीजमस्योच्यते बुधैः ॥ ३८ ॥

वदेच्चण्डेश्वरायेति बीजादिहृदयान्तिकम् ।
अर्चनादिष्विमं मन्त्रं यथावत्संप्रयोजयेत् ॥ ३९ ॥

एवं जपहुतार्चाभिः सिद्धमात्रे तु मन्त्रके ।
वाञ्छितादधिकं लभ्येत्काञ्चनं नात्र संशयः ॥ ४० ॥

त्र्यक्षरस्य जपो यावत्तावज्जप्यात्षडक्षरम् ।
ऐहिकामुष्मिकीं सिद्धिं यथा हि लभते नरः ॥ ४१ ॥

कृत्वा पिष्टेन शल्याः प्रतिकृतिमनलं चापि काष्ठैश्चिताना-
माधायारभ्य पुंसस्त्रिमधुरलुलिता दक्षिणाङ्गुष्ठदेशात्
छित्त्वा च्छित्त्वाष्टयुक्तं शतमथ जुहुयाद्योषितां वामपादा-
द्विप्रादीनां चतुर्णां वशकरमनिशं मन्त्रमेतद्धुतान्तम् ॥

अनुदिनमष्टशतं यो
जुहुयात्पुष्पैरनेन मन्त्रेण ।

सप्तदिनैः स तु लभते
वासस्तद्वर्णसंकाशम् ॥ ४३ ॥

अहरहरष्टशतं यो
मन्त्रेणानेन तर्पयेदीशम् ।
तस्य तु मासचतुष्का-
दर्वाक्संजायते महालक्ष्मीः ॥ ४४ ॥

साध्यर्क्षाङ्घ्रिपचर्मणां सुमसृणां पिष्टैश्च लोणैः समं
कृत्वा पुत्तलिकां प्रतिष्ठितचलां जप्त्वा च रात्रौ हुनेत् ।
सप्ताहं पुरुषोऽङ्गना यदि चिरं वश्यं त्ववश्यं भवे-
दस्मिञ्जन्मनि नात्र चोद्यविषयो देहान्तरे संशयः ॥

इति चण्डमन्त्रविहितं विधिव-
द्विधिमादरेण य इमं भजते ।
स तु वाञ्छितं [1]पदमिहाप्य पुनः
शिवरूपतामपि परत्र लभेत् ॥ ४६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे सप्तविंशः पटलः ॥**

---

1. पदमवाप्य.

# अष्टाविंशः पटलः ॥

अथाखिलार्थानुततैव[1] शक्ति-
युक्ता चतुर्विंशतितत्त्वभेदैः ।
गायत्रिसंज्ञापि च तद्विशेषा-
नथ प्रयोगान्कथयामि साङ्गान् ॥ १ ॥

ताराह्वयो व्याहृतयश्च सप्त
गायत्रिमन्त्रः शिरसा समेतः ।
अन्वर्थकं मन्त्रमिमं तु वेद-
सारं पुनर्वेदविदो वदन्ति ॥ २ ॥

जप्यः स्यादिह परलोकसिद्धिकामै-
र्मन्त्रोऽयं [2]महिततरैर्द्विजैर्यथावत् ।
भूदेवा नरपतयस्तृतीयवर्णाः
संप्रोक्ता द्विजवचनेन तत्र भूयः ॥ ३ ॥

---

1. ०नुगतैव. 2. महिततरो.

तेषां शुद्धकुलद्वयोत्थमहसामारभ्य तन्तुक्रियां
तारव्याहृतिसंयुता सहशिरा गायत्र्युपास्या परा ।
संध्योपासनया जपेन च तथा स्वाध्यायभेदैरपि
प्राणायामविधानतः सुमतिभिर्ध्यानेन नित्यं द्विजैः ॥

आदौ तारः प्रकृतिविकृतिप्रोत्थितोऽसौ च मूला-
धारादारादलिविरुतिराविश्य सौषुम्नमार्गम् ।
आद्यैः शान्तावधिभिरनुगो मात्रया सप्तभेदैः
शुद्धो मूर्धावधि परिगतः शाश्वतोऽन्तर्बहिश्च ॥ ५ ॥

प्रकाशितादौ प्रणवप्रपञ्चता
निगद्यते व्याहृतिसप्तकं पुनः ।
सभूर्भुवः स्वश्च महर्जनस्तपः-
समन्वितं सत्यमिति क्रमेण च ॥ ६ ॥

भूःपदाद्या व्याहृतयो भूशब्दस्तदि वर्तते ।
तत्पदं सदिति प्रोक्तं सन्मात्रत्वात्तु भूरतः ॥ ७ ॥

भूतत्वात्कारणत्वाच्च भुवःशब्दस्य संगतिः ।
[1]सर्वस्वीकरणात्स्वात्मतया च स्वरितीरितम् ॥ ८ ॥

1. सर्वस्य स्वीरणात्

महस्त्वाच्च महत्त्वाच्च महःशब्दः समीरितः ।
तदेव सर्वजनता तस्मात्तु व्याहृतिर्जनः ॥ ९ ॥

तपो ज्ञानतया चैव तथा तापतया स्मृतम् ।
सत्यं परत्वादाप्तत्वादनन्तज्ञानतः स्मृतम् ॥ १० ॥

प्रणवस्य व्याहृतीनामतः संबन्ध उच्यते ।
अकारो भूरुकारस्तु भुवो मार्णः स्वरीरितः ॥ ११ ॥

बिन्दुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतम् ।
शान्तं सत्यमिति प्रोक्तं यत्तत्परतरं पदम् ॥ १२ ॥

प्रणवस्य व्याहृतीनां गायत्र्यैक्यमथोच्यते ।
अत्रापि तत्पदं पूर्वं प्रोक्तं तदनुवर्ण्यते ॥ १३ ॥

तद्द्वितीयैकवचनमनेनाखिलवस्तुनः ।
सृष्ट्यादिकारणं तेजोरूपमादित्यमण्डले ॥ १४ ॥

अभिध्येयं [1]परानन्दं परं ब्रह्माभिधीयते ।
यत्तत्सवितुरित्युक्तं षष्ठ्येकवचनात्मकम् ॥ १५ ॥

धातोरिह समुत्पन्नं प्राणिप्रसववाचकात् ।
सर्वासां प्राणिजातीनामिति प्रसवितुः सदा ॥ १६ ॥

---

1. सदानन्दं

वरेण्यं वरणीयत्वात्सेवनीयतया तथा ।
भजनीयतया सर्वैः प्रार्थनीयतया स्मृतम् ॥ १७ ॥

पूर्वस्याष्टाक्षरस्यैवं व्याहृतिर्भूरिति स्मृता ।
पापस्य भञ्जनाद्भर्गो भक्तस्निग्धतया तथा ॥ १८ ॥

देवस्य वृष्टिदानादिगुणयुक्तस्य नित्यशः ।
प्रभूतेन प्रकाशेन दीप्यमानस्य वै तथा ॥ १९ ॥

ध्यैचिन्तायामतो धातोर्निष्पन्नं धीमहीत्यदः ।
निगमाद्येन दिव्येन विद्यारूपेण चक्षुषा ॥ २० ॥

दृश्यो हिरण्मयो देव आदित्ये नित्यसंस्थितः ।
हीनतारहितं तेजो यस्य स्यात्स हिरण्मयः ॥ २१ ॥

यः सूक्ष्मः सोऽहमित्येवं चिन्तयामः सदैव तु ।
द्वितीयाष्टाक्षरस्यैवं व्याहृतिर्भुव ईरिता ॥ २२ ॥

धियो बुद्धीर्मनोरस्य च्छान्दसत्वाद्य ईरितः ।
कृतश्च लिङ्गव्यत्यासः सूत्रात्सुप्तिङुपग्रहात् ॥ २३ ॥

यत्तु तेजो निरुपमं सर्वदेवमयात्मकम् ।
भजतां पापनाशस्य हेतुभूतमिहोच्यते ॥ २४ ॥

न इति प्रोक्त आदेशः षष्ठ्यासौ युष्मदस्मदोः ।
तस्मादस्माकमित्यर्थः प्रार्थनायां प्रचोदयात् ॥ २५ ॥

तृतीयाष्टाक्षरस्यापि व्याहृतिः स्वरितीरिता ।
एवं दश पदान्यस्यास्त्रयश्चाष्टाक्षराः स्मृताः ॥ २६ ॥

षडक्षराश्च चत्वारः स्युश्चतुर्विंशदक्षराः ।
इत्थंभूतं यदेतस्य देवस्य सवितुर्विभोः ॥ २७ ॥

वरेण्यं भजतां पापविनाशनकरं परम् ।
भर्गोऽस्माभिरभिध्यातं धियस्तन्नः प्रचोदयात् ॥ २८ ॥

उक्तैवमत्र गायत्री पुनस्तच्छिर उच्यते ।
आपो ज्योती रस इति सोमाग्न्योस्तेज उच्यते ॥२९॥

तदात्मकं जगत्सर्वं रसस्तेजोद्वयं युतम् ।
अमृतं तदनाशित्वाद्ब्रह्मत्वाद्ब्रह्म उच्यते ॥ ३० ॥

यदानन्दात्मकं ब्रह्म सत्यज्ञानादिलक्षणम् ।
तद्भूर्भुवःस्वरित्युक्तं सोऽहमित्योमुदाहृतम् ॥ ३१ ॥

एतत्तु वेदसारस्य शिरस्त्वाच्छिर उच्यते ।
लक्षणैरिति निर्दिष्टो वेदसारेषु निष्ठितः ॥ ३२ ॥

फलार्थी तदवाप्नोति मुमुक्षुर्मोक्षमृच्छति ।
उपव्युषस्येवोत्थाय कृतशौचविधिर्द्विजः ॥ ३३ ॥

दन्तानां धावनं चैव जिह्वानिर्लेखनादिकम् ।
कृत्वा स्नात्वा समाचम्य मन्त्रपूतेन वारिणा ॥ ३४ ॥

आपो हि ष्ठा मयेत्यादिऋग्भिस्तिसृभिरेव च ।
अभ्युक्ष्य शुद्धदेहः सन्नपः पीत्वा समाहितः ॥ ३५ ॥

सूर्यश्चेत्यनुवाकेन पुनराचम्य पूर्ववत् ।
अभ्युक्ष्य शुद्धदेहः सन्गृहीत्वाञ्जलिना जलम् ॥ ३६ ॥

आदित्याभिमुखो भूत्वा तद्गतात्मोर्ध्वलोचनः ।
वेदसारं परं ज्योतिर्मूलभूतं परात्परम् ॥ ३७ ॥

हृत्स्थं सर्वस्य लोकस्य मण्डलान्तर्व्यवस्थितम् ।
चिन्तयन्परमात्मानमप ऊर्ध्वं विनिक्षिपेत् ॥ ३८ ॥

एनस्ताः प्रतिनिघ्नन्ति जगदाप्याययन्ति च ।
ततः प्रदक्षिणीकृत्य पुनराचम्य संयतः ॥ ३९ ॥

क्रमात्तारादिमन्त्राणामृष्यादीन्विन्यसेत्सुधीः ।
तत्र तु प्रणवस्यादावृषिरुक्तः प्रजापतिः ॥ ४० ॥

छन्दश्च देवी गायत्री परमात्मा च देवता ।
जमदग्निभरद्वाजभृगुगौतमकाश्यपाः ॥ ४१ ॥

विश्वामित्रवसिष्ठाख्यावृषयो व्याहृतीरिताः ।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ॥ ४२ ॥

त्रिष्टुब्जगत्यौ च्छन्दांसि कथ्यन्ते देवता अपि ।
सप्तार्चिरनिलः सूर्यो वाक्पतिर्वरुणो वृषा ॥ ४३ ॥

विश्वेदेवा इति प्रोक्ताः सप्त व्याहृतिदेवताः ।
हृन्मुखांसोरुयुग्मेषु सोदरेषु क्रमान्न्यसेत् ॥ ४४ ॥

विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दः स्वयं स्मृतम् ।
सविता देवता चास्य ब्रह्मा शिर ऋषिः स्मृतः ॥ ४५ ॥

छन्दश्च देवी गायत्री परमात्मा च देवता ।
स्थानेषु पूर्वमुक्तेषु सताराव्याहृतीर्न्यसेत् ॥ ४६ ॥

गायत्रीं शिरसा विद्वाञ्जपेत्त्रिः स्यादुपासना ।
हृदयेऽधस्तथोर्ध्वं च महादिक्ष्वपि संयतः ॥ ४७ ॥

व्यापयेद्व्याहृतीः सम्यग्गायत्रीं च शिरोयुताम् ।
सार्थसंस्मृति संजप्यात्रिरिदं जपलक्षणम् ॥ ४८ ॥

आत्मन्यधश्चोपरितो दिग्भ्यस्ताः समुपानयेत् ।
गायत्रीं पूर्ववज्जप्यात्स्वाध्यायविधिरीदृशः ॥ ४९ ॥

एतत्त्रयं त्रिशः कुर्यादृजुकायस्त्वनन्यधीः ।
निरुच्छ्वासः स विज्ञेयः प्राणायामो मनीषिभिः ॥५०॥

ध्यानस्य केवलस्यास्य व्याख्याने दर्शितः क्रमः ।
त्रिव्याहृत्यादिमभ्यस्येद्गायत्रीं संध्ययोः सुधीः ॥ ५१ ॥

शतं वाथ सहस्रं वा मन्त्रार्थगतमानसः ।
पूर्वं प्रपञ्चयागोक्तान्गाणपत्यजपादिकान् ॥ ५२ ॥

लिपिन्यासादिकान्साङ्गान्महन्न्यासादिसंयुतान् ।
सनिजर्ष्यादिकान्सर्वान्विदध्याद्विधिवद्बुधः ॥ ५३ ॥

पादसंधिचतुष्कान्धुनाभिहृद्गलदोर्द्वयी ।
संध्यास्यनासागण्डाक्षिकर्णभ्रूमस्तकेष्वपि ॥ ५४ ॥

वारुणैन्दवयाम्यप्रागूर्ध्वकेषु मुखेषु च ।
क्रमेण वर्णान्विन्यस्येद्गायत्र्या मन्त्रवित्तमः ॥ ५५ ॥

शिरोभ्रूमध्यनयनवक्त्रकण्ठेषु वै क्रमात् ।
हृन्नाभिगुह्यजान्वाख्यपादेष्वपि पदान्न्यसेत् ॥ ५६ ॥

सब्रह्मविष्णुरुद्रैश्च सेश्वरैः ससदाशिवैः ।
ससर्वात्माह्वयैः कुर्यादङ्गन्यासं समाहितः ॥ ५७ ॥

एवं कृत्वा तु सिद्ध्यर्थं गायत्रीं दीक्षितो जपेत् ।
अथ त्रिगुणिते प्रोक्ते विचित्रे मण्डलोत्तमे ॥ ५८ ॥

शक्तिभिः प्राक्समुक्ताभिः सौरं पीठं समर्चयेत् ।
तत्र निक्षिप्य कलशं यथापूर्वोपचारतः ॥ ५९ ॥

गव्यैर्वा पञ्चभिः क्वाथजलैर्वा पूरयेत्ततः ।
तस्मिन्नावाह्य कलशे शक्तिमित्थं विचिन्तयेत् ॥ ६० ॥

मन्दाराह्वयरोचनाञ्जनजपाख्याभैर्मुखैरिन्दुम-
द्रत्नोद्यन्मकुटांशुभिस्ततचतुर्विंशार्णचित्रा[1] तनुः ।
अम्भोजारिदराह्वयौ गुणकपालाख्ये च पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद्भवदभीष्टोत्तारिणी तारिणी ॥ ६१ ॥

संचिन्त्य भर्तारमिति प्रभाणां
त्रिशक्तिमूर्तीः प्रथमं समर्च्य ।
आदित्यशक्त्याख्यचतुष्टयेन
यजेद्द्वितीयावरणे दिनेशम् ॥ ६२ ॥

---

1. ०मकुटांशुसंततचतुर्विंशार्णतत्त्वा

प्रह्लादिनीं प्रभां नित्यां सविश्वंभरसंज्ञकाम् ।
विलासिनीप्रभावत्यौ जयां शान्तां क्रमाद्यजेत् ॥ ६३ ॥

तमोपहारिणीं सूक्ष्मां विश्वयोनिं जयावहाम् ।
पद्मालयां परां शोभां भद्ररूपां तथा यजेत् ॥ ६४ ॥

मातृभिश्चारुणाभिश्च षष्ठ्यथो सप्तमीग्रहैः ।
आदित्यपार्षदन्तैरप्यष्टमीन्द्रादिभिः सुरैः ॥ ६५ ॥

आवृतिः कथिता चेति विधानं परमीदृशम् ।
गन्धादिभिर्निवेद्यान्तैर्दिनेशं सम्यगर्चयेत् ॥ ६६ ॥

अथ पुनरमुमभिषिञ्चे-
त्संयतचित्तं च देशिकः शिष्यम् ।
कृतहुतविधिमपि विधिव-
द्विहितबलिं दत्तदक्षिणं गुरवे ॥ ६७ ॥

भूयस्त्वक्षरलक्षं
गायत्रीं संयतात्मको जप्त्वा ।
जुहुयात्पायसतिलघृत-
दूर्वाभिर्दुग्धतरुसमिद्भिरपि ॥ ६८ ॥

एकैकं त्रिसहस्रं
मन्त्री समभीष्टसिद्धये मुक्त्यै ।
अक्षरसहस्रसंख्यं
मुख्यतरैः केवलैस्तिलैर्जुहुयात् ॥ ६९ ॥

दुरितोच्छेदनविधये
मन्त्री दीर्घायुषे च विशदमतिः ।
आयुष्कामो जुहुया-
त्पायसहविराज्यकेवलाज्यैश्च ॥ ७० ॥

दूर्वाभिः सतिलाभिः
सर्वैस्त्रिसहस्रसंख्यकं मन्त्री ।
अथ तु त्रिमधुरसिक्तै-
रुरुणैर्जुहुयात्सरोरुहैरयुतम् ॥ ७१ ॥

नष्टश्रीरपि भूयो
भवति मनोज्ञश्च मन्दिरं लक्ष्म्याः ।
अन्नाद्यर्थ्यन्नैरपि
पालाशैर्ब्रह्मवर्चसे जुहुयात् ।

सर्वैरेतैर्जुहुया-

त्सर्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥ ७२ ॥

इति परमरहस्यं वेदसारस्य सारं

गदितमजसुशुद्धैर्योगिभिर्ध्यानगम्यम् ।

अमुमथ जपहोमध्यानकाले य एवं

भजति स तु विशुद्धः कर्मभिर्मुक्तिमेति ॥ ७३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

प्रपञ्चसारे अष्टाविंशः पटलः ॥

# एकोनत्रिंशः पटलः ॥

अथ वक्ष्यामि विद्यायास्त्रिष्टुभः प्रवरं विधिम् ।
ऋषिच्छन्दोदेवताभिरङ्गन्यासक्रमैः सह ॥ १ ॥

मारीचः काश्यपो ज्ञेय ऋषिश्छन्दः स्वयं स्मृतम् ।
देवता जातवेदोऽग्निरुच्यन्तेऽङ्गान्यतः परम् ॥ २ ॥

नवभिः सप्तभिः षड्भिः सप्तभिश्च तथाष्टभिः ।
सप्तभिर्मूलमन्त्रेण कुर्यादङ्गानि षट् क्रमात् ॥ ३ ॥

अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिगुह्यके ।
स्तनाभिहृदयोरोजपार्श्वयुक्पृष्ठकेषु च ॥ ४ ॥

स्कन्धयोरुभयोर्मध्ये बाहुमूलोपबाहुषु ।
प्रकूर्परप्रकोष्ठेषु मणिबन्धतलेषु च ॥ ५ ॥

मुखनासाक्षिकर्णेषु मस्तमस्तिष्कमूर्धसु ।
न्यसेन्मन्त्राक्षरान्मन्त्री क्रमाद्वा व्युत्क्रमात्तनौ ॥ ६ ॥

शिखाललाटदृक्कर्णयुगोष्ठरसनासु च ।
स्कर्णबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ।
जङ्घाचरणयोर्न्यस्येत्पदानि त्रिष्टुभः क्रमात् ॥ ७ ॥

[1]भास्वद्विद्युत्करालाकुलहरिगलसंस्थारिशङ्खासिखेटे-
ष्वस्त्रासाख्यत्रिशूलानरिगणभयदां तर्जनीं चादधाना ।
चर्माण्युद्घूर्णदोर्भिः प्रहरणनिपुणाभिर्वृता कन्यकाभि-
र्दद्यात्काशानवीष्टांस्त्रिणयनलसिता कापि कात्यायनी वः॥

इति विन्यस्तदेहस्तु कुर्याज्जप्यादिकाः क्रियाः ।
दीक्षा प्रवर्त्यते पूर्वं यथावद्देशिकोत्तमैः ॥ ९ ॥

ततोऽस्त्रक्लृप्तिः संप्रोक्ता स्यात्प्रयोगविधिस्ततः ।
दीक्षकाख्याक्षराण्यादौ शक्त्यावेष्ट्य ततो बहिः ॥१०॥

यन्त्रं षड्गुणितं कृत्वा दुर्वर्णलसिताश्रकम् ।
बहिरष्टदलं पद्मं प्रोक्तलक्षणलाक्षितम् ॥ ११ ॥

अत्र पीठं यजेन्मन्त्री क्रमात्सनवशक्तिकम् ।
जया च विजया भद्रा भद्रकाली सुदुर्मुखी ॥ १२ ॥

1. उद्यद्विद्यु०

व्याघ्रसिंहमुखीदुर्गात्रिष्टुभो नव शक्तयः ।
तत्रादाय घटं दिव्यक्वाथमूत्रपयोम्भसाम् ॥ १३ ॥

एकेन पूरयित्वास्मिन्नावाह्य च विभावसुम् ।
अङ्गावृतेर्बहिरग्न्यादिपादाष्टकविनिःसृताः ॥ १४ ॥

मूर्तीरभ्यर्चयेदग्नेर्जातवेदादिकाः क्रमात् ।
पृथिव्यम्ब्वनलैरानप्यात्मनेपदसंयुतान् ॥ १५ ॥

अर्चयेद्दिक्षु कोणेषु निवृत्त्यादीर्यथाक्रमम् ।
दिक्ष्वेकादशसंख्याः स्युर्जागताद्यर्णशक्तयः ॥ १६ ॥

लोकपालांश्च तद्धेतीर्विधिनेति समर्चयेत् ।
जागता तापिनी वेदगर्भा दाहनरूपिणी ॥ १७ ॥

सेन्दुखण्डा सुम्भहन्त्री सनभश्चारिणी तथा ।
वागीश्वरी मदवहा सोमरूपा मनोजवा ॥ १८ ॥

मरुद्वेगा रात्रिसंज्ञा तीव्रकोपा यशोवती ।
तोयात्मिका तथा नित्या दयावत्यपि हारिणी ॥ १९ ॥

तिरस्क्रिया वेदमाता तथान्या दमनप्रिया ।
समाराध्या नन्दिनी च परा रिपुविमर्दिनी ॥ २० ॥

षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्रिसंज्ञका ।
निरवद्या विशालाक्षी श्वासोद्वाहा च नादिनी ॥ २१ ॥

वेदना वह्निगर्भा च सिंहवाहाह्वया तथा ।
धुर्या दुर्विषहा चैव रिरंसा तापहारिणी ॥ २२ ॥

त्यक्तदोषा निःसपत्ना चत्वारिंशच्चतुर्युताः ।
अभिषिच्य पुनः शिष्यं कुम्भादीन्गुरुराहरेत् ॥ २३ ॥

ईदृशं यन्त्रमारुह्य जपेच्छिष्यः सुयन्त्रितः ।
मन्त्राक्षरसहस्रं तु सिद्ध्यर्थं गुरुसंनिधौ ॥ २४ ॥

सर्वजापेषु संज्ञेया गायत्र्या द्विगुणो जपः ।
कर्तव्यो वाञ्छितार्थाप्त्यै रक्षायै कार्यसिद्धये ॥ २५ ॥

तिलराज्यनलक्षीरवृक्षेध्महविराज्यकैः ।
सर्पिःसिक्तैः क्रमाद्धोमः साधयेदीप्सितं नृणाम् ॥ २६ ॥

चत्वारि चत्वारिंशच्च चतुःशतसमन्वितम् ।
चतुःसहस्रसंयुक्तं प्रोक्तैरेतैर्हुतक्रिया ॥ २७ ॥

एवं संसिद्धमन्त्रस्य स्युरस्त्राद्याः क्रिया मताः ।
चत्वारि चत्वारिंशच्च वर्णानामस्त्रमिष्यते ॥ २८ ॥

विलोमपाठो वर्णानामक्रमाहुर्मनीषिणः ।
पादाष्टकमिदं विद्यात्ततोऽष्टाङ्गो मनुः स्वयम् ॥ २९ ॥

जप्तुकामो मनुं त्वेनं पादांस्तु प्रतिलोमतः ।
पठेत्तथा हि मन्त्रोऽयं क्षाल्यते दुष्टदूषितः ॥ ३० ॥

आद्याः पञ्चाक्षरपदास्त्रयः सप्ताक्षरः परः ।
पञ्चमश्चाथ षष्ठश्च द्वौ तु पादौ षडक्षरौ ।
पञ्चाक्षरौ तदन्त्यौ च तेषां भावो निगद्यते ॥ ३१ ॥

स्याद्यं ज्ञानेन्द्रियं कामं द्वितीयं पाञ्चभौतिकम् ।
तृतीयं धातवः सप्त चतुर्थं वर्णसप्तकम् ॥ ३२ ॥

षडूर्मयः पञ्चमं स्यात्षष्ठः षट्कौशिको मतः ।
सप्तमश्चाष्टमः पादः शब्दाद्यं वचनादिकम् ॥ ३३ ॥

साङ्गः सत्प्रतिपत्तिकः सगुरुपद्वन्द्वप्रमाणक्रमा-
ज्जाप्येत्यादिषडन्तकोऽन्तविगतो वर्णप्रतीपस्तथा ।
गुर्वादेशविधानतश्च विविधध्यानक्रियो मन्त्रिणा
तत्तत्कार्यसमाप्तयेऽखिलविपद्ध्वान्तौघभानूदयः ॥

अनुलोमजपेऽङ्गानामपि पाठोऽनुलोमतः ।
प्रतिलोमानि तानि स्युः प्रतिलोमविधौ तथा ॥ ३५ ॥

अन्तः पादप्रतीपे हि तथा तानि भवन्ति हि ।
वर्णप्रतीपे च तथा मात्राण्यप्रतिलोमके ॥ ३६ ॥

प्रतिपत्तिविशेषांश्च तत्र तत्र विचक्षणः ।
गुर्वादेशविधानेन प्रविदध्यान्न चान्यथा ॥ ३७ ॥

जपः पुरोक्तसंख्यः स्याद्धुतक्लृप्तिस्तथा भवेत् ।
क्षीरद्रुमसमिद्राजितिलहव्यघृतैः क्रमात् ॥ ३८ ॥

अथ वा पञ्चगव्योत्थचरुणा हुतमुच्यते ।
प्रत्यङ्मुखेन कर्तव्यं प्रायो जपहुतादिकम् ॥ ३९ ॥

तत्र स्युर्मन्त्रवर्णेभ्यस्तावत्यो वह्निदेवताः ।
प्रत्येकमावृतास्तास्तु पञ्चकेन नतभ्रुवाम् ॥ ४० ॥

तत्पञ्चकं च प्रत्येकमावृतं पञ्चभिः पृथक् ।
प्रत्येकं पञ्चकानां तु षोडशावृतिरिष्यते ॥ ४१ ॥

*P. II. 9

प्रत्येकं षोडशानां तु कोटयः [1]परिचारिकाः ।
इत्येकाक्षरजातपूर्वमेकस्मात्षोडशात्मकात् ॥ ४२ ॥

एतावत्यस्तु जातास्ताद्विस्तरं पुनरूहयेत् ।
तत्र त्विन्द्रियजाः प्रोक्ता देवतास्तूर्ध्वदृष्टयः ॥ ४३ ॥

तिर्यञ्चो भौतिकाः प्रोक्ता धातूत्थास्तूभया नराः ।
ऊर्मिजास्तूर्ध्ववदनास्तिर्यञ्चश्चाथ कोशजाः ॥ ४४ ॥

क्लीबा मुखद्वयोपेता गोचरोत्थाः स्त्रियो मताः ।
अधोमुखाश्च तिर्यञ्च इत्युक्तो मूर्तिसंग्रहः ॥ ४५ ॥

आभिः सर्वाभिरपि च शिखाभिर्जातवेदसः ।
व्याप्यते परराष्ट्रेषु वृक्षगुल्मतृणादिकम् ॥ ४६ ॥

आरम्भे मानुषाणि स्युर्नक्षत्राण्याभिचारके ।
कर्माण्यासुरभानि स्युर्दैवानि स्युस्तथा हृतौ ॥ ४७ ॥

अन्त्याश्वीन्द्वर्कादिति
गुरुहरिमित्रानिलाह्वया देवाः ।

---

1. परिवारिकाः

पूर्वोत्तरत्रयी यम-
हरविधयो मानुषाः परेऽसुरभाः ॥ ४८ ॥

नन्दास्वारभ्य रिक्तासु प्रयोज्यात्मनि संहरेत् ।
भद्रासु संग्रहं कुर्याज्जयासु च विशेषतः ।
आरेणारभ्य मन्देन प्रयोज्यादित्यवारके ॥ ४९ ॥

संहरेत्संग्रहं कुर्याद्वारे त्वाचार्ययोः सुधीः ।
चरोर्विसृज्योभयकैराहरेदभ्यसेत्स्थिरैः ॥ ५० ॥

दिनास्त्रं दिनकृद्युक्तं वारग्रहसमन्वितम् ।
कृत्तिकादि च कृत्यान्तं कृत्यास्त्रं जातवेदसः ॥ ५१ ॥

नक्षत्रात्मा हुताशः स्यात्तिथ्यात्मेन्दुरुदाहृतः ।
ताभ्यां करोति दिनकृद्विसर्गादानकर्मणी ॥ ५२ ॥

रक्षानिग्रहकर्मणोस्तु पराग्वक्त्राः प्रधानाकृति-
प्रख्या मन्त्रविधानविच्च दिशि दिश्येकादशैकादश ।
संस्थाप्य क्रमशोऽक्षरोदितरुचीः शक्तीर्जपेद्वा मनुं
सम्यग्वा जुहुयादनुप्रतिगतं सिद्ध्यै समाराधयेत् ॥

पीतायोमुष्टिगदा-
हस्ता महिषाज्यसंयुतपुलाकैः ।
वैभीतारिष्टसमि-
त्कोद्रवकैः स्तम्भयेच्च हुतविधिना ॥ ५४ ॥

सुसिता पाशाङ्कुशयु-
ग्विगलद्वारिप्रवाहसंभिन्ना ।
वेतससमिदाहुत्या
मधुरयुजा मङ्क्षु वर्षयेद्दुर्गा ॥ ५५ ॥

रक्ता पाशाङ्कुशिनी
निशि फलिनीकेसरोद्भवैः कुसुमैः ।
चन्दनरससंसिक्तै-
र्होमाद्दुर्गा वशीकरोति जगत् ॥ ५६ ॥

लवणैस्त्रिमधुरसिक्तै-
स्त्वक्कृतया वा जुहोतु पुत्तल्या ।
उडुतरुकाष्ठैर्नक्तं
सप्ताहान्नृपतिमपि वशीकुरुते ॥ ५७ ॥

सकपालशूलपाशा-
　ङ्कुशहस्तारुणतरा तथा दुर्गा ।
आकर्षयते लावण-
　पुत्तल्या त्रिमधुराक्तया होमात् ॥ ५८ ॥

ध्यात्वा धूम्रां मुसल-
　त्रिशिखकरामस्थिभिश्च तीक्ष्णाक्तैः ।
कार्पासानां निम्ब-
　च्छदमेषघृतैर्हुताच्च विद्वेषः ॥ ५९ ॥

धूम्रा तर्जनिशूला-
　हितहस्ता विषदलैः समहिषाज्यैः ।
होमाच्च मरिचसर्षप-
　चरुभिरजारुधिरसेचितैरटयेत् ॥ ६० ॥

शिखिशूलकराग्निनिभा
　सर्षपतैलाक्तमत्तबीजैश्च ।
मरिचैर्वा राजियुतै-
　र्होमादहितान्विमोहयेद्दुर्गा ॥ ६१ ॥

कृष्णा शूलासिकरा
  रिपुदिनवृक्षोद्भवैः समित्प्रवरैः ।
व्रणकृद्धृतसंसिक्तै-
  र्होमान्मासेन मारयेद्दुर्गा ॥ ६२ ॥

नक्षत्रवृक्षसमिधो
  मरिचानि च तीक्ष्णहिङ्गुशकलानि ।
मारणकर्मणि विहिता-
  न्यरुष्करस्नेहसिक्तानि ॥ ६३ ॥

नक्षत्रवृक्षसमिधां
  विलिखितसाध्याभिधानकर्मवताम् ।
सचतुश्चत्वारिंश-
  त्तत्त्वयुजां होमकर्म मरणकरम् ॥ ६४ ॥

मरिचं क्षौद्रसमेतं
  प्रत्यक्पुष्पीपरागसंभिन्नम् ।
उष्णाम्भःपरिलुलितं
  प्रसेचयेद्दक्षवृक्षपुत्तल्याः ॥ ६५ ॥

हृदये वदने च रिपोः
　　संमुखतः संप्रतिष्ठितोरायाः ।
जूर्त्यभिभूतोऽरिः स्या-
　　त्तत्कथनात्पक्षमात्रकान्म्रियते ॥ ६६ ॥

सैव प्रतिकृतिरसकृ-
　　त्प्रतिष्ठितसमीरणा च विशदधिया ।
तीक्ष्णस्नेहालिप्ता
　　विलोमजापेन तापनीयाग्नौ ॥ ६७ ॥

विधिना ज्वरपीडा स्या-
　　दपघनहोमेन हानिरङ्गस्य ।
सर्वाहुत्या मरणं
　　प्राप्नोति रिपुर्न तत्र संदेहः ॥ ६८ ॥

प्राक्प्रोक्तान्भूतवर्णान्दश दश युगशो बिन्दुयुक्तान्नमोन्ता-
　न्योनेर्मध्याश्रमध्येष्वपि पुनरथ संस्थाप्य भूताभवर्णान् ।
वर्णैस्तैः साकमग्नेर्मनुमपि कुलिशाद्यैः स्वचिह्नैः समेतं
　कुर्यात्कर्माणि सम्यक्पटुविशदमतिः स्तम्भनाद्यानि मन्त्री ॥

[1]ऊदोद्रादिलळाः को-
नसौ चतुर्थार्णका वसौ वाराम् ।
दृष्टचैर्द्वितीयरक्षा
वह्नेरद्वन्द्वयोनिकादियषाः ॥ ७० ॥

मरुतः कपोलबिन्दुक-
पञ्चमवर्णाः शहौ तथा व्योम्नः ।
मनुषु परेष्वपि मन्त्री
कर्माणि करोतु तत्र संसिद्धौ ॥ ७१ ॥

उन्मत्तक्ष्वेलनेत्रद्रुमभवसमिधां सप्तसाहस्रिकान्तं
प्रत्येकं राजितैलालुलितमथ हुनेन्माहिषाज्यप्लुतं वा ।
कृष्णाष्टम्याद्यमेवं सुनियतचरितः सप्तरात्रं निशायां
निःसंदेहोऽस्य शत्रुस्त्यजति किल निजं देहमाविष्टमोहः ॥

सामुद्रे च सहिङ्गुजीरकविषे साध्यर्क्षवृक्षाकृतिं
कृत्वा यो वदनाञ्जले घटकटाहादिश्रिते क्राथयेत् ।
सप्ताहं ज्वलनं जपन्विषतरोर्यष्ट्या शिरस्ताडनं
कुर्वन्सप्तदिनान्तरैर्यमपुरक्रीडापरः स्यादरिः ॥ ७३ ॥

1. ऊओद्रा

अर्कस्यन्दनबद्धपन्नगमुखग्रस्ताङ्घ्रिमाशाम्बरं
न्यग्वक्त्रं तिलजाप्लुतं विषहरं दीप्तं करैर्भास्वतः ।
वायुप्रेरितवह्निमण्डलमहाज्वालाकुलास्यादिकं
ध्यायन्वैरिणमुत्क्षिपेज्जलममुं मन्त्रं जपेन्मृत्यवे ॥ ७४ ॥

आर्द्रांशुकोऽग्निमनुना त्वथ सप्तरात्रं
सिद्धार्थतैललुलितैर्मरिचैर्जुहोतु ।
आरभ्य विष्टिदिवसेऽरिनरः प्रलाप-
मूर्छान्वितेन विषयीक्रियते ज्वरेण ॥ ७५ ॥

तालस्य पत्रे भुजपत्रके वा
मध्ये लिखेत्साध्यनराभिधानम् ।
अथाभितो मन्त्रमिमं विलोमं
विलिख्य भूमौ [1]विनिखन्य तत्र ॥ ७६ ॥

आधाय वैश्वानरमादरेण
समर्च्य सम्यङ्मरिचैर्जुहोतु ।
तीव्रो ज्वरस्तस्य भवेत्पुनस्त-
त्तोये क्षिपेद्वश्यतमः स भूयात् ॥ ७७ ॥

1. विनिहत्य

सिंहस्थाशरनिकरैः कृशानुवक्त्रै-
धावन्तं रिपुमनुधावमानमेनाम् ।
संचिन्त्य क्षिपतु जलं दिनेशबिम्बे
जप्त्वामुं मनुमपि चाटनाय शीघ्रम् ॥ ७८ ॥

कृत्वा स्थण्डिलमङ्गणे भगवतीं न्यासक्रमैरर्चये-
द्गन्धाद्यैः पुनरन्धसा च विकिरन्मन्त्री निशायां बलिम् ।
जप्त्वा मन्त्रममुं च रोगसहिताः कृत्यानिकृत्या कृतां-
स्तांस्तान्भूतपिशाचवैरिविहितान्दुःखानसौ नाशयेत् ॥

विधिवदभिज्वाल्यानल-
मन्वहमाराध्य गन्धपुष्पाद्यैः ।
संध्याजपाच्च मनुरय-
माकाङ्क्षितसकलसिद्धिकल्पतरुः ॥ ८० ॥

कुसुमरसलुलितलोणै-
र्वारुणवदनो जुहोतु संध्यासु ।
मन्त्राणसंख्यमग्नि-
रैक्येन द्रावयेदरीनचिरात् ॥ ८१ ॥

शुद्धैश्च तण्डुलैरपि
हविर्विनिष्पाद्य पञ्चगव्यमपि ।
सघृतेन तेन जुहुया-
दष्टसहस्रं [1]समेतसंपातम् ॥ ८२ ॥

प्राशितसंपातस्य
स्याद्रक्षा सर्वथैव साध्यस्य ।
प्राङ्गणमन्दिरयोरपि
निखनेद्द्वारे च शिष्टसंपातम् ॥ ८३ ॥

कृत्या नश्यति तस्मि-
न्वीक्षन्ते न ग्रहादयो भीत्या ।
कर्तारमेव कुपिता
कृत्या सर्वात्मना च नाशयति ॥ ८४ ॥

ब्रह्मद्रुमफलकान्ते
मन्त्रितमः सप्तसप्तकोष्ठयुते ।
कोणोदराणि हित्वा
मायाबीजं सकर्ममध्यगते ॥ ८५ ॥

---

1. समे ससंपातम्

विलिखेत्क्रमेण मन्त्रा-
  क्षरांश्च शिष्टेषु तेषु कोष्ठेषु ।
तत्र मरुतः प्रतिष्ठां
  विधाय विनिधाय वह्निमपि जुहुयात् ॥ ८६ ॥

आज्येनाष्टसहस्रं
  फलकोपरि सम्यगात्तसंपातम् ।
विप्रतिपत्तिधरायां
  निखनेन्नश्यन्त्युपद्रवाः सद्यः ॥ ८७ ॥

सिकताचरुगव्याश्मक-
  मृदां प्रतिष्ठा विधीयते सिद्ध्यै ।
प्रस्थाढकघटमाना
  ग्रहपुरविषयाभिगुप्तये सिकताः ॥ ८८ ॥

मध्याष्टाशान्तासु च
  कुण्डानामारचय्य नवकमपि ।
विधिना निवपेत्क्रमशः
  सिंहधनुश्छागयायिनि दिनेशे ॥ ८९ ॥

तिथिषु तु कालाष्टम्यां
[1]तेषु विशाखाग्निमूलभागेषु ।
वारेषु मन्दवाक्पति-
वर्जं सर्वे तथा प्रशस्यन्ते ॥ ९० ॥

हस्तश्रवणमखासु
प्राजापत्येषु कर्म कुर्वीत ।
द्वादशसहस्रसंख्यं
प्रजपेद्गायत्रमपि यथाप्रोक्तम् ॥ ९१ ॥

मध्ये च मूलमनुना
तदायुधैरष्टदिक्षु चक्राद्यैः ।
सकपालान्तैः पृथगपि
संस्थापनकर्म निगदितं विधिवत् ॥ ९२ ॥

तास्ताश्च देवता अपि
परिपूज्य यथाक्रमेण मन्त्रितमः ।
कुर्याद्बलिं [2]दिनग्रह-
करणेभ्यो लोकपालराशिभ्यः ॥ ९३ ॥

---

1. भेषु; 2. दिनकरग्रहणेभ्यो

सिकताः षोडशकुडुवं
ब्रह्मद्रुमभाजने तु गव्याक्तम् ।
निवपति यदि विधिना तं
देशं ग्रामं करोति चतुरब्दात् ॥ १४ ॥

अर्केऽजस्थेऽब्धिगायामपरिमितजलायां समादाय शुद्धाः
संम्यक्संशोषयित्वातपमनु सिकताः शूर्पकोणैर्विशोध्य ।
संसिद्धे पञ्चगव्ये सुमतिरथ विनिक्षिप्य ताः कुम्भसंस्था
मन्त्राग्नौ मन्त्रजापी द्विजतरुसमिधा भर्जयेत्कार्यहेतोः ॥

एवं मृदुपलचरवः
संस्थाप्यन्ते सपञ्चगव्यास्ते ।
वसुधाविप्रतिपत्ति-
क्षयं च पुष्टिं च कुर्वते क्रमशः ॥ १६ ॥

व्रीहिभिरन्नैः क्षीरैः
समिद्भिरथ दुग्धवीरुधामाज्यैः ।
मधुरत्रयमधुरतरै-
र्महतीमृद्धिं [1]करोति हुतविधिना ॥ १७ ॥

1. करोतु

यद्यद्वाञ्छति पुरुष-
स्तत्तदमुष्य प्रभावतः साध्यम् ।
सग्रहनक्षत्राद्यां
सगिरिपुरग्रामकाननां वसुधाम् ॥ ९८ ॥

साहिझषोपलमुदधिं
दहति ह मतिमानयत्नमेतेन ।
एवं प्रोत्थापयति च
मन्त्रेणानेन निशितधीर्मन्त्री ॥
पुंसा केन कियद्वा
मन्त्रस्याचक्षतेऽस्य सामर्थ्यम् ॥ ९९ ॥

तस्मादेनं मनुवरमभीष्टाप्तये संयतात्मा
जप्यान्नित्यं सहुतविधिरप्यादरादर्चयीत ।
भक्त्या कुर्यात्सुमतिरभिषेकादिकं कर्मजातं
कर्तुं वान्यत्प्रवणमतिरत्रैव भक्तः सदा स्यात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे एकोनत्रिंशः पटलः ॥**

# त्रिंशः पटलः ॥

अथाभिवक्ष्ये महितस्य मन्त्र-
स्यानुष्टुभः संग्रहतो विधानम् ।
ऋष्यादिकैरङ्गपदैर्यथाव-
द्दीक्षाजपार्चाहवनैः क्रमेण ॥ १ ॥

ऋषिरभिहितो वसिष्ठ-
श्छन्दोऽनुष्टुप्च देवता रुद्रः ।
त्र्यम्बकपदादिका स्या-
न्मनुनैव षडङ्गक्लृप्तिरथ कथिता ॥ २ ॥

त्रिभिस्तु वर्णैर्हृदयं शिरश्च
चतुर्भिरष्टाभिरथो शिखा च ।
उक्तं नवार्णैः कवचं तथाक्षि-
पञ्चार्णकं त्र्यक्षरमस्त्रमाहुः ॥ ३ ॥

प्राक्प्रत्यग्याम्यसौम्ये शिरसि च वदनोरोगलांसेषु नाभौ
हृद्देशे पृष्ठकुक्ष्योरथ शिवगुदयोरूरुमूलान्तयोश्च ।
जान्वोस्तद्वृत्तयुग्मस्तनतटयुगपार्श्वेषु पत्पाणिनासा-
शीर्षेष्वप्यूर्ध्वतोऽर्णैन्र्यसतु पुनरधस्तोऽपि मन्त्री तथोर्ध्वम् ॥

चरणाग्रसंधिषु गुदा-
धारोदरहृदयकंधरेषु पुन: ।
बाह्वो: संध्यग्रास्य-
घ्राणद्वयदृक्श्रुतिभ्रुशीर्षेषु ॥ ५ ॥

वर्णान्न्यस्य शिरोभ्रू-
दृग्वक्त्रकगलहृदुदरगुह्येषु ।
ऊर्वोर्जान्वो: पदयो:
पदैश्च मनुवित्क्रमेण विन्यस्येत् ॥ ६ ॥

वसिष्ठादिक्रमेणैव अङ्गन्यासं समाचरेत् ।
वसिष्ठस्त्र्यम्बकश्चैव त्रिणेत्रश्च तथैव च ।
अनुष्टुप्छन्दसे चेति जातियुक्तेन मन्त्रवित् ॥ ७ ॥

अच्छस्वच्छारविन्दस्थितिरुभयकराङ्कस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।

द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलाबन्धुरे प्लावयन्तौ
[1]देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं वः ॥

प्रासादोक्ते पीठे
गव्यैर्वा दुग्धतरुकषायैर्वा ।
संपूर्य कलशमस्मि-
न्महेशमावाह्य पूजयेद्भक्त्या ॥ ९ ॥

अङ्गैराद्यावृतिः स्या-
पुनरावृतिरष्टभिर्द्वितीया स्यात् ।
मन्त्रार्णशक्तिभिः स्युः
पुनश्चतस्रो दिशापवर्गाद्यैः ॥ १० ॥

अर्केन्दुधरणितोया-
नलेरवियदात्मसंज्ञकास्ते च ।
आनुष्टुभमित्यष्टा-
वरणं प्रोक्तं विधानवरमेवम् ॥ ११ ॥

रमा राका प्रभा ज्योत्स्ना पूर्णोषा पूरणी सुधा ।
विश्वा विद्या [2]सुधा प्रह्वा सारा संध्या शिवा निशा ॥

1. वेदं 2. सिता

आर्द्रा प्रज्ञा [1]प्रभा मेधा कान्तिः [2]शान्तिर्द्युतिर्मतिः ।
परोमा पावनी पद्मा शान्ता [3]मेधा जयामला ॥ १३ ॥

द्वात्रिंशदिति निर्दिष्टाः शक्तयोऽनुष्टुभः क्रमात् ।
शिवानुभावतो नित्यं जगदाप्याययन्ति याः ॥ १४ ॥

इति परिपूज्य महेशं
कलशजलैः समभिषेचयेच्छिष्यम् ।
कनकांशुकरत्नाद्यै-
र्गुरुमपि परिपूज्य मनुमतः सिद्धम् ॥ १५ ॥

प्रजपेल्लक्षायत्या
द्रव्यैर्जुहुयाज्जपावसाने च ।
बिल्वपलाशौ खदिरो
वटतिलसिद्धार्थदौग्धदुग्धानि ॥ १६ ॥

दधिदूर्वेति दशैता-
न्याज्यसमेतानि होमवस्तूनि ।
एकैकशः सहस्रं
दशभिर्हुत्वा प्रतर्प्य विप्रांश्च ॥ १७ ॥

1. वरा 2. शान्तिर्धृति० 3. मेघा

भवति नरः सिद्धमनु-
मन्त्रेण च सर्वकर्मकर्ता स्यात् ।
बिल्वैरयुतं हुत्वा
महतीं लक्ष्मीमवाप्नुयाद्विप्रः ॥ १८ ॥

तावद्भिर्द्विजवृक्षै-
र्द्विजः श्रियं पुष्कलामवाप्नोति ।
खदिरसमिदयुतहोमा-
त्तेजोबलपुष्टिमाप्नुयादिष्टाम् ॥ १९ ॥

न्यग्रोधायुतहोमा-
द्धनधान्यसमृद्धिमेति नचिरेण ।
अयुतं तिलैः प्रजुह्व-
न्नपमृत्योः पाप्मनो विमुक्तः स्यात् ॥ २० ॥

सिद्धार्थायुतहोमो
वैरिणमपमृत्युमपि विनाशयति ।
पायसहुतेन परमां
रमामथायुर्यशो लभेन्मर्त्यः ॥ २१ ॥

दुग्धहुतात्कान्तिः[1] स्या-
त्परकृत्या नश्यति श्रियं लभते ।
दधिहोमतोऽन्नवान्स्या-
त्संवननकरं च तं वदन्ति बुधाः ॥ २२ ॥

दूर्वायुतेन [2]जुहुया-
द्रोगान्निवार्य सर्वमपमृत्युम् ।
गर्वितधीरब्दानां
विप्रवरः सर्वथा शतं जीवेत् ॥ २३ ॥

निजजन्मदिने पयोन्धसा वा
[3]शतवीर्यत्रितयैः पयोघृताक्तैः ।
जुहुयाच्च शतं सविंशतिं यः
स लभेदायुररोगतां चिराय ॥ २४ ॥

काश्मर्यदारुसमिधां त्रिशतं सहस्रं
सर्पिःपयोन्नसहितं त्रितयं जुहोतु ।
विप्रान्प्रतर्प्य च गुरून्परिपूज्य सम्य-
ग्दीर्घं विमुक्तगदमायुरवाप्तुकामः ॥ २५ ॥

---

1. ॰च्छान्तिः 2. जुह्व- 3. शतवीर्या॰

स्नात्वार्काभिमुखोऽम्भसि स्थित इमं मन्त्रं सहस्रं जपे-
दायुष्यं प्रतिपर्व दुग्धहविषा होमो महाश्रीप्रदः ।
लाजाभिर्निजवाञ्छिताय हवनात्कन्याशु संदीयते
स्वाद्वक्तस्तनजद्रुमैश्च हवनात्सर्वान्वशे स्थापयेत् ॥

गायत्रिवर्णपरिपूर्णतनुस्तु भानु-
स्त्रिष्टुब्विशिष्टमहिमा महितः कृशानुः ।
आनुष्टुभाक्षरसमग्ररुचिः शशाङ्को
दद्युः समुद्यतममी परिवाञ्छितं वः ॥ २७ ॥

एभिस्त्रिभिर्मनुवरैस्तु शताक्षराख्यो
मन्त्रोऽभिकाङ्क्षितफलाप्तिदकामधेनुः ।
प्रोक्तो हिताय जगतां मुनिभिः कृपार्द्र-
चित्तैर्यथोक्तमथ संग्रहतो वदामि ॥ २८ ॥

ऋष्याद्याः पूर्वोक्ता-
स्त्रिदशाः स्युर्हृत्त्रयोदशभिरर्णैः ।
शिर एकादशभिश्च
द्वाविंशद्भिस्तथा शिखाकवचम ॥ २९ ॥

नयनं पञ्चदशार्णैः
  ससप्तभिर्दशभिरस्त्रमङ्गविधिः ।
विन्यासं च मनूनां
  मन्त्रज्ञः पूर्ववत्क्रमात्कुर्यात् ॥ १० ॥

स्मर्तव्याखिललोकवर्ति सततं यज्जङ्गमस्थावरं
  व्याप्तं येन च यत्प्रपञ्चविहितं मुक्तिश्च यत्सिद्धितः ।
यद्वा स्यात्प्रणवत्रिभेदगहनं श्रुत्या च यद्गीयते
  तद्वः काङ्क्षितसिद्धयेऽस्तु परमं [1]तेजस्त्रयोत्थं महः ॥

लक्षायतो जपविधिः
  शताक्षरस्याथ होमविधिरुक्तः ।
अयुतावधिको द्रव्यं
  दौग्धान्नं सर्पिषा समायुक्तम् ॥ १२ ॥

सौरे पीठे पूज्या
  पूर्वोक्ताङ्गैः समावृतिः प्रथमा ।
प्रह्लादिन्याद्याभि-
  स्तिस्रः प्रोक्ताः क्रमात्समावृतयः ॥ १३ ॥

1. ज्योतिस्त्र०

पञ्चम्यावृतिरुक्ता
त्रैष्टुभवज्जागतादिभिस्तदनु ।
स्याच्चरमादिभिरावृति-
चतुष्कमुक्तं दशम्यथेन्द्राद्यैः ॥ ३४ ॥

इति शताक्षरमन्त्रसमर्चना
निगदितेह दशवरणा बुधैः ।
प्रजपतामभिकाङ्क्षितसिद्धये
निखिलसंसृतिमोक्षपदाप्तये ॥ ३५ ॥

दुग्धाक्तैर्जुहुयात्सहस्रममृताकाण्डैस्तु दीर्घायुषे
दूर्वाणां त्रितयैस्तथा घृतपयःसिक्तैर्घृतेनैव वा ।
लक्ष्म्यै कोकनदैश्च शोणरुचिभिस्त्रिस्वादुयुक्तैस्तथा
रक्तैरुत्पलकैस्तदह्नि विकचैर्बैल्वप्रसूनैरपि ॥ ३६ ॥

अनुदिनमघशान्त्यै संयतात्मा सहस्रं
प्रतिजुहुतु तिलैर्वा मन्त्रविन्मासमेकम् ।
अपि दिनकरसंख्यं भोजयीत द्विजाती-
न्विविधरसविशिष्टैर्भक्तितो भोज्यजातैः ॥ ३७ ॥

शतं शतं प्रातरतन्द्रितोद्यतो
जपेद्विजो मन्त्रमिमं शताक्षरम् ।
अरोगजुष्टं बहुलेन्दिरायुतं
शतं स जीवेच्छरदां सुखेन सः ॥ ३८ ॥

सर्वान्कामानवाप्नोति मन्त्रमेनं जपेत्तु यः ।
सर्वं साधयते मन्त्री अस्त्रशस्त्रादिलक्षणम् ॥ ३९ ॥

प्रणवव्याहृत्याद्या व्याहृतितारान्तिका च मन्त्री च ।
जप्त्वा शताक्षरी स्यादिहपरलोकप्रसिद्धये दिनशः ॥४०॥

मनुममुमघशान्त्यै पत्पदाद्यं प्रजप्या-
द्रुद्गणरहितायाप्यायुषेऽनुष्टुबाद्यम् ।
विमलमतिररातिध्वंसने त्रिष्टुबाद्यं
दिनमनु दिनवक्त्रे वत्सरं संयतात्मा ॥ ४१ ॥

शताक्षरमनोरयं क्रम उदीरितः संग्रहा-
द्व्रजेदमुमतन्द्रितो दिनश एव मन्त्री रहः ।
अभीष्टफलसिद्धये सुयशसे च दीर्घायुषे-
ऽप्यशेषजनरञ्जनाय चिरमिन्दिरावाप्तये ॥ ४२ ॥

संवादसूक्तविहितं
विधानमथ साङ्गदेवतारूपम् ।
वक्ष्यामि साधकाना-
मनुदिनमभिवाञ्छितप्रदानकरम् ॥ ४३ ॥

ऋषिरपि संवननोऽस्या-
नुष्टुप्च त्रिष्टुबुच्यते च्छन्दः ।
संवादाद्यः प्रोक्तः
संज्ञानाद्यश्च देवता वह्निः ॥ ४४ ॥

ब्रह्माख्यो हृदयमनुः शिरश्च विष्णू
रुद्रः स्यादिह तु शिखेश्वरश्च वर्म ।
नेत्रे द्वे भवति सदाशिवस्तथास्त्रं
सर्वात्मेत्यथ कथितं षडङ्गमेवम् ॥ ४५ ॥

धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयं च ।
सवरदममलेन्दुक्षीरगौरं त्रिणेत्रं
प्रणमत सुरवक्त्रं मङ्क्षु संवादयन्त्रम् ॥ ४६ ॥

सहस्रकाणां दशभिश्चतुर्भिर-
    प्यथो सहस्रैश्च चतुर्भिरन्वितम् ।
जपेन्मनुं सम्यगथाभिदीक्षितः
    पयोन्धसान्ते जुहुयाद्दशांशकम् ॥ ४७ ॥

यजेत्पुराङ्गैश्च तदर्चनाविधौ
    पुनर्द्वितीयावरणेऽग्निमूर्तिभिः ।
अनन्तरं च त्रिदिवेश्वरादिभिः
    क्रमेण वह्निं विधिनेति पूजयेत् ॥ ४८ ॥

संवादसूक्ते विधिनेत्यनेन
    संसाधिते कर्म करोतु मन्त्री ।
चतुःशतं चापि दशोत्तरेण
    चतुश्चतुष्कं प्रजपेद्धुनेद्वा ॥ ४९ ॥

पायसेन मधुरत्रयभाजा
    विप्रराजतरुजैः कुसुमैर्वा ।
सर्पिषा स्तनजवृक्षसमिद्भि-
    र्वाञ्छितार्थविधये प्रजुहोतु ॥ ५० ॥

जुहुयात्कलाचतुष्कैः
प्रत्यृचमायोज्य कादिवर्गचतुष्कैः ।
तद्वच्च पयशलाद्यै-
र्वर्गैः संयोज्य पूर्ववन्मतिमान् ॥ ५१ ॥

तद्वदृचं प्रतियोज्य
त्रिष्टुप्पादांश्च पूर्वसंख्येन ।
जुहुयात्सर्पिःसिक्तं
पायसमचिरेण कार्यसमवाप्त्यै ॥ ५२ ॥

प्रतिपादमथकपर्दं
प्रतियोज्य जुहोतु पूर्ववन्मतिमान् ।
तेनाभीष्टावाप्ति-
र्नचिरेण नरस्य हस्तगा भवति ॥ ५३ ॥

अक्षरपादात्रिष्टु-
ब्युक्तैः सूक्तैस्तु पूर्वसंख्येन ।
जुहुयात्समाजरूपं
संवादयितुं प्रतर्पयेद्वाग्भिः ॥ ५४ ॥

उद्दिश्य यद्यदिह मन्त्रितमो जुहोति
सूक्तैरमा निगदितैस्त्रिविधैश्च मन्त्रैः ।
व्यस्तैर्यथाविभवतो विधिवत्समस्तै-
स्तत्तस्य सिध्यति समग्रमयत्नमेव ॥ ५५ ॥

ऋग्वारुणी ध्रुवा स्वाद्या या सा त्रिष्टुब्निगद्यते ।
ऋषिर्वसिष्ठस्त्रिष्टुप्च च्छन्दो वारीशदेवता ॥ ५६ ॥

अष्टभिः सप्तभिः षड्भिः पुनस्तावद्भिरक्षरैः ।
षडङ्गानि विधेयानि तन्मन्त्रसमुदीरितैः ॥ ५७ ॥

अङ्गुल्यग्रससंधिपायुशिवसंज्ञाधारनाभिष्वथो
कुक्षौ पृष्ठहृदोरुरोजगलदोःसंध्यग्रवक्रेषु च ।
गण्डघ्राणविलोचनश्रवणयुग्भ्रूमध्यमध्येषु के
सर्वाङ्गेषु तथा न्यसेद्द्विशदर्धीर्वर्णैः समर्थैः क्रमात् ॥

अच्छांशुकाभरणमाल्यविलेपनाढ्यः
पाशाङ्कुशाभयवरोद्यतदोः सरोजः ।
स्वच्छारविन्दवसतिः सुसितः प्रसन्नो
भूयाद्विभूतिविधये वरुणश्चिरं वः ॥ ५९ ॥

अङ्गैरष्टभिराहिपै-
दिंशाधिपैः समभिपूज्य वारीशम् ।
कलशैः पुनरभिषिञ्चे-
त्परमगुरुर्मन्त्रजापिनं शिष्यम् ॥ ६० ॥

वसुभिः प्रसाद्य देशिक-
मथ शिष्यो मनुमिमं जपेल्लक्षम् ।
जुहुयाच्च दुग्धपक्कै-
रन्नैरयुतं घृताप्लुतैर्मतिमान् ॥ ६१ ॥

ऋगियमृणमोचनी स्या-
ज्जपैर्हुतैस्तर्पणैश्च मन्त्रविदः ।
संप्राप्तदुर्गतेरपि
सद्यो हृद्यां च संवहेल्लक्ष्मीम् ॥ ६२ ॥

इक्षोः सितैश्च शकलै-
र्घृतसंसिक्तैश्चतुर्दिनं जुहुयात् ।
सकलोपद्रवशान्त्यै
तथर्णमुक्त्यै च संपदे सुचिरम् ॥ ६३ ॥

वैतससमिद्युतहुता-
　　द्वृष्टिमकालेऽपि वितनुते वरुणः ।
गव्यक्षीरसमेता-
　　त्त्रिदिनकृताद्दिनमुखेषु मुदितमनाः ॥ ६४ ॥

शतभिषजि समुदितेऽर्के
　　चतुःशतं पायसं हुनेत्सघृतम् ।
ऋणमोचनाय लक्ष्म्यै
　　जनसंवननाय शुक्रवारे वा ॥ ६५ ॥

पाशाबद्धं वैरिण-
　　मङ्कुशसंप्रोतमम्बुधेः पारे ।
ध्यायन्परे क्षिपन्तं
　　वरुणं जुहुयाच्च वा तथा प्रजपेत् ।

पाशनिबद्धं वैरिण-
　　मसिना च्छित्वाशु नाशयन्तममुम् ।
ध्यायन्वेतससमिधा
　　गोमूत्रयुजा हुनेत्तदपहत्यै ॥ ६७ ॥

दौग्धान्नैर्भृगुवारे
घृतसंसिक्तैः कृतश्च हवनविधिः ।
ऋणमोक्षदश्च विविधो-
पद्रवशमकृद्रमाकरः प्रोक्तः ॥ ६८ ॥

पश्चिमसंध्यासमये
पश्चिमवदनोऽनलं समाराध्य ।
ऋचमेनामभिजप्या-
च्चतुःशतं सकलदुःखनाशाय ॥ ६९ ॥

शालीघृतसंसिक्ताः
सरिदन्तरतो जुहोतु परसेनाम् ।
संस्तम्भयितुं त्रिदिनं
सुमना मन्त्री चतुःशतावृत्त्या ॥ ७० ॥

प्रत्यङ्मुखोऽथ मन्त्री
प्रतर्पयेद्वा जलैः सुशुद्धतरैः ।
यः सोऽप्युपद्रवाणां
रुन्धेन्निवहं श्रियं समृच्छति च ॥ ७१ ॥

बहुना किमनेन मन्त्रिमुख्यो
मनुनाशु प्रतिसाधयेदभीष्टम् ।
हवनाक्रिययाथ तर्पणैर्वा
सजपैः पाशभृतो महामहिम्नः ॥ ७२ ॥

अथ लवणमनुं वदामि साङ्गं
सजपं सप्रतिपत्तिकं सहोमम् ।
विधिवद्विहितेन येन सर्वा
जगतीमात्मवशे करोति मन्त्री ॥ ७३ ॥

लवणाम्भासि चेत्याद्या द्वितीया लवणे इति ।
दहेति च तृतीया स्यात्सदग्ध्वेति चतुर्थ्यपि ॥ ७४ ॥

ऋकपञ्चमी तु या ते स्याद्यथा प्रोक्तमथर्वणि ।
ऋग्भिराभिस्तु पञ्चाङ्गं पञ्चभिर्वा समीरितम् ॥ ७५ ॥

चिट्यक्षरैः षडङ्गं वा प्रणवाद्यैर्निगद्यते ।
पञ्चभिश्च त्रिभिरपि पञ्चभिः पञ्च चाक्षरैः ॥ ७६ ॥

सपञ्चभिर्युगार्णेण जातियुक्तैः समाहितः ।
अङ्गिराः स्यादृषिश्छन्दोऽनुष्टुबत्रैव देवता ।
अग्निरात्री तथा दुर्गा भद्रकाली समीरिता ॥ ७७ ॥

*P. II. 11

अरुणोऽरुणपङ्कजसंनिहितः
स्रुवशक्तिवराभययुक्तकरः ।
अमितार्चिरजात्तगतिर्विलस-
न्नयनत्रितयोऽवतु वो दहनः ॥ ७८ ॥

नीलवरांशुककेशकलापा
नीलतनुर्निबिडस्तनभारा ।
साङ्कुशपाशसशूलकपाला
यामवती भवतोऽवतु नित्यम् ॥ ७९ ॥

करकमलविराजच्चक्रशङ्खातिशूला
परिलसितकिरीटा पातितानेकदैत्या ।
त्रिणयनलसिताङ्गी तिग्मरश्मिप्रकाशा
पवनसखनिभाङ्गी पातु कात्यायनी वः ॥ ८० ॥

सुरौद्रसितदंष्ट्रिका त्रिणयनोर्ध्वकेशोल्बणा
कपालपरशूलसड्डमरुका त्रिशूलाकुला ।
घनाघननिभा रणद्रुचिरकिङ्किणीमालिका
भवद्विभवसिद्धये भवतु भद्रकाली चिरम् ॥ ८१ ॥

खेटासिमुसलतोमर-
कपालशक्तीः सपाशसृणि दधती ।
दंष्ट्रोग्रा सिंहस्था
...रात्रिकालिका ध्येया ॥ ८२ ॥

अयुतं नियतो मन्त्रमृकपञ्चकसमन्वितम् ।
प्रजपेत्त्रिसहस्रं वा सम्यगेनं समाहितः ॥ ८३ ॥

दशांशेन हुनेत्सिद्ध्यै हविषा घृतसंयुजा ।
एवं कृते प्रयोगार्हो मन्त्री भूयान्न चान्यथा ॥ ८४ ॥

वह्निरात्री वरे स्यातां वश्याकर्षणकर्मणोः ।
दुर्गाकाल्यौ तथा देव्यौ शस्ते मारणकर्मणि ॥ ८५ ॥

आरभ्य कर्मकृन्मन्त्री तृतीयां कृष्णपक्षजाम् ।
संदीक्षितो भवेत्पूते मन्दिरे मन्त्रजापवान् ॥ ८६ ॥

निखन्यात्तत्र कुण्डं च दोर्मात्रं त्र्यश्रमेखलम् ।
चतुष्कं सुन्दराकारं पुत्तलीनां च कारयेत् ॥ ८७ ॥

एतां साध्यर्क्षवृक्षेण शालिपिष्टेन चापराम् ।
चक्रीकरमृदा चान्यां मधूच्छिष्टेन चेतराम् ॥ ८८ ॥

तासु हृद्देशलिखितसाध्याख्यासु समाहितः ।
सम्यक्संस्थापयेत्प्राणान्साध्यादानीय साधकः ॥ ८९ ॥

उत्तानां दारवीं कुण्डे खनेन्मन्त्राभिमन्त्रिताम् ।
विष्टरां विष्टरस्याधः पादस्थाने च मृन्मयीम् ॥ ९० ॥

लम्बयेदम्बरे सिद्धमयीमूर्ध्वमधोमुखीम् ।
पुनः कृष्णाष्टमीरात्रौ पूर्वयामे गते सति ॥ ९१ ॥

रक्तमाल्याम्बरो मन्त्री कृतरक्तानुलेपनः ।
सम्यक्कृतलिपिन्यासप्राणायामादिकः शुचिः ॥ ९२ ॥

कुडुबं पीतलवणं सुश्लक्ष्णं परिचूर्णितम् ।
दधिक्षौद्रघृतक्षीरैः प्रोक्षयित्वा सुशोधितम् ॥ ९३ ॥

आलोड्य गुडमध्वाद्यैर्विस्पष्टावयवामथ ।
तेन पुत्तलिकां मन्त्री चार्वङ्गीं कारयेत्सुधीः ॥ ९४ ॥

तस्यां च स्थापयेत्प्राणान्गुर्वादेशविधानतः ।
अष्टोर्ध्वशतसंख्यं वा तथाष्टोर्ध्वसहस्रकम् ॥ ९५ ॥

ऋक्पञ्चकं पञ्चविंशत्संख्यं प्रतिकृतिं स्पृशन् ।
जपित्वाङ्गानि विन्यस्येत्स्वाङ्गप्रतिकृतावपि ॥ ९६ ॥

सतारैश्चिटिमन्त्रार्णैश्चतुर्विंशतिसंख्यकैः ।
शिरोललाटदृक्कर्णनासास्यचिबुकेष्वपि ॥ ९७ ॥

सकण्ठहृदयोरोजकुक्षिनाभिकटीषु च ।
मेढ्रपायूरुजान्वाख्यजङ्घाङ्घ्रिषु च विन्यसेत् ॥ ९८ ॥

अधो गुह्यादभेदः स्यादूर्ध्वं भेदेऽन्विते सति ।
आत्मन्येवं प्रविन्यस्य पुनः प्रतिकृतौ न्यसेत् ॥ ९९ ॥

अङ्गुष्ठसंधिप्रपदजङ्घाजानूरुपायुषु ।
सलिङ्गनाभिजठरहृदयेषु स्तनद्वये ॥ १०० ॥

कंधराचिबुकास्येषु घ्राणदृक्कर्णयुग्मके ।
ललाटशिरसोर्न्यस्येत्प्रतिमायां च संहरेत् ॥ १०१ ॥

उपलिप्याथ कुण्डं तद्बहिर्गोमयवारिणा ।
साध्यसंमुख आसीन आदध्याद्धव्यवाहनम् ॥ १०२ ॥

प्रज्वाल्य साध्योडुतरुकाष्ठैरभ्यर्च्य दीप्तिमान् ।
राजीकुशीतपुष्पाद्भिश्चषके रजतादिके ॥ १०३ ॥

देवतां प्रतिपाद्यार्घ्यं दत्त्वा कार्यार्थसिद्धये ।
उपतिष्ठेद्धुतस्यादावन्ते मन्त्रैरितीरितैः ॥ १०४ ॥

त्वमाननममित्रघ्न निशायां हव्यवाहन ।
हविषा मन्त्रदत्तेन तृप्तो भव मया सह ॥ १०५ ॥

जातवेदो महादेव तप्तजाम्बूनदप्रभ ।
स्वाहपते विश्वभक्ष लवणं दह शत्रुहन् ॥ १०६ ॥

ईशे ईश्वरि शर्वाणि ग्रस्तं मुक्तं त्वया जगत् ।
महादेवि नमस्तुभ्यं वरदे कामदा भव ॥ १०७ ॥

तमोमयि महादेवि महादेवस्य सुव्रते ।
स्त्रिया मे पुरुषं गत्वा वशमानय देहि मे ॥ १०८ ॥

दुर्गे दुर्गादिरहिते दुर्गसंशोधनार्गले ।
चक्रशङ्खधरे देवि दुष्टशत्रुभयंकरि ॥ १०९ ॥

नमस्ते दह शत्रुं मे वशमानय चण्डिके ।
शाकंभरि महादेवि शरणं मे भवानघे ॥ ११० ॥

भद्रकालि भवाभीष्टे भद्रसिद्धिप्रदायिनि ।
सपत्नान्मे दह दह पच शोषय तापय ॥ १११ ॥

शूलादिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय ।
महादेवि महाकालि रक्षात्मानं कुमारिके ॥ ११२ ॥

पुनः प्रतिकृतेरङ्गसप्तकं निशितायसा ।
दक्षपादादिकं छित्वा पञ्चर्चं प्रजपेन्मनुम् ॥ ११३ ॥

साध्यं संस्मृत्य शितधीर्जुहुयात्सप्तसंख्यया ।
दक्षिणं चरणं पूर्वं ततो दक्षार्धकं पुनः ॥ ११४ ॥

दक्षहस्तं तृतीयं स्याद्गलादूर्ध्वं चतुर्थकम् ।
पञ्चमं वामहस्तं स्यात्षष्ठं वामार्धमेव च ॥ ११५ ॥

सप्तमं वामपादं स्यादन्यापि स्याद्धुतक्रिया ।
सप्त सप्त विभागो वा क्रमादङ्गेषु सप्तसु ॥ ११६ ॥

एकादशांशभिन्नैर्वा तदङ्गैः सप्तभिर्हुनेत् ।
होमोऽन्यथा वा पूर्वं तु दक्षिणश्चरणो भवेत् ॥ ११७ ॥

द्वितीयो दक्षिणकरस्तृतीयः शिर उच्यते ।
वामबाहुश्चतुर्थस्तु मध्यादूर्ध्वं तु पञ्चकम् ॥ ११८ ॥

अधोभागस्तु षष्ठः स्याद्वामभागस्तु सप्तकः ।
हुत्वैवं पूर्वसंप्रोक्तैरुपस्थापकमन्त्रकैः ॥ ११९ ॥

अर्चयित्वा दण्डदीर्घं प्रणमेद्धव्यवाहनम् ।
सकर्षस्वर्णयुक्ताङ्गां शोणां दद्यात्सतर्णकाम् ॥ १२० ॥

दक्षिणां सप्तकर्षां तु दद्यान्मारणकर्मणि ।
अंशुकं रुचकं धान्यं दत्त्वा संप्रीणयेद्गुरुम् ॥ १२१ ॥

एवं कृतेन मन्त्रीष्टं लभते होमकर्मणा ।
अथ वा मारणाकाङ्क्षी साध्यवामाङ्घ्रिपांसुभिः ॥१२२॥

सनिम्बतिलसिद्धार्थव्रणकृत्तैलसंयुतैः ।
हिङ्गुत्रिकटुकोपेतैर्महिषीमूत्रपेषितैः ॥ १२३ ॥

वराहपारावतयोः पुरीषेण समन्वितैः ।
एतैश्च संमिश्रयतु लोणं पूर्वोक्तसंख्यकम् ॥ १२४ ॥

पूर्ववत्पुत्तलीं तेन लोणचूर्णेन कारयेत् ।
प्राणान्प्रतिष्ठापयेच्च तत्र पूर्वोक्तसंख्यकम् ॥ १२५ ॥

पूर्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखे ।
दुर्गां वा भद्रकालीं वा प्रतिपद्य यथेरिताम् ॥ १२६ ॥

उपस्थिते त्वर्धरात्रे सव्यपाणिस्थशस्त्रकः ।
वामपादं समारभ्य जुहुयात्पूर्वसंख्यया ॥ १२७ ॥

समापयेद्दक्षपादं विकारेणायसो वशी ।
त्रिसप्ताहप्रयोगेण मारयेद्रिपुमात्मनः ॥ १२८ ॥

तस्यां रात्र्यामुपोष्याथ परेऽहनि च साधकः ।
प्राणायामादिभिरपि गायत्रीजपहोमकैः ॥ १२९ ॥

विमुक्तपापो भूत्वा तु स पुनर्विहरेत्सुखम् ।
यां कल्पयन्त्यपामार्गराजीघृतहवींषि च ॥ १३० ॥

पृथगष्टोत्तरशतावृत्त्या हुत्वा बलिं हरेत् ।
यो मे पुरस्तादित्यादिदशमन्त्रैर्बलिं हरेत् ॥ १३१ ॥

इति लवणमनोर्विधानमेवं
प्रणिगदितं विधिवत्प्रयोगभिन्नम् ।
विधिममुमथ साधु संप्रयुञ्ज्या-
द्व्रजति फलं निजवाञ्छितं चिराय ॥ १३२ ॥

अथ वा लवणैः परागभूतै-
र्मधुराक्तैः पुनरष्टमीनिशाद्यम् ।
जुहुयात्तु चतुर्दशीनिशान्तं
कुडुबोन्मानितमेभिरेव मन्त्रैः ॥ १३३ ॥

नारीनरान्वा नगरं नृपान्वा
ग्रामं जनान्वा मनसोऽनुकूलान् ।

वशीकरोत्येव हुतक्रियेयं
चिराय नैवात्र विचारणीयम् ॥ १३४ ॥

वस्तुनोक्तेन क्रियतां साङ्गोपाङ्गेन पुत्तली ।
तस्यां तु साध्यलिङ्गायां प्राणाद्यर्पणमाचरेत् ॥ १३५ ॥

निक्षिप्य हृदये किंचित्कीटान्तां संस्पृशन्पुनः ।
प्राणार्पणेन यत्कार्यं क्षिप्रं कुर्याद्विचक्षणः ॥ १३६ ॥

अथास्य हृदये स्मृत्वा वर्तुलं वायुमण्डलम् ।
कृष्णषड्बिन्दुगं वायुं वायुगर्भं विचिन्तयेत् ॥ १३७ ॥

तत्र भूतास्तु तन्मात्राशब्दाद्यं श्रवणादिकम् ।
धातून्मनश्च बुद्धिं च संक्षिपेदप्यहंक्रियाम् ॥ १३८ ॥

तत्सर्वं तेन चण्डेन समीरेण समीरितम् ।
अवामनासारन्ध्रेण स्वसमीपमुपानयेत् ॥ १३९ ॥

प्रवेशयेच्च पुत्तल्यां पुनस्तेनैव वर्त्मना ।
प्राणप्रतिष्ठामन्त्रेण लब्धप्राणादिकां तथा ॥ १४० ॥

याद्यष्टकान्भ्रमरवद्धृदयाम्बुजस्थां
तत्केसरार्पितपरागपरिष्कृताङ्गान् ।

संचिन्त्य साध्यहृदयेऽपि तथैव भूयः
साध्याम्बुजस्थानलिपिस्वकीयैः ॥ १४१ ॥

हृत्पद्ममध्यस्थिततन्तुजालै-
रेकैकमेकोत्पतितैः क्रमेण ।
निश्वासमात्रेण सुखं प्रविष्टा-
स्तत्प्राणमार्गेण हरेर्द्विरेफान् ॥ १४२ ॥

वायव्याग्नेयैन्द्रवारीणमहेश-
ऋव्यात्सोमप्रेतनाथाश्रितेषु ।
किञ्जल्केषु प्राणभूतद्विरेफां-
स्तत्संबन्धांस्तन्तुभिर्बिन्दुभूतैः ॥ १४३ ॥

अवामनासामार्गेणैवाकृष्याकृष्य पुत्तलीम् ।
प्रवेशयेत्सुधीः प्राणान्प्राणाद्यर्पणयोगतः ॥ १४४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे त्रिंशः पटलः ॥**

———*———

## एकत्रिंशः पटलः ॥

प्राणप्रतिष्ठानमनोर्विधानं
प्रवक्ष्यते संप्रति सर्वसिद्ध्यै ।
यस्माद्दतेऽमी कथिताः प्रयोगाः
व्यर्था भवेयुर्गतजीवकल्पाः ॥ १ ॥

प्रोक्त्वा पूर्वममुष्यशब्दमथ च प्राणा इह प्राणका-
स्तद्वज्जीव इह स्थितेति च तथा सर्वेन्द्रियाणीति च ।
भूयो वाङ्मनसावुदीर्य तदनु प्राणा इहायान्त्विति
स्वाहान्तं प्रजपेन्मनुं निशितधीः प्राणान्प्रतिष्ठापयेत् ॥[1]

सृष्टिः सा जगतामनादिनिधना विश्वस्य चेष्टाकरी
प्राणाख्या प्रकृतिः क्रियामयवपुर्देवी परा देवता ।

---

[1]तद्वद्वाङ्मनसी दृशं श्रुतिमथो घ्राणं च सप्राणकं
सैवेहागतयाममुक्सुखचिरं तिष्ठन्तु ठद्वन्द्वकम् ।
मन्त्रस्यास्य विधिर्हरिश्च हर इत्येते मुनित्वे स्थिता
श्छन्दस्त्वृग्यजुषी च सामकमथर्वेतीह च्छन्दांसि च ॥

प्रत्येकं कादिवर्गैः प्रतिगतलिपिकैर्बिन्दुयुक्तैर्धराद्यैः
शब्दाद्यैः श्रोत्रमुख्यैर्वदनकरमुखैस्तत्क्रियाभिः क्रमेण ॥
बुद्धयाद्यैश्चात्मनेऽन्तैरुपरि च विलसज्जातिभिः षड्भिरेवं
कुर्यादङ्गानि सम्यग्वरविशदमतिर्विश्वरूपत्वसिद्ध्यै ॥३॥

नाभेर्देशादापदं पाशबीजं
हृद्देशादा नाभिदेशं च शक्तिम् ।
आहृद्देशं मस्तकादङ्कुशाख्यं
न्यस्त्वा यादीन्धातुभिर्न्यस्य[1] सप्त ॥ ४ ॥

प्राणे जीवे चैव हंसश्च
यार्णन्यस्येन्मूलं व्यापकं मस्तकादिम् ।
एवं न्यस्य प्राणशक्तिस्वरूपं
[2]विद्यां ध्यायेदात्मरूपां च देवीम् ॥ ५ ॥

रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान् ।
बिभ्राणा सृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः स्वरूपा ॥

---

1. जन्तुषु न्यस्त 2. बिभ्रत्

ध्यात्वा देवीं प्रजपेदेवं लक्षं मनुं समाहितधीः ।
आज्येनान्ते जुहुयाच्चरुणा वा तद्दशांशतो मन्त्री ॥ ७ ॥

शाक्ते पीठे देवीं षट्कोणस्थैः प्रजेशहरिरुद्रैः ।
वाणीलक्ष्मीगिरिजासहितैरङ्गैश्च मातृलोकेशैः ॥ ८ ॥

प्रयजेच्चतुर्भिरेवं परिवारैर्नित्यमेव निशितमनाः ।
एवं संसिद्धमनुर्वश्याद्यान्यारभेत कर्माणि ॥ ९ ॥

पाशाङ्कुशान्तरितशक्तिमनोः परस्ता-
दुच्चार्य यादिवसुवर्णगणं सहंसम् ।
पश्चादमुष्यपदमुच्चरतु प्रयोग-
मन्त्रोऽयमित्थमुदितो ग्रहसंख्यया वा ॥ १० ॥

मृता वैवस्वता चैव जीवहा प्राणहा तथा ।
आकृष्या ग्रथना चैव उन्मादा विष्फुलिङ्गिनी ।
क्षेत्रज्ञा प्रतिहारी च प्राणमूर्त्यः सयादिकाः ॥ ११ ॥

बद्ध्वा साध्या पाशबीजेन शक्त्या
गृह्णन्नाकृष्याङ्कुशेनाथ यादीन् ।

दूतीश्चोक्त्वा साध्यनाम्नाथ धातू-
नेवं मन्त्रो यावदात्मा सवीर्यः ॥ १२ ॥

सुप्ताशेषजने निशीथसमये साध्ये स्वपित्यादरा-
दारुह्य स्ववशं विधाय हृदये साध्याकृतेः कीलकम् ।
बद्ध्वा तं च निपीडमेव सहसा कालस्य यष्ट्या शिर-
स्याघातात्क्षुभिताखिलेन्द्रियगणं साध्यं स्मरेत्साधकः ॥

वायव्याग्नेयैन्द्रवारीणमहेश-
क्रव्यात्सोमप्रेतराणमध्यकेषु ।
स्थानेष्वेतेष्वष्ट यादीन्सहंसा-
न्भृङ्गान्ध्यायेद्बीजाबिन्दुप्रबद्धान् ॥ १४ ॥

स्वीये चैवं संस्मरेद्धृत्सरोजे
भृङ्गीरूपान्निर्गतान्श्वासमार्गैः ।
साध्याब्जस्थांश्चञ्चरीकान्गृहीत्वा
स्वीयं स्थानं पूर्ववत्संप्रविष्टान् ॥ १५ ॥

बीजानि रक्तानि तु वश्यकर्म-
ण्यम्भोधराभान्यभिचारकाले ।

धूम्राणि विद्वेषविधौ समोहे
पीतानि संस्तम्भविधौ स्मरेच्च ॥ १६ ॥

अथ वा साध्यप्राणा-
न्मण्डूकाकारधारिणो ध्यायेत् ।
स्वीयान्भुजगाकारा-
नभिचारादौ नृशंसकर्मविधौ ॥ १७ ॥

प्राणप्रतिष्ठाकर्मैवं विधायैकादशापरम् ।
पुत्तल्यादौ खचित्ते वा तांस्तु संस्तम्भयेद्ध्रुवा ॥ १८ ॥

आकृष्टानां साध्यदेहादसूनां
पुत्तल्यादावप्ययं स्यात्प्रकारः ।
किं तु स्वीये हृत्सरोजे प्रवेशो
वश्याकृष्ट्योरेव नात्राभिचारे ॥ १९ ॥

पाशाद्यत्रिकयुक्तमूलहृदयभ्रूमध्यसूत्रायिता
साग्निः साध्यललाटरन्ध्रवगतोऽप्यामूलमाजग्मुषि[1] ।
योन्यां त्वात्महृदब्जमेवमनिशं भ्राम्यत्यसौ चिन्त्य तं
शक्तिर्जन्मशतान्यपीह वशयेत्साध्यं समाकर्षयेत् ॥२०॥

1. ०पतितामामूलमाजग्मुषि

प्राणप्रतिष्ठाविधिरेवमुक्तः

साङ्गः सयोगो विनियोगयुक्तः ।

अस्मिन्प्रवीणो गिरिकाननादी-

न्प्रचालयेत्प्राणवतो विधाय ॥ २१

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्द-

भगवत्पूज्यपादशिष्यस्य श्रीमच्छकरभगवतः कृतौ

प्रपञ्चसारे एकत्रिंशः पटलः ॥

# द्वात्रिंशः पटलः ॥

अथ यन्त्रविरचनाभि-

मन्त्रविशेषान्बहुप्रकारयुतान् ।

कथयिष्ये मन्त्रविदा-

मैहिकपारत्रिकाप्तये सुधियाम् ॥ १ ॥

त्रिगुणितसंज्ञे माया-

लंकृतकोणे तयाभिवीते च ।

या या विशेषक्लप्ति-

स्तां तामपि संग्रहेण समभिदधे ॥ २ ॥

कोणोल्लसितसुधाक्षर-

गलदमृतस्फुरितवह्निपरिवीतान् ।

बिन्दोर्मध्यगबीज-

स्थितान्सुधाधारया परिस्रुतया ॥ ३ ॥

पूर्णसुषुम्नारन्ध्रां
साध्यतनुं संस्मरञ्शिरसि बध्यात् ।
तेनारोगी पुरुषः
प्रज्ञावान्दीर्घमायुराप्नोति ॥ ४ ॥

शीतांशुमण्डलस्थं
कूर्मचतुर्थान्तकोणलसितमिदम् ।
शीतप्रलिप्तजप्तं
कधृतं च शिरोरुजाज्वरार्तिहरम् ॥ ५ ॥

तद्यन्त्रयुगं विलिखे-
दभिविलिखितसाध्यसाधकाख्ययुतम् ।
साध्यमधस्तात्कृत्वा
बद्ध्वात्र स्वपतु साधको नित्यम् ॥ ६ ॥

विधिनानेन तु सम्य-
क्साध्योऽस्य वशे भवेदयत्नेन ।
तत्तु खनित्वागारे
तत्रान्नं सिद्धमत्तु वश्यकरम् ॥ ७ ॥

साध्याख्यां शक्तिवह्नौ नरहरिमपि रन्ध्रत्रये च त्रिशक्तौ
कर्मालिख्याथ लोष्टे सततगमपि संस्थाप्य जप्त्वा स्वशक्त्या ।
आगारे स्थापयित्वा नरमुदकनिधेश्चित्रपत्रे लिखित्वा
दीपाग्नौ तापयित्वा स्त्रियममलधियः सम्यगाकर्षयेयुः ॥८॥

त्रिगुणितविहिता विधयः
षड्गुणिते च प्रयोजनीयाः स्युः ।
रक्षाकर्मणि विहितं
तत्प्रायः प्रचुरमन्त्रयुक्ततया ॥ ९ ॥

पाशाष्टाक्षरवीतशक्ति दहनप्रोल्लासिसाध्याह्वयं
शक्तिश्रीस्मरसंवृतं कुयुगरन्ध्राबद्धचिन्तामणि ।
इत्थं षड्गुणितं विलिख्य जपितं मन्त्री दधानोऽसकृ-
द्राज्ञां वामदृशां प्रियो भवति संग्रामे पुरे वा चिरम् ॥

चिन्तारत्नाश्रिताश्रित्रियुगमथ नृसिंहावृतान्तःस्थबीजं
प्रादुःसाध्याभिधानं बहिरपि लिपिभिः प्रानुलोमानुवीतम् ।
क्ष्माबिम्बद्वन्द्वरन्ध्रप्रचलितचतुरर्णं ग्रहोन्मादभूत-
व्याधिघ्नं यन्त्रमस्मिन्कृतकलशविधिर्गर्भरक्षाधिकारी ॥

द्वादशगुणिते शूले
नृसिंहबीजं नरेन्द्रपुरवीतम् ।
पीतालिप्तं पुरलघु-
धूपितमन्तःप्रबद्धकर्मयुतम् ॥ १२ ॥

चतसृषु दिक्षु निखन्या-
त्सीमायां द्वारतोरणाधो वा ।
देशाभिगुप्तिरेषा
गुप्ततमा सूरिभिः पुरा प्रोक्ता ॥ १३ ॥

अलदलनिशाकुशीतै-
र्मसृणे पट्टे विलिख्य यन्त्रमिदम् ।
[1]धेरस्थापनकर्म
प्रतिजप्तं प्राङ्गणे खनेन्मन्त्री ॥ १४ ॥

तत्र विशन्ति न चोरा
[2]ग्रहकृत्या स्यान्निकेतरक्षा च ।
अश्माभिपातवारण-
मभिवृद्धिं संपदां करोत्यचिरात् ॥ १५ ॥

1. सेर॰ 2. ग्रहकृत्याद्या निकेत॰

तद्वद्भूटार्गलाख्यं
यन्त्रं नीले विलिख्य पट्टवरे ।
[1]मेचकसाध्यप्रतिकृति-
हृदये गुलिकां विधाय निक्षिप्य ॥ १६ ॥

त्रिमधुरपूर्णे पात्रे
विन्यस्याभ्यर्च्य गन्धपुष्पाद्यैः ।
बलिमपि विकिरेद्रात्रिषु
सप्ताहादानयेद्वधूमिष्टाम् ॥ १७ ॥

तामेवाथ प्रतिकृति-
मग्नौ किंचित्प्रतापयेत्प्रजपन् ।
शक्तिं पाशाङ्कुशमनु-
साध्याह्वयदर्भितां समाहितधीः ॥ १८ ॥

विधिनामुना त्रिरात्रा-
द्गर्वितधियमपि सुराङ्गनां मन्त्री ।
आकर्षेन्निजवाञ्छा-
प्रदायिनीं मदनबाणविह्वलिताम् ॥ १९ ॥

1. मोचक०

यन्त्रं तदेव लाक्षा-
    ताम्रावीतं निधाय कलशजले ।
जप्त्वा भानुसहस्रक-
    मभिषिञ्चेद्रजतकाञ्चनाभ्यां च ॥ २० ॥

तद्वद्विधाय [1]कलशे
    तद्यन्त्रं धारयेत्पुनर्नित्यम् ।
वाञ्छितसिद्धिं लभते
    भक्त्या प्रणमन्ति देवता अपि तम् ॥ २१ ॥

यन्त्रं तदेव विधिव-
    द्भित्तावालिख्य पूजयेद्दिनशः ।
चोरारिभूतनागा
    अपि तं देशं न वीक्षितुं शक्ताः ॥ २२ ॥

आलिख्य वीरपट्टे
    यन्त्रमिदं मस्तकार्पितं कृत्वा ।
युध्यन्प्रत्यर्थिनमपि
    हत्वा यात्यव्रणाङ्कितो योद्धा ॥ २३ ॥

---

1. कलशं

मदजलविलिखितमेत-
    द्यन्त्रं जप्तं च मस्तके न्यस्तम् ।
करिणीमपि मदयेद्वा-
    क्चण्डतरे का कथा करेणुवरे ॥ २४ ॥

बहुनेति भाषितेन कि-
    मेभ्यो मुख्यं न किमपि यन्त्रेभ्यः ।
तस्मादमूनि सद्भि-
    र्धार्याणि च विश्ववश्यमिच्छद्भिः ॥ २५ ॥

गजमृगमदकाश्मीरै-
    र्मन्त्रितमः सुरभिरोचनायुक्तैः ।
विलिखेदलक्तकरसा-
    लुलितैर्यन्त्राणि सकलकार्यार्थी ॥ २६ ॥

राज्या पटुसंयुतया
    सपाशशक्त्यङ्कुशेन मन्त्रेण ।
स्वाद्वक्तयाभिजुहृ-
    न्निश्युर्वीशांस्तथोर्वशीं वशयेत् ॥ २७ ॥

हृल्लेखाग्निस्थसाध्याह्वयमपि बहिरांक्रोंवृतं वह्निगेह-
द्वन्द्वाश्रिस्वस्तिकाढ्यं प्रतिलिखतु दले यन्त्रजं नागवल्ल्याः ।
जप्त्वा शक्तिं तु पाशाङ्कुशलिपिसहितां तापयेद्दीपवह्नौ
नक्तं भक्त्यानताङ्गी स्मरशरविवशा प्रेमलोलाभियाति ॥

शक्तिस्थं निजनाभिवह्निभवनद्वन्द्वोदरे मान्मथं
　बीजं साध्यविदर्भया परिवृतं शक्त्या बहिः पार्थिवम् ।
तत्कोणे स्मरमन्यपुष्टनयनप्रोत्थैः पुनः [1]कर्णिकै-
　[2]स्ताम्बूलैर्लिखिताभिजप्तमदयेद्योषिन्मनोमोहनम् ॥२९॥

शक्त्यन्तःस्थितसाध्यनाम परितो बीजैश्चतुर्भिः समा-
　बद्धं शक्तिमनोभवाङ्कुशलिपिप्रोंभिः समावेष्टितम् ।
शाल्युत्थे प्रतिलिख्य पिष्टविकृतौ प्राणान्प्रतिष्ठाप्य च
　त्रिस्वादौ परिभर्ज्य तत्समदतः साध्यो वशे तिष्ठति ॥

डान्तं शिखीलवयुतं दहनांशसाध्यं
　मायांशसाधकमथाभिवृतं कलाभिः ।
मध्योल्लसद्द्विमुखशूलमिदं तु भर्तु-
　र्यन्त्राह्वयं नरनताङ्गिवशंकरं स्यात् ॥ ३१ ॥

1. कण्टकै- .2. स्ताम्बूले

मृत्काराङ्गुलिकात्तया सक्कलासान्तर्वसायुक्तया
साध्यस्याङ्घ्रिरजोयुजा मृदुमृदा क्लप्तस्य शक्तिं हृदि ।
रूपस्याभिविलिख्य तद्विवरके साध्यं तदीरान्प्रति-
ष्ठाप्याजल्प्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृत् ॥

वामाक्ष्याः प्रतिलिख्य नाम निशया वामोरुदेशे निशा-
मध्ये वामकरेण संशितमतिः संछादयंस्तन्मनाः ।
पूर्वं रुद्रपदं ततश्च दयितेयोगीश्वरीबिन्दुम-
न्मन्त्रं जप्यति चेदनङ्गविवशां सद्यः प्रियामानयेत् ॥

मायाहृदोरथान्ते
ब्रह्मश्रीराजितेऽक्षरान्प्रोक्त्वा ।
राजयुतपूजितेऽर्णा-
न्स जये विजये च गौरि गान्धारि ॥ ३४ ॥

त्रिभुवनवशंकरीति च
सर्वलोकान्तिके वशंकरि च ।
सर्वस्त्रीपुरुषवशं-
करि सुदुघे वाक्षरान्प्रवीप्स्य ततः ॥ ३५ ॥

मायाद्विठान्तिको मनु-
    रेकाधिकषष्टिवर्णकः प्रोक्तः ।
ऋषिरस्याजोऽतिनिचृ-
    च्छन्दो गौरी च देवता प्रोक्ता ॥ ३६ ॥

सचतुर्दशभिर्दशभि-
    स्तथाष्टभिश्चाष्टभिस्तथा दशभिः ।
एकादशभिर्मन्त्रा-
    क्षरैः क्रमादुच्यते षडङ्गविधिः ॥ ३७ ॥

असकलशशिराजन्मौलिराबद्धपाशा-
    ङ्कुशरुचिरकराब्जा बन्धुजीवारुणाङ्गी ।
अमरनिकरवन्द्या त्रीक्षणा शोणलेपां-
    शुककुसुमयुता स्यात्संपदे पार्वती वः ॥ ३८ ॥

अयुतं प्रजपेज्जुहुया-
    द्घृताप्लुतैः पायसैर्दशांशेन ।
आराधयेत्तदङ्गै-
    र्मातृभिराशाधिपैश्च निशितमना ॥ ३९ ॥

तिलतण्डुलकैर्लोणै-
स्त्रिमधुरसिक्तैः फलैश्च मधुरतरैः ।
साज्यैररुणकुवलयै-
स्त्रिदिनं हवनक्रिया सुवश्यकरी ॥ ४० ॥

नित्यं चादित्यगतां
देवीं प्रतिपद्य तन्मुखो जप्यात् ।
अष्टोत्तरशतमह्ना-
मादौ भुवनं वशीकरोत्यचिरात् ॥ ४१ ॥

वर्णादर्वाङ्मन्त्री
प्रयोजयेत्साध्यनामकर्मयुतम् ।
प्रजपेद्वा हवनविधौ
वाञ्छितसिद्धिप्रदस्तथा मन्त्रः ॥ ४२ ॥

सताराराजमुख्यन्ते राजाधिमुखिवर्णकान् ।
संभाष्य वश्यमुखि च स्वां श्रीमारार्णकान्वदेत् ॥ ४३ ॥

वीप्स्य देविमहादेविपदं देवादिदेवि च ।
प्रोक्त्वा सर्वजनस्येति मुखं मम वशं वदेत् ॥ ४४ ॥

कुरु कुर्विति ठद्वन्द्वान्तिकं मन्त्रं समुद्धरेत् ।
सप्ताधिकैः सदशभिस्तथा त्रिंशद्भिरक्षरैः ॥ ४५ ॥

दशभिः सप्तभिश्चैव चतुर्भिः करणाक्षरैः ।
पञ्चभिः सप्तदशभिर्वर्णैरङ्गक्रिया मता ॥ ४६ ॥

ब्रह्मश्रीमन्त्रसंप्रोक्ता प्रतिपत्तिरमुष्य च ।
मन्त्रस्य जपक्लृप्तिस्तु तथा होमविधिर्मतः ॥ ४७ ॥

मन्त्री सर्वजनस्थाने कुर्यात्साध्याह्वयान्मनोः ।
प्रजपे हवने वाथ तथा तर्पणकर्मणि ॥ ४८ ॥

देवीध्माष्टशतं प्रसूनवदथ त्रिस्वादुयुक्तं हुने-
त्सप्ताहं भमितेन तेन विहितं पुण्ड्रादिकं वश्यकृत् ।
आज्यैस्तत्कृतहोमपातितसमाजप्तं घृतं प्राशये-
त्साध्यं निष्परिहारकं च तदिदं वश्यं भवेद्देहिनाम् ॥

शक्तिं साध्यर्क्षवृक्षप्रतिकृति हृदि संलिख्य संस्थाप्य जीवं
जप्त्वा खन्याङ्कणेऽस्मिन्विधिवदनलमाधाय पुष्पैर्जपायाः ।
देवीमन्त्रेण रात्रौ दशपरशतसंख्यैस्तु काचन्दनाक्तै-
र्हुत्वा तां सप्तरात्रं सरिति निखनतादुत्तमं वश्यकर्म ॥

अन्नं मय्यन्नं
मे देह्यन्नाधिपतये ममेत्युक्त्वा ।
अन्नं प्रदापयेति च
ठद्वयुगान्तोऽन्नदायको मन्त्रः ॥ ५१ ॥

करणेन्द्रियरसधातु-
द्वयवर्णैरङ्गमन्त्रपत्रपदैः[1] ।
द्व्ययुतजपावधिरेष
द्विसहस्रहुतं च सर्पिरन्नाभ्याम् ॥ ५२ ॥

दुग्धाब्धौ रूप्यवप्रावृतकनकमयद्वीपवर्ये सुराढ्ये
कल्पद्रूद्यानकाधो मणिमयलसिते वित्तसस्याग्रभागे ।
आसीने भूश्रियौ वाञ्छितवसुनिचयं मन्त्रिणे संसृजन्त्यौ
मन्त्री संचिन्तयानो जपतु दिनमुखे संपदेऽन्नस्य मन्त्रम् ॥

नत्यादिभगवत्यन्ते माहेश्वरिपदं वदेत् ।
अन्नपूर्णेऽग्निजायान्तो मन्त्रोऽन्नप्रदसंज्ञकः ॥ ५४ ॥

मायाविहितषडङ्गो
दिनमुखजप्यश्च षोडशसहस्रम् ।

---

1. ०मस्य मन्त्रपदैः

प्रोक्तो जपावसाने
   सघृतैरन्नैर्दशांशको होमः ॥ ५५ ॥

रुद्रताण्डवविलोकनलोलां
   भद्रवक्त्रनयनां भवकान्ताम् ।
अन्नदाननिरतां जननीं तां
   चिन्तयञ्जपतु चित्रदुकूलाम् ॥ ५६ ॥

वैश्रवणः पकाशः
   पिङ्गलनिधिपौ तथैव वित्तेशः ।
सकुबेरस्वाहान्ताः
   सव्याहृतयः समीरिता मन्त्राः ॥ ५७ ॥

वित्तेशस्यान्तराले दशवटसमिधः सर्पिषाक्ता विविक्ता
  होतव्या द्रव्यसिद्ध्यै कनकघटकरण्डात्तदोस्तुन्दिलोऽसौ ।
[1]हेमाभो रत्नदीप्तो दरकमलनिधिद्योतितो हेमपीठे
  ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्वदेवावसाने ॥

मन्त्रैरेतैर्घृतयुत-
   पायसहोमोऽपि मन्त्रिणां विहितः ।

---

1. हेमाभै रत्नजालैः

लक्ष्म्यै सघृतैश्च तिलै-
बिल्वसमिद्धो मतस्तदेव फलम् ॥ ५९ ॥

भयाहारेन्दुयुक्सैव विदण्डाहस्पताक्षरा: ।
[1]बालिस्थयोनिर्नत्यन्तो वसुवर्णो मनुर्मत: ॥ ६० ॥

वर्णसाहस्रजाप्यश्च तावच्छतहुतो मत: ।
होम: सर्पिष्मतान्नेन बीजेनाङ्गक्रिया मता ॥ ६१ ॥

रत्नस्वर्णांशुकादीन्निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमेवं
भीतापुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत्स्वर्णवस्त्रादिसिद्ध्यै ॥

वययोरन्तरास्त्रं मे देहि शुक्राक्षराद्विठ: ।
मन्त्रोऽयुतजप: सर्पि: सहस्रहवनक्रिय: ॥ ६३ ॥

शुक्रास्ये शुक्लपुष्पैर्हुतभुजि गुणश: सप्तशोऽप्येकविंश-
द्वारं होतव्यमेषोऽप्यतिसितकुसुमालेपनो वामदोष्णा ।
वासोरत्नादिकार्तस्वरमपि सततं साधकाय प्रयच्छ-
न्ध्यातो व्याख्यानमुद्राकलितपरकरस्त्वापणालिन्दसंस्थ: ॥

---

1. वायुः स०

राजेरस्थोऽहिपो दण्डी वेदान्तेऽसौ विदण्डकः ।
सायान्ते नतिरष्यष्टवर्णो वैयासिको मनुः ॥ ६५ ॥

मुनिव्रातावीतं मुदितधियमम्भोदरुचिर-
    द्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम् ।
परं जानौ कृत्वा दृढकलितकक्ष्ये कविवरं
    समासीनं व्यासं स्मरत निरतं पुण्यचरितम् ॥

विकृतिसहस्रजपोऽयं
    दशांशतः पायसाज्यहवनविधिः ।
निरुपमकविताप्रज्ञा-
    व्याख्याश्रीसंपदावहो मन्त्रः ॥ ६७ ॥

करचरणपार्श्वमूल-
    द्युलोंहरेबिन्दुदुंसरसनार्णाः ।
अलिकाद्या वर्मास्त्र-
    द्विठान्तिको मनुरयं ध्रुवादिः स्यात् ॥ ६८ ॥

अयुतं प्रजपेच्च षट्सहस्रा-
    वधि मन्त्रे जुहुयाद्दशांशमानम् ।

तिलसर्षपतण्डुलैः सशाली-
हविराज्यैः सुसमेधिते कृशानौ ॥ ६९ ॥

उत्तुङ्गादिः प्रचेता अपि दहनसमीरौ धराव्योमसंज्ञे
प्राक्प्रत्यग्दक्षसौम्यास्वध उपरि च दिक्षु प्रबन्धप्रभाः स्युः ।
तन्मध्यस्थान्विपक्षादिकहरिरुरुदन्तीन्द्रनागान्सचोरा-
न्हन्त्येतैर्मन्त्रिमुख्यो मनुविहितबलव्याकुलान्सद्य एव ॥

निजरिपुमचलाद्यैस्तैः ससंबाधवीतं
मनुविदथ हलोभ्यां रुद्धनिश्वासवेगे ।
तदुपरिगतबीजैः साधुसंस्यूतवक्त्रं
दहतु सकवचास्त्रद्वीन्दुभिः[1] स्वेच्छयैनम् ॥ ७१ ॥

योनिर्वियत्सुनेत्रं
परमे वर्णास्तथास्थिगं मेदः ।
रक्तस्थहृद्गिद्वठान्त-
स्ताराद्योऽयं मनुर्दशार्णयुतः ॥ ७२ ॥

अयुतं जपेन्मनुमिमं
सहस्रवारं हुनेत्तथाज्येन ।

---

1. ०बिन्दुभिः

ध्यातापि गिरिसुतेयं
　　जगतीं विश्वां वशीकरोत्यनिशम् ॥ ७३ ॥

अश्वारूढा कराग्रे नवकनकमयीं नेत्रयष्टिं दधाना
　दक्षेऽन्येनानयन्ती स्फुरिततनुलतापाशबद्धां स्वसाध्याम् ।
देवी नित्यप्रसन्नाननशशधरबिम्बा त्रिनेत्राभिरामा
　दद्यादाद्यानवद्या प्रवरसुखफलप्राप्तिहृद्यां श्रियं वः ॥ ७४ ॥

विद्ययानुदिनहृद्ययानया
　　होमकर्मवरहेमदायि तत् ।
कामितां सपदि वामलोचना-
　　मानयेदपि च मारपीडिताम् ॥ ७५ ॥

हवनक्रिया सपदि वश्यकरी
　　मधुरावसेकपटुना पटुना ।
सदृशो न कश्चन जगत्यपरो
　　मनुनामुनानयनकर्मविधौ ॥ ७६ ॥

वाणी स्यात्तारूपा शिरसि गिरिसुता शक्तिरूपा ललाटे
　रव्यग्न्यक्ष्णोस्तथामौ विधुरपि वदनावेष्टने टान्तरूपः ।

श्रीर्जिह्वायां स्वरूपा स्वभिमतकरिरूपौ स्वहौ दीर्घयुक्ता-
वेवं न्यासे मुखश्रीविभवसुखयशःकान्तिमेधाकरः स्यात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे द्वात्रिंशः पटलः ॥**

# त्रयस्त्रिंशः पटलः ॥

अथ संतानसंसिद्धिसमाकुलितचेतसाम् ।
तदुत्पत्तिकरं यागं प्रवक्ष्ये गृहमेधिनाम् ॥ १ ॥

न चापुत्रस्य लोकोऽस्ति पितरोऽधः पतन्ति च ।
तस्मात्तु सकलोपायैर्यतेतापत्यसिद्धये ॥ २ ॥

देवर्षिपितृपूजासु निरतानामभक्तितः ।
गुरुमातृपितृश्राद्धवञ्चकानां च नित्यशः ॥ ३ ॥

अर्थिभ्योऽर्थमदातॄणां विद्यमानेऽर्थसंचये ।
अदत्त्वैवातिथिभ्योऽन्नं भोक्तॄणां पापचेतसाम् ॥ ४ ॥

हरिशंकरयोः पादपद्मार्चाविरतात्मनाम् ।
स्वभार्यानिन्दकानां च लोकवेदविरोधिनाम् ॥ ५ ॥

इत्यादिदोषदुष्टानां पापानां [1]गृहमेधिनाम् ।
दुष्प्रतिग्रहदोषाद्वा जायते त्वनपत्यता ॥ ६ ॥

---

1. गृहवर्तिनाम्.

एवमादिकदोषापनोदनी सुतसिद्धिदा ।
अशेषपापहन्त्री च वक्ष्यते यजनक्रिया ॥ ७ ॥

पुत्राप्तये गृहस्थो
दीक्षाविधिना चतुर्दशीरात्रिम् ।
सह पत्न्या गमयित्वा
कृत्वा पौर्वाह्णिकीः क्रियाः सर्वाः ॥ ८ ॥

संयोज्य किंचन यथाविधि पञ्चगव्यं
संकोचकेन मनुना प्रतिमथ्य वार्णम् ।
संमन्त्र्य चाष्टशतकं समवद्यभूत-
मन्त्रैः पिबेत्स्वयमसावपि गर्भधात्री ॥ ९ ॥

ततोऽग्निमाधाय चरुं च कृत्वा
संकल्प्य तद्दक्षिणमुत्तरं च ।
भागं क्रमात्पैतृकदैविकं त-
त्पित्र्यं तु पूर्वं जुहुयात्क्रमेण ॥ १० ॥

स्मृत्वा निजं पितरमप्यधरा निषण्णं
सांनाय्य पिण्डयुगलं घृतसंप्लुतं तत् ।

हुत्वा स्रुवेण घृतसंपुटितं तथैव
मन्त्री पितामहमथ प्रपितामहं च ॥ ११ ॥

व्याहृतीभिरथ पक्कहोमतः
सर्वतः प्रतिजुहोतु सर्पिषा ।
मातृवर्गगुरुतातपितृद्वयं
पूर्ववत्समवदिष्य साधकः ॥ १२ ॥

कलायुतैः षोडशमूर्तिमन्त्रै-
र्व्यस्तैरथाष्टाक्षरजैश्च वर्णैः ।
अष्टौ समस्तेन च तेन पञ्चा-
क्षरेण चाष्टाक्षरवज्जुहोतु ॥ १३ ॥

पक्वाहुतीनामपि वर्णसंख्यं
चतुर्गुणं चापि घृताहुतीनाम् ।
हुत्वावदानद्वितयं च पुंस्त्री-
भेदप्रभिन्नं हविषा करोतु ॥ १४ ॥

पञ्चाक्षरेण पुरुषात्मकमन्यदन्य-
वर्णेन चाष्टशतयुग्ममथ प्रजप्य ।

संयोज्य तद्युगलमप्यभिमन्त्र्य विष्णु-
    र्योन्यादिकेन मनुना च कपर्दिसंख्यम् ॥ १५ ॥

पुरुषः पुरुषात्मकं प्रकृत्या-
    त्मकमन्याथ समाहितोपयुज्य ।
अवदानयुगं क्रमान्मनस्वी
    पुनराचम्य समर्चयेद्धुताशम ॥ १६ ॥

गुरवेऽप्यथ दक्षिणां प्रदत्त्वा-
    नलमुद्वास्य च भोजयेद्द्विजातीन् ।
प्रतिपर्वकमेवमेकवृद्धया
    मतिमान् पकुरकं प्रपूरयीत ॥ १७ ॥

एकह्रासादन्यमब्दं द्विजाती-
    न्संभोज्यान्यं पूरयेदेकवृद्ध्या ।
संपूर्यमाणादेवमेव त्रिकाब्दा-
    दर्वाक्पुत्रो जायते दैवशक्त्या ॥ १८ ॥

पितृदेवताप्रसादा-
    न्मेधायुःकान्तिसंयुतो विद्वान् ।

लक्ष्मीतेजोयुक्तो
धर्मरुचिर्भवति संततेः कर्ता ॥ १९ ॥

समुनिसुरपितृभ्यो ब्रह्मचर्येण यज्ञै-
स्त्रिविधमृणमपत्यैश्चैव संमोचयेद्यः ।
श्रुतिवचनकृदस्मिन्वापि लोके परस्मि-
न्निति स तु गृहमेधी पूज्यते साधुलोकैः ॥

[1]वर्णादिको हलोमन्त्रः संकोचाख्यो ध्रुवादिकः ।
मन्त्रः स्याद्भूतमनवः स्युश्च भूतात्मनात्मभिः ॥ २१ ॥

अथो हिताय जगतां प्रथितं शितचेतसाम् ।
अद्य संक्षिप्य वक्ष्यामि लक्षणं गुरुशिष्ययोः ॥ २२ ॥

स्वच्छः [2]स्वच्छन्दसहितोऽतुच्छधीः सक्तहृच्छयः ।
देशकालादिविद्देशे देशे देशिक उच्यते ॥ २३ ॥

अग्रगण्यः समग्रज्ञो निग्रहानुग्रहक्षमः ।
षड्वर्गविजयव्यग्रोऽनुग्रो विगतविग्रहः ॥ २४ ॥

शुक्लशुक्लांशुकोत्कृष्टकर्मा विक्लवमानसः ।
वेदवेदाङ्गविद्वादी वेदिताविदितागमः ॥ २५ ॥

---

1. वर्गादिको; 2. स्वच्छन्दचरितो

इष्टदोऽनिष्टसंहर्ता दृष्टादृष्टसुखावहः ।
रतोऽविरतमर्चासु परं पुरमुरद्विषोः ॥ २६ ॥

शान्तो दान्तः शान्तमना नितान्तं कान्तविग्रहः ।
स्वदुःखकरणेनापि परं परसुखोद्यतः ॥ २७ ॥

ऊहापोहविदव्यग्रो लोभमोहविवर्जितः ।
अज्ञानुकम्प्यविज्ञातज्ञानो ज्ञातपरेङ्गितः ॥ २८ ॥

निरंशसांशवित्सर्वसंशयच्छिदसंशयः ।
नयविद्विनयोपेतो विनीतो न चिरात्मवान् ॥ २८ ॥

व्याधिरप्रापितव्याधिः समाधिविधिसंयुतः ।
श्रुतिधीरोऽतिधीरश्च वीरो वाक्यविशारदः ॥ ३० ॥

वर्गोपेतसमारम्भो गभीरो दम्भवर्जितः ।
आदर्श इव विद्यानां न तु दर्शनदूषकः ॥ ३१ ॥

असौ मृग्यश्च दृश्यश्च सेव्यश्चाभीष्टमिच्छता ।
शिष्यस्तदावर्जनकृद्देहेन द्रविणेन च ॥ ३२ ॥

तस्य पादारविन्दोत्थरजःपटलरूषणः ।
स्नानमप्राप्य न प्राप्यं प्रायो बुद्धिमतेप्सितम् ॥ ३३ ॥

नित्यशः कायवाक्चित्तैस्त्र्यब्दैकाब्दादिकावधि ।
परिचर्यापरः शिष्यः स्यात्सुसंयतमानसः ॥ ३४ ॥

तं तथाविधमालक्ष्य सदावितथवादिनम् ।
मातृतः पितृतः शुद्धं बुद्धिमन्तमलोलुपम् ॥ ३५ ॥

अस्तेयवृत्तिमास्तिक्ययुक्तं मुक्तिकृतोद्यमम् ।
अकल्मषं मृषाहीनमहीनद्रव्यमानसम् ॥ ३६ ॥

ब्रह्मचर्यपरं नित्यं परिचर्यापरं गुरोः ।
अल्पाशनिद्रं पूजायामनल्पकृतकल्पनम् ॥ ३७ ॥

अधीतवेदं स्वाधीनमनाधिं व्याधिवर्जितम् ।
तरुणं करुणावासं परितोषकरं गुरोः ॥ ३८ ॥

सुवेषमेषणातीतममलं विमलाशयम् ।
सुप्रसन्नं प्रसन्नाङ्गं सदा संनिहितं गुरोः ॥ ३९ ॥

परोपकारनिरतं विरतं परदूषणे ।
मातृवद्गुरुपत्नीं च भ्रातृवत्तत्सुतानपि ॥ ४० ॥

स्मरन्तमस्मराबाधं स्मितोपेतमविस्मितम् ।
परिग्रहे परीक्ष्यैव शिष्यमेवंगुणं गुरुः ॥ ४१ ॥

अलसं मलसंक्लिन्नं क्लिष्टं क्लिष्टान्ववायजम् ।
दम्भान्वितमगम्भीरं चण्डं पण्डितमानिनम् ॥ ४२ ॥

रागिणं रोगिणं भोगलालसं बालसंमतम् ।
रौद्रं दरिद्रं निद्रालुमाढ्यूनं क्षुद्रचेष्टितम् ॥ ४३ ॥

नृशंसमन्धं बधिरं पङ्गुं व्यङ्गममङ्गलम् ।
अतिदीर्घमतिह्रस्वमतिस्थूलकृशात्मकम् ॥ ४४ ॥

आदित्सुं कुत्सितं वत्सं बीभत्सं मत्सरात्मकम् ।
परदारपरं भीरुं दारुणं वैरिणं सताम् ॥ ४५ ॥

लुब्धं त्वलब्धवैदग्ध्यं स्तब्धं लुब्धकबान्धवम् ।
सुखिनं मुखरं दुर्गं दुर्मुखं मूकमानसम् ॥ ४६ ॥

प्रत्यग्रमुग्रं व्यग्रेहमग्रगण्यं दुरात्मनाम् ।
प्रष्टव्यकं तमःस्पृष्टं क्लिष्टामिष्टापहं नृणाम् ॥ ४७ ॥

स्वार्थकृत्यं प्रसक्तार्थं निरर्थारम्भणं शठम् ।
ईदृग्विधं गुरुः शिष्यं न गृह्णीयात्कथंचन ॥ ४८ ॥

यदि गृह्णाति तद्दोषः प्रायो गुरुमपि स्पृशेत् ।
मन्त्रिदोषो यथा राज्ञि पत्यौ जायाकृतो यथा ॥ ४९ ॥

तथा शिष्यकृतो दोषो गुरुमेति न संशयः ।
स्नेहाद्वा लोभतो वापि यो न गृह्णाति दीक्षया ॥ ५० ॥

तस्मिन्गुरौ सशिष्ये तु देवताशाप आपतेत् ।
मधुद्विषि महादेवे मातापित्रोर्महीभृति ।
भक्तिर्या सा पदाम्भोजे कार्या निजगुरौ सदा ॥ ५१ ॥

छायाज्ञापादुकोपानद्दण्डांश्च शयनासने ।
यानं मनोगतं चान्यदन्तेवासी न लङ्घयेत् ॥ ५२ ॥

व्याख्याविवादः स्वातन्त्र्यकामिता [1]काम्यजृम्भिता ।
निद्राकुतर्कक्रोधांश्च त्यजेद्गुरुगृहे सदा ॥ ५३ ॥

अग्राम्यधर्मं विण्मूत्रसर्गनिष्ठीवनादिकम् ।
परित्यजेत्परिज्ञाता वर्मिं च गुरुमन्दिरे ॥ ५४ ॥

ग्राम्योक्तीरनृतं निन्दामृणं च वसुविक्रयम् ।
परित्यजेद्गुरौ तस्य सपत्न्यैश्च समागमम् ॥ ५५ ॥

इष्टं वानिष्टमादिष्टं गुरुणा यत्तु गुर्वपि ।
त्वरया परया कुर्याद्धिया सम्यगजिह्मया ॥ ५६ ॥

---

1. कार्यं०

कर्मणा मनसा वाचा सदा भक्तियुजा गुरुम् ।
निर्व्याजं पूजयेच्छिष्यो निजकार्यप्रसिद्धये ॥ ५७ ॥

लोकोद्वेगकरी या च या च कर्मनिकृन्तनी ।
स्थित्युच्छेदकरी या च तां गिरं नैव भाषयेत् ॥ ५८ ॥

रम्यमप्युज्ज्वलमपि मनसोऽपि समीप्सितम् ।
लोकविद्वेषणं वेषं न गृह्णीयात्कदाचन ॥ ५९ ॥

इत्याचारपरः सम्यगाचार्यं यः समर्चयेत् ।
कृतकृत्यः स वै शिष्यः परत्रेह च नन्दति ॥ ६० ॥

देवानृषीनपि पितॄनतिथींस्तथाग्निं
नित्योद्यतेन मनसा दिनशोऽर्चयेद्यः ।
इष्टानवाप्य सकलानिह भोगजाता-
न्प्रेत्य प्रयाति परमं पदमादिपुंसः ॥ ६१ ॥

इत्थं मूलप्रकृत्यक्षरविकृतिलिपिव्रातजातग्रहर्क्ष-
क्षेत्राद्याबद्धभूतेन्द्रियगुणरविचन्द्राग्निसंप्रोतरूपैः ।
मन्त्रैस्तद्देवताभिर्मुनिभिरपि जपध्यानहोमार्चनाभि-
स्तन्त्रेऽस्मिन्यन्त्रभेदैरपि कमलज ते दर्शितोऽयं प्रपञ्चः ॥

यदाश्रया विप्रकृतिप्रभावतो
विभिन्नतारांशसमुत्थितौजसः ।
जगन्ति पुष्णन्ति रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ॥ ६३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
**प्रपञ्चसारे त्रयस्त्रिंशः पटलः ॥**

**प्रपञ्चसारः संपूर्णः ॥**

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

*P. II 18.